श्रीधरस्वामिकृत भावार्थदीपिका ।

कुरुदेवस्य युधिष्ठिरस्य देव्या द्रौपद्या आत्मनः स्नुषायाः स्वीयैरस्रैरश्रुभिः स्वकुच कुङ्कुमानि रिपुस्त्रीणां वा तत् भर्तृवधेन हरन्त्याः ॥ ६ ॥

सत्यावलम्बस्य सत्याश्रयस्य । वनात् प्रत्यागत्य समयेन पूर्व्वकृतेन दायं भागं याचमानस्य यत् यदा न अदात् तमः मोहं जुषमाणः ॥ ७ ॥

यानिच वचनानि पुंसां भीष्मादीनां अमृतायनानि अमृतस्रावीणि । राजा धृतराष्ट्रः दुर्योधनो वा उरु बहु न मेने । यतो नष्टः पुण्यलेशो यस्य सः न सुखकीर्त्तिधर्म्मादि हेतुः किन्तु राज्यप्राप्तिमात्रहेतुः पुण्यलेश एवासीत् । तस्यापि नष्टत्वात् न आदृतवानित्यर्थः ॥ ८ ॥

श्रीराधारमणदासगोस्वामि विरचित दीपिन्याख्य तट्टिप्पणी ।

एतेषांचयदेत्यादिदशपद्यानां तदा तादृशापराधदर्शनकाले ६ तन्नर्तृवधेनेतिरिपुस्त्री भर्तृवधेन अत्रद्रौपद्यश्रुस्रावस्यकारणत्वरिपुस्त्रीकुंकुमहरणस्यकार्य्यत्वमिति चतुर्थ्यतिशयोक्तिरुत्प्रेक्षाचव्यञ्जिता तथा चतल्लक्षणं चतुर्थस्य कारणस्य गदितुं शीघ्रकारितां यत्र पते कार्य्यस्यपूर्वोक्तिरिति ॥ ७ ॥ ८ ॥

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रिका ।

एवं सपृष्टोराज्ञामुनिराहेति सूतआहसइति राज्ञापरीक्षितायवमा पृष्टःसाकल्येनपृष्टः सुवद्वविन्सुष्ठुबहुवेत्तीतिसुवहुवित्मुनिः श्रीशुकः ...त्मासमीचीनप्रश्नेनसंतुष्टचित्तःश्रूयतां इत्यामंत्र्यराजानं प्रत्याह ...।

...ज्ञापृष्टोमुनिस्तमेवसंवादंप्रतुष्टपुस्ताद्विदुरस्यपौरवेंद्रगृहत्यागे ...त्तान्याह यदेति यदाराजाधृतराष्ट्रोयविष्ठस्य कनीयसोभ्रातुः ...डोःसुतान्विवंधून्पितृहीनान्युधिष्ठिरादीन् लाक्षाभवनेजतुगृहेप्र...श्य प्रविष्टान्कृत्वादहाहदग्धवान् तदासविदुरःअपासरद्गतइत्येका ...दर्शक्रियासंबंधः एवमुभयत्रापि कथंभूतोराजाविनष्टदृष्टिः विनष्टाह...ष्टिर्दृष्टेनविषयकंज्ञानं चक्षुश्रयस्यसः अतएवाधर्मेणासाधून्वालान्...पुतान्पुष्णन् एवंभूतोददाहेत्यन्वयः ॥ ६ ॥ ...दुरस्यतीर्थयात्रा

यदाचनृपः धृतराष्ट्रः सभायांकुरुदेवस्ययुधिष्ठि इतिशब्दआदिवचनः ...व्याःकेशाभिमर्शरूपंगर्ह्यंनिंदितं सुतकर्मपुत्रवा स्फुरणंसंचलनं तत्रज्येष्ठस्य ...तदायादित्यन्वयः कथंभूतायाः कुरुदेवे ॥

...ः स्वीयैरश्रुभिः कुचकुंकुमानि ... हरंत्याः ॥ ७ ॥

श्रीमद्वल्लभाचार्य्य कृत सुबोधिनी ।

...तद्वातेतमोजुषाणो...दोषव्यासो भगवद्वाक्यंनांगीकृतवानित्याह यदाचपार्थ ...तुसोप्यदायंदृष्टयासंबंधात्प्रेषयामासतात्तचितं स्वतोनदत्तवानेवयदाचनदत्त ...वांस्तदापार्थिवेनयुधिष्ठिरेणप्रहितःप्रेषितोभगवान्यानिजगादतानि ...नोरुमेनेइतिसंबंधःस मायामित्युक्तेस्तो ...तीत्या विनत्यशाकथनं जगद्गुरुरितिसर्वेषां हितोपदेशकर्तृत्वात्परमार्थतोऽपिनान्यथाकरणं ...यानिजगादेति संध्युजुगुणतत्रापवरोधवाक्यानिजगद्गुरुत्वप्रतिपाद

तुकंचेच्छूद्वांजनयति अस्यकथंतद्विलतउक्तमितीति इतिहेतुभक्तरवाप्रकारादिष्विवितियादवः ॥ ५ ॥

विदुरस्यतीर्थयात्रायांनिमित्तमाह यदात्विति अत्रयदाशब्दो हेत्वर्थे यदातदेतिहेत्वर्थेकालार्थेऽपिचभवयतइतिवचनात् अधर्मेणेत्यस्यावधारणार्थेतुशब्दःविनष्टाभगवद्विषयादृष्टिर्यस्यसतथा असाधून्न्यायवर्त्तिनः अधर्मेणधर्मविरुद्धकर्मणावविष्ठस्य कनिष्ठस्य विवंधून्नलौकिकबंधुरहितान् लाक्षाभवनेलाक्षोपगूढगृहेददाह यदायस्मात्तदातस्मादित्येकोहेतुः ॥ ६ ॥

अयमेकोहेतुरित्याह यदेतिनृपोधृतराष्ट्रः कुचकुंकुमान्यस्रैनेत्रजलैर्हरंत्याः स्वस्याःस्नुपायाः कुरुदेवस्ययुधिष्ठिरस्यदेव्याःपट्टाभिषिक्ताया द्रौपद्याःसभायांगर्ह्यंनिंद्यं सुतस्यदुःशासनस्य कर्मकेशाभिमर्शकवरी भारपरामर्शलक्षणं न निवारयामास यदायस्मात्तस्मात् ॥ ७ ॥

अयंतृतीयोहेतुरित्याह द्यूतेत्विति तुशब्दोऽवधारणार्थः अधर्मेणेत्यनेनसंबध्यते साधुत्वादीनिपितृधनदानयोग्यत्वहेतवइतिप्रकाश्य नायोक्तानीति अवलंबआधारयष्टिः दायंस्वस्यप्राप्तियोग्यंपितृधनं वनवासावसानसमयेनादादितियत्तस्मादितिशेषः तत्रहेतुः तमइति तमोयथार्थज्ञानग्लानिकारणंपुत्रवचनंजुषाणःसेवमानोऽङ्गीकुर्वाण इत्यर्थः ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

यदेति । अमृतायनानीत्यत्र अमृतावहानीति वृत्तेत्यत्र वृत्तेति चित्सुखः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

...भादेव ...मः सर्वान्म...

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ...निवारिता आस्त...

अत्र देशकाल परित्याग हेतुत्वत्वाच्चादानेनसाम ॥ ११ ॥ ...वा

...तपरित्यागहेतुर्वक्तव्यः सत्राशंक्यैकसहायेनैव त्रैलोक्यजयसामर्थ्य विशि केनावर्णनीयत्वमाशंक्यदेवइति सहायार्थंपार्थप्रार्थनापि नापेक्षतेतुपुनःस्वयमेव हि मंत्रद्रष्टृत्वेनैवान् पार्थानिति संबंधेन बहुवचने च सर्वथातद्गुणोगोलक्ष्यते शुद्धं ...नोहिवल्लव स्वकीयान् गृहीत्वाकश्चि तूष्णीं तिष्ठति देवत्वान्मानुषै ...हर्ष... जेतुंशक्यः अतएव दुर्योधनस्य दैत्यत्वान्मारणमपिगम्यते देवदैत्या नामजेयत्वायभगवानिति अनेनपार्थकर्मापि चेद्विपरीतं भवेत्तद प्यन्यथा कुर्यादितिसूचितं कालजयायमुकुंदइति अन्येषामपि दुःखं दूरीकृत्यमोक्षदातुः कालजयः किंवक्तव्यमित्यर्थः अनेनराज्यदानं चावश्यकमितिज्ञापितं किंचसभगवान् क्षितिदेवदेवइतिक्षितिदेवाः ब्राह्मणास्तेषामपि देवस्तद्धितकर्तृत्वादतो यत्रभगवांस्तत्रैव ब्राह्म णाअपि सहायाः किंच आस्तेस्वपुर्यांयदुदेवदेव इति भगवान्स्व तोध्यातो ...सर्वमनिष्टं निवार्यराज्यादिकं प्रयच्छति तत्रचादेव भक्तानां हितार्थेनभक्तपुर्यामास्ते किंच यदुदेवायादवाः यदोर्वंशे उत्पन्ना देवाइति तेषामपि देव इति यत्रभगवांस्तत्रैव यादवाइति तदवंधुसहायोऽपि नास्तीत्युक्तं किंच विनिर्जिताशेषनृदेवदेव इति नृदेवाराजानस्ते सर्वे विशेषेण निर्जितायेनतमपि विजिगीषतइति भावः ॥ १२ ॥

...दुर्योधनोनमन्यत इति चेत्तत्राह स एष दोषः इति प्रसिद्ध

यदोपहूतो भवनं प्रविष्टो मन्त्राय पृष्टः किल पूर्व
अथाह तन्मन्त्रदृशां वरीयान् यन्मन्त्रिणो वैदुरिकं व
अजातशत्रोः प्रतियच्छ दायं तितिक्षतो दुर्विषहं तवागः
सहानुजो यत्र वृकोदराहिः श्वसन् रुषा यत्त्वमलं बिभेषि ॥ १० ॥
पार्थांस्तु देवो भगवान् मुकुन्दो गृहीतवान् सक्षितिदेवदेवः ।
आस्ते स्वपुर्यां यदुदेवदेवो विनिर्जिताशेषनृदेवदेवः ॥ ११ ॥
स एष दोषः पुरुषद्विडास्ते गृहान् प्रविष्टो यमपत्यमत्या ।

जनव्यावृत्त्यर्थं सर्वेषामेवतानिवाक्यानिसर्वं
...यनानीतिअमृतस्यायनानिस्थानभूतानि
...सागरंमथित्वाऽमृतकलशमुद्धृतवान्
...क्यान्युद्धृत्यजगादोक्तवानित्यर्थः ।
...भोगसुकृतं जीवन्पुत्रसुकृतं
...स्यसतथोक्तःगुरुत्वंमान
...पपिगतप्रायंस्व-
... ॥ ९ ॥
...द्रहेगच्छत्वमपि
...दनंतरंमंत्रार्थं
...कत्वादनात्म-
...श्यकत्वं तथा
...श्यभयादिकमत्र
...तादृशकथनेहेतुः
...स्पतिप्रभृतयोमं
...ग्वरायान्किंचअ
...विदुरेणप्रोक्तंवै
...र्नानप्रसिद्धिः

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

मैणासुतरामन्तर्दृष्टिरपिगता तदाहांवेनष्टद्दष्टिरिति भ्रातुर्यविष्ठस्येति संवंधकृतधर्मोनास्तीति सूचितं विवंधूनिति सर्वथा दयाभावः कनिष्ठभ्रातुः पांडोः पुत्रान्पांडवान्राज्यस्पर्द्धादि शंकारहितान्स्ववशान्पितृहीनान्सर्वथा परिपालनीयान् लाक्षाभवने प्रवेश्यविश्वासघातकं कृत्वाददाहेत्यर्थः अनेनास्य क्रिया संपूर्णेति पाण्डवानाम मरणेऽपिवधदोषोजातएवेति भावः ॥ ६ ॥

राजसंदोषमाह यदासभायामिति भगवतासंरक्षितानां तेषां राजसूयेन राजत्वयुक्तानां राज्याकांक्षां परित्यज्य तूष्णींस्थितानां बलादपरा[illegible]करणं सर्वनाशकं युधिष्ठिरस्य कुरुदेवत्वात् राजपत्नी केशाकर्षणं सर्वनाशायेति जानन्नपिनवारयामास सभायामिति परलोक[illegible]शोऽपिसूचितः सभायांन प्रवेष्टव्यमिति स्मृतेः अवमर्शं आकर्ष[illegible]पादकस्य परिपालनमावश्यकमिति सुतपदं परलो[illegible]त्वान्न पुत्रपदं कर्मेति दुरदृष्टजनकं गर्ह्यमि[illegible]नकं ब्राह्मणः समदृक्शांतो दीनानां समु[illegible]भांडारपयो यथेति संवंधरहि-
[illegible]वानित्याह नवारयामा
[illegible] सामर्थ्यस्नुषा
[illegible]हेतुत्वम
[illegible]चितं

श्रीमद्विश्वनाचक्रवर्त्तिकृत सारार्थदर्शिनी

पुंसां तद्भक्तानां भीष्मादीनां राजा धृतराष्ट्रो दुर[illegible] वहु न मेने तत्र हेतुः क्षत्तेति न सुखकीर्त्तिधर्मादिकर[illegible] प्रापको यः पुण्यलेश आसीत्तस्यापि नष्टत्वादित्यर्थः

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

तादृशमपिगृहंदुर्जनकृतोपद्रवात्त्यक्तवानित्याह यदेत्येक[illegible] विनष्टादृष्टिर्यस्यसराजाधृतराष्ट्रः असाधून्दुष्टान् दुर्योधनादीन् अ-धर्मेणापुष्णान् यविष्ठस्यकनीयसोभ्रातुःपांडोःसुतान्युधिष्ठिरादीन् विवंधून् मृतपितृकान्लाक्षाभवनेप्रवेश्ययदाददाहतदासविदुरः अ यादित्येकादशेक्रियासंवंधः लाक्षाभवनदाहे मनसाअयात्दुर्योधना सत्कारेतुस्वयमितिविवेकः एवमग्रेऽपि ॥ ६ ॥

नृपः धृतराष्ट्रः आत्मनः स्नुषायाः कुरुदेवस्य युधिष्ठिरस्यदेव्या द्रौपद्याः केशाभिमर्शरूपंगर्ह्यनिंद्यं सुतस्यदुः शासनस्य कर्मनवा यामासतदाअयात् ॥ ७ ॥

द्यूतेअधर्मेणअन्यायेनजितस्यवनात्प्रत्यागतस्यसाधोःशिष्टस्ययुधि रस्यपराजितंद्वादशवर्षाणिवनेएकंवर्षमलक्षितः पुर्य्यषित्वापुनरा ज्यस्वरिक्थभागभवतुइत्येकंपूर्वकृतेनसमयेनदायं रिक्थंयाचमानस्य तमोजुषाणः तामसंकल्पंदुर्योधनंसेवमानोधृतराष्ट्रः यत्यदानअदा त्तदाअयात् ॥ ८ ॥

---

भाषाटीका ॥

[illegible] राजा परीक्षित् नें जब पूछा तब शुक
[illegible] होकर राजा से बोले किन्तु-

[illegible] दृष्टि राजा धृतराष्ट्र
[illegible] के पुत्रों को

(६)

…ष्णाद्विमुखो गतश्रीस्त्यजाश्वऽशैवं कुलकौशलाय ॥ १२ ॥
…शंस्तत्र सुयोधनेन प्रवृद्धकोपस्फुरिताधरेण ।
…तूक्तः सत्स्पृहणीयशीलः क्षत्ता सकर्णानुजसौवलेन ॥ १३ ॥
क एनमत्रोपजुहाव जिह्मं दास्याः सुतं यद्बलिनैव पुष्टः ।
तस्मिन् प्रतीपः परकृत्य आस्ते निर्व्वास्यतामाशु पुराच्छ्वसानः ॥ १४ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

…दुरस्यैव कृतं पराभवं दर्शयति षड्भिः यदा पूर्व्व-मन्त्रायोपहूतोऽन्तर्गृहं प्रविष्टो मन्त्रं पृष्टः सन् अथा किं तत् मन्त्रिणो यद्वैदुरिकं विदुरवाक्यमिति ॥ ९ ॥

…तशत्रोरिति त्रिभिः। तव आगः अपराधं सहमा-…च्छ देहि। यत्रापराधे अनुजैः सह वर्त्तमानो वृको …कोऽग्नेन श्वसन् वर्त्तते। यत्यस्मात्त्वं अलमत्यर्थं मैणासु… संवंधकृतं …हवः पुत्राः सन्तीति गर्वं मा कृथा इत्याह। कनिष्ठभ्रा… आत्मीयत्वेन गृहीतवान्। सच देवः। तत्रापि भग शान्यित्… …कंच। सह क्षितिदेवैर्विप्रैर्देवैश्च इन्द्रादिभिर्वर्त्त-घातकं … …प्यास्तत्रैव विप्रा देवाश्च इत्यर्थः। सच स्वपुर्यामेव मरणे… …न्यत्र गतः। किञ्च यदुदेवानां देवः पूज्यः। यतोऽत्र-…तत्रैव यदुप्रवरा इत्यर्थः किञ्च नृदेवेषु मण्डलेश्वरेषु रा… …प्रकाशन्ते इति नृदेव देवा राजानः विनिर्जिता अशेष …येन यतोऽसौ तत्रैव सर्वे राजानः अतः पार्थानां दायं …॥ ११ ॥

…धनस्तत्र मन्यते इति चेदत आह स एष मूर्तो दोष एव प्रविष्ट आस्ते। दोषत्वे हेतुः। पुरुष द्विट् श्रीकृष्णाद्वेष्टा। …ो यं त्वमपत्यमत्या पुष्णासि। नत्वपत्यमसौ नपतत्यस्मादिति …त्यं प्राहुः। गता श्रीर्यस्मात् सत्वमित्याक्रोशति। अत एनं …शैवं अमंगलं आशु त्यज ननु कथं पुत्रस्त्याज्यः। तत्राह कुलस्य …शलाय। त्यजेदेकं कुलस्यार्थे इति न्यायात् ॥ १२ ॥

इत्यूचिवान् एवमुक्तवान् असौ क्षत्ता विदुरः। सतां स्पृहणीयं …शीलं यस्य सः। कर्ण दुःशासन शकुनि सहितेन दुर्योधनेन असत् …क्तः तिरस्कृतः ॥ १३ ॥

तिरस्कारमाह क इति। दासीसुतो ह्यत्राह्वानानर्हः। जिह्मः …टिलः जिह्मतामाह यस्य वलिना अन्नेन पुष्टः तस्मिन्नेव प्रतीपः …तिकूलः परेषां कार्ये वर्त्तते अतः पुरान्निर्वास्यतां श्वसानः श्वसन् …ीवनमात्रशेष इत्यर्थः श्मशान इति पाठे श्मशानवदमंगलः। सर्व्वं धनादि गृहीत्वा निर्वास्यतामित्यर्थः ॥ १४ ॥

---

श्रीराधारमणदासगोस्वामि विरचित दीपिन्याख्य तट्टिप्पणी ।

प्रचुरघुण्येलेशमात्रमेवनष्टंनसर्वमित्यर्थं भ्रान्तिवारणायव्याचष्टे नसुखकीर्त्तीत्यादि हेतुगर्भमिदंविशेषणम् ॥ ९ ॥ अनन्तरं प्रश्नानन्तरं तद्वाक्यमाह मंत्रिणोऽद्यापि न्यायोपेतंवाक्य मन्यस्यापिवैदुरवाक्यसदृशमितिवदन्ति ॥ १० ॥ ॥११॥

तत्रापि देवेष्वपि सन्तीतितिविशेषणस्यप्रयोजनंव्याचष्टे यतोऽसाविति एवमग्रेऽपि ॥ १२ ॥

त्यजेदेकंकुलस्यार्थेग्रामस्यार्थेकुलंत्यजेत्ग्रामंजनपदस्यार्थेआत्मार्थे सकलंत्यजेदितिसमग्रवाक्यंज्ञेयम् ॥ १३ ॥

एवं नीतिप्रकारेण ॥ विदुरोधृतराष्ट्रं प्रतिउक्तवान् ॥ १४ ॥

---

श्रीमद्वीरराघवाचार्य्य कृत भागवतचन्द्रिका ॥

यदेतिपार्थेनयुधिष्ठिरेणप्रहितः जगतोगुरुः धर्मोपदेष्टाभगवान्-श्रीकृष्णः सभायांयानिपुंसांभीष्मादीनामसृतायनान्यमृतस्त्रावीणि वचांसिजगाद तानिवचांसियदाच राजाधृतराष्ट्रोनोरुमेनेनवहु-मेनेतदायादित्यन्वयःकथंभूतोराजाक्षतपुण्यलेशः क्षतोविनष्टःपुण्य-स्यलेशोयस्यसः ॥ ९ ॥

यदेति यदापूर्वजेनधृतराष्ट्रेणमंत्राय उपहूतः उपसमीपेहूतः-आहूतः भगवद्गृहेप्रविष्टः मंत्रदृशांमंत्रविदांमध्येवरीयान् श्रेष्ठोविप-श्चिन्मंत्रे समालोचनंप्रतिपृष्टः मंत्रदृशांमंत्रविदांमध्येवरीयान्विदुरः अथ प्रश्नानंतरमुवाच मंत्रमेवाहयत्यतः वैदुरिकंविदुरो-क्तमेवमांत्रिणः इतरेसर्वेमंत्रिणः वदंति ॥ १० ॥

पृष्टः किमाहेत्यतआह अजातशत्रोरितित्रिभिःदुर्विषहंसोढुमश-क्यंतवागःअपराधंतितिक्षतोमृष्यतःअजातशत्रोर्दायंप्रतियच्छअसमर्थे परंतितिक्षुयैवभवितव्यमित्यत आह सहानुजः अनुजैरर्जुनादिभिः सहितः वृकोदरः भीमः सपवाहिः सोरुषाश्वसन्यत्राजातशत्रुसंनि-धौवर्त्तते यद्यस्माद्वृकोदरात्त्वमलं नितरांविभेषियंत्वमित्यपिपाठः तदायंप्रतिविभेषीत्यर्थः ॥ ११ ॥

भगवत्सहायानां पार्थानां वलीयस्त्वं किमुवक्तव्यमित्याह पार्थानिति देवःभगवान्समय ज्ञानशक्त्यादिसंपन्नः मुकुंदःश्रीकृष्णः पार्थान् गृहीतवान् ममप्राणाहि पांडवा इत्यभिमानविशेषेण परि-गृहीतवान् गृह्णातुभगवांस्ततोपि किमित्यतआह स भगवान्क्षिति देवाः ब्राह्मणास्तेषां देवः ब्रह्मण्य इत्यर्थः यत्र भगवान् ब्रह्मण्योव र्त्ततेतत्रश्रीर्विजयोभूतिरिति न्यायेन तत्रैव विजयइत्यर्थः … भगवता किंभवितव्यं इति मावोचइत्याह स्वपुर्यामेवा… …स्थन पुर्यांतथाप्येकेन तेन किं इत्यतआह यदुदेवदेवः यदु… …त आस्तांस्व सात्यकिप्रद्युम्नानिरुद्धादयः तेषांदेवः प्रभुः य… …वाः यदुश्रेष्ठ …देवास्तत्संनिधा वेवास्ते इत्यर्थः यादवतुल्यायोद्धारोमत्संनिधा…यपि संतीत्यतआह विनिर्जिताशेषनृदेवदेवः विनिर्जिताअशेषाः नृ…देवाः राजानः यैस्ते षामपि देवइत्यर्थः समस्तदिग्विजेतृणामपिप्रभुः ॥ १२ ॥

एवं भगवत्सहायानां पार्थानामजेयत्वमभिधायस्वकुलविना-शको भगवद्द्वेषीत्वत्सुतो निर्वास्यतामित्याह यंदुर्योधनमपत्यबुद्ध्या त्वंपुष्णासिसएषदुर्योधनः दोषप्रचुरः त्वदीयपापराशिरेवापत्यरू-पेणमूर्त्तः सन्गृहान्प्रविष्टः कुतः यतः पुरुषद्विड्भगवद्द्वेषी आस्तेक थंभूतः पुष्णासिकृष्णाद्विमुखः अतएवगतश्रीः अतआश्वशैवममंग लमेनंदुर्योधनंकुलकौशलायत्वजेदेकं कुलस्यार्थे इतिन्यायेन स्वकुला निष्टनिवृत्तयेत्यजेति आश्वथैनं आश्वसेव्यामित्यपिपाठः आश्वेनं दुर्योधनमपीत्यर्थः असेव्यमूर्खतमाशुत्यजेत्यर्थः ॥ १३ ॥

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

त्रिदोषोऽयमेव दोष इति वचनात्तदनंगीकारो न बाधको दोषः सर्वैरुपायैस्त्याज्योनतुदोषातुरोषेनौषधं त्याज्यमिति भावः तस्य दोषत्वेहेतुमाह पुरुषद्विडितियः पुरुषं द्वेष्टि स दोषः अन्यथा तस्यैव शरीरेतन्नियस्ये स्वयंस्थितः कथंनद्वेष्टि यस्य राज्ये ग्रामेऽपि स्थितस्तत्र द्वेष्टितत्र शरीरे विद्यमानो रोगस्मृतियंद्विष्यादतः पुरुष दोषाद्दोष इत्यवसीयते ॥ तत्याग उपपत्ति रूपोनिदान मित्यर्थः ग्रास्त इति शीघ्रं तस्य प्रतीकारः कर्त्तव्यः सांप्रतं सुकार्यमकृत्वै वतूष्णीं तिष्ठति उपेक्षितस्तुकुलमेवनाशयिष्यतीति भावः कास्तीत्याकांक्षायामाह सर्वत्रैवतावकान् गृहान् प्रविष्टः स्वास्ते ममत्वात् सर्वगृहप्रवेशनेनिवारयाशक्तिः अयमिति दूरेस्थितमंगुल्यानिर्दिशति तथा प्यंधत्वात्तत्त्वत्तेति प्रकारांतरेण बोधयति यमपत्यमत्या त्वं पुष्णासि आपद्यस्मायत इत्यपत्यं तन्मतिरेव किंचत्वंचकृष्णाद्विमुखोयतः पुष्णासि अतएव गतश्रीश्चभविष्यसि तस्मादस्य सर्वानर्थ मूलत्वात्त्यजेदेकं कुलस्यार्थे इतिन्यायादेतंत्यज चकारात्कृष्णावैमुख्यंचत्यजेत्यर्थः ॥ १३ ॥

यदेवमाक्रोशपूर्वकमाज्ञारूपेणोक्तवांस्तदा ऽसत्कृतइत्यूचिवानितिसंबंधःइत्यूचिवानितिवाभिन्नं तत्रस्यानेआगतेनभ्रातुरंतिकेवासु योधनइतितस्यापकर्षार्थवचनं ननुपितृव्यतिरस्कारंकथंकृतवानित्याशंक्यांतः क्रोधेनवाहिर्दुरुरैरकांतत्वादितितृतीयांतंविशेषणद्वयंप्रवृद्धो यःकोपस्तेन स्फुरितमधरंयस्य अनेनक्रोधेनलोभएवस्फुरितइति तदुक्तोदानरूपउपायोऽप्यतोनसंमतइतिसूचितंअसत्कारोऽप्रेचकव्यो वाप्यवमप्रियकथनंधर्मनीतिविरुद्धंसत्यंब्रूयात्प्रियंब्रूयादिति स्मृतेःप्रधान परित्यागश्चनीतिविरुद्धः सोऽपिसन्माननेनैवबोधनीयोभवतितथा प्येवंवचनंपरित्यागार्थंमेतदभिसंधायाह सत्स्पृहणीयइतिसाद्भिःस्पृहणीयंशीलंयस्यएत्रमेवासद्भिः सहस्थितौतत्परित्यागार्थमेवंकर्तव्य मितिसत्स्पृहणी यताक्षत्तेतिविश्वासपात्रत्वंसूचितं दुष्टचतुष्टयमध्येदु र्योधनोमुख्यः कर्णदुःशासनशकुनयस्तुसहायास्तदाह तैः सहि तइति अथवानुमंत्रस्यस्वाहितत्वादंगीकारमेव कथंनकृतवानित्या हसद्भिरेवस्पृहणीयंशीलं यस्येति तस्यपरिचारस्यासत्वादिति भावः ॥ १४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी।

इदानीं विदुरस्यैव पराभवं तत्कृतं दर्शयति षड्भिः। अथानन्तरं विदुरः तदाह किं मन्त्रिणोऽयापि यत् वैदुरिकं विदुरवाक्यमिति प्रसिद्धं वदन्ति ॥ ९ ॥

तदेवाह अजातेति यत् यत्र आगसि वृकोदररूपोऽहिः क्रोधेन श्वसन् वर्त्तते। यत् यस्मात् त्वमलमत्यर्थं बिभेषि ॥ १० ॥

संप्रति त्वन्यदप्यद्भुतं तेषां महाबलाधिक्यं श्रृणित्याह पार्थांस्त्विति। आत्मीयत्वेन गृहीतवान् स च देवः तत्रापि भगवान् क्षितिदेवैर्विप्रैर्देवैश्च सहितः तत् पत्र एव विप्रा देवाश्चेति भावः। तत्रापि स्वपुर्य्यामेवास्ते नत्वन्यत्र गतः। यदुदेवा यदुप्रवरा देवा इव बलिष्ठा यस्मात् सः। यत्रासौ तत्रैव यदुप्रवीरा इत्यर्थः। किञ्च तस्यैव बलं श्रृणित्याह विनिर्जिता अशेषा नृदेवाः कंसजरासन्धादयो येनाश्च बाल्यमारभ्यैव ब्रह्मेन्द्ररुद्रादयो येन सः। अतः पार्थानां दायं देहि यद्यात्मनो भद्रमिच्छसीति भावः ॥ ११ ॥

अतपुत्रो दुर्योधनोऽत्र विप्रतिपद्यस्यते इति चेत्तत्राह सएष इति त्वत्कोटिजन्मकृत दुष्कृतफलभूत इत्यर्थः। दोषो मूर्त्तएव यतः पुरुषं परमेश्वरं द्वेष्टि तत्रापि तव गृहान् वाह्यान् अभ्यन्तरान् मनो-बुद्ध्यादिरूपानपि प्रविष्ट एवास्ते तत्रापि त्वं तं पुष्णासि तत्राप्यपत्यमत्या नह्यसावपत्यं नपतत्यस्मादित्यपत्यमिति निरुक्तेः। अतएव त्वमनुमीयसे कृष्णाद्विमुखः गतश्रीरिति लक्ष्मीस्तव गृहेभ्यो निःसृत्य गतेति जानीहि। ननु तर्हि कोऽत्र प्रतीकारस्तत्राह आशु शीघ्रमशैवममंगलमेनं त्यज ननु मया पित्रा पुत्रस्य त्यागे मत्कुले कलंकः स्यात् तत्राह। कुलस्यैव कौशलाय त्यजेदेकं कुलस्यार्थे इति न्यायात्। अन्यथा कुलमेव सर्वं ते नंक्ष्यतीति भावः ॥ १२ ॥

इत्यूचिवान् एवमुक्तवान् विदुरः सुयोधनेन असत्कृतः तिरस्कृतः कर्णं दुःशासन शकुनिसहितेन ॥ १३ ॥

तिरस्कारमेवाह क एनमत्र महाराजसदसि आजुहावेति आह्वानानर्हमिति भावः। तत्र हेतुः दास्याः सुतमिति जन्मनैव दुष्टं। जिह्मं कुटिलमिति। कर्मणापि कौटिल्यमाह। यद्बलिना यद्दत्तेनान्नेन पुष्टस्तस्मिन्नेव स्वस्वामिनि प्रतीपः प्रतिकूलः परेषां शत्रूणां कृत्ये कार्ये वर्त्तते। अतोऽयमत्र स्थितः सर्वमेवास्मत्कुलं नाशयितुं यतिष्यत इति भावः। निर्वास्यतां अयमितो निष्कास्यतां यः कोऽप्यत्र मदीयो वर्त्तते तेनेति भावः। तत्राप्याशु मा विलम्बेत तत्रापि श्वसानः श्वासमात्रावशिष्ट इति सवधुवेत्र प्रहारमिति भावः। श्मशान इति पाठे श्मशानवदमंगलोऽयं केनास्मत्गृहमध्ये आनीतो यो मामेवामंगलं वक्ति। अत आशु निष्काश्यतामन्यथा राजपुरमिदं श्मशानमेव करिष्यतीति भावः ॥ १४ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः।

राजा धृतराष्ट्रः अमृतायनानिश्रेयोमूलानि ॥ ९ ॥

पूर्वजेनधृतराष्ट्रेणमंत्रिणोयद्वैदुरिकं विदुरवाक्यंवदंतितदाह- ॥ १० ॥

यद्यस्मान्महाबलात्त्वमलमत्यर्थंविभेषि सवृकोदराख्योऽहिः स हानुजः अर्जुनादिसहितः यत्रागसिक्रोधेनश्वसन्नास्तेतत्तवाग अपराधंतितिक्षतः सहमानस्य अजातशत्रोः युधिष्ठिरस्यदायं प्र तियच्छप्रत्यर्पय ॥ ११ ॥

तद्दायप्रत्यर्पणंतवश्रेयोऽर्थंपांडवास्तुश्रीकृष्णप्रियाश्रतः कृतार्था एवेत्याशयेनाह पार्थांस्त्विति ॥ १२ ॥

दुर्योधनस्तद्दायप्रदानंनांगीकरोत्यतआह सइति योजन्मकालेकुत्सितान् शब्दान्कुलनाशसूचकानकरोत् तदैवमयाप्रार्थितोभवान् पुत्रंदोषरूपंत्यजेति एवं मयावार्यमाणोऽपियमपत्यबुद्ध्यापुष्णासिस एषमूर्त्तोदोषएवगृहान्प्रविष्टआस्तेदोषत्वेहेतुमाह पुरुषान् युधिष्ठिरादीन् श्रीकृष्णप्रियान् द्वेष्टीतिसतथा कृष्णाद्विमुखश्चेति तस्मात् अशैवममंगलं दुर्योधनमाशुत्यज कथंपुत्रस्त्याज्यइत्यत्राह कुल कौशलायेति त्यजेदेकंकुलस्यार्थेग्रामस्यार्थेकुलंत्यजेत्ग्रामंजनपदस्यार्थेआत्मार्थे पृथिवींत्यजेदितिन्यायात् ॥ १३ ॥

सुचाविदुरः इतीत्थम् ऊचिवान् तत्रसभायामेवकर्णदुःशासन शकुनिसहितेनसुयोधनेन दुर्योधनेन असत्कृतः तिरस्कृतः ॥ १४ ॥

---

भाषा टीका।

और जब युधिष्ठिर के भेजे हुये जगद्गुरु श्री कृष्ण सभा में पुरुषों को अमृत तुल्य वचन कहते हुये उन वचनों को नष्ट है पुण्य लेश जिस का ऐसे राजा धृतराष्ट्र नहीं माने ॥ ९ ॥ और जब ज्येष्ठ भ्राता धृतराष्ट्र श्री विदुर जी को घरमें बुलाय कर मंत्र पूछा तब मंत्र देखने वालों में श्रेष्ठ श्री विदुर जी जो मंत्र कहते हुये जिस को मंत्री लोग वैदुरिक मंत्र कहते हैं ॥ १० ॥

स इत्थमत्युल्वणकर्णबाणैर्भ्रातुः पुरोमर्म्मसु ताडितोऽपि ।
स्वयंधनुर्द्वारि निधाय मायां गतव्यथोऽयादुरुमानयानः ॥ १५ ॥
स निर्गतः कौरवपुण्यलब्धो गजाह्वयात्तीर्थपदः पदानि ।
अन्वाक्रमत् पुण्यचिकीर्षयोर्व्यामधिष्ठितो यानि सहस्रमूर्तिः ॥ १६ ॥
पुरेषुपुण्योपवनाद्रिकुञ्जेष्वपङ्कतोयेषुसरित्सरः सु ।
अनन्तलिङ्गैः समलङ्कृतेषु चचार तीर्थायतनेष्वनन्यः॥ १७ ॥
गां पर्य्यटन् मेध्यविविक्तवृत्तिः सदाप्लुतोऽधःशयनोऽवधूतः ।
अलक्षितः स्वैरवधूतवेषो व्रतानि चेरे हरितोषणानि ॥ १८ ॥
इत्थं व्रजन् भारतमेववर्षं कालेन यावद् गतवान् प्रभासम् ।
तावच्छशास क्षितिमेकचक्रामेकातपत्रामजितेन पार्थः ॥ १९ ॥
तत्राथ शुश्राव सुहृद्विनष्टिं वनं यथावेणुजवह्निसंश्रयम् ।
संस्पर्द्धयादग्धमथानुशोचन् सरस्वतीं प्रत्यगियाय तूष्णीम् ॥ २० ॥

भाषाटीका ।

तुह्मारे दुस्सह अपराधसहनेवाले श्रीयुधिष्ठिरजीको राज्यभाग दीजिये क्योंकि भाइयोंसहित भीमसेनरूपसर्प क्रोध हो श्वास लेरहा है जिससे तुम अत्यन्त डरते हो ॥ ११ ॥

और पार्थ युधिष्ठिरादिकोंको तो देव और सब राजोंके देव और यादवोंके देव और सब राजोंको जीतनेवाले मुकुंद श्रीकृष्ण आत्मीयत्वसे ग्रहण करलिया है ॥ १२ ॥

सो यह पुरुष श्रीकृष्णसे द्वेष करनेवाला दोषरूप दुर्योधन तुह्मारे घरोंमें प्रविष्ट है सो कृष्ण से विमुख गतश्री तुम जिसको पोषण करते हो पुत्रमति से सो इस दुर्योधन अमंगलको अपने कुलके हितार्थ शीघ्र त्याग करिये ॥ १३ ॥

साधुवों के स्पृहणीय शीलवाले विदुरजी इस तरह कहकर चुप होगये तब प्रवृद्ध कोपसे फडकता है अधरोष्ठ जिसका और कर्ण दुःशासन शकुनि सहित दुर्योधनने बडा अनादर किया॥१४॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

अत्युल्वणैः कर्णयोर्बाणवत् प्रविशद्भिः परुषवाक्यैः मर्म्मसु ताडितोऽपि गतव्यथः । तत्र हेतुः मायां उरु बहुमानयन् अहो मायाया माहात्म्यमिति । तामेव तत्र हेतुं मन्यमानः तन्निःसारणात् पूर्वं स्वयमेव अयात् निर्जगाम । किं कृत्वा एते नूनं मरिष्यन्ति किं धनुषेति तस्य द्वारि धनुर्निधाय । यद्वा भीमादिभिः संगत्याऽस्माभि र्योत्स्यत इति माशंकिष्टेति धनुर्निधानम् ॥ १५ ॥

ततो निर्गतस्य तीर्थाटनप्रकारमाह स इत्यष्टाभिः । स गजाह्वयान्निर्गतः सन् तीर्थं पादौ यस्य तस्य हरेः पदानिः क्षेत्राणि पुण्यचिकीर्षयाऽन्वाक्रमत् प्रत्यपद्यत । कौरवाणां पुण्येनः लब्ध इति तेषां भाग्यमेव तेन रूपेण गतमिति सूचितं । उर्व्यां सहस्रमूर्त्तिः ब्रह्मरुद्राद्यनेकमूर्त्तिः सन् तीर्थपात् यानि अधिष्ठाय स्थितः तानि तानि जगाम इत्यर्थः ॥ १६ ॥

पुण्यानि यान्युपवनादीनि तेपु कुञ्जं लतादिगूढं स्थानं अपङ्कानि तोयानि येषां तेपु सरित्सुसरःसु च तीर्थेषु आयतनेषु च क्षेत्रेषु । कीदृशेपु अनन्तस्य लिंगैः मूर्त्तिभिः समलंकृतेषु अनन्य एकाकी ॥ १७ ॥

किञ्च । गां पर्य्यटन् हरितोषणानि व्रतानि चेरे अचरत् । मेध्या पवित्रा विविक्ता असंकीर्णा वृत्तिर्जीविका यस्य । सदाप्लुतः प्रतितीर्थं स्नातः अधःशयनं यस्य । अवधूतः असंस्कृतदेहः । अवधूतवेशो वल्कलादिधारी अतएव स्वैरलक्षितः ॥ १८ ॥

एकस्यैव चक्रं सैन्यं यस्यां । एकमेव राजचिह्नं श्वेतातपत्रं यस्यां तां । अजितेन श्रीकृष्णेन सहायेन ॥ १९ ॥

तत्र प्रभासे परस्परं संस्पर्द्धया निमित्तभूतया सुहृदां कौरवाणां विनष्टिं विनाशमशृणोत् । परस्परनाशे दृष्टान्तः । वेणुजं वह्निं संश्रयते यद्वनं तत् यथा दग्धं भवति तथा प्रत्यक् उद्गमाभिमुखम् ॥ २० ॥

---

श्रीराधारमणदासगोस्वामि विरचित
दीपिन्याख्य तट्टिप्पणी ।

अत्र० मन्त्रसभायां ॥ तस्मिन्नेवान्नदातरि परेषांशत्रूणांयुधिष्ठिरादीनां अतःशत्रुकार्य्यपरत्वात् सर्वस्यश्वसंस्त्वात्प्रकृतानुपयोगमाशंक्यव्यञ्जनयाव्याचष्टे जीवनेतिस्मशानइतिपाठान्तरम् ॥ १५ ॥

तत्र० गतव्यथत्वेहेतुः माययामोहनशक्तेःतामेवमायामेव तत्र० स्वतिरस्कारे तन्निःसारणात् दुर्य्योधनादिकर्त्तृकनिःसारणात् एते भक्ताऽपराधिनोदुर्य्योधनादयः तस्य० धृतराष्ट्रस्य पूर्वार्थेमहानुभावस्यास्यपरमरणसंकल्पानौचित्यमित्यरुचेर्यद्वेति ॥ १६ ॥

ततोगृहात् अधिपूर्वस्थाधातोः सकर्मकत्वेनकर्मप्रत्ययशंकांवारयितुमधिष्ठायस्थितइति कर्त्तृसाधनतया व्याख्यानादित्यर्थइत्युक्तम् पुण्यचिकीर्षया भक्तापराधिसङ्गप्रायश्चित्तेच्छया अतोभक्तद्रोहिसंगलक्षणदोषग्रस्तमात्मानंमन्यमानस्सहसाश्रीकृष्णादर्शनार्थमपि नजगामेतिज्ञेयम् ॥ १७ ॥

श्रीराधारमणदासगोस्वामि विरचित
दीपिन्याख्य तट्टिप्पणी।

पुरेषुप्रसिद्धेष्वयोध्यादिषु अन्यन्यपकलः सर्वत्रश्रीकृष्णैकस्फूर्त्तिमय इतिवा ॥ १८ ॥

असंकीर्णापरवृत्तिभिरसंमिश्रा अतएवावधूतवेषत्वादेव १९॥२०

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रिका ॥

तिरस्कार प्रकारमेवाह कइति दास्याः सुतंजिह्मंकुटिलात्मानममनत्रमंत्रेकउपजुहावाहूतवान् जिह्मत्वंस्फुटयति यद्बलिनायस्यममबलिनाऽन्नेनैवपुष्टःसंवर्द्धितस्तस्मिन्नयिप्रतीपः प्रतिकूलः परकृतपरपांडवानांकृत्येकार्ये प्रथमांतत्वेव्यधिकरणबहुव्रीहिः शत्रुकार्यपर आस्तेवर्त्ततेअतः श्मशानःशूद्रःयस्मुद्दवापतच्छ्माशानंयच्छूद्र इतिश्रुतेःपुरान्निर्वास्यतांनिर्याप्यताम् ॥ १९ ॥

सविदुरः अत्युल्बणैः कठिनैः भ्रातुः पुरः कर्णयोर्बाणवदायतैर्वाक्यैः तीक्ष्णैर्मर्मसुताडितोऽपिप्रव्यथितोऽपाविगतव्यथः यं हिन व्यथयंत्येतेपुरुषंपुरुषर्षभइत्युक्तरीत्यागतव्यथः अतएवस्मयन्नीषद्धसन्स्वयमितिपाठेधनुर्विशेषणं धनुः शरासनंद्वारिनिधायतीर्थान्यटि ... ममकिंधनुषेतिवुद्ध्यानिधायमायां सर्वजनमोहिनींभगवन्मा ... ु ... नयानःअहोमाया माहात्म्यमितिबहुमन्यमानः अयान्निर्गतः ... यतिशेषः ॥ १६ ॥

पुरुषमार्गगृहत्यागहेतुत्वत्यागंचाभिधाय तस्यतीर्थाटनप्रकारमाह सइ- ... कुरुप्वे कौरवपुण्यलब्धः सविदुरः गजाह्वयात्पद्भ्यांनिर्गतः कौरप्रपुण्यन्लिब्धइत्यनेन तेषांभाग्यतेनरूपेणनिर्गतमितिसूचितं तीर्थपदःश्रीदेवापादयस्यतस्यहरेःपदानिस्थानानिपुण्यं कर्त्तुं मिच्छयाऽन्वगम ... द्वारकानिपदानिउर्व्यांभूम्यांयानिपदानिसहस्रमूर्त्तिः सहस्रा- ... र्त्तयोरंगेणवेंकटेशहयशीर्षाद्यर्चारूपाणियस्यतथाभूतो ... अधिष्ठितः अधिष्ठायस्थितः ॥ १७ ॥

पुरेषुपुण्यान्युपवनानिचाद्रयश्चकुंजानिचतेषुतेष्वपंकानिनिर्मलानितोयानियेषुतेषुसरित्सरःसुसरितश्चसरांसिचतेष्वनंतस्यभगवतोलिंगैर्मूर्त्तिभिः सम्यगलंकृतेषुतीर्थायतनेष्वनन्यः अव्यभिचरितभक्तियोगनिष्ठःचचारपर्यटत् ॥ १८ ॥

गांभूमिंपर्यटन्मेध्यैर्विविक्तैर्जात्याश्रयनिमित्ताद्दुष्टैरन्नादिभिर्वृत्तिर्जीविकायस्यसः सदाप्लुतःस्नातः अधःशयनंयस्यसःअवधूतः ... गोद्वर्त्तनादिदेहसंस्काररहितः स्वैः स्वदेहसंबंधिभिरलक्षितः ... अवधूतानांवेषोवल्कलाजिनधारणादिरूपोयस्यसः हरितोष ... निहरिस्तोष्यतेपभिरितिहरितोषणानिव्रतानिचेरेऽचरत् ॥ १९ ॥

इत्थमिति भारतवर्षेभवइत्थंव्रजन्पर्यटन्कालेनयावद्यावताकालेनप्रभासंप्रभासतीर्थं प्रतिगतवान् विदुरस्तावंतं कालंपार्थोयुधिष्ठिरः अजितेनार्जुनेनसार्क श्रीकृष्णेनहेतुनावाप्तकातपत्रां एकमातपत्रंयस्यांतांएकचक्रांएकस्यैवचक्रंसैन्यंयस्यांतांक्षितिंशशासअनुशिष्टवान् ॥ २० ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

धिक्कारप्रकारमाह कएनमिति दास्याः सुतमित्याक्रोशेषष्ठी उपजुहावाहूतवान् जिह्मंवक्रहृदयं यस्यपुंसोबलिनाऽपवर्जितान्नेन तस्मिन्पुंसिप्रतीपोविरोधी परेषांममविरोधिनांपांडवानांकृत्येकार्ये आस्तेयस्मात्तस्मादितिशेषः निर्वास्यतांनिष्कासयतां श्वसानःश्वासमात्रावशेषी स्वकृतोदोषः स्वस्यैवेतिसूचनायश्वानप्रयोगः ॥ ११ ॥

संभावितस्यताडनात्प्रागेवनिर्गमनं श्रेयइति भावंश्लोकद्वयेनसूचयन्नाह सइति भ्रातुर्धृतराष्ट्रस्य स्मयन्मंदस्मितंकुर्वन् मायांपुत्रहत्यादिक्लेशलक्षणांहरेर्बंधकशक्तिं गुरुमानयानो बहुमन्वानः सोऽयाद्ययौ तीर्थमितिशेषः ॥ १६ ॥

पुण्यलब्धइत्यनेन हस्तिनापुरमपि पुण्यक्षेत्रमिति सूचयति तीर्थपदोहरेः पदानिस्थानानि सहस्रमूर्त्तिरनंतमूर्त्तिः तदेतत्सहस्रं तत्सर्वमितिश्रुतिः ॥ १७ ॥

पतदेवविशिनष्टि वनेष्विति तीर्थानां शुद्धजलानामायतनेषुस्थानेषु नित्यशुद्धस्यहरेः सन्निधानस्थानेषुवा पुण्यशब्दः प्रत्येकमभिसंबध्यते उपवनेषुपुरोपकंठवनेषु अद्रिषुश्रीपर्वतादिषु कुंजेषु सिंहगिरिव्रजाद्यल्पतरपर्वतेषु वनेषुवृंदावनेषु सेव्यत्वेहेतुमाह अपंकेति सरित्सुगोदावर्यादिनदीषुसरःसुपुष्करादिषु अनंतस्यहरेर्लिंगैः प्रतिमाभिः सम्यगलंकृतेषु ॥ १८ ॥

चरणंविशिनष्टि गामिति गांभूमिं मेध्यैःशुद्धैःविविक्तैः पृथग्भूतैर्वृत्तात्पतितैः पत्रादिभिर्वृत्तिराजीविकाजीवनं यस्यसतथोक्तः यद्वा शुद्धएकांतस्थलेवृत्तिरवस्थानंयस्यसतथा अधःशयनेनस्थंडिलशयनेनावधूतैरजोरूषितदेहः स्वैः स्वकीयैरलक्षितोऽविज्ञातः अवधूता वायुनोद्धूताः केशायस्यसतथा यद्वापाठांतरे अवधूतवेषवद्वेषोयस्य सतथा कीदृशानिव्रतानि हरितोषणानि यानियानिव्रतानिचेरेतानि तानिसर्वाण्यपि हरिप्रसादजनकानीत्यर्थः अनेनोद्दिश्यव्रतदेवतावशीकरणसमर्थानीति व्रतशब्दनिर्वचनंसूचितं वृञ्वरणइति धातोर्व्रियतेऽनेनैतदित्यस्मिन्नर्थेव्रतमिति रूपंसिध्यति ॥ १९ ॥

कर्मभूमित्वाद्भारतवर्षमेवाटितवान् नान्यदित्यस्मिन्नर्थे एवशब्दः केनचित्कालेन यावद्यदातावत्तदापार्थोऽजितेनकृष्णेनोक्तविधिनैकचक्रामेकाज्ञां एकमेवातपत्रं श्वेतच्छत्रं यत्रसातथातां क्षितिंवारूग त्योरितिधातोः सर्वत्रसन्निवासः सुगमनंचोराद्युपद्रवोनास्तीत्येतत्सूचनायक्षितिमिति प्रायोजि इत्थमित्यनेन नियमभंगोनास्तीति सूच्यते ॥ २० ॥

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः।

स्वयमित्यत्र स्मयदिति चित्सुखः ॥ १५ ॥

अन्वामक्त अनुक्रमेण प्राप। पुण्यचिकीर्षया तद्दुःसंगप्रायश्चित्तेच्छया। अतः सदोषमन्यःसहसा श्रीकृष्णमपि न जगामेति भावः ॥ १६ ॥

पुरेषु अयोध्यादिषु प्रसिद्धेषु न विद्यते पङ्कं पापं येभ्यस्तेषु पापहन्तृषु तोयेषु अनन्यः सर्वत्र श्रीकृष्णैकदृष्टिः ॥ १७ ॥

विविक्तत्वं परवृत्तिभिरमिश्रत्वम् ॥ १८ ॥

भारतमेव वर्षमिति तन्मध्यवर्त्ति कुमारिकाखण्डमेव ज्ञेयं विष्णुपुराणानुसारेणान्यत्रागम्यत्वात् ॥ १९ ॥

सुहृद्भिनिधनमिति यादवानां विर्नाशमित्येव ज्ञेयं। नातिविलम्बादेवाद्धवेन मिलनात् ॥ २०—२३ ॥

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

कएनमिति लोकोक्त्याऽधिक्षेपः पित्रासमाहूतत्वंज्ञात्वा युक्तकरणात्तमथाक्षिपतीति ज्ञायतेस्वभावजाति क्रियादुष्टस्यमंत्रानर्हत्वात् अयंतुतादृश इति विशेषणत्रयंसिद्धं क्रियैवतृतीयाजिह्मः कुटिलःछिद्रान्वेषीमयाकापट्येनस्थातव्यं विश्वासंजनयता स्वावसरेऽपकर्त्तव्यमितिजिह्मलक्षणं तदद्यविदुरेस्पष्टंजातं स्वाधिकारानुसारेणम

### श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

गवान्सर्वत्र तथास्फुरतीति सत्वादीनामाक्षेपकत्वंज्ञापितंदास्याःसु
तमिति जातिदोषःक्रियादोषंवक्तुंकृतघ्नतामाह यद्बालिनैवपुष्टस्तस्मि
न्प्रतीपइति यथा आश्रितत्वाचंडालादिभ्यो बलिर्दीयतेतथाऽयमपि-
पतितोब्रह्मबीजस्य शूद्रायांजातत्वादतएवैवकारः बलिपुष्टः श्वपा-
काएवमेवभवंतीति ज्ञापितंपोषएवतथाभावेहेतुःपरेषांशत्रूणांकृत्ये-
आस्तइति क्रियादोषःदंडोनिर्वास्यतामिति आश्रितयावच्चित्ततदुक्तंनप्र
विशतेतेषामपितनापिवधस्यानुक्तत्वात्परित्यागस्यैवोक्तत्वान्निर्वासनंदं
डःश्वसानःप्राणवायुशेषःअस्तुसतांदृष्टचाप्राणहरणापेक्षयाधिकोऽयंदं
डःश्मशानइति पाठेयत्रस्थास्यतितेषाममंगलं भविष्यतीत्यर्थः यत्त्वे
नमृतोपजीवित्वाद्वा अतएवपुराम्निर्वास्यतांइति केवलंवचनमुक्तवान्
॥ १५ ॥

एवंदशभिः श्लोकैः पूर्वावस्थापरित्यागहेतुरुक्तः अनेनपूर्वदेह सं
बंधिनोऽपित्यक्ताइव परित्यागमाह सइत्थमितिअत्युल्बणत्वंशीघ्रका-
र्यकरणात्तद्दर्शितंबाणाः कर्णद्वाराहृदयंप्रविष्टादशप्राणस्थानेषु मर्म-
सुताडितोपिभ्रातुः पुरतः इतिसन्निधाविवबाणानांप्राणहारकत्वंदृष्टां
तीकृतंताडितोऽपगतव्यथः तत्रहेतुःमायामधिकंमानयानः धनुर्द्वारि
निधायेति प्रतिपक्षगमनशंकानिवर्त्तिता निःसारणात्पूर्वमेववास्यात्
स्वकर्तृकस्यैवपरित्यागहेतुत्वात् अन्यथासर्वान्वलकृतानर्थान्प्रकृता
न्मनुरब्रवीदितिविरोधःस्यात् ॥ १६ ॥

एवमपमानतोनिर्विण्णस्यतीर्थादि जनितसुकृतपरिपाकेनपृथिवीज
लयोःसंस्कृतत्वादधिकारिदेहद्वय संपत्तिर्निष्पद्यतेतेजोनिरूपणार्थंस
त्संगोजातइत्याह सतिर्गतइत्यष्टभिः चतुर्भिर्भूमिसंस्कारस्तथान्यैश्च-
जलस्यचउत्तरोत्तरशेषत्वात्तच्छेषोप्युच्यतेपुण्योपदेशार्थं गमनंपु
ण्यदेशेतथैवच तदंगानिफलंचेतिचतुर्द्धाभूमिसत्क्रिया जलेसामान्य
संबंधोविशेषश्चापिसंमतःसाधनंचफलंचेतिजलोक्तिश्चचतुर्विधामंत्रगृ
हान्निर्गतोनस्वगृहंगतःकिंतुपुरादपिनिर्गतइति कौरवपुण्यलब्धइति
पूर्वजोपार्जितसुकृतेनप्राप्तो निर्गतश्चेद्देशस्थापकसुकृतमेवतद्द्वारानि-
र्गतमितिसूचितं पुण्यलब्धस्तंभगवत्स्थानगमनेपिहेतुः सर्वतीर्थानि
पादेयस्यतितस्यस्थानेष्विति तीर्थेष्वपिविशेषो वैष्णवस्थानंष्वेवगत
इत्यर्थः अन्वाक्रमतमध्ये स्थानानतिक्रमेणभ्रांतवान् राजनिवेशन
वनस्थानमात्रंकिंतुतान्स्वमूर्त्या अनुभावेनानुभावं प्रदर्शयन्स्वयमधिष्ठ
यंयेषुस्थितस्तानितीर्थानीतिपूर्वेणसंबंधः पुण्यांचिकीर्षयेतितत्वज्ञा
नादुक्तं परमेश्वरप्राप्तिसाधनत्वाद्वा अथवाउर्व्यांपुण्यचिकीर्षया पु-
ण्येनपृथिवींसंस्कर्तुमिति दैत्याधिष्ठितसंस्कारानभावप्यतीत्युर्व्यां-
यानिसहस्रमूर्तिर्भगवानधिष्ठायास्थितइत्युक्तम् ॥ १७ ॥

अनेन संस्कृतंदेवाधिष्ठानान्पंचाग्निविद्यावद्भगवत्मूर्त्तिष्वेवतस्य
संस्कारःप्रदर्शितोविशेषमाह पुरेष्वितिमथुरादिनगरेषु परमेश्वरक्रीडा
स्थानत्वात् गोकुलनिकट वृंदावनाद्युपवनानिअद्रिर्गोवर्द्धनादिः कुंजा
निलतागृहाःसर्वाण्येतानि भगवत्संबंधात्पुण्यजनकान्यपि भक्तिजन
कानिअपंकतोयेष्विति कृष्णजलक्रीडादियोग्येषुसरित्तांसरस्सुकाली
यादिहृदेषुपर्यटनं निमित्तमनंतमूर्त्तेरासादिक्रीडनचिह्नैःसम्यगलंकृते
षुजलस्थलप्रधानेष्वेकाकीचरतिसमित्यर्थः अनन्यांभक्तोवा अनंतपंच-
गुणापृथिवीसंस्कृतेतिज्ञापितं तत्रपृथ्वीद्विविधा मृत्पाषाणभेदेनपु
रेष्वाद्रिष्विति उपवनेनगंधःकुंजेषुस्पर्शःसरित्सरसः अनंतलिंगस-
मलंकृतत्वेनरूपं कुंजेषुवाशब्दःअपंकतोयेष्वतिरसः सरस्स्वितिस्पर्श
अनन्यत्वेनैवमौनं सिद्धतेनवाशब्दः संस्कृतः ॥ १८ ॥

साधनान्याह तांगांपर्यटन्निति एतेसप्तत्वगादिधातुसंस्काराःव्रता
न्यंतः करणसंस्कारकाणि एकाकिपरिभ्रमणं भगवच्चरित्रस्यातिगो-
प्यत्वात् एवंदर्शनेनकिंचिद्भक्तत्वोत्पत्तेः कृष्णप्राप्त्यभावाद्विरहेणात-
त्प्राप्तयएवव्रतानिकृ तवान्अत्रैवंक्रमः अन्वेषणार्थंप्रथमंपर्यटनं ततो
तदर्हैर्नियमाःततोऽपिव्रतानि तत्रमध्येएकांतेध्यानाद्यर्थमुपवेशनादि
रूपास्थितिर्यस्येति पवित्रैकरात्रांतरेताहारादिर्जीविकायस्येतिवात्रि
कालस्नानभूशयनाभ्यंगवर्जनादयस्त्रयोगुणादोषत्रयनिवारकाःनन्वेवंकृ
तंबंधुभिः कथंनवद्धस्तत्राह अलक्षितःस्वैरितितत्रहेतुरवधूतवेषःकृ
त्रिमवेषधारीव्रतानि चत्वारिएकादश्याद्युपवासः सर्वभूतदयायथा
लाभसंतोषः सर्वेंद्रियोपशमश्चेति एतानिभगवत्तोषहेतुभूतानि
॥ १९ ॥

फलमाह इत्थंव्रजन्नितिशुद्धोहिदेवदेशेतिष्ठतीति पूर्वकामनासंपू
र्णज्ञापकंचैतत्फलस्ययथाअसदधिष्ठानंभूमौगतंतथाशरीरेऽपीतिपुण्या
धिक्याद्भारतएवपर्यटनंवहुनापि कालेनयावत्प्रभासययंतंगतवांस्ता
वदन्यथासर्वमासीदित्याहगतवानिति एकस्यचक्रंसैन्यंयस्यांसैन्यं
वाराजचिह्नमन्यस्यनास्तीत्यर्थः भारतमेववर्षंयावत्प्रभासंतावच्छब्द
नोच्यते तावदित्यर्थविशेषेवा अस्यतीर्थपर्यटनमेव भगवद्भक्तानां भ
गवताराज्योपलंभनेहेतुः अजितेनेतिसामपार्थइतिहेतुः एतत्तुपूर्वजा-
तमप्यसंभावनयाजिज्ञासाभावान्नज्ञातवान् ॥ २० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

स इत्थमत्युल्वणकर्णवाणैः अत्युल्वणैः परुषवाक्यैः कर्णयोर्वा
णैरिव प्रविश्य मर्म्मस्थानेषु ताडितस्तत्रापि भ्रातुः पुरः अरे किमेवं
ब्रूषे इत्यप्यनुक्तवतः । किञ्च । ताडितोऽपि गतव्यथः । धन्योऽसि
अरे दुर्योधन धन्योसि त्वया मम सर्वा अपि व्यथा निर्व्वापिता य-
दितो निःसार्यमाणस्य दूरे क्वचन तीर्थादिषु निर्विण्णतया स्थास्यत
स्त्वज्ज्ञनके ममतां त्यक्तवतो मम का व्यथेति मनस्यनुल्ययेति भावः
अयात् निर्जगाम स्वयमिति दुष्टैर्निःसारणात् स्वयमेव निःसरणं
भद्रमिति भावः । धनुर्द्वारि निधायेति संप्रति सर्व्वं स्वगृहादिकमपि
त्यक्तवतो विविक्तं क्वचिदुप्रविश्य कृष्णं भजिष्यतो मम किमनेन
दुश्चिह्नेन धनुषेति भावः यद्वा भीमादिभिः संगत्याऽस्माभिः सहयां-
तुमयत इति पापोऽयं माशंकेतेति धनुर्निधानं मायां उरुमानयानः
मानयन्निति माययैवान्धीकृतः पुरः सन्तमपि कृष्णं न पश्यति ॥
यद्वा अहो मायामाहात्म्यं भगवतः कृष्णस्य यदेवं प्रकारेण मां स्व-
भक्तमितो निष्काश्य भीमादिभिर्निःसंशयमेते घातयिष्यन्त इति
॥ १५ ॥

कुरंस्तद्दर्शनाञ्च पुण्येन लब्ध इति तेषां भाग्यमेव तेन रूपेण
गतमिति सूचितं तीर्थं पादौ यस्य तस्य हरेरिति तच्चरणावुद्धेव
तादृशानां तीर्थादिइत्येति सूचितं पदानि क्षेत्राणि सहस्रमूर्त्तिमतस्य
कूर्माद्यनेकमूर्त्तिः सन् यानि यान्यधिष्ठायस्थितः ॥ १६ ॥

अनन्य एकाकी ॥ १७ ॥

गां पृथ्वीं मेध्या पवित्रा विविक्ता वृत्त्यन्तरेणामिश्रिता वृत्तिर्जी-
विका यस्य सः सदा आप्लुतः प्रतितीर्थं स्नात इति स्नानेन पावि-
त्र्यं लक्ष्यते स्नानानन्तरं कदाचिदस्पृश्यस्पर्शे पुनरपि स्नातीति सदा
भगवन्मन्त्रादिस्मरणार्थं पवित्र एव तिष्ठतीत्यर्थः अवधूतोऽसंस्कृत-
देहः अवधूतवेशो वल्कलादिधारी अत एव स्वैरलक्षितः ॥ १८ ॥

एकस्यैव चक्रं सैन्यं यस्यां एकमेव राजचिह्नं श्वेतातपत्रं यस्यां
तां अजितेन श्रीकृष्णेन सहायन हेतुना पार्थो युधिष्ठिरः ॥ १९ ॥

तस्यां त्रितस्योशनसो मनोश्च पृथोरथाग्नेरसितस्य वायोः ।
तीर्थं सुदासस्य गवां गुहस्य यच्छ्राद्धदेवस्य स आसिषेवे ॥ २१ ॥
अन्यानि चेह द्विजदेवदेवैः कृतानि नानायतनानि विष्णोः ।
प्रत्यङ्गमुख्याङ्कितमन्दिराणि यद्दर्शनात् कृष्णमनुस्मरन्ति ॥ २२ ॥
ततस्त्वतिव्रज्य सुराष्ट्रमृद्धं सौवीरमत्स्यान् कुरुजाङ्गलांश्च ।
कालेन तावत् यमुनामुपेत्य तत्रोद्धवं भागवतं ददर्श ॥ २३ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

तत्र प्रभासे सुहृदां कौरवाणां विनाशं दुर्योधनादिषु सौहार्दा-भावादनतिविलम्ब एवोद्धवमिलनाच्च सुहृदां यादवानामिति केचि-द्व्याचक्षते वनं यथा दग्धं भवतीत्यन्वयः प्रत्यक् प्रतीचीं पश्चिम-वाहिनीमित्यर्थः ॥ २० ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

तदेवाह कइति जिह्मंकुटिलम् यस्यबलिना अन्नेनपुष्टस्तस्मिन्ने-वप्रतीपः प्रातकूलः परकृत्येष्वास्ते शत्रुकार्येवर्ततेत्व्याप्रियते अतः श्व-सानः श्वसन्जीवन्मात्रशेषः पुरान्निर्वास्यताम् ॥ १५ ॥

प्रसिद्धावाणाः देहंभित्वाऽन्यत्रपतंति उद्धर्तुंचशक्याःवाग्बाणा-स्तुहृदिनित्यंशयनंकुर्वंति यथोक्तंमहाभारते कर्णिनालीकनाराचाउ-द्धरंतिशरीरतःवाग्बाणास्तुननिर्हर्तुंशक्योहृदिशयोहिसइतिवाक्सायका-वदनान्निःपतंतियैराहतःशोचतिराज्यहाणिपरस्परम्मर्मसुतेपतंति तान्पंडितोनावसृजेत्कदाचिदिति च एवमत्युल्बणैः कर्णयोर्वाणव-त्प्रविशद्भिः परुषवाक्यैः भ्रातुर्धृतराष्ट्रस्यपुरोमर्मसुताडितोऽपि गत-व्यथः स्वयमयात् दुर्योधननियुक्तपुरुषकर्तृकनिः सारणप्रयत्नात्पूर्वं स्वयमेवनिर्जगाम कथंभूतः मायांविश्वमोहिनींभगवन्मायां उरुबहु-मानयानः भगवन्मायाऽत्रनिमित्तमितिमन्यमानः किंकृत्वाधनुर्द्वारि निधायभयदेभ्योऽपिस्वतोऽभयंदातुं तद्द्वारिधनुरुपलक्षितंशस्त्रास्त्रपू-र्गत्यक्त्वेत्यर्थः विदुरतुल्यानांदौर्लभ्यमुक्तम् पुरुषावहवोलोकेसा-धवः साधुकारिषु दुर्लभः पुरुषोलोकेयः साधुरसाधुष्विति॥ १६ ॥

यद्वहंश्रीकृष्णानात्मसात्कृतं तदपिदुर्जनसंगदोषात्त्यक्तमित्युक्तम् इदानींतस्यतीर्थाटनप्रकारमाह सइत्यष्टाभिः सविदुरः कौरवपुण्य-लब्धः कौरवाणांपुण्येनलब्धः तत्कुलभूषणपुण्यरूपः गजाह्वया-न्निर्गतः तत्कुलदूषणस्तुतत्रैव स्थितआसीदिति भावः उर्व्यांया निसहस्रमूर्तिः अनंतमूर्तिः भगवानस्वधिष्ठितः सुष्ठुअधिष्ठाय स्थितः तानितीर्थपदः तीर्थंपादौ यस्यतस्यभगवतः पदानिवा सस्थानानिपुण्यंकर्तुमिच्छया अन्वाक्रमत् अनुचचार ॥ १७ ॥

पुरेषुपुण्यानि उपवनानिच अद्रयश्चकुंजानिगूढस्थानानिचतेषु अपंकानिपापरूपपंकनिवारकानि तोयानियेषुसरित्सरस्सुच अनं-तस्यभगवतो लिंगैर्मूर्तिभिः सम्यगलंकृतेषुतीर्थेषु जनशोधकेष्वाय-तनेषुच ॥ १८ ॥

गांपृथिवीं पर्यटन्नहरिस्तोष्यते एभिरितिहारितोष्याणिव्रतानि चेरे अचरत् मेध्यापवित्राविविक्ताअसंकीर्णा वृत्तिर्जीविकायस्यसः सदाआप्लुतः स्नातः अधः शयनंयस्यसः अवधूतः उद्वर्तनादिशरीर संस्कारवर्जितः अवधूतानांतापसानां वल्कलाजिनधारणरूपोवेषो यस्यसःअतएवस्वैरलक्षितः ॥ १९ ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

यावत्यावता कालेनविदुरः प्रभासंगतवान्तावत्तावताकालेन पार्थोयुधिष्ठिरः एकस्यैवचक्रमाज्ञायस्यतांम् एकमेवराजचिह्नंश्वेता तपत्रंयस्यतांम् अजितेनश्रीकृष्णेनसहायेनशशास ॥ २० ॥

---

भाषाटीका ।

इस कपटी को यहाँ कौनने बुलाया है ये दासी पुत्र जासे पुष्ट होय है तिसासे प्रतिकूल होकर शत्रुवोंके कृत्य में वर्त्ते है यास जीते भये अमांगलिकको शीघ्र पुरसे निकालो ॥ १५ ॥

अपने भाई धृतराष्ट्र के सामने दुर्योधन करके वचनरूप कठोर बाणों से मर्म स्थानो में ताडित भी होकर ईश्वरकी माया का माहात्म्य ऐसाही है ऐसे बहुत मानते हुवे विदुरजी अपने धनुष को घरके द्वारपर रख के चलेजाते भये ॥ १६ ॥

कौरवोंके पुण्य कर्मसे प्राप्त हुये जो विदुरजी सो हस्तिनापुर से निकस तीर्थरूप हैं चरण जिनके ऐसे हरिके क्षेत्रनको पवित्र करने की इच्छा से जाते भये जिन तीर्थों में सहस्रमूर्ति भगवान् अधिष्ठित हैं ॥ १७ ॥

पुरों में पवित्र उपवनों में पर्वतों में कुञ्जों में कीच नहीं ऐसे नदी और सरोवरों में ईश्वर के चिह्नों करके सुंदर अलंकृतों में और जो तीर्थों के स्थान क्षेत्र हैं तिनमें सब में अकेले विदुरजी विचरते भये ॥ १८ ॥

पृथिवीपर विचरतेभये पवित्र और एकान्तिक वृत्ति है जिनकी सब तीर्थों में स्नान करते भये पृथिवी पर शयन करते भये शरीर के संस्कारों करके रहित अवधूत वेषको धारणकिये स्वकीयों कोभी अलक्षित अवधूत वेष धरके हरि को प्रसन्न करनेवाले व्रत करते भये ॥ १९ ॥

ऐसे इस भारतवर्ष में विचरते हुये कोई कालमें प्रभास क्षेत्र में गये एक आज्ञारूप चक्र है जिनका ऐसे श्रीकृष्णजी की सहायता करके राजा युधिष्ठिर सब पृथिवीपर राज्य करतेभये ॥ २० ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

त्रितादीनामेकादशतीर्थानि तत्तन्नाम्ना प्रसिद्धानि आसेवित-वान् ॥ २१ ॥

स वासुदेवानुचरं प्रशान्तं बृहस्पतेः प्राक्तनयं प्रतीतम् ।
आलिङ्ग्य गाढं प्रणयेन भद्रं स्वानामपृच्छद्भगवत्प्रजानाम् ॥ २४ ॥
कच्चित्पुराणौ पुरुषौ स्वनाभ्यपाद्मानुवृत्त्येह किलावतीर्णौ ।
आसात उर्व्याःकुशलंविधायकृतक्षणौ कुशलंशूरगेहे ॥ २५ ॥
कच्चित्कुरूणां परमः सुहृन्नोभामः स आस्ते सुखमङ्ग शौरिः ।
यो वै स्वसॄणां पितृवद्ददाति वरान् वदान्यो वरतर्पणेन ॥ २६ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ॥

द्विजदेवैर्ऋषिभिः देवैश्च कृतानि अङ्गमंगं प्रतिवर्त्तन्ते इति प्रत्यंगान्यायुधानि तेषु मुख्यं चक्रं तेनाङ्कितानि मूर्द्धन्यहेमकुम्भेषु चिह्नितानि मन्दिराणि येषु तानि नानाविधानि विष्णोरायतनानि. क्षेत्राणि तीर्थानि च आसिषेवे । येषां चक्राङ्कितमन्दिरवतां दर्शनात् श्रीकृष्णस्मरणं भवति ॥ २२ ॥

अतिव्रज्य अतिक्रम्य यावदुद्धवः प्राप्तः तावत् स्वयमपि यमुनामुपेत्य ॥ २३ ॥

स विदुरः प्राक् तनयं पूर्वशिष्यं नीतिशास्त्रे प्राप्तनयामिति पाठे प्राप्तो नयो नीतिशास्त्रं येन तं प्रतीतं प्रख्यातं । स्वानां ज्ञातीनां भद्रमपृच्छत् । प्रश्ने हेतुः । भगवतः प्रजानां पोष्याणाम॥ २४ ॥

प्रथमं तावत् रामकृष्णयोः कुशलं पृच्छति । कच्चिदिति प्रश्ने स्वनाभौ भवः स्वनाभ्यः पाद्मो ब्रह्मा तस्यानुवृत्त्या प्रार्थनया इहावतीर्णौ कुशलमासाते वर्त्तेते । कृतक्षणौ दत्तावसरौ । सर्वेषां कृतोत्सवाविति वा । तयोर्नित्यकुशलत्वेऽपि उक्त विशेषणविशिष्टौ शूरगेहे कच्चिदासाते इति प्रश्नः ॥ २५ ॥

यदूनां कुशलं पृच्छति नवभिः । भामः पूज्यः शौरिर्वसुदेवः यद्वा भामो भगिनीभर्ता कुन्ती; वसुदेवस्य भगिनी अतो देवकी पाण्डोर्भगिनीति लोकव्यवहारः । वरान् अर्थान् वदान्यः अत्युदारः । वराणां तत्पतीनां तर्पणेन सन्तोषणेन सह ॥ २६ ॥

---

श्रीराधारमणदासगोस्वामि विरचित
दीपिन्याख्य तट्टिप्पणी ॥

कौरवेषु सौहार्दाभावेऽपि शोकोऽयं स्ववाक्याऽमननादेवेति ज्ञेयम् उद्गमाभिमुखं प्रवाहाभिमुखम् ॥ २१ ॥

तस्यां सरस्वत्याम् यत्तीर्थं तदासिषेवे तत्तन्नाम्नात्रिततीर्थौशनसस्तीर्थादिनाम्ना ॥ २२ ॥

क्षेत्राणि पुरुषोत्तम मथुरादीनि तीर्थानि ऋषिजुष्टजलानि चेत्यन्यानि चेत्यस्यव्याख्यानम्॥ २३ ॥

तत्र यमुनातीरे ॥ २४ ॥

पाठांतरे प्राप्तनयमिति पाठे अत्र, श्रीभगवत्पितृव्य विदुरकर्तृकालिङ्गनेप्युद्धवस्य नमनाद्यभावस्तस्य श्रीभगवद्विरहमूर्च्छामभिव्यञ्जयति ॥ २५ ॥

उक्तविशेषणं हिप्रपञ्चेऽवतीर्णत्वं तथाच नित्यकुशलत्वेऽपिप्रपञ्चानुग्रहपूर्वकं शूरगृहे आसाते किम्वाऽप्रकटं विहरत इति प्रष्णा इत्यर्थः ॥ २६ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचान्द्रिका

तत्रेति अथप्रभासतीर्थे ससमीपेसंस्पर्द्धयापरस्परसंघर्षेणसुहृदांकौरवादीनांविनष्टिंशुश्रावाशृणोत् परस्परसंस्पर्द्धयाविनाशेदृष्टांतः वेणुभ्योजातोयोवह्निस्तस्यसंश्रयमाश्रयंवनं यथादग्धंतद्वत् अथसुहृद्विनष्टिश्रवणानंतरमनुशोचन्प्रत्यक् पश्चिमाभिमुखंसरस्वतींनदींप्रतितूष्णीमियायगतवान् ॥ २१ ॥

तस्यांसरस्वत्यांत्रितेनसेवितंतीर्थमित्यर्थःत्रितादीनामेकादशतीर्थानि तत्तन्नाम्नाप्रसिद्धानि आसिषेवेआसेवितवान् ॥ २२ ॥

अन्यानीति द्विजदेवाऋषयस्तैर्देवैश्चकृतानि विष्णोरायतनानिबहुविधानिस्थानानि यद्दर्शनात्येषामायतनानांदर्शनात्कृष्णमनुस्मरन्ति कृष्णस्मारकानीत्यर्थः प्रत्यंगान्यायुधानितंपांमुख्यंचक्रं सुदर्शनं तेनांकितानिमूर्द्धन्यहेमकुंभेषुविह्नितानिमंदिराणियेषु तान्यन्यानिचतीर्थान्यासिषेवेइति पूर्वेणान्वयः ॥ २३ ॥

ततः सरस्वत्याऋद्धंसमृद्धं सुराष्ट्रंदेशं सौवीरांश्चदेशानतिव्रज्ययावदुद्धवःप्राप्तस्तावत्स्वयमपिकालेनयमुनामुपेत्यतत्र यमुनातीरे भागवतं उद्धवंददर्श ॥ २४ ॥

विदुरः वासुदेवानुचरस्तं येनयेनधातागच्छतीत्युक्तमुक्तवत्प्रवृद्धभगवदायत्त स्थिति प्रवृत्तिमंतं शमदमादिसंपन्नं बृहस्पतेःसकाशात्प्राप्तनयं प्राप्तो नयोनीतिर्येनतं प्रतीतं प्रख्यातं उद्धवं प्रणयेनगाढं यथातथा आलिंग्यस्वानांस्वसंबंधिनां भगवत्प्रजानां भगवतस्तत्प्रजानां पुत्रपौत्रादीनामन्येषांतुपोष्याणांचभद्रं कुशलमपृच्छत् ॥ २५ ॥

प्रथमंतावद्रामकृष्णयोः कुशलं पृच्छति कच्चिदिति कुशलप्रश्नेद्योतकमव्ययं स्वस्यनाभौभवः स्वनाभ्यः सचासौपद्मःपद्मसंभवोब्रह्मातस्यानुवृत्त्याप्रार्थनयेह भूर्लोकेऽवतीर्णौ पुराणौ पुरुषौ उर्व्यां कुशलं सुखं विधाय कृत्वा कृतक्षणौ लब्धावसरौ शूरगेहे वसुदेवगृहंकुशलं सुखं कच्चिदासातेकिल. ॥ २६ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

प्रभासतीर्थागमनेनकश्चिदर्थविशेषः सूचितः कोऽसावितितत्राह तत्रेति अथप्रभासक्षेत्रगमनानंतरं तत्रप्रभासेतिष्ठन्विदुरः सुहृदांयदूनांविनष्टिंविप्रशापनिमित्तविनाशंशुश्रावेत्यन्वयः विदुरस्तुप्रभासस्थःशापंसंक्षेपतोऽशृणोत् यदूनांविस्तरात्पश्चादुद्धवाद्यमुनामनुइति वचनात् विप्रशापेनभविष्यंतंयदुविनाशंश्रुतवान् अन्यथामहाभारताविरोधःस्यादित्यर्थःतज्जिज्ञासुस्तत्रागमत्किनेत्याहयथेतिवायुनोद्धूतवेणुसंघर्षणलक्षणसंस्पर्शोत्थितवह्निनातदाश्रयंवनंयथादग्धं भविष्यतितथा विप्रशापहेतुसंस्पर्धयाऽन्योन्यमर्मस्पर्शनवचनोत्थितकलहवह्नि

### श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

नादहिष्यत्स्वकुलमनुशोचन्नथप्रत्यक्सरस्वतीं पश्चिमवाहिनीनाम्ना सरस्वतीं नदीमियायेत्यन्वयः तूष्णीमित्यनेनदुःखेनत्वेत्रवासिनोना-पृच्छदितिसूचयति ॥ २१ ॥

दुःखाग्निसंतप्तस्तत्रसरस्वत्यांमर्तुंकिंगतइतितत्राह तस्यामिति- अनेनविदुरस्यशास्त्रज्ञानाधिक्यंसूचयति यतःसंसारःक्षणभंगुरोऽत स्तीर्थस्नानादिनाशुद्धांतः करणस्यभगवदपरोक्षज्ञानेनपुरुषार्थः स्या दित्यनेनतीर्थस्नानमकारिनान्योव्यापारइति ॥ २२ ॥

नकेवलंनदीतीर्थान्येवनिषेवितानिकिंतुतद्देशभवानिक्षेत्राणीत्या-ह अन्यानिचेतिइहनद्यांसुराष्ट्रेच कीदृशान्यायतनानिप्रत्यंकाः स-म्यक्लक्षणावंतोब्रह्मादयस्तेषांमुख्योविष्णुस्तस्यप्रतिमाभिरंकितानि चिह्नितानि मंदिराणि येषुतानितथा ब्रह्माप्रत्यंकवान्सम्यक्विष्णुर्लक्षणवत्तमइति प्रत्यंकमुख्यमायुधश्रेष्ठंचक्रंतदंकितानीति व्या ख्यानंचित्यं निघंटुकारैस्तथाऽनभिहितत्वादिति येषांक्षेत्राणां द-र्शनात् ॥ २३ ॥

विदुरस्य तीर्थसेवायां तात्पर्याधिक्यं सूचितमृद्धमित्यनेन अन्य थासमृद्ध देशत्यागेकारणाभावात् कालेन केनचिदिति ॥ २४ ॥

तत्र तीर्थस्नानमंतरेणोद्धवंदृष्ट्वाऽनेन किमकारितन्मह्यं ब्रूहीति परीक्षितो हार्दंचोद्यं परिहरति स इति प्रशांतमित्यादि विशेषण त्रयेणोद्धवस्य भगवन्निष्ठाया वैराग्यस्य शास्त्रज्ञानस्य प्रख्यातेश्चा धिक्यंसूचयति भगवान्कृष्णः प्रजापुत्रोयेषां तेतथोक्तास्तेषां अपृ च्छदितिद्विकर्मकोधातुः तेनोद्धवमित्यन्वेतव्यम् ॥ २५ ॥

स्वोविष्णुस्तस्य नाभ्योनाभिजातः पद्मोब्रह्मातस्यानुवृत्त्याप्रार्थ नालक्षणसेवयाकृतक्षणौ कृतावसरौ कच्चित्कामप्रवेदनइतिवचनात् प्रश्नार्थेवर्ततेकच्चिच्छब्दः पद्मोब्रह्मासमुद्दिष्टःपद्मा श्रीरपिचोच्यत इतिच लोकानांसुखकर्तृत्वमपेक्ष्यकुशलंविभोः । पृच्छयतेसततानंदा त्कथंतस्यैवपृच्छयतइति वचनात् इदंःकुशलप्रश्नो लोकानांसुखकर्तृ त्वमपेक्ष्येतिज्ञातव्यम् ॥ २६ ॥

---

### श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ॥

सुहृद्भिर्नष्टैः श्रुतत्वेऽपि स्वानां भद्रमपृच्छदिति शोकावेश स्व-भावोऽयं । स्वानां स्वेषां परमात्मीयानाम् ॥ २४ ॥

स्वनाभ्येति । स्वीयस्य गर्भोदशायिनोनाभौ भवः स्वनाभ्यः निजशासनार्हणमितिवत् व्याख्यातं । कुशलं लोकानां मंगलं यस्मा त् तद्रूयथा स्यात् ॥ २५ ॥

भामो भगिनीभर्त्ता । पौरवी रोहिण्योः पतित्वात् । स्वसृणा-मिति कुन्तीस्नेहतात्पर्यादुक्तम् ॥ २६ ॥

---

### श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

प्रभासेत्वधिकारिणो देहपरित्यागार्थंतत्स्थानमिति तत्रगतोवहि श्चित्तइवजातस्ततः शुश्रावेत्याह तत्राथेति अथेतिभिन्नप्रक्रमेसुहृदां विनष्टिंश्रुतवान् तस्यशोकहेतुत्वायविशेषणं सुहृद्भिनष्टिमेवानिरूपयति संस्पर्द्धयादग्धमिति अनुवादेधर्मप्राधान्यानिरूपणेधर्मिणइतिवैपरी त्यमवस्थाभेदेनौदासीन्यंशोकानिरूपणार्थमुपपादनएवविशेषणं वनंय थावेणुजवह्निः सम्यगाश्रयोयस्यसम्यक्श्रयेतयमितिवार्थःसंस्पर्द्धयाद

---

*कच्चिच्छब्दस्यकुशलप्रश्नार्थत्वेऽपि कुशलादिपदानांपृथक्सत्त्वे नप्रश्नमात्रार्थेवर्ततइत्यर्थः

### श्रीमद्वल्लभाचार्यकृत सुबोधिनी ॥

ग्धमित्यन्यायनाशः तत्रप्रभासेसंस्पर्द्धिनांभवतुनाशः तत्संबंधात्सर्वे पिसुहृदोनष्टाइतिशोकः नाशेदृष्टांतः वेणुभ्यांजातोग्निर्नतावन्मात्रं नाशयति वेणुवनमेवसर्वंतद्वत्कौरवपांडवसंस्पर्द्धयेति नाशहेतुः अनेनानुपयोगनाशः सूचितः अतएवानुशोकः सरस्वतीधर्महेतु र्जलसंस्काररूपिणी भक्तिहेतुस्तुयमुनासत्संगाच्चैजसीस्मृता ज्ञान-हेतुस्तुगंगास्यात्बुद्धिसंस्कारकत्वतः प्रत्यक्स्रोतोभिमुखंतूष्णीं शोचन्नित्यप्रकटत्वाय द्वारकागमनाभावार्थैवमुक्तम् ॥ २१

ननुभगवद्वासभूतद्वारिकात्यागेनवृथान्यत्रगत इत्याशंक्यतत्रकृ-ष्णस्मारकाणिबहूनिसंतीत्याह तस्यामितिद्वयेन तस्यांसरस्वत्या मेकादशतीर्थानिप्रसिद्धानि अत्रव्युत्क्रमोजल प्राधान्यकुलक्रमानुरोधे नतत्रसरस्वत्यामेव त्रितकूपमस्तितत्प्रथमंनिर्दिशति कूपानामेवापां प्राथम्यात् एवमन्यान्यपिज्ञातव्यानिउशनसादीनां तपस्थानानितानि मनुःस्वायंभुवःपृथुर्वैन्यः तीर्थचतुष्टयेसेवितेशोकादयः सर्वेव्यावृत्ताः त्रितस्तुकूपेपतितः तस्मात्संकटान्निस्तीर्णस्तथाऽयमपि शोकसंकटा न्निस्तीर्णः उशनातत्रमृतसंजीविनींविद्यां प्राप्तवांस्तथाऽयंमृतोजीवि तः मनोस्त्विष्टसिद्धिर्ज्ञानरूपा अस्यापिशोकनिवृत्तिज्ञानोत्पत्तिस्तत्र पृथुस्तुपूर्वजातसर्वदोषनिवर्त्तकः एवंचतुर्भिः पूर्वावस्थागताते-नप्राप्तःअतः परमन्यभिन्नप्रक्रमेण विशोकस्तीर्थानिकृतवानित्याह अग्नेरिति असितऋषिर्वायुर्देवतासुदासोराजागवांगोसत्रस्थानं गोती र्थंगुहःकुमारः श्राद्धदेवोवैवस्वत मनुरेतानिसप्ततीर्थान्येवंसप्तधातु शोधकानि ॥ २२ ॥

अन्यानिप्रकीर्णकानिप्लक्षजात पर्यंतनिरंतरंकृतानि सर्वशोधकानि जातानीत्याह अन्यानिचेति एतानितपःकरणाल्लोकेतथाख्यातानि नित्यान्येवान्यानितुद्विजदेवैर्ब्राह्मणैर्देवैश्चकृतानि अतएवनानायत-नानिनानास्थानानियेषु तीर्थेषुकिंचतेष्वायतनेषु विष्णोःप्रत्यंगमुख्यां कित मंदिराणिसंति प्रत्यंगान्यायुधानितेषुमुख्यंयत्सुदर्शन चक्रंतेनांकि तानिचक्रेण परिचिह्नितानि भगवन्मंदिराणिभवंतिकिंतावतेत्यतआ ह यद्दर्शनात्कृष्णमनुस्मरंतीति भगवत्स्मरणंबहुजन्मसुकृतेनभवति तदत्रचिह्नदर्शनेनैवभवतीति तीर्थानामाधिक्यं सांगस्यभगवतस्तत्र स्थितत्वेप्यनेनस्मारकदर्शनाच्चिरंस्थित्वा तत्रगतइतिलक्ष्यते अतएव कालविलम्बाद्यदुकुलनिवृत्तिरपिजाता ॥ २३ ॥

एवंतीर्थगमनेनैव सर्वेदेशाअतिक्रांताइत्याह ततस्त्वतिव्रज्येति ऋद्धमित्यनेन तत्रभगवान्अस्तीति ज्ञापितंसौवीरदेशोगुर्जरदेशःम-त्स्यास्ततोऽर्वाक्कुरुजांगलदेशःकुरुदेशदेशःसर्वत्रग्रामेषकरात्रिविधि नासमागमनेषड्त्रिंशद्वर्षाजाताः तदाहकालेनतावदिति यावत्कालंभग वान्स्थितोमौसलंवजातं तावद्यमुनामुपेत्यतावताकालेनयमुनांगतः तत्रोद्धवंददर्शेतिसंबंधः दर्शनेहेतुर्भागवतामिति इदंदर्शनप्रत्ययज-नकम् ॥ २४ ॥

यावतोद्धवः प्राप्तस्तावतास्वयमपि तत्रगतइत्यतः परंसत्संगेना ग्निसंयोगवत्स्वस्यापितेजःप्राप्तिरिनितंविशिनष्टिसवासुदेवानुचराभि ति भगवद्भक्तत्वेपि सेवकत्वेविशेषः वासुदेवसेवकत्वान्मोक्षोपयोगि-त्वंतद्दर्शनस्य अनेनसंभाषणीयत्वंसूचितं प्रकटेपिनीतिज्ञत्वादन्यंनबो धयिष्यतीति विशेषणं बृहस्पतेः प्राप्तनयामितिबृहस्पतेः सकाशा-त्प्राप्तोनयोनीतिशास्त्रंयेनप्राप्तनयमितिपाठे पूर्वमुद्धवः पुत्रत्वेनास्थि-तइति देवगुह्याभिज्ञः प्रशांतत्वान्नस्वयमासज्जते प्रतीतत्वान्नपरिहारः संभवति आलिंग्यगाढमित्युभयोर्भगवदीयत्वात्पूर्वस्नेहः सूचितःप्रण येनत्युभयत्र स्वानांभद्रत्वेहेतुर्भगवत्प्रजानामिति भगवत्परिपालयानां भ

कच्चित् वरूथाधिपतिर्यदूनां प्रद्युम्न आस्ते सुखमङ्ग वीरः ।
यं रुक्मिणी भगवतोऽभिलेभे आराध्य विप्रान् स्मरमादिसर्गे ॥ २७ ॥
कच्चित् सुखं सात्वतवृष्णिभोजदाशार्हकाणामधिपः स आस्ते ।
यमभ्यषिञ्चच्छतपत्रनेत्रो नृपासनाशां परिहृत्य दूरात् ॥ २८ ॥
कच्चिद्धरेः सौम्य सुतः सदृक्ष आस्तेऽग्रणी रथिनां साधु साम्बः ।
असूत यं जाम्बवती व्रताढ्या देवं गुहं योऽम्बिकया धृतोऽग्रे ॥ २९ ॥
क्षेमं स कच्चिद्युयुधान आस्ते यः फाल्गुनाल्लब्धधनूरहस्यः ।
लेभेऽञ्जसाऽधोक्षजसेवयैव गतिं तदीयां यतिभिर्दुरापाम् ॥ ३० ॥

श्रीमद्वल्लभाचार्य कृत सुबोधिनी ।

गवतांशावतारेणोत्पादितानांवा तस्मिन्दृष्टेस्वयमपिभगवत्संबंधी-जातइति तदीयानांस्मरणेन पंचभूतेषुवायुः संस्कृतः भगवदीयानां कुशलंद्विविधं सामान्यविशेषरूपेण तत्रसामान्यंभगवत्पोष्यणाकु-शलंभगवत्स्थितिः साध्यमिति ॥ २५ ॥

प्रथमंहेतुभूतां भगवत्स्थितिंपृच्छति कच्चित्पुराणौपुरुषाविति अव तारावेशाभिप्रायेणद्विवचनं स्वगतभेदाभावायावन्मूर्त्तीनां पुराणावि निपुणोत्तरौद्वैविलक्षणयायोक्तं अविशेषेणकार्यमाहनाभौभवे पद्मे आविर्भूतोब्रह्मास्वनाभ्यपाश्रस्तस्यानुवृत्तिः प्रार्थनाकिलेति पुराणादौ तथा प्रसिद्धत्वात् भूम्यांकुशलंभारावतरणं कृत्वासर्वेषांकु-शलंयथाभवति दत्तावसरौकृतक्षणौ निश्चिन्ततयास्वानंदानुभवेनि-मितक्षणौवावसुदेवगृहेकिमासात इतिप्रश्नः॥ २६ ॥

श्रीमद्विश्वनाथचक्रवर्त्ति कृत सारार्थ दर्शिनी ।

त्रितस्येति त्रिततीर्थमित्यादि नाम्ना यद्यत् प्रसिद्ध मित्यर्थः ॥ २१ ॥

द्विजदेवैरृषिभिर्देवैश्च अंगमंगं प्रति वर्त्तन्त इति प्रत्यंगान्यायु-धानि तेषु मुख्यं चक्रं तेनाङ्कितानि मन्दिराणि येषु तानि ॥ २२ ॥

तावदिति वाक्यालङ्कारे सम्भ्रमे वा ॥ २३ ॥

प्राक्तनयं पूर्वशिष्यं नीतिशास्त्रे प्राप्तनयमिति वा पाठः । प्रतीतं ख्यातं अत्र विदुरकर्त्तृकालिंगनेऽपि उद्धवस्य नमस्काराभाव प्रेममूर्च्छयैव ज्ञेयः ॥ २४ ॥

भगवत् प्रकटस्थित्यैव तत्प्रजानां भद्रमिति भगवत्सुखस्थितिं पृच्छति कच्चिदिति प्रश्ने स्वनाभौ भवः स्वनाभ्यः पाद्मो ब्रह्मा कृत-क्षणौ कृतोत्सवौ तयोर्नित्यकुशलिनोरपि कुशलप्रश्नः प्रेम्णैव ज्ञेयः ॥ २५ ॥

भामो भगिनीभर्त्ता वसुदेवभार्यायाः पौरव्या विदुरादीनां भगि नीत्वात् शौरिर्वसुदेवः । स्वसृणामिति कुन्त्याः स्नेहातिशयो ध्वन्य ते । अन्यासु स्वसृषु तथाभावादृष्टेः । वरानभीप्सितानर्थान् वराणां तत्पतीनां तर्पणेन सम्भाषणेन सह ॥ २६ ॥

श्रीमच्छुकदेव कृत सिद्धांतप्रदीपः ।

तत्रप्रभासे वेणुजंवह्निसंश्रयते इतितथा वनंयथा दग्धंभवति तथासंस्पर्द्धयापरस्पर भिभवेच्छयानिमित्तभूतया सुहृदांकौर-वाणां विनष्टिंविनाशमशुश्राव अशृणोत् अथानंतरंशोचन् प्रत्यग भिमुखंसरस्वतींतूष्णीमियायगतवान् ॥ २१ ॥

सविदुरः त्रितादीनामेकादशानामेकादशतीर्थानि आसिषेचे आसेवितवान् ॥ २२ ॥

अन्यानिचविष्णोः आयतनानितीर्थानिसआसिषेवेइतिपूर्वे णान्वयः कथंभूतानिद्विजदेवैः ऋषिभि र्देवैश्चकृतानि अंगमंगंप्रति वर्ततेइतिप्रत्यंगान्यायुधानितेषुमुख्येनश्रीसुदर्शनेनांकितानि मूर्द्धन्य हेमकुंभेषुचिन्हितानिमंदिराणि येषुतानियत् येषामायतनानांदर्श नात्कृष्णमनुस्मरंतीति श्रीकृष्णस्मरणंभवतीत्यर्थः ॥ २३ ॥

ततस्तदनंतरमसुराष्ट्रादीन्देशान् अतिव्रज्यअतिक्रम्य यावन्कालेनो द्धवः प्राप्तस्तावत्स्वयमपि यमुनामुपेत्य तत्रयमुनातटे भागवतमुद्ध-वंददर्श ॥ २४ ॥

सविदुरः बृहस्पतेः प्राक्तनयंपूर्वं शिष्यमतएवप्रतीतंप्रख्यातम् उद्धवंप्रणयेनगाढंयथा भवतितथाआलिंग्य आलिंगनेहेतुगर्भविशेष णंवासुदेवानुचरमाति स्वानांज्ञातीनांभद्रंकुशलमपृच्छत् तद्भद्रप्रश्ने हेतुः भगवत्प्रजानामितिभगवतः पोष्याणाम् ॥ २५ ॥

भाषा टीका ।

जैसेवांसों के वन में आपहीवांसोंके रगडोंसे अग्नि लगने से हो जाय तैसे प्रभास क्षेत्र में अपने सुहृदकौरव पांडवों को विनाश सुनते भये परस्पर ईर्षा करके भस्म हो गये उनको शोक करते भये फिर चुप हो पश्चिम वाहिनी सरस्वती के तट पर गये ॥२१॥
उस नदी के तट पर त्रित १ शुक्राचार्य २ मनु ३ पृथु ४ अग्नि ५ असित ६ वायु ७ सुदास ८ गौ ९ स्वामिकार्त्तिक १० श्राद्धदेवा ११ दिकोंकतीर्थोंको सेवन करते भये ॥ २२ ॥

और भी ऋषियोंके किये और प्रत्यंग मुख्य जोशंखचक्र हैं तिन सेचिन्हित श्री विष्णु के किये अनेक स्थान हैं जिनके दर्शन से श्री कृष्णका स्मरण होय है ॥ २३ ॥

तापीछे समृद्ध सुराष्ट्र और सौवीर मत्स्य कुरुजांगलादि देशों को उल्लंघनकर कांईकालमें यमुनापरपहुंचकर भागवतउ-द्धव को देखते भये ॥ २४ ॥

श्रीवासुदेव के अनुचर अत्यन्तशान्तबृहस्पति के नीतिशास्त्र में पूर्वशिष्यविख्यात श्री उद्धवजी अति प्रीति से मिलकर भगवत्प्र जां अपन स्वकीय जो हैं उनकी कुशल विदुरजी पूछते भये ॥ २५ ॥

भाषा टीका ।

श्री रामकृष्ण की कुशल पूछैं हैं किपुराण पुरुष अपनी नाभि से भये ब्रह्माजी की प्रार्थना से यहांअवतार लेकर पृथ्वी काकुशल करि कै अब या समय में अवकाश से शूरसेन के घर में आनन्द से हैं॥ २३ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ॥

वरूथाधिपतिः सेनानीः आदिसर्गे पूर्वजन्मनि स्मरं कामं सन्तं अभिलेभे पुत्रं लब्धवती ॥ २७ ॥

सात्वतादीनामधिप उग्रसेनः शतपत्रनेत्रः श्रीकृष्णः । नृपासनाशां राज्याभिलाषं परिहृत्य प्राणभयेन दूरात् स्थित मित्यर्थः ॥२८॥

हे सौम्य हरेः सुतस्तेन सदृक्षः सदृशः सुखमास्ते गुहं कार्त्तिकेयं अग्रे पूर्वजन्मनि यो भवान्या गर्भे धृतः तम् ॥ २९ ॥

युयुधानः सात्यकिः क्षेमं कुशलमास्ते । फाल्गुनादर्ज्जुनाल्लब्धं धनुषो रहस्यं येन तदीयां अधोक्षजसम्बन्धिनीम् ॥ ३० ॥

---

श्रीराधारमणदासगोस्वामि विरचित

दीपिन्याख्य तट्टिप्पणी ॥

पूर्वार्थेमामशब्दस्य पूज्यतारूपेऽप्रसिद्धेऽपि हेतुर्नोक्तइत्यरुचेर्येद्वेति लोकव्यवहारोऽयमेकदेशिकएवनतुसार्वत्रिकः वस्तुतस्तुपौरावि मदिराइलाइत्यादिनवमोक्तेःपुरुवंशभवायाः पुरुवंशभवत्वेनच वसुदेवस्त्रीत्वात्पौरव्याः विदुरस्मगिनीत्वात् वसुदेवोभगिनीभर्तेतिज्ञेयम् अर्थानुधनादिभोगात् ॥ २७ ॥

पूर्वजन्मनिअंशेनकामं सन्तमितिव्याख्येयम् तस्यश्रीकृष्णाचतुर्व्यूहत्वेनमूलप्रद्युम्नत्वात्प्राकृतस्मरत्वंनसंगच्छते विशेषजिज्ञासा चेत्कृष्णसन्दर्भेदशमदीपिकादीपनेद्रष्टये ॥ २८ ॥

प्राणभयेनययातिशापप्रयुक्तेन अत्रपरिहाराभिषेकयोः समानकर्तृत्वमभिप्रेतंनसंगच्छते भगवतः प्राणभयसंभावनौचित्यात् अतः स्थितामिति साध्याहारादिव्याख्यानादित्यर्थ इत्युक्तम् ॥ २९ ॥

पूर्ववद्गहमित्यप्यंशांशयभेदाभिप्रायेणयोजनीयम् एतेहियादवाः सर्वेमद्गणएवभामिनीति सत्यांभगवद्वाक्येन तत्रकैमुत्यात् अतएवतत्रदौर्लभ्यसूचनार्थं व्रताढ्येत्युक्तम् ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रिका ॥

वसुदेवस्यकुशलंपृच्छति कुरूणां नः परमः सुहृद्भामः भद्रः पूज्योवा यद्वाभगिनीपतिः अतोदेवकीपांडोर्भगिनीति लोकस्यव्यवहारः सःप्रसिद्धः शौरिः शूरस्यापत्यं वसुदेवः अंगहेउद्धवसुखमास्तेकच्चित्कथंभूतः शौरिर्विदान्योऽत्युदारः स्वसृणांभगिनीनांवरतर्पणेनवराणांतत्पतीनां तर्पणेन तृप्तिकरवस्तुजातप्रदानेनसहवरान भीष्टानर्थान्पितृवद्ददात्यदात् ॥ २७ ॥

प्रद्युम्नमापृच्छति यदूनांवरूथाधिपतिः सेनापतिर्वीरः प्रद्युम्नः सुखमास्तेकच्चिदंगहेउद्धवकथंभूतः प्रद्युम्नः रूक्मिणीविप्रानाराध्यादिसर्गेपूर्वजन्मनिस्मरंकामंसंतं प्रद्युम्नं केशवतः सकाशाल्लेभे-लब्धवती ॥ २८ ॥

उग्रसेनंपृच्छति सात्वतादीनामधिपतिः सउग्रसेनः सुखमास्ते कच्चिच्छतपत्रनेत्रः पुंडरीकाक्षोभगवान्स्वयं नृपासनस्याशामभिलाषंदूरात्परिहृत्ययमुग्रसेनमभ्यषिंचत् अभिषिक्तवान् ॥ २९ ॥

सांबंपृच्छति हेसौम्यरथिनांरथिकानामग्रणीः श्रेष्ठःहरेःश्रीकृष्णस्यसुतः सदृक्षः हरिणासमानः सांबो साध्वास्तेकच्चित् जांबवती व्रताढ्याव्रतनिष्ठा सतीदेवंगुहंपूर्वजन्मनिकार्तिकेयंयंसांबंप्रासूतचतीयः गुहः, अग्रेपूर्वजन्मन्यंविकयाभवान्याधृतः गर्भे इतिशेषः ॥ ३० ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

भामः पूज्यः वदान्योदानशीलः वरतर्पणेनभर्तृतर्पणेन ॥ २७ ॥

यदूनांवरूथाधिपतिः सेनापतिः आदिसर्गेपूर्वजन्मनि स्मरंकामं विप्रानाराध्येति कथनंलोकवनितानांब्राह्मणप्रसादेनस्वार्भीष्टावाप्तिरितिप्रदर्शनपरं नतुस्वार्थपरमित्यभिप्रायः ॥ २८ ॥

सात्वतानामधिपउग्रसेनः शतपत्रनेत्रः पुंडरीकाक्षः नृपासनाधिसिंहासनंममनाभूदितियआधिः मनस्तंपरिहृत्य आधिर्मनोवरूथंच-आत्माखमपिचोच्यतइति ॥ २९ ॥

सदृक्षः पुत्रत्वयोग्यः दक्षइतिपाठेकर्तव्यत्वेन युगपदनेकेषुकार्येषुप्राप्तेष्वव्यामोहेन क्रमेणकर्तादक्षइत्यर्थः अग्रेपूर्वजन्मनि अंविकयापार्वत्या धृतोगर्भेइतिशेषः ॥ ३० ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ॥

स्मरं श्रीभगवद्व्यूहरूपं । श्रीकृष्णसन्दर्भे तथा निर्णीय व्याख्यातत्वात् ॥ २७ ॥

नृपासनाशां तद्दिशमपि परिहृत्येत्यस्य शतपत्रनेत्र एव घा कर्त्ता ॥ २८ ॥

साम्बस्य गुहत्वं प्रद्युम्नवदेव ॥ २९ ॥

तदीयां गतिं परमान्तरंगाम् ॥ ३० ॥

---

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

अनेनसर्वेषां साधारणं कुशलं पृच्छति कच्चित्कुरूणामिति प्रथमं वसुदेव कुशल प्रश्ने हेतुः कुरूणां सुहृत्तमो भामश्चभामस्तु भगिनीपतिः प्रतिविवाहसंभावनया देवक्यपि स्वभगिनीत्याभिप्रायेणोक्तं कौरव गृहेवातस्याऽन्योविवाहः पृथापेक्षयावसुदेवस्यज्येष्ठत्वादेशन्यायेनकष्टभगिनी भर्ताशालक इति भावुकत्वं किंच नसंबंधमात्रं वसुदेवे किंचोपजीव्यइत्याहयोवैस्वसृणामितिशूरः श्वसुरोददात्येव स्वयमपि भगिनीनांददातिवरानभिलाषितार्थान् अविहितत्वाच्चतुर्थी अधिकदाने हेतुः वदान्य इति ॥ २७ ॥

भगिनानांभर्तृतर्पणमपि कृत्वायादवानां मध्ये सर्वतउत्तमं प्रद्युम्नंपृच्छति कच्चिदिति वरूथाधिपतिः सेनापतिः यदूनांमध्येवीरः यदूनां वावरूथाधिपतिः स्वतोवीरः सेनातः जन्मपरंपर याचतदाह प्रद्युम्नइति प्रकृष्टधनात्मकः अतोराजापेक्षया प्रथमंप्रश्नःकिंच सपूर्वं सर्गेहेतुकामःतं रुक्मिणीभगवंतं प्रार्थयित्वावंशजननार्थं विप्रानाराध्यधर्मसिद्ध्यर्थं तपःकृत्वारुक्मिणीतंलेभे आराध्यविप्रानिति शक्त्यतिशयाधानं कृतंगम्यते भगवतइति पुत्रार्थमेवयतः ॥ २८ ॥

---

* स्वसृणांभर्तृतर्पणेन

कच्चिद्बुधः स्वस्त्यनमीव आस्ते श्वफल्कपुत्रो भगवत् प्रपन्नः ।
यः कृष्णपादाङ्कितमार्गपांशुष्वचेष्टत प्रमविभिन्नधैर्यः ॥ ३१ ॥
कच्चिच्छिवं देवकभोजपुत्र्या विष्णुप्रजाया इव देवमातुः ।
या वै स्वगर्भेण दधार देवं त्रयी यथा यज्ञवितानमर्थम् ॥ ३२ ॥
अपिस्विदास्ते भगवान् सुखं वो यः सात्वतां कामदुघोऽनिरुद्धः ।
यमामनन्ति स्म हि शब्दयोनिं मनोमयं सत्त्वतुरीयतत्त्वम् ॥ ३३ ॥
अपिस्विदन्ये च निजात्मदैवमनन्यवृत्त्या समनुव्रता ये ।
हृदीक सत्यात्मज चारुदेष्ण गदादयः स्वस्ति चरन्ति सौम्य ॥ ३४ ॥
अपि स्वदोर्भ्यां विजयाच्युताभ्यां धर्म्मेण धर्मः परिपाति सेतुम् ।
दुर्योधनोऽतप्यत यत्सभायां साम्राज्यलक्ष्म्या विजयानुवृत्त्या ॥ ३५ ॥

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

राज्ञोराज्यंतुकाकतालीयन्यायेनागत मित्याहयमभ्यर्पिचादितिम् तत्पुत्रस्यदुःखाभावेनराज्यस्वीकारेहेतुः शतपत्रनेत्रइति दृष्ट्यैवसर्वता पहारीकमलनयनः दूरादिति पुत्रपौत्रद्वाराऽपि ॥ २९ ॥

निरतिशय स्वरूपसामर्थ्यं : सद्भावात्सांबादीन्माहात्म्यस्वरूपेवद न्पृच्छति कच्चिद्धरेरिति संबोधनानि तत्र तत्रकथनेहेतुभूतानि हरेरे वसदृशः रथिनामग्रणीः साधुरास्तइति सर्वापेदनत्वपार्वत्या सहि- तौमहादेवावती र्णइतिज्ञायते अतएवतस्यजननं नप्राकृतयाशक्यमि- त्याहअसूतयंजांबवतीव्रताढ्येति जाम्बवान्वले भगवत्तुल्योभक्तश्चतस्य कन्याततोऽपिव्रताढ्या तस्यस्वरूपतः सामर्थ्यमाहदेवंगुहमिति गुहस्य देवत्वमुत्कर्षो भूतगणमध्यपातित्वाभावायअंबिकया अग्निवत्तस्या मंतर्भूतत्वमयमपितस्योत्कर्षः ॥ ३० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

अत्र प्रश्ने तेनातिवैक्लव्यात् क्रमो नानुसृतः । वरूथाधिपतिः सेनानीः आदिसर्गे पूर्वजन्मनि स्मरं कन्दर्पमिति कन्दर्पस्य देवत्वात् प्रद्युम्नस्यनरत्वात् तथा भूतत्वे उत्कर्षद्योतनावस्तुतःसिद्धान्तेतु कन्द र्पस्तद्विभूतिविशेष एव एवंत्रेऽपि तदंशविभूतयोऽपि सर्वत्र तल्लीला कयातु तादात्म्येनैवोच्यन्ते । यथा देवकीवसुदेवावपि पृश्निसुतप- सावुक्तौ स्वयं भगवतैव त्वमेव पूर्व्वसर्गेऽभूः पृश्निः स्वायम्भुवे सती त्यादिना सर्वत्र नरलीलता पृष्ट्या चमत्कार एव कारणं ज्ञेयं यथा तत्रैव आराध्य विप्रानिति जाम्बवती व्रताढ्येति रुक्मिणी जाम्बवत्या दीनां भगवद्स्वरूपशक्तीनामपि तत्तदर्थं तत्तत्साधनमपि ॥ २७ ॥

अधिपः उग्रसेनः यं उग्रसेनं नृपासनाशां राज्याभिलाषं परिहृत्य प्रार्थनयेन दूरात् स्थितमित्यर्थः शतपत्रनेत्रः श्रीकृष्णः ॥ २८ ॥

सदृक्षः सदृशः गुहं कार्त्तिकेयं अंशांशिनोरैक्यात् रुद्रस्य भग- वदंशत्वात् तत्पुत्रस्य कार्त्तिकेयस्यापि भगवत्पुत्रांशत्वं युक्त्या ज्ञेयं । यद्वा परावरेशो महदंशयुक्त इत्यादि वक्ष्यमाणयुक्त्या अवता रकाले श्रीकृष्णे नारायणप्रवेशे सति नारायण एव वसुदेव गृहेऽ- वतीर्ण इति प्रतीतिरिव साम्बे गुहप्रवेशाद प्रद्युम्ने कामप्रवेशाद

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

उद्धवादिष्वपि वस्त्वादेः प्रवेशात् तथा तथोक्तिर्नानुपपन्ना ॥ २९ ॥
युयुधानः सात्यकिः फाल्गुनादर्ज्जुनात् ॥ ३० ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

हेअंगउद्धवयः वदान्यः अत्युदारः स्वसृणांभागिनीनांवर तर्पणेन पतितर्पणेनसहवरान् पदार्थान्ददातिसभामः पूज्यःशौरिर्वसुदेवः नोऽस्माकंपरमः सुहृत्सुखमास्तेकच्चित् ॥ २७ ॥

आदिसर्गेपूर्वजन्मनिस्मरंसंतंरुक्मिणी यं सुतमभिलेभेप्राप्तवती स्वयदूनांवरूथाधिपतिःसेनानीः प्रद्युम्नः सुखमास्तेकच्चित् प्रद्युम्नवि भूतिःस्मरः विभूतितद्वतोरभेदाभिप्रायेणप्रद्युम्नस्तथोक्तः ॥ २८ ॥

नृपासनाशांपरिहृत्यदूरात् प्रार्थनयेनस्थितमितिशेषः यंशतपत्र नेत्रः अभ्यर्पिचत्स उग्रसेनः ॥ २९ ॥

सौम्यहेउद्धवहरेः सदृक्षः सदृशः सुतः ॥ ३० ॥

---

भाषाटीका

कौरवों के परम सुहृद हमारी भगिनी के पति पूज्यवसुदेवजी सुखी हैं जो वसुदेवजी अत्युदारतासे अपनी भगिनी के पतियों को धन देकर प्रसन्न करते रहे ॥ २७ ॥

सब सेना के मालिक यादवों के पति अतिवीर प्रद्युम्नजी सुखी हैं जिनको पूर्व जन्म में ब्राह्मणों का पूजन खूब करके काम के अव तार प्रद्युम्न को श्री रुक्मिणीजी प्राप्त करती भई ॥ २८ ॥

सात्वत वृष्णि भोजदाशार्हकों के स्वामी उग्रसेनजी सुखी हैं जिन उग्रसेन को कमल नेत्र श्रीकृष्ण राजासन की आशा को दूर कर अभिषेक करते भये ॥ २९ ॥

हे सौम्य उद्धव रथियों में अग्रणी साधूसाम्ब सुखी हैं जिनको जाम्बवतीजी व्रताढ्य होकर उत्पन्न करते भई जैसे स्वामि कार्तिक को पार्वतीजी ॥ ३० ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ॥

श्वफलकपुत्रोऽक्रूरः बुधो विद्वान् । अतो भगवन्तं प्रपन्नः अनु-सृतः । अतएव अनमीवो निष्पापः भक्तौ लिङ्गं योऽचेष्टत व्यलुठत् प्रेम्णा विभिन्नं विदीर्णं धैर्यं यस्य सः । स्वस्ति क्षेममास्ते ॥ ३१ ॥

देवकनामा यो भोजः तस्य पुत्र्याः देवक्याः । विष्णुः प्रजा पुत्रो यस्याः । तस्या देवमातुरदितेरिव कच्चित् शिवं । यज्ञवितान रूपमर्थं त्रयी यथा प्रकाशतया बिभर्त्ति तथा दधार ॥ ३२ ॥

सात्वतानामुपासकानां कामान् दोग्धि पूरयतीति कामदुघः भगवत्वे हेतुः यं शब्दस्य योनिं कारणं आमनन्ति वेदाः । कुतः मनोमयं मनसः प्रवर्त्तकं । तत् कुतः सत्त्वस्यान्तःकरणस्य चतुर्वि-धस्य तुरीयं तत्वं चतुर्थमधिदैवं । चित्ताहङ्कार बुद्धि मनसां अन्तः करणभेदानां क्रमेण वासुदेव-सङ्कर्षण-प्रद्युम्नानिरुद्धा ह्यधिष्ठातारः मनसः शब्दयोनित्वं प्रसिद्धं मनः पूर्व्वरूपं वागुत्तररूपमिति श्रुतेः तथा अन्योऽन्तर आत्मा मनोमय इति प्रस्तुत्य तस्य यजुरेव शिरः ऋग्दक्षिणः पक्ष सामोत्तरः पक्ष इत्यादि श्रुतेः ।तथाच शिक्षायां आत्मा बुद्ध्या समेत्यार्थान् मनोयुङ्क्ते विवक्षया । मनः कायाग्नि-माहन्ति स प्रेरयति मारुतं ।· मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरमित्यादि ॥ ३३ ॥

हे सौम्य अपिस्वित् अन्ये च स्वस्ति चरन्ति निजस्य देहादिव्य तिरिक्तस्य आत्मनो दैवं श्रीकृष्णं अनन्यवृत्त्या एकान्तभावेन ये सम्यगनुव्रता अनुसृताः । हृदीकश्च सत्यभामाया आत्मजश्च चारु-देष्णश्च गदश्चादियेषां तेऽपि ॥ ३४ ॥

इदानीं कुरून् पृच्छति षड्भिः अपि किं स्ववाहुभ्यां श्ववाहुवद्ध र्त्तमानाभ्यां विजयाच्युताभ्यां अर्ज्जुनकृष्णाभ्यां धर्म्ममार्गेण धर्म्मः युधिष्ठिरः सेतुं धर्म्ममर्यादां परिपाति यस्य सभायां विजयानुवृत्त्या जयपरम्परया अर्जुनस्य सेवयेति वा एवम्भूतं यस्यैश्वर्य्यमित्यर्थः।३६

---

श्रीराधारमणदासगोस्वामि विरचित
दीपिन्याख्य तट्टिप्पणी ॥

रहस्यंतत्वं गतिमप्रकट प्रकाशाख्यंद्वारकाधाम अतएवयतिभिर्ब्र ह्मविद्भिरपिदुर्लभाम् ॥ ३१ ॥

अतोबुधत्वात् अतएव० प्रपन्नत्वादेव सत्यपिसम्बन्धान्तरेव्रज संबंधेनश्लाघनात्तस्यवैशिष्ट्यंव्यक्तम् ॥ ३२ ॥

देवमातुरिवेति देवानांरक्षणांशे पेश्वर्य्यांशे दृष्टांतोनतुतारतम्ये कृष्णस्तुभगवान्स्वयमित्युक्तेः स्वर्गमेंगोतिलौकिकोक्तिः मातरित्तथा व्यवहारस्य रसावहत्वेनतदुक्तेरवौचित्यात् वस्तुतस्तुमनसैवकाष्ठा यथानंदकरंमनस्त इति दशमेप्रकरणोक्तेः समाख्यातः प्राबल्यादि तिज्ञेयम् अतएवदृष्टांते प्रकाशकतयेतिव्याख्यातमृयज्ञवितानार्थो हिशब्दप्रकाश्यंगतुतज्जन्यः कर्म्मणःशब्दअन्यत्वाभावात्भावनांलिङा दिज्ञानस्य ज्ञापकत्वेनकरणत्वंनतु त्पादकत्वेनेतितदीयस्वारस्या दिति ॥ ३३ ॥

मनःपूर्वरूपमितिपदद्वयस्यांख्यस्यमनः प्रधानत्वात् वैखरीरूपस्य वागिन्द्रियप्रधानत्वाच्छब्दस्यमनः पूर्वरूपंवागुत्तररूपमितिश्रुतिपदार्थः तथान्यः प्राणमयाद्भिन्नः अंतरस्तदन्तःस्यूतः ज्ञानेंद्रियैः सहितंमनः मनोमयआत्मातस्य मनोमयात्मनः शिक्षाशास्त्रंआत्माजीवः बुद्ध्या अर्थांस्तत्तच्छब्दार्थान्समेत्यस्वस्यगृज्ञात्वाविवक्षयामनः प्रतियुङ्क्ते तान र्थान्वक्तुं पूर्वरूपेमनसियोजयतीत्यर्थः मनः कर्तृ कायेस्थितं वाचा वाहिर्मुखंसजइत्यादेः वागधिदैवतमग्निमाहत्यसंप्रेर्य्य मारुतंवैखर्य्यं

चारखोनिमित्तंप्रेरयति मन्द्रंगंभीरंस्वरंअकारादिस्वरांपलक्षितवर्णसमू हंजनय ति ॥ ३४ ॥

एकान्तभावेनशुद्धदास्यभावेनानुसृताव्याः भृत्यदारुकप्रभृतयः तेपीतियेशुद्धगुरुत्वभावनावन्तोलालयाः सत्यभामात्मजादयः पुत्राः तत्रहृदीकःपार्षदविशेषःतेऽपीत्यर्थः ॥ ३५ ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रिका ॥

सात्यकिंपृच्छतिक्षेममिति युयुधानः सात्यकिःक्षेमंकुशलमास्तेक च्चित् यः युयुधानः फाल्गुनादर्जुनाल्लब्धंधनूरहस्यं धनुर्वेदोयस्वसः अधोक्षजस्य श्रीकृष्णस्य सेवयैवतदीयामधोक्षजसंबंधिनीं यतिभि रपिदुरापांगतिमंजसा सुखेनैवलेभेप्राप्तवान् ॥ ३१ ॥

अक्रूरंपृच्छति बुधः विज्ञाततत्वः अतएवानमीवः अपापः भगवंतं शरणंगतः श्वफल्कपुत्रः अक्रूरः स्वस्तिकुशलमास्तेकच्चित् यःश्वफ ल्कपुत्रःकृष्णस्यपादाभ्यामंकितःचिह्नितः योमार्गस्तस्यपांशुपुरजः सुप्रेम्णाकृष्णपादांकितमार्गदर्शनजनितप्रीत्यतिशयेनविभिन्नंधैर्यं यस्य सः अचेष्टतव्यलुठत् ॥ ३२ ॥

देवकीपृच्छति देवकनामाभोजस्तस्य पुत्रोविष्णुःश्रीकृष्णःप्रजाऽ पत्यंयस्यास्तस्या देवक्याः देवमातुरदितेरिवशिवं कुशलंकच्चित् यांदेवकीस्वर्गमेंगादेवं भगवंतंदधार तत्रदृष्टांतः त्रयीवेदः यज्ञवितान मर्थंयथाप्रकाशकतया बिभर्तितद्वदित्यर्थः ॥ ३३ ॥

अनिरुद्धंपृच्छति अपीति सात्वतांभक्तानांवः युष्माकंकामदुघः अभीष्टप्रपूरकः भगवाननिरुद्धः सुखमास्तेऽपिस्वित् अपिस्विदादयः कच्चित्पर्यायाः यमनिरुद्धंशब्दयोनिंशास्त्रप्रमाणकंसत्वतुरीयतत्वं सत्वमेवततस्य तुरीयंतत्वं चतुर्थंशमामनंति शब्दयोनित्वंकुतः मनोमयंयोगपरिशुद्धमनोग्राह्यं लौकिकप्रमाणाविषयमित्यर्थः ॥ ३४ ॥

अवशिष्टसर्वयादवानांकुशलं युगपत्पृच्छति निजात्मदैवंतं भगवंतमनन्यवृत्त्या एकांतभक्त्या समनुवर्त्तकायेहृदीकादयःतेसर्वेहे सौम्यस्वस्तिकुशलं चरंत्यपिस्वित् ॥ ३५ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

युयुधानः सात्यकिः फाल्गुनादर्जुनात् अनेन धनुर्वेद ज्ञानाधि-क्यं भगवत्प्रियतमत्वं च प्रष्टव्यत्वेहेतुरिति सूचयति एवमुत्तर त्राप्यूह्यम् ॥ ३१ ॥

अनमीवोनिष्पापःश्वफल्कपुत्रोऽक्रूरः प्रेम्णा भक्त्याविभिन्नंनष्टं धैर्यं रजोवेष्टनाहंकाररूपं मनोयस्य स तथा ॥ ३२ ॥

विष्णुःप्रजापुत्रोयस्याः साविष्णुप्रजातस्या देवकश्चासौभोजश्चदेवक भोजःनाम्नादेवकः कुलेनभोजः तस्य पुत्र्या देवक्यादेवमातुरदितेरिव विष्णुप्रजाया इति योजना यज्ञोविष्णुर्वितानो विभूतिर्विष्णु विभूतिरूप मर्थं प्रतिपाद्यंयागलक्षणमर्थंवा कादाचित्कंदेवक्यागर्भधारणंत्रय्या अर्थधारणंसनातनमतस्तन्निदर्शनंकथंस्यादित्यतउक्तंचाद्रिति दृष्टां-तदार्ष्टांतिकयोरेकदेशसाम्येनालंतत्प्रसिद्धेरिति ॥ ३३ ॥

अनिरुद्धोभगवान्वासुखमास्तेऽपिस्वित्किमित्यन्वयः अनिरु द्धशब्दार्थंलक्षयति यःसात्वतामिति नकेवलंकामिनिरणाद्धिकिंतुत त्सदिष्टदायकआश्रितानामतोऽनिरुद्धःपूज्यश्च कामदुघइतिछंदसप दप्रयोगेणसूचितंवैदिकत्वंस्पष्टमाह यमिति शब्दोवेदोयोनिर्ज्ञप्ति कारणंयस्यसतथोक्तस्तं भद्रंनोअपिवातयमनइत्येवंरूपः शब्दःनत्तु हेमनस्त्वंकतुंदक्षंदर्शनमुतभद्रंमंगलंविष्णुंप्रतिवातयगमयेति मनो

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

मयमिति सर्वकार्यपुमनःप्रथयतीतिमनोऽभिमानित्वादनिरुद्धस्यमनः शब्देनसएवोच्यते मनसावाअग्रेसंकल्पयति मनएवमनुष्याणांका रणंबंधमोक्षयोरित्यादेःनामनोभद्रंवातेयतिमनसःकर्मत्वप्रतीतेःकथम नेनउच्यतेइतिचेत्सत्यसएवतर्ह्यनिरुद्धःस्यात् ननुहंततर्हिमनःशब्दा भिधेयत्वंगतमत्राह सत्त्वेति सत्त्वाच्चित्तात्तुरीयंचतुर्थमनःशब्दार्थम निरुद्धमामनंति मनोबुद्धिरहंकारश्चित्तमित्यंतरात्मनः । यद्विदुर्ह्यनि रुद्धाख्यंहृषीकाणामधीश्वरं । शारदेंदीवरश्यामंसंराध्यंयोगिभिः शनैरित्यादिना हेमनोनाथानिरुद्धनोस्माकंक्रतुंसंकल्पदर्शनज्ञानंत त्वविषयंकुरु हेभगवन्नोमनोदक्षंसमर्थंक्रतुमध्वरंचभद्रंत्वंवातयप्राप येत्युभयथापिहितद्विषयत्वंसंगच्छते दक्षौदर्शनपंडिताचेतियादवः कामदुघत्वादिमाहात्म्यंहरेरितरत्रासंभावितंकथमस्मिन्योज्यतइत्य तोवाऽऽहयमिति यंकामपुत्रंसत्त्वस्यबलाविज्ञानपूर्णस्यचतुर्मूर्तेर्हरेस्तु रीयमर्थमनिरुद्धनामानंहरिमामनंतीत्यतो युक्तंतदावेशित्वात्तादृश माहात्म्यकथनंपृथ्व्यादौदर्शनादिति ॥ ३४ ॥

उक्तकुशलप्रश्नं प्रसिद्धाप्रसिद्धेष्वप्यतिदिशति अपिस्वि-दिति ॥ ३५ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

अक्रूरस्य सर्वदा परमभक्तिमत्त्वेऽपि यः कृष्णेति कालदेशादिवै शिष्ट्येन चमत्कारत्वादयुक्तम् ॥ ३१ ॥

देवमातुरिवेति दृष्टान्तत्वं तदितराभावेन ॥ ३२ ॥

एवमनिरुद्धस्यापि साक्षाच्चतुर्व्यूहत्वे लिंगमाह अपिस्विदिति । शब्दयोनिं निश्वासव्यञ्जितवेदवृन्दं एवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतद् यद् ऋग्वेद इत्यादि श्रुतेः मनोमयं चित्ते वासुदेव-वन्मनस्युपास्यं । सत्त्वं शुद्धसत्त्वात्मकं श्रीवासुदेवादिरूपोभगवान् तत्र तुरीयं रूपं । अतोबाणयुद्धादौ बन्धनानुकरणादिकमात्मेच्छा-मयी लीलेव श्रीरामचन्द्रादिवत् । अस्य पाद्मबृहत्सहस्रनाम्नि माहात्म्यनामानि चैतानि । अनिरुद्धो बृहद्ब्रह्म प्रद्युम्नो विश्वमोहनः चतुरात्मा चतुर्वर्णश्चतुर्युगविधायकः । चतुर्भेदैकविश्वात्मा सर्वोत् कृष्टांशकोविभुः । आश्रयात्मेति । अतःश्रीकृष्णव्यूहत्वेन महानिरुद्ध त्वादस्यैवाविर्भावविशेषः प्रलयार्णवादिधामा पुरुष इति ज्ञेयं । अत एवाभेदेन जगृहे पौरुषं रूपं भगवानित्याद्युक्तं । मूलसंकर्षणा-द्यंशैरेव हीतरसङ्कर्षणाद्यवस्थाऽयं पुरुषं प्रकाशयतीति तथैवाभेदेन विष्णुधर्मोत्तरेऽपीदमुक्तं । अत्र श्रीवज्रप्रश्नः । कस्त्वसौ बालरूपेण कल्पान्तेषु पुनः पुनः । दृष्टो येन त्वया ज्ञातस्तत्र कौतूहलं मम । श्रीमार्कण्डेयोत्तरञ्च । भूयोभूयस्त्वसौ दृष्टो मया देवो जगत्पतिः । कल्पक्षये न विज्ञातः स मया मोहितेन वै । कल्पक्षये व्यतीतेतु तं देवं प्रपितामहात् । अनिरुद्धं विजानामि पितरं ते जगत्पतिमिति । भीष्मपर्व्वणि दुर्योधनं प्रति भीष्मशिक्षायां श्रीकृष्णस्यावतारारम्भे गन्धमादनमागतस्य ब्रह्मणस्तदाविर्भावं मनसि पश्यत स्तुवानस्य तादिदं वचनं । सृष्टा सङ्कर्षणं देवं स्वयमात्मानमात्मना । कृष्णत्व-मात्मनाऽस्राक्षीः प्रद्युम्नश्चात्मसम्भवं । प्रद्युम्नाच्चानिरुद्धन्तु यं विदु-र्विष्णुमव्ययं । अनिरुद्धोऽसृजन्मां वै ब्रह्माणं लोकधारिणं । वासु-देवमयः सोऽहं त्वयैवास्मि विनिर्मित इति । अत एव च पूर्वमपि जगृह इत्यत्र श्रीकृष्णस्यानिरुद्धावतारान्तःपातित्वं न व्याख्यातं । अतएव विशेषः कृष्णसन्दर्भेऽस्ति ॥ ३३ ॥

निजस्य आत्मीयस्य आत्मनश्च देवं श्रीकृष्णम ॥ ॥ ३४ ॥

अपि स्वदोर्भ्यां इत्यादिकं श्रीभगवदन्तर्द्धानेन तेषां प्राकट्यास-म्भवात् ॥ ३५ ॥

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

शूरा नुक्त्वा शूरभक्तमाह स कच्चिदिति युयुधानः सात्यकि रर्जुनशिष्यो गतिं परमभक्ति फल रूपं तत्र साधनं भगवत्सेवैव नतु ज्ञानमपीत्याह यतिभिर्दुरापामिति ॥ ३१ ॥

परम भक्त माह कच्चिदिति अतएव बुधः अनमीवोनीरोगः कृष्णसेवा योग्यत्वाय तथा प्रश्नःश्वफल्कपुत्रोऽक्रूरः भगवत्प्रपन्नः शरणागतस्तस्य भक्तिर्लोके प्रसिद्धेत्याह यः कृष्णपादांकितेति मार्गपांसुरत्यंतमपवित्रः सोपि कृष्णपादांकित इति गंगा पेक्ष-या तस्योत्तमत्वं मत्वा तत्र लोटनं कृतवान् अचेष्टतेति भक्त्यावे-शेन लौकिक पदार्थ ज्ञानाभावः सूचितः प्रबोधितोऽपि भक्त्यावि-ष्टो नप्रबुद्ध इत्याह प्रेम विभिन्न धैर्य इति धाताहि सर्व ग्रहणे स-मर्थः ॥ ३२

यद्भक्त्या पुत्रत्वमपि गतो हरिस्तान् प्रतिभक्तान्पृच्छति कच्चि दिति भोजेति वंशनाम देवक एव भोजपुत्रत्वमघटमानमाशं-क्य दृष्टांतः अदितिर्यथा वामन माता पिता विष्णु रेव प्रजा य-स्या देवानां मातेति सर्वे देवास्तस्यामाविर्भूता इति भगवान पिस्वयमाविर्भूतः पुत्रत्वं च गर्भस्थितिमात्रेण जननात्तदाह या वैस्वगर्भेण दधारेति धारणमपि सर्व लोकार्थं तदाह त्रयी यथेति गर्भस्थिति मात्रेण जनकत्वं वारयन्माहात्म्यमुक्तं भवति अर्थमि-ति सहजसंबंधरूपत्वादंतर्यामितया विद्यमान एव प्रादुर्भूतइति सूचितम् ॥ ३३ ॥

अनिरुद्धेजोवस्योत्कर्षाभावेनाविष्टस्य भगवत एव माहा-त्म्यं वदन् स्तौति अपि स्विदास्त इति भगवाननिरुद्धः सात्वता नां वैष्णवानां सर्व कामपूरकोऽनिरुद्ध एवहि पालकः सोहि मन सोऽधिष्ठात्री देवता अत एव यं शब्दयोनिमामनंतिस्मेति प्रसिद्धेः मनः पूर्व रूपं वागुत्तररूपामिति श्रुतेःह इत्याश्चर्ये तादृशस्यावता-र इति यतोऽयंमनोमयः तद्देवतात्वेनैव प्रसिद्धो अत एव नकेना पि रोद्धुं शक्यत इत्यनिरुद्धः किंच सत्वस्यांतःकरणस्यतुरीयं यन्मन स्तस्य परमार्थतत्वमनेन सर्वात्मत्वं तस्य लोकसिद्धम पीत्युक्तम् ॥ ३४ ॥

एवं कतिपयान्विशेषेण पृष्ट्वाऽन्यान्सर्वानेकेन पृच्छति अपि स्विदन्ये चेति निजश्चासावात्मा च चेतनारूपस्तस्यापि देवस्ता दृशमनसो वृत्त्या सर्व भावेन ये तदेकनिष्ठा हृदीकादयः सत्यात्म जा सत्यभामापुत्राः चारुदेष्ण प्रद्युम्नभ्राता गदादयो भ्रात्रादयः आदिशब्देन सर्वे संगृहीतास्तेषां चरित्रमपिकिं समीचीन मि-ति प्रश्नः ॥ ३५ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शनी ।

अनमीवो निष्पापः श्वफल्कपुत्रोऽक्रूरः अचेष्टत नन्दग्राम प्रवेशे व्यलुठत् ॥ ३१ ॥

देवकनामा यो भोजस्तस्य पुत्र्या देवक्याः विष्णुः प्रजा अप-त्यं यस्यास्तस्या देवमातुरदितेरिव ॥ ३२ ॥

सात्वतां यादवविशेषाणां भक्तानां वा । शब्दयोनिं निश्वासव्य-ञ्जितवेदवृन्दं एवं वा अरे अस्य महतो भूतस्य निःश्वसितमेतद्यदृ-ग्वेद इत्यादि श्रुतेः । मनो मयते इति मनोमयं मनसः प्रवर्त्तकं तथा सत्त्वस्य शुद्धसत्त्वरूपस्य चतुर्व्यूहस्य तुरीयं चतुर्थं तत्त्वं तदप्यस्य बाणयुद्धादौ बन्धनादिकमचिन्त्यात्मेच्छामयी लीलैव श्रीरामचन्द्रा दिवत् । अत्रास्य चतुर्व्यूहत्वे प्रमाणं विष्णुधर्म्मोत्तरे वज्रप्रश्ने मार्क-ण्डेयोत्तरं यथा । भूयो भूयस्त्वसौ दृष्टो मया देवो जगत्पतिः कल्प

किम्वा कृताघेष्वघमत्यमर्षी भीमोऽहिवद्दीर्घतमं व्यमुञ्चत् ।
यस्याङ्घ्रिपातं रणभूर्न सेहे मार्गं गदायाश्चरतो विचित्रम् ॥ ३६ ॥
कच्चिद्यशोधा रथयूथपानां गाण्डीवधन्वोपरतारिरास्ते ।
अलक्षितो यच्छरकूटगूढो मायाकिरातो गिरिशस्तुतोष ॥ ३७ ॥
यमावुतस्वित्तनयौ पृथायाः पार्थैर्वृतौ पक्ष्मभिरक्षिणीव ।
रेमात उद्दाय मृधे स्वरिक्थं परात् सुपर्णाविव वज्रिवक्त्रात् ॥ ३८ ॥
अहो पृथापि ध्रियतेऽर्भकार्थे राजर्षिवर्य्येण विनाऽपि तेन ।
यस्त्वेकवीरोऽधिरथो विजिग्ये धनुर्द्वितीयः ककुभश्चतस्रः ॥ ३९ ॥
सौम्यानुशोचे तमधःपतन्तं भ्रात्रे परेताय विदुद्रुहे यः ।
निर्यापितोयेन सुहृत् स्वपुर्य्या अहं स्वपुत्रान् समनुव्रतेन ॥ ४० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

क्षये नविज्ञातः स मया मोहितेन वै । कल्पक्षये व्यतीतेतु तन्तु देवं पितामहात् । अनिरुद्धं विजानामि पितरं ते जगत्पतिमिति । भीष्म पर्व्वणि दुर्योधनं प्रति भीष्मशिक्षायां श्रीकृष्णस्यावतारारम्भे गन्ध माद्नमागतस्य ब्रह्मणस्तदाविर्भावं मनसि पश्यत स्तुवानस्य तदिदं ब्रह्मवचनं । सृष्ट्वा सङ्कर्षणं देवं स्वयमात्मानमात्मना कृष्णत्वमात्मनाऽस्राक्षीः प्रद्युम्नं ह्यात्मसम्भवं प्रद्युम्नाच्चानिरुद्धस्तु यं विदुर्विष्णुमव्ययं । अनिरुद्धोऽसृजन्मां वै ब्रह्माणं लोकधारिणं वासुदेवमयः सोऽहं त्वयैवास्मि विनिर्मित इति ॥ ३३ ॥

निजस्यात्मनो दैवं मूर्त्तं भाग्यमिव श्रीकृष्णं सम्यगनुव्रता अनुसृताः ॥ ३४ ॥

इदानीं कुरून् पृच्छति षड्भिः । दोस्तुल्याभ्यामर्ज्जुनकृष्णाभ्यां धर्मो युधिष्ठिरः सेतुं धर्म्ममर्य्यादां साम्राज्यसम्पत्त्या कीदृश्या विजयस्य सर्वोत्कर्षस्य अनुवृत्तिर्यस्यां तया ॥ ३५ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

युयुधानः सात्यकिः ॥ ३१ ॥

अनमीवः अपापः अचेष्टतव्यलुठत ॥ ३२ ॥

देवकस्यभोजस्यपुत्र्या श्रीदेवक्या विष्णुर्वामनः प्रजापुत्रोयस्या स्तस्याः देवानांमातुरदितेरिवशिवंकुशलंकच्चित् यादेवकीस्वगर्भेण देवंवासुदेवंयथात्रयीयज्ञावितानरूपमर्थं प्रकाशकतयाबिभर्ति तथा दधार ॥ ३३ ॥

यंशब्दयोनिंशब्दोवेदःयोनिः ज्ञापकोयस्यसतथातंवेदैकवेद्यमाम नंति तत्रहेतुर्गर्भविशेषणंसत्वतुरीयतत्वमितिसत्वस्यजगत्कारणस्यवासुदेवस्यतुरीयंतत्वंचतुर्थतत्वमित्यर्थः यद्वा सत्वेपुवासुदेवसंकर्षणप्रद्युम्नानिरुद्धानामुपास्या नांक्रमेणवासस्थानेषुचित्ताहंकार बुद्धिमनः सुतुरीयेमनसितत्वमुपास्यमित्यर्थः अतएवमनोमयंशुद्धमनोग्राह्यम् अतएवसात्वतामुपासकानांवायुष्माकंयः कामान् दोग्धिपूरयतीतिकामदुघः सभगवान् अनिरुद्धः सुखमास्ते अपिस्वित् किंचित् ॥ ३४ ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

हृदीकश्चसत्यात्मजाः सत्यभामात्मजाश्च चारुदेष्णगदादयश्च अन्येचयेनिजात्मनःस्वरूपस्य अंशस्यदैवमिष्टम् शिवंश्रीकृष्णम् अनन्यवृत्त्या अनन्यनभावेनसम्यगनुव्रताः तेअपिस्वित् किंचित् हसौम्यस्वस्तिचरंति ॥ ३५ ॥

---

भाषाटीका ॥

धनुर्विद्या रहस्य अर्जुनजी से जिनको प्राप्त भया ऐसे सात्यकी जी सुखी हैं जो केवल श्रीकृष्ण की सेवा से यतियों को दुरापगति को प्राप्त हुये ॥ ३१ ॥

बुद्धिमान् निष्पाप भगवान् के शरणागत श्वफल्क पुत्र अक्रूर जी सुखी हैं प्रेम से गयो है धैर्य जिनका ऐसे अक्रूरजी श्रीकृष्ण की चरण रज में लोटते भये ॥ ३२ ॥

देवकनाम भोज की पुत्री अदितिकीनाईं विष्णुजिसके पुत्र ऐसी देवकी प्रसन्न हैं। जो देवकी अपने गर्भ में श्रीकृष्ण को धारण करती भई वेदत्रयी जैसे यज्ञ के विस्तार को धारण करै ॥ ३३ ॥

आप के भगवान् उपासकों को कामना देने वाले अनिरुद्धजी सुखी हैं जिन अनिरुद्धजी को शब्द शास्त्र के कारण मनोमय अंतःकरण के चतुर्थ तत्व वेद मानते हैं ॥ ३४ ॥

हे सौम्य अपने आत्मदेव श्रीकृष्ण के अनुव्रत अर्थात् भगवत्परायण हृदीक सत्यभामा के पुत्र चारुदेष्णगदादिक सुखी हैं। ३५

और अपने भुजा रूप श्रीकृष्ण अर्जुन से धर्मराज युधिष्ठिर धर्म से धर्म के सेतुको पालन करते हुये सुखी हैं- जिनकी सभा में विशेष करके विजय की अनुवृत्ति से सम्राट्पने की लक्ष्मी से दुर्योधन तपतो भयो ॥ ३६ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका।

कृतागेषु कृतापराधेषु कुरुषु स्वकर्तृकमघं दीर्घतमं बहुकालानुचिन्तितं अहिवदत्यमर्षी भीमः किं व्यमुञ्चत् नो वा गदाया विचित्रं विविधं मार्गं चरतः॥ ३६॥

रथयूथपानां मध्ये यशोधाः कीर्त्तिधारी। यद्वा स्वीयानां तेषां कीर्त्तिप्रदः उपरता अरयो यस्मात्। यस्य शरकूटेन बाणसमूहेन गूढः आच्छन्नः तुतोष॥ ३७॥

उतस्वित् किं स्वित् यमौ नकुल;सहदेवौ रेमाते क्रीडात इत्यर्थः माद्र्याः सुतावपि पृथायास्तनयौ पृथायाः पुत्रैर्वृतौ आवृतौ सुपर्णाविव रेमाते किं कृतापरात् दुर्योधनात् स्वरिक्थं स्वीयं राज्यं मुदाय आच्छिद्य वज्रिवक्त्रात् इन्द्रस्य मुखात् स्वरिक्थं

अमृतं गरुड इवेति। यद्वा सुपर्णाविवेति यदि द्वौ गरुडावमृतमानयेतां तर्हितद्वत् अक्षिणीवेति मणीवादिगणत्वात् सन्धिः॥३८॥

अहो पृथायाः किं कुशलं पृच्छेयं यतस्तस्याः पाण्डुना विना-प्राणधारणमेवाश्चर्यमित्याह। अहो इति। ध्रियते जीवति नचात्या अन्यं यतोऽर्भकार्थे ध्रियते न भोगार्थं। तथापित्वाश्चर्य्यमित्याह तेन तथा भूतेन विना तदेवाह यस्त्विति धनुरेव द्वितीयं सहायो यस्य॥ ३९॥

पृथाऽर्भकार्थे जीवतीति युक्तमेवेत्याह हे सौम्य तं धृतराष्ट्रं जीवन्तमनुशोचामि। तत् किं यतः अधः पतन्तं तत्र हेतुःपरेताय मृताय भ्रात्रे पाण्डवे तत् पुत्रद्रोहेण यो विदुद्रुहे द्रोहं कृतवान्। किञ्च जीवतोऽपि भ्रातुर्ममापकृतवानित्याह। येन सुहृत् भ्राता अहञ्च स्वपुर्य्याः सकाशान्निर्यापितः॥ ४०॥

---

श्रीराधारमणदासगोस्वामि विरचित दीपिन्याख्य तट्टिप्पणी।

कुरूनुतद्विशेषानूपाण्डवादीन् श्रीभगवदन्तर्धानेतेषां प्राकट्यासम्भवादनिष्टशंकयापृच्छति तेषांकुशलप्रश्नं दुर्योधनतापकथनस्यानुपयोगमाशंक्य तात्पर्य्यार्थमाह एवंभूतमिति अतएवेत्यर्थइत्युक्तम्॥ ३६॥

अघं० क्रोधजमासक्त्यपरपर्य्यायंव्यसनं अंहोदुःखव्यसनेष्वघमित्यमरः भीमदुर्योधनमृधस्यानिर्णयात्वस्यांघ्रीत्यनुमानेनैवोक्तम्॥ ३७॥

पूर्वार्थेनिर्द्धारणषष्ठ्याः पश्चादुपस्थितत्वात्प्रतिपत्तिगौरवमतःकुलदीपकत्वलक्षणं गुणोत्कर्षं वक्तुंयद्वेति तेषांरथयूथपानां सम्बन्धेकीर्त्तिस्तत्वध्वंसाभावाच्च संप्रदानम्॥ ३८॥

पूर्वार्थेगरुडइवेत्यध्याहृत मित्यरुचौयद्वेति यदीत्युक्त्वाऽभूतोपमाव्यञ्जिता॥ ३९॥

तथा भूतेनमहावीरेण अर्भकार्थइति तदर्थमेवजीवनात् तेपामेवकुशले तस्याश्चकुशलंस्यादिति तदेववदेतिभावः॥ ४०॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रिका।

एवं यादवानां कुशलं पृष्ट्वा मथ पांडवानां तत्पृच्छति अपीति स्वदोर्भ्यां विजयाच्युताभ्यामर्जुन कृष्णाभ्यां सह धर्मो युधिष्ठिरः धर्मेण वेदशास्त्राविरोधेन सेतुं वर्णाश्रमादि मर्यादां परिपाल्यपिस्वित् यत्सभायां यस्य युधिष्ठिरस्य सभायां विजयोऽर्जुनस्तत्कर्तृका या अनुवृत्तिः सेवातया हेतुभूतया या साम्राज्यलक्ष्मीस्तया दुर्योधनोऽतप्यत यमनुवर्तते विजयस्तमेव साम्राज्य लक्ष्मीरप्यनुवर्तते इति बुद्ध्याऽतप्यतेत्यर्थः॥ ३६॥

किं वेति कृतागेषु कृतापराधेषु तत्कृत मघ मपराधं व्यथंभूतं दीर्घतमंबहुकालानुसंचितमहिवदत्यमर्षसहिष्णुर्भीमोऽव्यमुंचत् किंवा अमर्षमिति शेषः अमर्षं मत्यजत् किं इत्यर्थः यस्य भीमस्यांघ्रिपातंपादघातंरणभूर्नेसेहे कथंभूतस्य गदाया विचित्रं मार्गं गतिं चरतः गदां विचित्रं भ्रामयत इत्यर्थः॥ ३७॥

कच्चिदिति रथयूथपानां मध्ये यशोधाः कीर्तिधारकः उपरता निवृत्ता अरयो यस्मात्स उपरतारिर्गांडीवधन्वा आस्ते कच्चित् यस्य गांडीव धन्वनः शरकूटेनबाणसमूहेन गूढः संवृतः अर्जुनेतरैरलक्षितः माया किरातः मायया किरात वेषधरः गिरिशो रुद्र स्तुतोपसंतुष्टः॥ ३८॥

नकुल सहदेवौ पृच्छति एकेन यमाविति पार्थैर्युधिष्ठिरभीमार्जुनैः पक्ष्मभिरक्षिणीवबृतौरक्षितौ अक्षिणीवेति प्रगृह्यत्वाभावआर्षःपृथायाःकुंत्यास्तनयौतनयीयंतौयमौ युगपदभिषिक्तौनकुलसहदेवौ मृधेयुद्धेस्वरिक्थं पराच्छत्रोरुद्दायलब्ध्वारेमाते उतस्वित् परात्स्वरिक्थलाभे दृष्टांतः वज्रिवक्त्रादिन्द्रमुखात्सुपर्णाविव यदि द्वौगरुडावमृतमानयेतां तद्वदित्यर्थः अभूतोपमेयम्॥ ३९॥

पृथायाः कुशलंकिं पृच्छेयं यतस्तस्याःपांडुंविनाप्राणधारणमेवाश्चर्यमित्याह अहो इति तेनप्रसिद्धेन राजर्षिवर्येणपांडुना विनाप्यर्भकार्थे ऽर्भकपोषणार्थं पृथा कुंतीध्रियतेऽवतिष्ठते अहोइत्याश्चर्यं यस्तुपांडुरेकवीरः असहायवीरः धनुरेवद्वितीयं यस्येत्यतिरथः एवंभूतश्चतस्रः ककुभः दिशःविजिग्येजितवानेवंभूतेनपांडुना विनापृथाजीवनमप्याश्चर्यमेव॥ ४०॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली।

धर्मोधर्मपुत्रः। विजयाच्युताभ्यांस्वदोर्भ्यांधर्मेणधर्मशास्त्रमनतिक्रम्यधर्मसेतुंपरिपातिकिमित्यन्वयः यस्ययुधिष्ठिरस्यसभायां दिग्विजयेनानुवृत्तिरनुगमनंयस्याःसातथा विजयादर्जुनादनुवृत्तिर्यस्याःसातथा विजयस्यहरेरनुवृत्तिर्यस्याःसातथातयावा श्रीमदादितरेषांधर्मसेतुलंघनंसंभाव्यतेनास्यतदस्तीतिप्रश्नः ततएवधर्मइतिप्रायोजि॥ ३६॥

भीमःकृतागेषुदुर्योधनादिषुअघंव्यमुंचत्किंवा *पुनरपराधबुद्धिमुत्क्वाऽऽस्तेकिं प्रश्ननिमित्तमाह अत्यमर्षीति तस्यपराक्रममाह यस्येति अंघ्रिपातेनिमित्तमाह मार्गमिति॥ ३७॥

रथयूथपानांयशोदधातीतियशोधा यच्छरकूटेनयस्यशरपंजरेणगूढोनिलीनः माययेच्छयाकिरातः गृहीतशबरवेषः॥ ३८॥

पक्ष्मभिरावृतेअक्षिणीइवपार्थैरावृतौरक्षितौमाद्र्यास्तनयौयमौवज्रिणइंद्रस्यवक्त्रात्सुपर्णौगरुडौसुधामिवमृधेयुद्धेस्ववैरिमुखात्स्वरिक्थंनिजराज्याख्यंधनमुद्धृत्यरेमाते उतस्वित्किमित्यन्वयःसुपर्णावितिदार्ष्टांतिकापेक्षयाद्विवचनम्॥ ३९॥

तेनराजर्षिवर्येणपांडुचक्रवर्तिनाविनारहितापिध्रियते पुत्रैरिति शेषः राजर्षिवर्यत्वंदर्शयति यस्त्विति चतस्रःचतस्रः॥ ४०॥

---

*अघशब्दस्यपापपरत्वभ्रांतिवारणायतात्पर्यप्रदर्शितार्थमाह।

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

अघं क्रोधजं व्यसनं ।"अहो दुःखव्यसनेष्वघमित्यमरः यस्यां श्रीस्वनुमानेनैवोक्तम् ॥ ३६ ॥ ३७ ॥

उद्दायेत्यस्य कर्त्तारः पार्था एव वा तथाहि यौ पार्थैर्वृतौ पाल्य मानौ सन्तौ स्वच्छन्दविहारित्वेन सुपर्णाविव रेमाते ॥ किं कृत्वा वृतौ परात् स्वरिक्थमुद्दाय। कस्मादिव वज्रिणो वज्रहस्तस्य मुखा दिवेत्यभूतोपमा उद्दायेत्यत्र उद्धृत्य इति पुस्यारण्य पाठान्तरम् ३८

सर्वानेव तान् युगपत् पृच्छन् कुन्तीमपि शोचति अहो इति तेषामपि परमसद्गुणानामर्भकाणामर्थे इत्यर्थः ततश्च तेषामेव कुशलेन तस्याश्च कुशलं स्यादिति तदेव वदेति भावः ॥ ३६ ॥

तदेवमजीवन्तं पाण्डुं न शोचामि सद्गत्यर्हत्वात् धृतराष्ट्रं तु जीवन्तमपि तद्विपरीत्याच्छोचाम्येवेत्याह सौम्येति ॥ ४० ॥

---

श्रीमद्वल्लभाचार्य्य कृत सुबोधिनी ।

युधिष्ठिरस्य कुशलंपृच्छति अपिस्वदोर्भ्यामिति असाधनेहेतुः वि जयाच्युताभ्यामिति तौहिनारायणानिरुद्धांशौ धर्मरक्षकौ राजाच धर्मः बाहुभ्यांचात्मारक्ष्यतेतदुक्तं स्वदोर्भ्यामितिविजयोऽर्जुनः अ च्युतोभगवान् सेतुंमर्यादापरंपरागतां धर्मेणविहितप्रकारेण किंप रिपालयतीतिप्रश्नः धर्मत्वेन धर्मतः परिपालनंसिद्धमेवकिं मिति पुनः पृच्छतीत्याशंक्यसिंहासनस्यानर्थहेतुमाह दुर्योधन इति विवि धोजवस्तस्यपरंपरायस्यांतादृशलक्ष्म्याविजयांऽर्जुनस्तस्यानुवृत्त्यासेव यासाम्राज्यलक्ष्म्या चयत्सभायांदुर्योधनोऽतप्यतेतिभिन्नंबाराज्ञस्तुगु णद्वयमधिकमस्तीतिसुतरांतापः संभवतीतिभावः ॥ ३६ ॥

भीमंपृच्छति किंवेति कृतापराधेष्वमर्षी भीमोऽघमतिः किमिति प्रश्नः अघमत्यमर्षीकिमितिवा अघमतिः पापमतिर्मारकइत्यर्थः अघम स्यामारयिष्यामीतिबुद्ध्या अघमपराधंदंडरूपंअत्यमर्षीसीमइतिवाअत्यम र्षित्वेदृष्टांतः दीर्घतमंदीर्घकालचिंतितंपुत्रादिपरंपराविषयमपिचअनेनप्र तिज्ञामीमेन पालितामवा अर्जुनैनवातमारिताइतिप्रश्नः अशक्यंतुतस्य नास्तीत्याह यस्येतियस्यभीमस्यत्रिपातंरणभूः कर्कशापिनसेहेसा दुमशक्ताअंघ्रेः पातः उत्प्लुत्यपतनात्मकस्तस्यावसरमाहमार्गं गदा याश्चरतइति गदाया विविधशिक्षाप्रकारंकर्तुं चरतोगदायुद्धएवो त्प्लुत्यादिप्रकाराः ॥ ३७ ॥

अर्जुनंपृच्छति कच्चिदिति रथयूथपानांयशोधायशोधारकःयशो हेति पाठे सर्वेषांयशोदूरीकरोतीति तत्र सामर्थ्यंगांडीवधन्वेति यशोधाकीर्तिधारीसर्वेषांतन्मारणेनस्वयमेवविभर्त्तीतितथातन्मध्येवा अनेनस्वतः परतश्चसामर्थ्यंसूचितं गांडिवधन्वेतितस्यत्रिपुलोकेप्व प्यरीणां विद्यमानत्वादुपरतारिर्जातो नवेति प्रश्नःसामर्थ्यमाहअल क्षित इति युद्धसंधार्थंमायां किरातोऽतएवालक्षितः अतएव यच्छर कूटेनाच्छन्नः एतादृशसामर्थ्यवतोजयेविलंबकारणांनास्ति प्रतियो गिप्राप्य भावव्यंतिरेकेणातः संदेहः किंसर्वे प्रतियोगिनः प्राप्ता न वेति ॥ ३८ ॥

यमौपृच्छतियमावितिमातृसम्माननशत्रुजयसंदेहाभावेपिस्व तोरमणमस्तिनवेति संदेहात्पृच्छति माद्रीपुत्रावपिपृथायांसमर्प णात्तत्पुत्रौ परादुद्दाय आच्छिद्यसुपर्णौ विवेति ऽभावनयागरुडदृ ष्टांतः वज्रिवक्त्रादिति पीयमानमप्यमृतमानेतुंसमर्थौ यथागरुडौ परादिति वैकल्पिकः छांदसोवातेन शत्रुं जित्वाधनमानयत इति ज्ञापितम् ॥ ३६ ॥

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

कुंतीं पृच्छति अहो इति पृथापि ध्रियते अर्थात्प्राणान् अथवाऽ भर्कश्च अर्भ कार्थे छांद सोनपुंसकभावस्तेन राजर्षिवर्येणपांडु नाबिनापि भर्त्रासहितावैवधनपुत्रौ रक्षणीयौतदभावेपि रक्षणादाश्चर्यंतस्य सामर्थ्यमाहयस्त्वेकवीर इति यस्यसहाया पेक्षा पिनास्तिशत्रुजयेवीरइति स्वयमेव युद्धकर्त्ताअधिरथ इति रथवञ्च्यः सर्वेभ्योवाऽधिकः चतस्रःककुभोविजिग्येविजितवान्सहाये धनुरे वान्यथामंत्रादिवासिद्धयाबाजयःसिद्धोभवेत्तच्चनाश्चर्यकारिअतउक्तं धनुर्द्वितीयइतिएतावता कालेन पूर्वं येषुयेष्वनुरागः स्थितः ससर्वोऽप्युक्तः ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

कृतागेसुकुरुपुत्रकर्तृकमघं विषमिववधहेतुंदीर्घतमंबहुका लानुचिन्तितंकिंव्यमुञ्चत्नोवा ॥ ३६ ॥

रथयूथपानांमध्ये यशोधाकीर्त्तिधारीउपरतारिर्विनष्टशत्रुः स- ञ्चास्ते यच्छरसमूहेनगूढ आच्छन्नः ॥ ३७ ॥

यमौनकुलसहदेवौमाद्राः सुतावपि पृथाया एव तनयौपक्ष्म- भीरक्षिते अक्षिणी इवपार्थैं वृतौ अक्षिणीवेतिमखीवादिः पराच्छ त्रोर्दुर्योधनात्सकाशान्मृधेयुद्धे स्वरिक्थं राज्यं उद्दाय आच्छिद्यरे माते कस्मात्किमाच्छिद्यकाविव वज्रिणश्चक्रादिन्द्रस्य मुखात् रिक्थम मृतमाच्छिद्यद्वौसुपर्णाविवउद्दायेत्यस्यकर्त्तारः एव पार्था एव वा तथा हि पार्थैर्वृतौ पाल्यमानौरेमाते किंकृत्वा वृतौ परात्स्वरिक्थं मादायकस्मादिव वज्रिणो वज्रहस्तस्यमुखादिव सुपर्णा विवेत्य भूतोपमयम् ॥ ३८ ॥

अहोआश्चर्यमत्रकुशलप्रश्नेमयापृथाऽपिध्रियतेइति तस्या अ पिकुशलंब्रूही तिभावः ॥ ननुकिमेवंब्रूपे तत्राह राजर्षिवर्येण पा ण्डुनाख्यपतिनाविनाऽपि अर्भ कार्थे युधिष्ठिरादिबालक पा लनार्थ मेवस्थितायादियुधिष्ठिरादयोऽर्भका नाभविष्यं स्तदा सा अम रिष्यदेवेति भावः यः पाण्डुरेको निस्सहायएव वीरोधनुरेवद्वितीयं यस्यसः ॥ ३६ ॥

धृतराष्ट्रस्यान्धस्य तु कुशलं नैवपृच्छामि किंतु तमधः पतन्तम नुशोचे हे सौम्य उद्धर्वे वः परेताय मृतायापि भ्रात्रे तत्पुत्रद्रोहे णविदुद्रुहे द्रोहं कृतवान् मद्यमपरस्मै भ्रात्रेजीवतेऽपि निर्वासितवान् हे इत्याहनिर्यापित इति सुहृत्तस्यहितकार्यपि ॥ ४० ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

इत्थंयादवानांकुशलं पृष्ट्वाऽथकौरवाणां कुशलंपृच्छति अपीतिप- ञ्चभिः यत्रयस्यसभायांविजयस्य अनुवृत्त्यासेवयाहेतुभूतया याल- क्ष्मीस्तयादुर्योधनोऽतप्यत सधर्मोयुधिष्ठिरःदोर्भ्यांभुजवदनुकूलाभ्यां विजयाच्युताभ्यां अर्जुनवासुदेवाभ्यां धर्मेणराजशास्त्रोक्तेन धर्ममा र्गेणसेतुंपूर्वैः कृतांधर्ममर्यादां अपिकिंक्षितपरिपाति ॥ ३६ ॥

यस्यगदाया विचित्रमार्गंचरतोभ्रमतः अंघ्रिपातंरणभूर्नसेहेस अहिवदत्यमर्षीभीमः कृतागेसुगरदानादिभिः कृतापराधेषु दुर्योध- नादिषुदीर्घतमं बहुकालात्संकल्पितंस्वकर्तृकमघं किंवाव्यमुंचत् ॥ ३७ ॥

सोऽहंहरेर्मर्त्य विडम्बनेन दृशोनृणाञ्चालयतोविधातुः ।
नान्योपलक्ष्यः पदवीं प्रसादाच्चरामि पश्यन् गतविस्मयोऽत्र ॥ ४१ ॥
नूनंनृपाणां त्रिमदोत्पथानां महा मुहुश्चालयतांचमूभिः ।
वधात् प्रपन्नार्तिजिहीर्षयेशोऽभ्युपैक्षताघं भगवान् कुरूणाम् ॥४२
अजस्यजन्मोत्पथनाशनाय कर्म्माण्यकर्तुर्ग्रहणायपुंसाम् ।
नन्वन्यथाकोऽर्हतिदेहयोगं परोगुणानामुतकर्म्मतन्त्रम् ॥ ४३ ॥
तस्य प्रपन्नाखिललोकपानामवस्थितानामनुशासने स्वे ।
अर्थाय जातस्य यदुष्वजस्य वार्त्तां सखे कीर्त्तय तीर्थकीर्त्तेः ॥ ४४ ॥

इतिश्रीभागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां
तृतीयस्कन्धे विदुरोद्धवसम्वादे
प्रथमोऽध्यायः ॥ १ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

माययाआत्मगोपनलीलयाकिरातः अतएवालक्षितः अर्जुनेन शिवोयमित्येवमज्ञातः गिरिशः वत्यस्यशरकूटेनबाणसमूहेनगूढः आच्छन्नः तुतोषसरय्यूयपानांमध्ये यशोधाकीर्तिधारीउपरता अर योयस्माद सतथाआस्तेकच्चित् ॥ ३८ ॥

यमौमाद्रेयौ पृथयापालितत्वात्तत्तनयौपार्थैः युधिष्ठिरादिभिः प क्ष्मभिः अक्षिणीवमर्णीवादिगणत्वात्संधिः इतौरक्षितौपरात् शत्रोः सकाशात् स्वरिक्थंस्वयंभागं उद्दायआच्छिद्य उत्तक्षित् रेमातिक्रीडेते परात्स्वरिक्थादानेदृष्टांतः सुपर्णाविवज्रिवक्त्रादिति यदि द्वौ गरुडौ इंद्रवक्त्रा दमृतमानयेतां तद्वदभूतोपमालंकारः ॥ ३९ ॥

पृथायाः किंकुशलंपृच्छेयं तस्याः भर्तृविहीनायाः जीवनमप्याश्चर्यमित्याह अहोइति यएकवीरः असहायः धनुरेवाद्वितीयं सहायो यस्य सः चतस्रः ककुभोविजिग्ये जितवान् एवं भूतेन तेन पांडुना विनापिपृथा अर्भकार्थं पुत्र पालनार्थं पुत्र पालनव्याजेन अहो इत्याश्चर्यं म्रियते जीवति ॥ ४० ॥

---

भाषाटीका ।

अपराध कारी कौरवों में क्रोधी जो सर्प की नाई अत्यन्त श्वास लेवै गदा ले विचित्र मार्गों में विचरै जिसके चरण की धमक को भूमि न सह सकी सो भीम सेन प्रसन्न हैं ॥ ३७ ॥

रथ यूथपों में यशधारी शत्रु जासे दूर भये ऐसे गांडीव धनुष धारी अर्जुन प्रसन्न हैं अ लक्षित जिन के बाणों सेढ के भये माया से भील बने ऐसे शिव प्रसन्न भये ॥ ३८ ॥

क्यों जी माद्री के पुत्र कुंती ने पुत्रवत् पाले कुन्ती के पुत्रों करके शोभित जैसे पलकें आंखों की रक्षा करें तैसे राखैं शत्रु इन्द्र के मुख से जैसें दो गरुड अमृत लावैं ताकी नाई अपना भाग लेकर नकुल सह देव रमण करैं हैं वे सुखी हैं ॥ ३९ ॥

भाषाटीका

बडे आश्चर्य की वार्त्ता है कि पांडु राजर्षि के विना केवल पुत्रों की रक्षा के लिये कुंती प्राणधारै है जो पांडु एक वीर सब में महारथी एक केवल दूसरो धनुष लेकर चारों दिशा जीतते भये ॥ ४० ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

अहो खलु विस्मयः जानतांऽपि तस्यैवं दुश्चेष्टितं यतस्त्वं साधु रपि दुःखं प्रापितोऽसीत्यत आह सोऽहं हरेःप्रसादात्तस्य पदवीं माहात्म्यं पश्यन् गतविस्मयः । अत्र भूतले । नान्योपलक्ष्यो गूढःसन् सुखं विचरामि । कथम्भूतस्य मर्त्यविडम्बनेन ऐश्वर्य्याच्छादकेन मनुष्यानुकरणेन नृणां दृशश्चत्तवृत्तीश्चालयतः भ्रामयतः ॥ ४१ ॥

ननु हरेः किमेवं लीलया । येन स्वभक्तानां वनवासादिक्लेशा भवन्ति स्वस्य च दौत्ये बन्धनोद्यमादि पराभवः तद्वरं तेषां अपराधानन्तरमेव हननं नापराधोपेक्षेत्यत आह नूनं निश्चितं त्रिभिर्मदैरुत्पथानां असद्वृत्तानां वधाद्धेतोः प्रपन्नानां आर्तिजिहीर्षया ईश अघसमय एव हन्तुं समर्थोऽपि कुरूणामघमुपैक्षत । तदानीमेव तेषां वधे सर्वदुष्टराजवधो न स्यादित्याशयेनेत्यर्थः । विद्यामदो धनमदस्तथैवाभिजनो मदः । एते मदा मदान्धानामेत एव सतां दमा इति त्रयो मदाः ॥ ४२ ॥

सर्वदुर्वृत्तवधार्थमेव भगवतो जन्मकर्म्माणि नान्यथेति कैमुत्यन्यायेनाह अजस्यापि जन्मअकर्त्तुरपि कर्म्माणि पुंसांग्रहणार्थाय कर्म्मसु प्रवृत्तये । अन्यथानचेदेवं तर्हि भगवतो जन्मादिकथा तावदास्तां । कोवाऽन्योपि गुणानां परो गुणातीतो देहयोगं कर्म्मविस्तारंवार्हतीति ॥ ४३ ॥

तस्मादेवम्भूताचिन्त्यमायाविनोदस्य कथां कथयेत्याह । तस्य प्रपन्ना देऽखिललोकपाः तेषां अन्येषाञ्च स्वीये अनुशासने

श्रीधरस्वामिकृत भावार्थदीपिका ।

स्थितानामर्थाय प्रयोजनाय यदुषु जातस्य । तीर्थं संसारतारिणी कीर्त्तिर्यस्येति ॥ ४४ ॥

इति श्रीमद्भागवत महापुराणे तृतीयस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
प्रथमोऽध्यायः ॥ १ ॥

---

श्रीराधारमणदासगोस्वामि विरचित
दीपिन्याख्य तट्टिप्पणी ।

धृतराष्ट्रंजीवन्तमिति अजीवन्तमपि पाण्डुंनशोचामिसंगत्यर्हत्वादितिसूचितम् ॥ ४१ ॥

माहात्म्यं जानतोपि धृतराष्ट्रस्यस्वमायया‌ऽव्यामोहकत्वंगतविस्मयअहोभगवन्मायायां किमशक्यमितिविगताश्चर्य्यस्सन् अत्रेदंतत्वं दुर्योधनानिस्सारणसमयेविदुरेणविचारितम् अहोभगवद्विमुखसङ्गदुष्टेनमयासहसा भगवदभिगमनेत्रपासागरं कथंमज्ज्यतेदुस्सङ्ग प्रायश्चित्तात्मक तीर्थयात्राव्रतादिकमेवकर्त्तव्यं किंतुतद्वियोगाधिः कथंसोढव्यइतिविकलोभूत्वा हेपार्थसखे हेदीनदयालो भक्तवत्सलहाहन्तत्वद्वियोग विषज्वालया ज्वलन्तिदिनानि कथंनयामिइति फूत्कृत्यमुहुरुरोदतदा प्रत्यक्षीभूयभगवतोक्तम् भोपाण्डवप्राणरक्षक भोमद्भक्तपक्षपातिन् भोदुस्सङ्गदोषगन्धशून्यमत्प्रियपितृव्य विदुर मद्विरहेणकिमित्येवं खिद्यसियत्रत्वंयास्यसितत्रैव तीर्थंत्वदग्रेचलन् संवदन्आत्मानंदर्शयन्नहमपि तीर्थयात्रांकरिष्यामि माखिदेतिभगवतावरोदत्तइत्यनुमीयते अन्यथायादमात्रगमनेमूर्छाताहशानांस्यात् अतएवदुर्योधनवधानन्तरं युधिष्ठिरराज्यप्राप्ति श्रीकृष्णस्यैवतत्रस्वाराज्यंश्रुत्वापिसाक्षात्तद्दर्शनानन्दमत्तेनतेननायातम् अन्यथावश्यमायास्यतैव किन्तुमौशलवलीलान्तेप्रपञ्चाद्भगवद्दं तर्द्धानेविदुरनेत्राद्दर्यंतर्धानमितिज्ञायतेइति तदवधिविदुरस्यवैकल्यमतएवप्रसादात्ताहशवरलक्षणात् पदवींचरणविन्यासवर्त्मेत्यपिव्याख्येयम् ॥ ४२ ॥

येन. लीलाप्रकारेण तत्तस्मात् तदानीमेव अपराधानंतरमेव तेषांकुरूणाम् ॥ ४३ ॥

दुर्वृत्ताः दुराचाराः आदिनासुकर्मप्रवृत्तेर्ग्रहः अन्या० जीववत्कर्मपारतन्त्र्येण अजस्यप्राकृतजन्मरहितस्यापि जन्माविर्भावमात्रं अकर्त्तुः अपूर्त्तस्यनिजपूर्त्यर्थं चेष्टाकर्मतद्रहितस्यापिकर्माणि स्वरूपानन्दोल्लासमयानिचेष्टितानि कर्मसुसदाचारेषु प्रवृत्तये शिक्षणायेत्यानुषङ्गिकं प्रयोजनंवस्तुतस्तुग्रहणाय० स्वस्मिन्मनसआकर्षणाय नचेदंवंयदि दुर्वृत्तवधादिप्रयोजनंनस्यात् अन्योपिपार्षदादिरपिदेहेन्द्रियादिशून्यानामित्युक्तेर्गुणातीतः देहयोगंप्राकृत पित्रादिचर्मधातुप्रवेष्टदेहसम्बन्धं प्राकृतविषयविषार्थं कर्मविस्तारंचकोऽर्हति किमुतभगवानित्यर्थः तस्माद्भगवतस्तद्भक्तानांच जन्मकर्माणि परमालौकिकानि स्वरूपशक्तेर्विलासरूपाण्येवेतिभावः ॥ ४४ ॥

यस्मात्परमालौकिकान्यंव तस्यजन्मकर्माणितस्मात् एवंभूतात्वेपिअकर्त्तृत्वेपि वास्तवजन्मकर्मप्रकाशिका अतएवाचिन्त्यायामायास्वरूपशक्तिस्तयाविनोदः क्रीडायस्यतस्य जन्मादिकथांकथयेत्याह तथाचवियोगाब्धौ पतितस्यममेदानीं तस्यजन्मादिकथैव निस्तारिणीति भावः ॥ ४५ ॥

इति श्रीमद्भागवते तृतीयस्कन्धे दीपिकादीपने
प्रथमोऽध्यायः ॥ १ ॥

---

श्रीमद्वीरराघवाचार्य्य कृत भागवतचन्द्रिका ॥

धृतराष्ट्रमनुशोचति हे सौम्य उद्धवपरेतायपरलोकंगतायभ्रात्रेपांडवे यांदुदुहे तत्पुत्रेभ्योद्रोहकरणेनतस्मा एव द्रोहंकृतवानित्यर्थः अतएवाधः नरके पतंतधृतराष्ट्रमनुशोचे येनधृतराष्ट्रेणसुहृन्मित्रमहंपुर्याः निर्यापितः येनकथं भूतेनस्वस्य पुत्रान्दुर्योधनादीन्सम्यगनुव्रतेनस्वपुत्रानुसारिणेत्यर्थः ॥ ४१ ॥

एवंयादवपांडवकौरवाणां कुशलंपृष्ठ्वास्वप्रस्थानप्रकारमाह सइति सोहंतननिर्यापितोहंमर्त्यविडंबनैनैश्वर्याच्छादकमर्त्यानुकारेणनृणांदशेर्हष्टोश्चित्तवृत्तीः ताश्चालयतःभ्रामयतः विधातुर्जगन्नियंतु र्हरेः श्रीकृष्णस्यप्रसादादनुग्रहात्यदर्वांताद्विभूतिं जगत्पश्यन्नतएवगताविस्मयः निवृत्ताश्चर्यः अत्रभूतलेनान्योपलक्ष्यः प्रच्छन्नश्चरामि ॥ ४२ ॥

नन्वयंश्रीकृष्णोविधाताभक्तानुग्रहीताचेतिकिमितिपार्थान्स्वभक्ताननुजग्राहकिमितिवाकौरवान्स्वांसमनृद्धेपिणोननिगृहीतवानित्यतआहनूनमितित्रिमदःअभिजनवित्तविद्यामदःयद्वाधनैश्वर्यसैन्दर्याणांमदःतेनोत्पथानांउद्धतानांचमूभिःसेनाभिःमहींपुनश्चालयतांनृपाणांवधाद्धेतोःप्रपन्नानांपांडवानामार्त्तेः पीडायाजिहीर्षयाहर्त्तुमिच्छयाईशोप्यघसमयएवहंतुसमर्थोपि भगवान्कुरूणाममघंपराधंउपैक्षत तदानीमेवेतेपांवधो असज्जनराजन्यवधंनस्यादित्याशयेन प्रतीक्षितवानित्यर्थः नूनंनिश्चितम् ॥ ४३ ॥

ननुजगन्नियंतुर्भगवतः किमर्त्यविडंबनेनप्रयोजनमित्यतआह अजस्येति अजस्यकर्मायत्तोत्पत्तिरहितस्यजन्म अकर्मायत्ताप्राकृच्छेच्छिकदिव्यविग्रहरूपंजन्मउत्पथानांनाशायाकर्त्तुःकर्माधीनकारणायत्तव्यापाररहितस्यकर्माणिपुंसांग्रहणायलोक संग्रहायेत्यर्थःअन्यथादुःकृतविनाशाद्यर्थं जन्मादिकं न चेत्तर्हि हे उद्धवगुणानांसत्वादीनांपरः नियंतागुणावश्यइत्यर्थः देहंकर्मकृतंदेहकर्मतंत्रंकर्मविस्तारंचकोऽर्हतिअतोनकर्मावत्त जन्मकर्मा दिकंअपितू त्पथनाशाद्यर्थं मित्यर्थः ॥ ४४ ॥

एवंसाधुपरित्राणाद्यर्थमवतीर्णस्याश्रितवात्सल्यजलधेः वार्त्तां कथयेतिउपसंहरति तस्येति स्वस्वकीयेऽनुशासनं आज्ञायामास्थितानामाज्ञानुल्लंघिनामित्यर्थः प्रपन्नायेऽखिललोकपालाइंद्रादयस्तेषामर्थायप्रयोजनाययदुषुजातस्यावतीर्णस्याजस्यकर्मावश्योत्पत्तिशून्यस्यतीर्थकीर्तेः पवित्रकीर्त्तेः तस्यभगवतःश्रीकृष्णस्यवार्त्तांवृत्तांतं हेसखेउद्धवकीर्त्तयकथय ॥ ४५ ॥

इति श्रीमद्भागवतमहापुराणेतृतीयस्कंधे ॥
श्रीमद्वीरराघवाचार्य्यकृतटीकायां
प्रथमोध्याय ॥ १ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

परेतायमृतायभ्रात्रे पांडवे क्रुधद्रुहेर्ष्यासूयार्थानां संप्रतिकोपइतिचतुर्थी सुहृत्प्रत्युपकारकर्त्ता ॥ ४१ ॥

विधातुःकृष्णस्यपदवींनिवृत्तिमार्गंचरामि पश्यन्संसारिणांक्लेशमितिशेषः ॥ ४२ ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

ननुकंसादिवधवत्कुरूणांहननंझटितिकिमिति नकृतंनकारितंचे त्याशंक्यप्रयोजनांतरसद्भावादुपेक्षित मित्याशयेनाह नूनमिति भगवा न्कुरूणामघमपराधमुपैक्षत नूनमुपेक्षितवानितितर्कयामि तर्कनिश्च ययोर्नूनमितियादवःतद्धननासामर्थ्यान्नेत्यतउक्तंईशोहीति तर्हिकिं निमित्तमितितत्राहिनृपाणामितित्रिमदाद्विद्याधनाभिजननिमित्तान्म दादु पथानां संतंपंथानमपहायवर्तमानानांचभूभिरनेकाक्षौहिणी गणितांभिर्मुहुर्महींचालयतां नृपाणां कंसादीनांवधाद्धेतोः तद्वध प्राथम्येपीदंनिमित्तमित्याह प्रपन्नेति प्रपन्नानांदेवावताराणांवसुदे वादीनामार्तिजिहीर्षयाऽसह्यदुःखहरणेच्छयाकारणेन अनेनहरेः प्रवृत्तिर्भक्तार्थाभक्तानुसारीणातिदर्शितंभवति ॥ ४३ ॥

भक्तार्थश्चभूभारायितदुष्टजननिधनं यत्तदेवावतार प्रयोजन मितिभावेनाह अजस्येति अजस्यविष्णोर्जन्मावतारः उत्पथनाशना नायकंसादिनिधनाय प्रयोजनांतरंचास्तित्याह कर्माणीति फल मनुसंधायाकर्तुः स्वतएवसृष्ट्यादेःकर्तुर्हरेः कर्माणिजगत्सर्जनादिल क्षणानि पुंसांशरणागतानां ग्रहणायश्रवणमननादिरूपजिज्ञासायै हरिःकर्ताप्यकर्तेतिफलाभावेनभवत इति बालवल्लीलार्थंदेहंगृह्णा तीतिकिंनस्यादितीमंपक्षमाक्षिपति नत्विति अन्यथाभक्तजनग्रहणा दिकमंतरेणस्वप्रयोजनमपेक्ष्य नैव कुतः । असंभवात् तथाहिकः पुरुषः शुक्रशोणितसंपृक्तदेहंप्रत्यर्हति नकोऽप्यर्हति हरिरर्हतीति नेत्याह परइति गुणानांसकाशात्परस्तदतीतस्त्वेनोत्तमः गुणसं सर्गोऽपिनास्तीति गुणानामितिषष्ठी सदेहइतिहरेर्देहित्वप्रतीतेः कोहेतीतिकथमाक्षिप्यतेइत्यतउक्तंकर्मेति मनुष्यादिदेहयोगाघसं भवेपिदेवादिशरीरयोगःस्याद्वेत्यनउक्तं उतेति उतात्यर्थविकल्प योरिति विकल्पोऽपिनघटतइत्यर्थः नदेहयोगादिजनिर्विष्णोर्व्यक्ति जनिः स्मृतेतिविशेषवचनाद्देहयोगांगीकारपक्षोगर्हितइतिभावः ॥ ४४ ॥

किंबहुनोकेनेतिविदुरः स्वामीष्टंवक्ति तस्येति ॥ ४५ ॥

इतिश्रीमद्भागवत महापुराणे तृतीयस्कंधे
श्रीमद्विजयध्वजकृतटीकायां
प्रथमोऽध्यायः ॥ १ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

अहन्तु तत्सङ्गेऽपि भगवत्प्रसादाच्च तादृशाज्ञानवान् । अत्यन्तसङ्गं त्यक्त्वा तद्वार्त्ताश्रवणेऽपि निर्विण्णः सन् लोकेष्वात्मानं गोपयंश्चरामीत्याह सोऽहमिति । गतविस्मयः गतसन्देहः । अथ विदुरस्य श्रीकृष्णे परमपरायणस्यापि व्यवहारमात्रदृष्ट्या श्रीकृष्णपरित्यागेन यावज्जीवं दूरगमनमिदं श्रीकृष्णेनैव कारित मिति लक्ष्यते तच्च धृतराष्ट्रादिव्यवहारावेशपरित्याजनाय स्वैक मात्रावेशाय च पश्चात्तापं सम्पादयितुमिति अतः पूर्वं योविदु राभिप्रायो व्याख्यातः सोऽपि तदिच्छयैव जात इति ज्ञेयम् ॥ ४१ ॥ ४२ ॥

अजस्य जन्मेत्याविर्भावमात्रं तदित्यर्थः । अकर्त्तुः कर्म्माणीति स्वैरलीला इत्यर्थः । पुंसां सर्वेषां ग्रहणाय स्वस्मिन्मनस आकर्ष णाय । यथोक्तं पञ्चमे । यल्लीलां मृगपतिराददेऽनवद्यामादातुं स्वज नमनांस्युदारवीर्य इति । अतो देहयोगमिति पितृत्वेन स्वीयांक्रयमा णानां देहेष्वाविर्भावमात्रमित्यर्थः । गुणानां परः कः पार्श्वदा दिरपि ॥ ४३ ॥

हन्त हन्त सा दुर्वार्त्ता मया प्रभासे श्रुतैव तदाप्युत्तरमदद्वाने ऽपि त्वयि प्रत्ययवत् यत् स्पृष्टं तत् खलु विलपितमेव तस्माज्जन्मा दिलीलामेव तद्विस्मरणाय श्रोतुमिच्छामीत्याह तस्येति ॥ ४४ ॥

इति श्रीमद्भागवतमहापुराणे तृतीयस्कन्धे
श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भे
प्रथमोऽध्यायः ॥ १ ॥

---

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

सांप्रतंद्वेषमनुवदति तत्रप्रथमंधृतराष्ट्रंशोचाति सौम्यानुशोच इति सौम्येतिसंबोधनं मित्रत्वज्ञापनाय मित्रस्यस्थाने अवक्तव्यंनवक्त व्यमिति सएवस्वयमधः पतन्शोचतितमन्वहमपितंशोचामि शोकेतु अधःपतनमेवहेतुः भ्रात्रेपरेतायच दुद्रुहेइतिजीवदृशायामप्यपकृतौ मरणानंतरमपितनयस्य द्रोहेणापकृतःजीवन्भ्राता अहमप्यपकृत इत्याह निर्वापितइति मयात्वपकारोनकृतइत्याहसुहृदादिति स्वनगरा देवाहंनिर्यापितः पुत्रद्वारापिकृतस्त्वकृतमेवयतः पुत्रान्स्वयमनुसृतः एवंजीवन्मृतभ्रातृद्रोहादधःपात इति शोचेइदानीमपि शोचामि तत्र मरणमस्तिनवेतिप्रश्नः एवमपकृतगेहेस्थितवाजीवतीति ॥ ४१ ॥

ननुयथापुत्रापराधिनः समर्थापेक्षया धृतराष्ट्रस्यापराधित्वंतथा तवाप्युपेक्षादोयदुष्टत्व मित्याशंक्यधृतराष्ट्रभीष्मद्रोणादीनां वासु देवमोहितानां प्रतिपक्षशंकयाखहितमेव कृतवानहमित्याह सोहमि तिसोऽहमेवधृतराष्ट्रादिभिरपकृतोविधातुः प्रसादाद्गतविस्मयएवच रामि अत्राप्यर्थसंदेहःकियुक्तमयुक्तमिति सर्वदुःखहर्त्ताभगवान्सहि यथासुखंसर्वाभ्युदयनिःश्रेयसादिषुयोजयति तत्रयंप्रवृत्त्यासुखा धिकारिणोनिवृत्त्यासुखमिच्छंति तान्वामोहयति भगवान्नृणांसंबंधि यन्मर्त्यदेहस्तस्य विडंबनेनानुकरणेननृणां विधातुरितिवाकपटमा नुषचेष्टयानृणांहशश्चालयितुः यदिनव्यामोहयेत्तदातेषां सृष्टिकथं कुर्यात्पुनः पुनः सृष्ट्यर्थंताव्यामोहयतीत्यर्थः यथाभगवान्केनापिन ज्ञातस्तथाहमपिनान्येनोपलक्ष्यः अतएवभगवत्प्रसादोमय्यप्यस्तीति ज्ञायते अतस्तत्प्रसादसूचको विस्मयाभावः वहि स्तत्प्रसादसूचको लोकेज्ञानाभावोऽतएवाम्येवद्भ्रमारिता अहंविचरामीतिनृणांभीष्मा दीनामंतःकरणवृत्तीर्भ्रामयति प्रसादात्कृतत्वप्यपराधिकंतदिच्छये तिजानन् गताभिमानस्तत्प्राप्त्युपायं तीर्थाटनंकरोमीत्यर्थः ॥ ४२ ॥

ननुसर्वसमर्थःपरमेश्वरःकथमुपेक्षितवानित्यतआह नूनमिति यद्यपिभगवान् दुष्टनाशार्थमेवावतीर्णः स्तथापियोदुर्योधनादीन्नह तवान्स्वयंप्रपन्नार्तिजिहीर्षया शरणागतभीमादिप्रतिज्ञापूरणार्थमि त्यर्थः त्रिमदाः विद्याधनाभिजनाख्याः विद्यामदोधनमदस्तथैवाभि जनोमदइति तेनत्रिमदेनोत्पथानांनृपाणांवधात्प्रत्यब्लोपेपंचमीवधं कृत्वापि कुरूणांवधाद्धपेक्षांकृतवान्कुरूणांवधमकृत्वैवस्थितोयत स्तेषामघमपराधमुपेक्षितवान् यतईशः भक्तद्वारापिमारयितुं समर्थः ॥ ३४ ॥

### श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

एवंभगवच्चरित्रंसर्वमेवाहंतत्प्रसादाज्जानामीतिस्वज्ञानं निरूप्य भगवत्स्वरूपमपिजानामीत्याह अजस्याकर्त्तुश्चजन्मानिकर्माणिचो त्पथानांदुष्टानांनाशायसतां शिक्षणायचनहिसूर्योत्पत्तिव्यतिरेकेणां धकारोनश्यतिनहिभगवदाचरणव्यतिरेकेणकश्चिद्धर्ममाचरतिअतो दुष्टनिग्रहशिष्टपरिपालनार्थंभगवतो । जन्मानिकर्माणिविरुद्धा- न्यपिजायंते अन्यथाकर्मपारतंत्र्यरहितःकथंजन्म स्वीकुर्यात्अनेनसा धारणपक्षोज्ञायतेस्वेच्छयाजानि तेदेहेअग्निवद्भगवदावेशइतिगुणानाम पिपरइत्यनेनगुणजनितकर्मपरतंत्रःकथंभवेदितिमहद्वैलक्षण्यंसूचि- तंदेहमात्रस्यैवकर्मपरतंत्रत्वंमन्यंतोयथासर्वमेवकाष्ठमानीतंतत्रप्र- विष्टोऽग्निरपिसुतरामनित्याविर्भावोभवतीतिभावः यथावाभार्यादे होभर्तृवशोपिभार्याजीवाधीनएवतथेश्वरपरिगृहीतोपिदेहःकर्माधी- नएवेतिकेषां चिन्मतं तथायमपिमन्यते तदपिदूषयिष्यत्युद्धवः ॥ ४४ ॥

एवंस्वस्यसर्वबुद्धिमत्त्वात्तेनाधिकारेदेहहेतुभूतवायुसंस्कारं- निरूप्यसंस्कृताकाशसिद्ध्यर्थंभगवच्चारित्रंपृच्छति तस्येतिप्रपन्नाखि ललोकपानां प्रपन्नाश्चतेअखिललोकपाश्चसर्वेहींद्रादयोभगवत्प्रप- न्नास्तदाज्ञाकारिणश्चातस्तेषांकार्यार्थमाविर्भूतस्ययदुकुलेवस्तुतोज- न्मरहितस्यवार्त्तांकथयेतितृतीयःप्रश्नः तीर्थयात्रार्थंकृतसंकल्पःकथ मन्यच्छ्रोष्यतीत्याशंक्याह तीर्थकीर्त्तेरितितीर्थरूपाकीर्तिर्यस्यसखेइ तिसंबोधनंयुक्तमयुक्तंवापृष्टंवक्तव्यमेवेति ज्ञापनार्थंएवंभगवच्चारित्रं भगवदीयानांचारित्रंशुश्रूषुः प्राप्तसत्संगतीर्थायतनैःकृतपुण्यपुंजोदेहं योग्यंप्राप्याधिकारीभवतीतिभगवदाधिकस्संगोनिरूपितः ॥ ४५ ॥

इति श्रीमद्भागवत सुबोधिन्यां श्रीमल्लक्ष्मण भट्टात्मज
श्रीवल्लभ दीक्षित विरचितायां तृतीयस्कन्धे
प्रथमाऽध्याय विवरणम् ॥ १ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

किञ्च । मयि तस्य द्रोहो न ममापकारकोऽभूत् प्रत्युत परमोपकारक एवाभूदित्याह सोऽहमिति । मर्त्यानां धृतराष्ट्रादीनां स्वप्रसादालम्भनाद्विडम्बनेन वञ्चनेन नृणां तत्सदृशानामन्येषामपि प्राकृतानां दृशो बुद्धिवृत्तीश्चालयतो भ्रमयतः हरेः प्रसादात् तत् पदवीं तस्य चरणविन्यासवर्त्मचरणौच पश्यन् भक्तवत्सलस्य भगवतः कियदेतदाश्चर्य्यमिति गतविस्मयः काप्येतद्रहस्यानुद्घाटनादनन्योपलक्ष्यः सन् अत्र तीर्थेष्वेव चरामि अत्र दुर्योधननिःसारितस्य खेदसमुद्रे निमज्जतो विदुरस्य प्रत्यक्षीभूय भगवता तस्मिन्नेव काले एवमुक्तं भो मत्परमभक्त विदुर मद्विरहमनुस्मृत्य किमित्येवं खिद्यसे यत्र यत्र त्वं यियाससि तत्र तत्रैव तीर्थे तदग्रे चलन्तं त्वया सह कृतसंवादमेव मां पश्यन्नेव यास्यसीति भगवद्वरोऽनुमीयते अतएव दुर्योधनवधानन्तरमपि युधिष्ठिरराज्यप्राप्तावपि भगवद्दर्शनानन्दनिर्वृतेनैव विदुरेण नायातमन्यथा अवश्यमायास्यतैव । किञ्च मौसललीलान्तेऽन्तर्दधता भगवता विदुरनेत्रादप्यन्तर्हितं । अतएव तदवधि उद्धवदर्शनपर्यन्तं विदुरस्य वैकल्यम् ॥ ४१ ॥

ननु भगवतः किमेवं लीलया येन स्वभक्तानां वनवासादिक्लेशा भवन्ति । स्वस्य च दौत्ये बन्धनोद्यमादिपराभवः तदुत्तरं तेषामपराधानन्तरमेव हननं नापराधोपेक्षेत्यत आह न्यूनमिति । त्रिभिर्मदैरुत्पथानामुद्धृत्तानां वधादेव प्रपन्नानामार्त्तिजिहीर्षया ईशः अघसमये हन्तुं समर्थोऽपि कुरूणामघमुपैक्षत । तदानीमेव तेषां वधे सर्वे दुष्टराजन्यवधो न स्यादित्याशयेनेत्यर्थः । विद्यामदो धनमदस्तथैवाभिजनो मदः । एते सदा मदान्धानां तएव हि सतां दमा इति त्रयोमदाः ॥ ४२ ॥

ननु चिद्घनानन्दरूपस्य भगवतः किमेवं प्राकृतलोकभद्राभद्र मध्यवर्त्तित्वेन सत्यं स्वभक्तेषु वात्सल्यं अन्यत्र सर्वत्रापि हितैषित्वमिति द्वावेव तत्र हेतू इत्याह अजस्य जीववन्मायाधीनतया जन्मादिविकाररहितस्यापि जन्म योगमायया भक्तप्रेमाधीनतया जन्मादिविलासवत्त्वं उत्पथानां सन्मार्गच्छिदामसुराणां नाशनाय स्वकर्मकनाशनेन तेषां मोक्षदानाय अकर्त्तुः नास्य कर्माणि जन्मादावित्युक्तदिशा सत्त्वादिगुणनिबन्धनकर्तृत्वरहितस्यापि कर्माणि चिदानन्दमयानि गोवर्द्धनोद्धरणादीनि । पुंसां स्वभक्तानां सर्वत्र स्वर्गमोक्षादिसुखेष्वपि विरक्तानां ग्रहणाय आस्वादनीयत्वेन स्वीकाराय । यद्वा । पुंसां मुक्तमुमुक्षुसंसारिकाणामपि जीवानां ग्रहणाय स्वस्मिन्नाकर्षणाय निवृत्ततर्षैरुपगीयमानादित्यादेः । नत्वन्यथा जीवानां स्वकर्माधीनमेव यथा जन्म कर्म्म न तथा इत्यर्थः । कर्म्माधीनजन्मकर्मवत्त्वे देहेनापि तस्य सम्बन्धः कर्माधीन एव स्यात् । सच देहयोगो गुणातीतभक्तिसिद्धजीवस्यापि नास्ति किं पुनः साक्षात् परमेश्वरस्य तस्येत्याह गुणानां परः गुणेभ्यः पृथग्भूतः सन्नपि कः खलु जीवोऽपि कर्मतन्त्रं कर्माधीनं देहयोगं अर्हति अपि तु न कोऽपि अत्र कर्मतन्त्रं देहयोगं नार्हतीत्युक्ते अकर्मतन्त्रं देहयोगमर्हतीत्यर्थो लभ्यते । तस्य परमेश्वरस्य तु मायया सहयोगासम्भवात् तद्देहस्य चिदानन्दघनत्वं स्वतएवायातम् ॥ ४३ ॥

अतस्तस्य चिद्घनानन्दरूपाणि जन्मकर्म्माण्येव कथयेत्याशयेनाह तस्य प्रपन्ना येऽखिललोकपालास्तेषामन्येषाञ्च स्वीये अनुशासनेस्थितानां अर्थाय प्रयोजनाय । तीर्थं परमपावनी संसारतारिणी च कीर्त्तिर्यस्य तस्य । सर्वेषु तीर्थेषु प्रायः कृतमज्जन एवास्मि । सम्प्रति त्वं तेषां साफल्यमुपादाय कृष्णस्य कीर्त्तितीर्थामृते मां निमज्जयेति भावः ॥ ४४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
तृतीये प्रथमोऽध्यायः संगतः संगतः सताम् ॥

---

### श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

पृथा विष्णुभक्तपुत्रार्थेजीवति अतस्तस्यांजीवनस्यपुण्यावहत्वात् सुतासापुण्यलोकंगामिष्यत्यतस्तांनशोचेज्ज्येष्ठं भ्रातरंतुशोचेयत स्तज्जीवनस्यपापावहत्वात् मृतः सपापलोकंगतेत्याशयेनाह सौम्येति हेसौम्य यःपरेतायमृतायभ्रात्रेपांडवेतत्पुत्रद्रोहेण विद्रुद्रुहेद्रोहंकृतवान् येनैवसुहृदनुकूलः भ्राताअहं स्वपुर्याः सकाशात् निर्यापितः विवासितः तमधः पतंतंधृतराष्ट्रम् अनुशोचे ॥ ४१ ॥

एवंयादवानां कौरवाणांचकुशलंपृष्ट्वानृणांपुत्राद्यनुरागेणमह दुपेक्षादिरूपोमोहस्तत्कर्मानुसारि भगवदिच्छयैवेतिवदन्स्वस्यतीर्थाटनप्रयोजनविशेषमाह सोहमिति विधातुःप्राणिकर्मफलविधानकर्तुः मर्त्याविडंब

श्रीमच्छुकदेव कृत सिद्धांतप्रदीपः ।

नेनयेनपरमेश्वरेणजीवानांमर्त्यत्वभ्रमस्तेनमर्त्यानुकरणेननृणांधृत-राष्ट्रादीनांदृशोदृष्टाःमहांतःकथंचित्पृथग्भूताअपिस्वादरणीयादुर्वृत्ताःपुत्राद्यंऽप्युपेक्षणीया इतिशिष्टव्यवहारतश्चालयतःहरेःपदवींप्राप्तिमार्गंतत्प्राप्तिसाधनोपदेष्टारपुरुषांमत्यर्थःपश्यन्मृगयन्चरामिकथंभूतःनान्योपलक्ष्यःगूढःत्वदूरोऽयंचरतीतिपरैःस्वकीयैर्वामज्ज्ञानेतुतत्रविघ्नस्यादितिभावः॥ ४२ ॥

नन्वसकृदपराधकारिणोदुर्वृत्ताः कौरवाः प्रथमापराधंकुतोनविगृहीताइत्यतआह नूनमिति नूनंनिश्चितम् त्रिभिर्विद्याधनाभिजनहेतुकैर्मदैः उत्पथानामुद्धतानांमहींचमूभिर्मुहुश्चालयतांभूभारभूतानांनृपाणां वधाद्धेतोः प्रपन्नानांतत्तद्दुष्टनृपेहतुकीर्त्तिंजिहीर्षयाईशःप्रथमापराधसमये एवनिगृहीतुमीशःसमर्थोऽपिकुरूणांदुर्योधनादीनामघमपराधमुपैक्षत प्रथमापराधेदुर्योधनादिनिग्रहेपांडवाना मेवार्त्तिनिवृत्तिःस्यान्नान्येषांप्रपन्नानांतस्मात्सर्वदुष्टनृपनिग्रहार्थंकुरूणामघमुपैक्षतेतिफलितार्थः ॥ ४३ ॥

यतः अजस्य कर्मफलभोगनिमित्तकजन्मरहितस्य उत्पथनाशनायअपाकृतदेहस्य वसुदेवादिपुत्रत्वेन प्रकटीकरणंजन्म अकर्त्तुःफलभोगनिमित्तककर्माकर्तुः पुंसांग्रहणायकर्मरुच्युत्पादनायकर्माणिअन्यथातुईश्वरप्रयोजनाभावेतुनतुनिश्चितम् भगवतो जन्मकर्मवार्ताबावदास्तां गुणानांपरः प्रकृतिमंडलबाह्यः मुक्तोजीवोऽपि देहयोगंदेहैः पित्रादिदेहैर्योगंपुत्रत्वेन संयोगं कर्मतन्त्रं कर्मशास्त्रं कर्मनिष्ठामित्यर्थः । कोऽर्हतिनकोऽपीत्यर्थः प्रपन्नोपकारार्थं तु मुक्ताअपि जन्मानि कर्माणि भगवदाज्ञयास्वीकुर्वंतीति भावः ॥ ४४ ॥

तस्मादेवं भूतस्य प्रपन्नाये अखिला सर्वलोकपास्तेषाम् अन्येषांचस्वेऽनुशासनेस्थितानाम् अर्थायोपकाराययदुषुजातस्यकृताविर्भावस्यतीर्थकीर्तेः पवित्रयशसः वार्त्तांवृत्तांतं हेसखेकीर्तयकथय ॥४५॥

इति श्रीसनत्कुमारसंतति प्रवर्तकभगवन्निंबार्कचरणचिंतक
शुकसुधीप्रणीते श्रीमद्भागवतसिद्धांप्रतदीपे
तृतीयस्कंधीयेप्रथमाध्यायार्थप्रकाशः ॥ १ ॥

---

भाषा टीका ।

हे सौम्य उद्धव नरक में गिरने वाले धृतराष्ट्र को मोय वडा शाक है कि मरेभये पांडु से जानें द्रोह कीनों उसी धृतराष्ट्र नें पुत्र के आधीन होकर हमको हास्तिनापुर स निकाल दीह्नों ॥ ४१ ॥

मनुष्यों में अवतार धारकर मनुष्यों की दृष्टिको चलायमान करै सव के धारक श्रीहरि के प्रसाद सें तिन की पदवी कों देखतोभयो कोई नदेखे इसतरह अपने रूपको छिपाकर सब विस्मय जिसको गयो ऐसो म या पृथिवी में विचरूंहूं ॥ ४२ ॥

विद्याधनजाति मदवाले और सेनासे सव पृथ्वी को चलायमान करने वाले राजानको वधकरनेसे शरणागतों की पीडा हरने को भगवान् कौरवों के अपराधन को उपेक्षा करते भये ॥ ४३ ॥

अजन्मा ईश्वर के जन्म पाखंडियों के नाशार्थ हैं और अकर्त्ता के कर्म पुरुषों के ग्रहणार्थ हैं याके विना गुणों से पर जो ईश्वर हैं उनको विना कर्म के वशहोनो और देह धारण करनो संघटित नहीं होता है ॥ ४४

हे सखे शरणागत सव लोक पालन के और अपनी आज्ञा में स्थित जोहेंउन के अर्थ यादवों में प्रगट तीर्थ रूपजिनकी कीर्त्ति ऐसे श्रीकृष्णजीकी वार्ताकहो ॥ ४५ ॥

तृतीयस्कन्ध का प्रथम अध्याय समाप्त ॥

---

इति तृतीयस्कन्धे प्रथमोऽध्यायः ।

# द्वितीयोऽध्यायः ।

श्रीशुकउवाच ।

इतिभागवतःपृष्टः क्षत्त्रावार्त्तां प्रियाश्रयाम् ।
प्रतिवक्तुं नचोत्सेहे औत्कण्ठ्यात् स्मारितेश्वरः ॥ १ ॥
यःपञ्चहायनोमात्रा प्रातराशाययाचितः ।
तन्नैच्छद्रचयन् यस्य सपर्य्यां वाललीलया ॥ २ ॥
सकथं सेवया तस्य कालेन जरसंगतः ।
पृष्टोवार्त्तां प्रतिब्रूयाद्भर्त्तुः पादावनुस्मरन् ॥ ३ ॥
समुहूर्त्त मभूत्तूष्णींकृष्णांघ्रिसुधयाभृशम् ।
तीव्रेण भक्तियोगेन निमग्नः साधुनिर्वृतः ॥ ४ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

द्वितीयेकृष्णविश्लेषा दनुशोचन्नथोद्धवः ।
चक्रेबालचरित्राणि कृष्णस्यावर्णयन्श्वसन् ॥ १ ॥

तदेवं प्रियवार्त्तां पृष्टस्य उद्धवस्य श्रीकृष्णविरहौत्कण्ठ्यावेशेन प्रतिवचना सामर्थ्यमाह षड्भिः इतीति स्मारित ईश्वरोयस्य ॥ १ ॥

एतदेवकैमुत्यन्यायेन प्रपञ्चयतियइति द्वाभ्यांयःपञ्चवर्षोऽपिवाललीलयेति कृष्णंकञ्चित् परिकल्प्यपरिकल्पितैरेवसाधनैःपरिचर्यां कुर्वन् मात्राप्रातर्भोजनार्थं प्रार्थितोऽपितद्भोजनंनैच्छत् ॥ २ ॥

जरसं वृद्धत्वं गतःप्राप्तः ॥ ३ ॥

श्रीकृष्णांघ्रिसुधया साधुनिर्वृतःतस्यामेवतीव्रेण विवशत्वापादकेनभक्तियोगेन भृशंनिमग्नश्च ॥ ४ ॥

---

श्रीराधारमणदासगोस्वामि विरचित
दीपिन्याख्य तट्टिप्पणी ॥

अथ० जन्मादिकथा प्रश्नानन्तरं अनुशोचन्निति शोकःस्थायीभावःश्वसन्निति शत्रावर्णनसमकालत्वेनश्वासस्यभूमत्वंव्यज्यते तेन-श्वासभूमालोकानपेक्षतेत्युक्तेः क्षेपणोद्धास्वरानुभावः ताभ्यांतत्संवलनात्मककरुणरसोऽभिव्यञ्जितः तदुक्तंरसाभिज्ञैः सद्भावश्चेद्विभावाद्यैः किञ्चिन्मात्रस्यजायते सद्यश्चतुष्टयाक्षेपात्पूर्णतैवोपपद्यतेइति प्रतिवचनंप्रत्युत्तरं प्रियाश्रयां प्रियसंबंधिनीम् ॥ १ ॥

यइतियुग्मकम् एतदेव प्रतिवचनाऽसामर्थ्यमेव वृद्धत्वं चिरसेवकत्वंनतुकालकन्यांजरां तत्रप्रवयसोऽप्यासन्युवानोऽतिवलौजसइत्यनेन कैमुत्येनविरोधात् ॥ २ ॥

कृष्णांघ्रिसुधया स्फूर्त्यांसाक्षात्कृतया साधुयथास्यात्तथानिर्वृतः आनंदितः अतएवविंयोगशान्त्याप्रातिवचनशक्तोभाविष्यतीतिभावः ॥ ३ ॥

स्नेहः प्रेमोत्कर्षावस्थारूपोभावं विशेषस्तुतथा तल्लक्षणंसांद्रचित्तद्रवंकुर्वन्प्रेमास्नेहइतीर्य्यतइति ॥ ४ ॥

---

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रिका ।

एवंविदुरेणपृष्टेउद्धवेतस्यभगवतोवतारप्रभृतितत्समाप्त्यवधिदिव्यचेष्टितवर्णनानुरूपमुत्तरंवक्ष्यंस्तावदुद्धवस्य भगवद्विरहौत्कंठ्यावेशेनप्रतिवचनासामर्थ्यमाहवादरायणिरितीत्यादिषड्भिःक्षत्राविदुरेणप्रियाश्रयांप्रियभगवद्विषयांवार्त्तांप्रतीत्युक्तप्रकारेणपृष्टः भागवतउद्धवः औत्कंठ्यात्प्रेमविशेषात्स्मारित ईश्वरः श्रीकृष्णो यस्यसःप्रतिवक्तुंउत्तरंवक्तुंनचोत्सेहेनसमर्थोऽभूत् ॥ १ ॥

एतदेवकैमुत्यन्यायेनप्रपंचयतियइतिद्वाभ्यां पंचहायनःपंचवर्षःयउद्धवः मात्राजनन्याप्रातराशायप्रातर्भोजनार्थंयाचितः प्रार्थितः तत्प्रातराशंनैच्छत् कथंभूतः सन् अस्यश्रीकृष्णस्यसपर्यांपूजांवाललीलयारचयन् वालक्रीडयाश्रीकृष्णंकंचित्परिकल्प्याकल्पितैरेवसाधनैः परिचर्यांकुर्वन्नित्यर्थः ॥ २ ॥

एवंवाल्यप्रभृतितस्यभगवतः सेवयाकालेनजरसंजरांवृद्धत्वंगतः प्राप्तः सउद्धवः वार्त्तांप्रतिपृष्टः भर्त्तुः श्रीकृष्णस्यपादावनुस्मरन् कथंप्रतिब्रूयात्एवंप्रत्युत्तरासामर्थ्यमभिधायाथतस्यपरिपूर्णभक्तियोगेनपरवशस्यमहताप्रयत्नेनसामर्थ्यमाह समुहूर्त्तमिति कृष्णांघ्रिसुधयासाधुयथातथानिर्वृतः भृशमत्यंतंतीव्रेणभक्तियोगेनानिमग्नः परवशःसउद्धवःमुहूर्तंमुहूर्तमात्रंतूष्णीमभूत् ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

अत्राध्यायत्रेयउद्धवेनाविदुरप्रश्नप्रतिवचनायहरेः श्रीकृष्णावतारसंक्षेपकथानिरूप्यते तत्रप्रथमतउद्धवस्यभगवतिभक्त्युद्रेकलक्षणंशुकःपरीक्षितंकथयतीत्याह सूतःशौनकाय इतीति आत्मादेरपिप्रियः प्रेष्ठोहरिराश्रयोयस्याःसातथातां वार्तांकथामौत्कंठ्यंचित्तविद्रवणहेतुभूतौत्सुक्यं तस्माद्गद्गदकंठत्वादिविशेषः स्मारितेश्वरःप्रसंगविशेषादितिशेषः ॥ १ ॥

एकांतभक्तानामेतद्युक्तमितिभावेनाह यइति पंचहायनः [illegible]रायस्य सतथाप्रातराशायप्रातर्भोजनायतत्प्रातर्भोजनं सपर्यांपूजां रचयन्प्रचयन् ॥ २ ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली।

तस्यहरेर्जरसंजरांवार्धकंवयः ॥ ३ ॥

कृष्णांघ्रिस्मरणसुधया तृतीयासप्तम्यर्थे तस्यांनिमग्नोनिर्वृतः परमानंदंप्राप्तः ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः।

स्मारितेति स्मरणविशेषं गमयति ॥ १ ॥

य इति युग्मकं। यस्य पञ्चालिकारूपस्य जरसं जरां कृतचिरसेवित्वमित्यर्थः। प्रवयसोऽप्यासन् युवानोऽतिवलौजस इत्यनेन विरोधात् ॥ २ ॥

तर्हि कथं नत्युक्तवान् उच्यते श्रीभगवतैव स्वनित्यलीलाया मनसि दर्शनेन सान्त्वनादित्याह स इति त्रिभिः ॥ ३—५ ॥

---

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी।

अधिकारार्थसर्गोहि भूतसर्गोनिरूपितः।
मात्रायामेवसर्गोऽत्र द्वितीयेविनिरूप्यते ॥ १ ॥
मुख्याधिकारिणोभक्तौ क्रियाज्ञानविभेदतः।
अलौकिकचरित्रेण माहात्म्यंविषयोमतः ॥ २ ॥
क्रियानुभगवत्येव नान्यत्रेतिनिरूप्यते।
षड्भिस्तुमनसातानि षट्कर्माणींद्रियैर्यतः ॥ ३ ॥
षड्गुणैश्वर्यसम्पन्नोभगवानेकएवसः।
समाधिकेनविंशत्यातावन्तोभगवद्गुणाः ॥ ४ ॥
तत्वतोविषयाःप्रोक्तास्तेदेयाःसर्वएवहि।
कथायांत्रिभिरध्यायैरधुनोत्तरमुच्यते ॥ ५ ॥
सामान्यकुशलेत्वत्रत्रेधाप्युत्तरमुच्यते।
लोकद्वयेचभक्तैवदुर्भाग्यायादवाइति ॥ ६ ॥

तत्रप्रथमं विदुरेण पृष्टउद्धवोनोत्तरमुक्तवा नित्याह षड्भिः भक्त्युद्रेकोद्धवे षड्भिस्तादृशोक्तंफलायहि अशक्तिर्भक्तिलिंगंहि हेतूक्तचातस्यसाधनं सर्वव्यापारराहित्यंभक्ति लिंगस्यदर्शनं तथापि कृष्णमाहात्म्यंकथनायसमुद्यमःतत्रप्रथमंतस्याशक्तिरुच्यते इतिभागवतइति इतिशब्देनपूर्वाध्यायार्थः प्रकारविशेषादवक्तव्यत्वायसगृहीतःतत्रहेतुर्भागवत इति एतादृशींकथामन्योवक्तुमशक्तस्त्वंतुभागवतस्तथापिपृष्टश्चेद्भगवानिव स्वयंमप्यंतर्हितशक्तिरेवभवति तत्राप्यज्ञेन कुशलेनपृष्टस्तदाहपृष्टःक्षत्रेति साहिवार्त्ताप्रियाश्रिता उत्तरात्तुनिराश्रयानहिनिराश्रयःकेन चिद्वक्तुंशक्यातदाह प्रियाश्रयांप्रतिवक्तुंनांत्सेह इति चकारान्निषेधेप्यशक्तोनप्रष्टव्यइति इंद्रियसामर्थ्येविद्यमानेपि ज्ञानांशसहायेपि क्रियांशमनउत्साहात्मकं तत्रनजातमिनिनोत्सेहइत्युक्तं प्रस्तुतकथान्वेषणार्थंप्रवृत्तांचित्तं भगवंतंस्मारयितुमुत्कंठामुत्पादितवान्अनेन भक्तिर्वचनप्रतिबंधिका जातेत्युक्तंभवति ईश्वरत्वाच्चन प्राणोद्गमःएवमशक्तिंनिरूप्यतस्याभक्तिलिंगत्वंवदन्हेतूक्तचा तां साधयति द्वाभ्यांयःपंचहायनइति पंचवार्षिकोहिसेवाया मधिकारीवालस्यप्रातर्भोजनं संपूर्णदिवसेवलजनकंमात्रा लालनमुत्साहजनकं तद्द्वयंतस्यपूर्वमेवनासीद्वलंतु सपर्ययैव उत्साहस्तुलीलयैवाबालत्वंतु तदानींननं क्रीडितंतदुभयमिदानींनास्तीति नवलंनप्रोत्साहः अतएवाशक्तिर्भक्तिलिंगं अनेनहस्तव्यापारो भगवत्येवेतिनिरूपितं मनोव्यापारस्तु प्रथमंस्पष्टं मात्रायाचितइति लौकिकवैदिकधर्मापेक्षायिनकृता इच्छाभावेनभगवत्त्वेभवदीयानांपदार्थानां लौकिकापेक्षया ऽतिवलीयस्त्वंनिरूपितं यस्योतिकृष्णस्यसपर्या परिचर्याक्रीडार्थंभग

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

वदधिष्ठानंयदिकल्प्य तत्रराज्योपचारैः क्रीडनंवाललीला ॥ २ ॥

एवमशक्तेर्भक्ति लिंगत्वंनिरूप्यप्रकृतेहेतूक्त्याऽशक्तिंसाधयतिस कथमिति तस्यचाल्पएवतथात्वंनकिंत्वाजन्मभगवदीयैरेवसामर्थ्यं यतः सेवयैवसहजरांप्राप्तः अनेनतस्यसेवाजराभावार्थमपिनव्यापृता आनुषंगिकंतुनजातंकालस्यएववलीयस्त्वादित्याहकालेनेति जरसंवार्द्धक्यं पूर्वसिद्धस्यशक्तिहेतोरभावात्कथमितिशक्त्यर्थंप्रश्नः अतएववार्त्ताकथंब्रूयादग्रेऽपिवार्त्तांपृष्टोमाहात्म्यंकथयिष्यतितत्तुसर्वं सर्वदासाश्रयमेवालौकिकत्वाद्वार्त्तातुलौकिकी नचात्रभक्तिविरोधःप्रकारांतरेणभक्तेः क्रियमाणत्वात्तदाह भर्त्तुःपादावनुस्मरन्निति भर्तृपदेनतस्यैवलीलाश्रुतिसिद्धायुक्तेतिसूचयति भर्त्तासन्प्रियमाणोविभर्त्तीत्यादिश्रुतेः पादावितिद्विवचनंभक्तिमार्गख्यापनायअन्वित्युपदेशानतिक्रमायअनेनवाहर्वागिंद्रियविषयनिवृत्तिरुक्ता ॥ ३ ॥

अशक्तिर्नकेवलंवागिंद्रियेकिंतुसर्वत्रैवेतिव्यापार राहित्यमाहसमुहूर्त्तमितिमुहूर्त्तमात्रमेवभगवतिस्थितःसहिलीनरूपःपादस्मरणेनचपादांतिकंनीतः तूष्णीमितिसर्वेन्द्रियव्यापारराहित्यंतस्यसद्योमुक्तिमाह कृष्णांघ्रिसुधयानिर्वृतः इति ब्रह्मानंदंप्राप्तइत्यर्थःसुधापदेनचतत्रप्राणलयाभावः सूचितः स्मरणेतदानंदाविर्भावात्तदर्थमुपायमाहतीव्रेणभक्तियोगेनसाधुनिमग्नइतितीव्रेतिवाहिर्व्यापारोच्छेदात्तत्सामर्थ्यं सूचितंभक्तिरत्रप्रेमलक्षणासचोपायभूतः सर्वत्राविद्यमानःनहियोगेननिमग्नःशीघ्रमुत्तिष्ठतिअनेनक्रियारूपस्पर्शेन्द्रियव्यावृत्तिरुक्ताविषयोऽपिभक्तानामनेनानिरूपितः ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी।

द्वितीये प्रेमवैक्लव्यरोदनस्नपिताननः।
व्रजलीलां समासेन रासान्तामुद्धवोऽवदत् ॥ ० ॥

श्रीकृष्णविश्लेषविवृद्धप्रेममूर्च्छितस्योद्धवस्य प्रतिवचनासामर्थ्यं वदन् कामपि दशां दर्शयति। विदुरस्योच्चैः प्रश्नेभ्योमूर्च्छाभङ्गेन स्मारित ईश्वरो यस्य सः ॥ १ ॥

तस्य प्राक्तनीं भक्तिं दर्शयति बाललीलयेति पञ्चालिकाभिः खेलन्नेव कामपि पञ्चालिकां कृष्णं परिकल्प्य कल्पितैरेवोपचारैः परिचर्यां कुर्वन् मात्रा प्रातर्भोजनार्थं प्रार्थितोऽपि संप्रत्यपि मे भगवत्परिचर्या न निर्व्यूढेति तद्भोजनं नैच्छत् ॥ २ ॥

तस्य सेवया हेतुना सेवाप्रभावेणेत्यर्थः काले समयेऽपि जरसं वृद्धत्वं न गतः यद्वा काले या सेवा यस्मिन् काले या समुचिता सेवा तया कालेनेति तृतीयान्ततया व्याख्यानं त्वसङ्गतं तत्र प्रवयसोऽप्यासन् युवानोऽतिवलौजस इत्यनेन विरोधात् ॥ ३ ॥

पादयोरनुस्मरणं विवृणोति स इति विदुरप्रश्नैरुद्धवस्य मूर्च्छाभङ्गे सति हन्त हन्त तेन प्रभुणाहं विरहितोऽस्मीति श्रीकृष्णाङ्घ्रयोः स्मरणेन साक्षात्कारे सति प्राप्ता या, सौन्दर्यसुधा तया आस्वाद्यमानया मुहूर्त्तं घटिकाद्वयपर्यन्तं तूष्णीं स्थितोऽभूत् ततश्च तीव्रेण कृष्णविश्लेषविवृद्धेन भक्तियोगेन प्रेम्णाऽऽस्वादनभूम्ना तस्यामेव सुधायां निमग्नः विस्मृतकृष्णविश्लेषदुःखः सन् साधु यथा स्यात्तथा निर्वृतोऽभूत् ॥ ४ ॥

---

पुलकोद्भिन्नसर्वाङ्गो मुञ्चन्मीलद्दृशा शुचः ।
पूर्णार्थो लक्षितस्तेन स्नेहप्रसरसंप्लुतः ॥ ५ ॥
शनकैर्भगवल्लोकान्नृलोकं पुनरागतः ।
विमृज्य नेत्रे विदुरं प्रत्याहोद्धव उत्स्मयन् ॥ ६ ॥

श्री उद्धव उवाच ।

कृष्णद्युमणि निम्लोचे गीर्णेष्वजगरेण ह ।
किम्पुनः कुशलं ब्रूयां गतश्रीषु गृहेष्वहम् ॥ ७ ॥
दुर्भगो वत लोकोऽयं यदवो नितरामपि ।
ये संवसन्तो न विदुर्हरिं मीना इवोडुपम् ॥ ८ ॥
इङ्गितज्ञाः पुरुप्रौढा एकारामाश्च सात्वताः ।
सात्वतामृषभं सर्वे भूतावासममंसत ॥ ६ ॥
देवस्य मायया स्पृष्टा ये चान्यदसदाश्रिताः ।
भ्राम्यते धीर्न तद्वाक्यैरात्मन्युप्तात्मनो हरौ ॥ १० ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

एवंविदुरेणापृष्टउद्धवो यादवादीनांवृत्तांतंभगवतोवार्ताप्रादुर्भावादिस्वधामारोहणपर्यंतांचविदुरायोपदिश्यवदर्याश्रममगाद्विदुरस्तद्वचनान्मैत्रेयाश्रममगादित्याह श्रीशुकस्त्रिभिरध्यायैः तत्रतावत्उद्धवस्य श्रीकृष्णस्यविरहग्रहाविष्टत्वेनप्रतिवचनासामर्थ्यमाह इतीति पंचभिः ॥ १ ॥

तत्कैमुत्यन्यायेनवर्णयति यद्वातिद्वयेनप्रातराशायप्रातर्भोजनाय यस्यकृष्णस्य ॥ २ ॥

अरसंवृद्धत्वम् ॥ ३ ॥

साधुयथातथानिर्वृतः सुखितः ॥ ४ ॥

---

भाषाटीका

श्रीशुकउवाच — ईश्वर जिन को स्मरण करायो ऐसे भागवतउद्धव से विदुरजी श्रीकृष्ण प्यारेकी ऐसी वार्ता पूछी तब श्रीकृष्णविरह मे आवेशित होके कुछ भी बोल न सके ॥ १ ॥

जो उद्धवजी पांच वर्ष के हे तब बाल लीला में भीश्रीकृष्णकी पूजा करते रहे तो प्रातः समय मैया भोजन को बुलाती तो भी नहीं जाते रहे ॥ २ ॥

सो उद्धवजी तिनकी सेवाकरते काल से वृद्धहो गये श्रीकृष्ण जी अपने स्वामी का स्मरण करते हुये जो पूछ सो कहते भये ॥ ३ ॥

श्रीकृष्ण के चरणामृत से तीव्र भक्ति से अत्यन्त मग्न होके अतिसुख में होने से एक मुहूर्त्त चुपहोगये ॥ ४ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ॥

पुलकैरुद्भिन्नानि उज्जृम्भितानि सर्वाण्यंगानि यस्य। मीलन्त्या दृशा शुचः अश्रूणि मुञ्चन् । तेन विदुरेण पूर्णार्थः कृतार्थो लक्षितः यतो भगवति यः स्नेहस्तस्य प्रसरः पूरः तस्मिन् संप्लुतः निमग्नः ॥ ५ ॥

भगवानेव लोकः तस्मात् नृलोकं देहानुसन्धानं । उत्स्मयन् यदुकुलसंहारादि भगवच्चातुर्य्यं स्मरणेन विस्मयं प्राप्नुवन् ॥ ६ ॥

श्रीकृष्णविरहेण संतप्यमानः प्रत्याह श्रीकृष्ण एव द्युमणिः सूर्यः तस्य निम्लोचे अस्तमये सति । अजगरेण कालमहासर्पेण गीर्णेषु गिलितेषु नो गृहेषु त्वत्पृष्टानां वन्धूनां किं नु कुशलं ब्रूयाम् ॥ ७ ॥

अनुशोचन्नाह दुर्भगो भाग्यहीनः येसह वसन्तोऽपि हारिरयमिति न विदुः । यथा क्षीरसमुद्रे जातमुडुपं चन्द्रं तदा तत्रत्या मीनाः केवलं कमनीयः कश्चिज्जलचर इत्येव विदुः । न चामृतमयमिति तद्वत् । यद्वा । जले प्रतिबिम्बितं चन्द्रं यथेति ॥ ८ ॥

भाग्यहीनत्वादेव न विदुः नतु ज्ञानसामग्र्यभावादित्याह । इंगितं चित्तस्थं जानन्तीति तथा पुरु अतिशयेन प्रौढा निपुणाः एकस्मिन्नेव स्थाने आवसन्तीति तथा । एवम्भूता अपि भूतानामावासमीश्वरं सन्तं सात्वतामृषभं सात्वतां श्रेष्ठममन्यन्त ॥ ६ ॥

ये यादवा देवमायया स्पृष्टाः व्याप्ता यादवोऽयमस्मद्बन्धुरिति वदन्ति । ये च शिशुपालादयोऽसदेवान्यद्वैरमाश्रिताः निन्दन्ति तेषां वाक्यैः आत्मनि हरावुप्तात्मनो निक्षिप्तचित्तस्य मादृशस्य बुद्धिर्न भ्राम्यते मोहं न प्राप्यते अन्येतु मूढा एवेत्यर्थः ॥ १० ॥

---

### श्रीराधारमणदासगोस्वामि विरचित
### दीपिन्याख्य तट्टिप्पणी ॥

भगवानेवलोकोभक्तानांस्फूर्त्यानिवासस्थानंतस्मात् संहारादीत्यादिनास्वनियाणां दिमहोत्सवः तत्रयद्भगवतश्चातुर्य्यंवहिर्मुखान्प्रतिशुष्कवैराग्यदर्शनमन्तर्मुखान्प्रतितुप्रपञ्चाप्रकटनित्य लीलायांगोप्यत्व प्रदर्शनंइतियुगपत्समाधानंतस्यस्मरणेनतथाहितल्लक्षणां चतुरोयुग पक्रूरिसमाधानकृदुच्यतइति ॥ ५ ॥

वहिर्देहानुसंधानेनतादृशस्फूर्त्तिभङ्गात् श्रीकृष्णविरहेणेत्यादि श्रीकृष्णस्यसूर्य्यत्वेनमथुरायाउदयाचलत्वं साधकानांपद्मत्वांसद्धानांचक्रवाकत्वं प्रभासस्यास्ताचलत्वमाक्षिप्यते अस्तमयेऽस्तत्वेसति ॥ ६ ॥

अत्रयदूनांतन्नित्यपरिकरत्वेनमहाभाग्यवत्वेऽपिदुर्भगातिशयोक्तिः श्रीव्रजपरिकरवत्कृद्धमाधुर्य्यावगाहित्वाभावात् श्रीहरिः परममनोहरोऽयमस्मद्बन्धुरितिनाविदुर्नजानंति किन्तुवृष्णीनांपरदेवतेत्युक्तेरैश्वर्य्यवत्त्वेनैवजानंतीतिव्याख्येयम् अत्रनित्यं तेनतत्संयोगाभावेनाविदुः येसंवसन्तोहरिमित्येवावक्ष्यादितिज्ञेयम् स्वामिपादैस्तुउद्धवस्यपरम निर्वेदार्त्तिभ्रांतस्यावियोगेतत्पारमैश्वर्य्यंमेवास्फुरत् प्रेमणोहिवियोगकालीनोऽयंस्वभावोयदसन्तमप्यैश्वर्य्यंस्फोरयति किमुतसन्तंयथाऽऽदिभरतचरितेमृगवालकपादस्पर्शसौभाग्येनपृथिव्यास्तपस्सौभाग्यंवर्णितमित्यभिप्रेत्यैवैश्वर्य्यज्ञानाभावेनदुर्भगत्वं व्याख्यातंनत्वैश्वर्य्यमाधुर्य्ययोस्तारतम्यविवक्षयेतिज्ञेयम् अन्यथादुर्लभन्तुमयिपुत्रतया प्रेमेत्यादितदव्याख्यालमेवपरस्परंव्याहन्यंत; दृष्टान्तेतदाजन्मकालेअपूर्वायैतेषांमीनानांजनिकालेचंद्रेजलत्वज्ञानं कल्पितमेवनतुनिश्चितं विदुरितिवर्त्तमाननिर्देशश्चनसंगच्छतेसदासाक्षात्समुद्रे चंद्रस्थित्यसम्भवादित्यवधेयमिति ॥ ७ ॥

वियोगात्तत्पारमैश्वर्य्यस्फूर्त्तेरेवभाग्यहीनत्वादेवनविदुरित्यपि व्याख्यातम् वस्तुतस्तु अनुवादमनुक्त्वैवनविधेयमुदीरयेदित्युक्तेः सात्वतांस्वरामेवमृषभंकुलपतिंस्वयंभगवन्तमपि भूतावासंतद्देशमंतर्यामिणमेवामंसतसर्वभूताधिवासमित्यंतर्यामिश्रुतेः वृष्णीनांपरदेवतेत्युक्तेश्चेतिव्याख्येयम् ॥ ८ ॥

माययाव्यामोहनसक्त्या अन्येयादवाःशिशुपालादयश्चतत्रपूर्वे प्रेममुग्धत्वेनउत्तरेचामिथ्याज्ञानेनमूढाएवेत्यर्थः ॥ ९ ॥

अतः अतततरत्वात् तादृशस्यश्रीकृष्णसदृशस्य ॥ १० ॥

---

### श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रिका ॥

पुलकेनरोमांचेनोद्भिन्नंव्याप्तंसर्वमंगंयस्यसः मीलद्दृशानिमीलद्दृष्ट्याशुचःआनंदाश्रूणिमुंचन्स्नेहप्रसरसंप्लुतः भगवतियः स्नेहः तस्यप्रसरेणसंप्लुतोव्याप्तः उद्धवस्तेनविदुरेणपूर्णार्थः कृतकृत्यो लक्षितः ॥ ५ ॥

शनकैरितिभगवानेवलोकस्तस्मान्नृलोकंदेहानुसंधानंशनकैपुनरागतःनेत्रेविमृज्यसंमृज्यउत्स्मयन्भगवदाख्यस्यलोकस्यज्ञातत्वाद्विस्मयंप्राप्नुवन्नुद्धवः विदुरंप्रत्याहप्रत्यभाषत ॥ ६ ॥

कृष्णेत्यादिकृष्णएवद्युमणिःसूर्यस्तस्यनिम्लोचेऽस्तमयेसत्यजगरेणकालरूपमहासर्पेणनोऽस्माकंगृहेषुगीर्णेषुसत्सु कुशलंत्वत्पृष्टानां कुशलमहंकिंब्रूयाम् ॥ ७ ॥

दुर्भगइतित्रतेतिखेदेऽयंलोकःजनः दुर्भगः यद्वस्तुसुतरामपिदुर्भगाःयेयदवः सवसंतः श्रीकृष्णेनसहसंवसंतोपिहरिंभगवंतंनाविदुःकिंनुस्वसदृशएवायममेति विदुःतत्रदृष्टांतःमीनाःमत्स्याउडुपंचंद्रमिवसीनाउडुपमयमपिकश्चिज्जलचरइतिजानंति नतूत्तारणहेतुरयमिति एवंयदवोऽप्ययंश्रीकृष्णःस्वाश्रितदुरितान्यपहरन्संसारपारंतारयतीति नजानंतिकिंतुकश्चिद्यादवोवलवानेवेति ॥ ८ ॥

एतदेवाह इंगितज्ञाइति इंगितज्ञाःपरचित्तवृत्तिज्ञाः अतएवपुरुप्रौढाःवहुनिपुणाःएकारामाःएकस्थानवर्त्तिनश्चसात्वताःयादवाःसर्वे सात्वतामृषभंयादवानांश्रेष्ठश्रीकृष्णंभूतावासंत्तेऽज्ञमेवामन्यंत ॥ ९ ॥

नकेवलंयादवाएवभूतावासंश्रीकृष्णममसतकिंत्वन्येपीत्याह देवस्यभगवतोमाययास्पृष्टामोहिता अतएवासदचेतनंशब्दादिकंभोग्यत्वेनाश्रताः अन्येशिशुपालादयः तेसर्वेऽपिभूतावासममंसतेति पूर्वेणान्वयः तर्हिभगवदादयोपिमायास्पर्शाविशेषान्नजानीयुरित्यत आहभ्राम्यतइतिआत्मनिपरमात्मनिहरौउप्तात्मनांसमर्पितमनसां-- मादृशानांधीः तद्वाक्यैर्भगवन्मायामोहितानांजीवोऽयमित्यादिवाक्यैर्नभ्राम्यते ददामिबुद्धियोगंतंयेनमामुपयांतितइति भगवतैवगीतत्वादितिभावः ॥ १० ॥

---

### श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

उद्धवस्यैवंविधामवस्थां पश्यतोविदुरस्यमनसिकिंप्रत्यभादित्याह पुलकेति तेनाविदुरेण पुलकोरोमांचस्तेनोद्भिन्नमंकुरितंसर्वांगंयस्यसःमीलद्दृशाऽर्द्धोन्मीलितनेत्रेणाश्रुवाष्पकलांमुंचन्स्नेहप्रसरसंप्लुतोभक्तिनदीप्रवाहमग्नःसउद्धवःपूर्णार्थः कृतकृत्योलक्षितोलक्षणातोज्ञातइत्यन्वयः ॥ ५ ॥

ततःपरंविदुरस्यकाभीष्टसिद्धिरभूदित्याशंक्यतत्प्रश्नप्रवचनोपक्रमसिद्धिरित्याह शनकैरिति भगवल्लोकादसंप्रज्ञातावस्थालक्षणान्नृलोकंमनुष्यदेहाभिमानमागतः उत्स्मयन्नुत्कृष्टंमंदस्मितंकुर्वन् ॥ ६ ॥

कीदृशीसेत्यत्राह कृष्णेति कृष्णएवद्युमणिः सूर्यस्तस्यनिम्लोचेअस्तमयेसति अतएवगतश्रीषुनष्टालोकेषु अतएवकालाजगरेणगीर्णेषुग्रस्तेषुअस्तंगतेषुविनाशंयातेषु नःसंबंधिषुयदुषु किंनुकुशलंब्रूयांहेत्यनेनकुशलप्रश्नप्रवचनप्रत्यारंभोनकर्तव्यो विप्रशापेनसाभिकृष्टनाशस्यप्रसिद्धत्वादितिदर्शयति प्रत्यारंभेप्रसिद्धेहेतियादवः ॥ ७ ॥

दुष्टनिधनव्याजेनज्ञानोपदेशार्थमवतीर्णस्यकृष्णस्यज्ञानेननाशंयास्यतामपियदूनां त्रिलोक्याश्चश्रेयःसिद्धिः स्यादित्याशंक्यज्ञानेसतिश्रेयस्तदेवनास्तीत्यनुतपन्नुद्धवइत्याह दुर्भगइति लोकोजनः वतशब्दः खेदवचनःहरिंनाविदुर्दुस्तरसंसारसंहारकत्वेनेतिशेषः ॥ ८ ॥

नकेवलमज्ञामिथ्याज्ञानिनोपिज्ञाताइत्याह इंगितज्ञाइति अत्रेंगितशब्दोद्विरावृत्त्याव्याख्यातव्यः इगिचेष्टायामितिधातुः लोकस्येंगितेनचेष्टितेनेंगितंहृद्गतभावंजानंतीतींगितज्ञाः इंगितंहृद्गतोभावइंगितंचांगचेष्टितमित्यभिधानं पुरुप्रौढाः शरीराभिमानिनः गृहस्वामिनोवाएकारामाःकेवलक्रीडालोलाः एकेमुख्यान्यकेवलाइतिच एवंविधाःसर्वेसात्वताः यादवाः सात्वतांब्रह्मादिभागवतानामृषभंस्वामिनंप्राकृतप्रधानपुरुषवद्भूतावासंकतिपयजनावासहेतुभूतममंसतामन्यंतेत्यन्वयः एकोदेवइतिप्रतिपाद्यत्वेनप्रसिद्धंभूतावासमविशेषणसकलजगन्निवासंभगवंतंसात्वतां यादवानामेवऋषभममंसतेतिवा ॥ ९ ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

प्रसंगाज्ज्ञानिलक्षणमाह देवस्येति देवस्यहरेर्माययावंधकशक्त्यास्पृष्टाउपतप्तज्ञानत्वादन्यथाज्ञानिनोयेचान्येअसतांजनानाममंगलानांविषयाणांवाश्रयास्तद्वाक्यै स्तेषांनृणांवाक्यैरात्मनि परमात्मनिउप्तात्मनांसंततन्यस्तनिदोषमनसांज्ञानिनांधीर्नभ्राम्यते नान्यथाभवतीत्यनेनसम्यग्ज्ञानित्वमेवंविधमित्युक्तंभवति हरावित्यक्षरद्वयेन ओहाङ्गतावितिहेतिज्ञानंरमुक्रीडाया मितिरीत्यतिशयितसुखमिति सच्चिदानंदलक्षणोविष्णुरुच्यतइतिज्ञातव्यम् ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ॥

भवगल्लोकात् नित्यलीलामय द्वारकाख्यात् । नृलोकं वहिर्दृश्यमानं विदुरादिमयं मनुष्यलोकं आगतः अनुसदधानः । उत्स्मयन् तदनुभवेनोच्चैरानन्दित इत्यर्थः ॥ ६ ॥ ७ ॥

दुर्भग इति । अयं मम हृदय स्फुरन् द्वारकावासी लोकः । दुर्भगो भाग्यहीनः ये संवसन्तः सह वसन्तोऽपि न विदुर्नजानन्ति अह तु सम्वासभाग्यहीनो न जानामीति नाश्चर्यमिति भावः । अत्र तदानीं यदि संवासो नाभाविष्यत् तदा नावेदिषु रित्येवावक्ष्यदिति ज्ञेयंकिञ्चहरिःसर्व्वमनोहरत्वेनज्ञातमपितंनाविदुः स्वयंभगवत्त्वेमवजानन्ति तत्रदृष्टान्तः मीना इवोडुपमिति स्वकलावर्द्धनार्थप्रभासे समुद्रमग्नंतंमीनायथा केवलंमधुरोज्ज्वलत्वेनैवाविदुः नतुदेवोत्तमत्वेनतद्वदित्यर्थः ॥ ८ ॥

नन्वधुनापिनजानन्तीतिकथं जानासि इत्याशंक्यतत्रहेतुंप्राचीननिजानुभवमाह इङ्गितज्ञा इति सात्वतांस्तेषामवऋषभंनित्यकुलपतित्वेवर्त्तमानंस्वयं भगवन्तमतिभूतावासंतदंशरूपंभूतान्तर्यामिणमंवामंसतेति एकोदेवइत्यादौ सर्व्वभूताधिवासइत्यन्तर्यामीतिश्रुतेः उक्तञ्चवृष्णीनांपरदेवतेति ॥ ९ ॥

देवस्येति येचयादवेभ्योऽन्येविराड्विदुषामित्याद्युक्तप्रकारेणापरमविद्वांसस्तेत्वन्यदसत् परमोत्कृष्टभौतिकदेहोऽसावितिमन्यन्तइत्यर्थः ॥ १० ॥

---

श्रीमद्वल्लभाचार्य्यकृत सुवोधिनी ॥

एवंसर्व्वव्यापार राहित्यंनिरूप्यतस्यभक्तिलिंगजनकत्व मन्यथातद्व्यर्थमितितदाह पुलकोद्भिन्नसर्वांगइति पुलकैःरोमोद्गमैःरुद्भिन्नानिसर्वांगानियस्य अनेनानंदःपूर्णोमध्येजात इत्युक्तंवहिरपिनिर्गच्छतीत्यामुंचन्मीलदृहशाशुचइति मीलदित्यंतभोगोनिरूप्यते ननुजलानिमग्नत्वरकेवलमंतःपूर्णता अशुचआनन्दाश्रूणि अनेनशोकंनिवार्यस्वयंनिर्गच्छंतीति सूचितंएवंरोमादीनां भक्तिलिंगानामुत्पत्तिमुक्तातेषांलिंगत्वमाह पूर्णार्थोलक्षितइति अर्थोभगवानानंदरूपःपूर्णोयस्मिंस्तेन विदुरेणानेत्रोदकादिनास्मृत्वातस्य भक्तिदर्शनात्स्वस्यापि भक्तिर्जाता तस्यात्मानंविरजी करोतीतिभक्तेरपिपूरणायं वहुविप्लावितइत्यपिलक्षितःभक्तेः प्लावकत्वंनसंभवतीति स्नेहस्यप्रसरउक्तःसाहिशास्त्रतोजायमानायावत्कार्यमेवजायते अनेन विसर्जनक्रिया निरूपिता ॥ ५ ॥

[ ९ ]

श्रीमद्वल्लभ चार्य्यकृत सुवोधिनी ॥

एव मेवसर्वेंद्रियाणामगवद्विषयत्वं तादृशोपिभगवंतं दृष्टालक्ष्याश्रयो भगवन्माहात्म्यकथनार्थ विदुरं कृतार्थी कर्तुं भगवदिच्छयाभगवंतमाश्रयभूतंगृहीत्वैवसावधानतया समागत इत्याह शनकैरिति सावधानत्वेन तस्य स्मरणमात्रं जातं किंतु व्यापि वैकुंठे गत्वासमागतमित्याह भगवल्लोकान्नृलोकंपुनरागत इति पुनः पदेनचपूर्वं मप्युद्धवोवैकुंठादेवसमागत इति ज्ञायते अन्यथास्वधामनयमामपीतितस्यकामना प्रतिहतास्यात् एवंतुभगवत आज्ञा परिपालनार्थंसमागतःइदानीं तुभक्तस्यनेत्रे विमृज्येति निद्राया योगोत्थितत्वंसूचितं स्वस्यपूर्णत्वेनमहत्त्वमल्पश्चागतं गर्वायभवतीतितन्निवृत्त्यर्थमाह उत्स्मयन्निति उच्छ्वद्योनवृत्तिवाचकः ॥ ६ ॥

काष्ठवन्मुखावकाशंवोधयति तादृशोभूत्वाप्रत्याह एकेनसाधारणमुत्तरंकृष्णद्युमणीति कृष्णोहिसदानंदःसर्वदाद्युमणिरेवनहिकदाचिदपिसूर्यो भूमौ समायाति तत्र स्थितएवपर मिदंजगत्प्रकाशयति तथा भगवान्व्यापि वैकुंठएवस्थितोऽस्मदादिरूपांपृथिवीं प्रकाशितवान् सइदानीमवहिर्मुखानस्मान्प्रकाशयितुंनिम्लोचति तस्यनिम्लोचसति सर्वमेवजगत्पूर्वंतत्प्रकाशितमंधकारेणगृह्यते सह्यंधकारोऽजगरआधिदैविकः इदंहिलोकोपरिदृश्यमानंमनंतमाधिभौतिकंगतरूपंतुतमसावायौ ज्योतिः प्रलीयतइत्याध्यात्मिकमात्मप्रस्वापनंतमइत्याधिदैविकं महत्तत्वंतुमुखोब्रह्मा अजस्य गरणंगिलनं येनेति गृनिगरण इति धातोः येनमहत्तत्वमपि भक्ष्यते भगवत्प्रकाशावसानेतेनैवेत भक्षिताः सहिमुक्तानामभक्तानांचभक्षकोनियतस्तदाहहंतिहीति पाठेभगवदीयानामेतन्महदाश्चर्यं कुशलंहिविद्यमानमुच्यतेएतावत्तुजातमतः परंकिंकुशलमिति न जाने इत्याह किंपुनः कुशलंब्रूयामिति किंचकुशलं सर्वं लक्ष्मीकार्यं च तत्रभगवतानतेषुकिंचित्कुशलंकृतं लक्ष्मी कृतं गृहेस्त्रीष्वेवाभवति तल्लक्ष्म्यामपि गतायांगतश्रीपुगृहेषुसत्सुकिंकुशलं ब्रूयामिति सर्वकुशलनिवृत्तिः अहमित्यहमेवावशिष्टएतादृशोऽतोमांदृष्ट्वैवज्ञातव्यं वक्तव्यं तुनावशिष्यत इत्यर्थः ॥ ७ ॥

ननुभगवता ते कथं नोपकृतास्तत्राह दुर्भगेतित्रिभिः तामसादिगुणैस्ते भगवंतं न जानंति सामान्यतोऽज्ञातमन्यथाज्ञानं विरुद्धत्वज्ञानमस्तीति भगवता ते नोपकृताः तेषांसामान्यतोऽज्ञानं सहेतुकमुपपादयति अयंलोकोभूलोकः दुर्गतं भाग्यं यस्यतादृशं वर्तेति खेदे नहिभागे विद्यमाने स्वयंतिष्ठतिभगवति गते अभाग्यं तुनास्ति कियत्कालंभगवदनुभवात् यथा दुर्भगस्तथायं लोकः एतावतावर्त्ततएव दुर्भगता परमन्यस्यांअयमिति जनात्मकः तथास्वयं भगवति व्यवस्थितस्त्वन्येनदुर्भगोजातः यादवास्तुसुतरामेव तथा जातायेचक्षुष्मंतोऽप्यंधाइवकूपेपतिताःसर्वतोऽभ्युरयंलोकः यादवाअन्योन्यघातेनतथै वजाता इति भावः अंधत्वमाह येसम्यगेकत्रचसंतोपि नविदुरिति ज्ञातेकिंस्यादित्याशंक्यदृष्टांतेनविपरीते फलाभावमाह मीना इवोडुपमिति पूर्वं समुद्रे मत्स्याश्चंद्रश्चैकत्रस्थितास्ते चेच्चंद्रंप्रार्थयेयुस्तदाऽमृतपानेनामराभवेयुः सह्यमृतमयः अमृतंचदातुं शक्तः मत्स्याश्चसर्वतो मृत्यवोज्ञाति घातिनश्चतेषामप्रार्थनायामज्ञानमेवमूलंतथा यादवा भगवदज्ञानान्न मुक्ताः किंतुसर्वतो मृत्यवोजाता इत्यर्थः तस्यदानसामर्थ्य माह उडुपमिति तदमृतलेशेनैवनक्षत्राणिप्रकाशंतेतत्तिरोभावेपि एवं भगवत्तिरोभावेप्येते प्रकाशं प्राप्नुयुर्यदिजानीयुः सर्वं दुःखहर्तृत्वाद्भगवतः ॥ ८ ॥

---

श्रीमद्वल्लभाचार्य कृत सुबोधिनी ।

किंचमीनानां ज्ञान सामर्थ्य मपिनास्तीतिएते तु ज्ञानसमर्था अपिनज्ञातवंत इत्याह इति भगवत श्चेष्टितमपि जानंति कदाचिद्भगवान्कि चिच्चिकीर्षयाऽस्मदादिकमपि पश्यति तदेव जानंत्येतत्करिष्यतीतिएवं ज्ञानशक्तिरुक्ता पुरु अधिकंप्रौढाः आतिक्रिया शक्ति युक्ताः अत एव ज्ञान क्रिया शक्ति युक्तत्वादेका रामाः भगवता सहैकत्रैवारामो येषां शक्तिद्वयस्य फलभेतत्सात्वता इति वैष्णवा एवं लौकिक प्रकारेण ज्ञान क्रियातद्भक्ति युक्ता अपि न जानंतीत्याह सात्वता मृषभमिति समस्त वैष्णवानां स्वामिनि मुक्तानामपि कामपूरकभूते आवासो यस्य पांचभौतिकदेहे स्थितं कारण भूतदेहे स्थितंवा अमंसत ज्ञातवंतः अनेनाविपरीतज्ञानंतेषां स्थितं मनो ज्ञातुमपि नयतंत इति भावः ॥ ९ ॥

एवं श्लोकद्वयेनाज्ञातं स्वसाधारण्येनाथाज्ञानं चोपपादयन् रागमुपपाद्यद्वेषमुपपादयति देवस्य माययेति देवस्य ज्ञानात्मकस्य मायया व्यामोहिकया के चनस्पृष्टाः आत्मानं परं च न जानंति प शुवद्भगवति व्यवहरंतिये च युक्तमाययासम्यग्व्याप्ताः शिशुपालादयस्ते असद्देवमेवाश्रिताः यदसत्युद्भवति भगवत्संबंधंदूरीकरोति अथवा केचिदन्यदेवाश्रिताः येन भगवतो भिन्ना भवंति अहंकारगर्वसहितमित्यर्थः अन्ये चकारोक्ताः सर्वथातत्वज्ञानयोग्या अपिपाषंडा असद्भगवन्निंदामेवाश्रिताः अनेनये केचिद्ज्ञातुमपि यतंते तानपि तेनाशयंतीति भावःतर्हि सर्वएव नष्टास्तथासति भगवदवतार फलं न जातमित्याशंक्याह भ्राम्यते धीरिति नहिसर्वेषांबुद्धिं भ्रामयितुंशक्ताः येतद्वाक्यं मन्यं तो दृढमूलाः शास्त्ररहितास्त एव भ्रांता भवंति येत्वस्मदादय आत्मरूपे भगवत्युप्तात्मानस्तेनभ्रमेनेएकवचनं दुर्लभाभिप्रायेणाऽप्तआत्मायेनेति कृष्यादिनाभूमिं सित्वासर्वतः संस्कृत्यशुद्धं वीजंये रुप्यते तद्बीजजातांकुरं वायुनागच्छति आमूलपतितंतृणादिकमेवगच्छति आत्मशब्देनचांतःकरणस्यशुद्धतोक्ता भगवांस्तुस्वयं चरण योरुप्तंचिभं केषामपि न दूरीकरोतिसर्वं दुःखहर्तृत्वादित्याहहराविति ॥ १० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्ति कृत सारार्थ दर्शिनी ।

निर्वृत्त्यनुभावं दर्शयति पुलकैरुद्भिन्नानि अंकुरितानि सर्व्वांगाय ङ्गानीति उद्भिदस्तरुगुल्माद्या इति स्तम्भश्च व्यञ्जितः । मीलन्त्या दृशाशुचः अश्रूणि मुञ्चन् तेन विदुरेण पूर्णार्थः कृतार्थो लक्षितः अनुभावैरनुमितेन प्रेम्णेत्यर्थः यतः प्रेम्णएवभगवति स्नेहश्चित्तद्रवस्तस्य प्रसरः पूरस्तस्मिन्संप्लुतःनिमग्नःप्रथमं प्रेम्णि निमग्नस्तद्वृद्धितीयकक्षायां स्नेह निमग्नइत्यर्थः ॥ ५ ॥

ततश्च भगवल्लोकात् स्वप्रेमोद्रेकेण प्रापिताभित्यलीलामय द्वारकाख्यं नृलोकं विदुरप्रेम्णा आकृष्यमाणः सन्नागतः पुनरिति द्वितीय मूर्च्छाभङ्गे सतीत्यर्थः । उत्स्मयन् भूभारहरणादि चातुर्य स्मरणेन विस्मयं प्राप्नुवन् । यद्वा भो उद्धव विदुरं प्रत्युत्तरेण समाधाय पुनरत्रागच्छेति भगवदाश्वासनेनोत्कृष्टं स्मितं कुर्वन् ॥ ६ ॥

शोकव्याकुलं विदुरमाश्वासयितुं प्रथममेव सिद्धान्तं ब्रुवन् स्वबहिर्दृष्ट्या तद्विरहसन्तापं लोकानां दुरवस्थानं चावेदयति । कृष्ण एव द्युमणिः सूर्यस्तस्य निम्लोचे अस्तमये सति अजगरेण महासर्परूपशोकान्धकारेण गीर्णेषु निगिलितेषु गृहेषु नोऽस्माकं

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

त्वत्पृष्टानां बन्धूनां किं कुशलं ब्रूयां । अत्र ज्योतिश्चक्रे स्थितस्यैव द्युमणेरश्वरथसारथ्यादि परिकरविशिष्टस्य यस्मिन् वर्षे अस्तमयो दृश्यते तदन्येषु वर्षेषु तदैवोदय पूर्वाह्णमध्याह्नादयो दृश्यन्ते यथा तथैव गोकुल मथुरा द्वारकास्थस्य सपरिकरस्य तत्तल्लीलामृतमज्जित जगज्जनस्यैव कृष्णस्य यस्मिन् ब्रह्माण्डेऽन्तर्द्धानं दृश्यते तदेवान्येषु ब्रह्माण्डेषु जन्मोत्सव रासोत्सव कंसवध रुक्मिण्यादि परिणयोत्सवाद्या लीला दृश्यन्ते ज्योतिश्चक्रे सूर्यस्योदयपूर्वाह्णाद्या प्रतीयमानत्वादवास्तवाः । कृष्णस्य तु जन्माद्यास्तत्र तत्र नित्यत्वाद्वास्तवा एवेति विशेषः सर्वासां लीलानां नित्यत्वं प्रथमस्कन्धे दर्शितं दशमे च पुनः स प्रमाणकं दर्शयिष्यते च यथा सूर्यास्तमय सम्बन्धिनि वर्षे अन्धकारेण ग्रस्यमाने कमलानि म्लायन्ति चक्रवाका विलपन्ति चोर दस्यु राक्षस प्रेताद्या हृष्यन्ति तथैव श्रीकृष्णान्तर्द्धानसम्बन्धिनि ब्रह्माण्डे दुःखाजगरग्रस्ते साधवो म्लायन्ति कृष्णानुरागिणो विलपन्ति धर्मसंतवो भिद्यन्ते अधार्मिका भगवद्बहिर्मुखा हृष्यन्तीत्युद्धवेन गीर्णेष्वित्यादिना सूचितम् ॥ ७ ॥

एवं तद्विना भूतानामुत्तमलोकानां दुरवस्थां दर्शयित्वा तद्विरहोद्रेकेणाकस्मात् स्फुरितं तदीयमहैश्वर्यज्ञानं स्वस्मिन् नालक्ष्य

तद्विनाभूतानां तल्लीलापरिकराणां तादृशमहैश्वर्य्यस्फूर्तिमनालक्ष्य प्रेमविभ्रमस्य केनापि वैचित्र्येणैव ताश्निन्दति दुर्भगइतिअयं मम हृदये स्फुरन् द्वारकावासी लोकः दुर्भगो भाग्यहीनस्तत्रापि यदवस्तदतिसमीपसम्बन्धिनो नितरां दुर्भगाः । ये संवसंतः सह वसन्तोऽपि हरिं स्वमाधुर्य्येण तत्तन्मनोहरन्तं न विदुर्नजानन्ति । अहन्तु संवासभाग्यहीनत्वात् ज्ञात्वाप्यतिदुर्भग इति भावः यथा क्षीरसमुद्रे जातमुडुपं तत्रस्थं चन्द्रं तत्रत्या मीनाः केवलमतिकमनीय आस्माकीनः कश्चिज्जलचर इत्येव विदुर्नतु देवतारूपः सुधांशुनिशापतिरिति तद्वद्यदवः कृष्णस्य माधुर्य्यमेव जानन्ति नत्वैश्वर्य्यमिति दुःखेन तान् दुर्भगानेव ब्रवीमि इति भावः । वस्तुतस्तु दुर्ज्ञेयो भगोमाहात्म्यं यस्य सः । ऐश्वर्य्यज्ञाननिष्ठेभ्योऽपि माधुर्य्यज्ञाननिष्ठानामुत्कर्षस्य दशमे व्याख्यास्यमानत्वात् अत्र न विदुरिति वर्त्तमान निर्देशेन द्वारकावासिनां यदूनाश्च भगवन्नित्य सङ्गित्व ज्ञापनाय भो विदुर त्वत्पृष्टकुशला यादवादयः सम्प्रति श्रीभगवता सहैव सुखेनैव खेलन्ति । केवलं प्रष्टा त्वं पृष्टश्चाहमित्यावामेव तत् संवासविरहितत्वात् अकुशलिनावत आवामेवावां शोचाव इति भावः अत्र यदि तदानीं कृष्णेन सह तेषां संवासो नाभविष्यत्तदानावेदिषुर्ये वसन्त इत्येवावक्ष्य दिति ज्ञेयम् ॥ ८ ॥

ननु शुद्धप्रेमैकमाधुर्य्यभुजो गोकुलवासिन इव द्वारकावासिनो न स्वस्वैश्वर्य्यज्ञानशून्या भवन्ति तत् कथं न विदुरिति ब्रवीषि तत्राह इङ्गितज्ञा इति तदीयचित्तस्थमपि वस्तु जानन्ति किं पुनः शरीरस्थं सौन्दर्य्यलावण्यादिकं तत्र हेतुः पुरुप्रौढा अतिसूक्ष्म बुद्धयः । तदप्यैश्वर्य्यज्ञानाभावमाह एकस्मिन्नेवासनशयनादौ आरमन्ते । सात्वतां स्वेषामेव ऋषभं नित्यकुल पतित्वेन वर्त्तमानं कृष्णभूतावासं सर्व्वभूतेष्वावसन्तमन्तर्य्यामिणमेवामंसत एको देव इत्यादौ सर्व्व भूताधिवास इत्यन्तर्यामि श्रुतेः । ननु स्वयं भगवत्त्वेन साक्षान्नारायणस्याप्यंशिनामित्यतस्ते हरिं न विदुरित्यहमवोचमिह जगतिसमुचितं जानन्तोऽ जानन्तश्च न निन्द्यन्ते । निन्द्यन्तेतु तन्मध्यवर्तिनोनोऽ र्द्धमर्द्धं जानन्त इति भावः ॥ ९ ॥

प्रदर्श्यातप्ततपसामवितृप्तदृशां नृणाम् ।
आदायांतरधाद्यस्तु स्वबिम्बं लोकलोचनम् ॥ ११ ॥
यन्मर्त्यलीलौपयिकं स्वयोगमायाबलं दर्शयता गृहीतम् ।
विस्मापनं स्वस्य च सौभगर्द्धेः परंपदं भूषणभूषणांगम् ॥ १२ ॥
यद्धर्म्मसूनोर्वत राजसूये निरीक्ष्य दृक्स्वस्त्ययनं त्रिलोकः ।
कार्त्स्न्येन चाद्येह गतं विधातुरर्वाक्सृतौ कौशलमित्यमन्यत ॥ १३ ॥
यस्यानुरागप्लुतहासरासलीलावलोकप्रतिलब्धमानाः ।
व्रजस्त्रियो दृग्भिरनुप्रवृत्तधियोऽवतस्थुः किल कृत्यशेषाः ॥ १४ ॥
स्वशान्तरूपेष्वितरैः स्वरूपैरभ्यर्द्यमानेष्वनुकम्पितात्मा ।
परावरेशो महदंशयुक्तो ह्यजोऽपि जातो भगवान् यथाग्निः ॥ १५ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

एवञ्च ये मर्त्यलोकवर्तिनः साधवस्तद्विरहदुःखिनः ये च यादवाद्यास्तन्नित्यसङ्गिनः संयोगसुखिनस्ते द्वय एव भक्तिमत्त्वात् धन्या एव अन्येत्वभक्ता नारकिन एवेत्याह देवस्य मायया ये स्पृष्टा विद्वन्मानिनस्तत्रापि ये च अन्यत् शिष्टसिद्धान्तादपरमति दुष्टमतमासुरमाश्रिता स्तेषां वाक्यैः कृष्णः शरीरं परित्यज्य-वैकुण्ठं गत इति तथा कृष्णो धृतराष्ट्रजरासन्धादि महामहा राजद्रोहाधर्म्मजनितेन ब्रह्मशापेन सकुल एव नाशं प्राप्त इति निन्दा भाषितैर्हरौ आत्मनि परमात्मनि उप्तात्मनो निक्षिप्तचित्तस्य भक्तजनस्य धी र्न भ्राम्यति किन्तु तन्माधुर्य्य एव निमज्जति येषां भ्राम्यति तैरप्यलं नारकिभिरिति भावः ॥ १० ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

पुलकैरोमांचैरुद्भिन्नमंगंशरीरंयस्यसः मीलंत्याद्दशाशुचः प्रेमाश्रूणिमुंचन् स्नेहप्रसरेश्रीकृष्णप्रेमपूरेसंस्तुतस्तेनक्षत्रापूर्णार्थः कृतकृत्योलक्षितः ॥ ५ ॥

भगवानेवलोकः प्रवेशस्थानंततो नृलोकंशरीराद्यनुसंधानम् ॥ ६ ॥

कृष्णद्युमणोःकृष्णाख्यभास्करस्य निम्लोचेअस्तमितेसतिअजगरेणकालमहाहिनागीर्णांपुग्रस्तेषुनोऽस्माकंगृहेपुत्वत्पृष्टानां किंनुकुशलंब्रूयाम् ॥ ७ ॥

योहरिंसंसारतापहरंनवेदसोऽयं दुर्योधनादिलोकोजनोदुर्भगो भाग्यहीनःयेकेचित् संवसंतः हरिणासहवासमपिकुर्वंतःकृतवर्मादयोहरिंसंसारतापहरंनविदुः तेयादवाअपिवर्ततेतिखेदेनितरांदुर्भगाः यथामीनाः जलशैत्यसंपादनेनपद्मवृद्धिकरत्वेनार्कतापहरमुडुपंनजानंतितद्वदित्यर्थः ॥ ८ ॥

यादवविशेषान् कौरवविशेषान् भगवतस्वानभिज्ञत्वेन विनिंद्याथयादवान् कौरवांश्चभगवत्तत्वज्ञान्स्तौतिइंगितज्ञाइति इंगितज्ञाः शास्त्राचार्याभिप्रायज्ञाः पुरुप्रौढाःपुरुकुलमुख्याः युधिष्ठिरादयःसा

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

त्वतावसुदेवादयः सात्वतामृषभंसात्वतश्रेष्ठं श्रीकृष्णंभूतावासंसर्वभूताधारंब्रह्मअमंसतअमन्यंत एकारामाः एकस्मिन्भगवतिआरमंतीतितेतयाकृतार्थाइत्यर्थः ॥ ९ ॥

हरिप्रावण्याप्रावण्ययोः हरिद्वेषिजनवचनादेः त्यागस्वीकारौज्ञापकमित्याह देवस्येति माययास्पृष्टाः अतएवअसदेववैरमाश्रिताः येशिशुपालपौंड्रकाद्याः तेषांवाक्यैः आत्मनिपरमात्मनिउप्तात्मनः अर्पितबुद्धेः हरिभक्तस्यबुद्धिर्नभ्राम्यतेमोहंनप्राप्यते अन्यस्यपरमात्मनि अनुप्तात्मनस्तुबुद्धिर्भ्राम्यतेइत्यर्थः ॥ १० ॥

---

भाषा टीका ।

सब अंगोंमें रोमांच खडे होगये नेत्र मूंद शोकत्याग स्नेह के प्रवाह में निमग्न सब अर्थ पूर्ण हुऐ ये दिखायो ॥ ५ ॥

धीरेसे भगवत के ध्यान से फिर देहानु संधान में आय नेत्रों-कों पोंछकर उद्धवजी विदुरजी से बोले ॥ ६ ॥

उद्धवउवाच—उद्धवजी बोले कि श्री कृष्ण रूप सूर्य अस्त हो गए काल रूप अजगर ने सब शोभित गृहों को ग्रसे सो हम कौन की कुशल कहें ॥ ७ ॥

ये सब लोक भाग्य हीन हैं यादव तो सब अत्यन्त भाग्य हीन हैं जो हरिके निकट बसते रहे तौ भी हरिको न जानते भये जैसे मत्स्य चंद्र के प्रतिबिम्बको न जानैं ॥ ८ ॥

भगवान् के चित्त के ज्ञाता अति निपुण एक स्थान में रहने वाले यादव लोग यादवश्रेष्ठ सर्व जगन्निवास ईश्वरको मानते भये ॥ ९ ॥

ईश्वर माया में फसे भए असत्पदार्थ के आश्रितजो असुरआदिक थे उन के वाक्यों करके आत्माहरि में लगो जिन को चित्त ऐसी हमारी बुद्धि नहीं भ्रमी ॥ १० ॥

---

### श्रीधरस्वामिकृत भावार्थदीपिका ॥

कोऽसौ हरिरित्यपेक्षायामाह प्रदर्श्येति । न तप्तं तपो यैः अतोऽवितृप्ता दृशो येषां तेषां । स्वबिम्बं मूर्त्तिं एतावन्तं कालं प्रकर्षेण दर्शयित्वा योऽन्तर्हितवान् लोकस्य लोचनमादाय आच्छिद्य तादृशस्यान्यस्य विलोकनीयस्याभावात् ॥ ११ ॥

तदेव बिम्बं वर्णयति त्रिभिः । यन्मर्त्यलीलासु औपयिकं योग्यं स्वस्यापि विस्मयजनकं यतः सौभगर्द्धेः सौभाग्यातिशयस्य परं पदं पराकाष्ठा । भूषणानां भूषणान्यङ्गानि यस्मिन् ॥ १२ ॥

दृशां स्वस्त्ययनं परमानन्दकरं त्रिभुवनस्थो लोकः प्राणिमात्रं अद्य इदानीं इह बिम्बे अर्वाक्सृतौ अर्वाचीनसंसारनिर्माणे मनुष्यनिर्माणे यत्कौशलं नैपुण्यं तत्कार्त्स्न्येन गतमुपक्षीणं नातः परं तस्य कौशलमस्तीत्येवं मेने । तन्मूर्त्तेर्विधातृसृज्यत्वाभावेऽपि लोकदृष्टिरियमुक्तिः ॥ १३ ॥

अनुरागेण प्लुतो व्याप्तो हासः रासो विनोदः लीलावलोकश्च तैः स्वकृतहास्याद्यनन्तरं प्रतिलब्धो मानो याभिस्ताद्दृग्भिः सह अनुप्रवृत्ता गच्छन्तं तमेवानुगता धियो यासां ताः । कृत्ये शेषो यासां ताः । असमापितकृत्या एवावतस्थुः ॥ १४ ॥

एवम्भूतबिम्बप्रदर्शने कारणमाह स्वीयान्येव शान्तान्यशान्तानि च रूपाणि तत्र शान्तरूपेषु इतरैः पीड्यमानेषु अनुकम्पितः कृतानुकम्प आत्मा यस्य अजोऽपि जातः आविर्भूतः महाभूतरूपेण नित्यसिद्ध एवाग्निर्यथा काष्ठेष्वाविर्भवति तद्वत् । अजस्य जन्मनि हेतुः महान् महत्तत्वं अंशः कार्यलेशो यस्याव्यक्तस्य तन्महदंशं तद्युक्त इति ॥ १५ ॥

---

### श्रीराधारमणदासगोस्वामि विरचित दीपिन्याख्य तट्टिप्पणी ॥

स्वयोगमायास्वरूपशक्तिस्तस्यावलंसर्वावतारिभ्यः सौंदर्य्यं प्रकाशकंवीर्य्यंदर्शयता गृहीतमाविष्कृतम् यदिति बिंबनिर्देशः दर्पणमणिचत्वरादौ स्वमूर्तिदर्शने स्वस्यापिविस्मापनं तथाचतद्वाक्यं अपरिकलितपूर्वः कश्चमत्कारकारीस्फुरति ममगरीयानेषमाधुर्य्यपूरः अयमहमपिहंतप्रेक्ष्ययंलुब्धचेताः सरभसमुपभोक्तुंकामये राधिकेवेति ॥ ११ ॥

यद्विम्बंकर्म इयं० विधातुः कौशलस्यकृष्णमूर्त्ति सौंदर्य्यैपरावधित्वमननलक्षणाल्लोकस्यप्राकृतस्य दृष्टिरुक्तानतुविज्ञस्यविज्ञदृष्ट्या त्वयमर्थः इहश्रीकृष्णबिम्बेविधातुः कौशलंगतंनष्टं सर्वत्रतत्कौशलं नतुभगवत्सौन्दर्य्ये तस्यस्वाभाविकत्वादिति ॥ १२ ॥

अनुरागेण व्रजसुन्दरीविषयकप्रेमसय तृष्णातिशयेनयदुक्तंरसामृतसिंधौ ॥ सदानुभूतमपियः कुर्वन्नवनवंप्रियं रागोभवन्नवनवः सोऽनुरागइतीर्यतेइति स्वकृतेतिप्रतिशब्दवलादध्याहृतम् ॥ १३ ॥

तत्रशांताऽशान्तरूपद्वयमध्ये शान्तरूपेषुश्रीवसुदेवादिषुइतरैरशान्तरूपैः कंसादिभिः स्वरूपैःसुष्ठुरूपैः विकटरूपैरितिश्लिष्टोर्थःस आतार्येतत्प्रत्ययः तस्यैवार्थः कृतानुकम्पइति आत्मामनः तदुक्तइतिप्रपञ्चेऽवतीर्णइत्यर्थः यद्वामहद्भिरंशाभिरंशैश्चयुक्तइति एतेचांशकलापुंसः कृष्णस्तुभगवान्स्वयमिति परिभाषाश्रुतेः ॥ १४ ॥

पारतंत्र्यप्रतीतेर्जन्मभयादिना कर्माधीनत्वभानात् तत्रजन्मनोदिव्यत्वाल्लौकिकानुकरणं दुर्वितर्कभयपलायनादित्वसंभवाद्दुर्घटइतिज्ञेयम् ॥ १५ ॥

---

### श्रीमद्वीरराघवाचार्यकृत भागवतचंद्रिका ।

भवत्वेवमजस्यवार्त्ता सखेकीर्त्तयेत्यस्य किमुत्तरमित्यतआह प्रदर्श्येत्यादिना योभगवान्तप्तंतपो यैस्तेषामवितृप्ताद्दृशः येषांनृणांलोकलोचनलौकैरवलोकनीयं कर्माणाद्युद् अतिसुंदरंस्वरयांबिंबंवपुःप्रदर्शयित्वा आदायस्वबिंबंगृहीत्वांऽतरधादंतर्दधे आदायांतरधादित्यनेनस्वबिंबेनसहैव गमनमप्राकृतत्वादिति सूचितम् ॥ ११ ॥

लोकलोचनमित्यनेनसूचित मेववपुषः सौंदर्यंवर्णयतित्रिभिः यदिति मर्त्यलीलासु मनुष्यलीलास्वौपयिकं योग्यंस्वस्ययायोगमाया आश्चर्यशक्तिः तस्या बलंदर्शयता लोकस्येतिशेषः गृहीतंस्वस्यातिविस्मापनमाश्चर्यकरंसौभगर्द्धेः सौभाग्यसमृद्धेः परंपदंपराकाष्ठाभूतं भूषणभूषणांगंभूषणानिकौस्तुभादीनि भूषयंत्यलंकुर्वंतीतिभूषणानि अंगानिउरः प्रभृतीनियस्मिंस्तदेवंयद्वपुः तदादायांतरधादितिपूर्वेणान्वयः ॥ १२ ॥

यदिति धर्मसूनोर्युधिष्ठिरस्यराजसूययागे त्रिलोकंत्रिभुवनस्थलोकंदृशांस्वस्त्य यनंपरमानन्दकरं यद्वपुर्निरीक्ष्य विधातुर्ब्रह्मणः अर्वाक्सृतौअर्वाचीनमनुष्यसृष्टौयत्कौशलंनैपुण्यंतत्कार्त्स्न्येनसाकल्येन इहवपुषि अद्यइदानींगतंपर्यवसितमित्यमन्यतमेने विधातुःकौशलं कार्त्स्न्येनास्मिन्नेववपुष्युपक्षीणंनातः परंतस्यकौशलमस्तीत्येवंमेनइत्यर्थः तद्वपुषोविधात्रसृष्टत्वेपिलोकदृष्टेरियमुक्तिः ॥ १३ ॥

यस्येति यस्यभगवतः अनुरागेणावृतः हासोहसनंरासः क्रीडा लीलावलोकश्चतैःसाधनैः प्रतिलब्धः मानोवहुमानोयाभिस्ताव्रजस्त्रियःदृग्भिः सहानुप्रवृत्तधिय अनुप्रवृत्ताः गच्छंतमेवानुगताः धियो यासांताः भगवद्गृहानुवृत्त्यन्तर्वाह्येंद्रियवृत्तयइत्यर्थः अतएव खिलकृत्यशेषाः खिलस्य कृत्यस्यशेषोयासांताः कृत्याकृत्यविवेकशून्याः सत्योऽवतस्थुः किलकृत्यशेषाइत्ययमपिपाठः ॥ १४ ॥

नन्वीदृशंभुवनसुंदरंवपुः किमर्थमंतर्द्धापितवानितीमामाशंकां वपुः परिग्रहनिमित्तंवपुषः स्वरूपंचाह स्वशांतरूपेष्विति अनेनजीवेनात्मनानुप्रविश्यनामरूपेव्याकरवाणि नामरूपयोर्निर्वहितातेयदंतरातद्ब्रह्मसत्तसत्यंचानृतंचसत्यमभवदित्यादि श्रुत्युक्तरीत्यासर्वाणि सत्वप्रचुराणिरजस्तमः प्रचुराणिचरूपाणिस्वस्यैवरूपाणिस्वस्यैव शरीराणि तत्रप्रशांतरूपेषुसत्वोत्तरेषुरूपेषुइतरैः स्वरूपैरद्यमानेषुपीड्यमानेषुसत्सुअनुकंपितः आत्माचित्तंयस्यसः सत्वोत्तरेष्वनुकंपापरः परावरेशः सत्वाधिपतिः भगवानजोऽपिकर्मायत्तोत्पत्तिशून्योपिमहदंशयुक्तः महतांऽशेनचरामरूपेणयुक्तः अकर्मायत्तस्वेच्छोपात्ताप्राकृतदिव्यरूपविशिष्टोऽवतीर्णइत्यर्थःयथाग्निर्दार्वादिष्वाविर्भवन्स्वस्वभावमजहन्नेवाविर्भवतितथायमपिभगवान्देवमनुष्यादियोनिष्वाविर्भवन्निरस्तनिखिलदोषानवधिकातिशयासंख्येयकल्याणगुणाकरत्वस्वभावमजहन्नेवावतीर्णइतिदृष्टांताभिप्रायः ॥ १५ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली।

योज्ञानिबुद्धिविषयोहरिः सएवायंकृष्णइत्याह प्रदर्श्येति अतप्त तपसामस्मिन्जन्मनीतिशेषः अनेनपूर्वतनतप्ततपस्त्वंसूच्यते स्वविंब मिति सच्चिदानंदलक्षणंस्वरूपंतत्प्रतिमाचगृह्यते तेनज्ञानिनांसाक्षादितरेषामितिज्ञायते लोकस्यजनस्यलोचनंनेत्रंयास्मिस्तल्लोकलोचनं जनरंजनंवा अधादितिलुङ्लृङर्थे अंतर्धास्यतीत्यर्थः वियोम्निमंडलं समं प्रतिमासुख्यलक्ष्मस्विति तुनाद्वेवावब्रह्मणोरूपेइत्यादिश्रुतिसूचयति ॥ ११ ॥

पुनरपियद्वपुःस्वयोगमायाबलंस्वरूपेच्छासामर्थ्यंदर्शयताहरिणा गृहीतं यच्चमर्त्यलीलौपयिकंमानुषलीलांबालकौमारादिविषयामुपयातीति अनेनस्वतएकप्रकारलक्षणमुक्तंभवति स्वस्यकृष्णस्यचविस्मापनंविस्मयकरं यच्चसौभगर्द्धेःसौंदर्यसमृद्धेःपरंपदंस्थानं यच्चभूषणानामपिभूषणान्यंगानियस्मिन्तत् ॥ १२ ॥

पुनरपिकीदृशं धर्मसूनोराजसूयेयज्ञेपश्यतोजनस्यदृशांस्वस्त्ययनं आनंदाश्रयं यद्वपुर्निरीक्ष्यत्रिलोकइत्यमन्यत कथंविधातुर्विरिंचस्यार्वाक्सृतावंत्यसृष्टौकात्स्न्येनकौशलमत्रकृष्णव पुषिउपगतंपर्यासमितिनैतत्सत्यमित्याह वतेति अनेनात्रिलोकस्याज्ञानमाश्चर्यमितीविस्मयंकरोति आनंदरूपंदृष्ट्वाऽपिलोकोभौतिकमेवतुमन्यतेविष्णुरूपंच-- अहोभ्रांतिर्वहुस्थितेतिवचनात् ज्ञान्यज्ञानिनांसमुच्चयेचकारः तथाचैवंयोजना अत्रजविराशौ त्रिषुवेदादिषुलोकःप्रकाशोज्ञानंयस्यसतथा वेदैकप्रमाणोजनोधर्मसूनोराजसूयेउपगतंसर्वाधिकत्वेनास्थितंयद्वपुर्निरीक्ष्यसृतौमनुष्यसृष्टिमार्गेप्रवर्तमानस्याविधातु र्यत्कात्स्न्येनकौशलंमंगलविषयंनिर्माणपाटवंतदर्वाक्नीचमित्यमन्यत श्रीकृष्णसौंदर्यस्याकृत्रिमत्वात् अतएवानंतत्वाच्चतज्ज्ञान्यज्ञानिनांज्ञानेऽज्ञानेवा-वैचित्र्यमहोइत्याखादयति ॥ १३ ॥

यस्यश्रीकृष्णस्यानुरागेणस्नेहेनप्लुतौ हासरासौअनुस्मितहासरासक्रीडेताभ्यांसहितेनलीलावलोकेनप्रतिलब्धोमानोयासांतास्तथोक्ताः हासरासशब्दोरसपरस्तेनवा रसःसीरोवरइतिवचनात् रसएवरासः वार्तासंभवयोःकिलेतिवचनात्संभावितोयमर्थः व्रजेगोष्ठे ॥ १४ ॥

अवतारप्रयोजनमाह स्वशांतेति स्वस्यशांतरूपेषुसात्विकप्रकृतिषुसुरादिष्वितरैरशांतरूपैरसुरैरभ्यर्द्यमानेषुसत्सु अनुकंपितात्माअनुवृत्तचित्तोमहदंशयुक्तःमहांश्चासावंशोमहदंशोमुख्यप्रतिबिंवभूतोब्रह्मा तेनप्रार्थितत्वेनयुक्तोविनियुक्तःपरावरेशोऽजो विष्णुर्जातोभवतीत्यन्वयःयथाग्निर्दारुणइतिशेषःअनेनजनीप्रादुर्भावइति धात्वर्थोविवृत इति ॥ १५ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भ।

यथा तथापि सर्वाकर्षणमेव तद्रूपमित्याह प्रदश्येति चक्षुशक्षुरिति श्रुत्युक्त रिशा। लोकलोचनरूपं स्वविम्बं स्वमूर्त्तिमादाय गृहीत्वा। तथोक्तं मौपले पर्वणि। कृत्वा भारावतरणं पृथिव्याः पृथुलोचनः। मोचयित्वा तनुं कृष्णः प्राप्तः स्वस्थानमुत्तममिति। मोचयित्वा भारावतरणात् त्याजयित्वा नतु मुक्तेत्यर्थः ॥ ११ ॥

तत्र हरावुप्तात्मनां निश्चयमाह, यस्मत्यैति। स्वयोगमापायलं



श्रीमज्जविगोमिकृत क्रमसन्दर्भ।

स्वचिच्छक्तेवीर्थं एतादृशसौभाग्यस्यापि प्रकाशिकेऽयं भवतीत्येवंविधं दर्शयताविष्कृतं। सकल स्ववैभवविद्वद्गणविस्मापनायेति भावः। न केवलमेतावत् तस्यैव रूपान्तरे तादृशत्वाननुभवात् तत्रापि प्रतिक्षणमप्यपूर्वप्रकाशात् स्वस्यापि विस्मापलं यतः भौमगर्द्धेः परं पदं परा प्रतिष्ठा। ननु तस्य भूषणं त्वस्ति सौभगहेतुरित्यत आह भूषणेति। कीदृशं मर्त्यनीलौपयिकं नराकृतीत्यर्थः। तस्मात् सुतरामेव युक्तमुक्तं श्रीमहाकालपुराधिपेनापि द्विजात्मजा मे युवयोर्दिदृक्षुणा मयोपनाता इति। श्रीहरिवंशे श्रीकृष्णेन च। मद्दर्शनार्थं ते वाला हृतास्तेन महात्मेति ॥ १२ ॥

देवमायास्पृष्टानामाह यद्धर्मेति ॥ १३ ॥

अथ प्रेमविलासयोः परमोत्कर्षमाह यस्येति। एषु वाक्येषु यच्छव्दानां पूर्ववाक्यस्यान्ते पठितत्वात् न पूर्वान्वयापेक्षा ॥ १४ ॥

अनुकम्पामाह स्वशान्तेति। इतरैरशान्तैः स्वरूपैः तत्स्वभावजरूपैरित्यर्थः। तच्च जन्मनि तत्तदंशानादायैवेत्याह महदंशयुक्तः महतः स्वस्यैवांशैर्युक्तः महान्तं विभुमात्मानमित्यादि श्रुतेः। महद्वचेति न्यायप्रसिद्धेश्च। महान्तो ये पुरुषादयोअंशास्तैर्युक्त इति वा लोकनाथं महद्भूतमितिवदात्मव्यभिचारः। महद्भिर्वंशिभिर्वंशैश्च युक्त इति वा ॥ १५ ॥

---

श्रीमद्वल्लभाचार्य्यकृत सुवोधिनी॥

अतएव भगवान् ज्ञापनार्थमागतः प्रायेण सर्वानेवानधिकारिणो ज्ञात्वास्वरूपमुपसंहृतवानित्याह स्वोपेक्षादोषाभावाय प्रकर्षेण दर्शयित्वेंद्रियाणि वहिर्मुखत्वेन दर्शनकारणायोग्यत्वेऽपि स्वसामर्थ्यं दत्वाप्रदर्शनं प्रशब्दार्थः तेषां दृष्टीनांसातराभावमाह अत सतपसामिति अतप्ततनुर्नतदामोऽश्नुतइतिश्रुतेः येन नतप्तंतपः सत्वाममपक्कः नहिसजलाधारोभवितुमर्हति जलनिकटे-- स्थितेप्यामघटेनजलंप्रक्षिप्यते स्वरूपनाशशंकया तथा भगवानपि स्वरूपं तेषां दृष्टौ न स्थापितवान् तयोर्व्यतिरेकेण भगवत्यन्यथा वुद्धिसंभवात्तन्नाशएवस्यात् तर्हि एतावत्कालं कथंस्थापितवान् तत्राह अवितृप्तदृशामितिनाविशेषेण तृप्तादृष्टियेषांवस्तुसामर्थ्यात् वस्तुविचारमकृत्वैव रूपमेव पश्यन्तः स्थिताः तृप्तदृशोःजाताः सर्वथा तृप्ताश्चेदन्यथा जानीयुः अतउपसंहृतवानित्यर्थः नृणामिति राजसत्वं आदायेति धर्मद्वारा तेषां दृष्टिषु प्रविष्टं तत आच्छिद्यस्वयमप्यंतर्हितवान् अविवन्मेषवद्वातृप्तादृष्टियेषांतेह्यधोमुखाः नीचदृष्टयः अतएव आदानेसुगतास्वंविवमिति स्वयमादित्योविंवं रूपं अनेन विदुरज्ञानंपरास्तं यथा तेजो रूपं विंवं तथाऽऽकृतिः सच्चिदानंदरूपेति किंच तद्रूपं लोकानां लोचनं ज्ञानरूपं नहि पदार्थवोधव्यतिरेकेणचक्षुषाकिंचिज्जानाति चक्षुषश्चक्षुरितिश्रुतेः लोचनमेतदेवनहि लोचनं दृश्यं भवति निमेषमात्रेण च तिरोभवतीति तस्य तिरोभावो युक्त इत्यर्थः ॥ ११ ॥

तु शब्देन रूपांतरेण तिष्ठतीति सूचितं तद्रूपं सच्चिदानन्दरूपमिति निरूपयितुं सदुत्कर्षचिदुत्कर्षमानंदोत्कर्षं चाह त्रिभिः

### श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

धीरत्वंममर्त्यैपुमर्त्यैर्लीलाभावः तथापिपार्थिवानां तुयोग्यताभ
तोऽलौकिकमेव यन्मनुष्यरूपसदृशंशुद्धं स्वरूपंतंद्वलीलायोग्यंकार्यं
सर्वदोषराहित्यात् किंच स्वयोगमायावलं दर्शयतागृहीतं स्वस्यासा
धारणरूपासाधनभूता सर्वभवनसमर्थायाकारणरूपा मायातस्याव-
लंपरीक्षार्थं वलिनायथामहत्कर्मकार्यंते तथाप्यतोऽनंतरूपकऽर्याः स-
र्वसामर्थ्यमेकव्यापृतंप्रवर्द्धनीयमितियत्तादृशंरूपंनिर्मितं तानिनानाविध।
निरूपाणिजलंस्वच्छतया गृह्णातितस्यजलस्योत्कर्षोमाययैववैकुंठस्थ
तमपिरूपंगृह्णातीति जलभावेपिजलोत्कर्षः किंचस्वस्यापि विस्मा
पनं स्वयंहितेजोमयः सतवप्रका।शकः सर्वमेवस्वरूपमन्येभ्यः प्रदर्श-
यतितस्यनकिंचिद्विस्मयं तादृशस्याप्येतद्विस्मापनं विस्मयजनकं
अहोमयैतादृशमपि लोकेप्रदर्श्यतइति तेजोरूपंयत्तेजसोत्कृष्टं किंच
सौभगर्धेः परंपदंसौभाग्यस्यर्द्धेः अणिमाद्यष्टैश्वर्यस्यचपरमंस्थानं
प्राणस्ययोगस्य चकार्यमेतद्द्वयंतेनवायुरूपं सद्वायोरुत्कृष्टंसौभगमत्र
सौंदर्यातिशयः सर्वपुरुषरोचकत्वंऋद्धिः समृद्धिः पुरुषोत्तमस्यापि
रुचिजनकमतएव तद्रूपेभगवतोऽपिप्रीतिःप्राणादप्यधिका किंच भूष-
णभूषणांङ्गमिति भूषणानांभूषणभूतान्यंगानियस्य भूषणान्यंगदादी-
निकौस्तुभांतानि तेषांविभूषणमंगमेव यथेंद्रनीलमणिः स्वर्णमणी
नां अनेननभस्तुल्येविमान विद्युदादयइवभगवद्रूपे आभरणानिशोभंत
इतिआकाशतुल्येप्याकाशादुत्कृष्टम् ॥ १२ ॥

एवंसदुत्कर्षंनिरूप्याचिदुत्कर्षमाह यद्धर्मसूनोरितिधर्मेहि ज्ञानम
भिव्यक्तंभवतिधर्मोज्ञानंधर्मादप्युत्कृष्टं तस्यापिराजसूययागोधर्मो-
त्कर्षरूपः तादृशींमवस्थांस्मृत्वा धर्मेणाहवतेतिहर्षेसर्वेपिभगवद्रूपं
दृष्ट्वैवज्ञातवंतस्तद्रूपंवर्णयति दृक्स्वस्त्ययनमिति दृष्टीनांस्वस्त्यय
नमिति दृष्टानांस्वस्तिकल्याणरूपमयनंस्थानंसर्वेपिविषयादर्शनांना
शकाःयेपिभगवद्विषयास्तेपिस्वरूपतःकल्याणरूपा किंवहुनाविषय-
मात्रमेवतद्दृष्टिप्रेमजनकंनतुपोषकज्ञानमेवतुदृष्टिपोषकं ज्ञानेंद्रि-
याणांचतदेवायनं सजातीयएवप्रविष्टं सजातीयंवर्द्धतेतेनविषयपक्षे
पिकश्चिद्धीरःप्रत्यगात्मानमैक्षदितिन्यायेनयदाज्ञानमेवपश्यतिचक्षुस्त
दास्वस्त्ययनंभवतिचक्षुषश्चक्षुरितिश्रुतेश्चतदात्रिलोकस्य यावुद्धि-
र्जातातामाह इह इहचिद्रूपेभगवच्छरीरेकौशलत्वंविधातुर्जगत्कर्तुर्गतं-
अर्वाक्सृतावेवकौशलमितोऽर्वाक्सत्वसृष्टावेवजगत्कर्तुः सामर्थ्यंअथ-
वाअर्वाक्सृतिर्मनुष्यसृष्टिःअर्वाक्स्त्वांतत्रयत्कौशलंतादिहगतं अर्वाक्
सृतिकौशलेनेदंकर्तुं नशक्यतइत्यमन्यततेनस्वस्त्ययनत्वात्सर्वलोकेप्रती
तिसिद्धत्वात्सत्वसृष्टव्यतिरिक्तंमतांचिद्रूपामिति ॥ १३ ॥

आनंदरूपतामाह यस्यानुरागेतिस्त्रियोह्यानंदप्रधानास्तासांदृष्टिरा
नंदएवभवति यतः आनंदार्थमेवप्रयततेसाधनंचाप्रकृतेसाधनत्वाभावा
न्निरुपाधिकस्त्रीयदृष्टिविषयत्वेनानंदत्वमुच्यते यस्यभगवतोऽनुरागे
णप्लुतोयोहासःप्लुतोनिमग्नोऽधिकोवातत्सहितो योरासोरससमू
हात्मकोवहुनर्तकीपुनृत्यविशेषस्तत्रयल्लीलावलोकनंतेनप्रातिलब्धोमानं
याभिःपूर्वमभिमानंपरित्यज्यभक्तिमार्गानुसारेणभगवंतंप्रपन्नास्तत्रस
र्वपर्यंतंभगवद्व्रजनेजातेऽनुरागःप्रवृद्धो हाससहितोरासोभावो-
द्गारीहृदयेभगवदैक्यंप्रापयति तत्रहास्यांशः काममध्येप्रविष्टोभेदम
पिवोधयेदित्यनुरागेणप्लुतः कृतःपरमप्रेमात्मकोजातः स्वादजनक
त्वाद्धासोप्यपेक्षितःरासोवश्यतापादकःअतएवतत्रवशीभूतस्यभगव
तोयल्लीलावलोकनं तेनपूर्वत्यक्तोपिमानोभगवति अनेनदीनतयाभ
क्तिरसआप्लुतःस्वतंत्राएवताभगवदानंदानुभवेसमर्थाजाताइत्यर्थः-
व्रजस्त्रियोगोकुलस्त्रियःव्रजतीतिव्रजःसंदैकत्रस्थितिरहितःतादृशी--

### श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

तास्तच्चित्तयैकत्ररसास्वादनंस्वभाव तोविरुध्यतइतिस्वभावविजयीभ
गवानानंदमयःकामसाधकत्वाभावमाह दृग्भिरनुवृत्ताधयइतिदृग्भिःस
हअनुप्रवृत्ताधियोयासां यथादृष्टिर्भगवतिप्रविष्टातत्संगेचेतनापितत्रैवग
ताअतोनस्वशरीरेतासांकामभोगापेक्षाभगवत्स्वरूपएवानंदानुभवा--
त्कामेनानंदोनवास्त्वस्मिन् जातस्यानंदस्यानुभवः अंतःकरणादीनां
तत्रैवव्यापृतत्वाच्चात्मन्यानंदजननसामर्थ्यं मस्मिन्नर्थेनमंदः कथं
व्यइत्याह किलेति किंच कृत्यशेषाएवभवतस्थुःकृत्यशेषायास्तांप्रति
क्षणंभगवदात्मकतामेव प्राप्नुवंतिनिजगृहकृत्येतासांकृत्यशेषएवेति
देहस्मरणाभावादतोपिस्वमित्रानंदोत्पत्तिःयथाशु रेस्थितंदृष्टिर्विषयी
करोतितथादूरेस्थितं भगवंतमप्यानंदरूपंदृष्टिर्विषयीकरोत्यन्यथानं
दप्रेप्सूनामवंस्थितिर्नस्यात् ॥ १४ ॥

एवंसच्चिदानंदरूपत्वंस्वरूपस्योपपाद्यतत्रजीवस्येवभगवतोऽस्थि
तिर्वक्तव्येत्याशंक्यतत्रैवसच्चिदानंदरूपेऽक्षरेस्थितस्यपुरुषोत्तमस्याग्नि
वत्तत्रभगवदाविर्भावःप्रादुर्भावइत्याहस्वशांतरूपेष्विति अक्षरस्यैवप्र-
कारेणाविर्भावश्चानिमित्तंनभवतिअन्यद्वारेकिमर्थंकारयन्नपिमोभ
वेत्अंतःपुत्रशिक्षावद्भगवान्दैत्यान्मारयतीत्याहस्वशांतेषुस्वरूपेषुदेवा-
दिरूपेष्वशांतैरितरैः स्वरूपभूतैरेवदैत्यैरर्द्यमानेषुदयाविष्टचित्तः सर्वां-
शेनाप्यजःउभयसमाधानार्थंस्वयंसाक्षरःपुरुषोत्तमआविर्भूतइत्यर्थःका-
लकर्मादिप्रेरणाभावार्थमाहपरावरेशइति परःकालादिरवरःकर्मादिस्ते
षांनियंता ननुपुरुषोवास्वानंदेनसहाविर्भावंलभतां किंपुरुषोत्तमादिनेत्य
तआह महदंशयुक्तइति महानंशोयस्यप्रथमपुरुषतद्युक्तस्रष्टाथःस्व
स्मिन्प्रकृतिपुरुषमंतर्भाव्यैवाविर्भवति अतएवस्वास्मिन्नयशोत्रादिभि-
र्जगदुपलभ्यते एतदेवहिब्रह्मलिंगम् अन्यथाव्यावृत्त्यर्थमाह भगवानि
तियथाग्निरितिव्याख्यातम् ॥१५॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

तस्माद्भक्तानां मतमेव वास्तवं भवेत्तदेव किमिति अपेक्षाया-
माह प्रदर्श्येति । अवितृप्तदृशां नृणामित्यनादरे षष्ठी यस्तु स्वविम्वं
स्वीयं श्रीविग्रहं नॄन् प्रदर्श्य तन्माधुर्य्यमास्वादयितुमारब्धवत एव
तान् अवितृप्तदृशोऽनादृत्य स्वविम्वं पुनरादाय तद्गृ‌‌ह्य आच्छिद्य
नीत्वा अन्तरधात् शीघ्रं तिरो वभूव । अत्र यत्पदस्योत्तरवाक्या-
र्थंगतत्वेन न तत्पदापेक्षा । साधु चन्द्रमसि पुष्करैः कृतं मीलितं
यदभिरामताधिक इतिवत् । तिरोधानाकरणे अतिलोभिनस्ते पुन-
रपि निर्भरमास्वादयिष्यन्तीति वुद्ध्यैवेत्युत्प्रेक्षा ध्वनिता । ननु तर्हि
दत्तापहारी सोऽभूत्तत्राह लोकानां लोचनानि स्थितानि यत्रेति
लोचननान्यपहर्त्तुमेव नृभ्यः स्वविम्वं दत्तं नतु तत्तस्य परमार्थदानं
किन्तु चौरस्येवेति पुनरप्युत्प्रेक्षा । ततश्च कृष्णेन पृथिव्यामवतीर्य
सर्वचक्षुर्हरणाल्लोका अन्धीकृता एव नतु पालिता इति व्याजस्तुतिः
ननु स्वविम्वमाधुर्यस्यानन्त्यात् चिरायापि पायने तस्य का हानि-
रभविष्यत्तत्र तस्य कृपासिन्धोः को दोषः किन्तु लोकानामेव
भाग्याभाव इत्याह अतप्ततपसामिति लोकरीत्यैवोक्तिर्वस्तुतस्तु
अतप्ततपसां किन्तु प्राप्ततत्कृपाभराणामित्यर्थः । न ह्येतादृशमनु-
रागित्वापादनमेव मुख्यप्रयोजनञ्च ध्वनितं अस्मिन्नभ्युदिते जातु
न तृप्तिर्दर्शनादिष्वित्युज्ज्वलनीलमण्युक्तेरतृप्तनेत्रत्वं स्नेहलक्षणं
तृष्णाधिक्यादनुरागलक्षणं वा ज्ञेयं । तथा स्वविम्वं आदायैव अंत
रधात् । ननु परित्यज्य इति शरीरपरित्यागवादिनः पराहताः ।

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

तथा यन्मर्त्यलीलौपयिकमिति यद्धर्मसूनोरित्युत्तरश्लोकेषु स्वबिम्ब स्यैव विशेषणादानान्मानुषं विम्बं परिहाय दिव्यं स्वबिम्बमादाया-गादिति विरुद्धं व्याचक्षाणा अपि पराहताः । तथा प्रदर्श्येति अन्त र्धादिति ननु पश्यति स्मेति प्रदर्शने अन्तर्द्धाने च तस्यैवैव का-रणमिति कर्माधीनत्वविवादिनोऽपि पराहताः तस्मादेवस्य माय-या स्पृष्टा इति पूर्वश्लोकोक्तानामसतां मतं दूषयितुं प्रवृत्तस्योद्धव-स्यैवेयं वाणी प्रमाणी कर्त्तव्या तत्वेतत्प्रतिकूलानां वाक्यानां को दीरपीत्येतद्वाक्यं कृष्णस्तु भगवान् स्वयमिति वाक्यवदेव मन्तव्य-मिति शास्त्रस्यास्य स्वरसो रसनीयः ॥ ११ ॥

नन्वन्तर्द्धाय स्वबिम्बं वैकुण्ठमेव किं नीतवांस्तत्राह यद्बिम्बं मर्त्यलीलासु औपयिकमुपयुक्तं कथं वैकुण्ठं यात्विति भावः । तेन द्वारकायामेव सम्प्रत्यपि यथा पूर्वमेव तद्वर्त्तत एव तदिच्छाभावा-दवत्या लोकास्तन्न पश्यन्तीति मात्रं विशेष इति भावः नच मर्त्य-लीलौपयिकत्वेन तस्यापकर्षो मन्तव्यः प्रत्युत वैकुण्ठलीलास्वरूपे-भ्योऽपि परमोत्कर्ष एवेत्याह । स्वयोगमायास्वरूपभूता चिच्छक्तिस्त स्या बलं सम्पूर्णमेव सामर्थ्यं दर्शयता दर्शयितुमिति नच किम् ऐश्वर्यं माधुर्य्यधानिद्वन्द्वस्य स्थापितमपि तु स्वसर्व्वस्वमेवात्र विंबे निक्षिप्तं नापि वैकुण्ठेऽप्येवं बलं दर्शितमिति भावः गृहीतमिति स्थितिसर्गनिरोधेषु गृहीता मायया विभोरित्यत्र मायया गुणा गृहीता इति वदभेदेऽपि भेदोक्तिः । बुद्धिर्हि भगवती अभेदेऽपि भेदं जनयतीति न्यायात् गृहीतमाविष्कृतमिति सन्दर्भः । यद्वा यद्बिम्बं दर्शयता दर्शयितुं स्वयोगमायाबलं गृहीतं राजमहिषीवि-वाहादिषु तथा प्रसिद्धेः बलमेव द्योतयति स्वस्य च वैकुण्ठस्थस्य श्रीनारायणस्वरूपस्यापि विस्मापनं अहो रूपमहो सादृगुण्यमिति चमत्कारप्रापकं अन्यावताररूपगुणादिदर्शिनां वैकुण्ठीयपार्षदा-दीनां का वार्त्तेति भावः । अतएव सौभगर्द्धेः सौभाग्यसम्पत्तेः परं पदं परावधिस्थानं अतो वैकुण्ठस्यापि तद्दर्शनेच्छोद्भवति । द्विजा-त्मजा मे युवयोर्दिदृक्षुणेत्यादेः भूषणानामपि भूषणान्यंगानि यस्ये-ति परमसौन्दर्यमुक्तम् ॥ १२ ॥

तस्य सौभगर्द्धिमत्त्वं त्वयापि साक्षात्कृतमिति स्मारयति यद्धर्मेति । त्रिलोकः त्रिभुवनस्थो लोको ब्रह्मेन्द्रादिरपि इति अम-न्यत किं । अथ इह जगति विधातुरर्वाक्सृतौ अर्वाचीनविचित्र-संसारनिर्माणे यत्कौशलं तत्सर्वं गतमुपक्षीणं एतदंगकातौ दृष्टा यां विधातृत्वयानां नीलोत्पलदलिताञ्जनेन्द्रनीलमणिनीरदानां जुगुप्सा एतन्मुखे दृष्टे चन्द्रपद्मयोरपि धिक्कार इत्येवम् ॥ १३ ॥

किञ्चैवमगुक्तेभ्यस्त्रिलोकस्थेभ्यो ब्रह्मरुद्रादिभ्योऽपि व्रजस्त्री-णामनुरागाधिक्यं यतस्तैस्तथा सम्मानितेन कृष्णेनापि ता एव यथा सम्मानिता ननु तथा तेऽपीत्याह अनुरागेण प्लुतैर्व्यासैर्हासै-रासो रससमूहो यत्र तथाभूतो यो लीलाया अवलोकस्तेन स्वकृतेन जन्मनामादानान्तरं प्रतिलब्धो मान आदरो याभिस्तास्तदैव दृग्भिः सह अनुप्रवृत्त्या गच्छन्तं तं एवानुगता धियोऽपि यासां ताः । अव तस्थुस्तत्क्षण एव जाड्योदयात् किमपि चेष्टितुं न प्रबभूवुरित्यर्थः ततश्च कृत्येषु मार्जनलेपन-दधिमथन-परिवेषणादिषु शेषो यासां ताः तत्तत्कृत्यमध्य एवाकस्मिक-तद्दर्शनप्राप्तेरसमापितकृत्या एव बभूवुरित्यर्थः । तेन तस्य स्वपर्यन्त सर्वजगत्सु विस्मापनता व्रज-स्त्रीषु पुनर्मोहनता च प्रेमाधिक्येनैवाभूदिति भावः । तदेवं तद्बिम्ब स्य मर्त्यलीलौपयिकत्वप्रपञ्चनेन मर्त्यलोकस्थगोकुलमथुराद्वारका-

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

स्थैव नित्यस्थितत्वं द्युमणिदृष्टान्तेन दर्शनादर्शनमात्र विशेषत्वञ्च ध्वनितम् ॥ १४ ॥

ननु वैकुण्ठान्नारायण एवागत्य वसुदेवगृहे अवततारेति क्वचि त् पुराणपुरुषः सितकृष्णकेश एवेति क्वचित् क्षीरोदनाथ इति क्वचिन्नरनारायणाविति क्वचिदुपेन्द्र इति त्वन्मुखात्तु द्वारकादि-धामस्थो मर्त्यलीलौपयिकः सर्वोत्कृष्ट इति श्रूयते अत्र को निश्चय इत्यत आह स्वशान्तेति स्वीया ये शान्तरूपा भक्तास्तेषु इतरैः स्व-रूपैर्घोरैर्मूढैश्च पीड्यमानेषु सत्सु अनुकम्पितो जातानुकम्प आत्मा मनो यस्य सः । प्रकृतेः परे ये नारायणादिस्वरूपाअपरे ब्रह्मादय-श्च तेषामीशः स्वयं भगवान् श्रीकृष्ण- महदंशयुक्तः महान् महत्-स्रष्टा पुरुषः महान्तं विभुमात्मानमित्यादि श्रुतेः ॥ अंशा मत्स्यकू-र्म-नृहरि-नरनारायण-वामनादयस्तैर्युक्तः सन् अजोऽपि आत्यन्ति-ककारणत्वादजन्योऽपि प्राकृतजन्मरहितोऽपि वा जात आविर्भूतः महाभूतरूपेण नित्यसिद्ध एवाग्निर्यथा माणिशिलासु घर्षणवशादा विर्भवति तद्वत् । तेन मथुरादि स्वीयनित्यधामस्थ एव भगवान् मथुरास्थ वसुदेवो अग्रसेनादिषु स्वभक्तेषु लब्धातिकष्टेषु कृपाशक्ति घर्षणवशेनाविर्भूतो इदयो बभूवेत्यग्निदृष्टान्तः । तथा मथुरोदयशैले देवक्यां प्राच्यां दिशि उदितः सन् दुष्टतमांसि संहृत्य शिष्टकमला न्यनुरागिचक्रवाकांश्च तैरभ्यर्हितानि संतोष्य धर्ममर्यादाः प्रवर्त्य प्रभासास्तशैले अस्तंगत इति द्युमणिदृष्टान्तश्च परम्परानुकूलः स्वधामस्थं सन्तमेवाविर्भूतं तं स्पष्टमेवाभिदधाति न तु कुतश्चिद्वै-कुण्ठनाथो वैकुण्ठात् क्षीरोदनाथः क्षीरोदात् नरनारायणावुपेन्द्रा दयश्च स्वस्वधामत आगत्यावततारेति यथास्थानं प्रसिद्धिरपि मह दंशयुक्त इति विशेषणादाविर्भावसमये ते वैकुण्ठनाथादिभिराग-त्यपरावरेशे कृष्णे संमिलनात् सुसंगतैवेति सर्वं मुनिवाक्यञ्च प्रमाणम् ॥ १५ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

यादवादीनांकुशलप्रश्नेकिंतुनः कुशलंब्रूयामित्युक्तमयकोसौह-रिरित्याकांक्षायां हरिस्वरूपगुणविभ्रमादिकंवर्णयन् अर्थायजातस्य यदुध्वजस्यवार्त्ता सखेकीर्त्तयतीर्थकीर्त्तेरित्यस्योत्तरमाह प्रदर्श्येत्या दिनायः कृतज्ञत्वादिगुणगणमंदिरः आसमंततः तप्तानितपांसियैस्ते षां अवितृप्तास्तदितर दर्शनेदृशोयेषामन्य दर्शनोपेक्षकानांमहताम् लोकैरवलोकनीयं लोकलोचनकर्मणिल्युट् स्वविंबंस्वसाधारणं अप्राकृतंश्रीमद्विग्रहंप्रदर्श्य आविष्कृत्यपुनरादायस्वविंबेन सहैवयोत अंतर्हितवान् सहरिरित्यन्वयः अनेनभगवन्मूर्त्तेर्नित्यताप्रतिपा दिता ॥ ११ ॥

विंबस्यलोकलोचनमिति विशेषणेनदर्शितं दर्शनीयत्वंप्रपञ्चय-तित्रिभिःमर्त्येषुयालीलास्तास्वौपयिकं योग्यंयदप्राकृतमेवनहि प्राकृते देहेसकलविश्व प्रकाशनादिलीला संभवतीतिभावः स्वयोगमाया याः शक्तिभूतायाः बलंसामर्थ्यंदर्शयतागृहीतमुपात्तम् स्वस्यचस्व-स्यापिविस्मापनं विस्मयजनकंसौभगर्द्धेः सौभाग्यसमृद्धेः परंश्रेष्ठंप दमाश्रयम् भूषणानांभूषणान्यंगानियस्मिंस्तत् एवंभूतंयद्बिंबंतदा-दायान्तर्धादितिपूर्वेणसंबंधः ॥ १२ ॥

मां खेदयत्ये तदजस्य जन्म विडम्वनं यद्वसुदेवगेहे ।
व्रजेचवासोऽरिभयादिव स्वयंपुराद्व्यवात् सीद्यदनन्तवीर्य्यः ॥ १६ ॥
दुनोति चेतः स्मरतो ममैतद्यदाह पादावभिवन्द्य पित्रोः ।
ताताम्व कंसादुरुशङ्कितानां प्रसीदतं नोऽकृतनिष्कृतीनाम् ॥ १७ ॥
कोवा अमुष्यांघ्रिसरोजरेणुं विस्मर्त्तुमीशीत पुमान् विजिघ्रन् ।
यो विस्फुरद्भ्रूविटपेन भूमेर्भारं कृतान्तेन तिरश्चकार ॥ १८ ॥
दृष्टाभवद्भिर्ननु राजसूये चैद्यस्य कृष्णं द्विषतोऽपिसिद्धिः ।
यां योगिनः संस्पृहयन्तिसम्यग् योगेन कस्तद्विरहं सहेत ॥ १९ ॥
तथैव चान्ये नरलोकवीरा य आहवे कृष्णमुखारविन्दम् ।
नेत्रैः पिवन्तो नयनाभिरामं पार्थास्त्रपूताः पदमापुरस्य ॥ २० ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

धर्मसूनोर्युधिष्ठिरस्यराजसूयेयदृहशांस्वस्त्ययनंनिरातिशयसुखदम् त्रिलोकः त्रिगुणजनोजतुदिव्यदृष्णिर्नारदादिलोकः निरीक्ष्य अद्येदानीं इहश्रीकृष्णविग्रहे विधातुरज्जयोनेः अर्वाक्सृतौ अर्वाचीनसृष्टौयत्कौशलंनैपुण्यंतत्कात्स्न्र्येनगतंपर्य्यवसितमित्यमन्यत ॥ १३ ॥

यस्यअनुरागेणस्वभक्तविषययानुरक्त्याप्लुतोव्याप्तोहासः रासोविनोदः लीलावलोकश्चतैः प्रतिलब्धः मानोयाभिस्ताः व्रजस्त्रियः दृग्भिः सहअनुप्रवृत्ताः प्रजंतमनुगताः धियोयासांताः कृत्यशेषोया सांताः असमाप्तकृत्या एवतस्थुः ॥ १४ ॥

विवस्राकरयकरणेकारणंदर्शयतिस्वशांतरूपेष्विति महतासंकर्षणाख्येनांशेनसह अजोपि अपूर्वदेहग्रहणरूपजन्मशून्योपिजातः देवक्यांनित्यमूर्तिरेवाविर्भूतः वसुदेवपुत्रभावंगतः यथानित्यसिद्ध एवाग्निरएयामाविर्भवतितद्वत् ॥ १५ ॥

---

भाषा टीका ।

तपन करैं नही है दृष्टितृप्त जिन की ऐसे मनुष्यों के नेत्र अपनेस्वरूप का दर्शन कराय आप अन्तर्धान हो गये ॥ ११ ॥

ईश्वर तत्व वर्णन करैं हैं की यो मनुष्य लीलाके योग्य अपनी योग माया के वल दिखायवे को ग्रहण की जो अपने को विस्मयकरायवे वारो अत्यन्त सौभाग्य ऋद्धि को परमस्थान भूषणों के भी भूषण ईश्वर हैं ॥ १२ ॥

धर्म पुत्र युधिष्ठिर के राज सूय यज्ञ में दृष्टि को आनन्द दाता ईश्वर को देख सव तीनों लोक यह मानते भये कि व्रह्मा की सृष्टि में आज श्री कृष्ण जी के श्री अंग में सव कारीगरी आय गई क्यों कि सव अवतारोंके अंग व्रह्मा के रचे नहीं हैं आप स्वयंभू हैं ॥ १३ ॥

भाषाटीका ॥

जिनकी अनुराग भरी हास लीला देखकें मान करैं दृष्टियों बुद्धियों से जानी न जाय मनोरथ जिन के पूर्ण न भये ऐसी व्रज स्त्रियां होती भई ॥ १४ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

ननु कुतोऽसौपरावराणामीशः पारतन्त्र्य प्रतीतेः तत्राह द्वाभ्यां मामपि एतत् दुर्वितर्क्यंदुर्घटञ्च खेदयति तदेवाह वसुदेवगेहे वन्धनागारे यज्जन्मनो विडम्वन मनुकरणं । ननुनृसिंहवदकस्मादाविर्भावः । कंसभयादिव निलीय व्रजे वासश्च । कालयवनादिरिपुभयादिव पुरान्मथुराया व्यवात्सीत् पलायत ॥ १६ ॥

एतच्च हरेश्चरितं स्मरतो मम चेतः कर्म्मभूतं दुनोति व्यथयति तदेव दर्शयति यदाहेति । हे तात हे, अम्वयुवां प्रसीदतं प्रसादं कुरुतं न कृता निष्कृतिःशुश्रूषणं यैः तेषांनोऽस्माकं इति वहुवचनन्तु-रामाद्यभिप्रायम् ॥ १७ ॥

ननु तर्ह्यनीश्वर एव किंन स्यात् तवतु श्रद्धामात्रमेतदिति तत्राह त्रिभिः को वा अंघ्रिसरोजयो रेणुस्तमपि विजिघ्रन् सेवमानः पुमान् विस्मर्त्तुं मीशीत शक्नुयात् विस्फुरद् भ्रूविटपः भ्रूलता स एव कृतान्तः तेन ॥ १८ ॥

न च तस्येश्वरत्वं साधनीयं भवद्भिरपि दृष्टत्वात् इत्याह दृष्टेति । यां सिद्धिं सम्यक् योगेन प्राप्तुमिच्छन्ति ॥ १९ ॥

आहवे युद्धे पार्थस्यास्त्रैः पूता निष्पापाः सन्तः ॥ २० ॥

श्रीराधारमणदासगोस्वामि विरचित
दीपिन्यख्य तट्टिप्पणी ।

एतच्च० वक्ष्यमाणञ्च चरितंकर्त्तृभूत रामादीत्यादिनागदादि महः ॥ १६ ।

यर्हिजीववदाचरति तर्ह्यनीश्वरोजीवएवकुतोनभवेत् ॥ एतच्चरितस्यदुर्वितर्कत्वादि श्रद्धामात्रमारोपित विश्वासमात्रम् भ्रूलताभ्रूरेवलताशाखाविशेषः विटपशब्दस्यशाखावाचकत्वं विटपःपल्लवेविडुंगविस्तारेस्तम्ब शाखयोरितिविश्वप्रकाशात् अयंभावःनेदंश्रद्धामात्रंतथात्वेतादृश माधुर्य्याभावेनविस्मृतिः कुतोनस्यादहदयतच तत्र सुक्तानामपि परमानन्दावेशनतादृशतल्लीला वर्णनेनन्नानीश्वरस्यचरितंमात्मारामा आवेशेनवर्णयन्ति तथाभूमारहरणञ्चानीश्वरत्वेन संगच्छतेतस्माद्यथार्थं वेशाममश्रद्धानारोपितेति ॥ १७ ॥

नचतस्यश्रीकृष्णस्येश्वरत्वं साधनीयमिति श्रीकृष्णईश्वरः संवताविस्मृतपादरेणुकत्वात् भूमारहारित्वात्नारायणवत्व्यतिरेकेजीववदेस्यनुमानस्यनात्र प्रवृत्तिरित्यर्थः कुतः पक्षताविरहादित्याह भवद्भिरपिहयादिति सिसाधयिपाविरहविशिष्टसिद्ध्यभावोहि पक्षता तत्रहिसाध्यसिद्धिरनुमाति प्रतिबंधिका अत्रहिसाध्यस्यश्वरत्वस्यसिद्धिः हतारिगतिदायकत्वेन प्रत्यक्षवत्तत्वएवेतिनानुमानमपि कर्त्तव्यसंविग्धन्यायः प्रवर्त्ततेनतुनिर्णीतइति न्यायादित्यर्थः श्रियंस्पदम ॥ १८ ॥

अत्रपार्थाख्यपूतत्वंतद्दर्शन याथार्थ्यहेतुः स्वतस्तेषामासुरभावत्वात्स्वादरावलोकन लक्षणपानानुपत्तेः ॥ १९ ॥

स्वयन्त्विवतियुग्मकम् तत्र० असोऽस्यातिशयत्वे त्रयाणांमहत्स्रष्टृब्रह्माण्डस्यसर्वभूतस्थानांपुरुषाणामीशः चिरकालीनैरप्राकृतैः ॥ २० ॥

---

श्रीमद्वीरराघवाचार्य्य कृत भागवतचन्द्रिका ॥

अजहत्सर्वज्ञत्वसत्य संकल्पत्व ज्ञानशक्त्यादि स्वभावस्यैवपुनर्मर्त्य लीला नुकार ऐश्वर्या च्छाद कोनकर्मायत्तइत्याह मामितिद्वयेन अजस्य भगवतः वसुदेव गेहे बंधनागारेयज्जन्मनो विडंबनमनुकरणंनतुनृसिंह वदकस्मादाविर्भावः पश्चात्स्वयमनंतवीर्यः कंसभयादिवव्रजेचवासः कालयवनादिभयादिवपुरान्मथुरायाव्यवात्सी त्प्रोषितवानितिचयदेतन्मां खेदयति मचितं व्यामोहयति एतत्सर्वं मैश्वर्याच्छादकमेवेत्यर्थः ॥ १६ ॥

दुनोतीति पित्रोर्देवकीवसुदेवयोःपादावभिवंद्यनमस्कृत्यहेतातपितः हे अंबमातः कंसादुर्वधिकंशंकितानांभीतानामकृत निष्कृतीनामकृतशुश्रूषाणां नोस्माकं युवांप्रसीदतं प्रसादं कुरुतमितियदाह एतत्स्मरतोममचित्तं कर्मदुनोति खेदयति ॥ १७ ॥

एवं तर्ह्यनीश्वरएवायंकिंनस्यादि त्याशंकापरि हारायमर्त्यलीलामनुकुर्वन्यतः पुनरैश्वर्यमपिप्रकाशितवानितिवदन्नानिर यवाल्पत्वया दिगुणवतस्तस्य विरहोऽतितुःसहइत्याह सप्तभिः ॥ ० ॥

कइति अमुष्य श्री कृष्णस्यांघ्रि सरोजरेणुं विजिघ्रन्कोवापुमान्विस्मर्तुमीशीतशक्नुयात् यः कृष्णः भ्रूरेव विटपः विस्फुरंश्चलन्याभ्रूविटपः तेनभ्रूभंगा नुवर्त्तिनाकृतांतेनमृत्युनाभूमेर्भारंतिरश्चकारापहृतवान् भ्रूभंगेन भूमारापहरणमैश्वर्यप्रकाशकम् ॥ १८ ॥

श्रीमद्वीरराघवाचार्य्य कृत भागवतचन्द्रिका ॥

द्वयेति राजसूये कृष्णं द्विषतोपि चैद्यस्य शिशुपालस्य सिद्धिर्भगवत्प्राप्ति र्भवद्भिर्दृष्टानु कथंभूतासिद्धिः यांसिद्धिं योगिनःभक्तियोगनिष्ठाःसम्यग्योगेनैकांतभ क्तियोगेन संस्पृहयंति वांछति तस्य द्विषतोपि निरतिशय पुरुषार्थ रूप मुक्तिं प्रयच्छतोवात्सल्यनिधेः श्रीकृष्णस्यविरहंकः सहेत ॥ १९ ॥

न केवलं द्विपतां भजतां चस्वपद प्रापकः उदासीनानामपीत्याह तथैवेति येयुद्धेनयना भिरामंनयनानंदकरं श्रीकृष्ण मुखकमलं नेत्रैः पिबंतोनुभवंतः पार्थस्यार्जुनस्यास्त्रैः पूताःपवित्रिताः अन्येपिराजानः अस्यभगवतः पदंस्थानमापुः ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

ब्रह्मादीनामपिभगवद्विषयज्ञानंमध्याह्नार्कवत्संचलति किमुतास्मदीयमितिभावेनाह मांखेदयतीति वसुदेवस्यगृहेभार्यायांजन्मविडंबनंजातवदनुकरणं अरिःकंसोजरासंधश्चपुरान्मथुरापुरात् गोमंतद्वारकयोर्विवासःप्रवासः अनंतवीर्यस्ययंलोकानुकरणंस्मारयति ॥ १६ ॥

एतत्कंसवधानंतरंक्रियमाणंकर्म पित्रोर्देवकीवसुदेवयोः अकृतनिष्कृतीनामनुष्ठितकंसकृतप्रतिक्रियाणाम् ॥ १७ ॥

विस्फुरद्भ्रूविटपेनविस्फुरंत्योर्भ्रमंत्योर्भ्रुवोर्विटपनलेशेनकृतातेनकालोपमेन ॥ १८ ॥

रसज्ञेनपुरुषेणाहरेर्विरहोनसोढुंयुक्तइतिभावेनाह द्वयेतियोगिनोयुक्त्युपक्रमादि लक्षणेनवेदतात्पर्यवेदिनोयांसिद्धिंस्पृहयंतिवांछंतिराजसूयेभवद्भिश्चासुरप्रवेशात्कृष्णंद्विषतोपिचैद्यस्यकृष्णप्रवेशलक्षणासिद्धिर्दृष्टा अपिनानिर्दितात्तद्वेषात् भक्त्यैकलभ्याचतप्रवेशलक्षणा सिद्धिःकथंसंभवतीतिचोद्यंनन्वित्यनेनपरिहृतं तथाहिप्रश्नावधारणौ तिह्यसमीहाद्यु मतेनन्वितिवचनात् यथाप्रमाणेनानुमतं तर्हागीकर्त्तव्यं प्रमाणंतु असुराअपियेविष्णुंशंखचक्रधरंरणे भक्तिपूर्वमवेक्षंते ज्ञेयाभागवताइति विद्विषंतितुयेविष्णुंसृष्टिपुत्राअपिस्फुटं असुरास्तेपिविज्ञेयागच्छंतिचसदातमइति अतएवसम्यग्योगेनेत्युक्तं सर्वथाभक्तितोमुक्तिर्द्वेषात्तमउदीरितमित्यादेः ततःकिंतत्राह कइति य स्मात्जीवद्वयसमायोगेनजातान् जयादीन्भक्त्यानुप्रवेशाद्विमोच्य दुष्टांस्तमसिप्रापय्यप्रवर्तते तस्मात्कृपालोस्तस्यविरहं विस्मरणालक्षणंकः पुमान्सहेत भक्तिमानितिशेषः जीवद्वयसमायोगाद्विरयय कमुखाः परइत्यादेः एकस्मिनजीवद्वयसमायोगोऽस्तीतिज्ञायते ॥ १९ ॥

चैद्यवदन्येपिस्वयोग्यांसिद्धिमापुरित्याह तथैवेति येसारतयुद्धेदुर्योधनपक्षपातित्वोऽन्येनरलोकवीराः कर्णादयोनयनाभिरामंनेत्रोरस्वजनकंकृष्णमुखारविन्दंनेत्रैःपिबंतः पार्थास्त्रपूताः पार्थस्यपाशुपतास्त्रेणपूताःछिन्नशिरस्कामृतास्तेऽपि तथैवचैद्यवदेवास्यकृष्णस्यप्रसादात्तदधीनं स्वयोग्यंपदमापुरित्यन्वयः स्वपदप्राप्त्यनंतरंमुक्तिंचप्रापुरित्यस्मिन्नर्थेचशब्दःपुंङ्क्षेदनइतिधातुः पूङ्पवनइतिधातुपाठेद्वेषंमुक्त्वाभक्त्याशुद्धाइत्यर्थः ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

अहो तादृश महिम्नोऽपि तस्य परमसौशील्येन स्वजनसुखदा-श्री लोकवल्लीलेयमीक्ष्यतां यत एवास्माकं तद्वियोगखेदोऽतिशेते इत्याह मामिति द्वयेन ॥ १६ ॥ १७ ॥

तत्तच्च माधुर्य्यं तस्य परमप्रभावत्वेऽपि सर्वेषामप्याकर्षकमित्याह कोवेति । माधुर्यं कैमुत्यमङ्घ्रीति । तद्रेणुमपीत्यर्थः कीदृशस्यापि तत्राह य इति । विटपः पल्लवे पिङ्गे विस्तारे स्तम्बशाखयोरिति विश्वप्रकाशः ॥ १८ ॥

कृपाया अत्यमर्यादत्वमाह दृष्टेति ॥ १९ ॥

तथैवेति पार्थास्त्रपूतत्वमत्र तन्मुखारविन्ददर्शनयाथार्थ्यं हेतुः । तदेतत्तु स्थापितं ययाहरद्भुवोभारमित्यादौ ॥ २० ॥

---

### श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

एवमक्षरपुरुषोत्तमत्वं भगवद्देहात्मनोरुपपाद्यलोकप्रतीतिविरोधं भगवद्वाक्यविरोधंचपरिहर्तुमाह द्वयेनमांखिदयत्येतादितिभगवान्नूलं कवंचनायंप्राकृतदेहत्वं ख्यापयितुंयदुपुत्रत्वादिविडंवनंयत्करोति तद्विडंवनमपितस्यसवर्थाऽयुक्तमिति किंसर्वसमर्थस्यवंचनंनेतितथाकरणांमांखिदयतीत्याह अजस्यजन्माविडंवनामिति तत्रापिवसुदेवगेहे वसुदेवभार्यायांदेवक्यां एतदेपअयास्तंभवब्रह्मणोद्वदयादिवा विर्भाव विडंवनंसमीचीनमितिकिंच व्रजेचवासोमांखिदयतिकुत्रव्यापीवैकुंठवासीलौकिकानाम पिवासायोग्योगोकुलेकिमित्यवात्सीदिति किंच अरिभयादिवजरासंधादिभीतइवपुरान्मथुरातोव्यवात्सीदिति यत्पुरात्पलाय्यस्थानांतरंगतमितियत् विवासः परदेशवासःअयुक्तत्वे हेतुः अनंतवीर्यइतिव्रजेचेतिचकारोगुरुकुलादिसंग्रहार्थः अरिभयादिति भयाभावादिवेत्युक्तं नहिसर्वात्मनोभयाःसंति स्वायत्तस्यभयं अन्येषांभयनिवर्त्तकत्वाच्चस्वयमितिनांशङ्कारा ॥ १६ ॥

वाक्यविरोधंपरिहरतिदुनोतिचेतइ तिपित्रोःपादावभिवंद्यकंसवधानंतरंदेवकीवसुदेवपादावभिवंद्यभगवानेवमाह हेतातहेअंवकं सादुरवशंकितानांकिंकरिष्यतीति शंकयातिभतानामस्माकमुपरिप्रसीदतप्रसन्नौभवतमिति यदेवतद्वाक्यंतत्स्मरतोममचेतो दुनोतिदुःखितंकरोति अनेनसर्वाण्येवभगवद्वाक्यानिमानुर्षीतनुमास्थितंवदंति वासुदेवसुतंहिमामित्यादिवाक्यानिलोकव्यामोहार्थमितिव्याख्यातानि यद्वाभगवद्वाक्यानामेवैषागतिस्तदातैर्व्यामोहितानांवाक्यानांकिंवक्तव्यमितिभावः ॥ १७ ॥

एवंसर्वविरोधंपरिहृत्यसाक्षात्पुरुषोत्तम मुपपाद्यतस्यगुणकर्माणि निरूपयिष्यन्भक्तिमार्गसिद्धये आदौभजनीयान्गुणान्निरूपयतिकोवेतिभजनीयःसएवस्यात्यःस्वयमभयः सकृदपिप्रपंन्नंसर्वतोभयान्मोचयति ऐहिक्यामुष्मिकींचर्द्धिमोक्षंचप्रयच्छतिभजनसंदेहेप्यनुषंगादपियेमुक्तिंप्रयच्छति स्वयंचनिर्दोषपूर्णगुणविहीनेधिकारिण्यपि गतिंप्रयच्छतिपरार्थंस्वकृतनियममपिविरुद्धंनमन्यतेएवंयःसप्तगुणो भवतिषडंगसहितोभजनोपयोगिमहागुणवान्सभजनीयइतिसप्तस्वपिगुणेषुहेतुभूतंगुणत्रयमन्यत् चेद्भवतिअतिसामर्थ्यंस्वरूपतएव सर्वोत्कर्षःपरमादयाचससर्वेषामुपास्योभवति तदाहसप्तभिःश्लोकैः प्रत्येकमेकैकेनसप्तगुणाद्वाभ्यांत्रिभिस्ततोद्वाभ्यांतै रेवमूलगुणानि रूप्यंते तत्रप्रथममतिसामर्थ्यंनिरूपयआश्रितसर्वदुःखदूरकितृत्वमाह केवाअमुष्याङ्घ्रीति संत्रेहिशरणिनःसर्वानेवभजंतेतद्गतगुणदोषैरनु रक्ताविरक्ताश्चभवंतिएवमंत्रद्वाराभजनीयदोषव्यतिरेकेणसेव्यमानंन त्पजातिलोकेहिसर्वेषामेवदेवानांमनुष्याणांवासेवकास्तत्परित्यज्यभगवदीयाजायंतेनभगवदीयाःकदाचिदप्यन्यस्य यस्त्विमंशास्त्रार्थमन्यथाकरिष्यामीतिभगवन्मार्गेसमागत्येत्युक्तमिच्छतिकौतुकादपि सोपितथाकर्तुंनशक्नोतितदाह अमुष्यांघ्रिसरोजरेणुंसकृदपिजिघ्रन् कोवाविस्मर्तुमीशीतेतिअतःसएवेशोयस्त्वीशितव्यान्वशीकरोतिरेणुर्घ्राणमार्गेणांतर्गतःपूर्वोक्तस्यसंघातं भगवदीयमेवकरोति सतदर्थोत्पादितसंघातःसर्वतोव्याप्तंतंरेणुंविस्मर्तुं समर्थोभवेत्ननुाश्लिष्टसंघातमपिविस्मरतिक्लेशनाशक मेवाधिमन्यतइतिचेत्तत्राह यैत्रिःस्फुरादिति अयंहिकल्पतरुर्यस्यभूःपर्णसहिताकाचिच्छाखाअनंतशाखस्यस्कंधशाखासंहारकत्वस्वभावतःसंतुष्टात्तुसापिपरमैश्वर्यंप्रयच्छति अतस्तादृशशाखायाविद्यमानत्वात्स्वानिष्टनाशेकाशंकायतोभूमेरेवसर्वाधारभूतायाकृतोंतोयेन विशेषणस्फुरताभारसंभावनापितत्र स्वयंगदातद्दूरीकरणस्वभावेनभूविटपेनभारमपितिरश्चकारयदर्थंसर्वेषामपिदेवादीनांमहाप्रयत्नःयाचेतत्तद्दूरीकर्तुमायांतितावत्सभारःपूर्वमेवतिरोभवान् यथाप्रथमोद्गतैःसूर्यकिरणैरेवसर्वतमोनाशःसूर्यस्तुनमःपश्यत्यपिनतथाभगवान् भक्तानामित्यर्थःइष्टफलंतुभक्तानांनवक्तव्यमेवयतोद्विषन्नपि भगवंतमासुरोपिलोभाभिभूतःसर्वधर्मप्रतिपक्षो भगवत्संबंधमात्रेणैव निषिद्धनापिज्ञानिनोपिदुर्लभंसायुज्यंप्राप्तवान् ॥ १८ ॥

अयंचार्थःसर्वजनीनस्तदाह दृष्टाभवाद्भिरितिकृष्णाद्विषतोपिचैद्यस्यशिशुपालस्यराजसूयसभायांसर्वैरेवराजभिस्तत्रसेवायांक्रियमाणायांयासिद्धिःसायुज्यरूपासाभवद्भिरेवदृष्टानन्विति संबोधनंसंमत्यर्थंयांसिद्धिंयोगिनःस्वभावतः उत्तमाः फलपर्यवसायिनासर्वसाधनसहितेनापियोगेनवांछामेवकेवलं कुर्वंतिनतुभगवत्संबंधव्यतिरेकेणतांप्राप्नुवंति अतःकोवातत्संबंधाभावरूपंभगवद्भिरहंसहेन भगवत्संबंधाव्यतिरेकेणतांप्राप्नुवंति अतःकोवाहिकोटिकल्पवृक्षादप्यधिकःअतःकेनवात्यक्तुंशक्यइत्यर्थः ॥ १९ ॥

एवमिष्टसिद्धिहेत्वनिष्टनिवारकभगवद्गुणं निरूप्यस्वरूपंनिरूपयन्संबंधव्यतिरेकेणापिकेवलस्वरूपसंबंधेनैवपूर्वोक्तादप्यधिकंफलंप्रयच्छतीत्याह तथैवचान्यइतियेनरलोकेवीराःअन्येभगवत्संबंधरहिताःभगवंतंपपिंनतथाहवेरूपसौंदर्यगुणव्यामुग्धानेत्रैर्नयनाभिरामंलावण्यामृतपूरंकृष्णमुखारविंदंपश्यंतोभगवत्सायुज्ये प्रतिबंधकरूपशुद्धंदेहंनिराकृत्यपार्थास्त्रैःपूताहहचएवव्यापिवैकुंठंतच्चरणारविंदंप्रापुः एतादृशीकाफलचिंता ॥ २० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

एवं सर्व एव सिद्धान्तस्तुभ्यं यथात्मबोधमाविष्कृतः किन्तु यन्मादृशैरपि दुर्ज्ञेयं विद्वद्भ्यः पृष्ट्वाप्यप्राप्ततत्त्वं तत्र खेद एव मम पूर्वमासीदित्याह अजस्येति । एकस्यैवाजत्वं जन्मवत्त्वञ्च कथं संभवेदिति । किञ्चात्र जन्मवत्त्वस्यानुकरणमात्रत्वेनावास्तवत्वे खेदो नस्यादित्युभयोरेव वास्तवत्वमुद्धवस्य विवक्षितं ज्ञेयं । तथा वसुदेवगेहे कंसकारागारे यज्जन्म एतन्मां खेदयति पूर्वमखेदयत् वर्त्तमान सामीप्ये वर्त्तमानवद्वेति लट् यतो विडम्बनमपकर्ष एव तस्य

त्वयन्त्वसाम्यातिशयस्त्र्यधीशः स्वाराज्यलक्ष्याप्तसमस्तकामः ।
वलिंहरद्भिश्चिरलोकपालैः किरीटकोटीडितपादपीठः ॥ २१ ॥
तत्तस्य कैङ्कर्य्यमलं भृतान्नो विग्लापयत्यङ्ग यदुग्रसेनम् ।
तिष्ठन्निषण्णं परमेष्ठिधिष्ण्ये न्यबोधयद्देव निधारयेति ॥ २२ ॥
अहो बकीयं स्तनकालकूटं जिघांसयाऽपाययदप्यसाध्वी ।
लेभे गतिं धात्र्युचितां ततोऽन्यं कम्वा दयालुं शरणं व्रजेम ॥ २३ ॥
मन्येऽसुरान् भागवतांस्त्र्यधीशे संरम्भमार्गाभिनिविष्टचित्तान् ।
ये संयुगेऽचक्षत तार्क्ष्यपुत्रमंसे सुनाभायुधमापतन्तम् ॥ २४ ॥
वसुदेवस्य देवक्यां जातो भोजेन्द्रबन्धने ।
चिकीर्षुर्भगवानस्याः शमजेनाभियाचितः ॥ २५ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

जन्मलीला हि मातापित्रोर्वन्धूनामन्येषाञ्च भक्तानां परमोत्सवमयी भवितुमर्हति परम स्वतन्त्रेण तेन तथा कथं न कृतेति तथा व्रजे च वासस्तस्य स्वाभाविकः परमसुखमय एव तत्र अरिभयस्य कारणत्वं कथं स्थापितं इवकारेण यद्यपि कंसाद्व्रजे स्थितो न विभेति तदपि तथा पुरान्मथुरातः व्यवात्सीत् । अपरिमितवलोऽपि कालयवनादि रिपु भयात् पलायत नह्यस्य कर्हिचिद्राजन् पुमान् वेद विधित्सितमिति श्रीभीष्मेणाप्युक्तं किन्तु रहसि मत्पृष्टेन श्रीभगवतैव प्रवोधितस्य मम संप्रत्येव खेदोऽपगत इति भावः ॥ १६ ॥

एवमेवैतच्चरितं स्मरतो मम चेतः कर्म्मभूतं दुनोति क्ष्मेत्यर्थः । यदाहेति मातापितरौ स्वापराधं क्षमापयन्निस्म हे तात हे अम्ब युवां नोऽस्मान् प्रसीदतं द्वितीयार्थे षष्ठ्यः अत्र कंसादुरुशङ्कितानामित्यस्य वाक्यस्य सत्यत्वे ईश्वरत्वव्यभिचारः मिथ्यात्वे ईश्वरवाक् कथं मिथ्येति पूर्ववत् खेदः । अतिसर्वैश्वरस्याप्येवं लौकरीत्या विनयोऽतिमाधुर्य्यपोषकः कथं मया विस्मर्त्तव्य इति मच्चेतसि तत्तच्चरितं शल्यमिवाभूदित्युद्धवविलापः ॥ १७ ॥

ननु तर्ह्यनीश्वर एव किं न स्यात्तवतु श्रद्धामात्रमेव तत्राह त्रिभिः विस्फुरन् भ्रूविटपः स एव कृतान्तस्तेन । विटपः पल्लवे षिड्गे विस्तारे स्तम्बशाखयोरिति विश्वः ॥ १८ ॥

तस्य परमेश्वरत्वानुभावः कैर्वा न साक्षात् कृत इत्याह दृष्टा इति द्विषत इति कृपाया अप्यपारत्वं यां यस्यै ॥ १९ ॥

द्विषत्तसु मोक्षदायिनी कृपामुक्त्वा तदन्येषु तटस्थेष्वपि प्रेमप्रदायिनीं कृपामाह तथैवेति नेत्रैः पिवन्त इति तएव धन्या वयमधन्याः तन्माधुर्य्यपान तत्पदं प्राप्तिश्चां वञ्चिता इति विलापध्वनिः ।२०॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

अतएवभगवतोजन्मकर्मचात्यंतमद्भुतमित्याह मांखेदयतीतद्वीश्याम जन्मनोविडंवनमनुकरणं पूर्वदेहत्यागपूर्वकंदेहांतरग्रहणाभावात् खेदयत्यतथ्यत्वान्मोहयति अनंतवीर्यः अरिभयादिवयोव्यवात्सीत्तदपिभगवत्कर्ममांखेदयति ॥ १६ ॥

पित्रोर्देवकीवसुदेवयोः नः अस्माकंयुवांप्रसीदतमिति यद्भगवत्

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

कर्म एतदपिममचेतो दुनोतिव्यथयति ॥ १७ ॥
ईशितरस्त्युयात् विस्फुरताभ्रूविटपेनभ्रूप्रांतेनकृतातेन ॥ १८ ॥
॥ १९ ॥ २० ॥

---

भाषाटीका

भगवत् के दर्शन में कारण है कि अपने शांत रूपों में और स्वरूपों से दुःखितों पर दयाकारी देह जाकी पर अवरके ईशमहा अंशसं युक्त अजन्मा ईश्वरजन्मते भए जैसे अग्नि काष्ठ से प्रगट होते हैं तद्वत् ॥ १५ ॥

श्री उद्धव जी वोले कि तर्क में न आवे किसी से न हो सके ऐसो मों को खेद होय है कि जो कभी न जन्मे सो वसुदेव के घर में जन्में व्रज में वसे शत्रु भय से भाजे जिनमें अनन्त वलसो पुर से निकले ॥ १६ ॥

वो वातों को याद करते मेरोचित्त व्यथा कूं प्राप्त होयहै जब पिता माताके पादों में प्रणाम कर ये वोले कि हे तात हे अम्ब कंस से बहुत शंकित आप की कुछ सेवा हम से न वनी ऐसे हम पै तुम दोनों प्रसन्न होवो ॥ १७ ॥

इन के चरण के रज को स्वाद लेता हुआ इन को कौन भूल सकै है जो भगवान् विशेष करके फरके ऐसे भ्रूविटप रूप यम धर्म राज से भूभार को नाश करते भए ॥ १८ ॥

राज सूययज्ञ में श्री कृष्णजी की निन्दा करेऐसे शिशुपाल का जो सिद्धि प्राप्त भई सो आपने देखी जा सिद्धि को योगी जन चाहैं है ऐसे श्री कृष्णजी के वियोग कौन सह सकै ॥ १९ ॥

तैसे ही मनुष्य लोके में युद्ध में नेत्रों को आनन्द दायक श्री कृष्ण के मुखारविन्द की नेत्रों से पीतेहुए अर्जुन के अस्त्र से पवित्र होके वीर लोग वैकुण्ठ को जाते भए ॥ २० ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ॥

तदेवं परमैश्वर्ये सत्यपि यदुप्रसेनानुवर्त्तित्वं तत् पुनरस्मानत्य न्तं व्यथयतीत्याह । स्वयन्तु य एवं भूतःतस्य तत् कैङ्कर्य्यंनोऽस्मान् विग्लापयतीत्युत्तरेणान्वयः न साम्यातिशयौ यस्य यमपेक्ष्यान्यस्य साम्यमतिशयश्च नास्तीत्यर्थः । तत्रहेतवः अधीशः त्रयाणांपुरुषा- णां लोकानां गुणानाम्वाईशः स्वाराज्यलक्ष्म्या परमानन्दस्वरूपस- म्पत्त्यैव प्राप्तसमस्तभोगाः बलिं करं अर्हणं वा हरद्भिः समर्पय- द्भिः चिरकालीनैर्लोकपालैः किरीटाग्रेण ईडितस्तुतं पादपीठं यस्य सः प्रणमतां किरीटसंघट्टनध्वनिरेव स्तुतित्वेनोत्प्रेक्ष्यते ॥ २१ ॥

अङ्ग हे विदुर भृतान् उग्रसेने यत् किङ्करत्वं तदेवाह परमेष्ठि- धिष्ण्ये राजासनेनिषण्णमासीनं स्वयंतिष्ठन् हेदेव अवधारयेतिन्य- बोधयत् विज्ञापितवान् ॥ २२ ॥

एवम् वृत्तिः कृपैवेति सूचयन् अपकारिष्वपि तस्य कृपालुतां दर्शयन्नाह : अहो आश्चर्य्यं दयालुतायाः हन्तुमिच्छयापि स्तनयोः सम्भृतं कालकूटं विषं यमपाययत् बकी पूतना असाध्वी दुष्टापि धात्र्या यशोदायाऽउचितां गतिं लेभे भक्तवेशमात्रेण यः सद्गतिं दत्तवानित्यर्थः । ततोऽन्यं कम्वा भजेम ॥ २३ ॥

ननु भागवतानेव भगवाननुगृह्णातीति प्रसिद्धं सत्यं असुरान- प्यहं भागवतानेव मन्ये यतो भागवता इवतेऽपि भगवद्ध्यानाभि- निवेशेन भगवन्तमपरांस्तं पश्यन्तीत्याहसंरम्भः क्रोधावेशः तेन मा र्गेणाभिनिविष्टंचित्तं येषां तान् अतएव संग्रामे तार्क्ष्यःकश्यपः तस्य पुत्रं गरुडं अंसे स्कन्धे सुनाभायुधश्चक्रायुधो हरिर्यस्य तं अचक्षत अपश्यन् तस्मात्तेष्वपि अस्यानुग्रहो युक्त एवेत्यर्थः वक्ष्यति च त- स्मात् केनाप्युपायेन मनः कृष्णेनिवेशयेदिति ॥ २४ ॥

इदानीं तस्यांतर्धानप्रकारं वक्तुं आदित आरभ्य तच्चरितं संक्षे- पतः कथयति वसुदेवस्य भार्य्यायां जातः भोजेन्द्रः कंसस्तस्य बन्धनेबन्धनागारे अस्याः पृथिव्याः शं सुखं स्वयं चिकीर्षुः अजेन ब्रह्मणायाचितःसन् ॥ २५ ॥

---

श्रीराधारमणदास गोस्वामि विरचित

दीपिन्याख्य तट्टिप्पणी ।

अनुवृत्तिरुग्रसेनानुवर्त्तित्वं आश्चर्य्यत्वं दयालुतायाः काप्यन्यावता रावतारिषु प्रेमपर्य्यंतहतारिगतिदायकत्वा श्रवणात् तस्यैवप्रकाशां तरेपि व्रजंविनानिरंकुशकृपालुदयात् तत्रैवतस्यपूर्णतमत्वमित्यर्थः गतिस्तन्यामृत दायिनीपुस्थितिं अहोव्रजस्यशुद्धभावस्य परमवैशि ष्ट्यंयस्यामात्र कृत्यासापराधयापि सत्यधात्रीगणप्रवेशइत्यर्थः॥२१॥

मन्यइति उत्प्रेक्षाव्यञ्जकः शब्दःयद्यपिनतेषुवस्तुतो भागवतत्वं तथाप्यंतिमसमये तत्साक्षात्कार तत्पदप्राप्तिलिङ्गेन तत्र भागवत्तत्व मुत्प्रेक्ष्यतइत्यर्थः तेनचांतिमसमयेस्वस्य तद्दर्शनसौभाग्या संभावना यानिर्वेदेन स्वनिन्दाव्यज्यते ॥ २२ ॥ २३ ॥

पित्रावसुदेवेन विश्यताहेतुभूतेनगतइति कर्त्तरिक्तःतत्रव्रजे ॥ ए कादशेतिव्रजे कालेनाल्पेनराजपं इत्यारभ्यबाललीलानुक्रमतएव म हाराजकुमारत्वेन बाल्येपौगंडप्रवेशः पौगण्डानवसान एवकैशोर- प्रवेशइति एकादशवर्षमात्रेणैवनव्ययौ वनापरपर्य्यायपूर्णकैशोरत्वा द्वेकादशेत्युक्तम् अतएवस्वमुखेनैव वसुदेवंप्रतिबाल्यपौगण्डकैशो-

श्रीराधारमणदासगोस्वामि विरचित

दीपिन्याख्य तट्टिप्पणी ॥

राः पुत्राभ्यामभवन् क्वचिदिति श्रीभगवतोक्तमितिज्ञेयम गूढार्चिः व्रजवासिनां प्रेमभरेणापिहितैश्वर्य्यः ॥ २५ ॥

व्याहरदितिप्रामादिकःपाठः अक्रीडदितिव्याख्यानात् व्याङ्पूर्वे कहरतेर्व्याहार उक्तिलेपितमित्यमरात् भाषणार्थप्रसंगा च ॥ २५ ॥

---

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रिका ॥

एवंमर्त्यलीलामनुकुर्वतो भूभारावतरणमुक्तिप्रदत्वादिकमैश्वर्य - प्रकाशकमभिहितंपुनरैश्वर्य्यंप्रकाशयतोमर्त्यलीलानुकृतिमाह स्वयमिति द्वाभ्यां असाम्यातिशयः समाभ्यधिकरहितः अतएवत्र्यधीशः प्रकृ- तिपुरुषकालानामीशः यद्वात्रिलोकाधिपतिः सत्वादिगुणेशोवा अतःस्वराज्यलक्ष्म्यास्वराडनन्यायत्तः तस्यभावः स्वराज्यंतेनयालक्ष्मी रैश्वर्य्यश्च आदिसंपत्तिस्तयाप्राप्ताः समस्ताः कामायस्यसः नित्यसं निहितभोग्यभोगोपकरणभोगस्थानसमृद्धइत्यर्थः बलिपूजांहरद्भिः स्वीकुर्वद्भिः चिरलोकपालैश्चिरंलोकपान्यालंयद्भिः किरीटानांकोटि भिरीडितः सेवितः पादपीठोयस्यसः ॥ २१

स्वयमेवंभूतोपिभगवानङ्गहेविदुरपरमेष्ठिधिष्ण्ये सार्वभौमर्षि हासनेविनिषण्णमुपविष्टमुग्रसेनं प्रतिस्वयं तिष्ठन् हेदेवनिधारया वधारयेति अबोधयद्विज्ञापितवान् तद्विज्ञापनवचः तस्यभगवतः कैंकर्य्यंकिंकरभावंउपाश्रितानस्मान् अलंभृतानिपाठेप्ययमेवार्थः अस्मान्विग्लापयन्तिविस्मारयतीत्यर्थः ॥ २२ ॥

पुनरैश्वर्य्यदयालुतांचाह अहोइत्याश्चर्य्येइयंबकीपूतनास्तनकालकू टंस्तनयोः संभृतंकालकूटंविषंजिघांसयाहंतुमिच्छयाऽपाययदेवमसा ध्वीदुष्टापिबकीधात्र्यायशोदायाः उचितांतत्संबंधिनींगतिंलेभेप्राप्त वती एवमपराधवत्या अपिमुक्तियोदत्तवान् ततोभगवतोऽन्यंदयालुंकं पुरुषंशरणंभजेमभजेम ॥ २३ ॥

ननुनान्यः पंथाविद्यतेऽयनायेतिभगवतः भक्तियोगप्राप्यत्वश्रव- णात्कथमुदासीनानांद्विषतांचमुक्तिप्रायच्छदित्युच्यतइत्यतआह मन्य इति अधीशेत्रिलोकेशेभगवतियेसंरंभमार्गाभिनिविष्टचित्ताः संरंभः क्रोधावेशः तेनमार्गेण अभिनिविष्टंचित्तंयेषांते येचसंयुगयुद्धेप्राणां स्त्यक्ष्यंतस्तार्क्ष्यपुत्रस्यगरुत्मतोऽ सेसुजेआपतंतमधितिष्ठंतंसुनाभंच क्रमायुधंयस्यतत्सुनाभायुधंचक्रायुधधरं भगवंतमचक्षताः पश्यत तान्सर्वानसुरान्दैवसंपत्याजातान्भागवतान् भगवद्भक्तानेवमन्येत स्मात्केनाप्युपायेनमनः कृष्णेनिवेशयेदितिवक्ष्यमाणरीत्याभक्तियोग निष्ठतुल्यापवद्विषदादयोपीतिभावः ॥ २४ ॥

अथावतारप्रभृतिदिव्यचेष्टितानिसंग्रहेणवर्णयतिवसुदेवस्येत्यादिना भोजेंद्रःकंसस्तस्यबन्धनेकारागृहेवसुदेवस्यतद्भार्यायांदेवक्यां जातः प्रादुर्भूतः कथंभूतोभगवान्समग्रज्ञानशक्तिबलैश्वर्यादिसंपन्नः अजेन ब्रह्मणाभियाचितः प्रार्थितः अस्याभूमेःकंसुखंचिकीर्षुः कर्त्तुमिच्छुः एवंभूतोऽवतीर्णइत्यर्थः ॥ २५ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

एवं विधस्यहरेर्भक्तानु कंपागंतरेणनान्यत्प्रयोजनं मत्स्यावतारादिनंत्याशयेनाह स्वयंत्विति नसाम्यातिशयोयस्यसतथोक्तः एकमेवाद्वितीयमितिश्रुतेः स्वाराज्यलक्ष्म्यास्वरूपानुभवलक्ष्म्याःस्वंमहिम्नीतिश्रुतेः वलिस्पृजाम् ॥ २१ ॥

इदमपितन्माहात्म्यातिशयसूचकं यस्मादेवंविधज्ञानवतोऽस्मान् विग्लापयति तत्कर्मेतिभावेनाह तत्तस्येति तद्वचःकैंकर्यंद्रासत्वंविग्लापयति माहात्म्याविपर्येऽज्ञानलक्षणांग्लानिमुत्पादयति तदितिकिं तत्राह यदिति परमेष्ठिधिष्ण्यंयसिंहासनेपण्णामुग्रसेनं स्वयमुत्तिष्ठन्यद्वचोन्यबोधयत्अविज्ञापयामास हंदेवअस्मद्विज्ञापनंनिधारयचित्तेकुर्विति ॥ २२ ॥

पूर्वमर्थतउक्तंदयालुत्वमधुनावाक्यतः कथयति अहोइति वकभक्षणइति धातांभक्षणशीलत्वात्नकीपूतना अपिनातारकांगर्हयति धात्रीणांशुभानांयोग्यताभेदेनोचितां कंसपूतनिकाद्याश्रयांधवादियुतायतः जीवद्वयसमारोपाद्गतिद्वयाजिगीषवइतिवचनात् दयालुत्वमुवंशीप्राप्त ॥ २३ ॥

असुरयोनित्वमप्रयोजकंभागवतत्वेकिंतुनिर्दोषा भक्तिरेवेत्याशयेनाह मन्यइतिसंरंभमार्गाभिनिविष्टचित्तानिति यथाकीटःपेशस्कारिणाकुडयेनिरुद्धस्तस्मिन् भृंगेप्रथमंद्वेषयुक्तः पश्चादन्नदानात्तंद्वेषं विहायस्नेहनतं भृंगंस्मरन्तत्स्वरूपतांयाति तथातेप्यसुराःसंरंभमार्गेणस्मरंतस्तस्मिन्संरंभंविहाय भक्त्यैवतस्मिन्नभिनिविष्टाचित्ताःनिरंतरंतन्मनस्काइत्यर्थः इदंतत्रहेतुगर्भविशेषणं सुनाभायुधंचक्रायुधमचक्षतापश्यन् अतएवअसुराअपिये विष्णुंशंखचक्रधरंरणइत्युक्तंतार्क्ष्यपुत्रस्यगरुडस्यांसेस्थितम् ॥ २४ ॥

नातिचिरेणकृष्णस्य यादवानांचस्वलोकप्रयाणंभविष्यतीति निवेद्यभक्त्यतिशयात्तस्यावतारलीला अनुक्रमिष्यन्नादौ तदवतारमाह वसुदेवस्येत्यादिना वसुदेवस्यसकाशाद्देवक्यांजातः प्रयोजनमाह भोजेन्द्रेति भोजेंद्रेणतयोः कारागृहेवंधनेसतितंकंसंहत्वावंधनादुन्मुच्य तयोः शर्मचिकीर्षुरितिहेतुगर्भनिमित्तांतरंचाह अब्जजेनेति ॥ २५ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

पुनरलौकिकलीलायां परमविनयगुणत्वमाह. स्वयन्त्वित्यादि युग्मकेन । अधीशः त्रयाणां महत्स्रष्टॄणां ब्रह्माण्डस्थितसर्वभूतस्थानामीशः । विष्णोस्तु त्रीणि रूपाणीत्यादि । चिरलोकपालैः अप्राकृतलोकपालैः । मनुरूपैश्च दशभिर्दिक्पालैः परितो वृतामिति ब्रह्मसंहितातः ॥ २१ ॥ २२ ॥

अहो वकीत्यादौ पुनर्लौकिकलीलायां कृपाया अत्यमर्यादत्वं अन्यत्रावताराद्यदर्शनात् । तत्र धात्रीणां किमु गावोनुमातर इत्यनुसारेण तस्मै स्तन्यामृतदायिनीनां कासाञ्चित्तां गतिम् ॥ २३ ॥

मन्ये इति यद्यपि तेषु वस्तुतोभागवतत्वं नास्ति तथाप्युत्प्रेक्षत एवेत्यर्थः । ततश्च निजबहिर्मुखत्वेनैवान्तिम समये तद्दर्शनं न प्राप्स्यामीति स्वनिन्दार्थमुक्तम् ॥ २४ ॥ २५ ॥

---

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

अत्रपरमेकमेववाधकंव्यामोहिकाभगवल्लीलातयाचेन्नव्यामुग्धः साहिभगवतःसर्वोत्तमत्वादिगुणान् भजनीयतांचशास्त्रराहितानांबुद्धौस्थितामपनयति तत्रसावधानेनभाव्यमित्याहद्वाभ्यांस्वयंत्विति एषालीलाव्यामोहिकास्वयमीश्वरो भूत्वासर्वोत्तमः सर्वाधमस्य तुच्छस्यस्वयंततादृशंविधायकैंकर्यंकरोतीतियेनभ्रांतानांहृदयेऽयमेतादृशोभवति भ्रांतामन्यतेतत्रप्रथमंतस्यसर्वोत्तमत्वमाह स्वयमिति तुशब्दोभ्रांतप्रतीतिव्यावृत्त्यर्थः नविद्यतेलोकेवेदेवासाम्यमतिशयश्चयस्ययस्मात्स्वरूपतोगुणतश्चप्रसिद्धचापि अधीशःकिंच अपोत्तमपिनावशिष्यते यल्लौकिकन्यायेनकैंकर्यहेतुर्भवतितदाह स्वाराज्यलक्ष्म्यास्वमिन्नंवयद्राज्यंसर्वमेवहिजगत्स्वस्मिन्नेववर्तते यःस्वस्मिन्राज्यंकरोतीतिससर्वस्मिन्नेवकरोतीति तत्रयालक्ष्मीनिरतिशयानंदरूपातयैवप्राप्ताःसर्वकामायेन अस्यैवानंदस्यान्यानिमात्रामुपजीवंतीतिश्रुतेःकिंचलोकेपितस्यैश्वर्यंसिद्धंयतोवलिहरद्भिःचिरकालीनैर्लोकपालैःकिरीटकोटिभिरीडितंस्तुतंपादपीठंयस्ययथापदार्थकरणपक्षस्तथाकिरीटैरपिपादस्यस्तोत्रंस्वयमपकृष्टभावेननम्राः स्वसंबंधिनंसर्वोत्कृष्टत्वेनवांधयंतिह्यधमोदूगतशब्देर्नातिकाचित् ॥ २१ ॥

एतादृशःस्वसिंहासनेस्थितंस्वानंदलक्ष्मी मनुभवन्नेवस्थातुंयोग्योनतुकैंकर्यंकर्तुंयोग्यइत्याह तत्तस्यकैंकर्यमितिकिंकरस्यभावःकैंकर्यंनादिति प्रसिद्धंतस्येति पूर्वोक्तस्य ननुकरोतुकिमपि भगवान्किंतवानेन विचारेणेत्याशंक्याह अलम्भृतान्नइति वयमत्यर्थंभगवताभृताःधृताःपोषितावासेवार्थमेववयंपोषिताः यदिसर्गइवसेवापिभगवतःकर्त्तव्यास्यात्तस्मिन्नपिपक्षेवयंमुख्यसेवार्थ मुत्पादिताःअस्मद्वारैवकारयतुतदर्थमस्मानुत्पाद्यपुनः स्वयमेवकरणात्तत्कैंकर्यमस्मान्ग्लापयतिस्वयंग्लायतेऽस्मानपिग्लापयतीतिलापयतीतिपाठेलपधातुर्ग्लानार्थःअंगेति स्वदुःखख्यापनायान्यमित्रस्यसंबोधनं उग्रसेनस्येतिउग्रासेनायस्यसकंसपितातं पारमेष्ठ्यधिष्ण्येब्रह्मणस्थानेअधिष्ण्यंनिधिष्ण्यमितिपर्यायः तस्मिन्निषण्णंस्वयंतिष्ठन्समागतान्सर्वानेवन्यबोधयेत् हेदेवअयमागतोनमस्करोतिपश्येतिन्यबोधयत्इदंह्यतिहीनदौवारिककृत्यं यद्यपिसर्वंकृत्यंभगवत्कर्तृकमेवतथापिरूपांतरमेवकृत्वाकरोति यदिस्वयमेवकर्त्तव्यंतदाविपरीतंकिंनकरोतीतिचित्तक्लेशःदेवसभायांयत्रब्रह्मापिविशतित द्राजासनमिति पारमेष्ठ्यधिष्ण्ययुक्तं अनेनब्राह्मणेष्वपितस्यानभ्युत्थानंनिरूपितं अप्रतीकार्यक्लेशः एवंरूपंमोहनंचोक्तातस्याभिप्रायापरिज्ञानादज्ञस्यतवक्लेशइत्याशंक्यतदभिप्रायमपिजानामि तथापिक्लेशइतिवक्तुंतस्यदयांनिरूपयतिक्लेशस्तुबुद्धिकृतोनभगवत्कृतःस हिभगवान्सर्वानेवभक्तान्सेवकानात्मनोप्यधिकत्वेनज्ञापयति तत्रान्यासहनमयुक्तंउग्रसेनापिनवक्तव्योभगवतैवतथा क्रियमाणत्वाद्विपरीतंचकरोति ॥ २२ ॥

पूर्वश्लोकेतथैवकथनात्तस्मात् प्रमाणवलमतिक्रम्यप्रमेयवलेनतथाकरोतीतितत्यप्रमेयवलंनिरूपयन्भजनीयत्वंस्थापयतिअहोवकीयमिति यथाभगवतःसाधनंसर्वोश्चर्यकरंफलपूर्णस्यतुच्छफलसाधनरहितस्यापिपूर्णफलदानमित्यहोआश्चर्यंवकस्यभगिनीदैत्यवकरूपातद्वत्संतोपिनमुक्ताभवंति इयमितिदुष्टाभगवत्संगेसाप्युपस्थितास्तनकालकूटमिति स्तनेविद्यमानेकालकूटंकालानांकूटंसमूहःसहस्रंहिकालामृत्यवःसंतितेसर्वेतस्या स्तन्यएकीभूताअतःकालानांकूटंयत्रतादृशंस्तन्यमपाययत् ज्ञानहेतुपक्षेपितस्यादुष्टत्वमाह जिघांसयेति हंतुमिच्छयापूर्वमपितस्यादुष्टत्वमाह असाध्वीति अनेनदैत्यधर्मोपितस्यांनास्तीत्युक्तंतेहिजितेंद्रियास्तथाप्यकृतलिंक्रियेर्यापशोदातुल्यत्वांत्तगतंदोषमविचार्यैवक्रियाफलेदत्तवान्अनेनभगवत्स्वरूपंयथाकथंचिदपिसंयुक्तंसाधनांतरनिरपेक्षंफलंरूपयतीत्युक्तं भगवांश्चगुणाने

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

घगृह्णातिनदोषानतः परमदयालुरित्याह कंवादयालुमिति अ-न्यस्तुदयालुर्दैन्यमपेक्षतेनप्रतांवादोषाभावंवा अयंतुकिमपिनापे-क्षतइति ततोन्यंकंदयालुंशरणंव्रजेम शरणपदेनचसेवाभक्त्यादि-कमपिनिवारितम् ॥ २३ ॥

ननुनिबंधायासुरीमतेत्यासुर्यासंपादिजाताकथमुच्यतेतानहंद्विषतः क्रूराननितिभगवतैवान्यथाप्रतिज्ञातानाहमन्येसुराननितिअसुरानहंभाग-वतानेवमन्येमामप्राप्यैवेतिवचनात्येप्राप्नुवंतिभगवंतंद्वेष्टचादिनापि-तेषामधमगत्यर्थमप्राप्यभावान्मुक्ताएवभवंतियेतुमामात्मपरदेहेषुप्र-द्विषंतइति द्वेषसाधनाभगवदप्राप्तिसाध्यानिरूपितातंजगद्रूपमेवभगवंत द्विषंतिनतुसाक्षात्द्विषन्तितेप्राप्नुवंत्येवकेनचिदंतःकरणधर्मेणतेभग-वत्संबंधिनइतिभागवता येतुसहजादानवाःदानवास्तुतमोलयाइतिवै-ष्णवैर्निरूपिताःतेवदे पिदेवप्रातिपक्षत्वेननिरूपितानमुच्यंतइतिकेचि त् ततश्चमुच्यमानेषुपूतनादिपुनसहजासुरत्वंकित्वसुराद्यवेशः सतु भगवत्संबंधेगच्छतीतितेषांमुक्तिर्युक्तेतिएतदर्थंभेदवादंवैनाशिकींच प्रक्रियांमोहकवाक्यवत्स्वविरुद्धंभगवद्वाक्यंवेदवाक्यानिचमन्यंतेते यद्वावाक्यविरोधाद्वित्याःभक्तचर्थवातथावदंतीतिलोकशिक्षार्थंवा-असुराणांभगवत्प्राप्तावुपायमाह संरंभमार्गाभिनिविष्टचित्तानिति-क्रोधसंरंभएवभगवत्प्रापकोमार्गस्तत्राभिनिविष्टंचित्तंयेषांक्रोधमार्गेण तेषांचितंभगवतिप्रविशतीत्यर्थःज्ञानेच्छाप्रयत्नानामिवभगवदाद्विषत्वे तत्क्रोधस्यभगवन्मार्गत्वं भगवतःपरमदयालुत्वसिद्ध्यर्थंक्रोधस्यापिमु क्तिहेतुत्वंनिरूप्यते अन्यथादयालुत्वंनस्यात् तस्माद्वैष्णवैरेकमंगी कर्तव्यंदैत्यानांमुक्तचभावोवाभगवतोदयावा तत्रापिवलिष्ठादयेत्या ह येसंयुगेऽचक्षतेति तेहियुद्धेमर्तुंसमायांतितेषुचेद्भगवतोभवंस्तदा परोक्षेस्थितोऽन्येनवामारयेन्नतुस्वयंप्रत्यक्षोभवेत् ननुतथासतिभक्ति मार्गविरोधइतिचेत्तत्राहतार्क्ष्यपुत्रमिति अंसेसुनाभंचक्रमायुधंयस्यता दृशंगरुडंपश्यातिअंसेसुनाभायुधामित्यलुक्समासःएतावान्भेदोभक्त दैत्ययोःभक्ताःसर्वरूपंसर्वदाभगवंतंपश्यंति गरुडाधिरूढंअन्यैःसह-संयुगेच दैत्यास्तुसंयुगएव गरुडमेवपश्यंतिपरमंभगवदारूढंभगवा-नारूढोऽयामिति अयमर्थःकालात्मकोगरुडस्तदुपरिचभगवानतःका-लंप्राप्यभगवंतंप्राप्नुवंतइतिविशेषः ॥ २४ ॥

एवंभगवतःस्वरूपगुणानुक्त्वाविदुरस्यतद्विषयकमज्ञानंदूरीकृ-त्यपृष्टकथायामुत्तरंवदन्पंचाभिमात्रानिरूपयतिदशभिःश्लोकैःवसुदेव स्यदेवक्यादिभिःगंधोभगवतः स्थानंरसक्रीडापिवालकैःरूपंत्रिभंगल-लितंसर्वदोषनिवारकं मृत्योरमार्गभीरक्षातस्यस्पर्शोभिधीयते लोक-वेदविरोधेनमनोवागनुसारतःप्रयत्नेभगवल्लीलादुःखाभावसुखात्मि-कासशब्दोनान्यइत्येषमात्रारूपोधिकारकृतवसुदेवस्यभार्यायांदेव— क्यांभोजेंद्रस्यकंसस्य वंधनर्यस्मिस्तादृशेगृहे अस्याः पृथिव्याः शंकल्याणचिकीर्षुःपृथिवीसुखार्थंभगवदवतार प्रयोज्यस्यदेवकानि मित्तंभोजेंद्रवंधनेजातोवातात्पर्यस्यानिरूपितत्वात् यथालोकसिद्धां कथांनिरूपयतिसर्वभाव विकाराणांतुल्यत्वायनब्रह्मप्रार्थनापिभक्तो द्धारार्था अपिशब्देनान्येषामपिप्रार्थनासर्वोद्धारार्था ॥ २५ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शनी ।

किञ्च ब्रह्मादिष्वादिपुरुषादिष्वपि तस्य प्रभुत्वं वा क्व उग्रसेने कैङ्कर्यं वा क्वेति भक्तवश्यत्वमाधुर्यं मया कथं विस्मर्त्तुं शक्यमिति विलपति द्वाभ्यां न विद्यते साम्यं किमुतातिशयो यस्य स- । यम

श्रीमद्विश्वनाथचक्रवर्त्ति कृत सारार्थ दर्शिनी ।

पेक्ष्यान्यस्य साम्यमेव नास्ति किमुतातिशय इत्यर्थः । तत्र हेतवः त्रयाणां महत्स्रष्ट्रादिपुरुषाणां तिसृणां चिच्छक्तिजीवशक्तिमाया-शक्तीनाञ्चेशः स्वैरंशैर्भक्तैः शक्तिभिर्लीलाभिरैश्वर्यैर्माधुर्यैश्च राजत इति तस्य भावः स्वाराज्यं तदेव लक्ष्मीस्तया हेतुना आप्ताः सम-स्ताः कामा यं सः चिरकालीनैर्लोकपालैरनन्तकोटिब्रह्माण्डेषु सृज द्भिर्ब्रह्माभिः पालयद्भिर्विष्णुभिः संहरद्भिः रुद्रैर्धारयद्भिः शेषैः किरी टाग्रेण ईडितं स्तुतं पादपीठं यस्य सः प्रणमतां किरीटसंघट्टनध्व-निरेव स्तुतित्वेनोत्प्रेक्ष्यते ॥ २१ ॥

अङ्ग हे विदुर तान् भृत्यान् उग्रसेने यत् किङ्करत्वं तदेवाह परमेष्ठिधिष्ण्ये महाराजसिंहासने निषण्णमासीनं स्वयं तत्तल तिष्ठन् कस्यापि सहायं कुर्वन् हे देव महाराजाधिराज अस्य त्वदी यमण्डलेश्वरस्य कृत्यं निधारयेति न्यवोधयदवधापयामास ॥ २२ ॥

अवतारारम्भत एव परोपकारिष्वपि कृपामाधुर्यं स्मरन् विल-पति अहो आश्चर्यं वकी पूतनेति मातृभावस्य कृत्रिमत्वेऽपि तत्रापि जिघांसयापि कालकूटमपि यमपाययत् ततः सकाशात् धात्र्युचितां अम्बिकाच किलिम्बाच धात्रिकं स्तन्यदातृके इति द्वं कृष्णस्य धात्र्यौ तदुचितां गोलोके गतिं लेभे भक्तवेशमात्रेणापि भक्तोचितां गतिं प्राप्नोतीत्यत्र भगवता द्विषत्यपि पूतना दृष्टान्तीकृता एवं द्वि-षतामपि मुक्तिर्भक्तिश्च स्यादिति कृष्णावतारस्यासाधारणो धर्म्म उक्तः ॥ २३ ॥

मन्य इति विलाप एव ननु सिद्धान्तः असुरान् भागवतान् मन्य इति अन्तिमसमये भगवत्साक्षात्कार भगवत्पदप्राप्तिभ्यां लिङ्गाभ्यां तेनास्मदादीन् वाहर्मुखान् मन्ये अन्तिमसमये तद्दर्शना-भाव तत् प्राप्त्यभावाभ्यामिति ध्वनितं संरम्भः क्रोधावेशः तार्क्ष्यः कश्यपस्तत्पुत्रं गरुडं अचक्षत अपश्यन् । कीदृशं अंसे स्कन्धे सुना भायुधश्चक्रायुधो यस्य तं आपतन्तं सम्मुखमायान्तम् ॥ २४ ॥

विदुरप्रश्नसमाधानार्थं मौसललीला अवश्यं वक्तव्येति तां दुःखमयीं लीलां सुखमय्या लीलया सहितीकृत्यैव विवक्षुराह वसु देवस्येति । भोजेन्द्रस्य वन्धनागारे । अस्या- पृथिव्याः शं सुखं अजेन ब्रह्मणा ॥ २५ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

अधीशस्त्रिलोकाधिपःस्वाराज्यलक्ष्म्यास्वातंत्र्यसम्पत्त्या ॥ २१ ॥

अंगहेविदुरपरमेष्ठिधिष्णे महाराजासनेनिषण्णा मासीनंस्वयंति-ष्ठन्हेदेवनिधारय अवधारयेतिन्यवोधयत् इति यत् तस्योक्तमाहिम्नः कैंकर्यं उग्रसेन किंकरत्वं भृत्यान् नोऽलंविग्लापयति ॥ २२ ॥

वकीपूतना यंश्रीकृष्णम् ॥ २३ ॥

अधीशेत्रिगुणनियंतरि संरंभमार्गेण क्रोधावेशमार्गेण अभिनिविष्टं चित्तं येषांतान् असुरानपि भागवतान् मन्येयेहि अंशेस्कंधे सुनाभायुधश्चक्रायुधो यस्य तंसंयुगे आपतं-तंतार्क्ष्यपुत्रं गरुडम् अचक्षत अपश्यन् कंठेकाल इति वत्सप्तम्या अलुक् ॥ २४ ॥

अस्याभूमेः शंसुखम् अजेनब्रह्मणा ॥ २५ ॥

---

ततोनन्दव्रजमितः पित्रा कंसाद्धि विभ्यता ।
एकादशसमास्तत्र गूढार्च्चिः सवलोऽवसत् ॥ २६ ॥
परीतो वत्सपैर्वत्सांश्चारयन्व्यहरद्विभुः ।
यमुनोपवने कूजद्द्विजसङ्कुलितांघ्रिपे ॥ २७ ॥
कौमारींदर्शयंश्चेष्टां प्रेक्षणीयां व्रजौकसाम् ।
रुदन्निवहसन्मुग्धबालसिंहावलोकनः ॥ २८ ॥
सएव गोधनं लक्ष्म्यानिकेतं सितगोवृषम् ।
चारयन्ननुगान् गोपान् रणद्वेणुररीमत् ॥ २९ ॥
प्रयुक्तान् भोजराजेन मायिनः कामरूपिणः ।
लीलया व्यनुदत्तांस्तान् बालः क्रीडनकानिव ॥ ३० ॥

भाषा टीका ।

ईश्वर आप ऐसे हैं कि जिन के कोई वरावर नहीं है अपनी स्वाराज्य से भोग जिन को प्राप्त हैं और चिरलोक पाल ब्रह्मादिक वलिदान पूर्वक जिन के चरणारविन्द की चौकी को अपने किरीट के अग्र से स्तुति करतेहैं ॥ २१ ॥

हे विदुर ऐसे ईश्वर की कैंकर्य करैं जो हम उन के सेवक तिन को वडा विस्मय होय है कि राज सिंहासन पर वैठ उग्र सेन से वोलत हे देव हम को आज्ञा दीजिये ॥ २२ ॥

वडे आश्चर्य की वात है कि दुष्टा पूतना स्तन में विषलगाय मारवेकी इच्छा कर जिन श्री कृष्ण को स्तनप्याती भई वाको माताके योग्य गति दीही ऐसे दयालु श्रीकृष्णके विना कौनके शरण जाय ॥ २३ ॥

क्रोध से श्री कृष्ण में मन लगायो यासे हम असुरों को भागवत मानें हैं जो संग्राम में गरुडजी के कंधा पर वैठ अपने ऊपर चले आवें ऐसे श्री कृष्ण के दर्शन करते भए ॥ २४ ॥

कंस के वंधन में वसुदेव की स्त्री देवकी में जन्मे या पृथिवी के सुख करवेकी इच्छा कर कै ब्रह्मा ने प्रार्थना की तव अवतरे ॥ २५ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

पित्रा हेतुभूतेन नन्दव्रजं इतो गतः । एकादशसमाः सम्वत्सरान् गूढार्च्चिः गुप्ततेजाः ॥ २६ ॥

व्यहरत् अक्रीड़त् । कूजद्भिर्द्विजैः पक्षिभिः संकुलिता व्याप्ता अङ्घ्रिपा वृक्षा यस्मिन् ॥ २७ ॥

रुदन्निवेतीव शब्दस्य यथायोग्यं सर्वत्रान्वयः । मुग्धो बालश्च यः सिंहस्तद्वदवलोकनं यस्य सः ॥ २८ ॥

स एवाधिकं वयः प्राप्तः सन् गोधनं चारयन् कथम्भूतं गोधनं लक्ष्म्याः शोभादिसम्पदो निकेतनं सिता गोवृषा यस्मिन् नानावर्णो गोसङ्घे । रणन् शब्दं कुर्वन् वेणुर्यस्य । अरीरमत् रमयामास २९॥

व्यनुदत् जघान क्रीड़नकान् तृणादिभिर्निर्मितान् सिंहादीन् यथा ॥ ३० ॥

---

श्रीराधारमणदासगोस्वामि विरचित
दीपिन्याख्य तट्टिप्पणी ॥

कौमारी मितियद्यप्यनंतवाल्यलीलेयं वत्सचारण लीलातःप्राक् वर्णनीया तथा पितृविरहावेशेनव्यत्यस्यपठिता इवशब्दोत्रवाल्यस्वभावत्वाद्रोदनादेरस्थैर्य्यंव्यनक्ति ॥ रुदन्निवहसन्निवप्राकृतकौमारीभिवैति सर्वत्राप्यन्वयः मुग्धः सुन्दरः मुग्धस्सुन्दरमूढयोरित्यभिधानात् ॥ २६ ॥

यांवाल्ये वत्सानचारयत्सएवाधिकंपौगण्डं वयःप्राप्तःसन्निति ॥ २७ ॥ २८ ॥

तदेव विषदुष्टमेव ॥ २९ ॥

---

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रिका ॥

कंसाद्बिभ्यतातिभीतेनपित्रावसुदेवेननिमित्तभूतेननंदव्रजं इतः गतः एकादशसमाः संवत्सरान् तत्रनंदव्रजेगूढार्चिरनभिव्यक्तैश्वर्यः सवलः सरामः अवसदुषितवान् ॥ २६ ॥

किंकुर्वन्नवसदित्यतआहपरीतइति बत्सपैर्वत्सपालकैः सहवत्सान्परितश्चारयन्कूजद्भिः शब्दंकुर्वद्भिर्द्वियैः संकुचिताः व्याप्ताअंघ्रिपा वृक्षायस्मिन्तस्मिन्यमुनायानद्याउपवनेप्रांतवनेस्वयंविभुः सर्वांतर्यामीसन् ॥ २७ ॥

कौमारींच वासिनांप्रेक्षणीयांचेष्टांदर्शयन्स्वयंहसन्निवरुदन्निव- मुग्धः सुंदरोबालसिंहः तस्येवालोकनंयस्यसः व्यहरदाक्रीडदिति श्लोकद्वयमेकान्वयम् ॥ २८ ॥ २९ ॥

प्रयुक्तानिति भोजराजेनकंसेनप्रयुक्तान्प्रेषितान्मायिनः वंचकान्कामरूपिणः स्वेच्छानुरूपवेषधारिणः तांस्तान्शकटधेनुकारिष्टादीन् व्यनुददहनत् बालः क्रीडनकानिवेत्यनायासंदृष्टांतः क्रीडनकान्क्रीडार्थंस्वकाल्पतोपकरणानीत्यर्थः ॥ ३० ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

ततोमथुरापुरात् गूढाचिरप्रकाशितस्वमाहात्म्यः ॥ २६ ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

कूजंतोऽव्यक्तशब्दं कुर्वतो द्विजाः पक्षिणस्तैः संकुलिताअंघ्रिपा वृक्षा यस्मिन्ननृत्यां कंतस्मिन् ॥ २७ ॥

कौमाराद्यन्यवयोभावश्चेष्टानांवैलक्षण्यप्रदर्शनार्थः बालसिंहस्यावलोकनमिवावलोकनंयस्यसतथोक्तः ॥ २८ ॥

लक्ष्म्यानिकेतंमंदिरं सितास्तंतूनांरज्ज्वानासिकायांस्यूताःप्रोतागोवृषाःककुद्मंतोयस्मिन्तथोक्तं चारायंस्तृणानीतिशेषः ॥ २९ ॥

प्रयुक्तान्प्रहितान् मायिनः ॥ माययाबेपांतरधारिणस्तांस्तानितजातिभेदायोक्तं क्रीडनकान्लीलासाधनानि ॥ ३० ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ॥

एकादशेति । तावतैव पूर्वकैशोरत्वात्सथोक्तं कालेनाल्पेन राजर्षे इत्यादि । क्वचाति सुकुमाराङ्गौ किशोरौ नाप्तयौवनावित्यादिबाल्य-पौगण्ड-कैशोराः पुत्राभ्याममवन् क्वचिदित्यादिभ्यः गूढार्चिरिति यथा गूढार्चिः कुत्राप्यग्निः प्राप्तं प्राप्तमिन्धनं दहति । तथा गोपलीलायां गूढप्रभाव एव सन् प्राप्तं प्राप्तमसुरवृन्दं दहन्नित्यर्थः एकादशपर्यन्तं गूढार्चिः ततः परं पञ्चदशपर्यन्तं प्रकटार्चिरिति साध्याहारं व्याख्यानं त्वघटमानञ्च एकादशाब्यन्तरे तत्तत्प्रभावस्य मध्ये मध्ये प्रसूतत्वात् । तावतैव पूर्वकैशोरत्वात्तथोक्तम् २६ २७

---

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ॥

ततोमथुरायांजननानंतरं पित्रावसुदेवे कंसाद्भिशेषेणविभ्यतानंदव्रजमितःप्राप्तःतवचोपसंहततेजोभूत्वादशसमाःएकादशवर्षाणिवलमद्रसहितःलएवनिजसहायइतिसहितोऽवसत् एतेहिद्रशप्राणात्मकाःद्वौद्वौचविषयात्मकौजननेहेतुत्रयं गोकुलसमागमनेहेतुद्वयंअजेनापीत्यनुपंगात् इदंवतप्रयोजनमध्येप्रदिशति भक्तयाखातन्त्र्येणनिरूपणात्इदंचांतास्त्विस्थानात्रीत्यतएवरुद्रप्रीत्यर्थमेकादशसमा-अवसत् वायोस्तुल्यरूपतयाप्रीत्यर्थं गूढार्चिर्त्वसवलत्वंचसमवर्णाः ॥ २६ ॥

एवंमितसतयाध्वितस्यपूर्वोक्तप्रयोजनाभावात् शिरोभूतवासुदेवरूपेणश्रीडांकृतवानित्याहाष्टमिःसत्वैशीर्षण्याः वागष्टमीतिश्रुतेः-तत्रश्रीवेत्राहपरीतदाभ्यां वक्रमेतद्वयंस्कंधार्थत्वेनश्रोत्रमेतद्वयं प्रकरणार्थत्वेन वत्सपैर्गोपालैर्बालकैर्वेष्टितःवत्सांश्चारयन्सितिक्रियैव वायोःप्राणानांचव्याहरत् विहारंकृतवान् बालैःसहक्रीडितवानित्यर्थःबाधाभावायाह यमुनोपवनमितियमुनायाःसमीपवनेचित्तोद्वेगाभावायाहकूजद्भिर्द्विजैःसंकुलिताःअंघ्रिपायस्मिन्भगवद्भक्त्याद्वैवकवपक्षचमुखिजासक्तिमाश्रित्यभगवंतंगायंतीत्युक्तंभवति ॥ २७ ॥

वनेक्रीडामुक्त्वासंध्यादिपुव्रजेक्रीडामाह कौमारीदर्शयंश्चेष्टामिति कुमारसंबंधिनीपंचवर्षपर्यंतंजायमाना पंचापिलीलाःपंचवर्षैःक्रियमाणाव्रजवा सितांपंचविधानांत्रिविधाः पुरुषाः द्विधास्त्रियःनहिस्त्रीत्वस्य स्त्रियःसत्यतःसर्वैपमेवप्रेक्षणीयांचेष्टांप्रदर्शयन्व्याहरदितिसंबंधःसमर्थोहिसर्वकर्तुंदर्शयत्वित्यनेनस्वयंतथानकृत व नेवतत्रप्रथमरुद्रश्चिवतामस्यस्तंदैवतुष्यंतिरुद्रप्रीत्यर्थंचहसश्चितिदाजस्यःमुग्धभावेनतामसःवत्सभावेनराजसाः सिंहावलोकनेनसा

१ एकोनविंशति श्लोकतात्पर्यदनिशेषः

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ॥

त्विकाःअत्राप्यातिपूर्वैभक्तान्स्मरतीति रुदन्निवहसन्मुग्धोयोवालः-सिंहस्तद्वदवलोकनंयस्यसः ॥ २८ ॥

पौगंडलीलामाह सप्तथेतिशिखिपुष्टसुवर्णेपुपड्भिःश्लोकैर्विशेषतस्तास्तालीलाइहोदिष्टाःक्रमेणात्रविवक्षिताःसप्तवयःपूर्वमुक्तःगोधनंगवांसमूहं लक्ष्म्यानिकेतमितिसुंदरं चारणेहेतुःसितागावोवृषायत्रेतिधर्मप्राधान्यंनिरूपितंअतस्तच्चारणंधर्मकरणमेवेत्युक्तं अन्यान्स्वाश्रयाधर्मकर्त्तृत्वंशब्रिमेवफलसंबंधान्कृतवानित्याहअनुगान्स्वस्वाम्यभावोपजीविनो गोपालान्वेणुवादनंकृत्वाब्रह्मामृतंपाययित्वापरब्रह्मानंदेअरीरमत्रमयामास ॥ २९ ॥

तत्रबाधांस्तुलीलयैवदूरीकृतवानित्याह प्रयुक्तानितिभोजराजेनकंसेनप्रेषितान्नानारूपधारिणोदैत्यान्व्यामोहनार्थं समागतान्लीलयैवक्रीडारूपयैवविक्रोशेनानुद्वल्यदूरीकृतवान्तांस्तानितिप्रसिद्धान्अथमामावायाहवालःक्रीडनकानिधितिवत्सपुच्छिकाः काष्ठादिक्रीडासाधनानिवाद्वयमेकवर्षकृत्ये ॥ ३० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ॥

पित्रा हेतुना इतो गतः एकादशसमाः संवत्सरान् व्याप्यावसत् । तावतैव कालेन बाल्यपौगण्डकैशोरलीलासंपूर्तेः गूढार्चिः प्राकृतैः कंसादिभिरलक्षिततत्त्वः माधुर्योद्रेकेण गूढैश्वर्य इति वा २६॥

कूजद्भिर्द्विजैः संकुलिता व्याप्ता अङ्घ्रिपा यत्र तस्मिन् ॥ २७॥

रुदन्निवेति बालानां रोदनश्चावश्यमिति तथा बाला विनापि रोदनचिह्नं रोदनं दर्शयन्ति तथैव मातृणामग्रे अदेयलोभ्यवस्तु प्रार्थनहठादौ रुदन्निव भवति तदैव तत्प्राप्तौ हसन् । किञ्च । भीषणवैत्याद्यागमे मुग्धोऽपि बालोऽपि सिंहो यथा घोरसत्त्वान्नावमेति किंतु स्वपराक्रममेव दृष्ट्या द्योतयति तथाभूतस्य सिंहस्येवालोकनं यस्य सः । परमवत्सलान् पित्रादीन् व्याकुलयति ॥ २८ ॥

स एव किञ्चिदधिकवया भवन् वत्सचारणं समाप्य लक्ष्म्याः शुक्लनीलहरितपीतधूमलसुवर्णशोभाया निकेतं गोधनं चारयन्नरीता गोवृषा यत्र तत् गोपान् रमयामास ॥ २९ ॥

व्यनुदत् जघान क्रीडनकान् पत्रादिनिर्मितान् सिंहादीनिव॥३०॥

---

श्रीमच्छुकदेव कृत सिद्धांतप्रदीपः ।

पित्रानेत्राइतोगतः ॥ २६ ॥

कूजद्भिर्द्विजैर्मयूरादिभिः संकुलिताः व्याप्ताः अंघ्रिपाः द्रुमा यस्मिन् ॥ २७ ॥

मुग्धोऽपटुर्नरदारकः तद्वत्सुरेपु बालोयः सिंहस्तद्वदसुरेषु अवलोकनं यस्य सव्याहरदिति पूर्वेणान्वयः ॥ २८ ॥

अरीरमत् रमयामास ॥ २९ ॥

मायिनः वंचकान् व्यनुदत् जघान ॥ ३० ॥

---

भाषाटीका ।

कंस से डरपे ता पीछे पिता ने नन्द के व्रज में पहुंचाए ऐसे बलदेव सहित ११ वर्ष गुप्त तेज होकर वसे ॥ २६ ॥

विपन्नान् विषपानेन निगृह्य भुजगाधिपम्।
उत्थाप्यापाययद्गावस्तत्तोयं प्रकृतिस्थितम् ॥ ३१ ॥
अयाजयद् गोसवेन गोपराजं द्विजोत्तमैः।
वित्तस्य चोरुभारस्य चिकीर्षुः सद्व्ययं विभुः ॥ ३२ ॥
वर्षतीन्द्रे व्रजः कोपाद्भग्नमानेऽतिविह्वलः।
गोत्रलीलातपत्रेण त्रातो भद्रानुगृह्णता ॥ ३३ ॥
शरच्छशिकरैर्मृष्टं मानयन् रजनीमुखम्।
गायन् कलपदं रेमे स्त्रीणां मण्डलमण्डनः ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां तृतीयस्कन्धे विदुरोद्धवसम्वादे
द्वितीयोऽध्यायः ॥ २ ॥

भाषाटीका

गोपालों सहित श्री कृष्ण बछरा चरवाते भये जिन वृक्षों पर पक्षियों के समूह शब्द करते ऐसे यमुना के उपवनमें विहार करते भये ॥ २७ ॥

देखने योग्य कौमार अवस्था व्रजवासियों के दिखाते भये मोह में होके मुग्ध बालसिंह के समान जिनका अवलोकन है ॥ २८ ॥

सो श्री कृष्ण जी अब अधिक बड़े भए तब लक्ष्मी को स्थान युक्त गाय बैल गोधन को चराते हुए बंशी बजाते गोपों के साथ रमण करते भए ॥ २९ ॥

कंस ने मायावी नाना रूपधारी दैत्य भेजे तिन्हें भगवान लीला कर के नाश करते भए जैसे बालक अपने बनाए हुए मट्टी के घरों को बिगाड देवे ॥ ३० ॥

तैसे फिर भगवान विष जल के पान करने से मरे गो गोपों को जिवाय और कालिय सर्प को ह्रद से निकाल फिर निर्मल हुयो वही जल गोप गैयान को पान कराते भये ॥ ३१ ॥

श्रीधरस्वामिकृतभावार्थदीपिकायां

विपन्नान् मृतान् गोपान् गाव इति गा उत्थाप्य तदेव तोयं प्रकृतिस्थितं निर्विषम् ॥ ३१ ॥

इन्द्रपूजाभङ्गेन कृता गवां पूजैव गोसवः गोयज्ञः तेन। गोपराजं नन्दं। वित्तस्य चेति चकारादिन्द्रस्य मानभङ्गं कुर्वन्। उरुभारस्यं अतिसमृद्धस्य ॥ ३२ ॥

कोपाद्वर्षति। गोत्रः पर्वत एव लीलाऽऽतपत्रं तेन हे भद्र॥ ३३ ॥

मृष्टमुज्ज्वलं स्त्रीणां मण्डलं मण्डयतीति तथा ॥ ३४ ॥

इति श्रीमद्भागवतमहापुराणे तृतीयस्कन्धे
श्रीधरस्वामिकृत भावार्थदीपिकायां
द्वितीयोऽध्यायः ॥ २ ॥

श्रीराधारमणदासगोस्वामि विरचित
दीपिन्याख्य तट्टिप्पणी ॥

गवांपूजाचेयंप्रतिपद्दर्श संयोगे क्रीडनन्तुगवाम्मतमिति वैदिक्ये वावतारसमये श्री भगवताप्रकटीकृतेति ज्ञेयम् ॥ ३० ॥ ३१ ॥

शरदिति आश्विनपूर्णिमायां रास लीला सूचिता ॥ ३२ ॥

इति श्री मद्भागवत महापुराणे तृतीयस्कंधे
दीपिकादीपनीटीकायां
द्वितीयोध्यायः ॥ २ ॥

श्रीमद्वीरराघवाचार्यकृत भागवतचंद्रिका

विपन्नानिति विषतोयेनकालियह्रदजलेनविपन्नानापन्नान्मूर्छिता नित्यर्थः दृष्टांतिशेषः भुजगाधिपंकालियंनिगृह्यविपन्नानुत्थाप्यप्रकृति स्थितंस्वभावस्थितं तोयं जलं गाः अपाययत्पानमकारयत् ॥ ३१ ॥

अयाजयदिति उरुभारस्यबहुभारस्यसंभृतस्यवित्तस्यसद्व्ययंसमी चीनोपयोगंचिकीर्षन्प्रभुः द्विजोत्तमैःसहितः गोसवेनगोसवाख्ययागे नगोपराजंनंदमयाजयत् ॥ ३२ ॥

वर्षतीति भग्नमानेविहतपूजे इंद्रेकोपाद्वर्षतिसतिहेभद्राविदुर अतिविह्वलःअत्यापन्नः व्रजः अनुगृह्णतागोत्रंपर्वतएवलीलातपत्रंयस्य तेनभगवतात्रातः रक्षितः ॥ ३३ ॥

शरदिशरत्कालेयः शशीचंद्रमास्तस्यकरैः किरणैर्मृष्टंउज्ज्वलंर जनीमुखंप्रदोषंमानयन्कृतार्थतांतस्यापादयन्नित्यर्थः स्त्रीणांगोपीनां मण्डलंमंडयतिभूषयतीतिमंडलमंडनः कलान्यव्यक्तमधुराणिपदान्य क्षराणियस्मिन्कर्मणि तथागायन्रेमेऽरमत् ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
वीरराघवाचार्य्यै कृत टीकायां
द्वितीयोऽध्यायः ॥ २ ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

विषपानान्मृतप्रायान् यमुनायाउत्थाप्यगावोगोगास्तस्यायमुनाया-स्तोयंप्रकृतिस्थितंविषामिश्रणात्प्राग्यथाशुद्धंतथास्थितम् ॥ ३१ ॥

गोसवनगोयज्ञेनउरुभारस्यबहुसंख्याविशेषविशिष्टस्य सत्प्रश-स्तोव्ययस्यागविशेषस्तम् ॥ ३२ ॥

भग्नमानेनशाभिमानेअतएवातिविह्वले कर्तव्यमूढेगोत्रलीलातपत्रे णपर्वताख्यक्रीडाश्वेतच्छत्रेण भोभद्रकल्याणात्मन् ॥ ३३ ॥

शरद्दतावुदितः शशीशरच्छशीतस्यकरैर्मृष्टमलंकृतंरजनीमुखंप्र-दोषं कलपदंयथाभवतितथामंडलमंडयतीतिमंडलमंडनः ॥ ३४ ॥

इति श्रीभागवतमहापुराणे तृतीयस्कंधे
विजयध्वजटीकायां
द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ॥

कौमारीमिति । अत्यन्तबाल्यत्वाद्वत्सचारणस्य प्राक्तनीयं लीला शोकावेशेन व्यत्यस्य पठिता य एवम्भूतः स परीत इत्यादि योज्यं तत्र रुदन्निव हसन्निव बालस्वभावो दर्शितः ॥ २८—३४ ॥

इति श्रीमद्भागवतमहापुराणे तृतीयस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीमद्वल्लभाचार्य कृत सुबोधिनी

सप्तमवर्षकृत्यमाह विषपानेतिविषपानेनेति कालियह्रदेविषतोय-पानेनविपन्नान्भुजगाधिपंनिगृह्यतन्मारकंदंडयित्वातान्सजीवानु-त्थाप्यतद्देवतोयंगांश्चापाययत् गावइतिगाःभुजगाधिपःकालियःतत्तो-यंकालियहृदतोयंप्रकृत्यास्थितंविषरहितम् ॥ ३१ ॥

अयाजयदितिसप्तमीतल्लीलागोसवेनेतिइंद्रयागंभक्तवैश्यस्तो-मंगावःसूयतेऽनेनेतिगांवृद्धिकरवैश्यस्तोमात्मकं गोपराजंनंदंद्विजोक्त मैरितितर्पयाजकत्वेनस्वस्येतिज्ञापितं इंद्रयागभंगेनतथाकरणेहेतुः चित्तस्यैतिकोऽस्यवधिद्रव्यस्यभारूपेणस्थितस्यसद्व्ययंचिकीर्षुः पू-र्वस्थितस्यान्यथाकरणेसामर्थ्यंविभुरिति ॥ ३२ ॥

अष्टमवर्षादिकृत्यमाह वर्षतीतिइंद्रइतिदेवताप्रधानपक्षोमुख्यइतिख्यापयितु मिंद्रेणवृष्टिकारितवानपु धिलीलांचस्थापयितुंगोवर्द्धनोद्धरणंचक्रे-तदाव्रजविषयककोपाद्धेतोरिंद्रेमेघद्वारावर्षतिसतिव्रजनाशमाशंक्यस व्रजोरक्षितःइंद्रस्यकथमेवंकरणमित्याशंक्याह भग्नोमानोयस्यतस्मि न्सतिपश्चाद्वर्षतिसतिगोत्रंपर्वतःसएवलीलातपत्रंपृथिवीरक्षकःअपि धर्मिष्ठत्वाद्भगवतोवृतालीखया आतपत्रमिवलीलातपत्रंछत्राकंवाञा तारक्षितःभद्रेतिसंबोधनमुक्तविश्वासायभवानपितथारक्षितइतिज्ञाप नार्थंवान्यथापिपालयितुंसमर्थः स्वस्यपरमनुग्रहंव्रजविषयकलो-कंख्यापयितुंपर्वतोद्धरणंकृतवानित्यभिप्रायेणाहअनुगृह्णतेति॥ ३३ ॥

वर्षचतुष्टयकृत्यमाह शरच्छशिकरैर्मृष्टमितिप्रत्यग्रोदितचंद्रकिर णैर्मृष्टमुज्ज्वलितंरजनीमुखंमानयन्रेमेरजनीस्त्रीशशीभर्तासहिबहु कालेनसमागतोमानिनीनामंतस्तापेनाक्लिष्टास्वकरैर्मृजन्मानाप-नोदनंकरोतितिनतावतातस्यामादोऽपगच्छतिसाहिदेवतानिष्कलंकेनर-मणमपेक्षते सहिभर्ताशशकलंकयुक्तःअतउभयसमाधानार्थंस्वयमु पायंकृतवान्रजनींस्त्रीसहस्ररूपांकृत्वाचंद्रंस्वमनोभवंविधायतस्यम नोधिष्ठातृदेवतात्वसिद्ध्यर्थमीशब्रह्मादिविस्मयकरींरतिंक्रीडांकृतवान् तत्कालीनःशशीतिवर्षाकालेरजनीमुखे वृष्टिर्भवतीतिरुदंती अत-

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

एवतदनंतरंकालेउत्पन्नःस्वकरैर्मार्जनंकरोतीति ह्यकंयुनर्न्येरजनी-मुखं मानयंतिमहतांतस्मिन्कालेक्रीडाभावातदोषस्तुरसात्मकएव नभवतिनिर्दोषतयामाननंभगवदेकनिष्ठतयैवस्त्रीणांमंडलंयस्यमंडल-स्यमंडनभूतःसुवर्णेनीलमणिवत् कषपाषाणेवासुवर्णरेखा ॥ ३४ ॥

इतिश्रीमद्भागवतेमहापुराणेतृतीयस्कंधेसुबोधिन्यां
श्रीमल्लक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां
द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीमद्विश्वनाथचक्रवर्ति कृत सारार्थदर्शिनी ॥

विषोदकपानेन क्रीडनकान् मूर्च्छितान् गोपालान् गाश्चोत्थाप्य प्रकृतिस्थितं निर्विषम् ॥ ३१ ॥

गोसवेनेन्द्रमखभङ्गतः प्रवर्त्तितेन गवां पूजनेन चकारादिन्द्रस्य च मानभङ्गं उरुभारस्य अतिसमृद्धस्य ॥ ३२ ॥

कोपाद्वर्षति सति गोत्रः पर्वत एव लीलातपत्रं तेन हे भद्र ॥३३॥

रजनीमुखं प्रदोषं पक्षे शरच्छशिनो नायकस्य करतलघर्षणैर्मृष्टं प्रस्वेदापसारणेनोज्ज्वलीकृतं रजन्या नायिकायाः स्वाधीनभर्तृ-काया मुखं मानयन् अभिनन्दयन्नहमप्येवमेव करोमीति स्त्रीणां मण्डलं राससम्भोगलीलानन्तरं मण्डयति स्त्रः ॥ ३४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
तृतीये द्वितीयोऽध्यायः सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः

प्रकृतिस्थितं निर्विषम् गावः गाः ॥ ३१ ॥

सद्व्ययं सत्कर्मणि उपयोग्यम् गोसवेन गोपूजनयागेन गोप-राजं श्रीनंदम् ॥ ३२ ॥

यागभिराकरणेन भग्नोमानो यस्य तस्मिन्कोपात् वर्षतिसति गोत्रो गिरिरेव लीलातपत्रं तेन भद्र हे विदुर ॥ ३३ ॥

स्त्रीणां मंडलं मंडयतीति तथा मृष्टमुज्ज्वलम् कलपदं मधुरपदं गायन् ॥ ३४ ॥

इति श्रीमद्भागवतमहापुराणे तृतीयस्कंधे
सिद्धांतप्रदीपटीकायां
द्वितीयोऽध्यायः ॥ २ ॥

---

भाषाटीका ॥

फिर बडो भार रूप धन को सन्मार्ग में खर्चं करवाने की इच्छा से और इन्द्र के मान भंग करवाने की इच्छा से ब्राह्मणों के द्वारा समर्थ भगवान् नन्दजी को गौओं की पूजा निमित्त यज्ञ करवाते भये ॥ ३२ ॥

मान भंगहोने के कारण क्रोध कर जब इन्द्रने वर्षा की कि जिस से ब्रज बडो विह्वल भयो तब मंगल की इच्छा कर श्रीकृष्ण जीने गिरिराज उठाय वाही को छत्र कर सब की रक्षा की ॥ ३३ ॥

शरद के चद्रमा का किरणों से प्रकाशित रजनीमुख को मान मनोहर पद गाय स्त्रियों के रासमंडल में शोभित होय रमण करते भये ॥ ३४ ॥

तृतीयस्कन्ध में द्वितीयाध्यायसमाप्त।

## तृतीयोऽध्यायः ।

### श्रीउद्धव उवाच ॥

ततः स आगत्य पुरं स्वपित्रोश्चिकीर्षया शं बलदेवसंयुतः ।
निपात्य तुङ्गाद्रिपुयूथनाथं हतं व्यकर्षद्व्यसुमोजसोर्व्यां ॥ १ ॥
सान्दीपनेः सकृत्प्रोक्तं ब्रह्माधीत्य सविस्तरम् ।
तस्मै प्रादाद्वरं पुत्रं मृतं पञ्चजनोदरात् ॥ २ ॥
समाहुता भीष्मकन्यया ये श्रियः सवर्णेन बुभूषयैषाम् ।
गान्धर्व्ववृत्त्या मिषतां स्वभागं जह्रे पदं मूर्ध्नि दधत् सुपर्णः ॥ ३ ॥
ककुद्मिनोऽविद्धनसो दमित्वा स्वयम्वरे नाग्नजितीमुवाह ।
तद्भग्नमानानपि गृध्यतोऽज्ञान् जघ्नेऽक्षतः शस्त्रभृतः स्वशस्त्रैः ॥ ४ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ॥

तृतीये मथुरामेत्य व्रजात् कंसवधादिकम् ।
यत्कृतं द्वारकायाञ्चकृष्णेनतदवर्णयत् ॥ ० ॥

शमित्यव्ययं पित्रोःसुखस्य चिकीर्षेत्यर्थः । तुंगात् राजमञ्चात् रिपुयूथनाथं कंसं व्यसोरपि विकर्षणं पित्रोःसुखार्थम् ॥ १ ॥

ब्रह्म वेदंसविस्तरं षडंगादिसहितं पञ्चजनोदरविदारणद्वारा पुत्र-मानीयेत्यर्थः ॥ २ ॥

भीष्मककन्यया रुक्मिण्या ये राजानः समाहुताः ह्रस्वत्वमार्षं स माहृता इति पाठे आकृष्टा इत्यर्थः केन साधनेन श्रियो लक्ष्म्याः सवर्णेन समानेन रूपेण यद्यपि तया केवलं श्रीकृष्ण एवाहूतः न सर्वे-तथापि तस्या लावण्यं तेषामागमने हेतुरिति तयैवाहूता इत्युच्यते तेषां मिषतां मूर्ध्नि पदं दधतः तया सह गान्धर्ववृत्त्या परस्परसमय-रूपया बुभूषया भवितुमिच्छया जहार कथंभूता स्वभागं लक्ष्म्यंश त्वात् तयास्वात्मने ऽर्पितत्वाच्चसुपर्णःसुपतनः यद्वा सुपर्ण इव स्व भागं सुधामित्यर्थः यद्वा श्रियः रुक्मिण्या समानं वर्णद्वयं वाचकं यस्य सः श्रियः सवर्णो रुक्मी तेन समाहुता शिशुपालादयः ॥ किमर्थं भीष्मककन्यया सह तेषां बुभूषया भूतिर्भवत्वित्येतदर्थं । तत्र शिशुपालस्याह्वानं वरत्वेन बुभूषया । जरासन्धादीनां तद्विवा-होत्सवेन । शेषं पूर्ववत् ॥ ३ ॥

ककुद्मिनो वृषभान् अविद्धनासिकान् विद्धनासिकान् कृत्वेति वा । तैर्वृषभैस्तद्दमनेन वा भग्नो मानो येषां तथापि तां गृध्यतः का-मयमानान् अतएवाज्ञान् शस्त्रभृतो राज्ञः तच्छस्त्रैरक्षत एव जघान ॥ ४ ॥

---

श्रीराधारमणदासगोस्वामि विरचित दीपिन्याख्य
तट्टिप्पणी ।

रासलीलावर्णनवैवद्ग्येनाध्यायसमाप्तिः पश्चात्कथमपिवहिरु

श्रीराधारमणदास गोस्वामि विरचित
दीपिन्याख्य तट्टिप्पणी ।

संधानेउद्धवउवाचेत्युक्तम्ततःव्रजलीलानंतरं शमित्यत्रषष्ठयाःस्वी-कारादित्यर्थइत्युक्तम् हस्फुटंतंव्यसुंमृतं पित्रोः सुखार्थमित्युपलक्ष णंदेवादीनांम्भृतिनिश्चयापादनेनसुखातिशयार्थं तत्स्थूलशरीरस्या-न्यैर्विश्रांतिघट्टपर्य्यंतंनेतुमशक्यत्वादुत्तरक्रियार्थंनिजधामरजसिवि लुंठनसौभाग्यदर्शनार्थंचेत्यर्थः ॥ १ ॥

तस्मैसांदीपनयेवरंदक्षिणां पञ्चजनोदरात् तदुदरंविदार्यैतिल्य ब्लोपेपंचमीस्वीकृतायमालयादानीयेत्यार्थिकोऽर्थः ॥ २ ॥

परस्परसमयरूपश्चाश्वोभाविनित्यमजितोद्वहनइति श्रीरुक्मि-णीसंकेतः तामानयिष्येउन्मथ्येति श्रीभगवतश्चसंकेतइति परस्पर-संकेतरूपायाभवितुंस्वस्य वरत्वेनतस्याश्चभार्य्यात्वेनभवितुमिच्छा-तयाजहारेतिप्रथमपक्षेऽर्थःसुपतनःशोभनागमनःपूर्वार्थेरुक्मिण्यामा ह्वानकर्तृत्वमारोपितंश्रीकृष्णानुरक्तयातयावीभत्सितस्यतस्याह्वानान र्हत्वात् मांराक्षसेनविधिनेतिवाक्येनराक्षसविवाहस्यगान्धर्वविवाह त्वासम्भवाच्चारुचेर्यद्वेतिशिशुपालस्यवरत्वेनभूतिस्संपत्तिरस्तुजरा संधादीनांभोजनदक्षिणादिविभूतिरस्तुइति तयासमाहूताइतियावु भूषासापिरुक्मिणःपरस्परपक्षपातमयी कथञ्चिद्गान्धर्ववृत्तिरेवेति योज्यम् शेषंपूर्ववदित्युक्तम् ॥ ३ ॥

प्रथमेपक्षेऽकारप्रश्लेषात्अविद्धनसइति अनुवादमात्रम्दमनमे-वविधेयम् द्वितीयेतुविद्धनासिकत्वविशिष्टंदमनंविधीयतेतथापिभ ग्नमानत्वंपितांनाग्नजितीमतएवभग्नमानत्वेपिकामयमानत्वादेनत-च्छस्त्रैःजरासंधाद्यस्त्रैरित्यपेक्षितत्वात्करणपदमध्याहृतंनतुस्वशस्त्रै-रित्यस्यव्याख्यानंस्वशब्दस्यवाक्यस्थकर्तृपरामर्शकत्वात् तस्मादे-वंव्याख्येयम्तच्छस्त्रैरक्षतएवस्वशस्त्रैःस्वकस्याऽर्जुनस्यास्त्रैर्जघानेति तदुक्तंदशमेगांडीवीफालयामासासिंहःक्षुद्रमृगानिवेति ॥ ४ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रिका ।

एवंनंदव्रजेवृंदावनेचश्रीकृष्णकृतानिचेष्टितानिसंग्रहेणावर्ण्य-यत् अथव्रजान्मथुरामेत्यभगवताकृतानिततोद्वारकांचैत्यकृतानिच संग्रहेणवर्णयत्यध्यायद्वयेन तत्रमथुरायांकृतानिभगवच्चेष्टितान्याह ततइतिद्वाभ्यां स्वपित्रोर्देवकीवसुदेवयोःशंसुखंचिकीर्षयाकर्त्तुमिच्छयावलदेवेनसंयुतः ततः व्रजात्पुरींमधुपुरीमागत्यहतंस्वेनेतिशेषः रिपुयूथनाथंशत्रुसमूहनायकं कंसंव्यसुंगतप्राणमोजसावलेनतुंगाद्राजमंचादुर्व्यांभूम्यां निपात्य व्यकर्षद्देवानां विश्वासार्थमिति-भावः ॥ १ ॥

सांदीपनेरुपाध्यायात्सकृत्प्रोक्तं सविस्तरंषडंगोपेतंतंब्रह्मवेदमधीत्यतस्मैसांदीपनयेमृतंपुत्रंमृतपुत्रप्रदानरूपंवरंपंचजनोदरात्पंच-जनोनामकश्चिदसुरस्तस्योदरविदारणद्वारायमपुरींगत्वाततः पुत्रमानीयप्रादात् ॥ २ ॥

द्वारकाचेष्टितान्याहसमाहुताइति श्रियोलक्ष्म्याःसवर्णेनसमानरूपेणयुक्तयेतिशेषः भीष्मककन्ययारुक्मिण्यानिमित्तभूतयातदुद्वाहार्थमित्यर्थः येशिशुपालादयः समाहुताःसम्यगाहुताः रुक्म्यादिभिरितिशेषःतेषांचैद्यादीनांमिषतांपश्यतांमूर्ध्निपदंदधद्धानः तानभिभूयेत्यर्थःगांधर्वेवृत्त्यापरस्परसंकेतरूपयावृत्त्याबुभूषयाभवितुमुद्वोढुमिच्छयासुपर्णः शोभमानरथः स्वभागंरुक्मिणींराघवत्वेऽभवत्सीतारुक्मिणीकृष्णजन्मनि अन्येष्वप्यवतारेषुविष्णोरेषानपायिनीभास्करस्यप्रभायथेत्याद्युक्तरीत्यास्वांशभूतानित्यानपायिनींजह्रेहृतवान् ॥ ३ ॥

ककुद्मिनइतिअविद्धनसः अच्छिद्रनासिकान्ककुद्मिनः वृषभान्दमित्वाछिन्ननासिकान्कृत्वानाग्नजितींनग्नजितोराज्ञः कन्यांस्वयंवरउवाहउदवहत् तद्भग्नमानान्तेनककुद्मिदमनेनभग्नः मानः वलिनोवयंइतिमानोयेषांतानपिगृध्नतः काम्यमानान्नाग्नजितीमित्यर्थः अतएवाज्ञान्मूढान्राज्ञःभूपान्शस्त्रधारिणोराज्ञः स्वशस्त्रैःस्वस्य दिव्यैः सुदर्शनादिभिरायुधैः जयन्घ्नतः क्षतवर्जितः सन्जघ्नेहतवान्तान्विजित्यनाग्नजितीमुदवहदित्यर्थः ॥ ४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली

ततोवृंदावनात् आशादिगतिकृष्णयोरितिस्वपित्रोराकांक्षितांचिकीर्षयाकर्तुमिच्छया व्यसुंगतप्राणम् ॥ १ ॥

ब्रह्मवेदं पंचजनोदरात्पंचजनाख्यदैत्योदरात्सांदीपिनेरधीत्यसकृत्प्रोक्तंतेनेतिशेषः ॥ २ ॥

भीष्मककन्ययेतितृतीयातादर्थ्ये भीष्मककन्यायारुक्मिण्याअर्थेसवर्णेनक्षत्रियत्वमात्रयोग्यतयासमाहूताः एषांक्षत्रियाणांश्रियोऽजिहीर्षयातेषांमूर्ध्निपदंद धदित्यनेनस्त्रीहरणप्रकारः मिषतांपश्यतां सुपर्णःसुपरानंदात्काकुत्स्थोवाचिरंस्थितेरितिवचनात् सुष्ठुपरमानंदरूपःसुपर्णइत्यनेनदसोप्यंक्लेशेनेतिदर्शितंगांधर्ववृत्त्याकन्यासंवादलक्षणयाइत्यनेनवहवोविवाहविधयोदर्शिताभवंति स्वभागमित्यनेनस्वयोग्यमितिदर्शयति ॥ ३ ॥

अविद्धनसोऽच्छिद्रनासिकान्ककुद्मतोवृषभान् वृषभाणामाटोपसमयसूचनायस्वयंवरइत्युक्तं किंच स्वयमक्षतःसन्येस्वयंवरार्थमागतास्तान्क्षत्रियान्जघ्नइत्यन्वयः कन्यायाः स्वलाभेनभग्नमानानभिगृध्यतःकन्याकांक्षमाणानज्ञान्कृष्णप्राप्तियोग्यामजानतः शस्त्रभृतइत्यनेनगृध्नंतेक्षत्रियाएवनतृपाइतिज्ञायते चशब्दः समुच्चये ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

उद्धव उवाचेति। रासलीलावर्णनारम्भे प्रेमवैवश्यादध्यायसमाप्तिः पश्चात् कथमपि वहिरनुसन्धाने सतीति ज्ञेयं। तत इति प्रियादि प्रियजनपीडकत्वाद्देवादीनां प्रीतिविषयकत्वाच्च विकर्षणम् ॥ १ ॥

पञ्चजनोदरं प्राप्य मृतं यमलोकादानीय प्रादादिति वोद्धव्यम् ॥ २ ॥

भीष्मककन्याया या वुभूषा तयेति व्यधिकरण एव तृतीयाद्वयं स्वभागं श्रीरुक्मिणीरूपं जहार ॥ ३ ॥

स्वेषामर्ज्जुनादीनां शस्त्रैर्जघ्ने। तेषु स्वप्रभावावेशात् स्वयमेव जघानेत्यर्थः। गाण्डीवी कालयामासेति श्रीदशमसम्वादाग्रेत्थं व्याख्यायते ॥ ४ ॥

---

### श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

तृतीयेमध्य चरितंकृष्णस्यविनिरूप्यते। इंद्रियाणांतथासर्गमधिकारस्यपोषकं। आविर्भूतोहिभगवांस्तत्रैमैव प्रवर्त्तयन्सर्वांसृष्टिंवितनुतेतावंतोत्रततोगुणाः । दशेंद्रियाणिचत्वारिमनआदीनिदेवताः।अष्टाविंशतिरूपाणि निरूप्यन्तेततोत्रहि। पूर्वाध्यायेमथुरायामुत्पत्तिमुक्त्वातत्रकर्तव्यचरित्रेवक्तव्येमध्येगोकुलवासादिकंनिरूपितं इदानीमाविर्भावकार्यंनिरूप्यते तत्रप्रथमंगोकुलात्समागत्यकंसंहतवानित्याह ततइति ततोगोकुलात्भगवान् स्वपुरंमथुरामागत्यस्वपित्रोः शंचिकीर्षयाउभयोःकार्यसिद्ध्यर्थं वलदेवेनसंयुतोरिपुयूथानांनाथंकंसंतुंगान्मंचान्निपात्यतदुपरिस्वयंपतित्वामृतं तस्मिन्पित्रोः प्रियचिकीर्षया हतमपितंव्यकर्षयत् विकर्षणंकृतवान्एवंहितेषांकामामनसिस्थिताःकएवमित्थंकरिष्यतीतिओजसेतियथारस्यावयवाविशीर्णाभवंति तथामहाप्रयत्नेनविकर्षणं कृतवानित्यर्थः इदमेवभक्तानांमनः भक्तानांम नसिस्थितंतदस्माहवातन्मनः स्वस्थंकृतमितिएतादृशेचरित्रेकृतेतेषां हृदयेयज्जायतेऽस्माभिरप्येवंकर्त्तव्यं भगवदपेक्षयास्थातव्यंभगवानेव चित्तेस्थितंदोषंपरिहृत्यमनःस्थिरीकरिष्यतीति ॥ १ ॥

एवं दुष्टनिग्रहं निरूप्यशिष्टपरिपालनं वक्तुंसतांशिक्षार्थंस्वयमाद्यंब्रह्मचर्यलक्षणं धर्मंसंपूर्णंकृतवानित्याह सांदीपनेरिति संदीपनस्यपुत्रः सर्वज्ञस्तस्यसकाशाद्ब्रह्मवेदमधीत्य सकृत्प्रोक्तमित्यतिसौबुद्ध्यंलोकप्रतीत्यानिरूप्यते विधिपरिपालनार्थंवा सुष्ठुविस्तरमिति अर्थावबोधंअंगादिसहितं अधीत्यविद्यांसमाप्यगुरवेदक्षिणांदत्तवान् सादक्षिणावररूपा सोऽपिपुत्ररूपःसोऽपिपूर्वंमृतरूपः पूर्वंपंचजनोदरंप्राप्यमृतपुत्रंमरणात्पूर्वावस्थरेस्थितरूपंतस्मैप्रादात् भगवदाज्ञयाकालेन मरणक्षणमारभ्यसर्वतत्त्वसमूहस्यसंघातस्य प्रतिक्षणंयोविकारो जातस्तंसर्वमेवविकारं कालउद्गिरणंकृतवान् तदासससर्वोपिसंघातः पूर्वस्थितएवभवति इयमेवमनोऽधिकारिदेवता चंद्रएवहिक्षीणोवर्द्धते शब्दहेतुश्चभवति ॥ २ ॥

एवमाचारेणशिष्टपरिपालन मुक्त्वाद्वितीयाश्रमलक्षणधर्ममाचारेणप्रवर्त्तयन् कृतवानित्यर्थः समाहुताइति भीष्मककन्ययायेषांवुभूषयाश्रियःसवर्णेनरुक्मिण्यायेसमाहूतास्तेषां मूर्ध्नि पदंदत्वागांधर्ववृत्त्यातांहृतवान् गांधर्वो राक्षसश्चैवधर्म्यौक्षत्रस्यतौस्मृताविति प्रथमविवाहे तदुभयंविधातुंरुक्मिण्यंशेगांधर्वताइतरविषयेप्रसह्यान्यासामाहरणाद्राक्षसत्वमिति गांधर्ववृत्त्याजह्रेयुक्तम् तेषांमूर्ध्निपदंदधादिति वंधुभिर्यत्तेभ्यो दत्तंतदेकाधहुभ्योदातुमशक्यमिति योरोचते

श्रीमद्वल्लभाचार्य्य कृत सुबोधिनी ।

योवामहांस्तस्मैदेयमितीच्छाथा जातस्वात्तत्सिद्धयर्थं सर्वेपांमस्तकेस्वपदं सर्वानुकल्परूपंदत्तवान् अनेनतेषामिच्छासमर्थिता सर्वप्रतिरूपत्वाद्भगवतः श्रिय:समानवर्णेन रुक्मिणीरूपेणायेसमाहृताइतिवापाठःरूपेणव्यामुग्धाः समागताइतितेषां मस्तकेपददानेनतस्मिन्पक्षेतेपांमोहोनिराकृतः" भीष्मककन्ययाकन्यांश्रियः सवर्णेनकरणेनगांधर्ववृत्त्याबुभूषयाये समागताइत्यर्थः नियतत्वात्सर्वप्रतिरूपतथा गांधर्वत्वं प्रसह्यकन्याहरणंतुसर्वत्रतुल्यमेव मिषतामिति चौर्यनिवारितं सर्वेषांबलहानिर्वानिरूप्यते स्वभागमितिनवेधोदोषः सुपर्ण इतिगरुड़भावमापन्नोभगवानेव तथासत्यमृतमिवतांहृतवान्‌मातुःप्रियचिकीर्षयास्वभागमिति वचनादियंज्ञानशक्तिः एवंवबुद्धिराधिकारिणीयाभगवदेकपरा भगवतैवसर्वान्दोषान्दूरीकृत्यस्वार्थमेवात्मसात्कृताभवति ॥ ३ ॥

एवं सोमवंशे विवाह मुक्त्वासूर्यवंशे सोत्सवं विवाहमाह ककुद्मिनइति ककुद्मिनो वृषभान्पणत्वेनस्वीकृतवान् विद्धनसः कृत्वानासिकांभित्वातत्ररज्जुंनिपात्यसमाकर्षणेन दमित्वाभग्नवीर्यान्कृत्वातत्रापि स्वयंवरएवनत्वाद्यदानं अनेनंस्वधर्मोप्युक्तोगांधर्वः नग्नजितःपुत्रींसत्यामुवाह तस्यांराजसत्वमप्याह तद्भग्नमानान्पूर्वं स्वयंवरार्थमागतान् स्वभयवंधरूपैस्तैरेववृषैर्भग्नो मानोयेषांतथाभूताअपितन्मारकवृषभजेतुर्भगवतः सकाशात्तांहर्तुंगृध्यतः अधिकाकांक्षावतः अतएवाक्षान्स्वयमक्षत एवस्वशस्त्रैस्तान्शस्त्रभृतोजघ्ने अनेनतान्हत्वानयनाद्राक्षसत्वंनिरूपितं इयमेवाहिबुद्धिदेवता ब्रह्मरूपा तस्यादोषाद्विविधानियताः अनियताश्चानियतामायाकृताः सप्तव्यसनात्मकाः अनियतास्त्वनंताएव तानुभयविधानपिभगवान्दूरीकृत्यभग्नान्पाषंडान्जयतीतिवेदोधर्मोवा तज्ज्ञानिकांदेवतांस्वनिष्ठामेवकृतवानिति तत्स्वभावतोपि भगवदीयानांबुद्धिरन्यविषया भवति ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

तृतीये मथुराद्वारवत्योः कंसवधादिकाः । लीलाः कुरूणां निधनमपि संक्षिप्य वर्णितं । शमित्यव्ययं सुखवाचकं पित्रोः सुखस्य चिकीर्षयेत्यर्थः । तुंगात् मञ्चात् हतं प्राप्ताघातं ततो व्यसुं प्राप्तमृत्युमपि व्यकर्षदिति तन्मरणमसम्भावयतां विश्यतां पित्रादीनां मूर्च्छितत्वभाननिरासार्थम् ॥ १ ॥

ब्रह्म वेदं सविस्तरं षडङ्गादिसहितं पञ्चजनोदरं विदार्येति ल्यप्लोपे पञ्चमी यमलोकादानीयेति शेषः ॥ २ ॥

भीष्मककन्ययेति षष्ठ्यर्थे तृतीया भीष्मककन्याया रुक्मिण्याः श्रियः साक्षात्लक्ष्म्याः समानौ वर्णौ द्वौ रुक्मीत्यक्षरद्वयं वाचक यस्य तेन रुक्मिणा ये राजानः समाहुता ह्रस्वत्वमार्षं समाहृता इति पाठे समानीता इत्यर्थः । येषां राज्ञां मूर्ध्निपदं दधत् सुपर्णो गरुडः सुधामिव स्वभागं रुक्मिणीं जह्रे । एषां कीदृशानां गान्धर्वे विवाहे या वृत्तिस्तया शिशुपालस्य वरत्वेन अन्येषां वरयात्रत्वेन यद्वरणं तेनेत्यर्थः बुभूषया अहं वर इति वयं वरयात्रा इति भवितुमिच्छया मिषतां कदाचित् कृष्ण आगत्य कन्यामपहरेदित्यत इतस्ततः सचकितं पश्यताम् ॥ ३ ॥

ककुद्मिनो वृषभान् अविद्धनासिकानेव दमित्वा तैर्वृषैः पराभूतत्वेन भग्नो मानो येषां तान् । तद्वपि गृध्यतः कन्यामभिकांक्षतः अत एवाक्षान् राज्ञः स्वशस्त्रैर्जघ्ने तेषां शस्त्रैर्भृतः पूर्णः आच्छन्नोऽप्यक्षतः ॥ ४ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

स्वपित्रोः देवकीवसुदेवयोः शंसुखम् ॥ १ ॥

सविस्तरंसांगम् ॥ २ ॥

भीष्मककन्ययानिमित्तभूतयातदुद्वाहार्थमित्यर्थः श्रियः सवर्णेनरुक्मिण्याः समनाम्नारुक्मिणायेसमाहुताः सम्यगाहूताः तेषां मिषतां मूर्ध्निपदंदधत् तानभिभूयसुपर्णः शोभनंरुक्मिण्यनुमत्यागमनंयस्यसः गांधर्ववृत्त्या बुभूषया सदारोभवितुमिच्छयास्वभागं स्वीयांजह्रेहृतवान् इत्यन्वयः ॥ ३ ॥

अविद्धनसः ककुद्मिनः वृषान् ४ ॥

---

भाषाटीका ।

उद्धवजी बोले कि तापीछे श्रीकृष्णजी मधुपुर में आय अपने पिताके कल्याणकी इच्छाकर बलदेव सहित ऊंचे मचान से शत्रु यूथों के नाथ कंस कों पटक मरे हुये कंस को पृथिवी में घसिटा तेभये ॥ १ ॥

सांदीपनि गुरू को कह्यौ भयो वेद एक वार में विस्तार से पढ कर गुरू कों मरे पुत्र को पंचजन के उदर से लायकर देते भए ॥ २ ॥

श्रीमहालक्ष्मी के समान रूपवती रुक्मिणी जीनें गांधर्व विवाह की इच्छा करकै जो राजा लोग बुलाये हे तिनको देखते हुये उनके शिर पर पाद धर कर गरुड जैसे अमृत हरलाए तैसे अपनो भाग रूप रुक्मिणी कूंहर के ले जाते भये ॥ ३ ॥

नाथ जिनकी विधी नही ऐसे सात वैलों को जीत कर स्वयंवर में नाग्न जिती से व्याह करते भये और वैलों से मान जिन के भग्न भये औरनाग्निजिती को चाहैं ऐसे राजों को अपने शस्त्रों से मारते भये ॥ ४ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ॥

यदा अदित्याः कुण्डले दातुं स्वर्गं गतस्तदा प्रभुः स्वतन्त्रोऽपि ग्राम्यः स्त्रीपरतन्त्र इव प्रियायाः सत्यभामायाः प्रियं विधातुमिच्छुः द्युतरुं पारिजातं आनीतवान् यदर्थे यन्निमित्तं तं श्रीकृष्णं वज्री स्त्रीप्रेरितो योद्धुमधावत् स्वकार्यसाधकेन तेन सह युद्धोद्यमस्तस्या युक्त एवेत्याह क्रीडामृग इति अयं वज्री ॥ ५ ॥

सुनाभेन चक्रेणोन्मथितं हतं सुतं भौमं दृष्ट्वा तस्य मात्रा धरिञ्या भूम्या आमन्त्रितः प्रार्थितः सन् तस्य तनयाय भगदत्ताय हृतशेषं राज्यं दत्त्वा ॥ ६ ॥

तत्रान्तःपुरे कुजेन भौमेन या आहृतास्ताः प्रहर्षश्च व्रीडा च अनुरागश्च तैः प्रहिताः प्रेरिता ये अवलोकाः तैर्जगृहुः स्वीकृतवत्यः ॥ ७ ॥

आसां योषितां पाणीन् तत्तदनुरूपः सन् सविधं विवाहोचितप्रकारसहितं यथा भवति तथा जगृहे ॥ ८ ॥

सर्वतः सर्वैर्गुणैः स्वतुल्यानि प्रकृतेर्मायाया विविधं भवनं विस्तारस्तदिच्छया । यद्वा । प्रकृतेर्हेतोर्विविधं भवितुमिच्छया ॥ ९ ॥

प्रियं प्रभुर्ग्राम्य इव प्रियाया विधित्सुरार्च्छद्द्युतरुं यदर्थे ।
वज्र्याद्रवत्तं सगणो रुषान्धः क्रीडामृगो नूनमयं वधूनाम् ॥ ५ ॥
सुतं मृधे खं वपुषा ग्रसन्तं दृष्ट्वा सुनाभोन्मथितं धरित्र्या ।
आमन्त्रितस्तत्तनयाय शेषं दत्त्वा तदन्तःपुरमाविवेश ॥ ६ ॥
तत्राहृतास्ता नरदेवकन्याः कुजेन दृष्ट्वा हरिमार्त्तबन्धुम् ।
उत्थाय सद्यो जगृहुः प्रहर्षव्रीडानुरागप्रहितावलोकैः ॥ ७ ॥
आसां मुहूर्त्त एकस्मिन् नानागारेषु योषिताम् ।
सविधं जगृहे पाणीननुरूपः स्वमायया ॥ ८ ॥
तास्वपत्यान्यजनयदात्मतुल्यानि सर्व्वतः ।
एकैकस्यां दश दश प्रकृतेर्विबुभूषया ॥ ९ ॥
काल–मागध–शाल्वादीननीकैरुन्धतः पुरम् ।
अजीघनत् स्वयं दिव्यं स्वपुंसां तेज आदिशत् ॥ १० ॥

श्रीधरस्वामिकृत भावार्थ दीपिका ॥

कालः कालयवनः रुन्धतः आवृण्वतः मुचुकुन्दभीमादिभिः निमित्तमात्रैः स्वयमेव अजीघनत् घातितवान् तेन च स्वपुंसां तेजः प्रभावं कीर्त्तिञ्च दत्तवान् ॥ १० ॥

श्रीराधारमणदासगोस्वामि विरचित
दीपिन्याख्य तट्टिप्पणी ।

स्त्रीपरतंत्रःप्राकृतकामीवनतुसएवयतःप्रियायाः स्वविषयकप्रीतिमत्यानतुकामिन्याःप्रियंरुक्मिण्यादिभ्यउत्कर्षलक्षणंसुखं तेन श्रीकृष्णेनसह तस्यवज्रिणः युक्तएवेतिवानरोहिस्वपालकमेवपशुत्वाद्दंशातितत्तुल्यत्वात्तस्यापितेनसयुक्तएवेत्यर्थः अयुक्तइतिपाठस्तुलेखकभ्रमात् असम्बद्धार्थत्वात् ॥ ५ ॥

यद्यपिश्रीवाराहपृथिवीभ्यांजातस्याऽसुरत्वंनसंगच्छतेतथापिवाणासुरदुस्संगएवतत्रेहतुरितिपुराणान्तराद्विशेषोज्ञेयः ॥ ६ ॥ ॥७॥

स्वमाययाचिन्त्यचिच्छक्त्या ॥ ८ ॥

पूर्वार्थेतेषामात्मतुल्यानां मायिकत्वप्रसक्तिरतोयद्वेतिप्रकृतेस्स्वाभाविकस्वरूपशक्तेर्हेतोःप्रकृतिश्चस्वरूपंचस्वभावश्चेत्यमरः व्याख्यातञ्चस्वामिभिरेवपंचमेप्रकृतिंभजस्वेत्यत्रप्रकृतिंस्वरूपमिति ॥ ९ ॥

स्वयमेवेतितत्रतत्रसाक्षादावेशात् तेनतत्तद्द्वाराहननेन तेषां स्वपुंसांमुचुकुन्दादीनांसम्बन्धे प्रभावकीर्त्यादिपुस्वत्वध्वंसाभावान्नसंप्रदानत्वम् ॥ १० ॥

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रिका ॥

प्रियंप्रतिस्वयंप्रभुः स्वतंत्रएवग्राम्यइव स्त्रीपरतंत्रग्रामजनइवप्रियायाःसत्यभामायाःप्रियंचिकीर्षुः कर्त्तुमिच्छुः द्युतरुंपारिजातमाहृतवान् कथंभूतं यदर्थे यस्यपारिजातस्यार्थेतद्विमोचनायेत्यर्थः वज्रीइन्द्रः सगणः मरुद्गणसहितः रुषाक्रोधेनांधः तंपारिजातापहर्त्तारं भगवंतंप्रत्याद्रवत्स्त्रीप्रेरितोयुद्धमभिमुखमापतत्तथाभूतमित्यर्थः कृत्स्नस्यश्रीकृष्णशेषतामजानानस्त्रीपरतंत्रं वज्रीआद्रवत् अयं वज्रीवधूनांस्त्रीणांक्रीडामृगःक्रीडार्थसंपादितमृग इवभगवतस्तुपतिंविश्वस्येतिश्रुत्युक्तरीत्याविश्वशेषित्वात्तस्यस्वशेषभूतपारिजातापहरणंयुक्तमेवैतावता च स्त्रीपारतन्त्र्यमिन्द्रस्यानात्मन्यात्मबुद्धिर्या अश्वेभादिर्ष्ववमदीयमितितद्वत् पारिजाते स्वत्वमभिमन्यतोऽज्ञानमेवेतिभावः ॥ ५ ॥

अन्यदपि दिव्यचेष्टितमाह सुतमिति मृधे युद्धेवपुषाखमंतरिक्षं ग्रसंतं इव स्थितं सुनाभेन चक्रायुधेन उन्मथितं भिन्नं सुतं नरकं दृष्ट्वाधरित्र्या मात्रा भूम्या आमंत्रितः प्रार्थितः तत्तनयायनरकस्य सुताय शेषं स्वपरिगृहीतावशिष्टं कोशराज्यादिकं दत्वा तस्मात् पुरमाविवेश प्रविष्टवान् ॥ ६ ॥

तत्रेति तत्रांतःपुरे कुजेन भूमिपुत्रेण नरकेणाहृता आनीतास्ताः प्रसिद्धाः नरदेवकन्या राजकुमार्यः आर्तबंधुंहरिंदृष्ट्वासद्यः तदैवोत्थाय प्रहर्षश्च व्रीडा चानुरागश्चतैः प्रहिताः प्रेरिताः येऽवलोकास्तै र्जगृहुः स्वीकृतवत्यः ॥ ७ ॥

आसांस्वीकृतवतीनांयोषितांस्त्रीणांपाणीन्नानागारेषुप्रतियोषिद्भिन्नेषु गृहेषु एकस्मिन्नेव मुहूर्ते स्वमायया स्वीयसंकल्पेनस्वयमपि बहुरूपः सविधंजगृहे गृहीतवान् ॥ ८ ॥

तासु गृहीतपाणिषु स्त्रीषु एकैकस्यां भार्यायांसर्वशः सर्वप्रकारेणात्मनातुल्यान्यपत्यानिदशदश अजनयदुत्पादयामास किं कर्त्तुमिच्छयाप्रकृतेर्विबुभूषया विभूषितुमिच्छया पृथ्वीच्छयेत्यर्थः मन्नियम्यायाः प्रकृतेः वृद्धिरीदृशीति प्रकाशयितुमिच्छयेति यावत् ॥ ९ ॥

कालेत्यादि कालः कालयवनः मागधो जरासंधः कालप्रभृतीननीकैः सैन्यैः पुरीं रुंधतः आवृण्वतः स्वयमजीघनत् घातितवान् स्वपुंसांभीमार्जुनादीनां दिव्यं स्वीयंतेजः आदिशद्दत्तवान् भीमादिद्वारास्वयमेवतेषांसामर्थ्यप्रदानेनहताइत्यर्थः ॥ १० ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

ग्राम्यविषयभोगासक्तइवप्रियायाःसत्यभामायाः प्रियमभीष्टंविधित्सुःकर्तुकामःप्रभुः द्युतरुंस्वर्गवृक्षंपारिजातमाच्छेत् अहार्षीत्रुषांधःसगणोमरुद्गणेनसहितः वज्रीइंद्रःयदर्थंयस्यद्युतरोरर्थे तंकृष्णामाद्रवत् शच्यावचनादितिशेषःस्वार्थेस्वप्रयोजनायंकृष्णंतैः सहानतःप्रणातिविशिष्टोभूत्वा ॥ ५ ॥

धरित्र्याःसुतंनरकंआमंत्रितस्तयेतिशेषः ॥ ६ ॥

तत्रांतःपुरे कथंजगृहुरितितत्राह व्रीडेति प्रहर्षेणसहिताभ्यांव्रीडानुरागाभ्यांलज्जास्नेहाभ्यांप्रहितैः प्रेरितैरवलोकैर्गृहीतवत्यइत्यर्थः प्रहर्षंचपतित्वेनेतिशेषः ॥ ७ ॥

भगवतापुनःकिंकृतमत्राह आसामिति विधिनाशास्त्रोक्तकर्मणा सहवर्त्ततइति एकस्यनानाविधगृहेषुस्त्रीणांकरग्रहणंकथंघटतइत्यत उक्तंपुरुरूपइति यौगिवत्स्वसामर्थ्येनगृहीतबहुरूपेणघटतइत्यर्थः ॥ ८ ॥

उत्तमैःसर्वतःसाम्यंकिंचित्साम्यमुदीरितमितिवचनात्सर्वतआत्मतुल्यत्वंकिंचित्साहश्यविवक्षयेतिज्ञातव्यं पुत्रत्वेनपुत्रवत्याशापूर्तिसंभवाद्दशत्वसंख्याकिमभिप्रायेणेत्यतउक्तं प्रकृतेरिति जडप्रकृतेर्विबुभूषयाविविधभावेच्छयाबहुत्वसंख्याविशिष्टत्वेच्छया ॥ ९ ॥

यदर्थमवतीर्णंतत्प्रयोजनमाह कालेति कालोगर्गनिर्मितःतेजःप्रभावं अनेनमुचुकुंदादिकृतंवधमप्यात्मनैवकृतंज्ञापयति इत्यतोऽजीघनदित्ययंलौकिकः ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

ग्राम्यः कामीवदृश्यमानोऽपि वस्तुतः प्रियायाः प्रेमवत्याः प्रियंप्रेम्णोप्सितं यत्तद्विधित्सुर्यदर्थे द्युतरुमाच्छेत् वज्री स्वात्मानुसारेणतमन्यथा मत्वैवाद्रवत् अन्यथा मननमेवाह अयं कृष्णो वधूनां सौन्दर्यमात्रलोभेन स्वीकृतानां कामिनीनां नूनं क्रीडामृगः कामवश इति ॥ ५—७ ॥

स्वमायया अचिन्त्यचिच्छक्त्या सविधिमिति पुण्यारण्यः ॥८॥

प्रकृतेः स्वरूपस्यैव वैभवेच्छया प्रकृतिश्च स्वरूपश्च स्वभावश्चेत्यमरः व्याख्यातश्च टीकाकृद्भिः पञ्चमे प्रकृतिं भजस्वेत्यत्र प्रकृतिस्वरूपमिति ॥ ९ ॥

स्वयमिति साक्षादेव कुत्रचित्तु तत्र तत्रावेशेनेत्यर्थः ॥ १० ॥

---

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

एवं विवाहमुक्त्वा तत्र रमणमासक्तिव्यतिरेकेण नभवतीतितदासक्तिकार्यमाह प्रियंप्रभुरितिप्रियायाः सत्यभामायाः ग्राम्यइवप्रियं विधित्सुर्द्युतरुमार्छत् पारिजातमाहृतवान् स्वर्गस्थितियोग्यंदेवोपभोग्यमिति पारिजातमर्यादातांभङ्क्त्वा प्रियार्थं यथाग्रामीणाःकामरसाविष्टामर्यादांभङ्क्त्वारसमनुभवंतितथादिव्यं भोगंकृतवानित्यर्थः पारिजातस्यस्वर्गेपि दुर्लभतांतु ख्यातमाह यदर्थं इतियस्यपारिजातस्यार्थेवज्रीइंद्रोवज्रंगृहीत्वास्वर्गार्थब्राह्मणवधमप्यंगीकृतयोब्राह्मणंहतवांस्तादृशत्वंवज्रपेदनसूच्यतेभगवतापिसहकलहार्थंसगणो देवादिसहितो विचारानुत्पत्तयेरुषांधआद्रवत्आभिमुख्येनयुद्धार्थमागतः अनेनसर्वस्मादपि स्वर्गात्पारिजातोऽधिकइत्युक्तं यदर्थमिंद्रादयोपि मर्त्तुं समुद्यता इति नन्विन्द्रः सर्वज्ञोदेवो बृहस्पति शिष्यः कथमेवं नीतिविरुद्धं सर्वप्रकारेणोपजीव्येन भगवता कथंविरोधं कृतवानित्याशंक्याह क्रीडामृगो नूनमयंवधूनामिति अयमिंद्रोवधूनामितिवधू नामिंद्राण्यादीनांनिश्चयेनक्रीडामृगो वानरः वानरोयथोक्तमेवकरोतिनतुकिंचिदपिविचारयति वधूशब्देन च ता एव गृहपतयउक्ताः तद्दत्तार्थमेवइंद्रादीनामुपयोगइत्ययमहंकारो निरूपितः ॥ ५ ॥

भगवद्भक्तानां भगवतैवस्थापितोऽहंकारःफलायेतिअस्याभिमानिनी देवता रुद्रस्त द्भक्तनिराकरणेन भगवानेवतद्रूपइति भक्ताहंकार निर्वाहकं रूपमुत्तरत्रवर्णयंते भगवतो भोगोपि भक्तेष्टसिद्ध्यर्थमेवेति तस्यदयांप्रतिपादयन्दुष्टानिग्रहपूर्वकं भक्तानां सर्वमेवेष्टंप्रयच्छन्भोगंकरोतीत्याह सुतंमृधेइत्यादिचतुर्भिः सुतंनरकासुरंभगवताहतं दृष्ट्वाधरित्री भगवंतं प्रार्थितवती शरणार्थं कृते करणाभावात्तदातया आमंत्रितस्तत्तनयाय भगदत्तायशिष्टं सर्वमेवराज्यंदत्वातत्पुत्रोपयोगाभावाच्चारित्रमुक्तं इदमेव रूपमहंकारदेवताया नरकासुरवधेहेतुः स्वंवपुषाग्रसंतमिति वृत्रतुल्यतानिरूपिता ब्रह्मणाहिकृतं जगत्परिपालयितुं समुद्यतो विष्णुःरुद्रप्रसादान्महाभूतग्रसनसामर्थ्यमाप्तवंतंस्थित्यर्थं स्वपुत्रमपिहतवान्पौत्रस्थापनंतुभार्याप्रार्थनयादोषाभावायमृत्र इत्युक्तं संग्रामे हननंत्वत्रियाणांनदोषाय सून्यंहिवस्तुनापूरितं भवतिखमाकाशंशरीरेण पूरितमिति ग्रसोनिरूप्यते ग्रसन्तमिति वर्त्तमाननिर्देशेन प्रतिक्रियाकालोऽयमितिसूचितंसुनाभंसुदर्शनं उन्मथनंखंडशश्छेदनंतच्छरीरंमथित्वातत्रास्थित्वातंजीवमुद्धृतवानिति वातदंतःपुरप्रवेशात्तमात्मनिसायुज्यं प्रथितवानितिलक्ष्यते अतएव न दोषोपि केनाप्यंशेनेति ताश्चदेवस्त्रियइति च संबंध एव वर प्राप्त इत्यष्टावक्रशापप्रसादाभ्यामवगम्यते ॥ ६ ॥

तत्रताभिर्हृतइत्याह तत्राहृताइति ताःपूर्वोक्तादेवस्त्रियः सांप्रतंनरदेवकन्याःकुजेननरकासुरेणाहृतास्तत्रांतःपुरेसर्वदुःखहर्त्तारमैहिकपारलौकिकदोषदूरीकरणसमर्थंस्वभोगार्थंतथाकरोतित्याशंकानिवृत्त्यर्थमार्त्तबंधुंआर्त्तानांतदीयत्वेबंधुवद्धितकर्त्तारंदृष्ट्वोत्थायसद्यएकवारमेवतंपतित्वेनजगृहुः हरिमार्त्तबंधुमिति विशेषणं नज्ञातमुपयुज्यते किंतुस्वरूपंसदैव अतएवभगवद्दर्शनमात्रेणदंदीक्लेशबंधुत्यागादिसर्वदुःखानामपुनःस्मरणंविस्मृतत्वात्स्वगृहपुप्रहृष्टाइवकामकलापूर्णाःकंदर्पकोटिलावण्यंभगवंतंभोगेच्छयागृहीतवत्यइत्याहप्रहर्षव्रीडानुरागप्रहितावलोकैरिति भगवान्हस्तेनदीनतयाशरीरेणवाबंधुमिवनगृहीतवत्यः किंतुहर्षेणव्रीडयाऽनुरागेणचप्रहितानियान्यवलोकनान्यानंदांचरसद्भावहष्ट्यः प्रथमतोभगवंतमानंदमयंदृष्ट्वाप्रकृष्टोहर्षोजातस्तेनानंदानुभवार्थंदृष्टिःप्रथमंप्रेषिता ततोविभुज्यमानेभगवतिपतिस्त्रीरूपंचेतनभावमापन्नाव्रीडयाभोगंनिवार्य तदीयस्वरूपापिकादृष्टिः प्रेषिता ततोंतःकरणंभगवतिपरमप्रेमोत्पन्नोभगवतोपिस्वस्मिन्दृष्टिपातेअनुपश्चादुद्गतोरागो जातस्तेनपरमवैषयिकभोगार्थंभगवतिसादृष्टिःप्रेषिता तान्येवावलोकनानिभगवद्ग्राहकाणि अनेनभगवदीयानामेवंविधोभगवतोत्पाद्यतइत्युक्तम् ॥ ७ ॥

तासांभगवत्स्वरूपमाह आसांमुहूर्त्तएकस्मिन्निति समुदायेनभोगःस्त्रीणांसुखकरोनभवतीतितासांकालतइच्छाबाधाभावायाहभगवाननुरूपोभूत्वालौकिकवाच्यतानिवृत्त्यैयसीविधिविघातपूर्वकंसमानफल

२ प्रार्थितः

### श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

सिद्धयेभगवत्त्वख्यापनायचैकस्मिन्मुहूर्त्तेनाखिलगृहेविवाहंकृतवा-नित्यर्थः स्वमाययाकर्तुःकरणभूतयाकेवलसान्निध्यदानेनोपभोगार्थंतदुग्र-हणायोग्यत्वायस्वरूपमाच्छादयतीतिमायायाः करणत्वं यतःसर्वमेव जगद्भगवद्रूपंचिदंशमाययाऽव्यवहितंसर्वैर्यथेष्टंव्यवहूियते तथाभगवा न्स्वमाययातासामभिलषितभोगार्थमुरुरूपोजातइत्यर्थः योषितामिति भोगप्रदर्शिनानागारेष्विति पूर्णारसाविर्भावाय अत्रविधिर्गांधर्वइति प्रतिभाति क्षत्रियाणांमुख्यत्वादेवंग्रहणमेवाचित्ताधिष्ठातुर्वासुदेवस्य भक्तान्प्रतिचित्तप्रेरणामित्युक्तम् ॥ ८ ॥

तासांफलमाह तास्वपत्यानजनयदिति अपत्यानिकन्यापुत्ररूपा-णितासामधिकरणत्वेन तत्तुल्यापत्यजननं निवारितं तथासतिभग-वदिच्छाया प्रकृतिपुरुषसंबंधेनैवतासां पुत्राजायेरंस्तद्व्यावृत्त्यर्थं नातुल्यापीत्याह सर्वंतदितिपंचधाशरीरतइंद्रियतःप्राणतांतःकरणतः स्वरूपतस्तत्सर्वंथमेतश्चेति । एकैकस्यांदशदशेतितांवध्यर्थःपरिपालितः दशास्यांपुत्रानाधेयीतिश्रुतेः प्रकृतेर्विशेषभवनेच्छयंतिकरणसंख्यायां

साह्येकमेवपुरुषं सकृदुपलभ्यमहत्तत्त्वकार्यंकृतवती पुनः संबं-धेप्रयोजनाभावात्सकामैवस्थिता भगवांश्चेदनंतरूपोभवतिततदा— कार्यंकृतवती पुनः संबंधे प्रयोजनाभावात्सकामैवइदानींभगवां-श्चेदनंतरूपोभवति तदातद्भोगार्थंपुनः पुरुषसंबंधप्राप्यकार्याणि जनयिष्यतीति तस्याविभूषासिद्ध्यति यागवत्करणात्तस्याः भगव-दिच्छयाव्यारकनावद्बुधाजननं साधयतीति अनेनसांख्यवद्भगव-द्भक्तानामिंद्रियप्रवृत्तिरिति दशसंख्ययाबाहिरेंद्रियाणांस्वरूपमुक्तं-तेष्वग्रेनबीजाभावं प्राप्नुवंति भोगश्चान्येष्वपीति तत्रापि नभोगे च्छाकारणं किंतुभवनेच्छैवकारणम् ॥ ९ ॥

एवंकामलीलामुपपाद्यक्रोधलीलांशोपपत्तिकामुपपादयति का-लमागधेत्यादिसप्तभिःकामजनकानि चत्वार्येवबाह्येंद्रियाणिइंद्रिय-स्पर्शः श्रोत्रंचक्षुरितिरचितेरेच चतुर्भिः क्रोधांशैः संवत्सररुद्रपाल-कसूर्यैः ।कामक्रोधौसमंकर्तुं सप्तसप्तनिरूपिताः। यद्वोभेगुणसंख्या-स्तेनिवृत्तिसतघातत: ।ततोमध्येचतुर्मूर्तैः प्रद्युम्नादेर्निरूपिताः।वासु-देवाङ्गकरत्वात्तृतीयात्सानिरूप्यते । तत्रप्रथमंसर्वपरिपालनार्थं भूभा रेरूपान् शत्रूनत्युत्कंठान्प्रथमं मारयतीत्याह कालेतित्रयोद्धृताः स्वयमागत्यभक्तद्रोहं कृतवंतः इतितान्हतवान् तत्रकालमागधौमथु रापुरनिरोधकौशाल्वोद्वारकायानिरोधकैः कालः कालयवनः मा गधोजरासंधः कालस्यप्रथमत उपादानमग्रेजरासंधवधात् आदि शब्दस्त्रिष्वपि संबध्यते तेतुससमूहास्तेत्रयएवोक्ताभवंति तामसा-दिगणाध्यक्षाः । अनीकैरिति सेनानांरोधकरणत्वं अनेनतज्जयस्य दुर्लभतासूचिता तथाप्यजीघनत्स्वयमिति भिन्नतयास्वोद्योगेन । ननुतदुद्योगेपुंसांमुचुकुन्दभीमप्रद्युम्नबलभद्रादीनांतेजआदिशत् अनेन प्र.तिष्ठ.धंसान्सारकत्वेनोपस्थापितवान् तेहिमार्गत्रयस्यालौ-किकादिप्रकारेण ब्राह्मणब्रह्मशिवप्रपन्नभक्तकामनाविक्षेपकाभ-वंति तन्निरासको भगवांस्त्रिमूर्तिरपित्रिविधकामनियंता ॥ १० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

आस्थः कामीव दृश्यमानोऽपि वस्तुतस्तु प्रियाया प्रेमवत्याः प्रियं प्रेमवशत्वेन प्रीतिं विधित्सुर्धुतरुं पारिजातमाच्छंत् आहृत-वान् यदर्थं वज्री वज्रसहित एव तं आद्रवत् आ इंपत् योद्धुमागत-वान् । तत्र हेतुः अन्ध इति तत्रापि हेतुः वधूनां शच्यादीनां क्रीडा-मृग इति ।यद्वा आत्मवन्मन्यते जगदिति न्यायेन वधूनां सत्यभामा-दीनमयं क्रीडामृग इति निन्दंस्तद्वदिवदित्यर्थः ॥ ५ ॥

सुतं नरकासुरं सुनाभेनोन्मथितं हतं दृष्ट्वा धरित्र्या तन्मात्रा आमन्त्रितः निवेदितः तत्तनयाय भगदत्ताय अत्र शुद्धमातापितृ-कस्यापि तस्य नाणासुरसङ्गादेव कुबुद्धिरिति असाधुसङ्गमहिम-प्रस्तावे पुराणान्तरकथा ज्ञेया ॥ ६ ॥

तत्रान्तःपुरे कुजेन नरकासुरेण प्रहर्षश्च व्रीडा च अनुरागश्च तैः प्रहिताः प्रेषिता अवलोकास्तैर्जगृहुर्ममायमेव वर इति प्रत्येकं स्वांचक्रुः ॥ ७ ॥

सविधं विवाहोचितप्रकारसहितं स्वमायया योगमायया सुष्ठु अमाययेति वा ॥ ८ ॥

प्रकृतेः स्वस्वभावस्य विबुभूषया विभवेच्छया आत्मतुल्यानी-त्युक्तः प्रकृतिश्च स्वरूपञ्च स्वभावश्चेत्यमरः ॥ ९ ॥

कालः कालयवनः अनीकैः सैन्यैः रुन्धतः आवृण्वतः मुचुकुन्द-भीमादिभिर्निमित्तमात्रैः स्वयमेव अजीघनत् घातितवान् तेन च तेषां स्वपुंसा तेजः प्रभावं कान्ति च दत्तवान् ॥ १० ॥

---

### श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

प्रियायाःसत्यभामायाः प्रियंविधित्सुः विधातुमिच्छुः द्युतरुंपा-रिजातम् आछंदानीतवान् तंश्रीकृष्णम् । यदर्थंद्युतर्वर्थंवज्री आद्रवत् योद्धमन्वधावत् ।ननुसर्वस्वामिनप्रत्येवंकर्मेंद्रस्यनयुक्तमित्यत्राह अयं अज्ञोग्राम्यइववधूनांक्रीडामृगःस्त्रैणानांकिमकृत्यमितिभावः ॥ ५ ॥

शोभनानाभियंस्यतेनश्रीकृष्णेनोन्मथितंसुतं भौमंदृष्ट्वाधरित्र्या भूम्या आमंत्रितः प्रार्थितः सन् तत्तनयायभौमसुतायभगदत्तायशे-षंहतशेषसैन्यंतत्साध्यंराज्यमित्यर्थः ॥ ६ ॥

कुजनभौमेनयाआहृताः ताः हर्षादिभिः प्रहितायेऽवलोकास्तैर्हरिं जगृहुः अयमस्माकंपतिरितिस्वीकृतवत्यः ॥ ७ ॥

स्वमाययास्वसंकल्पेनअनुरूपः तत्तदनुरूपः सविधंपाणिग्रहण-प्रकारसहितं यथाभवति तथाएकस्मिन्मुहूर्ते पाणीन्जगृहे ॥ ८ ॥

प्रकृतेः पराप्रकृतेः जीवभूतायाः विशिष्टंभवनं जन्मतदिच्छया उत्तमपुरुषप्रकटाकरणेच्छयेत्यर्थः अतएवसर्वतः सर्वगुणैः स्वतुल्या-नि अपत्यान्यजनयत् प्रद्युम्नः भगवन्मूर्तिभूतएवकेचित् श्रीकृष्ण-सारूप्यंगताः मुक्ताः केचिद्भक्ताश्चरमजन्मानश्चभगवत्पुत्रत्वेनोत्प-न्नाइतियथासम्भवमूह्यम् ॥ ९ ॥

कालः कालयवनः मागधोजरासंधः शाल्वः प्रसिद्धस्तदादीन् निमित्तभूतैर्मुचकुंदादिभिः स्वयमेवअजीघनत्घातितवान् यतः स्वपुं सांमुचकुंदादीनांदिव्यमलौकिकंस्वतेजः आदिशत्दत्तवान् ॥ १० ॥

---

### भाषाटीका

जासत्यभामा प्रिया के प्रिय करवे की इच्छा से प्राकृत की नाईं कल्प वृक्ष लाये सब गण सहित क्रोध से अंध स्त्रियों के मध्य में वानर सम विषयी इन्द्र श्रीकृष्ण जी से लडवे को आयो ॥ ५ ॥

संग्राम में आकाश तक लंबो चक्र से मारो भौमासुर देख वा की मा पृथिवी प्रार्थना करती भई तब वाके पुत्र भगदत्त को राज्य दे ता के महलों में प्रवेश करते भये ॥ ६ ॥

---

शम्वरं द्विविदं बाणं मुरं वल्वलमेवच ।
अन्यांश्च दन्तवक्रादीनवधीत् कांश्च घातयत् ॥ ११ ॥
अथ ते भ्रातृपुत्राणां पक्षयोः पतितान्नृपान् ।
चचाल भूः कुरुक्षेत्रं येषामापततां बलैः ॥ १२ ॥
सकर्णदुःशासनसौबलानां कुमन्त्रपाकेन हतश्रियायुषम् ।
सुयोधनं सानुचरं शयानं भग्नोरुमुर्व्यां न ननन्द पश्यन् ॥ १३ ॥
कियान् भुवोऽयं क्षपितोरुभारो यद्द्रोणभीष्मार्ज्जुनभीममूलैः ।
अष्टादशाक्षौहिणिको मदंशैरास्ते बलं दुर्विषहं यदूनाम् ॥ १४ ॥
मिथो यदैषां भविता विवादो मध्वामदाताम्रविलोचनानाम् ।
नैषां वधोपाय इयानतोऽन्यो मय्युद्यतेऽन्तर्दधते स्वयं स्म ॥ १५ ॥

भाषा टीका

याके अंतःपुरमें भौमासुर की हरी भई राजों की कन्या श्रीकृष्ण जी को देख शीघ्र उठीं और अति हर्ष की लाज अनुराग युक्त चितवन से श्रीकृष्ण से व्याह करती भई ॥ ७ ॥

इन स्त्रियों के सब घरों मे एकही मुहूर्त्त में अपने माया से उनके अनुसार होकर विवाह योग्य प्रकार सहित पाणि ग्रहण करते भये ॥ ८ ॥

सब गुणों में अपने समान एक एक स्त्री में दश दश पुत्र माया के विस्तारार्थ उत्पन्न करते भये ॥ ९ ॥

कालयवन जरासंध शाल्वादिकों की सेना से अपने पुरको घिरो देख उनकों आप मारते भये अपने पुरुषों का दिव्य तेज जगाते भये ॥ १० ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका

शम्वर द्विविद वल्वलानन्यानपि कांश्चित् प्रद्युम्नरामादिभिर्घातयत् अघातयत् घातयन्निति वा पाठः।दन्तवक्रादीन् स्वयमेवावधीत् ॥ ११ ॥

नृपान् घातयदित्यनुषङ्गः। कथं भूतान् कुरुक्षेत्रमापततांगच्छतां येषां बलैः सैन्यैर्भूः सर्वापि चचाल चकम्पे ॥ १२ ॥

स कृष्णः। हता श्रीः आयुश्च यस्य। भग्नौ ऊरूयस्य तं उर्व्यां शयानं पश्यन्नपि न ननन्द संतोषं न प्राप ॥ १३ ॥

अनभिनन्दनप्रकारमेवाह कियानिति। द्रोणादिभिर्मूलैः कारणभूतैः यदिति यः अष्टादशाक्षौहिणीयुक्तः। हूस्वत्वमार्षं। क्षपितोय उरुभारो भुवः। अयं कियान् अत्यल्प इत्यर्थः। यस्मान्मदंशैः प्रद्युम्नादिभिर्हेतुभूतैर्दुर्विषहं बलमास्ते ॥ १४ ॥

तेषां न चात्रान्य उपायः प्रभवति किन्तु मधुना य आमदः सर्वतोमदः तेनाताम्रविलोचनानां एषां विवादो यदा भविष्यति तदा इयानेवैषां वधोपायः। अतोऽन्यो नास्ति। एकात्मनोऽपि मय्युद्यते सति स्वयमेव विवादेनान्तर्दधीरन्नित्यर्थः ॥ १५ ॥

---

श्रीराधारमणदासगोस्वामि विरचित
दीपिन्याख्यतट्टिप्पणी।

घातयदित्यत्राडागमभावआर्षःघातयन्निितिशत्रन्तोवापाठः शम्वरमितियुग्मकम् ॥ ११ ॥

हता श्रीःआयुश्चयस्येतिसमासाभिप्रायाद्धतश्रियायुषमित्येकंपदम् व्याडिगालवमतेयकारस्यैवकल्पिकत्वात् ॥ १२ ॥

यदूनांदुर्विषहंवलमित्यत्रतत्सैन्यस्यब्राह्मण्यानां वदान्यानां नित्यंवृद्धोपसेविनामित्यादिवचनैःपरमधार्म्मिकत्वेऽ पितुर्विषहत्वंश्रीकृष्णवियोगनक्षुभितैर्विलुण्ठद्भिस्तैःपरःपरार्द्धैःपीडितापृथिवी नश्येदित्यभिप्रायादेव ॥ १३ ॥

अतएवनचात्रान्यउपाय इत्यादिव्याख्यानंअत्र-यदुकुलसंहरणे वधोपायस्तत्तुल्यःपृथिवीत्याज्ञनोपायःविवादेनमायिकेनांतर्द्धीरन्नतुनाशंप्राप्स्यन्तीत्यर्थः ॥ १४ ॥

स्थाप्येत्यार्षंस्थापयित्वेत्यर्थः ॥ १५ ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचंद्रिका।

एतदेवाह शंवराद्विविदवल्वलानन्यानपिकांश्चिद्राम प्रद्युम्नादिभिर्घातयत् अडभाव आर्षः घातितवान् घातयन्निति वापाठः दंतवक्रादीन्स्वयमेवावधीत् ॥ ११ ॥

अथेति ते तव भ्रात्रोः पंडुधृतराष्ट्रयोर्ये पुत्रायुधिष्ठिरादयोदुर्योधनादयश्चतेषांपक्षयोः पतिता न्प्राप्तान्नृपानघातयदित्यनुषज्यते कथंभूतान्नृपान् येषांकुरुक्षेत्रं प्रत्यापततांनृपाणांबलैः सैन्यैर्भूः सर्वापि भूमिश्चचाल चलितवती ॥ १२ ॥

एवं स्वयं निहत्य घातयित्वा च स्वकुलं संजिहीर्षुस्त्वद्भ्रातृपुत्र तत्पक्षपातिनांच वधेन न भुवोभारः क्षपित इति सभगवान्कर्णादीनांकुत्सितमंत्रपाकेनस्वानिष्टावहालोचनेनफलेनहता श्रीःसम्पदायुश्चयस्य तं भग्नोरुं उर्व्यां भूम्यां शयानं सानुचरंदुर्योधनं पश्यन्नपि न ननंद नतोषंप्राप ॥ १३ ॥

असंतोषहेतुं वदंस्त त्प्रकार मेवाह कियानिति मदंशैर्मच्छरीरभूते द्रोण भीष्मार्ज्जुनभीमाः मूलमादिर्येषांतैः मदंशै भीमार्ज्जुना

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचंद्रिका

दिभिरष्टादशाक्षौहिणी संख्या युक्तः क्षपितः निरस्तः सचासावु रुभारश्च क्षपितोरुभारोयं कियानल्पइत्यर्थः भीष्मादि द्वाराम्नया भूभारोनिः शेषो नावतारितः कुतः यद्यस्मात्तद्दुर्विषहं सादुमशक्यं यदूनां बलमास्ते तिष्ठति ॥ १४ ॥

एवमभिनंद्यस्वकुलसंहर्त्तांउपायं संचिंतितवानित्याह मिथइतिमाध्व्याः सुरायाः मदादाताम्राणि विलोचनानि येषांतेषां एषांयदूनांयथा विप्रशापपरिजिहीर्षया प्रभासतीर्थगमनानंतरंविवादोभविता तदियानेवएषांवधोपायः नान्योऽस्ति कोऽसावित्यत आह मयिसर्वान्तरात्मीनसर्वसंहर्त्तरिमयि उद्यतेमल्लोकंगंतुमुद्युक्तेसतिस्व यमेवंत विवादंनांतर्द्धीरन्तंक्ष्यंतिस्मेति ॥ १५

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

एतदेवकिंचिद्विवेचयति शंबरमिति शंबरद्विविदौप्रद्युम्नवलभद्राभ्यामघातयत्मुरादीन्स्वयमेवावधीदितिविवेकः ॥११ ॥

अथदंतवक्त्रवधानंतरं तेतवभ्रातृपुत्राणांकुरूणांपांडवानांचकुरुक्षेत्रंप्रत्यापततांयषांनृपाणाम् ॥ १२ ॥

श्रीकृष्णास्यदुर्योधनपातेनभीमेप्रसादातिशयमाह सकर्णेति सकृष्णःसुयोधनंभग्नोरुमुर्व्यांशयानंपश्यन्ननंद भीमायेतिशेषइत्यन्वयः अनुचरैर्दुःशासनादिभिःशृगालादिभिर्वासहवर्ततइतिसानुचरस्तं हतनष्टश्रीश्चायुश्चयस्यसतथातम् ॥ १३ ॥

कालयुगसज्जनप्राचुर्यावस्थानस्यदुष्टभारस्यैवानभीष्टत्वात्सोपिसंहार्यइतियादववलसंहरणोपायसंचिंतनप्रकारमाह कियानिति मत्सन्निधानविशेषयुक्तत्वान्मदंशैद्रोणभीष्मार्जुनभीमशल्यैः क्षपितोऽष्टादशाक्षौहिणिकोभुवोयद्यायंभारःसकियानल्पएव कुतःसुरासुरैर्दुर्विषहंयदूनांबलमास्तइति यस्मात्तस्मादित्यन्वयः ॥ १४ ॥

तत्रएषांयदूनांवधोपायइयानेतावानेव यदामाध्व्यावारुण्याःपानादुत्पन्नान्मदात्कृष्टबुद्धीनांताम्रलोचनानांरक्तनेत्राणांरजोगुणोपरक्तज्ञानानांत्रायदूनां मिथोविवादो भविता तदासएव वधोपायोभविष्यत्यतोन्योनास्ति तदर्थंकिंकर्तव्यमितिनचिंतनीयमित्याहमयीति मय्युद्यतेसतिस्वयंसर्वेतर्द्धधतेतिरोधानलक्षणंमरणंप्राप्नुवंतिस्मस्मृतमित्यर्थः ॥ १५ ॥

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

शम्बरमिति युग्मकं । शम्बरादीनघातयत् बाणादीनवधीदिति यथायथं योज्यम् ॥ ११ ॥

पतितानिति स्वयं पृथ्वीभारभूतत्वेन कांश्चित् तत्पक्षगामित्वेन च कांश्चिद्रक्षणीयेभ्यश्च्युतानित्यर्थः ॥ १२ ॥ १३ ॥

आस्ते बलमित्यस्यायम्भावः । भूभारस्तावद्व्यक्तिबाहुल्येन न स्यात् पर्वतसमुद्रादीनां तत्र प्राचुर्यात् । किन्त्वधार्मिकप्राचुर्येणैव तत्र भारः स्यात् । तत्रास्तां तावद् प्रद्युम्नादिमदंशानां यदुमात्राणां परमधार्मिकत्वमेवोक्तं । ब्रह्मण्यानां वदान्यानां नित्यं वृद्धोपसेविनां विप्रशापः कथमभूद्वृष्णीनां कृष्णचेतसामित्यादौ । शय्यासनाटनालापक्रीडास्नानाशनादिषु । न विदुः सन्तमात्मानं वृष्णयः कृष्णचेतस इत्यादौ । तस्माद् यदत्र दुर्विषहत्वेन भारत्वमुच्यते । तत् खलु नासह्यत्वात् केवलस्य समान्तर्द्धाने तेषां मद्वियोगेन पीडितानां परार्द्धसंख्यानां सङ्गात् पृथिवीयं पीडिता स्यादितीत्थमेव गम्यते १४

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भ ।

तत्रान्येषामिव नैषां संहारो घटते किन्तु प्रकारान्तरमेव स्यादित्याह मिथ इति । एषां यदूनां यदा मिथो विवादस्तथाप्येषां पृथिवीपरित्याजने बधरूप उपायो न घटते किमुतान्येन विवादेन स न स्यादिति । तर्हि तेषां मयाभिलषिते पृथ्वीपरित्याजने कतम उपायो भवेत् । तत्र पुनः परामृशति अतोवधादन्य एव इयान् एतावानेव उपायोवर्त्तते । कोऽसौ मयि उद्यते ममेच्छायां सत्यां एते स्वयमन्तर्द्धते इति यः । स्मेति निश्चये । यद्वा वधस्योपायो न विद्यते इत्येवं व्याख्याय । अतो; वधोपायादन्य इयान् वधोपायतुल्य उपायोविद्यत इति व्याख्येयं । अन्यत् समानम् ॥ १५ ॥ १६ ॥

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

एवमुद्यतान्त्रिविधान्हत्वास्वतोऽनुद्यतानन्यद्वारैवकांश्चिन्मारितवानित्याह शंबरमिति शंबरःप्रद्युम्नेनमारितःद्विविदोबलेन बाणश्छिन्नभुजोभगवतैवकृतःबल्वलोपि बलेनैव दंतवक्रादयोभगवतैवआदिशब्देनविदूरथादयस्तत्पक्षपातिनः एतान्कांश्चिद्घातयत्कांश्चिदवधीत्हस्ताबुक्तौ भगवदीयैर्भगवत्कर्त्तव्यंभगवदाज्ञयाकर्त्तव्यमिति ॥ ११ ॥

एवंदोषनिर्हारार्थमुद्यतान्दैत्यान् हत्वाशस्त्रसंन्यासंविधाय भूमिभारंनिराकृतवानित्याह अथेतिद्वाभ्यांभक्तानामेवयदुःखंदोषरूपंन्यवारयत् भूमेस्तुदेहजोभारोनशस्त्रेणनिवार्यते उत्तारितस्तु भूभारःकंडूयांजनयत्ध्रुवं ततस्तस्यानिवृत्त्यर्थंनखरूपैर्हिपांडवैःप्रयत्नप्रेरितैर्बाह्यान्स्वयमेवन्यवारयत् अंतरन्यांचतामेवपूर्वस्पर्शसमुद्भवांक्रमिकंटकरूपांतांत्तन्नाशेनावधीत्पुनः अथेतिप्रक्रियांतरेसारथ्यभावेनतेनभ्रातृपुत्राणांपांडवानांदुर्योधनादीनांचपक्षयोःसहाययोःपतितान्धर्ममनपेक्ष्यस्नेहाग्रहभावेनपतितान्घातयान्नितिपूर्वेणसंबंधःतेषामाधिक्यमाह चचालेति कुरुक्षेत्ररूपाभूःधर्मक्षेत्रेहितंधर्मभावंप्रापिताचलनमधर्मात्तंसर्वेह्यधर्मैकनिष्ठाज्ञातिघातिनःअतएवयेषांबलैर्भूश्चचालेति इंद्रकार्यंकृतवानित्यर्थःकिंच अप्रधानवधमुक्त्वाप्रधानवधमाह सकर्णदुःशासनेति ॥ १२ ॥

ननुजीवनादृष्टेविद्यमानेकथंसर्वेसंभूयमृताः मद्भोक्तृमदृष्टंसर्वेषामित्याशंक्यदुर्योधनपक्षपातेनैवसर्वेषामायुःक्षीणमित्याह सकर्णेदुर्योधनःकर्णसहितोदुःशासनोभ्रातासौबलः शकुनिर्मातुलः एतेचत्वारोदुष्टाः एतेषांकुमंत्रस्थयः परिपाकस्तत्कुमंत्रेयेस्थितास्तेषां श्रीरायुश्चएकेनैवहतमित्याह हतेति हताश्रीरायुश्चयेषामितिविशेषणं दुर्योधनमपिहतवानितिसंबंधः अनुचरसाहितोभग्नोरुःशयानःपश्यतिकर्मएवंसर्वकार्यंकृत्वाऽपिभारनिवृत्तयेसमागतोनिवर्त्तकैर्भारंजनयन्पूर्वभारंदूरीकृत्यापिननंदसंतोषं नकृतवान्स्पर्शरूपतानिरूपिता ॥ १३ ॥

भगवदीयानांस्पर्शनेन्द्रियंज्ञानहेतुरेवनसुखहेतु रितिद्वितीयंभारंदूरीकर्तुंनंदनमेवाह कियानिति क्षुद्रनिराकरणार्थंक्षुद्रग्रामेयदिमहाराजःसमायातितदातत्सेनयैव ग्रामोनश्यति तत्रत्यक्षुद्रस्त्वल्पमेवनाशयतिसौनकास्तुसर्वमितिन्यायेनाह भुवःकियान्वाभारोमयाक्षपितोमदंशैःकरणैर्दूरीकृतःतानंशानाहयद्वो णभीष्मार्जुनभीममूलैरितिद्वयंद्वयमुभयत्र तेषांमूलभूतैःस्वतेजोभिरेव एवंचतुर्विधैरपितेजांनिधिश्चतुरंगसेनारूपोऽष्टादशाक्षौहिणिकस्तावदक्षौहिणीभिर्जातोभारोयस्मा दूरीकृतस्ततोऽप्यधिकोभारोऽस्तीत्याह आस्तेबलमितिअधिकत्वेहेतुः

### श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

दुर्विषहमितिकेनापिसोढुंमशक्यं दुर्विषहत्वेहेतुःमदंशैरितिसर्वस्यापिभगवदंशत्वेऽपियदूनांसंबंधिभिर्मदंशैरितिपक्षपाताद् निर्वाय्यत्वंनिरूपितं वायुरित्यत्रबलाधिष्ठाता भगवत्संबंधिनीमेवस्पर्शबुद्धिजनयतितत्रसुखंपूर्णनतेनपरिच्छिन्नेनगृहीतुंशक्यतइति परिच्छिन्नतुल्यतयाज्ञानंनभगवदभिप्रेतमितिस्पर्शदेवतानिर्णयः ॥ १४ ॥

तस्यापिभारस्यनिवृत्त्युपायमाह मिथोयदेषामिति यदैषांयादवानांमिथोविवादोभविता सोपिविवादोविवेकराहितो मौढ्याच्छापव्यवसायीजातइत्यभिप्रायेणाह माध्व्यामदाताम्रविलोचनानामिति माध्वीमदिराबहुपानसिद्ध्यर्थमधुरसांगांभुक्तवान् तयायोमहागर्वोहंविवेकादस्मरणात्मकस्तेनताम्राणिविलोचनानियेषां नत्वन्योन्याघातनमदिरयानिषिद्धमरणेनचभक्तसहायार्थं मागतानांभगवदीयानामयुक्तेत्याशंक्यप्रकारांतराभावादेवंक्रियतइत्याह नैषांवधोपायइयानतोऽन्यइति एषामियानेववधोपायोनत्वन्यःतत्रहेतुमाह मय्युद्यतइतिअन्यस्तूपायःस्वांशमय्युद्यतेस्वयमेवांतर्द्धेनहिसूर्याणांनिराकरणंतमसाभवतितुल्यत्वाच्चनैकेन स्मेतिप्रसिद्धं यदायादवनाशार्थंमागधादयःप्रवृत्तास्तदाऽहमुद्यतांस्तान्हंतुंतदामय्युद्यतेऽन्यउपायाः अंतर्द्धेतनतुकेथंभगवतोलीलायत्स्वकीयान्सेवकान्स्वसंगेसमागतानन्यशरणान्स्वयमेवमन्या येननष्टान्करोतीत्युच्यते सर्गार्थमेवामीति स्वात्मनासहचतुल्यता अतोनात्यंतभक्तिविरोधःस्वतस्तेषामाविर्भावसामर्थ्याभावान्माययैवाविर्भावतिरोभावौखेदाभावाय तदावस्थाउत्पत्तिर्लीलार्थमिति नलीलाविरोधःयथास्यसर्गहेतुत्वंतथाग्रेवक्ष्यतेनचतेषांदुर्गतिःमुक्तावेवतदर्थमेवोक्तत्वात्सर्गादौमुक्त्यंते चोक्तत्वात्सर्वत्रतान्विनानाश्रयोनिरूपयितुंशक्यइतिसूचितं तस्मात्स्वाविर्भावेतेषामाविर्भावंकारयन्स्वतिरोभावेचतांस्तिरोभावयन्स्वसमान्करोतीतिनभक्तेषुकाऽपितिरस्कारलीला । १५

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

अथ तदनन्तरं कांश्च नृपान् घातयदित्यडागमाभाव आर्पः । घातयन्निति पाठे बभूवेति शेषः ॥ ११ ॥

कांश्च कीदृशान् ते तव भ्रातृपुत्राणां युधिष्ठिरादीनां दुर्योधनादीनाञ्च पक्षयोः पतितान् प्राप्तान् कुरुक्षेत्रमापततामागच्छतां येषां बलैः सैन्यैः भूः सर्वापि चचाल चकम्पे ॥ १२ ॥

स कृष्णः पश्यन्नपि न ननन्द ॥ १३ ॥

तत्र हेतुः कियानिति यतो द्रोणादिभिर्मूलैः कारणभूतैरष्टादशाक्षौहिणीभरः भुवो भारः उरु यथा स्यात्तथा क्षपितः अयं कियान् अत्यल्प इत्यर्थः ।सन्धिरार्पः । समासव्याख्यायां विधेयांशाविमर्शः सोढव्यः । यस्मान्मदंशैः प्रद्युम्नादिभिर्हेतुभूतैर्दुर्विषहं बलमास्ते । ननु भूभारस्तावद्व्यक्तिबाहुल्येन न स्यात् पर्वतसमुद्रादीनां तत्र प्राचुर्यात् किन्त्वधार्मिकप्राचुर्येणैव. तेचाधार्मिका भगवता संहृता एव । न च यदुकुलस्याधार्मिकत्वं वाच्यं भगवत्परिकररूपत्वात् । ब्रह्मण्यानां वदान्यानां नित्यं वृद्धोपसेविनां विप्रशापः कथमभूद्वृष्णीनां कृष्णचेतसां शय्यासनाटनालापक्रीडास्नानाशनादिषु । न विदुः सन्तमात्मानं वृष्णयः कृष्णचेतस इत्याद्युक्तिभ्यश्च अत्रोच्यते भारोहि द्विविधो भवति दुःखरूपः सुखरूपश्च प्रथमो दुःसहः द्वितीयस्तु सुसह एव यथा युवत्याः स्वरमणस्य भारः यथा च वत्सलया मात्रा स्वपोतस्य क्रोडे कृतस्य भारः यथा च वणिजा शिरसि धृतस्य स्वधनस्य भारः किञ्चाल्पबलेन जनेन स्वरसादतिबहुलः सुखरूपोऽपि भारो वोढुं न शक्यते यथा परमधार्मिकस्य महाभागवतस्य तपोबलाधिक्यमाविष्कुर्वतो ध्रुवस्यापि भारः पृथिव्याः ॥ यदुक्तं यदैकपादेन सपार्थिवार्भकस्तस्थौ तदंगुष्ठनिपीडिता मही ननाम तत्रार्द्धमिभेन्द्रधिष्ठिता तरीव सव्येतरतः पदेपदे इति यदा च भगवतापि स्वबलमाविष्क्रियते तदा तस्य परमानन्दरूपस्यापि भारो न वोढुं शक्यते यथा भीष्मस्तुतौ धृतरथचरणोऽभ्ययाच्चलद्गुरिति नृसिंहाविर्भावे च प्रोत्सर्पतः क्ष्मा च पदाभिपीडितेति अतोऽत्र यद्यपि यदुकुलस्य भारः पृथिव्या भारत्वेन नाभिमन्यते यथा सुकुमार्यापि स्त्रिया बहुस्वर्णरत्नाद्याभरणभारस्तदपि प्रेमवता तत्कान्तेन तदंगेभ्यः कश्चन कश्चनोत्सवादावागन्तुक एवाभरणभारो निष्काश्यते स्थाप्यते च सर्वदोपयोगी तथैव अंशावतरणसमये नित्यपरिकररूपेषु यादवादिषु ये देवादयोंऽशाः प्रविष्टास्त एव द्वारकातो निष्क्रमय्य प्रभास उपसंहृताः ॥ १४ ॥

तत्रान्येषामिव नैषां संहारः सम्भवति किन्तु प्रकारान्तरेणैवेति स्वगतमाह मिथ इति मधुना य आ सम्यङ्मदस्तेनाताम्रनेत्राणां विवादस्तदापि एषां वधरूप उपायो न भवति किन्तु अतो वधात् अन्य एव इयान् वधसदृशो नतु वध इत्यर्थः तेन लोका वस्तुतस्त्ववधमेव परस्परवधं द्रक्ष्यन्तीत्यर्थः वास्तवं वस्तुतस्तु स्पष्टमाह मयि उद्यते इमानुपसंजिहीर्षौ सति स्वयमेव इमे अन्तर्द्धते अन्तर्द्धास्यन्ते स्मेति निश्चयं ॥ १५ ॥

---

### श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

शंबरादीन्प्रद्युम्नादिभिःघातयत् अडभावआर्पः तत्रकांश्चित्स्वयमवधीत् तत्रबाणवधस्तद्भुजनिकृंतनमात्रम् ॥ ११ ॥

नृपान्अघातयदितिपूर्वेणैवसंबंधः ॥ १२ ॥

सःश्रीकृष्णःननंदसंतोषंनप्राप ॥ १३ ॥

असंतोषेहेतुमाह कियानितिमदंशैर्मत्प्रेरितै द्रोणादिभिःमूलैः कारणभूतैः अष्टादशाक्षौहिणिकःह्रस्वत्वमार्षम् अष्टादशाक्षौहिणीयुक्तःक्षपितोनिरस्तश्चासावुरुभारश्चभुवोऽयंकियान् अत्यल्पइत्यर्थः

यत्यस्मात् दुर्विषहंसोढुमशक्यं यदूनांबलमास्तेयादवाभूभारभूतानकिंतुतेषुभुविवर्तमानेषुतन्निमित्ततः पुनर्यतस्ततोदैत्यादिभिर्भूभारोभविष्यतीतिभावः ॥ १४ ॥

तत्रोपायमाह मिथइति मधुनायआसर्वतोमदस्तेन आताम्रविलोचनानामेषांयदामिथोविवादोभविताभविष्यति तदाइयानेवैषांवधोपायः अतोऽन्योनविद्यतेतत्समयमाह मयिउद्यतेपरमंधामगंतुंप्रवृत्तेसतिस्वयमेवैतेमिथोविवादेन अंतर्दधतेअंतर्दधीरन्नित्यर्थः ॥ १५ ॥ ॥ १६ ॥

---

### भाषाटीका

शम्बरासुर द्विविद बाणासुर बल्वल दंतवक्रादिकों को किसी को आप मारते भये किसी को और से मरवाते भये ॥ ११ ॥

याके उपरान्त तुह्मारे भाई के पुत्रों की ओर नृप रहे उन सेनों के आयवे सें कुरुक्षेत्रकी भूमि चलायमान होतीभई ॥ १२ ॥

कर्ण दुःशासन शकुनि की कुत्सित सलाह से लक्ष्मी आयु हीन सोये भये सब सेना समेत मरे जंघाटूटी धरती में पडे दुर्योधन को देख श्रीकृष्ण जी कुछ प्रसन्न न भये ॥ १३

एवं सञ्चिन्त्य भगवान् स्वराज्ये स्थाप्य धर्म्मजम्।*
नन्दयामास सुहृदः साधूनां वर्त्म दर्शयन् ॥ १६ ॥
उत्तरायां धृतः पूरोर्वंशः साध्वभिमन्युना ।
स वै द्रौण्यस्त्रसंप्लुष्टः पुनर्भगवता धृतः ॥ १७ ॥
अयाजयद्धर्म्मसुतमश्वमेधैस्त्रिभिर्विभुः ।
सोऽपि क्ष्मामनुजैः रक्षन्रेमे कृष्णमनुव्रतः ॥ १८ ॥
भगवानपि विश्वात्मा लोकवेदपथानुगः ।
कामान् सिषेवे द्वार्व्वत्यामसक्तः सांख्यमास्थितः ॥ १९ ॥
स्निग्धस्मितावलोकेन वाचा पीयूषकल्पया ।
चरित्रेणानवद्येन श्रीनिकेतेन चात्मना ॥ २० ॥:।:

भाषाटीका ।

द्रोण भीष्म अर्जुन भीमसेन के कारण अष्टादश अक्षौहिणी केवल भार नाश भयो सो कछु न भयो अभी मेरे अंश असह्य यादवरूपभार विद्यमान है ॥ १४ ॥

मीठी वारुणी के मद से लाल लोचन इन यादवों का आपस मे विवाद होय येही इन के मारवे का उपाय है और नहीं जब हम या काम करवे कों प्रारम्भ करैंगे तो आपसे ही ये सब नष्ट हो अंतर्द्धान होंगे ॥ १५ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

एवं श्लोकद्वयोक्तं क्रमेण सञ्चिन्त्य स्वराज्ये स्थापयित्वा ॥१६॥
धृतः रक्षितः १७
अनुजैः भीमादिभिः सह १८
सांख्यं प्रकृतिपुरुषविवेकम् १९
स्निग्धो यः स्मितसहितोऽवलोकस्तेन पीयूषकल्पया सुधातुल्या पाठान्तरे सुधाप्रवाहरूपया आत्मना देहेन २०

श्रीराधारमणदासगोस्वामि विरचित
दीपिन्याख्य तट्टिप्पणी ॥

पूर्वंधृतःस्थापित.पुनर्धृतोरक्षितः ॥ १६ ॥
सोपिकृष्णमनुव्रतस्सक्षितिग्रन्योन्यप्रीतेरुल्लासः ॥ १७॥
भगवत्प्रीत्यर्थमेववैराग्यंक्रियतेऽन्यैर्विपायिभिर्नतु भगवतामाय व्युदस्यचिच्छक्त्याकैवल्येस्थितआत्मनीति सदैवतत्राऽनासक्तत्वादेवभूतोभगवानपिलोकशिक्षार्थं सांख्यमाश्रितःवैराग्यलीलांप्रकाशितवानित्यर्थः ॥ १८ ॥
वैराग्यलीलायाःक्रममःहास्त्रिभिस्तत्रस्निग्धेतियुग्मकम् पीयूषकुल्ययेतिपाठान्तरंकुल्याल्पाकृत्रिमासरिदित्यमरःअवसरः रहक्रीडावकाशः ॥ १९ ॥
सन्यस्तवद्विरागानभिधानाल्लक्षणयौदासीन्यमित्यार्थिकोर्थः ॥२०॥

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रिका ।

एवमिति एवमुक्तरीत्यासंचिंत्यभगवान् स्वराज्येस्वस्यधर्मजस्यराज्यंतस्मिन् धर्मजंयुधिष्ठिरंस्थाप्यस्थापयित्वाल्पवार्षोऽसमासत्वात्साधूनांवर्त्मं वर्णाश्रममर्यादांदर्शयन्स्वानुष्ठानेन लोकमनुष्ठापयन्सुहृदः मित्राणिनंदयामास संतोषयामास ॥ १६ ॥

उत्तरायामिति अभिमन्युनास्वभार्यायांउत्तरायांपूरोर्वंशः साधुधृतःपूरोर्वंशवर्द्धकः परीक्षिदुत्पादितः सवैपरीक्षिदुत्तरागर्भस्थःद्रौणेरश्वत्थाम्नोऽस्त्रेणब्रह्मशिरोऽस्त्रेणसंभिन्नः पुनर्भगवताश्रीकृष्णेनधृतःपरिरक्षितः ॥ १७ ॥

अयाजयदिति सोपिधर्मसुतोपिकृष्णमनुव्रतः सेवमानः अनुजैः सह क्ष्मां पृथिवींरक्षन्रेमे ॥ १८ ॥
भगवानिति विश्वात्माविश्वस्यांतः प्रविश्यधारकः भगवान् श्री कृष्णोपि लोक वेदपथानुगः श्रौतस्मार्त्त धर्माननुवर्तमानः द्वार्वत्यांपुर्यांकामान्सिषेवेकथंभूतः सांख्यं संख्याबुद्धिस्तयागम्यं सांख्यंमुमुक्षूपास्यं स्वात्मानमास्थितः स्वानंदमेवानुभवन्नित्यर्थः अतएवासक्तः शब्दादिष्वना-सक्तः अत्रकाम्यंते इति कामाः कल्याणगुणाः तान्सिषेवे स्वकीयकल्याणगुणसंशीलनपरोवभूवेत्यर्थः नतुशब्दादिविषयानुभवोविवक्षितः यद्वा कामाननुभवन्निवावतस्थावित्यर्थः ॥ १९ ॥

तदेवप्रपंचयति स्निग्धेत्यादिना स्निग्धः कृपायुक्तोयःस्मितावलोकः मंदहासयुक्तावलोकः तेनपीयूषममृतं तत्तुल्ययावाचा अनवद्येननिर्दुष्टेनचारित्रेणश्रियोलक्ष्म्यानिकेतेनाश्रयेणात्मना शरीरेणच
इमंभूलोकममुंउपरिलोकाश्चरमयन्नस्मिन्लोकेयदूश्चसुतरांरमयन् क्षणादयाराव्यादत्तंक्षणंक्षण मात्रंस्त्रीणामी क्षारूपं सौहृदंयेनसःदत्तक्षण स्त्रीक्षणसौहृदः रेमे ॥ २० ॥ २१ ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

स्वाराज्येस्वर्गसमराज्ये ॥ १६ ॥
यःपूरोर्वंशोऽभिमन्युनासाधूत्तरायांधृतःसद्रौणयस्त्रेणसंछिन्नसंछादितः पुनर्भगवताधृतोरक्षितोऽभूदित्यन्वयः ॥ १७ ॥ १८ ॥
अपीत्यनेनलोकसंग्रहणार्थंगृहस्थधर्मानुचरणंनतुस्वार्थं सत्यसंकल्पत्वादितीममर्थंसूचयति विषयसेवयापितल्लेपोनास्तीत्यसक्तइति तत्रहेतुगर्भविशेषणमाह सांख्यमिति केवलंभगवज्ज्ञानंसांख्यमित्याभर्धीयतइतिवचनात् नसांख्यशास्त्रोक्तविधिः किंतुस्वरूपज्ञानमेवगृह्यते तद्ब्रह्मवदांहब्रह्मास्मीतिश्रुतेः ॥ १९ ॥

* विजयध्वज्यां स्वाराज्य इति पाठः

:।: वीरराघव कृत चंद्रिकायां चारित्रेणानवद्येनेतिपाठः

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

श्रियोनिकेतेनवासेनात्मनांदेहेन ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ॥

पूर्वं धृतः स्थापितः पुनर्धृतो रक्षितः १७ १८

भगवानपीति कृतकृत्यतायां जातायां, वैराग्यलीला प्रकाशिते-
त्यर्थं १९

तत्र क्रममाह त्रिभिः । स्निग्धेति युग्मकम् ॥ २० ॥

---

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

एवंविसर्गोनिरूपितस्तत्रदेवतांमन्त्रंनिरूपयन् प्रद्युम्नंनिरुध्यवासुदेवं
निरुपयतिषड्भिः यदापाततोभक्तानामाहितप्रतिभानंतद्भक्तिमार्गस्य
तथात्वख्यापनायदशलीलापरंव्यापिवैकुंठेनित्यावस्थितिःरुपांतरेण
भजनंस्वामिसेवकयोर्हितेस्वामित्वंसेवकोहमितिसेवकत्वंतथापरः अन्य
थासफलानस्याद्भक्तिमार्गः ससाधनः सेवादशायांचेत्स्वामीविरसः
सिध्यभावतापश्चाच्चेत्सेवकत्वंस्यात्फलमाशश्चनोभवेत् ॥ यावत्सा
धनमात्मानंसर्वशास्त्राविरोधनंकृत्वांतेपूर्वधर्मस्यनाशंचकुरुत्तफले अ
न्तःस्थितिदशायांहिताद्विचेत्यहरिःस्वयं स्वानाभिप्रेत्यविषयान्भोजय
त्येवनान्यथातदाह एवंप्रकारेणसम्यग्विचारयित्वातथाकरणसामर्थ्यं
तस्यैवेत्तिभगवानित्याह स्वराज्येपितृपैतामहेस्वस्यैवराज्येवाशास्त्र
फलंप्रयोक्तरीतिन्यायेनभगवद्राज्येवा धर्मजमिति तथास्थानेस्थापना
धिकारांदार्शतः नंदयामासेतिसर्वानेवसुहृदः सर्वप्रकारेणानंदयु
क्तांश्चकारनकेवलंलौकिकविषयैरेवपूर्णान्करोतिकिंतुवैदिकमार्गेणापी
त्याह साधूनांवर्त्मदर्शयन्निति सतांमार्गोवैदिकस्तद्धर्मनिष्ठातद्दर्शय
न्स्वयंयज्ञादिधर्मान्कुर्वन्वैदिकमार्गेणापिनंदयामासेत्यर्थः ॥ १६ ॥

अनेनप्रवाहंमर्यादांचस्थिरीकृतवानित्युक्तं पुष्टिमार्गंतावत्स्थि
रीकरोतीत्याह उत्तरायामिति पुरोर्वंशोऽभिमन्युनोत्तरायांशास्त्रानु
सारेणभूतः स्वभार्यायामर्जुनपुत्रोयथाशास्त्रंगर्भेधृतवान् इमांमर्या-
दांप्रवाहाद्दूरीकृतवानित्याह सवैद्रोण्यस्त्रसंछिन्नइति निश्चयो
ब्रह्मास्त्रस्याद्यत्वादतएवा सम्यक्छिन्नः अग्रेसंततिः छिन्नाः छेदना
नंतरंसएव वंशोभगवताधृतः छिन्नोहिपूर्वोभागोनोत्तरं विभर्त्तिवं
शःप्रदीपसंततिवद्भवति यथानिरंतरमुत्पद्यमानास्तेजोवयवाः अंगु
ल्यग्रपरिमितांदीपशिखांस्वप्रवेशनिर्गमाभ्यांसमांस्थापयंतितैलंवर्ति
कांचनिमित्तमाश्रित्य तथापूर्वदेहेत्रायुषि समासाद्य शरीरोत्पाद
कावयवाः स्थूलतयापरिदृश्यमानंरूपंप्रवेशनिर्गमाभ्यांसमयेवस्था
पयंतोवस्त्रवत्सूक्ष्माज्ञानत्वात्तन्मध्येउत्तरोत्तरंशुक्रांतानिसप्तावरणा
निसूक्ष्मसूक्ष्माणिकुर्वंतिततोंतःसूक्ष्ममावरणंप्रशिथिलावयवंसूक्ष्मवस्त्र
वत्स्थितंयोषाग्निसंबंधात्सर्वतः आकृष्टंपिंडीभूतमिवयोनौप्रविशति
तत्राप्यत्रायुषिनिमित्तमाश्रित्यपूर्ववत्तत्रापिसप्तधातून्स्पृष्टांतः सूक्ष्म-
सूक्ष्मान्रूपविशेषान्कुर्वंतीत्या ब्रह्मतृणस्तंबानांव्यवस्था तत्रतस्याः
संततेर्विच्छेदेपूर्वसाधितस्यपिंडस्यविनाशकेनविघाते उत्तरोत्पाद
नासामर्थ्येभगवान्स्वयं प्रविष्टस्तांसंततिंतथैवरचितवान् नतुकृष्या
दिवद्बीजांतराधानेनसंतत्यन्तरमेवशास्त्रतोऽभ्यनुज्ञानात्पूर्वसंततिंकृत
वानित्यर्थः । १७ ।

अनेनपुष्टिमार्गप्रवृत्तिःप्रवाहेणमर्यादा भंगएवेतिसूचितंसचेत्पु
ष्टिमार्गोमर्यादांयथास्थानस्थितांनकुर्यात्प्रवाहवत्तस्यापिबाधकत्वमे
वस्यादितितद्व्यावृत्त्यर्थमाहअयाजयद्धर्मसुतामितिभताब्राह्मणानांस्वतः

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

प्रवृत्त्यभावाद्भगवत्प्रेरणयैवयाजनं कुर्वंतीतिभगवानयाजयदित्युक्तं
मंत्रसहितदेवतासांनिध्यकरणाद्वा त्रिभिरितिकायिकादिसर्वपरि
हारार्थंतरतिमृत्युंतरतिपाप्मानंतरतिब्रह्महत्यामितिश्रुतेःत्रिविधफल
सिध्यर्थंप्रहारपृथक्कन्यायेनत्रयोश्वमेधाःकृताःयाजनादि सामर्थ्यां-
र्थ्यमाहविभुरिति एवंनिर्दुष्टस्याग्रिमकार्यमाह सोपीति क्ष्मांपृथ्वीम
भुञ्जेभ्रातृभिःसहरक्षन्द्विविधधर्मसंपन्नःकृष्णभक्तोजातइत्यर्थःसदे
वौपादौनिरूपितौ । १८ ।

एवंभगवान्भक्तहितंविधायधर्मस्थापनं फलमिवस्वार्थंकृतांसृ
ष्टिंबुभुजइत्याहत्रिभिःभगवानपीति भगवत्सेवकोयुधिष्ठिरादिरपि
भगवद्दत्तंराज्यंबुभुजे भगवानपिकामान्सिषेवे विषयान्नानाविधान्बु
भुजइत्यर्थः तस्यस्वार्थंसृष्टस्यजगतोभोगेजीवतुल्यतास्यादतआहावि-
श्वात्मेतिनहिभगवान्विश्वं विषयत्वेनभुक्तवान्कित्वात्मत्वेन सहिवि
श्वात्मात्रिविधपरिच्छेदाभावेननतुकेवलविश्वरूपेण ननुतस्यविषयभो
गःसर्वत्रस्वतएवसिद्धःकिमितिविशेषाकारेणोच्यतइत्यत आहलोक
वेदपथानुगइति सहिसर्वदाब्रह्मत्वेन सर्वान्विषयान्भुङ्क्ते अत्रतुलोका-
नुसारेणलौकिकसाधनेनलौकिकक्रियारुपेणलौकिकान्विषयान्भुंक्ते
वेदानुसारेणतुवैदिकक्रियया वैदिकान्पुत्रानुत्पाद्यताननुभवति
अतोत्रप्रकारत्रयेणाप्यनुभवतीत्यर्थंकामभोगेहिनिर्गमनमार्गोनास्ती
तितस्यसर्वावरकत्वात्कथं भगवान्जीववत्कामान्सिषेवइत्यतआह
द्वावेत्यामिति अनेनकर्मविरोधःपरिहृतःयथानिस्तारेणोपायंकुर्वा
णःकर्मफलमुपभुंक्तेमाद्विज्ञानविरोधाभावाय असक्तइति आसक्त्या-
भोगेहिज्ञानविरोधःस्वार्थकृतसृष्टिमनुभवतीतिज्ञापयितुमाहसांख्या
मास्थितइति संख्याहितत्वानांयत्राभिन्नतयागणनासाद्वित्वेनपर्यवस्य
तीतिसर्गभेदहेतुर्निरुपितःअनेनभक्तिविरोधोपिपरिहृतःभगवान्भुंक्ते
जीवोपिभुंक्ते जीवद्वाराभगवान्भुंक्तइतिपक्षेभक्तिमार्गविरोधोभवति
घ्राणंनिरुपितम् ॥ १९ ॥

रमणंपुरुषोत्तमरूपेणचेतिद्वितीयेभोगेवदन् रमयामासेत्येतद्वि
स्तारयतिस्निग्धस्मितावलोकेनेति चतुर्भिश्चतुर्विधानांभूतानांभोगोनि
रुप्यते चतुर्विधान्यत्रभूतानित्रिविधाजीवाःमार्गत्रयवर्त्तिनोव्यापिवै
कुंठवासिनश्चतत्रभगवानिमंलोकं स्निग्धस्मितविलोकेनरमयामास
अत्रहिद्विविधाजीवाःद्वौभूतसर्गौलोकेस्मिन्निति तत्रदेवाःस्निग्धाव-
लोकेनप्रेमदृष्ट्यारतियुक्ताःकृताः आसुराः सुस्मितेनमंदहासेनाद्भुमाया
मोहेनसर्वथामुग्धाशुद्धदैत्याभवंति तेदोषमलात्मकाअर्द्धमुग्धास्तु-
लौकिकाभगवत्प्रसादेनसर्वानेवविषयान्प्राप्नुवंति तत्रस्मितावलोक
स्यहेतुत्वं आमुष्मिकान्वाचापीयूषकल्पयारमयामास तेहिमर्यादावंतो
वैदिकफलभोक्तारस्तद्धिस्वर्गाख्यंतद्भगवद्वाचावेदेनस्वर्गाख्यंभवति
अमृतकल्पेनचोपनिषद्भागवतादिनाआमुष्मिकंफलप्राप्नुवंतिअनव
द्येनचरित्रेणसर्वानेवपुष्टिमार्गस्थितान् भक्तान्यदूंश्चसुतरांरमयामा
स चरित्रैर्णवहिभक्तारज्यंतेलोकनिंदारहितेनतुकुलीनायादवाःसु-
तरांरज्यंतेवैकुंठस्थिताःश्रीनिकेतनानंदयुक्तेऽयनात्मनासच्चिदानंदरू
पेणचकारातश्रियादिविभूत्याक्षणदयादत्तक्षणोरात्र्यादत्तावसरः-
स्वप्नसुषुप्तिसुखंनिद्रयाभवतीतिरात्रेःक्षणदात्वंलौकिकम् ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ॥

स्थाप्य स्थापयित्वा १६

धृत आहितः । धृतो रक्षितः १७

रेमे विरराज १८

इमंलोकममुञ्चैव रमयन् सुतरां यदून् ।
रेमे क्षणदया दत्तक्षणस्त्रीक्षणसौहृदः ॥ २१ ॥
तस्यैवं रममाणस्य सम्वत् सरगणान् वहून् ।
गृहमेधेषु योगेषु विरागः समजायत ॥ २२ ॥
दैवाधीनेषु कामेषु दैवाधीनः स्वयंपुमान् ।
को विस्रम्भेत योगेन योगेश्वर मनुव्रतः ॥ २३ ॥
पुर्य्यां कदाचित् क्रीड़द्भिर्यदुभोज कुमारकैः ।
कोपिता मुनयः शेपुर्भवन्मतकोविदाः ॥ २४ ॥
ततः कतपयैर्मासैर्वृष्णि भोजान्धकादयः ।
ययुः प्रभासं संहृष्टा रथैर्दैव बिमोहिताः ॥ २५ ॥
तत्रस्नात्वापतृन् देवानृषींश्चैवतदम्भसा ।
तर्पयित्वाथ विप्रेभ्यो गावोवहुगुणाददुः ॥ २६ ॥
हिरण्यं रजतंशय्यां वासांस्य जिनकम्वलान् ।
हयानूथानिभानून्कन्यां धरां वृत्तिकरीमपि ॥ २७ ॥
अन्नञ्चोरुरसं तेभ्यो दत्त्वाभगवदर्पणम् ।
गोविप्रार्थासवःशूराःप्रणेमुर्भूविमूर्द्धभिः ॥ २८ ॥

इतिश्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां तृतीयस्कन्धे विदुरोद्धवसम्वादे
तृतीयोऽध्यायः ॥ ३ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

पञ्चम षष्ठ ऐश्वर्य्ये द्योतयति भगवानपि विश्वस्यान्तर्यामीव असक्तः लोकवेदेति लोकवेदयोरनिषिद्धानेव कामान् सुखरूपान् इन्द्रादिभिरुपायनत्वेन प्रेषितान् सिखेवे बुभुजे अत्र असक्त इति वैराग्यं सांख्यमिति ज्ञानम् १६

मायाशक्तिविलास एव तस्यानासक्तिश्चिच्छक्तिविलासंत्वसा-किरेवेत्याह स्निग्धेति क्रमेणावलोकवचनलीला रूपैश्चतुर्भिर्माधुर्यैः ॥ २० ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

अभिमन्युनाधृतःस्थापितःभगवताधृतःरक्षितः ॥ १७ ॥ १८ ॥
सांख्यमात्मानात्मविवेकम् ॥ १९ ॥ २० ॥

---

भाषाटीका ।

ऐसा चिंतवन कर भगवान् अपने राज्य पर युधिष्ठिर को स्थित कर साधु लोगों का मार्ग दिखावते भये और सुहृद सहित आनन्दित हुये १६

साधू अभिमन्यु नें पुरुको वंश उत्तरा में धारण कीह्नौं जो अश्व त्यामा के अस्त्र से नष्ट भयो सो भगवान् ने फेरद्याकी १७

भाषा टीका ।

समर्थ कृष्ण जीइ अश्वमेध यज्ञ राजा युधिष्ठिर से करवाते भये वो भी श्रीकृष्ण की सेवा सें भाइयों से पृथ्वी की रक्षा कराय रमण करते भये १८

भगवान् विश्वात्मा भी लोक वेद के अनुसार द्वार का में रह कर सांख्य मे मन लगाय सब काम भोग करते भये ॥ १९ ॥

मनोहर मुस क्यान की दृष्टि से अमृत मीठी वाणी से कोई निन्दा करै नहीं ऐसे चरित्र करके श्री महा लक्ष्मी के निवास शरीर से सब को आनंद देते भये ॥ २० ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

क्षणदया रात्र्या दत्तः क्षणः अवसरः उत्सवो वा यासां स्त्रीणां तासु क्षणं सौहृदं यस्य सः ॥ २१ ॥

गृहमेधेषु गार्हस्थ्योचितधर्मानुष्ठानेषु कामभोगाद्युपायेषु विराग औदासिन्यं जातमित्यर्थः ॥ २२ ॥

यदा स्वाधीनेष्वपि भगवतो विरागः । तदा दैवाधीनेषु को वि-स्रम्भेत विस्वासं प्रीतिं वा कुर्यात् । योगेन चेत् योगेश्वरं श्रीकृष्ण-मनुव्रतः ॥ २३ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

शेपुः शापं ददुः भगवतो मतेऽभिप्रायं कोविदाः अभिज्ञाः ॥२४॥
पयःशीलादि बहुगुणोपेता या गावस्ताः ॥ २५ ॥
कन्याश्च वृत्तिकरीं जीविकापर्याप्ताम् ॥ २६ ॥
भगवदर्पणं यथा भवति । गोविप्रार्थो असवो येषां ते ॥ २७ ॥

इति श्रीमद्भागवतेमहापुराणे तृतीयस्कन्धे
श्रीधरस्वामिकृत भावार्थदीपिकायां
तृतीयोऽध्यायः । ३ ।

———

श्रीराधारमणदासगोस्वामिविरचित
दीपन्याख्यतट्टिप्पणी ।

तादृशलीलायाःप्रयोजनंव्याचष्टेयदास्वाधीनेस्त्विति योगेनभक्तियोगेन ॥ २१ ॥
अभिप्रायेस्वाज्ञयामहिमदर्शनद्वाराप्रपञ्चास्तिरोधानलक्षणे ॥ २२॥
ततःशापानंतरं ॥ २३ ॥
तत्रेतियुग्मकम् तत्रप्रभासे ॥ २४ ॥
गोविप्रार्थासवइतितेषांपरमधार्मिकत्वे पित्राज्ञणवंचनंभगवदिच्छयैवतथाशापाभासश्चलौकविभीषामात्रमेवेतिव्यंजितम् ॥ २५ ॥

इतिश्रीमिद्भागवतेमहापुराणेत्रतीयस्कंधे
दीपिकादीपिन्याटीकायां
तृतीयोऽध्यायः ॥ ३ ॥

———

श्री मद्वीरराघवाचार्यकृत भागवतचंद्रचंद्रिका

तस्येति इत्थमनासक्त्यावहून्स्वत्सरगणान् रममाणस्यतस्य-भगवतः गृहमेधेषुगृहाश्रमप्रयुक्तेषुयोगेषुधर्मेषुविरागः उपसंजीहीर्षया अनादरः समजायत ॥ २२ ॥

एतदेवकैमुत्यनयेनाह दैवाधीनेति योगेश्वरंयोगफलप्रदंभगवंतंयोगेनभक्तियेगेनअनुव्रतः सेवमानः स्वयंदैवाधीनः दैवायत्तः कः पुमान्दैवायत्तेषुकामेषुविस्रंभेतविश्वसेतन्नकोपीत्यर्थः किंमुत भगवानविश्वेसदित्यभि प्रायः ॥२३ ॥

अथस्वकुलंसंजीहीर्षोर्भगवतोभिप्रायानुसारेण विप्रशापप्रवृत्तिंयदुकुल संहर्तिं च संग्रहेणाह पुर्यामिति पुर्यांद्वारकायां कदाचिद्भगवत्स्वकुल संजीहीर्षानंतरकाले क्रीडद्भिः रममाणैर्यदुभोजकुमारकैः कोपिताःकोपं प्रापिताः मुनयः भगवन्मत कोविदाभगवदभिप्रायाभिज्ञाः शेपुः शापंदत्तवंतः ॥ २४ ॥

ततःशापानंतरंकतिपयैर्मासैः नाना विधारिष्टदर्शनानंतरंवृष्ण्यंधकभोजा दयो दैवविमोहिताः अतएवसंहृष्टाः संतोरथैः सहप्रभासंतीर्थं ययुः ॥२५

तत्रप्रभासेस्नात्वातदंभसाप्रभासांभसापित्रादीं स्तर्पयित्वाबहुगुणाः वयः शीलादिबहुगुणोपेताः गावः गाः विप्रेभ्योदुः ॥२६ ।
हिरण्यादीन्वृत्तिकरींजीवनकरींधरांभूमिंचददुरितिपूर्वेणान्वयः बह्वादत्वे त्युतरेणान्वयः ॥ २७ ॥

स्वादुरसंमृष्टरसमन्नंतेभ्योविप्रेभ्यःभगवदर्पणं यथाभवति तथादत्वाभगवत्प्रीणनकरमन्नंदत्वेतिवा गोविप्रार्थासवः गोविप्रार्थप्राणाः शूरा यदवः विप्रेभ्यःमूर्द्धभिः प्रणेमुः नमस्कृतवन्तः ॥ २८ ॥

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रिका ॥

इति श्रीमद्भागवत चन्द्र चन्द्रिका ख्यायां
व्याख्यायां तृतीयस्कंधे तृतीयोऽध्यायः ॥

———

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

क्षणदयाराज्याद्दत्तक्षणोदत्तावसरः अनेनक्षणदाशब्दार्थोदर्शितः स्त्रीपुरुषणकालंसौहृदंयस्यसस्त्रीक्षणसौहृदः । स्त्रीक्षणोरुद्रस्तं स्यसौहृदंयस्मिन्सतथावा अनेनरुद्रगणचरणयोग्यसमयेस्त्रीभिः सहरमणंकथमितिचोद्यंपरिहृतं ॥ २१ ॥

गृहस्थधर्ममनुवर्तमानस्यहरेर्लोकशिक्षार्थेवाह्यविषयेषुवैराग्यप्रदर्शनमित्यभिप्रेत्याह तस्येति सर्वदाऽपिविरक्तः सन्नभासयीत विरागवत् । कादाचित्कः कुतस्तस्यलोकशिक्षार्थमिप्यतइतिस्मृतेः योगेषुविषयसाधनेषुविरागः समजायतवैराग्यमभूदितिदर्शयामास ॥ २२ ॥

नित्यविरक्तस्यकादाचित्कविरक्त्यनुपपत्तेर्लोकशिक्षार्थमेवदर्शितमित्येतत्स्पष्टयति दैवेति नित्यविरक्तेनापिभगवताविराग प्रदर्शितइतियस्मात्तस्मात्स्वयंदैवाधीनोयोगेनध्यानलक्षणोपास्त्या योगेश्वरंकृष्णमनुव्रतःकः पुमान्दैवाधीनेषुकामेषुविषयेषुविश्रंभेत नित्याइतिविश्वासंकुर्यात् नकोपीत्यर्थः अत्रदैवधीनत्वंहरेर्नित्यविरक्तत्वेनविषयाणामागमापायित्वेनानश्वरत्वेहेतुः ॥ २३ ॥

इत्थंभगवच्चरितमुक्त्वायदुकुलनाशनिमित्तमाह पुर्यामिति भगवन्मतकोविदाइत्यनेनमुनिशब्दार्थोदर्शितः ॥ २४ ॥

भविष्यद्यदुकुलनाशंवक्ष्यँस्तेषांप्रभासयात्रामाह ततइति एष्यंतुनिश्चितंयत्तदतीतत्वेनभण्यते । चक्रवत्परिवृत्तेर्वाद्दुष्टानांमोहनायचेतिवचनाद्ययुरित्यादिप्रयोगोयुज्यते सुखहेतुत्वान्मासैरिवसंवत्सरैः ॥ २५ ॥

बहुगुणाः सौशील्यादिसर्वगुणोपेतागावोगाः ॥ २६ ॥

नकेवलंगापददुःकिंतुपरलोकेयत्स्वात्मनः पुण्यफलत्वेनप्राप्यंतत्तद्द्रव्यजातंददुरित्याह हिरण्यमित्यादिना हिनोतिदुःखरातिसुखमितिहिरण्यं रंजनरागंचातनोतिइतिरजतं अजिनंनयतीत्यजिनं कंसुखंबलयतीतिकंबलःहयत्यनेनगतंव्यमितिहयः पुंसिसंज्ञायांघःप्रायेणेतिघःहयगताविितिधातुः रथगताविितिरथतिचरति रतिस्थापयतीतिवारथः इष्टंभासयंतीतिइभाः भादीप्ताविति धातुःकनंदीप्तिंयापयतीतिकन्या ध्रियतेऽनयेतिधरा ॥ २७ ॥

उरुरसंपक्कसोपेतं भगवदर्पणं गवार्थेविप्रार्थे असवोजीवनंयेषां तेतथोक्ताः ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्विजयध्वजतीर्थकृत टाकायां
तृतीयोऽध्यायः ॥ ३ ॥

———

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

रजन्या दत्तावसरस्त्रीणां क्षणमुत्सवरूपं सौहृदं यस्य ॥ २१॥
गृहमेधेषु गार्हस्थ्योचितधर्मानुष्ठानेषु वैराग्यमौदासीन्यम् ॥२२
सा च वैराग्यलीलैतद्बोधयितुमित्याह दैवेति ॥ २३ ॥
भगवन्मतन्तु विप्रशापव्याजेन मिथो यदैषामित्यादिना पूर्वमुक्तम् ॥

श्रीमज्जीवगोस्वामि कृत क्रमसन्दर्भः

देवः श्रीकृष्णः ॥ २४ ॥

तत्रेति युग्मकम् ॥ २५ ॥ २६ ॥

गोविप्रार्थासव इति परमधार्मिकत्वमेव दृढीकृतं तेन भगवदिच्छयैव तादृशबुद्धित्वमागन्तुकामिति व्यञ्जितं । ततश्च तत्र तत्र दंडश्च लोकभीषणार्थमेव ननु वास्तवामिति च दर्शितम् ॥ २७ ॥

इति श्रीमद्भागवतेमहापुराणे तृतीयस्कन्धे
श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भे
तृतीयोऽध्यायः । ३ ।

---

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ॥

ततोत्रविशेषंवक्तुंस्त्रीणांसंबंधिनित्त्यसुखंसौहृदंतस्येत्युक्तं वैकुंठसुखंहिनिष्प्रपंचेस्वरूपेस्थितोरमेतराभ्यामवतीर्णो पितथास्त्रीसु खेएवंचतुर्भिःसर्वेषांरमणमुक्तं स्निग्धेतिग्राम्यदेवता ॥ २१ ॥

इमामितिवागतएवतस्यैवमित्यभिःसंकर्षणचरित्रमाह तस्यैवमिति एवंप्रकारद्वयेन रममाणस्यविरागोभोगप्रतिबंधात्माषष्ठोभगवद्वीर्योगुणः प्रादुर्भूतोजातइत्याहद्विविधाहिविरक्तिः भोग्यपरित्यागेन दोषदर्शनसहितेनशास्त्रदृष्ट्यासाधारणलौकिकानां अतिभोगेनचभगवतोविशिष्टासाजातेतिवक्तुंतद्धेतुमाह संवत्सरगणान्बहूनिति संवत्सराणांगणा! प्रभवादिसमूहास्तेपिवहवोबहुरूपेणरमणाद्वैराग्यस्यविषयमाह गृहमेधेषुयोगेष्विति उपायपुर्वैराग्यं ॥ ननुस्वरुपभोगे उपायोद्विविधः पूर्वमुक्तालौकिकोवैदिकश्चतत्रसुतरांलौकिकेष्विति गृहएवमेधावुद्धिर्यैरिति विरागोरागाभावरूपोरागनिवर्त्तकोवा रागस्यत्रुभयंनिवर्तकम् ॥ २२ ॥

असाध्यताज्ञानमनिष्टज्ञानंचतत्रानिष्टज्ञानंलौककेषुविहितेपुशास्त्रतः परमार्थतश्चेतितुच्छवलत्वभावादकार्थत्ताज्ञानंलोकेनिवर्त्तकं मन्यमानोभगवांतैवराग्यमुक्त्वापुरुषदर्पेऽपिकैमुत्तिकन्यायेनवैराग्यमाहदैवाधीनेष्विति ॥ २३ ॥

दैवाधीनेष्विति ॥ यत्रस्वप्रयत्नसाध्यतानास्तितेनाप्यंशेनतत्ररागोनजायतेदृष्टएवप्रयत्नसाध्यतानादृष्टेनचैमेवाचादृष्टरूपकर्मसाध्यं ॥ तत्रदेहाभोगाधिष्टानं ॥ विषयास्तदाधाराः भोग्याभोक्ताच ॥ तदभिमानित्रयमपिदैवाधीनं ॥ स्वयंपुमान्अनेनाक्षिप्तोदेहोवास्त्रगादयश्चविषयाततः किमतआह । कोविस्त्रंभेतेति कोवाविश्वासंकुर्याद्भोगोभविष्यतीतिघुणाक्षरन्यायेन कदाचिद्भवतिनह्येतावताघुणःकीटोत्तराणिलिखितुंजानातीतिघुणभक्षितकाष्टाक्षराणिवाचयितुंकश्चिद्विचारयतीतितथादैवगत्यास्वप्नवत्कदाचिद्भोगजातेसंदर्भ भविष्यतीतिकोवाविश्वासंकुर्यादित्यर्थः ननुजगदेवविश्वासंकरोतिकुतोऽनिषिध्यतइत्याशंक्याह ॥ यंगेनेश्वरमनुव्रतइति शास्त्रोक्तप्रकारेणशास्त्रवुध्वाविहितभक्तिमार्गेणोपायेनयोगेश्वरंसर्वोपायप्रवर्त्तकंयः सेवतेसर्वभावेनसविश्वासंनकरोतीत्यर्थः एवंवैराग्यमुक्त्वास्यसंकल्पत्वाद्यत्ततदनुगुणं बहिर्वैराग्यजनकं शापानरूपयति पुर्यांकदाचिदिति पुर्य्योद्वारकायांसामीप्यसप्तमीकदाचिदिति भगवद्विचारितकालेक्रीडद्भिरिति ॥ नतेषांस्वभावतोदुष्टत्वंयदुभोजकुमारकैरिति ॥ उपजीव्याः सर्वएवभगवदीयावालकाःकुमाराःनवैशिशूनां गुणदोषयोःपदमितिदोषाभावःसूचितः तैःकोपितामुनयोमननशीलाव्रह्मर्षयः शेपुःशापंदत्तवंतस्तत्रहेतुः भगवन्मतकोविदा इति भगवदभिप्रा यंजानंतीतिनिर्मर्यदोषाभावः । २४ ॥

ततःपरंत्यागत्रयम इनतः रतिपयेरितित्रि भिःग्रहपरित्यागः प्रवाह परित्यागःसर्वस्व परित्यागश्चेति ॥ रागाभा- ॥

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

वाद्ययस्यतद्धेतुभूत्तशापचात्रिष्टुपर्वसानात्तत्राद्यमाह ॥ कतिपयैरेवमासैस्त्रिभिर्मासैःसर्वेपियादवानिर्गताइतिवृष्णिभोजांधकाःसात्विकराजस तामसानिर्दिष्टास्तदादयः सर्वेपित्रिष्वंवांतर्भवंतीत्यतएव संहृष्टाययुः नहिभगवदभिप्रायंसगुणाजानंति ॥ प्रकर्षेणभानंस्थानसंहर्त्तुः संकर्षणस्यस्थानंप्रभासः ॥ रथैरिति ॥ युद्धसाधननयनंसूचितंएधंगमनेहेतुर्दैवरूपेणभगवतामोहिताइति ॥ मनुष्यभावंपरित्यज्यदेवभावः प्राप्तव्यइति ॥ अनेनशापोत्रविपरीतोनिरूपितः ॥२५॥

शापोहिहीनभावंनयतिनतूत्कृष्टभावं ॥ एतेतुशापाद्देवभावंप्राप्स्यंतीतिलौकिकक्रियापरित्यागार्थमाहतत्रस्नात्वेतिअयमेवचाविशेषमोहः तेहिभगवद्भक्ताभगवद्भक्त्यैवसर्वसमाधानंकर्तुमुचितास्तथापिस्नानादिकमेवकृतवंतस्तत्रसरस्वत्यामग्निकुंडेवास्नत्वादेवर्षिपितृतर्पणंविधायविप्रेभ्योवहुगुणागावोवहुदोहसारदुग्धसाधुत्वादयो गुणाः अनेनाध्यात्मिकाधिदैविकाधिभौतिकसंतोषः संपादितइत्युक्तम् ॥ २६ ॥

धनत्यागमाह ॥ हिरण्यमिति ॥ हिरण्यंसुवर्णंहिरण्यंरजतमिति देवपितृप्रीत्यर्थंदक्षिणाविषयः शय्यांवासांसीतिरात्रिदिनसुखकराणि अजिनकंवलानीतिआस्तरणपरिधेयानित्रिविधान्येतानिसत्वरजस्तमोभेदेननसाधारणानांहेयानिहयान्रथान्कंवलाःसहिताश्चाश्वाः इभाः हस्तिनः स्वंनत्राकन्याधरामितिराजसंदानंहयाः सात्विकाः वृत्तिकरीमपीतिभूमिमात्रंपूर्वंधराग्रामादिरूपाकिंवहुनायेषांयदस्ति यत्किंचिन्नीततत्सर्वंब्राह्मणद्वारापरित्यक्तमित्यर्थः ॥ २७॥

एवं परित्यज्यशुद्धाभूत्वाभगवत्प्रीतिकरंकर्मकृतवंतइत्याह अन्नं चोरुरसमिति अनेकव्यंजनयुक्तमन्नंपूर्वोक्त एव ब्राह्मणेभ्यः कृष्णप्रीत्यर्थंदत्वानिवृत्तपापाःभक्त्यावशेनसात्विकभावंप्राप्ताः स्वधर्मोद्वेनराजसमिश्राः सात्वकाः जाताइत्याहगोविप्रार्थासवः शूराइति गवांविप्राणामेवार्थंअसवोयेषामितिसात्विकत्वं शूराइतिराजसाः तादृशानांसर्वप्रायश्चित्तमाह प्रणेमुर्भूविमूर्द्धभिरिति यएवशापंदत्तवंतस्तेभ्यःस्तदीयेभ्योवाभूमौसाष्टांगप्रणामंकृतवंतशिष्टेषु शिष्टानि एवमर्यादया च तुर्विधंभगवच्चरित्रमत्रनिरूपितं इन्द्रियाणांज्ञानंकर्मभेदोविहितावाहितभेदश्च अष्टभिः सप्तभिश्चैवषड्भिःसप्तभिरेवच चतुर्मुखैर्भगवतश्चरित्रंस्वामिहोच्यते एतद्रूपाणीन्द्रियाणिनान्यंगृह्णन्तिच क्वचित् । सर्गार्थंहेतवश्चोक्ता जन्महेतुस्वभावतः ॥ २८ ॥

इतिश्रीमद्भागवते महापुराणेतृतीयस्कंधे
श्रीमद्वल्लभाचार्यकृतसुबोधिन्यां
तृतीयोऽध्यायः ॥ ३ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

इमं लोकं मर्त्यलोकस्थं स्वभक्तंअमुं देवलोकस्थं तेष्वपिमध्ये यदून्नितरां यदुष्वपि मध्ये स्त्रीषु रेमे इत्यासक्त्याधिक्यं क्षणदया रजन्या दत्तः क्षणोऽवसरो यासां तथाभूतासु स्त्रीषु क्षणेन रतोत्सवेन सौहृदं यस्य सः । पट्टमहिषीणां स्वरूपभूतत्वाच्चिच्छक्तित्वं । स्कान्धप्रभास खंडे शिवगौरीसम्वादे गोप्यादित्यमाहात्म्ये दृष्टं । षोडशैव सहस्राणि गोप्यस्तत्र समागताः । लक्षमेकं तथा षष्ठिरेते कृष्णसुताः प्रिये । इत्युपक्रम्य हंस एव मतः कृष्णः परमात्मा जनार्दनः । तस्यैताः शक्तयो देवी षोडशैव प्रकीर्त्तिताः । चन्द्ररूपी मतः कृष्णः कलारूपास्तु ताः स्मृता इति । अत्र विशेषो दशमे प्रपञ्चयिष्यते ॥ २१

श्रीमद्विश्वनाथचक्रवर्त्ति कृत सारार्थ दर्शिनी ।

गृहमेधेषु योगेषु रजोगुणमयकर्ममार्गेषु तदुपलक्षित कर्मिजनोपनीतभोग्यवस्तुषु च विरागं औदासीन्यं सम्यगजायतेति सर्वकालमेव स आसीदेव । तदानीं त्वतिस्पष्टीबभूवेत्यर्थः । गुणोप्यसङ्गो वैराग्यमिति वैराग्यस्य लक्षणादगुणातीतेषु शुद्धसत्वमयेषु रुक्मिण्यादिविलासेषु वैराग्यं न व्याख्येयम् ॥ २२

साच वैराग्यलीला एतद्बोधयितुमित्याह यदा स्वाधीनेष्वपि भगवतो विरागस्तदा दैवाधीनेषु को विस्रंभेत विश्वासं प्रीतिं वा कुर्वीत योगेन चेत् योगेश्वरं भगवन्तमनुव्रतः स्यात् । २३ ।

भगवतो मते अभिप्राये कोविदा इति मुनीनां दोषः परिहृतः भगवतोऽपि तादृशाभिप्रायकारणमेकादशान्ते व्याख्यास्यते । देवमोहिता एव वृष्ण्यादयो यदुर्नित्यभूतास्तु द्वारकायामेव प्राकृतिकलोकालक्षतया तस्थुः । देवाश्च ते मोहिताश्चेति वा ॥ २४ ॥

गावो गाः बहुगुणाः पयःशीलादिमतीः ॥ २५ ॥

वृत्तिकरीं जीविकापर्य्याप्तां भगवतेऽर्पणं यत्र तत् यथास्यात्तथा गोविप्रार्थां असवो येषां ते इति तेषां धार्मिकत्वं दृढीकृत्य भगवदिच्छाधीनसंहारत्वं व्यञ्जितं । भगवदिच्छा च ब्राह्मणा न कोपनीया इति लोकप्रवर्त्तना नित्यभूतेभ्यो यादवेभ्यो देवांशविभाजना तेषां तन्मिषेण स्वस्य पदमापणा स्वीयषष्ठैश्वर्यद्योतना । स्वभक्ति भक्तधामलीलापरिकरादि माहात्म्यगोपनेन बहिर्मुखलोकप्रतारणा स्वभक्तजनानुरागविस्तारणाद्या इति ॥ २६ ॥ २७ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
तृतीयोऽयं तृतीयेऽत्र सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

क्षणदयाराऽयादत्तः क्षणः अपसरोयासांस्त्रीणांतासुक्षणसौहृदं यस्यसः ॥ २१ ॥

गृहमेधेषुगृहधर्मेषुयोगेषुकामभोगसाधनेषु ॥ २२ ॥

यदास्वाधीनस्यश्रीकृष्णस्यस्वाधीनेषु विरागोजातः तदायोगेन हेयोपादेयविवेकेनयोगेश्वरंश्रीकृष्णमनुव्रतः दैवाधीनः कर्मवश्यः कः दैवाधीनेषुस्वकृतकर्मफलेषुअनित्येषुकामेषुकाम्यंतेइतिकामाःगृहादिपदार्थास्तेषुविस्रंभेतविश्वासंप्रीतिमितियावत् कुर्यात् ॥ २३ ॥ २४ २५

गाःबहुगुणाः गावःताः २६ २७

श्रीमच्छुकदेव कृत सिद्धांतप्रदीपः ।

भगवदर्पणंयथास्यात्तथादत्वा गांविप्रार्थंअसवोयेषांतेतेभ्योविप्रेभ्यः प्रणेमुः २८

इतिश्रीमद्भागवतसिद्धांतप्रदीपेतृतीयस्कंधीये तृतीयाध्यायार्थप्रकाशः ३

---

भाषाटीका

या लोक को और वा लोक को और याद वों को अत्यन्त रमण करावत जिहें रात्रिनें क्षण मात्र सुख दियो है ऐसी स्त्रियों में क्षणिक प्रीति वाले भगवान् श्री कृष्ण जी रमण करते भये ॥ २१ ॥

बहुत वर्ष पर्यंत रमण करते २ तिन श्रीकृष्णजी को गृहस्थाश्रम में वैराग्य होतो भयो २२

जोकि अपने अधीन भी कामों में स्वतंत्र परमेश्वर को वैराग्य हुवा तो जिनका काम पराधीन है और आप भी परके आधीन उन में कौन ऐसा है कि योगेश्वर भगवान को भजन करता हुआ देवाधीन कामों में प्रीति करैगा २३

कोई समय द्वारकापुरी मे क्रीडा करते यदुभोजवासीनके वालको करके कोप कराये भये भगवानकी इच्छा के अनुकूल मुनिलोग शाप देते भये २४

ता पीछे कछुक महीने में वृष्णि भोज अंधकादिक प्रसन्न होय रथ पर बैठ दैव से विमोहितही के प्रभास क्षेत्र में गये २५

तहां स्नान कर वाही जल सें पितृ ऋषियों का तर्पण कर बहुत गुण वाली गौ ब्राह्मणों को देते भये ॥ २६ ॥

सुवर्ण चांदी शय्या वस्त्र दुशाला पीताम्बरादि मृग चर्म सवारी रथ हाथी कन्या पृथिवी जीविका चलाने हारी वस्तु दान करते भये ॥ ६७ ॥

बहुत रस युक्त अन्न ब्राह्मणों को दियो और सब भगवत् के समर्पण करते भये गौ ब्राह्मण के अर्थ देने वाले यादव भूमि में मस्तक से प्रणाम करते भए ॥ २८ ॥

भागवत तृतीयस्कंधका तृतीयाध्याय समाप्त

---

## इति तृतीयस्कन्धे तृतीयोऽध्यायः ॥ ३ ॥

# चतुर्थोऽध्यायः ।

## श्रीउद्धव उवाच ।

अथ ते तदनुज्ञाता भुक्त्वा पीत्वाच वारुणीं ।
तया विभ्रंशितज्ञाना दुरुक्तैर्मर्स्म पस्पृशुः ॥ १ ॥
तेषां मैरेयदोषेण विषमीकृतचेतसाम् ।
निम्लोचति रवावासीद्वेणूनामिव मर्दनम् ॥ २ ॥
भगवान् स्वात्ममायाया गतिं तामवलोक्य सः ।
सरस्वतीमुपस्पृश्य वृक्षमूल उपाविशत् ॥ ३ ॥
अहञ्चोक्तो भगवता प्रपन्नार्त्तिहरेण ह ।
वदरीं त्वं प्रयाहीति स्वकुलं संजिहीर्षुणा ॥ ४ ॥

---

### श्रीधरस्वामिकृत भावार्थदीपिका ॥

चतुर्थे वन्धुनिधनं श्रुत्वात्मज्ञानलब्धये ।
उद्धवस्योपदेशेन क्षत्ता मैत्रेयमागमत् ॥ ० ॥

तैर्ब्राह्मणैरनुज्ञाताः वारुणीं पैष्टीं मदिराम् ॥ १ ॥

वारुण्येव मैरेयं तस्य दोषेण रवौ निम्लोचति अस्तं गच्छति मर्द्दनं कदनम् ॥ २ ॥

उपस्पृश्य सरस्वत्यां आचम्य ॥ ३ ॥

अहञ्चोक्तः पूर्वमेव द्वारकायाम् ॥ ४ ॥

---

### श्रीराधारमणदासगोस्वामि विरचित दीपिन्याख्य तट्टिप्पणी

तयावारुण्या उपलक्षण मात्रया भगवतैव विभ्रंशितंज्ञानंयेषां ते ॥ १ ॥ २ ॥

स्वात्ममायाया इन्द्रजालवत्स्वाचिंत्येच्छा शक्त्यागतिर्वृत्तिस्तत प्रपञ्चाप्तिरोधान लक्षणां मौशललीलाम् ॥ ३ ॥

चकारोत्रस्वद्वाराज्ञानशिक्षा लक्षणं लीलांतरंसमुच्चिनो तिवदरी प्रयाणाज्ञायांप्रयोजनंतुअस्माल्लोकादुपरतइत्यादिकंज्ञेयम् ॥ ४ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका .

अथस्नानदानाद्यनंतरंतेयदवः तदनुज्ञाताः विप्रैरनुज्ञाताः भुक्त्वा-वारुणींपैष्टींमदिरांपीत्वातयावारुण्यैवविभ्रंसितज्ञानाः विभ्रष्टस्व-परविज्ञानाः संतोदुरुक्तैः मर्मस्थानानिपस्पृशुः ॥ १ ॥

ततः मेरेयस्यमद्यस्यदोषेणमदेनविषमीकृतानिविभ्रंशितानिचे-तांसियेषांतेषांयदूनांरवौसूर्येनिम्लोचत्यस्तंच्छतिसतिवेणूनामिवमर्द नंपरस्परसघर्षणमासित् ॥ २ ॥

### श्रीमद्वीरराघवाचार्य कृत भागवतचंद्रचंद्रिका

भगवाँस्त्विातिसभगवानात्मनोमायायाः प्राकृतसंकल्पस्यगतिं-फलरूपांतांस्वकुलसंहृतिमवलोक्यसरस्वतीमुपस्पृश्यसरस्वत्यांस्न-ात्वावृक्षमूलंअश्वत्थवृक्षमूलमुपाविशत्प्राविशत् ॥ ३ ॥

अहमितिप्रपन्नार्त्तिहरेणस्वकुलंसंजिहीर्षुणाभगवतात्वंवदरिकाश्रमंप्रतिप्रयाहिगछेत्युक्तोहम् ॥ ४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

अथतदनुज्ञातास्तैर्विप्रैर्भोजनायानुज्ञाताः तयावारुण्याविभ्रंशितं स्वः परइतिज्ञानंयेषांतेतथोक्ताः पस्पृशुस्ताडितवंतः स्पृशउपतापे ॥ १ ॥

मैरेयदोषेणमैरेयाख्यमद्यपानदोषेण रवावादित्येनिम्लोचति अस्तंगच्छतिसतिआसीत् विमर्दनंविनाशलक्षणः कलहोऽन्यो-न्यसंघर्षलक्षणः ॥ २ ॥ तदाभगवताकिमकारीतितत्राह भगवा-निति आत्ममायायाआत्मसामर्थ्यस्यगतिमवलोक्य * पूर्वमेवेतिशेषः तत्तद्योग्यतयातत्तद्वस्तुषुप्राकट्येनयावर्ततेतां ज्ञात्वाकतिपयैर्वर्षैः पूर्वमेवजनार्दनः मौसलंज्ञानसंतत्याउद्धवंवदरींनयदिति नयदनैषीत् ॥ ३ ॥

संक्षिप्योक्तंविवेचयति अहंचेति संजिहीर्षुणासंहर्तुकामेन हे-त्यनेनतज्ज्ञानंतत्रविस्तीर्यपुनर्द्वारवतमिगादितिवचनात् स्वर्गारोहणात्पूर्वमपिभगवदाज्ञयावदरीगमनंस्पष्टयति ॥ ४ ॥

---

* स्वर्गारोहणापेक्षयपर्ड्विंशत्यावत्सरेभ्यःपूर्वमित्यर्थः ॥

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

तथा उपलक्षणभूतया भगवतैव विभ्रंशितं ज्ञानं येषां ते ॥१॥२॥ स्वात्ममायाया इति इन्द्रजालवदेव मौसललीला व्यञ्जिता ॥३॥ बदरीं त्वं प्रयाहीति । अत्र अस्माल्लोकादुपरत इत्यादि वक्ष्यति ॥ ४ ॥

---

श्रीमद्वल्लभाचार्यं कृत सुबोधिनी

चतुर्थेह्यधिकारार्थबुद्धिर्भगवतोच्यते पंचधासात्रसंप्रोक्तापंच पर्वाधिकारिणां स्वरूपंचगुणाःप्रोक्ताःफलमत्रनिरूप्यते एतादृशोहिपुरुषेभगवान्नाविशेद्यतः तदैवतद्गताःसर्वेबुध्यंतेनान्यथायथा अतोभगवतःसर्गेहेतुश्चायंनिरूपितः तत्रप्रथमंस्मृत्यात्मिकाबुद्धिर्भगवदिच्छयोत्पन्नेत्याहअथेत्यादिभिःत्रिभिःतामसीराजसीचैवसात्वकीचेतिसाक्रमात्पूर्वमेवतादृशाअपिसर्वदोषविनिर्मुक्ता भगवदिच्छयाश्रमापनोदनंकर्त्तव्यमितितेषांमतिरुत्पन्ना ततः पूर्ववासनयातेषामसद्बुद्धिरुत्पन्नेत्याह अथाभिन्नप्रक्रमेणतेपूर्वोक्ताब्राह्मणैरनुज्ञाताभुक्त्वेत्यत्यंतंपूर्वसंबंधिवारुणीं पीत्वोर्तनिषिद्धाचरणंतस्याःफलमाह तयाविभ्रंशितज्ञानाइति सर्वंहिसाधनंव्यर्थंयदिबुद्धिर्विनश्यति अकर्त्तव्यंतदानास्तिमहतामपिनिश्चितं तस्मादेवंनकर्त्तव्यमितिबुद्धिरिहोच्यते अतोत्रशास्त्रेसर्वत्रह्यप्रामाण्यंस्मृतेस्तदा बुद्धिभ्रंशफलमाह दुरुक्तैर्मर्मपस्पृशुरिति दुरुक्तानिदुर्वाक्यानिअपकर्षबोधकानियस्ययत्रोचितंतत्प्रमादाज्जातंमर्मेत्युच्यते अपकर्षवाक्यैस्तादृशमुक्तवंतइत्यर्थःज्ञानंचशास्त्रेस्थिरं नश्चित्क्षणावस्थायिघ्राणेनगंधवन्मनसातस्यग्रहणे--स्फुरणंतद्भगवतिनित्यमेव अन्येषांतुजन्यंशरीरस्यान्नमिवलोकशास्त्रादिकंतस्यावश्यकं इंद्रियाणिजनकान्यभ्यासोदीर्घहेतुःतच्चात्रिविधंसात्विकादिविभेदेनदेशादयश्चपट्पदार्था निषिद्धास्तस्यनाशकाःविहितास्त्वंतःकरणशुद्धिहेतवःपोषकाः तत्रजीवस्यप्रयत्नेन स्थापनंतिष्ठतिगृहेपदार्थाइवशब्दाविषयाश्चोद्दीपकाः जनितस्या जनितस्योत्पादनएवसामग्रीरूपास्तदेवबुद्धिचेतनादि वाच्यं तदेकंभगवद्रूपंतस्योत्पत्तिरनेकधाआनंत्येपिदशधातन्निरूप्यते लीलावदाश्रयंरूपंमुख्यमविकृतंसर्वात्मभूतंचतदेवप्रकाशकधर्मरुपेणाविर्भूतमविकृतमेवभगवद्गुणत्वेनोच्यते तदेवपुनःसृष्ट्यर्थंवेदशरीरंगृह्णाति तदपिरूपंविराडिवानंतंपश्चाद्विराजतामप्यापद्यते शरीरविशिष्टंतदाव्यष्टयइवविकृताःसर्वेशब्दाभवंति तदेवपुनःप्रमातारंप्रमेयंचाश्रयते तत्रप्रमेयाश्रयंप्रमेयोत्पादनमेवपरं प्रमेयरूपतयैकविधमितितदेकमेवोच्यते प्रमातरितुपंचधातद्भवति अंतःकरणेंद्रियाश्रयणात् अंतःकरणेतुचतुर्द्धाइंद्रियेत्वेकधाविषयास्तुविशेषयाश्रयज्ञानाद्विगुणतया पुष्टाभवंति तत्रमनसाजनितंसंशयात्मकंभवतिविशेषास्त्वत्रापिविपय कृताःअहंकारोबुध्यासहितः स्वापंपश्यतीतिस्वप्नज्ञानमहंकाराश्रितंशरीराभिमानिनस्त्वहंकारेणकृत्स्नबुद्ध्याश्रया चित्तत्वान्मानमेवसुषुप्तौपश्यत्यन्यदालिनमतोनिर्विषयिकं ज्ञानंचित्ताश्रितंतस्यचस्थितिर्निरूपिता शस्त्रादिभिरिति नाशोपिविशेषेणनिरूप्यते पूर्वोक्तमर्यादाभावएवसामान्यतो नाशस्तत्रहेतुर्मायाज्ञानस्यैवातिरस्कारिणी तस्याःषडाश्रयभूताः कालादय कलिर्मंगधमद्यादिदैत्यशाक्तनिषिद्धःक्रियाःतेयथायथंस्वरूपतःस्थानतो गुणतश्चज्ञानस्यांशतोनाशंकुर्वंति येषुज्ञानंजायतेतेष्वेवनश्यति अथोत्रमदिरयातेषांयत्ज्ञानंपूर्वास्थितंप्रमातरिबुद्ध्याश्रयेतदधस्तात्पातित मितिविभ्रंशितज्ञानत्वंमाययाचाविद्यमानाःपदार्थाबुद्धावेवोपस्थाप्यंतेताद्विषयसहकृतंबुध्याश्रितंज्ञानंस्मृतिरूपंभवति तयाकृतानितद्विषयसंबंधीनिवाक्यानि दुरुक्ता

श्रीमद्वल्लभाचार्य्यंकृत सुबोधिनी ॥

निभवंतितानिचविषयसहितानिविषयाश्रयाधारंमर्मस्पृशंतिमृङ्प्राणत्यागइतिधातोरावश्यकमरणार्थाद्भर्मावेकृतेडम्प्रत्ययेकृतेमर्मनिभवतितत्राप्यलोप्याप्रातःशब्दकृतोपिमहर्तीं व्यथांजनयतिमत्तत्वात्स्पर्शमात्रमुक्तंनत्वाघातः ॥ १ ॥

एवंस्वरुपविस्मरणपूर्वकाविपरीतपदार्थस्मरणैः शब्दस्पर्शेणान्तोभंजनयित्वाशंखादिभिरपिस्पर्शो कृतवंतः इत्याहतेषामितिमैरेयेणाद्रव्येणपूर्वज्ञाननाशपूर्वकाविपरीतज्ञानजननलक्षण दोषेण स्वस्थापिचेतमात्मिकाबुद्धिः स्नेहेनातिसमापिविषमाजाताविषयाश्रितमपिज्ञानंतेजःप्रकारापेक्षमपितदपिनेंद्रियपोषकंजातामित्यभिप्रायेणाहानम्लोचतिरवावासीदिति सर्वत्रदोषःसमानोजातइत्याह वेणूनामिवेतिमर्दनंनाशः ॥ २ ॥

एवंतेषांपूर्वस्थितिंसाधनसाध्यभावेनतिरोभावंप्रापयित्वातस्याप्यनीश्वरत्वंतिरोभावयितुंसाधनंसाध्यंचाहभगवानिति अनैश्वर्यंतिरोभावेहेतुः स्वस्यचआत्माचिदंशस्तस्यमायागतिप्रवृत्तिकार्यकारणमितियावत्तांपूर्वोक्तामवलोक्यंत्युत्तरत्रसाधनंसद्दतितदर्थंप्रवृत्तःअनैश्वर्यंतिरोभावाद्वयेनभवतिवेदैर्वैष्णवैश्च तदुभयंकृतवानित्याह सरस्वतीमुपस्पृश्यवृक्षमूलमुपाविशदिति सरस्वतीवेदात्मिकासैवनदी तदुपस्पर्शनस्नानमनेनवेदेषुस्वात्मानंस्थापितवानित्युक्तंद्वितीयमाह वृक्षमूलमिति वैष्णवोवैवनस्पतयइतिश्रुतेःतस्यमूलंयनरुपेणविष्णुनातेजनितास्तद्बीजात्मकंमूलं तत्रविष्णोर्वीजात्मकेऽर्थांशंस्थापितवानित्यर्थःएवमैश्वर्यादिगुणानेकत्रस्वरूपंचवकृत्वास्थापयित्वाऽश्रयाभावेनानैश्वर्यंनिराकृतवानित्यर्थः ननुभगवान्बीजेकिमितिस्थापितवान्वैकुन्ठाहस्थापनीयं तत्राह उपाविशदिति उपसमीपे वैकुंठस्थितेनसर्गलीलाकर्त्तुमशक्याअतस्तत्समीपएवआसर्वतः सर्वभावेन, तत्रप्रविष्टासृष्ट्यर्थमेतदर्थमेवप्रथमतइयं कथाकथितायथाभगवानैश्वर्येणवीजेप्रविशत्ययमेवचाधिकारोमाहात्म्यंस्वरूपंलीलाविषयश्चरित्रमिंद्रियाणिस्वांशेनकारणप्रवेशोबुद्धिरितिबीजरूपोयंसर्गः विष्णोर्जातावैष्णवाःविष्णोरिमेइतिच अतोभगवान्स्वयंवृक्षमूलउपविश्यसृष्टिकारणवीजमुपपाद्यमोक्षकारणबीजमप्युपपादयितुंवैष्णवमुद्धवंपूर्वमेवविचारितवान् नत्वलीलासुप्रथमामयाकर्त्तव्याअंत्तिमात्वनेन मध्यमातुकालादिभिरिति उद्धवस्यचकामनास्वधामनयमामपीतितद्यदा यत्रतिष्ठतितत्स्वधामइदानींबीजात्मकंकारणरूपंविष्णोस्वयंस्थित--स्तंचकारणरूपेऽमृतवदर्यात्मकवदर्याश्रमानंदानुभवार्थंमोक्षसाधनतपःसन्निधानेतिष्ठतुइतिविचारितवान् तस्यापिपूर्वस्थितिविनाशस्तत्रभवतीतिविनाशस्थानेप्रभासेसमागच्छन्निति चेष्टांकृतवानतोद्वितीयंबीजंनिरूपयन्निश्चयरूपांबुद्धिमेकोनविंशतिश्लोकैराह अष्टादशविद्यास्थानातिक्रमंहिबुद्धिर्निश्चयमवलंबतेतत्रसप्तांगानिमीमांसयासहितानिद्वादशात्मास्वतंत्रतयाप्रकाशकत्वादेनैनवपूर्वावस्थागच्छतीतिज्ञापितंमुक्तौतुकारणस्यावक्तव्यत्वादिमामेवलीलामन्यथोक्तवान् ॥३॥

बीजात्फलेविस्ताराभवतीतिचातःप्रथमंभगवदुक्तमाह अहंचोक्त इति स्वकीयाअन्येपिप्रभासगमनार्थमुक्ताः अहंत्वोक्तोवदरींत्वंप्रयाहीति चकारात्प्रभासेगत्वेतिहृदयंभगवतेतिकार्यसिद्ध्यावश्यकतातद्वाक्येसूचितानत्युक्तिमित्येवमुक्तवानित्याशंक्याह प्रपन्नानामार्त्तिसंक्लेशस्टैष्टासर्वैश्वर्यदानेनदूरीकरिष्यामीतितथोक्तवान्इत्याश्रयेविपरीतेनसाधनेनसाध्यमितिवदर्यप्यरण्यात्मिकाफलार्थममृतरूपाचवस्याऽमृतस्यदरीवदरीत्वंप्रयाहीतिविशेषतयानिर्दिष्टंप्रकर्षेणागमनपदार्थविस्मरणात्अन्यत्तुस्वकुलंसमूहःतेस्टष्टावेवापयुज्यंत्तेऽतः स्वार्थसम्पक्जिहीर्षुः अन्यथाऽनंतविधास्टष्टिर्नरुपात् ॥ ४ ॥

अथापि तदभिप्रेतं जानन्नहमरिन्दम ।
पृष्ठतोऽन्वगमं भर्त्तुः पादविश्लेषणाक्षमः ॥ ५ ॥
अद्राक्षमेकमासीनं विचिन्वन् दयितं पतिं ।
श्रीनिकेतं सरस्वत्यां कृतकेतमकेतनम् ॥ ६ ॥
श्यामावदातं विरजं प्रशान्तारुणलोचनम् ।
दोर्भिश्चतुर्भिर्विदितं पीतकौशाम्बरेण च ॥ ७ ॥
वाम ऊरावधिश्रित्य दक्षिणाङ्घ्रि सरोरुहम् ।
अपाश्रितार्भकाश्वत्थमकृशं त्यक्तपिप्पलम् ॥ ८ ॥
तस्मिन् महाभागवतो द्वैपायनसुहृत्सखा ।
लोकाननुचरन् सिद्ध आससाद यदृच्छया ॥ ९ ॥
तस्यानुरक्तस्य मुनेर्मुकुन्दः प्रमोदभावानतकन्धरस्य ।
आशृण्वतोमामनुरागहाससमीक्षया विश्रमयन्नुवाच ॥ १० ॥

---

श्रीमद्विश्वनाथचक्रवर्ति कृत सारार्थदर्शिनी ॥

अप्राकट्यं हरेः श्रुत्वा स्वकुलस्योद्धवाच्छ्रुसन् ।
चतुर्थे स्वोपदेशार्थं मैत्रेयं विदुरोऽन्वगात् ॥ ० ॥

तैर्ब्राह्मणैस्तेन कृष्णेन वा अनुज्ञाताः मर्मपरस्परमिति शेषः ॥ १ ॥

वारुण्येव मैरेयं तस्य दोषेण निम्लोचति अस्तं गच्छति सति मर्द्दनं नाशः ॥ २ ॥

ननु वात्सल्यपारावारो भगवान् कृतवरपुत्रपौत्रादिपरमपालनः प्रद्युम्नादिवधं कथं साक्षाद्दृष्टवानित्यत आह भगवानिति । मायाया गतिं चेष्टां प्रद्युम्नाद्या यादवाःपरस्परवधेन सद्य एव नाशं प्रापुरिति सर्वलोकप्रत्यायनरूपां स्वात्मेति नहि यदीया माया तमपि सा मोहयेदित्यर्थः । मायायाः स्वाश्रयाव्यामोहनस्वभावत्वात् ततश्च भगवतात्वेवं विलोकितं नित्यभूता लीलापरिकराः प्रद्युम्नादयो यादवा द्वारकायामेव स्थितास्तत्तत्प्रविष्टचरा देवास्तु तत्तदङ्गेभ्यः पृथक् कृतास्तत्तद्रूपेण, प्रभासमानीता भुक्त्वा पीत्वा स्वलब्धानुज्ञाः सुखेन दिवं ययुरिति । अतएव पूर्वपद्ये तदनुज्ञाता इति दिवं गन्तुमित्येव तत्त्वं । अत्र रामप्रद्युम्नानिरुद्धानां भगवद्व्यूहत्वात्, एते हि यादवाः सर्वे मद्गणा एव भामिनि । सर्वदा मत्प्रिया देवि मत्तुल्य गुणशालिन इति यथा सौमित्रिभरतौ यथा सङ्कर्षणादयः । तथा तेनैव जायन्ते निजलोकाद्यदृच्छयेत्यादि पाद्मोक्तेः । देवानाञ्च हितार्थाय वयं प्राप्ता मनुष्यतामिति । हरिवंशे अक्रूरोक्तेश्च । यदवानां नित्यलीलापरिकरत्वात् तेषु शाम्बादिषु प्रविष्टानां गुहादीनां देवानामप्यधिकारमध्य एव नाशानर्हात् मौसललीलेऽयं मायिक्येव मायिक्यपि सर्वमायिकसृष्ट्यभावेऽपि श्रीकृष्णलीलान्तर्वर्त्तित्वादचिन्त्ययोगमायानुमोदिता नित्यैव ज्ञेया ॥ ३ ॥

अहश्चोक्तः पूर्वमेव द्वारकायां अहश्चेति । प्रकाशभेदेन स्वसङ्गे अ[illegible] ग[illegible]न इ[illegible] क[illegible]श्चेति स[illegible]स्वत्यां [illegible] प्रयोजि[illegible] उद्धवः तत्र हेतुः प्रथमे पक्षे प्रपन्नस्य मम आर्त्तिं स्वविरहपीड़ां हर्त्तीति तेन

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

द्वितीये अस्माल्लोकादुपरत इति वक्ष्यमाणयुक्त्या प्रपन्नानां बदर्य्याश्रमवासिनां स्वांशनरनारायणादीनां आर्त्तिं स्वचरितं भक्तिज्ञानवैराग्यादिश्रवणोत्कण्ठारूपं हरतीति तेन ॥ ४ ॥

---

श्रीमच्छुकदेव कृत सिद्धान्तप्रदीपः

तदनुज्ञाताविप्राद्युमोदिताः १
मैरेयदोषेणवारुण्याव्यामोहेन २
भगवान्स्वात्मनः मायायाःसंकल्पस्यतांपूर्वंत्रसंकल्पितांगतिंफलं यदुकुलसंहारम् अवलोक्य सरस्वतीमुपस्पृश्यतस्यामाचम्य ३
बदरींत्वंप्रयाहीति द्वारवत्यामहमुक्तः ४ ॥ ५

---

भाषाटीका ॥

उद्धवजीवोले कि-

स्नान दानादि के पीछें वे यादव लोग ब्राह्मणों की आज्ञा से भोजनकिये पीछें मदिरापानकर वासों नष्ट विवेक होकर दुर्वाक्यों से मर्मस्थान को स्पर्श करतभये ॥ १ ॥

सूर्यअस्तभये पीछें मदिरा दोष से बिषमचित्तवारे यादवन को वांसों केनांई संघर्षण होतो भयो ॥ २ ॥

भगवान् अपनी माया की गति को देखकें सरस्वती में आचमनकर अश्वत्थ वृक्षकी मूलपर विराजते भये ॥ ३ ॥

शरणागतों की रक्षा करनेंवारे अपने कुल के संहार की इच्छा वारे भगवानने तुम बदरिकाश्रम जाव एसी मोकूं आज्ञा दीनी ॥ ४ ॥

---

श्रीधरस्वामिकृत भावार्थ दीपिका ॥

तदभिप्रेतं कुलसंहारादिकम् ॥ ५ ॥

कृतकेतं कृतवासं अकेतनं अनाश्रयम् ॥ ६ ॥

विरजं विरजसं शुद्धसत्वमयं विदितं लक्षितं । कौशं कौशेयम् ॥ ७ ॥

अधिश्रित्य उपरिस्थापयित्वा अपाश्रितः पृष्ठतोऽवष्टब्धः अर्भको बालः कोमलोऽश्वत्थो येन तं । त्यक्तं पिप्पलं विषयसुखं येन तं । तथाप्यकृशं आनन्दपूर्णम् ॥ ८ ॥

द्वैपायनः सुहृद् सखा च यस्य स्वगुरुपुत्रत्वात् पराशरशिष्यो मैत्रेय इत्यर्थः ॥ ९ ॥

प्रमोदेन भावेन च आनता कन्धरा यस्य । प्रमोदभारानतेति पाठे प्रमोदस्य भारेण अनुरागेण हासो यस्यां तया समीक्षया विश्रमयन् विगतश्रमं कुर्वन् ॥ १० ॥

---

श्रीराधारमणदासगोस्वामि विरचित
दीपिन्याख्य तट्टिप्पणी ।

अथापि तथोक्त्याऽऽज्ञप्तत्वेऽपि पृष्ठतोन्वगनेहेतुः पादविश्लेषणाक्षम इति ॥ ५ ॥

अद्राक्षमिति त्रिकम् अनाश्रयं सर्वा धारत्वादा श्रयान्तरविरहितम् शुद्धसत्वमयं सच्चिद्वपुषम् लक्षितं परमेश्वर त्वेनज्ञातं यद्यपि तत्र न कदाचि द्विषय सुखानुभवस्तस्य प्राकृतस्वे तत्र स्पर्शानौचित्यात् न यत्र मायेत्याद्युक्तेस्तथापि प्रकट लीलायाः प्रपंचा प्रपञ्चमिश्रत्वात् अज्ञानांयत्तदिवभाति तदपित्यक्तं येनवैराग्यलीलाप्रदर्शनात् त्यक्तविषयसुखोहि कृशो भवति प्रकृति जेलोके तथाप्य कृशंस्वानन्द पूर्णत्वात् ॥ ६ ॥ ७ ॥ ८ ॥

तस्मिन् सरस्वतीतीरे अत्रात्यंततिरस्कृतवाच्यध्वनिन्यायेन मेयार्थलक्षणया मैत्रेयाभिधान मात्रस्यविवक्षितत्वादित्यर्थं इत्युक्तम् सखा इतिकचित्पाठस्तत्रटजभावश्चार्षः सिद्धः प्राप्तयथावद्भगवत्साक्षात्कारत्वंनजीवन्मुक्तः यदृच्छयाकेनापिभाग्योदयेन ॥ ९ ॥

प्रमोदेनदर्शनोत्थानन्द भारेण भावेन दास्य भावेनच प्रमोदभारेणेति पाठन्तरम् आशृण्वतोपिमामेवोवाचेति स्वास्मिन्ननुग्राह्यत्वातिशयस्तस्माद्दोपनमुद्राचाभिप्रेता श्रमोऽत्रविरहखेदोत्थैवव्ययम् ॥ १० ॥

श्रीमदुद्धवस्यनि त्यपार्षदत्वेपि वसोइति सम्बोधनमेकांशेनाभेदविवक्षया अत एव तत्साधनंप्राप्तिसाधनंदास्यामीत्युक्तम् ॥ ११ ॥

साधो इत्यत्र भावहीति पाठः प्रामादिकः भाव शब्दस्य जन्मार्थे ऽप्रसिद्धेःतस्मान्निर्द्धारणशक्त्याक्षिप्तोयंभवशब्दःभवस्यचरमत्वोक्तिरंशेनसहाभेदविवक्षया एत देकान्तभक्तयेकान्तेदर्शनं ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्य्य कृत भागवतचन्द्रचन्द्रिका ॥

तथाप्येवमुक्तोप्यहंतदभिप्रेतंकुलसंहारादिकंजानन् हे अरिंदमहेविदुरभर्तुर्भगवतःपादविश्लेषणोऽक्षमःतमेवपृष्टतोन्वगममन्ववर्त्तं॥५॥

एवमनुगच्छन्नहंतमेवविचिन्वन्मनसाविचिंतयन्नद्राक्षंचक्षुषाचदृष्टवानस्मि कथंभूतंप्रकृंअसहायंदयितंनिरतिशयप्रियतमंपतिंनिरुपाधिक



श्रीमद्वीरराघवाचार्यकृत भागवतचंद्रचंद्रिका

शेषियां श्रीनिकेतंश्रीनिवासंसरस्वत्यां सरस्वतीतीरे कृतकेतंकृतनिवासंस्वतअकेतनमनाश्रयं तस्यैवसर्वाश्रयत्वात् इतिभावः ॥ ६ ॥

श्यामावदातंनीलश्वेतवर्णंविरजंनिर्मलंप्रसन्नेऽरुणेलोचनेयस्य तं चतुर्भिर्दोर्भिर्भुजैः पीतकौशांबरेणचकौशंकौशेयं पीतकौशेयांबरेणचविदितंलक्षितम् ॥ ७ ॥

दक्षिणपादसरोरुहंवामेऊरावधिश्रित्यउपरिस्थापयित्वाउपाश्रितः पृष्ठतोवष्टब्धः अर्भकोबालः कोमलोऽश्वत्थोयेनतं त्यक्तपिप्पलंत्यक्तकर्मफलं अतएवाकृशंकर्मायत्तकार्श्यस्थौल्याधिव्याध्यादिरहितम् ॥ ८ ॥

तस्मिन्निति तस्मिन्भगवत्संनिधौद्वैपायनसुहृत्सखः द्वैपायनोव्यासः तस्यसुहृन्मित्रंसखाचसौहार्दसहाध्येतृत्वंचोभयमपिविवक्षितंमहाभागवतःभागवताग्रगण्यःअतएवसिद्धःकृतकृत्यःमैत्रेयःलोकाननु चरन्यदृच्छयाभगवदिच्छयाआससादागतोभूदित्यर्थः ॥ ९ ॥

तस्येतिप्रमोदेनभगवद्दर्शनजनितसंतोषेणभावेनभक्त्याआनताकंधरायस्यअनुरक्तस्यभगवत्यनुरागयुक्तस्यतस्यमुनेर्मैत्रयस्याशृण्वतःसतःमुकुंदोभगवाननुरागहाससमीक्षयाऽनुरागहासान्वितावलोकनेन विश्रमयन्श्रमहानिंजनयन्मांप्रत्युवाच ॥ १० ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

हे अरिंदमाविदुर अथापिपूर्वादिष्टोऽहंपुनःस्वर्गारोहणकालेभर्तुःपृष्ठतोऽन्वगममनुगमिष्यइत्यन्वयः चर्वितचर्वणवत् अनुगमनंनिष्प्रयोजनंनेत्याह तदभिप्रेतिमिति तस्यकृष्णस्याभिप्रेतंज्ञानोपदेशलक्षणहार्दं जानन् प्रयोजनांतरंचास्तीतिध्वनयति पादेति तदुक्तं पूर्वमेवोपादिष्टोपिहरिणाज्ञानमुद्धवः स्वर्गारोहणकालेतुपुनः पप्रच्छकेशवमित्यादि ॥ ५ ॥

ननुअनुगमनवचनेनमौसलावस्थायामनवस्थानंप्रतीयते तथाचतद्दर्शनाभावेनतज्ज्ञानोपदेशासंभवः स्यादित्युक्तमयुक्तमितितत्राह अद्राक्षमिति विचिन्वन्मार्गमाणः दयितंप्रेष्ठं पतिमात्मज्ञानदानेनपातारं सरस्वत्यांतत्तीरे कृतकेतंकृतनिवासंअकेतनमनन्याधारं ॥ ६ ॥

श्यामश्चायमवदातश्चनिर्मलश्चेतिश्यामावदातस्तं श्यामायांरात्र्यामप्यवदातमरुणंसूर्यवत्प्रकाशमानमित्यर्थः अवदातः सितेरुणइत्यभिधानाद्योग्यताभेदात्सितोरुणश्चाधिकारिणांभेदात्प्रतीयतइतिद्योतनायतथोक्तमितिवा प्रशांतेस्तिमितेअरुणेलोचनेयस्यसतथातं कृमिकोशनरचितंकौशेयंतेनांबरेणचविदितंविशेषितं कौशेयंकृमिकोशोत्थमित्याभिधानं छंदोभंगभयात्भ्रंशितं अण्प्रत्ययाद्वा ॥ ७ ॥

अपाश्रिताभंकावस्थमवतारदशायांयाऽवस्थातामाश्रितं अकृशंपूर्णं त्यक्तपिप्पलं त्यक्तकर्मफलं योगाद्वोत्सृष्टाश्वत्थमूलं ॥ ८ ॥

तस्मिन्नवसरेद्वैपायनस्यवेदव्यासस्यसुहृत्सखाचभूम्यादिलोकाननुचरन्पर्यटन्सिद्धोज्ञानीमैत्रेयोयदृच्छयाभगवदिच्छयाऽऽससादहरिमितिशेषः ॥ ९ ॥

हरेरनुग्रहातिशयसूचनायमुनेराशृण्वतःसतइत्युक्तं सम्यगनुरागहासाभ्यांस्नेहमंदस्मिताभ्यांसहितयासमीचीनयाकटाक्षेक्षयाविश्रमयन्संसारक्लेशंपरिहृत्यानंदंजनयन्समभेदसमीचीनइतियादवः ॥ १० ॥

### श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

अद्राक्षमिति त्रिकम् ॥ ६—७ ॥

यदृच्छया केनापि भाग्योदयेन द्वैपायनसुहृत्सखेति दज्ञभाव आर्यः ॥ ६ ॥

तस्य तथाभूतस्य आश्रृण्वतोऽपि मामेवोवाचेति । ततोऽपि स्व-स्यानुग्राह्यत्वं व्यञ्जितं । तथाच वक्ष्यते स्वयं भगवता अस्माल्लोका-दुपरते इत्यादि द्वाभ्यां । अतएव षष्ठी । अतएव तस्याश्रृण्वत इति तद्वचने किञ्चिद्गोपनमुद्रा च दर्शिता ॥ १० ॥

---

### श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

यद्यपिभगवतामुखतएवमुक्तंतथापिप्रभासेसमागत्यगंतव्यमिति हृदयाभिप्रायःअन्यथापूर्वावस्थापरित्यागोनस्यात्तदाह अथापीतितद भिप्रेतंपूर्वोक्तंजानन्नहामितिउपदेशज्ञानेनसर्वज्ञतायांजातत्वाद्भगवत्कृप यातदपिज्ञानंपरंमैयवअरिंदमेतिसंबोधनमभिप्रायज्ञानार्थं ॥ राजनी तावपिप्रभोरभिप्रेतमपिकर्त्तव्यंनेतावतावाक्योल्लंघनंतथापिसहनगतं प्रथमतयैव बदरिकाश्रमयात्राकृतागिरिदुर्गपर्यंतंसमागत्यपश्चा— त्प्रभासगतइतिवक्ष्यते । अभिप्रायस्यसंदेहेपिपूर्वावस्थायाविद्यमान त्वात्स्नेहादपिगतइत्याह ॥ पादयोर्विश्लेषणंवियोगःपूर्वावस्था-याःपरित्यागस्तत्राहमच्युमः ॥ ५ ॥

अभिप्रेतोर्थस्तर्कितोपिप्राप्तोजातइत्याह ॥ अद्राक्षमेकमिति ॥ तदाभगवतः ऐश्वर्यस्यतत्प्रादुर्भूतत्वात्षोडशापिकलास्तदाभगव-त्तिदृष्टाः संपूर्णोभवति ॥ अतोत्रभगवतः शोडषविशेषणानि॥एता न्येवगुणोपसंहारेषोडशाधिकरणप्रतिपादितानिएवंसर्वार्थस्यस-र्वगुणविशिष्टस्यसाक्षात्कारोजातइत्यद्राक्षमित्युक्तंब्रह्मसाक्षात्का रोदयपूर्वावस्थापरित्यागात्तत्रप्रथमंभगवतो ममसाधारणोगुणो-यत्सर्वं प्रपंचातीतः सर्वमुपसंहृत्यैकोभवति ॥ कारणरूपश्चभवति-किंचभगवानासीनोभवतिसर्वत्रैवविशेषतोवैष्णवानांसमीपेअव्यग्र त्वात्तयोक्तकार्याभावादुपविष्टएवहिस्टार्ष्टिकरोतीतिचज्ञापितंअनेन लोकेप्ववयवोपसंहारश्चज्ञापितःभगवतोपिदर्शनंभगवदिच्छयैवजात मित्याह ॥ विचिन्वान्निति ॥ सर्वत्रसरस्वतीतीरेगरुडध्वजादिरथा न्वेषणेनक्वास्तीतिविचारयन्यत्रोपविष्टः स्थितस्तत्रदृष्टइत्यर्थः ॥ अनेनविचारदशायांसर्वभूतस्थितमेकमेवविचारयेत्तदनंतरंसः प्रि-यत्वेनात्मत्वेन पर्यवस्यतिततोपिब्रह्मवित्त्वेब्रह्मात्मभावेजातेपति-त्वेनपर्यवस्यति ॥ अत्तुरस्यापिपुरुषोत्तमः पतिरिति ॥ एवंचतूरूपं प्रमेयेनिरूपितंसाधनफलभेदेन ॥ प्रमाणेतस्यरूपत्रयमाह ॥ अर्थश-ब्दफलानांतत्रप्राधान्यादत्रार्थः श्रीनिकेतः अनेनप्रपंचयज्ञसौभाग्यै-र्युक्तइत्युक्तः सरस्वत्यांकृतकेतनमिति ॥ वेदैकसमधिगम्यता ॥ अ-केतनमितिफलं ॥ सर्वाश्रयराहित्येनस्वरूपस्थितइति ॥ स्वरूपेताह-शस्यवोक्तत्वात् ॥ श्रीवत्सेलक्ष्मीश्चात्रोपविष्टा ॥ सरस्वतीतीरेच शुद्धउपदेशनार्थंस्थितोदृष्टः अनाश्रितत्वेनसर्वहेतुवादाविरोधाश्च परिहृतागृहरथासनाद्यभावश्चएकमेकेनप्रमाणप्रमेयनिर्णयःचतुर्मू तिस्त्रिमूर्तिश्चोक्तः एकः संकर्षणआसीनोवासुदेवः दर्षितःप्रद्यु म्नः पतिरनिरुद्धइतिश्री निकेतोविष्णुरितीतरौब्रह्मशिवौ ॥ ६ ॥

एवंप्रमेयप्रमाणेनिरूप्यफलरूपंभगवंतंपंचरूपमाह श्यामावदा तमिति ॥ श्यामश्चासावबदातश्च ॥ मध्यदिनसवितृमंडलमध्यस इशवन्द्रासतइत्यर्थःआदित्यवर्णंतमसःपरस्तादितिश्रुतेःअनेनसारूप्य रूपामुक्तिरप्युक्ताभवतिविरजंनिर्मलं ॥ व्यापिवैकुंठेरजोभावःअनेन सालोक्यमप्युक्तमउत्पादकसंस्कृतभूताभावश्चतेनसालोक्योपिपुनरु त्पत्तिर्निवारितामुक्त्युपदेष्टारमेनंप्रतितथाविधमात्मानंप्रदर्शयतिफ लत्वाथ ॥ अनेननषोडशकलोयंमनोमयोवेदात्मासूचितःप्रशांतारुण लोचनमिति ॥ प्रकर्षेणशांतेऽरुणेलोचनेयस्यज्ञानशक्तिक्रियाशक्ती लोचनेयस्येत्युक्तं ॥ प्रकर्षः साधनसाहित्यंअनेनसार्ष्टिरुक्ता समानै श्वर्यं ॥ इदमेवहिसामीप्यं ॥ ज्ञानक्रियाशक्तिमत्वस्यैवतथात्वात् । अनेनवेदार्थोप्येतावानेवात्रप्रसिद्धइतिसूचितंदोर्भिश्चतुर्भिर्विदित-मिति ॥ विदितंज्ञानंअनेनसायुज्यमुक्तंउभयोर्बाहुचतुष्टयंज्ञापितमि व ॥ अत्रयत्पदद्वयक्रिययाभक्त्याज्ञानेनचसायुज्यंभवतीतिज्ञापयि-तुंदोर्भिश्चक्रियाभिश्चतुर्भिःपादसेवनादिभिर्विशेषेणविदितंयस्मा दितिसर्वाज्ञाननिवर्तकज्ञानंकालनिवर्तकंवा ॥ अन्यथाचतुर्भुजमित्ये वोक्तंस्यात्प्रकटचतुर्भुजार्थंवा ॥ पीतकौशांबरेणचेति पीतंकौशंकौ शेयंयद्वरंतेनचाविदित । अनेनब्रह्मभावेपिज्ञानमंगामितितदेवावेश-शणमाह ॥ पीतामित्यहंताममताभावःकौशमितिकुशसंबंधिनोयम नियमाद्यः अंबरमित्यवस्थात्रयपरित्यागेननिर्लेपता एतामब्रह्मभा वेज्ञानसाधनानिवैराग्यंचतपश्चैवसमाधिरितिसाधन एकमेवे तन्नप्र त्यकपर्यवसायिचकारउक्तसर्वफलसमुच्चयार्थःसर्वफलरूपोभगवानि त्यर्थः ॥ ७ ॥

एवंफलरूपंनिरूप्यसाधनरूपंचतूरूपंनिरूपयति ॥ वामऊराविति वामऊरौदक्षिणाङ्घ्रिसरोरुहमधिश्रत्यस्थितंदक्षिणमङ्घ्रिसरोरुहं यस्येतिवाभक्तिरनेनसाधनत्वेनोक्तावामामनोहरायेभगवत्प्रतिरूपाः रूपास्तेषुभगवद्भक्तिमार्गः कमलवत्सुन्दरः सर्वोपायेरूश्चस्थापि तः सरोरुहत्वेनप्रेम्णैवतद्गच्छतीतिसूचितं दक्षिणपादेनभक्तिमार्ग त्रीणिविशेषणानीतिसूचितंचातुर्यंदाक्षिण्यादेशः पाषंडाभावएवच-भक्तेचोरूपदेशः कुटुंबस्यभक्तिपरत्वायस्त्रीपुत्रादिस्थानेपिभक्ति-रेवेतिवाअधिश्रयणंपाकार्थंयथासर्वोपयोगिभवतिवैष्णवैःसंस्कृताभ क्तिमार्गःसाधनमिति ॥एवंभक्तिसाधनत्वेननिरूप्यकर्माणिसाधनत्वे ननिरूपयति ॥ अपाश्रिताभंकाश्वत्थमिति ॥

अपाश्रितआश्रितोभंकाश्वत्थोयेन ॥ आश्रितःपश्चादितिवा-अर्भाणांकंसुखंयस्मादुबालकसुखदायी अर्भकरूपः कोमलोऽश्व त्थोवातस्यैवारणीभवनः ॥ सर्वाणिकर्माणितत्साधनान्येवअपा-श्रयपदेनचतत्साधनत्वंनैवकर्मणामपेक्षानततुतद्धफलमप्यपेक्षितमि-तिसूचितम् अपाश्रिताअर्भकायस्मिन्नितिबालाधिकारः कर्मणिसूचि तः अकृशामिति ॥ ज्ञानपूर्णत्वादन्येषांपरिच्छेदरूपत्वात् ॥ अनेनपूर्ण मेवज्ञानसाधनमितिनतुखंडब्रह्मज्ञानानिशारीरकादीनिसर्वेषांभक्ताना मुपसंहृतत्वाद्दौर्बल्यमाशंक्यनिराकृतं ॥ भक्तानांतत्रैवप्रवेशादनेना-न्येपिदैहिकाधर्माः निराकृताः ॥उत्पत्तिकार्यंतपःस्थानानिचात्तरसा स्यान्निवारितानि असभुग्विडुकृष्ककरणेशमउपशमइतिधात्वादयो-गृहीताः प्रपंचकर्मज्ञानानि वाज्ञानसाधनानि ससाधनंज्ञान मुक्तंभवति त्यक्तपिप्पलमितित्यक्तंपिप्पलंकर्मफलंयेनवैराग्यमेतत् पिप्पान्लातीतिपिप्पलंपयःपांतीतिपिप्पाः पिबतीतिपिः कालः अ-विशेषेणसर्वभक्षकत्वात्तद्भक्षकानिकर्माणिकालविशेषएवविहित-त्वात्कर्माणिचफलमेवादत्तंफलकामनयैवकर्मकरणात् ॥ तत्रैकवच नंसर्वस्याऽपत्वेनैकरूपमिति ॥ अनेनवैराग्यलौकिकानिदैहिकानिभक्ति मार्गस्थानिवाविरक्तस्यननिषिद्धानिनवानित्यानिफलेनतेपामप्यनाक र्षान्नैमित्तिकानिचार्द्धंनिषिद्धानिकालपोषकत्वादग्निहोत्रादीन्यापति यत्कालकर्त्तव्यानिनैमित्तिकान्येव सदाकर्तुंशक्यान्येवनित्यानियोगं नात्मनिदर्शनं ॥ दानादिपदार्थाःक्रियाभगवद्भजनमित्यादि एतेषां

### श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

नकालपरिपालकत्वमतोवैराग्यंनित्यानिकर्त्तव्यान्येवनैमित्तिकानिविक ल्प्यंतेकाम्यानितुत्यक्तव्यान्येवेतिसूचितंगीतायांयज्ञगदानतपःयज्ञदानतप इतितन्नापियज्ञानित्याजरामर्यादादयोवा दानमपिज्ञानोपदेशादयः सर्व दातुंशक्याअक्षयत्वात् ॥ तपोपिनित्यमेवयत्संभवति उर्द्ध्वरेतभादि- रूपं ॥ नतुकृच्छ्रादितेषांसर्वदाकर्तुमशक्यत्वात्एवंषोडशकलंभगवंतं- दृष्टवान् ॥ ८ ॥

प्रमेयसाधनेचैवचतुर्मूर्तिफलेपुनः पंचात्मकास्त्रिमूर्तिश्चप्रमाणइ- तिनिश्चयः यदैवमयाभगवान्दृष्टस्तदैवमैत्रेयोपिसमागतःविदुरोद्धा- रार्थतदानयनात् अतएवमुख्यंभागवतंमैत्रेयोक्तमपिभवति ब्रह्मसमा नत्वात्साक्षाद्भगवतात्रयाणांस्थानेनिरूपितत्वादतःशुकोक्तमपिपृष्ठतः कृत्वामैत्रेयोक्तमेवोक्तं एकांतरितत्वाल्लीलाद्वयेनकृतार्थताविदुरस्यै- षमुद्धवोक्तेपिभाविष्यति कल्पांतरेब्रह्मोद्धवमैत्रेयाणांसूक्ष्मलीलामा- त्रश्रवणेनैवकृतार्थतासाचलीलाआश्रयरूपा परमांस्थितिमितिवच नात्तस्याप्यागमनंभगवदिच्छया पूर्वमपिसवेदव्यासतुल्यः शुकतुल्यो पिनारदतुल्योपिब्रह्मपरपरायांयावंतस्तेसर्वे मैत्रेयएकएवेतिनपरंपरा द्वयस्याल्पमपिवैलक्षण्यमितितादृशरूपोमैत्रेयःसमागतइत्याह त- स्मिन्महाभागवतइति तस्मिन्देशेकालेच भगवद्भक्तानामपिकृतार्थ करणसामर्थ्यान्महाभागवतत्वं द्वैपायनइति तदर्थमेवपुष्ट्याभगवद वतारस्तथायमपीतिज्ञातव्यं तस्यसुहृत्तमस्यापिहितकारीसखाच प- राशरशिष्यत्वात् अनेनपुराणमेवव्यासवत्परंपरयापराशराद्वग- तंनतुभागवतमितिसूचितं व्यासोपिनारदादेवभागवतंज्ञातवाननेनमै त्रेयस्यापिभगवदाज्ञयापुराणकथनं नव्यासस्याधिकारिणोविरोध हेतुस्तत्पुत्रोपदेशाच्चैतदर्थंमित्रत्वमुक्तं लोकाननुचरन्निति शुकवत्स सिद्धउक्तः शुकोप्याचारेणैवसिद्धोजातःआससादयदृच्छयेति नारद तुल्यतानिरूपितासहियादृच्छिकः ॥ ९ ॥

एवंभगवान्सर्वसंनिधानंविधायपूर्वा वस्थांत्याजयितुंस्वस्यकृपायाम साधारणांकारणांस्वयमेवसंपादितवानित्याह तस्यानुरक्तस्येति ननुगो प्योद्धवयोपदेशश्चउपदेशोनाहिद्वयोः भिन्नप्रकारयोर्जात्यास्वरूपेणगुणो नच इत्याशंक्याह अनुरक्तस्येति अनुरक्तस्यप्रसिद्धमैत्रेयस्यआगएव तोमामाहेतिसंबंधःअन्यत्रकथनाभावायमुनेरितिकृपाकथनहेतुःमुकुंद इतिसहिमोक्षदातासर्वेषांयथावत्कर्त्ताऽतस्तथोक्तवान् नह्यभयोःप्रधा नत्वंकुतोनोच्यतेतआहप्रमोदभारानतकंधरस्येति प्रकृष्टोयोमोदस्ते- नानताकंधरायस्यसहिप्रेमभारेणगृहीतःज्ञानाधारमधःकृत्वाप्रेमाश्रून् मुंचँश्चरणमेवपश्यन्स्थितोऽतः साक्षादुपदेशानाधिकारीभक्त्याचकृ तार्थोऽतस्तस्यश्रृएवतएवसतोमामुद्दिश्यैवाह स्वस्थेहिचित्तेउपदे- शोघटतेस्वास्थ्यंचदेशकालवैपरीत्यदर्शनात्श्रमादिनाचनसंभाव्यते ऽतआह अनुरागहाससमीक्षयेति अनुरागाद्भयानिवृत्तिःनह्यनुरक्तो- भगवान्मारयति हासेनचमोहं भगवतापूर्णंकृतंपश्यन्नपिनानुसंधत्ते सम्यगीक्षासमीक्षणंदयासहितं तेनदेशकालभयानिसर्वाण्यपिनिवृ त्तानिविशिष्टेनश्रमाभावःअनुरागपूर्वकोयोहासः तत्सहितासमीक्षे तिपूर्वमतिव्रज्यगतीस्तिस्त्रोमामुपेष्यतिकेवलमितिभगवताप्रोक्तम्— ॥ १० ॥

———

### श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

तदभिप्रेतं याहीति ब्रुवन्नपि प्रभुर्मां प्रायो न त्यक्ष्यतीति वा कु- लसंहारादिकं वा ॥ ५ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

केतनमाश्रयो न विद्यते यस्य तं प्राकृताप्राकृतवस्तूनां वस्तुनस्त दाश्रितत्वादिति भावः ॥ ६ ॥ ७ ॥

आश्रित्य उपरि स्थापयित्वा अपाश्रितः पृष्ठतोऽवष्टब्धोऽश्वत्थ पोतो येन तं न श्वस्तिष्ठतीत्यश्वत्थः भूरादिपञ्च पादत्रिभूतिरस्थिरा मायिकी सा पृष्ठीकृतेत्यतः परं प्रापञ्चिका लोका मां न पश्यन्त्वि- त्याशयेन अर्भकपदेन सर्वब्रह्माण्डेषु मध्ये अस्य ब्रह्माण्डस्याणिष्ठु- द्रत्वं व्यञ्जितं त्यक्तपिप्पलं समाप्तीकृततद्ब्रह्मांडविलासं पिप्पलशब्दे न श्रुत्या विषयसुखोक्तेः ॥ ८ ॥

द्वैपायनो व्यासः स्वगुरुपुत्रत्वात् सुहृत्सखा च यस्य सः मैत्रेयः पराशरस्य शिष्य इत्यर्थः । यदृच्छया अकस्मादेव ॥ ९ ॥

तस्यानुरक्तेत्यादिविशेषणविशिष्टस्यापि मामेवोवाचेति तस्मा- दपि स्वस्य प्रेमास्पदत्वाधिक्यं व्यञ्जितं अतएव षष्ठी अनुरागस्य हासः प्रकाशो यस्यां तया समीक्षया अनुरागहासाभ्यां युक्तयसा मीक्षया वाविश्रमयन् मां विगतविरहश्रमं कुर्वन् ॥ १० ॥

———

### श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

अकेतनंसर्वत्रवासमपिकृतकेतंकृतावासम् ६ ७

अपाश्रितः पृष्ठतोऽवष्टब्धः अर्भकाश्वत्थोवालपिप्पलोयेनतम् ॥ त्यक्तः पिप्पलः वासस्थानम् येनतम् अकृशंतत्त्यागनिमित्तकार्श्यर- हितम् ॥ ८ ॥

द्वैपायनःसुहृत्सखाचयस्यसमैत्रेयः ॥ ९ ॥

प्रमोदभारेण आनताकंधरायस्यसतथातस्य अनुरागेणसइहा- सोयस्यांतयासम्यगीक्षया ॥ १० ॥

———

### भाषाटीका

हेविदुरजी तौभी अपने स्वामी के चरणों के वियोग में असम- र्थ मैं कुल संहारादि रूप भगवान को अभिप्राय जानतो भयो उन के पीछैंई गमन करतो भयो ॥ ५ ॥

अनाश्रय होकर भी सरस्वती में किया है आवास जिनने एसं लक्ष्मी के निवास अपने प्यारे स्वामी श्रीकृष्ण को देखता भया ॥६॥

वह कैसे हैं कि श्यामहोकर उज्वल और रजोगुण रहित और प्रशांत अरुण नेत्र वाले हैं आर चार भुजा तथा पीतां वरसे ये मेरे स्वामी श्रीकृष्ण हैं एसे जाने जाते हैं ॥ ७ ॥

फिर कैसे हैं कि वांये उरूपै दाहिना चरणकमल धरें हुवें एक छोटे से पीपल के पोधे के सहारें बैठे हुवे हैं सर्व विषय सुख त्या- गदिया है तौभी कृशनहीं हैं ॥ ८ ॥

तहांपर महाभागवत श्रीव्यासजी के प्रिय सिद्ध मैत्रेयजी हरी च्छासों आगये ॥ ९ ॥

प्रमोद और भाव से झुकरह्यो कंधाजिन को एसे अनुरक्त मननशील मैत्रेयजी के सुनते सुनते अनुराग हास वारी चितवन से मेरो श्रम दूरकरत श्रीकृष्ण मोसूं बोले ॥ १० ॥

———

श्रीभगवानुवाच ।

* वेदाहमन्तर्मनसीप्सितं ते ददामि यत्तद्दुरवापमन्यैः ।
सत्रे पुरा विश्वसृजां वसूनां मत्सिद्धिकामेन वसो त्वयेष्टः ॥ ११ ॥
स एष साधो चरमो भवानामासादितस्ते मदनुग्रहोयत् ।
यन्मां नृलोकान्रह उत्सृजन्तं दिष्ट्याददृश्वान् विशदानुवृत्त्या ॥ १२ ॥
पुरा मयाप्रोक्तमजाय नाभ्ये पद्मे निषण्णाय ममादिसर्गे ।
ज्ञानं परं मन्महिमावभासं यत् सूरयो भागवतं वदन्ति ॥ १३ ॥
इत्यादृतोक्तःपरमस्य पुंसःप्रतीक्षणानुग्रह भाजनोऽहं ।
❀ स्नेहोत्थरोमास्खलिताक्षरस्तं मुञ्चन् शुचःप्राञ्जलिराबभाषे ॥ १४ ॥
कोऽन्वीश ते पादसरोजभाजां सुदुर्लभोऽर्थेषु चतुर्ष्वपीह ।
तथापि नाहं प्रवृणोमि भूमन् भवत्पदाम्भोजनिषेवणोत्सुकः ॥ १५ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

तमनसीप्सितमहं अन्तःस्थितांवदवेंद्मिज्ञानेहंतुःविश्वसृजांवसूनाञ्च मिलितानांसत्रेहंवसोइति पुरापूर्वजन्मनित्वंवसुरासीःतदा मत्प्राप्तिकामेनत्वयाऽहमिष्टःअतस्ततत्साधनंददामिदास्यामिअन्यैर्मत्परांङ्मुखैःदुष्प्रापम् ॥ ११ ॥

तस्यभाग्यमभिनन्दति सएषभवोजन्मतेभवानांमध्येचरमःयद्यस्मिन्मदनुग्रहआसादितोलब्धःयत्पुनर्मारहएकान्ते विशदानुवृत्त्याएकान्तभक्त्याददृश्वान्दृष्टवानासि एतद्दिष्ट्याभद्रंजातमित्यर्थःनृलोकान् नृशब्देनजीवास्तेषांलोकानुत्सृजन्तं वैकुण्ठंगच्छन्तमित्यर्थः ॥ १२ ॥

ददामीति यदुक्तंतदेवनिर्दिशतिपुरापूर्वस्मिन् पाद्मेकल्पेआदिसर्गेसर्गोपक्रमे ममहिमालीलाअवभास्यतेयेनतत् ॥ १३ ॥

इत्येवमादृतश्चासावुक्तश्चाहं प्रतीक्षणं कृपावलोक एवानुग्रहः तस्यभाजनः पात्रभूतः । प्रतिक्षणानुग्रहभाजन इति पाठे प्रतिक्षणमनुग्रहस्य पात्रमिति । शुचः अश्रूणि मुञ्चन् आबभाषे उक्तवानस्मि ॥ १४ ॥

नहि स्वाज्ञाननिवृत्तिमात्रकामोहं किन्तु त्वन्निषेवणोत्सुकः त्वयि चाघटमानाचरणं दृष्ट्वामेमोहोभवति अतस्तत्त्वज्ञानंदेहीतिप्रार्थयितुमाहकोऽन्वितिचतुर्षुधर्मादिषुतथापितानहंनवृणोमि हे भूमन् भवत्पदाम्भोजनिषेवणोत्सुकोऽहम् ॥ १५ ॥

---

श्रीराधारमणदासगोस्वामि विरचित
दीपिन्याख्य तट्टिप्पणी ।

पाद्मेकल्पे इति यद्यपि द्वितीयस्कंधे ब्राह्मेकल्पेतत्कथितं तथापिपाद्मपुनरप्युपदिष्टं कालाति शयेन सन्दिग्धत्वादत एव तस्य स्वाविर्भ्रि परि ग्रहलक्षणो मोहेपि मध्ये संघटेत लीलावभासकत्वेन श्री मद्भागवतस्य शुष्क ज्ञानपरत्वं व्यावृत्तम् ॥ १३ ॥

प्रतिक्षणेति पाठान्तरं ॥ १४ ॥

उद्धवस्य श्री मद्भागवते मुख्याधिकारित्वंव्यंजयितुं तदाभि प्रायंव्याचष्टे नहीति स्वाज्ञान निवृत्ति निर्वि शेष स्वरूप ज्ञानं तावन्मात्र कामोहंनास्मियेन श्री भागवताऽधिकारीवस्यांकिन्तु त्वन्निषेवणोत्सुकः अतः अघटमानाचरणस्यमोहावहत्वात् तन्निवृत्त्यर्थतत्वज्ञानं लीला याथार्थ्यानुभवम् ॥ १५ ॥

अघटमानेति अत्र यदि कर्मादौ निवस्तु तत्त्वानि नस्युस्तर्हि विदुषांमोहोनस्यात् भक्तसम्बन्धेनभयपलायनादि लीलाया अपिस्वरूपानन्दोल्लाससारत्वात्परस्परविरुद्धधर्माचरणमचिन्त्यमिति संशयेखिद्यत इति भावः ॥ १६ ॥

अकुंठिन्तोऽनाश्यः सततः व्ययशून्यः सदात्मा सद्रूपो यथार्थस्तथा चसंशयादि रहित इति व्याख्यातम् अवहितःसन्मन्त्र अवधानसावधानः अत्रापितत्तदुभयंतात्विकमेव तथप्यचिन्त्यशक्तिमाहात्म्यदृष्ट्यानकश्चनमोह इतिद्योत्युक्तम् ॥ १७ ॥

श्रीमद्वीरराघवाचार्य कृत भागवतचन्द्रचन्द्रिका ।

भगवद्भक्तिमेवाहद्वयेन वेदेति हेवसोउद्धवपूर्वजन्माभिप्रायेणेदं संबोधनं विश्वसृजांप्रजापतीनांवसूनांच सत्रेपुरापूर्वजन्मनिमत्सांद्धिकामेनमत्प्राप्तिकामेनत्वयाऽहमिष्टः सम्यगाराधितः अतस्तेतवांतर्मनसांतःकरणेनेप्सितंयत्तद्वेदजानामिअन्यैरनाराधितमच्चरणैर्दुरापंदुःखेनाप्यवाप्तुमशक्यंतद्ददामिदास्यामि ॥ ११ ॥

सइतिहसाधोउद्धवभवानांजन्मनांमध्येसएषभवःचरमः अंतिमः कुतः यद्यस्मात्त्वयामदनुग्रहः आसादितःलब्धः यस्माच्चपुनर्नृलोकान्मर्त्यलोकान्रहःएकांतेउत्सृजंतंत्यजंतंमर्त्यलोकाद्वैकुंठंगच्छंतंमांविशदानुवृत्त्याएकांतभक्त्याददृश्वान् दृष्टवानासि एतद्दिष्ट्याजातमित्यर्थः ॥ १२ ॥

किंददासीत्यपेक्षायांदेयंनिर्दिशति पुरेति आदिसर्गेसृष्ट्युपक्रमेनाभ्येनाभिभवेपद्मकमलेनिषण्णायउपविष्टायाजायब्रह्मणेपुरापूर्वकालेमयाप्रोक्तंममहिमाऽवभास्यतेप्रकाश्यतेऽनेनेतिमन्महिमावभासंयदेवसूरयो भागवतमितिवदंतितत्परमंज्ञानंददामीत्यनुषंगः ॥ १३ ॥

एवंभगवतोक्तेमयैवमुक्तमित्याह इतीति इतीत्थमादृतोक्तः आदृतश्चासावुक्तश्चपरमस्यपुंसः परमपुरुषस्यप्रतीक्षणंकृपावलोक नमनुग्रहश्चतयोर्भाजनः पात्रभूतः स्तंहाः र्ध्वरोमास्स्नेहेनोर्ध्वांति

* मनसोप्सितंन इति वीरराघवीयःपाठः   * स्नेहोर्द्धरोमाइतिवीरराघवीयःपाठः

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचंद्रिका।

पुलकितानिरोमाणियस्यसः स्खलिताक्षरःगद्गदवागहंशुचआनंदाश्रूणिमुंचन्प्रांजलिस्त्वंभगवंतंप्रत्यावभाषे आभाषितवानस्मीत्यर्थः ॥ १४॥

किमाभाषितवानसीत्यतआह कइति हेईशतेतवपादसरोजभाजांपादकमलंभजमानान इहपुरुषाणांचतुर्ष्वर्थेषुधर्मार्थकाममोक्षेषु कोवुसुदुर्लभः नकोपिदुर्लभइत्यर्थः तथापि पुरुषार्थचतुष्टयस्यसुलभत्वेपिहेभूमन् विभोनाहं प्रवृणोमिपुरुषार्थचतुष्टयमिति शेषः कथंभूतोहंभवत्पदांभोजयोर्निषेवणोउत्सुकः तेषांज्ञानीनित्ययुक्तइत्युक्तधज्ञान्यहम् ॥१५॥

---

### श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली।

किमित्याहहरिरितितत्राह वेदेति हेवसोमद्भक्तशिरामणे तेतवमनस्यंतर्हृदियदीप्सितंतदहंवेदततःकिंतत्राह ददामीति तेतुभ्यंत्वदभीष्टं ददामिदास्यामीतिच्छामि अन्यैः प्राप्यंचेत् किमनेनेत्यतउक्तं दुरवापमिति अन्यैर्मद्भक्तिरहितैः त्वन्मुखारविंदान्निः सृतंश्रोतुंमहतापुण्येनभाव्यं अननुष्ठितपुण्यकर्मणामेतत्कथंस्यादितितत्राह-सत्रइति पुरापूर्वजन्मनिनित्यंभगवदुपासनशीलत्वान्मुनिशब्दवाच्यानांदेवानां सत्रेयज्ञविशेषेमत्सिद्धिकामेनत्वयेष्टः पूजितः ॥ ११ ॥

फलांतरंचाह सएषइति हेसाधोउद्धवतेत्वयाऽऽसादितोयोभवः शरीरसंयोगलक्षणः प्रसादविशेषः कुतोवगतमेतदितितत्राह य-स्मामिति भवान्रहएकांतेनृलोकमुत्सृजंतंमांविशदानुवृत्त्यानिर्मल-सेवयाददृश्वानितियदतइत्यन्वयः दिष्ट्येत्यव्ययंभद्रमित्येतस्मिन्नर्थे वर्तते ॥ १२ ॥

वक्तव्यार्थेश्रद्धातिशयजननार्थंज्ञानंस्तौति पुरेतितज्ज्ञानंतुभ्यमुपदेक्ष्यामिइत्यध्याहृत्यान्वयः कर्तव्यः ज्ञानंयत्परमुत्तमंमन्महिम्नोवभासः प्रकाशोयस्मात्तत्सूरयोयच्चभागवतंभगवदेकविषयत्वाद्वदंति ॥ १३ ॥

इतिशब्देनज्ञानस्यविशेषणांतराविशिष्टत्वंसूचयति अमत्रंभाजनंपात्रमित्यभिधानं स्नेहोत्थरोमाभक्त्यासमुत्पन्नरोमांचः आदभाषइतिपरोक्षव्यपदेशः सर्वेंद्रियाणांभगवद्विषयत्वेनबाह्यप्रवृत्तिशून्यतामपेक्ष्येतिज्ञायते सुप्तोहंकिलविललापेत्यादौदृष्टत्वात् ॥ १४ ॥

भगवदपरोक्षज्ञानसाधनपादारविंदभक्तिमंतरेणनान्यदाकांक्षइत्याह कोन्विति भवत्पदांभोजनिषेवणोत्सुकइत्यनेनएतावंतंकालंनप्रवृणोमिउत्तरत्रकथमितिनजानइत्यापव्याख्यानंप्रत्युक्तं अध्याहारस्याप्रामाणिकत्वात् उत्सुकत्वस्यसदातनत्वप्रतीतेश्च ॥ १५ ॥

---

### श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ॥

अतएव नित्यपार्षदत्वेप्येकांशेन वसुत्वमुक्तान्यादिष्टम् ॥ ११ ॥

नवानां वस्वादिरूपेणापिलोकसंग्रहार्थं बहूनामवताराणांचरमः । परमकाष्ठामापन्नस्तदंशिरूपइत्यर्थः ॥ विशदानुवृत्त्याशुद्धभावतया अनुगमनेनयद्दृष्टवांस्तद्दिष्ट्याभद्रमेव कृतम् ॥ १२ ॥

पुरामयेति । पुराब्राह्मे कल्पे द्वितीयेस्कन्धे ब्रह्मकल्पकथनात् ॥ ज्ञानंपरं चतुः श्लोकीरूपम् ॥ मन्महिमावभासमितितस्यनिर्विशेषप्रतिपादकत्वंनाङ्गीकृतम् ॥ १३ ॥

अतएवाह इतीत्यादि ॥ १४ ॥

तथैव निवेदयति कोऽन्विति ॥ १५ ॥

---

### श्रीमद्वल्लभाचार्यकृत सुबोधिनी।

तदुद्धवस्यसर्वथाहितमिव भवति सहिभगवंतमेवप्राप्तुमीष्टे-निरंतरंचनिकटेस्थातुंसाधनानिचकर्तुंवांछति तादृशस्यबदरिकाश्रमप्रेषणंनात्यंतमभीष्टमितितदिच्छामनुवदन्देयांतरमाह अस्मिन्दत्तेतदेतच्चान्यथा भविष्यति अहमिवतथाकरिष्यतीत्यभिप्रायेणाह वेदाहमिति तेयदंतर्मनसीप्सि तंतदहंवेदइदंवाक्यमनुवादकंतत्फलंदास्यामीत्येतदर्थंएवमुक्तेप्रथमत एवाश्वासोभवत्यन्यथकाकतालीयत्वंकास्यादन्यथाभिप्रायशंकाच नन्वेतद्भगवदात्मकंलोकवेदतोदेयंकथंदास्यतीत्यतआह ददामियत्तदिति यत्त्वयामनसिकृतं तद्दास्यामीत्यर्थः तस्यासाधारणत्वमाह दुरवापमन्यैरिति त्वद्व्यतिरिक्तैः सर्वैरेवदुरवापंतांकामनांविस्मृतामिवस्मारयति सत्रेपुरेति विश्वसृजः प्रथमाः सत्रमासतेति श्रुतौ सहस्रसमयागे विश्वसृजांमध्येच सर्वेपि स्थितास्तन्मध्येत्वमेकोमत्सिद्धिकामः तेहिसर्वएतेवैविश्वसृजइदंविश्वमसृजन्तइतिश्रुतेः ब्रह्मणः सायुज्यंसलोकतांयांतीतिश्रुतेश्चविश्वसामर्थ्यंततोविश्वंसृष्ट्वाब्रह्मसायुज्यंप्राप्नुवंतीति सर्वेषांफलं अधिकारिविशेषप्रयुक्तं विश्वकरणसामर्थ्ययागस्यस्वतः सामर्थ्यं हिरण्मयशकुनिरूपब्रह्मोत्पत्तिस्तदातेविश्वंसृष्ट्वाब्रह्मसायुज्यंप्राप्ताः भवाँस्तुतदुभयंनकांक्षितवान् किंतुसंगानुरोधेनयागे प्रवृत्तोमत्सिद्धिमेवकांक्षितवान् मत्सिद्धिर्मद्भावः पुरुषोत्तमो ममभवतु अहंभवामीतितच्चसर्वथादुर्लभंयागादतोयागःकामितत्वाभावान्ननियतंफलंदत्तवानेतच्चदातुमसमर्थःत्वामेवंरूपमुत्पाद्यमत्सेवांकारितवानतोमयासेवाफलंबदरीस्थानेपुरुषोत्तमप्राप्तिरूपंफलंयथासिद्ध्यति तथोपाय उक्तः यागफलंतुनदत्तं तदिदानींदास्यामीत्यर्थः वसो इतिसंबोधनम् ॥ ११ ॥

एतदर्थानुसंधानंभगवत्कृपयातस्यजातमितिख्यापनार्थंफलार्थमेवयागइतित्वयाअहमेवष्टस्तर्हिकिंदातव्यंकथंदातव्यमित्याकांक्षायामाहसएषेतिसराषभवोजन्मतेभवानांचरमःयदिदानीदत्तंस्यात्तदातवाग्रेजन्माभावात्फलंनभवेदेवततःकिमतआहयद्यस्मिन्जन्मनिमदनुग्रहःप्राप्तःममानुग्रहःफलसूचकःअनंतिमजन्मन्यप्यंतिमत्वंसाधयातिएवमंतिमेजन्मन्यनुग्रहोजातइतिफलमावश्यकंकिंचनयोग्यतामात्रंकिंतुफलमुखमेवतज्ज्ञातमित्याहयन्मांलोकान्रहउत्सृजंतमिति नृलोकान्सर्वानेवैकांतेस्थित्वोत्सृजंतंमांददृश्वान्दृष्टवानसि एतच्चदर्शनंनिर्मलयासेवयाजातमतः ससाधनत्वात्तत्स्थितंनकाकतालीयंउत्सृजंतमूर्ध्वंव्रजतंवेत्यर्थद्वयंविवक्षितं तेनयागप्रयोजनंमद्भावश्चैकरूपो भवति मद्भावेप्येतद्वयंकर्तव्यंगुप्ततयास्थितत्वाविश्वजननंसर्वलोकपरित्यागश्चत्वज्जन्मनश्चरमत्वादेवपरित्यागः सिद्धः ॥ १२ ॥

मद्भावेनजगज्जननमेवशिष्यंततत्रमत्सायुज्येजगज्जननमन्यथासिद्धंभवतिएकीभावश्रुतेःयथासर्वासामपांसमुद्रएकायनमितिभिन्नतयाब्रह्मभावेजगद्व्यापारवर्जमितिन्यायान्नजगकर्तृत्वमतःसर्वाविरोधेनमद्भानजगज्जननंयथासिद्ध्यतितथावक्ष्यामीत्यभिप्रायेणब्रह्मणोप्येतदेव मयोक्तमित्येतदर्थःज्ञानेनयथाब्रह्मामद्रूपोभूत्वामद्रूपंजगत्कृतवान्क्रियातस्यतथाधिकारात्त्वमप्येतद्ज्ञानान्मद्रूपोभूत्वामद्रूपंजगद्ज्ञानेनकरिष्यसीत्याशयेनतद्ज्ञानमाहपुरामयाप्रोक्तमितिएतद्वक्ष्यमाणंज्ञानंममनाभ्येपद्मेनिषण्णायाजायआदिसर्गेप्रोक्तंतत्राहिसर्वेकृतयुगेब्रह्मरूपाः मत्कृक्षयाब्रह्मापुरुषोत्तमरूपान्कृतवान्यदाविवेकनिपुणाआदौकृतयुगेयुगइतिं भगवद्वाक्यात्नाभौभवत्वाभ्यंअजइति योनिद्वारानजातइतिअसंतद्धेदहे संबंधेनवासमाष्टिव्यष्ट्युभयरूपत्वाभावात्तस्यस्वरूप-

### श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

मग्रेवक्तव्यं रजोभाजोभगवतोलीलेयमित्यतोयमजः यदुक्तंतत्किमित्याकांक्षायामाह ज्ञानंपरमिति ज्ञानमध्यात्मरूपमपिभवति ( तद्व्यावृत्यर्थमाह परमितितदौपनिषदमपि भवतीतिततोप्युत्कृष्टमाह मन्महिमावभासमिति मन्महिम्नोऽवभासोयत्रेति यस्मिन्ज्ञानेममपुरुषोत्तमत्वंभासते महात्म्यप्रतिपादकागुणाः कर्माणिशक्तयश्च अलौकिकंचसामर्थ्यंमे तत्सर्वंयत्रभासते तद्भागवतमितिलोके प्रसिद्धंसूरयस्तथावदंतीत्यतोस्मिन्नपि शास्त्रेवादिनामपि वादएवतत्कथयिष्यामीतितुनोक्तंवस्तुनिर्देशएवपरंकृतः ॥ १३ ॥

नापृष्टःकस्यचिद्ब्रूयादितिशास्त्रमर्यादावस्तुनिर्देशएवपृच्छेत्यस्यज्ञायकः अतोधिकारीभगवदभिप्रायंज्ञात्वा पृष्टेवक्तव्यमितिपृष्टवानित्याह इत्यादृतोक्तइति आदृतश्चासावुक्तश्चवसोइत्यादि संबोधनपूर्वकंपूर्वकृत सेवानुवादादादृतोवस्तु निर्देशादुक्तश्चआदृतएववोक्तः पृष्टव्यमिति अन्यथोत्तरस्यवाग्व्ययरूपस्यक्लेशरूपत्वाद्भक्तस्यप्रश्नोनघटेत आज्ञायांतुसर्वथाकर्त्तव्यमेव तदुक्तमुक्तइति आदरस्तुस्फुरणार्थः अनेनप्रमाणबलं प्रमेयबलंचदत्तमित्युक्तं ततः किंजातमित्यतआह परमस्यपुंसः प्रतिक्षणानुग्रहभाजनोहंजातइति अहमेतावत्कालंस्थितइदानीं परमस्यजातः ननुकालोपिपरएवतत्राह पुंसइति ज्ञानेनात्तरभावोवापरशब्देनप्राप्तः पुरुषशब्देन निवार्यतांकिंच नसंबंधित्वमात्रंकिंतुप्रतिक्षणानुग्रहभाजनः भक्तंदृष्ट्वाभगवदनुग्रहस्यतरंगाउद्गच्छंतितेषांभाजनं पात्रमहमेवजातः नन्वचेतनेसमुद्रेतरंगानांलयइवभगवत्येवानुग्रहोलीनइति निरंतरंमद्विषयकएवजात इतिवा तदाभगवदनुग्रहस्यकार्यंमयिजातमित्याह स्नेहात्थारोमेति अंतर्भक्तिरसपूर्णस्तदास्नेहेनोत्थितानि सर्वांगयेवरोमाण्यवयवशः सर्वत्रैवांगेलोमशोदेवताः संतितेभगवतिसंतुष्टे सर्वेसंतुष्टाएवोत्थितास्तत्रापिस्नेहेनमहदस्यसुखंकर्तव्यमितस्खलिताक्षरश्चजातः पदवाक्योच्चारणं दूरेअक्षराण्यप्युच्चारयितुंउद्धृतानिक्षरंति अनेन मर्यादासर्वथापिशांतावाचःप्रयत्नपरित्यागात् किंचमुंचन्शुचः नेत्राभ्यां शोकाश्रूणिमुंचन् अनेन साधनं ज्ञानं पूर्वस्थितं निवृत्तमितिज्ञापितं प्रकृष्टाअंजलिर्यस्यअंजलिमेवपुरतोनिधाय विज्ञापितवाननेन तस्यप्रश्नाधिकारः सूचितः आर्षपद्यभाषे यथाकथं चिन्मुखाद्वर्णानिःसृताइत्यर्थः ॥ १४ ॥

उद्धवःस्वाभीप्सितंप्रार्थयितुंअन्यनिषेधंतत्रहेतुंचाहत्रिभिः तत्र ब्रह्मणोमयाभागवतंप्रोक्तमिति अवणोप्रार्थणायंमांब्रह्मांडांतरेब्रह्माणंकरिष्यतीतिप्रतिभातंनिवारयति कोन्वीशेति ईशेतिसंबोधनंसर्वसामर्थ्यबोधनाय तेपादसरोजभाजांसंबंधिषुचतुर्ष्वप्यर्थेषुकोनुदुर्लभः चरणरूपापृथिवीब्रह्मांडमपिपृथिव्यात्मकमेव तत्तुप्राप्यदुग्धपानवत्सेवते तत्रापिसरोरुहंजलोद्भवंपद्मं जलस्यापिफलरूपं अनेनसर्वमेवब्रह्मांडेस्थितंफलंतापापनोदश्चत्वद्भजनेस्वतःसिद्धः अत्रतीर्थैकदेशेमुक्तिःप्रसिद्धा लक्ष्म्यैकदेशेअर्थःप्रसिद्धः फलत्वेनसेवनयाकामः प्रसिद्धः विहितत्वाद्धर्मःसिद्धएव अतस्तेषांकोवादुर्लभः ईशेतिसंबोधनादसाध्यमपिसिद्ध्यति चतुर्ष्वपीतिनिर्द्धारवचनं अवांतरभेदेनसर्वएवैतेष्वंतर्भवंतीतिसूचितं तथापिसूक्ष्मतयाप्राप्तमपिस्थूलतयाप्राप्तव्यमितिचेत् तथापिनाहंप्रवृणोमीति यदिभगवदिच्छातथैवभविष्यतितदाकेननिवारयितुंशक्या तथापितथास्मदभिप्रेतंनवायाचनीयं किंच नचब्रह्मत्वंदुर्लभंचस्वएवब्रह्माणोजायंते यतोभूमाभगवान्ब्रह्मांडकोटिविग्रहः तत्रकिमेकस्मिन् ब्रह्मांडेस्थितेनब्रह्मणा

### श्रीमद्वल्लभाचार्यकृत सुबोधिनी ॥

कार्यंभविष्यति संपूर्णांपरित्यज्यकोट्यंशग्रहणात् अतोहंभवत्पदांभोजनिषेवणोत्सुकएव चिंतामणिवत्सर्वसाध्यापेक्षयासाधनमेवाधिकं नहिचिंतामणिर्वस्त्रंप्रयच्छतीतिकश्चिच्चिंतामणिंपरित्यज्यवस्त्रमिच्छति तस्मात्किमप्रस्तुतत्वेनेत्यर्थः ॥ १५ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

वेदवेद्मियदन्यैर्दुरापं तद्ददामिदानेहेतुः विश्वसृजां वसूनाञ्चमिलितानांसत्रे हेवसो इति पूर्वजन्मनित्वंवसुरभूः तदामत्प्राप्तिकामेनत्वयाहमिष्टः इति नित्यलीला परिकरेउद्धववसोःप्रवेशात्नित्यसिद्धस्याप्युद्धवस्यसाधनसिद्धत्वमेव मैत्रेयमुद्धवश्चज्ञापयामासनित्यलीलायारहस्यत्वरक्षणार्थंकेचित्तुलीलापरिकरउद्धवो द्वारकायामेव स्थितः वसुरूपउद्धवोयमित्यहुः ॥ ११ ॥

तमाश्वासयतिसइतिभवानांजन्मनांमध्येएषभवश्चरमः शेषःयस्मिन्नासादितः प्राप्तः । यत् पुनर्मारहएकान्ते विशदानुवृत्त्याएकान्तभक्त्यादृश्वान्दृष्टवानसिएतद्दिष्ट्या भद्रंजातमित्यर्थः । नृलोकान्नृशब्देनजीवास्तेषांलोकान् उत्सृजतवैकुण्ठंगच्छन्तामित्यर्थः ॥ १२ ॥

ददामीतियत्प्रतिश्रुतंतन्निर्दिशतिपुरेतिआदिसर्गेब्राह्मेकल्पेमन्महिमालीला अवभास्यतेयेन तदितिस्वामिचरणाःमहिमामाहात्म्यमित्यन्ये । भागवतंचतुःश्लोकीरूपम् ॥ १३ ॥

इत्येमादृतश्चासावुक्तश्चप्रतीक्षणंमन्त्रणादिषुउद्धवंविनाएतत् कोपिन जानाति सत्रागच्छतुतत्इदंभविष्यतीत्यादिप्रतीत्याहूतमध्यपाठे प्रतिक्षणंक्षणेक्षणेयोऽनुग्रहस्तस्यपात्रंशुचः अश्रूणि ॥ १४ ॥

ननुभगवन्प्रभोकिङ्करंमांसंसारान्मोचयितुंसारूप्यादिकंवाग्रहीतुंस्वज्ञानंव्याजिहीर्षसिचेदलंतेनेत्याहकोन्वितिचतुर्षुधर्मादिषुमध्येपादसरोजंभजतांकोनुदुर्लभ इति सकामानामपि विनापिज्ञानंपादभजनेनैवमोक्षादिफलसिद्धिः स्यादितिभावः। अहन्तु तथापिस्वतएवप्राप्तानपि तानर्थान्नवृणोमि तत्र हेतुर्भवदिति अतोज्ञानेनममकिंकार्यमितिभावः ॥ १५ ॥

---

### श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

वसोउद्धवविश्वसृजांवसूनांचमिलितानासत्रेपुरापूर्वजन्मनिवसुभावेमत्सिद्धिकामेनमत्प्राप्तिकामेनत्वयाहमिष्टः आराधितः अतोयत्तेमनसिईप्सितंमत्प्राप्त्युपायम् अहमंतः स्थितोवेदवेद्मितदन्यैर्दुरवायमपितुभ्यंददामिदास्यामि ॥ ११ ॥

तेभवानांजन्मनांमध्येएवभवोजन्मचरमः यत्यस्मिन्मदनुग्रहःत्वयाआसादितः लब्धः यच्चनृलोकान् उत्सृजंतवद्धजीवलोकान् । त्यक्तानिजलोकंगच्छंतंमांविशदानुवृत्यारहएकांतेदृश्वान् । दृष्टवानसि ॥ एतत्दिष्ट्याभद्रम् ॥ १२ ॥

ददामीत्युक्तंतत्रकिंददासीत्याकांक्षायामाह । पुरेति पुरापाद्मेकल्पेआदिसर्गेसर्गोपक्रमे ममनाभ्यंनाभिस्थेपद्मेनिषण्णायमन्माहिमावभासंममधैभवविषयकम् परंज्ञानंप्रोक्तम्ददामीत्यन्वयः ॥ १३ ॥

इत्येवमादृतश्चासावुक्तश्चशुचः अश्रूणि ॥ १४ ॥

पादसरोजभाजाम् चरणकमलेभजमानानाम् ॥ १५ ॥ ॐ ॥ ॐ

---

कर्म्माण्यनीहस्य भवोऽभवस्यते दुर्गाश्रयोथारिभयात्पलायनम् ।
कालात्मनोयत् प्रमदायुताश्रयः स्वात्मन्रतेःखिद्यतिधीर्विदामिह ॥ १६ ॥
मन्त्रेषुमांवा उपहूय यत्त्व मकुण्ठिताखण्डसदात्मवोधः ।
पृच्छेःप्रभोमुग्ध इवाप्रमत्त स्तन्नोमनोमोहयतीवदेव ॥ १७ ॥
ज्ञानंपरंस्वात्मरहःप्रकाशं प्रोवाच कस्मैभगवान्समग्रम् ।
अपिक्षमंनोग्रहणायभर्त्त वेदाञ्जसायद्वृजिनंतरेम ॥ १८ ॥
इत्यावेदित हार्दाय मह्यंसभगवान्परः ।
आदिदेशारविन्दाक्ष आत्मनःपरमांस्थितिम् ॥ १६ ॥
सएवमाराधित पादतीर्था दधीततत्वात्मविबोधमार्गः ।
प्रणाम्यपादौपरिवृत्यदेव मिहागतोहं विरहातुरात्मा ॥ २० ॥

भाषाटीका।

श्रीभगवान् बोले ॥ हे उद्धव। हम तुमारेभीतर मनमें जो इच्छित है सो जानते हैं अब जो साधन औरों को बहुत कष्ट से मिले सो हम तुमें देवे हैं क्योंकि पूर्व जन्ममें जब तुम वसुरहे तब प्रजापति और वसून के यज्ञमें हमारी प्राप्ति की कामना करके तुमने हमारो पूजन कियो रहो ॥ ११ ॥

सो अब ये तुमारे जन्मों में अंतिम जन्म है क्योंकि या जन्म में तुमें हमारो अनुग्रह प्राप्त भयो और भी मनुष्य लोक छोडते समें अच्छीतरह अनुवर्त्तन कर के जो मेरो दर्शन कियो ये और भी बडो मंगल भयो ॥ १२ ॥

आदि सर्ग में हमारी नाभि कमल में बैठे भये ब्रह्माको हमारी महिमा को प्रकाशक उत्कृष्ट ज्ञान हमने दियो जाकों ज्ञानीलोग भागवत कहैं हैं ॥ १३ ॥

परम पुरुष श्रीकृष्ण को सदा कृपाकटाक्ष को पात्र ऐसे मो कूं भगवान ने जब आदर करके कह्यो तब मेरे स्नेहसें रोमाञ्च होय आये गद्गद कंठ हो गयो फिर में हाथ जोड कर अश्रुन को छोडतो भयो भगवान सों बोलो ॥ १४ ॥

हे ईश आपके चरण कमल की सेवा करने वारेन कूं याजगत में धर्मादिक चारों पुरुषार्थों में कोनसो दुर्लभ है अर्थात् कोई भी नहीं तौभी हे भूमन् आपके चरणारविन्द की सेवा की इच्छा वारो मैं उन्हें नहीं मागूं हूं ॥ १५ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका।

अघटमानाचरणंदर्शयति कर्म्माण्यनीहस्य निष्पृहस्य निष्क्रियस्यवा अभवस्य अजन्मनो भवोजन्म कालात्मनस्तव अरिभयात् दुर्गाश्रयः पलायनञ्च। स्वात्मनिरतिर्यस्यतस्यबह्वीभिःस्त्रीभिःगृहाश्रम इतियत्तदह अस्मिन्विषयेविदुषामपिधीःसंशयेनखिद्यते ॥ १६ ॥

किञ्चमन्त्रेषुप्रस्तुतेषुस त्वसुमामाहूयचैअहोपृच्छेः अप्रच्छः। अकुण्ठितः कालादिना अखण्डः सन्ततः सदात्मा संशयादिरहितोवोधाविद्या शक्तिर्यस्यमुग्धवत् अज्ञवत्। अप्रमत्तःअवहितःसन् ॥१७॥

स्वात्मनस्तत्परहो रहस्यंतत्स्वंतस्यप्रकाशकंकस्मैब्रह्मणे-

श्रीधरस्वामिकृत भावार्थदीपिका॥

सर्व्वंनामत्वमाधनोऽस्माकंग्रहणाय अपिक्षमं यदियोग्यंतर्हिवद। भर्त्तःस्वामिन्। यत् यतःवृजिनं संसार दुःखं अनायासेन तरिष्यामः ॥ १८ ॥

आवेदितोहार्दोहृदिस्थोऽभिप्रायोयेनतस्मै ॥ १६ ॥

आराधितपादोभगवान्सएवतीर्थं गुरुस्तस्मादधीतः अधिगतः तस्वात्मविबोधस्यपरमात्मज्ञानस्यमार्गोयेनसोऽहंदेवं श्रीकृष्णंपरिवृत्यप्रदक्षिणी कृत्य ॥ २० ॥

श्रीराधारमणदासगोस्वामि विरचित
दीपिन्याख्यताट्टिप्पणी।

तत्वं रूप गुण लीलादीनांयाथार्थ्य ज्ञानं भगवज्ज्ञानं साधनं- श्री मद्भागवतं समग्रं सर्वे शास्त्रेभ्यः पूर्णं कृष्ण प्रतियादकत्वात् अनभ्यासेनानुषंगेन। १८।

परमांस्थातिं नित्याप्रकट धामिन नित्य परिकरैस्सहावस्थितिम् ॥ १६ ॥

अत्र श्री मद्भागवत श्रवणा नंतरमपि विरहातुरत्वं श्री मद्भागवतस्यरूपज्ञानपरत्वंनिराचष्टे ॥ २० ॥

सविरहातुरोप्यहंतदाज्ञांपालयितुंबदर्याश्रममंडलंग मिष्येनन्वातुरस्यतव चलनेगदनेचकथंशक्तिस्तत्राहतद्दर्शनेतिदर्शनंचेदंशनकैंभंगवल्लोकादितिवत्स्फूर्त्तिमयांतःसाक्षात्कारस्तथावियोगश्चस्फूर्त्तिभङ्गेतथाचस्फूर्त्तिदार्ढ्यंनैवतत्तच्छ्रांक्तरितिभावःदयितं मांप्रस्थापयितुमिष्ट ॥ २१ ॥

अत्रतपस्तेपातइत्यत्रयद्यपितपइत्यधिकम् तथापिप्रयोच्चारणामाअर्थस्वनतपधात्वर्थस्याविवक्षित स्वात्उक्तार्थानामप्रवोगाच्चमिलित्वा तपश्चरत इत्यार्थिकोर्थः ॥ २२ ॥

---

श्री मद्वीरराघवाचार्यकृत भागवतचंद्रचंद्रिका

नित्ययोगविरोधनंधर्मादिकंनवृणोमि किंत्वघठितघटनासामर्थ्यरूपांभवदीयांशक्तिंस्मरतांचित्तंपारवश्यंयातीत्यब्रुवमित्याह कर्माणीति अनीहस्यानिर्व्यापारस्यतवकर्माण्यभवस्यजन्मरहितस्यभवःजन्मकालात्मनः कालशरीरस्यदुर्गाश्रयःद्वारकारूपजलदुर्गाश्रमः

### श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ॥

यच्चारिभयात्कालयवनादिभयात्पलायनंस्वात्मनिरतःप्रमदायुताश्रमः
बह्वीभिः प्रमदाभिःस्त्रीभिर्युक्तःयस्याश्रमः गृहस्थाश्रमः इतिचयादि
हास्मिन्विषयेविद्वांविदुषामपिधीःविदतिपारवश्यंयाति ॥ १६ ॥

किंचमंत्रेषुप्रस्तुतेषुसत्सुमामुपहूयवै आहूयैवपृच्छेः पृष्टवान-
सिकथंभूतस्त्वकुंठिताखंडसदात्मबोधः अकुंठितःआवरणरहितः अ
खंडः अपरिछिन्नः सन्सत्यरूपः आत्मनः स्वस्यबोधः यस्यसः अनाद्द
ताऽपरिच्छिन्नात्मज्ञानइत्यर्थः अतएवाप्रमत्तः स्वयमेवंभूतोपिमुग्धइव
मूढइवयत्पृष्टवानस्तितन्मेमनोमोहयतीवमोहंप्रापयतीवयवर्त्ततेइवशब्दे
नपरमार्थतएतत्सर्वंसुपपन्नमेवेतिसूच्यतेतथाहिअकर्मायतक्रियस्यलीं
लयाकर्माणि अकर्मायत्तभवस्यस्वेच्छोपात्ताप्राकृतादिव्यमंगलास्यदावि
ग्रहपरिग्रहरूपो भवश्च उपपद्यते दुर्गाश्रयादिकं मर्त्यलीलयोपपद्य-
तेयोवैवालोक एतेषांपुरुषाणांकर्त्तायस्यचैतत्कर्म अजायमानोवहु-
धाविजायतेलोकवत्तुलीलाकैवल्य मित्यादिश्रुतिसूत्रादिभ्यः ॥ १७ ॥

एवमुक्त्वाहार्दमपिनिवेदितवानस्मीत्याह ज्ञानमिति स्वात्मनस्त-
त्वरहः याथात्म्यंतस्यप्रकाशकंपरंज्ञातव्येषुप्रधानभूतंसमग्रमंगोपतंय
ज्ज्ञानंभगवान्पूर्णषाड्गुण्यो भगवान्कस्मैअजायब्रह्मणेसर्वनामत्वमार्ष-
प्रोवाचोचिवान् तज्ज्ञानंहेभतःस्वामिन्नोऽस्माकग्रहणायगृहीतुक्षमंयो
ग्यमपिचेद्वद यद्वास्मादज्ञानाद्वृजिनं दुःखात्मकसंसारमंजसासुखेनत
रेमातिवर्त्तेमहि ॥ १८ ॥

एवंस्वाभिप्रायेनिवेदितेमह्यंसभगवांस्तत्वमुपदिदेशेत्याहइतीतिइतीत्थ
मावेदितंहार्दमभिप्रायोयेनतस्मैमह्यंसभागवानरविदाक्षःआत्मनःस्वा
त्मनःपरमांपरोज्ञातव्यो मानयस्यास्तांपरमांज्ञातव्यांतररहितांस्थितिं
याथात्म्यावगतिमादिदेशउपदिदेश ॥ १९ ॥

उपसंहरतिसइति आराधितपादतीर्थात् तीर्थशब्दः पावनवाची
आराधितपवित्रपादादित्यर्थः यद्वापादेतीर्थंयस्यसः आराधितश्चा-
सौपादतीर्थश्चतस्माद्भगवतः एवमधीततत्वात्मविबोधमार्गः तत्वा-
त्मकपरमात्मयाथात्म्यावगतिरूपोबोधःसम्यगयंतयरिशील्यतेऽनेनेति
तत्वात्मविबोधमार्गःआत्मयाथात्म्यावगतिप्रकाशकंशास्त्रम् अधीतःत
त्वात्मविबोधमार्गः येनसे हंपादौभगवतश्चरणौप्रणम्यदेवंश्रीकृष्णंपरि
वृत्यप्रदक्षिणीकृत्यतद्विरहेणभगवद्विश्लेषेण आतुरःखिन्नः आत्मा
चित्तंयस्यसःएवंभूतः सन्निहागतोस्मि ॥ २० ॥

---

### श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

ज्ञानांतरंगगुणोपसंहारलक्षणोपासनामंतरेणभक्तेराकांक्षितत्वे
किंकारणमित्याशंक्यहरेर्देवदत्तकर्मवत्कर्मप्रतीतिंर्गुणानांदुरवबोध-
त्वंनिमित्तमित्याह कर्माणीति अनीहत्वादिमतस्तवकर्मादिदर्शनं
लोकविरुद्धमतोजन्माद्यभावविदामस्माकमपिबुद्धिः खिद्यतइति अ-
भवस्यजन्मरहितस्यभवोजन्म नित्यमुक्तस्यबंधोवा अदुर्गस्यनिखिनि
कटवर्तिनोद्वारकादिदुर्गाश्रयः अतएवजरासंधाद्यरिभयात्पलायनं-
गोमंतमितिशेषः कलकामयेनान्वितिधाताः कालात्मनः सर्वसंहर्तुर्वा
स्वात्मनूरतेः स्वात्मनिरतिः रमणंयस्यसतथातस्यप्रमदानामयुताश्र-
यइतियत्तन्मर्वविरुद्धमतद्वति अपिनालोकविडंबनमिदंनतुतत्त्वमिति-
सूचयति ॥ १६ ॥

इदमपिआसदुर्बलानांबुद्धिव्यामोहकरमित्याह मंत्रेष्विति वैश-
ब्दादक्रूरादिःआहयति अकुंठितोऽधिमिश्रितः अखंडःपूर्णःसन्निर्दोष
आत्मबोधः स्वरूपज्ञानंयस्यसतथा ॥ १७ ॥

### श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

ज्ञानाख्याव्याकृताकाशस्तत्तद्योग्यताभेदंजानन्नात्मयोग्यमेवोप-
दिशतिभवान्तथापिस्वचापल्याद्विज्ञापयामीत्याह ज्ञानमिति स्वात्म-
रह प्रकाशोयस्मात्तत्तथातत् कस्मैब्रह्मणेनोऽस्माकंतत्समग्रमपिग्रह
णायत्तममपिकिंनोऽभमं योग्यताभेदात्तर्हिकीदृशमुपदिशामीतित-
त्राह वेदेति भवान्यदस्याधिकारणोयोग्यंवेद वयंचयद्येनज्ञानेनांज-
सावृजिनंसंसारदुःखंतरेमतदुपदिशेत्यन्वयः अनेनब्रह्माद्युत्तमाधि-
कार्युपदिष्टज्ञानैकदेशंसंसारदुःखनिर्मूलनमस्मद्योग्यमुपदिशेत्युक्तं-
भवति ॥ १८ ॥

एतदेवोपदिष्टंहरिणानान्यदितिवक्ति इतीति हार्दंहृद्गतं परमां-
स्थितिं ब्रह्मादिजीवराशेरुत्कृष्टतामन्येषामपकृष्टतामन्योन्यंतारत-
म्यंच ॥ १९ ॥

एवमित्येतदधीतेत्यनेनान्वेतव्यं आराधितंपादतीर्थंपादोदकंय
स्यसतथातस्मात्श्रीकृष्णादेवमुक्तप्रकारेणाधीतोधिगतस्तत्वात्मनः
अनारोपिताद्वितीयज्ञानानंदात्मनोहरेः विबोधमार्गोविशिष्टज्ञानमार्गो
येनसतथा परिवृत्यप्रदक्षिणीकृत्य विरहेणातुरः क्लिष्टआत्माशस्य
सतथा ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

नन्वेवंचेत्तर्हिः कथंकिमपिज्ञातुमिष्टंवर्त्तते यदेवमयाव्यञ्जितंवेदा
हमन्तर्मनसीप्सितंतदित्यनेनसत्यं किन्तुनात्मार्थंएस्यांलीलायांपृच्छा
तस्यास्तवभक्तकृपावैभवमयत्वेनज्ञातत्वात् तथापिमेश्रेयसाद्विवे-
यात्वद्वचनेनान्यांस्तथासुष्ठु प्रत्यापयितुमेवममतथेप्सेतिविज्ञापयन्ना
ह कर्म्माणीतित्रिभिःविदामेतादृशानांसर्वज्ञानामपि ॥ १६ ॥

मोहयतीवेतिवस्तुतःस्वस्यमोहाभावात् ॥ १७ ॥

तस्मात्ज्ञानंपरमिति वृजिनंविदामपितथात्वयिसन्देहेनजातंनि
जदुःखंभवत्पदाम्भोजनिषेवणोत्सुकानामस्माकमन्यदुःखास्पृष्टत्वा
दितिभावः ॥ १८ ॥

परमांस्थितिंचतुश्लोकीप्रोक्तां तादृशरूपत्वेऽपिरहस्याख्यप्रेमव
शतामयलीलामयीं ॥ १९ ॥

अधीतोज्ञातःतत्वेनयाथार्थ्येन आत्माभीष्टविज्ञानस्यमार्गश्चतु-
श्लोकीरूपोयेनसःतस्यचभगवत् प्रेमवश्यत्वप्रतिपादकत्वाद्विरहातुरा
त्मेवसान्निहागतोऽहमिति अनेनचतस्यरूक्षज्ञानतात्पर्य्यंत्वंस्वतएवख
ण्डितम् ॥ २० ॥

---

### श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

तर्ह्येवंसतिनकिंचित्प्रार्थनीयमित्याशयातितत्राह ॥ कर्माण्यनीहस्येति-
अत्रचरणभजनएवंप्रार्थनीयं । दोषाभावइतितत्रदोषोद्विविधोभग-
वद्भजनेक्रियमाणस्वतएकोदोषउत्पद्यतेभगवताचापरः क्रियतेवत्तु
भयंयथानभवतितथोपायोवक्तव्यस्तच्चेद्भागवतंभविष्यति ॥ तदा-
तद्वक्तव्यमितिप्रथमतोदोषद्वयमनुवदतिदोषनिवर्तकत्वेभागवतेना-
पिनकृत्यं नहिभगवच्चरणारविंदादन्यत्फलमस्तितत्सेवमानानांत-
द्बाधकनिवृत्तिरेवप्रार्थनीयातच्चबाधकंसर्वैरेवपोष्यतेनतुबाध्यतेतद
त्यभीष्टमितिज्ञापयितुंप्रथमफलादाह ॥ कर्माण्यनीहस्येति ॥ अनेना
यमुत्तमाधिकारीतिज्ञापितं भगवतोविरुद्धानिकर्माणिस्वबुद्धौ स्फु
रितानिबाधकानिसामान्यदूषणद्वयंविशेषणदूषणत्रय मितिभगव
तेसव्यत्वासिद्धये ॥ स्वस्यजन्मादिदुःखनिवृत्त्यर्थमभवः ॥ सेव्य ॥
इतिभगवानभवोगीकर्त्तव्यः स्वस्यकर्मणानानाविधक्लेशाभवंतीति-

श्रीमद्वल्लभाचार्य कृत सुबोधिनी

तदभावायसेव्योभगवान्नितितस्यतदभावांगीकर्त्तव्यः तच्चप्रत्यक्षेण भजनहेतुनविरुध्यतेवसुदेवस्यगृहेजननान्निरन्तरंकर्मकरणाच्चप्रत्य क्षंतुशुक्तिरूपाऽभानाद्वालिष्ठंचरणभजनंतुस्वतोतिरसंप्रयच्छतीतिफलतोमहत्त्वंचप्रत्यक्षसिद्धं पर्यवसानेतुबाधः यत्रभगवानेवंजायतएवं चकरोति तत्रतदाश्रयाणामस्माकंकावार्त्ताभगवानेवहिफलदातायद्यंततः सएवअधिष्ठानःतथाप्येवंरूपयतिअननुदिक्लेशस्वविद्यमानत्वात्किंभजनेनेत्यनास्थाप्रतिभाति ॥ किंचसाधारणेश्वरादप्यन्यथा प्रति भातिवस्तुतोब्रह्मादीनामप्युपास्यत्वप्रत्यक्षसिद्धत्वान्महानेवाय मिति प्रतिभाति तथापित्रयोदोषाबुद्धौस्फुरंति ॥ कथंभगवान्स्वकीयस्था नंमथुरांपरित्यज्यशत्रुभयात्पलायितःद्वारकाख्यंदुर्गमाश्रितः कथंवाकालयवनात्पलायितः ॥

कथंवास्वरूपानंदः स्वभोगार्थंस्त्रीसहस्रंपरिगृहणात्युपभुंक्तेच अतो यावज्जन्मैवान्यथाप्रतिभानाद्भजनबाधकमभगवत्त्वमेवप्रतिभाति ॥ अथयदिमांहनार्थमेवंकरोतीत्यभिप्रायःकल्प्येततथापियावद्वतारं-मोहकत्वात्कथमुपास्योभवेत् ॥ अथोपासकंनव्यामोहतीतिकल्प्येतत दपिनसंभवतिस्वयंसर्वज्ञोऽसर्वज्ञइवमंत्रेणुसामुपहूयकर्तव्यंपृच्छत्युक्तं-चकरोति ॥ अतःकेनापिप्रकारेणचरित्रादिदर्शनेनभगवद्भजनबुद्धेर्नाशएवदृश्यतेव्यामुग्धानांवचनानितुकिंवक्तव्यानियद्येतानिदूषणानि-भागवतेपरिहृतानिभवंति ॥ तदातद्वक्तव्यमित्यभिप्रायेणातिमांलीलां पश्यन्तेवांतदूषणान्येवसिद्धानीतितांदशांपश्यन्पूर्वंदूषणान्येवानुवद तिदूषणत्वायस्वरूपंचकीर्तयति सिद्धांतसंभावनार्थंच कर्माणि पूतनास्तुपयःपानादीनिअनीहस्यपूर्णब्रह्मणः अभवस्यनिर्विकारस्य भवः सर्वविकारहेतुर्जननात्मा ॥ सर्वसंहर्तुः सर्वनियंतुश्चकालात्म नः स्वरक्षकत्वेनदुःखगातिहेतुंदुर्गादिकंखरक्षकत्वेनमन्यतेअथोतिभिन्नप्रक्रमेण अनेनदुर्गाश्रयेपिपलायनंस्वतंत्रतयापिपलायनंसूचितं ॥ आत्मारामस्यचप्रमदायुताश्रयणंएतल्लीलापंचकंब्रह्मत्वेनत्वांजानतांलीलांचपश्यतांसंकटेपतिता धीः खिद्यति ॥ १६ ॥

इहेत्यस्मिन्नर्थेत्वत्कायिकेन व्यामुग्धोहंवाचिकेनापि मुग्धोजातइत्याह ॥ मंत्रेष्विति ॥ जरासंधवधार्थंराजप्रार्थनायांयागार्थंयुधिष्ठिर-प्रार्थनायांचस्वयमुपायंजानन्नवमामुपहूयमंत्रेष्वितिबहुवचनेनकालांतरेपिस्वमंतकादिषुपृष्टमितिप्रीतभावितवेत्यनादरेआहूयतिप्रासंगिकत्वं निषिद्धस्वमितिनात्रतिरोहितंकिंचिदितिसूचितंसर्वशास्त्रानुसारेणान कुंठितः तीक्ष्णतामप्यपरित्यज्यस्वकार्यकर्ताअकुंठितः ॥ अखंडःतैल-धारावदनवच्छिन्नोनकालादिनाशंकितभंगआत्मबोधोयस्यपृच्छेःआमंत्रणेनपृष्टवानसिविधिप्रयोगात्परिहर्तुमशक्यइति सूचितं प्रभोइतिसं बोधनंपूर्वस्थितमपिनाशयेदितिभयादपिकथनंसूचितं ॥ मुग्धइवेति ॥ तदानींतनचेष्टयानजानातीत्येवंप्रतीतिरुत्पन्ना ॥ अन्यथानसोपपत्ति कंवदेत्बहूनामपिवाक्येयुक्त्याबालिष्ठत्वज्ञानेपिपक्षांतरे स्वाभिप्रेतमेवकरोतीत्यप्रमत्तइत्युक्तं ॥ अतस्तवैतादृशंचरित्रंनोस्माकमेवसर्वेषां भक्तानांमनोमोहयतीवसान्निध्याद्भजनाच्चमाहात्म्यमपिप्रतिभाती-तीवप्रयोगः देवेतिसंबोधनंच पूर्वपक्षसमाप्तिसूचकं ॥ १७ ॥

देवचरित्रंमनुष्यबुध्यानिर्द्धारणाशक्यमितिसूचनात्तस्मात्तदर्थं भागवतंकथयेत्याह ज्ञानंपरमिति पूर्वोक्तोस्माकंयोमोहःसोज्ञानकृत इतिज्ञानेनैवतन्निवर्त्तते अतोज्ञानैकप्रतिपाद्यंतादृशंभागवतंकथनीयं नतुजाग्रत्स्वप्नवत्ज्ञानाज्ञानेअन्योन्यविरोधिनीतथाचोभयोस्तुल्यवलत्वादन्योन्योपमर्दसंभवात्किज्ञानेनेत्यतआह परमिति प्रकृत्यादिनियंतृअज्ञाननिवर्त्तनसमर्थं ननुभगवदिच्छायाः प्रधानत्वादस्यज्ञानंनश्य

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ॥

त्यितीच्छयाभगवत्प्रेरितमाययावाऽज्ञानादिनिवर्त्तकमपिज्ञानंनश्येदेव ज्ञानिनामपिचेतांसिदेवीभगवतीहिसावलादाकृष्यमोहायमहामायाप्र यच्छतीतिवाक्यात्परेणापिज्ञानेनकिंप्रयोजनमित्याशंक्यपुनर्विशिनष्टि स्वात्मरहःप्रकाशमिति स्वकीयानांमायादिशक्तिनामात्मनःभगवतश्च रहोयन्मत्कर्मबंधनमोचनलीलायां कीदृशोभगवदभिप्रायस्तदीयानां चेतियत्रज्ञानेइदंरहःप्रकाश्यतेतादृशज्ञानरूपंब्रह्मणेभगवताप्रोक्तमितिश्रुतं कस्मादितिव्यर्थवचनान्नज्ञायतेकस्मैप्रोक्तंअन्यथासएवपृष्टस्यादितिगम्य तेतत्राप्यवांतरभेदाःसंतिभगवदभिप्रायाणामनंतत्वादतःसर्वएवाभि प्राये यत्रगम्यतेतत्समग्रं भगवानित्यचिरस्थैर्यंतयाकदाचित्तादृशम पिज्ञानंभवेद्वदेद्वेतिसंभावनातज्ज्ञानंपुरुषविशेषएवभवतीतिचेत्तत्राह तज्ज्ञानंनोस्माकंग्रहणायक्षमंचेत्तदावक्तव्यंअपीतिसंभावनायांकृपाविषयत्वान्ममवस्कनिर्देशाद्यमप्यपि ततसंभावितंननुतज्ज्ञानंमद्रूपंकथमन्यस्यसंभवतिसत्तुब्रह्मामद्वतारइतिचेत्तत्राह हेभर्त्तःअनधिकार्येपिभार्यायाःपतितद्वृत्तंचधर्मविभर्त्यतोस्माकंत्वंभर्त्ते तिस्वरूपत्वेपितद्युज्यतेऽतस्तत्सर्वथावक्तव्यमित्याहवदेतिप्रार्थनायांलोट् आग्रहेहेतुः अंजसायद्वृजिनंतरेमेति वृजिनंपूर्वोक्तंदुःखंतदनायासेनैवतरेमेति ॥ १८ ॥

एवंस्वाभिप्रायेप्रकटितेऽधिकार्य्ययंभवतीति; भगवांस्तदाहेत्याह इत्याधेदितहार्द्योयेति हार्दंहृदिस्थितमभिप्रेतमितियावत्तदातज्ज्ञानंभगवान्मह्यमादिदेश सिद्धमेववस्तुयथाकिंचिदादिश्यते इदमित्याज्ञाया अपिदत्तत्वात्स्वपरव्यवहारोपयोगिभाविष्यति अन्यथाकेवलनिर्देशो व्यर्थःस्यात्भगवतिस्थितमेवतज्ज्ञानमुद्भवेनव्यवहर्त्तव्यं ननुयथाब्रह्मणोदत्तंतथास्मैदत्तंतथासामर्थ्यात्तर्हिसर्वस्वंप्रदर्शितंकथतत्राह . अरविंदाक्षइति अरविंदवदक्षिणीयस्यअनेनतापहारित्वेनदृष्ट्वैवतदनाधिकारोनिवारितःभगवद्विचारेणसिद्धंतत्किरूपमित्याकांक्षायामाहआत्मनःपरमांस्थितिमितिपरमाश्रयरूपाभगवतःस्थितिर्नततःपरमन्यत्सापराकाष्ठा ॥ १९ ॥

ततस्त्वयाकिंकृतमित्यकांक्षायामाह आराधितपादतीर्थादिति एवंप्रकारेणभगवताज्ञापितार्थोहंपादौप्रणम्यपरिवृत्यविरहातुरात्माइहागतइतिसंबंधःइहागत्यवाविरहातुरात्माजातइति;तद्भागवताख्यंशब्दब्रह्ममयास्वाधीनंकृतंतच्चगुरुसेवाव्यतिरेकेणनभवतीतिप्रभुत्वेनसेवितोपिभगवान्गुरुत्वेनापिसेवितस्तदाह आराधितपादतीर्थादिति आराधितःपादश्चासौतीर्थरूपश्चतीर्थशब्देनगुरुरत्रोच्यते आराधितौपादौ यस्येतिगुरोश्चरणसेवाकृतेतिगम्यतेतादृशतीर्थाद्भगवतोऽधीतो विबोधमार्गोयेन तेचविबोधमार्गाबहवःप्रतीकादिव्यावृत्त्यर्थमात्मेत्युक्तं-आत्मविषयकोविबोधमार्गइतितत्रापिशारीरादिपक्षाःसंतीतितद्व्यावृत्त्यर्थमाह तत्वेति तत्वंपरमार्थरूपंतस्ययःसहजोभावइति स्वरूपेणैवप्रादुर्भूतइति स्वरूपमेवात्रात्मशब्देनोच्यते विशेषबोधःपूर्वसंदेहवारकः तदनंतरंविद्यासमाप्तौपादौप्रणम्यपुनस्तांगुरुत्वबुद्धिंपरित्यज्येदंवस्वामिनंमुपास्यंतंपरिवृत्यप्रदक्षिणीकृत्वेहैवागतःभगवत्प्रदक्षिणानंतरमत्रैवमात्मलाभोजातःअयमहमितिकिंभगवदिच्छयाततएकेनैवपदाऽत्रागतःक्रमेणवेतिनजानामिपरंप्रदक्षिणानंतरंमदवस्थानंस्मर्यते अतएवेदानींविरहातुरात्माजातःअन्यथैतावद्दूरमागमनेमत्रनस्यादनेनाग्रिमवार्त्तापितत्रत्यानज्ञायतइत्युक्तंभवति ॥ २० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

अस्माकं दासानां पुनस्तद्रूपगुणलीला एवदर्शनस्मरणाद्यैः परमानन्द हेतुस्तासामपि ज्ञानेनातीवाग्रहः । यत्किञ्चिज्ज्ञानस्य सत्त्वात् सामस्त्येन ज्ञानासम्भवाच्च । किन्तु तत्र लीलाः काश्चन काश्चन युक्त्या विरुद्ध्यन्ते तत्रैव मे जिज्ञासितं वर्त्तत इत्याह द्वाभ्यां । अनीहस्य निष्क्रियस्य कर्म्माणि गोवर्द्धनोद्धरणादीनि तेषांहिमाया गुणकृतानांत्वद्यारोपितत्वेनस्वरूपतः स्तावकत्वाभावान्निष्कलंनिष्क्रियंशांतंनिरवद्यंनिरंजनमितिश्रुत्युक्तेननिष्क्रियत्वेननाविविरोधः गोवर्द्धनोद्धरणादीनां कर्म्मणान्तुत्वयास्वरूपेणैवकृतत्वात्तेषांनिष्क्रियत्वेनविरोधएवेतिमम संशयःयद्वानराकृतिपरब्रह्मणस्तवनराकृतित्वे अप्राकृतानन्तकर्म्मवत्त्वं ब्रह्मत्वेप्राकृताप्राकृतकर्म्मराहित्यंतत्रैवब्रह्मपदस्यरूढेःनचनिर्विशेषस्वरूपमेवब्रह्मसाविशेषस्वरूपो भगवानिति-- स्वरूपभेदाद्व्यवस्थेयमितिवाच्यं स्वरूपद्वयाभावादिति पष्ठोक्तेः संशय एव यतस्तथा । अभवस्याजन्मनोजन्म । कालात्मनस्तवजरासन्धाद्यारिभयात् पलायनंसमुद्रदुर्गाश्रयश्च स्वात्मन्येव रतिर्यस्य तस्यापिप्रमदानामयुनेनसहाश्रमो गृहाश्रमः गृहाश्रमप्रयुक्तदेव पित्रादियोगे स्वात्मारामस्य तवरतिः ! रुक्मिण्यादि प्रमदाभीरमणेतु तथात्मारामतानापगच्छेत् तासामात्मभूतत्वादित्यहं जानाम्येव । अत एवमया आश्रमशब्दः प्रयुक्तः । इह अस्मिन् विरोधेविदां विदुषामपि धीः समाधानादर्शनात् खिद्यति नच निष्क्रियत्वाजड़त्वकालात्मत्वाऽऽत्मारामत्वादीनामेव सत्यत्वं सक्रियत्वजन्मवत्त्व भीतत्वगृहाश्रमत्वानामनुकरणभावत्वमीति वाच्यं तथात्वे विदुषां धीरत्र खिद्यतीतिनोक्तंस्यात् सक्रियत्वादीन्यनुकरणान्येव नतुवास्तवानीति ज्ञाने कुतः खेदः तथैवाक्रियत्वादिभिः प्राकृताक्रियादय एवनिषिध्यन्ते नत्वप्राकृतक्रियादय इति ज्ञानेकुतःखेदः तथैवब्रह्मत्व भगवत्त्वाभ्यामेवाक्रियत्व सक्रियत्वादिव्यवस्थांतिज्ञाने कुतः खेदइति च ततश्चसाक्रियत्वादीन्यनुकरण मात्राणीति ब्रुवाणा अक्रियत्वमप्राकृतत्रियत्वं अभवत्वमप्राकृतजन्मवत्त्वमितिचब्रुवाणा ब्रह्मत्व भगवत्त्वाभ्यामेवाक्रियत्वसक्रियत्वादि व्यवस्थेति ब्रुवाणा अखिद्यद्बुद्धय एवाविद्वांस इति ध्वनिः यदुक्तं स्वयं भगवता न मे विदुः सुरगणाः प्रभवंनो महर्षय इति सुरगणा ब्रह्माद्या अपि महर्षयो व्यासाद्या अपि मे प्रकृष्टं भवंजन्म न विदुरिति तत्रार्थः भीष्मेणाप्युक्तं न ह्यस्य कर्हिचिद्राजन पुमान् वेद विधित्सितं यद्विजज्ञासया युक्ता मुह्यन्ते कवयोऽपि हीति ॥ १६ ॥

किञ्च मन्त्रेषु जरासन्धवध राजसूयाद्यर्थं गमनविचारादिषुप्रस्तुतेषु मां वै निश्चितमुपहूयपृच्छेः उद्धव ! त्वमत्र कर्तव्यं ब्रूहीत्यपृच्छः । अकुण्ठितः कालादिना अखण्डः ॥ परिपूर्णःसदा सार्व्वदिक एव आत्मनः बोधः सच्चिच्छक्तिर्यस्यसः मुग्धइव यथान्योमुग्धो जनः पृच्छति तथेत्यर्थः किञ्चअप्रमत्तः कार्य्यान्तरव्यावृत्यादिराहितत्वादिति भावः ॥ तत्तव युगपदेवमौग्ध्यंसार्व्वज्ञञ्च मांहयतीवमोहयत्येव ॥ अत्रमुग्ध इव त्वं नतु मुग्ध इति तथा मोहयतीव नतु मोहयतीति व्याख्यायामसङ्गत्यभावादिति सङ्गतेषु वाक्येषु मध्येऽस्योत्थापनं व्यर्थं स्यादित्यतस्तथान व्याख्येयम् ॥ १७ ॥

अत एतदादि संशयापनोदनमेव ज्ञानमिच्छामीत्याह ज्ञानमिति स्वात्मनस्तव रहः सर्व्वागम्यं रहस्यं यन्मम जिज्ञास्यं तस्य प्रकाशो यत्र तज्ज्ञानं नतु त्वयादातुं प्रतिश्रुतं तन्महिमावभासमित्यर्थः कस्मैभवान् प्रावोचचंद्रदयह्याकस्मभवान् प्रावाचआपतु नकस्माम पीत्यर्थःतदपियदेवंमामनुकम्पसेतदा हेभर्त्तर्यदतद्वनाग्रहणायन्मम

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ॥

अस्माकंशुद्धदास्यवतांग्रहीतुंयदियोग्यंस्यात् किम्वायोग्यत्वेऽपियदि शक्यंस्यात्तदावदनोचेन्मावदेतिभावःयतोज्ञानादर्व्वाजनमुक्लक्षणम् मज्जिज्ञास्यं संप्रत्युपस्थितं यदुकुलसंहार त्वद्देहान्तर्द्धानादिकं च दुःखसिन्धुम् ॥ १८ ॥

मह्यं न तु मैत्रेयायापीत्यर्थः आत्मनः स्वस्य स्थितिं व्यवसितं लीलायामर्य्यादाञ्च द्वारकादिधामसु नित्यनिवासंच किन्तु यास्थितिः शुकदेवेन न विवृता नाप्युद्धवेन विदुरायान्यस्मै कस्मैचिदपीत्यतः सिद्धान्त विशेषालाभात् निष्क्रियत्व सक्रियत्वादीनामचिन्त्यशक्तिसिद्धत्वमेवाहुरेके यथोक्तं भागवतामृते कर्म्माण्यनीहेति पद्यमधिकृत्य तत्तच्च वास्तवं चेत् स्याद्विदां बुद्धिभ्रमस्तदा नस्यादेवेत्यचिन्त्यैव शक्तिर्लीलासु कारणमिति ॥ १६ ॥

स उद्धवोऽहं आराधितपादो भगवान् स एवतीर्थं गुरुस्तस्मादधीततत्त्वरूपस्य आत्मविबोधस्य मार्गो येन सः परिवृत्य परिक्रम्य ततः परंभगवता किं कृतं तन्मया न दृष्टमिति भावः॥२०॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

अनीहस्यफलसेवनस्पृहारहितस्यकर्माणिसंध्योपासनादीनि ॥ अभवस्यो पत्तिविनाशवद्देहरहितस्यभवोजन्म कालात्मनःकालशक्तेः दुर्गाश्रयः पलायनंचस्वात्मनिरातिर्यस्यतस्यप्रमदायुताश्रयः इतियत् इहास्मिन्विषयेविदामपिधीःखिद्यतिकिमुतमूर्खाणामित्यर्थःत्वयास्वर्वं लोकसंग्रहार्थंकृतंतत्र जीवास्तुकेचितत्तल्लीलाप्रयोजनानभिज्ञामुह्यंतीतिभावः ॥ १६ ॥

आस्तामन्यवार्तातत्रचेष्टितं मामपिमोहयतीवेत्याह मंत्रेष्विति पृच्छेःआपृच्छः ॥ १७ ॥

स्वात्मरहः प्रकाशंस्वात्मनस्तवतत्वप्रकाशकम् कस्मैब्रह्मणेप्रोवाचसर्वंनामत्वमार्षम् अपियदिनोस्माकंग्रहणायक्षमंयोग्यंतर्हिहेभर्तः स्वामिन्वदयत्यतः अंजसाअनायासेनवृजिनंदुः खसंसारंतरेमतरिष्यामः ॥ १८ ॥

परमांज्ञातव्यांतरराहितांस्थितिंसर्वश्रेष्ठंयाथात्म्यम् आदिदेशोपदिष्टवान् ॥ १९ ॥

आराधितपादानांब्रह्मादीनामपितीर्थंशुद्धिहेतुर्गुरुस्तस्मात् अधीत तत्वानांप्रकृतिपुरुषादीनामात्मन आश्रयस्यभगवतः योविबोधः भगवद्विषयकंज्ञानंतस्यमार्गः शास्त्रंयेनसः परिवृत्यप्रदक्षिणीकृत्य ॥ २० ॥ २१ ॥

---

भाषा टीका ।

निस्पृह जो आप तिन के कर्म अजन्मा जो आप तिनको जन्म तथा काल रूप को वैरी के डरसं भागनों और दुर्गको आश्रयलेनों आपै में रमन वारेकों वहुत स्त्रियों के साथ गार्हस्थ्य करनो यामें ज्ञानियों की भी मति घवरावै है ॥ १६ ॥

हे नाथ जो आप अकुण्ठित अखंड सदात्मवोध वारे होकर अर्थ विचार परेपै मोकूं वुलाय भोरे कैसी नांई सावधान होके पूंछते हे देव तामें मेरो मन मोहकों प्राप्तसो होवै है ॥ १७ ॥

आप के रहस्य को प्रकाश करने वारो एसो उत्कृष्टज्ञान जो आपने संपूर्ण ब्रह्मदेव को कह्यो हेस्वामिन् सो यदि हमारे ग्रहण करवे के योग्य हांयतो कहिये जासूं ये संसार दुःख विना परिश्रम तरें ॥ १८ ॥

एसें जब मैंने अपने हृदय को अभिप्राय निवेदनकियो तब वे

सोऽहंतद्दर्शनाल्हादावियोगार्त्तियुतः प्रभो ।
गमिष्ये दयितं तस्य बदर्याश्रममण्डलम् ॥ २१ ॥
यत्र नारायणो देवो नरश्च भगवानृषिः ।
मृदु तीव्रं तपोदीर्घं तेपाते लोकभावनौ ॥ २२ ॥

श्रीशुक उवाच ।

इत्युद्धवादुपाकर्ण्य सुहृदांदुःसहं वधं ।
ज्ञानेनाशमयत् क्षत्ता शोक मुत्पतितं बुधः ॥ २३ ॥
सतं महाभागवतं व्रजन्तं कौरवर्षभः ।
विश्रम्भादभ्यधत्तेदं मुख्यं कृष्णपरिग्रहे ॥ २४ ॥
ज्ञानं परं स्वात्मरहः प्रकाशं यदाह योगेश्वर ईश्वरस्ते ।
वक्तुं भवान्नोऽर्हति यद्धि विष्णो भृत्याः स्वभृत्यार्थकृतश्चरन्ति ॥ २५ ॥

भाषा टीका

पर भगवान् कमल सदृश नेत्रवारे श्रीकृष्ण मोकूं अपनी परमस्थितिको उपदेश करते भये ॥ १९ ॥

सोमें याप्रकार आराधित चरणकमल श्रीकृष्ण रूप गुरून से परमार्थ्यात्मज्ञान के मार्गको अध्ययन कर के परिक्रमादे चरणोंकों प्रणामकर विरह संआतुर चित्तवारो मैं आप के समीप में प्राप्त भयोहुं ॥ २० ॥

श्रीधरस्वामिकृत भावार्थदीपिका

तस्यदर्शनेनाह्लादः वियोगेनार्त्तिश्चताभ्यांयुतःतस्यबदर्य्याश्रमस्थानंगमिष्यामि ॥ २१ ॥

मृदुपरोपद्रवशून्यं तीव्रंदुश्चरंदीर्घंआकल्पान्तंतेपातेतपश्चरतइत्यर्थःलोकभावनौलोकानुग्राहकौ ॥ २२ ॥

ज्ञानेनविवेकेन ॥ २३ ॥

विस्रम्भात्विश्वासात् ॥ २४ ॥

यस्मात्विष्णोर्भृ याःस्वभृत्यप्रयोजनसाधकाःसन्तःचरन्ति नहिकृतार्थानामन्यत्कृत्यमस्तीत्यर्थः ॥ २५ ॥

श्रीराधारमणदासगोस्वामि विरचित
दीपिन्याख्य तट्टिप्पणी ॥

विवेकेनमौशललीलेयमिद्रजालवन्मायिकीनित्यलीलात्वमायिकीतिपृथक्पृथक्ज्ञानेनेत्यर्थः ॥ २३ ॥

कृष्णपरिग्रहे द्वारकास्थतत्पार्षदमध्ये ॥ २४ ॥

स्वात्मरहःस्वरूपभूतंप्रेमतस्यप्रयोजनतयाप्रकाशकंपरंज्ञानंपरतत्वसाक्षात्कारसाधनंश्रीमद्भागवतंशास्त्रमित्यर्थः कैवल्यैकप्रयोजनमितिसद्योद्धववरुध्यंतेत्रक्तातिभिरितिचतद्विशेषणात् ॥ २५ ॥

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

इहागत स्त्वंक्वगमिष्यसीत्यतआह सइति सोहंबदरींत्वंप्रयाहीत्याज्ञप्तोहंतस्यभगवतः दर्शनेयोममाल्हादः वियोगेनार्तिश्चताभ्यांयुतः सन्प्रभोर्भगवतः तस्यदयितंप्रियंबदर्याश्रममंडलंप्रतिगमिष्ये ॥२१॥

आश्रमंप्रस्तौति यत्रेति यत्रबदर्याश्रममंडलेऋषिः सर्वज्ञोनारायणोनरश्चमृदुलोकानांक्षेमस्वस्त्यादिकरंतीव्रंदुश्चरंदीर्घमाकल्पांतंतपस्तेपातेचक्राते कथंभूतौतेपातेलोकभावनौलोकानुग्राहकौलोकानुग्रहार्थंतस्यतपश्चरणमितिभावः ॥ २२ ॥

एवमुद्धवादुपश्रुतवृतांतस्यक्षत्तुरवस्थितिप्रकारमाहशुकःश्लोकद्वयेनइतीतिक्षत्ताविदुरःबुधःविद्वानित्युक्तप्रकारेण उद्धवादुद्धवमुखात्ज्ञातीनांदुःसहंसोढुमशक्यमत्यंतदुःखजनकमित्यर्थःवधंनाशमुपाकर्ण्यश्रुत्वोत्पतितमुत्पन्नंशोकं ज्ञानेनस्वात्मपरमात्मयाथात्म्यज्ञानेनाशमयत् ॥ २३ ॥

सइति सकौरवर्षभःविदुरःव्रजंतंव्रजिष्यंतंबदर्याश्रमंप्रतीतिशेषः महाभागवतंभागवतश्रेष्ठमुद्धवं विस्रंभाद्विश्वासादिदमभ्यधत्तानुसंहितवान्निश्चितवानित्यर्थःकिंकृष्णपरिग्रहे कृष्णानुग्रहेयमुद्धवोमुख्य इतिकृष्णपरिग्रहविषयाणांमध्येऽयंमुख्यइति विश्वासपूर्वकंनिश्चितवानित्यर्थः ॥ २४ ॥

अथश्रुतभगवद्वृत्तान्तं तदुपदिष्टतत्वजिज्ञासुःक्षत्तापृच्छातिज्ञानमितियोगीश्वरःयोगफलप्रदःईश्वरोभगवान्ततुभ्यमात्मरहः प्रकाशंपरयज्ज्ञानमाह तद्ज्ञानंभवान्नःअस्मभ्यंवक्तुमर्हति यद्यस्माद्विष्णोर्भक्ताः स्वभृत्यार्थकृतःस्वभृत्यप्रयोजनकारिणश्चरंतिहि ॥ २५ ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

इतःकुत्रयास्यसीतितत्राह सोहमिति त्वद्दर्शनजाताह्लादेनकृष्णवियोगोत्पन्नार्त्याचयुतः बदर्याश्रममंडलंबदरिकाश्रमपरिसरवर्तिकलापग्रामं ॥ २१ ॥

कृष्णप्रियत्वेनिमित्तमाह यत्रेति धर्मस्यभगवतःपुत्रत्वेनावतीर्णः साक्षान्नारायणांशोनारायणनामाशेषांशोनरोभगवांश्च मृदुलोकसुखकरंतीव्रंदुष्करं लोकभावनौ लोकग्राहकौ अनेनफलानपेक्षिताविद्युक्तंभवति तपआलोचनेकरणेच ॥ २२ ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

परमात्मनो जीवात्मनश्चस्वातन्त्र्यपारतन्त्र्यादिविशेषज्ञानेन वर्धमं-विष्यतं ॥ २३ ॥

नन्वत्रविदुरेणयदूनामेध्वंसंश्रवणोत्पन्नशोकशमनप्रयत्नएव कृतउतान्योपिप्रसंगइत्यत्राह सतमिति कृष्णेणपीरप्रहेकृष्णपरिवार जने विश्रंभादयमुद्धवोमदभीष्टंवक्ष्यतीतिविश्वासात् ॥ २४ ॥

इदमित्युक्तंविशिनष्टि ज्ञानमिति अत्रहेतुमाह यदिति हिशब्दो-वधारणार्थः हिहेतावववारणइतियादवः स्वभृत्याःस्वदासास्तेषाम र्थप्रयोजनंकुर्वतः स्वभृत्यार्थकृतश्चरंति ॥ २५ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ॥

विरहातुरात्मा चेत्तर्हिकथं चलितुंगदितुंवाशक्तोपि तत्राह सो ऽहमिति दर्शनाह्लादःशनकैर्भगवल्लोकादित्यनुसारेण वियोगार्त्तियुत स्तत्रलोकंपुनरागत इत्यनुसारेण ततोवियोगेऽपिमध्येमध्येस्वसाक्षा त्कारात्समर्थः सन्नतत्स्वदयितंमांप्रस्थापयितुंव्यञ्जितंबदर्याश्रममपि गमिष्यामीत्यर्थः ॥ २१ ॥ २२ ॥ २३ ॥

विस्रम्भात् प्रणयात् विस्रम्भः प्रश्रयेऽपिचेत्यमरः ॥ २४ ॥

यदैवज्ञानस्यासाधारणोयोभृत्यार्थःभवत् पदाम्भोजनिषेवणोत् सुकइत्युक्तानुसारेणसेवारूपस्तत् कारिणोविष्णोर्भृत्याश्चरन्ति अ-नुतिष्ठन्तीतितस्यज्ञानस्यभक्तिमयत्वंव्यक्तं अतएवासिन्नुत्तरवाक्येपूर्वो क्तश्रीमदुद्धववाक्येरहःशब्दश्चतुश्श्लोकीपठितरहस्य शब्देनसमानार्थत यानिर्दिष्टःअतःश्रीभगवद्दाक्येमन्महिमावभासमितिमहिमशब्दस्या पितत्पर्य्यन्ततायासेवतात्पर्यम अतस्तथाभूतोऽपिप्रेम्णवशएवाहं तथातथापरलीलादावा विष्टोभवामीति श्रीभगवतासिद्धान्तितमपि परमस्थितिशब्दस्याप्यत्रैव तात्पर्य्यात् ॥ २५ ॥ २६ ॥

---

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

इदानींतुविरहेणातुरआत्मामंतःकरणंयस्येततर्हिकिमतःपरंकर्त्त व्यमित्याकांक्षायामाहसोऽहमिति तस्यदर्शनेनाह्लादोवियोगेनचार्त्तिरु भययुतःसन्सर्वसंदेहानांभगवतानिवारितत्वात्प्रभोर्भगवतआज्ञा अव-श्यंपरिपालनीयेतिद्वारकांपेक्षयाभिदयितंप्रियमत्यंतं बदरीस्थानमेव भगवतांक्षपिरूपस्याश्रममिति बदर्यंबाश्रमंगमिष्यामितत्राधिकंविशे षमाह मंडलमिति यथासवितृमंडलमध्यवर्तीनारायणस्तथाबदर्याश्र-ममंडलेऽपीति ॥ २१ ॥

तत्रभगवतोनित्यसन्निधानंबोधयितुमुपपादयति यत्रेति यत्रबदरि काश्रमउभयरूपेणभगवानस्तिआश्रमेनरनारायणरूपेणचकाराद्भगवान् न रप्राधान्येनऋषिर्भगवानाश्रमे नारायणप्रधानोदेवोनरसहितोमंडले ऽतःसूर्यमंडलापेक्षयापितत्स्थानंसमीचीनमित्युक्तंभवति उभयोर्भग वत्त्वमूर्पित्वंदेवत्वंचातोमृदुतीव्रंदीर्घतपस्तेपाते देवत्वान्मृदुतपःकु-र्वंति तेहिसात्विकानात्युग्रतपोयोग्याः भगवत्त्वात्तीव्रंकुर्वंतिऋषि-त्वादीर्घंतेह्यानेकजन्मतपःकुर्वंति भगवांस्तुशीघ्रफलकंकर्मकरोति विलंबे-कारणाभावादतस्तीव्रत्वमुक्तं तपोऽत्रसमाधिरूपमाहारपरित्यागपू-र्वकंनन्वेतादृशतपःकरणेकोहेतुस्तत्राह लोकभावनाविति लोकंभाव यतःलोकास्तुत्रिविधाःअतःसर्वहितार्थंत्रिविधंतपःकरोतीत्यर्थः ॥२२॥

एवंनिश्चयांबुद्धिंनिरूप्यविपर्ययस्यात्रप्रयोजकत्वात्त्याज्यत्वेनतद्वद न्नेवसंशयमाह ॥ इत्युद्धवादितित्रिभिः अत्रप्रथममुद्धवादंवधंश्रुत्वाभ गवादिच्छांचश्रुत्वाद्वयोः फलेजातेशोकेतदपगमेचांततः बुधोभूत्वा-

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

संदेहनिवृत्त्यर्थंत्तमेवार्थंमुद्धवंपृच्छतीति स्वाधिकार वोच्यनिरूपणा त्वाक्यत्रयंसंदेहस्यानिवृत्तत्वादग्रिमवाक्यंसंदेहस्यापकमितिनेयंबुद्धि निश्चयरूपापदार्थस्यानिर्द्धारितत्वात् ॥ उपायनिर्द्धारणपक्षेतुसंशय-स्याप्रयोजकत्वात्साधननिश्चयात्मकएवस्तानिरूप्यते ॥ इत्थंपूर्वाक्रम कारणमदिरापानादिनासुहृदांवधमुद्धवादुपाकर्ण्य श्रोतुमप्यशक्यं-शोकादिस्वकार्यावश्यंभाविदुःसहमुद्धवाच्छ्रुतमितिविपरीतशंकाभा-वाद्गूराद्दमिहिरिवतस्यहृदयेशोकआपतितःतदुत्पन्नतुल्यत्रैवागतःइत्यर्थः शोकंज्ञानेननाशयत्तत्तज्ञानंतस्यपूर्वंसिद्धमित्याह ॥ स्वतेति येनज्ञा नेनपूर्वंमिन्द्रियजयेनरागोनिवार्यतेतेनैवशोकोपिनिवारितःकामादस्य विशेषमाह ॥ उत्पतितमिति ॥ उद्यतोहिकामस्तेननिवारितः परम तुत्पत्स्यर्थमेवयत्नंकृतवान्शोकंतूत्पतितमपिनिवारयामास यतोयंबुधः भगवत्स्मरणोत्पन्नस्यज्ञानेनोत्पते मनसाभगवतैवायमुपदिष्टः ॥ २३ ॥

एवंभगवच्छिष्योपिभूत्वाशोकं निवार्यविशेषाकारेणकथनार्थंतंपृच्छती त्याह ॥ सतंमहाभागवतमितिमहाभागवतत्वात्मार्थना भगवदनुग्रही तोभगवानिववक्तव्योभवति ॥ सतमितिपदाभ्यांभगवतैवैतत्स्वं यद्दत्तंकृतमितिप्रायेणैतद्वारैवविशेषंवक्ष्यतीतिप्रश्नेहेतुः व्रजंतमिति॥ सेवादिनांमनोनुरंजनानंतरंप्रष्टव्यमितिपक्षोनिवारितः स्वस्यास्याधिका रानिरूपणार्थंकौरव्यंभित्युक्तं ॥ एकस्वामिसेवकत्वात्पूर्वस्नेहाच्चपृष्टेव क्ष्यतीतिकृतविश्रंभोविश्वासस्नेहानिश्चयोवाइदंवक्ष्यमाणमभ्यधत्त ॥ तथापिभगवद्भक्तः कथमन्यंप्रार्थयतइत्याशंक्याह ॥ मुख्यंकृष्णपरिग्र हइतिभगवतायावंतः सेवकाः परिगृहीतास्तत्रोद्धवोमुख्यइतितादृश प्रार्थनेनकोपिभक्तिविरोधइत्यर्थः ॥ २४ ॥

प्रष्टव्यंपृच्छति ॥ ज्ञानंपरमितिपूर्ववद्व्याख्यानंपदत्रयस्यएतादृशंयज्ज्ञा-नगर्वांस्कन्ध्यमाह ॥ तज्ज्ञवान्नोऽस्मभ्यंवक्तुमर्हतीतियन्वयः ॥ ननुबहवएव संतिज्ञानिनोव्यासादयः किमितिमामेवप्रार्थयसइत्याशंक्यतन्नकोपि जानातीतिहेतुभूतंपदद्वयमाह ॥ योगेश्वरेश्वरइति ॥ साधनतः स्वरू पतश्चयः सर्वेश्वरः सचेत्तुभ्यमेवंप्रकारेणोक्तवांस्तदतिदुर्लभं ॥ नहि-व्यासादयईश्वराः नवानिरुद्धादयोयोगेश्वराः उभयभावमवलंब्या-पियद्गूढागवांस्कन्धमुपदिष्टवांस्तेनावश्यमेतद्वक्तव्यमितितदाह ॥ वक्तुंभवान्नोऽर्हतीति यथाभगवान्भवांस्तथामवानहमतोयथातादृशोयो गेभगवानवक्तव्यमप्युक्तवानेवंत्वमपिवदेत्यर्थः ॥ ननुभगवान्भक्तोद्धा रार्थंभवयतत्स्वतंत्रश्चातउपदेशंकरोतुनामअस्माभिस्कतत्कथंकर्तुं शक्यमित्यतआह ॥ भृत्याःस्वभृत्यार्थकृतश्चरंतीतियद्यस्माद्विष्णोर्भृ त्याःस्वामिसमानधर्मत्वात्सेवकानांयथास्वामीस्वसेवकोद्धारकःएवं भृत्याअपिस्वभृत्यार्थंभवकर्तव्यंपेणतादृशाएवभूत्वास्वभृत्यानन्वेषंदुश्चरंति अन्यथाभगवदीयत्वेनैवकृतार्थाःसंतःकिमितिपरिभ्रमेयुः भगवत्स्मर णाच्च ॥ २५ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

ननुत्वंतद्विरहव्यथयापि कथंजीवसीतितत्राह त्वदहंत्वदीयेतद्दर्श-नेनह्लादस्तद्वियोगेनार्त्तिश्चताभ्यांयुतःबदर्याश्रममिति तत्रैवगन्तुंभ-गवदादेशात् ॥ २१ ॥

तत्रैवतद्दर्शः साक्षान्नारायणआस्तइत्याह यत्रेतिमृदुसर्व्वलोकसु खदंतीव्रसर्व्वलोकैर्दुश्चरंदीर्घंबहुकालव्यापि लोकानांभावनोउदपा दकौपालकौवा ॥ २२ ॥

सुहृदांवधंदुःसहमपिउद्धवात् सकाशात्तस्यैवंप्रकारकम-

उद्धवउवाच ॥

ननुते तत्त्वसंराध्यः ऋषिःकौषारवींतिमे । :।:
साक्षाद्भगवतादिष्टो मर्त्यलोकं जिहासता ॥ २६

सूतउवाच ॥

इति सह विदुरेण विश्वमूर्त्तेर्गुणकथया सुधया प्लावितोरुतापः । ❋
क्षणमिव पुलिने यमस्वसुस्तां समुषित औपगविर्निशां ततोगात् ॥ २७ ॥

राजोवाच ॥

निधनमुपगतेषु वृष्णिभोजेष्वधिरथयूथपयूथपेषु मुख्यः । :०:
स तु कथमवशिष्ट उद्धवो यद्धरिरपि तत्यज आकृतिं त्र्यधीशः ॥ २८ ॥

श्रीशुकउवाच ॥

ब्रह्मशापापदेशेन कालेनामोघवाञ्छितः ।
संहृत्य स्वकुलं नूनं त्यक्ष्यन्देहमचिंतयत् ॥ २९ ॥ -:-
अस्माल्लोकादुपरते मयि ज्ञानं मदाश्रयम् ।
अर्हत्युद्धव एवाद्धा संप्रत्यात्मवतांवरः ॥ ३० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

उपाकरर्येत्यन्वयः ज्ञानेनकृष्णद्युमानिनिम्लोच इत्याद्युद्धवोक्तितात्पर्य्यपर्य्यालोचनजनितेन ॥ २३ ॥

विस्रम्भात् विश्वासात्स्वतोऽतिकनिष्ठंमयि कृष्णपरिग्रहेकृष्णां परिग्रहीतुंवशीकर्तुंमुख्यंस्वतोऽतिश्रेष्ठंअतःकनिष्ठा अपि भक्त्युद्रेकवन्तोज्येष्ठैरपिगुरवःकर्त्तव्याइत्यत्रविदुरवाक्यमेवप्रमाणमितिबोधतम् ॥ २४ ॥

नोऽस्मभ्यमित्यस्मदोर्द्वयोश्चेत्येकत्वेपिद्वित्वेऽपिवहुत्वं यद्यस्माद्विष्णोर्भृत्यावैष्णवाःस्वभृत्यानामर्थं भक्त्युपदेशरूपंकुर्वाणाःकृपयाश्र लोकानां गुरवोभवन्तएवभ्रमन्ति अतस्तत्सेवकाभिमानिनेमह्यं भगवज्ज्ञानमुपदिशेत्यर्थः ॥ २५ ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

लोकभावनौलौकशिक्षार्थंप्रवृत्तौमृदुसात्विकंतीव्रंरजस्तमोवृत्तिभिर्दुश्चरंदीर्घमाकल्पांतम् ॥ २२ ॥ २३ ॥ २४ ॥

यत्यतः स्वभृत्यार्थकृतः स्वभक्तप्रयोजनकारिणः ॥ २५ ॥

भाषाटीका

अंतसमें के दर्शन को सुख और वियोग को दुःख दोनों से युक्त सोमें अपने प्रभु के प्यारे वदरिकाश्रम कों जाऊँगो ॥ २१ ॥

जहां लोक के कल्याण करने वारे श्रीनरनारायण भगवान् ऋषि रूप सूं वहुत काल से शांत और दुश्चर तप कर रहे हैं ॥२२॥

श्रीशुकदेवजी वोले ॥ ऐसें उद्धव से अपने सुहृदों का दुःसह वध सुन के वढो जो शोक ताकूं परम विवेकी विदुरजी अपने विवेक सें शांत करते भये ॥ २३ ॥

भाषाटीका ।

फिर वो विदुरजी वदरिकाश्रम कों जाने वारे श्रीकृष्ण परिजन में मुख्य महाभागवत श्री उद्धवजी कों विश्वास सें यों वोले ॥ २४ ॥

विदुरजी वोले ॥ योगेश्वर श्रीकृष्ण ने अपने रहस्य को प्रकाशकजो ज्ञान आपकों कह्यो वाकों आप हम सें कहवे कों योग्यहो क्योंकि हरिदासजो हैं सो अपने दासोंई के प्रयोजन कों विचरें हैं ॥ २५ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

तत्त्वाय संराध्य इति अयंभावः भगवतैव स्मरणमात्रेण तवापि तत्त्वमुपदिष्टप्रायं । अथकेवलं असम्भावनादिनिवृत्तये ज्ञानी कश्चिदाराध्यः सचतवाराध्यो मैत्रेयोनत्वहं ।ममांतिक एव त्वदुपदेशे तस्यादिष्टत्वादिति ॥ २६ ॥

प्लावितः अपनीतः उरुस्तापोयस्य यमस्वसुर्यमुनायाः पुलिने तीरे तां निशांक्षणमिव समुषितः औपगविरुद्धवः ॥ २७ ॥

ब्रह्मशापेन निधनं प्राप्तेषु यस्मात्त्रयाणां ब्रह्मादीनामधीशो हरिरपि आकृतिं मनुष्याकारं त्यक्तवान् ॥ २८ ॥

ब्रह्मशापः अपदेशो मिषं यस्यतेनकालेन स्वशक्तिरूपेण अमोघं वाञ्छितंयस्य नह्यत्रशापः प्रभुः किन्तु भगवदिच्छैवेत्यर्थः ॥ २९ ॥

मयि उपरते सति ज्ञानमर्हति ज्ञानयोग्यो भवति नचान्यः ॥३०।

श्रीराधारमणदासगोस्वामि विरचित
दीपिन्याख्य तट्टिप्पणी ।

ननुसर्वैरेवमुमुक्षुभिर्ज्ञानीकश्चिदाराध्यएवसाक्षाद्भगवदादेशस्य

:।: तत्वसंराद्धइतिविजयध्वजीयपाठः ॥
:०: भोजेष्वतिरथेत्यादिवीरराघवीयपाठः
❋ प्लुतोरुतापइतिवल्लभवीरराघवाचार्ययोःसम्मतःपाठः ।
-:- स्वकुलंस्फीतमितिचक्रवर्त्तिवीरराघवाचार्ययोःसम्मतःपाठः ।

श्रीराधारमणदासगोस्वामि विरचित
दीपिन्याख्य तट्टिप्पणी ।

किंफलमित्यपेक्षायामाह अयंभावइति त्वदुपदेशेत्वामुद्दिश्योपदेशेत स्य मैत्रेयस्य ॥ २६ ॥

ततः यमुना पुलिनात् ॥ २७ ॥

मनुष्याकारंनद्रूपत्वेनरूपितंप्रपञ्चं मर्त्यलोकंजिहासतेति अस्माल्लोकादुपरतेतिपूर्वापरवाक्यगतिसामान्यात् वस्तुतस्तुएतेहि यादवाः सर्वेमद्गणा एवभामिनीत्यादि प्रामाण्यात् नितरांधनं यदूनांसर्वस्वं नित्यलीलास्थलम् ॥ २८ ॥

अत्रधार्मिक यदुकुल संहरणं देहं पातालमेतस्य हिपादपद्मामित्यादिनारूपितं विराडाकारंप्रपञ्चं ॥ २९ ॥

नचान्य इतिएवकारार्थः मदाश्रयंस्वयंभगवद्रूपकृष्णविषयकं आत्मवतां श्रीकृष्णैक पुरुषार्थवताम् ॥ ३० ॥ ३१ ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचंद्रचंद्रिका

तत्वजिज्ञासुनात्वयापृष्टउद्धवआह नन्विति ननुहेविदुर ! तेत्वया ऋषिस्तत्वदर्शीकौशारवोमैत्रेयःतत्वसंराध्यः तत्वोपदेशार्थमाराधनीयः पूज्यःनन्वहंकथंभूतःकौशारविःमर्त्यलोकं जिहासताहातुमिच्छताभगवतामेंऽतिसमीपेसाक्षादादिष्ट आज्ञप्तःतीर्थान्यटित्वाभवंतमुपसज्ञायत्तत्रैवमुपदिशेत्यादिष्टइत्यर्थः ॥ २६ ॥

विदुरोद्धवसंवादमुपसंहरतिशुकइतीति इतीत्थंविदुरेणसहविश्वमूर्तेःविश्वशरीरस्यभगवतोगुणकथारूपयासुधयाआप्लुतःनिरस्तःउरुस्तापोयस्यसःऔपगविरुद्धवः यमस्वसुर्यमुनायाःपुलिनेतटेतांनिशां रात्रिंक्षणमिवसमुषितःसम्यग्भगवद्गुणकथया तांरात्रिंक्षणमिवनीत्वाततःयमुनायाअगात् बदर्याश्रमंप्रतीतिशेषः ॥ २७ ॥

अथोद्धववचिपर्येकिंचिद्राजापृच्छति निधनमिति वृष्णिभोजेषुनिधनंब्रह्मशापेननाशमुपगतेषुसत्सूद्धवस्तुकथमेकोऽवशिष्टःअस्यापिविप्रशापविषयत्वादित्यभिप्रायः किमुवक्तव्यंवृष्ण्यादयोनिधनमुपगताइतिय यतःअतिरथानांयूथपांतीत्यतिरथयूथपाः तेषामपियेयूथपास्तेष्वपि मुख्यःत्र्यधीशःलोकत्रयेशःहरिरप्याकृतिंमनुष्यसजातीयसंनिवेशंतिरोभावयामास अत्रभूत्यागएवविवक्षितः सर्वेनित्याःशाश्वताश्च देहास्तस्यमहात्मनइतिस्मरणात् ॥ २८ ॥

विप्रशापादेःसर्वस्यभगवत्संकल्पानुविधायित्वात्तत्संकल्पेनायंशापविषयोऽप्युद्धवइहैवस्थापितइत्युत्तरमाहवैयासकिःब्रह्मेत्यादिब्रह्मशापापदेशेनाविप्रशापव्याजेनकालेन स्वसंकल्पितकालेनाऽमोघवांछितंयस्यसः सत्यसंकल्पइत्यर्थः एवंभूतोभगवान्स्फीतंसमृद्धंस्वकुलंसंहृत्यदेहं स्वदेहंत्यक्ष्यन्तिरोभावयिष्यन्निदमचिंतयत् ॥ २९ ॥

चिंतामेवाहअस्मादिति अस्माल्लोकान्मर्त्यकान्मय्युपरतेस्वलोकंगतेसतिमदाश्रयं अहमाश्रयोविषयो यस्यतन्मदाश्रयंसाद्विषयंज्ञानंसंप्रतीदानींमुख्यएवाभ्यास्तत्वेनसाक्षादर्हति स्वयंगृहीतुमन्यान्ग्राहयितुंच उद्धवएवयोग्यो नत्वन्यइत्यर्थःकथंभूतउद्धवःआत्मवतांस्वात्मपरमात्मयाथात्म्यज्ञानवतांसध्येवरःमुख्यः ॥ ३० ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

बन्धवोद्धवेनश्रुत्वातूष्णींगतमुतकिमप्यभिहितंतत्राह नन्विति ननुशब्दोहेत्वर्थः तत्वसंराद्धः तत्वज्ञानसिद्धः कौषारवोमैत्रेयः

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

इदंगुणनामापिवैशंपायनवल्लोकप्रसिद्धत्वादुच्यते अंतिकेममसमीपेस्थितस्तेनवभगवताऽऽदिष्टः । तत्त्वज्ञानोपदेशायेतिशेषः जिहासता हातुकामेन तस्मान्नमयापृथग्वक्तव्यमितिशेषः ॥ २६ ॥

सूतः शौनकायेमांकथांकथयति इतीति गुणकथ्यया सुधया प्लुतोगतउरुस्तापोयस्यसतथा प्लुङ्गताविति धातुः यमस्वसः यमुनायाः यस्याःपूर्वसंध्यायांविदुरदर्शनंतांनिशांसमुषितः सुखमुषित औपगविः उपगोरपत्यमुद्धवस्ततोयमुनायाः ॥ २७ ॥

परीक्षित्वदरीत्वंप्रयाहीत्यादिश्रुतकथनत्वेनइताद्धवावशेषेविशेषबुभुत्सयापृच्छति निधनमितितुशब्दएवार्थः तेषुवृष्ण्यादिषुनिधनंदेहत्यागलक्षणंनाशमुपगतेषुसत्सुसउद्धवएवकथमवशिष्टइत्यन्वयः अयोद्धमुख्यत्वादुर्वरितइतितत्राह अधिरथेति ॥ अधिरथानांयूथपांतीतिअधिरथयूथपास्तेषांयूथपांतीति अधिरथयूथपयूथपास्तेषुमुख्योमुख्यतोयोद्धाहरेरवशिष्टत्वात्तदपेक्षयेति ॥ तत्राहयद्धरिरिति हरिरप्याकृतिंपृथिवींतत्यजे तत्याजेत्यन्वयः इतियदतस्तदपेक्षापिदूरोत्सारिता त्रिलोकेशत्वमिद्रस्याप्यस्तीति त्र्यधीशइति अनेनभूलोकात्स्वर्गलोकंगतइत्यर्थःसंपद्यतेआकृतिशब्दस्यपृथिव्यभिधेयत्वे सर्वमुपपद्यते तत्कथमितीयमाशंकाशरीरमाकृतिर्देहःकुःपृथ्वीघमहीतथेत्यनेनपरिहृता अस्त्वाकृतेःपृथिवीपर्यायत्वंतथाप्यत्रतच्छब्देनशरीरमेवोच्यतइतिअंगीकर्तव्यंअनंतरमपिनिश्चेतनत्वेनतदाकारदर्शनात्अतोयुक्तिर्वक्तव्येतिचेन्न नित्यानंदस्वरूपत्वेनदेहत्यागाभोगात् अतोदेहत्यागोनामपृथिवीलोकत्यागएवतेनतदाकारदर्शनंदुष्टजनमोहनायकृतंतदुक्तंपृथिवीलोकसंत्यागोदेहत्यागोहरेःस्मृतःनित्यानंदस्वरूपत्वादन्योनैवोपलक्ष्यते दर्शयन्जनमोहाय तद्दर्शी तत्तदाकारमनटवद्भगवांविष्णुःपरज्ञानकृतिःसदेति राजन्परस्यतनुभृज्जननाप्ययेहांमायाविडंबनमवेहियथानटस्येत्यत्राप्युक्तं ॥ २८ ॥

परिहारंवक्ष्यन्नृपंशुकोवक्ति ब्रह्मेति ब्रह्मशापापदेशेनकालेनमृत्युना देहंपृथिवीं यस्यपृथिवीशरीरमितिश्रुतिः ॥ २९ ॥

परिहरति अस्मादिति अस्मात्पृथिवीलोकात् उपरतेस्वर्लोकंगते सतिअर्हति उपदेष्टुमितिशेषः आत्मवतांब्रह्मज्ञानिनांमध्येपरः ॥ ३० ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

विश्वमूर्त्तेः सर्व्वतः साक्षादिव स्फुरतः । अतएव विरहेऽपि गुणकथयेत्यादि ॥ २७ ॥

निधनं नितरां धनस्वरूपं श्रीकृष्णनित्यलीलाधाम । उप समीप तोऽवधानं निनेव गतेषु सतुकथमविशिष्टः । एक एव प्रपञ्चे स्थितः ! यतःयस्मात्त्रयाणां ब्रह्मादीनां महत्स्रष्ट्रादीनां वा अधीशो हरिराकृतिं विराड़ाकारं त्यक्तवान् । मर्त्यलोकं जिहासतेति अस्माल्लोकादुपरते इति पूर्व्वापरानुरोधात् ॥ २८ ॥

एवंत्यक्ष्यन्देहमितिचज्ञेयम् एतच्च श्रीकृष्णसन्दर्भस्यत्रिनवतितमवाक्यप्रघट्टकदृष्ट्याविचार्य्यम् । तथाहि तदेवं । यद्यपि भगवतः श्रीकृष्णस्यस्वयं भगवत्त्वेसुष्ठु निर्द्धारिते नित्यमेव तद्रूपत्वेनावास्थितिरपिसिद्धा तथापि मन्दधियां भ्रान्तिहानार्थमिदं विव्रियते । तत्र तावदारा धनावाक्येनेव सा सिद्ध्यति । आराध्यस्य भावे आराधनानोदनाया विप्रलिप्साजन्यत्वापत्तेः तच्च परमाप्तेशास्त्रेनसंभवति । संभवेच पुरुषार्था भावात् शास्त्रानर्थक्यं आरोपश्च परिच्छिन्न गुणरूपएव वस्तुनि कल्प्यतेनानन्तगुणरूपे । श्री स्वामिचरणैरपीदमवपृष्टेमकादशान्ते । धारणाध्यानमङ्गलमित्यत्र

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

धारणाया ध्यानस्य च मंगलं शोभनं विषयः। इतरथातयोर्निर्विषयत्वं ।
दृश्यते चाद्याप्युपासकानां साक्षात्कारस्तत्फलप्राप्तिश्चेति भावइ
ति। श्रूयते चैवं पञ्चमे नवसु वर्षेषु तत्तदवतारोपासनादि । यथोक्तं
नवस्वपिवर्षेषु भगवान्नारायणो महापुरुषः पुरुषाणां तदनुग्रहाया
त्मतत्त्वव्यूहेनात्मनाद्यापिसन्निधीयतइति। सन्निधानंचेदंसाक्षाद्रूपयो
व। श्रीप्रद्युम्नादौगतिविलासादेर्वर्णितत्वात् । तत्र चात्मना स्वयमे
वेत्युक्तं । तथा नित्यत्वमेव शालग्रामशिलादिषु नरसिंहत्वादिभेद
श्चसङ्गच्छते । तत्तदवतारसान्निध्यादेवहितत्तद्भेदः तथा श्रीकृष्णम
धिकृत्यापि गीतं विष्णुधर्म्मोत्तरस्यश्रीकृष्णसहस्रनामप्रारम्भे ।
तस्यहृष्टाशयःस्तुत्याविष्णुर्गोपांगनावृतःतापिच्छश्यामलरूपं पिच्छो
त्तंसमदर्शयदिति । अग्रेचतद्वाक्यं । मामथेहिमहाभागकृष्णकृत्याव-
दाम्बरपुरस्कृतोऽस्मि त्वद्भक्त्या पूर्णाः सन्तुस्ते मनोरथा इति तथा पा
द्मनिर्वाणखण्डे । पश्यत्वं दर्शयिष्यामि स्वरूपं वेदगोपितमिति-
श्रीभगवद्वाक्यानन्तरं ब्रह्मवाक्यं ततोऽपश्यमहं भूपबालं कालाम्बु-
दप्रभं । गोपकन्यावृतं गोपंहसन्तं गोपबालकैः । कदम्बमूल आसी
नं पीतवाससमद्भुतं वनं वृन्दावनं नामनवपल्लवमण्डितमित्यादि ।
त्रैलोक्यसम्मोहनतंत्रे श्रीमदष्टादशाक्षरप्रसङ्गे । अहर्निशं जपेन्मन्त्रं
मंत्री नियतमानसः । सपश्यति नसंदेहो गोपरूपधरंहरिमिति ।
गौतमीयेचसदाचार प्रसंगे । अहर्निशं जपेद्यस्तुमंत्री नियतमानसः
स पश्यति न सन्देहो गोपवेशधरं हरिमिति श्रीगोपालतापनीश्रुति
श्चवं । तदुहोवाच ब्रह्मणोसावनवरतं मेध्यातः स्तुतः परार्द्धान्ते
सोऽबुध्यतगोपवेशोमेपुरस्तादाविर्बभूवेति । सिद्धान्तिद्वंशोऽपिश्रूयते
यथा वन्दे वृन्दावनासीनमिन्दिरानन्दमन्दिरमिति बृहन्नारदीयारम्भे
मङ्गलाचरणं । अहेसंतिष्ठतेयस्यमाहात्म्यंदैत्यनाशक द्वारकायाःसमु
द्भूतं सानिध्यं केशवस्यच रुक्मिणीसहितः कृष्णोनित्यंनिवसतेगृ
हइति स्कन्दद्वारकामाहात्म्येबलिं प्रतिश्रीप्रह्लादवाक्यं व्रतिनःकार्त्तिके
मासेस्नातस्य विधिवमन्म । गृहाणार्घ्यं मयादत्तंराधयासहितो हरे
इति पाद्मकार्त्तिकमाहात्म्ये तत्प्रातःस्नानार्घ्यमन्त्रः । एवञ्चश्रीमद
ष्टादशाक्षरादयोमन्त्रास्तत्तत्परिकरादिविशिष्टतयैवाराध्यत्वेनसिद्ध
निर्द्देशमेव कुर्वन्ति तदा आवरणादि पूजामन्त्राश्च । किंबहुना कर्मवि
पाकप्रायश्चित्त शास्त्रेऽपि तथा श्रूयते यदाह बौधायनः होमस्तु पूर्व
वत् कार्यो गोविन्दप्रीतये ततः इत्याद्यनन्तरं गोविन्द गोपीजनवल्ल
भेश कंसासुरघ्नत्रिदशेन्द्रवन्द्य गोदानतृप्तः कुरुमेदयालो अशेषवि
नाशं क्षपितारिवर्ग इति अन्यत्र च तत्र यथा गोविन्द गोपीजनवल्ल
भेश विध्वस्त कंस त्रिदशेन्द्रवन्द्य गोवर्धनाद्रिप्रवरैकहस्त संरक्षिता
शेषगवांप्रवीणगोवेत्रवेणुक्षपणप्रभूतमान्धवस्तथोग्रं तिमिरंक्षपास्वि-
ति स्पष्टंचतथातंश्रीगोपालतापन्यांगोविन्दंसच्चिदानन्दविग्रहंसुर
भूरुहतलासीनंसततंसमरुद्गणोऽहंतोषयामीतिअतएवपुरस्कृतोऽस्मि
त्वद्भक्त्येत्येवोक्तमितिअलंचैवम्विधप्रमाणसंग्रहप्रपञ्चेनयतश्चिच्छक्त्यै
कव्यञ्जितानांतत्परिच्छेदादीनामपितथानित्यावस्थितित्वेनाविर्भाव
तिरोभावावेवद्वितीयसन्दर्भे साधितौस्तःसर्व्वथोत्पत्तिनाशौतुनिषि
द्धौ ततस्तदवताराणां किमुतस्वयं भगवतोवातस्यकिमुततरामिति
यथाच व्याख्यातं जगृहेपौरुषंरूपमित्यत्र तत्ववादगुरुभिःव्यक्त्यपेक्ष
याजगृहे तथाहिमन्त्रभागवते अहेयमनुपादेयंयद्रूपंनित्यमव्ययं सए
वापेक्ष्यरूपाणां व्यक्तिमेवजनार्दनः अगृह्णाद्व्यसृजच्चेतिकृष्णरामा
दिकांतनुं पठ्यतेभगवानीशोमूढबुद्धिव्यपेक्षया तमसाह्युपगूढस्य
यचमःपानमीशितुःएतत्पुरुषरूपस्यग्रहणंसमुदीर्य्यते कृष्णरामादि

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

रूपाणांलोकव्यक्तिव्यपेक्षयेति एवमेवप्रथमेद्वादशाध्यायेविभूयेत्या
दिपद्येस्वामिभिरपिव्याख्यातंयत्रदृष्टस्तत्रैवान्तर्हितः नत्वन्यत्रगतः
यतोविभुःसर्व्वगतइति तथामाध्वभाष्यप्रमाणिताश्रुतिश्च वासुदेवः
सङ्कर्षणःप्रद्युम्नोऽनिरुद्धोऽहंमत्स्यःकूर्म्मोवराहोनारसिंहोवामनोरा-
मोरामोरामकृष्णोबुद्धःकल्किरहंशतधाहंसहस्रधाहममितोहमनन्तो
ऽहं नैवैतेजायन्तेनैतेम्रियन्ते नैषामज्ञानबन्धोनमुक्तिः सर्व्वएवह्येतेपू
र्णाअजराअमृताःपरमाःपरमानन्दाइति चतुर्वेदशिखायां तथाचश्री
नृसिंहपुराणेयुगेयुगेविष्णुरनादिमूर्त्तिमास्थायविश्वंपरिपातिदुष्टहेति
तथाचश्रीनृसिंहतापन्यांतद्भाष्यकृद्भिर्व्याख्यातं एतदेवनृसिंहावग्रहं
नित्यमिति श्रुतिश्चसेयं ऋतंसत्यंपरंब्रह्मपुरुषंनृकेशरिविग्रहमिति ए
वञ्चब्राह्मपाद्मोत्तरखण्डादावपि श्रीमत्स्यदेवादीनाञ्चपृथक्पृथग्वै
कुण्ठलोकाःश्रूयन्ते एवमेव जलेषुमांरक्षतुमत्स्यमूर्त्तिरितिनारायणव
र्म्मोद्युक्तमपिसंगच्छते तस्मात् स्वयंभगवतिश्रीकृष्णेऽप्यन्यथास-
म्भावनमनादिपापविक्षेपएव तदेवमभिप्रेत्यतान्दुर्बुद्धीनपिबोधयि
तुंतस्यस्वोपास्यत्वंश्रीशुकदेवेन प्रतिपादितं पतिर्गतिश्चान्धकवृष्णी
सात्वतांप्रसीदतां मे भगवान्सतांपतिरिति अत्रविशेषजिज्ञासा-
चेत्कृष्णसन्दर्भोदृश्यः ॥ २९ ॥

अहंश्रीकृष्णरूपआश्रयो यस्येतिज्ञानस्यापिवैशिष्ट्यमुक्तं आत्मा
अहमेवपरमपुरुषार्थत्वेनाविद्यतेयेषां तेषामात्मवतांश्रेष्ठः ॥ ३० ॥

---

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

उद्धवःउपदेशार्थमेवरक्षितइतिहृदयेप्रतिभातमतोभगवदाज्ञयैवगच्छं
तमप्युद्धवंस्वभृत्यार्थकृतश्चरंतीत्युक्तवान्विदुरोक्तमभिप्रायमङ्गीकृत्य
सामान्यन्यायोयमेवेतिमत्वाविदुरभगवत्कृतोविशेषोस्तीतिभगवद्वा
क्यपरिपालनार्थंभिन्नेनप्रकारेणोपदिशतिनतुतइतितत्वोपदेशस्तुभग
वता कृतएव केवलमाचार्यवान्पुरुषोवेदेतिविधिपरिपालनार्थंयादिक
श्चिद्गुरुः सेव्यस्तदाभगवतैवनिर्दिष्टःकौषारवोमैत्रेयस्तेतवतत्वज्ञाना
र्थंसंराध्यःयतःसऋषिभगवदीयत्वेपिऋषित्वंतत्राधिकमितिभगवता
विनिर्दिष्टइति सोवश्यंतुभ्यंवक्ष्यति तदाहसाक्षाद्भगवतादिष्टइति
तादृशेसमयआज्ञप्तःसंदेहोवापुनःप्रश्नोवायत्रनोत्पद्यतएवतदाहमर्त्यं
लोकंजिहासतेति अतःपरमस्मिन्लोकेस्थितस्तदाज्ञांचेन्नकुर्यात्सोपि
लोकवत्त्यक्तव्यएवस्यात् अतः सर्वांस्त्यजन्भगवान्स्तंपरिगृह्याह
विदुरउपदेष्टव्यइति अतःसर्वथासउपदेक्ष्यतिभगवदाज्ञाचपुनस्त्वया
मयापिकर्त्तव्याऽतस्तत्रगच्छेत्यर्थः ॥ २६ ॥

एवंविदुरमुक्त्वासगतइतिवक्तुंप्रसंगादन्यांकथामुपसंहारव्याजेनकथ
यतिइतीतिसहविदुरेणेतिसंध्याकालेयमुनातीरेदृष्टउद्धवः प्रातःकाल
पर्यंतंभगवत्कथामेवकथितवान्यथायथायस्मिन्नवसरेभगवान्पुष्ट्या
दिलीलयास्वस्मिन्कृपांकृतवानेवंविदुरोप्युद्धवंप्रतिभगवत्कृपाकथां
कथयतिस्म तदाह सहविदुरेणेतिइतीत्युपसंहारःप्रसंगादन्यामपि
कथांकथयंतौभविष्यतःइत्याशंक्यतन्निराकरणार्थमाह विश्वमूर्तेरि
तिविश्वमेवमूर्त्तौयस्यअनंतमूर्तिर्वाभगवांस्तेनप्रासंगिक्यपि कथाभ
गवद्रूपयिक्यैवभवत्यतस्तस्यानंतगुणस्यसर्वोत्तमत्वप्रतिपादकायेध
र्मास्तत्कथयैवक्षुत्पिपासाश्रमादिसर्वेतापाउभयोरपिनिवृत्ताःननुकथ
याकथंक्षुत्पिपासादिकं निवर्ततेस्वाभाविकत्वाद्दोषाणांकथायाश्च-
तन्निवर्तकत्वेनलोकप्रसिद्ध्यभावादस्वाभाविकत्वमतः कथंनिवर्त
कत्वमितिचेत्तत्राह ॥

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

सुधयेतिअमृतरूपाहिसाअमृतंहितथाभवतीतिलोकसिद्धंसाकालकृत
मपिनिवर्तयतिजरामरणादिकंकिमुतकालाधीनकर्मस्वभावकृतनिवर्तक
त्वंकिंचअल्पयापिकथयासुधयालोकाअमराजायंतेतत्रतुमहानमृतपू-
रोयंनाऽऽसमंतात्प्लुतउरुतापोयस्यअतएवकालोपितननष्टातइत्याहक्ष
णामिवेति देशकृतोपिदोषस्तस्यनस्फुरितइत्याहपुलिनेयमस्वसुरिति
यमभगिनीहिकालिंदीमकरादिसर्वदुष्टजंतुसमाश्रिता तस्याः पुलिने
रात्रौसर्वेदोषाः संभवंतितेपिनस्फुरिताः अतएवतांनिशांसम्यगुषितः
ननुनिद्रयापीडितः कथंवार्त्ताकृतवांस्तत्राह औपगविरितिउपगोरप-
त्यंऔपगवस्तस्यापत्यमौपगविरितिअथवाएकोगोत्रइतिनिबंधेवाऽह्वा
दित्वदिञ् एवउपसमीपेगावोयस्यसउपगुरितिगोरक्षकत्वाद्रात्रौ-
जागरणाभ्यासस्तस्यचायमपत्यंतत्स्वाभावएव अतस्तांनिशां-
वर्त्तयैवसमुषितःप्रातःकालेतस्मात्पुलिनाद्बदरिकाश्रमंगतइत्यर्थः॥२७॥

भगवद्वियोगेपि भगवत्कथयास्थितइति सम्यगुषितः सएवनि-
वासः समीचीनोयोविषयांतराभावेन भगवत्कथयैवगच्छतीति सि-
द्धांतःविपर्ययबुद्धिमायांचैकीकृत्य प्रश्नोत्तररूपेणनिरूपयति निधन
मुपगतेष्वितिषड्भिःविपर्ययप्रश्नएवमाया सिद्धांतगोपने सिद्धांतक-
थनेप्यस्यबुद्धिपर्यवसानाय कथामात्रंशुकोराज्ञेकथयिष्यतीति सि-
द्धांतान्नसप्तार्थीराज्ञाबुद्धानवाएतेशब्दाः किन्तुशब्दांतरैरेतैश्चयथा
संभवंकथंचश्रुताश्चतोऽस्यभगवत्स्वरूपाज्ञानादेवंप्रश्नोयुक्तएव सहि-
शापादेवसर्वंजातमितिमन्यते यथा स्वतक्षकं ततःपृच्छतिनिधनमुप-
गतेषु निधनंमरणंप्राप्तेषुवृष्णिभोजेष्वितिषट्सुयादवेषुद्वौवहुवचनां
तौनिर्दिष्टौपरणांसात्विकादित्वज्ञापनायवृष्णिभोजेषु निधनमुपगते
पुसत्सूद्धवः कथमवशिष्टइतिप्रश्नः नन्वप्रयोजकावहचएवेतिशापश्च
प्रधानपरोऽतएवभगमवद्वाक्यंस्त्रियोवालाश्ववृद्धाश्चेति तथायमापिसं
न्यास्युर्वेरितइतिचेत्तत्राह अधिरथयूथपयूथपेपुमुख्यइति आधिरथा-
थानांयूथपाःसेनापतयोमहामात्रास्तेषांयूथंपांतीतिमहाराजानोजरा
संधप्रभृतयः क्षत्रियाणांवलेनैवाधिक्यात् तेष्वपिमुख्योमहावलइत्य
र्थःअतःसकथमवशिष्टोयस्मान्नाम्नैवसताहशइत्याह उद्धवोयादितिय
स्मादुद्धवःउर्ध्वंहवोयस्यसर्वापेक्षयाअस्यसंग्रामउच्चैर्भवतीतिउत्सव
परत्वेपिक्षात्रियाणां युद्धादेवोत्सवोभवतिप्रायिकमेतदितिचेत्तथास
तिशापवैयर्थ्यापत्तेरुद्धतपरभितिचेत्तत्राह हरिरपीति औद्धत्यशंका-
पियन्ननास्तीत्यर्थः यादवाकृतियथानरवानरादेरकांतवीजतत्वेपिपूर्व
वीजसंतातिपाताज्ञात्यैवभेदोभवतिएवंवाह्मणक्षत्रिययोर्यादवायादव
योश्चातोयादवेपुकश्चनधर्मोवर्ततेयेनतइतिज्ञायंतेतन्निवृत्त्यर्थमेवशापः
अतोयादवत्वख्यापनार्थंभगवांस्तल्लक्षणंस्वरूपेप्रदर्शितवांस्तदेवाकृति
शब्देनोच्यतेततांतज्यज इतिस्वबुद्धिः अधीशइतिगुणत्रयस्वामीसर्व-
मन्यथाकर्तुंसमर्थस्ताहशंपिशापंनान्यथाकृतवानित्यर्थः ॥ २८ ॥

शुकस्तद्बुद्धिमनुसृत्यैवभगवानिवतांवुद्धिलोकेस्थापयितुंप्रकारां
तरेणसमाधानमाह ब्रह्मशापापदेशेनेतिवह्मशापइत्यपदेशमात्रं किं-
तु स्वाज्ञाकारिणाकालेनसर्वंकुलंसंहृत्याज्ञामपच्छियैवकृतवान्पश्चा-
त्स्वयमेवसर्वमेवलोकंत्यजन्वीजभावेनप्रवेशं कुर्वन्नेवमचिंतयत्तदाहस्र
स्माल्लोकादिति निश्चयेनमयाऽयंलोकस्त्यक्तव्यस्तत्रगुणपंचकानांका
र्यस्यजातत्वाज्ज्ञानकार्यमवशिष्यतेतत्तुनग्रंथमात्रेणभवतिप्रत्यक्षसंदे
हानांतत्रानिराकरणादतः केनचित्पुरुषेणतत्प्रवर्त्तकेनास्थातव्यंतत्र
ममानंतगुणत्वेपिप्रचारयमाणेज्ञानेऽयंवाउद्धवोवाप्रचारणसमर्थोभ-
वतियतस्तज्ज्ञानमपिमद्विषयकमेव नह्यन्योमांजानाति अहंवाजाना-
मिभक्त्यामामभिजानातीति ज्ञानपूर्णभक्तोवा अतउद्धवम्-

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

ज्ञानपूर्णमक्तंज्ञात्वास्वस्थानतेस्थापितवान् ॥ २९ ॥

किंच तज्ज्ञानंमदाश्रयंमामेवाश्रित्यातिष्ठति भगवच्छब्दवाच्यगुण
मध्यपातात् शब्दाश्रितंज्ञानंवाक्यश्रवणात्सर्वस्यैवाधिकारिणो-
भवति इदंतुमय्येवहृदिस्थितेमत्संगेनसमायाति नारदादयोपिशास्त्रा
श्रितमेवज्ञानंसमाश्रिताः इदंतुपुष्ट्यात्मकमहंतुस्वस्मिन्वाभक्तेवातिष्ठा
म्यतोभक्तोत्तमत्वात्साक्षादुद्धवएवार्हति॥ननुसंतिज्ञानिनोन्येपिभक्ता
श्चकोस्मिन्विशेषइत्याशंक्याह संप्रत्यात्मवतांवरइति संप्रतिमज्ज्ञानधा
रकः कोपिनास्तिअत्रांगत्रयमपेक्षते ज्ञानंभक्तिरतिर्जितेंद्रियताच त-
त्त्रयंकस्यापिनास्तिएकेनद्वयेनवानेदंज्ञानंतिष्ठति अयंकालः सर्वानेवा
जितेंद्रियानेवकरोति तस्मादुद्धवएवसंप्रत्यात्मवतांवरः ॥ ३० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

इदमभ्यर्हणीयं कथमहं शिष्यीकुर्य्यामिति स्वगतं ब्रुवन्नये महा
भाग यद्भगवन्मुखादवगतं तस्य तदीय यादवादीनाञ्च देहत्यागंविनै
व स्वस्वधामास्थितत्वं तत्तन्मयोक्तमेव किंतु तदीय जन्मकर्माद्यशेष-
विशेषतत्त्वानि जिज्ञाससेचेत् तर्हि ऋषिर्मैत्रेय एव गुरुः कर्त्तव्य इ
त्याह नन्विति । ननु निश्चितमेव तस्य भावस्तत्त्वं तेन स्वभृत्यार्थकृत
त्वेनगुरुत्वेनेतियावत्संराध्यआराध्योमैत्रेयएवनतुअहंयतस्तदुपदेशा
र्थममांतिके भगवता साक्षात् स आदिष्ट एव ॥ २६ ॥

तां निशांक्षणमिव समुषितः औपगविः औपगवस्यापत्यमुद्धवः
ततः प्रातरगात् ॥ २७ ॥

निधनं नाशं यद्यस्माद्यधीशो हरिरपि आसम्यक्प्रकारेण कृतिं
चेष्टां लीलां तत्याज समापीचकारेतिप्रकटोऽर्थः वस्त्वर्थस्तु नितरां
धनं सर्वस्वं कृष्णं प्रपञ्चागोचरीभूतमपि उपगतेषु निकटंप्राप्तेषु
वृष्ण्यादिषु स तु उद्धवः कथमवशिष्टः तदीय विरहसन्तापमुपलब्धु
मेकांशेनापि प्रकटतयास्थित्यनौचित्यादिति भावः । न च सवृष्ण्या
दिष्वप्रसिद्धो मन्तव्यः यतः अधिरथेत्यादि । ननु बदरीं त्वं प्रयाही-
ति भगवदाज्ञां कथमन्यथा कुर्यात्तत्राह यस्य हरिः सर्व्वदुःखहर्त्ता
पि प्रभुः आकृतिं इङ्गितमपि तत्याज । आकारस्त्विङ्ग इंगितमित्यम-
रः व्रजदेवीषु तद्यातमाचिरं गोष्ठं । शुश्रूषध्वं पतीन्सतीरितिवदाज्ञा
दानसमये यदि किमपींगितमकरिष्यत्तदा महासुखाद्धरसावुद्धवो
बदरिकाश्रमं नागमिष्यत्तत् समीप एवास्थास्यादित्यर्थः ॥ २८ ॥

प्रत्युत्तरमाह बह्मशापापदेशः प्रपञ्चागोचरी करणे मिषं तेन
स्वकुलं संहृत्य अचिन्तयत् कालेनापि अमोघंव्यर्थीकर्त्तुं अशक्यंवा
ञ्छितमिच्छा यस्य सः । स्फीतं स्वमर्य्यादातोप्यति विस्तृतं देहंत्य
जन् अचिन्तयत् । तद्देहस्य निबन्धनं प्रापञ्चिकलोकचक्षुर्गोचरी-
भूतत्वमेवस्फीतत्वं । तत्रसविशेषणेहिविधिनिषेधौविशेषणमुपसंक्रा
मतः सति विशेष्यबाध इति न्यायेन त्यागक्रिया विशेषण एवान्वे
तिनतु विशेष्ये यथा चैत्रोराजा भवति देहं त्यजन् पुष्टमसौ चकार
इयं साध्वी स्त्री नष्टाऽभवदिति । अत्र त्यागक्रियाया देहेऽन्वयवा
धो भगवद्देहस्य सच्चिदानन्दरूपत्वेन नित्यत्वात् तथाहि महावा
राहे । सर्व्वेनित्याः शाश्वताश्च देहास्तस्य परात्मनः । हानोपाद
नरहिता नैव प्रकृतिजाः क्वचित् । परमानन्दसन्दोहा ज्ञानमात्रा
श्चसर्व्वतइति । तथा माध्वभाष्यप्रमाणिता श्रुतिश्चवासुदेवः स-
ङ्कर्षणः प्रद्युम्नोऽनिरुद्धोहंसो मत्स्यः कूर्म्मोवराहोनरसिंहोवामनोरा
मोरामोरामऽकृष्णोबुद्धः कल्किरहं शतधाहं सहस्रधाहममितोहमन
न्तोऽहंनैवैतेजायन्तेनैतेम्रियन्तेनैषांबन्धोनमुक्तिःसर्व्वएवह्येतेपूर्णा:अ
जराअमृताःसच्चिदानंदरूपत्वेनविभुत्वेपिस्वरूपाःपरमाःपरमानन्दाः

नोद्धवोण्वपि मन्न्यूनो यद्गुणैर्नार्दितः प्रभुः । *
अतोमद्वयुनंलोकं ग्राहयन्निह तिष्ठतु ॥ ३१ ॥
एवं त्रिलोकगुरुणा संदिष्टः शब्दयोनिना ।
बदर्याश्रममासाद्य हरिमीजे समाधिना ॥ ३२ ॥
विदुरो प्युद्धवाच्छ्रुत्वा कृष्णस्य परमात्मनः
क्रीडयोपात्तदेहस्य कर्माणि श्लाघितानि च ॥ ३३ ॥
देहन्यासंच तस्यैवं धीराणां धैर्यवर्धनम् ।
अन्येषां दुष्करतरं पशूनां विक्लवात्मनाम् ॥ ३४ ॥ :०:
आत्मानंच कुरुश्रेष्ठ कृष्णेन मनसेक्षितम् । ::
ध्यायन् गते भागवते रुरोद प्रेमविह्वलः ॥ ३५ ॥
कालिंद्याः कतिभिःसिद्ध अहोभिर्भरतर्षभः । ✣
प्रापद्यत स्वःसरितं यत्र मित्रासुतो मुनिः ॥ ३६ ॥
इतिश्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां तृतीयस्कंधे विदुरोद्धवसंम्वादे
चतुर्थोऽध्यायः ॥ ४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

गोविंदंसच्चिदानन्दविग्रहं वृन्दावनसुरभूरुहतलासीनमितिगोपालताप नीश्रुतं सत्यंपरं ब्रह्मपुरुषंन्टकेसरिविग्रह मिति नृसिंहतापनीच। तथा अत्रैव कृष्णद्युमणि निम्लोच इति।आदायान्तरधाद्यस्तुस्वबिंबं लोक लोचनमिति व्रजपुरवनितानां वर्द्धयन् कामदेवमित्यादि श्रुतिस्मृति वाक्यानिबहून्येव द्रष्टव्यानि अत्रतु प्रकटार्थेन देहत्यागमवगमय्यपूर्वा परवाक्यविरोधमनवधार्य्यच आसुरप्रकृतय एव प्रेमभक्त्यमृताद्वञ्चि ताः श्रीभगवतस्य मोहिनीत्वे व्याख्यातत्वात्व्याख्यास्यमानत्वाच्च नूनमिति पाठेतु निश्चितं ऊनं देहं स्वांशरूपं नारायणाभिधं अवतारकाले स्वस्मिन्वैकुण्ठादागत्यमिलितं सम्प्रति पुनर्वैकुण्ठे प्रस्थापयितुं स्वदेहाद्विभज्य त्यजन् आगतेभ्यो ब्रह्मादिभ्यः पालनार्थंदास्यन् त्यजेर्दानार्थत्वात् देहं विराडाकारं पृथ्वीमितिसंदर्भः ॥ २६ ॥

अस्मात् प्रापञ्चिकलोकादुपरते स्वीयरूपगुणलीलामाधुर्य्यवृष्टिभ्योविरते सति अहमेवाश्रयो यस्यतत् अहंयज्जानामितदुद्धवोऽपिज्ञातुमर्हतीत्यर्थः मांदिदृक्षून्मन्मुखाज्ज्ञानं जिज्ञासून्वदरिकाश्रमवासिनोमुनीन्मत्प्रतिमूर्त्तित्वेन ज्ञानं ग्राहयितुमिति भावः आत्मा अहमेव स्वामित्वेनवर्त्तयेषांतषामात्मवतां वरः श्रेष्ठः ॥ ३० ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

ननुहेविदुर! तत्वसंराध्यः तत्वोपदेशार्थसंराध्यः पूजनीयः मैत्रिमम समीमेत्यदुपदेशार्थंसाक्षाद्भगवता आदिष्टआज्ञप्तः ॥ २६ ॥

औपगविरुद्धवःगुणकथयासुधयाप्लावितः अपनीतउरुस्तापोयस्यसः यमस्वसुर्यमुनायाः पुलिनेतांनिशांक्षणमिवसमुषितः तांरात्रिंक्षणमिवनीत्वाततः पुलिनादगात् ॥ २७ ॥

श्रीमच्छुकदेव कृत सिद्धान्तप्रदीपः

आर्त्तीतत्रिगुणाभिव्यक्तिरूपंप्राकृतंलोकम् त्र्यधीशःत्रिगुणनियंता ॥ २८ ॥

अमोघंवांछितंयस्यसःभगवान्ब्रह्मशापः अपदेशोमिषंयस्यतेन स्वशक्तिभूतेनकालेनस्वंकुलंसंहृत्यदेहंलीलायतनंब्रह्मांडंत्यक्ष्यन् अचिंतयत् ॥ २९ ॥

मदाश्रयंमाद्विषयम् ॥ ३० ॥

---

भाषाटीका

उद्धवजी बोले ॥ हेविदुरजी आप को तत्वोपदेश के लियें मैत्रेय ऋषि आराधनीय है। क्योंकि मनुष्य लोक छोडने की इच्छा वारे साक्षात् श्रीकृष्ण ने मेरे समीप में उनहीं को आज्ञा दीनी हैं ॥ २६ ॥

श्रीशुकदेवजी बोले ॥ ऐसें विदुर के साथ विश्वमूर्त्ति श्रीकृष्ण की गुण कथा रूप अमृत से बुझाई है विरह की तपन जिनने ऐसे उद्धवजी यमुनाजी के तीरपै वास करत रात्रिको क्षणकी नांई बिताय के प्रातः काल में वदारिकाश्रम को गये ॥ २७ ॥

राजा परीक्षित बोले ॥ वृष्णि भोजादिक यदून मे अधिरथ यूथपन केयूथप वडे वडे योद्धा जव नाश को प्राप्त भये तव उद्धव कैसें अवशिष्टरहे क्योंकि ब्रह्म रुद्र इन्द्र तीनो के स्वामी श्रीकृष्ण जो मुख्यरहे सो भी मनुष्य देह को छोड चुके ॥ २८ ॥

श्रीशुकदेवजी बोले ॥ अमोघ इच्छा वारे श्रीकृष्णने अपने देह त्याग के पहिले ब्रह्म शापको मिष करके कालशक्ति से अपने कुल का संहार करें ऐसें विचार कियो ॥ २९ ॥

---

* यद्गुणैर्निर्जितः प्रभुरितिविजयध्वजीयपाठः ॥ सुबोधिनी संमतस्तु :०: दुष्करतमामिति ::: मनसाधृतमिति च पाठः ।
✣ सिद्धोहोभिर्भागवतर्षभइतिवीरराघवीयपाठः ॥ † द्युसरितमितिविजयध्वजीयपाठः

भाषाटीका

मोकूं याख्लोक से उपराम को प्राप्त भयेपीछें मेरे आश्रय जो ज्ञान है ताके योग्य यासमें तो वास्तव में एक उद्धवही है क्योंकि यो स्वरूपज्ञान धारेन में श्रेष्ठ हैं ॥ ३० ॥

श्रीधरस्वामिकृत भावार्थदीपिका।

मत्तः सकाशादीषदपि न्यूनो न भवति यद्यस्माद्गुणैर्विपर्यनै र्न्न क्षोभितः मद्वयुनं मद्विषयं ज्ञानं लोकेस्योपदिशन् इह भूतले तिष्ठतु ॥ ३१ ॥

एवमनेनाभिप्रायेण शब्दयोनिनावेदकर्त्रा। इंजे पूजयामास ३२

अन्येषां पशूनां पशुतुल्यानां विक्लवात्मनां अधीर चित्तानाम् ॥ ३३ ॥ ३४ ॥

मनसेक्षितं चिन्तितम् ॥ ३५ ॥

कालिन्द्याः सकाशात् क्षिप्रएव विदुरः कतिपयैर्दिनैःस्वःसरितं गङ्गां प्रापद्यत प्राप्तः ॥ ३६ ॥

इति श्री मद्भागवते महापुराणे तृतीयस्कन्धे श्रीधरस्वामि कृत भावार्थ दीपिकायां चतुर्थोऽध्यायः ॥ ४ ॥

श्रीराधारमणदासगोस्वामि विरचित दीपिन्याख्य तट्टिप्पणी।

समाधिना स्फूर्तिविशेषेणाईजेसाक्षाद्दिवसिषेवे॥३२॥३३॥३४॥३५॥

विदुरइति त्रिकम् क्रीडयाप्रपञ्चंनिष्प्रञ्चोपिविडम्बयसिभूतल इति न्यायेनभक्तसुखदकारिण्यालीलयोपात्तःप्रपञ्चेप्रकटीकृतोदेहोये नतस्यदेहन्यासंतस्यैवदेहस्यप्रपञ्चात्तिरोधापनेनाऽप्रपञ्चधाम्निविन्या सस्थापनंतविशिनष्टिधीराणांनित्यलीलास्फूर्त्तिशालिनांनित्यलीलात्व निर्णयात्स्वप्राप्तिसंभावनयांधैर्यवर्द्धनं ॥ अन्येषांतद्विपरीतभावना नांदुष्करतरंदुर्विभाव्यंकाष्ठानिकुर्विवत्यत्राहरेतिवत्सासान्यार्थोधातु

र्विशेषार्थपरःस्वयंभगवता श्रीकृष्णेनचिंतितत्वात्सिद्धएव॥ ३६॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे ष्पणयामदीपिकादीपन्यांटि चतुर्थोऽध्यायः

श्रीमद्वीरराघवाचार्य कृत भागवतचन्द्रचन्द्रिका।

एतदेवाहनेति उद्धव अपव पिमन्न्यूनोमत्तो न्यूनोनभवतिनि रंजनः परमंसाम्यमुपैति जगद्व्यापारवर्जंभोगमात्रसाम्यर्लिंगाच्चमम साधर्म्यमागताइत्यादिश्रुतिसूत्रस्मृत्यादिप्रतिपन्नंभोगेसाम्यंविवक्षि- तंमुक्तोमयासहसमानभोगयोग्यइत्यर्थःकुतः यद्यस्माद्गुणैः रजस्तमोभि श्चसत्वैस्तत्कार्यशब्दादिविषयैर्नार्दितः नपीडितः अतएवप्रभुः स्वव- शीकृतेंद्रियः अनेनमुक्तिसाधनसमग्रसंपत्तिः सूचिताअतआत्मवद्वर स्त्वान्मद्वयुनंमद्विषयज्ञानंलोकंग्राहयन्मर्त्यलोकेतिष्ठतु मुक्तिपर्यंतमि- तिशेषः ॥ ३१ ॥

उपसंहरति एवमितिएवंइत्येवंत्रिलोकगुरुणा शब्दयोनिना शा- स्त्रप्रमाणगरयेनभगवतासंदिष्टः आज्ञप्तः उद्धवः बदर्याश्रममासाद्य- समाधिनाध्यानयोगेनहरिंभगवंतमीजेयष्टवान् ॥ ३२ ॥

विदुरइति विदुरोपिक्रीडयाक्रीडार्थंमुपात्तदेहस्यस्वच्छोपात्ताप्राकृतदि व्यविग्रहस्यपरमात्मनः श्रीकृष्णस्यकर्माणिश्लाघितानिचरित्राणिच-

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका

उद्धवाकूतत्वात्तस्यैवभगवतःधीराणांयोगिनांधैर्यवर्द्धनंयोगवर्द्धकंवि क्लवात्मनामधीरचित्तानांपशूनामज्ञानिनांदुष्करतरंदेहन्यासंचदेहत्या गप्रकारंचहेकुरुश्रेष्ठ! राजन्कृष्णेनभगवताकर्त्रामनसाकरणेनेक्षितं दृष्टमात्मानंस्वात्मानंचश्रुत्वेतिपूर्वेणान्वयः भागवतेउद्धवेगतेसतित मेवश्रीकृष्णमेवध्यायन्प्रेमविह्वलः निरतिशयभगवत्प्रेमपरवशस्सन् रुरोद ॥ ३३ ॥ ३४ ॥ ३५ ॥

कालिंद्याइति भागवतर्षभः भागवतश्रेष्ठोविदुरः स्वयं सिद्धएवपरिनिष्पन्नभक्तियोगनिष्ठएवकतिचिदहोभिर्दिनैः कालिं द्याःयमुनायाः सकाशात्स्वः सरितंगंगांप्रापद्यतप्राप्तः यत्रगंगातीरे हरिद्वारेमित्रासुतोमैत्रेयः आस्तेतत्रप्रापद्यतइत्यर्थः ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे वीरराघवा चार्यकृत भागवतचंद्र चंद्रिकायां टीकायाम् चतुर्थोऽध्यायः

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली॥

एतदेवनिर्धारयति नेति प्रभुरहंयद्गुणैर्यस्यभक्त्यादिगुणैर्मि- र्जितोवशीकृतः सउद्धवोऽणवपि किंचिदपिमन्न्यूनोमत्तोहीनोनभव ति किंतुममसमएव उत्तमैरधिकत्वंवासाम्यंवापिजयोपिवा उच्यते- पितुनीचानांमोहार्थंवाप्युपेक्षयेत्यादेर्दुष्टजनमोहार्थं तत्कालेस्वज्ञानो पदेष्टुःपुरुषाधिक्यज्ञापनार्थंवा श्रीकृष्णेनस्वस्वाम्युद्धवस्योक्तं- नतुतत्वार्थमितिज्ञातव्यं यतोमज्ज्ञानोपदेष्टृपुरुषाधिकोयमतःपुनर्म द्वयुनंलोकंजनंज्ञानादिकंग्राहयन्निहातिष्ठतु इत्यचिंतयदित्यन्वयःएते नकारणेनोद्धवोवशिष्टइतिप्रश्नपरिहारः ॥ ३१ ॥

उद्धवेनाप्येतदाज्ञकृतेत्याह एवमिति शब्दोवेदोयोनिर्ज्ञप्तिकार णंयस्यसतथा तेनईजेपूजयामास ॥ ३२ ॥

औद्धवींसमाप्यवैदुरींकथामाह विदुरोपीत्यादिना ॥ ३३ ॥

देहन्यासंपृथिवीलोकत्यागं पशूनामज्ञानाम् ॥ ३४ ॥

आत्मानंस्वमनसेक्षितंस्मृतम् ॥ ३५ ॥

धुसरितंगंगां मित्रासुतोमैत्रेयः॥ ३६ ॥

इतिश्रीभागवतेतृतीयस्कंधेश्रीमद्विजयध्वजतीर्थकृतायांपदरत्ना वल्यां टीकायांचतुर्थोध्यायः ॥ ॥ ४ ॥

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः।

यद्यस्मादतिशयेनमदन्यूनत्वाद्धेतोःगुणैःसत्वादिभिर्नार्दितःनपी डितःगुणातीतइत्यर्थःयतःप्रभुःसर्व्वार्थेसमर्थश्चमद्वयुनं मद्विषयम् ज्ञानंग्राहयन्तितिवदरिकाश्रमगतांस्तान्महामुनीन् प्रत्यपीत्यर्थःतदि दंग्राहणं व्यक्तमकार्षीयष्यमाणामपिज्ञेयमेव भगवत्संकल्पस्यान्य थात्वासम्भवात् यथोक्तंममोघवाञ्छितइति ॥ ३१ ॥

बदर्य्याश्रमंप्रतिगमनायभगवदादेशोऽयंश्रीभगवद्विहारमयेस्मि न्देशेतेनस्थातुमशक्यत्वादित्यभिप्रायः समाधिनाअनन्यमनोवृत्या ईजेसाक्षाद्दिवसिषेवे तदिदंतुमैत्रेयसहिततयासंक्षेपेणतद्ग्रहस्यान्त मेवज्ञेयं इतितस्यधैर्य्यकारणंदर्शितम् ॥ ३२ ॥

विदुरइतित्रिकं उपादानमत्रप्रकटनंप्रापञ्चिकभक्तसमीपानयना र्थत्वात् देहन्यासंप्रकटलीलावकाशेधाम्निस्वविग्रहस्यविन्यासंप्र वेशनमित्यर्थः धीराणांतस्मिन् लुब्धचित्तानां तद्रूपत्वेनैवतदवस्थान-

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

निर्णयाद्वैर्य्यवर्द्धनं अन्येषांतद्विपरीतबुद्धीनांतत्वाज्ञानाद्दुर्विभाव्य-मित्यर्थः ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥

इतिश्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भे
चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

किंच । नोद्धवोणवपिमन्न्यूनः ज्ञानाधारत्वार्थंयेगुणाअपेक्षंतेतेम यीवोद्धवेपिसर्वेसंतिसर्वप्रकारेणातोणुमात्रमपिमन्न्यूनोनभवतितत्र-प्रमाणमाह ॥ यद्गुणैर्नार्दितइतिज्ञानेसएवाधिकारीयस्यगुणक्षोभो नभवतिगुणाहिबहुधाहृदयेक्षोभमुत्पादयंतिकिंबहुनातत्क्षोभरहितोब्र ह्मापिनभवत्यतोऽयमेवगुणैर्नार्दिततत्रहेतुमाहप्रभुरितिप्रभुःसमर्थःस्व भावनियंतासएवशूरइत्युच्यते शूरएवहिलोकेप्रभुर्भवति ॥ तथास्मि न्शास्त्रेयएवस्वभावंजयतिसएवप्रभुस्तादृशश्चोद्धवःक्षत्रियः शूरः संबंधीपितृव्योपिभूत्वानीचादपिनीचभावेनैवसेवतेअयमेवहिस्वभाव जयः इदमेवप्रभुत्वं । भगवदवगतंअतोमद्वयुनंमज्ज्ञानंलोकमधिकारि णंग्राहयन्भक्तिज्ञानोपदेशेनजितेंद्रियत्वंशिक्षयन्निहलोके तिष्ठतुएव-मचितयदितिसंबंधः ॥ ३१ ॥

ततोभगवताज्ञप्तस्तथैवकृतवानित्याह ॥ एवंत्रिलोकगुरुणेति एवमेवप्रमेयंबोधयित्वात्वंतिष्ठेत्याज्ञप्तः आज्ञागुरूणांह्यविचारणीये तिममैतदसाध्यमिति ज्ञात्वापिजगद्गुरुवाक्यंस्वशक्त्यनुसारेणकर्त-व्यमितिकृतवान् ननुभगवानेवसर्वानेवानधिकारिणोज्ञात्वाकिमित्युद्धवं स्थापितवानित्याशंक्याह ॥ शब्दयोनिनेतिसहिवेदकर्तासर्वाधिका-रेणपदार्थान्वदतियत्रैचतदधिकारेणविशतिसएवाधिकारीभवती-तिनास्याधिकारानधिकारविचारः कश्चित् प्रजापतिरात्मनोवपामुद खिददित्युपक्रम्यसएतंप्राजापत्यमजंतूपरमालभेतेत्याह नह्येतादृश-स्तुपरः केनचिदुत्पादयितुंशक्यते ॥ तथापिसर्वप्रकारेणक्रीडांकुर्वन्ने तत्कर्मणियमेवयजमानंकृत्वाक्रीडितुंवांच्छति । तमेवस्वप्रवेशेनतथा करोत्यतेऽत्रापिशब्दयोनिनोपदिष्टइतिवदर्याश्रमेगत्वाभगवदुक्तार्थ सिद्धयर्थंसाधनांतरमलभमानः सर्वदुखहर्तारंभगवंतंस्वमनःक्लेश-मपिनिवारयिष्यतीतिसमाधिनातमीजे ॥ अतोभगवदाज्ञयास्थितइति नशापादेर्बाधकत्वंनवासाधकत्वंयादवभावत्यागोपिनपरमार्थतःइदा नीमपिभगवतोपपादकत्वात्तथैवभक्तानामनुभवाल्लोकप्रतीत्यालीला यामपिस्वेच्छयैवतथात्वम् ॥३२ ॥

एवंप्रासंगिकंपरिहृत्यप्रस्तुतमाह विदुरोपीतिसिद्धांतस्यानुर क्तत्वाद्विपर्ययमायासंबंधस्तत्रादिसिद्धोऽतस्तच्छेदत्वेनविदुरकथापि कथ्यते अतएवाग्रेविदुरोऽन्यथावक्ष्यति सएवभगवान्कालःसर्वेषांनः समागतइतियथोद्धवोबदरिकाश्रमंगतएवंविदुरोपिप्रापद्यतस्वःसरित मितिसंबंधःमध्येस्वस्यसम्यक्ज्ञानंनास्तीतिज्ञापयितुंभागवतेउद्धवेनि र्गतेस्वयंप्रेम्णाविह्वलः सन्रुरोदरोदनेहेतवश्चभगवच्चरित्रश्रवणंभग-वन्मोहकलीलाश्रवणंभक्तेपुभगवत्कृपाश्रवणंचसात्विकमेतदाद्यंरा-जसमतस्त्रिभिरपित्रिविधिप्रेमोद्गमाद्रोदनंउद्धवमुखाच्छ्रुतत्वान्नान्य थाभावशंकालोकप्रसिद्ध्यनुसारेणवपदार्थान्निरूपयति कृष्णस्येति चरित्राणांभक्तिजनकत्वायस्वरूपमाहात्म्यमाहपरमात्मनइतिविदुरा धिकारेणैवमुक्तंस्मृत्यनुसारेणैवतस्य भगवत्स्वरूपज्ञानात्परमात्मा-पुरुषोत्तमःआत्माभूत्वासएवपरमःचिंतामणयादेर्लोकप्रतीत्यापरमत्वे

---

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

पिनात्मत्वंनवाजीवस्यपरमत्वमत्तउभयप्रकारेणभनवानेवज्ञायतइति तथोक्तं क्रीडयाबालकनटवत्कपटमानुषवेषंकृतवांस्तदेवोपात्तदेहत्वे नोच्यतेतादृशस्यसर्वैरेवश्लाघितानिकर्माणिभूभारहरणादीनिगोवर्द्ध नोद्धरणादीनिवाचकारादुगुप्तान्यपि अद्भुतचरित्रंगोपिकारमणंवा ॥ ३३ ॥

देहस्यन्यासःकारणेस्थापनंशब्दच्छलेननटवत्त्यागोवाएवामितिश्रुत प्रकारेणधीराणांवैराग्यानुसंधानानांधैर्यसाहसंसर्वपरित्यागेनएवंयो गेनैवतत्त्याज्यमितिस्वरूपेगतइतिफलप्रदर्शनादवांतरक्लेशानानुसंधेयइ तिधैर्यवर्धनंअन्येषामविवेकिनांदेहात्ममानिनांदुष्करतमंनह्येवंकाश्चि-त्कर्त्तुशक्तःतत्रापिपशूनामग्निमहिताहितविवेकानुसंधानरहितानांतत्रा पिविक्लवात्मनांविक्लवःआत्माथेषांवैक्लव्यमेवयेषामंतःकरणधर्मःसह जःमौर्ख्यणापियेषांसाहसाभावस्तेपशुभ्योपिविशिष्यंते ॥ ३४ ॥

किंचआत्मानंचभगवतामनसाधृतमितिश्रुत्वाकुरुश्रेष्ठेतिसंबोधनं मत्पूर्वजैःकृतानिपुण्यान्येववंशीयेषूपतिष्ठंत इतिज्ञापनार्थंचकारादु पदेशनार्थंमैत्रेयाज्ञापनंनकेवलंस्मरणमात्रंकिंतुमनसिस्थापितं येय-थामांप्रपद्यंतइतिन्यायव्यतिरेकेणापिवहिर्मुखोपिभक्तंपलायमानमपिम नसाधृतंतादृशंकृपापात्रमात्मानं ध्यायन्गुणांतरकथनाभावादूगतेरु-रोदप्रेम्णाविह्वलोजातोमूर्च्छितोभूदित्यर्थः ॥ ३५ ॥

ततो मूर्च्छायां भगवान्समागत्यसर्वमुपदिश्यगतइति सिद्धएव भूत्वाज्ञानादिसंपन्नोमूर्च्छातउत्थायकालिंद्यास्तीरान्निधिस्थानात्प्रा प्तपुरुषार्थः कतिभिरेवाहोभिः स्वःसरितंप्रापद्यत अयंमोहभावो मनुष्याणामेवनतुदेवानांदेवत्वप्रापिकाचगंगाअतोत्राविद्यमानापिस्वः सरिदेव। भरतर्षभेति संबोधनं फलपर्यवसायिविवेकस्यप्राप्तत्वान्न तस्यमायामोहइति सूचितं अहोभिः कतिभिरिति प्रतिबंधकका लापगमार्थमुक्तंप्रकर्षेणापद्यतेतिमध्येक्लेशाभावउक्तःतत्रगमनेहेतु-माह यत्रमित्रासुतोमुनिरिति जगन्मित्रायाःपुत्रोपितादृशःस्वस्वभा वादेवसर्वान्कृतार्थान्करिष्यतीति तस्यान्यत्रगमनशंकांवारयतिमु निरिति सहिमननशीलोजानातिचविदुरःसमायास्यतीति तादृशएव देशोवक्ताचभगवत्कथायांफलसाधकइतिज्ञापितम् ॥ ३६ ॥

इतिश्रीभागवते सुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीवल्लभ-
दीक्षितविरचितायांतृतीयस्कंधविवरणे
चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

स्वप्रतिमूर्त्तित्वे उद्धवस्य योग्यतामाह अएवपिमत्तः काशादीष दपि न न्यूनः यद्यस्मात् गुणैः सत्त्वादिभिः ननु जगत्यस्मिन् गुणा-तीताः परः सहस्रा जीवन्मुक्तागुणैरनर्दिता एव सन्तितेनकिं तेषां भगवत्साम्यात् सत्यंतर्ह्येवं व्याख्येयं गुणैरप्राकृतैर्वलबुद्धिज्ञान वै-राग्यादिभिर्नार्दितः तेषांवेगधारणसामर्थ्यमेवतैरनर्दितत्वमत्र ज्ञेयं यथा कामादिवेगधारणसामर्थ्यमेवकामाद्यनर्दितत्वमुच्यते उद्धवो हि अधिरथयूथपयूथपेषुमुख्य इत्युच्यते ॥ तर्दापनकापि तादृशस्या प्राकृतस्य बलस्याविष्कारः कृत इति बलवेगधारणं एवं बुद्धयादी नामपि वेगधारणं ज्ञेयमेतदेवासाधारण्यंप्रभु अहमिववशीकृतमाय इत्यर्थः ॥ मद्वयुनं मज्ज्ञानम् ॥ ३१ ॥

एवमनेन प्रकारेण त्रिलोकस्थानां गुरुणा केषाञ्चिदवशिष्टानां

श्रीमद्विश्वनाथचक्रवर्त्ति कृत सारार्थ दर्शिनी ।

बदरिकाश्रमवासिनामुद्धवद्वारापि गुरुणेत्यर्थः श्रुतदेवादिमिलनार्थं बाणाद्यसुरजयार्थं पारिजातादिनयनार्थं ब्राह्मणपुत्राद्यानयनार्थं देव पुत्राद्यानयनार्थश्च प्रायो मिथिलादि समस्त भूतलस्वर्ग वैकुण्ठसुत-लादीन् गच्छता स्वदर्शनेन स्वश्रीमुखज्ञानोपदेशेन च तत्रत्यान्कृता-र्थयताऽपि भगवता बदरिकाश्रमाना गमनात् तत्रत्य ऋषिगणानाम-प्युत्कण्ठा मनुस्मृत्य तत्रोद्धवः प्रस्थापितः क्वचित्कल्पे बदरिकाश्र मोऽपि स्वयं तेनैव गत इति चेत्तदा उद्धवोऽपि तत्र न प्रस्थापित इति ज्ञेयं । संदिष्ट इति कश्चित् संदेशोऽपि प्रेषितः इमं सन्देशं नर-नारायणाभ्यां देहीति संदेश विषयीकृत इत्यर्थः सच नोद्धवोऽपव पीति पद्यमेव शब्दयोनिता शब्दानां वेदलक्षणानामपि योनिरुत्पत्ति र्यतः इति वेदेष्वप्यनुपलभ्यज्ञानंभगवान् जानातीतिध्वनिः तथोद्धवे न्यस्तामित्युत्तुध्वनिः उद्धवमुखान्नरनारायणौतदेवप्राप्स्यतइतिप्रत्युत ध्वनिःसन्देशपत्री च स्वस्ति श्रीमन्नरनारायणौ प्रति विज्ञापनंचेदं। सपाद शतवर्षपर्य्यन्तैव मत्प्रकटप्रकाशगता लीला भवेत् तन्मयं-ादाच सम्प्रति वृत्तेति द्वारकायां सपरिकरेणमथा अन्तर्द्धीयतंप्रभा-सञ्ज गत्वाश्चनारितान् देवादीनाधिकारिकभक्तान् प्रतिस्वास्पदेषुप्र स्थाप्य ब्रह्मप्रार्थितेनैकेनांशेन वैकुण्ठे साज्जुनंनांशेनालक्षितंयुष्म-त्पदचगम्यते किञ्चमत्पूर्णस्वरूपदर्शनसोत्कंठानांयुष्माकंकृतेमत्प्रिय पार्षदमुख्येऽस्मिन्नुद्धवे स्वसारूप्यसादूगुणये अर्पितेयतःनोद्धवोऽराव ऽपिमन्यूनो यदूगुणैर्नार्हितःप्रभुः अतो मद्वयुनं लोकं ग्राहयन्निह तिष्ठ-त्वि त्यपा । इह बदरिकाश्रमे ॥ ३२ ॥

क्रीडयैव कर्त्या उप आधिक्येनआत्तो गृहीतोदेहो यस्य तस्य । तस्यलालाशक्तेरधीनएवसतस्यदेहस्तयैवशक्तयाऽऽविर्भाव्यतेचान्त र्द्धाप्यतेचेति भावः तथा एव मनेन प्रकारेण तस्य धीराणां यादवा दीनामपि देहानांन्यांसं द्वारकायाम प्रकट प्रकाशेर्पणं प्रभासे च-पुनस्त्यागं श्रुत्वा कीदृशं धैर्यवर्द्धनं तथा श्रुत्वैव विदुरो हृदि धैर्य्य मवधनादित्यर्थः ॥ यद्वातदपि धैर्यछेदनं वर्द्धछदनं पुनः कीदृशं-अन्यैषामसक्तानामयोगिनामापिअतिशयेन दुष्करं ॥ एकत्र देशे देहस्यान्तर्धानमन्यत्र देशे त्यागत्वेन लोके ज्ञापनमिति योगिभिर्दु-ष्करमित्यर्थःपशूनामितिभक्तानामावदिति भावः विक्लवातमनामेवं-कर्त्तुं व्याकुलमनसां आत्मानं स्वम् ॥ ३३ ॥ ३४ ॥ ३५ ॥

कालिन्द्याः सकाशात् कतिभिरहोभिः सिद्धे निष्पन्ने सति भा वेकः कतिपु अहस्सु वृत्तेषु सत्स्वित्यर्थः स्वः सरितं गगां पापद्यत प्राप्तः ॥ ३६ ॥

इति सारार्थदर्शिन्यांहर्षिण्यां भक्तचेतसाम् ॥
तृतीयेऽत्रे चतुर्थोऽपि सङ्गतः सङ्गतः सताम् ॥ ४ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

मद्वयुनंमद्विषयंज्ञानम् ॥ ३१ ॥

शब्दोवेदःयोनिर्ज्ञापकंयस्यतेनवेदवेद्येन ॥ ३२ ॥ ३३ ॥

पशूनांदारापत्यादिवश्यत्वेनपशुतुल्यानांविक्लवात्मनांविकलचि-त्तानांधैर्य्यवर्द्धनम् ·अन्येषांहरिविमुखानांतत्समर्द्धदुष्करंचकर्तुमश क्यम् तस्यभगवतः संबंधिनांधीराणांसान्निध्यादीनांएवंदेहन्यासं चश्रुत्वेत्यन्वयः ॥ ३४ ॥

मनसैवविदुरंदध्यायदामैत्रेयस्तदुपदेशार्थंप्रवर्तितस्तंकृष्णेनमन सेक्षितमात्मानंध्यायन् ॥ श्रीकृष्णानुग्रहपात्रीभूतंचिंतयन्रुरोदयतः प्रेमविह्वलः ॥ ३५ ॥

अतएवसिद्धः कालिंद्याःसकाशात् कतिभिः अहोभिर्दिवसैर्यत्र मित्रासुतोमैत्रेयस्तत्रस्थलेस्वःसरितंगंगांप्रापद्यतप्राप ॥ ३६ ॥

इति श्रीमद्भागतसिद्धांतप्रदीपेतृतीय स्कंधीये
चतुर्थाध्यायार्थप्रकाशः ॥ ४ ॥

---

भाषाटीका ॥

उद्धव मोसूं अणु मात्र भी न्यून नही है क्योंकि विषयों से जो भितनहीं भयो समर्थ है ताई सों हमारे ज्ञान को लोकों को उपदे-श करतो भयो याई लोक में रहै ॥ ३१ ॥

या अभिप्रायसों वेद कर्त्ता तीन लोक के गुरु श्री कृष्ण की-आज्ञा पाय उद्धवजी बदरिकाश्रम को प्राप्त होय समाधि से हरि को पूजन करते भये ॥ ३२ ॥

विदुरजी भी क्रीडासें देह को ग्रहण करवे वारे परमात्मा श्री कृष्ण के श्लाघायुक्त कर्म तथा अधीर चित्त वारे पशून कों अ ति दुष्कर धीरनकों धैर्य बढावन वारो प्रभु को या तरह को देह त्याग और हे राजन्! अंत समें श्रीकृष्ण नेमन सें अपनो स्मरणक रनों इन बातन को उद्धवसे सुन के इन बात न कोई ध्यान करते करते उद्धवके गये पीछें प्रेम से विह्वल होयके रोदन करत भये ॥ ३३ ॥ ३४ ॥ ३५ ॥

ऐसें श्रीयमुनाजी के तीर सें कितनेई दिनों में कृत कृत्य भरत श्रेष्ठ विदुरजी जहां मैत्रेय मुनि रहे तहां श्रीगंगाजी पै पहुंचते भये ॥ ३६ ॥

इति तृतीयस्कन्ध में भाषा टीका में चतुर्थ अध्याय समाप्त भयो ॥

श्री रुक्मिणीरमणोजयति ॥

---

## इति श्रीमद्भागवते तृतीयस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः ।

### श्रीशुक उवाच

द्वारि द्युनद्या ऋषभः कुरूणां मैत्रेयमासीनमगाधबोधम् ।
क्षत्तोपसृत्याच्युतभावशुद्धः पप्रच्छ सौशील्यगुणाभितृप्तः ॥ १ ॥ * १

### श्रीविदुर उवाच ।

सुखाय कर्म्माणि करोति लोको न तैः सुखं वान्यदुपारमं वा ।
विन्देत भूयस्तत एव दुःखं यदत्र युक्तं भगवान् वदेन्नः ॥ २ ॥
जनस्य कृष्णाद्विमुखस्य दैवादधर्म्मशीलस्य सुदुःखितस्य ।
अनुग्रहायेह चरन्ति नूनं भूतानि भव्यानि जनार्द्दनस्य ॥ ३ ॥
तत् साधुवर्य्यादिश वर्त्म शंनः संराधितो भगवान् येन पुंसाम् * २
हृदि स्थितो यच्छति भक्तिपूते ज्ञानं सतत्त्वाधिगमं पुराणम् ॥ ४ ॥

---

#### श्रीधरस्वामिकृत भावार्थ दीपिका ॥

पञ्चमे भगवल्लीलांक्षत्त्रा पृष्टो महामुनिः ।
प्रोवाच महदादीनां सर्गं तैश्च हरेः स्तुतिम् ॥ १ ॥
उक्तश्चतुर्भिरध्यायैः क्षत्तुर्मैत्रेयसङ्गमः ।
सम्वादस्तु तयोः स्कन्धद्वयेनाथ निगद्यते ॥ २ ॥

द्युनद्यागङ्गाया द्वारिद्वारे आसीनंनतुकर्म्मव्यग्रंतत्रहेतुः । अगाधः अपरिच्छिन्नोबोधोयस्येति । मैत्रेयस्यसौशील्यं आर्जवादिगुणाश्च करुणादयः तैरभितृप्तः । सौशील्यगुणाभितृप्तमिति पाठेक्षत्तुः सौशील्यादिभिरभितृप्तं सन्तुष्टं मैत्रेयम् ॥ १ ॥

प्रश्नानेवाह । सुखायेति पञ्चदशभिः । तैः कर्म्मभिरपि सुखं वा अन्यस्य दुःखस्य उपारमंवेत्यर्थः । अथवा अन्यद्वा न विन्देत किंतदित्यपेक्षायांतस्यैवनिर्द्देशः उपारमं वेति । ततश्चतैः कर्म्मभिर्भूयः पुनःपुनर्दुःखमेव विन्देत । अतएवम्विधे संसारेनोऽस्माकंयद्युक्तंयोग्यंतत् सर्व्वज्ञोभवान्वदेत् निरूपयतु ॥ २ ॥

दैवात् प्राचीनात् कर्म्मणोनिमित्तभूतात् कृष्णाद्विमुखस्यअतः अधर्म्मशीलस्यअतः सुदुःखितस्यजनस्यानुग्रहायभव्यानिमङ्गलानिभूतानि चरन्ति । भवन्तः परोपकारस्वभावाएवइत्यर्थः ॥ ३ ॥

तत्तस्मात् हेसाधुवर्य्य । शंसुखरूपंवर्त्मनः आदिशकथययेनवर्त्मनासंराधितोहृदिस्थितःसन् तत्त्वाधिगमः आत्मापारोक्ष्यंतत्सहितं पुराणं अनादिंवेदप्रमाणकम् ॥ ४ ॥

---

#### श्रीराधारमणदासगोस्वामि विरचित दीपिन्याख्य तट्टिप्पणी ॥

भगवल्लीलांप्रतिपृष्टः तैर्महदादिभिःकर्तृभि सप्रसंगउपोद्घातोहेतुतावसरस्तथा निर्वाहकैक्यकार्य्यैक्येपोढासङ्गतिरिष्यतेइत्युक्तेः—
उपोद्घातसंगतिमाहउक्तइतिसम्वादः प्रश्नोत्तरकथा अथ संगमानन्तरंतत्र कर्मव्यग्रत्वाभावे । पाठांतरे तृप्तामितिपाठे ॥ १ ॥

पूर्वार्थेएकपदत्वेन्योपरममितिस्यात्तथाचार्थत्वमनने ऽसन्तोषादथवेतिअन्यदितिपृथक्पदंतस्यैवान्यस्यततइस्यस्यव्याख्यातैरितिभगवानित्यस्यसर्वज्ञइति ॥ २ ॥

सर्वेषांसतातथास्वभावत्वेभवन्तइतिआर्थिकोर्थः एवकारेणसाधवस्तुनस्वार्थसाधकाइतिसूचितम् ॥ ३ ॥

तस्मात्परोपकारस्वभावत्वात् ॥ भक्तिपूतेप्रेमविमले ॥ आत्मपारोक्ष्यंब्रह्मपरमात्मभगवत्साक्षात्कारः ॥ ४ ॥

---

#### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचंद्रिका ।

एवंकुत्रक्षत्तुर्भगवतेमैत्रेयेणससंगमः कदावासहसंवादइत्यस्योत्तरमुक्तं अथेतः प्रभृतितृतीयचतुर्थ स्कंधाभ्यांविदुरमैत्रेयसंवादंविवक्षिष्यंस्तावद्विदुरस्यमैत्रेयोपसत्तिप्र कारंतत्पृष्टभगवल्लीलारूपमहदादिसृष्टिप्रकारंचाहानेन पंचमेनाध्यायेन तावद्यथाविधिक्षत्तुर्मैत्रेयोपसत्तिप्रकारमाहबादरायणिः द्वारीति द्युनद्याः गंगायाःद्वारिद्वारेआसीनंनिषण्णमगाधबोधमगाधोऽपारः बोधआत्मपरमात्मयाथात्म्यज्ञानंयस्यतं श्रोत्रियंब्रह्मनिष्ठइत्याद्युक्ताचार्यलक्षणलक्षित मित्यर्थः एवंभूतंमैत्रेयंउपसृत्यगुरुमेवभिगच्छेत्समित्पाणिरित्याद्युक्तरीत्योपसमीपेप्राप्यक्षत्तापप्रच्छ कथंभूतःक्षत्ताअच्युतभावः परमात्मभक्तिः तेनशुद्धः निर्मलचित्तः अनेनप्रशांतचित्तायशमान्वितायेत्यस्यार्थ उक्तःसौशील्यगुणाभितृप्तः सौशील्यंमहतोमंदैः सहनरिंध्रेण

---

* १ सौशील्यगुणातितृप्तमितिविजयध्वजीयपाठः । * २ दिशशर्मवर्त्मेतिविजयध्वजीयपाठः । * आराधितइतिवीरराघवीयपाठः ।

श्री मद्वीरराघवाचार्यकृत भागवतचंद्रचंद्रिका

संश्लेषस्वभावत्वंमैत्रेयस्यसौशील्यगुणेनाभितृप्तःसत्यार्जवदयादाना हिंसादीनामप्युपलक्षणं तैरप्यभितृप्तःएतेनाचार्यत्वपूर्तिरभिप्रेता ॥१॥ किंपृष्टवानित्यपेक्षायांतावत्परीक्ष्यलोकानित्यस्यार्थं सूचयंस्तत्प्रश्न- मेवाह सुखायेत्यादिना लोकःजनः सुखायसुखार्थंसुखलिप्सयेत्यर्थः कर्माणिकृष्यादीनिलौकिकानिश्रौतस्मार्तानिचकरोति तैःकर्मभिः सुखंवानिरतिशयसुखंवाऽन्यस्यदुःखस्यउपारममात्यंतिकनिवृत्ति-- वानविंदत नविंदते किंतुततस्तैःकर्मभिःपुनःपुनःदुःखमेव विंदेत अत्रनिरातिशयसुखप्राप्तौआत्यंतिकदुःखनिवृत्तौचसाधनत्वेनयद्युक्तं- कर्त्तव्यंतन्नः अस्मभ्यंभगवानुत्पत्यादिज्ञानसंपन्नः त्वंवदेद्वदेत्यर्थः तद्ययेहकर्मचितोलोकःक्षीयतेएवमेवामुत्रपुण्यचितोलोकः क्षीयते इत्युक्तरीत्याकर्मणामात्यंतिकदुःखनिवृत्तिपूर्वकनिरतिशयसुखप्राप्ति साधनत्वानुपपत्तिपरीक्ष्यमाणायानिरातिशयसुखसाधनविवित्सावते मह्यमुपादिशेत्यर्थः ॥ २ ॥

निवृत्तबाह्याभ्यन्तः करणव्यापारस्यभगवत्प्रवणैकचित्तस्यमेकिं भवत्कृतप्रश्नानांप्रतिवचनेनप्रयोजनमित्याशंकांशमयंस्तस्यप्रतिवच नौत्सुक्यमाविष्करोतिजनस्यंतिदैवात्पूर्वकर्मवशादधर्मशीलस्याधर्म निरतस्य पापंप्रज्ञांनाशयतिक्रियमाणंपुनपुनः । नष्टप्रज्ञःपापमेवनित्य मारभतेजनइतिवचनात्अतएवकृष्णाद्विमुखस्यपराङ्मुखस्यअतएव सुदुःखितस्यजनस्यानुग्रहायभव्यानिभद्राणिजनार्दनस्यविष्णोः भूता निविष्णुभक्ताभवंतइत्यर्थः इहमर्त्यलोकेचरंति कृपालूनांभवतांलोकानु जिघृक्षयैवमर्त्यलोकेसंचरणंनात्यथेत्यर्थः ॥ ३ ॥

बुभुत्सितानिक्रमशः पृच्छति तदिति हेसाधुवर्य! शंसुखसंपादकं तद्धर्मउपायंनःआदिशकथय कथंभूतंवर्त्मयेनवर्त्मना संराधितोभगवा न्पुंसांभक्तिपूतेभक्तियोगेनपावित्रितेहार्दिहृदयेस्थितः सन्तत्वाधिगमं तत्वमधिगम्यतेयेनतत्तत्त्वावभासकंपुराणमनादि वेदप्रमाणकंज्ञानयं च्छतितद्धर्मादिशेत्यर्थः ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

अत्रगंगाद्वारेमैत्रेयंप्राप्यविदुरस्यप्रश्नप्रकारंकथयति द्वारीति च्- त्तायुनद्याद्वारिगंगाद्वारेआसीनमगाधबोधमनवगाह्यज्ञानं विदुरस्यसौ शील्यादिगुणैरतितृप्तंमैत्रेयमभिसृत्यगुरूपसत्तिविधिनाप्राप्यपप्रच्छे त्यन्वयः अच्युतभावेनभगवद्भक्त्याशुद्धः । अच्युतभावतृप्तइतिपाठे अच्युतलीलामृतपानेनशरीरयात्रावानित्यर्थः । भावोलीलाक्रियाचेष्टे- त्यभिधानं । कुरुणामृषभइत्यनेनकुलीनत्वेनज्ञानग्रहणयोग्यत्वंसूच- यति ॥ १ ॥

ननुपृच्छतेर्द्विकर्मकत्वेनभाव्यत्वादत्रतदप्रतीतेर्निरर्थकोयंप्रश्नइ- तितत्राहसुखायेति लोकोजनःसुखायसुखप्राप्तयेयागादिकर्माणिकरो तितैःकर्मभिःसुखमन्यस्यदुःखस्योपरमंविनाशंवानाविंदेत किंचातोव हुतरांमनर्थप्राप्तिर्रपस्यादित्याह भूयइतिततःकर्मभ्योभूयोदुःखमेवा- प्नोति तदस्तुतवकिमत्राह यदत्रेति अत्रसुखप्राप्तयेदुःखनिवृत्तयेचय द्युक्तमविप्रतिपन्नत्वेनयोग्यंतदिंकनोवदेदित्यन्वयः अनेनसुखप्राप्तिंदुः खनिवृत्तिंचपप्रच्छेत्युक्तंभवति ॥ २ ॥

नन्वत्रसुखप्राप्तिदुःखनिवृत्त्युपायप्रश्नएवाक्रियतनभगवत्तत्त्वविषय इतितत्राह जनस्येति स्वतोज्ञानाभावात् बोधकपुरुपालाभाच्चकृष्णा- द्विमुखस्येत्याह नत्वयोग्यत्वादन्यथातस्यानुग्रहाय जनार्दनस्यभूता- निचरंतीत्युक्तिर्विरुद्धास्यादभव्यानिमंगलानि एवंविधानिजनार्दनस्य भूतानिज्ञानोपदेशलक्षणप्रसादकारणायेहकर्मभुविदेहधारणंकृत्वा- वर्ततइतिभावः ॥ ३ ॥

फलितमाह तदिति यतोलोकानुग्रहायभवज्जीवनंतत्तस्मात्साधु- वर्य!शर्म वर्त्मसुखप्राप्तिमार्गमादिशेत्यन्वयःयेनशर्मवर्त्मनास्वसत्ताधि गमंस्वर्व्याप्तज्ञापकंपुराणसंप्रदायागतम् ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

सौशील्यं सुस्वभावः तत्प्रधाना गुणास्तैस्तृप्तो मानादीच्छार- हितः पाठान्तरे त्वतुः सौशील्यादिभिरभितृप्तं सन्तुष्टं मैत्रेयम् ॥ १ ॥

तत्र यद्यपि विदुरः श्रीभगवदिष्टज्ञानं श्रोतुमभीष्टवान् पृष्टवां- श्च श्रीमदुद्धवं प्रति पूर्व्वं श्रीमदुद्धवेन च श्रीमैत्रेयं प्रतिप्रष्टुं श्रीभ- गवदाज्ञानुसारेणोपादिष्टः । तथापितं प्रति तमनुपृष्टवांस्तत् खलु श्रीमदुद्धवविषयकप्रश्नानन्तरं जातेन दैन्यस्वभावेनैव ॥ दैन्य- ञ्च श्रीभगवता स्वप्रतिनिधिरूपोद्धवद्वारानुपदेशेनात्मनि नाति- योग्यता मननात् श्रीभगवांस्तु तस्य श्रीमदुद्धवाच्चतुः श्लोकीमात्रे ण मनः प्रकाशाभावं तथा वहूंश्चप्रष्टव्यानर्थान् विज्ञाय तावत् सम्वादनिर्व्विवरणेन तेनतत्रोपदिदेश किंतु तत्रयोग्येन मैत्रे- येणैवेति ॥ तस्मादात्मनि तज्ज्ञानयोग्यत्वापादनसाधनायैव- स निवेदयाति सुखायेति त्रिभिः ॥ तत्रात्मनः साधारणयाय ॥ लोकमात्रस्य दौस्थ्यं प्रथमेन तादृशं विनान्याश्रयराहित्यं द्वि- तीयेन ॥ अभीष्टप्रार्थनं तृतीयेन ज्ञेयम् ॥ २ ॥

जनस्येति ॥ दैवात् प्राचीनकर्म्मणो हेतोस्तदावेशादधर्म्मशील स्य भगवद्धर्म रहितस्येत्यर्थः ॥ ३ ॥

तत् साध्वीति भक्तिपूते प्रेमविमले ॥ स तत्वं ज्ञानं तच्च ब्रह्म- भगवत्परमा त्मेत्याविर्भावम् ॥ ४ ॥

---

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

चतुर्थोसर्गआद्योत्रह्यधिकारेनिरूपितः ।
पुरुषत्वायकृष्णस्यचतुर्भिःसर्गईर्यते ॥ १ ॥
सएवभगवल्लीलांश्रोतुमर्हतितत्वतः ।
अन्यथान्योहिमनुतेह्यधिकारस्ततोहितः ॥ २ ॥
कृष्णार्थसृष्टौभूतानिजातान्येवेतिनिश्चयः ।
येदेपंचभिरेवास्य पुरुषस्यकथोदिता ॥ ३ ॥
तापवबहुधाव्यस्ताह्यस्मात्तत्त्वानितानिवै ।
भोगःशरीरएवेतिमात्रा स्तत्रनिरूपिताः ॥ ४ ॥
नानाविधानिशास्त्राणितैः संदेहाविनिश्चयौ ।
मनोभगवतोह्युक्तं तेनैवेंद्रियसंकथा ॥ ५ ॥
बुद्धिर्भगवतोब्रह्मा तत्कार्यंचनिरूप्यते ।
स्वकृतिप्रसादौकार्याणां भूतानीत्येषनिश्चयः ॥ ६ ॥
ततस्तेषांशरीराणि मात्राएवहरेर्यथा ।
कालएवेंद्रियाण्येषां तत्रासक्तोम्रियेतवै ॥ ७ ॥
बुद्धिस्तेषांमहात्मानो वेदमन्वादयस्तथा ।
तत्रोक्तैरवयद्युक्त मुक्तंतेषांहितायतत् ॥ ८ ॥
कार्योपयोगितत्वानां पंचमेविनिरूप्यते ।
उत्पत्तिःयाहशैःकार्यं तद्भावश्चनिरूप्यते ॥ ९ ॥
प्रश्नाभिनंदनौचांगं सर्वत्रैवहरेःकृतौ ।
अतोत्रभगवत्प्रश्न षड्विधोविनिरूप्यते ॥ १० ॥

### श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

वैराग्यादिःसृष्टिमार्गेविपरीतप्रवेशतः ।

तत्रप्रथमंतयोःकथार्थसंबंधमाह द्वारिद्युनद्याइतिसर्वेषांदेवत्वसिद्ध्यर्थंयादेवनदीप्रवृत्तासाप्रथमतएवसमीचीनंकार्यंकरिष्यतीति भगवदाज्ञयामैत्रेयस्तत्रैवस्थितःगंगाद्वारिब्रह्मकुंडेवेतिमेमतिः अंतर्वेदे भगवत्सानिध्यात् कुरूणांऋषभंइति महानुद्योगःफलपर्यवसायीतस्यलक्ष्यतेमैत्रेयोहितकर्ताआसीनोऽव्यग्रः अगाधोबोधोयस्येतिस्वबुद्धस्तत्रनिमज्जनंसंभविष्यतीतिसूचितं अन्यथानसर्वसंदेहनिवृत्तिःचचाप्रथमतएवजितेंद्रियोविचक्षणश्च अच्युतभावोऽच्युतेभक्तिस्तेनशापाधिकारादिवीजपातयोनिदोषादिसर्वाशुद्धिनिवृत्याशुद्धः उपसृत्यसमीपेगत्वाविध्यनुसारेणवामैत्रेयस्यार्जवकरुणादयः सौशील्यगुणास्तैराभिवृतः सःकथंवक्ष्यतिनवेतिसंदेहरूपाक्षुद्गुणैर्निवृत्तेतिताहशोभूत्वापप्रच्छेत्यर्थः ॥ १ ॥

षट्प्रश्नेषुवैराग्यार्थकउपायःकर्तव्यइति प्रश्नंकुर्वन्स्वभावतोवैराग्यहेतोरप्रयोजकत्वमाहसुखायकर्माणिकरोतीति फलंलोकेद्विविधंदुःखाभावःसुखंवादुःखस्यसुखप्रतिबंधकत्वेनवादुःखाभावःसुखएवहेतुःअतोलोकःसुखार्थमेवसर्वव्यापारंकरोति,तेनपुनःकदापिनसुखंप्राप्नोति लोकइतिप्रमाणनिर्देशःचकारात्पूर्वसुखमपिगच्छतिकिंचअन्यदुपारमंवादुःखाभावोवानभवतिप्रतिबंधकाभावएवहृयुचितसाधनपर्यवसानस्यस्पष्टत्वात्तत्परमपिनजातंतथासति सहजंवासुखंभवेत् किंचप्रत्युततैरेवदुःखंभवतिभूयःसहजादप्याधिकं ततएवेतिसाधनांतरानिवृत्तिःसाधनांतरस्यादृष्टत्वात्तदुदितःसहियो यदनंतरमितिसुखसाधनस्यैवदुःखसाधकत्वंसाधनताज्ञानंत्वंधपरंपरयाअनिवृत्तिस्त्वाग्रहात्, अस्मदीयैस्तथैवकृतमिति भूयोव्यभिचारदर्शनमपिपरंपराश्रद्धावाधतेएताहशार्थेफलविपर्ययंदृष्ट्वापियदिननिवर्ततेतदा वाक्यमात्रेणकथंनिवर्तेरन्तस्माद्वैराग्यार्थंकिंकर्तव्यमितिप्रश्नःअथवायेनैवाव्यभिचारिसुखंभवतितद्वावक्तव्यमितिलोकादतिरिक्तप्रमाणत्वंतस्याह भगवानितिअस्माकंतुभगवदुक्तमेवप्रमाणंअतोस्माभिः स्वार्थमेवपृच्छ्यतइतिनाप्रकृतत्वंवदेदितिप्रार्थनायाम् ॥ २ ॥

नन्वस्माकंभगवदाज्ञातत्वोपदेशार्थंनत्वेताहशार्थकथनार्थंइत्याशंक्याहजनस्येतिभवत्सुद्वयमस्तिभगवतः सामान्याज्ञाविशेषाज्ञाचेतिइदंसामान्याज्ञयावक्तव्यंयतो भगवान्भवतएतदर्थमेवसृजतिअन्यथाभगवदीयानोत्पद्येरन्रवाधेतेषांप्रथेजनाभावादत्पद्येतद्भूतपदप्रयोगः जानातीत्यर्थःशब्दछेन्नतेलप्राःस्वसमानंकुर्वंतीतिज्ञाप्यतेयदिलोकानांतथाभाग्यमपिनभवति तथापितएवभाग्यरूपाभूत्वातान्स्वसमानान्कुर्वंतीतिभव्यानीत्युक्तं अतोलोकोपकारार्थंसमागतानांभवतामेतदावश्यकमिति जनस्यप्राणिमात्रस्यजन्मतएवजायतेभगवद्विमुखोयमिति अन्यथाजन्मैवनस्यात्प्रवृत्त्यावावसीयतेकृष्णादितिमूलसच्चिदानंदवैमुख्यंमहदाश्चर्यमितितथापिचसुखस्यजननानंतरमपिदैवात्प्राचीनासुरकर्मणोविमुखस्यदैवादधर्मशीलस्यस्वभावतएवाधर्मेरोचतइति नहिस्वाभाविकंकेन चिन्निवर्तयितुंशक्यते अतएवसुदुःखितस्यअन्यथातदनुग्रहमपिनमन्येतइहास्मिन् लोकेनततोन्योदुःखनिवारणहेतुःनूनंनिश्चितंसंदेहाभावउभयत्रभगवदीयैरेवदुःखाभावोनान्यैरितितत्रहेतुर्जनार्दनस्येतिजनांसर्वलोकजननीं अर्दयतीतिजनायावाअर्दनोयस्मादिति सहिमूलंजननंनिवारयतितदीयाश्चतत्रसाधकाः ॥ ३ ॥

अस्योत्तरंभगवद्भजनंधर्तव्यंतदव्याभिचारिसुखहेतुर्भवतीतितेनोदितं

### श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

तदातत्रोपायंकथयेतिपृच्छतितत्साधुवर्यादिशतितत्तदायादिभगवद्भजनेनैवप्राणीकृतार्थोभवतितदातत्रवर्त्मादिशभगवत्प्रेरणयाभगवदारूपपवेदानुसारेणवाक्रियमाणोपिभगवान्नपरितुष्यति। दुःखस्यानिवृतत्त्वात्अतोयेनमार्गेणसम्यगाराधितोभगवान्ज्ञानंप्रयच्छतितमुपायंस्थिरंप्रहितंसर्वलोकप्रसिद्धंकथयेतिप्रश्नः कल्याणरूपमितिसाधनदशायामपिसुखरूपत्वंयथाविमानयानंगूढस्याप्यभीष्टस्यापिज्ञापनेहेतुः हेसाधुवर्येतिसंबोधनंहितमात्रंसाधुरपिवदतिएताद्दशंतुभगवद्भक्तायोब्रह्मवित्सएववदति। साहिस्वात्मानमिवसर्वमन्यतयेनमार्गेणप्रथमंभगवान्संराधितोभवतिभगवत्वाच्चसंराधनंकठिनंकिमासनंतेगरुडासनानाथेतिवाक्यात्स्वस्यवामर्यादत्वादिगुणवैशिष्ट्यात्सुसाधमितिबहूनांकाकतालीयवदुपायनमार्गोभवतिकिंच ॥ भगवानंतर्यामीसर्वानेवनानाप्रकारेणप्रेरयतिस्वस्वभावाज्जीवस्वभावमनु सृत्यचोभयथापिप्रेर्यधर्माविष्टोभवतितत्रयदिपूर्ववदेवसप्रेरयेत्तदाकृतमपिभजनंव्यर्थंस्यादतस्ताद्दशोपायोवक्तव्योयेनसएवांतर्यामिभक्त्याभूतोपूतः पवित्रएवप्रेरयतिभक्त्यापूतोभक्तावेवप्रेरयत्सहिस्वभावतः प्रवाहनिर्वाहार्थमेवनियुक्तस्तथाप्रेरयतियथाप्रवाहः सिध्यतिअयंसहजोधर्मस्तथाकरणादपूतइवलोकेप्रसिद्धःस्तस्यैवचवहीरूपकालःयथैकेनहस्तेनाध्रियते। अपरेणचमार्यतेतत्रोभयोः पावनार्थमार्गद्वयं सृष्टंवेदःकालस्यअंतर्यामिणांभक्तिस्तन्मार्गप्रविष्टस्सोमवत्पूताभवतिवेदेनपूतःकालोनमारयति ॥

भक्त्या पूतोंतर्यामीनान्यथाप्रेरयतिइदंचपावनंनाशुद्धस्यशुद्धिजनकं ॥ किंतुसोमवत्तन्मार्गनिर्गमनं ॥ अन्योन्याश्रयाच्चायमर्थोनासिध्यतीतिप्रश्न गुरूपदेशाच्चायमर्थोनसंत्स्यतीत्याहहृदिस्थतइतिसहिहृदयस्थितःस्वेच्छयायदिप्रेरयेत्किंथाहिरुपदेशेनअतोभगवतायदुक्तमिदंविदुषयज्ञानंवक्तव्यमिति तदंतर्यामिसमाधानव्यतिरेकेणनभविष्यतीतितत्समाधानार्थंप्रथमतोभगवदाराधनाततोभगवत्संतोषस्ततोभगवतादत्तस्यप्रेम्णः प्राप्तिस्ततः प्रेमभक्तयातस्यैवातर्यामिणोज्ञानार्थंप्रेरणंपूर्वसिद्धनानाविधज्ञानानांविद्यमानत्वात्तदस्मरणपूर्वकंयथाज्ञानमुदेतिवाक्यात्तथाप्रेरणंपुर्वसिद्धामिति॥ तर्ज्जानतंज्ञानंनकार्यंसमर्पयत्यतएवमहतापिसाधनेनवाक्यात्ज्ञानंनोदेति ॥ यदापुनःसएवांतर्यामीस्वस्यैवगुणभूतंज्ञानं तस्मैप्रयच्छति तदापार्थत्रामेववाक्यंज्ञानहेतुर्भवतितत्ज्ञानंत्रिविधंशारीरात्मनोब्रह्मत्वेनानुभवः सांख्यंसर्वतत्वाविवेचनात्मकंभगवतश्चाविशेषप्रकारेणस्वरूपबोधकंतत्त्रिविधमपिज्ञानंसाधनान्यफलभूतभक्त्यापूतो भगवान्प्रयच्छतीति ज्ञानंब्रह्मभावात् तत्वसवतत्वानांज्ञानसहितंतत्रापितत्वानां मूलभूतस्य सर्वभावज्ञानं प्रमाणम् ॥ ४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

पञ्चमे जगतः सृष्ट्याद्यपृच्छत् सुखदुःखिनः ।<br>
क्षत्रा प्रत्याह मैत्रेयः सर्गं तत्त्वैः स्तवं हरेः ॥ १ ॥<br>
भङ्ग्या चतुर्भिरध्यायैराश्रयस्याङ्गिनः स्थितिम् ।<br>
उक्त्वा तदङ्गभूक्तोऽपि सर्गः सव्यासमुच्यते ॥ २ ॥

द्युनद्या गङ्गायाः द्वारि हरिद्वार आसीनं नतु कार्य्यव्यग्रं प्रथमान्तपाठे मैत्रेयस्य शौशील्य गुणैः सन्तुष्टः द्वितीयान्तपाठे विदुरस्य ॥ १ ॥

अत्रभगवदुपादिष्टं रहस्यं ज्ञानमुद्धवात् प्राप्य स्वस्य तत्रायोग्यताम्

करोति कर्म्माणि कृतावतारो यान्यात्मतंत्रो भगवांस्त्र्यधीशः ।
यथाससर्जाग्र इदं निरीहः संस्थाप्य वृत्तिंजगतो विधत्ते ॥ ५ ॥
यथा पुनः स्वेख इदं निवेश्य शेतेगुहायां स निवृत्तवृत्तिः ।
योगेश्वराधीश्वर एक एतदनुप्रविष्टो बहुधा यथासीत् ॥ ६ ॥
क्रीडन् विधत्ते द्विजगोसुराणां क्षेमाय कर्म्माण्यवतारभेदैः ।
मनो नतृप्यत्यपि शृण्वतां नः सुश्लोकमौलेश्चरितामृतानि ॥ ७ ॥
यैस्तत्त्वभेदैरधिलोकनाथो लोकानलोकान्सहलोकपालान् ।
अचीक्लृपद्यत्रहिसर्व्वसत्त्व निकायभेदोऽधिकृतःप्रतीतः ॥ ८ ॥
येनप्रजानामुत आत्म कर्म्मरूपाभिधानाश्चभिदांव्यधत्त ।
नारायणो विश्वसृगात्मयोनिरेतच्च नोवर्णयविप्रवर्य्य ॥ ९ ॥
परावरेषां भगवन् व्रतानिश्रुतानिमे व्यासमुखादभीक्ष्णम् ।
अतृप्नुमः क्षुल्लसुखावहानां तेषामृते कृष्णकथामृतौघात् ॥ १० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शनी ।

मत्वा आंतिनिर्व्विण्ण एव विदुरो मनसि परामम्रर्श । तस्यानुरक्तस्य मुनेर्मुकुन्दः प्रमोदभारानतकन्धरस्य । आश्रृण्वतो मामनुरागहास समीक्षया विश्रमयन्नुवाचेत्युद्धवोक्तेः । परमान्तरंग स्वभक्तचूड़ामणि मुद्धवमेव भगवान् रहस्यं स्वज्ञानमुपदिदेश नतु शृण्वन्तमपि मैवं तदहं तज्ज्ञानार्थे मिममजानन्तं महानुभावं प्रथमं न प्रार्थयिष्यम् किन्तु स्वजिज्ञासितमेव यत्किञ्चित् पृच्छामि यदिच तदयं जानाति तदाभो विदुरत्वदर्थे भगवताहमादिष्टो भगवत्प्रोक्तं तस्याजत्वजन्म वत्त्वादि विरोध परिहारकमति रहस्यं ज्ञानं त्वं गृहाणेति स्वयमेव वक्ष्यतीत्यत आह सुखायेत्यादि तैः कर्म्मभिः सुखंवा अन्यत् दुःखोपशमं वा उपारमं वैराग्यंवा न विन्देत किन्तु भूयोभूयः कृतेभ्यस्तेभ्यः कर्म्मभ्यो दुःखमेव अत्र प्रश्ने यद्युक्तं तदुत्तरं नः अस्मान् वदतु भवान् ॥ २ ॥

सर्व्वभूतानुग्राहका भवद्विधामहाभागवता एव तत्त्वं जानंतीत्याह । भव्यानि भूतानि मङ्गलरूपा भक्ताः ॥ ३ ॥

शं सुखरूपं वर्त्म भजनमार्गं नोऽस्मानादिश स प्रसिद्धो भगवान् तत्त्वस्या वदन्तितत्तत्त्वविद इत्यनेनोक्तस्य ब्रह्मपरमात्म भगवत्स्वरूपस्याधिगमो यस्मात्तज्ज्ञानं यच्छति । यदुक्तं तच्छ्रद्दधाना मुनयो ज्ञानवैराग्य युक्तया पश्यन्त्यात्मनि चात्मानं भक्त्या श्रुतगृहीतयेति । पुराणं पुरातनं नमीमांसादिकमिवार्व्वाचीनम्॥ ४ ॥

---

श्रीमच्छुकदेव कृत सिद्धांतप्रदीपः ।

एवं विदुर मैत्रेय संगमं प्रपंच्याथपंचमेऽध्याये महदादिसर्गं ॥ महदादिकृतं भगवत्स्तांश्चंचाविदुर मैत्रेयसंवादेन प्रपञ्चयति भगवान् शुकः द्वाराति ॥ १ ॥

सुखायचकारद्दुःखनिवृत्तयेकर्म्माणिकरोतितैः कर्मभिः सुखम् ॥ अन्यदुपारमंदुःखनिवृतिंवानाविंदेत ॥ अत्रनोस्माकं यत् युक्तंकर्तुयोग्यंतद्भगवान्वदेत्निरूपयतु ॥ २ ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

दैवात्पूर्व्वकर्मणः भव्यानिमंगलानिविष्णोर्भूतानिभक्ताः भवाद्विधाः ॥ ३ ॥

तत्तस्मात् । आत्मनःपरोपकारार्थपरत्वाद्धेतोः । हेसाधुवर्य्य!नोऽस्माकंशंसुखरूपंवर्त्म । आदिशकथय । येनवर्त्मनासम्यगाराधितः भक्त्यापवित्रीकृतेहृदिस्थःसन् सतत्त्वाधिगमं तत्त्वाधिगमेनजिज्ञास्य तत्त्वापरोक्षेणज्ञानेनसाध्येनसहितं ज्ञानंसाधनं पुराणं वेदप्रमाणकम् यच्छति आत्मावाअरेद्रष्टव्यःइतिजिज्ञास्यतत्त्वापरोक्षंज्ञानंसाध्यमुद्दिश्यश्रोतव्योमंतव्योनिदिध्यासितव्यइतिसाधनंज्ञानंवेदेनविधीयतेतादृशंज्ञानंसम्यगाराधितोभगवानेवद्दातीतिगम्यते ॥ ४ ॥

---

भाषाटीका

श्रीशुकदेवजी बोले ॥ सौशील्यादिगुणोंसे तृप्त भगवद्भाव से शुद्ध कुरुश्रेष्ठ, विदुरजी, हरिद्वार में विराजमान अगाधबोधवारे श्रीमैत्रेयजी के समीप जाय प्रश्न करते भये ॥ १ ॥

विदुरजी बोले ॥ सब लोग सुख के लियें कर्म करते हैं पर इन कर्मोंसे न तो सुख होवै और न इन कर्मों से निवृत्ति होवे उलटो तिनसें वारंवार दुःखै प्राप्त होवै है तासूं या संसार में जो करवे के योग्य होवे सो आप कहिये ॥ २ ॥

पूर्व कर्म के निमित्त सें श्रीकृष्ण सों विमुख अधर्मशील ताईं सें अत्यन्त दुःखी जो जन हैं तिनके ऊपर अनुग्रह करवेईकों या संसार में आप सदृश भगवज्जन विचरें हैं ॥ ३ ॥

तासूं हे मैत्रेयजी ! आप मोकूं ऐसो सुखरूप मार्ग बतावो कि जा मार्ग सें आराधित भगवान् पुरुषोंके भक्ति शुद्ध हृदय में वैठ कर तत्व साक्षात्कार सहित प्राचीन ज्ञान कों देवें हैं ॥ ४ ॥

---

### श्रीधरस्वामिकृत भावार्थदीपिका

करोति कर्म्माणीत्यादीनां वर्णयेति पञ्चमश्लोकेक्रियासम्बन्धः यथा येन प्रकारेण पुरुषरूपेण कृतावतारः सन् अधीशः त्रिगुणमायानियन्ता अतः स्वतन्त्र एव । यानि कर्म्माणि करोति । कर्म्माण्येव विशेषतः पृच्छति यथेत्यादिना । निरीहः निष्क्रियः निस्पृहोवा- संस्थाप्य सुस्थिरं कृत्वा वृत्तिं जीविकाम् ॥ ५ ॥

स्वे स्वीये खे हृदयाकाशे गुहायां योगमायायां बहुधा ब्रह्मादि-रूपेण ॥ ६ ॥

मत्स्याद्यवतारभेदैः क्रीडन् यानि यथा कर्म्माणि विधत्तेकरोति । पुनर्विशेषं प्रष्टु मौत्सुक्यमाविष्करोति । मन इति सुश्लोकाः पुण्यकीर्त्तयः तेषां मौलिरिवाधिक्येनोपरि विराजमानस्तस्येत्यर्थः॥७

लोकनाथाधिपतिः अलोकान् लोकालोकपर्व्वताद्बहिर्भागान् अचीक्लृपत् कल्पयामास । यत्र येषु सर्व्वाणियानि सत्वानि तेषांनिकायाः तेषां भेदः अधिकृतःतत्तत्कर्म्माधिकारी आश्रित इति वा॥८

उत अपिच । येन प्रकारेण जीवानां आत्मा स्वभावः तत्कृतं कर्म्म तत्कृतं रूपं तत् कृता अभिधातासां भेदं विश्वसृड्वा स्वयञ्चात्मयोनिः स्वतःसिद्धः ॥ ९ ॥

ननु महाभारते त्वया सर्व्वं श्रुतमेवकिंपुनः प्रश्नैस्तत्राह । परेत्रैवर्णिका अपरेशूद्रादयः तेषां व्रतानि धर्म्माः मे मम अभीक्ष्णं पुनः पुनस्तेषां श्रवणे अतृप्नुम तृप्ताः स्मः तेषां तुच्छसुखावहत्वात् ॥ यस्तु तत्र कृष्णकथामृतौघः सूचितस्तस्माद्दते तत्र त्वलं बुद्धिर्नास्तीत्यर्थः ॥ १० ॥

———

### श्रीराधारमणदासगोस्वामि विरचित
### दीपिन्याख्य तट्टिप्पणी ॥

यथेतिपूर्वार्द्धेपियोजितम् ॥ अतोमायानियन्तृत्वात् ॥ ५ ॥

स महत्स्रष्टृपुरुषः।वृत्तयोमायेक्षणाद्याः शेतेब्रह्मतादात्म्येनतिष्ठतियोगमायायां हेतुरूपायां सत्यां यथाएतद्विश्वमंतर्यामिरूपेणानुब्रह्माण्डसृष्ट्यनंतरंतस्मिन्नण्डे प्रविष्टस्सन् बहुधाब्रह्मादिरूपेण यथा सीदितियोजनीयम् ॥ ६ ॥

गौण्यावृत्त्याव्याख्यानादित्यर्थइत्युक्तम् ॥ ७ ॥

प्रतीतः प्रख्यातः ॥ ८ ॥

एतच्चप्रकारविशिष्टस्वभावादिभेदनिर्म्माणम् ॥ ९ ॥

महाभारते तदीय कतमकतमांशे ॥ १० ॥

———

### श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचंद्रिका

करोतीति त्र्यधीशःत्रिलोकेशः भगवान्स्वतंत्रः अकर्मवश्यएव कृतावतारः ब्रह्मादिरूपेणकृतानुप्रवेशावतारः यानिकर्माणिकरोति अग्रेसृष्टेःपूर्वं निरीहः निर्व्यापारएवस्वयमिदंविश्वंयथायेनप्रकारेण ससर्ज यथासंस्थाप्यसम्यक्स्थितिरक्षांकृत्वाजगतः वृत्तिंजीविकां विधत्तेकरोति एतद्वर्णयेत्युपरितनेनान्वयःएवमग्रेपि ॥ ५ ॥

यथेतिसभगवान्स्वशरीरभूतेखेसूक्ष्मावस्थाऽऽकाशादिकारणभूते अक्षरंतमसिलीयतइत्युक्ततमःशब्दवाच्यप्रकृतिद्रव्ये इदंकार्यप्रपंचं निवेश्य संहृत्य निवृत्तवृत्तिः निवृत्तजगद्व्यापारःगुहायां परमाकाशे वैकुंठइत्यर्थः शेतेवसति हेयोगीश्वराधीश्वर!योगीश्वरश्रेष्ठ!एकःस्वयं एतच्चिदचिदात्मकं जगदनुप्रविष्टः स्वप्रशासनाधीनंकुर्वन्धारकतया स्थितःबहुधा देव मनुष्यादिवहुनामभाक्यथाआसद्बभूव ॥ ६ ॥

### श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

क्रीडन्निति यथाचद्विजगोसुराणांब्राह्मणगोदेवतानांक्षेमायावतारभेदैः रामकृष्णाद्यवतारभेदैः भेद शब्दोगौणावेशशक्त्याद्यवताराणां प्रदर्शनार्थःस्वयंक्रीडन्नेवकर्माणिदुष्कृद्विनाशनसाधुपरित्राणादिरूपकर्माणिविधत्तेकरोति अन्यदपिप्रक्ष्यमाणः अंतरास्वस्यप्रतिवचनश्रवणौत्सुक्यमाविकरोतिअर्द्धेन मनइति सुश्लोकमौलेः सुष्टुश्लोक्यंतेकीर्त्यंतइतिश्रुश्लोकाःपवित्रकीर्तिमंतःतेषांमौलिरिवप्रधानःतस्य भगवतश्चरितामृतान्यमृततुल्यानिचरित्राणिशृण्वतामपिनः मनः नतृप्यत्यलंभावंनगच्छतीत्यर्थः ॥ ७ ॥

अन्यदपिपृच्छति यैरिति अधिलोकनाथःलोकाधिपतिःयैस्तत्वभेदैर्महदादिभिरित्यर्थः सहलोकपालन्सहविद्यमानाःलोकपालायेषां तान्लोकान्अलोकान् लोकालोकबहिर्भागस्थकान्वाअचीक्लृपत् कल्पयामासतान्वर्णयेत्यर्थः यत्रयेषुलोकादिषुसर्वाणियानिसत्वानि प्राणिनःतेषांनिकायासमूहास्तेषांभेदः भिदा अधिकृतःकर्मानुगुणाधिकारवान्प्रतीतःप्रतीयते ॥ ८ ॥

येनेति उतापिचाआत्मयोनिःआत्मैवयोनिःकारणंयस्यसः आत्मयोनिःकारणांतरशून्यइत्यर्थः विश्वस्रष्टानारायणः प्रजानांव्यष्टिभूतानांआत्मकर्मरूपाभिधानां आत्माज्ञानेंद्रियगणः कर्म कर्मेंद्रियगणः रूपाणिदेवमनुष्यादिरूपाणिअभिधादेवोमनुष्यइत्याद्याभिधाः आसांभिदांयनयेनप्रकारेणव्यधत्ताकरोत्किंसाक्षात्परंपरयवेत्यभिप्रायः एतत्पृष्टं च कारादपृष्टमपिनोऽस्मभ्यंहेविप्रवर्य!वर्णय ॥ ९ ॥

ननुबहुश्रुतस्यतवकिमनयाशुश्रूषयेत्यतआह परावरेषामितिहेभगवन्मैत्रेय!परेत्रैवर्णिकाअवरेस्त्रीशूद्रादयः तेषांव्रतानिव्यासमुखादभीक्ष्णंपुनःपुनःमेमयाश्रुतानिभगवत्कथामृतपूराद्विनाक्षुल्लसुखावहानामल्पसुखसंपादकानां तेषांव्रतानांश्रवणेनेतिशेषः अतृप्नुमः तृप्ताअभूमः भगवत्कथामृतश्रवणेनतुनतृप्ताइत्यर्थः ॥ १० ॥

———

### श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

सुखवर्त्मापिभगवत्सृष्ट्यादिगुणकर्मकथनश्रवणादिकमेव नातोन्यदित्याशयवान्तत्सृष्ट्यादिप्रकारंपृच्छति करोतीति देवदत्तव्यावृत्त्यैआत्मतंत्रइति स्वातंत्र्यंचकतिपयवस्तुष्वेवनसर्वत्रेत्यतउक्तंभगवांस्त्र्यधीशइति तानिकर्माणिदुष्टनिग्रहादीनिवर्णयेतिप्रत्येकमन्वेतव्यं किंचाग्रआदिकालेयथाइदंजगत्ससर्जतंप्रकारमितिसर्वत्रयोज्यं । तत्सेतौसंस्थाप्यन्यस्ययथाजगतोवृत्तिंजीविकांविधत्ते तवेयमितिशास्त्रतोवक्ति ॥ ५ ॥

पुनःप्रलयेखेनिजोदराकाशेगुहायामिदंनिवेश्यनिवृत्तजगत्सृष्ट्यादिवृत्तिःसहरिर्यथाशेते एतज्जगत्सृष्ट्वातदनुप्रविष्टोहरिर्यथाबहुधासीत् अनायासेनबहुरूपंगृह्णातीतियोगेश्वराधीश्वरइत्युक्तं ॥ ६ ॥

जगत्सर्जनादिकर्मकथनश्रवणादेरवतारभेदैःक्रियमाणकर्मकथनादौसम्यक्मनोनिर्विशतीत्यतस्तानिकर्माणिअवश्यंवक्तव्यानीत्याशयेनपुनरुक्तंकरोति क्रीडन्निति द्विजगोसुराणांक्षेमायेतिचतुर्थ्यांतदेवप्रयोजनमित्यवधारयति भवताश्रुतपूर्वाणिहरेः कर्माणिपुनःप्रश्नस्यकोर्थइत्याशंक्यसत्यंकिंत्वलं वुद्ध्यभावाद्विशेषश्रवणेच्छार्थइत्याह मनोनेति चरितश्रवणपानंकुर्वतामित्यर्थः ॥ ७ ॥

ननुचतुर्मुखेनलोकादयः कल्प्यंते सूर्याचंद्रमसौधातायथापूर्वमकल्पयदित्यादिश्रुतेः अतःकथंहरेः सकाशात्लोकादिसर्जनादिकंतत्कथनीयमितिप्रश्नइत्याह यैरिति महदादितत्त्वभेदैः भेदोविशेषोदलनमित्यभिधानं भूरादिलोकान्अलोकान्पृथिव्यादिदाह्यावरणविशेषात् तत्त्वभेदैरित्युक्त्याप्रथमतोब्रह्मांडनिर्माणंतदनंतरंलोकादिकल्पन

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

मितिग्राह्यं तथावक्ष्यमाणत्वात् तेनयत्रब्रह्मांडेक्लृप्तलोकेषुसर्वसत्त्वानांसर्वप्राणिनांनिकायस्यदेवमनुष्यादिभेदोधिकृतः । तत्तत्पदाधिकारयोग्यतयाक्लृप्तः प्रतीतः प्रत्यक्षानुमानाभ्यामवगतःकथमित्येतदपिवर्णयेति ॥ ८ ॥

नारायणोयेनवाप्रजानामात्मनादेहेनस्वभावनेवाकर्मणाचेष्टालक्षणेनादृष्टेनवा रूपेणशुक्लनीलाद्याकारविशेषेणाभिधानेनघटादिनाम्नाभिदांव्यावृत्तिमुतापिव्यधत्तएतदप्यस्माकंवर्णयेत्यन्वयःसर्वसत्त्वनिकायेतिसामान्येनोक्तस्यविशेषोयं नारायणोदेवदत्तइवेत्यतउक्तंविश्वसृगिति स्वयमन्येनसृष्टः कथंविश्वसृक्स्यादित्यतउक्तमात्मयोनिरितिआत्मास्वयमेवयोनिःकारणंयस्यसतथा ॥ स्रष्टाधातेति चतुर्मुखस्यस्रष्टृत्वप्रसिद्धेःकथमस्यविश्वसृक्त्वमित्यतोवेत्युक्तमात्मयोनिरिति आत्मनोविरिंचस्ययोनिरित्यर्थः ॥ ९ ॥

भगवज्ज्ञानोपयोगित्वेनापादनीयत्वाद्भवत्वेवंमनुष्यादिभेदज्ञानेन किंप्रयोजनमित्याशंक्यतज्ज्ञानस्यभगवज्ज्ञानोपयोगित्वेन शुकमापाद्यत्वमित्याह परावरेषामिति परावरेषांब्रह्मादिदेवमनुष्याणां कृतानिमेमयाव्यासमुखादभीक्ष्णंश्रुतानि ततःकिंतत्राह नेति श्रुतानांतेषां ब्रह्मादिचरित्राणामृतेभवगमेतात्पर्यज्ञानेसति ब्रह्मादिमहिम्नामपिभगवन्महिमावलंबित्वात्कृष्णकथामृतौघएवासौइतियतोऽतस्तेषांभागवतानांकृष्णस्यचकथामृतौघात्श्रुतात्नतृप्नुमः तात्पर्यज्ञानेसतिकृष्णकथामृतौघत्वंकुतइतितत्राह कर्णेति कृष्णकथामृतौघस्यैवकर्णसुखावहत्वंनान्यस्य तस्यकर्णकर्कशत्वमित्यर्थः ऋगतावितिधातोर्निष्ठांतमृतमितिरूपं नतुअृतइत्यव्ययं तदंगीकारेतेभ्योनतृप्नुमइतिप्रयोगःस्यात् नतुतेषामितिग्रंथांतरेभारतस्यप्रशंसानुपपत्तेश्च ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ॥

तत्र वहुषु साधनेष्वत्सु निजहृद्यं निवेदयति करोतीत्यादिभिः टीकायांयथेत्यादिनेति । उभयत्रापि यथा शब्दस्य सम्बन्धात् पूर्व्वमपियोजितम् ॥ ५ ॥

खे स्वस्वरूपे खे आकाशे आकाशस्तल्लिङ्गादित्यादि न्यायेन ब्रह्माख्ये निवेश्य विलाप्य गुहायांकस्मिंश्चित् सर्व्वागोचर प्रदेशे तत्तादात्म्येन तिष्ठति महत्स्रष्टृ पुरुष इति शेषः ॥ ६ — ११ ॥

---

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

नन्वेतन्निरंतरंभगवद्गुणश्रवणाद्भवतीतिचेत्तत्राहकरोतिकर्माणीति अयंचतृतीयःप्रश्नः भगवतोहीयंश्रीःअत्र सप्तपदार्थाःपृच्छ्यंतेसप्तविधभक्तिसिद्ध्यर्थंभगवतोवतारकर्माणिजगदुत्पत्तिस्थितिप्रलयास्त्रयःप्रवेशनानात्वंजगतःप्रकारा इतिसप्तानांपूर्वपूर्वसाधकत्वंतत्रभगवदवतारकर्माणिकिमर्थमित्याकांक्षायांमोक्षार्थमितिचेदुत्पत्तिर्व्यर्थानभवेत्किमितिसंदेहःअथयदितदर्थमेवोत्पादनंतदावतारकमाण्यव्यर्थान्युभयोरेकत्वात्अमोहकत्वेनैवचकार्यसिद्धेःतस्मादुत्पादनलीलापिज्ञातव्या उत्पादनमात्रेणचकार्यसिद्धेःयोग्यतासिद्ध्यर्थंतावत्कालंस्थितिरपिमृग्यायदिभगवांस्तत्रनाश्रयेत्तदाविहितकरणादिनापिकार्यंसेत्स्यतीतिनावतारप्रयोजनंकिंचयदिबहुधायंभगवाननभवत्तदावतारणसर्वमुक्तिरेवभवेत्अतोभिन्नस्वभावेनप्रेरणान्नानाभावाच्चसर्वथासंपद्यतेलोकाश्चेद्भगवत्कृताएकविधास्स्युर्ब्रह्मांडाद्बहिर्निर्गमनंनभवेत्तदाप्यवतारकर्माणिभिन्नानिएकात्म्येवायेकस्यसाधनमन्यस्यभवेत्तदापिव्यर्थंस्यादितिभेदानिर्माणंचज्ञातव्यंस्यादतः सप्तानामेकप्रश्नःसप्तांगत्वाच्छ्रियः कृतावतारोभगवान्यानि कर्माणिकरोतियानीतिप्रसिद्धिरुक्ता बहूनिवक्तव्यानितेषांकर्मत्वंचवक्तव्यंतानिभगवत्कर्माणिभवंतिनभवंतीतिभगवतः कर्त्तव्यमकत्तव्यं वा दोषत्रयाभावस्तमयैवज्ञायतइति विशेषणत्रयमाहभगवान्कालाधीनतथानकिंचित्करोतिकालार्थंवातदाहआत्मंतत्रइति स्वतन्त्रोनकालाधीनइत्यर्थः कर्मस्वभावयोःस्वमध्यपातात्भिन्नतयानिवारयतिभगवानिति । कर्माधीनताव्यावर्तिता ॥ नहिपूर्णज्ञानवतःकर्माणिबंधकानिभवंति त्र्यधीशइतित्रिगुणनियंता अतोनस्वभावाधीनस्तस्मादे तादृशेनयानिकर्माणिकृतानिनस्वभावाज्ञादृष्टतोनकालप्रेरणात्तानि कर्माण्यलौकिकान्येवभवंति श्रोतव्यानिभवंतिकिंचयथाइदंससर्ज ॥अग्रेसृष्टेःपूर्वमेकोदोषाभावस्तज्ञायते यदयंचेष्टयानकरोतीति मनश्चेष्टापिनिवारिताइच्छायांसंदेहःप्रयत्नोनास्तीतिनिश्चयःज्ञानंवास्तीतिकिंचसर्वमेवोत्पादितंसम्यक्स्थापयित्वाजगतोवृत्तिविधत्तेसर्वेषामेवजीविकांप्रयच्छतिअत्रदूषणाद्यभावोनश्रुतोनज्ञायते प्राणिनामन्योन्याहारात् ॥ ५ ॥

किंच यथावेदंसर्वंसहृत्यस्वेस्वकीयेहृदयाकाशइदंसर्वंनिवेश्यस्वयमपिगुहायांगुह्यस्थानेकिलशेतेअत्रैकस्यदूषणस्यपरिज्ञापनेनिवृतावृत्तयोयस्यजाग्रत्स्वप्नसुषुप्तिवृतयोत्रनसंतीति। कावागुहाकोवास्वप्नोपीतिनजानीमःहृदयेचपुनःसर्वंनिवेशितवान्किंचयोगेश्वराणामधीश्वरःएकएवैतत्सर्वंसृष्टमनुप्रविष्टोयथा बहुधाआसीत्तद्वक्तव्यंयोगेननानारूपाणियोगीकरोतितद्दृयुपायेनस्वयोगं व्यपाकृत्यतथाभवंतियथाकर्मणाक्रमेणभवंति योगेनत्वेकदैवभवंति अयंतुतेषामपीश्वरःअधिशब्देनचयोगैश्वर्येप्यधिकोनिरूपितेभवतःअनेनवहुधा भवनं संभवती त्युक्तंपरमखंडःसमुदायेनवाखंडशोवाभवतीतिसंदेहः ॥ ६ ॥

नन्वेतादृशंचरित्रंभवतावहुधाश्रुतंभारतादौकिमितिपुनःपृच्छ्यतइत्याशंक्याहक्रीडान्विधत्तइति द्विजगोसुराणांक्षेमायअवतारभेदैःक्रीडन्कर्माणिविधत्तेकिमतोत्रयद्येवमतआहतानिकर्माणिशृण्वतामपिमनोनतृप्यतिअन्येषांतृप्तावपिनोमनोनतृप्यतितत्रहेतुःसुश्लोकमौलेश्चरितामृतानीति एकं कर्तुं विशेषणमपरंकर्मणांसुश्लोकाउत्तमामौली यस्य यदा भगवान्दृश्यते तदा दूरादेवतस्य कीर्त्तिर्दृश्यतेयथा दूरात्पुरुषस्यमुकुटंदृश्यतेअतोभगवदिच्छायांनिवृत्तायांपरंकीर्त्तीच्छानिवर्तते भगवंतं मन्यमानः कथं शिरोभूषणान्निवर्त्तेत किंचएतानिकर्माण्यमृतरुपाणिचरितामृतानि कर्माण्येवचरितानि चरितानाममृतत्वमनुभवसिद्धंक्षुत्पिपासादिनिवारकत्वेनचमरणनिवर्तकत्वं चचरितानीति प्रयत्नमात्रंभक्षणवाचकत्वेनवाविरोधेनामृतत्वमद्भुतकर्मत्वेनकर्माणिचपुनश्चरितेनकृत्यैवामृतान्युत्पन्नान्येवनित्यानीतिप्रयत्नमात्रविषयत्वेनतेषांनित्यत्वेश्रवणादिप्रयत्नविषयाणामपिनित्यत्वात्सर्वेंद्रियव्यापारपूर्णत्वेनैहिकामुष्मिकदुःखनिवारकाणिभवंति तदोभयामृतत्वंसंपद्यतेद्विजगोसुराणामिति मंत्रहविर्देवताश्चयागप्रधानभूतास्त्रयोनिर्दिष्टास्तेषां क्षेमायकर्म करणं अनेनभगवत्कर्माणिधर्मरूपाणीत्युक्तं ततश्चतानिमनसाभावितानिमनोयज्ञा भवंति— कीर्त्तितानिवाग्यज्ञाः श्रुतानिज्ञानयज्ञाइति अवतारभेदैरिति नानाविधैरवतारैर्भेदग्रहणेनलोकेतदवतारत्वंनज्ञातुमशक्यमिति गम्यते— मत्स्याद्यवतारादिसदृश त्वाद्भेदाइत्युच्यंते अथवाज्ञानक्रियाविशिष्टभेदेनत्रयोवतारास्तेषांभेदाज्ञानकलावताराव्यासादयः क्रियाकलावतारावराहादयः उभयंकृष्णः अवताराश्चभेदाश्चेतिवातदाभेदाश्चावेशिनः अवतारैरावेशैश्चयज्ञानांपरिपालनं क्रियतइतिकरणेरक्षाहेतुःअतृप्तौचरितामृत्वं अतश्चरित्राणि वक्तव्यान्येवेत्यर्थः ॥ ७ ॥

किंचयैस्तत्व भेदैर्लोकानलोकांश्च लोकपालसहितानचीक्लृपत्तानिकथयेत्याह कतितत्वानिलोकसर्गेव्यापृतानि कतिचालोके

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

यदिसर्वैरेवतत्वैः सर्वएवकृतास्युस्तदालोकालोकादि भेदोनस्यात्-लोक्यतइतिलोकःप्रत्यक्षयोग्यःलोकालोकात्परभागास्तुनप्रत्यक्षयोग्याः अस्यायंभावः स्वभावतएवलोकरूपाः अलोकरूपाश्चलोकानतुते जसा प्रकाशिताः मनुष्याणामेव तदप्रेक्षणात्तदभावो वार्किमूलतः अत्रैवहिमेषकाष्ठसूर्योदय उत्पद्यंतेतेचान्यत्रकुतोन भवंत्यतोऽलोकाः केचनस्वतएवेति तत्रापिचलोकपालाः संतितत्रचक्षुषाविषयग्रहण-आलोकापेक्षाभावः चक्षुरभावोवा। अथवालोकान्स्वर्गादीन्श्च लोका न्लोकरहितान्जडान् लोकेपिलोकपाल सहितान्त्रीनित्यर्थः यत्रा-चीक्लृपत्तत्कथयेति प्रश्नः ननुकिमितित्रयांभेदागणिताः लोका-राजसाः अलोकास्तामसाः लोकपालाः सात्विकाइति तत्राहसर्व सत्वनिकायभेदोऽधिकृतः प्रतीतश्च सत्त्वाणिच सत्वानिजीवयोनि-भेदास्तेषांनिकायः समूहस्तस्यभेदः सहानवस्थानंसमूहा अपिभि-न्नास्तिष्ठंतीति नहिपीपिलिकाः पक्षिणश्चैकत्रभवंतिसोप्यधिकृतस्त त्राधिकारिणः संतिअन्यथाउपदीकानां मुखेजलं काकानामेकाक्षत्वं पशूनांचपरस्परंभेदोनस्यात् किंचाप्रतीतोप्ययं सर्वोपिभेदोयत्र प्र-तीयते सर्वेभेदास्तत्राप्रतीताः किंथंतोवाभवंतीति युक्तएवमहतोनि र्माणेतत्वभेदइतिहिशब्दार्थः ॥ ८ ॥

अनेन ब्रह्मांडनिर्माणं सहेतुकंवक्तव्यमितिप्रश्नः किंचयेनेतिप्रजा नामपिप्रत्येकं आत्मास्वरूपंकर्मरूपमभिधानाम एतेषांयेनहेतुनाकृत्वा भिदांव्यधत्त एकस्यामपियोनौअनंताएव भेदास्तेषुचैकोद्वितीयइवन भवति स्वरूपादिनाकेनापि तत्कुतइतिप्रश्नः नन्वेतदकृतमेवस्यात्त-त्राह नारायणोविश्वसृगात्मयोनिरिति अत्रहेतुत्रयमस्माभिर्ज्ञायते नान्यइति तानाह नराज्जातानि तत्वानिनाराणीतिविदुर्बुधाः तान्ययनं यस्येतितेषुसर्वत्रैव विद्यमानत्वादेकेनांशेनद्वयं नाक्रियतइतितदंशा-विद्यमानएवभगवांस्तावद्भेदे हेतुरित्येकः पक्षः किंचविश्वसृक्सर्वस्य कर्त्ताभगवान्सर्वत्रैवोपादान गोचरापरोक्षज्ञानमस्यास्ति अन्यथाता वतोनसृजेदतो भगवद्ज्ञानमेवतावद्भेदहेतुरितिद्वितीयंकिंच आत्म योनिरिति आत्मैवयोनिःकारणंयस्य अथंस्वस्मादेवस्वयमुत्पद्यते-अतोभगवतः कश्चनतादृशोगुणोस्तियेन स्वयमेवस्वस्मादुत्पद्यतइ-तिभिन्नोभवति एवमेवायमनंतमूर्त्तिर्जातइति स्वयमेवतावद्रूपोभव-तीति एवंतत्वतोज्ञानतश्चहेतुत्रयंज्ञायते अन्यद्वक्तव्यमित्यर्थः एतच्चे-तिचकारात्पूर्वोक्तमपि प्रष्टव्यमित्युक्तं अन्यथोत्तरमेव वक्तव्यंस्यात् सर्वत्रनइतियहुवचनभेकाशिष्यत्वादवक्तव्यनिराकरणेन प्रचारणपा रंपर्यबहुत्वज्ञापनार्थं विप्रवर्यैति पृपूरणइति धातोर्विशेषेणपूरयती-तिसर्वकथनहेतुःसर्वगुण पूर्णतानिरूपिता तेषामपिवर्यत्वात्पूर्णाभग वद्गुणाअस्मिन्संतीति सर्वकथनेहेतुः ॥ ९ ॥

नन्वेतत्सर्वंभारतेकथितमेव पुनः किमर्थंपृच्छ्यतइत्याशंक्याह परा वरेषामितिश्रुतस्यापिश्रवणे किंदूषणमानंत्यात्पदार्थानामपर्यवसा-नामिति चेत्तत्रोच्यते परावरेषां ब्रह्मादिस्थावरांतानांव्रतानिनि-यतधर्माः कर्माणिचश्रुतान्यंवतानिव्यास मुखादभीक्ष्णशः श्रुतानि व्यासोद्विनीति ज्ञानार्थं बहुधासर्वेषां धर्मान्कथयाति अन्यथाराज्येस्थि रबुद्धिर्नभवतीति परंराज्यमेवत्यक्तमिति तेभ्यउपरता बुद्धिःउपरमे हेतुः क्षुल्लसुखावहानामिति अल्पमेवसुखमावहंतितद्वतः श्रवणेन-तथाह्यर्द्दभावनायामततोगत्वा न संभवति तस्माद्धादोषाद्विमुच्यते उभयथाप्यल्पं सुखंफलतःस्वरूपतस्तु तद्दुःखात्मकमेवात उक्तं क्षुल्लसुखमावहंतीति अतस्तैस्तृप्ताजाताःअतःपरंतच्छ्रवणेच्छा-नोत्पद्यतइत्यर्थःतेषामितिप्रसिद्धानामिति कृष्णकथामृतौघादृते कृष्ण कथैवामृतौघोऽमृतपूरस्मात्परं न तृप्तिः विरोधाभासश्चसूचितः क्षुल्लसुखात्तृप्तिरमृत पूराच्चातृप्तिरिति अयमर्थःइच्छाहि यथाविषयं ज्ञायतेतस्मिन्प्राप्ते निवर्त्ततेच साचविषयसमानाभवति विषयश्चा-ल्पइति अल्पीयस्येवसा सर्वत्रोत्पद्यते पिंपीलिकाक्षुद्वत् नहिपिंपीलि कागजभोग्यं भोक्तुमर्हत्यतोल्पेनैवनिवर्त्तते गजस्तु कोटिपिपीलिका न्नेनापिनतृप्यति अतोभगद्विषयिण्याइच्छानंतगुणत्वाद्भगवतः सर्वंगृहीतुंमहताकालेनाप्यशक्तानतृप्ताभवति अतोननिवर्त्ततइति-कृष्णइति सदानंदस्तस्यकथातद्रूपा ॥ १० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ॥

करोति कर्म्माणीत्यादीनां ॥ वर्णयेति पञ्चमश्लोकस्थेनान्वयः ॥ ऽयधीशः पुरुषत्रयेशः कृष्णः कर्माणिगोवर्द्धनोद्धरणादीनि ॥ त्रिगुण मायाधिष्ठाता महाविष्णुश्चयथा इदंअग्रे पूर्व्वमहाकल्पान्ते संस्थाप्य संहृत्य पुनरेतन्महाकल्पादौ ससर्जसृष्टाचावृत्ति जीवका पालनमित्य र्थः ॥ ५ ॥

यथा पुनः स्वस्मीये हृदयाकाशे निवेश्य स्थापयित्वा गु-हायांसर्वांगऽयत्वाद्विरजायांनद्यामित्यर्थः निवृत्तमायागुणवृत्तिः एतज्जगत् सृष्ट्वाऽनुप्रविष्टः बहुधा देवमनुष्यादिरूपो यथासी-दिति सृष्ट्यादिप्रश्नपौनःपुन्यं प्रति महाकल्पगता सृष्ट्यादिली-लाएकरूपा भिन्नरूपा वेति जिज्ञासया ॥ ६ ॥

अवतारभेदैर्मत्स्यकूर्म्मादिभिः ॥ ७ ॥

तत्वभेदैर्वैराजपादादिभिः पृथिव्याद्यैर्लोकान् पातालादीन् अलोकान् लोकालोकपर्व्वताद्बहिर्भागाद् अचीक्लृपत् कल्पयामास यत्र येषु सर्व्वप्राणिनिकायानां भेदो नानाविशेषोऽधिकृतः भक्तिज्ञा नयोगकर्म्मादधिकारी भवेत्प्रतीतः ख्यातोऽवाधितश्च ॥ ८ ॥

उत अपिच येन प्रकारेणजीवानां आत्मा स्वभावः तदनुसृतं कर्म कर्म्मानुसृतं रूपं रूपानुसृता अभिधा तासां भेदं कृतवान् नारा यण एव विश्वसृग्विश्वसृष्ट्यर्थमात्मनियोर्ब्रह्मा सन्नित्यर्थः ॥ ९ ॥

नन्वेतत्सर्व्वं महाभारते त्वया श्रुतमेव तत्राह परेदेवाद्यास्वरे-पश्वाद्यास्तेषां व्रतानि स्वभावास्तेषां तैरतृप्नुम तृप्ताःस्मः। नाग्निस्तृ प्यति काष्ठाना मितिवत् षष्ठीक्षुल्लं तुच्छं किंतु यस्तत्र कृष्णकथा-मृतौघस्तस्माद्दृते ॥ तेन यद्यन्मया पृच्छ्यते तत्तत्सर्वंकृष्णकथा मृतसंपृक्तमेव त्वया वक्तव्यमिति भावः ॥ १० ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

ऽयधीशः त्रिगुणमायानियंतापुरुषरूपेणकृतावतारः सन् ॥ या-निकर्माणिकरोतीत्यादीनांवर्णयेतिवक्ष्यमाणेनक्रियापदेनान्वयः क-र्माण्येवविशेषतः पृच्छतियथेत्यादिनानिरीहः निस्पृहः यथाइदंवि-श्वंससर्जयथाचसंस्थाप्यवृत्तिंजीविकांविधत्तेकरोति ॥ ५ ॥

यथापुनः इदंविश्वंस्वस्मीयेस्वकार्यप्रवेशस्थानेकारणेनिवे-श्यनिवृत्तवृत्तिः ॥ निवृत्तजगद्व्यापारः गुहायांशयनस्थानेशेत ॥ यथाच एकएतत्कार्यंअनुप्रविष्टः उपादानरूपेणानुगतः सन्बहुधातत्तत्का-र्यरूपः आसीत् ॥ ६ ॥

अवतारभेदैर्मत्स्याद्यवतारैः क्रीडन् ॥ द्विजादिक्षेमाययानिकर्मा-णिविधत्तेतानिच ॥ नानाहरिचरितप्रश्नेकारणमाहमनइति शोभ नाः श्लोकाः यशांसिपद्यानिवायेषांतेषांमौलेः शिरोभूषणवत्प्रति-ष्ठाहेतोश्चरितामृतानिश्रृण्वतांनोमनोनतृप्यति ॥ ७ ॥

कस्तृप्नुयात्तीर्थपदोऽभिधानात् सत्रेषु वःसूरिभिरीड्यमानात् ।
यःकर्णनाडींपुरुषस्य यातो भवप्रदां गेहरतिंछिनत्ति ॥ ११ ॥
मुनर्विवक्षुर्भगवद्गुणानां सखापि ते भारतमाह कृष्णः ।
यस्मिन्नृणां ग्राम्यसुखानुवादैर्मतिर्गृहीता नु हरेःकथायाम् ॥ १२ ॥
सा श्रद्दधानस्य विवर्द्धमाना विरक्तिमन्यत्र करोतिपुंसः ।
हरेःपदानुस्मृतिनिर्वृतस्य समस्तदुःखाप्ययमाशु धत्ते ॥ १३ ॥
ताञ्शोच्यशोच्यानविदोऽनुशोचे हरेःकथायां विमुखानघेन ।
क्षिणोति देवो निमिषस्तु येषामायुर्वृथावादगतिस्मृतीनाम् ॥ १४ ॥
तदस्य कौषारवशर्म्मदातुर्हरेः कथामेव कथासु सारम् ।
उद्धृत्य पुष्पेभ्य इवार्त्तबन्धो शिवाय नःकीर्त्तय तीर्थकीर्त्तेः ॥ १५ ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

अलोकान् ॥ लोकालोकगिरितोबहिर्भवान् अचीक्लपत् कल्पयामास ॥ यत्रयेषु लोकादिषु सर्वसत्वनिकायभेदः अधिकृतः ॥ तत्तदनुरूपाधिकारितयानिवेशितः प्रतीतोभवति शास्त्रद्वारेविशेषः॥ ॥ ८ ॥

आत्मयोनिः स्वतः सिद्धः येनप्रकारेण प्रजानांसृज्यमानानां देवादीनाम् आत्मास्वभावः तत्कृतंकर्मतत्कृतंरूपंतत्कृताऽभिधातासांभेदं व्यधतअकरोत् ॥ एतच्चनोऽस्मभ्यंवर्णय ॥ ९ ॥

हेभगवन्गुरो!परावरेषां । परः श्रीकृष्णःतस्यव्रतानिचरित्राणि अवरंब्रह्माद्याजीवास्तेषांचव्रतानिकर्माणिव्यासमुखात् महाभारतादिषु अभीक्ष्णंपुनः पुनः मेमयाश्रुतानि तेषांव्रतानांकृष्णकथामृतौघादृते क्षुद्रसुखावहानाम् धर्माणांनातिशोषः अतृप्नुमतृप्ताःस्मःश्रीकृष्णकथामृतौघपाने न तुनतृप्ताइतिफलितोर्थः ॥ १० ॥

---

भाषाटीका

त्रिगुण माया के नियन्ता परम स्वतंत्र परमात्मा पुरुषावतार धारन करके जिन कर्मोंकों करें हैं जाप्रकार सृष्टि के पूर्व निर्व्यापार रह कर भी भगवान ने या जगत कों रच्यो फिर स्थित करके जा प्रकार जगत की जीविका को विधान कियो ॥ फिर जैसें अपने हृदयाऽऽकाश में धरके निवृत्त व्यापार होकर परमाकाश रूप गुहा में शयन करते हैं योगेश्वरों के अधीश्वर जीवद्वारायाा जगत में प्रवेश करके एक होकें ब्रह्मादि रूपसं जैसें बहुत भये ॥ क्रीड़ा करवे कूं गौ ब्राह्मण देवता इनके कल्याणार्थ मत्स्यादि अवतार धारण कर जिन कर्मों को आप करते हैं पुण्यकीर्तिजनोंके मुकुट ऐसे आप के उन चरितामृतों को सुनने वारे हम लोगन को मन नहीं तृप्त होंवहै ॥ लोकनाथाधिपति आप परमात्मा जिन तत्वों से लोक पाल सहित लोकन कूं और लोकालोकपर्वत के वहिर्भागनकूं रचते भये ॥ जिन लोकन में सर्व प्राणियों के समूहों के भेद अपनेर आधिकारानुगुण प्रतीत होते हैं ॥ तिनकों वर्णन करों ॥ और भी विश्व की सृष्टि करने वारे और आप स्वतः सिद्ध एसे नारायण

भाषा टीका

जा प्रकार प्रजान को स्वभाव कर्म रूप और नामों के भेद को विधान करते भये एभी आप वर्णन कीजिये ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

जे वार्णिक और शूद्रादिकन के धर्म हमने व्यासजीके मुखसे बहुत बार सुने एक श्रीकृष्ण कथा रूप अमृत के प्रवाह के विना क्षुद्र सुख कों देने वारे उन धर्मो से हम तृप्त हैं॥ १० ॥ हरिःओम्

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

तत्रहेतुः क इति । तीर्थपदः कृष्णस्याभिधानात् कथामृतात् सत्रेषु समाजेषुसूरिभिनारदादिभिः ॥ ११ ॥

महाभारतस्याप्यत्रैवतात्पर्य्यमित्याह । मुनिः कृष्णोवेदव्यासः भगवद्गुणान् मोक्षधर्म्मान्ते नारायणीयोपाख्यानेनवक्तुमिच्छुःसन् अर्थकामादिवर्णनंतुहरिकथायां मतिप्रवेशार्थमेवेत्याहयस्मिन्निति। नृणांमतिः ग्राम्यसुखानुवादैर्द्वारभूतैः नुनिश्चितंहरेःकथायां गृहीता नीता । तदुक्तमितिहाससमुच्चये । कामिनोवर्णयन् कामाँल्लोभं लुब्धस्यवर्णयन् । नरः किंफलमाप्नोतिकूपेन्धमिवपातयन् । लोकचित्तावतारार्थंवर्णयित्वात्रतेनतौ । इतिहासैः पवित्रार्थैः पुनस्तत्रैव निन्दितौ । अन्यथाघोरसंसारबन्धहेतू जनस्यतौ । वर्णयेत्सकथंविद्वान् महाकारुणिकोमुनिरिति ॥ १२ ॥

श्रीहरिकथायां मतिप्रवेशस्यफलमाहसाकथामतिर्वा । अन्यत्रग्राम्यसुखेततः किमत आहहरेरिति ॥ १३ ॥

एवम्भूतायांकथायांयेनरमन्तेताञ्शोचतिशोच्याथेतेषामपिशोच्यान् तत्र अविदःभारततात्पर्य्यानभिज्ञान्शोच्यान् । येतुज्ञात्वापिहरेःकथायांविमुखास्तान् तेषांमपिशोच्यानितियोज्यम्। अनिमिषःकालोयेषामायुः क्षिपति । अत्रहेतुः वृथैववादगतिस्मृतयोवाग्देहमनोव्यापारायेषाम् ॥ १४ ॥

तत् तस्मात्हेकौषारवमैत्रेय ! अस्य विश्वस्यशिवायकथासुसारभूतां हरिकथामेवोद्धृत्यनः कीर्त्तययथापुष्पेभ्योमधुमधुपउद्धरतितद्वदुद्धृत्य ॥ १५ ॥

श्रीराधारमणदासगोस्वामि विरचित
दीपिन्याख्य तट्टिप्पणी ।

तत्रतृप्तत्वभावेयः तीर्थपात्पुरुषस्येतिकर्णाश्रमादिनियमोव्याप्तः कर्णनाडींकर्णप्रदेशंप्रतिच्छिनत्तिइत्यनेन विरागस्यानुषाङ्गिकत्वंव्यंजितम् ॥ ११ ॥

अत्रैवश्रीकृष्णकथायामेवतात्पर्य्यंवक्तुर्व्यासस्यैच्छिकंप्रयोजनम् तत् कामादिवर्णनस्यहरिकथायांमतिप्रवेशार्थत्वम् ॥ लोकचित्ताव तारार्थंजनानांकृष्णकथायांमतिप्रवेशार्थं ॥ अत्र भारते तेनव्यासेन । अन्यथानिरुक्तप्रयोजनाविरहे ॥ तौकामलोभौ ॥ १२ ॥

समस्तेतिश्रीहरिसाक्षात्कारेणेतिभावः ॥ १३ ॥

तत्र शोच्यतच्छोच्ययोर्मध्ये ॥ तत् भारततात्पर्यं । तेषामपिशो च्यानामपितैरपिशाच्यानित्यनुशब्दबलाद्व्याख्यातम् ॥ १४ ॥

तस्माद्धरिकथामन्तरासर्वंवैयर्थ्यात् ॥ १५ ॥

---

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका

पतदेवाह कइति वःयुष्माकंसत्रेषुसूरिभिर्विद्वद्भिरीड्यमाना त्स्तूयमानात्तीर्थपदोभगवतः अभिधानाच्चरित्रात्कः शृण्वन्पुरुषः तृप्नुयात् नकोपि तृप्नुयादित्यर्थः यस्तीर्थपात्पुरुषस्य शृण्वतः पुंसः कर्णनाडींश्रोत्रविलंयातःगतः कथाश्रवणेनश्रोत्रविलद्वारेण हृदयं प्रविष्ट इत्यर्थः भवप्रदां संसृतिसंपादिकांगेहरतिंदेहाप त्यकलत्रादिष्वासक्तिंछिनत्ति नह्येवंभूतानांतापत्रयाभिहतिसामर्थ्य मस्तीतिभावः ॥ ११ ॥

ननुभगवत्कथायाएवतापत्रयात्मकसंसृतिविच्छेदकत्वे सैवप्राधान्येन भगवताव्यासेनमहाभारतेकिमितिनानुवर्णिताकिमितिवाप्रायशोव्र तान्येववर्णितानीत्याशंक्यान्वारोहवादन्यायेन श्रीमहाभारतस्यापि भगवद्गुणानुवर्णनेतात्पर्यमित्याह मुनिरिति तेसखामुनिः कृष्णः व्यासः भगद्गुणानांविवक्षुः भगवद्गुणान्वक्तुमिच्छुर्भारतमाहयस्मिन् भारते ग्राम्यसुखानुवादैर्द्वारभूतैरनुपश्चाद्धरेःकथायांनृणांमतिः गृहीताऽवतारितेत्यर्थः शाखाचंद्रन्यायेन भगवत्कथायांबुद्ध्यव तारार्थंभारतेग्राम्यसुखानुवादः कृतः नहितावतातत्रैवतात्पर्यमिति वक्तुंयुक्तं तदुक्तमितिहाससमुच्चये कामिनोवर्णयन्कामान्लोभंलुब्ध स्यवर्णयन् नरःकिंफलमाप्नोतिकूपेऽधमिवपातयन् लोकचित्तावता रार्थंवर्णयित्वातुतेनतौ इतिहासैःपवित्रार्थैःपुनस्तत्रैवनिंदितौ अन्य थाघोरसंसारबंधहेतू जनस्यतौ वर्णयेत्सकथंविद्वान्महाकारुणिको मुनिरिति अतोभारताभिप्रायोदुरवगमइत्यर्थः ॥ १२ ॥

भगवत्कथायांमतिप्रवेशस्यफलमाह सेति साहरिकथाअहरहः श्रवणेनवृद्धिंप्राप्तासतीश्रद्दधानस्यकथाश्रवणेश्रद्धांकुर्वतः पुंसः अन्यत्रशब्दादौविरक्तिंकरोति ततःकिमित्यतआहहरेर्भगवतःपादयो रनुस्मृत्याऽनुध्यानेननिर्वृतस्यसुखितस्यसमस्तदुःखानामप्ययंनाशं विधत्तेसाहरिकथेतिशेषः ॥ १३ ॥

हरिकथैवस्वस्यांश्रद्दधानस्यशुश्रूषोः शब्दादिविषयेषुविरक्तिंभगवत्प दारविंदभक्तिंचजनयतितापत्रयाभिहतिंचविधत्ते अतएवंविधप्रभा- ववत्यांहरिकथायांयेविमुखास्तान्शोचतितानितिशोच्यशोच्यान्शो- च्यानामपिशोच्यानत्यंतशोच्यानित्यर्थःकुतःअविदःअज्ञान्तान्शोचेते केहरेःकथायांउक्तगुणशालिन्यामघेनपापेनयेविमुखाःपराङ्मुखाः अ तएवयेषांहरिकथाविमुखानामायुरनिमिषोदेवः रविःक्षिणोतिक्षपय- ति किमिदमुच्यतेयतः कथाः शृण्वतोप्यायुः क्षिणोतीत्याशंकांशम यन्विमुखान्विशिनष्टि वृथावादगतिस्मृतीनामिति वादोवाग्व्यापारः

श्री मद्वीरराघवाचार्यकृत भागवतचंद्रचंद्रिका

गतिर्देहव्यापारः स्मृतिर्मनोव्यापारः वृथाव्यर्थाःवादगतिस्मृतयोये- षांतेषां भगवतःकथाःशृण्वतस्तुवादगतिस्मृतयः सफलाइत्यर्थःआ- युः क्षपयंतुतुल्यमेव ॥ १४ ॥

प्रश्नमुपसंहरतिद्वाभ्यांतादिति तत्तस्माद्धरिकथायाएवसमस्तदुः खाप्ययकरत्वाद्धेतोः हेकौषारव!मैत्रेय!शर्मदातुःसुखप्रदस्यपवित्रकी र्तेरस्यहरेःकथामेवकथासुसारंसारभूतांउद्धृत्यपुष्पेभ्यः मधुकरोम- धुइवनःशिवायहेआर्तबंधो ! तापत्रयाभिपीडितानांसुखकर ! कीर्तय कथय ॥ १५ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

इतोपिश्रीकृष्णस्यगुणगणकथामृतस्यपात्रीभूतात्भारतात् न- कस्यापितृप्तिरित्याह कस्तृप्नुयादिति वोयुष्माकंसत्रेषुसूतादिसूरि भिरीड्यमानाव् स्तूयमानात्तीर्थपदोहरेरभिधानात् भारतनामकी र्तनाद्वसज्ञःकःपुरुषः।तृप्नुयादलमितिबुद्धिंकुर्यादित्यन्वयः अलंबुद्ध्य भावेहेतुमाह यइति यस्तीर्थपात्पुरुषस्यकर्णनाडीद्वाराहृदयगुहांप्रवि ष्टः संसारप्रदांगेहरतिंगृहजायापुत्रादिस्नेहलक्षणांरतिंछिनत्तितस्ये- तिशेषः ॥ ११ ॥

यन्मोक्षसुखानुवादिशास्त्रंतदेवाभ्यसनीयंभारतस्यग्राम्यसुखा नुवादित्वेनपुरुषार्थानुपयोगित्वादितितत्राह मुनिरिति गुणानामिति षष्ठीद्वितीयार्थे भगवद्गुणान्वक्तुकामस्तेतवसखामुनिः सर्वज्ञोपिकृ- ष्णोभारतमाह । ननुगुणान्वक्तुमकामयतनत्वभ्यधाद्यतोग्राम्यसु- खानुवादेनन्णांमतिर्गृहीतेतितत्राह यस्मिन्निति यस्मिन्भारतेश्रव- णादिनाऽभ्यस्यमानेसतिनृणांमतिर्ग्राम्यसुखानुवादैर्नगृहीताहरेःक थायामेवगृहीता भारतान्नपरंविष्णोर्महिमावाचकंकचित्। भारता- न्नविरागायभारतान्नविमुक्तयइतिवचनात् सत्यकामेनहरिणाविव- क्षितागुणाभारतेकथिताइत्यतइदमेवशास्त्रंमुमुक्षुणाभ्यसनीयमित्य- विगीतम् ॥ १२ ॥

अस्तुहरेः कथायांगृहीतानृणांमतिः ततः किंफलंविधत्तइतित- त्राह साश्रद्दधानस्येति ग्राम्यसुखानुवादैर्नगृहीता हरेःकथायांविव- र्द्धमानाश्रद्दधानस्य पुंसोमतिरन्यत्रविषयेषुविरक्तिंकरोतीतिप्रथमंवै राग्यं द्वितीयंभक्तिलक्षणं तृतीयंमुपासनाजनितापरोक्षज्ञानं चतुर्थं समस्तसंसारदुःखोच्छेदेनपरमानंदलक्षणंमोक्षाख्यंफलंकरोति एतदे वाह हरेरिति सदानुस्मृत्याजातापरोक्षज्ञानेन निर्वृतस्यासंप्रज्ञातसमा ध्यवस्थासुखंप्राप्तस्याशुकालक्षेपमंतरेण ॥ १३ ॥

व्यतिरेकमुखेनहरेःकथायादुःखाप्ययहेतुत्वमाह तानिति अवि दोज्ञानदुर्बलान् अघेनव्यसनेनआत्मनः शोकाधिकरणत्वंयथार्थं न- मिथ्याभूतमितिद्योतयितुमनुशोचइत्यात्मनेपदप्रयोगः अनिमिषोदेवः कालात्माविष्णुः वृथावादा वृथागतिर्वृथास्मृतिश्च येषांतेतथा तेषामायुर्वृथाक्षिणोतिइतिवा वृथावादोविवादस्तत्सहितेगतिस्मृती- येषांतेतथातेषां नहरिकथावतांवृथेतिविशेषद्योतकस्तुशब्दः ॥ १४ ॥

स्वार्थप्रश्नमुपसंहरति तदिति हरिकथाविमुखाव्यर्थायुषइतिय- स्मात्तीर्थंयथासेवमानानांपापंक्षिणोति तथाहरेःकीर्तिरपितादृशी- तीर्थरूपाकीर्तिर्यस्यसतथा तस्य नान्यकथाशिवसाधनमित्यस्मिन्न- र्थेएवशब्दः ॥ १५ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

मुनिर्विवक्षुरिति । यस्मिन्ग्राम्यसुखानुवादप्राये । कौरवादीनां

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

कथायांश्रीकृष्णकथानुगतेः । तदेतद्विदुरस्य श्रीव्यासाच्छ्रवणंच तीर्थाटन समय एव ज्ञेयम् ॥ १२ ॥

साहरेः कथा। समस्तेति श्रीहरिसाक्षात् कारेणेतिभावः ॥१३॥

अत्रत्रिविधा एवजनादृश्यन्ते केचिदावेशेन हरिकथायांश्रोतारः केचिदनावेशेनकेचित्तुविमुखाएवेति। तत्रावेशिनामनावेशिनः शोच्याः। विमुखास्त्वनावेशिनामपीतिपर्यालोच्याहतानिति । स्पष्टमेव ॥ १४ ॥ १५ ॥

---

श्रीमद्वल्लभाचार्य कृत सुबोधिनी ।

भगवद्धर्माणांभगवद्रूपत्वात्सरसश्चपदार्थोबहुगृह्यतेऽल्परसोऽल्पेनत्यनुभवः अत्राधिकारिभेदेनव्यवस्थाभविष्यतीत्याशंक्यनिराकरोतिकस्तृप्नुयादिति । अत्रेच्छैवनोत्पद्यतेउत्पन्नाचेन्नकदाचित्तृप्यतिवन्हिराहुतिभिरिवतद्गुणाइच्छामेववर्द्धयंतीति पूर्वंनिरूपितं युक्तश्चायमर्थः असुराणामिच्छाभावाद्देवानांमध्येकस्तृप्नुयात् विहितार्थएवहितंपांप्रवृत्तिस्तत्रविरक्ताविरक्तभेदेनब्राह्मणक्षत्रिय भेदेनवायज्ञास्तीर्थानिचविहितानिचित्तशुद्धिद्वारामोक्षफलकानितानिस्वरूपतोदुःखात्मकान्यपिफलतः समीचीनानि भगवद्गुणास्तुचरित्ररूपाणि स्वरूपतोप्यमृतानिफलतो मोक्षफलानि यज्ञरूपाणितीर्थरूपाणि वातः कस्तृप्नुयात् तीर्थानिपादेयस्येति । तिस्रःकोट्यर्धकोटीचतीर्थानांवायुरब्रवीत् दिविभुव्यंतरिक्षेचतानितेजान्हवीजलइति सागंगा भगवत्पदीतादृशस्यचाभिधानंशब्दमात्रमेतदितिपक्षोग्रेनिवर्त्तयिष्यतेसत्रेषुचसूरिभिर्भगवद्गुणाभिज्ञैरीड्यतेसत्रेषुहरिगाथोपगायनमस्ति यथाश्वमेधंब्रह्मणावीणागाथिनौगायेतामितियथावानारदोगानार्थमाहूतस्तेनहिसत्रंपूर्वतोविष्णोः कर्माणिपश्यतेत्यादिश्रुतेश्चकिंचयोभगवान्कर्णनाडींपुरुषस्ययातःस्वस्यहृदयस्थित्यर्थंहृदयेविद्यमानांगेहरतिसंसारदायिनीमनिष्टरूपांछिनत्तिअमृतरूपत्वादिष्टरूपत्वंपूर्वमेव—निरूपितं अनिष्टनिवारकत्वंचोक्तंयागात्मकताचनिरूपिताकर्णनाडीं पुरुषस्ययातइत्यनेनशब्दोनकेवलइत्युक्तंभगवत्सहि तत्वेतुतीर्थानि सिद्धान्येव ॥ ११ ॥

नन्वेवंसतिव्यासःकथमन्यदुक्तवानित्याशंक्याहमुनिर्विवक्षुर्भगवद्गुणानामिति सहिभगवद्गुणानेववक्तुमिच्छुस्तेषामधिकारसिद्ध्यर्थं भवानिवभगवदाज्ञांप्राप्यभरतवंशोत्पन्नानामेवचरित्रमाहसहिदौर्व्यंतिर्मार्थामत्यगादितितद्वंश्यास्तादृशाएवतेषांश्रवणोतदैवमायामोहभावेभगवद्गुणाः श्रोतुशक्याभवंत्यतोऽनधिकारिणोपिभगवद्गुणश्रवणसिद्ध्यर्थं तेसर्वापिकेवलभगवद्गुणवक्तापि नाम्नाकृष्णोपि—भारतमाहयस्मिन्भारतेनृणांबुद्धिरुपायेनाकृष्टाभवतितत्रते सर्वेग्राम्यकथास्वेवाविष्टाचिताः प्रवृत्तिश्चस्वरुच्यैवातस्तेषांबुद्धिग्रहणार्थंग्राम्यकथासुभगवत्कथाप्रवेशितास्ताःकथाग्राम्यत्वेनापिगृहीत्वा स्वप्रयोजनंकुर्वतीतिप्रयत्नःसार्थको भवतितदाह ॥ नुनिदंचयेनेति ॥ १२ ॥

ततःकिमतआह ॥ साश्रद्दधानस्येति॥ आस्तिक्यबुद्धिः श्रद्धा कथाप्रथमतः स्वकार्यंश्रद्धामेवनजनयतिग्राम्यपदार्थेपूच्चनीचभावेरसानुभवादुत्कृष्टमेवगृह्णातिनन्निकृष्टमतःसामतिः श्रद्दधानस्यविवर्द्धमानाश्रद्धयानिरंतरश्रवणाद्विवर्द्धमानाअन्यत्रकुशरतयाप्राप्तेविरक्तिंकरोतिउत्तमान्नसंपन्नोनहिकश्चिदपिपण्याकंभक्षयति ॥ परमेकएवगुणापेक्षतेस्वातन्त्र्यमितितत्राहपुंसइति ततोपिकिमतआह हरेः पदानुस्मृतीतिप्रवृद्धमत्यानिरंतरं भगवत्स्मरणं करोतितदाचित्तंभगवत्

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

स्मरणस्यनिरंतरस्थितौचित्तंनिर्वृतंभवतितत्राहिभगवानानंदमयःप्रविष्ट इतितदासंपन्नंसत्तच्चित्तंततोननिवर्त्ततेततोपिप्रवृद्धामतिःसमस्तानां दुःखानामप्ययंनाशमाशुशीघ्रमेवधत्ते ॥ १३ ॥

अतः परमपुरुषार्थसाधनोभारतेनिर्दिष्टः ॥ एवमप्युपायेकृतेयेषांचित्तंभगवति नप्रविशातितानप्यहमनुशोचे भगवान्स्वसेवार्थमिन्द्रियाणिदत्तवान्कतिपयेभ्योनदत्तवान्येभ्योनदत्तवांस्तेशोच्यास्तेषांचेंद्रियाणिभवेयुस्तद्द्वाराभगवद्भजनंकुर्युरितियेष्ठुनर्दानसमयआसुराणींद्रियाणिप्राप्तवंतस्तेतःकथाःश्रुत्वापितद्रसानाभिज्ञानभजंतेतेशोच्यानामपिशोच्याः अथवायेन जानंत्येव संगाद्यभावात्तानहंशोचंतेपियदिदैवगत्याभगवत्संमुखाभवेयुस्तथापि नशोच्याःसर्वथाविमुखाश्चेत्तदा शोच्यास्तथात्वेहेतुःश्रवणेनेति ॥ पानेनैवभगवद्वैमुख्यंकार्यंतेस्वनाशशंकयातदाकालोपितान्ग्रसतीत्याहच्छिणोतीति सहि सर्वज्ञोदेवः सर्वान्जानातिग्रासार्थंचानिमिषः ॥ सावधानः तुशब्दः पक्षांतरंव्यावर्तयति भगवद्विमुखस्यदेवतांतरेणवामार्गांतरेणवा निस्तारोस्तीति पक्षस्तेषां सर्वेषामेवायुर्हरतितस्यतदेककार्यत्वात् ननु कायवाङ्मनोभिस्तेकिंचित्समीचीनं कारष्यंतीत्याशंक्याहवृथाधादगतिस्मृतीनामितिअर्थ शून्यास्त्रयोपिवादादयस्तएवतेषांरांचंतेदिवाभीतानांयथातेजोगतिःकायिकीतस्मात्तेषांसर्वनाशाद्विद्यमानेपि पुरुषार्थसाधनेपुरुषार्थाभावाच्चशोच्यानामपिशोच्याः ॥ १४ ॥

एवमन्वयव्यतिरेकाभ्यांभारततात्पर्यमुक्त्वातेनभगवत्कथायांगृहीतचित्तंमांप्रतिभगवत्कथैवकेवलावक्तव्येत्याहतदस्येति पूर्वंप्रश्नाश्चत्वारोऽज्ञानान्यथाज्ञाननिवर्त्तकाः अयंतुप्रश्नोज्ञात एवप्रत्यहंभोजनवदावश्यकोपेक्ष्यते तत्तस्मात्कारणादस्यपुरतः परिदृश्यमानस्यभगवतः स्वभावतयासर्वेभ्यः शर्मदातुदुःखनिवारकस्यचकथयनतुहरिकथालौकिक्यासंवलिताकथंभिन्नतयाकेवला कथयितुंशक्यतेतत्रोपायमाहकथासुसारंसमुद्धृत्येतिसृष्टप्रकाराः बहवःसंतितत्रभगवत्कर्तृकैवसृष्टिर्नैकव्यापालनंबहुविधमितिकालकर्मादिभिःक्रियमाणंतत्रभगवत्क्रियमाणमेववक्तव्यंप्रलयेपितथैवयस्यांसृष्टौभगवानेवप्रविश्यनानाभवतिनतुजीवःपुरुषान्योवाचरित्रमपिप्रकृत्याद्यसंवलितंवक्तव्यमितिकिंबहुनाभक्तेष्टपूरणादुःखनिवारणैकप्रयोजनंकेवलंभगवच्चरित्रंसर्वतःसारमुद्धृत्यवक्तव्यंबुध्यैवात्रोद्धारःसूक्ष्मोद्धारेदृष्टांतमाहपुष्पेभ्यइवेतियथापुष्पएवमकरंदास्तिष्ठंति परंतंभ्रमरएवपिबतिमधुमक्षिकाचोद्धृत्यस्थापयतितथायद्यपिभ्रमरवत्पीयतेतथापिपरोपकारोनभवतीतिमधुमक्षिकावदुद्धृत्यवक्तव्यंनन्वेतत्क्लेशात्मकंभवतिपीतस्यपुनरुद्धिरणात्तत्राहआत्मबंधोइति लोकोपकारार्थं क्लेशोपिसोढव्यः वस्तुतस्तुपानइवनिष्कासनेपींद्रियसंबंधस्यतुल्यत्वादविकृतत्वाच्चपरोपकारसिद्धेरोमंथइवरसास्वादनंभवत्यतोनास्माकंशिवायकीर्त्तय अधिकारोनास्तीतिनमंतव्यं तीर्थरूपाकीर्त्तिर्यस्येति तेनैवाधिकारोपि भविष्यति ॥ १५ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

ननु कृष्णकथापि त्वया बहुश एवः श्रुता तत्राह क इति । अभिधानात् नामत एव किमुत कथाभ्यः । यद्वा । अभिधानात् कथनमात्रात् ल्यब्लोपे पञ्चमीयम् ॥ ११ ॥

महाभारतस्यापि वस्तुतस्तत्रैवतातपर्य्यमित्याह मुनिः कृष्णो वेदव्यासः । गुणानामिति द्वितीयायां षष्ठी ॥ यद्वा उत्कर्षमित्याक्षेपलभ्यं ॥ यस्मिन् भारते ग्राम्यसुखानुवादैःअर्थकामकथानुकथनैर्नृणां विषयलुब्धानामपि मतिर्गृहीताव्यासेनस्वहस्तवशीकृता—

स विश्वजन्मस्थितिसंयमार्थे कृतावतारः प्रगृहीतशक्तिः ।
चचार कर्म्माण्यति पूरुषाणि यानीश्वरः कीर्त्तय तानि मह्यम् ॥ १६ ॥

श्रीशुकउवाच ॥

सएवं भगवान् पृष्टः क्षत्त्रा कौषारविर्मुनिः ।
पुंसांनिःश्रेयसार्थेनत माह बहु मानयन् ॥ १७ ॥ *

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

किमर्थं हरेः कथायां भगवद्गीता नारायणीयापाख्यानादिषु प्रवेशयितुमित्याक्षेपगम्यं । अन्यथा परमार्थकथामश्रवयन्तस्ते तत्समीपमेव नैवायास्यन् ॥ तदुक्तमितिहास समुच्चये कामिनो वर्णयन् कामान् लोभं लुब्धस्य वर्णयन् ॥ नरः किं फलमाप्नोति कूपेऽन्धमिवपातयन् ॥ लोकचित्तावतारार्थं वर्णयित्वात्र तेन तौ ॥ इतिहासैः पार्यन्त्यार्थैः पुनस्तत्रैव निन्दितौ ॥ अन्यथा घोरसंसारबन्धहेतू जनस्यतौ वर्णयेत स कथं विद्वान् महाकारुणिकोमुनिरिति ॥ १२ ॥

हरिकथायां मतिप्रवेशस्य फलमधिकारिभेदेनाह सा हरिकथा श्रद्धधानस्य हरिकथायामेव परमपुरुषार्थबुद्ध्या विश्वसतः शुद्धभक्तस्येत्यर्थः ॥ अन्यत्र धर्मार्थकाममोक्षेषु ॥ ननु कथं मोक्षेऽपि विरक्तं चेत् करोति तत्तः कथं निवृत्तिःसंसारदुःखनाशो वा तत्राह हरेः पदयोरनुस्मृति प्रतिक्षणमेव माधुर्यानुभूतस्तस्यैव निर्वृतस्य लब्धपरमानन्दस्य पुंसः समस्तदुःखोयः संसारस्तस्यापि अप्ययं नाशं तत्रापि आशु शीघ्रमेव ॥ १३ ॥

अत्रहरिकथायां त्रिविधाजनाः सम्भवन्ति ॥ श्रद्धधाना अश्रद्धधाना विमुखाश्च श्रीभागवतमते भक्तौ परमपुरुषार्थत्वेन विश्वसन्त श्रद्धधाना उच्यन्ते ॥ तावत् कर्म्माणि कुर्वीत न निर्विद्येत यावता मत्कथाश्रवणादौ वा श्रद्धा यावन्नजायते इति ॥ जातश्रद्धो मत्कथास्वित्यादौ तथा प्रतिपादयिष्यमाणत्वात् पुरुषार्थसाधनमात्रत्वेनैव विश्वसन्तोऽश्रद्धधानाः भक्त्या विनैव पुरुषार्थान् सिषाधयिषवो विमुखास्तत्र प्रथमान् साभिनन्दनमुक्त्वा द्वितीयानुल्लंघ्य तृतीयान् शोचति ॥ शुद्धभक्तैर्ये शोच्याः स्वर्गमोक्षादिसाधनरतास्तैरपिशोच्यान्भक्तिरहितकर्म्मज्ञानयोगादिमतोऽहमशोचामितत्रहेतुःअविदः शास्त्राण्यधीत्यापि तत्तात्पर्य्यमविदुषः यतोहरेरित्यादिग्रन्थेन प्राचीनार्वाचीनमहापराधेनैवहेतुनेत्यर्थः अनिमिषःकालः ननुतेऽपिक्षमतस्थापने नानावादनानागतिना ..स्मृत्यादिमन्तःससायांप्रगलमन्ते तत्रसधिकारमाह वृथेत्यादि ॥ १४ ॥

तत्तस्मात् हेकौषारव ! ॥ १५ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

तदेवाहतीर्थपदःश्रीकृष्णस्यवोयुष्माकंसत्रपुसमाजेषु सूरिभिः श्रीनारदादिभिरीड्यमानात्प्रस्तूयमानात् अभिधानात् कःतृप्नुयात्नकोपि ॥ ११ ॥

महाभारतादौ अन्यकथाभिःसहश्रीकृष्णकथावर्णनेश्रीव्यासाभिप्रायमाह मुनिरिति कृष्णोव्यासः भगवद्गुणानांतत्प्रसंगतोवावक्तुःवक्तुमिच्छुःभारःब्रह्मादीनांनानाजीवानांकथावर्णनरूपः अर्थेधर्मकाममोक्षवर्णनरूपश्चविद्यतेयस्मिन् तद्भारतं मत्वर्थीयस्तत्प्रत्ययः

तद्भारतमाह यस्मिन्भारते नृणांमतिर्ग्राम्यसुखानुवादैर्द्वारभूतैः तुनिश्चितंहरेःकथायांगृहीतानीता अतःमहाभारतादि कथासामान्याधिकारिविषया उत्तमाधिकारिविषयांकेवलांहरिकथां कथयेतिभावः ॥ १२ ॥

हरिकथाश्रवणफलमाह सेति ॥ १३ ॥

हरिकथाविमुखानिन्दतितानितिशोच्याः।अकृतार्थतयाचिंतनीयाः तेषामपिशोच्यान् शोचेअकृतार्थतयाचिंतयामि वृथावादादयोयेषां तेषामायुः देवः सूर्यःतथैवच्छिद्यंतिष्पयति ॥ १४ ॥

तत्तस्मात् हेकौषारव ! अस्यअस्माद्विधस्यशरणागतस्यशर्मदातुः सुखप्रदस्यहरेःकथांकथासुसारंसारभूताम् पुष्पेभ्यः सारंयथोद्धरतितद्वदुधृत्यनः शिवायकल्याणायकार्तय ॥ १५ ॥

---

भाषाटीका ॥

आप के समाजों में ज्ञानियों से श्लाघा पूर्वक गाई गई सकल तीर्थ हैं चरणों में जाके एसे कृष्ण की कथा से कौन तृप्त होयगो जो श्रीकृष्ण, कथा द्वारा कर्णों में जाकर पुरुषों को संसार देने वारी गृह की प्रीति को छुडाय देवै हैं ॥ ११ ॥

भगवद्गुण कथन की इच्छा वारे, आपके सखा, श्रीव्यास मुनि-, ने भी महा भारत ग्रन्थ कियो जा में लौकिक सुखों के अनुवाद करके हरि कथा में मति खैंची है ॥ १२ ॥

प्रति दिन वढनवारी, श्रद्धावान पुरुष की वो मति, भगवद्व्यतिरितिक्त विषयों में वैराग्य कराय देवे हैं और गोविन्द के चरणारविंद के स्मरण से सुखित जो पुरुष तिन के शीघ्र ही समस्त दुःखों को नाश करे है ॥ १३ ॥

पूर्व पाप से महा भारत के तात्पर्य को न जान कर हरि कथा से विमुख जो पुरुष तिन कों मैं सोचूं हूं और जो तात्पर्य जानकर- भी हरि कथा सूं विमुख हैं वे शोचनीय लोगों को भी शोचनीय हैं व्यर्थ है वाणी देह और मन को व्यापार जिनको ऐसे पुरुषन की आयु को काल व्यर्थ ही क्षीण करै है ॥ १४ ॥

तासों हे दुखियान के बंधु ! हे मैत्रेय जी ! सब कथाओं में सार सुख देवे वारे, पवित्र कीर्ति, श्री हरि, की कथाईको हमारे कल्याण के तांई कीर्त्तन करो जैसे भ्रमर पुष्पों में से मकरंद निकाले तारीत सों ॥१५॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

विशेषतः श्रीकृष्णकथाः कथनीया इत्याशयेनाहस इति । यो विश्वसर्गाद्यर्थपूर्वं प्रगृहीतशक्तिः सएव पुरुषेषु कृतावतारः सन् पुरुषानतिक्रम्यवर्तमानानि यानिचकार तानि विस्तराद्वद ॥ १६ ॥

पुंसां निःश्रेयसमेवार्थः प्रयोजनं तेन हेतुना पृष्टः ॥ १७ ॥

---

* निःश्रेयसार्था यें ति विजयध्वज वीरराघवाचार्ययोः संमतः पाठः ॥

मैत्रेयउवाच ॥

साधु पृष्टं त्वयासाधो लोकान्साध्वनुगृह्णता ।
कीर्तिं वितन्वतालोके आत्मनोऽधोक्षजात्मनः ॥ १८ ॥
नैत च्चित्रं त्वयिक्षत्त बादरायण वीर्यजे ।
गृहीतोऽ नन्य भावेन य स्त्वया हरिरीश्वरः ॥ १९ ॥
मांडव्यशापा द्भगवान् प्रजासंयमनोयमः ।
भ्रातुः क्षेत्रे भुजिष्यायां जातः सत्यवती सुतात् ॥ २० ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

बहुमानमेवाह साध्विति पञ्चभिः । अधोक्षज एवात्मामनोयस्य तस्यात्मनः स्वस्यकीर्त्तिञ्च प्रसङ्गाद्वितन्वता ॥ १८ ॥

हरिर्यद्गृहीत एतच्चित्रं न भवतिकुतःबादरायणवीर्य्यजे ननुबादरायण वीर्यजो धृतराष्ट्रोपि भवति सत्यं परंतुत्वयिततोविशेषइत्याहगृहीतइति ॥ १९ ॥

ननुतर्हिंकथंशूद्रत्वं कथञ्च लोकानुग्राहकत्वं तत्राह माण्डव्यशापादिति । भ्रातुर्विचित्रवीर्य्यस्य क्षेत्रे क्षेत्रत्वेन स्वीकृतायां भुजिष्यायां दास्यांयम एवत्वं जातोऽसि ॥ २० ॥

---

श्रीराधारमणदासगोस्वामि विरचित
दीपिन्याख्य तट्टिप्पणी ।

पुरुषेषुमनुष्येषु ॥ १६ ॥

निःश्रेयसंभक्तिरूपंमङ्गलम् ॥ १७ ॥

भक्तानांस्वकीर्त्यनपेक्षणात्प्रसंगादितिव्याख्यातम् ॥ १८ ॥

अनन्यभावेनानिष्किञ्चनभक्तियोगेनवीर्य्य मत्रभक्तोत्पादकसत्संकल्पप्रभावस्तस्माज्जातेनेतिव्याख्येयमन्यथा धृतराष्ट्रेतिप्रसंगस्यादितिज्ञेयम् ॥ १९ ॥

यर्हिबादरायणवीर्य्यजत्वंतर्हिकथंशूद्रत्वंशूद्रत्वेचकथंलोकानुग्राहकत्वम् महाभागवतोयमएवत्वं नशूद्रःयतोनशूद्राभगवद्भक्तास्तेतुभागवताःस्मृताःसर्ववर्णेषुतेशूद्रायेनभक्ताजनर्दनेइति वस्तुतस्तुभगवत्परिकरोयंविदुरोनित्यसिद्धएव तत्रयमस्यप्रकटलीलायांप्रवेशादभेदव्यवहारइतिज्ञेयम् ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचंद्रचंद्रिका

भगवत्कथास्वपिप्राधान्येन श्रीकृष्णकथैवकथनीयेत्याह सइति योभगवान्विश्वस्यजन्मस्थितिसंहारार्थे सृष्टिस्थितिसंहारार्थंप्रगृहीतशक्तिः प्रगृहीतोपात्ताशक्ति ब्रह्मादिरूपाशक्तिर्येनसः शक्ति—तन्वंशविभूतिशरीरादयः शब्दाः पार्यायाः पालनाधिकृत--स्वावताररूपविष्णुगतपालनानुकूलसामर्थ्यंस्यस्वशक्तित्वंबोध्यंयएवंभूतसएवेश्वरःकृतावतारःअतिपूरुषाणयातिमानुषाणिदिव्यानिकर्माणिचकारतानिमह्यंकीर्तयकथय ॥ १६ ॥

एवंक्षत्त्रापृष्टोमैत्रेयआहेत्याहशुकःसएवमित्येकेन भगवानुत्पत्त्यादिज्ञानसंपन्नःसकुषारवसुतांमैत्रेयः एवंक्षत्त्राविदुरेणपुंसांनिः श्रेयसार्थायमोक्षोदयायस्वस्यतुसंसिद्धत्वान्नस्वनिश्रेयसार्थायेत्यर्थःएवमापृष्टःतंक्षत्तारंबहुमानयन्संमानयन्नाह ॥ १७ ॥

पुंसांनिःश्रेयसार्थायेत्यनेनसूचितमेवक्षत्तुर्लोकानुग्रहकारित्वमाविष्कुर्वंस्तावत्प्रश्नमभिनंदतिमैत्रेयःसाध्वितिहेसाधो ! विदुर ! त्वया

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ॥

साधुसम्यक्पृष्टंत्वयाकथंभूतेनलोकान्साध्वनुगृह्णताअधोक्षजात्मनः अधोक्षजआत्मायस्यतस्यात्मनः स्वस्याधोक्षजचितस्यस्वस्योत्तमकीर्तिलोकेवितन्वताविस्तरयता ॥ १८ ॥

हरिकथाप्रश्नस्त्वयिनचित्रमित्याह नैतदितिहेक्षत्तःबादरायणवीर्यजेव्यासवीर्यसंभूतेत्वयिइदंहेतुगर्भविशेषणंएतद्धरिकथाप्रश्नइत्येतन्नचित्रंनकेवलंबादरायणवीर्यं जत्वमात्रमेवकिंतुयद्यस्मादनन्यभावेनैकांतभावेनेश्वरोहरिस्त्वयागृहीतः ॥ १९ ॥

बादरायणवीर्यजत्वंचस्पष्टयतिमांडव्यशापादितिप्रजानामभागवतानांप्रजानांसंयमनो दंडयितायमःवैवस्वतःमांडव्यस्यमुनेः शापाद्भ्रातुःसत्यवतीसुतस्यविचित्रवीर्यस्यक्षेत्रक्षेत्रत्वेनपरिगृहीतायांभुजिष्यायांदास्यांसत्यवतीसुताद्व्यासाज्जातः उत्पन्नः यमएवत्वंजातोसीत्यर्थः ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

सारकथापि सृष्ट्यादिविषयलीलैवेत्याशयेनाह सइति पुरुषाब्रह्मादयस्तत्कर्मातिक्रांतानिअतिपूरुषाणिकृतवासुदेवाद्यवतार सृष्ट्यादिकर्तारौब्रह्मरुद्रावितिभ्रांतिनिवारणार्थमीश्वरइत्युक्तं ब्रह्मशिवेशनशीलईश्वरइत्यर्थः प्रगृहीतसृष्ट्यादीच्छाशक्तिः वशीकृतप्रकृतिशक्तिर्वा ॥ १६ ॥

मैत्रेयोविदुरप्रश्नपरिहारंवक्तुमुपक्रमतइत्याहशुकः सएवमिति निः श्रेयसार्थायमोक्षादिपुरुषार्थाय ॥ १७ ॥

बहुमानप्रकारंवक्ति साध्विति अधोक्षजेहरावात्मामनोयस्यसतथा तस्यआत्मनोममस्वस्यपरमात्मनोवा ॥ १८ ॥

तवतद्विषयप्रश्नउचितएवेतिकथयति नैतदिति यादृशोभावोविष्णोरन्यस्मिन्वस्तुनिनास्तितादृशोभावोनन्यभावस्तेनसर्वोत्तमत्वज्ञानपूर्वकबहुमानेनेत्यर्थः हरिरीश्वरइत्येतौशब्दौअन्योन्यव्यावर्तकत्वंनप्रवृत्तावितिज्ञातव्यम् ॥ १९ ॥

द्वयोर्नित्वात्तवहरिकथाप्रश्नोनाश्चर्यकरइति भावेनकथयतिमांडव्येति व्यासस्यभ्रातुर्विचित्रवीर्यस्यक्षेत्रेवीर्याधानयोग्यायांभुजिष्यायांदास्यांयः सत्यवतीसुताज्जातः प्रजासंयमनोयमोभवानितियस्मात् ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

तत्र विशेषतः श्रीकृष्णकथानुरक्तत्वेऽपि विरहदुःखवृद्धिभयात् सामान्यत एव पृच्छतिस विश्वेति अतएव श्रीमैत्रेयोऽपि तत्कथां न प्रस्तुतवानितिज्ञेयं कुतः सम्प्रत्यवतारोयेनसः श्रीकृष्णोजन्माद्यर्थंप्रगृहीतशक्तित्रयः सन्यानिचकारेतियोज्यम् ॥ १६ ॥

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ॥

पुंसां सर्व्वेषामेव पुरुषाणांयान्निःश्रेयसं मङ्गलंभक्तिरूपं तदेवार्थः पुरुषार्थोयस्यतेन ॥ १७—२० ॥

---

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

एवमुद्धृत्यभगवत्कथांपृष्ट्वामूलपुरुषस्याद्वितियपुरुषस्यचरित्रंपृच्छतिस विश्वेतिपूर्वोक्तःसएवकार्यांतरार्थेऽवतीर्णस्यचरित्रंप्रथमतः पृष्टमिति अंतेसर्वस्यापिविश्वस्यजन्मस्थितिसंयमार्थे यःकृतावतारःपरमपुरुषो व्यष्टीनांवाजन्माद्यर्थंकृतावतारोनतुकालादीनाज्ञापयति किंतुस्वयमेवागत्यकरोतियःनतुभगवत्कृतेपिहित्याद्यनुभवात्कथंकेवलंभगवत्कृतं तद्भाविष्यतीत्याशंक्याहप्रगृहितशक्तिरितिप्रकर्षेणगृहिताः कालादिशक्तयोयेनेतद्धिकालादयस्तत्रप्रतीयमानाअपि भगवतानियमितान स्वतःकार्यंकुर्वंतिप्रतीतिमात्रंतुनदोषायजन्माद्यर्थमेवावताराज्जन्मादीनिकरिष्यत्येवकिंत्वन्येभ्यः पुरुषेभ्यः प्रकर्षेणातिपौरुषाणियानि चकारसाधारणंतुनकरिष्यतीश्वरत्वात्तानिकेवलमेवकथय मयापरंपरार्थमध्यन्यस्मैनवक्तव्यमितिभावः एतादृशप्रश्नकर्त्तानान्योभविष्यतिनवाप्रभुव्यतिरेकेणवक्तुंशक्यमतोस्याधिकारोनिरूपितःअनेनैव प्रश्नेनसहिताभवंतीतिपर्यवसानतएकएवप्रश्नः सिद्धस्तस्योत्तरमध्यायद्वयेनवक्ष्यतिअवतारादिषुपौरुषप्रयोजनभेदात्तस्मादेतदध्यायद्वयं स्वतएवानेनोद्धृत्योक्तअनेनचेदतृप्तः प्रश्नांतरजिज्ञासुर्भविष्यातितदा पूर्वोक्तानपिविशषांस्तत्रवक्तशरेपातयित्वाजीवसंदेहनिवृत्त्यर्थंवक्ष्यामीत्यभिप्रायांमैत्रेयस्य ॥ १६ ॥

अतः प्रश्नाभिनन्दनंवक्तुं तस्यायंप्रश्नोभिप्रेतइत्याह एवंसभगवान्पृष्टइति मैत्रेयआविष्टोभगवान्वर्त्ततइति सभगवान्केवलेनैतत्ज्ञातुंवक्तुंशक्यंक्षत्रेति पूर्ववत्कौषारविरिति पितृनाम्नाविवेकित्वंमुनिरितितदुक्तार्थ ज्ञानानुसंधानेहेतुः इदमतिपवित्रंनैकस्मैप्रयोजनायच कव्यमितिपुंसांनिःश्रेयसार्थायेत्युक्तं परंतमुद्दिश्यैववेत्याहतमाहेतिबहुमाननेनतस्य हृदयंप्रविशतीतिभगवदीयत्वाच्च वहुमाननंकृतवानित्यर्थः ॥ १७ ॥

तत्रचतुर्भिःसन्माननंकरोति।पृष्टार्थ देहजीवानांसंवंधस्यापि सर्वतः ज्ञात्वाकथनबोधायतैरुत्कर्षोनिरूप्यते ॥तत्रप्रथमंप्रष्टव्योत्कर्षेणतमभिनंदतिसाधुपृष्टमितिवहवएवपृच्छंतिकोप्येवनपृच्छतीतित्वयेत्युक्तंनचतवायंप्रश्नः काकतालीयतः किंतुज्ञात्वैवकृतः उत्तरमपिज्ञायते तर्हिप्रश्नोव्यर्थइत्याशंक्याह लोकान्साध्वनुगृह्णतेति लोकोद्धारार्थमेवज्ञात्वापित्वयाप्रश्नःकृतःअनेनास्मिञ्शास्त्रेपरोपकारो मुख्यंसाधनमित्युक्तंतवाप्येकमानुषंगिकं फलंसिद्ध्यतीत्याह कीर्तिवितन्वतालोकइति अस्मिन्लोकआत्मनः कीर्तिंविस्तारयताभवता पृष्टंननुस्वकीत्यर्थंतथाकरणमनुचितमितिचेत्तत्राहअधोक्षजात्मनइति अधोक्षज एवांतःकरणेयस्यदेवालयप्रतिष्ठयादेवंदवएवप्रतिष्ठितोभवतीतिपरंपराश्रयणंतुसाक्षाद्भवतइंद्रियागोचरत्वात्तदाहअधोक्षजेतिएवमस्यप्रश्नस्यस्वपरहितत्वात्साधुत्वंदेहोत्कर्षमाहशूद्रयोनिदोषाभावाय १८

नैतच्चित्रमिति ॥ क्षेत्रमेकेप्रशंसंतिवीजमन्येमनीषिणःतयोर्वीजमेवोत्तमंयस्माद्वीजप्रभावेनातिर्यंजाऋषयोभवन्अतोवदरायणस्यवीर्यजे त्वयिचित्रंनतादृशवक्तुःपुत्रोवक्तुमेवसमर्थोभवातिकिंपुनःप्रश्नेअतएव चित्राभावस्तस्यवीजस्यफलमपिजातं इत्याहगृहीतइतिअनेनप्रामादिकवीजत्वशंकानिवारितानह्यन्यथोत्पन्नोभगवद्भक्तोभवति अलौकिक सर्गत्वादतएवानन्यभावेनकेवलभगवद्भावेनभगवान्गृहीतःसहि–



श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

दुःखमपिशमयतियोन्यादिसर्वदोषानपिदूरीकरोतियतईश्वरःकरणेहेतुःहरि रितिदीन दयालुत्वात्तथाकरोतीत्यर्थः ॥ १६ ॥

जीवोत्कर्षमाहमांडव्यशापादिति सहिधर्मराजएवमांडव्यशापाद्धासद्धाराक्षत्रियभोगपत्न्यांजातोमांडव्योहियमेनाज्ञानाद्दंडितःकस्यचिद्राज्येचौरैः सहमांडव्यनामाऋषिःस्तपःकुर्वाणः शूलमारोपितःसहियमंप्रष्टुंगतःतेनपृष्टोयमआहत्वयावाल्येशकुंतिकायाःपृष्ठेइषीकापृवेशितेतिततःक्रुद्धोमुनिर्वाल्येनकृतंपित्रोर्भवतीत्यज्ञानात्त्वयाहंदंडितइति शूद्रोभवेतिशशापतस्यदेवस्यशापसंवंधेहेतुमाह प्रजासंयमनइति–प्रजाःसंयमयतिमारयतीतितथा अतस्तेनकर्मणादेवस्यापिपापंजातं ततोदैत्येपुजन्ममाभवत्विितिसर्वथादैत्यसंवंधराहितेभगवतिव्यासेआविष्टःशापसार्थकत्वायतस्यैवभ्रातुःक्षेत्रेभोगपत्न्यांभुजिष्यायांशूद्रायां व्यासस्यापिसंक्रमणयोग्यार्थंसत्यवतीसुतइत्युक्तंउपरिचरवसोर्वीजान्मत्स्ययांनौ जाताकैवर्ताधिपेनदासेन परिपालिता दासकन्या सत्यवतीतस्याः पुत्रा व्यासाज्जात इति ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ॥

अतो निराकांक्षत्वार्थमुक्तलक्षणानां मत्प्रश्नानामुत्तरं संक्षेपेणोक्त्वा मधुरेण समापयेदिति न्यायेन श्रीकृष्णावतारकथैवविस्तारार्थं कीर्त्तनीयेत्याह स इति कृताः पूर्व्वं पुरुषादयोऽवतारा येन स महां मां प्रसादयितुम् ॥ १६ ॥

त्वत्रा कीदृशेन पुंसां कलौ जनिष्यमाणानां निःश्रेयसं निस्तार इवार्थो यस्य तेन तस्य श्रीकृष्णपार्षदत्वेन कृतार्थत्वादेवेति भावः ॥ १७ ॥

अधोक्षज एव आत्मा मनो यस्य तस्य आत्मनः स्वस्य॥१८॥

त्वय्येतन्नाश्चर्य्यं यतो वादरायणस्यवीर्य्याज्जातेयतश्च गृहीत इत्यादि ॥ १९ ॥

न त्वं प्राकृतो लोकस्त्वामहं परिचिनोम्येवेत्याह माण्डव्योति : भातुर्विचित्रवीर्य्यस्य क्षेत्रे क्षेत्रत्वेन स्वीकृतायां भुजिष्यायां दास्याम् ॥२०॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

कारणंतुध्येयमिति श्रुतेर्विश्वकारणस्यभजनं विधीयतेतच्च विश्वकारणंश्रीकृष्णस्तस्मात् कृष्णकर्माणिवर्णयेत्याह सइतियोविश्वजन्माद्यर्थं पूर्वगृहीतशक्तिः सएवकृतावतारः सन् पौरुषाणि पुरुषानतिक्रम्य वर्तमानानियानिचकारतानि कर्माणिमह्यंविस्तराद्वद ॥ १६ ॥

एवंपुंसांनिःश्रेयसार्थायपृष्टः तंवक्तारंवहुमानयन्नाह ॥ १७ ॥

अधोक्षजे आत्मामनोयस्यतस्य ॥ १८ ॥

यद्धरिर्गृहीतः एतत्वयिचित्रंनतत्रहेतुः वादरायणवीर्येणेति ॥ १९ ॥

भ्रातुः सत्यवतीसुतस्यविचित्रवीर्यस्यक्षेत्रेभुजिष्यायांसत्यवतीसुतात् श्रीवेदव्यासात् ॥ २० ॥

---

भवान् भगवतो नित्यं संमतःसानुगस्यच ।
यस्यज्ञानोपदेशाय मादिशद्भगवान्व्रजन् ॥ २१ ॥
अथ ते भगवल्लीला योगमायोपबृंहिताः ।
विश्वस्थित्युद्भवांतार्था वर्णयाम्यनुपूर्वशः ॥ २२ ॥ *

श्रीमैत्रेयउवाच।

भगवानेक आसेदमग्र आत्मात्मनां विभुः ।
आत्मेच्छानुगतोह्यात्मानानाशक्त्युपलक्षणः ॥ २३ ॥
स वा एष तदा द्रष्टा नापश्यद्दृश्यमेकराट् ।
मेनेऽसंतमिवात्मानं सुप्तशक्तिरसुप्तदृक् ॥ २४ ॥
सा वा एतस्य संद्रष्टुः शक्तिः सदसदात्मिका ।
माया नाम महाभाग ययेदं निर्ममे विभुः ॥ २५ ॥

भाषाटीका

संसार के सृष्टि पालन संहार करने के लिये अवतारकूं धारण करने वाले भगवान् दिव्य शक्तियों कूं धारण करके जिन अति मानुष कर्मों को किये तिन कर्मों को मेरे से आप कथन करो ॥ १६ ॥

श्रीशुकदेवजी बोले॥ इस प्रकार विदुरजी के पूछने पर मननशील श्रीमैत्रेय भगवान मनुष्यों के कल्याण के हेतु से बहुत मान करते हुये उन से बोलते भये ॥ १७ ॥

मैत्रेयजी बोले हे साधो ! लोकों के अच्छे अनुग्रह करने वाले तिसी हेतु से लोकों में अपनी कीर्तिके विस्तार करने वाले, परमेश्वर मेमन कूं लगाने वाले, आपने अच्छा प्रश्न किया॥ १८ ॥

हे विदुरजी आप श्रीवेदव्यासजी के वीर्य से उत्पन्न हो आप में इस बात का आश्चर्य नहीं है जो कि आपने अनन्यता से हरि-ईश्वर का ग्रहण किया है ॥ १९ ॥

मांडव्य ऋषि के शाप से प्रजाओं का नियमन करने वाले यमराज-भ्राताकी दासी रूप भार्या में श्रीव्यासजी से आप उत्पन्न हो ॥ २० ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका

किञ्च । भवानिति कुतः यस्य तव ज्ञानोपदेशाय मामादिष्टवान् । चकारात् स्वयमपि स्मृत्यैवोपदिष्टवानिति ॥ २१ ॥

विश्वस्थित्यादय अर्था विषया यासांताः ॥ २२ ॥

तत्र सृष्टिलीलां वर्णयितुं ततः पूर्वावस्थामाह । इदं विश्वंअग्रेसृष्टेः पूर्वं परमात्मा भगवानेक एवास आसीत् । आत्मनां जीवानां आत्मास्वरूपं । विभुः स्वामीच । नान्यद्द्रष्टृदृश्यात्मकं किञ्चिदासीत् । कारणात्मना सर्वेऽपिपृथक् प्रतीत्यभावादित्याह । अनानामत्युपलक्षणः नानाद्रष्टृ दृश्यादि भिर्नोपलक्ष्यते इति तथा यद्वा अकारप्रश्लेषं विनैवायमर्थः यःसृष्टौ नानामतिभिरुपलक्ष्यते सतदाएक एवासीदितिकुतः आत्मेच्छामाया तस्या अनुगतो लयेसति यद्वाआत्मनएकाकित्वेन अवस्थानेच्छायामनुवृत्तायामित्यर्थः ॥२३

तत्र प्रथमं मायोद्भवप्रकारमाह द्वाभ्यां । सवैएषद्रष्टासन् दृश्यं नापश्यत् यत एकराट् एकएव तदा प्रकाशते तदा आत्मानं

श्रीधरस्वामिकृत भावार्थदीपिका ॥

असन्त मिव मेने । दृश्याभावे द्रष्टृत्वाभावात् । तदाहसुप्ता मायाद्याः शक्तयोयस्यसः । नत्वसन्तमेव मेने । यतः असुप्ता चिच्छक्तिर्यस्येति ॥ २४ ॥

सावै द्रष्टृ दृश्यानुसन्धानरूपा । सदसदात्मिका कार्यकारणरूपा । यद्वासद् दृश्यं असदद्दृश्यं आत्मस्वरूपंच तयोरात्मायस्य तस्याः तदुभयानुसन्धानरूपत्वात् ॥ २५ ॥

---

श्रीराधारमणदासगोस्वामि विरचित
दीपिन्याख्य तट्टिप्पणी ।

सानुग्रहस्य यज्ज्ञानदशा यच्चमामादिशद्भगवान्व्रजन्निति सम्बन्धोक्तिपाठः तत्रस्वामिव्याख्याचसङ्गतास्याच्चकारस्यतत्रैवयोजनात् ॥ २१ ॥

अथश्रीभगवत्सम्मतत्वात् विषयःप्रतिपाद्यः ॥ २२ ॥

तवतत्रतासुत्रिविधलीलासुमध्ये ततःसृष्टेः भगवानित्येनदारभ्यअशेषसंक्लेशशमंविधत्तइत्येतत्पर्यन्तंचतुः श्लोकीविवरणएकएवासीदितिकारणेनभगवतासहैकीभूयासीदित्यर्थः स्वरूपंरश्मीनांमंडलमिवपरमस्वरूपंमूलरूपमित्यर्थः यथाजीवानामात्मत्वेऽपितदात्माभगवांस्तथाभगवतापिकश्चनात्मास्यादितिभ्रांतिव्युदासायद्वितीयात्मपदंस्वस्यस्वयमेवात्मास्वयंसिद्धस्वरूपइत्यर्थः पूर्वार्थेएकएवत्यनेनवाविवक्षितसिद्धेरकारविश्लेषगौरवाच्चयद्वेति गुणमायायाएवलयस्सम्भवतिनत्वात्ममायायाः आत्ममायातदिच्छास्यात् गुणमायाजडात्मिकेतिमहासंहितोक्तेरनुगतिशब्दस्यलयवाचकत्वं चाप्रयुक्तमित्यपरितोषाद्वेनितदाप्राकृतनानात्वाभावेपिवैकुण्ठादिवैभवसद्भावोराजासौप्रयातीतिवज्ज्ञेयस्तथाचाहमेवासमेवाग्रइत्यर्द्धंव्याख्यातम २३ ॥

तत्रसृष्टिलीलायां दृश्यंविश्वंनापश्यत् स्वेच्छयास्वस्मिंल्लीनत्वात् आत्मानंप्रपञ्चद्रष्टृपस्थंस्वांशंपुरुषावतारं तदाह प्रपञ्चद्रष्टृत्वाभाववत्त्वमाह इवशब्दार्थमाहनत्विति चिच्छक्तिस्स्वरूपभूतातरङ्गशक्तिः ॥ २४ ॥

अतेर्थंयत्प्रतीयेतइत्युक्तांबहिरङ्गशक्तिंदर्शयन्पश्चादहंयदेतच्चेति व्याचष्टेसावैइति द्रष्टृदृश्यानुसंधानरूपासंविच्छक्तेराभासरूपा

* शक्त्युपलक्षित इति जीवगोस्वामि श्रीवीरराघवाचार्ययोः संमतः पाठः

श्रीराधारमणदासगोस्वामि विरचित
दीपिन्याख्यतट्टिप्पणी

पूर्वार्धेद्रष्टृदृश्यानुसंधानरूपत्वनवार्चीनर्कामत्यरुचंर्यद्वोतिदृश्यं विश्वं अदृश्यंतदृष्टृपुरुषाख्यंआत्मपदंव्याचष्टस्वरूपमितितयोः सदऽसतोर नुसंधानविषयंयास्स्वरूपंयस्याःसाज्ञानाभासरूपायाःआत्मरूपामीति तुलेखकभ्रमःतदुभयोतियद्विषयंयदऽनुसधानंतत्स्वरूपंतस्मिन्स्वका र्योविषयंएवविषयन्निधयातिष्ठतीतिनियमादितिभावः ॥ २५ ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचंद्रिका

किंचभवानितिसानुगस्यसभागवतस्यभगवतःश्रीकृष्णस्यभवान्नित्यं संमतः प्रीतिविषयः यद्यस्य तव ज्ञानोपदेशाय मामभगवान् व्रजन्भु वंत्यक्ष्यन्नादिशदादिष्टवान्समीपेऽसंतमपि ॥ भगवंतंस्मृत्वा ज्ञानापदें- शार्थं मा. माज्ञप्तवान् एतेन भगवान्निरतिशयप्रीतिविषयत्वमवग- म्यते प्रियो हि ज्ञानिनो त्यर्थं मिति स्मरणात् ॥ २१ ॥

अतोनिरतिशय भगवत्प्रीति विषयायतं यथाप्रश्नं वर्णयामीति प्रति जानीते अथेति अथ ननु भगवल्लीलाः वर्णयामी ति संबंधः कथंभूता योगमायोपवृंहिताः युज्यते इतियोगस्सचा सौ मायाच आश्चर्यं शक्तिः तयोपवृंहिताः भगवान्नयाम्याश्चर्य शक्त्युप कल्पि ताः अंतः सहारः अर्थो मोक्षः विश्वस्य स्थित्यादयो यासांताः एवं भूता लीलाः ॥ यद्वा अर्थशब्दः स्वरूपपरः वस्तुन्यर्थशब्दप्रयोगात् अंतशब्देन संहारोमोक्ष श्च विवक्षितः ॥ यत्प्रयंत्याभिंसविंशतीतिश्रु तेः विश्वस्य स्थित्यादयः अर्थः स्वरूपं यासांताः लीलाः क्रीडाः च- ष्टाःआनुपूर्व्यशः प्रश्नानुसारेण वर्णयामीत्यर्थः यद्वा सृष्टिलीलादि क्रमेणे त्यर्थः ॥ २२ ॥

प्रथमं सृष्टिलीलां वर्णयितुं सृष्टेः पूर्वं कारणत्वेनावस्थितवस्तु स्वरूपमाहत्रयेण भगवानितिइदंपरिदृश्यमान नामरूपविभागार्हं- स्थूलचिद चिदात्मकंजगदग्रेसृष्टेः पूर्वकालेआत्मनां जीवानामात्मां तः प्रविश्य धारकः विभुः स्वामी एक अविभक्तनामरूप सूक्ष्म चिद चिच्छरीरः भगवानेवासीदित्यर्थः ॥ स एव भगवानात्मेच्छा नुगता वात्मनः स्वस्येच्छा सृष्ट्युपयोगि संकल्पः तस्या अनुगतौ उन्मेषे सति नाना मत्युपलक्षितः देवादिनानानाम रूप विषय बुद्धि बोध्य पूर्वस्मिन् कल्पे आसीत् कुतः आत्मा आत्मपर्यंततत्वा नाम रूप विषय मतीनामित्यर्थः प्रायः एक एव भगवा न्कदाचि द्विभक्त नाम रूप चिदचि च्छरीरकः कार्यावस्थः नानास एव कदा चि न्नाम रूप विभागा नर्ह सूक्ष्म चिद चिच्छरीरकः परमात्मा का रणा वस्थ इत्यर्थः यद्वा ऽनाना मत्युप लक्षित इतिछेद आत्मे छानु गतौसंहारविषयात्मयिसंकल्पोन्मेषेसतिअनानामत्युपलक्षितःदेवादि नामरूपविषयबुद्ध्युपलक्षितःकुतआत्मादेवादिनामरूपभाक्तदभाव आत्मनएवेत्यर्थःनचै वं विकारित्वप्रसंगःसद्वारकत्वान्नामरूपसंस्प र्शस्यत्यभिप्रायादत्रेदंशब्देनस्थूलचिदचिच्छरीरकःपरमात्मैवोच्यते तस्यैवस्थूलावस्था प्रहाणेन सूक्ष्म चिद चिच्छरीरकतयाऽवस्थित स्य कारणत्व मुच्यते नच चिद चिच्छरीरकत्वस्या त्राप्रतीते रेक एवे त्यनेन सजातीय विजातीय स्वगत भेद शून्यं ब्रह्मै व जग त्का रण मित्युच्यत इति भ्रमितव्यं अग्र इति कालस्यानिर्देशा द्विजातीय भेदस्या त्मना मात्मे ति व्यतिरेक निर्देशेन सजातीय भेदस्य भग- वानि त्यनेन कारणत्वो पयिक सार्वज्ञ्य सर्वशक्तित्व सत्य संकल्प- त्वादि स्वगत भेदस्य चा त्रैव प्रति पन्नत्वात् तर्हि क इत्यनेन किमु च्यत इति चेदु च्यते महदादि सृष्टिक्रमेण वक्ष्यमाण नानात्व प्रती तिसंबंधि ह्येकत्व मेक इत्यनेनो च्यत इति नाम रूप विभागाभावा

श्रीमद्वीरराघवाचार्यकृत भागवतचंन्द्रचन्द्रिका ।

भिप्राय निबंधनो ह्येक इति व्यपदेशः ॥ २३ ॥

तद्व्यंदंतर्ह्य व्याकृत मासीत्तन्नाम रूपाभ्यां व्याक्रियते इतिप्रकृति पुरुष काल शरीरकस्य सार्वज्ञ्यादि कल्याण गुणाकरस्यै व कारण त्वं प्रपंचयति द्वाभ्यांस इति स वा एषः सो यं भगवान् तदा प्रलय- दशायांद्रष्टा सर्वज्ञःतत्रहेतुःअसुप्तदृगसंकुचितज्ञानः तत्कुतःएकरादृएक रूप प्रकाशः नतु जीववत् कर्मायत्त कदाचित्कं संकोच विकास भा ग्ज्ञान संपन्नः सुप्त शक्तिः सूक्ष्मा वस्थ चिद चिदाख्यस्व श- क्तिः तत्कुतः तन्वादि पर्यायः शक्ति शब्द इत्युक्तं दृश्यंकार्यं ना- पश्यत् किंतु असंतं व्यवहारानर्हं नामरूपरहित मितिवाऽऽत्मानंमेन अमन्तुत इव शब्देन तस्य सूक्ष्म दर्शित्वा त्स्वशरीर भूत सूक्ष्मा व- स्थ चिद चिद्विषय ज्ञान संपत्तिः सूच्यते अनेन सार्वज्ञ्यादि गुण संपत्ति र्नाम रूप विभागा भाव श्चोक्त. ॥ २४ ॥

अथ चिदचि च्छरीरकत्व माह सावा एतस्ये ति सदृदृष्टुःसतो दृष्टुः सत्ता योगि सकल पदार्थ द्रष्टुः शक्तिरपृथक्सिद्धविशेषण भूता माया नाम प्रकृतिः सद सदा त्मिका चेतनाचेतनात्मिकाभूमि रापो नलोवायुः । अपरे यमितस्त्वन्यां प्रकृतिं विद्धीति । चेतनाचेत नयोरुभयो रपि परस्पराविलक्षण प्रकृतित्वाभिधानात् ययासद सदात्मिकयाप्रकृत्याइदं कार्याऽवस्थ चेतना चतनात्मकं जग- त्स्वयं विभुः जगद्गत दोषा संस्पृष्टः निर्ममे सृष्टवा न्सैषा माया पि विभोः शरीरत्वेन सूक्ष्मा वस्थया आसीदित्यर्थः भगवाने क- एवेदमग्र आसीदि त्यनेन सूक्ष्म चिद चिद्वि शिष्टस्यो पादानत्वं यये दं निर्ममे विभु रित्यनेन केवल निष्कृष्ट स्वरूपस्यनि मित्तत्वं चा भिहितं ॥ २५ ॥ ————

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली

किंचस्वधामव्रजन्तवज्ञानोपदेशायमामादिशदितियस्मात्तस्मा त्भवान्सानुगस्यभगवतोनित्यंप्रियत्वेनसंमतोऽतोयुक्तइतिभावः हि शब्देनसंमतत्वेग्रंथांतरप्रसाक्षिंद्योतयति ॥ २१ ॥

श्रोतुरभिमुखीकरणार्थंवक्तव्यार्थंप्रतिजानीते अथेतियोगमायोप वृंहिताः स्वरूपसामर्थ्योपेताः ॥ २२ ॥

भगवानेकइदमग्रेअस्याग्रेआत्मापरमात्माआत्मनांजीवानांविभु- रधिपतिः आत्माभादानादिकर्ता आत्मेच्छांस्वरूपभूतां सृष्टीच्छामनु- गतः सिसृक्षामीतिभावमुपगतः तदुपकरणाभावेदेवदत्तेच्छावत्त- दिच्छापिव्यर्थेनेत्याह नानाशक्तीति; स्वाधीननानासाधनोपलक्षितः नानामत्युपलक्षितइतिपाठे। सदेवसौम्येदमग्रआसीदसदेवेदमग्रआ- सीदित्यादिश्रुतितात्पर्यार्थोज्ञानिनानावादिमतोपलक्षितइत्यर्थः सतो ऽधुमसतिनिरविंदन्नित्यादिश्रुतेःअसत्त्वमतमासुरमतमितिप्रसिद्धेः२३

एकस्यसतोहरेः सृष्टीच्छोत्पत्तिप्रकारमाह सवाइति योऽसावेक राडेकोराजाचक्रवर्तीसएषतदाप्रलयेविश्वंनापश्यत् सर्वकार्याणांमू लप्रकृतौलीनत्वादितिशेषः दर्शनशक्त्यभावादित्यतउक्तं द्रष्टेति नहि द्रष्टुर्दृष्टेर्विपरिलोपोविद्यतइतिश्रुतिर्वाइत्यनेनगृहीता असुप्तदृगित्यने नएतदेवावव्रियते । जीवानांनित्यत्वेनालीनत्वाद्दर्शनसंभवात्कथंनाप श्यदितितत्राह मेनइति आत्मानमितिजातावेकवचनंपरमात्मायतो- जीवंभेनेऽसंतमशक्तइतिवचनादसत्त्वमशक्तत्वमेवनतुस्वव्यतिरेके णासत्त्वं पुरुषआसीदितिश्रुतेः क्षेत्रज्ञः पुरुषोह्यात्मासंसारीचेतनो- मतइत्यभिधानं सुप्ताआत्मन्येवातीवरताशक्तिः शक्यत्वाद्भार्यारमा यस्यससुप्तशक्तिः तदुक्तं शक्यत्वाच्छक्तयोभार्याः शक्तिः सामर्थ्य- मुच्यतइति सुप्तिस्तुप्रकृतेः प्रोक्ताअतीवभगवद्रतिरितिच अनेन-

### श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली

प्रकृतिदर्शनमपिप्रत्युक्तंपृथगनवस्थानात्तर्हारर्रापिनिद्रामुद्रितनेत्रत्वेन नापश्यदि।तिकिंनस्या।दित्यतउक्तं असुप्तदृगिति क्वापितथो।च्यमानस्य गतिः अनास्थान्यत्रचप्रोक्ता।विष्णो।श्चक्षुर्निमीलनमितिवक्तव्या ॥२४॥

शक्तेर्नामाह सावाइति महान्भागोभाग्यसमूहोयस्यसतथामहतींभांप्रतिगच्छतीतिमहाभागोवा तस्यसंवुद्धौहेमहाभागेति एतस्य संद्रष्टुः सर्वदर्शनशक्तिमतोनारायणस्ययाप्रलयेसायुज्यंप्राप्यरमते साशक्तिर्मायानामसर्वप्रधानत्वान्मायीविष्णुस्तस्येयंमाया चार्थेवशब्दः साजडात्मकाशक्तिश्चमायानाम सविभुर्ययेदंजगन्निर्ममे कीदृशीसदसदात्मिका आद्यामहदादिकारणव्यापिनी द्वितीयातद्रूपा ॥ २५ ॥

---

### श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

सानुगस्यह यज्ज्ञानोपदेशाय च मामादिशद्भगवानज इति सम्बन्धोक्तिपाठः ॥ २१ ॥ २२ ॥

अथ तत्प्रार्थितलीलाकथां कथयन्नेव श्रीभगवदादिष्टचतुःश्लोकी ज्ञानं विवृत्याह भगवानित्यादि अशेषसंक्लेशमं विधत्ते इत्याद्यन्तेन ग्रन्थेन अथ कथाक्रमानुरोधेन चतुर्णामर्था विपर्य्ययेण वक्तव्याः तत्र अहमेवासमेवाग्रे नान्यद्यत् सदसत् परमित्यर्द्धस्यार्थे सृष्टिलीलोपक्रमेण दर्शयति भगवानिति द्वाभ्यां । इदं विश्वं पुरुषादिपार्थिवपर्य्यन्तं तदानीमेकाकिना स्थितेन भगवता सहैकीभूयासीदित्यर्थः । आत्मनां शुद्धजीवानामपि रश्मिस्थानीयानामात्ममण्डलस्थानीयं परमस्वरूपं । न च तस्याप्यन्यत्तदस्ति यत् आत्मा स्वयं सिद्धस्वरूप इत्यर्थः । इति तत्र स्वांशानामप्यंशित्वं दर्शितं । ब्रह्माभिन्नत्वञ्च । कदा आत्मेच्छा तस्य सृष्ट्यादीच्छा तस्यानुगतौ लीनतायां सत्यामित्यर्थः ननु वैकुण्ठादि वहुवैभवेऽपि सति कथमेक एवासीत् तत्राह वैकुण्ठादि नानामत्यापि स एवैक उपलक्षित इति। सेनासमेतत्वेऽपिराजासौ प्रयातीतिवत् ॥ २३ ॥

द्रष्टा विश्वं नापश्यत् । तद्दर्शनाभावादेव तल्लीनमासी दित्यर्थः तथात्मानं आत्मांशं पुरुषमपि असन्तमिव मेने भेदेन नापश्यदित्यर्थः । शक्तिर्माया । दृक् चिच्छक्तिः स्वरूपभूतान्तरङ्गशक्तिरित्यर्थः । एकराट् सर्व्वाधिकारी ॥ २४ ॥

पश्चादहंयदेतच्चेत्यस्यार्थं कथयन् सृष्ट्युपयुक्तं वहिरङ्गशक्त्यन्तरमाहसेति । शक्तित्वेन निमित्तरूपत्वं सदसदात्मकत्वेनोपादानरूप त्वञ्चांशतो व्यञ्जितम् ॥ २५ ॥

---

### श्रीमद्वल्लभाचार्यकृत सुवोधनी ।

भगवदीयत्वेन प्रकृतोपयोगि महत्व माह भवा न्भगवतो नित्यमिति नित्यं भवा न्भगवत्संमतः सेवकसहितस्या पि वैष्णवाना मपि सु संमत स्तदाह सानुगस्येति सर्वदा संमात स्तदानीं स्मरणा दवसीयते सेवका अपि भीष्मादयो विदुरेण महात्मने तिवा क्या द्भवं तं मन्यंते तत्र हेतु माह यस्यज्ञानोपदशायेति यस्य तवज्ञानोपदेशार्थं भगवा न्मा मा दिशत् ॥ चकारा त्स्वय मपि स्मरणेनो पदिष्टवान भगवानि ति स्मरणे हेत्वभावः व्रजन्निति तस्यावश्यकत्वं देवरा त्सुतोत्पत्ति विंदिते ति व्यासस्य भ्रातृ पत्नि गमनं न दोषः तस्य राग संबंधा भाव प्रयोजक इत्य ग्निहोत्रादि वत्क लौ निषिद्धः ॥ २१ ॥

एवं तस्या भिनंदन मुक्ता त त्पृष्टां भगव ल्लीला माह अथेति

### श्रीमद्वल्लभाचार्यकृत सुवोधिनी !

लोक प्रसिद्धे भिन्नः प्रकार इत्यथ शब्दः केवल भगव न्निर्मित च रित्रं वेद एव तथा पि तुभ्यं तद्व क्तव्यं न भवती ति योग मायो पबृंहिताः भगव ल्लीलाःवदिष्यामीत्याह ते भगवल्लीलाइति योगमायायाः साधनभूता पूर्वोक्ता भगव न्माया तयो पबृंहिताः स्पृष्टाः केवला स्तव योग्या न भवंती ति तत्राप्यं तिम प्रश्ने परिहार उच्यत इत्याह विश्वस्यास्थित्युद्भवां ता एवा र्था प्रयोजनानि या सांता आनुपूर्व्येणक्रमेण वर्णयिष्यामि भगव ल्लीलाया मनु रंजकत्वेन स्नेह जननकत्वं योग मायो पबृंहितत्वेना श्चर्य रुपत्वा दद्भुतत्वं शुद्धचंतर वि स्मरणायैत दुच्यते विश्वोत्पत्त्या दि कं तु माहा त्म्यज्ञानार्थं आनु पूर्वी तुवुद्धि सौकर्यार्थ एवं सति भक्ति र्भवति अनेन भगव त्कर्तृ कता लीलयै वेति सर्वं दोषा भावः पुरुषोत्तमत्वाय च लीला उपायेन संवंधेति न साप गच्छति तस्या न कर्तृत्वप्रवेशः किंतु सह भाव मात्रं अन्यथा सर्वं वशीकरणं नस्यात्विश्वस्य स्वरूपं वक्तव्यं तदेकं भगवद्रूपं तासांलीलानां तदुत्पत्यादयो विषयाःसिद्धाएव मया परिकीर्त्यंते ननु कथिवद्वर्णयंत इत्या नुपूर्वी निरूपिता ॥ २२ ॥

एवं प्रतिज्ञाय श्रोतारं सावधानं विधाय विश्वस्योत्पत्ति निरूपणार्थं पूर्वावस्था माह भगवाने क आसे द मिति इदं सर्वं जग त्पूर्वं भगवाने वास शुद्धातु भगव ल्लीला भगवाने वैवं प्रकारेण भवती ति योग मायो पबृहि तंतु इदं जगद्दे कं रूपं भगवतः प्रवाहा नादि।पकारेणा विर्भाव तिरो भाव युक्तं अनाद्यनंतं वर्त्तते तिरो भावे तद्भ गवाने व भवति यथा लवणं जल मेव भवति तथापि न तयोः स्वरूपै क्यं तस्य मिष्टो रसोऽ स्य च लवणः परं विवेचयितुं तं शक्यत इति भगवत्त्वं तदाह इदं जगत् अग्रे सृष्टेः पूर्वं भगवाने वास अनंतमूर्त्तौ च भगवति न तस्य तिरोभाव कि वेकस्मि न्नेवा आसे ति तत्र नभगव त्कर्तव्यता काचित्। विलीनं लवणं जले स्वत एव भवाति ततः पृथ करणं तु मह त्कठिनं। भगवदे क साध्य मत इदं भगव च्चरित्र मुच्यते। स्वयंतथा भवने भिन्नतयो त्पादने वा योगिव न्मायाव न्न कां पि प्रयासःनतु जीवानां तदानींतनानां चिद्रूपत्वा त्कथ मेकस्मिल्लु य स्तत्राह आत्मात्मनामिति स हि भगवा न्सर्वेषां जीवाना मात्मा समष्टिव न्मूलभूत श्चिद्रूप एव तत्रै वा स्य सत्प्रधानस्य लयःअन्यथा काठिन्य मेव न स्या त्सति लये सदे व स्यात् अमुक्तजीवानां प्रलयाज्जीवाश्रितं जगत्त त्रैव लीनं तस्यो द्गमन सामर्थ्या याह विभु रिति स हि सर्वसमर्थःप्रथमतो जीवान्स्वस्मिन्स्वस्मिन्संपाद्य तत्रै व जगल्लयं कारितवा ननेन तस्य! स्पर्शो निरूपितः एव मैक्ये प्य स्पर्शोविभुत्वहेतुः। ननु जीवाना मिच्छादि धर्माणां विद्यामानत्वा त्कथ मेकभावेन स्थिति स्तत्रा ह आत्मेच्छा नु गतौ सत्यां आत्मनां या इच्छा स वं एव धर्मा स्तेषा मपि तत्रै वा नु गतिः भगवतो वेच्छया यदा तत्र जग त्यनुगति स्त दा तल्लीन मिति पूर्वं प्रलये हेतु र्निरूपितः तदाऽयं भगवा नात्मे त्येव व्यप दिश्यते आत्मत्वेन वात स्मिन्नि च्छा तेन तदा त्मभूतं जातं तदा भगवा न्सृष्टंयतर वंदवा रसां न जातः किंतु नाना मतिभिरेवो पलक्षितः अथवा सर्वाभिरेव मति भिरेक एवोप लक्षितः यथा न्योन्य विजातीयानि सहस्रं लवणा न्येकस्मिन् जलेपरिच्छन्ने प्रक्षिप्ता न्येकर सत्व मप्याप न्नानि नाना मतिभि रुपलक्षित मेकं भवति यथा केनचित्स्पृष्टःसैंधवादिके तिसर्वार्थे जल मेव निर्दिशति आत्मेच्छायाः सर्वत्रानुग मादात्मत्वं वा तेने कदेश एव भगवति विश्वस्य लय उक्तो भवति एकांशेन स्थितो जगादि ति भगव द्वाक्यं तत्पर मेव

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

आविर्भावेपि तथा ॥ २३ ॥

एवं पूर्वस्थिति मुक्त्वा प्रथमतो जीवाना मुद्गम माह स एव भगवा न्स्वस्मिन्विद्यमानसर्वो वै निश्चयेनैषो देवदत्तादिरूपेण प्रतीयमानो जीवो जातस्तदाजीवो भूत्वा तिरोभाव प्रकारेणाऽविर्भूतः पूर्वसंस्कारेण तदा द्रष्टा जातः अहंद्रष्टे ति पूर्वा वस्थां स्मृतवा द्तदा द्रष्टृत्व निर्वाहार्थं दृश्यालोचने क्रियमाणे दृश्यं ना पश्यत् यतः स एक एव सर्व जीवाना मात्मभूतो निर्गत इत्ये एक एव राजत यद्यप्या त्मान मपि द्रष्टुं शक्नोतितथापि पूर्ववासनया वाहमुखं एव निर्गत इति स्वातिरिक्त मेव दृश्य मालोचयन् तदभाव मात्मान मेवा सन्तं मेने इत्येवयां सत्वं आत्मांशो वर्त्तते वेद्यांशो नास्तीति औपाधिक धर्माणा मुपाध्यभावे धर्माभावः अतो द्रष्टा आत्मान मद्रष्टार मेव मेने ननु पूर्वं दृश्यस्य विद्यमानत्वा त्सदृशस्यतस्य लयात्तस्याविर्भावे दृश्य मपि कुतो ना विर्भूत मिति चेत्तत्राह ॥ सुप्तशक्तिरिति सुप्ताः शक्तयो यस्य ये प्रपंचोद्बोधका स्तेनाद्याप्युत्थिता इति एवं तर्हि ज्ञानशक्तिरप्युपहतास्यात्ततः कुतो मेने आत्मानमसंतं मिति तत्राह अलुप्तदृगिति अलुप्ता दृग्यस्य ज्ञानशक्तिः पूर्व मपि न लुप्ता लोपं न प्राप्ताः आत्मवदेव स्थिताआत्माविर्भाव एवा विर्भूतइत्यर्थः ॥ २४ ॥

स यदा आत्मान मसंत मिव मेने एतान्ये वात्मासत्वज्ञानान्वेकीभूतानि मायारूपेण जातानी त्याह स वा एतस्ये ति। यदा आत्मा न मन्यथा ज्ञातवानेपैव माया ॥ सा पूर्वोक्ता प्रसिद्धा मोहिका सदसदात्मिका सदसद्रूप आत्मा यस्य स्वभावतः सन् अन्यथा गीकाराद सन् एतादृश एवात्मा तस्या अय मेवात्मा सा धर्मरूपा तस्या वा स्वरूप मात्मै व समर्पयति क्रियात्मकं वा स्वरूपं तस्या धर्मं त्व माह एतस्य संद्रष्टुः शक्ति रिति एतस्य जीवस्य सम्य ग्द्रष्टुः अर्था दालोचनेना त्मान मेव पश्यती ति शक्तिः उत्तरकार्ये सामर्थ्यं तस्या नाममायेति मया सह वर्त्तत इति प्रत्ययस्या लुक् सुवंत प्रति रूपको धायं निपातस्ततो ण्प्रत्ययः सवर्णदीर्घः नङीप् महाभागे ति संबोधन मय मथो दुर्ज्ञेय इति तज्ज्ञाने महद्भाग्य मिति सूचितं ययेदं निर्ममे विभु रिति यया मायया चिच्छक्तिरूपया अनुकृत सारयेदं जगदेव निर्ममे यस्य भावरूपा शक्तिस्तस्य कर्तृत्वं व्यावर्तयति विभु रिति भगवत्कर्तृक एव जगति जीवार्थत्वा त्तन्मायये व भगवान् जगत्कृतवान् येन केना पि जगत्कारणा द्विभु रिति ॥ २५ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शनी ।

न केवलं यमत्वेन त्वमधिकृत भक्त एव किन्तु भगवन्नित्यपार्षदोऽपि प्रकारान्तरे भवसीत्याह भवानिति मा मां भजन् वैकुंठं गच्छन् ॥ २१ ॥

तत्र प्रथमं यथा ससर्जाग्र इदं निरीह इति तत् प्रश्नस्योत्तरत्वेन पुरुषावतार लीलां वक्ष्मीत्याह योगमायास्वरूपशक्तिवृत्तिविशेषः तथा उपबृंहिताः स्वांशमायाद्वारा विस्तारिताः विश्वास्थित्यादय अर्था विषया यासां ताः मायाशक्तेर्योगमायांशभूतत्वस्य नारदपञ्चरात्रे दृष्टत्वात् ॥ २२ ॥

सृष्टिलीलां वर्णयितुं ततः पूर्व्वावस्थामाह इदं विश्वमग्रे सृष्टेः पूर्व्वं भगवान् षडैश्वर्य्यपूर्ण एक एवास आसीत् भगवति लीनत्वेन भगवतोऽधिष्ठान कारणत्वादित्येके । भगवच्छक्तिकार्य्यत्वादित्यन्ये यद्वा इदमग्रे इत्येकपदेन अस्याः सृष्टेः पूर्व्वमित्यर्थः तथा स एव योगमार्गेणोपास्य आत्मानां जीवानामात्मा अन्तर्यामी तथा स एव ज्ञानमार्गेणोपास्यः सर्व्वव्यापको ब्रह्मेत्यर्थः एवमुपासकानां भक्तियोगिज्ञानिनां मतभेदानामतिभिरुपलक्षणं यस्य सः तथैव श्रुतयोऽपि यथा वासुदेवो वा इदमग्र आसीन्नब्रह्मा नच शंकर इति एको नारायण एवासीन्न ब्रह्मा नेशानइति आत्मैवेदमग्र आसीदिति सदेवासीदित्याद्याः ननु सृष्टेः पूर्व्वमपि कं समयमारभ्य स एक आसेत्यपेक्षायामाह आत्मनां जीवानां तथा इच्छायाः सिसृक्षायाश्च अनुगतालये सति प्राचीन प्राकृतिकप्रलयमारभ्येत्यर्थः ॥ २३ ॥

स वै निश्चितं द्रष्टा प्रकृतीक्षणकर्त्ता पुरुषः तदासृष्ट्यारम्भकाले दृश्यं सृष्ट्यर्थं द्रष्टव्यं प्रधानंनापश्यत् । ततश्चात्मानं स्वं विराजन्तमपि असन्तमिव मेने गृहिणीं विना गृहस्थइवेति काव्यरीत्योक्तिः यद्वा उत्पत्स्यमानं आत्मानं समष्टिविराजं स्वस्मिन् सूक्ष्मरूपेण सन्तमप्यसन्तमेव मेने प्रकृतीक्षणं विनातस्य प्राकट्यासम्भवादितिभावः ननु द्रष्टैवभोग्यासा कांतामायातस्य तदा कीदृश्यासीत्तत्राह सुप्ता स्वापवती शक्तिर्माया यस्य सः नहिस्वापवती कांता संभुज्यतइति भावः किञ्च तस्यानन्दार्थमन्याः सुभगा बह्व्य एव कान्ता जाग्रत्य एव वर्त्ततइत्याह असुप्तादृक्चिच्छक्ति वृत्तयो लक्ष्म्याद्या यस्य सः तदपि विश्वसृष्ट्याद्यर्थं बहिरङ्गा दुर्भगापि माया शक्तिस्तदानीमपेक्षितव्यैवेति भावः ॥ २४ ॥

ततश्च तदिच्छया सा मायाशक्तिस्तदा जजागारेत्याह सा प्रसिद्धा वै निश्चितं सदसदात्मिका कार्य्यकारणरूपा इदंविश्वं विभुः परमेश्वरः ॥ २५ ॥

---

श्रीमच्छुकदेव कृत सिद्धांतप्रदीपः

यस्यतव मामाम् ॥ २१ ॥

विश्वस्थित्यादयः अर्थोविषयोयासांताः ॥ २२ ॥

तत्रविश्वसृष्टिलीलांवर्णयितुं विश्वस्यकार्यस्यकारणाभिन्नत्वमाह भगवानिति इदंविश्वमग्रेसृष्टेःपूर्वम् आत्मनएकत्वेच्छानुगतौ आत्मासर्वात्मएकः सजातीयविजातीयभेदशून्यः भगवान् स्वगतैश्वर्यवान् आसआसीत् सदेवसौम्येदमग्रआसीदितिश्रुतेः स्वगतभेदं प्रपंचयितुंएकंविशिनष्टि आत्मनामित्युपलक्षणं प्रकृतिकालयोः प्रकृतिपुरुषकालानाम् शक्तिभूतानाम् आत्माआश्रयः प्रकृतिपुरुषकालशक्तिमानित्यर्थः कथंभूतः सृष्टीयोनानामतिभिरुपलक्ष्यते नानाकार्यविषयबुद्धिभिर्बुध्यतेसः ॥ २३ ॥

प्रकृत्याख्यशक्तिपरिणामतः सृष्टिवक्तुंतदुद्भवप्रकारमाह सइति द्वाभ्याम् एषवर्णनीयगुणः श्रीकृष्णः तदासृष्टेःपूर्वंद्रष्टाः सर्वज्ञः यतः असुप्तदृक् दृश्यंकार्यंनापश्यत् यतःसएकराट् तदानीमेकएवप्रकाशते यतः सुप्ताः प्रकृत्याद्याः शक्तयोयस्य अतएवआत्मानमसंतमिव अद्रष्टारमिवमेनेदृश्यालाभेद्रष्टृत्वस्यानुपपन्नत्वात् ॥ २४ ॥

विभुर्ययाइदं विश्वंनिर्ममेसाएतस्यसंद्रष्टुः शक्तिस्तदिच्छयाचुभितामूदितिशेषःयतः सासदसदात्मिकाकार्यकारणरूपा तदानींकार्योन्मुखीजातेतिफलितोर्थः ॥ २५ ॥

---

भाषाटीका

आप भगवान को और भक्तन को सदा अभिमत हो जिन आपके ज्ञानोपदेश के लिये भगवान वैकुंठ जाते रमोकूं कह गये ॥ २१ ॥

कालवृत्यातु मायायां गुणमय्यामधोक्षजः । ❀
पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवान् ॥ २६ ॥
ततोऽभवन्महत्तत्त्वमव्यक्तात्कालचोदितात् ।
विज्ञानात्मात्मदेहस्थंविश्वं व्यंजंस्तमोनुदः ॥ २७ ॥ *
सोप्यंशगुणकालात्मा भगवद्दृष्टिगोचरः ।
आत्मानं व्यकरोदात्मा विश्वस्यास्य सिसृक्षया ॥ २८ ॥
महत्तत्त्वाद्विकुर्वाणादहंतत्त्वंव्यजायत ।
कार्यकारणकर्त्रात्मा भूतेंद्रियमनोमयः ॥ २६ ॥ *
वैकारिकस्तैजसश्चतामसश्चेत्यहंत्रिधा ॥
अहंतत्त्वाद्विकुर्वाणान्मनोवैकारिकादभूत् ॥ ३० ॥

भाषाटीका

अव हम आप के आगे भगवान की लिला यें क्रमसे वर्णन करते हैं जो विश्व की स्थिति प्रलय और संहारर्थ यांग माया सं वढी हुई हैं ॥ २२ ॥

भगवान जीवों के आत्मास्वामी सृष्टि के पूर्व एकही रहे फिरव ही आत्मा श्री हरि अपने सृष्टयादि के संकल्प होने पर नाना वुद्धि यों से वांध्य हो गये ॥ २३ ॥

वही श्री हरिः प्रलय काल में एक रूप से प्रकाशमान कार्य रूप को नहीं देखते भये क्योंकि चेतना चेतनात्मक शाक्ति संकल्पके अभाव से सुप्त हैं आप मात्र असंकुचित ज्ञान वारे हैं इसी से अप ने स्थूल शरीर को असत् सा मान ते भये ॥ २५ ॥

इन सर्वज्ञ परमात्मा की वही चेतनाचेतनात्मक माया नाम वारी प्रकृति शार्क है जासें विभुने इस जगत को रचा है ॥ २५ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

कालवृत्याकालशक्त्यागुणमय्यांक्षुभितगुणायांअधोक्षजः परमात्मा । आत्मांश भूतेन पुरुषेण प्रकृत्यधिष्ठातृरूपेण । वीर्यं चिदाभासं आधत्त वीर्य्यवान् चिच्छक्तियुक्तः ॥ २६ ॥

कालप्रेरितादव्यक्तान्मायातः तत्त्वपदंपरित्यज्यमहतोलक्षणांअतः पुलिङ्गनिर्देशः विज्ञानात्मेति सत्त्वप्रधानत्वात् स्वदेहस्थं विश्वं उच्छूनवीजगतमङ्कुरादिरूपं वृक्षमिवव्यञ्जयन्प्रकाशयन् यतोऽस्तौतमोनुदतीतितमोनुदः । तदुक्तं सात्त्वततन्त्रे । विष्णोऽस्तुत्रीणिरूपाणिपुरुषाख्यान्यथोविदुः । प्रथमं महतः सृष्टृ द्वितीयं त्वण्डसंस्थितं तृतीयं सर्व्वभूतस्थंतानिज्ञात्वाविमुच्यते इति ॥ २७ ॥

अहङ्कारोत्पत्तिमाहसोऽपीतिसार्द्धद्वाभ्यां अंशश्चिदाभासो निमित्तं गुणउपादानंकालः क्षोभकः तदात्मा तदधीनः भगवान् सर्व्वाध्यक्षः तद्दृष्टिगोचरः सन् स्वयमात्मानं व्यकरोत् रूपान्तरमनयत् ॥ २८ ॥

अहङ्कारस्य लक्षणमाहकार्य्यंमधिभूतं कारणमध्यात्मं कर्तृ अधिदैवं तेषां आत्माआश्रयः अत्रहेतुः भूतेन्द्रियमनोमयस्तद्विकारवान् मनइति देवानामप्युपलक्षणं एतदेव विभागशः प्रपञ्चयतिवैकारिकइत्यादिना वैकारिकः सात्त्विकः तैजसोराजसः ॥ २६ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

देवाश्चवैकारिकाः सात्विकाहंकारकार्य्यभूताइत्यर्थः यतोयेभ्यइन्द्रियाद्यधिष्ठातृभ्यो:देवे भ्योहेतुभ्यः अर्था भिव्यञ्जनं शब्दादिप्रकाशो भवति ॥ ३० ॥

---

श्रीराधारमणदासगोस्वामि विरचित
दीपिन्याख्य तट्टिप्पणी ।

चिदाभासं जीवाख्यमाधत्तस्थापितवान् हन्तेमास्तिस्रोदेवता अनेनजीवेनात्मनानुप्रविश्य नामरूपेव्याकरवाणीतिश्रुतेः ॥ २६ ॥

ततःजीवाविशिष्टात् अतस्तत्त्वपदपरित्यागेनमहतोविवक्षितत्वात् सत्वप्रधानत्वात् चित्तंतन्महदात्मकमित्युक्तेस्सत्वांशस्यप्राधान्याद्वि[illegible]ानात्माविशिष्टानुसंधानमयः तमोनुदःप्रलयगताज्ञानध्वंसकर्त्ता तत् पुरुषरूपेणमहत्स्रष्टृत्वम् ॥ २७ ॥

तस्यत्रिगुणात्मकत्वात्तमोंशप्राधान्येसति अहंकारोत्पत्तिमाह चिदाभासोजीवशक्तिः तदात्मा तेंशादयआत्मानःप्रवर्त्तकायस्यतथा चतदधीनइतिव्याख्यातम् आत्मा विज्ञानात्मा विश्वस्यजनिष्यमाणस्यसिसृक्षयेतिभगवदिच्छाभासस्तत्रारोप्यतेनदीकूलंपिपातिषतीतिवत्॥ २८ ॥

महत्तत्वादीत्यर्द्धकम विकुर्वाणादंशेनपरिणतात् ॥ २९ ॥

अधिभूतमधिष्ठानविषयरूपंअध्यात्ममिन्द्रियवर्गः अधिदैवंतद्देवतावर्गःतेषामात्मामूलरूपंसर्वस्यकार्यस्यकारणमेवाश्रयइतितथाव्यख्यातम् तत्रआश्रयत्वे तद्विकारवान्भूतादिलक्षणकार्य्यवान् एतदेव भूतादिमयत्वमेव ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचंद्रचंद्रिका

अथ महदादि क्रमेण सृष्टि वक्तुं स्वशरीर भूत जीवा नुप्रवेशेनाहित सृष्टि सामर्थ्यया एव प्रकृतेर्महदादि रूपेण परिणामः नतु केवलाया इत्याह कालवृत्त्यामिति काला नुगुण वृत्ति मत्या मत एव गुणमय्यां सम्यानापन्न सत्वादि गुण प्रचुरायां मायाया मात्म भूतेन स्वशरीरभूतेन पुरुषेण जीवेन वीर्यं सृष्टि सामर्थ्यं स्वयं वीर्यवानविकृत एवाऽऽधत्त संपादितवान् मायाभिमानी स्वात्मक जीवानुप्रवेशेन मायां सृष्ट्यु न्मुखीमकरो दित्यर्थः ॥ २६ ॥

महतः सृष्टि माह तत इति तत आहित वीर्या त्काल चोदितात्

पा० * कालवृत्यामिति * भूतेन्द्रियमनोभवइतिच विजयध्वजवीरराघवाचार्यौ * तमोनुदश्चितिविजयध्वजः ॥

### श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ॥

कालप्रेरिता दव्यक्ता त्स्वात्मका दव्यक्ता त्स्वय मेव विज्ञानात्मा विज्ञानं यज्ञं तनुते इत्युक्तरीत्या जीवांतरात्मा आत्मदेहस्थं स्वशरीर भूतप्रकृतिगतं विश्वं कार्यजातं व्यंज न्प्रकाशय न्प्रकाशयंतु मित्यर्थ पर्यवसानं बोध्यं तमो नुदः तमः शब्दवाच्य सूक्ष्मा वस्थ प्रकृतिप्रेरको भगवा न्महत्तत्वं ममव दित्यर्थः प्रकृति पुरुष शरीरका भगवाने व महच्छरीरको भूदि त्यर्थः ॥ २७ ॥

महतो हंकारस्य सृष्टि माहद्वाभ्यां सो पीति सो पि स महान पि अंश गुण काला त्मा अंशो जीवः । अंशो नानाव्यपदेशात् । ममै वां शो जीव लोके जीव भूतः सनातन इति प्रयोगात् गुणाः सत्वादयः काल श्चै रुपलक्षितः आत्मा स्वरूपं यस्यसः काल वश्यो गुण मयो जीवगर्भ श्चे त्यर्थः भगवद् दृष्टि गोचरः भगवतो दृष्टिः संकल्प रूपं ज्ञानं तस्य गोचरः विषयः आत्मा परमात्मात्मकः सो पयात्मे ति सामाना धिकरण्यं शरीरात्मभाव निबंधनं एवं भूतो महानस्य विश्वस्य सिसृक्षया अहंकारादीनि स्रष्टु मिच्छया आत्मानं स्वात्मानं व्यकरो द्विकृत मकरोत् ॥ २८ ॥

महत्तत्वादिति विकुर्वाणा द्विक्रियमाणा न्महत्तत्वा दहंतत्व महकारः अजायत उत्पन्नो भूत् कथंभूतः कार्यं कारण कर्त्रा त्मा कार्यं शरीरं कारण मिंद्रियं तयोः कर्त्रा त्मा कर्तृरूपः कारण भूत इत्यर्थः तद्विवृणोति भूतें द्रिय मनो भवः भूतेन्द्रियमनसाभवः । भवत्य स्मादिति भवः भूतें द्रिय मनोमय इति पाठे भूतें द्रियादिरूपेण परिणामस्वभाव प्रचुरः ॥ २९ ॥

अहकारं विभजते वैकारिकइति वैकारिकः सात्विका हंकार तैजसोराजसा हंकारः तामस स्ताम साहंकारः तस्यै व भूतादि रिति नामांतरं-वैकारिकाहंकारकार्य माह। अहंतत्वादिति। विकुर्वाणा द्विक्रियमाणा द्वैकारिका त्सात्विका दहंतत्वा दहंकारा न्मनोभूदु दभूत् ये देवाः दिगादि देवाधिष्टे यानीं द्रियाणी त्यर्थः नतु दिगादि देवा स्तेषां चतुर्मुख स्रक्ष्यमाणतया अंडोत्पत्तेः पूर्व मुत्पत्त्य संभवात् अतो देव शब्दन तदधिष्ठेयानी द्रियाण्ये व विवक्षितानि ये देवा स्ते पि वैकारिकाः सात्विकाहंकारकार्यभूता इत्यर्थः॥ कथं भूता देवाः यतो येभ्यः अर्था भि व्यंजनं शब्द स्पर्श रूप रसादीना मर्थाना माभि व्यंजनं उपलं भो भवति एवं भूता देवा वैकारिकादभव न्नित्यर्थः ॥ ३० ॥

---

### श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

ययेदंनिर्ममेजगदित्युक्तंप्रपंचयति कालवृत्त्यामितिजगृहेपौरुषंरूपमित्यारभ्योक्तात्ममूलरूपाविर्भूतपुरुषरूपेणाधोक्षजः कालेनपुरुषादृष्टाख्यफलपाचकेनवृत्तिः सिसृक्षत्वादिलक्षणायस्याश्चेतनायाः सा तथोक्ता अन्यत्रक्षोभलक्षणावृत्तिः गुणमय्यांसत्त्वादिगुणाभिमानिन्यां इतरत्रतद्रूपायां मायायांचेतनायामचेतनायांचवीर्यरेतआख्यंपरिणामकरंसामर्थ्यंचाधत्त तुशब्देनउभयांर्महावैलक्षण्यंवक्ति वीर्यवानिति हरेर्नपुंसकरूपंनास्तीतिलक्षयति नैनंवाचास्त्रियंब्रुवन्नैनमस्त्रीपुमान्ब्रुवन्निति श्रुतः यद्वा स्वेनाहितवीर्यस्यजनकत्वशक्तिद्योतयति ॥ २६ ॥

नहिलोकेवीर्यमादधानाः कार्यंजनयंतोदृश्यंते नचैवमयंतत्कुतः कार्योत्पत्तिदर्शनादित्याह ततइति यत्रवीर्यमाहितं ततोमायाख्यवस्तुनोमहत्तत्वंचतुर्मुखशरीरमभवत् मायायानामांतरमाह अव्यक्तादिति अतिसूक्ष्मत्वात्तत्रास्नः कालेनसकलप्राण्यदृष्टसाक्षिणापुरुषेणसृष्ट्युद्बोधकेनचचोदितात्प्रेरितात् अभिमानिनोऽभिमानात्तुत्पादे-

### श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

शरीरोत्पादोव्यर्थइतितत्राह विज्ञानात्मेति विज्ञानात्माब्रह्माचततोव्यक्ताभिमानित्वात्तत्रामनोरमाख्यात् कूटस्थादभूत्मदोऽयंदेहइत्यभिमानोत्पत्तिमानभूदित्यर्थः उत्पत्तेः प्रागपिज्ञाननाशोनास्तीतिद्योतनायविज्ञानात्मेतिपदं अभिमानोत्पत्तेःकिंलक्षणमत्राह आत्मदेहस्थमिति निरालोककथमिदंव्यज्यतइत्यतउक्तं तमोनुदाभिति नारायणप्रसादप्रादुर्भूतज्ञानलक्षणप्रकाशो नसूर्यइवतत्कालभवंतमोनुदन्नभिभूयसूर्यवद्वर्तमानइत्यर्थः शरीरनिमित्तज्ञानरहितावात्माभिमानरहितोवा ॥ २७ ॥

प्रपंचपचाकरणप्रकारंप्रपंचयतिसोपीति स आत्मा महत्तत्वाभिमानीविरिंचोपि अंशोजीवो गुणाः सत्वादयः कालःफलपाचकः एषामात्माभिमानीभगवतोहरेर्दृष्टेः कटाक्षवीक्षणस्यगोचरोविषयोऽस्यप्रपंचस्यसिसृक्षयात्मान स्वकीयत्वेनाभिमन्यमानंमहत्तत्वंव्यकरोत्परिणामं मुखीकृतवान् चैतन्यस्याविकारित्वेन अत्रात्मपदंनचैतन्यवाचि किंतुदेहवाच्येव कालजीवगुणादीनामभिमानीचतुर्मुखइतिवचनात् अंशगुणकालात्मेत्यत्रात्म पदेनाभिमानित्वमुच्यतेनदेहः क्वचिद्धिहिरण्यगर्भस्यांशशब्दवाच्यत्वमंगीकर्त्तव्यं सवैजीवाभिमानित्वादंशइत्येवचोच्यतइतिवचनात् ॥ २८ ॥

अहंतत्त्वमजायतेत्यत्रजडात् जडस्योत्पत्तिरभिमानिनो गरुडादय उदभूवन्निति तात्पर्यग्राह्यं भूतंभूताभिमानीचोतवचनात् तत्स्वरूपमाहकार्येति कार्यशरीरं कारणानींद्रियाणि कर्तृमनः एषामात्मादिकारणं किमुक्तंतत्राह भूतेति भुतेन्द्रियमनसांभवउत्पत्तिर्यस्मात्सतथा ॥ २९ ॥

भूतादीनां त्रयाणां कारणस्याहंकारस्य नामभेदेनत्रित्वमाह वैकारिक इति अधुनात्रित्वसंख्याविशिष्टाहंकारात् पृथक् पृथक् सृष्टिभेदमाह अहंतत्त्वादिति अंशगुणकालानामीशस्यचप्रेरणया विकुर्वाणादहंतत्वाद्वैकारिकत्नाम्नोमनस्तत्त्वमभूदित्यन्वयः ॥ ३० ॥

---

### श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

सृष्टिमाह कालवृत्त्येति । भगवानेक आसेदमिति पूर्व्वोक्तात् अधोक्षजो भगवान् । पुरुषेण प्रकृतिद्रष्ट्रा । आत्मभूतेन स्वांशेन द्वारभूतेन कालोवृति र्यस्यां तया मायया निमित्तभूतया गुणमय्यां मायायां अव्यक्तं वीर्य्यं जीवाख्यमाधत्त । हन्तेमास्तिस्रो देवता इत्यादि श्रुतेः ॥ २६ ॥

तत इति विज्ञानात्मकोऽपि पदार्थः समभवत् । तदेव नाम्ना महत्तत्त्वमिति । तमोनुदः प्रलयगताज्ञानध्वंसकर्त्ता ॥ २७ ॥

सोपीति । भगवान् एतदंशः पुरुष आत्मा विज्ञानात्मैव सिसृक्ष येत्यौपचारिकमेव । नदी कूलं पिपतिषतीतिवत् ॥ २८ ॥

महत्तत्त्वादित्यर्द्धकम् ॥ २९ ॥ ३० ॥

---

### श्रीमद्वल्लभाचार्य कृत सुबोधिनी ।

यं त्वया सामान्यतःसृष्टि रुक्ता तां विस्तरेण निरूपयति काल वृत्त्ये ति तु शब्दः पक्षं व्यावर्त्तयति न वा जीवः कर्त्ता न वा अन्येन करोती ति कालस्य वृत्तिः काल स्तत्र समागत्य परिवृतःप्रदक्षिणां कृतवान् काल पराघृत्या कृत्वा मायायां गुण क्षोभो जात कालेन व्यापृता क्षु ब्ध गुणा जाते त्यर्थः तदा सा व्यासुग्धा सती पुरुष इव कामांधा जातातदा भगवानिं द्रिया तीतएवतस्या अदृश्य एव भूत्वा तस्या भर्तृ योग्य मात्मनः सकाशा देकं पुरुषं निर्ममे सहि भर्तृ योग्यः

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

भगव दंशः पुरुषोत्तमा त्मक एव तस्य स्वतः प्रवृत्य भावा त्तं-निमित्तो कृत्य भगवा न्स्वय मेवांतर्यामी भूत्वा तस्यां वीर्यमाधत्त धतः स्वय मेव वीर्यत्वा न्पुरुष जीवयो र्वीर्यो भावा त्कोश भावात् शरीर एव तयोः कोश संभवाद तः पुरुषं निमित्ती कृत्य भगवत्स्थापितं वीर्यं मायायां स्थितं जीव प्रवेशा न्मह तत्व मभवत ॥२६॥

तन्या मेव स्थितस्य बीजस्य महत्त त्वता ना स्ती ति प्रसवा यं काल क्षाभा त्प्रसव कर्या स्त स्या महत्तत्व मभवदि त्याह अव्यक्ता त्काल चोदिता दिति।जीव धर्मा देव भगव दंशा च्चसर्व चेतन कार्यं जायते। संघाता त्पत्ति रेवा त्रा मीष्टा संघात एवचलीयते। सहिविज्ञानात्माजातः महत्तत्वामिति महदिति तस्यनाम तत्वामिति भगवतः कारणभावस्तस्यजनने गुण भावे पि पश्चा त्प्रधा न भावा त्त त्वतां परि त्यज्य महापुरुषत्वेन निर्दिष्टः स विविध ज्ञाना त्मा जातः तद्द्वारै वच सर्वं जग ज्ञातं क्रम सृष्टि पक्षत्वात्तदातस्य वि ज्ञानेन स्वस्मि न्वद्यमानं जगत् प्रकाश युक्तं जातं तद्गत मावरणं च तमो दुरीभूतं तदा ह सविज्ञाना त्मा आत्म देहस्थमेव विश्वं प्रकाशयं स्तमो नुदो जात इति ॥ २७ ॥

स जगज्जननार्थं भगवता सृष्ट इति पुन स्तूर्ष्णी तस्मिन्-स्थितं कार्यार्थं भगवता स दृष्टः कालो पि समा गतः कारण गुणा अपि समागताः सत्वादयः। अंशो पि पुरुषः समागतः आत्मा जीवो पि एते यस्मिन्नेतादृशो भूत्वा चतु र्मूर्ति भगव दूदृष्ट आत्मानं वि-विध मकरोत् व्यापारा विष्टं कृतवान् यतोहं विश्वस्या त्मा अन्यथा ह्यात्मा न व्यापृतः स्यात् तथाकि मर्थ मकरो दित्या शंक्याह विश्व स्या स्य सिसृक्ष येति सहि पूर्वं ब्रह्म विदि व स्थितः पश्चा त्कार्यं व्यापृतो जात इत्यर्थ ॥ २८ ॥

कार्यं माह महत्त स्वादि ति स्वातंत्र्या भावात्पुनः कारण भाव मेवा पन्न इति महत्तत्वा दित्यु क्तं सयदा विशेषणं कुर्वाणो जातः कार्यं मात्मा यं कर्तु मैच्छद् तदा तस्मादहं तत्वमजायत तस्य त्रै विध्यं पूर्वव न्निरूपयति कार्यं मधि भूतं कारणं मध्यात्मं कर्त्ता अ धिदैवं स त्रितयात्मा भूत्वा भूतेंद्रिय मनो मयो जातः भूतानामि न्द्रियाणां मनसश्च जनक स्त्रिविधो हंकारो जात इत्यर्थः ॥ २६ ॥

तद्भेदान्गणयति वैकारिक इति वैकारिकःसात्विक स्तैजसो राजसः तामसो भूत हेतुः। सात्विका त्सृष्टिमाह। अहंतत्वादिति वैकारिका श्च ये देवा इति। गंधर्वादि देव व्युदासः सात्विकाहंकार कार्य भूता ये देवा स्ते पि सात्विका जाता इत्यर्थः तेषां भिन्नत्वे प्रमाण माह अर्थो भिव्यंजनं यत इति देवाधिष्ठान व्यतिरेकेण केवला दिं द्रियात् शब्द ज्ञाना दिकं न भवती ति सामर्थ्यं देवाना मेव इन्द्रिया णा मेव तथा त्वं कल्प्येत यदि कल्पितं शांखं स्यात्तथा सिद्ध मत्रो च्यत इति देवा धीनै व विषय प्रकाशन शक्तिः ॥ ३० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

मायामत्तुरादिपुरुषस्याप्यंशी महावैकुण्ठनाथो भगवानेव सर्व्वकारणकारण माश्रयतत्वमिति दर्शयन् सर्गारम्भमाह कालस्य वृत्त्या प्रार्थमक्या महापुरुषनिश्वासरेचन प्रथमक्षणेनेत्यर्थः। अधोक्षजो महावैकुण्ठनाथो भगवान् आत्मभूतेन स्वांशरूपेण मायाधिष्ठात्रा आदिपुरुषेण द्वारामायायां दूरादीक्षणेनैव संभुक्तायां वीर्यं चिदाभासाख्यां जीवशक्तिं आधत्त मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहमित्यत्र गर्भं चिदाभासं दधामि प्रलये मयि लीनं सन्तमविद्याकामकर्म्मानुशयवन्तं क्षेत्रज्ञं सृष्टिसमये भोग्येनक्षेत्रेण स योजयामीत्यर्थः इतिश्रीस्वामिचरणा मधुसूदनसरस्वतीपादाश्च माया शक्तिजीवशक्त्योर्मेलनेनैव जगदुत्पत्तिसम्भवाद्। यथा क्षेत्रज्ञशक्तिः सा तारतम्येन वर्त्तत इति वैष्णवोक्तेर्मायाशक्तौ जीवशक्तेः प्रवेशनान्मायाशक्त्यधीनां जीवशक्तिं चकारेतिवा-क्यार्थः किञ्चविष्णु शक्तेरानन्त्यात् मायायामप्रविष्टा अप्यनन्ताएव तस्य जीवा विष्वक्सेनादि नामानो व्यक्ता अव्यक्ताश्च नित्यासिद्धाः सन्तीत्याह वीर्य्यवान् इति। स्त्रियामाहिताद्वीर्य्याद्धिकप्रमाणमेव वीर्य्यपुंसि तिष्ठतीति लोकेष्वपि प्रसिद्धः ॥ २६ ॥

पुरुषाधिष्ठानेन लब्धचेतनाया मायायास्तस्यास्त्रयोविंशतौ भागेषु कार्य्यकारण भावेनोत्पद्यमानेषु प्रथमं महत्तत्त्वस्य जन्माह तत इति अव्यक्तात् मायातः कीदृशात् कालचोदितात् तदुत्पत्त्युचितकाल प्रापित विकृतेः तत्त्वपदं परित्यज्य महतो लक्षणमाह वि ज्ञानात्मा स महान् सत्त्वांशप्राधान्येन विशिष्टज्ञानस्वरूपः सर्व्वदेहेषुचित्तरूपेणायोंऽशेन वर्त्तत इत्यर्थः स्वदेहस्थं विश्वं उच्छूनबीजगतमंकुरादिरूपं वृक्षमिव व्यञ्जयन् प्रकाशयन् यतोऽसौतमोनुदः प्रलयगताज्ञानध्वंसकर्त्ता ततो रजोंऽशप्राधान्ये सति क्रियाशक्त्या महत्तत्त्वभेदः सूत्रतत्त्वमभूदित्यपि ज्ञेयम् ॥ २७ ॥

तमोऽशप्राधान्ये सत्यहंकारोत्पत्तिमाहसोऽपि महान् अंशः पुरुषः वीर्यं जीवशक्तिगुणाः प्रकृत्यंशाः सत्त्वाद्याः कालश्च तदुत्पत्त्युपयोगी तैरेव कारणैरात्मास्वरूपं यस्यसः भगवतो दृष्टिरिच्छा तद्विषयीभूतः सन् आत्मानं स्वंव्यकरोत् रूपान्तर मनयत्कीदृशं विश्वस्य जनिष्यमाणस्य आत्मा आश्रयः सिसृक्षया अहंकार सृष्टीच्छयाविकुर्व्वाणात् विक्रियमाणात् ॥ २८

अहंकारस्य लक्षणमाह कार्य्यमधिभूतं कारणमध्यात्मं कर्तृ अधिदैवं तपामात्मा आश्रयः तत्र हेतुः भूतेन्द्रियमनोमयः तद्विकारवान् मन इति देवानामप्युपलक्षणं एतदेव विभज्य वक्तुमाह वैकारिकः सात्विकः तैजसोराजमः ॥ २६ ॥

ये देवा दिगाद्यास्तेऽपि वैकारिकाः वैकारिकजन्याः यतोयेभ्यो देवेभ्य इन्द्रियाधिष्ठातृभ्योऽर्था भिव्यञ्जनं शब्दादिप्रकाशोभवति ॥ ३० ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

कालवृत्त्याकालशक्त्यासृष्टिकालेनेतियावत् गुणमय्यांक्षुभितगुणायांसृष्ट्युन्मुख्याम् अधोक्षजःपरमात्मावीर्य्यवान्आत्माभूतेनस्वावतारेणमहत्सृष्ट्यावीर्य्यंसृष्टिसामर्थ्यमाधत्तसंयोजितवान् अत्रमायावद् मायावृतोवद्धजीवपुरुषोऽभिक्षुभितोज्ञेयः प्रकृतिंपुरुषंचैवप्रविश्यात्मेच्छयाहरिः क्षोभयामाससंप्राप्तेसर्गकालेव्ययाव्ययाविति वैष्णवात् पुरुषद्वारामायायावीर्यमापादनमपियुक्तमेवतथैवत्वक्तः पुमान् समधिगम्ययवास्यवीर्यंधत्ते महांतमिवगर्भममोघवीर्यः। सोऽयंतयानुगत आत्मन आंडकोशंहैमंससर्जवहिरावर्णैरुपेतमित्येकादशेब्रह्मादिदेवगणवाक्यं श्रीकृष्णंप्रति अतएवसात्वततंत्रे विष्णोस्तुत्रीणिरूपाणि पुरुषाख्यान्यथोविदुः आद्यंतुमहतः स्रष्टृद्वितीयमंडसंस्थं तृतीयं स र्वभूतस्थंतानिज्ञात्वाविमुच्यते इति ॥ २६ ॥

ततोमायाऽपरपर्य्यायात् अव्यक्तात् वद्धजावसंयुक्तात् कालेनक्षुभितगुणात् भगवद्वीर्य्यसंयुतात् महत्तत्त्वंमहानभवत् समहान्विज्ञायते अनेननिमित्तभूतेनेतिविज्ञानं सत्वंतदात्मातत्प्रधानः देहस्थं

वैकारिकाश्च ये देवा अर्थाभिव्यञ्जनं यतः ॥ ३० ॥
तैजसानीन्द्रियाण्येव ज्ञानकर्म्ममयानि च ।
तामसो भूतसूक्ष्मादिर्यतः खं लिङ्गमात्मनः ॥ ३१ ॥
कालमायांशयोगेन भगवद्वीक्षितं नभः ।
नभसोऽनुसृतं स्पर्शं विकुर्व्वन्निर्म्ममेऽनिलम् ॥ ३२ ॥
अनिलोऽपि विकुर्व्वाणो नभसोरुबलान्वितः ।
ससर्ज्ज रूपतन्मात्रं ज्योतिर्लोकस्य लोचनम् ॥ ३३ ॥
अनिलेनान्वितं ज्योतिर्विकुर्व्वत् परवीक्षितम् ।
आधत्ताम्भोरसमयं कालमायांशयोगतः ॥ ३४ ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

विश्वंचेतनाचेतनात्मककार्यजातम् व्यंजन् व्यंजयन् तमोनुदतीति तमोनुदोजातइत्यर्थः ॥ २७ ॥

महतोऽहंकारोत्पत्तिमाहसइतिसार्द्धद्वाभ्याम् सःमहान् अंशःजीवपुरुषः "ममैवांशोजीवलोकेजीवभूतःसनातनइति" वचनात् गुणाः उपादानंकालः क्षोभकः तदात्मातदाश्रयः भगवद्दृष्टिगोचरइत्यस्यभगवद्वीर्योपबृंहित इतिफलितोऽर्थः अस्यविश्वस्यसिसृक्षया आत्मानं-यमात्मानंव्यकरोत्रूपांतरमनयत् ॥ २८ ॥

तदेवाह महत्तत्त्वादिति कार्यकारणकर्त्तृणाम् अधिभूताध्यात्माधिदैवानाम् आत्माआश्रयः यतोभूतेंद्रियमनोमयःतद्विकारवान् उपलक्षितादेवाअपिबोध्याः ॥२९ ॥

अहंकारस्यैवत्रैविध्यमाह वैकारिकइति वैकारिकःसात्विकः तैजसोराजसः यतः येभ्यः॥ ३० ॥

भाषाटीका ॥

काल्लानुगुण त्रिगुणमयी प्रकृति में भगवान नें अपने शरीर भूत जीव द्वारा सृष्टि की सामर्थ्य को धारण किया ॥ २६ ॥

पश्चात् ( विज्ञा नात्मा ) जीव शरीर वाले, प्रकृति प्रेरक, भगवान, काल प्रेरित प्रकृति शरीरसे ( आत्मदेहस्थ ) अपने प्रकृति रूप शरीर में स्थित, जो विश्व ताके प्रकाश करने को महत्तत्व होते भये॥ २७ ॥

भगवत्संकल्प का विषय, इसी से जीव और सत्वादि गुणों से युक्त, कालप्रेरित वही ( आत्मा ) परमात्मात्मक महत्तत्व, इस विश्व की सृष्टि की इच्छा से अपने स्वरूप को विकृत करता भया ॥ २८ ॥

विकार को प्राप्त महत्तत्वसे अहंकार उत्पन्न भया वह कैसा है कि भूत इन्द्रिय मनरूप विकार वाला है इसीसे शरीर और इन्द्रियों का कारण रूप भी है ॥ २९ ॥

वह अहंकार सात्विक राजस तामस भेद से तीन प्रकारका है सात्विक अहंकार जब विकार को प्राप्त भया तब उससे मन भया और जिनसे शब्दादि विषयों का प्रकाश होता है ऐसे इन्द्रियाधिष्ठातादेव भी होते भये ॥ ३० ॥

श्रीधरस्वामिकृत भावार्थदीपिका ॥

तैजसान्येवेत्यन्वयः । ज्ञानेन्द्रियाणां ज्ञानमयानां सात्विकत्वशङ्कामाभूदित्येवकारः तामसो भूतसूक्ष्मस्य शब्दस्यादिःकारणंयतः शब्दात् खमाकाशंभवति आत्मनो लिङ्गं स्वगुणशब्दरूपेणप्रकाशकं हृदयाकाशतयावा यद्वा लिंगशरीरं "आकाश शरीरंब्रह्म" इति श्रुतेः॥३१

नभसः खस्मादनुसृतं उद्भूतं स्पर्शविकुर्व्वत् रूपान्तरं नयत् अनिलं वायुम् एवं सर्व्वत्र तन्मात्र द्वारा भूतोत्पत्तिरिति ज्ञातव्यम् ॥ ३२ ॥

नभसा सहितः स्वयं चोरुबलान्वितः ततो ज्योतिः लोचनं प्रकाशकम् ॥ ३३ ॥ ३४ ॥३५ ॥

श्रीराधारमणदास गोस्वामिविरचित दीपन्याख्यतट्टिप्पणी ।

येदेवास्तेऽपिवैकारिकाइतियोज्यम्चकारोऽप्यर्थकः येभ्यइत्युत्तरवाक्यस्थत्वात्तच्छब्दंनापेक्षते ॥ ३० ॥

एवकारप्रयोजनंव्याकुर्वन्सांख्यमतंनिराचष्टे ज्ञानेन्द्रियाणामिति आत्मनःपरमात्मनःस्वगुणशब्दरूपेण "तस्माद्वाएतस्मादात्मनआकाशःसम्भूत" इति "शास्त्रयोनित्वात् ॥१।१।३॥ इत्यादिश्रुतिसूत्रात्मकशब्दद्वारेत्यर्थः साक्षात्प्रकाशकत्वाभावात्तत्तच्छब्दस्य भगवन्निश्वासजत्वेनप्राकृतनभोगुणत्वाभावाच्चपक्षांतरम् तत्रापिसंकुचिताकाशमननेऽसंतोषाद्यद्वेति "खंब्रह्मोपासीत" इतिप्रतीकोपासनायांब्रह्मण आकाशशरीरत्वम् ॥ ३१ ॥

नभःकर्तृ स्पर्शस्पर्शतन्मात्रम् ॥ ३२ ॥

नभसापूरकेणखकारणेनसहितइतितद्गुणस्यशब्दस्यापि तत्रसत्त्वाऽभिप्रेतः ततोरूपतन्मात्रात् ॥ ३३ ॥

रसमयंरसतन्मात्रद्वारेत्यर्थः कालः सृष्टिप्रवर्त्तकःमायापरेशेच्छाभासःविक्षेपशक्तिर्वाअंशश्चिदाभासस्तत्संस्वन्धात् ॥ ३४ ॥ ३५ ॥

श्री मद्वीरराघवाचार्यकृत भागवतचंद्रिका ।

ज्ञानकर्ममयानि ज्ञानेंद्रियाणि कर्मेंद्रियाणिचइन्द्रियाणितेअसान्यव तैजसाहंकार सह कृत सात्विकाहंकारकार्याण्येवेत्यर्थः तैजसस्य वैकारिक तामसयोरनुग्राहकत्वेन पृथक्कार्याभावादनुग्राहकतैव हि तैजसस्य कार्यता ॥ अथ तामसा हंकार कार्यमाह तामस इति

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका

तामसः भूतसूक्ष्मादिः भूतानाम् आकाशादीनां तत्सूक्ष्माणांशब्दादीनां चादिःकारणं एतदेवोपपादयति यतः भूतादेः सकाशादात्मनो ब्रह्मणो यल्लिंगं प्रमापकं शब्दः स ततो लिंगात् ख माकाशं चा सृदित्यर्थः ब्रह्मणः शब्दैकप्रमाणकत्वं शास्त्रयोन्यधिकरणे सिद्धम् ॥ ३१ ॥

नभः कार्यमाह कालेत्यादि माया सत्वादिगुणाः सोऽयं शगुणकालात्मेतिपूर्वमुक्तत्वात् ॥ अंशो जीवः कालादियोगेन-हेत्वर्थे तृतीया कालादि योगेन हेतुना भगवद्वीक्षितं भगवत्संकल्परूपज्ञानविषयं नभोऽभूत् एवं भूतान्नभसोऽनुसृतमुद्भूतंस्पर्शस्पश तन्मात्रं विकुर्वद्विक्रियमाणं सदानिलंनिर्ममेऽसृजत् ॥ ३२ ॥

स्पर्शादुत्पन्नोऽनिलो वायुरपि विकुर्वाणः नभसा नभोगुणेन शब्देन सहितः स्वयं चोरुबलान्वितः अधिक बल युक्तः बलमपि प्राणनौजःसहसामप्युपलक्षणं रूपतन्मात्रं ससर्ज रूपतन्मात्रं च लोकस्य लोचनं प्रकाशकं ज्योतिः तेजः ससर्ज ॥ ३३ ॥

तच्च ज्योतिरनिलेनान्वितं स्पर्श गुणेनान्वितम् अनिलेनेतिनभसोऽप्युपलक्षणम् एवमग्रेऽपि शब्द स्पर्शाभ्यां स्व कारणभूतगुणाभ्यां स्वगुणेनरूपेण चान्वितं ज्योतिर्भगवत्संकल्पविषयं सत् कालमायांशयोगतो हेतोःरसमयंरसगुणकमंभः जलमाधत्त असृजत् भगवद्वीक्षणकालमायांशयोगाः सर्वत्रान्वेतव्याः रसमयमंभः ससर्जेत्यनेन प्रथमं रस तन्मात्रं ततोऽभ इतिक्रमोवेदितव्यः ॥ ३४ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

येभ्योर्थानांविषयाणामभिव्यंजनंतद्विषयज्ञानंभवति येचेंद्रियाभिमानिनोवैकारिकनामानोदेवास्तेचवैकारिकादहंतत्वादभूवन्निति संबंधः ज्ञानकर्ममयानि ज्ञानप्रधानानिश्रोत्रादीनिकर्मप्रधानानिवागादीनिचतैजसान्येव तैजसादहंकारादेवोत्पन्नानिनान्यस्मादहंकारादित्यन्वयःतामसाहंकारोभूतसूक्ष्माणामादिःकारणं शब्दादितन्मात्रास्तामसाहंकाराज्जाताइत्यर्थः तत्रकीदृशीशब्दतन्मात्रा यतःशब्दतन्मात्रायाआत्मनोहरेर्लिंगंगमकंप्रमाणंखंसमुत्पन्नमित्यन्वयः ॥ ३१ ॥

कालमायांशयोगेन । कालस्यसृष्टिविशिष्टस्यमायायाःप्रकृतेरंशस्य जीवाभिमानिनश्चतुर्मुखस्यसन्निकर्षलक्षणसंबंधेनभगवतावीक्षितंकटाक्षितंतामसानुसृतंखकारणतामसाहंकारेणानुस्यूतमतएवविकुर्वन्नभः स्पर्शतन्मात्रांनिर्ममेतस्मात्स्पर्शादनिलंवायुंनिर्ममे ॥ ३२ ॥

कालादिसहकारिणानभसास्वकारणेनानुस्यूतत्वादुरुबलान्वितोविकुर्वाणोऽनिलोरूपतन्मात्रांससर्जतन्मात्रयालोकस्यलोचनंप्रकाशकं लुचप्रकाशनइतिधातोः ज्योतिस्तेजस्तस्यमस्राक्षीत् ॥ ३३ ॥

रसमयंरसतन्मात्राकार्यंपरेणहरिणावीक्षितंकालमायांशयोगतः कालात्परिणामान्मायायाः प्रकृतेरंशाद्धिरण्यगर्भाच्च ॥ ३४ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

तैजसानीति आत्मनः परमात्मनः । तस्य लिङ्गंबोधकं । "तस्माद्वा एतस्मादात्मनः आकाशः सम्भूत,, इत्यस्याः श्रुतेस्तद्द्वारातद्बोधकत्वात् ॥ ३१ ॥

स्पर्शं स्पर्शात्मकं भूतसूक्ष्मरूपं वायुमित्यर्थः एवमुत्तरत्रापि ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥

---

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

राजसी सृष्टि माह तैजसानींद्रियाण्येवेति एवकारःसात्विकत्व तामसत्व व्युदासार्थः ज्ञानं सत्व प्रधानं क्रिया तमःप्रधानेति उभय विधानामिन्द्रियाणां राजसत्वे युक्तिः पूर्व मुक्तैव चकारा द्बुद्धि प्राणौ । तामसात्सृष्टिमाह तामस इति भूत सूक्ष्माणामादिःशब्दतन्मात्रं तस्यादित्वेनैव ब्रह्मणस्तामस इति पुल्लिंग निर्देशोऽहंकारविशेषणं वा तदा भूतानां सूक्ष्माणां च सत्वादिरिति सामान्यतस्तस्य कार्यं निर्दिष्टं यतः अहंकारात् शब्द तन्मात्रा द्वारा आकाशम् आत्मनो भगवतो लिंगं बोधकं शरीरं वा आकाश वद्व्यापको निर्लेपश्चेति यथा वा आकाशेऽन्तमः प्रकाशा भवंति न भवंति च तथापितैराकाशं नलिप्यते एवमात्मा आकाश शरीरं ब्रह्मे ति श्रुतेश्च माहात्म्यार्थं तथा कथनम् अन्यथा तामससृष्टिरधमेति न वक्तव्या स्यात् ॥३१ ॥

आकाशाद्वायोः सृष्टिमाह कालेति पूर्ववत्कालो गुणक्षोभको माया गुणरूपा अंशः पुरुषो जीवोऽपि वा अत्रापि पूर्ववद्भगवद्दृष्टिः भगवद्वीक्षितं नभो जातमिति भिन्नं कार्योन्मुखांसृष्टि माह नभस इति नभसः सकाशादनुसृत मुत्पन्नं स्पर्शं स्पर्शतन्मात्रं त त्पुनर्विकुर्वदनिलं निर्ममे ॥ ३२ ॥

एव मनिलोऽपि नभसा स्वकारणेन प्रकृत्या उरुबला न्वितो जातस्तदा रूप तन्मात्रं ससर्ज ततो ज्योति र्जातं लोकस्य लोचनमिति माहात्म्यं तस्य आलोकाभावे लोकोऽस्मदादिर्विद्यमानेऽपि चक्षुषिन पश्येदतो लोकस्य लोचन मित्युक्तम् ॥३३॥

अनिलेनान्वितं ज्योतिरिति पूर्ववत्कारणाद्बलसिद्धिः परेण भगवता वीक्षितं सत् अंभो रसमयमिति रसतन्मात्रं जला त्पृथङ्नप्रतीयत इति श्लिष्ट मेवोत्पन्नमित्युक्तम् अत्रापि वाक्रमः कल्पनीयः प्रथमतो रसतन्मात्रं पश्चादंभ इति कालमायांश योगत इति ॥ ३४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी

इन्द्रियाणि तैजसान्येवेत्यन्वयः । ज्ञानेन्द्रियाणां ज्ञानमयानां सात्विकत्वाशंका माभूदित्येवकार तामसो भूतसूक्ष्मस्य शब्दस्यादिः कारणं । यतः शब्दात् खमाकाशो भवति आत्मनः परमेश्वरस्य लिङ्गं स्वगुणशब्दरूपेण प्रकाशकं यद्वा "तस्माद्वा एतस्मादात्मनः आकाशः सम्भूत,, इति श्रुतेरात्मकार्य्यत्वादात्मज्ञापकम् ॥ ३१ ॥

नभः कर्तृ नभसः स्वस्मादनुसृतं उद्भूतं स्पर्शं विकुर्व्वद् रूपान्तरं प्रापयत् सत् अनिलं निर्म्ममे । एवं सर्व्वत्र तन्मात्र द्वारा भूतोत्पत्तिरिति ज्ञेयम् ॥ ३२ ॥

नभसा सहितः स्वयं चोरुबलान्वितः रूपतन्मात्रात् ज्योतिर्भूत् लोकस्य लोचनं प्रकाशकम् ॥ ३३ ॥

रसमयं रसगुणं अम्भः आधत्त असृजत् ॥ ३४ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

तामसः भूतसूक्ष्मस्यशब्दतन्मात्रस्य आदिः कारणम् यतः शब्द तन्मात्रात् खमाकाशः उत्पन्नम् आत्मनोब्रह्मणोलिंगंशरीरम् आकाशशरीरंब्रह्मे,,तिश्रुतेः ॥ ३१ ॥

ज्योतिषाम्भोऽनुसंसृष्टं विकुर्वद्ब्रह्म वीक्षितम् ।
महीं गन्धगुणामाधात् कालमायांशयोगतः ॥ ३५ ॥
भूतानां नभ आदीनां यद्यद्भव्यावरावरम् । ❋
तेषां परानुसंसर्गाद्यथासंख्यं गुणान् विदुः ॥ ३६ ॥
एते देवाः कला विष्णोः कालमायांशलिङ्गिनः ।
नानात्वात् स्वक्रियानीशाः प्रोचुः प्राञ्जलयो विभुम् ॥ ३७ ॥

देवा ऊचुः ।

ननाम ते देव पदारविन्दं प्रपन्नतापोपशमातपत्रम् ।
यन्मूलकेता यतयोऽञ्जसोरुसंसारदुःखं बहिरुत्क्षिपन्ति ॥ ३८ ॥
धातर्यदस्मिन् भव ईश जीवास्तापत्रयेणाभिहता न शर्म्म ।
आत्मन् लभन्ते भगवंस्तवाङ्घ्रिच्छायां सविद्यामत आश्रयेम ॥ ३९ ॥
मार्गन्ति यत्ते मुखपद्मनीडैश्छन्दः सुपर्णैर्ऋषयो विविक्ते ।
यस्याघमर्षोदसरिद्वरायाः पदंपदं तीर्थपदः प्रपन्नाः ॥ ४० ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः

नभः भगवद्वीक्षितमभूत् भगवताकार्योत्पादनाभिमुखक्षितामित्यर्थः कालमायांशयोगेनेतिकालादियोगः सर्वत्रसंबध्यते तस्मान्नभस अनुसृतमुद्भूतंस्पर्शंस्पर्शतन्मात्रं विकुर्वत्सत् अनिलंनिर्ममेससर्ज ॥ ३२ ॥

अनिलाऽपनभसान्वितः स्वयंचोरुबलान्वितः रूपंरूपतन्मात्रं ससर्जतन्मात्रमपिलोकस्थलोचनप्रकाशकंज्योतिस्तेजः ससर्ज॥३३॥

अनिलेनान्वितं ज्योतिरंभ आधतरसतन्मात्र द्वाराजलमसृजत् ३४

भाषाटीका ।

ज्ञानेंद्रिय तथा कर्मेंद्रिय दोनो राजसाहंकार से उत्पन्न होते हैं तामसाहंकार सें शब्द तन्मात्रा तिससे ईश्वर का ज्ञापक शरीर रूप आकाश होता है ॥ ३१ ॥

काल तथा माया तथा चिदंश के योग से भगवान की इच्छा सें युक्त जब आकाश होता है तब तिस से स्पर्श उत्पन्न होता है वह स्पर्श विकार कोप्राप्त होता हुआ पवन को उत्पन्न करताभया३२

पवन भी आकाश के साथ युक्त होने से अधिक बली होकर रूप तन्मात्रा को उत्पन्न करता हुआ वह रूप तन्मात्र लोकों का प्रकाशक तेज को उत्पन्न करता भया ॥ ३३ ॥

पवन से युक्त जो तेज उसने परमात्मा के दृष्टिपथहोने से विकारको प्राप्त होकर काल मायाचिदाभास के योग से रस तन्मात्र सहित जल को उत्पन्न किया ॥ ३४ ॥

श्रीधरस्वामिकृत भावार्थ दीपिका ॥

हे भव्य विदुर! भाव्यावरावरमिति पाठ भाव्यं कार्य्यं यद्यद्वरमवरं कार्य्यं तेषां कार्य्याणां परैः कारणैः अनुसंसर्गादन्वयात् यथा संख्यं यथाक्रमं उत्तरोत्तरमधिकान् गुणान् विदुः तथाहि नभसः शब्द एव गुणः अन्यान्वयाभावात् वायोस्तु स्पर्शः आकाशान्वयात् शब्दश्च । एवं तेजसस्तौच रूपञ्च अम्भसस्तानि रसश्च । महयाः सर्व्वे ॥ ३६ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

देवा महदाद्यभिमानिनः विष्णोः कला अंशाः काललिङ्गं विकृतिः मायालिंगं चेतना तानि विद्यन्ते येषु अतः समत्वेन नानात्वात् परस्परासम्बन्धात् स्वक्रियायां ब्रह्माण्डरचनायां अनीशा अशक्ताः सन्तः विभुं परमेश्वरं प्रोचुः ॥ ३७ ॥

मिथस्पर्द्धिष्णावो देवा न मिलन्तः परस्परं । विश्वकर्म्मण्यनीशाना निर्व्विण्णा हरिमीडिरे । प्रपन्नानां तापोपशमे आतपत्रं छत्रं तत्र हेतुः यस्य पादारविन्दस्य मूलं तलं केत आश्रयो येषां बहिर्दूरत एव उत्क्षिपन्ति परित्यजन्ति पान्थाः स्वगृहं प्राप्य मार्गं श्रममिव ॥ ३८ ॥

श्रमं निवेदयन्त आहुः हे धातः पितः? यद्यस्मात् भवे संसारे आत्मन् आत्मनि सम्बोधनं वा शर्म्मसुखं ऋते यादिति पाठे यत् पादभजनं विना शर्म्म न लभन्ते ननु ज्ञानादज्ञानकृतस्तापो निवर्त्तते किं मदङ्घ्रिच्छायाश्रयणेन तत्राहुः सविद्यां तदाश्रयणमेव विद्या प्रापकमित्यर्थः ॥ ३९ ॥

अज्ञातस्याश्रयणायोगात्तज्ज्ञानसाधनमाहुः । मार्गन्तिअन्वेषयन्ति यत् तत्तीर्थपदस्तव पदं वयं प्रपन्नाः कैर्मार्गन्ति छन्दः सुपर्णैर्वेदपक्षिभिः तवैव मुख पद्म नीडंयेषां यथा पक्षिणो नीडादुद्गताः ततस्ततः परिभ्रम्य पुनस्तत्रैव विशन्ति तथावेदा अपि त्वत्तः उद्गतास्त्वय्येव पर्य्यवस्यन्ति अतो वेदानाश्रित्य त्वत्पदं मृगयन्त इति विविक्ते असङ्गे मनसि । किञ्चअघमर्षं अघनाशक मुदमुदकं या सांसरितांतासु वरायाः गङ्गायाः पदं उद्गमस्थानं अतोगंगामनुसेवमानाअपितदुद्गमस्थानं त्वत्पदं प्राप्नुवन्तीत्यर्थः ॥ ४० ॥

श्रीराधारमणदासगोस्वामि विरचित
दीपिन्याख्य तट्टिप्पणी ।

पाठान्तरेभाव्याऽवराऽवरमितिपाठेभाव्येषुकार्य्येषुमध्येयद्यदवरंअवरंकार्य्यमस्तितेषांकार्य्याणामितिव्याख्यातम् अन्वयाद्व्यापनात् तौ स्पर्शशब्दौ तानिस्पर्शशब्दरूपाणि सर्वेपञ्चापि ॥ ३६ ॥

❋ परात्परमिति विजयध्वज वीर राघवाचार्ययोस्सम्मतः पाठः ॥

श्रीराधारमणदास गोस्वामिविरचित
दीपिन्याख्य तट्टिप्पणी

अतः कालादिलिङ्गित्वस्याविशेषात् अत्रस्तोतृत्वाद्यपिएतेदेवा महाभगवताभक्ततदासास्तथापिविषवृक्षप्रविष्टगंगोदकवत् वहिर्मुख सङ्गेनतथातथाप्रतीयन्तइतिगंगोदकवन्नतपांदोषइतिज्ञेयम् ॥ ३७ ॥

तत्रातपत्रत्वे पांथाइत्यत्रपांथःस्वशरणंयथेतिवाक्यंमानम् ॥ ३८

अतेयदास्मिन्निति पाठान्तरम् तदाश्रयणमङ्घ्रिच्छायाश्रयणमेव ज्ञानोत्पादकं वासुदेवेभगवतिभक्तियोगःप्रयोजितइत्यादौतथानिर्णयात् ॥ ३९ ॥

यस्ययत्पदं मार्गति तस्यतत्पदंवयं प्रपन्ना इतियोज्यम ॥ पक्षिणीडान्वेषणोपि यथावृक्षमूलेमवप्रपद्यन्तेतन्नीडोपलब्ध्यर्थं तथा तवांघ्रिश्रयणार्थं वेदसाधनेनांघ्रिमेवऋषयः प्रपद्यन्त इति भावः ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचद्रन्चन्द्रिका

तथांभो ज्योतिषा ज्योतिः स्पर्श शब्दैरनुसन्सृष्टमनु संहितं ब्रह्म संकल्प विषयं कालादियोगतो हेतोः गंध गुणां महीं माथा त्प्रथमं गंधं ततो महीं चाथादसृजत् ॥ ३५ ॥

भूताना मिति हेभव्य ! विदुर ! नभ आदीनां भूतानां मध्ये त्परात्परं यद्य उत्तर भूतं तत्तत्परानुसंसर्गात् कारणद्रव्य गुणा नुवृत्या यथासंख्यं गुणान्विदुः प्रथमस्यैको गुणः द्वितीयस्य द्वौ तृतीयस्य त्रयः चतुर्थस्य चत्वारः पंचमस्य पंच गुणा इत्येव विदुः ॥ ३६ ॥

अथैतानि महत्तत्वादिपृथिव्यान्तानि तत्वानि परस्पर पंचीकरणरूपसंमेलनाभावात् ब्रह्मांड रचनायामसमर्थानी श्वरं तुष्टुवुरित्याह एत इति ननु भगवद्दृष्टि गोचरः भगवद्वीक्षितंनभः परवीक्षितं ब्रह्मवीक्षितमित्येषां तत्त्वानां भगवत्संकल्परूप ज्ञानविषयकत्वोक्त्या सृष्टि सामर्थ्यावगमात्पुनः स्तुतिप्रीतपरमेश्वरानुप्रवेशकृतसामर्थ्योक्तिर्विरुध्यते नचान्य एव वस्य-माणोऽनु प्रवेश इति वक्तुं शक्यं विभोरीश्वरस्य ज्ञानेनैवानुप्रवेशस्य वाच्यत्वात्तावतैवतेषां शरीरत्वोपपत्तेः आधेयत्व विधेयत्व शेषत्वानां शरीरत्वनिर्वाहकत्वात् यस्यचेतनस्य यद्द्रव्यम् आधेयं विधेयं शेषं च तत् तस्य शरीरमिति हि शरीरलक्षणं मैवं ॥ पूर्वं महदादीनां स्वस्वकार्योत्पादनसामर्थ्यावहेश्वरप्रवेशस्योक्तत्वेऽप्येतैः— सर्वैः संहत्यांडोत्पादन सामर्थ्यापादकानुप्रवेशस्यानुक्तत्वेनैवं विधानुप्रवेशाय स्तुतेस्तत् प्रीतपरमात्मनोऽनु प्रवेशस्य ततोऽडस्-ष्टेश्चोपपत्तेः एते महदादयो देवा देवस्य भगवतः शरीरत्वाद्देवा इत्युक्तिः यथा "हंताह मिमास्तिस्रो देवता" इत्यादौ कालमायांशलिंगिनः कालमायांशरूपाणिलिंगान्यस्यसंतीति कालमायांशलिंगी तस्य कालमायाजीवशरीरस्येत्यर्थः विष्णोर्भगवतः कलाः शरीरभूता नानात्वात्पृथग्भूतत्वात्परस्परसंबंधाभावत्स्व क्रियायां ब्रह्मांडरचनाया मनीशा असमर्थाः संतः विभुं भगवंतं प्रांजलयो बद्धां जलयः प्रोचुः तुष्टुवुः ॥ ३७ ॥

नन्वचेतनानां महदादीनां स्तोतृत्वानुपपत्तिः नचा धिष्ठातृणामुपपन्नमिति शंक्यम् अंडसृष्ट्यनंतरं चतुर्मुखस्रक्ष्यमाणादित्येंद्रादीनामंडसृष्टेः प्राक्तदनुपपत्तेः नच तत्त्व शरीरक परमात्मनः स्तोतृत्वमुपपन्नमिति वाच्यं स्तुत्यत्वस्तोतृत्वयोरेकस्मिन्नसंगतत्वात् ब्रह्मणःसर्वो पादानत्वेन सर्वविकाराश्रयत्वेऽपि सद्वा

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रिका ।

रक विकाराश्रयत्वेन तस्य जीवद्वारैवस्तोतृत्वात् उच्यते परमाकाशवर्तिनस्तत्वाभिमानिदेवास्तत्वान्यधिष्टाय तुष्टुवुः मूर्तचतुः षोडश पंच शक्तिभिरिति परमाकाशे तत्त्वाभिमानिदेवतास्थित्यवगमात् यद्वा पुरुषेणात्मभूतेन वीर्यं माधत्त वीर्यवानिति जीव द्वारैवपरमात्मनो महदादि पृथिव्यांततत्त्वेष्वनुप्रवेशकथनात्परमात्मात्मकादृष्ट विशेषसचिवजीवानुप्रवेशसंपादितसृष्टि सामर्थ्यानां तत्त्वानां स्वस्व कार्योत्पादकत्ववत् स्तोतृत्वोपपत्ते रिति प्रथमं कारणत्वव्याप्तोपास्यत्व मोक्ष प्रदत्वगुणविशिष्टं प्रणमंति नमाम इति हेदेव भगवन् ! तव पदारविंदं नमाम नमस्कुर्मः कथं भूतं पदारविंदं प्रपन्नतापोपशमातपत्रं प्रपन्नाः शरणागतास्तेषां ये तापा आध्यात्मिकाधिदैविकाधिभौतिकास्तेषामुपशमे निर्हरणे आतपत्रं छत्र मिव वर्तमानं अनेन तापत्रयातुरो पास्यत्वमुक्तं यन्मूलकेताः यत्पदारविंद मूल मेव केतआश्रयो येषां ते यतयः मनो नियमने यतमानाः अंजसा सुखेन संसार दुःखम् अनेन मोक्ष प्रदत्वमुक्तं बहिर्दूरत एव उत्क्षिपंति त्यजंति सांसारिक सुखं दुःख शब्देन विवक्षितं मुमुक्षोरिष्ट प्राप्ति विरोधित्वात्सुखस्यापि दुःखशब्दवाच्यत्वात् ॥ ३८ ॥

एतद्व्यतिरेक मुखेनापि कथयंतो नमस्कुर्वंति ऋतइति हे ईश ! अस्मिन् भवे संसारे यद्दते यत् भगवत्पदांबुजं विना भगवत्पदारविंदोपासनं विना ताप त्रयेणाभिहताः जीवा आत्मन्यात्मनि सवोधनं वा शर्म सुखं न लभते अतोऽन्वयव्यतिरेकाभ्यां भगवत्पदांबुजोपासनस्यैव तापत्रयनिवृत्तिपूर्वकमुक्तिसाधनत्वा द्धतोः हेभगवन् ! तवांघ्रि च्छायां विद्यामाश्रयेम विद्या मुक्त्युपायाभूतोपासना तत्सहितामंघ्रिछायां मुक्ति माश्रयेम उपासनानिवृत्या मुक्तिं प्राप्नुवामे त्यर्थः ॥ ३९ ॥

ननु कथं मत्पदांबुजोपासन मात्रेणात्यंतिक सांसारिक सुख दुःख निवृत्ति रुच्यते यत स्तत्सुख दुःखो त्पादक पुण्य पाप रूपकर्मणामविनष्टत्वादित्याशंकायां तदुपासनस्यैवात्यंतिक कर्म निरासकत्वमपीति सूचयंतस्तद्भगवत्पदांबुजस्यैव मुमुक्षूपास्यत्वाद्वयमार्पितमेवशरणागताइत्याहुः मार्गतीतितीर्थपदस्तवपदांबुजं वयं प्रपन्नाः शरणं गता इत्यन्वयः तीर्थपदः पवित्रपादस्य स्वाश्रित दुरितनिवर्तकपादकमलस्येत्यर्थःकथंभूतंत्वत्पदांबुजंयत्अघमर्षोदसरि द्वरायाः अघ मर्षाणि पापक्षपणकानि उदानि उदकानि यासु तासु सरित्सु मध्येवरायाः श्रेष्ठाया गंगायाः परं पदमुत्कृष्ट मुत्पत्तिस्थानंएतेनासेवमानसमस्तजनदुरितनिवर्तकसरिद्वरायाएवदुरितनिवर्तकत्वा त्तदुत्पत्ति स्थान भगवत्पदांबुजस्याश्रित दुरित निवर्तकत्वं कैमुत्य नय सिद्धं यथा पुष्कर पलाश आपो न श्लिष्यंत एव मेवं विदि पापं कर्म न श्लिष्यते इत्यादिका श्रुति रत्रानु संधेया उपासकाना मात्यंतिक पुण्य पाप निवृत्ति पूर्वक निरतिशय सुख प्रापकत्वाद्च त्व त्पदां बुजं ऋषयः उपासत इत्याहुः मार्गतीति तं तवमुख पद्म नीडैर्मुखकमलानिलयैर्मुखकमलोत्पन्नैरिति यावत् वस्य ह वा एतस्य महतो भूतस्य निः श्वसित मेतदृग्वेद इतिश्रुतेः भगवन्मुखकमलोत्पति स्थाने छंदः सुपर्णैर्वेद पक्षिभि नीडं शकुंता इव जातपक्षा इति न्यायेन साम्यं बोध्यं यथा नीडे जातपक्षा पक्षिणो नीडादु ड्डीना इत स्ततः परिभ्राम्य पुन स्तत्रैव प्रविशंति तथा वेदा अपि त्वन्मुखा दुद्गता स्त्वय्येव पर्यवस्यंती त्यभिप्राय

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवं विधं छन्दः सुपर्णैः विविक्ते निःसंगे मनसि ऋषयः मार्गेति परिशीलयंति वेदोक्त कर्म ज्ञानो पासनाप्रवृति योगैर्यत्परिशीलयंति तत्पदार विंदं वयं प्रपन्ना इत्यन्वयः ॥ ४० ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली

गन्धाख्येगुणोयस्यास्तांगंधगुणाकार्यामित्यर्थः ॥ ३५ ॥

विशेषगुणत्वाच्छब्दादयोनभआदिष्यावर्तकाइतियद्वैशेषिकमतं तन्निराकरोतिभूतानामिति नभआदीनांभूतानांमध्येयद्यत्परात्पर-स्मात्पूर्वस्मात्परंपश्चात्यद्भाव्यमुत्पाद्यंतेषांपरानुसंसर्गात्पूर्वेषां कारणानामुत्तरोत्तरकार्येषुमनुप्रवेशाद्यथासंख्यंएकद्वित्र्यादि संख्यावि-शिष्टान्शब्दादीन्गुणान्विदुः वैशेषिकादितरइतिशेषः ॥ ३६ ॥

ब्रह्मांडोत्पत्तिप्रकारंवक्तुंमहदाद्यभिमानिदेवानांस्तुतिप्रकारंकथयति एतेदेवाइति गेमहदाद्यभिमानित्वेनहरिणासृष्टाएतंब्रह्मादयोदे-वाविभुंप्रोचुरित्यन्वयः कीदृशाः विष्णोः कलाः भिन्नांशाः कालनिमित्तेनमायानिमित्तेनांशानिमित्तेनत्रलिंगंशरीरमेषामस्तीतिकालमायांशलिंगिनः अत्रैकस्यैवविरिंचस्यकलांशाभिमानिरूपद्वयमस्तीतिब्राह्मं कालजीवाभिमानंनरूपद्वंद्वीचतुर्मुखइतिवचनात् स्तुतौनिमित्त माह नानात्वादिति नानात्वादश्लिष्टत्वात्स्वक्रियायांब्रह्मांडोत्पादन-क्रियायामनीशाअसमर्थाः शिरसिप्रकृष्टांजलिर्येषांतेतथा ॥ ३७ ॥

किमूचुरितितत्राह नताःस्मेति तेतव प्रपन्नानांपुंसामाध्यात्मि-कादितापोपशमायातपत्रमिवस्थितं आतपात्त्रायतइत्यातपत्रंछत्रंनके-वलंतात्कालिकताप निवारणपटुमनादिसंसारदुःखनिवारणसमर्थ-मितिभावेनाह यन्मूलेति यत्पदारविंदमेवमूलकेतमधिष्ठानंगृहंयेषां-तेतथा यतयोनिर्जितेंद्रियग्रामाअंजसाऽऽशुमार्गेणसंसाराख्यं दुःखं हृदयग्रंथिलक्षणंबहिरुत्क्षिपंति निर्मूलयंति ॥ ३८ ॥

ईशऽणिमादिपूर्णैश्वर्यमूर्त्ते! अस्मिन्भवेसंसारेजीवाबंधमोचोपाय भूतपादारविंदमृतेतत्सेवांविनाआत्मन्नात्मानिशर्मनलभंते यदतो भगवंस्तवांघ्रिच्छायायाः ब्रह्मविद्यायाः अंशविद्यामेकदेशविद्यामा-श्रयेमब्रह्मविद्याहरेच्छायातदंशोहिसुरेष्वपि सर्वविद्याश्रयःप्रोक्तःप्र-धानांशश्चतुर्मुखइतिवचनात् योग्यतातारतम्यमपेक्ष्यांशविद्यामित्यु क्तमनेनव्यतिरेकन्यायोदर्शितः ॥ ३९ ॥

इतोपिभगवत्पदज्ञानमेवस्वाभीष्टसाधनमितिभावेनस्तुवंति मार्गंतीति ऋषयोब्रह्मादिज्ञानिनोविविक्तेस्थितवासुखपद्मनीडैः । मुखपद्ममेवनीडंयेषांतेतथातैः छंदांसिवेदाएवसुपर्णाः पक्षिणस्तैः । तेत वयत्पदंमार्गंतिमन्विच्छंतिविचारयंति अद्यापिमृगयंतइतिवा यच्च यस्माच्चप्रपन्नामामघमर्षः दुःखनाशःस्यात् यच्चद्युसरितोधराया इचपरंपदं वयंतीर्थपदस्तेतवपदंप्रपन्नाइत्यन्वयः॥४०॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ॥

तदेवं पादत्रयार्थो दर्शितः योऽवशिष्येत सोऽस्म्यहमिति तु भगवानेक आसेदमित्यनेनैव दर्शितः एवं प्रथम श्लोकार्थ ज्ञानं दर्शयित्वा द्वितीयश्लोकार्थं विज्ञानं वक्ष्यमाणतया त्यक्त्वा परात्परोऽप्यसौ भक्तिवश स्यादिति रहस्य तत्साधनज्ञापकतृतीयचतुर्थश्लोकार्थं दर्शयति एते देवा इत्यादिनाइति तासां स्वशक्तीनामित्याद्यन्तेन ग्रन्थेन विष्णोः कला विभूतय कालादयो लिंगञ्च शरीरं सहायत्वेन विद्यन्ते येषां ते अतएव प्रांजलयः प्रोचुरिति ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ मार्गन्तीति यस्य यत्पदं मार्गंति तस्यते तत्पदं वयंप्रपन्नाइति योज्यं नीडमार्गिणोऽपि पदस्थानीयं वृक्षमूल मेव प्रपद्यंत इति भावः ४०

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

ज्योति रित्यस्य साधनम् एवमग्रेऽपि ज्योतिषा अनु संसृष्टमंभो दत्त सामर्थ्यं जलं गंधगुणां मही मिति पूर्ववत्प्रथमतो गंधतन्मात्र तस्मान्मही तेषां धर्मानाह भूतानामिति नभ आदि येषां वायु प्रभृतीनां मध्ये यदेवोत्तरोत्तरमग्रे भाव्यं तदेवाधिकगुणं तत्र हेतुः तेषां परानुसंसर्गादिति कारणानु संसर्गो यथा संख्यं संख्या मनतिक्रम्य आकाशस्यैको गुणः शब्दो वायोः शब्दस्पर्श इति द्वयं तेजसः शब्द स्पर्श रूपाणि अम्भसश्चत्वारः शब्द स्पर्श रूप रसाः पृथिव्या इत्याधिको गंधः विदुरिति प्रमाणम् ३५ ॥ ३६ ॥

एतेषां तत्वानां चेतनानांकार्योपयिकरूपसिद्ध्यर्थंभगव-द्भजन माह एते देवा इति देवं द्वियाणामैक्यविवक्षया दशत्वं भूततन्मात्राणि च दश महदहंकारमनांसित्रीणिएवं प्राकृतिक स्त्रयो विंशति को गणः सामान्यनिर्देशात् कालमायादयोपि स्तोत्रं कुर्वंतीति ज्ञायते सर्वे देवाः विष्णो र्भगवतः कला धर्मा इत्यर्थः कालमायांशलिंगानि वर्त्तंते येषां मिति हेतु सहिता अपि गुणत्रय कार्यं रूपत्वा द्भिन्न भावं प्राप्ताः अतो नानात्वाद्भिन्न भावा त्स्वक्रियायां ब्रह्मांडनिर्माणे ऽनीशाः संतस्त्रिविधत्वादमेलनं प्रत्येकं त्वसमर्थाः अतो विभुं समर्थं प्रांजलयो भूत्वा प्रोचुस्तुतिं कृतवंत इत्यर्थः एतेषांदेहवचनादिकंविचार्यतेतत्वान्येतानिभगवद्भाव-भूतानि भावो नाम सर्वान्प्रति सामान्यकारणता भगवतः कारणता पंच विंशति प्रकारेण जाते त्युक्तं भवति भाव प्राधान्येन धर्मिणो ऽप्राधान्यात्सच्चिदा नंद रूपाणय पि तिरोहित रूपाणि भवंति यावद्धर्म मात्रे प्राकट्यं भगवता क्रियते तादृशा एव भवंति भगवतः सर्वतः पाणि पादत्वात् यदंशा एते प्रति रूप तया निर्गताः तत्र सर्वत्रैव कारणप्रतिरूप हस्त पादा दीनां विद्यमानत्वात्तैरेव तेषां व्यवहारः शरीरंतूत्पन्नमेव अभिमानिनोपिचिदंशादेव विशेषाश्च त एव ना धिक वलत्वं वेदंतु तत्व स्थानीयः प्रजापति रेवेति समष्ट्यनंतर मेव तत्रत्यानां पदार्थानां निरूप्यमाणत्वात् द्वयाह प्राजापत्या इत्यत्रापि सृष्टि भेदेनोभयविधेंद्रियाणयपि तत्र संतीति तेषां मपीदमेवरूपमिति चक्षुरुद्गायदित्या दि संगच्छते यथात्रमहत्तत्वं तथा वेदे प्रजापतिः ॥ यथात्र पुरुषस्तथा विराट् यथा भगवांस्तथा यज्ञः यथा कालस्तथा परमेष्ठी यथा माया तथा तेषां प्रयत्न इति उत्तरकांडे तु यज्ञस्थानीयं ब्रह्म यथात्र भगवत्स्तुतिः तथा तत्रोद्गीथः आधिदैविकत्वात्तेषामस्मदा दींद्रिय नियामकत्वेनोच्यते अन्यथा दोषगुणादिनियमोभगवदाज्ञाच प्रत्येकं कर्त्तव्यास्यादतोभगवदिंद्रियप्रतिरूपेंद्रियाणां तत्वेपु विद्यमानत्वाद्विसर्गे जीवेष्वपि तथात्वा श्च का प्यनुपपत्तिः ॥ ३७ ॥

सृष्टौ तु साधकंरूपं भक्त्यादेर्विनिरूप्यते ॥ तत्वादि स्तोत्र-रूपेण सर्वं लीलासुतत्स्थितौ ॥ १ ॥ तत्वैस्तुभक्ति निर्धारो ज्ञानस्य ब्रह्मणातथा ॥ ऋषिभिर्यज्ञ निर्धारस्तत्वसृष्टि हेतुकं ॥ २ ॥ भगवत्कार्य सिद्ध्यर्थं कामादि रहितं तथा ॥ साधकं नान्यथा रूपमित्यग्रे नाश उच्यते ॥ ३ ॥ काल प्रयुक्ता भक्ति र्हि त्रयोदश विधा यतः ॥ अन्यथा सृष्टि करणं शुद्धया नैव तद्भवेत् ॥ ४ ॥ भक्ति प्रपत्ती प्रत्यक्षं भक्ति ज्ञाने परोक्षतः ॥ सात्विकीयं समाख्याता वासंत ग्रैष्म भावतः ॥ ५ ॥ राजसे भक्ति राहित्यात्तदर्थं प्रार्थना पुरा ॥ शरणागमनंपश्चाद्द्वयं साधनं फले ॥ ६ ॥ तामसे ज्ञान निन्दातः परोक्षे भजनं स्तुतं ॥ भगवत्कार्य

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

राहित्यहेतुत्वयास्वस्यसाधनं ॥ ७ ॥ फलत्वत्प्रार्थनाप्रोक्ता द्विविधा सा निगद्यते ॥ ८ ॥ तत्र प्रथमं सात्विकीमुक्त मांसक्ति प्रत्यक्षे निरूपयति नमामेति नमनातिरिक्तस्य प्रत्यक्षे भजनस्याभाव अमेनम एतावत्स-दुपशिक्षितमितिवाक्याच्च स्वामिस्ते चरणारविंदं नमाम त्याहुः नमने हेतु रूप माह देवे ति यत्र व देव रूप तात्प्रति भाति स एव न-मस्यः गुर्वादिष्वपि देवत्वमेव नमन प्रयोजकं गुरुत्वंतु परिचर्या-यां तच्चनमनंत्रिविधं लौकिकंवैदिकं भक्तिमार्गस्थितंच तत्रेद भक्ति मार्ग स्थितमिति ज्ञापयितु माह पदारविन्दमिति चरणस्य सु-सेव्यता बुध्वा स्नेहेन यन्नमनं चरणारविन्देत्वा भक्तिः यद्वा पस्य मननं तत्त द्वयं यतद्गतधर्माणामैश्वर्यादीनां नमन तल्लौकिकं अताविर्भूतरूपस्य नमनादरविंदमित्येकवचनं सगुणत्वात्सृष्टयो पयिकत्वात्सामर्थ्यं क्लेशा भावस्य सह कारित्वात् क्लेश निवारक त्वं चरणारविंदस्य प्रकार द्वयेन निरूपयति प्रपति भक्ति भेदेन तत्रापि प्रपत्यधिकारिणस्त्यागासमर्थाः भक्त्यधिकारिणस्तु— त्याग समर्था इति ॥ अथः प्रथमं ताप निवारण रूप माहप्रपन्न तापो पशमातपत्र मिति प्रपन्नानां शरणागतानां यैतवहिस्तापाः— तदु पशमार्थं निकटमेव तद्दूरीकरणार्थं भगवच्चरणारविंद-मातपत्रं भवति आतपान्नायतइति भगवच्चरणारविंदंध्रुव-स्ये व प्रपन्नस्योपरि तिष्ठति अनेन यत्र क्वचिदपि स गच्छतु तत्रे व तच्चरणारविंदं तापं दूरीकुर्वदेव गच्छतीति भक्तवश्य-ता । चरणधर्मो निरूपितः काल कृतो यं तापइत्यातपत्रेणैवनिरूपि-ता । स्वभाव कृते त्वमृतत्वादि निरूपयति ॥ कर्म कृतेत्वगदादि भा वेनतन्निरूपयति । प्रपन्नार्थं भगवान्स्वयमागच्छति सहगच्छतीत्य प्युक्तं सर्वतो विरक्तान् भक्तान्प्रति चरणमाहात्म्यमाह यन्मूल केता इति यस्य चरणस्य मूल मधोभागो भगवच्चरणारविंदाऽध एव सर्वदा तिष्ठति न गृह वृच्छाद्यधः ते मूलकेता निकेतनं केत स्था न मिति यावत् यथेच्छ व्यवहाराभावादत्तुसर्गः तर्हि तदर्थं मन्यद्ग्र हं कर्त्तव्य मिति चेत्पंचाग्नि तपोवत्त्राह यत्तव इति भगव-न्मार्गे प्रयत्नवंतः तत्र पूर्वावस्थात्यागः पूर्वाग तावन्मात्र पर्यव-सिताः शालावृकभक्ष्या एव भवंति त्यागासामीचान्यं ननु पापंडि त्व मेव यं तु भगवदर्थं यतयस्ते अजसा अनायासेनैव उरु-अधिकं संसार दुःखं क्षुत् पिपासादिकृतं बाह्यरुवत्त्विपति पार लौकिकं च बहि रेव वर्त्तत इति मूल केतानां तन्निवृत्तमेव अतः सर्व पुरुषा र्थं रूपत्वा च्चरणारविंदस्य तन्नमामी ति मुख्यो हेतु रूपितः येषामर्थं भगवान्समागतस्त त्रिविधा निरू— पिताः ॥ ३८ ॥

भगवदीयाः प्रपन्ना भक्ता श्च अन्यार्थं मागतं ये भजंते तेषां-रूपं कथयंतो मध्य भाविनाश्रय माहुः धातरिति अन्यार्थं सृष्ट्यर्थं समागत इति ज्ञापितं धाता विधाता कर्त्ता पितेत्यर्थं अस्मि न्भवे संसारे यद्यस्माद्धेतोः जीवस्ताप त्रयेणाभिहता एव भवंति शर्म क्वापि न लभन्ते ईशेति संबोधनं तद्दूरीकरण सामर्थ्यार्थं प्रथमत एव निरूपितं एकेनापि तापेनाभिहतः स्वाभाविकं शर्मन प्राप्नोति शर्मांतरस्य च का वार्त्ता त्रयेण त्व भिहतः सुतरा मेव शर्म न प्राप्नोत्यतोऽस्माभिः प्रथमत एव संसारे प्रवेशमकृत्वैव तवांघ्रिच्छायामेवाश्रयेम प्रार्थनायां लिङ् भगव न्निति संबोधनं सर्वं तापनिवृत्तिपूर्वक सर्वेष्ट सिद्धिनिरूपणार्थं । छायया वाह स्तापो गच्छति अंतः स्ताप निवारणार्थं माह सविद्या मिति यथा

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

सजलं छत्रं भवति छाया प्राधान्यं भगवदभिप्राय प्राधान्यं भगव-दभिप्राय प्राधान्यार्थं सूर्यादि वशात्क्वदाचिच्छाया चरणारवि-दे देशादन्यत्र पतति तदान्यत्रस्थितै र वाश्रय कर्त्तव्य इति अ-धस्ता त्तु घर्म एव भवति निकटे न स्थातव्य मिति भगवदिच्छायां निकटे न स्थातव्य मिति भावः सांप्रतं तथा त्वां द्वय मतेः हेताश्छाया माश्रयेम विद्या उपासना ज्ञानं वा भगवद्गुणा नुसंधानेन च भगव त्परि चर्यया वा काचि त्स्थातव्य मित्यर्थः ॥ ३९॥

एवं साक्षा द्भगव त्संबंधे भक्ति प्रपती निरूपिते तथा नाधि-कारे परोक्षे गंगा तीरे स्थित्वा श्रुति तात्पर्य विचार्य भगव च्चर-णा नुसंधानं कुर्वाणे नस्था तव्य मित्याह मार्गन्तीति यद्य स्माक्ष्र पयो मंत्र द्रष्टार स्ते मुख पद्मनीडे छदः सुपर्णा स्ते पदं मार्गंति वि चारयंति वेदा हि गरुड प्रायाः पाक्षाण स्तेषा मूल स्थानं भगवतो मुख पद्म मेव यथा पद्मे मकरंदा दि पानार्थं मार्गतुका अपि पक्षि-णा स्तिष्ठति पतेर्गा तु तन्नीड मेव ते हि तत्रैव लब्ध जन्मान स्तत एवो द्गच्छंति अन्यत्र चरंतो पि नीड तात्पर्या एव ते ॥ छंदसां सुपर्णत्वं श्रुति सिद्ध मेव छंदांसि रथो मे भवन्त्व त्र तेषा मेव रथत्वं छंदा सि सौपर्णेया इति श्रुतेः सुपर्ण पदेन च गरुड रूपतया भगव त्स मा रूढा एवते लोके प्रचरंति यज्ञ रूपं भगवंतं लोके बोधयती ति ऋषयो हि मंत्र द्रष्टारो भगन्मंत्रं जानं त्येवं प्रकारेण गंगा तीरे स्थि ते भगवा न्स्व पदं प्रापयिष्यती ति । अत एकांत एकाकिभि रेवस्था यत इत्यर्थः बहूनां प्रापणाभावात् यस्ये ति प्रसिद्धस्य ते तीर्थ पद स्तीर्थानि पादे यस्य प्रसिद्धत्वा न्न संदेहः तीर्थ पदत्वा त्सर्व पाप क्षय हेतु त्व मधिकार सिद्धये तीर्थ पदत्व मेवो पपादयति ॥ अघमर्षो दसरि द्वारायाः पद मिति ॥ अघस्य पापस्य मर्षो येन ताहश मुद् मुदकं यस्या स्ताहशी या सरि द्वारा गंगा तस्याः पदं स्थान मिति पद विशेषणं । गंगा तीरे गमने पद पर्यंत गच्छति वेदानां च पुन स्तात्पर्यं विचार्यमाणे भगव त्पदं जानंति जलेन पाप नाशन मानुषंगिक फलत्वेनोक्तं चरणा दन्यत्र गच्छत्य पिगंगा वेदवत्पुन स्तत्रै व प्रवेक्ष्यती ति वेदानां दृष्टांतार्थं निरूपितं माहा त्म्यं च यथा गंगायाः पद संबंधा देवं वेद प्रामाण्य मपि भगव त्प्रामाण्या देव ॥ मंत्रा यु र्वेद व च्चतत्प्रामाण्य माप्तप्रामाण्या दिति स्मृतेः अत्र मार्गण कर्तारः प्रपन्ना एव भवंति ना न्यै मार्गणं कर्तुं शक्यते ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ॥

संसृष्टं संयुक्तम् ॥ ३५ ॥

हे भद्र ! विदुर ! भाव्येति पाठे भाव्यं कार्य्यं नभ आदीनां मध्ये यद्यदवरमवरं वाय्वादिकं तेषां कार्य्याणां परैः कारणै स्तुसं-सर्गात् अन्वयात् या या संख्या तथा गुणान् विदुरिति यथा संख्यमिति वीप्सायामव्ययीभावः तेन वायोरेकं नभ एव कारण-मिति स्वस्य कारणान्वितत्वे द्वित्वसंख्येति द्वौ शब्दस्पर्शो गुणौ एवं तेजसो द्वौ नभोवायुकारणे इति तदन्वितत्वे स्वस्य त्रित्व संख्येति त्रय एव गुणाः एवमम्भसश्चत्वारः पृथिव्याः पञ्च ॥ ३६ ॥

विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

नन्वेते महदहंकारादय एव स्वैर्गुणैर्बद्ध्वा स्वर्गनरकादिषु मुहुः क्षिपन्तो जीवान् संसारयन्ति तदमी निर्हेतुद्रोहिणः सर्व्वथा विध्वंसनीया एवेति मैवंवादीरेते निर्हेतूपकारिणः प्रत्युतार्हणीया एव तथाहि मोक्षसाधनानि ज्ञानयोगनिष्काम कर्म्माणि एतैर्विना न सिद्ध्यन्ति तथा प्रेमसाधनानि श्रवणकीर्त्तनस्मरणदास्यसख्या दीन्यपि भगवत्कृपोपव्यञ्जितै रेभिरेव सिद्ध्यन्ति किञ्च परदार-परद्रव्यापहरणे गोब्राह्मणद्रोहादिविविधपातकानि नरकसाधना न्येतैरेव सिद्ध्यन्तीति नैते दूषणीयाः भागीरथ्या जलं सज्जनानां स्नानपानादिभिः परमपावनममृतमेव कूलस्थेषु तृण गुल्मादिषु धान्यगोधूमादिषु पनसाम्रद्राक्षाकरकादिषु प्रविष्टं सर्व्वविध-जनानां परमोपकारकं परमसुखदमपि विषवृक्षेषु प्रविष्टं तेषामेव स्वान्मारकमिति भागीरथीजलस्य न दोषः किन्तु तत्तत् कुपात्रस्यैव यथा तथा तानहं द्विषतः क्रूरान् संसारेषु नराधमान् क्षिपाम्यजस्रमशुभान्नासुरीष्वेव योनिष्वित्यादि भगवदुक्त्यनु-सारेण तेषु दुर्जीवेषु स्थितानामेषामधिकृतभक्तानां को दोषः किन्तु तेषामेवेति वस्तुतस्त्वेते परमवैष्णवा एवेत्येतत्कृतया स्तुत्यैवाभिव्यञ्जयितुमाह एते देवा महदाद्यभिमानिनः विष्णोः कलाः मायाशक्तिवृत्तित्वादित्यर्थः काललिंगं विकृतिः मायालिंगं विवेकहर्षशोकादि अंशलिंगं चेतना तानि विद्यन्ते येषां ते अतः समत्वेन नानात्वात् परस्परासम्बन्धत्वात् स्वक्रियायां ब्रह्माण्ड-रचनायामनीशा असमर्थाः प्रोचुः तुष्टुवुरिति तत्त्वानामेषां सहसैव सर्व्वेन्द्रियवत् तनुमत्त्वमतर्क्यया भगवच्छक्त्यैवेति तदिच्छाया अनन्यापेक्षत्वद्योतनार्थमिदं ज्ञेयम् ॥ ३७ ॥

आतपत्रं छत्रं यस्य पदारविन्दस्य मूलं तलं केत आश्रयो येषां तथा भूता एव यतयो नान्ये अञ्जसा शीघ्रमेव उरु समूल मेव संसारदुःखं स्वगात्र लग्नं जलौकसमिव बलेन निष्कास्य बहिर्दूरत एव उच्चीकृत्य क्षिपन्ति यथा पुनः स्वसमीपं नायाति अत्र अञ्जसेति उर्व्विति बहिरित्युत्क्षिपन्तीति पदैस्तदनाश्रित यतयो विलम्बेनैव नापि समूलं तथा क्षिपन्ति यथा तान् पुनः संसारो ग्रसतीति लभ्यते यद्यपि तदानीं यतयो न वर्त्तन्तेस्म तदपि सर्व्वशास्त्रसिद्धान्त विज्ञतयैव तत्त्वविदस्त्रिकालज्ञास्तथा प्राहुरिति ज्ञेयम् ॥ ३८ ॥

नन्वज्ञानमूलकं संसारदुःखं ज्ञानेनैवोपशाम्येदिति ज्ञानिनां किं भक्त्येति तत्राहुः ऋते इति यत्पादभजनं विना अस्मिन् भवे संसारे आत्मन् स्वस्मिन् सम्बोधनं वा शर्म्म न लभन्ते । तत्र हेतुः माविद्यां विद्यया सह वर्त्तमानां तवाङ्घ्रिच्छायाया-मेव विद्या वर्त्तते नान्यत्रेति भक्त्या विना ज्ञानमेव न सिद्ध्य-तीति ते मिथ्याज्ञानिन इति भावः ॥ ३९ ॥

किञ्च त्वया कृपया स्वचरणकमलसाक्षात्प्राप्त्यर्थं सुखसोपान द्वयं यन्निर्म्मितं तदाश्रित्य ये त्वच्चरणौ दिदृक्षन्ते त एव बुद्धिमन्त स्तएव वास्तवज्ञानिन इत्याहुः मार्गन्ति यत् तदेव तीर्थपदस्तव पदं वयं प्रपन्नाः केमार्गन्ति छन्दःसुपर्णैर्वेदपक्षिभिः कीदृशैः तवैव मुखपद्मं नीडं येषां तैः यथा नीरास्पदं देशे विश्रामार्थं वृक्षतला-न्वेषिणो जना इतस्ततश्चरतां पक्षिणामनुपद धावन्तः सायं स्वनीडं प्रविशतां तेषामास्पदीभूतस्य वृक्षस्य तलं प्राप्नुवन्ति तथा त्वन्मुखादुद्गतानां पुनस्त्वय्येव पर्य्यवसितानां वेदानां तात्पर्य्यमव धार्य्य तेनैव त्वां भजन्तस्त्वां प्राप्नुवन्तीत्येकं सोपानमुक्त्वा

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

द्वितीयं सोपानमाहुः अघमर्षमघनाशकं उदकं यासां सरितां तासु वराया गंगायाः पदमुद्गमस्थानं अतो गंगामनुसेवमाना अपि तदुद्गमस्थानं त्वत्पदं प्राप्नुवन्तीत्यर्थः ॥ ४० ॥

———

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

संस्पृष्टंसमन्वितम् गंधतन्मात्रद्वारामहीम् आधाद्सृजत् ॥ ३५ ॥

हेभव्य!विदुर!भूतानामाकाशादीनाम् मध्येयत्यत् अवरावरम् उत्तरोत्तरम् तेषांपरानुसंसर्गात् कारणान्वयात् यथासंख्यंगुणान् शब्दादीन् विदुःआद्यस्याद्यः द्वितीयस्यद्वौतृतीयस्यत्रयः चतुर्थस्यचत्वारः पंचमस्यपंचेतिजानीत ॥ ३६ ॥

मायायांवीर्यमाधत्तेत्यनेनमायायांमहदुत्पादनायसामर्थ्यंभगवदृष्टिगोचरइत्यादिभिश्चाहंकाराद्युत्पादनार्थं महदादिषुसामर्थ्यं भगवतासंस्थापितं अथब्रह्मांडोत्पादनसामर्थ्यंमहदादिप्रार्थितेनभगवतातेषुनियोजितमित्याह एतेदेवाइत्यादिना एतेमहदादयः देवाःस्वस्वरूप प्रद्योतमानाः विष्णोःकलाः कालःक्षोभकः मायोपादानभूता अंशोवः ख्वजीवः लिंगमाकृतिः एतानिविद्यंते येषांतेतथाभूताअपिनानात्वात् स्वस्वसामर्थ्यान्स्वस्वक्रियायांब्रह्मांडरचनायाम् अनीशाःसतः विभुं प्रोचुः ॥ ३७ ॥

हेदेवतेपदारविंदंनमामनमस्कुर्मः प्रपन्नतापानामाध्यात्मिकाधिदैविकाधिभौतिकानामुपशमेनिराकरणे आतपत्रंछत्रम् अस्यपदारविंदस्यमूलंतलंकेतआश्रयोयेषांतेयतयोयतनशीलाभक्ताअंजसासुखेनसंसारतापंबहिर्दूरत एवोत्क्षिपंतिपरित्यजंति उपायोपेयरूपोभगवानेवेति बुद्ध्याभगवंतंशरणंगतःप्रपन्नः उपेयोभगवान् तदर्थज्ञानभजनाद्युपायपराभक्त इतिभेदः ॥ ३८ ॥

ननुप्रपन्नाःत्रिविधतापोपशमार्थमन्यदुपायंनजानंतीतिकिमित्यत्रोपायांतराभावमाहुः ऋतेइतिअस्मिन्भवेसंसारेयत्पदारविंदं ऋतेतायत्रयंणाभिहताः जीवाभक्ताःशर्मसुखंनलभंते प्रपन्नानांप्रपत्तव्यंभक्तानांभजनीयंत्वत्पदारविंदादन्यन्नेत्यर्थः अतोवयमपितवांघ्रिकल्पतरोः शरणागतिरूपांछायां आश्रयमसविद्यांविद्योपासनातत्सहिताम् त्रिभिःसंबोधनैः सर्वनियंतृत्वसर्वात्मत्वस्वाभाविकषड्गुणाश्रयत्वादयोभगवदसाधारणाः गुणाः दर्शिताः ॥ ३९ ॥

विविक्तेएकान्तेऋषयः मुखपद्मभवदीयमुखारविंदंनीडंयेषांते छंदः सुपर्णाः शोभनंनीडाश्रयभूतंभगवत्त्वेवप्रतिपादकत्वेनपर्णंपतनंयेषांतैर्वेदैर्यस्यभगवतः यत्पदंमार्गंतिकेवलमन्वेषयंति तस्यैवतवतदेवपदंवयंप्रपन्नाः शरणंगताः कथंभूतम् अघमर्षणोपापापहानि उदकानियासांसरितांतासुवरायाः गंगायाःपदमुत्पत्तिस्थानम् ॥ ४० ॥

———

भाषाटीका

तेज से युक्त जो जल परमात्मा के दृष्टि युक्त होने से तथा काल माया चिदंशके योग से विकार को प्राप्त होकर गंध तन्मात्र सहित पृथ्वी को उत्पन्न करता हुआ ॥ ३५ ॥

हे विदुरजी आकाशादिक पञ्च भूतन में जो पीछे २ के हैं वे अपने कारणके संसर्ग से यथा संख्य अर्थात् उत्तरोत्तर अधिक गुण वाले हैं जैसे आकाश का एक शब्द वायु के शब्द स्पर्श दो इत्यादि । ॥ ३६ ॥

काल माया और जीवों से मिलित ये देव सब विष्णु के कला हैं नाना प्रकार होने से अपने कार्यों में असमर्थ होकर हाथ जोड भगवान की स्तुति करते भये ॥ ३७ ॥

यच्छ्रद्धया श्रुतवत्या च भक्त्या संमृज्यमानेहृदयेऽवधाय।
ज्ञानेनवैराग्यवलेन धीरा व्रजेम तत्तेऽङ्घ्रि सरोजपीठम् ॥ ४१ ॥
विश्वस्य जन्म स्थिति संमार्थे कृतावतारस्य पदांबुजंते।
व्रजेम सर्व्वे शरणं यदीश स्मृतिंप्रयच्छत्यभयं स्वपुंसाम् ॥ ४२ ॥
यत्सानुवन्धे सति देहगेहे ममाहमित्यूढ दुराग्रहाणां।
पुंसां सुदूरं वसतोपि पुर्य्यां भजेम तत्ते भगवन् पदाब्जम् ॥ ४३ ॥
तान् वैह्यसद्वृत्तिभिरक्षिभिर्ये पराहृतान्तर्मनसः परेश।
अथो न पश्यन्त्युरुगाय नूनं ये ते पदन्यासविलासलक्ष्म्याः ॥ ४४ ॥

भाषाटीका

देवता बोले ॥ शरणा गतों की तापों को दूर करने में छत्र रूप आपके चरणारविन्दों को हम नमस्कार करें है जिन चरणारविंदो के आश्रय लेने वारे महात्माजन विना श्रम वडे भारी संसार के दुःख को दूर त्याग देवे हैं ॥ ३८ ॥

हे पितः हे ईश! या संसार में जीव ताप त्रय के मारे सुख को नहीं प्राप्त होवैं है हे भगवन्! याइंसो हम विद्या देन वारी, आप के चरणारविंद की छाया को आश्रय लेवें हैं ॥ ३९ ॥

ऋषि लोग एकांत में 'आप को मुख कमल है घोंसला जिनका एसे वेद रूप पक्षि गों द्वारा, जिस आप के चरण को ढूढते हैं और पाप हारी जलवारी सरितन में श्रेष्ठ श्री गंगाजी का जो उत्पत्ति स्थान एसे आपके चरण कमल के हम शरणागत हैं ॥ ४० ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ॥

ननु विषयाकृष्टचित्तानां कुतस्तदन्वेषणं तत्राहुः। यच्छ्रद्धयेति यत्हृदयेऽवधाय ध्यात्वा वैराग्यं वलं यस्य तेन ज्ञानेनधीरा भवन्ति ननु सरागे चित्ते ध्यानमेव कुतस्तत्राहुः। श्रद्धया श्रवणपूर्व्विकया भक्त्या चसंमृज्यमाने संशोध्यमाने ॥ ४१ ॥

भक्तानुग्रहं स्मरन्त आहुःविश्वस्येति ॥ ४२ ॥

अन्तर्यामितया नित्यंसन्निहिते अनर्थकं व्रजनमित्याशङ्क्याहुः यादिति। सानुवन्धे सोपकरणे। असतितुच्छे पुर्य्यांस्वदेह एव वसतोपि यत्सुदूरं दुष्प्रापम् ॥ ४३ ॥

ननु यदि हृदिस्थस्यापि पदाब्जम् केषाञ्चित् सुदूरं तर्हिअन्येषा मपि तथैवस्यात् अविशेषादित्याशङ्क्याहुः तानिति असद्वृत्तिभिर्वहिर्मुखैःअक्षिभिरिन्द्रियैःपराहृतंदूरमपहृतमन्तःस्थंमनोयेषांते अथो। अतएवनूनं तान्नपश्यन्ति वै प्रसिद्धंकुतःपुनस्तेषां तत्सङ्गःस्यात्का न् ते तव पदन्यासो गमनं तस्यविलासो विभ्रमस्तस्य लक्ष्मीः शोभा तस्या ये। त्वल्लीला कथनादिभिः शोभमानांस्त्वद्भक्तानित्यर्थः। पथ इति लक्ष्या निति च पाठे त्वत्पदन्यासविलासो लक्ष्यां येषांतान् पथः त्वन्मार्गभूतान् सतः। मार्गान्वा श्रवणादीन् नपश्यन्तीत्यर्थःयद्वा ये एवम्भूताभागवतास्तेतानुन्मत्तान्नूनंनैव पश्यन्तीत्यन्वयः सत्सङ्गाभावेन हरिकथाश्रवणाभावाद्धृदिस्थितमपि तेषांसुदूरमितिभावः ॥ ४४ ॥

---

श्रीराधारमणदासगोस्वामि विरचित
दीपिन्याख्य तट्टिप्पणी।

वलंवर्द्धकम् ॥ श्रद्धया आदरेण ॥ भक्त्या साधन भक्त्या ॥ ४१ ॥

यत्पदाम्जंकर्तृस्मृतंसत्स्वपुंसामभयंप्रयच्छति ॥ ४२ ॥

यत्पदाम्वुजंनिकटकपिसुदूरंभवति ॥ ४३ ॥

केषांचिदहंममतावतां अन्येषांभक्तानामपितथैवदूरंस्यात् अविशेषाद्धृदिस्थितत्वस्योभयत्रतुल्यत्वात् वहिर्मुखैःसापराधैरितिव्याख्येयम्सामान्यतोवहिर्मुखेषुश्रीनारदादिकृपादर्शनात् अतःअपराधे नपराहृतान्तर्मनस्त्वात् तांस्त्वद्भक्तान्नपश्यन्तिततोनानुसरंतीत्यर्थः तेषांसापराधानांतत्सङ्गः ॥ भक्तसङ्गः लक्ष्याइतिचपाठंइत्येवपाठःनतु लक्ष्यानितियत्तच्छब्दयोरनन्वितत्वापत्तेःलक्ष्यःप्राप्यःननुदर्शनादिनाऽननुसरणेपियादृच्छिकीमहत्कृपातंपुकुतोनजायते इत्याशङ्क्यपक्षान्तरंयद्वेति उन्मत्तान्भगवद्भक्तद्वेषिणः तथाचयादृछिक्यपिमहत्कृपासापराधान्विहायवहिर्मुखसामान्येप्रवर्त्ततेनतुतादृशतइतिः:द्धान्तःफलितः ॥ ४४ ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचंद्रचांद्रिका।

ननु कथं मार्गेति विषय प्रवण चितैः कथंवा मनसोऽसंगः संपादनीयः येन विविक्ते मार्गतीत्युच्येत इत्याशंक्य त्वत्प्रसादानुग्रहीतत्वद्भक्त्यैव सर्वं संपत्स्यते इत्याहुः यदिति श्रद्धया श्रद्धा युक्त्या श्रद्धानमिास्तकंयस्वचिकीर्षितादावितिशेषः श्रुतवत्याश्रुति विहित पंच महायज्ञादि रूपाऽसंगकर्मयोगयुक्तयाभक्त्या उपासनया वैराग्यंशब्दादिष्वनासक्तिःतदेववलंयस्य तेन ज्ञानेनप्रकृतिविविक्तात्मयाथात्म्यज्ञानेन ज्ञानकर्मयोगानुग्रहीतभक्तियोगेन संमृज्यमाने शोध्यमाने हृदये अवधार्य धारणविषयं कृत्वा धीरा जितेंद्रिया यदन्वेषयंति तत्तवांघ्रि सरोज पीठं शरणं व्रजेम अनेन मार्गण प्रकार उक्तः ॥ ४१ ॥

### श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

अथ भगवतः भक्तानुग्राहकत्वं स्मरंतः आहुः विश्वस्येति हेईश ! यत्ते पदांबुजं स्वपुंसां स्वभक्तानामभयं शब्दादिभिरप्रति हतं स्मृतं भावेक्तः ध्रुवानुस्मरणं यद्वाऽभयं न विद्यते भयं संसारो यस्मात्तथाभूतं स्मृतं प्रयच्छति ददाति निवर्त्तयती त्यर्थः तत्त्वत्पदांबुजं वयं सर्वे शरणं ब्रजेम कथंभूतस्य ते विश्वस्य जगतः सर्ग स्थिति संयमार्थे सृष्टि स्थिति संहारार्थं कृतावतारस्य कृतप्रकृत्यनुप्रवेशस्यावतारस्येदमेव हि स्वभक्तानुग्राहकत्वं यत् तापत्रयाभिहतिनिवर्त्तक नित्य निरतिशया मंद साधन भूतध्रुवानु स्मृति निर्वर्तकत्वं स्वभक्तानां स्मृतं प्रयच्छती त्यनेनाभक्ताननुग्राहकत्वं सूचितम् ॥ ४२ ॥

तत्प्रतिपादयंतः शरणं भजांमि यदिति सानुबंधे अनुबध्यंते इत्यनुबंधाः पुत्र दारादयः पात्रवस्त्रादयः देहानुबंधिनो गृहानुबंधिनश्च तैः सहिते ऽसति अचेतनपरिणाम रूपं देह गेह समाहार द्वंद्वे एकत्वं ममे दं। देवो हं मनुष्यो हं इत्यूढः निरूढः दुराग्रहः दुरभिमानो येषां पुंसां पुर्यां शरीरे हृदय गुहायां इत्यर्थः वसतां पि वात्सल्यातिरेका त्पुरीमभिनिविष्टतोपि तं तव हेभगवन् ! यत्पदांबुजं सुदूरमतिविप्रकृष्टं तत्पदांबुजं शरणं ब्रजमे त्यर्थः ॥ ४३ ॥

अहं ममाभिमान ग्रस्त चित्तानां सत्संगतिरेव दुर्लभा कुतः सत्संगति शुश्रुषाचार्योपसत्तिप्रणाड्या भगवत्पदांबुजोपासन निर्वृत्तिः स्यादित्याहुः ता निति हेपरेश ! परेषां ब्रह्मादीनां ईश ! नियंतः ! असदूवृत्तिभि रचेतन परिणाम रूप शब्दादि प्रवणै रचिभिरिन्द्रियैपराहृतं दूरमपकृष्टमन्तस्थं मनो येषां ते ये बांका स्ता ऽनपश्यंति वै प्रसिद्धं केन पश्यंति इत्यत आहुः हेउरुगाय! बहुगेय! ये तव पदन्यास विलासलक्ष्म्याः पदयो र्यो न्यासः स्वात्मासमर्पणं तस्य विलासो विलसितं येषां ते शमादयो गुणा स्तेषां लक्ष्मीः संपद्येषां ते भवत्पादारविंदात्म समर्पण विलसित शमादि गुण संपत्समृद्धा इत्यर्थः लक्ष्म्येति तृतीयांतपाठे तयोपलक्षिता इत्यर्थः अथो ऽत एव न पश्यंति न वीक्षंते किमु तत्संगतिं न कुर्वंतीति पथइति पाठे भ्रष्टानि त्यध्याहर्त्तव्यं पथो मार्गाद्भ्रष्टान्नपश्यंतीत्यर्थः लक्ष्मानिति द्वितीयांत पाठे पथ इति पाठं च अपदन्या स विलास लक्ष्मी निति पदच्छेदः । पद न्यास विलास लक्ष्मीरहिता न त एव पथो मार्गाद्भ्रष्टान् मार्गेति यत्ते इति पूर्व प्रस्तुता भगवदुपासका न पश्यंती त्यर्थः त्वां वे त्यपि पाठः अस्मि न्पाठे ममाह मि त्यूढ दुरा ग्रहाणां पुंसां भगव त्पदां वुजं सुंदूर मित्युक्तंतथा मदुपासनाधिकृतानां संनिकृष्टं स्यादि शंका यामुपासना धिकार एव तावद्दुर्लभ इत्याहुः त्वामिति अस्मि न्पाठे भ्रष्टा इति प्रथमान्ता ध्याहारः ये असदूवृत्तिभिः पराहृतांतर्मनसोऽत एव सन्मार्गभ्रष्टा ये ते त्वां न पश्यंति नो पासते तर्हि के उपासत इत्य त आहुः ये इति त्व त्पद न्यास विलास लक्ष्म्यस्तु पश्यंती त्यर्थः लक्ष्म्या इति पंचम्यं त पाठे पथ इत्य स्य विशेषणं पद न्यास विलास लक्ष्मी रूपात्पथो भ्रष्टा न पश्यंति अस्मि न्पाठे अथो इति पाठा भ्युप गमे लक्ष्म्याः भ्रष्टाः अथोअत एव न पश्यंती त्यर्थः ॥ ४४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

एतत्पदप्राप्तौ साधनमाहुः यच्छ्रद्धयांति संमृज्यमानेसम्यक्शोध्यमाने अवधार्यसंनिधाय्य वैराग्यमेवबलंयस्यसतथा तेनधीरसराजाख्यं पीठं ॥ ४१ ॥

हरेर्त्रिविक्रमोलोकोपकाराय नस्वार्थाय यदतःस्मरणमात्रेणप्रीतोऽस्मदभीष्टकरोतीतिभावेनस्तुवंति विश्वस्येति तवयत्पदांबुजंस्मृतस्वपुंसामभयंप्रयच्छति संवेतच्छरणंव्रजमेत्यन्वयः कृतावतारस्यगृहीतपुरुषादप्रादुर्भावस्य ॥ ४२ ॥

हरःपदविरक्त्येकलभ्यमितिभावेनस्तुवंति यत्सानुबंधइति सानुबंधपुत्रादिपरिकरसहितेअसत्यमंगलेदेहगेहजातिभिन्नेदेहेऽहमिति गेहममेदमितिचोढदूराग्रहाणांदुष्टज्ञानस्यचोढृणांपुंसांपुर्यांदेहेवसतामपितवयत्पदांबुजंसुदूरमत्यंतमगोचरं हेभगवन् ! तपदांबुजंभजेमेत्यन्वयः ॥ ४३ ॥

निकटवर्तिनोहरेर्दर्शनासंभवेकिंकारणमितितत्राह तंत्वामिति यस्त्वमेवमुक्तमहिमाअथोतस्मात्ते।तत्वांनून।निश्चयेननपश्यंतीइत्यन्वयःअसद्वृत्तिभिरर्चिभिरिंद्रियैःपराहृतंबहिष्कारितमंतःस्थितमनोयेषांतेपरहृतांतर्मनसोयस्मात् अंतःस्थितंप्रत्यगात्मानंविषयीकर्तुंयोग्यमितिसूचनायान्तरितिविशेषणंकीदशं न्यासेनसकलकर्मणांपरब्रह्मार्पणेनविलासोयेषांतेन्यासविलासास्तेषांलक्ष्म्याःलक्षदर्शनांकनयोरितिधातोःदर्शनस्यपदंविषयं अनेनपरमहंसाश्रमस्थाएनंपश्यंतीत्युक्तं मुडागमोऽपिएतज्ज्ञानस्यातिशयंसूचयतःपदयोर्न्यासोभुविक्षेपाविशेषः तस्यविलासलक्ष्म्याःपदमितिद्विरावृत्यान्वेतव्यं अनेनपदविषयास्तुतिरयुक्तेतिशंकानिरस्तेतिज्ञातव्यमितिवा ॥ ४४ ॥

---

### श्रीमज्जीवगोस्वामि कृत सन्दर्भः ।

श्रद्धया श्रवणादरेण ॥ ४१ ॥

स्वपुंसामधीन मन्येषां स्मृतमभयं प्रयच्छति ॥ ४२ ॥

स्वतस्त्वन्येषां निकटमपि सुदूरमित्याहुः यदिति ॥ ४३ ॥

तस्मात् येषु स्वपुंसां कृपा स्यात् तेषामेव तत्स्मरण विषयः स्यात् सा च कृपा न सर्वत्र स्यादित्याहुः तदेवं यदत्र नोपलभ्यते सत्संगस्तत्राप्याधुनिक प्राक्तनो वा पारम्पारिकोवानुमेय एव तत्र कृत श्रीनारदादि दर्शनादरपि देवतादेः श्रीनलकूवरादिवत्तादृशत्वप्राप्तिर्नश्रूयत इत्यत एवं विवेचनीयं यद्यपराधसद्भावो वर्तते पुरुषे तदा तद्दोषेण सत्सु निवारणानां साधारणमप्यादिदृष्टीनाञ्च तद्दोषशांत्यर्थसत्सङ्गस्यभगवत्साम्मुख्यस्यकारणत्वेततकृपासाहायमपेक्ष्यते निरपराधत्वे सतितत्सत्सङ्गे नैव जातपरमोत्तमदृष्टीनांतु तेषु सतोऽवधानाभावेऽपि सत्सङ्गमात्रं तत्कारणमितिअतः सापराधानेवाधिकृत्योक्तं तानिति । ते तव पदन्यासविलास लक्ष्म्याः सम्बन्धिनो ये भक्ता इत्यर्थः । ते तान् नूनं प्रायेण पश्यन्ति न कृपादृष्टि विषयीकुर्वन्तीत्यर्थः । कान् । ये असदूवृत्तिभिः सापराधचेष्टैर क्षिभिरिन्द्रियैः पराहृतान्तर्मनसः दूरीकृतान्तर्मुखाचत्तवृत्तयो वाहिर्मुखा इत्येवं व्याख्यानमप्यत्रानुसन्धेयं । अत्रसाधारणासद्वृत्तित्वं न गृह्यते । सर्व्वस्य तत्कृपायाः प्राक् तथा भूतत्वात् । जनस्य कृष्णाद्विमुखस्य दैवादित्यादिक विषयं स्यादिति तस्मादनपराधसद्वृत्तौ तेषां कृपा प्रवर्त्ततएव कथञ्चिदपराधाभावेन तदप्रवृत्तावपि सङ्गमात्रणैव तेषां सम्मति स्यात् यत्र तु सापराधेऽपि स्वैरतयैव कृपाकुर्व्वन्ति तस्यैव तन्मानिः स्यात् नान्यस्य नलकूवरा दिवत् साधारण देवता वद्येति ॥ ४४ ॥

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

अन्येपुनस्तत्राप्यशक्ताः केवल ज्ञान मार्गेण चरणारविंद माश्रित्य तिष्ठंती त्याहुः ॥ यच्छ्रद्धयेति यस्मिन् भगवति श्रद्धा आस्तिक्यबुद्धिः श्रुतवती च भक्तिः श्रवणा दिना पोपिता ॥ ज्ञानमार्गे श्रद्धा भक्ती अंतःकरणशोधिके चकाराद्यथा यथात्मा परिमृज्यतेसाविति कीर्त्तनरूपयापि भक्त्या संमृज्यमाने सम्यक्शोध्यमाने हृदये अङ्घ्रि सरोज पीठ मवधार्य निश्चित्य तेन निश्चयात्मकेन ज्ञानेन वैराग्येण वलं यस्य तादृशेन धीरा भवंति तादृशं तदङ्घ्रि सरोज पीठं भजेम प्राप्नुमो वयं ततोप्यनधिकारिणोऽत्र स्तद्धृदये स्थितं निर्द्धारितं वयं भजेम ॥ श्रद्धा श्रवणा दिना वैराग्यसहितात्मज्ञाने जाते विदितात्मतत्वो ब्रह्मभूतो भवति तदा द्वारं भगवत्पादपीठं तत्राभिव्यक्तं भवति तदा तदुपदेशाच्छ्रद्ध ये वा प्रविश्य त त्तत्त्वभावं वा प्राप्य तच्छरणं गतानि तत्वा न्यत इच्चतुर्थी कक्षा भक्ति मार्गे ह्येषा सा द्विविधा स्वतो हृदये भजनं भक्ताश्रयत्वं चेति । ज्ञानिनां पादाभिव्यक्त्यभावात्पीठमित्यु क्तं स्व स्वोपयोगिरूपनिरूपणार्थमङ्घ्रिसरोजपदं ॥ धीरभवन मेव तत्र फलं वस्कतो भगवान्भगवदाज्ञया वा कालादिः करोति ॥ नान्यथाऽतो भय हेत्व भावा द्धर्थ मेव प्राणी धैर्याभावात् क्लेशा नतु भवत्यतः पूर्वोक्त पक्षाभावे धैर्य फलकोयमेव पक्षः समीचीनः ॥ ४१ ॥

एवंसात्विक प्रकारे पंच पक्षानिरूपिताःराजस प्रकारेण प्याव तत्र प्रथमं सकामतया शरणागतिमाहुः विश्वस्येति यो भगवाह न्विश्वस्य सृष्ट्याद्यर्थ मेवावतीर्णोऽक्षर रूप विशेषणं प्रकृतिः पुरुष श्चो भौ परमात्माभवत्पुरेति निबंधोक्त प्रकारेण । यो भगवान तीर्थ स्तस्य पदां बुजं शरणं व्रजेम सहास्मदनुगुणः नन्ववतारिता एव भवंतःसम्यक् प्रकारेण कि मतः परं शरणागत्या तत्राह स्मृतिं प्रयच्छतीति यद्यस्मात्कारणात्स्वपुंसां भक्तानां संबंध्य भयं न विद्यते भयं यस्मा त्तादृशं स्वरूपं वा प्रयच्छति स्मृतिश्चप्रयच्छति स्वकार्यानामस्माकं वातद्द्वयं प्रयच्छेदिति अवतारिता अपि वयं यदि स्मृत्यभय हीना श्च स्तदा सर्वं व्यर्थम् भगवद्दायानां वा स्मरणं भवेत् भगवत्स्मृतिः पूर्वं सिद्ध स्वरूप स्मृतिः प्रकृतोपयोगि कार्य स्मृतिर्वा स्मृत्यभयदाता विश्वस्य कर्ता भगवांस्तस्य चरण शरणागमनेजन्मादौ सुखं भवतीति फलार्थं क्रिया व्यापृतस्य भक्तिः प्रथमा राजसी ॥ ४२ ॥

द्वितीय माह यत्सानुबंधे सतीति जगत्कर्ता भगवा न्सर्वं सृष्ट्वा सर्वत्र प्रविष्टःसर्वेषां हृदये प्रकाशते तथापिसनप्रतीयते दोषवशात्ता दृशस्यैव तम इष्ट्वैव केवलहृदयेवर्तत इतिज्ञात्वातच्छरणा गमनं द्वितीयं दोषनिराकरणार्थं वा दोषकीर्त्तनं तत्र दोषस्य त्रै विध्य माह सानुबंधे पुत्रादि सहिते देहं गहे च सति दुष्ट ममाह मिति दुराग्रहस्तत्र केवलाग्रहं यथाकथंचिन्निर्वाहे धर्मार्थं भगव द्भजनार्थं वा आग्रहे चैविधं भवति देह गेहयोर्वा सत्वे अन्यतरासत्वे उभया सत्वे चत्रैविध्यं भवति अनुवादो वानियमनाद्वयो रसत्वमेव तत्रास्थि ते रुढश्चाग्रहो भवनीति तादृशानां हृदये पदा ब्जं सुदूरं यद्यपि भगवान्पुर्यामेव वसति तथा पि तत्र चरणार विंदौ नस्तः केवल मंतःकरण प्रेरणार्थं हस्तौ वाइच्छामात्रंवाप्रकटी करोत्य तोयेपाम भिमान स्तेषु भक्ति र्नास्ती ति मुख्यः पक्षः संसारा भिमाना भावेन केवल भगवदीयाभि माने गौणः पाक्षिकोभगवानस्तीत्यर्थः सर्व थाऽभिमाना भावे सर्वथास्ती ति सिद्धांतः तस्मात्प्रकृते तादृश प्रकारेण क्वचि त्प्रकाशाप्रकाशौ कुर्वतो भगवतः पदाब्जंचरणं

श्रीमद्वल्लभाचार्य कृत सुबोधिनी ।

व्रजेमेति एतादृशा अपि यदि भगवद्भक्तानां सेवका भवेयु स्तदापि तृतीया राजसी भक्ति र्भवेत् यथा भक्त भक्तास्तेपिभक्ता भगवच्चरित्रा भिज्ञा श्चेत् ॥ ४३ ॥

न त्वयं सुगमः पक्षः कि मिति ना श्रीयते तत्रा ह तान्वैह्यस द्भिः स्विमिरिति ता न्भगवद्भक्तां स्तेन पदयं त्यपि भजनंतु दूरं तत्र हेतुः असद्भतिभि रंद्रियैः परा हृतांतमनसइति असत्स्वं व वृत्तया येषां ता न्यासुराणीं द्रियाणि आसुराणि स्वभावतोऽसत्पदार्थानेव गृह्णंति यथा मक्षिका अमेध्यं गृह्णाति नतु चंदन मत एव तादृशै रक्षिभि रिन्द्रियैः पराहृतं वशी कृत मंतः करणं मनश्चयेषां इंद्रियै र्विषया कृष्यंते रिति न्यायेनंद्रियाणि विषयैराकृष्यन्ते इंद्रियैश्च मन आकृष्यते मनसो रूप द्वयमस्त्यांतरं बाह्य च आंतरं यदधीनं तद्वशो भवंति पुरुष स्तदा ह परा हृता तरमनस इति ॥

तर्हि तेप्येके स्वतंत्राः कुशलिन इति किं तेषां मेतद् दर्शने नेत्यत आह परेशेति । परे ब्रह्मा दय स्तेषां मपीश इति संबोधनं तान्नाशयितुं भगवां स्तथा करो ती ति ज्ञापयति अथो अथ अतो हेतोस्तांस्तेन पश्यंति पूर्वेण संबंधः ननु दर्शना भावः कथ मुच्यते दृष्ट्वापि परं न भजंती त्ये व मंतव्यं तत्रा ह उरुगाये ति उरुभि र्गायंत इति यदि तेतं पश्येयुस्तदा यथा भगवान् सर्वे रेवगीयते तथा तैरपि गीतः स्यात्तदभावादेव लक्ष्यते नूनं तैर्नदृष्ट इति तान्साधारण्य व्यावृत्त्यर्थं विशिनष्टि ते पदन्यासविलासलक्ष्म्याहतानि पदयो र्न्यास स्तत्रयो विलास स्तेन लक्ष्या स्तेषां लक्षणं भगव त्पद न्यास विलास स्ते तदेव ज्ञायंते यदि भगवां स्तेषां स्थाने गमना र्थं तेषु स्व विलास स्थापना र्थं च विलासं न पाद विन्यासं करोति तेषां हृदये वा पद स्थापनार्थं विलासं प्रेमादिकं करोति तदा ते ज्ञाता भवंती त्यर्थः भगवत्पद संबंधादेव तेषां महत्वं न प्रकारांतरेण तत्तस्य लक्ष्यार्थस्य गुतत्वा त्ता न्न जानंतीत्युक्तं विलास लक्ष्म्या इति पाठे विलासस्य लक्ष्मीः शोभा तस्या स्तं ते विलासलक्ष्मी संबंधा देव प्रसिद्धा इति पूर्ववत् अनेन तादृश भगवद्भक्त ज्ञाने तद् द्वारा भगव द्भजनं तृतीयं राजसम् ॥ ४४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

किञ्चतेभ्योऽपि केवलभक्तिमात्राश्रयिणःश्रेष्ठाइत्याहुः । यच्च व पदं श्रुतं गुरुमुखोपादिष्टं भजनवर्त्मवर्त्तते यस्यांतया भक्त्या संहृदय एवावधाय अनुभूय लब्धेन ज्ञानेन तन्माधुर्यास्वादरूपेण की हृशेन वैराग्यस्य सर्व्वत्रवैतृष्ण्यस्य वलं यस्मात् तेन धीरा भवन्ति अर्के चेन्मधु विन्देत किमर्थं पर्व्वतं व्रजेदितिन्यायेन पूर्व्वमिव वेदाद्य न्वेषणा श्रमवन्तोन भवन्ति ॥ ४१ ॥

तादृश्या भक्तेः सुगमत्वार्थं तस्य भक्तानुग्रहं स्मरन्त आहुर्विश्वस्येति ॥ ४२ ॥

तदपि दुर्जीवैर्भक्ति र्दुर्लभ्येत्याहुः यदिति पूर्य्यां मथुराद्वारकादौ प्रकटाप्रकट प्रकाशाभ्यां सदा वसतोऽपि देहेऽन्तर्यामि रूपेणापि ॥ ४३ ॥

ननु जगत्यस्मिन् इतस्ततश्चरतां साधूनां बहुत्वात्तेषां सङ्गं कृत्वा तत्प्रसाद सुलभतां शुद्धां भक्तिं ते कथं न कुर्व्वन्तीति तत्राहुःतानिति असद्भृत्तिभिर्बहिर्मुखैरिन्द्रियैः पराहृतं दूरमपहृतं अन्तः स्थमनो येषां तेअथो अतएव तान् वैनिश्चितन्न पश्यन्ति कुतस्तेषां तत्सङ्गः । तान् कान् ते तव पदन्यासो गमनं तस्य विलासो विभ्रमस्तस्य लक्ष्मीः सम्पत्तिस्तस्याःसम्बन्धिनो ये तान्स्वलीलाकथाविलासस्मरणकीर्त्तनादिभिः पूर्णान् परमकृतार्थांस्त्वद्भक्तानित्यर्थः ॥ अथ इति पाठे

पानेनतेदेवकथासुधायाः प्रवृद्धभक्त्या विशदाशयाये ॥
वैराग्यसारंप्रतिलभ्यवोधंयथाऽञ्जसाऽन्वीयुरकुंठधिष्ण्यम् ॥ ४५ ॥
तथाऽपरेचात्मसमाधियोगवलेनजित्वाप्रकृतिंवलिष्ठाम् ॥
त्वामेवधीराःपुरुषंविशंतितेषांश्रमःस्यान्नतुसेवयाते ॥ ४६ ॥
तत्तेवयंलोकसिसृक्षयाऽद्यत्वयानुसृष्टास्त्रिभिरात्मभिःस्म ॥ *
सर्वेवियुक्ताःस्वविहारतन्त्रंनशक्नुमस्तत्प्रतिहर्त्तवेते ॥ ४७ ॥
यावद्वलिंतेऽजहरामकालेयथावयञ्चान्नमदामयत्र ॥
यथोभयेषांतइमेहिलोकावलिंहरंतोन्नमदंत्यनूहाः ॥ ४८ ॥
त्वंनःसुराणामसिसान्वयानांकूटस्थआद्यःपुरुषःपुराणः ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

त्वत्पदन्यासविलासो लक्ष्मीं येषां ते । ये तान् पथः तन्मार्गे भूतान् साधून् न पश्यन्तीत्यर्थः ॥ यद्वा ये एवम्भूता भागवतास्ते तानस्मान् सापराधान्नैव पश्यन्तीत्यन्वयः ॥ ४४ ।

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

अथभगवत्पदशरणागतेस्त्यादरणीयत्वंकैमुत्तिकन्यायेनवर्णयंतः पादपीठेशरणंव्रजेमेत्याहुः यदितिभगवत्पादपद्मशरणागतिःसर्वपुरुषार्थदेतिज्ञानेनपुत्रकलत्राद्यासक्तिः संसारफलेतिवैराग्यरूपगावलेनचसंमृज्यमानेशोध्यमाने हृदयेश्रद्धयाश्रुतवत्याभगवद्गुणश्रवणसंवर्द्धितया भक्त्याचयदंघ्रिसरोजपीठम् अवधायधीराभवंति तदंघ्रिसरोजपीठंव्रजेमशरणंगच्छामः ॥ ४१ ॥

भगवतः कृपालुतांद्योतयंतः श्रद्धातिशयेनपुनः पादपद्मंशरणं व्रजेमेत्याहुः विश्वस्येति ॥ ४२ ॥

वहिर्वृत्तीनांयत्सन्निहितमपिपदांवुजमतिदूरं भवतितैर्विस्मृतत्वात् तत्पदांवुजंवयंभजेमेत्याहुः यदिति असति अनित्ये पुर्य्यांदेहे अंतर्यामितयागेहेगुर्वादिरूपेणावसतोपितेपदांवुजंदूरंभवति तद्व्रजेम उभयत्रभजनीयतयासन्निहितंपश्यामइतिभावः ॥ ४३ ॥

ननुतर्हितेपिभवद्विधानांसतांसंगनकुतोनमांसन्निहितंकुर्वंतीत्यत आहुः पानिति तेतवपदन्यासोगमनंतस्यविलासोविभ्रमः तस्यलक्ष्मीःशोभ तस्याः येभागिनः भवदीयास्तान् असति असत्यंदेहंगेहेच धृत्ययोयेषांतैराक्षिभिरिन्द्रियैः पराहृतंवहिर्मुखीकृतंमनायेषांतेनूनंनिश्चतंवैप्रसिद्धं नपश्यंतितत्संगस्यतुकाकथेतिभावः ॥ ४४ ॥

---

भाषाटीका

कथा श्रवण द्वारा उत्पन्न भई भक्तिसे शुद्ध एसे हृदयमें जिस चरणारविन्दको श्रद्धा से धारण करके वैराग्य सहित ज्ञान से जन चित्त वृत्ति के जीतने में धीर होवै हैं उस आपके चरण कमल के पीठ को हम प्राप्त होवें ॥ ४१ ॥

हे ईश ! संसार के उत्पत्ति पालन संहार करने वारे आपके चरणांवुज की शरण कों हम सब प्राप्त होवें । जो चरणांवुज स्मरण करने से अपने जनों कों अभय देवे है ॥ ४२ ॥

जो चरणांवुज 'उपकरण सहित देह गेह में मैं मेरी बुद्धि करने वारे, पुरुषों कों आप हृदय में विराजो हो तौ भी दूर है ॥४३॥

भाषा टीका

हे ब्रह्मादिकन के ईश ! हे भगवान् ! दुष्ट इन्द्रियों से दूर हरयो भयो मन जिनको तिनकों जो भक्त आपके चरणारविन्द के गमन के विलास को लखन वारे हैं वे नहीं देखते हैं ॥ ४४ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका

एतदेव स्फुटयंति पानेनेतिद्वाभ्यां वैराग्यं सारोवलं यस्यवोधस्य तं लब्ध्वा अन्वीयुः प्राप्नुयुः अकुण्ठधिष्ण्यं वैकुण्ठ लोकम् ॥ ४५ ॥

आत्मनिसमाधिर्मनः स्थैर्यं स एव योग उपायः तस्यवलेन । ज्ञानयोगतः श्रमेण मोक्षः सत्सङ्गतस्त्वत्कथाश्रवणादिनात्वनायासेनैव अहंममताविष्टानांतु न कथञ्चिदिति भावः ॥ ४६ ॥

तदेवं स्तुत्वा प्रार्थयन्ते चतुर्भिः तत्तस्मात् हे आद्य ! तेत्वदीया वयं । यस्माल्लोकानां सिसृक्षया अनुस्रष्टाः क्रमेणोत्पादिताः त्रिभिरात्मभिः सत्त्वादिभिः स्वभावैः अतएव विरुद्धस्वभावत्वाद्वियुक्ताः सन्तः यदर्थं । सृष्टास्तत् स्वविहारतन्त्र त्वत्क्रीडोपकरणं ब्रह्माण्डं ते तुभ्यं प्रतिहर्त्तवे प्रतिहर्त्तुं समर्पयितुं न शक्नुमः । अतस्त्वं न स्वचक्षुः पारदेहीति त्रयाणां श्लोकानां चतुर्थेनान्वयः ॥ ४७ ॥

असामर्थ्य मेव प्रपञ्चयितुं कार्य्यानिर्वैचित्र्यमाहुः । भो अजकाले तत्तदवसरे वलिं भोग्यं यावत् साकल्येन तेतुभ्यंहराम समर्पयाम यथायन प्रकारेण अन्नमदाम भक्षयाम इत्यंननान्नमात्रमस्माकं ऐश्वर्य्येण तु भोगः तवैवेत्युक्तं उभयेषां तव चास्माकञ्च । यत्र स्थित्वा इमे जीवा अनूहा अप्रत्यूहानिर्विघ्नाः । यद्वा अनूहा अवितर्कानिःसंशया इत्यर्थः तथाच श्रुतिः । ता एनमब्रुवन्नायतनं नः प्रजानीहि यस्मिन् प्रतिष्ठिता अन्नमदामेति ॥ ४८ ॥

अवश्यञ्च त्वयास्माकमेषाञ्च कार्य्योपाधीनांवृत्तिः परिकल्पनीया जनकत्वादित्याहुः नोऽस्माकं सान्वयानां स्वकार्य्याणां । यद्वा । अन्वेतीत्यन्वयः कारणं तत्सहितानां त्वमेवाद्यः कारणं । अत्रहेतवः । कूटस्थः अविक्रियः । पुरुषः अधिष्ठाता । पुराणः पुरातनः । एतदुपपादयन्तित्वामिति । हे देव ! अजएव त्वंगुणानांसत्वादीनां कर्म्मणां जन्मादीनाञ्च योनौ कारणभूतायां शक्त्यां मायायां प्रथमं रेत आदधे निहितवानसीत्यर्थः कीदृशं कविं सर्व्वज्ञं महत्तत्वरूपम् ॥ ४९ ॥

पा० * त्रिभि रात्मनिस्थे इत्यपि वीरराघवीय पाठः ॥

त्वंदेवशक्त्यांगुणकर्मयोनौरेतस्त्वजायांकविमादधेऽजः ॥ ४९ ॥
ततोवयंसत्प्रमुखायदर्थेबभूविमात्मन्करवामकिन्ते ॥ *
त्वन्नःस्वचक्षुःपरिदेहिशक्त्यादेवक्रियार्थेयदनुग्रहाणाम् ॥ ५० ॥ *

इतिश्रीमद्भागवते महापुराणे परमहंस्यां संहितायां
वैयासिक्यांतृतीयस्कन्धे महदाद्युत्पत्तिर्नाम
पञ्चमोऽध्यायः ॥ ५ ॥



श्रीधरस्वामिकृत भावार्थदीपिका

तथा हे आत्मन् ! देव सत्प्रमुखा महदादयो वयं यदर्थं बभूविम तत् किं कार्य्यं ते करवाम सृष्टिमिति चेत् तत्राहुः । तर्हि नो ऽस्माकं त्वं स्वचक्षुः स्वीयं ज्ञानं शक्त्या सह परिदेहि प्रयच्छ यस्मात्त्वत्त एवानुग्रहा येषां ते यदनुग्रहा तेषामस्माकंक्रियार्थे इयानेवेतावाननुग्रहो येषां इत्येकं वा पदं । त्वदीयज्ञान क्रिया शक्तिभ्यामेव वयं सृष्टौ क्षमा नान्यथेत्यर्थः ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
पञ्चमोऽध्यायः ॥ ५ ॥

---

श्रीराधारमणदासगोस्वामि विरचित
दीपिन्याख्य तट्टिप्पणी ।

एतदेव हृदिस्थत्वाविशेषेपिश्रवणादिनावैशिष्ट्यमेव ॥ ४५ ॥

अपरंमोक्षमात्रकामा तावन्मात्रपुरुषार्थेपितेषांश्रमःस्यात् सेवया मोक्षानंदादपिपरमानन्दमय्या ॥ सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युतदीयमानंनगृह्णन्तिविनामत्सेवनंजनाइत्यादेः ॥ ४६ ॥

यस्मात्त्वदाश्रयणमेवसर्वपुरुषार्थहेतुस्तत्तस्मात् अतएवसत्वादिस्वभावैःसृष्टत्वादेव । यदर्थं ब्रह्माण्डनिर्माणार्थं ॥ ४७ ॥

अन्नंयत्किञ्चिद्देवदत्तंस्वस्वोपजीव्यं पूर्वार्थेऽनूहशब्दस्यानिर्विघ्नार्थेनेयार्थलक्षणेत्यस्वरसाद्यद्वेति तथाच अन्नप्रार्थनेप्रमाणंश्रुतिः तादेवताः एनमीश्वरं अब्रुवन्प्रार्थयामासुःआयतनंस्थानं यस्मिन्स्थानेप्रतिष्ठिताः सम्यक्स्थिताः ॥ ४८ ॥

कार्य्योपाधीनांइन्द्रियाद्यधिष्ठातृणामजानजानांअन्वयशब्दस्य कार्य्यवाचकत्वमप्रसिद्धमतोयद्वेति अत्रसर्वकारणत्वे एतत्पुराणपुरुषत्वे महत्तत्त्वरूपंतदाविष्टंसमष्टिजीवमित्यर्थः अन्यथाचित्तरूपस्य तस्य ज्ञानकरणत्वेनतत्कर्तृत्वाभावात्सर्वज्ञमितिव्याख्यानंनोपपद्यते ॥ ४९ ॥

ततोजीवाविष्टमायातः सत्प्रमुखाइत्येवपाठोनतुमत्प्रमुखाइतितत्रस्वच्छत्वमविकारित्वंशांतत्वमितिचेतसइतिवक्ष्माणत्वान्म हतस्सच्छब्दवाच्यत्वम् अत्रयथा पृथिव्याद्यधिष्ठातृरूपेण तत्रतत्रस्तुतिः श्रूयते तथा सर्वेषा मपिमहदाद्यभिमानिनां शरीर निर्म्माणमीश्वरेच्छयैव कृतं तत्प्रार्थनयाऽन्येषांभविष्यतीतिज्ञेयम् ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
दीपिकादीपिन्यां
पञ्चमोऽध्यायः ॥ ५ ॥

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ॥

एव मनु ग्राहकत्वाननु ग्राहकत्वे उक्ते अथा नुग्रह विषये त्वपि भगव त्कथा श्रोतृणां समाधि परेभ्य सौकर्य माहुः द्वाभ्यां पानेने ति हेदेव ! ते कथा सुधायाः अमृत तुल्य कथायाः पानेन श्रवणेन प्रवृद्ध भक्त्या प्रवृद्ध प्रेमात्मक ज्ञानेन विशदाशयाः निर्मलांतःकरणाः अनेनोपायो त्पत्ति प्रतिबंधक पुण्य पाप निवृत्तिरुक्ता भवति वैराग्य सारं वैराग्येण सार भूतं वैराग्यं नाम विमोक्षापर पर्यायं कामेष्वलालसत्व रूपं कामानभिष्वंगत्वं इदं च विवेकादीनां मप्युप लक्षणं विवेका दि साधन सप्तकानुगृहीतं बोध्यं तैल धारवद विच्छिन्न स्मृति संतान रूपं प्रत्यक्षतापन्नं प्रेमात्मकं ज्ञानं प्रतिलभ्यांजसा सुखेनाकुंठधिष्ण्यं काल सत्वादि गुणा दिभि रप्रतिहतं वैकुंठाख्यं मुक्त प्राप्यं स्थानं यथान्वायुः प्रापुः ॥ ४५ ॥

अथा परेचान्येप्यात्म समाधि योग बलेनात्मनो ऽतःकरणस्य यः समाधिः स्थैर्यं स एव योगः उपाय स्तस्य बलेन यद्वा आत्मनः परमात्मनः यः समाधिः परमात्म विषयकः समाधिः स एव योग स्तस्य बलेन निष्पादनेन परि पक्व भगवत्समाधिना बलिष्ठां दुस्तरां प्रकृतिं भगवन्मायां जित्वा तीर्त्वा धीरा जितेंद्रियाः पुरुषं परमपुरुषं त्वा मेव विशंति प्राप्नुवंति तथापि तेषां श्रमः स्यात् अष्टांग युक्त भक्ति योग निष्ठानां श्रमः स्यात् एकैक स्वांगस्यै व दुःसंपाद्यत्वात् नतु सेवया कथा श्रवणादि रूपत त्सेवयो पलक्षितानां तु न श्रम इत्यर्थः ॥ ४६ ॥

तदे व स्तुत्वाअथस्वाभिप्रायमाविष्कुर्वंतीत्याहुः तदित्यादिभिश्चतुर्भिःतदस्माकंशरणागतत्वाद्धेतोःहेआद्य!परमकारण!तेवयंत्वत्संबंधिनोवयंलोकसृत्त्वयालोकान्स्रष्टुमिच्छयात्वयात्रिभिःसत्वादिभिर्गुणैः स्वआत्मन्याधारभूतेसृष्टाः आत्मभिःस्मेतिपाठेआत्माभिः शरीरभूतैस्त्रिभिरित्यर्थः अनुसृष्टाः महदाद्यनुक्रमेणसृष्टाः सर्वैवियुक्ताः परस्परमसंमिलितास्तेतुभ्यंस्वविहारतंत्रं स्वाधिकारनिर्वहणं प्रतिहर्तुंवेप्र त्युपकर्तुं त्वल्लीलापकरणब्रह्माड रचनारूपप्रत्युपकारार्थंनशक्नुमः ॥ ४७ ॥

प्रतिहरणासामर्थ्यमेवप्रपंचयंति यावदिति हेअजकाले तत्तदवसरे तेतवबलिमाराधनं यथा हरामसमर्पयामकरवामेतियावत् वयंचभवत्क्रीडोपकरणभूतावयमन्यच्चशब्दादिभोग्यं यथाअदामः अनुभवाम यथाचेम लोकाः स्रक्ष्यमाणादेवादयोलोकाउभयेपांज्ञानकर्मेंद्रियाणां बालिशब्दादीनृगंतव्यादीश्चविषयान्हरंतः उपस्थापयंतः अनूहाः निरसंशयाः अन्नमदंतिसुखमनुभवंतितथाकर्तुंनशक्नुमइत्यर्थः यावच्छब्दो वधारणे न शक्नुम यावन्नशक्नुम एवेत्यर्थः ॥ ४८ ॥

पा० *. तत्तेवयमिति * त्वदनुग्रहाणामितिच वीरराघवीय पाठः ॥

श्री मद्वीरराघवाचार्यकृत भागवतचंद्रिका ।

एवंब्रह्मांडसृष्टावात्मनांसामर्थ्यमावेद्याथतत्सामर्थ्यंप्रार्थयिष्यंतस्त्व-मेवतत्प्रदानसमर्थइत्याहुः त्वमइति सान्वयानांसकार्याणां सुराणांन अस्माकंत्वमाद्यः कारणभूतोसि आद्यत्वेनविकाराश्रयत्वमाशंक्याहुः कूटस्थः निर्विकारः तर्ह्याद्यत्वमयुक्तमित्याशंक्योक्तंपुरुष इति पुरिशे ते पुरुषःतत्तदंतरात्मतयावस्थितः नतुतद्वस्तुगत विकाराश्रयइत्य र्थः तस्यापि कारणांतरं माशंक्योक्तं पूराण इति सर्वा पेक्षयाइत्य मेव पुराणः नतुत्वदपेक्षयाकिंचित्पुराणमस्तीत्याभिप्रायः एवं भूतो ऽजस्त्वं हेदेव! गुणकर्म योनौ,शब्दादि गुणग्राहकज्ञानेंद्रियाणां च कर्मेन्द्रियाणाञ्च योनौकारणभूतायाशक्त्यांस्वापृथक्सिद्धविशेषण भूतायामजायांप्रकृतौ रेतः सृष्टिसामर्थ्यं कविंसमष्टिपुरुषंब्रह्माणं चादधेनिहितवान् पुरुषेणात्मभूतेनवीर्यमाधत्त वीर्यवानिति पूर्व मुक्त्वा दिति ॥ ४६ ॥

तदिति तत्तस्मात्तवैवपरमकारणत्वात्सत्प्रमुखाः समष्टि पुरुष प्रभृतयःतेवयंत्वच्छरीरभूतावयंयदर्थंयदर्थंवभूविमअभूमतत्किंतेका-र्यंकरवामसृष्टिमितिचेत्तत्राहुःतर्हिनोऽस्मभ्यंहेदेव!त्वंक्रियार्थेसृष्ट्यर्थं स्वचक्षुःस्वाधिकारानुरूपं विज्ञानं शक्त्यासामर्थ्येन सहयदनुग्रहणा मिति यस्यानुग्रहो येषांतेषामितिव्याधिकरणबहुव्रीहिःयस्यतवानुग्रह भाजामस्माकं देहीत्यर्थः यद्वाऽनुगृह्यतेयेन भवताइत्यनुग्रहः संसा-रिणां फलनिष्पत्तावनुग्राहकतयानुगृहीताः तेषां नःक्रियार्थे स्व-स्व प्रवृत्तेयच्चक्षुर्ज्ञानं तद्देहीत्यर्थः । अत्रेदंतत्वं पुरुषेणात्मभूतेन वीर्य माधतवीर्यवान्रेतस्त्वजायांकविमादधेजइतिपरमात्मात्मकसमष्टिपु-रुष संसृष्टायामायायाःमहदाद्यारंभकत्वमवगम्यते तत्र महदादिपृथि व्यंताः अचेतनस्यैवावस्थाविशेषःतत्राखंडितायाएव मायायाः प्रदेश भेदेनमहद्रूपत्वेन परिणामःएवं महतोप्यखंडिततत्प्रदेशभेदेनाहंका-ररूप परिणामःएव महंकारादिष्वापिद्रष्टव्यं नतुकात्स्न्येन महदादीना मुत्तरोत्तर कार्यं रूप परिणामः तथा सत्युत्तरोत्तर कार्यरूपेण कृत्स्न स्यापिमहदादेः परिणतत्वान्महदादीनां पृथक्स्थित्यनुपपत्त्या पृथिव्य प्सुप्रलीयते इत्यारभ्य महानव्यक्तेलीयते इत्यंतेनलय श्रवणंविरुध्येत अयमेवहिलयः यत्पूर्वपूर्वावस्थयावस्थितेनद्रव्येण तदेकदेशस्योत्तरो-त्तरावस्था मापन्नस्य तदवस्था प्रहाणे न संश्लेषः एवं च पंची करणोपपत्तिः अन्यथा पृथक्तत्त्वानाम भावात्तदनुपपन्नंस्यात् एवं च महत्त्वादहंकारत्वावकाशत्वादि पृथिवीत्वपर्यंतावस्थामापन्न स्यप्रधान द्रव्यस्य परमात्मात्मक सृष्टि पुरुष ब्रह्मानुप्रवेशेन पर-मात्म शरीरत्वव्यपदेश उपपन्नः कार्यावस्थ कारणावस्थद्रव्यस्यै-कत्वेन तत्रै वानु प्रवेश मात्रेण यस्य पृथिवी शरीरमित्यादीनां उपपत्तिः ननु पृथिवीत्वाद्यवस्थास्वनुप्रवेश उपपन्नः नचैवंयस्या व्यक्तं शरीर मित्येतावतै व महदादि पृथिव्यंतानां शरीरत्व सिद्धेः पृथक् यस्य पृथिवी शरीरं यस्यापः शरीरमिति पृथिव्यादीनां शरीरत्वकथनं,व्यर्थमितिवाच्यं परस्परमवस्थानामवस्थावस्थावतो-श्चभेदेप्यवस्था वद्द्रव्यानामेकत्वात्सर्वावस्थ द्रव्यस्य परमात्म शरीरत्वंमेव ननु वैशेषिकमतरीत्याकार्यकारणयोर्भि न्नद्रव्यत्वेना शरीरत्वमिति प्रतिपादनार्थत्वात् नचमहदादीनां केवला चेतन परि णाम रूपत्वे विशिष्टो पादानत्वा सिद्धिः प्रकृति पुरुष विशिष्टस्य परमात्मन उपादानत्वं हिविशिष्टो पादानत्वम् विशेषाश्रयत्वंह्यु पादानत्वमिति वाच्यं विशिष्टोपादानत्वेपि त्रयाणामसांक-र्येण कार्यत्वाभ्युपगमेन विरोधाभावात् अचेतनमचेतनं प्रति चेतन श्चेतनं प्रति ईश्वरईश्वरं प्रति कारणं इत्यंगी क्रियते तत्रा चेतनस्यकार्य

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका

ता महदादि पृथिव्यंतावस्थाश्रयतारूपा,स्वरूपान्यथाभाव लक्षणा। चेतनस्य कार्यता तु संकुचितज्ञानस्य तद्विकासरूपा स्वभावान्यथा भाव लक्षणा। सैवाग्रिमाध्याये प्रतिपादयिष्यते तत्रहि अथ त-स्याभि तप्तस्य कति चायतनानीत्युपक्रम्यजीव संघात संश्लि ष्टस्य समष्टिपुरुषस्य चतुर्मुखस्य वागाद्यींद्रियेभ्यः व्यष्टिभूतानांदेवा दीनामिंद्रियोत्पत्ति चातुर्वर्ण्योत्पत्तिचाभिधाय एतेवर्णास्वधर्मेण यजंतिस्वगुरुं हरिं श्रद्धयात्मविशुद्ध्यर्थं यज्जाताः सहवृत्तिभिरिति प्रलयदशायां संकुचितज्ञानानामचेतनप्रायाणां जीवानांभगवदा राधनोपयुक्त करणकेलवरोत्पत्तिद्वारा विज्ञानविकासरूप कार्यता ह्यभिधास्यते कार्यावस्थ चेतनाचेतन नियमनरूपाद्वारकाव-स्थाश्रयतारूपा चेतनाचेतनगतकार्यता निर्वाहकत्वरूपा सद्वारका-वस्थाश्रयता चेत्युभयविधा वस्थाश्रयतेश्वरस्यानु प्रवेशे चेतनाचेत नसामानाधिकरण्यादिभि रस्मिन्शास्त्रेबहुधा प्रतिपाद्यते अतोस्मि न्नध्या येऽचेतनं न परिणामपरंपरामात्र मभिहितमिति ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्री वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिकायां
पञ्चमोऽध्यायः ॥ ५ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

एवंविधस्यहरेरपरोक्षज्ञानसाधनोपासनाद्विविधा ध्यानरूपा वे-दांतशास्त्रश्रवणादिलक्षणाच तत्राद्विप्रवृत्यर्थंप्रथमाक्लेशसाध्याद्वि तीयासुखसाध्येतिउभेविशिनष्टिपानेनेतिहेदेव!तेकथासुधायाःपाने नश्रवणादिलक्षणेनप्रवर्धमानयाभक्त्याविशदाशयानिर्मलांतः कर-णाः वैराग्यसारंवैराग्यफलंबोधमपरोक्षज्ञानं प्रतिलभ्यप्राप्यअंजसा ऋजुमार्गेणाकुंठादिस्थानंअपरिच्छिन्नस्वरूपंत्वात्वांयथांईयुः॥ ४५॥

तथापरेयेन्येयोगिनःयमनियमादियोगनिष्ठाः आत्मसमाधियोग बलेनपरमात्मचित्तैकाग्र्यलक्षणध्यानसामर्थ्येनबलिष्ठामन्यसाधना जेयांप्रकृतिंबंधकशक्त्यभिमानिनीं प्रसादाज्जित्वाधीराधीपुरुषमाणा अपरोक्षज्ञानिनःपुरुषंपूर्णषड्गुणंत्वामेवविशंति तुःस्यान्भेदेऽवधारण इतिवचनात् तत्रतेषांयोगिनांश्रमःस्याद्यथातथातेतवश्रवणादिरूप यासेवयानतुनैवश्रमःस्यात्किंतुसुखमेवेत्यन्वयः अत्रप्रकृतिजयोनाम तत्प्रसादैकलभ्योनान्यः तदुक्तं वायोश्चप्रकृतेर्विष्णोर्जयोभक्त्यैवना न्यथेति ॥ ४६ ॥

स्तुत्याप्रसन्नीकृत्यस्वाभीष्टंविज्ञापयंतीत्याह तत्तेवयमितियस्मा त्त्वंलोकदयालुस्तत्तस्मत्त्वयालोकासिसृक्षयात्रिभिरात्माभिःकालमायां शैर्विसृष्टायेतेवयमद्यसर्वेवियुक्ताविश्लिष्टाः स्वविहारतंत्रंस्वस्यतव-क्रीडोपकरणंयत्ब्रह्माडंतत्प्रतिकर्तुंनशक्नुमइत्यन्वयः ॥ ४७ ॥

ब्रह्मांडनिर्माणेनप्रयोजनमाहुरित्याह यावदिति यावद्बलिंभक्ष्या हरामतावत्पर्यंतंब्रह्मांडंसमुत्पाद्यतस्मिन्स्थित्वात्वद्विषयज्ञानकर्मल-क्षणंबलिमुपहारंसमर्प्यतर्पयामः यत्रब्रह्मांडेस्थितावयंकालेकालेय-थान्नमदामस्वविषयेपुव्यवहराम तथोभयेषामस्माकंयुष्माकंचबलिं हरंतः समर्पयंतस्तइमेऽनीशाः अस्मत्प्रेरणामंतरेणप्रवृत्तावसमर्था-लोकाजनाः अन्नंज्ञानकर्मलक्षणमदंति तादृशब्रह्मांडनिर्माणोपायंकु-र्वितिवाक्यशेषइत्यन्वयः तादृशमंडंकर्तुंनशक्नुमइतिपूर्वेणसंबंधइ-तिवा अज! विष्णो! अजविष्णुहरच्छागाइत्यभिधानम् ॥ ४८ ॥

किमितिमांप्रत्येतद्विज्ञापनमन्यस्य स्यादितितत्रैवमूचुरित्याहत्वं-नइति आद्यः आदेरुत्पत्तेःकर्तापितृत्वात् त्वांविज्ञापयामइतिभावः

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली

अस्मत्पदंविशिनष्टि सुराणामिति नकेवलमस्माकमेवजनयिताकिंत्वस्मत्संततीनामितिभावेनोक्तं सान्वयानामिति त्वंकइतिपुराणः पुरुषः श्रीनारायणः पितुरपिदेहरूपणविकारदृष्टेस्त्वद्विकारावयमितिशंकामाभूत्कूटस्थः विकारकूटेषुतिष्ठति नतुविकारवान् हरेऽपि तृस्थानीयत्वंस्पष्टयितुमाहुरित्याह त्वंदेवेति हेदेवत्वंकविरतिक्रांतदर्शीअजश्चदेवदत्तवत्भवतांगर्भाधानादिकर्माण्यसंभावितानितथापि भवान्शक्त्यांभार्यायांसत्त्वादिगुणानांकर्मणामदृष्टानांयोनौकारणभूतायामजायांजननधर्मरहितायांचिदचित्प्रकृतौरेतागर्भमादधइत्यन्वयःतुशब्देनोभयेषांमहान्विशेषोस्तीतिसूचयति ॥ ४६ ॥

ततेस्तस्याःप्रकृतेः । वयंसत्प्रमुखामहत्तत्त्वमुखाबभूविम ततःकिंत आह यदर्थइति आत्मन् ! स्वामिन् ! यदर्थंयत्प्रयोजनायबभूविमतदर्थेतेतवकिंकरवामविमुक्ता अस्वतंत्रायस्मात्तस्मात्त्वंचक्षुर्ज्ञा..मंडनिर्माणोपायविषयंपरिदेहि कीदृशंतत्राहुः शक्ताइति यस्यज्ञानस्यग्रहेणक्रियार्थंब्रह्मांडनिर्माणायशक्ताः स्यामेत्यन्वयः ॥ ५० ॥

इति श्रीभागवते महापुराणे तृतीयस्कन्धे
श्रीमद्विजयध्वजतीर्थकृत पदरत्नावल्यां
पञ्चमोऽध्यायः ॥ ५ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

तत्कथायां सत्यां तु परमफलप्राप्तिं क्रमादाहुः पानेनेति विशदाशयाः प्रोज्झितकैतवाः सेवैकपुरुषार्थाः अकुण्ठधिष्ण्यं वैकुण्ठलोकामितिटीका ॥ ४५ ॥

येतु ज्ञानिसङ्गिनस्तेषां साधनसाध्ययोः कनिष्ठत्वमाह तथेति । अपरेमोक्षमात्रकामाः तन्मात्र पुरुषार्थेऽपि तेषां श्रमःस्यात् ये तु सेवैकपुरुषार्थास्तेषां सेवया श्रमो न स्यात् सदैव सेवापरमानन्दमनुभवतामानुषङ्गिकतया मोक्षश्च स्यादित्यर्थः ॥ ४६ ॥

यस्मादेवं सर्व्वेषां भवदाश्रयेणैवोत्तमत्वंतत्तस्मात् ॥ ४७ ॥

तत्र निज कर्त्तव्यसेवारूपाश्रयं निवेदयन्ति यावदिति अन्नं यत्किञ्चिद्भगवद्दत्तं स्वस्वोपजीव्यम् ॥ ४८ ॥

कर्त्रिं समष्टिजीवम् ॥ ४९ ॥

तत इति तत्रैषां पृथिवीन्यायेन तत्वाधिष्ठातृदेवानां भक्तत्वेन स्वयमेव पुराशरीरानिर्म्माणमीश्वरेण अन्येषां तु तत्प्रार्थनयैव भवष्यतीतिज्ञेयम् ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्री मज्जीवगोस्वामिकृत क्रमसन्दर्भे
पञ्चमोऽध्यायः ॥ ५ ॥

---

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

तेषां मेव ज्ञानं वा चतुर्थ माह पानेने ति हे देव ! ते कथा सुधायाः पानेन प्रवृद्धया भक्त्या कृत्वा ये विशदा शया स्ते वैराग्य सारं बोधं प्रतिलभ्य यथ ऽनायासेन तेऽकुंठधिष्ण्यमीयु स्तथापरेपीयु रिति संबंधः एतेतु राजसा राज सेषु निकृष्टा ये अंतः करण शुध्य र्थ मंतःकरण ताप निवारणाय भगवत्कथां पीत्वा तेन प्रक्षालितांतःकरणाः प्रक्षालनार्थं च मध्ये भक्ति मपि कल्पयित्वा तेनापि शुद्धांतः करणा एव । एवं साधन साध्य भक्ती अंतःकरणशुध्यर्थ मेव ये नियुञ्जते

श्री मद्वल्लभाचार्य कृत सुबोधनी

ते कर्म मार्गा इवराजस प्रथमाः । शुद्धे चांत करणे वैराग्य मेवसारभूतं यस्य येन ज्ञानेनविषय वैतृष्ण्यं भवति तादृश ज्ञानं प्राप्य अंजसा सामस्त्येन ते ऽकुंठधिष्ण्यं कृत्रिम वैकुंठमीयुः देवेति संबोधनाद्विष्णु लोकं गच्छंती त्युक्तं भवति ध्रुव स्थानं वा अकुंठमिति नकदाचि दपि कुंठितं तत्र सर्वदा भोगः सिद्ध एव अथवाते अक्षर सायुज्यं प्राप्नुवंति ॥ ४५ ॥

तथा केवल ज्ञानिनोपीत्याह तथापरेचेति फलतो भगवदीयत्वात् भक्तत्वंपरेअन्ये इदानीं भगवदीया अपिकेचित्स्वभाव गुणानां वलिष्ठत्वादात्मपर्यवसाय्यात्मविषय कोवायतोयतोनिः सरतीति प्रकारेण निरंतरस्थिति रूप समाधिपर्यंतज्ञानेन पूर्वं तामस वासनां जित्वात्वा मेवविशंति परं पुरुष रूपं चिरात्सायुज्यं प्राप्नुवंतीत्यर्थः एते देवावा ऽकुंठधिष्ण्यं चतुर्विंशति प्राकृत संबंधा द्विमुक्ताः पुरुषं प्रकृति भर्त्तारं वाईयुः त्वामेवेति पुरुषांतरव्युदासः साधन भक्तापेक्षा या फलभक्ता हीना इत्याह तेषां श्रमः स्यादिति साधने भक्तेरप्रवेशात् ॥ ४६ ॥

एवं सर्वानुत्का तामस भेदा न्स्वान्मन्यमानाः आत्मनएव त्रिविधानाहुः तत्त्वयमिति तत्तस्मात्कारणा त्तेवयं त्वदीया स्तामसा तामसावालोकसिसृक्षया त्वयाद्य सृष्टाः त्रिभिरात्मभिरिति आत्मास्थाने स्थापितै स्त्रिभिर्गुणै रहंकारै र्वा त्रिविधिर्जीवै रित्येके अस्मिन्पक्षे प्रत्येकं भेदत्रयं अनु पश्चात्सृष्टाइति परोक्षेणसृष्टा ज्ञानरहिताः जाताः अथेति सृष्ट्यंतर व्युदासः अन्यदात्वे तस्माज्जायतेप्राणो मनः सर्वेंद्रियाणि च खं वायुर्ज्योतिरापः पृथिवीविश्व स्यधारिणीति भगवतएव साक्षात्सर्वंभवतीति तन्निवारणार्थं,मथेत्युच्यते अतएव त्रिभिरात्मभि रित्युक्तं अतः सर्वेवियुक्ता अकारादस्य सामग्र्यपि सर्वा भगवतास्त्रिविधासृष्टा आतोपि वयं वियुक्ताः अतएव स्वस्यतव विहारतंत्रं विहरणसामग्रीं न शक्नुमः तेतुभ्यं प्रतिहर्त्तवे प्रतिहर्त्तुं तुमर्थेसेनित्यामित्यनन तवेतिप्रत्ययः तत्प्रतिहर्त्तुं यदर्थं वयंसृष्टा स्तत्प्रयोजनं प्रतिहर्तुं दातुं समपर्यितुमितियावत् तत्किमित्याकांक्षायां तत्प्रसिद्धं स्वविहारतंत्रमितिलभ्यते तत्स्वविहारतंत्रं प्रतिहर्तुंन शक्नुमइत्यर्थःएतेयदर्थं भगवतासृष्टास्तेसर्वेदुरात्मानःस्वस्वाभिमानेननष्टाः भगवत्कार्यमकृत्वापि स्थिताइति ॥ ४७ ॥

एतादृशाः भक्ता स्तामसमध्यमाः भगवता भिन्नतया सृष्टाइति मध्यमत्वमन्यथा अधमाएवस्युः तादृशाअपिवयंजाता इत्याहुः याव द्वलिमिति हे अज ! यावत्तेवलिंहराम तावद्यथावयमन्नमदाम तथा त्वयाकर्त्तव्य मित्यभिप्रायः यावदिति प्रलयावसानता ननु सृष्टिमात्रं कालेस्वस्वावसरे यथावयं चान्नमदाम यत्रचान्नमदामयथाचोभयेषां तवास्माकं चइमेसृष्टालोकाः बलिंहरंति निष्प्रत्यूहाः संतः स्वयमन्नमदंति तथाचक्षुः परिदेहीत्यग्रेणसंबंधः अतएवैतेषांवैषम्यं केचन स्वार्थनिरपेक्षाः भगवदर्थमेवकार्यंकर्तुमिच्छंति केचित्स्वार्थापेक्षिणोपि भगवदर्थमेव कुर्वंतिकार्यंभगवानेवपश्चाद्दास्यतीति केचितु स्वस्यस्वसेवकानांच भगवतश्च कार्यंतुल्यतया कर्तुं वाच्छंति तएते ॥ ४८ ॥

ननु किमर्थमेवंप्रार्थ्यते प्रथमतोस्मदर्थंब्रह्माडंकुरुततपश्चात्स्वार्थमित्याशंक्याहुः त्वन्नः सुराणामिति नोस्माकं सुराणांदेवानां सान्वयानांसपरिकराणां त्वमेवाद्यउत्पादकः यद्यपि वयमपि स्वकार्योत्पादका स्तथापि वयंविकृताः भवांस्तुकूटस्थः अविकृत किंच पुरुषो

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

भवान्स्वतंत्रो वयंप्राकृताः अस्वतंत्राः किंच भवान्पुराणः पूर्वसर्व वृतांताभिज्ञः वयंनूतनाः आधुनिकाः अतस्त्वयैवास्माकं सर्वकर्त्तव्यं किंचपुत्ररूपावयंतवातस्त्वयाप्रथमतो वयंपालनीयाइत्याहुः हेदेव ! त्वंदेवरूपायांशक्त्यांमायायां गुणाः कर्माणि चयोनिर्यस्याः गुण कर्मात्मिकायोनिर्गुणरूपाः कर्मात्मकाश्च ततोजायंत इति तस्यामजायां कर्माद्युत्पादनार्थं रेतः आदधे अजाशब्दोऽत्रनयौगिकोनापिरूढः किंतु कल्पनोपदेशः कल्पनोपदेशाच्चमध्वादिवदविरोध इत्यधिकरणेनायमर्थः समर्थितः अन्यथात्रमायायाउत्पत्तेरुक्तत्वाद्योगो विरुध्येत रूढिरप्याकृत्यभावात् सृष्टौ कामः प्रधानमिति तन्निरूपणार्थं मजशब्दकल्पनात्रानिरूपिता कर्विमहत्तत्वंपूर्वावस्थारेतः उत्तरावस्थाकविरितिउभयोः साजात्याभावे कार्यमेकविधन्न भवेदिति भगवतोप्यजत्वंनिरूपितं अयमेवतामस हीनभावो भक्तेर्यद्भगवत एवंप्रकारेणनिरूपणम् ॥ ४९ ॥

तत्तत्सजातीया एववयमुत्पन्ना इत्याह ततोवयमिति सत्प्रमुखाः सात्विकाहंकारप्रमुखायस्य भगवतः कार्यार्थंवभूविम उत्पन्नाः तर्ह्यन्यानुत्पादयिष्यामीत्याशंक्याह हेआत्मन्निति सर्वेषांत्वमात्मा नहिकार्याणां स्वभावतः कश्चनगुणोदोषोवास्ति त्वत्त एवजातत्वात्त्वद्रूपत्वाच्चातोन्यानप्युत्पाद्य तेषु यदिशक्तिंदास्यति तदातेप्युपयुक्ता भविष्यंत्यतो लाघवादस्मभ्यमेव तत्सामर्थ्यं देयमितिभावः नन्वनाज्ञाकारिणो भवंतोयतः प्रवृत्ताएव तूष्णींस्थितातत्राह करवामकिंतद्यति तेतुभ्यंकिंकरवाम आज्ञापनाभावाद्विशेषतोऽज्ञानाद्वा तूष्णींस्थितिरितिवस्तुतोनदुष्टत्वं तर्हीदानीं ब्रह्मांडनिर्माणं कुरुतेत्याशंक्याहुःत्वन्नइति नोस्माकं त्वमेवसर्वार्थे अतस्तदर्थंसाधकंस्वचक्षुःपरिदेहिं येनचक्षुषावय निष्पादिताः तत्रक्रियाशक्तिरेवास्मसु प्रतिष्ठितान ज्ञानशक्तिरित्यतः स्वचक्षुः परिदेहि परितोदानंसर्वेभ्यः क्रियाशक्त्यासहपुनर्देयं विशेषकल्पिततयोभयप्राप्तावपिन कार्यसिद्धिरतः स्वशक्त्या सहस्वचक्षुर्देहीदि ननूभयदानंसहदानंचाशक्यं उभयोरेकदास्थित्यभावात् एकंशब्देऽपरं क्रियायामित्याशंक्याह हे देवेति यद्यपि लौकिकन्यायेन लौकिकेनत्रानैवंकर्त्तुंशक्यंतथापिचभवान्देवः अतोऽलौकिकसामर्थ्यात् मिलितमपिदातुंशक्नोतीति ननुनियमेनभवद्भ्यएवदेयमितिकोयंनिर्बंधस्तत्राहाक्रियार्थेयदनुग्रहाणामिति ब्रह्मांडकरणार्थमेवयस्यभगवतअनुग्रहोयेषां येनानुग्रहेण वयमुत्पादितास्तेनैवानुग्रहेणचक्षुः शक्त्यासहदेयमित्यर्थः ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे तृतायस्कधे

श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षित विरचितायां सुबोधिन्यां

पंचमोऽध्यायः ॥ ५ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ॥

भक्ता यथा साधनदशामारभ्यैव परमसुखिनस्तथा ज्ञानिनः साधनदशामारभ्यैव परमदुःखिन इति भक्तिज्ञानयोरेतावदेवान्तरमित्याहुर्द्वाभ्यां पानेनेति वैराग्यस्य सारो ब्रह्मसायुज्योपर्य्यपि बलं यस्मात्तथाभूतंबोधं प्रवृद्धं भक्त्युत्थं भगवन्माधुर्य्यानुभवं प्राप्य अकुण्ठ धिष्ण्यं वैकुण्ठलोकमिति स्वामिचरणाः ॥ ४५ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

आत्मनि समाधिर्मनःस्थैर्य्यं सएव योग उपायस्तस्य बलेन ज्ञानयोगत इत्यर्थः यद्वा अष्टांगयोगतः त्वां पुरुषं विशन्ति त्वयि सायुज्यं प्राप्नुवन्तीत्यर्थः किन्तु तेषां श्रमः स्यादिति तेषां भक्तिराहित्ये श्रेयःसृतिं भक्तिमुदस्य ते विभो क्लिश्यन्तीत्यादेः । पुरेह भूमन् बहवोऽपि योगिन इत्यादेश्च । भक्तिं विना वास्तवं ज्ञानमेव न स्यात् कुतोमुक्तिरिति ते परमदुःखिन एव यदुक्तं तेषामसौ क्लेशल एव शिष्यते नान्यद्यथा स्थूलतुषावघातिनामिति ज्ञानांगभक्तिसाहित्येतु सायुज्यं प्राप्नुवन्त्येव किन्तु साधनदशायां चित्तैकाग्र्यार्थमुपायान्वेषणानुष्ठानादिषु श्रमः स्पष्ट एव साध्यदशायां त्वद्वशीकारकारणं प्रेमाणं प्राप्नुवद्भिस्त्वद्भक्तैः परित्यक्तस्य त्वत् प्रवेशस्य ग्रहणमेव निष्कर्षः स च दुःखमेवेति भक्तानां मते तदापि ते दुःखिन एवेत्यर्थः ननु परिचर्य्यादिभिर्भक्तानामपि श्रमोऽनुमीयते तत्राहुः नतु सेवया त इति अत्र त एवानुभविनः प्रमाणं यथा श्रमिणोरपि स्त्रीपुरुषयोर्न श्रमः किन्तु श्रमाप्राप्त्यैव श्रमस्तथा त्वद्भक्तानां प्रत्युत सेवया दैवादप्राप्त्यैव मनो दुःखरूपो महाश्रमः स्यादिति भावः अत्र सेवया त्वां विशन्तीति न योजनीयं अन्वीयुरकुण्ठधिष्ण्यमिति पूर्वोक्तेन विरोधात् नच कुण्ठं धिष्ण्यं यस्य तं त्वां अन्वीयुरिति तत्रापि व्याख्येयं विशेषणस्यापुष्टार्थत्वात् ॥ अन्वीयुरिति अनुगत्यर्थकपदोपन्यासस्यापि वैयर्थ्यात् ॥ ४६ ॥

तव तस्मात् ते तवैव सेवका वयं सेवामप्राप्यैव क्लिश्याम इति भावः सेवाया अप्राप्तिं विवृण्वन्ति लोकानां सिसृक्षया त्वया अनुसृष्टाः क्रमेणोत्पादिताः स्वभिरात्मभिःसत्त्वादिस्वभावैरतएव विरुद्धस्वभावत्वात् मिथो वियुक्ताः सन्तः यदर्थं सृष्टास्तत् स्वविहारतन्त्रं त्वत्क्रीडोपकरणं समर्ष्टि ते तुभ्यं प्रतिहर्त्तवे प्रतिहर्त्तुं समर्पयितुं न शक्नुमः ॥ ४७ ॥

तर्हि किं युष्मद्वाञ्छितं करवाणि तद्ब्रूथेत्यत आहुः हे अज ! काले समुचितसमये बलिं पूजोपहारं यावत् साकल्येन ते हराम देवमनुष्यादिविविधपुरसंकुलसमष्टिव्यष्ट्यात्मकप्रापञ्चिक त्वत् क्रीडोपकरणवृन्दं निर्म्माय तुभ्यं यथा समर्पयाम यथाच वयं त्वन्मायाशक्ति वृत्तयोऽन्नमदाम राज्ञा आदिष्टा गृहनिर्म्मातारो वर्द्धकयोयथा वेतनरूपं स्वस्वोदरपूरमन्नं प्राप्नुयन्तीत्यर्थः यथाच इमेलोकादेवतिर्य्यगादयस्त्वज्जीवशक्तिवृत्तयस्तदधीनत्वात् त्वन्मायाशक्त्यधीनत्वाच्च । उभयेषां तव चास्माकञ्च बलिं हरन्तो विविधयानयोगज्ञानादिरूपमाराधनं कुर्व्वन्तोऽन्नमदन्ति स्वस्वकर्म्मफलं प्राप्नुवन्ति अनूहा अवितर्काः प्रभुरस्मभ्यं कर्म्मफलं दास्यति न दास्यति वेत्यभ्यूहशून्या इति एतदेवास्मद्वाञ्छितं सम्पादयेति भावः तथाच श्रुतिः ता एनमब्रुवन् आयतनं नः प्रजानीहि यस्मिन् प्रतिष्ठिता अन्नमदामेति ॥ ४८ ॥

सेव्यसेवकलक्षणं सम्बन्धमुपपादयन्ति नोऽस्माकं सान्वयानां अन्वेतीत्यन्वयः कारणं तत्सहितानां कूटस्थो निर्व्विकार एवाद्य श्चिन्तामणिरिव कारणं पुरुषोऽधिष्ठाता पुराणः पुरातनः आदिशून्य इत्यर्थः यतस्त्वं हे देव ! शक्त्यां मायायां गुणानां सत्त्वादीनां कर्म्ममहदादिकं यत्र तथाभूतायां योनौरेतः समष्टि जीवरूपं कार्यंधिष्ठं आदधे अतोऽस्माकं जीवानाञ्च पितृत्वात्त्वमेव सेव्य इति भावः ॥ ४९ ॥

मत्प्रमुखा महदाद्या वयं हे आत्मन् ! किंते करवाम सृष्टिमिति चेत् तत्राहुः तर्हि नोऽस्माकं त्वंस्वचक्षुः शक्त्यासह परिदेहि वैराज

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी

निर्म्मांणे ज्ञानं देहि शक्तिञ्च देहीत्यर्थः त्वदीयज्ञानक्रिया शक्तिभ्यामेव वयं सृष्टेत्त्वमा नान्यथा इति भावः हे देव! अस्माकं क्रियारूपेऽर्थे इयानेवानुग्रहस्त्वया कर्त्तुमुचितः येषु तेषां त्वदादिष्टां सेवामेव सुखेन करवामेत्येतावदेवास्मद्वाञ्छितं नान्यदिति भावः अत्रतत्वाधिष्ठातृदेवानां भक्तत्वात् स्वयमेव शरीरनिर्म्माणमीश्वरेण अन्येषान्तु तत्प्रार्थनैवेति सन्दर्भः ॥ ५० ॥

इति सारार्थ दर्शिन्यां हर्षिण्यां भक्त चेतसाम्
तृतीये पञ्चमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

भगवदीयाधन्याइत्याहुः पानेनेति अकुण्ठंधिष्ण्यंयस्य तं निरावरणलोकेष्वकुंठं निरावरकत्वात् ॥ ४५ ॥

क्षेत्रज्ञोपासकास्तुपरमानंदंविनासेवयानैवविशंति किंतुपुरुषंदेहस्थंजीवात्मानंविशंत्यतस्तेषांश्रमएवस्यातपरमानंदलाभाभावात् ॥ ४६ ॥

तदेवंस्तेषांभगवदीयभगवत्पराङ्मुखानामकृतार्थत्वं भगवदीयानांकृतार्थत्वंच निरूप्याथप्रार्थयंते तदितिचतुर्भिः हे आद्य!सर्वकारण ! तेत्वदीयावयम् लोकान्सृष्टुमिच्छयात्वया यतः त्रिभिः सत्वादिभिः आत्मभिः जीवात्मावरणहेतुभूतैः गुणावृताः जीवाः गुणमयंदेहादिकमात्मानं मन्यंतेतदृष्ट्यात्मशब्देनगुणाग्रह्यंते अनुसृष्टाः अनुक्रमेणोत्पादिताः तत्ततोहेतोःविषमत्त्वात्सर्वेवियुक्ताः संतः यदर्थे सृष्टाः तत्स्वविहारतंत्रेत्वक्रीडोपकरणं ब्रह्मांडंतेतुभ्यंप्रतिहर्त्तवेसंपाद्यप्रत्यर्पयितुंनशक्नुमः अतस्त्वंनः स्वचक्षुःपरिदेहीतित्रयाणांचतुर्थेनान्वयः ॥ ४७ ॥

उभयेषांभवतोऽस्माकंच अनूहाः ऊहातर्कस्तद्रहिताः ॥ ४८ ॥

मान्वयानांसकार्याणाम् आद्यः कारणंकूटस्थः निर्विकारस्वरूपः अनुक्थंकारणस्यानिर्विकारस्वरूपत्वमित्यतआह स्वशक्त्यामजायांप्रकृतौगुणानांसत्वादीनां कर्मणांजन्मादीनां योनौआश्रयभूतायाम्रेतः सृष्टिसामर्थ्यंमादधेनिहितवान् कर्विजीवात्मानमनादिवद्धंचादधेसृष्ट्युन्मुखायांमायायांजीवमपिसृष्ट्युन्मुखंकृतवानित्यर्थः ॥४९॥

यतएवंभूतस्त्वंततोहेतोः हेआत्मन् ! यदनुग्रहाणाम् यस्यभवतएव अनुग्रहोयेषांतेषांनोस्माकंयदर्थेसत्प्रमुखाः महदादयोवयंवभूविमजातातस्याः क्रियायाः सृष्टेः अर्थेस्वचक्षुः स्वसृष्टिविवेचकंशक्त्यासाम्र्थ्येनसहपरिदेहि अन्यद्दातेकिंकरवामतदाज्ञापयेतिशेषः ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
सिद्धान्तप्रदीप टीकायां
पञ्चमोऽध्यायः ॥ ५ ॥

---

भाषाटीका ॥

हे देव आपके कथा अमृत के पान करके बढने वारी भक्ति सें निर्मलांतः करण वारे भक्तजन वैराग्य वलवारे ज्ञान कों प्राप्त होय अनायास से जैसें वैकुंठ को प्राप्त होवै हैं॥ तैसें केवल ज्ञानी योग भी समाधि योग बलसे वलवती प्रकृति को जीत के आप कोंही प्राप्त होवै हैं पर इतनोंही तारतम्य है कि ज्ञानियों को जो पद परिश्रम से मिले हैं सो आपकी सेवा; वारे न कों विना परिश्रम से मिले हैं ॥ ४५ ॥ ४६ ॥

तासों हे आदि मे रहने वाले ! प्रभो ! आपने लोक सृष्टि के लिये तीन गुणो से हमको वनाये हैं हम सव मिलके आपकी क्रीडा के उप कारण, ब्रह्माड, को वनाकर आप को समर्पण करने को समर्थ नही है ॥ ४७ ॥

हे अज जैसे हम आप को समय पर समग्र वलि पूजा समर्पण करे, और जसे हम भी आप के पीछे अपने भोग पावैं, तथा जैसें ये प्रजा लोग आप को और हमको वलि भेट देकर सुख से भोजन करें सो उपाय आप के आधीन है ॥ ४८ ॥

हेदेव ! आप हमारे देवन के कारण सहितन के भी कारण हौ क्योंकि आप विकार रहित हौ और पुरातन होकर अधिष्ठाता हौ और गुण कर्म को उत्पन्न करने वाली माया में अपने संकल्प से महत्तत्त्व रूप वीर्य को आपने धारण किया है ॥ ४९ ॥

हेदेव ! महत्तत्त्व प्रभृति हम सव जिस कार्य को उतपन्न भये सो आप के कार्य को असमर्थ होने से कैसे करें तासों सृष्टि के निमित्त आप शक्ति सहित अपने ज्ञान को दीजिये हम आप के अनुग्रह के पात्र हैं ॥ ५० ॥

भागवत तृतीय स्कंधमें पाचमे अध्यायकी भाषाटीका समाप्तभई
श्री रूक्मिणी रमणोजयति

## इति श्रीमद्भागवतमहापुराणे तृतीयस्कंधे पञ्चमोऽध्यायः ।

## षष्ठो ऽध्यायः ।

——०:०:०——

### ऋषिरुवाच ॥

इति तासां स्वशक्तीनां सतीनामसमेत्य सः ।
प्रसुप्तलोकतन्त्राणां निशम्य गतिमीश्वरः ॥ १ ॥
कालसंज्ञां तदा देवीं बिभ्रच्छक्तिमुरुक्रमः ।
त्रयोविंशतितत्त्वानां गणं युगपदाविशत् ॥ २ ॥
सोऽनुप्रविष्टोभगवांश्चेष्टारूपेण तं गणम् ।
भिन्नं संयोजयामास सुप्तं कर्म प्रबोधयन् ॥ ३ ॥
प्रबुद्धकर्मादैवेन त्रयोविंशतिकोगणः ।
प्रेरितोऽजनयत्स्वाभिर्मात्राभिरधिपूरुषम् ॥ ४ ॥

#### श्रीधरस्वामिकृत भावार्थदीपिका ॥

षष्ठेतैरीश्वराविष्टैःसृष्टिमाहविराट्तनोः ।
अधिदैवादिभेदंचतत्रैवभगवत्कृतम् ॥ १ ॥

स्वशक्तीनांमहदादीनामसमेत्यामिलित्वासतीनांस्थितानाम् प्रसुप्तलोकतंत्रंविश्वरचनायासाम् यद्वा प्रसुप्तजीवोपकरणानांगतिंस्थितिं दृष्ट्वाअविशदित्युत्तरेणान्वयः ॥ १ ॥

कालेनसंज्ञाउद्बोधोयस्याःकालयतिक्षोभयतिस्वकार्यार्थमितिवाकालसंज्ञाप्रकृतिस्तांशक्तिम् प्रकृत्यासहप्रवेशात्त्रयोविंशतितत्त्वानामित्युक्तम् अंतर्यामित्वयाप्राविशत् ॥ २ ॥

चेष्टारूपेणाक्रियाशक्त्या कर्मतेषांक्रियांजीवानामदृष्टंवा ॥ ३ ॥

प्रबुद्धं कर्मक्रियाशक्तिर्यस्यसत्रयोविंशतेर्गणः दैवेनेश्वरेणप्रेरितः मात्राभिरंशैः अधिपुरुषंविराड्देहम् ॥ ४ ॥

———

#### श्रीराधारमणदासगोस्वामि विरचिता दीपिन्याख्यादीपिकाटिप्पणी ।

तैर्महदादिभिः कर्तृभिः तत्रैव विराज्येव इतीति युग्मकम् ॥ प्रसुप्तमनुद्बुद्धं विश्वरचना विश्वविषयिणीतिकर्त्तव्यतेति चैतन्य प्राधान्येन व्याख्यातम् उपाधि प्राधान्य विवक्षयाव्याचष्टे यद्वेति ॥ अस्वरस्तु पूर्वेऽर्थे प्रसुप्तशब्दस्य मुख्यार्थो विश्वरचनालक्षणक्रियायांन सम्भवतीति लक्षणागौरवमेवेति प्रसुप्तजीवोपकरणानां प्रसुप्तानां प्रलयेलीनानां जीवानां भोगपरिच्छदरूपाणां तस्तदुभयार्थवाचकत्वं यथा विश्वप्रकाशे "तंत्रंकुटुम्बकृत्येचकारणेचपरिच्छदेइति कर्त्तव्यतायाञ्च" इति ॥ १ ॥

प्रकृत्या व्यापिकयासह ॥ २ ॥

क्रियाशक्त्या नियमनशक्त्या तेषांमहदादीनां क्रियामितिकर्त्तव्यताम् ॥ ३ ॥

#### श्रीराधारमणदासगोस्वामि विरचिता दीपिन्याख्यादीपिकाटिप्पणी

अंशैरिति अंशरूपेण परिणामो नसर्वात्मनेतिउपाधिप्राधान्यपक्षोऽपिमूलाद्गृहीतइतिज्ञेयम् ॥ विराड्देहं ब्रह्माण्डस्थम् ॥ ४ ॥

———

#### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचंद्रिका ।

एवं निवेदित हार्दानांतत्त्वानामंतः प्रवेशनाहितसृष्टिसामर्थ्यानां ब्रह्मांडसृष्टिःतत्रसमष्टिपुरुषचतुर्मुखोत्पत्तिस्ततसमष्टींद्रियादिभ्यो व्यष्टींद्रियोत्पत्तिश्चकथ्यतेषष्ठेनाध्यायेन तत्र तावदसंहतानां परमात्मानुप्रवेशेन सृष्टिसामर्थ्यमाह इतीति त्रिभिः ईश्वरो भगवान् इतिउक्तरीत्यासमेत्यमिलित्वा सतीनांवर्त्तमानानांस्वशक्तीनां यस्यपृथिवीशरीरंयस्यात्माशरीरंयस्यचक्षुः शरीरम्इत्यादिप्रकारेणशरीरभूतानाम् प्रसुप्तमनुद्बुद्धंलोकतंत्रंलोकरचनासामर्थ्यंयासां तासां समष्टि चेतन प्रमुख महदादि तत्त्वानां गतिं स्थितिं निशाम्य दृष्ट्वा गणमाविशदित्युत्तरेणान्वयः ॥ १ ॥

कालसंज्ञामिति ततो निशामनानंतरं कालसंज्ञां कालाख्यां देवीं देवस्य स्वस्य संबंधिनीं शक्तिमपृथक्सिद्धविशेषणभूतां रूपांतरमित्यर्थः बिभ्रदंतः प्रविश्य प्रशासनेन धारयन्त्रयोविंशतितत्त्वानां महदहंकारपंचभूत पंचतन्मात्रैकादशेंद्रियरूपाणांतत्त्वानांगणंसमूहम् उरुक्रमो विस्तृतपादन्यासः त्रिविक्रमो भगवान्युगपदेकदा आविशदनुप्रविष्टोऽभूत् ॥ २ ॥

स इति सभगवांश्चेष्टारूपेण प्रेरणात्मकचेष्टोपलक्षितः भिन्नमसंहतं तंगणं त्रयोविंशति तत्त्वगणं संयोजयामासे त्युक्तम् चकारात् भूतानां पंची करण मिन्द्रियाणां भूतैराप्यायनं चोक्तंभवति कथंभूतः सुप्तंकर्म तद्व्यापारं प्रबोधयन्नुद्बोधयन् ॥ ३ ॥

आहितसामर्थ्यस्य तत्त्वगणस्य ब्रह्मांडोत्पत्तिद्वारा चतुर्मुख शरीरारंभकत्वंसंग्रहेणाहैकेनप्रबुद्धकर्मेति दैवेनभगवत्संकल्पेन— प्रबुद्धमुद्बुद्धंकर्म स्वव्यापारो यस्य स त्रयोविंशति तत्त्वात्मको

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ॥

गणाः प्रेरितः दैवेनेत्यनुषंगः स्वाभिर्मात्राभिरंशैराधिपूरुषं ब्रह्माण्डमजनयत् असृजत् ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली

अस्मिन्नध्याये "तदनन्यत्वमारंभणशब्दादिभ्य।१५इत्यधिकरणार्थः प्रपंच्यतइत्यभिप्रेत्यादौहरेस्तत्त्वेषुप्रवेशंवक्ति इतीति उरुक्रमस्त्रयोविंशतितत्त्वानांगणंयुगपदाविशदित्यन्वयःआकाशादिपंचभूतानिशब्दादिपंचतन्मात्राः श्रोत्रादिदशेन्द्रियाणि मनोमहदहंकारइतित्रयोविंशतितत्त्वानि तदुक्तं "शब्दाद्यानभआद्याश्चमनोयुक्तेन्द्रियाणिच।अहंकारोमहांश्चैवत्रयोविंशतिकोगण" इति देवतेन्द्रियाणामेकत्वविवक्षया पृथङ्नोक्तेदेवतेन्द्रिययोरैक्यान्नपृथग्गणनंतयोरिति प्रकृतिश्चतुर्विंशा तत्प्रवेशस्य पूर्वंसिद्धत्वान्नोक्ताहरिरविशदितिपंचविंशत्वेनसूचितः अत्रापियदाजडांशस्वीकारस्तदाजीवःपंचविंशकः विष्णुःश्रियासह षड्विंशकःसप्तविंशकोवा "यदाजडांशस्वीकारोजीवस्तत्पंचविंशकः, इत्यादेरिदंसर्वमुरुक्रमपदेनसूचितं प्रवेशकारणमाहइतीतिसमेत्या सतीनामसमेतानांविश्लिष्टानांस्वशक्तीनांशक्यत्वात्स्वाधीनत्वाच्छक्तिशब्दवाच्यानांप्रसुप्तलोकतंत्राणामनभिभूतलोकसृष्टिशक्तीनां प्रलीनलोकसृष्ट्युपकरणानांवा 'तनुतेयेनकार्यंतत्तंत्रंसाधनमुच्यते कारणानांस्वशक्तिर्वाप्रधानंसाधनंयत,इति तासामित्युक्तप्रकारांगिरंनिशम्य "शक्यत्वाच्छक्तयोविष्णोर्महदाद्यारमातथा,, इतिवचनात् शक्तिशब्दवाच्यत्वंमहदादीनांयुक्तं प्रवेशोऽपिरमयासहेतिभावेनाह- कालसंज्ञामिति यदाप्रवेष्टुमैच्छत्तदा "त्रयोविंशतितत्त्वानिप्राविशद्रमयासह । कालाख्ययाख्ययंविष्णुःशक्यत्वाच्छक्तिरूपया,,इतिवाक्यं मानंतत्प्रकाराग्रहप्रवेशन्नत्वयंप्रवेशः किंतुस्वातंत्र्येणेतिद्योतनायेश्वरइति ॥ १ ॥ २ ॥

निलयंनिलीनइवकिमयंतूष्णीमास्तेकिंचित्कर्माकार्षीदितितत्राह सोऽनुप्रविष्टइति "सर्वचेष्टकरूपेणस्वसामर्थ्येनकेशवः।तानिभिन्नानितत्त्वानियोजयामासचांशत"इति अनेनचास्यार्थोदर्शितः भिन्नंविश्लिष्टं प्रलयेसुप्तंकर्मप्रतिबुद्धशक्तिकंसृष्टिनिमित्तमदृष्टंप्रबोधयन्नकार्योन्मुखंकुर्वन् यद्यपीश्वरः स्वमनसैवांडस्रष्टुंशक्तः तथापिकर्त्रोपुरुषेस्वस्योपकरणेनभाव्यमितिदर्शयितुंसंश्लिष्टोगणः ॥ ३ ॥

किंकार्यंचकारेतितत्राह प्रबुद्धकर्मेति प्रबुद्धमुन्मुखीकृतंकर्मादृष्टं यस्यसः प्रबुद्धकर्मादैवेन हरिणाप्रविश्यप्रेरितः । त्रयोविंशतिकोगणः स्वाभिर्मात्राभिरंशैः पुरुषस्यब्रह्मणः शरीरत्वात्पुरुषशब्दवाच्यंब्रह्मांडमजनयदित्यन्वयः अधिपुरुषमितिपाठेऽधिगतः पुरुषसूक्तवाच्योयस्मिंस्तत्तथेत्यर्थः "ईश्वरोदैवमुद्दिष्टंसर्वस्यापिप्रभुत्वत,,इत्यतः पूर्वोक्तेश्वरोदैवशब्देनगृह्यते ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ॥

कालयति सर्वं मेलयतीति कालः । कालं वृत्तिविशेषः । काल एव संज्ञा यस्यास्ताम् । त्रयोविंशतितत्त्वानामिति । महदादीनामेव परस्परमेलनात् प्रकृतेस्तु सर्वानुगतेः ॥ १ ॥ २ ॥

चेष्टारूपेण पूर्वोक्तेन कालाख्येनैव कारणभूतेन । योऽयं कालस्तस्य तेऽव्यक्तबन्धो चेष्टामाहुरित्युक्तः ॥ ३ ॥

अधिपूरुषं ब्रह्माण्डरूपम् काहं तमोमहदहंखचराग्निवार्भूरित्यायुक्तेः ॥ ४ ॥ ५ ॥

---

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

"एवं भगवतःसृष्टौ भूतोत्पत्तिर्निरूपिता ॥ कालोत्पत्त्यर्थमधुना ब्रह्मांडोत्पत्तिरुच्यते॥१॥स्वशक्तिदानभोगौतु विषयत्वार्थमुच्यते॥विषयाणांप्रसिद्धौहि माहात्म्यं विनिरूप्यते॥२॥एव भगवतो मात्राश्चतुर्विनिरूपिता:॥स्पर्शोभगवतोनास्तितद्भावादंहवर्ण्यते:॥३॥एवंपूर्वाध्यायांते तत्त्वानांप्रार्थनमुक्तम् ॥ तत्प्रार्थनमुपसंहरति इतीति एतावत्येवप्रार्थना तासांगतिनिरीक्ष्यनिशम्य शक्ति विभुर्युगपदाविशदिति संबंधः तासुभगवत्प्रवेशानयुक्त इत्याशंक्याह स्वशक्तीनामिति स्वीत्वेनतासांविज्ञापनंनदोषाय स्वस्यैव सामर्थ्यरूपत्वात्तासांकुलभावेस्वसामर्थ्याभावएवभवेत् स्त्रीरूपाश्चता भार्याशक्ति स्वयमेवकरोति कारयतिच शक्तित्वादेवाभिन्नतयास्थितिर्नदोषाय नहितावाक्ये न मिलंतिस्त्रैगैवतुमिलंति पुरुषलिंगितापवतापएकीभवंति नस्वभावतः समान प्रतिपत्तेर्नैवमगत्यमतएवस्वभावतः असमेत्यमिलित्वासती नांविद्यमानानां किंच स्वप्रवेशव्यतिरेकेणतासुविद्यमानमपिरंजोनप्रकटंभवतितदाहप्रसुप्तलोकतंत्राणामिति प्रकर्षेणसुप्तानिलोकानां तंत्राणिरचनायासु तंत्रेसमूहेप्रसुप्तावा येलोकाः येषांजीवानांकर्मनप्रवृद्धं तदधीनास्ताः प्रायश्चदृष्टप्रेरितापवताः कार्याणिकुर्वंति समष्टेगृहत्वेनव्यष्टीनांमेवमुख्यत्वमितिपक्षःद्वयमप्युपपन्नंभगवतः पुरुषरूपद्वयसंपत्यर्थेनिरूप्यते तदुक्तं असमेत्यसतीनांप्रसुप्तलोकतंत्राणामिति तासामन्योऽन्यमेलने ब्रह्मांडोत्पत्तिः कर्मप्रबोधेऽदृष्टानामुत्पत्तिः एतत्सर्वंनिशम्य ज्ञात्वा अग्रेप्रकारभूतांचगतिनिशम्य सर्वप्रकारकरणसामर्थ्यार्थमाह ईश्वरइति ॥ १ ॥

एवंसमर्थंनिक्षिप्य यत्कृतवांस्तदाह कालसंज्ञामिति कालइतिसंज्ञायस्याः काल एकभगवच्छक्तिः अन्यथापुरुषद्वयप्रवेशे शक्तिपुरसामासः स्यात्कालेनसंज्ञाबोधोयस्याः सा तां वा मर्यादारूपा भगवच्छक्तिःसृष्टिकालेप्रबुध्यते अन्यास्तुभगवताप्रबोध्यंते तयासह भगवद्देवेन तासांमास्वयं मामवस्थिति देवीमित्युक्तं साहिदेवतारूपा अतिसूक्ष्मा तयाविना कर्मप्रबोधोदुर्घटः कर्मकालाधीनमेवातःकालेकर्मविधानं तस्याश्चप्रयोजकत्वं निराकरोति शक्तिमिति विभुरदितिप्रवेशद्वयरूपावृत्त्यर्थमुक्त तत्रभगवतोऽतिसामर्थ्यंवक्तुं तादृशसामर्थ्ये भगवतांवक्तं तदिति ज्ञापयति उरुक्रमइति अद्भुतंचरित्रत्वमुरुक्रमेऽभिप्रेतंतेनैवाद्भुतचरित्रेण त्रयोविंशतितत्त्वानां गणंयुगपदाविशत् प्रकृतिंपुरुषौपरित्यज्य शिष्टांस्त्रयोविंशतिः भवंतियुगपत्प्रवेशात्तच्चरितं तप्तयाः संधिरिव नैकतरप्रवेशेकार्यसिद्धिः गणप्रवेशोगणादेवकार्यमितिसूचयितुम् अत्रप्रवेशो नजलादेरिवकिंतुतेजसइवायागोलकादावावेशो यथागणकार्यंभगवत्कार्यंभवति अन्यथाभगवच्चरितास्यसर्गस्य नस्यात्तदाह अविशदिति ॥ २ ॥

ततः किमतआह सोऽनुप्रविष्टइति यद्यपिताभिः क्रियायाःसह ज्ञानमेवप्रार्थितं नसहस्वप्रवेशस्तथापि भगवतैवकार्ये नताभिः सेत्स्यतीति भगवान्स्वयमेवप्रविष्टः अतः परंप्रार्थितस्य प्रयोजनाभावान्न प्रार्थितंदत्तम् ननुस्वभावतएव सर्ववस्तुषु वस्करूपोभगवानस्ति तथापिचेत्कार्यंनसिध्यति किंप्रवेशे नाविभवेत्तत्राह चेष्टारूपेणेति चेष्टाप्रयत्नः कार्योपयोगिज्ञानेच्छाप्रयत्नरूपेण केवलप्रयत्नरूपेण वा तत्रप्रविष्टः प्रविश्यपुनस्तंगणंभिन्नंसंयोजयामास सृष्ट्यर्थं कार्यजननसमर्थास्तेसृष्टाः परंभिन्नाइति योजनमेवकर्त्तव्यंसम्यग्योजनं यथाकार्यमुपपद्यत संगेनीतायाः शक्तेः प्रयोजनमाह सुप्तंकर्म प्रत्येश्वयान्निति प्राणिनांयत्सुप्तंकर्मतत्कालशक्त्याप्रबोधयन् प्रबो

परेण विशता स्वस्मिन्मात्रया विश्वसृग्गणाः ॥
चुक्षोभान्योऽन्यमासाद्य यस्मिँल्लोकाश्चराचराः ॥ ५ ॥
हिरण्मयः सपुरुषः सहस्रपरिवत्सरान् ॥
आण्डकोश उवासाप्सु सर्वसत्त्वोपबृंहितः ॥ ६ ॥
सवै विश्वसृजां गर्भोदेवकर्मात्मशक्तिमान् ॥
विबभाजात्मनात्मानमेकधा दशधा त्रिधा ७
एष ह्यशेषसत्त्वानामात्मांशः परमात्मनः ॥
आद्योऽवतारोयत्रासौभूतग्रामो विभाव्यते ॥ ८ ॥

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

धनप्रवेशयोःसमानकालत्वे उभयाविधंकार्यमेकदासिध्यति प्रबोधन-स्यभिन्नहेतुकत्वान्नप्रधानक्रियासंबंधः ॥ ३ ॥

ततोयज्ज्ञातं तदाह प्रबुद्धकर्मादैवेनेति सुप्तैःसहकारणमप्यशक्यं प्रबुद्धेसाहाय्यमपि तेनसिध्यतिदैवेनेति देवतारूपयाशक्तयाक्रिया-प्रबोधस्वार्थंभवेदिति नपुंसकानिर्देशः तयासहितंभगवद्रूपंवा दैवश-ब्देनोच्यते सर्वत्रकर्मप्रबोधार्थं पुनस्त्रयोविंशतिकोगण इत्युक्तं पुन-र्भगवत्कार्यांतरमाह प्रेरितइति मेलनं प्रेरणांचभगवत्कार्यं भगवत्प्रवे शात्तस्यगणस्यव्यापकताजाता ततोगणांशैरल्पैरेवब्रह्मांडनिर्माणं-जातमित्याह स्वाभिमात्राभिरिति अधिपूरुषंब्रह्मांडपुरुषमाधि—पूरुषशरीरत्वात्पुरुषशब्दोऽप्यस्ति पुरुषादप्यधिकंवा आवरणानाम पि अननाद्भगवत्प्रेरणया गणानकृतत्वाद्भगवत्कृतमेव ॥ ४ ॥

———

विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

षष्ठे विराड्भूत्तत्त्वैरन्तर्यामिप्रवेशतः ।
अधिभूतादिभेदश्च तस्य देहे प्रपञ्चितः ॥ ० ॥

स्वशक्तिकार्यत्वात् स्वशक्तीनां महदादीनां असमेत्य आमिलि-त्वा सतीनां स्थितानां प्रसुप्तं लोकतन्त्रं विश्वनिर्माणक्रिया यासां तासां गतिं दशां दृष्ट्वा ॥ १ ॥

कालेनैव संज्ञा महदाद्याः विविधा यस्याः साकालसंज्ञा प्रकृतिः तां बिभ्रत् सन् आविशत् प्रथमं संहननकारिण्या शक्त्यैव ततो वर्षसहस्रान्ते अन्तर्यामितयेत्यर्थः। प्रकृत्या सह प्रवेशात्त्रयोविंशतीं-त्युक्तं महदहंकारौ पञ्चतन्मात्राणि पञ्चमहाभूतानि एकादशेन्द्रिया णीति त्रयोविंशतिः यदुक्तं। "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृति विकृतयः सप्त। षोडशकस्तु विकारो न प्रकृतिर्नविकृतिःपुरुष„इति "तत्सृष्ट्वा तदेवानुप्राविशत्„ इति श्रुतेः ॥ २ ॥

चेष्टारूपेण क्रियाशक्त्या कर्म तेषां क्रियां जीवानामदृष्टं वा ॥३॥

प्रबुद्धं कर्म क्रियाशक्तिर्यस्य सः। देवेनेश्वरेण। मात्राभिरंशैः अधिपूरुषं विराड् देहम् ॥ ४ ॥

———

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

इत्थंकृतप्रार्थनेषु भगवत्प्रवेशं भगवदाविष्टेभ्यस्तत्त्वेभ्यो ब्रह्मांडो त्पत्तिं तत्रभगवत्कृतमधिभूतादिभेदंचाह षष्ठेनाध्यायेन प्रसुप्तलोक तंत्राणाम प्रबुद्धलोकरचनासामर्थ्यानामित्येवम् असमेत्यआमिलित्वा सतीनां वर्त्तमानानांस्वशक्तीनां महदादीनांगतिंस्थितिं निशाम्य

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

दृष्ट्वाकालेन संज्ञाउद्बोधो यस्याःस्तांप्रकृतिदेवींबिभ्रत् तयासह त्रयोविंशतितत्वानां महदहंकारपंचभूतपंचतन्मात्रैकादशेंद्रियाणां-गणंसमूहमाविशदिति द्वयोरन्वयः ॥ १ ॥ २ ॥

सुप्तमप्रबुद्धं कर्मलोकरचनाव्यापारम् प्रबोधयन् चेष्टारूपेणप्र-बोधनसंयोजनादि चेष्टारूपेणोपलक्षितः सभगवान् भिन्नंगणंसंयो-जयामास ॥ ३ ॥

प्रबुद्धकर्मा प्रबुद्धव्यापारः दैवेनभगवतः मात्राभिरंशैः अधि-पूरुषं सावरणंविराड्देहम् ॥ ४ ॥

———

भाषाटीका

शुकदेव जी बोले इस पूर्वोक्त प्रकार से संयुक्त न होने से अ-पनी उन शक्तियों की गति को भगवान ने देखा कि उन शक्तियों मे लोकों के सब कार्य लीन हो रहे थे ॥ १ ॥

तब तो अति पराक्रम वाले ईश्वर ने काल नामवाली दिव्य अ-पनी शक्ति को धारण कर के तेईस तत्वों के गण मे एक साथ प्रवेश किया ॥ २ ॥

सो भगवान् चेष्टा करने वाले रूप से उस तत्त्वों के समूह में प्रवेश होकर उस समूह की छिपी हुई शक्ति को प्रकट करने के वास्ते पृथक् भूत उस समूह को संयुक्त किये ॥ ३ ॥

ईश्वर के प्रेरणा से प्रगट हुई हैं शक्ति जिसकी ऐसा जो तेवीस-तत्त्वों का समूह सोई अपनी सूक्ष्म मात्राओं से ब्रह्मा को उत्प-न्न करता हुआ ॥ ४ ॥

———

श्रीधरस्वामिकृत भावार्थदीपिका ।

जननेमवाऽऽहपरेणेश्वरेणविश्वसृजांतत्त्वानांगणः मात्रयाक्षुब्धो भपरिणतोनसर्वात्मना यस्मिँल्लोकाःस्थिताः ॥ ५ ॥

सपुरुषोऽधिपुरुषइत्युक्तः आंडकोशेब्रह्मांडमध्ये सर्वैःसत्त्वैरनु शायिभिर्जीवःसहितः ॥ ६ ॥

गर्भःकार्यरूपोविराड्देवशक्तिर्ज्ञानशक्तिस्तत्रैकधात्हृदयावच्छिन्न

श्रीधरस्वामिकृत भावार्थदीपिका ॥

चैतन्यरूपेण कर्मशक्तिःक्रियाशक्तिस्तयादशधाप्राणरूपेण प्राणा दयःपंच 'नागःकूर्मश्चकृकलोदेवदत्तोधनंजय'इत्यतेपंचवैवृत्तिभेदेनद शविधःप्राणः आत्मशक्तिर्भोक्तृशक्तस्तयाऽध्यात्मादिभेदेनत्रिधाऽऽत्मानंविभक्तंकृतवान् ॥ ७ ॥

एवंविभागसामर्थ्यायतस्योत्कर्षमाह एषहीतिअशेषसत्त्वानांप्राणिनामात्माव्यष्टीनांतस्यांशत्वात्अंशोजीवःअवतारत्वोक्तिस्तस्मिन्नवतारणविमांवाभिप्रायेण ॥ ८ ॥

---

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्यादीपिकाटिप्पणी

यस्मिन् गणेब्रह्मांडरूपेणपरिणतेसति स्थितास्तदा श्रिताः॥५॥

सपुरुषः समष्टिपुरुषोपाधित्वात्पुरुषशब्दवाच्योविराड्देहः अनुशायिभिःस्वस्वोपाधिविशिष्टैर्व्यष्टिजीवैः ॥ ६ ॥

विराड्नदभिमानित्वात्तदभिन्नस्समष्टिजीवः हृदयावच्छिन्नचैतन्यरूपेण शुद्धक्षेत्रज्ञरूपेण भोक्तृशक्तिरहङ्कारोपहितचिदाभासः ॥ ७ ॥

तस्यसमष्टिजीवस्यआत्माऽऽश्रयः वृक्षाणांवनवत् तदंशत्वाद्स्मदंशत्वात् तस्मिन्समष्टिरूपेजीवे ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचंद्रचंद्रिका ।

कथमजनयोदत्यपेक्षायां तदेव विवृणोति पेणेति मात्रयांशभूतसंकल्परूपज्ञानेन स्वस्मिन् विशताऽनुप्रविष्टेन परेण भगवतो पलक्षितः हेतौ वा तृतीया विश्वसृड्गणः विश्वंसृजतीति विश्वसृड्गणः त्रयोविंशतितत्त्वजातं यस्मिन् गणे चराचराः स्थावरजंगमा लोकाः कार्यत्वेनावस्थिताः एवंभूतोगणः अन्योऽन्यं परस्परमासाद्य संहत्य चुक्षोभ परिणतोऽभूत्समष्टिपुरुष गर्भ ब्रह्मांडरूपेण परिणतोऽभूदित्यर्थः ॥ ५ ॥

हिरण्मयइतिस्यंडकोशविशेषणं सपुरुषः समष्टिपुरुषसहितः यद्वा अप्सु वर्त्तमानेऽस्मिन्कोशे हिरण्मयः स्वर्णमयांडकोशावृतत्वाद्धिरण्मयः स प्रसिद्धः समष्टिपुरुषश्चतुर्मुखः देवादि सर्वसत्त्वैरुपबृंहितः युक्तः सहस्रपरिवत्सरान्यावदंडस्य परिपाकस्तावदुवास उषितवानित्यर्थः अत्राप्सु उवासेत्यनेनांडकोशोत्पत्तेः पूर्वमपां स्थित्यवगमात् उदाप्लुतं विश्वमिदंतदासीदिति वक्ष्यमाणत्वाच्चावरणजलसृष्टिरंडोत्पत्तेः पूर्वमवगंतव्यासर्वसत्त्वोपबृंहित इत्यनेनचतुर्मुखस्य समष्टिपुरुषत्वमावेदितम् एतेनावरणजलेशयानस्य भगवतोनाभ्याः प्रसूतत्वारब्धपद्मकोशरूपब्रह्मांडोत्पत्तिरर्थसिद्धावेदितव्या सपद्मकोशः सहसोदतिष्ठदिति वक्ष्यमाणैकार्थ्यात् एवं तत्त्वानांसमष्टि पुरुषशरीरारंभ कत्वमुक्तं समष्टिपुरुषत्वं नामभूतसंघातारब्धस्वसंश्लिष्टजीवसंघातमनःप्राणेंद्रियात्मक शरीरवत्त्वं नचपुत्रादिशरीरारंभक शरीरवत्त्वात्पित्रादीनांसमष्टि पुरुषत्वशंकाकार्या "पंचम्यामाहुतावापः पुरुषवचसोभवंति, तदंतरप्रतिपत्तौरंहतिसंपरिष्वक्तःप्रश्नानरूपणाभ्याम्॥३॥१॥शरीरंयदवाप्नोतियच्चाप्युत्क्रामतीश्वरः गृहीत्वैतानिसंयातिवायुर्गंधानिवाशयादित्यादिश्रुतिसूत्रस्मृत्यादिप्रामाण्येन मनआदींद्रिय विश्लेषाभावेन पित्रादिशरीराणांतदारंभकत्वाभावात् तदिंद्रियाधिष्ठानमात्रत्वात् ॥ ६ ॥

एवं समष्टिपुरुषोत्पत्ति मभिधायाथास्मात्समष्टि पुरुषशरीरा-

श्रीमद्वीरराघवाचार्यां कृत चंद्रचंद्रिका ॥

व्यष्टि शरीरेन्द्रियाणा मुत्पत्तिवक्ष्यंस्तावदस्य समष्टिपुरुषत्वंत्रकरणभोक्तृविषयरूपेण त्रिधाविभागंकरणांशे एकादशधाविभागं स्वकर्तृकमाह स इति विश्वसृजांमहदादीनांगर्भः अपत्यरूपःदैवं भगवत्संकल्पः कर्मात्मशक्तिः कर्मरूपा आत्मनांजीवानांशक्तिः अविद्या कर्मसंज्ञाऽन्यातृतीयाशक्ति रिष्यतइत्युक्तेः तद्वानित्यर्थः यद्वादैवंभगवत्संकल्पः कर्म जीवानांकर्म आत्मानोजीवाः शक्तिः जीवसघशरीरारंभकाचिच्छक्तिश्चास्य संतीति तद्वान् अनेनसमष्टि पुरुषत्वमुक्तम् एवंभूतःसर्वसमष्टि आत्मनाकर्त्रा आत्मानं प्रथमं त्रिधाकरणभोक्तृविषयरूपेण तत्रापिकरणांशेएकधादशधाममः पर्यंतेंद्रियरूपेणैकादशधेत्यर्थःविबभाजविभक्तमकरोत्स्वसंश्लिष्ट जीवसंघं भोक्तृत्वेन स्वेंद्रियैकदेशान् तद्भोग्यकरणत्वेनाकारेणाकरोदित्यर्थः ॥ ७ ॥

अस्यैवंविधविभागसामर्थ्यमाह एषइति एषब्रह्माऽशेष सत्त्वानां समस्तव्यष्टिपदार्थानामात्मा आधारः तच्छरीर कपरमात्म इत्थंदमुक्तं परमात्मनोंऽशः अपृथक्सिद्धविशेषणभूतः नान्विर्दृसयंजीव साक्षरणमत आह आद्यइति आद्यः अवतारः परमात्मन इत्यनुषंगः परमात्मन आवेशावतारोवाध्यः "सृष्टिंततः करिष्यामित्वामाविश्य प्रजापते"इत्युक्तेः यत्रपरमात्मात्मके समष्टिपुरुषे परमात्मांशावतारभूतेऽसौभूतग्रामः व्यष्टिपदार्थजातं विभाव्यते विविधमुत्पाद्यते अत इदृश विभाग समर्थं इत्यर्थः ॥ ८ ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

एतदेव स्पष्टयति परेणाति चुक्षोभ ब्रह्मांडाकारेण विकृत वान्यस्मिन्नंडेउत्पन्नः ॥ ५ ॥

प्रथमक्षणेशरीरप्रवेशो हरेरनंतरंभोगिनश्चेतनस्येतिदर्शयितुकामस्यहरेरंडप्रवेशमाचष्टेहिरण्मयइति यस्यप्रेरणयातत्त्वगणोंडमजनयत् सहिरण्मयोज्ञानानंदात्मककरचरणाद्यवयववान् पूरुषाख्योहरिरांडकोशेंडकोशस्थाप्स्वंडकोशस्थोदकेशषपर्यंकेसहस्रपरिवत्सरानुवासेत्यन्वयः प्रलयेसर्वचेतनानांपरमचेतनेनैकीभावइतिशंकांनिबारयति सर्वेति सर्वसत्त्वैः सर्वजीवैरुपबृंहितोनत्वेकीभूतः अनेननिर्देहानांचेतनानांप्रलयेऽवस्थानंकथमितिशंकानिरस्ता परमात्मन्यवस्थानोपपत्तेः ॥ ६ ॥

सिसृक्षोर्हरेर्गर्भोदकेबहुकालव्यापकेननिवासेनसृष्टिकथोपरतेतिशंकांपरीक्षितोहार्दापरिहरन्नंडांतर्वर्तिनोहरेर्विक्रमविशेषमाहसयाइति योगर्भोदकेशेषपर्यंकशयानः सविश्वसृजांब्रह्मांडंसृष्टवतांतत्त्वानांगर्भोंतर्यामीदैवंब्रह्मादिदैवतेष्वधिकंकर्मप्राण्यदृष्टंसुखदुःखभोगसाधनमात्मशक्तिः प्रकृतिः नित्यमेतैर्युक्तत्वाद्दैवकर्मात्मशक्तिमान्ब्रह्मणोविराडाख्यंशरीरंसृष्ट्वातत्प्रविश्यात्मनापरप्रेरणामंतरेणस्वेच्छयात्मानंतद्देहहृदयादिनियामकत्वेनएकधादिविबभाज विभक्तवानित्यन्वयः वाइत्यनेनोक्तार्थस्यग्रंथांतरप्रसिद्धिद्योतकेनविश्वसृजांगर्भःकार्यात्माआत्मानमंडरूपमेकधादिभेदेनविबभाजेत्येतदपव्याख्यानंप्रत्याख्याति स्वतोऽचेतनस्यकार्यकारणत्वशक्त्यदर्शनात् अप्रसिद्धत्वाच्चेति ॥ ७ ॥

ननुविश्वसृजांगर्भआंडकोशएवभवेदेषह्यशेपसत्वानामात्मेतिवैप्राण्याधारत्वेनपरामर्शात्तदर्थसृष्टत्वाच्चेतितत्राह एषहीति नायमंडकोशस्यपरामर्शः किंतुपुरुषेणात्मभूतेनवीर्यमाधत्तवीर्यवानितिपुरुषाख्योहरिरभिहितःसएषपरामृश्यते परमात्मनोंशइत्युक्तत्वाद्योवतारइत्यवतारशब्देनविशेषितत्वाच्च नह्यंडकोशस्यहरेरवतारत्वनिर्देशःक्वचिद्दृष्टःश्रुतोवा तथाचायमक्षरार्थः योमहदादितत्त्वानिसृष्ट्वा तेषामंडसृष्टावस्वातंत्र्यंप्रकाश्यात्मानं तैस्तावयित्वातदनुग्रहायस

### श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली

एकरूपेणारमयासहप्रविश्यसंयोज्यक्षोभयित्वातदंशैरंडंसृष्ट्वातत्प्रविश्यअप्सुसहस्रपरिवत्सरानुषित्वातदंतेब्रह्मणोविराट् शरीरं सृष्ट्वा तद्देहेंद्रियादिनियामकत्वेनाविर्बभूव एषह्यशेषसत्वानामात्मानियामकःपरमात्मनःस्वरूपांशआद्योऽवतारएतादृशमहिमेतिशेषइतिकोऽसावितितात्पर्यात्श्रद्धातिशयजननार्थंपूर्वोक्तमेवाह यत्रेति यत्रयस्मिन्नाद्यावतारेपुरुषनाम्निभूतग्रामोभूतसमूहोविभाव्यतेसत्तांप्राप्यदृश्यतेसइत्यर्थःहिशब्द"आद्योऽवतारोविष्णोस्तुपुरुषोनामकीर्तित"इत्यादौप्रसिद्धोऽयमर्थइतिदर्शयति ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

हिरण्मयो ब्रह्माण्डस्तस्मिन् स्थितो हिरण्यगर्भः अप्सु इति । पूर्वं जलेनान्तः पूर्णत्वात् ॥ ६ ॥

स वै इति दैवकर्मात्मशक्तिमान् इत्यत्र दैवशक्त्या कर्मशक्त्या आत्मशक्त्या च युक्त इत्यर्थः ॥ ७ ॥ ८ ॥

---

### श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

एवंब्रह्मांडसृष्टिमुक्त्वाद्वितीयपुरुषमुपपाद्य तृतीयमुपपादयितुंतत्रैवपुनः कार्यमाहपरेणविशतेतिस्वस्मिन्विशता परेण भगवता हेतुनाकृत्वाविश्वसृग्गणश्चुक्षोभपरमात्रयाएक देशेनांतिस्थितेन अन्यथाब्रह्मांडभेदःस्यात् अंतकार्यार्थमेव स्वस्मिन्विशतेत्युक्तमन्यथाभगवत्प्रवेशेनक्षुब्धोजातइतिवदेत् अतः प्रवेशेनाक्षोभ एवतदैकंब्रह्मांडंनिष्पन्नं यदापुनःसानियामकेन रूपेण भिन्नरूपेणवा सएव गणः स्पष्टः तदामध्येसहस्रधादीर्णश्चुक्षोभ अन्यथाव्यष्टिपुराणिनसृष्टानिभवेयुः क्षोभफलमाह अन्योऽन्यमासाद्येति सहिविश्वसृजांगणो विश्वसृष्टिस्तस्यस्वतः कायमतएकस्मिन्नपिव्यष्टौसर्वतत्त्वानां कार्यसिद्ध्यर्थं मनोऽन्यमासाद्यचुक्षोभ एकस्मिन्नपिद्वाविंशतितत्त्वानांप्रवेशः एवंप्रस्तारआनंत्यंभवत्याकृत्यधिकरणन्यायेन अतस्तदर्थमेवान्योऽन्यासादने ततोयज्जातं तत्राहयस्मिन्नन्योऽन्यासादनपूर्वकक्षोभयुक्तेगणेचराचराएवलोकाः ॥ ५ ॥

एवंसमष्टिव्यष्टि देहानामुत्पत्तिमुक्त्वा तत्रसर्वत्रभगवत्प्रवेशार्थंजीवानामप्रवेशः तत्त्वान्यपिभगवत्प्रवेशार्थं सर्वसामग्रींसंपादयंतिस्थितानीत्याह हिरण्मयइति सहिब्रह्मांडात्माहिरण्मयः सुवर्णात्मकः पृथक्तेजसांसमानांशतया अन्योऽभिभवाभावेनयत्कार्यं तत्सुवर्णमितिउच्यते जलाधिक्येरौप्यं पृथ्व्याधिक्येत्वन्येधातवः द्वयोःकारणप्रवेशेमृण्मयानि मृदस्तैजसमिति तायेसिकताः प्रधानायेपाषाणाः अल्पतापेत्विष्टिकाः जीवसंबंधेनस्थावरास्थिभेदाः काष्ठादयः तत्र सविराट्पुरुषोहिरण्मयः सुवर्णप्रतिमावत्स एवपुरुषोदेहरूपेणपुरुषसहितोवा सहस्रपरिवत्सरपर्यंतं स्वयमंडात्पृथग्भूत एव नालिकेरफलवत्तस्मिन्नेवांडकोशे अधस्तात् स्थितगर्भोदकेदेहात्स्वतएवामृतोदके स्वसृष्टेवोदकेशयनं कृतवानित्याह उवासाप्स्विति व्यष्टीनामपि तदाशयनमेवेत्याह सर्वसत्त्वोपबृंहितइति सर्वाणिसत्त्वानिजीववद्देहाः सदंशत्वात्सत्त्वानी त्युच्यंतेतैरुपबृंहितः संबंधोनारायणोदर एवसर्वाणिभूतानि स्थितानीत्यर्थः अस्मिन्पक्षेननिरात्मकः कियत्कालंस्थितः पूर्वमेवभगवत्प्रवेशात् सृष्टप्रवेशपक्षेतु



### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

निरात्मकस्थितिरतएवात्र सपुरुषइत्युक्तम् अत्रतु सहस्रवर्षपर्यंतं अंतः कार्यंनकृतवानिति केवलंसत्त्वैरुपबृंहितः ॥ ६ ॥

कार्यप्रकार पर्यालोचनार्थं स्वतस्ततः कार्यंकृतवानित्याह सवैविश्वसृजांगर्भइति विश्वसृजांतत्त्वानां गर्भोबालकः सामर्थ्यरूपोवा त्रिविधकर्मात्मकोजातः चेष्टारूपस्यभगवतः प्रवेशात्कर्मशक्तियुक्तोजातः कर्मप्रेरक कालशक्तिप्रवेशात् दैवशक्तियुक्तोजातः विश्वसृजां सहजसामर्थ्यात्कारणगर्भेणात्मशक्ति युक्तोजातः अतस्त्रिविधशक्तिमानात्मानमेव विवभाजकेचनात्माधीनाःकृतास्तेआध्यात्मिकाःकेचनदैवाधीनास्त आधिदैविकाः कालाधीनाइत्यर्थः केचनक्रियाधीनास्त आधिभौतिकाः अतोभगवतः क्रियारूपस्यप्रवेशात्क्रिययाभगवत्कार्यमेवं कर्त्तव्यं भगवत्क्रियान्यकरणेतु स्पष्टो दोषस्तदाह विबभाजेति अतःपरंतस्य कारणांतरंनापेक्षितमित्याह आत्मनात्मानमिति तत्रत्रैविध्यमवान्तरभेदान्वदन्नाह एकधेति प्रथमभेदेसात्विकदैवएकएवभेदःद्वितीयेराजसेदशभेदाः तृतीयेतामसेत्रयोभेदाइति ॥ ७ ॥

नन्वेतावद्भिरेवभेदैः कथंसर्वंकार्यंसेत्स्यतीत्याशंक्याह एषहीति अशेषसत्त्वानामात्मा हियुक्तश्चायमर्थः बीजंयादृशमेवभवति तादृशमेवकार्यं भविष्यतीति सर्वेषामात्मत्वात्सचेदेवं प्रकारेणत्रिरूपो जातस्तदा सर्वाण्येवसत्त्वानि तथा भविष्यंतीति सर्वमेवकार्यंसेत्स्यति किंच किमनेनैकेन एतादृशाभगवतःकोटिशः कोट्यंशानामप्यंशःपरमयमानंदांशइत्याह आद्योऽवतारइति चिदंशास्तुजीवाः सर्वेषांब्रह्मांडांतर्वर्त्यवताराणामर्थोऽयमाद्योऽवतारःसह्यक्षरात्परतो विद्यमानोभगवान्प्रथममस्मिन्विराड्युत्तीर्णःपश्चान्मध्येइदमेवावतरणं संबंधश्च वह्निवदितिपूर्वमुक्तम् अस्यावतारस्य स्वरूपात्प्रच्युतिः केनाप्यंशेननास्तीत्याभिप्रायेणाह यत्रासौभूतग्रामो विभाव्यतइति प्रपंचाश्रयत्वमेव भगवत्त्वमतोनारायणोऽयं प्रपंचाधारत्वाद्भगवानेव असौपरिदृश्यमानो भूतग्रामोयास्मिन्पुरुषे विशेषेणभाव्यते शबलतयातिष्ठतीत्यर्थः ॥ ८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी

जगत्प्रकारमाह विश्वसृजां तत्त्वानां गणः स्वस्मिन् परेण परमेश्वरेण मायया अंशेन विशता सता अन्योऽन्यमासाद्य प्रधानगुणभावं प्राप्य चुक्षोभ गर्भरूपेण परिणतोऽभूत् ॥ ५

स समष्टिविराट् हिरण्मयः चतुर्दशभुवनात्मक अण्डकोशे या आपः गर्भोदकानि तासु यद्वा अप्सु योऽण्डकोशस्तस्मिन् सर्वसत्त्वैरनुशायिभिर्जीवैरुपबृंहितो विस्तृतः ॥ ६ ॥

अथ तस्य मुखाद्यङ्गसिद्ध्यर्थम् प्रथमं त्रिशक्तित्वमाह विश्वसृजां महदादीनां गर्भः कार्यरूपः दैवकर्मात्मशक्तिमान् जीवप्राणाध्यात्मादिशक्तियुक्तः आत्मनैवात्मानं विबभाज विभक्तं कृतवान् एकधा जीवशक्त्या दशधा प्राणशक्त्या त्रिधा आध्यात्मिकादिशक्त्या॥७॥

परमात्मोपासकानां चित्तशुद्ध्यर्थं प्रथममयमेवोपास्य इत्याह एष हीति अशेषसत्त्वानां प्राणिनामात्मा व्यष्टीनां तदंशत्वात् अंशो जीवः अवतार इति योगिनां तदन्तर्यामिणा सह तस्यैक्यभावनया भूतग्रामो देवमनुष्यादिसमूहः ८

---

साध्यात्मः साधिदैवश्च साधिभूत इति त्रिधा ।
विराट् प्राणोदशाविध एकधा हृदयेन च ॥ ९ ॥
स्मरन्विश्वसृजामीशो विज्ञापितमधोक्षजः ।
विराजमतपत्स्वेन तेजसैषां विवृत्तये ॥ १० ॥
अथ तस्याभितप्तस्य कतिचायतनानि ह ।
निरभिद्यन्त देवानां तानि मे गदतः शृणु ॥ ११ ॥
तस्याग्निरास्यं निर्भिन्नं लोकपालोऽविशत्पदम् ।
वाचा स्वांशेन वक्तव्यं ययाऽसौ प्रतिपद्यते ॥ १२ ॥

### श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः

संपुरुषः सप्तावरणांतर्गतःविराट्देहः ऑंडकोशेसप्तावरणमय ब्रह्मांडमध्येसर्वैः सर्वैरनुसायिभिर्जीवैः सहितः अप्सुगर्भोदकेषु उवासऽर्पितवान् तस्यविराड्देहस्यप्राकृतत्वेऽपितदंतः प्रविष्टस्य-भगवतः पुरुषावतारस्य अप्राकृतदेहोऽपिहिरण्मयइतिविशेषणेनसू च्यतेइतिबोध्यम ॥ ५ ॥

सःविश्वसृजांमहदादीनांगर्भः कार्यभूतोविराडाख्यः दैवंनियं ताभगवान् कर्मभोगनिदानम् आत्मासमष्टिव्यष्टिजीवसमूह-शक्तिः भगवद्दत्तंसामर्थ्यंताःसंत्यस्यसतथा आत्मनानिमित्तभूतेन आत्मानमुपादानभूतम् त्रिधाअध्यात्मादिभेदेनाविवभाजएकधाहृदय रूपेणदशधाप्राणरूपेण ॥ ६ ॥

ननुअस्यत्रिधाकार्यप्रतिनिमित्ताभिन्नोपादानत्वेकिंबीजमत्राह एषइति एषविश्वसृजांगर्भःपरमात्मनःपरमकारणस्य अंशः परम-शक्तिपरिणामरूपत्वात्परमात्मकार्यभूतइत्यर्थः यद्वा परमात्मांश भूतचतुर्मुखाख्यसमष्टिजीवशरीरत्वात्तद्वाचकांशशब्दवाच्यः आद्यो ऽवतारः आद्यस्यपरमकारणस्यपरमात्मनोऽवतारः परमात्मावतार स्यपुरुषस्यनियंतुर्वैराजस्यानयम्यभूतोविराडाख्योदेहः अतोऽवतार शब्दवाच्यः एवंप्रभावत्वादात्मनात्मानंत्रिधाविवभाजेतिभावः अत-एवाशेषभूतानांव्यष्टिप्राणिनामात्मांशी अतएवयत्र असौभूतग्रामः व्यष्टिप्राणिसमूहः विविधतयाभाव्यते उत्पाद्यते ॥ ७ ॥

एकधादशधात्रिधेत्येतद्विवृणोति साध्यात्मइति विराट् अध्या-त्मसिंद्रियगणस्तत्सहितः अधिदैवंदेवगणस्तत्सहितः अधिभूतमिं-द्रियविषयंशब्दादिकम् तत्सहितः प्राणः वायुर्दशविधःप्राणापान समानव्यानोदाननागकूर्मकृकलदेवदत्तधनंजयभेदात् तत्सहित-इत्यर्थः ॥ ८ ॥

---

### भाषाटीका ॥

वह तेवीस तत्वों का समूह परमात्मा के प्रवेश होने से जिस में चर अचर जीवादि हैं वही आपस मे मिल कर त्तोभ को प्राप्त हुआ ॥ ५ ॥

पूर्वोक्त वह ब्रह्मा जी हिरण्मय पुरुष रूपी सब सत्त्व से युक्त होकर हजारों वर्ष पर्यंत अंड कोश मे स्थित होकर प्रलय जल मे बसते हुये ॥ ६ ॥

### भाषाटीका

देव कर्म आत्मा शक्ति वालावह जो तत्वों का समूह है उसी ने अपने स्वरूप को एक प्रकार तीन प्रकार तथा दश प्रकार से वि-भाग किया ॥ ७ ॥

वह सब प्राणियों का आत्मांश रूप जो सर्ग है सो परमात्मा का पहिला अवतार है जिस में सब प्राणि मात्रों का विभावना उत्पत्ति होता है ॥ ८ ॥

---

### श्रीधरस्वामि कृत भावार्थदीपिका।

पूर्वश्लोकार्थंविवृणोति साध्यात्मः अध्यात्मानींद्रियाणितत्सहि तः विराडितिसर्वत्र ॥ ९ ॥

अध्यात्मादिभेदंप्रपंचयितुमाह स्मरन्निति विज्ञापनंयावद्वालित-ऽजहरामेत्यादि स्वेनतेजसाचिच्छक्त्या अतएतदेवंकरिण्यामीत्यालो चितवान् 'यस्यज्ञानमयंतप, इतिश्रुतेः विवृत्तयेविविधवृत्तिलाभाय ॥ १० ॥

मेमत्तःशृणु ॥ ११ ॥

आयतनान्येवाऽऽह तस्याग्निरित्यादिचतुर्दशभिः आस्यंनिर्भिन्नं पृथग्जातम् पदंस्वस्थानम् स्वांशेनस्वशक्त्यावाचासहाविशत् असौ जीवः वक्तव्यंप्रतिपद्यते शब्दमुच्चारयतीत्यर्थः सर्वत्रयन्निर्भिन्नंतदधि ष्ठानम् अग्न्यादिप्रथमांतमाधिदैवम् वागादीन्द्रियम् तृतीयांतमध्या-त्मम् प्रतिपत्तव्यमाधिभूतम् ॥ १२ ॥

---

### श्रीराधारमणदासगोस्वामि विरचित
### दीपिन्याख्या दीपिकाटिप्पणी ।

पूर्वश्लोकार्थंसवैविश्वसृजामित्यस्यार्थं(हृदयेन)हृदयाऽवच्छिन्न चैतन्यरूपेण ॥ ९ ॥

विश्वसृजां महदादीनां ज्ञानमयमालोचनात्मकम् ॥ १० ॥

(अथ)ईश्वरालोचनानन्तरम् अभितप्तस्यालोचन विषयीं भूतस्य॥ तस्यविराजः निरभिद्यन्त पृथक् पृथक् जातानि ॥ ११ ॥

स्वशक्त्या वन्हिशक्त्या एवं परत्रापिइन्द्रियाणांस्व स्वदेवता शक्ति रूपत्वंव्याख्येयम् ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्य कृत भागवतचंद्रचंद्रिका ।

प्रस्तुत त्रिविधैकादशविध विभागा वुपपादयन्समष्टि पुरुषत्व मेवोपपादयति साध्यात्म इति विविध राजते व्यष्टि रूपेण भाती ति विराट्यद्यपि विराट् शब्दोऽनिरुद्ध परः तथापीह समष्टि पुरुषा द्विभक्तव्यष्ट्युत्पत्ति प्रकरणा च्चतुर्मुखपरः सब्रह्मा साध्यात्मः अध्यात्मसहितः समष्टिरूपेण स्वशरीरां तर्गतभोक्तृवर्गसहितः आत्मनि देहे वर्त्तमानो जीवोह्यध्यात्म शब्दोक्तः सचाविभक्तरूपः समष्टव्यवस्थः साधिभूतः भूतेषुवर्त्तमानशब्दादिविषयसहितः ब्रह्मशरीरारब्ध भोग्यजातमविभक्तं साधिदैवःइन्द्रियसमष्टि सहितः आदित्य मंडलादिषु स्थानेषु वर्त्तमानाआदित्यादयो देवशब्द वाच्या तदधिष्ठेय इन्द्रिय वर्ग इत्याधि दैव शब्दोक्तःसमष्ट्यवस्थस्वशरीरां तर्गतभोक्तृभोग्यकरणग्रामवानित्यर्थः अत्राधिदैवांशं विवृणोति- प्राणइति प्राणशब्दइन्द्रियपरः "तमुत्क्रामंतं सर्वेप्राणा अनुत्क्रामंति,, इति श्रुतिप्रयोगात् दशविधःश्रोत्रादिरूपेणैकधाहृदयेन मनसा व्यष्टिशरीरेंद्रियादीनांब्रह्मणाविभक्तत्व वक्ष्यते ॥ ९ ॥

तत्तु न स्वातंत्र्येणकृतं किंतु भगवदनु प्रवेशादित्याह स्मरन्निति ईशः नियन्ता अधोक्षजा भगवान् विश्वसृजां महदादितत्त्वानां विज्ञापितं "यावद्बलिंतेऽजहराम काले" इत्यादिना विज्ञापितस्मरन्नेषामिंद्रियादीनांविवृद्धये व्यष्टिरूपेण विस्तारायस्वेन स्वीयेनतेजसा ज्ञानेन विराजं ब्रह्माणमतपदालोचयत् तपआलोचनं अयंव्यष्टिशरीरेंद्रियविभागसामर्थ्यवान् यथा भवेत्तथातमसंकल्पयदित्यर्थः ॥ १० ॥

व्यष्टिशरीरेंद्रियाणां ब्रह्मणः सकाशाद्विभाग प्रतिपादनं प्रतिजानीते अथेति अथालोचनानंतरम् अभितप्तस्य उक्तसंकल्पविषयस्यतस्यतस्माद्ब्रह्मणा इत्यर्थःनटस्यश्रृणोतीति वदत्रपंचम्यर्थः संबंधसामान्य परतयाषष्ठ्या विवक्षितः देवानांव्यष्टीन्द्रियाणांकृतिचायतनानि कतिपयानि स्थानानिनिरभिद्यंत उदभूवन्तानि स्थानानिगदतः ममत्तःश्रृणुवाकर्णयेत्यर्थः ॥ ११ ॥

विभागमाह तस्येत्यादिभिश्चतुर्दशभिः अत्रप्रतिश्लोकं प्रस्तुतः समष्टि पुरुषो भगवदात्मकश्चतुर्मुखस्तस्यास्येत्यादिषष्ठ्यतैः परामृश्यते तस्यभगवदात्मकाच्चतुर्मुखान्निर्भिन्नं विभक्तमुत्पन्नमिति यावत्व्यष्टिभूतजातस्यास्यं पदं स्थानमास्यरूपं स्थानंस्वांशेन स्वाधिष्ठेय भूतेन वाचा वागिंद्रियेण सहलोकपालोऽग्निराविशत्प्राविशत् कथंभूतया वाचाऽसौव्यष्टिजीवःययावाचा वक्तव्य मुच्चार्यशब्दं प्रतिपद्यते उच्चारयतीत्यर्थःसमष्टिपुरुषा द्विभक्तोऽग्निस्तस्मादेव विभक्तस्य व्यष्टिजीवस्य विभक्तमास्यं विभक्तेन वागिंद्रेण सहप्राविशदित्यर्थं एवमग्रेऽप्यूह्यं सर्वत्रासावित्ति प्रथमांतमध्यात्मपदं वाचेत्यादि तृतीयांतमाधिदैव समर्पकं वक्तव्यमित्यादि प्रतिपत्तव्यं शब्दादिक मधिभूतसमर्पकं वेदितव्यम् ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थ कृत पदरत्नावली ।

एकधेत्याद्युक्तंविवृणोति साध्यात्ममिति क्रमोल्लंघनंप्राधान्यदर्शनाय अध्यात्मादित्रित्वस्यनित्यत्वात्तद्वादशानींद्रियाणया---दुरितिश्रुतेरिंद्रियाणांदशविधत्वस्य प्रायिकत्वात्हृदयस्यज्ञानवि—वक्षयैकत्वादंतःकरणविवक्षयाचातुर्विध्यात् अध्यात्मसाहित्य वर्त्तमानरूपमित्यादियोज्यं विशेषणराजनाद्विराट् प्रकृष्टचेष्टकत्वा त्प्राणनामाब्रह्मांतर्यामी ब्रह्मदशेंद्रियांतस्थत्वेनदशविधः ब्रह्महृदयस्थरूपेणैकविधः चशब्दस्त्वध्यात्मादिपुत्रिषुश्रोत्रादींद्रियेषुहृदयच प्रवेशसंभवाद्धरेः संख्याभेदः तत्सृष्ट्वातदेवानुप्राविशदितिश्रुतिसिद्धत्वाद्युज्यतइतिदर्शयति प्राणादिनागादिदशप्राणाअपिअध्यात्मादिभेदेनत्रिधाज्ञातव्याःतदुक्तं "प्राणादिपंचकंचैवतथानागादिपंचकम् ।

श्रीमद्विजयध्वजतीर्थ कृत पदरत्नावली ।

एवंतुदशधाप्राणाअध्यात्मादित्रिधाऽखिला" इति अधिभूतमपिद्विधा प्रधानवायुत्वगादिभेदेन। "प्राणःप्रथमजोयस्तुप्रधानोवायुरीरितः त्वगात्माद्यास्तुनत्पुत्राद्विधाभूतमुदाहृतम्" इतिवचनाददंप्रसंगादुक्तम् ९॥

इदानींतत्त्वानामस्माकमायतनानिर्माणशक्तिदेहीतियदुदितंतत्करणप्रकारमाहस्मरन्निति अधोक्षजोविराजंब्रह्मशरीरमंतर्यामिरूपेणप्रविश्यस्वेनतेजसाततवैराजाख्यंब्रह्मशरीरमेषामग्न्यादिदेवानांयथाआयतनानिभवंतितथाविवृद्धयेऽतपदप्रकाशवदकरोदित्यन्वयः १०

तापकार्यमाह अथेति देवानांयान्यायतनानितस्याभितप्तस्यशरीरस्यसकाशान्निरभिद्यंतविवृतानि अथगदतोममसकाशात्तानिश्रृणुवित्यन्वयःकतिचेत्येकंपद चशब्दश्चित्पर्यायः "हेत्यनेनसोद्धृत्यएवपुरुषसमुद्धृत्यामूर्च्छयत्तमभ्यतपत्तस्याभितप्तस्यमुखंनिरभिद्यत,,इत्यादि समाख्यांसूचयति ॥ ११ ॥

शरीरावयवेष्वग्रेमुखलक्षणावयवस्यप्राधान्यज्ञापनायतदुत्पत्तितदभिमान्यभिमानोत्पत्तिंचाह तस्येति तस्यब्रह्मांतर्यामिणोविवक्षोर्हरेरास्यंमुखसंज्ञायतनंयन्निर्भिन्नंविवृतंतत्पदंस्थानं लोकपालोऽग्निर्वाचावागिंद्रियाख्यस्वांशेनसहाविशदित्यन्वयः अग्निर्वाग्भूत्वामुखंप्राविशदितिश्रुतिः ययावाचायंनवागिंद्रियेणब्रह्मशरीरवर्तीहरिर्वक्तव्यंवागिंद्रियविषयंव्यवहाराख्यंप्रतिपद्येत विज्ञायव्यवहरतीत्यन्वयः उत्तरत्राप्येवमव्याख्येयाः ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

अत्र देवस्य ईश्वरस्य जीवरूपा चिच्छक्तिः तया हृदयस्थया एकधा ॥ ९ ॥

ननु विराट् पुरुषस्येदृशी शक्तिश्चेदीश्वर प्रवेशेन किं तत्राह स्मरन्निति । अधोक्षजांशः पुरुषः । कारणानुग्रहेणैव कार्यशक्तिरुद्भवतीति भावः । अतएतदनन्तरमेव स वै विश्वसृजामित्याद्युक्तं ह्ययम् अतपत् स्वेन तेजसा प्रकाशयितुमिष्टवान् ॥ १०—१४

---

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

पूर्वोक्तभेदान्गणयति साध्यात्मइति अन्यथा अन्योऽन्यथावर्णयेत् त्रैविध्यंप्रथमतोनिरूपयति अस्यजगतः तामसप्राधान्यादेहप्राधान्यादित्यर्थः तत्रैकः साध्यात्मभेदः आत्मानमधिकृत्य योवर्तते अध्यात्मदेहस्तद्गतोवा आत्मा जीवोभगवदंशोवातेनाध्यात्मेनसहितोविराड्देहांशःसाध्यात्माभवति एवं साधिदेवः देवाअंतर्यामिदिगादयस्तानधिकृत्य योवर्ततइंद्रियवर्गस्तदभिमानिनोजीवा भगवदंशावातेऽधिदेवाइंद्रादयो वा तैः सहितोविराड्देहांशः उपरिभागः साधिदेवः एवमधिभूतश्च अत्रचकाराऽवतारभेदेऽप्याध्यात्मकादिसंग्रहार्थः साधिभूताविराडधोभागः इत्यनेनप्रकारेणत्रिधा इदंहगणश्चत्रैविध्यदशविधमाह विराट्प्राणोदशविधइति विराजोयः प्राणआसन्नरूपस्तृप्त्या संबंधाद्विराडासन्नावताराइत्युक्त महत्तत्त्वस्यक्रियाशक्त्यंशःसूत्रात्मा सएवविराट् प्राणादयः पंच तथा नागादयः "नागःकूर्मश्च कृकलोदेवदत्तोधनंजय,, इतिवाक्यात् एतेषांदेहकार्यंनियतं "काशोहिक्कातथोद्गारोजृंभाशायस्तथैवच तस्यैकः हृदयेनहृदयमिति वक्तव्येतस्यकरणत्वेनानिर्देशस्तदंतभेदनिरूपणार्थः मनोबुद्धिरहंकारश्चत्तमिति चकारात्तस्याधिभूतादिभेदाः संगृहीताइति हृदयंमनः प्रभृतयस्तदेवाश्च ॥ ९ ॥

एवं तस्याविराजस्तदंतर्गतानांचैकप्रकारेण स्वरूपमुक्त्वास्वप्रवेशेनैव विश्वसृजांकार्यं विधायज्ञानक्रियाशक्तीअदत्त्वा यथावयंचात्मदामयत्रेतियद्विज्ञापितं तदपिचेत्सदयात् तत्त्वानांनाशः खेदवाश्च

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

वेदिति तेषांविज्ञापनांसत्यांकृतवानित्याह स्मरन्विश्वसृजामिति विश्वसृजामित्यनेनतेषांमहत्त्वमुपकारश्चसूचितः दानंहेतुर्विज्ञापितामिति स्वार्थंतुनकृतवानित्याह अधोक्षजइति अधःअक्षजंयस्मात् यत्किंचिदिन्द्रियैरुत्पद्यतेज्ञानंक्रियावा तद्भगवंतमप्राप्यैवपराङ्गवनिवर्त्तते अतः स्वोपयोगाभावात् उपयोगेभक्तिविरोधाच्च तेषामेवोपकारंकृतवान् किंकृतवानित्याकांक्षायामाह विराजमतपदिति सहिसर्वसमर्थः सिद्धेऽपिकार्ये तेषामुपयोगार्थं स्वतेजसा पुनस्तंकार्यंसंततंकृतवान् स्वतेजसातप्तत्वाच्च वृथानाद्यप्रकारेणतस्यभंगः किंत्वेषांतत्त्वानां विविधवृत्तयेस्थानासिद्धये यथा तेषांस्थित्यर्थं मध्येछिद्राणि स्थानानिभवंति तथा तापंकृतवानित्यर्थः ॥ १० ॥

तेषांछिद्राणां स्वोपयोगाभावाच्छिद्रप्रक्रमेण निरूपयति अथेति तस्यभगवत्तेजसा अभितस्तप्तस्यकत्यायनानि निरभिद्यंततानिचेज्जानासि तदानवक्तव्यम् अथनजानासि तदावक्तव्यमित्यभिप्रायेण कतीत्युक्तं चकाराज्जीवार्थंस्वार्थंच तत्रैवप्रकाराः संगृहीताः भेदेननाशशंकांवारयति आयतनानीति भिन्नान्यपि प्रहरूपाण्येवकृत्वा जातानीति हेत्याश्चर्ये देवानांस्थानत्वाद्भगवदिकलत्वं तानिनजानासि चेन्मेगदतः शृणु मेगदतः सतः मयात्वदर्थमेवोच्यतइति नदेवानांमर्मोद्घाटनेन दोषः स्यात्किंतु मयाकीर्त्यते देवानांस्थानानिचरूपंत्वयापिश्रोतव्यम् आज्ञाभावेचौर्यंस्यादिति ॥ ११ ॥

तान्यायतनानिनिरूपयति तस्याग्निरास्यमिति तस्यविराजोनिर्भिन्नमास्यं वक्त्रमग्निराविशत् वाचिजायमानो सोगाग्निर्भवति लोकपालइति विशेषणमग्नेस्स्वरूपस्य विज्ञापनासिद्ध्यर्थमग्नेयदिदिशयेलोकास्तेषांपालकत्वंदत्तम् आस्यैवास्थानंदत्तंतत्पदं तस्यलोकास्तु पाल्यास्तत्प्राप्तएवभागस्त वाचैवेववाचास्वांशेनेति वागिन्द्रियमनेनाध्यात्मिकंरूपम् आसंगदोषसहितोऽग्निर्वागित्युच्यते अतएवाग्नेः स्वांशभूतावाक् अनेनाग्निरित्यरूपोनिवारितः किं तयादेवतयावाताह यवावाचा असौविराट्पुरुषोवक्तव्यं वाक्व्यापारंशब्दोच्चारणमितियावत् दैवताधिष्ठितेन्द्रियेणप्रतिपद्यते ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

एकधा दशधा त्रिधेति पूर्वश्लोकोक्तं व्युत्क्रमेण विवृणोति साध्यात्मः साध्यात्मानीन्द्रियाणि तत्सहितः अधिदैवानीन्द्रियाणां देवताः अधिभूतानि अधिष्ठानानि विषयाश्च "प्राणोपानः समानश्च उदानो व्यान एव च । नागः कूर्मश्च कृकरो देवदत्तो धनञ्जय" इति वृत्तिभेदेन दशविधः प्राण इति दशविधेनानेन विराडेव दशविध इत्यर्थः तत्र प्राणः प्राक्क्रमणो नासाग्रवर्त्ती अपानोऽवाक्क्रमणः पाय्वादिस्थानवर्ती समानो भुक्तपीतान्नादिसमीकरणः शरीरमध्यवर्त्ती उदानः उत्क्रमणः कंठस्थानवर्त्ती व्यानो विश्वक्क्रमणः शकलशरीरवर्त्ती नाग उद्गिरणकरः कूर्मः उन्मीलनकरः कृकरः क्षुधाकरः देवदत्तो जृम्भाकरः धनञ्जयः पोषणकरः हृदयेन हृदयावच्छिन्नेन चैतन्येन जीवेन ॥ ९ ॥

अध्यात्मादिभेदं प्रपञ्चयितुमन्तर्यामिरूपेण प्रविष्टस्येश्वरस्य किमपि कृत्यमाह स्मरन्निति विज्ञापितं यावद्वलिं तेऽज हरामेत्यादि स्वेन तेजसा चिच्छक्त्या अतपत् प्रकाशयामास एषां विश्वसृजां विवृत्तये विविधवृत्तिलाभाय । चक्षुपश्चक्षुरुत श्रोत्रस्य श्रोत्रमित्यादि श्रुतेः कारणशक्तिरेव कार्यपूर्वमवर्तीति भावः ॥ १० ॥

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ॥

तस्य समष्टिविराजः अभितप्तस्य परमेश्वरेण प्रकाशितस्य आयतनानि स्थानभेदा निरभिद्यन्त पृथग्भूवन् से मत्तः ११

निर्भिन्नं पृथग्जातम् आस्यं पदं स्वस्थानं वाचा वागिन्द्रियेण सह अग्निरविशत् स्वांशेन स्वेनैकांशेन, यया वाचैव असौ जीवः विराट् वक्तव्यं प्रतिपद्यते शब्दमुच्चारयतीत्यर्थः एवं सर्वत्र यन्निर्भिन्नं द्वितीयान्तं तदधिभूतमधिष्ठानं यदग्न्यादि प्रथमान्तं तदधिदैवं । यद्वागादि तृतीयान्तं तदध्यात्मं यत्पुनर्द्वितीयान्तं क्वचित् षष्ठ्यन्तं तदधिभूतं विषयः ॥ १२ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

अथाध्यात्मादि विभागंस्वयंभगवानेवकृतवानितिसूचनपूर्वकंतद्विभागमाह स्मरन्नित्यादिषोडशभिः आलोचनात्मकेनतेजसाप्रतपत् आलोचितवान् ॥ ९ ॥

अभितप्तस्यालोचितस्यमेमत्तः ॥ १० ॥

आस्यंनिर्भिन्नंपृथक्जातमुत्पन्नमित्यर्थः पदंस्वस्थानंलोकपालः समष्टिव्यष्टिवागधिष्ठातृदेवतास्वांशेनस्वाधिष्ठेयेनेन्द्रियेणवाचासहाविशत् ययाअसौसमष्टि देहाभिमानीजीवः वक्तव्यं शब्दाख्यं विषयं प्रतिपद्यते समष्टिदेह समष्टिजीवो देहव्यष्टिजीवश्चेतिविवेकः परमात्मातूपास्यएवेतिश्रोतार्थतुमसौ प्रतिपद्यते इत्युक्तम् यन्निर्भिन्नं तदधिष्ठानम् अग्न्यादिप्रथमांतमधिदैवम् वागादीन्द्रियम् तृतीयांतमध्यात्मं वक्तव्यमधिभूतम् असौशब्देनोक्तोजीवः सकलाचेतनभिन्नः अधोक्षजः सकलचेतनाचेतनविलक्षणस्वरूपः स्वतंत्रकर्ता सर्वनियंता तत्रायमायतनादिविभागः स्वकार्ये समष्टिशरीरे भगवतास्वैनैवकृतस्तत्प्रकरणात् अधोक्षजोहरविंभरित्याद्युक्तवक्ष्यमाणप्रयोगाच्च तदनुसारेणैवव्यष्टिशरीरादि रचनाभगवद्वशवर्तिचतुर्मुखकृतासृजामितत्रियुक्तोऽहमित्युक्तत्वात् ॥ ११ ॥

हरेः वैराजस्यभगवतः तालुनिर्भिन्नम् तदालोचनं नैवस्वशरीरविराजितात्पादितमित्यर्थः ॥ १२ ॥ १३ ॥

---

भाषाटीका ।

आत्मा ( साध्यात्मसाधिदैव, साधिभूत ) इस प्रकार से तीन प्रकार का है और विराट्रूपी प्राण दश प्रकार का अन्तःकरण से एकही प्रकार का है ॥ ९ ॥

अधोक्षज विश्व सृष्टि के ईश आगे इस प्रकार से करूं हूं ऐसे पूर्व कथित स्मरण करते हुये अपने तेज रूप चिच्छक्ती से इनके विविध वृत्ति लाभ के ताईं समालोचना करते भये ॥ १०

समालोचना के अनन्तर देवताओं के स्थान पृथक हुए उनको हम कथन करते हैं सो आप श्रवण करो ११

प्रथम विराट् रूपी हरि को मुख पृथक् भयो उस स्थान में लोकपाल अग्नि वाणी रूप अपने अंश सूं प्राप्त भये, वह जीव शब्दोच्चार को जिस से समर्थ होता है १२

---

निर्भिन्नं तालु वरुणोलोकपालोऽविशद्धरेः ।
जिह्वयांऽशेन च रसं ययाऽसौ प्रतिपद्यते ॥ १३ ॥
निर्भिन्ने अश्विनौ नासे विष्णोराविशतां पदम् ।
घ्राणेनांशेन गन्धस्य प्रतिपत्तिर्यतोभवेत् ॥ १४ ॥
निर्भिन्नेअक्षिणी त्वष्टा लोकपालोऽविशद्विभोः ।
चक्षुषांशेन रूपाणां प्रतिपत्तिर्यतोभवेत् ॥ १५ ॥
निर्भिन्नान्यस्य चर्माणि लोकपालोऽनिलोऽविशत्
प्राणेनांशेन संस्पर्शं येनासौ प्रतिपद्यते ॥ १६ ॥

श्रीधरस्वामिकृत भावार्थदीपिका

हरेर्विराजः ॥ १३ ॥ १४ ॥
त्वष्टा आदित्यः ॥ १५ ॥
प्राणेनेति प्राणवद्देहव्यापिनात्वगिंद्रियेणेत्यर्थः ॥ १६ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपन्याख्यादीपिकाटिप्पणी

हरि विष्णु शब्दौविराट्रूपेणोपासनार्थंप्रतिपद्यतेऽनुभवति १३
अंशेनदेवताशक्तिरूपेणघ्राणेन्द्रियेणसह ॥ १४ ॥
अंशेनादित्यशक्तिरूपेणचक्षुरिन्द्रियेण सह शुक्लनीलपीतादि-रूपाणां यतश्चक्षुषः प्रतिपत्तिर्ज्ञानम् ॥ १५ ॥
अंशेनवायुशक्तिरूपेण प्राणेनत्वगिन्द्रियेण सहचर्माणि चर्म्मोपलक्षितात्वगित्यर्थः इति द्वितीय टीकाअनुसन्धेया ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्य कृत भागवतचंद्रचंद्रिका ।

निर्भिन्नमिति निर्भिन्नं पृथग्विभक्तं तालुस्थानं लोकपालोवरुणः अंशेन स्वाधिष्ठेयेन जिह्वयाइन्द्रियेण सहाविशत् असौ व्यष्टिजीवः ययाजिह्वया रसानम्लमधुरादिरसान् प्रतिपद्यते जानाति ॥ १३ ॥
निर्भिन्नेइतिविष्णोर्विष्णवात्मकाद्ब्रह्मणोनासेनिर्भिन्ने अश्विनावंशेन स्वाधिष्ठेयेन घ्राणेंद्रियेण सहाविशतांयतःघ्राणेंद्रियेणगंधस्य सुगंध दुर्गंधादेः प्रतिपत्तिः ज्ञानं भवेत् ॥ १४ ॥
विभोर्ब्रह्मणः सकाशान्निर्भिन्ने अक्षिणीस्थाने लोकपालः त्वष्टा आदित्यः स्वाधिष्ठेयेन चक्षुरिंद्रियेण सहाविशत् रूपाणां नीलपीतादीनां प्रतिपत्ति र्यतः येन चक्षुषा भवेत् ॥ १५ ॥
निर्भिन्नानीति अस्य ब्रह्मणः निर्भिन्नानि चर्माणि लोकपालोऽनिलोवायुरंशेन प्राणेन त्वगिंद्रियेणप्राणवत्कृत्स्नदेहव्यापिने-त्यर्थः अविशत् असौ व्यष्टिजीवः येनत्वगिंद्रियेण संस्पर्शंमृदुत्व कठिनत्वशैत्यौष्ण्यादि संस्पर्शं प्रतिपद्यते ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

तालुजिह्वामूलम्असौहरिः प्रतिपद्यतेजानाति ॥ १३ ॥
नासेनासिके ॥ १४ ॥ १५ ॥
चर्माणित्वगिंद्रियस्थानानि ॥ १६ ॥ १७ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ॥

चर्म्माणीति चर्म्मोपलक्षिता त्वगित्यर्थः इतिद्वितीयस्कन्धे टीकास्य वर्त्तते । प्राणेनेन्द्रियेणात्र तु त्वग्रूपेणेत्यर्थः ॥ १६ ॥ १७ ॥

---

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

स्थानांतरमाह निर्भिन्नंतालुविति तत्रैवास्येयोवक्रसंमितआकाशस्तत्राग्निर्देवतावागिंद्रियंतत्रैव पुनस्तालुलोकेजिह्वापदवाच्यंगोलकंनिर्भिन्नं तन्निर्भिन्नंतालुवरुणोदेवता अविशत् लोकपालइतिपूर्व-वत् विभोइति विराजः स हविर्भागान्नानारसानुपस्थाप्यग्राहयति अतोवरुणस्यतत्रमहाभोगः प्रभोर्भोगस्थानेविद्यमानत्वात् जिह्वयांशेनेति जिह्वापींद्रियं वरुणस्यांशस्तयाजिह्वया असौविराट्संप्रतिपद्यते ॥ १३ ॥
अभ्यद्विवरद्वयमाह निर्भिन्नेअश्विनाविति आश्विनीकुमारौ निर्भिन्नेनासापुटे पदमाविशतांनासापुटद्वयंगोलकं विष्णोर्विराजः घ्राणमिंद्रियं गंधस्यप्रतिपत्तिर्गंधज्ञानं घ्राणदेवताभ्यांहेतुभ्यां भगवतोभवति सर्वत्रविवरंगोलकंदेवतायाः स्थानं देवताइंद्रियप्रेरिकाइंद्रियंचतस्यांशः इंद्रियदेवताभ्यांचाभिमानिनस्तद्विषयानुभवइति १४
इंद्रियांतरस्यचक्षुषोविषयंनिरूपयति निर्भिन्नेअक्षिणीइति । अक्षिणीगोलके त्वष्टासूर्यःअभिमानिनोनिर्देशःचक्षुषांशेनरूपाणांप्रतिपत्ति र्यतःप्रायिकासुरत्वख्यापनायचक्षुरिंद्रियं निर्भिन्नान्यस्यचर्माणीति रोमकूपछिद्रानंत्याद्बहुवचनम् एषात्वग्रूपात्वक्शब्देनचाग्रिमः सूक्ष्मोंऽशोनिरूप्यते तस्मादत्रेंद्रियद्वयम् ॥ १५ ॥
यश्चर्मोपरिसूक्ष्मोंऽशः सात्वक्त्वक्चर्मेतिक्रमात् तत्रचर्मण्यनिलोदेवताप्राणइंद्रियंलोकेत्वक्शब्दवाच्यंप्राणस्योपष्टंभकत्वात्तच्छब्देनोच्यते ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

हरेःहरित्वेन ध्येयस्य विराजः ॥ १३ ॥
यतो घ्राणात् ॥ १४ ॥
त्वष्टा सूर्य्यः ॥ १५ ॥
प्राणेनेति प्राणवद्देहव्यापिना त्वगिन्द्रियेणेत्यर्थः ॥ १६ ॥

---

कर्णावस्यविनिर्भिन्नौ धिष्ण्यं स्वं विविशुर्दिशः ॥
श्रोत्रेणांशेन शब्दस्य सिद्धिं येन प्रपद्यते ॥ १७ ॥
त्वचमस्य विनिर्भिन्नां विविशुर्धिष्ण्यमोषधीः
अंशेन रोमभिः कण्डूं यैरसौ प्रतिपद्यते ॥ १८ ॥
मेढ्रं तस्य विनिर्भिन्नं स्वधिष्ण्यं क उपाविशत् ॥
रेतसांऽशेन येनासावानन्दं प्रतिपद्यते ॥ १९ ॥
गुदं पुंसोविनिर्भिन्नं मित्रोलोकेश आविशत् ॥
पायुनांऽशेन येनासौ विसर्गं प्रतिपद्यते ॥ २० ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

त्वष्टासूर्यः ॥ १५ ॥

अंशेनत्वगाख्येनेंद्रियेण सहानिलोवायुः चर्माणिप्रविशत् प्राणेनोपलक्षितोवद्ध इत्यर्थः असौसमष्टिव्यष्टिदेहाभिमानी जीवो येनेंद्रियेण संस्पर्शलभते प्राणेनोपलक्षित इत्यनेनोपास्य भूतस्य समष्टिशरीरवतः वैराजस्यव्यष्टिशरीरवतोऽतर्यामिणः कर्मफलभूत संस्पर्शादि निरपेक्षत्वंसूच्यते ॥ १६ ॥ १७ ॥

भाषाटीका ।

अनन्तर तालुस्थान पृथक् भयो उस स्थानको लोकपाल वरुण देवता जिह्वांश सूं प्राप्त भये जिस से यह जीव रस ग्रहण को समर्थ होवे है १३

अनन्तर नासिका स्थान निर्भिन्न भयो उस स्थान के देवता अश्विनी कुमार अपने घ्राणांश सूं प्राप्त भये, जिस से गंध ग्रहण सामर्थ होवे है १४

अनन्तर नेत्र स्थान पृथक् भयो उस स्थान के देवता लोकपाल श्री सूर्य अपने चक्षु सूं प्राप्त भये जिस से रूप ग्रहण समर्थ होवे हैं १५

अनन्तर चर्म स्थान निर्भिन्न भये उस स्थानों की देवता लोकपाल वायु अपने प्राणांश सूं प्राप्त भये जिससे स्पर्श ज्ञान समर्थ होवे हैं १६

श्रीधरस्वामिकृत भावार्थदीपिका ॥

शब्दस्यासिद्धिज्ञानम् ॥ १७ ॥

त्वचंचर्म ओषधीरोषधयः त्वगिंद्रियस्यैवस्थानभेदेनविषयद्वयंकंडूः स्पर्शश्च तत्रचायं नामभेदोदेवताभेदश्चेतिद्वितीयस्कंधएवव्याख्यातम् ॥ १८ ॥

कःप्रजापतिः । १९ ॥ २० ॥

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्यादीपिकाटिप्पणी

अंशेनशक्ति रूपेण श्रोत्रेन्द्रियेण सह ॥ १७ ॥

तत्रचविपयद्वये अंशः रोमत्वकूलक्षणइन्द्रियनामभेदः अंतर्वहिराधिष्ठानंत्वक् इन्द्रियमपित्वक्वायुर्देवताअन्तर्वहिः इप-

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्यादीपिकाटिप्पणी

र्शोविषय इति चतुष्टयात्मको द्वितीयो भेद इति विवेकः १८

अंशेन प्रजापतेः संतानोत्पादक शक्ति रूपेणेन्द्रियेण सह ॥ १९ ॥

अंशेनमलविसर्जन शक्तिरूपेण पाय्विन्द्रियेण सह ॥ २० । २१ ॥

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ॥

कर्णाविति अस्य ब्रह्मणःविनिर्भिन्नौ कर्णौस्वधिष्ण्यंस्वस्थानंदिशः देवताः श्रोत्रेणांशेन श्रोत्रेंद्रियेण सहविविशुः शब्दस्यसिद्धि ज्ञानं येन श्रोत्रेण प्रपद्यते प्राप्नोति

त्वच मिति अस्य ब्रह्मणः विभिन्नां त्वच मोषधी रोषध्यः तदभिमानिदेवताः विभक्ति व्यत्ययआर्षः रोमाभिरंशेन रोम रूपस्वाधिष्ठेयेंद्रियेण विविशुः प्राविशन् असौ व्यष्टि जीवः यै रोमभिः कंडूं प्रतिपद्यते जानाति त्वगिंद्रियस्यैव स्थान भेदेन विषय द्वयं कंडूः स्पर्शश्च तत्रायं नाम भेदेन देवताभेदश्चेति द्वितीय एव व्याख्यातम् १८।

मेढ् मितितस्यब्रह्मणः विनिर्भिन्नं मेढ्रमुपस्थेंद्रियस्थानं स्वधिष्ण्यंस्वस्थानंकः प्रजापतीरेतसा अंशेन रेतो रूपस्वाधिष्ठेयेणेंद्रियेण उपाविशत् येन रेतसाऽसौव्यष्टिजीवः आनंदंरतिसुखं जानाति१९

गुदमिति पुंसो ब्रह्मणः विनिर्भिन्नं गुदंपार्य्विद्रियस्थानंलोकेशः मित्रः पायुनांशेनपाय्विंद्रियेण सहाविशत् येन पायुना विसर्गं पुरीष त्यागं प्रतिपद्यते करोति ॥ २० ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

औषधीरोषध्यभिमानिदेवताः अस्यहरेः रोमभिरंशेन ॥ १८ ॥
कःप्रजापतिः रेतसागुह्येंद्रियेणानंदंमैथुनोत्थसुखम् ॥ १९ ॥
विसर्गं धातुमलोत्सर्जनादिक्रियाम् ॥ २० ॥

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ॥

त्वचमिति एकस्मिन्नपि स्पर्शग्राहके भेदद्वयमिदं कल्प्यं बहिराधिष्ठानं चर्म्म इन्द्रियं लोम देवताश्च ओषध्याधिष्ठात्र्य इत्येकः अन्तर्व्वहिराधिष्ठानं तुत्वक् इन्द्रियमपि त्वक् देवता च वायुरित्यन्योभेदः ॥ १८–२४ ॥

हस्तावस्य विनिर्भिन्नाविन्द्रः स्वर्पतिराविशत् ॥
वार्तयांऽशेन पुरुषोयया वृत्तिं प्रपद्यते ॥ २१ ॥
पादावस्य विनिर्भिन्नौ लोकेशोविष्णुराविशत् ॥
गत्या स्वांशेन पुरुषोयया प्राप्यं प्रपद्यते ॥ २२ ॥
* बुद्धिंचास्य विनिर्भिन्नां वागीशोधिष्ण्यमाविशत् ॥
बोधेनांशेन बोद्धव्यप्रतिपत्तिर्यतो भवेत् ॥ २३ ॥
हृदयं चास्यनिर्भिन्नं चंद्रमा धिष्ण्यमाविशत् ।
मनसांऽशेनयेनासौ विक्रियां प्रतिपद्यते ॥ २४ ॥
आत्मानं चास्यनिर्भिन्नमभिमानोऽविशत्पदम् ।
कर्मणांऽशेन येनासौ कर्तव्यं प्रतिपद्यते ॥ २५ ॥

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

दिशोदेवताः श्रोत्रमिंद्रियंशब्दस्यसिद्धिः शब्दज्ञानंत्वग्गोलकम् १७ ॥

औषधीर्देवतागोलकानींद्रियाणि कंडूस्त्वग्घर्षणसुखम् ॥ १८ ॥

मेढ्रंगोलकंकोदेवतारेतइंद्रियं आनंदः स्त्रीसंभोगसुखम् ॥ १९ ॥

गुदंगोलकंमित्रोदेवता पायुरिंद्रियं विसर्गोमलत्यागः ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

सिद्धिं ज्ञानम् ॥ १७ ॥

ओषधीरोषध्यः । अत्र त्वचाधिष्ठाने त्वक् रोमाणि चेन्द्रियद्वयं तत्र त्वगिन्द्रियये अनिलो देवता स्पर्शो विषयः । रोमन्द्रिये ओषध्यो देवताः कण्डूर्विषयः ॥ १८ ॥

कः प्रजापतिः रेतसां रेत उपलक्षितेन उपस्थेन इत्यर्थः ॥ १९ ॥

विसर्गं मलमूत्रोत्सर्गम् ॥ २० ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

त्वगिंद्रियस्यैव विषयांतरं तद्ग्रहणसहायभूतं देवतांतरंचाह त्वचमिति त्वचमुत्पन्नांचर्मणीत्यर्थः ओषधीः ओषधयः विभक्तिव्यत्ययः आर्षः द्वितीयस्कंधे महीरुहशब्देनोक्ताः देवताः अंशेनत्वगिंद्रियेणसहविविशुःअसौजीवःसमष्टिव्यष्टिरूपः येनांशेनत्वगिंद्रियेण यैः रोमभिस्तदुपलक्षितैश्चर्मभिः धिष्ण्यभूतैः कंडूंप्रतिपद्यते जीवः महीरुहैः सहायभूतैर्देवैर्बहिःकंडूं वायुदेवेनसहायभूतेनांतर्बहिश्चस्पर्शम् इत्येवं द्वितीयस्कंधेऽप्यचस्थानभेदाद्विषयभेदः देवभेदश्चबोध्यः ॥ १८ ॥

कः प्रजापतिः अंशेनोपस्थेंद्रियेणसह उपाविशत् येनांशेनोपस्थेनेंद्रियेणरेतसानंदमौपस्थ्य सुखंप्राप्नोति ॥ १६ ॥ २० ॥

भाषाटीका

अनन्तर कर्णस्थान पृथक् भये, उस स्थान की देवता दिशा अपने श्रोत्रांश से प्राप्त भई, जिस से शब्द ज्ञान को प्राप्त होता है ॥ १७ ॥

अनन्तर चर्म स्थान पृथक् भयो, ओषधि अपने रोम रूपांश से उस स्थान को प्राप्त भई जिस से कंडू ज्ञान को प्राप्त होता है १८

अनन्तर शिश्न स्थान पृथक् भयो, उस स्थान की देवता ब्रह्मा अपने रेत अंश से प्राप्त भये, जिस से आनन्द को प्राप्त होता है ॥ १९ ॥

अनन्तर गुदस्थान पृथक् भयो, उस स्थान की देवता लोक पाल सूर्य अपने पायु रूप अंश से प्राप्त भये जिस से विसर्ग ( मला दित्याग ) को प्राप्त होता है ॥ २० ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

स्वर्पति;स्वर्गस्यपतिः वार्तयाक्रयविक्रयादिशक्त्या वृत्तिजीवकाम् ॥ २१ ॥ २२ ॥ २३ ॥

विक्रियांसंकल्पादिरूपाम् ॥ २४ ॥

आत्मानमहंकारम् अभिमन्यतेऽनेनेत्यभिमानोरुद्रः कर्मणाऽहंवृत्त्या कर्तव्यामिति क्रियाम् ॥ २५ ॥

---

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्यादीपिका टिप्पणी ।

विष्णुस्तदा विष्टोदेवविशेषः स्वांशेनविष्णोः शक्त्यागत्याइन्द्रियेण सह प्राप्यं गमनेन प्राप्तव्यंयज्ञीयद्रव्यं द्वितीयसम्वादात् ॥२२॥

अत्र बुद्धिंचास्य विनिर्भिन्ना मितिपद्यं क्वचिद्दृश्यते तत्स्वास्य सम्मत मेव बुद्धिचित्तयोरभेदेन निर्देश इति व्याख्यानात् तथापि पुस्तकेषु दृष्टत्वात्पृथगङ्कः क्रियते वागीशो ब्रह्मा बोधेन सर्व व्यवहार हेतु व्यवसायेनांशेनेन्द्रियेण सहबोद्धव्यस्य ज्ञेयस्य व्यवह्रियमाणवस्तुनः प्रतिपत्तिर्ज्ञानम् ॥ २३ ॥

* वीरराघवे २३—२४ श्लोकयोर्व्यत्ययेन पाठः ।

श्रीराधारमणदासगोस्वामिविरचिता
दीपन्याख्यादीपिका टिप्पणी ।

मनसा सुखाद्युपलब्धिसाधनेन्द्रियेण सह ॥ २४ ॥

अहं वृत्त्या अहमिति व्यापारेण ॥ २५ ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका

हस्ताविति अस्य ब्रह्मणः विनिर्भिन्नौहस्तौकरौ स्वर्पतिः स्वर्गस्य पतिरिंद्रः वार्तया कृष्याद्यिव्यापाररूपवृत्तिसाधनेनांशेन पाणीन्द्रियेणाविशत्पुरुषोऽयंहिजीवः यया वृत्तिसाधनपाणीन्द्रियेण—वृत्तिंजीवन प्रकारंप्रति प्रपद्यते प्राप्नोति अत्रहस्ताविल्यनेनाच्छिपीइति द्विवचनेनचरणां श्लोकानां चतुर्मुखशरीराद्धिमकव्यष्टिदेहांवषय त्वं स्पष्टं ननु तस्यैव हस्ताद्युत्पत्तिपरत्वं चतुर्मुखस्य भुज चतुष्टयनेत्राद्यक सद्भावात् ॥ २१ ॥

पादावितिअस्य विनिर्भिन्नौ पादौ चरणौ लोकेशो विष्णुर्गत्या गति साधनेनांशेन स्वाधिष्ठेयपादेन्द्रियेण सहाविशत् यया गति साधनेन पादेन्द्रियेणासौ जीवःप्राप्यंगंतव्यं गमनेन प्रतिपद्यते प्राप्नोति ॥ २२ ॥

हृदयमिति अस्य निर्भिन्नं हृदयं कमलाकारं धिष्ण्यं स्थानं चंद्रमा मनसांशेनेन्द्रियेण सहाविशत् येन मनसाऽसौ जीवः विक्रियां विकल्प संकल्प रूपां प्रतिपद्यते ॥

एकस्यैवांतःकरणस्य विक्रिया बोधाभिमान विवेक रूपवृत्ति भेदेन मनो बुद्ध्यहंकारचित्तभेदस्य चंद्रवागीश रुद्र प्रजापतयोऽधिष्ठातारो बोध्याः तत्र संकल्प विकल्पात्मक वृत्त्यवच्छिन्न स्वान्तः करण भेदस्य चंद्रमसा धिष्ठितस्य समष्टि पुरुषा द्विभागः ॥ २३ ॥ अथ बुद्ध्यादि विभागमाह बुद्धिमित्यादिना ब्रह्मणः विनिर्भिन्नां बुद्धिंधिष्ण्यं स्थानं वागीशःब्रह्मा बोधेन निश्चयात्मकज्ञानजननसामर्थ्येन सहाविशत् यतः बोधेनबोधव्यस्य निश्चेतव्यस्य प्रतिपत्ति र्ज्ञानं भवेत् ॥ २४ ॥

आत्मानमिति आत्मानमहंकारमस्य ब्रह्मणःनिर्भिन्नं पदं स्थानमभिमानः अभिमन्यतेऽनेनेत्यभिमानः अनात्मन्यात्माभिमान कृद्देवता रुद्रः सर्वात्मनोऽतःकरणं गिरित्रं इति प्रागुक्तत्वात् कर्मणा देहाभिमनिनांशेनाविशत् येन कर्मणाऽसौ जीवः कर्तव्यमभिमान विषयं प्रतिपद्यतेऽभिमनुते ॥२५॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

"इंद्रोवृषात्मशक्रार्केषु,,इत्यभिदानादिंद्रशब्दस्यपुरंदरादन्यविषयत्वनिरासायस्वर्पतिरित्युक्तं वार्तयाहस्तेन्द्रियेणांशेन वृत्तिमादानाख्याम् ॥ २१ ॥

गत्यागतिसाधनपादेन्द्रियेण ॥ २२ ॥ २३॥

हृदयंमनोनिवासस्थानं मनसेन्द्रियेणविक्रियांसंकल्पाविकल्परूपाम् ॥ २४ ॥

आत्मानमात्मनाडीविशेषमुत्पन्नं वाचस्पतिर्बृहस्पतिः बुद्ध्याख्यांशेनाविशत्ययाबुद्ध्याऽसौहरिनियतोब्रह्मानिश्चयंप्राप्नोति "आत्मनाऽयंतथाबुद्धिरत्रस्थश्चबृहस्पतिमिति, इत्यतआत्मशब्देनात्रनाड्येबोच्यते ॥ २५ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

आत्मानमहम्भावास्पदं कर्मणा अहम्भावेनेन्द्रियेण ॥ २५ ॥

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ॥

हस्तौगोलकमिंद्रोदेवास्वर्पतिरितिलोकपालःवार्ताकृतिः करणसामर्थ्यबलमिति यावदिंद्रियवृत्तिर्हस्तव्यापारः ॥ २१ ॥

पादौगोलकंविष्णुर्देवतागतिरिंद्रियं प्राप्यंचरणकर्मग्रामादिसंबंधइतियावत् ॥ २२ ॥

अंतःकरणचतुष्टयस्यहृदयमेकंगोलकं तद्वविषयभेदेन बुध्यादिशब्देनोच्यते बुद्धिर्गोलकवागीशोब्रह्मादेवताबोध इंद्रियंबोद्धव्यादृष्टादःप्रतिपत्तिः ज्ञानमिंद्रियव्यापारः हृदयगोलकंचंद्रमादेवता मन इंद्रियविक्रियाविविधक्रियासंकल्पविकल्परूपेंद्रियव्यापारः २३-२४

आत्माहंकारः अंतःकरणांशः अभिमानोदेवतारुद्रात्मकइतिकेचित् नूतनसृष्टित्वात्तच्छब्दवाच्यापव तथाविधास्ते कर्मअभिमति देहादावहंबुद्धिः इंद्रियंकर्तव्यमहंकारकार्यसत्वंगोलकं महान्देवता चित्तमिंद्रियंविज्ञानं चेतनाइंद्रियव्यापारः ॥ २५ ॥

---

श्रीविश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ॥

वार्तया क्रयविक्रयादिशक्त्येति वार्ता वर्णाशिल्पादिशब्दवाच्यमध्यात्मं वृत्तिं जीविकाम् ॥ २१ ॥ २२ ॥

बुद्धिं बुद्ध्यास्पदं गोलकं हृदयैकदेशं । वागीशो ब्रह्मा बोधेन बुद्ध्या श्लोकोऽयमसर्वसम्मतः ॥ २३ ॥

विक्रियां सङ्कल्पादिरूपाम् ॥ २४ ॥

आत्मानमहंकारास्पदं गोलकं हृदयैकदेशम् अभिमन्यतेऽनेनेति अभिमानो रुद्रः । कर्मणाहंकारेण कर्त्तव्यं अभिमन्तव्यम् ॥ २५

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

यया आदानादिक्रियायाऽसौजीवः वृत्तिंजीविकांप्रपद्यते तयावार्तयानुमेयेनांशेनपाणीन्द्रियेणसहस्वर्पतिः स्वर्गपतिरिंद्र आविशत् २१

यया प्राप्यंगन्तव्यं देशंप्रपद्यते तयागत्यानुमेयेनस्वांशेन स्वाधिष्ठेयेन पादेन्द्रियेण सह आविशत् ॥ २२ ॥

अथैकस्यैवांतः करणस्यबोध विक्रियाऽभिमान विवेकाख्याभिर्वृत्तिभिर्भेदेषु बुद्धिमनोऽहंकार चित्तेषुब्रह्मणः प्रवेशमाह बुद्धिमितिचतुर्भिः यतः सहायभूताद्वागीशात् ॥ २३ ॥

हृदयंमनः येनमनसात्मिकायाः विक्रियायाः हेतुभूतेनांशेन स्वकरणेन असौजीवः विक्रियांसंकल्पादिरूपाम् ॥ २४ ॥

आत्मानमहंकारम् अभिमन्यतं अनेनेत्यभिमानो रुद्रःकर्मणांशेन अहंदेवोमनुष्यः ममेदमित्येववचनादि कर्मकौशलेनकर्त्तव्यं देहगेहादौक्रियमाणं महंतांममतांच प्रतिपद्यते ॥ २५ ॥

---

भाषाटीका ॥

अनन्तर याके हस्थ निकसे तब उनके स्वामी इन्द्र स्वर्गपति प्रवेश करते भये वार्ता के अंश से जिन हस्तन से सर्व वृत्ति मैं विराट् देव करने लगा ॥ २१ ॥

अनन्तर पाद निकसे तब लोकेश्वर विष्णु प्रवेश करते भये चलना या अंश करके चलने को प्राप्त होतो भयो ॥ २२ ॥

अनन्तर याको बुद्धी भई तब ब्रहस्पति अपने ज्ञान अंश सं प्राप्त भये जिस से यह संकल्प विकल्प आदि को प्राप्त भयो ॥ २३

या विराज देह को हृदय उत्पन्न भयो ताके चन्द्रमा देवता अपने मन के अंश करके यह देह रूप विकार को प्राप्त होतो भयो ॥२४॥

सत्त्वं चास्य विनिर्भिन्नं महान् धिष्ण्यमुपाविशत् ।
चित्तेनांशेन येनासौ विज्ञानं प्रतिपद्यते ॥ २६ ॥
शीर्ष्णोऽस्य द्यौर्धरा पद्भ्यां खं नाभेरुदपद्यत ।
गुणानां वृत्तयो येषु प्रतीयन्ते सुरादयः ॥ २७ ॥
* आत्यन्तिकेन सत्त्वेनदिवं देवाः प्रपेदिरे ।
धरांरजः स्वभावेन पणयो ये च तानन्तु ॥ २८ ॥
तार्तीयेन स्वभावेन भगवन्नाभि माश्रिताः ।
उभयोरन्तरं व्योम ये रुद्रपार्षदां गणाः ॥ २९ ॥
मुखतोऽवर्तत ब्रह्म पुरुषस्य कुरूद्वह ? ।
यस्तून्मुखत्वाद्वर्णानां मुख्योऽभूद्ब्राह्मणो गुरुः । ३० ॥

भाषाटीका

अनन्तर अहँकार भयो तामें सर्व प्रकार से अभिमान करने वारेरुद्र हृदय में प्रवश करते भय जा कर्म क अंश स सर्व कर्म योग्यताको प्राप्त होतो भयो ॥ २५ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

सत्त्वमितिबुद्धिचित्तयोरभेदेननिर्देशः महानितिब्रह्मा चित्तेनचेतनया ॥ २६ ॥

त्रिलोकोत्पत्तिमाह शीर्ष्णइति वृत्तयः परिणामाः ॥ २७ ॥

एतदेवप्रपंचयति द्वाभ्याम् आत्यंतिकेनोर्जितेन पणव्यवहारे पणंतेयागादिनाव्यवहरंतीतिपणयो मनुष्यास्ताननुएतदुपकरणभूतायेगवादयस्तेऽपिधरांप्रपेदिरे ॥ २८ ॥

तृतीयंतमस्तदीयेनतामसेन उभयोर्द्यावापृथिव्योरंतरंमध्यंव्योमांतरिक्षंतदेवभगवतोनाभिस्तामाश्रितारुद्रपार्षदांरुद्रस्यपार्षदानांभूतादीनांगणाः ॥ २९ ॥

अवर्ततप्रवृत्तम् ब्रह्मवेदः यस्तून्मुखत्वान्मुखोद्भवत्वाद्वर्णानांमुख्योमुखमिवप्रथमोगुरुश्चाभूत्सोऽपिमुखतोऽवर्ततेत्यनुषंगः अध्यापनादिनाब्राह्मणस्यवेदोवृत्तिःतयावृत्त्यासहब्राह्मणोमुखतोजातइत्यर्थः एवमुत्तरत्रवर्णत्रयेऽपिज्ञातव्यम् ॥ ३० ॥

---

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी

ब्रह्मेति ब्रह्मवासुदेवयोरभेद निर्देशः तदसम्मत पद्याभ्युपगमे महान् वासुदेवः क्षेत्रज्ञोवा विज्ञानमनुसंधानम् ॥ २६ ॥

अस्य विराजः शीर्ष्णः कारणांशात्सत्त्वप्रधानाच्छिरस्थानीयात् द्यौः स्वर्लोकः एवं पद्भ्यांकारणांशाद्रजः प्रधानात् पदस्थानीयाद्धरा भूर्लोकः नाभेः कारणांशात्तमः प्रधानान्नाभिस्थानीयात्खंभुवर्लोकः इति व्याख्येयम् येषु लोकेषु ॥ २७ ॥

एतदेव सुरादीनां तत्तल्लोकस्थितत्वमेव तदुपकरणभूता मनुष्याणां व्यवहार परिच्छद रूपाः ॥ २८ ॥ २९ ॥

अनुषङ्गः अन्वितस्यक्रियापदस्यपुनस्सम्बन्धः मुखमिव प्रथम इतिव्याख्यानात् मुखशब्दस्याद्यवाचकत्वमत्रनोपादीयते तत्र प्रत्ययस्यवैयर्थ्यात् एवं वृत्त्यासहोत्पन्नत्वम् ॥ ३० ॥

---

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्यादीपिका टिप्पणी ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचंद्रचंद्रिका ॥

सत्त्वमिति अस्य ब्रह्मणो विनिर्भिन्नं सत्त्वं देहात्मविवेक ज्ञानहेतु शुद्ध्याख्यमंतःकरणं बुद्धिचित्तयोरभेदेनायं निर्देशः धिष्ण्यं स्थानं महान् प्रजापतिः चित्तेनांशेन सम्यगर्थचिंतनरूपेण मनसोपाविशत् येन चित्तेनांशेनासौ जीवः विज्ञानं सम्यक्चिकीर्षयितव्यार्थविषयं ज्ञानं प्रतिपद्यते लभते ॥ २६ ॥

एवं व्यष्टींद्रियविभागमुक्त्वाऽथ देवादीनां भोगस्थानविभागमाहशीर्ष्ण इति अस्य ब्रह्मणः शीर्ष्णः शिरसोद्यौःपद्भ्यांपादाभ्यांधरा भूमिः अस्य नाभेःखम् अंतरिक्षलोकः उदपद्यतउद्भूत् येषु द्युधराखेषु गुणानां सत्त्वरजस्तमसां वृत्तयः वृत्तिमंतः देवमनुष्यादयःवृत्तिशब्दोऽजहल्लक्षणयावृत्तिमत्परःप्रतीयंतेदृश्यन्ते देवादय उत्पद्यंत इत्यन्वयः २७

गुणानां वृत्तयइत्येतदेव प्रपंचयतिद्वाभ्यांआत्यंतिकेनेतिआत्यान्तिकेन ऊर्जितेन औत्पत्तिकेनेत्यपि पाठः तदा नैसर्गिकेणेत्यर्थः सत्त्वेनसत्त्वगुणेन उपलक्षिता देवाः दिवं सात्त्विक कर्मानुष्ठाननिष्पादित फलभोगानुरूपद्युलोकं प्रतिपेदिरे प्राप्ताः पणयः पण व्यवहारे पणंते आयासादिना व्यवहारेण जीवंतीति पणयो मनुष्याः ताननुसृत्य ये उपकरणभूता गवादयस्ते सर्वे रजः स्वभावेन उपलक्षिताः राजसकर्मफलभोगानुकूला धरां भूमिं प्रपेदिरे हेत्वर्थे तृतीया सात्त्विकादिस्वभावेनहेतुनाद्युः पृथिव्यादीन् लोकान् देवादयः प्रपेदिरे इत्यर्थः २८

तार्त्तीयेनेति तृतीयं तमः तदीयेन तार्त्तीयेन तमःस्वभावेन भगवन्नाभिंभगवतो वैराजधारणायां नभस्थलं नाभिसरोगृणन्ति, भूः पादौ यस्य नाभिर्वियदित्यादिभिर्नाभित्वेनानुसंधीयमानं यद्वा भगवान्नाभिं भगवतश्चतुर्मुखशरीरस्यभगवतः नाभिनाभ्याआसीदंतरिक्षमिति श्रुतेः उपचारात्कार्ये कारणशब्दः उभयोर्द्यावापृथिव्योरंतरं मध्यस्थं व्योमांतरिक्षं रुद्र पार्षदां गणाः भूत प्रेत पिशाचाद्या आश्रिताः २९

* औत्पत्तिकेनेति विजयध्वज वीरराघवयोः संमतः पाठः ।

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका

चतुर्वर्णोत्पत्तिमाह मुखतइति पुरुषस्य समष्टिपुरुषस्य मुखतःब्रह्मयद्ब्राह्मणवृत्ति रध्ययनादि तन्मुखतोऽवर्त्ततप्रवृत्तं एतदेवहि ब्राह्मणानां ब्रह्ममुखोद्भूतत्वंनाम यत्तन्मुखव्यापारभूताध्यापनादिवृत्त्यार्थतत्वम् एवंक्षत्रियादिष्वपिद्रष्टव्यं हेकुरूद्वह! विदुर ! यद्यस्माद्ब्राह्मणः तन्मुखत्वात्तन्मुखोद्भवत्वात्तन्मुखोद्भूताध्यापनादिमुखव्यापारत्वा — द्वर्णानांमुख्यः मुखमिवप्रधानः गुरुश्चाभूत् ॥ ३० ॥

———

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

महान्ब्रह्मासर्वसत्वनाडीविशेषाधिपत्यंस्वस्थानंचिंत्तनाविशत् असौब्रह्मांतर्यामीब्रह्माच“शतंचैकास्यहृदयस्यनाड्य”इतिश्रुतेःबहुत्वान्नाडीनांकिमेतद्विशेष्योच्यंतइतिचेदुच्यते ब्रह्मनाड्याअवांतरत्वज्ञापनायएतयोर्मुख्याभिमानीब्रह्माचेति तदुक्तं “अहंसत्त्वमितिद्वेधाब्रह्मनाड्याअवांतरं। कर्तृनामात्वहंकारस्त्वहंनाड्यांव्यवास्थितः। सत्वनाड्यांतथाचित्तमभिमानोहरस्तथा। अहंनाड्यांसत्वनाड्यांब्रह्माचैवव्यवस्थित” इति ॥ २६ ॥

शीर्ष्णःशिरसः धराभूमिः खमंतरिक्षं येषुप्राणिषुसत्वादिगुणानांवृत्तयःसुखकर्मप्रमादलक्षणाःस्वतोदृश्यंते तेषुलोकेषुसुरासुरादयोवसंतीतिशेषः आदिशब्देन मनुष्या रुद्र पार्षदगणा गृह्यंते २७

एतदेवविवृणोति औत्पत्तिकेनेति औत्पात्तिकेनस्वाभाविकेनसत्वेनस्वाभाविकसात्विकत्वात् पणायोहानोपादानव्यवहारंकुर्वंतोमनुष्याःयेचतान्पणीननुअनुगतास्तेऽपि ॥ २८ ॥

तार्तीयेनतामसेनस्वभावेनभगवन्नाभिमंतरिक्षमाश्रितारुद्रपार्षदगणाः उभयोर्द्यावापृथिव्योरंतरंमध्यंव्योमाश्रिताइतिशेषः ॥ २६ ॥

इदानींवर्णोत्पत्तितदभिमान्युत्पत्तिंचवक्ति मुखतइति पुरुषस्यब्रह्मांतर्यामिणोमुखतोब्रह्मजातिरवर्तत अत्रब्रह्मशब्देनब्राह्मणजातिः तदुत्पन्नाब्राह्मणास्तज्जात्यभिमानिनउच्यंतइतिज्ञापनायब्रह्मेत्युक्तम् उत्तरत्राप्येवमेवानुसंधेयंब्रह्माभिमानीतुभृगुरजनिब्रह्मणोमुखात् चत्राभिमानीतुमनुर्ब्रह्मवाहोरजायतेत्यादिवचनेनाश्रुतव्याख्येयमितिअपवादंनिवारयति यत्रहरावुन्मुखत्वाद्ब्राह्मणास्त्रिवर्णानांमुख्योगुरुरभवत् तस्यपुरुषस्यैवतत्त्वोपदेशाद् तत्वज्ञानदानेनाविद्यादिदोषनिगरणाच्चगुरुरित्यर्थः गृशब्देगॄनिगरणइतिधातुः ॥ ३० ॥

———

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

सत्वं चित्तास्पदं गोलकं चित्तेन्द्रियेण विज्ञानं सामान्यतो ज्ञयम् एतच्च बुद्धेरप्युपलक्षणं क्वचित्तु पादावस्येत्यनन्तरं बुद्धिं चास्येत्यादिकमपि पद्यं पृथगस्ति ॥ २६ ॥

शीर्ष्णइति अस्य विराजः शीर्ष्णो द्युलोककारणांशात् एवमन्यत्रापिज्ञेयं भुवर्लोकः ॥ २७—३२ ॥

———

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ॥

इदानींमध्येअवयवैर्लोकनिर्माणमाह शीर्शोऽस्येति अस्यविराजः शीर्ष्णः सकाशाद्यौरुदपद्यत नाभेः खमंतरिक्षमुदपद्यत पद्भ्यामितिपंचमी धरापृथ्वीविपरीतकथनेप्रयोजनंवक्तव्यं ननुकिमर्थमेतन्निरूपणं विज्ञापितो हिसंतापःकृतः तत्वानां च भोगार्थं स्थाननिर्माणमुक्तंधरादिनिर्माणस्य कोपयोग इत्याशंक्याह गुणानामिति पूर्वमहंकारस्य मायाया वा गुणानिरूपितास्तेषां प्रत्येकवृत्तिस्थानं वक्तव्यं तदभिमानिदेवानां नियतभोगार्थं वृत्तयोविलासप्रकारायेषु धरादिषु ननु गुणानां कावृत्तयः विलासश्चेतनानांभवतीत्याशंक्याह- येषु प्रतीयंते सुरादय इति येषु प्रतियंति पुनरसुषजंतसुरादेवाः आदिशब्देन नराभूतानि च ॥ २६ ॥ २७ ॥

तदेव विभज्य स्पष्टयति आत्यंतिकेनेति आत्यंतिकं गुणांतरादुत्कृष्टं सत्वाधिक्यं वा देवाः पूर्वोक्ता अन्ये च पूर्वमेथाधिदैविकानिरूपिता अन्ये च त्रयस्त्रिंशत्तेसर्वेऽतिसात्विका इति सत्वविलासस्थानंदिवं प्रतिपेदिरे विपरीतकथने हेतुं वदन्व्युत्क्रमेण निरूपयति धरामिति गुणक्रमएवात्रक्रमोनत्ववयवक्रमःरजःस्वभावेनपणायोनराधरां प्रतिपद्यंते ते हिकर्मणापणंतोकर्मदत्वाफलं गृह्णंतीति कर्मैवव्यवहारइति पाणिनोनराः नतुगवादयस्तेषां तामसत्वेऽपि नरोपकारांभूमिमेवाश्रिताः ॥ २८ ॥

तृतीयस्थाने हेतु माह तार्तीयेनेतितार्तीयंतृतीयं प्रकृतेर्गुणत्वाय स्वभावेनेत्युक्तं भगवन्नाभिरंतरिक्षंतामसस्य मध्ये निवेशनं हेतुरुच्यते उभयोरंतरंव्योमेति अंतरिक्षं शून्यं तेषां स्थानं रुद्राघातुकाअनायतनाः अतस्तृतीसत्वेतार्तीयमध्यस्थानस्य शून्यत्वाद्रुद्रैः स्वस्थानंगृहीतमिति आधेयाधारयोर्वलिष्ठत्वेनांतरालमवस्थानं तत्रास्थतान्निर्दिशति येरुद्रपार्षदइति रुद्रस्य पार्षदिसभायां योग्याः कदाचित्तत्ररुद्रसभायांसनकादयोदेवावाआगच्छंतीति तद्व्यावृत्त्यर्थं गणइत्युक्तं ये महादेवस्य गणाभूत्वापार्षदास्ते मध्ये तिष्ठंति ॥ २९ ॥

एवं व्यष्टिसृष्टौ गुणैः स्थानभेदानिरूपिताः गुणैरेव वर्णभेदा इति वर्णानवयवेभ्यः उत्पन्नान्निरूपयति भजनार्थं मुखतोऽवर्त्ततेतिचतुर्भिः भगवतोमुखतोब्रह्मदेवतारूपं शुद्धसत्वपरिणामभूतं यदधिष्ठानाद्ब्राह्मणा भवंति तज्जातं अवर्ततेतिविद्यमानमेव मुखात्प्रकटीभूतं पुरुषस्य भगवतोनारायणस्य कुरूद्वहेति विश्वासार्थमेतच्छ्रवणाधिकारार्थं वा यस्तुवर्णानां मुख्यः ब्रह्मोन्मुखत्वाद्ब्राह्मणोऽभूत् तुशब्देन स्वतोब्राह्मणस्य मुखत्वं च भवति ब्रह्मणि स्थितोब्राह्मणस्तत्रभवोवा तस्येदमिति वा अणू उन्मुखोऽग्रेप्रवृत्तः मुख्योवर्णऊर्ध्वमुखोभवति ऊर्ध्वमुखंयस्यउपदेशाद्यर्थसाद्यस्योर्ध्वमुखं भवति ब्रह्मण्यूर्ध्वमुखं भगवन्मुखाद्यतऊर्ध्वंजातम् ऊर्ध्वमुखं येनेति ब्रह्मोत्पत्त्यर्थमेव भगवतोमुखमूर्ध्वं जातमिति अतः समष्टिव्यष्टोर्बीजांकुरभावेनैक्यादुन्मूर्ध्वं जातम् ऊर्ध्वं मुखं येनेति ब्रह्मोत्पत्त्यर्थमेव भगवतो मुखमूर्ध्वं जातमितिसामान्येन वर्णानां मध्ये मुख्योमुखेभवः प्रथमं जातश्च ब्राह्मणोजातः अतएव गुरुर्भगवानेवहिगुरुः सहिमुखेनोपदिशति ततउपदेशनार्थमेव ब्रह्म आधिभौतिकं निर्गतं आध्यात्मिकं ब्रह्मवेदः आधिदैविकं त्वक्षरमिति अतोभौतिक ब्रह्माविर्भावादुन्मुखत्व सामान्येन तत् ब्रह्मवर्णाद्येप्रविशतीति ब्राह्मणएव द्वितीयब्रह्मणोवेदस्य आध्यात्मिकस्य तृतीयब्रह्मज्ञानार्थमुपदेष्टा भवतीति गुरुः ॥ ३० ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

सत्वं चित्तास्पदं गोलकं हृदयैकदेशं महान् विष्णुः विज्ञानं चेतनाम् । २६

त्रिलोकोत्पत्तिमाह शीर्ष्णइति । वृत्तयः परिणामाः ॥ २७

आत्यन्तिकेन उर्जितेन पणान्ते यागादिना व्यवहरन्तीति पणायं मनुष्याः पणव्यवहारे ।ताननुवर्त्तन्ते ये तदुपकरणभूता गवादयस्तेऽपि धरां प्रपेदिरे २८

तृतीयं तमस्तदीयेन तामसेनेत्यर्थः ये रुद्रपार्षदां भूतादीनां गणास्ते भगवतो विराजो नाभिमाश्रिता इत्यन्वयः । नाभिरेव का

वाहुभ्योऽवर्तत क्षत्रं क्षत्रियस्तदनुव्रतः ।
योजातस्त्रायते वर्णान्पौरुषः कण्टकक्षतात् ॥ ३१ ॥
विशोऽवर्तन्त तस्योर्वो र्लोकवृत्तिकरीर्विभोः ।
वैश्यस्तदुद्भवो वार्त्तां नृणां यः समवर्तयत् ॥ ३२ ॥
पद्भ्यां भगवतोजज्ञे शुश्रूषा धर्मसिद्धये ।
तस्यां जातः पुरा शूद्रो यद्वृत्त्या तुष्यते हरिः ॥ ३३ ।
एते वर्णाः स्वधर्मेण यजंति स्वगुरुं हरिम् ।
श्रद्धयाऽऽत्मविशुद्ध्यर्थं यज्जाताः सहवृत्तिभिः ॥ ३४ ॥
एतत्क्षत्तर्भगवतो दैवकर्मात्मरूपिणः ।
कःश्रद्दध्यादु * पाकर्तुं योगमायावलोदयम् ॥ ३५ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

तत्राह उभयोर्द्यावापृथिव्योरन्तरं मध्यं व्योम आकाशं भुवर्लोकम् ॥ २९ ॥

चातुर्वर्ण्योत्पत्तिमाह ब्रह्म वेदः पुरुषस्य परमेश्वरस्यैक्यात्तस्य मुखतोऽवर्त्तत अभूत् यस्तु उन्मुखत्वाद्वेदान्मुखत्वाद्धेतोर्वर्णानां मुख्यो गुरुश्चाभूद्ब्राह्मणः सोऽपि मुखतोऽवर्त्ततेत्यनुषंगः ॥ ३० ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

सत्वंचितम् महान्क्षेत्रज्ञः चित्तांशेन चेतनयाविज्ञानंविवेकं ॥ २६ ॥

भगवद्देहात्रिलोकोत्पत्तिमाह शीर्ष्णइति अस्यवैराजस्यभगवतः येषुद्युप्रभृतिषु गुणानांसत्त्वादीनां वृत्तयःप्रतीयंते ॥ २७ ॥

गुणानांवृत्तय इत्यर्द्धश्लोकार्थं प्रपंचयत्यात्यंतिकेनेतिद्वाभ्याम् आत्यंतिकेनोर्जितेन पणांतेयागादिना व्यवहरंतीति पणयांमनुष्यादयः येचतानतुमनुष्योपकरण भूतागवादयः तेचधरांप्रपेदिरे ॥२८

तार्तीयेनतामसेन उभयोर्द्यावा पृथिव्योरंतरं मध्येव्योम अंतरिक्षंतदेव भगवन्नाभिमाश्रिताः ॥ २९ ॥

पुरुषस्यभगवतो मुखतोब्रह्मवेदः ब्राह्मणवृत्तिहेतुरवर्ततजातम् यस्तून्मुखत्वात् मुखोद्भूतत्वात् वर्णानांमुख्यः अग्रगण्यः अतएवगुरुश्चाभूत्सोऽपि मुखतोऽवर्ततेत्यनुषंग ॥ ३० ॥

---

भाषाटीका ।

अनन्तर याके सत्व भयो ब्रह्मदेव प्रवेश करते भये जा चित्त के कारण विराट देह विज्ञान को प्राप्त भयो ॥ २६ ॥

याके मस्तक से स्वर्ग पाद से पृथिवी नाभी से आकाश भये जिन में गुणों के वृत्तियों से देवता आदि प्रतीत होते हैं ॥ २७ ॥

अत्यंता धिकत्व गुण होने से देवता स्वर्ग में प्राप्त भये रजोगुण के स्वभाव से या गादि व्यवहार करनेवाले मनुष्य और गौ आदि क पृथिवी पर प्राप्त भये ॥ २८ ॥

भाषाटीका ।

अकाश पृथिवी मध्य रूप तीसरे तमोगुण से स्वर्ग पृथिवी को मध्य जो आकाश वो ईश्वर की नाभि उसमें रुद्र के पार्षद गण वसत भये ॥ २९ ॥

हे राजन् ! वा पुरुष के मुख से वेद भये. मुखमे से होनेसे,वेद मुख से कहने से सर्व वर्णों के मुख्य ब्राह्मण गुरु होत भये ॥ ३० ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

क्षत्रंपालनरूपावृत्तिस्तल्लक्षणमनुव्रतोऽनुसृतः क्षत्रियोऽपिवाहुभ्योऽवर्ततइत्यर्थः तदनुव्रतत्वमेवाऽऽह यइतिपौरुषःपुरुषस्यविष्णोरंशःकंटकाश्चोरादयस्तेभ्योयत्क्षतंमुपद्रवस्तस्माञ्चायतेरक्षति ॥३१॥

विशःकृष्यादिव्यवसायाः लोकस्यवृत्तिकरीर्जीविकाहेतवः तस्यविभोरूर्वोःप्रवृत्ताः तदुद्भवऊरुजोवार्ताजीविकांयः स्ववृत्त्यासंपादितवान् ॥ ३२ ॥

तस्यांनिमित्तभूतायाम् यस्यवृत्त्याहरिः स्वयमेवतुष्यति ॥ ३३ ॥

यद्यस्माज्जाताः गुरुत्वाज्जनकत्वाद्वृत्तिप्रदत्वाच्चहरेराराधनेतेपांपरोधर्मइत्यर्थः ॥ ३४ ॥

भोक्षत्तर्दैवकर्मात्मरूपिणः कालकर्म स्वभावशक्ति मतो योगमायावलेनोज्जृंभितमेतद्विरान्रूपमुपाकर्तुं साकल्येन निरूपयितुंकःश्रद्दध्यादिच्छेत् इच्छाऽप्यशक्या निरूपणं तुदूरतइत्यर्थः ॥ ३५ ॥

---

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्यादीपिका टिप्पणी ।

आवृत्त्यान्वयादित्यर्थ इत्युक्तम् ॥ ३१ ॥

वृत्तिकरीः वृत्तिकर्य्यः ॥ ३२ ॥

यस्यवृत्त्याब्राह्मणवैष्णवसेवारूपया ब्राह्मणादिभिरपि कृतया हरिस्तुष्यतीतितद्वृत्तिमाहात्म्योपलक्षणेन सद्भक्तेरेवमाहात्म्यं-विवक्षितम् त्यक्त्वास्वधर्ममित्यादिनाकेवलवर्णधर्मेण तत्तोषणानुपपत्तेः ॥ ३३ ॥

यजन्ति तस्मिंस्तदर्पणेनतमाराधयन्तीत्यर्थः ॥ ३४ ॥ ३५ ॥

* उदाहर्तुमितिविजयध्वजपाठः

### श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका

बाहुभ्यइति क्षत्रंत्रियधर्मः पालनरूपावृत्तिः तद्बाहुभ्योऽवर्त्तत यो तदनुव्रतः स्वरनन्तरः क्षत्रियश्च स्ववृत्तिद्वारा बाहुभ्योऽवर्त्तत यो ब्रह्मणोबाहुभ्योजातःपौरुषः समष्टिपुरुषांशः क्षात्त्रयः कंटकक्षता त्कंटकवल्लोकोपद्रवकारिणश्चोरादयः तेभ्योजातं यत्क्षतमुपद्रवस्त स्माद्रक्षणात्त्रायतेरक्षतीति ॥ ३१ ॥

विशइतितस्यविभोः प्रभोः ब्रह्मणः ऊर्वो रुपादानस्यैवशेषत्व विवक्षयापष्ठीलोकवृत्तिकरीः कृषावाक्कृष्या दिलोकजीविकाहेतवः विमाकालिंगव्यत्ययावार्योविशः वैश्याअवर्त्ततततुद्भवः ब्रह्मणा उद्धृतः योवैश्यः सन्दणांवार्त्ता माजे विकासमवर्त्तयन्संपादितवान् ॥ ३२ ॥

पद्भ्यामिति भगवतः भगवदात्मकस्य ब्रह्मणः पद्भ्यांशुश्रूषाधर्मसि द्धयं स्वपूर्ववर्णशुश्रूषारूपधर्मसिद्धयर्थं जज्ञे कथंभूता शुश्रूषा इत्यत आह तस्यामिति यद्वृत्त्यायस्यशूद्रस्य वृत्त्याहरिस्तुष्यते तस्यां तादृशशुश्रूषावृत्तौ निमित्तभूतायां शूद्रोजातः भगवत्तुष्टयापादकस्वपू र्ववर्ण शुश्रूषावृत्तिनिमित्तकं शूद्रजन्मेत्यर्थः अनेन स्ववृत्त्या भगव त्संतोषजननमेव परोधर्मइति सूचितम् ॥ ३३ ॥

तदेवोपपादयति एतइति एतेवर्णाः ब्राह्मणादयश्चत्वारः वर्णाः स्वधर्मेण स्ववर्णोचितधर्मेण श्रद्धया आत्मविशुद्धयर्थं मात्मनः अ नादिपापवासना दूषितस्यांतःकरणस्य विशुद्धयर्थं स्वगुरुंस्वजनकं हरिं स्वाश्रितसंसारबंधहरं हरिं यजंति यजंतीत्यर्थः कथंभूतं हरिं यजाताः यद्यस्माच्चतुर्मुखशरीरकात्परमात्मनोहरेः सकाशाद्वृत्तिभिः सहजाताः तंहरियजंतीत्यर्थः ॥ ३४ ॥

एवं सृष्टिलीलां वर्णयित्वा पुनः प्रश्नावसरप्रदानायापारमहि-म्नोभगवतः साकल्येन महिमानमुपवर्णयितुं न कोऽपि शक्तइतिवक्तु पसंहरति एतदिति दैवकर्मात्मरूपिणःदैवंकालः देवनियाम्यत्वेनतत्सं बंधित्वात्कर्मशब्देन जीवादृष्टस्यपृथगुपादानात् आत्मानः कालकर्म वश्याजीवाः देवादिरूपाणि शरीराणयस्यसंतीति दैवकर्मात्मरूपी तस्य भगवतः पूर्णषाड्गुण्यस्य योगमायाबलोदयं युज्यतइति योगाख्य घिष्ठेया माचासौमाया तस्याबलं जननसामर्थ्यं तस्योदयः वि-भवोयस्मिंस्तदेवंतद्विश्वं हेक्षत्तः? विदुर ! उपाकर्तुंसाकल्येनव्याकर्तुं वर्णयितुमितियावत्कः पुमान्श्रद्दध्यात् श्रद्धांकुर्यात् नकोऽपीत्यर्थः ॥ ३५ ॥

---

### श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

तंत्राह्मणमनुव्रतः क्षत्रशब्दंनिर्वक्ति यइति कंटकाःशत्रवः "वेणौद्रुमांगेरोमांचेत्तुद्रशत्रौचकंटक" इतियादवः क्षतात्त्रायतइति-क्षत्रम् ॥ ३१ ॥

विशोवैश्यजातयःतदभिमानिवास्तुश्च वार्ताकृषिगोरक्षणादि-जीवनम् "आजीवोजीविकावार्तावृत्तिर्वर्तनजीवने।स्त्रियांकृषिःपाशुपाल्यंवाणिज्यंचेतिवृत्तय" इत्यमरःविष्णुब्रह्मवायुरुद्रेभ्योजातत्वाद्वश-इतिबहुवचनम्एतत्पूर्वत्रहरेर्जाताब्रह्मणस्तदनंतरमित्यादेःविरिंचादिभ्यो जन्मचेत्कथंहरियातुष्यतेहरिरेतत्कथंयुक्तमितिचेन्न तदंतस्थस्यहरेर्जात त्वात् तदंतस्थहरेर्जानिरितिवा ॥ ३२ ॥

शूद्रजात्यभिमानीकृतिः कृतिनामाशुश्रूषाकर्मासिद्धयेशुश्रूषाख्यक र्मसाधनायपुरादिवृष्टीयस्यशुश्रूषाख्ययावृत्त्या ॥ ३३ ॥

एतेषांस्वस्ववर्णविहितकर्मैवश्रीहरियजनात्मकत्वेनतत्तुष्टिकरंना न्यदितिभावेनाह एतइति तत्रहेतुमाह यज्जातादति स्वस्वविहितवृ-त्तिभिःसहविष्णोर्जातायस्मात्तस्मात्पितृत्वाद्गुरुत्वादिष्टदेवतात्वा

### श्रीमद्विजयध्वजतीर्थ कृत पदरत्नावली ।

त्स्वामित्वाच्च आत्मविशुद्धयर्थंमंतःकरणनैर्मल्याय ॥ ३४ ॥

एवंविधस्यहरेर्माहात्म्यंपुरुषायुषशतेनापिवर्णयितुंनकस्यापिश क्तिरित्याह एतदिति भगवानेवमतीतानागतवर्तमानानंतब्रह्मांडानां निर्मातेतियतोऽतोदैवकर्मात्मरूपिणः देवेष्वधिकत्वाद्देवंसर्वस्यसृष्ट कारणत्वात्कर्मव्यापत्वादात्माएवंविधरूपंस्वभावोऽस्यास्तीति "रूपं शब्देपशौश्लोकेग्रंथावृत्तौहितादिषु। सौंदर्येचस्वभावे च ,, तियादवात् स्यभगवतोयोगमायायाःस्वरूपमहिम्नोबलोदयशक्तिप्रसरंकःपुमानु दाहर्तु सद्गणंनवक्तुंश्रद्दध्यात्श्रद्धांकुर्यादनंतत्वादितिशेषः "आधिक्य कत्वाद्देवशब्दोदैवतेष्वधिकोयतः। दैवंहरिःकर्म मूलंकृतिरितिवभयाः ते।व्याप्तत्वादात्मशब्दश्चश्रीपतित्वाच्चमाधव' इतिवचनादुक्तएवार्थो दैवंदिष्टंभागधेयमित्याद्यभिहितंनभवति ॥ ३५ ॥

---

### श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

पद्भ्यामिति। यद्वृत्त्या शुश्रूषारूपया ब्राह्मणादिना सर्वेणापि स्वस्मिन् कृतया हरिरपि तुष्यतीति तद्वृत्तेर्महिमा दर्शितः। स्वकृ स्वधर्ममित्यादौ केवलेन स्वधर्मेण भगवत्तोषानंगीकारात् ॥ ३३ ॥

तत्र प्रथमजातैः सर्वैरेतैस्तु स्वस्वधर्मः हरियजनरूपतयैव भा विता इति तदानीन्तनानां वैशिष्टयमभिप्रेत्याह एत इति। अत्र यदि ति विराजो हरिशक्तित एव तच्छक्तः अतो हरिभजनं एव तदमेक्षे केस्ततात्पर्यम् ॥ ३४ ॥

योगमायात्र विश्वसृष्टयादिशक्तिः ॥ ३५ ॥

---

### श्रीमद्वल्लभाचार्य कृत सुबोधिनी ॥

द्वितीय वर्णोत्पत्तिमाह बाहुभ्योऽवर्त्ततेति क्षत्रं नाम भगवद् वीर्यं लोकरक्षात्मकं किंचित्तद्बाहुभ्योनिर्वृत्तं अंतःस्थितं सद्बहिर्नि तमित्यर्थःवर्णानांमध्ये द्वितीयस्तदनुव्रतः क्षत्रमनुव्रतं यस्य यद् क्षत्रंरक्षार्थमेवप्रवृत्तं तथायमपीपि सहजातत्वादेकोपादानकत्वा क्षत्रसेवकत्वात् क्षत्राद्धर्मइति नियतकर्मवाचकत्वेन जातिवा कत्वपवप्रत्ययादनुव्रतत्वाद्वर्णोनियुक्तः तदेव विशदयति योजा इति क्षतात्त्रायतइति क्षत्रियः योजातएव स्वातिरिक्तान् त्रीन्वर्णा कंटकक्षतात्त्रायते रोगात्त्राणव्युदासार्थंकंटकादित्युक्तंकंटकादेर शास्त्रे हि भूमेः कंटकप्रायागतिप्रतिबंधकाइति यावत् अन्यथ मारकत्वाद्विपरीततास्यात् अनेन कंटकानां वर्णता निषिद्धा दि दिति संभावनायां पौरुषोयं क्षत्रियाः पुरुषाज्जातः पौरुषः साम कथनार्थं पौरुषइत्युक्तम् ॥ ३१ ॥

तृतीयवर्णोत्पत्तिमाह विशोवर्त्तत इति विशइति सर्वेषामेव र्णानां जीवकावृत्तयउक्ताः कृष्यादयः शिलोंछादीनामपि तन्मूल वं देयमपितत्तएवोच्यतइति तत्रोत्पादकद्वयं कृषिर्गोरक्षाच वाणि त्कुशीदेवृद्धिप्रापके यद्यपि धातुव्यवहारेवैरुप्यं न प्रयोजक तथापि न धातुभिर्जीवनं भवतीत्यत्रोत्पत्त्यर्थं च कृषिगोरक्षयोर्व योजकत्वं कंटकादेव रक्षा क्षात्त्रियस्य ततएवोत्पन्नसुपदेशः ब्राह्म लभते रक्षातः क्षत्रियः। आरण्यानां मूलफलादीनां च यद्यपि उ नोपयोगित्वं तथापि न सर्वेषां सर्वदा तदुपयोगः तस्य भगवतः र्वोः उरुद्वयाद्वार्ता उत्पन्ना तासां प्रयोजनमाह लोकवृत्तिकरीरि लोकानां वृत्तिं जीविकां कुर्वंतीति नन्वमन्त्रोस्ताः पदार्थानां नियतत्वाद्धान्यादीनामपि दर्शनात्कथं तासां सर्वनिर्वाहकत्वमत विभोरिति सहि समर्थोवृत्त्याश्रयणामात्रेणैव सर्वानपि हि

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

न्दूरीकृत्य तं जावयत्यवं तासाममूर्त्तान माधारार्थं नाभ्यएव निर्गतो वैश्यस्तृतीयोवर्णोनृणां वार्त्तां जीविकां सम्यगवर्त्तयत् यइति प्रसिद्धः अथवा वैश्यस्तदुद्भवइति भिन्न यइत्यनुवादः नृणामातदेवाद्व्युदासः अनेन साधारणएव पुरुषास्तद्वृत्त्या जीवंति नत्वधिगतपरमार्थाः सम्यग्वर्त्तनं नामानायासेन नित्यनिर्वाहकत्वम्॥ ३२ ॥

चतुर्थोत्पत्तिमाह पद्भ्यामित्यादि भगवतः सर्वात्मकस्य पदार्थचतुष्टयमभिप्रेतं ज्ञान क्रिया रक्षारूपा जीविका सेवेति ततो भगवतः पद्भ्यांशुश्रूषा नाम सेवारूपा काचिद्भगवद्भक्तिरूपा अंतरंगा काचिच्छक्तिरुत्पन्ना तस्याः प्रयोजनमाह धर्मसिद्धयइति धर्मः सेवयैव भवति गुरुसेवा देवतासेवा अरण्यसेवाआत्मसेवेति किं बहुनासर्वएव धर्माःपातिव्रत्यादयोऽपिसेवायामेव पर्यवसिताःअतो धर्मसिद्ध्यर्थं सेवा गतिदात्री भगवद्भक्तिहेतोरुत्पन्ना अनेनपूर्ववर्णानां पुरुषार्थांतरहेतुत्वमर्थादुक्तं विशोऽर्थसाधकत्वं क्षत्रस्य कामसाधकत्वं ब्रह्मणोमोक्षसाधकत्वमिति अतएव ब्राह्मणएव मुक्तिः क्षत्रियेभोगोवैश्येऽर्थः धर्मः शूद्रइति उत्तरस्य पूर्वहेतुत्वादुत्तरार्थमेव पूर्वग्रहणम् अतो मोक्षार्थमेव धर्मादीनामन्यधर्माणांकरणाकरणं ब्राह्मणस्य तथा भोगार्थमेव क्षत्रियस्य धर्मादिकरणं तथा वैश्यस्य-धनार्थमेवधर्मकरणंशूद्रस्यतुधर्मार्थमेवसेवाधर्मकरणम्अतोऽयंमहान्यार्थधर्मकरणात् अतएव यद्वृत्त्या तुष्यते हरिरिति किंच हरिः सर्वेषांसर्वदुःखहर्त्तासेवयाच दुःखं गच्छत्यतःस्वकर्त्तव्यकरणादपितुष्यति तादृशसेवायांजातःशूद्रस्तन्निर्वाहार्थं वा पुरा कल्पादौ इदानींतनानां तु तदुद्भवत्वं शुश्रूषायांभवइति शकारोकारौ मिलितौद्विरुक्तावेकशेषेणशूभवतः सन्प्रत्ययश्चजस्त्वेन दत्वमापद्यते रेफस्यपरोक्षार्थं व्यत्ययः अप्रत्यादिति सनंतात् अण्प्रत्ययोवाकारोभवति स्त्रीत्वाभावान्न टाप् अण् तद्धितः वृद्ध्यभावःपरोक्षार्थः शुगस्यतदनादर श्रवणात् तदाद्रवणात् १।३ योगेनान्यथा शूद्रशब्दोनिरुक्तः स न जात्युपयोगी तं वा निर्वचनं कालभेदेन स्थापयतिपुरा शूद्रइति सहि यावत्पर्यंतं सेवां न करोति तावत्पर्यंतं शुचैवद्रवति तस्यार्थाद्यभावात् धर्मोऽपि यदि न भवेत् शोकांभवेदिति तेन चाद्रवतीति पुराऽयंशूद्रोभवति पश्चात्तु वर्णमात्रंशोकाभावे हेतुः यद्वृत्त्यातुष्यते हरिरिति हरितोषात्सर्वमेव सिद्धं भवतीत्यर्थः ॥ ३३ ॥

एवं वर्णानामुत्पत्तिरुक्ताभवति तेषांविनियोगमाह एतेवर्णाइति स्वधर्मेणवागादिव्यापारेण सहितेषां स्वधर्मःऔत्पत्तिकोवाव्यापारेण भगवद्भजनं ब्राह्मणस्यरक्षादिना भगवद्भजनं क्षत्रियस्य सेवोपयोगि पदार्थसमर्पणेन वैश्यस्यसेवया शूद्रस्येति तत्रसेवा प्रथमकक्षा सर्वसुलभा यदि सर्वेऽपि भगवत्तोषमेव केवलंकामयंते तदासेवैवकर्त्तव्यायदि स्वधर्मेण सेवितुमिच्छंतिनदास्वधर्मं सिद्ध्यर्थं सेवाकर्त्तव्या तदास्वधर्मस्य फलं वक्तुंतदुपयोगि भगवद्गुणानाह स्वगुरुं हरिमिति स्वधर्मेणसएवोपास्यो यस्त्वावश्यकोभवति तत्र धर्मोपदेष्टत्वाद्भगवानेवोपास्यः सहिस्वगुरुः धर्मेणसहोत्पादनात् यथार्थं ज्ञापयन्शब्दोच्चारयिता गुरुर्भवति एवमेवभगवान् वृत्तिस्वधर्मं प्रथमत उत्पाद्यपश्चात्तदर्थमात्मानमुत्पादयतीति किंच तथैव कृतेऽस्य दुःखाभावोभवतीति नियमात् तथा कर्त्ताहरिर्भवति यजंतीति सिद्धवन्निर्देशः उत्पत्त्यैवधर्मप्रकारयोर्जातत्वाद्विलंबाभावाच्चापर्यवसितत्वाच्चसर्वदैव भगवद्भजने वर्तमानता यजंतीत्यनेन तत्प्रीतिजननप्रकारेणस्वधर्मः कर्त्तव्यःइति सूचितं श्रद्धयेतिहेतुः

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

सर्वत्रआत्मविशुद्धिश्चान्तः करणशुद्धिः सर्वत्रापापंडिनां नियतंफलं शुद्धेऽन्तःकरणेसर्वत्राधिकारीभवति पश्चात्सर्वं सुलभं ननुनिरंतर सेवायांकोऽयंनिर्वंधस्तत्राह यद्यस्मात्स्ववृत्तिभिः सहजाताः अभजनेकालान्तरेऽवृत्तिमुत्पादयिष्यतीत्येवंभगवतःसमष्टिव्यष्टिरूपोत्पादनं सर्वदेवानां तत्रोपभोगः स्वार्थंवर्णचतुष्टयोत्पादनम् ॥ ३४ ॥

तेषांचद्भगवद्भजन प्रकारइति चतुष्टयमुक्त्वोपसंहरति एतत्क्षत्तर्भगवत इति एतच्चतुष्टयमेवास्माभिर्निरूपितंसूचनार्थमधिकंतु स्वयमेवज्ञातव्यमिति नैपुण्यार्थं संबोधनं क्षत्तरिति एकस्यतद्वीर्यस्यांशभूताया क्रियाशक्तेः कोट्यंशलेशोनिरूपितः अतिरिक्तोभगवान्पूर्णएवतदाह भगवतइति तत्रापित्रितयसंयोगमाह दैवकर्मात्मरूपिण इति दैवंकालः कर्मप्राणिनाम् आत्मास्वभावः एतान्यपिस्वस्यैव रूपाणिवर्त्तंते यस्यैकस्यापि रूपस्ययत्रानंत्यं तत्रकोवा तत्स्वरूपमानंत्य चतुष्टयात्मकं निरूपयेत् किंच योगमायायावलस्योदयोयत्रैतादृशंचारित्रं योगमायाहि क्षणमात्रेण कोटिब्रह्मांडानि कर्त्तुंशक्नोति तस्याअपिबलं भगवद्गुणै[illegible]ति अथवायोगमायाकरणं योगमाययायोवलोदयइति उपाकर्त्तुंयथा वेदाआरभ्यंते उपाकरणंनसमाप्यंते चोत्सर्गेण तत्र भगवद्गुणानामपि मुख्याधिधात्वात्तदुपाकरणं युक्तं समाप्तिर्दूरे उपाकर्तुमपि कोऽपिनशक्नोति उपाकरणमपि दूरेकरिष्यामीति प्रारम्भमपिकःकुर्यादंततोगत्वाश्रद्धामपिकः कुर्यादतो मयाभगवतश्चतुर्मूर्तेरापाततो गुणाः कथिताः ॥ ३५ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

क्षत्रं पालनशक्तिः तदनुव्रतस्तन्मुखः क्षत्रियोऽपि बाहुभ्योऽवर्ततेत्यर्थः कण्टकाश्चोरादयस्तेभ्यो यत् क्षतमुपद्रवस्तस्मात् त्रायते रक्षति यतः पौरुषः पुरुषस्यायं तदीयपालनशक्तिमत्त्वादित्यर्थः ३१

विशः कृष्यादिव्यवसाया उर्वोः उरुभ्यां लोकानां वृत्तिकरीर्जीविकाहेतवः वैश्योऽपि तदुद्भव उरुभवः वार्त्तां जीविकां यः स्ववृत्त्या समवर्त्तयत् सम्पादितवान् ॥ ३२ ॥

शुश्रूषा परिचर्या कर्मणो वर्णाश्रमधर्मस्य सिद्धये शुश्रूषां विना कर्ममात्रस्यैव सिद्धिर्नभवतीति सा शूद्रस्य वृत्तिर्भवन्त्यपि वस्तुतः सार्ववार्ण्यक्येवेति भावस्तस्यां विषये शूद्रो जातः पद्भ्यामिति शेषः यद्वृत्त्या हरिस्तुष्यतीति वेदादिभ्योऽपि शुश्रूषाया उत्कर्षः सूचितः ॥ ३३ ॥

सह वृत्तिभिरिति हरियजने जीविकार्थं चिन्ता न कार्येति भावः ॥ ३४ ॥

दैवकर्मात्मानः कालकर्मस्वभावाः स्वीयशक्तित्वाद्रूपाणि तद्वतः योगमायाबलेन उदयो यस्य तदेतद्विश्वमुपाकर्त्तुं सामस्त्येन निरूपयितुं कः श्रद्दध्यात् इच्छेत् इच्छाप्यशक्या निरूपणं तु दूरत एवेति भावः ॥ ३५ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

क्षत्रंक्षत्रियवृत्तिहेतुः पुरुषस्यबाहुभ्योऽवर्तत तदनुव्रतःक्षत्रानुसृतःक्षत्रियोऽपपौरुषःपुरुषबाहुजइत्यर्थः यः कंटकेभ्यश्चोरादिभ्यो यत् क्षतमुपद्रवस्तस्मात्त्रायतेरक्षति ॥ ३१ ॥

लोक वृत्तिकरीः लोकस्यजीविकाहेतवः विशः कृष्यादिव्यवसायाः तस्यपुरुषस्योर्वोरवर्तत तदुद्भवः पुरुषोद्भवः ॥ ३२ ॥

अथापि १ कीर्तयाम्यङ्ग ? यथा मति यथाश्रुतम् ।
कीर्तिंहरेः स्वां सत्कर्तुं गिरमन्याभिधाऽसतीम् ॥ ३६ ॥
एकान्तलाभं वचसो नु पुंसां सुश्लोक मौलेर्गुणवादमाहुः ।
श्रुतेश्चविद्वद्भि रुपाकृतायां कथासुधायामुपसंप्रयोगम् ॥ ३७ ॥
आत्मनोऽवसितो वत्स ? महिमा कविनाऽऽदिना ।
संवत्सरसहस्रान्ते धिया योगविपक्कया ॥ ३८ ॥
अतो* भगवतोमाया मायिनामपि मोहिनी ।
यत्स्वयं चात्मवर्त्मात्मा नवेद किमुतापरे ॥ ३९ ॥
यतोऽप्राप्य न्यवर्तन्त वाचश्च मनसा सह ।
अहं चान्य इमे देवास्तस्मै भगवते नमः ॥ ४० ॥

इति श्रीमद्भागवतेमहापुराणे तृतीयस्कन्धे
पारमहंस्यां संहितायां वैयासिक्यां महदाद्युत्पत्तिर्नाम
षष्ठोऽध्यायः । ६ ।

———○:*:○———

श्रीमच्छुकदेव कृत सिद्धांतप्रदीपः !

भगवतः पुरुषस्यविष्णोः पद्भ्यांशुश्रूषाजज्ञे तस्यांनिमित्तभूतायां जातायां सत्यांधर्मसिद्धयेत्रैवर्णिकपरिचर्यार्थं शूद्रोऽपिपद्भ्यांजज्ञेय स्यवृत्त्याहरिः स्वयंतुष्यति ॥ ३३ ॥ ३४ ॥

भोक्षत्तः विदुर ! दैवकर्मात्मरूपिणइति दैवादिशब्दवाच्यकालक र्मस्वभावरूपाणिप्रवर्तकतयासंत्यस्येतिसतथातस्ययोगमायावलेनो- ज्जृंभितविराट्सृष्ट्यादि उपाकर्तुंकात्स्न्येनव्याकर्तुंवर्णयितुंकः अद- ध्यात् वर्णनेऽस्यतुकाकथावर्णनेच्छामात्रमपिकः कुर्यादित्यर्थः ॥ ३५ ॥

———

भाषाटीका ।

बाहु से पालन रूप कर्म भयो. बाहु से क्षत्रिय भये जाने जन्म तेही वर्णों की चोरादिक उपद्रव सं रक्षा कीनी यासे वे ईश्वरांश भये ॥ ३१ ॥
ऊरू से कृष्यादि व्यवहार भये वो लोक के जीवि का हेतु भये,जि न से वैश्य भये, वो मनुष्यों की सर्व जीवि का संपादन करते भये ॥ ३२ ॥
शुश्रूषा कर्म सिध्ध के अर्थ भगवान के पांव से शूद्र भये,जिनकी जीवि का से श्री हरि प्रसन्न होते भये ॥ ३३ ॥
ये चारों वर्ण स्वधर्म से अपने गुरु श्री हरि को पूजते भये श्रद्धा से आत्मशुध्यर्थं सर्व वृत्ति से सहित सर्व वर्ण होते भये ॥ ३४ ॥
हे क्षत्तः दैव कर्म आत्मरूपी भगवान् को योगमाया बलको ( विराट्रूपको ) कौन कहवे योग्य है ॥ ३५ ॥

———

श्रीधरस्वामिकृत भावार्थदीपिका ॥

अंगविदुर!अथापिहरेःकीर्तिंकीर्तयामि यथाश्रुतं गुरुमुखात् तदपिनसर्वात्मना किंतुयथामतिस्वमत्यनुसारेण अन्याभिधाहरि- व्यतिरिक्तार्थाभिधानंतयाऽसतींमलिनांस्वीयांवाचंसत्कर्तुंपवित्रीक- र्तुम् ॥ ३६ ॥

अज्ञात्वापियथामतिकीर्तनेभवणेवाऽऽवश्यकंकैवल्यमित्याह एकांततोलाभंनुनिश्चितमाहुः श्रुतेः श्रोत्रस्यउपाकृतायांनिरूपितायां मुपसंप्रयोगंसन्निधौअर्पणम् ॥ ३७ ॥

नचातीवज्ञानेनिर्बंधः कर्तव्योब्रह्मणोऽपिदुर्ज्ञेयत्वादित्याहआत्म नोहरेर्महिमायोगविपक्कयाऽपिधियासंवत्सरसहस्रांतेऽपिआदिकवि नाब्रह्मणाऽपिकिमवसितःकिंज्ञातः इतिकाकूक्त्याएतावानितिनज्ञा तएवेत्युक्तम् ॥ ३८ ॥

यद्यस्मात्स्वयमप्यात्माहरिरात्मवर्त्मस्वमायागतिमेतावदितिन वेद अनंतत्वात् ॥ ३९ ॥

अतोदुर्ज्ञेयत्वात्केवलंनमस्करोति यतइति यस्यज्ञानायप्रवृत्तावा- चोऽपिमनसासहतमप्राप्यैवन्यवर्ततदुर्ज्ञेयत्वात् नकेवलंवाङ्*मनसी अहमहंकारस्याधिष्ठातारुद्रोऽपिइमेइंद्रियाधिष्ठातारोदेवाअन्येच॥४०॥

इतिश्रीमद्भागवतेमहापुराणे तृतीयस्कंधे
श्रीधरस्वामिकृत भावार्थदीपिकायां
षष्ठोऽध्यायः ॥ ६ ॥

———

१ अद्यापीतिश्रीवल्लभाचार्यपाठः

* भागवतीति जीवगोस्वामि वीरराघवयोः संमतः पाठः ।

* वाङ्मनसेइतिवंगपाठसूचितः

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्यादीपिकाटिप्पणी

तथापिसाकल्येननिरूपयितुमशक्यत्वेऽपि गिरंवागिंद्रियम ॥ ३६॥
कैवल्यं निर्वाण सुख शुद्धभक्तिर्वा ॥ ३७ ॥
आत्मन इति सार्द्धकम काकूक्त्या विस्मयेनध्वनेर्धिकारेण ॥ ३८
यत्स्त्र्य इति सार्द्धकम अन्येचेति चकारान्वयः ॥ ३९ ॥४०॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
दीपिन्याख्यदीपिका टीकायां
षष्ठोऽध्यायः ॥ ६॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचंद्रचन्द्रिका।

ननु कस्याप्यशक्तौ कथंभवतावर्ण्यत इत्यतआह अथापीति अथापि कात्स्न्र्येनवर्णयितुं कस्याप्यशक्तावपि यथाश्रुतं गुरुमुखाच्छ्रुतमन तिक्रम्य तत्रापि यथामतियावत्स्वबुद्धि विषयमनतिक्रम्य हरेः कीर्त्तिं अंग हे विदुर ! कीर्त्तयामिनह्यहं साकल्येनवर्णयामीति प्रतिज्ञातवानस्मीत्यभिप्रायः तर्हि किमेकदेशवर्णनेन प्रयोजनमित्यतआह स्वांस्वकीयामन्याभिधा हरिव्यतिरिक्तार्थाभिधानं तयाऽसतींदुष्टां गिरंवाचं सत्कर्त्तुंपवित्रीकर्त्तुमित्यर्थः ॥ ३६ ॥

एतदेवोपपादयति एकांतलाभमिति सुश्लोकमौलेः श्लोकनीय प्रधानस्य भगवतो गुणवादंगुणकथनमेव पुंसांवचसः एकांतलाभं एकान्तफलमाहुः श्रुतिस्मृतीतिहासपुराणतज्ज्ञाः विद्भद्भिरुपाकृतायामउपवर्णितायां कथासुधायाम उपसंप्रयोगं सन्निधौ अर्पणं संबंधमित्यर्थः श्रुतः श्रोत्रेंद्रियस्य एकांत लाभमाहु रित्यर्थः ॥३७॥

नकेवलम स्माभिरेव भगवन्महिमाकात्स्न्र्येनदुर्ज्ञेयः किंतु ब्रह्मादिभिरपि ज्ञानाधिकैरित्याह आत्मनइति हे वत्स ! विदुर ! आदिनीकावना चतुर्मुखेनात्मनो भगवतो महिमावद्बुसंवत्सरांते योगविपक्वया धियाऽवसितः किमिति काका एतावानिति नज्ञातएवेत्युक्तं यद्वा अवसितः अपरिच्छिन्नत्वेनेत्यध्याहारः ॥ ३८ ॥

नकेवलमादिकाविरवापरिच्छिन्नत्वेन वेद किंतु भगवानपि स्वयं तथैववेदेत्याह अहोइति भागवती भगवत्संबंधिनीमाया आश्चर्यस्य क्रिमायिनामप्याश्चर्यशक्तिमतामपि मोहिन्याश्चर्यजनयित्री अहोइत्याश्चर्ये यद्यस्मादात्मवत्र्मात्मा आत्मवत्र्मनः स्वप्रापकमार्ग भूतस्यवेद स्यात्मावेदमूर्त्तिः न वेद इयत्तयानवेद अपरे ब्रह्मादयः नविदुरिति किंमुतकिमुवक्तव्यमित्यर्थः ॥ ३९ ॥

ननु वाङ्मनसयोरतींद्रियार्थ दर्शिनः ऋषयो देवाश्चजानीयुरेव सर्वैषामपिदुर्ज्ञेयत्वे ऽनुपास्यत्वप्रसंगादित्यतआह यतइति वाचो वेदवचांसिमनः योगपरिशुद्धंमनः तेन सहाहमतींद्रियार्थदर्शिनोऽस्मतप्रभृतयः ऋषयः देवाश्चरुद्रादयश्चाप्राप्यकात्स्न्र्येनयन्महिमानमनवगम्य यतो भगवतः न्यवर्तंत तस्मैभगवतेनमः नहिकात्स्न्र्ये न वाङ्मनसादयोविदुः किंतु तन्महिमानमपरिच्छिन्नत्वेनैव विदुः नचानुपास्यत्वप्रसंगः तत्स्वरूपगुणविभूतीनामपरिच्छिन्नत्वेनोपासनोपपत्तेः अतएव नभगवतोऽपिकात्स्न्र्येन स्वस्वरूपाद्यज्ञानेन सर्वज्ञताहानिः अपरिच्छिन्नत्वेनैव ज्ञानस्यसर्वज्ञतानिर्वाहकत्वात् यत्वस्तु य याविधंप्रमितं तस्यतथायान्यज्ञानंहि सर्वज्ञतापादकं नहिअपरिच्छिन्नस्यपरिच्छिन्नतयाज्ञानंपरिच्छिन्नस्यवाऽपरिच्छिन्नताज्ञानंसर्वज्ञत्वंनि वोढुमलम् अतएव "यस्यामतंतस्यमतंमतंयस्यनवेदसः अविज्ञातं विजानतांविज्ञातमविजानतां यतोवाचोनिवर्त्तंतअप्राप्यमनसासह आनंदं

श्रीमद्वीरराघवार्यकृत भागवतचन्द्रचन्द्रिका

ब्रह्मणो विद्वान्„र्तिवंदनाविधि निषेधयोरुपपत्तिः अपरिच्छिन्नत्वपरिच्छिन्नत्वाभ्यां तयोर्व्यवस्थित विषयत्वात् ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे
श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिकायाम
षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीमद्विजयध्वजतीर्थ कृत पदरत्नावली।

भगवन्माहात्म्यकथानुवर्णनसामर्थ्याभावेऽपिस्वप्रयोजनवशाद्ब्रवीमीत्याह अथापीति यद्यप्यानंत्याद्वक्तुंनशक्नोमितथापिह्यरेरन्यस्याभिधानंयस्याः साअन्याभिधातांस्वांगिरंसंस्कर्तुं मन्यवार्तापरित्यागेन संस्कर्तुमित्यर्थः ॥ ३६ ॥

वागादींद्रियाणांजन्मलाभोऽयमेवेत्याह एकांतलाभइतिपुंसोवचसोवागिंद्रियस्यसुश्लोकमौलेर्हरेर्गुणानुवादंगुणानामभिवंदनमेकांतलाभमव्यभिचरितपुरुषार्थफलमाहुः प्रेक्षावंतइतिशेषः श्रुतःश्रवणेंद्रियस्यचाविद्वद्भिरुपाकृतायाव्याख्यातायाःकथासुधायाः संप्रयोगएकांतावित्तत्वेनश्रवणमेकांतलाभः उतशब्दाच्चुरादिग्रहणंकर्तव्यं"तमुस्तोतारःपूर्व्यंयथाविदऋतस्यगर्भजनुषापिपर्तन आस्य जानंतो नाम चिद्विवक्तन महस्ते विष्णो सुमतिं भजामहे" इत्यादिश्रुतिस्मृतयोऽप्यस्मिन्नर्थेप्रमाणम् ॥ ३७ ॥

नन्वादिकविनाहरेर्महिम्नःसमापितत्वादेषउदाहर्तुंकथंनशक्यत इतितत्राह आत्मनइति आदिनाकविनाविरिंचेनसंवत्सरसहस्रयोगेन शमदमाद्युपायेन विपक्वया परिपाकं प्राप्तया धियासकलशास्त्रार्थावधारणशक्तिमत्याबुद्ध्याअवसितउपाधितः आत्मनः परमात्मनोमहिमाऽवसितःपरोक्षीकृत्यज्ञातोयदतोभगवतोमायामहिमा यिनांज्ञानिनामपिमोहनीबुद्धिभ्रंशकरीति ॥ ३८ ॥

ब्रह्मणाज्ञातत्वात्कथंमोहकरीत्याशंक्यतस्यापिसाकल्येनज्ञानंदुष्करमित्याशयेनाह यादिति आत्मवर्त्मापरमात्मज्ञानोपदेशाचार्यआत्माब्रह्मास्वयमपिभगवतोमायांनवेदेतिःयत्रस्मात्सर्वात्मनोतिशेषः अतोऽपरेऽस्मदादयोनविदुरितिकिमुत"मायातुमहिमाप्रोक्तःप्राचुर्येतु मयड्यतइति गुण ( * ) पूर्तेरात्मशब्दोब्रह्माहीनत्वतोहरः अहंशब्दस्तथाप्येतौनजानीतोहरिंपर"मितिस्मृतिः अहंरुद्रः ॥ ३९ ॥

नैतच्चित्रमितिभावेनाह यतइति वाचोनतवेद्राऽभिमानिन्यःश्रिश्चानादिकालमारभ्यमनसागुणगणान्ध्यायंत्योवागिंद्रियेण निरंतरंवर्णयंत्योगुणकथावसानमप्राप्यनशक्यमितियतोनिवर्ततेतेनतुअनंत गुणपूर्णइतिनिश्चित्यनित्यपरिचितगुणकथनेचनितरांवर्ततेइति अहंचाहंकाराभिमानिनोरुद्रगरुडशेषाअन्यइमेदेवाइंद्रियाभिमानिनंइन्द्रादिदेवायन्मायांनविदुरितियतस्तस्मैभगवतेनमइत्यन्वयः वाचइति बहुवचनंश्रियोरूपानंत्याद्युज्यते श्रीर्यन्नरूपिणयुरुगायपादयोःकरोति मानंबहुधाविभूतिभिरितिच अहंत्रिधेत्यहंशब्दस्याहंकारेप्रयुक्तस्याभ्रमैत्रेयोऽत्रोच्यते अ ( ‡ ) हीनत्वतोहरः "अहंशब्दस्तथाप्येतौनजानीतोहरिंपर„मितिच ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्विजयध्वजतीर्थ कृत पदरत्नावल्यां
षष्ठोऽध्यायः ॥ ६ ॥

---

( * ) योग्यतानुसारेणगुणपूर्तेरात्मशब्दवाच्यः।
( ‡ ) अहेयत्वतइत्यर्थःअहंशब्दवाच्यः।

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

कीर्त्ति तादृक् थिराट् सृष्ट्यादि वर्णनरूपां गिरं वागिन्द्रियम् ३६ एकान्तेति । कैवल्यसुखस्याप्यतिक्रमादिति भावः ॥ ३७ ॥

आत्मन इति सार्द्धकं परमात्मनो महिमा अचिन्त्यैश्वर्य्यादिरूपः संवत्सरसहस्रान्ते योगविपक्वया धियैवावसितः अचिन्त्यशक्तित्वेनैव निश्चितः ॥ ३८ ॥

अतो ये तु चिन्त्यत्वेनैव निश्चिन्वन्ति तेषामन्यान् प्रतिमायिनां मोहकारिणामपि भगवतो माया मोहिनी भवतीत्यर्थः । अतः कारणात् तन्माया मायिनामपि मोहिनीति सार्द्धेनान्वयः । भगवत इत्यत्र भागवतीति क्वचित् पाठः अचिन्त्यत्वमेव दर्शयति यदिति सार्द्धकेन यत् यस्मात् स्वयमपि आत्मा वर्त्मस्वरूपैश्वर्यं न वेद सा वेद्रेनापि न परिच्छिनत्ति अनन्तत्वात् अतस्तस्मै नम एव केवलमित्यर्थः ॥ ३९ ॥

तमेव विशिनष्टि यत इति निघर्त्तन्त इति क्वचित् पाठः ॥ ४० ॥

इति श्रीमद्भागवतमहापुराणे तृतीयस्कन्धे
श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भे
षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीमद्वल्लभाचार्यकृत सुवोधिनी ।

नचैतावताहं निवृत्तः किन्तुगुणानामानंत्यमेवतदाह अद्यापिकीर्त्तयामीति अंगेतिकोमलसंबोधनमप्रतारणायअद्यापीति यतआरभ्याहमुत्पन्नस्ततप्रभृति अद्यापिमरणपर्यंतंकीर्त्तयाम्येव स्वधर्मोत्परंसूक्ष्मजीवत्वान्मायिविशेषः यथामतीतिमतिमनतिक्रम्ययावज्ज्ञानामितावंद्वक्कथयामिनतुकल्पयित्वातत्रापियथाश्रुतंगुरोः सकाशात् श्रवणमनतिक्रम्यअनेनावृत्तिर्भगवद्गुणानामुक्तातत्राप्रतारणायअथापीति यतआरभ्याहमुत्पन्नस्ततप्रभृतिअद्यापि प्रयोजनमाह कीर्तें हरेरितिनूनंश्रवणे सामर्थ्यमुपायश्चनास्तिप्रयोजनाभावश्चआनंत्यात्स्वधर्माभावाद्धतोयावत्कीर्तयितुंशक्यतेतावदेवश्रोतव्यमिति अल्पंश्रुत्वातदेवकीर्तयाम तदाहैकवचनेनहरेरिति तावतैवभगवान्दुःखंदूरीकरीष्यतीतिपुनःपुनः कीर्तनस्यतुप्रयोजनमस्तिस्वगिरंसत्कर्तुमन्यपदार्थानामभिधयाकथंनेनेयमस्मद्वाणयस्तीजाता भगवतास्वार्थमेववयमुत्पादिताः वाणीचसमर्पितवान्स्वसंवार्थतस्याः पतिर्भगवान् भगवदर्थेस्वयंप्रेरकः तथाचस्वतोत्रामत्प्रेरणयावाऽन्यमभिधायवाणीव्यभिचारिणीजातातामिदानींसंस्करोमिसंस्कृतासाभगवतियोजनीयेत्यतः संस्कारार्थवहुशःकीर्तयामीत्यर्थः अनेनयस्यसाधनंभगवतास्वार्थेयद्दत्तंतदन्यत्रोपयोज्यतच्छुद्ध्यर्थं भगवतितत्पुनः पुनरुपयोज्यमिति ॥ ३६ ॥

एवमुपसंहृत्यसंदर्भनिर्द्धारितंजन्मफलमाह एकांतलाभमिति अन्यानींद्रियाणिकेवलंभगवदर्थेयोजयितुमशक्यानिदेहार्थतदुपयोगावश्यकत्वात्दुष्टानिचनभगवतियोजनीयानिहस्तौनित्यममंगलस्पर्शौतथाचक्षुपीतथान्यान्यपिदेहनिर्वाहार्थमवश्यमन्यत्रयोजनीयानिचेद्भगदर्थेकिंचिद्रक्षणीयस्वतःशुद्धंकृत्वातदाद्वयंरक्षणीयंवागिंद्रियंश्रोत्रचअनयोर्नदेहोपयोगआवश्यकः तस्मादेतौचेद्भगवत्कृपयास्वार्थंप्राप्तौभवतस्तदाभगवद्गुणावक्तव्याश्चनान्यद्वक्तव्यंश्रोतव्यमित्याहवचमोवागिंद्रियस्यएकांतलाभःएकएवभगवान्स्वार्थेऽतोयस्यलाभोभगवत्प्राप्त्यैवसाप्राप्त्येतकालाभइत्याकांक्षायामाह सुश्लोकमौलेर्गुणवादमितिसुश्लोकाः कीर्तिप्रतिपादकाभागवतादिरूपास्तप्रतिपादिताकीतिर्वामौलीयस्यातेनतस्यकीर्तिर्मुकुटरूपाभवतीत्युक्तं तां-

श्रीमद्वल्लभाचार्यकृतसुवोधिनी ।

चेदयंसंस्कुर्यात्सर्वस्यगात्रस्यशिरः प्रधानमितिप्रधानमेवभूषितंभवेत्तादृशस्यभगवतो गुणवादमुत्कर्षप्रतिपादकानांधर्माणांभावपूर्वकंनिरूपणं लाभमाहुरितिसंवंधःआहुरितिप्रमाणकथनम् नकेवलंवचसएवायंलाभः किंतुअनुपश्चात्तुनिश्चयेनवा पुंसामपिलाभः तदुपयोगार्थमन्येंद्रिय व्यापारात्स्वोपयोगेऽपस्वस्तत्रोपयोगात्कीर्त्तनद्वारासर्वाण्येवेंद्रियाणिस्वयं च सफलोभवतिश्रोत्रस्यवाग्भेवलाभः चकरात्तदनुवर्त्तिनांपुंसामपिविद्वाद्भिरुपाकृतायांभगवत्कथायामारब्धायामुपसंप्रयोगंसमीपेसम्यक्प्रकर्षेणयोगोयस्यतादृशंश्रवणममृतकथाश्रवणमितियावत् तच्छ्रुनेर्लाभः श्रोत्रस्य विशेषउच्यतेभगवत्कथैवश्रोतव्यातत्राप्यमृतरूपाप्रेम्णा निरूपिता तत्रापिविद्वद्भिरेवनिरूपिता अन्यथाअज्ञैरन्यथा निरूपणसंभवात्तेषांपदार्थानांयस्तुतोभगवदीयत्वाभावाद्भगवत् कथायां तच्छ्रवणेश्रोत्रस्यव्यभिचारोभवेत् भगवदीयपदार्थश्रवणं विद्वद्भिरेवनिरूपितंश्रोतव्यंतैरन्यथार्थेनिरूपणेप्रकृततात्पर्याभावात्तन्न श्रोतव्यंतदाहउपाकृतायामिति कथासंवद्धावार्त्ता सैवसुधारसजनिकामृत्युनिवर्त्तिकाचतदपिश्रवणंनदूरतःअंतःकरणशुद्धिद्वाराज्ञानंभविष्यतीतिद्रविडमंडकन्यायोभगवद्गुणेपुनकर्त्तव्यःसम्यक्त्वंचस्वपर्यवसानात् प्रकर्षःविस्मरणराहित्यं यद्येवंशृणुयात्तदाश्रोत्रंस्वयंच भगवदर्थं भवेदन्यथानभवत्काकथौवा ॥ ३७ ॥

नन्वल्पमेवोक्त्वाकथमुपसंहारः कृतः कथंवास्वार्थेनिरूप्यतइत्युच्यते भगवन्माहात्म्यंज्ञातव्यंततोभक्तिस्ततोभगवत्सायुज्यमितिक्रमंपरित्यज्यवाक्शुद्ध्यर्थंगुणानुकीर्त्तनमिंद्रियलाभार्थंचश्रवणकीर्त्तनमितिकथमेवमुच्यतइत्याशंक्याह आत्मनोऽवसितोवत्सेति आत्मनो भगवतोवासुदेवस्यमहिमाआदिकविनाब्रह्मणापिसंवत्सराणांसहस्रपर्यंतंतपोयोगं च कृत्वा तत्परिपाकेसतिसंवत्सरसहस्रांतेयोगविपक्वयापिबुद्ध्यावसितः किम्अपितुनज्ञातएवब्रह्मणापिनपःकृत्वापिमहतापिकालेनमहिमाचेन्नज्ञातोयस्य कथाप्रवक्तव्याऽन्यःकोवाज्ञास्यतिएदर्थमेवतांकथांकथयिष्यामीतिभावः अतइंद्रियलाभएवभगवद्गुणेकथितेक्रमात्सर्वस्मिन्नपिसंप्राप्तेस्वाधीनंजातेसुखेनसाक्षाद्वैकुंठे भगवत्सेवाकर्त्तुंशक्यतइतिमैत्रेयसिद्धांतः इमंपक्षंनिराकृत्ययोऽन्यथावक्ष्यतितमग्रेभ्रांतत्वेननिराकरिष्यतिआत्मनइतिवस्तुप्राप्त्यभावेनदुर्लभतानिराकृताआत्मत्वेनापिप्रकाशमानस्यकिमित्यनध्याहारेवाकाकुस्वरकल्पनयावातथावक्तव्यः अथवाब्रह्मणैवावसितस्तस्यसाधनत्रयंप्रथमंभगवानात्मत्वेनप्रकटःस्वयंचादिकविर्वेदगर्भोनप्रमाणंप्रमेयंचतस्यासिद्धमित्युक्तम् ॥ ३८ ॥

संवत्सरसहस्रांतइत्यादिसाधनंतदाफलंयुक्तमितितदापिवानफलमितिचिंत्यंब्रह्मणःकथायथातथास्तअन्येतुमहिम्नो ज्ञानार्थंयेयतंतेतद्द्वारातद्वाक्यंप्रार्थयंते न केवलंभगवन्माया मोहिताः तेयद्यप्यन्यान्मोहयितुं तदावदंति तथापिमहती भगवन्मायातानपिव्यामोहयत्याहयतइतिअतःकारणात्यस्मात्तेमाहात्म्यंज्ञातुंप्रवृत्ताइयमेवभगवन्माया तेसंसारंव्यामोहयित्वामोक्षार्थं प्रवृत्तास्तानपिव्यामोहयतिति ननु भगवान्माहात्म्यज्ञानार्थं प्रवृत्ताः कथंवामुग्धाभवंति तत्राह यत्स्वयमिति अयमात्माभगवान्स्वस्यापिमार्गं स्वयंनजानातिकिमुतापरेसहि यावत्करोति तावत्तस्यपरोक्षे भवतिनाहिवश्चिद्रंनादूरंगतः स्वातिक्रांतंसर्वमेव मार्गंपश्यति तथासतिनएवस्यात् अतिनिपुणोऽपि पूर्वादिवसेयादृशं कुर्यात्तादृशंपुनः

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ॥

ज्ञातुं वा नजानाति अतः प्रतिक्षणंनूतनानंतब्रह्मांडनिर्माणात्पूर्वंयेन मार्गेणसांप्रतंसृष्टिसमर्थोवर्ततेतंमार्गंस्वयमपिनजानातीत्युक्तम् अपरे पुनस्तत्प्रेर्याः केचिद्ब्रह्मांडोदुंबरेमशकवत्स्थिताः स्वगतिमेवनजानं- ति कुतोभगवद्गतिमुत्प्रेक्षाप्रमाणम् अथवा भगवन्माहात्म्यज्ञानार्थं प्रवृत्ताः कथंभगवन्माययामोमुह्यंतेऽन्यथासन्मार्गोव्यर्थःस्यात् अ- न्यत्रतस्यामोहकत्वं सिद्धमेवभगवन्माहात्म्यज्ञानार्थं प्रवृत्तानपियदि मोहयेत्तदाप्रमाणानिदत्ततिलांजलीनिस्युः इत्याशंक्य“स्वयोग्य मि- च्छन्पुरुषः यतत्येवनसंशय,, इतिन्यायेनमायायाःकोदंपदातन्माहा त्म्यज्ञानार्थंप्रवृत्तस्यस्वरूपमाह यत्स्वयमिति स्वयंजीवआत्मापभूत्वा मोहमादिकल्पेस्थिताः कथमेतावत्पर्यंतमागतमितिस्वयंनविदुःसर्व- ज्ञाअपितन्मतत्रयंचतुष्टयं वाजानंनिअतोऽयमन्यं ज्ञास्यतीतिदूरकथा शब्दानांज्ञानमंधपरंपरान्यायतुल्यमितिनात्यंतंप्रमाणंतस्मादस्मदुयुक्त मार्गएवयुक्तःवस्कतोऽयमेवार्थःपूर्वव्याख्यानंतत्परमताद्भिन्नमानाज्ञा नमेवासावेश्यं संपादयति वेदेश्वसंदेहवचनंच “यद्यिानवेदनिको हितद्वेदे”तिवत् अत्रशोभनपत्रमास्ति अतोयावत्किंचित्स्वकीर्त्तनो पयोगिनावद्वावर्ततोयमिति ॥ ३६ ॥

किंच यदन्यशक्यंसापेक्षमित्यतोनमनमेवकर्त्तव्यमित्याह यतोऽ प्राप्येति वाङ्मनश्चयंभगवंतमप्राप्यैवावागवनिवर्ततेअहंकारश्चंद- वोअन्येचेमेदेवाःइंद्रियाधिष्ठातारस्तमप्राप्यैवनिवृत्तावाचाऽत्रेवदरूपाः मनस्तेषामपिपूर्वरूपंभगवदीयंयतोवाचोनिवर्त्तन्तेश्रुतेरप्ययमेवार्थःस्व- यंत्वहंकारःयस्कश्रुतावहमेवात्मानंवदभगवान्मांहंनामाभवादिति साऽ पिजगत्कर्त्तारस्वयमात्मानंनवेत्तिनवाजगन्निर्माणार्थानरूपितानीमा- नितत्त्वानिदेवानविदुः तस्मान्माहात्म्यज्ञानंदुर्लभमितितदर्थंप्रयासन कृत्वाकेवलं भगवते ।मनंकर्त्तव्यंतदाह तस्मैभगवतेनमइति “याद- शोऽस्मिहरकृष्ण ! तादृशायनमोनमः । यादृशोऽस्मिहरेकृष्णतादृशंमां हिपालय ॥ ४० ॥

इतिश्रीभागवतेमहापुराणे
सुबोधिन्यांलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षित विरचितायां
तृतीय स्कंध विवरणे षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी।

यथाश्रुतं गुरुमुखात् तत्रापि यथामति स्वबुद्ध्या यावद्गृहीतं तावदेव न तु यद्यदेव श्रुतमित्यर्थः अन्याभिधा हरिव्यतिरिक्ता कथा तया अमतीं मलिनां स्वीयां वाचं सत्कर्तुं पवित्रीकर्त्तुम् ॥३६॥

हरिकथामृताब्धेरपारत्वात् सामस्त्येन ज्ञानं न कस्याप्यतो यत्किंचिज्ज्ञाने एव तत्कीर्तनश्रवणाभ्यां लोकाः कृतार्थीभूय तं प्राप्नुवन्तीत्याह गुणवादं गुणकीर्तनमेव एकान्ततो लाभमाहुर- न्यत् सर्वं वचसोपचयमेवेत्यर्थः श्रुतेः श्रोत्रस्यापि उपाकृतायां कीर्त्तित यशम् उपसप्रयोगं सन्निधापयंणाम् ॥ ३७ ॥

नचातीव ज्ञाने निर्बन्धः कार्यो ब्रह्मणोऽपि दुर्ज्ञेयत्वादित्याह आत्मनो हरेर्महिमा योगविपक्कयापि संवत्सरसहस्रान्तेऽपि आदि- कविना ब्रह्मणापि किमवसितः किंज्ञान ज्ञात काक्वा एनाधानाति न ज्ञान इत्यर्थः। यद्वा अवेत्यस्यापि अकारलापं नात्रज्ञातः वसितः अवासेन इति सिद्ध यद्वा संवत्सरसहस्रान्त एव महिमा ज्ञात इति अचिन्त्यत्वानन्तत्वाभ्यां दुर्ज्ञेयत्वेन निश्चीयते तदेव भगवन्-

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी।

महिम्नो ज्ञानं एतावदिदमित्थंकारेण ज्ञानं तज्ज्ञानमेवेति भावः। तथाच श्रुतिः “यस्यामतं तस्य मतं मतं यस्य न वेद स,, इति ॥३८

नन्वात्मतत्त्वं जानन्तोऽन्यानपि ज्ञापयन्तो दार्शनिका बहव एव दृश्यन्ते तत्राह अत इति। अतः कारणात् तन्माया मायिनां बोध- यितव्येषु स्वशिष्येषु मायामेवार्पयतां तेषामपि मोहिनी निश्चयेनैव मोहिनी मुहुरपि संसारेषु पातयितुमिति भावः। यद्यतः स्वयमात्मा परमेश्वरोऽपि आत्मवर्त्म स्वस्वरूपं न वेद न जानाति अपरे वराकाः किमुत जानीयुः ॥ ३९ ॥

अतो दुर्ज्ञेयत्वमेव स्थापयन् नमस्करोति अप्राप्य अन्तमलब्ध्वा यतः सकाशान्निवर्त्तन्ते वाचः समष्टिव्यष्टीनां सर्वेषामपि वागिन्द्रि याणि मनसा सहेति मनांसिच यद्वा ब्रह्मणो मुखान्निर्गताः सर्वे वेदा एव वाचः तस्यैव मनसा सह अहं अहंकाराधिष्ठाता रुद्रः इमे देवा बृहस्पत्यादयश्च यतो निवर्त्तन्तेकुतः अप्राप्य यन्नामरूपचारत्रा दीनां सम्यङ्माधुर्य्यग्रहणासामर्थ्यात् अपारणां तथामन्तप्राप्त्य- सामर्थ्याच्चेत्यर्थः। श्रुतिरप्याचष्टे यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहेति। अत्रापादाननिर्देश एव वाङ्मनससम्भ्रम प्रत्यायको निवृत्तिस्त्वनन्तत्वेन प्रमातुमशक्यत्वादिति ज्ञेयं। सर्वथैव वागाद्य- गम्यत्वं त्वात्मनो न व्याख्येयं वेदैश्च सर्वैरहमेव वेद्य इति मनसैवा नुद्रष्टव्यमतदप्रमेयं ध्रुवं तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय इत्यादि श्रुतिविरोधापत्तेः ॥ ४० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
षष्ठोऽध्यायस्तृतीयेऽस्मिन् सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः।

अथापियथाश्रुतं तथापियथामतिहरेः कीर्तियशः हेअंगविदुर ! कीर्तयामि तत्रस्वार्थमाह स्वामिनि अन्याभिधया हरिवाहिमुर्खजना भिधांनन असतींभ्रष्टांस्वांस्वीयांवाचंसत्कर्तुंसाध्वींकर्तुम् ३६

पुंसांवचसः एकांततः अव्यभिचारतः लाभंगुणवादंनुनिश्चित माहुः श्रुतःकर्णेन्द्रियस्य उपाकृतायांप्रवर्त्तितायांकथाएवसुभानस्या म् उपसंप्रयोगंसुग्राहकतयायोजनम् चकाराच्चक्षुरादीनांतल्लिंग- दर्शनादौउपसंप्रयोगमित्यूह्यम् ३७

ननुकःश्रद्धयादुपाकर्तुमित्येननयदिभगवद्यशस एवदुर्ज्ञेयत्वमु- क्तंतर्हिसुतरां भगवतोदुर्ज्ञेयत्वमतोऽनिर्मोक्षप्रसंगः स्यादित्यत्र सा- धनेनभगवान् ज्ञेयएवेत्याह आत्मन इति आत्मनः परमात्मनः मांह माकविनायोगाविपक्कयाध्याननिष्पन्नया अवसितः ज्ञातः ३८

ननुभगवत्पुत्रोऽपिमहताकालसाध्येनध्यानेनज्ञातवान्ततःपूर्वंनवे दतत्रकारणंकिमत्राह अतइति यत् ग्तःभगवतांमायामायिनामाश्च र्यशक्तिमतांब्रह्मादीनामपिमोहिनीअतःस्वयंध्यानेनैरपेक्ष्येणआत्माभ गवत्पुत्रोऽपिआत्मवर्त्मभगवद्वर्त्मनवेद अपरेनाविदुरितिकिमुतवक्त- व्यम् सर्वेजीवाभगवदंशभूता अपितन्मायामोहितत्वात्तनजानंति साधनसंपत्त्यातुजानंतीतिफलितोऽर्थः ३९

एवंभगवतोज्ञानविषयत्वमुपपाद्याथेयत्तयातुवागाद्यविषयत्वंभ- गवतोवदन्नमस्करोति यतइति ४०

इति श्रीमद्भागवते महापुराणे तृतीये स्कन्धे सिद्धान्तप्रदीपे षष्ठाध्यायार्थ प्रकाशः ॥ ६ ॥

---

भाषाटीका।

हे विदुर! जैसी मेरी बुद्धि है जैसा श्रवण करयो है तैसी श्री-हरि की कीर्ति अपने वाणी को सफलता के अर्थ वर्णन करूं हूं॥ क्यों कि खोटीवाणी अन्यका वर्णन कर के अशुद्ध होगई है ॥३६॥

पुरुषों के वचन को एकांत में लाभदेने वारो विद्वानों ने संग्रह कीनो कथामृत में जाको वर्णन ऐसे यशस्वी में मुकुट मणि श्रीकृष्णजी के गुणानुवाद हैं ॥ ३७ ॥

हे विदुर! श्रीहरि की महिमा योगा भ्यास से पकीहुई बुद्धि से ब्रह्मदेव सहस्र संवत्सरांत मे भी जान नही सके ॥ ३८ ॥

या कारण से भगवान की माया मा यियों को भी मोह करने वाली है क्योंकि श्री हरि स्वयं अपने माया के गति को न जान सके हैं और की तो क्या चले है ॥ ३९ ॥

भाषाटीका

जाके ज्ञान के अर्थ मन कर के सहित वाणी वर्णन करत न प्राप्त हुए किंतु बदल के उलटी है हम और ये सब देवता नहीं जानते ऐसे भगवान को नमस्कार करते हैं ॥ ४० ॥

इति श्रीभागवत महापुराण में तृतीयस्कन्ध का

षष्ठाध्याय समाप्त हुआ ॥ ६ ॥

---

इतिश्रीमद्भागवते महापुराणे तृतीयस्कन्धे षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ।

श्रीशुकउवाच ।
एवं ब्रुवाणं मैत्रेयं द्वैपायनसुतोबुधः ।
प्रीणयन्निवभारत्या विदुरः प्रत्यभाषत ॥ १ ॥
विदुरउवाच ।
ब्रह्मन्कथं भगवतश्चिन्मात्रस्याविकारिणः ।
लीलया चापि युज्येरन्निर्गुणस्य गुणाः क्रियाः ॥ २ ॥
क्रीडायामुद्यमोऽर्भस्य कामश्चिक्रीडिषाऽन्यतः ।
स्वतस्तृप्तस्य च कथं निवृत्तस्य सदाऽन्यतः ॥ ३ ॥
अस्राक्षीद्भगवान्विश्वं गुणमय्यात्ममायया ।
तया संस्थापयत्येतद्भूयः प्रत्यभिधास्यति ॥ ४ ॥
देशतः कालतोयोसाववस्थातः स्वतोऽन्यतः ।
अविलुप्तावबोधात्मा सयुज्येताजया कथम् ॥ ५ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका

सप्तमेसंशयच्छेदिप्रतिनंद्यमुनेर्वचः ॥
पुनःक्षत्राकृतानानाप्रश्नाःसम्यगुदीरिताः ॥ १ ॥

"अथतेभगवल्लीलायोगमायोपबृंहिताः,, इत्यादिनामायागुणैर्लीलयाभगवान्सृष्ट्यादिकरोतीत्येवंब्रुवाणंमैत्रेयंभारत्याप्रार्थनारूपयाप्रीणयन्निवेत्यभिप्रायाज्ञानेनाक्षेपात् ॥ १ ॥

निर्विकारस्यक्रियानिर्गुणस्यचगुणाः कथं लीलयेत्युक्तिः प्रयोजनाभावंपरिहरतिनवस्तुविरोधमितिभावः ॥ २ ॥

अर्भकवल्लीलाऽपिनयुज्यतेवैषम्यादित्याह उद्यमयतिप्रवर्तयतीत्युद्यमः अर्भकस्यक्रीडायांप्रवृत्तिहेतुःकामोऽस्ति अन्यतस्तुवस्त्वंतरेणवालांतरप्रवर्तनेनवातस्यक्रीडेच्छाभवति ईश्वरस्यतुस्वतस्तृप्तस्यकथंकामोऽन्यतः सदानिवृत्तस्यचासंगाद्वितीयस्यकथमन्यतश्चिक्रीडिषेत्यर्थः ॥ ३ ॥

यच्चोक्तम् "स्मरन्विश्वसृजामीशोविज्ञापितमधोऽक्षज,, इत्यादिनाऽविद्योपाधेर्जीवस्य भोगार्थमीश्वरःसृष्ट्यादिकरोतीति तदप्याक्षेप्तुमनुवदति अस्राक्षीदिति गुणमयी आत्मनाजीवस्यकर्तृत्वभोक्तृत्वादिमोहोत्पादिकायामायातयासृष्टवान् तदुक्तंप्रथमे " ययासंमोहितोजीवआत्मानंत्रिगुणात्मकम् ॥ परोऽपि मनुतेऽनर्थंतत्कृतंचाभिपद्यते,, इत्यादिना अत्रच " अतोभगवतोमायामायिनामपिमोहिनी, इतिसंस्थापयति पालयति प्रत्यभिधास्यतिप्रातिलोम्येनतिरोहितंकरिष्यति पाठांतरेप्रातिलोम्येनात्मन्याभितोधारयिष्यति ॥ ४ ॥

एतच्चजीवस्याविद्याश्रयत्वेघटेतनतुतत्संभवतीत्याह देशतइतियोऽसौदेशादिभिरविलुप्तावबोध आत्माजीवः ब्रह्मस्वरूपत्वात् स कथमजयाऽविद्ययायुज्येत तत्रदेशतोदीपप्रभायाइवलोपोनास्तिसर्वगतत्वात् नकालतोविद्युतइवनित्यत्वात् नावस्थातःस्मृतिवदविक्रियत्वात् नस्वतःस्वप्नवत्सत्यत्वात् नान्यतोघटादिवदद्वितीयत्वात्एवमेतैर्यस्यबोधोनलुप्यतेसकथमजयायुज्यते अजाचात्राविद्यैवनमाया तस्याअवबोधेनविरोधाभावात् ॥ ५ ॥

---

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी

उदीरिताइत्यत्रशुकेनेतिशेषः । आक्षेपात्मैत्रेयकृतसिद्धान्तस्यतिरस्कारात् ॥ १ ॥

निर्विकारस्यावस्थांतरप्राप्तिरूपविकारशून्यस्यनिर्गुणस्यप्राकृतगुणास्पृष्टस्यचयथाक्रमंक्रियाविकारोत्पादिकाः गुणाः सत्वादयः कथंकेनप्रकारेणयुज्येरन्संगच्छन्ते प्रयोजनाभावंप्रयोजनविरहंपरिहरतिदूरीकरोतियद्यपियथाराज्ञः कन्दुकादिलीलानिष्प्रोजनाआप्तकामत्वात्किन्तुस्वोल्लासमयीतथाभगवतोऽपिसृष्ट्यादिलीलायांनकिञ्चित्प्रयोजनंसृष्ट्यादिंकहरिर्नैषप्रयोजनमपेक्ष्य कुरुतेकेवलानन्दाद्यथामत्तस्यनर्तनमितिस्मृते'र्लोकवत्तुलीलाकैवल्यमितिन्यायाच्चेतिप्रयोजनाभावस्सिद्धस्तथापिलीलयेत्युक्तिः क्रियागुणांगीकारेलीलैवप्रयोजनमितिसूचयतीत्यर्थः व्यङ्ग्यार्थमाहनवस्तुविरोधंपरिहरति प्रकाशाऽप्रकाशसामानाधिकरण्याऽभाववत्निर्विकारित्वनिर्गुणत्वयोः क्रियागुणाभ्यांसामानाधिकरण्याभावाद्विरोधस्तदवस्थएवेत्यर्थः एवंधर्मविरोधमुक्त्वास्वरूपाविरोधमाहचिन्मात्रस्येतिचिदेकरस-

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्यादीपिकाटिप्पणी

स्यगुणतदा रंगहेतुकक्रियासत्वेचिन्मात्रत्वव्याहन्येतेतिभाव चिन्मा
त्रत्वेऽपिभगवत्त्वं भगस्यापितन्मात्रत्वंसूत्रयतितत इच चिन्मात्रत्वेत
दूद्वयमंवन्धामम्भवेभगवत्त्वंतुतुच्छतद्द्वयसम्बन्धम्सुतरांनसम्भवती
तिद्विगुणीभूयप्रश्नः ॥ २ ॥

वैषम्यात् ० वालेश्वरयोः सकामत्वम्चतस्तृप्तत्वादिनाविषम
त्वात् उभमइत्यस्यव्याख्यानंप्रवृत्तिहेतुरितिचकारस्त्वर्थेऽपिव्याख्या-
तः आवृत्त्याव्याख्यानादिस्यर्थइत्युक्तम् ॥ ३ ॥

आर्त्तंनुपूर्वं रक्तात्रेययोकर्नुपाठान्तरप्रत्यभिधास्यतीतिपाठे ॥
प्रातिलं स्येन सृष्टिप्रतिलोमतया ॥ ४ ॥

एतच्च ० जीवभोगार्थसृष्ट्यादिकरणाञ्च ततः अविद्याश्रयत्वम्
जीवस्यचिन्मात्रत्वेनब्रह्मस्वरूपत्वात्दीपप्रभादयो व्यतिरेकदृष्टान्ताः
अन्यतःमुद्गरादेः अद्वितीयत्वात्० लोपकस्यद्वितीयस्यात्यंताभा-
वात् एवंनिरुक्तप्रकारेणएतैर्देशादिभिः अत्र ० अस्मिन्श्लोके
तस्यामायायाःअत्रत्येन० विद्याख्यस्ववृत्तिविशेषणसहवैष्णवमते-
स्वप्नवत्इत्यत्रशुक्तिरजतवदितिद्रष्टव्यम् तन्मतेस्वप्नस्यसत्यत्वात्-
"वैधर्म्याच्चनस्वप्नादिवदितिन्यायात् ॥ ५ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं प्रकृतिपुरुषकालनियंतृपरमेश्वराधिष्ठितात्प्रधानान्महदा-
दिपृथिव्यंततत्त्वेषुसृष्टेषुतेषुस्वानुप्रवेशाहितसृष्टिसामर्थ्येषुचांडचतुर्मुख
शरीरारंभद्वारा समष्ट्यवस्थयावस्थितेषु कथितेषुपुनस्तेभ्यएव
व्यष्टिशरीरेंद्रियादिविभागेपरमात्मात्मकचतुर्मुखकर्तृकेऽभिहितेपुनः
क्षत्ताकांश्चित्प्रक्ष्यमाणः प्रथमंभगवतोजगदुपादानत्व प्रयुक्तदोषसंप
र्कशंकापरिहारयुभुत्सयापप्रच्छेत्याह शुकः एवमिति द्वैपायनसुतः
श्रीव्यासपुतः बुधस्तत्त्वदर्शी विदुरःभारत्यास्वागिराप्रीणयन्निव प्रीतिं
जनयन्निवेवमुक्तप्रकारेण ब्रुवंतं कथयंतं मैत्रेयं प्रत्यभाषत ॥ १ ॥

प्रथमं भगवतः स्रष्टृत्वमुपादानत्वंचाक्षिपति ब्रह्मन्निति द्वाभ्यां-
हे ब्रह्मन्मैत्रेय! भगवतः पूर्णपाड्गुण्यस्य चिन्मात्रस्य ज्ञानैकरसस्य-
मात्रयाकारेजडत्वव्यावृत्तिःअतएवाविकारिणः अपरिणामिनःअत-
एव निर्गुणस्यसत्वादिगुणराहित्यस्यगुणाः गुणकार्यभूताःक्लेशादयः
क्रियाःपरिणामादयश्च लीलयावापिकथंयुज्येरन्नित्यन्वयःअयमभिप्रायः
भगवतः सृष्ट्यादिकर्तृत्वं जगदाकारेणपरिणामश्च लीलयैवेतिवक्त-
व्यंनतुकर्मणा अपहतपाप्मेत्यादिश्रुतेः एतदेवहितप्रयोजनवत्त्वाधि-
करणे "लोकवत्तु लीलाकैवल्यमित्यनेनसूत्रेण सिद्धांतितम् एवंचैक
स्यैव कर्त्तृत्वोपादानत्वयोर्लौकिकप्रयोजनयोरभ्युपगम्यमानयोर्नि-
र्विकारिणो निर्गुणस्यपरिणामादयःक्रियाः गुणकार्यगर्भजन्मजरा
मरणक्लेशादयश्च दुर्वारा आपतिष्यंत्यतः कथंजगत्कारणत्वामिति
अनेन प्रयोजनवत्त्वाधिकरणसिद्धांतेदूषण मुक्तंभवति तत्रहि स
प्तद्वीपवतीं मेदिनीमधितिष्ठतो महाराजस्यकंदुकाद्यारंभवत्पूर्ण षा-
ड्गुण्यपूर्णस्यावाप्तसमस्तकामस्य स्वपरप्रयोजनरहितस्यापि भगवतः
केवल लीलैकप्रयोजनो जगद्व्यापारउपपन्नइति स्थापितं तत्राविषमोऽ
यंदृष्टांतः महाराजस्य षाड्गुण्यपूर्णत्वेनावाप्तसमस्तकामत्वात्म-
त्वादिगुणवश्यत्वाद्विकारित्वाद् ब्रह्मणस्तद्विपरीतत्वादुक्तदोषा
पातश्च न ॥ २ ॥

एवं दृष्टांतांतरमपि नोपपन्नमित्याह क्रीडायामिति अर्भस्यवालकस्य
क्रीडायामुद्यमःप्रयत्नःतद्धेतुभूतः कामः अन्यत क्रीडापकरणैःबाला

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

न्तरप्रवर्तनेन वा चिक्रीडिषा क्रीडेच्छाचस्यादीश्वरस्यतु स्वतस्तृप्त-
स्य स्वानुभवेनैवतृप्तस्य कथंकामः सदाऽन्यतः स्वव्यतिरिक्त स्वतंत्र
क्रीडापकरणक्रीडाप्रवर्तक पुरुषान्तरैश्चनिवृत्तस्य विरहितस्य नि
क्रीडिषाचकथंस्यादतोऽर्भकदृष्टान्तोऽनुपपन्नइति भावः ॥ ३ ॥

नान्यदद्दोषापादनमयुक्तं यदुपादानत्वपरिणामित्वक्लेशाद्याश्रयत्व-
मिति यतः प्रकृतिपुरुषशरीरकस्यकारणत्वाभ्युपगमेन गुणक्रियाणां
स्वशरीरभूतप्रकृतिपुरुषगतत्वादितीमांशकांभगवानेकएवेषइतिपूर्वा-
र्द्धेनजानानः अमुष्यदुर्भगत्वमित्युत्तरार्द्धेन देशतः कालतइतिश्लोकं
च दोषांतरापादनेनपरिहरतिअस्मात्चोदित्यादिना गुणमय्यासत्वादि
गुणप्रचुरया आत्मसंबंधिन्यामायया भगवान्विश्वमसृजत् तथा
माययोपलक्षितः एतद्विश्वंसंस्थापयति सम्यक्स्थापयति प्रतिष्ठा-
पयति पालयतीति यावत् पुनर्भूयःप्रत्यभिधास्यति प्रातिलोम्येनापि
धास्यति अपिधास्यति तिरोहितं कारयति अपिपूर्वोधाधातुस्तिरो-
धानेवर्त्तते स्वाधिष्ठेयांगुणमयींमायां महदादिरूपेणपरिणमय्य स-
र्वंगुणत्रययुक्तत्रिमूर्त्तिरूपेण सृष्ट्यादीन्करोति ॥ ४ ॥

अतःपरिणामादयः स्वाधिष्ठेयमायागता नस्वगता इतिचेत्तथा
देशतइति योऽसौपरमात्मादीपप्रभायाइव देशतः विद्युतइवकालतः
स्मृतिरिवावस्थातः स्वप्नवत्स्वतः जीववद्न्यतः कृत्यादी-
रविलुप्तावबोधात्माविशेषणालुप्तज्ञानरूपोनभवति सर्वगतत्वादिस्थि-
रत्वादविक्रियत्वादनितरानुभाव्यत्वात्कालमात्रावसायित्वाभावात्क-
वश्यत्वाभावादतईदृशः सपरमात्माऽजयामायया कथंपुज्यते यद्दिदे-
नकेनापिदेशादिनालुप्तावबोधोभवेत्तर्ह्यविद्यासंबन्धः सम्भाविष्य-
तस्तदभावात्कथमजयायुज्येतेतिशंकाभिप्रायः ॥ ५ ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

दुर्भगशरीरस्यस्वहरेर्देवदत्तस्येवमाहात्म्यातिरोभावोदुःखमो-
क्षनास्तीत्ययमर्थः विदुरस्यचवक्ष्यमाणार्थप्रश्नप्रामध्याम्मन्वय-
येनिरूप्यते तत्रादौविदुरप्रश्नोपक्रमंवक्ति एवमिति भरतस्यमुख्य-
प्राणस्यप्रिययावाचा ॥ १ ॥

कालवृत्त्यांतुमायायामित्यादिनानिर्गुणोऽपि सत्त्वादिगुणैरुपा-
नकारणैर्जगत्सृष्ट्यादिकरोतिईश्वरइत्युक्तं तत्रचोदयति विदुर
इत्याह ब्रह्मन्निति हेब्रह्मन्! शमदमादिगुणबृंहितचिन्मात्रस्यज्ञानै-
रसशरीरस्यातएवनिर्गुणस्यसत्त्वादिगुणराहित्यस्यातएवाविकारि-
णोभगवतऐश्वर्यादिगुणसमुद्रस्यहरेःसत्वादिगुणास्तन्निमित्तज-
सृष्ट्यादिक्रियाश्च कथंयुज्येरन्नकथमपिउक्तहेतोरित्यन्वयः ल क
घटनइतितत्राह लीलयेति नहिकाश्चिल्लीलयाकंटकाग्रेपादंनिदधा-
अपितुप्रत्युतदूरादेवपरिहरति ऐश्वर्यादपियुज्यतइत्यतोवापीतिवि-
निष्ठोनिरवद्यइतिश्रुतंगर्हितत्वात् करोतिचातइदंतत्त्ववत् ब्रूहीतिप्र-
र्थः ॥ २ ॥

लीलयावानयुज्यतइतितत्र किं बाधकमत्राह क्रीडया इ
क्रीडायामुत क्रीडासंबंधिसुखमर्हस्यापूर्णसुखस्य यतो यस्मा
स्मात्तस्मान्न घटत इति तत्र कैमुत्यमाह कामेति यथेष्टं क्रीडि-
मिच्छापि अन्यतोऽरतिनस्तद्द्वा संभवासि अन्येन समेन पुरुषे
वा सह एतद्द्वयमप्याक्षिपति स्वत इति शब्दादिविषयनिमित्त
मंतरेण स्वभावेनैवालं बुद्धिगोचरानंदसमुद्रमग्नस्यातएव निवृत्त
रोमांचितगात्रस्यारत्यसंभवात् सच्चासावात्माच सदात्मा त
"सदेव सौम्येदमग्र आसीदात्मा वा इदमेक एवाग्र आसीदेकं

श्रीमद्विजयध्वजतीर्थ कृत पदरत्नावली ।

द्वितीय" मित्यादिश्रुतेरसत्वाच्च पुरुषांतरेण सह क्रीडेच्छाया एवासंभवात् किमुत लीलासंभव इति सदानिवृत्तस्य आत्मन इति सदानिवृत्तस्य आत्मन इति भिन्नं वा पदं समस्तगुणपूर्णत्वेन लीला प्राप्यप्रयोजनानवकाशादित्यर्थः तुना प्रकारांततरं निवारयति ॥ ३ ॥

ननु हरेर्गुणैः सृष्ट्यादिक्रीडायां सत्यामियं चिंता सैव नास्ति निष्क्रि यमिति श्रुतेरिति तत्राह अस्राक्षीदिति आत्ममायया स्वाधीनया प्रकृ त्या भूयः पुनस्तया रजोरूपया अस्राक्षीत् सत्वरूपया सख्यापयति तमो रूपया तद्विश्वं प्रत्यभिधास्यति संहरिष्यंतीत्यतो गुणक्रिया संसर्ग दर्शनान्ममायं संशय इत्यर्थः ॥ ४ ॥

इतोऽपि संशयो दुरुत्साद इत्याह देशतइति देशादि- निमित्तत्वेन स्वतोऽन्यतः परतोऽविलुप्तावबोधात्मा अविनष्टज्ञान स्वरूपोयोऽसौ भगवान्सोऽजया प्रकृत्या कथं युज्येत युक्त्वागुणरूप- प्रकृतिसंसर्गो न संभवतीति दृश्यते तथा तुच्छेनाप्यपिहितमिनि श्रुतेः अतः संदेह इत्यर्थः अवस्थातो जाग्रदाद्यवस्थानिमित्तेन ॥ ५ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ॥

इवेति वाक्यालंकारे ॥ १ ॥

अथ स्वाभाविकमायाशक्त्या परमेश्वरो विश्वसृष्ट्यादिकं करो- ति जीवश्च तत्र मुह्यतीत्युक्तं तत्र सन्देहं प्रश्नोत्तराभ्यां परिहरति ब्रह्मन्नित्यादिना । हे ब्रह्मन् ! कथं भगवतश्चिन्मात्रस्य स्वतः स्वरूप- शक्त्या भगवतः श्रीमद्वैकुण्ठादिगततादृशैश्वर्यादियुक्तस्य अतएव निर्गुणस्य प्राकृतगुणास्पृष्टस्य तत एव चाविकारिणः तादृक् स्वरू पशक्तिविलासभूतानां क्रियाणामनन्तानामपि सदोदितवरानन्तवि- धप्रकाशे तस्मिन् नित्यसिद्धत्वात् तत्तत्क्रियाविर्भावकर्तृत्वस्या- वस्थान्तरप्राप्तत्वाभावात् प्राकृतकर्तृत्वेव न निर्विकारापत्तिरिति निर्विकारस्य कथं सत्त्वादयः प्राकृतगुणाः कथं वा तदासंगहेतुका स्थापनादयः क्रियाश्च युज्येरन् ततश्च चिन्मात्रवस्तुविरोधादेव तं च ताश्च न युज्यन्ते भगवत्त्वे तु स्वैरचेष्टयापि न युज्येरन्नित्याह लीलया चापीति । अत्राविकारित्वनिर्गुणत्वाभ्यां सह चिन्मात्र- त्वं भगवत्त्वं चेत्युभयमपि स्वीकृत्यैव पूर्वपक्षिणा पृष्टं । ततश्च तस्य चिन्मात्रस्वरूपस्य भवतु भगवत्त्वं तन्मात्रेऽस्माकं न संदेहः किन्तु तस्य कथमितरगुणादिस्वीकारो युज्यत इत्येव पृच्छ्यते इति वा- क्यार्थः । ततश्च चिन्मात्रत्वे भगवन्मात्रत्वे च तस्य तुच्छा गुणाः क्रियाश्च न सम्भवन्त्येवेति द्विगुणीभूयैव प्रश्नः ॥ २ ॥

लीलया चापि कथं युज्येरन्निति । विशदयति क्रीडायामिति । अधिकारित्वादि तत्तद्युतकर्तृहीनस्यार्भकस्य चिक्रीडिषा रूपःकाम- स्ताभ्यामन्यस्य क्रीडायामुद्यमे हेतुर्भवति । भगवतस्तु स्वेनात्मनास्व- रूपवैभवेन च तृप्तस्यात एवान्यतः सदा निवृत्तस्य च कथमसा- वन्यतः सम्भवेत् ॥ ३ ॥

ननु तस्य ते गुणास्ताः क्रियाश्च न विद्यन्त इत्यपलपनीयं तथै व प्रसिद्धेरित्याह अस्राक्षीदिति गुणमय्या त्रैगुण्यव्यञ्जिन्या आत्मा श्रितया मायया संस्थापयति पालयति प्रत्यपिधास्यति प्रातिलोम्येन तिरोहितं करिष्यति ॥ ४ ॥

जीवस्य कथं मायामोहितत्वं घटेतेत्याक्षेपान्तरमाह देशत इति योऽसौ देशादिभिरविलुप्तावबोधः आत्मा जीवः स कथमजया अविद्यया युज्यते तत्र देशव्यवधानतो देशगतदोषतो वा चक्षुःप्र-

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

कारा इव कालतो विद्युदिव अवस्थातः स्मृतिरिव स्वतः शुक्तिरज तमिव अन्यतः घटादिवस्त्विव न तस्यावबोधो लुप्यते अव्याहत- स्वरूपभूतज्ञानाश्रयत्वादेवेत्यर्थः ॥ ५ ॥

---

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

हरेरिंद्रिय वर्गस्य मनसः सर्ग उच्यते ।
संकल्पेन विकल्पेन द्विधा तद्विनिरूप्यते ॥ १ ॥
संकल्पो निश्चयः प्रोक्तः सचसंदेह पूर्वकः ।
अन्यथा ज्ञान मेवस्यात्तदर्थं प्रथमो द्विधा ॥
विकल्पो विविधःपक्षस्ते प्रश्ना इह निरूपिताः ॥ २ ॥
अत्र सर्वाणि कार्याणि पृथगानि भगवत्कृतिः ।
ज्ञातुं सा मनसा भाव्या पूर्वं चापि कृतौ मनः ॥ ३ ॥

एवं पूर्वाध्यायांते उद्धृत्य पुष्पेभ्य इति प्रश्ने स्वबुद्ध्या यावदुद्धृतं तावन्निरूपितं तत्र यत्स्वयं चात्मवर्त्मोत्मा न वेदेति वचनाद्भगवतो ऽलौकिकं सामर्थ्यं प्रायेणाख्यानभिप्रेतमिति तदभिप्रायेण जीवे भगवति च संदिग्धमर्थं द्वयं पृच्छति तत्र प्रथमं भगवति संदेह- चतुष्टयं जीवे च द्वयं पृच्छति ब्रह्मन्निति सगुणादिव्यापारास्त्वये- कविधानिरूपिताः ते च गुणातीता एवेति वक्तुं न शक्यंते स- गुणाश्चेत्कार्यकारणवैलक्षण्यं ब्रह्मन्निति संबोधनं ज्ञानस्य निश्चि- तत्व एव ब्रह्मभावो भवतीति तव निश्चितमेव किंतु बोध- नार्थं पृच्छ्यत इत्यौद्धत्यसमाधानं कथमिति प्रकारे प्रश्नः भगवत श्चिन्मात्रस्येति भगवच्छब्दो न यौगिकः किन्तु रूढ्या ब्रह्मपरः तच्च- चिन्मात्रमेवेति धर्मशक्तिविशेषस्वरूपाणामभावाद्वाच्यवाचकसंबंधा भावादनिरूप्यत्वाच्च कथं तादृशस्य जगत्कर्तृत्वं कर्तृत्वादयश्च धर्मा विकृता विकारिणो भवंति अतो विकारिणो भगवतः प्रयोजनसंदे हपूर्वपक्षाभावेऽपिनिर्गुणस्य गुणाः क्रियाः कथं भवंतीति बीजसंदे- ह प्रश्नः कार्यं हि बीजप्रयोजनाभ्यां विना न भवति तत्र प्रयोजनं परमानंदस्य जगति नास्त्येव"लोकवत्तु लीले"ति न्यायेनप्रयोजनाभा- वेऽपि लीलया करिष्यतीति चेल्लीलापि न संभविष्यतीत्यग्रे वक्ष्यते अस्तु वालीला तथापि जगतो बीजं न भगवान् विलक्षणत्वात् ज गदचेतनं विकारि नानारूपं च भगवांस्तुचिन्मात्रो ऽविकारी च किंच जगत्सगुणं भगवान्निर्गुणोऽतः कार्यकारणवैलक्षण्याभ्भग वत्कार्यं जगत् यद्यपि चिंतामणेः सकाशात्तद्विलक्षणं सकलमेव कार्यमुत्पद्यते तथापि पूर्वपक्षिणः पक्षे न चिंतामणिमात्रात्कार्यमुत्प- द्यते अन्यथा सर्वदोत्पद्येत किंतु कामयितुः सन्निधाने यथा यथा चिंतोत्पद्यते घटाकारेण पटाकारेणच तथा तथा मणिसान्निध्यात्ते पदार्था मनसा भाविताः कार्यकृता इव भवंति इयमलौकिकी तस्य शक्तिः भगवतस्तुद्वितीयसान्निध्याभावान्नानेनापि प्रकारेण कार्योत्पत्तिः संभाविता तदाह चिन्मात्रस्येति ॥ १ ॥ २ ॥

एवं बीजभाव दूषयित्वा फलभावापन्नांलीलां दूषयति क्रीडायामि तिलीला नाम विलासेच्छा कार्यव्यतिरेकेणैव कृतिमात्रं नतया कृ त्या वहिः कार्यं जन्यते जनितमपिकार्यं नाभिप्रेतं नापि कर्त्तरि प्र- यासं जनयति किंत्वंतः करणे पूर्णआनंदे तदुल्लासेन कार्यजननस दृशी क्रियाकाचिदुत्पद्यते यथा लोके राज्ञः सा लीला सापि नोत्प- द्यते तत्र प्रयोजनाभावेऽपि हेतुरस्ति स च हेतुर्लोकासिद्ध एव वक्त व्यः लोकान्यायेन लीला निरूपणातसाच लीला वाले प्रसिद्ध

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

बालस्यापिकामेनैव चिक्रीडिषाभवति अन्यथा सर्वदैव क्रीडितुमिच्छास्यात्कामोऽपि सहेतुकःअन्यथा सर्वदा स्यात् तदाह अर्भस्वक्रीडायामुद्यमः प्रथमनो भवति स चार्भस्य प्रथमं कामात् तत्रैवं वाक्यरचना प्रथमतोऽर्भस्य कामोवासनया"काममयएवायं पुरुष"इति श्रुतः। ततदनंतरं चिक्रीडिषा क्रीडितुमिच्छा अन्यतश्च भवति अन्यं बालकं निमित्तमाश्रित्यैकस्य क्रीडाऽसंभवात्तदभावे कामेऽपि क्रीडेच्छा निवर्त्तेत इति कामोऽत्रक्रीडाज्ञानं क्रीडायाः फलरूपत्वात्साधनरूपत्वाच्च कामप्रयत्नयोरेकविषयत्वं यत्र पुनः स्वर्गादौ साधनफलयोर्भेदस्तत्र कामःस्वर्गे चिकीर्षा यागेऽतोऽत्र न पौनरुक्त्यं तदनंतरं क्रीडायामुद्यमो भवति क्रीडां कर्त्तुमुद्युक्तो भवतीत्यर्थः केचित्तु कामस्यैव विशेषणमुद्यमं वदंति उद्यमवतीति उद्यमःकाम एव पुरुषमुद्यमयति अन्यतश्च चिक्रीडिषा भवतीति तच्चिंत्यम् एतादृशोऽपि पक्षोभगवतिनसंभवति स्वतस्तृप्तस्य कामो न संभवति कामो ह्यपूर्णस्यैव अन्यथा फले जातेऽपि कामःस्यात् स्वस्यैव सर्वफलरूपत्वात्प्राप्तत्वाच्च तृप्तस्य कामाभावो लोकसिद्धः प्रकारभेदेनैव कामातृप्तिश्चेदतृप्तो भगवान्स्यात् ततश्च स्वार्थमेव कुर्यात् एतादृशी तृप्तिरदूषणामिति चेत्स्वानंदस्य परिच्छेदः स्यात् तस्मात् युक्त्या कामोनिरूपयितुमशक्य इति सोऽकामयतेति श्रुतिरन्यपराभवतु नित्यश्चेत्कामः स्यात् सर्वदैव कार्यं भवेत् कार्यपक्षे तु तज्जनकांतराभावादनुत्पत्तिरापद्येत कालादिना तदुद्बोधपक्षेऽपि भगवतःकालादिसंबंधो भवेत् सचनास्तीत्याह निवृत्तस्यसदान्यत इति अन्यसंबंधाभावस्तस्य सर्वदाऽतो बीजप्रयोजनाभावाद्भगवतः कार्यपक्षोऽनुपपन्नः ॥ ३ ॥

किं च मायायां स्वीकृतायां यद्यपि पूर्वोक्तसर्वदूषणनिवृत्तिर्भवति किंतु तदेव स्वीकर्त्तुमशक्यं मायासंबंधस्य निरूपयितुमशक्यत्वात् मायाह्यज्ञानात्मा सा ज्ञानाभावे भवतीति भगवतस्तु ज्ञानाभावो न संभवतीत्याह श्लोकद्वयेन असाक्षीदिति विश्वसंबंधिनीमेव मायां मन्यमानस्यैष प्रश्नः भगवानिदं विश्वं गुणमय्यात्ममायया असाक्षीत् तयैव च संस्थापयति तयैव च भूयः प्रत्यभिधास्यनि संहरिष्यति ॥ ४ ॥

एवं माययोत्पत्तिस्थितिप्रलया विश्वस्य भगवत्कृता इति पक्षमनूद्य मायासंबंध एव तस्य न घटते पूर्णज्ञानत्वादित्याह देशत इति ज्ञानस्य नाशः पंचधा संभवति भगवांस्तु पंचप्रकारेणाप्यविलुप्तावबोधात्मा नविलुप्तो बोधो ज्ञानं यस्य तादृशश्चासावात्मा च बोध एवात्मा स कथमजया युज्येत तत्र कस्यचिद्बोधो देशेन नश्यति घटज्ञानं घटेन परिच्छिन्नं पटं न विषयी करोतीति देशतस्तस्याभावःकालतोऽपि ज्ञाननाशःकालांतरे विस्मरणादवस्थातोऽपि नाशः स्वप्नेजाग्रदवस्थावस्तूनां ज्ञानाभावात्स्वतोऽपि नाशःउदासीनज्ञानानां संस्कारानाधायकत्वादन्यतोऽपि नाशो विरोधिगुणप्रादुर्भावात् भगवतस्तु ज्ञानं पंचविधैरपि दोषैरसंबद्धं तत्र सर्वविषयकत्वान्न देशतः परिच्छिन्नं नित्यत्वान्न कालतःभगवतोऽवस्थाभावान्नावस्थातः निर्विषयकत्वान्न स्वतःभगवतो विरोधिगुणाभावान्नान्यतः अतोऽजयामायया प्रकृत्या वा न युज्येत तस्मात्स्वतो वा मायासंबंधेन वा भगवतो जगत्कर्तृत्वं नोपपद्यते ॥ ५ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

सप्तमे भगवज्जीवगतान्यत् संशयच्छिदा :
भक्तिजिज्ञासयान्येऽपि क्षत्तुः प्रश्नाः प्रकीर्त्तिताः ॥

एवं सा वा एतस्य संद्रष्टुः शक्तिः सदसदात्मिका माया नाम महाभाग ययेदं निर्ममे विभुः। कालवृत्त्यातु मायायां गुणमय्या मधोक्षजः पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवानित्यादि श्रुवाणां भारत्या ब्रह्मंस्त्वया संसारकूपादुद्धृत एवाहमिति मधुरया वाचा प्रीणयन्निवेति विदुरमनोगताक्षेपस्य सहसैव मैत्रेयेणावगतत्वान्मैत्रेयं प्रीणयितुमशक्नुवन्नित्यर्थः ॥ १ ॥

चिन्मात्रस्य गुणाः सत्वादयः क्रियाः सृष्ट्याद्यश्च कथम् । अत्र चिद्रूपस्य चिन्मयस्येत्यादिकमप्रयुज्य चिन्मात्रस्येत्यवधारणवाचिमात्र शब्द प्रयोगादचिद्गन्धस्यापि तत्र राहित्यं बोधितं ततश्च सा वा एतस्येत्यनेन सत्त्वादिगुणमय्या मायाया भगवच्छक्तित्वेनोक्तत्वाच्छक्तेश्च स्वाभिन्नत्वासम्भवात् वस्तुतो गुणास्तदीया एवेति तस्य चिन्मात्रत्वे कथं सत्वादिजडगुणवत्त्वं सत्त्वादिजडगुणवत्वे च कथं चिन्मात्रत्वमित्याक्षेप एकः । तथा विकारोहि कालहेतुको गुणधर्म एवेति तस्यतु चिन्मात्रत्वादेवाविकारित्वे कथं विकारजनकक्रियावत्त्वं क्रियावत्वेच कथमविकारित्वमिति द्वितीयः । नन्वेवमसम्भवन्तोऽपि गुणाः क्रियाश्च तस्य स्वैरलीलत्वात् सम्भवेयुस्तत्राह लीलया वेति नहि लीलयेत्युक्त्या विरोधः परिहर्त्तुं शक्यते तस्य तादृशलीलत्वे गुणवत्त्वस्य दुष्परिहरत्वादिति भावः । अत्र भगवत इति विशेष्यं भगवानेक आसेदमिति पूर्वोक्तेः । सेयं भगवतो मायेत्युपरिष्टादुक्तेश्च भगवतः कथम्भूतस्य चिन्मात्रस्य न च भगवानेव चिन्मात्रो नतु भग इति वाच्यं यतो भगस्यापि भगवत्त्वमप्राकृतत्वञ्च विष्णुपुराणे दृष्टं । यथा ज्ञानशक्तिबलैश्वर्य्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिरित्यत एव देहदेहिविभागोऽत्र नेश्वरे विद्यते क्वचिदित्युक्तमतएव भगशब्दवाच्यानां षडैश्वर्याणामपि चिन्मात्रत्वमेव नतु सत्वादिगुणपरिणामत्वमिति भगवत्त्वं स्वरूपलक्षणमेव भगवत्त्वस्य मायिकत्वात् तटस्थलक्षणत्वमिति व्याचक्षाणा भ्रान्ताएव इन्द्रस्य मायेयमिति इन्द्रो मायया वृषभो भवतीत्युक्ते इन्द्रस्य वृषरूपत्वमेव स्वमायाकृतं प्रतीयतं नत्विन्द्रत्वं यथा तथैव सेयं भगवतो मायेति भगवानेव मायया विश्वं भवतीत्युक्त्या भगवतो विश्वरूपत्वमेव मायिकं स्यान्न भगवत्त्वमिति युक्तेश्च ॥ २ ॥

किञ्च लीलयेत्युक्त्या विरोधपरिहारो मास्तु लीलैव तावदीश्वरे हेत्वभावान्न घटत इति सदृष्टान्तमाह क्रीडायामिति उद्यमयति प्रवर्त्तयतीत्युद्यमः काम एवार्भकस्य स्वाभाविकः क्रीडायां प्रवृत्तिहेतुरस्ति । तथा अन्यतो वालान्तरप्रवर्त्तनेनापि चिक्रीडिषास्ति परमेश्वरस्य त्वात्मारामत्वात् कथं कामः ईश्वरान्तराभावात् । कथमन्यतश्चिक्रीडिषेत्याह स्वतस्तृप्तस्येत्यादि अन्यतो निवृत्तस्य अन्यरहितस्य ॥ ३ ॥

नच तस्य ते गुणाः क्रियाश्च न सन्तीत्यपलपनीयं तथैव प्राप्तेरित्याह असाक्षीदिति प्रत्यपिधास्यति प्रातिलोम्येन तिरोहितं करिष्यति ॥ ४ ॥

जीवस्य च कथं मायामोहितत्वं घटेतेत्याक्षेपान्तरमाह देशत इति योऽसौ नित्यज्ञानत्वात् देशादिभिरविलुप्तावबोध आत्मा जी

भगवानेक एवैष सर्वक्षेत्रेष्ववस्थितः।
अमुष्य दुर्भगत्वं वा क्लेशोवा कर्मभिः कुतः ॥ ६ ॥
एतस्मिन्मे मनोविद्वन्खिद्यतेऽज्ञानसङ्कटे।
तन्नः पराणुद विभो? कश्मलं मानसं महत् ॥ ७ ॥
श्रीशुकउवाच।
स इत्थं चोदितः क्षत्रा तत्त्वजिज्ञासुना मुनिः।
प्रत्याह भगवच्चित्तःस्मयन्निव गतस्मयः। ८ ॥
मैत्रेयउवाच।
सेयं भगवतोमाया यन्नयेन विरुध्यते।
ईश्वरस्य विमुक्तस्य कार्पण्यमुत बन्धनम् ॥ ९ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी

स कथमजया अविद्यया युज्येत अजायोगोत्थस्तस्यावबोधलोपः कथं स्यादित्यर्थः। तत्र देशतऊषरदेशात उप्तं बीज मिव कालतो विद्युदिव अवस्थातः स्मृतिरिव स्वतः स्वप्न इव अन्यतो घटादिरिव यस्य चिद्वस्तुत्वादवबोधो न लुप्तो भवितु मर्हति स कथमविद्यया विलुप्तविबोधः क्रियत इत्यर्थः ॥ ५ ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

सप्तमेविदुरकृत आक्षेपस्तत्परिहारः पुन विदुरकृताः प्रश्नाश्च निरूप्यंते एवमिति अथतेभगवल्लीलायोगमायोपबृंहिताःविश्वस्थित्युद्भवांतार्थायआत्मयाऽनुपूर्वशः भगवानेकआसेदमग्रआत्मात्मनां-विभुः सवाएवतदाद्रष्टानापश्यद्दृश्यमेकराट्मेनेसंतमिवात्मानंसुप्त-शक्तिरसुप्तदृक् सावाएतस्यसंद्रष्टुः शक्तिःसदसदात्मिका मायानाम महाभागययेदंनिर्ममेविभुरित्येवंब्रुवाणंभारत्याप्रीणयन्निवप्रसन्नीकुर्वन्निवप्रत्यभाषत इवशब्दः वह्निभिर्विदुरगुणैः पूर्वमेवतत्प्रसन्नतांद्योतयति १

हे ब्रह्मन्! चिन्मात्रस्याचद्रूपामात्राज्ञातृत्वशक्तिर्यस्यतस्यसर्वप्रवृत्तिनिमित्ताभिन्नस्यनिर्गुणस्य हेयगुणरहितस्य अविकारिणः अनयालीलयैवसुखीस्यामित्येवंविकारशून्यस्यउभयत्रहेतुगर्भविशेषणंभगवतः स्वाभाविकषाड्गुण्यसिंधोः लील्याहेतुभूतयालीलार्थमित्यर्थः गुणाः विश्वकर्तृत्वादयः क्रियाविश्वसृष्ट्यादिव्यापाराश्चकथं-युज्येरन्नयुक्तास्युरित्यर्थः ॥ २ ॥

ननुको दोष इत्यत्राह क्रीडायामिति अर्भस्य बालस्यक्रीडायाम् उद्यमयति नियोजयतीति प्रवृत्तिनिमित्तं कामः अन्यतः बालांतरेण चिक्रीडिषा क्रीडेच्छा चास्ति स्वतस्तृप्तस्य पूर्णकामस्य अन्यतः सजातेर्विजातेश्च सदा निवृत्तस्य सजातीयविजातीयभेदशून्यस्य कामः चिक्रीडिषा च कथं स्यान्न कथमपीत्यर्थः अथ ते भगवल्लीलेत्यादिना एक एव भगवान् लीलया विश्वसृष्ट्यादि करोतीतितव वाक्यं कथं घटेत लीलाप्रवृत्तिनिमित्तासंभवादित्याक्षेपः ॥ ३ ॥

सावाएतस्य संद्रष्टुःशक्तिःसदसदात्मिका माया नाम महाभाग ययेदं निर्ममे विभुरित्यपि त्वद्वाक्यं ब्रह्मकारणवादे कथं घटते-त्याक्षिपति अस्राक्षीदिति द्वाभ्याम् ॥ ४ ॥

श्रीमच्छुकदेव कृत सिद्धांतप्रदीपः!

देशादिभिः अविलुप्तावबोधः अनावृतज्ञानः आत्मास्वरूपं यस्य सः अजया मायया विश्वसृष्ट्यादौ सहायभूतया कथं युज्येत मायाया अपि जगद्धेतुप्रसंगात् भगवतो जगत्कर्तृत्वस्य परायत्तत्वप्रसंगाच्च भगवानेक आसेदमित्येकत्वविरोधाच्च प्रधानं जगत्कारणं स्यादितिभावः ॥ ५ ॥

भाषाटीका।

श्री शुकदेवजी बोले कि ऐसे बोलते हुये मैत्रेयजीको व्यास पुत्र बुद्धिमान् विदुरजी वाणी से प्रसन्न करते बोले ॥ १ ॥

विदुरजी बोले कि, हे ब्रह्मन् ईश्वर चैतन्य मात्र, अविकारी निर्गुण कों क्रिया और गुण कैसे होय हैं ॥ २ ॥

बालक के क्रीडा में उद्यम करनो ये काम है, और खेल करवे की इच्छा करनीं योग्य है, परंतु अपने आप तृप्त, सदा सब ओर से निवृत्त ईश्वर को काम और इच्छा कैसै होय है सो कहो ॥ ३ ॥

गुण मयी अपनी माया से या विश्व को रचें है, वाही से स्थिति करे हैं और संहार भी करे है ॥ ४ ॥

देश से काल से अवस्था से अपने से और से जाको ज्ञान नष्ट नहीं होय ऐसे ईश्वरमाया करके कैसे संयुक्त होय है सो कहो ॥ ५ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ॥

किंच ब्रह्मरूपत्वादेवजीवस्यसंसारोऽपिनविद्यतइत्याक्षिपति सर्वक्षेत्रेष्ववस्थितोभोक्ताऽपिवस्तुतोभगवानेवचिद्रूपत्वेनतद्व्यतिरेकाभावात् एवंचसत्यमुष्यजीवस्यदुर्भगत्वमानंदादिभ्रंशः कर्मभिर्हेतुभूतैः क्लेशोवाकुतः कर्मसंबंधाभावात् अन्यथाईश्वरस्यापितत्प्रसंगःस्यादितिभावः ॥ ६ ॥

अज्ञानमेवसंकटंदुर्गंतस्मिन् तन्मानसंकश्मलंमोहंपराणुदापाकुरु ॥ ७ ॥

चोदितआक्षिप्तः स्मयन्निवप्रौढिमाविष्कुर्वन्निव वस्तुतस्तुगतस्मयः ॥ ८ ॥

भगवतोऽचिंत्यशक्तेरीश्वरस्यसेयंमाया नयेनतर्केणविरुध्यते तर्कविरोधमेवानुवदति विमुक्तस्यैवपुंसोऽविद्याबंधनंकार्पण्यंचेति ॥ ९ ॥

**यदर्थेन विनाऽमुष्य पुंस आत्मविपर्ययः ।**
**प्रतीयत उपद्रष्टुः स्वशिरश्छेदनादिकः ॥ १० ॥**

### श्रीधरस्वामिकृत भावार्थदीपिका ।

अत्रोदाहरणमाह यद्यथा अर्थेन शिरश्छेदादिना विनाऽप्युपद्रष्टुः स्वप्नसाक्षिणो ममेदं शिरश्छिन्नमित्यात्मविपर्ययः केवलं मृषैव प्रतीयते तद्वत् ॥ १० ॥

### श्रीराधारमणदासगोस्वामि विरचिता दीपिन्याख्यादीपिकाटिप्पणी

भगवानिव ग्रहेव प्रसजति वस्तुनामग्रहत्वं सति अन्यथा वस्तु तोग्रहत्वेऽपि दुर्भगत्वादिसत्वं तत्प्रसंगः दुर्भगत्वादिप्रसंगः ॥ ६ ॥ ७ ॥

प्रौढिमुत्तरदाने प्रागल्भ्यम् गतस्मयः विगतगर्वः ॥ ८ ॥

तर्केण विचारेण विरुद्ध्यते विचारातीता अतर्क्येत्यर्थः पुंसो जीवस्य यया मायया अविद्यया स्ववृत्त्या बंधनं गुणमयजालप्रवेशः कार्पण्यं स्वरूपज्ञानतिरोभावश्चासन्नपि प्रतीयते सेयं भगवतो मायेत्यन्वयः अत्राचिन्त्यस्वरूपशक्तेर्भगवतो मायेत्युक्त्वा स्वरूपशक्तेरंतरंगत्वाद्बहिरंगाया मायायागुणैः स्वादिभिस्तत्कार्यसृष्ट्यादिक्रियाभिश्च नासौ स्पृश्यते इति निर्गुणत्वं निर्विकारत्वं च न विरुद्धं नियामकतया गुणयोगः संकल्पमात्रेणैव सृष्ट्यादिक्रियाश्च न विरुद्धा इति ब्रह्मन्कथं भगवत इत्यस्याप्युत्तरमनुसन्धेयम् ॥ ९ ॥

अत्र असतोऽपि बंधादेः प्रतीतौ आत्मविपर्ययः ॥ १० ॥

### श्रीमद्वीरराघवाचार्यकृत भागवतचंद्रचंद्रिका ॥

एवं जीवशरीरकत्वे तद्गतक्लेशाद्यनाश्रयत्वमदेनाशक्यपरिहमिति भगवानिति पश्यभगवानेकः सर्वत्रैवसमस्तशरीरेष्ववस्थितः जीवांतरात्मतयाऽवस्थितः अंतःप्रविष्टः शास्ताजनानां य आत्मानिनिष्ठात्मनोंतर इत्यादिश्रुतेः अतोऽदुःखोतसंसारित्वादयो गुणकार्यभूतानपरमात्मानंस्पृशंतीतिचेत्तत्राह अमुष्येति भवतः दुर्भगत्वं कर्मभिः क्लेशोवा कुतःस्यादित्यर्थः अयमभिप्रायः यदि परमात्मनः सर्वत्रगणितरुच्यते तर्हि जागरस्वप्नसुषुप्तिमूर्च्छोक्रांतिषु जीवस्य तत्तत्स्थानप्रयुक्ता येदोषास्ते तदंतर्यामिणः परस्यब्रह्मणोऽपि संभवंति नच परमात्मनोऽकर्मवश्यत्वेन दोषाभाव इति वाच्यं कर्मणां देह संबंधापादनद्वारा स्वशाद्यपुरुषार्थ जनकत्वेन देहसंबंधस्याप्यपुरुषार्थत्वादन्यथा कर्मणामेवदुःखादि जनकत्वेन देहसंबंधस्य प्रयोजनशून्यत्वापत्तिश्च परमात्मनःकर्मवश्यत्वाभावेऽपि सर्वत्रैवावस्थितइति देहसंबंधाभ्युपगमाच्चाना विधाशुचिदेहसंबंधस्यैवापुरुषार्थत्वात् अतएवतन्नियमनार्थं स्वेच्छया तत्प्रवेशोऽप्यपुरुषार्थसंबंधोऽवर्जनीयः पूयशोणितादिमज्जनंहि स्वेच्छाकारितमप्यपुरुषार्थ एवेति ह अतो यद्यपि जगदेककारणं सर्वज्ञादिकल्याणगुणाकरं च ब्रह्म तथापि यः पृथिव्यांतिष्ठन् य आत्मनितिष्ठन्योरेतसि तिष्ठन्नित्यादि वचनात्तत्रतत्रावस्थितस्य तत्संबंधरूपाऽपुरुषार्थाः संतीति प्रश्नमुपसंहरति एतस्मिन्निति हेविद्वन्मैत्रेय! एतस्मिन्नज्ञानसंकटे इति पदच्छेदः अज्ञानरूपसंकटे मेमनः खिद्यते तस्माद्विभोमैत्रेय ! नःअस्माकं मानसं मनःसंबंधिमहत्कश्मलं खेदं पराणुदापाकुरु ॥ ७ ॥

### श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका

एवमापृष्टो मैत्रेयस्त्वाहेत्याह शुकः सइति तत्त्वजिज्ञासुनाचत्रा[illegible] मुकारीत्याचोदितआपृष्टो मुनिर्मैत्रेयः भगवच्चित्तः भगवत्येव चित्त[illegible] स्यसगतस्मयः तत्त्वदर्शित्वेन विगतस्मयः स्मयन्निव प्रश्नस्यसु[illegible] रिहरत्वादतिभावः प्रत्याहप्रत्यभाषत ॥ ८ ॥

यदुक्तं चेतनाचेतननियमनार्थं तदंतरात्मतया स्वेच्छयाप्यवस्थितस्यतत्संबंधप्रयुक्त परिणामित्वदुःखित्वाद्यपुरुषार्थसंबंधोऽवर्जनीयइति नतद्युक्तंनह्यचिद्वस्त्वपिस्वभावतोऽपुरुषार्थ स्वरूपं कर्मवश्यानांतुकर्मस्वभावातुगुण्येन परमपुरुषसंकल्पादेक मववस्तु कालभेदेन पुरुषभेदेन च सुखायदुःखायचभवति वस्तुस्वरूपप्रयुक्तत्वेतादृग्ध्ये सर्वसर्वदामवंस्य सुखायदुःखायैव वा स्याच्चैवं दृश्यते तथाचोक्तं "नरकस्वर्गसंज्ञे वै पापपुण्ये द्विजोत्तम। वस्त्वेकमेव दुःखाय सुखायेर्ष्यागमाय च। कोपाय च यतस्तस्माद्वस्तुवस्त्वात्मकं कुतः। तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते। तदेव कोपाय यतः प्रसादाय च जायते। तस्माद्दुःखात्मकं नास्ति न च किंचित्सुखात्मकमि"ति अतो जीवस्य कर्मवश्यत्वात्तत्तत्कर्मानुगुण्येन तत्तद्वस्तुसंबंध एवापुरुषार्थःस्यात् परस्यब्रह्मणो निरस्तनिखिलदोषस्य समस्तकल्याणगुणाकरस्य स्वाधीनस्य विविधविचित्रस्वाभाविकशक्तिमतः अपुरुषार्थाश्रय चेतनाचेतनसंबंधस्तच्चिदचिन्नियमनरूपलीलारसायैवस्याज्जीवस्यत्वविद्या[illegible] बंधोऽपुरुषार्थजननायस्यादित्याह सेयमिति त्रिभिः ईश्वरस्य कु[illegible] णत्वंमुक्तस्यबंधनंचयेनहेतुनानविरुध्यते सेयं भगवतो माया आश्चर्यशक्तिः जीवस्थाव्यापिनो भगवतोव्याप्यरूपणबद्धजीवगत दोषास्पर्शहेतुभूताश्चर्यशक्तियोगाद्व्याप्यवस्तुगतदोषास्पर्शकारि[illegible] नैवविरोधइत्यर्थः "परास्यशक्तिर्विविधैवश्रूयतेस्वाभाविकीज्ञानबलक्रियाचे"ति श्रुतेः विविधविचित्रानंतशक्तियोगात्तत्तद्वस्तुवस्तुनप्रयुक्तद्दतदोषास्पर्श उक्तः अनेन ब्रह्मन्कथं भगवतइति कारकत्वाक्षेपोऽपि परिहृतः गुणक्रियाभ्यां चेतनाचेतनद्वारकत्वेन ब्रह्मणस्तत्संस्पर्शाभावात्प्रकृतिपुरुषविशिष्टस्य कारणत्वाभ्युपगमेप्रकृति पुरुषगतविकाराणां शुक्लकृष्णरक्ततं[illegible]शौक्ल्यकर्ण्यादीनां तत्तच्छुक्लादिनंतु संयुक्तप्रदेशैकांतस्थितिवत् शरीरगतबाल्ययौवनादीनामात्मन्यस्पर्शवच्च परमात्मनिप्रसक्तत्वाभावात्सर्वत्रैवावस्थितस्यापि रमात्मनो नाक्षत्रगतदोषसंस्पर्शः ॥ ९ ॥

जीवस्यतु स्वतोपहतपाप्मत्वादिविशिष्टत्वेऽपि तत्स्वरूपस्यविद्याकर्मवासनारुचिप्रकृतिसंबंधादिभिस्तिरोहितत्वेन तत्तद्देहदेहात्माभिमानेनापुरुषार्थसंबंधोऽवर्जनीय इति सदृष्टांतमाह यदर्थेनेति यद्यतः अमुष्यकर्मवश्यस्य पुंसो जीवस्याधीन पुरुषार्थभूतेनात्मस्वरूपेण विनाआत्मविपर्ययः देवमनुष्यत्वादिभावः तत्प्रयुक्तः स्वशिरश्छेदनादिकः स्वशरीरभूतदेवमनुष्यादिशिरश्छिन्नमेमेदंशिरश्छिन्नमिति शोकश्च उपद्रष्टुःदेह आत्मतादात्म्येनानुसंधानात्प्रतीयतेऽनुभूयते सेयमपि भगवतो मायेत्यर्थः ॥ १० ॥

### श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली

विदुरः प्रकारान्तरेण शंशय्यते इत्याह भगवानिति नित्य[illegible] शयशकलैश्वर्यादियोगोऽस्ति हरेरित्याशयेनोक्तं भगवानिति यथा[illegible] इतरस्य दुर्भगत्वमैश्वर्यादिराहित्यमविद्यास्मितारागद्वेषाभिनिवेश[illegible]

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

कसंसारजन्यदुःखलक्षणः क्लेशोवा दृश्यते तथा दुर्भगसर्वक्षेत्रेषु सत्त्वादमुष्यापि तत्संसर्गः संभाव्यः स न युज्यते कुतो भगवत्त्वादतः संशय इत्यर्थः ॥ ६ ॥

शुक्तिज्ञानपूर्वकत्वादयं संशयः स्वयमेव श्लथितो भवतीत्याशंक्य ज्ञानदार्ढ्याभावात्स्थाणुवदवस्थानात्त्वयैव निर्मूलनीय इति भावेनाह एतस्मिन्निति ज्ञानसंकटे ज्ञानसंबाधे निश्चितज्ञानाभाव इत्यर्थः परा णुद निराकुरु "मूर्च्छा तु कश्मलं मोह" इत्यभिधानं संत आत्मनि अल्प मपि दोषं महत्त्वे न भावयंतीत्याशयेन महदित्युक्तं नतु तत्त्वेन अत एव मानसं नतु बुद्धिसंस्थम् ॥ ७ ॥

शुकस्तस्यप्रश्नं परिहरतीत्याह स इति गतस्मयो गताहंकारः स्मयन्मंदं हसन्निव ॥ ८ ॥

दुर्भगशरीरस्थस्यापि दुःखादिकर्दमास्पर्शोमाहात्म्यातिशयादि तिपरिहरति सेयमिति ईश्वरस्यैश्वर्यमूर्तेर्हरेः कार्पण्यं दैन्यं विमुक्त स्य नित्यमुक्तस्यापि बंधनं विरुध्यते प्रमाणतो युक्तितश्च विरुद्ध-मिति येन तेन तन्न्याय्यं न्यायोपेतमेव कथं सेयं भगवतो माया अ यं हि हरेर्महिमा यत्प्रमाणयुक्तिभ्यामुपपन्नं तत्परमार्थवस्तु यत्ता-भ्यां दुर्घटं तथापि प्रतीयते शुक्तिरजतवत् सा मायेत्यनुभवसिद्ध-मित्यभिप्रेत्य प्रश्नं परिहरति सेयमिति यन्नयेन न्यायेन विरुध्यते सा भगवतो माया अनिर्वाच्याऽविद्यालक्षणायमिति सर्वानुभवसिद्धत्वा दपाकरणायोग्येति न्यायविरोधं दर्शयति ईश्वरस्येति इत्येतद्भगव-त इत्युक्त्यापहसिततमिति ज्ञायते तथा हि समस्तैश्वर्यादिमतो भग-वच्छब्दार्थत्वेनप्रमितत्वान्नतस्यकार्यकारणे मायापेक्षा अशक्ता-हि सात्वादयो मायामपेक्षन्ते "अशक्ताः सत्यसृष्टौ हि माया-सृष्टिं वितन्वते„ इति च "कथं देहे परोदेवो नलिप्येतेह बं-धनैः। कथं न दुःखी स भवेद्दुःखी चेदीश्वरः कुत„ इत्यादि श्रुतिविरुद्धत्वादुक्त एवार्थ इति प्राकृतदेहवत्त्वात् देवदत्त-वन्मायायोगो घटत इतीयमाशंका अलुप्तबोधरूपत्वात्सौ प्राकृतदे-हवानिति वाक्यमवतारयता त्वयैव परिहृता अविलुप्तावबोधात्मेति अत एव माया सृष्ट्याद्यर्थं तद्योग इति च न युक्तं "यश्चिकेतसत्यमि त्तन्नमोघ„मिति सत्यत्वावधारणात् एवमपि तदंगीकारे दानवमतप्र वेशः स्यात्तदुक्तं "न च सृष्ट्यादिकभ्रांतिर्भ्रांतिवादा हि दानवाः। अतो भ्रांत्यादिसंबंधो नास्य क च न युज्यत„ इति ॥ ९ ॥

तर्हि कस्य भ्रांत्या संसार इत्याशंक्य प्रकृतिसंबंधात्तया जीव-स्यैव संसार इतीममर्थं सदृष्टांतमाह यथेति अमुष्य पुंसो जीवस्यो पद्रष्टुः स्वप्नं पश्यतोऽर्थेन विना प्रयोजनादृते स्वप्ने स्वशिरश्छेदना दिक आत्मविपर्ययःआत्मनो देहस्य विपर्ययो दृष्टश्रुतवासनयाऽवि द्यमान एव प्रतीयते अत्रेदं तात्पर्यम् अस्मिन् जन्मनि जन्मांतरेवा शि रश्छेदः स्कंधारोहणं वा दृष्टः श्रुतो वा सङ्कल्पैकाधिकरण्येन दर्श नभ्रांत्या दृश्यते तद्दर्शनं न च प्रयोजनवदत एवार्थेन विनेत्युक्तं न च तावता स्वप्नस्य मिथ्यात्वमर्थक्रियाकारित्वात् "सूचकश्च हि श्रु-तेराचक्षते च तद्विद" इति सूत्रात् निमित्तकारणस्वेच्छानियतोपादान कारणभूतजीवमनोगतवासनाजन्यत्वाच्चेति वैदिकाधिकारविवक्षया पुंस इत्युक्तं स्वाधीनज्ञानाभावादुपद्रष्टुरिति ॥ १० ॥

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः।

तत्रैव विरोधान्तरमाह भगवानेक एवेति एष एक एव भग-वान् परमात्मापि सर्व्वक्षेत्रेषु सर्व्वस्य जीवस्यक्षेत्रेषु देहेषु अवस्थि तः। तत्र सति कथममुष्यैव भगवद्वदेव चिद्रूपत्व स्वरूप भूतज्ञा-नवत्त्वाव्यभिचारिणोजीवस्यदुर्भगत्वं स्वरूपभूतज्ञानादिलोपः कर्म्म भिः क्लेशश्चतस्यवा कुतोनास्तिनह्येकस्मिन्जलादौ स्थितयोर्वस्तुतः कस्यचित् तत् संसर्गः कस्यचिन्नेति युज्यत इत्यर्थः ॥ ६–८ ॥

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः।

तत्र केवलं चिन्मात्रत्वं जीवेऽपि न सम्भवतीति भगवत्त्वमेवां-गीकृत्य श्रीमैत्रेय उवाच सेयमिति। यया विश्वसृष्ट्यादिकं भवति सेयं भगवतोऽचिन्त्यस्वरूप शक्तेर्मायाख्या शक्तिः यत् या नयेन त-र्केण विरुद्ध्यते तर्कातीततया सेयमप्यचिन्त्येत्यर्थः यद्यप्येवं द्वयोर प्यचिन्त्यत्वं तथापि भगवतो मायेत्यनन व्यक्तत्वात् स्वरूपशक्तेर-न्तरंगत्वाद्बहिरंगाया मायाया गुणैः सत्त्वादिभिस्तत्कार्य्यैः स्था-पनादिभिश्च नासौ स्पृश्यत इत्यर्थः तन्त्रेण चायमर्थः यत् यया मा यया येन भगवता सह न विरुद्ध्यते नासौ विरोध विषयी क्रियत इति यत् या येन भगवता न विरुद्ध्यते न सर्व्वथा निर्विषयीक्रिय-त इति च एवमेव षष्ठे नवमाध्याये। दुरवबोध इव तवायं विहार-योगोयदशरणोऽशरीर इदमनवेक्षितास्मत्समवाय आत्मनैवावि-क्रियमाणेन सगुण मगुणः सृजसि पासि हरसि इति गद्येन तस्य-सगुणकर्तृत्वं विरुध्य पुनरथ तत्र भवान् किं देवदत्तवदिह गुण-विसर्गपतितः पारतन्त्र्येण स्वकृतकुशलाकुशलफलमुपाददातिअ-होस्विदात्माराम उपशमशीलः समञ्जसदर्शन उदास्त इति हवाव न विदाम इति गद्येनान्तर्यामितया गुणविसर्गपतितत्त्वेन जीववद्भो क्तृत्वयोगं सम्भाव्य नहि विरोध उभयं भगवत्यपरिमित गुणगण ईश्वरेऽनवगाह्यमाहात्म्येऽर्वाचीनविकल्पवितर्कविचारप्रमाणाभा सकुतर्कशास्त्रकलिलान्तः करणाशयदुरवग्रहवादिनां विवादानवस रे उपरतसमस्तमायामये केवल एवात्ममायामन्तर्द्धायकोन्वर्थो-दुर्घट इव भवति स्वरूपद्वयाभावादिति गद्येन तत्र तत्रा-वितर्क्यशक्तित्वमेव सिद्धान्ते योजितं तत्र स्वरूपशक्तेरवितर्क्यत्वं भगवतीत्यादिभिर्विशेषणैर्मायायाश्चात्ममाया मित्यन्तेन दर्शितं तत्र स्वरूपद्वयाभावादितितथाप्यचिन्त्यशक्त्यातत्तत्कर्तृत्वंतदन्तःपाति त्वञ्च न विद्यत इत्यर्थः समविषममतीनामिति तु गद्यं तथाप्युच्चा-वचबुद्धीनां तथा तथा स्फुरसीति प्रतिप्रत्ययं ज्ञेयम् दुरवबोध इवेति प्राक्तनगद्ये त्वशरीर इति शरीरचेष्टां विना अश रण इति भूम्याद्याश्रयं विनेत्यर्थः अथ तवेत्यादौ स्वकृतेति त-स्यापि हेतुकर्तृत्वंयोजनीयं तस्मादत्रापि स्वरूपशक्तेरेव प्राबल्यं दर्शितम् अतएव ऋतेऽर्थं यत् प्रतीयेतेत्यादौ मायाया आभासस्थानी यत्वं प्रदर्श्य तदस्पृश्यत्वमेव भगवतो दर्शितं त्वमाद्यः पुरुषः सा-क्षादित्यादौ मायां व्युदस्य चिच्छक्त्येत्यनेन चतथा ज्ञापितं माया परेत्याभिमुखे च विलज्जमानेत्यनेन च तदेवं भगवति तद्विरोधं प-रिहृत्य जीवेऽप्यविद्यासम्बन्धमतर्क्यत्वेन दर्शिततया तन्माययैव स माधत्ते ईश्वरस्येति यदित्यनेनैव सम्बन्ध्यते अर्थवशादत्रच तृ-तीयया परिणाम्यते यत् यया ईश्वरस्य स्वरूपज्ञानादिभिः समर्थस्य अतएव विमुक्तस्य कार्पण्यं तत्तत्प्रकाशतिरोभावः तथाबन्धनं द शितगुण मयजालप्रवेशश्च भवतीति तदुक्तं तत्सङ्गभ्रंशितैश्वर्य्यमि ति तदेवं सर्व्वमभिप्रेत्य श्रुतयोऽप्याहुः स्वयदजया त्वजामित्यादाव पेत भग इति च अत्र मूलपद्ये भगवतोमायेत्यनेन भगवत्त्वं मायि-कमित्यायातम् इन्द्रस्य मायेत्यत्र यथेन्द्रत्वम् एवं पूर्व्वत्रापि ज्ञेयम् ९

पुनरपि जीवस्य वस्तुतः तत्तदवस्थत्वाभावेऽपि भगवन्मायये-व तत्तत्प्रतीतिरिति सदृष्टान्तमुपपादयति यदर्थेन विनामुष्येति यत् यस्या मायायाहेतोरर्थेन विनापि यद्यपि तस्य कालत्रयमपि सोऽर्थो नास्ति तथापि आत्माविपर्य्ययः आत्मविस्मृतिपूर्व्वकपराभि मानेनाहमेव तद्धर्म्मीत्येवं रूपोः यः सोऽर्थः स्यात्तथाहि उपद्रष्टु-र्जीवस्य तृतीयार्थे षष्ठी स्वप्नावस्थायां जीवेन स्वशिरश्छेदनादिकोऽ पि पश्येत् किन्तु भगवन्मायैवान्यत्र सिद्धं तद्रूपमर्थं तस्मिन्नारोप-यति "मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादि„तिन्यायेन१०॥

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

किं च जीवो भगवानेव त्वया निरूपितस्तथा सति तदर्थं जगत्सृष्टौ हिताकरणादिदोषः दोषांतरमप्याह भगवानिति एक एव भगवान्सर्वक्षेत्रेषुसर्वदेहेष्ववस्थित एक एवेति वा एतादृशस्य दुर्भगत्वं वा जन्मभिःक्लेशो वा न भवेदनुभवसिद्धत्वाच्च क्लेशस्य अज्ञानतोऽगीकारेऽपि स एव दोषःपुनःपुनर्जन्मानि च श्रूयंते ॥ ६ ॥

तस्माद्भगवतो जीवभावोऽनुपपन्नःजगत्कर्तृत्वं चानुपपन्नमित्येतस्मिन्नर्थे मे मनः खिद्यतीत्याह एतस्मिन्निति ज्ञानसंकटे ज्ञानस्य शाब्दस्य युक्तिरूपविशालमार्गाभावात्ज्ञानस्य प्रसरणाशक्तेःसंकटं युक्त्यभावः अन्यथा ज्ञानं वा संकटं तत्र निर्द्धारणार्थं प्रवृत्तंमनः प्रसरणाभावाद्युक्त्यभावेन खिद्यति तं खेदं नाऽस्माकं हृदये वर्त्तमानं युक्तिभिः पराणुद तिष्ठत्वेतदित्याशंक्याह कश्मलं मानसं महदिति इदंतु मनसो महत्कश्मलं तत्तु महद्भिर्दूरीकर्त्तव्यमेव अन्यथाग्रिमं पूर्वोक्तं च ज्ञानं दुष्टे मनसि नातिष्ठेत् अतो निरूप्यमाणार्थं बोधार्थमिदं पराणुदेत्यर्थः ॥ ७ ॥

ऐश्वर्यं प्रथमेप्रोक्तं द्वितीये धर्म्मएवच ॥
यशःश्रियौ तथा द्वाभ्यां वैराग्यं ज्ञानमंत्ययोः ॥ १ ॥
स्वयुक्त्या भ्रमसंपत्त्याभगवत्त्वं निराकृतम् ॥
ततोऽत्र भगवद्वादः सर्गेऽपिविनिराकृतः ॥ २ ॥
तस्मिन्निराकृते प्रश्नो न पूरित इति स्थितम् ॥
अतस्तस्योत्तरं वाच्यं श्लोकार्थस्थापनाय हि ॥ ३ ॥

स हि मैत्रेयःसर्वनिरपेक्षकःचित्तशुध्यर्थं यथोक्तं गृहीत्वा आवर्त्तनीयमित्युक्त्वा पूर्वपक्षे कृते किमग्रे वदति न वेति संदेहं वारयितुंशुको वदतीतिपक्षं सहेतुकमुपपादयति स इत्थमिति भगवदीयत्वाद्भगवदाज्ञासहकारित्वाद्विदुरस्य प्रेरकत्वं मैत्रेयस्यकथनेच्छाजनकत्वंक्षत्रेति स्वतोऽपि प्रेरकत्वं निपुणत्वात् तत्रापि तत्त्वजिज्ञासुनाज्ञानोद्ग्रहणामात्रम् अतस्तत्र जिज्ञासुंबोधयेदिति किं च मुनिरयं निर्द्धारितं जानाति भाव्यर्थं च भगवदाज्ञापरिपालनार्थमाक्षेपकोऽपि समाधातव्य इतिभगवानेव तच्चित्ते निर्द्धारितं बोधयत्विति प्रार्थनार्थं वास्मयन्निवेति किमेतैरेतावत्कालं भारतादौ बुद्धमिति हसन्निव इवेति भगवन्मायायामोहकत्वाद्गतः स्मयोगर्वो यस्य अतोऽयं गूढतया निरूपयिष्यति अनधिकारेणाज्ञाने पुनः प्रश्ने वा तूष्णीं स्थातव्यमिति निबंध एवात्र समाधानं स्पष्टतया निरूपितम्

गुणातीता सृष्टिकथा सर्वथा नोपपद्यते।
कार्यकारणवैजात्याल्लोकहेतोरभावतः ॥ १ ॥
निरुपाधिकरूपेहि संदेहद्वयमीरितम्।
सोपाधिकत्वे परीहारस्तदेव न भवेदिति ॥ २ ॥
तृतीयो ब्रह्मगः सिद्धो जीवेऽप्येवमभेदतः।
माया संबंधकार्ये द्वि परिहार्ये तयोःक्रमात् ॥ ३ ॥
प्रथमस्य परीहारः षष्ठ्या नित्यतयोदितः।
भगवत्त्वाविरोधित्वं प्रकृत्यैव च सूचितम् ॥ ४ ॥
असमासात्प्रधानत्वं तेन नोपाधिसंभवः।
द्वितीयस्य परीहारे विरोधात्कार्यबोधनम् ॥ ५ ॥
विरोधमात्रमाहोस्विदाद्ये सेयं दर्शितः ॥
द्वितीये भूषणं तस्याविरोधो न तु दूषणम् ॥ ६ ॥
विरुद्ध कार्यसंबंधस्तत्कृतस्तेन वर्ण्यते

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ॥

विरोधोऽपि प्रतीत्यैव न वक्तानियतोवृहत् ॥ ७ ॥

इति अत्रपूर्वपक्षसमाधानं ब्रह्मवादे स्पष्टमेव दृश्यते कित्वधिकरणेन निरूपितम् ॥ ८ ॥

अविकृत एव भगवान्सर्वं करोति तादृशमेव भगवत्स्वरूपं श्रुतिप्रामाण्यात् यादृशेंगीऽक्रियमाणे सर्वसमाधानं भवति तस्मात्तत्र न मायादिकल्पनया नुपपत्तिपरिहारो मायया सोऽपि सविश्वरूपेणैव एवं सति श्रौतार्थताभवत्यन्यथा त्वप्रामाणिकः स्यात् स्वकपोलकल्पनात्सपक्षेऽत्रैवर्णिकायसर्वथा न वक्तव्य इति "दैव्यो वैवर्णो ब्राह्मणः असूर्यः शूद्र" इति श्रुतेः मायेत्यसुरा इति च उपक्रमेऽपि अथ ते भगवल्लीला योगमायोपबृंहितेति ज्ञानात् अत्रापि माययैव समाधानमाह सेयंभगवतो मायेति"कार्यकारणवैजात्यं माययैव समाहितम्।क्षणमध्ये तथा सर्वमन्यथैवान्यथा भवेत्।तादृश्येव हि सा शक्तिः स्वी कर्तव्यान्यथा न सा। क्रीडासृष्टिस्तथाज्ञानज्ञानेप्यज्ञानसंभवः। अभेदेऽपि यथा जीवस्तया मायैव सा तथा। इयं भगवतो माया सैव यास्माभिर्जगत्कारणत्वेन निरूपिता तव वाक्येऽपि सैव अतो यद्यस्माभिर्निरूपितं तदेव त्वया तस्याविरुद्धधर्मनिरूपणेन निरूपितमिति नात्र किंचित्समाधातव्यं यतः सा नयेन न्यायशास्त्रेण विरुध्यते स विरोधस्त्वयैव निरूपित इति नास्माभिर्बोधनीयः अस्यैव सिद्धांतत्वादेतत्समाधानमुच्यमानं पूर्वपक्षेणैव मंतव्यमिति भावः विरोधमेव स्पष्टयति ईश्वरस्येति अयं जीव ईश्वर एव तत्त्वमसि अयमात्मा ब्रह्म विज्ञानमय इति श्रुतेः अत एवेश्वरस्य सर्वसमर्थस्य संसाराद्विमुक्तस्य कार्पण्यं दैन्यमनालोचितयाचकत्वं वा ऐश्वर्यविरुद्धं बंधनं च विमुक्तविरोधि ननु कथमेवं मायायाः स्वरूपं तथा सति प्रमाणानामप्रामाण्यमेव युक्तं स्यत् सन्मार्गश्च विरुध्येतेति चेत्सत्यमेव परं सा माया यथा गमिष्यति तथोपायं वक्ष्यामि तस्या गमनमेव मुख्यं समाधानमिति तस्यां गतायां नकोऽपि विरोधः स्फुरिष्यतीत्यतो विरोधसमाधानार्थं प्रयत्नः न कर्तव्यः किं तु मायानिराकरणार्थमेव प्रयत्नः कर्तव्यःतस्यां गतायां भगवत्साक्षात्कारेसर्वेऽपि संदेहा निवर्तंत इतिप्रकारांतरेण समुपादिष्टं भवति तदा स्वयमेव ब्रह्मवादे ज्ञास्यतीति आसुरत्वे वागते शूद्रत्वमपि गमिष्यतीतितस्यां गतायां स्वतो वा मया वाबोधनीय इति भावः ॥ ९ ॥

मायादीनामेवंरूपतांनिद्रादिदृष्टांतेनाह यदर्थेनेति यद्यस्मात्कारणात्अमुष्य जीवस्य पुंसः अर्थेन बंधकादिना विनैवात्मविपर्ययः आत्मनोऽन्यथाभावःप्रतीयत एवं प्रतीतिमात्रे न तु वस्तुतोऽस्ति यतोऽयमुपसमीपे द्रष्टा न त्वयं दृश्यः व्यापकश्चायं प्रत्यक् संवेद्यः परिच्छिन्नः पराक् चान्यः यथा दर्पणे सन्निहिते तद्गतत्वेन विपरीततया मुखं दृश्यते तथा माया सन्निधानेनास्मात्पराक्परिच्छिन्नश्च दृश्यत इत्यन्यथा दर्शने मायैव हेतुः तत्र यथा स्वप्ने शिरश्छेदः प्रतीयते न हि द्रष्टुःशिरश्छेदः संभवति न वा द्रष्टुं शक्यते चक्षुषस्तत्रैव विद्यमानत्वात् प्रतीतिश्च वर्तते विरुद्धश्चायमर्थः युक्तिश्चास्त्येवमपीति भावः ॥ १० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी।

न चायमन्यायोऽराजकद्वैराज्ययोरिव सम्भावनीयो यदः निरपराधं जीवं पराभवेदित्याह सर्वेषामपि जीवानां क्षेत्रेषु देहेषु भगवानेष अवस्थितः अन्तर्यामिरूपेण स्वयमेव स्थितः नतु राजा स्वराज्येषु स्वप्रतिनिधिपुरुषद्वारेत्यर्थः। एक एवेति द्वैराज्यशंका परिहृता अतएव तस्मिन् भगवति सर्वप्रतिपालके अत्रैव तिष्ठत्य

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी।

अमुष्य जीवस्य दुर्भगत्वमानन्दादि भ्रंशो वा कर्मभिराविद्यकैः क्लेशो वा कुतः ॥ ६ ॥

अज्ञानमेव सङ्कटं दुर्गं तस्मिन् कश्मलं मोहं पराणुद अपाकुरु न इत्यस्मदादेर्योग्यत्वेति बहुवचनम् ॥ ७ ॥

मुनिर्भगवच्चित्त इति कथमत्र समाधानम् इति मननपरो भगवत्स्तं सस्मारेत्यर्थः। ततश्च सहसैवोपलब्धार्थः स्मयन्निव अहो दुःसमाधाना इमे आपेक्षा इति बहिर्विस्मयं प्राप्नुवन्तस्तु सुसमाधाना एवेमे इति विस्मयराहत एवेत्यर्थः ॥ ८ ॥

सा प्रसिद्धेयं भगवतां अचिन्त्यैश्वर्यस्य माया यतया नयेनतर्के या विरुद्ध्यते अतर्क्येत्यर्थः। स्वयमचिद्रूपापि चिन्मात्रस्य भगवत एव शक्तिरतस्तदीयाः सत्त्वादयोऽपि भगवतएव गुणा उच्यन्ते। तदपि भगवान् स्वरूपतो निर्गुणएव। यथा ज्योतिर्मात्रस्यापि सूर्यस्य मेघान्धकारहिमादयो ज्योतिःप्रतिकूला अपि तस्यैव भवन्ति। यथैव सूर्यात् प्रभवन्तीत्यनन्तरं यथा नभस्यभ्रतमः प्रकाश इति चतुर्थे। प्राणादिभिः स्वविभवैरुपगूढमन्यो मन्यते सूर्यमिव मेघाहमोपरागैरति श्रीदशमेच श्रीनारदोक्तेर्दृष्टान्तेऽप्यत्रातर्क्यत्वैव एवमेव स्वरूपतो निर्विकारस्यैव भगवतः शक्त्या माययैव विश्वसृष्ट्यादिक्रियाः शक्तिशक्तिमतोरभेदात्। यदुक्तं भगवता प्रकृतिर्यस्योपादानमाधारः पुरुषः परः सतोऽभिव्यञ्जकः कालो ब्रह्म तत् त्रितयन्त्वहमिति। तदेव मीश्वरगतं संशयं हित्वा देशतः कालत इत्यादिनोक्तं जीवगतमपि संशयं छिनत्ति ईश्वरस्येति सार्द्धद्वयेन ईश्वरस्य स्वरूपज्ञानानन्दाद्यनुभवसमर्थस्यापि जीवस्य दुर्भगत्वादिकार्पण्यं तथा विमुक्तस्यापि बन्धनं यत् सेयं माया मायावृत्तिरविद्या अविद्या निबन्धनत्वैतद्द्वयमित्यर्थः। अयमर्थः अजया जीवस्य कथं ज्ञानलोप इति त्वयोच्यते सच ज्ञानलोपो यदि सत्यः स्यात्तदा सा अजा स्वशक्तिरपि भगवता दण्ड्या स्यात् किंतु स नैव सत्यः यथा हृदिस्थितमपि रत्नपदकं विस्मृत्य जनेन नास्ति पदकमिति खिद्यते यथाचान्येन कृतमपि चौर्यं विभ्रांति वशान्मयैव हृतमित्यभिमन्यते तदनन्तरश्च राजकीयपुरुषदत्तं तत्फलं दुःखमपि भुज्यत एव तथैवानाद्यविद्यासङ्गवशात् जीवेन स्वज्ञानानन्दं विस्मृत्य देहाभिमानप्राप्तं देहधर्मं दुर्भगत्वादिकञ्च प्राप्य यदि क्लिश्यते तर्हि कस्मै दोषो देय इति अत्र तत् सङ्गभ्रंशितैश्वर्यं संसरन्तं कुभार्यवदित्यादिदृष्टेः किञ्चिदैश्वर्यसंभवात्तु जीवोऽनीश्वरशब्देनोक्तः केचित् पुनरेवं व्याचक्षते देशतः कालत इत्याद्यावविलुप्तावबोध आत्मा परमात्मा शुद्धचैतन्यरूपः स कथमविद्यया युज्यते परमतमाश्रित्य पूर्वपक्षिणः प्रश्नस्योत्तरमाह सेयमिति इयमेव भगवतो माया भवेत् मायामोहितत्वं विना ईदृशः प्रश्नो न घटत इत्यर्थः यदुयस्मात् नयेन नीत्या विरुद्धचते। नीतिविरोधमेवाह ईश्वरस्य परमात्मनोऽपि मायामोहितत्वेन जीवत्वे सति कार्पण्यं बन्धनञ्च नह्येकमेव शुद्धचैतन्यं मायया मोहितं सदेव जीव इति तदैव अमोहितं सदेव परमात्मेति वक्तुं युज्यते नहि स्वमायया स्वयं मोहितश्चामोहितश्च युगपदेव कोऽपि भवतीति परम एवानयः। तस्मात् यैरेवं पृच्छ्यते कष्टसृष्ट्या समाधीयते च त एव मायामोहिता ज्ञेया इति वस्तु तस्तु परमात्मजीवात्मानौ सूर्यतत्किरणाविव जात्यैव मिथो विलक्षणौ चैतन्यचैतन्यकणौ भवत इति सिद्धान्तः। छायाकिरणौ यथा सूर्यत एव भवतः अथापि सूर्यतुल्यकणौ सूर्यात् भिद्येते भिद्येतेच तथैव मायाशक्तिजीवशक्ती परमेश्वरादुद्भूते अप्यनादी अभिन्ने

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ॥

अपि स्वरूपतो भिन्ने एव। तथाच वैद्यके। पुंसोऽस्ति प्रकृतिर्नित्या प्रतिच्छायेव भास्वत इति। तथाच श्रुतिः यथाग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरन्तीत्येव मेवात्मन इति जीवस्य शक्तित्वंतु। अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे परां। जीवभूतां महाबाहो ययेदं धार्यते जगदिति श्रीगीतासूक्तम् ॥ ९ ॥

तत्र भगवतः पृष्ठस्थितया अनाद्यविद्यया तमःस्वरूपया अनादिवैमुख्यरूप भगवत्पृष्ठस्थानां जीवानां ज्ञानं यल्लुप्यते तस्य न वस्तुत्वं कारणं नापि प्रयोजनं किमप्यस्ति तमसः स्वभाव एवायं यत् क्षीणतेजस्खिन्नस्तेजस्तेन लुप्यते इत्याह यदर्थेनेति। यत् यतः अर्थेन वस्तुना कारणेन प्रयोजनेन च विनैवामुष्य पुंसो जीवस्य आत्मविपर्ययो ज्ञानानन्दभ्रंशः प्रतीयते "अर्थोविषयार्थनयोर्धनकारणवस्तुषु अभिधेये च शब्दानां निवृत्तौ च प्रयोजने" इति मेदिनी अत्र दृष्टान्तः द्रष्टुः स्वप्नसाक्षिणः उपसमीपे ममेदं शिरश्छिन्नमिति शिरसः सत्वेपि शिरसोऽभावः स्वप्नदशायां प्रतीयते तथैव वस्तुतो ज्ञानानन्दादि भ्रंशाभावेऽप्यविद्यादशायां तद्भ्रंशः प्रतीयते तमसापि तैजसस्य स्वर्णरूप्यादेस्तेजो न लुप्यते किन्तु आव्रियते मात्रं तथा वलवत्तेजसा पद्मरागादिना तमोऽपि लुप्यते यथा तथा भक्तजीवेनाविद्यापि भिद्यते इति ज्ञेयं द्वितीयव्याख्यायान्तु तस्मादीश्वरस्य पूर्णसच्चिदानन्दस्य परमात्मनः सर्वज्ञस्य सर्वव्यापकस्याविद्यावन्धाशङ्कापि दोष एव स एवाविद्यया जीवात्मा स एवाविद्यापगमे परमात्मेति सिद्धान्तोऽपि बहिर्मुखत्वैव किन्त्वीश्वरचैतन्याज्जालेव विलक्षणस्य चित्कणस्यासर्वज्ञस्य तदीयतटस्थशक्तेर्जीवस्यैवाविद्यया बन्धः सचाप्यवस्तुभूत एवेत्याह यदर्थेनेति पूर्ववदेव व्याख्या अमुष्य पुंसो जीवस्यैव नत्वन्यस्यास्मदनुभूतचरस्य परमात्मनो हरेरित्यर्थः ॥ १० ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

आत्मात्मनां विभुरित्यनेन सर्वजीवांतरात्मत्वंभगवतो यत्त्वया दर्शितं तदपि कथं घटेत सवितृसंनिधौ तमोवत् तत्सन्निधौ दुर्भगत्वाद्ययोगप्रसंगादित्याक्षिपति भगवानिति अमुष्य जीवस्य दुर्भगत्वं देहोऽस्मीत्यादि कार्पण्यम् ॥ ६ ॥ ७ ॥

चोदितः आक्षिप्तः ॥ ८ ॥

द्वितीयमाक्षेपं परिहरति सेयमिति या विश्वसृष्टिकाले भगवता पुरस्क्रियते सा राज्ञः अश्व इव अतदात्मिकया न भवति,किं तु विमुक्तस्य सर्वप्राकृतदोषास्पृष्टस्य ईश्वरस्य सर्वनियंतुः भगवतः मायाशक्तिरस्ति न स्वतंत्रस्थितिप्रवृत्तिमती अब्रह्मात्मिकायत उक्तदूषणायोगः स्यादित्यर्थः अतोनये तदात्मानं स्वयमकुरुतेति श्रुतिप्रोक्तं ब्रह्मैव जगदभिन्ननिमित्तोपादानकारणमिति सिद्धांतेनैव विरुध्यते अथ तृतीयमाक्षेपं परिहरति यत् यया मायया अनादिरूपया बंधनं देहोऽस्मि मरिष्यामीत्यादिकार्पण्यं चाश्रितजीवस्येति शेषः अतः भगवति संनिहितेऽपि अनादिमायाबद्धस्य जीवस्य दुर्भगत्वं क्लेशो वा कर्मभिः कुतः इति चाक्षेपः परिहृतः इतिभावः ॥ ९ ॥

अनादिमायाकृतं कार्पण्यं प्रपंचयति द्वाभ्याम् यदिति यत् यया मायया अर्थेन आत्मनो देहभावेन विनापि अमुष्यजीवस्य आत्मविपर्ययःदेहोऽस्मि कृशोऽस्मि मरिष्यामीत्यादिविपर्ययः अनात्मज्ञस्य

यथा जले चन्द्रमसः कम्पादिस्तत्कृतोगुणः ।
दृश्यतेऽसन्नपि द्रष्टुरात्मनोनात्मनोगुणः ॥ ११ ॥
सवै निवृत्तिधर्मेण वासुदेवानुकम्पया ।
भगवद्भक्तियोगेन तिरोधत्ते शनैरिह ॥ १२ ॥
यदेन्द्रियोपरामोऽथ द्रष्ट्रात्मनि परे हरौ ।
विलीयन्ते तदा क्लेशाः संसुप्तस्येव कृत्स्नशः ॥ १३ ॥
अशेषसंक्लेशशमं विधत्ते गुणानुवादश्रवणं मुरारेः ।
कुतः पुनस्तच्चरणारविन्दपरागसेवारतिरात्मलब्धा ॥ १४ ॥
विदुरउवाच ।
संछिन्नः संशयोमह्यं तव सूक्तासिना विभो ! ।
उभयत्रापि भगवन्मनोमे संप्रधावति ॥ १५ ॥

श्रीमच्छुकदेवकृत सिद्धांतप्रदीपः ।

विपर्ययः प्रसिद्ध एवेत्याह उपद्रष्टुः मनुष्याकारमात्मानं विस्मृत्य स्वाप्ने परकीयं पश्वादिशरीरमात्मत्वेन पश्यमानस्य स्वशिरश्छेदना दिकं प्रतीयते ॥ १० ॥

भाषाटीका ॥

भगवान् एक हैं सब के क्षेत्र में स्थित हैं इनको दुर्भागीपनो, क्लेश होनो कैसा होय है ॥ ६ ॥

हे विद्वन् ? हे विभो ? या अज्ञान संकट में मेरो मन खेदको प्रा प्त होय है, सो ये मन को महा संदेह दूर करो ॥ ७ ॥

श्रीशुकदेवजी बोले, तत्त्व जानवे की इच्छा करवेवारे विदुरजी ने एसे मैत्रेयमुनिसे पूंछा तब, भगवत में चित्तवारे मुनि गर्वरतित हास्य कर बोले ॥ ८ ॥

मैत्रेयजी बोले कि, यही भगवान की माया, जो तर्क करके वि रुद्ध होवे है, विमुक्त ईश्वर को कृपणपनो वा बंधन ये कुतर्क है ॥ ९ ॥

जाशिरच्छेदन के विना स्वप्न के साक्षी पुरुष कोमे रोया शिर छेदो, ये आत्मा को उलटा पुलटा होनो प्रतीत होवे है ॥ १० ॥

श्रीधरस्वामिकृत भावार्थदीपिका ॥

तर्हीश्वरस्यापिकिंनप्रतीयेतेतत्राऽऽह यथाजलेप्रतिबिंबितस्यैव- चंद्रमसोजलोपाधिकृतः कंपादिधर्मोदृश्यते नत्वाकाशेस्थितस्यत थाऽनात्मनोदेहादेर्धर्मोऽसन्नपितदभिमानिनोद्रष्टुरात्मनोजीवस्यैव- नत्वीश्वरस्येत्यर्थः ॥ ११ ॥

तन्निवृत्त्युपायमाह सवैअनात्मनो गुणोनिवृत्तिधर्मेणवासुदेव- स्याऽनुकंपातयाचतस्मिन्भक्तियोगस्तेनातिरोधत्तेऽदृश्योभवति शनै- रित्यनेनसाधनानुसारेणोक्तम् ॥ १२ ॥

तर्हिसर्वोनर्थनिवृत्तिः कदेत्यपेक्षायामाह यदेन्द्रियाणामुपरामोलै श्र्वलयम् कद्रष्टुरात्मन्यंतर्यामिरूपे अथानंतरमेवकृत्स्नं क्लेशविलयमा श्रेदृष्टांतःसंसुप्तस्येवेति नतुपुनरुत्थाने ॥ १३ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ॥

भक्तियोगेनक्लेशनिवृत्तिंदर्शयति अशेषेति गुणानामनुवादश्रवणं श्र वणं च आत्मानिमनसिलब्धा श्रवणकीर्तनापेक्षयासप्रेमध्यानेकिंपुनर्वा योक्तिः ॥ १४ ॥

उत्तरमभिनंदन्नात्मनःकृतार्थतामाविष्करोति संछिन्नइतिपड्भिः चिद्रूपत्वाविशेषेऽपिकथमीश्वरस्यजगत्कर्तृत्वादिकथंवाजीवस्यसं- सारइतिगः संशयोममासीत्सतवसूक्तं सोपपत्तिकंवाक्यमेवासिस्त- न्नस्तेनसंछिन्नः अतइदानींमिमनउभयत्रापिईश्वरस्वातंत्र्येजीवपारतं- त्र्येचसंप्रधावतिसम्यक्प्रविशति एवंवाऽविलुप्तावबोधरूपस्यात्मनः कथमविद्ययाबंधःकुतोवातन्निवृत्तिरितिसंशयःउभयत्रेति बंधेमोक्षे चेत्यर्थः ॥ १५ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपन्याख्या दीपिका टिप्पणी ॥

तदभिमानेन देहाद्यध्यासेन ॥ ११ ॥

निवृत्तिधर्मेण निष्काम भागवतधर्मेण भक्तियोगेन श्रवणादिना ॥ १२ ॥

नैश्चल्यं भावेन तदेकपरत्वम् ॥ १३ ॥

किंपुनर्न्यायःकैमुत्यं तथा च सप्रेमध्यानेन तद्वशीकरणमेव मु ख्यं फलं अशेषसंक्लेशशमस्त्वानुषंगिकफलमिति द्योतितम् ॥ १४ ॥

चिद्रूपत्वाविशेषेऽपि चिन्मात्रत्वलक्षणयोरीश्वर जीवयोस्तुल्यत्वेऽपि सोपपत्तिकं सयुक्तिकंवाक्यं सेयं भगवत इत्यादिकम् ईश्वरस्यस्वे च्छकया वशीकृतमायत्वाज्जगत्कर्तृत्वादिकं सर्वज्ञत्वादिगुणमयमेवे ति न तत्र दोषसंशयः जीवस्य त्वीशबहिर्मुखत्वेन मायया वशीकृ तत्वात् संसारोऽपि युक्त एवेति न संसारसंशय इत्यर्थःस वैनिवृत्ति धर्मेणेत्यादिना संसारनिवृत्तेरपि प्रोक्तत्वाचदनुमोदनमपि संगृहीत मेवं धेति ॥ १५ ॥

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ॥

एतदेवदृष्टांतेनोपपादयति यथेति यथाजलेचंद्रमसःस्वतश्चंद्रस्य असत्यपिकृतः जलाद्युपाधिकृतः कंपादिश्चलनादिरूपोगुणः दृश्यते एवमात्मनोऽसत्यप्यविद्यमानोऽपि अनात्मनोदेहस्य गुणःउपद्रष्टुर्देहस्यात्मतादात्म्यमभिमन्यमानस्यद्रष्टुरनात्मदेहस्यजीवस्यानाद्यविद्यासंबंधेन स्वरूपाप्रतीतिर्देहात्मभ्रांतिस्तयाचशोकमोहादयःपरमार्थतस्तुतद्देहगतधर्मैःस्पृश्यते इत्यभिप्रायःपरमात्मनस्त्वविद्ययाऽतिरोहितस्वरूपस्य प्रकृतिपुरुषयोर्नियंतुःनाविद्यातत्कार्यप्रसंगइत्यर्थः एवदेव"भुक्तभोगापरित्यक्ता दृष्टदोषाचनित्यशः।नेश्वरस्याशुभंधत्ते स्वेमहिम्निस्थितस्यचे,,त्युक्तं जीवेशयोरुभयोरपि प्रकृतिसंबंधोऽविशिष्टः इयांस्तुविशेषः प्रकृतिरेकस्यस्वरूपस्याशुभंधत्ते अन्यस्यतु स्वनियंतुर्लीलोपकरणायभवति तथाचश्रुतिः "अस्मान्मायीसृजतेविश्वमेतत्तस्मिंश्चान्योमायायासंनिरुद्धः।मायांतुप्रकृतिंविद्यान्मायिनंतुमहेश्वर,,मिति मायाप्रकृतिः मायीश्वरः अत्रयथार्थेनविनाऽमुष्येत्यपिपाठः तत्रायमर्थः परमात्मनः व्याप्यचिदचिद्गतदोषास्पर्शे दृष्टांतमाह यथेति यथाऽमुष्यजीवस्याऽर्थेनविना पुरुषार्थभूतस्वस्वरूपेणविना आत्मस्वरूपाप्रतीतिदशायामित्यर्थः आत्मविपर्ययः आत्मनः जीवस्यविपर्ययः देहाकारः प्रतीयते उपद्रष्टुस्तस्यैव देहतादात्म्यमभिमन्यमानस्य शिरश्छेदादिकोऽपुरुषार्थश्चप्रतीयते पुरुषार्थभूतस्वात्मप्रतीतिदशायांतु नविपर्ययः शिरश्छेदादिकोवाप्रतीयते तस्यदेहविलक्षणत्वात्तस्यदेहात्मबुद्धेः भ्रांतित्वात् देहातिरिक्तत्वसिद्धिः एवंजीवस्यापिपरमात्मशरीरत्वात् तस्यतद्गतदोषस्पर्शइत्यर्थः दृष्टांतांतरमाहयथेति यथाचंद्रमसेजलाद्युपाधिवशात्प्रतीयमानःकंपादिर्नपरमार्थतोऽस्तिकिंतुभ्रांत्यातथाद्रष्टुःसर्वज्ञस्यात्मनःपरमात्मनः अनात्मनःअपरमात्मनः गुणः अपरमात्मभूतचेतनाचेतनगतोधर्मः असन्नपिभ्रांत्याप्रतीयते परमात्मनः चेतनाचेतनगतदोषसंस्पर्शशंका मूलभूताबुद्धिर्भ्रांतिस्तत्सेत्यर्थः ॥ ११ ॥

नकेवलंभगवतस्तद्द्वयाकारजीवांतरात्मतयाऽवस्थितस्यदोषस्पर्शाभावरूपःकल्याणगुणएवप्रतिपादितःकिंतुतस्यजीवगतहेयनिवर्तकत्वंचेत्याह सवाइति सवैहेयगुणः कर्मयोगानुगृहीतभगवद्भक्तिज न्यभगवत्कृपयानिरोधत्ते इत्यर्थः यद्भक्त्याहेयनिवृत्तिस्तस्यहेयप्रत्यनीकत्वमर्थसिद्धम् ॥ १२ ॥

कियत्पर्यंतभक्त्याहेयानिवृत्तिरित्यतआहयदेतियदाअर्थान्नशब्दादीन्प्रति इंद्रियोपरतिरिन्द्रियनिवृत्तिः तदापरेप्रकृतिपुरुषविलक्षणे हरावाश्रितबंधहरिणि आत्मनिपरमात्मनिपूर्वोक्तभक्त्याद्दृष्टेसाक्षात्कृतेसति दृष्टे आत्मनीतिपदच्छेदःअयादेशे लोपेचार्षौगुणःकृत्स्नशः क्लेशाःविलीयंतइत्यर्थः "तस्मिन्दृष्टेपरावर,,इतिश्रुतिःतेषामस्थिरत्वे दृष्टांतमाहसंसुप्तस्येवेति नहिसंसुप्तस्यकात्स्न्येन दुःखनिवृत्तिः तस्यैवजाग्रतःपुनः क्लेशाश्रयत्वात् दृष्टात्मनीत्यपिपाठः तदाअर्थान्द्रष्टा इंद्रियोपरतिः इंद्रियाणामविकृतिर्यथातथापरहरावात्मनिजीवेस्थिते सति क्लेशविलयइत्यर्थः अथ द्रष्टात्मनीत्येपिपाठः तदासर्वज्ञे आत्मनिहरौइंद्रियाणामुपरामो नैश्चल्यं यदाअथानंतरं प्रत्यक्तापन्नामिकाध्रुवानुस्मृतिर्भवतितदाकात्स्न्येनक्लेशविलयइत्यर्थः ॥ १३ ॥

साक्षात्कारपर्यंतभगवद्भक्तेः कैमुत्यन्यायेन क्लेशनिवर्तकत्वमाह अशेषेति हरेर्गुणानुवादश्रवणं अनुवादः अनुवर्णनंश्रवणंचेत्येतदुभयमेवाऽशेषक्लेशशमंविधत्तेकरोति किंवा पुनःकिंपुनःआत्मलब्धा मनसालब्धातस्यभगवतः चरणारविंदयोःपरागःतस्यसेवारतिः तैलधारावदविच्छिन्न स्मृतिसंततिरितियावत् अशेषक्लेशशमंविधत्ते इति वक्तव्यमित्यर्थः ॥ १४ ॥

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

स्वामिभिमतमाविष्कुर्वन्नुत्तरमभिनंदति विदुरः सांछन्नइति संशयः ईश्वरस्यकारणत्वविषयकःसंशयः हेविभो!मैत्रेय! मह्यं तवत्वदीयेनसूक्तासिनासूक्तंसापप्रत्तिकंवाक्यंतदेवासिःखड्गःतेनमदुपदेष्टेन त्वयासिंछन्नवाक्यखड्गेन संछिन्नः अपितुउभयत्रगुणानुवादश्रवणे चरणारविंदपरागसेवायांच मेमनः संप्रधावतिप्रवणंभवति अनेन स्वामिप्रेतमाविष्कृतम् ॥ १५ ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

यथा च जले चंद्रप्रतिबिंबस्य तत्कृतोजलचलनादिकृतः कंपादिर्जलगुणोऽसन्नपि द्रष्टुः पश्यतः पुरुषस्य दृश्यते एवमेवात्मनो जीवस्यातत्त्वज्ञानादीशेच्छया अनात्मनो देहस्य जननमरणादिगुणो जातोऽहंमृतोऽहंकर्ताहमित्यादिप्रतीयतं अतःस्वतो द्रष्टुर्ज्ञानादिरूपस्य जीवस्येशच्छयातत्त्वातंत्र्यस्वपारतंत्र्याज्ञानात्तज्ञातयाभ्रांत्या संसारस्तस्मात्यथा जपाकुसुमसंपर्ककृतंस्फटिकलौहित्यं प्रकृतिसंबंधकृतः संसारःएवंनानिर्वाच्याविद्याजन्यत्वेनभ्रांतिः तदुक्तं"भ्रांत्याजीवस्य संसार,,इति स्वप्नस्यवासनाजन्यत्वेनासत्त्वात्तद्दृष्टांतेन संसारस्य सत्यत्वं दृष्टनिपादमितिद्वितीयदृष्टांतकथनम् ॥ ११ ॥

ननु संसारस्य सत्यत्वे निवृत्त्यभावेन कदापि मोक्षोन स्यादिति तत्राह सवाइति इह जीवे दृश्यमानः भगवद्भक्तियोगेन जातया वासुदेवानुकंपया यस्य प्रसादादिति श्रुतेः तिरोधत्ते विलीयते वा इत्यनेन ईशज्ञानाद्विलीयत इति मानं दर्शयति यथा गरुडध्यानाद्विषनाश इति सत्यस्यापि नाशो घटत इत्यस्मिन्नर्थे वा ईशस्वातंत्र्याज्ञानानुत्पन्नकर्तृत्वाभिमानलक्षणभ्रांतिविलय ईशज्ञानाद्युज्यते भ्रांतिर्हि देहाभिमनिरीशाज्ञानाद्भिनश्यतीति च ॥ बहूनां जन्मनामंत इति वचनाच्छनैरिति ॥ १२ ॥

सर्वनामसंज्ञाभावात्परइति सर्वोत्तमे हरौ संसारकारणदुरितदूरीकरणसमर्थे भगवति दृष्टात्मनि अपरोक्षीकृतस्वरूपे सति यदेंद्रियाणां विष्णुसमीपगमनाख्यपुरुषार्थो मुक्तिस्तदासर्वे क्लेशाविलीयंते संसुप्तस्य सम्यक्सुप्तस्य जीवस्य सुप्त्यवस्थायां कृत्स्नशः क्लेशा यथा विलीयंते तथेत्यर्थः ॥ १३ ॥

क्लेशनिवृत्तौ कैमुत्यन्यायप्रदर्शनव्याजेन सुगमोपायं दर्शयति अशेषेति गुणानामनुवादयुक्तश्रवणं यद्वा गुणानामनुवादो येषु ते गुणानुवादाभागवतादयस्तेषां श्रवणमेवाशेषसंक्लेशविनाशं करोति किं पुनर्व्याख्यानमिति सिद्धत्वात्पृथक् नोक्तं आत्मनि लब्धा तस्या सुरेश्वरचरणारविंदपरागसेवाया रतिःक्लेशशमं विधत्ते इति किं वाकिं वक्तव्यं पुनरिति संदेहं निवारयति"पुनरप्रथमे प्रश्नेऽप्यावृत्तावव धारणे,,इति वचनात् अनेन श्रवणमननव्याख्यानोपासनानामुत्तरोत्तरप्राबल्यमुपायांतराभावश्चेति दर्शितम् ॥ १४ ॥

विदुरो मैत्रेयस्यविश्ववक्तव्यत्वं तात्पर्यं जनयितुमुक्तार्थे वक्तव्यांशो नास्तीत्याह संछिन्न इति सूक्तमेवासिः खड्गः तेनात्रसंशयप देनान्यथाज्ञानं प्राह्यमन्यथोभयत्रेत्युत्तराधेमनुपपन्नं स्यादज्ञानं वा शीङ् स्वप्न इति धातुजत्वात्"स्वप्नस्त्वज्ञानशब्दोक्तोविपरीतमथापि चे,,ति वचनात् दुर्भगदेहस्थस्यापहरस्तद्गतदुःखादिभोगः संभाव्यत इति अन्यथाज्ञानं निरस्तमित्यर्थः मह्यं ममेति व्यत्यासः चिरकालस्थायी नस्यादित्याशयेनोक्तं नन्वन्यथाज्ञानस्य छिन्नत्वात्किमुत्तरप्रश्नेनेति तत्राहउभयत्रेति उभयत्र देहाद्यहंममतादौ हरौ चान्यथा ज्ञाननाशादिदमदोवेति संदेहो जायते इति भावः अपिशब्दः समुच्चयार्थः ॥ १५ ॥

### श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

अनपत्र शुद्धस्यापि सतो जीवस्यौपाधिकनैव रूपेणोपाधि धर्म्मापत्तिरिति दृष्टान्तान्तरेणोपपादयति यथा जले इति । यथा जले प्रतिबिम्बितस्यैव चन्द्रमसोऽयं जलोपाधिकृतकम्पादिधर्म्मो दृश्यते नत्वाकाशे स्थितस्य तद्वदनात्मनः प्रकृतिरूपोपाधेर्धर्म्मे आत्मनः शुद्धस्यापि मायया अहमेव सोऽयमित्यादिशात् माययोपाधितादात्म्यापन्नस्याहङ्काराभासस्य प्रतिबिम्बस्थानीयस्य तस्य द्रष्टुराध्यात्मिकाद्यवस्थस्यैव यद्यपि स्यात् तथापि शुद्धोऽसौ तदभेदाभिमानेन तं पश्यतीति तस्यैव स्यादित्यर्थः तदुक्तमेकादशे श्रीभगवता"नृत्यतो गायतः पश्यन् तथैवानुकरोति तान् । एवं बुद्धिगुणान् पश्यन्ननीहोऽप्यनुकार्य्यते"इति तथैवोक्तं शुद्धो विचष्टे ह्यविशुद्धकर्त्तुरिति विशब्दस्य चात्र तदावेशएव तात्पर्य्यं तस्मात् भगवतोऽचिन्त्यस्वरूपान्तरंगमहाप्रबलशक्तित्वाद्बहिरंगया प्रबलयाप्यचिन्त्ययापि मायया न सृष्टिः जीवस्य तु तया सृष्टिरिति सिद्धान्तितम् ॥ ११ ॥

स वै इति निवृत्तिधर्मेण निष्कामस्वभावेन भक्तियोगेन या वासुदेवानुकम्पा तया शनैस्तदनुकम्पातारतम्येन तिरोधत्ते ॥ १२ ॥ १३ ॥

अशेषेति । अत्र ब्रह्मन्नित्यादिद्वये प्रथमप्रश्नाभिप्रायोऽयं । तत्त्वदवताप्रार्थने भवता यद्व्यञ्जितं भक्तिवशतामयलीलया भगवान् सृष्ट्यादौ प्रवर्त्तत इति । तदप्यघटमानं वस्तुविरोधात् स्वभावविरोधाच्चेति । देशत इत्यादिद्वये तु तत्प्रस्तावत्वेनप्रश्नान्तरं ज्ञेयम् अथोत्तरम् । उपदेष्टव्यविशिष्टविज्ञानरूपचतुःश्लोकी द्वितीयश्लोकार्थानुसारेणैव । तत्र सेयमिलात्र भगवत इत्यनेनाचिन्त्यशक्तित्वमेव सिद्धान्तः । अत्र भक्त्यल्पशक्तेरपि तादृशसाम्यर्थं व्यञ्जितं । यतः पुनश्च स वै निवृत्तिधर्म्मेणेत्यादिभिः ससाधनं रहस्यमुपदिष्टं यत्रैव कुतः पुनरित्यन्तिमार्द्धे मुख्येन तत्सेवारतेः फलमशेषसंक्लेशशमनमात्रं न भवति किन्तु पूर्व्वोक्तरीत्या श्रीभगवद्वशीकरणमेवान च ध्वनितम् ॥ १४ ॥

अतएवाह संछन्न इति । उभयत्र ईश्वरे जीवे च । यद्वा । ज्ञानविज्ञानरूपे ज्ञाने प्रेमणि तत्साधनरूपायां भक्तौ चेत्यर्थः । संप्रधावति सम्यक् प्रविशति ॥ १५ ॥

---

### श्रीमद्वल्लभाचार्यकृत सुबोधिनी ॥

ननु मायायामयमात्मा प्रविशतीत्यात्मधर्मो मायायां भवितुमर्हति न तु मायाधर्म आत्मनि मायायाः प्रवेशाभावात्"नमसः परस्मा,, दिति श्रुतेः तस्मान्माया धर्मो बंधादयः कथमात्मनीत्याशंक्याह यथा जल इति यद्यप्यात्मनि माया न प्रविशति आत्मा तु प्रविशति तथापि प्रवेश नंतरं तद्धर्मैः संबध्यते तत्रप्रविष्टः प्रवेशोऽपि प्रतीत्यैव यथा चंद्रमसो जले प्रतिबिंबितस्य जलकंपात्तत्कम्पः न तु स्वभावतस्तथात्रतन्मायिधर्मे आत्मनि मायासंबंधात्प्रतीयते तदाह दृश्यत इति अत्र हेतुः द्रष्टुरिति आत्मनिरूपितं वैलक्षण्यमिदं मायानिरूपितं वैलक्षण्यमाह अनात्मनः प्रकृतेर्देहादेवा गुणाद्द्रष्टृत्वादिरतो मायायां प्रतीत्या संबधात् ॥ ११ ॥

तत्संबंधाभावार्थमुपायमाह सवै निवृत्तिधर्मेणेति स मायासंबंधो धर्मत्रयेण निवर्त्तते यथा त्रिदोषे पुरुषो म्रियते तथा धर्मत्रयसंबंधे तस्मिन्नेव शरीरे मायासंबंधो गच्छति प्रतीत्यानान् धर्मानाह निवृत्तिधर्मेणेत्यादिपदैः तत्र प्रथमं निवृत्तिधर्माः कर्त्तव्या न निवृत्तिमात्रं तथा सति भगवत्कृपा न स्यात्

विधानेन परित्यागः पुनस्त्यक्त्वा परिग्रहः ॥
एकाकित्वं तीर्थसेवा मौनं कृष्णानुचिंतनम् ॥ १ ॥
कालादिप्राप्तदुःखस्य सहनं वा प्रतिक्रिया ॥
दया संतोषात्मजायामुख्या धर्मा निवृत्तितः ॥ २ ॥

ततो भगवदनुकम्पयासत्त्वाकारांतः करणे स्फुरितस्य भगवतः कृपावलोकनं ततो भगवद्भक्तियोगो भगवद्विषययत्न इक्तेः साधनरूपत्वं योग इति निरंतरकृतिः निरंतरश्रवणादिकंभगवत्कृपाव्यतिरेकेण न संभवतीतिभगवद्भक्तियोगः पश्चादुक्तः ॥ १२ ॥

एवं त्रिभिर्गुणैः मायासंबंधः शनैरस्मिन्नेव जन्मनिनिरोधत्ते शनैरिति साधनबलानुसारेणसहसा सर्वक्लेशनाशार्थमुपायमाह यदेंद्रियोपराम इति यदैव सर्वेषामिंद्रियाणां स्वत एव स्वविषयेभ्यो निवृत्तिःअथ तदा भिन्नप्रकारेणात्मनि द्रष्टा भवति द्रष्टृत्वेनास्फुरतिप्रकृत्यादिनियामकत्वं च स्फुरति स्वस्य हरित्वं च तदा विलीयंते सर्वे क्लेशाः अविद्यादयस्ते पंचमस्कंधे वक्तव्या भवाटव्यां निवृत्तेरसंभावितत्वानिराकरणाय दृष्टांतमाह ससुप्तस्येति सुषुप्तस्य आत्मना सहैक्यं प्राप्तस्य"यथास्त्रिया संपरिष्वक्तः एवमेवायं शरीरात्मा प्राज्ञेनात्मना संपरिष्वक्तः इति,, इतिश्रुतेः ॥ १३ ॥

यदेति वचनान्नास्य साधनस्य सिद्धिकालो नियतोऽतो नियतं हेतुमाह अशेषसंक्लेशशमंविधत्त इति भगवतो माहात्म्यज्ञापकं धर्मानुकीर्त्तनपूर्वकश्रवणमशेषसंक्लेशशमंविधत्ते गुणानुवादश्रवणंसंक्लेशशमं विधत्ते गुणानुवादश्रवणस्य संक्लेशशमस्य च कार्यं कारणभावःकारणविद्यमानदशायामेवतेन यावत्संक्लेशविनाशं गुणानुवादश्रवणं कर्त्तव्यमअतो नैकेन श्रवणेन सर्वसंक्लेशाभावो जात इति विरोधो न मंतव्यःपरं नियतकारणमत्रोच्यतेमुरारेरिति विघ्नाभावस्तत्रस्वतःसिद्धः यदा श्रवणमेवंतद्विधत्त तत्र भगवच्चरणारविंदरतिर्विधत्त इतिकिं वक्तव्यंतदाह कुत इति किंपुनरिति वचनं रतिसाधकश्रवणदशायामेव क्लेशा निवृत्ता इति रतिःकुतो निवर्त्तयिष्यतीति ज्ञापितंचरणारविंदेति भक्तिमार्गानुसाराच्चरणारविंदस्य परागाः पूर्वं निरूपिताः गंगायां भगवदीयशरीरे च संतीति तत्र सेवायां रतिः पराग एव वामधुरादिस्थितः सव्य इति चरणारविंदसंबंधात्मकरंदो भजनानंदः स्वतःपुरुषार्थरूपः तत्संबंधिनी सेवा तस्यां रतिः प्रीतिः साप्यात्मनैव लब्धा अकस्मात्प्राप्ता आत्मनि वा लब्धास्वतः पुरुषार्थः सेवायां स्वभावतो यारुचिः सा सर्वमेव क्लेशं दूरीकरोतीति एवं साधनत्रयमुपदिष्टं कर्ममार्गानुसारेण ज्ञानमार्गानुसारेण भक्तिमार्गानुसारेण च ॥ १४ ॥

एवंमायापगमएव सर्वसंदेहानिवृत्तिरितिमैत्रेयोक्तंश्रुत्वासाधनंभगवद्रतिसाधनवाक्येनस्मृतत्वात्तस्यामुद्भूतायांस्वत एवसंशयोगतइति तदुक्तं फलं जातमिति स्वहृदये जातःसंशयाभावस्तंतस्याग्रेऽनुवदति संछिन्न इति अन्यथास्य संदेहाभावस्य गुरुशास्त्रप्रतिपाद्यता न स्यात् मह्यं मदर्थप्रयुक्तः यस्तत्सूक्तासिः उत्तमवाक्यखड्गस्तेन संशयश्छिन्नः ननु युक्त्यामोचितवचनं च खड्गरूपं साधनप्रदर्शनरूपत्वादतः परं च मुक्तिर्न वक्तव्या भगवन्मायांशबलवत्वेन स्वीकृत्यतया सह यत्रैव बुद्धिः प्रेर्यते तत्रैव बुद्धिरप्रतिहता गच्छति धनुर्योजितः शर इव तदाह उभयत्रापीपि भगवतः स्वातंत्र्येवर्तते बीजप्रयोजनयोर्वाज्ञानमायासंबंधयोर्वा संशयश्छिन्न इत्युभयत्रापि

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

मैमनः सम्यक् प्रधावति भगवन्निति संबोधनंस्वस्मिंस्तादृशज्ञान जननसामर्थ्यबोधाय प्रकर्षेण पावनं युक्त्यपक्षारहितंनिष्प्रत्यूहं सम्यक्त्वंचप्रयासाभावः ॥ १५ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी।

ननु ज्ञानानन्दाद्यावरणं जीवस्य भवतु नाम। रागद्वेषशोकमोहकामादयो धर्म्मास्तेन कुतो लब्धास्तत्राह यथेति। अन्तमनोऽन्तःकरणस्यैव गुणाः शोकमोहादिः द्रष्टुरात्मनो जीवस्यासन् तत्र न सम्भवन्त्यपि दृश्यते तत्र लिङ्गदेहाध्यासात् प्रतीयत इत्यर्थः। उपाधिधर्म्मस्योपाहतवर्त्तित्वेन प्रतीतौ दृष्टान्तः। यथा जले ज्ञात तत्कृतः जलोपाधिकृतः कम्पादिश्चन्द्रस्य प्रतीयते वस्तुतस्तु न स चन्द्रस्य किन्तु जलस्यैवायमर्थः। जले यश्चन्द्रो दृश्यते स हि चन्द्रमण्डलस्थ किरणपुञ्जएव नतु चन्द्रः। तथाहि चन्द्रसूर्य्यादिकिरणाः जलस्थलवृक्षभित्तिपाषाणादिषु प्रसर्पन्नपि तेषु मध्ये यत् स्वच्छं तत्र लोकैः स प्रतिबिम्बतयोच्यते। चन्द्रो हि मुखनासिकाहस्तपादादि भूषणवाहनादिपरिकरविशिष्टत्वेनैव तत्रत्यैर्जनैरनुभूयते। स हि भगवद्दृष्टान्तः। सएव स्वस्वरूपभूतकिरणपुञ्जव्याप्तस्तु किञ्चिदन्तिकस्थै किञ्चिद्दूरस्थैश्च किञ्चिद्विशेषत्वेन निर्विशेषत्वेन चानुभूयमानःक्रमशः परमात्म दृष्टान्तो ब्रह्म दृष्टान्तश्च ज्ञेयः तद्बहिर्भूतकिरणपुञ्जस्तु मण्डलाकार समष्टि जीव दृष्टान्तःतत्प्रतिबिम्बो यो जले दृश्यते स प्रतिबिम्बत्वेन प्रतीयते मात्रं नतु वस्तुतः प्रतिबिम्बस्तत्र जलेऽपि किरणपुञ्जस्य सत्यस्यैव दृश्यमानत्वादत: स एव जलोपाधिवर्त्ती जलधर्म्मैः कम्पादिभिर्यथान्वितस्तथैवान्तःकरणधर्म्मैः शोकमोहादिभिरन्वितो जीवस्तदध्यासात् तादृतस्ततः प्रसृमराः किरणास्तु व्यष्टिजीवदृष्टान्ता ज्ञेया इति ॥ ११ ॥

तर्हि जीवस्यकथं निस्तारस्तत्राह स अनात्मनो गुणःनिवृत्तधर्म्मेण निवृत्तिधर्म्मजन्येन भक्तिमिश्रज्ञानेनेत्यर्थः। तथा स्वभक्तद्वारया वासुदेवानुकम्पया उद्भूतेन भगवद्भक्तियोगेन तिरोभवेत्। तन्निवृत्त्युपायोहि ज्ञानं वा भक्तिर्वा भवेदिति वाक्यार्थः। शनैरात साधनानुसारेणानर्थनिवृत्तितारतम्येनेत्यर्थः ॥ १२ ॥

तर्हि सर्वानर्थनिवृत्तिः कदेत्यपेक्षायामाह यदेति तत्र ज्ञानमते इन्द्रियाणां मनोवृत्तीनामुपरागो लयः। सुषुप्तिव्यावृत्त्यर्थमाह द्रष्टुरात्मन्यन्तर्यामिणि परे ब्रह्मणि हरौ भगवति वा ज्ञानांगभूतया भक्त्या अनुभूयमाने सतीति शेषः। कृत्स्नक्लेशविलयमात्रे दृष्टान्तः संसुप्तस्य सुषुप्तिं प्राप्तस्य यथा धनपुत्रादिनाशदुःखानि लीयंते अथ भक्तिमते। हरौ स्वसौन्दर्य्यादिभिर्मनोहारिणि यदा इन्द्रियाणां चक्षुःश्रोत्रादीनाम् उपरामा नैश्चल्यं भगवत्सम्बन्धि सौंदर्य सौस्वर्य सौरभ्य सौकुमार्य माधुर्य वैदग्ध्येष्वेव चक्षुःश्रोत्र घ्राण त्वग् जिह्वा मनांसि सर्वथा निमज्जन्ति। न पुनः प्राकृतरूपशब्दाद्यास्वादं जिघृक्षन्ति हरौ कथम्भूते द्रष्टात्मनि द्रष्टृस्वरूपे स्वीयभक्तं कृपाकटाक्षाविषयं कुर्वतीत्यर्थः परे परमेश्वरे प्रकृतेः परत्रेति वा। क्लेशाभावमात्रे दृष्टांतः संसुप्तस्य नतु स्वपतः सुप्तोत्थितस्येत्यर्थः तस्य यथा स्वप्नदृष्टाः स्वशिरश्छेदनादि क्लेशा लीयंत इति ॥ १३ ॥

नन्वविद्योपशमार्थमुक्तयोर्ज्ञानभक्तियोगयोर्मध्ये कतरस्य श्रैष्ठ्यं तत्र भक्तिरेव श्रेष्ठेत्याह अशेषेति। किं वेति किं पुनरित्यर्थः। सेवायां रतिरभ्यासाकारेत्यर्थः आत्मलब्धा स्वेनैव स्वास्मिन् वा प्राप्नोति रतेः स्वप्रकाशत्वनाजन्यत्वं व्यञ्जितं साधनभक्तिरेवाविद्यामुपशमयति

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी॥

किं पुनस्तत्साध्या रतिरिति रतेर्मुख्यं फलमविद्योपशमो न भवति किन्तु भगवद्वशीकार इति भावः ॥ १४ ॥

मद्यं मम मां बोधयितुं तव यत् सूक्तं तदेवासिस्तेन उभयत्र ईश्वरे जीवे च संप्रधावात सांशयकं प्रविशति ॥ १५ ॥

---

श्रीमच्छुकदेवकृत सिद्धांतप्रदीपः

अन्यगुणोऽन्यस गंधित्वन प्रतीयते इति सदृष्टांतमाह यथेति जले सतः चंद्रमसः चंद्रप्रतिबिंबस्य तत्कृतः तस्मिन् जले कृतः वाद्याऽज्ञानतः अर्थात् जलगुणाः कंपादयः प्रतीयन्ते नतु प्रतिबिंबस्यैव कंपादिर्गुणः स्वाभाविकः एवं अनात्मनः देहादेः कृशत्वादिगुणा द्रष्टुर देहादिसंबंधिन आत्मनि असन् अपि आवद्यमानोऽपि द्रष्टुरेव अनात्मज्ञत्वेन प्रतीयते इत्यर्थः ॥ ११ ॥

आत्मविपर्ययस्य निवृत्ति हेतुमाह स इति द्वाभ्याम्। १२। १३॥

विश्वसृष्ट्यादिलीलायां निमित्तं नास्ति अतः सा कथं घटेतेति प्रथमाक्षेप समाधानं वदन् पराभक्तेः संसारनिवर्त्तकत्वं कैमुतिकन्यायेनोपपादयति अशेष इति हरेः गुणानां विश्वसृष्ट्यादिलीलानां योऽनुवादः अनुवर्णनं तच्छ्रवणम् हरिगुणानुवादश्रवणरूपा भक्तिरित्यर्थः अशेषाः संक्लेशा यस्मिन्स संसारस्तच्छमं विधत्ते अनेन विश्वसृष्ट्यादलीलानिमित्तं दर्शितम् जीवानामनुग्रहार्थं विश्वसृष्ट्यादिक भगवान्करोतीत्यर्थः आत्मनि हार्द लब्धा ध्यानरूपा ध्रुवानुस्मृतिरूपा हरिचरणारविंदयोर्यः परागस्तत्सेवारतिः अशेषसंक्लेशशमं विधत्ते इति कुतः पुनर्वक्तव्यम् ॥ १४ ॥

सूक्तासिना सापपत्तिवाक्यरूपेण खड्गेन निर्निमित्तालीला कथं घटेत इत्यादिसंशयः संछिन्नः किंच भगवत्सान्निध्ये सतोऽपि जीवस्य तन्मायया बंधपूर्वकः आत्मविपर्ययः तद्भजनेन तन्निवृत्तिरित्युभयत्र ॥ १५ ॥

---

भाषाटीका।

जैसे जलमे प्रति बिंबित चंद्रमा को उपाधिको वरतोभओ कंपादि गुण दीखे है य सत् नही है परंतु तदभिमानी द्रष्टा जीव को गुणहै तदंतर्यामी ईश्वर को दीखे है, सांनिध्य है ॥ ११ ॥

सो निश्चय करके निवृत्ति धर्म से वासुदेव की कृपासे भगवत् क भक्ति योग से धीरे धीरे नष्ट हो जायहै ॥ १२ ॥

जब इंद्रियें शांत होय तब द्राष्टा आत्मा हरि मे सर्व क्लेश विशेष लीन होंयहै, जैसे सोए भएके सर्व क्लेश दूर होयहैं ॥ १३ ॥

श्री मुरारी के गुणानुवाद संपूर्ण क्लेशका शांत करवे वारे हैं, तिनके चरणारविंदक परागकी सेवामें प्रीति आत्मा के लाभ करवे वारी है ॥ १४ ॥

विदुर जी बोले, हे विभो ! आपके सुंदर वचन रूप खड्गसे मेरो संशय कटगयो परंतु हे भगवान् ? जीव परतंत्र ईश्वर स्वतंत्र इन दोनो बातों में संदिग्ध मन होय है ॥ १५ ॥

---

साध्वेतद्व्याहृतं विद्वन्नात्ममायायनं हरेः ।
* आभात्यपार्थं निर्मूलं विश्वमूलं न यद्बहिः ॥ १६ ॥
यश्च मूढतमो लोके यश्च बुद्धेः परं गतः ।
तावुभौ सुखमेधेते क्लिश्यत्यन्तरितो जनः ॥ १७ ॥
अर्थाभावं विनिश्चित्य प्रतीतस्यापि नात्मनः ।
तां चापि युष्मच्चरणसेवयाऽहं पराणुदे ॥ १८ ॥
यत्सेवया भगवतः कूटस्थस्य मधुद्विषः ।
रतिरासो भवेत्तीव्रः पादयोर्व्यसनार्दनः ॥ १९ ॥
दुरापा ह्यल्पतपसः सेवा वैकुण्ठवर्त्मसु ।
यत्रोपगीयते नित्यं देवदेवो जनार्दनः ॥ २० ॥

श्रीधरस्वामिकृत भावार्थदीपिका ॥

यस्मात्त्वया साधु व्याहृतम् किं तत् हरेः शक्तिर्या आत्ममाया जीवविषया मायातद्यनं तदाश्रयमेतद्धि अंगत्वादिकं भातीति यद्यस्मात्स्वशिरश्छेदादिवदपार्थमवस्तुभूतं निर्मूलं मूलशून्यंच यस्मादस्य मूलं विश्वस्यमूलं स्वाज्ञानं बहिर्विनानास्ति ॥ १६ ॥

अल्पज्ञत्वात्पूर्वमम संशयोजातइत्याह यश्चेति मूढतमो देहाद्यासक्तोयश्चबुद्धेः प्रकृतेः परमीश्वरंप्राप्तस्तौ सुखंयथाभवति तथाएधेते जीवतइत्यर्थः संशयक्लेशाभावात् यस्तुदुःखानुसंधानेन प्रपंचं जिहासति वा नन्दमंवेदनाभावाद्धातुं नशक्नोतिसतुक्लिश्यतीत्यर्थः १७

इदानींतु कृतार्थोऽस्मि यतस्त्वया संशयश्छिन्नः केवलंबाधितानुवृत्तिरेवावशिष्टासापि युष्मत्प्रसादान्निवर्तिष्यतइत्याह नात्मनः अनात्मनः प्रपंचस्य प्रतीतस्याप्यर्थाभावमर्थोऽत्रनास्ति किंतुप्रतीतिमात्रमिति युष्मच्चरणसेवयानिश्चित्य तां प्रतीतिमप्यहंपराणुदे अपनेष्यामीत्यर्थः ॥ १८ ॥

मधुद्विषःपादयोरतिरासःप्रेमोरसवस्तीव्रोदुर्वारःस्वाभाविकःव्यसनं संसारमर्दयति नाशयतीतितथा ॥ १९ ॥

अहोदुर्लभंप्राप्तमयेत्याह दुरापादुर्लभा वैकुंठस्यविष्णोस्तल्लोकस्यवावर्त्मसुमार्गभूतेषुमहत्सु यत्रयेषु महत्सेवयाहरिकथाश्रवणं ततोहरौप्रेमतेनचदेहाद्यनुसंधानमपिनिवर्ततइतितात्पर्यम् ॥ २० ॥

---

श्रीराधारमणदासगोस्वामि विरचिता

दीपिन्याख्या दीपिका टिप्पणी ।

यदर्थेन विनेत्यप्यनुवदन् संशयच्छेदहेतुवाक्यमाह साध्विति यस्माद्धेतोः तत् साधु व्याख्यानं जीवमायाजीवव्यामोहिनी तदाश्रयं तद्धेतुकम् यस्मान्मायिकत्वात् बाहिरिन्यस्य व्याख्यानंविनेति टीकायां क्वचित्पाठव्यत्ययस्तुलेखकभ्रमात् ॥ १६ ॥

संशयक्लेशाभावात्मूढस्य संशयाभावात्परंगतस्य च क्लेशाभावादित्यर्थः अंतरितपदस्य विवृतत्वादित्यर्थ इत्युक्तम् ॥ १७ ॥

बाधितानुवृत्तिः बाधितस्य मिथ्यात्वेन ज्ञातस्यानुवृत्तिःप्रतीतिर्यथाद्विचन्द्रज्ञानं बाधितमपि नेत्रदोषादनुवर्त्ततेमात्रम् तथा प्रपंचस्य प्रतीतिमात्रमेवावशिष्टमित्यर्थःअत्रप्रपंचे अर्थः परमार्थसत्यत्वं नास्ति "वर्त्तमानसामीप्ये वर्त्तमानवद्वे,,ति न्यायादित्यर्थइत्युक्तम् ॥ १८ ॥

श्रीराधारमणदासगोस्वामि विरचिता

दीपिन्याख्या दीपिका टिप्पणी

वैष्णवचरणसेवाया आनुषङ्गिकं फलमुक्त्वा मुख्यफलमाह [illegible] त्सेवयेति येषांयुष्माकं पूर्वपद्ये प्रस्तुतत्वात् "साधुचन्द्रमसि पुस्तैः कृतं मीलितं यदभिरामिताधिके,, इतिवदुत्तरवाक्यस्थयच्छब्दस्य च्छब्दाकांक्षानास्ति कूटस्थस्य निर्विकारस्य यद्वा कूटमग्रकूटमित्याख्यातं श्रीगोवर्द्धनाद्रिशृङ्गं तद्वार्त्तिनो मधुद्विषः श्रीकृष्णस्य रतिप्रसः ताहशप्रीत्यारासलीलासाक्षात्कारो भवेदित्यर्थःतीव्रो दुर्वारः [illegible] त्य इत्यर्थः रासलीलाया नृत्यप्रधानत्वात् नृत्यस्य च गतिप्रधानत्वात् पादयोर्व्यसनं दुःखम् अन्यव्यापारपरताम्वाऽर्दयति नाशयतीति तथा ॥ १९ ॥

देहाद्यनुसंधानमपीत्यत्रापितत्प्रेम्ण एव परमपुरुषार्थत्वं देहाद्यनुसंधाननिवृत्तेस्त्वानुषङ्गिकत्वं व्यज्यते एवं तात्पर्यार्थेन शुष्कं [illegible] नमनादृतम् ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ॥

उत्तरमेवप्रपंचयन्नभिनंदतिसाध्विति आत्माजीवःमायाप्रकृतिः [illegible] भयमेवायनंहरेस्तस्यवासस्थानमित्येतत्साधुत्वयाव्याहृतमित्यर्थः [illegible] हिशरीरगतच्छेदनादेरात्मन्यस्पर्शेदृष्टांतीकृत्य हिशरीरभूतचिदचि[illegible] दोषाभावः परमात्मनिचत्सुष्ठूक्तः अतस्तस्यभगवतःचिदाचिद्व्या[illegible] पूर्वोक्तं नानूरीकृताकथंचेतनाचेतनं तस्यायतनंनहीदंजगत्तदात्मकत्वं प्रतीयते इत्यत्राह यद्भातीति विश्वमूलं विश्वकारणं यद्दर्शनं यद्वा [illegible] यस्यजगतः बाह्यन्अन्तः प्रविष्टं तदिदं जगन्निर्मूलंमूलभूतपर [illegible] रहितम् अनदात्कं भातीति यत्तदिदमपार्थमर्थशून्यांनिर्विषयंभ्रांतिरूपमिति यावत् अनेनाब्रह्मात्मकत्वप्रतिभासोमिथ्यारूपइत्युक्तम् ॥

एवंदेहात्म प्रतीतिभ्रांतिरूपेतिवक्ष्यन्नब्रह्मात्मकस्वतंत्रात्मभ्रमदेहात्मभ्रमवतांक्लेशित्वमाह यइतियश्चलोकेमूढतमःयश्चबुद्धेःपरं [illegible] त्वयांब्रह्मात्मकस्वात्मानं गतः कर्त्तारिक्तः अवगतवान् तावुभौ सु[illegible] मात्मस्वरूपाभिज्ञौसुखमेधेतेवर्द्धेतेमूढतमस्यापिमौढ्यमेवकिंचित् [illegible] जनकमित्यभिप्रायःइदंचांतरितस्यसर्वथाक्लेशित्वाभिप्रायकम् [illegible] रितः नमूढतमः नापिबुद्धेःपरंगतः किंतु संशयात्माजनः क्लिश्य[illegible] ॥ १७ ॥

पा० * यद्भात्यपार्थमिति वीरराघवीयपाठः ।

### श्रीमद्वीरराघवाचार्य कृत भागवतचन्द्रचन्द्रिका ॥

देहात्मप्रतीतेर्भ्रांतित्वं वदंस्तन्निवर्तनमूलकारणमाह अर्थाभाव-मिति प्रतीतस्यापि आत्मनाऽऽत्मत्वेनप्रतीयमानस्यापि नात्मनः अनात्मनःदेहस्यनिषेधार्थकोनशब्दःअर्थाभावमात्मत्वाभावंविनिश्चित्यतांचापिदेहात्मप्रतीतिमपि युष्मच्चरणसेवयासत्सेवाप्रणाड्येत्यर्थः अहं परागुदेऽपाकरोमीत्यर्थः ॥ १८ ॥

सत्सेवायाएवं प्रथमकारणत्वमाहयत्सेवयेति यत्सेवया येषांसतांसेवया कूटस्थस्य निर्विकारस्य मधुद्विषः भगवतः पादयोस्तीव्रः विघ्नाद्यहतः व्यसनार्द्दनः तापत्रयनिवर्त्तकः रतिरासः रत्युल्लासः अनुरागोल्लासः भवेत् ॥ १९ ॥

सत्सेवापि बहुतपसोपलभ्येतिव्यतिरेकमुखेनाह दुरापेति अल्पतपसः तपोहीनस्य वैकुंठवर्त्मसुवैकुंठप्रापकेषुभागवतेषु सेवादुरापाहि दुर्लभाहीत्यर्थः कथं भूतेषु यत्र वैकुंठवर्त्मसु देवदेवः ब्रह्मादीनामपिदेवः जनार्द्दनउपगीयते अनेनसत्सेवायाः श्रवणादिप्रणाड्येप्रेमभक्त्युत्पादकत्वमितिसूचितम् ॥ २० ॥

### श्रीमद्विजयध्वजतीर्थ कृत पदरत्नावली ।

अस्मद्वचननैशित्याभावात् संशयः किं नेत्याह मास्विति हे विदुर !ब्रह्मसाक्षात्कारयोग्यज्ञानवन् !हरेरात्ममायायनं स्वरूपसामर्थ्याश्रयमयं हि भगवन्महिमेति यद्वचाहनं त्वयोक्तं तत्साधुसंशयनिरासनैशित्योचितम् आत्मेत्यनेन मायाशब्दस्येंद्रजालाभिधेयत्वं दूरोत्सारितं यद्यप्येवं तथाप्यपार्थं प्रयोजनशून्यम् अत एव निर्मूलं पूर्वं दृष्टमन्तरेण कारणांतरशून्य देहात्मत्वादि मनस्याभाति विश्वमूलं ब्रह्मच मम ज्ञानाद्वहिर्न भवति यद्यस्मात्तस्मादंतरित उभयभ्रष्ट इवास्मीति शेषः ॥ १६ ॥

एतदेव स्पष्टयति यश्चेति लोके ब्रह्मणा सृष्टे जने यो मूढतमः अत्यंतज्ञानविवेकशून्यः यश्च बुद्धेः प्रकृतेः परं ब्रह्मगतः तावुभौ मस्तसुखमेधेते अंतरितस्तयोर्मध्यवर्ती जनःस्वप्नदर्शिवत्क्लिश्यति क्लेशं प्राप्नोति तथाहमपि क्लिश्यामीत्यर्थः ॥ १७ ॥

त्वमतरितजनेष्वेकश्चेत् संशयानुपगमेन मुक्तो न स्याः"तत्त्वसंशययुक्ता ये सर्वे ते निरयापगा„ इति वचनादित्याशंक्य स्थाणुर्वा पुरुषोवेति संदिहाना यथाप्तवाक्याद्वक्रकोटरादिदर्शनाद्वा संशय प्रतीतिं पराहृत्य स्थाणुरेवायं न पुरुष इति निश्चयज्ञानं प्रतिपद्यते तथाहमपि युष्मच्चरणसेवाप्रसन्नयुष्मदुपदेशादनात्मनो देहस्य संबंधिनोऽहंममतादेः मोहात्मत्वेन प्रतीतस्यापि अर्थाभावं जीवस्वरूपपर्यालोचनया प्रयोजनाभावं निश्चित्यचोभयविषयां तां प्रतीतिं निरस्य पुरुषार्थोपयोगिज्ञानं लभत इत्याभिप्रायवानाह अर्थाभावमिति द्वितीयापि शब्देन सेवायाः प्राधान्यं वक्ति चशब्दः संशयनिरासनिश्चयज्ञानलब्ध्योः समुच्चये वर्तते परागुद इत्यनेन नियतपरस्मैपदेनान्यथा प्रयुक्तेन विद्यमानमपि अनुभवमन्यथा वदति विदुर इति सूच्यते न च शूद्रयोनौ जातस्य यथार्थज्ञानमेव नास्तीति वाच्यं "द्रोणद्रौणिकृपाः पार्थो भीष्मो विदुरसंजयौ। येचान्येतत्रदेवांशाः सम्यक् तत्त्वापरोक्षिणः„इति वचनात्सम्यक्त्वापरोक्षत्वात् तर्ह्यनृतभाषित्वमापन्नमिति चे अपृष्टमेव वक्तव्यं नापृष्टमिति अपृष्टार्थप्रवचनोपरमार्थत्वेन गुणत्वात् आत्मनस्तु गुणाभावं वदतो न त्वसत्यता अ * पृष्टस्य दमार्थं च गुणायैव भवत्यपीति वचनात् ॥ १८ ॥

* अपृष्टस्यअपृष्टत्वस्यदमार्थं नाशार्थं

### श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

श्रीनारायणचरणारविंदनिषेवा संसारव्यथानिरासकत्वेन पुरुषार्थोपयोगिनी स्यात् किमस्मच्चरणसेवा करिष्यतीति शंकामाभूदित्याह यत्सेवयेति येषां हरिस्वरूपद्रष्टृणां युष्माकं सेवया भगवतः पादयोः तीव्रः पटुतरो रतिरासो रतिरूपा क्रीडारतिलक्षणो रागो वा भवेदित्यन्वयः मधुद्विष इत्यनेन हरेर्बहिरेवावस्थानं प्रतीयते तन्निरासार्थं कूटस्थस्येति चेतनाचेतनराशिनियामकत्वेन तदंतःस्थस्य क्रोधादिविकारणाहस्य वा ॥ १९ ॥

पूर्वसंचितपुण्यैरेव भवादृशानां महतां सेवा लभ्या नान्यैरित्याह दुरापेति वैकुण्ठस्य वर्त्म ज्ञानोपदेशमार्गो येषां तेषु महत्सु सेवा हिशब्द एवार्थे दुष्प्रापत्वे निमित्तमाह यत्रेति यत्र येषां भवादृशानां परिसरे भगवद्विमुखानां जनार्दनप्रसंगो दुःसह इति यस्मादतस्तत्कथाप्रसंजकेषु सत्सु दुःसहत्वेन सेवा दुरापेत्यर्थः जनो जननमुपलक्षणं मरणं चार्दयति नाशयतीति जनार्दनः अर्दहिंसागत्योरिति धातुः ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

संशयच्छेदने हेतु नवधारितार्थमेवानुवदति साध्विति पञ्चभिः हरेरात्माधीनमायाया अयनमचिन्त्या गतिरित्येतत् साध्वेव व्याख्यातं यद्यस्माद्वहिर्विना अपार्थमवस्तुभूतं मूलशून्यञ्च विश्वमूलं तदध्यासहेतु भूतमज्ञानं जीवानामपि नास्तीति ॥ १६ ॥

मूढतमः सारासारविवेकरहितः सुखमेधते संशयक्लेशरहितो भवतः अन्तरितः संशयितः ॥ १७—१८ ॥

प्रपञ्चप्रतीतिपरणोदनमात्रं कियत् यतः यत्सेवयेति व्यसनार्दन इत्यानुपूर्व्यक एवासौ यस्य गुण इत्यर्थः ॥ १९—२० ॥

---

### श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

नकेवलंपूर्वप्रश्नेष्वेवममसंदेहोगतः किंत्वन्यत्रसर्वत्रैवकार्येसंदेहोगतइत्याहसाध्वेतदिति एतन्माया निरूपणवचनंयद्भगवताव्याहृततत्साध्वेवव्याहृतंविद्वन्निति तथात्रानुभवोऽस्तीतिविज्ञापितंननुत्रत्र हीदृमोत्रणींकीनरूपितमित्याकांक्षायामाह आत्ममायायं हरेरिति हरेः संबंधिनोयेआत्मानोजीवास्तेषांयामायाव्यामोहिकापूर्वं चतुःश्लोक्यांनिरूपितातस्यामायायाअयनंस्थानंविषयाकारःब्रह्मजडत्वेनआत्मानात्मत्वेनयःस्फुरतिमायैववाअयनंयस्यैतमायाकृतायोऽन्तरःसर्गःसत्वपार्थमेवाभातिवस्तुदूरीकृत्यनिर्विषयकभेदज्ञानंमायाश्रितं यत्किंचिद्विषयत्वेनभातितर्हिसर्वं द्वैभायात्ततश्चानिर्मोक्षप्रसंगः इत्याशंक्याह निर्मूलमिति मायातिरिक्तमूलाभावादंतराभावानृतरूपशैवज्ञानभानात्तदैवगच्छतीति निर्मूलत्वमेवएवमेवहि शुक्तिकायांरजतप्रतीतिरंतराभासतेतलस्पर्शेच निवर्तत इत्ययमेवार्थोमंत्रेऽपिनिरूपितः "नतंविदाथयइदंजजानान्युष्माकमंतरंबभूवे„तिजगद्भतभगवत्कर्तृत्वंचश्रुतिसिद्धं सत्यमेवसृष्टस्यब्रह्मस्वरूपस्यजगतस्तथात्वप्रतीतौव्यामोहिकमायामध्येअन्यथैवप्रत्याय्यतेअविकृतंकार्यंकारणंकृतिश्च युष्माकमितिवचनाश्रसंदेशामयमनुभवः यत्पुनःप्रमेयाध्यायेअविरोधेन"नविलक्षणत्वात् ॥ २ । २ । ३ ॥ इतितथा परोक्तनया"दृश्यतेतु ॥ २ । ३ । ४ ॥ इत्थंसमर्थितंपूर्वपक्षेन"विलक्षणत्वाद„ति"तथात्वंचशब्दादि„ति विज्ञानंचाविज्ञानंचेतितत्सिद्धांतेवादिबुद्धिमनुसृत्यब्रह्मवादस्य वक्तुमयुक्तत्वात्परोक्तनया "दृश्यतेतु„ इत्यनेन न तुवस्तुत इत्यर्थः श्रुतिस्तु पूर्वकांड इव लोकसिद्धमनुवदति

श्रीमद्वल्लभाचार्यकृत सुबोधिनी

सत्त्वज्ञानार्थं यथा दहरं वै सा पराङ्घ्यामिति लौकिकदेहानुवादः अत एव सत्यं चानृतं च सत्यमभवदित्युभयथा प्रतीयमानं सत्यमेव वस्तुतां जातमिति बाधयनितथैतस्य भगवद्ध्यानात्तथास्फुरितमिति तस्यानुवादो मध्यस्थमात्रानुवादो वा मायावादिवत् ॥ १६ ॥

किं च विश्वस्य यन्मूल तद्बहिर्विषयेषु नास्ति भगवतो मायातीतत्वात्किंतु बुद्धेः सकाशादुद्गता मध्य एव स्फुरति तस्मादस्मिन्नृशास्त्रे उभावेव सुखिनौ अज्ञानसंकटरहितौतौ निर्दिशति यश्च मूढतम इति यस्तुज्ञानार्थं सर्वथा न प्रवृत्तः स लोकन्यायेन वर्त्तमानो मायापगमनार्थमेव यत्न कुर्वन् भगवत्कृपया तदपगमे पश्चात्सर्वमेव निःसंदेहं जानाति अथवा सद्गुरुणा कृत्वा भगवत्कृपया सहितोऽन्यो मोहनो व्यामोहिकां बुद्धिं त्यक्त्वा बुद्धेः परंगतः स्वरूपस्थितः पूर्वमेव निवृत्तानर्थत्वात्सुखमवतिष्ठते अंतरितो मध्यस्थितस्त्वल्पज्ञानाल्पभक्तिर्निर्द्धाराभावादेकतरज्ञानाश्रयाभावाच्च नैकाढ्यारूढवत् क्लिश्यति लौकिकमूढपक्षे उभयोः समानसुखकथनं विरुद्धमापद्येत न वा मूढानां सुखमस्ति ॥ १७ ॥

एवं शास्त्रार्थनिरूप्य स्वस्य किंचिज्ज्ञातं किंचिन्नेतितदुभयमनुवदति अर्थाभावमिति शास्त्रतः प्रतीयमानस्यार्थस्वरूपं नास्तीति निश्चितम् " आत्मैवेदं सर्वमि„ति श्रुतेःअनात्मनोऽर्थाभावःसिद्धःअतःपरं प्रतीतिरस्तिविषयबाधानिवृत्तातामपिप्रनीतियुष्मच्चरणसेवया गुरुचरणसेवया अहं पराणुदे यद्यपि स्वभावतो गुरुर्नोपदिशति तथापि सेवायां क्रियमाणायां तद्धर्मेण तदुपदेशेन वा तत्स्पर्शो भविष्यतीति तामप्यपनुदं दूरीकरिष्यामि ज्ञानमार्गानुसारेणैवार्थस्य निवृत्तत्वादन्यथा भगवच्चरणसेवयैव तां दूरीकुर्यात्अहमिति स्वाधिकारः तथैव भगवदाज्ञापनात् अन्यथा भक्तिमार्गानुसारेण यदूरी कुर्यात् अधिकारश्च पुनः प्राप्तव्यः ॥ १८ ॥

किं च भगवन्मार्गेऽपि गुरुसेवा भक्त्युपयोगिनी तदाह यत्सेवया भगवत इति मार्गत्रयाविरोधाय भगवतो विशेषणत्रयम् अन्यथा गुरुसेवाभावे मार्गांतरविरोधेन न भगवतिभक्तिः स्यात् तत्र भगवत इति भक्तिमार्गानुसारी भगवान्कूटस्थस्येति ज्ञानमार्गानुसारी मधुद्विष इति दैत्यद्वेषी सर्वेषामेव सुमनसां देवानां पुष्पाणां वा मधु गृहीत्वा स्वमुखेन तद्वमिन्वानिष्पादितं मधु मधु भवति तथा सर्वदेवानां बलं गृहीत्वा दैत्येन स्वभावं तत्र संपाद्य सर्वधर्मप्रतिपक्षतया ब्रह्मघातको निर्मितो मधुः कैटभस्तु ज्ञानांशबाधकः अत एव कपिलेन कैटभार्द्दन इत्युक्तं तादृशस्य भगवतो रतिरासो भवेत् रतिविलासो भवेत् विलासपदेन चरणस्य वशीकरणं सूचितं रतीनां वा बहुविधानां सर्वेन्द्रियविषयाणां रासो रससमूहः पादयोरित्यवतारा भिप्रायेण लौकिकोऽपि व्यामोहो गच्छतीति तीव्र इति शीघ्रमेव तत्स्पर्शयंति अवांतरखेदास्तु तस्यानुषंगिका इत्याह व्यसनार्द्दन इति व्यसनानि लौकिकानि विचित्राण्यर्दयतीति तस्य विशेषणं अतो व्यसननिवृत्ती रासस्यानुषंगिकी अतो मार्गद्वयसाधकत्वात् गुरुसेवा सर्वेषामेव हितकरा ॥ १९ ॥

तर्हि कथं न सर्वे कुर्वंतीत्याशंक्याह दुरापा इति अल्पं तपो येषां तेषां वैकुंठवर्त्मसु सेवा दुरापा दुःखेन प्राप्तुं शक्यादुर्लभत्वा वैकुंठवचनं भगवद्भक्तानांमाहात्म्यप्रतिपादनाय वैकुंठवर्त्मस्वित्युक्तं वैकुंठस्य मार्गभूतेषु व्यापि वैकुंठस्य भगवतो वा तन्मार्गं गतस्तत्र गच्छतीति तेषां वैकुंठमार्गत्वं स्थापयति यत्रोपगीयते नित्यमिति यत्र भगवद्भक्तेषु भगवान्नित्यमेवोपगीयते अनेन क्रमागमनं सूचितं भगवद्गुणाः पुष्पाणां गंधाइवा भगवन्मार्गे समायांति अत एव तेषामुपगान हृदये स्थितं तत्रैवोल्लसितं गानमुल्लासाधिक्येन मार्गनैकट्यं नित्यमुल्लासाद्वायुना इवश्रुत्या दूरे नयनं निराकृतं किंच स हि देवानां देवः देवोपरिवर्तते अतो देवमार्गापेक्षया यज्ञापेक्षयाप्यय मार्गः समीचीनः किंच जनार्द्दनोऽयं जनानर्दयतीति ज्ञानकार्यकर्ता अतो अचेतननिवर्तकापेक्षया ज्ञानमार्गापेक्षयापि भगवद्भातृणांनृणां सेवन मुत्तममित्यर्थः ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ॥

ननु मम सूक्तं त्वया कीदृशमवधारितं तत्राह हे ब्रह्मन् । साधु यथास्यात् तथा त्वया व्याहृतम् किं तत् । हरेर्बहिरंगा शक्तिर्या आत्ममाया तदाश्रयमेव एतत् । भगवतो निर्गुणस्यापि गुणवत्त्वं तैर्गुणैः सृष्ट्यादिकर्त्तृत्वश्चाभाति । अपार्थं निष्प्रयोजनं तस्यात्मारामत्वात् । निर्मूलं निष्कारणं तस्य प्रयोजकान्तराभावादेतत्कर्ममेवेतीश्वरगतं त्वया व्याहृतम् । तथा एतज्जीवस्याऽविद्या बन्धनं तदुत्थदुर्भगत्वादिकंचात्ममायायनमेव । निष्प्रयोजनं निष्कारणमवस्तु चेति जीवगतं च व्याहृतमिति । तन्त्रेणोयं विदुरोक्तिः किञ्च यद्बहिः यामात्ममायां विना विश्वस्य मूलं कारणं नास्तीति विश्वस्रष्टृत्वेन भगवतः सगुणत्वं सक्रियत्वञ्च न स्वरूपसिद्धमिति भावः ॥ १६ ॥

अल्पज्ञत्वादेतावद्दिनपर्यन्तमहं सांशयिकदुःखनिमग्न एवासमित्याह । मूढतमः पशुरिव विषयासक्तबुद्धेः प्रकृतेः परमीश्वरं प्राप्तः । तौ सुखं यथास्यात्तदेवमेधेते । संशयक्लेशाभावात् विषयानंदेश्वरानन्दाभ्यां वर्द्धेते । यस्तु दुःखानुसन्धानेन प्रपञ्चं जिहासति भगवद्भक्त्यलाभाद्धातुञ्च न शक्नोति सत्वन्तरितो मध्यवर्त्ती आनन्दयाभावेन संशयासिन्धुनिमग्नः क्लिश्यति ॥ १७ ॥

किञ्च संप्रत्यपि मम क्लेशशेषो वर्त्तत इत्याह । आत्मनो जीवस्यार्थाभाव वास्तवदुर्भगत्वाद्यभावं त्वन्मुखादितसिद्धांतेन विनिश्चित्यापि न प्रतीतस्याप्यर्थाभावस्य तामप्रतीतिमहं पराणुदेऽपनेष्यामि ॥ १८ ॥

भगवज्जनसेवायाः किमशक्यमित्याह यदिति । भगवतः कूटस्थस्य भगवत्त्वेनैव सर्वकालव्यापिनः " एकरूपतयातु यः कालव्यापी स कूटस्थ„ इत्यमरः । मधुद्विषो मधुसूदनस्य मधोरिव भक्तसंसारस्य नाशयितुः पादयोरत्या भावभक्त्या रासो विभावादिसंयोगोत्थः शान्तदास्यादिरससमूहः तीव्रः स्वमाधुर्येण प्राकृताप्राकृत सर्वमाधुर्योपमर्दी तेनाप्रतीतिपरत्वनोदनमिदं कियन्मात्रमिति भावः ॥ १९ ॥

किञ्च । सेयं महत्सेवात्रातिदुर्लभेत्याह अल्पतपस इति लोकरीत्योक्तिर्महत्सेवायास्तत्कृपैकलभ्यत्वेन तपःफलत्वाभावात् वैकुण्ठस्य वर्त्मभूतेषु तद्भक्तेषु नित्यं साधनसाध्यावस्थायाम् ॥ २० ॥

---

श्रीमच्छुकदेवकृत सिद्धांतप्रदीपः ।

हे विद्वन् त्वया साधु व्याहृतं सम्यगुक्तम् तदेवाह . एतत् आत्मनां जीवानां मायायनं मायारूपं स्थानं मायाख्यतच्छक्ति पा[illegible]णामभूतं हरेरेव हरिकर्तृकमेव कथं भूतं विश्वमूलं विश्वानि सर्वा[illegible]णि श्रुतिस्मृत्यादीनि मूलानि प्रमाणानि यस्मिन् तत् अंश्ववाति[illegible]

सृष्ट्वाऽग्रे महदादीनि सविकाराण्यनुक्रमात् ।
तेभ्यो विराजमुद्धृत्य तमनुप्राविशद्विभुः ॥ २१ ॥
यमाहुराद्यं पुरुषं सहस्राङ्घ्र्यूरुबाहुकम् ।
यत्र विश्व इमे लोकाः सविकाशं समासते ॥ २२ ॥
यस्मिन् दशविधः प्राणः सेन्द्रियार्थेन्द्रियस्त्रिवृत् ।
त्वयेरितो यतो वर्णास्तद्विभूतीर्वदस्व नः ॥ २३ ॥
यत्र पुत्रैश्च पौत्रैश्च नप्तृभिः सह गोत्रजैः ॥
प्रजा विचित्राकृतय आसन्याभिरिदं ततम् ॥ २४ ॥
प्रजापतीनां सपतिश्चक्लृपे कान्प्रजापतीन् ।
सर्गांश्चैवानुसर्गांश्च मनून्मन्वन्तराधिपान् ॥ २५ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

श्रुत्यादिबाह्यम् अब्रह्मात्मकप्रधानादि कारणवादिमतं तन्न यतो निर्मूलमतोऽपार्थमाभाति मुमुक्षुणा दूरतो हेयमिति भावः ॥ १६ ॥ १७

आत्मविपर्ययशब्देनोक्तो देहात्माहंकारः मायया जात इत्यवधार्य तन्निःशेषनिवृत्तिर्युष्मच्चरणसेवया भविष्यतीत्याह अर्थाभावमिति आत्मनः अनात्मनः देहादेः प्रतीतस्य आत्मत्वेन प्रतीतस्यापि अर्थाभावम् आत्मत्वाभावं युष्मच्चरणसेवया विनिश्चित्य तां प्रतीतिमपि पराणुदे अपनेष्यामीत्यन्वयः ॥ १८ ॥

रतिरासः भक्त्युत्सव. व्यसनं सर्वव्यसनहेतुं जन्ममरणप्रवाह मर्दयति नाशयतीतितथा ॥ १९ ॥

वैकुण्ठस्य वर्त्मसु प्रापकेषु महत्सु ॥ २० ॥

---

भाषाटीका

हे विद्वन् ! आपने यह उत्तम प्रतिपादन किया हरिकी माया का चरित्र जो कि व्यर्थ और विना मूलका भान होता है जिस माया के विना जगत्का मूल दूसरा नहीं है ॥ १६ ॥

जगत में जो अत्यंत अज्ञानी है सो और जो अत्यंत शास्त्र पारंगत है सो ये दोनो सुख पूर्वक रहते हैं और बीच का मनुष्य तो केवल दुःख का ही भागी होता है ॥ १७ ॥

प्रतीत वस्तु का भी अभाव को निश्चय करके और आत्माके यथार्थ भावको निश्चय करके उस माया कुं भी में आपके चरणारविंद की सेवा से दूर करूंगा ॥ १८ ॥

जिन आप लोगों की सेवा से निर्विकार मधुसूदन भगवान् के चरणों में दुःख का नाश करने वाला तीव्र अनुराग होता है ॥ १९ ॥

अल्प तपस्या वाले पुरुष को भगवद्भक्तों की सेवा अत्यंत दुर्लभ है जिन भक्तों के मार्ग में देव देव जनार्दन नित्यही गाये जाते हैं ॥ २० ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ॥

अर्थांतरं प्रष्टुं तदुक्तमनुवदति त्रिभिः सृष्ट्वेति विकारैरिंद्रियादिभिः सहितानि उद्धृत्य तदंशैर्विराजं सृष्ट्वा ॥ २१ ॥

प्रविष्टस्य रूपमाह यमिति विराजाविशिनष्टि यत्रेति ते इमे विश्वे सर्वेलोकाः सविकाशमसंकोचेन ॥ २२ ॥

श्रीधरस्वामि कृत भावार्थदीपिका।

प्राणादयः पंच नागादयः पंचेत्येवं दशविधः इंद्रियाणिच अर्थाश्च इंद्रियाणिचेति पुनरुक्तिस्तद्देवतालक्षणार्था तत्साहितः सर्वोपबृंहकत्वात्प्राणस्य तत्साहित्यम् एवंत्रिवृत्त्रिविधः प्राणस्त्वयेरित उक्तः तस्य विभूतीर्ब्रह्माद्याविसर्गशब्दवाच्याः ॥ २३ ॥

यत्र यासु इदंविश्वम् ततं व्याप्तम् ॥ २४ ॥

एवमेतत्पुरापृष्टोमैत्रेयोभगवान्किलेति परीक्षित्प्रश्नोत्तरंतया विदुरमैत्रेयसंवादः प्रस्तावितोऽतस्तानेवविदुरेण कृतान्प्रश्नानाह यावत्समाप्ति प्रजापतीनांपतिर्ब्रह्मेत्यादीनां वर्णयेति वक्ष्यमाणेनान्वयः चक्लृपेऽकल्पयत् सर्गान्सर्वावधान् अनुसर्गांस्तद्भेदान् ॥ २५ ॥

---

श्रीराधारमणदास गोस्वामिविरचिता ।
दीपन्याख्यादीपिका टिप्पणी ।

अर्थांतरं पृष्टश्रुतलीलाशेषं तदुक्तं मैत्रेयोक्तं तेभ्यो महदादिभ्यः तदंशैर्महदाद्यंशैः अनुसृष्टयनंतरं तं विराजम् ॥ २१ ॥

य कारणार्णवे गर्भोदके च शयानं यत्र विराड्रूपे ॥ २२ ॥

यतः पुरुषात् तस्य पुरुषस्य ॥ २३ ॥

यासु विभूतिषु याभिः प्रजाभिः ॥ २४ ॥

तद्भेदान् तद्विशेषान् ॥ २५ ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

अथार्थांतरान्प्रष्टुकामस्तदुक्तमनुवदति सृष्ट्वेति विकारैरिंद्रियादिभिः सहितानिसविकाराणि महदादीन्यग्रे व्यष्टिसृष्टेः पूर्वंसृष्ट्वा तेभ्यो महदादिभ्यः विराजं व्यष्टिरूपैर्निर्विधंराजतीति विराट्ब्रह्मा तमुद्धृत्य अंडसृष्टिद्वारोत्पाद्य विभुर्भगवान् तं विराजमनुप्राविशत् ॥ २१ ॥

कथंभूतोविभुः यंपुरुषशब्दवाच्यमाद्यं सर्वकारणकारणं सहस्रांघ्र्यूरुबाहुकमाहुः "सहस्रशीर्षापुरुष" इत्याद्याः श्रुतयः सोऽनुप्राविशदित्यन्वयः यद्वा तद्विभूतीर्वदस्वनइत्यनेनान्वयः तमेवविशिनष्टि यत्रेति यत्रचतुर्मुखशरीरकेविश्वे इमेसर्वेलोका ब्रह्माण्डलोकाः सविकाशमसंकोचेन समासतेतिष्ठंति ॥ २२ ॥

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

यस्मिन्नितिदशविधः प्राणापानादयः पंच नागकूर्मकृकलदेवद-त्तधनंजयाः पंचोपप्राणाइंद्रियार्थाः शब्दादयः इंद्रियाणिज्ञानकर्मा-ख्यात्मकानि तत्सहितोयस्त्रिवृत्त्रिगुणात्मकःप्राणः यस्मिन्वैराजेस-मास्ते यतश्चवैराजात्त्वयेरितास्त्वदुक्ताः वर्णाब्राह्मणादयोअभूवन् त-द्विभूतीस्तस्य वैराजस्यविभूतीः प्राधान्येन नियाम्य वर्गांश्चोऽस्मभ्यं वदस्ववर्णय ॥ २३ ॥

द्वितीयेऽष्टमेध्याये यदधातुमतोब्रह्मन्नित्यादिना राजकृतप्रश्नानां केषांचिदुत्तराण्यभि धायावशिष्टानामुत्तराण्यभिधातुं विदुरमैत्रेय संवादः प्रस्तावितः एवमेतत्पुरापृष्टइत्यादिना इदानींतेषामेव प्रश्ना नामुत्तरविवक्षया अतएवविदुरकृत प्रश्नानित्याह यावदध्या-यसमाप्ति यत्रेति यत्रब्रह्मांडे पुत्रादिभिःसह प्रजाःविचित्राकृतयः नानाविधदेहाः आसन् याभिरिदंब्रह्मांडंततंव्याप्तम् ॥ २४ ॥

प्रजापतीनां मरीच्यादीनांपतिः सब्रह्माकान्प्रजापतींश्चक्लृपेसृ-ष्टवान् तदेतत्सर्वं वर्णयेत्युपरितनेनान्वयः समष्टिपुरुषोनत्रप्रजापति सृष्टिद्वारा तत्पुत्रादिभिरिदं ब्रह्मांडमापूरितं यथाकथंसत्प्रकारंव-र्णयेत्यर्थः तथासर्गान्वक्ष्यमाणान्नवविधप्राकृतसर्गाननुसर्गा-श्चतुर्मुखसर्गात्पाश्चात्यसर्गान्मनून्स्वायंभुवादींश्चतुर्दशमनून्मन्वन्त-रेषु येऽधपास्तान् ॥ २५ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली

विदुरो विशेषं श्रोतुमनुवदति सृष्ट्वेति अग्रे जगदादौ षोडशवि कारास्तैः सहितानि तेभ्यो महदादिभ्योऽडंसृष्टांडांतर्वर्तिविराजं ब्रह्माणमुद्धृत्य सृष्ट्वा तं ब्रह्माणमनुप्राविशत् तदप्रवेशानंतरं ब्रह्मप्र-वेश इति ज्ञापनार्थान्विति विभुरुद्यांतः ॥ २१ ॥

नन्वंतर्बहिर्व्याप्तस्यपरिच्छिन्नयोग्यःप्रवेशः कथमित्याशङ्क्यतत्तद्व स्तुपरिमितरूपग्रहणेन सुकर इति भावेनाह यमाहुरिति यत्र य-स्मिन्पुरुषे इमे पातालादयः ॥ २२ ॥

यस्मिन्ब्रह्मांतर्यामिणि पुरुषे "प्राणापानौ तथाव्यानस्तथोदानस मानकौ । नागः कूर्मोऽथ कृकलदेवदत्तधनंजयाः" इति दशविधः सें-द्रियार्थेंद्रियइंद्रियार्थः शब्दादिभिश्चक्षुरादींद्रियैश्च सहितःत्रिवृदोजः सहोबलरूपो वर्तत इति शेषः श्रुतमनूद्य वक्तव्यांशं प्रार्थयते त्वयेर-ता इति त्वया ये ब्राह्मणादिवर्णा यतो ब्रह्मांतर्यामिणः सृष्टा ईरिताः तद्विभूतीस्तेषां वर्णानां तस्य ब्रह्मांतर्यामिणश्च विभूतीर्नोऽस्माकं वदस्व यथाज्ञातुं शक्यंते तथाब्रूहीत्यन्वयः "भासनोपसंभाषाज्ञानय-त्नविमत्युपमंत्रणेषु वद" इत्यात्मनेपदम् ॥ २३ ॥

यत्र येषु वर्णेषु जातैर्नप्तृभिः पुत्रपौत्रैर्विचित्राकृतयः परस्पर-व्यावृत्तलक्षणोपेताकाराः विभुर्ब्रह्मा विराज ब्रह्मांडं जलादुद्धृत्याव काशवत् कृत्वानुप्राविशदिति प्रतीतार्थं परित्यज्याप्रतीतार्थांगीका-रे किं नियामकं सृष्टेश्च ब्रह्मण इति प्रसिद्धिरिति चेन्न "ब्रह्माणं प्रा-विशद्विष्णुः सहस्राक्षः सहस्रपात्। अनुप्रविश्य ब्रह्माणं प्राणं दश-विधं तथा। इंद्रियाणींद्रियार्थांश्च वर्णांश्चैवासृजद्धरि"रिति प्रमा-णाद्वेन नियतत्वाद्रूढेर्दुर्बलत्वाच्च ॥ २४—२५ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ॥

तदेवं कृतकृत्य उल्लासेन पूर्वश्रुतलीलावशेषं पृच्छति सृष्ट्वेति ॥ २१ ॥

यं कारणार्णवे गर्भोदके च शायिनम् ॥ २२ ॥

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

तत्र तदुक्तमप्यनुवदति यस्मिन् विराड्रूपे ॥ २३ ॥

यत्र इति नप्तृभिर्दौहित्रैः ॥ २४—२८ ॥

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ॥

एवंपूर्वपक्षसिद्धांतपक्षौ निरूप्य अन्यान्विशेषान् ज्ञातुं पृच्छति सृष्ट्वाग्रे महदादीनीति तत्रादौश्लोकद्वयेन सार्धेन साधिकेन पूर्वो-क्तमनुवदति अन्यथोक्तार्थविस्मरणादग्रे न वक्तव्यं स्यात् निर्द्धारि-तार्थानुवादसार्थैव... चाल्पेनोच्यते महदादीनि त्रयोविंशति तत्त्वानि तेषां विकाराः स्त्ववांतरभेदाः सात्विकादिविभेदाः आध्यात्मिकादिभेदा वा आनुपूर्व्येण च तेषां सृष्टिः तेभ्यो विराजोद्धरणं च पुरुषस्य सा-शत्वाय तमनुप्राविशदिति अर्थान्निरूपितमनुवादेन स्पष्टितं तत्प्रवे-शव्यतिरेकेण ब्रह्मांडमध्यकार्याणि न भवेयुः विभुरिति सामर्थ्यं पदं भगवत्सहितस्य विराजो नाम ॥ २१ ॥

आद्यपुरुषमिति अस्मदाद्यपेक्षया आद्यत्वं सहस्रांघ्र्यूरुबाहुकमिति यद्यपि प्रचरद्रूपे पूर्वाध्याये नास्ति तथापि पुरुषस्य तथारूपत्वात् तद्धर्मत्वेनानुवादः स्वस्य सविशेषपरिज्ञानार्थं भगवत्कृपया या धर्मांतरस्फुरणं तदपि गुरुकृतत्वेनैव ज्ञापयितुमनुवादः क्रियते यत्र च पुनः पुरुषे इमे विश्वे लोकाः सर्वे प्राणिनःसविकाशमति विशालभूमौ सुखमासते ॥ २२ ॥

किं च यस्मिन्पुरुषे दशविधप्राणोनिरूपितः इंद्रियाणींद्रियार्थाश्च निरूपिताःइंद्रियाणामिंद्रियार्थानांप्राणानां च त्रैविध्यं निरूपितं यतो वर्णा अपि त्वया निरूपिताः एवमनूद्य विशेषं पृच्छति इदं भगव-द्रूपं भगवद्रूपं च तदैवस्याद्यदस्य विभूतिर्भवेत् भगवतो साधा-रणगुणेषु विभूतिरप्येका कथापदेऽप्यग्रे वक्ष्यमाणानां ब्रह्मादीनां न विसर्गत्वं विवक्षितं किं तु विभूतित्वमेव तेन स विभूतिः सर्गो निरूपितो भवति विसर्गस्तु धर्मादियुक्तोऽग्रे वक्ष्यते व्यष्टिष्वपि समष्टिव्यष्टिभेदःपरिकल्प्यते तत्र ब्रह्मा समष्टिःप्रजाःव्यष्टयःप्रजानां कर्तृत्वं कदाचिन्न भविष्यतीति तदर्थं प्रथमतस्ताः पृच्छति ॥ २३ ॥

यत्रेति सर्वत्र चत्वारो भेदाः विभूत्यर्थं वक्तव्याः नप्तारःप्रपौत्राः कन्यापुत्रा वा पुत्रशब्देपुत्र्याएकवद्भावः पौत्रे च पौत्र्याः एतदुभयं तत्रासूचयति गोत्रजा ज्ञातयः सर्गाःकारणपदार्थानामुत्पत्तयः अनुसर्गाः कार्याणां मनवश्चतुर्दशमन्वंतराणि षड्विधानि एतेषां मनूनांवंश्यानुचरितंतत्रोत्पन्नानांवंशवृद्धिंहेतु चरित्रंचकारादन्यान्य-पि चरित्राणि भूमेरुपरिस्वर्गादयो लोकाः कियंतः अधश्च कियंत इति आसत इति स्थिराः औत्पत्तिका मिश्रात्मजेति बहुप्रश्नेऽपि क्षोभाभावः सूचितः ॥ २४ ॥ २५ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी

तदेवं कृतकृत्य उल्लासेन पूर्वश्रुतलीलावशेषं प्रष्टुं तदुक्तमनुव-दति सृष्ट्वेति ॥ २१ ॥

यं कारणार्णवशायिनं विश्वे सर्वे समासते तद्रोमविलेषु सर्वब्रह्माण्डानां सत्त्वात् ॥ २२ ॥

किञ्च । यस्मिन् समष्टिविराजि इन्द्रियार्था विषया इन्द्रि-याणि च तैः सहितः । त्रिवृत् सह ओजोबलत्वेन त्रिविधः यतः एव वर्णाः यद्विशेषा एव विप्राद्याः । अथ तस्य परमेश्वरस्य विभूतीः प्रजापत्याद्याः ॥ २३ ॥

यत्र यासु विभूतिषु नप्तृभिः दौहित्रैः ॥ २४ ॥

द्वितीयस्कन्धे परीक्षिता पृष्टानर्थानेकजातीयहृदयस्थान् विदुरोऽपि पृच्छति यावदध्यायसमाप्ति प्रजापतीनां पति ब्रह्म सर्गान् दशविधान् अनुसर्गान् तद्भेदान् ॥ २५ ॥

एतेषामपि वंशांश्च वंश्यानुचरितानि च।
उपर्यधश्च ये लोका भूमेर्मित्रात्मजाऽऽसते ॥ २६ ॥
तेषां संस्थां प्रमाणां च भूर्लोकस्य च वर्णय।
तिर्यङ्मानुषदेवानां सरीसृपपतत्रिणाम्
वदनः सर्गसंव्यूहं गार्भस्वेदद्विजोद्भिदाम् ॥ २७ ॥
गुणावतारैर्विश्वस्य सर्गस्थित्यप्ययाश्रयम्।
सृजतः श्रीनिवासस्य व्याचक्ष्वोदारविक्रमम् ॥ २८ ॥
वर्णाश्रमविभागांश्च रूपशीलस्वभावतः।
ऋषीणां जन्मकर्मादि वेदस्य च विकर्षणम् ॥ २९ ॥
यज्ञस्य च वितानानि योगस्य च पथः प्रभो ! *
नैष्कर्म्यस्य च सांख्यस्य तन्त्रं वा भगवत्स्मृतम् ॥ ३० ॥

श्रीमच्छुकदेवकृत सिद्धांतप्रदीपः

अथ महदादिस्रष्टारमृषिमुखाच्छ्रुतं भगवंतमनुवर्णयन् तस्य विभूतिर्वदेति प्रार्थयते सृष्ट्वेति त्रिभिः। विभुः विकारैरिंद्रियादिभिः सहितानि सविकाराणि महदादीन्यग्रे सृष्ट्वा तेभ्यः विराजं सावरणं स्वदेहमुद्धृत्य सृष्ट्वा तमनुप्राविशत् "तत्सृष्ट्वा तदेवानु प्राविशदि"ति श्रुतेः ॥ २१ ॥

यं विभुम् आद्यं पुरुषं महत्स्रष्टारं सहस्राङ्घ्र्यूरुबाहुकं सहस्रशीर्षा पुरुष इत्याद्याः श्रुतय आहुः। यत्र यस्मिन्नुभयदेहयुक्ते विश्वे सर्वे लोकाः सविकाशमसंकोचेन सम्यगासते ॥ २२ ॥

इंद्रियार्थैः इंद्रियैश्च सहितः सर्वोपबृंहकत्वात् त्रिवृत् त्रिगुणकार्यः दशविधः प्राणादयः पंच नागादयः उपप्राणाः पंचैवं दशविधः प्राणः यत्र समासते इत्यन्वयः। त्वयेरितः वर्णितः यतो वर्णाजाताःतस्य विभोर्विभूतीः ब्रह्माद्याः नोऽस्मभ्यं वदस्व ॥ २३ ॥

यत्र यासु विभूतिषु याभिः प्रजाभिः इदं विश्वं ततं व्याप्तम् २४

एवमेतत्पुरापृष्टो मैत्रेयो भगवान्किलेति परीक्षित् प्रश्नोत्तरतया विदुरमैत्रेयाख्यायिका प्रस्ताविताऽतस्तानेव विदुरकृतान्प्रश्नानाह आ अध्यायपरिसमाप्तेः। प्रजापतीनांपतिः सः प्रसिद्धो ब्रह्मा कान् प्रजापतीन् चत्कल्पे सृष्टवान्। एतत्सर्वं वर्णयेति वक्ष्यमाणेनान्वयः॥२५॥

---

भाषाटीका।

सृष्टि के आदि मे महदादि तत्वों कि सृष्टि षोडश विकारों सहित करके उन तत्वों मे से विराट् पुरुषको पृथक करके परमात्मा ने उस में प्रवेश किया ॥ २१ ॥

जिन विराट्को आदि पुरुष कहते हैं जिनके हजारों चरणऊरूबाहु हैं जिस विराट् मे ये संपूर्ण चराचर लोक यथावकाश से स्थित रहते हैं ॥ २२ ॥

जिस विराट् मे आपका कहा हुआ चक्षुरादि इंद्रिय रूपादि विषय सूर्यादि देवताओं सहित तीन प्रकार वाला प्राणापानादि रूप से तथा नागकूर्मादि रूप से दश प्रकार का प्राणवर्तमान है जिसमे से ब्राह्मणादि वर्ण भये उनकी विभूतियोंको हमसे कथन करो ।२३

जिन विभूतियों में पुत्रपौत्र नाति तथा गोत्रजों के सहित ना

भाषाटीका ॥

ना स्वरूपवाली प्रजा उत्पन्न हुई जिनप्रजाओं से यह जगत पूर्ण होगया ॥ २४ ॥

प्रजापतियों का पति ब्रह्मा ने किन प्रजा पतियों को उत्पन्न किया और दश प्रकार के सर्ग तथा उनके भेद अनुसर्ग इन सबों को कहिये ॥ २५ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ॥

हेमित्रायाआत्मज ! ॥ १६ ॥

संस्थांसंव्यूहं सन्निवेशम् सर्गाणां संविभागम्। गार्भस्वेदद्विजोद्भिदाम् गार्भाजरायुजाः स्वेदाच्चद्वाभ्यांचजाताःस्वेदद्विजाः उद्भिदश्च तेषाम् ॥ २७ ॥

सर्गादीनाश्रयंच सृजतः ॥ २८ ॥

रूपं लिंगम् शीलमाचारः। स्वभावःशमादिस्ततःविकर्षणं विभागम् ॥ २९ ॥

वितानानि विस्तारान् नैष्कर्म्यस्यच ज्ञानस्य। तदुपायस्यच सांख्यस्य पथः मार्गान् तंत्रंचत्यर्थः ॥ ३० ॥

---

श्रीराधारमणदास गोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी

एतेषमितिसार्धकम्। तेषां लोकानाम् ॥ २६ ॥ २७ ॥

आश्रयश्च तेषां सर्गस्थित्यप्ययानां कारणं प्रजापतिमनुसर्गादिरूपं च सृजतः ॥ २८ ॥

वर्णाश्रम इति सप्तकम्। लिङ्गं पुस्तककङ्कतुलाधारणब्रह्मत्वादिचिन्हम् तत्तद्रूपादिवर्णनपूर्वकमित्यर्थः ॥ २९ ॥

तदुपायस्य ज्ञानसाधनस्य। सांख्यस्यात्मानात्मविवेकशास्त्रस्य भगवत्स्मृतं पंचरात्रं वेतिचार्थे ॥ ३० ॥

---

* अत्र विजयध्वजमते यज्ञस्यचेत्यत्र सार्धेकैनकोनात्रिंशत्समासिस्तेन मूल टीकयोः किंचिद्वैषम्यम्

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

एतेषां मन्वंतराधिपानां ये वंशास्तान् वंश्यानां वंशजानामनुचरितानि हे मित्रात्मज मैत्रेय! भूमेरुपर्युपरिष्टादधोऽधस्ताच्च ये लोकाआसते तांश्च तेषांलोकानां संस्थामवयवविन्यासं प्रमाणंपरिमाणंच वर्णाय कथयेत्यर्थः ॥ २६ ॥

तिर्यगिति तिरश्चांपश्वादीनां मानुषाणां देवानां सरीसृपाणां सर्पादीनां पतत्रिणांच गार्भाणां जरायुजानां स्वेदानां स्वेदजानामंडजानामुद्भिज्जांच सर्गं संव्यूहं सर्ग विकल्पनं नोऽस्मभ्यंवद कथय ॥२७॥

गुणावतारै रज आदिगुणप्रधानैरावेशावतारै र्ब्रह्मादिभिः सृजतोजगद्व्यापारं कुर्वतः श्रीनिवासस्योदारविक्रमं उदारव्यापारमाचक्ष्व । कथंभूतमुदारविक्रमं विश्वस्यसर्गस्थित्यप्ययाश्रयं सर्गस्थितिसंहाराणामाश्रयं हेतुभूतंसर्गादयः आश्रयोविषयोयस्यर्तामतिवा २८

तथा रूप शीलस्वभावतः रूपंलिंगं शीलमाचारः स्वभावःशमादिः तृतीयार्थेतसिः । रूपादिभिः सहवर्णाश्रमविभागांश्चवर्णादीनां परस्पर विविक्तस्वरूपं चाख्याहीत्युत्तरेणान्वयःएवमग्रेऽपि । द्वितीयांतानां तेनैवान्वयः वेदस्य विकर्षणं व्यासं विभागमिति यावत् २९

यज्ञस्य वितानानि विस्तरांश्च योगस्यानभिसंहितकर्मयोगस्य पथःमार्गान्नैष्कर्म्यस्य प्रवृत्तिधर्मस्थागस्य सांख्यस्यज्ञानयोगस्यच वितानानि वेदेति वा यद्वाज्ञानयोगादीनां प्रतिपादकं यद्भगवतास्मृतं तंत्रंसात्वतं तंत्रम् ॥ ३० ॥

---

श्रीमद्विजयध्वज तीर्थकृतपदरत्नावली

आसते तिष्ठन्ति संस्थां व्यवस्थाम् ॥ २६ ॥

परीसृपाः सर्पादयः सहस्रपादादयो वा सर्गसंव्यूहं सृष्टिविस्तारं गर्भजस्वेदजोद्भिज्जामिति वा पाठः अस्मिन्पक्षे पुनरुक्तिर्नास्ति ॥ २७ ॥

ब्रह्मांतर्यामिणो विभूतीर्वदस्वेति उक्तं विशेषतः प्रार्थयते गुणावतारैरिति । सर्गस्थित्यप्ययात्मनो विश्वस्य जगतोर्ये सृजतःआत्मानमिति शेषः ज्ञानादिगुणयुक्तावतारैः सत्वादिगुणनिमित्तावतारै र्वा * "यदा यदा हि धर्मस्य ग्लानिर्भवति भारत। अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहमि„त्यादेर्वीर्यादिगुणप्रकाशैर्वा श्रीनिवासस्योदारविक्रमं प्रख्यातचरितं व्याचक्ष्वेत्यन्वयः । "उदारो महति ख्यात„ इत्यभिधानम् । सर्वस्मादिदं श्रीहरिचरितं विस्तृत्य वदेत्यतो व्याचक्ष्वेति श्रिया सह निवासोऽस्यास्तीति श्रीनिवासस्तस्य अनेन "द्वावेतौ नित्यमुक्ताविʺतिश्रुतिः सूच्यते श्रीर्निवसत्यस्मिन्निति वा । अतेरि च कारके संज्ञायाम् ॥ ३ ॥ ३ ॥ १६ ॥ इति घञ् ॥ २८ ॥

रूपतः शीलतः स्वभावतः विकर्षणं विभागं यज्ञस्य वितानानि विस्तारान् योगस्याष्टांगयोगस्य पथो मार्गान् ॥ २९ ॥

नैष्कर्म्यस्य सांख्यस्य मोक्षसाधनज्ञानस्य स्मृतं प्रणीतं तंत्रं शास्त्रं पाषंडपथवैषम्यं पाषंडमार्गोत्पत्तिविशेषं "गुणानां विषमावस्था संभवः परिकीर्तितः । साम्यं तु प्रलयो ज्ञेय इति तत्त्वविदो विदु„रिति वचनात् यद्वा पाषंडस्य पापलिंगस्य धर्मस्य सकाशाद्बुद्धिवैषम्यं प्रतिलोमनिवेशनं ब्राह्मणादिकन्यकानां क्षत्रियादिविवाहलक्षणम् ॥ ३० ॥

* यद्यपीदंप्रमाणंसृष्ट्यग्रेमहदादीनीतिश्लोकव्याख्यानएवउदाहर्तव्यं तथापिश्लोकचतुष्टयोकार्यसंमतित्वेनात्रोदाहृतामितिज्ञातव्यम्॥

श्रीमज्जीवगोस्वामि कृतक्रमसन्दर्भ

सर्गादीन् तेषामप्याश्रयं प्रजापत्यादिरूपञ्च सृजतः कुर्वतः ॥ १६ ॥

वर्णाश्रम इति सत्तकम् । भगवत्स्मृतं तन्त्रं पञ्चरात्राख्यम्। प्रतिलोम्नां सूतादीनां निवेशनं संस्थापनम् ॥ ३०—३६ ॥

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ॥

तेषां लोकानां संस्थां मर्यादां केषु लोकेषु केव्यवहाराइति प्रमाणं परिमाणं चकारात्तत्रत्यानामपि व्यवस्थामुडपर्यधो लोकानामेवपृष्टत्वात्प्रधानभूतंभूर्लोकंपृच्छति भूर्लोकस्येति ।भूर्लोकस्य संस्थां प्रमाणंचेत्यर्थः चकारादवांतरभेदानां जीवानां योनिभेदान्पृच्छति तिर्यगिति तिर्यङ्मानुष देवाः तामसराजससात्विकाः सरीसृपस्तत्पक्षिणोऽपि द्वितीयकक्षायां तामसादयःतेषां सर्गाणां सम्यग्व्यूहःसमूहः केकियंतः कुतउत्पन्ना इति चतुर्विधा अपिभूतभेदा वक्तव्या इत्याह गार्भेति गर्भेभवाः गार्भाः जरायुजाजरायुशब्देन वा गर्भ उच्यते स्वेदजा मशकादयः अंडजाः पतंगादयः उद्भिज्जाः वृक्षाः स्वेदजादीनां स्वेदत्वं मन्यमानःस्वेदादिशब्दैरेव तज्जान्पृच्छति ॥ २६ ॥ २७ ॥

गुणावतारैरिति ब्रह्मविष्णुमहेश्वरैः विश्वस्यसर्गउत्पत्तिः अप्ययोनाशः उत्पत्त्यादीनामाकृति भावंवा ब्रह्मांडरूपमाश्रमिति केचित् सृजतः श्रीनिवासस्येति मूलकारणं विष्णुरुक्तः श्रीनिवासस्येति ब्रह्मानन्दपूर्ण उक्तः तस्योदारविक्रमाः अवतारचरित्राणि प्रकीर्णकानामेतेषां प्रश्नानां भगवद्विभूतिनिर्देशार्थंकीर्तनम् ॥ २८ ॥

वर्णानां विभागश्चतुर्द्धा आश्रमाणां चाद्यानामपि रूपशीलस्वभावाः भिन्नतया वक्तव्याः रूपमाकृतिः शीलमाचारः स्वभावः तःकरणधर्मः ऋषीणां भृग्वादीनां जन्म उत्पत्तिप्रकारः कर्म मंत्रद्रष्टृत्वादि वेदस्य विकर्षणं शाखाभेदेन विभागः ॥ २६ ॥

यज्ञस्य स्वसप्तदशस्य वितानानि संस्थाभेदाः चकारात्तत्तत्राणां योगस्य पथो योगमार्गान्। चकारादंगानां प्रभो ! इति संबोधनं ज्ञानार्थं नैष्कर्म्यं निवृत्तिमार्गः सांख्यस्य तंत्रं सांख्यशास्त्रं भगवत्तंत्रं वैष्णवशास्त्रं स्मृतमिति स्मृतिष्विदमेव प्रमाणमिति सूचितम् ॥ ३० ॥

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

हे मित्रायाः आत्मज ! ॥ २६ ॥

संस्थां सन्निवेशम् संव्यूहं संविभागं।गार्भा जरायुजा मनुष्यादयः स्वेदात् अण्डाच्च द्वाभ्यांश्च जाताः । स्वेदजाः कृमिदंशाद्याः द्विजाः पक्षिणः उद्भिदस्तरुगुल्माद्यास्तेषाम् ॥ २७ ॥

सर्गादीनामाश्रयञ्च सृजतः ॥ २८ ॥

रूपं लिङ्गं शीलमाचारः स्वभावः शमादिस्तैर्विकर्षणं विभागम् ॥ २९ ॥

वितानानि विस्तारान् योगस्याष्टाङ्गस्य पथो मार्गान् नैष्कर्म्यस्य ज्ञानस्य तदुपायस्य सांख्यस्य च मार्गान् । भगवत्स्मृतं तन्त्रं नारदपञ्चरात्रम् । चार्थे वाकारः ॥ ३० ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

हेमित्रात्मज ! ॥ २६ ॥

सस्थां निवेशं सर्गसंव्यूहं सर्गविभागम् ॥ २७ ॥

विश्वस्य विश्वं सृजतः श्रीनिवासस्य विक्रमं व्याचक्ष्व कथं सर्गादयः आश्रयो विषयो यस्य तम् ॥ २८ ॥

पाखण्ड पथवैषम्यं प्रतिलोमानिवेशनम्।
जीवस्य गतयोयाश्च यावतीर्गुणकर्मजाः ॥ ३१ ॥
धर्मार्थकाममोक्षाणां निमित्तान्यविरोधतः।
वार्ताया दण्डनीतेश्च श्रुतस्यच विधिं पृथक्॥ ३२ ॥
श्राद्धस्य च विधिं ब्रह्मन्! पितॄणां सर्गमेवच।
ग्रहनक्षत्रताराणा कालावयवसंस्थितिम् ॥ ३३ ॥
दानस्य तपसोवापि यच्चेष्टापूर्तयोः फलम्।
प्रवासस्थस्य योधर्मोयश्च पुंस उतापदि ॥ ३४ ॥
येन वा भगवांस्तुष्येद्धर्मयेनिर्जनार्दनः।
संप्रसीदति वा येषामेतदाख्याहि चानघ? ॥ ३५ ॥

श्रीमच्छुकदेवकृत सिद्धांतप्रदीपः

रूपशीलविभागतः तृतीयार्थेतसिः रूपेण लिंगेन शीलेनाचारेण स्वभावेन शमादिना वर्णाश्रमविभागान्। एतदाख्याहीत्यग्रिमेणा न्वयः विकर्षणं विभागम् ॥ २९ ॥

यज्ञस्य कर्मकांडस्य वितानानि विस्तारान् योगयस्य पथः ध्यानयोगस्य मार्गान्। तथा नैष्कर्म्यस्य ज्ञानस्य पथः सांख्यस्य विष्णव वतारकपिलकृतस्य शास्त्रस्य पथः ॥ ३० ॥

भाषाटीका

हे मैत्रेय? इन सर्वोके वंश तथा वंशों के चरित्र और पृथिवीके ऊपरनीचे जो लोक स्थित हैं तिनकुं कहिये ॥ २६ ॥

इन लोकों की स्थिति तथा प्रमाण और पृथिवी का भी प्रमाण तिर्यक्योनि मनुष्य देवता सर्प पक्षि इनकी सृष्टि तथा जरायुसे एवं पसीना से पृथिवी मे वृक्षादि रूपसे होने वाले जीवोंकी सृष्टि को हमसे कहो ॥ २७ ॥

श्रीनिवास भगवान ने गुणों के द्वारा अवतारों को धारण करके उत्पत्ति स्थिति संहार का आश्रय जगत्को सृष्टि किया है उस उदार चरित्र को कहिये ॥ २८ ॥

रूप शील स्वभावों से वर्ण तथा आश्रमों के विभागों को तथा ऋषियों के जन्म कर्मादि को एवं वेद के विभागको कहिये ॥२९॥

हे प्रभो! यज्ञके विस्तार योगके मार्ग निष्कर्म ज्ञान सांख्य इन के विस्तार को कहिये और परम पवित्र तथा वेदों के तुल्य साक्षात् भगवान् का स्मरण (उपदेश) किया जो तंत्र पंचरात्र शास्त्र तिसका विस्तार कहिये ॥ ३० ॥

श्रीधरस्वामिकृत भावार्थदीपिका।

पाखंडानां पंथाः प्रवृत्तिस्तदेव वैषम्यम ॥ ३१ ॥
निमित्तान्युपायान् परस्पराविरोधेन ॥ ३२ ॥
ग्रहादीनां कालचक्रे संस्थितिम् ॥ ३३——३४ ॥
येन मार्गेण संतुष्येत् येषामिति याद्दशानाम् ॥ ३५ ॥

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी।

प्रतिलोमाः सूतवैदेहकादयस्तेषां निवेशनं प्रवृत्ति गतयो गतीः यावतीः यत्संख्याकाः ॥ ३१ ॥

वार्त्तायाः कृष्यादिचतुर्विधायाः श्रुतस्यशास्त्रश्रवणस्य विधिं प्रकारम् ॥ ३२ ॥ ३३ ॥ ३४ ॥

एतदिति सामान्ये न पुंसकम् तं मार्गं प्रसादहेतुमधिकारिविशेषणश्चेत्यर्थः ॥ ३५ ॥ ३६ ॥

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ॥

पाषंडानां वैदिकवहिःकृतानां पंथाः प्रवृत्तिः तस्यावैशम्यंप्रतिलोमनिवेशनं वर्णप्रतिलोमजानां प्रतिकल्पनं जीवस्य सत्वादिगुणकर्मजाः यागतयः फलानि ताश्च ॥ ३१ ॥

धर्मादीनामविरोधतः परस्पराविरोधेन निमित्तान्युपायान् वार्त्तायाः कृष्यादिव्यापारस्य दंडनीतेश्च दंडउपकारिलोकशिक्षा तद्विषयायानीतेन्यायस्य श्रुतस्य श्रुतिविहितस्य संध्योपासनादेश्च पृथक्प्रविभक्तंविधिम् ॥ ३२ ॥

हे ब्रह्मन्मैत्रेय? पितॄणामर्यमादीनांसर्गं ग्रहाः सूर्यादयोनवग्रहाः नक्षत्राण्यश्विन्यादीनि तारास्तदितरताराः तेषां कालावयवसंस्थितिकालावयव तावच्छेदकतयास्थितिम् ॥ ३३ ॥

दानस्य तपसः कृच्छ्रचांद्रायणादेः इष्टापूर्त्तयोः श्रौतस्मार्त्तकर्मणोश्च यत्फलं तदपि प्रवासस्थस्य देशान्तरगतस्य योऽनुष्ठेयोधर्मःतम उतापिचपुंसः आपदि विपदि यश्चानुष्ठेयोधर्मस्तंच ॥३४॥

धर्म प्रवर्त्तकोजनार्दनः जनानामंतरात्मा भगवान्येन मार्गेण तुष्येत् येषांयादशानां वा संप्रसीदति तदेतत्सर्वं मे मह्यमाख्याहिकथय हे अनघ मैत्रेय? ॥ ३५ ॥

श्रीमद्विजयध्वज तीर्थकृतपदरत्नावली

यावतीर्यावत्यः तावतीरिति शेषः सत्वादगुणकर्मभ्यो जाताः निमित्तानि साधनानि अविरोधतः परस्पराविरोधेन ॥ ३१ ॥

अनुव्रतानां शिष्याणां पुत्राणां च द्विजोत्तम ! ।
अनापृष्टमपि ब्रूयुर्गुरवो दीनवत्सलाः ॥ ३६ ॥
तत्त्वानां भगवंस्तेषां कतिधा प्रतिसंक्रमः ।
तत्रेमं क उपासीरन् क उस्विदनुशेरते ॥ ३७ ॥
पुरुषस्य च संस्थानं स्वरूपं वा परस्य च ।
ज्ञानं च नैगमं यत्तद्गुरुशिष्यप्रयोजनम् ॥ ३८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

वार्तायां वाणिज्यादेः दंडनीतेरर्थशास्त्रोक्तस्य राजधर्मस्य श्रुतस्य श्रुत्युक्तस्य विधिं प्रकारम् ॥ ३२ ॥

ग्रहाः सूर्यादयः नक्षत्राण्यश्विन्यादीनि तारा ध्रुवादयः कालावयवानां परमाण्वादीनां संस्थितिः इष्टं यागादि पूर्तं तडागखननादि ॥ ३३ ॥

धर्मात् पुण्यात् योनिराविर्भावलक्षणोत्पत्तिर्यस्य स तथा धर्मस्य योनिः कारणं लोकसंग्राहकत्वेन कर्तेत्यर्थः ॥ ३४—३५ ॥

———

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

सर्वेष्वपि शास्त्रेषु पाषंडमार्गवैषम्यं वक्तव्यं प्रतिलोमानां चांडालादीनां निवेशनं शास्त्रीययोगमुत्पत्तिं वा जीवस्य गतयःसंसारप्रकाराः स्वरूपतः प्रकारतश्च गुणतः कर्मतश्च वक्तव्याः ॥ ३१ ॥

चतुर्विधेषु पुरुषार्थेषु सर्वार्थानामन्याविरोधतोनिमित्तानिचवक्तव्यानि वार्तायां जीविकायाः अधिकारिभेदेन प्रकारो वक्तव्यः एवं दंडनीतेश्च राजधर्माणां विधिः प्रकारोवक्तव्यः श्रुतस्य वेदाध्ययनस्य चकारादंगानाम् अर्थज्ञानस्य वा पृथगधिकारिभेदेन शास्त्रस्यापि प्रकारो वक्तव्यः ॥ ३२ ॥

पितृणामपि सर्गो वक्तव्यः ग्रहनक्षत्रताराणां बुधाद्यश्विन्याद्यन्यनक्षत्राणां कालावयवे ज्योतिश्चक्रे सम्यक् स्थितिर्वक्तव्या।३३।

दानादीनां फलं वक्तव्यं विधानं च वापीखननादेः य एवभेदास्तथाभिप्रेतास्त एव वक्तव्या इति इष्टं यागादि अग्निसाध्यं पूर्तं खातादिमृजलसाध्यं प्रवासस्थस्य परदेशगतस्य यो धर्मः इति पूर्वोक्तोऽन्यो वा सको वा इति पुंसः आपदि यो धर्मः ॥ ३४ ॥

किंच येन वा प्रकारेण भगवांस्तुष्येत् धर्मकर्त्ता ज्ञानदश्च तोषस्तस्य स्वभावतः परितोषः। प्रसीदतीति वरदानार्थं संतोषेणाभिमुखोभवतियेषां वा अधिकारिणांभगवान्संतुष्यतीतिवक्तव्यम्अनघेति संबोधनं भगवदभिप्रायज्ञानार्थम् ॥ ३५ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ॥

पाषण्डपथान् पाषण्डमार्गतोहेतोर्यद्वैषम्यं प्रतिलोम्नां सूतादीनां निवेशनं संस्थानम् ॥ ३१ ॥

निमित्तान्युपायान् परस्पराविरोधेन वार्त्तायाः कृषिवाणिज्यादिशास्त्रस्य। दण्डनीतेरर्थशास्त्रस्य श्रुतस्य वेदशास्त्रस्य ॥ ३२ ॥

कालावयवे दिनरात्रिमासवर्षादौ संस्थितिं स्थितिम् ॥ ३३ ॥

एवं परावरेषां भगवन् व्रतानि श्रुतानीत्युक्तेर्व्यासमुखात् प्रायोज्ञातानामप्येषां ज्ञेयवस्तुमात्र एव नैरपेक्ष्यार्थं पुनर्मैत्रेयमुखादपि जिज्ञासां समाप्येदानीं स्वामीष्टं विविदिसितं पृच्छति येनेति । वा शब्दस्त्वर्थे धर्माणां सर्वेषां योनिः कारणं जनार्दनः। सकाममकामान् कामान् याचयन्नपीत्यर्थः। यद्वा। शुद्धभक्तप्रेमात्येनानुतापेन पीड्यन् येषां वेति क्रमेण तत्प्रसादस्य साधकिम्। तत्राधिकारिणश्च कीदृशास्तन्मे कथयेत्यर्थः ॥ ३४ ॥

स्वामीष्टमपि प्रष्टव्यमहं न जानाम्यतस्तत्र भवन्त एव कृपया कथयन्त्वित्याह अनुव्रतानामिति । चतुर्थ्यर्थे षष्ठ्यः ॥ ३५ ॥

———

श्रीमच्छुकदेवकृत सिद्धांतप्रदीपः।

पाखंडानां वेदबाह्यानामुपधर्माणां पंथाः प्रवृत्तिस्तदेव वैषम्य ॥ ३१ ॥

निमित्तान्युपायान् ॥ ३२ ॥

ग्रहादीनां कालावयवे कालचक्रे संस्थितिम् ॥ ३३ ॥ ३४ ॥ ३५ ॥

———

भाषाटीका

पाखंड मार्ग की विषमता प्रतिलोमजातियों का निवेश जीवों के गुणकर्मों से हुई जितने प्रकार की गति हैं सो कहो ॥ ३१ ॥

धर्म अर्थ काम मोक्ष इन चारों के परस्पर में विरोध के विना जो निमित्त हों तिनको कहो वैश्यों कि वाणिज्यादि वृत्ति तथा क्षत्रियों की राजधर्म नीति ब्राह्मणों का वेदाध्ययन की विधिको अलग २ कहिये ॥ ३२ ॥

हेब्रह्मन्! श्राद्धकी विधि तथा पितरों कीसृष्टि तथासूर्यादिग्रहोंके अश्विन्यादि नक्षत्रों कि सामान्य तारों कि ज्योतिः चक्र में स्थिति कहो ॥ ३३ ॥

दान का तपस्या का तथा यज्ञ का तडागादिकों काजो फल होता है प्रवास में रहने वाले का जो धर्म है आपत्ति में पुरुष का जो कर्तव्य धर्म हों सो कहिये ॥ ३४ ॥

अथवा सब धर्मों के प्रवर्तक भगवान् श्रीहरि जिस धर्म से संतुष्ट होंय और जैसे पुरुषों को संतुष्ट होते होंय हे अनघ निष्पाप यह सब आप मोसें कहिये ॥ ३५ ॥

———

श्रीधरस्वामिकृत भावार्थदीपिका ॥

अनापृष्टमप्यपृष्टमपि मद्योग्यंवक्तव्यमितिभावः ॥ ३६ ॥

प्रतिसंक्रमः प्रलयः तत्रप्रलये इमं परमेश्वरं शयानंराजानमिवचामरग्राहिणः। केवाऽनुशेरते शयानमनुस्वपंति ॥ ३७ ॥

पुरुषस्य संस्थानं जीवस्य तत्त्वम् परमेश्वरस्य स्वरूपम् येनांशेन योरैक्यम् तथाज्ञानंच नैगममौपनिषदम् ॥ ३८ ॥

निमित्तानि च तस्येह प्रोक्तान्यनघसूरिभिः ।
स्वतोज्ञानं कुतः पुंसां भक्तिर्वैराग्यमेव वा ॥ ३९ ॥
एतान्मे पृच्छतः प्रश्नान् हरेः कर्म*विवित्सया ।
ब्रूहिमेऽज्ञस्य मित्रत्वादजया नष्टचक्षुषः ॥ ४० ॥
सर्वे वेदाश्च यज्ञाश्च तपोदानानि चानघ ।
जीवाभयप्रदानस्य न कुर्वीरन् कलामपि॥४१॥

श्रीशुकउवाच

स इत्थमापृष्टपुराणकल्पःकुरुप्रधानेन मुनिप्रधानः ।
प्रवृद्धहर्षोभगवत्कथायां संचोदितस्तंप्रहसन्निवाह॥४२॥

इति श्रीमद्भागवते महापुराणे तृतीयेस्कन्धे
पारमहंस्यां संहितायां वैयासिक्यां विदुर प्रश्नोनाम
सप्तमोऽध्यायः ॥ ७ ॥

———:*:———

श्रीधरस्वामिकृत भावार्थदीपिका

यानि सूरिभिः प्रोक्तानि तस्य ज्ञानस्य साधनानि तानिच ब्रूहि। गुरुंविनैतन्नभवतीति स्वतइति ॥ ३९ ॥

मे प्रश्नान्मेमित्रत्वात्स्निग्धत्वादित्यन्वयभेदान्नमेपदस्य पौनरुक्त्यम् ॥ ४० ॥

तत्त्वोपदेशेन जीवाभयप्रदानस्य ॥ ४१ ॥

पुराणे कल्पते प्रकाशते इति पुराणकल्पोबुभुत्सितोऽर्थ आपृष्टःपुराणकल्पोऽयं स मुनिप्रधानः ॥ ४२ ॥

इति श्रीमद्भागवतेमहापुराणे तृतीयस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
सप्तमोऽध्यायः ॥ ७ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपन्याख्या दीपिका टिप्पणी ॥

चामरग्राहिण इति पपदानां नित्यत्वमभिप्रेतम् तदुक्तं काशीखण्डे "नच्यवन्तेऽपि यद्भक्ता महत्यां प्रलयापदि। अतोऽच्युतोखिले लोके स एकः सर्वगोऽव्ययः । इति स्वपन्ति लीनास्तिष्ठन्ति ॥ ३७ ॥

पुरुषस्येति सार्द्धकम् तत्त्वं यथावत्स्वरूपं येन चिंदशेन साधनानि शमादीनि ज्ञानमित्यर्थकम् यत्तत्ज्ञानादिकम् ॥३८॥३९॥४०॥४१॥ तं प्रति ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे
दीपिन्याख्य दीपिका टिप्पण्याम्
सप्तमोऽध्यायः ॥७॥

———

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ॥

तस्यांतरा पृष्टप्रतिवचनौत्सुक्यमापादयन्नन्यदपि पृच्छति । अनुव्रतानामित्यादिना हे द्विजोत्तम ! मैत्रेय ! अनुव्रतानां सेवमानानां शिष्याणां पुत्राणां चाऽनापृष्टमपिब्रूयुः चोंहतौ यतोगुरवोदीनवत्सलाः दीनजनेषु वात्सल्यवंतः पुत्राणामितिदृष्टांतार्थं यथापुत्रेभ्योऽपृष्टमपि ब्रूयुस्तथा शिष्येभ्योऽपीत्यर्थः अपृष्टोऽपि रहस्यार्थः कश्चिदस्ति चेत्सोऽपि वक्तव्य इत्यर्थः ॥ ३६ ॥

हे भगवन्मैत्रेय ! तत्त्वानां पृथिव्यादीनां प्रतिसंक्रमःप्रलयः कतिधा कतिप्रकारः किं पृथिव्यादीनि सर्वाणि संहत्य स्वपरमकारणे लीयंते उतोत्तरोत्तरेषां पूर्वपूर्वस्मिन् लयःउतोभयविधोऽपीत्यादि संशयानां प्रवृत्तेः कतिधेत्युक्तिः तत्र प्रलये इमं परमात्मानं के उपासीरन्ननुपसंहृताः सेवंते मुक्ता इत्यर्थः क उस्वित्केचाऽनुशेरते उपसंह्रियंते इत्यर्थः ॥ ३७ ॥

पुरुषस्य जीवस्य संस्थानं स्वासाधारणप्रकारं स्वरूपं धर्मि स्वरूपंच तथा परस्यपरमात्मनःसंस्थानं स्वरूपं ज्ञानं च नैगमं शास्त्रजन्यंच कथंभूतं यद्गुरुशिष्ययोः प्रयोजनं प्रयोजनभूतं ज्ञानम् ॥ ३८ ॥

तस्य ज्ञानस्य निमित्तानि साधनानि यानि सूरिभिः प्रोक्तानि तानिच हे अनघ ! ब्रूहीत्यर्थः गुरूपदेशमन्तरेण सर्वमेतन्नसंपत्स्यतइत्याह । स्वतः इति स्वतोगुरूपदेशमन्तरा पुंसां ज्ञानं शास्त्रजन्यंज्ञानं ततोभक्तिःततोवैराग्यञ्च कुतः स्यात् ॥ ३९ ॥

ज्ञानभक्तिवैराग्यादेर्गुरूपदेशमन्तरेणासंपत्तेर्हरेः कर्मविवित्सया भगवद्विचेष्टितबुभुत्सयैतान्प्रश्नान्प्रश्नविषयानर्थान्पृच्छतः अजया प्रकृत्या नष्टचक्षुषःहृतज्ञानस्यात एवांधस्यमे मह्यं ब्रूहीत्यन्वयभेदान्नमे पदस्य पौनरुक्त्यम् ॥ ४० ॥

भवभयभीतस्य तत्त्वोपदेशेनाभयप्रदानान्नोत्तमोधर्मोस्तीत्याह सर्वइति। वेदाः वेदाध्ययनाध्यापनार्थज्ञानानि वेदशब्देन विवक्षितानि यज्ञादयोवेदार्थानुष्ठानरूपाः यज्ञाः पञ्चमहायज्ञादयः तपोऽनशनादि-

* विधित्सयाइतिश्रीवल्लभाचार्यपाठः ।

(४३)

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

ज्ञानमुपासनम् एतानि सर्वाणि जीवाभयप्रदानस्य जीवस्य संसारनिवृत्त्युपायोपदेशरूपाभयप्रदानधर्मस्य कलामपि मात्रामपि न कुर्वीरन् ४१ ॥

विदुरकृतप्रश्नानुपसंहरंस्तेषामुत्तरप्रदानाय मैत्रेयः प्रारभते इत्याह श्रीशुकःसइति । इत्थंपूर्वोक्तप्रकारेण आपृष्टपुराणकल्पः कल्प्यत इति कल्पः पुराणार्थःमंत्रकल्प इतिवद्रहस्यप्रकाशकतया कल्प-इत्युक्तम् आपृष्टःआसमंतात्पृष्टः पुराणकल्पोयस्य सः मुनिप्रधानः मुनिश्रेष्ठोमैत्रेयः कुरुप्रधानेन विदुरेण भगवत्कथायां संचोदितः अत एव प्रवृद्धहर्षः उत्कटहर्षः प्रहसन्निव प्रश्नानां सुंदरत्वात्सुखेनोत्तरयितुं शक्यत्वाच्च हसन्निव तं प्रत्याहेत्यर्थःअत्रेदंज्ञेयं तावद्राजप्रश्नानां विदुरप्रश्नानां चैकरूप्यं प्रतीयते उभयत्रोभयेषां प्रत्यभिज्ञानात् अप्रत्यभिज्ञातास्तूपलक्षणतया युक्ताः अत्रैषां केषां चित्प्रश्नानां मैत्रेयोक्तान्येवोत्तराणि तृतीयतुरीयाभ्यां स्कन्धाभ्यामाहवैयासकिःअन्येषान्तुस्वयमेव तत्तदाख्यानप्रवर्त्तनेनोपरितनैःस्कन्धैराचचक्षे मैत्रेयस्यकात्स्न्र्येन प्रश्नानामुत्तरानभिधानंतु विदुरस्य महात्मनोभगवद्धर्मप्रवर्त्तकस्योत्तरितप्रश्नैरेव बुभुत्सायाः शान्तत्वादुपपद्यत इति अलमति विस्तरेण ॥ ४२ ॥

इतिश्रीमद्भागवतेमहापुराणे तृतीयस्कन्धे
श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिकाटीकायां
सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीमद्विजयध्वजीर्थकृत पदरत्नावली ॥

प्रतिसंक्रमः प्रलयः ॥ ३६ ॥

तत्र प्रलये इमं हरिम् उना हृत्तापं सूचयति । प्रश्नप्रवचनपर्यंतं सोऽस्तीति "उतापे व्ययमीशाने" इति यादवः चेत्यस्मिन्नर्थे वा पुरुषस्यावतारसंस्थानं परस्य परमात्मनः स्वरूपम् अवतारेष्वपि निजावतारः क इत्यर्थः यद्वा पुरुषस्य जीवस्य एकत्वादिविषयं परस्य मुक्तस्य-स्वरूपं "मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थिति"रितिवक्ष्यति॥३७॥

गुरुशिष्ययोः प्रयोजनं व्याख्यानश्रवणाभ्यां नैशित्यनिश्चयलक्षणं यद्वा गुरुशिष्यौ प्रयोजयतीति वा नैगमं वेदांतजन्यं ज्ञानम् इह शास्त्रे तस्य ज्ञानस्योपायनिमित्तानि साधनानि तान्यपि ॥ ३८ ॥

पुंसां स्वतः साधनानि विना ज्ञानं कुतो भवेद् भक्तिर्वैराग्यं वा कुतः स्यातामिति शेषः ॥ ३९ ॥

कर्मविचिकित्सया वेत्तुमिच्छया पृच्छत इति शेषः वक्तव्यत्वे निमित्तमाह मित्रत्वादिति । "आपत्सु मित्रं जानीया"दिति वचनात् का तवआपदिति तत्राह अजयेति । अजया प्रकृत्या पुरुषस्यांधत्वाद्धिकापन्नास्तीत्यर्थः अंधकारेण नष्टचक्षुःशक्तेः पुंसो यथा मित्रः सूर्यः प्रयोजकः तथा त्वमपीति भावेनोक्तं मित्रत्वादिति ॥ ४० ॥

त्वदभीप्सिते कुत एवमेव वक्तव्यमन्यत्किं न स्यादत्राह सर्वं इति । जीवाभयहेतुज्ञानप्रदानस्य कलां षोडशांशम् अपिना वेदादिज्ञातृप्रयोक्तृपुरुषमंतरेणेति सूचयति ॥ ४१ ॥

शुक प्रश्नेन मैत्रेयेण पृष्टमेवोक्तमन्यद्वेति परीक्षितो हार्दां शंकां परिहरात स इत्थमिति । प्रश्नाख्यपुराणविषयः कल्पः विकल्पः "कल्पो न्याये सुरद्रुमे । विकल्पे चे"तियादवःबालकथाप्रश्नवद्धीकथैव सारभूता न भगवत्कथा पृष्टेति मंदाशंकां परिहरति भगवत्कथाया मिति । अनेन सर्वेऽपि प्रश्ना भगवत्कथाविषया इति सूचितं भवति ॥ ४२ ॥

इतिश्रीमद्भागवतेमहापुराणे तृतीयस्कन्धे
श्रीमद्विजयध्वजतीर्थकृत पदरत्नावल्याम्
सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

तत्त्वानामिति । तत्र तेषु प्रलयेषु प्रकृतिपर्य्यन्तेषु । अनेन पार्षदानां नित्यत्वमेवाभिप्रेतम् । तदुक्तं काशीखण्डे । "न च्यवन्ते हि यद्भक्ता महत्यां प्रलयापदि । अतोऽच्युतोऽखिले लोके स एकः सर्व्वगोऽव्यय"इति अनुशेरते लीनास्तिष्ठन्ति ॥ ३७ ॥

पुरुषस्येति सार्द्धकम् । पुरुषस्य प्रकृत्यादिद्रष्टुः संस्थानं सहस्रशीर्षेत्यादिरूपं ततः परस्य श्रीभगवतश्च ज्ञानं विचाररूपम् ॥ ३८॥

स्वत इत्यर्द्धकम् ॥ ३९ ॥ ४० ॥

जीवानामितस्ततोभीतानां किमुत संसारभीतानामभयप्रदानस्येत्यर्थः ॥ ४१ ॥

आपृष्टः पुराणकल्पो यत्र सः ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
सप्तमोऽध्यायः ॥ ७ ॥

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ॥

अपृष्टमपि वक्तव्यमित्याह अनुव्रतानामिति । न हि गुह्यं वालाः प्रतिजानन्ति अनुव्रतं येषां गुरोरिच्छानुवर्तिनां शिष्याणां शेषभावं प्राप्तानां ज्ञानार्थिनां वा पुत्राणां चेति दृष्टांतार्थं द्विजोत्तमेति संबोधनम् तव पित्रादिभिर्यथा भवान् शिक्षितः एवं मां शिक्षयेदिति ज्ञापनार्थं अनापृष्टमपि ब्रूयुरिति वचने सदाचारः प्रमाणं तदपि नवक्तव्य किंतु दयया तदाह दीनवत्सला इति ॥ ३६ ॥

प्रलयं भिन्नतया पृच्छति । तत्त्वानामेषां कतिधा प्रतिसंक्रमः प्रलयश्च तुर्विधादिभेदाः शास्त्रेषु बहुधा सिद्धा इति । किं च तत्र प्रलये इमं भगवंतं के उपासीरन् के वा अनुशेरते लीना भवंति जीवदेहतत्त्वानां मध्ये पुरुषस्य विराजः चकारादन्येषां संस्था नाशःस्वरूपं च वक्तव्यं चकारात्संस्थानविशेषोऽपि क्रियादि भेदा अपरस्य च व्यष्टीनां च ज्ञानं वक्तव्यं चकाराद्वैराग्यं च नैगमं वेदोक्तं गुरुशिष्याणां चावश्यकत्वे प्रयोजनं वक्तव्यं निमित्तानि च वक्तव्यानि तस्य ज्ञानस्येहास्मिन्देहे एवं प्रकारे वा चकाराद्बाधकानि च सूरिभिः प्रोक्तानीति परंपरया सिद्धानि ॥ ३७ ॥ ३८ ॥

अन्येषां तु पाक्षिकत्वं गुर्वाद्यभावे स्वतो वा ज्ञानं कथं भवति स उपायोवक्तव्यः तथा स्वतो भक्तिःवैराग्यं च ३९

नन्वेते पदार्थाः अनुपयुक्ताः किमिति पृच्छ्यन्ते इत्याशंक्याह एतान्म इति । एतान्प्रश्नान्मे मम ब्रूहि वचने हेतु हरेःकर्मविधित्सया पृच्छतः भगवतः कर्माणि मनसा विधातव्यानि चिंतनीयानि विशेषेण ध्यातव्यानि वा हृदये स्थापनीयानि मेऽज्ञस्य मित्रत्वादिति [illegible] वाक्यं त्वं यद्यपि सर्वेषां मित्रः तथापि त्वन्मैत्री तेषां नोपयुज्यत इति मदर्थमेव मित्रो भवत्याह । अजया नष्टचक्षुषः मे अज्ञस्य मित्रत्व दुब्रूहीति संबंधः । मोहिन्या मायया मम ज्ञानं नष्टमिति दैन्यम् ॥४०॥

### श्रीमद्वल्लभाचार्यकृत सुबोधिनी

सर्वदानापेक्षया ज्ञानदानमुत्तममिति वक्तुं ज्ञानेन जीवस्य भयं गच्छतीति फलतो ज्ञानं स्तौति सर्वे वेदा इति । सर्वे वेदा अधीता अध्यापिताश्च यज्ञाः कृताः कारिताश्च तपोदानानि चकाराद्यमनियमादीनि। अनघेति संबोधनं कार्यसंमत्यर्थं जीवाभयप्रदानस्य ज्ञानस्य कलयापि यत्फलं भवति तत्सर्वेऽपिमिलित्वाकर्तुं न शक्नुवंतीत्यर्थः॥ ४१ एवमनेकविध प्रश्नेषु मैत्रेयस्योत्तरदानार्थं संमतिरस्ति न वेति संदेहे सर्वेषां प्रश्नानां भगवच्चरित्रपरत्वं वर्तते इति महानेव हर्षस्तस्य जातइत्याह स इत्थमिति । आसमंतात्पृष्टः पुराणकल्पो येन पुराणं कल्पयतीत्येतेषामुत्तराणि निरूपितानि भवंतीत्यर्थः वक्तृश्रोत्रोरुत्कर्षमाह कुरुप्रधानेन मुनिप्रधानः संचोदितः प्रवृद्धहर्षः भगवत्कथायाःवक्तव्यत्वात्तदेवाहभगवत्कथायामिति सम्यक्प्रेरणं सपरिकर प्रश्नात् प्रहसन्निवेति सुखप्रसादःपुराणकथनप्रसंगव्याप्त्या वाक्याभिनंदनपूर्वकमाहेत्यर्थः । एवं भगवतः संकल्पविकल्पात्मकं मनो निरूपितम् ४२

इति श्रीमल्लक्ष्मणभट्टात्मजश्रीवल्लभदीक्षित विरचितायां
तृतीयस्कंधसुबोधिन्यां सप्तमोऽध्यायः ॥७॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

साधनभक्तिं पृष्ट्वा साध्यभक्तेर्नित्यत्वे विप्रतिपत्तिं निरस्यन् प्रलयं पृच्छति तत्त्वानामिति प्रतिसंक्रमः प्रलयः । तत्र प्रलये इमं परमेश्वरं शयानं राजानमिव चामरग्राहिणः के उपासीरन् के वा अनुशेरते शयानमनुस्वपन्तीति श्रीस्वामिचरणास्तेन भगवत्पार्षदानां तद्भक्तेस्तल्लोकस्य च नित्यत्वमभिप्रेतम् । अतएव न च्यवन्ते चं यद्भक्ता महत्यां प्रलयापदीति प्रसिद्धं काशीखण्डवचनम् ॥३६ ॥३७॥

उपासकस्य पुरुषस्य संस्थानं सम्यक्प्रकारेण कीदृशी स्थितिस्तत्त्वं वा । तथा उपास्यस्य परस्य परमेश्वरस्य च स्वरूपम् । तथा उपासनायाश्च ज्ञानं नैगमं निगमोक्तं यद्गुरुशिष्ययोः प्रयोजनं मत्तः सकाशात् शिष्योऽयं जानातु गुरुतः सकाशादहं भक्तिं जानीयामित्येतल्लक्षणम् । तस्य निमित्तानि सत्सङ्गादीनि ॥ ३८ ॥

अनघसूरिभिर्निरपराधविज्ञभक्तैः गुरुं विनैतत्र भवतीत्याह स्वत इति ॥ ३९ ॥

ननु तर्हि नानाविधाः प्रश्ना एतावन्तः कथं कृतास्तत्राह । हरेः कर्म्म परिचर्य्यादिकं तस्य विवित्सया प्राप्तीच्छयाएव एतान्मम प्रश्नान् ब्रूहि सर्व्वजिज्ञासितासिद्धौ सत्यामेव भगवत्परिचर्य्यायां मनोऽन्यनिरपेक्षमेकाग्रं भवति मनस ऐकाग्र्ये सत्येव तत्प्राप्तिरिति भावः । मे मह्यं मासुद्वर्त्तुमिति मे पदस्य पौनरुक्त्यं न शङ्क्यम् । मित्रत्वादिति मित्रायाः पुत्त्रस्त्वमपि मित्रमेव सर्व्वजगतामिति भावः ॥ ४० ॥

न केवलमिदं मदुद्धारार्थमेव अपितु भवतोऽपि पुण्ययशो लाभार्थमित्याह सर्व्वे इति ॥ ४१ ॥

पुराणेषु पुराणतात्पर्य्येषु कल्पते व्याख्यानसमर्थो भवतीति पुराणकल्पः । आपृष्टश्चासौ पुराणकल्पश्चेति सः । प्रहसन्निवेति वस्तुतस्तु हर्षोत्थस्मितविशिष्ट इत्यर्थः ॥ ४२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
तृतीयेसप्तमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥

### श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

शिष्याणां शिष्येभ्यः पुत्राणां पुत्रेभ्यः अनापृष्टमपि ब्रूयुः यतो दीनवत्सलाः अनेन यत्प्रष्टुं मम शक्तिर्न तदपि हितं चेन्मह्यं ब्रूहीति सूचितम् ॥ ३६ ॥

तत्त्वानां प्राकृतानां प्रतिसंक्रमः कतिधा कति प्रकारः तत्र प्रलये सति एनं भगवंतम् क उपासीरन् मुक्ता संतः सेवंते के उस्वित् के वा अनुशेरते उपसंह्रियंते इत्यर्थः ॥ ३७ ॥

पुरुषस्य जीवस्य परस्य परमेश्वरस्य च संस्थानं परिमाणं स्वरूपं च गुरुशिष्ययोः प्रयोजनभूतं नैगममौपनिषदमात्मपरमात्मविषयकं ज्ञानम् तस्य ज्ञानस्य निमित्तानि साधनानि च ब्रूहि ॥३८॥

ज्ञानं ततो भक्तिः ततो वैराग्यं स्वतः कुतः स्यात् किं तु गुरूपदेशत एव स्यादतः हरेः कर्मविवित्सया पृच्छतः मे प्रश्नान् प्रष्टव्यान् अर्थान् मे मित्रत्वात् हितकारित्वात् ब्रूहि ॥ ३९ ॥ ४० ॥ ४१ ॥

पुराणे कल्पते प्रकाशते इति पुराणकल्पो बुभुत्सितोर्थः आपृष्टः पुराणकल्पोऽयं स तथा मुनिषु प्रधानः ॥ ४२ ॥

इतिश्रीमद्भागवतेमहापुराणे सिद्धांतप्रदीपेतृतीयस्कन्धीये
सप्तमाध्यायार्थप्रकाशः ॥ ७ ॥

---

### भाषाटीका ॥

हे द्विजोत्तम !आज्ञाकारी शिष्य तथा पुत्र इनकोंतो विना पूछने परभी कहना चाहिये क्योंकि गुरु लोग दीनोंपर दयालु होतेहैं ३६

हे भगवन् ! उन तत्त्वोंमें कितने प्रकार का प्रलय होता है उस प्रलयमें इस परमात्माकों कौनतो उपासना करते हैं कौन लीन हो रहते हैं ॥ ३७ ॥

जीवकी स्थिति तथा परमात्मा का स्वरूप वैदिक ज्ञान जो कहा है तथा गुरु शिष्यका प्रयोजन कहिये ॥ ३८ ॥

और उसके निमित्त जो इहां निष्पाप महात्माओंने कहेहों पुरुषों को स्वयं ज्ञान कहां से होसकै भक्ति वैराग्य कहांसे होसकै ३९

हरिके कर्मकी जाननेकी इच्छासे मैं जो इन प्रश्नोंको पूछता हूं सो मेरे से मित्रहोनसे कहिये क्योंकि मै मायासे नष्ट ज्ञान हुआ हूं अज्ञहुं ॥ ४० ॥

हे अनघ! सब वेद यज्ञ तप दान जितने हैं सोजीवके अभय प्रदानके पुण्य का कलामात्र भी उपकार नहीं कर सकतेहैं ॥ ४१ ॥

शुकदेवजी बोले कौरवों में प्रधान विदुरके पूछने पर मुनियों में प्रधान पुराणों के कथन में समर्थ मैत्रेयजी हरि कथा में प्रेरित होनेपर हर्षित होकर हसते हुये विदुरजी से बोले ॥ ४२ ॥

इति श्रीमद्भागवत तृतीयस्कन्ध का
सप्तम अध्याय समाप्त हुआ ॥ ७ ॥

---

## अष्टमोऽध्यायः ।

मैत्रेयउवाच ।

सत्सेवनीयोवत पूरुवंशोयल्लोकपालोभगवत्प्रधानः ।
बभूविथेहाजितकीर्तिमालां पदे पदे नूतनयस्यभीक्ष्णम् ॥ १॥
सोऽहं नृणां क्षुल्लसुखाय दुःखं महद्गतानां विरमाय तस्य ।
प्रवर्तये भागवतं पुराणं यदाह साक्षाद्भगवानृषिभ्यः ॥ २ ॥
आसीनमुर्व्यां भगवन्तमाद्यं संकर्षणं देवमकुण्ठसत्त्वम् ।
विवित्सवस्तत्त्वमतः परस्य कुमारमुख्या मुनयोऽन्वपृच्छन् ॥ ३ ॥
स्वमेव धिष्ण्यं बहुमानयन्तं यं वासुदेवाभिधमामनन्ति ।
प्रत्यग्धृताक्षाम्बुजकोशमीषदुन्मीलयन्तं विबुधोदयाय ॥ ४ ॥
स्वर्धुन्युदार्द्रैः स्वजटाकलापैरुपस्पृशन्तश्चरणोपधानम् ।
पद्मं यदर्चन्त्यहिराजकन्याः सप्रेम नानाबलिभिर्वरार्थाः ॥५॥

श्रीधरस्वामिकृत भावार्थदीपिका ॥

अष्टमे समभूद्ब्रह्मा नाभेस्तुजलशायिनः ॥
तमजानन् जले विश्यत्तपसाऽतोपयद्विभुम् ॥ १ ॥

श्रोतारमभिनन्दति सतां सेवितुंयोग्यः बतअहो यद्यस्मादिहास्मिन्वंशे लोकपालोधर्मराजस्त्वं बभूविथ जातोऽसि कथंभूतः भगवानेव प्रधानभूतोयस्य सः अत्र हेतुः अजितेति प्रतिक्षणं नूतनयासि नवीनां करोषि ॥ १ ॥

अल्पसुखाय महद्दुःखं प्राप्तानां तस्य दुःखस्यविरमाय प्रवर्तये आरभे ॥ २ ॥

कोऽसौ भगवान्केभ्यश्चर्षिभ्यआह कथंचत्वयाप्राप्तमित्यपेक्षाया माह आसीनमितिसप्तभिः उर्व्यां पातालतले अकुण्ठसत्त्वमप्रतिहतज्ञानम् अतःसंकर्षणात्परस्य श्रीवासुदेवस्य ॥ ३ ॥

तमेव विशिनष्टि स्वमेव धिष्ण्यं स्त्रीयमाश्रयं वासुदेवसंज्ञं परमानन्दरूपं ध्यानपथंऽनुभूय बहुमानयन्तंसर्वोत्कर्षेण पूजयंतम् प्रत्यग्धृतमंत मुखीकृतं नेत्राम्बुजमुकुलं किंचिदुन्मीलयन्तम् कृपावलोकेन सनत्कुमारादीनामभ्युदयार्थम् ॥ ४ ॥

मुनीनां विशेषणं सार्धेन स्वर्धुन्याउदकेनार्द्रैरिति श्रीभागवतश्रवणार्थिसत्यलोकात्पातालं प्रत्यवतरन्तोनिरन्तरंगंगामध्यत एवावतीर्णा

श्रीधरस्वामिकृत भावार्थदीपिका ।

इतिभावः चरणावुपधीयेते यस्मिन्पद्मेतदुपस्पृशन्तोनमन्तः कथं तदाह यत्पद्मं प्रेमसहितं यथा भवत्येवं नानोपहारैः पूजयन्ति वरार्थाः पतिकामाः ॥ ५ ॥

श्रीराधारमणदास गोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी

प्रधानभूतो मुख्यसेव्यस्वरूपः अत्र भगवत्प्रधानत्वे ॥ १ ॥
य इत्थं त्वया पृष्टः सोऽहमित्यन्वयः यत्पुराणम् ऋषिभ्यस्संक...
दिभ्यः ॥ २ ॥

आसीनमिति चतुष्कम् संकर्षणात्परस्येत्युक्त्या मूल एवांशां... भावो विवंचित इति सर्वावताराऽवतारिसाम्यं व्याचक्षाणा प्र... ज्ञेयाः ॥ ३ ॥

तमेव संकर्षणमेव आश्रयमंशिनं पूजयन्तमिति तत्रापि से... सेवकभावो विवक्षितः अभ्युदयार्थं ब्रह्मानन्दतोऽपि परमानन्द... त्कर्षार्थम् ॥ ४ ॥

स्वर्धुनीति सार्द्धकम् अस्य संकर्षणस्य कृतानि चरित...
॥ ५ ॥

### श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका

एवम् भगवत्कथायां क्षत्त्रा प्रवर्त्तितो मैत्रेयः तत्कृतप्रश्नानां उत्तराण्यभिधास्यमानः प्रथमं भगवन्नाभेः ब्रह्मण उत्पत्तिं भगवन्तमजानंतस्तस्यैव जले विश्यतस्तपसा भगवत्तोषणं चाष्टमेनाध्यायेनाह तत्र भगवत्कथायां प्रवर्त्तयितारं श्रोतारं वक्तारमभिनन्दति सत्सेवनीय इति वताहो पूरुपवंशः सत्सेवनीयः सद्भिः सम्माननीयः यद्यस्माद्भगवत्प्रधानः भगवानेव प्राप्यतयोपायतया च प्रधानो यस्य सः लोकपाल: धर्मराजांशभूतत्वाद्विदुरो लोकपाल इत्युच्यते एवम्भूतस्त्वम् इह पूरुवंशे बभूविथ उत्पन्नोऽसूः अतः सत्सेवनीय इत्यर्थः भगवत्प्राधान्यमेव विशदयति अजितः परमपुरुषः तस्य कीर्त्तीनां यशसां या माला पंक्तिस्तां पदे पदे पुनः पुनरभीक्ष्णं भृशं नूतनयसि नवां करोषि ॥ १ ॥

एवमभिनंद्य त्वत्कृतप्रश्नानां केवलमस्मद्बुद्धिगोचरैरेवोत्तरयाम्यपि तु सत्संप्रदायादागतश्रीभागवताख्यामेनैवेत्याह सोऽहमिति। स भवता पृष्टः अहं सदाचार्यश्रीपराशरकृपया परावरतत्त्वदर्शी भगवत्कृतप्रश्नोत्तरविवक्षया भागवताख्यं पुराणं प्रवर्त्तये प्रवर्तनाफलमाह। क्षुल्लसुखायाल्पसुखायाल्पसुखसंपादनार्थं महदधिकं दुःखं गतानां प्राप्तानां लोकानां तस्य महतो दुःखस्य विरमायनाशाय अनेन लोकोज्जिज्ञीविषयैवायं सम्वादः प्रवृत्त इत्युपगम्यते उभयोरपि बहुज्ञत्वेन प्रष्टव्यवक्तव्यांतराभावात् कथंभूतं पुराणं यद्भागवतं पुराणं भगवान्संकर्षणः ऋषिभ्यः सनकादिभ्यः साक्षादाह तथा भूतमित्यर्थः द्वेधा हि भागवतसम्प्रदायः एकं हि भागवतं भगवंतमारभ्य चतुर्मुखनारदकृष्णद्वैपायनपर्यंतं चतुःश्लोकीरूपेण प्रवृत्तं तदेव व्यासेन विवृतं दशलक्षणं श्रीशुकेनाधीतं राज्ञे उपादिष्टमष्टादशसहस्रात्मकम् अपरं तु भागवतं संकर्षणमारभ्य सनत्कुमारसांख्यायनपराशरमैत्रेयपर्यंतपरंपरया चतुःश्लोकीरूपेणैव प्रवृत्तं मैत्रेयेण विवृतं विदुरायोपादिष्टं च तदेव द्वैपायनः स्कन्धद्वयात्मना विस्तरिष्यमाणोऽतोऽन्यद्द्वादशस्कंधात्मकं पुराणं चक्रइति बोध्यम् ॥ २ ॥

अस्य सांकर्षणभागवतस्य संकर्षणप्रभृतिस्वपर्यंतसत्संप्रदायप्रवृत्तिमभिधास्यमानः सनकादीनां विधिवत्संकर्षणोपसत्तिमाह चतुर्भिः। आसीनमिति। उर्व्यां पातालतले आसीनम् उपविष्टं भगवंतमाद्यमकुण्ठसत्त्वं रजस्तमोभ्यामप्रतिहतं सत्त्वं यस्य तं शुद्धसत्त्वमयं दिव्यमङ्गलविग्रहविशिष्टमित्यर्थः एवम्भूतं संकर्षणं देवं कुमारमुख्याः सनत्कुमारप्रभृतयः चत्वारो मुनयः अन्वपृच्छन्विधिवदुपसंगम्यानुपृष्टवंतः कथंभूता मुनयः अतः चेतनाचेतनात्मकजगतः परस्य विलक्षणस्य परमात्मनस्तत्त्वं याथात्म्यं विवित्सवः वेत्तुमिच्छवः ॥ ३ ॥

तमेव संकर्षणं विशिनष्टि स्वमिति यं वासुदेवाभिधं वासुदेवशब्दवाच्यमामनंति तं स्वधिष्ण्यं स्वावासभूतं स्वकारणं भगवंतम् इत्यर्थः बहुमानयंतं सर्वोत्कर्षेण पूजयंतं प्रत्यग्धृताक्षांबुजकोशं प्रत्यगात्मन्यभिमुखेन निमित्तेन धृतं मुकुलितं यन्नेत्राम्बुजकोशं तद्विबुधोदयाय विदुषामभ्युदयायेषदल्पम् उन्मीलयंतमन्वपृच्छन्निति पूर्वेणान्वयः ॥ ४ ॥

मुनीन् विशिनष्टि सार्द्धेन स्वर्धुनीति। स्वर्धुन्या गंगाया उदकेनार्द्रैः स्वजटाकलापैः श्रीभागवतश्रवणार्थं सत्यलोकात्पातालमवतरन्तो निरंतरं गंगामध्यत एवावतीर्णा इति तत्स्नानेनार्द्रजटाकलापा इति भावः एवंम्भूतैर्जटाकलापैश्चरणोपधानं चरणावुपधीयेतेऽस्मिन्पद्म इति तच्चरणोपधानं पादपीठमुपस्पृशन्तः नमस्कुर्वंतः सन्तः कथंभूतं चरणोपधानं यत्पद्ममहिराजकन्या अहिराजस्य संकर्षणस्य कन्याः

### श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका।

वरार्थाः पतिकामाः सप्रेमप्रेमसहितं यथा भवति तथा नानाबलिभिर्नानोपहारैरर्चंति तथाभूतमित्यर्थः ५

---

### श्रीमद्विजयध्वजतीर्थकृतं पदरत्नावली

अस्मिन्नध्याये सर्वजीवोत्तमहिरण्यगर्भसृष्ट्यभिधानेन हरेः सर्वोत्तमोत्तमत्वमाहात्म्यवमधृतमतस्तज्ज्ञानमवश्यमापाद्यं मुमुक्षुभिरिति निरूप्यते। तत्रादौ प्रश्नान् परिहरिश्यन् तं विदुरं मानयन्स्वस्य पुराणावगतिप्रकारं कथयति सत्सेवनीय इति। वतानुकम्पायां यद्यस्मिन्पूरोर्वंशे भगवानेव प्रधानः सर्वोत्तमो यस्य स तथा लोकपालस्त्वं लिटालोकविडम्बनार्थं गर्भवासानुभवं परोक्षयति। भगवत्प्रधानत्वं प्रकाशयति इहेति। इह लोकेऽजितस्य हरेः कीर्त्तिपुष्पमालां नूतनयसि नवां करोषि यस्मात्तस्मादित्यध्याहार्यौ ॥ १ ॥

अधुना प्रश्नप्रतिवचनं प्रतिजानीते सोऽहमिति। योऽहं कृष्णेन तव ज्ञानोपदेशायादिष्टो यश्च मम ज्ञानमुपदिशेति त्वया प्रार्थितः सोऽहं क्षुल्लसुखायाल्पसुखाय। महद्दुःखंगतानां नृणां दुःखस्य विरामाय निर्मूलनाय। साक्षात्संकर्षणो भगवान्सनत्कुमारादिभ्यः ऋषिभ्यो यदाह तद्भागवतं पुराणं त्वत्प्रश्नपरिहारत्वेन प्रवर्तय इत्यन्वयः ॥ २ ॥

सूचितमासिमूलत्वं प्रपञ्चयति आसीनमुर्व्यामिति। उर्व्यां पाताले त्रिलोकीविवक्षया भूमिपदेन पातालाभिधेयत्वं युक्तमतः संकर्षणात्परस्य हरेस्तत्त्वं विवित्सवो ज्ञातुकामाः कुमारमुख्या मुनयः। उर्व्यां पाताले विस्तृतायां वस्यामासीनमाद्यं सनकादिभ्यः पूर्वजातं देवं श्रीहरिस्तुत्यामेव प्रकाशमानं अकुण्ठसत्त्वमप्रतिवद्धज्ञानशक्तिं न कुण्ठो यस्य तदकुण्ठम् अकुण्ठसत्त्वं वैष्णवस्वभावो यस्य सोऽकुंठसत्त्वस्तमिति वा संकर्षणं भगवन्तमन्वपृच्छन्नित्यन्वयः ॥ ३ ॥

भगवदुपासितमन्तरेणान्यो व्यापारोऽस्य नास्तीति तादृशैर्विशेषणैस्तं विशिनष्टि स्वमेवेति। प्रेक्षावन्तो यं वासुदेवाभिधमामनन्ति तं स्वं सदानन्तरूपं स्वतन्त्रं वा धिष्ण्यं स्थानमाधारं भगवन्तमेव बहुमानयन्तं भक्त्योपासमानं। पुनरपि कीदृशं। प्रत्यगात्मनि स्वान्तर्यामिणि धृतमाहितमक्षाख्यमम्बुजकोशं विबुधानामुदयाय ईषदुन्मीलयन्तं विकसितं कुर्वाणं अनेन" संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकय"न्निति वचनादवनतजनानुग्रहायोन्मीलनमन्यदा न युक्तमित्युपास्ताविरथभावो दर्शितः। "आधार आश्रयो धिष्ण्यं निधानं चाभिधीयत" इति वचनात्। धिष्ण्यौ शुक्रानिलौ धिष्ण्यमृक्षे स्थाने वले गृह,, इत्युक्तं शुक्रादिकं न ग्राह्यमनुपयोगात्। वासुदेवाभिधमित्युक्तत्वाच्च ॥ ४ ॥

पथिकस्यार्थप्रश्नवन्नायं प्रश्नोऽवश्यं ज्ञातव्यत्वेनेति बहुमानं वक्ति स्वर्धुन्युदार्द्रैरिति। सप्रेमेति क्रियाविशेषणम्। अहिराजकन्याः नाना बलिभिर्बहुविध पूजासाधनैर्यत्पद्ममर्चयन्ति। वरार्हा वरप्राप्तियोग्या! इत्यनेनोत्तमभर्तृप्राप्तये पूजेति सूच्यते। स्वर्धुन्या भागीरथ्या उदस्य उदकस्यारा स्नानलक्षणा प्राप्तिर्येषां ते स्वर्धुन्युदारास्तैः ऋगताविति धातोर्घञ्प्रत्ययेनार इति रूपं। यद्वा स्वर्धुन्या अवगाहेन उदारैर्महद्भिः। उदारं दातृमहतोरित्यभिधानम् एवम् विधैः स्वजटाकलापैस्तस्य संकर्षणस्य चरणयोरुपधानं पीठायमानं तत्पद्ममुपस्पृशन्तः यावत्प्रसादं स्पृष्ट्वा नमन्त इत्यर्थः ॥ ५ ॥

---

श्रीमद्जीवगोस्वामि कृतक्रमसन्दर्भः

एवं द्वितीयस्कन्धान्ते पाद्मं कल्पमथो शृणिवति यदुक्तं तदवतारणार्थं चतुःश्लोकीमहिमगर्भितमेतावन्तं ग्रन्थमुक्त्वा तमेवाह सोऽहमित्यादिना । भागवतं सङ्कर्षणादिप्रवर्त्तिततद्भागवतविशेषमित्यर्थः ॥ १ ॥ २ ॥

आसीनामिति चतुष्कम् । किरीटेति सङ्कर्षणमित्यस्य विशेषणम् ॥ ३—१० ॥

---

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

अष्टमे भगवद्भक्तियादृशी सात्र वर्ण्यते ।
आधाराधेयरूपाणां तदीयानां तथोद्गमः ॥ १ ॥
षड्विधा भगवद्बुद्धिः स्वरूपरति रूपिणी ।
जगद्विषयिणी चैव कृतियुक्तेति वैद्विधा ॥ २ ॥
हरेरेव तथान्यापि भगवद्विषया त्रिधा ।
लौकिकोपायजनिता प्रथमा सा द्विधा पुनः ॥ ३ ॥
तर्कक्रियाविभेदेन द्वितीया वैदिकी स्मृता ।
साक्षात्कारस्तृतीयस्तु त्रिपद् सर्वं प्रतिष्ठितम् ॥ ४ ॥
सामान्यतो ग्रंथिरूपा भगवद्बुद्धिरीर्यते ।
सर्गोपयोगिनी यस्मात्तामसादुद्गता हि सा ॥ ५ ॥
अनेकधा भागवतप्रवृत्तिरुपयुज्यते ।
दशलीला युताः सर्वाः कल्पभेदैर्व्यवस्थिताः ॥ ६ ॥
भगवद्बुद्धिरेवेति सैव लीलाद्वयं तता ।

एवं पूर्वाध्याये भगवच्चरित्रज्ञानार्थं वहवः प्रश्नाः कृताः तत्र भगवत्कृपाज्ञानार्थं महानस्त्वोऽयम इति तं प्रोत्साहयितुं स्तौति सत्सेवनीयइति । वतेति हर्षे सद्भिर्महद्भिरपि पुरुवंशः सेव्यः उत्पत्तिस्थानार्थं ज्ञानार्थं च यद्यस्माद्यस्मिन्वंशे उत्पन्नो लोकपालो यमोऽपि भगवद्धर्मयुक्तोऽपि भगवत्प्रधानो जातः भगवानेव प्रधानं यस्य तादृशस्त्वं वभूविथ यतोऽजितकीर्त्तिमालां पदे पदे क्षणे क्षणे नूतनयसि अभीक्ष्णं सर्वदा संतो हि स्वभावजयार्थं महद्यत्नं कुर्वंति तच्चेत्पूर्वं संबधमात्रेण भवति तदा प्रयत्नांतरं परित्यज्य सद्भिः पुरुवंश एव सेव्यो भवति वतेति अत्याश्चर्यदर्शनात्प्रेमयवलाधिक्यख्यापनार्थम् अधिकारोहि सर्वथा भगवद्बुद्धिर्नश्यति सुतरां लोकपालाधिकारे. यदप्युक्तं द्वादशेते विजानीम इति तद्दोषपरिवर्जनार्थमधिकारेणाज्ञातव्यमिति ज्ञायते ननु भक्तिमार्गानुसारेण तत्रापि प्रकृते विशेषं वक्तुं वभूविथेति मध्यमपुरुषःप्रयुक्तस्तेन यमोऽतिक्रूरःसर्वघातक इति सूचितं तादृशस्यापियद्भगवत्परत्वंतद्बंधुसंबंधात् सोऽपि संबंधःआभिमानिक एव अविवाहितायां व्यासादुत्पत्तेः अजितेति नकेनापि जित इति भगवदुत्कर्षस्तस्य हृदये रोचत इति ज्ञापितं तेन सर्वथा मात्सर्याभावः सूचितः कीर्त्तिरिति यमः प्रधानो न प्रसिद्धिमात्रं मन्यतेऽप्यस्य हृदये समागतेति ज्ञापितम् किंच मालेतिकंठभूषणंकीर्त्तिं कंठेस्थापितवानितिभक्तंश्योऽप्याधिक्यं नूतनकरणेनाति सामर्थ्यं पदेपदेनूतनकरणंप्रेम्णा एवं माहात्म्यज्ञानपूर्वकंसुदृढस्नेहोऽस्य वर्त्तत इति सूचितम् अभीक्ष्णमित्यनेनप्रेम्णा कृतत्वं सर्वतोऽधिकत्वं च॥१॥

एवं सर्वे दोषनिवृत्तिपूर्वकभगवद्विषयकसर्वगुणा उत्पन्ना इति महानयं वंशः पांडवानां भक्तानां स्वस्य चावज्ञागर्वाभावार्थं तथा निरूपितः इदानीं सर्वप्रश्नाः विशकाक्षिततया पृष्टाः भगवच्चरित्र ज्ञापका न भवंतीति तथा विश्वत्वज्ञापनार्थमपृष्टकथनार्थं च पुराणमेव मूलतः किंचित्कथयिष्यामीत्याह सोऽहमिति ।

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ॥

त्वया ये पूर्वं प्रश्नाः कृताः सुखाय कर्माणि करोति लोक इत्यादिना तेऽप्यनेन परिहृता भविष्यंतीति तत्र प्रथमं प्रश्नं फलत्वेन निर्दिशन्नाह । नृणां क्षुल्लसुखाय महद्दुःखं गतानां तद्विरमायेति अनेन पृष्टानां सर्वेषामेव पदार्थानां भगवत्कर्मपरत्वं सामान्यतो निरूपितं स्वभावतः कर्मणामल्पसुखेच्छया कृतानां महद्दुःखजनकत्वं तान्येव च कर्माणि भगवत्संबंधानि चेद्भगवदीयत्वेन कृतानि दुःखाभावपूर्वक महत्सुखफलानि भवंतीत्यत्र श्रवणे भवानेवाधिकारीति तुभ्यमुक्तं भागवतमिति भगवता हि प्रतिपादिताःस्वकृताःसफला एव परंपरायामपि भगवदुक्तपदार्थानां दोषसंबंधाभावाय वक्तुः श्रोतुःस्वरूपतोऽवस्थातश्च परमां शुद्धिं निरूपयितुं शुद्धपरंपरामाह यदाह साक्षाद्भगवानृषिभ्य इति। यद्भागवतं भगवता न परंपरयोक्तं किं तु साक्षादेव भगवत्त्वं वा साक्षात् भगवत् कृपयाजातं भगवत्त्वव्युदासार्थमृषिभ्य इति ज्ञाननिष्ठा ऋषयः परमपात्रत्वेन निरूपिताः येषां बुद्धौ मंत्राः स्वतःस्फुरंति सा बुद्धिरुत्तमैव भवति ॥ २ ॥

भगवानपि न क्रीडां कुर्वन् लक्ष्मीसहितो वा भागवतमुक्तवान् किंत्वात्मध्यानारूढ एकाग्रचित्तस्तथोक्तवानिति भगवंतमुपदेष्टारं वर्णयति आसीनमुर्व्यामिति । आसीनामिति क्रियांतराभावेन लौकिकस्यापि वैयग्र्याभावः सूचितः उर्व्यामिति भूमौस्थित्या यज्ञियत्वं सूचितम् अन्यथा भगवान्कथं भूमावासीत इयमुर्वी नोधृता किं तु मृतभूतेव यतः पातालाधो विद्यमानत्वंस्थानलक्षणाभिर्नागकन्यापूजनया च निरूप्यते आद्यमिति पित्रादिजन्मदोषः परिहृतः संकर्षणमिति भगवतश्चतुर्मूर्त्तेर्या मूर्त्तिःसंहारकर्त्री सा निरूपयतीत्युक्तं तेन भगवता पदार्थनिरूपणे दृष्टांतार्थमपि यद्यन्ये पदार्था निर्दिष्टा भवंति तेऽपि संकर्षणं प्राप्य दग्धपूर्वावस्था भगवदीया एव नूतना भवंतीति सूचितं तामसत्वेन समागतं दूषणं परिहरति देवमिति। ननु देवानामपि नानाविधत्वात्तामसत्वमपरिहृतमेव तत्राह अकुंठसत्त्वमिति । न कुंठं कुंठितं सत्त्वं सत्वगुणःअक्षरात्मकं वा तादृसत्वेन यस्य स तु गुणात एव तामसः संहारकर्तृत्वात्तदपि प्रलयकाले इदानीं तु देवः सर्वोपास्य एव संकर्षणत्वं च द्रष्टृदृश्ययोः सम्यक् कर्षणादतः स एव संसारं प्रयच्छतीत्याद्यत्वं तेन भजनावश्यकत्वं पितृत्वादुपदेष्टृत्वं च संगच्छते इदं तु ज्ञानिन एव जानंतीति श्रोतृत्वं सनकादीनां मोक्षार्थमप्ययमेव सेव्यः सम्यक् कर्षणं तत एव यतो निवर्त्तते अस्य च रूपमग्रे निरूपयिष्यते ननु सनकादीनां ज्ञानस्य विद्यमानत्वात्संकर्षणस्थाने किमर्थं गता इत्याह विवित्सवः इति । अतःसंकर्षणात्परस्य वासुदेवस्य तत्त्वं स्वरूपं विवित्सवो ज्ञातुमिच्छवःकुमारमुख्याःसनकादयः सनत्कुमारो मुख्यो येषां मुनय इति संकर्षण एव जानाति स समर्थोवासुदेवं ज्ञातुं नान्य इति ज्ञानयुक्तं अन्विति ब्रह्मणा स एव प्रष्टव्य इत्युक्ते तमन्वपृच्छन् ॥ ३ ॥

यद्यपि ब्रह्मा जानाति तथापि सभक्तिमार्गप्रधानःसनकादींस्तन्नमन्यते अतः संकर्षणमपि ज्ञानप्रधानं मन्यमानस्तथाह संकर्षणाभिमानाधिदैवत्वान्न तमभिमानो व्याप्नोति अतः स्वस्यापि वासुदेवं ध्यायन्निव सर्वदा तिष्ठति यदा वा ध्यायति तदा ते गत इति तस्य ध्यानावस्थां निरूपयति स्वमेव धिष्ण्यमिति। धिष्ण्यस्थानमाश्रयं नत्वासनं वासुदेवाख्यं तं बहुमानयंतं तस्य ध्यानं क्रियमाणो ध्याता स्वयं ध्येयं बहुमानयत्येव तस्य ध्येयस्य स्वरूपमाह । यं ध्येयत्वेन निरूपितं लोका वासुदेवेति वदंति यो ध्येयत्वेन निरूपितस्तमित्यर्थः वासुदेव इत्यभिधा यस्य वस्तुतस्तु स्वसं

### श्रीमद्वल्लभाचार्यकृत सुबोधिनी ॥

अयभूत आत्मा लोकाः परं शब्दांतरेण व्यपदिशंति ननु ध्यानारूढे वहिःसंवेदनाभावात् कथमुपदेष्टा भवतीत्यत आह प्रत्यग्धृतेति। प्रत्यगात्मस्वरूपे धृतमक्षि येन "कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्त चक्षु"रितिश्रुतेःयद्यप्यंतर्नीतं तेन चक्षुस्तथापि भगवान् कमलनयन- इति तदंबुजं जलाद्बहिर्दृश्यते एव तथाभगवानपि ध्यानारूढोऽपि वहिःपश्यतीति ज्ञातव्यम्। किंच तदाक्षि कमलस्य कोशरूपं कोशो हि मुकुलितपत्रात्मको भवति तथायमपि निमीलिताक्षस्तथा विबुधाना मागतानां सनकादीनामुदयाय अभ्युदयाय तानभ्युदितान्कर्तुं मोषद्विकच इव पश्यंतं कोशे ह्यर्धविकाशः संभवति ॥ ४ ॥

तेऽपि वाह्यतोऽपि शुद्धा भूत्वा समागता इत्याह स्वर्धु-न्युदार्द्रैरिति। अथवा भगवदीयशरीरासिद्ध्यर्थं स्वर्धुन्युदार्द्रैरिति यावद्गंगाजलेनार्द्रं शरीरं तिष्ठति तावद्दैत्याक्रमणं न भवतीति पा ताले दैत्याधिक्यात्तत्स्पर्शाभावार्थमार्द्रा एव जटाः कृताः न शोषि-ताश्च गंगाद्वारमार्गेण गता इति केचित् तथा सति तु सर्वार्द्रा एव ते वक्तव्याः योगेश्वराणां गगिमाहुरिति न्यायेन येन केनापि मार्गेण ते गंतुं शक्ताः स्वर्धुनीपदे लक्षणा च स्यात् अस्तु वा तथैवाति पावित्र्यार्थं जटाअसंस्कृत केशाः तेषां कलापैःसमूहैःसंकर्षणचरणो पधानं पीठम् उपस्पृशंतोऽपृच्छन्निति संबंधः पूर्वंकृतनमस्कारा अपि वासुदेवस्वरूपज्ञानार्थं पुनः साष्टांगनमस्कारं कृतवंत इत्यर्थः ननु स्वार्द्रजटाकलापैस्तदुपस्पर्शे को हेतुस्तत्राह पद्मं यदर्चंतीति। अहिराजकन्याः वासुकिकन्याः सप्रेम यथा भवति तथा वरार्थाः सत्यो नाना वलिभिर्नाना पूजाप्रकारैर्यत्पद्ममर्चंति तेषां स्पर्शदोषा येति केचित् गंगापेक्षयापि तच्चरणस्यैव प्रकृष्टत्वात्किंतु तदुपस्प र्शनइष्टकामनासिध्यतीति तदुपस्पर्शने हेतुरर्चंतीति महतामपि फलदातेति स्वेष्टसिद्धिः सूचिता कन्यात्वादेव नाविकारांतरसंभा-वना कामितांतरकथनाच्च काम्यत्वमतः सर्वप्रकारेण निर्दुष्टं सर्वं कामनापूर्वकं भगवंतं तमेव ध्यायन् तत्स्वरूपं सम्यग्वक्ष्यतीति सूचितम् ॥ ५ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ॥

अष्टमे श्रीहरेर्नाभिपद्मोद्भूतश्चतुर्मुखः।
अन्वेषणाद्बिरम्याप्तसमाधिस्तमवैक्षत ॥ ० ॥

भो विदुर! तां चापि युष्मच्चरणसेवयाहं पराशुदे इत्यादिना स्वतो ज्ञानं कुतः पुमामित्यादिनाच त्वं मत्सङ्गं प्रार्थयसे। मन्मते तु साक्षात्तव सङ्गःपरमदुर्लभः केन महासुकृतिचूडामणिना लभ्यताम्। त्वत्प्रसङ्गानुप्रसङ्गवत्यपि जने सेव्यमाने हरौ भक्तिः स्यादिति विदुरं स्तुवन्नभिनन्दति। बत अहो तयास्मज्जन्मार्थम-ङ्गीकृतः। पुरुवंशोऽपि सतां सेवितुं योग्यः कृतः। यद्यत्र त्वं वभू-विथ जातोऽसि कथम्भूतःब्रह्मपरमात्मभगवत्सु मतभेदेनोपा-स्यस्वरूपेषु त्रिषु मध्ये भगवानेव प्रधानभूतो यस्य सः। इह भग-वदुपासकेष्वपि मध्ये अजितकीर्त्तिमाला मभीक्ष्णं प्रतिक्षणमेव पदे पदे प्रतिसुप्तिङन्तमेव प्रतिवाक्यमेव प्रतिश्लोकमेव प्रतिप्रकरण-मेव नूतनयसि कीर्त्तिमालामिमां स्वरसनासूच्या केवलं ग्रथना-स्येव। त्वं पुनरेनामतिस्निग्धानुरागिस्वकर्णमनःसम्पुटान्तर्नि-धाय नित्यनवीनीकरोषीति त्वन्माहात्म्यमनिर्वाच्यमेवेति भावः १ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

त्वत्सर्वप्रश्नोत्तराणि श्रीभागवते पुराणे एवोपलभ्यन्त इति तद्भागवतविशेषमेव त्वां श्रावयामीत्याह। सः प्रसिद्धः पराशर-शिष्योऽहं क्षुल्लसुखाय तुच्छविषयसुखार्थं दुःखं नरकादि। तस्य दुःखस्य। "एतेन सुखाय कर्म्माणि करोति लोक,, इत्यत्र "यदत्र युक्तं भगवान् वदेन्न,, इति त्वदादिमे प्रश्नेऽप्येतदेव युक्तमुत्तरं भवतीत्युक्तम् ॥ २ ॥

कोऽसौ भगवान् केभ्य ऋषिभ्य आह कथं त्वया प्राप्तमित्य-पेक्षायामाह आसीनमिति सप्तभिः। अकुण्ठसत्त्वं शुद्धसत्त्वस्व-रूपम् अप्रतिहतज्ञानं वा। अतः सङ्कर्षणात् परस्य श्रीवासुदे-वस्य ॥ ३ ॥

तमेव विशिनष्टि। स्वमेव धिष्ण्यं स्वीयमाश्रयतत्त्वं वहुमानयन्तं सर्वोत्कर्षेण पूजयन्तं तदेव किं तत्राह यदिति। प्रत्यग्धृतमन्त र्मुखीकृतमिति तद्वासुदेवस्वरूपानन्दानुभवार्थमित्यर्थः। तदपि ईषदिति विबुधानां सनत्कुमारादीनामभ्युदयार्थम् ॥ ४ ॥

मुनीन् विशिनष्टि सार्द्धेन स्वर्धुन्युदार्द्रैरिति। श्रीभागवतश्रव-णार्थं सत्यलोकात् पातालं प्रत्यवतरन्तो निरन्तरं गङ्गामध्यत एवा-वतीर्णा इति भावः। उपधानं उपवर्हम्। वरार्थाः पतिकामाः ॥ ५ ॥

---

### श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

इत्थं स्वबुभुत्सितार्थप्रवचने विदुरेण प्रवर्त्तितो मुनिस्तत्कृत प्रश्नोत्तराण्यभिधास्यमानस्ताद्भगवद्विभूतेर्ब्रह्मणः उत्पत्तिंब्रह्मकृतं भगवत्स्तोत्रं चानुवदत्यष्टमाध्याये। तत्रादौ श्रोतारमभिनन्दति सत्सेवनीय इति। पूरुवंशःसतां सेवनीयःमाननीयःवत अहो यत्यतः इह पूरुवंशे भगवान् प्रधान उपास्यो यस्य सः लोकपालः धर्मः त्वं वभूविथ जातोऽसि भगवत्प्रधानत्वे हेतुमाह। पदेपदे पुनः पुनः अभी-क्ष्णं भृशम्। अजितस्य विष्णोः कीर्त्तिमालां नूतनयासि नवीनां करोषि ॥ १ ॥

विदुर! त्वं कृतार्थस्तथापि त्वद्द्वारा क्षुल्लसुखाय अल्पसुखाय महद्दुःखं गतानां नृणां तस्य दुःखस्य विरमाय निवृत्तये। यत्पुरा-णं भगवान् संकर्षणः ऋषिभ्यः कुमारमुख्येभ्य आह तत्पुराणं भागवताख्यमहं प्रवर्त्तये ॥ २ ॥

अतः संकर्षणात् जगतो वा परस्य वासुदेवस्य तत्त्वं स्वरूपं गुणादियाथात्म्यं विवित्सवःवेत्तुमिच्छवःकुमाराः सनकादयःमुख्या येषु ते। कुमाराणां नित्यतया आगतज्ञाना इति। वैष्णवे नित्यसिद्ध ज्ञानवत्त्वोक्तेर्विवित्सव इति छत्रिन्यायेनोक्तम्। कुमारमुख्याः सन-कादयश्चत्वारः। इति व्याख्यात्वसंगता तेषु मुख्यामुख्यव्यवहाराभा-वात्। उर्व्या पातालतले। आसीनमुपविष्टम्। अकुण्ठसत्त्वम् नि-रावरणज्ञानम् ॥ ३ ॥

संकर्षणं विशिनष्टि। यं वासुदेवाभिधमामनन्ति तं स्वमेव धिष्ण्यं स्वीयमेवाश्रयं ध्यानपथेनानुभूय वहुमानयन्त सर्वोत्कृष्ट-त्वेन पूजयन्तम् प्रत्यग्धृतमन्तर्मुखीकृतमक्षाम्बुजकोशं नयनाब्जमुकु-लं येन तं विबुधानां विदुषामभ्युदयायेषदुन्मीलयन्तम् ॥ ४ ॥

कुमारमुख्यान् विशिनष्टि सार्द्धेन। तज्ज्ञाः संकर्षणकृतज्ञाःअस्य संकर्षणस्य कृतानि प्रेम्णा स्खलन्ति पदानि यस्मिन् तेन वचसा मुहुर्गृणन्त्यःगायन्त्यः वरार्थाः पतिकामा विष्णुपदप्राप्तिकामाः वा अहिराजानां कन्याः यत्पद्म सप्रेमप्रेमसहितं यथाभवति तथा वलिभि-

मुहुर्गृणन्तो * वचसाऽनुरागस्खलत्पदेनास्य कृतानि तज्ज्ञाः ।
किरीटसाहस्रमणिप्रवेकप्रद्योतितोद्दामफणासहस्रम् ॥ ६ ॥
प्रोक्तं किलैतद्भगवत्तमेन निवृत्तिधर्म्माभिरताय तेन ।
सनत्कुमाराय स चाह पृष्टः सांख्यायनायाङ्ग! धृतव्रताय ॥ ७ ॥
सांख्यायनः पारमहंस्यमुख्यो विवक्षमाणो भगवद्विभूतीः ।
जगाद सोऽस्मद्गुरवेऽन्विताय पराशरायाथ बृहस्पतेश्च ॥ ८ ॥
प्रोवाच मह्यं स दयालुरुक्तो मुनिः पुलस्त्येन पुराणमाद्यम् ।
सोऽहं तवैतत्कथयामि वत्स ! श्रद्धालवे नित्यमनुव्रताय ॥ ९ ॥
उदाप्लुतं विश्वमिदं तदासीद्यन्निद्रयामीलितदृङ्न्यमीलयत् ।
अहीन्द्रतल्पेऽधिशयान एकः कृतक्षणः स्वात्मरतौ निरीहः ॥ १० ॥
सोऽन्तः शरीरेऽर्पितभूतसूक्ष्मः कालात्मिकां शक्तिमुदीरयाणः ।
उवास तस्मिन् सलिले पदे स्वे यथानलो दारुणि रुद्धवीर्य्यः ॥ ११ ॥
चतुर्युगानां च सहस्रमप्सु स्वपन् स्वयोदीरितया स्वशक्त्या ।
कालाख्ययासादितकर्म्मतन्त्रो लोकानपीतान् ददृशे स्वदेहे ॥ १२ ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

नानोपहारैः अर्चंति पूजयंति तच्चरणोपधानं चरणावुपधीयेते यस्मिन् एतादृशं पद्मं सत्यलोकाद्गंगामध्यतः पातालावतरणवशात् स्वर्धुन्युदाद्रैः जटाकलापैरुपस्पृशंतः नमंतः ॥ ५ ॥

भाषाटीका ।

मैत्रेयजीबोले पुरुराजाका वंश सत्पुरुषोंके सेवने योग्य हैजिस वंशमें यमराज भगवद्भक्त आप भयेहो जोकि परमात्माके चरित्र समूहकों निरंतर क्षण क्षण मे नूतनसाही मानकर चाहतेहो ॥ १ ॥

सो अबमैं थोडे सुखके निमित्त बहुत दुःखको प्राप्त होनेवाले मनुष्योंके उसदुःखके नाशके हेतु श्रीभागवत पुराणको प्रवृत्तक करूंगा जोकिपुराण साक्षात् भगवानने ऋषियों से कहा है ॥ २ ॥

पृथिवी के तले विराजमान भगवान् अनंतजी आद्यदेव दिव्य ज्ञानवाले शेषजीके समीपजाकर इस विश्व से परेवर्त्तमान परमेश्वरके तत्वकोजानने की इच्छाकरनेवाले सनत्कुमारादि मुनिलोग प्रश्न करते भये ॥ ३ ॥

जो शेषजी अपने आश्रय भगवानका पूजनसे बहुमान कर रहे थे जिनको वासुदेवनामसे कथन करैहैं जोकि सनकादिकोंके कल्याणकेहेतु अपने नेत्रकमलको थोडासा विकाश किये रहे ॥ ४ ॥

उनके जिस चरण कमलको पति की कामनावाली नाग कन्या प्रेम सहित पूजन करती हैं उस चरणके पीठको आकाश गंगाके स्नानों से भी जे अपने जटाओंसे स्पर्शकरतेहुये सनकादि मुनि पूछने लगे ॥ ५ ॥

श्रीश्रीधरस्वामिकृत भावार्थदीपिका

कृतानि कर्माणि गृणंतः केन अनुरागेण स्खलितं पदं यस्मिंस्तेन वचसा तानि जानंतीति तज्ज्ञाः सहस्रमेव साहस्रं किरीटानां साहस्रं ये मणिप्रवेकारत्नोत्तमास्तैः प्रद्योतितमुद्दामफणानां सहस्रं यस्यतमपृच्छन्निति पूर्वेणान्वयः ॥ ६ ॥

तेन संकर्षणेन सनत्कुमाराय प्रोक्तम् ॥ ७ ॥

पारमहंस्येधर्मेमुख्यः विवक्षमाण इत्यात्मनेपदंभ्रूआदेशस्यवचेरुभयपदित्वात् अन्वितायानुगताय ॥ ८ ॥

पुलस्त्येनोक्त इत्यत्रैवमाख्यायिका पितरंराक्षसभक्षितंश्रुत्वापराशरोराक्षससत्रं प्रवृत्तोवसिष्ठवचनान्निवृत्तस्ततः पुलस्त्येनस्वसंततिरक्षणात्तुष्टेनवरोदत्तःपुराणप्रवक्ताभविष्यसीति ॥ ९

तदेवं संकर्षणात्संप्रदायप्रवृत्तिं प्रदर्श्य विभूतिकथनाय पद्मोद्भवं क्रमाह उदाप्लुतमेकार्णवोदके निमग्नं यद्यदाआसीत्तदाऽमीलि तदृगतिरोहितचिच्छक्तिरेव श्रीनारायणोनेत्रेमीलितवानित्यर्थः यावितंदं परित्यज्य स्वात्मरतौ स्वरूपानंद एव कृतोत्सवःअतएवनिरीहो निष्क्रियः सन् ॥ १० ॥

कालशक्तेः प्रेरणं पुनः सृष्ट्यवसरे प्रबोधनार्थं स्वे पदेऽधिष्ठानेवृत्त्यभावे दृष्टांतः यथानलइति ॥ ११ ॥

स्वया चिच्छक्त्या सह वर्तमान एव योगनिद्रया स्वपन्पूर्वमेव [illegible]नार्थं नियुक्तया स्वकालशक्त्या सादितंप्रापितं कर्मतंत्रं क्रियाकल्पो यस्य सः अपीतान् लीनान् ददर्श ॥ १२ ॥

* गृणन्त्य इति शुकदेव पाठः ॥

तस्यार्थसूक्ष्माभिनिविष्टदृष्टेरन्तर्गतोऽर्थो रजसा तनीयान् ।
गुणेन कालानुगतेन विद्धः सूष्यंस्तदाभियत नाभिदेशात् ॥ १३ ॥
स पद्मकोषः सहसोदतिष्ठत् कालेन कर्म्मप्रतिबोधनेन ।
स्वरोचिषा तत्सलिलं विशालं विद्योतयन्नर्क इवात्मयोनिः ॥ १४ ॥
तल्लोकपद्मं स उ एव विष्णुः प्रावीविशत् सर्व्वगुणावभासम् ।
तस्मिन् स्वयं वेदमयो विधाता स्वयम्भुवं यं स्म वदन्ति सोऽभूत् ॥ १५ ॥
तस्यां स चाम्भोरुहकर्णिकायामवस्थितो लोकमपश्यमानः ।
परिक्रमन् व्योम्नि विवृत्तनेत्रश्चत्वारि लेभेऽनुदिशं मुखानि ॥ १६ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ॥

लोकसृष्ट्यर्थमर्थं सूक्ष्मेऽभिनिविष्टा दृष्टिर्यस्य कालानुसारिणा रजोगुणेन विद्धः संक्षोभितः संस्तनीयानतिसूक्ष्मोऽर्थः सूष्यन् प्रसोष्यन्नुद्भविष्यन्नाभिदेशादुद्भूत इत्यर्थः ॥ १३ ॥

स तनीयानर्थः पद्मकोषः सन्नुदतिष्ठत् कर्माणि जीवादृष्टानि प्रतिबोधयति यः कालस्तेन आत्मा श्रीविष्णुर्योनिर्यस्य ॥ १४ ॥

तल्लोकात्मकं पद्मं सर्वान् गुणान् जीवभोग्यानर्थानवभासयतीति तथा तद्यस्माज्जातं स एव विष्णुः उ इति संबोधने प्रावीविशत्प्रकर्षेणानुप्तशक्तिरेवान्तर्यामितया विवेश तस्मिन्विष्णुनाधिष्ठिते पद्मे विधाता ब्रह्मा अभूत् कथं भूतः स्वयमेव वेदमयो नत्वध्ययनेनप्राप्तवेदः कोऽसौ अदृष्टपितृकत्वेन यं स्वयंभुवं वदन्ति स प्राक्कल्पान्तेनारायणेन सह निद्रयैकीभूत आसीत् तस्मिंश्च प्रबुद्धे तत एव पाद्मे कल्पे पद्मद्वारेणाभिव्यक्तिप्राप्त इत्यर्थः ॥ १५ ॥

स च तस्मिन् कल्पे चतुर्मुखोऽभूदित्याह तस्यामिति। परिक्रमंस्तत्रस्थ एव ग्रीवां चालयँल्लोकनिरीक्षणार्थं निवृत्ते विविचलिते नेत्रे यस्य ॥ १६

---

श्रीराधारमणदास गोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी

किरीटेत्यर्द्धकम् * ॥ (४)—३ ॥ ६ ॥

भगवत्तमेनेति अन्यावताराणां सङ्कर्षणांशत्वमाभिप्रेतम् सच सनत्कुमारः धृतव्रताय श्रीभागवतश्रवणार्थं धृतब्रह्मचर्य्यादिनियमाय ॥ ४ ॥ ७ ॥

पारमहंस्ये परमहंसाः प्राप्तात्मतत्त्वास्तेषां सम्बन्धिनि धर्म्मे प्रत्यङ्निष्ठारूपे यद्यपि परिभाषणार्थोवचिः परस्मैपदमिति विवक्षित्येव साधुस्तथापि ब्रुञादेशरूपस्य वचेरुभयपदित्वाद्विवक्षमाण इत्यात्मनेपदमित्यर्थः अनुगताय शिष्याय वृहस्पतेश्च वृहस्पतयेऽपि जगादेति योजनीयम् ॥ ५ ॥ ॥८ ॥

मुनिः पराशरः आद्यं सर्वपुराणमुख्यं पितरं शक्तिं स पराशरादधीतभागवतोऽहं तव तुभ्यमेतच्छ्रीमद्भागवतम् पुराणम् ॥६॥९॥

यदा निद्रया नेत्रे न्यमीलयत्तदा इदं विश्वं त्रैलोक्यम् उदप्लुतमासीदित्यन्वयः अतएव स्वरूपानन्दे कृतोत्सवत्वादेव ॥ ७ ॥ १० ॥

भूतसूक्ष्माण्यत्र विलीनपार्थिवांशतन्मात्रसहितानि त्रैलोक्यगतजीवानां लिङ्गशरीराणि यान्येव समष्टिलिङ्गशरीरमित्युच्यते त्रिलोकाद्बहिर्जलादीनां विद्यमानत्वात् अनलपक्षे वीर्यं दहनशक्तिः भगवत्पक्षे सृष्टिशक्तिः ॥ ८ ॥ ११ ॥

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी

प्रार्पितम् उद्बोद्धुं भगवद्दृष्टिगोचरतां नीतं क्रियाकलापो जीवकर्मसमूहः लोकान् सत्रैलोक्यजनान् ॥ ९ ॥ १२ ॥

अर्थसूक्ष्मोऽत्र त्रैलोक्यगतजीवानां लिङ्गशरीरसमूहः तनीयान् अर्थोऽपि स एव प्रसोष्यन् स्वकार्य्यं जनयिष्यन् अतएवोद्भविष्यन् स्वकार्य्यद्वारा स्वं वर्द्धयिष्यन्निति व्याख्यातम् ॥ १० ॥१३ ॥

पद्मकोषस्सन् इति नारायणनाभिकमलादयमन्य एव ज्ञेयः प्राक्तसूक्ष्मलिङ्गशरीरात्मकत्वात् योनिर्निमित्तम् अतएवार्क इवेत्युक्तम् ॥ ११ ॥ १४ ॥

स एव गर्भोदशाय्येव प्रतिकल्पं ब्रह्मसृष्ट्यसम्भवात् प्राक्कल्पान्त इत्यादिसाध्याहारं व्याख्यानमत एव इत्यर्थ इत्युक्तम् ॥१२॥१३॥ ॥ १५ ॥ १६ ॥

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

अस्य भगवतः कृतानि कर्माणि तज्ज्ञाः तानि जानन्तीति तद्विचेष्टिताभिज्ञाः अनुरागेण प्रेमातिशयेन स्खलन्ति पदानि यस्मिंस्तेन वचसा मुहुर्गृणन्तः गायन्तः मुनयः किरीटानां मुकुटानां सहस्रमेव साहस्रं तस्मिन्मणिप्रवेकाः मण्युत्तमाः तैः प्रद्योतितम् उद्दामफणाना मुदारफणानां सहस्रं यस्य तं संकर्षणमन्वपृच्छन्निति पूर्वेणान्वयः॥६॥

एवं विधिवदाचार्य्योपसत्तिमभिधायोपसन्नेभ्यस्तेभ्यः श्रीभागवतमुपदिदेशेति वदंस्तदर्वाचीनामप्याचार्यपारम्परीमाह प्रोक्तमिति निवृत्तिधर्माभिरताय मोक्षधर्मेष्वासक्ताय सनत्कुमाराय भगवत्तमेन तेन संकर्षणेन तद्भागवतं प्रोक्तं किल सनत्कुमारायेत्येकत्वं संघाभिप्रायकं सच सनत्कुमारः पृष्टः विधिवदुपसत्त्यापृष्टः सांख्यायनेनेति शेषः धृतव्रताय धृतानि व्रतानि शिष्यधर्मा येन तस्मै ॥ ७ ॥

पारमहंस्ये धर्मे मुख्यः प्रधानः सांख्यायनः भगवद्विभूतीर्विवक्षमाणः वक्तुमिच्छुः ब्रुञादेशस्य वचेरुभयपदित्वाद्विवक्षमाण इत्यात्मनेपदम् अन्विताय अनुगतायानुवर्त्तमानायेतियावत् अस्मद्गुरवे पराशरायाऽथवृहस्पतेश्च उवाच ॥ ८ ॥

दयालुः स मुनिः पराशरः पुलस्त्येनोक्तः त्वं परदेवतापारमार्थ्यज्ञानवान् पुराणकर्ता च भवेति दत्तवरः एवं ह्याख्यायिका पितरं राक्षसभक्षितं श्रुत्वा पराशरोराक्षससत्रे प्रवृत्तःवसिष्ठवचनान्निवृत्तः ततः पुलस्त्येन स्वसंततिरक्षणात्तुष्टेन वरोदत्तः "पुराणसंहिताकर्त्ता भवान् वत्स!भविष्यति। देवतापारमार्थ्यंच यथावद्वेत्स्यते भवा,,निति एवं भूतः दयालुःपराशरः मह्यं पुराणं प्रोवाच सोऽहं श्रीपराशरेणोपदिष्ट-

* अत्रमस्तकाङ्कपार्श्वयोर्धनुराकारंचिन्हंदत्तामितिज्ञेयम्

श्रीमद्वीरराघवाचार्य कृत भागवतचन्द्रचन्द्रिका ॥

श्रीभागवतपुराणोऽहं हेवत्स ! विदुर ! श्रद्धालवे नित्यमनुव्रताय च तव तुभ्यं नित्यामिति पूर्वपरान्वयि तवेति विभक्तिव्यत्यय आर्षः एतच्छ्रीभागवतं कथयामि ॥ ९ ॥

एवं संकर्षणात् संप्रदायप्रवृत्तिं प्रदर्श्य प्रस्तुतप्रश्नानामुत्तराणि विवक्षुः पूर्वोक्तामेव महदादिपृथिव्यन्ततत्त्वसृष्टिमुपजीव्य ब्रह्माण्डरूपपद्मोत्पत्तिवक्ष्यन्नन्तरा जगद्व्यापाराभिक्तानिरुद्धरूपिभगवदवस्थितिप्रकारमाह उदाप्लुतमितिद्वाभ्याम् । यद्यदाऽहीन्द्रतल्पे शेषशय्यायामाभिशयान एक असहायः कृतक्षणः तत्कालिकजगद्व्यापारादुपरतत्वेन लब्धयोगनिद्रावसरः स्वात्मरतौ स्वात्मानुभवसुखेऽहीनः पूर्णः अनीह इत्यपि पाठः तदा स्वात्मरतौ कृतक्षणः अनीहः निष्क्रियः निद्रया स्वात्मानुभवरूपयोगनिद्रया न्यमीलयत् लोचन इति शेषः तदेदं विश्वं चेतनाचेतनात्मकं जगदुदावरणोदकेनाप्लुतं व्याप्तमित्यर्थः अन्यथा ब्रह्माण्डरूपपद्मोत्पत्तेर्वक्ष्यमाणत्वायोगात् इदमुदाप्लुतमिति नैततत्कालिकावस्थयावस्थितस्योदाप्लुतत्वमुच्यते तत्कारणभूतजातस्यावरणजलसृष्टिद्वारा स्वकार्योदकव्याप्तिरुच्यते आवरणजलपर्यन्तं सृष्ट्वा तस्मिन्नावरणजले शयितवानित्युक्तं भवति ॥ १० ॥

पुनस्तमेव विशिनष्टि सइति । अन्तःशरीरे शरीरान्तः अर्पितभूतसूक्ष्मः अर्पितानि निहितानि भूतसूक्ष्माणि येन सः दिव्यविग्रहस्य भोक्तृकरणविषयनिरूपकशक्तित्रयाश्रयत्वात्कारणत्वानां तदन्तर्गततत्त्वं युक्तं कालात्मिकां शक्तिं स्वपृथक्सिद्धविशेषणभूतं कालं उदीरयाणः प्रेरयन्कालशक्तिप्रेरणं पुनः सृष्ट्यवसरे प्रबोधनार्थं स्वे स्वकीये पदे स्थाने सलिले विष्णोरायतनं हि स्मर्यते उवास उषितवान् बहिर्व्यापाराभावे दृष्टान्तः यथानल इति । दारुणि काष्ठेऽनलोऽग्निः रुद्धवीर्यः निरुद्धप्रकाशत्वापिङ्गलत्वदाहकत्वादिस्वभावोऽवतिष्ठते एवं सोऽपि स्वेच्छयैवानाविष्कृतस्रष्टृत्वादिसामर्थ्य आस्तइत्यर्थः ॥ ११ ॥

एवमन्तरावस्थितिमभिधाय तस्य ब्रह्माण्डस्रष्टृचौन्मुख्यमाह चतुरिति । सहस्रशब्दोऽनंतवाची अनेककालमित्यर्थः चतुर्युगानां कृतादीनां सहस्रमप्सु स्वपन्नत्पवासादितलोकतन्त्रः असंपादितलोकरचनः स्वयोगेरितया स्वसंकल्पप्रेरितया स्वशक्त्या स्वापृथक्सिद्धविशेषणभूतया कालरूपशक्त्या हेतुभूतया तयोपलक्षित इति वानिपीतानर्पितान् लोकान्स्वदेहे ददृशे लोककारणभूतान् भूतसूक्ष्मरूपानर्थान् दृष्टवानित्यर्थः स्वदेह इत्यस्य दिव्यविग्रहाश्रयं तत्त्वधिष्ठिते प्रधाने इत्यर्थः "श्रीवत्ससंस्थानधरमनेनच सूचितं प्रधान,मितिहि पराशरवचनं देहशब्दस्य दिव्यमङ्गलविग्रहपरत्वमपि तत्त्वं सद्वारकं देहशब्दः प्रधानपरोवा 'यस्याव्यक्तं शरीर,मिति हि श्रुतिः अत्र चतुर्युगानां सहस्रं स्वपत इत्युक्त्या नाभिदेशात्स पद्मकोशः सहसोदतिष्ठदित्यभिधानेन "क्रमेण त्वविवृद्धं तज्जलबुद्बुदवत्स,मिति वचनार्थः स्मारितो भवति अण्डस्रष्टौ प्रारब्धायां गृहगोपुरादिनिर्माणेष्विव विलम्बो नेति हि तस्यार्थः ॥१२ ॥

अथ ब्रह्माण्डोत्पत्तिमाहद्वाभ्याम् तस्येति । अर्थसूक्ष्माभिनिविष्टदृष्टेः भूतसूक्ष्मेषु प्रवर्तकसंकल्परूपज्ञानस्य तस्य भगवतोऽन्तर्गतः देहान्तर्गतः तनीयान्सूक्ष्मतरः अर्थः भूतसूक्ष्मवर्गः कालानुगतेन कालवशानुन्मिषितेन रजसा गुणेन विद्धः स्पृष्टः सूष्यन्प्रसोष्यन्नुद्भाविष्यन् नाभिदेशान्निरभिद्यत उद्भूदित्यर्थः रजसा उद्भूतरजसा भूतसूक्ष्म-

श्रीमद्वीरराघवाचार्य कृत भागवतचन्द्रचन्द्रिका ॥

जातं जगत्पद्मरूपेण परिणतमित्यर्थः रजःशब्देन पद्मरागसमाधिः सूच्यते ॥ १३ ॥

कथं भूतो निरभिद्यत इत्यत आह सः तनीयानर्थः आत्मयोनिः आत्मा योनिः कारणं यस्य स आत्मयोनिः परमात्मसृष्टः पद्मकोशः लोकात्मकपद्मरूपः कर्म जीवादृष्टं तत्प्रतिबोध्यतेऽनेनेति तथा कालेन सहसा न क्रमेणेत्यर्थः उदतिष्ठत कथंभूतः पद्मकोशः स्वरोचिषा विशालं तत्सलिलमावरणजलं सूर्य इव विद्योतयन् ॥ १४ ॥

अथ भगवन्नाभिदेशादुत्पन्नब्रह्माण्डरूपपद्मकोशे चतुर्मुखोत्पत्तिमुत्पन्नस्य तस्य व्यापारंच वक्ष्यंस्तस्य तदधिष्ठितपद्मस्यच भगवदात्मकत्वमाह अर्द्धेन तदिति । उ इति संबोधने विस्मये वा सर्वगुणावभासं जीवोपभोग्यानर्थानवभासयतीति तथा तल्लोकपद्मं स एव यस्माज्जातं स एव विष्णुः प्राविविशदन्तर्यामितया प्रविष्टो भूत् निवृत्तप्रेरणाद्विशेषेणेच धिष्ण्यमिति पाठान्तरं तदा सोगुणा स्रष्टृत्वौपायिका गुणाः तैरवभास्यते इति तथाभूतं स्वात्मजीवविशेषं लोकपद्मरूपं धिष्ण्यं प्राविविशत्प्रविष्टमकरोणादिसरसिजे स्थापयामासेत्यर्थः कोऽसौ स्वात्मको जीवविशेष इत्याकांक्षायां तद्विशदयंस्तस्य तत्रोत्पत्तिमाह तस्मिन्निति । यं स्वयम्भुवं प्रवदन्ति स वेदमयो वेदप्रचुरः विधाता स्रष्टा तस्मिन्पद्मेऽभूत् तत्र उदाप्लुतमित्यादयः श्लोका अवान्तरप्रलयपरा वा वर्णनीयाः तनीमर्थः सुगमः तथाहि पूर्वं सर्गश्चैवानुसर्गश्चेति चतुर्मुखात्पूर्वो रसृष्ट्या:"पृष्टवांस्तत्र भगवानेक आसेदमग्र आत्मात्मनांविभु' रिदि महाप्रलयकथनपूर्वकं चतुर्मुखात्प्राक्तनसर्गस्य कथितत्वादपजीव्येदानीमवान्तरप्रलयकथनपूर्वकमवान्तरसर्गः चतुर्मुखपाद्मलः दैनन्दिनः कथ्यते तत्र दैनन्दिनसर्गाणां तत्प्रलयानांचबहुत्वात्कथनस्य तच्छ्रवणस्य चाशक्यत्वात्पूर्वपराद्धाँन्तिमं पाद्माख्यं कल्पं तत्कल्पापेक्षया सन्निहितत्वात्कथयितुं प्रलयपूर्वकत्वात् सृष्टेः सृष्टिविषयेषु 'सदेवसौम्येदमग्रआसी,दित्यादिप्रलयकथनपूर्वकमेवसृष्टिकथनात् प्रथमं पाद्मकल्पात्प्राक्तनं प्रलयमाह उदाप्लुतमिति । 'निशायामागतायां,निर्मुक्तशशिभास्कर,मित्यारभ्य प्लावयन्त्युत्कटाटोपचण्डवातान्तर्मयं' इत्यन्तं वक्ष्यमाणरीत्या विश्वं त्रिलोकात्मकं जगदुदाप्लुतमासीदित्यर्थः अन्यत्पूर्ववत् एवं प्रलयमभिधाय सर्गं वक्तुमारभते तस्येत्यादिना । प्राक्कालपान्ते धाता भगवतो योगनिद्रायां त्रिलोक्या सह भगवति तिरोहितः तस्मिंश्च प्रबुद्धे ततएव पाद्मे कल्पे पद्मगर्भाणामिव्यक्तिं प्राप्त इति कथयितुं पद्मोद्भवमाह तस्येतिद्वाभ्याम् धिष्ण्यं प्राविविशत्स्वस्थानप्रविष्टमकरोन्नाभिसरसि स्थापयामासेत्यर्थः अन्यत्पूर्ववत् ॥ १५ ॥

अस्य चतुर्मुखाख्यजीवविशेषस्य कर्मणा संकुचितज्ञानस्य भगवदुपासनयैवाविर्भूतज्ञानक्रियाशक्तेर्लोककर्तृत्वं न स्वत इति वक्तुं तस्य प्रथमं मोहनमाह तस्यामित्यादिना द्वाभ्याम् सच स्वयंभूः तस्यां जगत्पद्मकर्णिकायामवस्थितास्तिष्ठन् लोकं प्रपंचमपश्यन् तद्दर्शनार्थं व्योम्नि विवृत्ते नेत्रे यस्य सः परिक्रमन्कमलमध्ये वर्तमानो दिक्षु परिभ्रमन् चत्वारि मुखानि लेभे प्राप्तवान् ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली

नमस्कारस्याष्टाङ्गविशिष्टत्वं सूचयतीत्याह मुहुर्गृणन्त इति । अस्य शेषस्य कृतानि कर्माणि अनुरागेण भक्त्या स्खलितपदानि यस्मिंस्तत्तथोक्तं तेन वचसा तज्ज्ञानप्रकारं कर्मप्रकारं च जानन्त इत्यर्थः देवाः किरीटाद्यलंकारवन्तः श्रूयन्ते कोऽस्यालंकारो येन देवमित्युक्तिः सार्थास्यादिति तं विशिनष्टि किरीटेति । सहस्रमेव साहस्रं किरीटानां सहस्रे प्रत्युप्तानां मणीनां प्रवेकैः श्रेष्ठैः प्रद्योतितं प्रकाशितमुद्दाममुत्कृष्टं च फणानां सहस्रं यस्य स तथोक्तस्तम् ॥ ६ ॥

तेन सङ्कर्षणेन सनत्कुमाराय प्रोक्तम् इदं पुराणं त्वत्प्रश्नपरिहारत्वेन वक्ष्यामीत्येतावता पूर्णत्वात् सांख्यायनायेत्यादिकथनेन किं प्रयोजनमित्याशङ्क्य पुराणाध्येतृगुरुपरम्पराकथनं श्रोतृणामतिशयबुद्ध्या तच्छ्रवणादौ क्षिप्रं निरन्तरं प्रवृत्तिः स्यादिति महाप्रयोजनमस्तीति सूचयन्नाह । प्रोक्तमित्यादिना । निवृत्तिधर्माभिरतत्वादिकं पुराणश्रवणाद्यधिकारसंपत्त्यर्थमुच्यत इति ज्ञातव्यम् ॥७॥८॥९॥

तदेवं शुकः पाद्मकल्पमिमं श्राविवत्युक्तं पाद्मं कल्पं मैत्रेयेण विदुरप्रश्नपरिहाररूपत्वेन कथयति उदप्लुतमिति । अनीहोऽक्लिष्टकारी धनः प्राणोऽस्यास्तीति अनी प्राणी तदर्थमीहा चेष्टावतारादि चरितं यस्य सोऽनीहः उपरतसर्गादि व्यापारो वा स्वात्मनि रतौ कृतक्षणो लब्धावसरः अहीन्द्रस्यानन्तस्य तल्पे भोगाख्यशय्यायामधिशयानो यद्यदा मीलितदृक् विनिद्रोऽपि निद्रामीलितलोचनो न्यमीलयत् योगनिद्रामुद्रितनेत्रः अभूत् तदेदं विश्वम् उदप्लुतम् उदे जले प्लुतं गतं मग्नं कल्पप्रलये जलशायिश्रीनारायणोदरगतमासीदित्यर्थः ॥ १० ॥

तदोदरीकृतलोकयात्रो हरिः किं चकारेति तत्राह । सोऽन्तरिति । यथाऽनलो दारुणि काष्ठे रुद्धवीर्यः प्रतिबद्धदाहकत्वशक्तिर्वसति तथा हरिरपि शरीरान्तर्हृदयाकाशेऽर्पितानि स्थूलकार्यदेहस्य लीनत्वाद्भूतानां सूक्ष्माणि रूपाणि यस्य स तथा यद्वा शब्दादितन्मात्रारूपाणि एतदात्मकत्वात्सर्वस्येति चराचरात्मकं सर्वं गृह्यते कालात्मिकां प्रलयकालमात्राख्यां शक्तिं यद्वा प्रलयकालाभिमानिनीं शक्तिं भार्यां सुखे प्रेरयन् स्वे पदे स्वस्थाने सलिले उवासेत्यन्वयः उदीरयाणः उदीरयमाण इति शानचा स्वात्मनीति सूचयति ॥ ११ ॥

स्वप्नावधिमाह । चतुर्युगानामिति । चशब्देनोवासेति पदमनुकर्षति चतुर्युगानां सहस्रमिति संख्यातं कालं स्वपन्नप्सूवासेति तत उत्तरकाले का क्रियाभूदिति तत्राह तयेति । सृष्टिसंहारशक्त्योरेकत्वद्योतनाय तयेति परामृष्टं सृष्टिकालाख्ययोदीरितया प्रेरितया स्वशक्त्याऽऽसादितकर्मतन्त्रः सृष्ट्यर्थमुपस्थापितजगत्सर्गादृष्टाख्यसाधनः नित्यज्ञानगोचरत्वादिमान् लोकान् स्वदेहे हृदयाकाशे ददर्श अपिशब्दान्निविधानपश्यदिति ग्राह्यं दृष्ट्वा सिसृक्षुरभूदिति वा अपीतानित्यपपाठः ॥ १२ ॥

सिसृक्षोस्तस्मादादौ किमभूद्येन तद्विशेषणोपादानं प्रयोजकं स्यादिति तत्राह । तस्येति । यदा सिसृक्षुरभूत्तदार्थो गर्भोदकलक्षणः तस्य हरेर्नाभिदेशादभिद्यत नाभिदेशं भित्वा प्राकाशतेत्यन्वयः हरेः स्वातन्त्र्यद्योतनार्थं भावप्रयोगः हरेः सृज्येष्वशेषविशेषज्ञानमस्ति न केवलं कुलालवद्युक्तिज्ञानमेवेति भावेनाह आत्मेति । आत्मनि स्थितेषु सूक्ष्मेषु योगिप्रत्यक्षविषयेषु आकाशादिभूतेषु इन्द्रियेषु जीवेषु वाऽभिनिविष्टा सम्यक् विषयीकृता दृष्टिरपरोक्षज्ञानं यस्य स तथा तस्य घटकारणादिवत् बाह्यार्थो नेत्याह अन्तर्गत इति । अनेनाब्भूतस्योदरे सत्त्वमुक्तं भवति इतोऽपि बाह्योदकं नेत्याह । तनीयानिति परमाणुत्वं प्राप्तः । गर्भोदकस्य प्रागेव सत्त्वात् किमिति कार्यानुत्पत्तिरिति तत्राह रजसेति । रजसा गुणेन विद्धोऽनुस्यूतः रजसोऽपि सत्त्वात् किमिति ततः पूर्वमनुत्पत्तिरित्यतः कालेति सृष्टिकालशक्त्या अनुत्पन्न इत्यनुत्पन्न इति भावः । अनेनेश्वरस्येच्छा मुख्यं कारणमित्युक्तं भवति वायुमन्तरेण कथमुत्पत्तिर्घटत इत्यत उक्तं शुष्यन्निति । शुष्यन् घनीभवन् वायुनेति शेषः उदकं वायुना शुष्यद्भिन्नपद्ममभूद्धरेरिति ॥ १३ ॥

उक्तकारणानां बहुत्वात् किमस्य मुख्यं कारणं यस्य स आत्मयोनिः कर्मणाऽदृष्टेन प्रतिबोधिनेन फलदानाय प्रेरितेन कालेनेरित इति शेषः उदतिष्ठत् यथा चतुर्दशभुवनं स्यात्तथा प्रवृद्धोऽभूदित्यर्थः ॥ १४ ॥

चेतनसंबन्धमन्तरेणाचेतनस्य पद्मस्य सूर्यवत्प्रकाशकत्वं कथं मण्यादीनामीश्वरेच्छया तेजःपरमाणूनां प्राचुर्येण संयोगसंभवात् कथंचिद्युज्यते अस्य तु रजसेति पार्थिवपरमाणुभ्य उत्पत्तिकथनात् तेषां तादृशशक्त्यदर्शनादतः कारणान्तरेण भाव्यं तत्किं तत्राह तल्लोकेति । यस्मात्पद्मप्रभूत् स एव विष्णुस्तल्लोकविभागकारणं पद्मं प्राविशत् यथा सूर्यवत् प्रकाशकत्वमाहात्म्यं स्यात्तथाविष्टवान् उकारेण रूपान्तरेण प्रवेशं सूचयति एवकारेणाणुमात्रमपि भेदो नास्तीति निर्धारयति भेददर्शनेन संतापलक्षणं दुःखं स्यादित्यर्थवाची वोकारः "उतापेऽव्ययमीशाने" इति यादवः विष्णोरेव प्रकाशकत्वं न पद्मस्य तस्य पृथिव्यात्मकत्वादिति भावेनाह सर्वेति । सर्वेषां शब्दादिगुणानामवभासः प्रतीतिर्यस्यां पृथिव्यां सा सर्वगुणावभासा तदात्मकत्वात् पद्ममपि गुणावभासमित्युच्यते तदुक्तं "तस्यासनविधानार्थं पृथिवीपद्ममुच्यत" इति तत्प्रवेशप्रयोजनमाह तस्मिन्निति । तस्मिन्पद्मे सन्निविष्टात् स्वयं प्रधानात्सर्वोत्तमाद्धरेः स विधाताऽभूदित्यन्वयः प्रधानवाचकस्त्वेकस्त्वनन्यःकेवलःस्वयमिति अतः स्वयं शब्दस्य प्रधानवाचित्वेऽपि विष्णोर्जातत्वं कथमवगतमितीयं शङ्का "पद्मसंस्थाद्धरेस्तत्र ब्रह्माजनि चतुर्मुख" इत्यनेन परिहर्तव्येति । ननु विधातेति क इति तत्राह स्वयंभुवमिति । अनेनाजत्वमपि व्याख्यातम् आत् विष्णोर्जात इति पद्मे स्वयं संभूत इति च प्रत्युक्तम् उक्तप्रमाणादन्यथा जनिकर्तुःप्रकृतिरिति सूत्रविरोधश्च सर्वस्याग्रे हरेर्जातश्चतुर्मुख इति निश्चेतुं तस्य नामान्तरं ध्वनयति वेदमय इति । मयगताविति धातोर्वेदेन गम्य इति वेदमयः लक्ष्मीनारायणावन्तरेण वेदप्रतिपाद्येषु प्रधानत्वाद्वा "हिरण्यगर्भःसमवर्तताग्रे भूतस्ये"ति श्रुतिः "यो ब्रह्माणं विदधाति पूर्वं,,मिति च पद्मभूतत्वमपि पद्मस्थितविष्णुभूतत्वमेवार्थं इत्यङ्गीकर्तव्यम् ॥ १५ ॥

नन्वत्र जातः स्वयंभूर्विष्णुः स्यात्स्वभूरिति प्रसिद्धेर्न ब्रह्मा विष्णोः पद्मप्रवेशाच्चेति तत्राह तस्यामिति । लोकं पृथिव्यादिकं स्वेतरं जनं वाऽपश्यमानः विवृत्तनेत्रः पर्यस्तलोचनः अत्र जातो ब्रह्मैव भवेत्तस्य चतुर्मुखत्वोक्तेः ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

अथ विभूतिकथनाय तदेव पुराणं प्रवर्त्तयति । उदाप्लुतमित्यादिना विश्वमत्र लोकत्रयम् सोऽन्तरिति । भूतसूक्ष्माण्यत्र विलीनपार्थिवांशतन्मात्रसहितानि त्रैलोक्यगतजीवानां लिङ्गशरीराण्येव ज्ञेयानि । यान्येवसमष्टि लिङ्गशरीरमित्युच्यते त्रिलोकाद्बहिर्जलादीनां विद्यमानत्वात् । तेषामन्तः शरीरेऽर्पणार्थमेव कालात्मिकामित्यादि जलस्तम्भनशक्त्या जलाभ्यन्तरे शयितत्वाद्बहिःस्थितानां महर्लोकादिवासिनां दृष्ट्यविषयत्वात्

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

तस्माद्युगान्तश्वसनाघूर्णजलोर्मिचक्रात्सलिलाद्विरूढम् । अपाश्रितः कञ्जमिति वक्ष्यमाणाख्यानलदृष्टान्तः संगमनीयः ॥ ११ ॥

स्वप्नानन्तरं च आसादितं जीवेषु संयोजितं कर्म्मतन्त्रं येन सः ॥ १२ ॥

सूक्ष्मन् स्वकार्य्यं जनयिष्यन् अभिद्यत उद्भूतः प्रवृद्ध इत्यर्थः ॥ १३ ॥

पद्मकोषोऽयं नारायणनाभिकमलादन्य एव जातः प्राकृतार्षमयत्वात् ॥ १४ ॥

तल्लोकेति । स गर्भोदकशाय्येव विष्णुरूपः सन् ॥ १५ ॥

तत्रैव परिक्रमन् भ्रमन् विवृत्तनेत्रः श्वसन् युगपत् चतुर्दिशोदर्शनोत्कण्ठया चत्वारि मुखानि लेभे ॥ १६ ॥

---

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ॥

तेषां संकर्षणज्ञानपूर्वकं ज्ञानं सिद्धमिति ज्ञापयितुं वासुदेवज्ञानस्यात्यभीष्टत्वं विज्ञापयितुं ते स्तुवन्तीत्याह मुहुर्गृणन्त इति । भक्त्युद्रेकान्मुहुर्गृणनं ज्ञाननिष्ठानां मनसा गृणनं संभवतीति प्रेमोल्लासख्यापनार्थं वचसेत्युक्तम् ततोऽप्याधिक्याय स्खलत्पदेति "यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाःप्रकाशन्ते महात्मनः" इति वाक्याद्वासुदेव इवास्मिन्नपि प्रेमाह अनुरागेण स्खलन्ति पदानि यस्मिन्निति । कविवन्नूतनकल्पनया स्तोत्रं निवारयति अस्य कृतानीति अस्य संकर्षणस्य कृतानि चरित्राणि तत्प्रतिपादकवचसा गृणन्त इति संबन्धः । नूतनपरिचयं व्यावर्त्तयन्संकर्षणैकतानतां तेषामाह तज्ज्ञाइति । संकर्षणस्य कृतं जानन्तीति तथा अन्यस्मै पूर्वोक्तलक्षणरहिताय भागवतं न वक्तव्यमिति तथोक्तं तस्य संकर्षणस्यावतार इवरूपान्तरेण स्थितिं वारयन्नानुषङ्गिकदोषाभावाय किरीटसाहस्रेति किरीटानां यत्साहस्रं सहस्रसमूहस्तस्य ये मणिप्रवेका मणयुत्तमास्तैः प्रद्योतिता ये उद्दामाः फणास्तेषां सहस्रं यस्य किरीटानामनादरार्थं साहस्रपदप्रयोगः तेन नित्यनूतनानि किरीटानि भवन्तीति ज्ञापितं मणयुत्तमैः प्रद्योतितत्वेन सहस्रफणा दर्शनं स्पष्टं ज्ञापितम् अनेन दर्शनेनापि भयं निवारितं गुणातीतत्वज्ञापनाय उद्दामेति प्रलयसाधकत्वात्कालान्तरे तेषां दाम्नेव संकोचःसंभवति तदपि निषिध्यते तथाकरणं तत्रत्यानां स्त्र्यादीनां नैकट्याभावाय फणा शब्दो विकसितफणवाची फणान्यासहस्रमभिव्याप्य यस्येति वा ॥ ६ ॥

एवं श्रोतृवक्तृस्वरूपं निरूप्य प्रस्तुतमाह प्रोक्तं किलैतादिति । ननु स्ववक्ष्यमाणस्य भागवतस्य माहात्म्यज्ञानार्थं किमित्येतावदुच्यते इत्याशङ्क्याह किलेति भगवत्तमेनेति निरुपाधिकभगवत्त्वं व्यावर्त्तयति अन्येभ्यश्चोत्कर्षं चाह अनेन तेनापि वासुदेवात् ज्ञानमिति ज्ञापितम् अस्य श्रवणेऽधिकारमाह निवृत्तिधर्माभिरतायेति । निवृत्तिधर्मे पारमहंस्यधर्मेऽभिरतिर्यस्य तेन पूर्वोक्तेन सहस्रफणरूपेणैवोपदेशं कृतवानिति ज्ञापनार्थं पुनर्निर्देशः कृतः सनत्कुमारायेति दुर्लभाधिकारित्वेन सनत्कुमार एवोपदिष्टः अन्येत्वानुषङ्गिकास्तत्र हेतुः निवृत्तिधर्माभिरतायेति पूर्वमुक्तः ततः परम्परामाह सचाहेति । सांख्यायनाय स उक्तवान् योगनिष्ठः सनत्कुमारः सांख्यनिष्ठायोक्तवान् सांख्ये व्यवहारोऽन्यथा भातीति तदर्थमाह धृतव्रतायेति । धृतानि व्रतानि येन अङ्गीत संबोधनं तथाधिकार एव सिद्ध्यतीति विदुरस्यापि तथात्वाय ॥ ७ ॥

श्रीमद्वल्लभाचार्यकृत सुबोधिनी

सांख्यायनस्तु पराशरं भक्तं मत्वा तस्मै प्रसंगादुक्तवानिति स्वगुरोराधिक्यकथनार्थमाह सांख्यायन इति । सहि पारमहंस्यधर्मेषु मुख्यः परमहंसानां श्रवणकीर्त्तनमामश्यकमतो भगवद्विभूतीर्विवक्षमाणो वक्तुमिच्छन्नन्विताय मिलितायास्मद्गुरवे पराशराय जगाद अन्वितो योग्यो वा अथ भिन्नप्रक्रमेणबृहस्पतेः स्थाने गत्वा तस्मै चोक्तवान् बृहस्पतेरत्र निरूपणं देवलोके भागवतप्रचारार्थं ब्रह्मा सनकादयश्चोपरितनलोकेषु संत्येव ध्रुवपर्यन्तं बृहस्पतिः भूमौ पराशरः पाताले संकर्षण एवास्त्यतश्चतुर्दशभुवनेषु भगवच्चरित्रं भागवतं व्याप्तमस्तीत्युक्तम् ॥ ८ ॥

पराशराद्भूमौ प्रचारमाह प्रोवाचमह्यमिति । मह्यं मैत्रेयाय दयालुरिति स्वस्य तथाधिकाराभाव उक्तः मुनिरिति अग्रे प्रचरणज्ञाः स इति प्रसिद्धः पराशरः यः सप्तवार्षिकोऽपि मार्कण्डेयापेक्षयापि वयसा वृद्धो गर्भे च वेदाध्येता पूर्णज्ञानः पुलस्त्येनोक्तः पुराणं वक्तव्यमित्याशप्तः पराशरः स्वपितरं शक्तिं राक्षसभक्षितं श्रुत्वा राक्षससत्रे सर्वाण्येव रक्षांसि हतवानतः स्ववंशरक्षार्थं पुलस्त्यः समागत्य राक्षससत्रनिवृत्त्यर्थमप्रार्थयत् ततो निवृत्ताय पराशराय वरं दत्तः पुराणाचार्यो भवेति अन्यथा अनधिगतः पुराणं वक्तुं नशक्नुयात्तत उक्तं पुलस्त्येनोक्त इति आद्यं भागवतं पुराणं प्रवृत्तौ प्रथमोत्पन्नाय ब्रह्मणे भगवता प्रथमत एवोक्तं विष्णुपुराणं तु भागवतसंबद्धप्रमेयं व्यासशाखाभेदवद्विष्णुपुराणे मैत्रेयपराशरसंकथा निरूपिता तद्व्यावृत्त्यर्थमाद्यमित्युक्तमन्यथा विष्णुपुराणे नेयं परम्परानिरूपिता सोऽहं गुरुकृपयानुगृहीतस्तव श्रोतृसंबन्धत्वेन एतद्भागवतं कथयामि वर्त्तमानसामीप्ये वर्त्तमानप्रयोगः वत्सेति स्नेहकथने हेतुर्भगवदाज्ञातु तावन्मात्र एव मर्यादारक्षार्थमधिकारे विशेषणद्वयमाह श्रद्धालवे नित्यमनुव्रतायेति । श्रद्धामुख्योऽधिकारो नित्यं चानुव्रततमिच्छानुरूपनिरन्तर सेवा अन्तर्वहिरधिकारहेतू श्रद्धा सेव ॥९॥

एवं परम्परां प्रतिज्ञांचोक्त्वा पुराणमारभते उदप्लुतमिति पुराणं हि दशलीलायुक्तं तत्रादौ सर्गो वक्तव्यः स च भागवतत्वाद्भगवत्कृतः तत्र तत्पृष्टानामर्थानां ब्रह्मकल्पे अभावात्कल्पान्तरानुसारेण वक्तव्यं यद्भगवतैव कृतं तच्चरित्रं पद्मकल्पे वर्त्तत इति तन्निरूपणार्थं पूर्वकल्पस्य प्रलयानन्तरं स्थितिमनुवदति उदकेनप्लुतं सर्वमेव विश्वमासीदिति बहुविधा हि प्रलयाः तामसेषु कल्पेषु तामसानि भूतानि दग्धानि अग्रिमसृष्ट्यर्थं राजसेषुतु प्रलयजलेन निमग्नानि भवन्ति सात्विकेषु तु स्थिता एव पदार्था एकदेशेन विनिवृत्ता अवशिष्यन्त एव यद्यग्रे सात्विक एव कल्पो भवति तत्र पद्मकल्पात्पूर्वकल्पो राजस इत्युदप्लुतमित्युक्तम् इदं विश्वं पूर्वमुदप्लुतमासीदेदमिति सर्वदा विश्वमेकधर्मवेति वृक्षवत्प्रवाहानादित्वं निरूपितं तदेति पूर्वप्रलये तस्य प्रलयनिमित्तमाह यन्निद्रयेति । यद्यदा निद्रया भगवच्छक्त्या अलुप्तज्ञानक्रिरेव अमीलितदृक् न्यमीलयत् अक्षिनिमीलिनं कृतवान् निमीलितचो जागर्तीत्यर्थः नन्वेवं स्थितौ को गुण इत्याशङ्क्याह स्वात्मकृतक्षण इति 'कदाचिद्रमते स्वस्मिन् प्रपञ्चेपि कचित्सुख,मिति प्रलयकरणे निमित्तमुक्तं स्वात्मरतौ आत्मनि क्रीडायां स्वरूपानन्दरमणे स्वरूपानन्दः पूर्णानन्दः अक्षरानन्दस्तु लक्ष्मीरूपः पूर्वं निरूपितः स च भगवान् व्यापिवैकुण्ठेऽपि कदाचिल्लक्ष्म्या सह क्रीडति कदाचित्स्वानन्दमेवानुभवति बीजधर्मा एव सर्वत्र कार्यपरम्पराया आदिस्तंवपर्यन्तं तथाप्यंशकार्येषु यादृशमेव वहीरमणं तादृशमेवान्तः क्रिया वहीरमणे अभिवृद्धिकरी ज्ञानंत्वन्तः अन्योऽन्यवाधकत्वं

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ॥

सर्वेहोपरतिरेवात्मानन्दानुभवे तदाह निरीह इति । सर्वचेष्टारहितः
यथा पुरुषत्वे तुल्येऽपि रङ्कमहाराजयोर्वहिर्भोगातिशयस्तथात्मन्यपी-
ति यावदेवात्मत्वेन जानाति तावदेवात्मसुखं वर्द्धते यथा यथा परि-
च्छिनत्ति तथा तथाल्पो भवति इदमेव भगवान् सृष्टिप्रलयाभ्यां
बोधयति एक इति । तत्सुखमक्षरब्रह्मैकेनैवानुभूयते क्रिडायां प्रयत्न
व्यावृत्त्यर्थमाधिकं शयानो जातः तल्पकृतपीडानिवृत्त्यर्थमहीन्द्रतल्पे
शेषपर्यङ्के स हि भगवच्छ्वासोत्थवायुपानेन प्रतिक्षणं तुङ्गः कोमल-
श्च भवति अत एव बहुकालं शयानो भवति ॥ १० ॥

तर्ह्यग्रे सृष्टिर्नस्यादित्याशङ्क्याह सोऽन्तरिति । शरीरं त्वानन्दमय-
मिति पूर्वं निरूपितं सदानन्दमयं वा सच्चिदानन्दरूपमिति वस्तु
स्थितिः पुरुषस्य सद् बाह्यं मध्ये ज्ञानमानन्दस्त्वंतश्रियास्तु विपरीतं
तस्याः सत्य एव रतिः नत्वानन्दे कदाचिदपि अन्तः सांख्ययोगज्ञाना
धिकार एव तस्या बहिर्भक्तेश्च पुरुषस्य तु विपरीतम् आनन्दानुभव
स्तस्यान्तर एव युक्तो न बाह्ये भेदकरणप्रसङ्गादानन्दस्य स्वस्थानस्य
गाच्च न तादृशानन्दोऽनुभवयोग्यः भगवत्यपि तथा जीवत्वात् स हि
भावत्रिषु वर्त्तत इति सच्चिदानन्देषु नैकत्रैवस्थितिः अन्यथा तादृग्
रूपवैयर्थ्यापत्तेः अनुस्यूतस्तु तद्वात्मक एव नित्यसिद्धः अतः सति
रमणेऽक्षरानन्दं पृथक्कृत्य लक्ष्म्या सह रमते इति रमणे सदानन्दे
तस्यान्तर्बहिर्निभाय बाह्याभ्यन्तरभेदेन रमते तत्र प्रपञ्चो वेदाश्च
रमणसाधनं स्वकृतप्रपञ्चेऽप्येतदुभयं करोति ते कल्पप्रलया इत्युच्य-
न्ते तत्राधिकारिणः कालस्य नियामकत्वाद्भगवदेकसंभोगसंपादक-
त्वाच्च अंशानां भोगो माभवत्विति तद्विषयानन्तःप्रवेश्य शेते तदाह ।
अन्तःशरीरेऽर्पितानि भूतसूक्ष्माणि येनेति चिदंशान् सर्वानेव यथायथं
स्थापयित्वा स्वात्मानुभवं करोतीति तेषामतिक्रमनिवृत्त्यर्थं कालात्मि
कां शक्तिं संहारिकामुदीरयाणः अलीनां कुर्वाणः प्रेरयमाणः तस्मिन्
सलिले स्वे पदे नारायणस्य स्थानभूते तस्मिन् पूर्वोक्ते उवास स्थितः
अयमंशः पूर्वोक्ताद्विशेषः अवान्तरकल्पत्वादल्पप्रयत्नव्यापाराभावमनि
वर्त्तकत्वाच्च सलिलानुग्रहः अतोऽस्मदादिषु स्वस्य सच्चिदानन्दांशेषु
रमणेशीघ्रं परमपुरुषार्थपर्यवसानाभावात् कारणे सतिरतिंकुर्वन्तिननु
बहिः स्थितानां पदार्थानामन्तःस्थापितत्वात् कालस्य च विद्यमानत्व
न् सर्वं जगद्बहिरागच्छेत् तत्राह यथानलो दारुणि रुद्धवीर्य इति ।
कारणे तादृशं रूपमस्तीति ज्ञापयितुं कार्ये तादृशं रूपं दृष्टान्तीकृतं
यथा तस्य दाहकशक्तिर्निरुद्धा तथा कालादीनामपि स्वस्यापि
शक्तिर्निरुद्धा ॥ ११ ॥

एवं कियत्कालं स्थित इत्यत्राह चतुर्युगानामिति । चतुर्युगानां स्व-
रूपमग्रे निरूपणीयं तेषां सहस्रावृत्तौ ब्रह्मणो दिनं भवति तावत्येव
निशेति तावत्कालं शयानं चकारात् सन्ध्यांशयोर्ग्रहणम् अन्यथा सं
ख्यानिवृत्त्यर्थंच्च कालशक्त्याः पर्वद्वयस्य विद्यमानत्वात् प्रथमपर्वाति-
क्रमस्य यदैवसा द्वितीये पर्वणिसमायाति तदैवानन्दतिरोधानार्थं ज्ञान
शक्तिमुद्भावयति अतिक्रमणज्ञापनार्थं वा अतएवास्मिन्कल्पे जीव-
द्वारैव भोगः अतो भगवान् स्वयमत्रैव स्वकीयया प्रामाणिकया
स्वेनोदीरितया स्वेच्छारूपया स्वशक्त्या न तु भिन्नतया स्थितकालेन
कदाचिद्भगवदिच्छया सोऽप्यन्तः प्रविश्य तथा कुर्यात् ततश्च तस्य
नियतत्वात् कालातिक्रमो भवेत् कालाधीनसृष्टिश्चेयं न भवेत् शक्त्य
न्तराणामप्युद्बोधप्रसंगात् अतो भगवदिच्छानुसारेण स्वशक्त्यैव
कालाख्यया आसादितमुपस्थापितंलोकानांतन्त्रं कारणसाधन यस्य
चेत्यागमनगाभ्रेणैव विषयं करणसाधनं चोपस्थापितवतीत्यर्थः

तथा अपीतान् मुक्तान् लोकान् जनान् स्वदेहे ददृशे वासनया विषये
संबन्धात् स्वांशेन भगवति चिति प्रविष्टान् स्वस्मिन् विद्यमानमंशंतत्र
प्रवेशयितुं तत्र ददृशे तदा सदंशमध्ये सर्वोऽपि चिदंशः पिण्डीभूतः
॥ १२ ॥

तस्योद्गममाह तस्य भगवतोऽर्थसूक्ष्मे जीवानामुपभोग्यरूपे अभि-
निविष्टदृष्टेः सतः तस्यान्तर्गतोऽर्थःचिज्जडात्मकोऽभूत् तदातनीया-
न् सूक्ष्मरूपो जातः अरूपस्य सूक्ष्मरूपं महान्विशेषः तदपि रजो-
गुणेनैव नतु भगवता अन्यथा पुरुष इव भगवद्रूपता स्यात्तदनन्तरं
ततस्तेनैव रजसा कालानुगतेन विद्धः सन् सूष्यन् प्रसवं प्राप्तुवं-
स्तदा नाभिदेशादभिद्यत नाभिदेशं भित्वाननिर्गतः किंत्वति सूक्ष्म-
त्वादाकाशशरीरत्वाच्च तस्माद्देशात् स जीवपदार्थत्वात् प्रसव-
प्रकारेण निर्गत इत्यर्थः ॥ १३ ॥

निर्गतस्य स्वरूपमाह स पद्मकोश इति । नारायणस्तु जलात्मक
इति जलकार्येषूत्तमं पद्मकोषमेव तत उदतिष्ठत् सहसेति विकाश-
मन्तरेणैव तदातस्मिन् वीहः स्थितःकालकर्मवत्प्राणिनांसंबद्धको-
शोत्पत्त्या प्रबुद्धं बहिः स्थितं कालमन्तः प्रवेशित इति कालेनैवकेवं-
लेनाप्रिसकार्यं कृतमित्याह कालेनेति । स्वरोचिषा स्वस्य तेजोरूपेण
कालस्य त्रिरूपत्वात् प्रकाशकं रूपं तस्य गृहीतं विशालमेवतत्स-
लिलं विद्योतयन्नेव जननप्रकाशनयोर्विलम्बाभावात् अर्क इव तथा
सामर्थ्याय आत्माभगवानेव योनिः कारणं यस्य सं उदतिष्ठदिति
संबन्धः ॥ १४ ॥

सहसा निर्गतत्वात् तद्विकाशार्थं स एव भगवांस्तत्र प्रविष्ट-
इत्याह ॥ कारणप्रवेशनव्यतिरेकेण पुरातनस्य निःसारस्य कार्योप-
योगो न भविष्यतीति नारायणप्रवेशः उ इति कोमलसंबोधने पूर्वं
नारायणोऽपि तत्र प्रवेशाद्विष्णुर्जातः विष्लृव्याप्ताविति वा पूर्वमेव
तत्र स्थितस्तत्राभिव्यक्तो जात इत्यर्थः तत्र हेतुः सर्वगुणानामव
भासो यत्र भगवद्गुणानां सर्वेषामभिव्यञ्जककार्यरूपाभिव्यक्ति-
स्थानत्वाद्भगवत्सहिताएवसर्वेगुणा भासन्तामित्येतदर्थं भगवत्प्रवेश
इत्यर्थः अयं पाद्मकल्पे विशेषः तत्र सर्वे जीवा एकीभूताः समष्ट्या
त्मकाः सन्त एकरूपेण प्रादुर्भूता इत्याह तस्मिन्स्वयमिति । स्वयं
भगवानत्र चितो भेदाभावात् तत्राप्युभयक्रीडार्थं वेदमयो विधातेत्यु
क्तं वेदमयत्वादात्मरमणं विधातृत्वाद्बहीरमणमिति तस्योद्गतस्य
नामाह स्वयंभुवमिति । तत्रत्या लोकास्तस्य पितरमदृष्ट्वा स्वयमेव
ब्रह्मा जात इति स्वयंभुवमाहुः एवं लोकैः स्वयंभूत्वेन निरुक्तोऽ
भूत् ॥ १५ ॥

ततो यज्जातं तदाह तस्यामिति पूर्वोक्तकमल एव स्वयमपि
पूर्वोक्त एव भगवत्प्रवेशो न विकसिते कमले कर्णिकायामवस्थि-
तः स्वातिरिक्तं लोकमपश्यमानः जनात्मकास्त्वस्मिन्नेव लोका-
त्मकास्तु कमलमेतदुभयाविसर्गाभावाल्लोकादर्शनं ततोऽन्यथा
दर्शनं कृतवानित्याह परिक्रमन्निति । परितः आक्रमन् शिरः प्रसार
यन् व्योम्नीत्युपरि भागे पूर्वमेव पिण्डस्योत्पन्नत्वात् विवृत्तनेत्रःप्रसा
रितनयनो भूत्वास्वयमेवच भागं न पश्यति तत्रैव लोको भविष्यती
ति बुद्ध्या सर्वत्र मुखेच्छायां सर्वगुणावभासस्य प्रतिष्ठितत्वादनु
दिशं चत्वारि मुखानि लेभे तदा चतुर्मुखो ब्रह्मा जात इत्यर्थः ॥ १६ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कृतानि कर्म्माणि गृणान्तः केन अनुरागेण स्खलन्ति पदानि यस्मिन् तेन वचसा तानि जानन्तीति तज्ज्ञा इति स्वामिचरणाः। कृतानि लीलाःसहस्रमेव साहस्रं तत्र मणिप्रवेकै रत्नमुख्यैः। "मुख्य वर्य्यवरेण्याश्च प्रवेकानुत्तमोत्तमा"इत्यमरः। अपृच्छन्निति पूर्वेणै-वान्वयः ॥ ६ ॥

तेन सङ्कर्षणेन सनत्कुमाराय भगवत्तमेनेति स्वार्थे तमप्। यद्वा जगदुत्पत्त्यादि ज्ञानवत्सु भगवत्सु श्रेष्ठेन ॥ ७ ॥

बृहस्पतेर्बृहस्पतये ॥ ८ ॥

स पराशरः पुलस्त्येनोक्त इत्यत्रेयं कथा पितरं राक्षसभक्षितं श्रुत्वा पराशरो राक्षससत्रे प्रवृत्तो वशिष्ठवचनान्निवृत्तस्ततः पुल-स्त्येन स्वसन्ततिरक्षणात्तुष्टेन वरो दत्तः पुराणप्रवक्ता भवेति ॥ ९ ॥

तदेवं श्रीभागवतस्य संकर्षणात् संप्रदाय प्रवृत्तिं प्रदर्श्य तत्-कथामारभते। उदाप्लुतं एकार्णवोदकनिमग्नमेव तदा आसीत्। कदा यदा नैमित्तिकप्रलये अमीलितदृक् अतिरोहितचिच्छक्ति-रेव गर्भोदकशायी श्रीनारायणो नेत्रे निमीलितवानित्यर्थः। तल्पे इत्यार्षे स्वात्मभिः स्वरूपशक्तिभिः सह रतौ रमणे कृतोत्सवः। निरीहः त्यक्तमायाविनोदः ॥ १० ॥

ननु त्रैलोक्यगतानां जीवानां तदा का वार्त्तेत्यत आह अन्तः-शरीरे स्वशरीर मध्यएव अर्पितानि भूतसूक्ष्माणि त्रैलोक्यगतदेव-मनुष्यादिसूक्ष्मशरीराणि येन सः। केन प्रकारेणेत्यत आह कालात्मिकां कालरूपां स्वशक्तिम् उदीरयन् प्रेरयन् तदिच्छावशात् प्रलयारम्भकालेनैव त्रिलोकस्थानां सर्व्वेषां स्थूलशरीराणि ध्वंस-यित्वा लिङ्गशरीराणि भगवदन्तःशरीरे अर्पितानि यान्येव सम-ष्टिलिङ्गशरीरमाहुरित्यर्थः। एवम्भूतः स स्वे पदे पातालतले स्वस्थाने सलिले एकार्णवोदकप्लुतेऽपि जलस्तम्भनशक्त्या उवास। ततश्च महर्लोकादिवासिनां दृष्ट्यविषयत्वे तस्य दृष्टान्तः यथानल इति ॥ ११ ॥

एवं कियन्तं कालं स विशश्रामेत्याह चतुरिति स्वया चिच्छक्त्या जाग्रत्या सह जाग्रदपि स्वपन् मायाशक्त्या शयितया सह शयान एवेत्यर्थः। ततश्च प्रलयावसानसमये स्वशक्त्या कालाख्यया आसादितं भोगाद्यर्थं संयोजितं स्वान्तःस्थितजीवेषु प्रतिस्वं कर्मतन्त्रं येन सः। ततश्च लोकानपि ब्रह्मादिस्थावरान्तानपि इतान् सूक्ष्म-रूपेण स्वस्मिन् प्राप्तान् ददृशे स्वशरीराद्निष्क्रमयितुमिति भावः १२

उक्तपोषन्यायेनाह तस्य नारायणस्य अर्थसूक्ष्मेषु सर्वजीवलिङ्ग-देहेषु अभिनिविष्टा निष्कासनेच्छया प्रविष्टा दृष्टिर्यस्य तस्य अन्त-र्गत एवार्थः प्राकृतपदार्थविशेषः तनीयानतिसूक्ष्मोऽपि कालानुसा-रिणा रजसा गुणेन विद्धः संक्षोभितस्ततश्च सूष्यन् प्रसोष्यन् नाभिदेशादुद्भिद्यत ऊर्ध्वमुपससर्प ॥ १३ ॥

सचार्थः कालेन पद्मकोषः सन्नुदतिष्ठत् प्रलयमहार्णवजला-दप्यूर्ध्वप्रदेशे तस्थौ कर्माणि जीवादृष्टानि प्रतिबोधयतीति तेन आत्मा श्रीविष्णुर्योनिर्यस्य सः अर्क इवेति स्वप्रभयैव सव्यक्षपदि-ति तत् प्रकाशनार्थमर्कान्तरापेक्षा नास्तीति भावः ॥ १४ ॥

ततश्च तल्लोकपद्मं लोकात्मकं वैराजमित्यर्थः। उ इति सम्बोध-ने। स एव प्रलयारम्भे यस्योदरमेव वैराजः सूक्ष्मरूपेण प्राविशत् प्रलयान्ते च ततः पद्मरूपेणाविर्भूतः वैराजः स एव गर्भोदशायी विष्णुः प्राविविशत् स्वार्थे णिच् अन्तर्यामित्वेन प्रविवेश पद्मं

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ॥

कीदृशं सर्वेषां गुणानां गुणकार्याणां जीवभोग्यानां स्वर्गनरकादीनां अवभासः प्रकाशो यत्र तत् तस्मिन् पद्मे विधाता ब्रह्मा अभूत्। कोऽसौ अदृष्टपितृकत्वेन यं स्वयम्भुवं वदन्ति सः। प्राक्कल्पान्ते नारायणेन सह निद्रया एकीभूत आसीत्। तस्मिन् प्रबुद्धे तत ए[illegible] पद्मद्वारेणाभिव्यक्त इत्यर्थः। अत्र स्थूलो वैराजः सूक्ष्मो हिरण्य-गर्भः सृष्ट्यादिकर्त्ता चतुर्मुख इति ब्रह्मण एव त्रैरूप्यं ज्ञेयम् ॥१५॥

परिक्रमन् तत्रस्थ एव लोकनिरीक्षणार्थं ग्रीवां चालयन् युग-पदेव दिक्चतुष्टये व्योम्नि निर्जनत्वादाकाशमात्रे विवृत्तनेत्रः निक्षिप्तदृष्टिः अनुदिशं चतुर्दिक्षु चत्वारि मुखानि लेभे ॥ १६ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

सहस्रमेव साहस्रं किरीटानां साहस्रे ये मणिप्रवेकाः मणयुत्तमा-स्तैः प्रद्योतितम् उद्दामानां श्रेष्ठानां फणानां सहस्रं यस्य तमपृच्छन्निति पूर्वेणान्वयः ॥ ६ ॥

तेन पातालतलगतेन सनत्कुमाराय एतद्भागवताख्यं शास्त्रं प्रोक्तम् वर्णितम् वर्णनप्रयोजनं वक्तुं सनत्कुमारं विशिनष्टि। निवृत्तिधर्माभिरताय मोक्षधर्मप्रवर्तकाय तदुक्तं मोक्ष धर्मे।

> सनः सनत्सुजातश्च सनकः ससनन्दनः।
> सनत्कुमारः कपिलः सप्तमश्च सनातनः ॥ १ ॥
> सप्तैते मानसाः प्रोक्ता ऋषयो ब्रह्मणः सुताः।
> स्वयमागतविज्ञाना: निवृत्तिधर्ममास्थिताः ॥ २ ॥
> एते योगविदां मुख्याः सांख्यज्ञान विशारदाः।
> आचार्या धर्मशास्त्रेषु मोक्षधर्मप्रवर्तकाः ॥ ३ ॥

इति वैष्णवे च भृग्वाद्युत्पत्तिमुक्त्वा"सनन्दनादयो ये च पूर्वं सृष्टास्तु [illegible]सा। नैतेलोकेषु सज्जन्ते निरपेक्षाःप्रजास्तुते। सर्वे ते चागतज्ञानाः वीतरा-गाविमत्सराः। आचार्या मोक्षधर्मस्य मोक्षशास्त्रप्रवर्तकाः,, इति अ[illegible] पिप्राक्कल्पसंप्लवविनष्टमिहात्मतत्त्वं सम्यग्जगाद मुनयो यदचक्षता[illegible] त्मन्नित्युक्तम् ननु पातालतले शेषः कश्यपपुत्रोऽप्यस्ति तस्या[illegible] अनन्तसंकर्षणादिसंज्ञाः संति स किं सनत्कुमाराय मोक्षप्रयोज[illegible] कमिदं प्रोक्तवानित्यत्राह भगवत्तमेनेति शेषोऽपि भगवान् संक[illegible] र्णांशत्वात् तस्याप्यंशी साक्षात्संकर्षणः भगवत्तमः अनयोर्भे[illegible] दशमस्कन्धे स्फुटतरः "वासुदेवकलानन्तः सहस्रवदनः स्वराट् अग्रतो भविता देवः,, इति संकर्षणं भगवन्तमभिधाय तस्य गोकु[illegible] वासं प्रतिपाद्य पुनः शेषोऽन्वगाद्वारि निवारयन् फणैरिति भगव[illegible] शेष उक्तः स च पुनः यस्यैकांशेन विधृता जगती जगतः पते[illegible] त्यनेन भगवत्तमसंकर्षणांशत्वेनोक्तः तस्य कश्यपपुत्रस्य स्वपि[illegible] पितामह पूज्यं सनतकुमारं प्रति श्रीमद्भागवतवर्णनेऽधिकाराभाव[illegible] सामर्थ्याभावाच्च तदंशिना साक्षात्संकर्षणेनेत्यर्थः स च सनत्कुमारः सांख्यायनाय आह ॥ ७ ॥

पारहंस्ये परमहंसानां धर्मे मुख्यः प्रधानः विवक्षमाणः [illegible]मिच्छुः अन्विताय अनुगताय ॥ ८ ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

स दयालुः पराशरः पुलस्त्येन पुराणाचार्यो भविष्यतीत्युक्तः आद्यं सनातनं पुराणं श्रीमद्भागवताभिधं मह्यं प्रोवाच एतत्पुराणं तव कथयामि पुलस्त्येनोक्त इत्यत्राख्यायिका पराशरः राक्षसेन भक्षितं शक्तिसंज्ञकं पितरं श्रुत्वा राक्षससत्रे प्रवृत्तः पितामहस्य वसिष्ठस्य वाक्येन राक्षससत्रान्निवृत्तस्ततः पुलस्त्येन स्वसंतति रक्षणात्तुष्टेन पराशराय वरो दत्तः पुराणप्रवक्ता भविष्यतीति ॥ ९ ॥

एवं संकर्षणात्सनत्कुमारेणानीयेह प्रवर्तितं श्रीमद्भागवतं पुराणं पराशरान्मया लब्धमित्युक्तमथ श्रीमद्भागवतबलेनैव प्रस्तुतप्रश्नानां प्रत्युत्तराणि विवक्षुः प्रथमं पद्मोत्पत्तिं दर्शयति उदाप्लुतमित्या- दिना यत् यदा भगवान् महदादीन् सृष्ट्वा तैर्ब्रह्माण्डं विधाय तत्रब्रह्मा- ण्डान्तर्गतजले गर्भोदसंज्ञके अहीन्द्रतल्पे निरीहः त्यक्तलोकव्यापारः आत्मरतौ सत्यामधिशयानोन्यमीलयत् नेत्रे निमीलितवान् कथं भूतः अमीलितदृक् अतिरोहितज्ञानदृष्टिः तदा स्वाधारनारायणद्वारा इदं पद्माकारेणोत्पन्नतया वक्ष्यमाणं भुवनत्रयमुदोदकेन प्लुतं निमग्न- मासीदित्यन्वयः चतुर्मुखोयन्नाभ्यात्पद्माज्जातस्तस्मिन्नारायणोप्रविश्य प्रत्यहं स्वपिति पुनरुत्थाय त्रिलोकीं सृजति स नारायणः ब्रह्माण्डान्तर्जले अन्तः स तस्मिन्सलिले आस्तेऽनन्तासनो हरि- रिति वक्ष्यमाणत्वात् तदन्तर्गतं लोकत्रयं पद्मात्मना स्थितमभूत् लोकानपीतान् ददृशे स्वदेहे इति वक्ष्यमाणत्वात् अतो युक्तमुक्त- मुदाप्लुतमिति तथा चैकादशे "मया संचोदिता भावाः सर्वे संह- त्यकारिणः । अण्डमुत्पादयामासुर्ममायतनमुत्तमम् । तस्मिन्नहं समभ वमण्डे सलिलसंस्थितौ । मम नाभ्यामभूत्पद्मं विश्वाख्यं तत्र चात्म- भूः इति ॥ १० ॥

स भगवाननन्तः शरीरे अर्पितानि निहितानि भूतसूक्ष्माणि लोक- पद्मरूपेण सृज्यमानानि भोक्तृभोग्यरूपाणि येन सः कालात्मिकां शक्तिमुदीरयाणः कालरूपां स्वीयां शक्तिं प्रेरयन् तदुदीरणं पुनः सृष्ट्यवसरे प्रबोधनार्थम् सलिले यत्स्वीयं पदं स्थानं तस्मिन् बहि र्व्यापाराभावे दृष्टान्तः दारुणि यथा रुद्धं वीर्यं दाहकत्वादि यस्य सः ॥ ११ ॥

स्वया स्वेच्छया स्वपन् स्वशक्त्या कालाख्यया पूर्वमेव प्रबोधन- र्थमुदीरितयोपलक्षितः आसादितं संपादितं कर्मतन्त्रं क्रियाकलापो येन सः अपीतान् लीनान् ददृशे ॥ १२ ॥

अर्थसूक्ष्मे उत्पादनीये पद्मेऽभिनिविष्टा दृष्टिर्यस्य तस्य अन्तर्गतः तनीयान् सूक्ष्मतरः कालानुगतेन कालप्रबोधितेन रजसा गुणेन विद्धः संक्षोभितः सन् सूष्यन् प्रसोष्यन् उद्भाविष्यन् नाभिदेशाच्चदा अभिद्यत निरभिद्यत ॥ १३ ॥

स तनीयानर्थः पद्मकोशः सन् कर्म जीवादृष्टं बोध्यतेऽनेनेति तथा तेन उदतिष्ठत् कथं भूतः आत्मा परमात्मा योनिर्हेतुर्यस्य सः ॥१४॥

सर्वान् गुणान् जीवानां भोग्यानर्थानवभासयतीति तथा तत् लोकपद्मं स एव पद्मनाभः प्राविविशत् उ इति संबोधने तस्मिन् अन्तर्यामितया विष्णुनाधिष्ठिते पद्मे स्वयं प्रथमं केवल एव वेद- मयः वेदप्रचुरः "यो ब्रह्माणं विदधाति पूर्वं तस्मै वेदांश्च प्रहिणो- ती"ति श्रुतेः भगवदुपदेशेन लब्धवेद इत्यर्थः अभूत् जातःकोऽसावहृ- ष्टपितृकत्वेन यं स्वयंभुवं वदन्ति यो भगवतैव पूर्वकल्पे मनसा वेदोप- देशतः शिक्षितः वेदप्रचुरः शब्दब्रह्माख्यः चतुर्युगसहस्रपरिमिते भगवच्छयनकाले तत्र शयानः शयनकालसमाप्तौ तस्मिन्प्रबुद्धे तत एव पाद्मे कल्पे पद्मद्वारेणाभिव्यक्तिं प्राप्तः तथोक्तं मोक्षधर्मे "ब्राह्मे रात्रिक्षये प्राप्ते तस्य ह्यमिततेजसः । प्रसादात्प्रादुरभवत्पद्मं पद्मरुहेक्षण॥ तत्र ब्रह्मा समभव,,दिति आदौ ब्रह्मकल्पस्त त्रमहदादि सृष्टिपूर्वकब्रह्माण्डरचनाशब्दब्रह्मोत्पादनादिलीला तद्रात्रिक्षये पद्म- कल्पस्तदन्तरालिककल्पान्तराङ्गीकारे आन्तरालिके पाद्मब्रह्मकृत- सृष्ट्यभावप्रसङ्गः अतः क्वचिन्नामान्तरायणयोरेवेति दिक् ॥ १५ ॥

यः ब्रह्मकल्पे वेदमयः स ब्रह्मा पद्मकल्पे चतुर्मुखो जात इत्याह तस्यामिति ॥ १६ ॥

---

भाषाटीका ।

वे सनत्कुमारादि मुनि जन उन शेषजी के चरित्रप्रभाव कूं जाननेवाले होने से अनुराग से अटकतेसे वचनों से उनके चरित्रों को गान करतेहुये हजार किरीटों के उत्तम मणियों के प्रकाश से अति शोभायमान हजार फणोंवाले शेषजी सें प्रश्न करतभये ॥६॥

हे विदुर ! तब उस पुराण को भगवान् शेषजीने निवृत्तिमार्ग के धर्म में निरत सनत्कुमार के अर्थ उपदेश किया सनत्कुमारजी ने भी पूछने पर उत्तम व्रतधारी सांख्यायन के अर्थ कहा ॥ ७ ॥

परम हंस धर्म में मुख्य सांख्यायन मुनिने भी भगवान् की लीला- विभूतियों के कथन की इच्छासे अनुव्रत हमारे गुरू पराशरजी को तथा वृहस्पतिजी को उपदेश किया ॥ ८ ॥

पुलस्त्य मुनि के कथन से वो दयालु मुनिने हम से आद्य पुराण का कथन किया हेवत्सविदुर ! सो मैं तिसपुराणको श्रद्धालु नित्य अनुवर्त्तन करने वाले तुह्मारे अर्थकहूंगा ॥ ९ ॥

जिसकाल मे अलुप्तदृष्टि चेष्टा रहित अपने स्वरूपमे रत होनेसे निश्चित शेष शय्यापर अकेले शयन करने वाले परमात्माने योग निद्रा से नेत्रों को वंद किया तिसकाल मे यह सब जगत प्रलय समुद्र के जल से व्याप्त हुआ था ॥ १० ॥

हे विदुरजी ! यह संसार जिस काल मे प्रलय के समुद्र मे डूबा था तिस काल मे भगवान् नारायण अकेले ही महासर्प अनंत जी की शय्या करके तिस पर शयन करते थे परंतु भगवान् अपनी ज्ञान शक्ति को छिपाकर दोनो नेत्रों को वंद किये थे इसी हेतु से उस काल मे वे क्रिया से रहित होकर रहे थे ॥ ११ ॥

परंतु वे नारायण अपने शरीर के भीतर भूत सूक्ष्म अर्थात् त्रिलोकी के अंतर्गत देव मनुष्यादि सब सूक्ष्म शरीरों को रख कर भी फिर सृष्टि के समय पर जगने के निमित्त काल रूप शक्ति को प्रेरणा करके रहे थे इसी से अग्नि जैसे दाह शक्ति को रोक कर रहता है तैसे बाह्य वृत्तियों को शून्य करके जल मध्य मे रहे थे ॥ १२ ॥

सो नारायण चार हजार युग पर्यंत अपनी ज्ञान शक्ति के सहित शयन कर के अपने शरीर मे इन समस्त लोकों को लीन हुये देखे प्रलय के अंत मे फिर सृष्टि करने के वास्ते संपूर्ण क्रिया- समूह को अपने स्मरण मे रखने के निमित्त अपनी काल शक्त को नियुक्त करते भये ॥ १३ ॥

तस्माद् युगान्तश्वसनावघूर्णजलोर्म्मिचक्रात्सलिलाद्विरूढम् ।
अपाश्रितः कञ्जमु लोकतत्त्वं नात्मानमद्धाऽविददादिदेवः ॥ १७ ॥
क एष योऽसावहमब्जपृष्ठे एतत् कुतो वाब्जमनन्यदप्सु ।
अस्ति ह्यधस्तादिह किञ्चनैतदधिष्ठितं यत्र सता नु भाव्यम् ॥ १८ ॥
स इत्थमुद्वीक्ष्य तदब्जनालनाडीभिरन्तर्जलमाविवेश ।
नार्वाग्गतस्तत्खरनालनालनाभिं विचिन्वंस्तदविन्दताजः ॥ १९ ॥
तमस्यपारे विदुरात्मसर्गं विचिन्वतोऽभूत् सुमहांस्त्रिणेमिः ।
यो देहभाजां भयमीरयाणः परिक्षिणोत्यायुरजस्य हेतिः ॥ २० ॥
ततो निवृत्तोऽप्रतिलब्धकामः स्वधिष्ण्यमासाद्य पुनः स देवः ।
शनैर्जितश्वासनिवृत्तचित्तो न्यषीददारूढसमाधियोगः ॥ २१ ॥
कालेन सोऽजः पुरुषायुषाऽभिप्रवृत्तयोगेन विरूढबोधः ।
स्वयं तदन्तर्हृदयेऽवभातमपश्यताऽपश्यत यन्न पूर्वम् ॥ २२ ॥
मृणालगौरायतशेषभोगपर्यङ्क एकं पुरुषं शयानम् ।
फणातपत्रायुतमूर्द्धरत्नद्युभिर्हतध्वान्तयुगान्ततोये ॥ २३ ॥
प्रेक्षां क्षिपन्तं हरितोपलाद्रेः सन्ध्याभ्रनीवेरुरुरुक्ममूर्द्धः ।
रत्नोदधारौषधिसौमनस्य वनस्रजो वेणुभुजाङ्घ्रिपाङ्घ्रेः ॥ २४ ॥
आयामतो विस्तरतः स्वमानदेहेन लोकत्रयसंग्रहेण ।
विचित्रदिव्याभरणांशुकानां कृतश्रियापाश्रितवेषदेहम् ॥ २५ ॥

भाषाटीका

इसी से लोक सृष्टि के लिये जो सूक्ष्म अर्थ मे ज्ञान प्रविष्ट था उसी के मध्य वही सूक्ष्म अर्थ काल के अनुसार से रजो गुण के द्वारा क्षोभित होकर जगत् के उत्पत्ति के निमित्त उन के नाभि मे से उत्पन्न हुआ ॥ १४ ॥

परंतु आत्मा विष्णु जिसके कारण हैं वह अर्थ उत्पन्न होते मात्र जीवों के अदृष्ट के जाग्रत कराने वाले काल के वश से पद्म कोश के आकार से परिणत होगया भगवान् श्री नारायण ही इस पद्म कोश के कारण हैं उनकी इच्छा से उसने परिणाम को प्राप्त होकर सूर्य के तुल्य उस महा विस्तृत जल को प्रकाशित किया ॥ १५ ॥

जीवों के सब भोग्य पदार्थों को प्रकाश करने वाले उस पद्म के भीतर वही विष्णु प्रविष्ट हुये फिर तिसी पद्म मे से स्वयं वेदों को जानने वाला ब्रह्मा स्वयं हुआ जिसको स्वयं होने से स्वयंभू करके कहते हैं ॥ १६ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ॥

तस्य च श्रीनारायणोपासनयैवाविर्भूतज्ञानक्रियाशक्तेर्लोककर्तृकत्वं न स्वत इति वक्तुं प्रथमं तस्य विमोहमाह तस्मात्सलिलाद्विरूढमुद्गतं कञ्जमुपाश्रितोऽपिनाकल्पेन तत्कञ्जं लोकतत्त्वं चात्मानंच साक्षान्न

श्रीधरस्वामिकृत भावार्थदीपिका ॥

ज्ञातवान् उ इति विस्मये कथंभूतात् युगान्तश्वसनः प्रलयवायुस्तेनावघूर्णं तत्र तत्र प्रकम्पितं यज्जलं तस्मात्सर्वत ऊर्मिचक्रं यस्मिन् ॥

अविदुषस्तस्य वितर्कमाह योऽसावहमब्जपृष्ठे एष कः अनन्यदेकमेवैतदब्जं कुतो वा जातं यत्रैतदधिष्ठितं तेनाधस्तात्सतावमानेन नु निश्चितं भाव्यं स इत्थमुद्वीक्ष्येत्युत्तरेणान्वयः तथा श्रुतिः "सोऽपश्यत्पुष्करपर्णे तिष्ठन् सोऽमन्यत अस्ति वै तद्यस्मिन्निदमधितिष्ठति"इति ॥ १८ ॥

तस्यच वहिर्मुखप्रवृत्त्या महताऽपि कालेन तदप्राप्तिमाह स इति द्वाभ्याम् तस्याब्जस्य यन्नालं तस्य नाडीभिरन्तश्छिद्रैः तस्य खरनालस्य पद्मस्य यन्नालं तस्य नाभिमधिष्ठानं विचिन्वन्नर्वाग्गतोऽप्राप्तस्तदानाविन्दत ॥ १९ ॥

हे विदुर! आत्मसर्गं स्वकारणं त्रिणेमिः कालः अजस्य विचिन्वतो हेतिः सुदर्शनरूपं शस्त्रं देहभाजां नराणां भयमुत्पादयन्नीति संवत्सरशतमतिक्रान्तमित्युक्तं भवति ॥ २० ॥

अन्तर्मुखतयातु भगवन्तं दृष्टवानित्याह द्वाभ्याम् । ततोऽन्वेषणान्निवृत्तन प्रतिलब्धः कामो मनोरथो येन स्वधिष्ण्यं पद्मं जितेन श्वासेन निवृत्तं संयत्त चित्तं यस्य अतएवारूढ आश्रितः समाधियोगो येन तथाभूतः सन् न्यषीदत् उपविवेश ॥ २१ ॥

पुरुषायुषा संवत्सरशतेन कालेन अभिप्रवृत्तः सुसं

### श्रीधरस्वामि कृत भावार्थदीपिका

योगस्तेन विरूढ उत्पन्नो बोधो यस्य यत् पूर्वं विचिन्वन्नपि नापश्यत् तत् स्वयमेवान्तर्हृदयेऽवभातमपश्यत् ॥ २२ ॥

यदपश्यत्तद्वर्णयति। मृणालेति नवभिः। नवस्वप्यपश्यदित्यस्यैवानुषङ्गः मृणालवद्गौरश्चासावायतश्च यः शेषः तस्य भोगो देहः स एव पर्यङ्कःतस्मिन् कुत्र स्थित पर्यङ्के फणातपत्रैरायताः सर्वगोयुक्ता ये मूर्द्धानस्तेषां रत्नानि किरीटस्थानि तेषां द्युभिः प्रभाभिः हतध्वान्तं युगान्ततोये ॥ २३ ॥

कथम्भूतं पुरुषं हरितोपलाद्रेर्मरकतशिलामयपर्वतस्य प्रेक्षां शो भां क्षिपन्तं स्वलावण्यातिशयेन तिरस्कुर्वन्तं सन्ध्याभ्रं नीवी परिधानं यस्य तस्य शोभां पीताम्बरेण क्षिपन्तम् उरुरुक्ममूर्ध्नः अनेकसुवर्णशिखरस्य तस्य स्वःकिरीटैः रत्नानिच उदधाराश्च ओषधयश्च सौमनस्यानिच पुष्पसमूहाः सुमनस एववा तेषां वनस्रजो वनमाला यस्य वेणव एव भुजा यस्य अङ्घ्रिपा एवाङ्घ्रयो यस्य स चासौ स च तस्य अयमर्थः यदि तस्मिन् मालाइव स्थिता रत्नादयो भवन्ति वेणवश्च भुजा इव वृक्षाश्च पादा इव तर्हि तस्य शोभां स्वीयरत्नमुक्तातुलसीपुष्पदामभिः भुजैरङ्घ्रिभिश्च क्षिपन्तमिति ॥ २४ ॥

किञ्च आयामतो दैर्घ्येण विस्तरतश्च स्वमानदेहेन मीयतेऽनेनेति मानम् उपमानं शोभनश्चासावमानो निरुपमश्च यो देहस्तेन यद्वा सुष्ठु अमानः अपरिच्छिन्नस्तेन यद्वा ताभ्यां स्वानुरूपप्रमाणेन अतएव लोकत्रयं संगृह्णते यास्मन् तथा विचित्राणि नानाविधानि दिव्यान्यपूर्वाणि च आभरणानि अंशुकानि च तेषां कृता श्रीः शोभा येन तेन देहेन विशिष्टम् एवं स्वतएवातिरम्यत्वेऽपि अपाश्रितवेषः स्वीकृतालङ्कारो देहो यस्य तमपश्यत् यद्वा केन प्रेक्षां क्षिपन्तम् इत्यपेक्षायाम् एवम्भूतेन देहेनेति सम्बन्धः ॥ २५ ॥

---

### श्रीराधारमणदास गोस्वामिविरचिता दीपिन्याख्या दीपिका टिप्पणी

तस्य ब्रह्मणः विमोहं लोकतत्त्वाद्यज्ञानं लोकतत्त्वं च तत्तल्लिङ्गशरीर सहितं त्रैलोक्यस्वरूपं साक्षात्प्रत्यक्षतस्तत्तद्विशेषपूर्वकमित्यर्थः सामान्यसलिलशब्देन पौनरुक्त्यमाशङ्क्य तत्र तत्रेत्यध्याहृतम् तत्र वातावर्त्तस्थले प्रकम्पितं यद्विशेषजलं तस्मात्सर्वतः परितः तरङ्गसङ्गो यत्र सामान्यसलिले तस्मात्सलिल द्विरूढम् ॥१७॥

क एष इति युग्मकम् वितर्कं संशयोत्थं विचारं तेनाधिष्ठानविशेषेण पुष्करपर्णे पद्मपत्रे तिष्ठत्तिष्ठन् स ब्रह्माऽब्जमपश्यत् दृष्ट्वा च सोऽमन्यत वितर्कितवान् वितर्कमेवाहास्तीति एतत्पद्माधिष्ठानमस्ति यस्मिन्नधिष्ठान इदं पद्ममाधितिष्ठतीति तस्य च ब्रह्मणः तदप्राप्तिम् अधिष्ठानालाभं तदान्वेषणकाले ॥ १८ ॥ १६ ॥

संवत्सरशतमिति "संवत्सरशतं नृणां परमायुर्निरूपितमित्युक्तेः ॥ २० ॥

अन्तर्मुखतया बहिरिन्द्रियनिग्रहेण तदेकध्यानपरतया समाधिस्त्र विशेषज्ञानाभावात् सामान्याकारे स्वकारणे वृत्तिनिरोधः॥ २१

संवत्सरशतेनेति। वर्त्तमानकलियुगापेक्षया ॥ २२ ॥

मृणालेति नवकम्। तत्र "बहुवाक्यैकवाक्यत्वे गर्भेऽङ्कबिन्दुमस्तका„इति परिभाषातः टीका क्रमलाभायादित एव द्विबिन्दुमस्तका अङ्काः कर्त्तव्याः अवान्तरवाक्यैकवाक्यसमाप्तौ तु अङ्कद्वयं नवसंख्योनविंशति संख्यारूपं पृथक् पृथक् लेख्यमेवमन्यत्रापि ज्ञेयम् पर्य्यङ्क इति तोय इति च व्यधिकरणसप्तम्यौ (१) ॥२३॥

लावण्य कान्त्या चाकचिक्यम् लावण्यातिशयादयो धर्म्माः आक्षेपलभ्याः सुमनस एव वेति स्वार्थेष्यञ् तेषां रत्नादीनाम् एतादृशमरकताद्रिप्रसिद्धत्वादभूतोपमां योर्धायतुं समासेन व्याचष्टे अयमर्थइति तस्मिन् मरकताद्रौ(२)॥ २४ ॥

मीयते ज्ञायतेऽनेन सादृश्येन किन्तु मानशब्दस्योपमार्थेऽप्रसिद्धत्वाद्यद्वेति अत्रापि पदच्छेदगौरवम् अपरिच्छिन्नत्वमात्रविवक्षणे आयामविस्तरशब्दौ चाधिकाविति पुनर्यद्वेति ताभ्यां स्वानुरूपप्रमाणत्वं यथाशोभं तत्परिमाणवत्त्वम् अतएवायामविस्तरवत्त्वादेव संगृह्यते संक्षिप्य निवेश्यते भूषणानां वैयर्थ्यव्युदासाय स्वीकृतेति व्याख्यातम् "अङ्गैरेवाभरणपटलीभूषितादोग्धिभूषा„मिति न्यायात् पूर्वार्थे विशेषणे तृतीयाभ्युपगमाद्विशिष्टमित्यध्याहृतम् किन्तु समुदितादितिरस्कारे करणस्याव्याख्यानाद्यद्वेति(३) ॥ २५ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका।

तस्मात्ततः युगान्ते प्रलयान्ते यः श्वसनः पवनस्तेनाघूर्णभ्रमत् यन्महोर्मीणामत्युच्चतरङ्गाणां चक्रं तद्यस्य तस्मात्सलिलाद्विरूढं कञ्जं जगत्पद्मम् उपाश्रितः अधिष्ठितः आदिदेवश्चतुर्मुखः लोकतत्त्वं लोकात्मकपद्मतत्त्वमात्मानं चाद्धा तत्त्वेन न वेद ॥ १७ ॥

अवेदनमेव प्रपञ्चयति क इति। अब्जपृष्ठ कमलकर्णिकाया स्थितो योसावहमित्येष कः अनन्यदद्वितीयम् एतदब्जमप्सु कुतो वाजातम् एवमब्जस्य तस्य तर्कमाह अस्तीति। अत्राधिष्ठाने एतत्पद्ममधिष्ठितं तदधिष्ठानभूतं किञ्चनवस्तु अधस्तादस्ति हि यस्मात्सतैवानुभाव्य विद्यमानाधिष्ठानेनैवाधिष्ठेयेन पद्मेन भवितव्यम् अधिष्ठानाभावेऽधिष्ठेयस्य पद्मस्यासंभवादित्यर्थः ॥ १८ ॥

स इति। स ब्रह्मा इत्थम् उक्तप्रकारेणोद्वीक्ष्य प्रतर्क्य तदब्जनालनाडीभिस्तल्लोकपद्मनालछिद्रैरन्तर्जलंजलस्यान्तः प्रविवेश प्रविष्टश्च अजः ब्रह्मा खरं कठिनं नालं यस्य तस्य पद्मस्य नाभिमधिष्ठानं विचिन्वन्नन्वेष्यन्नर्वाग्गतोऽपितदा तदधिष्ठानं नाविन्दत न लेभे ॥ १९ ॥

तमसीति। हे विदुर ! अपारे तमसि तमोवद्रूपदर्शनप्रतिबन्धकं जले आत्मसर्गे सृज्यतेऽनेनेति कर्त्तुरेव करणत्वविवक्षाया वा अधिकरणे घाघञ् आत्मकारणमित्यर्थः विचिन्वतः सतः त्रिणेमिः न्यूनाधिकसमदिवसरूपनेमित्रययुक्तः महान्दीर्धः स कालः आत्मसम्वत्सरशतमतिक्रान्तमित्यर्थः कथं भूतोऽसौ त्रिणेमि यः अजस्य भगवतः हेतिः कालचक्रं सुदर्शनरूपं शस्त्र देहभाजां देहधारिणाम् भयमीरयन्नुत्पादयन्नायुः परिक्षिणोति ॥ २० ॥

एवं लोकपद्माधिष्ठानभूतः परमात्मा नान्वेषणादवगतः किं तूपासनयैवेत्याह तत इति द्वाभ्याम्। स देवः ब्रह्माऽप्रतिलब्धकामः न प्रतिलब्धः कामः अधिष्ठानदर्शनरूपमनोरथः येन सः ततोऽन्वेषणात्प्रतिनिवृत्य पुनः स्वाधिष्ण्यं कमलकर्णिकामासाद्य शनैः जिताः श्वासाः प्राणा निवृत्तं विषयविमुखं कृतं चित्तञ्च येन सः अत एव आरूढ समाधि योग आरूढ आश्रितः समाधिरेव योगो येन तथा भूतः सन् न्यषीदत् उपविष्टवान् ॥ २१ ॥

कालेनेति। सोऽजः ब्रह्मा पुरुषायुषा कालेन शत संवत्सर पर्य्यन्तकालेनाभिप्रवृत्तो यो योगःसमाधियोगस्तेन विरूढ उत्पन्नो बोधो यस्य सः यत्पूर्वं विचिन्वन् जलेनापश्यत् तत्स्वयमेवान्तर्हृदयेऽवभातमश्यत् ॥ २२ ॥

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका

तद्दर्शयति मृणालेत्यादिनवभिः । नवस्वप्यस्तौदित्यस्यैवानुषङ्गः मृणालवत्पद्मनन्तुवद्गौरश्चासावायतश्च यः शेषस्य भोगः स एव पर्यङ्कः तस्मिन् शयानम् एकं पुरुषमपश्यत् कुत्र स्थिते पर्यङ्के फणा एवातपत्राणि तैरायताः सर्वतो युक्ता ये मूर्द्धानः तेषां रत्नानि किरीटस्थानि तेषां द्युतिभिः प्रभाभिः हतं निरस्तं ध्वान्तमन्धकारं यस्मिंस्तस्मिन्युगान्ततोये स्थित इत्यर्थः ॥ २३ ॥

कथं भूतं पुरुषं हरितोपलाद्रेर्मरकतशिलामयपर्वतस्य प्रेक्षां शोभां क्षिपन्तं स्वलावण्यातिशयेन तिरस्कुर्वन्तं कथंभूतस्य हरितोपलाद्रेः सन्ध्याभ्रमेव नीवःपरिधानं यस्य तस्य सन्ध्याभ्रस्य शोभां पीताम्बरेण क्षिपन्तमित्यर्थः उरुरुक्ममूर्द्ध्नः भूयिष्ठकनकशृङ्गस्य किरीटैः कनकशृङ्गशोभां क्षिपन्तमित्यर्थः रत्नानि च उदकधाराश्च ओषधयः पुष्पज्योतींषि च सौमनस्यानि पुष्पाणि सुमनसां समूहा एव वा तेषां वनस्रजो वनमालाश्च यस्य तस्य वेणव एव भुजा अङ्घ्रिपा वृक्षा एवाङ्घ्रयः पादा यस्य तस्य स्वीयरत्नतुलसीमुक्तापुष्पदामभिःभुजैरङ्घ्रिभिश्चहरितोपलाद्रेःरत्नादीनङ्घ्रिपान् तान् क्षिपन्तमित्यर्थः यदि मरकताद्रेःरत्नादयो वनमाला इव वेणवो भुजा इव वृक्षाश्चपादा इव वर्तेरंस्तर्हि तस्य शोभां स्वीयरत्नादिभिः क्षिपन्तमित्यभूतोपमेयम् ॥ २४ ॥

किंचाऽऽयामतः दैर्घ्येण विस्तरतः विस्तरेण च स्वमानदेहेन स्वानुरूपप्रमाणदेहेनात एव लोकत्रयसंग्रहेण लोकत्रयं संगृह्यतेऽनेनास्मिन्निति वा लोकत्रयसंग्रहस्तेन चित्राण्यद्भुतानि दिव्यान्यमानुषाण्याभरणान्यंशुकानि च येषां तेषां तृतीयार्थे षष्ठी तैः कृता संपादिता श्रीः शोभा यस्य तेनेति देहविशेषणं यद्वा आभरणांशुकैः कृता या श्रीः तया लोकत्रयसंग्राहकस्वमानदेहेन चोपाश्रित वेषदेहः उपाश्रितः स्फीतः वेषो यस्य स उपाश्रितवेषः एवं भूतो देहो यस्य तमिति बहुव्रीहिगर्भो बहुव्रीहिः ॥ २५ ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

इतोऽपि ब्रह्मैवोच्यत इत्याह तस्मादिति । युगान्तश्वसनः प्रलयवायुः तेनावघूर्णं क्षुब्धं महतीनामूर्मीणां चक्रं मण्डलं यस्मिंस्तत्तथा तस्मात् सलिलादि रूढमुत्पन्नं लोकतन्त्रं पृथिव्यादिलोकनिर्माणकारणं कञ्जं पद्मम् उ एव आदौ उत्पन्नो देव आदिदेवः आत्मानं स्वं परमात्मानं वाद्धा प्रत्यक्षं नाविदत् न ज्ञातवान् अनेन विष्णुः स्वयं ब्रह्मासमभूदित्याशङ्का परिहृता तस्याज्ञानासम्भवात् "अद्धाप्रत्यक्षसत्ययो„ रिति यादवः ॥ १७ ॥

ब्रह्मणः मंशयप्रकारं दर्शयति क एष इति । योऽसावब्जपृष्ठे निषण्णः एषोऽहम् कः अप्स्वनन्यत्प्रधानमेतदब्जं कुत उत्पन्नम् कारणाभावे च पद्मलक्षणकार्यस्याप्यसम्भवात् केनचित्कारणेन भवितव्यमिति युक्त्या निरचिनोद्ब्रह्मेत्याह अस्तीति । हि शब्दोऽवधारणार्थः इह जले अधोदेशे किञ्चन पृथव्यादिविलक्षणम् कारणं वस्तु अस्ति ह्येव ! एतत्पद्मम् यत्राधिष्ठितम् तत्कारणम् पृथिव्य धन्यतमम् न स्यात्तपामनुत्पन्नत्वात् अतो ब्रह्मैव मूलकारणमिति परिशिष्टमाह सतेति । सता ब्रह्मणाऽनुभाव्यमनुभव सिद्धत्वेनाङ्गीकार्यमित्यर्थः स ब्रह्मा चिन्तयन्कुतो नु पद्मम् ब्रह्मणः स्यादिति श्रुतः कुतो नु पद्मामिति सन्दिह्य ब्रह्मणा उत्पन्नं स्यादिति निश्चितवानित्यर्थः अनेन चतुर्मुखस्याज्ञानं क्षणिकम् जीववद्धस्वरूपसम्बद्धम् दुर्बलदृष्टिभिः कल्प्यमानम् मध्यंदिनार्कक्षोभवदिति ज्ञायते ॥ १८ ॥

श्रीमद्विजयध्वजतीर्थ कृत पदरत्नावली ।

युक्त्या ज्ञातपद्मकारणो ब्रह्मा पुनः किमकार्षीदिति तत्राह स इत्थमिति । इत्थं परिशिष्टप्रमाणेन उद्भूम तस्यार्दनिनामेति श्रुतेः वीक्ष्यालोच्य तस्याब्जस्य नालस्य दण्डस्य नालीभिः नाडीभिः सुषिरैः तनश्चकिं तत्राह नेति । खरनालस्य पद्मस्य नालसन्धिर्नानालीर्विचिन्वन्नन्विच्छन् मार्गमाणः इत्यर्थः तत्कारणम् नाविन्दत चक्षुर्विषयम् न लब्धवान् ॥ १९ ॥

भगवत्प्रसादमन्तरेण पुरुषायुषेणापि तद्दर्शनं दुःशकम् तादृग्माहात्म्योपेतत्वादितितत्कालस्यानेकसंख्यया विशिष्टत्वमाह तमसीति । अपारेऽनवसाने तमसि स्वरूपाच्छादकमायालक्षणान्धकारे आत्मनः सर्गो यस्मात्स आत्मसर्गः तं स्वकारणम् तिस्रो नेमयश्चातुर्मास्यलक्षणा यस्य स त्रिनेमिः अजस्य विष्णोर्हेतिश्चक्राख्यः ॥ २० ॥

एतद्दर्शनमपि न स्वप्रयत्नेन साध्यम् किं तु तत्प्रसादेनैव तत्प्रसादश्च तत्समाधियोगेनेति तं करवाणीति तदुपास्तिप्रकारं कथयति तत इति । अप्रतिलब्धा अदृष्टा काष्ठोत्कर्षो ब्रह्मलक्षणो येन स तथा अदृष्टस्वकारणब्रह्मरूप इत्यर्थः ततो निर्मार्गणात् स्वधिष्ण्यम् पद्ममास्थायारुह्य शनैः प्राणम् कुम्भके निरुध्य जितश्वासो भूत्वा विषयेभ्यो निवृत्तचित्तः सन् आरूढसमाधियोगः असम्प्रज्ञातचित्तैकाग्र्यलक्षणध्यानः पद्मकर्णिकायाम् कैलासिलक्षणायाम् न्यषीदत् स्वनासाग्रावलोकनोऽतिष्ठदित्यन्वयः पुरुशश्वन्निरन्तरमित्यर्थः ॥ २१ ॥

योगफलमाह कालेनेति । पुरुषायुषा शतवर्षावधिना कालेन तत्कारणमपश्यनेत्यन्वयः उपासनाजनितज्ञानफलमिदम् दर्शनमिति भावेनाह अभिप्रवृद्धेति । अनुदिनम् चन्द्रोदयेन समृद्धसमुद्रवत्प्रवृद्धयोगेन प्रकर्षेण समृद्धेन ध्यानापरपर्यायोपासनया विरूढबोधः समुत्पन्नापरोक्षज्ञानः तदपि स्वप्रसादेनेति भावेनाह अन्तर्हृदय इति । अवभातम् प्रकाशितम् स्वयम् प्रधानम् अनेन तस्मिन् स्वयमित्युक्तत्वात् ब्रह्मोत्पादकमेवापश्यन्नान्यादति सिध्यति अवभातमिति विशेषणम् विशिनष्टि अपश्यतेति पूर्वम् पद्मनालनिर्मार्गणसमये यन्नापश्यत्तदिति शेषः आत्मनेपदप्रयोगेण ममैवेष्टदेवतानान्येति ध्वनयति ॥ २२ ॥

कीदृशम् हरिमपश्यदित्याशङ्क्य नवभिःश्लोकैस्तम् विशिनष्टि मृणालेति । फणानाम् सहस्राणामयुतेषु अन्योन्यमश्रितेषु अन्योन्यसम्पर्करहितेषु मूर्धसु औत्पत्तिकानाम् रत्नानाम् द्युभिर्द्युतिभिः तम् नष्टम् ध्वान्तम् यस्य तद्धतध्वान्तम् तच्च युगान्ततोयम् तस्मिन् कल्पप्रलयजलस्थिते मृणालगौरायतशेषभोगपर्यङ्के शयानं शेषस्यानन्तस्य नागस्य भोगो देहः शेषभोगः "अहेः शरीरम् भोगः स्या„दित्यभिधानम् मृणालवद्गौरश्चायतश्च मृणालगौरायतः स चासौ शेषभोगश्च मृणालगौरायतशेषभोगः स एव पर्यङ्कः शयनीयम् तस्मिन् पुरुषम् पुरुषाकारम् एकम् केवलमप्राकृतमित्यर्थः ॥ २३ ॥

ध्यानसौकर्याय नीलपर्वतसाधर्म्येण वर्णयति प्रेक्षामिति । हरितोपलाद्रेर्नीलपर्वतस्य प्रेक्षां दर्शनीयकान्तिम् क्षिपन्तं तिरस्कुर्वन्तम् कीदृशस्य नीलगिरेः सन्ध्याभ्रनीवः सन्ध्याकालीनाभ्रमिव नीविर्वस्त्रम यस्य स तथा तस्य उरूणि बहूनि रुक्माणि हिरण्यानि मूर्ध्नि शृङ्गं यस्य स तथा तस्य रत्नैरुदधिस्तस्य रत्नाकरस्येत्यर्थः ओषधयः सौमनस्यानि सुमनसाम् समूह एव वन

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली

वनमाला यस्य स तथा तस्य विशाव एव भुजा यस्य अङ्घ्रिपा वृक्षा एवाङ्घ्रिर्यस्य स तथा तस्य अनेन हरिरपि नीलद्युतिदेहः पीताम्बरधरः सुवर्णकिरीटालङ्कृतमूर्धा कौस्तुभरत्नकन्धरः वनमालाचितो दीर्घदोर्दण्डमण्डितः प्रभातातिहारिश्रीपादपद्म इत्युत्प्रेक्षितम् भवति सन्ध्याभ्रवत्पीतवस्त्रस्येत्यादिव्याख्यानम् प्रेक्षां क्षिपन्तमित्यनेनानतिरिक्तं स्यात् ॥ २४ ॥

लोकत्रयम् संगृह्णानीति लोकत्रयसंग्रहस्तेनाऽऽयामेन विस्तरतः दैर्घ्यपरिमण्डलाभ्याम् समानेन न्यग्रोधपरिमण्डलत्वादिलक्षणवता देहेन विचित्रदिव्याभरणाद्या न कृतश्रिया पूर्णश्रिया इपाश्रितः समाश्रितः दिव्य औत्पत्तिको वेषः सौन्दर्यं यस्य स तथा तम् यद्वा आभरणादीनाम् कृतश्रिया उपगम्याश्रितः सेवितो दिव्यवेषो यस्य स तथा तमिति ॥ २५ ॥

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

सलिलाद्रिरूढमिति । श्रीनारायणशयनावकाशस्योपर्य्यपि अलाद्वृतत्वात् ॥ १७ ॥

क एष इति युग्मकम् ॥ १८ ॥ १९ ॥ २० ॥

आरूढसमाधियोग इति यत् किमपि सर्वकारणं वस्तु स्यात्तत्ख्याविर्भवत्वित्याशापूर्विका सामान्याकारेणैव तदनन्यवृत्तिता समाधियोगोऽत्र ज्ञेयः विशेषाकाराज्ञानात् ॥ २१ ॥

पुरुषायुषा वर्षशतेनेति श्रीमैत्रेयो वर्त्तमानकलियुगापेक्षया आहेति ज्ञेयम् । वस्तुतस्तूत्तरग्रन्थे भूयस्त्वं तप आतिष्ठेत्यादि-श्रीभगवद्वाक्यानन्तरं दशमाध्याये विरिञ्चोऽपि तथा चक्रे दिव्यं वर्षशतं तप इत्युक्त्वा एतदेव ज्ञेयम् । यत्तु द्वितीये दिव्यं सहस्राब्दमित्याद्युक्तं तत् ब्राह्मकल्पगतं ज्ञेयम् ॥ २२—२९ ॥

श्रीमद्वल्लभाचार्यकृत सुबोधिनी

एवं मुखचतुष्टयेनापि सर्वा एव दिशः पश्यंस्तदालोकाज्ञ-इष्टवांस्तदा भयं चिन्ता च जातेत्यभिप्रायेणाह तस्मादिति । युगान्ते यः स्वसनो वायुः तेनावघूर्णितं यज्जलं तत उत्पन्ना ये ऊर्मयस्तेषां चक्रं यस्मिन् तादृशात्सलिलाद्विशेषेण रूढं कमलमुपाश्रित इति भयकारणं सलिलमत्र नित्यं जलं कृत्रिमं वा वायुना च जलमेव दृश्यं श्रितम् अतस्तस्य चक्रं सलिले वर्त्तते इति न पौनरुक्त्यं विरूढमिति नित्यसलिल दुष्पारत्वात् मज्जनं नापि नालभङ्गः अपाश्रित इत्याश्रिराश्रितः अत एव कमलविचारे आत्मविचारे वा बुद्धिर्नप्रस्तुता लोकानां तन्त्रं देहादिसर्वसामग्री यत्रैतादृशं कमलमात्मानं च उभयमप्यद्धा साक्षाद् दादिदेवोऽपि भूत्वा पूर्वं ज्ञानादिसंपन्नोऽपि नाविदत् न ज्ञातवान् ॥ १७ ॥

तदा पूर्ववासनया तत्र जिज्ञासोत्पन्नेत्याह क एष इति । योऽहं एष कः जिज्ञासायामात्मविचारे प्रवृत्त इति पूर्वं विचारप्रारम्भे यो विचारकत्वेन प्रतिभातः स एव विचारदशायां भिन्नतया प्रतीत इत्येव इत्युक्तं स्वस्य स्वरूपाज्ञानात्क इति प्रश्नः यत्र अब्जपृष्ठे अहमेतद्वा कुतो जातमिति । ननु जले कमलं भवत्येव किमाश्चर्यमित्यत आह अजन्यदिति । अप्स्वशि यदुज्जलसंबन्धः तादृशं च कमलं नभवति किंच चकारादेतावमूलं न भवति अतो यत्रैतदधिष्ठितम् अधिष्ठाय स्थितं तेन सता भाव्यम् अस्ततोऽधिष्ठानाभावात् अतोऽस्य पद्मस्याधस्तात् किञ्चिद्स्ति किंचनेति किंचिदर्थे एतत्कमलमधिष्ठितं यत्र ॥ १८ ॥

एवमनुमानेन नैयायिकवद्देतावज्ञानं जातं तैस्तेन ज्ञानेन तर्क-

श्रीमद्वल्लभाचार्यकृत सुबोधिनी

सहकृतेन पदार्थं विनाश्रित्य पुरुषोऽहं मम च जननाधाररूपकं कमलं न केवलम् वेतनानुत्पत्तुमर्हतं नि कश्चिन्मरिपता वर्त्तते अधस्तात्तमन्वर्णायष्याः ति निश्चित्य सूक्ष्मं रूपं कृत्वा तस्याब्जस्य नाडीरन्ध्रेषु प्रविष्टोऽम्भर्जलमाविवेश तथाप्यधोभागं न प्राप्तवानित्याह नार्वाग्गत इति । तस्य खरनालस्य कमलस्य यन्नालं तेन तन्मूलभूतां नाभिं विचिन्वन्नपि तत् तदा अजोऽपि ब्रह्मापि सन्नाविन्दत अथ वा तन्नालमेवाविन्दत यतोऽयमजः बहिर्मुखः ॥ १९ ॥

ततोऽज्ञातं तदाह तमस्यपार इति । विदुरेति संबोधनं महताप्यज्ञानमिति सूचयति अपारे तमसीति । आलोकाभावादाराद्दज्ञानम् आत्मसर्गं स्वपितरं विचिन्वतः महाकालो जात इत्याह त्रिनेमिरिति । चक्रत्वात्तस्य परावृत्तिः शीघ्रमेव भवति शीतातप वर्षाकाला नेमयो यस्य स कियान् कालो जात इत्याकाङ्क्षायामाह यो देहभाजामिति । शतसंवत्सरात्मकः सकालः "शतायुर्वैपुरुष,इति श्रुतेः शतवर्षानन्तरं देहभाजामवश्यं भयं भवति तस्य कालस्य मरणजनकत्वे तत्र हेतुमाह । अजस्याप्यायुर्हेतिः कालचक्रं यतः परिच्छिनत्ति तस्यान्येषां देहभाजां भयजनने कः संदेह इत्यर्थः ॥२० अत स्वस्यापि पृथगमरणमाशङ्क्य ततो निवृत्त इत्याह तत इति । अप्रतिलब्धकाम एव ततो निवृत्य पुनः स्वधिष्ण्यमास्थाय ज्ञानसहितो भूत्वा देवो जातः ततः शनैः जितश्वासेन निवृत्तचित्तो भूत्वा न्यषीददिति स्थिरतया उपविष्टः ततः आरूढः समाधिपर्यन्तं योगो येन योगेन चित्तैकाग्र्यं विधाय तमेवार्थमचिन्तयदित्यर्थः ॥ २१ ॥

एतादृशो योगोऽपि बहुकालं कृत इत्याह कालेनेति । पुरुषायुषा अभिप्रवृद्धो योगो यस्मिंस्तत् कालेन विरूढबोधोजातः विशेषेण रूढः स्थिरो बोधो यस्य स तदा स्वयमेव भगवन्तमपश्यदित्याह स्वयमिति । पूर्वं प्रयत्नेनापि न दृष्टः इदानीं चित्ते शुद्धे भगवान् स्वयमेव मायाजवनिकां दूरीकृत्य ब्रह्मणो हृदये भातः पूर्वं मानसपरिकल्पितमूर्तिवैलक्षण्यमाह यत् पूर्वम् कदाचिदपि नापश्यत् यद्यपि हृदयं ब्रह्मकल्पे भगवान् दृष्टो वैकुण्ठस्थितः प्रतिकल्पं च पश्यति अन्यथा सृष्टिसामर्थ्यं न भवेत् तथापि नैवं विधः कदापि दृष्टः न हि स्वमनसि भाते भगवति तन्नाभिकमले स्वयं स्थातुमर्हति न वा नाले अधस्ताद्वियमाने अच्छिद्रत्वाल्लोऽन्तःप्रविशति न वा कदाचित्स्वस्यान्तर्हृदये प्रसन्नो भूत्वा समागतः शेषेशेते अतो यत् पूर्वं कदाचिदपि इदमिति यदुक्तं तद्युक्तमेव ॥ २२ ॥

अपूर्वं रूपं तदनुवर्णयति मृणालेप योगिनेत्यष्टभिः ॥

अवस्थामुपमानं च स्वरूपं च त्रिभिः क्रमात् ।
शास्त्रप्रत्यक्षभेदेन फलमानमेव च ॥ १ ॥
सर्वस्वाश्रयेणापि सर्वसौन्दर्यं मेवच ।
एवं षड्गुणमाहात्म्यमेकरूपेण वर्णितम् ॥ २ ॥
पुनर्गुणानां प्राधान्यादुपमारूपनस्त्रकैः ।
तस्य ब्रह्मत्वसंसिद्ध्यै तज्ज्ञानं सर्वबोधनम् ॥ ३ ॥
ततोयुक्तं यदेवात्र तदन्येन निरूप्यते ।

तत्र भगवन्तं प्रथमा वस्था वस्येन दृष्टमनुवर्णयति मृणालवद्गौरः आयतो यः शेषभोगः शेषस्य शरीरं तदेवपर्यङ्कः तस्मिन्नेक एव पुरुषः शेते महदेतदाश्चर्यं यत्सर्पशय्यायां शेते इति किंच फणातपत्रायां यदयुतममेलनं तत्सहितो यो मूर्द्धा तत्र यानि रत्नानि तेषां द्युभिर्हतं ध्वान्तं यत्र एतादृशे युगान्ततोये प्रलयसमुद्रे शेषपर्यङ्के तस्यैव शेषस्य ये फणास्त यथ

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ॥

त्रिकाभिता: सन्त आतपत्रप्राया भवन्ति ते च पुनः कमलपत्रवत्पौर्वापर्येण मिलिताः तत्र फणास्थाधो भागे देवतात्वसिद्धये सर्वत्रैव मूर्द्धा वर्तते फणासु शोभार्थाः तेषां मूर्द्धानो युतास्तत्र सर्वत्रैव मणयस्तथा सन्ति तैरेव तत्रत्योऽन्धकारः सर्वं एव गच्छति अतः स्वप्रभया भगवान् दृश्यते ब्रह्म गोहि बुद्धिर्बहिः प्रकटा नत्वन्तः अतो भगवानपि बाह्येन प्रकटः बुद्धेर्निरूपकत्वादथवास्य भगवतो लौकिकप्रभावाज्ञानात् भगवत्तेजसा नान्धकार निवृत्तिः किन्तु प्रमाणतो ज्ञानात् शेषशिरोमणिभिरेव ॥ २३ ॥

तस्य वृद्धौ लोकवत् प्रतिभातमिति लौकिकोपमा भगवति प्रतिपादयेत प्रेक्षणीति । कीदृशं ददर्शेति सर्वत्राकाङ्क्षा हरितोपलाद्रेः प्रेक्षां शिरस्तं हरिन्मणिरत्नतः कश्चित् क्षीरसमुद्रे वर्तते तथा शेषपर्यङ्के भगवानत एव शेषस्य मृणालतुल्यता शैत्यचिक्कणकान्तानां शुक्लवर्णानां तत्रैव सत्त्वात्प्रेक्षाद्रेः तुल्यो हि तुल्यविषयिकीं दृष्टिं दूरी करोति ननु भगवत्त्वे न तत्र वक्तव्यं सर्वप्रेक्षामेव क्षिपतीति हरिन्मोपलानामद्रिः ननु युक्तमेव तत्प्रेक्षाक्षेपणम् अनलंकृत स भगवान् अलंकृत इति तत्राह संध्याभ्रनीवैरिति। संध्याकालीनान्यभ्राणि मेघाः पीतरक्तास्तेनीवी कटिवस्त्रं पीताम्बरं यस्य उरूणि रुक्माणि सुवर्णानि मुकुटरूपाणि मूर्द्धसु यस्य किंच रत्नानि पद्मरागादीनि उदधारा जलप्रवाहाः ओषध्यो वनस्थाः रात्रौ तेजोवत्यः सौमनस्यं सुमनसां समूहः वनानि च तेषां माला यस्य पञ्च वर्णा हि भगवन्माला यथेन्द्रधनुषो मध्ये वर्णा भवन्ति रत्नानामेकामाला आरक्ता रत्नमालेव उदधाराणां माला मुक्ताहार इव ओषधीनां माला अलौकिकदिव्यरत्नकान्तिमालेव दीपसदृशमणि मालेव वा पुष्पमाला पुष्पमालेव वनमाला तुलसीमालेव किंच वेणव एव भुजाः अङ्घ्रिपा एवाङ्घ्रयो यस्य वेणुभुजश्चासौ अङ्घ्रिपाङ्घ्रिश्च ॥ २४ ॥

स्वरूपमाह । आयामो दैर्घ्यं विस्तारो विशालता लोकत्रयाणां संग्रहो यत्र तादृशं यस्य तादृशस्य मानं यावता विस्तारेण दैर्घ्येण च परिकल्प्यमाने लोकत्रयं तत्र तिष्ठति तादृशेन देहेनोपलक्षितं भगवन्तमित्यर्थः किंच विचित्राणि दिव्याभरणान्यंशुकानि च यस्य तेषां संबन्धिन्या नरेव कृतया श्रिया अपाश्रितः सर्वत्र तेजःपुञ्जवत्परिवर्त्तमानो वेष आकृतिविशेषो यस्य तादृशो देहो यस्येति भगवतो रूपं सच्चिदानन्दरूपमिति ज्ञापकं त्रैलोक्याश्रयत्वम् आभरणादिभिः क्रियमाणा शोभा भगद्वेषमेवाश्रयते नत्वाभरणैर्भगवद्वेषे शोभा भवति आभरणानामाभरणत्वं च ॥ २५ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

भगवद्दत्तयैव शक्त्या ब्रह्मणः सृष्ट्यादिशक्तिर्न स्वत इति लोकेषु ज्ञापयितुं पूर्वभ्यस्तसृष्ट्यादि शिल्पस्यापि ब्रह्मणो विमोहनमाह तस्मात् सलिलात् विरूढमुद्गतं कञ्जम् अपाश्रितः सन् उ इति विस्मये लोकानां तत्त्वम् आत्मनस्तत्त्वञ्च न विवेद सलिलात् कथम्भूतात् युगान्तेत्यादि युगान्तश्वसनः प्रलयवायुः ॥ १७ ॥

अविदुषस्तस्य तर्कमाह। योऽसावहमब्जपृष्ठे एष कः कुतः कस्माद्वा उत्थितमेतदब्जम् अनन्यदेकमेव। किञ्च हि निश्चितम् इह अधस्तात् किञ्चन वस्तु अस्ति यत्र एतत् पद्ममधिष्ठितम् अतएव सता सुधिया मया अनुभाव्यं तदनुभवितुमर्हः सन् "सन् सुधीः कोविदो बुध" इत्यमरः ॥ १८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ॥

स इत्थमुद्वीक्ष्येत्युत्तरेणान्वयः तथाच श्रुतिः । सोऽपश्यत् पुष्करपर्णे तिष्ठन् सोऽमन्यत अस्ति वैतद्यस्मिन्निदमधितिष्ठतीति भगवदिच्छां विना साभिमानपुरुषप्रयत्नो वैफल्यायैव स्यादिति प्रदर्शयन्नाह स इति । नालीभिर्नाडीछिद्रैः तस्य खरनालस्य पद्मस्य यन्नालं तस्य नाभिर्मधिष्ठानं श्रीनारायणनाभिपद्मम् अर्वागतोऽपि तन्निकटगतोऽपि न अविन्दत न प्राप भक्त्या विना तत्र प्राप्तेर्दुर्घटत्वादिति भावः ॥ १९ ॥

आत्मसर्गे स्वकारणं त्रिनेमिः कालः । यः कालः देहभाजां नराणां भयं मृत्युसन्निधिम् ईरयन् कथयन् आयुःपरिच्छिणोतीति सम्वत्सरशतात्मक इत्यर्थः । अजस्य विष्णोर्हेतिः सुदर्शनशस्त्रं शस्त्ररूपः ॥ २० ॥

त्यक्तस्वाभिमानस्य तस्य तदिच्छया तद्ध्यानेन तत्प्राप्तिमाह ततः । अन्वेषणात् स्वधिष्ण्यं पद्मं निवृत्तचित्तः संयतमना न्यषीदत् उपविवेश । समाधिर्भगवद्ध्यानेऽथम् चित्तैकाग्र्यम् ॥ २१ ॥

पुरुषायुषा सम्वत्सरशतात्मककालेनेति मैत्रेयो वर्तमानकलियुगापेक्षया प्राहेति ज्ञेयम्। अभिप्रवृत्तयोगेन पाकदशाप्राप्तभगवद्ध्यानेन । ध्यानेन स्म नो दर्शितं त उपासकानामित्युपरिष्टादुक्तेः । यद्वास्पदकमलाधिष्ठानं पूर्वं विचिन्वन्नपि नापश्यत् तत् स्वयमेवान्तर्हृदयेऽवभातमपश्यत् ॥ २२ ॥

तदेत वस्तु वर्णयति नवभिः । फणा एव आतपत्रायुतानि तैः मूर्द्धरत्नानां शिरःस्थमणीनां द्युभिः कान्तिभिर्हतध्वान्ते प्रलये जले ॥ २३ ॥

हरितोपलाद्रेर्मरकतशिलामयपर्वतस्य प्रेक्षामुतप्रेक्षां क्षिपन् किमयं मरकतमणिमयः पर्वत इति वा उत्प्रेक्षा तामपि स्वलावण्यातिशयेन तिरस्कुर्वन्तं निरुपममित्यर्थः । कथम्भूतस्य सन्ध्याभ्राणि नीवीव नितम्बे यस्य तस्योत्प्रेक्षां स्वीयपीताम्बरेण क्षिपन्तमित्यर्थः उरुरुक्माणि किरीटानीव मूर्द्धसु शिखरेषु यस्य तस्येति स्वीयकिरीटैः रत्नानां उदधाराणाम् ओषधीनां सौमनस्यानां पुष्पसमूहानां वनस्रजो वनमाला यस्येति स्वीयरत्नमाला मुक्तामाला तुलसीमाला पुष्पमालाभिः वनस्रक् शब्देन मालामात्रोक्तः यद्वा रत्नादिभिर्वनस्रग्यस्येत्युभयत्रैकैव वनमाला व्याख्येया "पत्रपुष्पमयी माला वनमाला पदावधी„ति वनमालालक्षणे रत्नमुक्तादेरप्युपलक्षणं ज्ञेयम् उपरिस्था वेणवो भुजा इव अधस्था अङ्घ्रिपाःअङ्घ्रय इव यस्य तस्येति स्वीयभुजपादैः ॥ २४ ॥

किञ्च । आयामतो दैर्घ्येण विस्तरतो विस्तारेण च स्वमानस्वानुरूपप्रमाणो यो देहस्तेन विशिष्टं श्लेषेण सुष्ठु अमानोऽपरिच्छिन्नस्तेन अपरिच्छेदमेव स्पष्टयति लोकत्रयसंग्रहेण त्रैलोक्यव्याप्तिना विचित्राणि दिव्यान्यलौकिकानि आभरणान्यंशुकानि तेषामपि कृता श्रीः शोभा येन तेन । तथा अपाश्रितवेषदा इच्छा यस्य तं । यदैव यं यं वेषमिच्छति तदैव सत्यसंकल्पत्वात् प्राप्नोतीत्यर्थः ॥ २५ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

भगवत्कृपां विना वेदमयस्य चतुराननस्यापि तत्त्वज्ञानं न भवति कुतोऽन्यस्येति द्योतयितुमाह तस्मादिति। विरूढं विविक्तयाऽस्थितमपि कञ्जम् अपाश्रितः आधिष्ठितोऽपि उ वितर्के तथा

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः।

लोकानां प्रत्यहं सृज्यमानत्वेन वक्ष्यमाणानां तत्त्वं मूलं कञ्जम् तथात्मानं च नाविदत् ॥ १७ ॥

तदानीं किं कृतवानित्याकाङ्क्षायां स वितर्क्य कमलनालच्छिद्रे भगवन्तं द्रष्टुं प्राविशदित्याह क इति द्वाभ्याम्। अनन्यदेकमब्जं वा कुतः कुत एतदब्जमधिष्ठितं तेन अधस्तात्सता वर्तमानेन निश्चितं भाव्यं भवितव्यम् स इत्थमुद्वीक्ष्येत्यग्रिमेण संबन्धः ॥१८॥

बहिर्दृष्ट्यापि भगवत्स्वरूपगुणाद्यनभिज्ञोऽपि भगवन्तं मृगयन् भगवत् प्राप्त्युपायं प्राप्नोत्येवेति चतुर्मुखवृत्तान्तेन दर्शयति स इत्थमित्यादिना। इत्थमुक्तप्रकारेणोद्वीक्ष्य वितर्क्य तदब्जनालस्य नाडीभिरन्तश्छिद्रैः अन्तर्जलं जलमध्ये आविवेश खरनालस्य पद्मस्य नाभिमधिष्ठानं विचिन्वन् अन्वेषयन् अर्वाग्गतोऽप्यजो ब्रह्मा तदधिष्ठानं नाविन्दत न लेभे अनेन "सोऽपश्यत्पुष्करपर्णे तिष्ठन् सोऽमन्यतअस्ति वैतत् यस्मिन्निदमधिष्ठित,,मिति श्रुतिरुपबृंहिता ॥ १९ ॥

आत्मासृज्यतं पुत्रपौत्रादिरूपेण विस्तार्यते अस्मिन्नित्यात्मसर्गः सृज्यमानविसर्गाधिकरणभूतो विष्णुस्तम् अधिकरणोऽत्र विचिन्वत सतःत्रिनेमिः त्रिचातुर्मास्यानि नेमयो यस्य सः अजस्य विष्णोर्हेति चक्रं संवत्सराख्यः कालः सुमहानभूत् संवत्सरशतावृत्त्या दीर्घोऽभूदित्यर्थः ॥ २० ॥

जितश्वासश्चासौ निवृत्तचित्तश्च आरूढः आश्रितः समाधियोगो येन सः धिष्ण्यं पद्मासाद्य प्राप्य न्यषीदत् उपविवेश ॥ २१ ॥

स अजो ब्रह्मा पुरुषायुषा संवत्सरशतेन कालेन अभिवृत्तेन सिद्धेन योगेन भगवति मनो नियमनेन विरूढोऽधिगतो बोधो यस्य सः यदन्वेषणवेलायां नापश्यत् तत्स्वयमेवान्तर्हृदि अवभातमाविर्भूतमपश्यत् ॥ २२ ॥

तदेवाह मृणालेति नवभिः। नवखण्डपश्यदित्यस्यान्वयः फणा एवातपत्राणि तैरेव आसर्वतो युता मूर्द्धानः तद्रत्नद्युभिः तत्किरीटकान्तिभिः हतमपगतं ध्वान्तं यस्मिन् युगान्ततोये मृणालवत् पद्मतन्तुवत् गौरश्चासावायतश्च यः शेषः तद्भोगोदेहः एव पर्यङ्कस्तस्मिन् ॥ २३॥

हरितोपलाद्रेः नीलशिलामयाचलस्य प्रकर्षेण दर्शनीया प्रेक्षा शोभा तां नीलवर्णादिना क्षिपन्तमधः कुर्वन्तम् संध्याभ्रं नीवीपरिधानं यस्य तस्य शोभां पीतपटेन क्षिपन्तमित्यर्थः उरुरुक्ममूर्ध्नः उरवः बहवो रुक्ममूर्द्धानः कनकशृङ्गाणि यस्य तस्य कनकमयैः किरीटैः रत्नानि च उदधाराश्च ओषधयश्च सौमनस्यानि च सुमनसां पुष्पाणां मण्डलानि तान्येव रत्नादिसौमनस्यान्तानि वनस्रजो वनमाला यस्य वेणाव एव भुजा यस्य अङ्घ्रिपा एव अङ्घ्रयो यस्य सचासौ सच तस्य अयमर्थः यदि तस्मिन् स्रज इव स्थितानि रत्नोदधारौषधिसौमनस्यानि स्युः वेणवो भुजा इव पादपाश्च अङ्घ्रय इव स्युः तदा तस्य शोभां स्वीयरत्नमुक्तातुलसीपुष्पमालाभिः भुजैरङ्घ्रिभिश्च क्षिपन्तमित्यभूतोपमा दर्शिता ॥ २४ ॥

आयामतो दैर्घ्येण विस्तरतो विस्तारेण च स्वमान देहेन सुष्ठु समानः प्रत्यक्षादिमानाग्राह्यस्तेन "न प्रत्यक्षं नानुमान"मिति श्रुतेः लोकत्रयं संगृह्यते अनेन अस्मिन् वा स तथा तेन विचित्राणि अद्भुतानि दिव्यान्यलौकिकानि चाभरणानि अंशुकानि च तेषां तृतीयार्थे षष्ठी तैः कृतां श्रीः शोभा येन देहेन हरितोपलाद्रेः प्रेक्षां क्षिपन्तमित्यनेन संबन्धः यत उपाश्रितवेषः उदधारादिवत् स्वीकृतमौक्तिकादिवेषो देहो यस्य हरितोपलाद्रिप्रेक्षाक्षपणद्यामशोभायुक्तो यः तम पश्यदित्यन्वयः ॥ २५ ॥

भाषाटीका

ब्रह्माने जिस पद्मका आश्रय कियाथा उसपर बैठकर उसीपद्म को तथा लोक तत्त्व को और अपने को नहीं जान सका और उस वखत उस पद्म की उत्पत्ति का स्थान जल समूह प्रलय के प्रबल वायु से कंपित होने से भयंकर तरंगवालाथा उसकेदेखने से ब्रह्मा कि पूर्व कालकीस्मृति नष्ट होगयीथी ॥ १७ ॥

ब्रह्मा विचार ने लगे कि मैं इस पद्म पर बैठा हूं मैं कौन हूं और जल के ऊपर यह पद्म मात्र ही है यह कहां से उत्पन्न हुआ इसके नीचे अवश्य ही कुछ होगा जिस मैं कि यहपद्म स्थित हो रहाहै१८

ब्रह्माजीनेऐसाविचार करके उस पद्म के नाल के छिद्र द्वारा जल के मध्य में प्रवेश किया परन्तु बहुत कांटे वाले पद्म के भीतर प्रवेश होकर ढूंढने पर भी उस पद्म का आधार नारायण की नाभि तक नहीं पहुंच सके ॥ १९ ॥

हे विदुरजी! बडे भारी अंधकार मे अपने कारण को ढूंढते २ ब्रह्माजी को वह काल उपस्थित होगया कि जो श्रीनारायण का सुदर्शन चक्र रूप है और देहधारियों को भय दिखाताहुआ उनकी आयु को क्षीण करदेता है अर्थात् ब्रह्मा की सौ वर्षकी आयु पूरी होगई ॥ २० ॥

तवतो ब्रह्मदेवजी मनोरथ के न प्राप्त होने से अन्वेषण से निवृत्त होकर फिर अपने स्थान कमलपर बैठकर चित्त वृत्ति को बाहिर से रोककर धीरेसे श्वास को बंदकर के समाधियोग को धारण करके उसी पद्मपर बैठगये ॥ २१ ॥

तब वे ब्रह्माजी पुरुषकीआयु सौ वर्षपर्यंतकाल तक योगारूढ होने से दिव्य ज्ञानी होगये तब तो जिस वस्तु को खोज करने पर भी नहीं पायेथे उसी तत्त्व वस्तु को हृदय के भीतर ही प्रकाश मान पागये ॥ २२ ॥

उस तत्त्व के स्वरूप का वर्णन नौ श्लोकों से करते हैं कमल के कंद के तुल्य श्वेत वर्ण तथा विस्तृतजोशेषनाग का शरीर तिसकी शय्या करके शयन करता हुआ अकेला एक पुरुष को देखा शय्या रूपी शेषजी के हजारों छत्र रूपी फणाओं की मणियोंकी कांतियों से प्रलय काल के अंधकार का जिस मे नाश हो गया है ऐसे जल मे शयन किये उनको देखा ॥ २३ ॥

वे पुरुष अपनी लावण्य शोभा से मरकत शिला (हरितमणि) पर्वत की शोभा को तिरस्कार करतेथे क्योंकि मर्कत पर्वत मे संध्या काल का मेघ पहिरने के वस्त्रकी शोभा को विस्तार करता है सो ठीक है परंतु उस पुरुष के पीत वस्त्र ने उस सायंकालीन मेघ की शोभा को नीचा कर दिया था और उस पर्वत के मस्तक पर बहुत सुवर्ण की शिखरों के होने से जो शोभा होती उस शोभा का उस पुरुषके किरीट की रत्नोंने अपमान कर दिया था और उस पर्वत की रत्न जलधारा औषधि पुष्प समूह इनों से वनमाला के तुल्य जो शोभा होती तथा वांसों के वृक्षों से हस्तों की सद वृक्षों से चरणों की जो शोभा होती सो शोभा भी इस विराट् पुरुष के रत्न मुक्ता तुलसी पुष्प माला तथा चरण भुजाओं की शोभा से नीची हो गयी थी ॥ २४ ॥

उस पुरुष के देह की लंबाई तथा चौडाई से तीन लोक व्याप्त हो रहे थे यद्यपि शरीर ही उसका सर्व शोभा मय था तथापि नाना प्रकार के दिव्य भूषण वस्त्रादि कों की शोभा से शोभित वेष किया था ऐसे पुरुष को देखा ॥ २५ ॥

पुंसां स्वकामाय विविक्तमार्गैरभ्यर्चितां कामदुघाङ्घ्रिपद्मम् ॥
प्रदर्शयन्तं कृपया नखेन्दुमयूखभिन्नाङ्गुलिचारुपत्रम् ॥ २६ ॥
मुखेन लोकार्तिहरस्मितेन परिस्फुरत्कुण्डलमण्डितेन ॥
शोणायितेनाधरविम्बभासा प्रत्यर्हयन्तं सुनसेन सुभ्र्वा ॥ २७ ॥
कदम्बकिञ्जल्कपिशङ्गवाससा स्वलंकृतं मेखलया नितम्बे ॥
हारेण चानन्तधनेन वत्स ! श्रीवत्सवक्षःस्थलवल्लभेन ॥ २८ ॥
परार्ध्यकेयूरमणिप्रवेकपर्यस्तदोर्दण्डसहस्रशाखम् ॥
अव्यक्तमूलं भुवनाङ्घ्रिपेन्द्रमहीन्द्रभोगैरधिवीतवल्शम् * ॥ २९ ॥
चराचरौको भगवन्महीध्रमहीन्द्रबन्धुं सलिलोपगूढम् ॥
किरीटसाहस्रहिरण्यशृङ्गमाविर्भवत्कौस्तुभरत्नगर्भम् ॥ ३० ॥
निवीतमाम्नायमधुव्रतश्रिया स्वकीर्तिमय्या वनमालया हरिम् ॥
सूर्येन्दुवाय्वग्न्यगमं त्रिधामभिः परिक्रमत्प्राधनिकैर्दुरासदम् ॥ ३१ ॥
तर्ह्येव तन्नाभिसरःसरोजमात्मानमम्भः श्वसनं वियच्च ॥
ददर्श देवो जगतो विधाता नातःपरं लोकविसर्गदृष्टिः ॥ ३२ ॥
स कर्मबीजं रजसोपरक्तः प्रजाः सिसृक्षन्नियदेव दृष्ट्वा ॥
अस्तौद्विसर्गाभिमुखस्तमीड्यमव्यक्तवर्त्मन्यभिवेशितात्मा ३३ ॥

इतिश्रीमद्भागवते महापुराणे तृतीयस्कन्धे
विदुरमैत्रेयसम्वादे भगवद्दर्शनम् नाम
अष्टमोऽध्यायः ॥ ८ ॥

———:०:———

श्रीधरस्वामिकृत भावार्थदीपिका ।

स्वाभिलषितफलाय विविक्तैः शुद्धैः वेदोक्तैः मार्गैरभ्यर्चितां पुंसां कामदुघमङ्घ्रि पद्मं प्रदर्शयन्तं किञ्चिदुन्नमय्य समर्पयन्तम् नखा एव इन्दवस्तेषां मयूखा रश्मयस्तैर्भिन्नाः संभिन्ना अङ्गुलय एव चारूणि पत्राणि यस्य तत् ॥ २६ ॥

लोकार्तिहरं स्मितं यस्मिंस्तेन परिस्फुरद्भ्यां कुण्डलाभ्यां मण्डितेन अधरविम्बदीप्त्या शोणवदाचरितेन शोभननासायुक्तेन सुभ्र्वा शोभनया भ्रुवा च प्रत्यर्हयन्तं पूजकान्प्रति पूजयन्तं संमानयन्तम् २७

कदम्बकिञ्जल्कवत्पिशङ्गं यद्वासस्तेन मेखलया च नितम्बे स्वलंकृतम् हे वत्स ! श्रीवत्सयुक्तं यद्वक्षःस्थलं तस्य वल्लभेन वक्षस्यनर्घ्येण हारेण स्वलंकृतमित्यर्थः ॥ २८ ॥

महाचन्दनवृक्षरूपकेण निरूपयितुं तं विशिनष्टि । परार्ध्यानि श्रेष्ठानि केयूराण्यङ्गदानि मणिप्रवेकाश्च मण्युत्तमास्तैः व्याप्ता दोर्दण्डा एव सहस्रमनन्ताः शाखा यस्य चन्दनवृक्षोऽपि केयूरादितुल्यैः फलपुष्पादिभिर्व्याप्तशाखो भवति अव्यक्तं प्रधानं मूलमधोभागो यस्य यद्वा अव्यक्तं ब्रह्म मूलं यस्य ब्रह्माभिव्यक्तिरूपत्वात् वृक्षस्यापि मूलं न व्यक्तम् भुवनात्मकमङ्घ्रिपेन्द्रम् अहीन्द्रस्यानन्तस्य भोगैः फणैर्देहावयवैर्वाऽधिवीताः संवेष्टिताः स्पृष्टा वल्शाः स्कंधा यस्य "वनस्पतेशतवल्शोविरोहे„ तिश्रुतेः सोऽपि सर्पैर्वेष्टितो भवति ॥ २९ ॥

प्रेक्षां क्षिपन्तमित्यत्रैव पर्वत रूपकेण निरूपितमपि विशेषणान्तरैः पुनर्निरूपयति । भगवानेवमहीध्रस्तम् चराचराणामोकः स्थानम् सोऽपि तथा अहीन्द्रस्य वन्धुम् सोऽप्यहीन्द्राणां वन्धुः सलिलेनोपगूढमावृतम् पर्वतोऽपि मैनाकादिस्तथा किरीटसाहस्रं हिरण्यशृङ्गाणि यस्य सोऽपि मेर्वादिस्तथा यथा पर्वतस्य क्वचिद्रत्नमाविर्भवति तथा आविर्भवत्स्पष्टं दृश्यमानं कौस्तुभरत्नं गर्भे मूर्तिमध्ये यस्य तम् ॥ ३० ॥

किंच वनमालया निवीतम् कण्ठलम्बिन्या व्याप्तम् आम्नाया वेदा एव मधुव्रतास्तैः श्रीर्यस्यास्तया हरिमिति पर्वतादिरूपं दृश्यत् हरिरसाविति ज्ञातवानित्यर्थः सूर्यादिभिरगममगम्यं स्वव्यापारैराकलयितुमशक्यमित्यर्थः किञ्च त्रिष्वपि लोकेषु

* वल्कमिति विजयध्वजीयेपाठः ॥

श्रीधरस्वामिकृत भावार्थदीपिका ॥

स्फूर्तिर्येषां तैः रक्षणार्थं परिक्रमद्भिः परितो धावद्भिः प्राधनिकैः प्रधनं संग्रामस्तत्प्रयोजनैः सुदर्शनादिभिर्हेतुभूतैर्दुरासदं दुष्प्रापम् ॥ ३१ ॥

यदैवं हरिमपश्यत्तर्ह्येव तदैव लोकविसर्गदृष्टिः संस्तस्य नाभिसरसि सरोजं श्वसनं प्रलयवायुं वियदाकाशं च ददर्श ॥ ३२ ॥

कर्मबीजं लोकसृष्टेः कारणम् रजसा उपरक्तो रजोगुणयुक्तः अतः प्रजाः स्रष्टुमिच्छन्नियदेव नाभिसरोजादिपञ्चकमेव विसर्गेऽभिमुखो दत्तचित्तः अव्यक्तवर्त्मनि भगवति निवेशितचित्तः ॥३३॥

इति श्रीमद्भागवतेमहापुराणे तृतीयस्कन्धे
श्रीधरस्वामिकृत भावार्थदीपिकायाम्
अष्टमोऽध्यायः ॥ ८ ॥

---

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी ।

सम्भिन्नाः संयुक्ताः(४) ॥ २६ ॥

मुख विशेषणत्वे सुभ्रुणोति स्यादिति पृथगेव चकारोऽध्याहृतः (५) ॥ २७ ॥

वक्षसीत्यध्याहारादावृत्त्या च व्याख्यानादित्यर्थोक्तिः (६ ॥ २८॥

रूपकेण द्वयोस्तादात्म्येन तं भगवन्तं प्रधानस्य तन्नियम्यत्वेन तदधोभागत्वं कारणत्वेन मूलस्थानीयत्वं भगवतोऽप्रकृतत्वादित्यरुचौ यद्वेति ब्रह्मणो निर्विकल्पकज्ञानमात्रत्वेन विशेष्यत्वान्मूलस्थानीयत्वं यतो निर्विकल्पकसाक्षात्कृतेः प्राथमिकत्वात् सविकल्पकभगवतो ब्रह्माभिव्यक्तिरूपत्वम् अङ्घ्रिपेन्द्रं वृक्षश्रेष्ठं श्रुतौ शतवल्शा शतस्कन्धी विरोहिता उत्पन्ना ( ७ ) ॥ २९ ॥

विशेषणान्तरैश्चराचरौकस्त्वादिभिः सोऽपि पर्वतोऽपि (८) ॥ ३० ॥

स्वव्यापारैरातपादिभिः आकलयितुमभिभवितुम् आर्थिकार्थत्वादित्यर्थोक्तिः ( ९ ) ॥ ३१ ॥

अतः पञ्चकात्परं सृष्ट्युपकरणम् ॥ ३२ ॥

अतः उपरक्तत्वात् विसर्गे दत्तचित्तोऽपि निवेशितचित्तस्सन्नस्तौदित्यन्वयः ॥ ३३ ॥

इति श्रीमद्भागवतेमहापुराणे तृतीयस्कन्धे
दीपिन्याख्यायां दीपिका टिप्पण्याम्
अष्टमोऽध्यायः ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका

पुंसामिति । स्वकामाय स्वाभिलषितफलाय विविकमार्गैरसङ्कीर्णैर्वर्णाश्रमादिधर्मैरभ्यर्चं नामाराधयतां पुंसां कामान् समीहितफलानि दोग्धीति कामदुघं यदङ्घ्रिपद्मं तत्कृपया प्रदर्शयन्तम् पुरुषमपश्यत् कथं भूतमङ्घ्रिपद्मं नखा एवेन्दवः तेषां मयूखैः किरणैः भिन्नाः संभिन्ना व्याप्ता इत्यर्थः ते चाङ्गुलय एव चारूणि सुन्दराणि पत्राणि यस्य तत् ॥ २६ ॥

मुखेनेति । लोकानाम् उपासकानामार्तिहरं दुःखहरं स्मितं यस्मिंस्तेन परिस्फुरद्भ्यां कुंडलाभ्यां मण्डितेनाधरबिम्बदीप्त्या शोणायितेनशोणवदाचरितेन सुनसा शोभननासिकायुक्तेन सुभ्रुवा सुभ्रुवाननेन प्रत्यर्हयन्तम् उपासकान् संम नयन्तम् ॥ २७ ॥

किञ्च कदम्बकिञ्जल्कवत्पिशङ्गवर्णेन वाससा मेखलया च नितम्बेष्वलङ्कृतं हे वत्स ! हे विदुर ! अनन्तधनेन बहुमूल्येन श्रीवत्सयुक्तं यद्वक्षःस्थलं तस्य वल्लभेन सुन्दरतरभूषणभूषितेन हारेण च स्वलङ्कृतम् ॥ २८ ॥

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका॥

पुनश्च चन्दनवृक्षरूपेण निरूपयितुं तं विशिनष्टि । परार्ध्यानि केयूरादयश्चाङ्गदानि मणिप्रवेकाः मण्युत्तमास्तैः पर्यस्ता व्याप्ता ये दोर्दण्डा भुजदण्डा एव सहस्रमनन्ताः शाखा यस्य तं वृक्षोऽपि केयूरादितुल्यैः फलपुष्पादिभिर्व्याप्तशाखो भवति अव्यक्तं ब्रह्म मूलं यस्य तं ब्रह्माभिव्यक्तिरूपत्वात् वृक्षस्यापि मूलमव्यक्तं भुवनाङ्घ्रिपेन्द्रं भुवनकारणमङ्घ्रिपेन्द्रं वृक्षश्रेष्ठम् अहीन्द्रस्यानन्तस्य भोगैः फणैर्देहावयवैर्वा अधिवीताः संवेष्टिताः वल्काः स्कन्धा यस्य तं वृक्षोऽपि हि सर्पवेष्टितो भवति ॥ २९ ॥

प्रेक्षां क्षिपन्तमित्यत्रैव पर्वतरूपेण रूपिनमपि विशेषणान्तरैः पुनारूपयति चराचरेत्यादिना । भगवानेव महीध्रः पर्वतस्तं कथंभूतं चराचराणामोकः स्थानं पर्वतोऽपि तथा अहीन्द्रस्य शेषस्य बन्धुम् पर्वतोऽप्यहीन्द्राणां बन्धुः सलिलोपगूढं जलेनावृतं पर्वतोऽपि मैनाकादिस्तथा किरीटानां साहस्रमेव हिरण्यशृङ्गाणि यस्य तं मेर्वादिस्तथा आविर्भवत्स्पष्टं दृश्यमानं कौस्तुभरत्नं गर्भे मूर्तिमध्ये यस्य तं पर्वतस्यापि हि गर्भे कश्चिद्रत्नमाविर्भवति ॥ ३० ॥

किञ्च वनमालया निवीतं कण्ठविम्बव्याप्तं कथंभूतया वनमालया आम्नायमधुव्रतश्रिया आम्नाया वेदास्त एव मधुव्रता भ्रमरास्तैः श्रीर्यस्यास्तया स्वकीर्तिमय्या स्वकीर्तिप्रचुरया स्वकीर्तिज्ञापकैर्वेदरूपैर्भ्रमरैर्गाहतशोभयेत्यर्थः सूर्येन्दुवाय्वग्न्यगमं सूर्यादिभिरगममगम्यं स्वव्यापारैराकलयितुमशक्यमित्यर्थः सूर्येन्दुताराग्न्यगममित्यपि पाठः तदा सूर्यादिभिरप्रकाश्यमित्यर्थः तथाच श्रुतिः "न यत्र सूर्यो भाति न चन्द्रतारकम्" इत्यादिका त्रिधामभिः त्रिषु लोकेषु धाम स्फूर्तिर्येषां तैः रक्षणार्थं परिक्रमद्भिः प्राधानिकैः प्रधनकः संग्रामस्तत्प्रयोजनकैः सुदर्शनादिहेतिभिर्दुरासदं दुष्प्रापम् ॥ ३१ ॥

तर्हीति । यदैव हरिमपश्यत्तर्ह्येव तदेव लोकविसर्गदृष्टिः लोकसृष्ट्यर्थं ज्ञानं यस्य सः जगतां व्यष्टीनां कर्ता स्रष्टा देवः ब्रह्मा तस्य भगवतः नाभिसरसि सरोजं श्वसनं प्रलयकालवायुं तात्कालिकमम्भ आत्मानं स्वात्मानं च ददर्श ततः सरोजादिभ्यः परमन्यत् सृष्टिप्रकारादिकं न ददर्शेत्यर्थः ॥ ३२ ॥

अथालब्धजगत्सृष्टिज्ञानस्तल्लब्धये भगवन्तं तुष्टावेत्याह स इति । स ब्रह्मा रजसा रजोगुणेन उपरक्तः युक्तः अतएवप्रजाः सिसृक्षन् स्रष्टुमिच्छन् इयदेव नाभिसरोजादिपञ्चकमेव विसर्गाभिमुखः विसर्गे अभिमुख उन्मुखः सिसृक्षन् विसर्गाभिमुख इत्याभ्यामिच्छाप्रगल्भावुक्ताविति न पौनरुक्त्यम् अव्यक्तवर्त्मन्यनभिव्यक्तगतौ पुरुषोत्तमेऽधिवेशितः आत्मा चित्तं यस्य स ईड्यं स्तुत्यं कर्मबीजं क्रियत इति कर्म जगत् "यस्य चैतत्कर्मे"ति श्रुतेः तस्य बीजं कारणं भगवन्तमस्तौत् स्तुतवान् ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिकायाम्
अष्टमोऽध्यायः ॥ ८ ॥

श्रीमद्विजयध्वज तीर्थकृतपदरत्नावली

कामं दोग्धीति कामदुघं तच्चाङ्घ्रिपद्मं पुंसां प्रदर्शयन्तमित्यन्वयः । नन्वेवं तर्हि किमिति सर्वे पुरुषार्थभाजो नाभूवन्निति तत्राह । स्वकामायेति विचिर्पृथग्भाव इति धातोर्विविक्तैर्वैदिकादिभेदेन पृथक्कृतैर्मार्गैरभ्यर्चताम् यथाभिमुखो भवति तथार्चनं कुर्वताम् नखा एवेन्दवस्तेषां मयूखा रश्मयस्तैर्भिन्ना इतरेतरविलक्षणा अङ्गुलयस्ता एव चारूणि पत्राणि यस्याङ्घ्रिपद्मस्य तथा तत्

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

अज्ञजनवृद्ध्यारोहार्थम् एवमुक्तं स्वत इतरपद्मविलक्षणमिदमङ्घ्रिपद्ममित्यर्थः ॥ २६ ॥

मुखेन प्रत्यर्हयन्तम् शरणागतजनान् सम्मानयन्तमिव स्थितमिति शेषः लोकार्तिहरस्मितेनेत्यादिना मुखंविशिनष्टि । अधरबिम्बभासा शोणायितेन रक्तवद्वर्तमानेन सुनसेन शोभमाननासिकेन सुशोभना भ्रूर्यस्य तत्सुभ्रु तेन सुभ्रुवा नपुंसकश्च सुवाक्शब्दवदयं शब्दः ॥ २७ ॥

किञ्जल्कः केसरः कदम्बेति तत्पुष्पं मेखला काञ्ची अनन्तधनेनेति हारस्यानर्घ्यत्वं वक्ति हेवत्स विदुर ! श्रीवत्सलक्षणस्य वक्षःस्थलस्य वल्लभेन प्रियेण ॥ २८ ॥

अधुना वृक्षसाधर्म्येण हरिं वर्णयति परार्घ्येति । परार्घ्यैरनर्घैः केयूरैः मणीनां प्रवेकाः श्रेष्ठाः येषु तैः कङ्कणैश्च पर्यस्तम् परितो न्यस्तमलंकृतम् दोर्दण्डसहस्रमेव शाखा यस्य स तथोक्तस्तम् अव्यक्तं प्रधानं त्रिगुणं मूले पादे यस्य स तथा तं प्रकृतेः कारणम् वा "तस्माद्व्यक्तमुत्पन्नं त्रिगुणम् द्विजसत्तमे,, ति वचनात् अविज्ञाताधःप्रदेशमिति वा "प्रधानं व्यक्तमव्यक्तो ब्रह्मणस्पष्टमूलयो,, रिति यादवः भुवनेषु विद्यमानानामङ्घ्रिपाणामिन्द्रं यद्वा चतुर्दशभुवनाख्याङ्घ्रिपाणामिन्द्रं श्रेष्ठम् अहीन्द्रस्य शेषस्य भोगैः शरीरविशेषैरधिवीतवल्कं सम्वीतत्वचम् उभयत्र समिदम् ॥२९

पुनरपि पर्वतसाधर्म्येण वर्णयति चराचरौक इति । भगवन्महीध्रं श्रीनारायणाख्यपर्वतमपश्यदित्यन्वयः चराचरस्य जगत ओको मन्दिरम् "ओकमीमन्दिराश्रया,, विति च प्रलयसलिलेन किरीटानाम् सहस्रारयेव हिरण्यशृङ्गाणि यस्य स तथा तम् कण्ठे आविर्भवत्कौस्तुभरत्नगर्भे प्रकाशमानकौस्तुभम् कुस्तुभात्समुद्राज्जातम् तन्नाम रत्नं गर्भं आभरणं यस्य स तथा तम् "गर्भोपचारके तुन्दे नेपथ्ये असिते पिचे,स्त्यभिधानम् ॥ ३० ॥

आम्नाया एव मधुव्रता भृङ्गास्तेषामाश्रयया स्वरूपकीर्तिमय्या वनमालया निवीतम् संवीतम् कण्ठ इति शेषः इयन्तम् कालम् अमुक्तं शबलं ब्रह्म ब्रह्मा ददर्श न नित्यमुक्तं निर्गुणमिति तत्राह सूर्येति । त्रिधाम्नो विष्णोरगच्छद्भिर्नित्यं तत्समीप एव तिष्ठद्भिर्मुक्तैः सूर्येन्दुवाय्वग्निभिर्वृतः अत्र व्यत्यासादादिशब्दप्रक्षेपो ज्ञातव्यः सूर्येन्दुवाय्वग्न्यादिभिरित्याचार्यवचनाच्च परिक्रमद्भिः प्रदक्षिणम् कुर्वद्भिः प्राधनिकैः प्राधनस्य हरेर्भृत्यैः पुरपालकैश्च वृतमिति शेषः तदुक्तं "मुक्तं वाय्वादिभिर्विष्णुं वृतम् ब्रह्मा ददर्शहे"त्यादिविशिष्टवचनाच्च दुरासदमित्यनेनापि मुक्तैर्निषेवितम् विष्णुमपश्यदिति गम्यते ३१

अनेनैतच्च लब्धमित्याह तर्हीति । यदैवं विधं हरिमपश्यत्तर्हि तदैव नाभिसरसि उत्पन्ने सरोजे स्थितमात्मानम् स्वं । ब्रह्मणो लोकविसर्गदृष्टिः लोकेन ज्ञानेन विशिष्टमुक्तस्वभावो येषां सूर्यादीनां लोकविसर्गास्तेषां दर्शनं लोके विसर्गाः सृष्टिरहिता लयोदकवाय्वादय एव तेषां दर्शनमभूदतः एतद्दर्शनात्परमन्यद्दर्शनम् नाभूत् मुक्तसूर्यादिकम् प्रलयजलादिकमेव ब्रह्मा ददर्श परं न ददर्शेत्युक्तं भवति यद्वा लोकस्य ज्ञानस्य विसर्गस्य सृष्ट्यादिव्यापारशून्यस्य निर्गुणस्य दृष्टिरतः परं न भवति इदमेव निर्गुणदर्शनमिति भावः ॥ ३२ ॥

यदर्थमहं हरिणा सृष्टस्तत्कर्तुं तदनुग्रहमन्तरेण न शक्नोम्यतः स्तुत्या तं प्रसाद्य तत्कटाक्षेधितज्ञानवीर्योऽभीष्टं कार्यं शुश्रूणलक्षणं करोमीति भावेन तं स्तौतीत्याह स्वकर्मबीजमिति । स ब्रह्मा तमीशगस्तौदस्तौषीदित्यन्वयः कीदृशं स्वकर्मबीजं सृष्टौ स्वनिमित्तकार-

श्रीमद्विजयध्वजतीर्थ कृत पदरत्नावली ।

णादृष्टस्य व्यञ्जकं कीदृशो ब्रह्मा रजसा गुणेन उपरक्तः उपरागफलमाह प्रजा इति । सृष्टिसाधनमियदम्भआदिकं दृष्ट्वा विसर्गाभिमुखः विविधसृष्ट्यभिमुखः अव्यक्तवर्त्मनि ब्रह्मलक्षणमार्गे अभिनिवेशितात्मा निर्विषयात् निविष्टमनाः ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्विजयध्वजतीर्थकृत पदरत्नावल्याम्
अष्टमोऽध्यायः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

अव्यक्तमूलमिति । न व्यज्यते शास्त्रविद्भिर्न कथ्यते मूलं यस्य तं सर्वमूलत्वेन मूलान्तररहितमित्यर्थः । अव्यक्तः स्वयं भगवांस्तन्मूलमिति वा भुवनरूपाणामङ्घ्रिपाणामिन्द्रम् ईश्वरम् ॥ २६—३१ ॥

तर्हीति । अतः परं सृष्ट्युपकरणम् ॥ ३२ ॥

स इति । रजसा युक्तः सन् प्रजाः स्रष्टुमिच्छन् इयत् नाभिसरोजादिपञ्चकमेव लोकसृष्टेः कारणं दृष्ट्वा विसर्गे दत्तचित्तोऽपि अव्यक्तवर्त्मनि भगवति निवेशितचित्तः सन्नस्तौदित्यर्थः ॥ ३३ ॥

---

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ॥

भगवद्धर्मः परोक्षतया मार्गानुसारेण भजतां फलदानं स्वोप योगाभावात् ब्रह्मधर्म एवेति तमाह । पुंसामिति । स्वकामाय स्वाभि प्रसिद्ध्यर्थं विविक्तमार्गैरन्योन्यास्लेषरहितैर्लोकातीतैर्वा एकान्त कारैर्वा ये अभ्यर्चयन्ति तेषां कामदुघं यदङ्घ्रिपद्मं तत्तेषामर्थे प्रदर्शयत् पुनःकथं भूतमङ्घ्रिपद्ममित्याकाङ्क्षायामाह नखेन्दुमयूखभिन्नाङ्गुलि चारुपत्रमिति । नखा एवेन्दवस्तेषां मयूखैर्भिन्नाः सर्वदेहविलक्षणा या अङ्गुलयस्ता एव चारूणि पत्राणि यस्य स्वभावतः पादप विकसितं नखानामिन्दुत्वेन पत्राणि प्रत्येकं संकुचितानि परि इन्दुरक्षार्थं नत्वग्रतः कमलपत्राणि चन्द्रकिरणैः संकुचितानि च तेनालौकिकत्वाच्च हृदयान्धकारमलौकिकमपि नाशयति चरण पद्मतायां हेतुरप्युक्तो भवति सर्वदेहवैलक्षण्याद्भक्तिमार्गः सर्व उत्तम इत्युक्तं भवति भक्तिरेव स्वतन्त्रफलेति स्वयं फलमदत्वा ते कामनापूर्त्तये दुःखाभावाय च तदुपास्यं चरणमेव प्रदर्शयति

एवं मार्गेण भजतां फलमुक्त्वा प्रत्यक्षेण भजतां फ माह मुखेनेति । मुखेन प्रत्यर्हयन्तं येपूजां कुर्वन्ति तान्प्रति पू यन्तं "ये यथा मां प्रपद्यन्ते" इतिवाक्यात् । ननु ते स्वकी सर्वस्वेनापि भगवन्तं पूजयन्ति भगवांस्तु कथं तान् पूजयती शङ्क्य भगवति षड्गुणाः सन्ति तैर्युक्तेन मुखेन तान् पूज तेषु मुखधर्मान्सर्वानेव योजयति तत्र मुखे षड्धर्मान् षड्भि पर्णः संपादयति लोकार्तिहरस्मितेनेत्यादिभिः । भगवतो मुख गुणद्वये सर्वोपकारिचतुष्टयं भक्तानामेवलोकानामार्तिहरतीति ता स्मितं यत्र स्मितं मन्दहासः "हासो जनोन्मादकरीच माया,, भग सृष्टिलीलाकर्त्ता ब्रह्माण्डस्थितजीवान् स्वेच्छया सर्वथा विनियोज तत्र ते प्रमाणबलमाश्रित्यान्यथा कर्त्तुं यतन्ते तदा व्यामोह वृथा क्लेशं प्राप्स्यन्तीति अतस्तेषां क्लेशाभावायैव हासः मन्द सर्वथा मुग्धाउत्पथ प्रवृत्ताःपारलौकिकदुःखं प्राप्स्यन्तीति लोक

श्रीमद्वल्लभाचार्यकृत सुबोधिनी

सज्जीवाः किञ्च परिस्फुरत्कुण्डलमण्डितंनेति परितः स्फुरन्ती ये कुण्डले ताभ्यां मण्डितेन सांख्ययोगौ कुण्डले तयोः परितः स्फुरणमैहिकामुष्मिककार्यसिद्धये तेन वैदिकमार्गेणापि यःक्लेशः सयोगेन निवार्यते सांख्येन स्वरूपानन्दमनुभाव्यते एतद्वा विपरीतम् उभयमुभयत्र वा अतोऽनिष्टनिवारकेष्टप्रतिपादनपूर्वकं प्रतिपूजनं करोतीत्युक्तम् इदं भक्तानां नातीव पुरुषार्थरूपं शोणायितेनेति शोण ईषद्गौरः पीताम्बरतुल्यः अनेन तेभ्यो भक्तिं प्रयच्छतीत्युक्तम्। किंच अधरविम्बभासा अधरविम्बस्य भाः कान्तिर्यत्र अधरोलोभात्मकः तत्र यद्विम्बं विम्बसदृशमित्यर्थः बाह्या शब्दबलेन भगवत्स्वरूपं तल्लोभे स्थापितं भगवद्भक्तेभ्यः प्रयच्छतीति प्रतिपूजनसाधने तत्कान्तिस्तत्साक्षात्कारः समायाति एवं भक्तिं दत्वा सर्वदुर्लभं तेभ्यः स्वरूपं प्रदर्शयतीत्युक्तम्। किञ्च सुनसेन सुभ्र्वेति शोभने नासिके यस्मिन् शोभने भ्रुवौ यस्मिन्निति अश्विनी कुमारौ नासिके भ्रूः कालो रोगकालयोर्निवृत्तिं करोतीत्यर्थः ॥ २७ ॥

एवं प्रत्यक्षभजने सर्वपुरुषार्थदाता निरूपितः सर्वतत्त्वाश्रयेणापि भगवतः सर्वसौन्दर्यं निरूपयति कदम्बेति। कदम्बस्य यथा किञ्जल्कास्तथेति रेखाकारा मुक्तायुक्ताः पीताम्बरे प्रतीयन्ते तेन सर्वसत्त्वैर्मुक्तैः सहितया भक्त्या भगवानाच्छन्न इति भगवति गोप्यं रूपमुक्तम् तेनैव तत्र शोभा नतु रूपेण अत एव पीताम्बरेण सुष्ठु अलङ्कृतं तच्च छन्दोमयं तेनाच्छादनं स्पष्टमेव। किञ्च मेखलया नितम्बं स्वलंकृतमिति मेखला भूमौ भगवत्कीर्तिर्भगवद्गुणानुवर्णनं गुणमयी च सा तया भगवत्कार्यकरणात् कार्यार्थमपि भगवान् नान्वेष्यः एवं क्वचिद्भगवद्रूपमप्रत्यक्षमपि सर्वसौन्दर्ययुक्तमित्युक्त्वा प्रकटं ततोऽपीत्याह हारेणेति। हारः सर्वरत्नानाम् अतएवानन्तधनेन वत्सरूपश्चिद्रूपो योऽयं श्रीवत्सो दक्षिणावर्त्तरोमरेखा तद्युक्तं यद्वक्षस्तत्रैव स्थलं सर्वसौन्दर्याणामाश्रयभूतं सर्वेषां भूतानामाश्रयभूतं वा अत्रवल्लभेन तेन च स्वलंकृतं नवभिर्गुणैरेकदेशस्थितैः हाराणां वा समूहेन मुक्तजीववृन्देन भृग्वादिसमूहेन अनन्त एव धनं यस्य अधिकारानन्तरमेव तेषां स्वरूपप्राप्तिः अनन्तकालः श्रीवत्सस्य चिद्रूपत्वं लक्षणतया ज्ञापकं तेन ब्रह्मता निरूपिता श्रीवत्सस्य यद्यपि चिह्नत्वं स्वभाव एव तथापि प्रियत्वाय तथोक्तिः नाम्नि तु श्रिया प्रियत्वं प्रतीयते तथापि हारस्य प्रियत्वं ख्यापयितुं वल्लभेति ॥२८॥

एवमुभयविधैरपि भक्तैर्भगवत्सौन्दर्यं निरूपितं पुनर्भगवन्तं सर्वपुरुषार्थोपयोगित्वेन च निरूपयति तत्र भगवन्तं कल्पवृक्षत्वेन वर्णयति पराद्ध्र्यैति। पराद्ध्र्याः अमूल्याः केयूरे ये मणिप्रवेकास्तैः पर्यस्ता दोर्दण्डास्तैः कृत्वा सहस्रं शाखा यस्य पूर्वं तदेव रूपं शयानमुपलभ्य पुनः परिदृश्यमाने तामवस्थां परित्यज्य रूपान्तरेण प्रदर्शितवान् "वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वं,,मितिश्रुतेस्तादृशं रूपं ब्रह्मत्वज्ञापनाय प्रदर्शितमिति तदनुवर्ण्यते वृक्षत्वेऽप्यलौकिकोऽयं वृक्षः केयूरं कङ्कणोपरिहस्ताभरणं तेनालंकृताएवहस्ताःतत्रत्यानामाभरणानां प्राधान्येन कीर्तनं तत्तेजः सर्वमेव हस्तं व्याप्नोतीति शतवल्शाः सर्वे वृक्षा इति तद्व्यावृत्त्यर्थं सहस्रशाखमित्युक्तम् अनेन प्रमाणात्मकता च निरूपिता उत्थितोऽयं भगवान् नतु शयानः वृक्षतुल्यत्वात् पर्यस्ता इति नानाविधकार्यकर्तृत्वमतोऽस्य सृष्टावुपयोगः बाहूनां दण्डत्वं मर्यादारूपत्वान्नियामकत्वख्यापनार्थम् अत्राभरणानि कर्माणि तेषां प्रत्येको नित्योत्कृष्टत्वम्

श्रीमद्वल्लभाचार्यकृत सुबोधिनी

अमूल्यता चस्वत एव ध्यानप्राप्तत्वादन्यथा दानप्राप्त्यपेक्षयाक्रयप्राप्तमुत्तममेव एवं तस्य बाहूनां शाखात्वेन वृक्षत्वं निरूप्य मूलतो वृक्षत्वं निरूपयति अव्यक्तमूलमिति। इतोऽप्यग्रेऽन्वेषणं न कर्तव्यं यतस्तस्य मूलमव्यक्तम् अनाविर्भूत एवाविर्भूत इति प्रकृतिं केचिदाहुः तदापि व्यक्तस्य मूलमिति व्याख्येयम् अतः परं नेत्यर्थः भुवनाङ्घ्रिपेन्द्रमिति। अङ्घ्रिपाणामिन्द्रो वृक्षश्रेष्ठः भुवनान्येवाङ्घ्रिपेन्द्रः अतएव प्रत्यक्षं कल्पा भिन्ना भवन्तिइयमुत्तरकाण्डे मर्यादा अव्यक्तमूलमिति प्रमाणं द्वितीयं प्रमेयं तृतीयं फलमिति कल्पवृक्षत्वं जगत्कर्तृत्वं दुर्ज्ञेयत्वं च निरूपितम् अहीन्द्रभोगैःशेषफणैरधिवीतो वल्शो यस्य चन्दनवृक्षे सर्पास्तिष्ठन्ति तथात्रापि शाखास्कन्धेष्वेव ननु ब्रह्मणि ॥ २९ ॥

एवमुत्थितं भगवन्तं निरूप्य उपविष्टं निरूपयति चराचरौकेति। उपविष्टेषु पर्वतः स्थिरः सच स्थावरजङ्गमाश्रयो भवति भगवानेव महीध्रः भूमिधारणसाम्याच्च अहीन्द्रस्य बन्धुः अहीन्द्र एव वा बन्धुः बन्धनरूपो यस्य मन्दरस्य सलिलेन समुद्रेणोपगूढां भवति मैनाकादिः एवमुपविष्टे भगवति अचलरूपता निरूपिता सर्वाश्रयो जीवनहेतुः सर्वोद्धारकः संसारात् अलौकिकभक्तिरसपाययिता भीतानां शरणभूतश्च सुसेव्यो वा। किञ्च उपरिभागे शिखरोपरि स्थितसुवर्णैः किरीटयुक्त इव किरीटानां साहस्ररूपाणि हिरण्यशृङ्गाणि यस्य आविर्भवत्कौस्तुभरत्नं गर्भे यस्य मध्योपरिभागौ वर्णितौ महाराजत्वाय रत्ननिधित्वाय चैश्वर्यं लक्ष्मीश्च वर्णिता ॥ ३० ॥

एवं बहिःस्थाने शयानमुत्थितमुपविष्टमुक्त्वामार्गत्रयरूपाणिच निरूप्यान्तःस्थितं रूपं निरूपयन् मूलरूपं निरूपयति निवीतमिति। तथा तथा दर्शनात्तथा तथा निरूपणम् आम्नायमधुव्रतश्रिया स्वकीर्तिमय्या वनमालया निवीतं मूलभूतं भगवतः पुरुषरूपं निवीतमिति मनुष्यधर्मत्वात् निवीतं कण्ठलम्बितम् आम्नाय आवर्त्यमानो वेदस्तएव मधुव्रतास्तेषां श्रीर्यत्र ते नीलास्तामसा इव स्वकीर्तिः शुक्ला सात्विकी "आपादलम्बिनीमालावनमालाप्रकीर्तिता। तुलसी पुष्परचिता नवरत्नैर्विराजिता,, रूपेणराजसी व मायैषा प्रवाहहेतुः कीर्तिमयीति भक्तिहेतुर्मर्यादाहेतुश्च आद्या मर्यादापुष्ट्योः धर्मत्वंप्रवाहाश्रयत्वात् मूलमेतादृशमिति ज्ञाते तदन्तरङ्गैर्भजनं सेत्स्यतीति नैते तस्य सहजधर्माः किन्तु प्रमाणबलकल्पिता एव सहजं तु सर्वेषां दुःखहर्तृत्वं तदाह हरिमिति। संघाते स्थितस्य तत्रागमनार्थं हेतुरूपमाह सूर्येन्द्वाय्वग्न्यगममिति।एते सूर्यादयः कर्णिकायामावरणभूताः एतैर्विद्यमानैर्भगवत्प्राप्तिर्न भवतीति दिनरात्रिव्यवस्थया कालातिक्रमार्थम् अवस्थात्रयेण योगेन कर्मणा वा भगवान्न प्राप्यते इति तथा तत्त्वैरपिसांख्येन तदाह परिक्रमत्प्राधनिकैर्दुरासदमिति परितःक्रमन्तीति तेषामप्यावरणत्वं निरूपितम् प्रधने उपयुक्तानि प्राधनिकानि चक्रादीनि तैर्दुरासदमिति कालातिक्रमो ज्ञानेन अवस्थातिक्रमश्च योगेन वाय्वतिक्रमः कर्मणा चाग्न्यतिक्रमः पृथ्वीजलातिक्रमस्तूक्त एव. ज्ञानभक्तिभ्यां तत्त्वातिक्रमस्तु सांख्येन एवं पञ्च पर्वयाऽविद्यया सर्वातिक्रमः एतैरेव प्राप्तिरित्येके तदा पश्चाप्येतानि त्यक्तव्यानि स्वरूपे गत्वा भगवान्पश्चात्प्राप्तव्यः ॥ ३१ ॥

एवं भगवति ज्ञाते अन्यत्सर्वं स्वत एव ज्ञातमित्याह तर्ह्येवेति। तस्मिन्नेव क्षणे तस्य नाभौ सरोवररूपं उद्गतसरोजं पद्मं तत्र स्थितमात्मानं बहिःस्थितमम्भःश्वसनं च वियदाकाशश्च पृथ्वी पद्ममेव

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ॥

तेजोभगवानेव स्वस्मिन्विद्यमानः तदा पञ्चभूतानि दृष्टानि तान्यपि स्वदेह एव एवं देहे सर्वं दृष्ट्वा जगतो विधाता जातः अतः परं ब्रह्मभूतो न जात इत्यर्थः उभयोरप्येतद्रूपं हेतुभूतम् यतोऽयं लोकविसर्गे हृषिर्यस्य तादृशः ॥ ३२ ॥

ततः किंकृतवानित्याह सकर्मबीजमिति । कर्मबीजं इयदेव दृष्ट्वा अस्तौदिति संबन्धः कर्मणि कार्ये जगत्कारणे एतदेव बीजं भगवान्पञ्चमहाभूतानि च एषणां समवाये जगद्भवतिनतुचेतननिर्माणे च्छया प्रवृत्त इति न बीजमात्रेण कार्यं किन्तु रजोऽप्यपेक्षत इत्याशङ्क्याह रजसोपरक्त इति । रजोगुणेनोप समीपे रक्तः स्वयमपि रजोगुणभूतो जात इत्यर्थः इयदेव दृष्ट्वेति क्रियाज्ञानं तस्य न जातं नहि रजोबीजाभ्यामेव किंचिद्भवति वपनं कर्षणं पूर्वाङ्गमध्यकृतया विकृतं वर्द्धनं जीवनदानं च यावन्न जायते तावत्कार्यं न सेत्स्यतीति चत्वारोऽर्था प्रार्थनीयाः तद्दाने च स्तोत्रं हेतुभूतमित्यस्तौत् मोक्षार्थतां व्यावर्त्तयति विसर्गाभिमुख इति । भगवता स विसर्गसंमुखः कृतः विसर्गमेव करिष्यामीत्यध्यवसाययुक्तः अतएव तं येनैवायमेवं कृत इति तर्हिस्तोत्रं किमर्थमित्याशङ्क्याह ईड्यमिति । स सर्वैःस्तुत्यःस्तोत्रानन्तरम् प्रसन्नजात एव प्रार्थनीयः नन्वन्यः स्वयं जानातु वेदाश्च साधनापदेष्टारः सन्ति किं भगवतेत्याशङ्क्याह अव्यक्तवर्त्मन्यभिवेशितात्मेति । अव्यक्तमार्गे एवाभिनिवेशितान्तःकरणः नहि कुम्भकारवत्स्पष्टतया जगत्कर्तुमिच्छति किन्तु योनौ बीजं स्थापयित्वा तत्र सर्वं कर्तुं वाञ्छति नहीतद्भगवत्कृपाव्यतिरेकेण संभवति चित्तं च तत्रैव प्रविष्टं न प्रकारान्तरेण कर्तुं वाञ्छतीत्यर्थः ॥ ३३ ॥

इति श्री मद्भागवते महापुराणे तृतीय स्कन्धे सुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजविरचितायाम् अष्टमाध्याय विवरणम् ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ॥

स्वकामाय स्वाभिलषितफलाय । यद्वा । स्वां भगवानेव कामस्तस्मै भगवन्तमेव प्राप्तुमित्यर्थः । स्वस्य भगवतः कामाय सेवाभिर्भगवन्तं सुखयितुमिति वा । विविक्तैर्ज्ञानकर्मभ्यामिश्रत्वेन शुद्धैर्मार्गे र्वैधरागादिभिर्दास्यसख्यादिभावमार्गैर्वा कामदुघं सेवोपयोगिमनोरथपूरकमङ्घ्रिपद्मं सहस्रपादपद्मानां मध्य एव एकं किञ्च दुस्समय्य प्रदर्शयन्तं तत्र पादपद्ममित्युत्तरश्लोके मुखेनेत्येकवचनलिङ्गेन भङ्ग्यात्रैव प्रस्तावे पुंसामित्यादिश्लोकत्रय्या श्रीकृष्णावतारदर्शनमेव ब्रह्मणे दर्शितं "तदुहोवाच ब्राह्मणोऽसावनवरतं मे ध्यातः स्तुतः परार्द्धान्ते सोऽबुध्यत गोपवेशो मे पुरस्तात् आविर्बभूवेति" गोपालतापनीश्रुतेर्ब्रह्मसंहिता कथा दृष्टेश्चेति । तस्यैव मदनगोपालस्वरूपस्य त्रिभङ्गमूर्तेर्व्यत्यस्तपादस्य दक्षिणचरणपद्मे नमनदृष्टेरिति केचिदाहुः । नखेन्दुमयूखैरेव भिन्नाः संभिन्ना अङ्गुलय एव चारुणि पत्राणि यस्य तदिति । पद्मस्यास्य चन्द्ररश्मि विकासित्वादद्भुतत्वमुक्तम् ॥ २६ ॥

प्रत्यर्हयन्तं पूजकांस्तान् प्रतिपूजयन्तं भोगापवर्गादिस्तैर्भक्तैरङ्गीकारात्सेनैव तत्सेवाकृष्णं परिशोधयन्तमित्यर्थः । आर्त्तिर्दुःखमात्रं तद्दर्शनोत्कण्ठ्यपीड़ा वा सुभ्र्वा शोभनया भ्रुवा एकया रचयैव रहस्यभावप्रकाशिकयेति प्रत्यर्हणीया अपि भक्तविशेषा एव सूचिताः ॥ २७ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

वत्स हे विदुर ! श्रीवत्सयुक्तं यद्वक्षःस्थलं तस्य वल्लभेन हारेण ॥ २८ ॥

श्रयशःसौरभसुवासितमर्चविश्वत्वात् महाचन्दनवृक्षरूपकेण निरूपयितुं तं विशिनष्टि । पर्यस्ता विश्वव्यापिनो दोर्दण्डा एव सहस्रमनन्ताः शाखा यस्य तम् । अव्यक्तं व्यञ्जनयापि कैरपि नोक्तं मूलमनादित्वात् यस्य तम् । यदुक्तं "स आत्मा स्वाश्रयाश्रय" इति । वृक्षपक्षे स्पष्टम् । भुवनानि चतुर्दश अङ्घ्रिणा एकेनैव पाति रक्षति सचासावङ्घ्रिः ऐश्वर्यवांश्चेत्येकपादविभूतिपतिर्मित्यर्थः । पक्षे सुपर्णेषु मध्ये ये अङ्घ्रिपास्तेषामिन्द्रम् अहीन्द्रस्यानन्तस्य भोगैः फणैर्देहावयवैर्वा अधिवीताः स्पृष्टा वलशाः स्कन्धा यस्य तं "शालवल्ली विरोह" इति श्रुतेः । पक्षे बहुसर्पवेष्टितस्कन्धशाखादिकम् ॥ २९ ॥

चन्दनवृक्षरूपकेण निरूप्य स्वस्य आश्रयोऽपि स्वयमेवेति दर्शयितुं चन्दनपर्वतरूपकेणापि निरूपयति । भगवानेव महीध्रो मलयगिरिस्तं चराचराणामोक आस्पदम् अहीन्द्रोऽनन्तोऽहीन्द्राः सर्पाधिपाश्च । सलिलेन गर्भोदेन क्षीरोदेन च आलिङ्गितं किरीटसाहस्रमेव हिरण्मयवर्णानि शृङ्गाणि यस्य तं मलयस्य स्वर्णवर्णशृङ्गत्वात् कौस्तुभरत्नं गर्भे मूर्त्तिमध्ये यस्य तं मलयस्य पर्वतत्वेन रत्नखनिमत्त्वात् ॥ ३० ॥

निवीतं युक्तम् । हरिमिति पर्वतादिरूपं पश्यन् हरिरसाविति ज्ञातवानित्यर्थः । सूर्यादिभिरगमं स्वव्यापारैराकलयितुमशक्यमित्यर्थः । त्रिधामभिः सच्चिदानन्दस्वरूपै रक्षणार्थं परिक्रामद्भिः परितो धावद्भिः प्राधनिकैः प्रधनं संग्रामस्तेन दीव्यद्भिः सुदर्शनादिभिर्जयविजयादिपार्षदैर्वा हेतुभूतैर्दुरासदमन्यैर्दुष्प्रापम् ॥ ३१ ॥

तत्रैव तन्नाभिसरसि सरोजं सरोजेचात्मानम् आत्मनश्चतुर्दिक्षु अम्भःश्वसनं वियच्चेति भूतत्रिकं ददर्श । नातःपरं पृथिव्यादिलोकानां विविधे सर्गे दृष्टिर्विकीर्णा यस्य सः ॥ ३२ ॥

कर्मबीजं लोकसृष्टेः कारणम् । इयदेव सरोजादिपञ्चकमेव विसर्गाभिमुखः विसर्गे कथमहं कुर्यामिति भावयन् अमुमेवाहं शरणं यामीति विसर्गाभिनिवेशं परित्यज्य अव्यक्तवर्त्मनि श्रीभगवति अभिनिवेशित आत्मा मनो यस्य सः ॥ ३३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
तृतीयस्याष्टमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

नखा एव इन्दवः तेषां मयूखैः रश्मिभिः भिन्नाः संभिन्नाः अङ्गुलय एव चारुणि पत्राणि यस्य तदङ्घ्रिपद्मं कामदुघाङ्घ्रि पद्मं कामपूरकचरणकमलं प्रदर्शयन्तम् ॥ २६ ॥

लोकानामुपासकानाम् आर्तिहरं दुःखहरं स्मितं यस्मिन् तत् परिस्फुरद्भ्यां कुण्डलाभ्यां मण्डितेनालंकृतेन अधरमेव बिम्बफलं तस्य भासा दीप्त्या शोणायितेन शोणवदाचरितेन सुनसा शोभमाननासिकायुक्तेन सुभ्र्वा शोभमानभ्रूयुक्तेन मुखेन प्रत्यर्हयन्तमुपासकान् संमानयन्तम् ॥ २७ ॥

कदम्बकिञ्जल्कवत् पिशङ्गेन पीतेन वाससा मेखलया च नितम्बे स्वलंकृतं सुष्ठु अलंकृतम् हेवत्स विदुर ! अनन्तधनेन अनर्घ्येण श्रीवत्सयुक्तस्य वक्षःस्थलस्य वल्लभेन हारेण च वक्षसि स्वलंकृतम् ॥ २८ ॥

श्रीवच्छुकदेवकृत सिद्धान्तप्रदीपः ।

पर्वतरूपेण भगवद्विग्रहं निरूप्याथ वृक्षराजरूपेण विग्रहं निरूपयितुं भगवन्तं विशिनष्टि परार्ध्येति। परार्ध्यानि श्रेष्ठानि अमौल्यानीत्यर्थः केयूराण्यङ्गदानि मणिप्रवेकाः मण्युत्तमास्तैः पर्य्यस्ताः परिवृताः दोर्दण्डाः भुजदण्डा एव सहस्रमनन्ताःशाखा यस्य तम् अव्यक्तं स्वस्वरूपलक्षणं मूलं यस्य तं विग्रहस्य स्वरूपाश्रयत्वात् भुवनात्मकमङ्घ्रिपेन्द्रं वृक्षराजं अहीन्द्रस्य संकर्षणस्य भोगैः शरीरावयवैः अधिवीताः संवेष्टिताः वल्शाः स्कंधा यस्य तम् ॥ २९ ॥

पर्वतरूपेण निरूपितं पुनर्विशिनष्टि चराचरौक इति। चराचराणामोकः वासस्थानम् भगवानेव महीध्रस्तम् अहीन्द्रस्य बन्धुम् सलिलेनोपगूढं मैनाकादिवदावृतम् किरीटसाहस्रमेव हिरण्यश्रृङ्गाणि यस्य तम् आविर्भवत् स्पष्टं दृश्यमानं कौस्तुभरत्नं गर्भे मध्यं कण्ठे यस्य तम् ॥ ३० ॥

पर्वतवत् वृक्षराजवच्च प्रथममपश्यत् हरिरसाविति ज्ञातवानित्याशयेनाह निवीतमिति । आम्नायाः वेदा एव मधुव्रताः भ्रमराः तैः श्रीः शोभा यस्यास्तया स्वकीर्तिमय्या वनमालया निवीतं कण्ठलम्बिन्या व्याप्तम् सूर्य्यादिभिरगम्यम् उपमानत्वेन तस्मिन् अतिप्रकाशत्वादगुणयुक्ते सूर्य्यादयोनान्विता भवन्तीत्यर्थः त्रिधामभिः त्रिषु कालेषु धाम मूर्तिर्येषां तैर्नित्यशरीरिभिः परिचर्य्यार्थे परिक्रमद्भिः प्रदक्षिणां कुर्वद्भिः प्रधनं भगवत्पराङ्मुखैः सह सङ्ग्रामस्तत्प्रयोजकैः श्रीमत्सुदर्शनादिभिः हेतुभूतैः दुरासदं हरिपराङ्मुखैरसुराद्यैः दुष्प्रापम् ॥ ३१ ॥

यद्विज्ञानेन सर्वं विज्ञातं भवतीति श्रुत्युपबृंहणायाह तर्ह्येवेति । लोकविसर्गदृष्टिरपि तर्ह्येव भगवद्दर्शनवेलायामेव तन्नाभिसरः सरोजादि ददर्श परन्तु अतोभगवतः परं भिन्नमतदात्मकं किमपि न ददर्शेत्यर्थः ॥ ३२ ॥

किंच सः रजसा रजोगुणेनोपरक्तो युक्तः ब्रह्मा प्रजाः सिसृक्षन् स्रष्टुमिच्छन् कर्मणः सृष्टिक्रियायाः बीजं कारणं तस्मिन् क्रियमाणे परमाश्रयमियदेव वक्ष्यमाणं स्तोत्रमेव दृष्ट्वा अतो विसर्गे अभिमुखोऽपि अव्यक्तवर्त्मनि भगवत्यभिनिवेशितः आत्मा चित्तं येन स तथाभूतः सन् तमेवास्तौदित्यन्वयः ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
सिद्धान्तप्रदीपे
अष्टमाध्यायार्थ प्रकाशः ॥ ८ ॥

---

भाषाटीका

अपने मनोरथ सिद्धि के वास्ते शुद्ध वेदोक्त मार्ग से पूजा करने वाले पुरुषों को उनके कामना का पूरण करने वाले चरण रूपी कमल को कृपासे दर्शन कराते थे जिस चरण के नखरूपी चंद्रों के किरणों से पद्म पुष्पके पत्ररूपी अंगुलियों के प्रकाश होने से वडी शोभा होतीथी ॥ २६ ॥

भाषाटीका ।

और वे श्री भगवान् लोकों की पीडा का नाश करने वाले मंद हास युक्त मुखसे अपने भक्तों को संतुष्ट करते थे अहो उस मुखार विंद की क्या शोभा थी कि जिसमें प्रकाश मान दो कुंडल थे सुंदर जिस मे नासिका थी सुंदर जिस में दोनों भौं थीं विंब फल के समान अधरमें ललाई थी ॥ २७ ॥

हे विदुर जी उनकी कमर कदंब के पुष्प के वर्णके तुल्य वस्त्र से तथा कौंधनी से सुशोभित थी तैसेई श्री वत्स चिन्ह युक्त जो वक्षस्थल तिसका अत्यंत प्रिय तथा बहु मूल्य वाला जो मुक्ता हार तिससे वक्षस्थल सुशोभित था ॥ २८ ॥

और भी वे भगवान् चंदन वृक्षके तुल्य विराज मान थे क्योंकि महा मूल्य वाले बाजु बंद आदि भूषणों से तथा उत्तम मणियों से उनके शाखा रूपी हजारों भुजा व्याप्त होरहे थे और वृक्षके तुल्य उनका मूल ( प्रकृति ) भी किसी को प्रगट नहीं था चंदन वृक्ष मे जैसे सर्पलिपटे रहते हैं तैसे उनके भी शेषजी के फणों की शोभा थी ऐसे चतुर्दश भुवन रूपी वृक्ष के समान शोभित थे ॥ २९ ॥

फिर पर्वत रूपसे वर्णन करते हैं पर्वत की नाँईं चराचर के वास स्थान आप हैं पर्वतों की नाँईं आप भी सर्प के बन्धु हैं ( शेषजी के ) मित्र हैं पर्वतों की नाँईं आप भी समुद्र मे वसते हैं पर्वतों के शिखरों की नाँईं आपके किरीट सुवर्ण मय हैं सामान्य मणि युक्त पर्वतों की नाँईं आप भी कौस्तुभ मणीसे भूपित हो रहेहैं ॥ ३० ॥

भ्रमर रूप धारि वेदों से व्याप्त कीर्ति रूपी घन माला से वेष्टित तथा सूर्य चंद्र वायु अग्नि इनों से अज्ञात, तीनों लोक मे जिनका तेज प्रकाश हो रहा है ऐसे संग्राम के उपयोगी घूमते हुये सुदर्शनादि अस्त्रों से अत्यंत प्रभाव युक्त मूर्ति को देख कर ब्रह्मा जी ने यही श्री हरि हैं ऐसा समझा ॥ ३१ ॥

उसी समय जगत्का विधाता देव ब्रह्मा जी ने लोक के उत्पत्ति के ज्ञान वाला होने से उस भगवान् का नाभि रूपी सरोवर तिसमे कमल उसमे अपना स्वरूप जल वायु आकाश इनकों देखा और कुछ नहीं देखा ॥ ३२ ॥

तब ब्रह्मा जी रजो गुण युक्त होकर प्रजा सृष्टिके इच्छा वाले होकर सृष्टि का हेतु यही पांच पदार्थ को देख कर जगत्सृष्टि के निमित्त परमात्मा मे मन लगा कर उस स्तुति योग्य नारायण की स्तुति करने लगे ॥ ३३ ॥

इति श्री भागवत तृतीयस्कंधका
अष्टम अध्यायसमाप्त ॥ ८ ॥

---

## इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे

## अष्टमोऽध्यायः । ८ ।

## नवमोऽध्यायः ।

### श्रीब्रह्मोवाच ।

ज्ञातोऽसि मेऽद्य सुचिरान्ननु देहभाजां न ज्ञायते भगवतो गतिरित्यवद्यम् ।
नान्यत्त्वदस्ति भगवन्नपि यन्न शुद्धं मायागुणव्यतिकराद्यदुरुर्विभासि ॥ १ ॥
रूपं यदेतदवबोधरसोदयेन शश्वन्निवृत्ततमसः सदनुग्रहाय ।
आदौ गृहीतमवतारशतैकबीजं यन्नाभिपद्मभवनादहमाविरासम् ॥ २ ॥
नातःपरं परम ! यद्भवतः स्वरूपमानन्दमात्रमविकल्पमविद्धवर्चः ।
पश्यामि विश्वसृजमेकमविश्वमात्मन् ! भूतेन्द्रियात्मकमदस्त उपाश्रितोऽस्मि ॥ ३ ॥
तद्वा इदं भुवनमङ्गल ! मङ्गलाय ध्याने स्म नो दर्शितं त उपासकानाम् ।
तस्मै नमो भगवतेऽनुविधेम तुभ्यं योऽनादृतो नरकभाग्भिरसत्प्रसङ्गैः ॥ ४ ॥
येतु त्वदीयचरणाम्बुजकोशगन्धं जिघ्रन्ति कर्णविवरैः श्रुतिवातनीतम् ।
भक्त्या गृहीतचरणः परया च तेषां नापैषि नाथ ! हृदयाम्बुरुहात् स्वपुंसाम् ॥ ५ ॥
तावद्भयं द्रविण-गेह-सुहृन्निमित्तं शोकः स्पृहा परिभवो विपुलश्च लोभः ।
तावन्ममेत्यसदवग्रह आर्तिमूलं यावन्नतेऽङ्घ्रिमभयं प्रवृणीत लोकः ॥ ६ ॥
दैवेन ते हतधियो भवतः प्रसङ्गात्सर्वाशुभोपशमनाद्विमुखेन्द्रिया ये ।
कुर्वन्ति कामसुखलेशलवाय दीना लोभाभिभूतमनसोऽकुशलानि शश्वत् ॥ ७ ॥

---

### श्रीधरस्वामिकृत भावार्थदीपिका

नवमे तपसा तुष्टं दृष्ट्वा नारायणं त्वजः ।
अस्तौदेकार्णवे सीदन् लोकसर्गचिकीर्षया ॥ १ ॥

भगवज्ज्ञानेनात्मनः कृतार्थतामाविष्कुर्वन्नज्ञांश्च शोचन्नाह ज्ञातोऽसीति । सुचिराद्बहुकालोपासनेनाद्य मे मया ज्ञातोऽसि नन्वहो देहभाजामेतदवद्यं दोषः किं तत् यद्भगवतस्तव गतिस्तत्त्वं न ज्ञायत इति । यतस्त्वमेव ज्ञातुं योग्यः सत्यत्वान्नान्यदसत्यत्वादित्याह त्वत् त्वत्तोऽन्यन्नास्ति यदप्यस्तीति प्रतिभाति तदपि शुद्धं सत्यं न भवति कथमसतः प्रतीतिस्तत्राऽऽह । यद्यतोमायागुणक्षोभात्त्वमेवोरुर्बहुरूपो विभासि ॥ १ ॥

ननु त्वमपि सम्यङ्न जानासि यत्त्वया दृष्टं रूपमेतदपि गुणात्मकमेव निर्गुणं ब्रह्मैव तु सत्यं तत्राह रूपमिति द्वाभ्याम् । अवबोधरसोदयेन चिच्छक्त्याऽविर्भावेन शश्वत्सदा निवृत्तं तमोऽवस्मात्तस्य तव यदेतद्रूपम् त्वयैव स्वातन्त्र्येण सतामुपासकानामनुग्रहाय गृहीतमाविष्कृतमवतारशतस्य शुद्धसत्वात्मकस्य यदेकं बीजं मूलम् तत्प्रदर्शनार्थं गुणावतारबीजत्वं दर्शयति यन्नाभीति ॥ २ ॥

### श्रीधरस्वामिकृत भावार्थदीपिका ॥

हे परम ! अविद्धवर्चोऽनावृतप्रकाशम् अतोऽविकल्पं निर्भे[illegible] अत एवानन्दमात्रम् एवं भूतं यद्भवतः स्वरूपं तदतोरूपात्परं [illegible] न पश्यामि किन्त्विदमेव तत अतः कारणात्ते तव अदः इदं [illegible] माश्रितोऽस्मि योग्यत्वादपीत्याह । एकमुपास्येषु मुख्यम् यतो [illegible] सृजं विश्वं सृजतीति विश्वसृजमत एवाऽविश्वं विश्वस्मादन्यत् [illegible] भूतेन्द्रियात्मकं भूतानामिन्द्रियाणांचात्मानं कारणमित्यर्थः ॥ [illegible]

नन्वेवमपि सोपाधिकमेतदर्वाचीनमेवेत्याशङ्क्याऽऽह तद्वै तद् [illegible] दम् हे भुवनमङ्गल ! यतस्ते त्वयानोऽस्माकमुपासकानां मङ्ग[illegible] ध्यानं दर्शितम् नह्यव्यक्तवर्त्माभिनिवेशितचित्तानामस्माकं स[illegible] धिकदर्शनम् युक्तमितिभावःअतस्तुभ्यं नमोऽनुविधेमानुवृत्त्या [illegible] वाम तर्हि किमिति केचिन्मां नाद्रियन्ते तत्राऽऽह योऽनादृत [illegible] असत्प्रसङ्गैर्निरीश्वरकुतर्कनिष्ठैः ॥ ४ ॥

आदरेण तु त्वां भजन्तः कृतार्था इत्याह येत्विति । श्रुति [illegible] स एव वातस्तेन नीतं प्रापितम् नापैषि नापयासि ये त्वत्[illegible] भवणमत्यादरेण कुर्वन्ति तेषां हृदि नित्यं प्रकाशस इत्यर्थः ॥ [illegible]

ततः किमत आह-तावदिति । द्रविणादौ विद्यमाने भयं [illegible] शोकः पुनश्च स्पृहा ततः परिभवस्तथाऽपि विपुलो लोभ[illegible]

श्रीधरस्वामिकृत भावार्थदीपिका ॥

पुनः कथंचित्प्राप्ते ममेत्यसदाग्रहः आर्तिमूलं भयशोकादेः कारणम् न प्रवर्तते नाश्नुवत् त्वत्पादाश्रयणमात्रेण मयादिनिवृत्तिः किं पुनस्त्वत्प्रकाशे सतीति भावः ॥ ६ ॥

ये निष्कामा अपि सन्तस्त्वां नाद्रियन्ते ते नरकभाज इत्युक्तं ये तु त्वत्कथाश्रवणादिविमुखाः सन्तः काम्यकर्मपरास्तेऽति मन्दा इत्याह दैवेन ते हृतधियो ते तरमन्यः प्रसङ्गाच्छ्रवणकीर्तनादिरूपात्स्वदुःखनिवर्तकाद्विमुखानीन्द्रियाणि येषाम् अकुशलान्यक्षेमकराणि ॥ ७ ॥

---

श्रीराधारमणदासगोस्वामि विरचिता

दीपिन्याख्या दीपिका टिप्पणी।

तुष्टं तुष्टतया हृद्याविर्भूतं सीदन् लोकतत्त्वाज्ञानात्खिद्यन् ज्ञानेन साक्षात्कारेण ज्ञातोऽसि मया याथार्थ्येनानुभूतोऽस्मि नन्वज्ञाने का हानिस्तत्राह नन्विति। दोष इति भगवद्वैमुख्यस्य सर्वानर्थमूलत्वात् अन्यत्स्वतन्त्रसत्ताकं वस्तु नास्त्यं येनि ज्ञेयं कुतोऽसस्त्वामिथ्यात्वात् यतो हेतोः मायागुणाच्चांभाद्योपात् तिमिरदोषाद्विचन्द्रवदधिष्ठानस्वरूपस्त्वमेव बहुरूपः विविधजगद्रूपः प्रतीयसे ॥ १ ॥

रूपमितियुग्मकम् रूपमीश्वररूपं गुणात्मकं कर्तृत्वादिगुणमयमेव एतत् कृपया भवतैव संदर्शितं चिद्घनश्रीविग्रहात्मकं रूपं स्यात् स्ययेणत्यध्याहृतैवकारार्थः तत्रच मानं "येनाप्नोति परां भूमिं पदगुणाभिधेयता। तदव्ययमुपादेयं पदव्याख्याविशारदैः,, रिति नित्यं धाम्नि पूर्वे सदेवोपासकानां मनस्याविष्कृतम् शुद्धसत्त्वात्मकस्य प्राकृतसत्त्वं हि न कदाचिच्छुद्धम् "अन्योऽन्यमिथुनाः सर्वे,,इत्युक्तेः तस्मात्तथाऽगोचरस्य गोचरत्वे हेतुः प्रकृतिजं सत्त्वं तथाऽप्राकृतस्य सत्त्वस्यापि सर्वप्रकाशकत्वेनतल्लक्षणाक्रान्तत्वात्सत्त्वशब्दव्यपदेश्यत्वं सम्भिन्नरूपत्वाच्च शुद्धत्वं तदात्मकस्य तत्प्रदर्शनार्थं बीजत्वज्ञापनार्थं निर्भेदं समानासमानजातीयभेदशून्यम् अतोरूपाच्छ्रीविग्रहलक्षणात् इदमेव श्रीविग्रहलक्षणं वस्त्वेव तद्ब्रह्म न तु ब्रह्मैवोपहितं श्रीविग्रह इति तदुक्तं हरिवंशेऽर्ज्जुनं प्रति भगवता "यत्परं परमं ब्रह्म सर्वं विभजते जगत्। ममैव तद्घनं तेजो ज्ञातुमर्हसि भारते,,ति अतः ब्रह्माभिन्नत्वात् रूपं श्रीविग्रहं योग्यत्वादाश्रयणार्हत्वात् अतः सृष्टत्वात् विश्वसमासृज्यात् आत्मानं मूलस्वरूपं कार्यैहिकारणात्मकामति कारणामति व्याख्यातम् ॥ २ ॥ ३ ॥

एवमपि ब्रह्माभिन्नत्वेऽपि सोपाधिकमिति हेतुगर्भं विशेषणम् सृष्ट्यादिकर्तृत्वेन मायोपाधिसहितत्वात् एतच्छ्रीविग्रहतत्त्वम् अर्वाचीनमागन्तुकमेव इदं श्रीविग्रहरूपं तदेव निरुपाधि ब्रह्मैव यतोऽव्यक्तं चक्षुराद्यगोचरं वर्त्म ज्ञानमार्गो यस्य तस्मिन्भगवति अभिनिवेशितम् एकाग्रीकृतं चित्तं येषां निरुपाध्युपासकभक्तेषु वञ्चनाया अयुक्तत्वात् निरुपाधिकमेवेदमित्यर्थः निरीश्वरकुतर्कनिष्ठैः ईश्वरोऽप्यज्ञानकल्पित इति कुतर्कनिष्ठैः ॥ ४ ॥

तु शब्देनात्रैव परमसंमतत्वं स्थापितम् ॥ ५ ॥

ततः प्रकाशात् तथापि परिभवेऽपि प्रकाशप्रयोजनस्य वाच्यार्थेऽनभिव्यक्तव्यंङ्ग्यार्थमाह त्वत्पादेति तथाच भयादिनिवृत्ति प्रकाशस्यानुषङ्गिकं प्रयोजनं मुख्यं तु प्रेमैव ज्ञेयम् ॥ ६ ॥

दैवेन दुरदृष्टेन ॥ ७ ॥

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका॥

अथ स्तुतिप्रकारं तया प्रसन्नस्य भगवतोऽनुग्रहविशेषं चाह नवमेन। तत्र कृत्स्नस्यचिदचिदात्मकस्य प्रपञ्चस्यच भगवच्छरीरत्वेन ज्ञातवतः स्वस्य कृतार्थतामाविष्कुर्वन्नीदृशज्ञानविधुरान्निन्दन्ब्रह्मात्मकवस्त्वन्तराभावमुपपादयति ज्ञातोऽसीति। ननु हे भगवन्! सुचिरादृबहुकालात्पार्जितात्तपस इति शेषः मे मया अद्याधुना ज्ञातोऽसि यथाऽवस्थिततत्त्वेन दृष्टोऽसि कार्यावस्थकारणावस्थकृत्स्नाचिदचिदन्तर्यामित्वस्वेच्छोपात्ताप्राकृतपञ्चोपनिषन्मयदिव्यमङ्गलविग्रहाद्यविशिष्टत्वसर्वज्ञत्वसर्वशक्तित्वसत्यसङ्कल्पत्वाश्रितवात्सल्यैकजलधित्वाद्यकारविशिष्टत्वेन सत्यज्ञानानन्दस्वरूपत्वमत्रविवक्षितं तस्मै नमो भगवते भुवनद्रुमायतिर्यङ्मनुष्यविबुधादिषु नातः परंपरमेत्यादिनाह्नो तदेवप्रपञ्चयिष्यति ईदृशज्ञानविधुरान्निन्दतिभगवतः।पाङ्गरूपपूर्णस्य तवगतिः स्वरूपं न ज्ञायते इति यदेतदेव देहभाजां कर्मायत्त प्रकृतिपरिणामरूपशरीरभाजां क्षेत्रज्ञानामवद्यं दोषः अब्भक्षो वायुभक्ष इत्यादिवद्भगवत एवेत्यवधारणं विवक्षितम् आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञातेइदं सर्वं विज्ञातं भवति येनाश्रुतं श्रुतं भवति सब्रह्मविद्यां सर्वविद्याप्रतिष्ठामिति च भगवज्ज्ञानेनैव कृत्स्नस्य ज्ञातत्वश्रवणात् अब्रह्मात्मकस्य स्वतन्त्रवस्तुनोऽभावात्तमेव विदित्वातिमृत्युमेतीति ब्रह्मज्ञानस्यैव मृत्युतरणोपायत्वश्रवणाच्च भगवानेव ज्ञातव्य इति तज्ज्ञानविधुराद्दुष्टाइत्यभिप्रायः एतदेवोपपादयतिनान्यदिति हे भगवन्! पूर्णषाड्गुण्यमूर्ते त्वत्त्वत्तः अन्यदत्वदात्मकं नास्ति सर्वस्य त्वदात्मकत्वात्त्वज्ज्ञानेनैव सर्वस्य ज्ञातत्वात् ज्ञातव्यान्तराभावात्त्वमेव ज्ञातव्य इत्यभिप्रायः ननु स्वतन्त्रत्वेनैव देवमनुष्यत्वादि वस्तुप्रतीतेस्त्वदन्यन्नास्तीति कथमुच्यतेऽत आह अपि स्वतन्त्रत्वेन प्रतीतमपि तद्देवादि वस्तु न शुद्धं नाबाधितम् अत्राब्रह्मात्मकस्वतन्त्रबुद्धिभ्रान्त्यैवेत्यर्थः कुत एतदित्यत आह मायेति यत्। यतः मायायाः प्रकृतेर्गुणानां व्यतिकराद्वैषम्यात् परिणामादित्यर्थः त्वमेव उरुर्बहुधा विभासि प्रकाशसे एकः सन् बहुधा विभासि बहुस्यां प्रजायेय तत्सृष्ट्वा तदेवानुप्राविशत्तदनुप्रविश्य सच्चत्यच्चाभवदिति प्रकृत्य सत्यं चानृतं च सत्यमभवदिति श्रुत्युक्तरीत्या स्वयमपरिच्छिन्नज्ञानानन्दत्वभावोऽप्यन्तसूक्ष्मतया संकल्पस्वलीलोपकरणचिदचिद्वस्तुशरीरतया तन्मयः परमात्मा विचित्रानन्तक्रीडनकोपादित्सया स्वशरीरभूतप्रकृतिपुरुषसमष्टि परम्परया महाभूतपर्यन्तमात्मानं तत्तच्छरीरकं परिणमय्य तन्मयः पुनः सत्यच्छब्दवाच्यविविधचिदचिन्मिश्रदेवादिस्थावरान्तजगद्रूपोभवत्सीत्यर्थः ब्रह्मणि जगद्रूपतया विक्रियमाणेऽपि तत्प्रकारभूताचिदंशगताः सर्वे विकाराः तत्प्रकारभूतचेतनांशगताश्चापुरुषार्थाःब्रह्मतुनिरस्तनिखिलदोषगन्धमपरिच्छिन्नज्ञानानन्दमेकस्वरूपमेवाभवदिति विवेकः एवं कृत्स्नाचिदचिदन्तरात्मनो भगवत एव ज्ञानस्य मुक्तिसाधनत्वं "तस्य तावदेवचिरंयावन्नविमोक्ष्येऽथ संपत्स्य' इति श्रुतं तस्य सर्वं ब्रह्मात्मकत्वेनोपासीनस्येत्यर्थः तथा च श्रुत्यन्तरं "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीते,,ति ॥ १ ॥

अथ "जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः। त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन,,इति भगवदवतार रहस्य ज्ञानस्यापि मोक्षसाधनत्वस्मरणात् अवतारयाथात्म्यमपि शोधयतिरूपमिति।अत्र बोधरसोदयस्यावबोधरूपस्य रसस्योदयः स्वाभाविकाविर्भावोयस्येति बहुव्रीहिःनिरुपाधिकनित्याविर्भावाऽपरिच्छिन्नज्ञानानन्दरूपज्ञानवतइत्यर्थः अतएव शश्वन्निवृत्त तमसः शश्वत्सदानिवृत्तंतमोऽज्ञानं यस्मात्तस्यअनेन

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ॥

विशेषणद्वयेन त्रिविधचेतनाचेतनव्यावृत्तिःआद्येनाचेतनव्यावृत्तिर्द्वि-
तीयेन चेतनव्यावृत्तिःबद्धानामनिवृत्ततमस्त्वान्मुक्तानामपि संसार-
दशायां तमःसम्बन्धाच्छश्वन्निवृत्ततमस्त्वाभावात्नित्यानां तथात्वस्य
परसङ्कल्पायत्तत्वेन सोपाधिकत्वात् एवं भूतस्वरूपं तव यद्रूपं विग्रहः
कथं भूतम् अवतारशतैकबीजमवतारशतानाम् एकबीजं मूलं तदेव
प्रदर्शयति यस्य परिगृहीतैवं विधरूपस्य तव नाभिपद्ममेव भवनं गृहं
तस्मादहं तवावेशावतारारूपोऽहं"सृष्टिं ततःकरिष्यामि त्वामाविश्य
प्रजापते,, इति चतुर्मुखस्य भगवदावेशावतारारूपत्वप्रसिद्धेः एतद्रूप
मादौ सर्गादौ सदनुग्रहाय सत्स्वनुग्रहाय साधूनां परित्राणायेत्यर्थः
गृहीतमाविष्कृतं नतु जीववत्कर्मायत्तसुखदुःखोपभोगाय गृहीतमि-
त्यर्थः तथा च श्रुतिस्मृती "अजायमानो बहुधा विजायते अजोऽपि
सन्नव्ययात्मा भूतानामीश्वरोऽपि स" न्नित्यादिके ॥ २ ॥

एवं चिदचिद्विलक्षणत्वेन शोधितस्वरूपस्य जीवशरीरविलक्षणत्वे-
न शोधितरूपस्य चोभयोरेवोपास्यत्वं वदन् पुनरन्यैरपि धर्मैःस्वरूपरूपे
विशिनष्टि नात इति। हे परम ! परो मा न विद्यते यस्मात्सपरमः तस्य
सम्बुद्धिः भवतः तव यत्स्वरूपं कथं भूतम् आनन्दमात्रं मात्रचा दुःख
सम्भेदनिरासः अविकल्पं जातिगुणादिरहितम् आभ्यां चिदचिद्व्या
वृत्तिः अविद्धवर्चःअविद्धमप्रतिहतं वर्चःसङ्कल्परूपंज्ञानं यस्य तदेवं
भूतं स्वरूपं यच्चाविश्वं विश्वविलक्षणं विश्वसृजं विश्वस्य कारणं
भूतेन्द्रियात्मकं पञ्चोपनिषन्मन्त्रप्रतिपाद्याप्राकृतभूतेन्द्रियात्मकं रूपं
चेति यदतः अस्मात् परं विलक्षणं स्वरूपं रूपं च न पश्यामि
अतः अदःएतदुभयमेव आत्मन् हे परमात्मन्!उपाश्रितोऽस्मि सम्यग
नुवृत्त्या शरणं गतोऽस्मि ॥ ३ ॥

पुनरुक्ताकारविशिष्टस्य भगवतो भक्त्यैकलभ्यत्वं वदंस्तमेव
नमस्करोति तद्वेति हे भुवनमङ्गल! विश्वस्य मङ्गलरूप ! यतस्त्वया
उपासकानां नोऽस्माकं ध्यानेन मङ्गलायास्मदभ्युदयाय यद्वा वेदा-
न्तेषु प्रसिद्धम् इदं रूपं दर्शितं तस्मै ईदृशस्वरूपरूपगुणविभूतिमते
भगवते पूर्णषाड्गुण्यमूर्तये तुभ्यं नमोऽनुविधेम नमस्कुर्महे यस्त्व-
मसत्प्रसङ्गैरसत्सु शब्दादिषु प्रकृष्टःसङ्गो येषां तैरतएव नरकभाग्भि
र्देहिभिर्नादृतः नाभाजीति ॥ ४ ॥

आदरेण त्वामभजन्तो नरकभाजस्त्वामादरेण भजन्तस्तु कृतार्था
इत्याह ये त्विति । श्रुतिः श्रवणं तदेव वातः पवनः तेन नीतं प्रापितं
त्वदीयचरणाम्बुजकोशस्य गन्धं कर्णविवरैर्ये जिघ्रन्ति येषां च
परयाऽव्यभिचारिण्या भक्त्या गृहीतौ चरणौ यस्य स तथाभूतो
भवान् भवति तेषां स्वपुंसां स्वभक्तानां हृदयाम्बुरुहाद्धृदयकमलात्
हेनाथ ! नापैषि नापसरसि येत्वत्कथाश्रवणमत्यादरेण कुर्वन्ति न
एकान्त भक्त्या त्वां प्रपन्नास्तेषां हृदि भवान्नित्यं संनिहितो भवती
त्यर्थः ॥ ५ ॥

भवतु मत्सान्निध्यमेतावता कथं तेषां कृतार्थतेत्यत आह ताव-
दिति । ते तवाभयं न विद्यते भयं यस्मात्तदभयं संसृतिनिवर्तक-
मङ्घ्रिं लोको यावन्न प्रवृणीत निरतिशयप्रियत्वेन नोपासीत ताव-
देव भयादय इत्यन्वयः आगामिदुःखदर्शनजं ज्ञानं भयं तच्च द्रविण-
गेहसुहृन्निमित्तं द्रविणं धनं सुहृन्मित्रं भाविद्रविणादिविपत्ति
निमित्तदुःखविषयं ज्ञानं भयमित्यर्थः शोकः अतीतपुत्रमरणादि
स्मरणविषयं ज्ञानं शोकस्तादात्विकप्रतिकूलविषयविषयं वा ज्ञानं
स्पृहाऽनुकूलविषयेष्विच्छा परिभवस्तिरस्कारः विपुलः विस्तृतः
लोभः तृष्णा असदवग्रहः अनात्मभूतेशरीरेऽवग्रह आत्मत्वाभिमानः

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका

अयं चोक्तानां भयादिरूपाणाम् आर्तीनां मूलं कारणम् एते सर्वे
तावत्कार्त्स्न्येन तावद्भवच्चरणारविन्दप्रवरणावधि अनुवर्त्तन्त इत्यर्थः
त्वच्चरणवरणेन तु सांसारिकभयादिनिवृत्त्याऽऽविर्भूतापहतपाप्मत्वा
दिगुणाष्टकविशिष्टः कृतार्थो भवतीत्यभिप्रायः ॥ ६ ॥

एवं भगवतो भक्त्यैकलभ्यत्वमभिधाय योऽनादृतो
नरकभाग्भिरसत्प्रसंगैरिति प्रस्तुतान्विषयलालसान्निन्दंस्तानेव शो-
चति दैवेनेति द्वाभ्याम् । सर्वाशुभोपशमनात्सर्वाण्यशुभानि
भयशोकादीनि उपशाम्यन्तेऽनेनेति तथा भूताद्भगवतस्तव प्रसं-
गाद्दर्शनश्रवणादिरूपाद्विमुखानीन्द्रियाणि चक्षुःश्रोत्रादीनि येषां
ते अकुशलान्यक्षेमकराणि कर्माणि शश्वन्निरन्तरं कामसुखानि
शब्दादिविषयसुखानि तेषां लवाय लोभेन तृष्णातिशयेनाभिभूतं
मनो येषां ते अत एव दीनाः क्षुद्राः कुर्वन्ति ते दैवेन हताःप्रतिहता
धियो येषां ते तथोक्ताः मन्दभाग्या इत्यर्थः ॥ ७ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली

ब्रह्मणः स्तुतिप्रकारोऽस्माकमपि श्रवणगोचरः किमिति मनः
शङ्कामाभूदिति भावेन तत्स्तुतिप्रकारं कथयति ज्ञातोऽसीत्यादिना।
नान्वत्यवधारणार्थोऽनुनयार्थो वा मे ननुमम सुचिरात्तपआद्यनुनयं
अद्यज्ञातोऽसि नन्वेवं मे अव्यक्तस्वभावस्य ज्ञानं कथं घटत इति तत्राह
देहभाजामिति भगवतो गतिः स्वरूपं देहभाजामनुनयेन न ज्ञायते
इति यत्तदवद्यं दुष्टमतोऽव्यक्तस्वभावोऽपिभक्त्यादिसाधनसामग्र्या
ज्ञायत एवेत्यर्थः ननु तर्हि कस्मात्सर्वे पुरुषार्थभाजः किं नाभूवन्नि-
त्यस्यदमेवोत्तरं तव गतिर्न ज्ञायते इत्यत्रावद्यं पापं कारणं नन्वित्य-
र्थःदेहभाजामिति स्वस्वामिसंबन्धज्ञापनाय षष्ठी स्वस्वामिभावज्ञाना
भावात् न ज्ञायत इति भावः ननु स्वव्यतिरिक्तवस्तुनोऽसत्वान्न
ज्ञायत इति किं न स्यादत्राह नेति त्वदन्यद्वस्तु अस्ति स्वतो नास्ति
त्वदधीनसत्ताकत्वात् द्रव्यं कर्म च कालश्चेत्यादेस्तर्हि तेन ज्ञाये-
तेति तत्राह तदिति तुशब्दो भेदेऽवधारणे वा त्वत्तो भिन्नं तज्जगदशुद्धं
सदोषमेवातः सदोषत्वान्निर्दोषो भवान्न ज्ञायत इत्यर्थः त्वदन्यस्य
सदोषत्वं भवतो निर्दोषत्वं च कथमत्राह मायेति मायायाः प्रकृतेः
सत्त्वादिगुणानां व्यतिकराद्विकाराज्जातेषु महदादितत्त्वेषु अन्तर्या-
मिरूपैरवतारैश्च उरुर्बहुत्वसंख्याविशिष्टो विभासीति यत्तस्मादितरत्
तु सर्वं सदोषं त्वं निर्दोष इत्यतो विभासीत्युक्तम् अत्र यत्स्थाननानात्वं
तदपि स्थानभेदादसदेव भाति 'एकोऽपि स्थाननानात्वान्नानेव हरिरी-
र्यते। सर्वान्तर्यामिणस्तस्य न भेदो विद्यते क्वचि,,दिति वचनात् ॥१॥

इतोऽपि वाङ्मनसागोचरं भवतः स्वरूपमित्येनदवद्यमित्याह रू-
पमित्यादिश्लोकद्वयेन अवबोधरसोदयेन अपरोक्षज्ञानरससमुद्रेक-
ण शश्वन्निवृत्ततमसः नित्यानन्तप्रकृतिगुणासक्तेः तव यदेतद
तारशतैकबीजं मत्स्याद्यवतारशतानां व्यञ्जकं रूपमादौ गृहीतम्
नादि अतएव नेदानीं गृहीतं"यत्तद्दिव्यं हरे रूपं क्षीरसागरमध्यगम्
इत्यतः क्षीरसमुद्रशायियन्नाभिपद्मभवनाद्यन्नाभिकमलाख्यगृहाद
हमाविरासं जातोऽस्मि "अनादिनित्यादव्यक्तात्तस्माज्जज्ञे चतुर्मुख
इति वचनात्॥ २ ॥

हेपरम! यदानन्दमात्रं सत्ज्ञानानन्दैकरसमत एवाऽविकारं षड्वि-
काररहितम् अनएवाविद्धवर्चः अप्रतिहतार्चीरूपं भवतः स्वरूपं पश्या-
मि अतः परं निर्गुणं नास्तीति पश्यामि सज्ज्ञानानन्दैकमात्रं"नतत

### श्रीमद्विजयध्वजतीर्थ कृत पदरत्नावली ।

परमं कचि,,दिति वचनाच्च यच्च विश्वसृजं विश्वस्य स्रष्टृ एकं स्रष्ट्रन्तररहितम् अविश्वं प्रपञ्चविलक्षणम् आद्यं सर्वस्यादिभूतम् उपजीव्य वा भूतेन्द्रियाणामात्मकं व्यापकं यच्चाप्नोतीत्यादेः ते तवादोरूपमुपाश्रितोऽस्मीत्यतो न ज्ञायते वाङ्मनसागोचरत्वादित्येतदवद्यम् अवस्तु-अभद्रं मतमभ्युत्तमाधिकार्येऽेक्षयोक्तं न देवदत्ताद्यधमापेक्षयेति तत्त्वम् अनेन प्रकृतिगुणाविकृतपदार्थेषु तिष्ठतो हरेरज्ञानादि कथं न स्यात् कथं वोदासीनस्याद्वितीयस्य रूपान्तरग्रहणं कथं वा विकारि सृज्यं सृजतोविकाराभाव इत्येतच्छङ्कात्रयमुन्मूलितमुक्तयुक्तेरिति भावः अदइत्यनेन दूरस्थवस्तुवाचिना "पूर्णमदःपूर्णमिदम्" इति श्रुतेः जगद्व्यापिरूपेण स्वहक् विषयरूपस्य एकत्वं ध्वनयति ॥ ३ ॥

न केवलं मयैव ज्ञातोऽस्मि त्वत्प्रसादेनान्यैरपि ज्ञायमानत्वान्न ज्ञायत इत्यवद्यामिति भावेनाह यद्धा इति। ध्यानात्मनो ज्ञानरूपस्य तत्तद्ध्यानानुगुणरूपस्य वा ते तवोपासकानां यदि दर्शितं तादृग्रूपविशिष्टायानुविधेम कुमः तर्हि दुर्ज्ञेया हि हरेर्गतिरित्यादेः कोऽभिप्राय इति तत्राह य इति । असत्सु विषयेषु प्रकर्षेण सङ्गो येषां ते तथा तैः इदानीमभावेऽपि जन्मान्तरेऽपि सत्सङ्गत्या सद्गतिः स्यात्तत्राह निरयेति अयगताविति धातोः अयनं गमनं निरस्तं यस्मात्स निरयो-निर्गमशून्यमन्धतमइत्यर्थः तत् भजन्तीति निरयभाजस्तैरन्धंतमःप्राप्तियोग्यैरित्यर्थः यैश्चानाहतः सादरं नार्चितस्तैर्दुर्ज्ञेय इति शेषः तस्मै नमः वा इत्यनेन साधनसामग्र्या दर्शनं भवत्येवेति सूचयति ॥ ४ ॥

बलिसमये यत्प्रत्यक्षवद्धरेः प्रत्यक्षत्वं न साक्षादतो न ज्ञायत इति तत्राह येत्विति उपासकत्रैविध्यसूचकस्तुशब्दः तत्र येऽन्तउपासका महान्तो गुरुमुखेभ्यः श्रुतिवातनीतमुपनिषदुक्तप्रकारेण श्रवणाख्यवायुना कर्णविवरैः प्रापितं त्वदीयचरणाम्बुजकोशस्य वीराध्यादिस्थितमूलरूपाख्यपद्ममुकुलस्य गन्धं हृदि व्यक्तरूम् जिघ्रन्ति अपरोक्षीकृत्यानुभवन्ति "हृदि व्यक्तं तु यद्रूपं हरेर्गन्धः स उच्यत इति उत्तमानां तु पादेन सर्वं रूपं तु कथ्यत,, इति वचनाच्च चरणः पाद इति पर्यायः "गन्धगन्धवतोर्यस्माच्च भेदःक्वचनेष्यत,, इति वचनात् गन्धो लेशो विनिर्दिष्ट इति भेदशंकापि न कार्येत्यर्थः हे नाथ! तेषां स्वपुंसां हृदयाम्बुरुहान्नापैषि नापसरसि न तिरोभवसि तत्र निमित्तमाह भक्त्येति । भक्तिलक्षणदृढपाशेन गृहीतचरणः प्रबद्धपाद इत्यर्थः अनेन भगवद्वशीकरणे भक्तिरेव प्रधानमित्युक्तं भवति ॥ ५ ॥

द्रविणादिनिमित्तभयं यावत् तावन्न ज्ञायत इति मतं निर्मूलमिति भावेनाह तावदिति ॥ ६ ॥

कस्मात्तर्हि न ज्ञायत इत्याग्रहो न निवर्तत इत्याशङ्क्य भवदनुग्रहापात्रत्वादित्याशयेनाह दैवेनेति। अन्धं तमःप्राप्तिपर्यन्तं शश्वदकुशलकरणान्न ज्ञायत इत्याग्रहो न निवर्तत इति भावः दैवेन सर्वोत्तमेन हरिणा विमुखवागादीन्द्रियाः सुखलेशलवायाल्पादल्पसुखाय लुभगार्ध्ये इति धातोर्लोभो गार्ध्यमभिलाषस्तेनाभिभूतं मनो येषां ते तथा यद्वा सद्व्ययानिच्छुत्वं तेन ॥ ७ ॥

---

### श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

ज्ञातोऽस्मीति अज्ञाने का हानिस्तत्राह देहेति । गतिः स्वरूपतच्छक्त्यादिरूपा परमा स्थितिः । ननु तादृशमद्गतेरन्यच्च प्रतीयते तत्राह । तादृशात् त्वत्त्वत्तोऽन्यत्तत्त्वं नास्तीति यद्वा अस्ति तदपि न शुद्धं किन्तु त्वमेवशुद्धं तत्त्वमित्यर्थः तत्रोभयत्रापि हेतुर्मायेति अनन्तवैभवमय्या अन्तरङ्गया शक्त्या स्वतः शुद्ध एव त्वंजगद्रूपेणायदुरुर्विभासि तत् खलु वहिरङ्गाया मायाख्यायाः प्रधानरूपायाः स्वीयद्रव्यशक्तेर्गुणानां व्यतिकरात् परिणामादेव भासीति न तत्र शुद्धत्वमिति भावः ॥ १ ॥

रूपमिति युग्मकम् । आदौ गुणावतारादीनामग्रतः । गृहीतमुपात्तं सतामाभिमुख्येनानीतं प्रकटितमित्यर्थः अविश्वमिति वक्ष्यमाणात् सृज्यत्वे विश्वान्तर्भावापातात् अवबोधरसोदयेन नित्यानिवृत्तसर्वप्रकृतिगुणस्य जीववत् तद्ग्रहणायोगात् । क्वाहं तमोमहदहमित्यादिष्वव तमोऽह्यत्र प्रकृतिः अवबोधस्य सर्वतश्छेदकत्वात् तत्रावतारशतैकबीजत्वे स्वानुभवेन दिग्दर्शनमाह यन्नाभीति। सृष्टेः प्रथमत्वादात्मनस्तथोक्तिः ॥ २ ॥

यत् खलवतःपरं भवतः स्वरूपं पूर्णभगवदादिरूपं तत्तु न पश्यामि किन्त्वदोरूपमुपाश्रितोऽस्मि तत्स्वरूपं विशिनष्टि । आनन्दमात्रं आनन्दो ब्रह्मेत्युक्तम् । ब्रह्म च मात्रा निर्विशेषचिद्रूपोंऽशो यस्य। न विद्यते विविधः कल्पः सृष्ट्यादिकल्पना यत्र। भगवदादिरूपस्थस्य महावैकुण्ठस्थितस्य सृष्ट्यादिकर्मण्युदासीनत्वात् पुरुषस्यैव तत्र प्रवृत्तत्वात् तदुक्तं "कालवृत्त्या तु मायाया,,मित्यादि विष्णोस्तु त्रीणि रूपाणीत्यादिच अविद्धं मायया न भिन्नं वर्चस्तेजः शक्तिर्यस्य तादृशं अदो रूपं विशिनष्टि विश्वसृजमित्यादिना। भूतानामिन्द्रियाणाञ्च आत्मा प्रधानाख्यं स्वरूपं यत्र यदाश्रित्यैवःविश्वकारणं प्रधानमपि प्रवर्त्तत इत्यर्थः ॥ ३ ॥

ननु तर्ह्यदोरूपं प्रकृतिगुणविशिष्टं नेत्याह नद्धा इदमिति । नदेवेदमित्यर्थः बहुमूर्त्येकमूर्त्तिकमित्यत्राक्रूरोक्तन्यायेन भिन्नत्वेनाविर्भूतत्वेऽपि तस्मादभिन्नत्वात् प्रधानेनाश्रितत्वेऽपि धाम्ना स्वेन सदा निरस्तकुहकमिति न्यायेन तदनासक्तत्वात् तर्हि कथं भवता दृश्यते तत्राह ध्यान इति। अस्माकं ध्यानलक्षणायां भक्तावेव स्वात न्त्र्येण दर्शितत्वात् तर्ह्येतद्रूपविशेषदर्शने किं कारणं तत्राह उपासकानाम । सृष्टिकामनया तादृशोपासनाकर्तृणां स्वस्य सकामत्वेऽपि तादृश तदुपकारानुसन्धानेन प्रत्युपकारासामर्थ्यात् केवल नमति तस्मा इति । तदेवं स्वेषां सकामत्वेऽपि कृपाकरत्वं तस्य दर्शयित्वा तद्वहिर्मुखान्निन्दति य इति । असन्तोऽत्र तत्तदज्ञानकल्पितमितिकुतर्केण मन्वाना उच्यन्ते ॥ ४ ॥

तदेव स्थापयन् ये तु शुद्धभक्तास्तेषां त्वच्चरणारविन्दमेव पुरुषार्थः स्यात् यतस्त्वमपि तांस्तथामन्यस इत्याह ये त्विति। तु शब्दे नात्रैव परमसम्मतत्वं स्थापितं नापैषि नापगन्तुमिच्छसीत्यर्थः अत्र परमसाधनं च त्वदीयेत्यादिनेति ॥ ५ ॥

ननु द्रविणादिनिमित्ते भयादौ सति कथमेतादृशमन्माधुर्यासक्तिः स्यात्तत्राह तावदिति । न प्रवृणीत शरणमात्रत्वेन नाश्रयेत ॥ ६—८ ॥

---

### श्रीमद्वल्लभाचार्यकृत सुबोधिनी ॥

जीवसर्गे भूतसृष्टौ ब्रह्मज्ञानं तदुच्यते ।
पञ्चविंशतितत्त्वानां स्वरूपस्य च बोधनम् ॥ १ ॥

### श्रीमद्वल्लभाचार्य कृत सुबोधिनी ॥

अतोऽत्र नवमेऽध्याये स्तुतिसंप्रार्थने पुरा ।
ततः सर्वोपदेशश्च भगवत्कृत ईर्यते ॥ २ ॥
ज्ञानमार्गस्य निर्द्धारस्तोत्रैरस्मिन् क्रियते स्फुटः ।
विषयः साधनरूपं बाधाभावस्तथैवच ॥ ३ ॥
प्रकीर्णकं च स्तोत्रैरस्मिन् ज्ञानार्थं विनिरूप्यते ॥

पूर्वध्यायान्ते दर्शयुक्तं तद्भगवत्स्वरूपं सृष्टौ कुत्रोपयुज्यत इति निरूपणीयं यदीदं ब्रह्म भवेत्तदा मूलकारणत्वं नोपपद्येत कर्त्ता च न भवति स्वस्य तत्र विनियोगात् अतः प्रथमसमयमेव भगवान्ब्रह्मेति ब्रह्मज्ञानस्य जगत्कारणत्वात् ज्ञाननिरूपणार्थं स्वस्य ज्ञात एव स त्वाकारो ज्ञानमिति निरूपयति हे भगवन् ! अद्यैव मे मया त्वं ज्ञातः परं सुचिरात् महतापि कालेन ज्ञात एव जन्मसाफल्यं नान्यथेत्यज्ञानं निन्दति नन्विति । अत्रोभयत्र भगवानेव संमतिहेतुः नन्विति कोमलसंबोधनं देहभाजां भगवतो गतिर्न ज्ञायत इति महदवद्यं महान्दोषः "नैनमृषिर्विदित्वा नगरं प्रविशे,,दिति श्रुतिनिषेधात् भगवांस्तु केनचित्प्रकारेण ज्ञायत एव गतिः परं न ज्ञायते स केन प्रकारेण कदा कुत्र कथं केन गच्छतीति एतस्यां ज्ञातायां ज्ञातव्यं नावशिष्यते ननु गतिमात्रज्ञाने कथं कृतार्थता विद्यात्तत्स्वरूपाज्ञानादित्याशङ्क्याह नान्यत्त्वदस्तीति त्वत्तः अन्यत्स्यैव यत् ज्ञातव्यं स्यात् त्वमेव परं तथा भवसि अतस्तव गतिर्ज्ञातव्या भगवन्निति संबोधनं तव षड्धर्मेषु त्वयि च सर्वं प्रतिष्ठितमिति ज्ञापयितुं ननु मध्ये मायया बुद्धिभ्रान्तिक्रियाऽन्याक्रियत इति निरूपितं तत्कथमुच्यते नान्यदिति तत्राह अपि तत्र शुद्धमिति मुख्यज्ञाने ब्रह्मवादे तत्रास्त्येव तथा दैवब्रह्मवादे तद्भवेत् तत्र भगवच्छक्तेर्माहात्म्यनिरूपणार्थं "नतं विदाथे"त्यादिमन्त्रेषु सूचितं तत्र मुख्यब्रह्मवादो भवति नचेन्द्रोमायाभिः पुरुरूप ईयत इति माध्यन्दिने सवने महेन्द्रगृहे महेन्द्रस्तोत्रपरत्वात् इन्द्रस्यैव मायास्ताः शक्तयोऽन्यथा बहुवचनं नोपपद्येत उपनिषत्सु च तत्कीर्तनं सर्वसामर्थ्यं भगवत एवेति ज्ञापनार्थमिन्द्रेणापि यत्क्रियते तद्भगवत्कृतमेवेति दैवताब्रह्मवादसंग्रहार्थमित्येके तस्माद्भेदं नास्त्येव मायया सृष्टिः स्वशक्तिरिक्त इति केचित् तथापि भागवतसिद्धान्तेऽपि यद्यन्तरा माया कल्पयति तत्र शुद्धं भ्रमस्य दोषस्य जनकत्वात् नन्वेकस्य कथमनेकता नहि कारणे एकत्वविरोधादनेकत्वसंभवति तत्राह गुणव्यतिकरादिति । मायागुणानां सत्वरजस्तमोगुणानां व्यतिकरादन्योऽन्यसंबन्धात्ते परिछिन्नाः सन्तोग्रहाद्वारेण नानात्वं संपादयन्ति तदा त्वमुरुर्विभासि अतस्त्वयि ज्ञाते न किंचित् ज्ञातव्यमिति ॥ १ ॥

ननु ब्रह्मणि ज्ञाते न किंचित् ज्ञातव्यमिति युक्तं ननु मयि ज्ञात इत्याशङ्क्य त्वमेव ब्रह्मेति प्रमाणतर्काभ्यामुपपादयति श्लोकत्रयेण । तत्र प्रमाणद्वयेन प्रकृतसमर्थनार्थमतिरिक्तनिराकरणार्थं च तत्र प्रकृतं समर्थयति रूपं यदेतदिति । यदेतत्त्वया रूपं गृहीतं तद्ब्रह्मैव यतोऽत्र बोधरसोदयेन तज्ज्ञातं केवलानुभवेन तत्रापि रसरूपेण निर्विषयेण तत्रापि तस्योदयेन सच्चिदानन्दरूपताप्युक्ता भवति तन्त्वज्ञानमिहस्थास्यति देहग्रहणहेतुभूतं तत्राह शश्वन्निवृत्ततमस इति। शश्वत् सर्वदा निवृत्तं तमो यस्य तवैतद्रूपम् अवबोधरसोदयेन निवृत्ततमस्त्वात ज्ञानाज्ञानाभावयोःकार्यकारणाभावमाहुस्तादृशस्यर्थं शश्वदित्युक्तं नित्यनिवृत्तानर्थस्य हेतुरेत्वं साधननित्यत्वेनैव तथात्वमिति चेत् कदाचित्केनैव साध्यसाधनभावस्य व्याप्तत्वात् नन्वेवं ग्रहणे किं निमित्तं तत्राह सदनुग्रहायेति अनेनापि ब्रह्मातिरिक्तता निषिद्धा नहि सतामब्रह्मणा किंचित्कार्यं सिद्ध्यति किंच आदौ गृहीतमेतद्रूपम् आदौ शुद्धं ब्रह्मैवास्ति न ततोऽतिरिक्तं कारणं किंचित् ब्रह्मैव तथाप्रादुर्भूतमित्यर्थः । किंच अवतारशतैकबीजमिति अवताराणां शतस्यैवैतदेकं बीजम् अस्यैवांशावताराइति अवताराश्च ब्रह्मरूपा इत्यग्रे वक्ष्यते उक्ताश्च अन्य कारणं ब्रह्म कार्यंच मध्ये इदमेव कथं न ब्रह्म भवेत । किंच जगत्कारणं ब्रह्मेति ब्रह्मलक्षणं तदत्रैव दृश्यत इत्याह यन्नाभिपद्मभवनादहमाविरासमिति । भवनपदेन पद्मस्य विशालता निरूपिता अहमिति सगुणकर्त्ता आविरासमिति ममाप्यलौकिकं जन्मातः सर्वप्रकारेणेदं ब्रह्मैव ॥ २ ॥

ब्रह्मान्तरपक्षं निराकरोति नातःपरमिति । अतःपरमस्माद्रूपात्परं भिन्नमेतद्रूपनियामकं वा भगवतः स्वरूपं न "आनन्दशरीरं ब्रह्मे"ति श्रुतेः ब्रह्मणः आनन्दरूपं तदेवैतत् तत्त्वितः अन्यदानन्दमात्रादिगुणकं रूपमस्ति आनन्दस्तत्रोपादानमन्यच्च सहकारि भविष्यतीत्याशङ्कां निवारयति तर्हि तद्विकृतं भविष्यति तत्राह अविकृतं तर्हि तिरोहिततेजो भविष्यति तत्राह अविद्धवर्चः इति । अविद्धं वर्चः केनापि यस्य अतिरिक्ताभावे प्रमाणमाह पश्यामीति ब्रह्मणोऽनुभवः प्रमाणम् अस्य ब्रह्मत्वे तु सर्व एव ब्रह्मधर्माः सन्तीत्याह विश्वसृजमेकमविश्वमिति । विश्वकर्तृब्रह्म "यतो वा इमानी"ति श्रुतेः "एकं ब्रह्म एकमेवाद्वितीय"मिति श्रुतेः अविश्वं ब्रह्म विश्वस्माद्तिरिक्तं "योऽस्मात्परस्माच्च पर,,इति श्रुतेः एवं ब्रह्मधर्माणां बहूनां विद्यमानत्वात् ब्रह्मैवेदम् आत्मन्निति संबोधनं ब्रह्मादिभिरात्मत्वेनोपास्यइति केचित् "अयमात्मा ब्रह्म विज्ञानमय" इति श्रुतेः अनात्मनो ब्रह्मत्वं न स्यादिति नन्वत्र चक्षुःश्रोत्रादीनां प्रतीयमानत्वादिन्द्रियवत्त्वं न कथं ब्रह्मत्वमत आह भूतेन्द्रियात्मकमिति । भूतानामिन्द्रियाणामात्माऽयं चक्षुषश्चक्षुःश्रोत्रस्य श्रोत्रमित्यादिश्रुतेः भूतेन्द्रियाणामात्मत्वाद्भूतेन्द्रियत्वेन ज्ञायते नतु तत्रभूतेन्द्रियाणि सन्तीत्यर्थः ते अत उपाश्रितोऽस्मीतिसंबन्धः पश्यामीति भिन्नंवाक्यम् अतोऽभवतत् इति न पौनरुक्त्यम् ॥ ३ ॥

तर्कमाह तद्वा इदमिति । हे भुवनमङ्गल ! त्रैलोक्यस्यैव मङ्गलरूप तदेवेदं वै निश्चयेन तत्र हेतुःध्याने मङ्गलाय दर्शितम् किमतः ते उपासकानामिति । वयं साक्षात्कारार्थं ध्यानं कृतवन्तो यतस्ते उपासका नहि परब्रह्मोपासकाःपरब्रह्मव्यतिरेकेणान्यद्ध्यायन्ति न वा तादृशा कल्पनार्थं भगवानन्यत्प्रदर्शयति नहि तादृशानामन्येन पुरुषार्थो भवति तस्मात्कारणात्युक्त्यापीदं ब्रह्मैव एवं तस्य ब्रह्मत्वं विनिश्चित्य नमस्करोति तस्मै नम इति तद्रूपं भगवानेवेति भगवत इत्युक्तं नमात्रमुदासीनेनापि क्रियतइति स्वस्यमुख्यसेवकत्वख्यापनाय तुभ्यमनुविधेमेत्याह । त्वत्प्राप्त्यर्थमनुविधानं कुर्म इत्यर्थः नमोऽनुविधेमेति पदे छान्दसत्वादुपपदविभक्तेरबलीयसी नमस्कुर्मो नृसिंहायेवत् भुव्येवं सति वादिनः कथमत्र सन्देहं कुर्वन्ति कथं वा तञ्जन्त इत्यत्राह योऽनादृत इति । येषां नरकपातोऽवश्यं भावी दैत्यादेस्तैरयं नादृतः तस्यनादरणमात्रेण कथं नरकपातो निषिद्धाचरणाभावादित्यत आह असत्प्रसङ्गैरिति असद्भिः सह प्रकृष्टः संगस्तैर्नहि स्वभावत एव कश्चिद्भगवन्तं न मन्यते आत्मत्वादानन्द

॥ श्रीः ॥

# विज्ञापन

## परिपक्षगिरिवज्रः ।

अयि विपश्चिता अद्यातिमहर्षसमयो वर्वर्त्ति अहं तत्रभवद्भ्यो भवद्भ्यो ऽद्भुतग्रन्थं निवेदयामि, यद्ग्रन्थान्वेषणे सहस्राणि विद्वांसोऽश्रांपुः चातकास्स्वातिबिन्दूनिव तथा ऽपि तद्ग्रन्थदर्शनमपि दुर्लभमभूत् तत्पाठनविचारणादि तु दूरापास्तमेवासीत् तमेव ग्रन्थं मत्यानन्देन समस्तभारतवासिनां श्रीमतां सेवायां निवेदयामि यं ग्रन्थं शारीरकहार्द संचयनामकं कथयन्ति, केचित्तु परपक्षगिरिवज्राख्यम् अध्यासगिरिवज्राख्यमपि ब्रुवन्ति, एष ग्रन्थो वेदान्तिनां शिरोधार्य्यो ऽस्ति, किञ्च सर्वमनीषिणामेतत्सुविदितमस्ति, निगमकल्पतरोरसमयफलं वेदान्तशास्त्रमेवास्ति, यद्यपि वेदान्तशास्त्रस्य स्वस्वसिद्धान्तानामनुकूला अनेके ग्रन्थामुद्रितास्सन्ति, तथापीदृशः को ऽपि ग्रन्थोऽद्यावधि न मुद्रितो ऽस्ति, यद्ग्रन्थावलोकनेनैव सर्वं सिद्धान्तज्ञानं भवति, एतस्मिन्ग्रन्थेऽद्भुतचमत्कारोऽस्ति एतदवलोकनेनैव सर्वं शास्त्रसिद्धान्तज्ञानपूर्वकसत्यासत्यविचारो भवति, अन्यवेदान्तग्रन्थस्यावलोकनावश्यकता ऽपि न भवति, सर्वेषां विपश्चितामेतद्ग्रन्थावलोकनेन पूर्णानन्दावाप्तिर्भवति, एष च ग्रन्थो विदुषां पठन पाठनादिषु प्रचारणीयो ऽस्ति, किम्बहुलेखनेनैतद्ग्रन्थावलोकयितृणां ब्रह्मानन्दास्वादसमुद्रस्तरङ्गितइव भवति, एतद्ग्रन्थावलोकनेन विद्वन्मण्डल्यां वाग्विलासे सङ्कोचः कदा ऽपि न भवति, एष च ग्रन्थो निम्नलिखितप्रकरणैर्विभूषितो ऽस्ति, एतस्मिन् ग्रन्थे चत्वारो ऽध्यायास्सन्ति, तत्र प्रथमे ऽध्याये विषयसम्बन्धगिरिनिपात प्रयोजनाधिकारिगिरिनिपात अध्यासगिर्यधिष्ठानगिरिनिपातादीनि महाविस्तीर्णानि त्रयोविंशतिः प्रकरणानि सन्ति द्वितीये चाध्याये जिज्ञास्योत्पत्तिगिरिनिपातादीनि दश प्रकरणानि सन्ति तृतीयेऽध्याये साङ्ख्यगिरिनिपातादीनि दश प्रकरणानि सन्ति चतुर्थेऽध्याये जीवन्मुक्तिगिरिनिपातो ऽस्ति, एवं चत्वारिंशत्प्रकरणैर्विभूषितो ऽष्टसहस्रश्लोकसंख्यापरिमितो ग्रन्थोऽस्तीति विज्ञेयंमनीषिभिरितिशम् मूल्यं रौप्यक त्रयम् ।

पूज्यपाद श्रीविश्वनाथचक्रवर्तिविरचितम

## श्रीकृष्णभावनामृतम् ।

श्रीकृष्णभावनामृतम् श्रीकृष्णचंद्राष्टकालिक सेवानिरूपणपरम् क्रीडानिकुंजस्थ किंकरी शुकसारिकादीनां परस्पर संवादिरूपपरंसुस्पष्टपद्यात्मकं महाकाव्यम् तदनुगुणमिताक्षर संस्कृतटीकयालंकृतम् ।

### श्रीमद्भागवत संबन्धीय नियमावली ।

१ श्रीमद्भागवत सम्प्रति प्रति महीने में इसी प्रकार रायल चार पेजी आकार में बारह फर्मों का एक एक खंड प्रकाश होता है। अ इन्तजाम ठीक होने पर दो दो खंड महीने में प्रकाश कर ग्रंथ शीघ्र ही पूर्ण कर दिया जायगा ।

२ इतने बड़े परिश्रम और अध्यवसाय पर भी सर्व साधारण के सुलभ संग्रह के अर्थ पूर्ण ग्रंथ का मूल्य केवल ५०) रुप अग्रिम रखा गया है राजा महाराजा और संमान्य मनुष्यों के सन्मान रक्षाके लिये उनसे केवल १००)रु० मात्र लिया जायगा अग्रिम मूल्य देने वालों को १२) रु० देना होगा ॥ अलग लेने से प्रत्येक खंड का मूल्य १।) रु० होगा ।

३ प्राय आज कल अनेक महाशय वेलूपेवल द्वारा भेजने को लिखदेते हैं पुस्तक पहुचने पर वापिस कर देते हैं इससे हमको क्षति ग्रस्त होना पडता है अतएव हमने यह नियम कर दिया है कि वेलूपेवल में लेने वालों को १) रु० पेशगी जमा करना पड़ेगा बराबर १=) का वेलूपेवल भेजा जायगा अंत में रुपया मुजरा देकर हिसाब बराबर कर दिया जायगा ।

४ पत्र तथा मूल्यादि निम्न लिखित ठिकाने पर सम्पादक के नाम पर भेजना चाहिये ।

५ शहर के ग्राहकों को मूल्य जमा करनेपर हाथ से चिट्ठा में दस्तखत करने से पुस्तक मिलैगी हाथ से चिट्ठा में दस्तखत न होने से मू एवं पुस्तक के दायी हम नहीं होंयगे

६ बाहर के ग्राहकों के मूल्य का स्वीकार केवल मनीआर्डर की रसीद द्वारा ही होगा ।

७ जो ग्राहक एक ग्रहण करेंगे उनको सम्पूर्ण ग्रन्थ ही लेना पडेगा ।

८ श्री भागवत ग्राहक महाशयों को ध्यान देना चाहिये कि इस श्री भागवत का ( ५० ) रुपया से अधिक मूल्य नहीं लिया जा इस वख्त कार्य के यथार्थ न होने से अंदाज छ महीने तक खंडका एक रुपैया लेंगे फिर पीछे महिना में दो दो चार चार खंड निक तो भी एक ही रुपैया लिया जायगा इस लिये किसी को संदेह न होना चाहिये इस कार्य में सहायता देकर उत्साह बढाना चाहि यह प्रार्थना है ।

## श्रीजगन्नाथवल्लभ नाटकम् ।

इह खलुजगतिविद्यास्थानेष्वनेकेषु पठनीयेषु सत्स्वपिशास्त्रांतराणां सहिष्णुवेद्यत्वेन सूक्ष्ममतिवेद्यत्वेनच तेष्वल्पजनादरणीयेषु इदानींस्थूलमतिवेद्यत्वेनसुकुमार वेद्यत्वेनचकाव्य नाटकादीन्येव मनुष्याणांसमययापनयोग्यानि तानिचभगवद्विषयकाणिचेद्भुक्तिमुक्तिप्रदानीनि विचार्येदानींजगन्नाथवल्लभनाटकं सर्वजनसौकर्यायप्रकाशितम् इदंचनाटकं श्रीराधाकृष्णरहस्यक्रीडा विषयेप्रतापरुद्रनृपतिपात्ररामानंदराय कविनानिर्मितम् अत्रचपंचाकाः संतितत्रप्रथमेंके नटनटी सूत्रधाराणांसंवाद पूर्वकप्रस्तावनानंतरं श्रीराधाकृष्णयोर्मदनिका विदूषकाणां वृत्तांतैःपूर्वरागनिरूपणम् १ द्वितीयेचभावपरीक्षादिनिरूपणम् २ तृतीयेभावप्रकाशादिनिरूपणम् ३ चतुर्थे श्रीराधिकाअभिसरण क्रियानिरूपणम् ४ पंचमे श्रीराधाकृष्णयोः संगमनिरूपणम् अस्मिन्ग्रंथेमध्ये २ गीतगोविंदवद्रागपद्यान्यपिविद्यंते मूल्यं द्वादश आणकाः ॥।)

श्रीमद्भागवत कार्यालय । श्री देवकीनन्द प्रेस ।
भ्रमरघाट श्रीवृन्दावन—जिला मथुरा }

श्री नित्यस्वरूप ब्रह्मचारी ॥

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ॥

स्वाच्च किंत्वसतां सङ्गेन बुद्धिरन्यथा जाता अनस्तत्संसर्गिदोषा-
त्सोऽपि पञ्चमो महापातकी सचेद्भगवन्तं मन्येत पूर्वपुण्यवशा
दन्यथावा तदा नरको न भवेत् अतो नरकस्यावश्यं भावात् तादृशै
र्भगवाननादृतः ॥ ४ ॥

एवं प्रमाणतर्काभ्यामिदमेव ब्रह्मस्वरूपमित्यत्र धृत्यैतत्साक्षात्करणं
साक्षात्कार इति "भक्त्या मामभिजानाती"तिवाक्यात्तत्साक्षात्कारा-
र्थं भक्तिमाह साधनमुखतयापि ब्रह्मत्वं साधयति येत्विति। तुशब्देन
चरणोपासनारहितान् पुरुषार्थविमुखान् व्यावर्तयति येत्वदीयचरणा-
म्बुजकोशगन्धं कर्णविवरैर्जिघ्रन्ति तेषां हृदयात्त्वं नापैषीतिसंबन्धः तत्र
हेतुः भक्त्या गृहीतचरणा इति। त्वदीयानां चरणेषु भगवत इव रेणवो
न सन्ति किंतु स्वभक्तरक्षकत्वात्कोशत्वं तद्धर्मोगन्धश्च वर्तते त्वदीय-
मेव वा चरणाम्बुजं भगवदीयत्वसंपादकशरीरहेतुभूतानि संस्कृतानि
भूतानि चेत् प्राप्नुयुस्तदास्मिन् जन्मनि त्वदीया एव भवेयुः अथेदानीं
तादृशशरीराभावेऽपि शरीरान्तरेऽपि श्रुत्यादिपर्यालोचनया माहात्म्ये
ज्ञाते भक्तिर्भवति तत्रेन्द्रियाणां भवदीयविषयग्रहणार्थमन्यथात्वंआ
यते गन्धोहि चित्तक्षोभकोऽन्तःप्रवेशसमर्थत्वात् शब्दस्तुनतथातत
श्रवणेऽपि गन्धानुभवत्वमुच्यते अन्तःप्रविश्य क्षोभार्थं भगवदीयानां
पदार्थानां सर्वधर्मवत्त्वं श्रुतीनां च गन्धवाहकत्वमीषत्स्पर्शात् अत्र
यशोवाची गन्धशब्दःपुण्यस्य कर्मणो गन्ध इव भगवन्माहात्म्य-
श्रोतॄणां श्रवणं देवतारूपमिति गन्धोऽप्यस्ति एवं माहात्म्यप्रतिपाद
नार्थमेवं कथा कर्णविवरैरिति मूर्तिभूतानां गुणानां प्रवेशः घ्राणेनैव
भक्तिः प्रेमलक्षणा चकारात्साधनरूपाच तदा ते स्वपुमांसो
भवन्ति तदा हृदयाद्भगवान्नापगच्छति तदा नियतः साक्षात्कारः
प्रवेशश्च भवतीत्यर्थः इदं ब्रह्मण एव कार्यं नान्यस्येति ॥ ५ ॥

कार्यद्वारापि ब्रह्मत्वं समर्थितं धर्मान्तरेणापि समर्थयते तावद्भय-
मिति । "अभयं वै जनकः प्राप्तोऽसी"ति श्रुतेः ब्रह्मप्राप्त्यनन्तरमेवा-
भयमिति भगवदीयत्वेनाभयत्वं निरूपयन् ब्रह्मत्वं निरूपयति ।
यावत्ते अभयमङ्घ्रिं लोको न वृणीत तावद्भयमिति संबन्धः न
विद्यते भयं यस्मादिति उभयथापि तस्मान्न भयमात्मत्वात् द्वितीया-
द्वैभयं भवतीति श्रुतेः अन्यदपि भयं निवर्त्तते समर्थत्वात् तत्साम-
र्थ्यमलौकिकमिति भयविशेषान्निर्दिशति। द्रविणनिमित्तं मुख्यं भयं
सर्वस्यैव तदाकाङ्क्षित्वात् ततो देहनिमित्तं देहो गमिष्यतीति ततः
पुत्रादिनिमित्तं भार्यापुत्रौ देहत्वेन गृहीत्वा पश्चादन्ये सुहृदोगृही-
ताः विद्यमाने भयं गते शोकः देहैकदेशो श्वा देहत्वेन ग्राह्यः अन्य-
था शोको न स्यात् पुत्रादिर्वागेह इति पाठे स्पष्टमेव पुनः प्राप्तव्य-
मिति स्पृहा ततोजनानुधावनं तैरेव परिभवः अथ दैवगत्या कदा-
चित्प्राप्ते विपुलो लोभस्तावदिति सबन्धः। किंचअहं ममेति देहादा-
वसदाग्रहः मिथ्याग्रहस्तावदेव इदमप्येकं ब्रह्मत्वसाधकं ब्रह्मात्म-
भाव एतन्निवृत्ते असदवग्रहस्य लौकिकप्रतीत्या सुखहेतुत्वमाश-
ङ्क्य तस्य दुःख हेतुत्वमाह आर्त्तिमूलमिति। नियतालिङ्गं तद्विष्णोः
परमं पदमिति श्रुतेः भगवत्पदमेव ब्रह्मअतो न ब्रह्मज्ञानेन व्यभिचारः
वृणीतेति यथा कन्या वरं वृणीते स्वेष्टपूरकत्वेऽपि स्वयमेव
तदीया भवति नतु स्वः स्वकीयः लोक इति विशिष्टाधिकारी॥ ६ ॥

नन्वेवं सति सर्वे कथं न भजन्त इत्याशङ्क्य पूर्वं रूपविशेषे
असत्प्रसङ्गैरिति परिहृत्यापि पुनः सामान्यतः परिहरतिदैवेनेति। दैवे-
न प्राचीनकर्मणैव हृता धीयेषां भवतःप्रसंगाद्ये विमुखेन्द्रियाः विष-
यस्य सर्वोत्तमत्त्वेऽपि प्रमातुः सर्वेष्टदातृत्वेऽप्यात्मत्वेऽपि ये न भजन्ते

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ॥

तत्रेन्द्रियबुद्ध्योरेव ग्राहकप्रेरकयोर्दोषोऽवसीयते अग्रहणेतत्र प्रेरिका
बुद्धिर्दैवेन हृता दैवं तस्या एव बुद्धेराधिदैविकं भगवदिच्छारूपमिति
केचित् प्रवाहनियामकस्य कर्मण एव तथात्वमिति ब्रह्मवादे अधि-
कृतः कालः स्वाधिकारे पतितं जीवं भगवत्प्रसङ्गेनान्यथा माभवत्विति
तद्बुद्धिं नाशयति काल एवेत्यपरे पक्षत्रयेऽपि तेषां स्वतोदोषाभावः
पूर्वंतु तेषां दोष उक्तः इमं हेतुत्वेन निर्दिश्याग्रे स्वदयामुपपाद्य तेषु
भगवत्कृपां प्रार्थयिष्यत्यर्थात् प्रसङ्गो वार्ता प्रासंगिकीं कथां सर्वेऽपि
बहीं शृण्वन्ति ततोऽपि विमुखा अन्यकथायां भगवत्कथा प्रसंगाः
चेत्समायान्ति ततो गच्छन्ति निद्राणावाऽन्यचित्ता वा भवन्तीत्यर्थः
तेषां बुद्धेर्दैवहतत्वोपपादनार्थं भगवत्प्रसंगस्य गुणानाह सर्वाशुभोप-
शमनादिति । ते खल्वन्यप्रसंगाद्बहेवपापं कृतवन्तः प्रसंगात्तत्सर्वं
गच्छेत् प्रारब्धकर्मणोऽप्यशुभं जायमानमुपशाम्यति अविद्याचात्मनि
विद्यमानामहाग्नावार्द्रकाष्ठमिवात्मन्येव शान्ताभवति इन्द्रियपदात्तेषां
निर्दुष्टत्वमिन्द्रियाणामपि संमुखाभावो न स्वाभाविकस्तस्मांदते
प्रवाहपतिताः कामलोभव्याप्ता इत्याह कुर्वन्तीति कामितस्य सुखस्य
लेशलवार्थं दीनाः सन्तोऽकुलानि कुर्वन्ति पञ्चेन्द्रियाणामुपभोग्यं
कामसुखं पूर्णं तस्य लेश एकेन्द्रियसुखं तस्य लवोऽल्पोभागः क्षण-
मात्रभोग्यः यथा कामिनीप्रसादार्थं भूयानेवानर्थः क्रियते। ननु -
सुखार्थं तथा करणं युक्तमित्याशङ्क्याह दीना इति। दैन्यं भोक्तृविशेष-
णम् अतो दैन्ये विद्यमाने भोगे स्वातन्त्र्याभावात्तस्मिन्नपि क्षणे दुःखं
सिद्धमिति न भोगः सिध्यति। ननु तथाप्याभिमानिको भोगः
सिध्येत्तत्राह लोभाभिभूतमनस इति। लोभेन मनसो अभिभवात् वृथैव
द्रव्यं व्ययितमिति पश्चात्तापान्नाभिमानिका सिद्धिः अकुशलपदेन
न विद्यते कुशलं यस्मादिति योगेन विद्यमानमपि कुशलं गच्छतीति
सूचितम् ॥ ७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ॥

गर्भोदशायिनं स्वान्तर्यामिणं नवमे विधिः ।
स्तुत्वा तस्य कृपावृष्ट्या सामर्थ्यं प्राप सृष्टये ॥ १ ॥

भगवत्कृपालब्धं तदीयसाक्षात्कारैककारणं भगवज्ज्ञानमेव
भवेदिति प्रदर्शयन्नाह ज्ञातोऽसीति। मे मया अद्य त्वं ज्ञातोऽसि
सुचिरात् बहुकालं त्वदीयध्यानं कुर्वतापीत्यर्थः : ईदृशसौन्दर्यस्य
तव मया कदाप्यध्यानात् ध्यानदशायां भगवन्तमहं ज्ञात्वैव ध्याया-
मीति हन्त हन्त वृथैव ज्ञानाभिमानः कृतः। तथा ध्यातरूप एव
प्रभुर्मे दर्शनं ददात्वित्याशंसापि वृथैव कृतेति ध्वनिः। यत ईदृश-
सौन्दर्यस्य लेशोऽपि महामरकतनीलोत्पलनवनीरदादिषु नास्ती-
ति तथारूपतया त्वं ध्यातोऽपीदृशरूपतया प्रत्यक्षोऽभूरिति तव
कृपाया माहात्म्यमनिर्वाच्यमित्यनुध्वनिः। स्वयं तन्माधुर्यास्वादम-
नुभूय तदननुभाविनोऽपरान् शोचति। देहभाजां प्राणिनाम् इत्येवावद्यं
दोषः किन्तत् भगवतस्तव गतिस्तत्त्वं न ज्ञायते ईदृशसौन्दर्यमाधुर्या-
दिकं नानुभूयते देहभाजामिति देहधारणस्य त्वद्भजनमेव फलं यस्मा-
देवैतादृशं स्वरूपमनुभवितुं शक्यत इति भावः। ननु विचित्रे जगत्य-
न्यदपि किमीदृशमिति मधुरमनुभवनीयं वस्तु नास्ति यतोऽन्या-
ज्ञाने देहिनामवद्यं ब्रवीषीति तत्राह । त्वत्तोऽन्यन्नास्ति यत् किल
ज्ञानार्थमुपादेयमित्यर्थः : भगवन्निति भगवत्ता त्वन्यत्र नास्त्येवेति

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

भग शब्दवाच्य निखिलाप्राकृतसौन्दर्यकीर्त्यादीनि विना नैव नेत्र-कर्णादिभोग्यं वस्त्वस्तीति भावः । ननु सर्वेन्द्रियभोग्यं स्वर्गसुख-मेवास्ति तत्राह । अपि तत्र शुद्धमिति तदपि नश्वरत्वादिभिरनित्यं परिणामविरसं परिमितमतिनिकृष्टमपि न शुद्धमपवित्रं कामिका-कसङ्गास्वाद्यं न तु निष्किञ्चनहंसपरिषद्दृश्यमपीत्यर्थः । किञ्च तच्चा पि त्वन्मायाशक्तिकार्यत्वान्न त्वत्तोऽन्यदित्याह । मायागुणानां व्यतिकरात् परिणामादुरुः स्वर्गपारमेष्ठ्यसार्वभौमादिरूपः ॥ १ ॥

नन्विदमपि मदीयं रूपमचेतनमेव अचेतनवेद्यानित्यमेवात्र अद्य ज्ञातोऽसीति त्वदुक्तिरेव प्रमाणमिति परिहासमाशङ्क्याह रूप-मिति। अवबोधरसः स्वरूपभूता चिच्छक्तिस्तदुदयेन हेतुना शश्वत् सदातनमेव निवृत्तं तमो माया यस्मात् तस्य तव । अत्र शश्वदित्यु-क्ते गृहीतमाविष्कृतमिति स्वामिचरणाः गृहीतमाभिमुख्येनानीत-मिति सन्दर्भः । गृहीता मायया गुणा इति वद्भेदेऽपि भेदबुद्धये-त्येके अवबोधरसेन कर्त्रा गृहीतमित्यपरे ॥ २ ॥

ननु निर्विशेषं ब्रह्मैव सर्वादिमं केचिद्व्याचक्षते न तु सविशेष-मेतदिति तत्राह नात इति । हे परम ! यद्भवतः स्वरूपम् अविकल्पं निर्विशेषम् आनन्दमात्रं ब्रह्म तद् अतोरूपात् परं न पश्यामि किन्त्वि-दमेव तत्रातु तदेवेदमित्यर्थः । हे अविद्धवर्चः ! अविद्धं कालदेशाद्य-परिच्छिन्नं वर्चस्तेजो यस्येति सर्वव्यापकं तत्तेजएव तद्ब्रह्मेति भावः यदुक्तं हरिवंशे अर्जुनं प्रति भगवता । "यत्परं परमं ब्रह्म सर्वं विभजते जगत्। ममैव तद्घनं तेजो ज्ञातुमर्हसि भारत,ति। ननूभयो-रैक्येऽपि त्वं कुत्र रज्यसीति तत्राह विश्वं सृजति । इगुपधत्वात् कः विश्वसृजः ते तव रूपमेकम् उपाश्रितोऽस्मि ननु त्वमपि ब्रह्मा विश्वं सृजसीति तत्राह अविश्वम् विश्वस्मादन्यत् चिन्मयमित्यर्थः अहन्तु विश्वमेव यतो भूतेन्द्रियात्मभिर्देहेन्द्रियमनोभिः कं सुखं यतोनैव मदो गर्वो यस्येति स्वस्य प्राकृतत्वमुक्तम् ॥ ३ ॥

ननु निर्विशेषं स्वरूपं किमिति नाश्रयासि तत्राह तत् । प्रसिद्ध-मिदं सविशेषं स्वरूपं वै निश्चितं चतुर्दशभुवनस्थजनानां सर्वेषामपि यानि मङ्गलानि धर्मार्थकाममोक्षास्तेषामपि मङ्गलाय कल्याणार्थं एतद्रूपोपासने सत्येव धर्मादयः कुशलिनः सार्थका भवन्त्यन्यथा व्यर्था भवन्तीत्यर्थः। निर्विशेषस्वरूपन्त्वेवं न भवतीति भावः। तथा नोऽस्माकमपि ध्याने इदमेव दर्शितं नतु तदिति । ततः कृपालुत्वा-धिक्यमपि । तस्मात् तस्मै सविशेषस्वरूपाय चिन्मयगुणसमुद्राय तुभ्यं नम एव केवलं विधेम करवाम । परिचर्यां पुनः कामहं कर्तुं शक्नोमीति भावः । नन्विदं रूपं न सच्चिदानन्दमयं किन्तु मायामय मिति ब्रुवाणाः केचिन्मां वस्तुतो नाद्रियन्ते तत्राह योऽनादृत इति। नरकभाग्भिरिति ते नरक एव निपतिष्यन्तीत्यर्थः असम्मिथ्यैवेदं सर्वमिति प्रसङ्गवद्भिरसाधुसङ्गिभिरिति वा ॥ ४ ॥

शास्त्रेषु निर्विशेषस्वरूपोपासका ज्ञानिन उच्यन्ते सविशेषस्व-रूपोपासकास्तु भक्तास्तेषामुभयेषां मध्ये भक्ता एव कृतार्थाः प्रिया-श्चेत्याह द्वाभ्याम्। येत्विति श्रुतिर्वेदः श्रवणभक्तिर्वा वातस्तेन नीतं प्रापितं ततश्च ये चरणाम्बुजसौरभ्यलोभिनो भृङ्गा इव चरणाम्बुज मेव परमपुरुषार्थत्वेन गृह्णन्तीत्याह। भक्त्या परया प्रेमलक्षणया। नापीपीति ते तथा तव चरणाम्बुज एव लोभिन स्तत्र न्यजन्ति तथा त्वमपि तेषां प्रेममाधुर्यवति हृदयाम्बुज एव लोभी तत्र त्यज-सीति परस्परवशीकारः सूचितः ॥ ५ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ॥

ननु तेऽपि स्त्रीपुत्रद्रविणादिमन्तश्चेत् संसारिण एवेति तत्र नहि नहीति स्वग्सनादंशमाह तावदिति द्रविणाद्यासक्तिहेतुकं भयं संसार इत्यर्थः । तस्यैव प्रपञ्चः शोक इत्यादिः । तावदेव यावत् रावाङ्घ्रिं प्रभुत्वादिभावेन न प्रवृणीत प्रकर्षेण वरणे सति त्वच्या सक्त्या द्रविणाद्यासक्तिर्निवर्तत इति भावः । यदिच द्रविणाद्यासक्तोऽपि कश्चिद्भक्तो भवेत्तदापि नैव चिन्तेत्याह ममेत्यसदाग्रहस्तावदवार्त्तिमूलं संसारकारणं यावदिति तवाङ्घ्रेः सेव्यत्वेन वरणमात्र एव द्रविणासक्त्यादंरुतखातदंष्ट्रोरगदंशस्येव नार्त्ति मूलत्वमित्यग्रे च वक्ष्यते । तावद्रागादयस्तेना इत्यत्र यावत् कृष्ण न ते जना इति तावच्छन्दस्य द्विपाठबलाद्व्याख्यातम्। एवञ्च येतु त्वदीयत्वेनैव रतिमन्तः तावद्भयमित्यर्थेनानर्थनिवृत्तिमन्तः तावन्ममेत्यर्थेनानिवृत्तानर्थास्त्रिविधा अपि भक्ता न संसारिण इत्युक्तम् ॥६॥

नन्वेवं चेत् सर्व एव सुधियो भूत्वा मच्चरणमाश्रयिष्यन्ते तर्हि के संसारिणो भविष्यन्ति तत्राह दैवेन त्वदपराधात्थदुरदृष्टेन अकुशलानि कामानि निषिद्धानि च कर्माणि ॥ ७ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

नवमे स्तोत्रं तेन प्रसन्नस्य भगवतोऽनुग्रहं चाह तत्रादौ मम सैव भगवदुपदिष्टवेदबलेन वेदार्थभूतं जगद्धेतुं भगवन्तं स्तुवन् वेदविरुद्धान् पक्षान्निन्दति ज्ञातोऽसीति। यत् यस्त्वम् "यतो वा इमानि भूतानि जायन्ते,, इति श्रुतिप्रसिद्धो जगद्धेतुः सर्वज्ञःसर्वशक्तिः मायायाः स्वशक्तेः गुणानां व्यतिकरात् क्षोभात् महदादिस्तम्बान्तरूपैः उरुर्विभासि "अद्वैतः द्वैतोऽसि एकःसन् बहुधा विचचार, इत्यादि श्रुतिरत्रानुसंधेया स त्वं मे मयासुचिरात्सुचिरकालोपासनेन ज्ञातोऽसि एवं ये न जानन्ति तान्निन्दति ननु अहंभगवन्! देहभाजां नानाजगत्कारणवादिनामित्यवद्यं दोषः तदाह भगवतः। षाड्गुण्यपूर्णस्य सर्वात्मनः गतिर्नज्ञायते किन्तु "कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्य"मिति श्रुति प्रोक्तानि नाना कारणानि स्वस्वमनीषया मन्यन्ते तत्तन्मतं न शुद्धम् यतः त्वत्त्वत्तः अन्यत् पृथक् किमपि नास्ति सर्वेषां कालादिपदार्थानां त्वदात्मकत्वात् अत एव सिद्धान्तपक्षविवक्षया श्रुत्याप्युक्तम् पुरुष इति चिन्त्यमिति ॥ १ ॥

एवमात्मनो ज्ञानवत्त्वमुक्त्वा अथ भगवद्रूपं वर्णयन् त्वद्रूपं प्रपन्नोऽस्मि शरणं व्रजामीत्याह रूपमिति द्वाभ्याम् । अवबोधरसोदयस्यासाधारणज्ञानस्वप्रकाशेन शश्वन्निवृत्ततमसः सर्वदा स्वभावत एव निवृत्ततमउपलक्षितं दोषमात्रं यस्मात् तस्य तव यदेतद्रूपं त्वयैव गृहीतमाविष्कृतम् ॥ २ ॥

हे परम ! हे आत्मन् ! आनन्दमात्रम् अविकल्पम् निर्भ्रमं यत् अनावृतप्रकाशम् भूतेन्द्रियात्मकं भूतानां ब्रह्मादिस्तम्बपर्यन्तानां प्राणिनां तदिन्द्रियाणां च कारणम् यतो विश्वसृजं सर्वज्ञं तथा अविद्धं सर्वविलक्षणमेकं निःसमानातिशयम् एवं भूतं यद्भवतः स्वरूपम् अतःपरं श्रेष्ठं न पश्यामि अतः अदः इदमुपाश्रितोऽस्मि ॥ ३ ॥

भगवतः कृपालुतां भक्तानां भगवत्कृपापात्रतामभक्तानां नरकपात्रतां च दर्शयन् भगवन्तं प्रणमति तस्मै इति। हेभुवनमङ्गल! उपासकानाम् नोऽस्माकम् मङ्गलाय ते त्वया तत्स्वरूपम् दर्शितं धन्या वयमिति भावः ॥ ४ ॥

क्षुत्तृट्त्रिधातुभिरिमा मुहुरर्द्यमानाः शीतोष्णवातवर्षैरितरेतराच्च ॥
कामाग्निनाच्युतरुषा च सुदुर्भरेण संपश्यतो मन उरुक्रम ! सीदते मे ॥ ८ ॥
यावत्पृथक्त्वमिदमात्मन इन्द्रियार्थमायाबलं भगवतो जन ईश ! पश्येत् ॥
तावन्न संसृतिरसौ प्रतिसंक्रमेत व्यर्थाऽपि दुःखनिवहं वहती क्रियार्था ॥ ९ ॥
अह्न्या पृतार्तकरणा निशि निःशयाना नाना मनोरथधिया क्षणभग्ननिद्राः ॥
दैवाहतार्थरचना ऋषयोऽपिदेव ! युष्मत्प्रसंगविमुखा इह संसरन्ति ॥ १० ॥
त्वं भावयोगपरिभावितहृत्सरोज आस्से श्रुतेक्षितपथो ननु नाथ ! पुंसाम् ॥
यद्यद्धिया त उरुगाय ! विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाय ॥ ११ ॥
नाति प्रसीदति तथोपचितोपचारैराराधितः सुरगणैर्हृदि बद्धकामैः ॥
यत्सर्वभूतदयया सदलभ्ययैको नानाजनेष्ववहितः सुहृदन्तरात्मा ॥ १२ ॥

### श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

भगवत्कथाश्रवणादिना भगवदाश्रयणे जीवानां कृतार्थतामाह ये त्विति ॥ ५ ॥
भगवदनाश्रयणे जीवानामकृतार्थतामाह तावदिति पञ्चभिः न प्रवृणीत नाश्रयेत् ॥ ६ ॥ ७ ॥

---

### भाषाटीका

ब्रह्माजी स्तुति करे हैं कि हे भगवान् बहुत दिनों तक तपस्या करने से आज मैंने आपका दर्शन किया है देहधारी पुरुषों को जो आपकी लीला नहीं मालूम होती है सो इनका बडा अपराध है यह बात निश्चित है क्योंकि आप से अलग होकर के कुछ भी नहीं हैं जिस भाव से जो पृथक् है भी सो भी शुद्ध नहीं है जिस से कि आपही अपनी शक्ति से बहु रूप ज्ञानिन को भान होते हो ॥ १ ॥

हे प्रभो ! जिन आपके नाभ पद्म रूपी गृह से मैं उत्पन्न हुआ अखंड एक रस ज्ञान के उदय से निरंतर अज्ञान अंधकार को दूर करने वाले तिन आपका यह वही रूप है जो कि सत्पुरुषों के अनुग्रह के निमित्त आमि मैं ग्रहण किया हुआ सैकडों अवतारों का एक मुख्य बीज हैं ॥ २ ॥

हे परम ! हे आत्मन् आपका जो आनंद मात्र भेद रहित स्पष्ट प्रकाश रूप है इसी से उससे दूसरे रूप को मैं नहीं देखता हूं इसीसे जगत् का कारण जगत् से भिन्न भूत इंद्रियादिकों का हेतु इस आपके रूपकी उपासना करता हूं ॥ ३ ॥

हे जगत् के मंगल कारक ! ध्यान करते हुये उपासक हम लोगों के कल्याण के लिये जो रूप दिखाया हैं सो ही आपका निज स्वरूप है तिस रूप के दिखाने वाले भगवान् आप को हम नमस्कार करते हैं जो कोई पुरुष असत् जनों के प्रसंग से आप का पूजन नहीं करते हैं वे नरक भागी होते हैं ॥ ४ ॥

जो तो शास्त्र रूपी पवन का लाये हुये आपके चरण कमल की कली के सुगंध को कान छिद्रों से सूंघते हैं उनकी परम भक्ति से आप बंधिजाते हो तब आप उनको निज पुरुष जानके उनके

### भाषाटीका ।

हृदय से कभी दूर नहीं होते हो ॥ ५ ॥

हे प्रभो ! जब तक यह मनुष्यादि जन दुःख का नाशक अभय का देने वाले आप के चरण को नहीं भजता है तभी तक धन गृह बंधु इनों के निमित्त से शोक मोह लोभ भारी तिरस्कार तथा दुःख का मूल जो मेरी वस्तु है ऐसा खोटा आग्रह सोभी होता है आपके चरण शरण लेने पर सब छूट जाता है ॥ ६ ॥

जो लोग सब दुःखों के नाश करने वाले आपके श्रवण कीर्तनादिक से विमुख इंद्रियों वाले हैं और काम सुखके किंचित्कणिका मात्र के वास्ते लोभ में बुद्धि को फसाकर दुखी होकर निरंतर संसार के कुत्सित कर्मों को करते हैं उन लोगों की बुद्धि खोटे प्रारब्ध से मारी गई है ॥ ७ ॥

---

### श्रीधरस्वामिकृत भावार्थदीपिका ॥

अकुशलत्वमेवदर्शयति क्षुच्च तृट्च त्रिधातवश्च वातपित्तश्लेष्माणस्तैः इमाः प्रजाः सुदुर्भरेण दुःसहेन कामाग्निनाऽच्युतया रुषाऽविच्छिन्नक्रोधेन च पीड्यमानाः संपश्यतो मे मनः सीदति ॥ ८

नन्वेवं भूतायाः संसृतेरपरमार्थत्वात्किमर्थं विषादः क्रियते तत्राऽऽह यावदिति आत्मन इदं पृथक्त्वं देहादिभावं भगवतस्तदेन्द्रियार्थरूपा या माया तया बलमाधिक्यं यस्य तत् न प्रति संक्रमेत नोपरमेत् दुःखसमूहं प्रापयन्ती क्रियाणामर्थः फलं यस्याम् पृथक्त्वमिदमितिपाठे इदं देहादि त्वदिति त्वत्तः पृथक् पश्येद्यावत्तावद्व्यर्थाऽपि नोपरमेत् ॥ ९ ॥

भवत्वेवमविवेकिनां विवेकिनस्तु मुक्ता एवेति किं तेषां भक्त्या कृत्यमत आह अह्नि आपृतानि व्यापृतानिच तान्यार्तानि क्लिष्टानि करणानीन्द्रियाणि येषां रात्रौविषयसुखलवोऽपि नास्ति यतोनिशि निःशयानाः स्वप्नदर्शनेनच तत्रा क्षणे भग्ननिद्रा दैवेनाहताः सर्वतः अर्थरचना अर्थार्थोद्यमा येषाम् ॥ १० ॥

तदेवमभक्तानां संसारानिवृत्तिमुक्त्वा भक्तानां तन्निवृत्तिमाह त्वमिति भक्तियोगेन शोधिते हृत्सरोजे आस्से तिष्ठसि श्रुतेन श्रवणेनेक्षितः पंथा यस्य किंच श्रवण विनाऽपि त्वद्भक्ता मनसा यद्यत्तव

* आपृतार्थ करणा इत्यपि वीरराघवपाठ ॥

### श्रीधरस्वामिकृत भावार्थदीपिका

वपूरूपं स्वेच्छया ध्यायन्ति तत्तत् प्रणयसे प्रकटयसि सतां भक्तनामनुग्रहाय ॥ ११ ॥

भक्तनां च निष्कामानां त्वमति सुलभोनेतरेषामित्याह नेति उपचितैरूर्जितैरुपचारैः पुष्पोपहारादिभिः यद्यथा असतामभक्तानामलभ्यया सर्वभूतदयया प्रसादे हेतुः एक इत्यादि ॥ १२ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिका टिप्पणी।

सीदति हन्त हन्त कथमासां निस्तारो भवितेत्यवसीदति॥८॥

एवं भूतायाः क्षुधादिभिः पीडारूपायाः अपरमार्थत्वात्प्रातीतिकत्वेन मिथ्यारूपत्वात् आत्मनो जीवस्य ब्रह्मभावात्पृथक्त्वं देहादिभावम् अध्यासेन देहेन्द्रियादितादात्म्यं तथा च विज्ञानेन यावद्भ्रमनिवृत्तिर्नस्यान्न तावत्संसृतेरुपरम इति विषाद इति भावः ॥ ९ ॥

अविवेकिनां देहात्मविवेकशून्यानाम् एवं संसृतेरनुपरमो भवतु इति हेतोः तेषां विवेकिन ऋषयो विवेकिनोऽपि चेद्युस्मत्प्रसङ्गविमुखास्तर्हि अहृद्यापृतार्त्तेत्यादिस्वभावाःसन्तः संसरन्ति जन्ममरणादिक्लेशमनुभवन्ति एवञ्च कर्मिमूढज्ञानिभेदेन त्रिविधा अपि जीवा भगवद्विमुखाः संसरन्त्येवेति क्रमेण दैवेन तद्इत्यनेन क्षुत्तृडित्यनेन अहृद्यापृतेत्यनेन च निर्दिष्टम् ॥ १० ॥

श्रवणं वेदवैदिकविचारश्रवणं विनापि अकुटिलहृदयास्त्वद्भक्ताः यद्यदिति सामान्योक्त्या रूपाणामचिन्त्यानन्तत्वमभिव्यञ्जितम् अत एव पूर्वं सदेव प्राकट्यमितिव्याख्यातम् सदनुग्रहायेति सत्सु अनुग्रह एव तत्र प्राकट्यस्य प्रयोजनमसुरनिग्रहादिकंत्वानुषाङ्गिकमिति व्यञ्जितम्"मुहूर्तेनैव संहर्त्तुं शक्तो यद्यपि दानवान्। मद्भक्तानां विनोदार्थं करोमि विविधाः क्रियाः। परित्राणाय साधूनामित्यादिप्रामाण्यात् ॥ ११ ॥

इतरेषां सकामानां न सुलभस्तेषां स्वार्थपरत्वेनान्यत्र दयाऽभावात् नेतीति भवानिति शेषः प्रियत्वे प्रसन्नत्वे तस्मात् भवत्प्रीत्यर्थं सर्वभूतदयामयी भक्तिः कर्त्तव्येति भावः ॥ १२ ॥

---

### श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका।

क्षुत्तृडित्यादि क्षुदशनाया तृद् पिपासा इमे शोकमोहजरामृत्यूनामप्युपलक्षणम् क्षुधादिषडूर्मिभिस्त्रिधातवः वातपित्तश्लेष्माणः तैश्च तथा शीतादिभिः इतरेतरैः परस्परैश्च कामाग्निना कामएवाग्निस्तेन कथंभूतेन सुदुर्भरेणाच्युतरूपा चाविच्युतक्रोधेन अच्युतेति संबोधनं वा एतैर्मुहुः पुनःपुनरर्द्यमानाः प्रजाः संपश्यतो मे मनः हे उरुक्रम! सीदते क्लिश्यति ॥ ८ ॥

असदवग्रह आर्तिमूलमिति देहात्मभ्रमस्यार्तिमूलत्वमुक्तमुपपादयनि यावदिनि द्वाभ्याम् भगवतस्तव मायायाःवलं वलकारितम् ईशः याथ ।ह्य न्द्रर्थ घपःभूत पृथक्त्वं देवमनुष्यादिदेहगतपृथक्त्वम् आत्मनः आत्मसंवन्धितया जनः यावत् पश्येत् हेईश तावदसौसंस्रुतिः नप्रतिसंक्रमेत न निवर्तेत न केवलमनिवृत्तिरेव किंतु क्रियार्था क्रियाऽर्थः प्रयोजनं यस्याः सा क्रियार्था संसृतिः व्यर्था परमपुरुषार्थ शून्यापि दुःखनिवहं दुःखसमूहं वहति प्रापयति अहंकारमूला संसृतिरुत्तरोत्तरकर्मान्तरहेतुस्तस्मान्मोक्षविरोधिनी दुःखवहा चेत्यर्थः ॥ ९ ॥

अहीनि। अन्यापृतार्थकरणा अहनि व्यापृतान्यर्थकरणानि शब्दादिविषयेन्द्रियाणि येषान्ते आर्तेति पाठे व्यापृतान्यार्त्तानि दुःखितानि करणानि येषां ते इत्यर्थः निशि रात्रौ निःशयानाः नितरां शयाना निवृत्तवाह्येन्द्रियव्यापाराः विषयसुखलवोऽपि नास्तीत्यभिप्रायः नाना भूतेषु मनोरथेषु धिया स्वप्नदर्शनेनेत्यर्थः क्षणे क्षणे भग्ननिद्रा येषां ते दैवाहतार्थरचनाः दैवेनाहता वितथीकृताः अर्थरचनाः प्रयोजनविषयव्यापारा येषां ते ऋषयोऽपि त्वद्भक्तिरहिताश्चेत्... विधा भूत्वा संसरन्तीत्यर्थः ॥ १० ॥

एवं देहात्ममानिनां भगवद्भक्तिविधुराणां संसृत्यनिवृत्त्यभिधाय भक्त्यैकलभ्यत्वमेव सुदृढय्य निष्कामेषु उपासकेषु भगवत्सौलभ्यमाह त्वमिति द्वाभ्याम्। हेनाथ! पुंसां स्वभक्तनां भावयोगो भक्तियोगः तेन परिभाविते शोधिते हृत्सरोजे हृदयकमले श्रुतेक्षितपथः श्रुतं शास्त्रजन्यं ज्ञानमीक्षितं विवेकादि जन्य मुपासनात्मकम् ईक्षितमिति भावे क्तः श्रुतेक्षिते पन्थाः उपायोयस्य प्राप्तौ स श्रुतेक्षितपथः शास्त्रदर्शितमार्गः एवं भूतस्त्वम् आस्से तिष्ठसि हेउरुगाय! ते स्वपुमांसः भिक्त तव ते यद्यद्वपुः ध्यायन्ति तद्वपुः सत्स्वनुग्रहाय प्रणयसे प्रकटयसे यादृशविग्रहविशिष्टं त्वां विशेषतो भावयन्ति तादृशविग्रहविशिष्टो भवसीत्यर्थः अनेन सौलभ्यमुक्तम् ॥ ११ ॥

निष्कामानामेव भवान्सुलभइत्याह नेति। सुरगणैरनुकूलजनैः "विष्णुभक्तिपरोदैवोविपरीतस्तथासुर,, इति वचनात् कथंभूतैः हृदि वद्धकामैः प्रसक्तकामैः सकामाऽपि भगवद्भक्तिरासुरप्रकृतीनां न संभवतीत्याभिप्रायः एवं भूतैः सुरगणैः कर्त्तृभिः उपचितोपचारैः पुष्कलोपचारैराराधितो भवान्नातिप्रसीदति नात्यन्तं प्रसन्नो भवसि निरतिशयमोक्षसुखप्रदो न भवसीत्यर्थः कुत इत्यत आह। यद्यस्मादसल्लभ्यया असद्भिर्देहमात्मतयाऽनुसंदधद्भिर्लब्धुमशक्यया सर्वभूतदयया सर्वेषु भूतेष्वात्मतयाऽवस्थिते सति त्वयि कस्मिन्नपि भूते कृतो द्रोहस्त्वय्येव कृतो भवतीति वुद्ध्या सर्वेषु भूतेषु क्रियमाणया स्वार्थनिरपेक्षपरदुःखनिराचिकीर्षापरपर्यायया दयया भवान्प्रसीदति सर्वभूतानामीश्वरशरीरत्वानुसंधानपराणामेव सुलभ इति भावः शरीरात्मभावमेवोपपादयति नाना जनेषु समस्तजनेषु अवहितः स्थितः कथमवस्थितः अन्तरात्मा जीवान्तः प्रवेशनेऽपि तद्गतदोषैरस्पृष्टः प्रशासितृत्वेन धारकत्वेन च स्थितः अत एव सुहृत्कामनापूर्वकं यज्ञादिकर्मणोऽपि सर्वभूतदया त्वत्प्रसादहेतुरित्यर्थः ॥ १२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली

त्वयि ज्ञाते सर्वमिदं ज्ञायते "अविज्ञातं विज्ञात' मिति श्रुतेः... स्तव गतिर्न ज्ञायत इत्यत्यन्तसाहसमिति सूचनाय ब्रह्मा दुःखिनफलभोगिप्रजानुकम्पाव्याजेन सज्ज्ञानोत्पत्तौ प्रथमं वैराग्यं साधनीयं बुभूषुणेति भावेनाह क्षुत्तृडिति। क्षुधा तृषा त्रिधातुभिर्वातादिभिराध्यात्मिकैरिमाः प्रजाः शीतोष्णवातवर्षैराधिदैविकैः इतरेतरादन्योऽन्यनिमित्तादाधिभौतिकैः सुदुर्भरेण कामाग्निना सुदुर्भरया रुषा च ॥ ८ ॥

त्रिविधो जीवसंघो मुक्तियोग्यः संसारयोग्यस्तमोयोग्यः तत्र भगवतो गतिर्नज्ञायत इत्यादिरूपा मुक्तियोग्यानां संसृतिः कदा निवर्तत इति तत्राह यावदिति। च शब्दोऽनुक्तसमुच्चयार्थोऽवधारणार्थो वा यावद्यदा आत्मनः स्वस्य भगवतः सकाशात् ... यार्थम् इन्द्रियविषयभोगार्थमसुक्तियोग्यो जनो ध्यायामि पश्यामि शृणोमीत्यादिपृथक्त्वं विभागलक्षणम् मायावलं भगवदिच्छया भगवदिच्छया प्रणीतं चेष्टितमित्यर्थः वलप्राणान इति ... पश्येत् चशब्दान्मुक्तावपि "ध्याये मंस्ये तथा पश्ये शृणोमि...

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

विभक्तता। जीवस्य तु हरेरिच्छावलादिन्द्रियभुक्तय" इत्यतो ना निर्वाच्यलक्षणोभेदः पृथक्त्वं पश्येदिति दृग्विषयत्वेन ज्ञेयत्वोक्तेर्हरेरिच्छैव माया नानिर्वाच्याविद्या तदुक्तम् ।

ज्ञेयत्वं * दुर्घटस्यापि घटनाधिकशक्तिता ।
अभेदईश्वरेणापिस्पृष्टयादावन्तरङ्गता ॥
उच्येत यस्याः सा माया हरेरिच्छाथवा बलम् ॥

इति ननु तर्हि मायाशब्दवाच्ययोर्लक्ष्मीबंधकशक्त्योर्विभागज्ञानं कथमचेतनप्रकृतेश्चेति प्रसक्ता शङ्का ।

भगवत्तन्त्रता यस्यास्तद्धार्यत्वं सुरूपता ।
उच्येत माया सा तु श्रीर्दोषयुक्ता जडा स्मृता ॥
परिणामिनी च यस्यास्तु दोषाश्चेतनता तथा ।
शैवली नाम सा माया जगद्बन्धात्मिका सदा ॥

इत्यनेन परिहर्तव्या इत्यभिप्रायेणाचार्यैः शेषोदाहरणं कृतं तावत्तदा व्यर्थापि आत्यन्तिकप्रयोजनशून्यापि धर्मादिक्रियार्था दुःखनिवहं दुःखपरंपरां वहन्ती संसृतिः प्रतिसंक्रमेत नाशं गच्छत्येवेत्यन्वयः अघटितघटकशक्तिरस्तीति द्योतनाय ईशेति संबोधनम् एतदभिप्रायेणोक्तं "ज्ञेयत्वं दुर्घटस्यापि घटनाधिकशक्तिते"ति ॥ ९ ॥

नित्यसंसारिणां संसरणप्रकारं निरूपयति अध्याहृतेति। अध्याहृतार्थानि आकृष्टशब्दादिविषयाणि करणानीन्द्रियाणि येषां ते तथाऽन्योऽन्याकर्षणत्वज्ञापनायैवमुक्तं तत्र निमित्तमाह निशीति।

अज्ञानं तु निशा प्रोक्ता दिवाज्ञानमुदीर्यते ॥

इति वचनान्निश्यज्ञाने नितरां शयानाः परमतत्त्वाज्ञानं कारणमित्यर्थः नानामनोरथधिय इति । हेतुगर्भविशेषणं तस्मात्प्रतिक्षणं भङ्गयुक्तनिद्राः निद्रातुमप्यवसरो नास्तीत्यर्थः नित्यलुप्तकर्मानुष्ठानत्वेन दैवादनुदितप्रसादाद्धतार्थरचनाः विनाशितार्थाभीष्टवस्तु चमत्कारा ऋषयोऽपि ऋषिकुलप्रसूता अपि अत्र सर्वत्र स्पष्टं निमित्तमाह युष्मदिति । इह जीवलोके स्वर्गे नरके च ॥ १० ॥

पृथक्त्वं मायाबलं पश्येदिति यदपरोक्षज्ञानमुक्तं तदुत्पत्तावित्थंभूतसाधनमाह त्वद्भावेति। पुंसां नाथ! पुरुषोत्तम! सतो लोकमान्यात् श्रेष्ठादार्यात् च श्रुतेन शास्त्रश्रवणेन ईक्षितोदर्शितः पंथा विष्णुभक्त्यादिलक्षणो येषां ते तथोक्ताः अत एव त्वद्भावयोगेन त्वद्विषयेण च भक्तियोगेन भावितमधिवासितं हृत्सरोजमन्तःकमलं येषां ते तथोक्ता मज इत्युपलक्षणं वेदान्तादिसच्छास्त्रश्रवणसंजातत्वद्भक्तियोगेन निर्मलीकृतेन्द्रियग्रामा ये मुक्तियोग्या जनाःहेउरुगायविष्णो! ते पुरुषास्तव यद्यद्वपुर्नन्वनुमतं यथा यथा स्वस्वयोग्यज्ञानानन्दादिगुणत्वेनानुज्ञातं धिया विभावयन्ति तदनुग्रहाय तेषामनुग्रहाय तत्तद्वपुस्तादृशं शुभाकारं प्रणयसे व्यक्तीकरणेन स्निग्धं करिष्यसीत्यन्वयः नन्वित्यनेनैतिह्यवाचिना ।

यादृशोभावितस्त्वीशस्तादृशोजीवआभवेत् ।
तं यथायथोपासते तदेव भवति ॥

इति वाक्यद्वयं प्रमाणयति एतदुक्तं भवति सद्गुरुमुखात्सच्छास्त्रश्रवणेतरविरक्ति द्वारा हरौ भक्तिस्तया स्वयोग्यगुणोपसंहारलक्षणोपासना तयास्य हरेरपरोक्षज्ञानं तेन पृथक्त्वस्य मायाबलविषयत्वं तस्माद्धरेःप्रसादस्तेन न ज्ञायते भगवतोगतिरित्यादिलक्षणा दुष्टजनसंगसंजाता संसृति र्न निवर्तत इति ॥ ११ ॥

धिया यद्यद्विभावयन्तीत्यत्र सकामैरेवोपास्यत इत्यन्यथा प्रती-

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

यते सा मुक्तिपरिपन्थिनीति सा नकर्तव्येति भावेनाह नेति । ह्वरीत्युभयत्रान्वेतव्यं सर्वभूतदयायाः कर्तव्यत्वे हेतुर्नानाजनेष्ववहित इति। दुर्भगशरीरस्थत्वेऽप्यणुमात्रं दुःखमस्य नास्तीत्यत्र हेतुरन्तरात्मेति- अन्तःस्थित्वापि रतिरूप इत्यर्थः अतएव सुहृदनिमित्तबन्धुः एवंविधो यस्त्वमसांद्रसुरप्रकृतिभिरलभ्यया लब्धुमशक्यया सर्वभूतदयया सुरगणैर्ह्वदाराधितोयथातिप्रसीदसि स त्वं तथा हृदि बद्धकामैर्जनैरुपचितोपचारैराराधितो नातिप्रसीदसि मन्त्रगुरुदेवताशक्त्या त्वन्नियतया किंचित्फलदानाभिमुखोऽपि नात्यन्तिकमुक्तिफलदत्वेन प्रसन्नो भवसीत्यतोऽप्युक्तम्

आराधितो यो ब्रह्माद्यैर्भक्तिज्ञानदयादिभिः ।
किंतस्य कामुकजनैः कृतया परिचर्यया ॥

इति वचनादुक्त एवार्थः इतरेषां सेवानुगुणफलदत्वेऽपि त्वमेक एवं विधस्वभाव इत्येक इति ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ॥

तच्च त्वत्तः स्वातन्त्र्याभिमानेनैव जीवानां स्यादित्यभिप्रेत्याह यावदिति । भगवतः सकाशात् आत्मनः पृथक्त्वं स्वातन्त्र्यम् यावत् पश्येत् ॥ ९ ॥

अतएव तत्तन्मार्गसिद्धमुनीनामप्यनादर इत्याह अह्न्यापृतार्त्तकरणा इत्यादि । स्वभावात् युष्मद्भजनविमुखाः संसारिणो भवन्ति किम्बहुना तत्तन्मार्गसिद्धा मुनयोऽपि युष्मत्प्रङ्गविमुखाश्चेदिह जगति तद्वदेव संसरन्ति । अथवा मुनयोऽपि त्वद्विमुखाश्चेत्तर्हि संसरन्त्येव । कथं भूताः सन्तः संसरन्ति तत्राह अह्न्यापृतेत्यादि । आरुह्य कृच्छ्रेण परं पदमित्यादेः । अत उक्तं श्रीयमेन ।

धर्म्मन्तु साक्षाद्भगवत् प्रणीतं नवै विदुर्ऋषयो नापि देवाः ।
न सिद्धमुख्या असुरा मनुष्याः कुतो नु विद्याधरचारणादयः ॥
स्वयम्भूर्नारदः शम्भुः कुमारः कपिलो मनुः ।
प्रह्लादो जनको भीष्मो बलिर्वैयासकिर्वयम् ॥
द्वादशैते विजानीमो धर्म्मं भागवतं भटाः ।
गुह्यं विशुद्धं दुर्व्वोधं यं ज्ञात्वामृतमश्नुते ॥
एतावानेव लोकेऽस्मिन् पुंसां धर्म्मः परः स्मृतः ॥

इत्यादि । एते धर्म्मप्रवर्त्तकाः विजानीम एव न तु स्वस्मृत्यादिषु प्रायशोपदिशाम इत्यर्थः । यतो गुह्यम् अप्रकाश्यम्। दुर्व्वोधं अन्यैस्तथा ग्रहीतुमशक्यं च । गुह्यत्वे हेतुः यं ज्ञात्वामृतमश्नुत इति । अतएव वक्ष्यते च । प्रायेण वेद तदिदं न महाजनोऽयमित्यादि महाजनो द्वादशेभ्यस्तदनु गृहीतसम्प्रदायिभ्यश्चान्यो महागुणयुक्तोऽपीत्यर्थः । तस्मात् साधूक्तमह्न्यापृतार्त्तेत्यादि अत्र विशेषो भक्ति सन्दर्भे दृश्यः ॥ १० ॥

भक्तानां तु त्वं वश एवेत्यपरं किं वक्तव्यमित्याह त्वमिति। भक्तियोगोऽत्र प्रेमा । परिभावितत्वं योग्यतामापादितत्वं श्रुतं भगवत् प्रतिपादकवेदवैदिकशास्त्रविचारश्रवणम्। तर्हि मद्रूपविशेषाविर्भावे किं कारणं तत्राह यद्यदिति धिया श्रुतेनैव लब्धेन बुद्धिविशेषेण । ते पूर्व्वोक्ताः श्रुतेक्षिततत्पथाः पुमांसो यद्यद्विभावयन्ति तत्तद्वपुः प्रणयसे प्रकर्षेण तत्समीपे नयसि प्रकटयसीत्यर्थः। ननु ईश्वरोऽहं कथमेवं तेषां वशः स्यां तत्राह सदनुग्रहाय। सत्सु तेषु अनुग्रह एव वशत्वे कारणं नान्यदिति भावः। ननु श्रुतमात्रेण मम कथं बहूनां रूपाणां ज्ञानं स्यात् तदभावे च कथमेकतरनिष्ठा स्यात् तत्राह

* मोक्षार्थं ।

### श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

हे उरुगायेति । वेदेन त्वमुरुधैव गीयस इति । स्वस्वमत्यनुसारेण सा स्यादिति भावः ॥ ११ ॥

नातीति भवानिति शेषः । ततश्च । यत्यथा सर्व्वभूतदयया साधारणैरपि जनैराराधितो भवानतिप्रसीदति । तथा बहुभिरुपचारैः सुरगणैरप्याराधितो नातिप्रसीदति । कुतस्तत्राह एक एव भवान्नानाजनेषु सुहृच्चान्तरात्मा च साधारणश्चेति । सुरगणैः कथम्भूतैः हृदिबद्धकामत्वात् तत्र तत्र स्पर्द्धासूयायुक्तैरित्यर्थः । तस्माद्भवत्प्रीत्यर्थं सर्व्वभूतदयामय्येव भक्तिः कर्त्तव्येति भावः ॥१२॥

---

### श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

तादृशेषु कृपां प्रार्थयितुं तेषु स्वस्य दयामाह क्षुत्तृडिति । इमाः प्रजा अस्वतन्त्रा मत्सृज्यत्वेनोपस्थिताः तेषां स्वरूपं सम्यक् पश्यतः हेउरुक्रम! मे मनः सीदति परदुःखं दृष्ट्वा दुःखितं भवतीत्यर्थः संबोधनेन तन्निवारणसामर्थ्यं सूचितम् इयमेव प्रार्थना द्वादश विधः पुरुषः द्वादशधारोगैर्व्याप्तो न केनाप्यंशेन सुखीभवति तान् द्वादशदोषाननिवार्यानाह क्षुधादिपदैः।क्षुत्तृषोरसह्यत्वं स्वानुभवसिद्धं त्रिधातवो वातपित्तश्लेष्माणस्तेऽपि तथा मुहुरर्द्यमाना इति बहुधा कृतप्रतीकारा अपि शीताद्योऽपि चत्वारस्तथा अन्योऽन्यतोऽपि क्लेशः इतरेतरादिशब्दा निपाताः अतोनैकशेषो नापि सर्वनामता चकारात्तत्संबन्धिशस्त्रादिभिरपि कामस्यानलत्वेनाग्नित्वम् अग्निना स्वरूपनाश एव भविष्यतीत्याशङ्कयाच्युतेति संबोधनं स्वरूपरक्षार्थम् अच्युतो रोष इति केचित् न कदाचिद् पिच्युतो भवति यो रोषः चकाराल्लोभादिभिः सुदुर्भरेणेति क्षणमात्रमपि तत्सहनमशक्यं सर्वदा प्रतीकारश्चाशक्योऽतोदुःखित्वं सीदत इति अर्थस्यालौकिकत्वादात्मने पदं छान्दसम् ॥ ८ ॥

तर्हि ज्ञानोपदेशेन ताः प्रजाः कथं न कृतार्थाः क्रियन्ते तत्राह यावदिति। यावदात्मनः पृथक्त्वं पश्येत्तावदुपदिष्टेऽपिज्ञाने संसृतिर्न प्रतिसंक्रमेत यावदित्यवधिरुक्तः मध्येदुःखनिवृत्त्यर्थं प्रार्थना आत्मनः पृथक्त्वं निरूपयति इदमिति । यावदिदमिति मन्यते यत्किंचित्तावत्पृथक्त्वम् अस्यावधिर्भगवत्सायुज्यमेव ब्रह्मभावोऽपि स एव अन्यस्तु पक्षोदेहग्रहणाग्रहणाभ्यां सर्वथानुपपन्नः इदमः आत्मभेदकत्वं निरूपयति इन्द्रियार्थमायाबलमिति।भगवत इन्द्रियार्थरूपाया मायाया बलं यत्र अन्तरोत्पन्नाः पदार्थाः मायिकाएव इन्द्रियाणामेवार्थे निष्पादिताः भगवत इवेन्द्रियाणि यदा लोकहितार्थं प्रवृत्तानि अहंकारेण तदा भगवदाज्ञया भगवन्मायास्वरूपभूताः पदार्था निष्पादिताः अतोविशेषणमपि भगवदीयमिति सविशेषणे भगत्संबन्ध उक्तः साह्यधिष्ठानज्ञानेन निवर्तते परं तद्यथा न भवति तथा बुद्धिः शास्त्रादिव्यामोहेन महदेव बलंकरोति तस्याबलस्येदमेव निदर्शनं यदीदं प्रतीयते तदास्ति बलमिति भगवदीयत्वाद्भगवत्कृपयैव निवर्त्तत इति ज्ञापितं दर्शने हेतुर्जन इति यदा जायते शरीरं गृह्णाति तदेवं पश्यतीति नियम एव ननु किमिदं जायते तत्राह ईशेति यदा भगवत ईशोऽहमिति इच्छा तदा ईशितव्यस्यापेक्षणाज्जननमित्यर्थः संसृतिः संसरणं बहुधा देहत्यागग्रहणे असाविति परिदृश्यमानः प्रतिसंक्रमो विपरीतप्रवाहः स भगवत्सायुज्यं प्रापयिष्यति "अन्नेप्रलीयते मर्त्य„इत्यादिना सतावन्नभवति ननुसंसृतेः किं मूलं किंवा प्रयोजनं कथंवा न प्रतिसंक्रमते तत्राह संसृतेः कर्ममूलं तदाह क्रियार्थेति प्रयोजनंतु नास्त्येव तदाह व्यर्थापीति विः कालः सर्वार्थाः कालार्थाः

### श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

संसृतिर्मध्ये दुःखनिवहं वहती दुःखप्रवाहसिध्यर्थमेव स्थिता कुतोऽपि न निवर्तते अतोबीजप्रयोजनावान्तरप्रयोजनानां विद्यमानत्वात्कदापि न निवर्तत इत्यर्थः ॥ ९ ॥

ननु ब्रह्मात्मभावेऽधिकारिणां गुरुकृपया वाक्यसहकृतमनसा भाते कथमिदं न निवर्तते सर्वत्रैवाहं बुद्धेः "आत्मैवेदं सर्वं ब्रह्मैवेदं सर्वं" मिति तत्राह अहृद्यापृतार्त्तकरणा इति। ये पूर्वजन्मनि ऋषयो ब्रह्मात्मभावचिन्तनपरास्तथा चिन्तनेनैव प्राप्तदेहावसानास्तेऽपि गुरुत्प्रसादविमुखाः इहैव संसरन्ति संसारेऽपि तेषां विशेषः अह्नि दिवसे आपृतान्यत एवार्तानि करणानीन्द्रियाणि येषां निशि रात्रौ च नितरां शयाना महामोहग्रस्ता भवन्ति एवं व्यर्थकालाः निद्रया जनितमानुषङ्गिकं सुखमपि नास्तीत्याह क्षणभग्ननिद्रा इति । क्षणमात्रेणैव भग्ना निद्रा येषां भङ्गे हेतुः नानामनोरथधियेति । नानामनोरथविषयिणी या बुद्धिः मनोरथानुसारेण स्वप्नं पश्यति तस्मिन्स्वप्ने भयादिदर्शनादिष्टावयोगाद्वा स्वाप्निकस्यास्थिरत्वाद्व्याकुलस्य निद्राभङ्गः स्पष्टः दैवेनैवाहताः अर्थरचना येषां तेषां क्रियापि व्यर्थेति सूचितं यदि तेभोगार्थं गृहादिकमपि कुर्वन्ति तदपि कालेन व्यर्थंनश्यतीत्यर्थः ऋषयोमंत्रद्रष्टारः भगवांस्तारशेभ्यः प्रसन्नो भूत्वा सत्यादिलोकेष्विह वा किंचित्प्रसादं प्रयच्छति स्वोक्तनिवृत्तिमार्गकरणात्तदानेदमस्माकमपेक्षितमिति यदि ततो विमुखास्तदेह संसरन्ति ते हि बालावाक्यार्थमेवविचारयंति न तु तस्योपपत्त्यादिकं कथमस्य जीवस्य ब्रह्मभावो भवतीति वाक्यानां तात्पर्याज्ञानात् अत्र ब्रह्माण्डे तेषामानन्दांशः प्रकटो न भवत्येव सर्वार्थे मायाजवनिकायाः प्रसारितत्वात् तथा भगवत्सायुज्यमपि भगवत्प्राकट्याभावात् ज्ञानमार्गस्य भगवतो वश्यत्वापादकत्वाभावात्यापि सद्यो मुक्तिरुक्ता । इहैव समवलीयन्ते प्राणाः ब्रह्मैव सन् ब्रह्माप्येति तदपि स्वातन्त्र्यभक्त्या भगवत्सायुज्यम् अतएव वेदव्यासः सकलवेदार्थाभिज्ञोज्ञानफलत्वेन सद्यांमुक्तिं नोक्तवान् किंतु ब्रह्मविदोऽर्चिरादिमार्गेणब्रह्मलोकस्थितिरेव फलत्वेनोक्ता अपुनरावृत्तिश्च॥ तदेव फलं भगवद्दत्तं तदनङ्गीकारे मनसा योगेन वा संसृतिरेव भवत्यतो ब्रह्मभावनायामपि न संसारनिवृत्तिः नन्वेवं सति भक्तानामपि संसारो न निवर्त्तेत उत्तमानामपि विष्णुलोकप्राप्तिः कृत्रिमवैकुण्ठगमनं वा भवेत् मायाजवनिकायाः सिद्धत्वाद्योगेन ब्रह्माण्डभेदस्तुफलप्रकारोऽयंनिरूपितः ॥ १० ॥

ननु तत्राधिकारी कश्चित्संभवति ब्रह्मणा सह तु ब्रह्माण्डनाशात् तस्मान्मुख्यभक्तिमार्गोऽपि न शीघ्रपुरुषार्थसाधक इत्याशङ्क्याह त्वं भावयोगेति । भावःप्रेमलक्षणा भक्तिः रतिर्देवादिविषयिणी भाव इति समुदायार्थत्वात् प्रीतिस्तु माहात्म्यज्ञानादेव सएव योगः विहित उपायरूपो भवति अन्यस्त्वनुपायः कामादिना जातः तत् प्रमेयबलमिति वक्ष्यते प्रमाणबलेत्वेषैव व्यवस्था अतो भावयोगेन परिभावितं परितः शोधितं भगवद्विषयकमाहात्म्यज्ञानपूर्वकस्नेहः यदि हृदये सहजो धर्मो भवति तदा तद्धृदयं सरोजं भवति प्रेमजले तदेवोद्गतं भगवदासनौपयिकं कमलं भवति तस्य च निदर्शनं यदि वैपयिकाः केऽपि न स्फुरन्ति तदापि चेत्प्रेम्णा पूर्ववत्पुनर्भाव भवति तदा भगवांस्तत्र तिष्ठति श्रुतेन गुणश्रवणेन श्रवणसाधनेन्द्रियेण वा ईक्षितोमार्गो येन यदेवं श्रवणं रिक्तं भविष्यति तदा भगवता निर्गमनार्थं मार्गोदृष्ट एव नान्विति कोमलसंबोधनं निर्गमनार्थे नाथेति युक्तिः भगवांस्तेषां पतिः सतु भार्यागृहेतिष्ठत्येव

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

परमेतावान्विशेषः पुंसामयं पतिः ननु तेषां ब्रह्मसायुज्ये आक्षिप्ते हृदये भगवत्स्थितिः कुत्रोपयुज्यते तत्राह ॥ यद्यद्धियेतिहेउरुगाय! उरुभिर्गीयत इत्यनेकप्रकारेण निरूपितानन्तमूर्ते ते तव यद्रूपं भक्ता विभावयन्ति तत्तद्वपुर्ब्रह्म वैकुण्ठरूपं व्यापिवैकुण्ठरूपमवतारूपं वा तदेव प्रकटीकरोषि तत्र हेतुः सदनुग्रहायेति संश्चासावनुग्रहश्च ज्ञानिष्वनुग्रहमात्रमत्र सन्ननुग्रहोऽबाधितोऽनुग्रहः तदात्रैव भगवति सायुज्यादिकं सर्वमेवोपपद्यते भक्तेच्छानुसारेण ॥ ११ ॥

एवं ज्ञानभक्तिमार्गौ निरूप्य साधननिरूपणे भक्तिसाधनापेक्षया ज्ञानमार्गसाधनं भगवत्तोषहेतुरुत्तमइत्याह नातिप्रसीदति साधनभक्तौ देवा मुख्याधिकारिणः दिव्यानि पुष्पादीनि साधनानि तैर्न प्रसीदति प्रसन्नोऽपि तेभ्यः कामितं फलं प्रयच्छन्नप्यत्यन्तं न प्रसीदति इतिभावः तत्र हेतुः हृदि बद्धकामैरिति प्रसादस्तु यदिभगवांस्तद्धृदये समागत्य तिष्ठति तांश्च स्वकीयान्मन्यते तत्र तैर्हृदये भगवत्स्थाने काम एव बलाद्बद्धोवर्तते सहितश्चेत् कामो भवेत् ॥ अन्ततो भगवानपि दूरीकुर्यात् सच बद्धः कामः कस्यचिन्नाशंकृत्वा निवर्त्तते बद्धोहि स्वकीयं सर्वस्वंप्रच्यच्छत्यतो दैत्यानां वधेच्छया पूजितो भगवान्दैत्यवधं कृत्वापि प्रसन्नो न भवति तत्र हेतुः नानाजनेष्ववहितः सुहृदन्तरात्मेति तर्हिकेन प्रसीदतीत्याशङ्क्याह यत्सर्वभूतदययेति यद्यथा सर्वभूतदयया भगवान्परीतुष्यति सर्वभूतेषु साधारणी दया ननु विशिष्टा अशक्यत्वात् स्वचित्ते तेषां हितभावनं भगवत्कृपाप्रार्थना अनिषिद्धोवादैहिकः यदेवैकं कार्यं सर्वेषामेव हितं भवति तद्भगवत्तोषहेतुः तर्हि सर्वे तदेव कथं न कुर्वन्ति सुलभत्वाच्चेत्याशङ्क्याह असदलभ्ययेति । इयं सर्वभूतदया असतामलभ्यैव न कदाचिदपि तेषां हृदयेदयोत्पद्यत इत्यर्थः एतद्देवासल्लक्षणम् उभयत्र हेतुत्रयं यतोऽयं भगवान्नानाजनेषु सात्विकादिनानाभेदभिन्नेष्ववहितः सावधानो भूत्वा तत्रस्थितः सभगवांश्चेत् क्वाचइर्वातिष्ठेत्तदा क्वचित्पूजया संतुष्टोभवेत्क्वाचिदपराधे क्वचित्पूजायां नसंतुष्यति नहि पादे ताडितः शिरसि पूजितस्तुष्यति किंच अयं सर्वेषां सुहृदतः क्वचिदपराधेऽपि न संतुष्यति अन्तरात्मा चायम् अन्तः करणकृतैरेव पूजासाधनैः तुष्यति न बहिष्करणे अतो येनैव प्रकारेण भगवान्परितुष्यति तदेव साधनमन्यत्तु परंपरया अपरितोषहेतुस्त्व साधनमेवेति निश्चयः ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

ये चान्ये पश्वादितुल्याः स्वीयहिताहितं किमपि न जानन्ति तांस्तु शोचास्येवेत्याह । क्षुच्च तृट्च त्रिधातवः वातपित्तश्लेष्माणस्तैरिमाः प्रजाः इतरेतराच्च पुत्रकलत्रादिष्वपि परस्परतोऽर्द्यमानाः कामाग्निना अच्युतया अनवच्छिन्नया रुषा सुदुर्भरेति द्वयोरेव विशेषणम् अर्द्यमानाःप्रजाः पश्यतो मम मनः सीदति हन्त हन्त कथमासां निस्तारो भवितेत्यवसीदाति ॥ ८ ॥

नन्वेवम्भूतायाः संसृतेरवस्तुभूतत्वादनया कथमवसीदसीति तत्राह यावदिति । यावदात्मनो जीवस्य इदं पृथक्त्वं देहादिभाव पश्येत् अनुभवेत् । भगवत इन्द्रियार्थ रूपाया मायाया बलं यत्र तत् तावत् संसृतिर्व्यर्थाप्यवस्तुभूतापि न प्रतिसंक्रमेत नोपरमेत् । दुःखनिवहं प्रापयन्ती यतः क्रियाणां कर्मणामर्थः फलं यतः सा ॥ ९ ॥

नचाज्ञानकल्पितायाः संसृतेर्ज्ञानेनैवोपराम इति वाच्यं यतो ज्ञानिनोऽपि भक्तिरहिताः संसरन्तीत्याह अह्न्येति । युष्मत् प्रसङ्गविमुखा ऋषयो ज्ञानिनोऽपि एवम्भूताः सन्तः संसरन्तीत्यन्वयः मुनय इतिच पाठः । कथं भूताः अह्नि आपृतानि नाना व्यापारयुक्तानि आर्त्तानिच करणानीन्द्रियाणि येषां तथा भूताः दैवेन आहता अर्थरचना भोग्यवस्तु प्रतिपादनानि येषां ते । एवञ्च दैवेन त इत्यनेन कर्मिणः क्षुत्तृड्त्यादिना मूढाः अह्न्यापृतेत्यनेन ज्ञानिन इति त्रिविधाः संसारिण उक्ताः ॥ १० ॥

भक्तास्तु ज्ञानं विनापि संसारं निस्तरन्तीति किं वक्तव्यं यतो भक्त्या त्वामप्यधीनी कुर्वन्तीत्याह भक्तियोगेन परि सर्व्वतोभावेन भाविते वासिते"भावितं वासितं त्रिपु"इत्यमरः । यद्वा हे भक्तियोग परिभावित! भक्तियोगेनैव परि सर्व्वतोभावेन भावितः प्रकटीकृतो भवतेर्ण्यन्तान्निष्ठया भक्तियोग एव त्वत्प्रकटीभवनस्य प्रयोजकः स्यादित्यर्थः । अतएव तेषां हृत्सरोजे आसने उपविश्य तिष्ठसि न ततो निःसरसि नापैषि नाथेति पूर्व्वोक्तेः आदौ गुरुमुखात् श्रुतः पश्चाद्दीक्षितः साक्षात् कृतश्च पन्था यस्य सः । येन पथा त्वं हृत्सरोजमायातोऽसि तं पन्थानं साधनभक्तिप्रकारं त एव सुष्ठुपरिचिन्वन्तीति ध्वनिः । अतो यस्य त्वत्प्राप्तीच्छा वर्त्तते स ततएव पन्थानं परिचिनोत्वित्यनुध्वनिः । किञ्च श्रवणं विनापि त्वद्भक्ता मनसा यद्यद्वपुः रूपं स्वेच्छया ध्यायन्ति तत्तत् प्रणयसे प्रकटयसीति स्वामिचरणाः । यद्वा ते साधकभक्ताः स्व स्व भावानुरूपं यद्यद्धिया भावयन्ति तत्तदेव वपुस्तेषां सिद्धदेहं प्रणयसे प्रकर्षेण तान् प्रापयसि अहो ते स्वभक्तपारवश्यमिति भावः ॥ ११ ॥

तेष्वपि निष्कामभक्तानामेवातिश्रैष्ठ्यं ननु सकामानामित्याह नातिप्रसीदति भवानिति शेषः । सकामानां स्वार्थपरत्वादेव सर्व्वभूतेषु दयाया अभावमेवातिप्रसादाभावे हेतुं व्यञ्जयन् निष्कामानान्तु परार्थपरत्वात् सर्व्वभूतदया साहजिकीत्यतिप्रसादोऽपि साहजिक इत्याह यद्यथा सर्व्वभूतदयया अतिप्रसीदति । असतामलभ्यया दयया अतिप्रसादे हेतुः एकएव भवान् नानाजनेष्ववहितः कृतावधानः यतः सुहृत् मद्भक्तकृपया भक्तिप्राप्त्या एते निस्तरन्तु इति तेषां हितैषी । नन्वेवञ्चेदहमेव स्वयं कृपया तान् कथं नोद्धरामि तत्राह अन्तरात्मा त्वं स्वभक्त एवैतत् यशोदानार्थं जगदुद्धारिणीं स्वकृपाशक्तिं तेषु निधाय सर्व्वत्रान्तर्यामिस्वरूपेण स्वयमौदास्यमेवावलम्बसे इत्यर्थः । एवञ्च सुहृदन्तरात्मेति पदाभ्यां क्रमेण नैर्घृण्यवैषम्यदोषौ परमेश्वरस्य पराहतौ भक्तवात्सल्यञ्च द्योतितम् । नन्वेवं सर्वमुक्तिप्रसङ्ग इति वाच्यं सर्वभूतदययेत्यत्र छत्रिणो गच्छन्तीतिवत् सर्व्वशब्दस्य प्राचुर्य्यमात्रार्थपरत्वेनाभिधानात् भगवद्भक्तकृपाया अपि प्रायः खल्वसार्व्वत्रिकत्वदर्शनात् । यद्वा भक्तेन सर्व्वभूतेष्वेव दयाकार्य्यैव तदापि न सर्व्वे मुक्तिर्द्रष्टव्या । नहि सर्व्वत्रैवोप्तान्यपि बीजान्युपरक्षारादि भूमिष्वपि प्ररोहन्तीति नारदादीनामपि दक्षादिषु कृपायाः फलवत्त्वादृष्टेः ॥ १२ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

क्षुच्च तृट्च त्रिधातवश्च वातपित्तश्लेष्माणः तैः इमाः प्रजाः ८ भगवतः इन्द्रियार्थरूपा या माया तया बलं यस्य तत् त्वन्मायाकारितम् आत्मनः पृथक्त्वं देहादिभावं यावत्पश्यति तावदसौ क्रियाकर्मप्रवाहः अर्थः प्रयोजनं यस्याः सा संसृतिः जन्ममरणप्रवाहलक्षणा व्यर्था परमार्थशून्या अपि जन्ममरणस्य आत्मन्य-

पुंसामतो विविधकर्मभिरध्वराद्यैर्दानेन चोग्रतपसा व्रतचर्यया च ।
आराधनं भगवतस्तव सत्क्रियार्थो धर्मोऽर्पितः कर्हिचिद्ध्रियते * न यत्र ॥ १३ ॥
शश्वत्स्वरूपमहसैव निपीतभेदमोहाय बोधधिषणाय नमः परस्मै ।
विश्वोद्भवस्थितिलयेषु निमित्तलीलारासाय ते नम इदं चकृमेश्वराय ॥ १४ ॥
यस्यावतारगुणकर्मविडम्बनानि नामानि येऽसुविगमे विवशा गृणन्ति ।
तेनैकजन्मशमलं सहसैव हित्वा संयान्त्यपावृतमृतं तमजं प्रपद्ये ॥ १५ ॥
योवा अहं च गिरिशश्च विभुः स्वयं च स्थित्युद्भवप्रलयहेतव आत्ममूलम् ।
भित्त्वा त्रिपाद्ववृध एक उरुप्ररोहस्तस्मै नमो भगवते भुवनद्रुमाय ॥ १६ ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

घटमानत्वात् निश्चितं दुःखनिवहं क्षुत्तृडादिदुःखसमूहं वहति प्राप्स्यति ॥ ९ ॥

ज्ञानिनोऽपि त्वय्यभक्ताश्चेत्तदा तेऽपि दुःखभागिन एवेत्याह अह्नीति अह्नि आपृतानि व्यापृतानि च तानि च तान्यार्त्तानि करणानी न्द्रियाणि येषां ते क्षणे क्षणे भग्ना निद्रा येषां ते दैवेन आहताः अर्थरचना येषां ते ॥ १० ॥

पुनर्भक्तानां कृतार्थतामाह त्वमिति । भावयोगेन भक्तियोगेन भाविते शोधिते पुंसां भक्तानां हृत्सरोजे आस्से तिष्ठसि श्रुतेन तत्स्वरूपगुणादिश्रवणेन ईक्षितः दृष्टः पन्थाः यस्य सः भगवतो भक्तवश्यतामाह ते सन्तः यद्यद्वपुः रूपं धिया विभावयन्ति ध्यायन्ति तत्तद्वपुः रूपं सतां भक्तानामनुग्रहाय त्वं ननु अहो प्रणयसे प्रकटयसि ॥ ११ ॥

भक्तेष्वपि निष्कामा भक्ता भगवतोऽति प्रिया इत्याह नातीति । एकः सर्वात्मा नानाजनेषु स्वात्मकेषु अन्तर्यामितयाऽवहितः संस्थितः तेषु भगवदात्मकेषु भगवदधिष्ठितेषु भगवद्दृष्टया निष्कामाः सन्तः त एव दयां कुर्वन्ति नतु असन्तोऽतोऽसदलभ्यया सर्वभूतदयया निष्कामभक्तकर्तृकया प्रसीदति यत्‌यथा तथा हृदिवद्धकामैः इतरस्य तु का कथा सुरगणैः देवसमूहैः कर्तृभिः उपचितैरूर्जितैरुपचारैराराधितोऽपि कृतज्ञत्वात्प्रसन्नोऽपि नातिप्रसीदति अत्यन्ततः प्रसन्नो न भवतीत्यर्थः ॥ १२ ॥

---

भाषाटीका ।

हे उरुक्रम भगवन् ! क्षुधा तृषा वात पित्त कफ शीत गर्मी पवन दुस्तर कामाग्नि अक्षय क्रोध इन उपद्रवों से तथा परस्परके वैर से निरंतर पीडित इन प्रजा ओं को देखकर मेरा मन बडा दुखित होता है ॥ ८ ॥

हे ईश ! जब पर्यंत यह मनुष्य भगवान्‌की इंद्रिय विषय रूपी माया के बल से अपने को पृथक् देहादि रूप देखता है तब पर्यंत क्रिया के फल देने वाली व्यर्थ भी होकर बडे दुःख देने वाली ( संसृति ) संसार नहीं निवृत्त होता है ॥ ९ ॥

हे देव ! दिनमे अनेक व्यापारों मे लगने से सब इंद्रिये

भाषाटीका ।

व्याकुल हैं जिनकी रात मे सोने पर नान प्रकार के मनोरथों से क्षण क्षण मे जिन की निद्रा नष्ट होती है खोटे प्रारब्धों से जिनके सब उद्यम नष्ट होजाते है इस प्रकार से आपके चर्चा से विमुख होनेसे ऋषि लोग भी इस संसार मे घूमते रहते हैं पार नहीं होतेहैं ॥ १० ॥

हे नाथ हे ! ( उरुगाय ) कीर्ति ग ने योग्य भगवन् ! जिन पुरुषों ने शास्त्र के श्रवण से आपके मार्ग को जाना है उनके भक्ति योग से परि शोधित हृदय कमल में आप विराजमान रहते हो यह बात निश्चित है वे भक्त पुरुष आपके जिस जिस स्वरूप का ध्यान करते हैं आप सत्पुरुषों के अनुग्रह के हित उसी स्वरूप को प्रगट करते हो ॥ ११ ॥

हे भगवन् ! आप सब के सुहृद हो सब के अंतर्यामी हो सबके भीतर प्रविष्ट हो और एक स्वतंत्र हो हृदय मे नाना कामना वाले देवतों को अनेक उपचारों से पूजा करने पर भी आप प्रसन्न नहीं होते हो परंतु असत्पुरुषों को दुर्लभ जो सर्व भूतों पर दया तिससे आप अति प्रसन्न होतेहो ॥ १२ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

यतः सकामानां भवाच्चाति प्रसीदत्यतः कामप्राप्तिः क्रियाणामुत्तमं फलं नभवति किंतु त्वत्प्रीणनमेव कामसंयोगस्त्ववान्तरफलं न प्ररोचनार्थमित्याह पुंसामिति । भगवतस्तवाराधनमेव संक्रियार्थश्च श्रेष्ठं क्रियाफलम् श्रेष्ठत्वे हेतुः यत्र त्वय्यर्पितो धर्मो न कदाचिद्ध्रियते न नश्यति कामार्थस्तु धर्मः कामं दत्वा नश्यतीत्यर्थः ॥ १३ ॥

अतस्त्वामेव वयं नता इत्याह । शश्वत्सर्वदा स्वरूपचैतन्येन निरस्तभेदभ्रमाय पुनश्च बोध एव धिषणा विद्याशक्तिर्यस्य धिषणामाश्रयः अत एव परस्मै अत्र हेतुः विश्वोद्भवादिनिमित्तं माया तस्या लीला विलासस्तया रासः क्रीडा यस्य ते तुभ्यं नमः नमनं चकृम कृतवन्तो वयम् ॥ १४ ॥

नामग्रहणमात्रतः कैवल्यप्रदत्वेनैश्वर्यं व्यञ्जयन्नमस्करोति ति अवतारादीनां विडम्बनमनुकरणमस्ति येषु तत्रावतारविडम्बनानि

* यद्यप्येतद्देशीय मूल श्रीधरी सिद्धान्तप्रदीनेषु ह्रियते इति पाठः दीपनेऽपि तथैवस्यात् तथापि म्रियते इति वीरराघवाचार्य पाठः तथैव दाक्षिणात्य श्रीधरपाठोऽपि तदनुसारेणैव वङ्गदेशीय मूल श्रीधर जीवगोस्वामि चक्रवर्ति पाठः ह्रियते इति वल्लभाचार्यपाठः क्रियते इतितु विजयध्वजपाठः ।

श्रीधरस्वामिकृत भावार्थदीपिका ।

नि देवकीनन्दन इत्यादीनि गुणविडम्बनानि सर्वज्ञोभक्तवत्सल इत्यादीनि कर्मविडम्बनानि गोवर्धनोद्धरणः कंसारातिरित्यादीनि असुविगमेऽपि विवशा अपि गृणान्त्युच्चारयन्ति केवलम् शमलं पापम् अपावृतं निरस्तावरणम् ऋतं ब्रह्म प्राप्नुवन्ति ॥ १५ ॥

तत्र गुणावतारकर्माणि दर्शयन्प्रणमति । योवै एकस्मिन्पात् प्ररोहा ब्रह्मादयः पादाः स्कन्धा यस्य प्रत्येकं च उरवः प्ररोहाः शाखोपशाखा मरीच्यादिमन्वादिरूपा यस्य तथाभूतः संववृधे तस्मै भुवनाकाराय द्रुमाय नमः किंकृत्वा ववृधे आत्मा स्वयमेव मूलमधिष्ठानं यस्य तत्प्रधानं भित्वा गुणत्रयरूपेण विभज्य त्रिपात्त्वमेवाऽऽह अहं ब्रह्मा गिरिशश्च स्वयं विभुर्विष्णुश्चेति स्थित्युद्भवप्रलयहेतवो ये वयम् एवं त्रिपाद्भूत्वा यो ववृध इत्यर्थः ॥ १६ ॥

---

श्रीराधारमणदास गोस्वामि विरचिता दीपिन्याख्या दीपिका टिप्पणी ।

श्रीयानमेवाराधनमेवोत्तमं फलं कामसंयोगः स्वर्गकामो यजेतेत्यादिमनोरथसंबन्धः अवान्तरफलेन गौणफलेन प्ररोचनार्थं खण्डलड्डुकादिभिः बालस्येव प्रलोभनार्थमेव धर्मो यागादिः न नश्यति किन्त्वाराधनरूपेण परिणमतीत्यर्थः ॥ १३ ॥

अतस्त्वत्प्रीतेः परमपुरुषार्थत्वात् स्वरूपचैतन्ये नैव स्वरूपभूतज्ञानेनैव निरस्तस्सजातीयविजातीयभेदभ्रमो यस्मिंस्तथा भूताय अन्यत्र विद्याशक्तिः प्राकृतसत्त्वात्मिका भगवति तु बोधश्चिच्छक्तिरेव विद्याशक्तिर्यस्य पूर्वार्थे बोधधिषणाशब्दयोस्सपर्यायत्वेन पौनरुक्त्यप्रतीतिरतो यद्वेति तथा स्वरूपभूतो बोधो ज्ञानशक्तिस्तस्याश्रयाय अत एव चिच्छक्त्याश्रयत्वादेव मायातःपरस्मै तदनभिभूताय तदुक्तं श्रीमदर्जुनेन मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनीति अत्र परत्वे विलासः सृष्ट्यादिक्रियोत्पादकरजआदिवृत्तिविशेषः तया लीलया तथा च नमनादिभक्त्यैव त्वत्प्रीतिर्नान्यथेत्यर्थः ॥ १४ ॥

आदिना यशोदानन्दनेत्यादि गुणविडम्बनेष्वादिना दयालुर्दीनबन्धुर्दामोदर इत्यादीनि पुनरादिना गोविन्दमधुसूदनादिग्रहः असुविगमेऽपीत्यपिना तदानींतनमात्रत्वेऽपि अशुद्धवर्णत्वेऽपि तथा सामर्थ्य व्यञ्जितम् विवशा अपि वशः कान्तावित्यमरसिंहात्तदिच्छारहिता अपि अजामिलादिवत्केनचित्कारणान्तरेणापीत्यर्थः अत एव केवलमुच्चारयन्ति न तु तदर्थमाधुर्यादिग्रहः १५ ॥

तत्र तेषु कर्मसु मध्ये एवंभूत्वेत्यध्याहारयोजनागौरवादित्यर्थ इत्युक्तम् ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

यतोऽभिसंहितफलैरुपचारैर्नातिप्रसन्नः अत एव सत्कर्मणामीश्वराराधनवेषेणानुष्ठानं कार्यमित्याह पुंसामिति । अतोऽभिसंहितफलानां कर्मणामीश्वरप्रसत्तिहेतुत्वात् संवात्मकब्रह्मोपासनस्यैव तत्प्रसादहेतुत्वाच्च हेतोः पुंसां भगवन्तमाराधयितॄणां संवन्धिभिरध्वरार्थैर्यज्ञादिभिःनानाविधश्रौतस्मार्तकर्मभिर्दानादयः प्रदर्शनार्थाः तपःकृच्छ्रचान्द्रायणादि व्रतचर्या व्रतानुष्ठानमेभिर्भगवतस्तवयदाराधनं तत्सत्क्रियार्थः सत्क्रियायां सत्कर्मणामर्थः प्रयोजनं त्वदाराधनैकप्रयोजनवेषेण सर्वाणि कर्माण्यनुष्ठेयानीत्यर्थः एवं विध-



श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ॥

कर्मानुष्ठानस्याक्षयिष्णुफलसाधनत्वमाह । धर्मः यज्ञादिरूपः यत्र यस्मिंस्त्वय्यर्पितः त्वत्सत्कारैकप्रयोजनः ननु स्वर्गादिफलद इति बुद्ध्या त्वय्यर्पितः कर्हिचित्कदाचित्कथंचिदपि न म्रियते न विनश्यति भगवदुपासनद्वारा नित्यपुरुषार्थहेतुर्भवतीत्यर्थः तथा च गीतं भगवता "नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते । स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् इति ॥ १३ ॥

एवमनभिसंहितफलकर्मयोगस्य भगवदाराधनरूपस्याक्षयफलसाधनत्वमभिधाय तस्यैव प्रकृतिविविक्तात्मयाथात्म्यज्ञानपूर्वकानुष्ठेयत्वमुभयोरपि भगवदुपासनाङ्गत्वमुपासनस्य कारणविषयत्वं चाभिप्रयन्नमस्करोति शश्वदिति । शश्वत्सदा स्वरूपमहसैव प्रकृतिविविक्तात्मस्वरूपयाथात्म्यज्ञानेनैव भेदः देवमनुष्यादिभेदः मोहः देहात्मभ्रमस्वतन्त्रात्मभ्रमादिर्निमित्तमज्ञानम् आदिशब्देन तत्प्रयुक्तशोकादयो विवक्षिताः निरस्ता भेदादयो येषां योगिनां तेषु योऽवबोधः स्वस्वरूपविषयकं ज्ञानं धिषणा भगवदुपासनात्मिका बुद्धिः एते स्वप्रत्युपायभूतेयस्य तस्मै प्रकृतिविविक्तात्मस्वरूपयाथात्म्यज्ञाननिरस्तभेदमोहप्रभृति सांसारिकधर्मयोग्युपदृतज्ञानयोगकर्मयोगाङ्गकोपासनाविषयभूतायेत्यर्थः यद्वा चतुर्थ्यन्त पाठे स्वरूपाविर्भावेन स्वस्मिन्नसंस्पृष्टदेवमनुष्यादिभेदरूपमोहाय अन्तरात्मतयावस्थितस्याप्यनात्मगतदोषास्पृष्टायेत्यर्थः अत एव परस्मै प्रकृतिपुरुषविलक्षणाय तत्र हेतुःविश्वस्य जगतःस्थितिलयेषु निमित्तभूता या लीला क्रीडा तस्या रागो रसो यस्य तस्मै ईश्वराय नियन्त्रे प्रकृतिपुरुषयोरसंभावितस्वलीलैकप्रयोजनजगद्व्यापारायेत्यर्थः अनेन प्रकृतिपुरुषविलक्षणतन्नियन्तृजगत्कारण विषयकोपासनमेवमुक्तिसाधनमित्यभिप्रेतम् एवंभूताय ते तुभ्यं नमश्चक्रमहे नमः करवाम ॥ १४ ॥

ननु परिपूर्णस्यावाप्तसमस्तकामस्य लीलार्थमपि जगद्व्यापारो नोपपद्यत इत्याशङ्क्य भवभयाभितप्तसांसारिकजीवानुजिघृक्षया संघटते इत्यभिप्रयंस्तदवतारगुणकर्मणामनुवचनस्य तत्प्राप्त्युपायतामाविष्कुर्वञ्छरणं व्रजति यस्येति । यस्य तवावतारगुणकर्मणां विडम्बनान्यनुकरणानि देवकीनन्दन दाशरथे सर्वज्ञ भक्तवत्सल गोवर्द्धनधर कंसारे रावणान्तक इत्यादीन्यसुविगमे प्राणोत्क्रमणकाले विवशाः परवशाः अपि ये गृणन्त्युच्चारयन्ति तेऽनेकजन्मार्जितं शमलं पुण्यपापरूपं सहसाऽचिरेणाहत्वा विधूयापावृतं निरस्तावरणम् ऋतं ब्रह्म संयान्ति प्राप्नुवन्ति तमजं कर्मायत्तोत्पत्त्यादिरहितं त्वां शरणमुपायं प्रपद्ये ऽध्यवस्यामि अनेन भक्त्या ऽसुविगमानुस्मरणादीनां तत्प्रसत्तिमात्रहेतुत्वम् उपायत्वं तु भगवत एवेत्यभिप्रेतं तथा च श्रूयते "अमृतस्यैषसेतु,, रिति सेतुः प्रापकः स्वकीयावतारगुणकर्मप्रतिपादकनामाद्यनुस्मरणादिना निस्तरेयुरित्यनुजिघृक्षयैव भगवतो जगद्व्यापार इति भावः ॥ १५ ॥

भवतु भगवद्गुणकीर्तनादेस्तत्प्राप्त्युपायत्वमथापि सृष्ट्यादिव्यापाराणां चतुर्मुखादिकर्तृकत्वश्रवणात्कथं विश्वोद्भवस्थितिलयेषु निमित्तलीलारसायेत्युक्तमत आह य इति । प्रथममेकः अविभक्तनामरूपः स्थित्युद्भवप्रलयानां हेतवः कर्त्तारः स्वयं विभुर्भगवानहं ब्रह्मा गिरिशो रुद्रश्च यो वै भगवानेवेत्यर्थः हिरण्यगर्भरुद्रतन्मध्यवर्त्यवतारवरूपवानित्यर्थः स्वयमित्यनेन स्थितिस्वावताररूपेण सृष्टिसंहारौ ब्रह्मरुद्राख्यजीवान्तः प्रवेशेन करोतीति द्योतितं सृष्टिं ततः करिष्यामीति स्मरणात् स्थित्युद्भवप्रलयहेतवे इति चतुर्थ्यन्तं वा भावप्रधानो निर्देशः स्थित्यादिकर्तृत्वाय हिरण्य

### श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

गर्भरुद्रस्वावतारतया भूत्वेत्यर्थः आत्ममूलमात्मैव मूलं यस्य तदात्ममूलमकार्यमित्यर्थः एवं भूतं हि त्रिपाद्विभूतिं हित्वाऽतीत्य भित्वेत्यपि पाठे ऽयमेवार्थः यद्वा स्थित्यादिहेतुभूतस्वावतारादिरूपेण त्रिस्कन्धः आत्ममूलं प्रधानं भित्वा महदादिसमष्टिप्रभृतिव्यष्टिपर्यन्तं परिणमय्य उरुप्ररोहः देवतिर्यङ्मनुष्यस्थावरादिरूपाः शाखोपशाखाः पत्रपुष्पफलादयो यस्य स एवं भूतो यः प्रववृधे तस्मै भुवनद्रुमाय भुवनाकारद्रुमाय भगवते नमः हिरण्यगर्भादिरूपेण सृष्ट्यादिव्यापारस्त्वयैव क्रियत इत्यभिप्रायः ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

न केवलं निष्कामतया कृतं भगवत्प्रसादजनकं किंतु भगवदर्पणसहितमित्याह पुंसामिति । पुरुषैर्यत्र येषु यज्ञादिषु सत्क्रियार्थस्तव पूजाप्रयोजनादृष्टाख्यो धर्मो यत्र यस्मिन् त्वय्यर्पितो न क्रियते तेषां पुंसामध्वराद्यैः क्रियमाणं भगवदाराधनं प्रसादजनकं न भवतीत्यन्वयः ॥ १३ ॥

हरेस्तत्त्वाज्ञानादुत्पन्नो यो न ज्ञायते गतिरित्यादिरूपः संसारस्तन्निवर्तकोपास्तौ तादृग्गुणोपसंहारः कर्तव्य इत्याह शश्वदिति । देवदत्तवद्देकदापि भेदमोहोऽस्तीत्यन्यथा प्रतीतिनिरासाय शश्वदिति परोपदेशमन्तरेण स्वरूपज्ञानेनैव "तद्ब्रह्मावेद अहं ब्रह्मास्मी"ति श्रुतेर्निपीतभेदमोहाय सम्यक् निरस्तेशापूर्णतादिषड्विधभेदमोहाय

> ईशस्यापूर्णताज्ञानं विष्णोरन्यस्य चेशता ।
> भेदस्तस्यावतारेषु जीवस्येशत्वमेवच ॥
> तथा जीवत्वमीशस्य जडाभेदस्तयोरपि ।
> भेदमोह इति प्रोक्तः स सदा न हरेः क्वचित् ॥
> अन्येषां तत्प्रसादेन शनैर्याति सतामपि ॥

इत्यादिवचनात्स्वतोमोहाभावेऽपि प्राकृतबुद्ध्या स स्यादिति तत्राह बोधेति । अप्राकृतज्ञानरूपबुद्धये नन्वेतज्जीवस्याप्यस्तीत्यत उक्तं परस्मादिति । स्वानियतकालप्रकृतित्वेन तदुत्तमत्वेन ततोविलक्षणत्वेन दूरीकृततदुपद्रवत्वेन जीवस्य तद्वशत्वात्कर्मवशत्वात्तन्मग्नत्वात् अलौकिकं तद्वस्तु लक्षणमन्तरेण ज्ञातुमशक्यमिति मन्वानो जगत्कर्तृत्वादिलक्षणविशिष्टत्वेन नमति विश्वेति । निमित्तभूता लीला शृङ्गारचेष्टा तस्या आरामाय क्रीडावनाय ते तुभ्यम् एवं विधलक्षणवतः किंना मेत्यत उक्तम् ईश्वरायेति प्राक्कालीनजन्मप्रचितपुण्यराशेरिदानीमपि भगवद्दर्शनं प्राप्तमिति सूचयितुं चकृमेति लिट्प्रयोगः ॥ १४ ॥

भगवतोऽवताराणां गतिरपि न ज्ञायत इत्येतदपि मतं दुष्टं यतो मूलस्वरूपवदवताराणामपि मुक्त्यादिदानसामर्थ्यं दृश्यते तस्मादिति भावेनाह यस्येति । यथा हरावततारभेदमोहोनास्तीति तथा तत्प्रसादात्तदीयेष्वपि नास्तीति द्योतयन्निति वा स्तौति यस्येति । असुविगमे प्राणप्रयाणकाले विवशा भक्तिविवशाः अनेन पूर्वाभ्यासपाटवं दर्शयति

> येभक्त्या विवशा विष्णोर्नाममात्रैकजल्पकाः ।
> तेऽपि मुक्तिं व्रजन्त्याशु किमुत ध्यायिनः सदा ॥

इति कैमुत्यन्यायसिद्धत्वा द्बलवत्प्रतिबन्धकात्तत्काले मुक्त्यभावेऽपि कालान्तरे निश्चितेति सहसेति अपावृतं स्वाच्छादिकमायावरणरहितं सृष्टिप्रलयादिषु विकारराहित्यादृतम् ऋतत्वे हेतुरजमिति ॥ १५ ॥

### श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

सृष्टिप्रलयहेत्वोर्भवतः शिवस्य च जाग्रतोः सतोर्हरेर्विद्द्रोद्भवादिलीलारामत्वं कथमिति तटस्थशङ्कां परिहर्तुमाह यो वा इति चशब्दः समुच्चयार्थाः अनन्तासनवैकुण्ठक्षीराब्धिस्थो हरिस्त्रिपादिति एकोहरिरात्मा नारायणो मूलं कारणं येषां ते आत्ममूलाः । योवा विभुः स्वयं विष्णुर्योवा अहं मदन्तर्यामी ब्रह्माख्यो यश्च गिरिशाख्यः शिवान्तर्यामी स्थित्युद्भवप्रलयहेतवो भूत्वा ऽवतीर्य सृज्यपदार्थानां नानाविधत्वात्तेषु अन्तर्यामित्वेनोरुप्ररोहोबहुरूपोववृधे तस्मै भुवनद्रुमाय नम इत्यन्वयः वृक्षसाधर्म्यकथनेन विकारित्वमुक्तमिति विभ्यच्चतुर्मुखो भगवत इत्याह नायं लोकद्रुमवर्द्धिकारी किंतु ऐश्वर्यादिगुणविग्रह इति तस्मा द्बुद्धावताराय तथोक्तमितिभावः वा इत्यनेन ।

> ब्रह्मादिभानो विष्णोस्तु तान्नयामकता भवेत् ।
> मत्स्यादितास्वभावस्तु नान्यथा क्वचिदिष्यते ॥

इति प्रमाणसिद्धिं सूचयता मत्स्यादिवदेतौ न साक्षात्स्वरूपे इति ज्ञापितम् ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

आस्तां तावत् पूजादौ निष्कामत्वं विविधकर्म्मादावपि तदेवोत्तममित्याह पुंसामिति । आराधनं प्रीणनम् । न म्रियते सा त्वत्प्रीतिं ददद्देव तिष्ठतीत्यर्थः ॥ १३ ॥

शश्वदिति । स्वरूपमहसा स्वरूपशक्त्या तद्वैलक्षण्येनैव निपीतो दूरीकृतो जीवादिभिः सह तव भेदे मोहस्तैः सह भेदो न सम्भवतीति भ्रमो येन त्वया तस्मै । तद्वैलक्षण्येन तेभ्यो भिन्नतया निश्चितायेत्यर्थः । अतएव बोधधिषणाय न तु जीववत् कदाचिद् बोधेनापि युक्तायेत्यर्थः ॥ १४ ॥

यस्यावतारेति । असुविगमेऽपीति । तदानीन्तन तन्मात्रत्वम् शुद्धवर्णत्वञ्च व्यञ्जितम् । विवशा इति । तदिच्छां विना केनचित् कारणान्तरेणापीत्यर्थः । वशः कान्ताविल्यमरः । तादृशशक्तिहेतुमाह अवतारेति । अवतारादिसदृशानि तत्तत्तुल्यशक्तीनीत्यर्थः । तत्रावतारविडम्बनानि नृसिंहेत्यादीनि गुणविडम्बनानि भक्तवत्सलेत्यादीनि । कर्म्मविडम्बनानि गोवर्द्धनधरेत्यादीनि । अ सच्चिदानन्दरूपं श्रीभगवन्तमेव । आत्मतत्त्व विशुद्ध्यर्थं यदा भगवान् ऋतं । ब्रह्मणे दर्शयन् रूपमित्युक्तेः ॥ १५ ॥ १६ ॥

---

### श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

एतदेव वदन् पूर्वोक्तानिरूपणमुपसंहरति पुंसामिति अ हेतोः पुंसामयमेव सत्क्रियार्थोयद्भगवतस्तवाराधनं विविधकर्मभिर्लौकिकैः वैदिकैः अध्वराद्यैर्यागपूर्तादिभिर्देवताप्रीति हेतुनिर्पितानि दानेनेति मनुष्यप्रीतिहेतुः उग्रं तपः स्वस्यैव प्रीतिहेतुर्देहस्य वा व्रतचर्या अन्तः करणस्य एवं लौकिकालौकिकभेदेन सर्वाणि कर्माणि तवाराधनरूपाणि तद्धेतवो वा भवन्ति तदा सत्क्रियार्थो भवति विहितक्रियाणां फलरूपं भवति ननुधर्मः स्वतः फलं भवति पुरुषार्थत्वादभ्युदयनिःश्रेयसहेतुत्वाद्वा तत्कथमुक्तं सर्वैर्भगवदाराधनं चेत्तदा फलमिति तत्राह धर्मोऽर्पित इति । भगवति अर्पितः समर्पितोधर्मः कदाचिदपि न द्रियते न विनश्यति भवति फलार्थं कृतोधर्मः स्वतन्त्रोवा "धर्मःक्षरति कीर्तनात्

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

हन्ति पुण्यं पुराकृतम् अब्द पुण्यं विनश्यति,. इत्यादि वाक्यैः तस्य नाशः श्रूयते तेन चेद्भगवानाराधितो भवति तदा भगवत् कार्यैर्निरूपितः भगवत्संबन्धेन नित्यतां प्राप्तः अतोऽक्षयफलदानार्थं तस्यापेक्षितत्वात्कदापि नम्रियते ॥ १३ ॥

एवं सर्वशास्त्रार्थं निरूप्य भगवन्तं नमस्यति षड्भिः शश्वादिति भगवतोनमस्यारूपाणिषड्भवन्ति अस्माद्ब्रह्मणःपूर्वतराणि नत्रैतदेवैकं रूपं शेषशायिनारायणः पुरुषोद्वितीयः सर्वतत्त्वप्रकृतिभर्ता पुरुषस्तृतीयः कालश्चतुर्थः यज्ञः पञ्चमः पुरुषोत्तमः षष्ठः तत्रैनद्धृदये परिदृश्यमानं तदावश्यकधर्मकीर्त्तनेन नमस्यति कदाचिदिदंशयानं रूपं मोहात्मकं भवेदित्याशङ्क्य तस्य मोहाद्यभावं निरूपयति । अथवैतदुत्तररूपं शयानंतु श्लोकद्वयेनाग्रे वक्ष्यति शश्वत्सर्वदा स्वरूपमहसैव निरन्तरं स्फुरता स्वप्रकाशेनैव नितरां पीतौ भेदमोहौ येन द्वयमेव जीवत्वसाधकं भेदोमोहश्च भिन्नश्च जीवोभवति मुग्धश्च । अतोजीववैलक्षण्यं दोषाभावेन गुणेन वैलक्षण्यमाह बोधधिषणायेति । बोध एवधिषणा बुद्धिर्यस्य जीवानां तु जडरूपा बुद्धिः अतएव परस्मै सर्वनियामकाय नियामकत्वमत्रनमने हेतुः । एवं स्वरूपमुक्त्वाकार्यमाह । विश्वस्योद्भवस्थितिलयेषु निमित्तायमाना या लीला तया रासःक्रीडा यस्य तस्यां वा रसमूहोयस्य सोऽक्षरात्मकोभवानेव नान्य इति वदन्नमस्यति इदं नमश्चकृम इति । नमस्कारं साष्टाङ्गं कुर्वन्निदमा निर्दिशति इदमिति चकृमेति स्वान्तर्गतैः । सर्वैरेव जीवैः सहितोनमस्करोमीति ज्ञापयति शिक्षार्थं चैतन्नमनमितिज्ञापयितुमाह ईश्वरायाति । सएव सर्वसमर्थः अन्यथा तत्कृपाव्यतिरेकेण जीवस्तत्कार्यं कथं कुर्यात् पुरुषं नमस्यन्पुरुषावतारान्सर्वानेव नमस्यति अथवा पूर्वश्लोके सामान्यभगवद्रूपकोर्त्तनेन नमनं विशेषास्तुषट् ॥ १४ ॥

तत्र प्रथमावताराः पुरुषादयस्ते जाता इति कस्यचिद्भ्रमोभवेत् तन्निवृत्त्यर्थं तस्य दोषान्परिहरन् नमस्यति यस्येति।अवताराः गुणाः कर्माणिच विडम्बयन्ति अनुकुर्वन्तीति देवकीनन्दन दयालो गोवर्द्धनोद्धरणधीरेति यानि नामानि ये प्राणिनः असुविगमे प्राणोत्क्रमणसमये एव विवशा अपि भूत्वा गृणन्ति ते पूर्वोपार्जितानेकशमलमपि तत्क्षणमेव हित्वा अपावृतमुद्घाटितकपाटमृतं ब्रह्मस्वरूपं संयान्ति एवं सर्वेषां सर्वपुरुषार्थहेतुं कर्त्तारं नमस्मीत्याह तमिति । अजमिति जन्माभावः तमिति गुणकर्माभावःसजातीयाःसजातीयं मन्यन्ते अत उत्पन्नानां सगुणानां कर्मकर्तॄणां स्वसदृश एवरोचत इति तादृशानि जन्मगुणकर्माणि प्रदर्श्य तान्मोचयति नतु तस्य तादृशं जन्म गुणाः कर्माणि वा आतोनिर्दोषपूर्णगुणविग्रहं तं प्रपद्ये शरणं गच्छामि तमनप्रपत्त्योरेकार्थता ॥ १५ ॥

एवं पुरुषं नत्वा सर्वतत्त्वसहितं प्रथमपुरुषं नमस्यति योवा अहमिति । योभगवान्त्रिपाद्वृधे तस्मै भुवनद्रुमाय नम इति संबन्धः पादत्रयमाह अहं ब्रह्मा चकारात्तपः प्रभृ नथः गिरिशोमहादेवः चकाराद्धर्मादयःविभुः समर्थः स्वयं पालकोविष्णुः एतेषां कार्यमाह स्थित्युद्भवप्रलयहेतव इति । एते त्रयो वै निश्चयेन यः पुरुष एव त्रिपादात्मनो मूलं प्रकृतिं भित्वा ववृध महदादिरूपेण मरीच्यादिरूपेण वा उरवोऽधिकाः प्ररोहा यस्य अधश्चोर्ध्वं तस्य प्ररोहाः अर्थोब्रह्माण्डमध्ये पृथिव्यादयः कश्यपादयश्च उपर्यावरणानि॥१६॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

भक्तौ यतो निष्कामाः श्रेष्ठाः अतः केवलभक्त्यशक्तावपि प्रधानीभूता लौकिकवैदिक कर्म्मार्पणरूपापि भक्तिर्निष्कामैव कार्य्येत्याह पुंसामिति । विविधकर्म्मभिर्लौकिकैः अध्वराद्यैर्वैदिकैश्च त्वदर्पितैराराधनं यत् करोषि यदश्नासीत्यादिना भगवता शिक्षितमित्यर्थः अत्र प्रधानीभूतायां भक्तौ लौकिकवैदिक निखिलकर्म्मार्पणं गुणीभूतायां वैदिकस्यैव नतु लौकिकस्य केवलायां लौकिकस्य तथा श्रवणकीर्त्तनादेश्च अर्पितस्यैव कारणमिति भेदो द्रष्टव्यः । सत्क्रियार्थस्तदेव सत्कर्म्मणां फलं कुतः । यत्र त्वय्यर्पितो धर्म्मः कर्हिचिदपि न म्रियते न नश्यति किन्त्वाराधनरूपेण परिणमति । कामार्थस्तु धर्म्मः कामं दत्वा नश्यतीत्यर्थः ॥ १३ ॥

एवमुपासनां द्विविधां भक्तानां निरूप्य पूर्व्वोक्तलक्षणां ज्ञानिभक्तयोरुपास्यं स्वरूपद्वयं प्रणमति सर्व्वदा स्वरूपचैतन्येनैव अगस्त्येनेव निपीतो भेदे मोहसमुद्रो यतस्तस्मै बोधस्य स्वरूपानुभवस्य हेतुर्धिषणा बुद्धिर्यतस्तस्मै निर्विशेषस्वरूपाय नमश्चकृम करवाम तथा विश्वोद्भवादिनिमित्तं या माया तस्मिन्नपि लीलया अवलोकनरूपया रासः सम्भोगो यस्य तस्मै सविशेषरूपाय । यद्वा हेनिमित्तकारणरूप ! लीलया रासो गोपीजनसङ्गतो लास्यविशेषो यस्य तस्मै । परार्द्धान्ते सोऽबुद्ध्यत गोपवेशो मे पुरस्तादाविर्बभूवेति श्रुतेः । कामदुघाङ्घ्रिपद्मं प्रदर्शयन्तमिति पूर्व्वोक्तेश्च सविशेषस्वरूपेष्वपि मध्ये श्रीकृष्णस्वरूपस्यैव परमपरिपूर्णत्वात् परमाश्रयत्वं ज्ञापितम् ॥ १४ ॥

उक्त लक्षणोपास्योपासना ज्ञान गन्धमपि विना नामाभासमात्रत एव पशुतुल्येभ्योऽपिजनेभ्यः स्वपददायित्वेन परमकृपैश्वर्य्यमाचक्षाणः सविशेषरूपएव स्वप्रपत्तिं विज्ञापयति यस्येति । अवतारादिसदृशानि तत्तुल्यशक्तीनीति सन्दर्भः । यद्वा । अवताररादीनां विडम्बनं नटादिष्वनुकरणमपि यैस्तानि । यद्वा । अवतारादि विडम्बनानि स्वभ्रातृपुत्रादि जीवविशेषवाचकत्वादवताराद्यनतुरूपाणीत्यर्थः । तत्र कृष्णोऽयंरामोऽयं नारायणोऽयमित्यादीन्यवतार विडम्बनानि दयालुः दीनबन्धुर्दामोदर इत्यादीनिगुणविडम्बनानि । गोविन्दो गिरिधरो मधूसूदनइत्यादीनि कर्म्म विडम्बनानि मामानि ये जना अजामिलादय इव प्राणविगममे विवशा अपि गृणन्ति केवलमुच्चारयन्ति शमलं पापम् अपावृतं निरस्तावरणम् ऋतं सच्चिदान्दस्वरूपं भगवन्तम् ।

आत्मतत्त्व विशुद्ध्यर्थं यदाह भगवानृतम् ।
ब्रह्मणो दर्शयन् रूपमित्यत्र तथैव व्याख्यानात् ॥ १५ ॥

न केवलमहमेकं एव प्रपद्ये अपि तु महदादीनां सर्व्वेषामेव त्वत्त उद्भूतत्वात् त्वत्प्रपत्तिरुचितैवेत्याभिव्यञ्जयन् नमस्यति । यो वै एकः त्रिपात् त्रयो ब्रह्मादयः पादाः स्कन्धा यस्य उरवो मरीच्यादिमन्वादयः प्ररोहाः शाखोपशाखा यस्य तथा भूतः सन् ववृधे । किं कृत्वा आत्ममूलम् आत्मकारणकं प्रधानं भित्त्वा गुणत्रयरूपेण विभज्य त्रिपात्त्वमेवाह अहमित्यादयः स्थित्यादिहेतव इति यथासम्भवनिर्देशः । अत्र विभुर्विष्णुः स्वयश्चेति विष्णौ स्वयं पदप्रयोगात् ब्रह्मगिरिशयोरिव विष्णोर्नास्ति गुणनिबन्धनः स्वतो भेद इति ज्ञापितम् । यद्वा । य एव अहमादयः य एव आत्मनः स्वस्यापि मूलं कारणम् । तथा य एव भित्त्वा स्वशक्तिकृतं भेदं प्राप्य त्रिपात् प्रथमं त्रिलोकरूपः तत उरुप्ररोहः चतुर्दशलोकरूपः तस्मै भुवनाकाराय द्रुमाय नम इति विश्वरूपत्वमुक्तम् ॥ १६ ॥

---

लोको विकर्मनिरतः कुशले प्रमत्तः कर्मण्ययं त्वदुदिते भवदर्चने स्वे
यस्तावदस्य बलवानिह जीविताशां सद्यश्छिनत्त्यनिमिषाय नमोऽस्तु तस्मै ॥ १७ ॥
यस्माद्बिभेम्यहमपि द्विपरार्धधिष्ण्यमध्यासितः सकललोकनमस्कृतं यत्
तेपे तपो बहुसवोऽवरुरुत्समानस्तस्मै नमोभगवतेऽधिमखाय तुभ्यम् ॥ १८ ॥
तिर्यङ्मनुष्यविबुधादिषु जीवयोनिष्वात्मेच्छयाऽऽत्मकृतसेतुपरीप्सया यः ।
रेमे निरस्तरतिरप्यवरुद्धदेहस्तस्मै नमो भगवते पुरुषोत्तमाय ॥ १९ ॥
योऽविद्यया ऽनुपहतोऽपि दशार्धवृत्त्या निद्रामुवाह जठरीकृतलोकयात्रः ।
अन्तर्जलेऽहि कशिपुस्पर्शानुकूलां भीमोर्मिमालिनि जनस्य सुखं विवृण्वन् ॥ २० ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

सकामभजनमपि भगवन्तमत्यन्ततो नहि प्रसन्नं करोति यदि तर्हि सकामकर्म तं न प्रसन्नं करोतीति किमुतवाच्यमतः सर्वक्रिया भगवदाराधनार्थं कर्तव्येत्याह पुंसामिति । यतः सकामभजनेनापि भगवान्नाति प्रसीदति अतः पुंसां विविधकर्मभिः दानादिभिश्च भगवतस्तवाराधनमेव संश्चासौ क्रियार्थश्च श्रेष्ठं क्रियाफलं यत्र त्वयि अर्पितो धर्मः कर्हिचिदपि न ह्रियते न विनश्यति अक्षयफलो भवतीत्यर्थः ॥ १३ ॥

यदर्पितं कर्माक्षयफलं भवत्येवं भगवन्तं पुनः नमस्यन् तत्स्वरूपगुणादिवर्णनेन स्तौति शश्वदित्याद्यष्टभिः । शश्वत् सर्वदा स्वरूपमहसैव सर्वात्मस्वरूपप्रकाशेनैव निरस्तभेदभ्रमाय अपगतभेदसंशयाय अतदात्मकपदार्थाभावात् बोधधिषणाय बोधएव धिषणा स्वात्मकसर्वपदार्थविवेकवती ज्ञातृत्वलक्षणा शक्तिर्यस्य तस्मै विश्वोद्भवादिषु निमित्तानि प्रकृत्याद्याः शक्तयः तासां लीलया विलासेन रासः क्रीडा यस्य तस्मै नमः नमनं चकृम कृतवन्तो वयम् ॥ १४ ॥

अवतारादीनां विडम्बनमनुकरणमस्ति येषु तानि नामानि असुविगमे प्राणप्रयाणकालेऽपि ये गृणन्त्युच्चारयन्ति ते सहसैव शीघ्रमेव अनेकजन्मशमलं बहुजन्मार्जितं पापं तथा पुण्यं हित्वा अपावृतं निरावरणमृतं ब्रह्म संयान्ति अवतारादिविडम्बनानि प्रथमे द्वितीये च स्कन्धे दर्शितानि तत्र अवतारविडम्बनं कुमार इत्यादीनि गुणविडम्बनानि अखण्डब्रह्मचर्यवान् इत्यादीनि कर्मविडम्बनानि विनष्टज्ञान ! प्रवर्तक इत्यादीनि ॥ १५ ॥

यो वै एकः अविस्तारितचिदचिच्छक्तिः आत्मा स्वयं मूलं यस्य प्रधानस्य तत्प्रधानं भित्वा रजआदिरूपेण विभज्य स्वयं विभुः सत्त्वनियन्ता अहं रजोयुक्तः गिरिशस्तमोयुक्तः एवं स्थित्यादिहेतवः त्रयःपादाः स्कन्धाः यस्य सत्रिस्कन्धः उरुप्ररोहः बहवो मरीच्यादयः प्ररोहाः शाखोपशाखादयो यस्य सः तथाभूतः सन् ववृधे तस्मै भुवनद्रुमाय नमः ॥ १६ ॥

---

भाषाटीका ।

जिस कारण से सकाम भक्तों को आप नहीं प्रसन्न होते हो तिसी से नाना प्रकार के यज्ञादि कर्मों से दान से उग्रत पस्या से व्रत चर्या से निष्काम होकर आपके आराधन रूप जो कर्म किये जाते हैं सोई सत कर्म हैं क्योंकि जिन आपके विषै अर्पण किया हुआ कर्म कभी क्षय नहीं होता है ॥ १३ ॥

भाषाटीका ।

निरंतर अपने स्वरूप के तेज से दूर कर दिया है भेद त[illegible] मोह को जिनने चैतन्य रूपी विद्या शक्ति है जिनकी संसार[illegible] उत्पत्ति स्थिति प्रलय मे निमित्त जो माया तिसकी जो ली[illegible] तिससे है क्रीडा जिनकी ऐसे जो आप ईश्वर हैं तिनके अर्थ ह[illegible] लोग नमस्कार किये हैं ॥ १४ ॥

जिन आपके अवतार गुण कर्म के सूचन करने वाले गोवर्ध[illegible] द्धरण इत्यादि नामों को जो कोई सत्पुरुष प्राण जाने के सम[illegible] परवश होकर भी स्मरण करते हैं वे पुरुष अनेक ज़न्म के पा[illegible] को शीघ्रही नाश करके खुले हुये मोक्ष मार्ग को चले जाते[illegible] तिन अजन्मा आपके शरण मे मै प्राप्तहूं ॥ १५ ॥

जो आप एक मूल स्वरूप; आत्म मूल वाली प्रकृति को विभा[illegible] करके तीनो गुणों से ब्रह्मा महेश्वर विष्णु तीन रूप से जगत[illegible] उत्पत्ति स्थिति प्रलय के हेतु तीन स्कंध सरीके होकर [illegible] मरीच्यादि रूप नाना शाखावाले होगये हो तिन भुवन वृक्ष[illegible] आपको नमस्कार है ॥ १६ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

एवं गुणावतारकर्मविडम्बनमुक्त्वा तस्यैव तत्कालाख्यं [illegible] तत्कर्मच दर्शयन्प्रणमति लोक इतिद्वाभ्याम् । विकर्मनिरतो वि[illegible] कर्मनिष्ठः कुशले हिते स्वे आत्मीये त्वदुदिते त्वयैव साक्षादुक्ते भव[illegible]र्चनरूपे कर्मणि उक्तं हि गीतासु

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय ! तत्कुरुष्व मदर्पणम् ॥ इति

तस्मिन्प्रमत्तोऽदत्तचित्तोयावद्वर्तते तावदस्य लोकस्य अनिमि[illegible] कालाय ॥ १७ ॥

आस्तां तावल्लोकस्य कथा यस्मात्कालाख्यात्त्वत्तोयद्द्विपरार्[illegible] वस्थायि धिष्ण्यं स्थानं तदारूढोऽपि बिभेमि भीतश्च संस्त्वाम[illegible] वरुरुत्समानः प्राप्तुमिच्छंस्तपस्तप्तवान् कथं भूतः बहुसवः ब[illegible] सवा यागाः संवत्सरा वा यस्य बहून् यागान् कृत्वापि बहून्संवत्स[illegible]न्वा तपस्तप्तवानित्यर्थः अधिमखाय मखाधिष्ठात्रे ॥ १८ ॥

इदानीं तत्तत्कालभाविलीलाऽवतारकर्माणि दर्शयन्नाह । तिर्य[illegible] दिषु जीवयोनिषु स्वेच्छया स्वीकृतमूर्तिः सन् स्वकृतधर्ममर्यादा[illegible] लनेच्छया रेमे वस्तुतः स्वानन्दानुभवेनैव निरस्तविषयसुखो[illegible] योऽत एव पुरुषोत्तमः तत्तदुपाधिधर्मासंस्पर्शात् तदुक्तं गीत[illegible]

श्रीधरस्वामिकृत भावार्थदीपिका।

यस्मात्क्षरमतीतोऽहमक्षरादपिचोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम इति ॥ १९ ॥

इदानीं दृश्यमानामेवमूर्तिं प्रणमति योऽविद्ययेति द्वाभ्याम्। दशार्धाः पञ्च वृत्तयोयस्यास्तयाऽविद्यया निद्राहेतुभूतयाऽनभिभूतोऽपि योगनिद्रामुवाह तस्मै ते नम इत्युत्तरेणान्वयः जठरीकृता उदरे प्रविलापिता लोकयात्रा लोकस्थितिर्येन अहिरेव कशिपुः शय्या तस्याः स्पर्शोऽनुकूलो यस्यास्तां निद्राम् भीमानामूर्मीणां माला विद्यन्ते यस्मिन्नन्तर्जले निद्रायास्याविवेकिनो जनस्य निद्रासुखमीहगिति विवृएवन्प्रदर्शयन्नुपहसन्नित्यर्थः अत एवान्तर्जलादिविशेषणानि यद्वा पूर्वकल्पे श्रान्तस्य जनस्य विश्रामसुखं विवृएवन्स्फारयन् तदा तु परोपकाराय स्वयं दुःसहमपि दुःखं सोढव्यमिति द्योतनार्थं विशेषणानि ॥ २० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या
दीपिका टिप्पणी।

तत्कर्म च कालकर्म विरुद्धकर्म भगवद्बहिर्मुखं कर्म एवं टीकायां तदर्पितस्य कर्ममात्रस्य तदर्चनरूपत्वं विवक्षितं श्रीगीतोदाहरणानुरोधात् तेन पञ्चरात्रोक्तार्चने कैमुत्यमभिप्रेतम् "पञ्चरात्रस्य कृत्स्नस्य वक्ता तु भगवान्स्वय"मिति मोक्षधर्मात्तस्यापि साक्षात्तदुक्तत्वात् ॥ १७ ॥

बहुसव इति विशेषणस्याऽपुष्टार्थत्वमाशङ्क्य दण्डीप्रैषानन्वाहेत्यत्र दण्डित्वविशेषणस्य यथा विधेयत्वं तथाऽस्यापि विधेयत्वं व्याचष्टे बहून् यागानिति अत एव इत्यथं इत्युक्तम् ॥ १८ ॥

तत्तत्काले प्रातिस्विकोचिताऽवसरे भवितुं शीलं येषां तथा भूता ये लीलार्थमवतारा वाराहादयस्तेषां कर्माणि अत एव निरस्तविषयसुखत्वेऽपि स्वीकृतमूर्तित्वादेव तत् उपाधिधर्माऽसंस्पर्शेन पुरुषोत्तमत्वम् आत्मकृतेत्यत्र स्वकृतेत्यपि; क्वचित् पाठः ॥ १९ ॥

दृश्यमानां प्रद्युम्नाख्यां सोऽयंहिरण्यगर्भस्य प्रद्युम्नत्वे नियामक इति भागवतामृतात् पञ्चवृत्तयः अविद्याऽस्मितारागद्वेषाऽभिनिवेशरूपाः निद्रां वहिर्वृत्त्यभावसाम्यात् लीलारूपाम् अनुकूलः सुखदत्वेन जनकः ईदृक् सर्वोर्मिजलादिभयस्थानेऽपि प्रसरणशीलम् तथाद्दर्शनस्योपहासे लक्षणात इत्यर्थ इत्युक्तम् अत एवोपहासस्य विवक्षितत्वादेव विशेषणानि तत्राहिकशिपुस्पर्शेति समानाधिकरणं विशेषणम् अन्तर्जल इति व्यधिकरणं भीमोर्मिमालिनीति तु विशेषणस्य विशेषणमिति विवेचनीयम् सृष्टेः पूर्वमविवेकिजनस्याभावात् तदुपहासोऽनुपपन्न इत्यरुचौ यद्वेति श्रान्तस्य जन्ममरणादिभिः खिन्नस्य विशेषणानि पूर्वोक्तान्येव ॥ २० ॥

---

श्रीमद्वीरराघवाचार्य्योक्त भागवतचन्द्रचन्द्रिका।

एव"मूर्ध्वमूलमधःशाख"मित्यादिना निरूपितवृक्षं भगवन्तमाकारान्तरेण वृक्षरूपं नमस्कृत्य तस्य भक्तानुग्राहकत्वमेवाह लोक इति। योभगवान् त्वदुदिते वेदात्मिकया वाचा त्वया गदिते भगवदाराधनरूपे स्वे स्ववर्णाश्रमोचिते कुशले क्षेमंकरे कर्मणि योऽयं लोकः अप्रमत्तः प्रमादरहितः अविकर्म निरतः विकर्म असत्कर्म अतन्निरतश्च भवति तस्य लोकस्य जीविताशां संसारश्रद्धां सद्यः अचिरेण छिनत्ति कुतः बलवान् सर्वशक्तित्वादित्यर्थः तस्मै सर्वशक्तये अनिमिषाय वैराग्योत्पादनावसरापेक्षाय भगवते तुभ्यं नमोऽस्तु स्तात् अनभिसंहितफलस्ववर्णाश्रमोचितधर्मैराराधयतां सांसारिकधर्मश्रद्धां विधुन्वन्वैराग्योत्पादनेनानुगृह्णातीत्यर्थः यद्वा विकर्मनिरतः प्रमत्त इत्येवच्छेदः अत्र व्यतिरेकमुखेन भक्तानुग्राहकत्वमाह विकर्मसु स्वरूपाननुबन्धिषु अहंममाभिमानगर्भेषु वैषयिकसुखसाधनेषु त्वदाराधनरूपे तु कर्मणि यो लोकः प्रमत्तः तस्याभक्तलोकस्य जीविताशां जीवनेच्छां कालशरीरको यो भगवान् छिनत्ति तस्मै अनिमिषाय कालरूपिणे नमः अनेन भक्तानुग्राहकत्वमर्थसिद्धं स्वानुरूपभगवदाराधनरूपकर्मभिराराधितो भगवानुपासकानां निवृत्तये निरतिशयमोक्षाख्यफलं प्रयच्छतीत्युक्तम् ॥ १७ ॥

इममेवार्थं स्वदृष्टान्तेन द्रढयन्नमस्करोति यस्मादिति। यद्द्विपरार्धधिष्ण्यं द्विपरार्धकालस्थायिस्थानं सत्याख्यलोकं कथं भूतं सकललोकनमस्कृतं सकलैरर्वाचीनलोकैर्नमस्कृतं संमानितमध्यासित आरूढोऽप्यहं यस्मात्कालशरीरकात्त्वत्तः बिभेमि "भीषास्माद्वातः पवत," इत्युक्तरीत्या त्वदधीनः स्वाधिकारेऽप्रमत्तोऽहमपीदमपि धिष्ण्यंद्विपरार्धावसाने विनंक्ष्यतीति बिभेमि भीतः सन् यं त्वामेवावरुरुत्समानः अवरोद्धुमिच्छन् प्रेप्सुरित्यर्थः बहुसवः बहवः सवास्त्वदाराधनरूपा यागा यस्य सः एवं भूतस्तपस्तेपे करोमि पाकं पचतीतिवन्निर्देशः तस्मै भगवतेऽधिमखाय मखाराध्याय मखफलप्रदाय च नमः

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेवच।

इति गीतत्वात् विसखायेति पाठान्तरं तदात्वसहायायेत्यर्थः १८

एवं नमः परस्मा इत्यादिना परत्वभक्तानुग्राहकत्वादिविशिष्टं भगवन्तं नमस्कृत्य परत्वप्रयुक्तोपास्यत्वनिर्वाहकसौशील्यसौलभ्यगुणविशिष्टं नमस्करोति तिर्यगित्यादिना। सौशील्यं हि महतो मन्दैः सह नीरन्ध्रेण संश्लेषस्वभाववत्त्वं सौलभ्यं नाम स्वतो वा ङ्मनसागोचरस्य सकलमनुजनयनविषयतां गतत्वम् एतद्द्वयं सूपास्यत्वापादकमवतारकथनेनोपपादयति तिर्यगादिषु जीवयोनिष्वात्मेच्छया आत्मीयसंकल्पेनैव न तु कर्मणेत्यर्थः अवरुद्धदेहः स्वीकृतमूर्तिः रेमे किमर्थम् आत्मकृतसेतुपरिप्लवाय स्वकृतमर्यादानां परिप्लवाय उन्मज्जनाय रक्षणायेत्यर्थः परीप्सयेति पाठे अध्ययनेन वसतीतिवद्धेत्वर्थे तृतीया परीप्सा रिरक्षा तदर्थमित्यर्थः स्वयं कथंभूतोऽपि निरस्तरतिरपि निरतिशयानन्दस्वस्वरूपानुभवेनैव कदाचिदप्यस्पृष्टवैषयिकसुखोऽपि रेमे तिर्यगादिसजातीयचेष्टितानि कुर्वन् रेमे तिर्यक्ष्ववतारा मत्स्यकूर्मवराहहंसादयः मनुष्येषु रामकृष्णादयः विबुधेषु वामनादयः एवं स्वसंकल्पेनैव स्वस्वभावमजहदेव तत्तद्योनिष्ववतीर्य तत्सजातीयादिव्यचेष्टितानि कुर्वन्नक्रूरोद्धवमालाकारगुहशवरीप्रमुखान् अनवधिकदयासौहार्दगर्भानुरागभावावलोकनालापामृतदानेनाप्याययन् सकलमनुष्यनयनविषयतां प्राप्नोषीत्यभिप्रायः एवं भूताय भगवते पुरुषोत्तमाय त्रिविधचेतनाचेतनविलक्षणाय ते नमः ॥ १९ ॥

एवं स्वरूपगुणविभूतिविशिष्टं भगवन्तं नमस्कृत्याथ स्वमनीषितं विजिज्ञापयिषुस्तात्कालिकं परिदृश्यमानमनिरुद्धरूपं प्रस्तुवन्नमस्करोति द्वाभ्यां योऽविद्ययेति दशार्धाःपञ्च वृत्तयो यस्यास्तया तामिस्रान्धतामिस्रमोहमहामोहतमोरूपाःपञ्चाविद्या वृत्तयःवृक्षगुल्मलतावीरु तृणगताःपञ्चपर्वाज्ञानवृत्तयःतमो मोहादयइति केचित् जाग्रत्स्वप्नसुषुप्तिमूर्च्छामरणोष्वज्ञानवृत्तय इति केचित् एवं भूतयाऽविद्यया

श्रीमद्वीरराघवाचार्य्योक्त भागवतचन्द्रचन्द्रिका ।

निद्राहेतुभूतयाऽनुपहतोऽप्यनभिभूतोऽपि योगनिद्रामुवाह प्राप्तवान् तस्मै नम इत्युत्तरेणान्वयः कथं भूत उवाह जठरीकृतलोकयात्रः उदरनिवेशितजगद्वृत्तः न्त अहिरनन्त एव कशिपुः शय्या तया स्पर्शोऽनुकूलो यस्यास्तां निद्रां भीमानामूर्मीणां माला विद्यन्ते यस्मिन्नन्तर्जले निद्राणस्य जनस्याविवेकिनो जनस्यनिद्रासुखमीद गिति निवृएव न्प्रदर्शयन्निवेत्यर्थः ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

शतं वर्षसहस्राणां जीवामि तदनन्तरं पुण्यं संचिनोमि किमिदानीं तत्करणमिति मत्वा भगवदुपासनादिसत्कर्मण्यालस्यं न कर्तव्यमिति भावेन कालान्तर्यामिणं भगवन्तं नमति लोक इति । तावत्तदा बलवान्योऽस्य जनस्येह जीविताशां सद्यः कालक्षेपमन्तरेण छिनत्ति अपराधमन्तरेण जीविताशाछेदनं साहसमिति न मन्तव्यमित्यत उक्तं विकर्मेति विहिताकरणादिना आत्महत्यादिदोषापत्तेरतेऽधिकोपराधोऽस्तीत्यतो न वैषम्यनैर्घृण्ये हरेरिति भावः स्वे स्वविहिते तस्मै अनिमिषाय नित्यज्ञाननेत्रेण नित्यं पश्यते कालान्तर्यामिणे नित्यं तुभ्यं नम इत्यन्वयः ।

नित्यज्ञानदृशा नित्यं लवकालमपीश्वरः ।
पश्येत्तात्कालिकं चैव तस्मादनिमिषो हरिः ॥

इत्यादेर्न मात्रमत्रग्राह्यं कालान्तर्यामिणो निमिषत्वं नित्यं लवादिकालनिरीक्षणात् तच्चोक्तम् ।

कालस्यानिमिषत्वं च लवादेर्नित्यवीक्षणात् ॥

इति इतरस्य तच्छब्दवाच्यत्वं तन्नियतत्वात् ॥ १७ ॥

क्लृप्तकालोऽहमपि यस्माद्बिभेमि किंवितरे तस्मात्कालान्तर्यामि हरिप्रसादोऽवश्यं संपादनीयः पुण्यनिचयं संपादयिषुभिरिति भावेन कालान्तर्यामिणं विशिनष्टि यस्मादिति । धिष्ण्यमध्यासित इति सप्तम्यर्थे द्वितीया द्विपरार्धं धिष्ण्यं ब्रह्मशतवर्षकालावस्थायिस्थानं सत्याख्यं स्वस्य भीतिश्चानेन ज्ञातव्येत्याशयेनाह तेप इति । भुक्तावानन्दवृद्धिकरं बहुतपः पूर्णज्ञानं चावरुरुत्समानः प्राप्तुमिच्छन् तपस्तेपे गुणोपसंहाररूपामुपास्तिमकरवमित्यर्थः स्वक्रियमाणे कर्मणि सहायान्तरमनपेक्षणाद्विगतः सखा यस्य स तथा तस्मै ॥ १८ ॥

तिर्यगादिजीवयोनिषु विज्ञानविलोपहेतुष्ववतरन्नित्योदितज्ञानानन्दत्वेनानन्यसाध्यं विक्रमं कुर्वन् क्रीडतीति यत्तेनैव तत्त्वज्ञानं सुलभं पुंसामतोऽपि न ज्ञायते गतिरित्यहो दुराग्रहो दुष्टानामिति भावेन श्रीहरिं स्तौति तिर्यगिति । आत्मेच्छया स्वेच्छया प्रयोजनमाह आत्मेति । परीप्सया पालनेच्छया तिर्यगादिजीवयोनिष्वप्यनिरस्तरतिः अन्यत्र नित्यरतिरपितु किमु अत्र हेतुगर्भविशेषणमाह उपलब्धकाष्ठ इति । नित्यानन्दानुभवलोपे हि दुःखानुभवः संभाव्यते नान्यथा नित्यानुभूतानन्दोत्कर्षत्वादित्यर्थः १९

हरेः श्रमोद्रेकोत्थनिद्रादिदर्शनात्तद्गतिर्दुरवबोधेति तत्राह य इति । दशार्धेन पञ्चसंख्यया वृत्तिः यस्याः सा तथा तया पञ्चपर्वबल्येत्यर्थः एवं विधाविद्ययानुपहतोऽव्याधितोऽपीत्यनेन एकमेव ब्रह्माविद्यया संसरतीति विद्यया मुच्यत इति मतं दूरादुत्सादितं भीमा भयंकर्य ऊर्मीणां माला अस्य सन्तीति भीमोर्मिमाली तस्मिन्नन्तर्जले अहिकशिपुस्पर्शानुकूलमिति क्रियाविशेषणम् अहिः

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

शेष एव कशिपुरुत्तरवस्त्रास्तृतशय्या तस्य स्पर्शानुकूलं स्पर्शसुखानुगुणं यथा भवति तथा न स्वार्थेयं निद्रा किंतु परार्थेत्याशयेनाह जनस्येति । अनेनापि निद्रामुद्रितनेत्रत्वमेव न सर्वेन्द्रियोपरमत्वमुक्तं भवति ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ॥

विकर्म्म भगवद्बहिर्मुखं कर्म्म । अर्च्चनं पञ्चरात्राद्युक्तं पञ्चरात्रस्य कृत्स्नस्य वक्ता तु भगवान् स्वयमिति मोक्षधर्म्मात् ॥ १७।१८

निरस्ता विषया जीवगोचरा अर्थाः प्राकृता यस्मात् । आत्मेच्छया भक्तपिपालयिषया अवरुद्धदेहः प्रकटितमूर्तिः ॥ १९ ॥

तस्यावतारिणः पुरुषोत्तमस्यैव दृष्टां लीलामनुमोदते य इति। जनस्य यन्निद्रासुखं तदेव लीलया स्वस्मिन् प्रकटयन् तत्रान्यदुर्गमास्पदत्वं सुखस्पर्शशय्यत्वं च तत्सौकर्य्यहेतुमाह अन्तर्जल इत्यादिना ॥ २०—२२ ॥

---

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

एवं भुवनद्रुमात्मकः सर्वशब्दवाच्यो भगवान् कल्पवृक्षस्तस्मै नमः कालात्मकं नमस्यति । लोकोविकर्मनिरत इति । विकर्म निन्दितं कर्म तत्र निरतः स्थिरः तदेकप्रवण इत्यर्थः कुशले धर्मे प्रमत्तोऽसावधानः सुतरां त्वदुदिते कर्मणि "मन्मनाभव मद्भक्त" इत्यादौ भवदर्चने तव पूजारूपे स्वे स्वधर्मरूपे सर्वथा प्रमत्तः तस्य यो जीविताशामपि छिनत्ति तावदिति नरकादर्वाक् पश्चात्तरकमपि प्रयच्छतीत्यर्थः इहेति नैकत्ये भगवदपराधं कृत्वा योमहानपि भवति तमपि मारयतीत्येतदर्थमाह बलवानिति । तथोपायं करोति योजीवन्नेव जीविताशां त्यजति एवमलौकिककालात्मने नमः॥१७॥

यज्ञरूपं नमस्यति यस्मादिति । कालो द्विविधः यज्ञादिप्रवर्तको यज्ञात्मा लौकिकश्च तत्र लौकिकः पूर्वमुक्तो यज्ञात्मा इदानीमुच्यते "स्वधर्मनिष्ठः शतजन्मभिः पुमान् विरञ्चितामेति ततः परंहिमाम्" इति वाक्यात् येनैव यज्ञात्मकेन सहस्राश्वमेधरूपेण ब्रह्मपदं अहं निवेशितः इदानीमपि बहुभिर्यागैस्तपोभिश्च तमेवाराद्धुमिच्छामि तत्सायुज्यमेव वाञ्छामि एवं यद्यपि ममाभीष्टकर्त्ता तथापि तस्मादहं बिभेमि मारयिष्यतीति यद्यपि द्विपरार्धधिष्ण्यमास्थितः द्विपरार्धे तस्यासनस्य स्थितौ कालपरिच्छेदिके यस्य मासनस्यापि नियतकालत्वम् अहमपि नियतकार्यस्तादृशस्तथापीश्वरगतिर्ज्ञातुमशक्येति बिभेम्येवेति यद्यपि ममासनस्य महत्त्वं सर्वलोकनमस्कृतत्वात् तथापि महानिति न त्यक्ष्यतीति भयं स्वभावत एवाहं बहुयज्ञकर्ता तथापि तपस्तेपे एवमतिदुर्द्धर्षाय मखाधिष्ठातृदेवाय तुभ्यं नम इति ॥ १८ ॥

पुरुषोत्तमं नमस्यति तिर्यगिति।तिर्यङ्मनुष्यविबुधास्तामसराजससात्त्विकदेहास्तदादयोऽन्येऽपि त्रिविधाः जीवयोनिषु जीवस्योत्पत्तिस्थानेषु आत्मेच्छया स्वेच्छयैवावरुद्धदेहः सन् स्वीकृतलीलाव्यविग्रहो भूत्वात्मकृतसेतुपरीप्सया स्वकृतमर्यादारक्षणार्थं यो देवमनुष्यादीन् स्वतुल्यान्विधाय स्वकृतधर्मरक्षार्थमेव कृष्णरूपो भूत्वा तिर्यगादिषु कुत्र चिदपि निरस्तरतिरपि रेमे एतादृशाय अक्षरातीतप्युत्तमो लोकप्रतीत्या बोधनार्थमेत्रं देहग्रहणकथा अवरुद्धा निरुद्धा वा देहा येन इच्छापि नास्ति देहोऽपि नास्ति तथापि स्वरूपानन्दभूत एव रेमे ॥ १९ ॥

श्रीमद्वल्लभाचार्यकृत सुबोधिनी।

नारायणं नमस्यति कार्यकारणावस्थारूपद्वयनिरूपणेन श्लोकद्वयेन योऽविद्ययेति। योदशार्धवृत्त्या पञ्चवृत्त्या अविद्ययाऽनुपहतोऽपि निद्रामुवाह नहि कश्चित्स्वात्मविस्मरणव्यतिरेकेण निद्रातुमर्हति पञ्चवृत्त्येति वक्तव्ये दशार्धवृत्त्येति वचनं विद्याविद्ययोः समभागार्थं यथा विद्ययाऽनुपकृतोऽपि जागर्त्येवमविद्यया अनुपहतोऽपि निद्रामुवाहेति विद्याविद्याकार्यं भगवति नास्ति किंतु तत्सदृशी लीला वर्तत इति ज्ञापनार्थम्। किञ्च जठरीकृता लोकयात्रा येन सर्वानेव लोकान् स्वोदरे निवेश्य शेते यथा लोकस्य स्वप्नस्तथास्मिन्निदानीं लोकाः अयमेव स्वप्नकर्ता निद्रासहितोऽतः स्वप्ने कार्यं कुर्वन्नपि मायिकमेव कार्यं करोति यदिदानीमपि निद्रित एव कार्यं करिष्यति तदग्रे उत्पत्स्यमानमपि कार्यमसदेव स्यात् मूलस्य तथात्वान्निर्बीजफलवृक्षवत्। किञ्च अन्तर्जले भीमोर्मिमालिनि अहिकशिपुस्पर्शानुकूलाम् निद्रामुवाह नहि कश्चिज्जलमध्ये शेते तत्रापि तरङ्गाकुले तत्रापि सर्पभोगे शयनं तामस्यवस्था जलमध्ये शयनं सर्वथानुपपन्नं व्याकुलाधिकरणशयनमतिश्रमसूचकम् सर्पे च शयनं मृत्युहेतूनप्यविगणय्य शयनसूचकम् एवं किमर्थं करिष्यतीत्याशङ्क्याह जनस्य सुखं विवृण्वन्निति। जनस्य जायमानस्यैवमवस्था चेत्तदा सुखं भवतीति लोके विवृण्वन् ज्ञापयन् अत एवमेवास्थिते यदि सृष्टिर्भवेत्तदोत्पन्नानां मोक्षादिवार्ता न भवेदित्येतदवस्थापरिहारं प्रार्थयिष्यन्तिमामवस्थामेवम् वर्णितवान् ॥ २० ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी।

विश्वरूपत्वमुक्तमथ विश्वनियन्तृ कालरूपत्वेन प्रणमति। लोको मनुष्यादिः कुशले कर्म्मणि प्रमत्तः अकृतावधानः। कुशलं कर्म्मैव किं तत्राह भवदर्चने "ननु स्वधर्म्मेण तमभ्यचर्ये"त्युक्तेः "ज्ञानिनो ज्ञानयज्ञेन यजन्ति ज्ञानविग्रह" मित्युक्तेश्च कर्म्मज्ञानयोगाभ्यामपि भगवदर्चनमेव स्यादिति केचिद्व्याचक्षते तत्राह त्वदुदिते। त्वयैव मदर्चनमिदमेवेति साक्षादुक्ते "ये वै भगवता प्रोक्ता उपाया आत्मलब्धये" इत्येकादशात्।

पञ्चरात्रस्य कृत्स्नस्य वक्ता तु भगवान् स्वयम् ॥

इति मोक्षधर्म्माच्च स्वे स्वीये स्वकर्त्तव्य इत्यर्थः। तदेवं त्वद्भक्तलोकेभ्योऽन्येष्वेव कालस्याधिकार इति द्योतितम् अस्य अभक्तलोकस्य जीवितस्याप्याशां किमुत भोगादिवाञ्छामित्यर्थः। अनिमिषाय कालाय ॥ १७ ॥

उक्तस्य कालबलवत्त्वस्य सीमामाह। यस्मात् कालात् अहं ब्रह्मा द्विपरार्द्धावस्थायि धिष्ण्यं स्थानं सत्यलोकम्। अध्यासितोऽपि बिभेमि तथा अवरुरुत्समानः अवरोद्धुं यं कालं वशीकर्त्तुमिच्छन् बहुसवः बहवः सवा यज्ञा यस्य तथाभूतः सन् तपश्च अहं तेपे। तदपि बिभेमीत्यर्थः। ननु कालवशीकारार्थं बहुयज्ञप्रवृत्तौ तव कदा का युक्तिरासीत्तत्राह अधिमखाय मखानामधिष्ठात्रे तुभ्यं नमः। मखानामधिष्ठातुस्तव मखैरेव यजनेन कालो मे वशी भवत्विति बुद्धेत्यर्थः। प्रत्युत कालेनैवाहं वशीकृतः संप्रत्यपि बिभेम्यतस्तव शुद्धभक्तिं विना कालो न जेयो भवतीत्याद्यज्ञाततत्त्वोऽतःपरं शुद्धामेव भक्तिं करवाणीति ध्वनिः ॥ १८ ॥

तदेव भगवद्रूपत्वेन तन्नियन्तृ कालरूपत्वेन च प्रणम्योदानीं परमोपास्य सच्चिदानन्दस्वरूपत्वेन प्रणमति। तिर्य्यगादिषु स्वेच्छ-

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी।

यैव अवतीर्ण इति शेषः स्वकृतसेतुपरीप्सया रेमे आत्मारामत्वात् त्यक्तविषयसुखोऽपि।

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः

इति स्वकृतमर्य्यादापालनाय स्वभक्तोपनीतस्रक्चन्दनगन्धपुष्पशय्याद्युपभोग्येष्वेव रेमे "नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना" इत्यात्मारामत्वेऽप्यपूर्णकाम इवेति भावः। स्रगादीनां प्राकृतविषयत्वेऽपि भगवदर्थविनियुक्तत्वे सति तत्क्षण एवाप्राकृतत्वं स्यादित्येकादशे व्यक्तीभविष्यति अवरुद्धदेहः भागुरिमते अवेत्यकारलोपे विभुत्वादनावृतदेहः सच्चिदानन्दशरीर एवेत्यर्थः यद्वा। आत्मकृतसेतोः स्वभक्तवश्यत्वरूपमर्य्यादायाः परिसर्वतोभावेनेप्सया प्राप्तीच्छया श्रीयशोदया दाम्नेवान्यैरपि भक्तैः प्रणयरसनया अवरुद्धदेहः अतः सर्व्वोत्कर्षात् महत्स्रष्ट्राद्यन्तर्य्यामिपुरुषेभ्योऽप्युत्तमायेति कृष्णावतार एव तात्पर्य्यं यदुक्तम्।

यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि वेदे लोके च प्रथितः पुरुषोत्तमः इति ॥ १९ ॥

इदानीं दृश्यमानां निजोपास्यां मूर्तिं प्रणमति द्वाभ्याम्। दशार्द्धाः पञ्च वृत्तयो यस्यास्तया अविद्यया निद्राहेतुभूतया अनभिभूतोऽपि निद्रामुवाह तस्मादियन्ते स्वरूपशक्तिमय्येव निद्रेति भावः। जठरीकृता उदरे प्रविलापिता लोकायात्रा लोकपरम्परा यस्य सः। अहिरेव कशिपुः शय्या तस्य स्पर्शोऽनुकूलो यस्यास्ताम्। भीमोर्म्मिमालिनि प्रलयसमुद्रे जनस्य प्राकृतलोकस्य। जलमध्यस्थकोमलशय्याशायिनः सुखं भवतीति विवृण्वन् लोकवल्लील एव त्वं भवसीति भावः। यद्वा। प्रलयकालेऽपि जनमात्रभयदे समुद्रेऽपि सर्पशय्यायामपि सुखेनत्वं निद्रासीति सर्व्वकाल-सर्व्वदेशसर्व्वसङ्गनिर्भयस्त्वमेव नान्य इति भावः। सुखं विवृण्वन्निति कालदेशसङ्गतोभययुक्तोऽपि निद्रालुर्हि जनः सुखमेव निद्रातीति ॥ २० ॥

———

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः।

त्वदुदिते

यत्करोषि यदश्नासि यज्जुहोसि ददासि यत्।
यत्तपस्यसि कौन्तेय! तत्कुरुष्व मदर्पणम् ॥

इत्यादिना त्वदुक्ते कुशले कर्मणि प्रमत्तः अनिमिषाय कालात्मने ॥ १७ ॥

द्विपरार्द्धधिष्ण्यं द्विपरार्द्धकालस्थायि स्थानम् अध्यासितोऽप्यहं यस्माद्बिभेमि तस्मै अधिमखाय मखाधिष्ठात्रे नमः कथंभूतः सकललोकनमस्कृतं यद्धाम वैकुण्ठादि तत् अवरुरुत्समानः आरोढुमिच्छन् बहुसवः बहवः सवाः तपोऽनुष्ठानकालावयवा यस्य स तथाभूतः सन् तपः तप्तवान् तदुक्तं द्रोणपर्वणि भूरिश्रवसं प्रति भगवता

ये लोका मम विमलाः ब्रह्माद्यैरपि सुरवृषभैरपीष्यमाणाः।
तान् क्षिप्रं व्रज सततामिहोत्रयाजिन्! मत्तुल्यो भव गरुडोत्तमाङ्गयान इति॥ १८ ॥

स्वात्मेच्छया स्वात्मनः संकल्पेन अवरुद्धदेहः स्वीकृतमूर्तिः निरस्तरतिः आनन्दैकराशित्वात् निरस्तविषयसुखोऽपि तिर्यगादिषु जीवयोनिषु जीवयोग्यासु जातिषु मत्स्यादिरूपेण रेमे यः तस्मै नमः ॥ १९ ॥

यन्नाभिपद्मभवनादहमासमीड्य ! लोकत्रयोपकरणो यदनुग्रहेण ।
तस्मै नमस्त उदरस्थभवाय योगनिद्रावसानविकसन्नलिनेक्षणाय ॥ २१ ॥
सोऽयं समस्तजगतां सुहृदेक आत्मा सत्त्वेन यन्मृडयते भगवान् भगेन ।
तेनैव मे दृशमनुस्पृशताद्यथाऽहं स्रक्ष्यामि पूर्ववदिदं प्रणतप्रियोऽसौ ॥ २२ ॥
एष प्रपन्नवरदो रमयाऽऽत्मशक्त्या यद्यत्करिष्यति गृहीतगुणावतारः ।
तस्मिन् स्वविक्रममिदं सृजतोऽपि चेतो युञ्जीत कर्मशमलं च यथा विजह्याम् ॥ २३ ॥
नाभिह्रदादिह सतोऽम्भसि यस्य पुंसो विज्ञानशक्तिरहमासमनन्तशक्तेः ।
रूपं विचित्रमिदमस्य विवृण्वतो मे मारीरिषीष्ट निगमस्य गिरां विसर्गः ॥ २४ ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

दृश्यमानं रूपं प्रणमति य इति द्वाभ्याम् । दशार्धाः पञ्च तामिस्रान्धतामिस्रमोहमहामोहतमोरूपाः वृत्तयो यस्याः तया अविद्यया निद्राहेतुभूतया अनुपहतोऽस्पृष्टोऽपि यः अन्तर्जले जलमध्ये निद्रामुवाह तस्मै ते नमः इत्यग्रिमेणान्वयः कथंभूतः जठरीकृतलोकयात्रः. उदरनिवेशितलोकत्रयस्थितिः कथंभूते अन्तर्जले भीमोर्मिमालिनि भीमा भयंकराः या ऊर्मयः तासां मालाः विद्यन्ते यस्मिन् तस्मिन् कथंभूतां निद्राम् अहिरेवकशिपुः शय्या तस्याः स्पर्शः अनुकूलो यस्यास्ताम् किङ्कुर्वन्नुवाह जनस्य ध्यातुः सुखं विवृण्वन् प्रकटयन् ॥२०॥

भाषाटीका

हे प्रभो ! ये संपूर्ण लोग पाप मे लगे हुये हैं आपके कहे आपके आराधन रूप अपना कर्तव्य पुण्य कर्म मे नहीं लगे हैं इन लोगों के जीने की आशा को भी जो आप शीघ्रही नाश करते हो तिन काल स्वरूप आपके अर्थ नमस्कार होवै ॥ १७ ॥

( दो परार्ध ) सौ वर्ष पर्यंत रहने वाले सब लोगों के नमस्कार करने योग आसन पर बैठा हुआ भी मैं जिन आप से डरता हूं और आपकी प्राप्ति की इच्छा से बहुत यज्ञादि कों से तपस्या करता रहा तिन भगवान् पुरुषोत्तम के अर्थ नमस्कार है ॥ १८ ॥

जिन आपने अपने चलाये धर्म मर्यादा पालने के हेत अपने इच्छा से मत्स्यादि तिर्यक् रामादिक मनुष्य वामनादिक देवता पर शुरामादिक जीव योनियों मे स्वतंत्र देह धारण करके विहार किया है तिन भगवान् पुरुषोत्तम के अर्थ नमस्कार है ॥ १९ ॥

जिन आपने तामिस्र मोह महामोहतम रूप पांच अविद्या कि वृत्तियों से रहित होकर भी अपने पेट मे सब संसार को रखकर भयंकर लहरों के समूह वाले समुद्र के जलके बीच मे रहकर मनुष्योंको निद्रा का सुख को जनाने के लिये शेषकी शय्या के स्पर्श से अत्यंत प्यारी योग निद्रा को धारण किया रहा तिन आपके अर्थ नमस्कार है ॥ २० ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

किंच यस्य नाभिपद्ममेव भवनं तस्मात् लोकत्रयमुपकरणं यस्य यद्वा लोकत्रयस्य सृष्ट्यादिद्वारेणोपकरोतीति तथा तादृशो-ऽहं यदनुग्रहेणासम् उदरे स्थितोभवः संसारप्रपञ्चोयस्य योगनिद्रावसाने किंचिद्विकसन्नलिनवदीक्षणं यस्य ॥ २१ ॥

एवं स्तुत्वा प्रार्थयते सोऽयमिति चतुर्भिः यद्येन सत्त्वेन ज्ञानेन भगेनैश्वर्येण च मृडयते सुखयति विश्वम् दृशं प्रज्ञामनुस्पृशतात् जयतु यथाऽहं स्रष्टुं क्षमोभविष्यामि यतः प्रणतप्रियोसावहंच प्रणतो नचान्यः प्रार्थनीयोऽस्ति यतोभगवान् स एव समस्तजगतः सुहृद्यतोऽसावेकोऽनुस्यूत आत्मान्तर्यामी ॥ २२ ॥

आत्मशक्त्या रमया सह यद्यत्कर्म करिष्यति स्वविक्रमं स्वस्य विष्णोरेव विक्रमः प्रभावोयस्मिंस्तदिदं विश्वं तदाज्ञया सृजतोऽपि मे चेतः स एव युञ्जीत प्रवर्तयतु कर्मासक्ति तत्कृतं शमलं वैषम्यादिपापं यथा विजह्यां त्यक्ष्यामि ॥ २३ ॥

अम्भसि सतो यस्य नाभिह्रदादिहासम् विज्ञाने शक्तिर्यस्य महत्तत्त्वात्मकस्य चित्तस्य तदभिमानी अस्य रूपमिदं विस्तारयतो मे निगमस्यावयवभूतानां गिरां विसर्ग उच्चारणं मारीरिषीष्ट हन्तु ब्रह्मवर्चसमितिन्यायेन मालुप्यतामित्यर्थः ॥ २४ ॥

श्रीराधारमणदास गोस्वामि विरचिता दीपिन्याख्या
दीपिका टिप्पणी ।

उपकरणं नियम्यत्वेन भोगसाधनं पूर्वार्थे लोकत्रयस्य तदा मजातत्वादुपकरणत्वमनुपपन्नमतो यद्वेति सृष्ट्यादीत्यादिना स्वविहितकर्मणि प्रवर्त्तनम् उपकरोति धर्मादिपुरुषार्थं जनयति नन्द्यादिविहितः कर्त्तरि ल्युप्रत्ययः ॥ २१ ॥

सोऽयं लोकवेदप्रसिद्धः यदित्यव्ययं येनेत्यर्थः ज्ञानेन एवं धर्मादिपुरुषार्थं प्रापणीयमिति जगद्विषयकेण ऐश्वर्य्येण शुभकर्मणि प्रवर्त्तनरूपेण नियन्तृत्वेन तेनैव सत्वेन भगेन चैव ज्ञानैश्वर्य्ययोजनप्रकारेणैव एकोऽनुस्यूत एकत्वेन व्यापकस्सन्नन्तर्यामी अतस्सर्वसुहृत् ॥ २२ ॥

प्रवर्त्तयतु मृष्टाविति शेषः गृहीतगुणावतारः गृहीता गुणा भक्तवात्सल्यादयो येषु तादृशा अवतारा मत्स्यकूर्मादयो यस्य व्याख्येयम् त्रिदेव्या अप्रकृतत्वात् ॥ २३ ॥

विज्ञाने अनुसंधाने त्रिभिर्नश्यति विप्रत्वं हलहालाहलाहल स्युक्तेः हलग्रहणेनान्तो नाशो यस्य तद्ब्रह्मवर्चसं ब्रह्मतेजः इति

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिका टिप्पणी ।

येन मारीरिषीष्टेति रिष् हिंसायामित्यस्य यङ्लुगन्तलुङि कर्मकर्त्तरि छान्दसं रूपमत इत्यर्थ इत्युक्तम् ॥ २४ ॥

———

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

किं च यस्य नाभिपद्ममेव भवनं तस्माल्लोकत्रयोपकरणः लोकत्रयमुपकरणं यस्य स लोकत्रयोपकरणः त्रैलोक्यपतिरित्यर्थः एवं भूतोऽहं यदनुग्रहेण यस्य भगवतोऽनुग्रहेण आसमाविरभवं तस्मै उदरस्थभवाय उदरस्थः भवः कार्यवर्गो यस्य तस्मै योगनिद्रावसाने विकसन्नलिनवदीक्षणं यस्य तस्मै नम इत्यर्थः ॥ २१ ॥

एवं स्तुत्वा मनीषितानि प्रार्थयते सोऽयमित्यादिभिश्चतुर्भिः । समस्तजगतां चेतनाचेतनानामात्मा अत एव सुहृत् सोऽयं भगवान् येन सत्त्वेन ज्ञानेन शुद्धसत्त्वमयविग्रहेण वा भगेनैश्वर्येण च विश्वं मृडयते सुखयति तेनैवैश्वर्येण मे दृशं प्रज्ञामनुस्पृशतात् योजयतात् दत्तादिति यावत् यथा इदं विश्वं पूर्वकल्पवत्स्रक्ष्यामि सृष्टिमौपयिकीं प्रज्ञामनुस्पृशतादित्यर्थः प्रार्थनाया नैष्फल्यशङ्कां वारयति असौ समस्तसुहृत्सर्वान्तर्यामी भगवान् प्रणतेषु प्रियः निरति शय प्रीतियुक्तः ।

प्रियो हि ज्ञानिनोऽत्यर्थमहं सच मम प्रिय

इति गीतत्वात् प्रणतप्रियत्वात्प्रणतार्थितार्थत्वपरिदानदीक्षित इत्याभिप्रायः ॥ २२ ॥

ननु विश्वसृष्ट्यर्थमेव सृष्टस्त्वं स्वबन्धकरीं विश्वसृष्ट्युपयुक्तां प्रज्ञां प्रार्थयितुं नार्हसीत्याशङ्कां निराकुर्वन्नन्यदपिप्रार्थयते एषइति।एष भगवान् प्रपन्नवरदः. आत्मशक्त्या आत्मनः स्वस्यापृथक्सिद्धविशेषणभूतया लक्ष्म्या साकं गृहीता अपरित्यक्ताः गुणाः स्वाभाविकसर्वज्ञत्वापहतपाप्मत्वादयः ज्ञानशक्त्यादयश्च गुणा येषु तथा भूता अवतारा यस्यसःयद्यत्करिष्यति यद्यद्देवमनुष्यतिर्यगादिसजातीयचेष्टितं करोति तस्मिन्कर्मणि मे चेतः चित्तं युञ्जीत तत्तदवतारगुणकर्मानुभवयुक्तं स्यात् कथंभूतस्यापि मे स्वविक्रमं स्वस्य तव विक्रमः प्रभावो यस्मिस्तदिदं विश्वं सृजतोऽपि तवाज्ञया त्वद्विभूतिभूतमिदं विश्वं सृजतोऽपि मे चेतः त्वद्गुणकर्मानुभवयुक्तं यथा भवेत्तथानुगृह्णात्वित्यर्थः किं गुणक।नुभवासक्तिप्रार्थनेनेति शङ्कानिरासायाह यथाचदुरितनिवर्त्तकगुणकर्मानुभवासक्त्या कर्मशमलं संसृतिहेतुभूतमनादि पुण्यपापरूपमालिन्यं विजह्यां त्यजेयं भवदनुग्रहेण त्वदवतारगुणकर्माण्यनुभवंस्त्वद्विभूतिभूतं जगत्त्वत्कैङ्कर्यवेषेण सृजतो मे त्वत्कैङ्कर्यप्रार्थनायुक्तैवेति भावः ॥ २३ ॥

एवं सृष्ट्यौपयिकीं प्रज्ञां मनसस्तदवतारगुणकर्मासक्तिं च सम्प्रार्थ्याथ तत्स्वरूपरूपगुणविभूतिप्रतिपादकवेदराश्यविस्मरणं प्रार्थयते नाभिहृदादिति । इहाम्भसि अस्मिन्नुदके सतः शयानस्यास्यानन्तशक्तेरपरिच्छिन्नज्ञानबलक्रियाशक्तेः पुंसस्तव नाभिहृदाद्विज्ञानशक्तिर्विज्ञानं शक्तिरपृथक्लब्धविशेषणं यस्य सः ज्ञानगुणकोऽहमासं जातः अस्य भगवतस्तव विचित्रमद्भुतं रूपं शरीरम् इदं

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

चिदचिदात्मकं जगद्विस्तारयतो निगमस्य वेदस्य गिरां वेदावयवभूतानां वाचां विसर्गः प्रसरः उच्चारणमिति यावत् मारीरिषीष्ट माक्षीणः स्यात् तथानुगृह्णात्वित्यर्थः ॥ २४ ॥

———

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

पितृनमस्कारोऽपि पुत्रेणावश्यं कार्य इत्याशा येन तं नमति यन्नाभीति । यदनुग्रहेणेत्युभयत्रान्वयः अहं यदनुग्रहेण यन्नाभिपद्मभवनादासं यदनुग्रहेण लोकत्रयोपकरणश्चासमिति लोकत्रयसृष्टौ सहकारीत्यनेन मुख्यस्रष्टैमुख्यस्रष्टा स एवेत्युक्तं भवति शिवोऽपि भवदाज्ञानियत इति भावेनाह उदरस्थेति।उदरेतिष्ठतीत्युदरस्थः उदरस्थो भवो रुद्रो यस्य स तथा तस्मै अनेन सर्वसंहर्तृत्वमपि रुद्रकृतमप्युपचारमात्रं मुख्यं तु हरेरित्युक्तं भवति रुद्रस्यापि संहर्ता किमुत जगत इति वा ब्रह्मरुद्रौ नारायणात्मानाविति भ्रान्तिरपहस्तितेति च ज्ञातव्यं योगनिद्रावसाने विकसन्नलिनेक्षणायेत्युक्तिर्नित्यविकसन्नलिनेक्षणस्य कादाचित्कविकासोक्तिरज्ञजनदृष्टमपेक्ष्योक्ता अतो भगवतो गतिर्न ज्ञायत इति मतमवद्यात्मकत्वाद्बुभूषुभिर्नग्राह्यमितिसिद्धम् ॥ २१ ॥

अधुना स्वाभीष्टं प्रार्थयत इत्याह सोऽयमिति । स इति ज्ञातोऽसीत्युक्तः परामृश्यते सुहृत्त्वादेकत्वात् सुहृदन्तररहितत्वादात्मत्वादुत्कृष्टत्वादिमं वरं प्रार्थय इति भावः।"आत्मशब्दस्य मुख्यार्थो विष्णुरेकः सनातनः । सं*दोहदेहमनसो बुद्धिर्जीवः स्वयं तथा । ब्रह्माद्यमुख्यः क्रमश उत्कर्षोऽप्यात्मता भवेत्"।इतिवचनान्मुख्यार्थो विष्णुरेव तस्यैव ग्राह्यत्वात् यद्येन भगेन ऐश्वर्यादिरूपेण सत्त्वेनात्मभावेन पराक्रमेण वा मृडयते रक्षति विश्वमितिशेषः स्पृश दान इति धातोः अनुस्पृशतात् ददातु दृशं विशिनष्टि यथेति। एवं प्रयच्छतः प्रतिदानमिदमेवेति भावेनाह प्रणतेति । अनेनेश्वरस्य स्वतस्तृप्तस्य तर्पकान्तरानपेक्षां सूचयति ॥ २२ ॥

उक्तमेवार्थं विशेषणान्तरप्रक्षेपेण प्रार्थयते एष इति । आत्मशक्त्या स्वभार्यया स्वसामर्थ्येन वा "स्वसामर्थ्यात्सकर्माणि रमया सह केशवः । कुरुते स्वयमेवैष कानिचित्पुरुषोत्तम" इति वचनात् यद्यत् यं यं विक्रमं तस्मिन्स्वविक्रमे स्वव्यापारे वीर्यलक्षणे जगत्सर्जनव्यापारमग्नस्यापि मे चेतः स्मृतिकारणं ज्ञानं युञ्जीत अपुष्टं पुष्टं कुर्यात् । इयदेव नालमित्याह कर्मेति । ज्ञानप्रतिबन्धकं पापात्मदैत्यादि सृष्टिपापकर्मणा प्राप्तं शमलं यथा येन जहामि तादृशमितिशेषः सत्त्वादिगुणाधीने ज्ञानाज्ञाने किमनेन स्यातामित्यत उक्तं गृहीतेति । स्वनियतसत्त्वादिगुणप्रकाशः हयग्रीवादिप्रसादप्राप्यं ज्ञानमस्मात्कथं स्यादित्यतोऽयुक्तं गृहीतेति स्वप्रकाशितज्ञानादिगुणहयग्रीवाद्यवतारः एतत्प्रार्थनया रूपान्तरप्राप्यफलमपि स्यादित्यर्थः ॥ २३ ॥

वैदिकप्रतिपाद्यवस्तुनोज्ञान विशेषोवेदार्थतात्पर्यज्ञानानान्तरीयक इति तद्विषयकज्ञानमपि न विनष्टं स्यादिति प्रार्थयते नाभिहृदादिति । इह अम्भसि सतोऽस्यहरेः रूपं प्रतिमास्थानीयं निगमस्य संबन्धिनीनां गिरां वाचो विसर्गो विशिष्टनिश्चयो विष्णु रेव सर्वोत्तम इत्यादिलक्षणो मारीरिषीष्ट क्षीणो नष्टो माभूदित्यर्थः ॥ २४ ॥

———

* मध्ये देहः ।

### श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

एव इति । रमयेति रमाख्यया स्वरूपशक्त्या न तु मायाशक्त्या हेतुना गृहीतगुणावतारः गृहीता गुणा भक्तवात्सल्यादयो येषु तादृशा अवतारा यस्य सः । त्वद्विक्रममिति । त्वद्विक्रममयत्वमेव विश्वं स्यात् ततस्त्वच्छक्त्यैव मया तत्कर्त्तुं शक्यं ततस्तथा तत् प्रार्थनञ्च मम युक्तमेवेति भावः ॥ २३ ॥

इदं महापातकात्मकपर्यन्तं सृजतो मम वेदोच्चारणरूपं ब्रह्मतेजो मा लुप्यताम् । यथा साधारणब्राह्मणानां हेलया ब्रह्मतेज इत्यर्थः । मारीरिषीष्टेति रिष् हिंसायामित्यस्य यङ्लुगन्तालिङि कर्म्मकर्त्त रिरूपं छान्दसम् ॥ २४--२८ ॥

---

### श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

सृष्ट्यादौ तस्य कार्यावस्थामाह यन्नाभिपद्मभवनादिति । यस्य नाभिपद्मभवनादहं ब्रह्मा आसं तस्मै नम इति सम्बन्धः ननु पितृत्वान्नमनमेव कर्त्तव्यं स्तुत्या किमित्याशङ्क्याह हे ईड्येति । स्तुत्यो यद्गतं स्तुत्यैव किंचित्कर्त्तव्यं लोकत्रयमुपकरणं यस्य यथा पुरुषस्य वस्त्रादयः एतादृशत्वं तत्कृपयैव जातमित्याह यदनुग्रहेणेति । यदनुग्रहेण लोकत्रयोपकरणमिति संबन्धः तस्मै ते तुभ्यं नमः नमने प्रयोजनमाह उदरस्थभवायेति । विश्वमेव तदुदरे स्थितं तच्चेत्प्र यच्छेत्तदा सृष्टिर्भवेदिति तर्हि निद्रिताय नमस्कारोऽनुचित इत्याशङ्क्याह योगनिद्रावसानविकसन्नलिनेक्षणायेति । योगनिद्राया अवसाने विकसन्नलिनवदीक्षणे यस्य योगनिद्रा काचिच्छक्तिः यथा सृष्टिः उभे भगिन्यौ तुल्यकाले सा भगवति प्रलयकाले आदिक्षणे तस्याः प्रथमोंऽशः संबध्यते प्रलयान्ते त्वन्तिमोंऽशः इदमेव तस्याव सानमतो निद्रावसानक्षणेऽथमतो नमनमुचितमित्यर्थः एवं नत्वा स्वाभीष्टान् पदार्थान् प्रार्थयते यन्नाभिपद्मभवनादिति चतुर्भिः । सृष्ट्यर्थं भगवतोत्पादित इति नान्यत्र तस्याधिकारः सृष्टौ च पदार्थज्ञानमपेक्ष्यते ज्ञानबुद्धिसंयोगोऽन्यथा कर्त्तुमेव न शक्यते ज्ञात्वा च कर्त्तव्यं चित्तस्य भगवच्चरित्रपरता चावश्यकी भगवदुपयोगिसृष्टिकरणात् वेदाविस्मरणं तथा सति पातकिकृतकार्यं पुरुषार्थोपयोगि न स्यात् असन्तोषपूर्वकं विषाददूरी करणं चापेक्ष्यते कार्योपयोगाय अतो वरचतुष्टयप्रार्थना ॥ २१ ॥

तत्र प्रथमं सृष्टिसामर्थ्यस्य पूर्वं विद्यमानत्वेऽपि बुद्धेरुद्वेगात्तदस्फूर्त्तिर्वैषम्यकरणं च स्यात् अतो भगवतोज्ञानसंबन्धं प्रार्थयते सोऽयमिति । सोऽयं भगवान् येन सत्त्वेन जगन्मृडयते तेनैव मे दृशमनुस्पृशतादिति संबन्धः सर्वेषां हितकारित्वादौदासीन्याभावादावश्यकत्वाच्च भगवतो ज्ञानं सृष्टावपेक्षितं तदर्थं विशेषणत्रयमाह समस्तजगतां सुहृत् एक आत्मेति । एकत्वात्सर्वत्र तुल्यः एकस्वभाव इत्यर्थः आत्मत्वादावश्यकः सत्त्वेनेति ज्ञानसुखकारणभूतगुणेन यद्यस्मात्कारणात् मृडयते सुखयति यदिति प्रसिद्धं वा जगत् कर्मणः स्पष्टत्वादवचनं वा भगेनेति तत्सत्त्वं भगात्मकमैश्वर्यादिषड्गुणरूपं तेन मे दृशमनुस्पृशतादिति षड्गुणाः ऐश्वर्यादयः प्रार्थिता भवन्ति ततः किमत आह यथाहं स्रक्ष्यामि पूर्ववदिति । उद्वेगाज्ञानवैषम्यानि यदा गमिष्यन्ति तदा पूर्ववदेव करिष्यामि नन्वेतावत्कथं दास्यतीत्याशङ्क्याह प्रणतप्रियोऽसाविति । असौ प्रणतप्रियः प्रणतः प्रियोयस्येति प्रियाय हि सर्वमेव दीयते असावेवै तादृशो नान्य इत्यर्थः ॥ २२ ॥

### श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

चित्तस्य भगवच्चरित्रपरतां प्रार्थयते एषप्रपन्नवरद इति । यदि चित्तं भगवच्चरित्रपरं न स्यात्तदाहंकर्तृत्वादुगर्वः स्यात् प्रमादा[...] षमकृतिजनितदोषश्च चरित्रं सत्त्वांशेन कृतं चिच्छक्तिगुण[...] चाविशिष्टेन वा भेदेन तादृशमानन्दं न जनयत्यतो ब्रह्मानन्दरूप[...] रमया लक्ष्म्याभेदाभावायात्मशक्त्या प्रपन्नानां वरद नाथं यद्यत्[...] रिष्यति तत्रापि स्वाधिकारानुसारेण ग्रहणार्थं गृहीतगुणावता[...] गृहीता गुणावतारा येन गुणानां धर्माणामवतारः पूर्वमुक्[...] यत्रोद्यत इत्यादिना अथवा ते गुणा न भगवदीयाः सर्वे पुरु[...] स्थिता अभिव्यक्ता जातास्ते गुणावतारास्तानादाय यद्यत्करिष्य[...] तीति बहव एव पदार्था भगवदीया भवन्ति कालकर्मस्वभा[...] कृतातिरिक्ताः सामान्यतोऽधिकृतत्वात्तत्राप्यहमेव कर्ता अतस्त[...] स्मिन् तव चरित्रे इदं तव पराक्रमरूपं जगत् भगवदीयं सृजतो[...] मे यथायुञ्जीत त्वच्चरित्र एव चित्तं सर्वदा युक्तं भवेत् यद्यपि काल[...] दिकृतसृष्टौ चरित्रपरता चित्ते युक्ता गर्वाभावार्थं भगवत्स्मरणार्थं[...] भगवदीयसृष्टौ तु नोपयुज्यते पूर्वोक्तदोषासंभवादित्याशङ्क्याह[...] दोषद्वयं संभवतीति तन्निराकरणार्थं चरित्रपरता युक्तैव अत्रसृज्य[...] नां भगवदीयत्वादणुमात्रेणापि भगवदिच्छावैपरीत्येन कृतिर्भवेत्त[...] भगवद्द्रोहः स्यात् सृज्यानां चाक्रोशस्तदुभयनिराकरणार्थं[...] कर्मिदम् सृजतोऽपिमे चेतो युञ्जीत ॥ २३ ॥

किंच कर्मणा जायते सर्वथा शमलं सृज्यानां सर्व[...] स्यात् तच्च शमलं यथा विजह्यां वेदविस्मरणं यथ[...] सृष्टेर्नामाधीनत्वात्कर्मबोधनार्थं च वेदोऽपेक्ष्यत इत्य[...] दिति इहाम्भसि सतो यस्य पुंसो नाभिहृदादहमासंतर[...] विचित्रं रूपं विवृण्वतो मे गिरां विसर्गो वेदो मारीरिषीष्ट[...] गच्छतु इहसत इत्यग्रेतिरोभावात्प्रश्नानुपपत्तिः त्वत्त एव[...] दन्याप्रश्नो विज्ञानशक्तिस्थाद्धि स्मरणानौचित्यं विचित्रंरू[...] विस्मरणे हेतुः नाभिहृदादित्यन्वेषणाङ्कुरसूचनं अनन्तशक्तिर[...] विस्मरणादानसामर्थ्यम् अहमिति यत्कृपयैतावत्त्वं साकृपाह्यग्रे[...] निर्वाह्येति सूचितम् अस्यरूपमिति वचनाद्धलान्तं ब्रह्मवर्चसमिति[...] येनवेदस्फुरणहेतुधर्मनाशः सूचितः चकाराद्भगवदपराधश्च विशेष[...] परित्यागः सवासनं न प्रायश्चित्तवत् रिष्हिंसायामिति धातोः स[...] तालुङ् ऋगताविल्यस्याशीर्लिङि रीङादेशे कृते वा रूपं सर्व[...] छान्दसाश्रयणं केनाप्यंशेन अडभावश्च माङ्योगात् इना[...] स्तयो रितिह्रस्वेऽपि छान्दस ईकारादेशः फलोफलीति सकारलो[...] विविधः सर्गो वेदे ब्रह्मणः सर्वमेव वाक्यं वेदरूपमिति वा निगम[...] येदस्य गिरामिति देवताशब्दान्तरव्यावृत्त्यर्थमुक्तं वेदो माविस्मृ[...] भवत्विति वक्तव्ये यत्प्रकारान्तरेण कथनं वरेण स्मरणमात्र[...] वृत्त्यर्थं यथान्यदीयमपि स्मरति अतएव मालुप्यतामितिप्रश्नः २४

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

आसम् अभूवं लोकत्रयमेव उपकरणमाज्ञाकारि यस्य सः । यद्वा सृष्ट्यादिद्वारा लोकत्रयस्योपकारी उदरे स्थितो भवः संसारप्रपञ्चो यस्य तस्मै । योगनिद्रावसाने सम्प्रति रात्र्यन्त इव विकसन्नलिनमिव ईक्षणं यस्य तस्मै । तेन हेमत्प्रभो कृपापारावार ! । जागृहि किङ्करोऽहं मङ्गलारात्रिकं करवाणीति भावः ॥ २१ ॥

एवं स्तुत्वा प्रार्थयते सोऽयमिति चतुर्भिः । समस्तजगतां प्राकृताप्राकृतानां सुहृत् पालकः आत्मा निरुपाधिप्रेमास्पदं एवम्भूतस्[...]

सोऽसावदभ्रकरुणो भगवान्विवृद्धप्रेमस्मितेन नयनाम्बुरुहं विजृम्भन् ।
उत्थाय विश्वविजयाय च नोविषादं माध्व्या गिराऽपनयतात्पुरुषःपुराणः ॥ २५ ॥

॥ मैत्रेयउवाच ॥

स्वसंभवं निशाम्यैवं तपोविद्यासमाधिभिः
यावन्मनोवचः स्तुत्वा विरराम स खिन्नवत् ॥ २६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

न्यस्याभावादेकः यद्यस्मात् सत्त्वेन गुणेन पालन लक्षणेन समस्तजगन्त्येव प्राकृतानि मृडयते सुखयति भगेन स्वायषडैश्वर्य्येण अप्राकृतान् भक्तजनानपि मृडयते यस्मात् तेनैव सत्त्वेन किञ्चिन्मात्रेण भगेन च से मम दर्श प्रज्ञां प्राकृतीं भक्तिसत्वादंशेनाप्राकृतीञ्च अनुस्पृशतु पालयतु यथाहं स्रक्ष्यामि प्राकृतान् मरीच्यादीन् स्रष्टुं अप्राकृतान् नारदादींश्चाविर्भावयितुं शक्ष्यामि यतोऽसौ प्रभुः प्रणतिं मात्रे कृतेऽपि प्रियः ॥ २२ ॥

पुनश्च रजोगुणमय्या सृष्टेर्विभ्यत् स्वीयसकेरभ्युदयं प्रार्थयते । एष भवान् प्रपन्नाय मह्यं एतद्वरदोऽस्त्वित्यर्थः । रमया स्वरूपभूतया न तु माययेत्यर्थः । अतो गृहीतगुणा घनस्वरूपशक्त्युत्थभक्तवात्सल्यादिगुणा अवतारा यस्य सः । तास्मन् चराचरणादौ कर्म्मणि मम चेतो युञ्जीत प्रवर्त्तयतु मम कथम्भूतस्य स्वविक्रमं स्वस्य स्वप्रभोर्विक्रमः प्रभावो यस्मिन् तदिदं विश्वं सृजतोऽपि तेन सृष्टे मम चेतो नासज्जतु किन्तु तल्लीलाकथायामेवेत्यर्थः । कर्म्मशमलं सृष्टयुत्थं वैषम्यादिपापं त्यक्ष्यामि ॥ २३ ॥

किञ्च भगवतस्तवैश्वर्य्यसिन्धोः कणमात्रेऽप्यस्मिन् मम यत् प्रवेशस्तत् खलु वेदाभ्यासप्रसादादेव यदुक्तं वेदश्चक्षुस्तवेश्वरेति सम्प्रति तु सृष्ट्यर्थकविविधव्यापारवत्त्वेनानध्यवसायात् तस्य वेदस्य विस्मृतिर्मे सम्भविष्यति सा मासूदिति प्रार्थयते नामीति यस्याम्भसि सतः पुंसस्तव नाभिहृदादहमासं विज्ञानशक्तिः विज्ञानमयपुरुषः समष्टिजीवरूपः बुद्धितत्त्वाधिष्ठाता वा अस्य परमेश्वरस्य रूपमिदं विश्वं विस्तारयतो मम निगमस्य अवयवभूतानां गिरां विसर्गः ऋगादिभेदप्रपञ्चः मारीरिषीष्ट्र मातिशयेन लुप्यतां मामायया विस्मृतो भवत्वित्यर्थः । रिष् हिंसायामित्यस्य यङ्लुगन्तलिङि कर्म्मकर्तरि रूपं छान्दसम् ॥ २४ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

यत् यस्य नाभिपद्ममेवभवनं तस्मात् लोकत्रयस्य प्रत्यहं सृष्टिद्वारेणोपकरोतीति लोकत्रयोपकरणोऽहमासम उदरे स्थित सेद्वारणजायमानो भवांशशेषो यस्य युज्यते इति यांगःसंकल्पस्तेनः यां निद्रा तदवसाने विकसन्नलिने इव ईक्षणं यस्य तस्मै ॥ २१ ॥

अथ प्रार्थयते सोऽयमिति चतुर्भिः । समस्तानि अनेककोटिब्रह्माण्डरूपाणि जगन्ति तेषां य एक एव सुहृदात्मा च समस्तानि जगन्ति येन मृडयते सुखयति सोऽयं तैनैव सत्त्वेन मम दर्श प्रज्ञाम् अनुस्पृशतात् योजयतु यथाहम् इदं पूर्ववत् स्रष्टुं क्षमो भविष्यामि यतोऽसौ प्रणतानां प्रियः प्रणता वा प्रिया यस्य सः ॥ २२ ॥

गृहीतगुणाः कृतज्ञाः अवतारा यस्य स एव भगवान् आत्मशक्त्या रमया सह यत् यत् चरित्रं करिष्यति तस्मिन् तत्र तत्र मे मम प्रणतस्य स्वविक्रमं विष्णोरेव विक्रमः प्रभावो यस्मिन्

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

तदिदं विश्वं सृजतोऽपि कर्मासक्तस्यापि चेतः चित्तं युञ्जीत सगव प्रवर्तयतु यथा कर्मशमलं कर्मकृतं वैषम्यादिपापं जह्यां त्यक्ष्यामि २३

किंच कर्मासक्त्या भगवत्स्वरूपगुणादिज्ञानदार्ढ्याय वेदान्तपाठः माऽलुप्यतामित्याह नाभिहृदादिति । यस्य पुंसः भगवतः अम्भसि सतः "विज्ञानं यज्ञं तनुते" इतिश्रुतेर्विज्ञानरूपा शक्तिः जीवविशेषशक्तिरहम नाभिहृदात् इहासम तस्यैव विचित्रं रूपमिदं विश्वं तदाज्ञया विवृण्वतः स्वाधिकारानुसारेण विस्तारयतो मे निगमस्य अवयवभूतानां गिरां विसर्गः उच्चारणं मारिरिषीष्ट माक्षीणः स्यादित्यर्थः ॥ २४ ॥

---

भाषाटीका

हे ईड्य ! स्तुति के योग्य ! तीन लोक रूपी भोग की सामग्री सहित मैं आपके नाभि कमल रूपी घरसे उत्पन्न हुआ हूं सो आपके अनुग्रह से आपके उदर में सब संसार भरा है अब योग निद्रा के अंत में, खिले हुये कमल सरीके आपके नेत्र को कृपा पूर्ण देखकर मैं आपके अर्थ नमस्कार करता हूं ॥ २१ ॥

जो ये आप शरणागतों को प्रिय मानने वाले हैं सब जीवों के मित्र हैं एकही अंतर्यामी हैं जिस ज्ञान ऐश्वर्य से सब जगत्को सुखी करते हैं उसी ज्ञान ऐश्वर्य से हमारी बुद्धि को भी युक्त करें तो हम भी पूर्व कल्प की नाईं इस जगत् की सृष्टि करें ॥ २२ ॥

ए भक्तों के वरदेने वाले भगवान् आत्मशक्ति लक्ष्मी के सहित गुणयुक्त अवतारों से जिन जिन चरित्रों को करेंगे उनहीं कर्मों का जिसमें प्रभाव है उस जगत्के बनाने में भगवान् मेरे चित्तकं लगावें जिससे कि संसार रचनारूपी कर्म के दोष को दूरकर सकूं २३

जिस अनंत शक्तिवाले भगवान के नाभिरूपी हौदमेंसे इस जलही के मध्यमें मैं चित्तका अभिमानी होकर उत्पन्न हुआ हूं इसी भगवान् का रूप इस जगत् के विस्तार करने में मेरा वेदों का उच्चारण मत भजिजावै ॥ २४ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

विवृद्धप्रेम्णा स्मितेन विजृम्भयन् विश्वस्य विजयायोद्भवाय चकारादस्मदनुग्रहाय चोत्थाय ॥ २५ ॥

स्वस्य संभवो यस्मात्तम् तपः शारीरम् विद्या उपासना समाधिरैकाग्र्यं तैर्निशाम्य दृष्ट्वा यथाशक्ति स्तुत्वा श्रान्तवद्विरराम ॥ २६ ॥

आत्मनो लोकसंस्थानविज्ञाने परिखिद्यतो ब्रह्मणोऽभिप्रेतमालक्ष्य तमाहेति द्वयोरन्वयः तेन प्रलयोदकेन विपरायाचेतसम् ॥ २७ ॥

कश्मलं मोहम् इवेति समस्तमोहाशमनं दर्शयति ॥ २८ ॥

अथाभिप्रेतमन्वीक्ष्य ब्रह्मणो मधुसूदनः ।
विषण्णचेतसं तेन कल्पव्यतिकराम्भसा ॥ २७ ॥
लोकसंस्थानविज्ञान आत्मनः परिखिद्यतः ।
तमाहागाधया वाचा कश्मलं शमयन्निव ॥ २८ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या
दीपिका टिप्पणी ।

सोऽसौ जलशायित्वेन प्रसिद्धः श्रीनारायणः ॥ २५ ॥

भगवद्गुणानामनन्तत्वात् श्रान्तत्वं तथाप्युत्कण्ठाया अनिवृत्तेर्घेत्प्रत्ययः ॥ २६ ॥

अथेति युग्मकम् अथ स्तुत्यनन्तरम् अभिप्रेतं सृष्टीच्छाभिप्रायं भावे निष्ठा आत्मनो लोकसंस्थानविज्ञाने स्वकर्तृकलोकरचनाविज्ञाने दुहितृगमनादिविकर्मप्रवृत्तेः समस्तेति इव शब्देन व्याख्यातम् ॥ २७ ॥ २८ ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

अथाभिमुख्येन तत्संभाषणं प्रार्थितस्य सर्वस्य निदानभूतं प्रार्थयते स इति । अदभ्रकरुणः अनल्पकृपः पुराणः पुरुषः सोऽसौ भगवान् विवृद्धप्रेमस्मितेन विवृद्धः प्रेमा यस्मिन् तथाभूतेन स्मितेन नयनाम्बुरुहं विजृम्भमुल्लासयन् विकाशयन्निति यावत् विश्वस्य विजयाय उद्भवाय चकारादस्मदनुग्रहाय चोत्थाय माध्व्या मधुरया गिरा नः विषादं खेदमपनयतान्निराकुर्यात् ॥ २५ ॥

स्तुतिमुपसंहरति स्वसंभवमिति । स्वस्य संभवो यस्मात्तं भगवन्तं तपोविद्यासमाधिभिः कर्मज्ञानभक्तिभिर्निशाम्य दृष्ट्वा एवमुक्तप्रकारेण यावन्मनोवचःस्वमनोवागनुसारेण यथाशक्ति स्तुत्वा न तु साकल्येनेत्यर्थः

इषुक्षयान्निवर्तन्ते नान्तरिक्षक्षितिक्षयात् ।
मतिक्षयान्निवर्तन्ते न गोविन्दगुणक्षयात् ॥

इतिवचनात् खिन्नवच्छ्रान्तवद्विरराम ॥ २६ ॥

आत्मनः स्वस्य लोकसंस्थानविज्ञानविषये परिखिद्यतः कल्पव्यतिकराम्भसा विषण्णचेतसः ब्रह्मणो हिरण्यगर्भस्याभिप्रेतमन्वीक्ष्य मधुसूदनस्तं ब्रह्माणमगाधया गम्भीरया वाचा कश्मलं मोहं शमयन्निवाह उवाचेति द्वयोरन्वयः ॥ २७ ॥ २८ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

अनुग्रहमात्रेणाभिप्रायसिद्धावपि संलापेनाधिकविश्वासो भवतीति सृष्टिविषादापनयनप्रार्थनव्याजेन संलापमभिप्रैति सोऽसाविति योऽसौ मया वर्णितगुणोऽदभ्रकरुणः पूर्णदयासमुद्रः स पुराणपुरुषो भगवान् विश्वविजयाय शेषपर्यङ्कादुत्थाय विवृद्धप्रेमस्मितेन पूर्णस्नेहप्रसरप्रादुर्भूतमन्दहासेन सह नयनाम्बुरुहं विजृम्भमुन्मीलयन् माध्व्या मदिरावद्रोमाञ्चं जनयन्त्या गिरा नो मनो विषादं भयमपनयतादित्यन्वयः हे वेदगर्भ ! भयं माभूत सर्गोद्यमं कुर्वित्यादिवचनेन प्रीतिमावहेदित्यर्थः ॥ २५ ॥

हरिगुणानन्त्यात्प्राज्ञेन विरिञ्चेन यावदायुः स्तुतोऽहरिः किमिति मन्दाशङ्कां परिहरति मैत्रेय इति । स्वसंभवं स्वजनकं विषामन्त्र लक्षणा निष्ठा स्तुतेरुपरमो गुणानामानन्त्यादप्रतिभानात् स्वाभीष्टसिद्धेरित्यनेकविधोऽदृष्टोऽत्रतु प्रथमपक्ष एवेति भावेनाह यावदिति । खिन्नवदलंबुद्धिरहितवत् इत्यनेन पुनरपि स्तोतुमिच्छां सूचयति ॥ २६ ॥

तर्ह्यनया स्वाभीष्टं न सेत्स्यतीति तत्राह अथेति । कल्पव्यतिकरः प्रलयस्तदम्भसा ॥ २७ ॥

आत्मनः स्वस्य लोकानां संस्थानस्यावयवशो विन्यासविशेषस्य विज्ञाने परिखिद्यतोऽलंबुद्धिमकुर्वतस्तस्य ब्रह्मणोऽभिप्रेतमालस्य लक्षणतो ज्ञात्वा कश्मलं ज्ञानसंकटम् ॥ २८ ॥

---

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

असंतोषपूर्वकं विपाददूरीकरणं प्रार्थयते सोऽसाविति अमात्यापने विषादं माध्व्या गिरा अपनयतादिति संबन्धः प्रार्थितदानसामर्थ्यनिरूपणार्थं स इति पूर्वोक्तनिर्देशः अदभ्रा करुणा यस्य दयैव प्रार्थनदाने हेतुः भगवानिति प्रार्थनीयत्वं विवृद्धप्रेमस्मितेन भक्तक्लेशस्मरणेन भक्ते विवृद्धा भगवतः प्रीतिर्भवति क्लेशाभावार्थं शास्त्रार्थग्रहव्यावृत्तये किंचिन्मोहनमपि करोति तदा भगवद्ज्ञानशक्ती रूक्षत्वाभावायाम्बुनि शीतले विषयसुखे संयुक्तमितिजीवोऽपि विषयसुखस्पृष्टो भवति तदाह्लादनयनमेवाम्बुरुहमिति तत्र विजृम्भा विशिष्टो विकाशः ज्ञानशक्तिरिति विलसिता सर्वत्र स्तुत्यान्यं बोधयन्ती क्लेशं सर्वथैव दूरीकरोति विशिष्टश्च विकाशः ... येऽपि तथोद्गमपरः उत्थिता जगत्सृष्टिः रजसा भवतीत्युत्थायेत्युक्तं विश्वस्य विजयाय चेति विश्वस्मिन्विजयः स्वभावादिदुद्धार्ये स्वाभिप्रेतविधित्सा विश्वस्मिन्नेव चकाराद्विश्वस्य स्वानुगुणत्वं नोविषादं पूर्वोक्तमस्माद्विपादं न इति स्वान्तस्थित भूतसहितानां प्रायं माध्व्या गिरेति स्नेहप्रतिपादकेन वचनेन ईश्वराज्ञायाः कर्तृत्वशङ्कयोक्तं पुराणः पुरुष इति पितामहत्वेन समत्वात् नयनाम्बुरुहविजृम्भणं विश्वविजयरूपेष्टसिद्धौ विषादनिराकरणे च हेतुः गिरां च परमेकम् कर्तृप्रविष्टम् अलौकिकद्वारा तदुभयकर्तृकं तु लौकिकद्वारा एतत्सर्वं कार्याभिनिविष्टः करिष्यति न वेति संदिह्य पुनरुत्तमभावं तत्र निरूपयति पुराण इति ॥ २५ ॥

स्वार्थं सर्वं प्रार्थितमिति ब्रह्मकल्पवद्भक्तिप्रकाशाभावाद्दुःखाभोगेन मध्येऽपराधसंभवाद्गुणत्रयस्य व्यवधायकं बोधयन् विरलेनोत्तरं दत्तवानित्याह त्रिभिः स्वसंभवमिति । यावत् ज्ञानं ब्रह्मणो भगवद्विषयकं जातं तपसा उपासनया समाधिपर्यन्तयोगेन च संभवं स्वोत्पत्तिम् एवं पूर्वोक्तप्रकारेण निशाम्य ज्ञात्वा स्वस्य यावन्मनः सामर्थ्यं तावत्कल्पयित्वा यावद्वा वक्तुं शक्यं तावत्स्तुत्वा स्थिते भगवत्यनवसरोऽयं वेति संदिह्य स्वयमपि तूष्णीं स्थितः

श्रीभगवानुवाच ॥

मा वेदगर्भ ! गास्तन्द्रीं सर्ग उद्यममावह ।
तन्मयापादितं ह्यग्रे यन्मां प्रार्थयते भवान् ॥ २९ ॥
भूयस्त्वं तप आतिष्ठ विद्यां चैव मदाश्रयाम् ।
ताभ्यामन्तर्हृदि ब्रह्मन् ! लोकान् द्रक्ष्यस्यपावृतान् ॥ ३० ॥

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

भगवन्तं प्रसन्नवदनं दृष्ट्वा पूर्वखेदस्याप्यनुवृत्तत्वात् खिन्नवदित्युक्तं यथा श्रूयते तथा न ज्ञात इति ज्ञानमप्यन्ते निरूपितम् ॥ २६ ॥

मध्ये भगवद्विचारोऽपि कालविलम्बहेतुर्जात इत्याह अथेति आनन्तर्ये कालविलम्बाभिप्रेतं स्वसमानज्ञानैश्वर्यं प्रार्थयत इति अन्वीक्षणं निश्चयः तस्मिन्दत्ते वा कालान्तरेऽपकारो न भवेदिति अन्वीक्षा ब्रह्मण इत्यधिकारित्वं तेन तथा प्रार्थनायामपि नापराधः मधुसूदन इति तद्धिताचरणं भगवतः स्वाभाविकं यथाऽनिष्टं निवर्तयति तथेष्टं संपादयतीत्यर्थः विषण्णचेतसमिति दया अधिकारित्वात्तस्य शक्यत्वाच्च साधनोपदेश एव तेनेति पूर्वोक्तेन भगवद्रहितेन भगवदीयत्वे तु तस्योद्वेगो न स्याद्भगवदीयकार्येचानुगुण्यं स्यात् अभगवदीयत्वार्थमाह कल्पव्यतिकराम्भसेति कल्पस्य व्यतिकरो नाशस्तत्साधकेनाम्भसा ॥ २७ ॥

तस्मादग्रिमभगवच्चरित्रं तस्य दुःखनिवारकमपीत्येतदुक्तं स्वार्थे चैतद्दुःखं भगवत्कार्याय तु यत् दुःखं तत्साक्षादेव निवारयतीत्याह लोकसंस्थानविज्ञान इति । लोकानां सम्यक् स्थानं यथोपयोगदेहादौ स्थितिः तद्विषयकज्ञानार्थे परिखिद्यतः परितः खेदं प्राप्नुवतो ब्रह्मण आत्मन एव हेतोर्ज्ञात मेव साधनेन साध्यमितिसाधनमकृत्वैव साध्यमेप्सुः खिन्नोभवत्येव तपोऽपि शीघ्रमेव निवर्तितमिति भगवतो विलम्बस्तदर्थमेव शयान एव भगवानाविर्भूतः सतु तदकृत्वैवोत्तालो भूत्वा स्तोत्रं प्रार्थनां च कृत्वा तूष्णींस्थितः एतादृशमपि तं भगवानाह अगाधा वाणी भगवतः अभिप्रायाज्ञानात् कश्मलमुभयविधं शमयन्निवेति साधनोपदेशात् ॥ २८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

किञ्च । प्रभोः कृपाकटाक्षकृपानिदेशाभ्यामेव दासस्य निःसंशय आनन्दो भवेदिति तावेव प्रार्थयते सोऽस्मावितिं । विजृम्भन् विजृम्भयन् नोऽस्माकं विश्वस्मिन् सर्व्वत्रैव विजयाय सृष्ट्यादिषु पराभवाभावाय चकारात् पूर्व्वोक्तवाञ्छितसिद्धये च । माध्व्या माधुर्य्यमय्या विश्वं सृजेति निदेशमय्या गिरा ॥ २५ ॥

स्वस्य सम्भवो यस्मात्तं तपः शारीरम् । विद्या आचार्य्यचैत्यवपुषा स्वगतिं व्यनक्तीति रीत्या आकस्मिकस्फूर्त्तिप्राप्तन्मन्त्रोपासना । समाधिश्चित्तैकाग्र्येण ध्यानं तैर्निशाम्य दृष्ट्वा यथाशक्ति स्तुत्वा कृपाकटाक्षस्यानुपलम्भात् खिन्न इव विरराम ॥ २६ ॥

कल्पव्यतिकराम्भसा प्रलयकालमिलितागन्तुकजलेन हेतुना विषण्णचेतसः तथा आत्मनः स्वस्य लोकानां देवतिर्य्यगादीनां संस्थानं समुचितस्वभावतया निर्माण स्थापनादिपरिपाटी तद्विज्ञाने खिद्यतो ब्रह्मणोऽभिप्रेतम् अन्वीक्ष्य ज्ञात्वा तमाहेत्यन्वयः । कश्मलं मोहं शमयन्निवेति ॥ २७ ॥ २८ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

अदभ्रा अनल्पा करुणा यस्य सः नयनाम्बुरुहं विजृम्भन् विजृम्भयन् उल्लासयन् विश्वविजयाय चकारादस्मदनुग्रहाय उत्थाय विवृद्धः प्रेमा यस्मिन् तेन स्मितेन माध्व्या गिराच नोऽस्माकं विषादं वैमनस्यम् अपनयतात् ॥ २५ ॥

स ब्रह्मा स्वस्य संभवो यस्मात्तं नारायणं तप आदिभिः निशाम्य दृष्ट्वा यावन्मनोवचः मनोवाक्शक्त्यनुसारेण स्तुत्वा खिन्नवत् विरराम ॥ २६ ॥

आत्मनो लोकसंस्थानविज्ञाने परिखिद्यतो ब्रह्मणोऽभिप्रेतमालक्ष्य कल्पे कल्पान्ते यो व्यतिकरः लोकत्रयनाशस्तदम्भसा विषण्णं चेतो यस्य स तथा तं ब्रह्माणं मधुसूदन आहेति युग्मान्वयः ॥ २७ ॥ २८ ॥

---

भाषाटीका ।

सो ये अत्यन्त करुणावाले पुराण पुरुष भगवान् प्रेमयुक्त हासके सहित नेत्रकमलको प्रकाश करके संसार के कल्याण के अर्थ उठकर के मधुर वचन से हमारे चिंताको दूरकरें ॥२५॥

मैत्रेय जी बोले ब्रह्माजी अपने उत्पन्न करने वाले नारायण को इस प्रकार तपस्या उपासना समाधि द्वारा अनुभव करके मन वचन के शक्ति तक स्तुति करके थके से होकर चुप हो गये ॥ २६ ॥

इसके अनंतर उस प्रलय के नाश करने वाले जल से खेदको प्राप्त हुये ब्रह्मा के अभिप्राय को जाना कि अपने हेतु से लोक की स्थिति के ज्ञान मे खेद को प्राप्त हो रहे हैं तब उनके मोह को नाश करने के लिये गंभीर वाणी से नारायण बोले ॥ २७ ॥ २८ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

हेवेदगर्भ ! तन्द्रीं विषादकृतमालस्यं मागाः तेनैव मेदृशमनुस्पृशतादित्यादियत्प्रार्थयसे तदग्रे पूर्वमेव संपादितम् ॥ २९ ॥

तर्हि कथमहं न जानामीत्यत आह भूय इति ॥ ३० ॥

भक्तियुक्तः समाहितश्च सन्नात्मनि स्वस्मिंल्लोके च मां ततं व्याप्य स्थितं द्रष्टासि द्रक्ष्यसि आत्मनो जीवांश्च ॥ ३१ ॥

सर्वत्र मद्दर्शने मोहो निवर्त्तेत इत्याह यदात्विति प्रतिचक्षीत पश्येत् ॥ ३२ ॥

---

तत आत्मनि लोके च भक्तियुक्तः समाहितः।
द्रष्टाऽसि मां ततं ब्रह्मन् मयि लोकांस्त्वमात्मनः ॥ ३१ ॥
यदा तु सर्वभूतेषु दारुष्वग्निमिव स्थितम्।
प्रतिचक्षीत मां लोको जह्यात्तर्ह्येव कश्मलम् ॥ ३२ ॥

श्रीराधारमणदास गोस्वामि विरचिता दीपिन्याख्या दीपिका टिप्पणी।

विषादकृतं सृष्ट्यसामर्थ्यप्रयुक्तम् ॥ २९ ॥

तपः प्राणायामादि विद्या मन्त्रोपासना ताभ्यां तपोविद्याभ्यां लोकान् भुवनानि जनांश्च ॥ ३० ॥

ततस्तपोविद्याभ्यां लोकदर्शनानन्तरं समाहितश्च सद्भक्तियुक्तत्वात् स्थिरचित्तश्च सन् लोके भुवने मयि सर्वाधारे लोकान् भुवनानि ॥ ३१ ॥

पश्येद्भक्त्येति शेषः ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका।

वचनमेवाह मेति। हे देवगर्भ ब्रह्मन्! तन्द्रीं विषादकृतपारवश्यं मागाः माप्राप्नुहि किं तु सर्गे सृष्टौ उद्यमं प्रयत्नमावह कुरु भवान् यत्तनैव मे हृशमनुस्पृशतादित्यादिना प्रार्थयते तदग्रे पूर्वमेव मया आपादितं संपादितम् ॥ २९॥

तर्हि कथमहं सृष्टेः प्रकारं न जानामीत्यत आह। भूय इति। भूयः पुनः तपः कर्मयोगं मदाश्रयां मद्विषयां च विद्याम् उपासनां तन्त्रेण ज्ञानयोगोऽपि विद्याशब्देन विवक्षितः आतिष्ठ कुरु ताभ्यां तपो विद्याभ्यामन्तर्हृदि हृदयकमलमध्ये हेब्रह्मन्! अपावृतान् लोकान् यथावद्द्रक्ष्यसि ॥ ३० ॥

ततः यथावल्लोकदर्शनानन्तरं मद्भक्तियुक्तः समाहितचित्तस्त्वमात्मनि स्वस्मिन् लोके च सर्वस्मिंश्चेतनाचेतनात्मके जगति च ततं व्याप्तं मां मय्यात्मनीति सामानाधिकरण्यम् आत्मन इति पाठे आत्मनो जीवानित्यर्थः यद्वा आत्मनो मम लोकान् शरीरभूताँल्लोकान् यद्वा आत्मनः मत्तः प्रसूतान् लोकान् मयि यथा वद्द्रष्टासि द्रष्टुमर्हसीत्यर्थः सर्वचेतनाचेतनान्तर्यामिणं धारकं मां मद्व्याप्यान् धार्यान् लोकांश्च परं पश्यसीत्यर्थः सर्वात्मकब्रह्मसाक्षात्कारेण मोहो निवर्तत इत्यभिप्रायः ॥ ३१ ॥

इदमेव कृत्स्नचिदचिद्विलक्षणत्वेन तदन्तर्यामितया चोपासनं कश्मलं च यथा विजह्यामित्यर्थितमुक्त्युपायोऽपीत्याह। यदाविति। दारुष्वग्निमिव सर्वभूतेषु स्थितं मां लोकः यदा तु प्रतिचक्षीत पश्येत् दारुष्वग्निमिवेति दृष्टान्तसामर्थ्याद्विलक्षणाकारयोगोऽभिप्रेतः कौटिल्यदैर्घ्यादिधर्मोहि दारुगतो न त्वग्निगतः एवं कृत्स्नाचिदन्तरात्मतयावस्थिते परमात्मनि चेतनाचेतनगतकर्मवश्यत्वसृज्यत्वपाल्यत्वनियाम्यत्वशेषत्वशरीरत्वादयो न संगच्छन्त इत्यभिप्रायः तर्ह्येव प्रकृतिपुरुषविलक्षणतया तदन्तरात्मतया च दर्शनानन्तरमेव कश्मलं दुःखं मोहं वा जह्यात् ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली।

तन्द्रीं लोकसंस्थानविज्ञानविषयं परिखेदं मागाः मवान्यल्लोकसंस्थानविज्ञानं प्रार्थयते तन्मया पूर्वमेव तप इति द्व्यक्षरवाक्येन चोदितं तत्प्रार्थनमपि न स्वाधीनं किंतु मत्प्रेरणयैवेत्यामर्थमहिना सूचयति ॥ २९ ॥

नैतावतालमित्याह भूयश्चेति

तप आलोचनं प्रोक्तं विद्या निष्ठाप्रकीर्तिता ॥

इति वचनात्तप आलोचनगुणोपसंहारलक्षणं ध्यानं विद्यां निष्ठां भक्तिलक्षणां ततः किं स्यादिति तत्राहताभ्यामिति ॥

लोकदर्शनमेव विशिनष्टि तत इति। भक्तियुक्तः समाहितः एकाग्रचित्तस्त्वं ततः स्वेन योगेन ध्यानेनात्मनि देहमध्ये हृदि ततं सर्वगुणपूर्णं मां द्रष्टासि आत्मनि त्वयि स्थिते मयि लोकान्द्रष्टासीत्यन्वयः ॥

देहे देहे हरिस्तस्मिन्सर्वे लोकाः प्रतिष्ठिताः।
अङ्गुष्ठमात्रेऽपि परे परशक्ति र्यतो विभुः ॥

इति वचनात् हृदन्तर्लोकदर्शनं युक्तमिति भावः ॥ ३१ ॥

लोकसंस्थानविज्ञानयोगमुपदिश्याधुना ब्रह्मणः सर्वेषां गुरुत्वात्तदुपदिष्टज्ञानस्य मुक्तिसाधनत्वाल्लोकोपकारकं तज्ज्ञानप्रकारमुपदिशति यदात्विति। तुशब्दो ज्ञानविशेषसूचकः लोको योग्यजनो दारुष्वग्निमिव निःसंगतया सर्वभूतेषु स्थितं तुशब्दात्सर्वभूतेषु स्थितेऽङ्गुष्ठमात्रे मय्यपि लोकान्यदा प्रतिचक्षीत प्रतिदृश्यं पश्येत् तर्हि तदानीमेव कश्मलं जीवेश्वराभेददर्शननिमित्त दुःखं जह्याज्जहाति देहे देहे हरि स्तस्मिन्नित्येतदत्राप्युदाहर्तव्यम् ३२।

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः।

भूय इति। तपः प्राणायमादि ॥ ३०--३२ ॥

---

श्रीमद्वल्लभाचार्यकृत सुबोधनी।

तत्र प्रथमं ज्ञानवृद्धिसंयोगे उत्तरमाह। मा वेदेति दर्शनवाक्यैरेव चतुर्थोत्तरं भवति द्वितीयं तु वरदानादेव तृतीयेऽल्पप्रयासोऽतः सपरिकरं प्रथममेवोपपादयति।

आलस्याभावतपसीभगवज्ज्ञानसाधने।
सर्वत्रान्वीक्षणं चैव ज्ञानेनैवमलक्षतिः।
चरित्रपरताहेतुर्मलाभावे विचारितः।
सा ज्ञानेनैव संसिद्धाह्यतस्तत्फलमीर्यते।
सुखेहेतुश्चतज्ज्ञानं स्वसंवन्धविशेषणात्।
गर्वाभावोवरादानाद्यान्यथेति निरूपितम्।
स्वाभाविकस्य दोषस्य निवृत्तिश्चाप्यनुग्रहात्।
मत्स्वरूपस्य विज्ञानं ज्ञातमेव तदेव तत्।
मयात्यंच चकृतमाविष्कारः स्तुतौकृतः।
ममैवानुग्रहात्सर्वमित्येषाह्युपसंहृतिः।

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

द्वितीयस्योत्तरं वेदैश्चतुर्थोऽप्युक्त एवहि ।
भवोदिति कृतंस्तोत्रं चरित्रं भक्तिहेतुकम् ।
नान्यत्रविनियं.कथं भक्तिर्नित्या नसाधनम् ।
वेदाविस्मरणं हेतु र्देह एव कृतः पुरा ।
तदाहैकेन तेनैवकलाश्लोका निरूपिताः ।

तत्र प्रथमम् आलस्याभावमाह । हेवेदगर्भ ! तन्द्रीं मागाः आलस्यं माकुर्वित्यर्थः सर्गे उद्यमं चावह सर्गकरणार्थ-मुद्युक्तो भव चकारात्साधनेमतिः कर्त्तव्या साधनमेव न जाना-मीति चेत्तत्राह तन्मयापादितमिति यन्मां त्वं साधनं प्रार्थयसे तन्मया पूर्वमेवापादितं हियुक्तोऽयमर्थः अन्यथैतावद्दूरे साधनपरं-परा न भवेदतः साधनस्य सिद्धत्वात् आलस्यं त्यक्तव्यमिति भावः ॥ २९ ॥

ज्ञानार्थं च तपः कुर्वित्याह । भूयस्त्वमिति । यथा पूर्वं तपःकृतं तथैव ततोऽपि भूयस्तपः कर्तव्यं पुनः पद्मादिपरित्यागेन भूयः पदप्रयोगेण अर्थद्वयमभिप्रेतमिति ज्ञायते तपसि आस्था कर्तव्या विद्यामद्रुपासनायै कर्तव्या सा चोपासाना मद्विषयैव ताभ्यामुपास-नातपोभ्यां हृदयमध्य एव अपावृतान् लोकान् द्रक्ष्यसि ब्रह्मन्निति संबोधनं तदधिकारद्योतनार्थं नहि ब्रह्मभावव्यतिरेकेण कश्चित्त-स्मिन् लोकान् द्रष्टुमर्हतीति अपावृतान् मदीयान् अन्येतु त्रिविधा जीवाः कालादिभिरावृता एव भवन्ति सर्वेषामेवजीवानाः पावृतत्वे त्रैविध्यं न स्यादिति केचित् परमार्थतोवा अपावृताः सर्वएव ततो-भवानात्मानं प्रजावदन्तरतमांल्लोकांश्च दृष्ट्वाआत्मत्वेन जानातु स्व-स्मिंल्लोकेच भक्तिर्भविष्यति स्वस्मिंस्नेहांशोऽस्त्येव माहात्म्यस्य दृष्टत्वात्स्नेहोमाहात्म्यं च मिलितं भक्तिर्भवति लोकेचापावृतत्व दर्श-नान्माहात्म्यज्ञानं स्वान्तरत्वात्स्नेहः एवमुभयत्र भक्तियुक्तः तत्रै-कोदोषः संभवति भगवतस्तुल्यता तदभावार्थं समाहितोभवेत्एतदु-भयमात्मज्ञानं भक्तिश्च न स्वतन्त्रा किंतु भगवज्ज्ञानार्थमिति तज्ज्ञानं कदाभविष्यतीति सावधानस्तदानीं द्रक्ष्यसि स्वप्नमध्ये लोकमध्येच मामिति यत्रैव भक्तिस्तन्मध्ये स्थिता प्रकाश्यते अतस्तत्त्वमस्याद्य-पि बांधनं स्वरूपे ब्रह्मणि सत्त्वर्यं ततः स्वस्मिन्नेव स्थितं भग-वन्तं द्रक्ष्यसीति ॥ ३० ॥

ननु स्वस्मिन् लोकेच भक्तौ कथं भगवत्साक्षात्कारस्तत्राह । ततइति । ततं सर्वत्र व्याप्तं पुनर्ब्रह्मन्निति संबोधनं प्रकृतोपयोग्यधिका-रसूचकं तदा मयि भक्तिरस्त्येव तद्वतानेयमन्नतानपि द्रक्ष्यसीत्याह आत्मसंवन्धिलोकानिति नन्वेवं ज्ञानस्य किंप्रयोजनमित्याशङ्क्य खण्डशोज्ञातप्रयोजनान्याह । तत्र लोकेवितितं भगवज्ज्ञानं सर्वदोष-निर्वर्तकं भगवदधिष्ठानत्वेनैव सर्वस्य ज्ञातत्वात्क्वाऽप्यग्रे दोषः संभवति "योमामजमनादिं चे" ति वाक्याद्भगवज्ज्ञाने सर्वपापक्षयः सिद्धः ॥ ३१ ॥

अतोवितितज्ञानं यादृशमपेक्ष्यते कश्मलनिरसने तादृशं रूपमाह । यदात्विति सर्वभूतेषु यथा दारुष्वग्निस्तथा चेदात्मनं वितितं पश्यति तदाकाशवत् नहि लोकैरावृतस्तदपगममात्रेण प्रकाशते ननु म-थनेनाग्निरिव घर्षणेनचायमभिव्यक्तो भवति तथा योगेन निरन्तर-भावनया वा मनसात्मघर्षणेन वहिरार्द्रतानिराकरणार्थं तपसाच तदाभिव्यक्तं भवति स्थितः प्रथमत एव सर्वेष्वपि दारुष्वेकस्मिन्नपि सर्वावयवे निर्गतोऽग्निस्तुल्य एव एकश्च सः भेदकप्रमाणाभावात् एवं सर्वत्र विचारं कृत्वा यो न भगवन्तं पश्यति प्रतिचक्षणं परीक्ष्य दर्शनं तत्रैव सर्वेषां लोकानां सर्वकश्मलनिरसनं भवत्यतो-लोकेऽप्ययमर्थः सिद्ध इति तव कश्मलनिरसने कः संदेह इत्यर्थः तर्त्थेवेति । मध्ये कश्मलनिरसनं वाधितमन्यद्यज्ज्ञानद्वयमस्ति स्वस्य ब्रह्मत्वेन ज्ञानं स्वस्मिन् प्रजाज्ञानंच ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

समस्तमोहोपशमनं दर्शयति । तन्द्रीमज्ञानं मागाः वेदगर्भेति न हि सर्ववेदविज्ञस्याज्ञानमुचितमिति भावः । ननु स्वस्य सृष्टि-सामर्थ्ये संशयानोऽस्मि तत्राह । सर्गे इति । उद्यमो निष्फलो भावी-त्यपि मा शङ्किष्ठा इत्याह । तन्मयेति । तेनैव मे दशमनुस्पृशतादिति यन्मां प्रार्थयते ॥ २९ ॥

नन्विदानीमुद्यमेन किं भविष्यति ये मया सृज्यान्ते भूरादयो लोका एव न दृश्यन्ते इत्यत आह । भूय इति । तपश्चितैकाग्र्यं विद्यां मन्त्रोपासनाम् अन्तर्हृदि हृदय एव वहिःस्थितानपि लोकान् भूरादीन् तत्रस्थान् मनुष्यादींश्च अपावृतान् जलावरणशून्यान् द्रक्ष्यसि ततश्च मयैव यथास्थिततया दर्शयिष्यमाणांस्तान् स्वहृदय एव दृष्ट्वा आदर्शदर्शी लेखक इव सुखेनैव वहिः स्रक्ष्यसीति भावः ॥ ३० ॥

सृष्ट्यावेशवशत्वेऽपि त्वामहं न विस्मरेयमिति यत् प्रार्थितं तत्राह । ततः सृष्टिसमयेऽपि भक्तियुक्तः समाहितश्च सन् आत्मनि स्वम-नसि वहिर्लोके च मां द्रष्टासि । तथा मयि लोकान् भूरादीन् आत्मनो जीवांश्च मृद्भक्षणलीलायां यशोदेव द्रष्टासि । यद्वा । ततं कृष्णावतारे वत्स वत्सपाद्याकारैर्व्यापकं मां मयि लोकान् ब्रह्मा-ण्डानि आत्मनश्चतुर्भुजमूर्त्तीः । यद्वा । आत्मनः स्वानि बहून् परमे-ष्ठिनः द्रक्ष्यसि ॥ ३१ ॥

कर्म्मशमलञ्च यथा विजह्यामिति यत् प्रार्थितं तत् खल्वेतादृश्यां दशायां सम्भवदित्याह । यदात्विति । प्रतिचक्षीत पश्येत् कश्मलं मोहम् ॥ ३२ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

तन्द्रामालस्यम् मागाः माप्राप्नुहि ॥ २९ ॥ ३० ॥

ततस्तदनन्तरं भक्तियुक्तस्त्वम् । आत्मनि स्वस्मिन् लोकेच मां ततं व्याप्तं द्रष्टासि द्रक्ष्यसि आत्मनः स्वस्य स्थितिमितिशेषः । आत्मनः आत्मानं चेति वा ॥ ३१ ॥

प्रति चक्षीत पश्येत् ॥ ३२ ॥

---

भाषाटीका ।

श्री भगवान् बोले हे वेद गर्भ ! आलस्य को मत प्राप्त होवो सृष्टि के उद्यम को करो आप मेरे से जो प्रार्थना करते हो सो हमने पहिले ही कर दिया है ॥ २९ ॥

हे ब्रह्मन् ! फिर हमारे प्राप्त करने वाली उपासना करो तथा तपस्या करो तिन दोनों से हृदय के मध्य में मेरेको देखोगे खुले हुये सब लोकों को भी देखोगे ॥ ३० ॥

हे ब्रह्मन् ! तिसके पीछे तुम मेरी भक्ति से युक्त होकर साव-धानता से अपने में तथा अन्य जगत् में भी मेरे को व्याप्त हुये

यदा रहितमात्मानं भूतेन्द्रियगुणाशयैः ।
स्वरूपेण मयोपेतं पश्यन् स्वाराज्यमृच्छति ॥ ३३ ॥
नाना कर्मवितानेन प्रजा बह्वीः सिसृक्षतः ।
नाऽऽत्मावसीदत्यस्मिंस्ते वर्षीयान् मदनुग्रहः ॥ ३४ ॥
ऋषिमाद्यं न बध्नाति पापीयांस्त्वां रजोगुणः ।
यन्मनो मयि निर्बद्धं प्रजाः संसृजतोऽपि ते ॥ ३५ ॥
ज्ञातोऽहं भवता त्वद्य दुर्विज्ञेयोऽपि देहिनाम् ॥
यन्मां त्वं मन्यसेऽयुक्तं भूतेन्द्रियगुणात्मभिः ॥ ३६ ॥

### भाषाटीका ।

देखेंगे फिर मेरे में सब जीवों को तथा सब भूरादि लोकों को देखेंगे ॥ ३१ ॥

जब मनुष्य काष्ठ में अग्नि की नाँईं सब भूतों में स्थित मेरे को जान जाता है तिसी समय में सब ज्ञान नाशक पापों से छूट जाता है ॥ ३२ ॥

---

### श्रीधरस्वामिकृत भावार्थदीपिका ।

तदा च मिथ्याज्ञाननिवृत्तौ मुच्यत इत्याह यदेति । भूतादिभिर्विरहितमात्मानं जीवं शुद्धत्वंपदार्थं स्वरूपेण स्वस्यात्मभूतेन मया तत्पदार्थेनोपेतमेकीभूतं पश्यन्भवति तदा स्वाराज्यं मोक्षं प्राप्नोति ३३

यतो वर्षीयान् वृद्धतरः अत्यधिकोऽस्तीत्यर्थः ॥ ३४ ॥

अनुग्रहमेवाऽह ऋषिमिति चतुर्भिः यद्यतस्ते मनो मयि निर्बद्धम् ॥ ३५ ॥

यद्यस्माद्भूतैरिन्द्रियैर्गुणैः सत्त्वादिभिरात्मनाऽहंकारेण चायुक्तं मन्यसे ॥ ३६ ॥

---

### श्रीराधारमणदासगोस्वामि विरचिता दीपिन्याख्या दीपिका टिप्पणी ।

तदा च मद्दर्शनकाले मिथ्याज्ञानम् अनात्मनि आत्मप्रत्ययः स्वस्य शुद्धत्वंपदार्थस्य आत्मभूतेन मूलस्वरूपेण एकीभूतं चिदंशोनाभिन्नीभूतम् ॥ ३३ ॥

सृष्टेर्बीजरूपाणां नानाकर्मणां वितानेन विस्तारानुसारेण बह्वीः जरायुजादिचतुर्विधाः आत्मा चित्तम् अस्मिन् विविधसृष्टिकर्मणि नावसीदति न खिन्नो भविष्यति तत्र हेतुः यतो हेतोः अस्तीति क्रियाध्याहारादित्यर्थ इत्युक्तम् ॥ ३४ ॥

न बध्नातीत्यनुग्रहेऽपि दशमेऽस्य मोहो मञ्जुमहिमदर्शनार्थं श्रीभगवदिच्छयैव न तु बहिरङ्गमायया न्यथापराधेन ज्ञानलोपे स्वकृतस्तवे तद्भूरिभाग्यमित्यादिकं नावद्यादिति ज्ञेयम् यद्यतस्ते मनो मयिनिर्बद्धम् ॥ ३५ ॥

ज्ञातोऽहमिति तु ज्ञातोऽसीत्यादिब्रह्मवाक्यपञ्चकानुमोदनेन श्रीविग्रहस्य परतत्त्वात्मकत्वसिद्धान्ताभ्युपगमपरम् अयुक्तं जीववत्प्राकृतैस्तैरहितं मन्यसे इति स्वरूपात्मकैस्तुतैर्युक्तमेव मन्यसेऽतोऽज्ञातोऽहमित्यर्थः ॥ ३६ ॥

---

### श्रीमद्वीरराघवाचार्यांकृत भागवतचन्द्रचन्द्रिका ।

एवं सर्वात्मकब्रह्मोपासनस्य मुक्तिसाधनत्वमभिधाय ब्रह्मशरीरतया प्रकृतिविलक्षणतया चस्वात्मोपासनमपि तत्साधनमित्याह यदेति भूतानि पृथिव्यादीनि इन्द्रियाणि ज्ञानकर्माभयेन्द्रियाणि आशयो वासनाऽन्तःकरणं वा एतैर्विरहितं तत्संबन्धे सति तदभावासंभवे भ्यो विलक्षणमित्यर्थः स्वरूपेण सत्यं ज्ञानमनन्तम्,, इति श्रुत्युक्तस्वरूपेण मया आत्मना धारकेण उपेतं व्याप्तम् आत्मीयंधा[rest illegible] आत्मानं जीवात्मनः पश्यन्नुदासीनः स्वाराज्यमकर्मवश्यत्व[rest illegible] ऋच्छति प्राप्नोतीत्यर्थः ॥ ३३

नन्वस्तुसर्वात्मकब्रह्मोपासनब्रह्मशरीरभूतस्वात्मोपासनयोर्मुक्तिसाधनत्वमेव मपि कथंमसृष्टिरूपव्यापारान्तरासक्तस्य सर्वात्मकब्रह्मानुसंधानं स्यादिति शोचन्तमनुगृह्णाति नानेत्यादिना नानाकर्मणां जीवसंबन्ध्यनादिपुण्यपापरूपकर्मणां वितानेन विस्तारेणानादि[rest illegible] त्कर्मवासनानुसारेण बह्वीर्बहुविधाः विचित्रा इत्यर्थः प्रजाः देवा[rest illegible] र्यङ्मनुष्यस्थावरादिरूपाः सिसृक्षतः ते तवात्मा चित्तं नावसीदति न मोहं प्राप्नोति किं तु मत्स्वरूपरूपगुणविभूत्यनुसंधानासक्तं भवति कुत एतदत आह । मदनुग्रहः । वर्षीयान् बलवत्तर इत्यर्थः व्यासंगान्तरासक्तस्यापि त्वच्चेतो मत्स्वरूपरूपगुणविभूत्यनुसंधाना[rest illegible] सक्तमेव स्यादित्यनुगृह्णामीत्यर्थः अनेन तस्मिन्स्वविक्रमामिदं सृ[rest illegible] तोऽपि चेतो युञ्जीतेति तेनैव विज्ञापितमनुगृहीतं भवति ॥ ३४ ॥

अनुग्रहस्य वर्षीयस्त्वमेव दर्शयति । ऋषिमिति । आद्य[rest illegible] आदौ भवमाद्यम् ऋषिं मत्स्वरूपरूपगुणविभूतिप्रतिपादककृत्स्न[rest illegible] वेदराशिद्रष्टारं त्वां पापीयान् बन्धकः रजोगुणः न बध्नाति [rest illegible] संसारयति कुतः यस्मान्मदनुग्रहात्प्रजाः संसृजतोऽपि ते मनो म[rest illegible] निर्बद्धं नितरामासक्तम् ॥ ३५ ॥

एवमनुग्रहस्य वर्षीयस्त्वं प्रदर्श्य मत्स्वरूपादिविषयकं ज्ञानं [rest illegible] द्विषयकस्तवनं चेत्येतत्सर्वं मदनुग्रहादेव संपन्नमित्याह । ज्ञातो[rest illegible] मिति देहासक्तानामभक्तानामित्यर्थः दुर्विज्ञेयोऽपि दुःखेनापि ज्ञातुम[rest illegible] क्योऽप्यहमद्याधुना भवता ज्ञातः यथावत्स्वरूपरूपगुणविभू[rest illegible] विशिष्टत्वेन ज्ञातः मया ज्ञात इति कथं ज्ञायत इत्यत आह । यद्य[rest illegible] त्वं भूतेन्द्रियगुणात्मभि भूतानि पृथिव्यादीनि गुणाः सत्त्वादयः म[rest illegible] मनः प्राकृतैर्भूतादिभिरयुक्तम्मां मन्यसे सर्वकर्मा सर्वकामः सर्व[rest illegible] सर्वरस इत्यादि श्रुत्युक्तरीत्याऽप्राकृतशुद्धसत्त्वपञ्चोपनिषन्म[rest illegible] न्द्रियादियुक्तं मन्यस इत्यर्थः रूपं यदेतदवबोधरसोदयेनेत्यादि[rest illegible] तथैव प्रतिपादनात् यद्वा युक्तमित्येव छेदः आत्मानो जीवा भूता[rest illegible]

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

एवं तैरात्माभिश्च नैश्च विशिष्टं मां मन्यसे मच्छेषतया मत्कर्तृकतया मत्संज्ञ्यपाल्यसंहार्यतया च चेतनाचेतनानाविशिष्टं मां सर्वज्ञत्वसत्यसंकल्पत्वसत्यकामत्वप्रकृतिपुरुषविलक्षणत्वाद्यनन्ताकारविशिष्टं मन्यस इत्यर्थः ॥ ३९ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

नैतावतापि पुरुषार्थ इति पुत्रोपाधिप्रज्ञातमपाचिनोतीयदेतीयदात्मासंभूतेन्द्रियगुणाशयैरहितं पश्यति तदात्माऽऽत्मगतमुच्छतीत्यन्वयः किन्तु विशेषोऽप्यस्तीत्याह । स्वरूपेणेति । स्वरूपेण मयोपेतं हृदिस्थितं जीवस्वरूपं पश्यन् मुक्तो भवति अयंभावः यदात्मानं स्वरूपं जीवसंज्ञं भूतेन्द्रियादिरहितं देहाद्यात्मभावं त्यक्त्वा हृदिस्थितं जीवरूपं आत्मभावं दृष्ट्वा हृदिस्थितेन स्वरूपेण स्वीयस्वरूपेण मयोपेतं समीपे स्थितं मम पादाब्जसंन्यस्तत्वेन वर्तमानं पश्यति तदा स्वरूपानन्दानुभवमुपैतीति तदुक्तम् ॥

त्यक्त्वा देहाद्यात्मभावं जीवरूपे हृदिस्थितं ।
दृष्ट्वात्मभावं तं चापि हरिपादाब्जसंस्थितम् ॥
यदापश्यत्यपरोक्ष्यात्तदा मुक्तिं व्रजत्यसाविति ॥ ३३ ॥

इदानीं तस्मिन्नेवानुक्रम इति प्रार्थितं तद्दानप्रकारमाह । नानेति । अस्मिन्सृष्टिकर्मणि नानाविधादृष्टाख्यकर्मणां विपाकेन फलदानात्मकेन कालेन वह्नीः प्रजाः सिसृक्षतस्ते तवात्मा बुद्धिर्नावसीदति न नश्यति तत्र निमित्तमाह । वर्षीयानिति । वर्षीयान्बहुसंवत्सरकालसंपन्नः मदनुग्रहोऽस्तीति यत्तस्मादितिशेषः वर्षीयान् ज्यायानिति वा ॥ ३४ ॥

एतदेव स्पष्टयति । ऋषिमिति । ऋषिस्त्रिकालदर्शी स्यादिति वचनात् ज्ञानित्वादाद्यमादौ भवं तं त्वां प्रथमोत्पन्नत्वेन तव श्रेष्ठत्वात् हेत्वन्तरमाह । यन्मत इति । प्रजाः संसृजतस्ते तवात्मा बुद्धिर्नावसीदति येन अन्यव्यापारप्रसक्तस्यान्यत्र मनो निधानं दुष्करं तथापि मत्कृतमतिमितरात्प्रतिपापीयानपि रजोगुणस्त्वां न वध्नातीत्यर्थः ॥ ३५ ॥

मनोनिवन्धनफलमाह । ज्ञात इति । यथास्थितवस्तुज्ञानमेव मत्प्रसादजनकं तत्त्वास्तीत्याह । यन्मामिति । त्वं भूतेन्द्रियगुणात्मभिः भूतेन्द्रियत्रिगुणमनोबुद्धिभिर्नियामकतयायुक्तं मां मन्यसे न तु तदात्मकत्वेनेति यत्तस्माद्यथार्थज्ञानित्वादित्यर्थः ॥

भूतेन्द्रियमनोबुद्धित्रिगुणादिषु सर्वशः ।
युक्तं नियामकतया पश्यञ्जानाति केशवम् ॥

इति वचनात् भूतेन्द्रियनियामकतया तद्युक्तज्ञानमेव ज्ञानमितिभावः ॥ ३६ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ॥

यदेति । भूतादिभिर्विरहितम् आत्मानं जीवं स्वरूपेण तस्य जीवशक्तेराश्रयभूतेन शक्तिमता मया उपेतं युक्तं स्वाराज्यं साष्ट्यादिकम् ॥ ३३ ॥ ३४ ॥

ऋषिमिति । द्वितीयस्कन्धे पूर्व्वमेवमुक्तम् एतन्मतं समातिष्ठ परमेण समाधिना । भवान् कल्पविकल्पेषु न विमुह्यति कर्हिचिदिति अतो न भारती मेऽङ्ग मृषोपलक्ष्यत इत्यादिकमपि स्वयमुक्तम् । यस्तु तस्यान्यावेशः क्वचित् श्रूयते स खलु न स्थिरः स्यादिति तदाभास एव ज्ञेयः । यस्तु दशमस्कन्धेऽस्य मोहः श्रूयते स तु न रजसा किन्तु भगवदैश्वर्य्यविशेषदर्शनेन तद्विशेषदर्शनेच्छया च । अस्मेजन्मजानिरित्यादेस्तत्रैव श्रवणात् एवमेकादशे च हंसरूपेण सनकादिषु ज्ञानकथनात् स्वमहिमप्रकाशनाय ब्रह्मज्ञानावरणं ज्ञेयम् ॥ ३५ ॥

ज्ञातेऽहमिति यदुक्तं तत्तु ज्ञातोऽसीत्यादि ब्रह्मोक्तपद्यपञ्चकानुसारेण ज्ञेयम् ॥ ३६ ॥ ३७ ॥

---

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

भगवति प्रजाज्ञानं सर्वेषामेवास्तीति न तदत्र निर्दिश्यते अनयोः फलं स्वाराज्यं तदाह । यदा रहितमिति । भूतेन्द्रियगुणाशयै रहितमात्मानं स्वरूपेण चिद्रूपेण मया औडुलोमिमत द्रक्ष्यामयोपेतमात्मानं पश्यन् स्वाराज्यं स्वरूपानन्दानुभवम स्वास्मिन्विद्यमानेषु वाधिपत्यम् प्राप्नोति ॥ ३३ ॥

स्वस्मिन्विद्यमानान् लोकान् पुत्रानिव चेति तदा त्वद्धृदये न कोऽपि दोष आलस्यादिरुद्गमिष्यतीत्याह । नाना कर्मवितानेति । यथा वहुकार्यकर्त्ता वहूनि काष्ठादीनि प्रसार्य यथोपयोगं सर्वं करोति तथा देवतिर्यङ्मनुष्यादिभावजनकं कर्म प्रसार्य यथायोग्यं चेत्प्रजाः स्रक्ष्यसि तदा कर्मानुसारेण करणात्ते आत्मा अन्तः करणं नावसीदति न खिन्नं भविष्यति इदं ज्ञानमात्रेण न भविष्यतीति सहकार्यन्तरमाह तस्मिन्कार्ये ते तुभ्यं वर्षीयानेव ममानुग्रहो वर्तत इत्यर्थः ॥ ३४ ॥

तस्यानुग्रहस्य स्वरूपं वदंस्तत्कार्यमपि विशदयति । ऋषिमाद्यमिति । आद्यमृषिं ब्रह्माणं त्वां पापीयान् रजोगुणोगर्वजनक उत्पत्त्यादिविक्षेपकर्ता वा न वध्नातीत्यनुग्रहः तत्र हेतुः यद्यस्मात्कारणान्मनोमयि निर्वद्धम् मनोगुणातीते शुद्धसत्त्वे वा रजसा व्याप्तं न भवति कर्मनिर्दिशति प्रजाः संसृजत इति सम्यगभिप्रायपूर्वकं प्रजाः सृजतो मनो रजोगुणव्याप्तं भवत्येव कर्मस्वभावात् कूपाद्वहिःस्थिरस्य स्थिरस्य कूपे लम्बमानः पादः कदाचिदपि न पतति तथा मयि निर्वद्धमनः कदापि रजोव्याप्तं न भवतीत्यर्थः ॥ ३५ ॥

नन्वेतज्ज्ञाने ममतु यत्त्वद्विषयकंज्ञानं तत्प्रतीपज्ञानमाहोस्वित्स्वरूपज्ञानमिति संदेहः तन्निराकरणार्थमाह । ज्ञातोऽहमिति । तुशब्दः पक्षं व्यावर्तयति अद्येति पूर्वज्ञानं व्यावर्त्यते पूर्वं हि वहिःस्थितं भगवन्तं ज्ञात्वा क्रियया प्राप्तव्य इति ज्ञातवांस्तदद्येति व्यावर्त्यते अन्तः स्थितोभगवांस्तपसा भक्त्याचाविर्भूतं भगवन्तं दृष्ट्वा विचारपूर्वकं यत् ज्ञातवांस्तज्ज्ञानमाह । ज्ञातोऽहमिति ननु किमाश्चर्यं वहव एव ब्रह्मविदस्त्वां जानन्ति तत्राह । दुर्विज्ञेय इति । देहिनामहं दुर्विज्ञेय एव देहाभिमानिनः स्वदेहं पश्यन्तो मामपि पश्यन्तः कदाचिदपि न मां ब्रह्मत्वे न ज्ञातुं शक्ष्यन्ति नह्यन्तःकामे कामिनीस्पर्शःकामोद्बोधको न भवति तदभावेतु कामिन्यपि पुरुषान्तरवत् प्रतिभाति एवंभगवानपि सच्चिदानन्दविग्रहः प्राकृते विग्रहे विद्यमानेतदभिमानवतान्यत्र विनियोगाभावात्मत्वेन दृश्यते स्वविनियोगाद्भगवन्तमपि इतरं देहिनमेव मन्यंते अतोदेहिनो दुर्विज्ञेयः किञ्च यस्मात्कारणात् त्वमेव पूर्वं मां भूतेन्द्रियगुणात्माभिर्युक्तं मन्यसे भूतानि पृथिव्यादीनि-

तुभ्यं मद्विचिकित्सायामात्मा मे दर्शितोऽबहिः ।
नालेन सलिले मूलं पुष्करस्य विचिन्वतः ॥ ३७ ॥
यच्चकर्थाङ्ग ! मत्स्तोत्रं मत्कथाऽभ्युदयाङ्कितम् ।
यद्वा तपसि ते निष्ठा स एष मदनुग्रहः ॥ ३८ ॥
प्रीतोऽहमस्तु भद्रं ते लोकानां विजयेच्छया ।
यदस्तौषीर्गुणमयं निर्गुणं मानुवर्णयन् ॥ ३९ ॥
य एतेन पुमान्नित्यं स्तुत्वा स्तोत्रेण मां भजेत् ।
तस्याशु संप्रसीदेयं सर्वकामवरेश्वरः ॥ ४० ॥

श्रीमद्वल्लभाचार्यकृत सुबोधनी ।

देहारम्भकाणि इन्द्रियाण्युभयत्रिधानि गुणा विषयाः आत्मा अन्तःकरणचतुष्टयं सर्वैरेवतत्त्वांशैर्युक्तम् अन्यथाबहिरन्वेषणं न संभवति ॥ ३६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

कस्यां दशायां त्वां प्राप्नुयादित्यपेक्षायामाह । यदा आत्मानं स्वं भूतादिभीरहितं देहद्वयाभिमानरहितं स्वरूपेणैव नतु स्वीयेनेत्यर्थः । मया सेव्येन परमेश्वरेण सह उपसमीप एव इतं सेवार्थं प्राप्तं पश्यन् भवति तदा स्वेन स्वीयेन प्रभुणा सह राजत इति स्वराट् दासस्तस्य भावः कर्म्म वा दास्यम् ऋच्छति प्राप्नोति । केचित् पुनर्निर्विशेषसविशेषस्वरूपयोर्द्वयोरेव स्तुतौ प्रक्रान्तत्वात् तदुपासकानां ज्ञानिनां भक्तानाञ्च तन्त्रेणैव चरमदशाव्यञ्जकतया पद्यमिदं व्याचक्षते । तथाहि ज्ञानी आत्मानं शुद्धत्वंपदार्थस्वरूपेण मया तत्पदार्थेन उपेतमेकीभूतं पश्यन् यदा भवति तदा स्वाराज्यं मोक्षं प्राप्नोति । तथा भक्तः शान्तादिपञ्चविधोऽपि स्वरूपेण शान्तश्चिद्रूपत्वेनं दासो दास्य रूपत्वेन सखा सख्येनैव पित्रादिर्वात्सल्येन प्रिया प्रेम्णैव उपेतं युक्तम् आत्मानं स्वं तथा मयापि पञ्चविध भाव विषयेणसहसाक्षात्पर ब्रह्मणा प्रभुणा सख्या पुत्रादिना कान्तेन च सह राजत इति तस्य भावस्तत्त्वम् ऋच्छति प्राप्नोति ॥ ३३ ॥

तदेवं ज्ञानभक्तिरसतत्त्वमुपदिश्य त्वयि ममानुग्रहो न केवलमद्यतन एव अपि तु सार्व्वकालिक एवेत्याह । नानेति । वर्षीयान् ज्यायान् ॥ ३४ ॥

त्वं रजोगुणान्माभैपीरित्याह । ऋषिमिति । दशमस्कन्धेऽस्य विक्षेपो न रजसा किन्तु मञ्जुमहिमदर्शनसौभाग्यादृष्टवशादेवेति तत्रैव व्याख्यास्यते ॥ ३५ ॥

यत् यस्मात् मां साकारमपि भूतादिभिरयुक्तं रूपं यदेतदवबोधरसोदयेनेत्यादि श्रुवाणस्त्वं मन्यसे तस्मान्ममायमाकारो न भूतानि पृथिव्यादीनि नापीन्द्रियाणि तैजसानि । नापि गुणमायानाप्यात्मा जीवः किन्तु साक्षाद्ब्रह्मैव त्वं जानासीत्यर्थः तेन मद्रूपस्य सच्चिदानन्दत्वमायात्वयोर्मननमेव मज्ज्ञानाज्ञानयोर्लिङ्गमिति भगवदभिप्रायोऽवगाह्यः ॥ ३६ ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

यदा भूतादिभिरंशैः आत्मानं द्रष्टारं विरहितं मया चांशिना पेतंच पश्यन् भवति तदा स्वाराज्यं स्वरूपयाथात्म्यसुखमुख्यं प्राप्नोति ॥ ३३ ॥

वर्षीयान् वृद्धतरः बहुविवेकवान् इत्यर्थः ॥ ३४ ॥ ३५ ॥

भूतादिभिरयुक्तमप्राकृतविग्रहत्वात् आत्मनान्तःकरणेन ॥ ३६ ॥

भाषाटीका ।

जब पृथिव्यादि पंच भूत ज्ञानें द्रिय कर्मे द्रिय मन सत्वादि गुण अंतः करण इन्हों से पृथक् वर्तमान एवं मेरे से मिले संयुक्त आत्म स्वरूप को जानता है तब मोक्ष को प्राप्त होता है ॥ ३३ ॥

अब नाना प्रकार के कर्मों के समूह से बहुत से प्रजाओं के उत्पन्न करने की इच्छा में भी तुम को मोह नहीं होगा क्योंकि मेरा वडा भारी अनुग्रह है ॥ ३४ ॥

प्रजों के उत्पन्न करने में भी तुम को वड़ा पापी भी रजो गुण ज्ञान प्रति वंधक नहीं होगा क्योंकि तुम वेद के देखने वाले हो और मेरे मे तुह्मारा मन लगा हुआ है ॥ ३५ ॥

यद्यपि मैं सव प्राणियों के जानने योग्य नहीं हूं तथापि तुमने हमको जान लिया है क्योंकि जो तुम हमको पंचभूत ग्यारह इंद्रिय तीन गुण अहंकार इनसे रहित हैं ऐसा जानते हो ॥ ३६ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

तुभ्यं तव नालेन मार्गेण पुष्करस्य मूलमधिष्ठानं सलिले विचिन्वतो मयि विचिकित्सायां भवितव्यमस्याश्रयेण नच दृश्यते ततोऽस्ति नास्तीति संदेहसत्यात्मा स्वरूपं मे मया अबहिरन्तर्हृदि दर्शितः ॥ ३७ ॥

अंग हे ब्रह्मन् ! चकर्थ कृतवानसि मत्कथैवाभ्युदयस्तेनाङ्कितं स एव बंधाभावो मयि मनोनिर्बन्धो मज्ज्ञानं मद्रूपस्य दर्शनं मत्स्तुतिस्ततो निष्ठाचेति यद्येष सर्वोऽपि मदनुग्रहः ॥ ३८ ॥

गुणमयत्वेन प्रतीयमानमपि निर्गुणमेवानुवर्णयन् ॥ ३९ ॥

तव प्रीत इति किंवक्तव्यमित्याह । य इति ॥ ४० ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिका टिप्पणी।

तुभ्यं तव मद्विचिकित्सायां मद्विषयके संदेहे सति तत्प्रकारकं तदभावप्रकारकं ज्ञानं संदेहः तं व्याचष्टे। भवितव्यमिति अस्य पुष्करस्य आश्रयेणाधारेण आश्रयश्च मया न दृश्यते ततो दर्शनाभावात् ॥ ३७ ॥

स एव इत्यनेन ऋषिमित्यादिश्लोकचतुष्टयार्थं संगृह्य व्याचष्टे बन्धाभाव इति। न बध्नानीति बन्धाभावः। यन्मन इति। मयि मनोनिर्बद्धं। ज्ञातोऽहमिति। मज्ज्ञानं तुभ्यमिति हृदि दर्शनम् यच्च कर्थेति मत्स्तुतिः यद्वा तपसीति तपोनिष्ठा इति यत्पृष्टं स एव सर्वोऽपि षट्प्रकारः विधेयपरामर्शेन स एव इति पुंस्त्वम् ॥ ३८ ॥

गुणमयत्वेन प्राकृतगुणमयत्वेनाज्ञैः प्रतीयमानमपि निर्गुणम् प्राकृतगुणरहितमप्राकृतस्वरूपभूतगुणप्रचुरमेवानुवर्णयन् ३९।४०॥

---

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका।

किंच मद्विचिकित्सायाम् अस्ति ह्यवस्तादिह किंचनैतदधिष्ठितं यंत्र सनातुभाव्यमित्येवं रूपायां मद्विषयायांविचारणायां निमित्तभूतायां सलिले पुष्करस्य मूलं माधिष्ठानं नालेन मार्गेण विचिन्वतेऽन्वेषते तुभ्यं मे मया आत्मा विग्रहः बहिर्दर्शितः ॥ ३७ ॥

किंच अङ्गहे ब्रह्मन् मत्कथाऽभ्युदयाङ्कितं मत्कथैवाभ्युदयः तेनाङ्कितम् मत् स्तोत्रंमद्विषयकं स्तोत्रं चकर्थ कृतवानसीति यत् यद्वा यचते तव तपसि निष्ठा चेति यदेतत्सर्वं स एव मदनुग्रहः॥ ३८ ॥

सर्वस्य मदनुग्रहकारितत्वात्तुभ्यमहं प्रसन्न इत्याह। प्रीतोऽहमिति। यद्गुणमयं कल्याणगुणप्रचुरं निर्गुणं हेयगुणरहितं माम् अनुवर्णयन् त्वं लोकानां विजयेच्छया सर्गेच्छयाऽस्तौषीः स्तुतवान् अतोऽहंप्रीतोऽस्मि निरतिशयप्रीतियुक्तो ऽस्मि ते तुभ्यं भद्रमास्त्वित्यर्थः ॥ ३९ ॥

तव प्रीत इकिं वक्तव्यमित्याहः। य इति। एतेन भवत्कृतेन स्तोत्रेण पुमान्नरः नित्यं स्तुत्वा मां भजेत्तस्य पुंसोऽप्याशुमहं सर्वेषां काम्यमानानां वराणाम् ईश्वरः दाता संप्रसीदेयं प्रसन्नो भवामि तवप्रसन्नइति किमुवक्तव्यमित्याशयः ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली।

इतः पूर्वं स्वरूपानाविष्करणमपि तवानुग्रहविशेषार्थमित्याशयेनाह। तुभ्यमिति। प्रलयसलिले पुष्करस्य पद्मस्य नालेन नालनाडीद्वारा पुष्करस्य मूलं कारणं मां विचिन्वतस्तव मद्विचिकित्सायां मद्विदृक्षाजिज्ञासायामात्मा सच्चिदानन्दलक्षणस्तुभ्यं त्वदर्थं बहिर्देवविषयत्वेन दर्शितः ॥ ३७ ॥

त्वत्कथातपोनिष्ठावलात्वं प्रत्यक्षोभूर्नतुस्वत इति दर्पोमाभूदिति भावेनाह। यच्चकर्थेति। कथवाक्यप्रबन्ध इति धातोः स्तोत्रलक्षणो वाक्यप्रबन्धः कथा तस्याः सम्यगुदय उत्कर्षस्तेनाङ्कितं युक्तम्। वागिन्द्रियव्यापारस्य मदनुग्रहमन्तरेणानुपपत्तेस्तेन शुभविषया प्रवृत्तिरभूत्तव। स एव मदनुग्रह इत्युच्यते यो वाचितिष्ठन्यो मनसि तिष्ठन्नित्यादेः ॥ ३८ ॥

कथापि स्तोत्रलक्षणा न प्रहेलिका बालप्रियेति भावेनोक्तंस्फुटयति। प्रीत इति। लोकानां सृष्टिविजयेच्छया गुणमयसार्वज्ञादिगुणपूर्णं निर्गुणं सत्त्वादिगुणरहितं मामनुवर्णयन्नस्तौषीरिति यत्तेनाहं प्रीतोऽस्मिते भद्रं कल्याणमस्त्वित्यन्वयः। सार्वज्ञादिगुणैर्युक्तं सत्त्वादिगुणवर्जितम्। योजानाति हरिं स्तस्य प्रीतोभवतिकेशवः इतीदं प्रमाणं गुणोत्कर्षज्ञानमेव प्रीतिजनकं न निर्गुणज्ञानमिति भावेनोदाहृतम् ॥ ३९ ॥

त्वत्कृतस्तोत्रेण मां भजमानो यस्तस्मै प्रसन्नो भीष्टं ददामि किमु तुभ्यमित्यभिप्रेत्याह। य एतेनेति।

आधिकारिकदेवानां स्वाधि काराभिकामनम्।
भवति प्रीतये विष्णोर्भक्त्यादरपियस्तदे ॥

त्यनेनसृष्टिस्वाधिकारकामेन ब्रह्मणा कृतमिदं स्तोत्रं कथं हरिप्रीतिजनकं स्यादितीदं चोद्यं निर्मूलनीयम् अतएव सर्वकामवरेश्वरइत्युक्तं सर्वकामितवराणामीश्वर इत्यर्थः ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः।

यच्चेति। तिर्य्यङ्मनुष्यत्वेऽप्येवं रूपं मत्कथामात्रमभ्युदयस्तत्रापि तदङ्कितं स्तोत्रमिति वैशिष्ट्यम्। स एव इति। तदेतत्सर्वं मदनुग्रहरूपमित्यर्थः ॥ ३८ ॥

प्रीतोऽहमिति। केचिद् प्राकृतगुणयुक्तत्वेन स्तुवन्ति। केचित्तु तद्रहितत्वेन। गुणमयम् अप्राकृतानन्तगुणविशिष्टम् त्वं तु तद्रहितम् प्राकृतगुणप्रचुरं च प्रतिपाद्य मामस्तौषीरित्यर्थः ॥ ३९ ॥ ४० ॥

---

श्रीमद्वल्लभाचार्यकृत सुबोधिनी।

अतएव मया तुभ्यं मत्स्वरूपं न प्रदर्शितमित्याह तुभ्यमिति। मद्विचिकित्सायां मत्स्वरूपज्ञानेच्छायां मे आत्मा मया बहिर्न प्रदर्शितः अन्यथा तवोत्पन्नमन्यथाज्ञानं तद्बुद्ध्यासंवादि जातमिति तव स्वरूपज्ञानमेव न स्यात् अतोऽन्तर्बहिःस्थितोऽप्यहं तव तथा ज्ञानं माभवत्विति बहिःस्वात्मानं न प्रदर्शितवान् नच वक्तव्यं मया नभ्रान्तमिति अन्यथा जले अन्वेषणार्थं न गच्छेः तदाह। नालेनेति नालद्वारा सलिलस्य मध्ये पुष्करस्य मूलं विचिन्वतस्ते तुभ्यमिति संबन्धः ॥ ३७ ॥

तर्हि इदानीं मया ज्ञातमिति किंप्रमाणं तत्राह। यच्चकर्थेति यद्यस्मात्कारणाद्धेअङ्ग! मत्स्तोत्रं चकर्थ ननु स्तोत्रमात्रेण कथं स्वरूपज्ञानं तत्राह। मत्कथाभ्युदयाङ्कितमिति। ममकथा अभ्युदयश्चोभाभ्यामङ्कितं स्तोत्रंभवता स्वज्ञानं सर्वं प्रकटितं तत्स्तोत्रं मत्कथया संबद्धं मदीयैव वार्ता तत्र कथिता मत्कथेति वचनादन्यकथा तस्मिन् समारोप्य न कथितेति सूचितं किंतु या कथा सा मदीयैव विशेषतोऽपि तव ज्ञानं जातं यतोमदभ्युदयेनाप्यङ्कितम् अभ्युदयोनाम सर्वोत्तमरूपं चरित्रं कथं पूर्वं मम ज्ञानं न जातं पश्चाद्वाज्जातमिति तत्राह। यद्वा तपसि ते निष्ठेति। यद्वेति वचनात्पूर्वापरपुनरप्युपजाते यत्त्वयैतादृशं स्तोत्रं कृतं यद्वा ते तपस्येयं निष्ठा एष सर्वोऽपि ममानुग्रह एव अतः पूर्वमनुग्रहाभावाददर्शनं पश्चादनुग्रहाद्दर्शनमिति नतु तपसा दर्शनं तपस्त्वनुग्रहसूचकम् ॥ ३८ ॥

एवं तस्य ज्ञानबुद्धिसंयोगः पूर्वं जातएवेत्युक्त्वा तदुपपादितम् इदानीं चित्तस्य भगवच्चरित्रपरता या प्रार्थिता तत्राह। प्रीतोऽहमिति चतुर्भिः। चित्तं भगवच्चरित्रपरं तदैव भवति यदि भगवान्प्रीतोभवति प्रीतः केन जायत इति संदिग्धं तत्र भगवानाह। अस्त्विति। भगवांश्चेच्छुभाशंसनं करोति तदा प्रीतोभवति शुभाशंसनं परमेष्ठं करोत्यतःसर्वथाराधितः परमेष्ठश्चेद्भवति तदाप्रीत्या

पूतेन तपसा यज्ञैर्दानैर्योगसमाधिना
राद्धं निःश्रेयसं पुंसां मत्प्रीतिस्तत्त्वविन्मतम् ॥ ४१ ॥
अहमात्माऽऽत्मनां धातः ! प्रेष्ठः सन् प्रेयसामपि
अतो मयि रतिं कुर्याद्देहादिर्यत्कृते प्रियः ॥ ४२ ॥

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

प्रीत्यनुसारव्यापारेक्रियमाणेऽपि तस्य कालादिवशात्केनाप्यंशेन तदानुगुण्यं चेन्न भवेत्तत्कृतेऽपि भजते पुनरेवं करणेपुनर्भजनेऽशक्य-मिव भगवान् मन्यमानः सत्यवाक्सत्यसंकल्पस्तस्येष्टमाशंसते तदा तस्य सत्यवाक्यात् सर्वं प्रतिबन्धक निवृत्त्या भगवत्प्रसादौ-पयिकमेव तस्य सर्वं सिध्यति तदा प्रसन्नो भवतीति नात्रा-न्योऽन्याश्रयः ते भद्रमस्त्विति योजनायामप्ययमेवार्थोऽपेक्षते अनुवादेतुअस्त्विति प्रार्थनानोपपद्यते प्राप्त कालेऽपि लोटोऽनुवा-द एव स्यात् अतस्ते भद्रमेव त्वद्बुद्धेश्चरित्रपरता भविष्यति-इत्यर्थः लोकानां स्वाधीनकरणं त्वदभिलापनं सेत्स्यतीति ननु चरित्रपरतैव ममाभीष्टा नतु लोकानां विजय इतिचेत्तत्राह । यदस्तौषीरिति । यदि लोकविजयेच्छा न स्यात्तदैतावत्स्तोत्रं न कृतं स्यात् एवंप्रकारेण च न कृतं स्यात् गुणमयम् अनन्त गुणपूर्णं निर्गुणं सत्त्वादिभिः प्राकृतैर्गुणैरहितं निर्दोषपूर्णं गुणंविग्रहप्रकारेण मामनुवर्ण्यन्यदस्तौषीरतो ज्ञायते साभि लाषस्तादृशेषु गुणेष्विति॥ ३९ ॥

तर्हि स्तोत्रमात्रेण कथमेतावत्फलं भविष्यति नहि स्वाभिलषि-तकीर्तनमात्रेणाभिलषितं प्राप्यते तत्राह । य एतेनेति । अनेन स्तोत्रे-ण यद्यन्योऽपि स्तोत्रं कुर्यात्तस्याप्यहं प्रसन्नः किमुततुभ्यमएतेन स्तोत्रेण पुमान् स्वतन्त्रो नित्यं नियमेन मां भजेत् भगवत्परिचर्यायां पूजायां चेत्स्तोत्रं स्वयं कुर्वन्निवार्थानुसंधानपूर्वकं त्वमिव यस्तूयात् स्तुत्वा च परिचर्यां कुर्यात् तस्य शीघ्रमहं प्रसन्नो भवामि स्तोत्रं न परिचर्याङ्गं प्रसादः परिचर्या स्तोत्रफलं कालकृतदोषनिवर्तक-मिति फलितं तेन किमभवेदित्याशङ्क्याह।सर्वकामवरेश्वर इति।सर्वे ये कामवराः अभिलषितपदार्थसिद्धयस्तेषामीश्वर इति अतो मयि प्रसन्ने सर्वे कामास्तस्य स्वतः सिद्धा इत्यर्थः ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

यतो मद्रूपस्य मदिच्छयैवानन्यया दृश्यत्वं न तु वस्तुनो नेत्रादीन्द्रियग्राह्यत्वमित्यत्र त्वमेव प्रमाणमित्याह । तुभ्यं त्वां कृता-र्थीकर्त्तुं सात्मा श्रीविग्रहो मे मया अवहिरन्तर्ह्रदि । यद्वा बहिरपि दर्शितः गोपवेशोमे पुरस्तादाविर्बभूवेति श्रुतेः । आत्मदर्शनस्य देयत्वात् क्रियाग्रहणमपि कर्त्तव्यमिति संप्रदाने चतुर्थी वा कदा पुष्करस्य मूलं विचिन्वतस्तव मयि विषये निचिकित्साया मस्या-धिष्ठानमस्ति नास्ति वेति सन्देहे सतीत्यर्थः अत्र तपसः समाधे-श्चानुल्लेखात्तावपि मद्दर्शनस्य वस्तुतो न हेतू किन्तु मदिच्छैवेति रहस्यं सिद्धान्तमपि ब्रह्माणं ज्ञापयामासेति ज्ञेयम् ॥ ३७ ॥

अतस्तव मत्स्तवाद्योऽपि मत्कर्त्तृकानुग्रहेणैवाभूवन्नित्याह । यच्चकर्थ अकरोः तत्सर्वं स प्रसिद्ध एव प्रत्यक्षो मदनुग्रह इति एतस्यैव कार्यं तत्तत्प्रतीहीत्यर्थः ॥ ३८ ॥

किञ्च । मत्कृपोत्थयैव भक्त्या पुनरहमतीव प्रीणामीत्यद्भुतां मत्परिपाटीं पश्येत्याह । प्रीत इति । लोकानां विजयेच्छया मत्-सृज्यमाना लोका जययुक्ता भवन्त्वितीच्छया गुणमयं कल्याण-समुद्रं साकारं मां निर्गुणं प्राकृतसत्त्वादिगुणरहितम् अनुवर्ण्य यदस्तौषीः प्रीतोऽहमतस्तेषां भद्रमस्तु ये तु गुणमयं मां श्री-नारायणं सत्त्वादिगुणवत्त्वेनैव स्तुवन्ति नतु निर्गुणत्वेन तेषु प्रीतोऽस्मीति न तेषां भद्रमस्त्विति भावः ॥ ३९ ॥

त्वयि प्रीत इति किं वक्तव्यमित्याह । य इति ॥ ४० ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

मद्विचिकित्सायाम् अस्तिह्यधस्तादिह किंचनेत्येवं भूतायां मद्विषयायां विचारणायां हेतुभूतायां नालेन नालगर्तच्छिद्र-मार्गेण पुष्करस्य मूलं विचिन्वतोऽन्वेषयतः तुभ्यं तव मया आत्मा अबहिः अन्तर्हृदि दर्शितः ॥ ३७ ॥

मत्कथारूपेणाभ्युदयेनाङ्कितम् ॥ ३८ ॥

गुणमयं कल्याणगुणराशिम् निर्गुणम् प्राकृतगुणरहितम् ॥ ३९ ॥

---

भाषाटीका ।

जलके भीतर कमल नाल के छिद्रके द्वारा उसके मूल को ढूढते समय मे जब तुम को मेरा संदेह हुआ तब हमने तुह्मारे हृदय में अपने स्वरूप का दर्शन कराया ॥ ३७ ॥

हे ब्रह्मन् ! जो तुमने हमारे प्रभावयुक्त चरित्र से युक्त स्तोत्र किया और जो तपस्या मे तुमारी निष्ठा हुई यह सब हमारा अनुग्रह है ॥ ३८ ॥

हे ब्रह्मन् हम प्रसन्न हैं तुमारा मंगल होय लोकोंके पालन की इच्छा से जो तुमने हमारी स्तुतिकी है तिस मे प्राकृत गुण रहित हमको दिव्य कल्याण गुण परिपूर्ण तुमने वर्णन किया तिसी से हम प्रसन्न हुये हैं ॥ ३९ ॥

जो पुरुष प्रतिदिन इस स्तोत्र से हमारी स्तुति करके हम को भजेगा उसको सब कामना के वरों को देने वाले हम प्रसन्न होजावेंगे ॥ ४० ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

नच मत्प्रीतेरप्यधिकं किंचिदस्तीत्याह । पूर्तादिभिः राद्धं सिद्धं यन्निःश्रेयसं फलं तन्मत्प्रीतिरेवेति तत्त्वविदां मतम् ॥ ४१ ॥

अत्र हेतुमाह । अहमिति । आत्मनामहंकारोपाधीनां जीवानाम् अतः प्रेयसामतिप्रियाणामपि मध्ये प्रेष्ठः प्रियतमः सन् नित्यं यत्कृते यदर्थम् ॥ ४२ ॥

अतस्त्वं कृतार्थ एवं तथाऽपि मत्प्रियार्थं सृष्टिं कुर्वित्याहाहं आत्मा त्वमिदं त्रैलोक्यं या मय्यनुशेरते ताः प्रजाश्च सृज केवलं नैवान्यनिरपेक्षेण तत्र ज्ञापकापेक्षाभावमाह सर्ववेदमयेनेति अहं योनिः कारणं यस्येति ज्ञानक्रियाशक्त्यतिशयं सूचयति

सर्ववेदमयेनेदमात्मनाऽऽत्मात्मयोनिना ।
प्रजाः सृज यथापूर्वं याश्च मय्यनुशेरते ॥ ४३ ॥
मैत्रेयउवाच ॥
तस्मा एवं जगत्स्रष्ट्रे प्रधानपुरुषेश्वरः ।
व्यज्येदं स्वेन रूपेण कञ्जनाभस्तिरोदधे ॥ ४४ ॥
इतिश्रीमद्भागवते महापुराणे तृतीयस्कन्धे
पद्मोद्भवे विदुरमैत्रेयसंवादे
नवमोऽध्यायः ॥ ९ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

पूर्वमिति।तत्रात्राऽभ्यासोऽप्यस्तीत्युक्तम् मय्यनुशेरत इति स्थितानामभिव्यक्तिमात्रमेव कर्तव्यमित्यनायासत्वमुक्तम् ॥ ४३ ॥

इदं सृज्यं व्यज्य प्रकाश्य पद्मनाभः श्रीनारायणरूपेण तिरोदधे ऽदृश्योऽभवत् ॥४४॥

इतिश्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीधरस्वामिकृतभावार्थदीपिका टीकायां नवमोऽध्यायः ॥९॥

---

श्रीराधारमणदासगोस्वामि विरचिता दीपिन्याख्या दीपिका टिप्पणी ।

मत्प्रीतिरेव न स्वर्गादि न च शुष्कज्ञानम् ॥ ४१ ॥

अत्र स्वप्रीतेः परमफलत्वे अतः आत्मात्मत्वात् रतिं प्रीतिम् ४२

अतः मम प्रीतत्वात् तत्र अपेक्षाभावमध्ये अत्र सृष्टौ ॥ ४३।४४॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे दीपिकादीपने नवमोऽध्यायः ॥ ९ ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

मत्प्रीतेरधिकमन्यच्छ्रेयो नास्तीत्याह । पूर्तेति । पूर्तं स्मार्तं पूर्तादिभिःराद्धं सिद्धं निश्रेयसफलं राज्यमिति पाठे राज्यानि निःश्रेयसं च मत्प्रीतिः यज्ञादिजन्यमत्प्रीतिनिबन्धनौ भोगमोक्षावित्यर्थः इति तत्त्वविदां मतं भवति ॥ ४१ ॥

एतदेव सहेतुकमुपपादयति।अहमिति! हे धातः ब्रह्मन्! आत्मनां जीवानामहमात्मा अन्तः प्रविश्य प्रशासनेन धारकः अत एव प्रेयसामपि प्रीतिविषयाणामपि मध्ये प्रेष्ठः निरतिशयप्रीतिविषयः सन् स्थितःयत्संबन्ध संबन्धात्सर्वं प्रियवद्भाति तस्य प्रियतमत्वं कैमुत्यन्यायसिद्धम् अतः आत्मत्वात्प्रेष्ठत्वाच्च मय्येव रतिं भक्तिं कुर्यात् प्रियः प्रियत्वेन परिगृहीतो देहादिरपि यत्कृते यदर्थं रत्यर्थं प्रियः भवति मद्भक्तिरेव जन्मनो लाभ इत्यर्थः ॥ ४२ ॥

मदनुग्रहविषयतया कृतार्थत्वं मदाज्ञारूपजगत्सर्गं कुर्वित्याह। सर्ववेदमयेनेति।आत्मात्मयोनिना आत्मनां जीवानामात्मा परमात्मा यस्य योनिः कारणं तेन मद्वत्तेनेत्यर्थः सर्ववेदमयेन मदुपदिष्टसर्ववेद प्रचुरेण आत्मना ज्ञानेन आत्मशब्दोहि मतिवाची मद्दत्तज्ञानेनेत्यर्थः इदं जगत् तदन्तर्गताःप्रजाः देवादीन्यथापूर्वं पूर्वकल्पवत् सृज कथमवस्थिताः प्रजाः याश्च या हि प्राजाः मय्यनुशेरते उपसंहृतास्तिष्ठन्तिताः सृजेत्यर्थः ॥ ४३ ॥

भगवद्ब्रह्मसंवादमुपसंहरति।तस्मै इति।प्रधानपुरुषेश्वरः प्रकृतिपुरुषयोर्नियन्ता कञ्जनाभः जगदात्मकं पद्मं नाभौ यस्य स एवं भूतो भगवान् तस्मै जगत्स्रष्ट्रे ब्रह्मणे इदं जगन्निर्माणप्रकारादिकं व्यज्य ज्ञापयित्वा स्वेन रूपेण तिरोदधे स्वकीयदिव्यमङ्गलविग्रहं तिरोहितमकरोदित्यर्थः ॥ ४४ ॥

इतिश्रीमद्भागवते महापुराणे तृतियस्कन्धे वीरराघव टीकायां भागवतचन्द्रचन्द्रिकायां नवमोऽध्यायः ॥ ९ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

मत्प्रीतेरेव सर्वपुरुषार्थोत्तमत्वं नान्यस्येत्याह । पूर्तेनेत्यादिना तुलापुरुषादिहिरण्यदानैः पुंसां मत्प्रीतिः निःश्रेयसं राज्यं रञ्जनीयं तत्त्वविन्मतं तत्त्वज्ञानिभिर्मतं रञ्जनीयमित्यनेन मोक्षोऽपि रञ्जनीया मत्प्रीतिरेवेति ध्वनयति तदुक्तम्

मुक्तस्यापि हरेः प्रीतिः सर्वतोऽप्यनुराजत ।

इति ॥ ४१ ॥

मुक्तावपि मत्प्रीतिरेव रञ्जनीयेत्युक्तं तत्र मुख्यसाधनं भक्तिरेवेत्याह। अहमिति। हे धातश्चतुर्मुख ! अहमात्मनां सर्वजीवानामात्मा अन्तर्यामित्वेनानन्दादिनिर्माताऽतएव प्रेयसामतिशयेन प्रियाणां स्वात्मादीनामपि सन्नभ्यर्हितः प्रेष्ठः प्रियतमः सर्वस्मात्प्रियाद्देहादेस्तव प्रेष्ठत्वं कथमित्यत उक्तं देहादिरिति देहादिर्यस्य स्वात्मनः कृतेऽर्थे प्रियः अस्य स्वात्मनो देहादिः प्रियः स्यादिति मयैवापादितत्वादिति यद्यतः स्वात्मादिभ्यः प्रियतमत्वान्मयिरतिं भक्तिं भवान् कुर्यादित्यन्वयः

सर्वतोऽपि प्रियोह्यात्मा तस्यापि प्रियतां हरिः ।
आपादयति यत्तस्मात्स्वात्मनोऽपि प्रियोहरिः ॥

इतिच ॥ ४२ ॥

सृष्टावेवाधिकृतत्वात् ब्रह्मणः सृष्टिकामत्वं न दोषहेतुः किंतु हरेः प्रीतिहेतुस्तदाज्ञाकारित्वादिति सूचितं तदिदानीं स्पष्टमाह । सर्वेति। सर्ववेदमयेन प्रजापते नत्वदेतान्यन्योविश्वाजातानि परिता बभूवेत्याद्यखिलवेदप्रतिपाद्येनात्मनोमत्तो योगः संबन्धोऽस्यास्तीति आत्मयोगी तेन मत्तोजातेनात्मना देहेनात्मा ब्रह्मा त्वं या मय्यनुशेरते ता इमाः प्रजा यथापूर्वं यथापूर्वकल्पे सृष्टास्तथा सृजेत्यन्वयः त्वदन्यस्थानधिकृतत्वात्चशब्दमेवैतत्कुर्वित्यवधारणार्थे शब्दो रुद्राद्युपसंग्रहार्थो वा ॥ ४३ ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

एवं विषमहिम्नो ब्रह्मणोऽप्यहङ्कयोऽभून्नारायण इति माहात्म्यातिशयप्रकटनाय हरेस्तिरोधानं कथयति । तस्मा इति । प्रधानपुरुषयोः प्रकृतिब्रह्मणोरीश्वरः यद्ब्रह्मणो मनसि सन्निहितमिदं व्यज्य व्यक्तीकृत्य ॥ ४४ ॥

इति श्रीभागवते महापुराणे तृतीयेस्कन्धे विजयध्वज टीकायां नवमोऽध्यायः ॥ ९ ॥

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

तदेवं भक्तविषयकस्वप्रीतिं स्तुत्वा स्वविषयिकामपि भक्तप्रीतिं स्तौति । पूर्तेनेति । पूर्तादिना परम्परया साक्षाद्वा या मयि प्रीतिः सैव राद्धं सुविचारसिद्धं निःश्रेयसं फलम् । यतस्तदेव तत्त्वविन्मतमिति ॥ ४१ ॥

तथैव साधयति । अहमात्मेति । आत्मनां शुद्धजीवानामपि अतो निरुपाधिनिरवधिप्रियतमस्य प्रसादरूपा प्रीतिरेव प्रार्थनीयेति भावः ॥ ४२ ॥ ४३ ॥

स्वेन कञ्जनाभाकारेणैव रूपेणेदं व्यज्य तिरोदधे ॥ ४४ ॥

इति श्रीमद्भागवते तृतीयस्कन्धे श्रीजीवगोस्वामिकृत क्रमसन्दर्भस्य नवमोऽध्यायः ॥ ९ ॥

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

ननु किंपरम्परया स्तोत्रेण कामाएव फलिता भवन्तीति कुतो नोच्यते अतआहापूर्तेनेति पूर्तं खातादि तपः कृच्छ्रादि यज्ञा अग्निष्टोमादयः साधनत्वेन कृताः दानादीनि तुलापुरुषादीनि योगा आत्मसंयमादयः समाधिश्चित्तैकाग्र्यम् एवं बाह्यधर्मेण केवलं भोगनिरोधेन क्रियाभावरूपशरीरेण वैदिककायवाङ्मनः कृतेन लोकोपकाररूपेणेन्द्रियान्तःकरणनिरोधेन च सर्वप्रकारेणापि धर्मेण यत्फलमेव न साधनं नाप्यफलं तत्र मोक्षस्यापि सर्वामिलषितत्वाभावाद्वैषयिकसुखनिवर्तकत्वेन न तत्फलमेव यथा वैषयिकाणां गाथा

अपि वृन्दावने शून्ये शृगालत्वं स इच्छति ।
नतु निर्विषयं मोक्षं कदाचिदपि गौतम ॥

इति अतः सर्वसाधारणमेकं निर्णेतव्यं यत्सर्वेषामेव सर्वफलरूपं भवति तत्र सनामयं निर्द्धारः मत्प्रीतिरिति तस्या एव फलत्वात्ते हि खलु तत्त्वविदः सर्ववस्तूनां याथात्म्यं जानन्त्यतस्तेषां संमतम् ॥ ४१ ॥

ननु बहूनां प्रीतिहेतूनामुक्तत्वान्मुख्यं तत्र प्रीतिसाधनं किमित्याकाङ्क्षायां स्वयं हेतुपूर्वकं जीवसंमत्यर्थमाह । अहमात्मेति । सर्वेषामात्मनामहमात्मा यथा सर्वस्यैव गङ्गाजलस्य गङ्गा यथा वा सर्वस्यापि मृदः पृथ्वी स्थूला यथा वा पत्रशाखादीनां वृक्षः एवमहं सर्वेषामात्मनामात्मा धातरिति सात्रधानतया करणार्थं संबोधनम् । नन्वात्मत्वनिरूपणे किंफलं तव तु तदात्मत्वे हानिरेव पूर्णत्वास्तदांश कियत्वात्तु रामीप नापकारःस्व तदवदुःखितत्वात् यद्वस्तु तो भवति हितकर्तृ स्वयं चेतनरूपं स्वतन्त्रं पुरुषार्थरूपं सत् तत् किञ्चान्तं भवेत् यथालोके स्वतोऽदाता ज्ञानेऽपि न दाता भवति तस्मादनुवादार्थमेव सर्वोऽपि भगवद्वाद इत्याशङ्क्याह । प्रेष्ठः सद् प्रेयसामिति । प्रेयसामप्यहं प्रियः अतः प्रीतिविषयत्वान्मयि रतिं कुर्याद्देहादौ च रतिंन कुर्यात् देहादिस्त्वात्मसंबन्धात्प्रियः करोम्येवाहं सर्वमेव हितं परं मयि स्नेहाभावाज्जीवास्तन्मुख्यं न गृह्णन्ति ततोयदि मयि रतिं कुर्यात्तदा स्नेहाद्गृह्णीयात् पश्चात्कृतार्थएव भवेत् ज्ञानमप्येतद्धेव मत्कृतं गृह्णीयादिति भिन्नतयापि भजने भजनफल... गृह्णीयात् तत्रास्याज्ञानात्तद्विचारेऽप्येष्टमपि मद्विचारेण न भवती... नोच्यते ज्ञानापेक्षयापि प्रीत्याशीघ्रं गृह्णातीति प्रीतिरेवो... तेभ्यः स्वकीयं सर्वमेव दीयत इति स्वातन्त्र्यमपि दत्तमिति कुर्या... बोध्यते अतः प्रीत्यादिकमपि प्ररोचनार्थमेवोच्यते वस्तुतः... मयि रतिमेव कुर्यान्मत्कृतग्रहणार्थं प्रीतस्त्वहं सर्वदा स... वतः अग्रहणादप्रीत इव यथा स्वयमात्मानमेवाक्रोशति त... वृत्त्यर्थं रतिरुच्यमाना नित्यप्रीतिपरत्वेनोच्यते अनयैव भग... चरित्रपरता भवति भगवत्कृतमेवचरित्रम् ॥ ४२ ॥

एवं द्वितीयं प्रश्नमुपपाद्य वेदाविस्मरणलक्षणं तृतीयमुप... दयति । सर्ववेदमयेनेति । अयं तव देहोवेदमय एव तेन देहविरो... देहेनैव करणेन सर्वं कुरु तावतैव वेदाः स्थास्यन्तीति भावः ... केवलवेदरूपस्य कथं करणत्वं नहि देहमात्रं करणं किंतु प्रयत्न... विग्रमतः स्वप्रयत्नमन्यत्रव्यापारयित्वाकरणत्वेन दण्डादिव्यापा... इयते वस्तुतस्त्वात्मैव करणं तत्राह । आत्मनेति । आत्ममाहात्म्ये... हेन एकभावापन्नेनोभयेनात्मत्वम् अनेन मद्दत्तमपि सामर्थ्यं त... दत्तमिति सर्वं त्वया कर्तुं शक्यमित्युक्तम् ननु जीवा यथा... स्तथाहमपीति कथं मम सामर्थ्यं भवेत्तत्राह । आत्मयोनिरिति आत्म... योनिः कारणं यस्य मदुत्पन्नत्वात्तव सर्वसामर्थ्यं सिद्धमिति... भावः अतो यथा पूर्वं प्रजाः सृज याश्च प्रजा अप्यनुशेरत इति भगवदीयानामपि सृष्ट्याज्ञा ॥ ४३ ॥

एवं चतुर्विधा अपि जीवास्त्वया स्रष्टव्या इति एतावदुप... दिश्य भगवानन्तर्हित इत्याह । तस्मा इति । जगत्सृष्टव्यावेव त... नाधिकं किंचिद्देयं ननु तत्साधनानि चैतदनुगुणानि न भवेयुः... दा किं कर्तव्यमित्यत्राह । प्रधानपुरुषेश्वर इति । प्रधानं पुरुष... तयोरीश्वरः भगवदाज्ञया तावपि ससामग्रीकौ तदनुगुणौ भव... तावतापि तस्याज्ञानमाशङ्क्यैकवारं सर्वमेव जगत्प्रदर्शयामा... एवं कुर्विति ज्ञापनार्थं तदाह । व्यज्येदमिति । इदं जगत्प्रकटं कृत्वा... स्वेनैवरूपेणाभिव्यक्तिकरणेन हेत्वन्तरमुत्पत्त्यादिकमपेक्षते ... स्वस्मिन्नेव शरीरे विद्यमानं जगत्साधारं प्रकाशितवान्... रूपेणान्यत्रापि संबध्यते नतु तद्रूपं स्थापयित्वा गतः किन्तु त... रूपेण तिरोहितवान् कञ्जनाभ इति तद्तिरोधाने जगत्कर्तुं ... शक्यत इति सूचितं नहि कश्चिद्भगवदीयो भगवतउपरि ... कर्तुं शक्नोतीति ॥ ४४ ॥

इति श्रीमल्लक्ष्मणभट्टात्मज श्रीवल्लभदीक्षित विरचितायां सुबोधिन्यां तृतीयस्कन्धविवरणे नवमोऽध्यायः ॥ ९ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

न च मत्प्रीतेरभ्यधिकं किञ्चिदस्तीत्याह पूर्तादिभिः रा... साधितं यन्निःश्रेयसं फलं तत् तत्त्वविदां मतं मत्प्रीतिरेव । म... प्रीतिं विना राद्धं । निःश्रेयसमनिःश्रेयसमेवेत्यतस्तत्त्वविदो म... प्रीत्यर्थमेव पूर्तादिकं कुर्वन्तीति ते मां प्रीणन्तमेव कर्तुमिच्छ... न तु मां स्वप्रीतेर्विषयं चिकीर्षन्त्यतस्तया सात्विक्या भक्त्या ता... प्रत्यहं प्रीतस्तेभ्यो मोक्षं ददामीति भावः ॥ ४१ ॥

निर्गुणभक्तिमतान्तु प्रीतेरहं विषय इति व्यञ्जयन् सर्वेषामा... जीवानां वस्तुतः प्रीतेरहमेव विषयीभवितुं योग्य इत्यतः स्वहि...

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

प्रीतिं विधत्ते अहमिति । आत्मनां जीवानामहमात्मा परमात्मा यत्कृते देहादिः प्रिय इति कलत्रपुत्रादिषु प्रीतिर्देहसम्बन्धेन देहे प्रीतिर्जीवात्मसम्बन्धेन जीवात्मनि प्रीतिः परमात्मसम्बन्धेनेति परमात्मन्येवप्रीतिः स्वाभाविकी जीवात्मादिष्वौपचारिकीति तेषु क्रमेण प्रियत्वह्रासः । ननु तर्हि मयि रतिं कुर्य्यादित्यस्य वाक्यस्य कथं विधित्वं रतेः प्राप्तत्वादेव । यदुक्तं विधिरत्यन्तमप्राप्तौ इति । उच्यते । मायायाः खल्वधिकारो जीवात्मपर्य्यन्त एव न तु ततोऽपि परत्र परमात्मनीति मायाबन्धपतितानां मनुष्यादीनां मायिकेष्वेव वस्तुष्वनुभवः प्रवर्त्तते जीवस्याप्यारोपितं मायिकत्वं वर्त्तत इति तत्रापि परमात्मनि तु स्वाभाविक्याः प्रीतेर्वर्त्तमानत्वेऽप्यनुभवाभावादज्ञातस्ववहुवित्तस्य वणिजो दारिद्र्यमिव तत्र प्रीत्यभाव इति प्रीतिं विधत्ते शास्त्रमिति । किञ्च । वस्तुतः प्रेष्ठोऽपि परमात्मा ज्ञानिभिः साक्षादनुभूतोऽपि रत्या विना प्रेमास्पदं न भवत्यतो भक्तानामेव सन् सर्व्वदेशकालवर्त्ती स प्रेष्ठो भवति ननु ज्ञानिनां यथा शीतार्त्तानिहरे चक्षुः प्रकाशसुखप्रदेऽपि सूर्य्ये साक्षादनुभूतेऽपि केऽपि यत् नानुरज्यन्ति तत्र ममत्वाभावएव हेतुः । सूर्य्यश्च तत्सुखप्रदोऽपि तेषूदास्त एव । एवं ज्ञानिजनाः खल्वज्ञानतमोहन्तरि सानुभवसुखप्रदेऽपि ब्रह्मणि ममत्वाभावान्नानुरज्यन्ति । ब्रह्मापित्वं निर्विशेषमेवानुभावयत्तेषूदास्त एव । यदा च सूर्य्यभक्तो जनश्चक्षुष्मानन्धोवा भक्त्या संतापितं सूर्य्यमहैव करचरणादिमन्तं महाश्वरथसारथ्यादिकं पश्यति तं स प्रेमवशश्च करोति । तथैव मुक्तो बद्धो वा जीवो भक्त्यै वपरमात्मानं सविशेषमनुभवंस्तत्रानुरज्यति तञ्च सप्रेमवशंकरोतीत्यतः परमात्मनः सर्व्वतः प्रेष्ठत्वं भक्तानां केवलया प्रधानीभूतया वा भक्त्यैव । न तु ज्ञानिनां गुणीभूतया भक्त्येत्यत उक्तं स्वयं परमात्मनैव अतो मयि रतिं कुर्य्यादिति विवेचनीयम् । यद्वा । अत उक्तयुक्तेरेव हेतोर्मयि रतिं कुर्य्यात् । यस्या रतेः कृते देहादावप्रीतिमतोऽपि विवेकिनो देहादिः प्रियो भवति देहेन्द्रियादिभिरत्र परिचर्य्याकीर्तनादिर्भक्तिसिद्धिरिति नैव ते मोक्षाकाङ्क्षिणः स्युरितिभावः ॥ ४२ ॥

मारीरिषीष्ट निगमस्येति यत् प्रार्थितं तत्राह । सर्व्ववेदमयेनेति वेदस्त्वया न विस्मर्त्तव्य इति भावः । इदमात्मना अनेनैव देहेन प्रजाः सृज आत्मनामात्मा अहमेव योनिः कारणं यस्येति तेन यथा पूर्व्वमिति पूर्व्वपूर्व्ववेदिनस्मृष्टि स्मारयति मय्यनुशेरत इति । रुधतानामभिव्यक्तिमात्रं कर्त्तव्यमित्यनायासत्वमुक्तं चकाराद्भक्तिञ्च कुरु ॥ ४३ ॥

इदं सूर्य्यं जगत् व्यज्यं प्रकाश्य स्वेन श्रीनारायणरूपेण अत्र ब्राह्मे कल्पे अहमेवासमेवाग्रे इत्यादि चतुःश्लोकी भागवतमिवपाद्मे कल्पे यदा तु सर्व्वलोकोर्ध्वात् यदा रहितमिति पूर्व्वेनेति अहमात्मात्मनामिति चतुःश्लोकी भागवतमिदं भगवानुपदिदेशेति केचिदाहुः ॥ ४४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
तृतीये नवमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ९ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

पूर्त्तादिभिः राद्धं सिद्धं निःश्रेयसं कल्याणं तन्मत्प्रीतिरेवेति तत्त्वविदां मतम् "किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने,, इत्यादि वाक्यान्यत्रानुसंधेयानि ॥ ४१ ॥

आत्मनां जीवानाम् आत्मा आश्रयः सन् प्रेयसां प्रेष्ठोऽहमतो मयि रतिं कुर्यात् देहादिः यत्कृते यदाराधनार्थम् प्रियस्तस्मिन् ॥ ४२ ॥

आत्मना अन्यनिरपेक्षया इदं त्रैलोक्यम् या मयि अनुशेरते ताः प्रजाश्च यथापूर्वं सृजत्वन्यनिरपेक्षः अदृष्टपूर्वप्रजश्च कथमेवं करिष्यामीत्यत आह । आत्मनामात्माऽहं योनिर्यस्य तेन सर्ववेदम येनेति ॥ ४३ ॥

इदं पूर्वोक्तं वाक्यं व्यपदिश्य ॥ ४४ ॥

इतिश्रीमद्भागवतेमहापुराणे सिद्धान्तप्रदीपे
तृतीयस्कन्धीयनवमाऽध्यायार्थप्रकाशः ॥ ९ ॥

---

भाषाटीका ।

वापी तडागादि से यज्ञों से तपस्या से दान से समाधि में योग से जो कल्याण मोक्षादि फल पुरुषों को प्राप्त होना है सो केवल हमारी प्रसन्नता से होता है इस बात को तत्त्ववेत्ता लोग जानते हैं ॥ ४१ ॥

हे ब्रह्मन् ! हम सब आत्मान के अंतर्यामी हैं प्रिय के भी अति प्रिय हैं क्योंकि जिस हमारे हेतुही से सब देहादिक सब को प्रिय होते हैं ॥ ४२ ॥

अब हम से उत्पन्न होने वाले सर्व वेद स्वरूप अपने देह से इस जगत् को रचो और जो मेरे में लीन हैं उन जीवों को भी शरीर द्वारा उत्पन्न करो ॥ ४३ ॥

मैत्रेयजीबोले प्रकृति पुरुष दोनों के ईश्वर भगवान् जगत्सृजनेवाले ब्रह्माको पूर्वोक्त प्रकार से चतुःश्लोकी भागवत उपदेश करके पद्मनाभिवाले आप उसीनारायण रूपसे अंतर्धान होगये ॥ ४४ ॥

इति श्रीभागवत तृतीय स्कन्धका नवमा अध्याय का
भाषानुवाद लक्ष्मणाचार्य कृत समाप्त ॥ ९ ॥

---

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे नवमोऽध्यायः समाप्तः ॥ ९ ॥

## ॥ दशमोऽध्यायः ॥

॥ विदुरउवाच ॥

अन्तर्हिते भगवति ब्रह्मा लोकपितामहः ।
प्रजाः ससर्ज कतिधा दैहिकीर्मानसीर्विभुः * ॥ १ ॥
ये च मे भगवन् ! पृष्टास्त्वय्यर्था † बहुवित्तम ! ।
तान् वदस्वानुपूर्व्येण छिन्धि नः सर्वसंशयान् ॥ २ ॥

॥ सूतउवाच ॥

एवं संचोदितस्तेन क्षत्त्रा कौषारवो मुनिः ।
प्रीतः प्रत्याह तान् प्रश्नान् हृदिस्थानथभार्गव ! ॥ ३ ॥

॥ मैत्रेयउवाच ॥

विरिञ्चोऽपि तथा चक्रे दिव्यं वर्षशतं तपः ।
आत्मन्यात्मानमावेश्य यदाह भगवानजः ॥ ४ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

दशमे कालसंप्रश्नं प्रतिवक्तुं तदुद्भवः ।
प्राकृतादिविभागेन सर्गस्तु दशधोच्यते ॥

मे मया वदस्व वद भासयस्वेति वा ॥ १ ॥ २ ॥
संचोदितः प्रार्थितः हृदिस्थानेवाऽऽह ननु ते प्रश्नास्तेन विस्मृता इत्यर्थः ॥ ३ ॥
आत्मनि श्रीनारायणे आत्मानं मन आवेश्य ॥ ४ ॥

---

श्रीराधारमणदासगोस्वामि विरचिता दीपिन्याख्या दीपिका टिप्पणी ।

तदुद्भवः कालजन्यः आदिना वैकृततद्रूपसमुच्चयपरिग्रहः ॥ १ ॥
भासयस्व प्रकाशय अर्थेऽस्मिन्नात्मनेपदमस्त्यत्र ॥ २ ॥
एवमिति शुकवाक्यं सूतेनानूद्यते इतिसङ्गतिर्नानुपपन्ना क्वचिच्छुकउवाच भार्गवेत्यत्र भारतेति च पाठः ॥ ३ ॥
यद्यथा भूयस्त्वं तप आतिष्ठेति भगवानाह तथैव विरिञ्चोऽपि तपश्चक्र इत्यन्वयः ॥ ४ ॥

---

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

एवं भगवन्नाभिकमलसमुद्भूत चतुर्मुख कृतस्तुति प्रकारैस्तुतिप्रीतभगवदनुग्रहे च चतुर्मुखविषयेऽभिहिते "यत्र विश्व इमे लोकाः सविकाशं समासत" इत्यादिना कृतप्रश्नोऽत्र शुश्रूषया विदुरः पृच्छति । अन्तर्हित इति । अत्र प्रश्नोत्तरयोः क्रमस्त्वविवक्षितः भगवति षाड्गुण्यपूर्णे ब्रह्माणमनुगृह्यान्तर्धानं गते सति लोकानां पितामहः ब्रह्मा चतुर्मुखः प्रभुर्वशीकृतेन्द्रियः व्यष्टीनां प्रभुः स्वामीति वा दैहिकीर्देहजाः मानसीः संकल्पजाश्च प्रजाः कतिधा ससर्ज सृष्टवान् ॥ १ ॥

ये चेति हे भगवन्मैत्रेय ! मे मया ये चान्ये पृष्टाः तान् संशयविशि[illegible]न् पृष्टान् प्रश्नानानुपूर्व्येणैकैकशः ननु प्रश्नक्रमानुसारेण उत्त[illegible] तस्यादर्शनात् अद्धा तत्त्वेन वदस्व उत्तरय कथयेति वाह ब्रह्मा[illegible] दग्रेसर ! नोऽस्माकं सर्वसंशयान् छिन्धि छिद्यन्ते सर्वसंशया इ[illegible] श्रुतत्वात् स्वपरसंशयच्छेदनं ब्रह्मविदस्तवयुक्तमित्यभिप्रायेणाब्र[illegible] वित्तमेत्युक्तम् ॥ २ ॥

एवमुक्तप्रकारेण तेन क्षत्त्रा विदुरेण संचोदितः उत्तरदा[illegible] प्रवर्तितः कौषारवः मैत्रेयः मुनिः प्रीतः निरतिशयप्रीतिरूपभग[illegible] क्तिजनकप्रश्नविशेषेण स्वयंनिरतिशयप्रीतियुक्तः हेभारत रा[illegible] हृदिस्थान् तान्प्रश्नान्प्रत्याह प्रत्यभाषत उत्तरयामासेत्यर्थः हृदि[illegible] स्थानित्यनेन भूतप्रश्नास्तेनाविस्मृता इत्यभिप्रायः ॥ ३ ॥

एवमापृष्टो मैत्रेयः स्तुतिप्रीतभगवदनुगृहीत चतुर्मुखस्यना[illegible] कञ्जस्थस्य तादात्विकं कर्मसंग्रहेणाह । विरञ्चोऽपीत्यादिपद्या[illegible] भगवान्षाड्गुण्यपूर्णः अजः जन्मक्षयादिविकारशून्यः यद[illegible] भूयस्त्वं तप आतिष्ठ विद्यां चैव मदाश्रयामिति यदाह तथा विर[illegible]ऽपि ब्रह्माप्यात्मनि परमात्मन्यात्मानं मनः आवेश्य स्थिरीकृ[illegible] दिव्यं देवमानमितं वर्षशतं वत्सरशतं तपश्चक्रे चकार ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

अस्मिन्नध्याये नवविधसृष्टिकथनेन निरतिशयमहिमा हरे[illegible]च्यते तत्र शुकोमैत्रेयंप्रति विदुरः पृच्छतीति परीक्षितमाह । अ[illegible]हित इति । दैहिकीर्मानसीरिति देहमनोभ्यां सृष्टाः ॥ १ ॥ २ ॥

---

* प्रभुरिति वीरराघव पाठः । † ब्रह्मवित्तमेति वीरराघव पाठः ।

**तद्विलोक्याब्जसंभूतो वायुना यदधिष्ठितः**
**पद्ममम्भश्च तत्कालकृतवीर्येण कम्पितम् ॥ ५ ॥**

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

हृदिस्थान् विदुरस्येति शेषः ॥ ३ ॥

भूयश्च तप आतिष्ठेति हरिणा यदुक्तं तदाज्ञाकरणप्रकार-माह । विरिञ्चोऽपीति । आत्मनि परमेश्वरं आत्मानं मन आवेश्य निधाय ॥ ४ ॥

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

सूत उवाचेति पद्ममित्यादिका सङ्गतिः स्वयमेव सूतेन क्रियते न श्रीशुककृतानूद्यत इति बोधयति । मैत्रेय उवाचेत्यादिकं तु श्रीशुकवाक्यानुकरणम् । शुक उवाचेति भारतेति च पाठौ न बहुसम्मतौ ॥ १—४ ॥

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

जगतां सूतसर्गस्तु ब्रह्मासोऽत्र निरूपितः ।
भगवत्कृपया युक्तसाहस्रत्वनिदर्शना ॥
मात्राणि सर्वरूपाणि दश सृज्यान्यतोऽत्रवै ।
दशमं विनिरूप्यन्ते मात्रात्वं चापि कालतः ॥
कालेनैव गृहीतास्तु भोग्याभोक्ताऽन्यथातु सः ।
भूतानां मात्रसंबन्धरूपपार्थकृतिः पुरा ॥
ब्रह्मणा निर्मितां प्राह द्वयं मात्रेनिरूप्यते ।

प्रथमतोब्रह्मनिरूपितं मात्रानिरूपणार्थं भगवदाज्ञया ब्रह्मा कथं कृतवानिति भगवत्सेवकधर्मज्ञानार्थं विदुरः स्वयं-त्वाभिन पृच्छति। अन्तर्हिते भगवतीति । भगवति धर्मिण्यन्तर्हिते तद्धर्माणामप्यन्तर्भाव आवश्यक इति ब्रह्मणा कथं जगत्स्रष्टुं शक्यत इति प्रश्नः लोकपितामहत्वाज्जनकस्यापि जनकत्वात्त-ज्जनितकार्यदर्शनेन सप्रपञ्चोजात एवेति सदेहः उत्पादने करणद्वयं देहो मनश्च वाक्तु वैदिकसृष्टौ प्रविशत्यतः करणद्वय-मेव कतिधा प्रजाः ससर्जेति प्रकारभेदे भगवदीयज्ञानमपेक्ष्यत इति तथोक्तं ननुदेहेनैव करणमुचितमतोमानस्यः कथं पृच्छयन्ते त-त्राह । विभुरिति । सर्वप्रकारेण करणसमर्थः ॥ १ ॥

अग्रे निरूप्यमाणस्यापि जगतो भगवदीयत्वबोधनार्थं पूर्वो-क्तानपि प्रश्नान् स्मारयते । ये च मे भगवन् पृष्टा इतिभगवन्निति सं-बोधनमविस्मरणे हेतुः । त्वयीति । त्वत्समीपे अर्था इति ते प्रश्नाः प्रयोजनरूपाः अतः सर्वथा ज्ञातव्याः बहुवित्तमेति संबोधनमुत्तर-दाने हेतुः तेपामानुपूर्व्येण कथनप्रार्थनं स्वबुद्ध्या ग्रहणार्थम् उत्तरं च यथा निःसंदिग्धं भवति तथा वक्तव्यं तदाह । छिन्धि नःसर्वसं-शयानिति ॥ २ ॥

मन्वयं पृथक् प्रश्नः पृष्टद्वयमध्यादरेणाहेत्याह । एवं संचोदित इति । प्रीतः प्रत्याहेतिप्रथमप्रश्नोत्तरं पूर्वोक्तान् प्रश्नांस्तत्वविस्मृतान् हृदिस्थानेव अर्थेति भिन्नप्रक्रमेण नतुप्रथमप्रश्नशेषतया संबोधनं भगवच्छेषतया सर्वेनिरूपणानिति ज्ञापनार्थं बहुधा व्याख्यातानि तु पदानि पुनर्व्याख्यायन्ते विशेषार्थाभावेन तत्र प्रथमे प्रश्नेऽन्तर्हितोऽपि भगवान् स्वकीयान् षड्गुणान् ब्रह्मणि स्थापयित्वा गत इति ॥ ३ ॥

ब्रह्मकृतानर्थान् षड्भिः श्लोकैराह तत्रापि निर्दुष्टेन कर्तव्यमि-ति दोषाभावार्थं श्लोकत्रयम्

तपोज्ञानं कृतिश्चैव दोषाभावश्च वर्ण्यते ॥
आलोचनं कृतिश्चैतदुपपादनमेवच ॥

प्रथमं भगवदाज्ञा यथा जाता तथा ब्रह्मा कृतवानिति धर्ममाह । विरिञ्चोऽपीति । भगवानन्तर्हितः विरिञ्चोऽपि तथा भूत्वा तत्रा-न्तर्हितवान्यथा भगवदाज्ञा जाता तथा कृतवान् अन्तस्तत्त्वावस्था-तिरोधानाभावे बहिर्जगत्कर्तृत्वं न संभवतीति तदुक्तमर्पाति । दिव्यं वर्षशतमिति संध्यांशे कृतयुगस्य चतुर्थभागेनिरूपितः पूर्वं चतुर्थस्तपस्यन्वेषणे च चतुर्थे भागेतु सर्वपदार्थनिर्माणं भविष्यति तत उत्पन्नेषु सर्वेषु युगप्रवृत्तिरेनत्सर्वं सूचयितुं दिव्यं वर्षशतमि-त्युक्तवान् केवलं तपोधर्मोभगवदीयो न भवतीति तपसि विशेषमा-ह । आत्मन्यात्मानमावेश्येति । भगवत्यन्तःकरणमावेश्य तपः करणं भगवदुक्तमित्येव कृतवांस्तदाह । यथाहभगवानज इति ॥ ४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

कालस्य लक्षणं सामान्यतो दशम उच्यते ।
सर्गो दशविधश्चातः प्राकृतादिविभेदवान् ॥ १ ॥
यदत्र त्वं सर्वथा जानासीत्यतो वदेत्यर्थः ॥ १ ॥ २ ॥

भार्गवेत्यादिना ज्ञाने सामर्थ्यं द्योतितम् । हृदिस्थानिति न ते प्रश्नास्तेन विस्मृता इत्यर्थः ॥ ३ ॥

आत्मनि श्रीनारायणे आत्मानं मनः ॥ ४ ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

एवं ब्रह्मोत्पत्त्यादिकं श्रुत्वा ब्रह्मकृतां प्रजोत्पत्तिं पूर्वकृतस्वप्रश्नो-त्तरं च श्रोतुं विदुरः पृच्छति । अन्तर्हित इति ॥ १ ॥ २ ॥

संचोदितः प्रेरितः प्रार्थित इत्यर्थः ॥ ३ ॥

आत्मनि श्रीनारायणे आत्मानं मनः ॥ ४ ॥

भाषाटीका ।

विदुरजी पूछनेलगे कि हेमैत्रेयजी ! भगवानके अंतर्ध्यान होने पर जगत्के पितामह सर्व समर्थ ब्रह्माजीने देहसे और मन से कितने प्रकार के प्रजा उत्पन्न किये सो कहिये ॥ १

हे भगवन् हे [ बहुवित्त म ] बहुत अर्थ के जानने वाले मैत्रेयजी जितने अर्थों के प्रश्न हमने किये हैं उन प्रश्नोंको भिन्न भिन्न से कहिये हमारे सर्व सन्देहों को छुटाइये ॥२॥

सूतजी बोले हे शौनकजी ! तदनन्तर इस प्रकारसे विदुरजी के पूछनेपर मैत्रेयजी बडे प्रसन्न होकर हृदय में वर्त्तमान उन सब प्रश्नों को कहने लगे ॥ ३ ॥

मैत्रेयजी कहैं है कि ब्रह्माजी ने भी अजन्मा भगवान् विष्णु जी ने जैसा कहा था वैसाही परमात्मा में मनको लगाकर दिव्य सौ १०० वर्ष पर्यंत तप किया ॥ ४ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

अब्जसंभूतो ब्रह्मा यदधिष्ठाय स्थितः कर्णीरूपः तत्पद्ममम्भश्च विलोक्य कथं भूतं पद्ममम्भश्च तेन प्रलयकालेन कृतं वीर्यं यस्य तेन वायुना कम्पितं त्यपादित्युत्तरेणान्वयः ॥ ५ ॥

तपसा ह्येधमानेन विद्यया चात्मसंस्थया ।
विवृद्धविज्ञानवलो न्यपाद्वायुं सहाम्भसा ॥ ६ ॥
तद्विलोक्य वियद्व्यापि पुष्करं यदधिष्ठितम् ।
अनेन लोकान् प्राग्लीनान् कल्पिताऽस्मीत्यचिन्तयत् ॥ ७ ॥
पद्मकोशं तदाविश्य भगवत्कर्मचोदितः ।
एकं व्यभांक्षीदुरुधा त्रिधा भाव्यं द्विसप्तधा ॥ ८ ॥

### श्रीधरस्वामिकृत भावार्थदीपिका ।

विवृद्धं विज्ञानं वलं च यस्य न्यपात्सर्वं पीतवान् ॥ ६ ॥

पुष्करं पद्मम् प्राग्लीनांस्त्रीन् लोकान्कल्पिताऽस्मि स्रक्ष्यामि ॥७॥

भगवता स्वयंकरणीये कर्मणि चोदितो नियुक्तः संस्तदा पद्मकोशं प्रविश्य तमेकमेव त्रिधा लोकत्रयरूपेण व्यभांक्षीद्विभाज एकेन कमलमुकुलेन कथं लोकत्रयसृष्टिरित्यसंभावनां वारयितुं तस्य विशालतामाह । द्विसप्तधा चतुर्दशलोकरूपेण उरुधा ततोऽपि वहुप्रकारेण भाव्यं भावयितुं योग्यम् अतो न तेन त्रिलोकीकरणं चित्रमित्यर्थः ॥ ८ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिका टिप्पणी ।

तदिति युग्मकम् यदधिष्ठाय यत्पद्ममाधिष्ठानं कृत्वा आत्मसंस्थया श्रीनारायणविषयया विद्यया उपासनया तपसा प्राणायमनादिना विज्ञानं सृष्टिविषयकं वलमपि तद्विषया क्रिया शक्तिः सर्वं प्रलये यावत्वृद्धम् ॥ ५ ॥ ६ ॥

वियद्व्यापि विशालम् अनेन पद्मेन ॥ ७ ॥

कर्मणि लोकसृष्टौ तदा सृष्टिकाले तं पद्मं तस्य पद्मस्य ततोऽपि चतुर्दशलोकतोऽपि अत उरुधा भाव्यत्वात् तेन पद्मेन ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

तदित्यादिश्लोकद्वयमेकान्वयम् । अब्जसंभूतो ब्रह्मा यदधिष्ठितः यत्पद्ममाधिष्ठाय स्थितः कर्त्तरिक्तः तत्पद्ममम्भश्च विलोक्य कथंभूतं पद्ममम्भश्च तत्कालकृतवीर्येण तेन प्रलयकालेन कृतवीर्य्येण उत्पन्नव्यापारेण वायुना कम्पितं तत्पद्ममम्भश्च एधमानेन उत्तरोत्तरप्रवृद्धेन तपसा कर्मयोगेन । विलोक्या त्मसंस्थया परमात्मविषयया विद्ययोपासनया च प्रवृद्धं विज्ञानं विविधसृष्टिविषयज्ञानमेव वलं यस्य तथा भूतः अम्भसा सह वायुंन्यपात् पीतवानित्यर्थः ॥ ५ ॥ ६ ॥

सवायवम्भसः पानानन्तरं कर्माह । तदिति । यदधिष्ठितः यत्पद्ममधिष्ठाय स्थितः तद्वियद्व्याप्यन्तरिक्षव्याप्यत्युन्नतमित्यभिप्राय :पुष्कर पद्मं विलोक्यानेन पुष्करेण प्राग्लीनान् पूर्वकल्पान्ते लीनाल्लोकान् कल्पितास्मि स्रक्ष्य मीत्यचिन्तयच्चिन्तितवान् ॥ ७ ॥

पद्म कोशमिति । भगवत्कर्मचोदितः भगवता स्वयं करणीये कर्मणि चोदितो नियुक्तः सन् तत्पद्मकोशमाविश्याधिष्ठाय तमेवैकं पद्मकोशं व्यभांक्षीद्विभाज उरुधा वहुधा विभागमेव विवृण्वन्नेकेन कमलमुकुलेन कथंत्रिलोकीसृष्टिरित्यसंभावनां निवारयितुं तस्य विशालतामाह भाव्यं चतुर्दशलोकात्मना भावयितुंयोग्यमतोऽनेन त्रिलोकीकरणं न चित्रमित्यर्थः त्रिधा देवादिभोक्तृरूपेण शब्दादिभोग्यरूपेण ज्ञानकर्मेन्द्रियात्मककरणरूपेणेत्येवं त्रिधा व्यभांक्षीदित्यर्थः ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

यदात्मनाधिष्ठितं तत्पद्मं तत्कालकृतवीर्येण प्रलयकालकृतपराक्रमेण तीव्रेणेत्यर्थः वायुना कम्पितमम्भश्च कम्पितं विलोक्य।

मूलोन्मूलनन्यायेन अम्भसा सह वायुं न्यपादित्यन्वयः

निपानमुदपानं स्यादापानं पानकोष्ठिक

इति हलायुधः ॥ ६ ॥

हरिणा स्रष्टुमुपदिष्टो ब्रह्मा संहर्तुमुपक्रमते किमिदं इत्याशङ्क्य सर्वविरोधित्वात्तयोः पानं युक्तमिति भावेनाह । तद्विलोक्येति । वियद्व्यापि आकाशवन्महत्परिमाणोपेतम् ॥ ७ ॥

एकेन पद्मेन त्रित्वादिसंख्याविशिष्टलोकरचनं कथमिति तत्राह पद्मकोशमिति । यदाचिन्तयत्तदैव चतुर्दशभुवननिर्माणनिमित्ते कर्मणा दृष्टेन चोदितः कर्मणा विषयभूतेन हरिणा प्रेरितो भगवान् ज्ञानवैराग्यादिगुणशाली पद्मकोशमाविश्य एकत्वसंख्याविशिष्टमुरुधा वहुत्वसंख्याविशिष्टत्वेन व्यभांक्षीद्विभक्तवान् किमनन्तसंख्याविशिष्टमकरोन्नेत्याह । त्रिधेति । भूम्यन्तरिक्षस्वर्गात्मकं त्रिधा भाव्य कृत्वा तत्त्रयं पुनः द्विःसप्तधा चतुर्दशभुवनात्मना विभक्तवानिति शेषः ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

तदिति युग्मकं न्यपादिति यावत् प्रलये वर्द्धते स्म तावदिति भावः ॥ ५—८ ॥

---

### श्रीमद्वल्लभाचार्यकृत सुवोधिनी ।

ततोयज्ज्ञातं तदाह । तद्विलोक्येति । तपसा तस्य ज्ञानं जातं ज्ञानविषयमाह अब्जसंभूतो ब्रह्मा यदधिष्ठितः यत्पद्ममधिष्ठाय स्थितःतत्पद्मं दृष्टवान् तस्य विलोकनं विशेषप्रकारेणातस्तद्वृत्तं वमेव ज्ञातवानित्यर्थः तत्कालकृतवीर्येण वायुना पद्ममम्भश्च कम्पितं वायुना कम्पितत्वज्ञानं वायोश्च प्रलयकालीनत्वं दैत्यांशित्वेन वायोः परिज्ञानं तस्मिन्नुपसंहृते कार्यं कारणंचानवस्थं भवेत् कालेन दैत्येभ्योवलं दीयते ॥ ५ ॥

ततोधर्मज्ञानाभ्यां यत्कृतं तदाह । तपसेति । एधमानेन तपसा विद्ययाच विवृद्धं विज्ञानस्य वलं यस्य सःतादृशेनाऽम्भसा सह वायुं पीतवान् ननूपासना पूर्वमेवानिवृत्तेति कथमस्या ज्ञानवलजनकत्वं तत्राह । आत्मसंस्थयेति । अन्तः करणे सा नित्यतया स्थिता भव...

एतावान् जीवलोकस्य संस्थाभेदः समाहृतः।
धर्मस्य ह्यनिमित्तस्य विपाकः परमेष्ठ्यसौ ॥ ९ ॥

॥ विदुरउवाच ॥

यदात्थ बहुरूपस्य हरेरद्भुतकर्मणः।
कालाख्यं लक्षणं ब्रह्मन्! यथावर्णय नः प्रभो! ॥ १० ॥

श्रीमद्वल्लभाचार्यकृत सुबोधिनी।

ब्रह्मा नित्यमेव भगवत्परिचर्याम् करोतीत्युक्तम् ॥ ६ ॥

एवं दोषाभावं निरूप्य भयकम्पादिहेतौ वायावम्भसि च निवृत्ते ततोयत्कृतवांस्तदाह। श्लोकत्रयेण। तत्र प्रथमं पूर्वज्ञानं तस्य प्रबुद्ध-मित्याह। तद्विलोक्येति। यदधिष्ठितं पुष्करं वियद्व्याप्य विलोक्य प्राक् पूर्वदिवसेऽनेनैव प्रकारेण अनेनैव च पद्मेन लोकान् कलिपतास्मि कल्पयितास्मीत्यचिन्तयत् कलिपतास्मीति लुट् चिन्तनं विमर्शः ब्रह्मणः शतवर्षे शतं कल्पा भवन्तीति कल्प्यते प्रत्यब्दं वृत्तव-त्कल्पा इति वृत्तसाम्यात्तस्य वर्षान्तर एवान्यथात्वं स्पष्टतेनैकैकः कल्पः न संवत्सराहोरात्रसंख्यापरिमितः मध्येत्वतिसूक्ष्मभेद आकलयितुं न शक्यत इति न नामान्तरापादकत्वं तथा सति पद्मकल्पा अपि षष्ट्युत्तरशतत्रयपरिमिता भवन्ति तदा पूर्व कल्पेऽपि पद्मेनैव जगन्निर्माणं कृतमित्यनेन लोकान् प्राग्लीना निति विमर्शः संगच्छते ॥ ७ ॥

तदा पूर्ववदेव कृतवानित्याह। तदाज्ञानन्तरं तदेव पद्मकोशा-माविश्यैकं पद्मकोशमुरुधा व्यभांक्षीत् ननु भगवन्नाभिकमलं कथमेवं भङ्कुमर्हतीत्याशङ्क्याह। भगवत्कर्म चोदित इति। भगवदी-यस्रष्टौ भगवत एव कर्मात्रसंक्रान्तमस्ति तेन प्रेरितस्तदा भगव-त्कर्मणा प्रेरितस्य भगवत्कर्मरूपत्वान्नास्यापराधः क्वापि तस्य ख-ण्डनाह। एकं व्यभांक्षीदुरुधेति। एकमेवोरुधा व्यभांक्षीत् अवान्तर-लोकभेदेन सहस्रशः खण्डान् कृतवान् जातिभेदेन विभागं क्रियमा-णे सत्त्वादिभिः कृत्वा त्रिधैव भाव्यं प्रसिद्धलोकव्यवहारेण भेदे क्रियमाणे द्विसप्तधा अभाङ्क्षीत् चतुर्दशलोकभेदेन विभक्तं कृत-वान् ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी।

अब्जसंभूतो ब्रह्मा यत् पद्मम् अधिष्ठितः इति कर्त्तरिक्तः। तदेव पद्ममम्भश्च वायुना कम्पितं वीक्ष्य न्यपादित्युत्तरेणान्वयः वायुना कथम्भूतेन तत्कालिन प्रलयसमयेन कृतं वीर्य्यं यस्य तेन ॥ ५ ॥

न्यपात् नाशयामासेत्यर्थः प्रलयकाले यावत्प्रमाणमम्भो वायु-श्चावर्द्धत तावत्प्रमाणमेवेति ज्ञेयम् ॥ ६ ॥

ततश्च पुष्करं पद्मं वियद्व्यापि सत्यलोकपर्यन्तमुच्छ्रितं कलिप-तास्मि स्रक्ष्यामि ॥ ७ ॥

ततश्च आविश्य प्रविश्य भगवता कर्म्मणि जगत्सर्गे नियुक्तः तमेकमेवं त्रिधा लोकत्रयरूपेण व्यभाङ्क्षीत विबभाज। एकेन कमलकोषेण कथं लोकत्रयसृष्टिरित्यसम्भावनां वारयितुं तस्य विशालतामाह। द्विसप्तधा चतुर्द्दशलोकरूपेण उरुधा ततोऽपि बहुप्रकारेण भाव्यं भावयितुं योग्यमतो न तेन त्रिलोकीकरणं चित्रमिति स्वामिचरणाः। प्रथमं स नालेन कमलकोषेण त्रिधा ततश्चतुर्दशधा ततः सूर्य्यचन्द्रादिलोकभेदेन उरुधा व्यभाङ्क्षीत कीदृशं भाव्यं ध्येयं वैराजोपासकैरित्यन्ये ॥ ८ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः।

यदधिष्ठाय स्थितःकर्त्तरिक्तः तत्पद्मम् अम्भश्च विलोक्य सहाम्भसा वायुं न्यपादित्युत्तरेणान्वयः ॥ ५ ॥

आत्मसंस्थया परमात्मविषयया विवृद्धं विज्ञानं बलं च यस्य सः न्यपात्सर्वं पीतवान् ॥ ६ ॥

लोकान् कलिपतास्मि स्थापयिष्यामि ॥ ७ ॥

भगवता स्वयं करणीये कर्मणि नियुक्तः सन् पद्मकोशमाविश्य तमेकमेव त्रिधा लोकत्रयरूपेण व्यभांक्षीत् विबभाज सोऽस्रजत्त-पसा युक्तो रजसा मदनुग्रहात्। लोकान् सपालान् विश्वात्मा भूर्भुवः स्वरिति त्रिधेति एकादशे वक्ष्यमाणात् एष दैनन्दिनः सर्गो ब्राह्मस्त्रैलोक्यवर्तन इति अत्रैव वक्ष्यमाणाच्च एकेन कमल मुकुलेन लोकत्रयसृष्ट्यसंभावनां निराकर्तुमाह द्विसप्तधा ततोऽपि उरुधा बहुधा भाव्यं भावयितुं योग्यम् अतस्त्रिधा विभागेऽसंभावना न कार्येति भावः ॥ ८ ॥

---

भाषाटीका।

तब कमल में पैदा होंने वाले ब्रह्मा ने देखा कि जिस पद्मपर बैठे थे सो पद्म तथा जल दोनों उस प्रलय कालके वायु से कां-पने लगे ॥ ५ ॥

तबतो खूब बढे हुये तपसे तथा हृदय में स्थित दिव्य उपासना से ब्रह्मा जी का ज्ञान बल दोनों बढगये तब जल सहित उस वायू को पान करगये ॥ ६ ॥

फिर आकाश तक व्याप्त अपने बैठने के कमल को देखकर पूर्व प्रलय में जो सब लोक लीन होगये है उन सबों को हम इसी कमल से बनावेंगे ऐसा ब्रह्माजी ने विचार किया ॥ ७ ॥

तब ब्रह्मा जी ने भगवान् की आज्ञा से प्रेरित होकर अनेक प्रकार होने योग्य उस पद्म मे प्रवेश होकर उस एक पद्म को तोडकर तीनखंड फिर सात खंड किये फिर अनेक खंड किये ॥ ८ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका।

त्रिलोकीरूपेणैव विभागे हेतुमाह। एतावांस्त्रिलोकीरूपो जीव-लोकस्य जीवानां भोगस्थानस्य प्रत्यहं सृज्यस्य संस्थाभेदो रचनाविशेष उक्तः ननु परमेष्ठिनोऽपि जीवत्वाविशेषाद्ब्रह्मलो कस्यापि किमिति प्रत्यहं सृष्टिर्न भवति तत्राऽऽह हि यस्मादनिमि त्तस्य निष्कामस्य धर्मस्य विपाकः फलरूपोऽसौ उपलक्षणमे-तत्सत्यलोकस्य महःप्रभृतिलोकानां तद्वासिनां च त्रैलोक्यस्य काम्यकर्मफलत्वात्प्रतिकल्पमुत्पत्तिविनाशौ भवतः महःप्रभृतीना मुपासना समुच्चितनिष्कामधर्मफलत्वाद्द्विपरार्धपर्यन्तं न नाशः तत्र-

मैत्रेय उवाच

गुणव्यतिकराकारो निर्विशेषोऽप्रतिष्ठितः ।
पुरुषस्तदुपादानमात्मानं लीलयाऽसृजत ॥ ११ ॥
विश्वं वै ब्रह्मतन्मात्रं संस्थितं विष्णुमायया
ईश्वरेण परिच्छिन्नं कालेनाव्यक्तमूर्तिना ॥ १२ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

स्थानां च ततःपरं प्रायेण मुक्तिरिति भावः ॥ ९ ॥

कालभेदेन लोकसृष्टिभेदं श्रुत्वा तमेव कालं जिज्ञासुः पृच्छति यत्कालाख्यं लक्षणं स्वरूपमात्थ अब्रवीः कथं कालः कल्प्यते किंवा तस्य सूक्ष्मं स्थूलं च रूपमिति यथावद्वर्णयेत्यर्थः ॥ १० ॥

तत्र सामान्यतः कालस्य स्वरूपमत्रोच्यते उत्तराध्याये तु विशेषतः गुणानां व्यतिकरो महदादिपरिणामस्तेनैव क्रियते यः स काल इति शेषः वक्ष्यते चैकादशे "गुणव्यतिकरः कालः स्वभावः सूत्रमेव चे"ति स्वतस्तु निर्विशेषः अप्रतिष्ठितः क्वाप्यपर्यवसितः आद्यन्तशून्य इत्यर्थः एतदेवदर्शयितुमीश्वरः सृष्ट्यादि तेनांनामस्त भूतेन करोतीत्याह । पुरुष इति । उपादीयते निमित्ततया स्वीक्रियत इत्युपादानम् स काल उपादानं निमित्तं यस्मिंस्तमात्मानमेव विश्वरूपेणासृजत स्वव्यतिरिक्तेण सृज्यस्याभावात् एतच्च वस्तु कथनमात्रम् कालेन निमित्तेन चासृजदित्येतावदेव विवक्षितम् ११॥

स्वव्यतिरिक्तसृज्याभावं दर्शयन् कालस्य सृष्टिनिमित्ततां दर्शयति । विश्वमिति । विष्णुमायया संस्थितं संहृतं ब्रह्मतन्मात्रं ब्रह्मभिन्नम् ईश्वरेण कर्त्रा कालेन निमित्तेन परिच्छिन्नं पृथक् प्रकाशितम् अव्यक्ता मूर्तिः स्वरूपं यस्येति स्वतो निर्विशेषता दर्शिता ॥ १२ ॥

श्रीराधारमणदास गोस्वामिविरचिता दीपिन्याख्या दीपिका टिप्पणी ।

प्रत्यहं ब्रह्मण इति शेषः असौ परमेष्ठी एतत्परमेष्ठिपदम् तत्र स्थानां महर्लोकादिस्थानां ततः द्विपरार्धात्परम् अभक्तत्वे पुनस्संसारात्प्रायेणेत्युक्तम् ॥ ९ ॥

कालभेदेनेति । कल्पकालेन त्रिलोकी सृष्टिर्द्विपरार्द्धेन च चतुर्दशलोकसृष्टिं तमेव सृष्टिहेतुं कल्प्यते केन लक्षणेनानुमीयते ॥ १० ॥

तत्र सामान्यविशेषस्वरूपयोर्मध्ये अत्राऽस्मिन्नध्याये महदादिपरिणामः तत्पौर्वापर्य्यानुसन्धानमित्यर्थः आक्रियते आकारभेदे लक्ष्यते निर्विशेषः निराकारः एतदेव अप्रतिष्ठितत्वमेव तेन कालेन एतच्च आत्मनो विश्वरूपत्वं च वस्तु कथनमात्रं विश्वस्य तत्कार्य्यत्वात्तदभिन्नत्वमिति सिद्धान्तकथनमात्रम् न तु विदुरपृष्टं कालस्य निमित्तत्वेन वर्णनमेव विवक्षितं तस्यैव पृष्टत्वादित्यर्थः ॥ ११ ॥

ब्रह्मतन्मात्रं सत् कार्य्यं हि स्वाविर्भावात्पूर्वं कारणमात्रात्मकं यथा घटादि पृथिव्यात्मकं तथा ब्रह्मलक्षणकारणमात्रात्मकं स दित्यर्थः अव्यक्ता चक्षुराद्यगोचरा निर्विशेषता निराकारता ॥ १२ ॥

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

कृत्स्नं जगदेतत्कमलान्तर्भूतमित्याह । एतावानिति । जीवलोकस्य कार्यवर्गस्य संस्थाभेदः संनिवेशविशेषः एतावान् विमक्तभोक्तृभोगोपकरणभोगस्थानान्तर्गतप्रपञ्चात्मकः पद्मकोशः उक्त इत्यर्थः नतु परमेष्ठिनः तत्स्थानस्य च कार्यवर्गान्तर्गतत्वात्प्रलये सृष्टि त्रिलोकीवर्तिकिनस्यादित्याशङ्कां निरस्यति । धर्मनिमित्तस्य । तत्का[illegible]स्य धर्मस्यासौ परमेष्ठी विपाकः फलभूतः परमेष्ठानि परमे[illegible] लोकोऽप्युच्यते तेन तस्याधिष्ठितत्वात् यद्वा भावप्रधानो नि[illegible] परमेष्ठित्वमित्यर्थः नन्वनिमित्तधर्मस्य मुक्तिरेव फलं नतु प[illegible]ष्ठित्वं तल्लोकप्राप्तिर्वा मैवं "ते ब्रह्मलोकेतु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे ब्रह्मणा सह न सर्वे सम्प्राप्ते प्रति संचरे" [illegible] ब्रह्मणस्तत्रत्यानां च द्विपरार्धावसाने प्रायशो मुक्त्यभिधाना[illegible]

एवं जगन्निर्माणप्रकारेसंग्रहेणाभिहिते विदुरस्तत्कालस्[illegible] वीर्येण कम्पितमिति प्रलयेऽपि कालसद्भावाभिधानेन नित्यत्वा[illegible] ततत्तानेस्तत्वात्यत्वजिज्ञासया तत्स्वरूपं पृच्छति । यदिति । चिदचि[illegible]त्मकप्रपञ्चरूपस्याद्भुतकर्मणः अचिन्त्यव्यापारस्य हरेः संबन्[illegible] यत्कालाख्यं लक्षणं रूपमात्थ उक्तवान् तत्कालकृतवीर्येण कम्पि[illegible]तम् इत्यनादित्वेन कथितवांस्तत्कालाख्यं भगवच्छरीरम् हे [illegible] सोऽस्मभ्यं यथा वद्वर्णय हे प्रभो ! वर्णयितुं त्वं समर्थ इत्य[illegible] प्रायः किं कालः कल्प्य उताकल्प्यः किंवा तस्य स्थूलं सूक्ष्[illegible] रूपमित्यादि यथावद्वर्णयेत्यभिप्रायः ॥ १० ॥

एवमापृष्टोमुनिः कालस्वरूपं वक्तुं तावत्कालकार्य[illegible]च्छिमनुवदति । गुणेत्या दिना । यावदध्यायसमाप्ति तत्र प्र[illegible] परमात्मन एवकर्तृत्वं कारणत्वं कार्यतां चाह । गुणव्यतिका[illegible] गुणव्यतिकरः परिणामो यस्य तद्गुणव्यतिकरं प्रधानं त[illegible] कारो रूपं शरीरं यस्य स तथोक्तः निर्विशेषः पृथिव्यादि[illegible] अप्रतिष्ठितः कारणान्तररहित इत्यर्थः कार्याणां हि का[illegible] प्रतिष्ठा प्रलयस्तदभावात्कारणान्तरराहित्यं फलितम् एवं वि[illegible] परमपुरुषः तदुपादानम् उपादानभूतं यस्येति बहुव्रीहिः उपा[illegible]नभूतेन तेन प्रधानेन विशिष्टमात्मानं जगद्रूपेणासृजदित्य[illegible] गुणव्यतिकराकारः सजातीयत्वेन चेतनाचेतनयो नियन्तुः [illegible] पुरुषस्य निष्कृष्टस्य निमित्तत्वं तदुपादानमात्मानमित्यने[illegible] पुरुषकालविशिष्टत्वाकारेणोपादानत्वंचोक्तं भवति तथा च [illegible] तदात्मानं स्वयमकुरुतेति सूत्रितं च

साक्षाच्चोभयाम्नानात् ॥ १ । ४ । २५ ॥

इति ॥ ११ ॥

एकस्यैव ब्रह्मणश्चिदचिद्विशिष्टस्यावस्थाभेदेन कार्यका[illegible] भावं प्रतिपादयन् सृष्टेः प्रागवस्थानमाह । विश्वमिति । विश्व[illegible]त्यनेन "सर्वं खल्विदं ब्रह्मेति श्रुतिः स्मारिता अत्र च सामानाधि[illegible] करण्येन निर्देशः कार्यकारणभावनिबन्धन इति भाष्ये प्र[illegible] एवंच विश्वं विश्वाकारं ब्रह्म तन्मात्रं प्रकृत्यवस्थामात्र[illegible] संस्थितं संहृतं ननु महदाद्यवस्थाविशिष्टं विष्णुमायया [illegible] त्संकल्पेन यत्कार्यावस्थायां स्थूलचिदचिद्विशिष्टं ब्रह्म [illegible]

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

कारं तत्संहारविषयस्वकीयसंकल्पेन प्रकृतित्वावस्थामात्रावशेषितत्वेनोपसंहृतमित्यर्थः एकस्यैव मृद्द्रव्यस्य कालभेदेन पिण्डत्वघटत्वाद्यवस्थाद्वययोगेन कार्यकारणभाववदेकस्यैव ब्रह्मणश्चिदचिद्विशिष्टस्य स्थौल्यसौक्ष्म्यावस्थाभ्यां कार्यकारणभाव उपपन्नः तन्निबन्धनएव मृदयं घट इत्यादिवत्सामानाधिकरण्यनिर्द्देश इत्यभिप्रायः प्रलयेऽपि कालसाचिव्यमाह । ईश्वरेणेति । कालेन विना सृष्ट्याद्ययोगात्तस्येश्वरत्वमीश्वरशरीरत्वाद्वा तस्येश्वरत्वव्यपदेशः कालस्येश्वरशरीरत्व“मेतस्याक्षरस्यप्रशासनेगार्गिमुहूर्तान्यर्धमासामासाऋतवः संवत्सराविधृतास्तिष्ठन्ती”त्यादिश्रवणात् यावत्सत्त्वं स्वशक्यनियन्तव्यस्वभावत्वमेवहिशरीरत्वम् अतएव शरीरशरीरिस्वभावेन सामानाधिकरण्यनिर्द्देशा उपपन्नाः अव्यक्तमूर्तिना प्रत्यक्षेणानव्यज्यत इत्यव्यक्तं मूर्तिः रूपं यस्य तेनानुमेयेन कालेन परिच्छिन्नं प्रलयदशायां सूक्ष्मचिदचिद्विशिष्टं कालपरिच्छिन्नंसदेवस्थितमित्यर्थः ॥ १२ ॥

———

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

न्यूनातिरेकसंख्यां निषेधयति । एतावानिति । जीवानां लोकस्थावस्थानस्य संस्थाभेदो व्यवस्थाविभागः समासतः संक्षेपतो मया तव कथित इति शेषः इदमपि न स्वशक्त्या कृतमित्याह ।धर्मस्येति। परमेष्ठिनो ब्रह्मणोऽनिमित्तस्य अनिषेधे पुमान् विष्णावित्यभिधानादः परमात्मा निमित्तं यस्य सोऽनिमित्तस्तस्य ब्रह्मार्पणबुद्ध्या कृतस्येत्यर्थः धर्मस्य कृतस्य विपाको विशिष्टफलमिति विद्धीति शेषः अ इति ब्रह्मेति श्रुतेः निर्निमित्तोनार्थः तत्र आदीनां भगवद्विषयत्वोक्तेः ॥ ९ ॥

श्रुतहरिमहिमा विदुरः कथान्तरप्रसंगेन मैत्रेयो भगवत्कथां समापयतीति भीत्या मैत्रेयं पृच्छति । यदिति । बहुरूपस्यानन्तरूपस्य हरेः कालाख्यलक्षणं स्वरूपं यथा यथावत् । “लक्षणं लक्ष्यमाणात्मा च स्वरूपमिति कथ्यत” इत्यभिधानान्नान्योऽर्थःकिंतु स्वरूपमेव ॥ १० ॥

कालस्य सर्वप्रवर्तकत्वेन प्रधानत्वात् सूचीकटाहन्यायेन तत्स्वरूपं वक्ष्यन् मैत्रेय आदौ जगत्सृष्ट्याद्यर्थं गुणत्रयोपादानकर्तृभगवद्रूपत्रयप्रादुर्भावप्रकारं वक्ति । गुणेति । प्रलये गुणानां द्रव्यत्वेन स्थितोगुणानां व्यतिकरं विकारविशेषं सम्यक्करोतीति गुणव्यतिकराकारः कर्मण्यण् प्रत्ययः पुरुषः पूर्णषड्गुणः अतएव निर्विशेषः निर्विकारः अधिकान्तररहितो वा अतएवाप्रतिष्ठितः अन्यत्रेति शेषः सभगवान् कस्मिन् प्रतिष्ठित इति स्वे महिम्नीति श्रुतेः तस्य गुणव्यतिकरस्योपादानं स्वीकारो येन स तथा तं गुणव्यतिकरोपादानकर्तारमित्यर्थः त्रिरूपत्वेनात्मानं लीलयासृजद आविरभावयत् ॥ ११ ॥

स्वार्थाभावेऽप्यन्यस्य किं तत्राह । विश्वमिति । सृष्ट्याद्यर्थत्वेन तस्य पुरुषस्य ब्रह्माविष्णुरीश्वर इतित्रीणि रूपाण्यात्मना सृष्टानीत्यनेनोच्यते तथाहि विश्वं ब्रह्मतन्मात्रं वै ब्रह्माणं सृष्ट्वा चतुर्मुखत्वेन तं प्रविश्य सृष्टिबृंहणाद्ब्रह्मनाम्ना तेन विष्णुना मितं त्रातं चेति तथोक्तं विष्णुनाम्नो हरेर्मायया सामर्थ्येन संस्थितं व्यवस्थापितं स्वस्वाधिकार इति शेषः अत्र यदीश्वराख्यं संहर्तृरूपं तत्कालाख्यं तेन रुद्रं सृष्ट्वा पञ्चमुखत्वेन तं प्रविश्य कालेन संहर्त्रा व्यक्तमूर्तिना चक्षुराद्यगम्यस्वरूपेण हरिणा परिच्छिन्नं संहृतमित्यन्वयः चतुर्मुखं सृष्ट्वा तं प्रविश्य स्वयं चतुर्मुखो ब्रह्मनामा हरिः सृष्टये रजोगुणमुपादत्ते अन्यरूपप्रवेशमन्तरेण स्वयं विष्णुनामा रक्षार्थं सत्यमुपादत्ते पञ्चमुखमीशानं सृष्ट्वा पञ्चमुखस्तंप्रविश्येश्वर नामा हरिः संहारार्थं तमो गुणमुपाददातीति तात्पर्यार्थोऽपि वा इत्यनेन श्रुतिप्रसिद्धिद्योतकेन ज्ञायते अथ त्रयीवावप्रकृतिः सत्त्वं रजस्तम इति तां नारायणः पर्यपश्यत्यनन्यप्रतिष्ठस्तं वापनमाहुः पुरुष इति पूर्णोह्येष भवति सत्रेधा बभूवैषां गुणानामुपादानाय विष्णुर्वाव सत्त्वस्य रजसो ब्रह्मेशो नाम तमसः स आविवेश ब्रह्मा ब्रह्माणं चतुर्मुखमीशं ईशानं पञ्चमुखं यो वाव ईशईशानमाविवेश तं काल इत्याचक्षते काल इत्याचक्षते इति सौकरायणश्रुतिः ॥ १२ ॥

———

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

एतावान् द्विसप्तधा पर्य्यन्तः श्रीब्रह्मा तु सर्व्वतो विशिष्टत्वात् तत्स्रष्टेत्याह । धर्मस्येति । अनिमित्तस्य स्वभावेनैव क्रियमाणस्य न तु गृहस्थवत् तत्तत्सङ्कल्पेनापीत्यर्थः । विपाकः पराकाष्ठाप्राप्तपरिणामः । असाविति । ब्रह्मान्तरं व्यवच्छिनत्ति । ब्रह्मणोऽपि भयं मत्त इत्याद्युक्तेः ॥ ९ ॥

एवमिति यदुक्तं तदेव विवृणोति । स काल इति । अत्र टीकायां परमाणुदशां परिक्रामतीत्यत्र मध्यमकालमाचष्टे यत्तल्लक्षणं ज्ञापकं गुणव्यतिकरेण क्रियारूपं तत्परिणामादि पौर्व्वापर्य्यानुसन्धानेनाक्रियते आकारभेदैर्लक्ष्यते यः स काल इत्यर्थः । विष्णोरीश्वरस्य मायया सृष्ट्यादिशक्त्या सह लीनं ब्रह्माणि विष्णावेव तादात्म्योपपन्नं सत् ईश्वरेण तत्प्रभावरूपेण कालेन परिच्छिन्नं पृथक् कृतमित्यर्थः ॥ १०—१२ ॥

———

श्रीमद्वल्लभाचार्यकृत सुबोधनी ।

ननु सर्वेषामेव लोकानां जीवाधिष्ठानानां क्रियमाणत्वात् कथं चतुर्दशलोकेष्वेव कोटिशोजीवसंघाः स्थास्यन्तीत्याशङ्क्याह । एतावानिति । जीवानां स्थानभूतस्य लोकस्य संस्थया सम्यङ्मर्यादया भेदोविभाग एतावानेव चतुर्दशधैव त्रिविधाएवहि सर्वे जीवा मध्ये त्रयोराजसाः अहङ्कारस्य त्रिविधत्वात् तामसाः सप्त पञ्चमहाभूतानि मात्राकार्यं चेति चत्वारः सात्त्विकाः अन्तःकरणस्य चतुर्विधत्वात् अत्रैवहि सर्वे जीवाः समाहिता भवन्ति सम्यगाहितः स्थानविभेदेन सम्यक् स्थापितो भेदः नन्वेवं कथं सामर्थ्यं ब्रह्मणो भगवदाज्ञायामपि स्वतः सामर्थ्यस्यापेक्षितत्वादित्याशङ्क्याह । धर्मस्य ह्यनिमित्तस्येति । अनिमित्तस्य निष्कामस्य धर्मस्य दशशताश्वमेधस्य शतजन्मसाधितस्य विपाकः फलम् अयं परमेष्ठी बहुजन्मसाधितधर्मफलत्वात् ब्रह्मणस्तथाकरणं युक्तमित्यर्थः ॥ ९ ॥

एवमाधारभूतं जगत् लोकानां मात्रात्वेन निरूपितम् आधेयभूतस्य लोकत्वात् मात्रात्वेन भविष्यतीत्याशङ्क्य कालवशाज्जीवस्यापि विषयत्वमिति कालप्रस्तावना भगवत उत्पत्त्यादिकर्तृत्वं श्रुतवतः कालविभेदेन कालमेव सर्वहेतुं मन्यमानस्य काले जिज्ञासोत्पन्ना तदा पृच्छति विदुरःयदात्थेति । बहुरूपस्य हरेरद्भुतकर्मणो लक्षणं यदात्थ तद्यथावद्वर्णयेति संबन्धः कालोहि भगवतो लक्षणम् असाधारणोधर्मः जगत्कर्तृत्वं नाम जगदुत्पत्तिकाल इत्यर्थः तल्लक्षणसहितः य आत्मा स भगवान् अतएव बहिरेव भगवान् गरुडध्वजः भगवतोऽतिसूक्ष्मत्वाल्लक्षणमप्यति सूक्ष्मं दुर्ज्ञेयं कलयतीति

### श्रीमद्वल्लभाचार्यकृत सुबोधनी।

कालः कलनं वा कालः सर्वस्यापि वस्तुन आकलनं ग्रहणं ज्ञानं वा भगवद्धर्मोभवत्येव अतएव काल इत्याख्या यस्य लक्षणस्य कलनं न साधारणमद्भुतकर्मरूपत्वात् यथा आकलनं जाते भगवानद्भुतं कर्म करोति यथा वा आकलय्यैकः सन् बहुधा भवति यथा वा आकलय्य सर्वेषां दुःखं स्वयं दूरीकरोति मार्गत्रयं वा प्रकाशयति तादृशस्य लक्षणभूतस्य कालस्य स्वरूपमवश्यं ज्ञातव्यमतोऽस्माकं तज्ज्ञानार्थंत्वं वर्णाय समर्थत्वात्तदाह। प्रभो इति ॥ १० ॥

एवं कालस्यावश्यं निरूपणीयत्वेऽसाधारणधर्मत्वात् कालं लक्षयति । गुणव्यतिकराकारइति। कालो ह्यमूर्तो धर्मोऽत एव न प्रत्यक्षः किन्तु कार्यवशादनुमेयोऽतस्तस्य लक्षणं नेदमित्थंतया वक्तुं शक्यं कालस्तदैव लक्षणं भवेद्यदि धर्मिणां धर्मेभ्यः कार्याच्च विलक्षणं स्यात् तदैवासाधारण्यम् स्यात् तत्र त्रितयवैलक्षण्यार्थं लक्षणे विशेषणत्रयं तत्र प्रथमं गुणव्यतिकराकारः कालः गुणानां व्यतिकरोऽन्योऽन्यसंश्लेषः आकारो यस्य अमूर्तत्वात्कार्यद्वारैव लक्षणं कार्यं पुनः प्रकृतेर्गुणसाम्यावस्थारूपायाः येन भगवद्गुणेन गुणानां व्यतिकरो भवति प्रथमतः सत्त्वादिरूपेण विभिन्ना भवन्ति ततः शुद्धा अन्योऽन्यं चमिलिता भवन्ति सगुणः काल इत्यर्थः इदमेव भगवत आकलनं क्रियाशक्तिरूपः प्रथमो गुणो मुख्यो योऽग्रे प्रकटो जातस्तत्र क्रियाशक्तिभेदा अन्येऽपि सन्ति तेषां विशेषनामानि वर्तन्ते स ऐक्षतेतीच्छासोऽकामयतेति कामस्तथा तस्य लोकप्रसिद्धं कार्यधर्मत्वत्वेन कार्याधेयतया न विशेषणं सिद्धं यथा मनोधर्मा इच्छाकामादयस्तथा न कस्य चित्कालो धर्मः परं सर्वाधारत्वेनैव प्रतीयते इहेदानीमित्यादिशब्दैरतोऽयंनिर्विशेषः कस्य चिद्धर्मत्वे तत्र प्रतीयेत घटकालइति भूमौ काल इति प्रतीयते त्विहघट इति तस्मात्सर्वविशेषरहितो गुणक्षोभहेतुः काल इति लक्षणं किं च वहव एव च धर्मा आकाशादीनां व्यावर्तका विशेषरहिता भगवद्धर्माः सन्त्यन्यथा नित्यानां परमाणूनामतीन्द्रियाणां व्यावृत्तिर्न स्यात् तद्व्यावृत्त्यर्थमाह। अप्रतिष्ठित इति। प्रतिष्ठा समाप्तिः पर्यवसानं तद्रहित इत्यर्थः विशेषास्तु प्रतिष्ठिताः अन्यथा परमाणूनां परिच्छेदो न स्यात् अतो ऽसंस्थितोऽप्रतिष्ठितः कालः सर्व एव पदार्थः संतिष्ठते कालस्तु न संतिष्ठते एवं कालस्य लक्षणमुक्त्वा सगुणो भगवता किमर्थं गृहीत इति जिज्ञासया तस्य प्रासंगिकं कार्यं गुणक्षोभरूपं जगदाधारत्वं वा तस्य मुख्यप्रयोजनं न भवतीति मुख्यं प्रयोजनमाह। पुरुषस्तदुपादानमिति। पुरुषो भगवान् कारणरूपः सत्त्वगुणानेककर्तृत्वादिभावापन्नान्कृत्वाजगत्करोति तत्र कर्तृत्वं स्वरूपधर्म एव भवति क्रियाशक्तिस्तस्य निर्वाहिका समवायिकारणं तु किंभवेत् अविकृतैव सा भवति सर्वत्र साक्षात्कार्येष्वविकृतमेव समवायिकारणं भवति यथा घटे मृद्रूपापृथिवीसाखननादिना परिच्छिन्ना कर्तृक्रियया व्याप्तो उपादानत्वमापद्यते एवं भगवानप्यात्मानं सृजति कालमुपादानं कृत्वा एकैव पृथिवी कुलालचक्रचीवरदण्डमृद्रूपा स्वधर्मैरेव स्वयं घटरूपा भवति तत्रान्ये सर्वे धर्माः कुलालादयो जीवसम्बन्धं प्राप्यैव कर्तृत्वादिभावमापद्यन्ते कुलालशरीरेच देवदत्तो जीवो दण्डे स्थावरः चीवरेऽपि कार्पासः स्थावर एव चक्रेऽपि एवंतः विकारे तु विकार एव एवं सर्वत्र तस्माद्यस्मिन्नंशे न कोऽपि विकारः प्रविशति कर्तृधर्मव्यतिरिक्तो भगवद्धर्मः कालः स आत्मानं स्वयमकुरुतेति श्रुतेः लीलयेति विशेषप्रयोजनाभावः तदुपादानमिति समीचीनं कर्तुं प्रयासाजनकमिति ॥ ११ ॥

नन्वेतस्य कालस्य भगवतः कापेक्षा। उपादानं स्वरूपं प्रकृतिर्वा भवतु तत्राह। विश्वं वै ब्रह्मतन्मात्रमिति। विश्वं कार्यं ब्रह्मतन्मात्रं यस्य यथा महाभूतेषु शब्दादीनां तन्मात्रसूक्ष्मावस्थारूपत्वादेवं विश्वस्यापि ब्रह्मैव सूक्ष्मावस्थारूपं पूर्वावस्था ब्रह्मोत्तरावस्थाजगदिति तस्योपसंहारस्तिरोभावः विष्णोर्भगवतो मायया विष्णू रक्षकः उपसंहर्ता तस्यैव माया सम्यक् स्थितं वा विष्णुमायया अलौकिकसामर्थ्येन स्थितमुपसंहृतं च भवतीत्यर्थः तत्र कश्चित्परिच्छेदकापेक्ष्यते अन्यथैकस्मिन्नपि कार्ये कृत्स्नप्रसक्तिर्निरवयत्वशब्दकोपो वा भवेत्। तस्माद्भगवत एव कश्चिद्धर्मोऽस्त्यसाधारणरूपो येनोत्पाद्यमानं कार्यं परिच्छिन्नं भवति तदेकं भगवतोरूपमित्याह। ईश्वरेणापरिच्छिन्नमिति। ऐश्वर्यमपि गुणास्तत्रैव भगवता स्थापितोऽन्यथा करणसामर्थ्यं हि तस्यात एव कलयतीति कालः तस्य च स्वरूपमव्यक्तमेव तिष्ठत्यतः परिच्छेदार्थं कालोऽपेक्ष्यत इत्यर्थः ॥ १२ ॥

---

### श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः।

जीवलोकस्य जीवानां भोगस्थानभेदः रचनाविशेषः एतावान् लोकत्रयरचनालक्षणः तत्रः लोकत्रयस्य प्रत्यहं सृष्टिर्नतु महरादिलोकचतुष्टयस्य तच्च प्रायः निष्कामकर्मिणां वासस्थानमित्याशयेनाह। असौ परमेष्ठीउपलक्षणमेतन्महरादिसत्यलोकांत प्रपञ्चस्य अनिमित्तस्य निष्कामस्य धर्मस्य नियामकः फलम् हिशब्दादिदं बोध्यम् प्रायः निष्कामकर्मकर्त्तारोमहरादिषु गच्छन्ति तत्र ये परब्रह्मोपासकाः तान् लोकान् विहाय ब्रह्माण्डं भित्वा मुक्ता भवन्ति ये केवलाश्रमकर्मकर्त्तारः केवलैर्निष्कामकर्मभिर्मुक्त्यसंभवात् तैः कर्मभिः विशुद्धान्तः करणाः परब्रह्मोपासनां तत्र बहुकालं कुर्वन्ति तत्सिद्धौ ब्रह्माण्डं भित्वा ब्रह्मणा सह द्विपरार्द्धान्ते मुक्ता भवन्ति अन्ये सर्वे तेषु लोकेषु गत्वापि भोगान्ते पतन्ति अस्त स्तेषां लोकानां प्रत्यहं सृष्टिर्नभवति द्विपरार्द्धस्थायित्वादिति ॥ ९ ॥

तत्कालकृतवीर्यैणेति। लोकत्रयपूर्वं वर्त्तिवायुवीर्यवृद्धिनिमित्तं कालं श्रुत्वा तमेव कालं जिज्ञासुर्विदुरःपृच्छति। यदात्थेति। हे कालाख्यं लक्षणं शक्तिमद्धरिरूपज्ञापकं कालनामकं शक्तिभूतत्वम् कालकृतवीर्यैणेत्यनेन आत्थ उक्तवान् तत् नोऽस्मभ्यं वर्णयेत्यन्वयः ॥ १० ॥

तत्र विशेषतस्त्वंग्रिमेऽध्याये कालोवर्ण्यते सामान्यतस्तं विश्वसृष्ट्यादिनिमित्ततया दर्शयति। गुणव्यतिकराकार इत्यादिना गुणानां व्यतिकरो यस्मात्तत्प्रधानमाकारः द्वितीयस्कन्धोक्तविराट् स्थूलं सूक्ष्मं च रूपं यस्य सः पुरुषः परमेश्वरः निर्विशेषः प्राकृतदोषास्पृष्टःअप्रतिष्ठितः सर्वाधारत्वेसति आधाररहितः स्वाभिन्नम् आत्मानं विश्वमसृजत् विश्वाकारं कृतवान् कथंभूतमात्मानं तदुपादानं तस्य सृज्यमानस्य विश्वस्योपादानम् ॥ ११ ॥

ननु तर्हि विश्वस्य पुरुषावस्थाविशेषत्वादुपादेयत्वमेव मर्थोविश्वव्यतिरिक्तपुरुषप्राप्त्युपाय इत्यत आह। विश्वं सर्वं यंजातं ब्रह्मैवयतः तन्मात्रं तदात्मकम् विष्णुमायया तच्छक्त्या संस्थितं तच्छक्तिपरिणामजामत्यर्थः यद्यप्येवं भूतं तथापि नैव अव्यक्तमूर्त्तिना कालनियन्त्रा ईश्वरेण कर्त्रा कालेन सृष्टि

यथेदानीं तथाऽग्रे च पश्चादप्येतदीदृशम् ।
सर्गो नव विधस्तस्य प्राकृतो वैकृतस्तु यः ॥ १३ ॥
कालद्रव्यगुणैरस्य त्रिविधः प्रतिसंक्रमः ।
आद्यस्तु महतः सर्गो गुणवैषम्यमात्मनः ॥ १४ ॥
द्वितीयस्त्वहमो यत्र द्रव्यज्ञानक्रियोदयः ।
भूतसर्गस्तृतीयस्तु तन्मात्रो द्रव्यशक्तिमान् ॥ १५ ॥
चतुर्थ ऐन्द्रियःसर्गो यस्तु ज्ञानक्रियात्मकः ॥
वैकारिको देवसर्गः पञ्चमो यन्मयं मनः ॥ १६ ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

द्वारनिमित्तेन परिच्छिन्नमनित्यमित्यर्थः अतोविश्वमनित्यत्वादनुपादेयमेव अनेन कालोनित्य इत्यर्थोऽपि ज्ञापितः ॥ १२ ॥

---

भाषाटीका ।

व्यष्टि जीवलोक का रचना तो तीनलोक रूप इतना हीं कहा गया है और जो यह ब्रह्मा का सत्य लोकादिक है ये तो मुक्त लोक होने से इनका उत्पत्तिलय नहीं होना है ॥ ९ ॥

विदुरजी बोले हे ब्रह्मन् हे प्रभो ! मैत्रयजी वहुत रूपवाले अद्भुत कर्मवाले हरि का कालरूप लक्षण जो आपने कहा है तिसको यथार्थ वर्णन हमसे कीजिये ॥ १० ॥

मैत्रेयजी बोले सत्वादि तीनोंगुणों के विषमता से जिसका महदादिक आकार होना है स्वयं जिसका स्वरूप प्रत्यक्ष नहीं है इसी से आदि अंत रहित है उसी को निमित्तमान कर ईश्वर ने जीवों की सृष्टि की है ॥ ११ ॥

संपूर्ण जगत प्रलय काल में विष्णु की माया से इकट्ठा होकर ब्रह्म का शरीर में लीन होकर के रहता है स्वयं अप्रगट रूप वाले भगवान् कालस्वरूप से इस जगत् को प्रगट करते हैं ॥ १२॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

अप्रतिष्ठितत्वं दर्शयितुं तत्कार्यविश्वप्रवाहस्याप्रतिष्ठामाह । यथेदानीमस्ति तथाऽग्रे पूर्वमप्यासीत्पश्चादपि भविष्यति एवं सामान्यतः कालं निरूप्य विशेषतो निरूपयिष्यंस्तन्निमित्तस्य सर्गस्य पूर्वोक्तानेवभेदाननुवदति। सर्ग इति ।यस्तु प्राकृतो वैकृतश्च स दशमः ॥ १३ ॥

तन्निमित्तमेव त्रिविधं प्रलयमाह । कालेनैव केवलेन नित्यः प्रलयः द्रव्येण संकर्षणाग्न्यादिना नैमित्तिकः गुणैः स्वस्वकार्यं ग्रसद्भिः प्राकृतिकः तानेव सर्गान् प्रपञ्चयति । आद्य इत्यादिना यावदध्यायसमाप्ति महतो लक्षणमात्मनो हरेः सकाशाद्गुणानां वैषम्यमिति ॥ १४ ॥

अहमोऽहंकारस्य तस्य लक्षणम् यत्रेति द्रव्यादयो वक्ष्यमाणा त्रयः सर्गाः तन्मात्रो भूतसर्गः भूतसूक्ष्मसर्ग इत्यर्थः द्रव्यशक्तिमान् महाभूतोत्पादकः ॥ १५ ॥

ज्ञानकर्मेन्द्रियात्मकश्चतुर्थः पञ्चमो वैकारिकः इन्द्रियाधिष्ठातारो देवा मनश्च ॥ १६ ॥

---

श्रीराधारमणदास गोस्वामिविरचिता दीपिन्याख्या दीपिका टिप्पणी ।

यथेत्यर्थकम् । कालस्याप्रतिष्ठितत्वमाद्यन्तशून्यत्वं दर्शयितुं तत्कार्य्येति । कालकार्य्यस्य विश्वप्रवाहस्य विश्वपरम्पराया अपि आद्यन्तशून्यतामाह। पूर्वं प्रलयस्यादौ पश्चात् उत्तरप्रलयान्ते ईदृशं पञ्चमहाभूतसप्तसमुद्रात्मकमेव भविष्यति न तु षष्ठमहाभूतादि रूपं कल्पितत्वे कदाचित्तथात्वमपि प्रसज्येतेत्यतोऽस्य न मिथ्यात्वं किन्तु नश्वरत्वमेवेत्यर्थः तथाक्वचिन्मिथ्यात्ववर्णनं स्वतन्त्रसत्ता निषेधवैराग्यादिपरत्वेनोपसर्जनमेव नतु मुख्यमितिव्यञ्जितम् तन्निमित्तस्य कालनिमित्तकस्य पूर्वोक्तान् पञ्चमाध्यायोक्तान्महदादि लक्षणान् भेदान् विशेषान् तत्र केचित्प्राकृता ईश्वरसृष्टाः केचिच्च वैकृता ब्रह्मसृष्टाः सतु दशमः यउभयात्मको वक्ष्यमाणः तन्निमित्तं कालकारणकम् ॥ १३ ॥

तान्नवविधान् वैषम्यं प्रथमवैषम्यस्य विकार इति महतो लक्षणं यत्र द्वितीयसर्गे द्रव्यमधिभूतं ज्ञानमधिदैवं क्रियाऽध्यात्मं तेषामुत्पादकत्वमहङ्कारस्य लक्षणम् ॥ १४ ॥

तन्मात्रस्तेषां महाभूतानां मात्रा सूक्ष्मावस्था यस्मिन्भूतसूक्ष्म सर्गे तथा च विश्वप्रकाशः मात्रा इत्यारभ्याल्पे च परिच्छद इति अत्र प्रतिपत्तिगौरवादित्यर्थं इत्युक्तम् ॥ १५ ॥

यन्मयं सात्विकाहंकारकार्य्यस्वरूपं द्वितीयस्तु शब्दः पादपूरणे तु हि च स्मह वै पादपूरणे इत्यमरः ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

सृष्टिसंहारदशासु सर्वत्र कालस्यानुगतिमाहार्धेन यथेति । इदानीं सृष्टिदशायां यथा सर्वं कालपरिच्छिन्नं तथाऽग्रे सृष्टेः । प्राक्प्रलये पश्चादपि भाविप्रलयसृष्ट्योरपि एतत् जगदीदृशं कालपरिच्छिन्नमेवेत्यर्थः नच कालपरिच्छिन्नत्वेनानित्यत्वंशङ्क्यम् अवस्थानां-कालपरिच्छिन्नत्वेऽप्यवस्थावतो द्रव्यस्य नित्यत्वात् तथाच वैष्णवं वचः "तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् आविर्भावतिरोभावजन्मनाशविकल्पव" दिति एवं सर्वस्यापि परिच्छेदकः काल इति सामान्यतः कालरूपमप्युक्तं भवति ॥ १३ ॥

एवं कालकाल्यवस्तुसृष्टिमनूद्य अथतत्सर्गभेदान्प्रलयभेदांश्च कालादीननुवदति। सर्ग इत्यादिना । दर्शैते विदुरेत्यन्तेन तस्य काल काल्यस्य वस्तुनः प्राकृतो वैकृतश्च यः उभयात्मकः सर्गः स नवविधः आद्योमहत्सर्गः द्वितीयस्त्वहंकारसर्गः भूतसर्गस्तृतीयः इन्द्रियसर्गश्चतुर्थः मनः सर्गः पञ्चमः अण्डसर्गः षष्ठःपन्न

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

षट्सर्गाः प्राकृताः तस्थूणां सर्गः सप्तमः तिरश्चामष्टमः सर्गः नृणां सर्गो नवमः एते त्रयोवैकृताः मिलित्वा नवविध इत्यर्थः अथ प्रलयान् विभजति कालेत्यर्द्धेन अस्य काल कालस्य प्रतिसक्रमः प्रलयः कालद्रव्यगुणैस्त्रिविधः कालेनास्मिन्कालऽस्य मृतिरिति नियतेन कालेन प्रलयो नित्यप्रलयाख्यः कालिक एकः द्रव्यस संकर्षणमुखाग्न्यादिना प्रलयो नैमित्तिकप्रलयाख्यः द्रव्यप्रलयो द्वितीयः गुणैः सत्वादिभिः साम्यावस्थैर्जातः प्राकृतप्रलयाख्यस्तृतीयः ॥ १४ ॥

नवविधानेव सर्गान्प्रपञ्चयति । आद्य इत्यादिना । अत्रोक्तोतस्तुनवम इत्यन्तेन आत्मनः कार्योन्मुखप्रकृतिपुरुषशरीरकात्परमात्मनः सकाशाद्गुणवैषम्यकृतो महत्तत्वस्य सर्गः स आद्यः वैषम्यापन्न गुणत्रयात्मकप्रकृतिविकारविशेषो महत्सर्गः प्रथम इत्यर्थः अहमः अहंकारस्य द्रव्यज्ञानक्रियादयः द्रव्यं भूतपञ्चकं ज्ञानक्रियाशब्दाभ्याम् ज्ञानकर्मेन्द्रियोक्तिः आदिशब्दात् मनस्तन्मात्राणि चोक्तानि एते यत्र यस्मादहमः उत्पन्नास्तस्याहमः सर्गो द्वितीय इत्यर्थः ॥ १५ ॥

भूतसर्गस्ततोयस्तद्वेवोपपादयति । तन्मात्रद्रव्यशक्तिमानिति । तन्मात्राणि शब्दादीनि पञ्चद्रव्याणि आकाशादीनि पञ्च एतान्येव शक्तयोऽस्य सन्तीति तद्वान् तन्मात्रद्रव्याणाम् भगवच्छरीरत्वाच्छक्ति शब्देनोक्तिः यथा "परस्य ब्रह्मणः शक्तिस्तथेदमखिलम् जगत् यस्य पृथिवी शरीर" मित्यादि तद्वत् तत्वंशशक्त्यादिशब्दाः पर्याया इति पुरस्तादेवोक्तम् अत्रमतुप्प्रत्ययेनावगतसंबन्धसामान्यं विषयविषयभावरूप संबन्धविशेषे पर्यवसन्नं यथा गामानयेत्युक्ते गोशब्दस्य विवक्षितप्रकृतगोव्यक्तिविशेषपर्यवसानम् तथाचायमर्थः भगवच्छरीरभूततन्मात्रद्रव्यविषयकः सर्गस्तृतीय इति तन्मात्रो द्रव्यशक्तिमानिति पाठे तृतीयो भूतसर्गो द्विविधः तन्मात्रः शब्दादितन्मात्रसर्गः द्रव्यशक्तिमान् द्रव्यशक्तिविषयश्चेति समासद्वयासरूपेण व्याख्येयं ज्ञानकर्मक्रियात्मकः ज्ञानकर्मेन्द्रियविषयः यस्त्वैन्द्रियसर्गः स चतुर्थ इत्यर्थः वैकारिकः सत्त्वोद्रिक्तः देवसर्गः इन्द्रियाभिमानिदिग्वातादिदेवसर्गो यः सपञ्चमः यन्मयंमनः यद्वैकारिकाहंकारकार्यं मनः तद्वैकारिकाहंकारोद्रिक्तो देवसर्गः पञ्चम इत्यर्थः यद्यपीन्द्रियाभिमानिदेवतानाम् सर्गस्याण्डसृष्ट्यनन्तरम् चतुर्मुखकर्तृकत्वेन नवैकारिकाहंकारसर्गान्तर्भावः अतएव वैकृतास्त्रय एवेते देवसर्गश्च सत्तमेति देवसर्गस्य वैकृतत्वंवक्ष्यते तथापीन्द्रियप्रसंगाद्वाक्यस्थतया तेषां कथनं ननु वैकारिकत्वविवक्षया सर्वेषामिन्द्रियाणाम् वैकारिकाहंकारादेव उत्पत्तेर्दिगादिदेवताधिष्ठेयश्रोत्रादीन्द्रियोत्पत्त्यभिप्रायेण वा देवसर्ग इत्युक्तम् ननुसर्वेन्द्रियाणाम वैकारिकत्वे कथं चतुर्थस्त्वैन्द्रियसर्गः यस्तु ज्ञानक्रियात्मकः इति पञ्चमसर्गान्तर्भावेन चतुर्थसर्गत्व कथनमितिचेन्न अन्तरिन्द्रियत्वबाह्येन्द्रियत्वरूपवैधर्म्येण मनः सर्वेन्द्रियवर्गसर्गयोः पृथग्गणनात् नचैतावतेन्द्रियाणामवैकारिकत्वशङ्का कार्या तैजसस्य वैकारिकभूतादेरनुग्राहकत्वेन स्वत इन्द्रियोत्पादकत्वस्य द्वितीये निरस्तत्वात् ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

तदुपादानं सोऽव्यक्तलक्षणो येन उपादानं कार्याधिकरणं यस्य स तथा तं तदुपादानम् आत्मानमेव चेतनाचेतनस्वरूपेणासृजदात्मानमसृजदित्युक्तत्वादाकाशादरविद्यमानस्यैवोत्पत्तिर्नैत-सारं यतो विश्वमाकाशादिब्रह्मतन्मात्रं प्रलयकाले बभूव तत्कथं स्थितं प्रलीनं नष्टमितियावत् विष्णुमायया व्याप्तस्य ब्रह्मणो मायया व्यक्तलक्षणया ईश्वरेणापरिच्छिन्नं विषयीकृतं काल कलनात्मकेन ज्ञानस्वरूपेण साक्षिणाऽव्यक्तमूर्तिना चक्षुराद्यस्यस्वरूपाणि त्रैकालिकासत्वेन व्याख्यानमयुक्तंप्रपञ्चत्रैकालिकाबाधगतस्यानुमानसिद्धत्वादित्याह । यथेति । यथेदानीं प्रा काले अर्थक्रियाकारित्वात्मत्त्वमनुभूयते तथाग्रे सृष्टेःपूर्वप्रलये पश्चादुत्तरत्राप्येतज्जगदीदृशं सत्यमित्यनुमातव्यं यथेदानीं कारणरूपेण सच्चैतन्यं दृश्यमाकाशादिकार्यमुपलभ्यते तथा प्र प्रलयकाले च कारणरूपेण सच्चैतन्यं दृश्यमिति चानुमात मिति त्रैकालिकासत्त्वेऽयं दृष्टान्त इतिचेन्न अस्मदुक्तस्वप्रमाणानु कूल्यादन्यस्याननुकूल्यादनर्थहेतुत्वाच्च तदुक्तं "सृष्टिश्च प्रलयश्च संसारोमुक्तिरेवच । देवर्षिप्रभृतयो लोका लोकाभूरादयस्तथा अनाद्यनन्तकालीनाः सर्वदैकप्रकारतः । जगत्प्रवाहः सत्योऽयं नैवमिथ्या कथंचन । ये त्वेतदन्यथा ब्रूयुः सर्वेहतार एवत" इत्यादि प्रवाहरूपेण सत्यस्य विश्वस्य सर्गस्य नवविधत्वाच्च सत्य सिद्धं नहीन्द्रजालवन्मिथ्याभूतस्य नियतसंख्याविषयत्वमनेकविधत्वात्तस्येति भावेनाह । सर्ग इति । तस्य विश्वस्य त्रिधाविधोप्रकारस्यादित्यभिधानं प्रकृतिविकृतत्वाच्च तानिर्वाच्यमायाकृतमित्याह प्राकृत इति । यः सर्गः प्राकृतोवैकृतश्चेत्यन्वयः । अव्यक्ताद्याः "पूर्वव्यक्ताः सर्गाः प्राकृतयः स्मृताः । तदुपादानकः सर्गः प्राकृ परिपठ्यते । अण्डन्त विकृतंज्ञेयं तज्जो वैकृत उच्यते" इति व नात् अण्डाद्बहिः सर्गः प्राकृतः विकृताण्डान्तस्थः सर्गो वैकृत ज्ञातव्य चशब्देन मायामयस्य परिणामादर्शनं लिङ्गमिति चयति स्वरूपादप्रच्युतादन्यथास्फुरणं मायेत्यङ्गीकारात् ॥ १३

प्रतिसंख्यायो सत्त्वप्रतिपेधवद्बाधाभावाच्च सत्य इति भावेनाह । कालेति । अस्य विश्वस्य प्रतिसंक्रमः प्रलयाख्यो ना कालद्रव्यगुणनिमित्तभेदेन त्रिविधो ज्ञेयः शतवर्षादिसंख्या कालतः घटादेर्मुसलादिनाद्रव्यतः प्रवृद्धेन सत्त्वेन तामस मल्पत्वेन तमसा सात्त्विकं सुखं क्वचिदुद्रिक्तेन रजसा रिक्तनामसयोरपि क्वचित्सत्त्वेन राजसतामसयोरपीत्यादि विलयो गुणतः । "रजस्तमश्चाभिभूय सत्त्वं भवतीत्युदाहृतं मसस्य पदार्थस्य सत्त्वं हि लयकारणम् । सात्त्विकस्य तम च तयोरपि रजःक्वचित् । गुणतोऽयं लयः प्रोक्तो द्रव्यत विरोधिना । कालतः कालसंख्याको लयः सर्वस्य वस्तुन" वचनाच्च विश्वस्य त्रैकालिकासत्त्वलक्षणो बाधो नोपपन्न तत्र प्राकृतवैकृतयोर्मध्ये प्राकृतसर्गमाह । आद्य इति । आत्म परमात्मनः सकाशाद्गुणवैषम्यं गुणवैषम्यनामको महतत्त्व देहस्य तदभिमन्यमानमहत्तत्वस्य च प्राकृतेष्वाद्यः सर्ग तेऽत्रेदमाकूतं तमोगुणाद्रजो गुणो द्विगुणः रजोगुणात्सत्त्वगुणो द्विगुणः एवं प्रकृतिजानां गुणानां परिमाणं स्यात्तत्र गुणेषु सत्त्वगुणः केवलोरजस्तमोभ्यामविमिश्रः रजोगुण त्रिविधःतथाहि मूलंरजसि रजोगुणाच्छतादधिकःसत्त्वगुण रज नांश तमोगुण इति रजोराशिः मूलतमोगुणोऽपि त्रिविधो मूल स्मि तमोगुणाद्दशगुणाधिकः सत्त्वगुणः रजस्तमस एकाद विभक्तादेकांशसंमितम् एवं गुणानां निजास्थितिः तत्र प्रल लरज एकादशधा विभक्तं दशांशेन शुद्धसत्त्वेन मिश्रितं ति एकांशेन मूलतमस्यपि मिश्रितं स्यादेतां गुणानां सा

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली।

वस्थामाहुः तत्र यदा मूलसत्त्वेन संगतं दशांशं तद्रजः सर्वं तन्मूलतमसा सह संगतं संयुक्तं भवति तदा महत्तत्त्वं समुत्पन्नमाहुः तत्केवलसत्त्वगुणमुच्यते प्रलये मूलसत्त्वेन संगतं मूलरजः मूलतमसि संगतं मूलरजः मूलरजसि स्वाभाविकं रज इति रजांस्येव त्रिभागा एकांशस्तम इति चतुर्भागा एषां संयोगेनोत्पन्नगुणवैषम्यनामकं महत्तत्त्वं ब्रह्मणो रूपमिति तदुक्तम्।

तमसांरजस्तुद्विगुणं रजसः सत्त्वमेवच।
परिमाणत एवं स्युस्त्रयः प्रकृतिजा गुणाः।
तत्रसत्त्वं केवल स्याद्रजस्यपि शताधिकं।
सत्त्वं रजःशतांशस्तु तमस्तत्र प्रकीर्तितम्।
तमस्यपि तथासत्त्वं तमसस्तु दशोत्तरम्।
तद्दशांशेन तु रजोमूलजं यद्रजस्तुतत्।
विलये दशांशतः सत्त्व एकांशेन तमस्यपि।
मिश्रितं भवति ह्येतां साम्यावस्थां विदुर्बुधाः।
यदातु तद्रजः सर्वं तमसा सह सङ्गतम्।
तदा त्वाहुर्महत्तत्वं तच्चतुर्भागसंभवम्।
तत्र त्रिभागा रजस एकांशस्तमसस्तथा।
तदाहुर्ब्रह्मणो रूपं गुणवैषम्यनामकम्।
तदेवं केवलं सत्त्वमितरापेक्षयाभवेत्।
श्रीर्मूलसत्त्वं विज्ञेया भूर्मूलं रज उच्यते।
मूलं तमस्तथा दुर्गा महालक्ष्मीस्त्रिमूलिका।
गुणेभ्यो गुणमूलाच्च योऽतीतः स जनार्दनः।

इति ॥ १४ ॥

द्वितीयसर्गमाह। द्वितीयइति। द्वितीयोऽहंकारस्य सर्गः तत्राहंकारसर्गे द्रव्याणि वियदादिभूतानि ज्ञानक्रिया ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि आदिशब्दगृहीता मनइन्द्रियाभिमानिदेवाश्च जायन्त इति शेषः भूतादीनां सर्गक्रमेण तृतीयादित्वेनाह। भूतसर्ग इति। भूतानामाकाशादीनां सर्गस्तन्मात्रद्रव्यशक्तिमान् तन्मात्राः शब्दादयः आकाशादीनां शब्दादिस्वरूपत्वात्तन्मात्रशक्तिमान् द्रव्यशक्तिमत्त्वाद्द्रव्यशक्तिमान् अहंकारतत्त्वेऽपि गुणवैषम्यमस्तीति ज्ञातव्यम् तथाहि मूले रजसि यद्रजोमूले तमसि यत्तम एतदात्मकं महत्तत्वं ब्रह्मणो रूपमेकादशधा विभज्य दशांशाः सत्त्वं स्युः एकांशोरजः रज एकादशधा विभज्यैकांशस्तमस्तस्मात्तमस उत्पन्नोऽहंकारस्तदभिमन्यमानमहंकारतत्त्वं चेति महतोऽहंकारसर्गः सोऽहंकारोऽपि त्रिविधः तस्मिन्नहंकारेऽपि दशांशाः सत्त्वमेकांशो रजस्तद्रज एकादशधा विभज्यैकांशस्तमस्तमोंऽशात्तामसाहंकारः रजोंऽशात्तैजसाहंकारः सत्त्वांशाद्वैकारिकाहंकार इति तत्रापि तामसाद्भूतसर्गः तैजसादिन्द्रियसर्गः वैकारिकाद्देवसर्गः।

यद्रजो मूलरजसि मूले तमसि यद्रजः।
तमश्च मूले तमसि महत्तत्त्वं तदात्मकम्।
दशांशास्तत्र सत्त्वं स्युरेकांशो रज एवतु।
तद्दशांशं तमो ज्ञेयमहंकारस्तदात्मकः।
सरुद्रस्तामसो ज्ञेयो विरिञ्चापेक्षयैव तु।
इतरापेक्षया सत्त्वं सत्त्वाद्यास्तद्वदस्यतु।
तत्तमोंऽशात्सात्त्विकांशो मनआद्याः प्रकीर्त्तिताः।
रजसोंऽशास्त्विन्द्रियाणि तामसोंशाश्च खादयः॥

इति वचनादिदं तात्पर्यं मवगम्यते ॥ १५ ॥

ज्ञानक्रियात्मको ज्ञानेन्द्रियकर्मेन्द्रियात्मकः पञ्चमो वैकारिकाहंकाराद्वैकारिकनामादेव सर्गः इन्द्रियप्रेरकत्वेनातिविकारित्वाद्वैकारिकनामवत्त्वं तेषां यस्माद्वैकारिकाहंकारादुत्पन्नत्वान्मनश्च यन्मयमित्युच्यते।

भूतानि द्रव्यशक्तीनि भूतेषु द्रवणं यतः।
तथा तन्मात्रशक्तीनि शब्दाद्यात्मकता यतः।
क्रियाशक्तीनि वागाद्यानीन्द्रियाणीतराणिच।
ज्ञानशक्तीनि मनसा देवाश्च ज्ञानशक्तयः।
एतेषां मूलभूतत्वादहंकारस्त्रिशक्तिमान्।
मानुषापेक्षया देवाः सात्त्विकाः परिकीर्तिताः।
तत्रापि सात्त्विकाः प्रोक्तास्सात्विका यास्तुदेवताः।
तत्रापि सात्त्विको रुद्रस्तत्रापि तु चतुर्मुखः।
अविकारौ ब्रह्मरुद्रौ देहभेदादिसंभवे।
विकारवन्त इन्द्राद्यास्तस्माद्वैकारिका मताः।
त एतेन्द्रियरूपेण यतस्त्वातिविकारिणः।
ज्ञानमात्रगुणोद्रिक्तास्तस्मात्तैजसनामकाः।
अविकारित्वयोग्यत्वं निवृत्तं हीन्द्रियेषु तु।
वैकारिकत्वनामापि ततस्तेषां न विद्यते।
यथा विप्रकुले मूर्खो मूर्ख इत्यभिधीयते।
विद्यायोग्यत्वतः शूद्रो न मूर्खो मूर्ख एव सन्।
तामसानीह भूतानि किंचिद्व्यवहितत्वतः।
ज्ञानस्य सुष्टुंज्ञत्वेऽपि पूर्णज्ञानो हरिः स्वयम्।

इति वचनात् तुशब्दचतुष्टयसूचित एषां विशेषो ज्ञातव्यः ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

यथेत्यर्धकम्। ईदृशं पूर्व्वोक्तप्रकारेण प्रलयाद्यात्मकम् सर्ग इति प्राकृतो वैकृतस्त्विति। तत्र केचित् प्राकृता ईश्वर सृष्टाः केचिच्च वैकृता ब्रह्मसृष्टा इत्यर्थः। उभयात्मकस्तु वक्ष्यते ॥ १३ ॥

आद्यस्त्वित्यत्र यत्रेति पूर्व्वेणापि सम्बध्यते। यत्र महतःसर्ग आत्मनो जीवस्य गुणवैषम्यं भवतीति। यद्यपि पाद्मकल्पेऽस्मिन्पूर्व्वसिद्धत्वान्महदादीनां सर्गो नास्ति तथापि तदुद्देशःसूक्ष्मसूक्ष्मक्रमबोधार्थं एव ॥ १४ ॥

तन्मात्रः तेषां भूतानां मात्रा सूक्ष्मावस्था यस्मिन्सः ॥ १५ ॥

यस्त्विति तुशब्दः पादपूरणे। तु–हि–च–स्म–ह–वै–पादपूरणे इत्यमरः ॥ १६ ॥

---

श्रीमद्वल्लभाचार्यकृत सुबोधिनी।

तस्योपादानत्वं कार्ये प्रदर्शयति। यथेदानीमिति। कालस्य नित्यत्वात्तदुपादानकं जगन्नित्यमेव परं यथोपादानत्वमुपदिश्यते भूतादिव्यपदेशाः कालकृताः कालो हि निरन्तरं वर्तमानो जलप्रवाहवत्पूर्वं पूर्वमुत्तरो बाधते तदाकारेण जातिविकारं जगत् भूतत्वेन व्यपदिश्यते वर्तमानोऽपि काल एव देशापेक्षाभावान्नापेक्षिकं वर्तमानत्वं जलादौ तु देशापेक्षया विद्यमानत्वादापेक्षिकैव वर्तमानता भवति अतो यादृशः कालस्तादृशं जगत्कालाधीनेत्वेपैव व्यवस्था अवान्तरकालानां मूलभूतः कालो नियामको जीवानामात्माभगवानिवातः स्वभावतस्तुल्यत्वादवांतरभेदो विवक्षयोच्यते इदानीं यथा जगदग्रे तथैव भविष्यति पश्चादप्येतदीदृशमेव अतोऽस्य जगतः कालनियामकत्वान्नमायिकत्वं तस्मात्कात्स्न्येनाभिव्यक्तस्वरूपत्वात् ब्रह्मरूपं जगदेवं कालोपादानत्वं

### श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

जगतो निरूप्य कालस्याधिदैविकं स्वरूपमुक्त्वा आधिभौतिकं स्वरूपं निरूपयति । सर्गो नवविध इत्यादिना । यावदध्यायपरिसमाप्ति-आध्यात्मिकभेदानग्रिमाध्याये वक्ष्यति तावता साधारणानांमात्रेन्द्रियाणां काल एवनियामकः तेषां बुद्धिस्तु वेदा ब्रह्मादिभिश्चातो भगवदधीनास्ते भगवदाज्ञया संसारे प्रवृत्ता भगवान्भगवदाज्ञा च तेषां मूलं महाभूतवत् विषयेंद्रियाणि तु कालाधीनान्येव कालरूपाणि ता मात्रास्त्रिविधा इत्याध्यात्मिकानाधिभौतिकांश्च निर्दिशति। सर्गो नवविध इति । प्रकृतश्चाधिभौतिकः षड्विधोवैकृतः आध्यात्मिकस्त्रिविधः तामसानामेतेननियामकत्वात् उभयेन विविधाः तुशब्दो वैकृते भेदान्तरमस्तीति ज्ञापकः वैकृतोऽप्याध्यात्मिकाद्वैकृतान्द्भिन्नः त्रिविध आधिदैविकोऽतएव यः प्रसिद्धः उत्पत्तिर्नवविधानामपि गुणानां व्युत्पादकत्वात्प्रतिसंक्रमस्तु त्रिविधः तामसानामेव नियामकत्वात्तत्राधिकारिणस्त्रयः कालो द्रव्यं गुणाश्चेति ॥ १३ ॥

कालेन पदार्थाः प्रकृतौ प्राप्यन्ते द्रव्यैर्वायुदण्डादिभिः गुणैर्विरोधिभिः विरुद्धा गुणाः प्रादुर्भूताः कर्मणा विहितप्रकारेण देवादिभावे प्राप्ते मानुषादिभावा निवर्तन्ते इति सत्त्वादिभिरेव पूर्वस्य प्रलयः नियतस्तु कालकृतः प्रलयोऽनियतावितरौ सर्गाणां नवविधत्वमुपपादयति । आद्यस्त्विति ।

> सर्गा अत्र विभेदेन कालतः क्रियया तया ।
> अतस्तत्त्वेऽपि षड्भेदाः पारंपर्यं न दूषणं ॥
> महत्त्वेन प्रकारेण जगत्सर्वं तथोद्गतम् ।
> अतो जगत एवात्र सर्गो हेतुर्महत्पुनः ॥
> भूतमात्रेन्द्रियधियां जन्मसर्ग उदाहृतः ।
> तच्चतुष्टयमात्रास्ति तेन सर्गत्वमस्य हि ।

तु शब्दः पक्षं व्यावर्तयति महत्तत्त्वस्य न केवलं जन्ममात्रं किन्तु महतो जन्म सर्गस्तत्राप्याद्यः सर्गान्तरापेक्षया अयं सर्गः सर्वोपकारी महत्तत्त्वाद्बुद्धिरुक्ता तस्य महत्तत्त्वस्य योनेः सकाशादुद्गम इव सर्गोऽत्र न विवक्षितः किंत्वात्महेतुको गुणानां विषमो भावः तत्र सत्त्वं धीनिमित्तं भगवतो धीर्निमित्तत्वे सत्त्वं मनोनिमित्तं विषया राजसाः भूतानि तामसानिवैषम्यादिभावे तु स्थित्यादिहेतुत्वमात्मनः सकाशाद्गुणानां वैषम्यमेतदेव महत्तत्त्वं सर्ग इत्यर्थः ॥ १४ ॥

द्वितीयमाह । द्वितीयस्त्विति । अत्रापि जन्ममात्रं व्यावर्त्यते । अहमःअहंकारस्य सर्गो द्वितीयः अत्रापि चतुर्विधत्वमाह । यथा-सर्गे गुणवैषम्यमपेक्षितमेवं द्रव्यज्ञानक्रियाणामभ्युदयोऽपेक्षितः द्रव्यमधिभूतं ज्ञानमधिदैवं क्रिया आध्यात्मिकी आद्यो भावो वैषम्यं द्वितीयो भावस्त्रैविध्यं यत्रेत्यधिकरणं कारणरूपं । महत्तत्त्वंबुद्धिः तृतीयमाह। भूतसर्गइति। अत्रापितुशब्दः पूर्ववत्यथाक्षोभापेक्षा-यथाज्ञानक्रियाविषयाणां तथा परिणामहेतुरूपस्यापि तच्च रूपं-भोक्तृभोग्यभावापन्नं वक्तव्यमिति भोग्यं तन्मात्रत्वेन विवक्ष्यते भोक्ता शरीरसाधकभूतत्वेन तदुभयमाह । तन्मात्रो द्रव्यशक्तिमानिति । तन्मात्रः पञ्चतन्मात्रारूपः द्रव्यशक्तिः परिणामः तत्सहितस्तृतीयः सर्ग इत्यर्थः ॥ १५ ॥

एवं त्रिभिः सर्गैः कार्यं निष्पद्यते त्रिभिश्च ज्ञायते तत्र प्रथमं चतुर्थऐन्द्रियः सर्गः इन्द्रियसंबन्धी सर्गः इन्द्रियाणां स्वरूपोत्पत्तिर्नसर्गः किन्तु कार्योपयोगित्वेनातोऽनुवादे तु शब्दः कार्ये भिन्नतयोत्पत्तिव्यावृत्त्यर्थं सर्गे पूर्वत्रैव योजितः यस्त्वित्यनुवादात्स्वरूपकार्ययोर्भेदनिरूपणार्थौ ज्ञानात्मकः क्रियात्मकश्च उभयेंद्रिय कार्यं क्रियात्मकत्वेन भूतानीन्द्रियाणि चोक्तानि ज्ञानात्मकत्वेन तन्मात्राणि धियश्चोक्ताः पञ्चममाह वैकारिक इति वैकारिकः सात्त्विको देवानां सर्गः अत्र देवानां सर्गे स्वरूप उत्पत्तिः अतीन्द्रियत्वेनाव्यवहार्यत्वेन च द्वैविध्याभावाच्च पक्षव्यावृत्तिःयथा ज्ञानेन्द्रियाण्यपेक्ष्यन्ते क्रियायांच तथैव देवताप्रेरणं तदभावे ग्रहणानुपपत्तेः वैकारिकत्वेन त्रिरूपता देवत्वाद्द्विरूपत्वं नन्वेतेषां देवानां किं कार्यं प्रेरणात्वन्तर्यामिजीवाभ्यामेवोपपद्यते इत्याशङ्क्याह । यन्मयं मनइति । पञ्चमसर्गप्रचुरं मनः यथेन्द्रियाणां सद्भावेऽपि मनोव्यतिरेकेण ज्ञानक्रियोदयः नाथैषममना इत्याद्यभिलापात् । नहि सजातीयनियमनव्यतिरेकेण केवलं चेतनेन राज्ञेव सर्वथा नियमनं कर्तुंशक्यते अतः सामान्यतो मनो यथानियामकं तथेन्द्रियं देवता अपि वैकारिकत्वे चैक्यं वैकारिकत्वं पूर्वरूपं प्रेरकत्वमुत्तररूपमिति ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

नन्वाद्यन्तयोरसत्वादसदेव विश्वमित्यतोऽसत्यस्य विश्वस्य किं परिच्छिन्नत्वाद्युक्त्योति चेन्मैवं वाच्यमित्याह । यथेति । अ पूर्वमहाप्रलयस्यादावपि एतद्विश्वमासीदेव । पश्चादुत्तरप्रलयान्तेऽपि भविष्यत्येवेत्यतोऽस्य न मिथ्याभूतत्वं किन्तु नश्वरत्वमेवेति भावः ॥ १३ ॥

एवं सामान्यतः कालं निरूप्योत्तराध्याये विशेषतो वि पयिष्यन् तन्निमित्तं सर्गं विस्तरेणोक्तं वक्ष्यमाणञ्च सुख धार्थं संक्षेपतोदशविधत्वेन संकलयति । सर्ग इति । यस्तुप्राकृ वैकृतश्च स दशम इति शेषः तन्निमित्तमेव त्रिविधं प्रलय कालेनैव केवलेन नित्यः प्रलयः द्रव्येण संकर्षणाग्न्यादिनै मित्तकः । गुणैः स्वस्वकार्य्यै प्रसद्भिः प्राकृतिकः ॥ १४ ॥

तानेवसर्गान् विवृणोति। आद्य इत्यादिना । यावदध्यायसमा महतो लक्षणं आत्मनः परमेश्वरात् सकाशात् गुणानां वैष प्रथमम् अहमोऽहंकारस्य तस्य लक्षणं यत्रेति द्रव्याणि भूता ज्ञानानि ज्ञानेन्द्रियाणि देवता मनश्च क्रिया कर्मेन्द्रिया तेषामुदयोयतः सः ॥ १५ ॥

भूतसर्गः तन्मात्रः तन्मात्रात्मकः द्रव्येषु महाभूतेषु श मान् तत्प्रकाशनसमर्थश्चेत्यर्थः । ज्ञानकर्मेन्द्रियाणामात्मा स्व यतः ॥ १६ ॥

---

### श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

ननु विश्वस्यानित्यत्वे सृष्टेः पूर्वं प्रलयतः पश्चाच्च विश्वा एव किमित्यत आह । यथेति । यथेदानीं भावरूपं तथा चाग्रे पूर्वं पश्चात्प्रलयानन्तरमीदृशं भावरूपमेव कार्य्यावस्थाया नित्यत्वं कारणरूपेण तु नित्यमेव तथोक्तं वैष्णवे :

> तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् ।
> आविर्भावतिरोभाव जन्मनाशविकल्पवदिति ॥

एवं विश्वसृष्ट्यादिनिमित्ततया कालं सामान्यतोनिरू विशेषतस्तं निरूपयिष्यन् काल परिच्छिन्नस्य सर्गस्य पूर्वो भेदानुवदति । सर्गइत्यादिना । षड्विधः प्राकृतः त्रिविधो

षष्ठस्तु तमसः सर्गो यस्त्वबुद्धिकृतः प्रभो। *
षडिमे प्राकृताः सर्गा वैकृतानपि मे शृणु ॥ १७ ॥
रजोभाजो भगवतो लीलेयं हरिमेधसः।
सप्तमो मुख्यसर्गस्तु षड्विधस्तस्थुषां च यः ॥ १८ ॥
वनस्पत्योषधिलतात्वक्सारा वीरुधो द्रुमाः।
उत्स्रोतसस्तमःप्राया अन्तःस्पर्शा विशेषिणः ॥ १९
तिरश्चामष्टमः सर्गः सोऽष्टाविंशद्विधो मतः।
अविदो भूरितमसो घ्राणज्ञा हृद्यवेदिनः ॥ २० ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः।

इत्येवं नवविधः यस्तु प्राकृतो वैकृतः सदशम इत्यर्थः ॥ १३ ॥

सृष्टिप्रसङ्गात्कालनिमित्तं त्रिविधं प्रलयमाह। काल इति। कालेन नित्यः प्रलयः द्रव्येण सङ्कर्षणाग्न्यादिना नैमित्तिकः गुणैः सत्त्वादिभिः स्वकार्यं ग्रसद्भिः प्राकृतिकः दश सर्गान्प्रपञ्चयति। आद्य इत्यादिना। दर्शिते विदुराख्याताः सर्गास्तेविश्वसृक्कृता इत्यन्तेन आत्मनो हरेः सकाशात् गुणानां स्वशक्तिगुणानां वैषम्यं नाम महतः सर्गः ॥ १४ ॥

यत्र यस्मात्तद्द्रव्यादीनां वक्ष्यमाणानां त्रिविधसर्गाणामुदयः तस्याहमः अहङ्कारस्य सर्गः तृतीयस्तु भूतसर्गः कथंभूतः तन्मात्रः शब्दादितन्मात्रप्रधानः द्रव्यशक्तिमान् आकाशादिमहाभूतान्येव शक्तयः शब्दादितन्मात्रकार्याणि यस्य सन्ति स तथा ॥ १५ ॥

ज्ञानेन्द्रियकर्मेन्द्रियात्मकश्चतुर्थः वैकारिकः सात्त्विकाहंकाराज्जातो यन्मयं मनः स मनः सहित इन्द्रियाधिष्ठातृदेवसर्गःपञ्चमः ॥ १६ ॥

———

भाषाटीका।

यह संसार जैसा अब दीखता है तैसाही पहिले था पीछे भी ऐसाही होगा इसका प्राकृत सर्ग छः प्रकार है वैकृत तीन प्रकार है ऐसे सब नौ प्रकार है काल से नित्य द्रव्य से नैमित्तिक गुणों से प्राकृतिक ऐसे तीन प्रकार का प्रलय होता है ॥ १३ ॥

गुणों के विषमता होने से परमात्मा के सकास से पहिला महत्तत्व का सर्ग होता है दूसरा अहंकार का सर्ग है जिस में पृथिवी आदि पंच एका दश इंद्रिय देवता मन इनकी उत्पत्ति है ॥ १४ ॥

भूत सर्ग तृतीय हैं जिस में शब्दादि पंच तन्मात्रा रूप सूक्ष्म भूत सर्ग है जो कि ज्ञानेंद्रिय कर्मेंद्रिय रूप है सो चतुर्थ सर्ग है ॥ १५ ॥

जोकि सात्विकाहं का कार्य है दिग्वातादिक देवता जिस मे होते हैं और जिस मे सात्विकाहंकाररूप मन है सो पंचम सर्ग है हे प्रभो! विदुर सो अज्ञान करने वाले तमोगुण का जो सर्ग है षष्ठ सर्ग है ॥ १६ ॥

श्रीधरस्वामिकृत भावार्थदीपिका।

षष्ठस्तु तमसः पञ्चपर्वाविद्यायाः अबुद्धिर्जीवानामावरणं विक्षेपश्च तां करोतीत्यबुद्धिकृत्तस्य मे मत्तः शृणु ॥ १७ ॥

अनुद्वेगेन श्रोतव्यतामाह। यद्विषया मेधा संसारं हरति तस्य हरेर्लीला यद्वा इयमिति तमआदिसर्गरूपा रजोभाज इति ब्रह्मरूपस्येत्यर्थः अस्मिन् पक्षे अबुद्धिकृत इति प्रथमान्तम् अनवधानकृत इत्यर्थः मुख्यमिव प्रथमं कृतो मुख्यसर्गः तस्थुषां स्थावराणाम् १८।

षड्विधत्वमेवाह। ये पुष्पं विना फलन्ति ते वनस्पतयः ओषधयः फलपाकान्ताः लता आरोहणापेक्षाः त्वक्सारा वेणवादयः लता एव काठिन्येनारोहणानपेक्षा वीरुधः ये पुष्पैः फलन्ति ते द्रुमाः तेषां साधारणं लक्षणमाह। ऊर्ध्वं स्रोतः आहारसंचारो येषाम् तमःप्रायाः अव्यक्तचैतन्याः अन्तःस्पर्शाः स्पर्शमेव जानन्ति नान्यत् तदप्यन्तरेव न बहिः विशेषिणोऽव्यवस्थितपरिणामाद्यनेकभेदवन्तः ॥ १९ ॥

तिर्यक्स्रोतसां सर्गमाह। तिरश्चामिति। स चाष्टाविंशतिभेदः तिरश्चां लक्षणम् अविदः श्वस्तनादिज्ञानशून्याः भूरितमसः आहारादिज्ञानमात्रनिष्ठाः घ्राणेना घ्राणेनैवेष्टमर्थं जानन्ति हृदिअवेदिनो दीर्घानुसंधानशून्याः तथाच श्रुतिः अथेतरेषां पशूनामशनायापिपासे एवाभिविज्ञानं न विज्ञातं वदन्ति न विज्ञातं पश्यन्ति न विदुः श्वस्तनं न लोकालोकाविति ॥ २० ॥

———

श्रीराधारमणदासगोस्वामि विरचिता दीपिन्याख्या

दीपिका टिप्पणी।

प्राकृताः "प्रकृतिश्च प्रतिज्ञा दृष्टान्तानुपरोधात् १।४।२३। इति न्यायात्प्रकृतिस्सर्वोपादानमीश्वरस्तस्माज्जाताः विकृतिः समष्टिविराड् ब्रह्मा तस्माज्जातान् भगवत्पक्षे रजोभाजस्सांनिध्येन तदुपकारकस्य पूर्वार्थे संनिकृष्टपरामर्शकस्येदंशब्दस्य व्यवहिततपरामर्शकत्वं न संभवतीत्यरुचौ यद्वेति तमआदीत्यादिना वक्ष्यमाणमुख्यसर्गादीनां परिग्रहः ब्रह्मरूपस्य एतत्पक्षे हरौ मेधा यस्येति ॥ १७ ॥ ॥ १८ ॥

सप्तम इति सार्धकम्। परिणामादीत्यदिना फलपुष्पादिपरिग्रहः ॥ १९ ॥

इतरेषां मनुष्यव्यतिरिक्तानामिति मनुष्यस्य तत्तज्ज्ञानसत्वे प्यभक्तत्वे पशुत्वं व्यञ्जयति विज्ञात मयमसाविति विचारितमर्थं

* प्रसार्गरितिवीरराघवपाठः।

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या
दीपिका टिप्पणी ।

अशनायापिपास इति द्वन्द्वैकवद्भावः लोकालोकौ प्रकाशाप्रकाशौ स्वर्गनरकौ वा २० ॥

---

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

षष्ठस्त्विति । तामसः तमः शब्देन प्रकृतिमण्डलात्मकमण्डमुच्यते आदित्यवर्णन्तमसः परस्तादित्यादौ तमः शब्देन प्रकृतिमण्डलाभिधानात् तद्विषयः सर्गस्तामसः षष्ठः तमेवाविशिनष्टि अबुद्धिकृतः प्रभोरिति । प्रभोश्चतुर्मुखस्याबुद्धिकृतः तदन्तर्यामि परमात्मसंकल्पकृत इत्यर्थः तामसस्याबुद्धिकृतत्वकथनंपूर्वेषामप्युपलक्षणम् षण्णामपि चतुर्मुखसृष्टेः प्राक्तनत्वेन चतुर्मुख बुद्धिपूर्वकत्वाभावात् षष्ठस्तु तमसः सर्ग इति पठित्वाबुद्धिर्जीवानामावरणम् विक्षेपश्च तां करोतीत्यबुद्धिकृत्तस्य तमसः पञ्चपर्वणो यः सर्गः षष्ठ इत्यर्थवर्णनं त्वयुक्तम् विष्णुपुराणे स्थावरादिसृष्टेः चतुर्मुखाबुद्धिकृतत्वदर्शनेन इहापि तदैकार्थ्यस्य न्याय्यत्वाच्चतुर्मुखाबुद्धिकृतत्वमेवेष्टव्यम् ननु स्थावरादिव्यष्टेरबुद्धिपूर्वकत्वमुक्तम् श्रीविष्णुपुराणे इह प्राकृतानां षण्णा मेवाबुद्धिकृतत्वं कथमुक्तमितिचेदुच्यते साधकामनुष्या इति तद्व्यतिरिक्तानां सृष्टिरबुद्धिपूर्विकेति भगवत्पराशरस्याभिप्रायः स्थावरतिरश्चां यज्ञोपकरणत्वाद्देवानां कर्माराध्यत्वाच्च मनुष्यवद्यज्ञौपयिकत्वमस्तीति स्थावरादिसृष्टिरपि बुद्धिपूर्विकेति भगवतोद्वैपायनस्याभिप्रायःअतो न विरोधः ननु चतुर्मुखसृष्टेष्वेवस्थावरेषु तदबुद्धिकृतत्वं तद्बुद्धिकृतत्वं च परस्परविरुद्धमुभयं कथमुपपद्यत इतिचेद्यज्ञानुपयुक्त स्थावराभिप्रायकत्वात्पाराशर्योक्तेः प्राकृत यज्ञानुपयुक्तैः चतुर्मुखस्य सिसृक्षाया अभावेऽपि तदन्तर्यामिपरमात्मसंकल्पादेव तत्सृष्ट्युपपत्तेः प्राक्तनसर्गान्निगमयन्वैकृतसर्गविभागमवतारयति । इमे षट् प्राकृताः सर्गाः अनुक्रमिता इतिशेषः मे मत्तः वैकृतानपि सर्गाननुक्रमिष्यमाणान् शृणु ॥ १७ ॥

नन्वचिन्त्यविविधविचित्ररचनया ब्रह्मणः श्रमःस्यादित्याशङ्क्य मुनिराह । रजोभाज इति । चतुर्मुखशरीरकत्वाद्रजोभाजः रजउद्रिक्तस्य भगवतो हरिमेधसः मेधया बुद्ध्याहरति सांसारिकक्लेशमिति हरिमेधाः यद्विषयकबुद्धिःसंसारक्लेशान् हरति सहरिमेधा इत्युच्यते तस्य हरेरियं सृष्टिर्लीला नतु तस्यां क्लेश इत्यर्थःवैकृत सर्गाननुक्रमिष्यन् तेषां स्थावरसर्गस्य पूर्वानुक्रांतप्राकृतसर्गापेक्षया सप्तमत्वमाह । सप्तम इति । तस्थुषां स्थावराणां यो मुख्यः सर्गः सप्तमः सच पुनः षड्विध इत्यर्थः तस्य मुख्यत्वं मुखमिव प्रथमं कृतत्वादवगन्तव्यम् ॥ १८ ॥

स्थावराणां षड्विधत्वमेवाह वनस्पतीत्यादि । अपुष्पाः फलिनो वनस्पतयः ओषधयः फलपाकान्ताः लता आरोहणापेक्षाः त्वक्सारा: कदलीवेणवादयः वीरुधः गुल्मरूपाः द्रुमाः पुष्पफलाः तेषां साधारणंलक्षणमाह । उत्स्रोतस इति उत्क्रान्ताः स्रोतसः गतराहाराद्वा गतिशून्या आहार शून्या वा तमःप्राया अव्यक्तचैतन्या अन्तःस्पर्शाविशेषिण इत्येकं पदम् अन्तःस्पर्शाः शीतोष्णादिसुखदुःखदाः स्पर्शा येषां तेऽविशेषिणश्च बाह्यविशेषानभिज्ञाश्च अन्तर्गतानेव स्पर्शान् जानन्ति नतु बाह्यानित्यर्थः ॥ १९ ॥

तिर्यक्सर्गस्याष्टमत्वं कथयन्पुनस्तस्याष्टाविंशद्विधत्वमाह । तिरश्चामिति । तिरश्चां तिर्यग्गच्छतां यः सोऽष्टमः सच पुनरष्टाविंशद्विधोमतः ज्ञातः तेषां साधारणं लक्षणमाह । अविद इति । ह्यस्तनाद्यतनश्वस्तनानादिज्ञानशून्याः भूरितमसः केवलाहारनिद्रामैथुनमात्रनिष्ठाः घ्राणज्ञाः घ्राणेनैवेष्टमर्थं जानन्तीति घ्राणज्ञाः गन्धेनग्राह्यं पश्यन्तीति वत् हृद्यवेदिनः हृद्गतसुखाद्यनभिज्ञाः दीर्घानुसन्धानरहिता इति भावः तथाच श्रुतिः अथापरेषां पशूनामशनायापिपासे एव जानन्ति वदन्ति न विज्ञानं पश्यन्ति न विदुः श्वस्तनं लोकालोकाविति ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

तमसोऽविद्यायाः तुशब्द एवार्थे अः विष्णुस्तस्मिन् बुद्धिरबुद्धिस्तत्पूर्वमेवकृतः सदा विष्णुबुद्धित्वेऽपि तमःसंसर्गेण स्वबुद्धिभ्रंशो भवति इति भीत्याविशेषतस्तद्बुद्ध्यैवेत्युक्तम् सर्वदा तद्बुद्धिर्वर्तनायैवेति यो भूतानां तामसांशस्तस्मादंशादविद्याब्रह्मणोत्पत्त्यादिताइति द्योतनाय तु शब्दः तदुक्तम् ।

> अबुद्धिपूर्वमिव तु ब्रह्मणो हरिबुद्धितः ।
> तामसानां तु भूतानां सहस्रं सत्त्वभागिनाम् ।
> शतांशरजसामेकतमसां सर्ववेदिनाम् ।
> केवलस्तामसो योंशः सोऽविद्या पञ्चपर्विका ।
> जातानि कृष्णा तद्देहाद्दैत्यरक्षःपिशाचकाः ।

इति

> अबुद्धिपूर्वकस्तस्य प्रादुर्भूतस्तमोमयः ।
> तमो मोहो महामोहस्तामिस्रोह्यन्धसंज्ञितः ।
> अविद्यापञ्चपर्वैषा प्रादुर्भूता महात्मनः ।

इति श्रीविष्णुपुराणे

> पञ्चपर्वा त्वविद्यातु भूतेभ्यो हरिणा पुरा ।
> मच्छृता ब्रह्मणि क्षिप्ता सा पुनस्तेन निःसृता ।
> तत्सष्टत्वज्ञापनाय तस्मात्सा तामसामतेति ।

च मया इमे षट् प्राकृताः सर्गास्तव कथिता इति शेषः प्राकृतसर्गकथनानन्तरमन्यः असङ्गोमाभूदिति परीच्छिद्वाक्यस्यानवकाशं वक्ति वैकृतानिति ॥ १७ ॥

प्राकृतवैकृतसर्गकथनश्रवणेन किं फलमित्याशङ्क्य भगवल्लीलात्वाच्छ्रवणेन मुक्तिरेव फलमिति भावेनाह । रजोभाज इति सृष्ट्यर्थं रजोगुणप्रवर्तकस्य हरिवत्सूर्याग्निवन्मेधा यस्य स तथा तस्य जाज्वल्यमानबुद्धेरित्यर्थः भगवतो नारायणस्येयं सृष्टिर्लीला न स्वार्थपरा योग्यजनमुक्त्यर्थेत्यर्थः विरिञ्चविषयत्वे हरौ मेधा यस्य स तथा तस्य अनेनाबुद्धिकृत इति पदं विवृतं विरिञ्चस्यापि श्रीनारायणानुग्रहेण सृष्टिरियं न श्रमजननी किन्तु लीलारूपेत्यनेनाप्यबुद्धिकृतत्वाच्छ्रमकरीत्यन्यथा प्रतीतिर्निरस्ता सृष्ट्यादावेतगुणाहरेरेव मुख्याः तदुक्तम् ।

> कृते गुणा हरेः सम्यक् स्वातन्त्र्यविषयाः सदेत्यादि ।
> यस्तस्थुषां स्थावराणां मुख्यः सर्गः स सप्तमः ।

स च षड्विधः

> स्थास्नुभिर्निग्रमान्मुख्या स्थितेर्गतिरवाप्यते ।
> प्रायः परोपकर्तृत्वात्तेषां मुख्यस्रोतस्त्वम् ।

इति मुख्य स्रोतस्त्वं स्थावराणां युक्तम् ॥ १८ ॥

षड्विधमाह । वनस्पतीति । फलन्ति ये विनापुष्पैस्तान्वदन्ति वनस्पतीन् । इत्यतःपनसादयो वनस्पतयः ओषधयः फलपाकान्ता व्रीह्यादयः लताः पराश्रयबलाः त्वक्सारा वेणवादयः वीरुधः

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली।

यडरुहाणि गुल्मानि द्रुमाद्यचूतादयः प्रमाणवचनेन यन्मुख्यस्रोतस इत्युक्तं तदेवोत्स्रोतस इति कथ्यते उत्स्रोतस इत्यस्यार्थ ऊर्ध्वस्रोतस इति किं न स्यान्न स्यादसंभवात्तथाहि ऊर्ध्वगन्तारो देवा मोक्षैकभागित्वात् तदुक्तम्।

नियमादूर्ध्वगन्तारो देवा मोक्षैकभागिनः।
ऊर्ध्वस्रोतस इत्येवं तस्मात्ते परिकीर्तिता

इति तर्हि देवानामयमर्थः कथं संपत्स्यते उच्यते उच्चतमत्वमूर्ध्वत्वं तदेवोच्छब्दस्यापीति तदुक्तम्।

ऊर्ध्वं इत्येव यस्तूच्चतम एवाभिधीयते।
ऊर्ध्व स्रोतस एतस्माद्देवा एव न तत्परः।

इति स्थावराणामेतच्छब्दवाच्यत्वमुच्चवर्धमानेषु मुख्यत्वात् तदुक्तम् उच्छब्द उच्चमात्रेऽपि तस्मात्स्थास्नुषु भण्यते इति अनेन मुख्यशब्दस्यार्थान्तरं दर्शितम् तत्स्वभावमाह तमःप्रायाइति तमः प्राया अज्ञानप्रचुराः कल्पवृक्षादिव्यावृत्त्यर्थं प्रायः शब्दः अन्तः स्पर्शाः स्पर्शने सत्यन्तर्ज्ञानवन्तः विशेषिणः छेदने सति सपदि शोषवन्तः॥ १६॥

तिरश्चां तिर्यक्स्रोतसाम्।

नाधो नोर्ध्वं तिरश्चां पुनस्तत्रैव यज्जनिः।
यज्ञोपयोगं च सतामुपकारं विनापि वा।
तिर्यक्स्रोतस इत्येव प्रोच्यन्ते ज्ञानिभिस्ततः।

इति अनेन तिरश्चां तिर्यक्स्रोतस्त्वं विवृतमिति ज्ञातव्यम् तिरश्चां लक्षणमाह। अविद इति। अविदः कार्याकार्यविशेषज्ञानशून्याः भूरितमसः शरीरमात्रेऽहंममाभिमानवन्तः यद्वा आहारनिद्राद्यतिरिक्तविषये ज्ञानरहिताः घ्राणेनैव जानन्ति इतिघ्राणज्ञाः। इत्येव वेदो ज्ञानं येषां ते तथोक्ताः। इदमुभयेषां तस्थुषां तिरश्चां समं लक्षणं तदुक्तम्।

तिरश्चीनाः स्थावराश्च अन्तःस्पर्शा इतीरिताः
यत्प्रत्यक्षानुमानाभ्यां हृद्गंज्ञानं न शास्त्रतः॥

इति यदप्रयत्नात् हृदयंगमं तदेव जानन्ति न शास्त्रयुक्तिभ्यामित्यर्थः अष्टाविंशद्विधत्वं प्रतिज्ञायाधिकोक्तिर्विशेषतो यज्ञेपूपकृतत्वाभिप्रायेण यो यस्य सदृशः स तत्रान्तर्गत इति ज्ञापनं चेति न दुष्यति तदुक्तम्।

अष्टाविंशद्विशेषेण यज्ञेपूपकृतं यतः।
तिरश्चां तावदेतस्माद्गण्यते शास्त्रवेदिभि

रिति अष्टाविंशत्प्रधानास्तु तिरश्चां यास्तु जातयः। यो यस्य सदृशस्त्वन्यः स तत्रान्तर्गतो भवेत्। जलजान्तर्गताः सर्पाः कीटाद्या याश्च जातयः। तेषां जलप्रधानत्वाच्छरीरस्य तु सर्वश इति च॥ २०॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः।

रजोभाजः सन्निधौ न स्वयं तदुपकारकस्य ब्रह्मरूपेण तु तदुपाधिकस्येत्यर्थः टीकायां तम आदीति आदिपदेन मुख्यसर्गप्रभृतित्वं ग्राह्यम्।अनवधानकृत इति हरेरेव ध्यानस्वातन्त्र्यात् ब्रह्मणस्तु तद्व्यभिचारादित्यर्थः॥ १८॥

सप्तम इति सार्द्धकम्॥ १६—२१॥

---

श्रीमद्वल्लभाचार्यकृत सुबोधिनी।

षष्ठ माहायस्त्विति।इन्द्रियग्राह्यत्वं भगवतो न सम्भवतीत्यन्तरा निष्पत्तिरूपामविद्यां मन्यते साकेवलं तामसी अविद्या प्रकृतिमायानां मध्ये प्रथममायाः प्राकृतविषयत्वात्प्राकृतैः सा वा तत्कार्यं वा गृह्यते अतोग्रहणार्थं तामसः षष्ठः सर्गो विषयः ताम सत्वमात्रेण विषयत्वे भूतसर्गोऽपि तथा स्यादतस्तद्व्यावृत्त्यर्थं यइत्यनूद्यतुशब्दः अबुद्धिकृतोऽज्ञानकृतः नन्वज्ञानेन शुक्तिकारजतवन्मिथ्याभूतमेव किंचिदुत्पाद्यते तस्य कथं सर्गत्वं सृज्याभावादित्याशङ्क्याहाविभोरिति। समर्थस्य सद्भाज्ञानप्रकारेणापि सदभिव्यक्तिं कर्तुं शक्तोऽतोऽस्य गृह्यमाणविषयस्याविद्याकृतत्वेऽपि सर्गत्वमेवमाधिभौतिकप्रकारेण निरूपितान्षट्सर्गानुपसंहरतिषडिमेप्रकृताः सर्गा इति। एवं विभागंचेन्न कुर्यात्सप्तमादिप्रयोगास्तर्वेऽप्येकविधा भवेयुः एवं प्राकृतानुपसंहृत्य वैकृतेषु न भेदो न स्वरूपं वा सिध्येदतो मे शृणु सावधानतया भेदो ज्ञातव्य इत्याहावैकृतानपीति। प्राकृतकार्ये वैकृतं प्राकृते निरूपिते निरूपितं भवतीति वैकृतानां न भेदो न स्वरूपं वा सिद्धेचदतो मे शृणिवत्याह। मत्त एवैते भेदाः श्रोतुं योग्या नत्वन्यो जानातीति भावः अतो व्यासंगव्युदासार्थं शृणिवत्युक्तम्॥ १७॥

नन्वेते प्राकृत वैकृतालौकिकाभगवद्भक्तैः कथं श्रोतव्या इत्याशङ्क्याह। रजोभाजो भगवत इति। यदा भगवान् रजोगुणमुत्पस्यर्थं क्षेत्ररजो वा कामार्थं भजते तदैवं लीलां करोत्यतो भगवल्लीलात्वात् श्रोतव्या एव सर्गाः ननु सर्वा भगवल्लीलाः श्रोतव्या यावानर्थ उदपान इति न्यायेन स्वोपयोगिन्येवलीला सेव्येत्याशङ्क्याह। हरिमेधसइति। हरिः सर्वदुःख हन्त्री मेधायस्य भगवद्विषयिणी याकाचिन्मतिः सैव सर्वदुखहर्त्री तस्माद्या कापि भगवल्लीला सासेव्या एव किंचानियतविषयबुद्धिभंग वत्सवंधित्वेनात्र वोध्यतेऽतो लीलान्तरापेक्षायामात्रारूपलीलाकालसंबंधित्वात्सहजननाशंकाः तद्दोषनिवृत्त्यर्थं चावश्यं भगवदीयत्वेन ज्ञातव्या एतदेवाभिसंधाय मेधः पदं यथामेधाशब्दोवुद्धिवचनः एवं मेधः शब्दोऽसुन्प्रत्ययान्तः तस्मा च्छ्रोतव्यमित्युपपाद्य वैकृतेषु प्रथममुपपादयति। सप्तम इति। वैकृतेषु मुखे भवो मुख्यः अत्र प्रथमतः सृज्यमग्रदास्तदनन्तरम् अन्यथा वाधकं त्वग्रेवक्ष्यते प्रक्रियांतरे अतो मुखेभवः भक्ष्यत्वेनैव कल्पितः सर्वजीवनोपयोगी प्राथम्येनोपकल्पितः मनसा सह कर्मेन्द्रियाणां षड्विधत्वादाद्यः षड्विधः ते यथा भक्ष्यमाणा अपि नापसरंति ततस्तम्भुषामित्युक्तं स्थावराणामेव यः षड्विधः सर्गः स एवात्र ग्राह्य इति यच्छब्देन निर्दिष्टः ननु जङ्गमत्वेन जातः स्थावरतामापद्यमानस्तस्य भगवल्लीलात्वाभावात् चकारात्तेऽपि शास्त्रतोऽपि निरूपिताः परिगृहीता दुग्धादयो वा चकारेणपरिगृहीताः॥ १८॥

वनस्पतयः अश्वत्थादयः प्रथमतो वनस्पतीनां ग्रहणं पालने विष्णोः प्राधान्याद्वैष्णवत्वेन वैष्णवा वै वनस्पतय इति श्रुतेः पुष्परहिताः सफला वनस्पतयः रजोरहिताः सफलाः वैष्णवा ओषध्यो व्रीहियवादयः फलपाकांताः तेहि मुख्यमन्नं भवंति लताः कूष्मांडादयोमेदोरूपाः व्यंजनात्मकाः त्वक्सारा वेणवः अत्रस्थित्यात्मका वेणुपर्वा अन्ये वेणवश्च बहूपयोगिनः वीरुधाः सोमादयस्तृणादयश्च तेषामप्युभयरूपत्वं द्रुमाः सफलपुष्पा आम्रादयः एतैः षड्विधैरद्यमानैरत्ताः सुप्रतिष्ठिता भवंति नन्वेनेषां षड्विधानां केन धर्मेणैकसर्गत्वमित्याशङ्क्य तान् धर्मान्निर्दिशति उत्स्रोतस इति। एतेहि सर्गरूपाभूताविभावरूपा वक्तव्या

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

एतेऽपि चतुर्भिर्विशेषणैर्निरूप्यन्ते ऊर्ध्वस्रोत आहारसंचारो येषां तेषां भक्षितं जलादिकमूर्ध्वमेव गच्छति अनेन भूतत्वं निरूपितं विपरीतं वा बुद्धिर्हि क्रिया बोध्या ते पादपा इति तेषां बुद्धि निरूपिता तमः प्राया इति ज्ञानाभावः अज्ञानं तत्रैव पर्यवसानं प्रायः पदस्थावर्त्यं वदन् विषयत्वं निरूपयति अन्तः स्पर्शा इति अन्तःस्पर्शमात्रं गृह्णन्ति नत्वन्यविषयकं ज्ञानमस्तीत्यर्थः । यत्तु भारते वृक्षाणां सर्वेन्द्रियत्वं साधितं सर्वज्ञानं च तदधिष्ठातृदेवतापरम् अभिमानिनां तु स्पर्श एव अविशेषिणश्च हस्तिनिस्त्यादिपरिमाणो नियमरहिताः विशेषसंज्ञारहिता वा ॥ १९ ॥

एवं सप्तमं निरूप्य अष्टमं निरूपयति । तिरश्चामिति । तिर्यगाहारसंचारो येषां ते तिर्यञ्चः तिर्यगञ्चन्तीति गोभिर्भक्षितं तिर्यक् भोगेनैवगच्छन्तीति तेषां सर्गः अष्टमः अन्यस्य भोगोपयोगित्वात्सोऽष्टाविंशद्विधः तत्त्वानां तथात्वात् तत्त्वैरेव भक्षितस्य प्रार्थितत्वात् यद्यपि बहवो भेदाः सन्ति तथापि भेदकप्राधान्याद्‌ष्टाविंशद्विध एव मतः अन्येषामत्रैवान्तर्भावो वक्ष्यते वैकृतत्वं वा निराकरिष्यते एषामपि पूर्ववत् चतुर्लक्षणमाह । अविद इति । वेदनं विस्वद्द कर्तव्याकर्तव्यानुसंधानं पारलौकिकज्ञानं वा तद्रहिताभूरितमस इतिभूरि अधिकं तमो येषामन्तस्तमसाऽभिभूताः सत्संगेजातेऽपि न ज्ञानयुक्ताः ये तु देवपशवो वैकुंठादिस्थिता वृक्षा वा ते कालाभिभूता न भवंतीति नैर्लक्षणव्याप्तिः तेषां सर्वेन्द्रिय सद्भावेऽपि घ्राणेन विशेषतः पदार्थान् जानंति चक्षुरादिभिः स्तुननिर्द्धारस्तमोभूयस्त्वात् हृद्यवेदिन इति पूर्वानुभूतस्मृतिबुद्धिशून्याश्चिन्ता रहिता वा वेदनं वेद इति ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

वैकारिकः सात्त्विकाहङ्कारसम्बन्धीदेवानामिन्द्रियाधिष्ठातॄणां सर्गः । यन्मयं मनः मनसोऽपि सर्गः पञ्चम इत्यर्थः एवं पञ्चसर्गाः प्राकृतिका उक्ताः आविद्यकं सर्गमाह । षष्ठस्त्विति । तुर्भिन्नोपक्रमे तमसोऽज्ञानस्य सर्गः षष्ठः प्रभोः परमेश्वरस्य शाङ्करबुद्धिर्जीवमोहिनी या अविद्या नाम्नी तया कृतः । अयमर्थः । प्रधान मविद्या विद्येति मायायास्तिस्रो वृत्तयः तत्रप्रधानेन महदादि पृथिव्यन्तानि तत्त्वानि सत्यान्येव सृष्टानि यैरेव समष्टिव्यष्टिरूपाः जीवस्य स्थूलास्तथा सूक्ष्माश्चोपाधयोऽभवन् द्वितीययाविद्यया तु जीवं मोहयन्त्या जीवसंबन्धमविद्या अस्मिता रागद्वेषाभिनिवेशात्मकं तमः पञ्चविधमज्ञानमसत्यमेव सृष्टम् एवं सत्यमिथ्यात्मकं जगदिदं प्रधानाविद्याभ्यां सृष्टं तृतीयया विद्यया तु पञ्चविधाज्ञाननिवर्त्तकं ज्ञानं सृष्टम् तच्चाग्रे विवृत्य व्याख्यास्यते ॥१७॥

प्रकृतेर्मायाशक्तेः सकाशाज्जाता इति प्राकृता इमे षट् विकृतिः समष्टिविराड् ब्रह्मा तस्माज्जातान् वक्ष्यमाणानपि मत्तः वैकृतानित्येतान्शृणोति रजोभाजो ब्रह्मरूपस्य हरेर्मेधायां यस्य तस्य ॥ १८ ॥

स्थावरजङ्गमात्मकस्य जगतः स्थावराणां प्राथम्यात् मुखे प्रथमे भवो मुख्यः यस्तस्थुषां स्थाताराणां पुष्पं विना फलवन्तो वनस्पतयः । ओषधयः फलपाकान्ताः । लता आरोहणापेक्षाः । त्वक्सारा वेणवादयः । लताएव काठिन्येनारोहणानपेक्षा वीरुधः । पुष्पैरेव फलन्तोद्रुमाः तेषां साधारणं लक्षणमाह ऊर्द्ध स्रोत आहारसञ्चारो येषांते तमः प्रायाअव्यक्तचैतन्या अन्तः स्पर्शा अन्तश्छेद एव व्यथानुभावनः विशेषिणः अव्यवस्थितपरिणामाद्यनेकभेदवन्तः ॥ १९ ॥

तिरश्चां तिर्यक्स्रोतसाम् । अविदः । श्वस्तनादिज्ञानशून्या भूरितमसः आहारादिमात्रनिष्ठाः घ्राणज्ञाः घ्राणेनैवेष्टमर्थं जानन्ति हृदि अवेदिनः दीर्घानुसन्धानशून्या अल्पपरामर्शाः तथा श्रुतिः । अथेतरेषां पशूनां अशनापिपासे एवाभिज्ञानं वदन्ति न विज्ञापितं पश्यन्ति न विदुः । श्वस्तनं न लोकालोकाविति भूरितमसो बहुरुषः घ्राणेनैव जानन्ति हृद्यं प्रति स्वप्रियं वस्त्वेव विन्दन्ति भोजनशयनाद्यर्थं गृह्णन्ति ॥ २० ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

अबुद्धिकृतः अबुद्धिं संसारप्रापणहेतुमज्ञानं करोतीत्यबुद्धिकृत् तस्य तमसः प्रकृतेः कार्यभूताया ब्रह्माण्डस्येत्यर्थः सर्गः षष्ठः केचित्तु वक्ष्यमाणांधतामिस्रादिसर्गं षष्ठमाहुस्तच्चिन्त्यं तस्याज्ञानाद्यज्ञानविमोहितसृज्यमानजीवस्वभावसूचकत्वेन वैकृतसर्गोऽन्तर्भावात् ॥ १७ ॥

यच्छ्रया मेधा संसारं हरति तस्य हरेर्विष्णोः कथं भूतस्य रजोभाजः रजोगुणयुक्तचतुर्मुखान्तर्यामिण इत्यर्थः चतुर्मुखादिभिरपि स्थावरादिसृष्ट्यादिकं यद्यत्कृतं तदपि भगवल्लीलाविभावस्तदाह तस्थुषां स्थावराणां यः सर्गः स सप्तमः कथंभूत मुखांमत्र मुख्यः प्रथमं कृत इत्यर्थः सच षड्विधः ॥ १८ ॥

षड्विधत्वं दर्शयति । वनस्पतीति । पुष्पं विना फलिनो वनस्पतयः फलपाकान्ताः ओषधयः आरोहणसापेक्षा लताः वेणवादयः त्वक्साराः लता एवारोहणानपेक्षाः किंचित्काठिन्ययुक्ता वीरुधः पुष्पफलाः द्रुमाः तेषां साधारणं लक्षणं दर्शयति उदूर्ध्वं स्रोत आहारसंचारो येषां ते तमः प्रायाः गूढचैतन्याः अन्तः स्पर्शाः स्पर्शमेव जानन्ति न दर्पयतेरन्य विशेषिणः विशेषाः अनेकावांतरभेदाः सन्ति येषां ते ॥ १९ ॥

तिरश्चां तिर्यग्गच्छताम अष्टमः स अष्टाविंशद्विधः तेषां साधारणं लक्षणमाह । अविदः श्वस्तनाद्यतनादिज्ञानरहिताः भूरितमसः आहारादिमात्रनिष्ठाः घ्राणज्ञाः घ्राणेन प्रियाप्रियं किंचिज्ज्ञानन्ति हृद्यवेदितः हृदि कार्याकार्यविवेकरहिताः तथ चश्रुतिः अथेतरेषां पशूनामशनापिपासे एवाधिविज्ञानं न विज्ञातं वदन्ति न विज्ञातं पश्यन्ति न विदुः श्वस्तने न लोकालोकाविति ॥ २० ॥

---

भाषाटीका ।

पहले प्राकृत सर्ग कहे है अब हम से वैकृत सर्गों को भी सुनो यह सब सृष्टि करना संसार के दुःख हरने वाले हरि भगवान का लीला है ॥ १७ ॥

सतमा जो मुख्य सर्ग है सो स्थावरों का है तिसमें बडे वृक्ष औषधि लता वांस वीरं विना फूलके फल ने वाले वन स्पति सब है ॥ १८ ॥

इनके आहारादिक ऊपर को होते हैं इनका ज्ञान रदता है भीतर में इनको स्पर्श ज्ञान होता है अनेक प्रकार होते हैं ॥ १९ ॥

तिर्यग्योनियों का अष्टम सर्ग है सो अठाइस प्रकार का है जंतु सब अज्ञानि होते हैं बडे तमो गुणी होते हैं केवल नासि

गौरजो महिषः कृष्णः सूकरो गवयो रुरुः।
द्विशफाः पशवश्चेमे अविरुष्ट्रश्च सत्तम !॥ २१ ॥
खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा ॥
एते चैकशफाः क्षत्तः ! शृणु पञ्चनखान् पशून् ॥ २२ ॥
श्वा सृगालो वृको व्याघ्रो मार्जारः शशशल्लकौ ॥
सिंहः कपिर्गजः कूर्मो गोधा च मकरादयः ॥ २३ ॥
कङ्कगृध्रवटश्येनभासभल्लूकबर्हिणः ॥
हंससारसचक्राह्वकाकोलूकादयः खगाः ॥ २४ ॥

भाषाटीका।
जो पदार्थ को जानते हैं इनके मन में स्मृति नहीं रहती है ॥ २० ॥

श्रीधरस्वामिकृत भावार्थदीपिका।
अष्टाविंशतिभेदानेवाऽऽह। गवादय उष्ट्रान्ता द्विशफाश्छिन्नखुरा नव ॥ २१ ॥
खरादय एकशफाः षट् ॥ २२ ॥
श्वादयोगोधान्ताः पंचनखा द्वादश एवमेते भूचराः सप्तविंशतिः मकरादयो जलचराः कंकादयश्च खगा अभूचरत्वेनैकी कृत्य गृहीताः तदेवमष्टाविंशतिभेदा भवन्ति तेषु कृष्णरुरुगौरा मृगविशेषाः अन्येषामपि तिर्यक्प्राणिनां यथायथमेतेष्वेवांतर्भावः ॥ २३ ॥ २४ ॥

श्रीराधारमणदास गोस्वामिविरचिता दीपिन्याख्या दीपिका टिप्पणी।
गौरजइति चतुष्कम् एकैकोऽयम् । बहूनामुपलक्षणरूपो ज्ञेयः २१।२४

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका।
अष्टाविंशतिभेदानाह। गौरिति गवादय उष्ट्रान्ताः द्विशफाः द्विनखाः नवैव सन्तीत्यर्थः हेसत्तम विदुर ॥ २१ ॥
खरादयश्च मर्यन्ता एकशफाः षट् ॥ २२ ॥
श्वादयो गोधान्ताः पञ्चनखाः द्वादश मिलित्वा भूचराः सप्त विंशतिः मकरादयो जलचराः ॥ २३ ॥
कंकादयः खगाः भूचरभेदनैकीकृत्य गृहीताः एवमष्टाविंश तिभेदाः मकरादिषु स्वजातिविशेषभिन्नेष्वप्यभूचरत्वेनैकाकारत्वं बोध्यं गवादिषु पठितौ रुरुगौरौ मृगविशेषौ छत्रिन्यायेन पशवश्चौ क्षे इति निर्देशः एवमन्यत्रापि द्रष्टव्यम् ॥ २४ ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली।
गवादिगोधान्तैः षड्विंशत्कूर्ममकारादिभिः सप्तविंशाङ्कका दिभिरष्टाविंशत्तद्वुक्तम् "गौरजो महिषः कृष्णः शूकरो गवयो रुरुः। अव्युष्ट्रौ च खरश्चैव चमरी श्वशृगालकौ। वृको व्याघ्रश्च मार्जारो हरिश्च शशशल्यकौ। कपिर्गजश्च गोधाद्या जलजाः पक्षिणस्त-थेति,, ॥ २१ ॥ २२ ॥

तत्र कूर्मो जलजत्वेनाष्टाविंशत्स्वन्तर्भूतोऽपि पञ्चनखत्वप्रदर्शनार्थं पृथगुक्तः
तत्तदाकारसंयुक्तान् गृह्यात् स्वधारमेव च।
यः सदा संस्मरेद्योगी न स भूयोभि जायत।
इति वचनात् प्रसिद्धानामपि द्विशफादीनां स्मरणार्थं च कुत्रचित्। अप्रसिद्धपदार्थं द्विधाशास्त्रवचः स्वदनमिति च उलूको वृचपक्षीच समल्लूकश्च कथ्यन्इत्यभिधानम् ॥ २३ ॥ २४ ॥

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः।
गौरज इति चतुष्कम्। एकैकोऽयं बहूनामुपलक्षणरूपो ज्ञेयः २१-२४

श्रीमद्वल्लभाचार्यकृत सुबोधिनी।
अज्ञानं तेषां मूलस्थाने मोहे विषयं इन्द्रियाणि घ्राणमात्र पर्यवसितानि बुद्धिस्त्वनुभवरूपैव ते त्रिविधाः
सात्विका द्विशफाः प्रोक्ता राजसास्तुचतुःसफाः।
तामसा इतरे प्रोक्तास्तु गुणानां हीनतापरा॥
तत्र द्विशफाःगवादयः कृष्णः कृष्णमृगः गवयो गोसदृशः रुरुर्बहुशृंगः एते द्विशफाः एते पुनर्यञ्शब्दवाच्या द्विशफाः पशवश्च यत्र पशवो निर्दिश्यंते तत्रैव ते ग्राह्याः अविर्मेषः उष्ट्रश्च सत्तमेति संबोधनंपशुगणनाय॥ २१ ॥
भगवत्कृतत्वशङ्कावन्यथाज्ञाननिवारणार्थं षडेकशफाः खरादयः गौरोगौरमृग आरण्यः शरभोऽष्टापदः चमरी गोसदृशो मृगः चकारादन्येऽप्यप्रसिद्धाआरण्या ग्राम्यचमरीणां द्विशफत्वं तान-भगवत्सृष्टाः क्षत्तरिति संबोधनं नैपुण्यार्थम् ॥ २२ ॥
अत एव बहुविधा विश्वामित्रादिभिर्योगबलेन सृष्टा भवन्ति तद्व्यावृत्त्यर्थं शृण्विति निर्दशनं पञ्चनखेषु दतसन्देहसूचकं पंचनखा मनुष्या अपि तद्व्यावृत्त्यर्थं पशूनित्युक्तवान् मनुष्याणामपि यद्यपि पशुत्वं श्रुतिसिद्धं तथापि तथा विवक्षितं न भवतीति तद्व्युदासः श्वादयःत्रयोदश तत्र मकरादयः सर्वेअभूचरा एकविधा अण्डजाः कूर्मो जलचरोऽप्यण्डजत्वाभावात्पृथग्गणनः मकरादय इति आदिशब्देन सर्पादयोऽपि परिगृहीता अंडजत्वसाम्यात् २३॥ तत्रापि प्रधानभूतान्यविंशान। कंकेति। भल्लूकोऽपि पक्षिविशेषो नतु ऋक्षः नं विश्वामित्रसृष्टं केचिदाहुः पद्मकल्पे तदभावो वा आदिशब्देन सूक्ष्मा अपि सर्वे परिगृहीताः ॥ २४ ॥

अर्वाक्स्रोतस्तु नवमः क्षत्तरेकविधो नृणाम्।
रजोऽधिकाः कर्मपरा दुःखे च सुखमानिनः॥ २५॥
वैकृतास्त्रय एवैते देवसर्गश्च सत्तम !।
वैकारिकस्तु यः प्रोक्तः कौमारस्तूभयात्मकः॥ २६॥
देवसर्गश्चाष्टविधो विबुधाः पितरोऽसुराः।
गन्धर्वाऽप्सरसः सिद्धा यक्षरक्षांसि चारणाः॥ २७॥
भूतप्रेतपिशाचाश्च विद्याध्राः किन्नरादयः।
दशैते विदुराख्याताःसर्गास्ते विश्वसृक्कृताः॥ २८॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी।

गवादय उष्ट्रान्ता द्विशफा द्विखुरा नव। अविर्मेषः खरादयश्च-मर्यन्ता एकशफाः षट्॥ २१॥ २२॥

श्वादयो गोधान्ताः पञ्चनखा द्वादश। एवमेते स्थलचराः सप्तविंशतिः। मकरादयो जलचराः। कङ्कादयः स्थलचराः हंसादयः पुनर्जलचराः काकादयः पुनः स्थलचरा इति एते मकरादय एकविधत्वेनैव व्यपदिष्टाः तदेवमष्टाविंशतिभेदा गवादयस्तेषु। रुरु कृष्णसारौ मृगविशेषाः। अन्येषामपि तिर्य्यक् प्राणिनां यथायथमेष्वन्तर्भावः॥ २३॥ २४॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः।

अष्टाविंशतिभेदान् दर्शयति। गौरिति। गवादयः अविरुष्ट्रश्च द्विशफाः द्विखुराः॥ २१॥ २२॥

श्वादयः गोधान्ताः पञ्चनखाः एते सप्तविंशति भूचराः मकरादयः जलचराः॥ २३॥

तथा कङ्कादयः खेचराः अभूचरत्वेनैकी कृत्य गृहीता तदेवमष्टाविंशतिभेदा भवन्ति अन्येषां तिरश्चां प्राणिनां यथायथमेतेष्वेवान्तर्भावः॥ २४॥

भाषाटीका।

हे सत्तम विदुरजी! गउ बकरा भैंस कृष्ण सार मृग सूअर रोज मृग रुरु मृग भेड ऊंट ए सब दो खुर वाले पशु हैं॥ २१॥

गदहा घोडा खच्चर गौरमृग शरभ चमरमृग हे सत्तम विदुर जी ए सब एक खुर वाले हैं अब पांच खुर वाले पशुओं को सुनो॥ २२॥

कुत्ता श्याल भेडहा बाघ बिलार खरगोस स्याही सिंह बंदर हाथी कछुआ गोह मगर इत्यादि पांच नख वाले हैं॥ २३॥

कंक पक्षी गीध वट पक्षी श्येन भास भल्लूक वर्हिण हंस सारस चक्र वाक कौवा घुघू इत्यादिक पक्षियों की सृष्टि है॥ २४॥

श्रीधरस्वामिकृत भावार्थदीपिका।

अथ आहारसंचारो यस्य सोऽर्वाक्स्रोताः हृस्वत्वमार्षम् नृणां सर्गो नृणां लक्षणम् रजोऽधिकं येषु ते॥ २५॥

एते त्रयो वैकृता एव न कौमारवदुभयात्मकाः देवसर्गश्च वैकृत इत्यनुषंगः वैकारिकस्तु देवसर्गः प्राकृतेषु पूर्वमेव प्रोक्तः अयंतु ततो न्यूनत्वाद्वैकृतो देवसर्गत्वात्तदंतर्भूतश्च सनत्कुमारादीनां सर्गस्तु प्राकृतो वैकृतश्च देवत्वेन मनुष्यत्वेनच सृज्य इत्यर्थः॥

वैकृतश्च देवसर्गोऽष्टविधः तत्रविबुधादयस्त्रयो भेदाः गंधर्वाप्सरस एकः यक्षरक्षांस्येकः॥ २७॥

भूतप्रेतपिशाचा एकः सिद्धचारणविद्याधरा एकः किन्नरा एकः आदिशब्दात्किंपुरुषाश्वमुखादयः एतद्विशेषोऽध्याये [illegible] भविष्यति॥ २८॥ २९॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीधरस्वामि कृत भावार्थदीपिकाटीकायां दशमोऽध्यायः॥ १०॥

श्रीराधारमणदास गोस्वामिविरचिता दीपिन्याख्या दीपिका टिप्पणी।

नृणां लक्षणे उत्तरार्धं ते च नरा रजोऽधिका इत्यादि [illegible]ज्ञनीयम्॥ २५॥

एते मुख्यतिर्य्यगर्वाक्सर्गास्त्रयो वैकृता ब्रह्मकृताः देवसर्गश्चेन्द्रादिलोकपालरूपः वैकारिकस्सात्त्विकाहङ्कारकार्य्यरूप इन्द्रियाधिष्ठातृदेवतागणसर्गस्तु प्राकृतेषु ईश्वरकृतसर्गेषु पूर्वमेवोक्तः अयं लोकपालेन्द्रादिसर्गस्तत आधिदैविकसर्गात्न्यूनत्वाद्वैकृतः [illegible] त् देवत्वमात्रसामान्येन प्राकृतान्तर्भूतश्च देवत्वेन आवेशावतार[illegible] ईश्वरकृतत्वात्प्राकृतः ब्रह्मणो मनस आविर्भूतत्वेन तत्सृज्या[illegible] पातविवक्षया मनुष्यत्वेन च वैकृत इत्यर्थः॥ २६॥

देवसर्ग इति सार्द्धकम् अत्रविबुधादीनां त्रयाणां पृथक् पृथक् करणेन विशेष सृष्टिकथनात्त्रयो भेदा इति व्याख्यातं गंधर्वाप्सरसामेकयैव कात्या तत्र तत्कथनात् एकत्वं भूतादीनामेकतद्विणा तत्रतत्कथनादेकत्वं सिद्धचारणविधाध्राणां पृथक् पृथक् एकैकत्वेन निर्देशेपिविशाध्याये एकयैव तिरोधानशक्त्या सृष्टि कथनात् चारणानांचोपलक्षितत्वात् सिद्धचारणविद्याधरा एक इतिव्याख्यातमकिन्नरकिंपुरुषादीनां तु एकेनैव प्रतिबिम्बेन सृष्टि कथनादेकत्वम् अन्यथा तत्तत्पदप्रयुक्तसंख्यास्वीकारे दशसंख्यात्वेनाष्टविधत्वानुपपत्तिः स्यात् अतएव एतद्विशेऽध्यायेस्पष्टं भ[illegible]ष्यतीत्युक्तम् एतद्देवसर्गाभिधानं स्पष्टविवृतम्॥ २७॥

विश्वसृक् हरिर्ब्रह्मा च॥ २८॥ २९॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे दीपिकादीपने दशमोऽध्यायः॥ १०॥

अतः परं प्रवक्ष्यामि वंशान् मन्वन्तराणि च ।
एवं रजः प्लुतः स्रष्टा कल्पादिष्वात्मभूर्हरिः ॥
सृजत्यमोघसंकल्प आत्मैवात्मानमात्मना ॥ २९ ॥
' गुणव्यत्यय एतस्मिन् मायाविन्वादधीशितुः ।
न पौर्वापर्यमिच्छन्ति सृष्टे नद्यां यथा भ्रमे ॥ ३० ॥
देवासुरादयो नामरूपाभ्यां ये प्रकीर्तिताः ।
अस्मिन् कल्पे त एवासन् ह्युत्तमेन्वन्तरान्तरे ' ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे

दशमोऽध्यायः ॥ १० ॥

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

अथ नवमं सर्गमाह । अर्वागिति । अर्वाक्स्रोतः गतिराहारो वा यस्य: सः अर्वाक्स्रोतः हे क्षत्तः ! नृणामर्वाक्स्रोतो यः सर्गः स एकविधः ननु खरादीनामिव नानाविधः सनवमः सर्गः अर्वाक्स्रोत इति क्रियाविशेषणं वाऽर्वाक्स्रोतो यथा भवति तथा यो नृणां सर्गइति नृणां साधारणं लक्षणमाह । रजोऽधिका इति । रजः प्रचुरा अतएव कर्मपराः ॥ २५ ॥

त्रय एते वैकृता एव ननु कौमारवदुभयात्मका इत्यर्थः देवसर्ग इत्यादि प्रोक्त इत्यन्तमेकान्वयं प्राकृतेषु यो देवसर्गः प्रसंगाद्वैकारिको ऽभिहितः स च वैकृतान्तर्भूत एवेत्यर्थः हेसत्तम विदुर ! वैकृतदेवसर्गान्तर्भूतकौमारसर्गस्योभयात्मकत्वमाह । कौमारस्त्विति । वैकृतसर्गान्तर्भूतकौमारसर्गस्य प्राकृतत्वं कथमिति चेत्कुमाराणामादावेव ब्रह्मणा सृष्टत्वात्प्राकृतान्तर्भावः कुमारेष्वन्तर्भूतो नीललोहितस्तु सनकादिभिः सह सृष्टोऽपि प्रतिकल्पम् सृज्यते ततस्तस्य वैकृतत्वमित्युभयात्मक इत्यभिप्रायात् ॥ २६ ॥

देवसर्गस्याष्टविधत्वम् प्रतिजानन् तद्भेदानाह । देवसर्ग इति । सार्द्धेन विबुधाः पितरश्चैककोटिकर्माराध्यत्वात् असुरा एककोटिः गन्धर्वाश्चैककोटिः सिद्धा एकः यक्षरक्षांस्येकः चारणा एकः भूतप्रेतपिशाचा एकः किन्नरादय इत्यादिशब्देनाश्वमुखकिंपुरुषादयश्च किन्नरा आदयो येषां ते विद्याधरा एककोटिः एव मष्टविधत्वमित्यर्थः ॥ २७ ॥

अनुक्रान्तान् सर्गान्निगमयति । दशेति । सर्गो नवविध इत्युपक्रमे कथितमवान्तरविधाभिप्रायेण दशेत्युपसंहार इत्यविरोधः हेविदुर ! विश्वसृजा चतुर्मुखरूपेण केवलेन स्वात्मना च कृता एते दशसर्गास्तेतुभ्यमाख्याताः कथिताः सर्गाश्चैवानुसर्गाश्च मनून्मन्वन्तराणिचेति चतुर्मुखसृष्टेः पूर्वापरेषु पृष्टेषु सर्गेषु कथितेष्वनन्तरसृष्टेषु मनून्मन्वन्तराणिचेति चतुर्मुखसृष्टपूर्वापरेषु पृष्टेषु सर्गेषु कथितेष्वनन्तरसृष्टेषु मनुमन्वन्तरेपूत्तरश्रवणे त्वरा न कार्या संगतिविशेषेण तान्यपि कथयिष्यामीत्याह । अतः परमिति । अतःसर्ववस्तुपरिच्छेदककालरूपकथनानन्तरम् मनून् मन्वन्तराणि च प्रवक्ष्यामि ॥ २८ ॥

पुरुषस्तदुपादानमात्मानं लीलयासृजदित्युपक्रान्तमेकस्यैव ब्रह्मणः उपादानत्वं निमित्तत्वं चोपसंहरति । एवमिति । कल्पादिषु स्रष्टा आत्मभूर्हरिश्चतुर्मुखशरीरको हरिः रजोवृतश्चतुर्मुखद्वारा रजउद्रेकः अमोघसंकल्पः सत्यसंकल्प इदं सार्वज्ञत्वसर्वशक्तित्वादेरुपलक्षणमात्मात्मनैव सृजति अमोघसंकल्प इत्यनेन लोकपरिदृष्टनिमित्तोपादानमृत्कुलालभेदन्यायस्यात्रानवकाश उक्तः कुलालस्यासर्वशक्तित्वान्नोपादानत्वं मृदस्त्वज्ञत्वान्ननिमित्तत्वम् इहत्वस्मिन्नेवोभयोः प्रतिपन्नत्वान्न कर्त्रन्तरकर्मान्तरकरणानामपेक्षेति भावः ॥ २९ ॥

उक्तनवविधसर्गाणां मध्ये अण्डसृष्टिर्युगपत्तत्त्वाकाशादीनामिव क्रमेणेत्याह । गुणव्यत्यय इति । गुणव्यत्यय इति गुणव्यतिकरात्मके एतस्मिन्नण्डेपौर्वापर्यं नेच्छन्ति सृष्टेमहदादितत्त्वं ब्रह्माण्डसृष्टिर्युगपदित्यर्थः तत्कुतः अधीशितुरधीशस्य स्रष्टुः परमात्मनो मायाविन्व तु आश्चर्यशक्त्युपेतत्वादण्डसृष्टिर्युगपदेवेत्यर्थः नत्वाकाशादिष्वपि यौगपद्यं शङ्क्यम् आकाशाद्वायुर्वायोरग्निरित्यादिविरोधात् युगपदुत्पत्तौदृष्टान्तमाह । नेति । भ्रमशब्द आवर्तबुद्बुदादिपरः नद्यां भ्रमत आवर्तबुद्बुदादेर्यथायुगपदेवोत्पत्तिस्तथेत्यर्थः ॥ ३० ॥

ननु प्रतिकल्पस्थानामेव जीवानामिन्द्रत्वाद्यैश्वर्यभाजां पुनःपुनः कल्पान्तरेऽनुवृत्तिरिति संशयं निराकुर्वन्नाह । देवासुरादय इति । हेक्षत्तः ! नामरूपाभ्यामिन्द्रादिनाम्ना सहस्राक्षत्वादिरूपेणाऽस्मिन्कल्पे ये सुरादयः प्रकीर्तिताः त एव मन्वन्तरान्तरे आसन्नित्यर्थः यद्वा य इदानीन्देवासुरादयः त एव मन्वन्तरान्तरं नामान्तररूपान्तराभ्यामुपलक्षिता आसन्नित्यर्थः अन्यथा प्रतिमन्वन्तरं पृथक्करणपराशरवचनविरोधात् अनेन श्लोकेनेन्द्राद्यैश्वर्यवतामादित्वम् पुनरावृत्तिश्च ज्ञाप्यते ॥ ३१ ॥

इतिश्रीमद्भागवते महापुराणे तृतीयस्कन्धेटीकायां
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
दशमोऽध्यायः ॥ १० ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

नवमः सर्गो ऽर्वाक्स्रोतोनाम केषां नृणां विषयः तुशब्दादेकविधोऽपि द्विविधः । असुराद्या मानुषा इति मानुषाणां स्वभावमाह रजोऽधिका इति भौतिकरजोंऽशजातत्वाद्रजोनिष्ठाःतदुक्तम् यद्रजो

श्री यद्विजयध्वजतीर्थकृत पदरत्नावली ।

भौतिकं तेन मानुषाणां सदा जनिः । तमोगूढेन रजसा त्रितरस्था नुचारिणामिति अनेन भूरितमम इति पदं विवृतम् रजोनिष्ठत्वा देव कर्मपराः नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृदिति वचनात् किञ्च रजोनिष्ठास्तमोनिष्ठा द्वेधार्वाक्स्रोतसः स्मृताः । असुराद्या स्तमोनिष्ठा मानुषास्तु रजोधिका इतिवचनाच्च मानुषलक्षणमुक्त्वा असुरादिलक्षणमाह दुःखचेति चशब्द एवार्थे दुःखएव सुखमानिनः अनेन सर्वार्थेषु विपरीतज्ञानित्वमासुरलक्षणमुक्तं भवति ।

सर्वार्थान् विपरीतांश्चबुद्धिःसा पार्थतामसी ।

इतिवचनात् सुखे सुखैकभावास्तु देवा नैवंतु दानवा इति चशब्दान्मानुषा उभयात्मका इति ज्ञातव्यं तर्हि अर्वाक्स्रोतस्त्वं मानुषाणां कथमितिचेत् शुभप्रयत्नमन्तरेणाधोगमनात् तदुक्तम् ।

प्रायोऽधोगमनं यस्मात्प्रयत्नेन विना भवेत् ।
अर्वाक्स्रोतस इत्येवमानुषाः परिकीर्तिता इति
तिरश्चां स्थावराणांच बुद्धिपूर्वप्रवर्तिनाम् ।
असुराणां रक्षसांच पिशाचानां तथैवच ॥
अर्वाक्स्रोतस्त्वमुद्दिष्टं नियमादसुरादिनाम् ।

इति वचनात् तिर्यगादिसाधारणमपि असुरादीनामर्वाक्स्रोतस्त्वं नियतमिति ज्ञातव्यम् ॥ २५ ॥

सत्तम मत्सुश्रेष्ठ!एते त्रयस्तस्थुषस्तिर्यङ्मानुषविषया एव वैकृता अण्डान्तरसर्गा उक्ता इतिशेषः एवसाम्येऽवधारणइत्यभिधानादेव शब्दस्य साम्यार्थमाह देवसर्गः प्राकृतो वैकृतश्चेत्यर्थः तदेव विशदयति वैकारिकश्चेति यो वैकारिको देवसर्गः प्राकृतत्वेन प्रोक्तः स कौमारश्चेत्युभयात्मकः प्राकृतो वैकृतश्चेति कौ भूमौ मा मानं निर्माणं तस्यारः प्राप्तिर्यस्य स तथोक्तः अंडाद्बहिर्जातानां पुनरण्डान्तर्भूमौ जन्म कौमार इत्युच्यत इत्यर्थःमा निर्माणइतिधातुः कुमारंतीतिकौमारा * देवानामंडजोद्भवाः । वैकारिकाणां जननात्प्राकृतो वैकृतश्च सः ।

वैकारिकेष्वेवान्येषामीषद्भोगित्वहेतुतः ।
उभयात्मकत्वेनैवप्रोच्यंतेसगुणाअपि ॥

इतिवचनात् ॥ २६ ॥

देवसर्गं विभजति देवसर्गश्चेति चशब्देन संख्याविशेषं केषांचिदन्तर्भावं सूचयति तदुक्तम्ः

प्रोक्ताअष्टविधा देवा विबुधाः सर्वएवतु ः
पितॄणां शतमेवात्र असुरास्त्रिशदेवतु ।
गंधर्वाप्सरसां चैव द्विशतं परिकीर्तितम् ।
सप्ततिर्यक्षरक्षः सु त्रिशच्चारणजातिषु ।
शतं सिद्धास्तथान्यासु सप्तति सर्वजातिषु ।
ऊर्ध्वस्रोतस एवैते अन्येऽर्वाक्स्रोतसः स्मृताः ।
वैकारिकेषु देवेषु एते वैमुख्यभोगिनः ।
अभोगिनस्तदन्येतुदेवा एते ततःस्मृताः ।
सर्वज्ञास्तैः सहाराध्या भक्तास्तेष्वंतरेषुच ।
नृत्तगानादिकर्तारो वाहनादिकृतस्तथा ।
सिद्धिसिद्धतिवक्तारश्चाराश्चैषां क्वचित्क्वचित् ।
सेवाकरा इतिह्येतैर्भेदैरष्टविधा मताः ।
अन्येचयेतुसर्वज्ञा विबुधास्ते प्रकीर्तिताः ।

तथान्ये कर्मभिस्तैस्तैरष्टभेदान्तरंगना इति ।

अडांतर्भूमौ जायमानानां देवानां भूतगतगुणत्रयादुत्पत्तिर्यत् भेदनानेकविधा तदुक्तम्

भौतिकेनतु सत्वेन गूढं ब्रह्मणआंकजम् ।
रूपं तत्रापि तुतमः शतांशेन प्रकीर्तितम् ।
तज्जोरुद्रस्ततस्त्वेवमिन्द्रादीनां पुनर्जनिः ।
गूहितम भूतरजसा तत्सत्त्वं मानुषा यदा ।
देवाएवंगुणास्त्वेते सर्वे व्याप्यव्यवस्थिताः ।
गुणातीतंच यद्रूपं ब्रह्मादीनां सुखात्मकम् ।
चिद्रूपं तस्य सत्वस्यैवोत्कर्षोयत्र विद्यते ।
तत्रोत्कृष्टं तमोयत्र हीनं तत्तु स्वभावतः ।
उपगूहनेतु नैवास्ति विशेषोनित्यचिन्मये ।
प्रकृतेर्गुणरूपायां मूलिकायाश्च नकचित् ।
विशेषः परमेतत्त्वे वासुदेवे कुतः पुनरिति ।

देवानां शापादिदोषाद्भूमौ जननेऽपि भूतगुणस्वभावेन दैत्यमासुरत्वं ज्ञायते तदुक्तम् ।

यदिदेवादयोदोषाज्जायेरन्मानुषादिषु ।
तथापि देवाविज्ञेया आसुराद्यास्तथाह्यत्र

मिति प्रकृतमुपसंहरति दशेति देवसर्गस्य प्राकृतवैकृत भेदेकसर्गाणां दशत्वं युज्यते ॥ २७ ॥ २८ ॥

मूलसृष्टिर्हरिणैवास्तु मन्वंतरेष्ववान्तरसृष्टिरन्यैरितिशंका भूदित्याशयेनाह । एवमिति । आत्मभूरजो हरिरात्मना स्वेच्छ कल्पादिष्वात्मैव स्वयमेव स्वतंत्रोभूत्वा प्रकृत्युपादानेन देवादि हान् सृष्ट्वा तन्नियंतृतयात्मान सृजति प्रादुर्बभूवः बहुरूपत्वेनेतिशे कीदृशोहरिरेवमुक्तप्रकारेण स्रष्टा अनेन विरिंचादीनां बहु द्वारमात्रमुक्तं भवति कथं स्रष्टेत्यत उक्तं रजःप्लुत इति रजआ गुणानां मध्यवर्तित्वाद्रजोगुणप्लुतो नतु गुणाधीनत्वादभिमा च देवदत्तवद्धरिरिंद्राद्यन्यतमः किंनस्यादित्यत उक्तमात्मभूरि कामोनेत्याह।स्रष्टेति।तर्हि विरिंचः किमित्यत उक्तं हरिरिति र गुणेन द्रवीभूतोरजः प्लुत इति प्रसिद्धार्थं परित्यज्याप्रसिद्धा कल्पने किंप्रमाणमित्यत आचार्यैरिदं मानमुदाहृतम् ।

गुणाप्लुतोहरिर्नित्यं गुणानां मध्यगोयतः ।
अनहंवेदनात्तस्य गुणासंस्पर्शएवचेति ।
सृष्ट्वा देवादिदेहान्स आत्मानं बहुधाकरोत् ।
तन्नियंतृतयात्मानं प्रकृति देहभेदत

इतिवचनं स्वबहुत्वे प्रमाणम् एकत्वेऽस्य कर्तृकर्मादि कथमितीदं चोद्यं ।

कर्ताचकरणंचैवकर्मचैवस्वयंहरिः ।
आत्मनोबहुधाभावे प्रकृतेस्तु स्वतंत्रता ।

इतिवाचा परिहर्तव्यम् एतदभिप्रायेणामोघसंकल्प कम् ॥ २९ ॥

तर्हि कथं सृष्टिः प्रथमेत्याशङ्क्य तन्नियमोनास्तीति सदृ न्तमाह ।गुणेति । एतस्मिन् गुणव्यत्यये गुणव्यतिकरे पौर्वा पूर्वापरीभावं नेच्छन्ति विपश्चित इतिशेषः कुतः अभी खंडैश्वर्यस्य हरेर्मायावत्त्वात् इच्छानियतत्वात् नद्यां भ्रमे पुनः पुनरावर्तमानाया भ्रमेरावर्तस्येव ॥ ३० ॥

एतत्कल्पसृष्टेभ्योन्यस्मिन्कल्पे ऽन्ये सृज्यन्ते इति भ्रान्ति

* कौभूमौमांनिर्माणमरंतिप्राप्नुवन्तीतिकुमारादेवास्तेषामयंसर्गः कौमारः ।

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

रयति । देवेति । इन्द्रादिनाम्ना महत्त्वाचशुक्लादिरूपेणाच ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
विजयध्वजतीर्थकृतपदरत्नावली टीकायां
दशमोऽध्यायः ॥ १० ॥

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ॥

यस्तु वैकारिकस्तस्वदेवतारूपः स तु प्रोक्तः प्राकृतत्वान्न तु वैकृतोऽत्र प्रोच्यते इत्यर्थः । कौमारस्तु उभयात्मक इति तेषां ब्रह्मणो मनस्यात्रिसृतमात्रत्वात् तत् सृज्यान्तःपातापातविवक्षया ॥ २६ ॥ देवसर्ग इति सार्द्धकम ॥ २७ ॥—॥ २८ ॥

इति श्रीमद्भागवते तृतीयस्कन्धे श्रीजीवगोस्वामि-
कृत क्रमसन्दर्भस्य टीकायां
दशमोऽध्यायः ॥ १० ॥

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

एवं भोग्यभोक्तृन्निर्दिश्य तदुभयनियामकान् निर्दिशति । अर्वाक् स्रोत इति । तुशब्दोऽत्र पूर्ववज्जननं व्यावर्तयति अर्वागेव स्रोतः आहारसंचारो यस्य स नृणां सर्गः एकविध एव सर्वे पञ्चनखा जलचरा अपि तथा एकपादा जलचराश्च तस्मिन्कल्पे नसन्तीति वा तेषां पूर्ववल्लक्षणमाह । रजोधिका इति । रजोगुण एव तेषामधिको न सात्त्विका नापि तामसा इति । ये पुनर्भगवदीयास्ते गुणातीता देवा एव न नराः । ब्रह्मसृष्टा वा न भवन्ति पद्मकल्पे वा तदभावः भूतस्थानीयं रजः सर्वदा कर्मपराः कुर्वन्त एव तिष्ठन्ति । ज्ञानेन्द्रियाणि तेषां गौणानि अनेन विषयेन्द्रियनिरूपणं दुःखेच सुखमानिन इति बुद्धिः चकारात्सुखे दुःखसाधने च ॥ २५ ॥

एवमाधिभौतिकादिभेदेन स्थावरजङ्गमा मनुष्याश्च निरूपिताः त्रयएवअन्ये स्थानरूपाभिन्ना अपि न सर्गत्वं प्राप्नुवन्ति तदाह । वैकृतास्त्रय एवैते इति । देवसर्गश्च सत्तमेति । मनुष्या एव पुण्यपरिपाकवशात् देवा भवन्तीति केचित् अतो नवैव सर्गाः गुणानां भेदान्तरासंभवात् । उत्पत्त्या नवविधोऽपि उत्पत्त्या उपसंहाराच्च दशविधः अतश्चकारः देवसर्गश्चेति । सत्तमेति संबोधनं देवानां फलरूपत्वज्ञापनार्थं स देवसर्गो द्विविधः एकोवैकारिकः सात्त्विकः अपरोवैकारिको विकाराज्जातः स दशमः तत्र प्रथमे निर्णयमाह । वैकारिक इति । तुशब्दः अस्माद्वैकारिकाद्भेदमाह । यः सात्त्विकाद्वैकारिकः स प्रोक्तः पञ्चमः कौमारस्तु देवोऽपि भवति मनुष्योऽपि भवतीति उभयनिरूपणेनैव निरूपितः अतः पृथक्तया स नवक्तव्य इति तु शब्दः ॥ २६ ॥

देवसर्गस्त्वेकविधोऽवान्तरभेदेनाष्टविधः तान् गणयति विबुधादेवाः इन्द्रादयः एके पितरः सुरा एके गन्धर्वाप्सरस एके सिद्धाः एके यक्षरक्षांसि एके चारणा अपि यक्षेष्वेवेति केचित् ॥ २७ ॥

भूतप्रेतपिशाचा एके विद्याधराभिन्ना इति केचित् किंन्नरकिंपुरुषादय एवं सर्वानुपपाद्यउपसंहरति । दशैते विदुराख्याता इति । संबोधनं स्नेहसूचकं तेनान्यथा कथनं व्यावर्त्तितम् विश्वसृजा ब्रह्मणा कृता एते सर्गाः ॥ २८ ॥

एतावदुक्त्वा तूष्णीं स्थिते पूर्ववत् पुनः प्रक्ष्यतीति वक्तव्यान्तरं निर्दिशति । अतः परं प्रवक्ष्यामीति । अनुवदं न एतच्छेदेनिरूपणानन्तरं कालान्तरं प्रवक्ष्यामीत्यर्थः अवशिष्टं रूपद्वयमास्ते इन्द्रियाणि वाद्वश्चेति तदुभयं निर्दिशति । वंशान् मन्वन्तराणि चेति । वंश इन्द्रियरूपः चकारात्तत्संबन्धिनोऽपि तत्रैव वक्तव्याः प्रतिज्ञाताः ॥ २९ ॥

नन्वेवं भगवान् अनेकविधान् किमर्थं कदा वा करोतीत्याशङ्क्याह । एवं रजः प्लुत इति । रजसा व्याप्तो भगवान् सृष्टौ प्रवृत्तः सर्वेष्वेव कल्पादिषु आत्मनः सकाशात् स्वयमेवाविर्भूतः सर्वेषां दुःखनिवारणार्थम् अमोघसंकल्पमात्रेण कर्तृकर्मकरणरूपः स्वयमेव सृजति ब्रह्मापि रजःप्लुतो भगवानेवेत्युक्तं भवति कल्पादिष्विति बहुवचनं स तत्त्वानि ब्रह्माण्डानि बहुधा सृजतीति ज्ञापयति रजोऽपि स्वयमेवेति स्वस्यैव करणत्वं तथा कर्मकालादयोऽपि स्वयमेव जगदपि स्वयमेवेति स्वस्यैव कर्मत्वं पुरुषादयोऽपि स्वयमेवेति स्वस्यैव कर्तृत्वं तस्मात्सर्वं हरिरिति सिद्धम् ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे श्रीमद्वल्लभदीक्षित
विरचितायां सुबोधिन्यां तृतीयस्कन्धे
दशमाध्याय विवरणम् ॥ १० ॥

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

अर्वागध आहारसञ्चारो यस्य सोऽर्वाक् स्रोतः दुःखत्वमार्षम्। नृणां लक्षणं रज इत्यादि ॥ २५ ॥

एते त्रयो वैकृता एव । देवसर्गश्च वैकृतः प्राकृतश्च । क इत्यपेक्षायामाह यस्तु वैकारिकः वैकारिकाहङ्कारभवानां देवानां सर्गः प्राकृतेषु प्रोक्तः पुनस्तेषामेव ब्रह्मसृष्टत्वाद्वैकृतश्च । तथा कौमारः सनत्कुमारः सनत्कुमारादीनां सर्गस्तु उभयात्मक इति तेषां भगवद्ध्यानपूतेन मनसान्यांस्ततोऽसृजदित्यग्रिमोक्तेर्भगवद्ध्यानजन्यत्वेन भगवज्जन्यत्वाच्च प्राकृतो वैकृतश्चेत्यर्थः ॥ २६ ॥

वैकृतस्तु देवसर्गोऽष्टभेदः तत्र विबुधादयस्त्रयो भेदाः गन्धर्वाप्सरस एकः यक्षरक्षांस्येकः भूतप्रेतपिशाचा एकः सिद्धचारणविद्याधरा एकः किन्नरादय एक इत्यष्टौ भेदाः । आदिशब्दात् किंपुरुषादयः ॥ विश्वसृक् परमेश्वरो ब्रह्मा च ॥ २७—२८ ॥ हरिरेवात्मभूः सान्वत्यन्वयः ॥ २९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
तृतीये दशमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

अर्वाक् अधः स्रोतः आहारसंचारो यस्य स तथा । दुःखत्व मार्षम् नृणां साधारणं लक्षणं दर्शयति रजोऽधिकं येषु ते ॥ २५ ॥

एते त्रयोवैकृताः देवसर्गश्च वैकृत इत्यन्वयः अयमर्थः अष्टौ प्रागुक्ताः नवमः अर्वाक्स्रोतस्तदुपलक्षितस्य देवसर्गस्यापि तत्रैवान्तर्भावोविशेषतोऽभिमतस्तथापि तत्र नृणां रजआधिक्यं लक्षणं प्रतिपाद्य देवानामर्वाक्स्रोतस्त्वेऽपि नृभिन्नं लक्षणं द्योतयितुं वैकृतेषु सामान्यतोनिर्देशः अतोदेवानां नवमसर्गे अन्तर्भावः तेषां चतुर्मुखसृज्यत्वादिति येतु वैकारिकादुत्पन्ना देवास्तेषां सर्गो वैका-

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

रिकः वैकारिकोदेवसर्गः पञ्चमः इत्यनेनोक्तः तेषां लिङ्गशरीरान्तर्गतेन्द्रियाधिष्ठातृणां च स्वसृज्यत्वाभावात् । एवं नव सर्गानुक्त्वा दशमं सर्गमाह । कौमारस्तूभयात्मक इति । उभययोगात् दशमइत्यर्थः सिद्धशिरोमणीनां कुमाराणां ज्ञानभक्तिसंप्रदायप्रवर्त्तकानां चतुर्मुखकृतसर्गे प्रादुर्भावात् कौमारः सर्गः वैकृतः सर्वेषु कल्पेषु ज्ञानभक्तिसंप्रदायप्रवर्त्तकत्वेनानुवर्त्तमानानां तेषां प्रत्यहं प्रादुर्भावाभावाच्चिरस्थायित्वेन चिरस्थायिषु प्राकृतेषु गणनात्प्राकृतश्चेत्येवमुभयात्मक इत्यर्थः यत्तु देवत्वेन मनुष्यत्वेन च सृज्यते इत्यर्थ इति तदयुक्तं कुमाराणां भगवदवतारगणामिहान्यत्र च मनुष्यत्वस्यादृष्टत्वादश्रुतत्वाच्च ॥ २६ ॥

नवमसर्गान्तर्गतः वैकृतदेवसर्गोऽष्टविधःतत्र विबुधाः पितरश्चेत्येकभेदः असुरा इत्येकः गन्धर्वाप्सरस इत्येकः सिद्धा इत्येकःयक्षरक्षांस्येकः ॥ २७ ॥

भूतप्रेतपिशाचा इत्येकः चारणा विद्याध्रा इत्येकः किंनरा आदिशब्दात् किंपुरुषादय इत्येकः इत्येवमष्टविधत्वमित्यर्थः विश्वसृक् सर्वकारणकारणः भगवान् तेन साक्षाच्चतुर्मुखद्वारा च कृताः इत्यर्थः ॥ २८ ॥ २९ ॥

तदेवाह । एवमिति । हरिः परमेश्वरः आत्मा सर्वात्मा स्रष्टा विश्वकारणभूतः सत्यसंकल्पः संकल्पमात्रेण सर्वं कर्तुं समर्थः आत्मानमेव सृजति कार्यावस्थया स्थापयति तत्र सर्वं साक्षाद्रूपेण किंचिच्च स्वांशद्वारेण सृजतीति द्योतयितुं विशिनष्टि । रजः प्लुतः चतुर्मुखरूप इत्यर्थः ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे सिद्धान्तप्रदीपे तृतीयस्कन्धे दशमाध्यायार्थप्रकाशः ॥ १० ॥

---

भाषाटीका ।

हे विदुरजी नवमा अर्वाक् सर्ग है जो कि नीचे को आधाराहार पाक करने वाले सो सर्ग एक प्रकार का मनुष्यों का है मनुष्य रजो गुणी और कर्म में तत्पर दुःख में सुख मानने वाले होते हैं ॥ २५ ॥

हे सत्तम ! विदुरजी ए तीनो सर्ग तथा देव सर्ग एवैकृत सर्ग हैं जो वैकारिक देव सर्ग है तिसको पहले कह चुके हैं और जो सनत्कुमारादि कों का सर्ग है सो तो प्राकृत वैकारिक दोनें प्रकारका है ॥ २६ ॥

देव सर्ग आठ प्रकार का है तिस में विबुध पितर सुर गन्धर्व अप्सरा सिद्ध यक्ष रक्षस चारण भूत प्रेत पिशाच विद्याधर किन्नर हे विदुर जी ब्रह्मा के ए दश सर्ग कथन किये इसके पीछे वंश मन्वन्तरों को कहेंगे ॥ २७ ॥ २८ ॥

इसी प्रकार कल्पों के आदि में रजो गुण से व्याप्त होकर हरि भगवान् ब्रह्मा होकर के अपने स्वरूप से अपने आपही को सृजते हैं क्योंकि वे सत्य संकल्प वाले हैं ॥ २९ ॥

इन गुणों के परिवर्तन मे ईश्वर के मायावी होने से जैसा काल का चक्र चलता है तैसे सृष्टि के होने से कोई पूर्वा पर भाव नहीं है ॥ ३० ॥

हे विदुरजी एजो देवासुरादिक इस कल्प मे कहे हैं ये सब इसी नाम रूपसे दूसरे मन्वंतरमेंभी होते थे ॥ ३१ ॥

इतिश्रीमद्भागवत तृतीयस्कन्धदशमअध्यायका

भाषानुवाद लक्ष्मणाचार्य्यकृत

समाप्त ॥ १० ॥

---

इतिश्रीमद्भागवतेमहापुराणे तृतीयस्कन्धे दशमोऽध्यायः ॥ १० ॥



## ॥ एकादशोऽध्यायः ॥

### मैत्रेय उवाच

चरमः सद्विशेषाणामनेकोऽसंयुतः सदा ।
परमाणुः स विज्ञेयो नृणामैक्यभ्रमो यतः ॥ १ ॥
सत एव पदार्थस्य स्वरूपावस्थितस्य यत् ।
कैवल्यं परममहानविशेषो निरन्तरः ॥ २ ॥
एवं कालोऽप्यनुमितः सौक्ष्म्ये स्थौल्ये च सत्तम ! ।
संस्थानभुक्त्या भगवानव्यक्तो व्यक्तभुग्विभुः ॥ ३ ॥
स कालः परमाणुर्वै यो भुङ्क्ते परमाणुताम् ।
ततोऽविशेषभुग्यस्तु स कालः परमो महान् ॥ ४ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

तत एकादशे कालः परमाण्वादिलक्षणैः ।
युगमन्वन्तरादिभ्यः कल्पमानादिवर्ण्यते ॥ १ ॥

तदेवं सामान्यतः कालस्योपलक्षणभूतं गुणव्यतिकरं दशविधं निरूप्येदानीं तस्यैव विशेषं निरूपयितुं तत्परिच्छेद्यं वस्तु लक्षयति द्वाभ्याम् सतः कार्यस्य विशेषाणामंशानां चरमोऽन्त्यो यस्यांशो नास्ति अनेकः कार्यावस्थामप्राप्तः असंयुतः समुदायावस्थां चाप्राप्तः अत एव सदा कार्यसमुदायावस्थयोरपगमेऽप्यस्ति स परमाणुर्विज्ञेयः किंतत्र प्रमाणमतआह। यतो येभ्यः समुदितेभ्यो नृणां व्यवहर्तॄणामैक्यभ्रमोऽवयविबुद्धिः तथा च पञ्चमेऽवयविनिराकरणं वक्ष्यति येषां समूहेन कृतो विशेष इति कार्यानुपपत्त्या कल्प्यत इतिभावः ॥ १ ॥

सूक्ष्ममुक्त्वा स्थूलमाह। सत एवेति। यस्य चरमोंऽशः परमाणुस्तस्यैव सतः कार्यमात्रस्य स्वरूपावस्थितस्य परिमाणान्तरमप्राप्तस्य यत्कैवल्यमैक्यं स परममहान् पुंस्त्वंतु परमाणुप्रतियोगित्वात् ननु नानाविशेषवान् परस्परं भिन्नश्च सर्वः पदार्थः कथमैक्यं तस्य तत्राऽऽह। अविशेषो विशेषविवक्षारहितो निरन्तरो भेद विवक्षारहितश्च सर्वोऽपि प्रपञ्चः परममहानित्यर्थः ॥ २ ॥

यथा सूक्ष्मः स्थूलश्चायं पदार्थः एवं कालोऽप्यनुमितः चक्रान्मध्यमावस्था गृह्यते संस्थानं परमाण्वाद्यवस्था तस्य भुक्तिर्व्याप्तिस्तया भगवानिति हरेः शक्तिः स्वतोऽव्यक्तो व्यक्तं भुङ्क्ते व्याप्नोति परिच्छिनत्तीति तथा विभुरुत्पत्त्यादिषु दक्षः ॥ ३ ॥

एतदेव प्रपञ्चयति सतइत्यादिना सतः प्रपञ्चस्य परमाणुतां परमाण्ववस्थां यो भुङ्क्ते स कालः परमाणुः तस्यैवाविशेषं साकल्यं यो भुङ्क्ते स परममहान् अयमर्थः ग्रहर्क्षताराचक्रस्थ इत्यादि यत्सूर्यपर्यटनं वक्ष्यते तत्र सूर्योयावता परमाणुदेशमतिक्रामति तावान् कालः परमाणुः यावता च द्वादशराश्यात्मकं सर्वं भुवनकोशमतिक्रामति स परममहान् संवत्सरात्मकः कालः तस्यैवावृत्त्या युगमन्वंतरादिक्रमेण द्विपरार्धान्तत्वमिति तथाच पञ्चमे सूर्यगत्यैव कालादिविभागं वक्ष्यति ॥ ४ ॥

---

श्रीराधारमणदास गोस्वामिविरचिता दीपिन्याख्या
दीपिका टिप्पणी ।

परमाण्वादिलक्षणैः परमाण्वाद्युपाधिभिः युगमन्वतरादिभ्यः युगादिमानमारभ्य कल्पमानादि कल्पस्य ब्रह्मदिनस्य मानं चतुर्युगसहस्रात्मकं चतुर्दशमन्वन्तररूपम् आदिना प्रलयवैराग्यकालपरिच्छेदरहितत्त्वपरिग्रहः। आदिना संध्यासंध्यांशपरिग्रहः गुणव्यतिकरं गुणक्षोभमयं सर्गं तस्यैव कालस्यैव विशेषं परमाण्वाद्यवस्थाभेदं। तत्परिच्छेद्यं कालव्याप्यं कार्यावस्थां द्व्यणुकाद्यवस्थां। समुदायावस्थां कार्य्यावस्थाहेतुभूतां संयोगेन समूहावस्थाम्। अत एव अवस्थाद्वयमप्राप्तत्वादेव। तत्र परमाणौ। समुदितेभ्यस्संयुक्तेभ्यः। अवयविबुद्धिः पृथगारब्धोऽवयवीति भ्रमज्ञानं भवति वस्तुतस्तु समूहमात्रं न तत्र कश्चन अवयवीत्यर्थः तथा च पञ्चमेन गतिसामान्यम्। कार्य्यानुपपत्त्या कार्यस्यावयविनोऽवयवमन्तरासिद्ध्या अर्थापत्त्यानुमीयते पञ्चमानुसारेणावयविनो निराकरणे स्वरूपासिद्धोहेतुरिति भ्रमपदं व्याख्यातम् ॥ १ ॥

परिणामान्तरमप्राप्तस्य कार्य्यसमुदायावस्थाविनाशरूपपरिणाममप्राप्तस्य। परमाणुप्रतियोगित्वात् पमाणुशब्दप्रतिस्पर्द्धित्वात् जात्याभिन्नत्वेऽपि व्यक्त्या नानाविशेषवान् गवादिपदार्थः जात्यापि परस्परं भेदवान् गवाश्वादिपदार्थः विशेषविवक्षा व्यक्तिभेदकृतभेदविवक्षा भेदविवक्षा जातिभेदकृतभेदविवक्षा तत्तद्रहितत्वेन सर्वोऽपि प्रपञ्च इत्यार्थिकत्वादित्यर्थोक्तिः। सौक्ष्म्ये सूक्ष्मोपाधौ परमाणौ स्थौल्ये स्थूलोपाधौ सर्वप्रपञ्चे कालपरिच्छेद्ये तत्परिच्छेदकतया कालोऽप्यनुमितः तथा च प्रयोगः परमा-

श्रीराधारमणदास गोस्वामिविरचिता दीपिन्याख्या
दीपिका टिप्पणी ।

घटादिपदार्थः कालपरिच्छेद्यः सूर्य्यात्मककालातिक्राम्यत्वात्तत्तद्दे-
शवत् व्यतिरेके आत्मवच्चेति ॥ २ ॥ ३ ॥

एतदेव कालस्य सूक्ष्मस्थूलत्वमेव भुङ्क्ते व्याप्नोति तस्यैव प्रपञ्चस्य साकल्यं सर्वप्रपञ्चमित्यर्थः कालस्य तत्तद्भोक्तृत्वं सूर्य्यरूपेणेति व्याचष्टे । अयमर्थ इति । तत्र सूर्य्यपर्य्यटने यावता कालेन । तस्यैव सम्वत्सरस्यैव ॥ ४ ॥

---

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

एवं कालकलपसृष्टिमुक्त्वा कालस्वरूपम् स्थौल्यसौक्ष्म्यरूपं प्रकर्षापकर्षकाष्ठे निरूपयति । चरम इति श्लोकद्वयेन । ननु कालपरिच्छेद्यवस्तुनः प्रकर्षापकर्षनिरूपणं किमर्थमप्रकृतत्वादितिचेन्न कालोह्यत्र परमाण्वादिसम्वत्सरान्तः स्थूलसूक्ष्मरूपः सूर्यगत्या लक्ष्यते यत्र सूर्यो यावत्परमाणुमतिक्रामति तावत्परमाणुः यावताचद्वादशराश्यात्मकं भुवनकोशमतिक्रामति स परममहान्संवत्सरात्मकः एवं च सूर्यगतिविषयदेशप्रकर्षापकर्षनिरूपणमन्तरेण सूर्यगमनकालप्रकर्षापकर्षनिरूपणायोगात् युक्तं तावत्कालकाल्यस्य वस्तुनः निरतिशयस्थौल्यसौक्ष्म्यनिरूपणं तत्र प्रथमं कालपरिच्छेद्यस्य निरतिशयसौक्ष्म्य रूपापकर्षकाष्ठामाह । चरम इत्येकेन । केचिदिमं श्लोकं वैशेषिकोक्तपरमाणुसद्भावपरमाहुः तदयुक्तम् वेदोपबृंहणपरे प्रबन्धे परमाणुसद्भावाभ्युपगमासंभवात् परमाण्वादिसंवत्सरावसानेनेति वक्ष्यमाणत्वाच्च सांद्वशेषाणां सतः कार्यस्य विशेषाणामंशानां यश्चरमोऽन्त्योंऽशः अत्यल्पः यस्य पुनरंशोनास्ति स इत्यर्थः तमेवविशिनष्टि । अनेकः कार्यावस्थामप्राप्तः असंयुतः समुदायावस्थां चाप्राप्तः अतएव सदा कार्यसमुदायावस्थयोरपगमेऽप्यस्ति सपरमाणुर्विज्ञेयः नृणां यतः कालापकर्षादैक्यभ्रमः ईदृशं सूक्ष्मं विभागमज्ञात्वाऽनेकेषु कालांशेष्वेकः काल इति भ्रमन्तीत्यर्थः ॥ १ ॥

एवमपकर्षकाष्ठाऽभिहिताऽथ प्रकर्षकाष्ठामाह । सत इति । यस्य कार्यस्य चरमोंऽशःपरमाणुस्तस्यैवसतः कार्यावस्थयावस्थितस्य स्वरूपावस्थितस्य विकारान्तररहितस्य पदार्थस्य यत्कैवल्यं केवलं स्वरूपं स एव परममहान्निरतिशयप्रकर्षः तमेवविशिनष्टि । अविशेषः पुनः प्रकर्षान्तररहितः निरन्तरः स्वसमवेतागृहीतभेदावयवः ॥ २ ॥

कालपरिच्छेद्ये स्वपदार्थे उपपादिते प्रकर्षापकर्षकाष्ठेऽप्यतिदिशति । एवमिति द्वाभ्याम् । एवं परिच्छेद्यप्रकर्षापकर्षकाष्ठावत्कालोपि सौक्ष्म्ये परमाण्वादिरूपप्रकर्षे च संस्थानभुक्त्याऽवच्छेद्यार्थंगतावस्थाविशेषसंयोगलक्षणया यद्वा स्वावच्छेदकाणुत्वाद्यवस्थारूपसंस्थानविशेषसंयोगलक्षणया भुक्त्यानुमितः कथं भूतः भगवान् भगवदात्मकः स्वयमव्यक्तः व्यक्तभुग्विभुः व्यक्तवस्तुपरिणामहेतुः ॥ ३ ॥

अतिदिष्टाभेवापकर्षकाष्ठामुपपादयति । स इत्यर्धेन । परमाणुतामत्यल्पतां यः कालः भुङ्क्ते अनुभवति स कालः परमाणुर्ज्ञेयः प्रकर्षकाष्ठामाह । सत इत्यर्धेन । सतः निरतिशयसूक्ष्मावस्थयावस्थितस्य स्वस्य यो विशेषः निरतिशयस्थूलसंवत्सरात्मकत्वं विशेषणं तं भजतीति विशेषभुग्यः स परमो महान्निरतिशयप्रकर्ष इत्यर्थः संवत्सरात्मकत्वमेवाह कालस्यौल्यं द्विपरार्धत्वं तस्यैव संवत्सरस्ययुगमन्वन्तरानुक्रमेण भवतीति न तस्य स्थौल्यम् ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

हरेरुभयानन्त्यज्ञानं मोक्षैकफलमित्ययमर्थोऽस्मिन्नध्याये निरूप्यते । तत्र कालाख्यं लक्षणं ब्रह्मन्निति विदुरप्रश्नं परिहरिष्यन् परमाणुकालज्ञानाय द्रव्यपरमाणुपरिमाणमाह । चरम इति । तु शब्दएवार्थेएकस्यार्थे यो विशेषाणां पार्थिवादिपदार्थानाम् चरमोऽन्त्यो विशेषः तर्हि निरवयवः किमित्याह । अनेकेति । यश्चानेकैरवयवैरासमंतात्सम्यक् युतः अनेकावयववत्वे चरम इति विशिष्योक्तिः कथमित्यतस्तुशब्देन विशिनष्टि देवलोके स्थितामनुष्या विशेषेण सौक्ष्म्येण * दर्शने यस्यांशांशित्वविशेषं द्रष्टुं न शक्ताः सएव चरमो विशेष इत्याचक्षते प्रेक्षावन्तः काणादादीनां यतो यस्मादैक्यभ्रमः यतः परमाणुर्नास्ति स पदार्थः परमाणुरिति भ्रान्तिः तेषां भ्रान्तिज्ञानं युक्तमिति दर्शयितुं नृणामित्युक्तम् नाम्ना परमाणुर्विज्ञेय इत्यर्थः ।

> मनुष्या देवलोकेऽपि विशेषेणैव दर्शने ।
> अंशांशित्वविशेषं तु यस्य द्रष्टुं न शक्नुयुः ॥
> चरमो विशेष इति तं मुनयो ब्रूयुरञ्जसा ।
> परमाणुः स विज्ञेयः काणादाद्या निरंशिनम् ॥
> अनन्तांशयुतत्वेऽपि यं ब्रूयुर्भ्रान्तिदर्शनात् ।
> ततोऽपि परमाणुत्वं तदंशानां तु यद्यपि ॥
> [illegible]विकार्थयस्योक्ता परमाणुतेति ।

वचनात् अस्यैव परमाणुत्वं नान्यस्येति ज्ञायते अत एव विज्ञेय इति ॥ १ ॥

अणु परिमाणम् निरूप्य महत्परिमाणं दर्शयति । सत इति । सतः परब्रह्मण एव यत्कैवल्यम् यः केवलभावः स परममहानित्यन्वयः कालतो देशतो गुणतश्चानन्तत्वं सतः परब्रह्मण एव मुख्यमित्यर्थः सन्घट इत्यादौ सच्छब्दवृत्तिदर्शनादित्यत पदार्थस्येति सदित्यनुवर्तते सत्पदमुख्याभिधेयस्य ।

> मुख्याभिधेय-स्त्वर्थः स्याद्वाच्यमन्यच्च भण्यते ।

अमुख्येष्वर्थशब्दस्तु नीचोपरिहितो भवेदिति वचनात् मुख्यस्योपपत्तावमुख्यस्वीकारायोगात् अणुतरवस्तुनिस्थितस्य सत्पदमुख्याभिधेयस्य तत्परिणामत्वेन भाव्यं यद्वेवसमःप्लुषिणेत्यादौ दर्शनादित्यतः स्वरूपावस्थितस्येति स्वरूपमेवावष्टभ्यस्थितस्य स्वे महिम्नीति श्रुतिः जगदावरकस्य वासुदेवाख्यस्य हरेर्जगत्प्रविष्टरूपात् किञ्चिन्महत्त्वात्स्वरूपावस्थितत्वाच्च तद्व्यावृत्तिः कथमित्यतः कैवल्यमिति जगदावरणव्यापारोदासीनतया स्थितं तादृशरूपाणामनेकत्वात्कथं निर्णय इत्यतोऽविशेष इति तादृशविशेषरहितः सर्वगतस्यापि प्रादेशमात्रतया स्थितत्वेन विशेषवत्त्वात्कथमविशेष इत्यतो निरंतर इति प्रादेशमात्रादिविशेषरहितः एतदुक्तं भवति परब्रह्मणः यः केवलभावोऽण्डान्तः प्रविष्टतदावरकं तस्यैव परमपुरुषादिरूपांतरतदेकदेशप्रादेशमात्रादिविशेषं च विना यत्सर्वगतं स्वरूपं तदेव परममहानित्युच्यते काल-कोटिविहीनत्वं कालानंत्यं विदुर्बुधाः ।

> देशकोटिविहीनत्वं देशानन्त्यंतथैव च ।
> गुणानामप्रमेयत्वं वस्त्वानन्त्यं विदो विदुः ।

* तस्य चरमत्वेनाप्रमाणोकरीत्यादेवलोकस्थमनुष्याणां विशेषाकारेणप्रत्यक्षत्वप्रयोजकमहत्त्वाभावरूपस्यैवाचिकमितिदर्शितुशब्दः ।

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

आनन्त्यं त्रिविधं नित्यं हरेर्नान्यस्य केनचित् ।
तस्य सर्वस्वरूपेष्वप्यानन्त्यं तु त्रिलक्षणम् ।
तथापि देशतस्तस्यपरिच्छेदोऽपि विद्यते ।
परिच्छेदस्तथाव्याप्तिरेकरूपेऽपि युज्यते ।
तस्याचिन्त्याद्भुतैश्वर्याद्व्यवहारार्थमेव च ।
गुणतः कालतश्चैव परिच्छेदो न कुत्रचित् ।
व्याप्तत्वं देशतोऽप्यस्ति पूर्वरूपेषु यद्यपि ।
न च भेदः कश्चित्तेषामणुमात्रोऽपि विद्यते ।
तथापि विद्यते ऽणुत्वं तस्मादैश्वर्ययोगतः ।
तस्माद्धुद्धयवतारार्थमव्याप्तत्वं च भण्यते ।
यत्तस्य व्यापकं रूपं परं नारायणाभिधम् ।
शून्यं ब्रह्मेति यत्प्राहुर्द्वितीयं स्रष्टृयत्ततः ।
परमं पुरुषो नामभितं तद्देशतो विभोः ।
तृतीयं वासुदेवाख्यं जगदावरकं मितम् ।

देशतो जगदाविष्टं तुरीयं विष्णुनामकमिति वचनेन मंदमतीनां शङ्कोपद्रवाः परिहृता इति ज्ञातव्यम् किंच सर्वगतस्यापि ब्रह्मरूपस्य कालादिरूपया प्रकृत्या समव्याप्तावपि दार्ष्टान्तिकेऽन्तर्भावात् तदन्यस्मिन्ननवस्थानात्स्वरूपावस्थितस्येत्युक्तं देव्याकालादिरूपिण्या स्थितं ब्रह्मापि सर्वगम् ।

उच्यतेऽनन्यगं यस्मादात्मवत्साहरेर्विभोः ।
महदादिगतं यत्तु तदन्यगतमुच्यते इति च ॥ २ ॥

उक्तमर्थं दार्ष्टान्तिके करोति । एवमिति । सौक्ष्म्ये परमाणुत्वे स्थौल्ये परममहत्त्वे वर्त्तमानकालोऽप्येवमनुमितः कलामुहूर्ता इत्यादिशास्त्रेण साक्षिप्रत्यक्षानुगृहीतव्याप्तिमल्लिङ्गज्ञानवता जनेनानुमितः ज्ञात इत्यन्वयः अनुमेति द्वयं प्राहुर्यथाज्ञानं च लिङ्गजमित्यभिधानादर्थद्वयं सेत्स्यति ।

यावन्तं देवलोकस्थो मानुषस्त्ववधारयेत् ।
महाप्रज्ञो देवजूकः सकालः परमाणुकः ।
सर्गाद्यैरनवच्छिन्नस्तदनन्तर इत्यपि ।
तथैव परमाण्वादिविशेषात्मापि नो भवेत् ।

पूर्वापरादिभेदेन सकालःपरमो महानिति शास्त्रवचनं चात्र प्रमाणं यज्ञादिकर्मणा प्रीतदेवताप्रसादेन प्राप्तैश्वर्यो मानवो देवजूक इति । न केवलमुभयविधः कालोऽनुमितः किं तु तदन्तर्यामी तदाख्यो हरिरपि अनुमित इत्यभिप्रेत्याह । संस्थानभुक्त्येति । विभुर्व्याप्तो भगवान् संस्थानभुक्त्या संस्थानयोः परमाणुत्वेन परममहत्त्वेन व्यवच्छिन्नयोः स्थित्या तदन्तर्यामित्वेनाव्यक्तोऽ दृश्यः परमाणुः परममहानित्यनुमित इत्यन्वयः तत्र स्थित्वा किं करोतीत्यत उक्तं व्यक्तभुगिति व्यक्तं तत्कालवृत्तिजगत्सृजति पाति संहरतीति व्यक्तभुगिति यद्वा स्वसमानधर्मवत्त्वाद्व्यक्तं प्रकृतिरूपं सृष्ट्यादौ प्रवर्तयतीति अत्राविशेषस्तु ।

देशतः कालतश्चैव वस्तुतश्चात्रिधा हरेः ।
यथानन्त्यं न चान्यस्य प्रकृतेर्देशकालतः ।
तथा शब्दस्य कालस्य देशानन्त्यं च कालतः ।
कालशब्दात्मिका सैव तथापितु हरेः सदा ।
नास्याः सामर्थ्यलेशोऽपि ज्ञानानन्दगुणेष्वपि ।
शेयस्तदवरो वायुः शेषवींद्रहरास्ततः ।

अवरास्तत इन्द्राद्या गुणैः सर्वैर्न संशय इति वचनादवगंतव्यः किंच कालांतर्यामिणः परमाण्वादिनामवाच्यत्वं तत्तद्विशेषभोक्तृत्वात्तदुक्तम् अण्वादिकालसंस्थानभोक्तृत्वात्परमेश्वरः । अण्वादिनामवाच्योऽसौ कालश्चेत्यभिधीयत इति ॥ ३ ॥

सामान्यत उक्तं विशिनष्टि । सकाल इति । यः कालः कालांतर्यामी हरिश्च परमाणुतां चरमस्तु विशेषाणामित्याद्युक्तलक्षणवत्तां भुंक्ते स कालः हरिश्च परमाणुरिति परमाणुनाम्ना वाच्य इत्युक्तस्मृतिप्रसिद्धमित्यर्थः सतो ब्रह्मणोऽविशेषं स्वरूपं स्वरूपावस्थितकैवल्याद्यविशेषं निरंतरलक्षणं परममहद्रूपं यः कालः कालांतर्यामी च भुंक्ते स कालः कालांतर्यामिब्रह्मरूपं परममहानिति नाम्ना वाच्यं तस्य कालांतर्यामिणोऽपि त्रिधा परिच्छेदाभावात् तदुक्तं सर्वत्र सर्वभोक्तापिविशेषादेवभोक्तृवत् । स्थितो हरिरचिन्त्यात्मा निजैश्वर्यादजो विभुरिति अनेन सत एव पदार्थस्येत्यादिना यानि विशेषणानि परममहतो ब्रह्मणः कथितानि तानि महत्कालान्तर्यामिणोऽपि सन्तीत्युक्तम् भवति तथाहि यः सच्छब्दस्य मुख्यार्थः परमाण्वादिकालान्तर्यामिस्वरूपव्यावृत्तस्तथा मन्वतरादिकालान्तर्यामिस्वरूपव्यावृत्तस्ततोऽपि स्थूलपरार्धपरादिकालान्तर्यामिस्वरूपव्यावृत्तो यश्चाखण्डतत्त्वेऽपि तदेकदेशाद्यवतारभेदव्यावृत्तत्वेन परममहद्रूपभोक्ता स परममहानिति यावता कालेन परमाणुपरममहतोरुत्पात्तप्रलयौ स्याताम् तौ कालौ परमाणुपरममहान्तावित्ययमर्थः प्रमाणशून्यत्वादुपेक्षणीयः ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

एवमिति यदुक्तं तदेव विवृणोति स काल इति । अत्र टीकायां परमाणुदेशमतिक्रामतीत्यत्र मध्यमवीथीमयज्योतिश्चक्रगत्येतिज्ञेयम् सर्व्वं भुवनकोषमतिक्रामतीत्यत्र तु स्वगत्येति ज्ञेयम् । यो भुङ्क्ते परमाणुतामित्यत्र च सूर्य्यरूपेण परमाणुदेशातिक्रामितामित्येवार्थः । वक्ष्यते च तस्य कालस्य सूर्य्येणाभेदः । यः सृज्यशक्तिमुरुधेत्यनेन । यद्वा । परमाणुतां तत्पदार्थवत् परमसूक्ष्मावस्थतां यो भुङ्क्ते व्याप्नोति स कालः परमाणुः ॥ १ ॥

सतः प्रपञ्चस्याविशेषभुक् सृष्ट्यादिसंहारपर्यन्तं सर्व्वमेव व्याप्नोति यः स कालः परममहान् द्विपरार्धरूप इत्यर्थः । तथाच वक्ष्यते कालोऽयं परमाण्वादि द्विपरार्द्धान्त इति ॥ २—४ ॥

---

श्रीमद्वल्लभाचार्यकृत सुबोधनी

एकादशे तु कालस्य सर्वेषामिन्द्रियाणि यत् ।
आध्यात्मिकं तु यद्रूपं त्रेधा तद्विनिरूप्यते ॥ १ ॥
सर्वोहि भगवान् कालस्तदर्थमुपचर्यते ।
धर्मप्रयुक्तोयः कालः साक्षि ब्रह्माणमेयिवान् ॥ २ ॥
सूर्यात्मकस्तु यः कालः सर्वेषां सोऽपि च त्रिधा ।
कार्ये प्रवेशाप्रवेशात् दर्शनादर्शनात्तथा ॥
भचक्रस्थानमानाभ्यामत्राप्युच्चावचं सदा ॥ ३ ॥

एवं पूर्वाध्याये कालस्य स्वरूपं कार्यं चोक्त्वा तस्यावान्तरभेदान्निरूपयति ।

सूर्यगत्या तु तद्भेदाः सूर्यस्तस्याधिदैविकम् ।
आध्यात्मिकं तु तद्भेदाः कश्चिदिक्वापि भेदिका ॥
पृथिवी च जलं तेजो देवास्तु पितृमानुषाः ।

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

उपाधितृतयं प्राहुस्ततः कालस्त्रिधा मतः ॥

प्रथमं मनुष्याणामहोरात्रं निर्णेतुं पार्थिवे लोके पृथिवीव्यवधानाव्यवधानाभ्यां सूर्य दर्शनादर्शनकृतं कालस्य दिनरात्रिरूपत्वमिति निरूपयितुं पार्थिवैरेव परमाण्वादिभिः कालभेदानाह। तस्योपाधिभूतस्य परमाणोर्लक्षणमाह। चरम इति सतः कार्यस्य घटादेः विशेषाणामवयवानां मध्ये यश्चरमः यस्य पुनरवयवो नास्ति।

अतिसूक्ष्मत्वात् विभाजका घातं न सहते स चरमः।
सोऽपि स जातीयैः समुदायावस्थां न प्राप्तस्तदाह।

अनेक इति। कार्यावस्थां च न प्राप्तः। असंयुत इति। सदेति कदाचित्संयोगं प्राप्तो भवत्येवेति लक्षणमसंभव्येव स्यात्। अनेकत्वं च नैकसंख्याभावः यत्र तिष्ठन्ति तत्र तत्सजातीया बहव एव तिष्ठन्तीत्यनेकत्वम्। भौतिकत्वे सति नित्यो गतिमान् परमाणुरिति परमाणुलक्षणे क्रियमाणे परमाणुभ्यः कार्योत्पत्तिरिति मतं स्यात्। सिद्धान्ते तु स्थूलादेव सूक्ष्मोत्पत्तिः स्वममानावयवस्थूलांशकार्यजनक इति। यदनेकावयवैर्योजनं पटादौ तत्कार्पासादेः स्थूलस्यैव दीर्घावस्थां प्राप्तस्य आकृतिविशेषसंपादनार्थं खण्डशो योजनं समुदायस्य चैवोपादानत्वम्। एवं कुण्डलप्रतिमादावपि तावत्समुदायस्यैवोपादानत्वम्। अन्यथा अनेकं कार्यं स्यात्। एकस्यैकमेवोपादानमिति निश्चयः कार्यस्य पाञ्चभौतिकत्वात् जलादयः संयुक्ता भवन्तीति तेऽपि ततः पृथक् भूताः परमाणुत्वमापद्येरन्। भगवांश्च सर्वत्रोपादानमिति चरमत्वं च तस्योपपद्यत इति तद्व्यावृत्त्यर्थमनेक इति। सत्वेक एव असंभवव्यावृत्त्यर्थमेव सदा। स परमाणुर्विज्ञेयः। विशेषेण तत्र ज्ञानमपि विशिष्यते। कुयुक्त्या सोऽन्यथा नमन्तव्य इत्यर्थमेव तस्य परमाणोः स्वरूपमुक्त्वा कार्यमाह। नृणामैक्यभ्रमो यत इति। नृणां जीवानां यैः परमाणुभिः कृत्वा आत्मना सह देहस्यैक्यभ्रमो भवति ऐक्यभ्रमहेतवस्तु परमाणव एव। तेह्यतिसूक्ष्माः धर्माधर्माभ्यां संस्कृताः जीवे संवध्यन्ते। तदा देहभावमापद्यन्ते अत एव ते दुष्टाः कालस्योपाधिभूताः तत्सम्बन्धे जीवस्य नाश एव। अत एव तेषां भ्रमजनकत्वं पुंजात्पुंजोत्पत्तिपक्षमाश्रित्य भ्रमात्। केचिदाहुः। तत्सोऽव्यम्। एतदर्थमेव कालावयवत्वेन निरूपणमिति चरमपदप्रयोगः। मनस्तु परमाणुपरिमाणमेव नतु परमाणुः परमाणवस्तु चतुर्विधा एव। अन्यथा पञ्चविधा एव परमाणवः स्युः। कार्यं च न ततः स्यात् परमाणुत्वात्। अतोनित्यगतिमत्त्वं न लक्षणं तदेजतितन्नैजतीति श्रुत्यानित्योभगवान् परमाणुः स्यात्। भौतिकत्वं च तेषां साधनीयम्। स्मृतिश्च श्रुत्याबाधिना इति वैशेषिकादीनां लक्षणं बाधितमेव। प्रकृते चानुपयोगः ॥ १ ॥

एवं परमाणुलक्षणमुक्त्वा परममहतोलक्षणमाह। सतएवेति। सतः कार्यमात्रस्य संपूर्णस्य ब्रह्माण्डस्य स्वरूपावस्थितस्य नतु प्राकृत्येनावस्थितस्य कैवल्यमेकता तत्परममहानिति लक्षणम्। पृथिवी मात्रं परममहानिति पक्षं निषेधति। अविशेष इति। नाम्न्ययं पृथिवी जलमिति या अविशेषः विशेषबुद्ध्यविषयः निरन्तरोभेदशून्यश्च सतएवेति स्वाप्निकव्युदासः पदार्थस्येति भेदव्युदासः। स्वरूपावस्थित इति कार्यव्युदासः। ब्रह्माण्डस्थितांसगवान् परममहानित्युक्तं भवति। सर्वोऽपिपदार्थः सर्वत्रनैकबुद्ध्यारूढः विशेषकल्पनाशून्यः प्रमाणापेक्षभेदशून्योऽपि यावान् सूर्येण प्रकाश्यते स सर्वोमिलितः परममहान् ॥ २ ॥

एवं पूर्वोक्तरावधी निरूप्य उपहितं कालं लक्षयति। एवं कालोऽप्यनुमित इति। यथा परमाणुपरममहान्तौ अनुमितौ कार्यचरमविशेषेण कार्यसमुदायेन च। एवं कालोऽपि तन्नोक्ता तादृशपरिच्छेदकर्त्ता अनुमेयः सौक्ष्म्ये स्थौल्ये च। सत्तमेति संबोधनम् अनुमानज्ञापनार्थम्। ननु कालस्य असङ्गस्य भगवत इव कथं पदार्थसम्बन्धः कथं वानुमानम्। अन्यथा भगवतोऽप्यनुमानं स्यात्तत्राह। संस्थानभुक्त्येति। संस्थानं तदवस्था। परमाणुत्वं परममहत्त्वमिति। भगवतो वस्तुस्वरूपत्वेन तुल्यत्वे ऽपि यः संस्थानविशेषः तस्य च योभोगः सकालकृतएवेति कार्यस्थौल्यसौक्ष्म्यात् कालस्य सौक्ष्म्यं स्थौल्यं च नन्वेवं कथं करोति स्वरूपस्यान्यथात्वं तस्य च भोगं ततोभोगमित्याशंक्याह। भगवानिति एवं सामर्थ्यरूपोभगवान् यथा केचन तादृशीं मायामविद्यां वा कल्पयन्ति। अस्मिन् शास्त्रे सकालः तर्हि एवं सर्वपदार्थभोक्तारं कथं सर्वे नपश्यन्तीत्याशंक्याह। अव्यक्त इति। तस्य कालस्य आसनिर्वृत्तिपरिज्ञानार्थं कार्यमाह। व्यक्तभुगिति। ननु स्वयमव्यक्तः व्यक्तं कथं भुंक्ते तत्राह। विभुरिति। सर्वप्रकारेण भोक्तुं शक्त इत्यर्थः ॥ ३ ॥

अनुमितं कालं शब्दतत्राह। सकालइति। यः परमाणुतां भुंक्ते परमाणुं व्याप्नोति ततः स्वस्यापि परमाणुत्वमनुभवति स परमाणुकाल इत्यर्थः। एवं सतोविशेषभुग्यः सन्नासंसविशेषतां योभुंक्ते तद्योगेन स्वयंवा विशेषत्वं प्राप्नोति स परममहान् कालः। तु शब्दोमहत्तत्त्वस्य आयुः परिच्छिनत्ति ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

एकादशे पुनः कालो विशेषेणापि लक्ष्यते ।
मासवर्षयुगादीनां प्रमाणं ज्ञायते यतः ॥

प्रथममात्यन्तिकं सूक्ष्मकालं स्वरूपतो लक्षयितुमत्यन्तसूक्ष्मवस्तु परिच्छेद्यं वस्तु लक्षयति। सतः कार्य्यस्य पृथिव्यादेर्विशेषाणामंशानां यश्चरमः यस्यांशो न सम्भवति। ननु चरम इत्येकवचनात् स किमेक एव न किन्त्वनेकः। अत्र सूक्ष्मकालज्ञानार्थं तेषां बहुत्वेऽपि एकस्यैवोपयोगितेत्येकवचनप्रयोगः। ननु तर्हि स स्वैर्मिलितोऽमिलितो वा अत्रोपादीयत इत्यत आह असंयुतः परमाणुर्विज्ञेय एव न तु दृश्यत इत्यर्थः ननु तर्हि तस्य सत्त्वे किं प्रमाणं तत्राह। यतः येभ्यः समुदितेभ्यः नृणामैक्यमति भ्रमो भवति। सूर्य्यरश्मियुक्ते गवाक्षरन्ध्रे ये भ्रमन्तोऽतिसूक्ष्माः पार्थिवकणा दृश्यन्ते तेष्वयमेकोऽयमेकोऽतिसूक्ष्म एक एव कण इति बुद्धिर्भवतीत्यर्थः। तस्य षष्ठोंऽश एव परमाणुः सत्वदृश्य एवेत्यर्थः। नृणामित्युक्त्या त्रसरेणुप्रमाणदेहानां कीटविशेषाणां केषाञ्चित् सोऽपि दृश्य एवेति व्यज्यते ॥ १ ॥

आत्यान्तिकं सूक्ष्ममुक्त्वा आत्यन्तिकं स्थूलमप्याह। यश्चरमोंऽशः परमाणुस्तस्यैव सतः कार्य्यमात्रस्य स्वरूपावस्थितस्य प्रलयपरिणामप्राग्भूतस्य यत् कैवल्यमैक्यम् स परममहान् पुंस्त्वंतु परमाणुप्रतियोगित्वात्। ननु नानाविशेषवत्त्वात् परस्परं भिन्नश्च सर्वैः पदार्थैः कथमैक्यं तस्य तत्राह अविशेषो विशेषविवक्षारहितः निरन्तरः भेदविवक्षारहितश्च। सम्पूर्णः प्रपञ्चः परममहानित्यर्थः ॥ २ ॥

अणुर्द्वौ परमाणू स्यात्त्रसरेणुस्त्रयः स्मृतः ।
जालार्करश्म्यवगतः खमेवानुपतन्नगात् ॥ ५ ॥
त्रसरेणुत्रिकं भुङ्क्ते यः कालः स त्रुटिः स्मृतः ।
शतभागस्तु वेधः स्यात्तैस्त्रिभिस्तु लवः स्मृतः ॥ ६ ॥
निमेषस्त्रिलवो ज्ञेय आम्नातस्ते त्रयः क्षणः ।
क्षणान् पञ्च विदुः काष्ठां लघुता दश पञ्च च ॥ ७ ॥
लघूनि वै समाम्नाता दश पञ्च च नाडिका ।
ते द्वे मुहूर्तः प्रहरः षड्यामः सप्तवा नृणाम् ॥ ८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

यथासूक्ष्मः स्थूलश्चायं पदार्थः । एवं कालोऽप्यनुमितः ज्ञातः केनप्रकारेण संस्थानं परमाणुपरममहतोः स्वरूपं तस्य भुक्त्या व्याप्त्या भगवच्छक्तित्वादूभगवान् स्वतोऽव्यक्तः व्यक्तं सर्व्वप्रपञ्चं भुङ्क्ते परिच्छिनत्तीति तथा विभुरत एव व्यापकः उत्पत्त्यादिषु दक्षोत्रा ॥ ३ ॥

संस्थानभुक्त्येत्यस्यार्थं विवृणोति । सतः कार्य्यस्य परमाणुतां परमाणुस्वरूपं यः कालो भुङ्क्ते सूर्य्यरूपेणातिक्रामतीति परमाणुः प्रहर्क्षेति वक्ष्यमाणवाक्यदृष्ट्या यावता कालेन सूर्य्यः परमाणुदेशमतिक्रामति तावान् कालः परमाणुरित्यर्थः । स च तस्यैव अविशेषं सर्व्वमेव प्रपञ्चम् भुङ्क्ते वत्सरयुगाद्यावृत्त्या सूर्य्यरूपी यःकालः स परममहान् सृष्टिमारभ्य प्रपञ्चस्य संहारपर्यन्तं यावान् कालः तावान् सर्व्व एव परममहानित्यर्थः । तत्र परमाणवणु त्रसरेणूनां कार्य्यांशानाञ्च कालांशानां संज्ञाप्रमाणे तुल्ये एव तथा परममहतः कार्य्यस्य कालस्य च संज्ञैवतुल्या तन्मध्यस्थानां संज्ञाप्रमाणयोर्भिन्नत्वमिति ज्ञेयम् ॥ ४ ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

एकादशे परमाण्वादिलक्षणः कालो वर्ण्यते तत्र यावता सूर्यः परमाणुलक्षणं प्रदेशमतिक्रामति तावान् कालः परमाणुर्यावद्द्वादशराश्यात्मकं भुवनमतिक्रामति तावान्कालः परममहान् संवत्सरात्मक इत्येवं परमाण्वादिकालं निरूपयितुं तावत्परमाण्वादिकालपरिच्छेदकं सूक्ष्मं स्थूलं च पदार्थमाह । चरम इति द्वाभ्याम् । सतः प्रधानाः ब्रह्मात्मककार्यस्येत्यर्थः विशेषाणामंशानां चरमः अन्त्योंऽशः चरमत्वं विवृणोति । अनेक इति । प्रथममेकं द्विधा विभज्य तत्राप्येकं द्विधा विभज्येत्येवमनेकतां नीत इत्यर्थः नन्वेवं प्रकारेणानुस्वपूर्वपूर्वापेक्षया सर्वेषां चरमत्वसिद्धिरित्यत आह। असंयुत इति। यस्य द्वैधीभावः कर्तुमशक्यः सर्वेषां चरम इत्यर्थः स पदार्थः परमाणुर्विज्ञेयः सच सदा सत्यः सन्मूलत्वात् यतः येभ्यः परमाणुभ्यः नृणां तार्किकादीनामैक्यभ्रमो भवति अखण्डानां परमाणूनां नाशासंभवात् ते नित्याः तदैक्यं विश्वमिति ॥ १ ॥

अल्पकालपरिच्छेदकं सूक्ष्मं पदार्थमुक्त्वा बृहत्कालपरिच्छेदकं स्थूलं पदार्थमाह । सतएवेति । यस्य चरमोंऽशः परमाणुः तस्यैवसतः कार्यस्य स्वरूपावस्थितस्य उक्तप्रकारेणोत्तरोत्तरद्वैविध्येनाऽविभक्तस्य यत्कैवल्यमेकत्वम् तदेव परममहान् पदार्थः कैवल्यं विवृणोति अविशेषो विशेषविवक्षारहितः अतएव निरन्तरः केवलः ॥ २ ॥

यथा परमाणुः परममहान् परिच्छेदकः पदार्थः एवं सौक्ष्म्ये । अल्पत्वे स्थौल्ये बृहत्त्वे चकारात् मध्यमभावे संस्थानभुक्त्या परमाण्वादिव्याप्त्या कालोऽप्यनुमितः कथंभूतः भगवान् विश्वसृष्ट्यादि निमित्तत्वलक्षणः विभुः प्रभावोविद्यते यस्य सः विभुः व्यापकः अव्यक्तः अदृश्यः ॥ ३ ॥

एतदेवविवृणोति । स इत्यादिना । सतः कार्यस्य परमाणुतामुक्तप्रकारां यो भुङ्क्ते स परमाणुः सूर्यपर्यटनकालः परमाणुः सतस्त्र अविशेषमैक्यं यो भुङ्क्ते स द्वादशराश्यात्मकभुवनकोशसूर्यपर्यटन कालः संवत्सरात्मकः परममहानित्यर्थः संवत्सरस्यैवावृत्त्यायुगमन्वन्तरादिक्रमेण द्विपरार्द्धत्वम् ॥ ४ ॥

भाषाटीका ।

मैत्रेयजीबोले सम्पूर्ण पृथिव्यादि सत्पदार्थों का अन्त्य अवयव अनेक संख्यावाला सदा असंयुक्त जो पदार्थ है उसी को परमाणु कहते हैं जिन के समूहसे मनुष्यों को एकताका भ्रम होता है ॥ १ ॥

अपने स्वरूप में विद्यमान सत्पदार्थ का जो एकता रूप प्रपञ्च है विशेष विवक्षा भेद विवक्षा से जोरहित है सो प्रपञ्चरूप परम महान् पदार्थ है ॥ २ ॥

इसीप्रकार से स्थूलता में तथा सूक्ष्मता में तथा परमाणु अवयवों के व्याप्ति से भगवान् कालभी अनुमान से जानाजाता है जिससे कि वह काल स्वयन्तो अप्रत्यक्ष है और सब पदार्थ का भोग तथा परिणाम करने वाला है ॥ ३ ॥

जो काल परमाणु को भोगता है वह परमाणु काल है सत्पदार्थ का विशेष भोग भोगनेवाला जो काल है वह परम महान् काल है ॥ ४ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

इदानीं द्व्यणुकादि लक्षणपूर्वकं मध्यमकालावस्थां कथयति । द्वौ परमाणू अणुः स्यात् त्रयोऽणवस्त्रसरेणुः सतु प्रत्यक्ष इत्याह । जालार्केति गवाक्षेप्रविष्टेष्वर्करश्मिष्ववगतः कोऽसौ योऽति लघुत्वेन खमेवानुपतन्नगाद्गतः पाठान्तरे खमेवानुपतन्नवगतो नतु गां पृथ्वीम् ॥ ५ ॥
शतं भागास्त्रुटिरूपा यस्मिन् स वेधः ॥ ६ ॥
ते निमेषास्त्रयः क्षण इत्याम्नातःतैर्वैधैःकाष्ठाः पञ्चदश एकं लघु ॥

नाडिकाः षट् सप्तवा प्रहरः स एव यामोऽपि दिनस्य रात्रेश्च चतुर्थो भागः ह्रासे षट् वृद्धौ सप्त संध्यांशमुहूर्तद्वयं विनेति ज्ञातव्यम् तत्राप्यनियमार्थो वाशब्दः प्रत्यहं तद्भेदानां गणयितुमशक्यत्वात् ॥ ८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या
दीपिका टिप्पणी ।

अणुद्व्यणुकपदार्थस्तथा तत्परिच्छेदकः कालश्च एवं तान्पदार्थःतत्तत्कालयोर्दृष्टान्तदार्ष्टान्तिकतया एकनामतया च सामान्यवर्णनमस्मिन्पद्येव्याख्येयम् त्रयोऽणावस्त्र्यणुकानि त्रीणि नगामिति पठान्तरं अवगतो ज्ञातः ॥ ५ ॥

त्रसरेणुत्रिकदेशं भुङ्क्ते व्याप्नोति तल्लक्षणं यथा सूर्यसिद्धान्ते सूच्याभिन्ने पद्मपत्रे त्रुटिरित्यभिधीयत इति । एकस्मिन्पद्मपत्रे सूच्याभिन्ने विद्धे सति यावान्कालस्स त्रुटिसञ्ज्ञक इत्यर्थः भागाः कालाङ्गाः ॥ ६ ॥

इति शब्दाध्याहारात् क्षण इत्येकवचनान्त एव पाठः ॥ ७ ॥

तत्रापि मुहूर्त्तद्वयपरित्यागे तद्भेदानां पलविपलप्रयुक्तानां प्रहरभेदानाम् ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

एवमपकर्षप्रकर्षावुपपाद्य अवान्तरकालविशेषावच्छेदकावस्थाः प्रतिपादयति । अणुर्द्वावित्यादिना । द्वौतावृतुः षडयनं दक्षिणं चोतरं दिवीत्यन्तेन अणुरित्यादिना न वैशेषिकप्रक्रियोक्तिः किंतु तैस्तथाऽभ्युपगतवस्तुपरिभाषितानां शब्दानां कालावयवेषु प्रयोगस्तं परमाणवादिना संवत्सरावसानेनेति वेति वक्षति द्वाभ्यां परमाणुभ्यामणुरित्येकः कालः स्यादित्यर्थः त्रिभिरणुभिस्त्रसरेणुरित्येकः कालः स्यात् त्रसरेणुसंज्ञकात् कालात् पूर्वोक्तानां कालानामत्यन्तसूक्ष्मतदवच्छेदककथनस्याशक्यत्वात्त्रसरेणुसंज्ञककालस्यावच्छेदकमाह । जालार्केति । जालकरन्ध्रनिष्क्रान्तादित्यरश्मिषु दृष्टः खमाकाशमेवानुपतन्नगाद्भूतः न भूमिमनुपतन् पांसुर्यः स त्रसरेणुः कालइत्यन्वयः अवच्छेद्यस्य कालस्यावच्छेद्यपांसुपदार्थस्य चोपचारात्सामानाधिकरण्यं जालार्करश्म्यवगतपांसोरीषत्स्पन्दनावच्छिन्नः कालः त्रसरेणुसंज्ञ इत्यर्थः ॥ ५ ॥

त्रसरेणुसंज्ञककालांशत्रिकं भुङ्क्तेप्राप्नोति यः कालः सत्रुटिरित्यर्थः त्रसरेणुकालत्रयं त्रुटिरित्युक्तं भवति सा त्रुटिः वेधाख्यस्यः कालस्य शतभागः शतगुणः कालः एकः एत्र वेधावच्छिन्नः त्रिभिस्तैर्वेधैर्लव एकः कालः स्मृतः इत्यर्थः ॥ ६ ॥

लवत्रयनिमेष इत्याह । निमेष इति । शतभागस्तु वेध इति श्रुतशतशब्दोऽनेकवाची तथा सति "निमेषशतभागस्य सहस्रांशः क्षणोनृप! तस्याप्ययुतभागांशैर्भवत्युपचयो नृणाम्" इति शौनकवचनैकार्थ्यं स्यात् ईदृशकालविभागः कथमवगम्यत इति चेत् एकक्षणे विद्युदादिलोकादयो अनेकयोजनं व्याप्नुवन्ति एकक्षणे आदित्यरथस्यानेकयोजनगतिश्च स्मर्यते तत्रैकयोजनेऽपि प्रदेशे समुदिताः केशाः सर्षपाश्च न शक्याः संख्यातुं ततश्च केशादिवत्परिमितदेशव्याप्त्यवच्छिन्नाः कालावयवा एकक्षणवत्प्रतिपन्ना अथ संख्येयाः सन्तीत्युपपन्नमेव ते त्रयो निमेषाः एकः क्षणः स्यात् पञ्चक्षणान् काष्ठां विदुः काष्ठाः पञ्चदश एका लघुना लघुताख्य एककालः ॥ ७ ॥

पञ्चदशलघूनि एका नाडिका समाम्नाताद्वे ते नाडिके एको मुहूर्तः षट् नाडिका सप्त वा प्रहरः स एव यामो दिनस्य रात्रेश्च चतुर्थो भागः ह्रासे षट् वृद्धौ सन्ध्या मुहूर्तद्वयं विनेति ज्ञातव्यं तत्राप्यनियमार्थो वा शब्दः नृणामित्यनेन मनुष्यमानमुक्तम् ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

इदानीं परमाणुपरममहतोरन्तरालकालावयवानाम संख्यायोगेन नामान्याह । अणुर्द्वाविति । द्वौ परमाणू मिलितौ द्व्यणुकनामकालः स्यात् उत्तरत्राप्येवमेवज्ञातव्यानि त्रयो द्व्यणुकामिलितास्त्रसरेणुस्त्र्यणुकः कालः सोऽयमयोगिप्रत्यक्षासिद्ध इत्याह जालेति । जालं गवाक्षं तत्र वर्तमानार्करश्मिनावगतः खमेवानुपतन्नगात् दृष्टिविषयं प्राप्य गत इत्यर्थः अत्र सर्वत्र तत्तत्कालावयवान्तर्यामित्वेन तत्तच्छब्दवाच्यत्वेन तत्तत्कालवर्तिद्रव्यप्रवर्तकत्वेन स्थितं सच्चिदानन्दलक्षणमनन्तसंज्ञं स्वरूपमनुभवतीति ज्ञातव्यम् अत एव सर्वत्र सर्वभोक्तेत्युक्तम् ॥ ५ ॥

तासां तिसृणां त्रुटीनां भागो भजनं यस्य स त्रिभागः तिसृभ्यस्त्रुट्यो वेध इत्युक्तं भवति ॥ ६ ॥

निमेषा अङ्गुलिस्फोटेन ज्ञेयाः ताः काष्ठाः पञ्चदशलघु ॥ ७ ॥

पञ्चदशलघूनि नाडिका ते द्वे नाडिके मुहूर्तंविदुः षण्णाडिकाः प्रहरः सप्तनाडिका यामः सूर्यगतिलक्षितराशिभेदात् नातिरेकाद्वेति विकल्पः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

अणुर्द्वाविति पद्यं पदार्थकालयोः सामान्यवचनं दृष्टान्तदार्ष्टान्तिकभावनैकनामत्वेन च ॥ ५—७ ॥

षट् सप्त वेति । वाशब्दस्तत्र सर्वमेवान्तरं समुच्चिनोति ॥ ८ ॥

---

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

एवमाद्यन्तकालं निरूप्य मध्यकालं निरूपयति । अणुर्द्वौ परमाणू स्यादिति । येन मार्गेण सूर्यरथचक्रं गच्छति तस्मिन्मार्गे परमाणुदेशं यावता कालेनातिक्रामति स परमाणुकालः । यावता परमाणु द्वयदेशमतिक्रामतिसः द्व्यणुककालः । एवमग्रेऽपि यावता कालेन सर्वमेव नभोवलयं द्वादशराश्यात्मकमतिक्रामति स परममहान्सम्वत्सरात्मकः अणुत्रयेण त्रसरेणुः । सूक्ष्म इति तत्र प्रमाणं महतां स्मरणम् । सतु प्रत्यक्ष इत्याह । जालार्करश्म्यवगत इति गवाक्षमार्गेणान्तः प्रविष्ट सूर्यरश्मिषु अवगतो भवति । अवगतेर्व्यञ्जकद्वयमाह । खमेवानुपतन्नगामिति । न तत्रसरेणवो भूमौ पतन्ति किंतु तस्मिन्नेव रश्मौ आकाशमुत्प्लवमाना गच्छन्ति । एकवचन मेवान्तरभेदव्युदासार्थम् ॥ ५ ॥

त्रसरेणुत्रितयस्य यावान् कालः स त्रुटिसंज्ञो भवति । एव त्रुटिः शतभागो वेधः शतांशो भागः शतशब्दोऽत्र नानापरिमितवाचीत्याह तुशब्दः शतं त्रुटयः एकोवेध इत्यर्थः वेधत्रयं लवः ॥ ६ ॥

निमेष इति । निमेषः त्रिलवकः निमेषत्रयं क्षणः । पञ्च क्षणाः काष्ठा । पञ्चदशकाष्ठाः लघु ॥ ७ ॥

पञ्चदश लघूनि नाडिका नाडिकाद्वयं मुहूर्त्तः । नाडिकाषट्कं प्रहरः सप्तवा । नृणां मनुष्याणां यन्नाडिका घटिकापेक्षया स्थूला तेन कथमपि वृद्धा रात्रिर्दिनं वा तस्य चतुर्थोभागः सप्तनाड्यात्मकः । ह्रासेतु षडनाड्यात्मकः । एवमहो-

द्वादशार्धपलोन्मानं चतुर्भिश्चतुरङ्गुलैः ।
स्वर्णमाषैः कृतच्छिद्रं यावत्प्रस्थजलप्लुतम् ॥ ९ ॥
यामाश्चत्वारश्चत्वारो मर्त्यानामहनी उभे ।
पक्षः पंचदशाहानि शुक्लः कृष्णश्च मानद ॥१०॥
तयोः समुच्चयो मासःपितृणां तदहर्निशम् ।
द्वौ तावृतुः षडयनं दक्षिणं चोत्तरं दिवि ॥११॥
अयने चाहनी प्राहुर्वत्सरो द्वादश स्मृतः ।
संवत्सरशतं नृणां परमायुर्निरूपितम् ॥ १२ ॥

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

द्विपञ्चाशन्नाडिका भवन्ति षष्टिनाडिका वा एवं प्रकारेणा-त्रगणिताः येतु सन्ध्याद्वयपरित्यागेनाहुः तैर्यामाश्चत्वारश्चत्वार इति वक्ष्यमनुसन्धेयम् । अथ यदि प्रातः सन्ध्याचदिवसेरात्राविति । तत्रोभयत्र घटिकाचतुष्टयं न गणितमिति । तथा गणनायां प्रयोजनाभावात् । सन्ध्यासन्ध्यांशव्यतिरेकेण मध्ये धर्मार्थमिति चेत् एवमप्यायुर्निरूपकत्वेन तत्त्यागे प्रयोजनाभावात् तत्र धर्म-करणे आयुर्वर्द्धत इति चेत् । अन्यदा धर्मकरणे आयुर्वृद्धिर्न-स्यात् । उदयास्तमयव्यासाविति विरोधश्च । नच नृणामिति वा-क्यात् पूर्वसन्ध्याकालः देवानाम् पश्चात्तनोऽसुराणामिति एवम-प्यायुः परिमाणार्थं न गन्तव्यम् । धर्मार्थमेव तथा कथन युक्तम् ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

द्वौ परमाणू अणुः स्यात् । त्रयोऽणवस्त्रसरेणुः सतु प्रत्यक्ष इत्याह । जालार्केति गवाक्षप्रविष्टएवार्करश्मिषु खमेवातिलाघवेन अनुपतन् अवगतश्चक्षुषा ज्ञातः नतुगां पृथ्वी मगादितिपाठे तथा भूतश्चलतीत्यर्थः अत्राणुपरमाण्वोः सत्त्वे किं ज्ञापकमिति चेत् त्रसरेणुरेव । तथाहि अवयवानां स्थौल्यप्रचुरत्वं विना अवयवी दृश्यो न भवतीति सर्वत्र नियमः अत्र त्रसरेणोरवयविनः त्रयः स्थूला अणवः एवावयवाः कल्प्या नतु परमाणवस्तेषां स्थौल्या भावात् स्थौल्यमनेक वस्तु घटितत्वमित्यणोः स्थौल्यं परमाणुं विना न सम्भवेदिति परमाणुसिद्धिः । त्रसरेणोर्दृश्य-त्वमवयवस्थौल्यं विना नसम्भवेदित्यणुसिद्धिः । तथा अणोः स्थौल्यार्थं परमाणोर्द्वित्वमेव कल्प्यते नतु त्रित्वचतुष्ट्वादिकं प्रथमोपस्थितेस्तन्त्रत्वादिति न्यायात् । यथा कपिंजलानालभेत तथा प्राचुर्य्यार्थंमणोरपि त्रित्वमेवकल्प्यते तथा युक्तेरिति । त्रसरेणुत्रिकमिति त्रिभिस्त्रसरेणुभिः त्रुटिः । सूच्याभिन्ने पद्म-पत्रे त्रुटिरित्यभिधियते इति । सूर्य्यसिद्धान्तः यावता कालेन पद्मपुष्पपत्रं भिद्यते तावान् कालः त्रुटिरित्यर्थः ॥ ५ ॥

शतं भागाः त्रुटिरूपा यस्मिन् स वेधः इत्यर्थः । तैस्त्रिभिर्लवः ६

ते निमेषाः आम्नाताः कथिताः ताः काष्ठाः ॥ ७ ॥

नाडिका दण्डः ते द्वे नाडिके । षट् सप्त वा नाडिकाः प्रहरः स एव यामोऽपि । दिनस्य रात्रेश्च चतुर्थभागः । ह्रासे षट् वृद्धि-प्रवृत्तौ सप्त । सन्ध्याद्वयघटिकां विनेति ज्ञेयम् । तत्राप्यनियमे वाशब्दः । प्रत्यहं तद्भेदानां गणयितुमशक्यत्वात् ॥ ८ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

अथावान्तरकालपरिच्छेदकाएवादि पदार्थलक्षणपूर्वकमवा-न्तरकालानाह । अणुरित्यादिना । द्वौपरमाणू अणुः स्यात् त्रयः अणवस्त्रसरेणुः सप्रत्यक्ष इत्याह । जालार्करश्म्यवगतः खमेवानुप-पतनादिति ॥ ५ ॥

शतं त्रुटिशतं भागा यस्मिन् सः वेधः तैर्वेधैः ॥ ६ ॥

ताः काष्ठाः पंचदश लघु ॥ ७ ॥

ते नाडिके द्वे मुहूर्तः नाडिकाः षट् सप्तवा प्रहरः सएव यामः अयमर्थः सन्ध्यासंध्याशमुहूर्तद्वयं विनादिनस्य रात्रेश्च ह्रासे तुर्य्यांश भागः षट् नाडिकात्मकः वृद्धौ सप्तनाडिकात्मकः याम इति एत-दपि स्थूलदृष्ट्योक्तं नियमासंभवात् ॥ ८ ॥

---

भाषाटीका ।

दो परमाणू का एक अणु होता है तीन अणुका एकत्र स रेणु होता है जो कि त्रसरेणु झरोखा में सूर्य किरण पडनेसे उपरकूं उडता हुआ दीखपडताहै इनपर माणुआदि का भोगने वाला काल परमाणु आदि काल है ॥ ५ ॥

तीनत्रसरेणु भोगने वाला जो काल सो त्रुटि है सौ त्रुटिका एक वेध होताहै तीनवेधका एक लवहोताहै ॥ ६ ॥

तीनलवका एक निमेषहोताहै तीननिमेषका एक क्षणहोता है पाञ्चक्षण का एक काष्ठा होता है पन्द्रह काष्ठा का एक लघु होताहै ॥ ७ ॥

पन्द्रह लघुका एक नाडिका होताहै दोनाडिका का एक मुहूर्त होताहै छः अथवा सात नाडिका का मनुष्योंका एक पहर होताहै चार प्रहरोंका रात्रि तथा दिन होता है ॥ ८ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

नाडिकाया उन्मानमाह । उन्मीयतेऽनेनेत्युन्मानं पात्रं षट्पलता-म्रविरचितम् पञ्चगुञ्जो माषस्तैश्चतुर्भिश्चतुरङ्गुलायामशलाकारूपेण रचितैः कृतमूलच्छिद्रेण यावत्प्रस्थपरिमितं जलं प्रविशति तेन च प्लुतं निमग्नं भवति तावान् कालो नाडिका अत्र पलच्छिद्रयोः

श्रीधरस्वामिकृत भावार्थदीपिका ।

गाधिक्ये शीघ्रं निमज्जेदल्पत्वे च विलम्बेनेति पलशलाकयो-नियमः ॥ ९ ॥

अहनी अहोरात्रम् ॥ १० ॥

पण्मासा अयनम् दिवीत्यस्योत्तरेणान्वयः ॥ ११ ॥

दिवीति देवानामहोरात्रं प्राहुः द्वादश मासाः ॥ १२ ॥

———

श्रीराधारमणदास गोस्वामिविरचिता दीपिन्याख्या दीपिका टिप्पणी ।

उन्मानं मानज्ञानसाधनं पलमत्र पञ्चटङ्कम् प्रस्थमत्र पञ्चपञ्चविंशतिटङ्कपरिमितसेटकं तत्परिमितं जलं यावता कालेन तस्मिन्पात्रे प्रविशति तेन च जलप्रवेशेन तत्पात्रं निमज्जति तावान् कालो नाडिकेत्यर्थः । रजतादिशलाकया तुच्छिद्रवृद्धि-रस्यादिति स्वर्णनियमोऽपि कृतः ॥ ९ ॥

अहनी इति लिङ्गसमवायन्यायेन द्विवचनमत एवाहोरात्र इति व्याख्यातम् । मानदेति कालश्रवणाऽवधानार्थं सम्बोधनम् ॥ १० ॥

तदिति नित्यं यत्कर्म समय इति वत् विधेयपरामर्शकम् तत्र कृष्णपक्षो दिनं शुक्लपक्षो रात्रिस्तत्र तत्कर्मनिषेधात् कर्कटादिषड्राशिषु सूर्यसंक्रमे षण्मासा दक्षिणायनम् मकरादिषड्राशिषुतत्संक्रमे षण्मासा उत्तरायणम् । तदुक्तं रामदेवज्ञेन सौम्ययाम्यायनं मकरकर्कटयोर्निरुक्तमिति ॥ ११ ॥

दिविचायनेऽहोरात्रे प्राहुस्तत्रोत्तरायणं दिनं दक्षिणायनन्तु रात्रिरिति ज्ञेयम् ॥ १२ ॥

———

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

प्रत्यहं तद्भेदानां गणयितुमशक्यत्वान्नाडिकामानं ज्ञापयितुं प्रस्थलक्षणमाह । द्वादशार्धेति । द्वादशार्द्धपलोन्मानम् उन्मीयतेऽनेन इत्युन्मानं पात्रं तच्च द्वादशपलंद्वादशपलपरिमिनताम्ररचितं षट् पलताम्ररचितमित्येके पञ्चगुञ्जो माषः तैश्चतुरङ्गुलायामशलाकारूपेण रचितैः कृतमूलच्छिद्रं तेन छिद्रेणप्रस्थपरिच्छिन्नजलभरेणान्तर्गतत्वात्प्रस्थशब्दवाच्यं पात्रं जले प्लुतं स्थापितं यावता कालेन निमज्जति सा नाडिकेत्यर्थः माषचतुष्टयमितस्वर्णकृतचतुरङ्गुलसूच्या कृतच्छिद्रमर्धाधिकद्वादशपलपरिमितं प्रस्थपरिमितजलभरेणैव निमज्जत्पात्रप्रस्थं तन्निमज्जनावच्छिन्नः कालः नाडिकेति समुदायार्थः अत्र पलच्छिद्रयोराधिक्ये शीघ्रं निमज्जेदल्पत्वेच विलम्बेनेति पलशलाकयोर्नियमः ॥ ९ ॥

चत्वारश्चत्वारः अष्टावित्यर्थः अष्टौ यामाः मर्त्यानामुभे अहनी अहोरात्रः पञ्चदशाहान्यहोरात्रात्मकान्यहानि शुक्लः कृष्णश्च पक्षः पञ्चदशाहानि शुक्लः पक्षः पुनः पञ्चदशाहानि कृष्णः पक्ष इत्यर्थः ॥ १० ॥

हे मानद ! विदुरनयोः शुक्लकृष्णयोः पक्षयोः समुच्चयः समुदाय एकोमासः नृणामित्यनुषङ्गः पितॄणां विशेषमाह । पितॄणामिति सपूर्वोक्तो मासः पितॄणामहर्निशमहोरात्रः यत्तदोरनियमेनोद्देश्ये विधेयान्यतरलिंगत्वात्तदिति नपुंसकनिर्देशः तौपूर्वोक्तौमासौनृणामृतुः षण्मासास्त्वयनमित्युच्यतेतच्चायनं दक्षिणोत्तरभेदेन द्विविधं षण्मासा दक्षिणायनं पुनः षण्मासाउत्तरायणम् ॥ ११ ॥

देवानाम् विशेषमाह अयने दक्षिणोत्तरायणेदिवि स्वर्गेऽहनीप्राहुः देवानामहर्निशमित्यर्थः द्वादशपूर्वोक्ताः नृणां मासाः द्वादशवत्सरः स्मृतः प्रसङ्गान्नृणामायुः परिमाणमप्याहसंवत्सरशतमिति । स्पष्टोऽर्थः नृणामित्युपलक्षणमन्येषामपि स्वस्वमानेन शतसम्वत्सरमायुर्भवतीत्यर्थः ॥ १२ ॥

———

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

नाडिकावधिं वक्तुं तत्पात्रलक्षणमाह । द्वादशेति । द्वादशार्धैः षड्भिः पलैः कृतमुन्मानमुत्कृष्टमानम् यस्य तत् द्वादशार्धपलोन्मानम् चतुर्भिश्चतुरङ्गुलैः चतुरङ्गुलदीर्घैः स्वर्णमाषैः कृतच्छिद्रं कृतद्वारमेवं रचितं नाडीपात्रं यावत्प्रस्थं जलं पिबेत्तावता कालेन प्रस्थजलं स्थापितं तज्जलं पीत्वा निमज्जति सानाडिकेत्यन्वयः इदमुक्तं भवति चतसृभिः काकिणिकाभिः कृतो विंशांशः तैश्चतुर्भिर्युतो माषश्चतुरङ्गुलदीर्घे माषचतुष्टये कृते सति यावान्परिणाहः स्यात्तावता तत्कृतद्वारचतुष्टयेन षट्पलरूपं नाडीपात्रमतिशैत्यकलङ्कमान्द्यादिदोषवर्जितं निर्मलं समोष्णं नित्यं सूर्यरश्मिसुतप्तं प्रवाहगतं वसन्तकालीनं प्रयागगतं वा जलं पिबति स कालो नाडिकेत्युच्यते तदुक्तम् ।

काकिणिकाचतुष्कं च विंशांशेत्याभिधीयते ।
कृष्णलेत्थापितं ब्रूयुस्तैश्चतुर्भिस्तु माषकः ।
चतुरङ्गुलदीर्घे तु कृते माषचतुष्टये ।
यावान्स्यात्परिणाहेन तावद्द्वारं विधीयते ।
प्रस्थस्य नाडीपात्रस्य षट्पलस्य शुभे जले ।
भागाधिक्येनोदकेन क्षिप्रं पूर्तिर्भविष्यति ।
अतिशैत्यकलङ्के च मान्द्येनैव तु पूरणम् ।
तस्माद्वसन्तकाले च प्रयागस्थोदकेन च ।
नाडीशुद्धिः परीक्षा स्यादन्यथा नैव संभवेदिति ।
निर्मलेन समोष्णेन नित्यं सूर्यांशुवारिणा ।

प्रवाहगेन कार्यास्यात्कालशुद्धिः सदैवत्विति च ॥ ९ ॥

उभे अहनी अहोरात्रे अहनीत्युक्तेऽह्नो द्वित्वं रात्रिर्नेत्यवसीयत उभेइति यत्रोभयोः सशब्दः स्यात्तत्त्द्विवचनेऽप्युभ इत्यभिधानात् ॥ १० ॥

उत्तरलिङ्गापेक्षया तदित्युक्तं समनुष्यमासः पितॄणामहोरात्रे तौ द्वौ मासावृतुः षट् ऋतवो दक्षिणायनमुत्तरायणमिति संज्ञिताः ॥ ११ ॥

दिवि स्वर्गे देवानां द्वे अयने अहनी अहोरात्रे रात्रिक्रियाभवात्रिरप्यहःशब्देनोच्यत इत्यहनीइत्युक्तं मानुषद्वादशमासावत्सरः ॥

———

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

अहर्त्वीति सूर्यगतिमात्रकथनं नतु कालावसानतात्पर्यं सम्वत्सरस्य परममहत्त्वायोगात् ॥ १२—१५ ॥

———

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

किंच यदि वक्ष्यमाणं प्रमाणं साम्प्रतनाडीपरिमाणमेव स्यात् दैवं कल्पनमुचितं वर्त्तेत स्विदं परिमाणं तदर्थं मानमाह द्वादशार्द्धपलोन्मानमिति । द्वादशार्द्धमुभयज्ञानेन्यूनाधिकभावं वुध्येत इति तुल्यज्ञानार्थं द्वादशार्द्धेना उक्ता पलं सुवर्णाश्चत्वारः सुवर्णः षोडशमाषं पञ्चगुञ्जापरिमितोमाषः । गुंजाच त्रियवा द्वादशार्द्धपलेन ताम्रेण पात्रं विधाय स्वर्णशलाकाचतुष्टयमिलितेन मध्ये छिद्रं कर्त्तव्यम् तेच स्वर्णमाषाश्चतुरङ्गुलाः चतुर्विंशतिस्तिलानां चतुर्गुणादीर्घाः तदाह । स्वर्णमाषैश्चतुर्भिश्चतु

**ग्रहर्क्षताराचक्रस्थः परमाण्वादिना जगत् ।**
**संवत्सरावसानेन पर्येत्यनिमिषो विभुः ॥ १३ ॥**

### श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

खैरिति । यावत्प्रस्थं जलं तत्र माति तावति प्रविष्टे प्लुतं भवति ॥९॥

एवं नाडिकापरिमाणमुक्त्वा तत ऊर्ध्वकालपरिमाणमाह । यामाश्चत्वार इति । चत्वारोयामा अहः पुनश्चत्वारोयामा रात्रिरिति ज्ञापयितुं द्विरुक्तिः । अहनी रात्रिंदिवम् उभे इति आवृत्तिव्युदासार्थम् । एवमुभयं मिलित्वा एकमहः पञ्चदशाहानि पक्षः सपक्षो द्विविधः । शुक्लः कृष्णश्चेति रात्रिमुखे चन्द्रदर्शनयुक्तः शुक्लः । रात्रिमुखे चन्द्राभावयुक्तः कृष्णः मानदेति सम्बोधनं श्रुत्वैव वचनान्यागच्छतीति गुरोर्मानदाता । पञ्चदशाहानीति कलाभिप्रायम् ॥ १० ॥

तयोः समुच्चय इति । तयोः समुच्चयो मेलनं मासः । स उभयविधो भवतीति द्वयमप्यस्याभिप्रेतम् । पितृणां तदहर्निशमिति चन्द्रस्य पञ्चदशकलासु यदा प्रविशति तदा रात्रिः चन्द्रेण व्यवधानात् यदा ततोऽपगच्छति तदा दिनम् । पितरोहिजलकृतमेव व्यवधानं सूर्यस्य मन्यन्ते नतुपृथ्वीकृतम् । यथाऽस्माकं चन्द्रे विद्यमानेऽविद्यमानेवा सूर्योदयास्तमयाभ्यामेव रात्रिदिनव्यवस्था । तथा तेषां सूर्यस्थितिरप्रयोजिका । चन्द्रकलासु प्रवेशनिर्गमावेव प्रयोजकौ । प्रवेशएव कलोत्पत्तिर्निर्गमएव कलाक्षयः निर्गमोदिनमिति अमावास्यायां महद्दिनं तेषां भोजनकालो भवति पौर्णमास्यान्तु तृप्ताः शेरतइति तेषां दिनरात्रिव्यवस्था । एवं मासद्वयमृतुः षण्मासास्त्वयनं द्वादशमासाः सम्वत्सरइति अयनद्वयं सम्वत्सरः तयोर्नाम दक्षिणं चोत्तरमिति । दक्षिणायनमुत्तरायणंचेत्यर्थः ॥ ११ ॥

तदयनद्वयं दिवि स्वर्गे अहनी प्राहुः दक्षिणायनं रात्रिः उत्तरायणमहः स्वर्गस्थाः तेजः कृतमेव व्यवधानं सूर्यस्य मन्यन्ते न चन्द्रकृतं नापि पृथिवीकृतं तत्र नक्षत्राणि तेजः शब्देनोच्यन्ते तत्रोत्तराषाढा उत्तरायणादिवसस्यारुणोदयः तस्य पादे उपभुक्ते सूर्योदयो भवति तदा भवति मकरः पुनर्वसु पादत्रयपर्यन्तंदिनं एतानि नक्षत्राणि मालाकारेण वर्तन्ते । अन्योऽन्यसन्मुखानि तेषु परभागे पूर्वभागे वा स्थिताः अर्द्धंपश्यन्त्यर्द्धेन । यथा द्विगुणे वस्त्रे । चित्रार्द्धमेवैकत्रस्थिताः पश्यन्ति । तथा देवानामपि पुनर्वसुपादमारभ्य उत्तराषाढापादपर्यन्तं नक्षत्राणि व्यवधायकानि सर्वाण्येतान्युपरिमुखानि मालारूपेण च वर्तन्ते । अतो दक्षिणायननक्षत्राणि यदा सूर्यसहितानि भवन्ति तदोभयनक्षत्राण्यपि अधोमुखानि भवन्तीति सूर्यस्तैर्नदृश्यतएव । प्राहुरिति प्रमाणं द्वादश मासा वत्सरः । अत्रापि स्मृतइति प्रमाणं सम्वत्सरशतं तु नृणां परमायुः अवृद्धिक्षये एकेन सम्वत्सरेणएकमायुः कालेनोपभुक्तं भवति "शतायुर्वैपुरुष" इति श्रुतेः । धर्मेतु क्रियमाणे कालेनायुर्भोगः प्रतिबध्यते तदा शतसम्वत्सरादप्यधिकं जीवति पापेतु क्रियमाणे पापमप्यायुरुपभुङ्क्ते कालोऽपि सच्चेत्पापं कालसमानं भवति । उत्कृष्टंचेत् भूयसः आयुषः क्षयः । उत्कृष्टपापे बहुजन्मजनके बीजपातक्षणमारभ्य पञ्चविंशति वर्षपर्यन्तं नानाविधा योनयः प्राप्यन्ते न तेन शतायुः श्रुतिभङ्गः निरूपितमिति प्रमाणम् ॥ १२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

नाडिकाया उन्मानमाह । उन्मीयतेऽनेनेत्युन्मानं षट्पलताम्ररचितं पात्रं चतुःषष्ट्या माषैः पलं भवति । पञ्चगुञ्जा माषः तैश्चतुर्भिश्चतुरङ्गुलायामशलाकारूपेण रचितैः कृतमूलच्छिद्रं तेन छिद्रेण यावत्प्रस्थपरिमितं जलं प्रविशति । तेन च प्लुतं निमग्नं भवति । तावान् कालो नाडिका अत्र पलच्छिद्रयोराधिक्ये शीघ्रं निमज्जेत् अल्पत्वे च विलम्बेनेति पलशलाकयोर्नियमस्तत्रापि रजतादि शलाकया छिद्रपुष्टिः स्यादिति स्वर्णस्यापि नियमः ॥ ९ ॥

अहनीअहोरात्रौ ॥ १० ॥

ते अयने दिवि देवानामहनी अहोरात्रौ द्वादश ॥ ११ ॥

मासा वत्सरः ॥ १२ ॥

---

### श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

द्वादशार्द्धपलोन्मानं षट् पलपरिमितताम्रमयं उन्मीयतेऽनेनेत्युन्मानं पात्रम् चतुरङ्गुलैश्चतुरङ्गुलायामसूचीरूपेण विरचितैः चतुर्भिः स्वर्णमाषैः कृतच्छिद्रं विरचितमूलच्छिद्रम् तेन च्छिद्रेण यावत्प्रस्थजलंप्लुतं भवति तावान्कालो नाडिका ॥ ९ ॥

चत्वारश्चत्वारः अष्टौ यामाः उभेअहनी अहोरात्रे ॥ १० ॥

द्वौमासौ ऋतुः षण्मासाः अयनम् दिवीत्युत्तरेण सम्बध्यते॥११॥

दिवि देवलोके अयने अहनी प्राहुः । द्वादश मासाः वत्सरः । स्मृतः ॥ १२ ॥

---

### भाषाटीका ।

छः पलभर ताँवा की सेरभर जल भरने लायक कटोरी वनाकर चौसठ मासा भर सुवर्ण से चार अंगुल की शलाका वना कर उस कटोरी में छिद्र करै फिर उस कटोरी को माठ में जल भरके तिरावै तव उस कटोरी के डूवने से एक घडी वखत वीता जानै ॥ ९ ॥

पहले कथन कि ये चार चार पहरों में मनुष्यों के रात और दिन होते हैं ऐसे पन्द्रह अहो रात्र का एक पक्ष होता है उसमें एक कृष्ण एक शुक्ल है ॥ १० ॥

उन दोनों पक्षों का एक मास होता है सो पितरों का अहो रात्र है उन दो मासों का एक ऋतु होता है छः महिनों का एक अयन होता है तिसमें एक उत्तरायण एक दक्षिणायन है ॥ ११ ॥

ए दोनों अयन देवतों के दिन रात हैं इन वारा महिनों का एक वर्ष होता है ऐसे सौ वर्ष मनुष्यों का परम आयु निरूपण करी गई है ॥ १२ ॥

---

### श्रीधरस्वामिकृत भावार्थदीपिका ।

अनेन क्रमेणासौ सूर्यो नित्यमायुः क्षपयतीत्याह । ग्रहाश्चन्द्रादयः ऋक्षाण्यश्विन्यादीनि तारा अन्यानि नक्षत्राणि तदुपलक्षितं यत्कालचक्रं तत्र स्थितोऽनिमिषः कालात्मा विभुरीश्वरः सूर्यो जगद्द्वादशराश्यात्मकं भुवनकोशं पर्येति पर्यटति ॥ १३ ॥

संवत्सरादिभेदश्च सौरबार्हस्पत्यसावनचान्द्रनाक्षत्रमासभेदेन

संवत्सरः परिवत्सर इडावत्सर एव च ।
अनुवत्सरो वत्सरश्च विदुरैवं प्रभाष्यते ॥ १४ ॥
यः सृज्यशक्तिमुरुधोच्छ्वसयन् स्वशक्त्या पुंसोऽभ्रमाय दिवि धावति भूतभेदः ।
कालाख्यया गुणमयं क्रतुभिर्वितन्वंस्तस्मै बलिं हरत वत्सरपञ्चकाय ॥ १५ ॥

विदुर उवाच ।

पितृदेवमनुष्याणामायुः परमिदं स्मृतम् ।
परेषां गतिमाचक्ष्व ये स्युः कल्पाद्बहिर्विदः * ॥ १६ ॥

### श्रीधरस्वामिकृत भावार्थदीपिका ।

द्रष्टव्यः केचित्पुनरेवमाहुः यदा शुक्लपक्षप्रतिपदि संक्रान्तिर्भवति तदा सौरचान्द्रमासयोर्युगपदुपक्रमो भवति स संवत्सरः ततःसौरमानेन वर्षे षट् दिनानि वर्धन्ते चान्द्रमानेन वर्षे षट् दिनानि ह्रसन्तीति द्वादशदिनव्यवधानादुभयोरग्रपश्चाद्भावो भवति एवं व्यवधानतारतम्येन पञ्च वर्षाणि गच्छन्ति तन्मध्ये द्वौ मलमासौ भवतः पुनः षष्ठः संवत्सरो भवति ॥ १४ ॥

एवं भूतः कालात्मा नित्यमप्रमत्तैः पूजनीय इत्याह । य इति । सृज्यं कार्यमङ्कुरादि तद्विषयां बीजादीनां शक्तिं कालरूपया स्वशक्त्या बहुधोच्छ्वसयन् कार्याभिमुखीं कुर्वन् दिव्यन्तरिक्षे धावति कोऽसौ भूतभेदो महाभूतविशेषस्तेजोमण्डलरूपी सूर्यः किमर्थं धावति पुंसः पुरुषस्याभ्रमाय भ्रमो मोहस्तन्निवृत्तये आयुरादिव्ययेन विषयासक्तिं निवर्तयन्नित्यर्थः सकामानां तु गुणमयं स्वर्गादिफलं क्रतुभिर्विस्तारयन् तस्मै सम्वत्सरपञ्चकप्रवर्तकाय पूजां कुरुत १५॥

इदं स्वस्वमानेन वर्षशतं गणितमायुर्मानम् प्रत्यहं कल्प्यते सृज्यत इति कल्पस्त्रैलोक्यं तस्माद्बाह्यतः विदो ज्ञानिनः ॥ १६ ॥

---

### श्रीराधारमणदास गोस्वामिविरचिता दीपिन्याख्या दीपिका टिप्पणी ।

परमाण्वादिर्यस्य सम्वत्सरश्चावसानं यस्य तेन कालेन १३

तत्र सूर्य्यसंक्रान्तिरूपो मासस्सौरस्तन्मानेन द्वादशमासाः सम्वत्सरः यावता बृहस्पतिरेकस्मिन् राशौ चरति तस्य द्वादशो भागः बार्हस्पत्यमासस्तन्मानेन द्वादश मासाः परिवत्सरः कुषीदवृत्त्या व्यवहियमाणस्त्रिंशद्दिनात्मको मासः सावनसंज्ञकस्तन्मानेन द्वादशमासाः इडावत्सरः दर्शावधिर्मासश्चान्द्रस्तन्मानेन द्वादश मासा अनुवत्सरः इन्दोस्सप्तविंशति नक्षत्र भ्रमणात्मको मासो नाक्षत्रमासस्तन्मानेन द्वादशमासा वत्सर इति वत्सरपञ्चकम् तदुक्तं ज्योतिषरत्नमालायाम् दर्शावधिं मासमुशन्ति चान्द्रं सौरं तथा भास्करराशिचारात् त्रिंशद्दिनं सावनसंज्ञमाहुर्नाक्षत्रमिन्दोर्भगणभ्रमाच्चेति ततः युगपन्मासारम्भात् उभयोः सूर्य्यचन्द्रयोः व्यवधानतारतम्येनेति प्रथमवत्सरे द्वादसदिनव्यवधानं द्वितीये चतुर्विंशतिदिनव्यवधानम् तृतीये षट्त्रिंशद्दिनव्यवधानम् चतुर्थेऽष्टचत्वारिंशद्दिनव्यवधानम् पञ्चमे षष्टिदिनव्यवधानम् एवं व्यवधानपञ्चकप्रयुक्ता सम्वत्सरादिपञ्चसंज्ञाइति पक्षान्तरं व्याख्यातम् तन्मध्ये वत्सरपञ्चकमध्ये ॥ १४ ॥

बीजादीनां कारणानां शक्तिं कार्य्यसूक्ष्मावस्थाम् अङ्कुरादेः सूक्ष्मस्थूलादिविशेषस्य प्रतिव्यक्ति भेदात् बहुधेत्युक्तम् बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वं महाभूतत्वम् ॥ १५ ॥

स्वस्वमानेन यथास्वं पूर्वोक्तकालगणनात्मकेन परेषां ब्रह्मसनकादीनाम् गतिं स्थितिमायुरित्यर्थः ॥ १६ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

अनेन क्रमेण सूर्योनित्यमायुः क्षिपतीत्याह । ग्रहर्क्षेति । अनिमिषः नित्यजागरूकः विभुः सूर्यः ग्रहर्क्षताराचक्रस्थः ग्रहाश्चन्द्रादयः ऋक्षाण्यश्विन्यादीनि तारा अन्यानि नक्षत्राणि तदुपलक्षितं यत्कालचक्रं तत्स्थितः जगद्द्वादशराश्यात्मकम् भुवनकोशं परमाण्वादिना संवत्सरान्तेन कालेन पर्येति पर्यटति ॥ १३ ॥

उक्तस्यैतत्सर्वात्मककालचक्रस्य सूर्यादिगतिभेदेन नामभेदमाह । संवत्सर इत्येकेन । आदित्यगत्यासम्वत्सरः त्रिंशद्दिवसैं मांसैर्मासैरादित्यगतिविशेषादिडावत्सरः चान्द्रनक्षत्रगतिभ्याम् अनुवत्सरवत्सरावित्येवं प्रभाष्यते कथ्यते ॥ १४ ॥

एवं सूक्ष्मत्वेन स्थूलत्वेनच सर्वस्यावच्छेदकत्वेनच स्वरूपम् निरूप्य उक्तविधकालशरीरकस्याकाल्यस्य सूर्य्यात्मनः परमात्मनः उपासनंकाल्यत्वमिच्छद्भिः कर्तव्यमित्याह । य इति । भूतानि भिनत्तीति भूतभेदः भूतविकारकृत्परमात्मा कालाख्यया स्वशक्त्या स्वतन्वा सृज्यानां कर्मशक्तीः परिणमयन् पुंसो जीवस्याभ्रमाय भ्रमो मोहस्तन्निवृत्तये तत्तत्कालानुष्ठेयधर्मविषयं मोहं निवर्तयितुमित्यर्थः क्रतुभिः साध्यं यद्गुणमयं सत्त्वादिगुणभेदेन त्रिगुणात्मकं फलं विचिन्वन्विस्तारयन् दिव्यन्तरिक्षे धावति सूर्यान्तर्वर्त्ती भूत्वा पर्यटति तस्मै सूर्यशरीरकाय वत्सरपञ्चकाय पूर्वोक्तसंवत्सरादिपञ्चकात्मने बलिं हरतपूजांकुरुत १५

एवं कालस्वरूपे आयुः परिमाणे कालस्य नियन्तुः सूर्यान्तरस्योपासने च कर्तव्येऽभिहितेऽपि नृणान्तदहर्निशं द्वि अयनेऽहनी प्राहुः सम्वत्सरशतं नृणाम् परमायुर्निरूपितमिति त्रैलोक्यान्तर्वर्तिना मेवपितृदेवमनुष्याणामायुः परिमाणं कथितं त्रैलोक्याद्बहिः स्थितानां तु कियदायुः परिमाणमिति बुभुत्सुः कथां पृच्छति विदुरः पितृदेवमनुष्याणां परमायुरिदं स्वस्वमानेन वर्षशतं स्मृतं परेषां गतिमायुर्मानमाचक्ष्व ते के इत्यत आह । कल्पात्कल्पस्थात्त्रैलोक्याद्बहिर्येस्युः सन्तीति विदुः तेषामित्यर्थः विद इति पाठान्तरन्तत्रकल्पाद्बहिर्भूता ये ज्ञानिनस्तेषामित्यर्थः ॥ १६ ॥

---

* विदुरिति वीरराघवपाठः ।

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

सूर्यादिनवग्रहाणामश्विन्यादि नक्षत्राणां ध्रुवादितारकाणाम् चक्रस्थो मंडलस्थप्राणिनां पुण्यपापकर्मदर्शनादनिशं मिषणाद्व-मनाद्वा धिकसनाद्वा मिषगतौ विकासे चानिमिषो विभुः परमाणवादिसंवत्सरावसानेन कालेन पर्येति जगदिति शेषः

सर्वदा दर्शनात्तस्य निमिषत्वं विदुर्बुधाः ।
सततं गमनाद्वापि कालस्थस्य महात्मन

इति अनेनापि मुख्यतः कालशब्दवाच्यो हरिरिति सिद्धम् ॥१३॥

तत्तत्संज्ञकालस्थत्वेन तन्नियन्तृत्वेन तत्तन्नामधानित्याह । संवत्सर इति । सौरद्वादशमासाः सङ्क्रमणावसानास्तेषु द्वादशसु मासेषु स्थितः सम्वत्सरः द्वादशराशिषु वृहस्पतेरावृत्त्या यः कालः तस्य द्वादशमे भागे यस्तिष्ठति स परिवत्सराख्यः सप्तविंशन्न-क्षत्राणि तद्द्वादशमासेषु स्थित इडावत्सरनामा तिथीनां द्वादशावर्तो यो द्वादशमासरूपस्तत्र स्थितो हरिरनुवत्सरः अह्नां षष्ट्युत्तर शतत्रयात्मकद्वादशमांशेषु स्थितो हरिर्वत्सरनामा कालान्तर्यामी हार रेवं रूपोभाष्यतइत्यन्वयः तदुक्तम्।

इडावत्सरनामास नक्षत्रद्वादशेस्थितः ।
तिथीनां द्वादशावर्ते योहरिःसोऽनुवत्सरः ।
वत्सरो यः स्थितस्त्वह्नां षष्ट्युत्तरशतत्रये ।
गुर्वावर्तद्वाशांशे यः स्थितः परिवत्सरः ।
सौरद्वादशमासेषु यत्स्थः सम्वत्सरो हरिः ।
एवं सकालनामापि कालस्थः परमेश्वर ।

इति स्मृतिसिद्धत्वादिदं ग्राह्यम् ॥ १४ ॥

वत्सरादिनामकरणप्रयोजनमाह । य इति । यः कालान्तर्यामी हरिः क्रतुभिः स्वप्रज्ञाभिः स्वेच्छानुरूपाभिः कालाख्यया स्वशक्त्या प्रकृत्य गुणमयीं सत्त्वादिगुणविकाररूपां सृज्यशक्तिं स्रष्टव्यपदार्थ-विषयां प्रकृतिमुरुधोच्छ्वसयन् जृम्भयन् पदार्थान् वितन्वन् विस्तारयन् पुंसो ऽभ्रमायाज्ञाननिवृत्तये भूतानां भेदो ज्यैष्ठ्यकानिष्ठ्य-विवेकज्ञानं यस्मात्स तथोक्तः

भूतानां ज्यैष्ठ्यकानिष्ठ्यज्ञप्त्यै यज्ञादि वृत्तये ।
वोभ्रयन् सृज्यशक्तिं च कालस्थो वर्तते हरिरितिंच।

दिवि व्योम्नि धावति सूर्यस्थो भूत्वा वेगेन गच्छति तस्मै वत्सर-पञ्चकाय सम्वत्सरादिपञ्चकान्तर्यामिणे वलिं हरत कुरुतेत्यन्वयः अनेकार्थत्वाद्धातूनाम् ॥ १५ ॥

विदुरउक्तार्थमनूद्य वक्तव्यार्थं विज्ञापयति पितृदेवेति ये विदो ज्ञानिनः कल्पात् लोकत्रयात् वहिर्महर्लोकादिषु वर्तमानाः स्युस्तेषां परेषामुत्तमानां गतिं स्थितिमाचक्ष्वेत्यन्वयः ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

पित्रादीनामायुरिदमिति तदेतद्यथास्वं पूर्वोक्तकालगणनात्मकमित्यर्थः । शतन्तु नृणामेव । पूर्वं नृणां पितृणां देवानाञ्चकालसंख्यानमुक्त्वा सम्वत्सरशतं नृणां परमायुर्निरूपितमिति निर्द्धारितत्वात् । इन्द्रादीनां मन्वन्तरस्थायिनामधिकपरिमाणप्राप्तेश्च परेषां ब्रह्मसनकादीनां कल्पाद्ब्रह्मदिनाद्बहिर्येस्युः जीवन्ति ॥ १६ ॥ १७ ॥

---

श्रीमद्वल्लभाचार्यकृत सुवोधिनी ।

एवं कालं निरूप्योपसहरति । ग्रहर्क्षताराचक्रस्थइति । ग्रहा वुधादयः ऋक्षाणि अश्विन्यादयः ताराअन्याः तेषां चक्रस्भचक्रं तत्र विद्यमानः सूर्यः तत्रस्थपरमाणुदेशमारभ्य सम्वत्सरावसानपर्यन्तं पर्येति पुनःपुनर्मण्डलाकारेण परिभ्रमति । अनिमिषः पर-श्रसने सावधानः । विभुः समर्थः जगत्पर्येति उपभुङ्क्ते ॥ १३ ॥

तस्य सम्वत्सरात्मकस्य केन चिन्निमित्तेन पञ्चनामानि सन्ति तान्युपासनार्थमाह । संवत्सरइति । मासाः पञ्चविधाः संवत्सरसमाप्ति सूचकाः द्वादश मासाः संवत्सरः त्रयोदशमासाः संवत्सर इतिब्राह्मणं त्रयोदशमासाः संवत्सर इति नाक्षत्रे नियतं चान्द्रे कादाचित्कम् द्वादशमासाः संवत्सरइति सौरे नियतं चान्द्रेकादाचित्कं वार्हस्पत्ये तु प्रभवादयस्ते नियताः वैष्णवोऽपिनियतः सावनस्तु न नियतः प्रतिदिनपर्यवसायित्वात अतः संवत्सरप्रयुक्त्या प्रभवादिनामसिध्यर्थंवार्हस्पत्यमानमप्यपेक्ष्यते व्रतादि सिद्धयर्थ मेकादश्याद्यपि मासो वैष्णवः अन्यथा भगवतः शयनं रात्रौ भागद्वये न स्यात् सावनस्तु व्यवहारसिद्धः न श्रुतिपदवीमुपारोढुमर्हति अतः पञ्चैव संवत्सराःतत्र चान्द्रःसंवत्सरःपरिवत्सरोवैष्णवःइडावत्सरः सौरः अनुवत्सरोनाक्षत्रः वत्सरो दैवः विदुरेति सम्वोधनं स्नेहेन परिज्ञानार्थं यद्यप्येकएव कालः सर्वेषां न संवत्सरभेदेन आवृत्त्या तथापि नामान्येव पञ्चेति एवं परिभाष्यत इत्युक्तं केचित्तु षष्टि सम्वत्सराः मासत्वेन परिवृताः द्वादशधा परिवर्तमानाः पञ्चवत्सरात्मका भवन्तीति आहुः प्रभवादिवहुधान्यान्ताः सम्वत्सरशब्दवाच्याः प्रमाथ्यादयः द्वादश द्वादश उत्तरशब्दवाच्या इति तत्र मासादीनां नियामकत्वाभावात् चिन्त्यम् ॥ १४ ॥

एवं कालस्य भेदत्रयमुपपाद्य तत्रोपासनमाह फलार्थम् । यः सृज्य इति । यः सृज्यशक्तिमुरुधोच्छ्वयन् स्वशक्त्या पुंसोऽभ्रमाय दिविधावति भूतभेदः फालस्य प्रयोजनं वदन् भजनमुपपादयितुं माहात्म्यमाह । यः सृज्येषु अङ्कुरादिषु वीजादिस्थितां शक्तिं उरुधाउच्छ्वसयन् पत्रकाण्डादिभेदेन वीजसामर्थ्यम् प्रकटयन् स्वस्य शक्त्या किरणादिस्थितसामर्थ्येन प्रतिक्षणं प्रकार-भेदजनकेन वीजशक्तिं प्रकटीकुर्वन् पुंसोऽधिकारिणः अभ्रमाय वैराग्यार्थं दिवि स्वर्गे धावति परिभ्रमति धावतीत्यनेन क्षणमात्रमपि पारलौकिकयज्ञं विना न स्थातव्यमिति ज्ञापयति ननु धावनेन कथमेवं भवतीत्याशङ्क्याह । भूतभेदइति । भूतानां भेदोयत्र सोऽह कालः सर्वाणि भूतानि भिनत्ति अतः स्वस्यापि भेदशङ्कया वैराग्यजनकत्वम् स्वशक्त्येत्यत्र 'यदादित्यगतन्तेज' इति वाक्यात् भगवच्छक्तिर्भविष्यतीत्याशङ्क्य तन्निवृत्त्यर्थमाह । कालाख्ययेति । कलयत्याकलयतीति कालः आख्या यस्य तत्र प्रकाशकत्वेनैव भगवत्तेजः प्रतिष्ठितमिति कालद्वारैवैयं भगवच्छक्तिः एवं साधनेसामर्थ्यमुपपाद्य फले सामर्थ्यमुपपादयति गुणमयं क्रतुभिर्वितन्वन्निति । गुणमयमानन्दमयं स्वर्गोहि "आनन्दादयः प्रधानस्य" इतिन्यायात् आनन्दादयएव गुणाः तन्मयाः स्वर्गादयः क्रतवोऽपि कालभेदा एव अतः क्रतुभिः स्वर्गादिकम् वितन्वन् नह्यधिष्ठातृव्यतिरेकेण यागादयः प्रकटीभवितुमर्हन्ति स्वर्गोवा प्रकटीभवितुमर्हति सोऽपिभगवदंशश्चेतनः देवेभ्योऽपिस्वर्गोलोकस्तिरोऽभवदित्यत्र निर्णीतः एवं फलसाधकंप्रवर्तकोभगवान् वत्सरपञ्चकप्रवर्तकः तादृशाय कालात्मने सूर्याय वलिं हरत तदुपार्जितान्नभोक्तारः तदुपार्जितस्वर्गभोक्तारश्च अन्यथा कृतघ्नता स्यात् भोगश्च नासिध्येत् येनैवोपायेन भोगः सिद्ध्यति कालोवा न ग्रसति सच प्रीतोभवेत्तथोपायः कर्तव्यः अहरहरुपासनं कर्तव्यमितिसिद्धम् ॥ १५ ॥

एवं त्रिविधकालं निरूप्य तूर्ष्णीं भावे आयुः प्रतिपादकत्वेन तदुपपादितं निरूप्य विशेषं प्रष्टुमाह । पितृदेवमनुष्याणामिति ।

भगवान् वेद कालस्य गतिं भगवतो ननु ।
विश्वं विचक्षते धीरा योगराद्धेन चक्षुषा ॥ १७ ॥
मैत्रेय उवाच !
कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् ।
दिव्यैर्द्वादशभिर्वर्षैः सावधानं निरूपितम् ॥ १८ ॥

**श्रीमद्वल्लभाचार्यकृत सुबोधनी**

आयुरायुः परिमाणम् परं पर्यवसितं परेषां कल्पवासिनां येक-ल्पान्तरेऽप्युत्पन्नाः कल्पसमाप्तावपि अनुवर्तन्ते तेषां गतिं दिन-रात्र्यवस्थाम् तत्र तेषां कृत्यं वा आचक्ष्व केचन कल्पान्त-मेव तिष्ठन्ति तेषां कल्पस्यैवायुष्ट्वं ततोऽपि ये कल्पात् वहिर्जीव-न्त जीवने हेतुर्विद इति ज्ञानिनः एव बहुकल्पजीविनः ॥१६॥

---

**श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।**

तच्च नृणामायुरुदयास्तमयाभ्यां सूर्य्यो हरतीत्याह । ग्रहा-श्चन्द्रादय ऋक्षाण्यश्विन्यादीनि तारा अन्यानि नक्षत्राणि तेषां चक्रेमण्डले तिष्ठतीति ज्योतिश्चक्रस्थ इत्यर्थः । अनिमिषः काल-स्वरूपः विभुरीश्वरांशः पर्य्येति परिक्राम्यति ॥ १३ ॥

ग्रहर्क्षतारा चक्रस्थ इत्युक्तमतः सूर्य्यगता ग्रहादीनामपि गत्या वर्षस्य नामभेदानाह । सम्वत्सर इति । सौरगत्या परिवत्सर इति । वार्हस्पत्यगत्या अनुवत्सर इति । चान्द्रगत्या । ऋक्षताराणां स्वतो गत्यभावात् चक्रगतिरेव गतिरिति तत्रापि ऋक्षाणां सप्त विंशतिदिनमानैर्मासैर्द्वादशभिर्वत्सर इति । ताराणां संख्याभावात् त्रिंशद्दिनप्रमाणैः सावनैर्मासैरिडावत्सर इति ज्ञेयम् ॥ १४ ॥

किमर्थमिदं वत्सर भेदकल्पनमितिचेत् तत्तद्वर्षे विहितधर्म्मा-दिसिद्ध्यर्थमित्याह । य इति । मृज्यानामुद्भिज्जादीनां शक्तिमङ्कुरादौ सामर्थ्यं स्वशक्त्या कालरूपया उरुधा उच्छ्वसयन् प्रकाशयन् दिवि अन्तरिक्षे धावति कोऽसौ भूतभेदः महाभूतविशेषस्तेजोमण्डलरूपी सूर्य्यः किमर्थं धावति पुंसः पुरुषस्य अभ्रमाय दिङ्मोहादिनिवृ-त्त्यै सकामानां गुणमयं स्वर्गादिफलं संवत्सरादिर्विहितकर्म्म-कालज्ञापनया क्रतुभिरनुष्ठेयैः तस्मात्स्मै वत्सरपञ्चकप्रवर्त्तकाय वलिमर्घ्यादिपूजोपहारं दत्त । हे धार्मिकलोकाः ॥ १५ ॥

इदं स्वस्वमानेन वर्षशतं ये विदो विद्वांसः कल्पादैनन्दि-नाद्वहिःपरत्रापि तिष्ठन्तितेषां सनकादीनां भृग्वादीनाञ्च गति-मायुः ॥ १६ ॥

---

**श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।**

परमाण्वादिसंवत्सरान्ताः कालभेदाः सूर्यपर्यटनकृता इत्याह । ग्रहेति । ग्रहाश्चन्द्रादय ऋक्षाण्यश्विन्यादीनि तारा अन्यानि ऋक्षाणि तदुपलक्षितकालचक्रस्थः अनिमिषः अनिद्रः विभुः महाप्रभः भास्करःजगत् द्वादशराश्यात्मकं भुवनकोशं परमाण्वादिना संवत्सरा-न्तेन कालेन पर्य्येति ॥ १३ ॥

प्रसंगात्संवत्सरभेदानाह । संवत्सर इति । हे विदुर ! संवत्सरः सौरः परिवत्सरः वार्हस्पत्यः इडावत्सरः सावनः अनुवत्सरः चान्द्रः वत्सरः नाक्षत्रः इत्येवं प्रभाष्यते सूर्यादिगतिविशेषात् कथ्यते ॥ १४ ॥

प्रसंगात् सूर्यान्तर्याम्युपासनामाह । यः भूतानि भिनत्ति इदं स्थावरमिदंजङ्गममित्येवं तत्तद्रूपेण पृथक् पृथक् प्रकाशयतीति भूतभेदः भगवान् सूर्यान्तरात्मा यः दिवि अन्तरिक्षे धावति तस्मै वत्सरपञ्चकप्रवर्तकाय वलिं हरत पूजां कुरुत किंकुर्वन्धावति कालाख्यया स्वशक्त्या मृज्यानामुद्भिज्जादीनां शक्तिम् उरुधा उच्छ्वसयन् कार्य्याभिमुखीं कुर्वन् कस्मै प्रयोजनायच धावति पुंसो मुमुक्षोः अभ्रमाय मोक्षाय मुमुक्षोस्तुगुणमयं स्वर्गादिफलं क्रतुभि विस्तारयन् ॥ १५ ॥

कल्पं कल्पस्थायित्रैलोक्यं तस्माद्बहिर्वाह्यतो विदोज्ञानिनः तेषां गतिमायुर्मानमाचक्ष्व ॥ १६ ॥

---

**भाषाटीका ।**

चन्द्रादि ग्रह अश्विनी आदि नक्षत्र और अन्य तारा इनके चक्रमें स्थित होकर श्री सूर्य नारायण परमाणु कालसे लगाके वर्षकाल पर्यन्त में द्वादश राशिके चक्रमें घूमते हैं ॥ १३ ॥

हे विदुरजी ! सो वर्ष संवत्सर परिवत्सर इडावत्सर अनुवत्सर वत्सर इस तरह से पांच प्रकार के कहे जाते हैं ॥ १४ ॥

तेजो मण्डल रूपजो सूर्य नारायण अपनी काल नामा शक्ति से अंकुरादिकों की बीज शक्ति को बहुत प्रकार प्रकट करते हुये और सकामों को यज्ञोंद्वारा गुण मय कर्म फलको देते हुये मनु-ष्यों के सब भ्रम को छुटाते हुये आकाश में दौड़ते हैं पञ्च वर्ष प्रवर्तक हैं उनकी पूजा सब मनुष्यों को करनी चाहिये ॥ १५ ॥

पितर देवता मनुष्य इन का आयुतो आप ने कहा अबजो ब्रह्मा के त्रैलोक्य से वाहिर सिद्ध ज्ञानिलोग हैं उन की आयुको कहिये ॥ १६ ॥

---

**श्रीधरस्वामिकृत भावार्थदीपिका ।**

योगराद्धेन योगसिद्धेन ॥ १७ ॥

द्वादशभिर्वर्षसहस्रैरित्युत्तरश्लोकसामर्थ्याज्ज्ञातव्यम् अवधा-यत इत्यवधानं संध्यांशाश्च तत्सहितम् ॥ १८ ॥

कृतयुगे चत्वारि सहस्राणि सन्ध्यासन्ध्यांशयोश्चत्वा चत्वारीत्यष्टौ शतानि च एवं त्रेतादिष्वपि योज्यम् ॥ १९ ॥

युगस्यादौ सन्ध्या अन्तेंऽशः सध्यांशः उक्तानि शतानि सङ्ख्य-ययोस्तयोरन्तरेण मध्ये युगम् तस्य विशेषमाह । यत्रेति गवालम्भा-दिधर्मविशेषाश्च विधीयन्त इत्यर्थः साधारणधर्मस्तु सन्ध्यांशा-दिष्वस्त्येव ॥ २० ॥

---

चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्रमम्।
संख्यातानि सहस्राणि द्विगुणानि शतानि च ॥ १९ ॥
संध्यांशयोरन्तरेण यः कालः शतसंख्ययोः।
तमेवाऽऽहुर्युगं तज्ज्ञा यत्र धर्मो विधीयते ॥ २० ॥

श्रीराधारमणदास गोस्वामिविरचिता दीपिन्याख्या दीपिका टिप्पणी।

भगवतस्सर्वसंहारसमर्थस्य गतिं तत्तद्विशेषस्वरूपम् भगवान् सर्वज्ञो भवान् वेद तत्र हेतुर्विश्वमिति ॥ १७ ॥

अवधीयते युगस्याद्यावधिः क्रियत इति अवधानं संध्या तथान्तावधिः क्रियते इत्यवधानं सन्ध्यांशश्च तत्सहितम् ॥ १८ ॥

चत्वारि सहस्राणीत्यादिसंख्यादेववर्षप्रमाणेन मनुष्याणां षष्ट्यधिकत्रिशवर्षैर्देवानामेकवर्षम् एवं देवानां द्वादशवर्षसहस्रैस्तेषामेव चतुर्युगम् मनुष्याणान्तु विंशतिसहस्राधिकत्रिचत्वारिंशल्लक्षवर्षैश्चतुर्युगं भवति तत्राष्टाविंशसहस्राधिकसप्तदशलक्षवर्षैः सत्यं षण्णवतिसहस्राधिकद्वादशलक्षैस्त्रेता चतुःषष्टिसहस्राधिकत्वर्लक्षैः कलिरिति ज्ञेयम् तत्र देवानां चतुर्युगसहस्रद्वयं ब्रह्मणोऽहोरात्रः तत्र च मनुष्याणां चतुः षष्टिकोट्यधिकम् पद्माष्टकम् भवतीत्यपि ॥ १९ ॥

संध्यासंध्यांशयोरन्तरित्येव पाठष्टीकाकृतां संमतः न तु संध्यांशयोरन्तरेणेति तस्य मध्यभागस्य युगशब्दवाच्यस्य विशेषं व्यावर्तकम् धर्मविशेषं यत्र मध्यभागे एव विधीयते न तु संध्यासंध्यांशयोरिति संकुचितवृत्तेरङ्गीकारादित्यर्थ इत्युक्तम् साधारणधर्मो वर्णाश्रमाचारलक्षणस्तु तत्राप्यस्तीति तत्र हेतुव्याख्यानम् ॥ २० ॥

---

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका।

अहं न जानामीति मावोच इत्याह। भगवानिति। भगवदात्मकस्य गतिं भाविनीमपि गतिं वेद जानाति ननु हे मैत्रेय ! निश्चये वा कथमहं जानीयामित्यत आह। धीरा भवादृशा ज्ञानिनः योगराद्धेन योगसिद्धेन चक्षुषा विश्वं जगद्विचक्षते पश्यन्ति योगिप्रत्यक्षाविषयं न किंचिदस्तीत्यर्थः ॥ १७ ॥

एवमापृष्टो मुनिस्त्रैलोक्याद्बहिरवस्थितानामाचतुर्मुखात्सर्वेषु युगसाहस्रं दिनपरिमाणम् एवं विधषट्युत्तरत्रिशतदिनात्मकवर्षशतमायुः परिमाणमिति कथयितुं तावद्युगपरिमाणं युगांशसन्ध्यापरिमाणं युगस्वरूपं युगेषु धर्मोत्तुवृत्तितारतम्यंचाह चतुर्भिः तत्र द्वाभ्यां युगपरिमाणमाह। कृतमिति। कृतादिचतुर्युगंसावधानमवधीयत इत्यवधानं सन्ध्याचांशश्च तत्सहितं चतुर्युगं दिव्यैर्देवमानमितैर्द्वादशसहस्रैर्वर्षैर्निरूपितम् ॥ १८ ॥

अपिच कृतादिषु यथाक्रमं चत्वारि त्रीणि द्वे चेति सहस्राणि संख्यातानि एतानि तु द्विगुणानि संख्यानीत्यर्थः अयमर्थः तावत्कृतयुगस्य देवमानेन चत्वारि सहस्राणि सन्ध्यासंध्यांशयोश्च चत्वारि चत्वारि शतानि इत्यष्टौ शतान्यष्टशतोत्तरचतुःसहस्रवत्सराः ससन्ध्यांशस्य कृतयुगस्य परिमाणं त्रेतायाः षट्शतोत्तरसाहस्रवर्षपरिमितिः द्वापरस्य तु सन्ध्यांशस्य चतुःशतोत्तरद्विसहस्रवर्षाणि कलेस्तु ससन्ध्यांशस्य द्विशतोत्तरैकसहस्रवर्षपरिमितिः युगस्यादौ सन्ध्या युगान्ते सन्ध्यांशः सहस्राणामुपरि उक्तानि शतानि क्रमेण तत्सन्ध्यांशयोः परिमाणमित्यवगन्तव्यम् ॥ १९ ॥

ननु ससन्ध्यांशस्यैव युगत्वमुत ताभ्यामन्तरेण मध्यस्यैवेति संशयं निराकुर्वन् चतुर्युगेषु तत्तद्वर्णाश्रमधर्माणामवश्यकर्तव्यत्वमाह। सन्ध्यांशयोरिति। शतसंख्ययोः शतानि संख्या ययोः सन्ध्यासन्ध्यांशयोरन्तरेण मध्ये यः कालः तमेव कालं युगमिति युगज्ञाः आहुरित्यर्थः यत्र युगे धर्मः नित्यनैमित्तिककाम्यकर्मभेदेन त्रिविधोऽपि धर्मो विधीयते कर्तव्यत्वेन बोध्यते इत्यर्थः ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली।

मैत्रेयस्य वक्तव्यार्थे ज्ञानपाटवमस्तीत्याह। भगवानिति। कालस्य कालान्तर्यामिणो भगवतो गतिं गमनं वर्तनं वेद ननु कुतः धीरा धीषु रममाणा ज्ञानिनो योगराद्धेनाष्टाङ्गयोगसिद्धेन चक्षुषा विश्वं विचक्षते भवानपि तेष्वेक इति यत्तस्मादिति शेषः ॥ १७ ॥

महर्लोकादिस्थितानामायुर्वक्ष्यन् कृतादिचतुर्युगतत्संध्याकालपरिमाणम् वक्ति। कृतमिति। दिव्यैर्देवानां विद्यमानैः ॥ १८ ॥

एतदेव विवेचयति। चत्वारीति। एवं कृतादिषु दशसहस्राणि एकैकह्रासक्रमेण संख्यातानि द्विगुणानि शतानि अवशिष्टद्विसहस्रगतशतानि कृतादिपूर्वापरसंध्यारूपाणि कलियुगपूर्वापरसंध्यामारभ्य द्विगुणानि ज्ञेयानि तथाहि कलियुगपूर्वापरसंध्ये शतं द्वापरपूर्वापरसंध्ये द्विशतं त्रेतायुगपूर्वापरसंध्ये त्रिशतं कृतयुगपूर्वापरसंध्ये चतुः शतमेवं विंशच्छतानाम् युगेभ्यो द्विगुणित्वम् ॥ १९ ॥

एवं तर्हि कृतादियुगत्वं कस्य कालस्येति तत्राह। संध्येति। शतसंख्ययोः संध्यासंध्यांशयोरन्तस्थो यः कालो यत्र तत्र तत्तद्युगधर्मो विधीते तमेव युगज्ञा युगमानमाहुः कृतादिषु संध्याकालाः पूर्वापरकोटिसंबद्धदूरस्थाः कालविशेषाः संध्यांशाख्या इति ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः।

कृतमित्यादीनामयमर्थः मनुष्याणां षष्ट्यधिकत्रिशतपरिमितैर्वर्षैः ( ३६० ) देवानां वर्षं तैर्द्वादशभिः सहस्रैस्तेषां चतुर्युगं। तच्च मनुष्याणां विंशतिसहस्राधिकत्रिचत्वारिंशल्लक्षगणितं ( ४३२०००० ) वर्षसंख्याकं भवति तावदेव सत्यादिचतुर्युगं। यतः सत्यं ( १७२८००० ) त्रेता ( १२९६००० ) द्वापरः ( ८६४००० ) कलिः ( ४३२००० ) इति एवं देवानां युगसहस्रद्वयं ब्रह्मणोऽहोरात्रः तच्च मनुष्याणां पद्माष्टकं चतुः षष्टिकोट्यधिक ( ८०००००६४००००००० ) मिति ॥ १८ ॥ १९ ॥

सन्ध्यासन्ध्यांशयोरन्तारित्यत्र। सन्ध्यासन्ध्यांशयोरन्तइति २०—२३ ॥

---

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

तत्र कथनार्थं मैत्रेयस्य ज्ञानमुपपादयति । भगवानिति । भवान् भगवान् भगवत्कृपया तथात्वात् भगवति श्रद्धावत्त्वाच्च अतएव भगवतः कालस्य गतिं वेद सहि स्वात्मानं वेदेति किंच धीराः संसारखेदसहिष्णवः योगसिद्धाः विश्वं सर्वमेव योगसिद्धेन चक्षुषा विचक्षते अतोयोगजधर्मेण ज्ञानेन च विचक्षते चक्षुषेति निःसंदिग्धार्थं योगसिद्धत्वात् नभ्रमजनकत्वम् ॥ १७ ॥

यथा क्षणादिभिः दिनगणना तथा युगैः तेषां दिनगणनेति कृतादीनां स्वरूपमाह । कृतमिति । कालविशेषस्य नाम किंच कृतमिति तस्मिन् काले कालेन यत्कर्त्तव्यं तत्प्रतीकारोवा तत्कृतमेव तस्मिन् युगे उत्पन्नानां न किञ्चित्कर्त्तव्यमवशिष्यते । त्रेता नाम तृतीयांशकर्त्तव्यता द्वापरमंशद्वयकर्त्तव्यता कलिः कलहः सर्वमेव विवादास्पदं न किंचिन्निर्द्धारितमित्यर्थः अत एव श्रुतौ येवै चत्वारस्तोमाः कृतं तत् अथ ये पञ्च कलिः सइति स्तोमानां पञ्चपक्षोनिन्दितः त्रिवृत्पञ्चदश सप्तदश एकविंश इति चत्वारएव स्तोमाः चत्वारोवर्णाः तएवोत्पादिताः अतस्तेषु नकोऽपि विवादः पञ्चस्तोमपक्षस्तु निन्दितः कलिपदेन पट्स्तोमपक्षस्त्वनिन्दितः यस्य त्रिणवमन्तर्यन्तीत्यादिना निरूपितः अतोनिन्दित पर्यायः कलिः तेषां कल्पवासिनां यस्मिन्काले सर्वमेव कर्त्तुं शक्यते संफलंच भवति स कालः अमृतघटिकारूपः कृतशब्देनोच्यते यस्तु निन्दितः विषघटिकात्मकः सकलिः यत्र कलहएव नत्वर्थपर्यवसानम् एतच्चतुष्टयं मिलित्वा चतुर्युगमित्युच्यते तेषां कालमाह । दिव्यैरिति । द्वादशभिर्वर्षैरिति सहस्रैरित्युक्तं भवत्यर्थात् दिव्याहि वर्षाः नाल्पसंख्यया गणयितुं योग्याः सहस्रसंख्या परमाकाष्ठा अतः सहस्रसंख्याप्राप्यते दिव्यपदेनैव शतसंख्यापिप्राप्यते तथापि संदिग्धेषु वाक्यशेषादितिन्यायेन संख्यातानि सहस्राणीत्यग्रिमवाक्यात् सहस्रसंख्यैव प्राप्यते द्वादशभिर्दिव्यसहस्रवर्षैः सावधानं चतुर्युगं निरूपितं भवति अवधानं व्यवधानं सन्धौ भवा सन्ध्या व्यवधानान्तरे याजायते सा सन्ध्या सन्ध्यांशः अल्पकरणं यथा घण्टानादेऽनुरणनं तन्मध्ये युगं सन्ध्यासन्ध्यांशौ युगेन सम्बद्धाविति । उभयसम्बन्धाद्युगत्वं समुदाययोगशक्तिभ्यामवसीयते ॥ १८ ॥

तेषामवान्तरकालानाह । चत्वारीति । चत्वारि सहस्राणि कृतयुगं त्रीणि त्रेता द्वे द्वापरं एकं कलिरिति यथाक्रमं सहस्राणि संख्यातानि युगदशमांशः सन्ध्या तावानेवांशः अतस्तावन्ति शतानि प्रत्येकं समुदायेन द्विगुणानि चकारात् अतिरिक्तोऽपि कश्चन कालो लभ्यते यदि भगवत्कार्ये किंचिद्व्यवधानं भवेत् १९॥

सर्वस्य युगत्वमाशङ्क्य तन्निराकरणाय मध्यकाल एव युगशब्देनोच्यते इति आह । सन्ध्यांशयोरिति । सन्ध्या अंशश्च तयोरन्तरेण यः कालः शतसंख्ययोरिति सन्ध्यांशयोरपि कालविशेषत्वमेव नतु देवतात्वं तमेव कालं युगमाहुः तज्ज्ञा इति प्रमाणं तत्र तस्य कालस्य स्वतः परिच्छेदरहितस्य केनोपाधिना कृतत्वमित्याशङ्क्य तमुपाधिमाह । यत्र धर्मोविधीयत इति । यत्र कालविशेषे धर्मो विधीयते नानूद्यते सन्ध्यायां पूर्वधर्मस्य भवति लोपः तदा युगप्रवृत्तौ ऋषिभिः पारंपर्यज्ञानाभावात् अपूर्वोधर्मोविधीयते सतु युगसमाप्तिपर्यन्तविधिः प्राणिनः प्रवर्त्तयन्ननुवर्तते अतोयुगशब्दवाच्योभवति धर्मोपाधिकत्वात् ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

भगवान् भवान् योगराद्धेन योगसिद्धेन ॥ १७ ॥

कल्पबहिरायुषो हि भृग्वादयो ब्रह्मतुल्यायुष एव भवन्ती ब्रह्मणः आयुर्वक्तुं युगादीनां मानमाह । कृतमिति । वर्षैर्वर्षसहस्रैः अवधीयत इत्यवधानं सन्ध्यासन्ध्यांशश्च तत्सहितम् ॥ १८ ॥

यथाक्रममिति । कृतयुगे चत्वारि सहस्राणि । सन्ध्यासन्ध्यांशयोश्चत्वारि चत्वारि शतानीत्यष्टौ शतानि एवं त्रेतादिष्वपि योज्यम् ॥ १९ ॥

युगस्यादौ सन्ध्या अन्ते सन्ध्यांशस्तयोः कथम्भूतयोः उक्तानि शतानि संख्या ययोस्तयोरन्तर्मध्यवर्त्ती यः कालस्तं युगमाहुः । यत्र धर्म्म इति ध्यानयज्ञपरिचर्य्याकीर्त्तनात्मको धर्मविशेषः साधारणधर्म्मस्तु गुणभूतः । सन्ध्यासन्ध्यांशयोरप्यस्त्येव । किञ्च । युगस्य युगस्य यो धर्म्मः स एव तत्सन्ध्यासन्ध्यांशयोरपि प्रधानीभूत इति ज्ञेयम् । मनुष्याणां षष्ट्यधिकत्रिशतवर्षैर्देवानामेकवर्षम् । एवं मनुष्याणां विंशतिसहस्राधिकत्रिचत्वारिंशल्लक्षवर्षैश्चतुर्युगं शास्त्रेषु युगशब्देनोच्यते । तत्राष्टाविंशसहस्राधिक सप्तदशलक्षैर्वर्षैः सत्यं षण्णवतिसहस्राधिकद्वादशलक्षैस्त्रेता । चतुःषष्टिसहस्राधिकाष्टलक्षैर्द्वापरः । द्वात्रिंशत्सहस्राधिकचतुर्लक्षैः कलिः ॥ २० ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

ननु हेमैत्रेय ! योगराद्धेन ध्यानयोगसिद्धेन ॥ १७ ॥

त्रैलोक्याद्बहिः स्थानामाचतुर्मुखात्सर्वेषां चतुर्युगसहस्रं दिन परिमाणं षष्ट्युत्तरशतत्रयदिनात्मकसम्वत्सरशतमायुरित्युत्तरं वक्तुं चतुर्युगपरिमाणं धर्मतारतम्यञ्चाह । कृतमिति चतुर्भिः । द्वादशभिर्द्वादशसहस्रैः अवधीयते इत्यवधानं सन्ध्यासंध्यांशश्च तत्सहितम् निरूपितमृषिभिः ॥ १८ ॥

सहस्राणि युगपरिमाणं शतानि सन्ध्यासन्ध्यांशपरिमाणम् ।

शतसंख्ययोः सन्ध्यांशयोः अन्तरेण मध्ये यः कालः सहस्रसङ्ख्यः तं युगमाहुः कृतयुगस्यादौ चतुः शतवर्षपरिमिता सन्ध्या तस्यान्ते चतुः शतवर्षपरिमितः सन्ध्यांशः तन्मध्येचतुः सहस्रवर्षपरिमितं कृतयुगमाहुः एवं त्रेतादिष्वपिविभागः यद्यपि सामान्यतः सन्ध्यासन्ध्यांशयोरपि धर्मोऽस्त्येव तथापि प्राधान्यतः यत्र युगे धर्मः तारतम्यतोविधीयते ॥ १९ ॥ २० ॥

---

भाषाटीका ।

आपतो भगवान् कालकी गतिको जानते हौ क्योंकि ज्ञानिलोग योगसिद्धचक्षु से सब संसार की वातों को जानते हैं ॥

मैत्रेयजीबोले सत्ययुग त्रेता द्वापर कलि ये चार युग इन युगों की संख्या सन्ध्याशके सहित ऐसी निरूपण की है ॥ १८ ॥

तहाँ सत्ययुग के चार हजार आठसौ वर्स हैं त्रेता तीन हजार छैसौ वर्ष हैं द्वापर के दो हजार चारसौ हैं कलियुग के एकहजार दोसै वर्ष हैं एसंख्या देवतों वर्षों से जानना चाहिये ॥ १९ ॥

इन में जोसौ की संख्या कही है सो जुगके आदि अन्त

धर्मश्चतुष्पान्मनुजान्कृते समनुवर्तते ।
स एवान्येष्वधर्मेण व्येति पादेन वर्धता ॥ २१ ॥
त्रिलोक्या युगसाहस्रं बहिराब्रह्मणो दिनम् ।
तावत्येव निशा तात ! यन्निमीलति विश्वसृक् ॥ २२ ॥
निशाऽवसान आरब्धो लोककल्पोऽनुवर्तते ।
यावद्दिनं भगवतो मनून्भुञ्जंश्चतुर्दश ॥ २३ ॥
स्वं स्वं कालं मनुर्भुङ्क्ते साधिकां ह्येकसप्ततिम् ।
मन्वन्तरेषु मनवस्तद्वंश्या ऋषयः सुराः ।
भवन्ति चैव युगपत्सुरेशाश्चानु ये च तान् ॥ २४ ॥

भाषाटीका।

सन्ध्या और अंश होता है उन के मध्य में जो काल है वही युग है उस के जानने वाले कहते हैं उसी युग में सवधर्मों के विधान हैं ॥२०॥

---

श्रीधरस्वामिकृत भावार्थदीपिका।

चतुष्पात्संपूर्णः त्रेतादिषु पादेन पादेन व्येति ह्रसति पादेन पादेन वर्धमानेनाधर्मेण हेतुना एतच्च स्वरूपकथनमात्रं वैराग्यार्थं नतु धर्मसङ्कोचनार्थम् ॥ २१ ॥

त्रिलोक्या वहिर्महर्लोकप्रभृतिब्रह्मलोकमभिव्याप्य चतुर्युगसहस्रमेकं दिनम् यद्यस्यां विश्वसृक् ब्रह्मा निमीलति स्वपिति ॥ २२ ॥

तत्र दिनस्थितिमाह। निशाऽवसान इत्यादिसार्धैश्चतुर्भिः चतुर्दश मनून् भुञ्जन् पालयन् व्याप्नुवन्नित्यर्थः ॥ २३

किंचिदधिकां युगानामेकसप्ततिम् मनुवंश्याः पृथ्वीपालकाः क्रमेण भवन्ति सप्तर्षिप्रभृतयस्तु युगपत्समकालमेव भवन्ति सुरेशा इन्द्राःताननुवर्तन्ते गन्धर्वादयस्तेऽपि ॥ २४ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिका टिप्पणी।

एतच्च प्रतियुगमधर्मवृद्धिपूर्वकं धर्मह्रसनं युगानां स्वभावकथनमात्रम् अहोप्रतियुगं धर्महानिर्भवति अलंविषयैरिति वैराग्यार्थं न तु युगस्वरूपमादाय धर्मसङ्कोचो विधेय इत्यर्थः ॥ २१ ॥

स्वपन्तं गर्भोदशायिनमनु तत्राविश्य स्वपिति। "ततोऽवतीर्य विश्वात्मा देहमाविश्य चक्रिणः। अवाप वैष्णवीं निद्रामेकीभूयाथ विष्णुने" ति कूर्मोक्तेः ॥ २२ ॥

आरब्धः कृतः लोककल्पो लोकरचना अनुवर्त्तते अनुक्रमेण यथापूर्वं भवति किं पर्य्यन्तं यावद्ब्रह्मणोदिनं भुञ्जन्निति लोककल्पस्य विशेषणं भोगस्य जडक्रियायामसंभवात् व्याप्नुवन्नित्याऽऽर्थिकोऽर्थः ॥ २३॥

स्वंस्वमित्यर्द्धकम् तत्र देवमानेन द्विपञ्चाशत्सहस्राधिकानि अष्टलक्षाणि वर्षाणि भवन्ति मनुष्यमानेन त्रिंशत्कोट्यः सप्तषष्टिर्लक्षाणि विंशतिसहस्राणि तथोक्तं श्रीविष्णुपुराणे "त्रिंशत्कोट्यस्तु सम्पूर्णाःसङ्ख्याताः सङ्ख्यया द्विज ! सप्तषष्टिस्तथान्यानि नियुतानि महामुने !। विंशतिश्च सहस्राणि कालोऽयमधिकं विना मन्वन्तरस्यसङ्ख्येयं मानुषैर्वत्सरैर्द्विजेति ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका।

कृते चतुष्पदोधर्मस्यानुवृत्तिं त्रेतादिषु तत्संकोचंचाह। धर्म इति। कृते युगे मनुष्यान् चतुष्पात् धर्मोऽनुवर्ततेऽन्येषु त्रेतादिषु एकेन पादेन वर्द्धताऽधर्मेण हेतुना धर्मः व्येत्यपगच्छतीत्यर्थः ॥ २१ ॥

अथ त्रैलोक्याद्बहिःष्ठानां दिनपरिमाणमाह। त्रैलोक्याद्बहिः स्थितानामाब्रह्मणः ब्रह्मपर्यन्तानां सर्वेषां युगसाहस्रं दिनमहरित्यर्थः हे तात विदुर ! तावती रात्रिः दिनपरिमितयुगसहस्रमिता रात्रिः यद्यस्यां रात्रौ विश्वसृग्ब्रह्मा निमीलति स्वपिति ॥ २२ ॥

बहिःष्ठानामहोरात्रगतानां स्थितिमाह। निशावसान इत्यादिना। अन्तः सलिलएतस्मिन्नित्यन्तेन। निशाया रात्रेरवसानेऽन्त्ये निशायामपगतायामित्यर्थः आरब्धो यो लोककल्पः कल्पाद्भिन्नोलोकः यद्वा कल्पनं कल्पः सर्ग इत्यर्थः लोकसर्गः चतुर्दशमनून् भुञ्जन् परिच्छिन्दन् भगवतो ब्रह्मणो यावद्दिनमनुवर्तेत इत्यर्थः ॥ २३ ॥

मन्वायुः परिमाणमाह। स्वंस्वमिति साधिकां किंचिदधिकां युगानामेकसप्ततिं स्वंस्वंकालं मनुर्भुङ्क्ते ऽनुभवतीत्यर्थः ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली।

कृतादिषु यो धर्मो विधीयते स किमवयवो वर्तेत इति तद्वृत्तिप्रकारं वक्ति। धर्म इति। तपः सत्यं दया शौचमिति चतुष्पान्मनुजाननुद्दिश्येति शेषः अन्येषु त्रेतादिषु न्यूनाधिक्यानुसारेण तपोविरोधिना वर्धता वर्धमानेनाधर्मेण व्येति ह्रसति क्रमेणेति योज्यम् ॥ २१ ॥

तत्र ये स्युः कल्पाद्बहिर्वि ? इति प्रश्नपरिहारमारभते। त्रैलोक्यादिति। त्रैलोक्याद्बहिराब्रह्मणो ब्रह्मपर्यन्तं तल्लोकपर्यन्तमित्यर्थः तावत्पर्यन्तं वर्तमानं चतुर्युगसहस्रं ब्रह्मण एकं दिनमाहुः तावत्येव चतुर्युगसहस्री तस्य निशा यद्यस्यां निशायां विश्वसृक् ब्रह्मा निमीलति निद्रामुद्रितलोचनो भवति ॥ २२ ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली।

चतुर्युगसहस्ररूपनिशावसाने पुनर्ब्रह्मणोऽर्थायारब्धो लोककल्पः लोकानां जनानां तथा भूरादिलोकानां कल्पः सृष्ट्यादिलक्षणस्तावदनुवर्तते यावद्भगवतो ब्रह्मणश्चतुर्दशमनून् भुञ्जानं दिनं स्यादिति शेषः दिनस्य भोक्तृत्वम् नामोपचारमात्रं तत्र यज्ञादिमूर्त्यावतीर्णस्य हरेर्मुख्यभोक्तृत्वमित्येतज्ज्ञापनाय भुञ्जन्निति लिङ्गव्यत्ययः ॥ २३ ॥

मनूनाम् भोज्यमन्वन्तरकालमाह। स्वंस्वमिति। साधिकैकसप्ततिर्मनोः काल इत्यन्वयः। सार्धाष्टदशलक्षवर्षाधिकैकसप्ततिचतुर्युगावसानम् मनुकाल इत्यर्थः तदुक्तम्

युगैकसप्ततेरूर्ध्वम् सार्धाष्टादशलक्षकम्।
वत्सराणां मनोर्मुक्तिः सहस्रं चतुरुत्तरम्।
शतानां प्रलयश्चैव पञ्चोत्तरमथापिच।
आद्येषु षट्सु प्रथमे द्विसहस्रं प्रकीर्तितम्।
वत्सराणां मनोरन्तन्द्रादीनां भवेदिति ॥

मन्वन्तरेष्वधिकृतमन्वादीनाह। मन्वन्तरेष्विति। तद्वंश्याः मनुवंशभवा राजानः सुरेशा इन्द्रादयः ये चताननुइन्द्रादीननुचरन्तो गन्धर्वाद्याः एते सर्वे युगपदेककाल एव भवन्तीत्यन्वयः ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः।

स्वं स्वमित्यर्द्धकम् ॥ २४ ॥

---

श्रीमद्वल्लभाचार्यकृत सुबोधिनी।

नन्ववान्तरभेदः किंनिबन्धन इत्याशङ्क्याह। धर्मश्चतुष्पादिति। धर्मावान्तरभेदएवयुगावान्तरभेदहेतुः तमाह चतुष्पाद्धर्मः कृते मनुजान् समवर्तत कालेनैव प्रेरितोधर्मः मनुजाननुवर्तते तत्रापि मनुजा एव हेतवः चत्वारोवर्णाः कृतएव त्रेतायां ब्राह्मणाभावः द्वापरे क्षत्रियाभावः कलौ शूद्रएव अतश्चतुष्पाद्धर्मः मनुजान् समवर्त्तत सएवधर्मः अन्येषु युगेषु पादेन व्येति पादेन वर्धताऽधर्मेण कृत्वा अनेन लब्धधर्मोत्कर्षः अधर्मेण व्याप्रियत इत्युक्तम् ॥ २१ ॥

एवं युगानां स्वरूपमुक्त्वा तैर्दिनव्यवस्थामाह। त्रिलोक्या इति। त्रिलोक्याः बहिः ब्रह्मलोकपर्यन्तं युगानां साहस्रं सहस्रसंख्यान्समुदायो दिनं महर्लोकमारभ्य उपरितनेषु लोकेष्वेतावद्दिनमित्यर्थः आब्रह्मण इतिवचनं पातालादिव्युदासार्थं तत्रदिनरात्रिव्यवस्थैव नास्ति यावद्दिनं तावत्येव निशा युगाद्यभावेऽपि ब्रह्मण आयुःखण्डएव नियामका भगवदिच्छा वा तत्र निमित्तान्तरमाह। यन्निमीलति विश्वसृगिति। यस्मिन्काले विश्वसृक् ब्रह्मा भगवान् ब्रह्मोदरोवा भगवान् शेते निद्राभावान्निमीलनमेवतस्य निमीलनमेव योगनिद्रा तातेति सम्बोधनमप्रतारकत्वज्ञापनाय ॥ २२ ॥

यथा युगप्रवृत्तिः दिनख्यापिका तथा शयनप्रवृत्तीरात्रिख्यापिकेति नियामकान्तरमाह। प्रतियुगं सृष्टिव्यावृत्त्यर्थं निशावसान इति रात्र्यवसाने अरुणोदये भगवता प्रारब्धोलोककल्पः यावद्दिनं दिवसावसानपर्यन्तम् अनुवर्त्तते प्रवाहरूपेण लोकाः कल्पान्ते उत्पाद्यन्ते अनया परंपरया अस्यां वा तत्पारंपर्य लोककल्पः तद्दिनं भगवतः ब्रह्मविदामपि भगवत्त्वात् तत्र धर्मप्रवृत्तेर्हेतुमाह। मनून् भुङ्क्ते चतुर्दश। अयं लोककल्पः चतुर्दशमनून् भुङ्क्ते अनुभवति धर्मपालकत्वेन गृह्णातीत्यर्थः मनूनां धर्मपरिपालनरूपं वक्तुं तत्परिच्छिन्नं कालमाह। स्वंस्वंकालमिति। एकसप्ततिचतुर्युगानि साधैकं पञ्चाशद्दिव्यवर्षाधिकं मन्वन्तरं मन्वन्तरशब्दोरूढः षड्गुणधर्मसाधनपरः ननु मनोरन्तेनोपभुज्यमानः कालः तथा सति मनुपुत्रादीनामुपभोगकालोऽन्यः स्यात् नापि सर्वस्यापि वंशस्य वाचको मनुशब्दः प्रियव्रतपुत्रेषु उत्तमतामसरैवतेषु भिन्नं मन्वन्तरं न स्यात् स एव स्वान्तरं नित्य इति तु प्रक्रियान्तरत्वात नान्यैर्मन्वन्तरैर्विरोधः अतोमन्वन्तरशब्दो रूढ एव मन्वन्तराणि सद्धर्म इति वाक्याच्च ॥ २३ ॥

षण्णां समुदायो मन्वन्तरम् तानाह। मन्वन्तरेष्विति। सर्वेष्वेव मन्वन्तरेषु मनुः मनुपुत्राः ऋषयः देवाः इन्द्रः अंशावताराश्च एते युगपदेव भवन्ति स पुत्रएव मनुः अधिकारेऽभिषिक्तो सुरेशाश्चेन्द्राः आद्यन्तयोर्बहुवचनं समुदायाभिप्रायेण अंशावतारास्तु युगपन्न जायत इति पञ्चैवोक्ताः ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी।

चतुष्पात् पूर्णः मनुजाननुलक्ष्यीकृत्य अन्येषु त्रेतादिषु अधर्मोपपादेन पादेन वर्द्धता वर्द्धमानेन हेतुना व्येति पादेन पादेन ह्रसति ॥ २१ ॥

त्रिलोक्या बहिर्महर्ल्लोकप्रभृति--ब्रह्मलोकमभिव्याप्य चतुर्युगसहस्रमेकं दिनं यद्यस्यां विश्वसृग्ब्रह्मा निमीलति। तदैव स्वपन्गर्भोदशायिनमनुस्वपिति। एवं युगसहस्रद्वयं ब्रह्मणोऽहोरात्रः। तत्र मनुष्याणां चतुःषष्टिकोट्यधिकाष्टपञ्चवर्षाणि भवन्ति ॥ २२ ॥

तत्र दिनस्थितिमाह। निशावसान इति। चतुर्दशमनून् मन्वन्तराणि भुञ्जन् व्याप्नुवन् लोकानां कल्पः ॥ २३ ॥

मनुः स्वायम्भुवादिः किञ्चिदधिकां चतुर्युगानामेकसप्ततिं कालं व्याप्य तत्र देवमानेन द्विपञ्चाशत् सहस्राधिकान्यष्टलक्षाणि वर्षाणि भवन्ति। मनुष्यमानेन तु त्रिंशत्कोट्यः सप्तषष्टिलक्षाणि विंशतिः सहस्राणीति। तथोक्तं विष्णुपुराणे।

त्रिंशत्कोट्यस्तु सम्पूर्णाः संख्याताः संख्यया द्विज!
सप्तषष्टिस्तथान्यानि नियुतानि महामुने!।
विंशतिश्च सहस्राणि कालोऽयमधिकं विना।
मन्वन्तरस्य संख्येयं मानुषैर्वत्सरैर्द्विजेति ॥ २४ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः।

धर्मतारतम्यमेवाह। धर्म इति। त्रेतादिषु पादेनैकेन व्येति ह्रसति ॥ २१ ॥

बहिर्महर्लोकादिसत्यलोकान्तेषु युगसाहस्रं"चतुर्युगसहस्रंच ब्रह्मणोदिनमुच्यत,, इति द्वादशस्कन्धे वक्ष्यमाणात् चतुर्युगसहस्रमेकं दिनम् यद्यस्यां निमीलति स्वपिति ॥ २२ ॥

निशायाः अवसाने अन्ते आरब्धः कृतः लोककल्पः त्रिलोकीसर्गः चतुर्दशमनून् भुञ्जन् पालयन् व्याप्नुवन् भगवतश्चतुराननस्य यावद्दिनं तावत् अनुवर्तते ॥ २३ ॥

चतुर्युगानां किंचिदधिकामेकसप्ततिं स्वंस्वं कालं मनुर्भुङ्क्ते तेषां वंश्याः भूपाः सुरेशा इन्द्राः तान् ये अनुतदनुवर्तिनो गन्धर्वादयश्च युगपत् भवन्ति भूपानां तुस्वस्वसंतति द्वारा प्रवाहरूपमित्यर्थः ॥ २४ ॥

---

भाषाटीका।

सत्ययुग में सब मनुष्यों में चार पाद से धर्म रहता

एष दैनन्दिनः सर्गो ब्राह्मस्त्रैलोक्यवर्तनः ।
तिर्यङ्नृपितृदेवानां संभवो यत्र कर्मभिः ॥ २५ ॥
मन्वन्तरेषु भगवान् बिभ्रत्सत्त्वं स्वमूर्तिभिः ।
मन्वादिभिरिदं विश्वमवत्युदितपौरुषः ॥ २६ ॥
तमोमात्रामुपादाय प्रतिसंरुद्धविक्रमः ।
कालेनानुगताशेष आस्ते तूष्णीं दिनात्यये ॥ २७ ॥
तमेवान्वपिधीयन्ते * लोका भूरादयस्त्रयः ।
निशायामनुवृत्तायां निर्मुक्तशशिभास्करम् ॥ २८ ॥

भाषाटीका ।

और युगों में अधर्म के एक एक पाद के बढनेसे धर्म का एक एक पाद क्षीण होता जाता है ॥ २१ ॥

हे तात विदुरजी ! त्रिलोकी के बाहर महर्लोकादिकों से ब्रह्म लोक पर्यंत दिव्य चार हजार वर्ष का एक दिन होता है उतनी हि रात्रि होती है जिस में विश्व कर्ता ब्रह्माजी शयन करते हैं २२।

रात्रिके अंतमे ब्रह्माके आरंभ करने से संसार की सृष्टि होती है तिस में जब तक भगवान् ब्रह्मा का दिन होता है तब तक चौदा मनुका भोग होता है तिस में एक एक मनु कुछ अधिक इकहत्तर युग देवतों के मान से भोगता है उन मन्वंतरो में मनु उनका वंश के राजा ऋषि देवता सप्तर्षि गंधर्व ये सब क्रम से होते हैं उसी साथ ही मे इन्द्र और उनके सब अनुचर भी होते है ॥ २३ ॥ २४ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

त्रैलोक्यं वर्तयतीति तथा ॥ २५ ॥

स्वमूर्तिभिर्मन्वन्तरावतारैर्मन्वादिभिर्द्वारभूतैराविष्कृतपुरुषाकारः सन्विश्वं रक्षति ॥ २६ ॥

रात्रिगतां स्थितिमाह। पञ्चभिः। तमसो मात्रां लेशम् प्रतिसंरुद्धः प्रत्याहृतो विक्रमो येन अनुगतमनुप्रविष्टमशेषं यस्मिन् ॥ २७ ॥

तदेव स्पष्टयति। तमेवेति। अन्वपिधीयन्त इति कर्मकर्तरि प्रयोगः तिरोहिता भवन्तीत्यर्थः कथम् निर्मुक्तो रहितः शशी भास्करश्च यथा भवति तथा ॥ २८ ॥

श्रीराधारमणदास गोस्वामिविरचिता दीपिन्याख्या दीपिका टिप्पणी ।

मनुवंशानां तज्जन्यत्वेन। नियतपश्चाद्भावित्वाद्युगपत्त्वं न सम्भवतीति क्रमेणेति अध्याहृत्य व्याख्यातम् वर्त्तयति विषयीकरोति यत्र दैनंदिनसर्गे ॥ २५ ॥

मन्वन्तरावतारैः विशुद्धसत्त्वमयैः प्राकृतं सत्त्वमपि साम्निध्येन पुष्णन् ॥ २६ ॥

प्रवृत्तिमर्य्यादां तमसः प्रलयहेतोः लेशं कालाग्निरुद्ररूपेण स्वीकृत्य अशेषं त्रैलोक्यस्थजीववृन्दम् ॥ २७ ॥

तदेव अनुगताशेषत्वमेव तमेव स्वपन्तं गर्भोदशायिनमेवानु अनुवृत्तायां प्रवृत्तायां सत्यां रहितो नष्टः यत्र तिरोधानं तद्यथा भवति तथेत्यर्थः ॥ २८ ॥

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

मन्वंतरगणानां स्थितिमाह। मन्वन्तरेष्विति। मनूनामन्तराणि मन्वन्तराणि पूर्वपूर्वमनुमारभ्य उत्तरोत्तरमनुपर्यन्ता मध्यकालास्तेषु मनवः मनुवंश्याः पृथिवीपालका राजानः ऋषयः सुराश्च सुरेशाः इन्द्रादयः तानुवर्तन्ते ये ते सर्वे युगपत्प्रभवन्ति त्रिलोकीं परिपालयन्तीत्यर्थः अथैवं त्रैलोक्यवहिष्ठमानमितिताद्दिनकालावधि स्वसर्गस्य दैनंदिनसर्गत्वंवदन्मन्वादिभिर्द्वारभूतैर्भगवानेव विश्वमवति नतु मन्वादयः स्वयमवितार इत्याह । एष इति । ब्राह्मश्चतुर्मुखकर्तृकः एष दैनंदिनः दिनंदिनं क्रियमाणो यः सर्गः स एष दैनंदिनसर्गः कथं भूतः त्रैलोक्यवर्तनः वर्द्धन इति पाठान्तरं तत्र त्रैलोक्यं वर्द्धयति तथा तत्र यस्मिन् दैनंदिने सर्गे तिरश्चां नृणां पितृणां देवानां कर्मभिः पुण्यपापरूपैः संभवः उत्पत्तिर्भवति ॥ २५ ॥

मन्वन्तरेषु भगवान् स्वमूर्तिभिः सत्त्वं शुद्धं सत्वं विशुद्धसत्त्वमयमूर्तिर्बिभ्राण इत्यर्थः उदितपौरुषः आविष्कृतपुरुषाकारः सन्मन्वादिभिर्द्वारभूतैरिदं विश्वमवति अतो न भगवतो रक्षकत्वविहतिरित्यभिप्रायः ॥ २६ ॥

एवं दिनगतां स्थितिमभिधायाथ रात्रिगतां स्थितिमाख्यातुमुपक्रमते। तमोमात्रामिति। तमोमात्रां लेशमुपादाय स्वीकृतोद्रिक्ततमस्क इत्यर्थः प्रतिसंरुद्धः निवृत्तः क्रमो व्यापारो यस्य सः कालेनानुगतमनुप्रविष्टमशेषं यस्य सः कालोऽप्येनमनुसरतीत्यर्थः ब्रह्मदिनात्यये दिनान्ते तूष्णीमास्ते उपविशति ॥ २७ ॥

अनुगताशेषत्वमेवविशदयति। तमेवेति। तमेवानुगतं कालमेवानुपश्चाद्भूरादयः त्रयोलोका अपिधीन्यते तिरोहिता भवन्तीत्यर्थः कथमपिधीयन्ते इत्यत आह। निशायामनुवृत्तायां प्रवर्तमानायां सत्यां निर्मुक्तः शशी चन्द्रः भास्करश्च यथाभवति तथा तौ विनैव पिधीयन्ते नश्यन्तीत्यर्थः ॥ २८ ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

ब्राह्मोब्रह्मकृतः दैनन्दिनो ब्रह्मणो दिने क्रियमाणः त्रैलोक्यं वर्तयतीति त्रैलोक्यवर्तनः यत्र यस्मिन् दैनन्दिनसर्गे तिर्यगादीनां सम्भव उत्पत्तिः ॥ २५ ॥

* मनुविलीयन्ते इति विजयध्वज पाठः ।

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

मन्वादयो जगत्पालनादिकुर्वन्तीति यत्तद्भगवदनुगृहीतमेवेत्याह । मन्वन्तरेष्विति । सत्त्वम् सत्त्वगुणम् उदितपौरुषो नित्योदितपराक्रमः ॥ २६ ॥

जगत्पालनमेव भगवन्नियतं न प्रलय इति मन्दाशङ्कां निवारयति । तमोमात्रामिति । दिनात्यये ब्रह्मदिनापगमे रात्रिसमये भगवांस्तमोमात्रां स्वनियततमोगुणप्रवर्तककालसंकर्षणरुद्रादिरूपमुपादाय प्रतिसंरुद्धविक्रमः कालेन कालनाम्ना ब्रह्मणानुगतः कल्पप्रलयोदके शेषे अनन्तभोगपर्यङ्के तूष्णीं निवृत्तजगद्व्यापारआस्ते शेत इत्यर्थः "ब्रह्मणा कालनाम्ना तु सहशेते हरिर्निशि" इति वचनात्कालेनेति न प्रलयकालोऽत्र विवक्षितस्तस्य दिनात्यय इत्यनेन गतार्थत्वात् ॥ २७ ॥

देवदत्तस्वापविलक्षणो भगवत्स्वापः कुतोऽस्मिश्चराचराणामनवशेषं विनाशादित्याशयेन तल्लयप्रकारं वक्ति । तमेवेति । लोके निर्मुक्त शशिभास्करे सति ब्रह्मणि च शयान इव हरिं प्रविष्टे सति तन्निशायामनुवृत्तायां सत्यां भूरादयोलोकास्तं ब्रह्माणमनु विलीयन्ते अनुविधीयन्त इति पाठे शयानं हरिमनुविधीयन्ते ब्रह्मणा सह सुप्ताः क्रियन्त इत्यर्थः ॥ २८ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

युगपदिति स्वस्वमन्वन्तर इत्यर्थः ॥ २५—२९ ॥

---

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

उक्तानि मन्वन्तराणि यदर्थं तमुपसंहरति । एप दैनन्दिन इति । दिनेदिने जायमानो दैनन्दिनः संवत्सरात्मकः कल्पो भिन्नः अयं तु दैनन्दिनः अस्य विशेषमाह । त्रैलोक्यवर्तन इति । त्रैलोक्यं वर्तयति आवर्तयतीति देवतिर्यङ्मनुष्याणां पुनः पुनर्जन्मेति कृत्वा त्रैलोक्यवर्तनत्वम् तदेवाह । तिर्यङ्नृपितृदेवानामिति । नृपितर एके जीवन्मृतभेदविवक्षया दैनन्दिने पुनः पुनरुत्पत्तौ कर्मणो नियामकत्वम् ॥ २५ ॥

एवं दिनमुपसंहृत्य तत्र नियामके धर्मे कः प्रवर्तक इत्याकाङ्क्षायां धर्मस्य भगवानेव प्रवर्तक इत्याह । मन्वन्तरेष्विति । सर्वेष्वेव मन्वन्तरेषु स्वस्य शुद्धं सत्त्वं बिभ्रत् भगवान् स्वस्य मूर्तिभिः ज्ञानकर्मयोगादिप्रवर्तकैरवतारैः मन्वादिभिः सहितैरिदं विश्वमवति उदितं पौरुषं यस्य यद्यपि स्वयमेव धर्मं पालयन् जगत्पालयति तथापि स्वस्यैव पौरुषस्य एते अंशाः मन्वादयः अवताराश्च ॥ २६ ॥

एवं दैनन्दिनसृष्टिमुपपाद्य तत्रत्यं प्रलयमुपपादयति । तमोमात्रामुपादायेति । तमसोमात्रा सत्त्वरजःसम्बन्धरहिता केवलं तम इत्यर्थः । तामुपादाय प्रतिसंरुद्धो विक्रमो यस्य तमसा विक्रमे प्रतिसंहृते विक्रमद्वारा विक्रमकार्यमपि जगत्पालनं कृत्वा भगवत्सेवानुगतं भवति तदाह । कालेनेति । सर्वमेवानुगतं भवति । अशेषपदेन शेषव्यतिरिक्तं जगदिति योगात्सूचितं तदा भगवान् कार्योन्मुखतां परित्यज्य तूष्णीमास्ते दिनात्ययं सन्ध्याकाले ॥ २७ ॥

भगवतस्तूष्णींभावे प्रवाहस्तम्भकाभावात् कालेन प्रेरिता भूरादयो लोका अन्वपिधीयन्ते । अव्यक्ते प्राविशन्ति तदा ते अव्यक्ते लीनेषु निर्मुक्तशशिभास्करं यथा भवति तथा निशायामनुवृत्तायां सम्यक् प्रवृत्तायां । तदनन्तरं त्रिलोक्यां संकर्षणाग्निना दह्यमानायामूष्मणा पीडिताःमहर्लोकेभृग्वादयःमहर्लोकस्थितिं परित्यज्य जनलोकं यान्तीति सम्बन्धः अत्रायं क्रमः । यदा भगवान् शिशयिषुर्भवति तदा तमो गृह्णाति पश्चाच्छेते । एतावानेव व्यापारः । अन्यत्सर्वं स्वयमेव भवति । विक्रमोपसंहारश्च तमोग्रहणादालस्येन । ततो रक्षकाभावात् कालस्य भक्षकत्वात् स्वयमेव जगल्लीयते कालस्यात्र न भक्षकत्वं किन्तु भयजनकत्वात् लये निमित्तत्वं जगति स्वस्मिन्प्रविष्टेऽपि भगवान्न परिपालनार्थं यत्नं करोति किन्तु तूष्णीमेव तिष्ठति । तस्य तूष्णींभावमनुभुञ्जानात्मका भूरादयः उज्जटग्रामभित्तय इव तिरोहिता भवन्ति । तदा आधारभूतानां लोकानामभावात् ज्योतिश्चक्रं ध्रुवाद्विगलितं प्रपतति । तदामुख्यौ शशिभास्करौ कीलाद्विगलितौ निर्मुक्तौ भवतः । तदान्धकारे प्रवृत्ते रात्रिः सुतरांप्रवृत्ता भवति ॥ २८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

मनुवंशः पृथ्वीपालकः क्रमेण भवति सप्तर्षिप्रभृतयस्तु युगपत् समकालमेव भवन्ति । सुरेशा इन्द्रास्ताननुवर्तन्ते ये गन्धर्वादयस्तेऽपि त्रैलोक्ये वर्त्तत इति सः त्रैलोक्य [illegible]रित्यर्थः ॥ २५ ॥

स्वमूर्त्तिभिरवतारैः उदित पौरुषः आविष्कृत पुरुषाकारः ॥ २६ ॥

रात्रिगतां स्थितिमाह । तमसो मात्रां त्रैलोक्यमात्रसंहारार्थं लेशं कालाग्निरुद्ररूपेण स्वीकृत्य संहारं प्रति संरुद्धो वह्न्यादिभिरावृतो विक्रमो भूरादिलोकत्रयं येन सः विक्रमो भूर्भुवःस्वरिति पूर्वोक्तेः । ततश्चानुगतमनुप्रविष्टमशेषं त्रैलोक्यस्थजीववृन्दं यत्र सः तूष्णीं त्यक्तमायिकलीलाविनोद इत्यर्थः ॥ २७ ॥

ततश्च तमनुलक्ष्यीकृत्य अपिधीयन्ते कर्म्मकर्त्तरि स्वयमेव तिरोहिता भवंतीत्यर्थः । निर्म्मुक्तः रहितः शशी भास्करश्च यथा स्यात्तथा ॥ २८ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

दैनन्दिनः दिनंदिनं क्रियमाणः ब्राह्मश्चतुर्मुखकृतः त्रैलोक्यं वर्तयतीति स तथा ॥ २५ ॥

स्वमूर्तिभिः मन्वन्तरावतारैः सत्त्वं स्वातन्त्र्यमुद्दिष्टमितिवचनात् सत्त्वं स्वातन्त्र्यं बिभ्रत् बिभ्राणः मन्वादिभिर्निमित्तभूतैर्भगवान् विश्वमवति ॥ २६ ॥

तमसो मात्रां लेशमुपादाय प्रतिसंरुद्धः प्रत्याहृतः विक्रमो येन सः अनुगतमनुप्रविष्टमशेषं यस्मिन् सः दिनात्यये तूष्णीमास्ते ब्रह्मेतिशेषः ॥ २७ ॥

निर्मुक्तः रहितः शशी भास्करश्च यथाभवति तथा लोकाः अपिधीन्ते तिरोहिता भवन्ति ॥ २८ ॥

---

भाषाटीका ।

यह ब्रह्मा का किया दैनंदिन सर्ग है इसी में तीनों लोकों की उत्पत्ति होती है इसी में तिर्यक् मनुष्य पितर देवतों के कर्मानुसार जन्म होते हैं ॥ २५ ॥

त्रिलोक्यां दह्यमानायां शक्त्या सङ्कर्षणाग्निना ।
यान्त्यूष्मणा महर्लोकाज्जनं भृग्वादयोऽर्दिताः ॥ २९ ॥
तावत्त्रिभुवनं सद्यः कल्पान्तैधितसिन्धवः * ।
प्लावयन्त्युत्कटाटोप चण्डवातेरितोर्मयः ॥ ३० ॥
अन्तः स तस्मिन्सलिल आस्तेऽनन्तासनो हरिः ।
योगनिद्रानिमीलाक्षः स्तूयमानो जनालयैः॥ ३१ ॥
एवं विधैरहोरात्रैः कालगत्योपलक्षितैः ।
अपक्षितमिवास्यापि परमायुर्वयः शतम् ॥ ३२ ॥

भाषाटीका ।

मन्वंतरों मे भगवान् सत्व गुण को धारण करके अवतार स्वरूपों से और मन्वादि रूप से इस जगतकों पालन करते हैं ॥ २६ ॥

जब दिन की समाप्ति होती है तब सब व्यापार को समेट करके तमो गुण के अंश को प्रगट करके कालके क्रम से सब प्रपंच को अपने शरीर में स्थापन करके सब व्यापार बन्द करके श्री भगवान् रहते हैं २७ ॥

तिसके ही पीछे चंद्र सूर्य दोनो तिरोहित होगये हैं जिनों मे से ऐसे भूम्यादिक तीनो लोक रात्रिके होते मात्र लीन हो जाते हैं ॥ २८ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

भगवच्छक्तिरूपो यः सङ्कर्षणमुखाग्निस्तेनोष्मणाऽर्दिताः सन्तो जनलोकं यान्ति ॥ २९ ॥

कल्पान्तेनैधिताः सिंधवः समुद्राः उत्कट आटोपः क्षोभो येषां ते च ते चण्डवातैरीरितोर्मयश्च ॥ ३० ॥

जनलोक आलयो येषां महर्लोकाद्गतानामन्येषां च तैः ॥ ३१ ॥

वैराग्यार्थमाह। एवं विधैरहोरात्रैर्वर्षशतं सर्वेषां प्राणिनामायुषः परमधिकमस्य ब्रह्मणो यदायुस्तदप्यपक्षितमिव क्षीणमिवेति लोकोक्तिः गतप्रायमित्यर्थः ॥ ३२ ॥

---

श्रीराधारमणदासगोस्वामि विरचितादीपिन्याख्या दीपिका टिप्पणी ।

दाहस्तु शतवर्षपर्यन्तो ज्ञेयः ॥ २९ ॥

तेधतेइति विशेषणयोःकर्मधारयः शीतोष्णं जल मितिवत् ३०।

अन्येषां च सदा तत्रत्यानाम् ॥ ३१ ॥

वैराग्यार्थमिति।अहो एतादृशपरमायुरपिब्रह्मा यस्माद्बिभेम्यह-मित्युक्त्वा विरज्य निरन्तरं श्रीभगवन्तमुपास्ते कियदायुषोवराकाः मनुष्याः केन साहसेन विषयमुपभुञ्जानास्तं न भजन्तीति भवति वैराग्यं प्रयोजनं कालवर्णनस्येत्यर्थः ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

पुनस्तमेवापिधानप्रकारमाह।त्रिलोक्यामिति द्वाभ्याम्। शक्त्या भगवच्छक्तिरूपेण सङ्कर्षणाग्निना संकर्षणमुखोद्भूतरुद्रगणाग्निना त्रिलोक्यांदह्यमानायां सत्यां तस्याग्नेरूष्मणाऽर्दिताः महर्लोकवासिनो भृग्वादयः तस्माल्लोकाज्जनलोकं यान्ति ॥ २९ ॥

तावत्तदासंकर्षणाग्निना दग्धंत्रिभुवनं कल्पान्ते एधिताः प्रवृद्धाः सिन्धवः उत्कट आटोपः क्षोभः येषां ते च ते चण्डवातेरितोर्मयश्च सद्यः प्लावयन्ति संप्लावयन्ति ॥ ३० ॥

एवं त्रिलोक्यपिधानमभिधाय तस्मिन्प्रलयाम्भसि भगवतोऽवस्थानमाह । तस्मिन् सलिले अन्तर्मध्येऽनन्तः शेष एवासनं यस्य स हरिः योगःस्वानुभवरूपः स एव निद्रा तया मीलिते अक्षिणी यस्य स जनालयैर्जनलोक आलयो येषां तैः स्तूयमानः आस्ते ॥ ३१ ॥

एवं त्रैलोक्यवहिष्ठानामायुः परिमाणमभिधाय "एते वै निरयास्तात स्थानस्य परमात्मन" इत्युक्तरीत्या ब्रह्मभुवनान्तानां हेयत्वमाख्यातुं ब्रह्मायुषोऽप्यपक्षयमाह। कालस्य गत्या परमाणवादिसम्वत्सरान्तरूपगत्योपलक्षितैः एवं विधैः पूर्वोक्तपरिमाणैः परं प्राणिनामयुषः परमधिकं वयः शतं स्वमानेन सम्वत्सरशतात्मकं यदायुस्तदपि अपक्षितमिवापक्षीणमिवेत्यर्थः इव शब्देन किंचिदायुरपक्षीणं किंचिदवशिष्टमिति सूच्यते ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

तमेव लयं स्पष्टयति । त्रिलोक्यामिति । संकर्षणमुखनिर्गताग्निना शक्त्या ज्वालनया भृग्वादयो महर्लोकनिवासिनः तस्मान्महर्लोकाज्जनलोकं यदा यान्ति ॥ २९ ॥

तावत्तदा विषसिन्धवः संकर्षणमुखविषसंमिश्राः समुद्रसिन्धवः उत्कट आटोपो यस्य स तथा अत एव चण्डः उत्कटाटोपश्चासौ चण्डश्चोत्कटाटोपचंडस्तादृशेन वातेनेरिता उत्पन्नाः ता ऊर्मयो येषु तथोक्ताः आटोपः कोलाहलः ॥ ३० ॥

कल्पप्रलयोदके हरेः स्थितिप्रकारं वक्ति । अन्तरिति । अनन्तासन इत्यनेन हरेः स्वापः प्रलयार्थमुपचर्यते ननु तात्विक इत्युपगम्यते ॥ ३१ ॥

एवं विधाहोरात्रवर्णनेन किं प्रयोजनमत्राह । एवमिति ।

* विष सिन्धव इति विजयध्वज पाठः ।

यदर्धमायुषस्तस्य परार्धमभिधीयते ।
पूर्वः परार्धोऽपक्रान्तो ह्यपरोऽद्य प्रवर्त्तते ॥ ३३ ॥
पूर्वस्यादौ परार्धस्य ब्राह्मो नाम महानभूत् ।
कल्पो यत्राभवद्ब्रह्मा शब्दब्रह्मेति यं विदुः ॥ ३४ ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

अस्य ब्रह्मणोऽप्येवम् विधैरहोरात्रैर्वयः शतं परमायुस्तथापि पुनरपेक्षितमिवेत्यन्वयः कीदृशैः कालनाम्नः सूर्यान्तर्यामिणो-हरेर्गत्योपलक्षितैः ब्रह्मकालस्य सूर्यगत्योपलक्षणं मनुष्यकालस्य तु दर्शनमिति विवेकः अस्येति न परमात्मन उच्यते "नायुर्मा-नं भगवतः कस्मिन् रूपेऽपि विद्यते । अनादित्वादमध्यत्वादनन्त-त्वाच्च सोऽव्यय„ इति वचनेन हरेः कल्पितायुर्निषेधाद्वहिराब्रह्म-णो दिनमिति तस्य प्रस्तुतत्वाच्च ॥ ३२ ॥

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

उत्कट टोपैश्चण्डवातैरीरिता उर्म्मयो येषां ते ॥ ३१—३३ ॥

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

तदा सङ्कर्षणमुखात् उत्थितोऽनलः त्रिलोकीं दहति जना अभिमानिन्यो देवताश्च पूर्वमेव गताः शिष्टमचेतनमग्निर्दहति मृदादीन् कथमग्निर्दहेदित्याशङ्क्य सोऽग्निः शक्तिरूप इत्युक्तम् । तस्याग्नेः प्राकृतवैलक्षण्याय माहात्म्यमाह । भृग्वादयः पीडिता भवन्तीति ॥ २९ ॥

तदनन्तरं भगवद्वशा घनाः वर्षन्तीत्याह। तावदिति । तावत्सि-न्धवः कल्पान्तेन कालेन एधिता मेघद्वारा वडवानलशान्ति-द्वारा वा सिन्धवः त्रिभुवनं प्लावयन्ति। उत्कटो योऽयमाटोपः तत्सहितो योऽयं चण्डो वातः तेन जनिताः ऊर्मयो येषु ॥ ३० ॥

तदा तस्मिन् सलिले शेषापरनामाऽनन्तः अन्तः स्थितस-र्वलोकानां दुःखहर्ता योगनिद्रया निमीलिताक्षः योगनिद्रया कृत्वा निमीलनं निमीलः तद्युक्ते अक्षिणी यस्य । जनालयैर्भृ-ग्वादिभिस्तूयमानः हिन्दोलायां गायकैर्गीयमान इव निमीलिताक्ष आस्ते शेत इत्यर्थः ॥ ३१ ॥

एवं ब्रह्मणो रात्रिन्दिवव्यवस्था निरूपिता तदनन्तरं ताद्दि-नाहोरात्रेण ब्रह्मण आयुराह।एवंविधैरिति । ननु द्वितीयदिवसस्य कथं प्रवृत्तिः । कर्मसूर्यगत्यादीनामभावादित्याशङ्क्याह । काल-गत्योपलक्षितैरिति । कालप्रवाहस्य विद्यमानत्वात् निर्विशेषं न सामान्यमिति न्यायेन सामान्येनोपलक्षिता विशेषा भवन्तीति पुनरहोरात्रप्रवृत्तिः एवमहोरात्रावृत्त्या पक्षमासवर्षावृत्तिः । तदा ब्रह्मणो वर्षशतं भवति तावद्भिरपि वर्षैर्ब्रह्मण आयुः अपेक्षि-तमेव भवति। तस्यापि ममायुर्वहिति न बुद्धिः । किन्तु अन्य-दपि चेद्भवेत् तदा समीचीनं भवेदितीच्छैव तिष्ठति ॥ ३२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

केन प्रकारेण इत्यपेक्षायामाह । त्रिलोक्यामिति ॥ २९ ॥

सद्य इति त्रिलोक्यां दग्धायां सत्यामविलम्बेनैवेत्यर्थः । दाहस्तु शतवर्षपर्यन्तोज्ञेयः। उत्कट आटोपः क्षोभो येषां ते च ते चण्डवातेरित तरङ्गाश्चेति ते ॥ ३० ॥

योगाख्या विमलादीनां चिच्छक्तिवृत्तीनां पञ्चमी सैव ता[ं]-नीं निद्रारूपा तया मुदितनेत्रः । जनालयैर्जनलोकनिवासिभि-र्मुनिभिः ॥ ३१ ॥

अस्य ब्रह्मणोऽप्यायुरपक्षितमपक्षीणं गतप्रायमेवेति यस्मा[द]-भेम्यहमित्युक्त्या कालाद्बिभ्यता ब्रह्मणापि विषयभोगेभ्यो विर[क्त]-निरन्तरमेव भगवानुपास्यते मनुष्याः कियदायुषः केन साहसे[न] विषयमुपभुञ्जानास्तं न भजन्तीति भक्तिवैराग्ययोः प्रयत्न आव-श्यक इति कालनिरूपणप्रयोजनमुक्तम् ॥ ३२ ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

सङ्कर्षणाग्निरूपया भगवच्छक्त्या ॥ २९ ॥

उत्कटः असह्यः आटोपः क्षोभो येषां ते च तेचण्डवातैरीरि[ता ऊर्]-मयश्च ते तथा कल्पान्तेनैधिताः सम्वर्द्धिताः सिंधवः त्रिभुवं[नं] सद्यः प्लावयन्ति ॥ ३० ॥

यः हरिः सलिलं आस्ते तस्मिन् सः प्रस्तुतः ब्रह्मापि अन्त-र्मध्ये आस्ते निद्रां प्राप्नोति कल्पान्ते "इदमादाय शयानेऽम्भस्युदन्व[ति] शिशयिषोरनुप्राणं विविशेऽन्तरहं प्रभो" रित्युक्तत्वात् कौर्मेपि "ततोऽ[न्त]-तीर्य विश्वात्मा देहमाविश्य चक्रिणः । अवाप वैष्णवीं निद्रामेक[ी]-भूयाथ विष्णुने„ति ॥ ३१ ॥

अस्य चतुर्मुखस्य कालगत्या परमाणवादिसम्वत्सरान्तकाल[स्य] गमनेनोपलक्षितैः एवं विधैरुक्तप्रकारैः अहोरात्रैः परं सर्वप्राण्या-युषः अधिकं वयः शतम् स्वमानेन सम्वत्सरशतात्मकं यदायुस्तद[पि] अपक्षितमिव अपक्षीणमिव गतप्रायमित्यर्थः ॥ ३२ ॥ ३३ ॥ ३४ ॥

भाषाटीका ।

तब भगवान् का शक्ति रूप जो संकर्षण जी के मुख का अ[ग्नि] तिससे जब तीनो त्रिलोकी दहन होने लगती है तब भृगु आ[दि] मुनि पीडित होकर गरमी के मारे महर्लोक से जन लोक को च[ले] जाते हैं ॥ २९ ॥

फिर सौ वर्ष तक दहन होने पर प्रचंड पवन से बड़ी भा[री] लहर तथा हलचल वाले कल्पांत में बढे हुये समुद्र सब शीघ्र[ही] त्रिभुव को डुवाय देते हैं ॥ ३० ॥

तिस समय पर अनंत की शय्या वाले हरि योग निद्रा से ने[त्रों] को बंद करके जनलोक वासियों से स्तुत होते हुये उस जल [के] मध्य मे रहते हैं ॥ ३१ ॥

काल गति करके उप लक्षित ऐसे अहो रात्रों से क्षीण हु[ई] सरीका परम आयु ब्रह्मा का सौ वर्षही का है ॥ ३२ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

तदेवाऽऽह । यदिति ॥ ३३ ॥

पूर्वस्य परार्द्धस्यादाविति त्रिभिर्वस्तु कथनमात्रम् ॥ ३४ ॥

तस्यैव चान्ते कल्पोऽभूद्यं पाद्ममभिचक्षते ।
यद्धरेर्नाभिसरस आसील्लोकसरोरुहम् ॥ ३५ ॥
अयं तु कथितः कल्पो द्वितीयस्यापि भारत ! ।
वाराह इति विख्यातो यत्रासीत् सूकरो हरिः ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

पाद्मत्वेहेतुः । यदिति ॥ ३५ ॥

अयन्तु द्वितीयस्यादौ कथितः ॥ ३६ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्यख्या दीपिका टिप्पणी ।

तदेव गतप्रायत्वमेव अद्य अस्मिन् कल्पे ॥ ३३ ॥

त्रिभिः श्लोकैर्वस्तुनः ज्योतिः शास्त्रानुसारेण शुक्लप्रतिपत्तुल्य जन्मतिथिलक्षणब्राह्मकल्पस्य तथा पञ्चाशत्तमवर्षान्त्यदिनलक्षण-पाद्मकल्पस्य तथा द्वितीयपरार्द्धादिमैकपञ्चाशत्तमवर्षस्य प्रथम-दिवसलक्षणश्वेतवाराहकल्पस्य च वस्तुत्रयस्य कथनमात्रम् ननु-कल्पानां क्रमेण परिगणनमित्यर्थः ॥ ३४ ॥

तस्यैव पूर्वपरार्द्धस्यैव यद्यस्मात् यस्मिन्कल्पेच ॥ ३५ ॥

यथा पूर्वपरार्द्धस्यादौ ब्राह्मकल्पस्तथा द्वितीयपरार्द्धस्या-प्यादौ अयन्तु वर्त्तमानः कल्पोनिर्दिष्टः तस्य संज्ञामाह । वाराहत्वे हेतुः यत्रेति ॥ ३६ ॥

---

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

अनन्तो हरिरक्षरतन्मात्रस्यात्रकियदायुषः कियदवशिष्टमित्य-त्राह । यदिति । तस्य ब्रह्मणो यदायुस्तन्मानेन सम्वत्सरशतात्मकस्य तस्यायुषः अर्द्धं परार्द्धमिति कथ्यते तस्य द्विपरार्द्धात्मकस्यायुषः पूर्वः परर्द्धोऽपक्रान्तः अपगतःअपर उत्तरपरार्द्धः अद्याधुना प्रवर्त्तते इत्यर्थः ॥ ३३ ॥

पूर्वोत्तरयोः परार्धयोः प्रतिदिनकल्पानामभेदोऽस्ति नेतीति संशयं निराकुर्वन् कल्पानां बहुत्वात्पूर्वपरार्द्धस्याद्यन्तयोः कल्पयो-रुत्तरपरार्धोतपरकल्पस्य चान्वर्थानि नामान्याह । पूर्वस्येत्यादिभिस्त्रि-भिः श्लोकैः । पूर्वस्य परार्द्धस्यादौ ब्राह्मो नाम ब्राह्माख्यमहाकल्पः अभूत् नाम्नोऽन्वर्थतां वदन्महत्त्वं चाह यत्र पूर्वपरार्द्धाद्यकल्पे ब्रह्मा-अभवदिदमेवान्वर्थतानिमित्तं कोऽसौ ब्रह्मा यत्सम्बन्धात्कल्पस्य ब्राह्मत्वमत आह । यं शब्दब्रह्मेति वेदमयमिति विदुः इदमेव हि महत्त्वे निमित्तं यस्य परब्रह्मतदुपासनतदाराधनप्रकाशकवेदमय-ब्रह्मणो यत्रोत्पत्तिरिति ॥ ३४ ॥

तस्यैव च पूर्वपरार्धस्यान्ते यं कल्पं ब्राह्ममित्याचक्षते मनीषिण इति स कल्पोऽभूत् तस्य पाद्माख्यात्वनिमित्तमाह । यत् यत्र कल्पे हरेर्भगवतोऽनिरुद्धस्य नाभिरेव सरस्तस्माल्लोकसरोरुहं भुवन-कोशात्मकं कमलमासीदुदपद्यत ॥ ३५ ॥

द्वितीयस्यापि द्वितीयपरार्द्धस्याप्ययं कल्पः कथितः कोऽसौ इत्यत आह । वाराह इति विख्यातः प्रसिद्धः अन्वर्थताया निमित्त माह । यत्र यस्मिन् कल्पे हरिः शूकररूपेणासीत् ॥ ३६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ब्रह्मण आयुरर्धमेव तावद्गतमिति ज्ञापयितुं तदायुर्विभजति यदर्धमिति ॥ ३३ ॥

यत्र यस्मिन् कल्पे स ब्रह्मा सर्वस्मात्प्रथममभवत् पाद्मादि कल्पेषु पद्माद्युत्पत्त्यनन्तरं ब्रह्मोत्पत्तेर्यं ब्राह्मं ब्रह्माख्यं वा शब्द ब्रह्मेति वेदवेद्यमिति विदुर्ज्ञानिन इतिशेषः ॥ ३४ ॥

प्रथमपरार्धावसाने कल्पमाह । तस्यैवेति । यद्यस्मिन्कल्पे ॥ ३५ ॥

द्वितीयपरार्धस्याद्यकल्पमाह । अयमिति । द्वितीयपरार्धस्यायम् वाराह इति विख्यातः प्रथमः कल्पः ॥ ३६ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

यदर्द्धमिति अद्य अस्मिन् ॥ ३४–३७ ॥

---

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

इदानीं तस्मिन्नायुषि स्थूलान् कल्पान् निरूपयितुं तस्या-युषो विभागमाह । यदर्द्धमायुषस्तस्येति । तस्य ब्रह्मण आयुषो यदर्द्धं तत्परार्द्धमित्यभिधीयते ब्रह्मायुषः परशब्दवाच्यात् पर-स्यार्द्धमिति तत्र पूर्वपरार्द्धस्य आद्यन्तौ ज्ञापयितुं पूर्वस्य समाप्तिमाह । पूर्वः परार्द्धोऽपक्रान्त इति । अद्य इदानीं अपरः प्रव-र्तत इति ब्रह्मणोऽप्यायुर्गतप्रायमिति सूच्यते । वैराग्यमुपदिष्टं साधारणानामिन्द्रियाध्यासत्वात् ॥ ३३ ॥

तत्र मुख्यकल्पानां मध्ये आद्यो ब्रह्मकल्प इत्याह । पूर्वस्ये-ति । तस्य कल्पस्य ब्राह्मत्वमुपपादयति सतु महान् कल्प आसीत् संवत्सरात्मको न तु दैनन्दिनः यत्र कल्पे ब्रह्मा स्वयमभूत् उत्पन्न इत्यर्थः । तस्मिन्कल्पे भगवानेव ब्रह्मेति तस्य सर्वक-ल्पेषु साधारण्यं मन्यमानः कल्पप्रयोजकं ब्रह्मणोरूपमाह शब्दब्रह्मेति यं विदुरिति । तस्मिन् कल्पे शब्दब्रह्मणः सकाशादेव सर्वोत्पत्तिः । तस्य शब्दब्रह्मणः स्वरूपं बुद्ध्यध्याये अग्रेवक्ष्यते ॥ ३४ ॥

तस्यान्तिमवर्षकल्पमाह । तस्यैव चान्त इति । यं पाद्ममभिच-क्षत इति स पद्मकल्पः पूर्वमुक्तः तस्य पद्मकल्पत्वनिमित्तमाह । यद्धरेर्नाभिसरस इति । पद्मेन कल्प्यत इतिव्युत्पत्त्या तस्य पद्म-कल्पत्वसिद्धेः पद्मोभव एव वक्तव्यः तदर्थं नाभिसरोरुहमि-त्युक्तम् ॥ ३५ ॥

द्वितीयपरार्द्धस्य आद्यं सम्वत्सरकल्पमाह । अयन्तु कथितः कल्प इति । तुशब्दो दैनन्दिनं व्यावर्तयति । वाराहइति । आद्यस्या-द्यो ब्राह्मः वेदात्मकः द्वितीयस्याद्यः शब्दार्थात्मकः वाराह इति लोके विख्यातः । तस्य वाराहत्वमुपपादयति । यत्रासीदिति । वराहः शूकरः हरिरिति ब्रह्मादीनां दुःखनिवारणं तथावतारे हेतुः । तत्रादिवाराहकल्पः प्रथमः वाराहो द्वितीयः तृतीयः श्वेत वाराहः सोऽयं वर्तमानः ॥ ३६ ॥

---

कालोऽयं द्विपरार्धाख्यो निमेष उपचर्यते ।
अव्याकृतस्यानन्तस्य अनादेर्जगदात्मनः ॥ ३७ ॥
कालोऽयं परमाण्वादिर्द्विपरार्धान्त ईश्वरः ।
नैवेशितुं प्रभुर्भूम्न ईश्वरो धाममानिनाम् ॥ ३८ ॥
विकारैः सहितो युक्तैर्विशेषादिभिरावृतः ।
आण्डकोशो वहिरयं पञ्चाशत्कोटिविस्तृतः ॥ ३९ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तदायुर्द्विधा विभक्तमाह । यदिति ॥ ३३ ॥

पूर्व्वस्येति। प्रभासखण्डोक्तैः श्वेतवाराहादिभिः पितृकल्पास्तैस्त्रिंशत्कल्पैरेव शुक्लप्रतिपदाद्यमावास्यान्तानि त्रिंशद्दिनानि तेषामेव कल्पानां पुनः पुनरावृत्त्या मासाः मासैर्द्वादशभिर्वर्षं पञ्चाशता वर्षैरेकं परार्द्धम्। तत्र पूर्वस्य प्रथमस्य आदौ ब्राह्म इति श्वेतवाराह एव ब्रह्मजन्मतिथित्वात् ब्राह्मशब्देनोच्यते । सा तिथिश्च चैत्र शुक्लप्रतिपदेव ज्योतिःशास्त्रोक्त्या ज्ञेया ॥ ३४ ॥

कल्पः पितृकल्पः यं परार्द्धस्यैवान्तिमं पितृकल्पमेव पाद्मं वदन्ति पाद्मत्वे हेतुः। यदिति । तेन सर्व्वेष्वेव कल्पेषु लोकात्मकं पद्मं न भवति किन्तु कापि कार्य्येवेत्यर्थः ॥ ३५ ॥

अयन्तु सम्प्रति वर्त्तमानःद्वितीयस्य परार्द्धस्य एकपञ्चाशत्तमवर्षस्य प्रथमदिवसइत्यर्थः । अत्र पाद्मं कल्पमतो भृगिवस्तुपक्रान्तायामुदाप्लुतं विश्वमित्यादिपाद्मकल्पकथायामेकार्णवोदके एकस्य पद्मस्यैव श्रवणात् तत्रैकस्य ब्रह्मण एवोद्भवाद्विलोक्य तत्रान्यदपद्यमान इत्याद्युक्तेर्महाकल्पायुषां सनकादीनाञ्च तत्रानुपलम्भात् केचित् प्रथमपरार्द्धान्ते महर्जनस्तपः सत्यानां द्विपरार्धान्तपर्य्यन्ते स्थायिनामनष्टानामपि जलाप्लवनं तथा तत्रत्यानां सर्वेषामेव कल्पायुषां ब्रह्मसाहित्येनैव श्रीनारायणे प्रवेशमाख्याय प्रथमपरार्द्धसमाप्तौ द्वितीयपरार्द्धस्यादिमं श्वेतवाराहमेव पाद्ममाहुः । द्वादशाध्याये च सनकादिमरीच्यादीनां ब्राह्मकल्प इव ब्रह्मतपवाविर्भावश्च वक्ष्यते न च तत्र ब्राह्मकल्पकथैवेति वाच्यं पाद्मकल्पकथायाः प्रक्रान्तत्वात् । तस्मात्तस्यैव चान्त इत्यत्र अन्ते अवसाने समाप्ताविल्यर्थ इति । अयन्त्विति तुरेवार्थे अयमेव पाद्म एव वाराह इति ख्यातः । तत्र हेतुर्यत्रासीदिति द्वितीयस्यापीत्यपिकारेण प्रथमपरार्द्धस्यादिमो ब्राह्मः कल्पोऽपि पाद्म उच्यत इति व्याचक्षते ॥ ३६ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

यं पाद्ममभिचक्षते स तस्य पूर्वपरार्द्धस्यान्ते कल्पद्वयावृत्त्या कल्पोऽभूत् ॥ ३५ ॥

द्वितीयस्य परार्द्धस्य आदौ कथितः वाराह इति नामान्तरेण विख्यातः वस्तुतस्तु ब्रह्मकल्पः ॥ ३६ ॥

---

भाषाटीका ।

ब्रह्माकी आयु का जो अर्ध भाग है वह परार्ध कहाता है पूर्व परार्ध चला गया है द्वितीय अब प्रवृत्त होरहा है ॥ ३३ ॥

पूर्व परार्द्ध के आदि में ब्राह्म नामक महाकल्प हुआ उसमें ब्रह्मा भये जिन ब्रह्माजी कूं शब्द ब्रह्म ऐसा कहते हैं ॥ ३४ ॥

उसी पूर्व परार्ध के अन्त में एक कल्प हुआ जिसको पा[द्म] नामक कल्प कहते हैं जिस कल्प में श्रीनारायण के नाभि [क]मल से त्रिलोक रूप कमल हुआ ॥ ३५ ॥

हे भारत । विदुरजी ! यह कल्प हमने तुमसे कहा है सो द्वि[ती]यपरार्ध के आदि में हुआ है वाराह इस नाम से प्रसिद्ध है जि[स] में सूकरावतार वाले हरि भये ॥ ३६ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

तदेवं कालेन निमित्तेन मृज्यानामायुः परिमाणमुक्त्वा काल[स्य] परिच्छेदरहितं तत्त्वमाह । कालोऽयमिति । पञ्चभिः उपच[र्यते] केवलं नत्वनेनापि क्रमेणायुर्गणनं तस्येत्याह । अव्याकृत[स्य] कार्योपाधिशून्यास्यातएवानन्तस्यान।देश्च जगदात्मनो जगत्कार[ण]स्य ॥ ३७ ॥

तत्परिच्छेदे कालस्यासामर्थ्यादित्याह।कालोऽयमीश्वरः।समर्थो[ऽपि] भूम्नः परिपूर्णस्येशितुं नैव प्रभुः समर्थः यतो धाममानि[नां] देहगेहाभिमानिनामेवेश्वरः ॥ ३८ ॥

भूम्न इत्युक्तं तत्प्रपञ्चयन्नाह । विकारैः षोडशभिर्युक्तैरष्टभिः संयुक्तैः सहितस्तदारब्ध इत्यर्थः अयमाण्डकोशो यत्र प्रवि[ष्टः] परमाणुवल्लक्ष्यते इत्युत्तरेणान्वयः कीदृशः अन्तः पञ्चाशत्को[टि]योजनविस्तृतो वहिश्च विशेषादिभिः सप्तभिरावृतः ॥ ३९ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

उपचर्य्यते लौकिकसदृशतयानिरूप्यते अनेनापि द्विपरा[र्ध]स्यापि निमेषत्वादिरूपेण क्रमेण अतएव उपाधिशून्यस्य जगत्कारणस्य कारणार्णवशायिनः ॥ ३७ ॥

आयुर्गणनाभावे हेतुस्तस्येति परिच्छेदे व्यापने नाशने यावत् देहाभिमानिनां सत्यलोकाकाद्यधिकारिणाम् ॥ ३८ ॥

तद् भूमत्वं प्रकृति संयुक्तैः मूलप्रकृतिमहदहङ्कारपञ्चतन्मात्रारूपाष्टप्रकृतिसहितैरेकादशेन्द्रियपञ्चमहाभूतरूपैः षोडश कारैर्ब्रह्माण्डकारणैस्सहितस्तथा च तैरचितइतिफलितोऽर्थः त्वं तत्त्वान्तरारम्भकत्वं तदनारम्भकत्वं विकारत्वं महाभूत शरीरादिजनकत्वेऽपि तेषां तत्त्वान्तरत्वाभावाच्चप्रकृतत्वमिति तदुक्तं कृष्णाचार्य्यैः "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृति[वि]यस्सप्त षोडशकस्तुविकारोनप्रकृतिर्नविकृतिः पुरुष इति पृथि[व्या]दिभिः पृथिव्यादीनामविकृतैरंशैरावरणसंज्ञैस्सप्तभिरावृतः ॥

---

**श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।**

ननु चतुर्मुखपर्यन्तानां कालकाल्यत्वमुक्तं तद्वत्परमात्मनोऽपि किंकालकाल्यत्वमस्तीत्याशङ्क्य नेत्याह । काल इत्यादिना । द्विपरार्द्धाख्योऽयं कालः अनादेर्भगवतो निमेष इवाभातीत्यर्थः निमेष इत्युक्ते कालपरिच्छिन्नत्वं स्यादित्याशङ्क्य उपचर्यत इत्युक्तम् अनादित्वात् न तस्य कालकाल्यत्वमित्यभिप्रायेणानादेरित्युक्तम् अनादेरपि हिरण्यगर्भादिचेतनस्य कालपरिच्छिन्नता त्वयाभिहिता तद्वत्परस्यापि सा स्यादित्यत्राह । अव्याकृतस्य । प्राकृतनामरूपराहितस्य हिरण्यगर्भादीनां प्राकृतनामरूपभाक्त्वेनादिमत्त्वमित्यभिप्रायः कथं तस्य नामरूपराहित्यम् उपादानकारणत्वेन नामरूपभाक्त्वस्यावर्जनीयत्वादित्यत उक्तं जगदात्मन आत्मतयानामरूपनिर्वोढृत्वेनोपादानत्वेऽपि स्वतो नामरूपभाक्त्वाभावात् ॥ ३७ ॥

कालइति । परमाणवादिर्द्विपरार्धान्तोऽयं कालात्मा य ईश्वरः ईश्वरशरीरत्वेन तन्नियामकः कालः अन्येषां धाममानिनामुल्वणं मन्यमानानां ब्रह्मरुद्रादीनामीश्वरः प्रभुरपि ईशितुः स्वेशितुर्भूम्नः त्रिविधपरिच्छेदरहितस्य भगवतो न प्रभुः न समर्थ इत्यर्थः ॥ ३८ ॥

प्रभुत्वमेवाह । विकारैरिति त्रिभिः । शब्दादिविषयाः पञ्च वागादिव्यापाराः पञ्च प्राणादिवायुवृत्तयः पञ्च एको मनोविकारः संकल्पादिः एतैः षोडशभिर्विकारैर्युक्तः विशेषादिभिः पृथ्व्यादिभिः पृथिव्यप्तेजोवाय्वाकाशाहंकारमहत्प्रभृतिभिः कथंभूतैः विशेषादिदशोत्तरादिभिर्दशोत्तराधिकैर्दशगुणमुत्तरोत्तरमधिकैर्बहिरावृतः पञ्चाशत्कोटिविस्तृतोऽयमण्डकोशः ॥ ३९ ॥

---

**श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।**

हरेः कालमितायुर्मानं नास्तीति ध्वनितमिदानीं स्पष्टयति काल इति । निमेषस्त्विव इत्युपचर्यते न तु परमार्थः हरेरिति शेषः तस्य निमेषास्तित्वे तद्धर्मत्वे कालाभिभूतत्वमायातमिति मन्दाशङ्कां प्रत्याह । अव्याकृतस्येति । यःपरमाण्वादिर्द्विपरार्धान्तस्तवैरितः कथितः यश्च धाम्नां लोकानां मानिनां ममाहमित्यभिमानवतां ब्रह्मादीनां प्रभुरन्यथा कर्तेश्वरः स कालो भूम्नो देशतः कालतो गुणतश्च पूर्णस्य नैवेष्टे नैवेश्वरो न प्रभुर्नान्यथा कर्तुं समर्थश्चेति यस्मात्तस्मादज्ञबोधनाय निमेष इत्युक्तमत एवोपचर्यत इत्युक्तम् भूमत्वमुपपादयति । अव्याकृतस्येत्यादिना । अव्याकृतस्य निमेषादिविकाररहितस्य परिच्छिन्नत्वेन विकारसंभवःस्यादित्यत उक्तमनन्तस्येति । देशाद्यन्तत्रयरहितस्य आकाशे नीलिमोदेतीति श्रुतेरनन्तस्याप्याकाशस्येव जनिमत्वं किंनस्यादत उक्तमनादेरिति कारणशून्यस्य विचित्रजगत्तु एकं किं कारणं न स्यादतउक्तं जगदात्मन इति जगत्स्वामिनः हीत्यनेनानादित्वादमध्यत्वादनन्तत्वादिति हेतुत्रयं स्मृत्युक्तं सूचितम् अत्र कालशब्देन बहूनामभिधेयत्वेऽपि सर्वसंहर्त्री श्रीदुर्गैवाभिधीयते तस्या एव ब्रह्मादिप्रभुत्वादन्यथा चेतनसन्निधानरहितस्य पाषाणादेरपि प्रभुत्वं स्यान्न चेदं क्वापि दृष्टमित्यभिप्रायेणाचार्यैः"यमः कालो मानुषाणां तस्य कालः सुदर्शनः । तस्यापि रुद्रस्तत्कालो ब्रह्मादुर्गापि तस्य तु" इत्याद्युदाहृतम् ॥ ३७ ॥ ॥ ३८ ॥

प्रकारान्तरेण भगवन्माहात्म्यं कथयति । विकारैरिति । अन्तर्दशेन्द्रियपञ्चभूतमन आख्यैः षोडशविकारैर्युक्तः दशेन्द्रियाणि च अनोभूतान्यण्डगतानि तु विकारा इति वचनात् । बहिर्द्विगुणयाविशेषनाम्न्या पृथिव्या वृतः ततः परत आदिशब्दगृहीतैः दशोत्तरैः अप्तेजोवाय्वाकाशाहंकारमहत्तत्त्वप्रकृतिभिः पृथिव्या सहाष्टप्रकृतिसंज्ञागतैरावृतः " पृथ्वीविशेष इत्याहुः शब्दादीनां बहुत्वतः । सा सूक्ष्मत्वाद्बृहत्त्वाद्धीण्डं द्विगुणा तु दशोत्तराः । अवादयः प्रकृत्यन्ता अष्टप्रकृतयः स्मृता „ इति च कियत्संख्याविस्तार इत्यत उक्तं पञ्चाशदिति एवं विधोऽण्डकोशोऽयं यत्र हरिः प्रविष्टः परमाणुवल्लक्ष्यते तस्मिन्नण्डकोशेऽन्तर्गताश्चान्ये च कोटिशो हरेः शरीररूपाण्डराशयो लक्ष्यन्ते ॥ ३९ ॥ ४० ॥

---

**श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।**

तदेवम् ब्रह्मणो दिनकल्पनेन गर्भोदशायिनो दिनकल्पना ज्ञेया । तस्यापि तदन्ते योगनिद्रास्वीकारात् । कारणार्णवशायिनः कालकल्पनन्त्वेवमित्याह । कालोऽयमिति । यस्यैकनिश्वसितकालमथावलम्ब्यजीवन्ति लोमविलजा जगदण्डनाथा इति ब्रह्मसंहितातः ॥ ३७ ॥

धाममानिनां सत्यलोकाद्यधिकारमानिनाम् ॥ ३८ ॥

विकारैरिति युग्मकम् । विकारा एकादशेन्द्रियपञ्चमहाभूतरूपाः प्रकृतयः प्रकृतिमहदहङ्कारपञ्चतन्मात्रारूपाः महदाद्याः— प्रकृतिविकृतयः सप्तेतिन्यायेन स्वस्वकार्यं प्रति महदादीनामपि प्रकृतित्वमननात् ॥ ३९ ॥

---

**श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।**

एवं ब्रह्मण आयुर्निरूप्य अक्षरस्याप्यायुर्वक्तव्यमित्याकाङ्क्षायामाह । कालोऽयमिति । अयं द्विपरार्द्धाख्यः कालः अक्षरायुपोनिमेषो भवति अयं निमेषः उन्मेषनिमेषात्मकः तेनापि प्रकारेण गणना नोचिता परिच्छेदसम्भवात् । सर्वदा ह्यपरिच्छिन्नं ह्यक्षरं ब्रह्म अत आह । उपचर्यत इति । ब्रह्मायुर्निमेष उपचारादेवोक्तः नतु वस्तुतः तत्र हेतुमाह । अव्याकृतस्येति । न केनापि व्याकरणमाविर्भावोयस्य । आविर्भावतिरोभावयोर्मध्यवर्ती कालः आयुरित्युच्यते । तत्राविर्भावाभावे तिरोभावोऽपि नास्तीति तस्यायुरेव नास्ति कस्य गणना स्यात् । किंच । परिच्छिन्नेहि गणना तदाह । अनन्तस्येति । अन्तरहितस्य तस्मादुत्तरावध्यभावात् न कालगणना आरम्भोऽपि नास्तीत्याह । अनादेरिति । अनादित्वं निरूपयति । जगदात्मन इति । जगतामात्मा येऽपि परिच्छेदकाःकालादयस्तेषामप्ययमात्मा । यथा देहस्यैवायुः नात्मनः । तथा अस्याक्षरस्य जगतामात्मनो देहस्थानीयाः । अतोदेहस्थानीयानामपि नित्यत्वात् । नाक्षरस्यायुः केनापि प्रकारेणसिद्ध्यति ॥ ३७ ॥

किंच अयं कालः परमाणवादिर्द्विपरार्द्धान्तः । मनुष्यायुःपरिच्छेदकसूक्ष्मोपाधिमारभ्य ब्रह्मणः परमायुश्छेदकपर्यन्तं कालः सर्वेषां धाममानिनामीश्वरोऽपि सन् नियन्तापि सन् भूम्नोऽक्षरस्य प्रभुर्न भवति । तत्रापि ईशितुः प्रभुर्न भवति । भगवल्लक्षीशितव्यं कर्तुं न समर्थो भवेदित्यर्थः । ईश्वरोधाममानिनामिति । भिन्नं वाक्यं तेनेश्वरपदेन न पौनरुक्त्यं । पुनरीश्वरग्रहणं तस्यैश्वर्यं स्थापयितुम् । अन्यथा मूले अनीश्वरः सर्वत्रैवानीश्वरः स्यात् ॥ ३८ ॥

एवं कालपरिच्छेदाभावमुक्त्वा स्वरूपमाह । विकारैरिति । विकारैः षोडशविकारैः एकादशेन्द्रियाणि पञ्चतन्मात्राश्च अव-

दशोत्तराधिकैर्यत्र प्रविष्टः परमाणुवत्।
लक्ष्यन्तेऽन्तर्गताश्चान्ये कोटिशो ह्यण्डराशयः॥ ४०॥
तदाहुरक्षरं ब्रह्म सर्वकारणकारणम्।
विष्णोर्धाम परं साक्षात्पुरुषस्य महात्मनः॥ ४१॥
इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धेविदुर
मैत्रेय सम्वादे कालस्वरूपकथनम्
एकादशोऽध्यायः॥ ११॥

—o:*:o—

**श्रीमद्वल्लभाचार्यकृत सुबोधिनी।**

रणं महाभूतानां विनियोगात् महाभूतानि वा उत्पत्तौ तन्मात्राणां प्राधान्यात् युक्तैर्मिलितैः अयुक्तैर्विशेषादिभिः पृथिव्यादिभिः आवृतःअयमाण्डकोशः वाहिरावृतस्य मध्ये स्वरूपं पञ्चाशत्कोटिविस्तृतम् वहिरेव वा पञ्चाशत्कोटिविस्तृतः अयंगोलः पञ्चमस्कन्धोक्ततिर्यग्गोलादन्यः सएव वा ऊर्ध्वगोलः ज्योतिः शास्त्रे गोलकपदकस्य प्रसिद्धत्वात् पद्मकल्पे पञ्चाशत्कोटिविस्तृतं कमलं वाराहे भूम्येव तावती अतोनानाप्रकारनिरूपणम् न दोषाय नाप्यन्योऽन्यविरुद्धम्॥ ३९॥

**श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।**

तदेवं सूक्ष्मं स्थूलं कालमुक्त्वेदानीमात्यन्तिकं स्थूलं परममहान्तं कालमाह। द्विपरार्द्धसंज्ञः कालस्य पर्य्यवसानासम्भवेऽप्यात्यन्तिकस्थूलत्वेन स एव शास्त्रे व्यवह्रियते सोऽपि जगदात्मनः परमेश्वरस्य निमेषः। नन्वेवं निमेषादिक्रमेण तस्यापि किमायुर्गण्यते तत्र नाह नहीति सरसनादंशमाह उपचर्य्यते कचिन्निमेष इति। यस्यैकनिश्वसितकालमथावलम्ब्य जीवन्ति लोमविलजा जगदण्डनाथा इति ब्रह्मसंहितादौ कचिन्निश्वास इत्युपचारमात्रं न तु वस्तुतो निमेषोऽपीत्यर्थः यतोऽव्याकृतस्य कालकृतविकाररहितस्य तत्र हेतुरनन्तस्यानादेः कालपरिच्छेदातीतस्येत्यर्थः यतोजगदात्मनः कालादिसर्वजगत्कारणस्य३७ व्यञ्जितमेवार्थं पुनः स्पष्टयति। कालोऽयमिति। भूम्नः परमेश्वरस्य धाममानिनां सत्यलोकाद्यधिकारिणाम्॥ ३८॥

जगदात्मन इत्यनेन व्यञ्जितं सर्व्वजगत् परिच्छेदकत्वं तस्याह। विकारैः षोडशभिर्युक्तैः अष्टप्रकृतियुक्तैः सहितस्तदारब्ध इत्यर्थः। अयमण्डकोशो यत्र प्रविष्टः परमाणुवल्लक्ष्यते इत्युत्तरेणान्वयः। कीदृशः वहिर्विशेषादिभिः पृथिव्यादिभिः सप्तभिरावृतः कीदृशैः अण्डकोषप्रमाणाद्दशगुण उत्तरोत्तरोऽधिको येषु तैः। न केवलमयमेक एव अपित्वन्येऽपि लक्ष्यन्ते॥ ३९॥ ४०॥

**श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः।**

स्वरूपतः जीवानां किमुत परमेश्वरस्य कालातीतत्वमेव तथापि मनुष्यादिचतुर्मुखान्तजीवानां लोकदेहादिकं कालग्रस्तमित्युक्तमथ कालातीतदेहादियुक्तं तत्वमाह।कालोऽयमिति पञ्चभिः।अव्याकृतस्य नित्यविग्रहादियुक्तस्य निमेषः उपचर्यते नतुआयुरवयवतयोच्यते कल्पमुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुरिति पुराणतरात्र॥ ३७॥

धाममानिनां मनुष्यादिचतुर्मुखपर्यन्तानां देहाद्यभिमानिनाम् ईश्वरः देहगेहादिपरिच्छेदकोऽपि ईशितुः सर्वनियन्तुः भूम्नः अपरिच्छिन्न देहादिमतः नैव प्रभुः यतः अयं काल ईश्वरः तच्छक्तित्वात् तदन तिरिक्तस्थितिप्रकृतिक इत्यर्थः ३८॥

विकारैः षोडशभिर्युक्तैरष्टप्रकृतिसंयुक्तैः सहितः चतुर्विंशतिप्राकृतपदार्थमय इत्यर्थःअन्तर्मध्ये पञ्चाशत्कोटियोजनपरिमाणात् द्वितीयस्कन्धे निर्णीतात्पृथिव्यावरणात् दशगुण उत्तरोत्तरोऽधिको येषु तैः विशेषादिभिः पृथिव्यादिभिः सप्तभिर्वहिरावृतः एवं भूतआण्डकोशः यत्र प्रविष्टः परमाणुवल्लक्ष्यत इति द्वयोरन्वयः॥ ३९॥

**भाषाटीका।**

द्विपरार्ध नाम ए काल जो है सो जगदात्मा अनादि अव्यक्त ब्रह्म का एक निमेष कहाजाता है॥ ३७॥

परमाणु से आदि लेकर द्विपरार्धांत जो काल है सो परिपूर्ण परब्रह्मके आयु क्षय करने को नहीं समर्थ है यह तो केवल देहादि अभिमान वालों का नाश करने वाला है॥ ३८॥

प्रकृति महत् अहंकार भूत इन्द्रिय इनों से संयुक्त है पञ्चाशत् कोटियोजन विस्तृत है वा हेरमे पृथिव्यादिक दशगुणे तत्त्वों से आवृत है जो यह ब्रह्माण्ड सो जिसके भीतर में प्रवेश हुआ परमाणु सा दीखता है और भी वहुत ब्रह्माण्डों के ढेर जिनके भीतर में दीखते हैं॥ ३९॥ ४०॥

**श्रीधरस्वामिकृत भावार्थदीपिका।**

कीदृशैः आण्डकोशप्रमाणाद्दशगुणमुत्तरोत्तरोऽधिको येषु तैः न केवलमयमेक एवापि त्वन्येऽपि लक्ष्यन्ते॥ ४०॥

सर्वेषां कारणानां कारणं धाम स्वरूपम्॥ ४१॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीधरस्वामि कृत भावार्थदीपिकाटीकायाम्
एकादशोऽध्यायः॥ ११॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

विष्णोः कारणार्णवशायिनः स्वरूपं स्वरूपभूतोदेहः षष्ठी-येयं राहोः शिरइतिवदभेदे गृहदेहत्विट्प्रभावाधामानी-त्यमरः ॥ ४१ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीराधारमणदासगोस्वामिविर-चितायां दीपिकाटिप्पण्याम् एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

यत्र मूलप्रकृतौ प्रविष्टः परमाणुर्दृश्यते एवं विधाश्चान्येऽण्ड-राशयः कोटिशः प्रविष्टाः परमाणुवद्दृश्यन्ते ॥ ४० ॥

तत्सर्वेषां कारणानां महदादीनामपि कारणं मूलं प्रधानं महात्मनः पुरुषस्य विष्णोर्धामशरीरमाहुरित्यन्वयः"यस्याव्यक्तं शरीरम्„ इति श्रुतेः एवमचिन्त्यविविधविभवमूलप्रकृतिशरीरकस्य परमात्मनः कथं कालः प्रभुः स्यादित्यभिप्रायः ॥ ४१ ॥

इतिश्रीमद्भागवतेमहापुराणे तृतीयस्कन्धे श्रीमद्वीरराघवा-चार्य्यकृतभागवतचन्द्रचन्द्रियाम् एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

परमाणुपरममहच्छब्दवाच्यः पदार्थः साक्षान्नारायण एव न पार्थिवाद्यन्यतम इत्याह । यमिति । यमण्डाधारं भगवन्तम् अक्षरं ब्रह्म सर्वकारणानां ब्रह्मादीनामपि कारणमाहुः तस्य महात्मनो महत्परिमाणोपेतस्य साक्षात्पुरुषस्यात्यन्ताणुशरीरेषु सरणाद्वर्त-मानात्पुरुषनाम्नो विष्णोरयमाण्डकोशः परं धाम केवलंगृहवद्वर्तते हि शब्देन तदन्तर्गता अण्डराशयोऽपि गृहवद्वर्तमानाः एकमेवाण्ड बहुत्वेन प्रत्येकं रोमकूपगतत्वादनन्तमित्यादि विशेषस्मृतिप्रसिद्धिं सूचयति तदुक्तम् अन्तर्गताः शरीराणि शरीराणां बहुत्वेन अतीताना-गतैस्तथा । अस्यैव देवकार्येषु प्रतिप्रति च दर्शनात् । विष्णुसाम-र्थ्यतोऽण्डानां बहुत्वं नान्यथा भवेदिति एकमण्डं बहुत्वेन प्रत्येकं रोमकूपगम् । ब्रह्मापश्यत्तथात्मानं हरेस्तेषु पृथक् पृथगिति च अतोऽतीतानागतवर्तमानानन्तब्रह्मादिपरमभागवतैरनवरतागणिता-चिन्त्यमहिमत्वादायुर्मानहीनत्वात्तस्य देशकालगुणानन्त्यज्ञानस्या-नन्तकालीनतत्सामीप्यादिनिर्वाणमुख्यसाधनत्वात्तस्मिन्निरतिशय-भक्त्या तज्ज्ञानं सर्वथा संपाद्यं मुमुक्षुणेति भावः ॥ ४१ ॥

इतिश्रीमद्भागवतेमहापुराणे तृतीयस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम् एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अन्ये च लक्ष्यन्ते इति जलाद्यावरणान्तु पूर्व्वोक्तयुक्त्यैवमेव सर्व्वेषामवमन्तव्यम् ॥ ४० ॥



यद्यपि पूर्व्वोक्तरीत्या महापुरुषोऽपि कालाधीनो न भवत्येव । तथाप्याविर्भावतिरोभावलीलत्वादक्षरशब्दवाच्यो न भवति । किन्तु तस्य परमस्वरूपं स्वयं भगवानेव नित्याविर्भावत्वात् तद्वाच्य इत्याह तदाहुरिति । महात्मनो विष्णोर्महाविष्णवाख्यस्य साक्षा-द्यत् परं धाम स्वतः सिद्धं परमांशिरूपः तत्वं तदेवाक्षरं नित्या विर्भावं ब्रह्मपरिपूर्णभगवत्त्वमाहुः । यतः सर्व्वकारणस्य पुरुषस्यापि कारणमिति ॥ ४१ ॥

इतिश्रीमद्भागवतेमहापुराणे तृतीयस्कन्धे श्रीमज्जीव-गोस्वामिकृत क्रमसन्दर्भटीकायाम् एकादशोऽध्याय; ॥ ११ ॥

---

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

तस्य ब्रह्माण्डस्य प्रकृतेनिरूप्यमाणस्य देशावच्छेदकत्वाभा-वाय स्थूलतामाह । दशोत्तराधिकैरिति । अण्डात्परतः पृथिवी पश्चा शत्कोटिदशगुणा विशेषादिभिरिति । अजहत्स्वार्थवृत्तुर्व्रीहिः गोल-एववा पृथिवीजलादय एव दशगुणा इतिकेचित् तदा तैरावर-कैः दृष्टः घटमध्ये प्रविष्टः परमाणुरिव लक्ष्यते तैः सहितो वा-रोमकूपे प्रविष्ट परमाणुरिव दृश्यते तस्यच कूपस्य मध्येऽन्येऽ प्येतादृशा अण्डकोशाः कोटिशो लक्ष्यन्ते ॥ ४० ॥

एवमनन्तब्रह्माण्डावृतरोमकूपो भगवान् अक्षरशब्देनोच्यत इत्या ह । तदाहुरिति । अक्षरस्यच ब्रह्मत्वं समन्वये स्थापितम्"अक्षर-मम्बरान्तधृतेः साचप्रशासनात्॥१।३।८॥इत्यधिकरणेसर्वकारणानां पुरुषादीनामपि यतः कारणं तदेवाक्षरं मायाफलरूपेण द्विधा यदा समभवत् तत्रैकोभागः पुरुषःअपराच प्रकृतिः अतः कारण-कारणं तादृशमपि तदक्षरं पुरुषोत्तमस्य परब्रह्मणः धाम भवति देहस्थानीयं गृहस्थानीयं वा यथा जगदात्मनोऽक्षरस्य देहस्थानीयाः तथा अक्षरमपि भगवतः अनेन भगवतः आयुः परिमाणादिशङ्कैव निवारिता ततोऽप्यन्यद्भगवतोधाम भविष्य-तीत्याशङ्क्याह । परमिति । यथास्मदादीनां प्राणान्तःकरणव्यवहि-तानामेव देहः स्थानं भवति न तथाक्षरं भगवतः किंतु साक्षा-त् मूलभूतस्य साकारत्वायाह। पुरुषस्येति । उत्कर्षमपकर्षहेतुंच श्रुत्वा सन्दिहानं प्रत्याह । महात्मनइति । महांश्चासावात्मेति आत्मभूतः पुरुषोव्यापक इत्यर्थः समुदायेनापि महानुभावः सर्व-भवनसमर्थ इत्यर्थः ॥ ४१ ॥

इतिश्रीमद्भागवतेमहापुराणे तृतीयस्कन्धे श्रीमद्वल्लभाचार्यकृतसुबोधिन्या मेकादशोऽध्यायः ॥ ११ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

विष्णोः कारणार्णवशायिनो धाम देहः ।
गृहदेहत्विट्प्रभावा धामानीत्यमरः ॥ ४१ ॥
इतिसारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशस्तृतीयस्य सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

न केवलमयमेव किन्त्वन्येऽपि लक्ष्यन्ते इत्याह । अन्ये कोटिशो ऽण्डराशय इति ॥ ४० ॥

तद्ब्रह्म बृहत्स्वरूपगुणशक्त्या सर्वेषां कारणानां प्रकृत्यादीनां कारणं स्थितिप्रवृत्त्यादिमूलम् तन्नित्यस्थानमाह । विष्णोर्ब्रह्मणः महात्मनः साक्षात्पुरुषस्य धाम स्थानमपि परं पूर्णमेव "योऽस्याध्यक्षः सपरमे व्योमन्,, इति श्रुतेः ॥ ४१ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपटीकायाम्
एकादशाध्यायार्थप्रकाशः ॥ ११ ॥

भाषाटीका ।

उसी को अक्षरब्रह्म कहते हैं वही सब प्रधानादि कारणों का भी कारण है वह साक्षात् महात्मा परमपुरुष विष्णु का स्वरूप है ४१ ॥

इति श्रीभागवत तृतीयस्कन्ध एकादश अध्याय का
भाषानुवाद लक्ष्मणाचार्य कृत
समाप्त ॥ ११ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे एकादशोऽध्यायः समाप्तः ॥ ११ ॥



## ॥ द्वादशोऽध्यायः ॥

---::*::---

इति ते वर्णितः क्षत्तः! कालाख्यः परमात्मनः ।
महिमा वेदगर्भोऽथयथास्राक्षीन्निबोध मे ॥ १ ॥
ससर्जाऽग्रेऽन्धतामिस्रमथ तामिस्रमादिकृत् ।
महामोहं च मोहं च तमश्चाज्ञानवृत्तयः ॥ २ ॥
दृष्ट्वा पापीयसीं सृष्टिं नात्मानं बह्वमन्यत ।
भगवद्ध्यानपूतेन मनसाऽन्यां*ततोऽसृजत् ॥ ३ ॥
सनकं च सनन्दं च सनातनमथाऽऽत्मभूः ।
सनत्कुमारं च मुनीन्निष्क्रियानूर्ध्वरेतसः ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

द्वादशेतु कुमारादिमनःसर्गोऽसमेधनात् ॥
कायद्वैधेन यौनस्तु मनुसर्गोऽनुवर्ण्यते ॥ १ ॥ १

अग्र इति ब्रह्मणः स्वसृष्टौ प्रथममविद्यावृत्तीः ससर्ज तत्र तमोनामस्वरूपाप्रकाशः मोहो देहाद्यहं बुद्धिः महामोहो भोगेच्छा तामिस्रं तत्प्रतिघाते क्रोधः अन्धतामिस्रं तन्नाशेऽहमेव मृतोऽस्मीति बुद्धिः तदेवोक्तं वैष्णवे

तमोऽ विवेको मोहः स्यादन्तःकरणविभ्रमः
महामोहस्तु विज्ञेयो ग्राम्यभोगसुखैषणा
मरणं ह्यन्धतामिस्रं तामिस्रः क्रोधउच्यते ।
अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मन

इति पातञ्जलेऽप्येन एवोक्ताः अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाइति श्रीविष्णुस्वामिप्रोक्ता वा अज्ञानविपर्यासभेदभयशोकाः तदुक्तम् स्वादृगुत्थविपर्यासेत्यादि ॥ २ ॥

न बह्वमन्यत नाभ्यनन्दत् ॥ ३ ॥

यद्यपि प्रतिकल्पं सनकादिसृष्टिर्नास्ति तथापि ब्राह्मसर्गत्वादिहोच्यते वस्तुतस्तु मुख्यसर्गादय एव प्रतिकल्पं भवन्ति-सनकादयस्तु ब्राह्मकल्पसृष्टा एवानुवर्तन्ते ॥ ४ ॥

---

श्रीराधारमणदास गोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

कायद्वैधेन ब्रह्मणः स्त्रीपुरुषरूपदेहविभागेन मूले महिमा-प्रभावः प्रभावं पौरुषं प्राहुः कालमेकेयतोभयमिति वक्ष्यमाणत्वात् अथ कालवर्णनानन्तरं यथाऽस्राक्षीत्तं प्रकारं मे मत्तस्त्वं शृणु॥१॥

तत्र पञ्चाविद्यावृत्तिषु मध्ये तत्प्रतिघाते भोगप्रतिबन्धे तन्नाशे भोगध्वंसे तदेव तमआदीनामीदृशलक्षणमेव विभ्रमो देहात्मबुद्धिः एते एवाविद्यावृत्तिरूपाः क्लेशाः तत्रास्मिताहङ्कारस्य सूक्ष्मावस्था लक्षणतः किंचिद्भेदमालक्ष्य तत्पञ्चकमुक्तम् वेत्युक्तम् स्वादृक् स्वरूपाज्ञानं समग्रपद्यं प्रथमटीकायां दृश्यम् ॥ २ ॥

दृष्ट्वेति युग्मकम् यद्यपि प्रतिकल्पं सनकादि सृष्टिर्नास्ति किन्तु रात्रौ शयिष्यमाणे ब्रह्मणि तेषां प्रवेशः पुनः सृष्टावाविर्भावः तथापि ब्राह्मकल्पसृष्टिकथनादिह सृष्टिप्रकरणे मैत्रेयेण सनकादिसृष्टिरुच्यते तथोक्तमभिज्ञैः आविर्भूयादिमे कल्पे ब्राह्मएव चतुस्सनः। नारदश्चानुवर्त्तेते कल्पेषु सकलेष्वपीति यथा पञ्चपर्वाऽविद्या तथा विद्यापि सांख्ययोगवैराग्यतपोभक्तिलक्षणवृत्तिभेदेन पञ्चपर्वा तत्र यथाक्रमं सांख्यादिरूपतया चतुर्णां सनकादीनामाविर्भावः शुद्धभक्तिरूपेण तु श्रीनारदस्येतिज्ञेयम् ॥ ३ ॥

तत्सृष्टिकरणम् अनिच्छायां हेतुर्मोक्षधर्माण इति ननु मन्वादीनामपि मोक्षधर्मित्वे सृष्टिहेतुत्वं श्रूयते तत्राह। वासुदेवपरायणा इति तथाच देवर्षिभूताप्तनृणां पितॄणामित्यादि प्रामाण्यात् न तत्र तदधिकार इति भावः ॥ ४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं कालसर्गसप्रपञ्चमभिधाय प्रकृतमनुसर्गमेव विशेषेण प्रतिपिपादयिषुस्तमेवानुसर्गकथनं वृत्तकथनपूर्वकं प्रतिजानीते । इतीति।हेक्षत्तः। परमात्मनः कालाख्योमहिमा तेतुभ्यमित्युक्तप्रकारेण वर्णितः अथानन्तरं वेदगर्भः ब्रह्मा यथाऽस्राक्षीत्तत्प्रकारं वर्ण्यमानं मे मत्तः निबोध शृणु ॥ १ ॥

प्रथममज्ञानपञ्चपर्वसृष्टिमाह। ससर्जेति।अग्रे व्यष्टिसृष्ट्यादावादिकृद् ब्रह्माऽन्धतामिस्रादीनि ससर्ज एता अज्ञानवृत्तयः इह वृक्षगुल्मलतावीरुत्तृणगतपञ्चपर्वाज्ञानवृत्तयः तमोमोहादय इतिकेचित् जाग्रत्स्वप्नसुषुप्तिमूर्च्छामरणान्यज्ञानवृत्तय इत्यपरे पातञ्जलोक्ता अविद्यास्मितारागद्वेषाभिनिवेशा इत्यन्ये तथैवोक्तं वैष्णवे तमोऽविवेकोमोहः स्यादन्तः करणविभ्रमः । महामोहस्तुविज्ञेयोग्राम्यभोगसुखैषणा । मरणंह्यन्धतामिस्रस्तामिस्रः क्रोध उच्यते । अविद्यापञ्चपर्वैषा प्रादुर्भूतामहात्मनइति तमः स्वरूपाप्रकाशकः (१) मोहोदेहादिष्वहं बुद्धिः (२) महामोहोविषयभोगेच्छा (३) तामिस्रस्तत्प्रतिरोधे क्रोधः (४) अन्धतामिस्रस्तन्नाशेऽहमेव विनष्टोऽस्मीति बुद्धिः उत्पथग्राहिणश्चेत्यज्ञानेज्ञानभानिनः अहंकृता अहं

* अन्यानिति वीरराघवार्याः।

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

माना अवेदिनः इति विशेषेण उक्तज्ञानवृत्तय इति केचित् अवेदिनः स्वरूपानभिज्ञाः अहंकृता देहेऽहंबुद्धिमन्तः अहंमानाः स्वतन्त्राभिमानवन्तः अन्यत्स्फुटम् ॥ २ ॥

पापीयसीनामज्ञानवृत्तीनां निरयसाधनत्वेन पापीयस्त्वात्तत्सृष्टेः पापीयस्त्वं सृष्टिं दृष्ट्वा आत्मानं पापीयः स्रष्टारं स्वात्मानं न बहुमन्यत न समीचीनममन्यतेत्यर्थः तत आत्मनोऽबहुमानानन्तरं भगवतोध्यानेन पूतं यन्मनस्तेनान्यानसृजत् ॥ ३ ॥

तानाह । सनकंचेति । आत्मभूर्ब्रह्मा सनकादीन् मुनीन् शुभाश्रयसंशीलनपरान् निष्क्रियान्निर्वृत्तधर्मपरायणानूर्ध्वरेतसः जितेन्द्रियानसृजत् ॥ ४ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अत्र हरेरानन्त्यज्ञानं यथा प्रीतिजनकत्वेन मुक्तिसाधनं तथा ब्रह्मादितारतम्यज्ञानं चेत्येतदर्थसृष्टिप्रकारः कथ्यते तत्राविद्याया हेयेषु प्राथम्यात्तत्सृष्टिं वक्तुं वृत्तमनूद्य वक्तव्यार्थं प्रतिजानीते इतीति ॥ १ ॥

आदिकृद्ब्रह्मा अग्रे तमःससर्जेत्यन्वयः अथ मोहादिकमत्रैकवचनं न यथातारतम्येन सृष्टिरिति ज्ञापनायेति ज्ञातव्यं क्रमस्तु

तमस्तु शार्वरं प्रोक्तं मोहश्चैव विपर्ययः ।
तदाग्रहो महामोहस्तामिस्रः क्रोध उच्यते ।
मरणं त्वन्धतामिस्रमविद्यापञ्चपर्विका ।

इत्युक्त एव तमोऽज्ञानं विपर्यासो मोहोऽन्ये तु तदाग्रहादिति वचनात् एषां मूलकारणमाह। अज्ञानेति । अज्ञानाद्वृत्तिर्येषां ते तथा ॥२॥

अविद्या हेयेत्याशयेनाह । दृष्ट्वेति । ततस्तर्हि सृष्टिर्निवृत्ता किंमेत्याह भगवद्ध्यानेति अनेन सर्वप्रायश्चित्तरूपोपायः भगवद्ध्यानमिति सूचितम् ॥ ३ ॥

आत्मभूर्ब्रह्मावसिष्ठाद्दिव्यावृत्त्यर्थं निष्क्रियानिति परमहंसान्॥४॥

———

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

दृष्ट्वेति युग्मकम्। असृजत् ब्राह्मकल्पसृष्ट्यानेव तान् त्रैलोक्यसृष्टौ। तत्र प्रकटयामासेत्यर्थः ॥ १—४ ॥

———

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

साधारणानां बुद्धिर्या द्वादशे सा निरूप्यते ॥
अष्टधा सा सर्गरूपा श्रेष्ठा चोत्तरतः परा ॥ १ ॥
तामिस्रादिप्रकारेण प्रथमप्राकृती मतिः ॥
ज्ञाननिष्ठाद्वितीया स्यात्सदोषा परिकीर्तिता ॥ २ ॥
दोषोऽप्यत्र हरेःसंगाज्ज्ञानादप्यधिका मता ॥
यया हरस्ततःश्रेष्ठा कृष्णस्याज्ञानुपालिनी ॥ ३ ॥
सदोषा सापि तस्यास्तु दोषे नप्रविशेद्धरिः ॥
ततोहीनैव सा मध्येलोके व्यामोहिका परा ॥ ४ ॥
ततोवेदविनिष्णाता तदर्थे कर्मणि स्थिता ॥
ततःश्रेष्ठावेदएवयोगोपासनया युता ॥ ५ ॥
सर्वतोऽप्युत्तमा यातु क्रीडेच्छापूरिकाहरेः ॥
एवमष्टविधा बुद्धिःसर्वेषां सर्गयोगिनी ॥ ६ ॥

एवंकालकृतं निरूप्य ब्रह्मकृतं जगदष्टधा निरूपयिष्यन् पूर्वोक्तमुपसंहरति तच्छेषत्वाभावाय । इतिते वर्णितइति । यथा ब्रह्मा भगवतोगुणावतारःएवं कालोऽपि भगवतोर्महिमा गुणविशेषः तै लोकप्रसिद्धिर्गौणी वस्तुयाथात्म्यमेव मुख्यमिति ज्ञापयितुं कालाख्य इत्युक्तम् अक्षरादेर्धर्मत्वं वारयति । परमात्मनइति पुरुषोत्तमस्य अथ भिन्नप्रकारेण कालसृष्टदशधासृष्टेः वेदगर्भ इति वैलक्षण्ये हेतुः वेदानुसारिणीसृष्टिः ब्रह्मणैव विनिर्मिता कालानुसारिणी कालात् पुष्टयासा भगवत्कृता तत्रापि सृष्टिप्रकारः कल्पि इति भिन्नप्रकारत्वाद्विवेकार्थं सावधानतया श्रोतव्यमित्याह । वि बोधेति ॥ १ ॥

तत्र प्रथमं पञ्चपर्वाऽविद्याधिष्ठातृदेवतानां सृष्टिमाह । ससर्ज अग्रइति । तत्रापि जातिहीना तामसी वृत्तिःतदधिष्ठातृदेवता वा स प्रथमा तामाह । ससर्जाग्रइति अन्धतामिस्रमग्रेससर्ज "विषय पुरुषश्चेति ज्ञाने कोटिद्वयं मतम् । पुरुषेबोधकं तच्च विषयेव्यापिकाप्रभा । अग्रे तदुभयाभावः तेनान्धत्वं तमस्तथा । तदनन्तरं तामिस्रं विषयेष्वेवमोहः नतु स्वात्मनि आदिकृदिति प्रथम एवजगत्कर्त्ता सचेदेवं न सृजेत्तदा जगदेव न स्यात् आत्मानं वस्तु रूपं च यदिजानाति सर्वथा । अत्युत्कटश्चेत्कामः स्यात् तदा सृष्टि नैवान्यथा । नतच्छक्यं ब्रह्मणः स्यात् हरेरेव तथा भवेत्। तदनन्तरं महामोहः वस्तुयाथात्म्यं पश्यन्नपि तस्मिन्नपि विषये स्वस्यैक्यबुद्धिः यथा देहोऽहमिति मोहस्तुममेति तमस्त्वहं कोऽहमिति न वेद पञ्चाप्येता अज्ञानस्यैववृत्तयः "अज्ञानं भगवच्छक्तिर्मायाकार्यमिहोच्यते । चतुर्मुखे प्रविष्टा सा पञ्चधानिर्गता बहिः ॥ २ ॥

ताः पञ्चविधा अपि देवता सृष्टा दृष्ट्वा जगत्कर्तृत्वेन तानि नियुक्ताः किन्तु मयाप्येतत्साधु न कृतमिति स्वात्मानमेव निन्दितवानित्याह । दृष्ट्वापापीयसीमिति । पापेनैवैतादृशी सृष्टिरुत्पन्नं ततोभगवद्ध्यानमपराधनिवृत्त्यर्थं कृतवान् तदपि ध्यानं तावज्जातं यावता मनः सर्वदा शुद्धं भवेत् यथाग्रे सृज्यमानेषु पूर्वसृष्टं प्रविशति । तदाह । भगवद्ध्यानपूतेनेति अन्यान् पूर्वस्मात् लक्षणान् ॥ ३ ॥

एते चत्वारो जाताः सनकंचेति अनेनैते कृतयुगस्थानीयाः पूर्वे कलिस्थानीया इति अथात्मभूरिति तेषामपि चतुर्णां म सनत्कुमारो महान् भगवत्पौत्रः अस्य सृष्टौ भगवत्पौत्रभाव मुख्य इति आत्मभूरित्युक्तम् आत्मा भगवान् सर्वेषां गुणत्रय ह मुनीन्निष्क्रियान् ऊर्ध्वरेतसइति तेषां कर्त्तव्यत्वेन मननमेव सिद्धम् उत्तरकाण्डार्थं एव तेषां कर्त्तव्योन पूर्वकाण्डार्थ इत्याह निष्क्रियानिति वेदमधीत्य वेदार्थं बुध्वापि बहिरध्यासशून्य मानसप्रधानाः केवलमनसैव यत्सिध्यति तदेव कुर्वन्तीत्यर्थः सृष्टिमपि कुतो न मनसा कुर्वन्ति तत्राह। ऊर्ध्वरेतस इति । तत्र सापि रेतोद्वारा सृष्टिः परं तद्धेतो मानसं तदूर्ध्वम् भगवद् नत्वधः हानजनकम् ॥ ४ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

सनकादिर्मरीच्यादिधर्म्माधर्म्मादिसृग्विधिः ।
द्वादशे सर्गवृद्ध्यर्थं मिथुनं देहतोऽसृजत् ॥ ० ॥
महिमा प्रभावः ॥ १ ॥

अविद्यावृत्तयः पूर्व्वसिद्धा एव सृष्ट्यारम्भे ब्रह्मतः सका तमआदिरूपेणाविर्बभूवुरित्याह । ससर्जेति । तत्र तमो

तान् बभाषे स्वभूः पुत्रान् प्रजाः सृजत पुत्रकाः ! ।
तन्नैच्छन्मोक्षधर्माणो वासुदेवपरायणाः ॥ ५ ॥
सोऽवध्यातः सुतैरेवं प्रत्याख्यातानुशासनैः ।
क्रोधं दुर्विषहं जातं नियन्तुमुपचक्रमे ॥ ६ ॥
धिया निगृह्यमाणोऽपि भ्रुवोर्मध्यात्प्रजापतेः ।
सद्योऽजायत तन्मन्युः कुमारो नीललोहितः ॥ ७ ॥
स वै रुरोद देवानां पूर्वजो भगवान् भवः ।
नामानि कुरुमे धातः ! स्थानानि च जगद्गुरा ! ॥ ८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

जीवस्य स्वरूपाप्रकाशः मोहो देहादावहन्तारोपः महामोहो भोक्तव्यविषयेषु ममत्वारोपः । तामिस्रः भोगप्रतिघाते सत्यन्तःकरणधर्म्मस्य क्रोधस्य स्वीकारः ततश्चान्धतामिस्रः क्रोधतन्मयीभाव रूपा मूर्च्छैव मरणम् एते जीवस्यासन्तोऽप्यविद्या सृष्टाः। यथोक्तं वैष्णवे । "तमोऽविवेको मोहः स्यादन्तः करणविभ्रभः । महामोहस्तु विज्ञेयो ग्राम्यभोगसुखैषणा । मरणं ह्यन्धतामिस्रं तामिस्रः क्रोधउच्यते । अविद्या पञ्चपर्व्वैषा प्रादुर्भूता महात्मन" इति पातञ्जलेऽप्येत एवोक्ताः अविद्यास्मितारागद्वेषाभिनिवेशाः । श्रीविष्णुस्वामिप्रोक्ता अज्ञानविपर्य्यासभेदभयशोकाः वस्तुतस्त्वविद्याया आवरणविक्षेपावेवद्वौ धर्म्मौ तावेव अविद्यास्मिताशब्दाभ्यामज्ञानविपर्य्यासशब्दाभ्याञ्चोच्येते । रागद्वेषाभिनिवेशास्त्वन्तःकरणधर्म्मा अपि विक्षेपांशप्राधान्याद्विक्षेपप्रपञ्चतयैवोच्यन्ते इति ज्ञेयम् ॥ २ ॥

अविद्याया निवर्तिका विद्यैवेतिज्ञापयितुं विद्यावृत्तयोऽपि तस्मादेव सनकादिरूपेणाविर्भूवुरित्याह दृष्ट्वेत्यादिना ॥ ३ ॥

महाकल्पायुषां ब्रह्मादीनां जीवतामेव प्रथमपरार्द्धान्ते परमेश्वरे प्रवेशात् पाद्मे कल्पे यथा ब्रह्मा पश्चादुदपद्यत तथा ब्रह्मापि सनकादीन् पुनरुत्पादयामासेत्याह । सनकञ्चेति । सांख्ययोगवैराग्यतपांसीति चत्वार्य्येव विद्यायाश्चतस्रो वृत्तयस्तासामेव सनकादिचतुष्टयरूपेणाविर्भावः । किञ्च भक्त्या विना विद्याया वैफल्यात्तद्वृत्तिषु तप आदिष्वपि भक्तिर्गुणीभूता सती तिष्ठेदिति सनकादयोऽपि भक्तिमन्त एव दृष्टाः मुख्यभक्तेराविर्भावस्तु नारदरूपेणाग्रे वक्ष्यते ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उक्तानुवादपूर्वकं पुनश्चतुराननकृतां सृष्टिं वक्तुं प्रतिजानीते इतीति ॥ १ ॥

आदिकृत् ब्रह्मा अग्रे अन्धतामिस्रादीन् ससर्ज्ज अज्ञानवृत्तयः अज्ञानस्यानादित्वादविवेकस्य वृत्तयः तत्र तमोनाम आत्मानात्मपरमात्मस्वरूपाद्यविवेकः मोहो योग्यायोग्ययोर्वैपरीत्येन मनसः प्रवृत्तिः महामोहो ग्राम्यभोगेच्छा तामिस्रः तत्प्रतिघाते क्रोधः अन्धतामिस्रः तन्नाशेऽहमेव मृत इति बुद्धिः तथोक्तं वैष्णवे "तमोऽविवेको मोहः स्यादन्तःकरणविभ्रमः। महामोहस्तु विज्ञेयो ग्राम्यभोगसुखैषणा।मरणं ह्यन्धतामिस्रस्तामिस्रः क्रोध उच्यते। अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मन" इति ॥ २ ॥

आत्मानं तादृशसृष्टिकर्तारं स्वात्मानं न बहु अमन्यत नसमीचीनममन्यत तदनन्तरं भगवद्ध्यानपूतेनेत्यनेन भगवन्तं तमेव पुत्रत्वेन प्रार्थयामासेति गम्यते नैष्ठिकान् प्रवृत्तिधर्मवर्जितान् यद्यपि प्रतिकल्पं सनकादिसृष्टिर्नास्ति तथापि ब्राह्मसर्गत्वादत्रोच्यते वस्तुतस्तु प्रतिकल्पं मुख्यसर्गादयो भवन्ति सनकादयस्तु ब्रह्मकल्पाविर्भूता एवानुवर्तन्ते ॥ ३ ॥ ४ ॥ ५ ॥

---

भाषाटीका ।

मैत्रेयजी बोले हे विदुरजी ! परमात्मा का काल नामा महिमा हमने वर्णन किया अब आगे ब्रह्माने जैसा सृष्टि किया सो हमसे श्रवण करो ॥ १ ॥

सृष्टि के पहिले अंधतामिस्र तामिस्र महामोह मोहतम ये पांच अज्ञान की वृत्तियों को आदिकर्ता ब्रह्माजी ने सृष्टि किया ॥ २ ॥

फिर ब्रह्माजी बहुत पाप की सृष्टिकुं देखकर अपने को अप्रसन्न हुये फिर भगवान के ध्यान से मन को पवित्र करके दूसरी सृष्टि किये ॥ ३ ॥

आत्मभू ब्रह्माजी ने इसके अनंतर सनक सनंदन सनातन सनत्कुमार इन निष्क्रिय ऊर्ध्व रेता मुनियों को उत्पन्न किया ॥ ४ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

स्वभूर्ब्रह्मा ॥ ५ ॥
अवध्यातोऽवज्ञातः प्रत्याख्यातमनङ्गीकृतमनुशासनं यैः ॥ ६ ॥
सचासौ मन्युश्च तन्मन्युः ॥ ७ ॥ ८ ॥ ९ ॥

---

श्रीराधारमणदासगोस्वामि विरचितादीपिन्याख्या दीपिकाटिप्पणी ।

स ब्रह्मा एवं निवृत्ताधिकारतया ॥ ६ ॥
तन्मन्युः जातक्रोधः ॥ ७ ॥
देवानां देवेभ्यः स कुमारः ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

स्वभूर्ब्रह्मा तान् सनकादीन् पुत्रान् बभाषे भाषणमेवाह । हेपुत्रकाः प्रजाः सृजत इति ते सनकादयः मोक्षधर्माणः निवृत्तिधर्मनि-

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

ष्ठाः वासुदेवः परमयनं प्राप्यंप्रापकमाधारश्च येषां ते तथोक्ताः सन्तो नैच्छन् पित्रानुज्ञातां सृष्टिं कर्तुं नैच्छन्नित्यर्थः ॥ ५ ॥

सः ब्रह्मा प्रत्याख्यातमनङ्गीकृतमनुशासनमाज्ञा यैस्तैः सुतै रेवमवध्यातः अवज्ञातः दुर्विषहं दुस्सहं जातमुत्पन्नं क्रोधं नियन्तुमुपचक्रमे उपक्रान्तवान् ॥ ६ ॥

धिया बुद्ध्या निगृह्यमाणोऽपि विष्टभ्यमानोऽपि तन्मन्युः सचासौमन्युः क्रोधः प्रजापतेर्ब्रह्मणः भ्रुवोर्मध्यान्नीललोहितः कुमारः अजायत निगृह्यमाणोऽप्यनिगृहीतो भ्रूमध्यमागत्यतस्मान्नीललोहितकुमाररूपेणाजायतेत्यर्थः ॥ ७ ॥

कोऽसौ नीललोहितः कुमारोयोजातः भ्रुवोर्मध्याज्जातश्च किमकरोदित्यत आह । सवा इत्यादिना । एवमात्मभुवा आदिष्टः परिक्रम्य गिरां पतिमित्यन्तेन देवानां पूर्वजोभगवान् भवःसदाशिवः सच जातोरुरोद रोदनप्रकारमेवाह । नामानीति ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ऊर्ध्वरेतस इत्यनेनैव स्वाज्ञाविमुखा एत इति जानन्नपि ब्रह्मा सृष्ट्यन्तरकरणाशयो वक्ति । तानिति । स्वोविष्णुस्तस्मादुद्भूतवानिति स्वभूस्तत्सृष्टिकर्म मोक्षधर्माणो निवृत्तिमार्गस्थाः ॥ ५ ॥

कथमवज्ञात इत्यत उक्तं प्रत्याख्यातेति निरस्तमनुशासनमाज्ञाकरणं यैस्ते तथा तैः चुक्रोधेति शेषः क्षणिकोऽयं कोपश्चतुर्मुखस्य न दीर्घकालीन इति भावेनाह । क्रोधमिति ॥ ६ ॥

प्रजापतेर्ब्रह्मणः सचासौ मन्युः क्रोधः तन्मन्युः सद्यो नियमनात्पूर्वक्षणमेव क्रोधसमये भ्रुकुटी नीलशिरा नेत्रं रोहितं स्यादित्यतो नीललोहित इति कारणगुणाः कार्यं समवयन्तीति न्यायात् अनेन सद्यो जातो नीललोहित इति नामद्वयं निरुक्तम् ॥ ७ ॥

लोके बालस्वभावप्रवर्तनाय तस्य तं वक्ति । स वा इति । इन्द्रादि देवानां पूर्वजः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तानिति अनिच्छायां हेतुर्मोक्षधर्माण इति । ननु प्रजापतीनामपि मोक्षधर्मित्वं दृश्यते तत्राह । वासुदेवपरायणाः । देवर्षिभूतात्प्त नृणां पितृणामित्यादिभ्यः ॥ ५—२७ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

आपाततः पुत्रानुत्तमान् दृष्ट्वा लोके ख्यातपौरुषः पुत्रानाह । तान् वभापइति । तान्पुत्रानाह । प्रजाः सृजतेति । अत्र ब्रह्मणोनाज्ञानं किन्तु भगवदुपयोगिसृष्टिमेव मनसा कुर्वन्त्विति सृजतेति नियोगः अन्यथा तस्मात्क्रोधात् महादेवोनोत्पद्येत स्वभूरिति पदंतु न भगवदाज्ञापनपर्यन्तं स्थितः किन्तु स्वयमेव ज्ञापितवानित्यत्रोपक्षीणं पुत्रका इति संबोधनमाज्ञाया अवश्यकर्तृत्वाय स्वार्थिकप्रत्ययः संदेहाभावाय अतएव तदाज्ञाकरणे भगवत्कार्यस्याकृतत्वात् भगवद्द्वारिकोधोद्गमः तदाह । तन्नैच्छन्निति । ननु भगवदीयमपि कार्यं कुतोनैच्छन् तत्राह । मोक्षधर्माण इति । मोक्षे ये धर्माः निवृत्ति मार्गसिद्धाः अथवा मोक्ष एवधर्मो येषां ते मोक्षार्थमेव धर्मान् कुर्वन्ति ननु भगवत्कार्यकरणमपि मोक्षहेतुः तत्कुतो न कृतवन्तस्तत्राह । वासुदेवपरायणा इति । वासुदेवोज्ञानं दत्वा मोक्षदाता न तस्य कार्यं सृष्ट्यादिकमन्नपेक्ष्यते तादृशस्य न कैवल्याख्योमोक्षः फलं किन्तु भगवत्संतोषः अतएव तत् ब्रह्मणोवाक्यं नैच्छन् इच्छामेव न कृतवन्तः नतु न कारिष्याम इतिवचनमपि ॥ ५ ॥

सोऽवध्यात इति अतएव तूष्णींभावे पूर्वमविद्यासृष्ट्या खिन्नः तच्छान्त्यर्थमेते सृष्टाः तेऽपि चेदनुपयुक्ताः तदा क्रोधो जातः सच नाल्पः कार्यव्यापाराविष्टत्वात् अभिमानं कार्यं च नाशयतीति दुर्विषहस्ततः क्रोधोत्पत्त्यनन्तरं मध्ये भगवदिच्छानिरूपयित्री बुद्धिर्ज्जाता कोऽभिप्रायो भगवतः कथमेते सृष्टिं न कुर्वन्तीति पश्चाज्ज्ञातोभगवदभिप्रायः तामससृष्ट्यनन्तरमेते सृष्टाः आसुरीमेव सृष्टिं भगवदुपयोगिनीं करिष्यन्ति मानुषभावाश्चैतेऽहंताधिकारिण इत्यभिप्रायं ज्ञात्वा क्रोधं नियन्तुमुपक्रमं कृतवान् ॥ ६ ॥

तदोत्पन्नः क्रोधो भगवदभीष्टकार्ये भगवदंशानुप्रवेशात् तस्मिन्कार्ये आधिदैविकोजात इत्याह । धिया निगृह्यमाण इति । मनसोव्यापारद्वयं क्रिया ज्ञानं च तत्र ज्ञानेन नियमनं न क्रियाया अतःक्रियायाः अनिवर्तितत्वात् स्वस्मिंश्चाप्रभवात् उभयरूपं भ्रूमध्येभगवदाज्ञाचक्रस्थानत्वात् भगवदाज्ञाकारी भगवदंशःतद्द्वारा निर्गतं इत्याह । भ्रुवोर्मध्यादिति । सद्य इति तत्क्षणं क्षणान्तरे क्रिययापि नियमनं स्यात् मन्युरितिक्रोधएव । नीललोहित इति कर्बुरवर्णः क्रोधस्यारक्तोवर्णः भगवतो नीलः उभयमेकीभूतं नीललोहितं भवति कुत्सितो मारोयस्येति स्वाभाविकसृष्ट्युपयोगिकन्दर्पनाशकः दैतेयकन्दर्पजनकश्च ॥ ७ ॥

ततस्तस्य नामनिरुक्त्यर्थं लीलया बहिः अन्तस्तु दुःखितान् सर्वानेव दृष्ट्वा रोदनं कृतवानित्याह । सवै रुरोदेति । सः देवानां मध्ये पूर्वजः यावन्तोह्याधिदैविका जाता इत्यर्थः सः भगवान्नजीवांशः भव इति स एव भवति सर्वत्र नह्यहंकार व्यतिरेकेण कश्चिज्जायते नाप्यलिङ्गः अतो जनने हेतुभूतोभवं भवति उपादानं हरिः रजोब्रह्मेति अतोऽशद्वयं सूक्ष्ममुपष्टम्भकं सर्वे वैष्णवाः अतस्त्रिमूर्तिदेहः रोदनकारणं पृष्टे उत्तरमाह नामानीति । नामानि स्थानानि जगत्कर्तृत्वात्स्थानजननं जगद्गुरुत्वान्नामकरणं नामव्यतिरेकेण अव्यक्ततया भोगः प्रसज्येत ततोनामप्रार्थना ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तन्नैच्छन्निति ज्ञानयोगः खल्वाविद्यककर्म्मयोगनिरासक एव स्यादिति द्योतितम् ॥ ५ ॥

अवध्यातोऽवज्ञातः नियन्तुमुपचक्रम इति ब्रह्मणो राजसभावत्वं व्यक्तम् । एवं तम आदि सनकाद्योः सृष्ट्यौ तामस सात्विकभावोदयौ तस्य पूर्वं ज्ञेयौ ॥ ६ ॥

अविद्याया निवर्त्तिका यथा विद्या विद्याया अपि क्वचिन्निवर्तिका अविद्या स्यादिति दर्शयितुं विद्योदयवत्यपि ब्रह्मणि अविद्यावृत्तिमुख्यस्य तामिस्राभिधानस्य क्रोधस्य रुद्ररूपेणाविर्भावमाह धियेति । तन्मन्युः तस्य प्रजापतेर्मन्युःस चासौ मन्युश्चेति वा नील लोहित इति क्रोधोऽपि तद्वर्ण एव ॥ ७ ॥

तल्लीलामाह । स वा इति ॥ ८—१० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रत्याख्यातमुपेक्षितमनुशासनं यैः एतावतैवावध्यातः अवज्ञातः ॥ ६ ॥

इति तस्य वचः पाद्मो भगवान्परिपालयन् ।
अभ्यधाद्भद्रया वाचा मारोदीस्तत्करोमि ते ॥ ६ ॥
यदरोदीः सुरश्रेष्ठ ! सोद्वेग इव बालकः ।
ततस्त्वामभिधास्यन्ति नाम्ना रुद्र इति प्रजाः ॥ १० ॥
हृदिन्द्रियाण्यसुर्व्योम वायुरग्निर्जलं मही ।
सूर्यश्चन्द्रस्तपश्चैव स्थानान्यग्रे कृतानि मे ॥ ११ ॥
मन्युर्मनुर्महिनसो महान् शिव ऋतुध्वजः ।
उग्ररेता भवः कालो वामदेवो धृतव्रतः ॥ १२ ॥

**श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः**

सचासौ मन्युश्च तन्मन्युः सद्यः कुमारः अजायत ॥ ७॥ ८॥९॥

---

**भाषाटीका ।**

उनसे ब्रह्माजी बोले हे पुत्रो प्रजों की सृष्टि करो वे लोग वासुदेव तत्परमोच्च धर्म वाले होगये उनने सृष्टि की इच्छा नहीं कीनी ॥ ५ ॥

अपनी आज्ञा के तिरस्कार करने से पुत्रों से जब एसे अव ज्ञात भये ब्रह्माजी तबतो दुःसह क्रोध जो उत्पन्न हुआ; तिसको रोकने का आरंभ किया ॥ ६ ॥

उस क्रोधको ब्रह्माजी ने बुद्धिसे रोका तौ भी उनके भौंके मध्यमें से शीघ्र ही क्रोधसे नीललोहित नाम का कुमार उत्पन्न हुआ ॥ ७ ॥

वे भगवान् महादेव हैं सब देवतों के भी आप बडे भ्राता हैं वे रोदन करके कहने लगे कि हे विधाता हे जगद्गुरु हमारे नाम करो और हमारे स्थान भी बताओ ॥ ८ ॥

---

**श्रीधरस्वामिकृत भावार्थदीपिका ।**

बालक इव ॥ १० ॥

अग्रे पूर्वमेव मे मया कृतानि ॥ ११ ॥ १२ ॥ १३ ॥

---

**श्रीराधारमणदासगोस्वामिविरचिता दीपिन्यख्या दीपिकाटिप्पणी ।**

तत् नामस्थानम् ॥ ९ ॥

यद्यस्मात् ॥ १० ॥

हृदादीनामहङ्कारकार्य्यत्वात् तदधिष्ठातुस्तस्य तत्तत्स्थानत्वम् क्रोधपक्षेऽपि हृदादिषु तस्य स्थितिरेव आकाशस्यापि घोरशब्द-गुणद्वारा मारकत्वम् अग्निजलयोः प्रलयहेतुत्वं मह्या मुद्गरादिरूपेण मारकत्वं सूर्य्यचन्द्रयोस्तापहिमाभ्यां मारकत्वं तपोदीपितमन्यच इत्युक्तेस्तपस्यपि मन्युरितिविवेचनीयम् ॥ ११ ॥

महेशान इत्येवपाठः नतु महिनस इति अनर्थकत्वात् १२॥ १३ ॥ १४ ॥

---

**श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।**

मारोदीः रोदनं माकुरु ते तव त्वदुक्तं करोमीति ॥ ९ ॥

नामकरणमेवाह । यदिति । हेसुरश्रेष्ठ ! सोद्वेगः भयसहितो बालक इव यद्यस्मात्त्वमरोदीः रोदनकामर्षीः ततः रोदनान्नि-मित्ताद्रुद्र इति नाम्ना प्रजाः त्वामभिधास्यन्त्यभिवक्ष्यन्तीत्यर्थः १०

स्थानकरणमाह । हृदीत्यादिना अहंकाराधिदेवतात्वेन रुद्रस्य हृत्स्थत्वं मत्वन्तरात्मतया असुः प्राणः रुद्रादीनि स्थानान्यग्रे पूर्वमेव मे ते तवार्थे मयाकृतानि ॥ ११ ॥

एकादशस्थानस्थस्य पुनः स्थानभेदानाह । मन्युरिति ॥ १२॥

---

**श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।**

पाद्मोब्रह्मा मारोदीरितिपदम् ॥ ९ ॥

प्रधाननामाह । यदिति ॥ १० ॥

हृन्मनः ॥ ११ ॥

नामानीति नामबहुत्वस्य प्रार्थितत्वात्कथं रुद्रस्यैकनामकरण-मिति तत्राह मन्युरिति मरुरेताः ।

मरुदग्निः कृष्णवर्त्मा शुचि र्वह्निरुषर्बुधः ।
धूमध्वजश्चित्रभानुर्दहनो हव्यवाहन ।

इत्यभिधानात् वह्निवीर्य इत्यर्थः ऊर्ध्वरेतस्त्वादिव्रतधारणा धृतव्रत ऊर्ध्वरेतं विरूपाक्षं शंकरं नीललोहितमितिश्रुतिः ॥ १२ ॥

---

**श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।**

तावतैव सन्तुष्टो ब्रह्मा अधिकमपि कृतवानित्याह । इतीति । तस्य वाक्यपरिपालनं कुर्वन् नामानि कृतवान् अभिप्रायस्तु अन्यक्त-त्वयैव भोगः कर्तव्य इति बालकरोदने भद्रया वाचा सान्त्वनं भवतीति सान्त्वयन्नाह । अभ्यधादिति मारोदीरिति । निषेधः त्वद-भीप्सितमेव सेत्स्यतीति तत्करोमि त इति गूढोऽभिप्रायः दास्यामि च भार्यास्ततस्तान् सर्वान् स्वयमेवोत्पाद्य स्वसमानान् करिष्य-सीति अतएवं भार्यादानं प्रार्थितं द्वयमभीष्टं चैकमिति न प्रार्थिता धिकदानम् ॥ ९ ॥

स्वभावतोगुप्तत्वात क्रिययैव त्वन्नामेत्याह । यदरोदी रिति । यद्यस्मात्कारणात् त्वमरोदीः अतोरुद्रः यदरोदीत्तद्रुद्रस्य 'रुद्रत्वम्' मिति श्रुतेः रप्रत्ययोऽत्र औणादिकः कर्तरि सुरश्रेष्ठेति सम्बोध-नात् न गणरुद्रत्वम् । तेहि सुरा एव न श्रेष्ठाः । ननु प्रार्थनायां कृतायामपि यथा प्रार्थ इति नाम न कृतं तथा रुद्रेऽपि न

धीर्वृत्तिरुशनोमाच नियुत्सर्पिरिलाम्बिका ।
इरावती सुधा दीक्षा रुद्राण्यो रुद्र ! ते स्त्रियः ॥ १३ ॥
गृहाणैतानि नामानि स्थानानि च सयोषणः ।
एभिः सृज प्रजा बह्वीः प्रजानामसि यत्पतिः ॥ १४ ॥
इत्यादिष्टः स गुरुणा भगवान्नीललोहितः ।
सत्त्वाकृतिस्वभावेन ससर्जाऽऽत्मसमाः प्रजाः ॥ १५ ॥
रुद्राणां रुद्रसृष्टानां समंताद्ग्रसतां जगत् ।
निशाम्य संख्यशो यूथान् प्रजापतिरशङ्कत ॥ १६ ॥

### श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

कर्तव्यमित्याशङ्क्याह । सोद्वेग इवेति उद्वेगसहितः सोद्वेगः चित्तव्याकुलता उद्वेगः । रोदनेकायवाङ्मनोव्यापारः संपन्नः तेन नामजनकत्वम् । अश्रुविमोकः कायिकः शब्दोवाचनिकः उद्वेगो मानस इति । यद्यप्यभिप्रायोऽन्यस्तथाप्यनुकरणं तादृशमिति लोके तथैव नाम तदाह । इवेति । अहं सर्वात्मक इति मद्बोधनार्थं कृतं रूपं सर्वजगत्प्रसिद्धं भवत्विति रुद्र इति नाम्ना सर्वेलोका-अभिधास्यन्ति । स्वक्रियाकरणेन अभिनयेनेव अभिधानं प्राप्तं तथाच सति पुनरप्रकट एव स्यात् अतआह । नाम्नेति ॥ १० ॥

तस्य स्थानान्येकादश निर्दिशति नामसाम्यात् । हादिन्द्रियाणीति । हृत् हृदयं इन्द्रियाणि च असुः प्राणः व्योम आकाशः तपः कृच्छ्रादिः जीवानां मध्ये त्रितयं । बहिर्महाभूतानि । अहोरात्रप्रकाशका बहिरन्तस्तपइति प्रकाशकमुपादानं करणं च हरासनं । नामानि भार्याः सिद्धचर्यं रुद्राणां गणभेदतः ॥ ११ ॥

मन्युर्महिनसो महान् शिव ऋतध्वजः मन्युरिति नामानि महिनस इत्येकः ॥ १२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

हृदीति । हृदादीनामहङ्कारकार्य्यत्वादहङ्काराधिष्ठातृरुद्रस्य तत्त तत्स्थानौचित्यात् । क्रोधपक्षेतु हृत् क्रोधस्य जन्मस्थानमेव स तत्र प्रवृद्धो नेत्रपाणिपादेन्द्रियेष्वपि तिष्ठति तत्तच्चपारसूच्यः । तथैवासुषु प्राणेष्वपि नासाश्वासाधिक्यसूच्यः । तथा बहिराकाशस्य प्रचण्डधारसिंहादिशब्दैर्वाय्वग्निजलानां शोकत्वदाहकत्व प्लावकत्वैः मह्याः स्वविकारैर्मुद्गरादिभिस्तथा तेषां सङ्घातैः सिंहव्याघ्रसर्पादिभिः सूर्य्यचन्द्रयोस्तापहिमाभ्यां मारकत्वमस्तीति तेष्वपि क्रोधस्तिष्ठति । तप इत्युपलक्षणं सांख्ययोगवैराग्यानामपि तेषामपि मांकपाल्यत्वाभावे क्रोधस्थानत्वं इदं तपोदीपितमन्यव इत्यादिवाक्यैरतएवोक्तमारुह्य कृच्छ्रेणं परं पदं ततः पतन्त्यधोऽनादतयुष्मदङ्घ्रयः इति ॥ ११ ॥

मनुरित्यादीन्येका दशरुद्राणां नामानि ॥ १२ ॥

---

### श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

मे मया ॥ १० ॥ ११ ॥ १२ ॥

---

### भाषाटीका ।

ऐसे उनके वचनों कोसुनकर ब्रह्माजीने स्वीकार किया मंगल सहित; वाणीसे वोले मतरोवो तुमारा कार्य करते हैं।॥९॥

हे सुरश्रेष्ठ उद्वेगवाला बालक सरीका होकर जो तुमने रोदन किया है तिससे तुमको प्रजालोग रुद्र ऐसा नाम कहेंगे ॥ १० ॥

हृदय इन्द्रिय प्राण आकाश वायु अग्नि जल पृथिवी सूर्य चन्द्र तप ए सब तुमारे हमने पहिले स्थान किये हैं ॥११॥

मन्यु मनु महिनस महान् शिव ऋतुध्वज उग्ररेता भव काल वामदेव धृत व्रत ये ग्यारह तुमारे नाम हैं ॥ १२ ॥

---

### श्रीधरस्वामिकृत भावार्थदीपिका ।

सयोषणः सस्त्रीकः एभिः स्थानैर्नामभिश्च युक्तः प्रजाः सृज ॥१४॥
सत्त्वं बलम् आकृतिर्नीललोहितता स्वभावस्तीव्रता तेन ॥ १५ ॥
रुद्राणां यूथानि दृष्ट्वा ॥ १६ ॥ १७ ॥

---

### श्रीराधारमणदास गोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

आत्मसमाः तुल्यबलादिमतीः ॥ १५ ॥
असंख्यशोऽसंख्यान् ॥ १६ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

धीःप्रभृतयः रुद्रपत्न्यः ता एकादश हेरुद्र ते स्त्रियः पत्न्यः ॥१३॥

सयोषणः सस्त्रीक एतानि नामानि स्थानानि च गृहाण एभिः स्थानैर्नामभिश्च युक्तः त्वग्भिः स्त्रीभिः सह बह्वीः प्रजाः सृज यत्प्रजासर्गोत्त्वमपि प्रजानाम्पतिरसि भवसि ॥ १४ ॥

गुरुणा पित्रा भगवानुत्पत्तिप्रलयादिज्ञानवान्नीललोहित कुमार इति उक्तप्रकारेणादिष्ट 'आज्ञापितः सत्त्वाकृतिस्वभावेन सत्त्वामाकीर्तयस्य तेन सात्त्विकेन स्वभावेनात्मना प्रजाः ससर्ज ॥ १५ ॥

रुद्रेण नीललोहितकुमारेण सृष्टानां रुद्राणां कथंभूतानां जगद्विश्वं समन्ताद्ग्रसतां यूथान् संघानसंख्यशः निशाम्य प्रजापतिरशंकताशङ्कहेत्यभिप्रायः ॥ १६ ॥

---

अलं प्रजाभिः सृष्टाभिरीदृशीभिः सुरोत्तम! ।
मया सह दहन्तीभिर्दिशश्चक्षुर्भिरुल्बणैः ॥ १७ ॥
तप आतिष्ठ भद्रन्ते सर्वभूतसुखावहम् ।
तपसैव यथापूर्वं स्रष्टा विश्वमिदं भवान् ॥ १८ ॥
तपसैव परं ज्योतिर्भगवन्तमधोक्षजम् ।
सर्वभूतगुहावासमञ्जसा विन्दते पुमान् ॥ १९ ॥

॥ मैत्रेय उवाच ॥

एवमात्मभुवाऽऽदिष्टः परिक्रम्य गिरां पतिम् ।
बाढमित्यमुमामन्त्र्य विवेश तपसे वनम् ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

रुद्राण्यो रुद्रभार्यास्ते तुभ्यं दत्ता इति शेषः ॥ १३ ॥

सपोषणमिति क्रियाविशेषणं पुष्णात्यनया गार्हस्थ्यधर्ममिति पोषणा भार्या प्रजानां पतिरसि यद्यस्मात्तस्मात् प्रजाभवे तत्पतित्वमपि गच्छतीति ॥ १४ ॥

गुरुणा ब्रह्मणा सत्त्वाकृतिर्वीर्याकृतिः सत्त्वं बलमाकृतिर्मूर्तिः स्वभावेनोग्रत्वादिगुणैरात्मसमाः ॥ १५ ॥ १६ ॥ १७ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

धीराद्या धीर्वृत्तिःसहोमाचेति या याः रुद्राण्य इति तव सहजास्त्रय एताः ॥ १३ ॥

गृहाणेति ॥ नाम्नां ग्रहणं रूपद्वारा भवतीति एकादशभावग्रहणं एकादशरूपग्रहणं वा विधीयते। सयोषणः सभार्यः सयोषण इतिच्छान्दसः आभिः कृत्वा बह्वीः प्रजाः सृज यस्मात्त्वं प्रजापतिः प्रजासृष्टाद्यधिकारितया आविर्भूतः ॥ १४ ॥

स्वाभिलषितमेव ब्रह्मणोक्तमिति तथैव कृतवानित्याह । इत्यादिष्ट इति ॥ स्त्रीभिः सह तथाकरणं नाभिलषितमिति ज्ञापयति गुरुणेति। "आज्ञागुरूणां ह्यविचारणीया" इति भगवानिति तादृशानामेव उत्पादनसामर्थ्यं सूचयति । नीललोहित इति रुद्रस्य असाधारणशब्दः । सत्त्वाकृतिस्वभावेनेति सत्त्वं बलं आकृतिः नीललोहितत्वं स्वभावस्तामसः एवं त्रिभिः कृत्वा आत्मसमाः प्रजाः ससर्ज ॥ १५ ॥

ततः किं जातमित्यत आह-रुद्राणामिति । रुद्र एक एव मारणोपयोगी उत्पादने नियुक्तः स्वकार्यप्रतिबन्धं ज्ञात्वा स्वकार्येण मारणं कृतवान् । तदा कार्याणां बहुत्वात् कालेन सृष्टाः सर्वा एव सृष्टयस्तैर्भक्ष्यन्ते सर्वानेवात्मप्रवेशनेन भुक्तान् कुर्वन्ति अचेतनानपि भूरादीन् परितोऽग्रसन्ति एवं रुद्रसृष्टानां रुद्राणां समंताज्जगद्ग्रसतां असंख्यशो यूथान् ज्ञात्वा प्रजापतिः स्वात्मानमपि भक्षयिष्यन्तीति शङ्कां कृतवान् ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

धीरित्यादीन्येकादश तच्छक्तीनां नामानि ॥ १३ ॥

सयोषणः सस्त्रीकः । एभिः स्थानैर्नामभिश्च युक्तः सन् प्रजाः सृज ॥ १४ ॥

सत्त्वं बलमाकृतिर्नीललोहितता स्वभावस्तीव्रता ॥ १५ ॥

रुद्रसृष्टानां रुद्राणां यूथानि दृष्ट्वेत्यन्वयः ॥ १६ ॥ १७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एतानि मया दत्तानि स्थानानि चकारात्कलत्राणि गृहाण सयोषणः सस्त्रीकः एभिः स्थानैर्नामभिश्च युतः प्रजाःसृज १३--१४ ॥

गुरुणा पित्रा आदिष्टः आज्ञप्तः सत्त्वेन बलेन आकृत्या नीललोहिततया स्वभावेनोग्रत्वेन हेतुना आत्मसमाः प्रजाः ससर्ज ॥१५॥

निशाम्य दृष्ट्वा अशङ्कत त्रासं प्राप्तः ॥ ॥ १६ ॥

भाषाटीका ।

हे रुद्रजी ! धी, वृत्ति, उशना, उमा, नियुत्, सर्पि, इला, अम्बिका, इरावती, सुधा, दीक्षा ए ग्यारह तुमारी स्त्री हैं ॥ १३ ॥

अपने स्त्रियोंके सहित इन नामों कर तथा इन स्थानों को ग्रहण करो फिर इन स्त्रियोंसें बहुतसी प्रजा उत्पन्न करो जिस से कि तुम प्रजापति पैदा भयो हो ॥ १४ ॥

पिता ब्रह्माके ऐसे आज्ञा देने से नीललोहित भगवान् अपने बल और स्वभाव से अपने सरीके प्रजा को उत्पन्न किये ॥ १५ ॥

रुद्रजी के पैदा किये रौद्र स्वभाववाले चारोंतरफ से संसारको ग्रसने वाले प्रजाओं के असंख्य यूथों को देखकर ब्रह्माजी को शंका हुई ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्रष्टा स्रक्ष्यति ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४॥२५॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

ईदृशीभिरुग्राभिः अलं सृष्टेरुपयोगोनास्ति प्रत्युतविनाशकत्वात् ॥ १७ ॥

तर्हि अनुकूला सृष्टिः कथंस्यादितिचेत्तत्राह । तपइति। तपआलोचन इत्यस्मात्तपोऽत्र भगवद्ध्यानम् ॥ १८ ॥

पुमानिति ध्यानोपलक्षितभक्तौ सर्वस्याधिकारित्वं सूचितम्

अथाभिध्यायतः सर्गं दश पुत्राः प्रजज्ञिरे ।
भगवच्छक्तियुक्तस्य लोकसन्तानहेतवः ॥ २१ ॥
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
भृगुर्वसिष्ठो दक्षश्च दशमस्तत्र नारदः ॥ २२ ॥
उत्सङ्गान्नारदो जज्ञे दक्षोऽङ्गुष्ठात्स्वयंभुवः ।
प्राणाद्वसिष्ठः संजातो भृगुस्त्वचि करात्क्रतुः ॥ २३ ॥
पुलहो नाभितो जज्ञे पुलस्त्यः कर्णयोर्ऋषिः ।
अङ्गिरा मुखतोऽक्ष्णोऽत्रिर्मरीचिर्मनसोऽभवत् ॥ २४ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

सर्वेषां मदुपासनम्" इति भगवद्वचनात् ॥ १९ ॥

बाढंतथैव करिष्यामीत्यमुं ब्रह्माणमामन्त्र्य पृष्ट्वा आज्ञां गृहीत्वेत्यर्थः तपसे तपः कर्तुम् ॥ २० ॥

अथ शिवस्य तपसि प्रस्थापनानन्तरम् अभिध्यायतः सृष्टिं बाहुल्येन चिन्तयतस्ततः भगवच्छक्तिः सृष्टिवृद्धिकरी क्रिया शक्तिः तया विशिष्टस्य ॥ २१ ॥

तत्र पुत्रेषु मध्ये ॥ २२ ॥

त्वचि त्वचः ॥ २३ ॥

कर्णयोः कर्णाभ्याम् ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवाह । अलमिति । त्रिभिः हे सुरोत्तम रुद्र ! ईदृशीभिः त्वत्तुल्याभिः सृष्टाभिः उल्बणैश्चक्षुर्भिर्मया सह दिशो दहन्तीभिः प्रजाभिरलं मासृज त्यजेत्यर्थः ॥ १७ ॥

अतस्तप आतिष्ठ चर ते भद्रमस्तु तपः कथंभूतं सर्वेषां भूतानां सुखमावहतीति तथोक्तं तपः प्रशंसति । तपसेति सार्धेन । भवान् त्वं विश्वं यथापूर्वं तपसैव स्रष्टा स्रक्ष्यसीत्यर्थः ॥ १८ ॥

तपसैव पुमानञ्जसा सुखेन भगवन्तं विन्दते प्राप्नोति कथंभूतमधोक्षजमधः कृतेन्द्रियव्यापारं निरस्तप्राकृतेन्द्रियव्यापारमित्यर्थः । सर्वभूतगुणावासं सर्वेषां भूतानां गुणानां कल्याणगुणानां वासमाश्रयं अत्राधोक्षजशब्देनाप्राकृतेन्द्रियादितद्वचापारतद्विषयसंपत्तिः सूच्यते । तथाहि श्रूयते "सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरस" इत्यनेन भोग्यतातिशयः सूच्यते गुणशब्देन प्राप्यत्वौपयिकाः ज्ञानशक्त्यादयः कल्याणगुणा विवक्षिताः भगवच्छब्देन प्राप्यविशेषनिर्देशः भूतावासशब्देन तदुपासनस्य स्वरूपानुगुणत्वं व्यज्यते ॥ १९ ॥

एवमादिष्टो रुद्रः किमकरोदित्यत्राह । एवमिति । आत्मभुवा ब्रह्मणा एवमुक्तप्रकारेणादिष्टः गिरां पतिं ब्रह्माणं परिक्रम्य प्रदक्षिणीकृत्य अमुं गिरांपतिं बाढमोमित्यामन्त्र्य भगवदाज्ञामङ्गीकरोमीत्युक्त्वा इत्यर्थः तपसे तपश्चर्तुं वनमरण्यं विवेश प्रविष्टवान् ॥ २० ॥

अथ रुद्राज्ञापनानन्तरं पुनःसर्गं ध्यायतश्चिन्तयतःपुत्रादश प्रजज्ञिरे जाताः ध्यायतः कथम्भूतस्य भगवच्छक्तियुक्तस्य भगवतो या शक्तिर्लोकरचनासामर्थ्यं तेन युक्तस्य पुत्रान् विशिनष्टि लोकसन्तानहेतवः लोकसन्ततिवृद्धिकराः ॥ २१ ॥

के ते दश पुत्राः कः कस्माज्जात इत्यत्राह । मरीचिरित्रिभिः ॥ २२ ॥

भृगुस्त्वचि त्वचश्चर्मणोभृगुर्जात इत्यर्थः कराद्धस्तात् ॥ २३ ॥

नाभितः नाभेः कर्णयोःकर्णाभ्यां पुलस्त्य ऋषिर्जातः मुखात् मुखादक्ष्णः नेत्रादत्रिर्जातः ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रवृत्तं कर्म निवार्य पुनः किं व्यधत्तेति तत्राह । तप इति । तच्च बहुविधं तत्रेदं कीदृशमत्राह । सर्वेति । भगवद्गुणस्मरणलक्षणं तप आलोचन इति धातोः सृष्टावलुपयुक्तेनानेन किमिति माभूच्छङ्केति वक्ति । तपसेति । भवांस्तपसैव यथा पूर्वं तथेदं विश्वं स्रष्टा संभविष्यतीत्यन्वयः ॥ १८ ॥

निर्विषयेनानेन किमिति तत्राह । तपसेति । स्वविषयेण तपसा पलब्धस्य हरेः प्रसादेन लब्धज्ञानो भवान् स्रष्टा भविष्यतीति भावः सूर्यादिज्योतिर्वलक्षयत्वात्परं तर्हि निराकारं किं नेत्याह भगवन्तमिति ऐश्वर्यादिगुणशालिनं तर्हि किं न दृश्यत इत्यत उक्तं मधोक्षजमिति अवाह्योन्द्रियज्ञानाविषयं तर्हि शशशृङ्गतुल्यमित्यतउक्तं सर्वेति । नन्विदं जीववद्वतत्त्वं किंनेत्याह । अञ्जसेति । इदमेव तत्त्वं नान्यदित्यर्थः अञ्जसा त्वरिते तत्वेऽव्ययहोऽद्भुतखेदयोरितियादवः तत्त्वेऽव्यद्धाञ्जसा द्वयमित्यमरश्च ॥ १९ ॥

सत्त्वाकृतिस्वभावेनेत्युक्तसत्त्वस्वभावोऽस्य स्पष्टः गुर्वाज्ञानुपालनात् स्यादिति भावेनाह । एवमिति । वनं जलम् ॥ २० ॥

तपस्तप्त्वा रुद्र एव सृष्टिशेषं करिष्यतीति मत्वा ब्रह्मणा तूष्णीं स्थितं किंतत्राह अथेति भगवतोहरे रजोमिश्रसत्त्वशक्त्या युक्तस्य चतुर्मुखस्य अङ्गेभ्य इति शेषः ॥ २१ ॥

किन्नामानस्त इति चोद्यानवकाशायाह मरीचिरित्यादिना । कस्मात्कस्मादङ्गादेषां जन्मेति तत्राह । उत्सङ्गादिति उत्सङ्गादि केवलतत्त्वनिर्णायकेऽस्मिञ्छास्त्रेऽयथातात्त्वतत्त्वस्य ... मोहनाय तस्यापि शास्त्रतात्पर्यार्थत्वात् महतां प्रियत्वाच्च ... बहुविधत्वात् तत्सृज्यानां च बहुरूपत्वादतोनिर्णायकग्रन्थान्तर...

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सारेणास्य तात्पर्यमवगन्तव्यं तदुक्तम् ।

"कालतो बलतश्चैवं ज्ञानानन्दादिकैरपि ।
सर्वैर्गुणैर्विष्णुरेव श्रेष्ठस्तदवरा रमा ॥
अनन्तांशेन कालात्तु समा तस्याश्चतुर्मुखः ।
अवरो बहुलांशेन तत्समो वायुरुच्यते ॥
नियमाद्वायुरेवैको ब्रह्मत्वं याति नापरः ।
तस्मात्समानता मुक्तौ वायुत्वे किंचिदूनता ।
दशवर्षं तु तत्पश्चाज्जननं तत्स्त्रियोरपि ।
आनन्दादिस्तद्दशांशः कालः संवत्सरात्परः ।
यावत्पश्चाज्जनिस्तावत्पूर्वं देहत्वयोभवेत् ।
ब्रह्मवाय्वोस्तुये देव्यौ तद्दशांशः सुखादिकः ।
शेषस्य गरुडस्यापि कालोदिव्यसहस्रकः
शेषरुद्रौ ब्रह्मवायू यथा तद्वत्परस्परम् ।
तद्देव्यस्तद्दशांशाः स्युस्ततस्त्विन्द्राद्योमताः ।
एवं मुक्तौ च पूर्वं च नान्यथा क्वचिदिष्यते ।
अन्यथोक्तिर्यत्र च स्यात्तन्मोहार्थं भविष्यति ।
पूर्वापरविपर्यासो बहुरूपत्वहेतुत ।

इति वचनात्

इन्द्राद्याःसनकाद्याश्च दक्षाद्यायेऽपि चापरे ।
ऋषयो मनवो देवास्तद्वंश्यायेच केचन ।
उमाया अवराः सर्वगुणैः सर्वैरसंशयः ।
तत्समो न भविष्यो वा न भूतोऽद्यतनोऽपिवा
ऋते हरिब्रह्मवायुशेषवीन्द्रान्सभार्यकान् ।
शंकरंचेति वक्तव्यमन्यन्मोहार्थमुच्यत

इत्यन्यत्रापि ॥ २३ ॥ २४ ॥

---

श्रीमद्वल्लभाचार्यकृत सुबोधिनी ।

अलं प्रजाभिरित्यादीनि वाक्यानि एवमात्मभुवादिष्ट इत्यत्र-खण्ड्यन्ते आत्मभत्त्वशङ्कया प्रजापतिराह । अलं प्रजाभिरिति । ईदशीभिः प्रजाभिरलमतः परमेतादृश्यः प्रजाः न स्रष्टव्या इत्यर्थः सुरोत्तमेति जीवभावमाह । देवोत्तमोभूत्वा देहभावेन सृष्टिकरणं न युक्तमितिभावः तासां कोदोष इत्याशङ्क्य दोषमाह । मया सहदहन्तीभिरिति । दशादिशः दहन्ति नापि दाहे तासामग्न्यपेक्षा किन्तु चक्षुर्भिरेव उल्बणैरिति क्रूरत्वेन भयजनकैः अनेन सांमुख्याभावेऽपि अन्यस्यापि तद्दर्शने भयेनापि मरणं सूचयति ।१७।

तर्हि किंकर्तव्यमित्याकांक्षायामाह । तप आतिष्ठेति । तपसि-क्रियमाणेऽपि न तव खेदोभविष्यतीत्याह । भद्रंत इति । सर्वभूतसुखावहमिति । तपोऽपि सृष्टिवल्लोकोपद्रवहेतुभूतं न कर्त्तव्यं किन्तु सर्वेषां भूतानां सुखमेव आवहति तादृशं सात्त्विकं कर्त्तव्यमित्यर्थः ततः किंस्यात् अतआह । तपसैव यथा पूर्वमिति । पूर्वंतामसकल्पे शिवः प्रजाजनकः ताः प्रजास्तामस्योभवन्ति परंलोकानुसारिण्यः तादृश्योऽपि प्रजाः अस्मिन् कल्पे उपयुज्यन्त इति तथोक्तम् ॥ १८ ॥

किंच मास्तु प्रजासर्गः तथापि सात्त्विके तपसि क्रियमाणे भगवान् परितुष्यतीत्याह । तपसैवेति । ब्रह्मा हि स्वानु-वप्रकारेण शास्त्रार्थं निरूपयति । परंज्योतिरिति । ज्योतिषामपि प्रकाशकं अतस्तस्मिन् दृष्टे सर्ववस्तुयाथात्म्यं स्फुरति सहि सर्वथा सर्ववस्तुयाथात्म्यप्रकाशकः । भगवन्तमिति । न ततोऽन्यत् ज्ञातव्यमस्तीति ज्ञापितम् । अधोक्षजमिति । साधनान्तरं निराकृतम् । सर्वभूतगुहावासमिति । सुलभत्वमावश्यकत्वं दुर्ज्ञेयत्वंच । एतादृशस्य प्राप्तिः तपसा भवतीति तपसोमाहात्म्यम् । अञ्जसा अनायासेन । पुमानिति दोषराशित्वम् ॥ १९ ॥

एवं ब्रह्मणा उपदेशे कृते रुद्रोयत्कृतवान् तदाह । एवमिति । आत्मभुवा ब्रह्मणा गिरां पतिमिति गुरुं प्रणम्य । बाढमिति अतः परं ममापि सम्मत मितिभावः । तथास्त्वित्यर्थः । अमुं ब्रह्माणं तपःकरणार्थं तपोवनं प्रविवेशेत्यर्थः ॥ २० ॥

एवमाधिभौतिकाध्यात्मिकाधिदैविकसृष्टयस्तामस्योनिरूपिता अथ राजस्यः प्रकारान्तरेण सृष्टयः कृताः ता निरूपयितुमुपक्रमते । अथाभिध्यायत इति । पूर्वं कर्तृत्वाभिमानेन सृष्टौ प्रवृत्तः । अहंकारस्य त्रैविध्यात् त्रिविधा सृष्टिरुत्पन्ना तामसी पञ्चपर्वा । ततो अहंकारे भगवद्ध्याने शुद्धे चित्ते राजसी सृष्टिः । तदुभयनिर्वाहार्थं सात्त्विकी चेति । इदानीं सृष्टिमेवध्यायति । कथमियं सृष्टिर्भवतीति । तदा सृष्टेर्भगवद्रूपत्वात् दशविधा सृष्टिरुत्पन्नेति निरूप्यते । नव त्रिगुणाः । एकेगुणातीत उद्देशे पश्चान्निरूप्यते विमर्शे प्रथमं तेषां चिन्तापरिहारकत्वेन दुःखनिवारकत्वात् पुत्रत्वं ननु ध्यानमात्रेण कथमेते पुत्रा उत्पन्नाः तत्राह । भगवच्छक्तियुक्तस्येति । या भगवतः सृज्या शक्तिः सैवपुत्रत्वेन प्रकटीभूतेत्यर्थः स्रष्टृशक्तिर्वा तदा तयैव शक्त्या ते उत्पादिताः भगवच्छक्त्या उत्पादिते योविशेषस्तमाह । लोकसन्तानहेतव इति । लोकस्य जनस्य सन्तानमनुवृत्तिः कल्पान्तपर्यंतं सन्ततिप्रवाहः नहि प्रवाहोभगवच्छक्तिव्यतिरेकेण अन्येनकर्तुं शक्यते ॥ २१ ॥

तानुद्देशतोगणयति । मरीचिरिति । आद्यास्त्रयः सात्त्विकाः मध्यमास्तामसाः भृग्वादयस्त्रयो राजसाः दशमस्तत्रेति भिन्नतया निरूपणं गुणातीतत्वख्यापनार्थम् ॥ २२ ॥

अवयवेभ्यस्तेषामुत्पत्तिमाह । उत्संगादिति । प्रीतिविषयत्वेन उत्सङ्गान्नारद उत्पादितः लाल्यमानः भगवदीयत्वात् अङ्गुष्ठाद्दक्षः स्वसमानत्वाय स्वयंभुव इति तस्यापि ब्रह्मण इवाभिमानः अन्ये यथायथमुत्पन्नाः वाह्याभ्यन्तरभेदेन ज्ञाननिष्ठास्त्वान्तराः मध्यस्था राजसाः वाह्यास्तामसा इति प्राणादशविधाद्वसिष्ठः सम्यग्जात इति आन्तपर्यन्तमुत्तमा तद्वंश्या निरूपिताः भृगुर्वाह्यः क्रतुरपि ॥ २३ ॥

पुलहोऽपि पुलस्त्यस्योभयवंशजनकत्वात् कर्णयोरित्युक्तमृषिरिति । वेदसहभावात् दैत्यत्वव्यावृत्त्यर्थम् अन्यथा मधुकैटभाविवपश्चाज्जायेत आङ्गिरा वक्त्रमध्यात् अक्षिमध्यादत्रिः तस्याप्युभयरूपसृष्टिजनकत्वं ज्ञानिनोयोगिनः पुत्ररूपाश्च मनसोऽपि द्वैरूप्यं मरीचेरप्युभयसृष्टिजनकत्वात् ययोरापूरितं जगदिति वाक्यात् ॥२४॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तप आतिष्ठेति सृष्टिस्थितिसमये रुद्रस्य लीला न भद्रायेति तपसि प्रवर्त्तना यथा पूर्वं सृष्टेति विपरीतलक्षणम् । यथापूर्वंकल्पान्ते विश्वं समहरस्तथा इत ऊर्द्ध्वमपि संहर्त्तासीत्यर्थः । क्वचित् कल्पे शिवोऽपि ब्रह्मेव प्रजाः ससर्ज्जेत्येके । "सृजामि तपसा विश्वं ग्रसामि तपसा पुनः । बिभर्मि तपसा विश्वं वीर्य्यं मे दुस्तरं तप" इत्युक्तवता भगवता शिवस्यक्वैदिदमुक्तमित्यपरे"यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः इति न्याये

धर्मः स्तनाद्दक्षिणतो यत्र नारायणः स्वयम् ।
अधर्मः पृष्ठतो यस्मान्मृत्युर्लोकभयंकरः ॥ २५ ॥
हृदिकामो भ्रुवः क्रोधो लोभश्चाधरदच्छदात् ।
आस्याद्वाक् सिन्धवो मेढ्रान्निर्ऋतिः पायोरघाश्रयः ॥ २६ ॥
छायायाः कर्दमोजज्ञे देवहूत्याः पतिः प्रभुः ।
मनसो देहतश्चेदं जज्ञे विश्वकृतो जगत् ॥ २७ ॥
वाचं दुहितरं तन्वीं स्वयम्भूर्हरतीं मनः ।
अकामां चकमे क्षत्तः ! सकाम इति नः श्रुतम् ॥ २८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

न त्वत्तस्तपः शिक्षित्वा सांसरिको लोकोऽपि निस्तरिष्यतीत्याह तपसैवेति । कर्म्मयोगस्यापि मरीच्यादिरूपेणाविर्भावमाह ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

मरीचिरिति । ज्ञानवैराग्यतपोयोगकर्म्मणां साफल्यं उक्त्वैव तथा स्वयमपि निरपेक्षतयैव भक्तिः सर्वफलदाता स्वयं फलरूपा चेति सर्व्वान्ते भक्तिर्नारदरूपेणाविर्भावमाह—दशम इति ॥ २२ ॥

उत्सङ्गात् प्रीतिस्थानात् श्लेषेण उत्कृष्टात् सङ्गात् साधुसङ्गादित्यर्थः । "आपोनारा इति प्रोक्ताः" इत्यादि दृष्टेर्नरशब्देन परमेश्वर उच्यते नरस्येदमित्यर्थे तस्येदमित्यण नारं भगवद्दास्यसख्यादिकं ददातीति नारदो भक्तिये.गः ॥ २३ ॥ २४ ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

जप्ता स्रक्ष्यति ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥२४॥२५॥

भाषाटीका ।

हे महादेवजी जोकि बडे क्रूरनेत्रों के अग्निसे मेरेको तथा सब दशोंदिशा को जलाते हैं ऐसे प्रजाओं की अब सृष्टि मत करो ॥ १७ ॥

आपका भलाहोवे आप अब सब लोगोंका सुखदेने वाला तप करो तपही से इस विश्वको पहिले सरीका आप सृजोगे ।१८।

तपही से पुरुष, परमज्योतिस्वरूप अधोक्षज सब भूतों के हृदय रूपी गुहा मे रहने वाले भगवान् को अनायास से पुरुष प्राप्त होजाता है ॥ १९ ॥

मैत्रेयजी बोले इस प्रकार ब्रह्मा की आज्ञा पाकर सरस्वती के पति ब्रह्मा को प्रणाम परिक्रमा करि के जो आज्ञा ऐसा कहके विदा मागकर तपस्या करने को वनको महादेवजी चलेगये ॥ २० ॥

इस के अन्तर सृष्टिका चिंताकर ते ब्रह्माजी के भगवत् शक्ति युक्तहो जानेसे लोकके संतानार्थ दशपुत्र उत्पन्नहुये ॥ २१ ॥

• उन पुत्रों के नाम मरीचि अङ्गिरा अत्रि पुलस्त्य पुलह क्रतु भृगु वशिष्ठ दक्ष दश में उन में श्रीनारदजी हैं ॥ २२ ॥

ब्रह्माजी के गोद में सें नारद उत्पन्न हुये अङ्गुष्ठ सें दक्षभये प्राणसे वसिष्ठ त्वचा सें भृगुजी हस्तसें क्रतुमुनि ॥ २३ ॥

नाभीसे पुलह कानों से अङ्गिरा नेत्रोंसें अत्रि मनसें मरीचि उत्पन्नभये ॥ २४ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

अधरच्छदादधरोष्ठात् ॥ २६ ॥ २७ ॥

देहान्तरेण कृतं सर्गं वक्तुं तद्देहत्यागे कारणमाह । वाचमित्यादिना ॥ २८ ॥ २९ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

यत्र धर्मे यस्मादधर्मात् ॥ २५ ॥

हृदि हृदः आस्यान्मुखान्तर्वर्तिच्छिद्रात् ॥ २६ ॥

विश्वकृतोब्रह्मणः ॥ २७ ॥

तद्देहत्यागे व्यभिचारिदेहत्यागे नः श्रुतमित्युक्त्या दर्शनाभावात्पूर्वकल्पवृत्तमिदं न तु सांप्रतिककल्पीयमितिसूचितम् अन्यथा चतुःश्लोक्युपदेशानन्तरं तादृशविकर्मणि प्रवृत्त्यनुपपत्तिः "भवान्कल्प विकल्पेषु न विमुह्यति कर्हिचित् भगवद्वाक्यात्" कथनं चेदं बहिर्मुखानां भीषणार्थं वेदबहिर्मुखानां तु ब्रह्मवत्प्रवृत्त्या वेदाचारनाशनार्थं चेतिज्ञेयम् ॥ २८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

धर्मइति । पुनः सर्गं ध्यायत इत्यनुषङ्गः दक्षिणात्स्तनात् धर्मो जातः कथम्भूतः यत्र धर्मे नारायणः स्वयं स्थितः अधिष्ठाता इत्यर्थः धर्मस्य प्रभुरच्युत इति वचनात् पृष्ठतः कथम्भूतः यस्माधश्चाधर्मे लोकभयंकरोमृत्युस्तिष्ठति अधर्मदेवतेत्यर्थः ॥ २५ ॥

हृदि हृदयात्कामः भ्रुवोर्भ्रूमध्यात् क्रोधः अधरदच्छदादधरोष्ठात् लोभः आस्यान्मुखतः वाक् वागधिष्ठात्री देवता मेढ्रात्सिन्धवः पायोर्गुदात् अघाश्रयः पापाश्रयः पापाधिष्ठाता निर्ऋतिः ॥ २६ ॥

छायायाः देहच्छायायाः कर्दमः कथम्भूतः देवहूत्याः स्वायम्भुवमनुकन्यायाः पतिः प्रभुः जितेन्द्रियः अवान्तरकथां प्रसङ्गादुपसंहरति । मनस इति । मनसोदेहतश्च पञ्चभूतकरीत्या विश्वकृतो ब्रह्मणः सकाशाज्जगज्जज्ञे ॥ २७ ॥

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

वाक्प्रसङ्गाद्वागन्तरकथां प्रस्तौति । वाचमित्यादिना । ता विशोः जगृहुरित्यन्तेन ग्रन्थेन स्वयम्भूर्ब्रह्मा स्वदुहितरं तन्वं स्त्रीरूपां मनश्चित्तं हरन्तीं स्वयमकामयमानां वाचं वागधिष्ठात्रीं देवतां स्वयं सकामः चकमे ऐच्छदिति नोऽस्माभिः श्रुतम् ॥ २८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अत्र यस्य धर्मस्य गृहे नारायणः स्वयं हरिर्नरनारायणकृष्णनाम्ना जात इति शेषः यस्मादधर्मान्मृत्युर्देहवियोगलक्षणः ॥ २५ ॥

उत्पत्त्यनन्तरमपि स्वकारणं मुक्त्वा न तिष्ठतीति हृदीति अधरवच्छदादधरोष्ठात् वाङ्मानुषी पायोर्गोलकात् अघाश्रयः, दुःखाभिमानी ॥ २६ ॥

शरीरच्छायायाः कर्दमोऽप्यन्योऽस्तीति देवहूत्याः पतिरिति संक्षिप्य फलितमाह । मनस इति ॥ २७ ॥

भगवन्महत्त्वविद्भिर्महद्भिरसुरजनमोहनं कर्तव्यमिति नियममवेक्षमाणस्य ब्रह्मणः कामिजनविडम्बनप्रकारमाह । वाचमिति- दुहितरं शृङ्गाररसदोग्ध्रीं तन्वीं सुन्दरीं अकामामकुत्सितां वाचमानुषीं नोऽस्माकं श्रुतं वार्तामात्रं नतु तथ्यमित्यर्थः ॥ २८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वाचं दुहितरमित्यादिकथनं वेदान्तसम्मुखानां भीषणार्थं तद्बहिर्मुखानां तदूदृष्टान्ततया तथा प्रवृत्त्या तदवज्ञया वालशासनार्थञ्च ॥ २८—३८ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं दशपुत्रान्निरूप्य तेष्वधिष्ठितरूपेण नवान्यान् सगुणानुत्पादितवानित्याह । तत्राग्रपश्चाद्भेदेन धर्माधर्मौ तयोश्च कार्यं मुक्तिः संसार इति धर्माधर्मौ निरूपयति । धर्मस्तनादिति । यत्र धर्मे नारायण आविर्भूतः स दक्षिणस्तनात् स्वभावतोहृदयाद्धर्मस्तत्र प्रवृत्तिस्वभावात् हृदयात् ज्ञानात्मा भगवदात्मकस्तु दक्षिणस्तनात् । स्वयमित्यात्मत्वात् मोक्षरूपत्वम् । अधर्मे वैलक्षण्याभावात् सामान्यतः पृष्ठत इत्युक्तम् । तत्राविर्भूतो भगवदंशको नाशको मृत्युः । लोकभयंकर इति तस्यावान्तरकार्यम् । अनेन भयहेतुरेवाधर्म इति भयेनाधर्मपरिज्ञानम् ॥ २५ ॥

षडन्ये हृदिकाम इत्यादि । कामक्रोधलोभाः वाक्समुद्रनिर्ऋतयश्च । तत्र निर्ऋतिः पाय्वाश्रयः । संविसर्गात्मा न स्थिरस्वभावः अतस्तस्याश्रयाभावः कामादयः सृष्टिप्रलयात्मकाः । मर्यादात्मकास्तु वाक्समुद्रनिर्ऋतयः ॥ २६ ॥

छायाया अपि प्रतिसृष्टिरूपत्वात् पुष्ट्युपयोगिसृष्टिजनकत्वं । अतोऽग्रिमप्रकरणं विस्तरेण वक्ष्यते

स्वप्नश्छायातमश्चैव मायाविद्याभ्रमास्तथा ।
तिरोभूतेन हरिणा सृज्यन्ते प्रतिसर्गजाः ।

कर्दमस्य प्रसिद्धिरतएव भार्यया तत्र स्त्रियाः प्राधान्यं तपोभगवदाराधनं च तत्र स्त्र्यर्थमेव स्त्रियाश्चमुक्तिः प्रकरणं चस्त्रियाः एतत्सूचयितुमाह । देवहूत्याः पतिरिति । देवानां हूतिर्यया यथा यज्ञैर्देवमार्गे तथास्त्रीदैत्यपक्षक । प्रभुरिति देवसृष्टावुत्पन्नत्वात् पश्चात् स्वातन्त्र्यतां त्यक्ष्यतीत्यर्थः । एवं सृष्टिमुक्त्वोपसंहरति । मनस इति । चकाराच्छायातोऽपि विश्वकृत इति पश्चात्पूर्ववदभिमान उत्पन्न इत्यर्थः ॥ २७ ॥

कारणदशायां योऽभिमानस्तदपेक्षया कार्यानन्तरमभिमानोऽनर्थहेतुरिति अस्याः सृष्टेः प्रतिच्छायारूपां सृष्टिमन्यां निरूपयितुमुपाख्यानान्तरमारभते । वाचं दुहितरमिति ।

अविद्या प्रथमं सृष्टा अभिमानस्तथोद्गतः ।
सृष्टौच सर्वपुरुषावागेकास्त्रीसरस्वती ।

( १ ) लौकिकीसात्र विज्ञेया सा वेदेऽपितिरोहिता। तिरोधानप्रवृत्त्यर्थं चरित्रमिदमुच्यते ( २ ) सत्यसृष्टौ प्रवेशोहि तिरोभूतान सा भवेत्। यज्ञात्मकोऽयं ब्रह्मात्र सृष्ट्याधिक्येच्छया पुनः । लौकिकीमपि वाणीं स गृह्णामीतिमनोदधे ( ३ ) ततोलौकिकभूयिष्ठं जगज्जायेत निश्चितम् । तन्नैच्छन् वैदिकः सृष्टेस्त्यागोभेदेनि रूपितः । दैत्यसृष्टौ ततः सर्वे यज्ञावेदाश्च लौकिकाः ( ४ ) नतं विदाय वाक्येन तेनिन्द्यन्ते सदाश्रुतौ । लौकिकी लौकिकेष्वेव सकामी नतु वैदिके ( ५ ) उत्तमस्य तु हीनत्वं जायते शीघ्रमेवहि । नाधमस्योत्तमत्वं हि कदाचिदपि जायते ( ६ ) दयासृष्टिर्द्वितीये तु दुहितृत्वं नचान्यथा । अधर्मोऽप्ययमेवात्र हीनकार्येषु या रतिः । भ्रातृणां चाविवाहोऽग्रे सृष्टिभेदे निरूप्यते ( ७ ) वाचं सरस्वतीं लौकिकीं तन्वीं कोमलांगीं सुन्दरीम् । गद्यपद्यादिरूपाहि लौकिक्येव सरस्वती । स्वयंभूरिति कुलादिमर्यादाभावः सूचितः । मनोहरन्तीमिति कामनायां हेतुः अहंकाराविष्टत्वात् मनसस्तदधीनत्वम् ॥ २८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भक्तियोगस्य च विहितस्यानुष्ठाने परमोधर्म्मश्च भवतीति धर्म्मोत्पत्तिमाह । धर्म्म इति । स्तनादिति सर्वोत्कृष्टस्थानस्य हृदयस्याप्युत्तमप्रदेशादतिप्रियात् धर्म्मस्यैव विहितस्याकरणे निषिद्धस्य च करणे अधर्म्म इत्यधर्म्मस्याप्युत्पत्तिमाह । अधर्म्म इति । पृष्ठत इत्यपकृष्टस्थानादनतिप्रियात् ॥ २५ ॥

अधर्म्मः कथं स्यादिति तत्प्रवर्त्तकानां कामादीनामुत्पत्तिमाह । हृदि मनसीति मनसः पुरुषानधीनत्वात्तत्रस्थस्य कामस्योन्मूलनम् दुःशकमिति द्योतयति । क्रोधादीनामपि मनस एवोत्पन्नानांभ्रूप्रभृतिप्राकट्यस्थानमेव ज्ञेयम् । कामक्रोधादिमत्त्वेऽपि शास्त्रज्ञानमयं पातित्यं शस्त्रवेदिनि दर्शयतुं तदैव सरस्वत्या उत्पत्तिमाह । आस्यादिति ॥ २६ ॥

सदा तामसराजसभाववतामपि कदाचित् किञ्चित् सात्त्विकभावोदयः स्यादिति दर्शयितुमाह । छायायाः कान्तेः ॥ २७ ॥

अतिविदुषामतिविवेकिनामपि कामजयो न भवेदतः कन्याभगिन्यादिभिः सह रहसि न वसेदिति ज्ञापयितुमाह । वाचमिति । इति नःश्रुतमित्यनेनैतद्वक्तुमनर्हमपि तज्ज्ञानार्थमपराधाद्बिभ्यददोषदृगेव ब्रवीमीति द्योतितम् । दोषदृष्टौ तु मरीचिपुत्राणामिवाधःपातः स्यादिति भीषणा च ज्ञेया । तथा नः श्रुतमित्येतत्कल्पभवानां केषाञ्चिददृष्टमप्येतन्न भवेदिति प्रसङ्गतोऽतिपूर्व्वकल्पगतमेवैतत् कर्म्म सम्प्रत्युक्तमिति भावः । चतुःश्लोकीभागवतोपदेशप्राप्त्यनन्तरमेतद्घटनात् । यदुक्तं भगवता । "एतन्मतं समातिष्ठ परमेण समाधिना । भवान् कल्पविकल्पेषु न विमुह्यति कर्हिचित्" इति २८॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अघाश्रयः पापाश्रयः ॥ २५ ॥ २६ ॥ २७ ॥
सकामः सृष्टिवृद्धिसंकल्पवान् ॥ २८ ॥

तमधर्मे कृतमतिं विलोक्य पितरं सुताः ।
मरीचिमुख्यामुनयो विस्रम्भात्प्रत्यबोधयन् ॥ २९ ॥
नैतत्पूर्वैः कृतं त्वद्ये न करिष्यन्ति चापरे ।
यत्वं दुहितरं गच्छेरनिगृह्याङ्गजं प्रभुः ॥ ३० ॥
तेजीयसामपि ह्येतन्नसुश्लोक्यं जगद्गुरो ! ।
यद्वृत्तमनुतिष्ठन् वै लोकः क्षेमाय कल्पते ॥ ३१ ॥
तस्मै नमो भगवते य इदं स्वेन रोचिषा ।
आत्मस्थं व्यञ्जयामास स धर्मं पातुमर्हति ॥ ३२ ॥
स इत्थं गृणतः पुत्रान् पुरो दृष्ट्वा प्रजापतीन् ।
प्रजापतिपतिस्तन्वं तत्याज व्रीडितस्तदा ॥ ३३ ॥
तां दिशो जगृहुर्घोरां नीहारं यद्विदुस्तमः ।
कदाचिद्ध्यायतः स्रष्टुर्वेदा आसंश्चतुर्मुखात् ।
कथं स्रक्ष्याम्यहं लोकान् समवेतान् यथापुरा ॥ ३४ ॥
चातुर्होत्रं कर्मतन्त्रमुपवेदनयैः सह ।
धर्मस्य पादाश्चत्वारस्तथैवाश्रमवृत्तयः ॥ ३५ ॥

विदुर उवाच ।

स वै विश्वसृजामीशो वेदादीन् मुखतोऽसृजत् ।
यद्यद्येनासृजद्देवस्तन्मे ब्रूहि तपोधन ! ॥ ३६ ॥

भाषाटीका ।

दहिने हस्तव में से धर्म हुआ जिस धर्म में स्वयं श्रीनारायण प्रगटभये पीठ में से अधर्म जिससे लोकका भय कारक मृत्यु पैदाहुआ ॥ २५ ॥

हृदय में से काम भौंमें सें क्रोध नीचे के ओंठसे लोभ मुख में से वाणी लिङ्गमें सें समुद्र गुदामें से पापका आश्रय निर्ऋति राक्षस जन्मा ॥ २६ ॥

ब्रह्माजीकी छायामें से कर्दमऋषि जन्मे जोकि बडे समर्थ हैं और देवहूतीजी के पति हैं इस प्रकार से ब्रह्माजी के मन से तथा देहसे यह सब जगत् उत्पन्नहुआ है ॥ २७ ॥

हे विदुरजी ! सुन्दर रूपवाली मन को हरनेवाली अपने को नहीं चाहनेवाली अपनी दुहिता को सकाम होकर स्वयंभू ब्रह्माजी ने इच्छाकिया ऐसे हमने सुना है ॥ २८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्वद् त्वत्तो ये पूर्वे ब्रह्मादयोऽन्ये वा तैरेतन्नकृतम् । अङ्गजं कामम् ॥ ३० ॥

तेजीयसामिति ॥ तेजस्विनामपि सुश्लोक्यं सत्कीर्तिदं न भवति येषां तेजीयसां वृत्तम् ॥ ३१ ॥ ३२ ॥

तन्वं तनुम् ॥ ३३ ॥

कथं स्रक्ष्यामीत्यभिध्यायतः स्रष्टुर्ब्रह्मणश्चतुःसंख्यायुक्तान्मुखात् समवेतान् सुसंगतान् यथा पुरा प्राक्कल्पे ॥ ३४ ॥

चातुर्होत्रं होत्रादीनां चतुर्णां कर्म कर्मतन्त्रं यज्ञविस्तारः उपवेदैर्न्यायैश्च सह आश्रमास्तद्वृत्तयश्चासन् ॥ ३५ ॥

मुखतो मुखेभ्यः ॥ ३६ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

विश्रम्भाद् शिष्टोऽयमस्मत्पिता धर्मवाक्यं मानयिष्यतीति विश्वासात् "यद्यदा चरति श्रेष्ठस्तत्तदेवेतरोजन „ इत्यादि न्यायेन अनुप्रवृत्तलोकानिष्टवारणार्थं प्रबोधयामासुः ॥ २९ ॥

पूर्वे पूर्वे द्विपरार्द्धगताः ब्रह्मादयो देवाः अन्यं मनुष्या वा दुहितृगमनम् प्रभुरपि ॥ ३० ॥

यत्तद्विकर्म ॥ ३१ ॥

श्रीनारायणं प्रति प्रार्थनञ्चेदं तत्कृपां विना कामोदुर्निवार इत्यभिप्रायात् ॥ ३२ ॥

महापातकस्य प्राणत्याग एव प्रायश्चित्तमिति बोधनार्थं तत्याज अत्र तनुशब्देन भावएवव्याख्येयः द्विपरार्द्धान्तरस्तस्य सम्भवात् ॥ ३३ ॥

तां त्यक्तां तनुं यद्यां विद्वांसः नीहारतमोरूपत्वेन वर्ण्य

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्यख्या दीपिकादिप्पणी।

सुसङ्गतात् यथावत्सन्निवेशात् सर्ववेदमयेनेदमिति श्रीभगवदुक्तेः वेदशब्दोंऽश्य एवा दौ ससृजे सप्रजापतिरिति वचनाचादौ सृष्ट्युपयोगि वेदाविर्भावकथनम् ॥ ३४ ॥

होतृशब्दस्योपलक्षणत्वात् होत्रादीनामितिव्याख्यानम् आदिना होत्रध्वर्युब्रह्मणामृत्विजां परिग्रहः, कर्मेति अणप्रत्ययस्यार्थः न्यायैरान्वीक्षिक्यादिभिर्वक्ष्यमाणैः ॥ ३५ ॥

पूर्वेदादिकं येन येनेत्यावर्तनीयम् ॥ ३६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अधर्मे दुहितृकामनारूपे प्रत्यवायात्मके कर्मणि कृतोत्पन्नामतिर्यस्य तं पितरं ब्रह्माणं विलोक्य मरीचिप्रभृतयः पुत्राः मुनयः विस्रम्भात्पितरि विश्वासाधिक्यात्पितरं प्रत्यबोधयन् ज्ञापितवन्तः ॥ २९ ॥

अवबोधनप्रकारमेवाह। नैतदिति। पूर्वैरेतत् कृतमयत् न कुर्वन्ति अपरे भाविनो लोकाः न करिष्यन्ति किन्तदित्यत आह। स्वयंप्रभुः धर्ममर्यादापालनसमर्थस्त्वमङ्गजं काममनिगृह्य स्वां दुहितरं गच्छेरिति यत् ॥ ३० ॥

तेजीयसामस्माकमेतत् प्रत्यवायकरमतआह। तेजीयसामिति। हे जगद्गुरो!। जगन्मर्यादापालकतेजीयसां तेजिष्ठानामप्येतत् सुश्लोक्यं न श्लाघ्यं कुतः हियस्मात्तेषां श्रेष्ठानामाचारं वृत्तमनुतिष्ठन् लोकः जनः क्षेमाय कुशलाय कल्पते तथाच गीयते।

> यद्यदा चरतिश्रेष्ठस्तत्तदेवेतरोजनः।
> स यत्प्रमाणं कुरुते लोकस्तदनु वर्त्तते ॥ ३१ ॥

एवं पितरं प्रबोध्य तमेतस्मादधर्मान्नियमयितुं भगवानेव समर्थः नान्य उपायोऽस्तीति तस्मै नमस्कुर्वन्तस्तस्मै विज्ञापयामासुरित्याह। तस्मा इति। तस्मै भगवते नमः। योभगवानात्मस्थमात्मनामरूपविभागानर्हसूक्ष्मदशापन्नस्थितं चेतनाचेतनात्मक मिदं जगत्स्वेन शोचिषा संकल्परूपज्ञानेन व्यञ्जयामास विभक्तनामरूपापन्नत्वेन व्यक्तमकरोत् सकलजगत्कारणभूतः परमात्मा अधर्मान्निवृत्तिरूपं धर्मं पातुं रक्षितुमर्हति ॥ ३२ ॥

एवमुक्तवत्सु पुत्रेषु पिता किमकरोदित्यत आह। स इति। इत्थमुक्तरीत्या पुरः अग्रे गृणतः भाषमाणान् प्रजापतीन् पुत्रान् दृष्ट्वा प्रजापतीनां मरीच्यादीनां पतिः ब्रह्मा व्रीडितः लज्जितः तदा तन्वं तनुं तत्याज त्यक्तवान् ॥ ३३ ॥

तां त्यक्तां घोरां तनुं दिशः जगृहुः गृहीतवत्यः कुतएतदवगम्यते इत्यत्राह। यत्त्यक्तां तनुमेव तमोनीहारं विदुः जानीयुः अत्र तनु त्यागोनामकामुकत्वभावत्याग एव तद्ग्रहणं नाम तद्भावग्रहणमेव तनुशब्देन निर्दिष्टस्तु तनुवद्विशेषणतया वेदितव्यम् तनुत्यागानन्तरं ब्रह्मा किमकरोदित्यत्राह। कदाचिदिति। समवेतान् संगतान् लोकान् यथा पुरा पूर्वकल्पवत् कथमहं स्रक्ष्यामीति कदाचिद्ध्यायतः स्रष्टुः चतुर्मुखाच्चतुर्मुखेभ्यः वेदा ऋगादय आसन्नाविर्भूताः ॥ ३४ ॥

चातुर्होत्रं चतुर्णां होतॄणां कर्मतन्त्रं यज्ञविस्तारः उपवेदा आयुर्वेदादयः ते च न्यायाश्च तैः सह धर्मस्य चत्वारः पादाः तपः सत्यं दयाशौचमिति प्रथमस्कन्धोक्ताः पादाः आश्रमास्तद्वृत्तयश्चासन्निति पूर्वेणान्वयः ॥ ३५ ॥

एवं सामान्येन वेदादीनां सर्गेऽभिहिते तेषां मध्ये कस्य कस्मान्मुखादुत्पत्तिरिति विवित्सया पृच्छति विदुरः। सद्वा इति। विश्वसृजां प्रजापतीनां पतिः स ब्रह्मा वेदादीनसृजदिति ज्ञातमस्माभिः इदंतु न ज्ञायते देवः ब्रह्मा येन यद्यदसृजदिति हेतपोधन मैत्रेय! तत्सत्यं ब्रूहि वद ॥ ३६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

भगवदुपासनया तत्र तत्र नित्यसन्निहितमनस्कत्वाददुष्टमनसः स्वयंभुवोदुष्टजनमोहनरीतिमाह। तमिति ॥ २९ ॥

कथमधर्मचारिति तत्राह। नैत यौऽङ्गजं काममनिगृह्य स्वां दुहितरं गच्छेत्तस्य एतत्कर्म पूर्वैस्त्वदन्यैर्न कृतं ये अपरे पश्चात्तनास्तेऽपि न करिष्यन्तीत्यन्वयः ॥ ३० ॥

ननु पामरस्यैवं दुष्करमग्निवत् दुष्कर्मेन्धनभस्मीकरणसमर्थस्य न मद्विधस्येति तत्राह। तेजीयसामिति। एकस्य चेदिदं दुष्कीर्तिकरं न बहूनामिति मन्दाशङ्कानिरासाय तेजीयसामिति बहुवचनं बहुभिरनुष्ठितमपि सुरापानं यथा न्याय्यं तथापीति हि शब्देन लोकसिद्धिं सूचयति इतोऽप्यनुपपन्नमित्याह। यद्वृत्तमिति। अनेन जगद्गुरुत्वेनैतत् करणेनतरेषामनर्थः स्यादिति ध्वनितम् ॥ ३१ ॥

कोपभीत्या सान्त्वयन्तो नमन्तीत्याशयेनाह। तस्मा इति। संलापेन प्रार्थयमाना इति भावेनाह। य इति। स्वेन स्वयं प्रातभाससमानेन रोचिषा ज्ञानेनात्मस्थः परमात्मस्थमिदं विश्वं व्यञ्जयामास स ब्रह्मा स्वसृष्टं धर्मं पातुमर्हतीत्यन्वयः ॥ ३२ ॥

त्यागात्यागौत्वितरप्रार्थनया महतां स्वभाव इति भावेनाह सइत्थमिति। अद्यापि सहस्थितत्वाच्चेयं निजा सरस्वती कित्वन्यैव त्यक्ता सा केति मन्दाशङ्का "यां तत्याज विभुर्ब्रह्मा मानुषी वाक् तु सा स्मृता। सरस्वती निजां भार्यां देवीं वाचं तु तां विदु" इति वाक्येन परिहर्तव्या ॥ ३३ ॥

दिश इति। दिक्स्था जना लक्ष्यन्ते अन्यथा मानुषीति विशेषोक्तिः व्यर्था स्यात् तथा च यद्यस्या उत्पन्नं नीहाराख्यं तमो विदुरित्यर्थः वेदादितदभिमानिनीनां सृष्टिरुच्यतेति सुप्तप्रतिबुद्ध इव तत्सृष्टिं कथयति। कदाचिदिति। चतुर्मुखादिति चतुर्भ्यो मुखेभ्य इत्यर्थः ॥ ३४ ॥

चातुर्होत्रकर्मादिकमपि भगवज्ज्ञानपूर्वकं सृष्टवा न्नाह्यमिति भावेनाह। कथमिति। कर्मशास्त्रमनुपपन्नांल्लोकान् कथं स्रक्ष्यामि इक्ष्यामीति ध्यायतो ब्रह्मणो वाचा कर्मतन्त्रं कर्मशास्त्रं समुत्पन्नं उपवेदस्मृतिलक्षणैर्न्यायैरुपोद्घातग्रन्थैः सह अत्र विशेषस्तु।

> अभिमानिनः शब्दतश्च ब्रह्मा वेदान् ससर्जह।
> यज्ञादींश्चाञ्छ्रुपे वाचा तथा सर्वाभिमानिनः।
> इतिहासपुराणे तु श्रुत्वा हरिमुखात्स्वयम्।
> भारतादीन् विना पश्चाद्द्वारिणान्यैश्च निर्मितान्।

इत्यनेन ज्ञातव्यः आश्रमवृत्तयः तदाचाराश्च ॥ ३५ ॥

विदुरः स्वयं विभागं जानन्नपि लोकहितार्थं विविच्य वक्तव्यमिति पृच्छतीत्याह। विदुर इति ॥ ३६ ॥

---

श्रीमद्वल्लभाचार्यकृत सुबोधिनी।

तमधर्मइति पितरं ब्रह्माणं सुताः मरीचिमुख्योयेषां मुनयइति मनने साक्षादधर्महेतुत्वमस्याः सुष्टना रतीति ज्ञातवन्तः विश्र-

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

स्मात् विश्वासाद्वार्ष्टर्येन प्रत्यबोधयामिति यथा ब्रह्मणा पूर्वमेते बोधिताः तथैवबोधं ब्रह्माणं प्रतिबोधितवन्तः वाचि च प्रवृत्ति- र्नकर्तव्या शिष्टैः पूर्वजैरकृतत्वात् अपकीर्तिजनकत्वात् जगन्ना- शहेतुत्वाच्च ॥ २९ ॥

तत्र प्रथमं हेतुं साधयति । नैतत्पूर्वैः कृतमिति । अत्र जगति एतादृशं कर्म पूर्वैः सृष्ट्यादिप्रवर्त्तकैः कदापि पूर्वं न कृतं नन्वेता दृश एवाचारोऽतः परं प्रवर्त्तनीय इत्याशङ्क्याहुः । नकरिष्यन्ति चाप- रइति । तस्मादयमनाचारः नं त्वमेवकरोषीत्याहुस्त्वमिति । गच्छेरि ति । अभीष्टे लिङ् यत्त्वं स्वेच्छयातां गच्छसीत्यर्थः ननुमनस्तयाहृतम तां तज्जः कामो हरतिमम कोदोष इति चेत्तत्राहुः । अनिगृह्याङ्गजमिति अङ्गजः कामः स्वकीयः एव निगृह्यः नतु प्रवर्तनीयः तथा सत्यधर्मः स्यादिति भावः । प्रभोइतिसम्बोधनं तथा सामर्थ्यंसूचयति अनेनाधर्मजनकत्वमपि सूचितम् ॥ ३० ॥

द्वितीयं हेतुं विशदयति । तेजीयसामिति । स्वतन्त्रैरपीश्वरैरेतत्कर्तुं शक्यं नपरतन्त्रेण नहि तेजोवत्त्वमात्रेण स्वातन्त्र्यं भवति यमादि- दण्डः परं निवार्यते तथाप्यपकीर्तिर्भवत्येव ततोऽपि तेजोवत्त्वेऽपि कीर्तिर्नभवत्येव तदाह । न सुश्लोक्यमिति । किञ्च त्वं जगद्गुरुः सर्वो- पदेष्टा । त्वद्वाक्याज्ज्ञानमन्यस्य तत्र वाक्ये जनकं ज्ञानं तत्र स्वाभा- विकं चेत्सम्भवेत् काव्यवदप्रमाणमेव स्यात् । उत्प्रेक्षाजनितत्वात् सत्यज्ञानस्य जनकत्वे एवं तवचारेनस्यादिति । किञ्च । यथात्वद्वा- क्यं प्रमाणं तथा तवाचारोऽपि । तनस्त्वदाचारानुसारेण प्रवर्तमानाः अधर्मेण नष्टा एव भवेयुः । अतस्तेषामपि रक्षार्थं नैवं कर्तव्यमि- त्याह । यद्वृत्तमिति । वरदानवत् क्षेमदानमपि सर्वदाननिर्वाहदिति यथातएव क्षेमे स्वयमेव समर्था भवन्ति तथोपायः ॥ ३१ ॥

एवं स्वतः सामर्थ्यतश्च न कर्तव्यमिति ब्रह्माणं बोधयित्वा भगवत्प्रेरणया क्रियतइत्याशङ्क्यभगवन्तं प्रार्थयन्ते । तस्मैनमइति । यद्यन्तर्यामीभगवान् प्रेरयेत् तदैवायं निवर्तेततेनापि प्रेरणमवश्यं कर्तव्यम् । इदं जगत् भगवता स्वस्मिन् स्थितं प्रकाशितं तदपि तेज- सा न तु तमसा दैत्यवत् । तस्य स्थितिर्धर्मेणैव तस्या धर्मेणनाशएव । तथासति उत्पन्नेव यो हतइतिवत् उत्पन्नमात्रमेव जगन्नष्टं भवेत् ततः अनुत्पादएव श्रेष्ठः स्यात् । अथ यदि सत्यसंकल्पः जगत्कृता- र्थतायै कृतवान् । तदा सएव जगत्कर्ता धर्ममपि पातुमर्हति ॥ ३२ ॥

एवं प्रकारत्रयेण ब्रह्माणं स्तुत्वा क्रियया अपिप्रतिबन्धका इव- पुरः स्थिताः ततोवाचा क्रियय चरुद्धः मानसभावस्तेन त्यक्त- इत्याह । सइत्थमिति । गृणतइति निवृत्तिपर्यंतं स्तोत्रंकृतवन्त इत्यर्थः सृष्टौचिन्ता नकर्तव्येति ज्ञापयितुमाह । प्रजापति । पतिप्रजापाति पति रिति तेषामपि पालनमावश्यकं । तन्वमिति । तनोः सकाशाज्जातं रूपं लज्जया निवृत्तिर्ज्ञांकृतइति सूचयितुं व्रीडित इत्युक्तं सत्यकातनुः प्र- तिसर्गरूपत्वात् नीहाररूपा जाता तान्दिशः श्रोत्राभिमानिन्यो- देवताः गृहीतवत्यः वाग्वोधिकास्ताः सर्वत्र वाचा सहतां योज- यिष्यन्ति । अतएवनतं विदाथेति श्रुतिः । अतएव श्रुत्यर्थविदः तामे- वतनुंनीहारमितिविदुः ॥ ३३ ॥

एवं सृष्टिप्रसङ्गेन प्रतिसृष्टिमुक्त्वाराजसे भेदेद्वयं निरूप्यसात्वि- कंभेदत्रयं निरूपयति । कदाचिदित्यादियावदध्यायसमाप्ति । आध्यात्मिकास्तु श्रुतयः शब्दब्रह्मतुदैविकम् । धर्मप्रवर्तकाः सर्व- भूतानि स्मरणात्पुनः । तत्र प्रथममाध्यात्मिकान् वेदान् जगज्जननार्थं ध्यानेन इष्टवान् । तदा तेसृष्ट्यर्थं भगवदिच्छयाप्रकटीभूताः तदाह ।

कदाचिदिति । स्रष्टुर्विधातुर्ध्यायत इति प्रथमतोध्याने प्रकटीभूताः पश्चान्मुखात्कदाचिदितिन सर्वकल्पेषु वेदोद्गमः । कथं स्रक्ष्यामीति ब्रह्मणश्चिन्ता वेदोद्गमेहेतुः । ध्यानमेवाह । कथंस्रक्ष्यामीति । समवेतान् मिलितान् । मिलितानां विवेचन मसाधारणलक्षणैरेव भवति- यथास्थापवादगः पुरुषादिभ्यः वक्रकोटिरादिभिर्वैविच्यन्ते तथा श्रुत्युक्तलक्षणैः समवेताविविच्यन्त इतिवेदोद्गमः ॥ ३४ ॥

वेदार्थमपि चिन्तया अङ्गादिभिः सह उत्पादितवान् इत्याह । चातुर्होत्रमिति । चत्वारोहोतारोयत्र ब्रह्महोताध्वर्युरुद्गाता एते च- त्वारः होमसाधनम् अनुज्ञाशस्त्रहोमस्तोत्रैः तत्कर्मचातुर्होत्रं तन्त्र- मिति । विस्तारः उपवेदाः आयुर्वेदादयः । नया नीतिशास्त्राणि पुराणान्यायमीमांसधर्मशास्त्राणिवा । धर्मस्यचत्वारः पादाः सत्यन्तपोदयादानमिति आश्रमाणां ब्रह्मचर्यादीनां प्रत्येकं चतस्रो वृत्तयः । चतुर्मुखादासन्निति सर्वत्रानुषङ्गः ॥ ३५ ॥ ३६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

विस्रम्भात् जन्यजनकसम्बन्धोत्थसख्यात् न तु पापदर्शनोत्थ- कोपादित्यर्थः । यद्वा । महतां विकर्मापि नापकारकमिति विश्र- म्भात् केवलमनु प्रवृत्तलोकाशङ्कयैव प्रबोधयामासुरिति मरीच्या- दीनामपराधाभावो द्योतितः ॥ २९ ॥

पूर्वैः पूर्वकल्पगतैर्लोकैः । त्वत्तः पूर्वे ये ब्रह्मादयस्तैः अङ्गजं कामम् ॥ ३० ॥

सुश्लोक्यं सत्कीर्त्यर्हं वृत्तं चरित्रम् ॥ ३१ ॥

एवं प्रबोधितोऽपि ब्रह्मा यदा न प्राबुध्यत तदा भगवत्कृपां विना कामः प्रकारान्तरेण नोपशाम्येदिति सिद्धान्तमनुस्मृत्य मुनयो भगवन्तमेव प्रापद्यन्तेत्याह । तस्मा इति ॥ ३२ ॥

तन्वं तनुं तत्याजेति महापातकस्य प्राणान्तमेव प्रायश्चित्तं मुख्यमिति ज्ञापयामास द्विपरार्द्धमध्ये तस्य तनुत्यागासम्भवात् भा- वत्याग एव तनुत्यागत्वेनोक्तः ॥ ३३ ॥

दिश इति ता एव तमसा अद्याप्याव्रियन्ते ॥ ३४ ॥

तेजीयसां न दोषाय वह्नेःसर्वभुजो यथेत्यादिवचनात् स्वकर्मा- नुगामिनोऽपि ब्रह्मणो मालिन्यं नाशङ्कनीयमिति वक्तुं ब्रह्मणः उज्ज्वलत्वमाह । कदाचिदित्यादिना नानाशक्त्युपबृंहितमित्यन्तेन ग्र- न्थेन यथा आसन्निति वेदेषु सृष्टिप्रकारः सर्व्व एव वर्त्तते तदृष्ट्या सुखेन सृजेति भगवदाज्ञावशादिति भावः ॥ ३५ ॥

होता उद्गाता अध्वर्युर्ब्रह्मेति चतुर्णां होतृणां कर्म चातुर्होत्रं कर्मतन्त्रं यज्ञ विस्तारः उपवेदैर्नयैश्च सह । आश्रमास्तद्वृत्तयश्च सन् ॥ ३६ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

विस्रम्भात् न्याय्य वाक्यं स्वीकरिष्यत्येवेति विश्वासात् प्र- बोधयन् ज्ञापितवन्तः ॥ २९ ॥

त्वत् त्वत्तः पूर्वे ये ब्रह्मादयस्तैरेतत् नकृतम् ये च भविष्यास्ते न करिष्यंन्ति अङ्गजं मनोजम् ॥ ३० ॥

सुश्लोक्यं यशस्करं यत् येषां तेजीयसां वृत्तं चेष्टितम् ॥ ३१ ॥

एवं पितरं संप्रार्थ्य सर्वप्रेरकं भगवन्तं नतिपूर्वकं प्रार्थ- तस्मै इति ॥ ३२ ॥

तदा भगवत्प्रार्थनावेलायां तन्वं तनुम् ॥ ३२ ॥ ३३ ॥

यथा पूर्वकल्पे तथा समवेतान् सुसंगतान् लोकान्

॥ मैत्रेय उवाच ॥

ऋग्यजुःसामाथर्वाख्यान् वेदान् पूर्वादिभिर्मुखैः।
शस्त्रमिज्यां स्तुतिस्तोमं प्रायश्चित्तं व्यधात्क्रमात् ॥ ३७ ॥
आयुर्वेदं धनुर्वेदं गान्धर्वं वेदमात्मनः।
स्थापत्यं चासृजद्वेदं क्रमात्पूर्वादिभिर्मुखैः ॥ ३८ ॥
इतिहासपुराणानि पञ्चमं वेदमीश्वरः।
सर्वेभ्य एव वक्त्रेभ्यः ससृजे सर्वदर्शनः ॥ ३९ ॥
षोडश्युक्थौ पूर्ववक्त्रात् पुरीष्याग्निष्टुतावथ।
आप्तोर्यामातिरात्रौ च वाजपेयं सगोसवम् ॥ ४० ॥
विद्यादानं तपः सत्यं धर्मस्येति पदानि च।
आश्रमांश्च यथासंख्यमसृजत्सहवृत्तिभिः ॥ ४१ ॥
सावित्रं प्राजापत्यं च ब्राह्मं चाथ बृहत्तथा।
वार्ता संचयशालीनशिलोञ्छ इति वै गृहे ॥ ४२ ॥
वैखानसा वालखिल्यौदुम्बराः फेनपा वने।
न्यासे कुटीचकः पूर्वं बह्वोदो हंसनिष्क्रियौ ॥ ४३ ॥
आन्वीक्षिकी त्रयी वार्ता दण्डनीतिस्तथैवच।
एवं व्याहृतयश्चासन् प्रणवो ह्यस्य दह्रतः ॥ ४४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

स्रक्ष्यामि इति ध्यायतः चतुर्मुखात् चत्वारि मुखानि यस्य तस्मात् तन्मुखेभ्य इत्यर्थः वेदाः आसन् ॥ ३४ ॥

चातुर्होत्रं चतुर्णां होत्रादीनां कर्म कर्मतन्त्रं षोडश्यादि कर्म तन्त्रम् उपवेदाः आयुर्वेदादयः नयाः आन्वीक्षिक्यादिशास्त्राणि तेच तेच तैः सह तप आदयः धर्मस्य पादाः आश्रमाश्च तद्वृत्तयश्च आसन्निति पूर्वेणान्वयः ॥ ३५ ॥

मुखतः मुख्येभ्यः ॥ ३६ ॥

---

भाषाटीका।

मरीचि आदि ब्रह्माके पुत्र पिता को अधर्म में प्रवृत्त देखकर पिताके विश्वास से प्रार्थना करने लगे ॥ २९ ॥

हे ब्रह्मन्! ऐसा कार्य न पहिले किसी ने किया है न अब कोई करता है न फिर कोई करेगा जो कि आप समर्थ होकर भी काम को न रोककर दुहिता को चाहते हो ॥ ३० ॥

हे जगद्गुरो! यह कार्य तेजस्वी पुरुषों को भी अच्छा नहीं है क्योंकि जिस तेजस्वी के किये आचरण करने से मनुष्यों को कल्याण होता है ॥ ३१ ॥

जिन भगवान् ने अपने तेजसे इस जगत् को प्रकाशि किया है उन भगवान के अर्थ, नमस्कार है वेही धर्म की रक्षा करने के योग्य हैं ॥ ३२ ॥

अपने पुत्र प्रजापतिन को सामने ऐसा कहते देखकर प्रजापतिन के पति ब्रह्माजी ने लज्जित होकर उसी वखत उस तनुको छोडदिया ॥ ३३ ॥

उस तनुकों दिशों ने ग्रहण किया वही तनु कुहुडी अंधेरा रूपसे है फिर कोई समय ब्रह्मा की सृष्टि की चिन्ता भई तब चारों मुखोंसे चार वेद भये ॥ ३४ ॥

फिर विचार किया कि पहिले सरी के मिले हुये लोकों को हम कैसे वनावेंगे ॥ ३५ ॥

हो ता उद्गाता अध्वर्यु ब्रह्मा ऐसे चातुर्होत्र कर्म तन्त्र नीति शास्त्र के सहित उपवेद धर्म के चार पाद चार आश्रम उनकी चार वृत्ति उत्पन्न किये॥ ३६ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका।

चातुर्होत्रसृष्टिक्रममाह। शस्त्रमप्रगीतमन्त्रस्तोत्रं होतुः कर्म इज्यामध्वर्योः कर्म स्तुतिस्तोमं स्तुतिः संगीतं स्तोमं तदर्थमृक् समुदायं त्रिवृत्स्तोमोभवतीत्यादिविहितमुद्गातृप्रयोज्यं प्रायश्चित्तं ब्राह्मम ॥ ३७ ॥

उपवेदक्रममाह। आयुर्वेदमिति। आत्मनो मुखैः स्थापत्यं विश्वकर्मशास्त्रम ॥ ३८ ॥ ३९ ॥

कर्मतन्त्रक्रममाह। षोडश्युक्थाविति। पुरीषी चयनम् अग्निष्टुत अग्निष्टोमः ॥ ४० ॥

विद्येति शौचम् 'क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमामता,, इति-

### श्रीधरस्वामिकृतभावार्थदीपिका ।

स्मृतेः दानमिति दया 'भूताभयप्रदानस्य कलां नार्हन्ति षोडशीम्,,' इतिवचनात् एवं च 'तपः शौचं दया सत्यमिति पादाः कृते कृता' इति प्रथमस्कन्धोक्तेरविरोधः ॥ ४१ ॥

ब्रह्मचर्याद्याश्रमेष्वेकैकस्य चातुर्विध्यमाह । सावित्रं ब्रह्मचर्यमुपनयनादारभ्य गायत्रीमधीयानस्य त्रिरात्रं प्राजापत्यं व्रतान्याचरतः सम्वत्सरं ब्राह्मं वेदग्रहणान्तं बृहन्नैष्ठिकम् वार्ता अनिषिद्धकृष्यादिवृत्तिः सञ्चयो याजनादिवृत्तिः शालीनमयाचितवृत्तिः शिलोञ्छः पतितकणिशकणवृत्तिः एकवचनमार्षम् इत्येता गृहे वृत्तय इति यद्वा शिलोञ्छ इति द्वन्द्वैक्ये सप्तमी एवं वृत्तिभेदे सति गृहे स्थिता भवन्तीत्यर्थः ॥ ४२ ॥

वने स्थिताश्चत्वारः तत्र वैखानसा अकृष्टपच्यवृत्तयः वालखिल्या नवेऽन्ने लब्धे पूर्वसंचितान्नत्यागिनः औदुम्बराः प्रातरुत्थाय यां दिशं प्रथमं पश्यन्ति तत आहृतैः फलादिभिर्जीवन्तः फेनपाः स्वयं पतितैः फलादिभिर्जीवन्तः कुटीचकः स्वाश्रमकर्मप्रधानः बहूदः कर्मोपसर्जनीकृत्य ज्ञानप्रधानः हंसो ज्ञानाभ्यासनिष्ठः निष्क्रियः प्राप्ततत्त्वः एते च सर्वे यथोत्तरं श्रेष्ठाः ॥ ४३ ॥

न्यायादीनां पूर्वादिक्रमेणोत्पत्तिमाह । आन्वीक्षिकीति । आन्वीक्षिक्याद्या मोक्षधर्मकामार्थविद्याः भूर्भुवः स्वरिति व्यस्तास्तिस्रः समस्ता चतुर्थी यथाहाश्वलायनः 'एवं व्याहृतयः प्रोक्ता व्यस्ताः समस्ता' इति यद्वा मह इति चतुर्थी तथाच श्रुतिः' भूर्भुवः स्वरिति वा एतास्तिस्रो व्याहृतयः तासामुहस्मैतां चतुर्थीम् महाचमस्यः प्रवेदयते मह इति,, इति दहृतो हृदयाकाशात् ॥ ४४ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

चातुर्होत्रस्य होत्रादीनां चतुर्णां तत्तत्कर्मविशेषस्य सृष्टिक्रममाह प्रसङ्गेनेत्यादि । अप्रगीतैः स्वरानुपूर्वीरहितैः नतु प्रयोगसमवेतार्थस्मारकैः स्तैतिशंसतीत्यादिश्रुत्या स्तुतिरूपस्वार्थपरैः तथोक्तं सूत्रकृद्भिः "स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वात्" अयमर्थः ननु स्तोत्रशस्त्रयोः स्तुतित्वेनैक्यात्कथं भेदनिर्देशस्तत्राह- स्तुतेति स्तोत्रशस्त्रयोः प्रगीताप्रगीतमन्त्रयोः स्तौतिशंसतीति श्रुत्या स्तुतिप्रधानयोः अदृष्टार्थत्वेन संस्कारत्वम् अप्रधानदेवता संबन्धमात्राभिधायित्वात् अग्निर्मूर्द्धेत्यादियाज्यामन्त्रवत् विशेषजिज्ञासाचेद्गाव्यंद्दयम् मन्त्रैः आज्यैः स्तुवेत इत्यादिमन्त्रसाध्यम् इज्याम् देवतोद्देशेन द्रव्यत्यागरूपां संप्रगीतं स्वरानुपूर्वीसहितं स्तोत्रं-स्तुतिः तदर्थं स्तोत्रार्थं त्रिवृत् नवसंख्यासंयुक्तस्तोम ऋक्समुदाय उद्गातृप्रयोज्यो भवति उद्गाता तं प्रयुञ्ज्यादित्यादिब्राह्मणवाक्येन विहितम् ॥ ३७ ॥

स्थापत्यं स्थपतेः कर्म ॥ ३८ ॥

इति हासेति युग्मकम् तेषां सर्ववेदविवरणरूपत्वात्सर्वेभ्य इति ॥ ३९ ॥ ४० ॥ ४१ ॥

सावित्र्यादिचतुर्विधं ब्रह्मचर्यं पूर्वादिमुखैर्यथासंख्यमसृजत शिलोञ्छ इति बहुवचने वक्तव्ये एकवचनमार्षम् यद्यपि ऊकालो ऽञ्छस्वदीर्घप्लुत इतिवत्सर्वोऽपि द्वन्द्वो विभाषयैकवद्भवतीति न्यायादेकवचनमितरेतरद्वन्द्वेऽपि संभवति तथापि लोके तथा प्रयोगबाहुल्याभावादार्षेति गृहे स्थिताश्चतुर्विधा गृहस्था भवन्ति वृत्तीनां चातुर्विध्यात् स्थिता भवन्तीत्यध्याहारादित्यर्थोक्तिः ॥ ४२ ॥

वने स्थिता वानप्रस्थाः तत्र तेषु वानप्रस्थेषु मध्ये न्यासे संन्यासधर्मे स्थिताश्चत्वारस्संन्यासिनो भवन्ति एते च प्रत्येकं चतुर्विधा गृहस्थादयः ॥ ४३ ॥

व्यस्ता ओं भूः ओं भुवः ओं स्वरितिविभक्ताः समस्ता ओं भूर्भुवःस्वरिति मिलिता चतुर्थी व्याहृतिः आश्वलायनवाक्ये पश्चार्यं शांख्यायनप्रोक्तोज्ञेयः समस्ताभिश्चतुर्थीप्रतीयेतैतस्यान्दनायामेवमनामादेशे सर्वेषु भूतकर्मसु पुरस्ताच्चोपरिष्टाच्चैताभि-र्जुहुयादितिमतान्तरप्रकारेण संख्यापूर्तिं एकं यद्वेति तासां व्याहृतीनां मध्ये महइत्येतां चतुर्थीं व्याहृतिं महाचमसोऽपत्यर्षि महाचमस्यः प्रावेदयते उपदिशति स्म उस्त्वर्थेहस्फुटम् ॥ ४४ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

एवमापृष्टोमुनिः क्रमेण पूर्वादिभ्योमुखेभ्यः ऋगादीनसृजदित्याह । ऋगित्यादि । पूर्वादिभ्योमुखेभ्यः चातुर्होत्रकममा शस्त्रमिति । शस्त्रमप्रगीतमन्त्रस्तोत्रं तत् होत्रा कर्तव्यत्वेन होत्रमित्युच्यते आध्वर्यवं स्तुतिःस्तोमस्तुतिः संगीतरूपं स्तोत्रं तदर्थमृक्समुदायं त्रिवृत्स्तोमोभवतीत्यादिविहितं तदुद्गात्रा प्रयुज्यत्वेनौद्गात्रमित्युच्यते स्तुतये स्तोममितिचतुर्थीसमासः प्रायश्चित्तं ब्रह्मणा प्रयोज्यम् एतानि चत्वारि क्रमादिति पूर्वादिमुखेभ्यो व्यधादसृजत् ॥ ३७ ॥

उपवेदक्रममाह । आयुर्वेदमिति । स्थापत्यं शिल्पिकर्म ॥ ३८ ॥

इतिहासाश्च पुराणानि च तेषां समाहारः पञ्चमं वेदमिति हासपुराणानि सर्वदर्शनः सर्वज्ञः ईश्वरोब्रह्मा सर्वेभ्योमुखेभ्यः ससृजे ॥ ३९ ॥

कर्मतन्त्रक्रममाह । षोडश्युक्थौ इति । षोडश्युक्थशब्दौ षोडश्युक्थनामकसंस्थानविशिष्टकर्मपरौ पुरीषीचयनः अग्निष्टुदग्निष्टोम आप्तोर्यामश्चातिरात्रश्च तौ कर्मविशेषौ गोसवेन सहितं सवं वाजपेयं षोडश्युक्थौ पूर्ववक्त्रात्पुरीष्यग्निष्टुतौ दक्षिणमुखादाप्तोर्यामातिरात्रौ पश्चिममुखाद्गोसववाजपेयौ उत्तरतः असृजदित्यर्थः ॥ ४० ॥

धर्मस्य पादानामाश्रमाणां च क्रममाह । विद्येति । विद्यादानादीनि धर्मस्य चत्वारि पदानि ब्रह्मचर्यादयः चत्वारः आश्रमाः यथासंख्यं वृत्तिभिः सह पूर्वादिभ्योमुखेभ्यः असृजत् ननु तपः सत्यं दयाशौचमिति प्रथमस्कन्धे दयाशौचयोः पादत्वं कीर्तितम् अत्रतु विद्यादानयोरिति विरोधः मैवम् दयाशौचयोर्विद्यादानकारणत्वात्कारणशब्दः कार्यं उपचर्य तयोक्तमित्यविरोधात् शौचं हि ज्ञानकार्यम् "क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धि परमामता" इति स्मृतेः "भूताभयप्रदानस्य कलां नार्हन्तिषोडशीम्" इति पूर्वोक्तरीत्या दयायाः भूताभयप्रदानमतो न विरोधः ॥ ४१ ॥

कास्ता वृत्तयो या आश्रमैः सह जाता इत्यपेक्षायां वृत्तीः वैदंस्तासामवान्तरभेदांश्चाह द्वाभ्याम् ।सावित्रं। ब्रह्मचर्यं कीर्तितं विरहादिरूपम उपनयनादारभ्य गायत्रीमधीयानस्य त्रिरात्रं प्राजापत्य संव्रतान्याचरतः संवत्सरान्तं ब्राह्मं वेदग्रहणान्तं बृहन्नैष्ठिकं एता ब्रह्मचर्याश्रमवृत्तयः वार्ता अनिषिद्धकृष्यादिवृत्तिः संचयो यावज्जीवनं वृत्तिः शालीनमयाचितवृत्तिः शिलं कणिशार्जनं उञ्छः कणशः आदानम् उभयमेकावृत्तिः एकवचनम्

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

समाहारद्वन्द्वेतु पुंस्त्वमार्षं वेदितव्यम् एता गृहं गृहाश्रमे वृत्तय इत्यर्थः ॥ ४२ ॥

चतुर्विधा वनस्था इत्याह । वैखानसा अकृष्टपच्याशिनः वालखिल्यालब्धेननवान्नपुराणत्यागिनः उदुंबराः प्रातरुत्थाय यां दिशं प्रथमं पश्यन्ति तत आहृतैः फलादिभिः जीवन्तः फेनपाः स्वयंजीर्णाशिनः वनेवनवासिनः इत्यर्थः तुर्याश्रमाणामपि चातुर्विध्यमाह । न्यास इति । कुटीचकः स्वाश्रमधर्मप्रधानः बह्वोदः कर्मोपसर्जनीकृत्य · ज्ञानप्रधानः हंसोज्ञानाभ्यासनिष्ठः निष्क्रियः परमहंसः प्राप्ततत्त्वः प्रवृत्तिधर्महानत्वान्निष्क्रिय इत्युक्तं नतु निवृत्तिधर्मनिवृत्तिरप्यनेनोच्यते विद्यांङ्गत्वेनतस्यावश्यमनुवर्तनीयत्वात् न्यासे · एते संन्यासाश्रमे स्थिताः ॥ ४३ ॥

नयादीनां पूर्वोत्पत्तिक्रमेणोत्पत्तिमाह । आन्वीक्षिकी आत्मानात्मविवेकविद्या मोक्षफला त्रयी कर्मविद्या स्वर्गादिफला वार्त्ता कृष्यादिरूपा जीवनफला दण्डनीतिरर्थपरा अथव्याहृतीनां क्रममाह । एवमिति । एवं पूर्वादिमुखक्रमेणैव व्याहृतयश्चासन्नित्यर्थः भूर्भुवः सुवरिति व्यस्तास्तिस्रो व्याहृतयः समस्ता चतुर्थीव्याहृतिः तथाहाश्वलायनः । "एवं व्याहृतयः प्रोक्ता व्यस्ताः समस्ता„ इति यद्वा मह इति चतुर्थी व्याहृतिः तथा च श्रुतिः भुर्भुवः सुवरित्येतास्तिस्रोव्याहृतयस्तासामुहस्मै तां चतुर्थीमादाचमस्यः प्रवेदयते मह इति श्रुतेश्चतुर्थीमह इति व्याहृतिः एवं मुखोत्पन्नानां पूर्वादिमुख क्रममभिधायान्येभ्योऽप्यङ्गेभ्यः अन्येषामुत्पत्तिमाह । प्रणव इत्यादिना । हृद्गतः हृदयाकाशात्प्रणव आस ॥ ४४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मैत्रेयोऽपि लोकहिताय विस्तरतो विदुरप्रश्नं परिहरतीत्याह- ऋग्यजुरिति । पूर्वादिभिः । पूर्वदक्षिणपश्चिमोत्तरदिग्भेदभिन्नैः शस्त्रं मंत्रम् ऋग्वेदगतमिज्यां मंत्रं याजुषं स्तुतिस्तोममंत्रौ सामवेदगौ स्तोमः क्रियमाणकर्म पुरतःक्रियमाणस्तुतिविशेषः अन्यदाक्रियमाणास्तुतिः प्रायश्चित्तमाथर्वणं व्यधात् विभागं कृतवान् वेदानां पूर्वसत्त्वाद्भूतत्वात् ॥ ३७ ॥

आयुर्वेदं वाहढं धनुर्वेदमायुधविद्यां गान्धर्वं भरतशास्त्रं स्थापत्यं तक्षशास्त्रम् ॥ ३८ ॥

इतिहाससहितं पुराणं शब्दत एव रचनं नत्वर्थतः तस्य वैदिकत्वात् वेदस्य व्यक्तिमात्रमेव करणं नच जनवादिनो वाक्यस्याविषयकत्वेनाप्रामाण्यं तस्य स्वाभिमान्युत्पत्त्या चरितार्थत्वात् अभिमानिनः शब्दतश्च "ब्रह्मा वेदान् ससर्जह" इत्यादेः सर्वदर्शनः सर्वज्ञः अनेन ब्रह्मोक्तस्याप्तमूलत्वं दर्शितं सर्वाणि दर्शनानि यस्मादुत्पन्नानि स तथोक्त इतिवा ॥ ३९ ॥

षोडस्यादयो यज्ञविशेषाः तद्भेदः कल्पतो बोद्धव्यः अथ पुरीष्याग्निष्टुतादिकं द्वयं द्वयं च दक्षिणादिवक्त्रेभ्य उत्पन्नम् ॥ ४० ॥

तप आदिधर्मपादानामपि वक्त्रचतुष्टयाज्जन्मेति ज्ञातव्यं यथासंख्यं ब्रह्मचर्याद्याश्रमांश्च पूर्वादिविक्त्रेभ्यः ससर्ज भैक्ष्यचर्यादिवृत्तिभिः सह ॥ ४१ ॥

यथासंख्यमित्यनेनाश्रमचतुष्टयावान्तरभेदोऽपि विवक्षितस्तत्र ब्रह्मचर्याश्रमावान्तरभेदमाह । सावित्रमिति । गुरुकुले ब्रह्मचारिणो द्वादशवर्षपर्यन्तमध्ययनकर्मसावित्रं प्राजापत्यं ब्रह्मचर्यमेकभार्यर्तुगमनं "प्राजापत्यं ब्रह्मचर्यमेकभार्यर्तुगामिता" इति वचनात् ब्राह्मं ब्रह्मचर्यं यावद्विवाहमध्ययनं बृहन्नामब्रह्मचर्यं यावज्जीवं नैष्ठिकं गृहे गृहस्थाश्रमपीत्येवं चातुर्विध्यं वार्ता यायावरं भैक्ष्यचर्यविशेषः असंचय एकाहित्वं तत्तद्दिनार्जितव्रीह्यादेस्तद्दिन एव व्ययः शालीनं तु वत्सरपर्यन्तं स्ववृत्तिहेतोः कुसूलमञ्जूषादिषु व्रीहिधान्यादिग्रहणं शिलोञ्छस्तु व्रीहिसस्यक्षेत्रेषु गलितव्रीह्यादिना देहत्रावर्तनं" वार्ता यायावरं ज्ञेयमेकाहित्वमसंचय„ इति ॥ ४२ ॥

वने वानप्रस्थाश्रमे वैखानसा मूलभक्षाः फलभक्षाः उदुम्बरा- वालखिल्याः सर्वभक्षाः फेनपाः वत्सफेनपा इत्यनेन व्याख्यातोऽय श्लोकः वत्समुखगलितपयः फेनपानेन जीवन्तः न्यासे यत्याश्रमे पूर्वं कुटीचकः कुट्यां स्वगृह एव पुत्रादिदत्तान्नादिना चकते तृप्यति अलंबुद्धिमाप्नोतीति चकतृप्ताविति धातुः द्वितीयो बहूदः स वनत्रयस्नानं विनात्वकाले तीर्थजलदर्शने तत्र स्नानं कुर्वंस्त्रिदण्डी तृतीयचतुर्थौ हंस एकदण्डी यज्ञोपवीती च निष्क्रिय- एकदण्डी हिंसादिक्रियारहितः परमहंसः ॥ ४३ ॥

आन्वीक्षिकी वेदानुसारिणी तन्त्रविद्या त्रयी त्रयो वेदाः वार्ता वाणिज्यादि दण्डनीतिः राजधर्मः एते यथा ब्रह्मणो वक्त्रचतुष्टयादासन् एवं भूरादिव्याहृतयश्च अजस्य मुखचतुष्टयादभिव्यक्ताः प्रणवेन सह तद्वक्त्रस्यास्पदगताश्चेत्यन्वयः त्रय्या सहपाठाच्च शिवप्रोक्तान्वीक्षिकी तस्या वेदबहिष्काराद्विष्णुप्रोक्तेयं तदुक्तम् ।

> आन्वीक्षिकी तन्त्रविद्या सा च वेदानुसारिणी ।
> विष्णुप्रोक्ता शिवाद्युक्ता ज्ञेया वेदबहिष्कृता ।
> दण्डनीती राजधर्मस्त्रयी वेदाः प्रकीर्तिता इति ।
> आन्वीक्षिक्या त्रय्या च ब्राह्मणानां जीवनम् ।

दण्डनीत्या राज्ञां वार्तया वैश्यादीनामित्येतत् द्योतयितुं च पुनस्त्रयी ग्रहणम् ।

> वार्तावाणिज्यकादिःस्यादेताभिर्यत्तु जीवनम् ।
> तदान्वीक्षिक्यादिनाम ब्रह्मणा निर्मितं पुरेति च ।

यद्वा प्रणवेन सहास्पदं ब्रह्मगतास्तत्प्रतिपादकत्वेन तदेकविषयत्वं प्राप्ता इत्यर्थः प्रणवेनेति तृतीयया प्रणवस्याप्राधान्यं न श्रद्धेयं तस्यपूर्ववक्त्रजत्वात्तदुक्तं "प्रणवः पूर्ववक्त्रेण भूराद्याश्च मुखत्रयात् प्रदक्षिणमवर्तन्त वेदाश्चैवाश्रमास्तथा" इति तस्मात् प्रणवं मुखीकृत्य ब्रह्मप्राप्ता इत्येवमर्थं तृतीयेति ॥ ४४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इतिहासेति युग्मकम् । इतिहासेत्यादिकं प्रथमस्कन्धे विवृतमस्ति ॥ ३९—४१ ॥

सावित्रमित्यादयो ब्रह्मचर्य्यभेदाः वार्त्तेतिसर्व्वेऽपि द्वन्द्वो विभाषयैकवद्भवतीतिन्यायात् ऊकालो ग्ग्रस्वदीर्घप्लुत इतिवत् ४२—४७ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रमादाद्वेदनिर्गमनेनियमेनेष्टंनसिध्यतीति अवश्यंब्रह्मणाएवहृदयेप्रकटवेदाः मुखेननिर्गिताइतिवक्तव्यम् । तत्रापिपूर्वादिक्रमेणान्येनवावेदाःसृष्टाइतिवक्तव्यं तथासतिवेदादीनांक्रमः सिद्धचेत् । अन्यथाकर्मापेक्षया क्रमकल्पनायां यजुर्वेदः प्रथमोभवेत् प्रधानपरोवा ब्रह्मणोवेदः अथर्वाङ्गिरसात्मकः प्रथमः स्यात् । तथोपवेदा-

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

दीनाम् । अतोविदुरः क्रमं पृच्छति । सर्वविश्वसृजामीशइति । मुख-तोऽसृजदित्यन्तमनुवादः तत्रहेतुरुक्तः । यद्यदितिप्रश्नविषयः देव-वात्तत्प्रतिपादनत्वात्श्रुतेः स्वार्थतत्सर्गइति प्रयोजनंदोषाभावश्च-निरूपितौ । स्वात्मानंप्रतितदुपदेशाभावमाशङ्क्याह । मेइति । तपो-धनेतिसम्बोधनं जन्मकर्मादिपरिज्ञापकं ततः सर्वज्ञत्वात् मां प्रत्य-पि वक्ष्यतीति ॥ ३७ ॥

वेदानांक्रममुखक्रमंचाह । देवताद्रव्यसम्बन्धदेवतास्तोत्रं यागाभ्यनुज्ञाचेति यागानामर्थतः क्रमः पूर्वादिमुखक्रमस्तुपाठार्थ-मुपयुज्यते तेषां चतुर्णां विनियोगमाह । शस्त्रमिति । शस्त्रं होतुःइज्या-यजिरध्वर्योः यजुर्वेदकृत्यंस्तुतिर्देवतायाः उद्गातुः सामवेदकृत्यं-प्रायश्चित्तंब्रह्मणइतिप्रायश्चित्ते ब्रह्माणमित्याश्वलायनसूत्रात् । एवं सप्रयोजनान् वेदान्पूर्वादिमुखैः सृष्टवानित्यर्थः ॥ ३८ ॥

वेदोपयोगिवेदार्थानाधर्भौतिकान् वक्तुंपुराणानिसृष्टवानित्याह इतिहासपुराणानीति । सर्वोपयोगित्वात् नात्रक्रमोविवक्षितः । अतःसर्वेभ्यएवव वक्त्रेभ्योनिर्ममेसर्वदर्शनइति सर्वेषामेववर्णानाम-वर्णानां स्त्रीशूद्रद्विजबन्धूनामुपयोगं पश्यन् पुराणं सृष्टवान् चिन्त्यमेतत् ॥ ३९ ॥

चातुर्होत्रादीनामप्युद्देशात् तेषामप्युत्पत्तिक्रममाह । षोडश्यु-क्थावितिः । "अप्यग्निष्टोमेराजन्यस्य गृह्णीयात्„ इतिश्रुतेः नवैषोड-शीनामयज्ञोऽस्तीति च सर्वोपयोगित्वात् पोडशीप्रथमतोगृहीतः । तथोक्थ्यस्यापि सर्वोपयोगित्वं तावुभौ पूर्ववक्त्रात्ससृजे । अग्नि-ष्टुदग्निष्टोमः पुरीष्याअग्नयश्चयनात्मकाः पुरीषमस्यास्तीतिपुरीषी पुरीषीचअग्निष्टुच्चपुरीष्यग्निष्टुतौसमासान्तः । आप्तोर्यामःअतिरा त्रस्यैव भूमा सविशेषोऽतिरात्रइत्यर्थः वाजपेयोऽपि स्वतन्त्रो-महाफलः गोसवश्चगोसत्र तयोरपिसहभावः ॥ ४० ॥

धर्मस्यैते चत्वारः पादाः विद्यादयः । विद्याज्ञानं दानं तुलापु-रुषादितपः कृच्छ्रादिसत्यंसत्यभाषणं पदानीति पदशब्दः चका-रादन्येऽपि धर्मपादाःभगवद्रूपत्वाद्धर्मस्य सन्तीतिज्ञापितम् । आश्रमां-श्चासृजत्सह वृत्तिभिरिति वृत्तिचतुष्टयसहितः एकाश्रमः एक-स्मान्मुखाज्जात इति ज्ञापितम् ॥ ४१ ॥

तत्र ब्रह्मचारिणोवृत्तिचतुष्टयमाह । सावित्र्यमिति । सावित्र्य-मुपनीतस्य गायत्रीशिक्षाकालःमौनादिसहितः त्रिरात्रात्मकः । ततःसम्वत्सरपर्यन्तं प्राजापत्यंवेदव्रतात्मकब्राह्मं वेदग्रहणात्मकंबृ-हन्नैष्ठिकं गृहस्थस्य वृत्तिचतुष्टयमाह । वार्त्तेति वार्ता कृष्यादिचतुष्टयं सञ्चयः अध्यापनादिनाप्राप्तधनस्य संग्रहः शालीनम लपधान्य-याचनंयायावरइत्यर्थः शिलोञ्छइति । शिलाखलेधान्यानां हस्तेनैकै-कशः उद्धारः उञ्छनं गृहस्थानां गृहेकण्डनादिस्थाने पतितधान्या-दीनां ग्रहणम् ॥ ४२ ॥

वनस्थानां वृत्तिचतुष्टयमाह । वैखानसाइति । विखनसा ब्रह्म-णायानि भगवद्भजनादीनि वैखानससूत्रे उपदिष्टानि वने स्थित्वा तत्कर्मकर्तारोवैखानसाः दैवादागतवृत्तिजीविनः वालखिल्यास्तप-स्विनः पञ्चाग्न्यादिसाधकाः सूर्यपकान्नभक्षकाः वनस्थाः वन्या-न्नाश्च औदुम्बरा नखलोमादिस्थापकाः मलधारिणः वृक्षफलोपजी-विनश्च नियतारण्याः फेनपाः वायुजलभक्षाः तपोवनादिवासः पूर्व-सिद्धः अनुवर्त्तत एवं सिन्यासिनां वृत्तिचतुष्टयमाह । न्यासइति । न्यासे संन्यासे कुटीचरः पूर्वं निरूप्यः पञ्चसप्तत्यूर्ध्वं सन्यासे आयु-र्भोगक्रमेणाश्रमचतुष्टयपक्षे नित्यः संन्यासोभवति तत्र ब्राह्मण्यं

वयः पूर्वाश्रमानन्तर्यञ्च प्रयोजकं न ज्ञानादिषट्त्रिंशदाब्दिकं ब्रह्मचर्यमिति वेदाध्ययनकालपक्षोऽपि विकल्प्यते । "चतुर्थमायु-षोभागमुषित्वाद्यं गुरौद्विजः । द्वितीयमायुषोभागं कृतदारोगृहे-सेत्„ इतिमनुवाक्यात्प्रत्येकसमुदायपक्षौ निर्णीतौ तत्र समुदाय-पक्षोनित्यः आश्रमचतुष्टयमपिक्रमेण ब्राह्मणेन कर्त्तव्यमिति वे-वात्र ब्रह्मणा निष्पादितमित्युच्यते प्रत्येकपक्षः काम्यः केचि-दधिकारभेदेनाहुः साधारणानां चतुष्टयमिति ऊर्ध्वरेतसां भक्तानां ब्रह्मचर्यं नैष्ठिकम् एकएवाश्रमस्तेषां तथासर्वथा वैराग्य-रहितस्योत्कटकामस्य गार्हस्थ्यमेव उपकुर्वाणो भूत्वा यथाशक्ति वेदानधीत्यविहितप्रकारेण कृतदारोभूत्वा यावज्जीवमग्निहोत्रं जुहुयात् किंवहुना शरीरसंस्थापर्यन्तं मृताग्निहोत्रमपि तस्य विहितम् अतएवापस्तंबकारेण सर्वे आश्रमागत्य निरूपिता सर्वत्रैवाग्र्यः सिध्यतीति प्रज्ञानिन्दावाक्यानि ऊर्ध्वरेतसां प्रशंसा पराणि योजितानि अन्यथाश्रुतीनाम् अन्योऽन्यविरोधः स्यात् एक-देशेनापि श्रुतीनां वाधोब्राह्मणानां न कर्त्तव्यः तथा वानप्रस्थे यथाशक्ति ब्रह्मचर्येण वेदाध्ययनं विधाय देहपातपर्यन्तं वने वासं तपश्च कुर्यात्न्यासेऽपि पूर्वजन्मनि आयुर्भोगक्रमेण कृतन्यासः प्राप्तज्ञानश्च दृढवैराग्यः निरन्तरमात्मचिन्तकः भगवत्प्रेमाभावात् सतां गृहेपुनरुत्पद्यते तस्योत्पत्तिसंबन्धात् पूर्वज्ञानं तिरोहितमे-व भवति तदोत्तरत्र जन्मनि उपनीतः वेदाध्ययने क्रियमाणे पूर्वज्ञानमुद्बुद्धं भवति तदा "यदहरेव विरजेत्तदहप्रव्रजेत्„ इतिश्रुत्य-र्थः कर्तव्योभवति तदादेहपातपर्यन्तं स एवाश्रमः परिपालनी-यो भवति अन्यथा पतितः स्यात्ः ततोऽप्युपनयनात् पूर्वमेव पू-ज्ञानवैराग्याणामुद्बोधेअनाश्रमी भवति यथा सनकादिः शुका-दिर्वा सर्वेदे निन्दितोभगवच्छास्त्रे च अतएव ब्रह्मणः सनकादिषु क्रोधः ब्रह्मपुत्रा अपिभूत्वा मानुषभावमापन्नाः ततोऽपि दैत्यत्वे प्रह्लादादिरूपा जाताः तत्रापि क्लेशः शुकस्तु इमंवाधकमवगत्य पूर्वजन्मनि ज्ञानादिसिद्धावपि रूपद्वयं विधाय एकेन रूपेण ब्रह्म-चर्ये वेदानधीत्य गार्हस्थ्ये पुत्रानुत्पाद्य पुनरैक्यं प्राप्तः देहपात-पर्यन्तं भगवत्परोजातः सोऽत्र मर्यादायां वैदिकमार्गेण गण्यते तत्र यः आयुर्भोगक्रमेण चतुष्टयं करोति सवने वासानन्तरं पुत्रादि-निर्मितकुट्यां पुत्रादिभिरेवपरिपाल्यमानः आत्मचिन्तकः कुटी-चरोभवति वनस्थोभूत्वा पुत्राद्यपेक्षां परित्यज्य स्वतन्त्रतया यदि संन्यासं कुर्यात्तदा सवह्वोदोभवेत् क्वचितीर्थविशेषे सर्वनिरपेक्ष-तीर्थवासी भवेत् तत्र वने पक्षद्वयं यदि सभार्यः साग्निर्वनं गच्छे-तदाग्रे पुत्रेषु भार्यां स्थापयित्वा स्वयं, कुटीचरोभवेत् यदि पूर्वमे-भार्यादि त्यक्तोभवेद्वनवासार्थमेव तदा तावत्त्यः कृत्वा अग्रे संन्यस्य वहूदकोभवेत् यदिब्रह्मचर्यानन्तरमेवपूर्वोक्तप्रकारेण ज्ञानादि-सम्पन्नोभवेत्तदा सन्यासे हंसोभवेत् सर्वत्र तीर्थेषु एकरात्रादि-ना निरपेक्षः परिभ्रमेत् तस्य मौनानीहानिलायामा दण्डा नित्य-ततोऽपि पूर्वजन्मन्येव सिद्धज्ञानादिः हंसोभूत्वा योम्रियते स उत्त-रत्र योगभ्रष्टः महतां गृहे उत्पन्नःप्राप्तद्विजातिसंस्कारः जडभरत-वत् तिष्ठेत् सनि ष्क्रियः तस्य मुक्तमाच्छादनं न लिङ्ग प्रकटं तस्य वकृषभवच्चर्या तस्यलोकसम्बन्धेपातित्यं यथैवालौकिकः तस्य सिद्धिः ससर्वोत्तमः तस्यधर्मे न हीनः कुर्यात् तस्मादधिकार-वस्थयैव वृत्तिचतुष्टमाहुः यद्युत्तमं कर्त्तुं शक्तस्यात्तदा प्रथमं प्रथमं कुटीचरोभूत्वा क्रमेणानिष्क्रियोभवेदिति सिद्धान्तः पूर्वाश्रमेष्वपि पूर्वं उत्तमाङ्ग गतिं व्रजेत् । आश्रमान्तरेषु

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

उत्तमां गतिं व्रजेदिति ॥ ४३ ॥

एवमाश्रमान्निरूप्य उपवेदनयैः सहेति निरूपणाद् नीतिभेदान्निरूपयति। आन्वीक्षिकीति। अन्वीक्षणमन्वीक्षा तत्सम्बन्धिनी नीतिः मर्यादा आन्वीक्षिकीत्युच्यते एषा नीतिः ब्राह्मणानामेवतत्राप्याश्रमश्रेष्ठानां त्रयी वेदत्रयी वेदानुसारव्यवहारः कर्तव्यः यज्ञाः कर्तव्याः याजनादीनिचवृत्तिः क्षत्रियाणां मुख्यैषावृत्तिः वार्ता चतुर्विधा। कृषिगोरक्षवाणिज्यकुसीदात्मिका-वैश्यानां मुख्या दण्डनीतिः दण्डप्रकारः दण्डनार्थं वा नीतिः यद्यप्ययं राजधर्मस्तथापि शूद्रेष्वेव दण्डः सर्वथा कर्तुं शक्यत इति तेषु प्रतिष्ठिता च। एवं चतुर्विधा नीतिः। यद्यप्यान्वीक्षिकी आत्मविद्या त्रयीच वेदत्रयं यज्ञाश्च तदर्थास्ते पुनर्नीतिमध्ये न वक्तव्याः तथापि तेषां लौकिकेऽपि ब्राह्मणादीनां परमहंसादीनां वा अन्वीक्षणादिरेव कर्त्तव्यो न तु सर्वथा लौकिक इत्येतदर्थं-नीतिशास्त्रेऽपि तयोरुपनिबन्धनं तथैवचेति पूर्ववत् पूर्वादिमुखैरेवोत्पन्ना इत्यर्थः एवं सात्त्विकबुद्धौ आध्यात्मिकत्वेन वेदाद्युत्पत्तिमुक्त्वाआधिदैविकं शब्दब्रह्मस्वरूपं निरूपयितुं प्रथमतो-व्याहृतीनामुत्पत्तिमाह। एवं व्याहृतय इति यद्यपि वेदएवगायत्रीव्याहृतयः प्रणवश्च निरूपिताः समष्टिव्यष्टिभेदेन चतुष्टयं सप्तव्याहृतिपक्षेऽपि मध्यमः त्रयाणां समष्टिः। चकारादत्रे प्रणवोऽपि तस्य चतुर्विधत्वाभावात्केवलं सद्भूतः हृदयादेव प्रकटीभूतः अतएव ब्रह्मणा न प्रमयाव उच्चारितः किन्तु "ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा। कण्ठंभित्वा विनिर्यातौतेन माङ्गलिकावुभौ" इति वाक्यात्प्रणवः स्वयमेव निर्गतः ॥ ४४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

मुखतो मुखेभ्यः चातुर्होत्रस्य सृष्टिमाह। शस्त्रमप्रगीतमन्त्रस्तोत्रं होत्रं होतुः कर्म्म। इज्यामध्वर्य्योः कर्म्म स्तुतिस्तोमं स्तुतिः सङ्गीतं स्तोत्रं स्तोमं तदर्थमृक्समुदायं त्रिवृत्स्तोमो भवतीत्यादिविहितमुद्गातुः कर्म्म। प्रायश्चित्तं ब्रह्मणः कर्म्म॥ ३७ ॥

उपवेदानां सृष्टिमाह। आयुरिति। स्थापत्यं स्थपतेः कर्म्म विश्वकर्म्मशास्त्रम् ॥ ३८ ॥

सर्वेभ्य इति। सर्ववेदविवरणरूपत्वात्तेषाम् ॥ ३९ ॥

कर्म्मतन्त्रसृष्टिमाह। षोडश्युक्थाविति ॥ पुरीषीचयनमग्निष्टुत् अग्निष्टोमः एतौ दक्षिणवक्त्रादित्येवं क्रमः सर्व्वत्र द्रष्टव्यः॥४०॥

विद्येति। शौचं "क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमामता" इति स्मृतेः। दानमिति दया "भूताभयप्रदानस्य कलां नार्हन्ति षोडशीम्" इति वचनात् एवं "तपः शौचं दया सत्यमिति पादाः कृते कृता,, इति प्रथमस्कन्धोक्तेरविरोधः ॥ ४१ ॥

उपनयनादारभ्य गायत्रीमधीयानस्य त्रिरात्रं व्याप्य ब्रह्मचर्यं सावित्रम्। व्रतान्याचरतः सम्वत्सरपर्य्यन्तं प्राजापत्यं वेदग्रहणपर्य्यन्तं ब्राह्मं मरणपर्य्यन्तं बृहदिति चतुर्विधंब्रह्मचर्य्यम्। वार्त्ता अनिषिद्धकृष्यादिवृत्तिः। सञ्चयो याजनादिवृत्तिः। शालीनमयाचितवृत्तिः शिलोञ्छनं पतितकणिशकणवृत्तिः। शिलोञ्छ इति द्वन्द्वैक्यम् ऊकालोऽञ्ज्हूस्वदीर्घप्लुत इति वत्। गृहे इति जीविका चातुर्व्विध्यात् गार्हस्थ्यमपि चतुर्विधमित्यर्थः ॥ ४२ ॥

वैखानसा अकृष्टपच्यवृत्तयः। वालखिल्या नवेऽन्ने लब्धे पूर्व्वसञ्चितमन्नत्यागिनः। औदुम्बराः प्रातरुत्थाय यां दिशं प्रथमं पश्यन्ति तत आहृतैः फलादिभिर्जीवन्तः फेनपाः स्वयं पतितैः फलादिभिर्जीवन्तः। वने इति वृत्तिभेदेन नामभेदाद्वानप्रस्थाश्रमोऽपि चतुर्विधः न्यासेइति संन्यासोऽपि चतुर्विधः। तत्र कुटीचकः स्वाश्रमकर्म्मप्रधानः। बहूदकः कर्म्मोपसर्जनीकृत्य ज्ञानप्रधानः हंसोज्ञानाभ्यासनिष्ठः। निष्क्रियः प्राप्ततत्त्वः इति यथोत्तरं श्रेष्ठाः ॥ ४३ ॥

न्यायादीनां पूर्व्वादिवक्त्रक्रमेणोत्पत्तिमाह। अन्वीक्षिक्याद्या मोक्षधर्म्मकामार्थविद्याः भूर्भुवः स्वरिति व्यस्तास्तिस्रः समस्ता चतुर्थीत्येवं चतस्रो व्याहृतयः।यथाहाश्वलायनः।"एवं व्याहृतयः प्रोक्ता व्यस्ताः समस्ता अपि"। यद्वा मह इति चतुर्थी तथाच श्रुतिः। भूर्भुवः स्वरिति वा एतास्तिस्रो व्याहृतयस्तासां मुहस्मैतां चतुर्थीं माहाचमस्यःप्रवेदयते महइतीति। हृत्खतः हृदयाकाशात् दहृत इति पाठे स एवार्थः ॥ ४४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

वेदोत्पत्तिक्रममाह। ऋगिति। चातुर्होत्रोत्पत्तिक्रमं दर्शयति। शस्त्रमिति। शस्त्रमप्रगीतमन्त्रस्तोत्रं होत्रं होतुः कर्म इज्यामध्वर्योः कर्म स्तुतिस्तोमं स्तुतिः सङ्गीतं स्तोत्रं स्तोमं तदर्थमृक्समुदायमुद्गातृप्रयोज्यम् प्रायश्चित्तं ब्राह्मं क्रमात्पूर्वादिभिर्मुखैः व्यधात् असृजत् ॥ ३७ ॥

उपवेदक्रमं दर्शयति। आयुरिति। स्थापत्यं विश्वकर्मशास्त्रम् ॥ ३८ ॥ ३९ ॥

कर्मतन्त्रक्रमं दर्शयति। षोडशीति। पुरीषीचयनम् अग्निष्टुत् अग्निष्टोमः ॥ ४० ॥

धर्मपादानामाश्रमाणां च क्रमं दर्शयति। विद्येति। तपः शौचं "तपः शौचंदया सत्यमिति पादाः प्रकीर्तिता,, इति प्रथमस्कन्धाविरोधसिद्धयेऽत्र विद्याशब्दः शौचपरः "क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमामता" इति वचनात् दानशब्दो दयापरः" भूताभयप्रदानस्य कलां नार्हन्ति षोडशीम्,,इति वचनात् ॥ ४१ ॥

आश्रमाणां वृत्त्युत्पत्तिक्रममाह। सावित्रमिति द्वाभ्याम्। तत्र ब्रह्मचर्याश्रमवृत्तीर्दर्शयति सावित्रं ब्रह्मचर्यमुपनयनादारभ्य गायत्रीमधीयानस्य त्रिरात्रं प्राजापत्यं व्रतान्याचरतः साम्वत्सरम् ब्राह्मं वेदग्रहणान्तम् बृहन्नैष्ठिकम् अथ गृहाश्रमवृत्तीराह। वार्ता अनिषिद्धकृष्यादिवृत्तिः संचयो याजनादिवृत्तिः शालीनमयाचितवृत्तिः शिलोञ्छ इत्यत्र द्वन्द्वैक्यंपुंस्त्वमार्षम् इति एता गृहे गृहाश्रमे ॥ ४२ ॥

वैखानसाः अकृष्टपच्यवृत्तयः वालखिल्या नवेऽन्नाद्ये लब्धे पुराणत्यागिनः औदुम्बराः प्रातरुत्थाय यां दिशं विलोकयन्ति तदाहृतफलादिवृत्तयः फेनपाः स्वतः पतितफलादिवृत्तयः एते चत्वारः वने स्थिताः न्यासे तुर्य्याश्रमे स्थिताः अपि चत्वारः तत्र कुटीचकः स्वाश्रमधर्मप्रधानः बहूदो ज्ञानप्रधानः हंसः ज्ञानाभ्यासप्रधानः निष्क्रियः ध्यानप्रधानः ॥ ४३ ॥

नयादीनां पूर्वादिमुखक्रमत उत्पत्तिं दर्शयति। आन्विक्षिकी मोक्षविद्या त्रयी धर्मविद्या वार्ता कामविद्या दण्डनीतिः अर्थविद्या एवं पूर्वादिमुखक्रमेण व्याहृतयश्चासन् तत्र भूर्भुवः स्वरिति व्यस्ता स्तिस्रः समस्ताचतुर्थी तथाहाश्वलायनः "एवं व्याहृतयः प्रोक्ता

तस्योष्णिगासील्लोमभ्यो गायत्री च त्वचो विभोः ।
त्रिष्टुम्मांसात्स्नुतोऽनुष्टुब्जगत्यस्थ्नः प्रजापतेः ॥ ४५ ॥
मज्जायाः पङ्क्तिरुत्पन्ना बृहती प्राणतोऽभवत् ।
स्पर्शस्तस्या भवज्जीवः स्वरो देहउदाहृतः ॥ ४६ ॥
ऊष्माणमिन्द्रियाण्याहुरन्तस्था बलमात्मनः ।
स्वराः सप्त विहारेण भवन्ति स्म प्रजापतेः ॥ ४७ ॥
शब्दब्रह्मात्मनस्तस्य व्यक्ताव्यक्तात्मनः परः ।
ब्रह्मावभाति विततो नानाशक्त्युपबृंहितः ॥४८॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

व्यस्ताः समस्ता" इति यद्वा मह इति चतुर्थी तथा च श्रुतिः भूर्भुवः स्वरित्येतास्तिस्रो व्याहृतयः तासामुहस्मै तां चतुर्थी- महाचमस्यः प्रवेदयते मह इतीति प्रणवस्तु हृत्स्थतः हृदया- काशतः आसीत् ॥ ४४ ॥

भाषाटीका ।

मैत्रेयजी बोले पूर्वादिक चारों मुखों से ऋक्यजुः साम अथर्वनामा चार वेदों को उत्पन्न किये शस्त्र इज्या नामक यज्ञके कर्म विशेष स्तुतिस्तोम वेद विशेष कर्म विशेष प्रायश्चित्त कर्म इनको क्रम से उत्पन्न किये ॥ ३७ ॥

आयुर्वेद धनुर्वेद गांधर्ववेद शिल्पशास्त्र इनको क्रमसे अपने चार मुखों से उत्पन्न किये ॥ ३८ ॥

पञ्चम वेद रूप जो इतिहास तथा पुराण इनको सबही मुखों से उत्पन्न किये क्योंकि ब्रह्मा जी सर्व दर्शी है ॥ ३९ ॥

षोडशी उक्थ दोनों पूर्व मुखसे भये पुरीषी अग्निष्टुत् दक्षिण मुखसे आप्तोर्याम अतिरात्र दोनों पश्चिम मुखसे गोसवबाजपेय उत्तर मुखसे ॥ ४० ॥

विद्या दान तपः सत्य ये चार धर्म के पाद अपनी वृत्तियों के सहित चार आश्रम क्रमसे पूर्वादि मुखों से भये ॥ ४१ ॥

सावित्र प्राजापत्य ब्राह्म नैष्ठिक ये चार ब्रह्मचारी की वृत्ति हैं कृष्यादि सञ्चय अयाचक कणवीनना ये चार गृहस्थ की वृत्ति हैं ॥ ४२ ॥

वैखानस वाल खिल्य उदुम्बर फेनप ये चार प्रकार के वान प्रस्थ होते हैं पहिला कुटीचक बह्वोद हंस निष्क्रय ये चार प्रकार के सन्यासी होते हैं ॥ ४३ ॥

आन्वीक्षिकी मोक्षशास्त्र त्रयी धर्मशास्त्र वार्त्ता जीवि का शास्त्र दंडनीति अर्थशास्त्र ऐसेही भूः भुवः सुवः मह ये चार व्याह ति क्रमसे पूर्वादि मुखसे भये ओंकार हृदय से भया ॥ ४४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्नुतः स्नायुतः"अनुष्टुप् स्नावान्,,इतिश्रुतेः ॥ ४५ ॥
महाकल्पे ब्रह्मा शब्दब्रह्मरूपोऽभवदित्युक्तं तदेव दर्शयन्वर्णा- नामुत्पत्तिमाह । स्पर्शइति सार्धेन । स्पर्शः कादिवर्गपञ्चकम् स्वरो- ऽकारादिः ॥ ४६ ॥

ऊष्माणः शषसहचतुष्कम् अन्तस्था यरलवाः सप्त स्वराः षड्जादयः विहारेण क्रीडया ॥ ४७ ॥

अतएव शब्दतनुत्वाद्ब्रह्मणः परमेश्वरो नित्यं प्रकाशत इत्याह । व्यक्ता वैखरी अव्यक्तः प्रणवस्तदात्मनस्तस्य ब्रह्मणः पर परमेश्वरोऽवभाति कीदृशः ब्रह्म परिपूर्णः तत्राव्यक्तात्मना ब्रह्म- रूपो विततोऽवभाति व्यक्तात्मनो नानाशक्त्युपबृंहित इन्द्रादिरू- पोऽवभाति ॥ ४८ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

स्नावान् स्नायुजन्यः ॥ ४५ ॥

दृदेव शब्दब्रह्मरूपत्वम् अत्र स्पर्शाद्यनुवादेन जीवत्व- दिविधेयं वर्णोत्पत्तिपक्षे वैपरीत्यं ज्ञेयं कार्य्यकारणयोरभेद- निर्देशात् ॥ ४६ ॥ ४७ ॥

अतएव वर्णोत्पादकत्वादेव तत्र व्यक्ताव्यक्तात्मनोर्मध्ये विततोव्यापकः ॥ ४८ ॥

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

ब्रह्मणः लोमभ्यः उष्णिगाख्यं छन्दः आसीत् अक्षराणां नियमादिः विभोर्ब्रह्मणः त्वचः गायत्रीछन्दः मांसात्त्रिष्टुप्छन्दः स्नुतः स्नायोरनुष्टुप्छन्दः प्रजापतेर्ब्रह्मणः अस्थ्नः जगतीछन्दः आसीत् ॥ ४५ ॥

मज्जायाः पङ्क्तिरुत्पन्नाप्राणात: बृहतीच्छन्दोऽभवत् ब्रह्मणो जीवः स्पर्शः कारणे कार्य्योपचारः एवमग्रेऽपि देहः स्वरः देहात्स्वर उत्पन्नः इन्द्रियाणीन्द्रियेभ्य ऊष्माणः आत्मनो ब्रह्मणः बलमन्त- स्थाः तस्मात्ते उत्पन्ना इत्यर्थः कादयोमावसानाः स्पर्शाःस्वराः सषसहा ऊष्माणः यरलवा अन्तस्था इति वैयाकरणोक्तरीत्या स्पर्शादयः शब्दाः प्रयुक्ताः प्रजापतेर्विहारेण क्रीडया सप्त स्वराः षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादाः भवन्ति स्मासं- न्नित्यर्थः ॥ ४७ ॥

एवं वर्णानामुत्पत्तिमभिधायाथ तस्मादेतद्ब्रह्म नामरूपं च जायत इति श्रुत्युक्तरीत्या शब्दार्थरूपप्रपञ्चात्मके ब्रह्म-

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

अर्थरूपस्यब्रह्मणो वेदादिरूपेण यथा विततत्वमेवं ब्रह्मणउत्पन्नाकारादिवर्णसंघातात्मकशब्दब्रह्मणोऽपि विततत्वमस्तीत्याहशब्दे-त्यादिना । शब्दात्मकं ब्रह्म आत्मा शरीरं यस्य तस्माच्छब्दब्रह्माभिव्यक्तिस्थानस्य तच्छरीरत्वाच्छब्दब्रह्मापि तच्छरीरमेवेत्यभिप्रायेण शब्दब्रह्मात्मनः इतिशब्दात्मकं ब्रह्म शरीरं यस्य तस्माच्छब्दस्याभिव्यक्तिरित्युक्तं व्यक्ताव्यक्तात्मनः चतुर्मुखशरीरेऽपि चतुर्थीषष्ठीतितरत्वमसम्भवाद्व्यक्ताव्यक्तत्वम् एवम्भूताच्चतुर्मुखात् हे तात ! परः अर्थात्मकादन्यः ब्रह्म शब्दात्मकः ब्रह्माऽपि विततः श्रुतिस्मृतीतिहासादिरूपेण प्रकृतिप्रत्ययपदवाक्यादिरूपेण षड्भाषारूपेण च विस्तृतः नानाशक्त्युपबृंहितः अत्र शक्तिशब्देनार्थोपमानसामर्थ्यरूपाभिधालक्षणागौण्यादिरूपा वृत्तय उच्यन्ते नानाशक्तिभिरभिधादिभिरुपबृंहितः ॥ ४८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तस्य ब्रह्मणो रोमादिभ्यः सप्तच्छन्दसां सर्गप्रकारमाह । तस्येति । अत्र क्रमव्यत्ययस्तस्योष्णिग्लोमानीत्यादिश्रुत्यनुसारात्कारणानुगुण्याच्च ॥ ४५ ॥

पञ्चाशद्वर्णानामपि ब्रह्मणोऽभिव्यक्तिप्रकारमाह । स्पर्शा इति । कादयोमावसानाः स्पर्शास्तस्य ब्रह्मणो जीवाच्चैतन्यादभवन्नभिव्यक्ता आसन् वर्णानां नित्यत्वादभिव्यक्तिरेव स्वरोऽकारादिर्देहः देहादुदाहृत उद्धृतः शषसहा ऊष्माणः श्रोत्रादीन्द्रियाणि इन्द्रियेभ्य उत्पन्ना इत्याहुः यरलवा अन्तस्था आत्मनो ब्रह्मणो बलं बलादभिव्यक्ताः अत्र सामानाधिकरण्यवचनम् "यस्माद्यज्जायते चाङ्गात्तदङ्गाभिधं भवेतिति वचनाद्युक्तं प्रथमा पञ्चम्यर्थे अकुहविसर्जनीयानां कण्ठ इत्यादिस्थानभेदवत् अन्यान्तरेस्थानभेदसंभवे कथमत्रोक्तम् एवं स्थानामिति निर्णीय इतीदं चोद्यं "स्पर्शास्तस्याभवन् जीवात्स्वरा देहात् प्रजज्ञिरे । ऊष्माण इन्द्रियेभ्यश्च अन्तस्था बलतोविभोरित्यनेन परिहर्तव्यम् ॥ ४६ ॥

"निषादर्षभगान्धारषड्जमध्यमधैवताः । पञ्चमश्चेत्यमी सप्त तन्त्री कण्ठोत्थिताः स्वरा इति सप्तस्वराः" प्रजापतेर्विहारेण शरीरसञ्चरणविशेषेण भवन्तिस्म अभवन्नित्यन्वयः स्वराणां सप्तविशेषत्वात्तत्सामग्रीमतस्तदुत्पादनसामर्थ्यं स्यात्तदस्य कथमिति तत्राह शब्देति "शब्दब्रह्मात्मको ब्रह्मा सर्वशब्दाभिधो यतः । ऋते नारायणादीनि नाम्नां स विषयो यत" इति वचनान्नारायणादिनाम्नां व्यतिरेकेण सर्ववेदादिशब्दराशेर्विषयत्वात्तदुत्पादनसामर्थ्यमस्तीत्यर्थः नित्यवर्णात्मकवेदानां नित्यत्वेनऽव्यासत्वात्परिच्छिन्नस्यब्रह्मणस्तद्विषयत्वं कथमत्राह । व्यक्तेति । "व्यक्तं ब्रह्माण्डमुद्दिष्टमव्यक्तं महदादि च । तद्व्यापकत्वाद्ब्रह्मा तु व्यक्ताऽव्यक्तात्मकःस्मृत" इत्यतो व्याप्तिमत्त्वात्तद्विषयत्वं युक्तम् उक्तादन्यात्रापि व्याप्तिशक्तिमत्त्वाच्चप्रभोरित्युक्तम् ॥ ४७ ॥

देहात्तदवयवेभ्यो ब्रह्मणः सृष्टिमुक्त्वाधुना प्रकारान्तरेण तस्मात्सृष्टिं वक्ति । ब्रह्मेति ब्रह्मा ततः पूर्वस्मादपरां स्त्रीपुरुषीकरणशक्तिमुपादाय सर्गाय मनो दध इत्यन्वयः परतन्त्रस्य ब्रह्मणः स्वाधीनसृष्टिः कथमत उक्तमनुभावेति अनुभावेन परब्रह्मणा विततः तस्यानुग्रहामृतेन पूर्ण इत्यर्थः ब्रह्मानुभावविततः इत्येकं वा पदं परब्रह्मणः प्रभावेण विततः हरेरनुकूलेन भावेन सत्तया विततोऽधिकृतो विशेषसन्निधानवानिति वा अत एव नानाशक्त्युपबृंहितः नानाविधसृष्टिसामर्थ्यपूर्णः ॥ ४८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

शब्दब्रह्मेति । व्यक्ताव्यक्तौ वैखरीप्रणवौ । तत्तदात्मकात् सर्वस्मादपि वेदान्तस्य परमेश्वर एवाभाति स एव च ब्रह्म परिपूर्णरूपः । तत्र हेतुः स्वरूपतोऽविततः शक्तिश्च नानेति ॥ ४८—५६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सप्तच्छन्दसामुत्पत्तिमाह । तस्योष्णिगासीदिति सार्द्धेन । लोमभ्यः चर्मभ्यः उष्णिगासीत् । एतानि सप्तच्छन्दांसि न्यूनाधिकभावमापन्नानि तत्रोत्पत्त्युपपत्तिभ्यां गायत्रीबृहतीच श्रेष्ठे तत्र चतुर्विंशत्यक्षरा गायत्री अष्टाविंशत्यक्षरा उष्णिक् द्वात्रिंशदक्षरा अनुष्टुप् षट्त्रिंशदक्षरा बृहती चत्वारिंशदक्षरा पङ्क्तिः चतुश्चत्वारिंशदक्षरा त्रिष्टुप् । अष्टचत्वारिंशदक्षरा जगती तत्र गायत्री त्रिपाद् अन्याश्चतुष्पदाः तत्र उष्णिक् सप्ताक्षरपादा भवति । अतःप्रथमं निर्दिष्टा । अथवा उत्पत्त्यात्रविचारः कर्तव्यः तत्र ब्रह्मणः शरीरेधातूनां स्थूलसूक्ष्मभेदेन छन्दसां स्थूलसूक्ष्मभेदौ क्रमश्चोत्पत्तौ धातुक्रमेणैव उत्पत्तिविचारे लोमाहरणात् गायत्री प्रतिष्ठिता । उपपत्तिविचारे अल्पाक्षरापि बृहती सर्वेभ्यश्छन्दोभ्यः महत्त्वात् बृहतीति नाम प्राप्तवती । स बृहती मेवास्पृण-दित्यादिश्रुतौ बृहत्या माहात्म्यप्रतिपादनात् प्राणतस्तस्या उत्पत्तिरुच्यते सर्वोपरि च अस्थ्नां बाहुल्यात् जगत्या उत्पत्तिः । तदपेक्षयामांसस्य हीनत्वात् ततस्त्रिष्टुबुत्पत्तिः ततो मज्जाहीनेति ततो हीनायाः पङ्क्तेरुत्पत्तिः मध्ये बृहती निरूपितैव स्नुतः स्नायुतः अनुष्टुबुत्पत्तिः त्वगपेक्षया चर्मणामाधिक्यात् लोम्नां स्पष्टमेवाधिक्यदर्शनात् बहिःस्थितत्वेन उष्णिक् प्रथमतो निरूपिता मज्जापेक्षयापि प्राणानामन्तःस्थितत्वात्पश्चान्निरूपणम् ॥४५॥४६॥

एवं सामग्रीं विनिरूप्य शब्दब्रह्मणो देहं विनिरूपयति । स्पर्शास्तस्याभवदिति सार्द्धेन । स्पर्शाः पञ्चविंशतिः ते सर्वे एकीभूताः शब्दब्रह्मणो जीवः अभिमानी योऽहमिति मन्यते स्वराः अकारादयः षोडशदेहः उदाहृत इति प्रमाणं शषसहा ऊष्माणः ते चत्वारः इन्द्रियाणि आहुरित्यपि प्रमाणम् अन्तस्था यरलवाः तस्य देहस्य बलम् एवं चतुर्मूर्तिः स्वरूपमुक्तं वाह्यक्रियामुदात्तादिरूपां वदन् विहारेण तेषामुत्पत्तिमप्याह कार्यकारणयोरभेदत्वाय स्वराः सप्तविहारेणेति स्वराः षड्जादयः सप्त विहारेण गतिलीलया प्रजापतेरिति शब्दब्रह्मणोऽस्य वा भेदो निरूपितः शब्दब्रह्मभावत्वेन वा जगज्जनकत्वम् ॥ ४७ ॥

तदेवोपपादयन्नुपसंहरति । शब्दब्रह्मात्मन इति । ननु शब्दब्रह्मणः कथं जगज्जनकत्वं शब्दार्थयोर्द्वैरूप्यात् ब्रह्मणैव अर्थात्मकस्य जगत उत्पादितत्वात् तत्राह । विभाति ब्रह्मेति । अर्थात्मकं जगत् उत्पादितमपि नामव्यतिरेकेण न प्रकाशत इति विभातीत्युक्तम् इदं सर्वं जगत् विततं ब्रह्मैव विभाति बृहत्त्वात् बृंहणत्वाच्च ब्रह्मणः बृहत्त्वाद्विततं बृंहणत्वान्नानाशक्त्युपबृंहितं शब्दब्रह्मव्यतिरेकेण परब्रह्मणः प्रकाशनं न भवति शब्दब्रह्मणैव परब्रह्म प्रकाश्यते स्वप्रकाशत्वमपि तस्य वेदेनैवोक्तम् अनुपलब्धेतप्रमाणमिति न्यायात् । पराञ्चिखानीत्यादिवाक्याद्वनुपलब्धत्वं स्वप्रकाशमपि सौरं तेजः दिवाभीतेन न दृश्यते नच व्यवधानं किंचिदपेक्ष्यते । इन्द्रियाणामेवाग्राहकत्वात् नह्याका-

**ततोऽपरामुपादाय स सर्गाय मनो दधे**
**ऋषीणां भूरिवीर्याणामपि सर्गमविस्तृतम् ॥४९॥**
**ज्ञात्वा तद्धृदये भूयश्चिन्तयामास कौरव ! ।**
**अहो अद्भुतमेतन्मे व्यापृतस्यापि नित्यदा ॥ ५० ॥**

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

शाग्रहणे चक्षुषा रसाग्रहणं वा व्यवधायकमस्ति । यदप्यन्य- युष्माकमन्तरं बभूवेति व्यवधानमुक्तं तदपि स्वप्रकाशस्य सर्वा- त्मकस्य मनसि चक्षुषि च घटे प्रकाशमानस्य व्यवधायकं न भवति । अथ यदि संयुक्तेऽपि तद्व्यवधायकमिति मन्यते तदा चक्षुराग्रहणमेव श्रौतमस्तु किंव्यवधानेन । अन्यद्युष्माकमिति तु भोगेच्छादिकं जातमेव निन्दार्थमनूद्यते नतु भित्त्यादिवत् व्यवधायकम् । यदपि मायिकं पूर्वमुक्तं तदप्यग्रहणादेव । हेतु- त्वेन व्यपदेशोऽपि आत्मव्यतिरिक्तस्य सृष्टिपक्षे उपयुज्यते । सृष्टि- भेदानां निरूपणात् अतः शब्देनैव ब्रह्मणोभानं यतोवाचो निवर्तन्तेइति इन्द्रियरूपा वाक् लौकिकश्च शब्दः लौकिकं च मनः अन्यथा तंत्वौपनिषदं पुरुषं पृच्छामि मनसैवेदमाप्तव्यमिति विरुद्धमापद्येत । माहात्म्यार्थं वा द्वयम् उभयमपि शब्दब्रह्मणा एव ज्ञायते एतदेवाभिसन्धायाह । व्यक्ताव्यक्तात्मनइति । कश्चिदव्य- क्तं । तस्य शब्दब्रह्मणो हृदयं कश्चिद्व्यक्तम । अन्यथा ब्रह्म- स्पष्टतया ज्ञातं स्यात् । तथात्वे भगवत एव नियामकत्वं तदाह परमिति । तत्र हेतुर्नानाशक्त्युपबृंहितमिति अनेकाः शक्तयो भगवति वर्तन्त इति तत्तदनुरोधेन तथा तथावचनम् । अन्यथा तासां गुप्तशक्तीनां प्रकाशो न स्यात् । अतः प्रकाशनिषेधं नवदाति किन्तु गुप्तानां स्वरूपमाह । अतो ब्रह्मप्रकाशार्थं प्रवृत्तं शब्दब्रह्म तत्कार्यमपि प्रकाशयतीति क्रियया प्रकाश्यते ब्रह्मणा ज्ञानेन प्रकाश्यते वेदेनेति ॥ ४८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

छन्दसामुत्पत्तिमाह । तस्येति । स्नुतः स्नायुतः सर्वाङ्गाच्छा- दकनाडीत इत्यर्थः अनुष्टुप्स्नावान् इति श्रुतेः ॥ ४५ ॥

वर्णानामुत्पत्तिमाह । स्पर्श इति सार्द्धेन । कादिवर्गपञ्चकं स्पर्शः स्वर. अकारादिः । ऊष्माणः शषसहचतुष्कम् । अन्तस्थाः य र ल वाः सप्तस्वराः षड्जादयः । विहारेण क्रीडया ॥ ४६ ॥ ४७ ॥

परमेश्वरस्फूर्त्यैव ब्रह्मणस्तेजस्वित्वमाधिक्यमित्याह । शब्दब्रह्म वेदस्तन्मयएव आत्मा देहो यस्य तस्य । यतो व्यक्ता वैखरी अव्यक्तः प्रणवस्तदात्मनस्तस्य ब्रह्मणा उपास्यत्वेन परः परमेश्वर आभाति सम्यक् स्फुरति । य एव निर्विशेषशुद्धज्ञानगम्यत्वेन ब्रह्म सविशेषशुद्धज्ञानगम्यत्वेन नानाशक्त्युपबृंहितो भगवानि- त्यतस्तस्य कन्यानुगमनजन्यमालिन्यं नास्तीति साधितम् ॥ ४८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्नुतः स्नायुतः ॥ ४५ ॥

ब्रह्मकल्पे ब्रह्मा शब्दब्रह्मरूपोऽभवदित्युक्तं तदेव दर्शयन् वर्णानामुत्पत्तिमाह । स्पर्श इति सार्द्धेन । तस्य ब्रह्मणः स्पर्शः कादिमावसानः वर्णसमूहः जीवः ततः कादयो वर्णा आसन् इति भावः एवमग्रेऽपि स्वरः अकारादिः ऊष्माणां शषसंहिति वर्णचतुष्कम् अन्तस्थाः यरलवाः स्वराः षड्जादयः विहारेण क्रीडया ॥ ४६ ॥ ४७ ॥

तस्योभयब्रह्मवेत्तृत्वमाह । शब्दब्रह्मात्मनः । ब्रह्मकल्पे शब्दब्रह्म- रूपिणः अव्यक्तदेहस्येत्यर्थः पुनः पद्मकल्पे चतुर्मुखरूपव्यक्त- देहयोगात् व्यक्ताव्यक्तात्मन इति विशेषणम् एवंभूतस्योभय- शरीरिणस्तस्य ब्रह्मणः नानाशक्त्युपबृंहितः अत एव विततः अनेकब्रह्माण्डात्मककार्यात्मना स्थितः परः परब्रह्मपदवाच्यः पर- मात्मा प्रतिपाद्यः ब्रह्मतत्प्रतिपादकं शब्दब्रह्म च भाति प्रका- शते इत्यर्थः प्रजापतिः उभे ब्रह्मणि सम्यग्जानाति अतः नाना- देहधारणे नानाप्रजासृजने च तस्य नास्ति प्रयास इति भावः ॥४८॥

---

### भाषाटीका ।

ब्रह्माजी के रोमों से उष्णिक् छन्द निकला त्वचा में से गा- यत्री छन्द मांससे त्रिष्टुप्छन्द स्नायुमें से अनुष्टुप्छन्द अस्थि में से जगतीछन्द निकले ॥ ४५ ॥

मज्जा में से पंक्ति छन्द प्राण में से बृहतीछन्द ककारादि मका- रान्त वर्ण ब्रह्माजी के जीव सें भये देह में से अकारादि स्वर भये ॥ ४६ ॥

इन्द्रियों से शषस ऊष्म भये बल में से यरलव अन्तस्थ भये प्रजापति की क्रीडा से निषादादिक सात स्वर भये ॥ ४७ ॥

हे तातविदुरजी परापश्यन्ती रूपअव्यक्तशब्द वैखरीरूप व्यक्तशब्द ये दोनो स्वरूपवाला जो शब्दब्रह्मात्मा तिस के विषे में नानाप्रकारकी शक्ति से युक्त बहुत विस्तार वाला जो शब्द है वही ब्रह्म रूपसे भान होता है ॥ ४८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

या पूर्वं विसृष्टा सती नीहारं तमोऽभवत् ततोऽपरामि- षिद्धकामासक्तां तनुं शब्दब्रह्मतनुस्तु सदास्त्येव तन्वन्तरग्रह- णे कारणमाह । ऋषीणामित्यादिना ॥ ४९ ॥

चितनमेवाह । अहो इति । व्यापृतस्य व्यापारं कुर्वाणस्य ॥ युक्तकृतो यथोचितं कुर्वतः ॥ ५१ ॥

अतएव कस्य ब्रह्मणोरूपं द्विधाभूतमित्याश्चर्यात्कायमध्या- भिचक्षते ॥ ५२ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

तद्धृदये सर्गवितानार्थम् ॥ ४९ ॥

व्यापृतस्य सृष्ट्युद्यमकरान्वितस्यापि एतत् प्रजाविवर्द्धनरूपं सृष्टिवृद्धौ दैवमीश्वराख्यम् ॥ ५० ॥

नह्येधन्ते प्रजा नूनं दैवमत्र विघातकम् ।
एवं युक्तकृतस्तस्य दैवं चावेक्षतस्तदा ॥ ५१ ॥
कस्य रूपमभूद्द्वेधा यत्कायमभिचक्षते ।
ताभ्यां रूपविभागाभ्यां मिथुनं समपद्यत ॥ ५२ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या
दीपिकाटिप्पणी ।

कस्य ब्रह्मणो रूपं शरीरमत एव द्वेधाभूतस्य कायत्वादेव इदं शरीरम द्यापीति यद्यपि द्विधाभूत ब्रह्मशरीर मेव कस्येदं कायमिति व्युत्पत्त्या कायशब्दवाच्यं तथापि आश्चर्य्यत्वात् तज्जन्यत्वे न च नरादिशरीरमपि अद्यापि कायत्वेन शब्दविदो वर्णयन्तीत्यर्थः न-डादित्वात्फक् नलोपश्छान्दसः ततः कायमिति साधु ॥ ५१ ॥
ताभ्यामित्यर्द्धकम् ॥ ५२ ॥

———

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

ततः वर्णस्वरसर्गानन्तरं किमकरोदित्यत्राह । तत इत्यर्द्धेन । ततः शब्दब्रह्मात्मकतन्वाः अपरां तनुमुपादाय स्वीकृत्य सृष्ट्यर्थं मनो दधे मनसाचिन्तयदित्यर्थः केयमपरा तनुः कीदृशी वा चिन्तेत्यपेक्षायामाह । ऋषीणामित्यादिना। स्त्री यासीदित्यन्तेन । प्रपञ्चयति । तावच्चिन्ताप्रकारमाह । ऋषीणामिति । भूरिवीर्य्यं प्रजननसामर्थ्यं येषां तेषामृषीणामपि सर्गमविस्तृतं ज्ञात्वा दृष्ट्वा तद्वृद्धये सर्गवृद्धये भूयश्चिन्तयामास ॥ ४९ ॥ ५० ॥

किमित्यत आह । नहीति । नित्यदा सर्वदा व्यापृतस्यापि प्रजासर्गे व्यापारं कुर्वतोऽपि मे मम सकाशात्प्रजा न ह्येधन्ते न वर्धन्ते एतदद्भुतमहो आश्चर्यं खलु अत्र प्रजावृद्धौ दैवं विघातकं प्रतिबन्धकं नूनं निश्चयः एवं युक्तकृतः उचितचिन्तनरूपं युक्तं कुर्वतः दैवं दैवानुकूल्यं चापेक्षतः अपेक्षमाणस्य कस्य ब्रह्मणो रूपं द्विधाऽभूत् प्राक्तने रूपे सत्येव द्वितीयं रूपमभूत्प्राक्तनेन सह द्वे रूपे भवत इत्यभिप्रेत्य द्विधाभूदित्युक्तम् इदं रूपस्य द्विधाभवनं न देवासुरादिसृष्टौ प्रभावत्वलोलुपत्वादिभावग्रहणवद्भावग्रहणं किन्तु तस्य शरीरमेव द्विधाभूतमित्यावेदयितुं रूपं विशिनष्टि । यत्कायमिति । यद्रूपं कायं शरीरमभिचक्षते व्याहरन्ति ताभ्यां रूपस्य विभागाभ्यां विभक्ताभ्यां रूपाभ्यामित्यर्थः मिथुनं स्त्रीपुंसात्मकं द्वन्द्वमभूदित्यर्थः तत्र मिथुने यः पुमान् स मनुः स्वायंभुवः स्वायंभुवमन्वाख्यः स्वराट् सार्वभौमोऽभूत् ॥ ५१ ॥ ५२ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हरेरनुकूलेन केन प्रकारेणापरां सृष्टिं चिन्तयतीत्याह । ऋषीणामिति । यत्र" पश्चात्तनः श्रेष्ठस्तत्र सिंहावलोकनम्"इति वचनात् पश्चादुत्पत्स्यमानस्य मनोः श्रैष्ठ्यादत्र सिंहावलोकनं कृतमित्यर्थः मरीच्यादिऋषीणां सकाशादपि तत्तस्मादविस्तृतत्वादेव अनेन महतापि पुरुषेण करिष्यमाणं कार्यमालोच्य कर्तव्यं न सहसेति निदर्शितम् ॥ ४९ ॥ ५० ॥

चिन्तनविधां दर्शयति। अहो इति। सृष्टौ व्यापृतस्य कुतस्तत्राह नहीति। चिन्तया निश्चितमाह। दैवमिति। दैवानुग्रहोऽस्ति चेत् सृष्टिः पूर्येत इति निरचिनोदित्यर्थः ॥ ५१ ॥

फलितमाह । एवमिति । युक्तिमतो ध्यानवतः दैवानुग्रहमप्यपेक्षमाणस्य कस्य ब्रह्मणो रूपं द्विधाऽभूत् यद्रूपं केन ब्रह्मणा प्राप्तत्वात् कायनामाभिचक्षते निरुक्तज्ञा इतिशेषः ॥ ५२ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवमाधिदैविकसृष्टिमुक्त्वा सात्त्विकीमाधिभौतिकीं सृष्टिमाह। ततोऽपरामुदायेति । अपरां तनुमुपादाय अन्यादृशीं सृष्टिं कर्तुं मनो दधे नन्वेतावतैव मरीच्यादिद्वारा सृष्टिर्भविष्यति किं प्रकारान्तरसृष्ट्येत्याशङ्क्याह । ऋषीणामिति । यद्यपि भूरिवीर्याणि येषां नहि मदपेक्षया ते वीर्यवन्तः उत्पादिता वा पश्चपाः तैः किं तावता सर्गस्य विस्तारस्तु न भविष्यत्येव प्रकारस्यानुत्पादितत्वात् अत प्रकर्षार्थं शरीरान्तरेण कार्यं कर्तुं मनो दधे इत्यर्थः ॥ ४९ ॥

अशक्ये हरिरेवास्तीति न्यायमाश्रित्य पूर्वं तपसि अल्पीयसि कृते प्रसन्नोऽपि भगवान् पुनस्तप आदिष्टवान् तथात्रापि यद्यपि प्रकारः कर्तव्य इति निश्चितं तथापि कः प्रकारः कर्तव्य इति भूयश्चिन्तयामासेत्याह । ज्ञात्वेति । यस्मिन् स्वरूपे चिन्तिते उपायः कर्तव्य इति ज्ञातं पुनस्तदेव हृदये चिन्तयामास कौरवेति आपाततः न कार्यान्निवृत्तिः कर्तव्या किंत्वादेहपातं कार्यं कर्तव्यमिति यथाकुरुणा कृतमितीममर्थं ज्ञापयति तस्य चिन्तामेवाह । अहो इति। कृतोऽपि प्रकारः भगवदानुगुण्याभावे न सेत्स्यति अन्यथा उत्पादितैरेव सर्वैः सर्वकरणे जगत्पूरितमेव स्यात् अहमेक एव यथा कृतवान् तथा एतेऽपि मरीच्यादयो बीजरूपाः कुर्युस्तदैतावता सर्वमेव पूरितं भवेत् अतः किंचिदस्ति प्रतिबन्धकं तच्चिन्तनेन ज्ञात्वा आश्चर्येणाह । अद्भुतमिति । य एव भगवान् सृष्ट्यर्थमाज्ञापितवान् स एव प्रतिबध्नाति नच सहकार्यभावः शङ्कनीय इत्याह । व्यापृतस्यापि नित्यदेति । सर्वदा व्यापृतस्यापि मे प्रजाः हि निश्चयेन नैधन्ते वृद्धिं न प्राप्नुवन्ति अतो दृष्टस्य प्रतिबन्धकस्याभावात् दैवमेव विघातकम् ॥ ५० ॥ ५१ ॥

एवं निश्चित्य भगवदाज्ञामुक्तप्रकारेण कुर्वन् स्थितः भगवच्चिन्तनमेव कृतवान् तदा तस्य एवं प्रकारेण युक्तकृतः कदा भगवान् प्रसन्नोभविष्यतीति दैवं चावेक्षतः तस्याशक्तिं ज्ञात्वा भगवानेव कस्य ब्रह्मणः रूपं द्विधा कृतवान् । तदा तस्य रूपं द्विधा अभूत् तदा तच्छकलद्वयं कायमभिचक्षते लोकाः का इयं कोऽयमिति वक्तव्ये एकस्य विशेष्यमपरस्य विशेषणं लोपयित्वा द्वयमेकीकर्तुं कायमित्याहुः । अनेन स्त्रीत्वतो विशेष्यरहिता पुरुषश्च विशेषणरहितः । अत उभयं मिलितं कायशब्दवाच्यं भवति ततः किं जातमित्यत आह । ताभ्यामिति । रूपस्य विभागाभ्यां शकलाभ्यां ताभ्यामिति भगवत्कृताभ्यामन्यथा कार्यनाशे शकलाभ्यां न किंचिदुत्पद्येत अतो भगवत्कृताभ्या शकलाभ्यामेकं

यस्तु तत्र पुमान् सोऽभून् मनुः स्वायंभुवः स्वराट् ।
स्त्रीयाऽऽसीच्छतरूपाख्या महिष्यस्य महात्मनः ॥ ५३ ॥
तदा मिथुनधर्मेण प्रजा ह्येधाम्बभूविरे ।
स चापि शतरूपायां पञ्चापत्यान्यजीजनत् ॥ ५४ ॥
प्रियव्रतोत्तानपादौ तिस्रः कन्याश्च भारत ! ।
आकूतिर्देवहूतिश्च प्रसूतिरिति सत्तम ! ॥ ५५ ॥
आकूतिं रुचये प्रादात्कर्दमाय तु मध्यमाम् ।
दक्षायादात्प्रसूतिं च यत आपूरितं जगत् ॥ ५६ ॥

इतिश्रीमद्भागवते महापुराणे तृतीयस्कन्धे
विदुरमैत्रेयसम्वादे
द्वादशोऽध्यायः ॥ १२ ॥

——::*::——

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

मिथुनं समपद्यत मिथुनमेकं कार्यम् अन्यथा पुरुषोऽर्धखण्ड एव अर्द्धवृगलमिति श्रुतेः समपद्यतेति भगवत्कृतमनायासेनैव जातमिति ततोऽप्यग्रे कार्यं भविष्यतीति ज्ञापितम् ॥ ५२ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

या पूर्व्वं विसृष्टा सती नीहारं तमोऽभवत् ततोऽपरामनिषिद्धकामासक्तां तनुं शब्दब्रह्म तनुस्तु सदा अस्त्येव ननु तेन पूर्व्वसृष्टा मरीच्यादय एव बहुनराः प्रजाः सृजन्तीति सर्गे तस्यालं पुनः प्रयत्नेनेत्यत आह । ऋषीणामिति ॥ ४९ ॥ ५० ॥

युक्तकृतः यथोचितं कुर्व्वतः । दैवं स्वीयदिष्टमेवावेक्षमाणस्य कस्य ब्रह्मणः रूपमेकमेव द्विधा एकं श्मश्रुयुक्तमपरं कुचद्वययुक्तमिति द्विविधमभूत् । यदुभयमपि कायं कसम्बन्धित्वात् कायशब्दवाच्यं नडादित्वात् फक् नलोपश्छान्दसः ॥ ५१—५३ ॥

श्रीम[illegible]देवकृतसिद्धान्तप्रदीपः ।

ततः या पूर्वं विसृष्टा सती नीहारं तमोऽभवत् ततो परामन्यां तनुमुपादाय गृहीत्वेत्यर्थः ॥ ४९ ॥ ५० ॥

युक्तकृतः सयुक्तचिन्तनं कृतवतः यत्पुनरुपादानं कायमभिधत्ते तद्रूपं द्वेधा अभूत् ॥ ५१—५३ ॥

———

भाषाटीका ।

तदनंतर दूसरे शरीर को धारण करके ब्रह्मा ने सृष्टि करने में मन लगाया और वडे पराक्रम वाले जो ऋषि हैं उन का जो का सर्ग है तिसको भी विस्तार न जानकर के मनमे फिर भी हृदयमें विचार किया ॥ ४९ ॥

आहो ये वडी अद्भुत वातहै कि मैं सव वखत लगा भी रहता हूं तौभी प्रजा नहीं वढती हैं सो इसमें दैवही वन्दकरने वालाहै ॥ ५० ॥

इस प्रकार सें यत्न करतें और प्रारब्ध को प्रतीक्षा करते संतें ॥ ५१ ॥

ब्रह्माजी के शरीर के दो भाग होगये जिन दोनों को काय इस नाम से कहते हैं तिन दोनों रूप विभागों से स्त्री पुरुष का जोड़ा होगया ॥ ५२ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

या स्त्री सा अस्य महिष्यासीत् ॥ ५३ ॥
एधाम्बभूविरे वृद्धिं प्राप्ताः तदेवाऽऽह । सचापीति ॥ ५४ ॥ ५५ ॥
यतो यासां सन्ततिभिः ॥ ५६ ॥

इतिश्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकाटीकायां
द्वादशोऽध्यायः ॥ १२ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्यां
दीपिकाटिप्पणी ।

तत्र स्त्रीपुरुषभागयोर्मध्ये ॥ ५३ ॥
तदेत्यर्द्धकम् ॥ ५४ ॥
तदेव वर्द्धनमेवाह । सचापीति सार्द्धकम् ॥ ५५ ॥
पूरितं व्याप्तम् ॥ ५६ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीराधारमण-
दासगोस्वामिविरचितायां दीपिकाटिप्पण्यां
द्वादशोऽध्यायः ॥ १२ ॥

———

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

या स्त्री साऽस्य महात्मनः महाबुद्धेः स्वायंभुवमनोः महि-
भार्या शतरूपाख्याऽभूत् ततः प्रभृतिकिमासीज्जातश्च मनुः

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

करोदित्यत्राह । तदेत्यादि । यावदध्यायपरिसमाप्ति तदा मनुशत रूपाप्रादुर्भावप्रभृतिकाले मैथुनधर्मेण प्रजा एधास्वभूविरेऽवर्द्धन्ते- त्यर्थः ॥ ५३ ॥

सचापि स्वायंभुवो मनुरपि शतरूपायां स्वभार्यायामपत्यानि पञ्चाजीजनज्जनयामास अपत्यशब्दस्य साधारणत्वात् तत्र स्त्रीपुं विभागमाह। प्रियव्रतेति। प्रियव्रतोत्तानपादौ पुत्रौ आकूतिर्देवहूतिः प्रसूत्याख्यास्तिस्रः कन्याश्चाजीजनदिति पूर्वेणान्वयः ॥ ५४॥ ५५ ॥

रुचये रुच्याख्याय मुनये प्रथमामाकूतिं कर्दमाय मध्यमां देव- हूतिं दक्षाय प्रसूतिमदाद्दत्तवान् यतः याभ्यः आकूत्यादिभ्यः उत्पन्नाभिः प्रजाभिः कृत्स्नं जगदापूरितं बहुसन्तानकराः कन्या इत्यर्थः ॥ ५६ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्वीरराघवा- चार्य्यकृतभागवतचन्द्रचन्द्रिकाटीकायां द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अस्य मनोरयं योगो विभूतिकर इत्याह। तदेति। तदा तन्मिथुन सृष्टिकालमारभ्य ॥ ५३ ॥

अनेन मनुना कान्यपत्यान्युत्पादितानीति तत्राह । सचेति । तन्नामान्याह । प्रियव्रतेत्यादिना । यतः कन्यात्रयात् ॥ ५४—५६ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां द्वादशोऽध्यायः ॥ १२

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीव- गोस्वामिकृतस्य क्रमसन्दर्भस्य द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तद्युगलद्वयं नाम्ना निर्दिशति । यस्त्विति । तयोर्मध्ये यः पुमान् स मनुः मननाज्जात इति । या सृष्टिप्रकाररूपा सा स्त्रीश- तरूपेति आख्या नाम यस्याः । सा आसीदिति । मनुशब्दो यौगिक इति स्वायंभुव इत्युक्तं स्वराडिति भगवदंशाज्जायत इति ज्ञाप- यति ऐश्वर्यादिगुणवत्त्वात् अतस्तेन सृष्टिः सेत्स्यतीति भावः शतानि रूपाणि यस्या इति नित्यनूतनत्वेन मनोभोगाधिक्यं सृष्ट्याधिक्यं च सूच्यते महिषी सर्वकामदोग्ध्री निरूपणसमये भगवदीयत्वेन भगवति प्रविष्टत्वात् यत्र यत्र भगवान् तत्र तत्र स इति अस्येत्युक्तम् । इममेवार्थं ज्ञापयति । महात्मन इति । महान् भगवान् आत्मा यस्य तस्य मिथुनस्य बीजत्वं ख्यापयति । तदे- ति । मैथुनं मिथुनीभावः स एव धर्म उपायः तदा आनन्दे निवि- ष्टाः प्रजाः एधाम्बभूविरे इममेवार्थम् आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त इति हिशब्दः सूचयति । अत्रापि हिशब्दस्त- मेवार्थमाह स्वत एव एधाम्बभूविरे ज्ञानादिकमपि तत्रापे- क्षितम् ॥ ५३ ॥

एवं मैथुनस्य प्रकारत्वमुपपाद्य प्रथमे तं प्रकारं योजयति । सचापीति । सजीवभूतोऽपि चकाराद्भगवानपि अतस्तत्पुत्रयोर्द्धि- रूपत्वं मनुप्राधान्येन उत्तानपान्मुख्यः।स विसर्गोपयोगी भगवत्प्रा- धान्ये प्रियव्रतः स स्थानोपयोगी कन्या चैका भगवदीया द्वितीया । अतस्तस्याः प्राधान्यं परं सर्गोपयोगित्वादत्रैव कथनं तृतीया कन्यास्त्रीप्रार्थनया एवं समुदायेन पञ्चापत्यानि शतरू- पायामिति तस्या अधिकरणत्वमेव नतु जनकत्वं तेन पञ्चाप- त्यान्यपि न प्राकृतानीति ज्ञापितम् । प्रियव्रतोत्तानपादौ पुत्रौ पुरुषैः सह स्त्रीणां नाम न ग्राह्यमिति तिस्रः कन्या इत्युक्तं भारतेति मोहाभावाय । स्त्रीप्रसङ्गोऽपि मोहहेतुः । तासां नामानि निर्दिशति आकूतिरिति इति शब्दो नामान्तरव्युदासार्थः सत्तमेति पुनः सम्बोधनं पूर्ववत् पुरुषसम्बन्धकथनात् ॥ ५४ ॥ ५५ ॥

तासां विनियोगमाह । आकूतिमिति । रुचिर्ब्रह्मपुत्रः कल्पान्तरो- त्पन्नः कर्दमाय त्विति तुशब्दः स्वापत्यतां वारयति कर्दमोऽपि छायया जातः छायायां काल एवोत्पादकः भगवद्रूपः अतो नाधर्म- संवन्धः केनाप्यंशेन । मध्यमामिति । महत्या नाम पुनः पुनर्न- ग्राह्यमिति सूचयति प्रसूतिरिति । नाम्ना स्त्री प्राधान्यादुत्पन्ना देयैवेति गुणान्तराभावेऽपि चातुर्यमेव दक्षेऽस्ति अङ्गुष्ठाज्जात इति भगवज्जातत्वम् "अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः" इति श्रुतेः अतः प्रसूतिं दक्षायादादिति प्रसूतिं चादादिति चकारसं- बन्धो न तु दक्षाय प्रसूतिं चेति ततो यज्जातं तदाह । यतः आपूरितं जगदिति । महाभूतानां विस्तारेण यथा जगत् पूर्यते तथा पञ्चभिरेव जगत् पूरितमिति ॥ ५६ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्वल्लभाचार्य्यकृतसुबोधिन्यां द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सच स्वायम्भुवः यतः यासां सन्ततिभिः ॥ ५४—५६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
तृतीये द्वादशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

एधांबभूविरे अवर्द्धन्त प्रजावृद्धिं दर्शयति सचापीत्यादिना ॥ ५४ ॥ ५५ ॥

यतः याभिः कन्याभिः : इदं जगदापूरितं सर्वतःपूर्णीकृ- तमित्यर्थः ॥ ५६ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपटीकायां द्वादशाध्यायार्थप्रकाशः ॥ १२ ॥

---

भाषाटीका ।

उन दोनों रूपके भागों में जो पुरुष है सोतो स्वयम्भू मनु हैं जो स्त्री है सो इन्हीं मनु महात्मा की पटरानी शतरूपा है तबतो मैथुन धर्म से प्रजा बढनेलगी उन मनूने शतरूपा भार्या में पांच सन्तान उत्पन्न किये ॥ ५३ ॥ ५४ ॥

तिन में प्रियव्रत उत्तान पाद ये दो पुत्र हैं हे भारत विदुरजी ! आकूति देवहूती प्रसूती ये तीन कन्या उत्पन्न हुई ॥ ५५ ॥

तिन मेसे रुचिनामा प्रजापति को आकूति दिया कर्दमजी मध्यकी देवहूति दिये दक्षको प्रसूति दिये जिन तीनों से ज परि पूर्ण होगया ॥ ५६ ॥

इतिश्रीभागवत। तृतीयस्कन्ध द्वादशअध्यायका भाषानुवाद लक्ष्मणाचार्यकृत समाप्त ॥ १२ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे द्वादशोऽध्यायः ॥ १२ ॥



## ॥ त्रयोदशोऽध्यायः ॥

श्रीशुकउवाच ।
निशम्य वाचं वदतो मुनेः पुण्यतमां नृप ! ।
भूयः पप्रच्छ कौरव्यो वासुदेवकथादृतः ॥ १ ॥
विदुरउवाच ।
स वै * स्वायंभुवः सम्राट् प्रियः पुत्रः स्वयंभुवः ।
प्रतिलभ्य प्रियां पत्नीं किं चकार ततो मुने ! ॥ २ ॥
चरितं तस्य राजर्षेरादिराजस्य सत्तम ! ।
ब्रूहि मे श्रद्दधानाय विष्वक्सेनाश्रयो ह्यसौ ॥ ३ ॥
श्रुतस्य पुंसां सुचिरश्रमस्य नन्वञ्जसा सूरिभिरीडितोऽर्थः ॥
यत्तद्गुणानुश्रवणं मुकुन्दपादारविन्दं हृदयेषु येषाम् ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।
त्रयोदशे सिसृक्षायां मनोराकस्मिकाप्लुताम् ।
धरामुद्धर्तुमुक्रूनात्क्रोडाद्दैत्यानुसूदनम् ॥ १ ॥
स्वयंभुवः पुत्रस्तद्देहांशत्वात् ॥ १ ॥ ॥ २ ॥
विष्वक्सेनो हरिरेवाश्रयो यस्य सः ॥ ३ ॥
अतस्तस्य चरितं श्रोतव्यमित्याह । सुचिरं श्रमो यस्मिंस्तस्य पुंसां श्रुतस्याञ्जसा मुख्यत्वेनायमेवार्थ ईडितः स्तुतो ननु मुकुन्दपादारविन्दं येषां हृदयेष्वस्ति तेषां भागवतानां गुणानुश्रवणमिति यत् ॥ ४ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।
आकस्मिकेति कारणमन्तरैव निमग्नां सूदनं नाशनम् आदृतिरस्यास्तीत्यादृतः कथायां सादर इत्यर्थः अर्शआदित्वादच् कथाया असूतत्वात् तत्कर्तृकादरासम्भवादारोपमार्थव्याख्यान्तरं हेयम् ॥१॥
ततः पत्नीलाभानन्तरं हे मुने ! सर्वज्ञ ! ॥ २ ॥
हि यतः हरिरेवेत्यन्ययोगव्यवच्छेदकावधारणेनैकान्तित्वं व्यम् ॥ ३ ॥
अतः विष्वक्सेनाश्रयत्वात् श्रुतस्य शास्त्रश्रवणस्य भावे निष्ठा गुणानुश्रवणमिति यत् अयमेवेति योजनीयम् ॥ ४ ॥

———

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।
एवमतीताध्यायान्ते सहजानेर्मनोर्जन्मनि तच्चरित्रं च संग्रहेणाभिहितं स्वायंभुवः स्वराट् महात्मन इति विशेषणसूचिततच्चरितविस्तरविवित्सया विदुरः पृच्छतीत्याह शुकः । निशम्येति । वदतः गदतो मुनेर्मैत्रेयस्य पुण्यतमां वाचं निशम्य श्रुत्वा हे नृप ! राजन् ! कौरव्यो विदुरः वासुदेवकथायामादृतः कर्त्तरिक्तः आदरेण युक्तः भूयः पुनः पप्रच्छ पृष्टवान् ॥ १ ॥
विदुरप्रश्नप्रकारमेवाह । सवा इति त्रिभिः । स्वयंभुवः ब्रह्मणः प्रियः पुत्राणां मध्ये प्रियः निरतिशयप्रीतिविषय इति भावः सम्राट् सार्वभौमः स स्वायम्भुवो मनुः प्रियां पत्नीं शतरूपां प्रतिलभ्य लब्ध्वा ततः किमकरोद्धेमुने मैत्रेय ! ॥ २ ॥
प्रकृतमनुसर्गं विहाय किमिति मनुचरितं पृच्छसीत्याशङ्कां निराकुर्वन् पृच्छति । चरितमिति । हे सत्तम ! अधिराजस्य तस्य राजर्षेर्मनोश्चरितं श्रद्दधानाय मह्यं ब्रूहि कथय हि यस्मादसौ मनुः विष्वक्सेनाश्रयः विष्वक्सेनो हरिरेवाश्रयो यस्य स तथोक्तः भगवद्भक्तत्वात्तच्चरित्रमवश्यं श्रोतव्यमिति तच्चरितं प्रष्टव्यमेवेति भावः ३॥
नन्वेवं तर्हि साक्षाद्भगवच्चरित्रमेव प्रष्टव्यं किं भागवतचरितानुप्रश्नेनेन्याशङ्क्याह । श्रुतस्येति । सुचिरश्रमस्य सुचिरं श्रमो यस्मिंस्तस्य चिरकालश्रमार्जितस्य पुंसां श्रुतस्याध्ययनस्यार्थः प्रयोजनं सूरिभिर्विद्वद्भिरयमेवेतीडितः स्तुतः किंतत् यत्सूरिभिरीडितमित्यत्राह । येषां हृदयेषु मुकुन्दपादारविन्दमुपास्यते तेषां भागवतानां गुणानां श्रवणमिति यत्तदित्यर्थः भगवद्गुणवद्भागवतगुणा अपि श्रोतव्या एवेत्यभिप्रायः ॥ ४ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।
अस्मिन्नध्याये हरेरवतारकथाश्रवणादिना साक्षात्पुरुषार्थः स्यादिति निरूप्यते श्रीशुकः परीक्षितं पुनरपि विदुरप्रश्नप्रकारं वक्ति । निशम्येति ॥ १ ॥
स्वधर्माचारैः स्वपतिं स्वर्गं नयतीति पत्नी तां प्रतिलभ्य तत इत्यनेन व्यापारान्तरं निषेधति ॥ २ ॥
कोऽसौ वैदुरिकः प्रश्न इत्यत्राह । चरितमिति । मे मह्यं वक्तव्यत्वे हेतुमाह । विष्वक्सेनेति । विष्वक् सर्वत्र सेना ज्ञान लक्षणा यस्य तथोक्तः ॥ ३ ॥

* सचेति श्रीवल्लभाचार्यपाठः ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विष्वक्सेनचरितं तद्भक्तचरितं चेति द्वयमेव पुरुषार्थान्तरङ्गत्वेन मुमुक्षुणा श्रोतव्यं सूरिभिरीडितत्वादित्याह । श्रुतस्येति । सुचिरं श्रम आयासोऽस्य स तथा तस्य पुंसां श्रुतस्य वेदार्थश्रवणस्य अञ्जसा तत्त्वेन सूरिभिरीडितार्थोऽयं ननु इदं फलं हि यत्तस्य हरेर्गुणानुवादश्रवणं येषां हृदयेषु मुकुन्दस्य पादारविन्दं लसतीति शेषः तेषां पुंसां चरितश्रवणं वा ज्ञानिभिरभिष्टुतोऽर्थ इति यस्मात्तस्मात् स्वायंभुवमनोर्विष्वक्सेनकथाविनाभूतत्वात्कथां ब्रूहीति भावः ॥ ४ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

आदृतिरस्यास्तीत्यादृतः सादर इत्यर्थः अर्श आदित्वादच् ॥१॥ २ ॥ ३ ॥ ४ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं द्वादशधा सर्गस्त्रिविधो ह्युपपादितः ।
तस्य कारणरूपं हि यादृशं तदिहोच्यते ॥ १ ॥
सर्ववेदार्थरूपो हि वराह इति विश्रुतः ।
स एव कारणं सृष्टौ वैदिक्यामिति निश्चयः ॥ २ ॥
अन्यथा प्राकृती सृष्टिः स्वप्नतुल्यैव सा भवेत् ।
अतोवैदिकसृष्टित्वज्ञापनाय वराहता ॥ ३ ॥
भूमिस्तु देवयजनं रोमभिर्बर्हिषो भवः ।
पात्राणि सर्वावयवैस्तेन यज्ञस्त्रयोदशे ॥ ४ ॥
सृष्ट्यर्थं तस्य भवनमित्यर्थं सङ्गतिस्तथा ।
ब्रह्मणा सह सम्वादो मनोः कल्पान्तरे पुनः ॥ ५ ॥
रसातलान्तपर्यन्तं पृथिवी पूर्वमुद्धृता ।
पञ्चाङ्गुल्या पञ्चलोका ह्युद्धृता अतलादयः ॥ ६ ॥
यज्ञभूमित्वसिद्ध्यर्थं पुष्करं प्रथनं ततः ।
एषा स्थितिः पूर्वकल्पे रसातलगता ततः ॥ ७ ॥
प्रजापतेरुद्धृतत्वान्निराधारा जलं विशेत् ।
वराहकल्पे प्रथमे सर्वोत्पत्तिर्विनिश्चिता ॥ ८ ॥
ततस्तद्भेदकल्पेषु नष्टोत्पत्तिर्न सर्वतः ।
प्रक्रियान्तरभावेन ततः सृष्टिरिहोच्यते ॥ ९ ॥
हिरण्याक्षादिदैत्यानां रसातलगता स्थितिः ।
अपेक्षितानामर्थानां भिन्नकल्पेऽपि संभवः ॥ १० ॥
लीलाकथनसिद्ध्यर्थमेकरूपेण वर्ण्यते ।
अतो नात्र विरोधोऽस्ति केनाप्यंशेन निश्चितम् ॥ ११ ॥

एवं पूर्वाध्यायान्ते सृष्टिनिरूपणार्थं मनुरुक्तः तस्य कथं सृष्टिहेतुत्वमिति विचारः कर्तव्यः ।

यद्यपिदैविको देवस्तदर्थं सम्भाविष्यति ।
कामादयश्चेत्प्रबलास्तस्मात्सृष्टिस्तदाभवेत् ।
तत्रापि कामजनितो दोषश्चेन्न भविष्यति ।
अतो द्वितीयसृष्ट्यर्थमुपोद्घातद्वयं स्मृतम् ।
प्रथमेऽप्यत्र भावेन बीजमेतद् द्वयं मतम् ।
कारणद्वितयं लोके भगवान् जीव एव च ।

अतो मनोः सृष्टिहेतुत्वसिद्ध्यर्थं सर्गद्वयमध्ये तस्य स्वरूपं निरूप्यते । इदं चरित्रं भगवदीयमिति ज्ञापयितुं स्वस्य दोषपरिहाराय विदुरमुखेन निर्णयं वदन् तत्प्रसङ्गमेव निरूपयति । निशम्येति । वदतो मुनेः वाचं निशम्य मुनिर्मननेन यद्वार्या भगवदाज्ञाप्रकटीकरणार्थमागतं तदेव वदतीति तद्विस्तार नावश्यं कर्तव्य इत्याभिप्रेत्य भूयः पप्रच्छ । किञ्च पुण्यतः वाचं स्वाधिकारप्रवृत्तक्रियारूपां नृपेति सम्बोधनं राज्ञः कथा श्रवणं राज्ञां सुखकरमिति ज्ञापकं विदुरस्य कौरव्येतिविशेष दृढकर्तृत्वख्यापकम् । वासुदेवकथादृत इति प्रसङ्गादपि वासुदेवक कथयिष्यतीति राजचरित्रप्रश्नः नतु राजभावेन ॥ १ ॥

तस्य कार्यं चरित्रं च श्रोतव्यत्वं च निरूप्यते श्लोकत्रयेण प्रथमं तस्य पूर्वां स्थितिमनूद्य कार्यं पृच्छति । सचेति । द्विरूपत्वं ज्ञा मिति ख्यापनार्थं चकारः । स्वायम्भुवः सम्राडिति उभयानुवादः अतएव स्वयंभुवः पुत्रोभगवदीय इति । तस्यैव प्रियश्च पु स्वायंभुवत्वमनूद्य तस्य भगवदीयत्वं विहितम् । तेन भगवदी यत्वं मुख्यमतश्चरित्रश्रवणे हेतुत्वेन प्रथममुक्तः । पश्चात्सृष्टि तुत्वार्थं भगवदीयत्वमनूद्य ब्रह्मणः पुत्रत्वं विधीयते । अतो पौनरुक्त्यं प्रियां पत्नीमित्यत्रापि द्विरूपता भगवदीयत्वात् प्रिया पतनात्पत्नीत्वमिति प्रतिलम्भः पुनः प्राप्तिः । कल्पान्तरेऽपि तद्भा वेनैव प्राप्तत्वात् । उभयं मिलित्वा किञ्चकारेति प्रश्नः । ननु मेल मेव सुखात्मकमिति न किञ्चित् करिष्यतीत्याशङ्क्य ततइत्युक्त मुनइति । सम्बोधनं तस्य परिज्ञानार्थं कथं स सृष्टिं कृतवान् प्रश्नः ॥ २ ॥

चरित्रं पृच्छति । चरितमिति । तस्येति भगवदीयत्वं चरित्र श्रवणे हेतुः राजर्षेरिति धर्महेतुत्वं सत्तमेति मिथुनवार्तया क्षोभा भावाच्चरित्रं वक्तव्यमेवेति निर्द्धारितः कथनहेतुः श्रद्दधानायेति श्रद्धायां हेतुः । विष्वक्सेनाश्रय इति । तत्रापि हेतुरसाविति भगवत उत्पन्न एव भगवदाश्रयो भवति आश्रित एव भगवदीयचरित्रश्रद्दधानो भवति ॥ ३ ॥

भगवदीयानामपि चरित्रं श्रोतव्यं निराश्रयं चरित्रं स्वस्याश्रयत्वं न संपादयति ततो न स्थिरं भवेत् । अतोमहता कष्टे श्रुतमपि भगवच्चरित्रं अस्थिरत्वान्नफलपर्यवसायीति भगवदीयानां चरित्रं श्रोतव्यम् एतदेवाह । श्रुतस्येति । नन्विति कोमलसंम्बोधनं न अनुभवोऽत्र प्रमाणमिति सूचितम् । श्रुतस्य भगवद्गुणानां श्रवणस्य अग्रे वक्ष्यमाण एवार्थः प्रयोजनं भवतीति सूरिभिरीडितः । अध्ययनादिना बुद्धिवैशद्यहेतुना यः कश्चन पदार्थः श्रुतस्तस्य वा फलमग्रिमा वार्ता विशदा बुद्धिः भगवद्गुणानां स्थित्यर्थं पुष्कलापि बुद्धिः अनेकगुणानां ग्रहणार्थं महता श्रमेण श्रवणस्य ग्राहकत्वमपि भगवदर्थमेव भगवदीया गुणाः श्रुताः स्थिराः फलपर्यवसायिनो मृग्यन्ते तत्र स्थैर्यं भगवदीयचरित्रहेतुकमिति प्रथमतः श्रुतं चरित्रं स्वस्थित्यर्थं भगवदीयचरित्रश्रवणे रुचिमुत्पादयति । अतो भगवच्चरित्रस्यापि भगवदीयचरित्रश्रवणफलं सुष्ठु चिरं श्रमो यस्मिन् अञ्जसा सामस्त्येन सूरयो हि साधनमेव स्तुवन्ति न फलं साधनाधीनत्वात् तमर्थमाह । तत्तद्गुणानुश्रवणमिति । येन येन गुणेन भगवद्भक्तसम्बन्धिना भगवच्चरणारविन्दं तेषां हृदये निष्ठति स तदीयो गुणः भगवच्चरणारविन्दस्थापकः श्रवणस्य फलं पूर्व श्रवणस्य तत्तद्गुणानुश्रवणं फलमिति सजातीयत्वान्न विरोधः । भगवदीया एव गुणाः भक्तेषु स्थितास्तथा भवन्तीति न विरोधः फलमुखेन गुणानां निरूपणात् न गुणान्तराभावेन दूषणं शङ्कनीयं तस्माद्भगवच्चरणारविन्दस्थापका गुणाः श्रोतव्या इति म

श्रीशुक उवाच ।

इति ब्रुवाणं विदुरं विनीतं सहस्रशीर्ष्णश्चरणोपधानम् ।
प्रहृष्टरोमा भगवत्कथायां प्रणीयमानोमुनिरभ्यचष्ट ॥ ५ ॥

मैत्रेय उवाच ।

यदा स्वभार्यया साकं जातः स्वायंभुवो मनुः ।
प्राञ्जलिः प्रणतश्चेदं वेदगर्भमभाषत ॥ ६ ॥
त्वमेकः सर्वभूतानां जन्मकृद्वृत्तिदः पिता ।
अथापि नः प्रजानां ते शुश्रूषा केन वा भवेत् ॥ ७ ॥
तद्विधेहि नमस्तुभ्यं कर्मस्वीड्यात्मशक्तिषु ।
यत्कृत्वेह यशो विष्वगमुत्र च भवेद्गतिः ॥ ८ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अरिष्टस्य श्रोतव्यत्वमनेन प्रियत्वादिकमपि तस्य सूचितम् ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

त्रयोदशे मनोर्वाचा ध्यायतो ब्रह्मणो नसः ।
उद्धृत्य गां गतः क्रोडो गामुद्दभ्रे द्विजैः स्तुतः ॥ ० ॥

आदृतिरस्यास्तीत्यर्श आद्यच् आदृतः सादर इत्यर्थः । यद्वा कथयैव कर्त्र्या मामसौ विदुरः शृणोतु । मन्माधुर्य्यमेतत्कर्तृकास्वादात् सार्थकं भवत्वित्यादृतः । यद्वा कथायामादृतः वक्तृभिः श्रोतृभिश्चेत्यर्थात् ॥ १—३ ॥

वैष्णवकथाश्रवणं विना विदुषामपि विद्या विफला भवतीत्याह । सुचिरं श्रमो यस्मिन् तस्य गुरुमुखात् श्रुतस्य शास्त्राध्ययनस्येत्यर्थः अयमवार्थः प्रयोजनम् । ईडितः स्तुतः तदन्यस्तु निन्दित इत्यर्थः । सच कः येषां येषां हृदयेषु कृष्णपादपद्मं वर्त्तते तेषां तेषां गुणानुश्रवणकीर्त्तनादीत्यर्थः ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

त्रयोदशे स्वायंभुवचरितवर्णनप्रसंगाद्वाराहचरितमुच्यते वासुदेवकथायामादृतः कर्तरिक्तः ॥ १ ॥ २ ॥

विश्वक्सेनाश्रयः मुकुन्दाश्रयः ॥ ३ ॥

मुकुन्दाश्रयजनगुणानुवादश्रवणं पुरुषाणां महच्छ्रमसाध्यशास्त्रश्रवणस्य प्रयोजनमित्याह । श्रुतस्येति । सुचिरं श्रमो यस्मिन् तस्य पुंसां श्रुतस्य, अयमेवार्थः प्रयोजनं सूरिभिस्तत्त्वदर्शिभिरीडितस्तुतः ननु अहो येषां येषां हृदयेषु मुकुन्दपादारविन्दं ध्येयत्वेन वर्त्तते तेषां तेषां गुणानुवादश्रवणम् ॥ ४ ॥

---

भाषाटीका ।

श्रीशुकदेवजी बोले हेराजन् ! कहतेभये मैत्रेयजी के मुखसे बड़ी पवित्र कथा को श्रवण कर के वासुदेव की कथा में बड़ी उत्कण्ठा से विदुरजी फिर भी पूछने लगे ॥ १ ॥

विदुरजी बोले हे मुने ! वहजो ब्रह्माका प्रिय पुत्र स्वायम्भुव महाराज सो प्रिय भार्या कूँ प्राप्त होकर फिर क्या करते भये ॥ २ ॥

हे मुनिसत्तम ! उन आदि राज राजर्षि मनु का चरित हमसे कहो मैं श्रद्धालूहूं वे विश्वक्सेन भगवान के भक्त हैं ॥ ३ ॥

सब मनुष्यों के शास्त्र श्रवण का अधिक परिश्रम का यही एक मुख्य फल है कि श्रीमुकुन्द के चरणारविन्द को हृदय में रखने वाले जो भगवद्भक्त हैं उनका गुणानुवाद श्रवण करना होजावै ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सहस्रशीर्षा श्रीकृष्णस्तच्चरणावुपधीयेते यस्मिन् श्रीकृष्णः प्रीत्या यस्योत्सङ्गे चरणौ प्रसारयतीत्यर्थः तमभ्यचष्टाभ्यभाषत मुनिर्मैत्रेयः प्रणीयमानस्तेन प्रवर्त्यमानः ॥ ५ ॥

वेदगर्भं ब्रह्माणम् ॥ ६ ॥

त्वमेवैकः पिता सर्वेषां यतो जन्मकृद्वृत्तिदः पोषकश्च त्वमेव अतस्तव यद्यप्यन्यापेक्षा नास्त्यथाप्यस्माकं ते शुश्रूषा केन कर्मणा भवेत्तद्विधेहीत्युत्तरेणान्वयः ॥ ७ ॥

हे ईड्य ! आत्मशक्तिष्वस्मच्छक्येषु कर्मसु मध्ये केन कर्मणा भवेत्तद्विधेहीदं कर्तव्यमिति कथय यत्कृत्वा यस्मिन्कृते सति विष्वक्सर्वतः अमुत्र परलोके ॥ ८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

सहस्रशीर्षा श्रीकृष्णः महाभारते विदुरगृहे भुक्त्वा सहस्रशीर्षा सन् तदुत्सङ्गे चरणौ निधाय सुष्वापेति प्रसिद्धः उपधीयेते प्रसार्येते ॥ ५ ॥ ६ ॥

त्वमेक इति युग्मकम् अतः जन्मकृत्त्वादेः ॥ ७ ॥

गतिः श्रीभगवत्प्राप्तिः ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

एवं वैदुरिकप्रश्नमाश्रुत्य मुनिरभ्यभाषतेत्याह शुकः । इतीति । उक्तप्रकारेण ब्रुवाणं पृच्छन्तं विनीतं विनयादिसंयुतं सहस्रशीर्ष्णः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

परमपुरुषस्य "सहस्रशीर्षा पुरुष" इतिश्रुतेः चरणौ उपधीयेतेऽस्मिन्निति चरणोपधानं भगवत्पादपीठं भगवत्प्रियोऽसौ विदुरः अतस्तस्य शिरस उपरि भगवान् स्वपादौ प्रसारयतीत्यर्थः एवंभूतं विदुरं प्रति मुनिर्मैत्रेयोऽभ्यचष्टाभ्यभाषत कथंभूतः भगवत्कथायां प्रणीयमानः प्रवर्त्यमानः अतएव प्रहृष्टानि उदञ्चितानि रोमाणि यस्य स तथोक्तः ॥ ५ ॥

अभिभाषणप्रकारमेवाह। यदेत्यादिना। यदा स्वभार्यया शतरूपया सहायं स्वायंभुवो मनुरुत्पन्नः तदायं मनुः प्रणतः नम्रो भूत्वा साञ्जलिरेनं वेदगर्भं ब्रह्माणं प्रत्यभाषत ॥ ६ ॥

त्वमिति। सर्वेषां भूतानां त्वमेक एव पिता जन्मकृद्वृत्तिदः पोषकश्च अतो यद्यप्यन्यापेक्षा नास्ति तथाप्यस्माकं ते शुश्रूषा परिचर्या केन कर्मणा भवेत्तद्विधेहीत्युत्तरेणान्वयः ॥ ७ ॥

तदिति। हे ईड्य! स्तुत्य! आत्मशक्तिषु मच्छक्तिविषयेषु कर्मसु मध्ये केन कर्मणा ते परिचर्या भवेदित्यनुषङ्गः इदं कर्तव्यमिति कथयेति भावः यत्कर्म कृत्वा इहास्मिन् लोके विष्वक् सर्वतः यशोभवेदत्रामुत्रपरलोके गतिश्च भवेदिति ॥ ८ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

श्रीशुकः परीक्षिते विदुरप्रश्नप्रकारं वक्तीति वक्ति सूतः शौनकादिभ्य इत्याह। इति ब्रुवाणमिति। सहस्रशीर्ष्णो हरेश्चरणोपधानं पादपीठस्थितं भगवत्कथायां प्रणीयमानः प्रेर्यमाणः अभ्यचष्टेत्यन्वयः विदुरमिति शेषः ॥ ५ ॥

संभाषणानन्तरमन्यकथाप्रसङ्गो नास्तीति भावेनाह। यदेति। नायमञ्जलिर्दाम्भि इति भावेनोक्तम् प्रणत इति ॥ ६ ॥

ननु किमियं भाषागुह्याद्यन्यतमा सांकेतिकी वा न द्वितीयः अप्रस्तुतत्वादसंभवाच्च प्रथमा च समाधिरेवेति भावेनाह। त्वमेक इति। अथ जन्मकृत्त्वाद्वृत्तिदत्वात्पितृत्वाच्च पोष्यैः शुश्रूषा कर्तव्या सा केन येन कर्मणा स्यादित्यर्थः अपिशब्देन कार्याकरणे पातकं सूचयति ॥ ७ ॥

तदिति। तत्कर्म इतोऽपि भवच्छुश्रूषया कर्तव्येत्याह। कर्मस्विति। आत्मशक्तिषु स्वकेषु नित्यनैमित्तिकेषु कर्मस्विज्या पूजा तत्कर्म विशिनष्टि। यत्कृत्वेति। इह लोके सर्वत्र यशोऽमुत्र परलोके गतिः सुखप्राप्तिलक्षणा स्यात्तादृशमिति शेषः ॥ ८ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

सहस्राणामनन्तसंख्यानां शीर्ष्णः श्रेष्ठरूपस्य श्रीकृष्णस्य चरणोपधानमिति महाभारते श्रीभगवतस्तद्गृहभोजने प्रसिद्धम्। शीर्षस्य शीर्षञ्छन्दसीति भगवान् पाणिनिः ॥ ५—७ ॥

यत् कृत्वेत्यत्र स्थितस्येत्यध्याहार्यम् ॥ ८ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं भगवच्चरित्रश्रवणपरं श्रोतारमुपलभ्य संतुष्टो मैत्रेय इत्याह इति। ब्रुवाणमिति। विदुरमिति भगवदाज्ञापनविषयत्वं बोधयति विनीतामिति स्वतोऽपि कथनहेतुत्वं सहस्रशीर्ष्णश्चरणोपधानमिति शास्त्रार्थतोऽपि तदाज्ञापरिपालनं कर्तव्यमिति महत्त्वं यथा भगवच्चरणस्थापका गुणास्तथा विदुर इति कृष्णः साक्षाद्भगवानतः सहस्रशीर्षेत्युच्यते तस्य चरणोप धानं विदुरः चरणा उपधीयते अस्मिन्निति यदा भगवान् पादं प्रसारयति तदा विदुरोत्सङ्गे प्रसारयतीति अत एव विदुरे आवश्यकगुणत्रयस्य विद्यमानत्वाद्भगवत्कथायाः वचनावश्यकं ज्ञात्वा प्रहृष्टरोमा जातः यतो भगवत्कथायां प्रकर्षेण नीयमानः स्वभावतो मुनिः अमितः अचष्ट हेतुपूर्वकं सर्वमुक्तवान् विपरीतं भगवद्वृत्तिं यद्विदुरसङ्गात् उत्तरोत्तरं मैत्रेयो भक्तो जायत इति यथा तद्वत् ज्ञानमत्र संक्रमते तथा विदुरभक्तिरपीतरत्र अतः प्रहृष्टरोमा ॥ ५ ॥

ब्रह्मप्रार्थनया सृष्टिं करिष्यतीति कथनार्थं ब्रह्मप्रसङ्गमाह। यदेति। स्वभार्यया साकामिति अनिषिद्धप्रजोत्पादनसामर्थ्यसहितः मनुरिति स्वभावतो धर्मपरत्वं स्वायंभुव इति अन्यथा अनिष्कृतं स्यात् तेन सृष्ट्यर्थमेवोत्पादनात् विज्ञापनार्थं प्राञ्जलिः प्रणतश्च मनोवाग्भ्यां कायवाङ्मनोभिर्नम्रता सूचिता वक्ष्यमाणं प्रष्टुर्ज्ञानवत्त्वमाह। वेदगर्भमिति ॥ ६ ॥

विज्ञापनामाह। त्वमेक इति द्वाभ्याम्। पुत्रस्य कार्यद्वितयं पितृशुश्रूषणं पुरः तदाज्ञाकरणं चेति द्वयं संदिग्धमत्र हि अतोऽत्र प्रथमं पृच्छति यद्यपि तव शुश्रूषापेक्षा नास्ति त्वयैव सर्वे सर्वभावेनोत्पाद्यन्ते पाल्यन्ते च अतोऽस्माभिस्त्वदुत्पन्नैस्त्वया च परिपालितैः का शुश्रूषा तव भविष्यति तथापि अस्माकं स्वनिष्कृत्यर्थं पितृशुश्रूषणं कर्तव्यमिति शुश्रूषायां वक्तव्यं शुश्रूषणं च तदेव येन सेव्यस्य सुखं भवति परितुष्यति च तत् ज्ञातमस्माकमिति प्रश्नः निरपेक्षतायां हेतुत्रयं सर्वभूतानां जन्मकृत्त्वं वृत्तिदातृत्वं असहायशूरत्वं च तत्रासहायशूरत्वं जन्मादेरपि प्रयोजकम् इति प्रथममाह। त्वमेक इति। त्वमेवैकः समर्थः सर्वत्र किंसेवया किञ्च। त्वमेवैकः सर्वभूतानां जन्मकृदुत्पादकः वृत्तिर्जीविका तां प्रयच्छतीति वृत्तिदः अतो न सेवापेक्षा किञ्च। पिता भगवान् सर्वभूतानामेव स्नेहोऽनेन निरूप्यते प्रतिबन्धकः सेवायाम् अथापि प्रयोजनाभावे प्रतिबन्धके च विद्यमाने नः प्रजानामुद्धारार्थं ते शुश्रूषा केन वा भवेत् तत्कथयेत्यर्थः कोऽर्थः ॥ ७ ॥

किञ्च। आज्ञापनं च कर्तव्यं परं यत्र कार्येऽस्माकं शक्तिः तद्विधेहीति। ननु सेवाकार्ययोः स्पष्टयोः कथमज्ञानं तत्र नमस्तुभ्यमिति। एतावदस्माभिः कार्यं सेवायां च ज्ञातं यत् नमस्य इति नमनातिरिक्तमशक्यमप्रयोजकं च। तथापि यत् प्रयोजकत्वेन ज्ञायते शक्यं वा भवेत् तद्वक्तव्यमित्यभिप्रायेणाह कर्मस्विति। स्तोत्रमपि सर्वैरेव स्तुतस्य अशक्यमेव तदाह ईड्य सम्बोधनेन आत्मशक्तिषु आत्मनः सामर्थ्यं येषु स्वशक्यत्वेऽपि तत्रापि यो भवति धर्मजनकः यो वाप्यपकीर्त्यजनकः। इह वेदविरुद्ध इत्यर्थः विष्वग्यश इति। एकदेशेऽपि यथापकीर्तिजनकत्वं यथा देशविशेषे निषिद्धकरणम्। अमुत्र चेति परलोके यशो गतिश्च ॥ ८ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

सहस्रशीर्षा विदुरशङ्कानिवृत्त्यर्थं तद्गृहे धृतसहस्रशीर्षविग्रहः श्रीकृष्णस्तस्य चरणयोरुपधानमुपबर्हरूपं महाभारते विदुरगृहे भोजने भगवांस्तदुत्सङ्गे चरणौ निधाय सुष्वापेति प्रसिद्धेः। प्रणीयमानः तेन प्रवर्त्यमानः ॥ ५ ॥ ६ ॥

॥ ब्रह्मोवाच ॥

प्रीतस्तुभ्यमहं तात ! स्वस्तिस्तताद्वां चितीश्वर ! ।
यन्निर्व्यलीकेन हृदा शाधि मेत्यात्मनाऽर्पितम् ॥ ९ ॥
एतावत्यात्मजैर्वीर ! कार्या ह्यपचितिर्गुरौ ।
शक्त्याप्रमत्तैर्गृह्येत सादरं गतमत्सरैः ॥ १० ॥
सत्वमस्यामपत्यानि सदृशान्यात्मनो गुणैः ।
उत्पाद्य शास धर्मेण गां यज्ञैः पुरुषं यज ॥ ११ ॥
परं शुश्रूषणं मह्यं स्यात्प्रजारक्षया नृप ! ।
भगवांस्ते प्रजाभर्तुर्हृषीकेशोनु तुष्यति ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

हे ईड्य आत्मशक्तिषु अस्मच्छक्येषु कर्म्मसु मध्ये केन कर्म्मणा ते शुश्रूषा भवेत्तद्विधेहि आज्ञापयेत्यर्थः यद् कृत्वा स्थितस्य ममेस्य ध्याहार्य्यम् ॥ ७ ॥ ८ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रणीयमानः विदुरेण प्रवर्त्यमानः मुनिः सहस्रशीर्ष्णः श्रीकृष्णस्य चरणावुपधीयेते यस्मिन् स्नेहातिशयात् भगवान् यदङ्के चरणौ प्रसारयति तं विदुरम् अभ्यचष्ट अभ्यभाषत ॥ ५ ॥ ६ ॥

नोऽस्माकं प्रजानां ते शुश्रूषा आत्मशक्तिषु अस्मच्छक्येषु कर्मसु मध्ये केन कर्मणा भवेत् तद्विधेहि कथयेति द्वयोरन्वयः ७ ॥ ८ ॥

———

भाषाटीका ।

श्रीशुकदेवजी बोले इसप्रकार बोलने वाले सहस्र शीर्षा भगवान् श्रीकृष्ण के चरण कमल को अपने गोद में रखने वाले विदुरजी ने जब भगवत्कथा में प्रेरणा किया तब रोमाञ्चयुक्त होकर मैत्रेयजी कहने लगे ॥ ५ ॥

मैत्रेयजी बोले जब स्वायंभुव मनु अपनि भार्यासहित उत्पन्न भये तब हाथ जोड कर नमस्कार कर के ब्रह्माजी सें बोले ॥ ६ ॥

आप एक ही सब जीवों के जन्म देनेवाले तथा उन की वृत्ति देनेवाले पिता हो तौ भी आप के सन्तान हम लोगों से आप की सेवा किस प्रकार होसकैगी ॥ ७ ॥

हे ईश सो बात आप हमको शिखावो कि कर्मों के मध्य में अपने शक्ति लायक जिस कर्म के करने से इस लोक में कीर्ति होवै परलोक में सद्गति हो जावै ॥ ८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

वां युवाभ्यां स्वस्ति भद्रं स्ताद्भूयात् यद्यतो मा मां शाध्यनुशिक्षयेत्यात्मना स्वयमेवार्पितं वेदितमतः प्रीतोऽस्मि ॥ ९ ॥



अपचितिः पूजा गृह्येत आज्ञेति शेषः सनकादयो न कुर्वन्ति वयं किमिति करिष्याम इत्येवं भूतो गतो मत्सरोयेभ्यः ॥ १० ॥

गां शास शाधि पालयेत्यर्थः पुरुषं हरिम् ॥ ११ ॥

प्रजापालकस्य ते तुष्टो भविष्यति ॥ १२ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्यां दीपिकाटिप्पणी ।

युवाभ्यामित्यत्रोद्देशश्चतुर्थ्यर्थः युवामुद्दिश्येत्यर्थः ॥ ९ ॥

शक्त्या स्वशक्त्यनुसारेण सादरं यथा स्यात्तथा ॥ १० ॥

स गृहीताज्ञस्त्वम् आत्मनः स्वस्य पृथिव्याः शिक्षणासम्भवात्पालने लक्षणात इत्यर्थोक्तिः ॥ ११ ॥

नु निश्चितम् ॥ १२ ॥

———

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

एवं मनुना पृष्टो ब्रह्माह । प्रीत इति । हेतात ! तुभ्यमहं प्रीतः हेक्षितीश्वर ! वां युवाभ्यां स्वस्तिस्ताद्भूयात् कुत एतत्तत्राह । यद्यस्मान्निर्व्यलीकेन निर्दुष्टेन हृदा मनसा मा मां शाध्यनुशिक्षयेत्यात्मना स्वयमेवार्पितम् आवेदितम् ॥ ९ ॥

हेवीर ! गुरौ पितर्यात्मजैः पुत्रैरेतावत्यपचितिः पूजाकर्तव्या क्रियतीत्यत्राह । शक्त्येति । अप्रमत्तैर्निर्मत्सरैः शक्त्या शक्त्यनुरूपेण सादरं गृह्येत आज्ञेतिशेषः यथाशक्ति पितुराज्ञाग्राह्येत्येतावतीपितरि शुश्रूषेत्यर्थः ॥ १० ॥

तर्हि का वापितुस्तवाज्ञा या मया कर्तव्या वोध्यते तत्राह । सत्वमिति । स मच्छरीरादुत्पन्नस्त्वमस्यां स्वमहिष्यामात्मनस्तव गुणैः सदृशान्यपत्यानि उत्पाद्य गां भूमिं धर्मेण शास अनुशिष्टयज्ञैः पुरुषं परमपुरुषं यजाराधय ॥ ११ ॥

इदमेव मह्यं परं शुश्रूषणं स्यादनेनावयोभगवानपि तुष्यतीत्याह । परमिति । हेनृप ! प्रजारक्षया भगवान् हृषीकेशो विष्णुः प्रजाभर्तुस्ते प्रजाभर्त्रे तुभ्यमित्यर्थः प्रजारक्षयेति वान्वयः अनुतुष्यति सन्तुष्टो भवति ॥ १२ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सच्छिष्ये सद्गुरुणा एवमनुग्रहः कर्तव्य इति भावं ध्वनयन्

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ब्रह्मा वक्ति । प्रीतइति । तद्यस्मात्त्वाधि शिक्षस्व आत्मना परप्रेरणा-मन्तरेण ॥ ६ ॥

इयमेका गुरोः क्रियमाणा पूजेत्याह । एतावतीति । अपचितिः पूजा एतावतीति केयमित्यत्राह । शक्त्येति । अथ गुरुनियोगानन्तरमेव शक्त्या शासनमाज्ञा गृह्येतेति यत्सेयमित्यर्थः ॥ १० ॥

आज्ञामाह । स त्वमिति । अस्यां शतरूपायाम् ॥ ११ ॥

केन वेत्यस्य प्रश्नं परिहरति । परमिति । अनेनाज्ञाग्रहणमेकमितरत्प्रजापालनमिति द्वयं शुश्रूषणमुक्तं भवति पुरुषस्य पुरुषार्थाय श्रीनारायणप्रसाद एव ततः प्रजापालनेन किं तत्राह । भगवानिति ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मत्सरोऽन्यशुभद्वेषः । सचात्रैकाकितया गुर्वाज्ञाकर्तृषु सजातीयेषु सम्भवतीति गतमवसरैरित्युक्तम् ॥ ६--१२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तत्र ब्रह्मा एकं कृतमेवेत्याह । प्रीत इति द्वाभ्याम् । शुश्रूषा सफला भवति फलेन ज्ञायते शुश्रूषा जातेति अतस्तत्फलमेव निर्दिशति प्रीतिरपि महती यतः सफला तस्याः फलमाह स्वस्तिस्तादिमिति । युवयोः कल्याणं भवतु संसारप्रवृत्तिरूपत्वात् कार्यस्य बन्धशङ्कायामेवमुक्तं क्षितीश्वरेत्यपरमपिफलं संबोधनेन निर्दिष्टं भूम्यैश्वर्यं भवत्विति ननु शुश्रूषा काऽस्माभिः कृता कथं वा सन्तोष इत्याशङ्क्याह । यन्निर्व्यलीकेन हृदेति । निष्कपटेन हृदा मामाज्ञापयेति यदात्मना सह सर्वस्वनिवेदनं तदेव शुश्रूषणं तत् दुर्योधनवत्कापट्येनापि भवतीतिनिर्व्यलीकेन हृदेत्युक्तम् आत्मनेति सहार्थे तृतीया अनेनैहिकं पारलौकिकमपि आत्मगामि सर्वं निवेदितमिति ज्ञापितम् एतदेवात्मसमर्पणं नाम न ततोऽन्यत् प्रभोः शुश्रूषणमस्ति ॥ ६ ॥

अन्यदपि ततो भविष्यतीत्याशङ्क्य परिहरति । एतावत्यात्मजैरिति । एतावत्येव शुश्रूषा आत्मजैः कर्तव्या यो यद्यतः प्राप्तवान् तदेव तस्मै निवेद्यमिति पितरि पुत्रकैरिति प्राप्तिमेवोपपादयति । गुरावपचितिरित्यपि पाठे गुरूपदिष्टस्य पदार्थस्य सिद्ध्यर्थं निस्तार्यमेव निवेदयेत् सहि आत्मात्मीयनिस्तारार्थमुपदिशति तदस्याशक्यमिति तस्मै निवेदनीयं सहि स्वात्मानमुद्धरतीति उपदेशसार्थकत्वेनैव तस्यापचितिः अन्यथा तस्य सेवाधीनत्वं स्यात् अत उभयेषां कार्यार्थमात्मसमर्पणमेवापचितिः सेवा प्रत्युपकार इति यावत् आत्मसमर्पणस्य निदर्शनमाह । शक्त्याप्रमत्तैरिति । स्वशक्त्यनुसारेण सावधानैः तद्वाक्यं सादरं गृह्येत मृदानयनेत्युक्ते स्वशक्त्यनुसारेण आदरपूर्वकं मृदानयनमात्मसमर्पणस्य निदर्शनम् अयुक्तप्रकारेणापि स्वोत्कर्षार्थं मां युक्तं कारयतीति तस्योत्कर्षासहनरहितैः ॥ १० ॥

एवं सेवामुपपाद्य कर्तव्यमाज्ञापयति । स त्वमिति । मत्पुत्रत्वे ह्यातियत्कर्तव्यन्तत्कृतमेव यद्भगवदीयत्वेन कर्तव्यं तदुच्यत इति ज्ञापयितुं स इत्युक्तम् । अस्यामित्यपि तथैव अत एव आत्मनः सदृशैर्गुणैः अपत्यान्युत्पादयेत्याज्ञा प्रथमा तदनन्तरं धर्मेण गां शास परिपाल येति द्वितीया यज्ञैः पुरुषं भगवन्तं यजेति तृतीया ॥ ११ ॥

तत्र द्वयं भगवत्प्रीतिहेतुभूतमित्यवधृतं पृथिवीपालनस्य क्षत्रियधर्मत्वात् यज्ञानां वैदिकधर्मत्वात् श्रौतस्मार्तश्च धर्माः स्वधर्माः अतः स्वधर्मेण भगवदाराधने कृते भवान्वेदगर्भः भगवांश्च परितुष्यतीत्यविवादं प्रजोत्पादने तु भवान् भगवान् वा परितुष्यतीत्यत्र न किंचित्प्रमाणमस्तीत्याशङ्क्याह । परं शुश्रूषणमिति । पुत्रेण हि पितुः शुश्रूषा कर्तव्या तत्प्रजारक्षयैव मम परं शुश्रूषणं भवति मत्कर्तव्यकरणात् भगवत्कर्तव्यकरणं भगवच्छुश्रूषणं परमिति पूर्वमवोचाम तस्मान्मया प्रजोत्पादनीया पालनीया सा त्वयैव क्रियत इति परं मम शुश्रूषणम् अनेन भगवांश्च परितुष्यतीति आह । भगवांस्ते प्रजाभर्तुरिति । प्रजाभर्तुः प्रजारक्षकस्य ते भगवान् परितुष्यति प्रजारक्षाया धर्मत्वात् किञ्च । हृषीकेश इति प्रजोत्पादने प्रजारक्षायां च सर्वेन्द्रियाणामुपभोगात् इन्द्रियाधिष्ठाता हृषीकेशो भगवान् परितुष्यति ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तुभ्यं प्रीत इति पक्षे शेते इतिवत् सम्प्रदानम् । अतो वां युवाभ्यां स्त्रीपुंसाभ्यामेव स्वस्तिस्तात् । यद्यतः मा मां शाधि अनुशिक्षय इति आत्मना स्वयमेवार्पितं विशेष्यपदानुक्त्या अहन्तास्पदममतास्पदादिकं सर्व्वमेव निवेदितमित्यर्थः ॥ ६ ॥

अपचितिः सेवा गृह्येत आज्ञेति शेषः । सनकादयो न कुर्व्वन्ति वयं किमित्याज्ञां कुर्म्म इत्येवम्भूतो गतो मत्सरो येषां इति तैः ॥ १० ॥

गां पृथ्वीं शास शाधि पालयेत्यर्थः ॥ ११ ॥

मह्यं मम मां प्रीणयितुमिति वा ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वां युवयोः मा मां शाधि अनुशिक्षयेति स्वयंनिवेदितम् अतः प्रसन्नोऽस्मि ॥ ६ ॥

अपचितिः पूजा एतावत्येव कार्या कियतीत्याकाङ्क्षायाम् अप्रमत्तैः सावधानैः सादरं यथा भवति तथा यथा शक्ति गुरोर्गुर्वाज्ञेति शेषः ॥ १० ॥

पुरुषं सर्वयज्ञभोक्तारम् ॥ ११ ॥ १२ ॥

---

भाषाटीका ।

हे तात मैं प्रसन्न हूं तुमारे वास्ते पृथिवी पति तुम्हारा कल्याण होगा जोकि तुम ने निष्कपट हृदय से हम को शिक्षा करो ऐसा अपने मन से निवेदन किया है ॥ ६ ॥

हे वीर! गुरु पित्रादि कों के लिये शिष्य पुत्रादिकों की यही पूजा सेवा है जो कि सावधान होकर शक्ति के अनुसार आदरपूर्वक उन के वचन को दूसरेमेंईर्षा न करके ग्रहण करना होवै ॥ १० ॥

सो तुम अब इस भार्या में गुणों से अपने सदृश पुत्रों को पैदा करके धर्मसे पृथिवी को पालन करो यज्ञों से भगवान् का आराधन करो ॥ ११ ॥

यस्मै न तुष्टो भगवान् यज्ञलिङ्गो जनार्दनः ।
तेषां श्रमो ह्यपार्थाय यदात्मा नादृतः स्वयम् ॥ १३ ॥

॥ मनुरुवाच ॥

आदेशेऽहं भगवतो वर्तेयामीवसूदन ! ।
स्थानं त्विहानुजानीहि प्रजानां मम च प्रभो ! ॥ १४ ॥
यदोकः सर्वसत्त्वानां महीमग्ना महाऽम्भसि ।
अस्या उद्धरणे यत्नो देव ! देव्या विधीयताम् ॥ १५ ॥

॥ मैत्रेयउवाच ॥

परमेष्ठी त्वपां मध्ये तथा सन्नामवेक्ष्य गाम् ।
कथमेनां समुन्नेष्य इति दध्यौ धिया चिरम् ॥ १६ ॥

भाषाटीका ।

हे नृप ! प्रजाओंकी रचा करने से हमारी बडी सेवा होगी प्रजावों के पोषण करने से हृषीकेश भगवान् तुमारे ऊपर प्रसन्न होंगे ॥ १२ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

उदासीनस्य भगवतोऽतोषे मे कोदोषस्तत्राऽऽह । येषामिति । यज्ञलिङ्गो यज्ञमूर्तिः अपगतोऽर्थो यस्मात्केवलं श्रमायैवेत्यर्थः यद्यस्मादात्मैव स्वयं नादृतः तस्मिन्नतुष्टे स्वार्थस्यैवासिद्धेः सर्वात्मत्वाच्च तस्य ॥ १३ ॥

वर्तेय वर्तिष्ये अमीवसूदन ! पापनाशन अनुजानीह्यत्र स्थातव्य मित्यनुज्ञां देहि ॥ १४ ॥

महीति चेदतआह । यदोकः स्थानं सा मही हेदेव ! अस्या देव्याः ॥ १५ ॥

पूर्वं पाने कृतेऽपि पुनरकाण्ड एवोद्भूतानामपां मध्ये सन्नामवसन्नां निमग्नां समुन्नेष्ये उद्धरिष्यामि ॥ १६ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

यस्मात्केवलश्रमादिति विशेष्याध्याहारादित्यर्थोक्तिः स्वार्थस्य स्वप्रयोजनस्यैवासिद्धेरात्मैवानादृतः तस्य भगवतः सर्वात्मत्वात्परमात्मानादरेण स्वतएवात्मा नादराच्चात्मानादृतइति हेतुद्वयम् १३। इह जगति तुस्तावदित्यर्थे प्रजानां स्रक्ष्यमाणानां स्रष्टुर्ममच ॥ १४ ॥

महाऽम्भसि गर्भोदके ॥ १५ ॥

अकाण्डेप्रलया वसरे तथा प्रलयकालवत् ॥ १६ ॥

———

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

किं भगवत्सन्तोषेणेत्यत्राह । येषामिति । यज्ञलिङ्गो यज्ञमूर्तिः सनातनो भगवान् येषां न तुष्टः तेषां श्रमः अपार्थाय निष्प्रयोजनाय भवतीत्यर्थः यद्यतः आत्मा भगवान् स्वयं नादृतः उपेक्षित इति यावत् ॥ १३ ॥

एवमुक्तो मनुः किमुवाचेत्यत्राह । आदेश इति । अमीवसूदन ! पापनाशन ! भगवतस्तवादेशो आज्ञायां वर्तेय किन्तु हेप्रभो ! प्रजानां मम च इहास्मिन् लोके स्थानं निवासस्थानमनुजानीह्यनुज्ञापय प्रदर्शयेत्यर्थः ॥ १४ ॥

ननु महीएव सर्वभूतानां स्थानं कथमुच्यते स्थानमनुजानीहीति तत्राह । यदिति । सर्वसत्त्वानां सर्वभूतानां यदोकः स्थानं स्थानभूता मही भूमिः महाम्भसि महति जले मग्ना अन्तर्गता आसीदिति तस्या देव्या भूमेरुद्धरणे यत्नः हेदेव ! विधीयताम् क्रियताम् ॥ १५ ॥

एवमुक्तो ब्रह्मा किमकरोदित्यत्राह । परमेष्ठी ब्रह्मा तदापां मध्ये आसन्नां निमग्नां गामवेक्ष्य ज्ञात्वा एनां भूमिमहं कथं समुन्नेष्ये उद्धरिष्यामीति धिया चिरन्दध्यौ चिन्तयामास ॥ १६ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

बाधकमाह । येषामिति । यज्ञो लिङ्गं ज्ञापको यस्य स तथा श्रमः इदं नः श्रेयः साधनमित्यनुष्ठानाद्यायासः आत्मा परमात्मा ॥ १३ ॥

ब्रह्मणा प्रजापालनायोपदिष्टो मनुस्तदाज्ञामादाय ब्रह्माणं प्रार्थयते । आदेशेऽहमिति । कामाद्यरिसूदन ! अनुजानीहि अनुज्ञापयादिशेत्यर्थः ॥ १४ ॥

भूम्याख्ये स्थाने स्थितिं विधाय प्रजापालनं कर्तव्यमित्याज्ञां तावदाशङ्क्य परिहरति । यदोक इति । सर्वसत्त्वानां पिपीलिकादिसर्वप्राणिनां यदोक आवासस्थानं सा मही महाम्भसि प्रलयजले मग्नाभूत् हेदेव ! अस्या देव्या भूमेरुद्धरणे यत्नः क्रियतामित्यन्वयः ॥ १५ ॥

पूर्वमेव भूमेरभावं जानन्नपि ब्रह्मा प्रार्थनापूर्वकं कृतमेवोपकृतं स्यादिति मन्वानो भूमेरुद्धारमालोचयतीत्याह । परमेष्ठीति यथोन्नेतुमशक्या तथा सन्नां मग्नाम् ॥ १६ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अपार्थाय अपार्थत्वायेत्यर्थः यदात्मा नादृतः स्वयमिति परमात्मानादरेण स्वत एवात्मानादरात् ॥ १३ ॥ १४ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

यदोक्त इत्यादिकं पाद्मप्रसङ्गे ब्रह्मकयासूचनवद्वर्त्तमानकल्पजश्वेतवराहकथासूचनं ज्ञेयम्। यत्रैव स्वायम्भुवप्रसङ्गे प्राचेतसदत्तदौहित्रहिरण्याक्षवधरूपा चाक्षुषकथापि भविष्यति। अत्रतु श्यामतयाविर्भूत इति तमालनील इति वक्ष्यति। महाम्भसि गर्भोदके॥ १५॥ १६॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ननु प्रजानां स्वस्य च इन्द्रियभोगस्य प्रवृत्तिरूपत्वात् प्रवृत्तेः संसारहेतुत्वाच्च तुष्टोऽपि भगवान् सांसारिकमेव फलं दास्यतीति मुक्त्यसाधकत्वात् किं प्रजयेत्याशङ्क्य परिहरति। येषां न तुष्टो भगवानिति। स हि हृषीकेशः सर्गलीलायां जातेषु सर्गानुकूलकृत्यैव परितुष्यति विपरीतान्न तुष्यति तदा तोषे तु सर्वनाशः यतो भगवान् तस्मिन्नतुष्टे ऐश्वर्यादिवत् ज्ञानादिकमपि न सिद्ध्येत् अतो मोक्षोऽपि दूरे। किं च। यज्ञलिङ्गो भगवान् यज्ञा लिङ्गानि यस्य भगवदपरितोषे यज्ञफलमपि न स्यात् तदा नायं लोकोऽस्त्ययज्ञस्येति ऐहिकामुष्मिकफलासिद्धिः किंच जनार्दनो भगवान् जनामविद्यामर्दयतीति तेनाविद्यानाशोऽपि न भवेत् अतो मोक्षो नास्ति एवं ज्ञानाभावः क्रममुक्तौ लोकाभावः। अविद्यानाशाभावात् मुक्त्यभावश्चेति तेषां परलोकार्थं मुक्त्यर्थं वा श्रमः अपार्थः व्यर्थः तत्रोपपत्तिरुक्तैव ननु धर्मस्य कृतत्वात् कथं वैयर्थ्यमुपपत्तिविचाराभावेऽपि उत्पत्तिविचारेण फलं भविष्यतीत्याशङ्क्याह। यदात्मा नादृतः स्वयमिति नहि कृतघ्ने धर्मोऽस्ति आत्मानात्मनोर्विरोधे आत्मा बलीयान् अन्तरङ्गबहिरङ्गन्यायेनापि मुख्यगौणन्यायेनापि सर्वस्यात्मार्थत्वात् अर्थद्वयविरोधेऽर्थो बलीयान् इति न्यायेनापि आत्मा नादरे न देहादिभिर्धर्मः सिद्ध्यति यथाविक्षिप्तेन्द्रियस्य न शारीरो धर्मः फलाय नाप्यैन्द्रियो धर्मः विक्षिप्ते मनसि तथा भगवद्विमुखस्य न कोऽपि धर्मः सिद्ध्यति यदि देहाद्यनुरोधेन लोकानुरोधेन वा देहादिलोकानां बाधकत्वाद्वा भगवदादरं न कुर्यात् तदा तेषामेव दोषो भवेत् भगवांश्च तानेव दण्डयेत् यदि स्वयमेव आत्मा नादृतः स्वयमित्यव्ययं स्वत एव यदि भगवन्तं न मन्येत तस्य सर्वनाशो भवेदिति संग्रहः॥ १३॥

मनुना एतत्प्रार्थनं सत्यलोके कृतं सत्यस्थश्च ब्रह्मा तथाज्ञां दत्तवान् सोऽप्यविचारयन् भूमेर्मज्जनं न जानाति अज्ञात्वैव पृथिवीपरिपालनादिकं कुर्वित्युक्तवान् तदा पृथिवी मज्जनं ज्ञापयति। आदेशेऽहं भगवत इति। अहं तु भगवतः भवतः आदेशे आज्ञायामेव वर्तेय तिष्ठामि हे अमीवसूदन! पापनाशक! अमीवं पापं परं प्रजार्थं मदर्थं च इह सत्यलोके स्थानमनुजानीहि आज्ञापय देहीत्यर्थः यतः प्रजानां मम च भवानेव रक्षकः रक्षणसमर्थः तदाह। प्रभो इति॥ १४॥

पृथिवीतु मग्नेत्याह। यदोक्त इति। सर्वसत्त्वानां यदोकः स्थानं सा मही महाम्भसि प्रलयोदके च मग्ना तस्या उद्धरणे यत्नो वा विधीयतां देवेति संबोधनात् सत्यलोकस्थानदानापेक्षयापि भूम्युद्धारयत्न एव मुख्यः यतो भूमिर्देवयजनं यज्ञाश्च कर्तुं शक्याः किंच देव्याः पृथिव्याः सा पृथिवी त्वयैवोत्पादिता आदिवराहकल्पे ब्रह्मणैवोद्धृत्य पुष्करपर्णे प्रथितत्वात् तस्मात्सत्यादौ वा स्थानं देयं भूम्युद्धारे यत्नो वा कर्तव्यः उभयोर्मध्येभूम्युद्धारयत्न एव विशिष्टः अत एव न वाशब्दः अत्रत्रो कतरयंविगीतमस्ति इत्याकर्ण्येति मैत्रेयवचनं ब्रह्मणो वचनार्थं पीतं मया जलं सरीसृप इति॥ १५॥

एवं मनुवचनं श्रुत्वा तद्वचनपरीक्षार्थं ज्ञानदृष्ट्या भूमिं दृष्टवान् तदा खिन्नां तां दृष्ट्वा ब्रह्मा यत् कृतवान् तदाह। परमेष्ठीत्विति। स्वान्त्र्यपारतन्त्र्याभ्यां स्वतो युक्तिविचारणं भगवत्येव भारस्य स्थापनं चिन्तितं स्थिरं तत्र प्रथमं पूर्ववत्सृष्टिसामर्थ्येन तस्या उद्धारे यत्नं कृतवान् तत्र हेतुः परमेष्ठीति परमे सर्वोत्कृष्टे आसने तिष्ठतीति तुशब्दः सत्यादौ स्थानदानपक्षं निवारयति अपां मध्ये तथा मग्नामिति पूर्वमपि तस्याः तथावस्था स्मृता पूर्वं तु पुष्करपर्णे उपविष्टः नालस्याधारत्व विद्यमानत्वात् भगवदाश्रयत्वाच्च नालस्य तत्र रसातलपर्यन्तादानीय पुष्करपर्णे प्रथितवान् इदानीं तु सत्यलोके स्थितः कथं तामुन्नेष्यति क्व वा स्थापयतीति भवति चिन्ता पूर्वं परमेष्ठित्वादिसिद्ध्यर्थं चिन्तायां क्रियमाणायां साधनभूता यज्ञादयः पदार्था मनस्याविर्भवन्ति तथा प्रकृतेऽपि भविष्यतीति कालकृतदोषापहाराय चिरन्दध्यौ तत्रापि विवेकवत्या बुद्ध्या यया सर्वं साधनं स्फुरत्येव॥ १६॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

यज्ञैर्यजनैः अर्चनश्रवणकीर्त्तनाद्यैरेव लिङ्ग्यते ज्ञायते इति स यद्यस्मादात्मैव नादृतः परमात्मानादरेण स्वत एवात्मानादरात् तस्मिन्नतुष्टे स्वार्थस्यैवासिद्धेः॥ १३॥

वर्त्तेय वर्त्तिष्ये स्थानं वसतिस्थलं अनुजानीहि परामृश। अमीवसूदन! हे पापनाशन!॥ १४॥

ननु पूर्वपूर्वकल्पे मनवः कुत्र सप्रजा आसन्निति शास्त्रज्ञत्वात् त्वं जानासि न वेति चेत् सत्यं जानाम्येवेत्याह। यदोक इति॥ १५॥ १६॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

यज्ञलिङ्गः यज्ञमूर्तिः आत्मा सर्वेषामाश्रयः यतोयैर्नादृतः तेषां श्रमः कर्मज्ञानादिसाधनानुष्ठानम् अपगतोऽर्थः फलं यस्मात्तस्मै निःष्फलत्वायेत्यर्थः॥ १३॥

हेअमीवसूदन! स्थानमनुजानीहि इदं तवस्थानमिति अनुज्ञापय॥ १४॥

हेदेव॥ १५॥

गां महीम्॥ १६॥

---

भाषाटीका।

यज्ञ मूर्ति जनार्दन भगवान् को जिनने प्रसन्न नहीं किये उनका सब धर्म का श्रम व्यर्थही है क्योंकि उनने आत्मा का ही सत्कार नहीं किया॥ १३॥

मनुजी बोले हे पापनाशक! प्रभो ब्रह्माजी मैं आपकी आज्ञा में रहूंगा इहांपर प्रजावों का और हमारा रहने का स्थान बताइये॥ १४॥

* "पीतं मया जलं पूर्वं पृथिवी च निवेशिता ।
तथापि किमिदं साद्य प्लाव्यते पुनरम्बुभिः ॥ १७ ॥
प्रजादेवासुरपितृमनुष्यपशुपक्षिणः ।
सरीसृपान्नगान्नागान्भूतान्युच्चावचानि च ॥ १८ ॥"
सृजतो (१) मेक्षितिर्वार्भिः प्लाव्यमाना रसां गता ।
अथात्र किमनुष्ठेयमस्माभिः सर्गयोजितैः
यस्याहं हृदयादासं स ईशो विदधातु मे (२) ॥ १७ ॥
इत्यभिध्यायतो नासाविवरात् सहसाऽनघ ! ।
वराहतोको निरगादङ्गुष्ठपरिमाणकः ॥ १८ ॥
तस्याभिपश्यतः खस्थः क्षणेन किल भारत ! ।
गजमात्रः प्रववृधे तदद्भुतमभून्महत् ॥ १९ ॥
मरीचिप्रमुखैर्विप्रैः कुमारैर्मनुना सह ।
दृष्ट्वा तत्सौकरं रूपं तर्कयामास चित्रधा ॥ २० ॥

भाषाटीका ।

संपूर्ण जन्तुओं का निवास स्थान जो पृथिवी है सो तो महा प्रलय जलमे डूबगई है हे देव ! इस देवी के उद्धार का यत्न कीजिये ॥ १५ ॥

मैत्रेयजी बोले ब्रह्माजी ने जल के मध्यमें पृथिवीको डुबी देख कर इसको कैसे लावैं इस प्रकार देर तक चिंता करने लगे ॥ १६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

चिन्तामेवाऽऽह । सृजतः सतः वार्भिरद्भिः रसां रसातलम् ईश्वरेण सर्गे नियुक्ताः मेऽनुष्ठेयं स एव विदधातु संपादयतु ॥१७॥

वराहतोकः सूक्ष्मोवराहः ॥ १८ ॥

खस्थ आकाशे स्थितः सन् ॥ १९ ॥

चित्रधा अनेकधा ॥ २० ॥ २१ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

रसातलं तदवकाशदेशपर्य्यन्तं गर्भोदे मग्नेत्यर्थः अन्यथा रसातलस्य भूविवरत्वेन तत्र भुवो मज्जनानुपपत्तेः अथाऽतः यस्येत्यर्द्धकम् हृदयान्नाभिसरोजात्संकल्पमात्राद्वा मे अनुष्ठेयं कर्त्तव्यं सर्गम् अनुष्ठेयमित्यध्याहारात् "कर्त्तव्यं करुणासिन्धुस्तीर्थकीर्त्तिरधोक्षज" इत्यर्द्धं केनाप्यागन्तुकं कल्पितमिति निश्चीयते ॥ १७ ॥

अङ्गुष्ठाग्रप्रमाणतस्तावन्मात्रमङ्गीकृत्येत्यर्थः ब्रह्मनासातउत्पन्नत्वेऽपि न ब्रह्मपुत्रत्वव्यवहारः तादृशशुद्धभावाभावात्किन्तु वराहतोकत्वव्यवहार एव अङ्गुष्ठपरिमाणकइतिक्वचित्कपाठस्तु अङ्गुष्ठशिरोमात्रइति वक्ष्यमाणत्वादङ्गुष्ठाग्रप्रमाणइति तद्व्याख्यानाद्धेयः १८ ॥

गजमात्रस्तद्वत्परिमाणकः तद्वर्द्धनम् ॥ १९ ॥

तर्कयामास ब्रह्मा विचारितवान् ॥ २० ॥

———

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

चिन्तामेव प्रपञ्चयति । पीतमिति । सर्वंकृत्स्नं जलं प्रलयिकं जलं मया पीतं ततः पृथिवीच निवेशिता स्थापिता देवासुरादीन्प्रजाः मेमम सृजतः सतःवार्भिः जलैः प्लाव्यमानामज्जमाना-रसांरसातलं गता प्राप्ता अथानन्तरं सर्गे योजितैः प्रयुक्तैरस्माभिः किमनुष्ठेयं किं विधेयं यस्य भगवतो हृदयात्सङ्कल्पादहमासमुदभूवं स ईशो मे भगवान् विदधातु अनुष्ठेयं सम्पादयतु ॥ १७ ॥

चिन्तां निगमयन्वराहावतारं प्रस्तौति । इतीति । इत्युक्तरीत्याभिध्यायतः चिन्तयतो ब्रह्मणो नासाविवरान्नासिकाविवराद्वराहतोकः वराहपोतःअङ्गुष्ठपरिमाणतः प्रातिपदिकार्थेतसिः निरगान्निर्गतोऽभूत् हेऽनघ ! विदुर ! मयानेन चतुर्मुख एव वराहरूपोऽभवदिति शङ्क्यं तर्कयामास चित्रधा किमेतत्सौकरव्याजं सत्वं दिव्यमिति चतुर्मुखेनाप्यज्ञायमानतया विचारितत्वोक्तेः ॥ १८ ॥

तस्य ब्रह्मणः अभिपश्यतः सतः सूक्ष्मोवराहः खस्थ आकाशे स्थितः सन् क्षणेन गजमात्रः गजपरिमाणः प्रववृधे तदुत्पत्तिराकाशारोहणे वृद्धिश्चेति एतत्पश्यतामाश्चर्यमिवा भूत् इवशब्देन

(१) मेऽक्षिभिर्वाग्भिरिति श्रीवल्लभाचार्यपाठः ॥　* अयं विजयध्वजपाठः ॥
(२) यस्याह मित्यस्यानन्तरम् "कर्तव्यं करुणासिन्धुस्तीर्थकीर्तिरधोक्षजः"। इत्यधिके नाष्टादशत्वं श्रीवल्लभाचार्यपाठे ॥

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

पश्यतामेवाश्चर्यं न तु भगवतोवराहस्येति सूचितम् ॥ १९ ॥

ततोमरीचिप्रभृतिभिः पुत्रैः कुमारैः सनकादिभिः मनुना सह तत्सौकरं वाराहं रूपं दृष्ट्वा ब्रह्मा चित्रधा तर्कयामास ॥ २० ॥

———

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मज्जने निमित्तमाह । पीतामिति । यावता पीतेन जलस्योद्रेकः शाम्यति तावत्सर्वमित्युच्यते न तु निःशेषत्वेन अन्यथा वार्भिः प्लाव्यमानेत्यसंगतं स्यात् निवेशिता निवेशनीकृता वार्भिर्जलैः प्लाव्यमाना चञ्चलीक्रियमाणा लयं गता मग्ना प्रजानां भारेणेति शेषः सृजतः सतः अत्रास्यामवस्थायाम् ॥ १७ ॥

इदमेवानुष्ठेयमित्याह । यस्येति । सत्यसंकल्पस्य हरेर्भक्तत्वात् ब्रह्मापि सत्यसंकल्प इति इममर्थं ध्वनयन् हरेः प्रादुर्भावप्रकारमाह । इतीति । नासाविवरान्नासाविलात्सहसा सद्यो निरूपितत्वेन वराहतोको वराहशिशुः ॥ १८ ॥

तस्य ब्रह्मणः खस्थ आकाशे स्थितः ॥ १९ ॥

कुमारैः सनकादिभिः ॥ २० ॥

———

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

रसां गतेति तदवकाशपर्य्यन्तं मग्नेत्यर्थः । रसाया अपि महीविवरत्वात् यस्येत्यर्द्धकम् ! हृदयादासं सङ्कल्पमात्रात् ॥ १७ ॥

वराहतोको निरगादिति तादृशभावाभावान्न पुत्रत्वादिव्यवहार इतिज्ञापितम् । अङ्गुष्ठपरिमाणक इति कचित् किन्तु स्वामिभिरग्रेऽङ्गुष्ठाग्रप्रमाण इत्येव लिखिष्यते ॥ १८—२१ ॥

———

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तथाप्यस्फुरणे स्वातन्त्र्यं परित्यज्य भगवदधीनतया भगवत्कृपया साधनं स्फुरिष्यतीति सोपालम्भमिव तस्य चिन्तामाह । सृजत इति । पूर्वं स्थापितापि इयं भूमिः भारेण पुनर्निमग्ना भारे हेतुः मे अक्षिभिरिन्द्रियैः वाग्भिश्च सृजतः सतः अक्षिभिर्वाग्भिरिति स्त्रीपुरुषाविव निर्दिष्टौ तथा भावसर्गे दैत्यांशा एव प्राचुर्येणोत्पन्ना इति तेषां भारहेतुत्वं पूर्वमुक्तं वक्ष्यते च अत एव प्लाव्यमाना जले निमग्ना रसातलं गता तदवध्युद्धृतत्वात् अथ तदनन्तरमत्र एतादृशे अर्थे अस्माभिः किङ्कर्तव्यं नच तूष्णीं स्थातुं शक्यते सर्गे योजितैः सर्गकरणमेव ह्यस्मदादीनां प्रयोजनम् ॥ १७ ॥

एवं पारतन्त्र्येणापि विचारे क्रियमाणे यदोपायो न स्फुरितः तदा भगवत्येव भारं दत्तवान् भारदाने हेतुमाह । यस्याहमिति । यस्य हृदयाद्विचारपूर्वकं यस्मादहं जातः सर्गार्थमेनमुत्पादयामि अनेन कार्यं करिष्यतीति प्रथममेव विचार्य ब्रह्मासर्गे नियोजितः ततो ज्ञायते इदमपि कार्यं मम चेदशक्यं तदा भगवानेव करिष्यति यतः इदमपि पूर्वमेव विचारितवान् अयमसमर्थः इदमप्यहमेव करिष्यामि यतः ईशः समर्थेन हि कर्तव्यं नतु सेवकेनैवेति नियमः उभयोः सामर्थ्ये सेवकेनैव कर्तव्यं अत्र तु ईश इति मे कर्तव्यं विदधातु नन्वशक्तोऽपि लोके सेवक एव करोति न प्रभुः शक्तोऽपि तत्राह । करुणासिन्धुरिति । सेवकस्यातिकष्टेन कार्यं सिद्ध्यति स्वस्य त्वनायासेन तदा करुणावान् स्वयमेव करोति परदुःखेन दुखितत्वात् ननु करुणावानपि ऐश्वर्यगुणयोगात् अशक्तैः सेवकैरेव कार्यं कारयति अन्यथेशत्वं न स्यात् तत्राह । तीर्थकीर्तिरिति । करुणासिन्धुत्वे परिहारे सिद्धेऽपि दृष्टान्तार्थमिदं विशेषणं तीर्थरूपां कृतवान् अतो यथैतत्करोति तथा स्वयमेव भूम्युद्धारमपि करिष्यतीति भावः किंच अधोक्षजो भगवान् अधः अक्षजं ज्ञानं यस्मादिन्द्रियातीतोऽपि सर्वेषां सर्वेन्द्रियहितं करोति ज्ञानरूपो मूत्वा मोक्षं प्रयच्छतीति अथ वा व्यवहारातीतत्वेन लोकानामुद्धारार्थं कीर्तिमेव तथा कृतवानिति तथा करणे अधोक्षजत्वं हेतुः ॥

अयं पक्षः फलपर्यवसायी जात इत्याह । इत्यभिध्यायता इति । इत्यमुना प्रकारेण अभितो ध्यायतः स एवैतत्कार्यं करिष्यतीति निर्द्धार्य तथैव चित्तं दृढं विधाय भावयन् तथैव स्वयं क्षणे कदा भगवान् केन रूपेण करिष्यतीति अभितो ध्यानं करोति तदा कार्याविष्टचित्तेन यज्ञरूपे भगवति ध्याने [illegible] स्थानाभावात् आध्यात्मिकं रूपमप्रकटमेव कृत्वा आधिदैविकेन रूपेण प्रकटो जातः क्रियापि तत्र प्रविष्टेत्याधिदैविकत्वमि[illegible] पूर्वं तु आध्यात्मिक एव यज्ञैः स त्रेधा सम्पद्यते यजमान[illegible] प्रयत्नेन वैदिकज्ञानेन ध्यानारूढस्वरूपेण च स त्रिविधोऽपि एकीभूतः भगवान् वराहः तस्य क्रियैव यजमानस्य क्रि[illegible] स्वरूपं तु तदेव सर्वयज्ञात्मकं साधिकरणं श्रुतिस्तत्रैवान्तर्भूता इति ज्ञापयितुं ब्रह्मणः श्वासमार्गान्निर्गतः निश्वसितमस्य वेदा इतिश्रुतेः वरानाहरतीति वराहः सर्वकामप्रदः सचासौ तोकश्च तोको बालकः आध्यात्मिकादिरूपेषु प्रबुद्धस्यैव फलसाधकत्वं एकदेशत्वात् अत्र तु तोकोऽपि फलसाधकः सफलत्वात् स[illegible] सेति ध्यानांशव्यावृत्त्यर्थमन्यथा एकेनाप्यंशेन आध्यात्मिकता स्यात् अनघेति सम्बोधनं विश्वासार्थं नहि केनाप्यंशेन सपापं विश्वासमेति तस्य रूपस्य कालशरीरेश्वररूपत्वज्ञापनाय उत्पत्त[illegible] अङ्गुष्ठपर्वमात्रप्रमाणेन वहिर्निर्गतः "अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं [illegible] समाश्रितः ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक्" इतिश्रुते[illegible] अङ्गुष्ठमात्रप्रमाणस्यैव विश्वभोक्तृत्वमीशत्वं चोच्यते यज्ञरू[illegible] स्यैव विश्वभोक्तृत्वं तस्यैव हि सर्वमन्नं सर्वे पशवः अङ्गुष्ठशब्दः स[illegible] त्राङ्गुष्ठशिरोवाची ॥ १८ ॥

एवमाधिदैविकस्य उत्पत्तितः स्वरूपमुक्तं शान्तितः स्व[illegible] वक्तुं भगवत्त्वज्ञापनाय कालादेः परिच्छेदकत्वाभावाय त[illegible] सूक्ष्मस्य स्थूलतां निरूपयति । तस्याभिपश्यत इति । तस्य ब्रह्म[illegible] अभितः सर्वतः पश्यतः सतः रूपान्तरग्रहणे लोके जवनि[illegible] पेक्ष्यते । अत्र तु पश्यत एव पूर्वमङ्गुष्ठमात्रोऽपि पश्चाद्गज[illegible] जातः । तिरोभावशङ्कानिवारणार्थं खस्थः क्षणेनेत्युक्तम् आ[illegible] शस्थितत्वान्नावरणं वृद्धौ लौकिकस्य कालस्याभावात् नान[illegible] रणेन तस्यैव वृद्धिः किलेति प्रसिद्धेनात्र प्रमाणं वक्तव्य[illegible] त्यर्थः । भारतेति विश्वासार्थम् एवं माहात्म्यज्ञापनपूर्वकश्रोतृ[illegible] परिहृत्य स्थूलं रूपमाह । गजमात्रं प्रववृध इति । गजोहस्ती त[illegible] त्रमिति परिहायनरूपं वैष्णवशास्त्रसिद्धगजो वा गजेन्द्रः [illegible] एवं निर्द्धारणसूचकम् अन्यथा द्वितीयक्षणे ततोऽपि ताव[illegible] त्रं वृद्धः स्यात् । तथाच क्षणस्य इन्द्रियार्थसंयोग एवोपल[illegible] त्वात् क्षणेनेति वचनं व्यर्थं स्यात् प्रकर्षेण ववृधे [illegible] सर्वावयवेषु यथायोग्यवृद्धिः । अतएव तदद्भुतमभूत् यत्रैव [illegible] तां युक्त्यस्फुरणं कार्यदर्शनं च तदेवाद्भुतं महदिति कार्य[illegible]

किमेतत्सौकरव्याजं सत्त्वं दिव्यमवस्थितम् ।
अहो बताऽऽश्चर्यमिदं नासाया मे विनिः सृतम् ॥ २१ ॥
दृष्टोऽङ्गुष्ठशिरोमात्रः क्षणाद्गण्डशिलासमः ।
अपि स्विद्भगवानेष यज्ञो मे खेदयन्मनः ॥ २२ ॥
इति मीमांसमानस्य ब्रह्मणः सह सूनुभिः ।
भगवान् यज्ञपुरुषो जगर्जागेन्द्रसन्निभः ॥ २३ ॥
ब्रह्माणं हर्षयामास हरिस्तांश्च द्विजोत्तमान् ।
स्वगर्जितेन ककुभः प्रतिस्वनयता विभुः ॥ २४ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

नमपि संदिग्धं नहि समुद्रः सान्तो द्रष्टुं शक्यते । तथा भगवच्छरीरमित्यर्थः ॥ १९ ॥ -

तदा तेषां वस्तुनिर्द्धारार्थं विमर्शोजात इत्याह । मरीचिप्रमुखैरिति । मरीचिरेव प्रमुखो मुख्यो येषां ब्राह्मणानां त्रिविधास्तत्र ब्रह्मपुत्राः ब्राह्मणाः क्षत्रियाः कुमाराश्च कुमाराः सनकादयः अनुपनीताः अष्टमे वर्षे ह्युपनयनं तेतु पञ्चवर्षाः भगवदस्मरणचणैः । तावता कालेन पञ्चवर्षाणामेव निष्पादितत्वात् देहोपभोक्तृकालस्यैव कर्मनियामकत्वात् विशेषेण प्राप्नुवन्तीति विप्रा ब्राह्मणा एव मनुः क्षत्रियः । एवं मार्गत्रयस्थितैः सर्वैः सह चित्रधा विचित्रप्रकारेण "संख्याया विधार्थे धा„ इत्यत्र योगविभागाच्चित्रधेति ।सिध्यति तत्सौकरं रूपमिति लोके निन्दितरूपत्वात् यथा मलान्मधुकैटभादेरुत्पत्तिः तथास्यापि भवेद्वराहस्य दैत्योऽपि वराहः श्रुतिसिद्धः । वराहोऽयं वाममोष इति श्रुतेः । पशूनां वा एष मन्युः यद्वराह इति क्रोधावतारो वा भवेत् । एवमनेकप्रकारेण तर्कितवन्तः तर्को नाम प्रत्यक्षतो दृष्टस्य पदार्थस्य निर्वाहिकोपपत्तिः । यस्मिन् पदार्थे कल्प्यमाने दृष्टोऽर्थ उपपद्यते तत्र प्रकृते कोऽपि पक्षो न निर्द्धारित इति चित्रधेत्युक्तम् ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

रसां रसातलोपलक्षितं गर्भोदमित्यर्थः । रसातलस्य भूविवरत्वात्तत्र भुवो मज्जनानुपपत्तेः विदधात्विति अनुष्ठेयमित्यस्य पूर्वस्यानुषङ्गः ॥ १७ ॥

वराहतोकः सूक्ष्मो वराहः ॥ १८ ॥

गजमात्रः हस्तिशरीरपरिमितः ॥ १९ ॥ २० ॥ २१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु अपाद्धायुं सहाम्भसेति पूर्वोक्तेः जलपाने कृते पुनर्मही कुत्रासेत्यतआह । सृजतः पुनः प्रयोजनविशेषार्थं जलानि मुञ्चतः सत इत्यर्थः वार्भिर्जलैः रसां रसातलम् विदधातु सम्पादयतु ॥१७॥

वराहतोकः वराहबालकइत्यर्थः ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

---

भाषाटीका ।

मेरे सृष्टि करतें समय मे जलों की डुबाई पृथिवी पताल को चली गई अब हम जो लोग सृष्टि मे नियुक्त किये हैं तो हमको इस में क्या करना चाहिये ॥ १७ ॥

जिसके हृदय से मै हुआ हूं वह ईश्वर मेरे कार्य को सहाय करै हे अनघ विदुर! एसे ध्यान करते हुये ब्रह्माके नासिकाछिद्रमे से शीघ्रही एक ॥ वराह का बच्चा निकला सो अंगुठा के बरावर दीखा ॥ १८ ॥

देखते ही आकाश मे रहकर हे भारत क्षण मात्र मे हस्तीसरीका बढकर होगया तब बडा सबको आश्चर्य हुआ ॥ १९ ॥

मरीचि ब्राह्मण सनत्कुमादि मुनि मनु इन के सहित ब्रह्माजी उस सूकर रूप को देखकर अनेक प्रकार तर्क करने लगे ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

पूर्वमङ्गुष्ठाग्रप्रमाणो दृष्टः गण्डशिला स्थूलपाषाणस्तत्समः यज्ञो विष्णुः निजरूपतिरोधानेन मे मनः खेदयन् ॥ २२ ॥

इति मीमांसमानस्य सतः जगर्जागर्जत् गिरीन्द्रतुल्यः ॥ २३ ॥

गर्जनप्रयोजनमाह । ब्रह्माणमिति ॥ २४ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

शूकरव्याजं आकारेण शूकरसदृशं सत्त्वं प्राणिविशेषः सत्त्वं गुणे पिशाचादौ बलेऽपि द्रव्यभावयोरिति मेदिनी ॥ २१ ॥

निजरूपं चतुर्भुजं तस्य तिरोधानेनादृष्टरूपाविर्भावनेन च संशयैर्मनः खेदयन् २२ ॥

गर्जनस्य मैत्रेयकथनात्पूर्वं चिरमतीतत्वाद्गर्जदिति लकारव्यत्ययो व्याख्यातः ॥ २३ ॥

प्रतिस्वनयता प्रतिध्वनिमतीः कुर्वता ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

तर्कमेव प्रपञ्चयति । किमिति द्वाभ्याम् । दिविभवं दिव्यं परमव्योमनिलयं शुद्धसत्त्वमयं परब्रह्मसत्त्वं सूकरः व्याजं सूकरः व्याजः छद्मवेषो यस्य स तदेवमवस्थितं किंशब्दोविचारद्योतकः मेममनासाया इदंवराहरूपं विनिः सृतं विनिर्गतमहोवताश्चर्यं ॥ २१ ॥

अङ्गुष्ठस्य शिरः ऊर्ध्वपर्व तदेवमा त्राणां यस्य सः प्रथमं दृष्टः पश्चात् क्षणेन गण्डशिलासमः स्थूलपाषाणमात्रोदृष्टः यज्ञोविष्णुः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यज्ञोवै विष्णुरितिश्रुतेः मे मनः खेदयति निजरूपतिरोधानेन मोहयन्नेव भगवानपि खिद्येत वराहमूर्तिर्भगवानपि स्वित् अपिस्विच्छब्दः सम्भावनायां भगवान् स्यादित्यर्थः ॥ २२ ॥

तर्कमुपसंहरन् वाराहतनोर्भगवतश्चरित्रं संग्रहेणाह । इतीत्यादिना यावदध्यायसमाप्ति । इत्युक्तरीत्या सूनुभिर्मन्वादिभिः सहतस्य ब्रह्मणः मीमांसतः तर्कयतः सतः अगेन्द्रसन्निभः गिरीन्द्रसदृशो भगवान् यज्ञपुरुषः जगर्जागर्जत् ॥ २३ ॥

ब्रह्माणमिति । विभुर्हरिर्वराहः ककुभः दिशः प्रतिस्वनयता प्रतिध्वनियुक्ताः कुर्वता स्वगर्जितेन ब्रह्माणं तांश्च द्विजोत्तमान् मरीच्यादीन् हर्षयामास ॥ २४ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सौकरं सूकरस्य विद्यमानं तर्कयामास मीमांसितवान् मीमांसा प्राकारं वक्ति किमेतदिति अहो इत्यनेन निकटवर्तिनो मुनीनुन्मुखीकरोति वत खेदयन् ॥ २१ ॥

किंबहुनेदं महाश्चर्यम् अङ्गुष्ठशिरोमात्रः अङ्गुष्ठाग्रपरिमाणः "गलितः स्थूलपाषाणा गण्डशैला इति स्मृता" एष वराहोमे मनः खेदयन् यज्ञोभगवानपि खित् ॥ २२ ॥

ब्रह्मणः सहसोत्पन्नाज्ञाननिरासप्रकारमाह । इतीति । मीमांसतोमीमांसमानस्य सतः मरीच्यादि सूनुभिः ॥ २३ ॥

गर्जितफलमाह । ब्रह्माणमिति । प्रतिस्वनयता प्रतिध्वनिमतीः कुर्वता गर्जितेन ॥ २४ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

खेदयन् अदृष्टरूपाविर्भावेन संशयैर्मनः क्षोभयन् ॥ २२ ॥

जगर्ज तदनुमतिं कुर्वन् हुङ्कृतवानिव । अगेन्द्रो महान् गिरिः ॥ २३ ॥

स्वेन असाधारणेन गर्जितेन ॥ २४ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यदा लोकवेदानुसारितर्कैः पदार्थनिर्द्धारणे अशक्तः तदा अलौकिकप्रकारेण पदार्थमुत्प्रेक्ष्यते । किमेतदिति । शूकरइति व्याजमात्रं दिव्यमेवैतत्सत्त्वं न प्राकृतं दिव्यत्वं निरूपयति । अहोइत्याश्चर्ये वर्तेति खेदे तेजःप्रागल्भ्यादेः परिदृश्यमानत्वात् अस्मदाद्यपेक्षयाप्यलौकिकतेजस्त्वात् किंचित्कारणभूतं तत्त्वमेव परं तस्य शूकररूपता अत्याश्चर्ये हेतुः खेदस्तु महतो विरूपत्वात् । आश्चर्यान्तरमाह । आश्चर्यमिदमिति । कालकर्मस्वभाववशेन महतोऽपि हीनभावः सम्भवति । तथापीदमत्याश्चर्यं यन्ममैव नासापुटान्निःसृतं नहि पुरुषात्सूकरा उत्पद्यन्ते तत्रापि नासिकायाः अनेन योनिरपि विजातीया नास्तीत्युक्तम् ॥ २१ ॥

आश्चर्यान्तरमाह । दृष्टइति । अङ्गुष्ठस्य शिरः उत्तमं पर्व तावन्मात्रा प्रमाणं यस्य दृष्ट इति प्रथमदर्शनं नासाद्वारस्य तावन्मात्रत्वादुपपत्त्योक्तं ब्रह्मणो ज्ञानस्य कालाद्यतीन्द्रियविषयत्वाद्वा अतएव क्षणादित्युक्तम् ब्रह्मवाक्यत्वात् न लौकिकन्यायेनाल्पः कालो लक्ष्यते पर्वतात् ज्युनाः स्थूलाः पाषाणाः गण्डशिलाः तैरुपमीयत इति परुषगुरुत्वादिभिरुच्यते अचेतनत्वादिन्तः खेदसूचकः स्वस्य पर्वतत्वेन वज्रेण छेद इव खेदसूचकः भाश्चर्यखेदौ वाक्यमेण निरूपितौ एवमलौकिकप्रकारेण पदार्थे तर्क्यमाणे निर्द्धारो न भवति बीजमेवहि तर्के निर्द्धारितं न प्रयोजनं नहि दिव्यस्यापि सत्त्वस्य प्रकटे प्र जनमस्ति भूम्युद्धारार्थं भगवान् ध्यातः अत एव भूम्युद्धारार्थे रूपेण प्रकट इति सम्भावना । ननु पुरुषोत्तमस्य किलोके निन्दितरूपेण प्राकट्ये कारणमित्याशङ्क्य खेदजनकत्वमेव कारणमुत्प्रेक्ष्यते । मे खेदयन्मन इति । अपीति सम्भावनायां खित् निश्चये पूर्वं बहवः पक्षा उत्प्रेक्षिताः तत्रायं निर्द्धारितः प्र अतोभगवान् परमेश्वर एवायं तद्यानन्तरूपेषु यज्ञरूपं मर्तुमर्हति प्रकृतोपयोगित्वात्कालमन्युरूपत्वेन दैत्यत्वं च सम्भाव्यते रूपेण अन्यथा दैत्यवधो न स्यात् मर्यादायां क्रूरैः क्रूरहननात् इयं यज्ञरूपा भूमिः । वराहेणैव संरक्ष्यते । तः दैत्यानां यज्ञाधिकरणवेदिः दैत्यवधं कृत्वा यदानीयते तदा देवानां पूर्णोयज्ञो भवति । ब्रह्मणा हि सर्वेभ्यो यज्ञा दत्ताः सर्वे करणाः । तेषां च वाममोषो वराहः हननं तु विपक्षे सति अतस्तादृशरूपमवश्यं कर्तव्यमापतितमिति ब्रह्माण्ड्मुपादाय इव यज्ञ एव वराहरूपं कृतवान् अन्यस्य बीजप्रयोजनोपपत्त्यर्थत्वं न सम्भवति ॥ २२ ॥

अयमपि पक्षः कार्ये निर्व्यूढे फलतो निर्द्धारितो भविष्यतीति फलनिष्पत्तिपर्यन्तं ब्रह्मणो विचार एव जात इत्याह इतीति । सूनुभिर्मरीच्यादिभिः सह ब्रह्मणो विचारं कुर्वत एव सतः शीघ्रं विचारान्तरानुत्पत्तये तेषां हृदयं ज्ञात्वा भगवान् यज्ञपुरुषः जगर्ज । पूर्वं गण्डशैलसमानोऽपि पुनस्तथा वृद्धभावेन मेरुसदृशो जातः । भगवानिति ऐश्वर्यादेः प्रकटितत्वात् नहि स्फूर्तिः । यज्ञांशो वराहरूपता अधिष्ठातृरूपत्वेतु पुरुषत्वं तेन यज्ञपुरुषो वराहः अनेन ब्रह्माणं प्रति स्वस्य पुरुषरूपमपि प्रदर्शितामिति खेदोऽपि निराकृतप्रायः । यथा समेघः पर्वतो गर्जति एवं भगवानेक एव गर्जतीत्यर्थः संशब्दार्थश्चायम् ॥ २३ ॥

अत एव ब्रह्मणो हर्षो जात इत्याह । ब्रह्माणमिति । हरिरिति तथात्वं स्वभावः तानिति मीमांसकान् ब्रह्मणो द्विरूपो हर्षः तेषामेकरूप इतिभिन्नतया निर्देशः हर्षणे हेतुः । द्विजोत्तमानिति यज्ञत्वात्तेषां हर्षः चौर्यनिराकरणार्थं तथा गर्जनं कृतवान् यः सर्वत्र दिक्षु प्रतिध्वनिर्जातः तदाह । ककुभः प्रतिस्वनयता स्वगर्जितेनेति ननु किमित्येवं कृतवान् तत्राह । विभुरिति ॥ २४ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यज्ञः प्रथममन्वन्तरावतारः । खेदयन् अदृष्टरूपाविर्भावेन संशयैर्मनः क्षोभयन् २२—२३ ॥

ककुभो दिशः प्रतिस्वनयता प्रतिध्वनिमतीः कुर्वता ॥ २४ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

गण्डशिलासमः स्थूलपाषाणतुल्यः ॥ २२ ॥

इत्येवं चिन्तयतः सतः ॥ २३ ॥ २४ ॥

———

भाषाटीका ।

क्या यह सूकरके बहाने से कोइदिव्य जंतु उत्पन्न

निशम्य ते घर्घरितं स्वखेदक्षयिष्णु मायामयसूकरस्य ।
जनस्तपः सत्यनिवासिनस्ते त्रिभिः पवित्रैर्मुनयोऽगृणन् स्म ॥ २५ ॥
तेषां सतां वेदवितानमूर्तिर्ब्रह्माऽवधार्याऽऽत्मगुणानुवादम् ।
विनद्य भूयो विबुधोदयाय गजेन्द्रलीलो जलमाविवेश ॥ २६ ॥
उत्क्षिप्तवालः खचरः कठोरःसटा विधुन्वन् खररोमशत्वक् ।
खुराहताभ्रः सितदंष्ट्र ईक्षाज्योतिर्बभासे भगवान् महीध्रः ॥ २७ ॥
घ्राणेन पृथ्व्याः पदवीं विजिघ्रन् क्रोडापदेशः स्वयमध्वराङ्गः ।
करालदंष्ट्रोऽप्यकरालदृग्भ्यामुद्वीक्ष्य विप्रान् गृणतोऽविशत्कम् ॥ २८ ॥

भाषाटीका ।

हुआ है अहो बडा आश्चर्य है कि हमारे नासिका मे सें यह निकला है ॥ २१ ॥

अंगुठा के अग्र भाग सा दीखा क्षण मात्र मे डुँगर सरी का होगया सो क्या यह यज्ञ स्वरूप भगवान् तो नहीं हैं जो हमारे मन मे खेद पैदा करते हैं ॥ २२ ॥

पुत्रों के सहित ब्रह्मा के ऐसे विचार करते मे पर्वत सरीके यज्ञ पुरुष भगवान् ने गर्जना की ॥ २३ ॥

व्यापक हरि भगवान् ने सब दिशों मे पूरित होने वाले अपने गर्जित से ब्रह्मा को और उन सब मुनियों को संतुष्ट किया ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

घर्घरितं तज्जात्यनुकरणध्वनिम् अनिश्चयेन यः स्वखेदस्तस्य क्षयिष्णु क्षपयिष्णु नाशकम् ते इति पुनरुक्तिः प्रसिद्धिख्यापनार्था त्रिभिः पवित्रैर्ऋग्यजुःसाममन्त्रैरगृणन्नस्तुवन् ॥ २५ ॥

वेदैर्वितन्यते स्तूयते मूर्तिर्यस्य सः अतएवात्मनो गुणाननुवदति तथा तत्तेषां ब्रह्म उच्चरितं वेदमवधार्य ज्ञात्वा ॥ २६ ॥

कथम्भूतः सन्नाविवेशेत्यपेक्षायामाह । द्वाभ्याम् । उच्चैः क्षिप्तो वालः पुच्छो येन खचर आकाशचारी कठोरः कठिनः सटाः स्कन्धवालान् खराणि तीक्ष्णानि रोमाणि यस्याः सा त्वग्यस्य खुरैराहतान्यभ्राणि येन सितदंष्ट्रोऽतिशुक्लदंष्ट्रः ईक्षा निरीक्षणमेवज्योतिरालोको यस्य तदा प्रकाशान्तराभावात् बभासेऽशोभत महीध्रः पृथिव्या उद्धर्ता ॥ २७ ॥

क्रोडापदेशो वराहच्छद्मा अतः स्वयमध्वराङ्गोऽपि पशुरिव घ्राणेन विजिघ्रन् गृणतः स्तोतॄन्विप्रानुद्वीक्ष्योर्ध्वं वीक्ष्य कञ्जलमाविशत् ॥ २८ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

मायामयस्य कृपाप्रचुरस्य ज्ञानस्वरूपस्य वा किम्वा मायाया अविद्याया अपि आमयोरोगोयस्मात्सतथाः ते प्रक्रान्ताः पुनस्ते प्रसिद्धाः ॥ २५ ॥

अतएव वेदवितानमूर्त्तित्वादेव ॥ २६ ॥

सन्ति यस्यामिति पूरणीयमन्यथाशप्रत्ययार्थोनव्यज्येत तदा सटैः पूर्वम् ॥ २७ ॥

यातु प्रकृतस्यान्यथाकृतिः सात्वपह्नुतिरितिलक्षणात् स्तना पदेशंफलयुग्ममेव धत्ते मृदुः काञ्चनवल्लिरेषेति वदपह्नुत्यलङ्कारोऽयं तेन क्रोडत्वस्य वास्तवत्वम् ॥ २८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

निशम्येति । मायामयसूकरस्याश्चर्यप्रचुरसूकरतनोर्घुर्घुरितं तज्जातीयानुकाररूपघुर्घुरितध्वनिं निशम्य ते जनस्तपः सत्यलोकनिवासिनः जनस्तपइत्यत्र सुडागमआर्षः मुनयः कथं भूतं घुर्घुरितं स्वखेदक्षयिष्णु स्वेषांसम्बन्धिनां यःखेदः तं क्षपयति तच्छीलं आत्मीयदुःखनिरसनस्वभावं ते मुनयः पवित्रैस्त्रिभिः ऋग्यजुःसामसूक्तैरगृणन् स्मास्तुवन् खलु ते इति पुनरुक्तिः प्रसिद्धिख्यापनाय ॥ २५ ॥

तेषामिति । वेदवितानमूर्तिः वेदैर्वितन्यत इति वेदवितानः यज्ञः सएव मूर्ति र्यस्य स भगवान् तेषां सतां मरीच्यादीनामात्मनो ये गुणाः कल्याणगुणाः तानुवदतीति तद्ब्रह्म वेदमवधार्य श्रुत्वा भूयः पुनः विनद्य घुर्घुरितं कृत्वा विबुधानां ब्रह्मादीनामुदयाय श्रेयसे जलमाविवेश कथं भूतः गजेन्द्रस्येव लीला यस्य सः ॥ २६ ॥

पुनः कथम्भूतो विवेशेत्यपेक्षायामाह । उत्क्षिप्तइतिद्वाभ्याम् । वराहं विशिनष्टि । उत्क्षिप्तः वालः पुच्छं येन सः खचरः आकाशचारी कठोरः कठिनः सटाः कन्धरास्थाः केशास्तान् विधुन्वन् खराणि रोमाणि यस्यां सा त्वग्यस्य सः खुरैराहतान्यभ्राणि येन सः सिते दंष्ट्रे यस्य सः ईक्षा निरीक्षणमेव ज्योतिरालोको यस्य सः प्रकाशमाननेत्र इत्यर्थः महीध्रः मह्या उद्धर्ता भगवान् बभासे ॥ २७ ॥

किञ्च घ्राणेनेति । क्रोडाप्रदेशः वराहच्छद्माऽतः स्वयमध्वराङ्गोऽपि पशुरिवाघ्राणेन पृथ्व्याः पदवीं विजिघ्रन्नन्वेषयन्निवेत्यर्थः कराले पङ्क्ले दंष्ट्रे यस्य तथा भूतोऽप्यकरालदृग्भ्यां सौम्य दृष्टिभ्यां गृणतः स्तोतॄन्विप्रानुद्वीक्ष्यऊर्ध्वं वीक्ष्य कं समुद्रजलमविशत् ॥ २८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अयं हरिरिति ज्ञात्वा एतैःकिमकारीति तत्राह । निशम्येति । मायामयसूकरस्येच्छामयवराहस्य स्वखेदक्षयिष्णु स्वखेद विनाशकरं घर्घरितं सूकराणां नादविशेषं श्रुत्वा जनादिलोक-

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

निवासिनोमुनयस्त्रिभिः पवित्रैर्निर्दोषवेदैस्तं यज्ञपुरुषमगृणन्नित्यन्वयः स्मेत्यनेन गुणानुपूर्वकस्तुतिं सूचयति जनस्तपइति छन्दोभङ्गभयाद्वेदानुकारित्वाद्वाविसर्गान्तम् ॥ २५ ॥

स्तुतिस्तत्प्रसादजननी समभूदिति भावेनाह। तेषामिति। वेदानां वितानेन विस्तरेण प्रतिपादिता मूर्तिर्यस्य स तथा यद्वा वेद एव वितानमुल्लोचमुपरिपतदवकरनिवारणवस्त्रं यस्याः सा वेदवितानाा तादृशी मूर्तिर्यस्य स तथा यज्ञवितानमूर्तिरिति पाठे यज्ञविस्तारेषु गृहीतमूर्तिरित्यर्थः आत्मनोज्ञानानन्दादिगुणानामनुवादोयस्मिंस्तत्तथा ब्रह्मस्तुतिलक्षणंवेदमवधार्य ननद ननाद भूय इत्युभयत्र सम्बध्यते जलं प्रलयजलम् ॥ २६ ॥

तत्तद्योनि जानां तत्तत्क्रियायां तत्तद्भावोऽनिवार्य इति जलप्रवेशे तद्भावं वक्ति। उत्क्षिप्तेति! स भगवान् महीध्रः नारायणाख्यः पर्वतः कंप्रलयजलमविशदित्यन्वयः तं विशिनष्टि। उत्क्षिप्तवालउद्धृतपुच्छः अन्यत्रोन्नतकपोलः "वालं तु कपिलं वज्रं ह्रीवेरं दीर्घरोमकम्" इत्यभिधानात् ह्रीवेरं वा खे आकाशे चरतीति खचरः उभयत्र समानं कठोराः परिदृढाः सटाः बहलकेसरान् धुन्वन् कम्पयन् अन्यत्र सटां लताविशेषाः खरा परुषा रोमवतीत्वग्यस्य स तथोक्तः अन्यत्र रोमशः पिचुमन्दः खरापिचुमन्दस्य त्वग्यस्मिन्' स तथा खुरैराहतमभ्रं येनासौ खुराहताभ्रः संताडितमेघः अन्यत्र खुरैः शृङ्गैः सितशृङ्गोधवलदंष्ट्रः अन्यत्र स्पष्टम् ईक्षाया नेत्रस्य ज्योतिस्तारा कनीनिका तया विभासोविभासनं दीप्तिर्यस्य स तथोक्तः यद्वा दर्शनाख्याग्नि ज्वालयाशोभमानः २७॥

घ्राणेनेन्द्रियेण विजिघ्रन् गन्धोपादानं कुर्वन् क्रोडापदेशोदेवकार्यनिमित्तेन वराहः नतु साक्षाद्वराहः किन्तु स्वयं स्वतोऽध्वराङ्गोयज्ञमूर्तिः श्रीनारायणः पूर्वत्र पर्वतोपमत्वेन दंष्ट्रोक्तिरत्र अशान्तत्वद्योतनायेति न पुनरुक्तिः अध्वरस्य अङ्गानि कुशादीनि साधनानि यस्मिन् सोऽध्वराङ्ग इति वा "अपदेशोलक्षणेस्यान्निमित्तव्याजयोरपि" इति यादवः ॥ २८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

मायात्र कृपैव ॥ २५ ॥ २६ ॥

खराणि रोमाणि सन्ति यस्याः सा त्वक् यस्य ॥ २७ ॥

क्रोडापदेशः प्राकृतक्रोडव्याजः । स्वयं तु अध्वराङ्गत्वादप्राकृतक्रोडाकृतिरित्यर्थः । स्वभावोऽपि क्रोडस्येव दर्शित इत्याह। घ्राणेनेति। आकृत्या अन्येषामुग्रोऽपि कृपादृष्टया भक्तानां परमसुकोमल इत्याह। करालेति ॥ २८—३० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

हयानां कार्यमाह। निशम्येति। घर्घरितमिति तज्जात्यनुकरणशब्दः मायायां [illegible]वाची सर्वेषामेव गृहं संपादयिष्यामीति गृहोपरि वा गृहं शरीरं गृहं चेति वा अत एव स्वखेदक्षयिष्णु सर्वेषां भूमावेव प्रतिष्ठा जनादिष्वपि भूमेरेवार्थसिद्धिः संबन्धिनामुद्धारार्थं वा अधिकारिणां खेदनिवृत्त्यर्थं वा स्वमीमांसितस्य अङ्गीकारेण वा ननु पश्वनुकरणेन कथं खेदनिराकरणं तत्राह। मायामयसूकरस्येति। दैत्यान् व्यामोहयितुं मायया तथारूपं कृतवान् मायामयत्वमिति वचनान्प्रदर्शकत्वं वेदे हि कर्ममार्गे अत्यन्तभ्रमजनकत्वात्।

आलम्भने फले चैव यज्ञरूपे तथोद्गमे।
उपाख्यानेषु सर्वेषु भ्रमो वैजायते श्रुतौ ॥ १ ॥
आधिदैविकरूपेऽपि मोहकत्वं तथासुरे।
यथास्वस्मिन्नीचबुद्धिः ततोऽपि भगवत्युत ॥ २ ॥

सूकर इति पूप्रसव इति प्रसवकर्ता।

वेदा ह्युत्पादिताः सर्वे मुक्त्यर्थं हीनभावताम्।
धारयिष्यन्ति समलाः ततः सूकर उच्यते।

जनस्तपः सत्यनिवासिन इति। त्रिविधा अपि सा[illegible] उक्ताः तैरेव स लोकः प्राप्यत इति त्रिभिः पवित्रैर्वेदत्रयेण मा[illegible] नीयैः पवमानादिभिर्वा एतेषां तु कथा भगवत्प्रसिद्ध्यर्थं मन[illegible] ज्ञानदार्ढ्यं स्मेति लौकिकी प्रसिद्धिः ॥ २५ ॥

एवं सर्वान् ज्ञापयित्वा यदर्थमवतीर्णः तत्कृतवानित्या[illegible] तेषामिति। तेषां स्तोत्रकर्तॄणां ब्रह्मवेदं भगवतो यज्ञस्य गुणा[illegible] वादनरूपमवधार्य निश्चित्य वेदोक्तो यज्ञवितानः मूर्तिर्यस्य वेदवि[illegible] ताना वा मूर्तौ यस्य भगवतोऽनन्तरूपत्वात् अनन्तशाखा[illegible] सतामिति तथाकरणे ज्ञाने च हेतुः विनन्द्य विनन्दनमभिनन्द[illegible] भूयोऽभिनन्दनं प्रत्येकं ब्रह्मवद्भगवानपि दैत्यादीनामप्युपका[illegible] करिष्यतीत्याशङ्क्याह। विबुधो दयायेति। देवानामेवाभ्युदयो[illegible] दैत्यानामिति ननु भगवान् सर्वसमर्थः सर्वगश्च तत्पाताल प[illegible] भूतः कथं न भूमिमाहृतवान् तत्राह। गजेन्द्रलील इति। गजेन्द्रस्य लीलेव लीला यस्य कथमत्र गजेन्द्रः जले प्रविष्टः क्रीडितवानि[illegible] तां क्रीडामनुकर्तुं गजेन्द्रस्य वा भक्तत्वख्यापनाय सहि भगवल्ली[illegible] लामेव कृतवानिति।

एका भगवतो लीला नानाकार्यप्रवर्तिका।
भक्तानां सर्वसौख्यार्थं लीलां चक्रे तथा विधाम् ॥ २६ ॥

तदानींतनां भगवन्मूर्तिं लीलासहितां वर्णयति। उत्क्षिप्त[illegible] वाल इति द्वाभ्याम्। स्वरूपक्रियावर्णनभेदेन तत्र प्रथमं स्वरू[illegible] वर्णयति ऊर्ध्वं क्षिप्तो वालः पुच्छं येन पुच्छं तस्य दीर्घ[illegible] दीर्घं कृशहेतुश्च स एव यज्ञे उत्सवाहेतुरिति ज्ञापयितुं खचर आकाशचरः सहि सर्वेषु यज्ञियपदार्थेषु आविष्ट इव असंल[illegible] एव तिष्ठतीति अनेन यज्ञः पशुषु प्रतिष्ठितः क्रियामय इति ज्ञाप[illegible] यितुं बलकार्यत्वात् कठोरः कठिनः निष्ठुरात्मकः मन्युरूपत्वा[illegible] खरा रोमशा त्वग्यस्य परुषा हिंसादिजननात् रोमशा बहि[illegible] भूयस्त्वात् त्वगुपरितनो भागः आकृतिस्तु लोकप्रसिद्ध[illegible] तादृशी खुरैः आहतानि अभ्राणि येन भगवतः पादचतु[illegible] स्तोमरूपं मिलितं सत् सवनद्वयात्मकं भवति तत्रैव प[illegible] सोमश्च सर्वः वृष्टिकार्यरूपो हन्यते सवनाभ्यामेव सर्वजन[illegible] त्कृतं मेघैर्जलं पूरितं ते अवश्यं दूरीकर्तव्याः अन्यथा तेषु पृ[illegible] वीस्थापने पृथिव्या अस्थिरता स्यात् जलमेघयोर्मध्ये स्थाप[illegible] पि मेघैः प्लावितं स्यात् खुरैरेवाहतत्वात् अन्यत्र स्थि[illegible] तत्र वृष्टिं करिष्यन्तीति मेघानां न सर्वथा नाशः सिता दं[illegible] यस्य वीक्षैव ज्योतिर्यस्य पृथिव्यास्थापनशोपणार्थं दंष्ट्रा[illegible] कीर्तनं मृत्योरतिक्रमार्थं कृपावलोकनार्थं च अतो भूमा[illegible] मृत्योरिति क्रमः भगवत्कृपा चेति [illegible]पितं बभास इति स[illegible] प्रमाणेन स्तुतः महीध्र इति पृथिव्युद्धारेण सर्वोपकार[illegible] यात् सर्वैस्तूयमानत्वं सर्वे हि महीध्राः लोकप्रसिद्धाः प[illegible] अयं तु भगवान् महीध्रः ऐश्वर्यादिगुणयुक्तोऽपि भारं वह[illegible] दयालुत्वम् ॥ २७ ॥

स वज्रकूटाङ्गनिपातवेगविशीर्णकुक्षिः स्तनयन्नुदन्वान् ।
उत्सृष्टदीर्घोर्मिभुजैरिवार्तश्चुक्रोश यज्ञेश्वर ! पाहि मेति ॥ २९ ॥
खुरैः क्षुरप्रैर्दरयंस्तदाप उत्पारपारं त्रिपरूरसायाम् ॥
ददर्श गां तत्र सुषुप्सुरग्रे यां जीवधानीं स्वयमभ्यधत्त ॥ ३० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं रूपं वर्णयित्वा क्रियां वर्णयति। घ्राणेनेति। पृथ्व्याः पदवीं घ्राणेन विजिघ्रन् सा हि गन्धवती गन्ध एव तस्याः व्यावर्त्तकः येन मार्गेण पृथ्वी गता स एव मार्गस्तस्य गमने साधीयान् तत्र हि जलं विरलं विशेषतो घ्राणम्। क्रोडापदेश इति। वराहरूपलीलाव्याजार्थमेव सर्वज्ञोऽपि गृहीतावतारः देहानुसारेणैव चेष्टां करोतीति घ्राणेनैव पृथिवीमार्गज्ञानं क्रीडनस्य विचारात्मकस्य मीमांसाशास्त्रस्य व्यपदेशमात्रमत्र यत् कर्मप्राधान्यमिति देवता या एव प्राधान्यात् तामेवोपपादयति। स्वयमध्वराङ्ग इति। अध्वराः अङ्गानि यस्य सर्वयज्ञात्मक इत्यर्थः अध्वनि रवो यस्येत्यध्वरः सर्वत्रैव मार्गे अस्यैव शब्दः न हि यज्ञव्यतिरेकेण कश्चिन्मार्गोऽस्ति अन्ये खण्डितास्तादृशानामप्यप्रामाण्यार्थमङ्गपदं यद्यप्ययं पशूनां घातकत्वेन प्रसिद्धस्तथाप्यग्रे ज्ञानप्रद इति सर्वोपास्य इति ज्ञापयितुमाह। करालदंष्ट्रोऽप्यकरालदृग्भ्यामिति। विप्रानुद्वीक्ष्येति सर्वेषां हि सर्वथा हितकर्त्तृषु भगवतो ज्ञानं कृपा चेति गृणत इति ज्ञानकृपयोः भक्तिः हेतुरित्युक्तं कं जलमाविशत् भक्तान् ज्ञानसम्पन्नान् कृत्वा अन्येषामुद्धारार्थं स्वयं सुख इव जले प्रविष्टः ॥ २८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

मायामयस्य कृपामयस्य ज्ञानमयस्येति वा मायाया अविद्याया अपि आमयो रोगो यस्मात् तस्येति वा घर्घरितं तज्जात्यनुकरणध्वनिं खेषां तदनिश्चयेन पृथिव्या अनुपालम्भेन वा यः खेदस्तस्य क्षयिष्णु नाशकं ते ब्रह्मादयोऽगृणन् अस्तुवन् तथा ते प्रसिद्धा जनादिवासिनो भृग्वादयो मुनयस्त्रिभिः पवित्रैः ऋग्यजुःसाममन्त्रैरस्तुवन्निति ते इत्यस्य द्विःपाठाद्व्याख्येयम् ॥ २५ ॥

वेदवितानरूपा सर्ववेदमयी नतु प्राकृती मूर्तिर्यस्य सः । वेदानां भगवन्निःश्वासरूपत्वात् भगवन्निश्वासस्यैव लीलया ब्रह्मनासाप्रविष्टस्य शूकररूपत्वं ज्ञेयम्। अतस्तेषां मुनीनामात्मगुणानुवादं तन्मुनिकर्तृकमात्मगुणानुकथनमेव ब्रह्म वेदमवधार्य ज्ञात्वा ॥ २६ ॥

जलं प्रविशतस्तस्य ध्यानमाह। उच्चैः क्षिप्तो वालः पुच्छं येन सः। खचर इति ब्रह्मलोकादाकाशमार्गेणैव त्रिलोक्यामवततारेत्यर्थः खररोमयुक्ता त्वग् यस्य सः। ईक्षैव ज्योतिषी चन्द्रसूर्याविव यस्य सः। महीध्रः पृथिव्या उद्धर्त्ता पर्व्वततुल्यो वा ॥ २७ ॥

तस्य लीलामाह । घ्राणेनेति। अध्वराङ्गः स्वयं वेद एव क्रोडापदेशो वाराहच्छद्मेति। स्तनापदेशं फलयुग्ममेव धत्ते मृदुः काञ्चनवल्लरिवेतिवदपह्नुत्यलङ्कारेण क्रोडत्वस्यैव वास्तवत्वं प्रत्याख्यते। "प्रकृतं यन्निषिध्यान्यत् स्थाप्यते सा त्वपह्नुतिः,,इति लक्षणात्। कं जलम् ॥ २८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

जनइत्यत्र सुडागमश्छान्दसः ते जनतपः सत्यनिवासिनः माया मवच्छूकरस्य मायात्राकृतरूपा भगवदिच्छा तन्मयवराहस्य स्वखेदस्य क्षयिष्णु नाशकं घुर्घुरितं तज्जात्यनुकरणध्वनिं निशम्य मुनयः आनन्दातिशयेन मननपरा बभूवुरित्यर्थः पुनस्ते त्रिभिः ऋग्यजुःसाममन्त्रैः अगृणन् अस्तुवन् ॥ २५ ॥

तेषां जनादि निवासिनां ब्रह्म वेदमवधार्य ज्ञात्वा वेदेन वितन्यते स्वरूपगुणादिविस्तरवर्णनपूर्वकं स्तूयते मूर्तिर्यस्य सः ॥ २६ ॥

उत्क्षिप्तोवालः पुच्छो येन सः कठोरः कठिनः सुरासुरैरजेयः सटाः स्कन्धस्थान् वालान् खराणि रोमाणि यस्यां सा त्वक् यस्य सः खुरैराहतान्यभ्राणि येन ईक्षा निरीक्षणमेव ज्योतिर्यस्य तदानींप्रकाशान्तराभावात् बभासे अशोभत ॥ २७ ॥

गृणतः स्तोतॄन् कञ्जलम् ॥ २८ ॥

---

भाषाटीका।

माया से सूकर रूप धारि भगवान् का अपने दुःख नाश करने वाला जो घुर्घुर शब्द वाला गर्जना तिसको श्रवण करके जन लोक तप लोक सत्य लोक के निवासि मुनी आदिकों ने पवित्र तीनों वेदों के मन्त्रों से स्तुति किया ॥ २५ ॥

यज्ञमूर्ति वराह भगवान् ने उन महापुरुषों के किये अपने गुणानुवादको जान कर देवतों की वृद्धि के लिये फिर वडी गर्जना करकै हस्ती कीसी क्रीडा करकै जल में प्रवेश किया ॥ २६ ॥

उनका वर्णन है कि पूंछको ऊपर को उठाये हैं आकाश ही में गमन कर रहे हैं वडे कठोर शरीर वाले हैं कांधे के वालों को फटकार रहे हैं वालों से वडी कठोर त्वचा वाले हैं खुरों से मेघों को ठोकर मारते हैं सपेद दांत वाले हैं अग्नि सरी के नेत्र वाले हैं एसे होकर पर्वत सरीके भगवान् प्रकाशित भये ॥ २७ ॥

यज्ञ शरीर धारी स्वयं शूकर के मिषवाले भगवान् नासिका से सूंघकर पृथिवी के मार्गको ढूंढते भये वड़ी डाढों से कोमलदृष्टिसे स्तुति करने वाले ब्राह्मणों के तरफ ऊपर को देखकर जलमेंप्रविष्ट होगये ॥ २८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

तदानीन्तनसमुद्रध्वनिमुत्प्रेक्षते स उदन्वान्समुद्र आर्त इव स्तनयन् शब्दं कुर्वन्भोयज्ञेश्वर ! मा मां पाहि मामवेत्येवं चुक्रोश आर्तसादृश्यमाह। उत्सृष्टाः प्रसारिता दीर्घा ऊर्मय एव भुजास्तैर्विशिष्टः आर्तत्वे हेतुः वज्रकूटो वज्रमयः पर्वतस्तद्वदङ्गं यद्भगवतस्तस्य निपातवेगेन विशीर्णा कुक्षिर्यस्य ॥ २९ ॥

स्वदंष्ट्रयोद्धृत्य महीं निमग्नां स उत्थितः संरुरुचे रसायाः ॥
तत्रापि दैत्यं गदयापतन्तं सुनाभसंदीपिततीव्रमन्युः ॥ ३१ ॥
जघान रुन्धानमसह्यविक्रमं सलीलयेभं मृगराडिवाम्भसि ॥
तद्रक्तपङ्काङ्कितगण्डतुण्डो यथा गजेन्द्रो जगतीं विभिन्दन् ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदा रसायां रसातले गां पृथ्वीं ददर्श कः त्रिपरुः त्रीणि परूंषि सवनात्मकानि पर्वाणि यस्य यज्ञमूर्तिरित्यर्थः किंकुर्वन् क्षुरप्रा आयताग्राः शरास्तत्सदृशैःखुरैरपो दरयन् कथम् उत्पारपारम् उत्पाराणां पारशून्यानामप्यपां यथा भवति तथा विदारयन् कथंभूतः अग्रे प्रलयसमये तत्र तास्वप्सु सुषुप्सुः शिशयिषुः सन् जीवाधीयन्ते यस्यां सर्वजीवाधारभूतां यां स्वयमभ्यधत्ताऽभिमुख्येन दधार जठरे धृतवानित्यर्थः अनेन तदुद्धरणेऽनायासं द्योतयति ३०।

रसायाः सकाशादुत्थितः संरुरुचे सम्यगशोभत तत्राप्यम्भसि गदामुद्यम्यागच्छन्तं रुन्धानं प्रतिघ्नन्तं न सह्यः सहनानर्हो विक्रमो यस्य तं दैत्यं सुनाभं चक्रं तद्वत्संदीपितस्तीव्रो मन्युर्यस्य यद्वा मयि विद्यमाने किमिति परिभवं सहस इति सुनाभेन संदीपितस्तीव्रमन्युः स भगवान्सिंहो गजमिव लीलया जघानेत्युत्तरेणान्वयः ॥ ३१ ॥

गजेन्द्रो जगतीं क्रीडया विदारयन् गैरिकया यथा अरुणगण्डतुण्डोभवति तथा तस्य रक्तमेव पङ्कस्तेनाङ्कितौ गण्डौ तुण्डं च यस्य सः ॥ ३२ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

उत्प्रेक्षेत आर्त्तध्वनित्वेन सम्भवाति स भगवता प्रवेशेन स्वीकृतः ॥ २९ ॥

तदेत्यध्याहृतम् तदा विदारणकाले इत्यर्थः प्रान्ति उच्चदेशं निम्नत्वेन पूरयन्ति इतिप्राः क्षुराश्चते प्राश्च क्षुरप्रास्तथाचायताग्राः शरा इतिव्याख्यातम् "क्षुरस्स्याच्छेदनद्रव्य"इतिविश्वः अनेन जठरधारणेन स्वदंष्ट्रयेत्यर्धकम् ॥ ३० ॥

तत्रापीति सार्द्धकम् । तत्रापीत्यपिशब्दः जलस्य युद्धानर्हस्थानत्वं व्यञ्जयति पूर्वार्थे चक्रस्य मूर्त्तस्यामूर्त्तमन्यूपमानत्वं तत्कार्यनेत्रारुण्यादिद्वारा न साक्षादित्यस्व रसाद्यद्धेति ॥३१--३३॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

तदानींतनं समुद्रध्वनिमुत्प्रेक्षेत स इति । स उदन्वान् समुद्रः वज्रकूटोवज्रपर्वतः तद्वदङ्गंथस्य भगवतस्तस्य निपातवेगेन विशीर्णा विलुठिता कुक्षिर्यस्य सः अतएवार्त इव स्तनयन् शब्दं कुर्वन् भोयज्ञेश्वर ! मां पाहि माभिन्धीत्येवं चुक्रोश आर्तसादृश्यमाह । उत्सृष्टाः प्रसारिताः दीर्घा ऊर्मय एव भुजास्तैर्विशिष्टः ॥ २९ ॥

जलप्रविष्टो भगवान् किमकरोदित्यत्राह । खुरैरिति । त्रिपरुः त्रीणि परूंपि सवनात्मकानि पर्वाणि यस्य सः यद्वा त्रीणि परूंपि •नेत्रा ककुत्स्थले यस्य सः उत्पारपार उत्पारश्चासौ पारश्चउत्पारः उद्वेल इव पारमतिक्रान्तः पारः संसारात्पारयिताचेत्यर्थः उत्पारपारमिति द्वितीयान्तोऽपिपाठः तदा उत्पारपारं दरयन्निति क्रियाविशेषणत्वेन योज्यम् उत्पाराणां पारशून्यानामपां पारमवसानं यथा भवति तथाऽपः जलानि खुरैस्तदा दरयन्विदलयन्विलोडयन् कथंभूतैः खुरैः क्षुरप्रैः क्षुरप्रायैः रसायां रसातले गांभूमिं ददर्श कथं भूतानामग्रे प्रलयसमये तत्र तास्वप्सु सुषुप्सुः शिशयिषुः सन् जीवधानीं जीवाधीयन्ते स्यां तां प्राणयाश्रयभूतां यां गां स्वय मभ्यधत्ताभिमुख्येन दधार जठरे धृतवांस्तामित्यर्थः ॥ ३० ॥

येन स्वदंष्ट्रया विलग्ना मही उद्धृता स भगवान् रसायाः सकाशादुत्थितः संरुरुचे तत्राप्यम्भसि गदया आपतन्तं गदामुद्यम्यागच्छन्तं रुन्धानं प्रतिघ्नन्तमसह्यः विक्रमो यस्य तमादिदैत्यं हिरण्याक्षं सुनाभेन सन्दीपितः उज्ज्वलः सचासौ तीव्रमन्युश्च भगवान् मृगराट् सिंह इभमिवगजमिव लीलया जघान हतवान् यथा गजेन्द्रः जगतीं वै प्रविभिन्दन्नरुणगण्डतुण्डोभवति तद्वत्तस्य रक्तमेव पङ्कस्तेनाङ्कितौ गण्डौ तुण्डश्च यस्य स जघानेति पूर्वेणान्वयः ॥ ३१ ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

जलप्रवेशसमये समुद्रेण स्तुतिरेवाकारि नत्वाक्रोशत्याशयेनाह । सवज्रेति । सउदन्वान्समुद्रोहेयज्ञेश्वर ! मां पाहीतिभावेन चुक्रोशाजुहावोक्तनादित्यर्थः रक्षाप्रार्थनायां कः क्लेशः प्राप्त इत्यतउक्तं वज्रकूटवद्योघनवद्वारिम्णोपेतस्याङ्गस्य निपातवेगेन विशीर्णोऽति निष्पिष्टः कुक्षिर्यस्य स तथा अतएवोदरवेदनयास्तनयन् शब्दं कुर्वन् आर्त इव उत्सृष्टाऊर्ध्वं गता अतएव दीर्घा ऊर्मयएव करास्तैः उदरादिवेदनार्तः पुरुषोयथाशिरसि करंनिधाय आक्रोशति तथेति लौकिकार्थः अध्यात्मस्तु स्तुतिरेव कृतेत्यर्थः ॥ २९ ॥

खरतरतरणिकिरणपरितप्तलोकवराहवन्नहरेर्जलप्रवेशः किन्तु यद्दर्शनार्थं प्रावेशि तद्दर्शनमनेन कृतमित्याह । खुरैरिति । उत्पारवारेति क्रियाविशेषणं पारेतीरान्तरेस्थितं, जलंवा यथोद्गतं भवति तथा क्षुरप्रैः क्षुरसाधर्म्यं पूरयन्तीति क्षुरवन्निशितैरित्यर्थः यद्वा स्वर्धचन्द्रैः "अर्धचन्द्रः क्षुरप्रः स्यात्" इतियादवः खुरैस्तस्य समुद्रस्यापो दरयन् भिन्दन् त्रिभिर्वेदैर्वियत इतित्रिवरुः त्रिषु युगेषु अवतारं वृणोतीतिवा गुरुशब्दवत्प्रक्रिया ढ्रलोपे पूर्वस्य दीर्घोऽण इतिदीर्घः अग्रे सर्वा वलाप्यसुषुप्सुर्निद्रां कर्तुकामः सहरियाजीवधानीं सर्वप्राण्याधारभूतामभ्यधत्त जलस्योपरि निहितवान् तां गां तत्ररसायां पाताले ददर्शेत्यन्वयः "वरुः सुगलरेखास्याद्वरा हस्य च विस्तृता,, इत्यभिधानाद्वलित्रयाङ्कितगलोवा पारन्वृणोतीतिपारवारः कर्मण्यणित्यण् प्रत्ययः पश्वादिप्राणिजातन्तद्यथोद्धतं स्यात्तथेति वा ॥ ३० ॥

भगवता महीं दृष्ट्वा किमकारीति तत्राह । स्वदंष्ट्रयेति । विलग्नां रसातले वन्दीगृहवत् स्थितां महीं स्वदंष्ट्रयोद्धृत्य रसायाउत्थितः सश्रादिवराहः संरुरुहे उपर्यारुरोह रसालयैरसुरैः स्वभूतभूमुखैः

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यत्समये निद्रितं किं तत्राह । तत्रापीति । स हरिस्तत्रभूम्युद्धरणसमयेऽपि खं रुन्धानं गदयापतन्तन्दैत्यमादिहिरण्याक्षं दंष्ट्रया जघानेत्यन्वयः कीदृशः सुनाभचक्रवत् सन्दीपिततीव्रमन्युः प्रज्वलितात्युग्रकोपोऽतएवासह्यविक्रमः मृगराट् सिंह इभं गजं यथा तथा अम्भसीत्यनेन रसातलात् किंचिदूर्ध्वमागत्येति सूचयति तस्य दीप्तिविशेषमाह । तद्रक्तेति । यथा जगतीं तटभूमिं विभिन्दन् तिर्यग्दन् प्रहारेण प्रोल्लिखन् तटपङ्काङ्कितकुण्डगण्डोभवति तथा दंष्ट्रया हिरण्याक्षं हत्वा तस्य रक्तपङ्केनाङ्कितकुण्डगण्डउच्चकाश इतिशेषः अनेन विशेषणेन हिरण्याक्षौ द्वौ तत्रैकोदंष्ट्रयाहत इतरस्त्वन्येनायुधेनेति ज्ञायते "ब्रह्मजस्तुहिरण्याक्षः प्रथमंदंष्ट्रयाहतः । स एव पार्षदाविष्टोद्वितीयः कर्णताडनात् । पूर्वं लयोदकेमग्नांक्षितियं तेनमज्जिताम् । भुवमुद्धरते वासौ हरिणाक्रोडमूर्तिना„ इत्यवगन्तव्यः अत्रैवोत्तरग्रन्थे विदुरप्रश्नं परिजिहीर्षुणा हरिणा हिरण्याक्षएकएव व्यत्यस्योच्यते तद्दुष्टमोहनार्थमाविविच्यकथनं देवानां प्रियार्थं चेति तदुक्तं "व्यत्यसेनापि चोच्यन्ते अविवेकेन कुत्र चित् दुष्टानां मोहनार्थाय तत्र तत्र कथा क्वचित्„ इति अविवेकोनाम नक्रहरेरज्ञानं "सर्वज्ञस्य" कुतो ज्ञानं व्यासस्योदारकर्मणइति वचनात् ॥ ३१ ॥ ३२ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

खदंष्ट्रयेत्यर्द्धकम् । अत्र विष्णुधर्म्मे विशेषश्च पातालमूलेश्वरभोगसंहतौ विन्यस्य पादौ पृथिवीञ्च बिभ्रतः । यस्योपमानं न बभूव सोऽच्युतो ममास्तु माङ्गल्यविवृद्धये हरिरिति अत्रतु सलिले स्वखुराक्रान्त इति वक्ष्यति ॥ ३१ ॥

तत्रापीति सार्द्धकं तादृशसंप्लवाम्भस्यपीत्यर्थः । अपिरत्र विस्मये संप्लवादिसाधारण्ये नैवाभेदोक्तिरियम् । वस्तुतस्तु चाक्षुषान्तर संप्लवे एवायं प्रसङ्गः । अत एव स्वायम्भुवादि संप्लवे त्रिलोकिगतानामनुत्पत्तेर्महर्लोकस्थानाञ्च पालनाय जनस्तपः सत्यनिवासिभिरेवस्तुतं चाक्षुषसंप्लवान्तहिरण्याक्षादिग्विजयेतु सर्गिणां स्थितिश्चिरन्तन्येव स्पष्टा । अथवा तत्रैव वराहावतारेऽपीति कदाचिदपीत्यर्थः । मृगराडादिदृष्टान्तस्तत् पराक्रमाद्यनुभवसोपानमात्रम् ॥ ३२ ॥ ३३ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

मध्ये जलस्य सापराधत्वात् दण्डं कृतवानित्याह । स वज्रेति । यस्मिन्जले भगवानाविष्टः येन च पृथिवी मज्जिता स उदन्वान् वज्रकूटवत् वज्रसमूहवत् अतिकठिनं यत् जाज्वल्यमानमङ्गं न हि वज्रातिरिक्तस्य तेजो जले तिष्ठत्यधिकं वा जायते स हि मेघान् जलं त्याजयति तादृशाः सर्वे यद्येकत्र भवन्ति तदा समुद्रादपि जलं त्याजयन्ति ते पुनः कपटेन चेदागच्छेयुः स्वरूपमेव नाशयेयुः । तद्रूपश्चायं भगवान् तादृशाङ्गस्य यो निपातः । वज्रपात एव तत्रापि समूहः । न कोऽपि जीवति । तत्रापि कापट्यं तत्रापि तदङ्गमेव यस्य तस्यापि पातः अनवधानदशायामुपरि पतनं पतनेऽपि महान् वेगः । यथा बाणो भित्वा गच्छति । तेन कृत्वा विशीर्णा कुक्षिर्यस्य । अनेन कुक्षेः कुक्षिर्निवार्यते अन्यथा स्वकुक्षिरेव न पूर्येत । उदन्वानिति जलवत्त्वं तत्कुक्षावेव तिष्ठति अतः कुक्षिभङ्गेनातः परं जलवृद्धिरितिसूचितम् । तथा त्वं जातमिति ज्ञापयितुं तत्कार्यमाह । उत्सृष्टेति । उर्द्धं सृष्टाः प्रसारिताः दीर्घा ऊर्मय एव भुजाः तैरुपलक्षितः । आर्त इवेति । पातेऽप्यानन्दमयः पततीति स्त्रीभुजबन्धनवत् सुखमेव भवतीति आर्त इवेत्युक्तं सर्वजलशोषे स्वरूपमेव नश्यति कुक्षिविदारे वृद्ध्यभावः तदा वर्षाशोषणाभ्यां समता भवति तदकरणे भूमेः स्थापनमेव न भवेत् चुक्रोशेति स्पष्टमेव तस्मिन्देवतारूपे समुद्रे दैत्यानामाधारभूते दण्ड उचित एव तथापि देवतात्वात् सर्वदेवता भोजकं भगवन्तं प्रार्थयते यज्ञेश्वरः पाहि मेति समुद्रस्यापि देवतात्वं समुद्राय स्वाहेति समुद्रियाभ्यः स्वाहेति च श्रुतेः यज्ञेश्वर इति संबोधनं स्वसंबन्धज्ञापनार्थं दैत्यानां हननेऽपि मां पालयेति ॥ २९ ॥

एवं समुद्रदण्डनं कृत्वा पुनर्यथा मज्जनं न करोति तथाशिक्षा दत्वा स्वयं भूम्युद्धारार्थं प्रवृत्त इत्याह । खुरैः क्षुरप्रैरिति । तीक्ष्णैः खुरैः तदापः दरयन् विदारयन् उद्गतः पारो यस्य तस्यापि परो यथा भवति तथात्रिपरुर्यज्ञवराहः त्रीणि पर्वाणि यस्य पादद्वयं द्वयमेकैकं पर्वमुखं चैकं तथैव सोमस्य प्रवृत्तेः "पद्भ्यां द्वेप्रसवने समगृह्णन्मुखेनैकम्„इति श्रुतेः द्वौ स्तोमौ प्रातः सवनं वहत इत्यादि श्रुत्या प्रतिसवनस्य द्विरूपत्वं मुखमपि द्विरूपमोष्ठाभ्यां रसायां स्थितां गां ददर्श ततस्तामुद्धृतवानिति वदन् तत्र हेतुमाह । तत्र सुषुप्सुरग्र इति । तत्र पृथिव्यां अविकृतायां पृथिव्यधिष्ठातृदेवता भगवतः शय्या भवतीति भार्या तु सिद्धैव अग्रे उद्धारानन्तरं भूमिमुद्धृत्य तस्मिन् शयनं करिष्यामीति प्रलये भगवान् शेषे शयनं कृतवान् सृष्टौ पुनः सर्वेषु पुरेषु शयनं करोतीति पुरुषशब्दव्युत्पत्तेः सर्वपुरनिर्माणार्थं भूमिमुद्धरिष्यतीत्यर्थः ननुभूमिं किमिति बहूनि शरीराणि करिष्यतीत्याशङ्क्याह । यां जीवधानीमिति । या पृथिवी सर्वेषां जीवानां आधारभूता साहि सर्वेषां देहान् सम्पादयति अतः स्वयमभ्यधत्त तदुद्धारे सर्व एव जीवाः उद्धृता भवन्तीति ॥ ३० ॥

एवं तां गृहीत्वा निर्गच्छन्तमनुवर्णयति । स्वदंष्ट्रयेति । दैत्यानामतिबलत्वात् भूमेरानयनप्रतिबन्धमाशङ्क्य स्वदंष्ट्रयेत्युक्तम् । नहि यमगृहीतः केन चिन्मोचयितुं शक्यते । तत्राप्याधिदैविकयमेन अन्यथा तद्भक्ताः तत्र विघ्नं कुर्युः । दंष्ट्राया एकत्वं महत्त्वख्यापनाय उद्धृत्येति वचनं नीयमानायाः पृथिव्याः देवतासम्बन्धकारणख्यापनार्थं नितरां मग्नामिति भूमेः सहजासुरत्वं निराकृतं निराधारस्य अधस्ताद्गतिरुपरिगतिरपि पक्षिणामिव संभवति नतूत्थानं । तत्रापि सम्भारः अतस्तां गृहीत्वा सम्युत्थितः सम्यक् रुरुचे स इति चोररूपेण समागतोऽपि भाराक्रान्तः न रोचते । भूम्या सहस्त्रियेव अतः सन्तोषेण वहिः शोभया च रोचनं संशब्दार्थः । तत्रापि रसाया उत्थितो लोकेन रोचते अयंतु रसातलात् अनेन पञ्चखण्डापृथिवी उद्धृतेति ज्ञापितम् स्वदंष्ट्रापदद्वयेन आध्यात्मिकाधिभौतिकयोः दैत्ययोर्निराकरणमुक्तम् आधिदैविकस्य निराकारणमाह । तत्रादिदैत्यमिति । आदित्वमाधिदैविकत्वेन आदौ वा दैत्यत्वं प्राप्तं गदया पतन्तमिति शूरत्वं भगवदीयत्वमिति प्रतिबन्धकत्वं च सूचितम् सुनाभेनसुदर्शनेन तीव्रो मन्युर्यस्य सुदर्शनेन मन्युजननं गदादीनां प्रतिघातसूचकं । गदादीन्यस्त्राणि तद्युद्धे प्रतिहतानि पश्चाद्गृहीतं सुदर्शनं विचारयति यद्यक्रोधेन भगवान्मांक्षिपेत् तदा गदादिरिव अहमपि व्यर्थस्याम् अतो भगवता क्रोध उत्पादनीय इति तदीया

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ब्रह्मद्रोहादयः भगवते स्मारिताः । तदा क्रोधेन सुदर्शनं प्रक्षिप्तवानिति सम्यग्दीपनं फलपर्यवसायि तीव्रत्वं फले विलम्बाभावाय ॥ ३१ ॥

अत एव जघान क्रोधेन हननात् पुनरुत्पत्तिः ननु दोषगुणयोर्विद्यमानत्वात् कथमेकान्ततो वध एव कृत इत्याशङ्क्याह रुन्धानमिति । सहिगतिप्रतिबन्धको न भवेद्यदि तदा न हतोऽपि स्यात् प्रतिबन्धकत्वात् अवश्यं हत इत्यर्थः नन्वचिन्त्यशक्तिर्भगवान् तत्र तिरोहितो भवेत् तं वा वञ्चयेत् हननमेव कुतः कृतवानित्याशङ्क्याह । असह्यविक्रममिति । न सह्यः विक्रमः पराक्रमो यस्य ननु तथाप्यपराधान्तरे मारणीयः ननु स्वापराधे व धातुकल्पः स्वद्रोह इति भगवच्छास्त्रात् तत्राह । स इति । सदैत्यवधार्थमेव वराहरूपं गृहीतवान् अन्यथा रूपान्तरेण इच्छया वा भूमिं जलोपरि स्थापयेत् ननु कल्पान्तरव्यवस्थयेव भूमिमन्यत्र स्थापयित्वा पश्चान्मारयेत् इत्याशङ्क्याह । लीलयेति । ननु पूर्वभक्तिमेव तस्योररीकृत्य तं भक्तं विधाय कृतार्थमेव कथं न कृतवान् सर्वसमर्थत्वादित्याशङ्क्य उभयोस्तादृशं रूपग्रहणं संवृत्तं वध्यघातकभावापन्नम् अतो हतवानित्याह । दृष्टान्तेन इभं मृगराडिवेति । अनेन शाश्वतिको विरोधः सूचितः दृष्टान्तेन प्राप्तं भक्षणदोषं परिहरति । अम्भसीति । उभावपि स्थलचरौ जले मारणं स्वरक्षणार्थमेव न भक्षणार्थमिति लोके तदपि प्रदर्शितमित्याह । तद्रक्तपङ्काङ्कितगण्डतुण्ड इति । अनेन स बलादग्रे समागत्यभूमिं धृतवानिति लक्ष्यते अन्यथा तदुदरं न विदारयेत् अत एव कल्पान्तरे विदारणं नोक्तं तस्य हिरण्याक्षस्य उदरभेदनेन यद्रक्तं स्रुतं तदेव किञ्चित्कालं स्थितं पङ्कप्रायं जातं तेन अङ्कितं गण्डपर्य्यन्तं तुण्डं यस्य तस्योदरे बहुदूरेमुखं गतं यथान्तर्गतं तस्य जीवतत्त्वं स्वमुखे समायति अन्यथा भगवतो भगवदीयानां च द्रोहेण तस्य नरकपातः स्यात् नीचयोनिर्वा भवेत् अतो भगवान् तं स्वस्मिन्नेव स्थापितवान् इममर्थं दृष्टान्तेन स्पष्टयति । यथागजेन्द्र इति । सहिकमलादीनां कन्दमात्मसात्करोति इन्द्रपदं दूरेऽपि विद्यमानं मूलं सप्ररोहमुत्पाटयतीति ज्ञापयति । जगतीमिति । यस्यां पृथिव्यां जङ्गमदेहा जायन्ते तादृशपृथ्वीभेदनेन स्वाभिलषितस्वसजातीयदेहोत्पादकपृथिव्यवयवसहितं भक्षयति एतत्परिज्ञानार्थमपीन्द्रपदम् एवं भगवानपि हिरण्याक्षस्य जीवं तदिन्द्रियवर्गं तस्याग्रिमदेहोत्पादकावयवसहितं विद्यमानदेहसम्बन्धिनं दूरीकृत्य आत्मसात्कृतवानित्यर्थः परनिराकरणपूर्वकस्वग्रहणमेव विशेषभेदनम् ॥ ३२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तदानीन्तनं समुद्रध्वनिमुत्प्रेक्षते वज्रकूटो वज्रमयः पर्वतः तद्वदङ्गं यद्भगवतस्तस्य निपातवेगेन विशीर्णो कुक्षिर्यस्य सः । उदन्वान् स्वत्राणत्यागशङ्कयेवार्त्तवच्चुक्रोश । उत्सृष्टाः प्रसारिता दीर्घा ऊर्मय एव भुजास्तैः हे यज्ञेश्वर मा मां पाहीति चुक्रोश २९

क्षुरप्रैरक्षविशेषैरिव खुरैस्तदा अपो जलानि दरयन् उत्पाराणां पारशून्यानामप्यपां पारमवसानं यथा स्यात्तथा दरयन् त्रीणि पर्वाणि सवनात्मकानि पर्व्वाणि यस्य यज्ञमूर्त्तिरित्यर्थः । रसायां रसातलोपलक्षिते पातालतले गर्भोदे इत्यर्थः । अतलादीनां सप्तानामेव भूविवरत्वेन पृथिवीत्वात् रसातले तस्याः स्थितिसम्भवात् । यदुक्तं विष्णुधर्म्मे । पातालमूलेश्वरभोगसंहतौ विन्यस्य पादौ पृथिवीञ्च बिभ्रतः । यस्योपमानं न बभूव सोऽच्युतो ममास्तु माङ्गल्यविवृद्धये हरिरिति । अत्रापि सलिले स्खलुराक्रान्त इति वक्ष्यति गां पृथ्वीं ददर्श । तत्र गर्भोदे सुषुप्सुः शिशयिषुरग्रे दैनन्दिनप्रलये भवतीत्यन्वयः । यां पृथ्वीं जीवधानीं जीवा धीयन्तेऽस्यामिति जीवधानीम् अभ्यधत्त स्वयमेव वेदरूपेणोक्तवानित्यर्थः ॥ ३० ॥

तत्रापि तादृशसंप्लवाम्भसीत्यपिविस्मये दैत्यं हिरण्याक्षं जघान आदिदैत्यमिति च पाठः । कीदृशं गदया सह आपतन्तं सक्रीडदर्शः । सुनाभेन चक्रेण सन्दीपितः । मयि वर्त्तमानेऽपि त्वां प्रलयं गदामुद्यच्छतीत्युद्दीप्तीकृतो मन्युर्यस्य सः । रुन्धानं रोदं चतुर्दिक्षु भ्रमन्तं तं घ्नन्तं श्रीवराहमुपमिमीते । गजेन्द्रस्त्रिकूटपर्व्वतस्थः सिंहसरभादीनामपि हन्ता जगतीं तत्रत्यां पृथ्वीं क्रीडया विदारयन् गैरिकया अरुणगण्डतुण्डो भवति तथा । "जगती जगति च्छन्दोविशेषेऽपि क्षितावपि,, इत्यमरः ॥ ३१॥३२॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्तनयन् ध्वनिं कुर्वन् मा मां पाहीति चुक्रोश ॥ २९ ॥

त्रीणि पर्वाणि सवनात्मकानि पर्वाणि यस्य स यज्ञमूर्तिः उत्पाराणां विपुलानामप्यपां पारमवसानं यथा भवति तथा क्षुरप्राः आयताग्राः खुराःतादृशैः दरयन् विलोडयन् रसाया रसातले गां मही ददर्श कथंभूताम् अग्रे प्रलयसमये तत्र तालप्सु शिशयिषुः सन् जीवाधीयन्ते यस्यां तामेवं भूतामभ्यधत्त उदरे आभिमुख्येन दधार ॥ ३० ॥

रसायाः सकाशात् उत्थितः सम्यगशोभत ॥ ३१ ॥

तत्रापि दैत्यमित्यनेन भाविदैत्यसमकालोऽपि "चाक्षुषे त्वन्तरे प्राप्ते प्राक्सर्गेकालविद्रुते । यः ससर्जप्रजा इष्टाः स दक्षोदैवनोदित" इति वक्ष्यमाणेन सर्गविनाशेन सूचितां महीं जले निमग्नामुद्धर्तुं जातस्य वराहस्य चरितमेकीकृत्य प्रकृतवराहचरितमत्र वर्णयते इति गम्यते सुनाभेन श्रीसुदर्शनेन दीपितश्चासौ तीव्रमन्युश्च गजेन्द्रो जगतीं क्रीडया विभिन्दन् गैरिकया यथा अरुणगण्डतुण्डोभवति तद्वत् तद्रक्तपङ्केन रुधिरयुक्तमांसेन अङ्कितौ गण्डौ तुण्डं च यस्य सः ॥ ३२ ॥

---

### भाषाटीका ।

वज्र के पर्वत सरी के वराह के अंग के पडने से सब कुक्षि के फटजाने से शब्द करता हुआ जो समुद्र दूर को फैलाई हुई जो भुजों सरी की लहरें उनसे मानों पुकार कर कहने लगा कि हे यज्ञेश्वर हमारी रक्षा करो ॥ २९ ॥

तीन कालरूप तीन पर्व हैं जिनके यज्ञमूर्ति भगवान् सब जलों के पार प्राप्त होते सरीके विस्तृतवाणों सरी के खुर के अग्रों से उस जल को विदारण कर के जाकर रसातल में पृथिवी को देखा जिस पृथवी को प्रलय के समय में शयन करने की इच्छा से सब जीवों का निवास स्थान बना कर अपने उदर में रखे रहे ॥ ३० ॥

डूबी हुई पृथवी को अपने दांत से उठाकर रसातल से आते हुये भगवान् शोभा को प्राप्त हुये तहां पर भी दौड कर आते हुये

तमालनीलं सितदन्तकोट्या क्ष्मामुत्क्षिपन्तं गजलीलयाऽङ्ग! ॥
प्रज्ञाय बद्धाञ्जलयो ऽनुवाकैर्विरिञ्चिमुख्या उपतस्थुरीशम् ॥ ३३ ॥

॥ ऋषय ऊचुः ॥

जितं जितं तेऽजित! यज्ञभावन! त्रयीं तनुं स्वां परिधुन्वते नमः ॥
यद्रोमगर्तेषु निलिल्युः* रध्वरास्तस्मै नमः कारणसूकराय ते ॥ ३४ ॥
रूपं तवैतन्ननु दुष्कृतात्मनां दुर्दर्शनं देव! यदध्वरात्मकम् ॥
छन्दांसि यस्य त्वचि बर्हिरोमस्वाज्यं दृशि त्वङ्घ्रिषु चातुर्होत्रम् ॥ ३५ ॥
स्रुक् तुण्ड आसीत्स्रुव ईश! नासयोरिडोदरे चमसाः कर्णरन्ध्रे ॥
प्राशित्रमास्ये ग्रसने ग्रहास्तु ते यच्चर्वणं ते भगवन्नग्निहोत्रम् ॥ ३६ ॥

भाषा टीका।

दैत्य के ऊपर सुदर्शन चक्र हरी के कुपित होकर उस दैत्य को भगवान् ने मारा ॥ ३१ ॥

वह दैत्य बडे असह्य पराक्रम वाला है उसको जल के मध्य में ऐसा मारा जैसे सिंह सहज ही हस्ती को मारता है उसके रुधिर पांक से मुख गंड स्थल सब लिप्त हो गया था तिससे जैसे हाथि गेरू की पृथिवी का विदारण करे तैसे दीखते थे ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

प्रज्ञायाऽऽलक्ष्य अनुवाकैर्वैदिकं सूक्तं तत्सदृशैर्वाक्यैस्तुष्टुवुः ॥ ३३ ॥

भो अजित! ते त्वया जितं जितमिति संभ्रमे वीप्सा यज्ञैर्भाव्यते आक्रियत इति तथा त्रयीं वेदमयीम् निलिल्युर्लीनप्रायाः कारणं पृथिव्युद्धरणं तेन सूकराय ॥ ३४ ॥

यज्ञात्मतां प्रपञ्चयन्तः स्तुवन्ति रूपमित्यादिचतुर्भिः छन्दांसि गायत्र्यादीनि यज्ञाङ्गभूतच्छन्दआद्यनुवादेन भगवदवयवताविधीयते बर्हिःशब्दे दीर्घाभाव आर्षः दृषि चक्षुषि चातुर्होत्रं होत्रादिकर्मचतुष्टयम् ॥ ३५ ॥

स्रुक् तुहुस्तुण्डे मुखाग्रे स्रुवो नासिकयोः इडा भक्षणपात्री चमसा ग्रहाश्च सोमपात्राणि प्राशित्रं ब्रह्मभागपात्रम् ग्रस्यतेऽनेनेति ग्रसनं मुखान्तर्वर्तिच्छिद्रम् चर्वणं भक्षणम् ॥ ३६ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी।

आक्रियतेऽभिव्यज्यते । कारणं परं ब्रह्म तत्स्वरूपाय शूकराय ॥ ३४ ॥

यज्ञात्मतां यज्ञभावनेति सम्बोधनोक्तां दुष्कृतात्मनां भक्त्याभावान्मलिनचित्तानां एतच्छ्रीवराहात्मकं छन्दआद्यनुवादेनेति तत्र छन्दआदीनि ज्ञातत्वादनुवादरूपाणि भगवदवयवतात्वज्ञातत्वाद्विधीयते "अनुवादमनुक्त्वैव न विधेयमुदीरयेत्" इति नियमात् छन्दांसि त्वचि त्वग्रूपत्वेन ध्येयानीत्यादिवचनव्यक्तिः सर्वत्र कर्तव्येत्यर्थः ॥ ३५ ॥

सोमभक्ष्यपतेत्यादि भक्ष्यते यत्र तानि सोमपात्राणि चमसाः अदनार्थस्य चमेरौणादिकोऽधिकरणसाधनः प्रत्ययः "प्रैतुहोतुश्चमसः प्रोद्गातॄणां चमस" इतिश्रुतेः उद्गातृचमसमेकं श्रुतिसंयोगादन्यायाच्च समाख्ययैव तस्य सोमभक्षणपात्रत्वं न वचनात् । तथा सोमो गृह्यते येषु तानि सोमपात्राणि ग्रहाः यद्ग्रहान् स्थापयतीति वचनात् अत्रापि समाख्यैव ॥ ३६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तमालवन्नीलं सितदन्तकोट्या दंष्ट्राग्रेण क्ष्मां मही गजस्येवली लयोत्क्षिपन्तम् ईशं भगवन्तं प्रज्ञायालक्ष्याङ्ग हे विदुर! विरञ्चिप्रभृतयो बद्धाञ्जलयः सन्तः अनुवाकोवेदसूक्तं तत्सदृशैर्वाक्यैरुपतस्थुः समीपे स्थित्वाभिदधुस्तुष्टुवुरित्यर्थः ॥ ३३ ॥

उपस्थानप्रकारमेवाह। जितमित्यादिना। हेऽजित! ते त्वयाजितं सर्वोत्कर्षेण वर्तितं जितं जितमिति संभ्रमाद्वीप्सा हेयज्ञभावन! यज्ञैर्भाव्यते संभाव्यते सेव्यत इति तत्सम्बुद्धिः यज्ञाराध्येत्यर्थः यद्वा यज्ञान् भावयति वर्तयतीति तथा यज्ञाधिपते इत्यर्थः यद्वा यज्ञैर्विभाव्यतेऽवयवत्वेनोपास्यत इति तथेति यावत् अतएव ह्याचरत्रयज्ञावयवान् छन्दआदीनवयवत्वेन कल्पयित्वा स्तुतिर्व्यज्यते- त्रयीं वेदत्रयीविहितयज्ञमयत्वेनोपासनात्तदाराध्यत्वाद्वात्रयीमयत्वं तन्वां ज्ञेयं स्वां स्वकीयां तनुं परिधुन्वते परितः सर्वतः कम्पते तुभ्यं नमः बहुषु कल्याणगुणेषु सत्सु किंविशेषेण तनुपरिधूननमेवप्रथमंस्तूयत इत्यत्राह। यद्रोमेति। यथस्यां तन्वां रोमाणि तेषां गर्तेषु रन्ध्रेष्वध्वयः समुद्रानि लिल्युर्लीनाबभूवुरतइदमत्याश्चर्यमिति तदेव प्रथमं स्तूयत इति भावः अतएव कारणसूकराय जगत्कारणभूतायाप्राकृतसूकररूपिणे यद्वा कारणादवित्युद्धारणनिमित्तात्सूकररूपधारिणे इत्यर्थः नहि प्राकृतसूकरस्येत्थं सामर्थ्यं दृष्टमित्यभिप्रायः एवं भूताय तस्मै नमः ॥ ३४ ॥

रूपस्याप्राकृतत्वं तदनुरुयज्ञभावनत्वमेव प्रपञ्चयति । रूपमिति चतुर्भिः । हेदेव ! यदध्वरात्मकं तव रूपं तद्दुष्कृतात्मनां दुष्कृतमयं तेन मलिनआत्मा मनो येषामयोगिनान्दुर्दर्शनं दर्शनाविषयं प्राकृतं हि रूपं प्राकृतमनोग्राह्यम् इदं तु रूपं "दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" इत्यादि श्रुत्युक्तविधया योगशुद्धमनोग्राह्यत्वादप्राकृतमित्यर्थः नन्वयोगिभिरपि तादात्विकैर्भगवतो विभवरूपं दृश्यतएव कथ मेतदुच्यत

* अध्वयइति वीरराघवः ॥

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

दुष्कृतात्मनां दुर्दर्शमिति उच्यते नह्ययोगिनो भगवतोविभवरूपमप्राकृतं पञ्चोपनिषन्मयंस्वेच्छयैवोपात्तमिति यथायज्ञानति किन्तु तिर्यगादिस जातीयं प्राकृतमित्येव जानन्ति अतो न विरोधः अत्रय ज्ञाङ्गानां छन्दआदीनां भगवदवयवत्वेनानुसंधानरूपदृष्ट्या उपासनविधानार्थं पूर्वोक्तयज्ञभावनत्वं यदध्वरात्मकत्वम् इत्यनूद्यते इदं छन्दआदीनां भगवत्त्वगादित्वरूपणं दृष्ट्युपासनंनामब्रह्ममनो ब्रह्मेत्यादिवत् नहि कालत्रयवर्तिनो छन्दआदीनां यज्ञानां संघातस्य तात्कालिकभगवद्वराहतनुत्वसंभवः सर्वशरीरकत्वात् यज्ञावयवानामपि तदङ्गत्वकथनं सम्भवति तथापि प्राकृतानां यज्ञावयवानामप्राकृतत्वावयवत्वासम्भव एवास्य सर्वशरीरकत्वेन यज्ञावयवानां तच्छरीरकत्वेऽपि प्रत्येकमेव यज्ञावयवानां तच्छरीरत्वात्तेषान्तच्छरीरावयवत्वकीर्तनमनुपपन्नमेव तस्मादृदृष्ट्युपासनावधानमेवेतिमन्तव्यम् अतश्छन्दांसि त्वचि वर्हिं रोमसुइत्यादि क्वचिद्व्यतिरेकनिर्देशः क्वचिदग्निहोत्रं चर्वणमुपसदः शिरोधरइत्यभेदनिर्देशश्चोपपन्नः यस्य तव त्वचि छन्दांसि गायत्रीत्रिष्टुबादीनि यज्ञाङ्गानि छन्दांस्यासन्नित्यपकृष्टक्रियापदविपरिणामेनान्वयः रोमसु वर्हिः कुशः वर्हिं रोमस्वित्यत्रार्षत्वात् द्रूलोपदनिदीर्घाभावः दृशिदृष्टौ आज्यमङ्घ्रिषु: चातुर्होत्रं चतुर्होतृशब्दवाच्यमन्त्रवेद्यं कर्म ॥ ३५ ॥

स्रुक् जुहूः तुण्डे मुखाग्रे आसीत् स्रुच इतरदर्वीनासिकयोरासीदित्यनुषङ्ग एवमुत्तरत्रापि इडा हविर्भक्षणपात्रम् उदरे चमसाः सोमपात्राणि च तत्र चमसाः कर्णरन्ध्रेआसन्प्राशित्रंब्रह्मभागपात्रं आस्ये मुखआसीद्ग्रहः ग्रसने ग्रस्यन्तेऽन्नेनेति ग्रसनं मुखान्तवर्तिच्छिद्रं तस्मिन्नासन् हेभगवन् ! यदग्निहोत्रर्माग्निहोत्रनामकं कर्म तत्ते तव चर्वणं भक्षणमासीत् ॥ ३६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अयं हरिरेव न लोकवराहइति ज्ञापनाय विरिञ्चप्रमुखानां देवानामुपपत्तिविधिमत्रक्ति । तमालेति । उत्क्षिपन्तमुद्धरन्तं । अनुवाकैरियत्सङ्ख्यां विशिष्टैर्वेदवाक्यैः ॥ ३३ ॥

उपस्थाय किंकृतं तत्राह । जिजं जितमिति । त्रयीं तनुं त्रिवेदप्रतिपाद्यां मूर्तिं परिधुन्वते रोमजलत्यागाय कम्पमानाय निलिल्युर्निलीनाः ते तुभ्यम् ॥ ३४ ॥

अनेन विष्णुरयं न लोकवराह इत्यस्य किमायातमिति तत्राह । रूपमिति । दुष्कृतात्मनामिति विशेषणेन सुकृतात्मनां सुदर्शनमिति ध्वनितम् अतइदमेवास्य परब्रह्मत्वेमानं सूचितम् अध्वरात्मकं यज्ञसाधनप्रसूतिकारणम् अनेनापिन केवलंभूम्युद्धरणाय किन्तु सकलयज्ञसाधनप्रसूतये इदं रूपमिति सूचितं यद्वा यज्ञाख्यपरमात्मरूपं "यज्ञोविष्णुर्देवता„इतिश्रुतेः अनेन ब्रह्मत्वं स्पष्टमुक्तं भवति अयमात्मा ब्रह्मेतिच अस्य यज्ञात्मकत्वं स्पष्टयति छन्दांसीत्यादिना सप्तच्छन्दांसीत्यादयो यस्य तव त्वगादिषु वर्तन्ते तुभ्यं नम इत्यन्वयः बर्हिर्दर्भः दृशि चक्षुषि चतुर्भिर्होतृभिः क्रियमाणं कर्म चातुर्होत्रम् ॥ ३५ ॥

इडायज्ञपात्रं चमसश्चतुष्कोणसंनिवेशोयज्ञपात्रं प्राशित्रंयज्ञपात्रं पुरोडाशादिर्वा द्वादशसोमग्रहाः रसने जिह्वायां क्रियायाश्च चर्वणं दन्तैश्चर्वणं "चर्वणं चूर्णनं दन्तैः" इतियादवः ॥ ३६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कारणं परं ब्रह्म तत्स्वरूपाय शूकराय ॥ ३४ ॥

अतस्तदाश्रयैव सर्व्वा यज्ञप्रक्रियेत्याह । रूपमित्यादिचतुर्भिः ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं दैत्यानां त्रिविधानामपि निराकरणमुक्त्वा भूम्युद्धारमुपसंहरति। तमालेति । ईशमुपतस्थुरिति सम्बन्धः तैरेवेशत्वं प्रत्यक्षतो दृष्टमयं यज्ञपुरुष इति प्राज्ञाय बद्धाञ्जलय इति यज्ञारम्भे नमस्काराञ्जलिर्विहित इति भुवनमसीत्यत्र तथोक्तत्वात् यज्ञारम्भे च प्रातरनुवाक उच्यते प्रकृते कालस्य नियामकत्वाभावादनुवाकं इत्येवोक्तं सर्वः क्रियमाणानामनुवाकानां यागभेदेनापि बहुत्वात् बहुवचनम् आधिदैविकत्वाय विरञ्चिमुख्या इति तस्य यज्ञत्वमीशत्वं च साधयति । तमालनीलां क्ष्मां सितदन्तकोट्या उत्क्षिपन्तामिति तमालैर्नीला तमालवद्वा नीला तमालास्तमोवन्नीलवृक्षाः सृष्टावज्ञानं भयं च हेतुः तमालास्त्वज्ञानभूतं वनं वृक्षरूपं भयहेतुः नीलोऽपि गुणः शृङ्गारवद्रसजनकः स्त्रियोगे सर्गोत्सालो भवति सर्गोत्पादनसामर्थ्यख्यापनाय क्षमाधर्मयोगात्क्ष्मेत्युच्यते अस्याः सजीवत्वनिराकरणार्थं दन्तकोटिसम्बन्धः देहाविशीर्णत्वाय सितत्वं दंष्ट्रापि स्वस्य प्रियत्वज्ञापनाय दन्तत्वेनोक्ता कोटिपदेन भगवतो माहात्म्यं सर्वेषामेवेशानां भूमौ स्नेहातिशयख्यापनाय संख्यावाचकपदप्रयोगः उत्क्षेपणमुत्तोलनम् अनेन भूमिः स्वरसान्नागतेति ज्ञापितं कोट्याभूमिस्पर्शनेन वेदिरिवत्वेनोद्धृता निरूपिता ऐश्वर्यं स्पष्टमेव गजलीलयेत्यनेनापि ऐश्वर्यम् यज्ञत्वं भक्तकृपालुत्वं च पूर्वोक्तमुपसंहृतम् अङ्गेति कोमलसम्बोधनं परिज्ञानार्थम् ॥ ३३ ॥

द्वादशार्कसमैः श्लोकैः कर्मनिर्णय उच्यते ॥
ब्रह्मादीनामुत्तमत्वात् द्विविधं कर्म रूप्यते ॥
उभयोर्भगवत्त्वाय षड्भिः षड्भिर्गुणास्तथा ॥
प्रमाणेन प्रमेयेन निर्णयो द्विविधो यतः ॥
तत्र प्रमाणरूपं हि षड्भिरादौ निरूप्यते ॥

ब्रह्मादीनां देवतात्वेऽपि यज्ञे ऋषीणामेव प्रयोजकत्वात् ऋषय ऊचुरित्याह । प्रथमतो यज्ञस्य सर्वोत्कृष्टत्वं प्रामाणिकत्वं च वदन् नमस्यन्ति । जितं जितमिति । ते जितमेवाजितं यज्ञार्थं शत्रुहननं वेदे निरूप्यते न केवलं शत्रुजयः हननस्य दोषजनकत्वात् अतो यज्ञार्थं शत्रुजयात् त्वयैव जितं किञ्च कालेन सर्वे जिताः कालमुखमपि भङ्क्त्वा तद्भक्षितां पृथिवीमानीतवान् असि इति त्वयैव जितं प्रलये कालग्रस्ताम् वा उत्पादयति इति सर्वोऽपि सावधारणइति ते जितमेव जितमित्युक्तं कदाचित्कस्य चिज्जयादिक्रिया उत्कृष्टावह्लार्थसाधिका च भवति काकतालीयन्यायेन नैतावता जयनिर्द्धार इत्याशङ्क्याह । हेअजितेति न कदापि केनापि जित इति एतादृशजयः तस्य सर्वदैत्यर्यज्ञैः सर्वे पदार्था भाव्यन्ते उत्पाद्यन्ते अयं तु यज्ञान् भावयति अतोऽपि जयनिर्द्धारः एवं स्तुत्वा नमन्ति त्रयीं तनुं परिधुन्वते नम इति रूपविशेषेण भजनं कर्त्तव्यमिति निरोधोऽत्र न घटते अस्यैव वेदरूपत्वात् अथर्वाङ्गिरसां मुख्यतया ब्रह्मप्रतिपादकत्वात् ब्रह्मोपयोगित्वेन त्रयीशेषत्वेऽपि ज्ञानशेषत्वमेव मन्यमानाः प्रमाणप्राधान्येन शास्त्रनिरूपकाः कर्माणि वेदत्रयमेव निर्धारित

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

वन्तः अतो वराहरूपं त्रयीमयमेव वेदानामपि तस्मिन् शरीरं प्रवेशस्योक्तत्वात् तस्य च परितः कम्पनं वेदानां विक्षेपार्थम् अन्यथा अध्या चतुर्थशेषत्वे वेदानां यज्ञे तात्पर्यं न स्यात् तथासति सर्वमुक्तिरेव न स्यात् परितो धूननेन हीनभावमपि प्रमाणस्य दृढकार्यजनकत्वात् प्रापयतीति भयादपि नमनं सृष्टिसाधकत्वादपि अनेन स्वार्थे वेदभ्रामणं न कारणीयमिति प्रार्थना सूचिता ननु भवतां वेदभ्रामणे किं स्यात् येगेन यज्ञान् दृष्ट्वा दर्शनानुसारेण तान् विज्ञाय कृतार्था भविष्यन्ति भवन्त इत्याशङ्क्य परिधूनने यज्ञदर्शनमेव न भविष्यतीत्यत्र हेतुं वदन्तो नमस्यन्ति। यद्रोमगर्तेष्विति। यस्य भगवतः रोमोद्गमस्थाने ये कूपाः ते विशाला गर्त्ता इत्युच्यन्ते तेषु सर्वे यज्ञा निलीनाः सहि जलादुद्गतः उपरिनिविष्टान् वेदान् विधूननेन दूरीकरिष्यतीति ज्ञात्वा स्वस्यापि दूरीकरणशङ्कया श्रुत्या सम्बद्धा रोमगर्तेषु निलीनाः तत्र रोमावलम्बनमस्तीति रोम्णां वर्हिष्ट्वात् यज्ञानां चलनेन स्कन्दनदोषोऽपि न भवति अस्कन्नं हि तत् "यत् वर्हिषि स्कन्दति,,इति श्रुतेः अतः सर्ववेदानां यज्ञानां च कारणभूतः उभयप्रसवकर्ता देहो यस्य तादृशायान्यत्कर्तुमशक्ताः नमनं कुर्वन्तीत्यर्थः कारणशूकराय त इत्यपि पाठे तुल्योऽर्थः ॥ ३४ ॥

एवं पुरुषोत्तमत्वं वेदयज्ञरूपतां स्वस्वामित्वं च निरूप्य तदुपपादयन्तः अतज्ज्ञान्निन्दन्ति। रूपमिति। तवैतद्रूपं निश्चयेन दुष्कृतात्मनां पापसंस्कृतभूम्यवयवनिष्पादितदेहानां द्रष्टुमप्ययोग्यं यथा दिवाभीतस्य सूर्यरूपं ज्ञानभजनादिकं तु दूरे नैतावता कर्ममार्गे काचित् क्षतिः तत्र हेतुद्वयमाह । हे देव ! यदध्वरात्मकमिति देवाः पापेभ्यस्तिरोहिता भवन्ति धर्मश्च यज्ञः अधर्मेण प्रकाशते अंशान्तरं तु वराहे नास्ति यतस्तद्रूपमध्वरात्मकमेव एवं दुष्टदुर्ज्ञेयत्वमुक्त्वा वेदत्वमादावुपपादयन्ति। छन्दांसि यस्य त्वचीति। छन्दांसि गायत्र्यादीनि सप्त अनन्तानि वा तानि त्वचि अन्तर्बहिर्व्याप्तायामनेन तत्र सर्ववेदनिवेशनमुक्तम् अर्थरूपाणि वा छन्दसामपि विनियोगात् तदाध्वरात्मकतैव निरूप्यते त्रयीतु तत्रोत्पत्तिकसम्बन्धयुक्ता वर्हिः रोमसु यज्ञियाः पदार्थाः पुरुषावयवैरुत्पादिताः तदधिष्ठातृदेवतारूपे वराहे निवेश्यन्ते तदा सदैवाभवन्तीति रोम्णांश्च वर्हिष्ट्वपादकत्वं वक्तव्यम् अतोवर्हिरधिष्ठातृरोम्णां विधूननेन पतितानां कुशकाशमयवर्हिष्ट्वम् आज्यं दृशि आध्यात्मिकं रूपमाज्यम् आधिदैविकं चक्षुः अत एव चक्षुषा आज्याभिघारणं चक्षुषः सत्यत्वम् आज्यस्य प्रजापतित्वं च तत्त्वख्यापकं तुशब्दः पक्षान्तरं व्यावर्तयति "वसन्तोऽस्यासीदाज्यम्,,इति"सरसमहत्वसन्ताय प्रायच्छत्"इति श्रुतेः वरप्राप्तमेव वसन्तादेः आज्यादिरूपत्वं तदत्र नोपयुज्यते अङ्घ्रिषु चरणेषु चातुर्होत्रं चातुर्होत्रवर्गः ॥ ३५ ॥

एवं द्रव्यर्त्विजां निवेशनमुक्त्वा पात्राणां निवेशनं वराहावयवेषुसफलमाह। स्रुक् तुण्ड इति।स्रुगिति जात्यपेक्षयाएकवचनं जुह्वभिप्रायेण वा तुण्डे मुखे आसीत् स्रुच इति,जात्यपेक्षया एकवचनं स्रुचौ अग्निहोत्रदर्शपौर्णमासयोः भेदेन श्रुचविधानात् इडापात्रमुदरेऽस्य भगवतः सर्वयागे सर्वत्र तत्तत्पात्रेषु सान्निध्यसामर्थ्यार्थम् ईश इतिसम्बोधनम् इडाभागस्योदरप्रवेशसाम्येन आकृतिसाम्येन च उदरे इडापात्रस्य निवेशनं चमसाः सोमपानपात्राणि कर्णरन्ध्रे इति आधिदैविके चमसे यशः स्थापितं तदाध्यात्मिकपरव्याख्याने प्राणत्वेन निरूपितं तथापि यशोरूपमिति तत्कर्णौ पेयमिति कर्णरन्ध्रे चमसानां निवेशनं प्राशित्रं ब्रह्मपात्रं तदास्ये मुखविवरे ब्रह्मभागस्य दन्तास्पर्शनेन गिलनविधानात् ग्रसने गिलनात्मके कर्मणि जिह्वामूले वा सर्वे ग्रहाः ऐन्द्रवायवादिपात्राणि तुशब्देन पात्राणां निवृत्तिरुच्यते वाक्यमध्ये तुशब्दस्य विद्यमानत्वात् ग्रसनस्य क्रियारूपत्वात् ग्रहा अपि सोमा एवात्र ग्राह्याः तत्पानं वा यस्य ते भगवतः चर्वणक्रियैव अग्निहोत्रं कर्म "अग्निहोत्र फला वेदा,, इति सर्वेषामेव यज्ञानामग्निहोत्रानुप्रवेशात् चर्वणत्वम् ॥ ३६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अत्र श्वेतवराहकल्पे स्वायम्भुवमन्वन्तरारम्भे ब्रह्मनासात एव श्वेतवराह आविर्भूय केवलं पृथ्वीमुद्धृत्यैवान्तरधात्ततः षष्ठे चाक्षुषमन्वन्तरे पुनराकस्मिके प्रलये जलादेराविर्भूय नीलो वराहः पृथ्वीमुद्धरन् हिरण्याक्षं जघानेति वराहद्वयलीलामेकीकृत्यैवात्र मैत्रेयः प्राह स्मेति श्रीभागवतामृतकारिकाभ्योऽवगन्तव्यं ताश्च यथा ।

> द्विधाविरासीत् कल्पेऽस्मिन्नाद्ये स्वायम्भुवान्तरे ।
> घ्राणाद्विधेर्धरोद्धृत्यै चाक्षुषीयेतु नीरतः ।
> हिरण्याक्षं धरोद्धारे निहन्तुं दंष्ट्रिपुङ्गवः ।
> चतुष्पात् श्रीवराहोऽसौ नृवराहः क्वचिन्मतः ।
> कदा चिज्जलदश्यामः कदाचिच्चन्द्रपाण्डुरः ।
> यज्ञमूर्त्तिः स्थविष्ठोऽयं वर्णद्वययुतः स्मृतः ।
> दक्षात् प्राचेतसात् सृष्टिः श्रूयते चाक्षुषान्तरे ।
> स्वतस्तत्रैव जन्मास्य हिरण्याक्षस्य युज्यते ।
> उत्तानपादवंश्यानां तनयस्य प्रचेतसाम् ।
> दक्षस्यैव दितिः पुत्री हिरण्याक्षो दितेः सुतः ।
> कल्पारम्भे तदा नास्ति सुतोत्पत्तिर्मनोरपि ।
> क्वासौ प्राचेतसो दक्षः क्व दितिः क्व दितेः सुतः
> अतः कालद्वयोद्भूतं श्रीवराहस्य चेष्टितम् ।
> एकत्रैवाह मैत्रेयः क्षत्तुः प्रश्नानुसारतः ।
> मध्ये मन्वन्तरस्यैव मुनेः शापान्मनुं प्रति ।
> प्रलयोऽसौ बभूवेति पुराणे क्वचिदीर्य्यते ।
> अयमाकस्मिको जातश्चाक्षुषेऽप्यन्तरे मनोः ।
> प्रलयः पद्मनाभस्य लीलयैतत्तु कुत्रचित् ।

इति अनुवाको वैदिकं सूक्तं तत्सदृशैर्वाक्यैस्तुष्टुवुः ॥ ३३ ॥

ते त्वया जितम् । हे अजित ! जय जयेत्यर्थः । यज्ञान् भावयसि हे सर्वयज्ञकारणेत्यर्थः । त्रयीं वेदमयीं हे सर्वजगत्कारण !॥ ३४ ॥

यज्ञात्मतां प्रकाशयन्तः स्तुवन्ति। रूपमित्यादिचतुर्भिः। त्वचि छन्दांसीत्यादौ छन्द आदीनां तव त्वगादय एव कारणमित्यर्थो ज्ञेयः । वर्हिःशब्दे दीर्घाभाव आर्षः चातुर्होत्रं होत्रादिकर्म्मचतुष्टयम् ॥ ३५ ॥

स्रुक् जुहूः तुण्डे मुखाग्रे स्रुवो नासिकयोः । इडा भक्षणपात्रं चमसः ग्रहाश्च सोमपात्राणि । प्राशित्रं ब्रह्मभागपात्रं ग्रस्यतेऽनेनेति ग्रसनं मुखान्तर्वर्त्तिच्छिद्रं चर्व्वणं भक्षणम् ॥ ३६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अनुवाको वैदिकं सूक्तं तत्तुल्यैर्वाक्यैः उपतस्थुस्तुष्टुवुः ॥ ३३ ॥

ते त्वया जितं जितमुत्कर्षेण वर्तितं संभ्रमे वीप्सा हे अजित ! यज्ञैर्भाव्यते आक्रियते यज्ञरूपेणोपास्यते इति फलितोऽर्थः तत्सन्यो-

दीक्षाऽनुजन्मोपसदः शिरोधरं त्वं प्रायणीयोदयनीयदंष्ट्रः ॥
जिह्वा प्रवर्ग्यस्तव शीर्षकं क्रतोः सभ्यावसथ्यं चितयोऽसवो हि ते ॥ ३७ ॥
सोमस्तु रेतः सवनान्यवस्थितिः संस्थाविभेदास्तव देव ! धातवः ॥
सत्राणि सर्वाणि शरीरसन्धिस्त्वं सर्वयज्ञक्रतुरिष्टिबन्धनः ॥ ३८ ॥
नमो नमस्तेऽखिलमन्त्रदेवताद्रव्याय सर्वक्रतवे क्रियात्मने ॥
वैराग्यभक्त्यात्मजयानुभावितज्ञानाय विद्यागुरवे नमो नमः ॥ ३९ ॥
दंष्ट्राग्रकोट्या भगवंस्त्वया धृता विराजते भूधर ! भूः सभूधरा ॥
यथा वनान्निःसरतो दता धृता मतङ्गजेन्द्रस्य सपत्रपद्मिनी ॥ ४० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

धने हेयज्ञभावन ! त्रयीं वेदत्रयमयीं निलिल्युर्लीनप्रायाः कारणेन-भूम्युद्धरणेन शूकराय ॥ ३४ ॥

यज्ञात्मतां दर्शयन्तः स्तुवन्ति । रूपमित्यादि चतुर्भिः । हेदेव ! यज्ञवशहरूपं दुष्कृतात्मनां दुर्दर्शनं दर्शनानर्हमप्राकृतं तदेव ननु अहो एतदध्वरात्मकम् अध्वररूपं यज्ञाकारमुपासकानामुपकारार्थं प्रकाशितमित्यर्थः तत्र छन्दांसि गायत्र्यादीनि त्वचि बर्हिः शब्दे-दीर्घाभाव आर्षः आज्यं दृशि चक्षुषि चातुर्होत्रं होत्रादिकर्मचतुष्टयमङ्घ्रिषु ॥ ३५ ॥

स्रुक् तुण्डः तुण्डे मुखाग्रे स्रुवः इतरदर्वी नासिकयोः आसीत् इडा भक्षणपात्रम् चमसाः प्रहाख्य सोमपात्राणि प्राशित्रं ब्रह्मभागपात्रं तत्र चमसाः कर्णरन्ध्रे आसन् प्राशित्रमास्ये मुखे आसीद् ग्रहाः ग्रसने ग्रस्यते अनेनेति आस्यान्तराच्छिद्रे चर्वणं भक्षणं तु अग्निहोत्रम् ॥ ३६ ॥

भाषाटीका।

तमाल वृक्ष सरी के नील वर्ण हैं सपेद दंत के अग्र भाग से पृथवी को उछालते हुये हस्ती की सी क्रीडा करते हैं हे विदुरजी ! इस प्रकार भगवान् को जान कर ब्रह्मादिक मुनि लोग हाथ जोडकर वैदिक अनुवाक मंत्रों से परमेश्वर की स्तुतिकरते भये ॥ ३३ ॥

मुनि जन बोले हे अजित!यज्ञ पालक!आपका जय हुआ जय हुआ वेदत्रय रूप अपनी तनू को कंपाते हुये आपको नमस्कार है जिन आपके रोमों के कूप सरी के छिद्रों में सब यज्ञ लीन हो गये हैं किसी कारण से सूकर रूप वाले के अर्थ नमस्कार है ॥ ३४ ॥

हे प्रभो ! आपका यह रूप पापी पुरुषों के दर्शन होने योग्य नहीं है जो रूप कि यज्ञस्वरूप है जिनकी त्वचामे सब वेदहै रोमों मे वर्हि कुशाहैं नेत्रोंमे आज्य घृत है चरणों में चातुर्होत्र कर्म है ॥ ३५ ॥

हे ईश ! स्रुक् मुखमें है स्रुव नासिका में है इडा पात्र उदर में है चमस पात्र कर्ण छिद्र में है ब्रह्मभागपात्र मुखमें है सोमपात्र ग्रास करने वाले मुख छिद्र में है भगवन् । अग्नि होत्र आप का भक्षण है ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

दीक्षा दीक्षणीयेष्टिः अनुजन्म वारंवारमभिव्यक्तिः उपसदस्तिस्र इष्टयः शिरोधरं ग्रीवा प्रायणीया दीक्षाऽनन्तरेष्टिः उदयनीया समाप्तीष्टिः ते एव दंष्ट्रे यस्य प्रवर्ग्यो महावीरः प्रत्युपसदं पूर्वं क्रियते सभ्यो होमरहितोऽग्निः आवसथ्यमौपासनाग्निः तयोरैक्यं तत्तव क्रतुरूपस्य शीर्षं शिरः चितय इष्टकाचयनानि पञ्चासवः प्राणाः ॥ ३७ ॥

प्रातःसवनादीन्यवस्थितिरासनं बाल्याद्यवस्था वा अग्निष्टोमोऽत्यग्निष्टोम उक्थः षोडशी वाजपेयोऽतिरात्र आप्तोर्याम इति सप्तसंस्थाविभेदास्त्वङ्मांसादिसप्तधातवः सत्राणि द्वादशाहादीनि बहुयागसंघातरूपाणि असोमा यज्ञाः ससोमाः क्रतवस्तद्रूपस्त्वम् इष्टियजनमनुष्ठानं तदेव बन्धनं यस्य सः ॥ ३८ ॥

पूर्वोक्तमेव सपरिकरं कीर्तयन्तःप्रणमन्ति । नमोनम इति । अखिलमन्त्रादिरूपाय क्रियात्मने सामान्यव्यापाररूपाय किञ्च वैराग्ययुक्तकर्मसाध्या सत्त्वशुद्धिस्ततो भक्तिस्तत आत्मजयश्चित्तस्थैर्यं तेनानुभावितं साक्षात्कृतं यज्ज्ञानं तस्मै एवं भूतज्ञानप्रदाय गुरवे च ॥ ३९ ॥

हेभूधर ! सभूधरा सपर्वता वनादुदकान्निर्गच्छतो गजेन्द्रस्य दता दन्तेन ॥ ४० ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी।

उपसदस्तत्संज्ञका यागविशेषाः महावीरो गरुडयागः ॥ ३७ ॥

सोमः सोमयागः रेतो वीर्यम् अवस्थीयतेऽत्रेत्यवस्थितिरासनं भावे क्तिन्प्रत्ययप्रसिद्धेः बालाद्यवस्थावेति पक्षान्तरम् । संस्थाविभेदाः ज्योतिष्टोमादिसंज्ञकसप्तयज्ञरचनाप्रकाराः । असोमा सोमद्रव्याहुतिरहिताः । बन्धनं तद्वशीकरणसाधनम् ॥ ३८ ॥

उक्तकर्मेति वेदविहितकर्मनिष्पाद्या अत्र"वासुदेवे भगवति भक्तियोगः प्रयोजितः।जनयत्याशु वैराग्यम्,,इत्यनुसारेण शुद्धभक्तिजवैराग्ये व्याख्याते प्रकृतयज्ञपरिकरता न स्यादग्रिमभक्तिपदं चासंबद्धार्थं स्यादिति मुख्यार्थानुपपत्त्या कार्य्यकारणभावसम्बन्धेन तत्पदस्य तत्कारणसत्त्वशुद्धौ लक्षणा प्रयोजनञ्च भगवदर्पितनिष्कामकर्मवैराग्यं न व्यभिचरतीति तथा व्याख्यातम् ततो वैरा

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

यात् ज्ञानं "भक्त्यामामभिजानाति,, इत्युक्तम् ॥ ३९ ॥

अत्र कान्तात्वेन भुवः पद्मिनीसादृश्यं पर्वतानां भुवोऽवयवत्वेन पत्रसादृश्यम् ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

दीक्षा दीक्षणीयेष्टिः तवानुजन्म वारंवारमभिव्यक्तिः उपसदः उपसदाख्या इष्टयः तव शिरोधरं ग्रीवा प्रायणीय आरम्भेष्टिः उदयनीयः अवसानेष्टिः प्रायणीयोदयनीये दंष्ट्रे यस्य वीरः प्रवर्ग्यः महावीरः जिह्वा आसीत् सभ्यो होमरहितोऽग्निः आवसथ्य औपासनाग्निः तयोर्द्वन्द्वैक्यं तत्क्रतोः क्रतुरूपस्य तव शीर्षकं शिरः चितय इष्टकाबन्धनविशेषाः ते तवासवः प्राणाः ॥ ३७ ॥

सोमस्तव रेतः सवनानि प्रातः सवनादीनि तवावास्थितिरवस्थानं बाल्याद्यवस्था वा संस्थाविभेदा अग्निष्टोमोऽत्यग्निष्टोम-उक्थः षोडशी वाजपेयातिरात्रौ आप्तोर्याम इति सप्त तव देहधातवः त्वङ्मांसादिसप्त धातवः सत्राणि बहुयजमानकानि कर्माणि सर्वाणि ते तव शरीरसन्धयः: त्वं सर्वयज्ञक्रतुरसोमा यज्ञाः ससोमाः क्रतवः तद्रूपस्त्वमित्यर्थः यद्वा यज्ञरूपः क्रतुः क्रतुशब्दो यज्ञमात्रपरः उपासनेष्वपि क्रतुशब्दप्रयोगः ततश्च यज्ञरूपः क्रतुरनुष्ठेयं कर्म यस्याराधनं सर्वयज्ञक्रतुस्त्वमित्यर्थः इष्टिर्याजमानमनुष्ठानं तदेव बन्धनं मध्यकायप्रदेशो यस्य स त्वमित्यर्थः ॥ ३८ ॥

एवं भागद्वयात्मकवेदपूर्वभागविहितयज्ञतदङ्गानि स्तुत्यत्वेन प्रकृतभगवद्वराहतन्वयवत्वेन रूपयित्वाद्यभगवतो भागद्वयात्मकवेदतदुपबृंहणरूपस्मृतिवेद्यताप्रतिपिपादयिषया पूर्वभागोदितयज्ञतदङ्गयवानां भगवच्छरीरतां तदाराधनरूपतामुत्तरभागोदितन्या सोपासनानां च तत्प्रसादहेतुत्वेन तस्यापि भागस्य भगवत्परतां च वदन्तो नमस्कुर्वन्ति । नमो नमइति । ते तुभ्यं नमो नमः आदराद्द्विरुक्तिः यद्वा पूर्वभागवेद्यत्वतदुपबृंहणवेद्यत्वरूपगुणमेव विशिष्टाकारभेदात्तदपेक्षया नमसोद्विरुक्तिः कथंभूताय ते क्रियात्मने क्रिया आत्मा शरीरं यस्य तस्मै यद्वा क्रियाया आत्मा तस्मै इत्यर्थः अनेन स्मार्तदानादीनां क्रियात्मत्वमुक्तं सर्वक्रतवे सर्वक्रतुशरीरायेत्यर्थः अनेन श्रौतयज्ञात्मत्वमुक्तम् यज्ञसाधनानामपि तदात्मकत्वमुच्यते । अखिलमन्त्रदेवताद्रव्यायेति । मन्त्रा द्रव्यदेवताप्रकाशकानि वेदवाक्यानि देवता उद्देश्यविशेषा इन्द्रादयो द्रव्याणि आज्यदधिपयः सोमादीनि अखिलानि मन्त्रदेवनाद्रव्याणि यस्य तस्मै अखिलमन्त्रादिशरीरायेत्यर्थः तत्तन्मन्त्रप्रकाशिततद्द्रव्यदेवतानिष्पाद्ययागहोमादिक्रियाबोधकपूर्वभागशरीरवाचकशब्दस्य शरीरिपर्यन्तत्वन्यायेन भगवत्परत्वमुक्तं भवति यज्ञानां भगवच्छरीरत्वं बृहदारण्यके माध्यन्दिनपाठे "यस्यात्मा शरीरम्" इत्यारभ्य यस्य यज्ञाः शरीरमिति श्रुतं गुणक्रियाणामपि शरीरत्वमाश्रयद्वारोपपन्नमित्यन्यदेतत् एवं पूर्वभागस्य भगवत्परत्वमुक्तम् अथोत्तरभागस्य तत्परत्वं वक्तुं न विशिनष्टि। वैराग्येति । वैराग्यं शब्दादिविषयेष्वनासक्तिः भक्तिः श्रवणकीर्तनस्मरणार्चनवन्दनादिरूपा साधनभक्तिः आत्मजयोऽन्तःकरणजयः एतैरनुभावितं निष्पादितं ज्ञानं ध्रुवानुस्मृतिरूपं ज्ञानं यस्य तस्मै अन्यपदार्थप्रधानबहुव्रीहिवललभ्यसम्बन्धसामान्यस्य प्रसादयितृत्वप्रासादनीयत्वरूपाविशेषे पर्यवसानं ततश्च वैराग्यादिनिष्पाद्यध्रुवानुस्मृत्यात्मकं ज्ञानं यत्प्रसादहेतुस्तस्मै इत्यर्थः अत्र वैराग्यशब्देन विवेकादिसाधनसप्तकान्तर्भूतविमोक उच्यते भक्तिशब्देन क्रिया आत्मजयशब्देनानुद्धर्षः इयं च केषांचिदुक्तिरन्येषामप्युपलक्षणार्था एवं चानेन विवेकादिसाधनसप्तकानुनिष्पाद्य भगवत्प्रसादहेतुभूतध्रुवानुस्मृतिबोधकस्योत्तरभागस्य भगवत्परत्वसिद्धिः विद्यागुरवइत्यनेन न्यासविद्याप्रतिपादकोत्तरभागैकदेशतदुपबृंहणानामपि तत्परत्वमुक्तम् विद्यागुरवे न्यासविद्याप्रवर्तिन इत्यर्थःन्यासविद्याप्रवर्तितत्वं भगवद्वराहाद्यवताराणांरामकृष्णवराहाणां वाराहपुराणश्रीरामायणश्रीभगवद्गीतादिषु प्रसिद्धम् अत्रापि गुणभेदविशिष्टाकार भेदान्नमसो द्विरुक्तिः ॥ ३९ ॥

एवं भागद्वयात्मकवेदवेद्यं भगवन्तं नमस्कृत्य अथ स्वाभीष्टं विज्ञापयिष्यन्तः प्रकृतवराहावतारचरित्रं तदवतारसौष्ठवञ्च विज्ञापयन्ति द्वाभ्याम् । दंष्ट्राग्रेति हेभगवन् ! त्वया कर्त्रा दंष्ट्राग्रकोट्या करणेन सभूधरा सपर्वता भूर्महीधृता सती विराजते भूधर भूधर्तः तत्र दृष्टान्तः यथा वनाज्जलान्निःसरतः निर्गच्छतः मतङ्गजेन्द्रस्य गजश्रेष्ठस्य दता दन्तेन धृता पत्रयुक्तपद्मिनी विराजते तथेत्यर्थः अभूतोपमेयं नहि कचिदपि पद्मिनी गजदन्तेनोद्धृता दृष्टा ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आत्मजन्म तव जननं दीक्षा व्रतसंग्रहः उपसदः उपसन्नामानो यज्ञविशेषाः उपसत्तिविशेषा वा शिरोधोग्रीवात्वं प्रायणीयोदयनीयदंष्ट्रः यस्य दंष्ट्रयोरुपक्रमावसानकर्मणी इष्टीप्रायणीयोदयनीयसंज्ञेवर्तेते स तथोक्तः । क्रतुः सङ्कल्पः क्रतोरिति पाठे क्रतोः सत्यसङ्कल्पस्य सर्वक्रत्वाधारस्य वातवशीर्षकं शिरः सभ्यावसथ्यौ अग्निचितयः सप्तकृतयस्तवासवः प्राणा जन्मभूमयः चितय इतीष्टका बन्धनविशेषा वा ॥ ३७ ॥

सोमो लता प्रातरादित्रीणि सवनानि अवस्थितिर्निश्चयत्वेन गतिनिवर्तनं संस्थाविभेदा अग्निष्टोमादयः सप्त अग्निष्टोमादयः संस्थाभेदाः सप्तास्य तंत्वइति यावचश्च त्वगादिसप्तदेह धावतः अत्र श्लोकद्वये सप्तसु प्रथमेति सूत्रात् प्रथमायाः सप्तमीत्वं युक्तं त्वचीत्यादिसप्तमीप्रयोगाच्च सर्वाणि सत्राणि बहुभिः संभूय कर्तव्यानि दीर्घकालीनानि यज्ञविशेषकर्माणि किन्त्वनुक्तेनेत्युपसंहरति । त्वं सर्वेति । एकाहिकद्व्याहिकादिसर्वयज्ञस्थापकेच्छावान् इष्टिबन्धनः तवदेहबन्धने संहनने इष्टिः प्रतिपत्तिथ्यादिषु क्रियमाणकर्मविशेषो वर्तत इत्यर्थः ॥ ३८ ॥

उक्तानुक्तविशेषणानि समुच्चीय विशिंषन्ति। अखिलेत्यादिना। सत्ताप्रदत्वेन मन्त्रादिषु सन्निहितत्वादखिलमन्त्रदेवताद्रव्याय सर्वे क्रतवः सङ्कल्पा यस्माद्भवन्ति स सर्वक्रतुः तस्मै क्रियात्मने कर्मकारयितृत्वेन तद्व्याप्ताय आत्मजयात्मनस्तव प्रसादाज्जातया वैराग्यजृम्भितभक्त्यानुभावितं स्वस्वयोग्यतानुसारेण समुत्पादितं स्वविषयं ज्ञानं येन स तथा तस्मै वेदादिपरविद्यागुरवे ॥ ३९ ॥

पूर्वमनाथत्वेन विलग्नामित्यनेन क्षीणां मध्यवत्कृशत्वं ध्वनितमधुना सनाथत्वेन पर्वताद्यवयवपुष्टाभूमिर्विराजते । इति स्तुवन्तीत्याह । दंष्ट्राग्रकोटयेति दता दन्तेन मतङ्गजेन्द्रस्य सपत्रपद्मिनी

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सरत्रा विसिनी "नलिन्यां तु विसिनीपद्मिनीमुखा" इत्यमरः अनेन हरेर्धरणीधरेति नामसार्थकमिति सूचितम् ॥ ४० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

क्रियाणां साधिकरणानां भगवति निवेशनमाह । दीक्षानुजन्मेति । भगवान् वराह इदानीमवतीर्णः पुनर्यजमानरूपेणाव तरति "प्रतियज्ञं यज्ञो यजमान इति गर्भो वा एष यद्दीक्षित इति च क्रीते सोमे पूर्णतेजा जायते एव" इति च श्रुतेः दीक्षासंस्कारः दीक्षाख्यदेवताया यजमाने स्थापनं तदिष्ट्या क्षौरादिना च सिद्धयति उपसदः ग्रीवा स एव शिरोधरशब्देनोच्यते शिरोविभर्तीति व्युत्पत्त्या "ग्रीवा उपसद" इतिश्रुतेः प्रायणीयोदयनीये इष्टी उपसदादौ सोमक्रयात् पूर्वं सोमान्ते च क्रियेते इति उभयोरेकं द्रव्यमेका च देवता एकं च पात्रमिति कालसंज्ञाभेदात् कर्मभेदः प्रहाणां मुखमध्ये स्थानात् प्रायणीयोदयनीययोः पार्श्वयोः स्थानमुचितमेव उभयोर्दंष्ट्रात्वं दिक्परिज्ञापकत्वेन सर्वो हि मृत्युभिर्हतः दिशः परिजानाति अन्यथा भवाटवीन्यायेन रजस्वलाचो दिशो न जानातीति मृत्युनैव दिशः परिज्ञाप्यन्ते जिह्वा प्रवर्ग्य इति प्रवर्ग्यपात्रमेव. शिरः कर्म चाध्यात्मिकम् आहुत्यनन्तरं या ज्वाला सा आकृतिसाम्याज्जिह्वा स एव पुनः प्रवर्ग्यः तव क्रतुरूपस्य शीर्षकं शिरः एवं क्रियानिवेशनमुक्त्वा तदधिकरणनिवेशनमाह । सभ्यावसथ्यं चितयोऽसवोहित इति । सभ्यावसथ्ययोरिष्टकाच यनाभावात् पृथङ्निर्देशः शालामुखीये धिष्ण्येषु च चयनं स्पष्टमेव दर्शपूर्णमासादिष्वपि चयनविधानात् "अग्निहोत्रे दर्शपूर्णमासयोः पशुबन्धे चातुर्मास्येषु" इति श्रुतेः दक्षिणाग्निप्राजाहितयो रपि चयनतन्त्रं शामित्रं तु प्राजाहितमाहवनीयो वा निर्मथ्यपक्ष स्त्वनुकल्पः असवः प्राणाः नव वै पुरुषे प्राणाः धिष्ण्यान्यपि नव गार्हपत्यो दशमः ॥ ३७ ॥

नामधेयानां विनियोगमाह । सोमस्त्विति । सोमः सोमयागः सोमेन यजेत इत्यत्र मत्वर्थस्याश्रयणात् ओषधिपक्षेऽपि देवतात्वात् सर्गजनकत्वेन रेतस्त्वं ग्रहाणां सोमत्वे अधिकृतः सोमो रेतस्त्वेन वक्तव्यः । सवनानि त्रीणि अवस्थितिः जाग्रत्स्वप्नसुषुप्तयः संस्था अग्निष्टोमादयः त्रयः पञ्चसप्तवा तेषां सर्व एव विभेदाः तव देहधातवः चर्ममांसमस्थिचेति त्रयः त्वङ्मांसस्नाय्वस्थिमज्जेति पञ्च सप्तपक्षे चर्मरुधिरयोरनुप्रवेशः चतुष्पक्षे त्रयो रुधिरं च सर्वथा देहधातव एव सर्वे संस्थाभेदाः सत्राण्येकाहादीनि सहस्रसमान्तानि सर्वाण्यवान्तरभेदयुक्तान्यपि शरीरस्य अस्थ्नां संयोगस्थानानि तान्येव सन्धिशब्देनोच्यन्ते सर्वे यज्ञाः क्रतवश्च त्वमेव यज्ञाः सप्तदशाहादयः क्रवतः द्वादशाहादयः अश्वमेधान्ताः चयनसहिताः इष्टयो दर्शपूर्णमासादयः बंधनानि नसाः ॥ ३८ ॥

एवं सर्वनिवेशनमुक्त्वा यज्ञरूपमुपसंहरन् नमस्यति । नमोनम इति । आदरे वीप्सा स्वस्य स्वभोगस्य च तत्फलत्वात् अस्य रूपान्तरत्वव्यावृत्त्यर्थं न इति अखिला मन्त्रा ईषेत्वादयः वस्वादयो देवताः द्रव्याणि व्रीह्यादीनि देवतोद्देशेन द्रव्यं मन्त्रेण देवतायै समर्प्यत इति अलौकिको यागः मन्त्रदेवताद्रव्यात्मको भवति पुरुषप्रयत्नस्तु लौकिकः अभिनयरूपत्वात् स न यागः प्रत्यक्षसिद्धत्वात् सर्वक्रतवे सर्वयागभेदरूपाय क्रियात्मने अभिनयोऽपि यागाविर्भावहेतुरिति क्रियाः प्रतीन्द्रिया कौश्यदाश्रिता वस्तुतस्तु तत्रैवान्तर्भूतमन्त्राधिकरणिका यजमानाद्याविष्टभगवन्निष्ठा एवं सर्वत्र क्रियारूपत्वेन स्वर्गादिसाधकत्वेन रूपेण नमस्कारं कृत्वा ब्रह्ममीमांसानुसारेण वेदार्थरूपेऽप्ययमेवेत्याह। वैराग्येति। वैराग्यं विषयवैतृष्ण्यं भक्तिर्भगवति श्रवणादि स्नेहो वा आत्मजयोऽन्तःकरणजयः त्रयमप्यन्तःकरणशोधकम् अत एव तैरनुभावितं यज्ज्ञानं ब्रह्मात्मानुभवः तद्रूपाय विद्या उपनिषद्वाक्यार्थज्ञानरूपा तज्जनको गुरुः उत्तरकाण्डे त्वेतावत्येव सामग्री षड्गुणा भगवद्रूपां पुनर्नमनं कार्यभेदात् ॥ ३९ ॥

एवं षड्भिः यागरूपत्वं निरूप्य आधिदैविकं रूपं प्रकृतोपयोगि निरूपयति षड्भिः। दंष्ट्राग्रकोट्येति। दंष्ट्रायाः अग्रं तस्य कोटिरेकदेशः माहात्म्यार्थमेवमुक्तम् ऊर्ध्वं धारणात् तथैव भवति तादृश्याः क्रियायाः असम्भावितत्वमाशङ्क्य भगवन्निति सम्बोधयति तत्रापि भगवत्प्रयत्न एव व्यापृत इति आह। त्वया धृतेति। अन्यधृतायाः तत्रापि दंष्ट्राग्रभिन्नायाः अशोभामाशङ्क्याह। विराजत इति। भूधरेति सम्बोधनं योगस्य दर्शनात् माहात्म्यार्थम् इतरभूधरसाम्याभावाय स भूधरेत्युक्तं सपर्वता भूमिर्धृतेत्यर्थः सपर्वता भूमिर्निम्नोन्नता शोभारहितेव भवति विशेषशोभायां हेतुमाह । यथा वनादिति । वनाज्जलात्स्थलकमलिनीं गृहीत्वा वनादेव वा अवनात् रक्षणाद्धेतोर्निः सरतः मतङ्गेन्द्रस्य दन्तेन धृता पत्रसहिता पद्मिनी कमलिनी भगवदर्थमुद्धृता गजेन्द्रेण कमलिनी शोभत इति अविवादं तथा यज्ञाय यज्ञेन समुद्धृता भूमिः सर्वपुरुषार्थमाधिकेति भर्तृसहितेति भर्तृपूजितेति वा ऊर्ध्वं निर्गच्छन्ती वा कैलासशिखरे मेघवत् विराजत एव प्राकृतवनादपि निःसरता गजेन धृता शुभ्राधिकरणा आश्चर्येण लोकैर्दृश्यमाना चित्ररूपमध्यगतेव विराजते आकृतिः प्रकृतेऽपि तुल्या ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

दीक्षा दीक्षणीयेष्टिः अनुजन्म वारम्वारमभिव्यक्तिः । उपसदस्त्रिस्र इष्टयः शिरोधरं ग्रीवा प्रायणीया दीक्षानन्तरेष्टिः उदयनीया समाप्तीष्टिः ते एव दंष्ट्रे यस्य प्रवर्ग्यो महावीरः प्रत्युपसदः पूर्वं क्रियते । सभ्यो होमरहितोऽग्निः आवसथ्य औपासनाग्निः । तयोर्द्वन्द्वैक्यं तत्तव क्रतुरूपस्य शीर्षं शिरः । चितय इष्टकाचयनानि पञ्च असवः प्राणाः ॥ ३७ ॥

सवनानि प्रातरादिकर्म्मकालाः । अवस्थितिरासनम्। संस्थाविभेदा अग्निष्टोमोऽत्यग्निष्टोमः उक्थः षोडशी वाजपेयोऽतिरात्र आप्तोर्याम इति सप्तधातवस्त्वङ्मांसादयः । सत्राणि द्वादशाहादीनि बहुयागसङ्घातरूपाणि। यज्ञाः असोमाः क्रतवः ससोमास्तद्रूपस्त्वम् । इष्टियजनं यज्ञाङ्गभूता त्वद्भक्तिः सैव बन्धनं यस्य सः ॥ ३८ ॥

उक्तार्थं समासेन स्तुवानाः प्रणमन्ति । नमो नम इति । क्रियात्मने यज्ञादिव्यापाररूपाय । यद्यप्येवं त्वं लीलया कर्म्ममार्गप्रवर्त्तकत्वेन सर्व्वकारणमूर्त्तिरसि । तदपि कर्म्मफलस्पृहारहितभक्त्यैव तवानुभवो भवेदित्याहुः वैराग्यं दृष्टादृष्टकर्म्मफलस्पृहाराहित्यं तद्युक्ता या भक्तिस्तयैवात्मनो मनसो जयस्तेनानुभावितं साक्षात्कृतं ज्ञानं स्वविषयकं येन तस्मै । अतएव विद्यागुरवे "ददामि बुद्धियोगन्तं येन मामुपयान्ति ते,, इति त्वदुक्तेस्त्वत्प्रापकं ज्ञानं त्वमेव दातुमर्हसीति भावः ॥ ३९ ॥

अहो पृथिव्या भाग्यं यां त्वं धत्से इति तां वर्णयति । दंष्ट्रेति

त्रयीमयं रूपमिदं च सौकरं भूमण्डलेनाथ दता धृतेन ते ।
चकास्ति शृङ्गोढघनेन भूयसा कुलाचलेन्द्रस्य यथैव विभ्रमः ॥ ४१ ॥
संस्थापयैनां जगतां सतस्थुषां लोकाय पत्नीमसि मातरं पिता ।
विधेम चास्यै नमसा सह त्वया यस्यां स्वतेजोऽग्निमिवारणावधाः ॥ ४२ ॥
कः श्रद्दधीतान्यतमस्तव प्रभो ! रसां गताया भुव उद्विबर्हणम् ।
न विस्मयोऽसौ त्वयि विश्वविस्मये यो माययेदं ससृजेऽतिविस्मयम् ॥ ४३ ॥
विधुन्वता * वेदमयं निजं वपुर्जनस्तपःसत्यनिवासिनो वयम् ।
सटाशिखोद्धूतशिवाम्बुबिन्दुभिर्विमृज्यमाना भृशमीश ! पाविताः ॥ ४४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

हे भूधर ! सभूधरा सपर्व्वता । वनात् जलात् । सपत्रपद्मिनीति तस्याः कोरककुड्मलादिभिरुच्चनीचपर्व्वता उपमिता ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

किञ्च दीक्षा दीक्षणीयेष्टिः तव अनुजन्म पुनःपुनरभिव्यक्तिः उपसदस्तिस्र इष्टयः तव शिरोधरं प्रायणीया आरम्भेष्टिः उदयनीया अन्त्येष्टिः ते दंष्ट्रे यस्य सः प्रवर्ग्यो महावीरः तव जिह्वा सभ्यो होमरहितोऽग्निः आवसथ्यः औपासनाग्निः तयोर्द्वन्द्वैक्यं तव क्रतुरूपस्य शीर्षकं शिरः चितयः इष्टकाचयनानि पञ्च असवः प्राणाः ॥ ३७ ॥

सोमस्तु तव रेतः सवनानि प्रातः सवनादीनि अवस्थितयः बाल्याद्यवस्थाः अग्निष्टोमोऽत्यग्निष्टोम उक्थः षोडशी वाजपेयोऽतिरात्र आप्तोर्य्याम इति सप्तसंस्था विभेदाः नव त्वङ्मांसादि सप्तदेहधातवः सत्राणि बहुयजमानकानि कर्माणि तव शरीरसन्धिः असोमा यज्ञाः ससोमाः क्रतवः सर्वे यज्ञाः क्रतवश्च यस्मिन् स तथैवं भूतस्त्वमसि इष्टयंजनमनुष्ठानं तदेव बन्धनं यस्य सः ॥ ३८ ॥

ते नमो नमः आदरार्थो द्विरुक्तिः अखिलानि मन्त्रादीनि यस्मात्तस्मै सर्वमन्त्रादिप्रवर्तकाय सर्वे क्रतवो यस्मात् सर्वैर्वैदिकक्रियाप्रवर्त्तकाय क्रियायाः लौकिक्याः आत्मा आश्रयः प्रवर्तकस्तस्मै अन्तःकरणशोधककर्मप्रवर्तकायेत्यर्थः आपत्र गुरवे अतएव स्ववर्णाश्रमकर्मानुष्ठानमुद्धान्तःकरणमनुभुत्सम्पादितैः वैराग्यभक्त्यात्मज्ञानैः त्रिपर्वैराग्यहारिकथाश्रवणादिहरिभक्तिमनोनैश्चल्यैः अनुभावितं निष्पादितं ध्यानं यस्य तस्मै नमः ॥ ३९ ॥

हेभूधर ! वनादुदकात् दता दन्तेन ॥ ४० ॥

---

भाषाटीका ।

आपका वारं वार प्रगट होना दीक्षा हैं उपसद शिरोधरा हैं प्रायणीय उदयनीय दोनो दांत हैं प्रवर्ग्य आपका जिह्वा है यज्ञ स्वरूप आपका सभ्य आवसथ्य दोनो शिर हैं चिति आपके प्राण हैं ॥ ३७ ॥

हे देव ! सोम आपका रेत है प्रातः कालादि आपकी स्थिति है अग्निष्टोमादिक संस्थाविभेद आपके देह के सप्तधातु हैं द्वादशाहादि सत्र आपके शरीर संधि हैं आप सर्व यज्ञ क्रतु स्वरूप हो इष्टि अनुष्ठान आपका बन्धन है ॥ ३८ ॥

संपूर्ण देवता मन्त्र द्रव्यों के आश्रय सर्व क्रतु स्वरूप क्रिया स्वरूप तथा वैराग्य भक्ति अन्तःकरण का जीतना इनसे साक्षात्कारकिया जो ज्ञान तद्रूप औविद्या गुरू आपके अर्थ नमस्कार है ॥ ३९ ॥

हे भगवन् हे भूधर ! जलमे से निकलते हुये मत्तहस्ती के दांत मे रखी हुयी कमलिनी पुष्करिणी अथवा कमलकी शाखा जैसी मालूम होवै तैसे पर्वतों के सहित पृथिवी आपके दांतों के अग्र में शोभित हो रही है ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्वया धृता भूर्विराजत इत्युक्तमिदानीं भूमण्डलेन त्वद्रूपं विराजत इत्याहुः । त्रयीति । अथेत्यर्थान्तरे ते इदं रूपं दन्तेन धृतं यद्भूमण्डलं तेन चकास्ति शोभते शृङ्गेणोढो धृतो योघनस्तेन भूयसातिमहता विभ्रमो विलासः ॥ ४१ ॥

लोकाय वासस्थानार्थं ते पत्नीं जगतां मातरं यतस्त्वं पितासि एवं सति तत्र स्थिताः सन्तस्त्वया पित्रा सहास्यै मात्रे नमसा विधेम नमनं करिष्यामः नमस्कारेण परिचरेमेति वा स्वतेजोधारणशक्तिं यज्ञिका मन्त्रतोऽग्निमरणाविवाधाः निहितवानसि ॥ ४२ ॥

इदंच त्वयाऽतिदुष्करं कृतमित्याहुः । क इति । हेप्रभो ! तव त्वया कृतं भुव उद्विबर्हणमुद्धरणं त्वदन्यः कः श्रद्दधीत स्पृहयेत् अध्यवस्येदित्यर्थः त्वयि पुनरसौ विस्मयो न भवति यतो विश्वे सर्वे विस्मया यस्मिन् कुतः योभवान् अतिविस्मयमद्भुतमिदं विश्वम् क्रियाविशेषणं वा ससृजे सृष्टवान् ॥ ४३ ॥

विस्मयं दर्शयन्तः प्रार्थयन्ते । विधुन्वतेति द्वाभ्याम् । सटानां शिखाभिरग्रैरुद्धूता उच्छालिता ये शिवा अम्बुबिन्दवस्तैः सिच्यमाना वयं पवित्रीकृताः ॥ ४४ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

अर्थान्तरे भगवद्रूपस्य विराजमानत्वरूपेऽर्थे पूर्वस्माद्विलक्षणे विलासोऽत्र शोभा त्रयीमयं पूर्ववर्णितयज्ञात्मकमपि ॥ ४१ ॥

---

विधुन्वत इति श्रीवल्लभाचार्यः

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

एवं सति संस्थापने सति तत्र भुवि ॥ ४२ ॥

अध्यवस्येत् स्वस्मिंस्तदुद्धारणयोग्यतां सम्भावयेत्‌असौ भुव-उद्धरणलक्षणः ॥ ४३ ॥

विधुन्वता कम्पयता त्वया ॥ ४४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

त्रयीमयमिति । हेनाथ ! दता दन्तेन धृतेन भूमण्डलेन ते तवेदं त्रयीमयमवयवत्वेन रूपितवेदविहितकर्मप्रचुरमेवेदं सूकररूपं चकास्ति शोभते अत्र दृष्टान्तः भूयसा विपुलेन शृङ्गोढघनेन शृङ्गेणोढो यो घनो मेघस्तेन कुलाचलेन्द्रस्य कुलाचलपर्वतश्रेष्ठस्य विभ्रमो विलासो यथा तद्वदित्यर्थः ॥ ४१ ॥

स्वाभिप्रेतं विज्ञापयन्तो नमस्कुर्वन्ति सतस्थुषां सस्थावराणां जगतां जङ्गमानां लोकाय स्थापनार्थं तव पत्नीं जगतां मातरमेनां भूमिं संस्थापय प्रतिष्ठापय यतस्त्वं जगतां पितासि पालको जनकश्चासि एवं सति तत्र स्थिताः सन्तो वयं त्वया पित्रा सहास्यै मात्रे नमसा विधेम नमस्करिष्यामः नमस्कारेण परिचरेमेति स्वतेजोधारणशक्तिं याज्ञिका मन्त्रतोऽग्निमरणाविव मन्थनकाष्ठे इव यस्यां भूमावधाः निहितवानसि ॥ ४२ ॥

एवं स्वाभिप्रेतं विज्ञाप्य स्वकृतार्थतामाविष्करिष्यन्तः तस्य भगवतोऽनन्त्याचिन्त्यविचित्रशक्तेस्तव कर्मैतैरचिन्त्यमित्याहुः । क इति । हेप्रभो ! अन्यतम इतरः प्राकृतः कः पुरुषस्तव रसातलं प्रातगताया भुव उद्विबर्हणमुद्धरणं श्रद्धीत इदमिति चिन्तयितुमुत्सहेत आश्चर्यत्वेन न कोऽपि निर्वक्तुं प्रभवेदित्यर्थः त्वयि पुनरसौ विस्मयो न भवति यतो विश्वविस्मयः विश्वे सर्वे विस्मया यस्मिन् विश्वस्य विस्मयो वा यस्मिन् सविश्वविस्मयः एवं भूतोयोभगवान् स्वस्य मायया आश्चर्यशक्त्यातिविस्मयमत्याश्चर्यमिदं जगत्ससृजे सृष्टवान् अचिन्त्यविविधविचित्रसंनिवेशं जगत् सृजतस्तवेदं भुव उद्विबर्हणं किं यदाश्चर्यकरमिति भावः ॥४३॥

स्वकृतार्थतामाविष्कुर्वन्ति । विधुन्वतेति । हेईश ! वेदमयं निजं वपुः शरीरं विधुन्वता कम्पयता त्वया कर्त्रा सटानां शिखाभिरग्रैरुद्धूता उच्चलिताः ते च ते शिवाम्बुविन्दवः तैः करणैर्विमृज्यमानाः जनस्तपः सत्यनिवासिनो वयं पाविताः पवित्रीकृताः कृतार्था अभूमेति भावः ॥ ४४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इतरसंयोगेनेतरेषां विराजनं हरेस्त्वात्मनैवेति भावेन स्तुवन्ती त्याह । त्रयीमयमिति । भूमण्डलं धृतेन दता चकास्ति विराजते चकासृदीप्ताविति धातुरदादिः शृङ्गेणोढेन घनेन विभ्रमः कान्तिविशेषः ॥ ४१ ॥

महाद्यभीष्टं जानतोऽप्येनां किङ्करोमीति हरेः प्रश्नात्प्रागेनं स्वाभीष्टं विज्ञापयन्तीत्याह । संस्थापयेति । जगतां जङ्गमानां तस्थुषां स्थावराणां मातरं तव पत्नीमेनां संस्थापय जलस्योपरीति शेषः कीदृशस्त्वं पितासि सर्वस्येति शेषः यद्वा त्वं जगतां पितासि तस्थुषां मातरमेनामिति स्वकृतोपकारप्रत्युपकारमन्यमपश्यन्तो वयमिमं नमस्कारं कुर्मं इति विज्ञापयन्तीत्याह । विधेमेति । उभयोर्मातृत्वं पितृत्वंच तस्मादिति व्यञ्जयन्तो विज्ञपन्तीत्याह । यस्यामिति । अनेन भूमेर्माहात्म्यंच सूचितम् अरणिरग्निमथनदारुविशेषः ॥ ४२ ॥

त्वदन्येनेदं कर्म निरूपयितुमशक्यं किं पुनः करणमिति विज्ञापयन्तीत्याह । क इति । उद्विबर्हणमुद्धरणमिदमस्माकमेवाश्चर्यं न तवेति श्रावयन्तीत्याह । नेति । इतोऽप्यधिकविस्मयोऽस्तीति विज्ञापयन्तीत्याह । यइति । अतिविस्मयोऽतिशायितविस्मयः ॥४३॥

वाचा तव गुणगणानां सङ्कीर्तनेन मनसा संस्मरणेन अन्तःशुद्धाः बहिस्तव सटाग्रसमुद्धूतशुद्धजलविन्दुभिः पाविता वयमिति विज्ञापयन्तीत्याह । विधुन्वतेति । तृतीया षष्ठ्यर्थे विधुन्वतस्तव यद्वा विधुन्वता त्वया पाविताः तत्कथमित्यतो विशिषन्ति । सटेति त्वया पाविता इति यत्सटाग्रशिवाम्बुविन्दुभिरिति ॥ ४४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत एव त्रयीमयमपि भूमण्डलस्थानीयेन शृङ्गोढघनेन कुलाचलेन्द्रस्य यथैव विभ्रमेण तव रूपं चकास्तीत्यर्थः ॥ ४१—४४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं भगवत्सम्बन्धात् भूमेः सौन्दर्यातिशयमुक्त्वा भगवतः तादृश्यदोषपरिहाराय तयां कृत्वा भगवतो रूपातिशयमाह । त्रयीमयमिति । सौकरमपीदं रूपं वेदत्रयात्मकत्वेन स्वरूपतो महदपि विराजमानमपि दता धृतेन भूमण्डलेन भिन्नप्रक्रमेणाधिकं चकास्ति वेदादिभावेनालौकिकं रूपमाहात्म्यं नतु लौकिकं इदं तु दन्ताग्रे भूमण्डलस्थापनेन लोकप्रसिद्धत्वात् अलौकिकापेक्षयाप्यधिकं यथा तुरगाद्यपेक्षयापि चित्रादिस्थिताः तुरगादयः अतिशोभा युक्ता भवन्ति तथा वर्णान्तरभावमापन्ना वर्णान्तरेण धृता वर्णान्तरस्य शोभाजनिका भवति इममेवार्थं वर्णकृतं शोभातिशयं दृष्टान्तेन स्पष्टयति । शृङ्गोढघनेनेति । श्वेतशृङ्गे आरूढेन नीलमेघेन स्थूलेन यथा मेरुः शोभते तत्रापि त्रयाणामन्योऽन्यस्नेहेन सचेतनत्वे विलासो भवति तदा दृश्यमानरूपमिव तद्भवातीति अभूतोपमा विभ्रमशब्देनोच्यते ॥ ४१ ॥

एवं दम्पत्योरन्यतरसम्बन्धेनान्यतरशोभामुक्त्वा तयोः पितृत्वं स्थापयन्तः स्वार्थं भूस्थापनं प्रार्थयन्ति । संस्थापयेति । पत्नीं जगतां स्थावरसहितानामुद्भवाय सर्वेषां मातरं तव पत्नीं पितृत्वात् सम्यक् स्थापय यथा पुत्राणामर्थे भार्यां स्थापयित्वा गृहस्थो देशान्तरे गच्छति तथा त्वयापि विधेयं यतः त्वं पितासि अनेन प्रत्युपकारमनपेक्ष्यैव त्वया स्थापनीया इयं च तथैव परिपालयत्विति निरूपितं तथाप्यस्माभिः स्वानुग्रहाय पूर्णकामयोर्युवयोः नमस्कारातिरिक्तं कर्त्तव्यं न भवतीति त्वया सह अस्यै नमसा विधेम नमः आसमन्तात् विधेमेत्यर्थः नमसेत्यनयं कर्त्तव्यनिर्देशो वा नमस्कारपुरःसरं पूजां करिष्याम इत्यर्थः अथवा अस्यै अस्याः प्रियार्थं नमसा सह च विधेम भक्तिं यज्ञादिकं च कुर्वाणाः आज्ञाकारिणो भविष्याम इत्यर्थः किञ्च इयं स्थापनीयैव यत इयं गर्भिणी भगवदाकृतिविशेषान् भक्तिसाधकान् प्रसविष्यतीत्यभिप्रायेणाह । यस्यां स्वतेज इति । मार्गद्वयवर्त्तकं सवान् यथा अश्वत्थे त्रयीमयमग्निं यज्ञसिद्ध्यर्थमधाः एवमस्यामपि स्वतेजः स्वस्य पुरुषोत्तमाकृतिं पुरुषाकृतिं वा भूमौ स्थापितवान् ॥ ४२ ॥

इमां प्रार्थनामुक्त्वा कर्त्तव्यान्तरं नावशिष्यत इत्यभिप्रायेण तस्य पूर्वकृतमेव चरित्रमनुवदन्तः स्तुवन्ति । कः श्रद्दधीतेति

**स वै बत भ्रष्टमतिस्तवैषते यः कर्मणां पारमपारकर्मणः ।**
**यदोगमायागुणयोगमोहितं विश्वं समस्तं भगवन् ! विधेहि शम् ॥ ४५ ॥**

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अन्यतमः त्वत्तः अन्यो भूत्वा महानपि भुव उद्विवर्हणमुद्धारं वहनउद्धरणं वा अन्यैरुच्यमानमपि श्रद्धां कुर्यात् त्वन्माहात्म्यमवाङ्मनसगोचरं दृष्ट्वाप्युक्तं न विश्वासं जनयति माहात्म्यमेतादृशाकार्याशक्तिं च मत्वा असम्भावनाया उपाख्यानानां मिथ्यात्वं परिकल्प्य न कदाचिदीदृशं जगदिति मन्यते। तद्वाक्येनान्येऽपि च भ्रान्ता भवन्ति यत्रान्यकरणमपि न मन्यन्ते तत्र स्वकरणं दूरे तव त्वेतदाश्चर्यहेतुरपि नेत्याह । न विस्मयोऽसाविति । असावुद्धारः त्वयि न विस्मयः आश्चर्यं न भवति तव वा गर्वहेतुर्न भवति । तत्र हेतुः । विश्वविस्मय इति । विश्वमेव तव विस्मयरूपं यथा रेतोरूपाज्जलात् मयूरादिः पुरुषादिर्वा जायते बीजाद्वटादिर्वा किञ्च विश्वमेव विस्मयमाश्चर्यं यस्मिन्निति भवत्वेवेदं माहात्म्यसूचकम् । इतोऽप्यन्यन्महन्माहात्म्यं तदाह। यो मायेयदमिति । इदमेव जगन्मायया स्वप्नादौ प्रतिपुरुषं भिन्नप्रकारेण एकस्मिन्नपि पुरुषे वयआदन्यथा रूपं च संसृज इति सृजत इति पाठे यो भवान् इति तत्रापि अति विस्मयं पर्वताग्रे समुद्रः दिवसे नक्षत्राणि स्वशिरश्छेदादिर्वा स्वयं तेनैव रूपेण पश्यतीति ॥ ४३ ॥

ननु तथापि भवद्वयों ज्ञानं मोक्षो वा देयः तदर्थमधिकारो वा सम्पादनीयः तत्कथमेतावतैव विरमणमित्याशङ्क्याहुः । विधुन्वत इति। इदं वेदात्मकं वपुःजलाद्धुद्धतं विधुन्वतः तव सतः प्रसंगादेव वयं जनतपःसत्यनिवासिनः तत्सटाशिखाद्धूतशिवाम्बुबिन्दुभिः पुनः पुनरागतैर्विशेषेण मृज्यमाना घर्षणपूर्वकं प्रक्षाल्यमानाः अत्यर्थमन्तर्बहिः पाविताः अतिपवित्रैर्स्नानादिकं प्राप्यत एव मुखे मन्त्रं पठन् हस्तेन मार्जनादौ लोकः किञ्च पवित्रो भवति तत्र वेदमयेनैव शरीरेण वेदार्थरूपेण बर्हिषा कण्ठोद्गतेन पवमानो बर्हिः मुष्ट्याकृतिरूपेण तत्रापि तवालोडनेन कल्याणरूपाम्बुभिः मार्जने किं वक्तव्यमित्यर्थः त्रिविधानां ब्रह्मणामेकविधाधिकारसिद्ध्यर्थम् ॥ ४४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यथा त्वया स्वामिना धृता भूः शोभते तथा भुवापि स्वभक्तया धृतस्त्वं शोभस इत्याहुः । त्रयीति । कुलाचलेन्द्रस्य महापर्वतस्य शृङ्गेण ऊढो धृतो यो घनो मेघस्तेन विभ्रमः शोभा यथा ॥ ४१ ॥

किं युष्माकमभीप्सितं तद्ब्रूतेति चेदत आहुः । संस्थापयेति । लोकाय वासस्थानार्थं ते पत्नीं जगतां मातरं यतस्त्वं पितासि । अतस्त्वया पित्रा सह अस्यै मात्रे नमसा विधेम नमस्कारं करवाम स्वतेजः धारणशक्तिं त्वमधा धृतवानसि। अरणौ अग्निं याज्ञिका यथा धारयन्ति तथा ॥ ४२ ॥

तवेमां लीलामन्यैर्दुष्करां वयं गायाम इत्याहुः। कइति हे विभो ! भुव उद्विबर्हणं तव त्वत्कर्तृकं त्वत्तोऽन्यतमः कः श्रद्दधीत कर्तुं स्पृहयेत् अध्यवस्येदित्यर्थः ॥ ४३ ॥

पृथिव्युद्धरणं त्वयि न विस्मयो विस्मयः पुनरयमेव यत्तान्निमेषेण महार्णवे निपतता वस्तुतस्त्वस्मास्वेव कृपापरवशेन त्वया स्वाङ्गक्षालनामृतैरूर्ध्वोर्ध्वं प्रापितैर्वयमृषयः कृतार्थीकृता इत्याहुः विधुन्वतेति ॥ ४४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

त्रयीमयं वेदत्रयीप्रोक्तकर्मप्रचुरत्वेन प्रतीतम् इदं रूपं दंताधृतेन भूमण्डलेन चकास्ति शोभते भूयसा महताश्रृङ्गोढेन शिखरधृतेन घनेन यथा कुलाचलस्य गिरेर्विभ्रमो विलासस्तद्वत् ॥४१॥

जगतां पितासि अतः यस्यां स्वतेजोधारणशक्तिं याज्ञिको-मन्त्रेण अरण्यावग्निमिव अधा निहितवानसि तां जगतां मातरं स्वपत्नीमेनां लोकाय वासस्थानार्थं संस्थापयेत्यन्वयः ॥ ४२ ॥

अन्येषामपि दुष्करमपीदं भूद्धरणं त्वया त्वतिसुकरतया कृतमित्याहुः । कइति। तव त्वया कृतं भुव उद्विवर्हणमुद्धरणम् अन्यतमः त्वदन्यः कः श्रद्दधीत स्पृहयेत् त्वयितु असौ एक एव विस्मय आश्चर्य्यं नास्ति यतो विश्वे सर्वे विस्मया आश्चर्य्याणि यस्मिन् तदाहुः यः अतिविस्मयमत्याश्चर्यमिदं विचित्रं विश्वं स्वस्य मायया शक्त्या ससृजे उपलक्षणमिदं पालनादेः ॥ ४३ ॥

वयन्तु भवता पवित्रीकृता इत्याहुः। विधुन्वतेति। वेदमयं वेदप्रधानं वेदैकप्रधानमित्यर्थः निजं स्वासाधारणं वपुः शरीरम् विधुन्वता कम्पयता सटानां शिखाभिरग्रैः उद्धूतैः उच्चालिताः येऽशिवाः अम्बुबिन्दवः तैर्विमृज्यमानाः प्रोक्ष्यमाणाः मृशमत्यर्थं पाविताः पवित्रीकृताः ॥ ४४ ॥

---

### भाषाटीका।

हे प्रभो ! वेदत्रय रूप जो यह आपका सुकर स्वरूप दांत में पृथिवी मण्डल के धारण करने से ऐसा शोभित होता है जैसे शिखर पर मेघ के रहने से कुलाचल पर्वत का शोभा विलास मालूम होता होवै ॥ ४१ ॥

स्थावर जंगम सब मनुष्यों के निवास के लिये इस आपकी पत्नी पृथवी देवी को स्थापन करो यह हमारी माता है आप हमारे पिता हैं जिसमें अपने वीर्य्य को रखा है कि जैसे मंत्रसे अरणी काष्ठ में अग्नि को रखते हैं तिस भूदेवी को आपके साथ विराजमान देखकर हम लोग साथ ही नमस्कार करेंगे ॥ ४२ ॥

हे प्रभो ! इस पृथवी का पाताल से उद्धार करने को आप के विना दूसरा कौन समर्थ है सर्व विस्मय लीला वाले आपको यह बात कुछ विस्मय नहीं है जिन आपने अति विस्मय रूप जगत्को सृजा है ॥ ४३ ॥

हे ईश ! आपने जब वेद स्वरूप निज शरीरको कंपाया तब जन तप सत्य लोकों के निवासी हम लोग आपके कांधे के बालों के पवित्र जल बिंदुओं के गिरने से धोजाने से अत्यन्त पवित्र होगये ॥ ४४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तव कर्मणां पारं य एषतेऽवलोकयति ज्ञातुमिच्छतीत्यर्थः यस्य तव योगमायया यो गुणैः सहयोगस्तेन मोहितम् अतो-

॥ मैत्रेय उवाच ॥

इत्युपस्थीयमानोऽसौ मुनिभिर्ब्रह्मवादिभिः ।
सलिले स्वखुराक्रान्ते उपाधत्ताऽवितावनिम् ॥ ४६ ॥
स इत्थं भगवानुर्वीं विष्वक्सेनः प्रजापतिः ।
रसाया लीलयोन्नीतामप्सु न्यस्य ययौ हरिः ॥ ४७ ॥
य एवमेतां हरिमेधसो हरेः कथां सुभद्रां कथनीयमायिनः ।
शृण्वीत भक्त्या श्रवयेत वोशतीं जनार्दनोऽस्याशु हृदि प्रसीदति ॥ ४८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विश्वस्य शं मङ्गलं विधेहि यथा त्वामचिन्त्यानन्तशक्तिं ज्ञात्वा भजेत्तथाऽनुगृहाणेत्यर्थः ॥ ४५ ॥

उपस्थीयमानः स्तूयमानः स्वखुराक्रान्त इति जलेऽपि धारणशक्त्याधानं दर्शयति अविता रक्षकः ॥ ४६ ॥ ४७ ॥

कथनीयानि मायीनि मायावन्ति चरित्राणि यस्य श्रवयेत श्रुत्वस्वमावर्तम् उशतीं कमनीयां हृदि प्रसीदति स्वमनसि सन्तुष्यतीत्यर्थः ॥ ४८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

एषत इति भौवादिकस्य एषृगतावित्यस्य ऋकारानुबन्धस्य रूपं ततो गत्यर्थत्वात् जानातीत्यर्थत्वेन अवलोकयतीति व्याख्यानं तस्य चासम्भवत्वात् ज्ञातुमिच्छतीति स्वसमवायिसमवेतत्वसम्बन्धेन लाक्षणिकोऽर्थःअतएव इत्यर्थ इत्युक्तम् ॥ ४५ ॥

धारणशक्त्या स्थापनशक्त्या आधानं स्थापनम् ॥ ४६ ॥

स्वलोकं ययौ जगाम लोकमित्यग्रे वक्ष्यमाणत्वात् ॥ ४७ ॥

मायावन्ति प्रभाववन्ति हृदि स्वमनसीति स्वशब्दाध्याहारादित्यर्थ इत्युक्तम् ॥ ४८ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

एवं कृतार्थतां विज्ञाप्याथ प्रकृतं भगवत्कर्मणोऽचिन्त्यत्वं व्यतिरेकमुखेन वदन्तः तस्य भगवतोऽनुग्रहं प्रार्थयन्ते । न्यगादिति। अपारकर्मणः जगत्सृष्ट्याद्यनन्तव्यापारस्य तव कर्मणां पारमवधिं यः ईषते कांक्षति ज्ञातुमिच्छतीत्यर्थः सनै भ्रष्टमतिः अपाराणां कर्मणां पारं जिज्ञासुः बुद्धिहीन इत्यर्थः हे भगवन् ! यस्य तव योगमाया स्वत्सम्बन्धिनी विचित्रसर्गकारिणी शक्तिस्तस्य ये गुणाः सत्त्वादयस्तेषां योगेन सम्बन्धेन मोहितं समस्तं विश्वं शं सुखं विशिष्टं सुखं यथा भवति तथेति क्रियाविशेषणं वा विधेहि कुरु ॥ ४५ ॥

एवं स्तुतः प्रार्थितो भगवान् किन्ततोऽकरोदित्यत्र ह । इतीति । तैर्ब्रह्मवादिभिः वेदतुल्यवाक्यानि भाषयद्भिर्मुनिभिर्मरीच्यादिभिरित्युक्तप्रकारेण उपस्थीयमानः समीपस्थैः स्तूयमानः अविता रक्षिता भगवान् स्वखुराक्रान्ते सलिलेऽवनिं भूमिमुपाधत्तोपस्थापयामासेत्यर्थः स्वखुराक्रान्त इत्यनेन विग्रहस्यास्युग्र तत्त्वं मन्यते ॥ ४६ ॥

वराहावतारकाण्डमुपसंहरति । सइति । प्रजापतिः प्राजानां स रक्षकः भगवान् पूर्णषाड्गुण्यः विष्वक्सेनः स वराहः हरिर्लीलया क्रीडया रसायाः सकाशादुद्धृतामानीतामुर्वीं भूमिमप्सु न्यस्य प्रतिष्ठाप्य ययावन्तर्दधे इत्यर्थः ॥ ४७ ॥

एतत्कथाश्रवणफलमाह । यइति । वर्णनीयाश्चर्यशक्तिमतः हरिमेधसः यद्विषया मेधा हरति संसारं तस्य हरेः भगवतो वराहस्य सुभद्रां सुमङ्गलामुशतीं कमनीयां पवित्रां कथामेवमुक्तप्रकारेण यः पुरुषः शृण्वीत शृणुयाच्छ्रवयेत श्रावयेत वा तस्य हृदि जनार्दनः आशु प्रसीदति ॥ ४८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वराहस्य गण्डादि लाघुपमत्वेन परिच्छिन्नत्वात्कर्मणोऽपि तथात्वान्नायं विष्णुरित्याशङ्क्य तथा मन्वानो भ्रष्टमतिरित्याह । सवा इति । यः पुरुषोऽपारकर्मणोऽनन्तविक्रमस्य तव कर्मणां भूसुद्धरणादिलक्षणानां पारमन्तमेषते सम्यगिच्छति स भ्रष्टमतिर्वा इत्यनेन नरकपातं लक्षयति नोऽस्माकं तादृशज्ञानेन दुःखोदर्कोमाभूत्किंतुसुखोदर्क एवस्यादिति प्रार्थयन्त इत्याह । त्वद्योगेति । तवबंधकशक्त्या भ्रष्टमनस्कत्वेन विस्रंसतां गलिततत्त्वज्ञानानाम् नः शं सुखसाधनज्ञानसाध्यं लोकं विधेहीत्यन्वयः ॥ ४५ ॥

भक्तवत्सलोऽहमिति भावयंस्तदुक्तं करोति हरिरित्याह । प्रत्युपस्थीयमान इति ॥ ४६ ॥

हरिस्ततः परं किंचकारेति तत्राह । सइत्थमिति । प्रजापतिः प्रजापालनशीलः उन्नीतामुद्धृताम् ॥ ४७ ॥

अस्य वराहस्य विक्रमस्य पुरुषार्थैकहेतुत्वादयं हरिरेवेति शब्दश्रवणादिफलमाह । यइति । हरिमेधसः संसारसंहारिबुद्धेः कथनीयमायिनः कथनयोग्यसामर्थ्यस्य उशतीमभीष्टदोग्ध्रीम् ॥ ४८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सवै इति । एषते इति भौवादिकस्य एषृ गतावित्यस्य ऋकारानुबन्धस्य रूपम् । ततोगत्यर्थत्वात् जानात्यर्थत्वेन अवलोकयतीति व्याख्यातम् । तस्यचासम्भवात् ज्ञातुमिच्छतीत्येवार्थः ॥४५॥४६॥

ययौ स्वलोकमितिशेषः ॥ ४७ ॥

एवं हिरण्याक्षमित्यादि वक्ष्यति हरिमेधसः लोकदुःखहरसङ्कल्पस्य कथनीया प्रशस्या या माया कृपा तद्युक्तस्य । प्रशस्तत्वमेवाह । शृण्वीतेति ॥ ४८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं भगवन्तं स्तुत्वा स्तोत्रमुपसंहरिष्यन्तः स्वल्पं स्तुतमिति स्वस्य दोषं परिहरन्ति । सर्वे वनेति । तव गुणानुवर्णनरूपे स्तोत्रे अलं वांछति विभागो व्यर्थः त्वद्गुणानामानन्त्यात् स्वबुद्ध्यनुसारेण तु स्तुतमेव यस्तु पुनः सर्वाण्येव भगवच्चरित्राणि कथयिष्यामीति प्रारभते स निश्चयेन भ्रष्टमतिः भ्रष्टस्वमर्यादो भवतीति वर्त्तते खेदे भगवद्गुणेषु चित्तं प्रसारयन्नपि भ्रष्टबुद्धिर्जात इति तस्य बुद्धिभ्रंशमेवाह। अपारकर्मणः कर्मणां पारं य ईषते भगवतः सर्वानेव गुणान् कथयिष्यामीति तदेयं बुद्धिः समीचीना भवेत् यदि कर्मणामन्तो भवेत् जातानामप्यन्तो नास्ति जनिष्यमाणानां चेति वक्तुमपारकर्मण इत्युक्तं तत्रापि ये सर्वज्ञा वेदाः अन्ये वा भगवद्भावं प्राप्ताः ते वदन्तु नाम ये पुनर्मायया मोहितास्ते कुतो वदेयुः विश्वस्मिन् सर्वे एव च मोहिताः तदाह यद्योगमायेति।यद्यस्मात् कारणात् समस्तमेव विश्वं योगमायायाः सत्वादिगुणैर्मोहितं सा हि जगत्कर्त्री स्वकार्यसिद्ध्यर्थं मोहयत्येव अतो मायामोहिताः स्वरूपमेव न जानन्ति कुतो भगवद्गुणान् अतः सर्वानेव त्वं पालयेत्याहुः।भगवन् विधेहि शमिति । पूर्ववाक्यं दयाजनकम् ॥ ४५ ॥

तेषां स्तोत्रं सफलं जातमित्याह । इत्युपस्थीयमान इति। इतीति समाप्तिः प्रकारवाची वा तैर्मुनिभिरेवमुपस्थीयमान उपस्थानविषया स्तूयमानः ब्रह्मवादिनां वचनमन्यथा मा भवत्विति स्वखुराक्रान्ते सलिले अवनिमुपाधत्त स्थापितवान् यतोऽयमविता सर्वेषां रक्षकः खुरैराक्रान्त इति जले मर्यादां भयं च सूचयति भगवत्खुराक्रान्तत्वात् तावज्जलं देवतारूपं जातमिति भूमेरतः परं न कापि चिन्ता ॥ ४६ ॥

एवं भगवच्चरित्रमुक्त्वा उपसंहरति । स इत्थमिति । इत्थममुना प्रकारेण रसायाः सकाशात् उर्वीमुद्धृत्य अप्सु न्यस्य यथावितिसन्बन्धः।एकाकिना कथमुद्धृता कथं वा स्थापितेति शङ्काव्युदासार्थमाह । विष्वक्सेन इति । विष्वक् परितः सेना यस्य तस्य भगवतः सर्वत्र सर्वकार्यकरणार्थं महत्येव सेना वर्तते स्थापने हेतुः पतिरिति गमने हेतुः हरिरिति ईश्वरसांनिध्यं प्रजानां स्वाच्छन्द्यप्रतिबन्धकम् ॥ ४७ ॥

प्रकरणं समाप्तमिति सूचयितुमेतच्छ्रवणस्य फलमाह त्रिभिः।य एव मेतामिति । य एतां पूर्वोक्तां भगवतः सृष्टिरूपां लीलां शृण्वीत श्रावयेत वा तयोर्भगवान् प्रसीदतीति फलं ननु दुःखनिवृत्तिः कथं न फलत्वेनोच्यत इत्याशङ्क्याह । हरिमेधसो हरेरिति।भगवद्विषयिणी स्वकीयैव बुद्धिः सर्वं दुःखं हरति भगवानपि हरति स्वतन्त्रतया अस्मृतोऽपि एवं सति दुःखनिवृत्तिः स्वतः सिद्धा कथं फलत्वेन वक्तव्येत्यर्थः ननु स्वर्गादिः कथं नोच्यते तत्राह। सुभद्रामिति।सर्वेभ्यः स्वर्गादिभ्योऽपि कथैव सुभद्रा अतिकल्याणरूपा पूर्णानन्दरूपेति यावत् ननु कथमुच्यते सर्वत्र फलत्वेन स्वर्गादिः तत्राह । कथनीयमायिन इति।कथनीया माया अस्यास्तीति अस्य सर्वेषां वाचि माया वर्तत इति यथासुखं वदन्तीत्यर्थः विहितत्वात् श्रवणकीर्त्तनेन धर्मो भवतीति तस्याभ्युदयनिःश्रेयसहेतुत्वं सिद्धमिति तन्निराकरणार्थं श्रवणकीर्त्तनयोर्भक्तित्वख्यापनाय मध्ये भक्त्येति पदं भक्त्या प्रेम्णा अत एव क्रियाद्वयमपि छान्दसं शृणुयात् श्रावयेदित्यर्थः प्रत्येकं हेतुत्वज्ञापनार्थं वा शब्दः श्रवणं तु स्वरूपसौन्दर्यादेव भविष्यतीत्याह। उशतीमिति।उशतीं कमनीयाम् अविद्यानाशकः तस्य हृदय एव प्रसन्नो भवति ॥ ४८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एवं त्वल्लीलां कति वर्णयामो वयं सर्ववेदविदोऽपि त्वल्लीलासिन्धोः कणमपि सामस्त्येन न विद्मः के पुनरन्ये वराका इत्याहुः । सर्वे इति।यस्तव कर्म्मणां पारम् एषते जानाति जानामीत्यभिमन्यत इत्यर्थः । एषृ गतौ भौवादिकः। ननु मायामोहितो जीवो न जानातु नाम मायातीतो भक्तो नारदादिर्जानात्येवेति तत्राहुः। यस्य तव योगमाया चिच्छक्तिवृत्तिभेदः गुणयोगो गुणमेलनरूपोऽविद्या च ताभ्यां मोहितं समस्तमप्राकृतं प्राकृतञ्च विश्वं तत्र ये अप्राकृतास्त्वद्भक्तास्ते योगमायया तन्माधुर्य्येषु निमज्य मोह्यन्ते । ये च त्वदन्ये प्राकृता जीवास्ते मायया वैषयिकसुखदुःखेषु निमज्य मोह्यन्ते इति कस्ते कर्म्मणां पारं ज्ञास्यतीत्यर्थः अतः शं विधेहि यथा जानीम इति मिथ्याभिमानो न भवेदिति भावः ॥४५॥

उपस्थीयमानः स्तुत्या परिचर्य्यमाणः सलिले सलिलोपरि स्वखुराक्रान्ते इति जलेऽपि धारणशक्त्याधानं दर्शयति अविता रक्षकः । ययौ स्वलोकमिति शेषः । अन्तर्दधे इतिवा ॥ ४६ ॥ ४७ ॥

हरन्ती भक्तसंसारं नाशयन्ती मेधा बुद्धिर्यस्मिन् तस्य कथनीया वर्णनीया माया मायाशक्तिः कृपा वा स्वरूपशक्तिर्वा तत्वतः श्रवयेत् श्रावयेत् उशतीं कमनीयाम् ॥ ४८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं यथाशक्तिस्तुत्वाथभगवद्गुणानामियत्तानवच्छिन्नत्वं वदन्तः प्रार्थयन्ते हेभगवन् ! पारमवधिमियत्ताम् एषते ज्ञातुमिच्छति यः स भ्रष्टमतिः यत् विश्वं तव योगमायागुणानां योगेन सम्बन्धेन मोहितं त्वत्पराङ्मुखं तत्प्रति शं मङ्गलं त्वत्प्रावण्यं विधेहि सम्पादय ॥ ४५ ॥

अविता रक्षकः उपस्थीयमानः स्तूयमानः स्वखुराक्रान्ते सलिले महीम् ॥ ४६ ॥ ४७ ॥

अस्य हरेः कथनीया वर्णनीया माया कृपा अस्यास्तीति स तथा तस्योशतीङ्कमनीयां यः कथां श्रवयेत् ह्रस्वत्वमार्षं श्रावयेत् शृण्वीत शृणुयात् वा तं प्रति हृदि स्वमनसि आशु प्रसीदति सन्तुष्यति ॥ ४८ ॥

---

भाषाटीका ।

अपार कर्म वाले आपके कर्मों का पार पाने को जो इच्छा करता है वह भ्रष्ट बुद्धिवाला है जिन आपकी योग माया से सब संसार मोहित है सो हे भगवन् ! आप सबका कल्याण करो ॥ ४५ ॥

मैत्रेयजी बोले इस प्रकार उन ब्रह्म वादि मुनियों ने जब स्तुति की तब रक्षक भगवान् ने अपने खुरों से दबाये हुवे जलही के ऊपर पृथिवी को रख दिया ॥ ४६ ॥

वह प्रजापति विश्वक्सेन वराह भगवान् इस प्रकार, पाताल से लाई हुई पृथिको जल में रखकर वैकुण्ठको चले गये ॥ ४७ ॥

संसार रोगहरनेवाली बुद्धि देनेवाली कथन करनेयोग्य मा-

तस्मिन् प्रसन्ने सकलाशिषां प्रभौ किं दुर्लभं ताभिरलं लवात्मभिः ।
अनन्यदृष्ट्या भजतां गुहाशयः स्वयं विधत्ते स्वगतिं परः पराम् ॥ ४९ ॥
कोनाम लोके पुरुषार्थसारवित्पुराकथानां भगवत्कथासुधाम् ।
आपीय कर्णाञ्जलिभिर्भवापहामहो विरज्येत विना नरेतरम् ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
वराहप्रादुर्भावानुवर्णने पृथिवीधरणे
त्रयोदशोऽध्यायः ॥ १३ ॥

भाषाटीका ।

या वाले हरि की इस मङ्गलकारक कथा को जो भक्ति से श्रवण करे अथवा सुनावे इस सुन्दरकथा के सुनाने से उसपै जनार्दन भगवान् हृदय में शीघ्रही प्रसन्न होते हैं ॥ ४८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

आशिषो यद्यपि सुलभास्तथापि न प्रार्थनीया इत्याह । ताभिराशीर्भिरलम् लवात्मभिस्तुच्छाभिः नच तदा भजनस्य वैफल्यं शङ्कनीयमित्याह भगवद्भजनव्यतिरेकेण फलान्तरदर्शिं विना भजतां स्वानुप्राप्तिं स्वयमेव विधत्ते गुहाशयत्वादहैतुकीं भक्तिं जानन् ॥ ४९ ॥

अतः कोनाम पुराकथानां पूर्ववृत्तानां मध्ये कथञ्चिदापीय विरज्येत विरमेत् नरेतरं पशुं विना ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे-
श्रीधरस्वामिकृतभावार्थदीपिकाटीकायां
त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या
दीपिकाटिप्पणी ।

आशिषो यदानप्रार्थनीयास्तदा भगवद्भजनमेवसुखं "कथा हरिकथोदर्का" इत्युक्तेस्तद्भिना या स्वर्गादिफलान्तरदृष्टिस्तां विनां तां हित्वेत्यर्थः स्वगतिं स्वस्फूर्त्यात्मकं ज्ञानम् ॥ ४९ ॥

अतः कथायाः परमफलत्वात् ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीराधारमणदासगोस्वामिकृतदीपिन्याख्यटिप्पण्यां
त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किन्तत्प्रसादेनेत्यतआह । तस्मिन्निति । सकलाशिषां सर्वपुरुषार्थानां प्रभौ दातरि तस्मिन् भगवति प्रसन्ने सति दुर्लभं दुर्लभ्यं किमस्ति किमपि नास्तीत्यर्थः अतो लवात्मभिः तुच्छाभिः ताभिराशीभिरलं यद्यपि सुलभास्तथापि न प्रार्थनीया इतिभावः नचैतावता तत्त्वभजनस्य विफलत्वं शङ्कनीयमित्याह । अनन्यदृष्ट्याएकान्तभक्त्या स्वात्मशरीरकबुद्ध्येत्यर्थः भजतां नितरां गुहाशयः हृदयकुहरे निविष्टः परः परमपुरुषः स्वयं परां निरतिशयां स्वगतिं स्वंप्राप्तिं विधत्ते सम्पादयति ॥ ४९ ॥

अतो निरतिशयपुरुषार्थसाधनभूतां कर्णरसायनां पवित्रां कथां शृण्वन्नरेतरं विनाको नामतृप्येदित्याह । कइति । पुरुषार्थानां धर्मादीनां सारं वेत्तीति तथाधर्मस्य ह्यापवर्ग्यस्य नार्थोऽर्थायोपकल्पतइति । प्रथमस्कन्धोक्तरीत्या पुरुषार्थसाराभिज्ञः कोनामपुराकथानां पूर्ववृत्तान्तानां मध्ये भगवत्कथैव सुधा तां कर्णावेवाञ्जलयः तैरापीय समन्तात् पीत्वा किम्भूतां भगवत्कथासुधाम्भवापहां संसारनिवर्तिनींनरेतरंपशुं विना कः विरज्येत न कोऽपि विरक्तोभवेदित्यर्थः । अहोइति । भगवच्चरित्रस्यात्याश्चर्यद्योतकमव्ययम् ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्प्रसादफलमाह । तस्मिन्निति । लवात्मभिर्लवकालरूपाभिः पश्चान्नश्वरीभिस्ताभिः स्वर्गाद्याशीर्भिः प्रसादोऽपि गाथावच्छृवणादिना न स्यादिति ध्वनयन्नाह । अनन्यभक्त्येति ॥ ४९ ॥

ननु कञ्चित्कालं हरिकथां निषेव्य पश्चान्मुञ्चन्तोदृश्यन्ते तत्र सारत्वं कथमित्याशङ्क्यते पशुकल्पा इत्याह । कोनामेति । नामशब्दः कुत्सने कोनामकः कुत्सितः पुराशब्दः पुराणे निकटातीतेआनन्तर्ये च वर्त्तते पुराणकथानां निकटातीतकथानामनागतकथानांच मध्ये सारभूतां तामिति शेषः "प्रबन्धेनिकटातीते पुराणेनागतेपुरा" इत्यादेः सुपूजितमोदयत्ते सुसुखंआपयतीतित्वा सुधा डुधाञ् धारणपोषणयोर्धेट् पानइतिधातुः भवापहां संसारविनाशनीं भद्रावहांच पपौशशाविति प्राच्यशास्त्रि सूत्रात्पकारस्य वकारः भवोभद्रइति यादवः नरेतरम्पशुम् ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां
त्रयोदशोऽध्याय ॥ १३ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सर्वफलरूपं तत्प्रसादे परमफलमाह । तस्मिन्निति । स्वगतिं स्वस्फूर्तिरूपं ज्ञानम् ॥ ४९ ॥

तत्रश्च सा कथैव नः पीयूषधारेव स्वस्तुमहाक्या भवतीति व्यतिरेकेणाह । क इति ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततः किं स्यादत आह । तस्मिन्प्रसन्न इति । तस्य प्रसाद एव दुर्लभः प्रसन्ने न किंचित् दुर्लभं तत्र हेतुः सकलाशिषां प्रभाविति । ऐहिकामुष्मिकमोक्षाणां प्रभुः स्वामी नियन्ता अनेन सर्वमेव तस्य भगवति प्रसन्ने सिद्धमेवेति ज्ञापितम् । ननु भगवद्भक्तानामपि सर्वविषयाभावो दृश्यते तत्कस्य हेतोस्तत्राह । ताभिर्विनात्मभिरलमिति । यथामात्रे सुखाभासजनकैः विषयैः अलम् । तर्हि कदाचिदुत्पन्ना विषयेच्छा भक्तानामपूरिता स्यात् । इत्याशङ्क्याह । अनन्यदृष्ट्येति । गुहाशयः तेषां हृदयाभिप्रायवित् स्वयमेव स्वगतिं वैकुण्ठाख्यं विधत्ते । पर इति पुरुषोत्तमः परामिति स्वसदृशं करोतीत्यर्थः । यथा स्वस्य भोगे न कापि न्यूनता तथा तस्यापीति भावः परमनन्यदृष्ट्या भजनं कर्तव्यं भगवदर्थमेव भगवान् सेव्यः ॥ ४९ ॥

नन्वेवं सति महाफलं भगवत्कथाश्रवणं यथा निर्वहति तदुपायो वक्तव्य इति चेत्तत्राह । को नाम लोक इति । नात्रोपायो वक्तव्यः कथासौन्दर्यमेव सहजं तत्र हेतुः ये भगवत्कथारसिकाः ते प्रवर्तन्त एव ये वृषभाः ते उपेक्षणीया एव । अथ प्रवृत्ताः कियत्कालानन्तरं कथां परित्यज्य रसान्तरे आविष्टा भविष्यन्तीति तेषां रसान्तरव्यावृत्त्यर्थमुपायो वक्तव्य इति चेत्तादृशो नास्तीति निरूपयति । को नाम प्रसिद्धः । कोऽपि लोके माहात्म्यमज्ञात्वापि स्वतन्त्रो भूत्वा पुरुषार्थानां सारासारविभागविदपि भूत्वा पुरा कथानां पूर्ववृत्तान्तानां मध्ये भगवत्कथासुधां निपीय प्रसङ्गादपि भगवत्कथां श्रुत्वा तस्या माधुर्यं सुखनिवर्तकत्वं च ज्ञात्वा तत्रापि भगवत्कथावक्तुः मुखाञ्जलिभ्यां कथां परितः श्रुतवान् अञ्जलिमात्रमिन्द्रियमल्पमजानन् निरवर्तयेत् को वा कालमिति मन्येत ब्रह्मसायुज्यं प्राप्तः यतः इयं कथा भवापहा । ननु विरक्ता अपि लोके दृश्यन्ते तत्राह । अहो इति । आश्चर्यमेतत् अत्र को हेतुरिति जिज्ञासायां स्वतः स्फुरितं हेतुमाह । विनेति । स प्रायेण नर एव न भवति वानरोंऽश अन्धो वेत्यर्थः ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्वल्लभाचार्यकृतसुबोधिन्यां त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

किं वस्तु दुर्लभमपि तु सर्वमेव सुलभं तदपि ताभिराशीर्भिरलं लवात्मभिः क्षुद्राभिस्तुच्छाभिरित्यर्थः । न च तदा भजनस्य वैफल्यं शङ्कनीयमित्याह । अनन्यदृष्ट्या भगवद्भजनव्यतिरेकेण फलान्तरदृष्टिं विना भजतां स्वयमेव विधत्ते गुहाशयत्वादहैतुकीं भक्तिं जानन्निति स्वामिचरणानां व्याख्या ॥ ४९ ॥

भक्तिरेव सर्वपुरुषार्थमहाफलमिति जानन्नेव सारज्ञ उच्यते । भक्तिः पुरुषार्थसाधनमेव न तु स्वतः फलरूपेति व्याचक्षाणस्तु पशुरेवेत्याह । कोनामेति । पुरा कथानां पूर्ववृत्तानां मध्ये भवापहां संसारध्वंसिनीम् अहो आश्चर्यं नरतरं पशुं विना कोविरज्येत यो विरज्येत स पशुरेवेति तेन श्रोतृकण्ठवाष्पकलया मुहुरर्द्यमानस्तथापि चित्तवडिशं शनकैर्वियुङ्क्ते इति वक्ष्यमाणलक्षणस्य योगिनः पशुत्वं व्यञ्जितम् ॥ ५० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
तृतीये त्रयोदशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आशिषां संपदाम्प्रभौ दातरि प्रसन्ने सति यद्यपि किन्दुर्लभं तथापि ताभिः आशीर्भिर्लवात्मभिः क्षणभङ्गुराभिः किं न किमपि प्राकृताः सम्पदः ततो न प्रार्थ्या इति भावः निष्कामानां स्वानन्यभक्तानां तु स्वयमेव परां गतिं विधत्ते सम्पादयति ॥ ४९ ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे-
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
त्रयोदशोऽध्यायः ॥ १३ ॥

---

भाषाटीका ।

सम्पूर्ण मनोरथों के प्रभु उन भगवान् के प्रसन्न होजाने से फिर क्या दुर्लभ है फिर उन तुच्छ कामनाओं को छोड देना चाहिये सबके अन्तर्यामी, एकाग्र बुद्धि से भजने वाले पुरुषों को अपनी परम गति को स्वयं ही देदेते हैं ॥ ४९ ॥

प्रचीन कथाओं के सार को और पुरुषार्थ के सारको जाननें वाला ऐसा कौन है जोकि संसार को छुडादेने वाली भगवत् कथा सुधा को कर्णरूपी अञ्जुलियों से पान करके अहो फिर छोडना चाहै जो पशु होगा सो भलेही छोडदेगा मनुष्य तो कभी नहीं छोडेगा ॥ ५० ॥

इतिश्रीभागवत तृतीयस्कन्ध त्रयोदश अध्याय का भाषानुवाद लक्ष्मणाचार्यकृत समाप्त ॥ १३ ॥

---

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥

## ॥ चतुर्दशोऽध्यायः ॥

——::*::——

॥ श्रीशुकउवाच ॥

निशम्य कौषारविणोपवर्णितां हरेः कथां कारणसूकरात्मनः ।
पुनः स[1] पप्रच्छ[2] तमुद्यताञ्जलिर्नचातितृप्तोविदुरो धृतव्रतः ॥ १ ॥

॥ विदुरउवाच ॥

तेनैवतु मुनिश्रेष्ठ ! हरिणा यज्ञमूर्तिना ।
आदिदैत्यो हिरण्याक्षो हत इत्यनुशुश्रुम ॥ २ ॥
तस्य चोद्धरतः क्षौणीं स्वदंष्ट्राग्रेण लीलया ।
दैत्यराजस्य च ब्रह्मन् ! कस्माद्धेतोरभून्मृधः ॥ ३ ॥

॥ मैत्रेयउवाच ॥

साधुवीर ! त्वया पृष्टमवतारकथां हरेः ।
यत्त्वं पृच्छसि मर्त्यानां मृत्युपाशविशातनीम् ॥ ४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

चतुर्दशे निदानन्तु तद्वधे वक्तुमुच्यते ।
सन्ध्यायां कश्यपाद्गर्भसंभवः कामतो दितेः ॥ १ ॥
तेनैव येन भूमिरुद्धृता अनुशुश्रुम त्वन्मुखात् ॥ १ ॥ २ ॥
मृधो युद्धम् ॥ ३ ॥
साधुत्वे हेतुः यद्यस्मात्त्वं हरेरवतारकथां पृच्छसीति मृत्योः पाशं विशातयति मोचयतीति तथा ॥ ४ ॥

——

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

निदानमादिकारणं सनकादिशापरूपं पञ्चदशाध्याये वक्तुं कामतः कामोद्रेकात् हरिकथाश्रवणार्थं धृतव्रतः पुनश्चेति चकारान्वयः ॥ १ ॥
येन स्वायम्भुवे पृथ्वीउद्धृता चाक्षुषेऽपि तेनैव हिरण्याक्षोहत इत्यन्वयः ॥ २ ॥
तस्य चेति चकारः पुनरर्थे पृथिव्या द्विर्वारमुद्धारात् ॥ ३ ॥
साधुपृष्टं समीचीनः प्रश्नः कृतः भावे निष्ठा ॥ ४ ॥

——

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

एवं सङ्क्षेपेण श्रुतवराहचरितो विदुरः पुनस्तच्चरित्रान्तर्भूतहिरण्याक्षवधवृत्तान्तं विस्तरबुभुत्सया पृच्छतीत्याह भगवान् शुकः । निशम्येति । कौषारविणा मैत्रेयेण उपवर्णितां कारणसूकरात्मनो-हरेः कथां निशम्य श्रुत्वा धृतव्रतः धृतं व्रतं भगवत्कथाशुश्रूषारूपं येन स अतएव नचातितृप्तः संक्षेपतः तत्कथाश्रवणे तृप्तिमलभमानः समुद्धृतः हस्तद्वयमेकीकृत्य उद्धृतः अञ्जलि "अञ्जलि परमा मुद्राक्षिप्रं देवप्रसादिनी" इत्युक्तविधो येन सः विदुरः पप्रच्छ पृष्टवान् ॥ १ ॥
प्रश्नप्रकारमेवाह । द्वाभ्यां तेनेति । श्रुतोपजीवनेन प्रश्नावतारद्योतनाय उक्तमनुवदन् पृच्छतिविदुरः तेनेति । हेमुनिश्रेष्ठ मैत्रेय येन भूमिरुद्धृता तेनैव यज्ञशरीरेण हरिणा आदिवराहेण आदिदैत्यो दैत्यानां प्रथमः वराहकल्पस्थापेक्षया प्राथम्यमत्राविवक्षितं हिरण्याक्षः हतः आदिवराहेण निहत इत्यनुशुश्रुम श्रुतवन्तो वयम् ॥ २ ॥
प्रष्टव्यं पृच्छति । तस्येति । स्वदंष्ट्राग्रेण क्षौणीं भूमिं लीलया उद्धरतस्तस्यादिवराहस्य हिरण्याक्षस्य च मृधः युद्धं कस्माद्धेतोरभूत् तद्युद्धनिमित्तमित्यर्थः ॥ ३ ॥
एवमापृष्टो मैत्रेयः सविस्तरं तत्कथां प्रस्तोष्यन् तावत् प्रश्नमभिनन्दति । साध्विति द्वाभ्याम् । हेवीर ! त्वया साधुपृष्टं तत्कुतः मर्त्यानां मरणशीलानां मृत्युपाशं विशातयतीति मृत्युपाशविशातनी तां हरेरवतारकथां त्वंपृच्छसि ॥ ४ ॥

——

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

रुद्रादीनां हर्य्याज्ञाकारित्वेन तद्वशाश्रिरुपमचरितख्यातनन्दगुणाकरे हरौ मनोरतिः कर्तव्या पुरुषेणेति विधीयते अस्मिन्नध्याये । तत्रादौ विदुरः पुनर्मुनिना वर्णितं वराहचरितमाकर्ण्य

(१) पुनश्चेतिदीपिन्यभिमतः पाठः । (२) समुद्धृताञ्जलिरिति श्रीवीरराघव पाठः ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कथायामलंबुद्धिरहितो विशेषतः श्रोतुकामो मैत्रेयं पृच्छतीति-शुकः परीक्षितं कथयति । निशम्येति । समुद्यताञ्जलिर्हरिमीड्-श्येति शेषः कुतएवमवगतमित्यतउक्तं नचेति । अनेन हरिकथा श्रवणतृष्णातिशयं ध्वनयति ततो हरिप्रसादेन हारिकथाश्रवणम् स्यादिति शिरसि मुकुलितकरकमल इत्यर्थः कथाश्रवणविघ्नप-रिहाराय धृतव्रतइति ॥ १ ॥

उक्तकथांशे वक्तव्यं नास्तीति द्योतयितुं श्रुतमनुवदति विदु-रइत्याह । तेनेति । येन लयोदके मग्नाभूरुद्धाहारि तेनैवरूपान्तरेण २॥

तत्र श्रोतव्यांशं पृच्छति । तस्येति । रणोत्पत्तौ महतापराधेन भवितव्यं तादृशोपराधः क इति प्रश्नार्थः ॥ ३ ॥

मैत्रेयो विदुरप्रश्नं स्तौतीत्याह । साध्विति । साधुसत्सभासूचि-तम् वेर्हरेरिच्छायां रमत इतिवीरः पुरुषार्थोपयोगित्वात्साधुत्वम-स्येत्याह । यत्त्वमिति ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तेनैवेति । येन स्वायम्भुवे पृथ्वी समुद्दध्रे चाक्षुषेऽपि तेनैवे त्यर्थः ॥ १ ॥ २ ॥

तस्य चेति चशब्दः पुनरर्थे ॥ ३ ॥ ४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

वर्णिता सर्गलीलात्र त्रिविधा भगवत्कृता ।
उपोद्घातस्तु तस्या वै मतान्तरमिहोच्यते ॥ १ ॥
लौकिकी चान्यभापा च समाधेः पोषिके तु ते ।
ते प्रमाणमभिप्रायात् सर्वथा पूर्ववन्नहि ॥ २ ॥
यदेव भिन्नरीत्यात्र रूप्यते तन्मतान्तरम् ।
न तद्विरोधो दोषाय पदशास्त्रार्थयोः क्वचित् ॥ ३ ॥
कामेन क्रोधलोभाभ्यां कर्ममार्गादिनाशनम् ।
वर्ण्यते येन जीवानां मुक्तानामिह सम्भवः ॥ ४ ॥
सर्गस्थित्यन्तकथनं त्रिभिस्तेषां निरूप्यते ।
अतः षड्भिरिहाध्यायैः सर्गोपोद्घात उच्यते ॥ ५ ॥
मतान्तरे शिवोत्कर्षो ब्राह्मणोत्कर्ष एव च ।
भक्तस्य विष्णोश्चैवात्र लीला व्यामोहिका मता ॥ ६ ॥
अन्यथा भगवल्लीला सर्गो नैव भवेद्ध्रुवम् ।
चतुर्दशे तु कामेन कर्मनाश इहोच्यते ॥ ७ ॥
आधारकथनं त्वादौ गर्भे जीवस्य संक्रमः ।
तामसः काम एषो हि ततोऽत्र शिवसङ्कथा ।
क्रोधोऽपि कामसम्बन्धी प्रसादो भक्तिहेतुकः ॥ ८ ॥
पूर्वाध्याये वराहस्य चरित्रं सुनिरूपितम् ।
तत्र हिरण्याक्षवधः संक्षेपेण निरूपितः ॥ ९ ॥

तं विस्तरेण श्रोतुं भगवतो युद्धलीलायामासक्तमनाः विदुरः पृच्छतीत्याह । निशम्येति । कौषारविणेति पितृसम्बन्धात् युद्धलीलां कथयिष्यतीति ज्ञापितम् । हरेरिति तत्र क्लेशाभावः कारणभूतो यः शूकरो यज्ञः स आत्मनि यस्य । अनेन वरा-हावतारस्वरूपं तेन ज्ञातमिति सूचितम् । वराहावतारकथां पूर्वं पृष्टां प्रकारान्तरेण पुनः पृच्छति । उद्यताञ्जलिरिति । कथां भिक्षा-मिव प्रार्थयति । तथा प्रार्थने हेतुः । नचाति तृप्त इति । देश-कालाभिज्ञत्वेन निपुणता अवश्यप्रश्ने हेतुः । धृतव्रत इति । स हि धृतभगवद्व्रतः भगवत्कथाश्रवणव्यतिरेकेण स्थातुं न शक्नोति ॥१॥

संक्षेपेण पूर्वोक्तां प्रकृतोपयोगिनीं भगवत्कथामनुवदति । तेनैवत्विति । तेनैव वराहेणैव मुनिश्रेष्ठेति ज्ञाने हेतुः । हरिणेति विरोधः कथं सर्वदुःखहर्ता तं मारितवानिति । एतद्विरोधपरि-हारार्थमेव बहुवक्तव्यम् । यज्ञरूपिणेति । दैत्यत्वात् मारणस्याव-श्यंभावः । आदिदैत्येति पदद्वयं मारणे अमारणे च हेतुः आदित्वात् दैत्यानां मूलोच्छेदक एव स्यात् । हिरण्याक्ष इति । हिरण्यरूपे अक्षिणी यस्य अनेन तस्य निधिरूपत्वं प्रदर्शि-तम् एतदप्यमारणे हेतुः मारणे वा तद्दृष्टिस्पृष्टभूमौ सुवर्णत्वसम्भवात् सर्वसुवर्णत्वे अमृतत्वेन सृष्टिनं स्यादिति अनुश्रव-णमुच्चारणानन्तरं भ्रमात् श्रुते उत्तरासंभवात् ॥ २ ॥

अथ प्रतिबन्धकत्वेन समागतो हत इति पक्षेणास्य कथं प्रतिबन्धकत्वमिति पृच्छति । तस्य चोद्धरत इति । द्वयोः संबन्धि-नोः षष्ठ्यानिर्देशः संबन्धदार्ढ्यार्थः एकः कार्यसाधकः कौतुकी अपरो दैत्यराजत्वात् सिद्धसमस्तार्थः अतः स्वभावतः कलहहेतो-रभावात् कस्माद्धेतोरभून्मृध इति प्रश्नः ॥ ३ ॥

भगवत्कथाभिनिविष्टं दृष्ट्वा तमभिनन्दति मैत्रेयः । साधुवीरे-ति । वीरेति संबोधनं तादृशलीलायां मनसोऽभिनिवेशद्योतकम् यथा कथंचिदपि मनो निवेशने कृतार्थो भवेदिति त्वया साधु पृष्टं कर्म पूर्वोक्तमेव साधुत्वेन निर्दिष्टं पृष्टस्य वा साधुत्वं विधीयते सर्वथैव तद्वाक्यं भिन्नं सा धुत्वमुपपादयति यद्यस्मात्कारणात् हरेरवतारकथां पृच्छसि साधवो हि परदुःखनिवारकाः प्रश्न स्य साधुत्वं विषयसाधुत्वात् विषयस्य कथारूपस्य साधु-त्वमुपपादयति । मृत्युपाशविनाशिनीमिति । मृत्योः पाशं विनाश-यतीति ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

चतुर्दशे दितिः सायमकामं चकमे मुनिम् ।
अनुतेपेच तद्दुष्टपुत्रामूत शिष्टनप्तृका ॥ ० ॥

चकार एवार्थः ॥ १ ॥

तेनैव येन हरिणा स्वायम्भुवे पृथ्वी उद्दध्रे तेनैव चाक्षुषी-ये हिरण्याक्षो हत इति व्याख्येयम् ॥ २ ॥

मृधो युद्धम् ॥ ३ ॥

हे वीर! हरेर्युद्धलीला शुश्रूषोः पृष्टमिदं साधु यतः एतत् प्रश्नमिषेण अवतारयोर्वराहनृसिंहयोः कथां पृच्छसि तद्वैरका-रणोक्तौ तयोरुपस्थितेः अन्यानपि कृतार्थयितुमित्याह । मर्त्या-नामिति ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं संक्षेपतोवराहचरितं श्रुत्वा विस्तरतस्तच्चरितं श्रोतुं विदुरः पुनः पप्रच्छेत्याह भगवान् शुकः! निशम्येति ॥ १ ॥

तत्रापि दैत्यं गदया पतन्तं जघानेति त्वन्मुखात् अनुशुश्रुम॥२॥

मृधः सङ्ग्रामः ॥ ३ ॥

मर्त्यानां मरणशीलानां मृत्योः पाशमहं ममाभिमानं घातयति मोचयतीति तथा ताम् ॥ ४ ॥

---

यथोत्तानपदः पुत्रो मुनिना गीतयाऽर्भकः ।
मृत्योः कृत्वैव मूर्ध्न्यङ्घ्रिमारुरोह हरेः पदम् ॥ ५ ॥
अथात्रापीतिहासोऽयं श्रुतो मे वर्णितः पुरा ।
ब्रह्मणा देवदेवेन देवानामनुपृच्छताम् ॥ ६ ॥
दितिर्दाक्षायणी क्षत्तर्मारीचं कश्यपं पतिम् ।
अपत्यकामा चकमे सन्ध्यायां हृच्छयार्दिता ॥ ७ ॥
इष्ट्वाऽग्निजिह्वं पयसा पुरुषं यजुषां पतिम् ।
निम्लोचत्यर्क आसीनमग्न्यगारे समाहितम् ॥ ८ ॥

### भाषाटीका ।

श्रीशुकदेवजी बोले मैत्रेयजी की वर्णन करीहुई किसी निमित्तसे वराह रूपी भगवान् की कथा को श्रवण करके व्रत धारण करने वाले विदुर अति तृप्त न होनेसे दोनो हाथ जोड़ कर फिर पूछने लगे ॥ १ ॥

विदुरजी बोले हे मुनिश्रेष्ठ ! वही यज्ञमूर्ति हरिने आदि दैत्य हिरण्याक्ष को मारा है ऐसा हमने सुना है ॥ २ ॥

हे भगवन् जब वे क्रीडा से दन्त के अग्रमें पृथिवीको लाते थे तब दैत्यराजका उनके साथ में क्यों युद्धहुआ ॥ ३ ॥

मैत्रेयजी बोले हे वीर ! तुमने अच्छा पूछा जो तुम भगवान् के अवतार की कथा को पूछते हो वह कथा मनुष्यों के मृत्यु पाश को काटने वाली है ॥ ४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेव दर्शयति । यथा कथया उत्तानपदः पुत्रो ध्रुवः मुनिना नारदेन अर्भक एव यदा ध्रुवाय सुनन्दादिभिर्विमानमानीतं तदाऽस्य देहत्यागोऽपेक्षितः स्यादिति मत्वा मृत्यावासन्नेऽपि देहं न तत्याज किन्तु सोपान इव तस्य मूर्ध्नि पदं दत्त्वा विमानमारुह्य विष्णुपदमारूढः वक्ष्यतिहि "परीत्याऽभ्यर्च्य धिष्ण्याग्र्यं कृतस्वस्त्ययनोद्विजैः । इयेष तदधिष्ठातुं बिभ्रद्रूपे हिरण्मयम् इति ॥ ५ ॥

तयोः संग्रामे हेतुं वक्तुमितिहासं प्रस्तौति अथेति अनुपृच्छतां देवानां ब्रह्मणा वर्णित इतिहासो मया श्रुतः ॥ ६ ॥

देवप्रश्नप्रस्तावाय प्रथमं हिरण्याक्षहिरण्यकशिपूत्पत्तिप्रसङ्गमाह दितिरित्यादिना यावदध्यायपरिसमाप्ति मरीचेः पुत्रं कश्यपं हृच्छयः कामस्तेनार्दिता अतः सन्ध्यायामेव कामितवती ॥ ७ ॥

तदप्यग्निहोत्रशालायां तत्रापि समाहितम् अग्निर्जिह्वा यस्य यजुषां यज्ञानां पतिं पुरुषं श्रीविष्णुम् ॥ ८ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

तदेव मृत्युपाशविशातनीत्वमेवाह । यथा द्वादशाक्षराद्युपदेशरूपया अत एवार्भकत्वमुक्तं किन्तु श्रीभगवद्दर्शनानुभावेन तस्य नित्यकिशोरलक्षणमर्भकत्वं तदवधि संपन्नमिति ज्ञेयम् सोपान इव निःश्रेणीतुल्ये तस्य मृत्योः ॥ ५ ॥

अथेत्यारम्भे अत्रापि सङ्ग्रामहेतुप्रश्नेऽपि अयं वक्ष्यमाणः वर्णित इत्यध्याहृतम् ॥ ६ ॥

अतः कामार्दितत्वात् ॥ ७ ॥

तदपि निषिद्धेऽर्कनिम्लोचनकालेऽपि तत्रापि अग्निहोत्रशालायामपि समाहितं समाधिनिष्ठम् ॥ ८ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ मुनिना नारदेन यया भगवत्कथया उत्तानपदः पुत्रोऽर्भकः ध्रुवः मृत्योर्मूर्ध्नि अङ्घ्रिं कृत्वा पादं विन्यस्य हरेः पदं स्थानं प्राप्तः ध्रुवगतिमारुरोहारूढवान् इदंशभगवत्कथाप्रश्नः साधिष्ठ इत्यभिप्रायः ॥ ५ ॥

एवं प्रश्नमभिनन्द्य हिरण्याक्षस्य वृत्तान्तं वक्ष्यन् वृत्तान्तस्य साम्प्रदायिकत्वमाह । अथ ननु हेविदुर ! अत्रापि त्वया पृष्टेऽर्थेऽपि अयमितिहासः मे मया श्रुतः कुत इत्यपेक्षायामाह । देवानामपि देवेन ब्रह्मणा चतुर्मुखेनानुपृच्छतां देवानां पुरा पूर्वकाले वर्णितः सन् परंपरया मया श्रुत इत्यर्थः ॥ ६ ॥

तमेव इतिहासं प्रस्तोष्यन् तदुपोद्घातरूपमितिहासं प्रस्तौति । दितिरित्यादिना । दक्षस्यापत्यं स्त्री दाक्षायणी दितिः दितिनाम्नी हे क्षत्तः ! मारीचं मरीचेः पुत्रं कश्यपं पतिम्भर्तारं स्वयमपत्यं कामयमाना हृच्छयः कामः तेन पीडिता अतएव सन्ध्यायां चकमे कामितवतीत्यर्थः ॥ ७ ॥

कथंभूतं चकमे इत्यत्राह । इष्ट्वेति । यजुषां यज्ञानां पतिं पुरुषं परमपुरुषमग्निजिह्वमग्निशरीरकं हुत्वाऽर्के सूर्ये निम्लोचति सत्यस्तं गच्छति सति अग्न्यगारेऽग्निहोत्रशालायामासीनमुपविष्टं समाहितचित्तं च ॥ ८ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

न केवलं संसारलक्षणमृत्युपाशविच्छेदनी हरिकथा अपितु ऐहिकामुष्मिकसिद्धिकरीति निदर्शयति । यथेति । मुनिना नारदेन अर्भकः पञ्चवर्षः अस्याः प्रपञ्चश्चतुर्थे वक्ष्यते ॥ ५ ॥

श्रोतॄणां श्रद्धातिशयजननार्थं विदुरप्रश्नपरिहारत्वेन पुराणं कथयति । अथेति । अथशब्देन पूर्वत्र ब्रह्मपुत्रो हिरण्याक्षो वराहरूपिणा हरिणा हतो ननु दितिपुत्रः स एव पार्षदाविष्टो निहन्यत इति कथा विशेष आरभ्यत इति सूचयति । अथस्यैककर्तृत्वाद्युक्तं

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

हनार्थत्वाच्च एवं कथनं सम्भावितमित्यपिपदेन वक्ति। श्रुतो वक्ष्यत इति शेषः ॥ ६ ॥

कोऽयमिति तत्राह। दितिरिति। दाक्षायणी दक्षस्य पुत्री नाम्ना दितिः मारीचं मरीचेः पुत्रं रामवैरिमारीचव्यावृत्त्यर्थं कश्यपमिति हृच्छयः कामः ॥ ७ ॥

मारीचं विशिनष्टि। इष्टेति। अग्निरेव जिह्वा यस्य स तथा तं यजुषां पतिं यजुर्वेदगतमन्त्राणां विषयत्वेन स्वामिनं निम्लोचति अस्तङ्गच्छति अग्न्यागारेऽग्निगृहे ॥ ८ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

यया यस्याः प्रभावेणार्भक एव सदा सन् अन्तकालेऽपि देहात्यागान्मृत्योर्मूर्ध्नि अङ्घ्रिमिव कृत्वा हरेः पदमारुरोह किन्त्वर्भकत्वमत्र किशोरत्वं ज्ञेयम्। राजत्वे लब्धे तच्छ्रवणं जातमिति युक्त्या लभ्यते राजत्वयोग्यवयस आवश्यकापेक्षत्वात्। पुत्राद्युत्पत्तिश्रवणाच्च ॥ ५ ॥ ६ ॥

दितिरिति युग्मकम् ॥ ७—१२ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

मृत्युपाशविनाशित्वमुपपादयति ययेति। यया कथया उत्तानपदः पुत्रो ध्रुवः मुनिना नारदेन गीतया सुखार्थमपि श्रुतया मृत्योर्मूर्ध्नि अङ्घ्रिं कृत्वा स्थापयित्वा हरेः पदमारुरोह स हि ध्रुवःशरीरममुक्त्वैव ध्रुवपदं गतः वीरः स्ववीर्येण अभिनिवेशितचित्तः कथायां भवति तपस्तु पूर्वसिद्धमेवेति तस्य न मृत्युनाशकत्वं भगवत्प्रसादेऽपि कथायाः व्यापाररूपत्वात् न भिन्नतया साधकत्व मतो नारदोपदिष्टः सर्व एव मार्गः कथारूपो जातः यद्यपि मात्रा भजनमुपदिष्टं तदपि मुनिनैव निर्द्धारितं भजनकथाश्रवणयोः प्राप्ताप्राप्तविवेके क्रियमाणे तपस्यादेरप्रयोजकत्वात् कथाभिनिवेश एव फलसाधकः तत्राप्यभिनिवेशस्य स्वरूपमध्यपानात् भिन्ना कथैव हेतुः उत्तानः पादो यस्येति पूर्वं सोऽपि ऊर्ध्वपादः तपः कृतवानिति ज्ञायते तादृशस्यापि नरकरक्षको जात इति स्वपरपुरुषार्थसाधकत्वं कथाया निरूपितम् अर्भक इति कालादेरसाधकत्वं विमाने समागते देहं त्यक्ष्यतीति बुद्ध्या मृत्युरपि समागतः तदा कथाव्याप्तदेहस्य भगवच्चरणारविन्दच्छायया शान्तस्य हेत्वभावात् मृत्युनोत्तोलितदेहः विमानपर्यन्तं मृत्योर्गमनाभावमाशङ्क्य तस्य मस्तके पादं दत्त्वा तेनैव शरीरेण विमानं पश्चाद्ध्रुवलोकं चारुरोह अतः कथाभिनिवेशो महाफलः स विदुरे जात इत्यभिनन्दनम् ॥ ५ ॥

यस्मिन् कल्पे वराहहिरण्याक्षयोर्युद्धकथा अतिसमीचीना तां वक्तुं प्रक्रियान्तरमारभते। अथेति। अत्राप्ययमिति हासः पूर्वं मया श्रुतः इतिहासत्वात् व्यासात् पराशराद्वा वेदसारोद्धारः समाधिभाषायामितिहाससारोद्धारः मतान्तर इति विवेकः इतिहासः पुरावृत्तकथा गर्वहेतुः हास्यहेतुर्वा आश्चर्याश्चर्यरूपता वा अयमिति बुद्ध्युपस्थितः पुरा ब्रह्मणा देवानामनुपृच्छतामर्थे वर्णित इति पुरावृत्तत्वं समर्थितं ब्रह्मणा बालकचेष्टाया वर्णितत्वात् हास्यहेतुत्वं देवानां निधानपरिज्ञापकत्वेन गर्वहेतुत्वं सर्गलीलायाश्च मुक्तजीवविषयत्वेन आश्चर्याश्चर्यत्वं गर्वस्थितौ जयविजयौ देवानां प्रश्नहेतुभूताविति तद्धेतुकथनार्थमयमध्यायः प्रकरणस्याप्युपोद्घात इति प्रकरणानुक्तोऽप्यर्थ उच्यते उक्तो वा ततः संकृष्य हेतुत्वार्थं भिन्नतया निरूप्यते। देवदेवेनेति। देवानामिष्टदेवत्वात् कथायाः प्रामाणिकत्वम् अनुपृच्छतामिति तत्रापि भगवत्कथायामेव तैरपि पृष्टमिति ज्ञायते ॥ ६ ॥

हेतुभूतां कथामारभते। दितिरिति। दाक्षायणीति पुरुषस्वभावा धृष्टा दक्षोऽपि प्राचेतसः गर्वादिदोषयुक्तः बहुभर्तृकापुत्रतया धार्ष्ट्यं नोपपद्येत। क्षत्तरिति। जितेन्द्रियत्वेन सम्बोधनं काममलीलाया वक्ष्यमाणत्वात् दोषाभावाय। मारीचमिति। मरीचिर्मनसोऽभवदिति मनसः सङ्कल्पजनकत्वात्सङ्कल्पस्य कामजनकत्वाच्च कश्यपः कामावतार इति सूचितम्। अन्यथा तथा क्षोभो न भवेत् न वा स प्रवर्तेत। कश्यपमिति। ब्रह्मणः शापरूपोऽयम्। यथा आसन् मरीचेः षट्पुत्रा इति कल्पान्तरे तथास्मिन् कल्पे मरीचिपुत्रत्वात् अस्याप्युपहासः सम्भवति जितेन्द्रियाभिमानिनः तदा ब्रह्मणा अयमपि शप्त इति लक्ष्यते पौत्रीविवाहात्। एवं प्रसङ्गात् नामनिरुक्तेश्च। पतित्वान्नात्यन्तमनौचित्यम्। बहुस्त्रीकत्वात्तद्दृतोऽयं रतिकाम्यया प्रवर्तते। यथाग्निहोत्रादिधर्मः तथा व्रतमपि धर्म इति। परं विधर्मत्वात् क्रोधजनकत्वम्। अपत्ये दोषसम्भवाच्च। अपत्यकामेति। न वैराग्यादिना परिहर्तुं शक्या। सन्ध्यायामिति। निषिद्धकामस्योद्गमनहेतुरुक्तः। हृच्छयः कामः। हृदये स्थित एव तदानीमुद्गतः तेनार्दिताभिन्नमर्मा ॥ ७ ॥

कश्यपं कर्मणि प्रवृत्तं नाशयितुं प्रवृत्तेति कथनार्थं तस्याग्निहोत्रकर्मोच्यते। इष्टाग्निजिह्वमिति। अग्निरेव जिह्वा यस्य यदा वीनार्चिर्ललायद्विभाति तद्देवानामस्य यदा नीलोऽप्रकाशोऽर्चिरुद्देति सोऽग्निर्भगवज्जिह्वा पयसा नित्यहोमः रेतः सिञ्चति प्रजनन इति प्रकृतोपयोगित्वं च अग्निहोत्रस्य चर्वणरूपत्वात् यागरूपत्वाच्च पुरुषमिष्ट्वेत्युक्तं यजुषां पतिमिति यजुर्वेदेनाग्निहोत्रमिति वाक्यात्। निम्लोचत्यर्क इति। अतोऽस्तमिते होतव्यं सन्धौ होतव्यमिति च पक्ष आदृतः। आसीनमिति। अनुपस्थानपक्ष उक्तः अन्यथा प्रजायेत अग्न्यगार एवासीनं समाहितमिति सावधानान्तःकरणो भूत्वा इष्टं भगवन्तं ध्यायतीति लक्ष्यते ॥ ८ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

हरिकथैव जगदुद्धारिणीत्यत्र प्रमाणमाह। यया कथया मृत्योर्मूर्ध्नीति ध्रुवस्यान्तकालं ज्ञात्वा यदैव मृत्युरागतस्तदैव सुनन्दादिभिर्विमानमानीतमारोढुं ध्रुवः सोपानान्वेषणे मृत्युमवस्थितं दृष्ट्वा भद्रमिदं जातमिति तस्यैव मूर्ध्नि पदं दत्त्वा शरीरमत्यक्त्वैव विमानमारुह्य विष्णुपदं जगामेति ॥ ५ ॥

मे मया अनुपृच्छतां देवानां सम्बन्धेन ॥ ६ ॥

देवप्रश्नप्रस्तावाय प्रथमं हिरण्याक्षहिरण्यकशिपूत्पत्तिप्रसङ्गमाह। दितिरित्यादिना यावदध्यायसमाप्ति। मरीचेः पुत्रं कश्यपं हृच्छयार्दिना कामपीडिता अतः सन्ध्यायामेव तत्राप्यग्निहोत्रशालायां तत्रापि समाहितं कृतसमाधिं सन्ध्यायामपि निम्लोचत्यर्के अर्कास्तमयकाल एवेत्यर्थः। अग्निर्जिह्वा यस्य तं यजुषां यज्ञानां पतिं विष्णुम् ॥ ७ ॥ ८ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

यया कथया मुनिना श्रीनारदेन उत्तानपदः पुत्रः ध्रुवः हरेः पदं स्थानम् ॥ ५ ॥

॥ दितिरुवाच ॥

एष मां त्वत्कृते विद्वन् ! काम आत्तशरासनः ।
दुनोति दीनां विक्रम्य रम्भामिव मतङ्गजः ॥ ९ ॥
तद्भवान् दह्यमानायां सपत्नीनां समृद्धिभिः ।
प्रजावतीनां भद्रन्ते मय्यायुङ्क्तामनुग्रहम् ॥ १० ॥
भर्तर्याप्तोरुमानानां लोकानाविशते यशः ।
पतिर्भवद्विधो यासां प्रजया ननु जायते ॥ ११ ॥
पुरा पिता नो भगवन् ! दक्षो दुहितृवत्सलः ।
कं वृणीत वरं वत्सा ! इत्यपृच्छत नः पृथक् ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अत्र दैत्यवधे ॥ ६ ॥

देवप्रश्नप्रस्तावायादौ, दैत्यजन्मप्रसङ्गमाह । आध्यायसमाप्तेः दितिरिति चकमे कामितवती अग्निर्जिह्वा यस्य तम् यजुषां यज्ञानां पतिम् "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" इति श्रीमुखोक्तेः ॥ ७ ॥ ८ ॥

भाषाटीका ।

नारदमुनि की गाई हुई जिस कथा के सुनने से उत्तानपाद के पुत्र ध्रुवजी ने मृत्यु के मस्तकपै पद को रखकर वैकुण्ठ आरोहण किया ॥ ५ ॥

इसी में एक इतिहास देवदेव ब्रह्माजी ने सुनते हुये देवतों के सामने पूछने से जो कहा है सो मैंने सुना है ॥ ६ ॥

दक्ष की पुत्री जो दिति तिसने मरीची के पुत्र कश्यप जी को पुत्र कामना से काम के वश होकर सन्ध्या काल में इच्छा किया ॥ ७ ॥

सायंकाल में अग्नि जिह्वा वाले यज्ञों के पति विष्णु को यजन करके सूर्यास्त होनेपर अग्निशाला में एकाग्र बैठे कश्यप जी को दिति ने इच्छा किया ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

कृपणां बहुभाषिणीमिति वक्ष्यति तत्र एष मामिति द्वाभ्यां कार्पण्यं भर्तरीति चतुर्भिश्च बहुभाषणं वर्ण्यते दुनोति पीडयति विक्रम्य शौर्यमाविर्भाव्य रम्भां कदलीम् ॥ ९ ॥

आयुङ्क्तां सर्वतो युनक्तु सम्यक्करोतु ॥ १० ॥

भर्तरि प्राप्तबहुमनानां स्त्रीणां यशोलोकानाविशते व्याप्नोति प्रजया पुत्ररूपेण "तज्जाया जाया भवति यदस्यां जायते पुनः" इति श्रुतेः ॥ ११ ॥

नोऽस्माकं पिता नोऽस्मान् पृथगपृच्छत् अयं भावः त्रयोदशानामप्यस्माकं त्वयि भावसाम्ये वैषम्याचरणं तवानुचितमिति ॥ १२ ॥ १३ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

तत्र कार्पण्यबहुभाषणयोर्मध्ये ॥ ९ ॥

तत्तस्मात् अनुग्रहं रमणरूपं तत्र सम्यक्त्वं पुत्रोत्पादकतया ॥ १० ॥

भर्तरि मानदे पत्युः पुत्ररूपत्वे श्रुतिः प्रमाणं यद्यस्मादस्यां स्त्रियां पुत्ररूपेण पतिर्जायते तत्तस्माज्जाया स्त्री जायाशब्दवाच्या भवति ॥ ११ ॥

पितापीति क्वचित्पाठस्तत्र म इति पदमावर्त्तनीयम् ॥ १२ ॥

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

तदुक्तिमेवाह । एष इत्यादिनाऽथ मे कुर्वित्यन्तेन । हेविद्वन्! कश्यप! आत्तमुपात्तं शरासनं धनुर्येन स एषः कामः त्वत्कृते त्वदर्थे त्वया सह सङ्गत्यर्थे दीनां कृपणां मा विक्रम्य दुनोति परितापयति पीडयति वा अत्र दृष्टान्तः रम्भां कदलीं मतङ्गो गज इवेति ॥ ९ ॥

तत्तस्मात्प्रजावतीनां सपत्नीनां समृद्धिभिः दह्यमानायां मयि भवाननुग्रहमायुङ्क्तां कुर्यात्ते तुभ्यं भद्रं मङ्गलमस्तु ॥ १० ॥

भर्तरि भर्तुः सकाशाद्विभक्तिव्यत्यय आर्षः आप्तोरुमानानां प्राप्तबहुमानानां स्त्रीणां यशः लोकान् प्रत्याविशते लोकेषु विस्तृतं भवति इत्यर्थः कीदृशं तदुरुमानमित्यपेक्षायां तद्विशदयति । भवद्विधः भवादृशः पतिर्भर्ता यासां मादृशस्त्रीणां प्रजया प्रजारूपेणानुजायते हिशब्दः "तज्जाया जाया भवति यदस्यां जायते पुनः" इति श्रुतिप्रसिद्धिं द्योतयति इदमेव तदुरुबहुमानं यत्स्वभार्यायां पतिः प्रजारूपेण जायते इति भावः ॥ ११ ॥

किञ्च पुरा पूर्वकाले नोऽस्माकं पिता दुहितृवत्सलः पुत्रीषु वात्सल्यवान् दक्षः अस्मान् प्रति पृथक् प्रत्येकं हेवत्से! कं वरं वृणीतेत्यपृच्छत् ॥ १२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मनसैव चकमे न तु वाक्पूर्वकमिति तत्राह । एषइति । त्वाद्दिश्य रम्भां कदलीम् ॥ ९ ॥

न केवलं विषयभोगेच्छुरहं त्वां याचे किन्तु प्रयोजनान्तरं

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

कृपयापीत्याह। तद्भवानिति। प्रजावतीनां पुत्रवतीनां मयि आयुङ्क्ष्वा-मिति पदच्छेदः संभ्रमादिकारशिरोऽकारो न लुप्तः ॥ १० ॥

अस्मदनुग्रहार्त्तिकं तव प्रयोजनमिति तत्राह। भर्तरीति। सप्तमी पञ्चम्यर्थे भर्तुराप्तोरुमानानामित्यर्थः मानमपि पुत्रावाप्ति-लक्षणमित्याशयेनाह। पतिरिति ॥ ११ ॥

श्रुतगुणत्वेन स्नेहोदर्कया मया भगवान्वृत इत्यतोऽपि मदनुग्रहः कार्य इत्याशयेनाह। पुरेति ॥ १२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

दितिः षड्भिः सोपपत्तिकं सम्बन्धं प्रार्थयति। एष इति। "कामपीडाप्रतीकारः यशसानुग्रहस्तथा। वैषम्यस्य च निर्द्धारो द्वाभ्यामन्ते तु याचनम्" प्रथमं कामपीडामाह सर्वहेतुभूतामेष इति देवतारूपः कामः प्रत्यक्षो जात इति प्रदर्शयति कामशास्त्रे कामः पुरुषमेव बाधते ननु स्त्रियं तस्याः स्वपूतनारूपत्वात् पुरुषार्थश्च पुरुषस्यैव अन्यथा पुरुषस्य स्त्रीशेषत्वं स्यात् तस्मात्कथं बाधत इत्याशङ्क्याह। त्वत्कृत इति। त्वदर्थं मां बाधते त्वां बाधितुमसमर्थः त्वद्बाधार्थं मां बाधत इत्यर्थः अतोऽहं कामप्रेरिता त्वद्बाधां करोमीति भावः। विद्वन्निति। नात्र किञ्चिन्निरूपणीयं कामातुरायाः शास्त्रसिद्धत्वात्। आत्तशरासन इति। त्वद्बाधाया-मकृतायां मां जीवन्तीं मारयिष्यतीति सूचितं साक्षात्कारः स्व-स्याः पूतनात्वसूचकः अत एव भ्रुवोर्भङ्गो जायत इति रसदृष्टयोऽपि निर्गच्छन्तीति शरवत्त्वं दुनोति पीडयति। दीनामिति। तस्य निर्दय-त्वं सूचितम् अस्य दयोत्पादनार्थं विकम्पेति तस्यात्यन्तमाग्रहः रम्भामिव महागज इति नाशनार्थं प्रवृत्तिः ॥ ६ ॥

तस्मान्नाहमुपेक्षणीया किन्तु कृपा कर्त्तव्येत्याह। तद्भवानिति। कामादयः षड्बाधकाः प्रत्येकं सर्वत्र लोके मम तु सर्वे सम्भूय बाधका इति ज्ञापनार्थं कामबाधां निरूप्य मात्सर्यमाह। सपत्नीनां प्रजावतीनां समृद्धिभिः दह्यमानायां मयि अनुग्रहमायुङ्क्ष्वां ओट् आत्मनेपदं सपत्न्येव दाहहेतुः तत्रापि बह्वयः तत्रापि मदपेक्षया तासां समृद्धिः तत्रापि प्रजावत्त्वमतो दोषचतुष्टयेन मात्सर्येण दाहः तन्निवृत्त्यर्थमनुग्रहः कर्तव्यः समृद्धिप्रजादाने ततोऽप्यधिकदाने वा दाहाभावः सुखं च भविष्यतीति भावः भद्रं त इति पूर्वं बाधकत्वेन स्वस्य निरूपणात् प्रवृत्तावपि कदाचिद्बाधः स्यात् तथा सति अप्रवृत्तिरेवास्त्विति शङ्कां परिहरति ॥ १० ॥

त्वदनुग्रहेण न केवलं दोषाभावः किंतु गुणोऽभविष्यतीत्याह। भर्त्तरीति। सामीप्ये सप्तमी भर्तृसमीपे आप्तोरुमानानां यशः लोकानाविशते गर्भाधानादिसंस्कारेषु भर्त्रा सह एकासने स्त्रीणां संमाननमिति तत्कीर्त्तनं भर्तृकर्तृकं वा माननं तद्यशसो लोकप्रवेशमुपपादयति। पतिर्भवद्विध इति। यासां स्त्रीणां भवद्विधः पतिः प्रजया पुत्ररूपेण निश्चयेन जायते "तज्जाया जाया भवति यदस्यां जायते पुनः" इति श्रुतेः ॥ ११ ॥

एवं गुणदोषौ निरूप्य नीतिमपि निरूपयति। पुरेति द्वाभ्याम्। विवाहात्पूर्वं नोऽस्माकं पिता दक्षः। भगवानिति सर्वसमर्थः चन्द्रमिव त्वामपि करिष्यतीति भयं जनयति। दक्ष इति। अभिचरेद्वा। दुहितृवत्सल इति। स्नेहादौदासीन्याभावः। अत एव हे वत्साः! कं वृणीतेत्यपृच्छत्। पृथक् पृथक् इत्यन्यानुरोधाभावाय। नः अस्मान् विभक्तान्तरत्वात् न पौनरुक्त्यम्। अनेन तस्य विचारभङ्गे महाननुपद्रवो भविष्यतीति प्रवृत्तौ हेतुरुक्तः ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

एष मामिति। मुद्रितनेत्रे पत्यौ कायिकाश्चाक्षुषाश्च अभियोगा अकिञ्चित्करा एव वाचिकेष्वपि मध्ये शब्दोत्था अर्थोत्थाश्च व्यङ्ग्याः। परमेश्वराभिनिवेशितबुद्धौ कश्यपे नावकाशं लभत एवेत्युत्तमाङ्गनानामभिधयैव पुरुषे सम्भोगप्रार्थना यद्यपि नैवं स्वभावस्तथापि कन्दर्पपीडयोन्मादिता दितिर्लज्जाशङ्के निगिलन्तीव समाधिभङ्गार्थमुच्चैराह। एष साक्षादिव दृश्यमान इत्यर्थः त्वत्कृते इति। यत्वहमेकाकिन्यस्थास्यं तदैव मम किमकरिष्यदिति पत्यौ तस्मिन्नेव दोषो न्यस्तः। दीनां दुनोतीति त्वं पतिः कथं मां न रक्षसीति भावः। ननु लज्जां कथं सहसैवाहासीस्तत्राह। रम्भामिवेति। यदि प्राणा एव नश्यन्ति तदा किं लज्जयेति भावः ॥ ६ ॥

नच केवलमहं कामातुरैव रतिं याचे किन्तु पुत्रार्थिन्यपीत्याह। तदिति। आयुङ्क्ष्वां सर्वतो भावेन करोतु ॥ १० ॥

त्वत्प्रसादाद्यशस्विनी पुत्रवती च भूयासमित्याह। भर्तरि भर्त्तुः सकाशादित्यर्थः प्राप्तबहुसम्मानानां स्त्रीणां यशः लोकान् व्याप्नोति प्रजया पुत्ररूपेण। "तज्जाया जाया भवति यदस्यां जायते पुनः" इति श्रुतेः यद्वा भवद्विधः पतिः प्रजया हेतुनैव जायते भवति अतोऽहं प्रजावती कथं न भवेयमिति भावः ॥ ११ ॥

किञ्च। विवाहात् पूर्वमेवाहं त्वय्यनुरागिणीति प्रत्याख्येयवाक्या न भवितुमर्हामीत्याह। पुरेति। नोऽस्माकं पिता नोऽस्मानपृच्छत। १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

दुनोति पीडयति रम्भाम् कदलीम् ॥ ९ ॥

आयुङ्क्ष्वामायुनक्तु सम्यक्करोतु ते तवापि भद्रं भवतु ॥ १० ॥

भर्तरि आप्तः प्राप्तः उरुमानोयाभिस्तासां मानप्राप्तिप्रकारमाह। प्रजयापत्यरूपेण पतिरेव जायते ॥ ११ ॥ १२ ॥

भाषाटीका।

दिति बोली हे विद्वन्! आप के निमित्त मेरे को यह कंदर्पवाण धनुष लेकर दुखित करता है जैसे कि मत्तगज केला के पेड को टोंडे तैसें ॥ ६ ॥

सो मैंजो सौतिनोंकी सम्पत्ति से दुखिता हूं क्योंकि उन-सबके उत्तम पुत्र हैं तब मेरे परभी आप अनुग्रह करो ॥ १० ॥

पतिन से जिनका सन्मान होता है उन स्त्रियों का यश जगत् में व्याप्त होता है जिनके कि आप सरी के पति प्रजा स्वरूप से उत्पन्न होते हैं ॥ ११ ॥

पुत्रीन पर कृपा करने वाले हमारे पिता दक्षने पहिले अलग अलग हमसे पूछा कि हे पुत्री हो तुम किसको वरौगे॥ १२ ॥

स विदित्वात्मजानां नो भावं सन्तानभावनः ।
त्रयोदशाददात्तासां यास्ते शीलमनुव्रताः ॥ १३ ॥
अथ मे कुरु कल्याण ! कामं कञ्जविलोचन ! ।
(१)अर्तोपसर्पणं भूमन्न मोघं हि महीयसि ॥ १४ ॥
इति तां वीरमारीचः कृपणां बहुभाषिणीम् ।
प्रत्याहानुनयन् वाचा प्रवृद्धानङ्गकश्मलाम् ॥ १५ ॥
एष तेऽहं विधास्यामि प्रियं भीरु ! यदिच्छसि ।
तस्याः कामं न कः कुर्यात्सिद्धिस्त्रैवर्गिकी यतः ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

मोघं न भवति हि महीयसि त्वादृशे महत्तमे ॥ १४ ॥
प्रवृद्धानङ्गेन कश्मलं मोहो यस्यास्ताम् ॥ १५ ॥
संध्याकालवञ्चनाय भार्याप्रशंसा । एष इति पञ्चभिः । यतो यस्याः सकाशात् ॥ १६ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

भावं त्वद्विषयकमनोविकारं अयम् पद्यद्वयस्य भावः प्रयोजनीभूतोऽव्यङ्ग्योऽर्थः ॥ १३ ॥
अथ अतः वैषम्यस्यानुचितत्वात् उपसर्पणं कामोपलब्धये सविधगमनम् ॥ १४ ॥
मोहोऽन्तः करणविभ्रमः ॥ १५ ॥
भार्यायास्सर्वत्र किं विद्यया किंतपसा किंदानेनेत्यादिना सर्वत्रगर्हितत्वात् अर्थवादपरतया व्याचष्टे सन्ध्याकालेति एष त्वया प्रार्थितः ॥ १६ ॥

———

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

स सन्तानं भावयति वर्द्धयतीति सन्तानभावनो दक्षः आत्मजानां दुहितॄणां नः भावं साभिप्रायं विदित्वा ज्ञात्वा तासामात्मजानां मध्ये यास्ते तव शीलं स्वभावमनुव्रताः ता अस्मान् त्रयोदश अददात् त्रयोदशानामप्यस्माकं त्वयि भावः साम्ये सति वैषम्याचरणमनुचितमित्यभिप्रायः ॥ १३ ॥
अथ ततः हेकश्यप ! हेकल्याण ! मङ्गलरूप मे मम काममभिलषितं कुरु हेकञ्जविलोचन ! हेभूमन् महत्तम महीयसि महत्तरे पुरुषे आर्तानामुपसर्पणम् अनुच्छन्दनं मोघं न भवति ॥ १४ ॥
एवमुक्तः कश्यपः किमाहेत्यत्राह । इतीति । इत्युक्तरीत्या बहुभाषिणीं कृपणां दितिं प्रति वीरमारीचः जितेन्द्रियः कश्यपः प्रवृद्धोऽनङ्गः कामस्तेन कश्मलो मोहो यस्यास्तां वाचाऽनुनयन् सान्त्वयन् प्रत्याह प्रत्युवाच ॥ १५ ॥
उक्तिमेवाह । एष त इत्यादिना ब्रह्मादयोयत्कृतसेतुपाला इत्यन्तेन । अत्र सन्ध्याकालापेक्षया भार्यां प्रशंसति । एष त इति पञ्चभिः । हेभीरु ! यदिच्छसि तत्प्रियं प्रीतिविषयं ते तुभ्यमहं विधास्यामि करिष्यामि तस्याःतादृशाया भार्यायाः काममभिलषितं को न कुर्यात्सर्वोऽपि कुर्यादेवेत्यर्थः कीदृशीचासौ यस्याः कामं सर्वः कुर्यादित्यत्राह । सिद्धिरिति। यतः यस्याः पत्न्याः सकाशात्त्रैवर्गिकी धर्मार्थकामरूपा सिद्धिः फलं भवेदित्यर्थः ॥ १६ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

भावं हृद्गताभिप्रायम् अददाददात् ॥ १३ ॥
उपसंहरति । अथेति । अथ तस्मात् भवतो महत्तमत्वान्मम भवच्छरणगमनं सफलं स्यात् तथा दृष्टत्वादिति भावेनाह । आप्तेति । महीयसि पुरुषे आप्तत्वेनोपसंर्पणं शरणगमनम् ॥१४॥
एवं प्रार्थयमानामेनामगणय्य मारीचः किं तूष्णीमभूद्योत्किंचिदुत्तरमवददुतेति संशयो माभूदिति भावेनाह । इतीति ॥१५॥
यतो यस्याः भार्यायास्त्रैवर्गिकी त्रयाणां धर्मार्थकामानां संबन्धिनी सिद्धिः ॥ १६ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स इति पदस्यावृत्त्या चतुर्थ्यर्थः षष्ठ्यर्थश्च योज्यः ॥१३—१६॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

इदानीमस्माकं नास्ति वैषम्यं तव तु वैषम्यमित्याह । स विदित्वेति । आत्मजानां नः भावं विदित्वा तासां मध्ये त्रयोदश नः अस्मान् ते अददात् । याः ते शीलमनुव्रताः समानभावाः तत्रापि दक्षः सन्तानभावनः । दुहितृसन्तानं भावयतीति सन्तत्यभावे दानमेव व्यर्थं स्यात् ॥ १३ ॥
एवमप्रवृत्तौ नीतिविरोधमुपपाद्य प्रार्थयति । अथेति । न विरोधादिशङ्कया प्रवृत्तिः कर्तव्या किन्तु रसेनैवेति भिन्नप्रक्रमः तव कामाभावेऽपि मे कामं कुरु मे कामनां पूरयेत्यर्थः कञ्जविलोचनेति प्रकृतोपयोगिरूपवत्त्वं दैन्यमाह । आर्तोपसर्पणमिति महीयसि महापुरुषे आर्तानां प्रार्थना सफलैवेत्यर्थः सर्वं षड्भिर्निरूपणं तत्कार्यस्य भगवन्नाय ॥ १४ ॥
"धर्माद्दक्षात्ततो भीतो लोकानां निन्दनादपि । कालकर्मभेदेवादप्रवृत्तस्त्वसान्त्वयत्,, । असान्त्वितायां भगवानपि कुप्यतीति तस्याः सान्त्वनं कृतवानित्याह । इतीति । वीरेति सम्बोधन सान्त्वनवाक्येषु भ्रमाभावाय । मारीच इति पूर्ववत् । कृपणां

(१) आर्तेति विजयध्वजपाठः ।

सर्वाश्रमानुपादाय स्वाश्रमेण कलत्रवान् ।
व्यसनार्णवमत्येति जलयानैर्यथाऽर्णवम् ॥ १७ ॥
यामाहुरात्मनो ह्यर्धं श्रेयस्कामस्य मानिनि ! ।
यस्यां स्वधुरमध्यस्य पुमांश्चरति विज्वरः ॥ १८ ॥
यामाश्रितेन्द्रियारातीन् दुर्जयानितराश्रमैः ।
वयं जयेम हेला[1]भिर्दस्यून् दुर्गपतिर्यथा ॥ १९ ॥
न वयं प्रभवस्तत्वामनुकर्तुं गृहेश्वरि ! ।
अप्यायुषा वा कार्त्स्न्येन ये चान्ये गुणगृध्नवः ॥ २० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

मिति दया । वहुभाषिणीमिति भयम् । वाचेति न प्रवृत्त्या अन्यथा रसाभासः स्यात् । किञ्च । प्रवृद्धः अनङ्ग एव कश्मलो यस्याः नहि सकश्मला भुज्यते । अतः कश्मलनिवृत्त्यर्थं सान्त्वनम् ॥ १५ ॥

कामोऽभिमानात् फलतो वा निवर्तते तत्र फलस्य साम्प्रतं कर्तुमशुक्तत्वात् साधाख्यावाक्यैः अभिमानं जनयति । एष तेऽहमिति षड्भिः । "प्रार्थितस्य प्रतिज्ञानं हेतूक्त्या तस्य साधनं क्रियाश्चतुर्भिः स्तोत्रं च प्रार्थना च निरूप्यते । संसारदुःखतरणे हेतुः स्त्री स्वयमेव च । अरातितरणे दुर्गमनन्तोपकृतिर्गृहम् । एवमुत्कर्षकथने साभिमाना भवेदिति । पश्चात्सम्प्रार्थनं युक्तं स्वकीर्तेर्हेतुता पि च,, । एष कामं तेऽहमवश्यं विधास्यामि । भीर्विति विशिष्टस्त्रीत्वकथनं महत्त्वज्ञापकम् । विशेषास्त्वङ्गनाभीरुरिति कोशात् प्रकृतोपयोगि च भीरुत्वं । यदिच्छसीति पुत्रान् भोगं सम्पत्तिं च एतदवश्यं कर्तव्यमित्युपपादयति । तस्या इति सम्वत्सरो वै प्रजापतिरिति श्रुतेः । त्रयोदशमासाः सम्वत्सर इति च काश्यपानन्दः त्रयोदशधावतीर्णाः । तत्रेयं मलमासरूपा सामान्यतस्तु स्तुतिः । तस्या इति नहि कश्चित् स्वानन्दं नानुभवति । किञ्च । यतो भार्यातस्त्रैवर्गिकी सिद्धिः पुरुषार्थत्रयं भार्यासहितस्यैव यतः सिद्ध्यति मिलितं तस्यैव धर्मोऽपि यज्ञात्मकः । तस्यैव काञ्चनमञ्चितं भवति यत्सङ्गेऽङ्गना इति वाक्यात् अर्थोऽपि तदधीन एव पुरुषार्थः अन्यथा दुःखहेतुः स्यात् । कामसमुद्रस्य तु सा तरीरेव ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

नो भावामिति लज्जया त्वन्नामागृह्णतीनामप्यस्माकमिङ्गितेनैव जनान्तरद्वारा सहसा ज्ञात्वेत्यर्थः तासां दुहितॄणां मध्ये तेन त्रयोदशानां मध्ये कथमहमेवापुत्रिणीति त्वद्वैषम्यमिदमनुचितमिति भावः ॥ १३ ॥

ननु स्वरमणार्थं सायं मत्समाधिभङ्गे यतमाना त्वं कथं मत्समशीलेत्यत आह । आर्तोपसर्पणमिति । सम्प्रत्यहमार्त्ता किं करोमि नार्तः कालमपेक्षत इति शास्त्रं त्वं परमदयालुर्जानास्येवेति भावः ॥ १४ ॥

हे वीरेति यथा भवद्विधा धर्म्मवीरास्तथा न कश्यप इति यतोऽनुनयन्नेव प्रत्याह नतु सकोपकटाक्षं तर्जयन्निति । यदि कृत्रिममपि कोपमदर्शयिष्यत्तदा तस्याः कामपीडापि भीत्या अन्तरधास्यदेवेति भावः । प्रवृद्धेति न ह्यनङ्गघूर्णिता अनुनयं सहत इति भावः ॥ १५ ॥

एष तेऽहमिति कश्यपस्य वहुवाग्विलासरचना सायङ्कालयापनार्थमेवेति ज्ञेयम् ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

महीयसि महत्तमे हेभूमन् ! पतिरूपविष्णो ॥ १४ ॥ १५ ॥

अकाले प्रवृत्तां प्रशंसापूर्वकं निवारयति । एष इत्यादि षड्भिः यतः यस्याः सकाशात् ॥ १६ ॥

---

भाषाटीका ।

तव प्रजा के वृद्धि करने वाले दक्ष में हमारे अभिप्राय को जान कर तेरा १३ कन्या आपको दिये जो हम सब आपकी आज्ञा में वर्त्तमान हैं ॥ १३ ॥

अव हे कमललोचन हे कल्याण ! हे भूमन् ! मेरे मनोरथ को पूरा करो महात्मों के पास शरण जाना दुखितों का व्यर्थ नहीं होता है ॥ १४ ॥

हे वीर ! इस प्रकार भाषण करने वाली वहुत वडी दुखी कन्दर्प के वश भई उस दिती को देखकर प्रेम से कश्यप जी वोले ॥ १५ ॥

हे भीरु जो तुम इच्छा करती हो सो हम करेंगे जिससे धर्म अर्थ काम की सिद्धि होती है उसका मनोरथ कौन नहीं करेगा ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सर्वाश्रमानुपादायेति तानप्यन्नादिदानेन कृच्छ्रतस्तारयन् स्वयं तरतीत्यर्थः ॥ १७ ॥

(१) हेलासेना समुद्दिष्टा कचिल्लज्जापिचोच्यते इतिवचनात् पक्षानुगुणयेनार्थोवोद्धव्य राज्ञः पक्षे सेना दितिपक्षे लज्जा । तदुपलक्षित हावभावविलासैरित्यर्थः ।

श्रीधरस्वामिकृतभावार्थदीपिका।

आत्मनो देहस्यार्धम् कर्मसु द्वयोः सहाधिकारात् यच्छन्दानां तां त्वामिति तृतीयश्लोकेन संबन्धः स्वधुरं दृष्टादृष्टकर्मभारम् विज्वरो निश्चिन्तः॥ १८॥

हेलाभिर्लीलाभिः जयेमेति सभार्यस्येन्द्रियाणि प्रायेणेतरतं न सपन्तीति भावः॥ १९॥

तामनेकोपकारकर्त्रीं त्वां कात्स्न्र्येनानुकर्तुं प्रत्युपकारैस्त्वत्सदृशा भवितुं न प्रभवो न समर्थाः ये चान्ये गुणगृध्नवो गुणप्रियास्तेऽपि न समर्थाः संपूर्णेनाप्यायुषा वाशब्दाज्जन्मान्तरैरपि न प्रभव इत्युक्तम्॥ २०॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी।

तरणे प्रकारस्याध्याहारेण व्याख्यातत्वादित्यर्थोक्तिः॥ १७॥

सहाधिकारत्वाज्जायापती अग्निमादधीयातामिति श्रुत्योरेककारकत्वावगमात् दृष्टभारं पुत्रादिभरणरूपमदृष्टभारमग्निहोत्रादिरूपमध्यस्यारोप्य॥ १८॥

हेलाशब्दस्य लीलावाचकत्वे विश्वप्रकाशः "हेलामवज्ञात विलासयोश्च" इति लीलाभिर्विलासप्रभवालिङ्गनादिक्रियाभिः तत्रापि विश्वः "लीलां विदुः केलिविलासखेलाशृङ्गारभावप्रभवक्रियासु,, इति॥ १९॥ २०॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

परंपरया तुरीयपुरुषार्थोऽपि भार्यातः सिद्ध्यतीत्याह। कलत्रवान् भार्यावान् पुरुषः स्वाश्रमेण सर्वाश्रमानितरान् त्रीनाश्रमानुपादायोपकृत्य सर्वाश्रमोपकारको गृहस्थाश्रम इतिभावः व्यसनमिन्द्रियाणां विषयप्रावणयरूपं दुःखमेवार्णवस्तमत्येति तरति तत्र दृष्टान्तः जलयानैर्नौभिरर्णवं समुद्रं यथेति इन्द्रियजयादिद्वारा तुरीयपुरुषार्थसाधनभूता तरिरित्यर्थः॥ १७॥

यामिति श्रेयस्कामस्य स्वर्गापवर्गाख्यश्रेयस्कामस्यात्मनोऽर्धमित्यनेन स्वर्गापवर्गसाधनेषु द्वयोः सहाधिकारित्वं सूच्यते यच्छब्दानां तां त्वामिति तृतीयश्लोकस्थतच्छब्देनान्वयः यस्यां पत्न्यां स्वस्य धुरं दृष्टादृष्टकर्मभारमध्यस्य निक्षिप्य विज्वरः निश्चिन्तः पुमान् चरति॥ १८॥

यां पत्नीमाश्रित्येतराश्रमैर्ब्रह्मचर्याद्याश्रमैर्दुर्जयान् जेतुमशक्यानिन्द्रियाणयेवारातयः शत्रवस्तान् हेलाभिर्लीलाभिर्वयं जयेम तत्र दृष्टान्तः दुर्गपतिर्दस्यून् दुष्टजीवान् चोरादीन् यथेति॥ १९॥

तामुक्तविधोपकर्त्रीं त्वां कात्स्न्र्येनानुकर्तुं प्रत्युपकर्तुं हेगृहेश्वरि! पुरुषायुषापि वयं न प्रभवः न समर्थाः एवमन्येऽपि गुणगृध्नवः गुणकांक्षिणः गुणदर्शिन इति यावत् तेऽपि पूर्णेनाप्यायुषा वाशब्दाज्जन्मान्तरैरपि न प्रभव इत्युक्तम्॥ २०॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

एतदेव विशदयति। सर्वाश्रमानिति। कलत्रवान् प्रशस्तभार्यायुक्तः स्वाश्रमेण गार्हस्थ्याश्रमेणान्नदानादिना ब्रह्मचर्यादिसर्वाश्रमानुपादाय संभाव्य संसाराख्यव्यसनसमुद्रमत्येतीत्यन्वयः१७॥ स्वधुरं स्वव्यापारभारमध्यस्य निक्षिप्य १८॥

इतोऽपि त्वं संभाव्येत्याह। यामिति। इन्द्रियाणयेवारातयः शत्रव इन्द्रियारातयस्तान् इन्द्रियाणामरातयो विषयास्तानिति वा एवं चेदृष्टान्तोऽपि संगच्छते उभयेषामपि बाह्यत्वात् पूर्वत्र संभावनामात्रतयोक्तम्॥ १९॥

वक्ष्यमाणस्ववाक्यार्थं कारयितुं मुनिः स्तुतिं करोति। नवयमिति। भवन्तो न प्रभवश्चेदन्यो भवादृशो नेति तत्राह। ये चेति येऽन्ये च गुणगृध्नवो गुणलुब्धाः पुरुषास्तेऽपि भार्यामनुकर्तुं न प्रभव इत्यर्थः॥ २०॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

सर्वाश्रमानिति। वानप्रस्थस्यापि गृहस्थादेवोत्पत्तेः॥१७-२०॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं तदीयं प्रार्थितमवश्यं कर्तव्यमित्युपपाद्य तां स्तौति सर्वदुःखनिवारकत्वेन। सर्वाश्रमानिति। अन्येषामाश्रमाणामन्नदाता गृहस्थ एव अभार्यस्त्वभोज्यान्नः। अग्न्यभावेन वीरहत्वात्। अतः स्वातिरिक्ताश्रमानुपादाय स्वाश्रमेण गार्हस्थ्येन व्यसनार्णवं क्षुत्पिपासार्दिदुःखसमुद्रमत्येति जलयानैर्बोहित्थपोतैः यथार्णवमत्येति। अन्यथा मत्स्यादिभिर्ग्रस्त एव स्यात्॥ १७॥

किंच यामाहुरिति यां भार्यामात्मनः अर्द्धमाहुः चिद्रूपस्य स्वस्य स्वदेहः सद्रूपः आनन्दरूपश्च भार्यायाः अर्द्धस्वगलत्वाद्वा आहुरिति प्रमाणं हीत्युपपत्तिरुक्तैव प्रजातिरमृतमानन्द इत्युपस्थ इति श्रुतेः श्रेयस्कामस्येति केषांचिन्मते भार्यासहितस्यैव कर्मण्यधिकारः मानिनीति सम्बोधनमेतादृशवाक्याकथनार्थम् एवं सुखहेतुत्वमुपपाद्य दुःखाभावहेतुत्वमुपपादयति यस्यामिति स्वधुरं स्वयं धुर्यो बलीवर्द्दः संसारलक्षणां धुरं निरन्तरं वहति तत्र भार्या चेदनुकूला सा सर्वमेव भारं गृह्णीयात् इदं च लोकसिद्धं नोपपादनीयं चरतीति यथासुखं परिभ्रमति मुक्तो जायत इत्यर्थः विज्वर इति चिन्ताज्वररहितः अन्यथा धनादिनिमित्तं सर्वत्र चिन्ता भवेत्॥ १८॥

किञ्चयामितियां भार्यामाश्रित्य इन्द्रियलक्षणान् शत्रून् अन्यायेनमारकान् भार्यासहिता वयं हेलाभिरेव जयेम नहि ते शत्रवः अन्याश्रमैः जेतुं शक्याः अत इतराश्रमैर्दुर्जयान् सभार्यं एव जयति भार्यावन्तमिन्द्रियाणि न बाधन्त इति केचित् जयस्तु शत्रुत्वे भार्यावतस्तदपेक्षणात्तेषां न शत्रुत्वं शास्त्रतः शत्रुत्वेऽपि बहिः स्वानन्दानुभवात् अतुषक्त एव हेलाभिरवज्ञयैवेन्द्रियाणां जयः बाधकानामबाधकत्वमेव जयः असामर्थ्यजनकत्वं वा अबाधकत्वमात्रमत्र जय इति वक्तुं दृष्टान्तमाह। दस्यून् दुर्गपतिरिति। नहि चौराणां जये कश्चन पुरुषार्थः किन्तु ते यथा न बाधन्ते तथा दुर्गाश्रयणमेव कर्तव्यं नतु तेषां मारणादि असमानत्वात् जयस्य कादाचित्कत्वाच्च॥ १९॥

किञ्च एकस्मिन्नपि दिवसे क्रियमाणस्य भार्योपकारस्य प्रत्युपकारो नास्तीत्याहनवयमिति। तां पूर्वोक्तोपकारकारिणीं प्रत्युपकर्त्तुं वयं न प्रभवामः यः उपकारः कर्त्तव्यः सोऽपि त्वदीयमेव भवतीति यथालङ्कारः देहपोषो वा गृहेश्वरीति सर्व-

अथापि काममेतं ते प्रजात्यै करवाण्यलम्।
यथा मां नातिवोचन्ति मुहूर्तं प्रतिपालय ॥ २१ ॥
एषा घोरतमा वेला घोराणां घोरदर्शना।
चरन्ति यस्यां भूतानि भूतेशानुचराणि ह ॥ २२ ॥
एतस्यां साध्वि ! सन्ध्यायां भगवान् भूतभावनः।
परीतो भूतपर्षद्भिर्वृषेणाटति भूतराट् ॥ २३ ॥
श्मशानचक्रानिलधूलिधूम्रविकीर्णविद्योतजटाकलापः।
भस्मावगुण्ठामलरुक्मदेहो देवस्त्रिभिः पश्यति देवरस्ते ॥ २४ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

धनात् प्रत्यहं तद्गृहे सर्वभोगान् भुञ्जानः कमुपकारं कुर्यात् कात्स्न्र्येनाप्यायुषेति तस्याभोग्यत्वं कियत्कालमेवेति तदनन्तरं परिपालनादिकं प्रत्युपकारसाधकं भविष्यतीति सम्भाव्य निराकरोति। तथापि तावत्कालमुपकरणात् ये चान्ये देवा अपि चिरजीविनः गुणगृध्नव इति तस्या एकोऽपि गुणः पुत्रजननादिः प्रतिकर्तुमशक्यः अतो येषां तद्गुणा अपेक्षिताः इह परत्र साधकत्वेन तैः प्रतीकारोऽशक्य इत्यर्थः ॥ २० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

सर्वाश्रमानिति चतुरोऽप्याश्रमानन्नादिदानेन कृच्छ्रतस्तारयन् स्वयं तरतीत्यर्थः ॥ १७ ॥

यां स्त्रियमात्मनो देहस्य अर्धम् "अर्द्धो वा एष यत् पत्नी" इति श्रुतेः स्वधुरं इष्टापूर्तकर्मभारम् ॥ १८ ॥

दुर्गपतिरिति। दस्यवः खलु दुर्गमाश्रित्यैव जनान् लुण्ठन्ति यस्तु दुर्गपतिस्तत्र कथं प्रभवन्तीत्यर्थः। दुर्गोऽत्र विषयभोग एव तत्र दैवात् पतितान् ब्रह्मचार्य्यादीनेव भ्रंशयन्ति न तु गृहस्थान् तेषां भोगविशेषस्य शास्त्रविहित त्वेन दुरदृष्टानुत्पादनात् ॥ १९ ॥

तदेवं स्त्रियमाश्रित्यैव गृहस्थ एव सुखेन विषयमपि भुञ्जके नरकेऽपि न पतति नतु विरक्त इत्यतस्तां प्रसिद्धां त्वां स्त्रीजातिमनुकर्तुं प्रत्युपकारैस्तादृशीभवितुं वयं पुरुषजातयो न प्रभवः कात्स्न्र्येन यदायुस्तेनापि सम्पूर्णेनाप्यायुषेत्यर्थः। वाशब्दाज्जन्मान्तरैरपि ये चान्येऽतिथयः गुणगृध्नवस्तद्गुणग्राहिणः पक्षे त्वामित्येकवचनेन वयमिति बहुवचनेन अप्यायुषेत्यादिनाच परिहासः सूचितः ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

सर्वाश्रमानुपादाय अन्नादिदानेन संगृह्य तैः सह व्यसनार्णवं तरतीत्यर्थः ॥ १७ ॥

यच्छब्दानां तां त्वामित्यनेनान्वयः ॥ १८ ॥

हेलाभिर्लीलाभिः ॥ १९ ॥

अनुकर्तुमनेकोपकारकर्त्र्याः प्रत्युपकारैः सदृशीभवितुं न प्रभवो न समर्थाः येऽन्ये गुणगृध्नवः गुणाकांक्षावन्तः गुणलुब्धा इत्यर्थः। तेऽपि न प्रभवः ॥ २० ॥

भाषाटीका।

ब्रह्मचर्यादि सब आश्रमों का पालन कर के गृहस्थाश्रमी संसार सागर को तरजाता है जैसे नाव से समुद्र को तर जाते हैं ॥ १७ ॥

हे मानिनि कल्याण कामना करने वाले पुरुष को जो आत्मा का अर्ध भाग रूपपत्नी है जिस के ऊपर अपना अर्थादिक भार को छोडकर पुरुष निश्चिन्त होकर रहता है ॥ १८ ॥

जिस भार्या को आश्रय कर के इतर आश्रमों से नहीं जीतने योग्य दुर्जय इन्द्रिय शत्रुन को हमलोग अनायास से जीतते हैं जैसे किलाभें रहने वाला चोरों को जीतता है ॥ १९ ॥

हे गृहेश्वरि तिन तुमारे प्रत्युपकार करने को हम नहीं समर्थ हो सकते हैं चाहे हमारा संपूर्ण आयु बीतजाय तौ भी और भी जो गुणग्राही हैं वेभी समर्थ नहीं होंगे ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

यद्यपि त्वदनुकरणमशक्यं प्रजात्यै पुत्रोत्पत्त्यै नातिवोचन्ति न निन्दन्ति प्रतिपालय प्रतीक्षस्व ॥ २१ ॥

स्वानिन्दामगणयन्तीं भीषयन् श्रीरुद्रमनुवर्णयति। एषेति सप्तभिः घोराणामेषा वेला स्वयञ्च घोरदर्शना ॥ २२ ॥

भूतपर्षद्भिर्भूतगणैः ॥ २३ ॥

तर्हि तत्संमुखत्वमात्रं वर्जनीयमिति चेत्तत्राह। श्मशाने यश्चक्रानिलो वातमण्डली तस्मिन् या धूलिस्तया धूम्रो विकीर्णो विक्षिप्तो विद्योतो द्युतिमान् जटाकलापो यस्य भस्मनावकुण्ठः प्रावृतोऽमलो रुक्मवद्देहो यस्य स देवस्त्रिभिः सोमार्काग्निनेत्रैः पश्यतीत्यस्योत्तरश्लोकत्रयेऽप्यनुषङ्गः एकस्य जामातरः परस्परं भ्रातरो व्यवह्रियन्ते अतो मम भ्राता असौ तव देवर इति लज्जार्थमुक्तम् ॥ २४ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी।

एतं पुत्रोत्पादकरतिलक्षणं वोचन्तीति ब्रूञ्वोचर्हिंसालाक्रंयोरिति श्वादिस्तस्मात् ॥ २१ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

घोराणामिति स्वस्वामिभावसंबन्धेषष्ठी घोरस्वामिकेत्यर्थः स्वयञ्च घोरं भयजनकं दर्शनं परिचयो यस्याः सा तथा ॥ २२ ॥

पर्षच्छब्दः सभावाचकः सभाहि गोष्ठी सामाजिको गण एवेति भूतगणैरितिव्याख्यातम् "सभासामाजिके द्यूते गोष्ठीमन्दिरयोरपि" इति विश्वः वृषेण वृषमारुह्य ॥ २३ ॥

अनुषङ्गः अत्रान्वितस्यापि पश्यतीति क्रियापदस्य वक्ष्यमाणश्लोकेषु संबन्धः देवरशब्दस्य भर्तृभ्रातृमात्रवाचकत्वाद्यपीत्यादिटीकालोकदृष्ट्या केनापि कल्पितेति गम्यते किन्तु लोकेऽपि ज्येष्ठादेव लज्जाधिक्यमिति चिन्त्यैव ॥ २४ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

अथापि त्वदुपासनानुरूपेण उपकर्त्तुमशक्यत्वेऽपि ते प्रजात्यै प्रजननाय पुत्रोत्पत्तये इतियावत् यःकामः तमेतं काममलं पर्याप्तं करवाणि यथाकृते मां प्रति त्वं नातिशोचन्ती भवसि तथा करवाणयेव किं तु मुहूर्तं मुहूर्त्तं कालं प्रतिपालय प्रतीक्षस्व ॥ २१ ॥

किमर्थं मुहूर्तं प्रतीक्षणम् इत्याशङ्कायां तस्य मुहूर्तस्य रत्यनुपयुक्ततां कथयति। एषेति। एषा वेला घोरतमा उग्रतमा घोराणामपि घोरदर्शना घोरं दृश्यत इति तथा यस्यां सन्ध्यावेलायां भूतेशो रुद्रस्तस्यानुचराणि भूतानि प्रमथाख्यभूतानि चरन्ति सञ्चरन्त्यतोऽपि नायमवसर इति भावः ॥ २२ ॥

चरन्ति चेद्भूतानि तर्हि तत्संचारविषयप्रदेशो वर्जनीय इत्यत्राह। एतस्यामिति। हेसाध्वि ! एतस्यां संध्यायां भूतभावनो भूतानां सर्वजीवानां भावयति सुखमिति तथा भगवान् भूतराट् रुद्रः भूतपरिषद्भिः प्रमथगणैः परीतः परिवेष्टितः वृषेण स्ववाहनभूतेन वृषभेण नन्दिकेश्वरेण सहाटति चरति ॥ २३ ॥

किञ्च श्मशानेषु यश्चक्रानिलः वात्या तेन यो धूलिस्तेन धूम्रा विशीर्णा विक्षिप्ता विद्योता विद्योतमानाश्च ताः या जटाः तासां कलापः समूहो यस्य सः भस्मनावगुण्ठः अवलिप्तः अमलः रुक्मवद्देहो यस्य सः देवः रुद्रः त्रिभिर्नयनैरिति शेषः पश्यति सर्वं साक्षात्करोत्यतस्तद्दर्शनाविषयप्रदेशोनास्तीति भावः पश्यतु देवस्तथापि तमनादृत्य प्रवर्ते इत्यत्राह सतु रुद्रस्ते देवरः त्वद्भगिन्या उमायाः पतिरित्यर्थः नतु पतिभ्रातृत्वं तदसंभवात् कश्यपो हि मरीचिपुत्रः नतु ब्रह्मपुत्रः स्वजननत्वादादरणीय इति भावः यद्वा एकस्य जामातरः परस्परं भ्रातर इति व्यवहारः तेन कृत्वा देवर इत्युक्तम् ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

किमिति स्तोत्रेण निष्प्रयोजनेनेति माभूच्छङ्केत्याह । अथापीति । यद्यप्येवमथापि तर्हि किमिति कालः क्षिप्यते इति तत्राह । यथेति । अतिवोचन्ति निन्दन्ति तर्हीदं वचनं गुडजिह्विकाकल्पमित्यत उक्तं मुहूर्तमिति प्रतिपालय प्रतीक्षस्व ॥२१॥

प्रतीक्षायां किंकारणमत्राह । एषेति । घोराणां वेलेत्युक्तं स्पष्टयति । चरन्तीति ॥ २२ ॥

भवत्सामर्थ्येन भूतानि किंकुर्वन्तीति तत्राह। एतस्यामिति। ।२३।

अस्मात्पशुपतेरपि किमभयमित्याशङ्क्य तस्मादस्मद्वध्यदर्शने भयमित्याशयवानाह । श्मशानेति । श्मशाने विद्यमानश्चक्रानिलो वात्या वायुः श्मशानमण्डलवर्ती वातस्तस्मादुत्पन्नया धूल्या धूम्रो धूमवर्णः विशीर्णश्च विद्योतश्च जटाकलापो यस्य स तथा विशिष्टो द्योतः प्रकाशो यस्य, स तथा भस्मनावकुण्ठोऽवरूषणं यस्य स तथोक्तः अमलरुक्मं रजतं भस्मावकुण्ठश्च रजतवद्धवलो देहो यस्य स तथा त्रिभिर्नेत्रैरितिशेषः तं तव देवरः सहोदर्याः सत्याः पतिः ॥ २४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं तां स्तुत्वा कालविलम्बं प्रार्थयति । अथापीति । प्रार्थितं तु यथेच्छं कर्तव्यमेव सुतरां प्रजानिमित्तमलमत्यर्थं करवाणि अथापि मुहूर्तं परिपालय यावत्सन्ध्यापगमो भवति तत्र हेतुः यथा मां नातिवोचन्तीति अतिक्रम्य निन्दापूर्वकं यथा न वदन्ति अस्मज्जातीयाः सर्वे सर्वज्ञाः त एव धर्मशास्त्रकर्तारः तेषामज्ञातं किमपि न भवतीति तत्कथनसंभावना ॥ २१ ॥

एवं तां प्रार्थयित्वा तस्य कालस्य स्वरूपतो दोषमाह। एषेति। एषा वेला घोरतमा सर्वभोगविगर्हिता । नहि घोरा भोगाधिकरणं भवति । कालदेशयोः सर्वाधिकरणत्वात् तद्दोषोऽवश्यं परिहरणीयः। सर्वस्यापि कालस्य सन्ध्यारजोरूपा। सन्ध्यैव रात्रिः रजस्वला सा परिहरणीयेति । अत एव सा पुष्पिता भवति । प्रत्यक्षतश्च तस्याः रागो रजोरूपो दृश्यते। कामादिजनकत्वात् भयहेतुरपि भवति । अतो घोरतमा घोराणां भूतादीनां च सम्बन्धिनी भवति। घोरदर्शना च। सर्वत्रैवान्धकारव्याप्त्या घोरसम्बन्धित्वमुपपादयति । चरन्ति यस्यां भूतानीति। तानि च भूतानि मन्त्रादिभिः न निराकर्तुं शक्यानीत्युपपादयति । भूतेशानुचराणीति । महादेवस्य सेवकानि तानि भूतानि। हेत्वाश्रयें। कथमेतस्मिन् एवं काले प्रार्थितमिति तस्या भयमुत्पादयति ॥ २२ ॥

किञ्च। अस्य कालस्याधिष्ठात्री देवता महादेवः । स कामनाशकः तच्छत्रुपरिग्रहः तस्य काले क्रियेत चेत् तदा स मारयिष्यतीति भयं जनयन् महादेवं स्तौति षड्भिः । एतस्यामित्यादिभिः। परिभ्रमो दर्शनं च सम्बन्धाभाव एवं च मारणे हेतुत्रितयं दोषाभावाय चापरे । तत्र प्रथमं तस्य परिभ्रमणमाह। देशान्तरागमनाय एतस्यां सन्ध्यायां साध्वि! इति सम्बोधनं निषिद्धकामवस्त्वव्या वृत्त्यर्थं भगवानित्यप्रतिहतगतिः। परिभ्रमणमुपकारहेतुरित्याह । भूतभावन इति । भूतानि भावयति पालयतीति। सन्ध्यायामुपपत्तिर्यदि भवेत् तेन तस्य च लोकस्य नाशो भवेत् । अतः सर्वत्र सन्मार्गवर्तिषु भोगनिराकरणार्थं भूतपर्षद्भिः परीतः भूतरूपा एव तस्य पर्षदः सभापतयो भवन्ति तैः सहितः वृषमारुह्य स्वयमटति भूतानां राजा भूतानां स एव कालः। अतः स्वभृत्यरक्षार्थं भूतराट् पर्यटति । यदि कश्चिदन्यायं कुर्यात्तदा पर्षद्भिः धर्मकारिणमपि सन्ध्यायां धर्मकारिणं मारयतीति सूचयितुं वृषेणाटतीत्युक्तम् । वृषो धर्मो यस्तमेवावरुह्य तिष्ठति स कथम् अन्यं तादृशं परिपालयेत धर्मस्य साक्षित्वार्थं वा ॥ २३ ॥

एवं देशान्तरगमनाभावाय तस्य परिभ्रमणमुक्त्वा अत्र इदानीं स्वभावतः स्थितः ।पश्यत्येवेत्याह । श्मशानेति । अयं देवो महादेवः त्रिभिरपि चक्षुर्भिः पश्यति । गार्हपत्यादयः तस्य

न यस्य लोके स्वजनः परो वा नात्यादृतो नोत कश्चिद्विगर्ह्यः ।
वयं व्रतैर्यच्चरणापविद्धामाशास्महेऽजां बत भुक्तभोगाम् ॥ २५ ॥
यस्यानवद्याचरितं मनीषिणो गृणन्त्यविद्यापटलं बिभित्सवः ।
निरस्तसाम्यातिशयोऽपि यत्स्वयं पिशाचचर्यामचरद्गतिः सताम् ॥ २६ ॥
हसन्ति यस्याचरितं हि दुर्भगाः स्वात्मन् रतस्याविदुषः समीहितम् ।
यैर्वस्त्रमाल्याभरणानुलेपनैः श्वभोजनं स्वात्मतयोपलालितम् ॥ २७ ॥
ब्रह्मादयो यत्कृतसेतुपाला यत्कारणं विश्वमिदं च माया ।
आज्ञाकरी तस्य पिशाचचर्या अहो विभूम्नश्चरितं विडम्बनम् ॥ २८ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिन्यां

पश्यति । स च देवः अतीन्द्रियमपि पश्येत् । देवर इति लज्जोत्पादनम् । एकजामातॄणां भ्रातृत्वव्यवहाराद् देवरत्वम् । पतिरपि देवर उच्यते । अग्निरूपत्वात् भगवतः।"तृतीयो अग्निष्टेपतिः"इति श्रुतेः । दैत्यानां च देवं सुखं राति इति तवोपास्यो देवरः तस्यातिक्रमः सर्वथानर्थहेतुस्तस्य स्वभावन एव मृतस्थानक्रीडापरत्वान्न तस्य मारणे काचिच्छङ्का इत्यभिप्रायेणाह । श्मशाने यश्चक्रानिलः वात्या तेनोद्धता या धूलिः तथा धूम्रा धूसरवर्णा विद्योतमानाश्च या जटाः तासां कलापो यस्य प्रलयकर्तृत्वादस्य जटानां प्रलयहेतुत्वात् भस्मधूमरत्वाभावे विकीर्णा विद्योतमानाः प्रलयमेव कुर्युः । भस्मान्तरं च प्रलयमेघान् न स्पृशति चक्रानिलादन्यः न सर्वतो भस्मसम्बन्धं कारयति । अतः तथा भाव उचित एव किञ्च । भस्मावकुण्ठामलरुक्मदेहः । भस्मना अवकुण्ठः प्रक्षालनं यस्य । अमलं यद्रुक्मं सुवर्णं रजतं वा तद्भस्मना घृष्टमत्युज्ज्वलं भवति । अतस्तस्य भस्मापेक्षास्तीति स्वल्पेऽप्यपराधे मारयेदित्यर्थः देवर इति कल्पान्तरे प्राचेतस एव षष्टिकन्यापक्षेऽपि महादेवाय सतीं दत्तवानित्यध्यवसेयम् । प्रथममन्वन्तरे यत्र सती जन्म तत्र दित्यादीनां जन्म देवं पतिं रातीति देवरः श्वशुरो वा । तथा च मरीचिभ्रातृत्वान्महादेवोऽपि देवरः कन्यासमये प्रार्थितो महादेवः पतिं दत्तवानिति देवरः ॥ २४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एवं यद्यपि त्वदनुकरणमशक्यं तथापि एतं कामं प्रजायै पुत्रोत्पत्त्यैकरवाणि नन्वलं वाग्विलासेन कालविलम्बस्य दुःखसहत्वात्तूर्णं तल्पगृहं प्रविशेति तत्राह । नातिवोचन्ति न निन्दन्ति प्रतिपालय प्रतीक्षस्व ॥ २१ ॥

निन्दामगणयन्तीं भीषयमाणः श्रीरुद्रमनुवर्णयति । एषेति सप्तभिः । घोराणां भूतप्रेतादीनां दर्शनं यस्याम् । अतएव घोरतमा घोराणामिति घोरस्वामिकेत्यर्थः । घोरायदेवाह । चरन्तीत्यादि ॥ २२ ॥

भूतान्यप्यगणयन्तीं पुनराह । एतस्यामिति ॥ २३ ॥

तर्हि तत् संमुखत्वमात्रं वर्जनीयमितिचेत्तत्राह । श्मशाने यश्चक्रानिलः वातमण्डली तत्र धूलिधूम्रः विकीर्णा विचित्रो विद्योतो द्युतिमान् जटासमूहो यस्य सः ! भस्मना अवगुण्ठ आवरणं यस्य तथा भूतोऽमलः स्वर्णवद्देहो यस्य स देवस्त्रिभिः सोमार्काग्निनेत्रैः पश्यतीत्येतदपराधफलं सद्य एव स नो दास्यतीति भावः सच ते न निःसम्बन्धो नाप्यपरिचितश्चेत्याह । देवर इति । एकस्य जामातरः परस्परं भ्रातरो व्यवह्रियन्ते अतो मम भ्रातासौ तव देवर इति त्वं वा कथं न लज्जसे इति भावः ॥ २४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रजात्यै सन्तत्यै नाति वोचन्ति न निन्दन्ति ॥ २१ ॥

अन्यथा रुद्राद्भयं स्यादिति दर्शयन् रुद्रं वर्णयति । एषेतिसप्तभिः ॥ २२ ॥

भूतपर्षद्भिः भूतगणैः परीत आवृतः ॥ २३ ॥

श्मशानचक्रानिलस्य शवभस्मस्थलचारिचक्रवातस्य धूल्या धूम्रो विकीर्णो विक्षिप्तः विद्योतो द्युतिमान् जटाकलापो यस्य सः भस्मना अवगुण्ठः आवृतः अमलरुक्मवद्देहोयस्य सः ते देवरः त्वद्भगिनी भर्ता ॥ २४ ॥

भाषाटीका ।

तौभी सन्तान पैदाहोने के लिये तुमारे इस मनोरथ को हम करैंगे परन्तु हम को जैसे मनुष्य कोई निंदा न करैं इस के वास्ते एक मुहूर्त मात्र ठहर जाओ ॥ २१ ॥

यह सन्ध्या समय बडा घोर वेला है घोर भूतादिकों की वेला वडी भयङ्कर है इस वखत श्री महादेवजी के अनुचर भूतगण विचरते रहते हैं ॥ २२ ॥

हे पतिव्रते ! इस सन्ध्या समय में जीवों के रक्षा करने वाले भगवान् महादेवजी भूतपार्षदों को साथ में लेकर वृषभ की असवारी करके संव भूतों के राजा आप घूमते हैं ॥ २३ ॥

श्मशान में जो चक्राकार वायु तिसकी धूली से धूमरे फैले हुये चमकने जटा समूह को धारण किये हैं भस्म लगा हुआ निर्मल देह है सुवर्ण सा प्रकास है देह में जिनके एसे तुमारे देवर महादेवजी तीन नेत्रों से देखते हैं ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु तथाऽपि महत्त्वेनादरणीयस्य स्वजनस्य च तव स सर्वं क्षमेतैव तत्राह । यस्य स्वजनादिर्नास्ति समत्वादीश्वरस्य ऐश्वर्य-

श्रीधरस्वामिकृतभावार्थदीपिका ।

मेवाह । येन चरणेनापविद्धां निर्माल्यवद्दूरतस्त्यक्तां तेन भुक्तभोगामजां मायां तन्मयीं विभूतिं महाप्रसाद इत्याशास्महे व्रतैस्तमाराध्य ॥ २५ ॥

अनिविद्धसुखत्यागादसौ पिशाच इत्युपहासो न कार्य इत्याह द्वाभ्याम् । यस्यानवद्यं विषयासक्तिशून्यमाचरितम् विभित्सवो भेत्तुमिच्छवः ॥ २६ ॥

समीहितमभिप्रेतं लोकशिक्षारूपम् अविदुषोऽविद्वांसः यद्वा न विद्वानन्यो यस्मादिति तस्य सर्वज्ञस्येत्यर्थः दुर्भगानेवाह । यैरिति । श्वभोजनं शुनां भोज्यं शरीरं स्वात्मतयायमेवात्मेति बुद्ध्वा ॥ २७ ॥

अहो अतर्क्यं तस्याचरणमित्याह । ब्रह्मादयो येन कृतान् सेतून्स्वस्वाधिकारान् पालयन्ति यः कारणं यस्य येन कृतमिदं विश्वम् माया च यस्याज्ञाकरी विभूम्नः परमेश्वरस्य विडम्बनमतर्क्यमित्यर्थः ॥ २८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

ईश्वरस्य समत्वादिति "ईश्वरस्तु पर्जन्यवद्द्रष्टव्य" इतिन्यायात् तन्मयीं मायाकार्य्यरूपां विभूतिं धनादिसंपत्तिम् ॥ २५ ॥ २६ ॥

अभिप्रेतम् अभिप्रायविषयीभूतं देहस्य कुत्सितत्वं दर्शयित्वा स्वात्मनिष्ठा कर्त्तव्येति लोकविशेषं प्रति शिक्षारूपं प्रथमार्थे द्वितीयामननगोरवाद्वेति ॥ २७ ॥

गुणावतारत्वेन परमेश्वराभेददृष्ट्याह । ब्रह्मादय इति । स्वाधिकारान् प्रजासृष्ट्यादिलक्षणान् पिशाचानामिव चर्यादेहानादरेणेतस्ततः पर्यटनम् "चर्य्यापर्यटने प्रोक्ता" इतिविश्वः देहस्य भाविदशानुकरणं विडम्बनं वैराग्यबोधकत्वादतर्क्यमित्यार्थिकोऽर्थः ॥ २८ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

यर्हि स्वजनत्वादादरणीयस्तर्हि तत एव स्वजनानामस्माकं सर्वं क्षमेतैव रुद्र इत्यत्राह । नेति । यस्य रुद्रस्य स्वजनः परः अस्वजनो वा लोके नास्ति नाप्यनीवादरणविषयः कश्चिद्विगर्ह्यः निन्द्योऽपि नेत नास्त्येव प्राकृतस्य हि विषमदृष्टेः स्वार्थापेक्षिणः स्वजनादिविभागः अस्य तु समदृष्टेरुपेक्षितसांसारिकलोकतद्विभूतेर्न स्वजनादिविभागोऽस्तीति भावः एतदेवाह । वयमिति । सांसारिकाभिप्रायेण वयमित्युक्तं तस्वदर्शिनोऽपि स्वस्य तन्मण्डलस्थत्वाद्वयं संसारिणः लोकाः यस्य रुद्रस्य चरणाभ्यामपविद्धां निर्माल्यवद्दूरतः परित्यक्तां तेन भुक्तभोगामजां मायां तन्मयीं विभूतिं व्रतैर्नानाविधैर्दैवयसाधनैराशास्महे प्रार्थयामहे ॥ २५ ॥

ननु श्मशानेषु पिशाचवच्चरतो ऽशुचेरस्मात् किमाशङ्कसे इत्यत्राह । यस्येति । यस्य रुद्रस्यानवद्यं निर्दुष्टमाचरितं चरित्रं मनीषिणः बुद्धिमन्तः अविद्यायाः पटलमावरणं विभित्सवः भेत्तुमिच्छवः ज्ञानार्थिन इत्यर्थः गृणन्ति कीर्तयन्ति "आरोग्यं भास्करादिच्छेच्छ्रियमिच्छेद्धुताशनात् । शङ्कराज्ज्ञानमन्विच्छेन्मोक्षमिच्छेज्जनार्दनात्" इत्युक्तरीत्या फलविशेषार्थिभिरुपास्यत्वात् कश्चिज्ज्ञानार्थी मिस्तच्चरितमुपादेयमिति न पिशाचवच्चरतीति स निन्दनीय इति भावः तर्हि किमर्थं स पिशाचवच्चरति तत्राह । स्वयं निरस्तसाम्यातिशयोऽपि । निरस्तं साम्यमतिशयश्च यस्मात्तथाभूतोऽपि सतां गतिः ज्ञानोपायः सन् पिशाचचर्यां चरति स्वोपासकैरपि जिज्ञासुभिरेवं वर्तितव्यमिति तच्छिक्षार्थं पिशाचचर्यां चरतीति भावः तथाच श्रुतिः "यथाक्रतुरस्मिल्लोंके पुरुषो भवति" इति निरस्तसाम्यातिशयत्वं च ज्ञानप्रदत्वे वेदितव्यं प्रकरणत्वात् यद्वैतत्सर्वं रुद्रशरीरकपरमात्मदृष्ट्योक्तमिति वेदितव्यम् ॥ २६ ॥

एवमन्वयमुखेन तच्चरित्रस्यानिन्द्यत्वमुक्त्वा व्यतिरेकमुखेनाप्याह हसन्तीति । स्वात्मनि रतस्य स्वात्मानुभवैकनिष्ठस्य समीहितं चेष्टितमविदुषः आर्षत्वाद्व्यत्ययेन द्वितीया अविद्वांसः यस्य रुद्रस्याचरितं हसन्ति निन्दन्ति ते दुर्भगाः के ते ऽविद्वांसः ये तस्याचरितं हसन्तीत्यत्राह । यैः कर्तृभिः वस्त्रादिभिः कारणैः श्वभोजनं शुनां भोज्यं स्वशरीरं स्वात्मतया स्वात्माभिमानेन उपलालितमयं देह एवात्मेति बुद्ध्वा देहो यैर्वस्त्रादिभिरुपलालितस्ते तेऽविदुष इत्यर्थः ॥ २७ ॥

एवमन्वयव्यतिरेकाभ्यां तच्चरित्रमनिन्द्यमित्युक्त्वा तस्य पिशाचचर्या विडम्बनमात्रमेवेत्याह । ब्रह्मादयो यत्कृतसेतुपाला इत्युक्तिः रुद्रप्रशंसायोतिनी ब्रह्मादय इति अतद्गुणसंविज्ञानो बहुव्रीहिः चित्रगुमानयेतिवत् ब्रह्मणोऽर्वाचीना इत्यर्थः अन्यथा पूर्वापरविरोधात् ब्रह्मणः स्रष्टृत्वं तद्दत्तनामधेयत्वं च प्रागुक्तं तेन ब्रह्मणो नमस्कार्यत्वं च वक्ष्यतेऽतो यथोक्त एवार्थः यद्वा ब्रह्मादयः पुलस्त्यपुलहादयः न च ब्रह्मणा इत्येते पुराणे निश्चयं गता इति तेषां ब्रह्मशब्दवाच्यत्वावगमात् यद्वा रुद्रशरीरकपरमात्मदृष्ट्येदमुक्तमित्यवगन्तव्यं ब्रह्मादयो येन रुद्रेण कृताः सेतवः मर्यादास्तान् पालयन्तीति तथा इदं विश्वं यत्कारणं यो रुद्रः कारणं यस्य तदिति बहुव्रीहिः विश्वं यत्कारणमित्यर्थः रुद्रस्य विश्वसंहर्तृत्वात्तदभिप्रायेण विश्वं यत्कारणमित्युक्तं माया च यस्याज्ञाकरी माया अहंकृतिस्तत्कार्यत्वात् यस्याज्ञाकरी अधिष्ठातृत्वात्तस्य विभूम्नो महीयसो रुद्रस्य पिशाचचर्यारूपं चरितं विडम्बनमनुकरणमात्रमेव अहो इत्याश्चर्ये बत एवं विधस्य महीयसः पिशाचचर्यानुकरणमाश्चर्यमित्यर्थः ॥ २८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गर्भिणीवधनोदार्थं पिशाचचर्यायां हर्याज्ञाकारित्वेन हरेः प्रियत्वादतस्तदप्रियं तस्याप्यप्रियमितीदानीमिदं कार्यमित्यभिप्रेत्य तस्य हरेरतिशयितमाहात्म्यमाह । न यस्येति । अतैर्हरिप्रीतिकरैर्यस्य चरणापविद्धां पदा तिर्यक् प्रहतां भुक्तभोगामप्यजां गृहमातृपुत्रादिरूपां प्रकृतिशब्दवाच्यां श्रियमाशास्महे इच्छामः इत्यनेन हरिमाहात्म्यमचिन्त्यमित्यास्वादयति ॥ २५ ॥

अविद्यालक्षणं पटलं दर्शनप्रतिबन्धकनेत्रदोषं विभित्सवो भेत्तुकामा मनीषिणो यस्यानवद्याचरितं जगत्सृष्ट्यादि कर्म गृह्णन्ति श्रवणादिनेति शेषः यश्च हरिर्निरस्तसाम्यातिशयः तस्य हरेराज्ञया देवेन्द्रादिसतामाश्रयो हरः पिशाचचर्यामचरदित्यन्वयः ।

पिशाचचर्यामचरद्रुद्रो विष्णवाज्ञयैव तु ।
गर्भिणीवधनोदार्थमहो विष्णुर्विडम्बकृत् ।

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इति वचनबलान्मध्ये हर्याज्ञयेति पदमध्याहियते पशुपता-
वुक्तगुणानामसंभवाच्च । अहं रुद्राय धनुरातनोमीति पराधीनता-
प्रतीतेश्च ॥ २६ ॥

ननु केचिद्धरेश्चरितमपि निन्दन्ति तत्कथमित्याशङ्क्य ते तमः
प्राप्तियोग्या असुरजना इति भावेनाह । हसन्तीति । यैः शुनो
भोजनमन्नमिदं शरीरं वस्त्रादिभिः स्वात्मतया निजस्वरूपतया
उपलालितं ते पुरुषाः समीहितं विडम्बनरूपचेष्टाविशेषमवि-
दुषोऽविद्वांसोऽज्ञानवन्तोऽतएव दुर्भगा दुःखरूपतम आप्तुं योग्याः
स्वात्मनि स्वरूपएव रतस्याचरितमुपनयात् ज्येष्ठविवाहाद्य पूर्वं
पुत्रोत्पत्त्यादिरूपं हसन्ति न दंत्रचरितं चरेदिति द्योतको हि-
शब्दः ॥ २७ ॥

इतोऽपि ब्रह्मरुद्राद्यचिन्त्यमहिमा परमात्मेत्याह । ब्रह्मादय इति ।
ब्रह्मादयो देवा येन हरिणा कृतधर्मसेतुं तदाज्ञया पालय-
न्ति इति तत्कृतसेतुपालाः इदं विश्वं यो हरिः कारणं निमि-
त्तं यस्य तद्यत्कारणं तत्कारणत्वं च मायया स्वेच्छया न
पराधीनतया हिशब्देन स हि कर्मफलोज्झित इति मानं सूच-
यति तस्य हरेराज्ञां करोतीति आज्ञाकरी केयं शिवस्य
पिशाचचर्या हरेराज्ञया शिवः पिशाचचर्यामकरोदित्युक्तं
भवति ततः किंतत्राह । अहोइति । विभूम्नः परिपूर्णस्य हरे-
र्विडम्बनं लोकानुकारिरूपं चरितमहो जगत्पूज्यान् रुद्रादीन-
पि स्वाज्ञाकर्मणि प्रवर्तयतीति अत्र रुद्रविषयत्वेन यथास्थित-
व्याख्यानस्यानुपपत्तिरुक्तेति नेह प्रपञ्च्यते ॥ २८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ननु श्मशानादिसम्बन्धः कथमस्मै रोचते यदि रोचेत
तदास्माकं दुर्वृत्तमपि रोचेत । किञ्च । यदि देवर इत्युच्यते
तदास्मत्सदृश एवासौ कथमेतावदादरविषयः स्यात् तत्राह । न
यस्येति । महानुभावत्वादस्मभ्यं सर्व्वसम्पत्प्रदत्वात् तस्याना-
दरे दोष एव स्यादिति भावः । अत्र भुक्तभोगामिति यच्चरणा-
पविद्धामिति च लोकशिक्षणाय तस्य कादाचित्कीं लीला-
मालम्ब्य सिद्धान्तितम् ॥ २५ ॥ २६ ॥

समीहितं देहस्य कुत्सितत्वं दर्शयित्वा स्वात्मनिष्ठा कर्त्त-
व्येति लोकविशेषं प्रति शिक्षारूपम् ॥ २७ ॥

गुणावतारत्वेन परमेश्वराभेद दृष्ट्याह । ब्रह्मादय इति । विडम्बनं
देहस्य भाविदशानुकरणे वैराग्यबोधकमित्यर्थः ॥ २८—३६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं लज्जां भयं चोत्पाद्य सम्बन्धेनापराधसहनमाशङ्क्य तस्य
सम्बन्धापेक्षा नास्तीत्याह । न यस्येति । हीतियुक्तोऽयमर्थः यः उत्पद्यते
सम्बध्यते वा कश्चित्तस्य सम्बन्धापेक्षा महादेवस्य ब्रह्म-
त्वेन तदुभयाभावात् न सम्बन्धापेक्षेत्यर्थः अत एव लोके
तस्य स्वजनो नास्ति स्वश्चासौ जनश्च आत्मीयो नास्तीत्यर्थः परः
शत्रुः एतद् द्वयं देहधर्मः नात्याहत इति अत्यन्तं स्नेहपात्रं विगर्ह्यो
निन्दितो द्वेषपात्रम् एतदुभयमन्तःकरणधर्मः स्निग्ध एवाहतो
भवति गर्हितः स्नेहरहित एव ननु तस्य विषयाणामपेक्षितत्वात्-
य एव विषयान् प्रयच्छति यो वा निवर्त्तयति स तथा भविष्यतीति
चेत्तत्राह । वयं व्रतैरिति । तस्य सहजो विषयभोगः परं तेन त्यक्तः
तथापि सा अजा प्रकृतिः विषयरूपा तस्यैव तद्वत्तैव प्राप्यते सर्वैः
यथा महाराजविभूतिः अत एवास्माभिः ईश्वरसम्बन्धाद्यनपेक्षं
व्रतैर्नियमविशेषैः आराध्यपाशुपतादिभिर्वा तद्दत्तामजामाशा-
स्महे । सहि सेवितः प्रसादत्वेन तां प्रयच्छति साहि भोगार्थमुप
स्थिता पादयोः पतति तदा स्वस्यानभिप्रेतां मत्वा तामुपास
केभ्यः पदेनापविद्धां प्रयच्छत्यवज्ञया भोगस्यानभिप्रेतत्वं मन्यमानः
तत्रापि भुक्तभोगामिति दृष्टदोषेण परित्यक्तेति ज्ञापयति अत एव
तदपेक्षा सर्वस्य न तस्य कस्य चिदपेक्षा सर्वेषामेव सेवक-
त्वाज्ञोपेक्षापि ॥ २५ ॥

तर्हि विगर्हितरूपेण किमिति तिष्ठतीत्याशङ्क्याह । यस्यान-
वद्याचरितमिति । यस्य महादेवस्य अनवद्यमाचरितं सर्वविषय-
त्यागेन स्वात्मचिन्तनरूपं मनीषिणो बुद्धिमन्तः मोक्षोपायान्वे-
षिणः अत एवाविद्यापटलं विभित्सवः अविद्याभेदनार्थं प्रवृत्ताः
आचरितं गृह्णन्ति नहि महादेववद्यावन्मनुष्यो न तिष्ठेत्तावत्कस्य
चिज्ज्ञानं भवति अत एव भगवान् महादेवः नित्यनिवृत्तानर्थोऽपि
लोकशिक्षार्थं पिशाचचर्यामचरत् मतान्तरे महान् हीनभावं प्राप्नो
ति चेत्तदा मुच्यते समभावं संसारः उत्कर्षाहङ्कारे हीनभावः
अतः सतां स्वयं तथाभूत्वापि शिक्षक इति गतिर्भवति उपदेष्टा
फलं वा देवोत्तमस्य पिशाचत्वमेवापकर्षः एवं मनुष्यैः गोमृग-
काकचर्या कर्त्तव्येत्युपदेशः ॥ २६ ॥

ननु लोके निन्दितो महादेवः कथमेवं स्तूयते तत्राह । हसन्तीति
तत्पदं गन्तुमशक्ताः तं हसन्ति निन्दन्त इत्यर्थः यस्य सर्वोपका-
रार्थं प्रवृत्तस्याचरितं सुदुर्भगा इति भाग्यरहिताः सर्वोऽपि स्वस-
मानं दृष्ट्वा स्वाभिलषितं वा स्तौति तद्विपरीतं तु हसति तद्वैलक्ष-
ण्यमाह । सहि पूर्णज्ञान आत्मा रामस्तदाह । आत्मन्रतस्येति । अन्ये
त्वज्ञा वहिर्मुखाः अत एवाविदुषः सम्यगीहितं भगवच्चरितं न जा-
नन्ति वैलक्षण्याभिनिवेश एव निन्दायां हेतुरिति निन्दकानां
विषयाभिनिवेशमाह । यैरिति । वस्त्राणि उष्णीषादीनि माल्यानि
पुष्पाणि आभरणानि कङ्कणादीनि अनुलेपनानि चन्दनादीनि
चत्वार एते पदार्था देहोपलालनहेतवः ये पुनरेतदुपलालकाः ते
देहात्माभिमानिन इति निश्चितं वस्तुतस्त्वयं देहः श्वभोजनं
ग्राम एव तेषां मरणसम्भवात् न गृध्रादीनां ग्रहणं केवलमुपला-
लने धर्मो वा भवेदिति तन्निवृत्त्यर्थ माह । स्वात्मतयेति । स्वपदेन भ-
गवत्त्वेन तदधिष्ठातृत्वेन वा उपलालनं व्यावर्त्तितम् अन्यथा
भोगैरात्मानमात्मनीति पक्षो विरुध्येत ॥ २७ ॥

ननु महादेवस्य पिशाचचर्यायां किमित्येवमभिप्रायः
कल्प्यते दक्षशापात्पिशाचत्वं जातमित्येवं कथं नोच्यत इत्या-
शङ्क्याह । ब्रह्मादय इति । भवेदेतदेवं यद्युत्कर्षहेतुर्न स्यात् ।
सर्वोत्कृष्टा लोके ब्रह्मादयः ते येन महादेवेन कृतां मर्यादां-
मोक्षमभिव्याप्य वर्तन्त इति सेतुरूपाः तेषां परिपालका आज्ञा-
कारिण इत्यर्थः । इदं च विश्वं यत्कारणं या माया कारणं
यस्य । सा माया आज्ञाकारिणी आज्ञां चेत्प्रयच्छेत्तदा महादेव-
भोगार्थं ब्रह्माण्डकोटीः सृजेत् । एवं विश्वकारणं विश्वप्रवर्त-
कांश्च यो नियमयति । तस्य पिशाचचर्या विडम्बनमेव । अनुक-
रणं यथा ब्राह्मणकौतुकाविष्टः पिशाचादिवेषान् करोति तदपि
तस्यानुचिन्तयतो विभूमा न ततोऽन्यः कश्चिन्महानस्ति विडम्बनेन

॥ मैत्रेयउवाच ॥

सैवं संविदिते भर्त्रा मन्मथोन्मथितेन्द्रिया ।
जग्राह वासो ब्रह्मर्षेर्वृषलीव गतत्रपा ॥ २९ ॥
स विदित्वाथ भार्यायास्तं निर्बन्धं विकर्मणि ।
नत्वादिष्टाय रहसि तयाथोपविवेश ह ॥ ३० ॥
अथोपस्पृश्य सलिलं प्राणानायम्य वाग्यतः ।
ध्यायन् जजाप विरजं ब्रह्म ज्योतिः सनातनम् ॥ ३१ ॥
दितिस्तु व्रीडिता तेन कर्मावद्येन भारत! ।
उपसङ्गम्य विप्रर्षिमधोमुख्यभ्यभाषत ॥ ३२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

थं रसयुक्तं कुर्यात् । तथापि करोतीत्याश्चर्यं तदाह । अहो इति ॥ २८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

नन्वासेया मया लज्जामयाश्रयां जलाञ्जलिर्दत्त एव त्वयाप्यत्र न मेतव्यमेव महत्त्वेनादरणीयस्य स्वजनस्य तव सर्वमेवासौ देवः क्षमेतैवेति तत्राह । न यस्येति । यस्य स्वजनादिर्नास्ति ईश्वरत्वेन सर्वत्र साम्यादिति भावः ऐश्वर्य्यमेवाह येन चरणेनापविद्धां निर्माल्यवद्दूरे त्यक्तां भुक्तभोगामजां तन्मयीं विभूतिं महाप्रसादं वयमाशास्महे तत्रापि व्रतैः सकामा वयं तदुच्छिष्टविषयभोजिन एव भवाम इत्यर्थः ॥ २५ ॥

ननु तस्यापि दिगम्बरतया सदैव स्त्रिया सह मिथुनीभूय तिष्ठतश्चिताभस्मास्थिभूषणस्य सर्वं सच्चरितमहं जानामीति तत्र हे कुमनीषिणि दिते! मत्तः सकाशात् तच्चरितस्य तत्त्वं श्रृणिवत्याह । यस्य अनवद्यमनिन्द्यमेव चरितं तत्सर्वं मनीषिणा एवादरेण गृणन्ति ते संसारान्मुक्ता भवन्तीत्यर्थः निरस्तेति भगवता सहैक्यात् । यद्वा निरस्तः साम्येन साम्यगुणवत्त्वेन अतिशयो यस्मात् सः ॥ २६ ॥

येतु निन्दन्ति ते संसारे बद्धा भवन्तीत्याह । हसन्तीति । दुर्भगाः न कस्याप्यनुकम्प्या इत्यर्थः । स्वात्मन् स्वस्यात्मनि श्रीकृष्णे रतस्य समीहितमभिप्रायमविदुषोऽविद्वांसः । समीहितश्चेदं समीचीनगन्धपुष्पवस्त्राभरणादीनि मत्प्रभोर्भगवत एवार्हाणीति तस्मै दत्तान्यतो नाहमुपभुञ्ज इत्येवं रूपम् । यैर्दुर्भगैः श्वभोजनं शुनां भोज्यं शरीरं स्वात्मतया अयमेवात्मेति बुद्ध्या वस्त्रादिभि रुपलालितम् ॥ २७ ॥

तत्र विश्वेश्वर के वयं वराका इत्याह । ब्रह्मादयोऽपि यत्कृतान् सेतून् सायं स्त्रीसङ्ग भोजनस्वापत्यागादिरूपमर्य्यादाः पालयन्ति । स एव कारणं यस्य तत् माया च यस्याधीना तस्याप्यहो चित्रं पिशाचचर्य्या तस्माद्विभूम्नः परमेश्वरस्य चरितं सर्वं विडम्बनमनुकरणमात्रमेव ॥ २८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अजां मायामयीं सम्पदम् स पश्यनीति त्रिषु श्लोकेष्वनुषङ्गः २५॥

अविद्यापटलमज्ञानावरणम् ॥ २६ ॥

स्वात्मन् स्वकीये उपास्ये वासुदेवे आत्मनि अन्तर्यामिणि रतस्य"सत्त्वेच तस्मिन् भगवान् वासुदेव अधोक्षजोमे नमसाभिधीयते" इतिवक्ष्यमाणात् अविदुषः वासुदेवज्ञानवतः "अव्रह्म" इतिश्रुतेः अकारोवासुदेवः स्यादिति वचनाच्च समीहितं सम्यक येन केनापि वेषेण वासुदेवः स्मर्तव्यः इत्येवं भूतमीहितमाचरितं दुर्भगा हसन्ति निन्दन्ति ॥ २७ ॥

अथ रुद्राणां शङ्करश्चास्मीति श्रीमुखवचनात् भगवद्विभूतिभूते श्रीरुद्रे भगवदृष्ट्यैवेदमुच्यते । ब्रह्मादयइति ॥ २८ ॥

भाषाटीका ।

जिन महादेवजी के कोई अपना भी नहीं है कोई पराया भी नहीं है कोई आदर योग्य भी नहीं है कोई तिरस्कार योग्य भी नहीं है जिनके चरणों से ठुकरायकर दूर फेंकी हुई माया को भोगकर त्यागीहुई जानकर हमलोग प्रसाद के तुल्य चाहना करते हैं ॥ २५ ॥

जिनके निर्मल चरित्र को महात्मा लोग अज्ञान के अन्धकार को दूर करने की इच्छा से गान करते हैं आप सत्पुरुषों के गति देने वाले हैं उनके समान वा अधिक कोई नहीं है तो भी आप स्वयं पिशाचों का आचरण करते हैं ॥ २६ ॥

जो स्वयं अभागे पुरुष हैं अज्ञानी होनेसे जिन शिवजी के चरित्र की हंसी करते हैं वे शिवजी अपने स्वरूप में मग्न हैं सो नहीं जानते हैं वे हँसनेवाले कौन हैं कि जिनने कुत्तों के खाने योग्य अपने शरीर को वस्त्र माला आभरणादिकों से युक्त करके उसी को आत्मासरीका प्यार कर रखा है ॥ २७ ॥

ब्रह्मादिक जिनके मर्यादा को पालन करते हैं जिनके हेतु से यह संसार है और माया जिनकी आज्ञा करने वाली है उनका पिशाच आचरण यह उन महा पुरुष का चरित्र लोगों के भुलाने के लिये हैं ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

भर्त्रा निरूपकेणैवं सम्विदिते ज्ञापितेऽपि सति वृषली वेदयेव ॥ २९ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विकर्मणि निषिद्धे कर्मणि दिष्टाय दैवरूपायेश्वराय उपविवेशेति मैथुनं लक्ष्यते ॥ ३० ॥

उपस्पृश्य स्नात्वा भर्गशब्दवाच्यं विरजं ज्योतिर्ध्यायन्सनातनं ब्रह्म गायत्रीं प्रणवं वा जजाप ॥ ३१ ॥

कर्मावद्येन कर्मदोषेण ॥ ३२ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

निरूपकेण वक्त्रा एवं सन्ध्याकालवञ्चनप्रकारेण ॥ २९ ॥

स गृहीतवासाः तं निर्लज्जतामयम् अथ ज्ञानानन्तरं नत्वा पुनरवनत्यनन्तरमेव रहउपवेशमात्रस्य विकर्मत्वाभावात् मुख्यार्थबाधात् तत्कार्य्ये मैथुने लक्षणा प्रयोजनञ्चाश्लीलगोपनमेव ॥ ३० ॥

अथ मैथुनानन्तरं ज्योतिः परं ब्रह्म ॥ ३१ ॥ ३२ ॥

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

एवमुक्तादितिस्ततः किमकरोदित्यत्राह । सेति । भर्त्रा कश्यपेनैव मुक्तप्रकारेण सम्वेदिते ज्ञापिते सति मन्मथेन उन्मथितानीन्द्रियाणि यस्याः साऽत एव वृषलीव वेश्येव गतत्रपा निर्लज्जा सती विप्रर्षेः कश्यपस्य वासो वस्त्रं जग्राह वासो गृहीत्वा विचकर्षेत्यर्थः ॥ २९ ॥

स कश्यपः भार्यायाः दितेः विकर्मणि सन्ध्यायां प्रतिषिद्धे रतिकर्मणि तं निर्बन्धं वासोग्रहणरूपं विदित्वा दृष्ट्वा दिष्टाय दैवरूपेश्वराय नत्वा तया भार्यया सह रहस्येकान्ते उपविवेश उपविवेशेत्यनेन मैथुनं लक्ष्यते ॥ ३० ॥

अथोपवेशानन्तरं सलिलमुपस्पृश्य सलिले स्नात्वेत्यर्थः प्राणानायम्य नियम्य वाग्यतः धृतमौनः विरजं निर्विकारं ज्योतिः ज्ञानस्वरूपं सनातनं नित्यं ब्रह्म ध्यायन् अत्र विरजशब्देन सत्यपदार्थः ज्योतिःशब्देन ज्ञानपदार्थः सनातनशब्देनानन्तपदस्यार्थः स्फोरितः विरजशब्देन रजःकार्यविकारराहित्यस्य ज्योतिःशब्देन प्रकाशरूपत्वस्य सनातनशब्देन कालपरिच्छेदराहित्यस्य चोक्तत्वात् जजापेति एवं विधब्रह्मप्रतिपादकं प्रणवं जजापेत्यर्थः ॥ ३१ ॥

अथाध्यायशेषो दितिकश्यपयोरुत्तरप्रत्युत्तररूपेण प्रवृत्तस्तत्र तावद्दितिरुवाचेत्याह । दितिरिति । तेन कर्मावद्येन कर्मदोषेण व्रीडिता लज्जिता दितिः हे भारत ! विदुर उपसङ्क्रम्य समीपे आगत्याधोमुखी सती विप्रर्षिं कश्यपं प्रत्यभाषत उक्तवती ॥ ३२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हरेर्माहात्म्यं दुरवबोधं यदेवं ज्ञापितया दित्या पापकर्मणि प्रवृत्तमिति भाववान्मैत्रेय एवमुक्तया तया किमकारीति वैदुरं मनः शङ्कां परिहरन्नाह । एवमिति । सम्विदिता सम्यग्ज्ञापिता वासः परिधानम् ॥ २९ ॥

निर्बन्धं दुराग्रहं दिष्टाय कर्मसाक्षिणे देवाय "निर्वेश उपभोगः स्यादुपवेशस्तु मैथुनम्" इत्यभिधानम् । प्रत्यारम्भे प्रसिद्धे हेत्यभिधानाद्धेत्यनेन प्रत्यारम्भं सूचयति ॥ ३० ॥

अप्सरो मुग्धमुनिवदाकल्पं मारीचेन तपोपविष्टं किमेत्याह । अथेति । अथ वीर्यपातानन्तरमेवाचम्य सुप्तं तेन किमत्राह ।

ध्यायन्निति ज्योतिः स्वज्योतीरूपं विरजं कज्जलादिरजोमलविधुरं ब्रह्म ध्यायन् सनातनं प्रणवनादेन सहितं ब्रह्म गायत्र्यात्मकं मन्त्रं अजापेत्यन्वयः ॥ ३१ ॥

दित्या पुनश्च किङ्कार्यमभूदथ किमिति गर्भीभूय स्थितं क्रियान्तरमारब्धमुतेति तत्राह । दितिस्त्विति । स्वकर्मणा जातेनावद्येन ॥ ३२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं महादेवभक्तां महादेवगुणकथनेन तात्पर्यं करिष्यामीति कृतेऽपि स्तोत्रे सा उद्गतकामा न निवृत्ता जातेत्याह । एवमिति । वाचनिके वाचनिकेनैव प्रतीकारस्य करणात् तत्परित्यज्य कायिकं व्यापारं कृतवती नच वक्तव्यं तदुक्तोऽर्थो न बुद्ध इति एवं भर्त्रा सम्यक् वादे कृते सम्यक् विदिते ज्ञाते सति वा तथापि मन्मथोन्माथिताशया वासो जग्राह एवं धार्ष्ट्यं वृषल्या भवतीति तद्दृष्टान्तः ब्रह्मर्षेरिति क्षोभकरणं मारणं च निवारयति वस्त्रग्रहणे क्षोभोऽज्ञातो भविष्यतीति वासो जग्राह इन्द्रियमथनं विवेकधैर्ययोरनुत्पादनार्थम् एकान्तत्वात् भर्तृत्वाच्च त्रपाभाव एव तस्या उक्तः ॥ २९ ॥

एवं तया कृते यज्जातं तदाह । सविदित्वेति । अथेति वचनं वञ्चनाभावार्थं भार्यात्वादपि तदिच्छापूरणं विकर्मणि कर्मनाशे कालकृतं तद्विदित्वा दिष्टाय कालाय नत्वा गत्यर्थकर्मणि द्वितीया चतुर्थ्यौ विधानात् दिष्टायेति चतुर्थी रहसि एकान्ते अग्निहोत्रगृहान्तरे अथेति वैदिकप्रकारेण गर्भाधानप्रकारेण तया सह उपविवेश हेत्याश्चर्ये महतो विकर्मणि प्रवृत्तः ॥ ३० ॥

एवं गर्भाधानं कृत्वा यत्कृतवान् तदाह । अथोपस्पृश्येति अत्रापि भिन्नप्रक्रमः प्रायश्चित्तार्थः कामाभावार्थे वा सलिलमुपस्पृश्येति स्नात्वा प्राणायामैर्दहेद्दोषानिति दोषाभावार्थं प्राणानायम्य वाग्यतः तन्निर्भर्त्सनाद्यकृत्वा ध्यायन् भगवच्चरणारविन्दं ज्ञानमार्गानुसारेण ब्रह्म ज्योतिः सर्वप्रकाशकं विरजनविधानाशकं ध्यायन् जजापेति प्रणवार्थं ध्यायन् प्रणवं जजापेत्यर्थः ॥ ३१ ॥

एवमृषेः प्रायश्चित्तमुक्त्वा तस्या अपि यथोचितमपराधप्रायश्चित्तमाह । दितिस्त्विति । तुशब्दः पूर्वभावव्यावृत्त्यर्थः कर्मणि अवद्यं कर्मावद्यं अग्निहोत्रमध्ये निन्दितकरणं तेन व्रीडिता अन्यत्तु न विगीतमतस्तेन प्रसिद्धेनापराधेन व्रीडिता सती उपगम्य अभ्यभाषतेति सम्बन्धः भारतेति सम्बोधनं भ्रमाभावाय भ्रान्त एव परमेकविधं मन्यते पूरकत्वाद्ब्राह्मण्यर्थज्ञानाच्च विप्रर्षित्वमधोमुखीति शङ्कान्तराभावाय ॥ ३२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भर्त्रा एवं सम्विदिते ज्ञापितेऽपि सति । यद्वा भर्त्रा हेतुना एवं ज्ञापिते सति वृषलीव वेश्येव । "कामो विवेकं ग्रसति स्वीयमन्यैश्च दर्शितम् । अत्र प्रमाणं ब्रह्मैव पुंसः स्त्रीपूज्यते दितिः" ॥ २९ ॥

दिष्टाय स्वादृष्टाय उपविवेश रेमे ॥ ३० ॥

उपस्पृश्य स्नात्वा आचम्य जजाप प्रणवं गायत्रीं वा ॥ ३१ ॥

कर्म्मावद्येन कर्म्मदोषेण ॥ ३२ ॥

॥ दितिरुवाच ॥

मा मे गर्भमिमं ब्रह्मन् ! भूतानामृषभोऽवधीत् ।
रुद्रः पतिर्हि भूतानां यस्याकरवमंहसम् ॥ ३३ ॥
नमो रुद्राय महते देवायोग्राय मीढुषे ।
शिवाय न्यस्तदण्डाय धृतदण्डाय मन्यवे ॥ ३४ ॥
स नः प्रसीदतां भामो भगवानुर्वनुग्रहः ।
व्याधस्याप्यनुकम्प्यानां स्त्रीणां देवः सतीपतिः ॥ ३५ ॥

॥ मैत्रेयउवाच ॥

स्वसर्गस्याशिषं लोक्यामाशासानां प्रवेपतीम्
निवृत्तसन्ध्यानियमो भार्यामाह प्रजापतिः ॥ ३६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भर्त्रा एवं सम्विदिते ज्ञापिते सति वृषलीव वेश्येव ॥ २९ ॥

दिष्टाय दैवात्मने परमेश्वराय ॥ ३० ॥

उपस्पृश्य स्नात्वा विरजं गायत्रीप्रतिपाद्यं भगवन्तं ध्यायन् ब्रह्म गायत्रीं जजाप ॥ ३१ ॥

अवधीत् माहन्यात् अंहसमंहः अपराधमहमकरवं कृतवन्यस्मि ॥ ३२ ॥

---

### भाषाटीका ।

मैत्रेयजी बोले इस प्रकार से पतिके कहने से भी कंदर्प से इन्द्रियों के मथित होजाने से वेश्या सरीकी निर्लज्जा होकर उस ने ब्रह्मर्षि कश्यप जी के वस्त्र को ग्रहण करलिया ॥ २९ ॥

कश्यपजी ने भार्या का कुकर्म में निश्चय जानकर परमेश्वर प्रारब्ध को नमस्कार करके उसके साथ एकान्त में शयन किया ॥ ३० ॥

मैथुन के अनन्तर स्नान करके प्राणायाम किये परमात्मा का ध्यान करके सनातन ज्योतिः ब्रह्म गायत्री को जपने लगे ॥ ३१ ॥

हे भारत ! विदुरजी उस खोटे कर्मसे लज्जित होकर दिति ब्रह्मर्षि के समीप बैठकर नीचा मुखकरके बोलने लगी ॥ ३२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

मावधीन्माहन्निल्यर्थः वधशङ्काबीजमाह । रुद्र इति । अंहसमंहोऽपराधमकरवं कृतवत्यस्मि ॥ ३३ ॥

रुतं दुःखं तद्द्रावयतीति रुद्रस्तस्मै उग्रायानतिलङ्घ्याय मीढुषे सकामेषु फलसेचनकर्त्रे निष्कामेषु शिवाय वस्तुतो न्यस्तदण्डाय दुष्टेषु धृतदण्डाय संहारे मन्यवे ॥ ३४ ॥

भामो भगिनीभर्ता उरुरनुग्रहो यस्य व्याधस्य निर्दयस्यापि सतीपतिरित्यनेन स्त्रीणां स्वभावं स्वयमपि वेत्तीति सूचयति ॥ ३५ ॥

स्वसर्गस्य स्वसंतानस्याशिषं शुभम् लोक्यां लोकद्दया-

हाम् सन्ध्यायां यो नियमः स निवृत्तो यस्य ॥ ३६ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

अवधीदिति लकारव्यत्ययस्यार्षत्वादित्यर्थं इत्युक्तम् ॥ ३३ ॥

शिवाय मोक्षप्रदाय वस्तुतः परमार्थतः परमवैष्णवत्वेन सर्वत्र न्यस्तस्त्यक्तो दण्डो येन "सर्वभूतेषु यः पश्येद्भगवद्भावमात्मन„ इत्युक्तमभागवतलक्षणात् तमोगुणावतारत्वेन संहारार्थं मन्युस्वरूपाय ॥ ३४ ॥ ३५ ॥

आशासानामिच्छन्तीम् ॥ ३६ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

भापणमेवाह । मेति । हेब्रह्मन् कश्यप ! भूतानामृषभः पतिः रुद्रः मे ममेमं गर्भं मावधीन्मा हन्यात्हि यस्माद्भूतानां रुद्रः पतिः यतः यस्य रुद्रस्यांहसमपराधमहमकरवं कृतवत्यतो मावधीदित्यर्थः ॥ ३३ ॥

एवं स्वाभिप्रेतमावेद्य नमस्कुर्वन्ती रुद्रं प्रसादयति । नम इति द्वाभ्याम् । रुद्राय नमः कथम्भूताय महते देवाय महादेवायेत्यर्थः विश्वसंहर्तृत्वमिन्द्राद्यपेक्षया महत्त्वं विवक्षितम् उग्राय उग्ररूपिणे मीढुषे सकामेषु फलसेचनकर्त्रे यद्वा रेतः सेक्षमाय निष्कामेषु शिवाय वस्तुतोन्यस्तदण्डाय संहारे मन्यवे ॥ ३४ ॥

स इति । भामोभगिनीभर्ता उरुरनुग्रहो यस्य स उमापतिर्भगवान् देवो रुद्रः व्याधस्याप्यनुकम्प्यानां दयनीयानां स्त्रीणां नोऽस्माकं प्रसीदतां प्रसन्नो भूयात् ॥ ३५ ॥

एवमाभाषन्तीं कश्यपः प्रत्याहेत्याह मैत्रेयः । स्वसर्गस्य लोक्यां लोकनीयामाशिषं शुभमाशासानां प्रार्थयन्तीं प्रवेपन्तीं कम्पन्तीं भार्यां निवृत्तः सन्ध्यायां यो नियमः स यस्य सः प्रजापतिः कश्यपः आह उवाच ॥ ३६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्वकृतपापकर्मप्रतीकारोपायमाह किन्नेत्याह । नम इति । भूतानामृषभ इत्यस्य व्याख्यानं पतिरिति अंहसमपराधम् ॥ ३३ ॥

समस्तापराधानां प्रतीकारो नमस्कारादन्यो नास्तीति मत्वा तमेव तद्दोषनिरासपटुगुणविषयत्वेन करोति नम इति रुद्रीयापराधलक्षणरोगद्रावकाय रोदनाद्रुद्र इति शिशुस्वभावो न युक्त इत्याह । महत इति । तस्य लोकानुकरणार्थत्वान्नदोषाय स्यादिति भावः यक्षादेरपि महत्त्वादिति अत उक्तं देवायेति । तस्यापि देवयोनित्वादित्यतउक्तमुग्रायेति । उद्धृतं सर्वं ग्रसतीत्युग्रस्तस्मै तर्ह्ययं सर्वभक्षको ननु निजाभीष्टवर्षीत्यतउक्तं मीढुषइति मिहसेचन इति धातुः स्वयं सुखित्वेन वर्तते चेन्निजाय सुखं ददातीति तत्कथमित्यतः शिवायेति अनेन प्रसिद्धनामकरणेन कृत्यकर्तरि न्यस्तदण्डाय तद्विरुद्धकर्तरि धृतदण्डायेति तद्योग्यतातिरेकेण क्रियां न करोतीत्युक्तम् उभयार्थसूचकविशेषणमाह । मन्यवे । मननशीलाय क्रोधात्मने वा गुणदोषौ मत्वा निग्रहानुग्रहौ करोतीति अनेन इमा रुद्राय स्थिरधन्वने गिरः क्षिप्रेषवे देवाय स्वधाम्न इत्यादिमन्त्रो दर्शितः ॥ ३४ ॥

फलितमाह । स न इति । माभीरितिभीमः प्रसादकर्तृत्वे हेतुमाह । व्याधस्येति । व्यधहिंसायामिति धातोः सन्ततहिंसाशीलस्य अपिपदेन कैमुत्यलक्षणो हेतुरुक्तः ॥ ३५ ॥

गर्भः सर्वथा रक्षणीय इति लौकिकी लोक्या तामनुसरन्तीमाशासानां कामयमानां प्रवेपतीं कम्पमानाम् ॥ ३६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

निषिद्धाचरणाभावात् नात्र स्मृत्याद्युक्तप्रायश्चित्तम् अङ्गत्वात्कालस्यापि न साक्षादधर्महेतुत्वं यथा अकाले कृतोधर्मः अकृतो भवति एवमकाले कृतो गर्भः अकृतोभवेत् तत्र केवलकालस्य न बाधकत्वमपि कर्मस्वभावानां बलिष्ठत्वात् दैत्यानां स्वभावनिष्ठत्वाच्च अतः कालाधिष्ठात्री देवता महादेवः कदाचित् हन्यात् तत्रापि ब्राह्मणक्रोधसहितः हन्यादेव अतोब्राह्मणक्रोधाभावं प्रार्थयितुं व्याजेन महादेवभक्तं तं ज्ञात्वा महादेवं प्रार्थयति इयं च प्रार्थना नैमित्तिकीति निमित्तमनूद्य तदभावं काम्यत्वेन प्रथमं निर्दिशति । मा मे गर्भमिति । इमं सञ्जातं गर्भं रुद्रो मावधीत् ब्रह्मन्निति सम्बोधनं तत्प्रतीकारकरणसामर्थ्यं सूचयति मारणे उपायः भूतानामृषभइति भूतप्रेरणयामारयेत् भूतानि हि गर्भं प्रविश्य स्रावयेयुः ननु सप्रजापतिः प्रजानामुत्पादकः कथं प्रजा मारयेत्तत्राह । सभूतानां पतिः य उत्पन्नाः तेषां स्वामी यतोरुद्रः रोदयतीति सहिबालक उत्पन्न एव रोदिति न गर्भस्थः अतो गर्भस्तदीयो न भवतीति गर्भं नाशयतीति वा एवं गर्भनाशने उपपत्तिमुक्त्वा निमित्तमाह । यस्याकरवमंहसमिति । यस्यापराधं कृतवत्यस्मि ॥ ३३ ॥

एवं सङ्कल्पमुक्त्वा तत्सिध्यर्थं रुद्रं प्रार्थयते । नमो रुद्रायेति । सहि गुणत्रयात्मकः अहङ्कारस्य त्रिगुणत्वात् अतो नवभिर्विशेषणैस्तस्य प्रार्थना महतां नमनमेव प्रसादहेतुः तत्र प्रथमं भूतानां कृपया यद्रोदनं कृतवान् सा कृपात्राप्यनुसन्धेयेति ज्ञापनार्थं रुद्रायेति आह अपराधसहनार्थं महते प्रार्थनया अपराधसहनार्थं देवाय अनेन तामसादिभावास्त्रय उक्ताः पुनः तानाह । उग्रायेति त्रिभिः। अन्यप्रेरणया मारयिष्यतीतीमम्पक्षं व्यावर्तयति उग्रायेति नहि उग्रस्याग्रे कश्चिद्वक्तुं शक्नोति तर्हि प्रार्थितोऽपि मारयेदित्याशङ्क्य न केवलमुग्र एव किन्तु सर्वेषां कामवर्षकोऽपीत्याह मीढुष इति । मीढ्वान् वृषभः पतिः कामवर्षक इति यावत् किञ्च न केवलं फलदाता किन्तु फलरूपोऽपीत्याह । शिवायेति । कल्याणरूपाय अतः प्रार्थितो न मारयिष्यति कल्याणं च करिष्यतीत्युक्तं पुनः तृतीयपर्याये सत्त्वादिभावानाह । न्यस्तदण्डायेत्यादित्रिभिः । सहि पूर्वं दत्तं कृत्वा महत्युपद्रवे जाते दण्डनं त्यक्तवान् । इदमपि ब्रह्मबीजम् । अतः अमारणार्थं महादेवकृतमिममर्थं स्मारयति न्यस्तदण्डायेति । तर्हि प्रार्थना व्यर्था स्वत एव दण्डस्य त्यक्तत्वादित्याशङ्क्याह । धृतदण्डायेति । दुष्टमारणार्थं धृतोदण्डो येन । तर्हि स्वत एव प्रार्थ्यतां किं ममाग्रे कथनेनेत्याशङ्क्याह । मन्यवइति । सहि ब्रह्ममन्युरूपः ब्रह्ममन्युनैव प्रकटोभवति नान्यथा अतस्त्वयि प्रसन्न एव स निवर्तते नान्यथेत्यर्थः ॥ ३४ ॥

एवं नमस्कारेण रुद्रं प्रार्थयित्वा पूर्वापराधं दूरीकृत्य भर्तारं प्रसादयितुमहंकारे स्थिते प्रसादोऽशक्य इति तदहङ्कारनिवृत्त्यर्थं महादेवमेव प्रार्थयति । स न इति । स पूर्वोक्तः नः अस्मभ्यं प्रसीदतां यतो भामः भगिनीपतिः न केवलं स्वतः प्रसादः किन्तु भर्तारमपि प्रसादयुक्तं करोत्विति तत्सामर्थ्यार्थं भगवानित्युक्तं ननु कृतेऽपराधे दण्डाभाव एव भूयात् कुतोऽनुग्रहं करिष्यतीत्याह । उर्वनुग्रह इति । उरुरनुग्रहो यस्य । प्रार्थितो न केवलमबाधक एव किन्तु फलदातापीत्यर्थः । किञ्च । अस्मास्वनुग्रहः कर्तुमेवोचितः यतो वयं स्त्रियः व्याधस्याप्यनुकम्प्याः । पुरुषार्थं हि तस्यापि हननमर्थापेक्षया कामो महान् सच स्त्रिया सत्यैव । अतो व्याधस्याप्यवध्याः । यतः स्त्रियोऽनुकम्प्याः सर्वस्यानन्ददायिका अपि स्वयमकृतार्था भवन्तीति किञ्च । स स्त्रीणां देवः स्त्रियो हि गौरीमेव सभर्तृकां पूजयन्ति । स एव क्रीडाकर्तेति वा किञ्च सतीपतिरिति । स्त्रीणां स्वभावज्ञ इति ॥ ३५ ॥

एवं महादेवे स्तुते अर्धं प्रसन्नः कश्यपः क्रोधं प्रसादश्च कृतवानित्याह । स्वसर्गस्येति । स्वस्य सर्गस्य गर्भस्य लोक्यां सर्वलोकप्रसिद्धामाशिषमाशासानां कामयमानां किं भविष्यतीति प्रवेपतीमतिकम्पमानां स्वयं निवृत्तसन्ध्यानियमो भूत्वा भार्यात्वादवश्यवक्तव्यमाह । प्रजापतित्वाच्च वचनं निष्ठुरम् । अन्यथा सर्वा एव तथा कुर्युः । दयावश्यकत्वाभ्यां साभीचीन्यकथनम् ॥ ३६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

न अवधीत् माहन्त्वित्यर्थः ॥ ३३ ॥

पश्चात्तापवती प्रणमति । रुद्राय मां रोदयिष्यते किम्वा मम रुत् रोदनं कृपया द्रावयिष्यते दूरीकरिष्यते । यतो महते देवाय मदपराधं क्षमिष्यमाणाय । किम्वा उग्राय मद्गर्भमिमं हनिष्यते किम्वा मीढुषे मन्मनोरथशाखिनं कृपामृतेनाभिषेक्ष्यते यतः शिवाय निरस्तदण्डाय किं वा धृतदण्डाय मां दण्डयिष्यते यतो मन्यवे मन्युस्वरूपाय ॥ ३४ ॥

एवं संशयानैव स्तुवाना स्वदैन्यं दर्शयन्ती तस्मादभयं प्रार्थयते । भामो भगिनीपतिः उरुरनुग्रहो यस्य सः । व्याधस्य निर्दे-

॥ कश्यपउवाच ॥

अप्रायत्यादात्मनस्ते दोषान्मौहूर्तिकादुत ।
मन्निदेशातिचारेण देवानां चातिहेलनात् ॥ ३७ ॥
भविष्यतस्तवाभद्रावभद्रे ! जाठराधमौ ।
लोकान् सपालांस्त्रींश्चण्डि ! मुहुराक्रन्दयिष्यतः ॥ ३८ ॥
प्राणिनां हन्यमानानां दीनानामकृतागसाम् ।
स्त्रीणां निगृह्यमाणानां कोपितेषु महात्मसु ॥ ३९ ॥
तदा विश्वेश्वरः क्रुद्धो भगवाँल्लोकभावनः ।
हनिष्यत्यवतीर्यासौ यथाद्रीन् शतपर्वधृक् ॥ ४० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यस्यापि सतीपतिरिति स्त्रीणां स्वभावं स स्वयमेव वेत्तीति सूचयति । यद्वा सत्या अप्यनुरोधेन तद्भगिनी मां मा दण्डयत्विति सा सती मदपराधं मार्जयत्विति वा भावः ॥ ३५ ॥

स्वसर्गस्य स्वसन्तानस्य लोक्यां लोकदयार्हाम् ॥ ३६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मीढुषे ज्ञानादिवीर्यसेचनकर्त्रे ॥ ३३ ॥ ३४ ॥

व्याधस्य निर्दयस्याप्यनुकम्प्यानां नोऽस्माकम् उरुरनुग्रहो यस्य सः भामः भगिनीभर्ता प्रसीदताम् ॥ ३५ ॥

स्वसर्गस्य स्वसंततेः आशिषं मङ्गलमाशासानां लोक्यामालोकनीयाम् निवृत्तः संध्यानियमः संध्याकालिकं कृत्यं यस्य सः ॥ ३६ ॥

---

भाषाटीका ।

दिती बोली हे ब्रह्मन् ! जिनका मैंने अपराध किया है वे भूतों के पति सर्वभूत श्रेष्ठ रुद्रजी मेरे इस गर्भ को नाश मत करें ॥ ३३ ॥

महान् रुद्र उग्रदेव काम वर्षी दण्ड देने वाले दण्ड को छोडने वाले उन महादेवजी को नमस्कार है ॥ ३४ ॥

भगिनी के पति भगवान् बडे अनुग्रह कर्ता सती के पति देव महादेव जी व्याधों के दया करने योग्य हम स्त्रियों पर प्रसन्न होवें ॥ ३५ ॥

मैत्रेयजी बोले अपने सन्तान को उभय लोकका मङ्गल को चाहती दिती कांपती हुई को जानकर सन्ध्या नियम के समाप्त होनेपर कश्यपजी भार्या से कहने लगे ॥ ३६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ते आत्मनश्चित्तस्याप्रायत्यादशुचित्वात् मौहूर्तिकात्संध्यारूपात् उत अपि मम निदेशस्याज्ञाया अतिचारेणातिक्रमेण देवानां रुद्रानुचराणाम् ॥ ३७ ॥

एतैश्चतुर्भिर्हेतुभिर्जाठराधमौ पुत्रापसदौ हे चण्डिकोपने ! ॥ ३८ ॥

हन्यमानानां सताम् ॥ ३९ ॥

शतपर्वधृक् वज्रधर इन्द्रः ॥ ४० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

अप्रायत्यादितियुग्मकम् चित्तस्याशुचित्वात् क्रूरचित्तोसंध्या द्विघटिकत्वाच्च मैआज्ञातिक्रमेणच धर्ममर्यादाभङ्गको देवहेलनाच्च हरिद्वेषिणौ एतैरशुचित्वादिभिश्चतुर्भिर्हेतुभिः क्रमेण चतुर्द्धा पुत्रापसदत्वं व्याख्येयम् ॥ ३७ ॥ ३८ ॥

प्राणिनामिति युग्मकम् ॥ ३९ ॥

तदा महत्कोपक्षण एव ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

तदुक्तमेवाह । चतुर्भिः अप्रायत्यादिति । ते आत्मनः चित्तस्याप्रायत्यादशुद्धिभावान्मौहूर्तिकात् संध्यामुहूर्तकालसम्बन्धिनो दोषात् उताऽपि मम योनियोगः आज्ञा तस्य योऽतिचारोऽतिक्रमस्तेन देवानां रुद्रादीनां हेलनादपचारादपि च ॥ ३७ ॥

अभद्रौ लोकामङ्गलकरावतएव जाठराधमौ पुत्राधमौ हे अभद्रे ! तव भविष्यतः जाठरयोरभद्रत्वमेव विशदयति लोकानिति हे चण्डि क्रुद्धौ सपालान् लोकपालैः सहितान् त्रीन् लोकान् मुहुः पुनः पुनः आक्रन्दयिष्यतः रोदयिष्यत इत्यर्थः ॥ ३८ ॥

प्राणिनां हन्यमानानां सतां कथम्भूतानां दीनानां कृपणानामकृतमागः अपराधो यैस्तेषां स्त्रीणाञ्च निगृह्यमाणानां सतीनां महात्मसु कोपितेषु सत्सु ॥ ३९ ॥

तदा क्रुद्धो रोषितः विश्वेश्वरः लोकम्भावयति सुखयतीति लोकभावनोऽसौ भगवानवतीर्य वराहनरसिंहाभ्यामाविर्भूय हनिष्यति तत्र दृष्टान्तः अद्रीन्पर्वतान्वज्रायुधधरः इन्द्रो यथेति ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आत्मनो मनसोऽप्रायत्यात् उपशमनलक्षणप्रयत्नाभावात् व्यवायाख्यदोषान्मन्निदेशातिचारेण मदाज्ञातिक्रमणेन हेलनादवज्ञानात् ॥ ३७ ॥

जाठराधमौ पुत्राधमौ अधमत्वमुपपादयति । लोकानिति ॥३८॥

प्राणिनां हन्यमानानां सतामकृतापराधानां स्त्रीणां निगृह्यमाणानां सतीनां महापुरुषेषु कोपितेषु सत्सु ॥ ३९ ॥

शतपर्वधृक् देवेन्द्रः ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अप्रायत्यादिति युग्मकम् । मुहूर्त्तः सन्ध्यारूपः तद्भवाद्दोषात् ॥ ३७ ॥ ३८ ॥

प्राणिनामिति युग्मकम् । यदा लोकानाक्रन्दयिष्यतः तदा प्राणिनां हन्यमानानां स्त्रीणाञ्च निगृह्यमाणानां सम्बन्धे महात्मसु कोपितेषु सत्स्वित्यन्वयः ॥ ३९—४१ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रथमतो दोषफलमाह । अप्रायत्यादिति चतुर्भिः । तस्या दोषचतुष्टयमनुवदति हेतुत्वेन प्रसादेऽपि विपरीतफलावश्यकत्वाय प्रथममाह । अप्रायत्यादिति । ते आत्मनो देहस्य अप्रायत्यात् अप्रयतत्वात् रजस्वलात्वादित्यर्थः मौहूर्तिको दोषः सन्ध्यारूपः तत्रोत्पन्नो दुष्टो न जीवति च उतेत्यप्यर्थे एको दोषः सूतकवत् न दोषान्तरं दूरीकरोति किन्तु समुच्चीयत इत्यर्थः तृतीयं दोषमाह । मन्निर्देशातिचारेणेति । ममाज्ञोल्लङ्घनेन अप्राप्युत देहलीत्वात् चतुर्थो दोषः देवानाञ्चैव हेलनादिति । देवानां भूतानां गार्हपत्यादीनां वा हेलनमवज्ञा ॥ ३७ ॥

एवं चतुर्भिः दोषैः तव पुत्रद्वयं भविष्यतीत्याह । भविष्यतइति । एकैकत्र दोषद्वयसङ्क्रमात् तत्रहिरण्याचे प्रथमौ तस्य शीघ्रं मरणात् तपस्यादिकरणाभावाच्च अभद्र इति सम्बोधनं पुत्रस्योभयांशत्वेऽपि मातृदोषेणैव दुष्टाविति ज्ञापयितुम् अतः तावभद्रौ ननु माताभस्त्रापितुः पुत्रइति शास्त्रात् बीजादुष्टत्वे कथं तयोर्दोषवत्त्वमित्याशङ्क्याह । जाठराधमाविति । जठरे जातेन दोषेण अधमौ उत्तमबीजमपि यथाशूद्रायां प्रविष्टं शूद्रतामापद्यते तथेत्यर्थः तयोर्दोषमाह । लोकानिति । लोकपालसहितान् लोकान् मुहुराक्रन्दयिष्यतः रुद्रकालजातत्वाद्रोदयितृत्वं चण्डि कोपनशीले अयमपि दोषस्तवैव ॥ ३८ ॥

एवं तयोर्दोषमेकमुक्त्वा अन्यान् त्रीन् दोषानाह । प्राणिनामिति । प्राणिनां दोषवत्त्वेऽपि दीनानां वधोऽनुचितः तत्राप्यकृतागसां वध इत्येको दोषः स्त्रीणां निगृह्यमाणानामित्यपरः पातिव्रत्यात् त्याजनं निग्रहः कोपितेषु महात्मस्विति चापरः तेषां भगवत्सेवाप्रतिबन्धात् कोपः ॥ ३९ ॥

एवं दोषचतुष्टये जाते "भक्तद्रोहे वधः स्मृत" इति वाक्यात्परमेश्वरः तौ मारयिष्यतीत्याह । तदेति । मारणे हेतुः विश्वेश्वर इति नहि जगतीश्वरद्वयं भवति किञ्च क्रुद्धः भक्तानां पीडनात् भगवानिति वैकुण्ठापचारपरिहारार्थमपि तादृशयोनेः त्याजयिष्यतीति सूचयति । लोकभावन इति । मर्यादारक्षार्थमपि तद्धननं स्वामिनः सेवकवधः साक्षादनुचित इति अवतीर्य हनिष्यति वराहनृसिंहरूपेण अप्तावितिं सोऽत्रैव तिष्ठतीति हननावश्यकत्वं सूचितं शतपर्वधृगिति यथा प्राणिनां क्लेशनिवृत्त्यर्थं वज्रहस्तेनेन्द्रेण पततां पर्वतानां पक्षच्छेदः क्रियते यद्वदीश्वरस्य तादृशवध आवश्यक इत्यर्थः ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ते तव आत्मनो मनसोऽप्रायत्यादपावित्र्यात् क्रूरमनसो मुहूर्तः सन्ध्यारूपो घोरस्तद्भवाद्दोषाद्घोरो सन्ध्याया द्विघटिकत्वाच्च द्वौ । मम निर्देशस्य आज्ञावाक्यस्य अतिचारेणातिक्रमेण च धर्म्ममर्य्यादाभञ्जनौ देवानां श्रीरुद्रादीनां हेलनाच्च भगवद्द्वेषिणौ हे अभद्रे इति तवैवाभद्राणि त्वत्पुत्रयोः सञ्चरिष्यन्तीति भावः ॥ ३७ ॥

जाठरौ त्वज्जठरभवौ अधमौ पुत्रौ एवं व्यस्तात् समस्ताच्च दोषात् लोकानित्यादि । हे चण्डीति !, मद्धर्म्मेवाकर्त्येऽपि यत्त्वया प्राचण्ड्यं कृतं तस्येदं फलं भुङ्क्ष्वेति कामक्रोधयोस्त्वं खनिरेवासीति कश्यपस्यापि तस्यां कोपो व्यक्तः ॥ ३८ ॥

कियत्तयोरायुरिति चेत् शृण्वित्याह । प्राणिनामित्यादि प्राणिष्वित्यर्थः शतपर्व्वधृक् वज्रधर इन्द्र इव ॥ ३९ ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ते आत्मनो बुद्धेः प्रयतस्य भावः प्रायत्यं कृत्यकालावेक्षणं तद्विपरीतमप्रायत्यं तस्मात् मौहूर्तिकात् सन्ध्यायां कृतात् ग्राम्यकर्मसाहसरूपाद्दोषात् मम निर्देशस्य आज्ञाया अतिचारेण अपालनेन देवानां रुद्रादीनां हेलनादपराधाच्च जाठराधमौ पुत्राधमौ भविष्यतः चण्डि!साहसिके ॥ ३७-४० ॥

---

भाषाटीका ।

कश्यपजी कहैं हैं कि तुमारे चित्तके मलिन होने से मुहूर्त के दोषसे हमारी आज्ञा के न मानने से देवतों के अवज्ञा-करने सें ॥ ३७ ॥

हे अमङ्गल रूपवाली दिति तेरे गर्भ में अभद्र अधम दो पुत्र होंगे हे क्रोधवाली दिक्पालों के सहित तीनों लोकों को वारंवार रोदन करावेंगे ॥ ३८ ॥

जब निरपराध गरीव प्राणियों को वे दोनों मारेंगे परस्त्रियों को पकड रक्खेंगे महात्मों को कोपित करेंगे ॥ ३९ ॥

तब लोकों के पालन करने वाले विश्वेश्वर भगवान् वही अवतार लेकर दोनों को मारेंगे जैसे इन्द्र पर्वतों को बज्र से विदारण करते हैं ॥ ४० ॥

---

॥ दितिरुवाच ॥

वधं भगवता साक्षात्सुनाभोदारबाहुना ।
आशासे पुत्रयोर्मह्यं माक्रुद्धाद्ब्राह्मणाद्विभो ! ॥ ४१ ॥
न ब्रह्मदण्डदग्धस्य न भूतभयदस्य च ।
नारकाश्चानुगृह्णन्ति यां यां योनिमसौ गतः ॥ ४२ ॥

॥ कश्यपउवाच ॥

कृतशोकानुतापेन सद्यःप्रत्यवमर्शनात् ।
भगवत्युरुमानाच्च भवे मय्यपि चादरात् ॥ ४३ ॥
पुत्रस्यैव तु पुत्राणां भवितैकः सतां मतः ।
गास्यन्ति यद्यशः शुद्धं भगवद्यशसा समम् ॥ ४४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सुनाभेनोदारो बाहुर्यस्य मह्यं मम कोपितेष्वित्युक्तत्वाच्छ्-ङ्किनचित्ता सती प्रार्थयते ब्राह्मणान्माभूदिति ॥ ४१ ॥

नारका अपि तथा यां यां योनिमसौ गतो भवति तत्रस्थाश्च नानुगृह्णन्ति कृपां न कुर्वन्ति ॥ ४२ ॥

कृतो यो ऽपराधस्तेन शोकस्ततोऽनुतापस्तेन प्रत्यवमर्शना-द्युक्तायुक्तविचारात् भगवति हरौ भवे श्रीरुद्रे एतैः पञ्चभिः कारणैः ॥ ४३ ॥

पुत्रस्य हिरण्यकशिपोः पुत्राणां मध्ये एकः सतां मतो भविष्यति तमेव वर्णयति । गास्यन्तीति सार्धैः पञ्चभिः । समं सह सदृशं वा ॥ ४४ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

सुष्ठु नाभिर्वलयं यस्य तत्सुनाभं सुदर्शनचक्रं तेनोदारो मोक्षादिदाता महांश्च बाहुर्यस्य स तथा आशासेऽभिकांक्षे ॥ ४१ ॥

तत्र हेतुः न ब्रह्मेति द्वितीयार्थे षष्ठ्यौ तत्र स्थाश्चेति चकारान्वयः।न कृपां कुर्वन्ति तन्निकटगमनादिकं नानुमोदन्तइत्यर्थः ॥ ४२ ॥

कृतेति सार्द्धकम् । मयि भर्तृरूपे गुरौ"पतिरेवहिनारीणां दैवतंपरमं स्मृतम्"इत्युक्तेः पुत्रस्यैव नतुपौत्रादेरितिसम्बन्धनैकत्वमेव कारेण व्यञ्जितम् ॥ ४३ ॥ ४४ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

एवमुक्ते पुनरपिदितिराह द्वाभ्याम् सुनाभश्चक्रन्तेनोदारः सुन्दरोवाहुर्यस्य तेन भगवता साक्षान्मह्यं मम पुत्रयोर्वधमाशासेऽनुमन्ये किन्तु हेप्रभो ! क्रुद्धाद्ब्राह्मणान्नानुमन्ये कोपितेषु महत्सुचेत्युक्तत्वात् कोपिताद्ब्राह्मणाद्वधमाशङ्कमानाम् एवं प्रार्थयते क्रुद्धान्माभूदिति ॥ ४१ ॥

नन्वस्तु ब्राह्मणादन्यतो वा कुतश्चित्तद्वधस्तत्र को विशेषइत्यत्राह नेति। ब्रह्मदण्डदग्धस्य ब्राह्मणशापहतस्य भूतानां भयसम्पादकस्य च नारकाः अपि नरकवासिनोऽपि नानुगृह्णन्त्यनुग्रहं नकुर्वन्ति नरकवासिनोहि सर्वस्मै लोकाय दुःखम्माभूदिति मन्यन्ते तेऽप्येतयोः कृपां नो कुर्वन्ति इत्यतोऽतिपापिनौ ब्रह्मदण्डदग्धभूतभयदौ इत्यर्थः किञ्चयांयोनिमसौ ब्रह्मदण्डदग्धो लोकभयदश्च गतः प्राप्तो भवति तत्रस्था अपि नानुगृह्णन्तीत्यर्थः ॥ ४२ ॥

एवमुक्तोमुनिराह । कृतेत्यादिसप्तभिः कृतो योऽपराधः तेन शोकः तस्माद्योऽनुतापः प्रत्यवमर्शनाद्युक्तायुक्तविचाराद्भगवति परे परमपुरुषेउरुमानाच्च भवे रुद्रे मय्यप्यादराच्चहेतोः ॥ ४३ ॥

पुत्राणामार्षत्वाद्बहुवचनं पुत्रयोर्मध्येएकस्य पुत्रस्य हिरण्यकशिपोः एकः पुत्रः सताम्मतः प्रह्लादः पुत्रः भविता भविष्यति तमेव वर्णयति।गास्यन्तीतिसार्द्धैः पञ्चभिः। यस्य तव पौत्रस्य यशः भगवद्यशसासमंसह सदृशम्वागास्यन्ति यच्छब्दस्य सवाइत्युत्तरेणान्वयः किञ्च यस्य त्वत्पौत्रस्यशीलमनुवर्तितुंनिर्वैरादिभिर्गुणैरात्मानमन्तः करणं साधवोभावयिष्यन्ति शोधयिष्यन्ते तत्र दृष्टान्तः योगैः क्षारादिसंयोगैः दुर्वर्णं हेम सुवर्णमिव ॥ ४४ ॥ ४५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भर्त्रैवमुक्ता दितिः किमाहेति तत्राह। वधमिति।सुनाभेन चक्रेण युक्तः उदारो महान् बाहुर्यस्य स तथोक्तः"उदारो महति स्यात्" इति यादवः तेन मह्यं ममाशासे इच्छामि किन्तुविशेषोऽस्तीत्याह माक्रुद्धादिति ॥ ४१ ॥

ब्रह्मशापेन हतस्य को दोषइति तत्राह । ब्रह्मेति । एताहशः को न्योऽस्तीति तत्राह । नभूतेति नारक्यः नरके पच्यमानाः प्रजाः असौ ब्रह्मशापदग्धभूतभयदो वा चशब्दोवार्थे ॥ ४२ ॥

सुनाभायुधात्पुत्रयोर्वधं सद्गतिमाशास इति यत्तच्चाभिलाषि तत्तद्भक्तस्य नत्वभक्तस्यायोग्यस्यासुरस्य तदुक्तम् ।

विष्णुहस्तवधाल्लोको भक्तस्यान्यस्य न क्वचित् ।
तथाप्यसुरमोहाय न विविक्तं क्वचित्क्वचित् ॥

इत्याशयवान् कश्यपः प्रकारान्तरेण तयोः सद्गतिः स्यादिति ध्वनयन्नुत्तरं वक्ति ! कृतशोकेति । कृतपापकर्मनिमित्तशोकात् तेनानुतापेन पश्चात्तापेन तव पुत्रस्य हिरण्यकशिपोः पुत्रा

**श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।**

मध्ये सतां सम्मत एकः पुत्रो भविता स तव पुत्रस्य सद्गतेर्हेतुः स्यादिति शेषः तदुक्तम् ।

हिरण्यकशिपुश्चापि भगवन्निन्दयातम

इत्यादि न पुत्रमात्रात्पित्रादेः सद्गतिः किन्तु निर्वैरादिगुणविशिष्टत्वादिति भावेन तद्गुणमाह । गायन्तीति । भगवद्यशसो विना भूतत्वात् सममित्युक्तम् ॥ ४३ ॥ ४४ ॥

---

**श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः**

नानुगृह्णन्ति न निकटे गमनादिकमनुमन्यन्ते ॥ ४२ ॥
कृतेति सार्द्धकम् ॥ ४३ ॥
गास्यन्तीति सार्द्धत्रिकम् ॥ ४४ ॥

---

**श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।**

भर्त्रा क्रोधेन अनिष्टे भाविते सा विष्णुभक्ता पुत्रयोर्भगवत्सम्बन्धं श्रुत्वा सन्तुष्टा तथेत्यन्वमोदतेत्याह । वधं भगवतेति । तेन पूर्वं कोपितेषु महात्मस्विति महापुरुषकोप उक्तः । स शापपर्यवसायी मा भवतु । तच्छापेन भगवतापि कृते वधे सामीचीन्यं न भविष्यतीति तदा भावेन केवलं भगवानेव ब्राह्मणप्रेरणाव्यतिरेकेण करोत्विति प्रार्थयति । साक्षादिति स्वहस्तेन ननु कालादिना सुनाभोदारबाहुनेति । वधोऽपि सुदर्शनेनैव यतः हस्त एव मोक्षादिसर्वपुरुषार्थदाता आशासे । कामितोऽयमर्थो दुर्लभः । परमनभिप्रेतः क्रुद्धादेव ब्राह्मणाद्वधः । तथा वरोदेय इति । तत्र सामर्थ्यं सूचितं प्रभो इति ॥ ४१ ॥

ब्राह्मणाद्वधः अत्यन्तं विगर्हित इति वक्तुं तस्य परलोकबाधकत्वमाह । न ब्रह्मदण्डेन ब्रह्मशापेन अग्निरूपेण दण्डोहि दृढकाष्ठरूपो भवति तद्गतोऽग्निः सर्वथैव दहेत् तत्र हेतुः भूतभयदस्येति ब्रह्मदण्डदग्ध एव भूतेभ्यो भयं प्रयच्छति नह्यन्यः स्वयं दुःखाभिज्ञः परेभ्यो दुःखं प्रयच्छति ब्रह्मशापेन ज्ञानादीनां नाशात्तथा कर्तुं शक्नोति पृथग्वाहेतुः चकाराद्भगवद्द्वेषिणः नारका अपि तस्य सम्बन्धिनः तान्वा अनुगृह्णन्ति द्वितीयार्थे षष्ठी चकारादन्येऽपि अप्यर्थे वा चकारः नारका अपि तं न स्पृशन्तीत्यर्थः असौ ब्रह्मदण्डदग्धादिर्यां यां योनिं गतः नारका द्विविधाः स्थानभेदाः योनिभेदाश्च तत्र योनिभेदे दैहिकः सम्बन्धः अधिको भवतीति कदाचिदनुग्रहो भवेत् तन्निषेधार्थमाह । यां या योनिमसौ गत इति॥४२॥

कश्यपः तां भगवद्भक्तां ज्ञात्वा स्वबीजस्यापि सार्थकतां विलोक्य वरं प्रयच्छति सप्तभिः । कृतशोकानुतापेनेति । वरः पौत्रो वैष्णवः तव भविष्यतीति "कार्यो षड्गुणाः क्षेत्रे कार्यं बीजस्वभावतः । अष्टादशगुणा जातास्ते कीर्त्यन्ते क्रमादिमे । तत्र प्रथमं तस्याः षड्गुणानाह कृतं यत् कर्म तत्र शोकः स्वपुरुषार्थो मया नाशित इति यथा पुत्रादिनाशे शोकः एवं कृतेऽपि भोगे जातेऽपि गर्भे शोकः अनुतापः मया किमर्थं कृतमिति पश्चात्तापः द्वयोरेकवद्भावः कर्त्तुः दुःखजननसाम्यात् अन्यं गुणमाह । सद्यः प्रत्यवमर्षणादिति । प्रत्यवमर्षणमपराधक्षमापनमत्र विनयेनागमनं प्रार्थनाच प्रत्यवमर्षः भगवत्युरुमानं वधं भगवता साक्षादिति पुत्रापेक्षयापि भगवत्यधिकसन्मानं लोके पुत्रमारकोऽत्यन्तं द्विष्टः स

चेदत्यन्तं मानितः तदायं महान् गुणः गुणद्वयमाह । भवे मय्यपि चादरादिति । पूर्वं न मे गर्भमित्यादि भवस्यादरः सूचितः मय्यादरः प्रभो इति संबोधनात् ब्राह्मणाधिक्याद्वा एतैः षड्भिः गुणैः कृत्वा एकस्य ज्येष्ठस्य पुत्राणां चतुर्णां मध्ये एकस्तृतीयः सतां मतो भविष्यति अनेन वंशवृद्धिरपि सूचिता सतां मतः तेषां प्रमाणभूतः अन्यथा सन् सत्तम इति वा वक्तव्यः स्यात् मतस्तु मानेनैव ज्ञातः अनेन भगवन्मार्गे स प्रमाणमिति निरूपितं तस्य प्रमेयतामाह । गास्यन्तीति । प्रमातुं तदेव योग्यं यत्कदाचिदपि विरुद्धज्ञानविषयो न भवति फलतः साधनतश्च अतो भगवद्यशो यदा गीयते तदाधारत्वेन प्रह्लादयशो गीयते आधाराधेययोः तुल्यत्वात्समत्वं भक्तानामाधारत्वं पूर्वं निरूपितं शुद्धमिति विशेषः खण्डशः आधारत्वव्यावृत्त्यर्थं सममित्युक्तं भगवद्यशसेति करणं वा शुद्धत्वे समत्वे च दैत्यानां यशः प्रायेण विषमं भवतीति मतान्तरत्वाच्च तुल्यत्वकथनमपि न दोषाय यथा पुण्यश्लोको नलो राजेति अत एव गास्यन्ति लोकाः ॥ ४३ ॥ ४४ ॥

---

**श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।**

सुनाभेन चक्रेण उदारो बाहुर्यस्य तेनेति तस्य तमतिसुन्दरं बाहुमुत्तमन्तं पुत्रौ मे द्रक्ष्यत इति भाग्यवन्तावेव पुत्रौ मे भविष्यतः तथा मरणस्यावश्यकत्वेऽपि तद्धस्ततो मरणात् सर्व्वपापेभ्यो निस्तारश्च तयोर्भावी आशासे वाञ्छामि मह्यं मामपि निस्तारयितुमिति तादृशपुत्रयोर्माता अहमपि जन्ममध्येऽप्यदृष्टभगवद्रूपापि पुत्रसम्बन्धेन भगवद्दर्शिनीभविष्यामिमंस्ये । क्रुद्धाद्विप्राद्वधं माआशासे इति । कोपितेषु महात्मस्विति त्वदुक्त्या ब्रह्मशापादेव पुत्रौ मे मरिष्यत इति शङ्कितचित्ता व्याकुलेवाहं मासिषं सम्प्रति भगवद्धस्ततो वधं श्रुत्वा स्थिरचित्तेवाभूवमिति भावः ॥ ४१ ॥

यतः न ब्रह्मेत्यादि द्वितीयार्थे षष्ठ्यौ नारका अपि तथा यां यां योनिमसौ गतो भवति तत्रस्थाश्च नानुगृह्णन्ति ॥ ४२ ॥

कृतो योऽपराधस्तेन शोकस्ततोऽनुतापस्तेन । प्रत्यवमर्शनात् युक्तायुक्तविचारात् एतैः पञ्चभिः कारणैः पुत्रस्य हिरण्यकशिपोः पुत्राणां मध्ये एकः सतां मतो भविष्यति ॥ ४३ ॥

सन्त एव गास्यन्ति समं सह सदृशं वा ॥ ४४ ॥

---

**श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।**

सुनाभः सुदर्शनस्तेनारिपु प्रक्षिप्यमाणेनोदारः प्रक्षेपकुशलोबाहुर्यस्य तेन ॥ ४१ ॥ ४२ ॥

कृतेनायुक्तकर्मणा यः शोकस्ततोऽनुतापस्तेन सद्यः प्रत्यवमर्शनात् योग्यायोग्यविचारात् पुत्रस्य हिरण्यकशिपोः ॥४३-४४॥

---

**भाषाटीका ।**

दिति कहने लगी हे प्रभो ! साक्षात् सुदर्शन चक्र धारी विष्णु भगवान् के हाथ से मेरे पुत्रों का वध होना तौ मैं मानती हूं परन्तु क्रोधित ब्राह्मण के शाप से मत मरैं ॥ ४१ ॥

ब्रह्म दण्ड से जला हुआ तथा प्राणियों को भय देने वाला जो है वह पुरुष जिस जिस योनि में जाय वे लोग तथा नरक वाले भी उसपर दया नहीं करते हैं ॥ ४२ ॥

कश्यपजी बोले शोक पश्चात्ताप करने से शीघ्रही विवेक के

योगैर्हेमेव दुर्वर्णं भावयिष्यन्ति साधवः ।
निर्वैरादिभिरात्मानं यच्छीलमनुवर्तितुम् ॥ ४५ ॥
यत्प्रसादादिदं विश्वं प्रसीदति यदात्मकम् ।
स स्वदृग् भगवान् यस्य तोष्यतेऽनन्यया दृशा ॥ ४६ ॥
स वै महाभागवतो महात्मा महानुभावो महतां महिष्ठः ।
प्रवृद्धभक्त्या ह्यनुभाविताशये निवेश्य वैकुण्ठमिमं विहास्यति ॥ ४७ ॥
अलम्पटः शीलधरो गुणाकरो हृष्टः परर्द्ध्या व्यथितो दुःखितेषु ।
अभूतशत्रुर्जगतः शोककर्ता नैदाघिकं तापमिवोडुराजः ॥ ४८ ॥

भाषाटीका ।

करने से भगवान् में शिवजी में मेरे में आदर के करने से ॥ ४३ ॥

तेरे पुत्र के पुत्रों के मध्य में सत्पुरुषों के मानने के योग्य एक पुत्र होगा जिसके यश को भगवान् के यश के साथ गान करेंगे ॥ ४४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

हीनवर्णं हेम यथा योगैर्दाहादिभिरुपायैः शोध्यते तथा यस्य शीलं स्वभावमनुवर्तितुमनुगन्तुं प्राप्तुं निर्वैरादिभिर्योगैरात्मानं भावयिष्यन्ति शोधयिष्यन्ति ॥ ४५ ॥

विश्वप्रसादे हेतुर्यदात्मकम् स्वदृगात्मसाक्षी यस्यानन्यया भगवानेव सत्य इत्येवं भूतया दृशा तोष्यते तोषं प्राप्स्यते ॥ ४६ ॥

तत्र हेतुः सवा इति । महात्मापरिच्छिन्नदृष्टिः महानुभावो महाप्रभावः महतामपि मध्ये महिष्ठोऽतिशयेन महान् प्रवृद्धया भक्त्यानुभाविते शोधिते चित्ते वैकुण्ठं हरिं निवेश्य देहाद्यभिमानं त्यक्ष्यति ॥ ४७ ॥

महाभागवतत्वमाह । अलम्पट इति । शीलधरः सुस्वभावः गुणानां धैर्यादीनामाकरो जन्मभूमिः परेषां समृद्ध्या हृष्टः परेषु दुःखितेषु सत्सु न भूतो जातः शत्रुर्यस्य निदाघे भवं तापं चन्द्रो यथा हरत्येवं जगतः शोकहर्ता भविष्यति ॥ ४८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या

दीपिकाटिप्पणी ।

गास्यन्तीति सार्द्धत्रिकम् तत्रापि गर्भेऽङ्कपातं कृत्वा गास्यन्ती-त्यर्द्धकम् "बहुवाक्यैकवाक्यत्वे गर्भेऽङ्का विन्दुमस्तका" इति परिभाषानियमात् शुद्धं श्रोतॄणामघहरं ( १ ) आदिना शमादिग्रहः आत्मानं चित्तम्भावयिष्यन्ति तादृशभक्तियोग्यतायै शोधयिष्यन्ति ॥ ४५ ॥

( २ ) यदात्मकं यदधीनं योहि यदधीनो भवति स तत्प्रसादात्प्रसीदतीति व्याप्तिदर्शनात् स्वदृक् स्वप्रकाशः ॥ ४६ ॥

( ३ ) तत्र तथा दृष्ट्या तोषे महताम्भक्तानामपि मध्ये "भवान्मे खलुभक्तानां सर्वेषां प्रतिरूपधृक्" इतिश्रीभगवदुक्तेः ॥ ४७ ॥

अलम्पटत्वादयश्चैते भक्त्यनुकूलास्तटस्थ लक्षणगुणाः ज्ञेयाः ॥ ४८ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च यत्प्रसादाद्भगवतः प्रसादादनुग्रहात् इदं विश्वं प्रसीदति भगवदनुग्रहविषये कृत्स्नं विश्वमपि प्रसादमेव कुर्यादित्यर्थः यदात्मकं भगवानेवात्मा यस्य तद्विश्वं यद्भगवदात्मकं सस्वदृक् करणनिरपेक्षं सर्वं साक्षात्कुर्वाण इत्यर्थः भगवान् यस्य त्वत्पौत्रस्यानन्ययाव्यभिचारिण्या दृशा भक्त्या तोष्यते सन्तोषं प्राप्नोति ॥ ४६ ॥

सवै त्वत्पौत्रः महाभागवतः निरतिशयभगवद्भक्तः महानुभावः महात्मा निर्मलान्तःकरणः महतां माहात्म्यवतामपि मध्ये महिष्ठः निरतिशयमाहात्म्यवान् प्रवृद्धया भक्त्यानुभाविते संशोधिते आशये चित्ते वैकुण्ठं भगवन्तं निवेश्यावस्थाप्य तद्भगवद्व्यतिरिक्तमैश्वर्यादिकं विहास्यति त्यक्ष्यति ॥ ४७ ॥

किञ्चालम्पटः अलोलुपः शीलधरः सुस्वभावः गुणानामाकरः परर्द्ध्या परेषामृद्धिः समृद्धिस्तया हृष्टः परेषु दुःखितेषु सत्सु स्वयमपि व्यथितः दुःखितः न भूतो न जातः शत्रुर्यस्य सोऽभूतशत्रुः जगतः शोकं हरतीति तथा तत्र दृष्टान्तः नैदाघिकं निदाघोग्रीष्मकालः तत्र भवं तापमुडुराजश्चन्द्रो यथा हरतीति ॥ ४८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

साधवो यस्य प्रह्लादस्य शीलं शमादिस्वभावमनुवर्तितुमात्मानं कर्तुं निर्वैरादिभिर्यथास्थितवस्तुदर्शनादिगुणैरात्मानमन्तःकरणं भावयिष्यन्ति शमादिमत्कुर्वन्ति दोषानपनीय कथमिव योगैरौषध्याद्युपायैर्दुर्वर्णं दुष्टवर्णं हेमेव यथा भावयन्ति अष्टादशदोषान्निरस्य स्वस्वरूपस्थितं कुर्वन्ति तथेत्यर्थः अनेन निदर्शनेनात्रेदं तात्पर्यमवगन्तव्यं तथाहि हिरण्यकशिपौ द्वौ चेतनौ स्तस्तत्रैकः सद्गतियोग्य एकोऽन्यगतियोग्यः अनादिभक्तिलक्षणयोग्यतौषधेन दुःसङ्गदोषलक्षणादुर्वर्णमपनीय पुत्रादिः सच्चेतनस्य सद्गतिहेतुः स्यान्न विष्णुभक्तिविधुरस्यातो ऽन्यद्दुष्टजनमोहनार्थं तदुक्तं स्वतः सद्गतियोगस्य पुत्रादेर्हेतुता भवेत् । योग्यता नास्ति भक्तिः स्यादयोग्यस्य कुतो गतिरिति ॥ ४५ ॥

तत्र पौत्रस्य प्रह्लादस्य माहात्म्यं भगवत्प्रसादायत्तमितिनिर्वेनाह । यत्प्रसादादिति । यस्य हरेः प्रसादात् प्रसन्नत्वे हेतुना यदात्मकमिति । यदात्मकं यत्स्वामिकं येन व्याप्तं च सर्वं सर्वदैकप्रकारज्ञानो भगवान् यस्यान्यया सर्वोत्तमो हरिरेतस्मादन्योऽन्यो नास्तीत्येवं विशिष्टया दृशा ज्ञानेन तोष्यते ॥ ४६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सवा इति । स एव पौत्रोमहात्मा एतादृशमहिमा अतत् तस्माद्धरेरन्यत्सर्वमनित्यमसारं हीनं चेति निरूप्य विहास्यति त्यक्ष्यतीत्यन्वयः महानुभावो महाप्रभावः वैष्णवसिद्धान्ते महानिधियो वा वैकुण्ठं नारायणम् ॥ ४७ ॥

निर्वैरादिभिरित्यत्रादिशब्दोक्तान् गुणानाह । अलम्पटइत्यादिना । अलम्पटो विरक्तः शीलधरः शीलसमाधावितिधातोः समाधिं कुर्वाणः गुणाकरो गुणनिधिः व्यथितेषु दुःखितेषु परेषु दुःखितस्तद्दुःखमात्मीयं करोतीत्यर्थः अभूतशत्रुरजातशत्रुः नैदाघिकमुष्णकालजातम् ॥ ४८ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तद्यशोगानस्य फलमाह । योगैरिति । अनुवर्त्तितुमनुमोदनेनानुगन्तुम् ॥ ४५ ॥

अनन्यया तदेकस्फूर्तिमय्या ॥ ४६ ॥

महाभागवतत्वमेव विवृणोति । महात्मेत्यादिना कुण्डलमण्डिताननमित्यन्तेन ॥ ४७ ॥

अलम्पट इति युग्मकम् ॥ ४८ ॥ ४९ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

साधारण्येन प्रमेयत्वमुपपाद्य असाधारण्येनोपपादयति । योगैरिति । यथा कुन्दनकर्तारः कल्कादिभिः सुवर्णं शोधयन्ति सर्वथा चेत् निर्दुष्टं तदा विजातीयसजातीयान् परिगृह्णाति क्षुद्रेऽपि सजातीये भगवन्तं योजयितुं शक्नोति हीरकमिव तत्र निकषे ज्ञाते तथा स्वात्मानमपि भावयेत् अतः सुवर्णे रजतादिदोषाः यथा दूरीक्रियन्ते तथा आत्मन्यपि वैरादिदोषा दूरीकर्तव्याः अतो निर्वैरताया अवधिर्ज्ञातव्यः प्रह्लादस्तु औत्पत्तिकताद्दशगुणयुक्तः अतो यथा "चितितन्मात्रेण तदात्मकत्वात्" इति न्यायेन ब्रह्मचैतन्यमिव स्वचैतन्यं क्रियते साधनैः भगवद्भावो वा सम्पाद्यते भगवदनुग्रहात्तथा साधुत्वार्थमन्यत्र भगवद्भावसम्पादनार्थं प्रह्लादभावोऽपि सम्पाद्यते तदाह । यथा सुवर्णं साधयन्ति तथा यच्छीलमनुवर्तितुं निर्वैरादिभिरात्मानं साधयिष्यन्ति साधवः परोपकारनिरताः ॥ ४५ ॥

एवं प्रमेयत्वं निरूप्य फलत्वं निरूपयति । यत्प्रसादादिति । भगवान् येन तोष्यते यद्यपि सर्वेषामात्मत्वात् स्वरूपतस्तुष्ट एव तथापि साधनेन तुष्टस्तुष्ट इत्युच्यते तदाह । यस्यानन्यया दृशेति । प्राणिनां षोडशदृष्टयो भवन्त्यन्तःदशेन्द्रियाणि अन्तःकरणचतुष्टयमात्मा देहश्चेति प्राणेन सह सप्तदश तत्सम्बन्धिनः पुत्रादयो बाह्याः सप्तदश एवं चतुस्त्रिंशद्दृष्टयो भगवद्विषयिका एव यस्य सोऽनन्यदृक् सर्वभावेन प्रपन्नः तदा सर्वं भावमापन्नो भगवान् प्रसीदति ननु भगवत्प्रसाद एव फलं कथमुच्यते विश्वस्यैव फलत्वात् अन्यथा भगवानपि विश्वस्मिन् न रमेत अत आह । यस्य भगवतः प्रसादादिदं विश्वमेव प्रसीदति भगवत्प्रसाद एव विश्वप्रसादः अनुसन्धानभेदात्कार्यकारणभावः अन्यथा कार्ये साधनान्तरमप्यपेक्ष्यते अतो भेदव्यावृत्त्यर्थमाह । यदात्मकमिति । भगवदात्मकमेव विश्वं भगवति प्रसन्ने प्रसन्नमेव भवति तदास्य सर्वत्र कामचारो भवति भगवत इव ननु भगवान् तं प्रति कथं विषयत्वमापद्यते हनिभावापत्तेः मर्यादाभङ्गश्च स्यात् अत आह । स्वदृगिति स भगवान् सर्वमात्मत्वेनैव पश्यति तथा च तस्य प्रसादे अयमप्यात्मत्वेनैव पश्येत् अतो न हीनत्वं न वा मर्यादाभङ्गः स्वत एव भगवत्त्वात् पूर्णकामोऽपि तदाह । भगवानिति । तस्मात्फलरूपः प्रह्लादः ॥ ४६ ॥

साधनरूपतामाह त्रिभिः । साधनानां त्रैविध्यात् गुणरूपाणि कानि चित्साधनानि दोषाभावरूपाण्यपराणि अन्तरङ्गफलरूपं चैकं तत्र प्रथमं गुणरूपाणि साधनान्याह । सवैमहाभागवत इति । यः उपपत्त्या उत्पत्त्या च साधनवान् स एव तच्छास्त्रे गुणयुक्तः अतः प्रह्लादः तादृश इति वै निश्चयेन महाभागवतः यस्तु भगवदीयो भूत्वा भगवदीयमेव देहादिभिः करोति जानाति स भागवतः यस्तु सर्वदैव तथाविधः स महाभागवतः अनेन भगवच्छास्त्रसिद्धं सर्वमेव साधनमुक्तं महात्मेति द्वितीयं साधनं ज्ञानमार्गसिद्धं ब्रह्मभावेन स जीवो महात्मा भवति अन्यथा परिच्छिन्न एव स्यात् महत्त्वं चापरिमितमेव महानुभाव इति तृतीयं साधनं कर्ममार्गानुसारेणोत्कर्षः तत्र ह्यनुभावेनैव महत्त्वं कर्मणोऽनित्यत्वेन महत्त्वजनकाभावात् कर्मजनितोऽनुभाव एव तथात्वबोधकः तस्य महानुभावत्वमग्न्यादिभिर्दाहाद्यभावात् सर्वोत्कृष्टोऽनुभावो महान् शीघ्रप्रत्ययहेतुः महत्प्रत्ययहेतुश्च महतां महिष्ठश्चतुर्थः लोके उत्कर्षहेतुः कीर्तिमतामपि कीर्तिमानित्यर्थः कीर्तिश्रियौ वा लोके महत्त्वहेतू अत एव महतां मध्ये अत्यन्तं महान् महिष्ठः एवं चतुर्विधसाधनमुक्त्वा पञ्चमं पुरुषार्थरूपं भगवत्स्नेहमलौकिकं साधनत्वेनाह । प्रवृद्धभक्त्येति । पूर्वसाधनैः प्रकर्षेण वृद्धा या प्रेमलक्षणा भक्तिः तयानुभावितं यदन्तःकरणं प्रेम्णा तदात्मकं सञ्जातं यथा भगवान्भाति स हि स्वाश्रयः अत एव स्वभावापन्नान्तःकरणो स निविशते वैकुण्ठमिति यद्दर्शनार्थं मेतावान् क्लेशोऽनुभूतः इमं देहं विहास्यति विदेहकैवल्यं प्राप्स्यति देहसन्ततिर्निवर्तिष्यत इत्यर्थः ॥ ४७ ॥

एवं सर्वशास्त्रलोकसिद्धं साधनं सफलमुक्तं गुणरूपं दोषाभावरूपमाह । अलम्पट इति । लाम्पट्यम् इन्द्रियविषयासक्तिर्दोषः शीलं सुस्वभावं तदेव धनं यस्य सर्वेभ्य एव चौरादिभ्यो धनं संरक्ष्यते तथा हीनानामतिक्रमादिभिः स्वशीलं संरक्ष्यते अनेन शीलनाशो दुष्टशीलताचनिवारिता गुणाकर इति गुणाः सत्यादयः प्रथमस्कन्धोक्ताः तेषामाकरः स्थानं ते सर्वे दोषाभावरूपाः लौकिकाः भगवत्युच्यमानाः तथैव भवन्ति सर्वेषु गुणेषु समतादया च उत्कृष्टे इति तयोर्विवरणमाह । हृष्टः परर्द्धौ व्यथितो दुःखितेष्विति । स्वसमृद्ध्यैव सर्वो हृष्यति अयं तु परसमृद्ध्यापीति समः दुःखितेषु व्यथितः दयावानेव भवति परदुःखं दृष्ट्वा कारुणिक एव दुःखितो भवति अभूतशत्रुरिति नभूताः शत्रवो यस्य किं बहुना यस्य कामादयोऽपि न शत्रवः जगतः शोकहर्तेति सामर्थ्यं परदुःखप्रहाणेच्छा सहजा निरुक्ता शोकस्त्वन्तर्हितस्तापोबहिस्तापमपि निवारयतीति दृष्टान्ते नाह । नैदाघिकमुष्णकाले सूर्यजनितः तथा कलिकालादौ कालजनितमपि तापम् उडुराजश्चन्द्रः स हि नक्षत्रैः सह तापं दूरीकरोति तथा सर्वपरिकरसहितः स्वसांनिध्येन असांनिध्येन वा तापं दूरीकरोतीत्यर्थः ॥ ४८ ॥

———

अन्तर्बहिश्चामलमब्जनेत्रं स्वपूरुषेच्छानुगृहीतरूपम् ।
पौत्रस्तव श्रीललना ललामं द्रष्टा स्फुरत्कुण्डलमण्डिताननम् ॥ ४९ ॥

॥ मैत्रेयउवाच ॥

श्रुत्वा भागवतं पौत्रममोदत दितिर्भृशम् ।
पुत्रयोश्च वधं कृष्णाद्विदित्वासीन्महामनाः ॥ ५० ॥

इतिश्रीमद्भागवते महापुराणे तृतीयस्कन्धे
दितिकश्यपसम्वादे
चतुर्दशोऽध्यायः ॥ १४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

हीनवर्णं हेम योगैर्दाहादिभिर्यथा शोध्यते तथा यस्य शीलं स्वभावमनुवर्तितुमनुगन्तुं प्राप्तुं निर्वैरादिभिर्योगैरात्मानं भावयिष्यन्ति शोधयिष्यन्ति ॥ ४५ ॥

यस्य भगवतः प्रसादाद्धेतोर्यस्मै प्रह्लादाय इदं विश्वमेव प्रसीदति कीदृशं सद् स एवात्मा अन्तर्य्यामी यस्य तद् अन्तर्य्यामिरूपेण तथा लोकान् प्रेरयति यथा तत्पितृवैरिण इन्द्राद्या अपि प्रह्लादाय प्रसीदन्तीत्यर्थः । स्वीयान् भक्तानेव प्रीत्या पश्यतीति स्वदृक् । न विद्यतेऽन्यो यस्यां तादृश्या दृशा बुद्ध्या यद्बुद्धौ अन्यः प्रवेष्टुं न शक्नोतीत्यर्थः ॥ ४६ ॥

महात्मा महाधृतिर्महाबुद्धिर्वा महान्त एव स्तम्भस्वेदाद्याः प्रेमानुभावा यस्य सः । तत्र हेतुः । प्रवृद्धया भक्त्या अनुभाविते अनुभावं प्रापिते आशये मनसि वैकुण्ठं कृष्णं वैकुण्ठस्थं वस्तु मात्रं वा निवेश्य इमं मायिकं लोकं त्यक्ष्यति ॥ ४७ ॥

तस्य भक्ति भक्त्युत्थान् महागुणांश्चावोचमन्यानपि भक्त्यनुकूलान् स्वाभाविकान् गुणान् श्रृणुवित्याह । अलम्पट इति । वक्तुमशक्या एव गुणाइत्याह गुणानामाकरः । परेषामृद्ध्या सम्पत्या परेषु दुःखितेषु सत्सु निदाघभवं तापं चन्द्रो यथा तथा जगतः शोकहर्ता भविष्यतीति ॥ ४८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

योगैः सन्तापनादिभिर्दुर्वर्णं हेम यथाशाव्यते तद्वत् साधवः मुमुक्षवः यस्य जायमानस्य प्रह्लादस्य शीलं स्वभावमनुवर्तितुमनुगन्तुं निर्वैरादिभिर्योगैरात्मानं भावयिष्यन्ति शोधयिष्यन्ति ॥ ४५ ॥ ४६ ॥

इमं प्रसिद्धं देहाद्यभिमानं विहास्यति त्यक्ष्यति ॥ ४७ ॥ ४८ ॥

भाषाटीका ।

महात्मा लोग जिसके स्वभाव के अनुवर्तन करने के वास्ते जैसे दाहादिकों से सोना को शुद्ध करते हैं तैसे योगादिकों से अपने अंतःकरण को शुद्ध करेंगे ॥ ४५ ॥

यह भगवत्स्वरूप संसार जिस भगवान् के कृपासे प्रसन्न दीखता है उस स्वयं प्रकाश सर्वज्ञ भगवान् को जिस प्रह्लाद ने अनन्य भक्ति बुद्धि से प्रसन्न किया है ॥४६॥

वह महाभागवत महात्मा दिव्यज्ञानवाला महापुरुषों में श्रे वडा वढी हुई भक्ति से शुद्ध किये हृदय में परमात्मा को स्थापन करके इसलोक को छोडैगा ॥ ४७ ॥

विषयों में लम्पट नहीं है सुन्दर स्वभाव वाला गुणों से पूर्ण दूसरे के सम्पत्ति से प्रसन्न होने वाला दूसरे के दुःख से दुःखि होनेवाला जगत्में शत्रुरहित ग्रीषम ऋतु के तापको जैसे चन्द्रमा हरण करै तैसे सबके शोक को हरने वाला होगा ॥ ४८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अपरिच्छिन्नदृष्टित्वमाह । अन्तरिति । स्वपुरुषाणामिच्छया पुनः पुनर्गृहीतानि रूपाणि येन श्रीरेव ललना सुन्दरी तस्य ललामं मण्डनम् द्रष्टा द्रक्ष्यति ॥ ४९ ॥

महामनाः सोत्साहचित्ता हरिणा सह युद्धेन मरणे पुत्रयो कीर्तिः सद्गतिश्च भवेदिति ॥ ५० ॥

इतिश्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
चतुर्दशोऽध्यायः ॥ १४ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

अपरिच्छिन्नदृष्टित्वं सर्वत्र तदेकस्फूर्त्तिमत्त्वम् कश्यपोक्तं कालानन्तरं प्रह्लादस्य जनिष्यमाणत्वाद्द्रक्ष्यतीति लकारव्यत्ययेन व्याख्यातः ॥ ४९ ॥

अमोदत हन्तहन्त मद्विकर्मापि सत्कर्मशिरोमणिदुर्लभं फलं धास्यतीत्यानन्द । वाराहनृसिंहाभ्यां पुत्रवधेऽपि कृष्णादित्युक्तिः श्रीकृष्णस्यांशित्वमभिव्यञ्जयति एवमन्यत्रापि ज्ञेयम् ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीराधारमणदास गोस्वामिविरचितायां दीपकाटिप्पण्यां
चतुर्दशोऽध्याय ॥ १४ ॥

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च तव पौत्रः श्रीललनाललामं श्रीः लक्ष्मीरेव ललना तस्या ललामं भूषणं "भर्तानामपरं नार्या भूषणादपि भूषणम्„इत्युक्तरीत्या भूषणभूतं श्रियःपतिं स्वहृदयकमलमध्ये बहिश्च द्रष्टा द्रक्ष्यते कथंभूतं श्रीललनाललामं स्फुरती ये कुण्डले ताभ्यां मण्डितं भूषितमाननं मुखं यस्य तं कुण्डलयोः श्रोत्रालंकारत्वेऽपि गण्डस्थलादिषु तत्प्रतिफलनवशान्मुखस्यापि शोभातिरिच्यते स्वपुरुषाः स्वभक्तास्तेषामिच्छानुरूपं गृहीतमप्राकृतदिव्यशरीरं येन तमञ्जनेत्रं कमलनेत्रममलं निरस्तहेयगुणम् ॥ ४९ ॥

दितिकश्यपयोः प्रश्नोत्तरे निगमयति श्रुत्वेति । दितिः भागवतं पौत्रं जनिष्यमाणं श्रुत्वा भृशममोदत जहर्ष कृष्णाद्भगवतः पुत्रयोर्वधं भाविनं विदित्वा ज्ञात्वा महामनाः हरिणा सह युद्धेन पुत्रयोर्भरणे कीर्तिः सद्गतिश्च भवेदिति महोत्सवचित्ता आसीत् ॥ ५० ॥

इतिश्रीमद्भागवतेमहापुराणे तृतीयस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अतद्द्रक्ष्यतीत्यनेन ब्रह्मेतरजगद्द्रक्ष्यति नतु ब्रह्मेति ध्वनितमर्थं स्पष्टयति । अन्तर्बहिरिति । श्रियो ललनायाः स्त्रियो ललामं तिलकस्थानीयं द्रष्टा द्रक्ष्यति ॥ ४९ ॥

एतच्छ्रुत्वा दित्या किमकारीति तत्राह । श्रुत्वेति । अमोदतेत्यनेन दितिरपि सद्गतियोग्येति निरूपितमिति ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

महामना गम्भीरचित्ता आसीत् । तेनापि सह वैरं भविष्यतीति दुःखस्य तेनैव तौ हनिष्येते इति सुखजातस्य च परस्परोपमर्दात् ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सर्वोत्कृष्टं साधनमाह । अन्तर्बहिरिति । तस्य हि भगवत्प्रसादेन भक्त्या ज्ञानवैराग्याभ्यां च भगवत्साक्षात्कारो जायते । तत्र भगवान् सर्वत्र साकारः सच्चिदानन्दरूपः सर्वतः पाणिपादान्तो मायाजवनिकाच्छन्नस्तिष्ठति । तत्र प्रह्लाददृष्टिः मायाजवनिकारूपां तां भित्वापि भगवद्रूपं पश्यतीत्यर्थः । केचित्तु प्रसन्नो भगवान् तस्य हृदयेऽमे स्वस्यैकां मूर्तिं स्थापितवान् अत्र वर्ण्यमानां तद्येव दृष्टिं प्रसारयति तत्रैव तं पश्यतीत्याहुः तत्र यदि तद्रूपं ब्रह्मस्वरूपं तदा न पूर्वस्मादिविशेषः अथोपाधिरूपं तदा न प्रह्लादस्योत्कर्षः इति अन्तर्बहिर्द्रष्टा द्रक्ष्यतीत्यर्थः । अमलमिति । यथामध्यंदिनसूर्यमण्डलान्तः अनेन दोषाभावउक्तः । अब्जनेत्रमिति दृष्टयैव सर्वेष्टपूरकः । अनेन सर्वे गुणा उक्ताः एवं निर्दोषपूर्णगुणविग्रहत्वमुक्त्वा भक्ताधीनत्वमाह स्वपूरुषेच्छेति स्वस्य पुरुषाः भक्तास्तेषां यादृशी इच्छा तदनुसारेण गृहीतं रूपं येन । तव पौत्र इति भक्तवंशस्तस्या एव श्रीः लक्ष्मीः ललना स्त्रीचिह्नरूपा तया ललामम् अनेन सर्वभाग्यरूपत्वात् । तद्दर्शने किञ्चित्प्राप्तव्यं द्रष्टव्यं वा नावशिष्यत इति निरूपितम् । अनेन भगवत ऐहिकफलरूपत्वमुक्तम् । स्फुरती ये कुण्डले ताभ्यां मण्डितमाननं यस्य । सत्साधनौ सांख्ययोगौ स्फुरत्कुण्डले तत्सहितः योऽयं भक्तिमार्गः स मुखमिति सोपायमोक्षदातृत्वं निरूपितम् ॥ ४९ ॥

एवं भगवन्माहात्म्यं तादृशं पौत्रं च श्रुत्वा सर्वचिन्तारहिता जातेत्याह । श्रुत्वेति । विना पुत्रस्य भगवदीयत्वेन भागवतः पौत्रो न भवतीति पुत्रोऽपि भगवद्भक्तः परं निमित्तवशात् अन्यथा प्रतिभासत इति मत्वा भृशममोदत मुमुद इत्यर्थः । तकारः छान्दसः अलौकिकज्ञानबोधनार्थः । पुत्रयोरपि विनियोगः समीचीनः भगवति प्रवेशात् भगवल्लीलासाधकत्वात् अतो ममोद्योगः सफल इति विदित्वा महामना आसीत् । यथा कश्चित् परमपुरुषार्थं साधयित्वा मुदितो भवति । अनेन दितिः परमभक्ता एवं रूपेण भगवल्लीलाः संपादयतीति विहितभक्तिमार्गाभावेऽपि भक्तेति मतान्तरेण सृष्ट्युपयोगित्वान्निरूपिता ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्वल्लभाचार्यकृतसुबोधिन्यां चतुर्दशाध्यायविवरणम् ॥ १४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अन्तरन्तः करणे ध्यानेन बहिः साक्षान्नेत्राभ्यां च पौत्रः प्रह्लादो द्रष्टा द्रक्ष्यति । श्रीरेव ललना कान्ता तस्या ललामं मण्डनरूपम् ॥ ४९ ॥

भृशममोदत हन्त मद्विकर्म्माऽपि सत्कर्म्मशिरोमणिदुर्ल्लभं फलं धास्यतीत्यहो मम भाग्यमित्याननन्द । महामनाः पुत्रयोर्मे सत्कीर्तिसद्गती भविष्यत इति सोत्साहचित्ता ॥ ५० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । तृतीये चतुर्दशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रीरेव ललना अतिसुन्दरी तस्याः ललामं मण्डनम् ॥ ४९ ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे चतुर्दशाध्यायार्थप्रकाशः ॥ १४ ॥

---

भाषाटीका ।

तेरा नाती. अपने भक्त पुरुषों के इच्छानुसार रूपों को धारण करने वाले महालक्ष्मी के भूषण रूप प्रकाशमान कुण्डलों से मुख की सुन्दर शोभा वाले निर्मल कमल लोचन ऐसे भगमान् को अन्तःकरण में और सर्वत्र भी निरन्तर देखैगा ॥ ४९ ॥

मैत्रेय जी बोले अपने पौत्र को भागवत सुनकर अपने पुत्रों का वध श्री कृष्ण के हाथ से होना सुनकर दिति प्रसन्न मनसे अत्यन्त आनन्द को प्राप्त हुई ॥ ५० ॥

इति श्रीभागवत तृतीयस्कन्ध चौदहवां अध्याय का भाषानुवाद लक्ष्मणाचार्यकृत समाप्त ॥ १४ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे चतुर्दशोऽध्यायः ॥ १४ ॥



## ॥ पञ्चदशोऽध्यायः ॥

——::*::——

प्राजापत्यं तु तत्तेजः परतेजोहनं दितिः ।
दधार वर्षाणि शतं शङ्कमाना सुरार्दनात् ॥ १ ॥
लोके तेन (१) हतालोके लोकपाला हतौजसः ।
न्यवेदयन्विश्वसृजे ध्वान्तव्यतिकरं दिशाम् ॥ २ ॥

॥ देवाऊचुः ॥

तम एतद्विभो ! वेत्थ संविग्ना यद्वयं भृशम् ।
नह्यव्यक्तं भगवतः कालेनास्पृष्टवर्त्मनः ॥ ३ ॥
देवदेव ! जगद्धातर्लोकनाथशिखामणे ! ।
परेषामपरेषां त्वं भूतानामसि भाववित् ॥ ४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

हतप्रभैः सुरैः पृष्टः प्राह पञ्चदशे विधिः ।
तद्बीजं विप्रशापादिवैकुण्ठे विष्णुभृत्ययोः ॥ १ ॥

तदेवं देवानां ब्रह्मणश्च संवादप्रस्तावमुक्त्वेदानीं तं संवादं वक्तुमाह । प्राजापत्यं काश्यपं तेजो वीर्यं परेषां तेजो हन्तीति तथा आर्षः स्वपुत्राभ्यां करिष्यते यत्सुराणामर्दनं पीडनं तस्माच्छङ्कमाना ॥ १ ॥

तेन गर्भतेजसा हतालोके निरस्तसूर्यादिप्रकाशे हतौजसो हतप्रभावाः ध्वान्तेन व्यतिकरं संकरम् ॥ २ ॥

वेत्थ जानासि किंविचारयसि यद्यतो वयं संविग्ना भीताः अव्यक्तमज्ञातम् न स्पृष्टं वर्त्म ज्ञानप्रचारो यस्य ॥ ३ ॥

ब्रह्माणं परमेश्वरत्वेन स्तुवन्तः प्रार्थयन्ते देवदेवेति सप्तभिः लोकनाथानां शिखामणे ! भावविदभिप्रायज्ञोऽसि केनाभिप्रायेण दितेर्गर्भो वर्धत इति जानासीत्यर्थः ॥ ४ ॥

———

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

तद्बीजं तमसा हतप्रभत्वस्यबीजं परतेजोघ्नमिति वक्तव्ये तेजोहनमित्यार्षः पचाद्यच्त्वेतु नार्षतेति यत्स्पर्द्धया व्याख्यातं तदमनुष्यकर्तृकेचेति विशेषशास्त्रविरुद्धत्वान्नादरणीयम् ॥ १ ॥

व्यतिकरशब्दोऽव्यतिसङ्गवाचकः व्यतिसङ्गो हिपरस्परसङ्गलक्षणः सङ्कर एव इति तथा व्याख्यातम् दिशां ध्वान्तेन व्याप्तिमिति यावत् "व्यतिकरस्समाख्यातो व्यसनव्यतिसङ्गयोः" इति विश्वः॥२॥

यद्यतस्तमसो वयं संविग्नाः प्रभीता एतत्तम इतियोज्यम् न स्पृष्टंन नष्टम् ॥ ३ ॥ ४ ॥

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

एवं देवर्षि ब्रह्मसम्वादरूपेतिहासोपोद्धातरूपमितिहासान्तरं प्रस्तुत्येदानीं ब्रह्मनारदसम्वादं प्रस्तोतुं तावद्देवानां ब्रह्मणः सन्निधावुपसत्तिहेतु वदन्तं वृत्तमितिहासं वर्त्तिष्यमाणेतिहासेन सङ्गमयति मैत्रेयः । प्राजापत्यमिति । परेषां तेजो हन्तीति तथा प्राजापत्यं कश्यपसम्बन्धि तेजो वीर्यं दितिरसुरार्द्दनाच्छङ्कमाना इन्द्रः कदाचित्किं कुर्यादिति शङ्कमाना सती शतं वर्षाणि दधार गर्भं धृतवतीत्यर्थः ॥ १ ॥

तेन गर्भतेजसा हतालोके निरस्तसूर्यादिप्रकाशे हतौजसो हतप्रभाः लोकपाला दिशां ध्वान्तेनान्धतमसेन व्यतिकरं व्यत्यासम् इयं पूर्वा दिगिति पश्चिमेति ज्ञानाभावं विश्वसृजे चतुर्मुखाय न्यवेदयन् ब्रह्मसमीपमागत्य विज्ञापयामासुरित्यर्थः ॥ २ ॥

निवेदनमेवाह । त्वमिति । हेविभो ! ब्रह्मन् ! त्वमेवैतद्वेत्थ जानासि किन्तदित्यत्राहुः । यद्यस्माद्वयं भृशं सम्विग्नाः भीताः तत्त्वमेवेत्यर्थः अहमपि त्वादृश एवातः कथं जानामीत्याशङ्कायां परमात्मनः आवेशावतारत्वात्त्वं सर्वं जानासीत्यभिप्रेत्याहुः । नहीति । कालेनास्पृष्टं वर्त्म ज्ञानं यस्य कालवशादसङ्कुचितज्ञानिनो भगवतः "सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते,, इत्युक्तेः ते त्वयाव्यक्तमविदितं भगवच्छरीरभुतस्य ते नह्यस्ति इत्यर्थः ॥ ३ ॥

एतदेव विशदयन्ति । हेदेवदेव ! देवानामिन्द्रादीनामपि देव हेजगद्धातः ! जगन्निर्मातः ! लोकनाथशिखामणे ! लोकनाथानां शिखामणे परेषामपरेषामस्मदपेक्षया पूर्वेषामर्वाचीनानां च भावविदभिप्रायज्ञोऽसि इति ॥ ४ ॥

(१). हतालोकइति विजयध्वजः ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

जयविजययोः शापमोक्षयोः प्रदानरूपसनकादिमहिम्नो वर्णनेन तेषां भगवत्समाधिसमुद्रेकसमुद्भूतमाहात्म्येन निरुपमचरितमहिमा हरिरिति निरूप्यतेऽस्मिन्नध्याये तत्रादौ दित्या पुनः किमकारीति विदुरस्य हार्दं प्रश्नं परिहरति । प्राजापत्यमिति । प्रजापतेः कश्यपस्येदमिति यथाविहितप्रत्ययः परेषां तेजस्विनां तेजो हन्ति हरतीति परतेजोहनम् असुरार्दनाद्देवेभ्यः शङ्कमाना ॥ १ ॥

किमतस्तत्राह । लोक इति । तेन गर्भेण लोके हतालोके अपहृतप्रकाशे सति तत्परिहारार्थं हतौजसो नष्टसामर्थ्याः इन्द्रादिलोकपालाः दिशां ध्वान्तव्यतिकरमन्धकारेण प्राप्तं व्यत्ययमुपद्रवमित्यर्थः ॥ २ ॥

यद्येन सम्विग्ना भ्रान्ता वयमेतत्तमो वेत्थ जानासि तत्र निमित्तं वदन्ति । नहीति । कालादिव्यवधानेनाज्ञानं स्यादित्यत उक्तं कालेनेति । अस्पृष्टमव्यवहितं ज्ञानवर्त्म यस्य स तथा तस्याप्रतिबद्धज्ञानमार्गस्येत्यर्थः ॥ ३ ॥

तदेव विवृणोति । देवदेवेति । परेषामुत्तमानामपरेषामधमानामतीतानागतानां वा भूतानां भावविद् हृदयज्ञोऽसीति यदतो व्यक्तं जानासीति भावः ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

शङ्कमानेति । गर्भे प्रसूते नूनमसुरार्दनो हनिष्यतीति । टीकायामपि इति तेजोघ्नमिति वक्तव्यं तेजोहनमिति प्रयोग आर्षः । "अमनुष्यकर्तृकेच„ इति तेजोघ्नमित्येव स्यात् ॥ १ ॥

ध्वान्तेन व्यतिकरमासङ्गम् ॥ २ ॥

अत्र देवा ऊचुरिति क्वचित् तम एतदित्यादिना परमेश्वराभेदेन ब्रह्माणं स्तुवन्ति ॥ ३ ॥

लोकपालेति पुण्यारण्यः ॥ ४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

"निरूप्यते पञ्चदशे क्रोधेन ज्ञाननाशनम् । बीजे जीवप्रवेशार्थं भक्तशापोऽनुवर्ण्यते । इतिहासप्रवृत्त्यर्थं सङ्गतिश्चापि रूप्यते। ज्ञानमूलस्य सत्त्वस्य कार्यनाशकता पुनः । वैकुण्ठे पक्षिवृक्षाणां स्त्रीणां चापि न मत्सरः । सर्वदोषविहीनत्वात्तत्र दोषो हरीच्छया। अतः सृष्टिप्रसिद्ध्यर्थं वैकुण्ठस्य च वर्णनम्"।एवं पूर्वाध्याये दितेर्गर्भाधानमुक्तं तदग्रिमं वृत्तान्तमाह । प्राजापत्यमिति । प्रजापतिः कश्यपः तस्य तेजो बीजमेव बीजस्य ब्रह्मत्वात् अत एव परतेजोहनं ब्रह्मतेजसाह्यन्ये हन्यन्त एव इममेवार्थं हिशब्द आह तस्य मारकत्वमुत्पत्तौ कालादिधर्मजन्यमिति सूचयितुं तदित्युक्तं शतं मानुषवर्षाणि गर्भं दधार देववर्षाणि वा तौ चेत् गर्भे पुष्टौ भवतः तदा देवैर्मारयितुमशक्यौ देवान्वा वृथा मारयेतां दितिपदेन च तस्याः स्वाभाविकं सामर्थ्यं सूचितं तस्याः सहजस्वसामर्थ्यानुसन्धानाद्भयं नास्त्येव ब्रह्मबीजत्वाच्च न देवानां वृथा मारणं तथापि भर्तृवाक्यात् शङ्का जातेत्याह । शङ्कमानेति ॥ १ ॥

तदा तस्मिन् बीजे द्विधाभूते जयविजययोः प्रवेशो जात इति ब्राह्मं वैष्णवं च तेजः एकीभूतं सूर्यादितेजः असहमानं हततेजसः एव दूरीचकार । लोकं तेनेति । तदा तेन बीजेन हतालोके सति लोकपाला अपि कालाधीनाः कालतेजसि गते स्वयमपि हतौजसो जाताः ते हीन्द्रादयो बलकार्यरूपाः अतस्तेषामोज एव गतं तदा बलप्रकाशयोः नाशात्तन्निदानं ज्ञातुकामाः ब्रह्मलोकं गताः मेरुपृष्ठं वा विश्वसृजे स्ववृत्तान्तं न्यवेदयन् स्वस्य ओजसः अभावः अप्रतिष्ठाहेतुत्वाच्च निवेदितः किन्तु ध्वान्तमन्धकारं तेन दिगव्युत्पत्तिं च न्यवेदयन् ॥ २ ॥

तत्र मूलं तम एवेति तत्र निदानं पृच्छन्ति । तम एतदिति "देवा भीता ब्रह्मणैव क्रियते दैत्यवर्द्धनम्।अतो देवविनाशः स्यादिति तेनैव मारणम्।ज्ञानं समर्थितं तस्य स्वदोषाभाव एव च।विद्यमानेऽपि तच्छान्तिस्तस्य भक्तकृपा तथा । भक्तानामभयं तस्मात्सेवकाश्च वयं भृशम्।अतोऽस्मासु कृपा कार्या दैत्योत्पत्तिर्हि जायते एवमष्टविधं वाक्यं ब्रह्माणं प्रति दैविकम् । तत्र प्रथमं महत्त्वात् प्रभुमप्यशक्ताः तमसो ज्ञानं सम्भावयन्ति हे विभो ! सर्वज्ञत्वादिसमर्थ ! एतत्तमः सर्वथा वेत्थ जानाति अतोऽस्मान् ज्ञापयेति भावः ज्ञापने हेतुः यद्यस्मात्तमसः भृशं वयं सम्विग्नाः अन्धकारात् ओजसः अभावात् तव त्वज्ञानं न भवति यद्व्यक्तं भगवतो रूपं तद् त्वां प्रति न अतो भगवतो वासुदेवगुणावतारस्य तव नास्त्यव्यक्तं किञ्च अव्यक्ते हेतुरपि नास्ति कालेन हि सर्वमव्यक्ते प्रविलाप्यते कालेन न स्पृष्टं वर्त्म यस्य तादृशः ।३।

एवं ज्ञानं तस्य समर्थयित्वा स्वदोषाभावं निरूपयन्तः तस्य सर्वहृदयाभिज्ञत्वमाहुः । देवदेवेति । अन्येषां भवाश्च पूज्यः तत्तद्धृदयमप्रविष्टः कदाचिन्न जानास्यपि वयं तु देवाः अस्माकं तु त्वमेवोपास्य इति सम्बोधनम् । किञ्च । वयं निष्कपटा एव त्वयोत्पादिताः शुद्धसत्त्वेन अतोऽपि जानासीति सम्बोधनान्तरमाहुः । जगद्धातरिति । जगतां त्वमेव विधाता धारयिता वा तथापि हृदयज्ञानमुचितमेव । किञ्च । स्वामी हि सेवकस्य हृदयं जानाति । भवांस्तु सर्वेषामेव लोकानां ये नाथा इन्द्रादयः तेषां शिखामणिः । लोकनाथा एव स्वलोकस्याभिप्रायं जानन्ति । भवांस्तु तेषामपि तत्रापि शिखामणिरिति तेषामुपरि तत्प्रकाशकत्वेन तत्कर्मसाक्षित्वेन च वर्तमानः अतः प्रभुत्वेन जनकत्वेन प्रकाशकत्वेन च परेषामस्मदाद्यपेक्षयोत्कृष्टानामपरेषां च हीनानां चकारादस्माकं च । सर्वेषामेव भूतानां त्वं भावविदसि अतोऽस्मासु न किञ्चित्तिरोहितम् ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सुरैः पृष्टो विधिस्तत्त्वं वक्तुं दितितनूजयोः ।
शापं पञ्चदशे विष्णुपार्षदौविप्रतोऽभ्यधात् ॥ ० ॥

ततो दितिर्गर्भस्य का वार्तेत्यपेक्षायामाह । प्राजापत्यं प्रजापतेः कश्यपस्य सम्बन्धि । परेषां तेजो हन्तीति तथा तत् पश्चाच्च सुराणामर्दनं पीडनं तस्मात् शङ्कमाना असुरार्दनाद्धिप्याहिति वा तद्धस्ततो मृत्युश्रवणात् ॥ १ ॥

तेन गर्भतेजसा हतालोके इति च पाठः । व्यतिकरो व्याप्तिम् ॥ २ ॥

वेत्थ जानास्येव यतो भगवनः सर्वज्ञस्य तव कालेनास्पृष्टज्ञानमार्गस्य ॥ ३ ॥

लोकनाथानामिन्द्रादीनां शिखामणे ! ॥ ४ ॥

---

नमो विज्ञानवीर्याय माययेदमुपेयुषे।
गृहीतगुणभेदाय नमस्ते व्यक्तयोनये ॥ ५ ॥
ये त्वानन्येन भावेन भावयन्त्यात्मभावनम्।
आत्मनि प्रोतभुवनं परं सदसदात्मकम् ॥ ६ ॥
तेषां सुपक्वयोगानां जितश्वासेन्द्रियात्मनाम्।
लब्धयुष्मत्प्रसादानां न कुतश्चित्पराभवः ॥ ७ ॥
यस्य वाचा प्रजाः सर्वा गावस्तन्त्येव यन्त्रिताः।
हरन्ति बलिमायत्तास्तस्मै मुख्याय ते नमः ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अयेन प्राजापत्यं कश्यपाख्यप्रजापतिसम्बन्धि तेजो वीर्यं परतेजोहनं परशौर्य्यध्नम् उत्पन्नौ सुरपीडनं करिष्यत इत्येवं शङ्कमाना दधार ॥ १ ॥

तेन प्राजापत्येन तेजसा हतालोके हतप्रभे ध्वान्तेन प्रभाभावेन व्यतिकरं मिश्रीभावात् ॥ २ ॥

ब्रह्माणि भगवद्दृष्टिं कुर्वन्तो देवाऊचुस्तम इत्याद्यष्टभिः। हे विभो! त्वं वेत्थ जानासि ज्ञानावरणस्य तु का कथा न स्पृष्टं वर्त्म यस्य तस्य अव्यक्तमज्ञातम् ॥ ३ ॥

भाववित् अभिप्रायवित् ॥ ४ ॥

---

भाषाटीका।

मैत्रेयजी बोले कश्यपजी का वह जो वीर्य दूसरे तेज को नाश करनेवाला है तिसको देवतों के दुःख होने के शंका से दितिजी ने सौ वर्ष पर्यंत गर्भही के भीतर रखा ॥ १ ॥

गर्भ में रहने वाले उस तेजके मारे सब जगत् का तेज नष्ट होगया भ्रष्टतेजवाले सब लोकपालों ने दिशों का अन्धेरा होना ब्रह्माजी से निवेदन किया ॥ २ ॥

देवता कहने लगे हे विभो! जिससे हम लोग बडे घवडाते हैं इस अन्धकार को आप जानते होंगे क्योंकि आप भगवान् हो काल से आपका ज्ञान नहीं नष्ट होता है ॥ ३ ॥

हे देवों के देव हे जगत् के विधाता हे लोकनाथों के शिखामणि पूर्वापर सब भूतों के गति को आप जानते हो ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

विज्ञानं वीर्यं बलं यस्य इदं ब्रह्मदेहमुपेयुषे प्राप्तवते गृहीतो गुणभेदो रजोगुणो येन व्यक्तस्य प्रपञ्चस्य योनये कारणाय न व्यक्ता केनापि प्रमाणेन विज्ञाता योनिर्यस्येति वा ॥ ५ ॥

सकामतया प्रतिक्षणं दुःखमनुभवन्तो निष्कामभक्तान् स्तुवन्तः आहुर्द्वाभ्याम्।ये त्वा त्वामनन्येन निष्कामेन भावेन भक्त्या ध्यायन्ति आत्मनो जीवान्भावयतीति तथा स्वस्मिन्प्रोतानि ग्रथितानि भुवनानि येन चेतनाचेतनप्रपञ्चकारणमित्यर्थः तत्र हेतुः सदसदात्मकं कार्यकारणरूपं वस्तुतस्ताभ्यां परम् ॥ ६ ॥

जितः श्वास इन्द्रियाण्यात्मा मनश्च यैः अतः सुपक्वयोगाः अत एव प्राप्तो युष्मत्प्रसादो यैस्तेषाम् ॥ ७ ॥

अन्ये तु नित्यं कर्मक्लेशिन इत्याहुः। यस्येति। तन्त्या दामन्या आयत्ता अधीनाः मुख्याय नियन्त्रे प्राणरूपायेति वा तथा च श्रुतिः "तस्य वाक् तन्तिर्नामानि दामानि" इत्यादिः ॥ ८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी।

विज्ञानं चिच्छक्तिः ज्ञानविज्ञाननिधये इत्यत्र तथाव्याख्यास्यमानत्वात् गृहीतोऽधिष्ठितः अत्र नञ् प्रश्लेषपक्षे निष्कारणायेत्यर्थः ॥ ५ ॥

येत्वेति। युग्मकम् भावयति ॥ उत्पादयति विशेषणद्वयस्य समुदायेन फलितव्याख्यानादित्यर्थं इत्युक्तं तत्र कारणत्वे मायया कार्य्यकारणरूपं वस्तुतः स्वरूपशक्त्या ताभ्यां कार्य्यकारणाभ्यां परङ्कार्य्यमाकाशादि कारणं महदादि ॥ ६ ॥ ७ ॥

लोकेऽपि नियन्तृत्वं दृश्यते तद्व्यवच्छेदार्थं मुख्यायेति नियन्त्रे इति विशेष्यमध्याहृत्य व्याख्यातम् पक्षान्तरे मुख्यशब्दस्य प्राणपरत्वे "प्राणो वै मुख्य" इति श्रुतिः प्रमाणं ज्ञेयम् वेदलक्षणवाक् तन्तिर्दीर्घरज्जुः नामानि ब्राह्मणादिशब्दाः दामानि गलबन्धनरज्जवः ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका।

एवं परमात्मावेशावतारत्वेन ब्रह्मशरीरकपरमात्मदृष्ट्या तस्य सर्वज्ञतामभिधाय पुनस्तद्दृष्ट्या तद्धर्मविशिष्टत्वेन नमस्कुर्वन्ति। नम इति। ते तुभ्यं नमः कथंभूताय ते व्यक्तयोनये व्यक्तं कार्यावस्थं जगत्तस्य योनये कारणाय नाहं व्यक्तयोनिः किन्तु परमात्मेत्यत्राहुः। गृहीतगुणभेदाय गुणानां भेदः रजोगुणो यस्य सगुणभेदः ब्रह्मा गृहीतः शरीरत्वेन गुणभेदः रजोगुणप्रधानः ब्रह्मा येन तस्मै रजोगुणप्रधानब्रह्मशरीरकपरमात्मा यो जगत्स्रष्टा स त्वमेवेत्यर्थः नेदं त्वद्रूपेणावस्थानं परमात्मनः कर्मायत्तमित्याह। मायया संकल्परूपज्ञानेनैव इदं ब्रह्माख्यं शरीरमुपेयुषे गताय एतदुपपादकत्वेन विशिनष्टि। विज्ञानवीर्यायेति। विज्ञानमेव वीर्यं बलं यस्य तस्मै ॥ ५ ॥

एवं विधस्य तव प्रजानां त्वन्निर्देशवर्त्तिनामस्माकमन्यैः परिभवोऽनुचित इति सूचयन्तो नमस्कुर्वन्ति त्रिभिः। ये त्वेति। आत्मनो जीवान् देवमनुष्यादिरूपेण भावयतीत्यात्मभावनस्तमात्मनि स्वात्मन्येव प्रोतं सन्दर्भितं भुवनं येन तमत एव सदसदात्मकं कार्यकारणरूपं वस्तुतस्ताभ्यां परं विलक्षणं त्वा-

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

येऽनन्येनाव्यभिचारेण भावेन भक्त्या भावयन्त्युपासते ॥ ६ ॥

तेषां कथंभूतानां जितश्वासेन्द्रियात्मनां जिताः श्वासाः प्राणा इन्द्रियाणि ज्ञानकर्मोभयेन्द्रियाण्यात्मान्तःकरणं च यैस्तेषाम् अत एव सुपक्वः परिपक्वः योगः भक्तियोगो येषां तेषामतएव लब्धः युष्मत्प्रसादः भवदनुग्रहः यैस्तेषां कुतश्चिदपि पराभवो नास्ति ॥ ७ ॥

यस्य तव वाचा वेदात्मिकया सर्वाः प्रजास्तन्त्या दामन्या गाव इव यन्त्रिताः बद्धाः आयत्तास्त्वदधीनाः सत्यः बलिं त्वत्पूजां हरन्ति कुर्वन्ति तस्मै मुख्याय श्रेष्ठाय ते नमः अनेन स्वसंबन्धिनां स्वनिर्देशवर्तिनामन्यैः परिभवोऽनुचित इति सूचितं भवति ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सर्वस्मात्प्रणतिरेव प्रसादजननीति मत्वा तत्पूर्वकं स्तुवन्ति । नम इति । विज्ञानवीर्यायाप्रतिबद्धज्ञानाय तदेव विशदयन्ति । माययेति । मायया श्रीनारायणानुगृहीतप्रज्ञाबलेन इदं विश्वमुपेयुषे ज्ञातवते रजआदिगुणेन ज्ञानप्रतिबन्धः सम्भाव्यत इत्यत उक्तं गृहीतेति हर्याज्ञया उपद्रावकत्वेन गृहीतरजआदिगुणविशेषाय इतोऽपि ज्ञानवीर्यं तवैवेति भावेन स्तुवन्ति । नमस्त इति । व्यक्तं ब्रह्माण्डं तस्य योनये कारणाय सृज्येषु वस्तुषु ब्रह्माण्डसर्जनस्यातिबहुलज्ञानसापेक्षत्वात्तस्य स्रष्टुर्ब्रह्मणोऽतिशयितज्ञानमस्तीति किमवक्तव्यमिति निरूपितं सर्वेषां ज्ञानादिगुणप्रतिबन्धकारजआदिगुणाः कथमस्य न विरोधका इरिप्रसादादिति चेत्तत्प्रसादसम्भवोऽपि कथमित्यतआह । अव्यक्तेति । अव्यक्तं ब्रह्म तद्योनिः कारणं यस्य स तथा तस्मै "यो ब्रह्माणं विदधाति„ इति श्रुतेः तेने ब्रह्म हृदा य आदिकवय इति च अतः स्वपुत्रत्वेन सर्वानुग्रहपात्रत्वान्न तस्य सत्त्वादिगुणाः परिपन्थिन इति ॥ ५ ॥

यस्य यदभीष्टं तत्प्राप्तये तेन तथानुष्ठेयमिति मन्वाना दितिगर्भनिमित्ततिमिरप्राप्तपराभवपरिहरणाय तादृशगुणविशिष्टत्वेन स्तुवन्तीत्याह । य इति । ये पुरुषा अनन्यभावेन हरेरन्यः स्वतन्त्रो नास्तीति ज्ञानदृढीकृतभक्त्या त्वां भावयन्ति निरन्तरोपासनया वशीकुर्वन्ति तेषां पुंसां न कुतश्चित्पराभव इत्यन्वयः पराभवकर्तॄणां त्वत्सृष्टजीवान्तर्गतत्वेन त्वन्नियतत्वान्न ते तावकान् द्रुह्यन्तीति भावेनोक्तमात्मभावनमिति । आत्मनोजीवान् भावयत्युत्पादयतीत्यात्मभावनस्तम् आत्मनः परमात्मनो भावनया निरन्तरोपासनया प्रवृद्धतदनुग्रहस्य तवासाध्यं नास्तीत्यतो वात्मभावनमिति आत्मनो भावनं यस्य स तथा तं न केवलं जीवजातं त्वदुत्पन्नत्वेन त्वदधीनं किन्तु चेतनाचेतनात्मकं सर्वमपि त्वया धृतमित्याहुरित्याह । आत्मनीति । त्वमपि जीवेष्वेक इति मन्दाशङ्कां निवारयति । परमिति । परं सर्वोत्तमम् अनेन जीवोत्पादकत्वेऽनुपपत्तिः परिहृता महदादिकार्यकारणव्यापित्वेन सर्वोत्तमत्वं युक्तमिति भावेनोक्तम् । सदसदात्मकमिति । न केवलं भारधरदेवदत्तवज्जगद्धारकत्वमस्य किन्तु बहिर्व्याप्तत्वेनापीत्यतो वोक्तम् । सदसदात्मकमिति । ततो विशेषं प्रतिपद्येत्यादिद्वितीये सर्वव्याप्तिमत्त्वमुक्तं मुक्तामुक्तप्रपञ्चस्य सुखादिदातृत्वादुक्तं युक्तमित्यतो वेत्युक्तम् । सदसदात्मकमिति । सन्त आत्मानो मुक्ता असन्त आत्मानोऽमुक्ता येषामुभयेषामपि कं सुखं यस्मात्तत्तथोक्तम् ॥ ६ ॥

विशिष्टध्यानमनस एवैवं निश्चफलवत्त्वं न तु तन्मात्रस्य तन्मात्रेण योगादीनां परिपाकाभावेन युष्मत्प्रसादानुत्पत्तिरिति भावेन तान् विशिंषन्तीत्याह । सुव्यक्तेति । अष्टाङ्गलक्षणो योगः ॥ ७ ॥

विधिनिषेधलक्षणया देववाचा प्रवर्तमानाः प्रजाः स्वस्वकर्मानुसारेण सुखादिकमश्नन्ति तत्रायं कुत्रोपयुज्यत इत्याशङ्क्य तया त्वदीयया नियतास्तदुक्तप्रकारेण त्वत्पूजां कुर्वन्ति तदनुसारेण भवान्फलं प्रयच्छतीत्यतस्त्वं सर्वोत्तम इत्याहुरित्याह । यस्येति । यस्य तव तन्त्या गोबन्धनोपरचितया दीर्घया रज्ज्वा यन्त्रिता बद्धाः यन्त्रिबन्धन इति धातुः हरन्ति नयन्ति मुख्यात्मने सर्वेभ्यो जीवेभ्यो मुख्याय ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नम इत्यादिना परमेश्वराभेदेन स्तुतिः ॥ ५ ॥

ये त्वेति । युग्मकम् । अनन्यभक्त्या लब्धयुष्मत्प्रसादः ततः सुनिर्व्यूढभक्तियोगत्वेन स्वतएव श्वासादि जय इति क्रमः ॥ ६—८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं स्वदोषाभावमुक्त्वा दोषे वा विद्यमाने तत्क्षमां कारयन्तः नमस्यन्ति । नमो विज्ञानवीर्यायेति । ननु भगवानेव नमस्करणीयः सर्वेषां स्वामित्वात् । गुरुर्वा तन्मार्गोपदेष्टृत्वात् गौणः । अहं नोभयरूप इति चेत्तत्राह । नमो विज्ञानवीर्यायेति । विज्ञानं ब्रह्मानुभवः वीर्यं पराक्रमो यस्य लौकिकक्रिया लौकिकज्ञानसहिता सर्वेषां पराक्रमहेतुर्भवति ततोऽपि केषामेव ऋषीणां वैदिकी क्रिया पराक्रमहेतुः । ततोऽपि ब्रह्मविदामेव तेजः सार्वज्ञ्यलक्षणः पराक्रमो ज्ञानेन सिद्ध्यति । तत्र साक्षात्कारेण विज्ञानेन भगवत एव यद्भवति तादृशं तवापि वर्तत इति स्वेच्छया सृष्ट्याध्यवसीयते । अतो भगवत्स्वरूपाभिज्ञत्वात् गुरुत्वेन नमनमुचितमेवेति भावः । ननु तादृशज्ञाने सम्पन्ने भगवत्सायुज्यमेव भवेत् कथमेवमधिकारः स्यादित्याशङ्क्याह । माययेति । इदं शरीरमुपेयुषे स्वीकृतवते या सृष्टिकरणभूता माया तस्याः कारणत्वनिर्वाहार्थं कर्त्रपेक्षायां सेवके विद्यमाने स्वामिनो व्यापृतिरनुचितेति भगवत्तुल्यताया जातत्वात् । जगद्व्यापारवर्जमयणाच्च तथैव मायया कृतमिदं तथैव कृत्वा स्वीकृतवानित्यर्थः ननु हरीणाति जीवानामकर्तृत्वं भगवतः कर्तृत्वं चेति तत्रास्ति कर्तृत्वे भगवत्त्वान्न शरीरापेक्षा जीवत्वे तु ज्ञानेऽपिशरीरे न कर्तृत्वं सेत्स्यतीत्याशङ्क्याह । गृहीतगुणभेदायेति । गृहीतः गुणैर्भेदो येन । नास्यसहजो भेदः । येनाकर्तृत्वं स्यात् नाप्यभेदः गुणैर्भेदस्य कृतत्वात् गुणा हि भेदरूपं भगवन्तं चिद्रूपे नियोजितवन्तः अतस्तत्कृतभेदस्य विद्यमानत्वात् तत्साम्यकृतं देहमवलंब्य जगत्कारणं शुकमेव । नन्वव्यक्तादीनि भूतानीति वाक्याद् अलौकिककर्तृत्वादेव कार्ये सिद्धे पुनः किं ब्रह्मकर्तृत्वेनेत्याशङ्क्याह । नमस्त इति । अव्यक्तस्यायं योनिः । अव्यक्तमस्मिन् जगत्प्रवेश्य स्वयं निवर्तते । अत एवास्य रजोगुणरूपत्वम् । यथा मातापित्रोर्जगज्जायते । तथास्मादव्यक्ताच्च जगज्जायत इति नास्यानुपयोगः । अतोमातृत्वात् पुनर्नमनम् ॥ ५ ॥

एवमपराधक्षमापनं कृत्वा तस्य भक्तकृपालुत्वं प्रतिपादयन्ति ये त्वानन्येनेति । अत्र वाक्यापरिसमाप्तिः कृपायाः सफलत्वप्राप्त्यर्था अतः कृपातो भक्तानामभयं वक्ष्यति अतः कृपाहेतुत्वे

स त्वं विधत्स्व शं भूमंस्तमसा लुप्तकर्मणाम्।
अदभ्रदयया दृष्ट्या आपन्नानर्हसीक्षितुम्॥ ९॥
एष देव! दितेर्गर्भ ओजः काश्यपमर्पितम्।
दिशस्तिमिरयन् सर्वा (१) वर्धतेऽग्निरिवैधसि॥ १०॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

प्रोच्यते ये सन्तः त्वां सर्वभावेन हृदये भावयन्ति तेषां लब्धयुष्मत्प्रसादानां न कुतश्चित्पराभव इति सम्बन्धः। ननु भगवत्येवानन्यभावः सम्भवति कथमन्यस्मिन् इत्याशङ्क्य अनन्यभावे हेतुचतुष्टयमाह। आत्मभावनमित्यादिपदैः आत्मानं भावकस्वरूपं भावकस्य देहादिकं भावयतीति तथा अनेन कर्तृत्वमात्मनि प्रोतं भुवनं येन अनेन समवायित्वं परं नियन्तारं स्थितौ सर्वप्रवर्त्तनादिकर्तारं सदसदात्मकमिति प्रलयकर्तारं सदसदात्मकः प्रलयः सतामसदात्मक इति मायात्मकत्वाद्वा प्रलयकर्त्तारं सर्वदा तस्य स्थित्यसंभवात् जगदात्मत्वेऽपि प्राप्तविवेकेन असत्येव पर्यवस्यति स्वकार्याणां सर्वेषामुत्पत्त्यादिकर्तृत्वात्तदधीनत्वात् स्वस्यापि सर्वभावेन भावनं सम्भवतीत्यर्थः एवं सर्वभावेन भावनं प्रसादहेतुः॥ ६॥

एवं कारणनिरूपणेन प्रसादं निरूप्य तेनाभयं निरूपयन्ति। तेषामिति। प्रसादेनाभयजनने अवान्तरव्यापारमाह। सुपक्वयोगानामिति। यस्य मुख्यात्मकत्वात् योगद्वारा सर्वसिद्धिहेतुत्वम्। अन्यथा भगवत इव स्वतन्त्रः स्यात्। सुष्ठु पक्वो योगो येषां सुपक्वो हि सर्वत्र नियोक्तुं शक्यते। योगपाके हेतुं वदन् व्यापारान्तरमाह। जितश्वासेन्द्रियात्मनामिति। जिताः श्वासाः इन्द्रियाणि आत्मान्तःकरणं च येषाम्। प्राणेन्द्रियान्तःकरणजयस्तदीयपदार्थानामस्पर्शहेतुत्वात् साक्षात्प्रीतिहेतुः वेदगर्भत्वेन ज्ञानहेतुत्वात् सकारणो योगो ऽवान्तरव्यापार इति नानेकव्यापारत्वमत एव लब्धो युष्मत्प्रसादो यैः। न कुतश्चित्कालादेरपि पराभवोऽभिभवः॥ ७॥

एवं भक्तेषु सफलां कृपामुक्त्वा तस्य कृपापरत्वं निरूप्य स्वस्मिन् कृपां प्रार्थयितुं स्वस्य सेवकत्वमाहुः। यस्य वाचेति। यस्य ब्रह्मणो वेदलक्षणया वाचा सर्वा एव प्रजाः कन्यका इव सर्वथासमर्थाः सेवकभूता अपि स्वकार्ये अतिनिर्बन्धेन नियोजिताः बलीवर्दाः तन्त्येव यन्त्रिताः ब्रह्मणो वाक् वेदलोकात्मिका। अत एव येषां वेदोऽपि न नियामकः तेषां लौकिकेन नियन्त्रणम्। अनेनैव सेवकत्वं निरूपितम्। सर्वेहि प्राणिनः फलार्थं कर्म कुर्वन्ति। तत्र निष्पन्ने फले अधिष्ठातृदेवताभिरुपस्थिते फले यः सारांशस्तेनैव स्वार्थं भिन्नं करोति। पश्चात्सारं प्रयच्छति तथा च सर्वकर्मणां यन्मुख्यं फलं सृष्टिः भगवदाज्ञा सुखं वा तद्ब्रह्मणे सिद्ध्यति धर्मतपस्यादिना यः असारः नान्तरीयकमलमूत्रादिरमणं तज्जीवेभ्यः प्रयच्छतीति एवं ज्ञात्वापि तथैव करणं यन्त्रणमत एव अधमा अपि गावः दृष्टान्तीक्रियन्ते एवं ज्ञात्वा ते निश्चिता इति एवं सर्वदा कार्यकर्तृषु असारभक्षकेषु कृपा उचिता किञ्च बलीवर्दापेक्षयापि एते उत्तमाः यदसारभूतमपि बलित्वेन तुभ्यं प्रयच्छन्ति अन्यथा तत्र मध्ये मारयेत अतो भवान् मुख्यः प्रवर्तकोऽपि भूत्वा प्रजासु श्रेष्ठः व्यङ्ग्येन ब्रह्मणोऽप्युपहास एक उक्तः आसन्यरूपत्वाद्वा बलिदानमाचिन्त्येन मुख्यतया निरूपणमासमन्तात् यत्ताः सावधानाः अनेन कदाचित्करणं व्यावर्त्तितम्॥ ८॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

इदं ब्रह्मदेहमुपेयुषे प्राप्तवते गुणभेदो रजः। अव्यक्तः परमेश्वर एव योनिः कारणं यस्य तस्मै॥ ५॥

तदपि अनन्येन परमेश्वरादभिन्नेन भावेन ये हिरण्यगर्भोपासकाः। यद्वा। अनन्येन निष्कामेण भावेन भक्त्या भावयन्ति ध्यायन्ति आत्मनो जीवान् भावयति सृजतीति तथा। समष्टित्वादात्मनि स्वस्मिन् प्रोतानि ग्रथितानि भुवनानि येन तम्। अतः सन्तोऽसन्तश्च आत्मानो देवासुराद्या जीवा यस्मिंस्तम्॥६-७॥

वाचा वेदलक्षणया। तथाच श्रुतिः। "तस्य वाक् तन्तिर्नामानि दामानि„ इत्यादि॥ ८॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

विज्ञानं विविधं ज्ञानं वीर्यं बलं यस्य तस्मै मायया कृपया इदं चतुर्मुखशरीरमुपेयुषे प्राप्तवते गृहीतो गुणभेदः अष्टृत्वलक्षणः रजोगुणो वा येन तस्मै व्यक्तयोनये विश्वकारणाय अकार प्रश्लेषे तु अदृष्ट कारणायेत्यर्थः॥ ५॥

आत्मभावनं स्वकारणं भावयन्ति ध्यायन्ति॥ ६-९॥

भाषाटीका।

विज्ञान बलवाले आपने से इस ब्रह्मा देहको प्राप्त भये गुण भेद रजोगुण को ग्रहण करनेवाले जगत् के कारण आपके अर्थ नमस्कार है॥ ५॥

कार्य कारण दोनों से परे वर्त्तमान अपने स्वरूप में सब भुवनों को रखने वाले सब जीवों के जन्म पालन करने वाले आपको जो लोग अनन्य भाव से ध्यान करते हैं॥ ६॥

उन लोगों के योग सिद्ध होजाते हैं प्राण इन्द्रिय मनका जीतना होजाता है आपकी कृपा पूर्ण होजाती है तिससे उनको किसी से भी पराभव की शङ्का नहीं होती है॥ ७॥

जिन आपकी वाणी में सब प्राणी रस्सी में बैल सरी के बंधे हैं आपके अधीन भेटदेते हैं तिस सर्व नियन्ता आपको नमस्कार है॥ ८॥

श्रीधरस्वामिकृतभावार्थदीपिका।

तमसा अहोरात्रविभागाभावेन लुप्तानि कर्माणि येषाम् आपन्नानापद्गतानस्मान्॥ ९॥

आपत्कारणमाहुः। एष गर्भः तस्य विशेषणम्। अर्पितं निक्षिप्तम्॥

(१) एधते इति वीरराघवपाठः सच श्रीमज्जीवगोस्वामि संमतः।

॥ मैत्रेयउवाच ॥

स प्रहस्य महाबाहो! भगवान् शब्दगोचरः ।
प्रत्याचष्टात्मभूर्देवान् प्रीणन् रुचिरया गिरा ॥ ११ ॥

॥ ब्रह्मोवाच ॥

मानसा मे सुता युष्मत्पूर्वजाः सनकादयः ।
चेरुर्विहायसा लोकान् लोकेषु विगतस्पृहाः ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

काश्यपमोजो वीर्यम् दिशस्तिमिरयन् तमो व्याप्ताः कुर्वन् ॥ १० ॥

दितेः कुचेष्टितं ज्ञात्वा प्रहस्य देवानां ये शब्दा विज्ञप्तिवाक्यानि तेषां गोचरो विषयभूतः प्रत्यभाषत ॥ ११ ॥

युष्मत्सकाशात्पूर्वं जाताः ॥ १२ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

तमसामित्यत्र लोकानामितिपाठस्स्वाम्यसम्मतः ॥ ९ ॥

तस्य गर्भस्य वीर्य्यन्तत्परिणामः एधते इति कचित्पाठः ॥ १० ॥

स देवैः पृष्टः हेमहाबाहो! जितकामशत्रुत्वात्त्वमेव महाबाहुर्नतु कश्यपादिरितिभावः ॥ ११ ॥

लोकानां कृतार्थीकरणाय चेरुर्यतो लोकेषु स्पृहाशून्याः १२।१३।

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

एवं नमस्कृत्य स्वाभीप्सितं प्रार्थयन्ते। सत्वमिति। हेभूमन्! स उक्तविधस्त्वं तमसाहोरात्रविभागाभाववेन लुप्तानि कर्माणि येषामस्माकं शं सुखं विधत्स्व कुरु आपन्नानापद्गताऽस्मान् अदभ्राअनल्पा दया यस्यास्तया दृष्ट्या ईक्षणेन ईक्षितुं द्रष्टुमर्हसि ॥ ९ ॥

ननु किमिदानीं भवतां व्यसनमुपस्थितमित्यत्राहुः। एष इति। हेदेव! दितेर्गर्भेऽर्पितं निहितं काश्यपं कश्यपसम्बन्ध्योजःवीर्यं सर्वा दिशस्तिमिरयन्नन्धीकुर्वन्नेधसि दारुनिचयेऽग्निरिवैधते वर्द्धते ॥ १० ॥

एवं देवैरुक्तो ब्रह्मा तान् प्राहेत्याह मुनिः। स इति। शब्दगोचरः वेदवेद्यः स भगवान् स्वभूर्ब्रह्मा प्रहस्य विहस्य हे महाबाहो विदुर! मधुरया गिरा प्रीणयंस्तर्पयन् देवान् प्रत्याचष्ट उक्तवान् ॥ ११ ॥

उक्तिमेवाह। मानसा इत्यारभ्याध्यायशेषेण मे मानसाः मनसः समुत्पन्नाः युष्मत्पूर्वजाः युष्मदपेक्षया पूर्वं जाताः सनकादयः लोकेषु विगता स्पृहा विषयाभिलाषो येषां ते तथोक्ता अपि लोकान्विहायसा नभोमार्गेण चेरुः सञ्चरितवन्तः ॥ १२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भवतां महता संरम्भेण स्तवनाभिप्रायः क इत्यतस्तमाहुरित्याह। सत्वमिति। स इति तच्छब्देन पूर्वोक्तवैशिष्ट्यंस्मारयन्ति दितिगर्भनिमित्ततिमिरेण लुप्तसन्ध्यादिकर्मणाम्। तदर्थमयमेवोपाय इति विज्ञापयन्तीत्याह। अदभ्रेति अदभ्रा पूर्णा दया यस्यां सा तथोक्ता तया दृष्ट्या ईक्षितुं द्रष्टुम् ॥ ९ ॥

किमिदानीं भयनिमित्तमिति तद्विज्ञापयन्तीत्याह। एष इति। काश्यपङ्कश्यपस्य विद्यमानं दित्यामर्पितमोजस्तेजः एष गर्भः सर्वा दिशस्तिमिरयन् अन्धंकारयन् लोकप्रदीपानां सूर्यविग्रहाणां तेजोऽवष्टम्भनं दिशामन्धकारित्वमतोऽस्य ते त्वया परिहारो द्रष्टव्य इति यावत् ॥ १० ॥

स्वप्रज्ञाधिगमं स्तुवतामेषामुत्तरं प्रतिजानीते ब्रह्मेति मैत्रेयो विदुरं वक्ति। स प्रहस्येति। शब्दगोचरो मिथो व्यवहारविषयः वेदवेद्यो वा प्रीणयन् प्रत्याचष्ट भवदुक्तस्योत्तरं वक्ष्यामीत्याह ॥ ११ ॥

स्वकवचनमध्ये तत्प्रश्नो माभूदिति मन्वान आदित एव वक्तुं प्रारभते। मानसा इति। मम मनसो जाताः अन्तरिक्षादिलोकान् किं प्रयोजनवन्त इत्यत आह। लोकेष्विति ॥ १२ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

गर्भनिदानमेव पृच्छामः। गर्भात्तमोजातमिति तु जानीम एवेत्याह। एष इति। एधते इति कचित् पाठः ॥ १० ॥

वृद्धो बालकान् प्रतीव प्रहस्य शब्दमात्रगोचर इति ब्रह्मणः साधारणगोचरत्वं व्यज्य महिमानं दर्शयति ॥ ११---१३ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं स्वस्य सेवकत्वमुपपाद्य कृपां प्रार्थयन्ति। सत्वमिति हे भूमन्! अधिककृपायां कृतायामपि न तव काचित् क्षतिरित्यर्थः अत एवास्मभ्यं शं प्रयच्छ कल्याणान्तरव्यावृत्त्यर्थं स्वाभिप्रेतमाहुः लुप्तकर्मणां लोकानामन्धकारेण सर्वकर्मरहितानां भुवनानां स्वामिन्निधनः आपन्नान् शरणागतान् अस्मानदभ्रदयया दृष्ट्या ईक्षितुमर्हसि इति कृपादर्शनव्यतिरेकेण तत्र विद्यमानमपि दैन्यादि न प्रकाशते। अतः कृपादृष्ट्या द्रष्टव्यमिति गूढोऽभिप्रायः साधारणलोकानां दीनत्वं दृष्ट्वा दयोत्पद्यते परं सा व्यर्था माभवत्वित्यदभ्रेति विशेषणम् ॥ ९ ॥

कस्मान्निमित्तात् कृपाविधेयेति शङ्कायां दैत्योत्पत्तिज्ञानं इति ततः अभयं कर्त्तव्यमित्यभिप्रायेणाहुः। एष देवेति। दितेः गर्भः काश्यपं तेनैवार्पितमोजः दूरात् दिशस्तिमिरयन् स्वभावतः एधसि काष्ठे अग्निरिव वर्द्धते इदानीं दितेर्गर्भः अनेन स्वभावतः क्रूरो भविष्यतीत्युक्तम् तत्रापि कश्यपस्य बीजं तदर्थ्योजो

त एकदा भगवतो वैकुण्ठस्यामलात्मनः ।
ययुर्वैकुण्ठनिलयं सर्वलोकनमस्कृतम् ॥ १३ ॥
वसन्ति यत्र पुरुषाः सर्वे वैकुण्ठमूर्तयः ।
येऽनिमित्तनिमित्तेन धर्मेणाराधयन् हरिम् ॥ १४ ॥
यत्र चाद्यः पुमानास्ते भगवान् शब्दगोचरः ।
सत्त्वं विष्टभ्य विरजं स्वानां नो मृडयन् वृषः ॥ १५ ॥
यत्र नैःश्रेयसं नाम वनं कामदुघैर्द्रुमैः ।
सर्वर्तुश्रीभिर्विभ्राजत्कैवल्यमिव मूर्तिमत् ॥ १६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तेनैव त्र अर्पितं समर्पितं दितेः स्थाने समर्तितमिति तत्र न कोऽपि प्रतीकारः कर्तुं शक्यः ॥ १० ॥

एवं महाभयेन देवानां वचनं श्रुत्वा तत्र निदानं हास्यरूपमिति तदस्मृत्वा तदवक्तव्यमिति वीजगर्भयोर्ज्ञातत्वात् तदतिरिक्तं हेत्वन्तरं वक्तुं कथामारभत इत्याह मैत्रेयः । स प्रहस्येति । महाबाहो इति विदुरसम्बोधनं शूरत्वेन कापि भयं न कर्त्तव्यमिति ज्ञापनार्थं भगवानिति तज्ज्ञाने हेतुः प्रतीकाराकरणे च शब्दगोचर इति अलौकिकः वेदैकसमधिगम्यः आधिदैविको ब्रह्मा तत्राविष्टो वदतीति ज्ञापितम् अन्यस्य भगवत्सेवकाद्यपकर्षः वक्तुमयुक्तः प्रत्याचष्ट प्रत्युत्तरं दत्तवान् ब्रह्मणा किञ्चित्कृतमितीयं शङ्का व्यावर्तिता भगवांस्तद्विधित्सतीत्यग्रे वक्ष्यति आत्मभूरिति तथा कथनं नापराधहेतुः मानसेत्यादिवाक्येभ्यः अन्ययैव रुचिरया गिरा तेषां यथा सुखं भवति तथा प्रीणन् प्रीतिं जनयन् ॥ ११ ॥

शापादागतजयविजययोः निस्तेजसोः तेजसा एतज्जातमिति वक्तुं शापार्थमुपाख्यानमारभते । मानसा इत्यध्यायद्वयेन । प्रसंगात्तेषां वैकुण्ठगमनमिति वक्तुं स्वभावतस्तेषां परिभ्रमणमाह । मानसाः मे सुता इति । भगवता मनसि कृतं ते कृतवन्त इति ज्ञापयति । मत्सुता इति सृष्टिहेतुत्वमुक्तम् । युष्मत्पूर्वजा इति भवतामज्ञाने हेतुः । देवाः पश्चादुत्पन्नाः । नत्वेते काश्यपाः तस्मिन् कल्पे तथैवोत्पत्तिः । देवानां शुद्धसात्त्विकत्वात् । ततः पूर्वजा गुणातीताः । अनेन स्वस्य दोषो नास्तीति सूचितम् । यथा मम पुत्राः तथा भगवतां ज्येष्ठा इति । सनकादय इति । तपोरूपत्वात् न कस्यापि प्रतीकारः शक्यः । विहायसा आकाशमार्गेण सामर्थ्यमप्रतिरोधः अमाभावश्च सूचितः । सर्वेष्वेव लोकेषु विगतस्पृहाः सन्तः चेरुः । गमनं कृतवन्तः लोकान् लोकान् वा प्रतिलोकोद्धारार्थमित्यर्थः लोकानित्यत्यन्तसंयोगे वा द्वितीया पुनर्लोकग्रहणं जनेषु प्रयोजनाभावार्थं तेषां पर्यटनं नित्यमिति ते परिभ्रमन्ति अतो भुवनानामेव कर्मत्वं नतु जनानाम् ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तमसा अहोरात्रविभागाभावेन । आपन्नान् अस्मान् । अदभ्रदयया अनल्पकृपया ॥ ९ ॥

ननु विशेषवार्त्ता ब्रूतेति तत्राहुः । काश्यपमोजो वीर्य्यमर्पितं सत् दितेर्गर्भः ॥ १० ॥

अहो अज्ञा मामेवं स्तुवन्ति एतद्विपत्तित्राणे कोऽहं वराक इतिवृद्धो वालान् प्रतीव प्रहस्य । शब्दा देवानां विज्ञप्तिव्याख्यानि तेषां गोचरः विषयः ॥ ११ ॥

एतद्विपत्कारणावर्तीं प्राचीनामद्भुतां कथां तावत् शृणुतेत्याह । मानसा इति ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अर्पितं निहितम् तिमिरयन् तमोव्याप्ताः कुर्वन् ॥ १० ॥
शब्दगोचरः चतुर्मुखादिशब्दार्थः ॥ ११—१३ ॥

---

भाषाटीका ।

हे भूमन् ! अन्धकार से हमारे सर्व रात दिनके कर्म नष्ट हो गये हैं अब हमारा कल्याण करो अत्यन्त कृपा वाली दृष्टि से हम शरणागतों को आप देखने योग्य हो ॥ ९ ॥

हे देव ! यह कश्यप जी का स्थापित किया तेज रूप जो दिति का गर्भ है सो सब दिशों में अन्धेरा करता हुआ काष्ठ में अग्नि सरीका बढता है ॥ १० ॥

मैत्रेयजी बोले हे महाबाहु विदुरजी शब्दों का विषय हुये भगवान् ब्रह्माजी आत्मभू हस करके मधुरवाणी से प्रसन्न करते हुये देवतों से बोले ॥ ११ ॥

ब्रह्माजी बोले हमारे मानस पुत्र तुह्मारे वडे भ्राता सनकादिक मुनि लोकों की इच्छा से रहित होकर भी लोकों में विचरते थे ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

वैकुण्ठाख्यं लोकं ययुः ॥ १३ ॥

तं वर्णयति । वसन्तीत्यादिद्वादभिः । वैकुण्ठस्य हरेरिव मूर्तिर्येषां ते निमित्तं फलं न निमित्तं प्रवर्तकं यस्मिन् निष्कामेन धर्मेणेत्यर्थः आराधयन्नाराधितवन्तः ॥ १४ ॥

यत्रेति । शब्दगोचरो वेदान्तैकवेद्यः विरजं सत्त्वमूर्तिं विष्टभ्य धृत्वा वृषो धर्ममूर्तिः स्वानां स्वान् ॥ १५ ॥

तत्रत्यं वनं विशिनष्टि । यत्रेति चतुर्भिः । सर्वेष्वप्यृतुषु श्रीःपुष्पादिसम्पद्येषां तैः ॥ १६ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

प्रथमनिमित्तशब्दः फलपरः द्वितीयतच्छब्दः प्रवर्त्तकत्वपरः वस्तुतस्तु निर्निमित्तोभगवानेव निमित्तं फलं यत्र निष्किंचनभागवतधर्म्मे स तथा तेन ॥ १४ ॥

प्राकृतस्य सत्त्वस्य सरजस्कत्वात् विरजमिति विशेषणेनाप्राकृतविशुद्धसत्त्वमूर्त्तिमवष्टभ्य चक्षुराश्रित्य पश्यतीतिवत् प्रकाश्येत्यर्थः मृडयन् सुखीकुर्वन्निति ॥ १५ ॥

कैवल्यैकप्रयोजनमित्यत्र कैवल्यशुद्धभक्तिपरत्वेन निर्णेष्यमाणत्वान्मूर्त्तिमद्भक्तिसुखमिव ॥ १६ ॥

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

ते सनकादयः एकदा एकास्मिन् कालेऽमलात्मनः शुद्धसत्त्वमयदिव्यमङ्गलविग्रहस्य वैकुण्ठस्याप्रतिहतैश्वर्यस्य भगवतः वैकुण्ठस्य सम्बन्धिनिलयं स्थानं प्रति कथंभूतं सर्वलोकैरर्वाचीनैर्लोकालोकवासिभिर्नमस्कृतं ययुर्गतवन्तः तत्र वैकुण्ठनिलयमिति विष्णुलोक उपरिस्थानमुच्यते नतु नित्यविभूतिः अष्टमस्कन्धे "वैकुण्ठः कल्पितो येन लोको लोकनमस्कृत" इति वक्ष्यमाणत्वात् ब्रह्मणापि समधिगम्यस्य परमाकाशप्रकृतियुक्तैर्गन्तुमशक्यत्वात् स्वचूडामणिमात्मधिष्ण्यमिति स्वर्गलोकचूडामणित्वेन वक्ष्यमाणत्वाच्च कैवल्यमिव मूर्तिमदिति वक्ष्यमाणत्वेन मुक्तप्राप्यभूमित्वाभावावगमाच्च वैकुण्ठशब्दवाच्यत्वं च विकुण्ठस्य भगवतः स्थानत्वादुपपन्नमिति विज्ञेयम् ॥ १३ ॥

तमेव वैकुण्ठं वर्णयति । वसन्तीत्यादिद्वादशभिः यत्र वैकुण्ठे अनिमित्तनिमित्तेन निमित्तं फलमनिमित्तेन निमित्तमप्रवर्त्तकं निमित्तं फलं यस्मिन्कामादिनिमित्तरहितेनेत्यर्थः धर्मेण हरिमाराधयन् आराधितवन्तः ये पुरुषा वसन्ति ते सर्वे वैकुण्ठस्य भगवतः मूर्तिराकारो येषां ते तथोक्ताः आराधयन् वसन्तीत्यनेन विष्णुलोकवासिनामपि भगवदुपासकत्वमुक्तं "धर्मध्रुवाद्यास्तिष्ठन्ति यत्र ते लोकसाक्षिण" इत्यादिनैकार्थ्यात् पूर्वमाराध्येहागत्य वसन्तीत्यर्थेऽपि न विरोधः नन्वकामेन धर्मेण भगवन्तमाराधयतां नित्यविभूतिरेव प्राप्या नत्वसावण्डान्तर्वर्तिवैकुण्ठलोकः सत्यं त एव कुतश्चित्प्रतिबन्धात्प्रथमं नित्यविभूतिमनवाप्येमं वैकुण्ठमागत्य तत्र भगवदनुभवेन निरस्तप्रतिबन्धाः कल्पान्ते ततो नित्यविभूतिं गमिष्यन्तीत्यतो न विरोधः अत्र यत्रेत्यादीनां यच्छब्दानां तद्विश्वगुर्वधिकृतमित्यत्रान्वयः ॥ १४ ॥

यत्र च वैकुण्ठे शब्दगोचरः शास्त्रैकप्रमाणकः भगवान् षाड्गुण्यपूर्णः आद्यः परमकारणभूतः वृषः श्रेष्ठः पुमान् परमपुरुषः विरजं रजोगुणेनाननुविद्धं सत्त्वं शुद्धसत्त्वमयं देहं विष्टभ्य धृत्वा स्वानां नः स्वकीयानस्मान्मृडयन्सुखयन्नास्ते ॥ १५ ॥

यत्र श्रीवैकुण्ठे निःश्रेयसं नाम निःश्रेयसाख्यं वनमस्ति कथम्भूतं सर्वर्तुश्रीभिः सर्वेषु ऋतुषु या श्रीः पुष्पादिसम्पत्सा येषां तैः कामदुघैरभीष्टानि वर्षद्भिर्द्रुमैर्विभ्राजद्विशेषेण भ्राजमानं मूर्तिमत्कैवल्यमिव स्थितम् ॥ १६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ततः किमत्राह । त इति । विकुण्ठाख्यं निलयं गृहं नितरां लीयतेऽस्मिन् सर्वमिति ॥ १३ ॥

शून्यागारत्वं निवारयति । वसन्तीति । ये नित्यमनिमित्तेन अः विष्णुर्निमित्तं यस्य सोऽनिमित्तः तेन विष्णवर्पणबुद्ध्या क्रियमाणेनेत्यर्थः धर्मेण हरिमाराधयंस्ते यत्र वसन्तीत्यन्वयः वैकुण्ठवन्मूर्तिर्येषां ते तथोक्ताः सारूप्यभाज इत्यर्थः ॥ १४ ॥

यत्र लोके वृषः श्रेष्ठ आद्यः सर्वैरुपजीव्यो भगवान् स्वैर्भर्गैर्मूर्तिमद्भिरुपेतः शब्दगोचरोऽनन्तानां मूर्तिधराणां वेदानां विषयः पुमान् नारायणो विरजं दूरीकृतरजोगुणं सत्त्वं बलज्ञानसमाहारात्मत्वमवष्टभ्य स्वानां नो यदस्ति तत्सर्वं मृडयन् रक्षन् आस्त इत्यन्वयः ॥ १५ ॥

कैवल्यं ब्रह्मकैवल्यममृतमक्षरं ब्रह्मेत्यभिधानं ज्ञानपुष्पसाध्यत्वान्नैःश्रेयसम् ॥ १६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वैकुण्ठस्येव नित्यानन्दरूपा मूर्तिर्येषां ते यत्र सन्ति । तथा न विद्यते निमित्तं कारणं यस्य स श्रीभगवानेव निमित्तं फलं यत्र तेन धर्मेण भागवताख्येन ये च हरिमाराधयन् ते च यत्र वसन्तीत्यन्वयः । हरिपदानतिमात्रहृष्टैरिति यत्र व्रजन्तीत्यादि वक्ष्यमाणात् ॥ १४ ॥

सत्त्वं गुणं सान्निध्येनोपकृत्य वृषः सर्वानन्दवर्षी ॥ १५ ॥

कैवल्यं शुद्धं भक्तिसुखं तदेव मूर्तिमदिव जातम् । तदेकसम्पन्मयत्वात् ॥ १६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तेषां प्रसङ्गात् वैकुण्ठस्यगमनमाह । त एकदेति । भगवतो वैकुण्ठस्येति, साक्षात्पुराणपुरुषावतारो वैकुण्ठः तन्नाम्ना निर्मितो लोको वैकुण्ठ इत्युच्यते । स्त्रीप्रार्थनया स लोको निर्मित इति सोऽवतारः कामीति शङ्का स्यात् तन्निवृत्त्यर्थमाह । अमलात्मन इति । अमला आत्मानो यस्येति वा यथा सत्यादिष्वविद्यावन्तः तिष्ठन्ति न तथा तत्रेत्यर्थः । वैकुण्ठनिलयमिति नित्यमेवस्थानं कृत्रिमत्वेऽपि व्यापिवैकुण्ठ एव तत्र निविष्ट इति तन्मुख्यमेव वैकुण्ठम् ॥ अतः पुनः लोकाय कल्पतामिति न विरोधः । वेद्ये च सात्वतपतेश्चरणं प्रविष्ट इति च न विरुध्यते । प्रत्येष्यतामिति च ॥ वैकुण्ठः कल्पितो येनेति वाक्यात् कृत्रिमत्वं च सनकादीनां गमनाच्च लोकसाधारण्यप्रसंगाच्च । अतः कृत्रिमे सहजस्यावेशः लोकावतरो वा । वैकुण्ठस्यनिलयमिति पुनरुक्तं वैकुण्ठ एव निलय इति सर्वेषामगम्यमिति सूचयितुमाह । सर्वलोकनमस्कृतमिति । सर्वेषां जनानां नमस्करणीयं । सर्वभुवनोत्कृष्टं वा । अन्यत्र लोके विद्यमाना लोकमुपद्रावयन्ति । अत्रत्यास्तु नैवमिति सर्वे लोका एनं नमस्कुर्वन्ति ॥ १३ ॥

सामान्यतः तं लोकं वर्णयति चिदानन्दसन्दोहैः । तत्र प्रथमं तत्रत्याः चेतनाः आनन्दरूपा इति स्वरूपोत्कर्षमाह । वसन्ति यत्र पुरुषा इति । यत्र वैकुण्ठे पुरुषा इति स्त्रीणां न सारूप्यमुक्तिः वैष्णवपतिव्रतानां तु तैः सह गमनम् । तत्र च भगवद्गुणगानमिति तदग्रे वक्ष्यति । सर्वे इति । न तत्र वर्णादीनां प्रयोजकत्वम् । वैकुण्ठस्येव मूर्तिर्येषाम् । आनन्दाकार एव तेषां देहः आनन्द एव वा तथापि स्वानन्दस्य तथात्वात् न भगवत्तुल्यत्वम् । तत्र हेतुमाह । येऽनिमित्तनिमित्तेनेति । ये भागवताः अनिमित्तेन निष्कामेन धर्मेण हरिमाराधयन् आराधितवन्तः न निमित्तं

वैमानिकाः सललनाश्चरितानि यत्र गायन्ति लोकशमलक्षपणानि भर्तुः।
अन्तर्जलेऽनुविकसन्मधुमाधवीनां गन्धेन खण्डितधियोऽप्यनिलं क्षिपन्तः ॥ १७ ॥
पारावतान्यभृतसारसचक्रवाकदात्यूहहंसशुकतित्तिरिबर्हिणां यः।
कोलाहलो विरमतेऽचिरमात्रमुच्चैर्भृङ्गाधिपे हरिकथामिव गायमाने ॥ १८ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

लोकप्रसिद्धं कामनारूपं निमित्तं यत्र निष्कामस्वधर्मेण श्रवणादिना धर्मरूपेण ये भगवदाराधनं कृतवन्तः ॥ १४ ॥

एवं जीवोत्कर्षमुक्त्वा भगवदुत्कर्षमाह। यत्रेति। यत्रान्दमदो भगवान् सदंशस्य मुख्यभावरूपं सत्त्वं विष्टभ्य तिष्ठति वैकुण्ठलोकोऽयं सर्वलोकविलक्षणः अतः चिदानन्दशरीरम् आनन्दस्य सच्छशरीरं सतश्च मोक्षरूपतेति अत एव सत्त्वादयो गुणाः सच्चिदानन्दानामिति पूर्वमुक्तं सर्गस्त्वावृत्तिरूप इति सच्चिदानन्दानामावृत्तिरुच्यते अत एवाश्रये आनन्दे प्रतिष्ठां वक्ष्यति चकाराद्यापि वैकुण्ठे आद्यः पुमान् पुरुषोत्तमः भगवानिति सधर्मः शब्दगोचर इति लौकिकसंबन्धाभावः सत्त्वस्य विशेषेण स्तम्भनं कालप्रवाहेण रजोगुणादिभिः सह मिलनाभावार्थं पूर्वैरथमिलितमित्याह। विरजामिति। ननु सत्वस्तम्भनेः कः पुरुषार्थं इत्याशङ्क्याह। स्वानां नो वृष इति ब्रह्मादीनां भक्तानां स्वामी स्वभक्ताः कालाङ्क्रितया सर्वैष्टैश्च संयोज्या इति यतो वृषः स्वामी स्वामिनो मृडनमावश्यकं स्वाम्यविशेषो वा साधारणस्वाम्यापेक्षया भक्तेषु मृडयन् अयं स्वामी अतः सत्त्वविष्टम्भनामित्यर्थः ॥ १५ ॥

एवमानन्दस्य सत्त्वमुक्त्वा सतामुभयविधपरमपुरुषार्थत्वमाह। यत्र नैःश्रेयसं नामेति। यत्र नैःश्रेयसं नाम वनं कामदुघैर्द्रुमैः सर्वर्तुश्रीभिर्विभ्राजत् कैवल्यमिव मूर्तिमत् यत्र वैकुण्ठ उपवनमस्ति तस्य नाम नैःश्रेयसमिति नैःश्रेयसशब्दो योगरूढभेदेन द्विविधः तत्र प्रमथं योगं समर्थयति। कामदुघैरिति। यद्वनं द्रुमैर्विभ्राजत् सर्वे एव द्रुमाः कल्पवृक्षाः त एव तत्रत्याः परमपुरुषार्थरूपाः तत्रत्यानामपि कामितार्थदातृत्वात् द्रुगताविति तद्रहिता द्रुमाः प्रतिष्ठिताः स्वतोऽपि तेषामुत्तमत्वमाह। सर्वर्तुश्रीभिरिति। सर्वेष्वेव ऋतुषु नियता पुष्पादिसम्पातिरूपा श्रीर्येषामेवं योगार्थमुक्त्वा रूढार्थमाह। मूर्तिमत् कैवल्यमिति। केवलस्य भावः कैवल्यं चिद्रूपाणां स्वरूपेण स्थितिः पुनः संघातसम्बन्धाभावः अनेन जीवपुरुषार्थता उक्ता तत्र गतः "चितितन्मात्रेण" इति यत् कैवल्यमापद्यते तदाप्येकं रूपं भगवतः यदौडुलोमिमतसिद्धं यदात्मत्वेन च आत्मवादिनो वदन्ति भगवांश्च अहमात्मा गुडाकेशेति प्रथमं विभूतित्वेनोक्तवान् सा कैवल्यमूर्तिः तदेव नितरां श्रेयोरूपम् "आत्मलाभान्न परं विद्यत" इति श्रुतेः तस्मात्तत्र वने प्रविष्टः आनन्दमयो भवति ब्रह्मानन्दं च प्राप्नोतीति सतः परमपुरुषार्थत्वम् ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

अमलाः शुद्धा भवन्त्यात्मानोऽन्तःकरणानि यतस्तस्य ॥ १३ ॥

वैकुण्ठमूर्त्तयः भगवत्सारूप्यवन्तः अनिमित्तं स्वप्रयोजनाभाव एव निमित्तप्रवर्त्तकं यस्मिंस्तेन निष्कामेण परमधर्म्मेण इत्यर्थः। आराधयन् पूर्व्वमाराधितवन्तः ॥ १४ ॥

विरजं सत्त्वं शुद्धसत्त्वं विष्टभ्य धृत्वा यस्य नामरूपलीलादिकं सर्व्वमेव शुद्धसत्त्वमित्यर्थः स्वानां स्वान् वृष साक्षात् परमधर्म्मरूपः ॥ १५ ॥

कैवल्यमूर्त्तिमदिवेति वनस्पतिसमूहस्य नित्यसिद्धत्वमेकरसं निरुद्वेगपरमानन्दमयत्वमात्मारामविहङ्गमस्पृहणीयत्वञ्चोक्तम् ॥ १६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अनिमित्तः अनाश्रयः भगवानेव निमित्तं यस्यिन् तेन आराधयन् आराधितवन्तः ॥ १४ ॥

शब्दगोचरो वेदैकवेद्यः सत्त्वं शुद्धसत्त्वरूपं शरीरं विरजंरजोपलक्षितप्रकृतिसम्बन्धरहितं विष्टभ्य धृत्वा भक्तवाञ्छितपदार्थान् वर्षतीति वृषः स्वानां स्वकीयान् मृडयन् सुखन् यत्र वैकुण्ठे आस्ते ॥ १५ ॥

वैकुण्ठस्थं वनं वर्णयति। यत्रेति चतुर्भिः। यत्र वैकुण्ठे सर्वेषु ऋतुषु श्रीः पुष्पादिसम्पद्येषां तैः द्रुमैर्विभ्राजत् शोभमानन्नैःश्रेयसंनाम वनं मूर्तिमत्कैवल्यमिव तिष्ठति ॥ १६ ॥

---

### भाषाटीका।

वे मुनि एक वखत निर्मल मूर्ति वैकुण्ठ भगवान् के सबलोगों के नमस्कार करने योग्य वैकुण्ठ नगर में पहुंचे॥ १३ ॥

जहाँपर सब विष्णु के मूर्तिवाले पुरुष निवास करै हैं जिन पुरुषोंने निष्काम कर्म से हरिका आराधन किया है ॥ १४ ॥

जहांपर वेदों के प्रतिपाद्य भगवान् महा पुरुष सबके मनोरथों को पूर्ण करने वाले निर्मल सत्त्वगुण वाले अपने भक्तों को सुखी करते विराजै हैं ॥ १५ ॥

जहांपर सब ऋतुओंमें मन कामना देनेवाले वृक्षोंसे प्रकाशमान मूर्तिमान कैवल्य सरीका नैःश्रेयस नाम का वन है ॥१६॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

चरितानि चरित्राणि भर्तुः प्रभोः अनुविकसन्त्यो मधु मकरन्दस्तद्युक्ता माधव्यो वासन्त्यो लताः यद्वा अनुविकसन्मधवः प्रसरन्मकरन्दा माधव्यो मधुकालीनाः सुमनसस्तासां गन्धेन खण्डिता विघ्निता धीर्येषां तेऽपि तद्गन्धप्रापकमनिलं क्षिपन्तस्तिरस्कुर्वन्तो गायन्ति अनेन भगवत्पार्षदानां निरतिशयविषयसुखेऽपि भगवद्गुणजनानन्दासक्तिर्दर्शिता ॥ १७ ॥

अन्यभृताः कोकिलाः दात्यूहश्चातकः अचिरमात्रं क्षणमात्रम्

मन्दारकुन्दकुरवोत्पलचम्पकार्णपुन्नागनागबकुलाम्बुजपारिजाताः ।
गन्धेऽर्चिते तुलसिकाभरणेन तस्या यस्मिंस्तपः सुमनसो बहुमानयन्ति ॥ १९ ॥
तत्सङ्कुलं हरिपदानतिमात्रदृष्टैर्वैदूर्यमारकतहेममयैर्विमानैः ।
येषां बृहत्कटितटाः स्मितशोभिमुख्यः कृष्णात्मनां न रज आदधुरुत्स्मयाद्यैः ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विरमति अनेन तत्रत्यपक्षिणामपि हरिकथाश्रवणादिपरमानन्दो दर्शितः ॥ १८ ॥

मन्दारपारिजातौ सुरतरुविशेषौ कुरवस्तिलकवृक्षः उत्पलं रात्रिविकासि अम्बुजं दिनविकासि नागो नागकेसरः एताः सुमनसः पुष्पजातयः सुगन्धा अपि तुलसिकाभरणेन श्रीहरिणा तुलस्या गन्धेऽर्चिते सति यस्मिन्वने तस्यास्तपो बहुमानयन्ति अनेन तत्रत्या गुणग्राहिण एव न मत्सरिण इत्युक्तम् एवंभूतं वनं यत्र तद्वैकुण्ठं ययुरिति पूर्वेणान्वयः ॥ १९ ॥

पुनर्वैकुण्ठमेव विशिनष्टि । यत्सङ्कुलं व्याप्तं भवति कैः हरिपदयोरानतिः प्रणामस्तावन्मात्रेण दृष्टैर्भक्तानां विमानैर्न कर्मादिप्राप्यैर्वैदूर्यमारकतैर्हेममयैश्च विमानैः बृहन्ति कटितटानि यासाम् स्मितशोभीनि मुखानि यासां ता अपि कृष्णे आत्मा येषाम् रजः काममुत्स्मयाद्यैः परिहासादिभिर्न आदधुर्नजनयामासुः ॥ २० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

पूर्वार्थे माधवीलतामात्रस्य वैशिष्ट्यं विवक्षितन्तु तत्पुष्पजातिमात्रस्य वनशोभोपयोगित्वात् किञ्चयुक्तपदाध्यारणौवञ्चेत्यखरसाघञ्चेति यद्यपि तत्रत्यवनस्य कैवल्यशिवमूर्तिमदित्युक्तत्वेनाप्राकृतत्वा ब्रह्मानन्दादपि वैशिष्ट्यं तस्यारविन्दनयनस्य पदारविन्देस्यादि वक्ष्यमाणत्वात् तथापि प्रेमानन्देदारुकोनाभ्यनन्ददितिवद् खण्डितधीशब्देन प्रेममूर्छैवव्याख्येया अनिलतिरस्कारेऽयंप्रकारः तेहिश्रीभगवच्चरित्रगानानन्दनिमग्ना अतस्तेषां ततउपरतिर्नरोचतेऽयरेमाधवीपुष्पामोदतुन्दिलसुमन्दशीतानिल ! किमर्थं तद्गणगाने विघ्नमाचरसिकिंभगवद्गुणेभ्योऽपित्वमधिकमात्मानं मनुषे धिक् त्वामिति निन्दनमेव अनेन श्लोकेन ॥ १७ ॥

भृङ्गाधिपश्चायंश्रीगरुडवत्स्वाभाविकतच्छब्दात्मकपक्षध्वनिमान् इतिघुणाक्षरन्यायेन वीणावत्तत्पक्षध्वनिरेवगानत्वेनोत्प्रेक्ष्यते तद्ध्वनिश्च हरिहरीत्याकारकोज्ञेयः भृङ्गाधिपत्वञ्चवनमात्राधिकारित्वाद् अनेन श्लोकेन ॥ १८ ॥

अनेन श्लोकेन तत्रत्या वैराग्यवनस्थगुणग्राहिणइति तदीयस्थावराणामपि ज्ञानशालित्वेन सच्चिदानन्दत्वं व्यज्यते ॥ १९ ॥

अत्र नतिरित्युपलक्षणं भक्तिमात्रेणेत्यर्थः मात्रपदमन्याचष्टे नकर्मादिप्राप्यैरिति आदिनाशुष्कज्ञानवैराग्यतपआदिपरिग्रहः कृष्णात्मनामितिवैकुण्ठनायेऽपि तच्छब्दप्रयोगात्तस्य स्वयंभगवत्त्वमभिव्यञ्जितम् एवं परत्रापिव्याख्येयम् कामं न आदधुः किन्तुतासाञ्चापिपरमभक्तत्वाद्भक्त्युद्दीपनमेव जनयामासुरित्यर्थः ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पुनस्तमेव वर्णयति त्रिभिः । वैमानिकाः विमानारूढाः सललनाः सस्त्रीकाः यत्र नैःश्रेयसे वने लोकभर्तुर्भगवतो लोकानां यानि शमलानि पापानि क्षपयन्ति निरस्यन्तीति तथा चरितानि चरित्राणि गायन्ति कथम्भूताः सन्तो गायन्ति अन्तर्जलेऽनुविकसद्गुस्यन्दमानं मधु मकरन्दो यासां माधवीनां वासन्तिकमाधवीपुष्पाणां गन्धेन सुगन्धेन पीडिता अन्तरिता धीर्येषां तथाभूता अपि अनिलं तत्प्रापकं वायुं क्षिपन्तः चरितानि गायन्तीत्यर्थः अनेन भोग्यभोगोपकरणभोगस्थानसान्निध्येऽपि तदनादरेण तल्लोकस्थानां भगवद्गुणानुभव एव निरतिशयाभिलाषः सूचितः ॥ १७ ॥

किमुत तद्वनस्थानां पुरुषाणां गुणानुभवासक्तिरिति यतस्तिरश्चां तत्रस्थानां भगवत्परतामाह । पारावतादयः शकुनिविशेषाः अन्यभृताः कोकिला दात्यूहाश्चातकाः बर्हिणो मयूराः पारावतादीनां यः कोलाहलः कलकलः भृङ्गाधिपे भृङ्गश्रेष्ठेहरिकथामिव उच्चैर्गायमाने गानं कुर्वति सत्यचिरमात्रं क्षणमात्रं विरमते समाप्तो भवति वनस्थाः पारावतादयः कोलाहलं कुर्वन्तो भृङ्गध्वनिमाश्रुत्य किमयं भृङ्गराजो हरिकथां गायतीति वयं श्रवणं कुर्मह इत्यभिप्रायेण स्वकोलाहलं त्यक्त्वा क्षणमात्रं भृङ्गध्वनिमेवोपशृण्वन्तीत्यर्थः ॥ १८ ॥

वनस्थानां स्थावराणामपि भगवत्परतामाह । मन्दारपारिजातौ सुरतरुविशेषौ कुन्दोऽतिमुक्तलताः कुरवकस्तिलकवृक्षविशेषः उत्पलं रात्रिविकासि अम्बुजं दिवाविकासि नागो नागकेसरः अर्णाः पुष्पवृक्षविशेषः मन्दारादयः सुमनसः सुगन्धाः अपि तुलसिकाभरणेन भगवता तस्याः तुलस्या गन्धेऽर्चिते सम्मानिते सति यस्मिन् वने तस्यास्तुलस्याः तपः बहुमानयन्ति तद्वनस्थाः पारिजातादयो मादृशेषु सत्स्वपि तुलस्यालंकृतो भगवान् तुलसीमेव बहुमनुते अहो तुलस्या आभरणं भगवदाभरणं दृष्ट्वा तस्याः तुलस्यास्तपो महत्पुराकृतमिति बहुमानयन्तीत्यर्थः ॥ १९ ॥

एवं निःश्रेयसवनमुपवर्ण्य पुनस्तमेवलोकं वर्णयति । यदिति । यद्वैकुण्ठनिलयं भक्तानां विमानैः संकुलं व्याप्तं कथम्भूतैः विमानैर्हरेर्भगवतः पदयोः पादयोर्या आनतिः प्रह्वीभावः अनेन तत्पूर्वका भक्तिर्लक्ष्यते आनतिमात्रदृष्टैर्न कर्मयोगादिभिः प्राप्तैरित्यर्थः वैडूर्यादीनां विकारैर्येषां यद्विमानारूढानां कृष्णात्म... बृहन्ति कटितटानि यासां स्मितेन शोभीनि मुखानि यासां ... अपि स्त्रियः उत्स्मयाद्यैः परिहसन्त्यः अपि स्त्रियः उत्स्मया... परिहासादिभिः रजः रजोगुणसमुद्भवं कामं नादधुर्नजनयामासुः ... कृष्णात्मनामिति हेतुगर्भविशेषणं कृष्णे भगवत्येव निहितात्मत्वाच्च काममादधुरित्यर्थः ॥ २० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सललना ललनाभिः स्त्रीभिः सहिता वैमानिका विमानेन चरन्तः पुरुषा लोकस्य जनस्य शमलक्षपणानि पापनाशनानि भर्तुर्हरेश्चरितानि यत्र गायन्ति नन्वत्र गानं वदनव्यादानेन न घटते पुष्पसौरभ्यसमावेशादिनेन्द्रियक्षोभसम्भवादित्याशङ्क्य परिहरति । अन्तर्जल इति । अत्रान्तः शब्दः समीपवचनः जलसमीपे तटे विलसन्तीनां मधौ वसन्ते विद्यमानानां माधवीनां वासन्तीलतापुष्पाणां गन्धेन खण्डितधियो विक्षुब्धबुद्धयोऽप्यनिलं गन्धप्रापकं वायुं क्षिपन्तः परिहरन्तः तुशब्देन भेदवाचिना मुक्ता अमुक्ताश्चेत्युभये सन्ति तत्र मुक्तानां कचिदपि पुष्पगन्धवायुनेन्द्रियक्षोभलक्षणो भ्रमो नास्ति अमुक्तानां कचित्स्यादिति तात्पर्यं निरूप्यते ।

> मुक्ताश्चैवाधिकारस्था द्विधा वैकुण्ठलोकगाः ।
> अमुक्तानां भ्रमः कापि न मुक्तानां कचिद्भवेत् ॥

इति वचनात् ॥ १७ ॥

तत्रत्यानां भक्तानां हरेश्चरणारविन्दार्चनावसरः कदा न्विति तत्राह । पारावतेत्यादिना । भृङ्गाधिपे हरिकथामनुगायमाने सप्तस्वरसमाहारेण गातुमुपक्रान्ते सति तद्गानमनुकूजद्भिः पारावतादिपक्षिगणैस्त्रिमात्रया त्रिमात्रादिस्वरेण कोलाहले कलकललक्षणे कूजने विरचिते सत्ययं समय इति मत्वा यस्मिन् वैकुण्ठे तुलसीदले मन्दारादिपुष्पराशौ च भक्तैरङ्घ्रिमूलेऽर्चिते सति तुलसिकाभरणेन तुलसीमालाधारिणा हरिणान्यपुष्पदलमपहाय हस्तेन तुलसीदलमुद्धृत्य तद्गन्धे घ्राणेनार्चिते सम्भाविते सति मन्दाराद्याः सुमनसो मन्दारादिशब्दवाच्यास्तद्देवतास्तस्यास्तुलस्यास्तपो वहु मानयन्ति गन्धार्थं कृतमिति शेषः ।

> तिरश्चीना स्थावराश्च सर्वे ज्ञानाद्विकुण्ठगाः ।
> अमुक्ता मुक्तिमायान्ति नियमात्कर्मणः क्षयः ।

इति वचनात् ज्ञानान्मुक्तत्वात्तत्समयज्ञानं गानं प्रशंसनं च भृङ्गाधिपानां तिर्यञ्चां मन्दारादीनां स्थावराणां च युज्यते । यद्वा तुलसिकाभरणेन तुलसिकाभरणे कृते सति गन्धार्थं तपो वहु मानयन्ति गन्ध इति तादर्थ्ये सप्तमी अर्णा करवीरपुष्पं नागो नागकेसरः पुन्नागः सुरकर्णिकारः ॥ १८ ॥ १९ ॥

वृहन्तः कटितटाः श्रोणीभागा यासां तास्तथोक्ताः स्मितशोभिमुख्यः स्मितेन शोभमानवक्त्राः स्त्रियः उत्स्मयाद्यैर्मन्दहासशृङ्गारादिरसविशेषैः कृष्णे हरावात्मा मनो येषां ते तथा तेषां रजो रागं न आदधुर्नाकुर्वंस्तेषां विमानैर्यद्वैकुण्ठाख्यं स्थानं संकुलं व्याप्तं मञ्चस्थपुरुषन्यायेन विमानानि विशिनष्टि । हरीति । हरिपदयोरानतिमात्रेण तृप्तैः कृतार्थां वयमिति भाववद्भिः । यद्वा हरिपदे व्योम्नि आनतिमात्रतृप्तैः सञ्चरणमात्रप्रयोजनैः वैदूर्यं पद्मरागं मरकतमिन्द्रनीलं हेमसुवर्णमेतैर्विराजितैः ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तादृशत्वेनैव वर्णयति । वैमानिका इत्यादिभिः । अन्तर्मध्ये जल इति तत्तदुपवनशोभाशैत्यादिकं ध्वनितम् । गन्धेन श्रीभगवद्विभूतिरूपत्वात्तत्सौरभ्यानुकारितया तत्स्मरणविशेषकर्त्रा तेन खण्डितधियः परमानन्दं मोहं प्राप्ता अपि भगवद्गुणगणाग्रहेण तद्गन्धवाहं क्षिपन्तः ॥ १७ ॥



दात्यूहो जलचरो वर्षासु ककेति प्रायभाषी भृङ्गाधिपोवनमालाधिकारी कोऽपि मुख्योभृङ्गः तस्यातिशयेन भगवत्प्रियत्वात् श्रीगरुडवत् स्वभावत एव तत्तदक्षरमयशब्दात्मकं गानमेव तेषु हरिकथितं ज्ञेयम् । इवेति तत्पार्षदादिकर्तृकहरिकथासादृश्यं ज्ञापयति वीणादिवत् ॥ १८ ॥

यत्र स्थावरा अपि ज्ञानशालिनः परकीयभगवद्प्रीणनगुणश्लाघिनश्चेत्याह । मन्दारेति । अर्णामपि पुष्पविशेषः सुमनसस्तत्तदधिष्ठात्र्यो देवता ज्ञेयाः ॥ १९ ॥

तद्वैकुण्ठं मरकतमेव मारकतं रजो नादधुः किन्तु तासामपि परमभक्तत्वाद्भक्त्युद्दीपनमेव जातमित्यर्थः ॥ २० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं लोकस्य सर्वलोकवैलक्षण्यार्थं सच्चिदानन्दवैशिष्ट्यं प्रतिपाद्य सर्वदोषाभावार्थं मोहाद्यभावमाह षड्भिः । वैमानिका इति । तत्र स्त्रीणां न मोहजनकत्वम् । तिर्यग्जीवानां न मदः लतागुल्मानां पुष्पप्रधानानामपि न मात्सर्यम् । भगवद्भक्तस्त्रीणां न कामजनकत्वम् । लक्ष्म्या अपि नाभिमानलक्षणो मानात्मकः क्रोधः लोभश्च तत्रैव प्रतिष्ठित इति न तस्याः स्वस्मिन् परमपुरुषार्थबुद्धिः किन्तु भगवत्येवेति सर्वदोषाभाव उक्तो भवति तत्र प्रथमं स्वाभाविकस्त्रीणां स्वभावदुष्टानामपि स्वदोषपरित्यागेन भगवद्गुणपरतोच्यते । विमानैकसिद्धा वैमानिकाः गन्धर्वादयः तेह्यागन्तुकाः स्वभावगमनवलाभावात् सौकर्याभावाच्च वैमानिका एव भवन्ति । तेषां तत्र गमने आदरेण गानमेव हेतुः । सललनाः सस्त्रीकाः अनेन उभयोः अन्योऽन्यमोहासम्भवो निरूपितः । यत्र वैकुण्ठे भर्तुः चरितानि गायन्ति । ते गन्धर्वादयः तदीया एव । भर्तुरिति ऐहिकपारलौकिकनिर्वाहकत्वेन तद्गुणगानमावश्यकमिति सूचितम् । एवं गुणगानस्य स्वोपकारकत्वमुक्त्वा परोपकारकत्वमाह । लोकशमलक्षपणानीति । तस्य लोकस्य सर्वेषामेव वा शमलं मार्गान्तरस्थितलोकसम्बन्धजातं नित्यं वा तस्य क्षपणं तत्रैव विलयप्रापणं यैः ते हि गन्धर्वाः रूपं भगवन्तमुपासने अतोऽप्सरसः तेषु प्रतिष्ठिताः गन्धर्वेषु योगव्युत्पत्त्या गन्धं वान्तीति पृषोदरादित्वात् गन्धर्वा भवन्ति । अप्सरसस्तु गन्धमेव भगवन्तमुपासते । उभयथापि सस्त्रीकाणां गन्धपरत्वमतो गन्धेन खण्डितधियोऽपि गन्धवाहं वायुं सर्वदा परमाराध्यं क्षिपन्तः सन्तः गुणानेव गायन्ति । गन्धस्य ग्रहत्वाय दोषाभावमाह । अन्तर्जल इति । जलमध्ये सुष्ठु विकसत् विकासेन प्रसरद्रूपं मधु मकरन्दो यासां माधवी काचिल्लता यत्र वसन्तर्तुराधिदैविकः प्रतिष्ठितः । सरसं च तस्येति विकसन्मधुत्वम् । अतस्तादृशीनां गन्धः वरप्राप्तः पृथिवीसम्बन्धाभावात् अप्राकृतः । अतस्तेषां सहजोपास्योपि भगवद्गुणगानार्थं तैः परित्यक्त इति आधिदैविकोऽपि मोहो नास्तीत्युक्तम् ॥ १७ ॥

एवं गन्धर्वाप्सरसामुक्त्वा पक्षिणां दोषाभावमाह । पारावतेति । एते पारावतादयो नव गुणाभिज्ञाः तेषामपि स्वतः सिद्धा वाक् तेषां वागेव ब्रह्म विप्रस्वनत्वमेव तेषां माहात्म्यमत एव प्रातरनुवाके तेषां वाक्यात् पूर्वमेवारम्भः अन्यथा देवानां तद्वाङ्माधुर्यपरत्वं स्यात् । अन्यभृतः कोकिलः दात्यूहः चातकः

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

बर्ही मयूरः य इति प्रसिद्धोऽपि कोलाहलः । तद्वाक्ये व्याकरणाभावात् पदवाक्यानामभावे शब्दराशित्वात् अनभिव्यक्तः कोलाहलत्वेनोक्तः । वस्तुतस्तु तेऽपि भगवद्गुणानेव गायन्ति । नहि तत्रत्याः पक्षिणो अन्यद्वदन्ति । शुद्धसत्त्वस्य तथा लोकत्वेनाविर्भावात्तत्र वृक्षपक्ष्यादीनां सम्भवः सोऽपि कोलाहलः क्षणमात्रमेव विरमते । भृङ्गाधिपे भ्रमरश्रेष्ठे हरिकथामिव गायमाने सति । अनेन तेषां स्ववाग्गर्वो नास्तीति सूचितम् । भृङ्गस्याधिपत्यं च मन्यन्ते । तस्य भगवत्सान्निध्यसम्भवात् कुन्तलानां तत्साम्याच्च । भृङ्गाणामधिपो वा आधिदैविकः तस्य वाग्रागरूपेति रागं कृत्वा गास्यतीति बुद्ध्या कोलाहलो विरमते । तस्याप्यनभिव्यक्तवाक्त्वात् ते रागपर्यवसानं ज्ञात्वा स्ववागिव तदपीति तदवधारणार्थं चिरमात्रं भगवत्कथागानसौम्यो राग उपयुक्त इति यदा तद्रागानुसारेण भृङ्गरवः उच्चैः शब्दाद्भगवदाज्ञाप्रायेण जातेति सन्देहः ॥ १८ ॥

एवं पक्षिणां दोषाभावमुक्त्वा लतादीनां पुष्पप्रधानानां मात्सर्यलक्षणादोषाभावमाह । मन्दारेति । मन्दारो देवतरुर्भूमावप्रसिद्धः कुन्दकुरुबकोत्पलचम्पकाः सर्वत्र प्रसिद्धाः अर्णः काश्मीरप्रसिद्धः पुन्नागनागकेसरबकुलाम्बुजा अपि प्रसिद्धाः पारिजातो मन्दारवत् एते पुष्पप्रधानाः अतिपरिमलयुक्ताः तथापि तुलसिकाभरणेन भगवता तुलस्या गन्धे अर्चिते यस्मिन् वैकुण्ठे तस्या एव तपः सर्वे एव सुमनसो भूत्वा मन्दारादयो बहुमानयन्ति न केवलं बहिर्बहुमाननं किन्तु अन्तःकरणेऽपीति सुमनस इत्युक्तं तपसा हि हीनउत्तमतां व्रजति तुलसिका भगवत आभरणं वनमाला तत्सम्भवेति तुलस्यमृतोद्भवा यथा लक्ष्मीः भगवत्प्रसादाच्च तया तपः कृतमित्यवसीयते वृन्दात्वेऽपि वा तस्यां प्रसादः साहि जालन्धरपत्न्यभूत् मधोः कन्या जालन्धरवधार्थं च तां परिगृहीतवान् तस्याः पातिव्रत्यं तपः तप एव वा पूर्वं सिद्धं गुणाकृतसौन्दर्याभावाय भगवता तथैव स्थपिता भक्तिमार्गे तस्या माहात्म्यं सर्वतोऽधिकम् ॥ १९ ॥

एवं प्रकारत्रयेण स्वभावसात्त्विकराजसतामसा अपि स्वदोषमभिमानं दूरीकृत्य यत्र वैकुण्ठे अस्वाभाविकधर्ममङ्गीकृतवन्त इत्युक्तम् इदानीं मुख्यतया स्त्रीणामेव सहजदुष्टत्वात् दोषाभावः प्रतिपाद्यते तत्र सर्वाः स्त्रियः अन्याः आधिभौतिक्यः लक्ष्मीर्द्विविधा आध्यात्मिकी लोकसम्बन्धिनी आधिदैविकी भगवद्भक्ता भगवदानन्दरूपा त्रिविधानामपि स्त्रीणामानन्दरूपत्वात् सहजो दोषः सम्भवति स निराक्रियते तत्र प्रथमं भगवदीयानां स्त्रीणां दोषाभावमाह । तत्सङ्कुलमिति । तद्वैकुण्ठं विमानैः सङ्कुलं तेषां विमानानां प्राप्त्युपायमाह । हरिपदानतिमात्रदृष्टैरिति । हरिपदयोरानतिमात्रं येषां तैर्दृष्टानि भक्तिमार्गानुसारेण भगवति नम्रत्वे तादृशविमानदर्शनं श्रवणादिषड्विधभक्तिर्वा मात्रशब्दोऽवधिवाची सख्याद्यभावेऽपि आनतिपर्यन्तेनैव भक्तिमार्गेण तत्प्राप्तिरिति वा । वैदूर्यमारकतहेममयैरिति । विमानानां त्रैविध्यमुक्तम् तत्र वैदूर्यं तामसमिव मारकतं सात्त्विकमिव हेम राजसमिव भक्तानामपि त्रैविध्यात् त्रिविधप्राप्तिः अनेन भक्तानां तत्र विमानेषु स्थितिरुक्ता भोगातिशयाय येषां विमानानां सम्बन्धिन्यः भोगार्थमेव स्थिताः । बृहत्कटितटा इति । भोगमेव पोषयन्ति मोहकत्वञ्च सहजमित्याह । स्मितशोभिमुख्य इति । स्मितेन शोभायुक्तं मुखं स्मितशोभि स्मितशोभिमुखं यासामस्तीति स्मितशोभिमुख्यः दर्शनेनैव मोहकत्वमुक्तम् रसद्वयसिद्ध्यर्थं वा विशेषणद्वयम् अमोहकत्वे हेतुः । कृष्णात्मनामिति । भगवद्भक्तानां मनसि ता न रज आदधुः कामं नोत्पातदितवत्यः न च ता विभावाद्यचतुरा इति मन्तव्यम् यतः उत्स्मयाद्यैरपि हास्यादिसर्वभावैरपि न रज आदधुः वैकुण्ठस्य माहात्म्यं कृष्णात्मत्वेनैव तत्रैव कृष्णात्मानो भवन्तीति कृष्ण आत्मनि येषामिति पक्षे दोषाणामदोषत्वं वा अकृष्णात्मनां तत्राभावात् नामविशेषकथनात् रज उत्पत्तिहेतुत्वं वा तदा वैकुण्ठोत्कर्ष एव भवति अन्यत्रापि तस्य न दोषत्वम् अन्यथा तत्र तेषामेव कीर्त्तनं विरुध्येत ॥ २० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

शमलेति । ब्रह्माण्डवर्तिजीवानां सर्वमालिन्यक्षपणानि स्वेषान्तु तद्विरहदुःखोपशमकानि । वैमानिकाः स्वरविशेषोद्भावनार्थं विमानादवतीर्य्य सरोवरस्यान्तर्जले कण्ठदघ्नजले इत्यर्थः । यद्वा तटवर्तिनीनामेव जलसंलग्नवृक्षशाखामारुह्य ताः स्वपत्रादिभिराच्छादयन्तीनामन्तर्जल एव विकसन्तीनां मधुयुक्तमाधवीनां गन्धेन खण्डिताः भगवच्चरितास्वादनैकतानत्वे सविघ्नीकृता धीर्य्येषाम् । तथा भूता अपि गायन्त्येव नतु गानाद्विरमन्तीत्यर्थः किन्त्वनिलं क्षिपन्तः अरे माधवीपुष्पामोदतुन्दिलसुमन्दशीतानिल ! भगवल्लीलामृतमाधुर्य्येषु निमज्जिता अस्माकं धियो वृत्तीः कथमाक्रष्टुं यतसे किं त्वं तेभ्योऽप्यात्मानं मधुरं मन्यसे धिक् त्वां मूढेति निन्दन्तः तेन कैवल्यमिव मूर्तिमदिति पूर्व्वोक्तेस्तद्वनस्थ पुष्पामोदादीनां ब्रह्मानन्दरूपत्वेऽप्याक्षेपात् ब्रह्मानन्दादपि भजनानन्दोऽत्याधिक इति द्योतितम् ॥ १७ ॥

वैमाननिका इव तत्रत्याः पक्षिणोऽपि परमभक्ता निर्म्मत्सरा श्चेत्याह । पारावताः कपोताः अन्यभृताः कोकिला दात्यूहो डाहुक इति ख्यातः । अचिरमात्रं शीघ्रमेव हंहे सम्प्रति हरिकथा प्रवर्त्तते तद्वयं सर्व्वे तावत्तूष्णीमेव शृणुम इत्येवं कोलाहलो विरमति । कदा भृङ्गाधिपे भगवद्वनमालाधिकारिणि हरिकथामिव हरिकथातुल्यमेव किमपि घुणाक्षरन्यायेन गायति सति हरिहरीत्याकारकस्वपक्षशब्दं कुर्व्वतीत्यर्थः । न जाने तस्मिन् साक्षाद्धरिकथां गायति सति पक्षिणां तेषां तस्मिन् कीदृश आदरो भवेदिति भावः ॥ १८ ॥

पक्षिण इव तत्रत्या वृक्षा अपि स्पर्द्धासूयादिरहिताः परमभक्ता एवेत्याह । मन्दारपारिजातौ सुरतरुविशेषौ कुरवास्तिलकवृक्षः । अर्णः पुष्पविशेषः नागो नागकेसरः एते वृक्षाः परमसुगन्धकुसुमा अपि तुलसिकाभरणेन श्रीहरिणा वनविहरणसमये तस्यास्तुलस्या गन्धे अर्च्चिते आदृते सति यस्मिन् वने अहो धन्यासि त्वं तुलसीति तस्या एव तपो बहुमानयन्ति ननु स्वेषामिति तेन यद्यस्यास्तपो जानीमः तर्हि तदेव तपोवयमितो भारतभूमिं गत्वा आचराम इति तेषां मनोऽनुलापो ध्वन्यते । ततश्च वैकुण्ठवासिनोऽपि भारतभूमौ जन्मवाञ्छन्तीति वैकुण्ठादपि भारतभूमेरुत्कर्षोऽनुध्वन्यते बहुमानयन्त्येव नत्वसूयन्तीत्यर्थः । यतः सुमनसः शुद्धचित्ताः पक्षे पुष्पतरवस्तेन वैमानिका इति । पारावतेति । मन्दारेत्यादिभिर्जरायुजाण्डजो-

श्री रूपिणी क्वणयती चरणारविन्दं लीलाम्बुजेन हरिसद्मनि मुक्तदोषा।
संलक्ष्यते स्फटिककुड्य उपेतहेम्नि संमार्जतीव यदनुग्रहणेऽन्ययत्नः॥ २१॥
वापीषु विद्रुमतटास्वमलामृताप्सु प्रेष्यान्विता निजवने तुलसीभिरीशम्।
अभ्यर्चती स्वलकमुन्नसमीक्ष्य वक्त्रमुच्छेषितं भगवतेत्यमताङ्ग! यच्छ्रीः॥ २२॥
यन्न व्रजन्त्यघभिदो रचनानुवादाच्छृण्वन्ति येऽन्यविषयाः कुकथा मतिघ्नीः।
यास्तु श्रुता हतभगैर्नृभिरात्तसारास्तांस्तान्क्षिपन्त्यशरणेषु तमस्सु हन्त॥ २३॥
येऽभ्यर्थितामपि च नो नृगतिं प्रपन्ना ज्ञानं च तत्त्वविषयं सहधर्म यत्र।
नाराधनं भगवतो वितरन्त्यमुष्य सम्मोहिता विततया बत मायया ते॥ २४॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

द्विदलय एव तत्र हरिं भजन्तो वर्तन्ते ननु चतुर्थः खेदजोऽ वर्णनादिति ज्ञेयम्॥ १६॥

अभितो वर्तिनीमुद्यानशोभां वर्णयित्वा मध्यवर्त्तिनीं वैकुण्ठ-नगरशोभां वर्णयति। तदिति। हरिपादयोरानतिः प्रणतिस्तावन्मात्रेणापि भजनेन हृष्टैः ननु सम्पूर्णाङ्गैरपि ज्ञानकर्म्मादिभिरित्यर्थः किञ्च। तत्र भजनानन्दनिर्वृत्तेषु लोकेषु पूर्व्वोक्तयुक्त्या ब्रह्मानन्दोऽपि न प्रभवति। किं पुनर्विषयानन्द इत्याह। बृहत्कटितटाः। परमसुन्दर्य्योऽपि येषां कृष्णात्मनां कृष्णनिमग्नमनसाम् उत्स्मयाद्यैः उत्कृष्टस्मितावलोकगत्यालापादिव्यापारैः स्वाभाविकैरजः कामं न आदधुर्न जनयामासुस्तैश्च सङ्कुलम्॥ २०॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

यत्र वने अन्तर्जले जलमध्ये अनुविकसन्त्यः मधुमाधव्यः मकरन्दयुक्ताः वासन्त्यः लतास्तासां गन्धेन खण्डिता विक्षिप्ता धीर्येषां तेऽपि तद्गन्धप्रापकमनिलम्वायुं क्षिपन्तस्तिरस्कुर्वन्तः। शमलानि पापानि क्षिपन्ति निराकुर्वन्तीति तथा तानि भर्तुः स्वामिनः चरितानि गायन्ति अनेन तत्र गन्धादिभोग्यपदार्थानामतिश्रैष्ठ्यं ततोऽपि भोक्तॄणां तन्निरपेक्षानन्दसंप्रसन्नत्वं ततोऽपि भजनवच्चरितगानाद्यानन्दाधिक्यं दर्शितम्॥ १७॥

यत्र वने भृङ्गाधिपे हरिकथामिव गायमाने पारावतादीनां कोलाहलः अचिरमात्रं क्षणमात्रं विरमते तेऽपि हरिकथाश्रोतार इव क्षणमात्रं तूष्णींभूतास्तिष्ठन्तीत्यर्थः तत्रान्यभृताः कोकिलाःदात्यूहाः चातकाः॥ १८॥

यस्मिन्वने मन्दाराद्याः सुमनसः पुष्पजातयः तुलसिकाभरणेन भगवता तुलसिकायाः गन्धे अर्चिते सति तस्यास्तपः बहु अधिकं मानयन्ति॥ १९॥

वनमुपवर्ण्य वैकुण्ठं पुनर्वर्णयति। तदित्यादिना। बृहन्ति कटितटानि यासां स्मितशोभितानि मुखानि यासां ताः अपि येषां रजः कामम् उत्स्मयाद्यैः परिहासादिभिः न आदधुः न जनयामासुः तत्र हेतुगर्भितं विशेषणम् कृष्णात्मनामिति तेषां विमानैस्तद्वैकुण्ठाख्यं स्थानं सङ्कुलं व्याप्तं कथम्भूतैः हरिपदानतिमात्रेण हरिपदानत्युपलक्षितहरिभक्तिमात्रेण हृष्टैः न कर्मादिप्राप्यैः॥ २०॥

---

भाषाटीका।

जिस वैकुण्ठ में निज स्त्रियों के सहित विमानोंपर बैठेहुये वैकुण्ठ वासी जन जल के मध्य में मकरन्द चुचावती माधवी लताओं के गन्ध से व्यामोहित बुद्धिवाले होजाने से उस गन्ध लाने वाले पवनों का दुर्वचनों से तिरस्कार करते हुये सब जगत् के पाप नाश करने वाले भगवान् के चरित्रों का गान करते हैं॥ १७॥

जिस वैकुण्ठ में कबूतर कोइल सारस चकवाचकवी चातक हंस तोता तीतर मोर इनका जो बडा हल्ला होता है सो जब भगवान की माला का भौंरा अपने पांखों को उठाकर शब्द करता है तब ऊंचे स्वरसे हरिनाम गानसा समझकर वे पक्षी अपने कोलाहल को छोडकर देरतक चुप रहते हैं॥ १८॥

जिस वैकुण्ठ में मन्दारकुन्द दोनों देव वृक्ष हैं तथा तिल वृक्ष चम्पा कुमोदिनी अर्ण पुन्नाग नागेश्वर मोरछली कमल पारिजात यह सब वृक्ष तथा फूलों के पेड जब तुलसी को भूषण बनाने वाले भगवान् तुलसी के सुगन्ध की प्रशंसा करते हैं तब ये सब तुलसी जी की तपस्या की सराहना करते हैं॥ १९॥

जो वैकुण्ठ हरि चरणों के नमस्कार मात्र से प्राप्त हुये भक्तों के बैठने के लिये वैदूर्य मरकत मणियों केविमानों से भरा है वे हरिभक्त कैसे हैं कि बडी स्थूलनितंब वाली मन्दहास मुख वाली वहां की सुन्दरी भी श्रीकृष्ण मे लगेहुये उनके चित्तमें कामके रजोगुण को नहीं पैदा कर सकती हैं॥ २०॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

श्रीर्लक्ष्मीः रूपिणी मनोहरमूर्तिधारिणी सती श्रीहरेः सद्मनि सम्मार्जनं कुर्वतीव यस्मिन् लोके संलक्ष्यते चरणारविन्दं क्वणयती नूपुरेण शब्दयन्ती मुक्तो दोषश्चाञ्चल्यं यया यद्वा मुक्तेन दोष्णा प्रसारितेन बाहुना कीदृशे सद्मनि स्फटिकमयानि कुड्यानि यस्मिन् मध्ये मध्ये च शोभार्थमुपेतं संयुक्तं हेम यस्मिन् यस्या अनुग्रहणे श्रीरनुग्रहं करोत्वित्येतदर्थमन्येषां ब्रह्मादीनां यत्नः सा अयं भावः यद्यपि तत्र रजो नास्त्येव तथाऽपि स्वर्णपट्टिकावच्छिन्नभित्तिभागेषु बहुधा प्रतिबिम्बिता सती लीलाम्बुजं भ्रामयन्ती विनयभक्तिभ्यां तथा लक्ष्यत इति॥ २१॥

अङ्ग हेदेवाः! यद्यस्मिह्लोके श्रीरेवममत अमंस्त मेने किञ्चु-

### श्रीधरस्वामिकृतभावार्थदीपिका ।

वेती विद्रुममयानि तटानि यासाम् अमला अमृततुल्या आपो यासां तासु वापीषु निजवने लक्ष्मीवने परिचारिकाभिरन्विता तुलसीभिः श्रीविष्णुं पूजयन्ती तदोदके प्रतिबिम्बितं शोभनालकयुक्तमुत्कृष्टनासिकायुक्तं च स्ववक्त्रं वीक्ष्य भगवता उच्छेषितं चुम्बितमित्यमन्यत अनेन लक्ष्म्या अपि सौभाग्यसुखं भगवदनुग्रहेणैवेति द्योतितम् ॥ २२ ॥

पुनः कथंभूतं तत् यद्वैकुण्ठं न व्रजन्ति के ये कुकथाः शृण्वन्ति कास्ताःअघं भिनत्तीत्यघभित्तस्य हरेः रचना सृष्ट्यादिलीला तस्या अनुवादादन्यविषया अर्थकामादिवार्ता मतिभ्रंशिकाः तेषामव्रजने हेतुः यास्तु हतभाग्यैर्नरैः श्रुताः सत्यस्तांस्तान् श्रोतॄनशरणेषु निराश्रयेषु तमःसु नरकेषु क्षिपन्ति हन्त खेदे कथम्भूताः आत्तः सारः श्रोतॄणां पुण्यं याभिस्ताः ॥ २३ ॥

प्रसङ्गात्तान् शोचति। नोऽस्माभिर्ब्रह्मादिभिरप्यभ्यार्थितां नृगतिं मनुष्यजातिं प्रपन्नाः प्राप्ताः सन्तोऽपि हरेराराधनं न कुर्वन्ति कीदृशीं नृगतिं यत्र यस्यां धर्मसहितं तत्त्वज्ञानं भवति तदुभयसाधकत्वात्तस्याः तेऽमुष्यभगवतो विस्तृतया मायाया ननु संमोहिताः वतेति खेदे यदि वैवं सम्बन्धः केवलं त एव न व्रजन्ति किंतु ये भगवदाराधनं न कुर्वन्ति तेऽपि तेषां मायामोहितत्वादिति॥२४॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

पूर्वोर्थे दोषरूपं चाञ्चल्पं प्राकृतश्रियामेव नतु स्वरूपशक्त्यां किन्तु सम्मार्जनकाले लीलागुणात्मकं चाञ्चल्यं प्रत्युतापेक्षितमित्यरुचौ यद्वेति लीलाम्बुजेनेत्युपलक्षणे तृतीया तत्र वैकुण्ठे विनयभक्तिभ्यां विनयादराभ्यां तथा संमार्जतीव लक्ष्यते पार्षदैर्दृश्यते तदुक्तं श्रीकालिन्द्या साहं तद्गृहमार्ज्जनीति ॥ २१ ॥

विष्णुं पूजयन्ती जले विष्णुपूजां कुर्वतीति नित्यपार्षदेऽपि साधनभक्तेराग्रहेणान्वय उक्तः तदा जले विष्णुपूजाकाले भगवता ध्यानजन्यस्फूर्तिलब्धेन अनेन लक्ष्म्यास्ताहशमननेन स्वसौभाग्यसुखं स्वसौन्दर्यसम्पत्तिजन्यानन्दः भगवदनुग्रहेणैव चुम्बनात्मकमदुपभोगलक्षणरूपयैव तदभावे सर्वसौभाग्यं तद्विरहस्फोरकत्वात् प्रत्युत दुःखप्रदमेवेत्यर्थः ॥ २२ ॥

अघमघासुरमघोऽपि यत्स्पर्शनधूतपातक इत्यादौ तच्छब्दस्य तत्र प्रसिद्धेः पापभिदादिशब्दानाञ्च तत्राप्रसिद्धेः नरकेषु तत्प्रायसंसारदुःखगर्त्तेषु ॥ २३ ॥

तत्त्वं भगवत्तत्त्वं तस्य ज्ञानमनुभवः धर्मोऽत्र वेदप्रणिहितो धर्मइति स्मृतिसूत्राद्यनुसारेण वर्णाश्रमप्रयुक्तो धर्म्मस्तत्सहितं तद्द्वयोः साधकत्वान्नृजातेः आराधनं धर्मज्ञानयोरपि फलप्रदं तदनन्तरा तत्फलासिद्धेः "सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनम्" इत्युक्तेः ॥ २४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

श्रीर्लक्ष्मी रूपिणी मूर्तिमती हरिसद्मनि वैकुण्ठलोकस्थे भगवद्वेश्मनि लीलाम्बुजेन लीलार्थं धृतेन कमलेन सम्मार्जती सम्मार्जनं कुर्वती संलक्ष्यते इव कथम्भूता श्रीः चरणारविन्दं कणयती नूपुरेण शब्दयन्ती मुक्तदोषा मुक्तो दोषोऽनित्यत्वरूपो यया सा यद्वा मुक्तदोषेति लीलाम्बुजविशेषणं मुक्तः प्रसारितो दोः भुजो यस्य तेनेति कथम्भूते वेश्मनि स्फटिकमयानि कुड्यानि यस्मिन् उपेत हेम्नि शोभार्थं मध्ये तत्र तदुपेतं संयुक्तं हेम सुवर्णं यस्मिन् तस्मिन्निति पुनः श्रियं विशिनष्टि। यदनुग्रहणे यस्याः श्रियः अनुग्रहे निमित्ते श्रीरस्मास्वनुग्रहं कुर्यादिति त्वन्येषां ब्रह्मादीनां यत्नः आराधनरूपो यत्नः स्यादित्यर्थः यद्यपि भगवद्वेश्मनि संमार्जतीति रजो नास्त्येव तथापि स्वर्णपट्टिकायां लाञ्छितस्फटिकमयभित्तिभागेषु हेमचूर्णैरिव लीलया रागपुञ्जैर्विचित्रीकरणार्थं सम्मार्जती निरतिशयनिर्मलासु स्फटिकमयभित्तिषुः प्रतिफलिता सती तत्रैवं लक्ष्यते इवाभूदिति भावः अलमतिविस्तरेण ॥ २१ ॥

वापीष्विति । अङ्ग हेदेवाः ! यद्यत्र लोके श्रीः भगवतो च्छेषितं चुम्बितमित्यमतामन्यत किंकुर्वती किङ्कृत्वा विद्रुममयानि तटानि यासां तासु अमला निर्मला अमृततुल्या आपो यासु वापीषु निजवने स्वकीयक्रीडावने प्रेष्याभिः स्वकीयपरिचारिकाभिः स्त्रीभिरन्विता तुलसीभिरीशं भगवन्तमभ्यर्चती पूजयन्ती तदोदके प्रतिबिम्बितं स्वालकं शोभना अलकाश्चूर्णकुन्तला यस्य उद्गता नासिका यस्य तत्स्वं वक्त्रं वीक्ष्य दृष्ट्वा निरतिशयविमलाम्बुवपीनामप्सु तुलसीभिरीशमर्चयन्ती लक्ष्मीरुदकसमीपे स्वमुखं निधाय तत्र प्रतिबिम्बितं स्वमुखं भगवन्मुखमनुसन्धायाहो भगवान्मन्मुखं चुम्बतीति मेने इत्यर्थः अनेन लक्ष्म्या सौभाग्यं लक्ष्यते ॥ २२ ॥

पुनः कथम्भूतं तद्वैकुण्ठस्थानमित्यत्राह। यद्वैकुण्ठनिलयं ते न व्रजन्ति नाप्नुवन्ति केत इत्यत्राह । अघं पापं भिनत्ति निरस्यतीत्यघभिद् हरिस्तस्मादन्यविषयाः अर्थकामादिविषयाः अत एव रचनानुवादात् रच्यन्ते सम्पाद्यन्तेऽनयेति रचनानुवादस्तस्मात् अनुवाद अनुवर्तनात्स्वस्तणादनोपायवोधकदण्डनीतिकामतन्त्राद्यनुवर्तना त् मतिघ्नीः बुद्धिभ्रंशकराः कुकथा ये शृण्वन्ति ते इत्यर्थः पुनः कुकथा एव विशिनष्टि यास्तु कुकथाः हतभगैर्विभाग्यैर्नृभिर्नरैः श्रुताः अत एव आत्तसाराः आत्तः स्वीकृतः सारः श्रोतॄणां पुण्यं याभिरेवं भूताः सत्यस्तान् श्रोतॄनशरणेषु निरालम्बेषु तमःसु नरकेषु क्षिपन्ति पातयन्ति ॥ २३ ॥

प्रसङ्गादवार्थपरान् श्रोतॄन् शोचति । य इति । ये हतभाग्या अभ्यर्थितां प्रार्थनीयां नृगतिं मनुष्यजन्म प्रपन्ना अपि यत्र मनुष्यजन्मनि सहधर्मे निर्गुणधर्मसहितं ज्ञानेन तत्त्वज्ञानेनोपपन्नाः प्राप्ता अत एव भगवत आराधनं संसिद्धिसाधनं भजनं न विन्दन्ति न कुर्वन्ति किन्त्वमुष्य भगवतः विततया मायया ते हतभाग्याः सम्मोहिता भवन्ति धन्येति खेदे यद्वा तत्त्वज्ञानं सहधर्मं यत्र यस्मिन् मनुष्यजन्मनि अन्यमनुष्यसाध्यं तादृशीं नृगतिं प्रपन्नाः भगवदाराधनं न कुर्वन्ति किंत्वस्य मायया संमोहिता एव इत्यर्थः अस्मिन् पक्षे अभ्यर्थितामपि नो इत्यत्र नो अस्माभिरभ्यर्थनीयां प्रार्थनीयां नृगतिमित्यर्थः ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वैकुण्ठस्थे तोऽधिकं माहात्म्यं किं वक्तव्यमिति भावेनाह श्रीरिति । अन्येषामुपासकानामस्मदादीनामुपासनादिप्र यस्या अनुग्रहणोऽनुग्रहार्थं स्युः सा नूपुरालङ्कृतचरणा

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

क्वणयती शब्दयन्ती जननादिसमस्तदोषैर्मुक्ता रूपिणी सौन्दर्यसागरमूर्तिः श्रीर्यत्र वैकुण्ठे हरिवेश्मनि अन्तःपुरे उपेतहेम्नि सुवर्णखचिते स्फटिककुड्ये नीलाम्बुजेनावस्करधूननसाधनस्थानीयेन संमार्जयन्तीव संलक्ष्यत इत्यन्वयः कुड्यं गृहभित्तिः ॥ २१ ॥

अङ्ग हे देवाः ! यद्यत्र प्रेष्याभिर्दासीभिरन्विता निजवने कमलवने तुलसीभिरीशमभ्यर्चती रूपिणी सौन्दर्यसागरमूर्तिः श्रीरमृतामलाप्सु विद्रुमरत्नबद्धतटासु वापीषु सुखावतारकूलासु प्रतिबिम्बितं स्वलकं शोभनकुन्तलमुन्नसं किञ्चिदुन्नतनासिकं वक्त्रमुद्वीक्ष्य हरिणेदं चुम्बितमित्यमतेत्यन्वयः ॥ २२ ॥

स्वर्गादीनामसुरादिगम्यत्वादस्य तदभावात्ततोऽतिशयमाहात्म्यमस्तीति भावेनाह । यन्नव्रजन्तीति । अघभिदः संसारदुःखहेतुभूतपापानां भेत्तुः कृष्णस्य रचनानां बालक्रीडादिचरितानां जगत्सृष्ट्यादिकर्मणां वा न अनुवादा येषां ते अरचनानुवादा असुरा यत्स्थानं न व्रजन्ति अनुवादः श्रवणमननादिलक्षणः ये चान्यविषया मतिघ्नीर्यथार्थज्ञाननाशनीः कुकथाः कुत्सितरतिवर्णनादिरूपाः कथाः शृण्वन्ति तेन यत्स्थानं न यान्ति तासां कथानामेतत्स्थानप्राप्तिप्रतिबन्धकत्वमेव न फलं किंतु तमःप्रापकफलमपीत्याह । या इति । हतभगैर्विनष्टभक्त्यादिभाग्यैर्नृभिः श्रुता याः कथास्ता अशरणेषु निराश्रयेषु तमस्सु क्षिपन्ति आत्तवीर्याः तमःपातने बहुभ्यासेन समुन्नद्धशक्तयः हन्त अहोकष्टं तुशब्दः अधः पतितानां तारतम्यद्योतकः ॥ २३ ॥

केचिज्ज्ञानसाधनयोग्यां मनुष्ययोनिं प्राप्यापि तत्साधनं न कुर्वन्ति तत्र किङ्कारणमित्याशङ्क्यासुरत्वमिति भावेनाह । येऽभ्यर्थितामिति । ये पुरुषा नोऽस्माकमभ्यर्थितां ज्ञानादिप्राप्तियोग्यत्वादाकाङ्क्षितां नृगतिं मनुष्ययोनिं प्राप्य यत्र यस्यां नृगतौ सहधर्मं धर्मेण सह वर्तमानं तत्त्वविषयं ज्ञानं च न प्रपन्नास्ते अमुष्य हरेर्जगति विततया मायया बन्धकशक्त्या धर्मज्ञानप्राप्तावयोग्यत्वेन सम्मोहिताः न भगवत आराधनं कुर्वन्ति न वितरन्त्यर्थिभ्यो नोपदिशन्त्यतो धर्मज्ञानादिवर्जिता असुरत्वात्ते न मनुष्या इतिममर्थं ध्वनयति । नान्वित्यनेन ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मुक्तदोषा अयमात्मापहतपाप्मेतिवत् नित्यमेव दोषरहिता । यत एव तद्भक्त्यात्यन्तदीनंमन्यात्वेन संमार्जनकर्त्री या काचित् सैव लक्ष्यते नतु प्रेयसीवत् । यथोक्तं कुरुक्षेत्रयात्रायां श्रीकालिन्द्या अहं तद्गृहमार्जनीति लीलाम्बुजेनेत्युपलक्षणे तृतीया ॥ २१ ॥

वापीष्विति । पत्युरेव परमदेवरूपत्वात् ततः सौभाग्यलाभार्थं स एव पूज्य इत्यभिप्रायेण । तत्र च जने ध्यानेन तत्स्फूर्त्तेस्तत्र स्वप्रतिबिम्बदृष्ट्या स्वमूर्त्तेश्च सहयोगाच्चुम्बितत्वभानमपि सङ्गतम् । यद्वा । उच्छेषितमुपभुक्तमित्यमन्यत पूर्व्वपूर्व्वानुभूततया स्मृतवतीत्यर्थः ॥ २२ ॥

अघभिदोऽघासुरहन्तुरघोऽपि यत्स्पर्शनधूतपातक इत्यत्र तथा प्रसिद्धस्य तस्य रचनाया अनुवादं परित्यज्य अन्यत् अन्यदीयं यद्वचनं तदेव विषयो यासां ताः कथा इति । भगवत्कथां कदाचिदपि ये न शृण्वन्तीत्यर्थः । तमःसु नरकप्रायेषु संसारगर्तेषु । सारो विवेकादिः ॥ २३ ॥



येऽभ्यर्थितामिति । यत्र यस्यां भगवद्धर्म्मपर्य्यन्तो धर्म्मो भवति भगवद्धर्म्मपर्य्यन्तस्य तत्त्वस्य ज्ञानञ्च भवतीत्यर्थः । तां प्राप्ता अपि सर्व्वेषां धर्म्माणां ज्ञानानाञ्च मूलं ये भगवतः आराधनं न वितरन्ति न कुर्व्वन्ति ते सम्मोहिताः । तदुक्तम् । विले बतोरुक्रमविक्रमान् ये इत्यादि । तथाच ब्रह्मवैवर्त्ते । "प्राप्यापि दुर्ल्लभतरं मानुष्यं विबुधेप्सितम् । यैराश्रितो न गोविन्दस्तैरात्मा वञ्चितश्चिरम् । अशीतिं चतुरश्चैव लक्षांस्तान् जीवजातिषु । भ्रमद्भिः पुरुषैः प्राप्य मानुष्यं चिविबुधेप्सितम् । तदप्यफलदं जातं तेषामात्माभिमानिनाम् । वराकाणामनाश्रित्य गोविन्दचरणद्वयम्" इति । यद्वा । यत्र तत्तद्विषयं ज्ञानं धर्म्मश्च सर्व्वोऽपि जज्ञे तादृशीमपि नृगतिं प्रपन्ना य इति पशुनिर्व्विशेषा व्यावृत्ताः ॥ २४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं भगवदीयस्त्रीणां दोषाभावमुक्त्वा लक्ष्म्याः तत्र गर्वः संभवति तदर्थमेव तन्निर्माणात् अथापि तस्यास्तद्दोषाभावमाह । श्री रूपिणीति । सर्वस्मिन्नेव जगति विद्यमानलक्ष्म्याः सा देवता अतो रूपिणीत्युच्यते ब्रह्मानन्दस्य नीरूपस्य रूपं सञ्जातमिति अलौकिकार्थं वा रूपवती सा निरूप्यते यद्यपि सौन्दर्यवत् आभरणादिकमप्यभिमानहेतुरस्ति तथापि नाभिमान इति वक्तुं क्वणयतीत्युक्तम् चरणारविन्दं नूपुरसिञ्जितैः क्वणयती शब्दं कुर्वती रूपित्वं चरणक्वणनं लीलाम्बुजं च तस्याः सर्वेषां वेद्यमिति नान्यद्वर्णितं रूपवत्त्वं प्रतिमाया अपि भवतीति क्वणनर्माधकं निरूपितं लीलाम्बुजेनाप्युपलक्षिता स्त्र्यन्तरव्यावृत्त्यर्थं यतः सैव पद्मकरा भवति मुक्तो दोषो यया स्थिरा लोके आधिभौतिक्याश्चाञ्चल्यं दोषः लीलाम्बुजयुक्तेन प्रसारितहस्तेनोपलक्षिता वा हरिसद्मनीति तत्र सर्वेषां सहजो दुःखाभावः दुःखाभावपूर्वकविषये सत्यवश्यं गर्वो भवत्येव तथापि तत्र सम्मार्जतीव संलक्ष्यते ननु उचितमेव गृहिण्या गृहसम्मार्जनमिति तन्निवृत्त्यर्थं तस्याः प्रतिबिम्ब एव तथा दृश्यत इति ज्ञापनार्थं गृहं विशिनष्टि । स्फटिककुड्ये उपेतहेम्नीति । एकस्फाटिकत्वे शोभा न स्यादिति बहवः स्फटिकाः वक्तव्याः तत्र योजकद्रव्यान्तरसम्बन्धे पुनः रजःसम्बन्धः स्यात् अतः उपेतं हेमसंधिषु यत्रेति प्रतिबिम्बाधिक्यार्थं वा अतस्तत्र रजःसम्बन्धाभावेऽपि सैव निराभिमाना तिष्ठतीति तथोक्तम् सर्वस्यापि वैकुण्ठस्यातिशोभायुक्तत्वात् लक्ष्म्यैव शोभा क्रियत इति तथोत्प्रेक्षणं तत्रत्यानां न लक्ष्मीपरत्वं वा । तेन तथोत्प्रेक्षा । अनेन लक्ष्म्याः अन्येषामपि तत्कृतो दोषो नास्तीत्युक्तम् । आदराभावस्त्वलौकिक इति ज्ञापयितुमाह । यदनुग्रहणेऽन्ययत्न इति । यस्याः अनुग्रहार्थम् अन्येषां ब्रह्मादीनां यत्नः ॥ २१ ॥

एवमाध्यात्मिक्याः गर्वाभावरूपं दोषाभावमुक्त्वा आधिदैविक्याः मानाभिमाने न स्त इत्याह । वापीष्विति । निजवने लक्ष्मीवने तुलसीभिः साधनैः वापीषु ईशमभ्यर्चती स्ववक्त्रं भगवता उच्छेषितमित्यमंस्त । सा हि भगवद्भजनं कुर्वाणा भजनस्य स्वस्य भगवच्चुम्बनमेव महाफलत्वेन ज्ञातवती तस्याः कथमभिमानः स्यात् तुलसीभिश्च पूजयतीति न सापत्न्यादिभावः । अवस्थास्मारकत्वेन वापीदास्योरुपयोगः । कदाचिदेवं भावव्यावृत्त्यर्थं वापीष्विति बहुवचनम् । प्रवालाः तटे यासामिति

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रतिबिम्बस्फुटता विद्रुमाः तटेषु यासां तदच्छायामालिन्याभावाय । अमलमिति नैर्मल्यं मुख्यं प्रतिबिम्बे हेतुः अमृतजलत्वम् च लवणजले विवर्णप्रतीतेः । जले च पूजार्थं ध्यातो भगवान् प्रेष्याप्रतिबिम्बे स्फुरितः सकचग्रहं चुम्बने ऊर्ध्वं मुखं भवति एतदेव महापुरुषार्थं इति ज्ञातवती । प्रेष्यान्वितेति शङ्काभावार्थं च । निजवन इति भगवदागमनाभावाय । यत्र तस्या एतावदेव मनोरथं सिद्धं तत्र कथं गर्वादिभावः । खलकमिति कचग्रहणार्थं वचनम् । ऊर्ध्वनासिकता तदैव भवति । उपविष्टायास्तु तावदेव । यत इयम् अभ्यर्चती यस्य वैकुण्ठस्य श्रीः । तुलसीभिरिति बहुवचनम् लक्ष्यादिपूजाद्युपलक्षकम् । ईशामिति पूजायामपि पतित्वेन नावहेला । अभितः अङ्गादिसहितपूजनं महाफलत्वाय चुम्बनमात्रेणैव कृतार्थताज्ञानं परमभक्तत्वबोधकम् । आत्मसमर्पणं तु जातमिति । उच्छेषितमसंस्तेति क्रिया विरतिरपि सूच्यते साक्षात्फलं सम्भवति किमित्येवं क्रियत इति ॥ २२ ॥

एवं सर्वदोषाभावमुक्त्वा दोषवतां तत्र गमनमेव नास्तीत्याह । यन्न व्रजन्तीति । अनेन संस्काररूपा अपि दोषाः तत्र न सन्तीति समर्थितम् । यद्वैकुण्ठं तेन व्रजन्ति ये अघभिदो रचनानुवादात् अन्यविषयाः कथाः शृण्वन्ति । अन्यविषयककथाश्रवणं वैकुण्ठगमने साधने सत्यपि प्रतिबन्धकम् । अन्यथा साधनाभावादेव न गच्छेयुः किमेतत्कथनेन अघं भिनत्तीत्यघभित् भगवान् तस्य पापनाशकत्वं सहजं तस्य रचना चरित्रं चरित्रस्य स्वातन्त्र्यायाः समासरचनाया अनुवादः श्रवणानुसारेण कीर्तनं कृतानुकीर्तनं वा । न तूत्प्रेक्षासिद्धं काव्यवत् तस्मादन्यविषयाः कथा इति केनापि प्रकारेण भगवत्सम्बन्धरहिताः भगवद्विरुद्धदैत्यादिकथा वा तासाममेलनादन्यत्वम् । अत एव ताः कुकथाः । तेषां धर्माणां दोषत्वात् दैत्यानां पराक्रमोऽपि ब्रह्महत्यादिरूपो भवति । ननु भगवत्कथाया अपि श्रुतत्वात् कथं तासामेव फलं तत्राह । मतिघ्नीरिति । पूर्वसिद्धां भगवत्कथा मतिं नाशयन्त्येव यदि श्रुता भवेयुर्विषवत् किञ्च न तासां केवलं प्रतिबन्धकत्वं किन्तु स्वतन्त्रतया अनिष्टसाधकत्वं चेत्याह । यास्तु श्रुता इति । पुण्ये विद्यमाने तेषां श्रवणमेव न सम्भवतीति हतभगैरित्युक्तम् । भाग्यं सुखानुभवहेतुरदृष्टं तद्यदा केनापि निमित्तेन नश्यति तदा कुकथाश्रवणे मतिरुत्पद्यते । ननु तेषां विवेकधैर्यादेः विद्यमानत्वात्पश्चाद्भगवत्कथां श्रोष्यन्तीत्याशङ्क्याह । आत्तसारा इति । नराणामल्पसारत्वात्तदपि कुकथाभिर्गृहीतं तदा-तत्सामग्र्या गतत्वात्तान् अशरणेषु तमःसु दैत्यस्थानेषु दूरादेव प्रक्षिपन्ति । हन्तेति खेदे महता कष्टेन श्रुताः पश्चादुद्घातका जाता इति तान् इति वीप्सा न कोऽपि तादृशः निस्तरतीति ज्ञापितं श्रवणे सम्पन्न एव मननाद्यपेक्षापि नास्ति तदैव क्षिपन्तीति न मुक्तिवत् एकसहायोऽपेक्ष्यते तेषां च स्थितौ मध्ये को वेद किं भवेदिति तादृशानां बहुत्वसम्भवात् बहुवचनेन वीप्सा ॥ २३ ॥

एवं तामसानां दोषवतां तत्रागमनपूर्वकं तमः प्रवेशमुक्त्वा राजसानामूर्ध्वाधोगतिरहितानां मध्ये परिभ्रमणेन क्लेशं दृष्ट्वा शोचन्नाह । येऽभ्यर्थितामपीति । ये नृगतिं प्रपन्नाः भगवत आराधनं न वितरन्ति ते निश्चयेन अमुष्य मायया मोहिताः नृगतिमनुष्यत्वं तस्य दुर्लभत्वमाह । नः अभ्यर्थितामिति । ब्रह्मादिभिरपि नृगतिः प्रार्थ्यते सर्वस्यापि प्रकृतिरूपत्वात् यथा कनकात्सर्वमेवकुण्डलादिकं भवति ननु कुण्डलात् अत एव ब्रह्मादीनामपि नृगतिः प्रार्थ्या न इति षष्ठीसम्बन्धमात्रविवक्षया नृगतेः वैलक्षण्यप्रतिपादनार्था या नृगतिः ब्रह्मत्वं सम्पादितवती नासुरीति यावत् षष्ठ्या सूचितं विशेषमाह । ज्ञानं च तत्त्वविषयमिति । यत्र नृगतौ तत्त्वविषयं ज्ञानं तत्त्वज्ञानं भवति ब्रह्मज्ञानं सुलभं तद्भावापन्नानां प्रापञ्चिकपदार्थानां वैदिकानां वा ज्ञानं दुर्लभं तत्त्वविषयमिति विषयपदं तत्त्वेन ज्ञानं वारयति तदा बाधितं स्वरूपमेव ज्ञातं स्यात् तदैत्यज्ञानेऽपि तुल्यं चकारात्स्वरूपज्ञानं सोऽह धर्मेति धर्मज्ञानसहितमेवमपि सति भगवत आराधनाभावः मायाकार्य एव वितरणं नाम मर्यादाव्यतिरेकेण दानं तथा सर्वेन्द्रियैः सर्वथा सर्वदा भगवद्भजनं न स्मार्तवत्पूजामात्रं सकृदाराधनं वा मायामोहः शास्त्रेण निवर्तयितुं शक्यत इति दृष्टेऽपि शास्त्रे यदवितरणं तत् मायामोहकार्यं न भवतीत्याशङ्क्याह । वितन्वया नन्विति कोमलसम्बोधनेन नात्रान्यथा कथनं शङ्कनीयमिति ज्ञापितम् सा हि वितता शास्त्रेऽप्यन्यथा बुद्धिः सम्पादयति सापि मायाविततैवेत्यर्थं मोहाभावात् ॥ २४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सर्वे हरिभजनानन्दवन्त इति किं वक्तव्यम् । साक्षाल्लक्ष्मीरपि यत्र सदा भजन्ती वर्त्तत इत्याह । द्वाभ्याम् । रूपिणी परमसौरूप्यवती चरणारविन्दं क्वणयन्ती मन्दगत्या, नूपुरेण शब्दयन्ती हरेः सद्मनि स्फटिककुड्ये स्फटिकमयभित्तौ उपेतहेम्नि मध्ये मध्ये शोभार्थं संयुक्तसुवर्णे । मुक्तदोषा प्रसारितेन भुजेन लीलाम्बुजेन पाणिधृतेन सम्मार्जतीव स्वच्छभित्तौ प्रतिबिम्बिता शोधन्या सम्मार्जनं कुर्वतीव संलक्ष्यते लीलाम्बुजमत्र शोधनीस्थानीयम् । यद्वा । सम्मार्जतीव सम्मार्जनकारयन्त्या दासीव । यदुक्तम् कुरुक्षेत्रयात्रायां साहं तद्गृहमार्जनीति । तदा मुक्तदोषा निर्दोषा । लीलाम्बुजेनेत्युपलक्षणे तृतीया नचानेन साल्पमाहात्म्या मन्तव्येत्याह । यस्या अनुग्रहयो श्रीरनुग्रहं करोत्विति यतदर्थमन्येषां ब्रह्मादीनां यत्नः सा ॥ २१ ॥

परिचरणभक्तिमुक्त्वा साधकभक्तानामिव तस्या अर्चनभक्तिमाह । वापीषु दीर्घिकासु अमृततुल्यजलासु निजवने निःश्रेयसवनैकदेशस्थे लक्ष्मीवने तुलसीभिरीशं श्रीनारायणमभ्यर्चती अभ्यर्चयितुं प्रातःस्नानं करिष्यन्ती प्रथमं मुखक्षालनार्थं सोपानतटमध्यासीना जले प्रतिबिम्बितं शोभनालकं उन्नतनासिकायुक्तञ्च स्वमुखमीक्ष्य ईक्षित्वा भगवता उच्छेषितमुच्छिष्टीकृतं चुम्बनाधरपानाभ्यामित्यमत अमन्यत । यद्वा तत्र जले नीलोत्पलप्रतिबिम्बे--मिलितं स्ववक्त्रप्रतिबिम्बं वीक्ष्य भगवता तन्मुखं चुम्बितं जातमिति भावोदयो जातः ॥ २२ ॥

तत्र गन्तुं केऽधिकारिण इत्यपेक्षायां प्रथममनधिकारिण आह । अघभिदः श्रीकृष्णस्य रचना लीला कथा तस्या अनुवादात् अनुकीर्त्तनात् अन्यविषया एव कथाः न्यायादिशास्त्रविषया अपि कथाः कुकथास्ता ये शृण्वन्ति ते यद्वैकुण्ठं न व्रजन्ति तर्हि किं व्रजन्ति तत्राह । याः कुकथा हतसगैः श्रुता इति । हतभगा एव तत्राधिकारिणः । अतो हतभगैर्नृभिरेवात्ताः गृहीतः सारः श्रोतृव्यत्वेनानुसंहितं महत्त्वं यासामत एव तांस्तान् हतभगान् तमस्सु नरकेषु ताः कथा एव बलात्कारेण क्षिपन्ति ॥ २३ ॥

हन्त हन्त यद्यपि तत्र गन्तुं नृजातय एवाधिकारिणो

यच्च व्रजन्त्यनिमिषामृषभानुवृत्त्या (१) दूरे यमा ह्युपरि नः स्पृहणीयशीलाः।
भर्तुर्मिथः सुयशसः कथनानुरागवैक्लव्यबाष्पकलया पुलकीकृताङ्गाः ॥ २५ ॥
तद्विश्वगुर्वधिकृतं भुवनैकवन्द्यं दिव्यं विचित्रविबुधाग्र्यविमानशोचिः।
आपुः परां मुदमपूर्वमुपेत्य योगमायाबलेन मुनयस्तदथो विकुण्ठम् ॥ २६ ॥
तस्मिन्नतीत्य मुनयः षडसज्जमानाः कक्षाः समानवयसावथ सप्तमायाम्।
देवावचक्षत गृहीतगदौ परार्ध्यकेयूरकुण्डलकिरीटविटङ्कवेषौ ॥ २७ ॥
मत्तद्विरेफवनमालिकया निवीतौ विन्यस्तयाऽसितचतुष्टयबाहुमध्ये।
वक्त्रं भ्रुवा कुटिलया स्फुटनिर्गमाभ्यां रक्तेक्षणेन च मनाग्रभसं दधानौ ॥ २८ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

देवादिजातयस्तदपि भक्तिरहितशास्त्रतात्पर्य्यभ्रंशितबुद्धयो नृजातय एव केचिद्वञ्चिता भवन्तीति तान् शोचति। ये इति। हा हन्त भारतभूमौ कदा नृजनुषो भूत्वावयं कृष्णं भजन्तः क्षणमात्रेणैव वैकुण्ठं प्राप्नुयामेति नोऽस्माभिर्ब्रह्मादिभिरप्यभ्यर्थितां नृगतिं ये प्रपन्नाः प्राप्ताः यत्र यस्यां तत्त्वविषयं ब्रह्मविषयकं धर्म्मसहितं ज्ञानञ्च भवति तदपि भगवत आराधनं न वितरन्ति न कुर्वन्ति चेत् ते अमुष्य मायया मोहिताः धर्म्मज्ञानयोरपि भक्तिं विना फलासिद्धेरिति भावः। यद्वा। यत्र धर्म्मसहितं ज्ञानं कुर्व्वन्ति तत्त्वाराधनं ते मोहिताः। यद्वा भगवतः एवाराधनं भगवते न ददति तत्सुखतात्पर्य्यतया न कल्पयन्ति ते सकामभक्ता अपीति ॥२४॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

यदित्यनन्तरश्लोकगतं पदमत्रसंयोज्यं यस्मिन्वैकुण्ठे मुक्तदोषा सर्वदापास्तसमस्तदोषा यस्या अनुग्रहयो श्रीरुपासके ष्वस्मास्वनुग्रहं करोत्विति सङ्कल्पेनान्येषां ब्रह्मादीनां यत्नः सा रूपिणी मूर्तिमती चरणारविन्दं क्वणयती नूपुरेण शब्दयन्ती श्रीर्लीलाम्बुजेन उपेतहेम्नि उपेतं यथायथं हेम यस्मिन् तस्मिन् हरिसद्मनि हरेर्वेश्मनि सम्मार्जतीव संलक्ष्यते इवशब्देन संमार्जनाद्यभावः सूचितस्तस्य विरजस्कत्वात् ॥ २१ ॥

यत्र यस्मिन् वैकुण्ठे अङ्ग हेदेवा! उच्छेषितं चुम्बितामित्यमतामन्यत अनेन मुखाद्यङ्गप्रतिबिम्बादिदर्शनेनापि श्रियः भगवत्स्मरणजन्यानन्दातिशयः सूचितः ॥ २२ ॥

यद्वैकुण्ठं स्मरणमात्रेण अघं भिनत्तीति स तथा तस्य हरेः तमःसु तामसयोनिषु ॥ २३ ॥

अभ्यर्थितां प्रार्थितां नृगतिं मनुष्यजातिं प्रपन्नाः प्राप्ताः सन्तोऽपि न वितरन्ति न कुर्वन्ति ॥ २४ ॥

### भाषाटीका।

जहांपर दिव्य रूप को धारण करने वाली श्री लक्ष्मी जी हाथ में क्रीडा के कमल को लेकर चरणों से नूपुरों को बजाती हुई भगवान के मंदिर में चंचलता दोष को छोड कर रही ऐसी मालूम देती हैं जैसे कि भगवान् के स्थानमें झाडू से मार्जन करती हों वे लक्ष्मी जी कैसी हैं कि जिन के अनुग्रह की चाहना से ब्रह्मादिक यतन करते हैं ॥ २१ ॥

हे देव हो जिस वैकुण्ठ में अपनी दासियों के सहित श्री लक्ष्मी जी अपनी विहार वाटिका में तुलसी पत्रों से भगवान् की अर्चना करती हुई अमृत सरी के निर्मल जलों वाली मूगा मोति की किनारे वाली बावडीयों में अपना अलकावली वाले मुख को उठा कर जब देखतीं हैं जल में तब समुझती हैं कि भगवान् नारायण ने इस मुख का चुम्बन किया है ॥ २२ ॥

जो जन पाप हारक हरि के चरित्र कथन से अन्य अपनी मति को नाश करने वाली दूसरे विषयकी खोटी कथाओं को सुनते हैं वे लोग जिस वैकुण्ठ को नहीं जाते हैं वे अन्य कथा कैसी हैं कि बडे खेद की बात है जिन कथों में कुछ सार नहीं है उन कथाओं को जो हतभागी सुनते हैं उन लोगों को वे कथा निराश्रय नरकों में गिरा देती हैं इस से मंदभागियों कि उनमें प्रवृत्ति होती है ॥२३॥

ब्रह्माजी कहैं हैं कि हमलोगों के भी प्रार्थना करने के योग्य जो मनुष्य योनि उसको भी प्राप्त होकर जहांपर कि धर्म के सहित तत्त्व विषय का ज्ञान है वहांपर भी जो इन भगवान् का आराधन नहीं करते हैं वे लोग मानो इन भगवान् की विस्तृत माया से मोहित हैं ॥ २४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

पुनःकथं भूतम् यच्च नः उपरि स्थितं व्रजन्ति के अनिमिषां देवानामृषभः श्रेष्ठो हरिस्तस्यानुवृत्त्या दूरे यमो येषां यद्वा दूरीकृतयमनियमाः पाठान्तरे दूरीकृताहङ्कारा इत्यर्थः स्पृहणीयं करुणादि शीलं येषाम् किंच भर्तुर्हरेर्यत्सुयशस्तस्य मिथः कथने योऽनुरागस्तेन वैक्लव्यं वैवश्यं तेन बाष्पकला तया सह पुलकीकृतमङ्गं येषाम् यद्वा नः उपरीति व्रजतां विशेषणम् निरहङ्कारत्वादस्मत्तोऽपि येऽधिकास्ते यद्व्रजन्तीत्यर्थः ॥२५॥

तत्तदा तदपूर्वं विकुण्ठं अथो अनन्तरमुपेत्य मुनयः परामुत्कृष्टां मुदमापुः अपूर्वत्वे हेतवः विश्वगुरुणा हरिणाऽधिकृतम्-

(१) दूरेयमाद्युचितसत्स्पृहणीयशीला दूरेयमाह्युपरिनः इत्यपीतिश्रीवीरराघवः।

### श्रीधरस्वामिकृतभावार्थदीपिका ।

धिष्ठितम् भुवनानामेकमेव वन्द्यम् दिव्यमलौकिकम् विचित्राणि विबुधाग्र्याणां विमानानि तेषां शोचिर्दीप्तिर्यस्मिन् योगमायाबलेनेति अष्टाङ्गयोगप्रभावेणोपेत्य परमेश्वरे तु योगमायेति चिच्छक्तिविलास इति द्रष्टव्यम् ॥ २६ ॥

तस्मिन्वैकुण्ठे षट्कक्षाः प्राकारद्वाराणि असज्जमानाः भगवद्दर्शनोत्कण्ठया तत्तदद्भुतदर्शन आसक्तिमकुर्वाणाः द्वारपालौ देवावपश्यन् समानं वयो ययोः गृहीते गदे याभ्याम् परार्ध्यैः केयूरादिभिर्विटङ्कः सुन्दरो वेषो ययोः ॥ २७ ॥

तावेव वर्णयति । मत्ता द्विरेफा यस्यां तया वनमालया निवीतौ कण्ठलम्बिन्या अलङ्कृतौ असिना नीलाश्चतुष्टयं चतुः संख्याका बाहवस्तेषां मध्ये विन्यस्तया वक्त्रं च मनाग्रभसं किञ्चित्क्षुब्धं दधानौ स्फुटावुत्फुल्लौ निर्गमौ श्वासमार्गौ नासापुटे ताभ्याम् ॥२८॥

---

### श्रीराधारमणदासगोस्वामिविरचितां दीपिन्याख्या दीपिकाटिप्पणी ।

पूर्वार्थे निषिद्धानाचरणमात्रेण यमो दूरे स्यात् तत्र मोक्षस्पर्द्धिन्या हर्य्यनुवृत्तेरनुपयोगात् इत्यरुचौ यद्वेति पाठान्तरे दूरेऽहमा इति पाठे पूर्वार्थे रमावैकुण्ठस्य वैकुण्ठः कल्पितो येनेत्यष्टमानुसाराद्ब्रह्मलोकादुपरिस्थितत्वासम्भवात् माहात्म्येन तथात्वं चेत्तस्य मानान्तरेण प्राप्तत्वादनुवादमात्रता इत्यरुचौ यद्वेति अस्मिन्पक्षेऽप्यर्थे चकारः अस्मत्तोऽपीति व्याख्यानात् ॥ २५ ॥

अष्टाङ्गयोगप्रभावेणेति अष्टाङ्गयोगश्चायं श्रीकपिलोक्त्यनुसारेण भगवद्ध्यानमयो ज्ञेयः मनीषितानुभावोऽयं मम लोकावलोकनमिति श्रीभगवदुक्तेः इति द्रष्टव्यमित्यनेन भगवति योगमाया सर्वत्र स्वरूपशक्तिविलास एव व्याख्येयः नतु त्रिगुणात्मिका न यत्र मायेति तत्र तन्निषेधादिति परमतं प्रत्याख्यातम् ॥ २६ ॥

तस्मिन्निति युग्मकम् सप्तमायाम् कक्षायाम् ॥ २७ ॥ २८ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

एवं भगवत्कथादिषु विमुखानां तल्लोकाप्राप्तिमभिधाय तांश्चानुशोच्य तत्कथाश्रवणप्रवणचित्तैस्तल्लोकस्य प्राप्यत्वमाह । यत्रेति । यद्वैकुण्ठनिलयमनिमिषां देवानामृषभः श्रेष्ठो भगवान् तस्यानुवृत्त्या भक्त्या व्रजन्ति कथम्भूता व्रजन्ति दूरं यमाद्युचितसत्स्पृहणीयशीलाः दूरे चिरकालेन यमाद्युचितश्लाघ्यशीलाः दूरे यमाह्युपरि नः स्पृहणीयशीला इत्यपिपाठः तत्र उपरिस्थितं यद्वैकुण्ठनिलयं व्रजन्ति कथम्भूताः नः अस्माभिरपि स्पृहणीयं श्लाघनीयं शीलं येषां ते दूरे चिरकालेन यमः यमोपलक्षितः शमदमादिगुणो येषां ते किञ्च भर्तुर्हरेः सुयशसः मिथः परस्परं कथनेन योऽनुरागस्तेन यद्वक्तव्यमधार्ष्टंचं तेनया वाष्पकला तया पुलकीकृतं उदञ्चितरोम अङ्गं शरीरं येषां ते व्रजन्तीत्यर्थः ॥ २५ ॥

एवं वैकुण्ठनिलयमनुवर्ण्याथानन्तरकथां प्रस्तौति । तदिति । मुनयः सनकादयः तदुक्तविधं वैकुण्ठनिलयं योगमायावलनाणिमाद्यैश्वर्यबलेन उपेत्य प्राप्याथ कात्स्न्र्येन परामुत्कृष्टां मुदं सन्तोषमापुः प्रापुः कथम्भूतं वैकुण्ठम् अपूर्वमदृष्टपूर्वं विबुधाग्र्या देवश्रेष्ठास्तेषां विमानैः शोचिः प्रकाशो यस्मिन् विचित्रमद्भुतं दिव्यममानुषं भुवनैः एकं प्राधान्येन वन्द्यं बहुमन्तव्यं तत्र हेतुः विश्वगुरुणा भगवताधिकृतमधिष्ठितम् ॥ २६ ॥

तस्मिन् वैकुण्ठे षट् कक्षाः प्राकारद्वाराणि अतीत्यातिक्रम्य असज्जमानाः भगवद्दिदृक्षाश्रद्धया तत्राद्भुतदर्शने आसक्तिमकुर्वाणा मुनयः सनकादयः अथानन्तरं सप्तमायां कक्षायां देवावचक्षत दृष्टवन्तः कथम्भूतौ देवौ समानं वयो ययोस्तौ गृहीते गदे याभ्यां तौ परार्ध्यैः श्रेष्ठैः केयूरादिभिः विटङ्को रुचिरः वेषो ययोस्तौ देवौ इति ॥ २७ ॥

पुनस्तावेव वर्णयति । असितं नीलं यद्बाहुचतुष्टयं तस्य मध्ये विन्यस्तया मत्ताः द्विरेफाः भ्रमरा यस्यां तया वनमालया निवीतौ वनमालां कण्ठावलम्बिनीं कृतवन्तौ इत्यर्थः किञ्च कुटिलया भ्रुवा स्फुटौ विकसितौ यौ निर्गमौ श्वासमार्गौ नासापुटे ताभ्यां च रक्तेक्षणौ रक्तनेत्रेण च मनागीषद्रभसम् उग्रं यथा भवति तथा वक्त्रं दधानौ देवौ ॥ २८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सन्तो देवप्रकृतय एव भगवत आराधनं कृत्वा तज्ज्ञानेन यत्र स्थितं हरिं प्राप्नुवन्तीत्याह । यत्रेति । यत्र नोऽस्माकमुपरि स्थितं वैकुण्ठस्थितं हरिं प्रयान्तीत्यन्वयः ये अनिमिषां देवानामृषभस्य स्वामिनो हरेरनुवृत्त्या निरन्तरसेवया दूरे यमा दूरीकृतयमलोका अत एव सर्वैः स्पृहणीयशीलाः सुयशसो भर्तुर्हरेर्गुणगणानां मिथः कथने योऽनुरागस्तस्मादुत्पन्नं यद्वैक्लव्यं पारवश्यं तन्निमित्तेन जाता या बाष्पकलानन्दाश्रुधारा तया पुलकीकृतान्यङ्गानि शरीरतदवयवा येषां ते तथोक्ताः सुयशस इति भागवतानां विशेषणं वा वैकुण्ठादप्युपरि शिवलोक इतिकेचिदाचक्षते तस्याप्रस्तुतत्वादनुपपन्नत्वादिति हेतुद्वयं हीत्यनेन सूचयति ॥ २५ ॥

प्रकृतमनुसरति । तद्विश्वगुर्वधिकृतमिति । अथ मुनयः परां मुदमापुरित्यन्वयः भगवत्समाधिना नित्यतृप्तानां मुनीनां कादाचित्कमोदप्राप्तौ किङ्कारणमुच्यते तद्वैकुण्ठस्थानमुपेत्य कीदृशम् । "उतामृतत्वस्येशानो यदन्नेनातिरोहति" इत्यादिना यो मुक्तामुक्तप्रपञ्चाधारत्वेन श्रुतः सचासौ विश्वगुरुस्तेन मुक्तामुक्तप्रपञ्चगुरुणा हरिणाधिकृतं विशेषतः स्वामित्वेनाभिमतं भुवनशब्देन तत्स्थाः पुरुषा लक्ष्यन्ते तैः शिवलोकोत्तमतया वन्द्यं दिव्यमप्राकृतं विचित्राणि नानावर्णानि विबुधाग्र्याणां विमानानि शोचयति दीपयति इति विचित्रविबुधाग्र्यविमानशोचिः शुचिर्दीप्त्यर्थादितिधातुः अपूर्वं पूर्वमदृष्टं योगमायाबलेन भगवदुपासनालब्धज्ञानबलेन प्राप्येत्यर्थः ॥ २६ ॥

मुदमुपेत्य बहिरेवावतिष्ठन्त उतान्तरा विशन् आविश्य च किञ्चक्रुरिति तत्राह । यस्मिन्निति । तस्मिन् वैकुण्ठे षट् कक्ष्याः गोपुरद्वाराण्यतीत्य तत्रासज्जमाना अनिवार्यमाणाः सप्तमायां कक्ष्यायां स्थितौ देवावचक्षतापश्यन्नित्यन्वयः केयूरादिभिर्विटङ्कोऽलङ्कृतो वेषो ययोस्तौ तथोक्तौ ॥ २७ ॥

तयोर्भावं वर्णयति । मत्तेति । असितानां श्यामानां बाहूनां चतुष्टयस्य मध्ये वक्षसि विन्यस्तया मत्ता द्विरेफा भृङ्गा यस्यां सा मत्तद्विरेफा वनमालिका वनमाला तया निवीतौ परिवृतौ कुटिलया वक्रया वक्रस्थितया भ्रुवा सह स्फुटं निर्गतेन रक्तचक्षुषा रक्तान्तकटाक्षनिरीक्षणेन मनाक् किञ्चिद्रभसं कोपं दधानौ

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अनुसन्धानं कुर्वन्तौ अन्तः प्रविशतो निर्गच्छतश्च जनान् ज्ञात्वा तिष्ठत इत्यर्थः ॥ २८ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अनिमिषां कालानधीनानामित्यर्थः ॥ २५ ॥

योगमायाबलेन भगवच्छक्तिप्रभावेणैव न तु स्वशक्त्या । मनीषितानुभावोऽयं मम लोकावलोकनमिति श्रीभगवतोक्तत्वात् ॥२६॥

तस्मिन्निति युग्मकम् ॥ २७ ॥ २८ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तत्र गमने साधनमाह । यच्च व्रजन्तीति । चकाराद्यचापि वैकुण्ठं यद्वैकुण्ठं हरेरनुवृत्त्या व्रजन्ति हे अनिमिषामृषभेति ! इन्द्रसम्बोधनं तस्य भगवदनुकम्पयैव इन्द्रत्वप्राप्तिः सर्वदुःखहर्तुरित्यनुवृत्तौ क्लेशाभावः विमानदर्शनं भगवदानतिमात्रेणापि भवति प्राप्तिश्च स्वतो वैकुण्ठगमनं तु हरेरनुवृत्त्यैव आनतिरेव वानुवृत्तिः अन्यार्थे तत्र कीर्त्तनात् पुनः स्वावसरे कीर्त्तनं तस्या अनुवृत्तेरत्र-निदर्शनमाह । दूरेऽहमा इति । अहङ्कारस्तेषां दूरेहीति भगवद्भजनस्य दोषनिवर्तकत्वात् तदाहङ्कारलक्षणो दोषो निवर्तत एव अनिवृत्तौ तु भजनं नास्तीत्यवगन्तव्यमिति बोधयति नः उपरि व्रजन्तीति सत्यलोकोपरि स वैकुण्ठलोको वर्तत इति बोधितम् । ये निरन्तरं हरेरनुवृत्तिं कुर्वन्ति ते शुद्धसात्त्विकस्वभावाः भवन्तीति नः स्पृहणीयं शीलं येषां तादृशा भवन्ति । अत एव न उपरि गच्छन्ति यद्यपि वयमपि हरेरनुवृत्तिं कुर्मः । तथापि अस्माकं न तदेकस्वभावः । अत एव न दूरेऽहमाः अत एव तेषां शीलं स्पृहणीयम् । तेषां परिज्ञानार्थं लक्षणमाह । भर्तुरिति । सह्यत्रापि परिपालकः । तेन देहादिनिर्वाहचिन्तापि तेषां नास्ति अन्यथा निर्वाहोऽपि न भवेदिति च । मिथ इति । रसाविर्भावार्थमुक्तम् । सुयशस इति विषयोत्कर्षः लौकिकानामपि यशः कीर्त्यते यशः कीर्तने धर्मो भवतीतीदं पुनर्यशः धर्मज्ञानभक्तिजनकत्वात् सुयशो भवति अत एव कथने अनुरागः कथानुरागेणैव कथयन्ते नतु निर्बन्धेन फलान्तरेण वा कथनम् । सोऽप्यनुरागः नासक्तिमात्रं किन्तु सफलं सलक्षणं चेत्याह । वैक्लव्येति । अनुरागेण शरीरे वैक्लव्यं जायते सर्वकार्यासमर्थं भवति इदं फलं लक्षणद्वयमाह । वाष्पकलया पुलकीकृताङ्गा इति । वाष्पाणां कला उत्तरोत्तराभिवृद्धिः अन्तःस्थितो भगवदानन्दः सर्वमेव संसारतापं बहिः करोति तदा तस्य बाष्पाः मुखतो निःसरन्ति तेषां कलया सह तया एव कलया प्रकाशमानाः रोमाञ्चयुक्ताङ्गाश्च भवन्ति अतो वैकुण्ठगतानां दोषः शङ्कनीयोऽपि नेत्यर्थः ॥२५॥

एवं नवभिर्निर्दुष्टे वैकुण्ठे स्वतो निर्दुष्टाः सनकादयः परमं दोषं कृतवन्त इति महदाश्चर्यमिति वक्तुमाह । तदिति । तद्वैकुण्ठं योगमायाबलेनापुरिति सम्बन्धः भक्त्यैव गतं तत्स्थानं हितकरं भवति नतु स्वयोगबलेन गतं तत्रापि सर्वकर्त्री या योगमाया तया स्वस्वार्थं नीताः कथमनर्थं न करिष्यन्तीति भावः तद्भक्त्यैव गन्तव्यमिति वक्तुं विशेषणमाह । विश्वगुर्वधिकृतमिति । विश्वगुरुणा वेदादिप्रवर्तकेन अधिकृतमधिकृतमधिष्ठितं गुरोः स्थाने धाष्ट्र्येण न गन्तव्यम् । नापि रिक्तहस्तादिना । किञ्च । तत् स्थानं भुवनैकवन्द्यं नतु पदा आक्रमणीयम् । तथा सत्यनर्थो भवेदेव । किञ्च । दिव्यं तदलौकिकं लौकिकप्रकारेण न गन्तव्यम् । अत एव विरक्तानामपि लौकिकदृष्ट्या गमने दोषोत्पत्तिः । किञ्च । विचित्रविबुधाग्र्यविमानशोचिः । विचित्राणि यानि विबुधाग्र्याणां विमानानि तैः शोचिः कान्तिर्यस्य । ब्रह्मादयोऽपि तत्स्थानं पदा अस्पृष्ट्वा अलौकिकानि विमानान्यारुह्य अधस्तात्स्थिताः तस्योत्कर्षं सम्पादयन्ति । विमानानां विचित्रता छन्दोमयत्वादिना । नहि तादृशं यथा कथञ्चिद्गन्तव्यम् । एवं चतुर्विधोत्कर्षसहितं विकुण्ठं कदापि भङ्गरहितं स्थानमुपेत्य मुदमापुः तस्यालौकिको धर्मः तैरपि प्रत्यक्षीकृत इत्यर्थः ॥ २६ ॥

सा हि योगमाया भगवता सृष्ट्यर्थमाज्ञप्ता स्वयं सृष्टिं विधाय तद्दर्शनार्थं भगवन्तमाकारयितुं भीता तत् द्वारपालकौ उपायेन तत्र नेतुं मुनीनानीतवती । बलाद्भगवता तयोर्द्वारपालकत्वं दत्तं तौ चेद्भूमिपालकौ भवतः तदा भूमिद्वारं भवेत् तदा भूमिमध्याद्द्वारत्वसिद्ध्यर्थं भगवानाविर्भवेत् तदा स्वकृत्यं पश्येदिति गूढाभिप्राया तानानीय यत्कर्तव्यं तत् कृतवतीत्याह । तस्मिन्नतीत्येति । तस्मिन्वैकुण्ठे षट् कक्षाः अतीत्य मुनयः सप्तमायां देवावचक्षतेति सम्बन्धः । मुदमपि प्राप्य तन्माहात्म्यं स्पष्टतोऽप्यनुभूय मायामोहवशात् तौ क्रोधदृष्ट्या दृष्टाविति । कक्षा रक्षकसहितद्वाराणि तत्र विरक्तत्वात् ऐश्वर्यादिषड्गुणप्रतिपादिकाः वैराग्यान्ताः अतीताः भक्तिः सप्तमी भक्ताश्चेत्तदप्यतिक्रम्य गच्छेयुः । तदभावात्तत्र रक्षकौ दृष्टौ असज्जमाना इति । षट्कक्षातिक्रमे हेतुः । समानवयसाविति । वृद्धिक्षयहेतुकालाभावयुक्तौ वैकुण्ठेकालस्यानियामकत्वात् । कालस्य तुल्यत्वेन तत्प्रेर्यकर्मस्वभावयोरपि तुल्यता । अथेति भिन्नप्रक्रमे तेषामप्यसज्जमानता गता । एतयोरपि पूर्ववदनिवारकत्वङ्गतम् । सप्तमायामिति । नेयं पूरणीकक्षेति ज्ञापनार्थं ङीप्प्रत्ययाभावः सप्तम्यप्येषा प्रथमा भवति । तत्रात्ययो नास्तीति साधिकरणत्वेन निर्दिष्टा । देवाविति वस्तुत एतेषामप्युपास्यौ । एते मनुष्याः तथापि मुनय इति तेषां तत्र गमनं किञ्च । एतौ गृहीतगदौ । आसन्वः एतदधीनः । तेन दैत्यनिवारणासमर्थौ । ततस्तयोराज्ञाकरणे कृतार्था एव भवन्ति । किञ्च । भगवत्सारूप्यमपि प्राप्तौ तावनुवर्णयति । परार्ध्येति । परार्ध्यानि केयूरकुण्डलकिरीटानि हस्तकर्णशिरोभूषणानि । अनेन तयोः कर्माणि सिद्धानि । साङ्ख्ययोगौ ज्ञानं च । आसन्यस्तु तदधीन एवेति मृत्युर्दैत्यजयः स्वतः सिद्धः । तैरपि विटङ्कौ वेषो ययोः । तैरलौकिकप्रकारेण भगवद्द्वारपालकयोग्यवेषौ तयोः कर्मादिकमपि भक्त्युपयोगीत्यर्थः ॥ २७ ॥

किञ्च । मत्तद्विरेफवनमालिकया निवीतौ । तयोः चतुर्विधान्यपि कर्माणि सिद्धानि । उत्पत्तिस्थितिप्रलया मोक्षश्चेति लौकिकानि वैदिकानि दिव्यानि भगवदीयानि च । तैः सम्बद्धा तयोः कीर्तिर्वनमाला तामनुवर्णयति । मत्ता ये द्विरेफाः भ्रमराः द्विरेफशब्दो रूढः । सर्वेषां शीघ्रप्रतीतेः । अन्यथा प्रतीतौ बर्बरशब्दादिव्युदासोऽपि न प्रतीयेत । मत्तद्विरेफसहिता वनमाला रेफोऽत्राग्नितेजो लौकिकवैदिकाग्नितेजोवद्देवसहिता वनमाला सापि प्रेमसम्बन्धात् मत्तभ्रमरैरिव सम्बद्धा वनमालिकयेति ताभ्यां वनमालाशोभा तया निवीतौ कण्ठलम्बितौ सा कीर्तिः तत्कर्मसहितेति वक्षुर्मासतचतुष्टयबाहुमध्ये विन्यस्तयेत्युक्तम्

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अनेन तयोर्हृदये भगवान् वनमाला कमलं हस्तचतुष्टयं पत्राणीति निरूपितम् एवं विधावपि वक्र कुटिलया भ्रुवा उपलक्षितं स्फुटनिर्गमाभ्यां श्वाससहिताभ्यां नासिकाभ्यां सहितं रक्तेक्षणेन च मनाग्रभसं क्रोधसहितं दधानौ एतद्रूपं भगवत्सारूप्यातिरिक्तं मायया कृतं वक्रं दधानाविति भक्तिमार्गनिविष्टौ तत्र दोषत्रयं कामादिरूपं कुटिला भ्रूः क्रोधस्य सूचिका नासिका हृदयवायुः एतेन प्रवेशनीया इत्यन्तःस्थितभगवद्दर्शनलक्षणमहाधनलोभन चिन्तया श्रान्तयोः स्फुटं निर्गतौ लोभस्य सूचकः स्वस्याधिकारं मत्वा स्वयं पूर्णकामौ भूत्वा कामितः स पदार्थः एतेषां माभवत्विति काममूलकः क्रोधसूचकः अक्ष्णोरारक्तिमा त्रिभिर्दोषैः कृत्वा मनाग्रभसम् उत्तरलं मुखम् अत एतयोः भक्तावन्तरायं भूतं दोषत्रयं जन्मत्रयं सम्पादयिष्यति मनाक् च संरम्भः तदपहेलया ॥ २८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अथाधिकारिण आह । यच्चेति । अनिमिषामृषभो हरिस्तस्यानुवृत्त्या दूरे यमो येषाम् । यद्वा दूरीकृता यमनियमाः यैः दूरेऽहमा इति पाठे दूरीकृताहङ्काराः नाऽस्माकमप्युपरिभूताः अधिकाः यतोऽस्माभिः स्पृहणीयमेव नतु प्राप्यं शीलं येषां ते किंतत् शीलं तत्र तेषां प्रमाणमाह भर्त्तुः प्रभोर्मिथ इति परस्परप्रणयवरेण कथनेनास्वादविशेषोपलब्धेः क्वचित् पुराणादावसुराणामपि कदाचित् केषांचित् तत्र यत्क्षणिकागमनं श्रूयते तत्तु तत्रत्यचिद्विभूतिसुखानुभवाभावात् गमनमप्यगमनायमानमेव यथा विविधसौरभ्यादिगुणयुक्तेषु मणिमयराजसदनेषु व्याघ्रभल्लुकादीनां प्रवेशः स्वपुरस्थपरिजनवृन्दान्येव कौतुकविशेषवशात् तांस्तान् दर्शयितुमिच्छो राज्ञ एवाज्ञया भवति तथैव स्वीयाप्राकृतनित्यधामनिवासिनः स्वजनान् कौतुकवशाद्दर्शयितुं प्राकृतपदार्थान् कदाचित् घोरसत्वान् असुरान् कदाचित् सात्विकान् भृग्वादीन् कदाचित्त्रिगुणातिक्रमिणः सनकादींश्च स्वेच्छयैव भगवानेवानयति पुनः शीघ्रमेव तदयोग्यत्वात्ततो निःसारयति च । स्वैकान्तिकभक्तिसिद्धांस्तु स्वपार्षदद्वारा विमानैर्वैकुण्ठमानयति तत्र सदा निवासयति स्वधाममाधुर्यं स्वसेवामाधुर्यम् स्वलीलादिमाधुर्यं तानेवास्वादयतीति विवेचनीयम् ॥ २५ ॥

अत्र तत्र सनकादीनां गमनं वर्णयति । अथो तद्विकुण्ठं योगमायया भगवदिच्छानुवर्तिन्या भगवच्छक्तेर्वलेन न तु स्वबलेन उपेत्य भगवत्कृपया परां मुदमपूर्वां यथा स्यात्तथा आपुः अत्र परामपूर्वामिति पदाभ्यां तदीयब्रह्मानुभवमुदोऽपि सकाशात् वैकुण्ठीयमुद आधिक्यं दर्शितम् । विकुण्ठं कीदृशं तेनैव विश्वगुरुणा हरिणा स्वयमधिकृतमिति नात्र तन्मायाशक्तेरधिकार इत्यर्थः । कृपया स्वीयभक्तिमुपदेष्टुमेव मुनीनत्रानिनायेति विश्वगुरुपदस्याभिप्रायः वस्तु विचित्राणि विबुधाग्र्याणां विमानानि तेषां शोचिर्यत्र तत् ॥ २६ ॥

ततश्च तस्मिन् विकुण्ठे षट् कक्षाः प्राकारद्वाराणि अतिक्रम्य । असज्जमानाः जन्मत एव ब्रह्मानुभवित्वात् । तत्र तत्र द्वारप्राकारादौ । सौरूप्यसौरभ्यसौन्दर्य्यादिषु विषयबुद्ध्या आसक्तिमकुर्वाणाः । अथ सप्तम्यां कक्षायां देवौ द्वारपालौ जयविजयावपश्यन् गृहीतगदौ तत्रापि वक्त्रं मनाग्रभसं किञ्चित् कोपक्षुब्धञ्च दधानौ । केन लक्षणेनेत्यपेक्षायामाह । भ्रुवेत्यादिस्फुटनिर्गमाभ्य मित्यस्य नासाश्वासाभ्यामिति विशेष्यपदमध्याहार्य्यम् ॥ २७ ॥ २८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यद्वैकुण्ठं नोऽस्माकं सुमेरूपरिसंस्थितानां ब्रह्मादीनामुपरि स्थितम् अनिमिषानामृषभस्य श्रेष्ठस्य विष्णोः अनुवृत्त्या दूरेयमः संयमिनीपतिः यमयति वशीकरोतीति यमः अहं ममाभिमानो वा येषां ते व्रजन्ति ॥ २५ ॥

तत्तदा तदुक्तप्रकारं विकुण्ठं विश्वगुरुणा सर्वोपदेष्ट्रा भगवता अधिकृतमधिष्ठितं विचित्राणां विबुधाग्र्यविमानानां शोचिर्दीप्तिर्यस्मिन् तत् अथोऽनन्तरं मुनयः योगः ध्यानयोगः माया वयुनं तयोर्भक्तिज्ञानयोर्वलेन उपेत्य प्राप्य परामुत्कृष्टां मुदमापुः भक्तिज्ञानवलेनैव वैकुण्ठप्राप्तिर्नान्यथेति सूचनाय तेषां भगवद्विज्ञानसम्प्रदायप्रवर्तकत्वसूचनाय च योगमायावलेनेत्युक्तम् ॥ २६ ॥

तस्मिन् वैकुण्ठेऽपि असज्जमानाः आसक्तिमकुर्वाणाः । अतिविरक्तस्वभावत्वात् भगवद्ध्यानज्ञानानन्दपूर्णत्वाद्भगवद्दिदृक्षावशाच्च कक्षाः प्राकारद्वाराणि अतीत्य सप्तमायां कक्षायाम् परार्ध्यैः श्रेष्ठैः केयूरादिभिर्विटङ्कः रुचिरो वेषो ययोः तौ देवौ अचक्षत दृष्टवन्तः कुटिलया भ्रुवा स्फुटौ निर्गमौ श्वासमार्गौ नासापुटे ताभ्याञ्च रक्तेक्षणेन च मनाक् ईषद्रभसं क्षुब्धं वक्त्रं दधानौ ॥ २७ ॥ २८ ॥

---

### भाषाटीका ।

जिस वैकुण्ठ को ऐसे पुरुष जाते हैं जोकि देवतों मे श्रेष्ठ जो नारायण तिनके अनुवर्त्तन करने से यमराज उनसे दूर रहते हैं प्रशंसा करने लायक गुणवाले होने से, हमारे सेभी ऊंचे हैं अपने भगवान् की कथा को परस्पर कथन करते समय अनुराग के होने से आंसुओं से भरजाते शरीर में रोमांच युक्त हो जाते हैं ॥ २५ ॥

सब संसार के धनी नारायण जिसके मालिक सब लोका में श्रेष्ठ सबके वन्दन करने के योग्य अप्राकृत नानाप्रकार के देवतों के विमानों की पंक्ति से युक्त है पूर्व में कहीं देखानहीं ऐसे वैकुण्ठ को योगमाया बलसे प्राप्त होकर सनकादिक परम आनन्द को प्राप्त भये ॥ २६ ॥

उस वैकुण्ठ में किसी शोभा में मनको न लगाकर छः दरवाजों को लांघकर सातमी ड्योढी पर जब गये तो बरोबर अवस्था वाले बाजूबन्द कुण्डल किरीटों से सुशोभित वेषवाले हाथ में गदालिये दो देवों को सनकादिकों ने देखा ॥ २७ ॥

उनके नीलवर्ण चार भुजों के मध्य में मतवारे भौरानवाली वनमाला पडी है तिससे लिपटे हैं दोनों भौंके टेढे होने से दोनों नासा पुटों में से श्वास के वेग होने से नेत्रों के लाल होने से किंश्चित् क्रोधित मुख को धारण किये वे दोनों देव दीख पडे ॥ २८ ॥

---

द्वार्येतयोर्निविविशुर्मिषतोरपृष्ट्वा पूर्वा यथा पुरटवज्रकपाटिका याः ।
सर्वत्र तेऽविषमया मुनयः स्वदृष्ट्या ये सञ्चरन्त्यविहता विगताभिशङ्काः ॥ २९ ॥
तान् वीक्ष्य वातरशनांश्चतुरः कुमारान् वृद्धान् दशार्धवयसो विदितात्मतत्त्वान् ।
वेत्रेण चास्खलयतामतदर्हणांस्तौ तेजो विहस्य भगवत्प्रतिकूलशीलौ ॥ ३० ॥
ताभ्यां मिषत्स्वनिमिषेषु निषिध्यमानाः स्वर्हत्तमा ह्यपि हरेः प्रतिहारपाभ्याम् ।
ऊचुः सुहृत्तमदिदृक्षितभङ्ग ईषत्कामानुजेन सहसा त उपप्लुताक्षाः ॥ ३१ ॥

॥ मुनय ऊचुः ॥

को वामिहैत्य भगवत्परिचर्ययोच्चैस्तद्धर्मिणां निवसतां विषमः स्वभावः ।
तस्मिन् प्रशान्तपुरुषे गतविग्रहे वां को वात्मवत्कुहकयोः परिशङ्कनीयः ॥ ३२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

एतयोर्मिषतोः पश्यतोरनादृत्यापृष्ट्वैव याः पूर्वाः षट् द्वारः पुरटालङ्कृतवज्रमय्यः कपाटिका यासु ता यथा विविशुस्तथा सप्तमायामपि द्वारि ते निर्विविशुः अप्रश्ने हेतुः सर्वत्र ये अविहता अनिवारिताः सञ्चरन्ति निःशङ्कत्वे हेतुः अविषमया स्वदृष्ट्येति ॥ २९ ॥

वातरशनान्नग्नान्वृद्धानपि पञ्चवर्षबालकवत्प्रतीयमानान् चकाराद्वाचा च अस्खलयतां निवारितवन्तौ न तत्स्खलनमर्हन्तीति तथा तान् अहो अत्रापि धार्ष्ट्यमित्येवं तेषां तेजो विहस्य भगवतो ब्रह्मण्यदेवस्य प्रतिकूलं शीलं ययोः ॥ ३० ॥

हरेर्द्वारपालपतिभ्यां देवेषु पश्यत्सु वार्यमाणास्ते मुनयः कोवामित्यादिश्लोकत्रयीमूचुः सुहृत्तमः श्रीहरिस्तस्य दिदृक्षितं दर्शनेच्छा तस्य भङ्गे सति कामस्यानुजः क्रोधस्तेन सहसाऽकस्मादवोपप्लुतानि क्षुभितान्यक्षीणि येषां ते सुष्ठुपूज्यतमा अपीति निषेधानर्हत्वे क्रोधानर्हत्वे वा हेतुः ॥ ३१ ॥

उच्चैर्महत्या भगवत्परिचर्यया एत्य प्राप्य इह वैकुण्ठं निवसतां तद्धर्मिणां भगवद्धर्मिणां समदर्शिनां मध्ये वां युवयोरेव कोऽयं विषमः स्वभावः कैश्चित्प्रवेष्टव्यं कैश्चिन्नेत्येवं भूतः ननु स्वामिनो रक्षार्थं द्वारपालयोरेष स्वभावो गुण एवेति चेदत आहुः। तस्मिन्निति । कुहकयोः कपटयोः आत्मवत्स्वदृष्टान्तेन यथा आवां कपटौ तथान्योऽपि कश्चित्कपटः प्रवेक्ष्यतीति अयं भावः नह्यत्र भगवद्भक्तं विना कश्चिदागच्छति नचेश्वरे प्रशान्तत्वादविद्यमानविरोधे भयशङ्का अतो युवां केवलं धूर्तावेवेति ॥ ३२ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

अत्रापि वैकुण्ठेऽपि धार्ष्ट्यं ब्रह्मज्ञानप्रयुक्तसमदृष्टेः प्रागल्भ्यम् शीलं ब्राह्मणनिरोधात्मकं चरित्रम् ॥ २९ ॥ ३० ॥

देवेषु पश्यत्स्विति क्रोधे हेतुः दिदृक्षितेति भावे निष्ठा क्षुभितानि अरुणानि ॥ ३१ ॥

कोवामिहेत्यत्र कोवा इहैत्येति क्वचित्पाठस्स तु स्वाम्यसम्मतः वामित्यस्यावृत्तिप्रसङ्गात् दूरान्वयाच्च कुहकयोरिति कर्त्तरि षष्ठी कुहकाभ्यामभ्यां युवाभ्यामित्यर्थः अत्र वैकुण्ठे अतोऽभक्तस्य प्रवेशाभावात् भगवति च भयशङ्काभावात् ॥ ३२ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

द्वारीति । एतयोर्देवयोर्मिषतोः पश्यतोः सतोः तावनादृत्यापृष्ट्वैव याः पूर्वा द्वारः कनकवज्रमयकपाटिकाः यथा निर्विविशुः तथास्यां सप्तमायां द्वारि निर्विविशुरित्यर्थः। अपृष्ट्वैवनिवेशे कारणमाह । यद्यस्मात्ते मुनयः अविषमया समया "विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि" इत्युक्तविधया स्वदृष्ट्या विगताभिशङ्का अत एव सर्वत्राविहता अनिवारिताश्चरन्ति ये सञ्चरन्ति इति पाठे ये मुनयः सर्वत्राविहताश्चरन्ति ते निर्विविशुरित्येकान्वयः ॥ २९ ॥

तानिति । भगवत्प्रतिकूलशीलौ तौ देवौ वातरशनान्नग्नान् वृद्धानपि दशार्द्धवयसः पञ्चवर्षबालकवदवस्थितान् विदितमात्मतत्त्वं परमात्मयाथात्म्यं यैस्तान्मुनीन्वीक्ष्य तेजः तेषां प्रभावं विहस्याहो अत्रापि भवतां धार्ष्ट्यमित्येवं परिहस्येत्यर्थः अतदर्हान् निवारणानर्हान् वेत्रेण चकाराद्वाचा च अस्खलयतां निवारितवन्तौ भगवत्प्रतिकूलशीलाविति हेतुगर्भं भगवत्प्रतिकूलशीलत्वान्निवारितवन्ताविति भावः ॥ ३० ॥

ताभ्यामिति। हरेर्भगवतः प्रतिहारपाभ्यां ताभ्यां देवाभ्यामनिमिषेष्वन्येषु देवेषु मिषत्सु पश्यत्सु सत्सु अर्हत्तमाः स्वयं पूज्या अपि निषिध्यमाना निवारणेन परिभूता अत एव सुहृत्तमो भगवांस्तस्य दिदृक्षितं दर्शनेच्छा तस्य भङ्गेनेषत्कामानुजोऽल्पक्रोधः तेन सहसाशूपप्लुतान्याकुलानि व्याप्तान्यक्षीणि येषां तथा भूताः सन्त ऊचुः ॥ ३१ ॥

उक्तिमेवाह त्रिभिः। क इति। उच्चैर्महत्या भगवत्परिचर्यया इहास्मिन्वैकुण्ठलोके एत्य प्राप्येमं लोकं प्राप्येत्यर्थः निवसतां तत्कर्मणां तत्समानधर्मिणां मध्ये को वां विषमः स्वभावः इह वसतां विषमस्वभावोऽनुपपन्न इत्यर्थः ननु द्वारपालयोरावयोरयं धर्म एव नूतनपुरातनप्रतिनिरोध निरोधावन्यथा स्वामिकृतदण्डपातापत्तेरित्याशङ्क्यामाहुः । अस्मिन्निति । प्रशान्ताः पुरुषा यस्मिन् गतो विग्रहः कलहो यस्मात्तस्मिल्लोके वाक्पारुष्यविवादादिदोषर-

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

हिनेऽस्मिँल्लोके आत्मवदावामिवान्योऽपि कश्चित्कुटिलः प्रविशे-दित्ययं परिशङ्कनीयः कुहकयोः कुटिलचित्तयोर्वा युवयोः को वास्ति यदि परिशङ्कनीयः त्वादृशः कश्चित्कुटिलोऽत्रास्ति चेद्वयम शङ्कनीया वारणीयाश्च अन्यथा प्रभोर्दण्डपातापत्तिश्च यतश्च खलु प्राकृतवाक्पारुष्यविवादादिदोषरहितोऽयन्देशः अत इयमाशङ्कानुपपन्नेत्यर्थः ॥ ३२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ये मुनयः सर्ववस्तुषु स्वस्य स्वतन्त्रस्य हरेर्दृष्ट्यान्तर्यामित्वदर्शनेन अविषया निस्पृहा अत एव विगताभिशङ्काः अविहताः अप्रतिहतगतयः सर्वत्र सञ्चरन्ति हि यस्मात्तस्मात्ते मुनयः नावपृष्ठा मिषतोः पश्यतोस्तयोर्द्वारि तथा प्राविशुरित्यन्वयः यथा पूर्वाः षट् द्वारः प्रविविशुः निःशङ्कतया कीदृशीर्द्वारः या आरपुटवज्रकपाटिका आरेण पित्तलेनालंकृतं पुटं यस्याः सा आरपुटा वज्रशिलया कृताकपाटिका आरपुटा च वज्रकपाटिका यासान्तास्तथा ।

"लोहमप्यारकूटं स्यात्पित्तलं चारमस्त्रियाम्"

इति यादवः ॥ २९ ॥

ततः किमभूदिति तत्राह । तानिति । वातो वायुरेव रशना वस्त्रं येषां ते तथा तान् कुमारानित्युक्तं विवृणोति । दशार्धवयस इति । दृष्ट्या पञ्चवर्षान् विदितात्मतत्त्वान् ज्ञातपरमात्मस्वरूपान् वेत्रेण यष्ट्या स्खलयतां प्रवेशप्रतिरोधं चक्रतुः अतदर्हणान् स्खलनायोग्यान् तेजस्तेषां प्रभावं विहस्याऽगणय्य तत्र निमित्तमाह । भगवदिति । भगवतो हरेः प्रतिकूलं विरुद्धम् शीलं ययोस्तौ तथा तौ ।

जयस्य विजयस्यापि कदाचिद्ब्रह्मशापतः ।

कृष्णावतारपर्यन्तं प्रातिकूल्यं च जायते

इति वचनेन शापनिमित्तं प्रातिकूल्यं सावधिकं चेति ज्ञायते अन्यथा तयोस्तत्रावस्थानमेव न युज्यते रज आद्यभावस्योक्तत्वात् ॥ ३० ॥

न्यस्तदण्डत्वात्प्रतिपिद्धास्ते तूष्णीं यथागतं ययुः किमत्राह । ताभ्यामिति । सुष्ठु अर्हत्तमाः पूज्यतमाः सुहृत्तमस्य हरेर्दिदृक्षितस्य दर्शनेच्छाया भङ्गे विघ्ने सति ईषत्कामानुजेनालपकोपेन उपप्लुतानि अतिकलुषीकृतान्यक्षीणि येषां ते तथोक्ताः प्रतिहारपाश्यामनिमिषेषु देवेषु मिषत्सु निषिध्यमाना ऊचुरित्यन्वयः ॥ ३१ ॥

क्रोधाकुलितनेत्रत्वाद्धितं न किन्त्वहितमेव तत्कीदृशमूचुरिति तत्राह । कोवेति । भगवत उच्चैः परिचर्यया समुन्नतपूजादिसेवया इह वैकुण्ठे स्वयोग्यं स्थानमेत्य तद्धर्मिणां तस्य हरेर्ध्यानादिधर्मवतां सतां भागवतानामपि मध्ये कः पुमान् विषमस्वभावः शत्रुरयमिदं मित्रमिति तामसशीलः वा इत्यनेनानुपपत्तिं सूचयति भगवद्विषये शङ्कनीयोऽस्तीति भगवन्निषेधः क्रियत इति तत्राह तस्मिन्निति । कुहकयोर्मिथ्यादृष्टिमतोर्युवयोरात्मवत् यथात्मा परिशङ्कनीयस्तथेह तस्मिन् भगवति विषये परिशङ्कनीयो विरुद्धस्वभावः कोवास्ति न कोऽपीत्यन्वयः कुतो नास्तीत्यत आह । प्रशान्तेति । लोके अप्रशान्तस्य परेण सहोत्पादितवैरस्य च शङ्कनीयो दृष्टस्तथा नायं पुरुषेषु प्रशान्तत्वात् अनुत्पादितवैरत्वाच्च ।

किञ्च प्रकृष्टानन्दस्वरूपत्वादनुपहतैश्वर्यादिषड्गुणपूर्णत्वात्सर्वशरीरेषु गतत्वादप्रतिद्वन्द्वत्वादप्राकृतशरीरत्वाच्चातो ऽस्मिन्निषेधो व्यर्थ इत्यर्थः ॥ ३२ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

मनाग्भसत्त्वे हेतुर्द्वारीति ॥ २९ ॥

भगवत्प्रतिकूलशीलाविस्यस्यायं भावः । भगवांस्तावदात्मना सर्वतः परमेश्वर इति निजस्य पारमैश्वर्य्यस्य आज्ञाद्यादिभिरतिक्रमणं सहते तदीयसेवकास्तस्य सुतरां तु तन्नियोगप्राप्तपालनाधिकारस्य तदंशस्य केनाप्यतिक्रमं सोढुं न शक्नुवन्तीति भगवतो विपरीतस्वभावौ ताविदं न सहेते इति । दृष्टान्तस्तु चित्रकेतुशिवशिवावृत्तान्त एव ज्ञेयः ॥ ३० ॥ ३१ ॥

तयोर्द्वारपालयोः सालोक्यसामीप्यादितारतम्यवत्सु वैकुण्ठजनेष्वप्युचितं विचारं कामानुजोपरक्तत्वात् स्वस्वभावानुसाराच्च निन्दति कोवेति त्रिभिः ॥ ३२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं तयोः गुणदोषौ निरूप्य मुनीनां गुणदोषाव् निरूपयति । द्वार्येतयोरिति । ज्ञानमार्गे अविषमदृष्टिः शङ्काभावः मननमात्मज्ञानं चेति चत्वारो गुणाः ते यदि भगवन्माहात्म्यज्ञानपूर्वकाः तद्वर्गेण्वादरयुक्ताः तदा भक्तिमार्गेऽपि गुणा भवन्ति लौकिकदोषनिवृत्त्यर्थमेव ते ज्ञानमार्गे गुणत्वेनोक्ताः । अधिकृतयोरुल्लङ्घनम् । भगवतः स्थानस्य सामान्यदर्शनमन्तरङ्गबहिरङ्गयोः तुल्यतया ज्ञानं तद्भक्तासाधारणगुणागणनं च चत्वारो दोषाः तेन दैत्ययोनिः स्वरूपज्ञानाभावः बहुकालं गर्भवासक्लेशः । यातनाचेति अनिष्टचतुष्टयं फलितम् । दोषाणां प्राबल्यात् मार्गान्तरगुणा अपि निवृत्ताः । तेन क्लेशो न दोषाय । पश्यतोर्मिषतोरेव सतोः तावविगणय्य द्वारि अन्तरङ्गभूतायां विविशुः । अपृष्ट्वेति । किं भगवान् करोत्यवसरोऽनवसरो वेति प्रष्टव्यं तदपृष्ट्वा प्रविष्टा इत्यर्थः । पूर्वद्वारः यथा प्रविष्टा तथेयमपि द्वाः पुरटवज्रकपाटिकाया इति द्वारमाहात्म्यं पुरटं सुवर्णम् । तत्सहिता ये वज्रा हीरकाणि । तैरेव निर्मितौ कपाटौ यासां कपाटिके वा । एवं पूर्वार्द्धे दोषा निरूपिताः । मार्गान्तरस्थान् गुणानाह । सर्वत्रेति । ते अविषमया दृष्ट्या चरन्ति अतएव केनाप्यविहता इति स्वस्मिन् विद्यमानमपि ज्ञानं परस्मिन् कार्यसम्पादकमिति सानुभावं निरूपितम् अतएव विगताभिशङ्काः विगता अभितः शङ्का येषां ब्रह्मविदश्चेत् तदा दोषो न भवेत् तत्रैवैते गुणत्वेनोक्ताः । एते स्वात्मविदः नहि विद्रूपं ब्रह्म तत्रापि मननपर्यन्तं व्यावृत्ताः तदध्यात्मरूपं न सर्वदा तेषामनुभवविषयः तत्र स्वरूपधर्मयोः मध्ये परिच्छेदधर्मस्य बलिष्ठत्वात् परिच्छेदाहंकाररहितमबात्मज्ञानं गुणरूपम् अन्यथा संसारित्वमपि तत्संभवात् मोक्षः स्यात् आत्मा हि भगवद्विभूतिरिति विभूतिमतस्समीपे परधर्मं त्यजतीति न तेषामन्यत्र प्रच्युतिः ॥२९॥

एवमेतेषां गुणदोषान्निरूप्य यथा क्रममिति क्रममाह तान्वीक्ष्येति । तत्र प्रथमं द्वारपालकृतातिक्रमो निरूप्यते तत्र तयोः सहजत्वात् तेषांनिवारणे हेतुः वातरशनानिति तर्हि दिगम्बरा बालका अपि कटिसूत्रवन्तो भवन्ति अतएवैतेषां रशनानिषेधः

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भ्रान्ता इव तदृष्टया प्रतीताः चत्वारो ऽप्येकविधाः इति । आश्चर्यमपि कुमाराः पञ्चवार्षिकाः कालेन तेषां शरीरस्य कौमारपर्यन्तमेव भोगः कृत इति उत्पत्तिकालविचारे तु ते वृद्धाः परार्द्धमितायुषः ब्रह्मकल्प एवोत्पन्नाः अत एव दशार्द्धवयसः पञ्चवार्षिका इति केचित् तेषां या मानुषदशा परार्द्धद्वयपरिच्छिन्ना तत्रार्द्धवयसः एकस्य परार्द्धस्यातिक्रान्तत्वात्तेषां ज्ञानवृद्धत्वमप्याह । विदितात्मतत्त्वानिति । विदितमात्मतत्त्वं यैरिति वेत्रं लकुटविशेषः चकारान्मुखेन च अस्खलयतामिति यथा ते स्खलिता भवन्ति तथाग्रे दण्डः प्रसारित इत्यर्थः एवं कर्तुमनुचिता इत्याह । अतदर्हणानिति । तत् स्खलनं नार्हन्तीति ते हि स्थिरीकृत्य वा प्रष्टव्याः विज्ञापनेन वा अनवसरो ज्ञापनीयः तदुभयमकृत्वा स्खलनमेव कारितवन्तौ । ताविति पूर्वोक्तौ दोषसहितौ निरूपितौ । तेजो विहस्येति । सर्वथा नाज्ञानात्तथाकरणं किं तु ज्ञात्वैव यत्तेषां ज्ञानं सर्वपरित्यागलक्षणः स्वधर्मः देहाद्यभिमानाभावश्च तत् तेजः तत् विहस्य दोषत्वेन पाखण्डित्वेन वा तद्गणनं विहसनं तदविगणय्य तेजः कृतं धार्ष्ट्यं दोषं मत्वा तत्र दण्डचिकीर्षा हास्ये हेतुः न तु कौतुकमात्रम् अत एव भगवतः प्रतिकूलं शीलं ययोः अनेन स्वामिसेवकधर्मोऽपि तयोर्नसिद्ध इत्युक्तं गर्वस्तु भगवत्प्रतिकूलो धर्मः दैत्यधर्मत्वात् अत एव प्रतिकूलपदं शीलमिति तद्धर्मस्य दुर्लङ्घ्यता सूचिता ॥ ३० ॥

एवं तयोरतिक्रममुक्त्वा मुनिकृतातिक्रममाह । ताभ्यामिति । ताभ्यामिति चतुर्थी तयोरर्थे शापमूचुरित्यर्थः शापमिति नोक्तं विचारपूर्वकमग्रे वक्ष्यमाणत्वात् इदानीमविचारितत्वात् क्रोधेन वचनमर्थात् शापरूपं भवतीति ज्ञातव्यम् अत एव निषिध्यमानाः मैवं शापो देय इति गमननिषेधस्तु कृत एवेति वर्त्तमानप्रयोगो नोपपद्येत अनिमिषेषु मिषत्स्विति देवानामुभयत्र साक्षित्वं निरूपितं तेह्यनिमिषाः सर्वसाक्षिणः तैरेव निषिध्यमाना इति नैकस्यादवसीयते तत्रत्यैः सर्वैरेव वा ताभ्यामेव निषिध्यमाना इति ताभ्यां तृतीया वा वस्तुतस्तु प्रवेशनिषेध एव ताभ्यां क्रियते वर्त्तमानसामीप्येऽपि वर्त्तमानप्रयोग उपपन्नः सुष्ठुअर्हत्तमा इति निषेधानौचित्ये हेतुः अर्हाः सदाचाराः तथापि यथाशास्त्रं परमहंसा अर्हत्तमाः तत्रापि ज्ञानिनः स्वर्हत्तमा इति तर्हि निषेधः कथं कृत इत्याशङ्क्याह । हरेः प्रतिहारपाभ्यामिति । स हि सर्वदुःखहर्त्ता अन्तःप्रवेशे भगवदतिक्रमे महान् दोषो भविष्यतीति तेनैव भगवता प्रतीहाराः द्वारपालकाः रक्षिताः सर्वत्र बहवः तेषामेतावधिपती अतो द्वारपालकानां रक्षार्थं तयोरपि रक्षार्थं निषिद्धा इत्यर्थः तर्हीतेषां क्रोधे को हेतुः तत्राह । सुहृत्तमदिदृक्षितभङ्गे सति ईषत् कामानुजेन क्रोधेन ते उपप्लुताक्षाः तेषामात्मविदां सर्वत्रात्मबुद्धिरेव भगवत्यप्यात्मबुद्धिः भगवानप्यात्मविदिति सुहृन्मित्रं तत्रापि तद्गुणैः अन्तःकरणनैर्मल्यं भवतीति सुहृत्तमः स्वस्याभीप्सितज्ञानसाधकत्वात् तस्य दिदृक्षितं दिदृक्षा दर्शनेच्छा यस्त्वस्मभ्यमेतावदुपकारं कृतवान् स द्रष्टव्य इति फलस्य जातत्वात् साधनं स्वल्पः कामः दिदृक्षितस्य भङ्गे सति अल्पत्वात् प्रतिबन्धे भङ्ग एव जातः नत्वेतत्समाधानं कृत्वा पुनर्द्रष्टव्य इति इच्छा तेषु स्थिता अत एव ईषत्कामस्यानुजः महति कामे प्रतिरुद्धेऽपि क्रोधो न भवति यथेश्वरवाक्ये अर्थार्थिनो वा तेषामपि विचारो नोत्पन्न इत्याह । सहसेति । उपप्लुतानि अक्षीणि येषाम् अनेन तयोः गुणा अपि तेषां न प्रत्यक्षा जाता इत्युक्तम् उपप्लवः प्रलयः सर्वनाशरूपः स तेषां जात इति तथोक्तम् ॥ ३१ ॥

तेषां वचनमाह । कोवामिहेत्यादित्रिभिः । तयोः स्वाभाविको दोषः स्वामिद्रोहस्तथापरः । स्वस्यान्तरङ्गमित्रत्वात् तदुल्लङ्घनमेव च । दोषस्तृतीयो नात्रोक्तः मित्रकार्यं परं कृतम् । तथावचनसन्दर्भात् सोऽच्यते जन्मसङ्ख्यया । तत्र प्रथमं तयोः स्वाभाविकं दोषमाहुः । इह वैकुण्ठे उच्चैः भगवत्परिचर्यया पूर्वजन्मनि कृतया भूमेः सकाशादिहागत्य निवसतां भगवत्सेवकानां मध्ये कोवां युवयोरेव विषमः स्वभावः । अस्मासु दोषबुद्धिर्नार्थदा पुरुषद्विषामिति पुरुषद्वेषस्य निन्दितत्वात् । कैश्चित् प्रवेष्टव्यं कैश्चिन्नेति केचिदाहुः । तदा द्वारपालकाधिकारदानं भगवतो विरुध्येत । आत्मीयानामपि मातापित्रोरपि अनवसरे गमनमुचितं न भवतीति लौकिकार्थं तथा करणं द्वारपालयोरुचितमेव तथापि नूतनानां महतामुपहासः क्रोधदर्शनं न वैकुण्ठवासिनामुचितं, सामान्यधर्मानुरोधेनैव विशेषधर्माणां कर्तव्यताया उचितत्वात् । तेषां मते सर्वं कर्म जन्यमेव । अत्रापि भोगरूपं भक्तिमार्गस्याज्ञातत्वात् अतो निरन्तरभगवत्सेवयात्रागत्य स्थितिर्भवतीति मन्यन्ते तत्रापि वैकुण्ठे ये भगवत्समानधर्माः ब्रह्मण्याः धर्मनिष्ठप्रीतियुक्ताः तेषां मध्ये इति तेनैतयोः सहजवैकुण्ठादागमनं निवारितं स्वस्य मुखाद्वचनं निःसरतीति को वेत्यधिक्षेपे । क इत्यधिक्षेपे वेत्यनादरे वा ननु त्रैविध्यात् केचित् विषमस्वभावा अपि भवन्तीति चेत्तत्राह । तस्मिन् प्रशान्तपुरुषे गतविग्रह इति । अयं विषमः स्वभावः स्वार्थं भगवदर्थस्वा । स्वार्थं चेत् न युवां भगवदीयौ । तत्र हेतुमाह । प्रशान्तपुरुष इति । प्रकृष्टेन शान्ताः पुरुषा यस्य तस्य हि सर्वे पुरुषाः शान्ता एव शान्तिस्तु ज्ञान एव । अतो वैषम्यं भगवदीयत्वाभीप्सोर्नोचितम् । भगवदर्थं च नापेक्ष्यत इत्याह । गतविग्रह इति । गतो विग्रहः कलहो यस्य । विशेषेण ग्रह आग्रहो वा विग्रहो देहो वा देहाभावात् न केनाप्यनिष्टं कर्तुं शक्यं कलहाभावात् न कश्चित् द्विष्टः । आग्रहाभावात् नानौचित्यं भगवान् मन्यते अतो विषमस्वभावः उत्पत्त्या च उपपत्त्या चात्र बाधितः वां युवयोः एवं तयोः विषमस्वभावं निन्दित्वा स्वातिक्रमदोषं तयोरुपपादयन्ति । को वात्मवदिति । कुहकयोः वञ्चकयोः कोवा आत्मवत्परिशङ्कनीय इति दुष्ट एव हि अन्यत्र दोषं मन्यते अतो युवयोर्दोषोऽस्तीत्यवसीयते । परिचर्याया एव वैकुण्ठागमनहेतुत्वं मन्यन्ते नतु निष्कपटपरिचर्यायाः । अतः कपटेन परिचर्यां कृत्वा वैकुण्ठे समागत्य अधिकारं प्राप्य स्वभावादधिकाराच्च यथा वयं तथान्योऽप्यत्रागमिष्यतीति । यत्रैव स्वस्य स्वारस्यं तत्रैव विषमदृष्टिः नतु विषमपरिज्ञानादिति तस्य पक्षस्याक्षेपः वयं तु न परिशङ्कनीया इति भावः निषेधस्तु परिशङ्काङ्गीकारे स्वस्यापि कुहकत्वं सेत्स्यतीति तस्माद्वयं निर्दुष्टाः युवामेव सदुष्टौ निर्दुष्टे दोषारोपात् । आग्रहाविष्टबुद्धिर्नात्यन्तं युक्तिमपेक्षते । अतोऽस्मिन् पक्षे न समर्थोपपत्तिः तथाग्रिमपक्षेऽप्यवगन्तव्यम् ॥ ३२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तयोः कोपकारणमाह । एतयोर्मिषतोः पश्यतोः एताव्रप्रश्नादनादृत्य याः पूर्व्वाः षट् द्वारः पुरटपट्टिका हीरककीलमयक-

नह्यन्तरं भगवतीह समस्तकुक्षावात्मानमात्मनि नभो नभसीव धीराः ॥
पश्यन्ति यत्र युवयोः सुरलिङ्गिनोः किं व्युत्पादितं ह्युदरभेदि भयं यतोऽस्य ॥ ३३ ॥
तद्वाममुष्य परमस्य विकुण्ठभर्तुः कर्तुं प्रकृष्टमिह धीमहि मन्दधीभ्याम् ॥
लोकानितो व्रजतमन्तरभावदृष्ट्या पापीयसस्त्रय इमे रिपवोऽस्य यत्र ॥ ३४ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

वाटिकावत्यस्ता यथा विविशुः तथा सप्तम्यामपि द्वारि ते विविशुः । प्रश्नाकरणे हेतुं तेषां स्वभावमेवाह । सर्व्वत्र ते सञ्चरन्ति ये अविहताः केनाप्यशक्याभिघाताः ॥ २९ ॥

वातस्य रसना क्षुद्रघण्टिका तदुपलक्षितानि सर्व्वाणि वस्त्रालङ्कारादीनि येषां ते वृद्धान् ब्रह्मसमवयस्कानपि पञ्चवर्षबालकवत् प्रतीयमानान् ब्रह्मज्ञान् वीक्ष्य वेत्रेण तिर्य्यग्वेत्रधारणेन चकारात् सहसा भगवदन्तःपुरमितो माविशतेति वाचा च अस्खलयतां निवारयामासतुः । न तत्स्खलनमर्हन्तीति तथा तान् तौ जयविजयौ अहो अत्रापि ब्रह्मज्ञत्वादहङ्कारेण धाष्ट्र्यमित्थं तेषां तेजो विहस्य भगवतो ब्रह्मण्यदेवस्य प्रतिकूलशीलाविति दासद्वारा स्वब्रह्मण्यता विघातो नैव सम्मतो यतः प्रभोर्मनोऽनुसारिशीला एव भृत्याः अदण्ड्याः कुशलिनो भवन्तीति भावः ॥ ३० ॥

अनिमिषेषु वैकुण्ठीयदेवेषु पश्यत्सु अर्हत्तमा अपि भगवत्समीपमतिशयेन गन्तुमर्हा अपि हरेर्द्वारपाभ्यां निषिध्यमाना ऊचुः । सुहृत्तमस्य हरेर्दर्शनेच्छाया भङ्गे उपघाते सति कामानुजेन क्रोधेन सहसा उपलक्षितमेव उपप्लुतानि व्याप्तानि अक्षीणि येषां ते ॥ ३१ ॥

क्रोधोपरक्तत्वात् प्रथमं निन्दन्ति को वा इति तद्धर्म्मिणां भगवत्तुल्यधर्म्मिणां तत्रापि इह तत्समीप एव वसतां विषमः ब्राह्मणैर्न प्रवेष्टव्यमिति भगवदस्वभावपरिपन्थी कः स्वभावः ननु ब्राह्मणवेशेन भगवद्द्वेषिणोऽपि कपटेन प्रविशन्त्यतः प्रथमं ब्राह्मणा अपि जिज्ञास्या एव ततः प्रवेशनीया इति । चेत्तर्हि युवामेव तद्भक्तवेशेन कपटिनौ तदीयब्रह्मण्यत्वप्रशान्तत्वगतविग्रहत्वादिमहागुणलोपे प्रवृत्तौ तद्वैषिणावत्रस्थः न त्वन्यः कोऽपि तस्य शङ्कनीय इत्याहुः तस्मिन्नित्यादि आत्मवदिति आत्मवन्मन्यते जगदिति न्यायेन वां युवयोः कपटिनोरपि को वा शङ्कनीय इति काका युवामेव शङ्कनीयाविति भावः ॥ ३२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ईषद्भ्रमस्वकक्षारणहेतुमाह । पुरटविभूषितवज्रमय्याः कपाटिका यासु ताः पूर्वाः षट् द्वारः यथा निर्विविशुः तथा तयोर्देवयोर्मिषतोः पश्यतोः अपृष्ट्वैव ते निर्विविशुरिति । अप्रश्ने हेतुमाह । ये सर्वत्र सर्वेषु लोकेषु वैकुण्ठेषु च अविहताः अनिवारिताः विगताभिशङ्काः सञ्चरन्ति । विगताभिशङ्कत्वे हेतुमाह । अविषमया स्वदृष्ट्येति ॥ २९ ॥

भगवत्प्रतिकूलशीलौ बहुसुरानुग्रहार्थमसुरभावेन भगवन्तमाराधयितुं प्रवृत्ताविति फलितोऽर्थः । वातरसनान् तेषां तेजः प्रभावं विहस्य तद्विचारणं नार्हन्तीत्यतदर्हणान् वेत्रेण चकाराद् वचनेन । अस्खलयतां निवारितवन्तौ ॥ ३० ॥

मिषत्सु पश्यत्सु सर्वार्हत्तमाः । अपि वैकुण्ठद्वारि ताभ्यां मिषद्भिश्च सुष्ठुपूजनीया अपि न पूजिताः प्रत्युत ताभ्यां निषिध्यमाना सुहृत्तमदिदृक्षितभङ्गे भगवद्दर्शनेच्छाप्रतिघाते सति कामानुजेन क्रोधेन सहसा अकस्मात् । उपप्लुतानि क्षुभितान्यक्षीणि येषां ते ऊचुः ॥ ३१ ॥

उक्तिमेवाह । क इति त्रिभिः । उच्चैर्महत्या भगवत्परिचर्य्यया पदं प्राप्य इह वैकुण्ठे तद्धर्मिणां भगवद्धर्मिणां निवसतां मध्ये वां युवयोरेव कोऽयं विषमः स्वभावः प्रशान्ताः पुरुषा यस्मिन् गतः विग्रहो यस्मात् तस्मिन् वैकुण्ठे आत्मवत् यथा आवां कुहकौ तथान्योऽपि कदाचित्प्रवेक्ष्यतीति स्वदृष्टान्तेन वां युवयोः कुहकयोः कपटयोः कः शङ्कनीयः ॥ ३२ ॥

---

### भाषाटीका ।

उन दोनों को देखतेही उनको विना पूछेही जैसे पहिले सुवर्ण तथा हीरान से जडे दरवाजों में पैठगये थे तैसे सातमे दरवाजे में भी पैठने लगे क्योंकि वे तो अपनी सम दृष्टि से निर्भय होकर किसी से विना रुके सर्वत्र विचरते रहते हैं ॥ २९ ॥

वे चारों कुमार नग्न वेष हैं पांच वर्ष के हैं सब से वडे वृद्ध हैं आत्मतत्वके जानने वाले हैं रोकने के योग्य नहीं हैं तौ भी उन दोनों पार्षदोंने ब्रह्मण्यदेव भगवान् के प्रतिकूल स्वभाव को धारण कर वो उनके प्रभाव का परिहास करके हाथ के वेत से उन का जाना बंद कर दिया ॥ ३० ॥

वडे भारी पूजा के योग्य वे मुनि सब देवों के देखते ही श्री हरिके भी द्वारपालों से जब रोके गये तब अत्यन्त सुहृत् प्रिय भगवान् के दर्शन की इच्छा के भंग होने से शीघ्र ही उनके नेत्रों में थोडा क्रोध व्याप्त हो गया ॥ ३१ ॥

तब मुनि बोले अनेक जन्मों में करी हुई भगवान् की सेवा से तुम इस वैकुण्ठलोक में आये हो इस के बसने वाले भगवान् के सम दर्शी धर्म वालों के मध्य में रहकर तुमारा यह विषम स्वभाव कौन कहां से हुआ और शान्त स्वरूप वैरभाव रहित उन परमात्मा के विषय में जैसे तुम आप कपटी हो तैसे कौनको तुमने कपटी समझा है ॥ ३२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

भयशङ्काबीजं च भेदः स च कस्याप्यस्मिन्नास्तीत्याहुः । नहीति समस्तं विश्वं कुक्षौ यस्य यत्र यदेह भगवति धीरा विद्वांस आत्मनोऽन्तरं भेदं न पश्यन्ति किन्त्वस्मिन्परमात्मन्यात्मानं

तेषामितीरितमुभाववधार्य घोरं तं ब्रह्मदण्डमनिवारणमस्त्रपूगैः ॥
सद्यो हरेरनुचरावुरुबिभ्यतस्तत्पादग्रहावपततामतिकातरेण ॥ ३५ ॥
भूयादघोनि भगवद्भिरकारि दण्डो यो नौ हरेत सुरहेलनमप्यशेषम् ॥
मा वोऽनुतापकलया भगवत्स्मृतिघ्नो मोहो भवेदिह तु नौ व्रजतोरधोऽधः ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

न्तर्भूतं पश्यन्ति महाकाशे घटाकाशमिव तदा यथान्यस्य राजादेरुदरभेदुदरभेदयुक्तं भयं भवति तथाऽस्य श्रीहरेस्तादृग्भयं यतो येन कारणेन सुरवेषधारिणोर्युवयोर्विशेषेणोत्पादितं तत्किम् न किञ्चिदित्यर्थः ॥ ३३ ॥

तत्तस्मादमुष्य वैकुण्ठनाथस्य भृत्याभ्यां युवाभ्यां प्रकृष्टं भद्रमेव कर्तुमिहास्मिन्नपराधे यद्युक्तं तद्वीमहि चिन्तयेम तदेवाहुः अन्तरस्य भेदस्य भावः सत्ता तद्दर्शनेन इतो वैकुण्ठलोकाद्व्रजतम् यत्र येषु लोकेष्वस्य पापीयसोऽन्तरभावद्रष्टुरिमे कामः क्रोधस्तथा लोभ इति गीतोक्तास्त्रयो रिपवो भवन्ति इतो वैकुण्ठात्पापीयसो लोकानिति वा ॥ ३४ ॥

इति तेषामीरितं भाषणं घोरमवधार्य तञ्च ब्रह्मदण्डं ब्रह्मशापमवधार्य तञ्चास्त्रसमूहैरप्यनिवार्यमवधार्य हरेरनुचरावतिकातरेणातिकातर्येण भयेन तत्पादग्रहणं कुर्वन्तौ सन्तौ दण्डवदपतताम् कथंभूतस्य हरेः एवम्भूतेभ्यो मुनिभ्यस्ताभ्यामप्युरु अधिकं बिभ्यतो भयं भावयतः ॥ ३५ ॥

अहो अपराद्धमस्माभिरित्यनुतप्यमानान्प्रत्यूचतुः अघोन्यघवति य उचितो दण्डः स एव भगवद्भिरकारि नात्र भवतामपराधः कश्चित् अतोऽसौ नौ आवयोर्भूयात् योऽशेषमपि सुरहेलनमीश्वराज्ञाऽतिक्रमरूपं पापं हरेत् किन्तु युष्माकं यः कृपानिमित्तोऽनुतापस्तस्य लेशेन नौ अधोऽधोमूढयोनीर्व्रजतोरपि भगवत्स्मृतिप्रतिघातको मोहोमाभवेत्किन्तु मोहोऽपि स्मृतिमेव प्रवहतादिति प्रार्थना ॥ ३६ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

अस्मिन् भगवति विद्वांसो ब्रह्मनिष्ठाः आत्मानं त्वंपदार्थम् अन्तर्भूतं जहदजहल्लक्षणया सामानाधिकरण्येनाभिन्नमुदरभेदयुक्तम् उदरोपलक्षितदेहैर्यो भेदः पृथक् पृथक् तत्पूरणात्मकः तद्युक्तं तादृक् उदरभेदयुक्तं येन भेददर्शनरूपेण कारणेन कर्त्रा युवयोः सम्बन्धे किं वा युवाभ्यां तत् भयवीजं भेददर्शनं किं भगवत्यस्ति न किञ्चिदित्यर्थः ॥ ३३ ॥

तस्मात्केवलधूर्त्तत्वात् युवाभ्यामिति चतुर्थी उद्देशार्थिका अस्मिन्भेददर्शनरूपेऽपराधे यद्युक्तं दण्डरूपं कारणम् ॥ ३४ ॥

घोरमसुरत्वोत्पादकभयजनकं तं च भाषणरूपं ब्रह्मदण्डमवधार्य्य ब्रह्मदण्डत्वेन निश्चित्येति पूर्वं सनकादिषु तेषां ब्राह्मणत्वज्ञानमवधानविषयं नासीदिति गम्यते । अत्र विधेयपरामर्शकत्वात्तच्छब्दस्य पुंस्त्वं तञ्च ब्रह्मदण्डम् । एवं भूतेभ्यः शापं दातुं समर्थेभ्यः ताभ्यां भीताभ्यां जयविजयाभ्यां भावयतः कुर्वतः ॥ ३५ ॥

अस्माभिरपराद्धमपराधः कृतः अत्र तयोर्द्वित्वात् अघवतीत्येकवचनमसम्बद्धं स्यात् यच्छब्दस्य च तच्छब्दापेक्षकत्वम् अत उचित इति पदमध्याहृतम् । अत्रोचितदण्डकरणे अत औचित्यात् असौ दण्डः । इह ईदृगपराधे भगवत्स्मृतिघ्नस्तु मोहो न भवेत् । आनुकूल्याभावेनापि स्मृतिमेव प्रवहतात् ॥ ३६ ॥

———

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

नन्वस्त्वयं लोक एवं विधिः नाप्यत्रत्यः कश्चित्कुहकः तथापि भगवतामन्तःप्रवेशो भगवतोऽनिष्ट इति मत्वा वारयाम इत्यत्राहुः । नहीति । समस्तं विश्वं कुक्षौ यस्य तस्मिन् भगवत्यन्तरमयमन्तःप्रवेशयोग्यो नायमित्येतदन्तरं वैषम्यं नह्यस्तीत्यर्थः समस्तकुक्षाविति विशेषणेन भगवता स्वोदरे निवेश्यमानं जगद्भवद्भ्यां किं निवारितमित्यभिप्रेतं भगवत्यन्तराभावमेवाह । यत्र-यस्मिन्नात्मनि परमात्मनि आत्मनं जीवात्मानं नभसि महाकाशे नभः घटाद्याकाशमिव धीराः योगिनः पश्यन्ति अपृथगसिद्धत्वेनानुसन्दधत इत्यर्थः अत्राविभागेन साम्ये एव नभो दृष्टान्तः नतु तादात्म्यं दृष्टान्तेऽप्याकाशप्रदेशानां पार्थिवानां घटपटादीनामभिन्नत्वेन तादात्म्यासम्भवादाकाशस्य प्रदेशभेदानभ्युपगमे घटादेर्विभुत्वमाकाशस्याल्पत्वं वा प्रसज्येत तथाहि किंघटादेः कृत्स्नाकाशेन सम्बन्धः उत प्रदेशभेदेन पूर्वस्मिन् पक्षे घटादेर्विभुत्वमाकाशस्याल्पपरिमाणत्वं वा द्वितीये तु प्रदेशभेदाङ्गीकार एव वेदान्तिभिर्नभसो निरवयववादोऽपसिद्धान्तितः वेदान्तेषु तस्यांशभेदेन पञ्चीकरणोपदेशादेकदेशांशेन वायुत्वेन परिणामवादादुत्पत्तिप्रलयदर्शनाच्च अत एव "घटध्वंसे घटाकाशो न भिन्नो नभसा यथा । ब्रह्मणा हेयविध्वंसे विष्ण्वाख्येन तथा पुमान्" इति शौनकवचनमपि नभस्यंशभेदाभिप्रायेण जीवस्य परस्मादात्मन औपाधिकवैषम्यविरहे दृष्टान्तसमर्थनपरं वेदितव्यं यथाग्निरग्नौ सङ्क्षिप्तः समानत्वमनुव्रजेदिति तत्रैव साम्यदृष्टान्ताभिधानात् तस्माज्जीवात्मनः परमात्मानं प्रति शरीरत्वाच्छरीरस्यापृथक्सिद्धैकस्वाभाव्याज्जीवपरयोरत्यन्तरवैषम्ये ऽपि ज्ञानैकाकारत्वेन साम्याच्चाविभाग एव नभोदृष्टान्तः अत एव ह्यविभागेनोपासनं मुक्तावनुभवश्च सूचितम् "आत्मेतितूपगच्छन्तिग्राहयन्ति चाविभागेन दृष्टत्वात्" इति चातो यथोक्त एवार्थः अतो भगवतः सर्वात्मकत्वात् नवैषम्यमस्तीत्यर्थः सुरलिङ्गिनोरनुकूलवेशयोर्युवयोः सुरलिङ्गिभ्यां युवाभ्याम् इत्यर्थः किं व्युत्पादितं रागद्वेषरहितेऽस्मिन् देशे किं भवद्भ्यामन्यानिवारणव्युत्पत्तिः कृतानह्यत्रेदृशव्युत्पत्तिसम्भवः अस्य देशस्य उदरभेदि उत अपि अरंभेदोऽन्तरं वैषम्यमिति यावत् अल्पमप्यन्तरनिमित्तमित्यर्थः एवं विधं भयंयतः कारणादवगम्यते तादृशीव्युत्पत्तिः किं कृतेत्यर्थः यद्वा यथान्यस्य रोगादेरुदरयुक्तं भयं भवति तथास्य हरेस्तादृग्भयं येन कारणेन सुरवेषधारिणोर्युवयोःविशेषेणोत्पादितं तत्किञ्चिदित्यर्थः ॥ ३३ ॥

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

तत्तस्मादमुष्य परमस्य समाभ्यधिकरहितस्य विकुण्ठभर्तुर्वैकुण्ठनाथस्य मन्दबुद्धिभ्यां वां युवाभ्यां वैकुण्ठनाथसम्बन्धिभ्यां कर्तुं यत्प्रकृष्टं युक्तं तद्धीमहि विचारयामः किन्तदितिचेत् इतः लोकाल्लोकान् व्रजतं गच्छतं कान् लोकानित्यत्राहुः अन्तरभावदृष्ट्या परकीयस्वीयवैषम्यसद्भावबुद्ध्या पापीयसः त्रयः कामक्रोधलोभरूपाः रिपवः शत्रवः यत्र येषु लोकेषु भवन्ति तान् व्रजतमित्यर्थः यदि भगवदभिप्रायेण वयं नापराधिनःयुवामेवापराधिनौ तनो व्रजतमित्याशयः"अस्मासु वा य उचितोऽभ्रीयतां स दण्डो येऽनागसौ वयमयुङ्क्ष्महि किल्विषेणेति वक्ष्यमाणत्वात् ननु "समहात्मा सुदुर्लभ" इति भगवतागीतत्वात्कथं नित्यासिद्धानां शापानुभवः ते हि सदा समस्तहेयरहिताः नित्यासंकुचितज्ञानैश्वर्यादिगुणाश्च "नित्यज्ञानक्रियैश्वर्ययोगोपकरणान्विता"इति ह्युच्यते सत्यं तथाविधा परमाकाशवर्तिनः पुरुषाः इमौ तु द्वारपालौ परमव्योमनिलयनित्यसिद्धभगवत्परिजनसमानरूपौ सुकृतविशेषाल्लब्धद्वाःस्थाधिकारौ अन्यथा भगवद्भक्तप्रातिकूल्यायोगाल्लब्धयाः प्रवेशनिवारणायोगाच्च साक्षाद्भगवत्परिजनानां हि नित्यं ज्ञानक्रियैश्वर्यवचनाद्भगवदभिप्रायानभिज्ञत्वं नोपपद्यते भगवदनुचरत्वप्राप्तिश्चानुष्ठानविशेषाद्भवतीति स्मर्य्यते "भूमौ प्रस्तरशायी च विष्णोरनुचरो भवेत्"इत्यादि यथाऽनन्तवैनतेयव्यतिरेकेण नागसुपर्णजातीया बहवो विद्यन्ते एवं सुकृतवशाद्भगवत्परिजनतुल्यरूपतामापन्ना बहवः सम्भवन्ति अत्रापि"वसन्ति यत्र पुरुषाः सर्वे वैकुण्ठमूर्तयः । येऽनिमित्तनिमित्तेन धर्मेणाराधयन् हरिम्,,इति सामान्यत उक्ताः कोवामिहेत्यभगवत्परिचर्ययोश्चैरित्यनयोर्भगवदाराधनेन तद्देशप्राप्तिर्विशेषत उक्ता किञ्च "नन्दः सुनन्दोऽथ जयो विजयःप्रबलो बलः। कुमुदः कुमुदाक्षश्च विष्वक्सेनः पतत्रिराट्।जयश्च श्रुतदेवश्च पुष्पदन्तश्च सात्वतः । सर्वे नागायुतप्राणा ह्यजेयाश्च सुरासुरैरिति त्रिविक्रमकाले जयविजयस्थानावगमाच्च शापाभिभूतौ जयविजयौ साक्षाज्जयविजयाभ्यामन्यौ निश्चितौ कृष्णावतारे शापान्मोक्षमाणयोस्तयोर्वामनावतारे तयोः पारिषदत्वापत्त्यनुपपत्तेःअस्य लोकस्य परमाकाशादन्यत्वं पूर्वमुपपादितम् अतस्त्रिपाद्विभूतिवर्तिभगवत्परिजनव्यतिरिक्तत्वमनयोः सिद्धमिति न प्रमाणान्तरविरोधः ॥ ३४ ॥

अथैवं मुनिभिरुक्तौ भगवद्द्वाःस्थौ तेषां पादमूले पतितौ विज्ञापयामासतुरित्याह ब्रह्मा । तेषामित्यादि द्वाभ्याम् । तेषां मुनीनां तदीरितं भाषितं कथं भूतं ब्रह्मदण्डं ब्रह्मशापरूपमत एवास्त्रपूगैरस्त्रसमूहैरनिवारितमनिवारणीयम् इत्युक्तप्रकारेणावधार्य श्रुत्वा सद्यः तदैव हरेरनुचरौ भूत्यावतिकातरेण तत्पादग्रहौ तेषां मुनीनां पादग्रहौ पादौ गृहीतवन्तौ उरु बिभ्यतः उरु अधिकं बिभ्यतः भीतान् अहो अस्माभिर्निरपराधाभ्यां भगवद्भक्ताभ्यामपराद्धमनेन भागवतापचारेण वयमपि संसरेमेति भयकम्पितान्मुनीन्प्रति अपततां दण्डवत्प्रणाममपूर्वकं विज्ञापयामासतुरित्यर्थः ॥ ३५ ॥

विज्ञापनमेवाहाभूयादिति।अघोन्यपराधवति य उचितो दण्डः स भगवद्भिर्युष्माभिरकारि कृतः नात्र काश्चिद्भवतामपराध इति भावः अतोऽसौ दण्डः नावावयोर्भूयात् अशेषसुरहेलनं भवच्छिरस्काररूपं पापं च हरेतापनुद्याच्च किन्त्वधोऽधःमूढयोर्नितु व्रजतोरपि नावावयोर्भगवद्विषयस्मृतिनाशकः मोहः वः युष्माकमनुतापकलया यः कृपानिमित्तोऽनुतापः तस्य कलया लेशेन मा भवेत् न भवेदित्यनुगृह्णीतेत्यर्थः ॥ ३६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आपादितदोष एव पुरुषोदण्डयोग्य इति तयोर्दोषित्वमुपपादयन्ति । नहीति । इहास्मिँल्लोके स्थिता धीरा ज्ञानिनः समस्तस्वमुक्तामुक्तप्रपञ्चस्य कुक्षयः शरीरकुहराणि यस्यावासभूतानि स समस्तकुक्षिस्तस्मिन् । यद्वा । समस्तकुक्षौ स्थिते भगवति अन्तरच्छिद्रं भेदं न पश्यन्ति किन्तु यत्र यस्मिन् लोके नभसि महाकाशे नभोघटाकाशमिवात्मानं स्वात्मस्थं भगवद्रूपमात्मनि व्याप्ते भगवद्रूपे पश्यन्ति तयोरैक्येनेत्यर्थः ततः किमत्राह।युवयोरिति। एवं ज्ञानिप्रत्यक्षे जाग्रति सुरालिङ्गिनोर्देवलक्षणवतोर्युवयोर्मनसा यतो भेददर्शनादस्य भेदस्य द्रष्टुः पुंसः सर्वत्र दुःखप्राप्तिरूपं भयं भवति ; तादृशमुदरभेदि उद्गता अरा दोषा यस्मात् तदुदरं ब्रह्म तस्य भेददर्शननिमित्तं भयं व्युत्पादितं किंप्रति शरीरान्तर्यामित्वेन स्थितस्याभयस्य हरेरन्यस्माद्भयमस्तीति बुद्धिः कृता अन्यथास्मन्निवारणं किमिति कृतं हिशब्देन तत्स्वानुभवसिद्धं दर्शयन्ति । यद्वा ।

> सर्वोदरगतं ब्रह्म ये भेदेन विचक्षते ।
> सर्वत्रापि भयं तेषां मृतानां तम एव च ॥

इति वाक्यं प्रमाणयन्ति युवयोरिति तृतीयार्थे षष्ठी तथा तद्द्वारपालत्वेन स्वस्वामिसम्बन्धस्य स्वानुभवसिद्धत्वेन तदपलापेन सर्वापलापप्रसङ्गात् भगवदपराध एव कृत इतिद्योतयन्ति ॥ ३३ ॥

एवं दोषानुपपाद्य तद्योग्यं दण्डं कर्तुमुपक्रमन्ते । तद्वाइति। मन्दधीभ्यां कपटबुद्धिभ्यां युवाभ्याममुष्य विकुण्ठभर्तुर्मूलरूपस्य परंपश्चादस्यावतारान्तर्यामिरूपस्य च यद्भेददर्शनं तत्कर्तुं न युक्तमिति धीमहि चिन्तयामः तद्युवाभ्यां कृतमतोऽन्तरभावदृष्ट्या भेददर्शनेनेतो वैकुण्ठलोकाद्यत्र येषु त्रिभिर्मत्रयोऽस्य हरेरिपवःस्युः तान्पापीयसोऽतिपापाज्जन्मयोग्यान् लोकान् देहान् व्रजतमित्यन्वयः श्रीनासुरान्देहान्यातमित्यर्थः वा इत्यनेन ।

> यथोदकं दुर्गेवृष्टं पर्वतेषु विधावति ॥

इत्यादिश्रुतिं प्रमाणयन्ति ॥ ३४ ॥

स्वतोजयविजयौ सच्चेतनाविति ध्वनयति। तेषामिति । तावुभौ हरेरनुचरौ जयविजयौ उरु बहुबिभ्यत इत्यन्वयः ब्रह्मास्त्राद्यस्त्रपूगैरनिवारणं प्रतिषेद्धुमशक्यं घोरं तेषामितीरितं ब्रह्मदण्डं ब्रह्मशापमवधार्य हृदि कृत्वा किञ्च तेषां पादौ गृहीत इति तत्पादग्रहावपततां भूमावितिशेषः अतिकातरेणेति भयातिरेकं दर्शयति । सद्यइति निर्दोषत्वम् ॥ ३५ ॥

पादयोः पतित्वा ताभ्यां पुनः किंकृतमत्राह । भूयादिति । हे चतुर्थाश्रमशिखामणयो भगवद्भिर्भवद्भिरस्मत्कृतादघादपराधाद्धि हेतोर्भूयान्महान् दण्डोऽकारि युक्त एवायमिति ब्रुवाते । यइति । योदण्डोनावावयोः न केवलं युष्मदपराधमेव हरति किन्त्वशेषं यथा तथा सुरहेलनं श्रीब्रह्मादिदेवावज्ञानमपि हरेत हर्तुं समर्थोभवति तत्रेदं भगवतः प्रार्थयावहे नावावयोरिह वैकुण्ठे स्थितयोरंशिनोर्वोयुष्माकमनुतापकलया पश्चात्तापलवेन पुन

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

पूर्ववद् भगवत्स्मृतिघ्नो भगवतो यथा स्वरूपज्ञाननाशको मोहो मा भवेत् माभूत् कीदृशयोर्युष्मच्छापेनाधोऽधोलोकादप्यधरलोकमासुरं व्रजतोर्गच्छतोरंशेनेति शेषः ॥ ३६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

धीराः ब्रह्मनिष्ठाः उदरैस्तदुपलक्षितैर्देहैर्यो भेदः पृथक् पृथक् तत्परायात्मकः। यदुक्तं तत्कारणकं भयम् ॥ ३३ ॥

पापीयसो लोकान् जनसमूहान् व्रजतं तेषु जायेताम्। यत्र व्रजने इमे अस्मिन्निर्दिष्टा लोका दैत्यराक्षसराजन्यजनसमूहाश्रयो ऽस्य भगवतोऽपि रिपवः ॥ ३४ ॥

तथ ब्रह्मदण्डमचधार्य्येत्यनेनानयोस्तेषु पूर्वं ब्राह्मणत्वज्ञानं नासीदिति गम्यते। ब्राह्मणेभ्य उरुबिभ्यतः ॥ ३५ ॥

तौ तु स्वस्य तद्रिपुत्वेन जन्म बुद्ध्वा रिपुत्वञ्च बुद्ध्वा तत्स्मरणमात्रं प्रार्थयते ॥ भूयादिति। इह ईदृगपराधे भगवत्स्मृतिघ्नस्तु मोहो मा भवेदित्यन्वयः ॥ ३६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

स्वामिद्रोहमाह। नह्यन्तरमिति। इह वैकुण्ठे शुद्धसत्त्वात्मके रजस्तमसोरभावात् तत्कृतमुच्चनीचत्वमपि नास्ति किञ्च भगवति नास्त्यन्तरं तेन ये ज्ञानादिमन्तः ते भगवद्रूपा इति तेषु भगवति च अन्तरकरणं स्वामिद्रोहः किञ्च समस्तकुक्षाविति समस्तं कुक्षौ यस्य वैकुण्ठवासिनः सर्वे पूर्वं तस्य कुक्षावेव स्थिताः इदानीं वा नारायणोदरे सर्वे तिष्ठन्तीति अतः प्रथमपक्षे वैकुण्ठवासिषु अन्तरमनुचितं द्वितीयपक्षे सर्वे ष्वेव तस्य समस्तकुक्षत्वं श्रुत्यनुभवसिद्धं तत्र श्रुतिः "आत्मैवेदं सर्वं यदिदमिदं संच त्रिवेति सर्वम्" इति च अनुभवं कीर्त्तयन्ति। आत्मानमात्मनि नभो नभसीव धीराः पश्यन्तीति। आत्मानं स्वात्मानम् आत्मनि भगवति आत्मनश्च पुनः सर्वत्रज्ञानात् सर्वं भगवति भविष्यति स्वदृष्टान्तेन वा तत्र प्रथमपक्षः वादिनं प्रति वक्तव्यो न भवतीति दृष्टान्तपक्षमेव दृष्टान्तेन स्पष्टयति नभो नभसि इवेति यथा घटाकाशः विद्यमानेऽपि घटे महाकाश एव महाकाशे वा तथा सर्वे आत्मानः सोपाधयोऽपि भगवानेव भगवति वा अत्र प्रमाणं धीराः पश्यन्तीति श्रुतिर्ब्रह्मवादे भगवद्वादे यज्ञवादे वाप्युपपद्यते तथाऽप्यनुभव आत्मवाद एव स्वाधीनः अतो धीरा इत्येवाधिकारिविशेषणं धैर्यं हि आत्मनो ::महाफलत्वज्ञानात् फलान्तरेच्छाभावपूर्वकेन्द्रियादिजयः । चित्तस्थैर्यमेव वा धैर्यमेवं सर्वकुक्षित्वं प्रतिपाद्य तत्रापराधः कृत इत्याहुः यत्र भगवति सुरजाङ्घ्नोः युवयोः देवानां लिङ्गमात्रं वस्तुतस्तु दैत्या एव वृतीया दैवगत्यापि करणं संभवतीति नोक्ता पष्ठ्या तु दोषः तयोः सम्बन्धीति बोध्यते उदरं भिनत्ति इति उदरभेदी तस्य भयं"यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति" इति श्रुतिः ये भगवद्भावं प्राप्ताः ते उदरशब्देनोच्यन्ते तेष्वन्तरं कुर्वन् भयं प्राप्नोति इत्यर्थः उत ऊर्ध्वं लौकिकापेक्षया ष्यधिकं शाश्वतं भेदसमर्थनम् अस्मीपत् भृत्यापराधे स्वाम्ये वैवं करोतीति लोके प्रतीतिर्भवेद तदा उदरभेदिनां यद्भयं तदस्मिन्नपि कृतं भवेदिति युक्तमेव तत्र स्वामिद्रोहो जात इति हिशब्दार्थः सेवककृतत्वात् भगवत एतदङ्गीकर्तव्यं तथा सति भयं भवेदिति गूढाशयः ॥ ३३ ॥

एतदनङ्गीकारे तु स्वामिनो भयं न भविष्यत्येव तदैतयोरेव भयं भवत्विति शास्त्रार्थसिद्ध्यर्थं भगवति मैत्रीनिर्वाहार्थं च तयोः शापं प्रयच्छन्ति। तद्वामिति। अमुष्य भगवतः सर्वेषां परमस्य स्वामिनः अस्मदाद्यनुग्रहार्थम्। विकुण्ठस्थाने संस्थितस्य विकुण्ठशब्देन शुद्धं सत्त्वं तन्नतुरिति अस्मदादिसत्त्वस्यापि भर्तृत्वात् तस्य प्रकृष्टं कर्तुमिहास्मिन्नर्थे यदुचितं तद्वीमहि ध्यानेन साक्षात्करिष्यामः वां युवाभ्यां मन्दधीभ्यामिति ताभ्यामेव चेदनिष्टं दीयते तदा ताभ्यामेव भगवत इष्टं भवतीति चतुर्थी तृतीये ध्यानेन निश्चितमर्थमाहुः। लोकानितो व्रजतमिति। अन्तरभावेन या दृष्टिः कृता क्रूरा तया कृत्वा इतः अधस्तनान् लोकान् व्रजतमिदं हि सत्त्वस्थानं ततः अधस्तनराजसतामसाः तत्रैकः केवलं राजसः द्वितीयो राजसतामसः तृतीयस्तामसं इति अवान्तरलोकानां बहुत्वसम्भवात् त्रीनिति वक्तुं विशिनष्टि। पापीयसस्त्रय इति। अस्य भगवतो रिपवः भगवदीयैः हेयत्वेन ज्ञाताः "कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्„ इति वाक्यात्। ते च पापीयसः सम्बन्धिनः न भगवदीयाः किन्तु तद्विरोधिनश्च। अतः भगवद्विरोधिकामादित्रयं येषु तान् लोकानितो व्रजतमित्यर्थः ॥ ३४ ॥

पूर्वं शापपर्यवसायित्वमज्ञात्वा कृतोऽतिक्रमः जाते च शापे अमूर्त्तो वाक् गदादिभिर्दूरीकर्तुमशक्येति तेषां प्रार्थनयैव शापोगमिष्यतीति बुद्ध्या तेषां प्रसादनं कृतवन्तावित्याह। तेषामिति। शापस्त्वङ्गीकृतो ग्लानिहेतुर्न भवतीति तदङ्गीकारार्थं तत्रोऽप्यधिकं मा वदन्त्विति तेषां पदयोः पतितौ इत्यमुना पूर्वोक्तप्रकारेण तेषामीरितमवधार्य तदुक्तश्चार्थौ ब्रह्मदण्ड इति निश्चित्य अस्त्रपूगैश्चानिवार्यं मत्वा हरेरनुचरावपि तेषां पदयोः अपततां तत्रापि पादग्रहौ तेषां पादान् गृहीत्वा तत्र पतितावित्यर्थः सद्य इति विलम्बे पुनः; शापः भगवद्दण्डो वा भवेदिति माया वा ततो निर्गतेति हरेरनुचराविति भगवदभिप्रायाभिज्ञौ स्थानान्तरे गमनमत्यरिष्टमिति स हि सर्वदा हरिः अन्यत्र दुःखहर्त्ता कोऽपि नास्तीति तेषां वा मनसि जातं दुःखं दूरीकर्तुं तथा कृतवन्तौ यत एतयोः स्वामी हरिः किञ्च उरु बिभ्यतः अधिकं च भयं प्राप्तवन्तौ श्रुत्यर्थः तदैव जात इति। अतिकातरेणेति। तेषां दयोत्पादनार्थं स्वस्य दैन्यं ख्यापितवन्तौ ॥ ३५ ॥

एवं चरणयोः पतित्वा एवं प्रार्थयतः। भूयादघोनीति। अघोनि पापसहिते भगवद्भिः यः दण्डः कृतः स भूयात्तथा कथने हेतुः यो दण्डः नौ आवयोः सुरहेलनं भगवदवज्ञां भगवद्देवतावज्ञां च अशेषं सर्वमेव हरेत् यदि;तदुक्तशापो नाङ्गीकृतः स्यात्तदा वरमपि न प्रयच्छेयुरिति तदङ्गीकरणं प्रार्थनामाहतुः। माबोऽनुतापकलयेति। वो युष्माकं योऽनुतापः वृथैव शापो दत्त इति तस्य कलया लेशेन नौ आवयोः अधोऽधः व्रजतोरपि मोहो मा भवतु कामक्रोधलोभैः। नरक एव भवति न संसारः मोहेन च संसारो भवति अतस्तत्प्रार्थनमुचितमेव। जायमानोऽपि मोहः आवश्यकत्वात् तत्तज्जन्मनि भगवत्स्मृतिघ्नो मा भवेत्। किन्तु जायमानःऽप्यज्ञानं मोहात्मकं भगवत्स्मरणमेव सम्पादयतु तु पुनः इह भगवति

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

मोहो भवतु भगवद्वैराग्यं माभवत्विति व्रजतमिति भगवद्वाक्यात् फलं शीघ्रमेव भविष्यतीति ज्ञापितं तथा स्मरणमपि भवत्विति प्रार्थनायामभावः। अघोऽधइतिदैन्यंख्यापितम्। दैत्याद्राक्षसा निकृष्टाः तेभ्योऽपि मनुष्या इति राक्षसानामपि देवयोनित्वात् ॥ ३६

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

शृणुतं रे मूर्खौ शृणुतमित्याहुः। नहीति। समस्तमेव विश्वं कुक्षौ यस्य तस्मिन्निति युवयोऽर्थे शङ्कनीयास्तेऽप्यस्य कुक्षावेव वसन्तीत्यर्थः। इह वैकुण्ठे यत्र भगवति आत्मनि परमात्मनि आत्मनं सर्व्वमेव जीवात्मानं धीरा ज्ञानिनोऽन्तरं भिन्नं न पश्यन्ति नभसि महाकाशे नभो घटाकाशमिव तस्यास्य परमेश्वरस्य युवाभ्यां सुराशिङ्गिभ्यां उदरभेदिभयं शत्रुः कश्चित् कपटेनागत्य प्रभोरस्य उदरं भेत्स्यतीति भयं यतः कारणात् विशेषेणोत्पादितं तत् किं नाम अस्माकमग्रेभूतं तावत् प्रथममित्यर्थः। अत्र यद्यपि सार्व्वज्ञ्यादिस्वरूपभूतानन्तकल्याणगुणादीश्वरचैतन्यादल्पज्ञत्वाधीनत्वादिस्वभावं जीवचैतन्यमीशितव्यं सूर्य्यात्तदातप इव जात्यैव भिद्यते तथान्यत्र वक्तृणां सनकादीनां ज्ञानित्वाज्ज्ञानिनाञ्च पद्धतौ अद्वैतज्ञानलभ्यनिर्वाणसिद्ध्यर्थं चित्सामान्यग्रहणस्यैव विधीयमानत्वात् चिद्विशेषभूतानामीश्वरजीवयोर्गुणानां मायायाश्च ग्रहणस्य निषिद्धत्वादीश्वरजीवयोर्महाकाशदृष्टान्तो नानुपपन्नो ज्ञेयः ॥ ३३ ॥

एवं निन्दित्वाप्यशान्तत्वात् पुनरतिक्रोधात् शपन्ति तत्तस्माद्वां युवाभ्यां मन्दधीभ्यां भृत्याभ्याममुष्य विकुण्ठभर्त्तुः प्रकृष्टं प्रकर्षकर्त्तु धीमहि अत्र भेददर्शनं विशेषतो ब्राह्मणवारणाञ्च ब्रह्मण्यदेवस्यापकर्षस्तदभावएव प्रकर्षस्तं कर्तुं तदनन्तरङ्गत्वेन वयमेव चिन्तयेमेति क्षणं तूष्णीं स्थित्वा तदेवाहुः। इतो वैकुण्ठाद्व्रजतम् लोकेषु पापीयसो युष्मद्विधापराधिजनस्य भेदभावदृष्ट्या इमे कामः क्रोधस्तथा लोभ इति गीतोक्तास्त्रयोरिपवो भवन्ति अत्रापरोक्षार्थवाचिना इदंशब्दप्रयोगेणेमे सम्प्रत्यस्माद्देहाद्भूताः क्रोधादय इति सरस्वत्यभिमतोऽर्थः ॥ ३४ ॥

अहो अपराद्धमाधाभ्यां यद्ब्राह्मणाः कोपिता इति तयोर्वैक्लव्यमाह। तेषामिति। हरेः सकाशात् प्रथमं बिभ्यतः भीतौ अतुसउकारलोपश्छान्दसः। ततश्च अतिकातर्य्येण तेषां पादग्रहणं कुर्वन्तौ दण्डवदपतताम् ॥ ३४ ॥

अहो अपराद्धमस्माभिरेव यद्युवां भगवद्भक्तौ शप्तौ हन्त अतः परं किं कुर्म्मः क्रोधाद्या जिता इत्यस्माकं सार्व्वकालिको ऽभिमानोऽत्र वैकुण्ठे चूर्णीबभूवेति पश्चात्तापवतस्तान् प्रत्येकमाहतुः।अघोनि। अपराधिनि मयि भगवद्भिर्य्युष्माभिर्य्यो दण्डो ऽकारि स भूयादित्याशीर्लिङ्गा तमहं स्वस्मिन्नाशीर्वादमेव भावयामि नतु दण्डम् अत्र हेतुं पुनर्द्वौ संहताविवाहतुः यो दण्डः नौ आवयोरशेषमेव सुरहेलनं युष्मदवज्ञानात् भगवदनभिप्रेताचरणाच्च। वैकुण्ठदेशानुचितक्रोधकरणाच्च युष्मासु भगवति च वैकुण्ठधाम्नि च जातमपराधं सर्व्वं हरेत नाशयेत्। किन्तु युष्माकं यः कृपानिमित्तः सम्प्रत्यनुतापस्तस्य कलया एकेन लेशेन एतद्देवावां प्राप्नुयावः नौ आवयोरधोऽधः पततोरपि मोहो भगवत्स्मृतिघ्नो मा भवेत्। मोहस्तु भगवति सेव्यबुद्धिपरिपन्थी भविष्यत्येव। युष्मदभिशापान्यथानुपपत्तेस्तदपि मोहः सोऽपि स्मृतिमेव प्रवहतात् नतु विस्मृतिमिति प्रार्थना ॥ ३६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अत्यन्तभिन्नस्य नभसो भास्कराद्भयं भवति भगवतस्तु सर्वात्मनोऽत्यन्तभिन्नवस्त्वभावात् निर्भये तस्मिन् भयं कल्पितं तदयुक्तमित्याहुः। नेति। यतः समस्तं विश्वं कुक्षौ यस्य तस्मिन्सर्वात्मनि धीराः हि निश्चितमन्तरं समस्तभेदं न पश्यन्ति "सर्वं खल्विदं ब्रह्म तज्जलानिति" इतिश्रुतेः अतः यत्र भगवति आत्मनि परमात्मनि आत्मानमंशभूतं नभसि अवयविनि बृहदाकाशे नभः अवयवभूतं घटाकाशमिव पश्यन्ति अत्र आत्मनि आत्मानमित्युक्त्या केवलभेदप्रतीतिस्तन्निराकरणार्थं नभो नभसीवेत्युक्तम् अंशस्य स्वाधीनस्थित्यादिमत्त्वाभावादंशयभिन्नमात्मानं पश्यन्तीत्यर्थः "आत्मत्वेनावगच्छन्ति ग्राहयन्ति" इतिन्यायात् तस्यास्य भगवतः राजादेरिवोदरभेदयुक्तं भयं सुरालिङ्गिनोः सुरवेषधारिभ्यां युवाभ्यां व्युत्पादितं किम् स्वात्मकात्स्वस्य भयासंभवात् भगवतः सकाशादेते ह्यतदात्मका अत्यन्ततो भिन्ना इति भेददृष्टिर्युवाभ्यां कृतेति भावः ॥ ३३ ॥

तत्तस्मात् इहास्मिन् अपराधे विकुण्ठभर्तुः मन्दधीभ्यां वां युवाभ्यां प्रकृष्टं भद्रमेव कर्तुं यदुचितं तद्धीमहि चिन्तयेम वैकुण्ठप्रदा एव*जनानां ज्ञानभक्तिप्रवर्तकत्वात् नतु वैकुण्ठाद्भागवतानां पातहेतवः। नच वैकुण्ठगतानां पातः किन्तु युवाभ्यां निमित्तभूताभ्यामनेकानां भक्तानां वैकुण्ठप्रापकान् भगवदवतारान्कारयितुं चिन्तयेमेतिभावः अन्तरस्यात्यन्तभेदस्य भावः सत्ता तस्य दृष्ट्या दर्शनेन इतो वैकुण्ठात् यत्र येषु लोकषु अस्य जीवस्य कामः क्रोधस्तथालोभ इति त्रयोरिपवस्तान् व्रजतम् कामादयो यद्यपि सुरेष्वपि सन्ति तथापि तेषु कामादीनां प्राशस्त्याभावात् असुरौ भवत इत्यर्थः अयं शापोवराहादिमूर्तिभिर्जगद्धिताय स्वपार्षदैः सह लीलाविशेषकामेन भगवतैव कृतः शापो मयैव निर्मितइति वक्ष्यमाणात् अतः परवैकुण्ठप्रदेशभूतात् प्रकृताद्वैकुण्ठात्पुनरावृत्तिशङ्कानास्तीति ज्ञेयम् ॥ ३४ ॥

इति पूर्वोक्तं तेषामीरितमिहेत्येत्यादिभाषणमवधार्य इतः पततमिति घोरमनिवारणमनिवारणीयं ब्रह्मदण्डं ब्रह्मशापञ्चावधार्य हरेरनुचरौ अतिकातरेणातिकातर्य्येण भयेन सद्यस्तत्पादग्रहं शीघ्रं तेषां चरणग्रहणं कुर्वन्तौ सन्तौ उरु अधिकं बिभ्यतः अथ भगवान् किंकरिष्यतीति भगवतो भीतान् प्रति दण्डवदपतताम् ॥ ३५ ॥

अहोऽस्माभिरेतौ भगवद्वियुक्तौ कृतावित्यनुतप्यमानान् मुनीन् प्रत्यूचतुः अघोनि अपराधवति य उचितो दण्डः सएव भवद्भिरकारि कृतः नात्र भवतां कश्चिद्व्यतिक्रम इतिभावः अतोऽसौनैव आवयोर्भूयात् अशेषं कृत्स्नं सुरहेलनं भवदवज्ञारूपं पापञ्च हरेदपनुद्यात् किंत्वधो मूढयोनीर्व्रजतोरपि भगवत्स्मृतिघ्नोमोहोवोयुष्माकं दयारूपोऽनुतापस्तस्य लेशेन मा भवेत् मूढयोरप्यावयोर्वैष्णवदिनिमित्तमपि भगवत्प्रावण्यमेव भवेदिति प्रार्थना ॥ ३६ ॥

---

एवं तदैव भगवानरविन्दनाभः स्वानां विबुध्य सदतिक्रममार्यहृद्यः ॥
तस्मिन् ययौ परमहंसमहामुनीनामन्वेषणीयचरणौ चलयन् सहश्रीः ॥ ३७ ॥
तं त्वागतं प्रतिहृतौपयिकं स्वपुंभिस्तेऽचक्षताक्षविषयं स्वसमाधिभाग्यम् ॥
हंसश्रियोर्व्यजनयोः शिववायुलोलच्छुभ्रातपत्रशशिकेसरशीकराम्बुम् ॥ ३८ ॥
कृत्स्नप्रसादसुमुखं स्पृहणीयधाम स्नेहावलोककलया हृदि संस्पृशन्तम् ॥
श्यामे पृथावुरसि शोभितया श्रिया स्वश्चूडामणिं सुभगयन्तमिवाऽऽत्मधिष्ण्यम् ॥३९॥
पीतांशुके पृथुनितम्बिनि विस्फुरन्त्या काञ्च्याऽलिभिर्विरुतया वनमालया च ॥
वल्गुप्रकोष्ठवलयं विनतासुतांसे विन्यस्तहस्तमितरेण धुनानमब्जम् ॥ ४० ॥

## भाषाटीका ।

सम्पूर्ण जगत्को पेट में रखने वाले भगवान् मैंतो ज्ञानी लोग जैसे महाकाश में घटाकाशादिकों का भेद नहीं है तैसे जीवों का भी पृथक् भाव नहीं समुझते हैं देवस्वरूप होकर तुम दोनों को देहादिकों के भेद को लेकर जिस कारण से यह भय हुआ है सो कारण कौन सो कहो ॥३३॥
इसी हेतु से इन परमपुरुष वैकुण्ठपति के भृत्य मंद बुद्धि वाले तुम दोनों के लिये हम भला करेंगे इस भेद बुद्धि से तुम इहां से दूसरे लोकों में जाओ जहांपर पापी पुरुष के ये तीन काम क्रोध लोभ रूप शत्रु होतेहैं ॥ ३४ ॥
उन मुनियों के इस प्रकार कथन को उनने सुना कि वह घोर ब्रह्म दण्ड है बडे शस्त्रों के समूह से भी हटने लायक नहीं है तब शीघ्रही भगवद्दास दोनो बडे भयभीत होकर अधैर्य से उनके चरणों को ग्रहण करके चरणों में गिर पडे ॥ ३५ ॥
जयविजय बोले आपने अपराधीपर जो दण्ड दिया सो होना ही चाहिये जो कि दंडं हमारे सब देवों की अवज्ञाके दोष को हरेगा परन्तु इतनी प्रार्थना है कि आपको यदि पश्चात्ताप हमारे दोष से या दुःख से हो वह ताप नीचे नीचे योनियों में जाने से भगवान् की स्मृति को नाश करदेगा सो मत होवै आप ताप मत करो हमको भगवत् स्मरण बना रहै ॥ ३६ ॥

---

## श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं स्वानां महत्स्वतिक्रममपराधं तत्क्षणमेव विबुध्य तस्मिन् यत्र ते रुद्धास्तं देशं ययौ आर्याणां हृद्यो मनोज्ञः चरणौ चलयन्निति अयं भावः मद्दर्शनप्रतिघातजं क्रोधं तौ दर्शयन् शमयिष्यामीति त्वराव्याजेन पद्भ्यामेव ययौ।श्रीसाहित्यं च निष्कामानपि विभूतिभिः पूरयित्वा क्षमापयितुम् ॥ ३७ ॥
तत्र तैर्दृष्टं देवमनुवर्णयति पञ्चभिः । तं त्वागतं तेऽचक्षत अपश्यन् आपञ्चमादिदमेव क्रियापदम् स्वपुंभिः शीघ्रं प्रतिहृतमानीतमौपयिकं गमनोचितं छत्रपादुकादि यस्य कथंभूतम् स्वसमाधिना भाग्यं भजनीयं फलं यद्ब्रह्म तदेवाक्षविषयम् हंसवच्छ्रीर्ययोस्तयोरुभयतश्चलतोर्व्यजनयोः शिवोऽनुकूलो वायुस्तेन लोलाश्चलन्तः शुभ्रातपत्रशशिकेसराः शुभ्रं यदातपत्रं तदेव शशिस्तादृश्याच्छशी तस्य केसरा मुक्ताहारविलम्बास्तेभ्यो गलन्ति शीकराम्बूनि यस्मिंस्तम् शीकरोऽम्बुकणः ॥ ३८ ॥
कृत्स्नस्य द्वारपालमुनिवृन्दस्य प्रसादे सुमुखम् स्पृहणीयानां गुणानां धाम स्थानम् स्नेहावलोककलया सप्रेमकटाक्षेण हृदि संस्पृशन्तं सुखयन्तम् त्रैलोक्यविवक्षापक्षे सत्यलोकपर्यन्तः स्वर्गस्तस्य चूडामणिवत्स्थितं स्वधिष्ण्यं वैकुण्ठं सुभगयन्तम् शोभयन्तं पृथुर्नितम्ब आश्रयत्वेन विद्यते यस्य तस्मिन् पीतांशुके अलिभिर्नादितया वनमालया च युक्तम् सुभगयन्तमिति पूर्वेणैव वा संबन्धः वल्गुषु प्रकोष्ठेषु वलयानि यस्य गरुडस्य स्कन्धे विन्यस्त एको हस्तो येन इतरेणान्येनाब्जं लीलाकमलं धुनानं भ्रामयन्तम् विन्यस्येति पाठे च वल्गित्यादिहस्तस्य विशेषणम् ॥ ३९ ॥ ४० ॥

---

## श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

तदैवेत्यस्य व्याख्यानं तत्क्षणमेवेति स्वानामिति पार्षदानां सजातीयत्वं बहुवचनं च द्वयोरप्यपराधः सर्वसजातीयकलङ्कप्रद इत्यभिप्रायात् । तस्मिन्निति द्वितीयार्थे सप्तमी अयं भावश्चरणचालनस्यायं प्रयोजनीभूतो व्यङ्ग्योऽर्थः । तौ चरणौ विभूतिभिरप्राकृतसम्पत्तिभिः किञ्च स्वगृहिणीमप्यगोपयित्वाहं समागत इति नापराधः कश्चिन्ममेत्युभयभावनमपि सह श्रीरित्यनेन व्यञ्जितम् ॥ ३७ ॥
तं त्वेति पञ्चकम् । तत्र बहुवाक्यैकवाक्यत्वात् गर्भे द्विबिन्दुमस्तकाङ्कनिर्म्माणं टीकाक्रमबोधाय विधेयम् एवमन्यत्रापि तत्र सप्तमद्वारि आपञ्चमात् पञ्चमश्लोकपर्यन्तं ब्रह्मणोऽप्यक्षविषयत्वं स्वप्रकाशशक्तितादात्म्येन सनकादीन्द्रियेषु स्फुटमनुभूयमानत्वमिति निर्विकल्पकासम्यगाविर्भावानन्तरं भक्त्या सविकल्पकानुभवो व्यञ्जितस्तेन तदीयरूपरसादीनां सच्चिदानन्दघनत्वं व्यञ्जितम् किञ्च पार्षदपरिच्छदादीनां विशेषणानामपि सनकादिरत्युद्दीपनत्वेनाह्लादिनी स्वरूपशक्तेर्वृत्तिविलासत्वमभिप्रेतम् । अत्र मुक्ताहारविलम्बानामुपमेयानामुपमानीभूत केसरैर्निगीर्णत्वेन वर्णनमेवातिशयोक्त्यलङ्कारस्तेन शशित्वेन रूपितस्यापि छत्रस्याधोमुखसहस्रपत्रपद्मत्वरूपकालङ्कारोव्यञ्जित इत्यलङ्कारव्यङ्ग्यालङ्कारत्वेन महत्तमकाव्यत्वम् शशिरूपकेण च यथा शशी परमाणुरूपममृतं स्रवति तेन च

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

यथादि न क्लिश्यम्भवति तथा भगवत्यपि क्लिन्नत्वादिकं नाशङ्कयमिति वस्तुव्यञ्जितम् शीकराम्बुमिति गोवलीवर्द्दन्यायेनानतिरिक्तार्थम् (१) स्वर्गः सुखभोगस्थानं श्रिया वामस्तनोर्द्ध्वरेखारूपया इवेति वाक्यालङ्कारे (२) युक्तमित्यध्याहाराद्विशेषणे तृतीया (३) हारेण कौस्तुभेन च युक्तं सुभगयन्तमिति वा सम्बन्धः (४) भक्तानां भगवति स्नेहाधिकानां वीरपार्षदानामित्यर्थः अन्यथा नित्यप्रेयस्यास्तस्यास्सौन्दर्य्यस्य न्यूनत्वे तेषां तथा ऽवमाने रसाभासः प्रसज्येत विनोदेन तु स्वमनसि तैस्तथा वितर्के रसोल्लास एवेति सर्वमनवद्यम् तथोक्तं श्रीपृथुना स्व एव धिष्ण्येऽभिरतस्य किन्तयेति उदाहृतञ्च श्रीरसिकशुकेन रसामृतसिन्धौ “कृपां तस्य समाश्रित्य प्रौढ़ान्नान्यमपेक्षते । अतुलां यो वहन्कृष्णप्रीतिं वीररस उच्यते” इति वीरलक्षणेन गणयेन्नभामामपीति ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

एवं स्वानामहद्व्यतिक्रममपराधं तदैव तल्लक्षणमेवावबुध्य ज्ञात्वा आर्याणां भक्तानां हृद्यः मनोज्ञः अरविन्दनाभो भगवान् तस्मिन् यत्र देशे सनकादयो द्वाःस्थौ च तत्र देशे ययौ जगाम कथंभूतः सन् सहश्रीः लक्ष्मीसहितः परमहंसा ये महामुनयः सनकादयस्तैरन्वेषणीयौ संशीलनौ चरणौ चलयन्नचरणादर्शनप्रतिघातंहेतुकं क्रोधं तौ दर्शयित्वा शमयिष्यामीति त्वराव्याजेन पद्भ्यामेव ययौ इति भावः मिथुनस्यैवोपास्यत्वप्राप्यत्वद्योतनाय मातृसन्निधौ सुतरां तेषां कोपमुपशमयितुं च सश्रियः आगमनमित्यभिप्रायः ॥ ३७ ॥

अथागच्छन्तं भगवन्तमनुवर्णयति पञ्चभिः । तमिति । आगतमागच्छन्तं भगवन्तं मुनयः अचक्षुनापश्यन् आपश्यपादिदमेव क्रियापदं कथंभूतं भगवन्तं स्वपुंभिः स्वपार्षदैः प्रतिहृतं प्रत्याहृतमौपयिकं छत्रचामरव्यजनपादुकादि यस्य तं स्वानां भक्तानां यः समाधिस्तस्य भाग्यं फलमक्ष्णोर्विषयं समाधिभाग्यमक्ष्णाक्षिविषयतां गतमिव स्थितमित्यभिप्रायः हंसवर्च्छ्रीर्ययोस्तयोर्व्यजनयोश्चामरयोर्यः शिवः सुरभिःसुमन्दो वायुस्तेन यल्लोलच्छुभ्रमातपत्रं छत्रं स एव शशी तस्य केसरा मुक्तादामाविलम्बाश्लेभ्यः शीकराम्बूनि तेभ्यो गलन्ति अम्बुकणानि यस्मिन् तं हंससदृशचामरसुरभिसुमन्दसुखस्पर्शवायवीयलोलचन्द्रमण्डलसदृशशुभ्रातपत्रविलम्बिमुक्तादामगलदमृतबिन्दुसन्दोहालंकृतमित्यर्थः ॥ ३८ ॥

किञ्च कृत्स्नप्रसादसुमुखं कृत्स्नप्रसादः संपूर्णानुग्रहः तस्मिन्सुमुखं पूर्णमनुग्रहं कुर्वन्तमिव स्थितमित्यर्थः स्पृहणीयानां कान्तिसौकुमार्यादिगुणानां धामाश्रयं स्नेहयुक्तो योऽवलोकः तस्य कलया प्रसरणेन हृदि संस्पृशन्तं चित्तमपहरन्तमित्यर्थः पृथौ पीने विशाले च श्यामे उरसि शोभितया प्रकाशमानया श्रिया वक्ष्म्या स्वर्लोकस्य चूडामणिमिव स्थितमात्मधिष्ण्यमात्मनः स्वस्य धिष्ण्यं स्थानं वैकुण्ठलोकं सुभगयन्तमिव शोभयन्तमिव स्थितम् ॥ ३९ ॥

किञ्च पृथुनितम्बिनि विपुलनितम्बवति पीताम्बरे विस्फुरन्त्या काञ्च्या मेखलया पृथुनितम्बोपरि धृतपीताम्बरोपरि विराजमानया काञ्च्येत्यर्थः अलिभिर्भ्रमरैर्विरुतया नादितया वनमालया च मधुपानमत्तनदद्भ्रमरयेत्यर्थः उपलक्षितमित्यध्याहारः यद्वा सुभगयन्तमिति पूर्वेणैवसम्बन्धः वल्गुषु सुन्दरेषु प्रकोष्ठेषु वलयानि यस्य तं विनतासुतो गरुडस्तस्यांसे स्कन्धे विन्यस्तः निहितः हस्तः वामहस्तो येन तम् इतरेण दक्षिणहस्तेनाब्जं सनालं कमलं धुनानं लीलया भ्रामयन्तमित्यर्थः ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

जयविजययोः सनकादीनां संलापो हरेः कर्णताडितः किमभूदत्राह । एवमिति । द्वयोरप्यंशांशिविवक्षया बहुत्वात्स्वानामिति बहुवचनम् एवं स्वानां स्वपार्षदानां सत्सु सनकादिषु अतिक्रमं प्रतिघातलक्षणमपराधं निशम्य निलयात् मुक्तस्थानात् तदैव तस्मिन् सप्तमकक्षास्थाने स्थितांस्तान् ययावित्यन्वयः स्वानां स्वभक्तानां सदतिक्रमं विद्यमानमपराधमिति वा आर्याणां ज्ञानिनां हृद्यो हृदयङ्गमः भगवदागमनं सनकादीनां पुण्याधिक्यं ध्वनयति । परमेति ॥ ३७ ॥

शेषकलुषितशेमुषित्वात् भृत्यापराधं तत्स्वामिन्यारोप्य तस्मिन्नागते ते मुनयस्तिर्यक्दृष्टयोऽभूवन् किमत्राह । तं त्विति । तुशब्दो रोषस्तात्कालिको मध्यंदिनचलनार्कवन्नतु चिरकालभावीति विकल्पयति । स्वपुंभिः स्वभृत्यैः प्रतिहृतं प्रत्यर्पितमौपयिकमुपायनादिसत्कारद्रव्यं यस्मै स तथोक्तस्तं सहसोत्थायागमनात्संक्षिप्तवाहनादिगमनयोग्यसाधनस्था चक्षुर्विषयमित्यनेन प्राप्ताम्मायारूपभ्रान्तिमुन्मूलयति । स्वसमाधिगम्यमिति । सच्चिदानन्दलक्षणमपश्यन्नित्यर्थः तदानींतनवैभववैशिष्ट्यं वर्णयति हंसश्रियोरिति । हंसवद्धवलश्रियोर्व्यजनयोः शिववायुना सुखस्पर्शवायुना लोलं चञ्चलं शुभ्रं धवलञ्चातपत्रमुष्णनिवारणाच्छत्रं तदेव शशी चन्द्रमास्तस्य केसरेभ्यो रश्मिभ्योनिःसृतानि शीकराणि वातास्त एव चाम्बूनि वारीणि यस्मिन् स शिववायुलोलशुभ्रातपत्रशशिकेसराम्बुस्तम् ॥ ३८ ॥

कृत्स्नः पूर्णः प्रसादः प्रसन्नता यस्य स तन्तथा सुप्रसन्नस्तमेवंविधं मुखं यस्य स तथा तं स्पृहणीयधाम कमनीयतेजः पुञ्जमिच्छाविषयस्थानं वा स्नेहोद्भूतयावलोककलया कटाक्षकलया भक्तानां हृदि संस्पृशन्तं त्वगिन्द्रियसुखं कुर्वन्तं श्यामे इन्द्रनीलरत्नकान्तिनिभे पृथौ विस्तीर्णे उरसि शोभितया श्रिया श्रीवत्सरूपयात्मनश्चतुर्मुखस्य धिष्ण्यं गृहस्थानीयरूपम् ।

कौस्तुभो ब्रह्मणो रूपं प्राणश्चूमडाणिस्तथा ।

इति वचनात् स्वग्रीवायां स्थितं मणिं कौस्तुभं नामसुभगवन्तमिव विकासयन्तमिव स्थितम् ॥ ३९ ॥

पीतांशुकं पृथुनितम्बमधिपीताम्बरावीनविस्तीर्णं कटितटोपरिस्फुरन्त्यासहस्रगुणया काञ्च्या अलिभिर्विरुतया शब्दितया वनमालया च शोभमानं वल्गुनि सुन्दरे प्रकोष्ठे मणिबन्धस्थाने वलयः कङ्कणोयस्य स तथा त्वमितरेण दक्षिणेन करेणाब्जं कमलं धुनानं कम्पयन्तम् ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तावदेव श्रीभगवान् तत्रैवागत इत्याह । एवं तदैवेत्यादिचतुष्टयेन । अत्र क्रमेण व्याख्यायते एवमिति । टीका च एवं स्वानां महतसु अतिक्रममपराध तल्लक्षणमेव विबुध्यतस्मिन् यत्र

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

रुद्धाः तं देशं ययौ । आर्य्याणां हृद्यः मनोज्ञः चरणौ चलयन्नित्ययं भावः । मच्चरणादर्शनप्रतिघातजं क्रोधं तौ दर्शयन् शमयिष्यामीति त्वराव्याजेन पद्भ्यामेव ययौ । श्रीसाहित्यञ्च निष्कामानपि विभूतिभिः पूरयित्वा क्षमापयितुमित्यपेक्षा । अत्र तेषामात्मारामाणामप्यानन्ददानार्थं चरणादर्शनेन तस्य सच्चिदानन्दघनत्वं श्रीसाहित्येन तच्छक्तिविलासस्यापि स्वरूपानतिरिक्तत्वं विवक्षितम् । स्वानामिति वहुवचनं द्वयोरप्यपराधः सर्व्वेष्वेव परिवारेष्वापततीत्यपेक्षया तयोर्वहुमानाद्वा स्वशब्देन मुनीनां न तादृशं तदात्मीयत्वमिति विवक्षितम् । यद्वा चरणौ चलयन् ननु पादुके अपि स्वीकुर्व्वन्निति मुनिष्वादरविशेषो दर्शितः । सह श्रीरिति तेषु तस्या अप्यगोपनं स्वस्य सूचयित्वा तयोरपराध एव दृढीकृत इति अन्यत्तैः ॥ ३७ ॥

तं त्वेति पञ्चकम् । ते सनकादयस्तमचक्षत निरीक्ष्य च नेमुरिति पञ्चभिरन्वयः । कथंभूतं स्वसमाधिभाग्यं स्वसमाधिना भाग्यं भजनीयं फलं यद् ब्रह्म तदेवाक्षविषयम् । यद्वा । यस्य ब्रह्मसमाधिरूपस्य साधनस्य भाग्यं फलरूपम् । यद्वा स्वसमाधेः स्वस्य हृदि ब्रह्माकारेण परतत्त्वस्फूर्तेर्भाग्यं फलरूपं यतोऽक्षविषयं तदीयस्वप्रकाशताशक्तिसंस्कृतनिखिलधीन्द्रियस्फुरितत्वेन सम्प्रति विस्पष्टमेवानुभूयमानम् । अनेन पूर्व्वंयक्तस्य शब्दस्पर्शरूपरसगन्धाख्यानां सर्व्वेषामेव धर्म्माणां सच्चिदानन्दघनात्मकत्वं साधितम् । तथा नित्यमेव तथाविधसन्ततोदित्वरमाधुरीवैचित्र्यानुभवपूर्व्वकं परमप्रेमानन्दसन्दोहेन सेवमानैस्तत्स्यात्मीयैः पुरुषैः आनीतमेवौपयिकनानावस्तुभिः सेव्यमानं भगवन्तं कथञ्चित् क्वचित् कदाचिदेव नापश्यन् तदानीं केनापि समाधिजभाग्योदयेन केवलमपश्यन्निति तेषां परमविदुषां स्पृहास्पदावस्थेषु श्रीवैकुण्ठपुरुषेषु कस्या अपि भगवदानन्दशक्तेर्विलासप्रयत्वं दर्शितम् अथ तेषां भगवद्दर्शनेरुद्दीपनत्वेन चित्तक्षोभकत्वात् परिच्छदादीनामपि तादृशत्वमाह । हंसेति सार्द्धत्रिभिः । केसरा मुक्तामयप्रलम्बाः अत्र छत्रस्य शशितया केसराणां शीकराम्बुत्वेन रूपकम् । शशिसम्बन्धित्वाच्छीकररूपाणामम्बूनाममृतत्वं लभ्यते ॥ ३८ ॥

कृत्स्नप्रसादेति । कृत्स्नः पूर्णो यो मुनिषु प्रसादस्तेन सुमुखं मनोहरवक्त्रं पार्षदयोस्तु प्रसादो न स्फुटः । एतौ द्वावित्यादिवक्ष्यमाणाविरोधात् । यद्वा कृत्स्नस्य द्वारपालमुनिवृन्दस्य प्रसादे सुमुखमिति । स्पृहणीयानां गुणानां धाम स्थानमिति तच्चङ्गणानां तादृशत्वं दर्शितम् । स्नेहावलोकेति विलासस्य स्वसुखभोगस्थानानि नित्यानन्तानन्दरूपत्वात् तेषां चूडामणिमात्मधिष्ण्यं स्वस्वरूपस्थानं श्रीवैकुण्ठम् । तादृशेऽप्युरसि शोभितयारेखारूपया श्रिया कृत्वा सुभगयन्तमिव तत्र भूषणविशेषं निदधानमिव इवेति वाक्यालङ्कारे । अनेन श्रीवैकुण्ठस्य नित्यत्वं सर्व्वोत्कृष्टत्वञ्च । उक्तञ्च तद्विश्वगुर्व्वित्यादौ आपुः परां मुदमपूर्व्वमित्यादि । वक्ष्यते च अथ ते मुनयो दृष्ट्वा नयनानन्दभाजनम् । वैकुण्ठं तदधिष्ठानं विकुण्ठञ्च स्वयं प्रभुम् । भगवन्तं परिक्रम्य प्रणिपत्यानुमान्य च । प्रतिजग्मुः प्रमुदिताः संशन्तो वैष्णवीं श्रियमिति ॥ ३९ ॥

पातानुके इत्यत्र काञ्च्या घनमालया चेति उपलक्षणे तृतीया ॥४०॥

———



श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं प्रार्थितेऽपि प्रसादे अङ्गीकारेण दत्तेऽपि साक्षाददानं पश्चात्तापव्याकुलानामुचितमेव विवेकेन सर्वप्रतिरोधो वा एवं सति सर्वनिर्द्धारार्थं भगवानागत इत्याह । एवं तदैवेति । एवं सति तदैव भगवान् विबुध्य तस्मिन् स्थाने ययाविति सम्बन्धः तदैवेति न ज्ञापनापेक्षा तत्र हेतुः भगवानिति । तर्हि पूर्वमेव कथं न प्रतीकारं कृतवानित्याशङ्क्याह । अरविन्दनाभ इति । सृष्टिजनकोऽयं यतः कमलनाभः अतः पूर्वं न कृतवानित्यर्थः तत्रैवं सन्देहः किं भगवता मुनीनामपराधो बुद्धः आहोस्वित् सेवकयोरिति । उभयत्र युक्तीनां सम्भवात् । तत्र निर्द्धारार्थमाह । स्वानां विबुध्य सदतिक्रममिति । स्वसेवकानामेवापराधः यतः सतामतिक्रमः कृत इति । अनेन प्रथमापराधस्तयोरिति सूचितं लोकेऽपि यः प्रथममपराध्यति स दण्ड्यः ननु तेषामेव कथं नापराधः यद्वपृष्ठैव प्रविष्टा इति तत्राह । आर्यहृद्य इति । आर्याः सन्मार्गवर्तिनः मर्यादायां श्रेष्ठाः ते हृद्याः यस्य अतो भगवदन्तःकरणे ते रोचन्त इति तेषामागमनं नापराध इति । आर्याणां हृद्यो वा अतोऽप्यागमनं तेषामुचितमेव । तस्मिन् स्थाने ययौ उभयोः कृतिसमर्थनार्थम् । यत्सेवकाभ्यां निवारिताः ते पुनः अन्तःप्रवेशयितुं न युक्ता इति स्वयमेव तत्र गतः नत्वाकारितास्ते न वा पश्चात्ते समानीताः सत्कृता वा तेषामपि चरणारविन्ददर्शनाकाङ्क्षा वर्तत इति चरणावेव चालयन् तत्र गतः । एवं सत्युभयेषां खेदो भवेत् । सेवकानामुचितएव खेदः मुनीनामपि । परमहंसमुनीनामन्वेषणीयौ तौ चरणाविति परमहंसाश्च ते मुनयश्च परमहंसा इत्यनेन धर्मनिष्कर्ष उक्तः महामुनीनामिति ज्ञानोत्कर्षः । उभयोत्कृष्टविशिष्टस्यैव भगवतः चरणान्वेषिणो भवन्ति काण्डद्वयार्थस्य सिद्धत्वात् भक्तिरेवावशिष्यत इति चलयन्निति चालयन्नित्यर्थः सहश्रीः लक्ष्मीसहितः तयापि सहागमनं तथा तस्याः स्थित्या ह्यनवसरत्वमिति सा पुनर्बहिरप्यानीता तेन सेवकानां न खेदः अनवसरबोधात् मुनीनां लक्ष्म्याः सन्तोषार्थमिति केचित् कदाचिल्लक्ष्म्या गर्वे जाते तन्निवृत्त्यर्थं लोकान्तरं परिकल्प्य तत्र जयविजयौ द्वारपालकौ निवेश्य स्वयं प्रविष्टः ताभ्यां लक्ष्म्या निरोधं कारितवान् ततः प्रभृति तस्याः मनसि तयोरस्वरसोऽस्तीति केचित् पुनः जन्मत्रयलक्षकार्यार्थं शेषलक्ष्मीसुदर्शनान्यागतानि इत्याहुः ॥ ३७ ॥

समागतं भगवन्तं वर्णयति । तं त्वागतमित्यादि पञ्चभिः । पूर्वं वैकुण्ठवर्णनायां भगवान्न वर्णित इति पञ्चविधाप्रवर्तकत्वेनात्र वर्णितः "समागमक्रियायुक्तं समागमनहेतुकम् । समागत्य स्थितं चापि दृष्टं नतमितिक्रमः" । तत्र समागच्छन्तं वर्णयति । तं त्वागतमिति । तं भगवन्तं सेवकपक्षभवतीति तु शब्दः आगतमिति दृष्टिपर्यन्तं शीघ्रमेव समागतं स्वपुंभिः स्वसेवकैः प्रतिहृतमग्रे स्थापितं गमनौपयिकं पादुकादि यस्य तयोश्चरणापतितत्वात्ते मुनय एवाचक्षत तैः पूर्वमपि तथैव हृदये दृश्यते तथापि इदानीमक्षविषयमचक्षत स हि स्वेच्छया अचक्षुर्विषयोऽपि चक्षुर्विषयो जातः तेषां प्रत्यभिज्ञामाह । स्वसमाधिभाग्यमिति । स्वस्य समाधिं भजत इति समाधेर्वा भाग्यं कदाचित्समाधौ एवं भूतो भगवानाविर्भवति तदा समाधेर्भाग्यं भवतीति एवं समाधावपि दुर्लभः इदानीं चक्षुर्विषयो जात इति तेषां भाग्यं समागमे श्रमाभावाय छत्रेण चामराभ्यां च सहि-

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ते वर्णयति हंसस्येव श्रीर्ययोः उभावपि श्वेतौ चामरौ रत्नदण्डौ अग्रे न स्त्री नम्रपुच्छाविव भासेते तयोर्व्यजनयोर्यः शिवोवायुः तेन लोलं शुभ्रं च यदातपत्रं छत्रं स एव शशी अमृतस्रावी चन्द्रः तस्य केसराः अमृतबिन्दुयुक्तकिरणा इव परितो बद्धाः मुक्तामालाः तद्गता मुक्ता एव वायुना लोलाः शीकराम्बुप्रायाः भवन्ति शीकराः अल्पकणाः वायुना भगवन्तमरूपं स्पृशन्ति अतः शीकराम्बुत्वम् अत्राम्बुपदं शैत्यसूचनार्थं सर्वत्रैव शीकरा बहुजलप्राया जाता इति वाम्बुपदं केसरपदेन सौरभ्यं लक्षितं मान्द्यशैत्ये स्पष्टे शशित्वात् तापहारित्वं सिद्धम् अम्बुत्वात् तृषापि आतपत्रत्वादेव छाया हंसत्वाल्लीलाजनकत्वं कल्याणो वायुरिति उत्कृष्टसर्वगुणोवायुरत्रनिरूपितः अत एव व्यजनयोः सम्बन्धी उक्तः अन्यथा महाभूतो वायुः चालनेनाभिव्यक्तो भवेत् स च कालादिधर्मसहित इति न सर्वतः शीतलः ॥ ३८ ॥

एवमागच्छन्तं वर्णयित्वा तस्यागमनहेतुरूपं वर्णयति । कृत्स्नप्रसादसुमुखमिति । भगवतो वैकुण्ठे स्थितिः वैकुण्ठनिर्माणं विवादस्थाने समागमनं च सर्वेषामुपकारार्थं ब्रह्माण्डे यदि वैकुण्ठस्थानं न भवेत्तदा कुत्र गत्वा ब्रह्मादयः कार्यं निवेदयेयुः यदि वा तत्र भगवान्न तिष्ठेत्तदा निवेदिते कार्ये कथमवतरेत् यदि वा तत्र भगवान्नागच्छेत्तदा कथं सर्वसमाधानं भवेदिति अतः सम्पूर्ण एव ब्रह्माण्डे ये वर्तन्ते तेषां प्रसादार्थं सुमुखमनेन भगवदागमनं कस्यापि नापकारि मुनीनां जयविजययोश्च अङ्गमित्यस्य सर्वाणि विशेषणानि स्पृहणीयं धाम तेजो यस्य दीपादिकान्तिः सर्वेषां न स्पृहणीया नापि सर्वदा इदं त्वानन्दरूपमिति स्पृहणीयत्वं धामपदं कान्त्यैवानन्दजनकमिति अनेन पर्यवसानविचाराभावेऽपि दर्शनेनापि सर्वेषां प्रसादहेतुर्भवतीत्युक्तं किञ्च स्नेहावलोकनया संस्पृशन्तमिति कालान्तरे फलदानं दूरे तिष्ठतु इदानीमेव स्नेहपूर्वकं यदवलोकनं करोति तस्यावलोकनस्य एकदेशेनापि भावितेन भगवान् हृदये निविशते कलया सह वा हृदि सम्यक् स्पृशन्तमनेन सर्वेषां हृदये तापापनोदो ज्ञानजननं च सूचितम् एवं विशेषणत्रयेण कार्यतोवहिरन्तश्च सर्वसुखदायिभगवदङ्गमित्युक्तम् एवमङ्गमात्रस्यैव गुणानुक्त्वा आभरणानामुपयोगमाह । श्यामे पृथाविति । श्यामवर्णे स्थूले वक्षःस्थले कषपाषाणे सुवर्णरेखेव श्रीवत्से या लक्ष्मीः तया कृत्वा सः चूडामणिं वैकुण्ठं सुभगयन्तं सौभाग्ययुक्तं कुर्वन्तमात्मधिष्ण्यं स्वस्य निवासस्थानं भगवान् यत् श्रीवत्साङ्कलक्षणं स्वस्यासाधारणरूपं गृहीत्वा तिष्ठति तद्वैकुण्ठशोभार्थम् अन्यथा तादृशं रूपं किमर्थं गृह्णीयात् सर्वस्यापि जगतः शोभा स्वर्गः तस्यापि मुकुटमणिः वैकुण्ठः तस्यापि शोभा वक्षःस्थलस्थितलक्ष्म्या अनेन लोकवत् स्थानादिसौन्दर्येण भगवत्सौन्दर्यं न किन्तु भगवत एव सर्वसुन्दरं भवतीति निरूप्यते वैकुण्ठस्य शोभां कुतो जनयतीत्याकाङ्क्षायामाह । आत्मधिष्ण्यमिति । इवेत्यनेन नैतावदेव प्रयोजनं किन्तु अन्यदप्यस्तीति सूचितं श्रिया विना न क्वापि शोभा सा च चञ्चलेति तस्या रमणार्थं श्यामं शृङ्गाररूपं स्थूलमालिङ्गनयोग्यं तस्याः स्वानन्दत्वात् उरः स्थलमासनं कृतं हृदये हि सर्वस्य सुखं सर्वमेव भगवद्धृदये वर्तत इति सर्वस्यापि सुखमपि जनयति इदमपि वचनमात्रं वस्तुतस्तु ब्रह्माण्डमध्ये आनन्दोऽभिव्यक्तस्तिष्ठति भगवद्रूपं तेन सर्वं सुखितमिति एवं श्रीवत्सस्य प्रयोजनमुक्तम् ॥ ३९ ॥

पीताम्बरादीनां प्रयोजनमाह । पीतांशुक इति । पीतमंशुकं यस्य एतादृशे स्थूलनितम्बयुक्ते कटितटे पीताम्बरोपरि विस्फुरन्त्या काञ्च्या भ्रमरैर्विशेषेण रुतया वनमालया च आत्मधिष्ण्यं सुभगयन्तमिति सम्बन्धः । आत्मनः स्वस्य पुरुषोत्तमस्य धिष्ण्यं जगद्रूपं वा पीतमम्बरं वेदः तद्भूमौ प्रसृतं यज्ञादिद्वारा हृदयादिशुद्धं सम्पाद्य आत्मनामात्मनो वा धिष्ण्यत्वम् । धिष्ण्यमन्तः करणादिकं वा शोधयति नितम्बाः हिमालयादिसमीपभूमयः पृथवः सर्वफलजनकत्वात् कर्मभूमीरूपाः तथापि भगवानाधिदैविके रूपे पीताम्बरं स्थापयति तदैवाग्र वेदः प्रचरति । तदैव च भगवतः अधिष्ठानं सर्वेषां हृदयं भवति । तत्र विस्फुरन्ती या काञ्ची काञ्चननिर्मितं दाम उपनिषदर्थरूपं तया सुतरामेव महतां हृदयमधिष्ठानं भवति विस्फुरन्त्येति योगादिसहितया । यद्येतादृशी ब्रह्मविद्या न भवेत् तदा कुत्रापि भगवत्स्थितिर्न भवेदिति । वनमालया च भगवद्गुणकीर्तनरूपया । अलयो भ्रमरा मृत्युरहिताः षड्गुणयुक्ताः भगवद्भक्तास्तेषां गुणानां वक्तारः सत्कीर्तितभगवद्गुणव्यतिरेकेणापि न भगवान् हृदये तिष्ठति अतो मूले पीताम्बरकाञ्चीदामवनमालानां धारणे भूमौ मार्गत्रयं प्रसिद्धं तिष्ठतीत्यर्थः चक्राद्भगवत्कृपया च उपवीतादिरूपया । एवं त्रयाणां विनियोगमुक्त्वा वलयादित्रयस्य विनियोगमाह । वल्गुप्रकोष्ठे वलया यस्य । चत्वारो भगवद्धस्ताः चतुः पुरुषार्थरूपाः तत्र तत्र क्रियाः तत्तत्साधकाः हस्तरूपाः तेषां शोभा भगवतश्चतुर्मूर्तेर्धाने भवति । वलयाः तद्रूपज्ञानात्मकाः ते चेत्तत्र न प्रतिष्ठिताः तदा न कोऽपि पुरुषार्थः सिध्येदिति पुरुषार्थसिद्ध्यर्थं वलयोपयोगः गरुडो हि कालात्मा स भगवत्पराक्रमेण प्रतिरुद्धः अन्यथा भक्तानपि भक्षयेत् विशेषेण नता या भगवन्माया तस्याः पुत्रो गरुडः कालः सैव भक्षेति वैष्णवतन्त्रे तस्यांसे स्कन्धे प्राणिनामदृष्टे प्रचारे वा विन्यस्तौ हस्तौ येन इतरेणेति वचनात् भक्तानामर्थं एको व्यापारः लोकानां भ्रामणार्थं चापर इति तदाह । इतरेण धुनानमब्जमिति । इतरेणेति विशेषतो भगवत्सम्बन्धरहितानेव मोहयतीति ज्ञापितम् अब्जं जगदात्मकं कमलं भगवच्छब्दार्थं वा लीलाकमलमितरेण कम्पयति ॥ ४० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

एवं परस्परापराधभावनोत्थान्तर्दैन्यसमुद्रपृषद्भिरेवाश्रुभिर्येण वहिर्निःसरद्भिः स्नपयित्वेव दोषात् पुनः शुद्धीकृतेषु सनकादिजयविजयेषु विप्रत्वभक्तत्वयोर्याथार्थ्यमनुभावितेषु तत्रत्यसभ्येष्वात्मधिकारेणैवं भक्तिः समुद्योतते समुद्योतिनी च भक्तिर्भगवन्तमाकर्षतीतीममर्थं प्रमाणीकुर्वन्निव ब्रह्मण्यदेवो भक्तवत्सलो भगवांस्तदा तत्रैवोपजगामेत्याह । एवमिति स्वानां स्वतिक्रमम् स्वभक्तकर्त्तृकं ब्राह्मणातिक्रमम् । आर्य्याणां हृदि प्रादुर्भवतीति तथा सोऽपि तेषां नेत्रेष्वपि प्रादुर्भवितुमिति भावः । तस्मिन् सप्तमद्वारप्रदेशे । महामुनीनामन्वेषणीयो अन्वेष्टुं योग्याविति तच्च निर्विकल्पकज्ञानानन्तरं सविकल्पकज्ञानमपेक्षितव्यं भवति तद् ब्रह्मस्वरूपानुभवानन्तरं भगवत्स्वरूपमनुभवितुमर्हन्त्यत चरणौ चलयन्निति मधुरगमाधुर्यमननुभूतचरमेतानुभा

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

महानिर्वृत्तिचमत्कारसिन्धौ निमज्जयामीत्यभिप्रायेणैव सह श्री-रिति वहिरङ्गाया मायाया एव मच्छक्तित्वमेते जानन्ति नत्वस्याः श्रियः स्वरूपभूताया इत्येतामप्याह्लादिनीं शक्तिमनुभावयामीत्य-भिप्रायेण ॥ ३७ ॥

तत्र तैरनुभूतचरं तन्माधुर्य्यं वर्णयति पञ्चभिः। तत्र भगवत्-साक्षात्कारे रूपमाधुर्य्यं व्यापकमेव शब्दादिमाधुर्य्यञ्च किञ्चित् किञ्चिद्भगवद्दत्त--स्वविषयकरतिशक्त्या तैरनुभूतं ज्ञेयम्। तन्तु तत्रागतं ते अचक्षत अपश्यन् कीदृशं स्वपुंभिः प्रतिहृतान्यौपायिकानि यस्मै तमहो श्रीभगवच्चरणाः सम्प्रति वहिश्चत्वरमलं कुर्व्वत इति तात्कालिक्या प्रथया तमवलोकितुमत्युत्कण्ठया द्वारपुरनगर-विमानकाननस्था भक्तजना आगत्य विविधरत्नवस्त्रालङ्कारफल-गन्धपुष्पमाल्यारात्रिकादीन्युपकल्पयाञ्चक्रुरित्यर्थः। अक्षविषयं तेषामिन्द्रियगोचरीभूतम्। ननु तर्हि तस्य विषयत्वं प्रसक्तं तत्र सद्दृष्टान्तभूतमनमाह स्वसमाधेस्तेषां स्वहृदि ब्रह्माकारे ब्रह्मानन्दानु-भवस्यापि भाग्यं मूर्तिमदित्यर्थः अहो एतद्दर्शनेनैवास्माकं समा-धिरपि सफलो बभूवेति तेऽमन्यन्त तदपि तद्रूपादेर्विषयत्वं को मूढः सम्भावयेदिति भावः। हंसवत् श्रीर्ययोस्तयोरुभय-तश्चलतोर्व्यजनयोर्यः शिवोऽनुकूलो वायुस्तेन लोलन्तश्चलन्तः शुभ्रातपत्रशशिकेसराः शुभ्रं यदातपत्रं तदेव शशीव तस्य केसरा मुक्ताहारविलम्बास्तेभ्यो गलन्ति शीकराम्बूनि यस्मिंस्तम् अत्र अतिशयोक्त्या मुक्ताविलम्बानां केसरत्वेन छत्रस्य अधोमुख-सहस्रदलकमलाकारत्वमारोपितं तेन च छत्रस्य शैत्यसौगन्ध्य-मार्द्दवानि व्यञ्जितानि। तथा शीकराम्बूनां शशिसम्बन्धित्वेना-मृतत्वम् ॥ ३८ ॥

सुभक्ताभ्यामभिशापदायिष्वस्मासु न जानीमहे भगवानन्तः कुप्यति न वेति संशयसिन्धुनिमग्नेषु कृत्स्न आभ्यान्तरोबाह्यश्च यः प्रसादस्तेन सुमुखम् अतएव हन्तास्मासु प्रत्युत प्रसाद एव पूर्ण उपलक्ष्यत इत्यन्तरुल्लसन्मुनिवृन्दस्य नेत्रादीन्द्रियैः स्पृह-णीयानां सौन्दर्य्यसौरभ्यसौकुमार्य्यकारुण्यौदार्य्यादीनां धाम पूर्णास्पदं हाहन्तावयोर्ब्रह्मशापानलदग्धयोरधः पततोरीदृग्द्-र्शनमाधुरी पुनर्नघटिष्यत इति खेदार्णवनिमग्नौ रुदन्तौ जयविजयौ प्रति यः स्नेहावलोकस्तस्य कलया कौशलेन तत्रत्य-जनानां सर्व्वेषामेव हृदि संस्पृशन्तम् अहो भक्तवात्सल्य-मिति मनोलोभयन्तं श्रिया वामस्तनोर्ध्वे स्वर्णरेखारूपेण स्थि-तया स्वश्चूडामणिं सत्यलोकान्तानां स्वर्गाणां चूडायां मणिमिव स्वधिष्ण्यं वैकुण्ठं सुभगयन्तं धन्यः स वैकुण्ठो यत्रत्याः स्वर्णरेखामयीं लक्ष्मीं भगवद्वक्षसि विलोकयन्तीत्येवं सौभाग्यवन्तं कुर्वन्तम् एवमग्रेऽपि व्याख्येयम्। अत्र कृपामाधुर्यरूप-माधुर्य्ये तन्मनोनेत्राभ्यामनुभूते ज्ञेये ॥ ३९ ॥

पृथुर्नितम्ब आस्पदत्वेन वर्त्तते यस्य तस्मिन्निति नितम्बोऽयं ममैव नान्यस्येति पीतांशुकेन तत्र स्वीयत्वमारोपितमिति इन् प्रत्ययध्वनिः तादृशे पीतांशुके विस्फुरन्त्या काञ्च्येति पीतांशुक-मपि स्वास्पदीकृत्य तदुपरि स्वस्वत्वमारोप्य स्थितयेत्यर्थः। तया तां काञ्चीमपि स्वास्पदीकृत्य तदुपरिस्थितया वनमालया कीदृश्या अलिभिर्वितवेति वनमालामपि स्वास्पदीकृत्य तदु-पर्य्यलिभिः स्वत्वमारोपितमित्यलिभ्य एव सर्व्वेभ्योऽपि साम्रा-ज्यं भगवता दत्तमिति भावः। तृतीयान्तानामात्मभिष्ण्यम्

सुभगयन्तमिति पूर्व्वेणैवान्वयः। वल्गु मनोहरं प्रकोष्ठे वलयं यत्र तद्यथा स्यादेवं गरुडस्कन्धे विन्यस्तवामहस्तम्। विन्यस्येति पाठे वल्गित्यादि हस्तस्य विशेषणम् इतरेण दक्षिणहस्तेन कमलं भ्रामयन्तमिति लीलाकमलभ्रामणमिषेण मुनीनां हृदय-कमलं ब्रह्मास्वादसुस्थिरमपि स्वमाधुर्य्यदर्शनया चपलीकुर्व-न्तं तेनच हेमुनयो मन्निर्विशेषस्वरूपानन्दात् सर्व्वोत्तमत्वेन-निश्चितात् सम्प्रति कथं चित्तं चालयथ तत्रैव किं न स्थिरी-कुरुध्वे मास्वनिष्ठां त्यजतेति मुनिषु नर्म्म द्योतितम् ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

स्वानां स्वस्वातिक्रममपराधं तदैव तत्क्षणमेव विबुध्य आर्याणां हृद्यो मनोज्ञः तस्मिन् स्थाने ययौ भगवतो भक्तवात्स-ल्यस्य गुणस्यातिशयं दर्शयितुं सहश्रीः लक्ष्मीसहितः इति परमहंसमहामुनीनामन्वेषणीयचरणौ चलयन्निति चोक्तम् ॥ ३७ ॥

मुनिभिर्दृष्टं भगवन्तं वर्णयति। तमित्यादिपञ्चभिः। तम्भग-वन्तं ते मुनयः अचक्षत निरीक्षितवन्तः निरीक्ष्य च कैः प्रणेमु-रिति पञ्चश्लोकानामन्वयः कथम्भूतं प्रतिहृतमानीतमौपयिकं गमनोचितं छत्रपादुकादि यस्य तम् स्वानां भक्तानां समाधेर्भा-ग्यफलं तदेवाक्ष्णोर्विषयम् हंसवच्छ्रीः शोभा ययोस्तयोरुभयतश्च-लतोर्व्यजनयोश्चामरयोर्यः शिवः मङ्गलरूपो वायुस्तेन लोलन्तश्च-लन्तः शुभ्रातपत्रशशिकेसराः शुभ्रं शोभनं यदातपत्रं तदेव शशिसदृशत्वाच्छशी तस्य केसराः मुक्ताहारविलम्बास्तेभ्यो गल-न्ति शीकराम्बूनि अम्बुकणानि यस्मिन् तम् ॥ ३८ ॥

कृत्स्नस्य भक्तवृन्दस्य प्रसादे सुमुखं स्पृहणीयानां कल्याण-गुणानां धाम आश्रयम् स्नेहसहितावलोकस्य कलया सौशी-ल्यवशादल्पेन सस्नेहावलोकनेन हृदि संस्पृशन्तमानन्दयन्तम् स्वर्गलोकस्य चूडामणिवत्स्थितं सुभगयन्तं शोभयन्तमिव॥ ३९ ॥

पृथुनितम्बः आश्रयत्वेन विद्यते यस्य तस्मिन् विस्फुरन्त्या काञ्च्या मेखलया वनमालया च सुभगयन्तमिति पूर्वेण सम्बन्धः युक्तमिति शेषो वा वल्गुषु सुन्दरेषु प्रकोष्ठेषु वलयानि यस्य तस्मिन् विनतायाः सुतस्य अंसे स्कन्धे विन्यस्तो हस्तो येन तम् धुनानं भ्रामयन्तम् ॥ ४० ॥

---

भाषाटीका।

पद्मनाभ भगवान् इस प्रकार से अपने भृत्यों के द्वारा महात्मों का अपमान होना जानकर उसी समय में सत्पुरु-षों के हृदय में रहनेवाले हैं इसी से परम हंस महा मुनि लोग जिनके खोज में हैं ऐसे दोनों चरणों से चलकर लक्ष्मी जी के सहित द्वारपर आगये ॥ ३७ ॥

जब भगवान् आये तब सब भृत्यों ने छत्र चामरादिक सब उपस्थित किये तब मुनियों ने जो कि समाधि में अपने को वडे भाग्य से प्राप्त होते उनको साक्षात् नेत्रों से देखा कि हंसकी सी शोभावाले दोचामरों के मंद वायु से हिलते हुये जो चंद्रमा सरीके शुक्ल छत्रके केसर तिनों मे से अमृत की वर्षा होरही है. जिनके उनके दर्शन किये ॥ ३८ ॥

भगवान् कैसे हैं कि सबके ऊपर कृपा करके सुंदर

विद्युत्क्षिपन्मकरकुण्डलमण्डनार्हगण्डस्थलोन्नसमुखं मणिमत्किरीटम् ।
दोर्दण्डषण्डविवरे हरता परार्घ्यहारेण कन्धरगतेन च कौस्तुभेन ॥ ४१ ॥
अत्रोपसृष्टमिति चोत्स्मितमिन्दिरायाः स्वानां धिया विरचितं बहु सौष्ठवाढ्यम् ।
मह्यं भवस्य भवतां च भजन्तमङ्ग ! नेमुर्निरीक्ष्य न वितृप्तदृशो मुदा कैः ॥ ४२ ॥
तस्यारविन्दनयनस्य पदारविन्दकिञ्जल्कमिश्रतुलसीमकरन्दवायुः ।
अन्तर्गतः स्वविवरेण चकार तेषां संक्षोभमक्षरजुषामपि चित्ततन्वोः ॥ ४३ ॥
ते वा अमुष्य वदनासितपद्मकोशमुद्वीक्ष्य सुन्दरतराधरकुन्दहासम् ।
लब्धाशिषः पुनरवेक्ष्य तदीयमङ्घ्रिद्वन्द्वं नखारुणमणिश्रयणं निदध्युः ॥ ४४ ॥

भाषाटीका ।

मुख की शोभा है जिनके सबके चाहना करने योग्य गुणों के आश्रय हैं स्नेहपूर्वक दृष्टि के कणा मात्र से सबके हृदय में प्रवेश होते हैं श्यामल विस्तार हृदय के ऊपर लक्ष्मीजी जिनके विराजमान हैं तिसी से ब्रह्मलोकादिकों का चूडामणि जो वैकुण्ठ धाम तिस को शोभित कर रहे हैं ॥ ३९ ॥

अति स्थूल कटिभाग के ऊपर जो पीतांबर तिसपर प्रकाशमान जो कौंधनी तासे भौंरा शब्द कर रहे जिसमें ऐसी वनमाला से सुशोभित हैं पहुंचा में सुंदर कंकण वाले वांये हस्त को गरुड जी के कांधे पर रखे हैं दूसरे दाहिने हस्त से नाल सहित कमल को घुमारहे हैं ॥ ४० ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्वकान्त्या विद्युतः क्षिपती ये मकराकारे कुण्डले तयोर्मण्डनस्यार्हे गण्डस्थले यस्मिंस्तच्च तदुन्नसं च मुखं यस्य मणियुक्तं किरीटं यस्य दोर्दण्डानां षण्डं समूहस्तस्य विवरे मध्ये स्थितेन हरता मनोहरेण विहरतेति वा परार्घ्यं उत्कृष्टस्तेन हारेण कन्धरायां स्थितेन ॥ ४१ ॥

किं बहुना इन्दिराया यत्स्मितमहमेव सर्वसौन्दर्यनिधिरित्यहङ्करणमत्र भगवत्सौन्दर्ये उपसृष्टमस्तंगतमिति स्वानां भक्तानां धिया विरचितं भृत्यैः स्वमनस्येवं वितर्कितमित्यर्थः कुतः बहु सौष्ठवेन सौन्दर्येणाढ्यं युक्तम् किञ्च मह्यं मम भवस्येश्वरस्य भवताञ्च कृते अङ्गं भजन्तं मूर्तिं प्रकटयन्तमचक्षत निरीक्ष्य च कैः शिरोभिर्मुदा नेमुर्नमश्चक्रुः न विशेषेण तृप्ता दृशो नेत्राणि येषां ते ॥ ४२ ॥

स्वरूपानन्दादपि तेषां भजनानन्दाधिक्यमाह । तस्य पदारविन्दयोः किञ्जल्कैः केसरैर्मिश्रा या तुलसी तस्या मकरन्देन युक्तो वायुः स्वविवरेण नासाच्छिद्रेण अक्षरजुषां ब्रह्मानन्दसेविनामपि संक्षोभं चित्तेऽतिहर्षं तनौ रोमाञ्चम् ॥ ४३ ॥

हर्षकारितं संभ्रममाह द्वाभ्याम् । ते वै किलामुष्य वदनमेवासितपद्मस्य कोशोऽन्तर्भागस्तम् असितपद्मकोशमित्यभूतोपमा सुन्दरतरे अरुणे अधरोष्ठे कुन्दवद्धासो यस्मिंस्तम् उत् ऊर्ध्वं वीक्ष्य लब्धमनोरथाः सन्तो नखा एवारुणमणयस्तेषां श्रयणमाश्रयभूतमङ्घ्रिद्वन्द्वं पुनरवेक्ष्याऽधोदृष्ट्या वीक्ष्य पुनःपुनरेवं निरीक्ष्य युगपत्सर्वाङ्गलावण्यग्रहणाशक्तेः पश्चान्निदध्युर्ध्यातवन्तः ॥ ४४ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

स्वरूपानन्दाद्ब्रह्मसुखादपि केसरैः तत्स्थानीयैः श्वेतारुणकान्तिमन्नखैः स्वविवरेण स्वशब्दस्य वाक्यस्थकर्तृपरामर्शकत्वात्स्वस्य वायोर्विवरेण नासाच्छिद्रेण यद्वाज्ञामन्तरेण सनकादयः परपुरं वैकुण्ठं प्रविष्टास्तर्हि वायुः स्वविवरं प्रवेष्टुं कस्याज्ञां गृह्णीयादिति भावः संक्षोभमिति पूर्वं हि तेषां चित्ते ब्रह्मराज्यमासीदिदानीन्तु तद्राज्यमपनेतुं तत्र स्वविवरद्वारा वायुः प्रविश्य हर्षाश्रुपुलकादिसैन्यैः सम्यक् क्षोभं चकारेत्यर्थः तथाच वायोरपि तथा सामर्थ्ये अङ्गोपाङ्गादिषु कैमुत्यङ्गमितम् ॥ ४३ ॥

अभूतोपमेति । असितपद्मस्य कोशो हि पीतो भवति यदि कथञ्चित्सोऽप्यसितस्यात्तर्हि तमिव वदनमित्युपमितिसमासः मयूरव्यंसके तु कोशस्य प्राधान्ये सुन्दरतरेत्यादिविशेषणां तत्रासम्भवं स्यादिति ज्ञेयम् पुनः पुनर्वीक्षणे हेतुः युगपल्लावण्येति कोशो हि विहीनबाह्यदलपटलोऽन्तर्भागः ॥ ४४ ॥

———

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च विद्युतं तडितं क्षिपती तिरस्कुर्वती ये मकराकृतिनी कुण्डले ताभ्यां यन्मण्डनमलंकरणं तस्मिन्नर्हे गण्डस्थले यस्मिन् तच्च तदुन्नसं चोदग्रनासिकं मुखं च यस्य तं मणिमत् मणियुक्तम् कीरीटं यस्य तं दोर्दण्डानां भुजदण्डानां यः खण्डः समूहः तस्य विवरे मध्ये स्थितेन हरता मनोहरेण परार्घ्य उत्कृष्टो हारो मुक्ताहारस्तेन कन्धरायां कण्ठे गतेन स्थितेन कौस्तुभेन च उपलक्षितम् ॥ ४१ ॥

किञ्च इन्दिराया इति । अहं निरतिशयसौन्दर्यनिधिरिति यल्लक्ष्म्या उत्स्मितम् उत्स्मयं विस्मय इति यावत् तदत्र भगवतः दिव्यदेहविषये उपसृष्टमन्तर्भूतमहो ममेदं निरतिशयं सौन्दर्यमिति यल्लक्ष्म्या उत्स्मितं तदत्र दिव्यदेहेऽन्तर्भूतं निरतिशयसौन्दर्यवत्या लक्ष्म्या अपि सुन्दरमित्यर्थः स्वानां भक्तानां धिया विरचितं भृत्यैः स्वमनस्येवं वितर्कितमित्यर्थः बहुसौष्ठवं निरतिशयसौन्दर्येणाढ्यं युक्तं मह्यं मम ब्रह्मणः भवस्य रुद्रस्य

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

भवतां देवतानां च भजन्तं भजनीयं कर्मणि शतृप्रत्ययः आर्षत्वात् अङ्ग हेदेवाः ! निरीक्ष्य दृष्ट्वा न वितृप्तदृशः न वितृप्ता-दिदृक्षापर्याप्तिमप्राप्ताः दृशः अक्षीणि येषां ते मुनयः कैः शिरोभिः मुदा नेमुर्नमश्चक्रुः ॥ ४२ ॥

तस्यारविन्दनयनस्य पुण्डरीकाक्षस्य भगवतः पदारविन्दयोः किञ्जल्का अङ्गुलयः तैर्मिश्रितो यस्तुलसीमकरन्दस्तस्य वायुः च स्वविवरेण स्वनासारन्ध्रेणान्तर्गतः सन्नक्षरजुषामप्यात्मा-नुसन्धानेनाविकृतमनसामपि तेषां मुनीनां चित्ततन्वोः संक्षोभं चकार चित्तसंक्षोभ आनन्दपारवश्यं तनुक्षोभो रोमाञ्चः ४३॥

सांक्षोभकारितं संभ्रममाह । तद्दति । ते मुनयः अमुष्य भगवतः वदनमेवासितपद्मकोशस्तमुद्वीक्ष्य ऊर्ध्वं वीक्ष्य श्यामवर्णत्वाद-सितपद्मकोशो दृष्टान्ततः अभूतापमाचेयं कथंभूतं सुन्दरतरा-धरकुन्दहासं सुन्दरतरे अरुणोऽधरोष्ठे कुन्दवद्धासो यस्मिंस्तं लब्धाशिषः लब्धमनोरथाः सन्तः पुनस्तदीयं भगवत्सम्बन्धि नखा एवारुणमणयस्तेषां श्रयणमाश्रयमङ्घ्रिद्वन्द्वं निरीक्ष्य पुनरेवं निरीक्ष्य युगपत्सर्वाङ्गलावण्यग्रहणाशक्ताः पश्चान्निदध्यु-र्ध्यातवन्तः ॥ ४४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कान्त्यादिगुणैर्विद्युतं क्षिपती निरस्यती मकराकारकुण्डले विद्युत्क्षिपन्मकरकुण्डले तयोर्मण्डनार्हे अलंकारयोग्ये गण्डस्थले यस्मिंस्तत्तथा तच्चोन्नसमुन्नतनासिकं मुखं च यस्य स तथा तं प्रशस्ता मणयोऽस्य सन्तीति मणिमत्तादृशं किरीटं यस्य स तथा तं दोर्दण्डानां खण्डस्य समूहस्य विवरे मध्ये चरता वर्तमानेन परार्ध्यहारेण अनर्घ्यमुक्तामालया कन्धरगतेन कण्ठालम्बिना कौस्तुभेन मणिना च युक्तम् एवं विशिष्टं भगवन्तमचक्षतेति पूर्वेणान्वयः ॥ ४१ ॥

योऽन्तर्गर्भितभक्त्युद्रेकोभगवद्दर्शनानन्तरं बहिरपि निर्गतइति भावेनाह । अत्रेति । ते मुनयो हरेरङ्गं वीक्ष्य मुदा न वितृप्तदृशः अलं-बुद्ध्य प्राप्तनेत्राः कैःशिरोभिर्नेमुरनाधारदण्डवत् भुवि पेतुरित्यर्थः अङ्गाङ्गिनोरणुरपि भेदो नास्तीति तस्येति विशेष्यावचनमित्य-तस्तदङ्गं विशिनष्टि । अत्रेति । चशब्दोऽप्यर्थः यथा ब्रह्मादिभिरा-राध्येन्दिराया लक्ष्म्या अपि अत्रास्मिन्काले उपसृष्टमुद्भूतमित्युत्स्मृतं यद्वात्र केशादिपादावयवविशिष्टे वपुषि इदं मयोपसृष्टमवसितं निश्चितं नातः परमिति तथापि स्वानां स्वभक्तानां धिया-विरचितं स्मृतं केचित्स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तमित्यादिना ।

अविद्यमानकरणं विद्यमानस्मृतिस्तथा ।
उभयं रचनं प्रोक्तं- पूर्वसिद्धेषु तु स्मृतिः ॥

इत्यभिधानाच्च तस्माद्रचनाशब्दस्य स्मरणार्थत्वं च सिद्धम् इतोऽपि भक्तधिया स्मृतं न कृतं कृतस्य न्यूनातिरेकसंभवादिति भावेनाह । वह्विति । "विपुलानेकयोर्बहुः„ इति वचनादनन्तसौन्द-र्यादिगुणपूर्णम् इतोऽपि मायारचितं नेत्याह । मह्यमिति । मह्यं मम प्रदर्शितमिति वा ॥ ४२ ॥

अर्थक्रियाकारित्वान्नेदं मायारचितमित्याह । तस्येति।स्वविवरेण स्वनासिकारन्ध्रेणान्तर्गतः प्रविष्टस्तस्य हरेः पदारविन्दयोः किञ्ज-ल्कैः केसरैरिव स्थितै रजोभिर्मिश्रा संपृक्ता या तुलसी तस्या मकरन्देन मधुना युक्तो मन्दो वायुस्तेषां सनकादीनां चित्तत-न्वोः संक्षोभं कञ्चन विकारं चकारेत्यन्वयः विकारानुत्पत्तौ का उपपत्तिरिति तत्राह । अक्षरजुषामिति । वैराग्यादिगुणैरक्षरं जुषां ब्रह्म सेवतां न्यासिनामपि अनेन यद्यप्यपूर्वविकारसंभावना प्राप्ति-र्नास्ति तथापि हरिचरणार्पिततुलसीमहिमातिशयद्योतनाय मनोविकासलक्षणविकारादानन्दाश्रुधारासंपातस्तदनुसंक्षोभाद्रो-माञ्चइति सूचितं क्षुभमंचलन इति धातोः ॥ ४३ ॥

मनश्चलनेनेन्द्रियचलनं तस्मात्तनोः संचलनमिति नियमा-दतोऽयमपि कश्चन संक्षोभइति ध्वनयन्नाह । तेवाइति । योनित्यं स्वहृदि अन्तरेऽपरोक्षीक्रियते सएवायमित्यतोऽमुष्येति षिञ्बन्धन इति धातोः सितं बद्धं मुकुलितम् असितं नवोत्फुल्लं वदनमेवासित-पद्मकोशमन्यथा सितं शुक्लम् असितं कृष्णमिति वा शापप्रदा-नस्यानभीष्टत्वेन मुखस्य काष्र्ण्यं जातं तदयुक्तमुत्तरत्र शापा-नुमतिप्रतीतेः । यद्वा । नेत्रयोर्नलिनवर्णत्वेन तद्युक्तत्वात् वदना-ख्यनीलपद्मकोशमुद्वीक्ष्य स्वयं वामनत्वाद्धरेः प्रांशुत्वादूर्ध्वमुखं दृष्ट्वा लब्धाशिषो भगवदवयवेषु मुख्यमुखदर्शनात् प्राप्तपुण्यो-च्चयाः सुन्दरतराधरश्च कुन्दवद्धवलोहासश्च यस्मिन्स तथा तं पुनर्मुखदर्शनानन्तरं नखा एवारुणा रक्ता मणयस्तेषां श्रयणमाश्र-यणमाश्रयं तदीयमङ्घ्रिद्वन्द्वमवेक्ष्यावाङ्मुखा दृष्ट्वा मुखमारभ्य पादाद्यन्तं सर्वाङ्गमवलोक्य नितरां दध्युरित्यन्वयः हृदि च निदध्युः आलोकयन्निति वा बहिष्ठस्य हृद्गतस्य चैकत्वमपश्यन्नित्यर्थः ॥४४॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विद्युदिति । हरता मनोहरेण ॥ ४१ ॥

तदेवं परिच्छदादीनामपि तादृशत्वं वर्णयित्वा पुनस्तस्यैवा-तिमनोहरत्वमाह । अत्रोपसृष्टमिति । इन्दिराया उत्स्मितं गर्व्वैः अत्र भगवति उपसृष्टम् अस्य परमसौन्दर्य्यादिगुणशालिनः कान्त-स्य नित्येन लाभेन नित्यमेवाधिकमाविर्भावितमिति तदीयानां धिया वितर्कितं तत्र हेतुः बहु सौष्ठवाढ्यं अनन्तस्वरूपगुण-सम्पद्भिर्युक्तं नन्वेवम्भूतस्य लक्ष्म्या अपि रहस्यमहानिधिरूप-स्य परमवस्तुनः कथं प्रकाशः सम्भवतीत्यत आह । मह्यमिति । भवस्य भवतां चाङ्गमङ्गीकारं भजन्तं अस्मद्विषयकमङ्गीकारं भजन्तमित्यर्थः । यद्वा अङ्गं भजन्तं तत्तत्कार्य्यसम्पादनार्थ-माविशन्तमित्यर्थः "उल्लङ्घितत्रिविधसीमसमातिशायिसम्भावनं तव परिव्रढिमस्वभावम् । मायाबलेन भवतापि निगुह्यमानं पश्य-न्ति केचिदनिशं त्वदनन्यभावा" इति वत् । "भक्तिरेवैनं नयति भक्तिरेवैनं दर्शयति" इत्यादिश्रुतेः । तथाभूतं तमचक्षतेति । निरीक्ष्य च मुदा कैः शिरोभिर्नेमुः अवितृप्तदृश इति । पश्यन्त एव शिरोभिर्नेमुरित्यर्थः ॥ ४२ ॥

तस्येति । अत्र पदयोररविन्दकिञ्जल्कामिश्रा या तुलसीति व्या-ख्येयम् । अरविन्दकिञ्जल्कतुलस्यौ च तदानीं वनमालास्थिते एव ज्ञेये । अस्तु तावत् भगवदात्मभूतानां तेषामङ्गोपाङ्गानां तेषु क्षोभ-कारित्वं तत्सम्बन्धिनो वायोरपीति भावः अन्यत्तैः ॥ ४३ ॥

वदनासितपद्मकोषम् उत् ऊर्ध्वदृष्ट्या वीक्ष्य पुनश्चार्वाग्दृष्ट्या-ङ्घ्रिद्वन्द्वञ्च वीक्ष्य पुनः पुनः श्रीमुखादिश्रीचरणपर्य्यन्तमङ्गं दृष्ट्वेत्यर्थः पश्चाद्धार्ष्ट्यबुद्ध्या सम्भ्रमान्निमीलिते नेत्रे निदध्युः अन्तरपि तदेव ददृशुरित्यर्थः । यद्वा भक्त्यतिशयेन पश्चादङ्-घ्रिद्वन्द्वमेव ददृशुरित्यर्थः । निर्वर्णनन्तु निध्यानं दर्शनालोकनेक्ष-

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

णम्" इत्यमरः । कोषो विहीनवाह्यदलपटलोऽन्तर्भागः ॥ ४४ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

कुण्डलादित्रयस्य विनियोगमाह । विद्युतिक्षपदिति । विद्युतमपि क्षिपती ये मकराकृते कुण्डले तयोर्मण्डनमर्हति यद्गण्डस्थलम् ऊर्ध्वा नासिका च ताभ्यां युक्तं मुखं यस्य मणियुक्तं किरीटं यस्येति च शिरो द्विधा वर्णितं वृत्तरूपं केशस्थानरूपं च सांख्ययोगौ कुण्डले विद्युन्मृत्युः कपोलद्वयं च प्रेमप्रपत्ती सांख्ययोगौ तयोरङ्गं वैतृष्ण्ये भगवत्स्मरणे चोपयुज्येते तौ चेन्मृत्युनिवारकौ भवतः तदैवास्मिन् शास्त्रे उपयुक्तौ मकरो हि जलग्राहः प्राकृतं शरीरादिकं ग्रसति तथाभिमानं शरीरं च सांख्ययोगौ ग्रसतः ताभ्यां कृतमण्डनस्य अप्राकृतरूपस्य योग्यं भवति गण्डस्थलं तादृशे एव भक्तिप्रपत्ती उत्पद्येते यतः सर्वदोषाभावो नासिकाऽऽचेदूर्ध्वा भवति तदा भक्तिमार्गः शोभते औपनिषदं ज्ञानं शिरः तत्साध्यं पारमेष्ठ्यं वा तदपि मणियुक्तकिरीटयुक्तं मणिस्तत्र भगवत्स्थाने गच्छन्तो भक्ताः ते चेत्तत्र न गच्छेयुः सत्यलोकस्य शोभैव न स्यात् अतो मणिमत्किरीटं यन्मस्तके स्थापयन्ति तेन भक्तास्तत्र प्रतिष्ठिता भवन्ति हारस्य प्रयोजनमाह । दोर्दण्डखण्डविवरे हरता पराध्यहारेणेति । दोर्दण्डाश्चत्वारः तेषां खण्डं समूहः तस्य विवरे मध्ये हरता हरतीति हरन् मनोहरेण त्रैलोक्यशोभां वा हरता उपलक्षणे तृतीया मुक्ताहारः मुक्ताः सर्वे हारा एवेति ते हि स्वसंघातं हरन्ति तेषां समूहो हारं ते चास्मिन् ब्रह्माण्डे पराध्याः परं ब्रह्मण आयुः तदर्ध्यं मूल्यं येषां ब्रह्मण उत्पत्तिक्षणमारभ्य तत्समाप्तिपर्यन्तं ब्रह्माण्डान्तरे कृतपुण्यपुञ्जा ये ते पराध्याः पराध्यैति पाठे अस्मिन्नेव ब्रह्माण्डे पूर्वोक्तन्यायेन पराध्यमायुर्हरन्तीति पराध्याः ते च ते हाराश्चेति ते भगवता महता प्रयत्नेन संरक्षिताः तेभ्यः परितो दोर्दण्डा अशक्यप्रतीकारदोषनिवृत्त्यर्थं पुनः विवरे स्थापिताः दोषां दण्डत्वं बाधकत्वेन समागतानां प्रहरणार्थं नतु रक्षामात्रार्थमेवं हारविनियोगमुक्त्वा कौस्तुभविनियोगमाह । कन्धरा कण्ठः कं शिरो धारयतीति सुखधारकश्च तद्गतेन, कौस्तुभेनाप्युपलक्षितः कौ पृथिव्यां स्तोत्रेण भान्तीति ये भगवद्भक्ताः मुक्ताः चैत्यस्य तत्त्वात्मकाः तेषां समूहः कौस्तुभं ते चानन्दधारके योजिताः कौस्तुभं चेद्भगवान्न स्थापयेत् भक्तानां ब्रह्मानन्दो न स्यात् चकारादन्यदपि कण्ठाभरणं लक्ष्यते गोपिकादितत्त्वरूपं यथास्थितं चकाराच्च वक्षस्थलेऽपि कौस्तुभस्य स्थितिर्बोध्यते तदा गोपिकादीनामन्येषां वा भक्तानां जगत्प्रकाशकत्वं सिद्ध्यति ॥ ४१ ॥

एवमाभरणादीनां विनियोगमुक्त्वा अङ्गगतसौन्दर्यस्य माहात्म्यस्य च विनियोगमाह । अत्रोपसृष्टमिति । इन्दिरायाः उत्स्मितं सौन्दर्यगर्वः अत्र उपसृष्टं वत्स इव स्तनपानार्थे भगवत्सौन्दर्यलेशप्राप्त्यर्थं स्थापितमित्यर्थः । इतीति । समाप्तिसूचकं हस्तेन दर्शयति च । त्रैलोक्यसौन्दर्यं च अत्रोपसृष्टं चकाराद्ब्रह्माण्डात् परभूतमपि । स्वानां भक्तानां निश्चयात्मिकया बुद्ध्या च यद्विशेषेण रचितं ध्यानादिना परिकल्पितम् । सौन्दर्यजनितगर्वश्चोपसृष्टः सौन्दर्यमेवोपसृष्टं गर्वो वा । ततोऽप्युत्कर्षं प्राप्स्यतीति ये पुनः लक्ष्म्या भगवति गर्वं प्रतिपादयन्ति ते लक्ष्म्या दोषमेव कथयन्तीत्युपेक्षणीयाः शङ्कितमपि तदिति भक्तैः कथमेवं धिया क्रियेत । भगवत्सौन्दर्यप्राकट्यस्यायं विनियोगः स्पष्ट एवोक्तः । संस्थानविशेषस्य विनियोगमाह । बहुसौष्ठवाढ्यमिति । सौष्ठवमवयवविन्यासप्रकारः तच्च सौष्ठवं ब्रह्मणा निर्मितं कमलादिषु वर्तते । तद्यावद् ब्रह्मणा ज्ञायते तावद् सौष्ठवं तस्य ततोऽप्यधिकं बहुसौष्ठवं तेन च, तद्रूपमाढ्यं तादृशमपि सौष्ठवं पूर्णमित्यर्थः अनेन ब्रह्माण्डे अस्मिन् ब्रह्मनिर्मितातिरिक्ता अपि भगवदीया बहवः पदार्था भवन्तीति सूचितमन्यथा मूले तथा सौष्ठवं न प्रकाशितं स्यात् एतावद्दूरे सृष्टिपदार्थानामुपयोग इति नाधिकं वर्ण्यते मूलत्वख्यापनाय माहात्म्यमाह । मह्यं भवस्य भवतां च भजन्तमङ्गमिति । मह्यमिति षष्ठ्यर्थे चतुर्थी भगवत्स्वरूपस्य स्वफलत्वख्यापिका राजसतामससात्त्विकानामाधिदैविकादिभेदभिन्नानां सर्वेषामेव भजनीयमङ्गं भजनीयमिति वक्तव्ये भजन्तमिति सफलं भजनं निरूपयति "ये यथा मां प्रपद्यन्ते" इति वाक्यात् भजनीयमिति पाठस्तु स्पष्टः सर्वेषां भजनीयरूपप्राकट्येन सर्वे एवानीश्वरवादा निरस्ताः अन्यथा प्राप्तमहाफलानां कथं भजनीयः स्यात् मोक्षोपयोगिपदार्थाश्चैते न भवन्तीति अधिकारिणां कथं भजनीयः स्यात् सृष्टौ च कथनं विरुध्येतानित्यं च ब्रह्मादीनां भगवद्भजनमतो मतान्तरव्यावृत्त्यर्थमेव भगवत्प्राकट्यमिति सर्वेषां भगवद्भजनं सूचयति तेन सनकादयो भगवन्तं दृष्ट्वा तथात्वं ज्ञातवन्त इति निरीक्ष्य नेमुरित्युक्तं सर्वे विशेषास्तेषां दृष्टौ स्फुरिता इति नमनं कृतवन्तःनमने प्राप्तं दोषं वारयति न वितृप्तदृशाद्दति न विशेषेण तृप्ता दृशो येषां नमस्कारस्य दर्शनप्रतिबन्धकत्वात् वाह्य तेषां न रस इति नमस्कारो ज्ञापयेत् तद्व्यावृत्त्यर्थमवितृप्तदृश इत्युक्तं ननु तथापि साधनात्फलमुत्कृष्टमिति दर्शनं परित्यज्य कथं नेमुस्तत्राह । मुदेति । सकृद्दर्शनेन एवं पूर्ण आनन्दः गङ्गायां घट इव निमग्नः अतो मुदैव नेमुः मुदैवहि तेनामिताः पूर्णानन्दाः चरणयोः पतिता इत्यर्थः तथापि दृष्टिर्नतृप्तेति तेषां तुच्छत्वं निराकृतं कैः शिरोभिः शिरसा नमस्कारो ब्रह्मविदां ब्रह्मत्वसूचकः ॥ ४२ ॥

एवं कृते भगवद्धर्माः प्रविशन्तीति ज्ञापनार्थं तेषु भगवद्धर्माः प्रविष्टा इत्याह । तस्यारविन्दनयनस्येति । तेषां चित्ततन्वोः भगवच्चरणसम्बन्धी वायुः संक्षोभं कृतवान् तच्चायुक्तं यतः ते अक्षरोपासका आत्मरूप ब्रह्मोपासकास्ते देहेन्द्रियान्तःकरणाध्यासरहिताः अतस्तेषां न कापि क्षोभःभक्तिरसस्तु नास्त्येव तथापि भगवत्सांनिध्यात् भगवदीया धर्मा यथा महादोषं दूरी कुर्वन्तितथातिशयमप्यादधते तत्र तेष्वतिशयाधाने संस्कारा उच्यन्ते । तस्यारविन्दनयनस्येति।स हि प्रसिद्धः सर्वानेव स्वापेक्षितान् भक्तान् करोति तथैतेऽपि भगवदपेक्षिताः अनेनेच्छयैव ते भक्ताः कृता इति ज्ञापितं किञ्च अरविन्दनयनस्येति कमलनयनस्य दृष्टचैव ते संस्कृता इति अरविन्दमिति रविव्यतिरिक्तं खण्डयति उपजीव्यातिरिक्तं धर्मं तेषामिति दूरीकरोति इति तेषां विरुद्धधर्मान् निवर्तयति नयनं प्रापकं प्राणरूपत्वात् अतो दृष्ट्वा बाधका धर्मा दूरीकृताः प्रयोजकाश्च स्थापिता इत्युक्तं किञ्च पदारविन्देति पदयोः स्पर्शे तेषु वृत्तः पद्यते ज्ञायते इति पदं ज्ञानात्मकं तत्स्पर्शे तेषां विशेषज्ञानमपि गतं वयमात्मविद एवेत्याग्रहो निवृत्त इत्यर्थः तदप्यरविन्दं स्वप्रकाशकातिरिक्तमात्मनि दूरीकरोतीति ज्ञानधर्मो निरूपित तस्य किञ्जल्काः केसराः खण्डशो दोषनिवर्तकाः तैरौषधैः

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

मिश्रितो यः भक्तिनिष्ठभक्तत्वापादकशरीरजनकरजोमिश्रवायुः घ्राणमार्गेणान्तःप्रविष्टः स्थूलशरीरनिरपेक्ष्यमेव मध्ये शरीरमुत्पादयति तदा चित्तदेहयोः पूर्वयोः अंशतो ग्रहणत्यागकरणात् संक्षोभो युक्त एव गन्धस्य हि द्वारं नासिका अतः तत्र गन्धस्य प्रतिबन्धो न जातः अयं गन्ध आधिदैविक इति । स्वशब्दप्रयोगः तेषां सर्वेषामेव साधनस्य तुल्यत्वात् अत एव चतुः सनोऽपि प्रह्लादो भक्तो जातः जयविजयगता भक्तिश्चतुर्षु स्थापितेत्यर्थः ज्ञानं च तेषां ताभ्यां दत्तमिति ॥ ४३ ॥

ततो भक्तवत्ते प्रणामं कृतवन्त इत्याह । ते वा इति । ते चत्वारोऽपि वै निश्चयेन भक्त्या व्याकुलिताः भगवदीयमङ्घ्रिद्वन्द्वं निदध्युः भक्तिर्हि भगवत्संबन्धं सर्वतः प्रापयितुं सकृदेव सर्वम् देहेन्द्रियादिक्षोभयति तत्र ज्ञानादिना न निर्वृतिः अन्योऽन्यविरोधात् न समाधानमतः केवलं सर्वसमाधानकर्तृभगवच्चरणारविन्दद्वन्द्वं निदध्युः ध्यानात् पूर्वं तेषामनिर्वृत्तौ हेतुमाह । अमुष्य इति । स्वस्य भक्तत्वमुत्पादितवतः वदनमेवासितपद्मकोशः नीलकमलमुकुलमुद्वीक्ष्य लब्धाशिषो भूत्वा अनुरागदृष्टिम् प्राप्य पुनरवेक्ष्य बहुधा नमस्काराः बहुधा च मुखदर्शनं माहात्म्यज्ञानं स्वरूपसौन्दर्यं च अन्तःकरणं दृष्टिं च वशीचकार जीवस्तु तदुभयानुरोधी पर्यायेण तयोः समाधानं कृतवान् तथापि तद्द्वयं न समाहितमुभयोरेकदा समाधानाभावादेकोपद्रवः सिद्ध इव असितपद्मकोशमित्यभूतोपमा देशान्तरे तादृशकमलसंभवः ऊर्ध्ववीक्षणे नयनस्य हेतुत्वार्थं तथोक्तं तद्धि न सर्वकृष्णं रूपतो ज्ञानतश्च अस्य तथात्वं भविष्यतीति ख्यापनार्थं पद्मपदप्रयोगः सजातीयाः सजातीयपोषका इति कोशपदेन तद्गतानां रक्षा सूचिता ऊर्ध्वं वीक्षणेन चरणयोः पतिता एव ते मुखारविन्दं पश्यन्तीत्युक्तं सुन्दरतरं यत् कुन्दपुष्पं तद्वत् हासो यस्य इयमेवह्याशीः सुन्दरत्वेन पूर्वावस्थानिवारकमायाप्रवृत्तावपि पूर्वावस्थाकृतसुखनिवृत्त्यभाव उक्तः तरप्प्रत्ययेन चाधिक्यमुक्तं ब्रह्मानन्दाद्भजनानन्दस्य। महत्त्वात् सुन्दरतरमधरं वा तदा तत्र परमानन्दादधिकरसोलोभात्मकः स्थापित इति तद्रसस्पर्शी हासः गोपिकानामिव सुखदः तस्य सुन्दरतरत्वमानन्दमूर्त्तेरक्षरानन्दात् भजनानन्दाच्च महानानन्द इति ज्ञापयति अन्यथा केवलमोहःस्यात् अनिष्टहेतुः कुन्दपुष्पसाम्यता च मौतिकरागव्यावृत्त्यर्थो मोहोऽपि भक्त्यर्थमेव न विषयार्थं कुं पृथ्वीं द्यति खण्डयतीति कुमेतादृशं प्रसादं प्राप्य पुनरवेक्षणं स्वहृदये भगवच्चरणारविन्दाविर्भावार्थमत एव तदीयमङ्घ्रिद्वयमाविर्भवच्चित्तेन गृह्यते इति निदध्युः द्वन्दपदमवताराभिप्रायं साकारब्रह्मवादेनान्यथा सिद्धिः स्यात् तस्य चरणस्य भक्तिमार्गसिद्धस्य सर्वपुरुषार्थदातृत्वज्ञापनार्थं नखा एव ये अरुणमणयः तेषामाश्रयणं यत्र ते हि, चिन्तामणिरूपाः अरुणवर्णाः अनुरागपूरकत्वात् अनेन तेषां सर्वोऽपि मनोरथः पूर्ण इति सूचितम् ॥४४॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

स्वकान्त्या विद्युतः क्षिपन्ती ये मकराकारे कुण्डले तयोरपि मण्डनार्हे गण्डस्थले यत्र तच्च तथा उन्नसं मुखं यस्य तं दोर्दण्डानां खण्डं समूहस्तस्य विवरे मध्ये हरता मुनीनां चित्तं चोरयता अतएव चौर्यहेतुकभयेनेव भुजच्छिद्रं प्रविशतेत्यर्थः । पराध्यंमूल्यहारेण कन्धरशब्देनात्र वक्षसोऽभिधानम् । यद्वा । कन्धराभ्यां सकाशात् स्वर्णसूत्रद्वारा गतेन वक्षःपर्यन्तं लम्बितेन कौस्तुभेनेति पूर्ववदन्वयः ॥ ४१ ॥

किं बहुना इन्दिराया उत् स्मितं अहमेव सर्वसौन्दर्याणां निधिरित्यहङ्करणमत्र भगवत्सौन्दर्ये उपसृष्टमस्तं गतमिति स्वानां भक्तानां धिया विरचितं भृत्यैः स्वमनस्येवं वितर्कितमिति स्वामिचरणाः परमसौन्दर्यादिगुणशालिनः कान्तस्य लाभेन तस्य उत्स्मितं गर्व उप आधिक्येन सृष्टमाविर्भावितमिति सन्दर्भः । यद्वा अत्र भगवति उपसृष्टं ब्रह्मादिभिराराध्ययापि रूपगुणमाधुर्य्यैः सर्वतः श्रेष्ठयापि मया उपसर्जनीभूतमप्रधानीभूतमित्यर्थः । इति हेतुना चकारात् प्रेम्णा च इन्दिराया लक्ष्म्या उत्कृष्टं स्मितं धन्याहं यस्या ईदृशः प्रेयानित्यानन्दोत्थ उल्लासो यस्मात्तथाभूतमङ्गं भजन्तं समुचितवस्त्रालङ्कारादिभिः शोभयन्तं नतु शम्भुमिव सुन्दरमप्यङ्गं भस्मादिभिर्विरूपयन्तमित्यर्थः । दृश्यते च स्वाङ्गपरिष्कारेऽपि पूजादिशब्दप्रयोगः । यथापादयोरवपूजेति सामुद्रकादौ । तच्च परः सहस्रकिङ्करद्वारैवेत्याह । स्वानां स्वाङ्गपरिचारकाणां धिया नित्यानित्य विविधवस्त्रादिशृङ्गारवैलक्षण्य विधायिन्या सूक्ष्मबुद्ध्यैव बहुसौष्ठवाढ्यं विरचितम् । अङ्गं पुनः कीदृशं भवस्य शम्भोर्भवतामस्मदादीनाञ्च मह्यं महनीयं गन्धपुष्पादिभिर्ध्यानेन देशान्तरे पूजनीयमेव नतु तेषामिव वैकुण्ठे साक्षात् परिचरणीयमित्यर्थः । मह पूजायामित्यस्य चुराद्यन्तस्य रूपम् । एवम्भूतं तमचक्षत ततो विशेषतस्तं निरीक्ष्य च अतृप्तनेत्राः सन्तः कैः शिरोभिर्नेमुः ॥ ४२ ॥

किञ्च तानि भगवदङ्गमाधुर्य्याणि तान् ब्रह्मानन्दतोऽपि परमचमत्कारं प्रापयित्वा स्वेषु मज्जयामासुरिति किम् वक्तव्यं तदेकाङ्गसम्बन्धिवस्तुसम्बन्धी मारुतोऽपि तान् स्वनिष्ठां च्यावयित्वा क्षोभयन् विजिग्ये इत्याह । तस्येति । पदारविन्दयोर्यं किञ्जल्काः श्वेतारुणकान्तिमन्नखरास्तैर्मिश्रा या तुलसी तस्या मकरन्दसम्बन्धी वायुस्तेषामन्तरन्तः करणगतः तत्र स्वाधिकारं कर्तुमिव प्रविष्टः नन्वाज्ञां विना परकीयान्तःपुरप्रवेशः सनकादीनामिव सहसानुचित इति चेत्तत्र सन्न्यायमाह । स्वविवरेण नासाच्छिद्रेण नासाच्छिद्रं खलु वायोरेव विवरं भवति तत्र प्रवेष्टुं कस्याज्ञां गृह्णीयादिति भावः । तत्र गत्वा किमकरोत्तत्राह चित्ततन्वोः संक्षोभश्चकार आदौ बलाच्चित्तं सानन्दविवर्त्ते निपात्य क्षोभयामास ततस्तनुमपि कम्पाश्रुरोमाञ्चस्वेदादिभिः । लोके ह्यन्योऽपि परकीयदेशे स्वाधिकारं चिकीर्षुः प्रथमं तद्देशाध्यक्षं निबध्य विलुण्ठ्य क्षोभयति ततस्तद्देशमपि स्वसैन्यसम्मार्दितं करोतीति । ननु ब्रह्मानन्दजुषां तेषां चित्तं ब्रह्मानन्दमयमेव कथं भगवदानन्दस्तत्स्वमयं करोतु तत्राह । अक्षरजुषामपीति । एवमेवास्य माधुर्य्याधिक्येन बलवत्त्वमिति भावः ॥ ४३ ॥

एवं तुलसीगन्धेन शोभितप्राणानां तेषामिन्द्रियाणाञ्च प्राणाधीनत्वात् प्रथमं चक्षुर्भ्यां रूपमाधुर्य्यग्रहणे लब्धाधिकाराणां रूपमाधुर्य्यस्य च प्रत्यङ्गगतवैविध्येनानन्त्यात् युगपज्जिघृक्षायामावेगसञ्चारिकारितमानन्दसम्मर्दंवैवश्यमाह । ते वा इति । वै

पुंसां गतिं मृगयतामिह योगमार्गैर्ध्यानास्पदं बहुमतं नयनाभिरामम्।
पौंस्नं वपुर्दर्शयानमनन्यसिद्धैरौत्पत्तिकैः समगृणन् युतमष्टभोगैः ॥ ४५ ॥

॥ कुमारा ऊचुः ॥

योऽन्तर्हितो हृदि गतोऽपि दुरात्मनां त्वं सोऽद्यैव नो नयनमूलमनन्त ! राद्धः।
यर्ह्येव कर्णविवरेण गुहां गतो नः पित्रानुवर्णितरहा भवदुद्भवेन ॥ ४६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

निश्चितं वदनमेवासितपद्मस्य कोषः वाह्यच्छदलपटलरहितोऽन्तर्भागस्तमुद्वीक्ष्य उत्कृष्टमाधुर्य्यत्वेनास्वाद्य तत्रापि सुन्दरतरेति अधरमाधुर्य्यमुत्कृष्टतरं तदुपरि च हासमाधुर्य्यमुत्कृष्टतममिति भावः। लब्धाशिष इति। पित्रा ब्रह्मणा भ्रात्रा नारदेन च भक्त्यर्थं या आशिषः पूर्व्वं दत्तास्तत्फललाभात् ता लब्धा इत्यर्थः। अहो चरणसौन्दर्य्यं कीदृशमिति मुखमाधुर्य्यमपिदेव गृहीत्वा तत्रातृप्ता एव ते चरणमाधुर्य्ये दत्तेक्षणा बभूवुरित्याह। पुनरिति। नखा एव अरुणमणयस्तेषां श्रयणमाश्रयभूतमङ्घ्रिद्वन्द्वं पुनरेव अधः प्रदेशे ईक्षित्वा ईषद्वीक्ष्य निदध्युः पुनरपि मुखं वीक्ष्य पुनः पुनरप्येवं ददृशुरित्यर्थः। "निर्वर्णनन्तु निध्यानं दर्शनालोकनेक्षणम्„ इत्यमरः। श्रीस्वामिचरणास्तु युगपत् सर्व्वाङ्गलावण्यग्रहणाशक्तेः पश्चान्निदध्युर्ध्यातवन्त इत्याहुः एवमत्र लब्धाशिष इत्यग्रे च पित्रानुवर्णितरहा इत्याभ्यां भक्तकृपानुगामिन्या भगवत्कृपयैवैषां भक्तेरुत्पत्तावपि भगवत्कृपाया भूयस्त्वाद् भूम्ना व्यपदेशा भवन्तीति न्यायेन भगवत्कृपयैव सनकादीनां भक्तिर्भक्त्यैव तेषां तन्माधुर्य्यानुभव इति प्रसिद्धिः ॥ ४४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

विद्युतं स्वप्रभया क्षिपती तिरस्कुर्वती ये मकराकारे कुण्डले ताभ्यां यन्मण्डनमलंकरणं तदर्हे गण्डस्थले यस्मिन् तच्च तदुन्नसं मुखं यस्य तम् मणिमत्किरीटं यस्य तम् दोर्दण्डखण्डस्य भुजदण्डसमूहस्य विवरे मध्ये संस्थितेन हरता मनोहारिणा परार्द्ध्येन श्रेष्ठेन हारेण कन्धरगतेन कण्ठस्थेन कौस्तुभेन च युक्तम् ॥ ४१ ॥

इन्दिरायाः रमायाः उत्स्मितं सौन्दर्याभिमानमत्र भगवत्सौन्दर्ये उपसृष्टं निमग्नमिति स्वानां भक्तानां धिया विरचितम् तैः स्वबुद्धौ वितर्कितमित्यर्थः यतो बहुसौष्ठवेन अनन्तसौन्दर्य्येणाढ्यं युक्तम् मह्यं भवस्य शिवस्य भवतां देवानां च कृते अङ्गं मूर्तिं भजन्तं प्रकटयन्तम् निरीक्ष्य द्राङ्क्षा न विशेषेण तृप्ता दृशो नेत्राणि येषां ते कैः शिरोभिर्मुदा हर्षेण नेमुर्नमश्चक्रुः ॥ ४२ ॥

अक्षरजुषां स्वरूपानन्दसेविनामपि तस्य श्रीविग्रहैकदेशभूतयोः पदारविन्दयोः किञ्जल्कैः केसरैरङ्गुलीभिर्मिश्रायाः तुलस्याः मकरन्देन युक्तो वायुः स्वविवरेण नासिकारन्ध्रेणान्तर्गतः चित्ततन्वोः संक्षोभं चकार तत्र चित्तसंक्षोभमानन्दोद्रेकं तनुसंक्षोभं रोमाञ्चम् ॥ ४३ ॥

अथ मुनयः निरतिशयवदनादिसौन्दर्ययुक्तं भगवन्तं पुनः पुनर्वीक्ष्य हृदि ध्यात्वास्तुवन्नित्याह। ते इति द्वाभ्याम्। वदनमेवासितपद्मकोशान्तर्भागस्तम् असितपद्मकोशमित्यभूतोपमा सुन्दरतरे बिम्बफलोपमेऽधरोष्ठे कुन्दवद्विशदो हासो यस्मिन् तम् ऊर्द्ध्वं वीक्ष्य लब्धाशिषः प्राप्तमनोरथाः सन्तः नखा एव मणयस्तेषां श्रयणमाश्रयभूतमङ्घ्रिद्वन्द्वं पुनरवेक्ष्य निदध्युर्ध्यातवन्तः ॥ ४४ ॥

भाषाटीका।

बिजुली की शोभा को जीतने वाले मकराकृति कुंडलों के भूषण होने से अत्यंत शोभायमान गण्डस्थल वाला उन्नत नासिका वाला मुख है मस्तक में मणि जटित किरीट हैं चारों भुजों के समूह के मध्य में अमूल्य हार से तथा कण्ठ में लंबित कौस्तुभ मणि से सुशोभित हैं ॥ ४१ ॥

इस भगत्स्वरूप में लक्ष्मीजी का सौंदर्य गर्व्व नष्ट होगया है एसी संभावना अपने भक्तों को कराने वाली शोभा से युक्त दिव्य मंगल मूर्ति को धारण किये हुये मेरे तथा महादेव जी के तथा आप लोगों के उपास्य भगवान् नारायण के दर्शन करके सनकादि मुनि नेत्रों की तृप्ति को न प्राप्त होकर आनन्द के मारे मस्तकों से नमस्कार करत भये ॥ ४२ ॥

उन कमल नयन भगवान् के चरणारविन्दों के जो अङ्गुली रूप केसर तिन से लगा हुआ जो तुलसी के मकरन्द का पवन तिस पवन नें मुनियों के नासिका छिद्र से अंतःकरण में प्रवेश करके अक्षर ब्रह्म तत्त्व के सेवन करने वाले भी उनके शरीर तथा चित्त को चंचल कर दिया ॥ ४३ ॥

वे मुनि जन इन भगवान के श्याम कमल के कली सरी के मुख को दर्शन करके सुंदर अधर में जो मंदहास तिसको देखकर मनोरथो की पूर्ति समुझकर फिर उनके दो चरणारविंद कों देखकर लाल मणि सरीके नखों का आश्रय जो चरण तिस को देखते रह गये ॥ ४४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

योगमार्गैर्गतिं मृगयतां पुंसां ध्यानस्य विषयभूतम् बहुमतमत्यादरास्पदम् बहूनां तत्त्वदृशां संमतमिति वा पौंस्नं पौरुषं वपुर्दर्शयन्तम् अन्येष्वसिद्धैरसाधारणैरौत्पत्तिकैर्नित्यैरणिमाद्यैश्वर्य्यैर्युतम् समगृणन्सम्यगस्तुवन् ॥ ४५ ॥

नित्यं ब्रह्मरूपेण प्रकाशसे न तच्चित्रम् इदानींतु परममङ्गलविशुद्धसत्त्वश्रीमूर्त्या प्रत्यक्षोऽसि अहोभाग्यमस्माकमित्याहुः हे अनन्त! यस्त्वं हृद्गतोऽपि दुरात्मनामन्तर्हितो न भवसि नयनमूलं त्वद्यैव राद्धः प्राप्तोऽसि अन्तर्धानाभावे हेतुः भवतः सकाशादुद्भवो यस्य तेनास्मत्पित्रा यर्हि यदैवानुवर्णितरहा उपदिष्टरहस्यस्तदैव नः कर्णमार्गेण गुहां बुद्धिं गतःप्राप्तोऽसीति ॥ ४६ ॥

ननु पित्रोपदिष्टं भवतामन्यादृशमदृश्यमात्मतत्त्वमहं त्वन्य

तं त्वा विदाम भगवन् ! परमात्मतत्त्वं सत्त्वेन संप्रति रतिं रचयन्तमेषाम् ।
यत्तेऽनुतापविदितैर्दृढभक्तियोगैरुद्ग्रन्थयो हृदि विदुर्मुनयो विरागाः ॥ ४७ ॥
नात्यन्तिकं विगणयन्त्यपि ते प्रसादं किन्त्वन्यदर्पितभयं भ्रुव उन्नयैस्ते ।
येऽङ्ग ! त्वदङ्घ्रिशरणा भवतः कथायाः कीर्तन्यतीर्थयशसः कुशला रसज्ञाः ॥ ४८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

एव स्यां दृश्यत्वात् मैवम् अस्मत्प्रत्यभिज्ञया भेदनिरासादित्याहुः । तमिति । हे भगवंश्चात्मतत्त्वमेव परं तं त्वां विदाम विद्मः प्रत्यभिजानीमः ननु निरुपाधेरात्मतत्त्वस्य कथमीदृशमैश्वर्यं स्यादत आहुः । सत्त्वेन विशुद्धसत्त्वमूर्त्या एषां भक्तानां सम्यक् प्रतिच्छयां संप्रति रतिः प्रीतिस्तां रचयन्तम् आत्मतत्त्वमेवाहुः तेऽनुतापः कृपा तेन विदितैर्ज्ञातैर्दृढैर्भक्तियोगैः श्रवणादिभिर्मुनयो हृदि यद्विदुः कीदृशाः उद्ग्रन्थयो निरहंमाना अत एव विगतरागाः ॥ ४७ ॥

स्वयमपि भक्तिं प्रार्थयितुं भक्तानां सुखातिशयमाहुः आत्यन्तिकं मोक्षाख्यमपि तव प्रसादं ते न गणयन्ति नाद्रियन्ते किन्तु किमुतान्यदिन्द्रादिपदम् ते भ्रुव उन्नयैरुज्जृम्भैरर्पितं निहितं भयं यस्मिंस्तत् ते के अङ्ग ! हे भगवन् ! ये भवतः कथाया रसज्ञाः कथं भूतस्य रमणीयत्वेन पावनत्वेन च कीर्तन्यं कीर्तनार्हं तीर्थं पवित्रं च यशो यस्य ॥ ४८ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या
दीपिकाटिप्पणी ।

गतिमात्मतत्त्वं ब्रह्मणोऽपि घनप्रकाशत्वादत्यादरास्पदं युतं विशिष्टं नतूपलक्षितामित्यणिमादीनां स्वरूपभूतत्वं व्यञ्जितम् ॥४५॥

विशुद्धसत्त्वं स्वपरप्रकाशकस्वरूपशक्तिवृत्तिविशेषस्तदात्मिकया श्रीमूर्त्या श्रीविग्रहेण अनुवर्णितरहः उपदिष्टचतुःश्लोकीप्रेमभक्त्याख्यरहस्यः ॥ ४६ ॥

दृश्यत्वात् श्रीविग्रहरूपेण स्मच्चक्षुरादिगोचरत्वात् मैवमित्यादि समाधानग्रन्थः स्मृतिभिन्नज्ञानोत्तरं ज्ञानं प्रत्यभिज्ञा सोऽयं देवदत्त इतिवत् स्मृतेर्विषयापेक्षकत्वं नास्ति प्रत्यभिज्ञायास्तु विषयापेक्षकत्वमिति द्वयोर्विशेषः पित्रानुवर्णितरहस्यं त्वत्प्रत्यभिजानीमः पुनः शङ्कते नन्विति निरुपाधेः ऐश्वर्यहेतुमायोपाधिशून्यस्य विशुद्धसत्त्वमूर्त्या मायिकसत्त्वस्य सदैव रजआदिसंभिन्नत्वेन शुद्धत्वमेव नास्ति किं पुनर्विशुद्धत्वमित्यतः स्वपरप्रकाशस्वरूपशक्तिवृत्तिमयतन्वेत्यर्थः अतस्तदैश्वर्यस्वरूपानुबन्धित्वेन स्वरूपानुबन्धित्वेन स्वरूपात्मकमेव नतु प्राकृतमितीदृशैश्वर्यवत्त्वेऽपि निरुपाधित्वमेवेति भावः अतएव उद्ग्रन्थत्वादेव ॥ ४७ ॥

भक्तिं स्वस्वामिसम्बन्धरूपभेदात्मिकां सुखातिशयमभेदज्ञानिभ्यः सुखाधिक्यम् ते प्रसादं स्वत्प्रसादत्वेन नाद्रियन्ते किन्तु भक्तिसुखलोपकत्वात् निग्रहत्वेनैव मन्यन्त इत्यर्थः ॥ ४८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं निरतिशयसर्वलावण्ययुक्तं भगवन्तं स्वहृदि ध्यात्वा-यथास्तुवन्नित्याह । पुंसामिति । इहास्मिंल्लोके योगानां कर्मयोगज्ञानयोगभक्तियोगादीनां ये मार्गाः प्रकारास्तैर्गतिं स्वरूपं मृगयतां चिन्तयतां कर्मज्ञानयोगयोः प्रकारौ भक्तियोगसाधनतैकरूपौ भक्तियोगस्य तु मुक्तिसाधनतैकरूपः प्रकारः तैर्मृगयतां ज्ञानकर्मयोगानुगृहीतभक्तियोगेन गतिं स्वस्वरूपं चिन्तयतामित्यर्थः तेषां पुंसां ध्यानास्पदं ध्यानस्य विषयभूतमतं बहुमतमत्यादरास्पदमत एव नयनयोरभिरामं पौरुषं पौरुषं वपुः शरीरं दर्शयानं दर्शयन्तमनन्यसिद्धैः स्वासाधारणैरौत्पत्तिकैः स्वाभाविकैरष्टभोगैरणिमाद्यष्टविभूतिभिः यद्वा अहिंसा प्रथमं पुष्पमिन्द्रियनिग्रहः” इत्याद्युक्तैर्भोगैर्युतं युक्तं भगवन्तं समगृणन् सम्यगस्तुवन् ॥ ४५ ॥

स्तुतिमेवाह । यावदध्यायसमाप्ति । तत्र चिरमस्माभिर्हृदये ध्यातमतस्त्वमस्मद्भाग्यवशादद्यनयनविषयतां गतोऽसीत्यात्मनः कृतार्थतामाहुः । य इति । दुरात्मनामयोगिनां हृदि गतोऽपि विद्यमानोऽपि अन्तर्हितस्तिरोहितः यस्त्वमद्यैव नोऽस्माकं नयनमूलं नयनविषयतां हे अनन्त ! राद्धः प्राप्तः यर्ह्येव यदैव त उत्पन्नेन पित्राऽस्मत्पित्रा चतुर्मुखेनानुवर्णितरहा उपदिष्टस्वस्वरूपगुणविभूतिर्भवान् अभूत्तर्ह्येव कर्णविवरेण नोऽस्माकं गुहां हृदयगुहां प्रविष्टः त्वत्पुत्रादस्मत्पितुश्चतुर्मुखादुपदिष्टं रहस्यं तत्प्रभृत्येतावन्तं हृदये ध्यात इदानीं नयनमूलं गतोऽसि अतो वयं कृतार्था इति भावः ॥ ४६ ॥

ननु भवत्पित्रोपदिष्टमात्मतत्त्वमन्यदहन्त्वन्यस्तत्कथं मद्दर्शनेन कृतार्थतेत्यत्राहुः । तमिति । हे परम ! परोमा यस्मात् स परमः सर्वोत्कृष्टस्तस्य सम्बोधनं हे सर्वोत्कृष्ट भगवन् सत्त्वेन शुद्धसत्त्वमयदेहेन एषां भक्तानां संप्रति सम्यक् प्रतिच्छयं रतिमनुरागं रचयन्तम् अनेन “न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय” इति स्मारितं पूर्वोक्तविधं त्वामेवात्मतत्त्वं पित्रोपदिष्टमात्मतत्त्वं विदाम प्रत्यभिजानीमः किं तदात्मतत्त्वं यन्मदाभिन्नं जानथेत्यत्राहुः अनुतापविदितैरनुतापः संसारनिर्वेदस्तेन लब्धे दृढे भक्तियोगे निश्चलभक्तियोगैः विरागा विगतशब्दादिविषयाभिलाषा उद्ग्रन्थयः निरहङ्कारास्ते प्रसिद्धा मुनयो हृदि यदात्मतत्त्वं विदुः स्थासीरन्मुनिभिरुपास्यं शुद्धसत्त्वमयविग्रहवदेवात्मतत्त्वमस्मत्पित्राप्युपदिष्टमिति प्रत्यभिज्ञातस्त्वामेव जानीम इति कृतार्थतोपपन्नेति भावः ॥४७॥

ननु कथं मद्दर्शनमात्रेण कृतार्थता यतो धर्मादीनामेव पुरुषार्थत्वमित्याशङ्क्य कैमुत्यन्यायेन दर्शनस्यैव कृतार्थतापादकत्वमाहुः । नेति । अङ्ग हे भगवन् ! ये त्वदङ्घ्रिरेव शरणं स्वरक्षणोपायो येषां ते भगवच्छरणागता इत्यर्थः अत एव कुशला दुष्करोपायेभ्यो निवृत्तत्वात् कीर्तन्यं कीर्तनीयं तीर्थं पवित्रं यशो यस्य तस्य भगवतः कथाया रसज्ञाः रसानुभवपराः सन्तः ते तव प्रसादरूपमात्यन्तिकं मोक्षमपि न विगणयन्ति ते तव भ्रुवः उन्नयैर्विक्षेपैरर्पितं निहितं भयं यस्मिंस्तत् स्वर्ग-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

स्वाराज्यादिकं न विगणयन्तीति किमु वक्तव्यमित्यर्थः त्वत्कथाश्रवणमात्रेण स्वात्मनः कृतार्थतां मन्यमानाः त्वच्छरणागताः परमपुरुषार्थमोक्षमपि नाद्रियन्ते किमुत वाङ्मनसागोचरस्वरूपस्वभावस्वदर्शनेनास्माकं कृतार्थतेति भावः ॥ ४८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

मनःसंकल्पेन वागिन्द्रियप्रवृत्तिदर्शनादयमपि कश्चन संक्षोभः संजात इत्यभिनयन्तस्तुवन्तीत्याह। पुंसामिति। ध्यानास्पदमुपासनाविषयं बहुपूर्णतायामितिधातोर्बहुत्वेन पूर्णत्वेन मतं ज्ञातं नयनान्यभिरमयति सुखयति इति नयनाभिराममेवं विधं तद्वपुर्दर्शयानं दर्शयन्तमनन्यसिद्धैरन्यैरननुभूतैरौत्पत्तिकैः सहजैरष्टभोगैरणिमाद्यैश्वर्यैर्युतं मिश्रितमभिन्नं हरिं समगृणामित्यन्वयः गृस्तुताविति धातुः ॥ ४५ ॥

गुरूपदिष्टगुणानुसङ्कीर्तनरूपत्वादियं स्तुतिः पारमार्थिकी न लौकिकेत्याशयेनाह। योऽन्तर्हित इति। त्वं दुरात्मनामशुभमनस्कानां हृदि गतोऽपि अन्तर्हितोऽसि अत्यन्तसमीपवर्तिनोऽदर्शनवचनं स्तुतित्वायुज्यतां नाम न परमार्थत इत्यत उक्तमनन्तराद्ध इति अनवसितमाहात्म्यादिदमपि किञ्चनमाहात्म्यमित्यर्थः स त्वमद्य नो नयनमूलमेपि चक्षुर्विषयं गतोऽसि किंगुणविशिष्टत्वेनेत्यत आह। यर्हीति। भवत उद्भवो जननं यस्य स तथा तेन नः पित्रा नाम्ना ब्रह्मणा यर्हि येन लक्षणेनानुवर्णितरहः यथावदुपदिष्टरहस्यः हरिरस्मत्कर्णविवरेण हृदयगुहां गतोऽभूत् तल्लक्षणविशिष्टत्वेनेति शेषः अनेन सच्चिदानन्दलक्षणं भगवन्तमद्राक्षनतु मायामयमित्युक्तं भवति एवकारेणोपदिष्टदृष्टयोरूपयोरेकत्वं द्रढयति ॥ ४६ ॥

इतोऽपि नेदं तत्कालोपपन्नमायामयरूपं किं तु साक्षाज्जगज्जन्मादिकारणमिति भावेन स्तुवन्तीत्याह। तन्त्वामिति। हेभगवन्! पित्रा जन्मादिकारणत्वेनोपदिष्टः तथेदानीं चक्षुर्विषयश्च तन्त्वां परमात्मनः परब्रह्मणस्तत्त्वमनारोपितं रूपं विदामः विद्मः कीदृशं त्वां सम्प्रतीदानीमेषां लोकानां सत्त्वेन गुणेन रतिं सुखं रचयन्तमुत्पादयन्तं सृष्ट्यादौ प्रवर्तमानस्यानारोपितरूपत्वे किं प्रमाणमित्याशङ्क्य सम्यग्ज्ञानिज्ञानं मानमित्याहुरित्याह। यत्त इति। तवानुभावस्य जगत्सृष्ट्यादिमहिम्नोऽनुभावेन निश्चयज्ञानेन विदितैर्लब्धैर्दृढैर्बलैर्भक्तियोगैर्विरागा विषयेषु शोभनाध्यासबुद्धिविधुरा अत एवोद्ग्रन्थयउन्मीलिताहंकारबन्धा उत्पादितपुत्रभार्यादिस्नेहरूपहृदयग्रन्थयो वा मुनयः सर्वज्ञाः परमहंसा यत्तत्त्वं विदुरुपास्यापरोक्षीकुर्वते तादृक् तत्त्वात्मकं त्वां विद्म इत्यन्वयः ॥ ४७ ॥

इतोऽप्युपनिषत्कामिन्या परिष्वक्तं ब्रह्मत्वमेव यतो भगवत्कथारसायनस्नातुष्णा मुक्तावानन्दसमृद्धिहेतुभूतभक्तिज्ञानमन्तरेण दर्शनमात्रेणापरिपक्वभक्तिज्ञानानां पुंसां योग्यां मुक्तिं नाकांक्षत इत्याह। नात्यन्तिकमिति। आत्यन्तिकं प्रसादं भगवद्दर्शनमात्रेण लिङ्गशरीरात्ययसमये विद्यमानभक्तिज्ञानपरिपाकाभावात् सम्यगनभिव्यक्तानन्दं मोक्षमपि न विगणयन्ति विशिष्टोऽयमिति न बहुमन्यन्ते

भक्तिज्ञानपरिपाकात् किञ्चित्पूर्वं च मुच्यते।
दर्शनेन हरेस्तत्र तानन्दः पूर्णतां व्रजेत् ॥

इति वचनात् तव भक्त्या कथामृतपानतृप्तत्वात् भ्रूव उन्नयैरुज्जृम्भणविशेषैरर्पितभयमन्यस्यास्मेष्ट्वा दिपदं किञ्च किमु वक्तव्यं कुशला इत्यनेन मुमुक्षुः केवलो भक्तोमुक्तावपि सुखीमवेदित्तो मोक्षेच्छुभ्योऽनपेक्षकाणां मुक्तावानन्दोद्रेकः स्यादिति भक्त्यापादनमेव साधीयानितिबुद्धिपाटवं सूचयति कीर्तन्यं कीर्तनीयं तीर्थं शुद्धं यशो यस्य स तथा तस्य अत्र मुक्तीनां बाहुविध्याच्चर्तिनकारिणां च तयात्वान्मुक्तावपि भेदः पारमार्थिकः तद्गतुरेकत्वेनाणुरपि स्वगतो भेदो नास्ति अनेकत्वे मिथोविषमत्वेन नाश्यत्यापत्तेः प्रमाणविरोधाच्चेति द्योतितम् ४८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

पुंसामिति। बहुमतं ब्रह्मणोऽपि घनप्रकाशत्वादल्पादरास्पदं पौंस्नं वपुर्दर्शयानमिति। पुरुषस्य गर्भोदशायिनो गुणावताररूपं श्रीविराडाख्यं यद्वपुस्तदभिन्नतः स्वं वपुर्दर्शयन्तं न तु ब्रह्मादिवदन्यथात्वेनेत्यर्थः। अनन्येति अनन्येन स्वेनैव सिद्धैः स्वरूपभूतैरित्यर्थः। अत एवऔत्पत्तिकैः तद्वदेवानादिसिद्धैरित्यर्थः। अणिमाद्यष्टैश्वर्ययुतं विशिष्टं न तूपलक्षितम्। अनेन तेषां स्तुत्यास्पदविशेषणत्वेन ऐश्वर्योपलक्षितसमस्तभगानां तादृशत्वं व्यञ्जितमथ।

अथ श्रीभगवतस्तादृशत्वे तादृशत्वव्यञ्जिनीं निजां मूर्तिं तेषामेव स्वहार्दाभिव्यक्तीकारेण स्तुतिवाक्येन प्रमाणयति कुमारा ऊचुरिति। स्तुतिमाह। य इति पञ्चभिः। अत्राचक्षुपामपीत्यनुसृत्य व्याख्यायते। नित्यं ब्रह्मस्वरूपेण प्रकाशसे न तच्चित्रम्। इदानीं तु विशुद्धसत्त्वलक्षणेन स्वरूपशक्तिवृत्तिविशेषेण प्रकाशितया घनप्रकाशपरतत्त्वैकरूपया मूर्त्या प्रत्यक्षोऽसि। स त्वं नोऽस्माकमन्तर्हितो न भवसि। तत्र हेतुः यर्ह्येव भवदुद्भवेनास्माकं पित्रास्मभ्यमनुवर्णितरहाः उपदिष्टचतुःश्लोकीप्रोक्तप्रेमभक्त्याख्यरहस्यः प्रोक्तः तर्ह्येव कर्णविवरेण तद्रूपतया गुहां गतोऽस्यन्तः स्फुरसीति नयनमूलं त्वचैव राद्धः प्राप्तोऽसि कृपावैशिष्ट्येन तर्ह्येव सम्यक् नयनं प्रविष्टः तत्राविर्भूत इत्यर्थः। रह इत्यदन्तोऽपि क्वचित्। तन्मातरो यदभजन्रहरूढभावा इत्यादिषु दृश्यते नाद्यैवेत्यत्र सोऽद्यैवेति क्वचित्। नतु टीकासम्मतः नोऽद्यैवेति क्वचित् ॥ ४६ ॥

तदेवानुभवेन परमतया निश्चिन्वन्ति। तं त्वामिति। हे भगवन्! तं पित्रोपदिष्टरहस्यं त्वां परमं भगवल्लक्षणं यदात्मतत्त्वं "ब्रह्मणो हि प्रतिष्ठाहम्," इति श्रीभगवद्गीतानुसारि "शुभाश्रयः सचित्तस्य सर्वगस्य तथात्मनः" इति श्रीविष्णुपुराणादिप्रसिद्धं ब्रह्मणोऽपि परमं तदेव विदामः प्रत्यभिजानीमः। कथं तत्राहुः सम्प्रति अधुना सत्त्वेन अस्मास्वेतद्रूपाविर्भावेन एतावन्तं कालं न ज्ञातवन्तो वयमधुना तु साक्षादनुभवेन निश्चितवन्त इत्यर्थः। न केवलं प्रत्यभिज्ञामात्रमित्याहुः। एषामस्माकं ब्रह्मानुभविनामपि रतिं रचयन्तम् अन्यथा रतिरपि त्वय्यस्माकं नोद्भवेदिति भावः। यद्वा एषामस्माकं ब्रह्मानुभविनामपि सम्प्रति साक्षात्कारमयेऽस्मिन् रतिं रचयन्तामिति। अस्य परमत्वमात्मारामान्तराणुभवेनापि व्यञ्जयन्ति। तं त्वामिति विरागाः। "चित्तं ब्रह्मसुखस्पृष्टं नैवोत्तिष्ठति कर्हिचित्" इति। तादृशत्वेन प्रसिद्धा अपि उद्ग्रन्थयो निरहंकारा अपि मुनयो यत् परमात्मतत्त्वं तव कृपाविदितैर्मयि भक्तिरस्तु ते इति पृथ्व्यादाविव स्वत्कृपामात्रलब्धैः। अत एव दृढैः सालोक्यसार्ष्टि इत्यादिन्यायेन निश्चलैर्भक्तियोगैर्विदुरिति। यथोक्तमात्मारामाश्च मुनय इत्यादि ॥ ४७ ॥

अथ पूर्ववमभेदमतयोऽपि सम्प्रति स्वरूपानन्दशक्तिविलास

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विचित्रमतयो भूयोऽपि भेदात्मिकां भक्तिमेव प्रार्थयितुं भक्तानां सुखातिशयमाहुः । नात्यन्तिकमिति । आत्यन्तिकं मोक्षलक्षणं ते प्रसादमपि किमुतान्यदिन्द्रादिपदम् ॥ ४८ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं तेषां भक्तकृत्यमन्तरुक्त्वा स्तोत्रादिलक्षणं वाह्यमाहुः । पुंसामिति । भगवति स्तुतिर्युक्तैव न त्वद्गुणारापभूता ननु ज्ञात्वा हि भगवद्गुणा वक्तव्याः भक्तैरेव ज्ञायन्ते गुणाः एते च पूर्वं न भक्ता इति कथं गुणज्ञानमित्याशङ्क्य भक्तत्वाभावेऽपि पूर्वं मेते योगिनः तत्र योगसिद्ध्यादिकं भगवता जातमिति तेन मार्गेण तादृशं माहात्म्यं ज्ञायत इति वक्तुं योगोपयोगित्वेन भगवन्तं विशिनष्टि । पञ्चभिर्विशेषणैः । योगे प्रथमं ध्येयं रूपम् अन्ते च योगसिद्धिप्रदं मध्ये त्रीणि रूपाणि निरन्तरध्यानेन तस्मिन् आदरः तदा वहुमतं तद्भवति ततो भगवत्साक्षात्कारः तदा नयनाभिरामो भवति वहिर्दर्शनं दत्त्वा अन्तरपि स्वदेहान्तर्हृदये प्रादेशमात्रं द्वितीयस्कन्धोक्तं पुरुषं पश्यति तदा तदुक्तप्रकारेण फलं भवति अवान्तरफलं चाणिमादिरूपं भवतीति तत्रैवोक्तं योगस्य बहुविधत्वात् तत्फलदानार्थमिदमेवरूपं ध्यायत इति सर्वफलदातृत्वं तस्य ज्ञायत इति वक्तुं नानाविधगतिं मोक्षरूपां वा मृगयतां पुंसां ध्यानास्पदमित्युक्तं पुरुषा एव योगिन इति पुंसामित्युक्तं वहुकालं योगं विधाय योगवलेन सार्वज्ञ्ये जाते प्राणिनां का गतिरित्यपेक्षायां तन्निश्चयार्थमपि भगवान् ध्यायत इति मृगयतामित्युक्तं पुरुषरूपम् अन्तर्यामिरूपमेव साक्षात्फलसाधकत्वेन तस्यैवोक्तत्वात् वहुभ्यः अणिमाद्यष्टैश्वर्यं प्रयच्छन्नपि स्वयं रिक्तो न भवतीति ज्ञापनार्थमनन्यसिद्धैरित्युक्तं भगवतोऽणिमादयो नान्यत्र सिद्धाः अतः दीयमाना अपि नान्यत्र स्वतो गच्छन्ति किन्त्वंशत एव तत्र हेतुरौत्पत्तिकैरिति न हि स्वाभाविका गच्छन्ति अष्टभोगा आणिमादयः मनसा सह षड्ज्ञानेन्द्रियसुखानि गुह्यवाग्भोगौ वा अष्टभोगाः अष्टभागैरित्यपि पाठे स एवार्थः सम्यक् गृणनमग्रे स्पष्टीभविष्यति ॥ ४५ ॥

स्तोत्रमाहु.। पञ्चभिः योऽन्तर्हित इति। "योगे लोके तथा भक्तौ भवान् विख्यातमङ्गलः । सर्वात्मना वयं दासा लब्धं तत्र च यत् फलम् । एतावतैव तैःस्तोत्रं कृतं भक्त्यातिविह्वलैः । अपराधस्य करणाद्धाधिकं स्फुरितं हृदि" । तत्र प्रथमं भगवन्तं ब्रह्मत्वेन स्तुवन्तः शास्त्रार्थपरत्वं स्तुतिपरत्वं वा माभवत्विति पूर्वदर्शनेन यो दृष्टः स एवायमिति प्रत्यभिज्ञां वदन्तः तस्यान्तर्यामित्वं समर्थयन्ति योऽन्तर्हित इति यः त्वं दुरात्मनां हृदि गतोऽप्यन्तर्हितः सः अद्यैव नः अस्माकं नयनमूलं नो राद्धः न सिद्धः किन्तु यत्र्यैव कर्णविवरेण हृदयं गतः तदैव परावृत्तचक्षुषा दृष्ट इति नयनमूलं तदैव राद्धः ब्रह्म प्रकारद्वयेन निश्चीयते शास्त्रतोऽनुभवतश्च तत्र शास्त्रं दुष्टानां ब्रह्मसाक्षात्कारो न भवतीत्याह ननु सतां साक्षात्कारो न भवति तथा सत्यनुवादकत्वं स्यात् अत उपनिषदामात्मब्रह्मवाक्यरूपाणामनधिकार्यासाक्षात्कारविषयप्रतिपादकत्वं तदेव प्रथममत्राप्याह । यस्त्वं दुरात्मनां हृद्गतोऽप्यन्तर्हित इति । स त्वमेव अनेन शास्त्रप्रतिपाद्यो भगवानेवेति निरूपितं स एव हृदये प्रकाशत इत्यनुभवमाह । सोऽद्यैवेति । वहिरिन्द्रियविषयत्वे अनात्मत्वं स्यादिति इदमप्यस्माकं चक्षुरात्मदर्शनाभ्यासवतामावृत्तमेवेति न वहिर्दर्शनामिति वक्तुं पूर्वदर्शनेन सह साजात्यं प्रतिपादयन्त आहुः । अद्यैव न नयनमूलं राद्ध इति एतद्दर्शनस्याप्रथमदर्शनत्वात् अनादर एव प्रथमदर्शनस्यैव अनधिगतार्थज्ञानत्वेनादरविषयत्वात् भक्तिमार्गानुसारेणापि अन्तर्भगवत्साक्षात्कारो जात इति वक्तुं कर्णविवरेण गुहां गत इत्युक्तमन्यथा अन्तरेव तस्याविर्भाव उक्तः स्यात् प्रविष्टः कर्णरन्ध्रेणेति तु भगवच्छास्त्रं पूर्वमपि वयं भगवदीया एव अन्यथास्मत्पिता ब्रह्मा भवद्रहस्यमस्मासु न वदेत् नच ब्रह्मा शास्त्राधिकारं न जानातीति वक्तव्यं यतस्तव साक्षादौरसः पुत्रः अतः स्वानां भावसरोरुहमिति न विरोधः ॥ ४६ ॥

एवं भगवन्तं परब्रह्मत्वेन स्तुत्वा आरोपणेनैवं कथनमित्याशङ्कां व्यावर्तयन्ति । तं त्वां विदामेति । तमेव परब्रह्मरूपं त्वां विदामः अन्यथा ज्ञात्वा अन्यथा कथनार्थमुत्प्रेक्षा भवति तथा प्रकृते नास्ति किन्तु त्वां परमात्मतत्त्वमेव जानीमः एते हि सांख्यानुसारिणः एतेषां तत्त्वपदप्रयोगः सर्वत्र तत्त्वं सहजं रूपं तत्र तत्त्वेष्वात्माप्येकं तत्त्वं तत्र तेषामप्यात्मनस्त्रैविध्यम् अस्मदादिजीवा अंशप्रायाः तेऽप्यात्मान इत्युच्यन्ते यश्च प्रकृत्यधिष्ठाता मुख्यः सोऽप्युच्यते पञ्चविंशति तत्त्वेषु परः श्रेष्ठः ततोऽप्युत्तमः असङ्गोदासीनः परमात्मा स एव प्राप्य इति तं त्वां जानीम इत्यर्थः ननु तस्य स्वप्रकाशत्वमात्मवृत्तिवेद्यत्वं वा संभवति नतु चक्षुर्विषयत्वमित्याशङ्क्य तन्मतानुसारेण परिदृश्यमानत्वं समर्थयन्ति । सत्त्वेन संप्रति रतिं रचयन्तमेषामिति । इदानीं वैकुण्ठे स्थितानामेषां भक्तानां प्रीत्युत्पादनार्थं शुद्धं सत्त्वं पुरुषरूपं कृत्वा तिष्ठसीत्यर्थः असंगोदासीन एव स्वभक्तानुरोधेन तथा करोति अन्यथा तस्य फलत्वं शास्त्रार्थत्वं च न स्यात् किञ्च यदि भगवान् सत्त्वाविर्भावं न कुर्यात् तदा ज्ञानमपि न सिद्ध्येदित्याह । यत्तेऽनुतापविदितैरिति । यदा जीवात्मा सञ्चरन् वहुकालं वहून् क्लेशान् प्राप्नोति तदा भगवतः कृपा उत्पद्यते अयं स्वानन्दानुभवयोग्यः क्लेशं प्राप्नोतीति स क्लेशो भगवतैव ज्ञात इति कृपानुतापरूपेण निरूप्यते अन्यथाऽलौकिकायोगप्रकाराः लौकिकवुद्धिगम्या न भवन्तीति भगवत्कृपयैव तादृशयोगमार्गाणां परिज्ञानं त एव दृढा भवन्ति भक्तिप्रधानाश्च भक्तिमार्गसिद्धयोगा वा भगवतः सत्त्वाविर्भाव एवैतद्भवति किञ्च उद्ग्रन्थयोऽपि कृपयैव भवन्ति अहंकारग्रन्थिः रजस्तमोभ्यां दृढो भवति तद्भगवत्सत्त्वप्राकट्येनैव शिथिलो भवतीति किञ्च मुनयोऽपि भवन्ति तेनैव विरागाश्च भक्तियोगैश्च वेदनं न केवलैः किन्तु भगवत्सत्त्वसहितैरेव अतः सर्वोपकारित्वात्सत्त्वाप्राकट्यमित्यर्थः ॥ ४७ ॥

एवं सन्मार्गानुसारेण सत्त्वरूपमेतदिति निरूप्य भक्तिमार्गानुसारेण तद्रूपं परमपुरुषार्थरूपमेवेत्याहुः । नात्यन्तिकमिति हे अङ्ग यं त्वदङ्घ्रिशरणास्तं आत्यन्तिकमपि न विगणयन्ति निवृत्तसजातीयस्य संसारस्य पुनः तत्रात्मन्यनुत्पाद इति मोक्ष आत्यन्तिक उच्यते सोऽपि स्वकृतसाधनसाध्यो न भगवान् किन्तु भगवान् प्रसन्नः सिद्धवत्कारेण तं प्रयच्छति तादृशं तेन गृह्णन्तीति दूरापास्तं यतो गणयत्यपि न ननु भक्ताः भगवत्प्रसादं कथं न गणयेयुः तत्राह । विगणयन्तीति । गणयन्ति परं यथाभक्ति विशेषाकारेण

## श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रसादत्वेन गणयन्ति तथा आत्यन्तिकं न गणयन्ति इत्यर्थः अत्रागणना नावगणना किन्तु भगवत्प्रसादेषु गण्यमानेषु नान्तरीयकमिति तद्गणनां न कुर्वन्ति यत्र मोक्षस्यैवैषा व्यवस्था तत्र किन्त्वन्यत् तुशब्दः विषयासक्तिपक्षं व्यावर्तयति अत्यन्तविषयासक्ताः मोक्षं न मन्यन्त इति ननु भक्त्युपयोगिपदार्थाः भगवत्सेवौपयिकाः भक्तैरपेक्ष्यन्ते एव कथं तेषामगणनेत्याशङ्क्याह । अन्यदिति । अन्यद्भगवत्सेवानौपयिकं परम्परोपयोग्योऽपि न भवतीति ज्ञापनार्थं विशेषणान्तरमाह । अर्पितभयमिति । भयं मृत्युः भगवदीयपदार्थानामिदमेव निदर्शनं यद्भयजनकं न भवति नवा नश्वरं तत्र हेतुः । भ्रुव उन्नयैस्त इति ते भगवतः या भ्रूः स एव कालः तस्योर्ध्वं नयनं सर्वप्रतीकारातिक्रमेण कार्यसाधनं नहि भगवान् स्वाभिप्रेतान् विषयान् तथा करोति मोक्षस्याऽगणनायामुपपत्तिमाह । येऽङ्गेति । अङ्गेति सम्बोधनं श्रवणादिभावे भगवतः तुल्यतया कोमलसम्बोधनप्रतिपादकं तादृशभक्तेरङ्गभावाद्वा अनेनापि मोक्षस्यागणना निरूपिता मोक्षदाता भगवानेव यस्यामङ्गमिति तेषां सर्वामेव सामग्रीं मोक्षादप्यधिकामाह । तत्र तेषामादौ गृहं निरूप्यते । त्वदङ्घ्रिशरणा इति । तवाङ्घ्रिद्वयमेव तेषां शरणं रक्षकं वा एकत्राधारत्वमपरत्र नियोज्यत्वं यच्चरणप्रसादलेशरूपाः सर्वे मोक्षादयः भगवद्भक्तिः स्वतन्त्रा सप्तविधा उत्तरोत्तराधिका च तत्र प्रथमकक्षायामेव स्थिता न गणयन्ति किमुत चरमकक्षायां स्थिता इति सूचयितुमाह । भवतः कथाया इति ये कथाया रसज्ञाः भगवदीयो रस उभयत्र प्रतिष्ठितः रूपलीलायां नामलीलायां च तत्र रूपलीलायामासक्ताः भगवदनुरोधमपि कुर्वन्ति अन्यथा सेवायाः कर्त्तुमशक्यत्वात् अतोऽत्र कथारस एव निरूप्यते कथारसः अनुभवेनैव ज्ञायत इति रसज्ञा इत्युक्तं यथा कामादिषु हृदये विद्यमानेष्वेव सत्सु कामिन्यादिनामरूपरसा अनुभूयन्ते नापि रसास्वादनव्यतिरेकेण किञ्चिदन्यत्तादृशं प्रमाणमस्ति नवा अधिकारिणि कामाद्यभावे स रसः स्फुरति रसानामधिकारिणं प्रत्येव स्फुरणनियमात् अतो रसज्ञा एव निरूपिताः सचाधिकारः शास्त्रानुभवाभ्यां प्रेमज्ञानाभ्यामेव भवति रसान्तराविष्टचित्तानामत्र रसो नोत्पत्स्यत इति तद्व्यावृत्त्यर्थं भगवतो विशेषणमाह । कीर्त्तन्यतीर्थयशस इति । कथाहि यशः प्रतिपादिका यशोहि सर्वेषां भगवतश्च श्रवणे रसजनकं भवति स्वाभाविकोऽन्यो रसः प्रथमरसान्तरं किं वारयतीत्यनुभवसिद्धं विशेषाकारेणापि पूर्वरसनिवर्त्तकमिति विशेषणद्वयं कीर्त्तन्यं तीर्थरूपमिति कीर्त्तनीयं तदेव भवति कीर्त्तयितुर्येन रसो जनितो भवेत् शास्त्रतो वाऽनुभवतो वा अनुभवतः रसजनकावर्थकामौ शास्त्रतः धर्ममोक्षौ यत् सर्वानुगुणं तत्कीर्त्तनीयं तल्लोके नास्तीति रसचतुष्टयप्रतिपादकं भगवद्यश एवेति कीर्तन्यपदेनोक्तं तीर्थं हि द्विविधं गुरुरूपं जलरूपं च बाह्याभ्यन्तरोपकारजननभेदेन निरूपितं सर्वपुरुषार्थाभीप्सुः तदुभयं सेवते विशेषसाधनासमर्थः स्थितिनिर्वाहके च ते अतो मरणान्तं तत्र स्थितौ सुखेनैव पुरुषार्थो भवतीति यत्र क्वापि पुरुषार्थे आसक्तो भगवद्यश एव शृणुयात् तीर्थरूपत्वादित्यर्थः अत्र स्वाभाविकमधिकारसूचकं विशेषणमाह । कुशला इति । नैपुण्यं बुद्धितीक्ष्णता चापेक्ष्यत इत्यर्थः ॥ ४८ ॥

---

## श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

किन्तु मुमुक्षूणामपि शुद्धभक्त्यभावात्तन्माधुर्य्यमजिघृक्षूणामपि तद्ध्यानं विना न मुक्तिरित्याह । पुंसामिति । गतिं मुक्तियोगमार्गैरङ्गयोगैर्बहुमतं ध्यानास्पदमिति । सविशेषरूपस्यावश्यध्येयत्वे नारायणस्वरूपमेव बहूनां सम्मतमित्यर्थः पौस्नं पुरुषसम्बन्धिवपुर्दर्शयन्तमिति । मोहिन्यादिवपुरन्तरमपि । तस्य भगवच्छब्दवाच्यं बहुतरमस्तीति ध्वनितम् अनन्येन स्वेनैव सिद्धैः स्वरूपभूतैरित्यर्थः अतएवौत्पत्तिकैर्नित्यैः अष्टभिः शब्दस्पर्शरूपरसगन्धकृपाकर्मैश्वर्य्यैर्भोगैर्नानाविध भक्तैर्भक्त्या भुज्यमानत्वादास्वाद्यमानत्वाद्भोगैः । तत्र शब्दादीनि सौस्वर्य्य—सौकुमार्य्य-सौन्दर्य्य-माधुर्य्य-सौरभ्य-वात्सल्य-लीलाशब्दवाच्यानि सप्त माधुर्य्याणि भक्तानां प्रेमाकार-षडिन्द्रियभोग्यान् अष्टमं भगशब्दवाच्यमैश्वर्य्यषट्कं भक्तैर्मुमुभिर्मुक्तैश्च यथाशक्तिस्वाद्यत इति ज्ञेयम् । अष्टभोगैरणिमाद्यष्टैश्वर्य्यैरिति केचित् ॥ ४५ ॥

अहो महत्कृपाया अपारो महिमा यतो भगवता ईदृशसाक्षात्कारानन्दमनुभाविताः स्म इत्यहो भाग्यमस्माकमित्याहुः हे अनन्त ! अपारमाधुर्य्यैश्वर्य्यसिन्धो ! यस्त्वं हृद्गतोऽपि दुरात्मनामन्तर्हित एव स त्वं न केवलमद्यैव नोऽस्माकं नयनमूलं राद्धः प्राप्तोऽसि अपि तु पूर्वमपि । ननु कदाहमेवं दृष्ट आसं तत्र सरसमाहुः । यर्हीति । न स्मरसि भवदुद्भवेन पित्रा ब्रह्मणा अनुवर्णितं रहो यस्य स त्वं यदैव नोऽस्माकं कर्णमार्गेण गुहां बुद्धिं गतः प्राप्तोऽसि तदैवेत्ययमर्थः । भो ब्रह्मानुभविनो मत्तनया ब्रह्मसाक्षात्कारादपि भगवत्साक्षात्कारः कोटिगुणितानन्दः सोऽपि भवतामस्तु सतु भगवान्नीलोत्पलदलश्यामलः पीनायतचतुर्बाहुः कटककेयूरकुण्डलादिमण्डितश्चन्द्रवदनो वैकुण्ठे विराजमानो भक्त्या लभ्यत इति भवद्भक्तस्यास्मत्पितुः कृपाशीर्वचनं यदैवाश्रौष्म तदैव कारणे लब्धे तत्फललब्धेरावश्यकत्वात् भावि किलाद्यतनमपि भवद्दर्शनं त्वद्भक्तकृपातुल्यकालमेव जातं जानन्तो वयमास्मेति भङ्ग्या हन्त ! भगवन् त्वं स्वतन्त्रोऽस्मान् कृपयसि किन्तु स्वभक्ताधीन एवेति त्वद्भक्तकृपाया माहात्म्यमनिर्वचनीयमेवेति ॥ ४६ ॥

किञ्च । एतावन्तं कालं वयं ज्ञानिन एवास्म सम्प्रति तु भक्ता अभूमेत्यहो भाग्यमस्माकमित्याहुः । तं पित्रानुवर्णितरहसं त्वां सम्प्रति सत्त्वेन साधुत्वेन त्वत्कृपया उद्भूतेन वैष्णवत्वेन हेतुना विद्राम साक्षादनुभवामः परमं यदात्मतत्त्वमिति । आत्मतत्त्वमस्माकं पूर्वमनुभूतमासीदेव अधुना तु ब्रह्मणोऽहि प्रतिष्ठाहमित्यादि त्वद्भक्तैरुत्कृष्टात्मतत्त्वमपीत्यर्थः । एषां वैकुण्ठवासिनां रतिं प्रेम रचयन्तं ननु भो ज्ञानिनो भक्तियोगेन विना ममेदं साकारस्वरूपं नानुभूयते तत्राहुः । यदुत्कृष्टात्मतत्त्वं ते तव दृढभक्तियोगैरेव मुनयोऽस्मल्लक्षणाः सनकादयो विदुर्जानन्ति ननु केन लक्षणेन भक्तियोगो ज्ञातव्यः तत्राहुः । अनुतापेन त्वद्भक्ताभ्यां शापदानानन्तरजातेन पश्चात्तापेनैव विदितैर्ज्ञातैः नहि वीतरागा निर्विकारा मुनयो भक्तिं विनानुतपन्तीति ॥ ४७ ॥

त्वत्साक्षात्कारस्य का कथा त्वत्परोक्षेऽपि त्वत्कथाकीर्त्तनानन्दोऽपि ब्रह्मानन्दादधिक इत्याहुः । आत्यन्तिकं मोक्षाख्यं सायुज्यमपि ते प्रसादं त्वत्प्रसादत्वेन न गणयन्ति नाद्रियन्ते किमु किमुतान्यत् इन्द्रादिपदम् । ते भ्रुव उन्नयैरुज्जृम्भितैरर्पितं निहितं भयं यस्मिन् तत् । त एव के तत्राहुः येऽङ्गेति । कथारस

कामं भवः स्ववृजिनैर्निरयेषु नःस्ताच्चेतोऽलिवद्यदि नु ते पदयो रमेत।
वाचश्च नस्तुलसिवद्यदि तेऽङ्घ्रिशोभाः पूर्येत ते गुणगणैर्यदि कर्णरन्ध्रः॥ ४९॥
प्रादुश्चकर्थ यदिदं पुरुहूत! रूपं तेनेश! निर्वृतिमवापुरलं दृशो नः।
तस्मा इदं भगवते नम इद्विधेम योऽनाऽऽत्मनां दुरुदयो भगवान् प्रतीतः॥ ५०॥

इतिश्रीमद्भागवते महापुराणे तृतीयस्कन्धे
विदुरमैत्रेयसम्वादवर्णनंनाम
पञ्चदशोऽध्यायः॥ १५॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

शास्त्र एव कुशलाः अन्ये अकुशलिन इत्यर्थः। कथायाः कीदृश्याः कीर्तनार्हाणि पावनत्वात्तीर्थरूपाणि यशांसि यस्याः भवत इत्यस्य वा विशेषणम्॥ ४८॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

बहुमतमत्यादरणीयं पौंस्नं पौरुषम् अनन्यसिद्धैः स्वासाधारणैः औत्पत्तिकैर्नित्यैः अष्टभोगैः अणिमाद्यैश्वर्यैर्युतम् समगृणन् सम्यगस्तुवन्॥ ४५॥

हे अनन्त! यस्त्वं दुरात्मनां दुष्टचित्तानां हृदि गतोऽपि अन्तर्हितः तिरोहितोऽसि स त्वं नोऽस्माकं तु नयनमूलं नयनोपलक्षितसर्वेन्द्रियमूलमन्तःकरणमद्यैव न राद्धः प्राप्तः किन्तु भवदुद्भवेन त्वदुत्पन्नेण नः पित्रा यर्हि यदैव वर्णितरह उपदिष्टरहस्यः तदैव कर्णविवरेण गुहां हृत्पद्मं गतः प्राप्तोऽसि महदनुग्रहेण सदैव त्वां पश्यामो धन्या वयमिति भावः॥ ४६॥

सत्त्वेन शुद्धसत्त्वेन अप्राकृतेन श्रीविग्रहेण एषां भक्तानां सम्यक् प्रतिक्षणं रतिं प्रीतिं रचयन्तं यं त्वां दृढैर्भक्तियोगैस्त्वत्स्वरूपगुणादिश्रवणकीर्तनादिभिः उद्ग्रन्थयः निरहङ्कारा विरागाः हृदि विदुः जानन्ति ध्यायन्तीत्यर्थः तं त्वां विदाम॥ ४७॥

श्रीविग्रहमद्भगवज्ज्ञानध्यानाद्यासक्त्या ते मोक्षमपि न गणयन्तीत्याहुः। नेति। हेअङ्ग भगवन्! आत्यन्तिकं मोक्षमपि न गणयन्ति नाद्रियन्ते किन्तु किमुत ते तव भ्रुवः उन्नयनैर्विक्षेपैः अर्पितं निहितं भयं यस्मिन् तत् अन्यत् मोक्षेतरत् स्वर्गादि न गणयन्तीति-किंवक्तव्यम्॥ ४८॥

---

भाषाटीका।

योग मार्गों से मोक्षादिगति कों ढूंढने वालों के ध्यान के आश्रय नेत्रों के आनंद दायक बहुत मानने योग्य अन्य को दुर्लभ स्वाभाविक अणिमादि अष्ट ऐश्वर्यों से युक्त पुरुषाकार निज मूर्ति को दर्शन कराते हुये भगवान् को मुनि स्तुति करने लगे॥ ४५॥

कुमार बोले हे अनन्त! जो आप दुष्ट पुरुषों के हृदय में हो तो भी छिपे रहते हो तिन आपके गुणों को जब तुम से पैदा होने वाले हमारे पिता ने वर्णन किया तब आप कानों के रस्ते हमारे हृदय में आयेथे अब नेत्रों ही के आगे आगये हो॥ ४६॥

हे भगवन्! आपकी कृपा से प्राप्त हुये जो दृढ भक्तियोंग तिन योगों से जिनकी अज्ञान ग्रंथी छूट गई हैं ऐसे वैराग्य वाले जो मुनिजन सो जिस तत्त्व को हृदय में जानते हैं सो परमात्मतत्त्व तो आपही हो जो कि सत्त्वगुण से इन भक्तों की प्रीति को इस समय में बढाते हो॥ ४७॥

हे प्रभो! जो महात्मा आपके चरण के आश्रय हैं सो आपके दिये मोक्ष को भी नहीं गिनते हैं क्योंकि वे कीर्तन करने के योग्य पवित्र यशवाली जो आपकी कथा तिसके रसिक होने से अति चतुर हैं जो मोक्ष नहीं चाहते हैं तो आपकी भृकुटी से जिनको भय होता है ऐसी जो इंद्रादि संपत्ति तिसको तो वे क्यों चाहेंगे॥ ४८॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

इदानीं स्वीयापराधं द्योतयन्तो भक्तिं प्रार्थयन्ते। काममिति। हेभगवन्नितः पूर्वमस्माकं वृजिनं नाभवत् इदानीं सर्वाण्यपि जातानि यतस्त्वद्भक्तौ शत्रौ अतस्तैः स्ववृजिनैर्निरयेषु कामं नोऽस्माकं भवो जन्म स्तात् स्यात् नु वितर्के यदि तु नश्चेतस्ते पदयो रमेत अलिर्यथा कण्टकैराविध्यमानोऽपि पुष्पेषु रमते तद्वद्धिप्रानवगणय्य यदि रमेत अङ्घ्रिभ्यां शोभा यासां यथा च तुलसी गुणानैरपेक्ष्येण त्वदङ्घ्रिसंबन्धेनैव शोभते तथा यदि नो वाचः शोभेरन् यदि च ते गुणगणैरापूर्येत कर्णरन्ध्र इत्यल्पस्य पूरणमेव याचकरीत्या प्रार्थयन्ते अयं तु गूढोऽभिप्रायः कर्णरन्ध्रस्याकाशत्वाद्गुणगणानां चामूर्तत्वान्न कदाचित्पूरणमतो नित्यमेव श्रवणं फलिष्यतीति॥ ४९॥

अद्य वयं कृतार्थाः स्मेत्याहुः। हेपुरुहूत! विपुलकीर्ते यदिदं प्रादुश्चकर्थ प्रकटितवानसि दृशो नेत्राणि अनात्मनामजितेन्द्रियाणां दुरुदयोऽप्रकटोऽपि इह इत्थं यः प्रतीतोऽसि तस्मै तुभ्यमिदं नमो विधेम॥ ५०॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे-
श्रीधरस्वामिकृतभावार्थदीपिकाटीकायां
पञ्चदशोऽध्यायः॥ १५॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या
दीपिका टिप्पणी ।

इतो भक्तापराधात्पूर्वमस्माकं जीवन्मुक्तानां "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्,, तत्सुकृतदुष्कृते विधूनुते इतिन्यायश्रुतिभ्यां वृजिनं पापं नाभवदेव अत्र भक्तापराधलक्षणवृजिनस्यैकत्वेऽपि बहुत्वनिर्देशोऽचिन्त्यशक्त्या नष्टानामपि तेषां पुनर्विरोहात् अत एव सर्वाण्यपि जातानीति व्याख्यातम् । काममिति। न निरयेभ्योऽस्माकं भयम् यदि चित्तरमणादिलक्षणा भक्तिस्स्यात् नारायणपराःसर्वे न कुतश्चन बिभ्यतीत्यादेः त्वद्बैमुख्यस्यैव मूलदुष्फलत्वात् तथाच श्लोकद्वयेऽस्मिन् भक्तिविरुद्धत्वात् भक्तिमात्रं कामयमानानामस्माकमनुभूतचरं कैवल्यमश्रेय एव तत्सद्भावे तदविरोधित्वान्नरकोऽपि तस्माच्छ्रेयानिति तात्पर्यं पर्यवसन्नम् ॥ ४६ ॥

तेन रूपेण दृष्ट इत्युक्त्वा योगिसिद्धं मानसध्यानमनादृतम् साधनकोटिप्रविष्टत्वात् इत्थं याथार्थ्येन प्रतीतोऽसि दृष्टोऽसि तस्माद्ब्रह्मज्ञानिगुरूणां सनकादीनां तथानुभवेन भक्तेः पञ्चमपुरुषार्थत्वं सिद्धम्

ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते परामिति ।

श्रीभगवद्वचनात्"आप्रयाणात्तत्रापिहिदृष्टम्,,इतिन्यायाच्च यद्यत्र कश्चिद्विप्रतिपद्यते तेषां तथोक्तिर्लोकसंग्रहार्था साधनदशासंस्कारवशाद्वा तदोभयत्रापि "वासो यथा परिकृतं मदिरामदान्ध,, इति न्यायेन तेषां तत्रावेशो न स्यात् लोकेषु विगतस्पृहा इति तेषामन्यत्रानावेशात् महामुनीनामन्वेषणीयचरणाविप्यादिनान्वेषणापरपर्य्यायावेशस्य भगवति सद्भावात् ब्रह्मणोऽपि घनप्रकाशोऽयं श्रीभगवानिति निर्णीयते तथाविधानां तादृशानुभवस्य सर्वप्रमाणचक्रवर्तित्वादिति ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीराधारमणदासगोस्वामिविरचितदीपिन्याख्यदीपिकाटिप्पण्यां
पञ्चदशोऽध्यायः ॥ १५ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

किं बहुना दर्शनस्य कृतार्थतापादकत्वं कथनीयमेतावतैव सर्वेषां कृतार्थता स्यादिति सूचयन्तस्तदेव प्रार्थयन्तो नमस्कुर्वन्ति । द्वाभ्यां श्लोकाभ्याम्। काममिति । हेभगवन् ! स्ववृजिनैः खेषामस्माकं वृजिनैर्दुरितैः कामं नोऽस्माकं निरयेषु निरयप्रायेषु नीचयोनिषु भवो जन्म स्यान्नु वितर्के यदि नूनं ते तव पदयोर्नश्चेतश्चित्तमलिवद्भृङ्गवद्रमेत यदि नः वाचः गिरः तुलसीवत्तेऽङ्घ्रिशोभाः अङ्घ्री शोभयन्तीत्यङ्घ्रिशोभाः स्तुतिपराः स्युरित्यर्थः यदि नःकर्णरन्ध्रंते गुणगणैः पूर्येत नित्यं त्वद्गुणगणश्रवणपरं स्यादित्यर्थः इदं शिरः पादयादीनां भगवद्वन्दनार्चनादेरुपलक्षणं तत्तद्दुरितानुसारेण जन्म स्यान्न तत्र शोकः इदन्तु भवन्तं प्रति प्रार्थनीयमवशिष्यते यच्चेत आदीनां भवत्पादारविन्दध्यानादिप्रावण्यमित्येतावतैव कृतार्था भवेयुरित्यर्थः इदं तु लोकदृष्ट्योक्तम् ॥ ४६ ॥

अथ स्वदृष्ट्या स्वकृतार्थतां वदन्तो नमन्ति प्रादुरिति । हे पुरुहूत ! पुरुभिः बहुभिः हूत स्तुत्य सर्वोपनिषद्वेद्येत्यर्थः यद्वा रूपविशेषणं पुरुभिर्हूतं वेद्यं पञ्चोपनिषत्प्रतिपाद्यमित्यर्थः यदिदं रूपं दिव्यमङ्गलविग्रहं प्रादुश्चकर्थ प्रकटीकृतवानसि तेन रूपेण तद्दर्शनेनेत्यर्थः हे ईशास्माकं ! दृशः नेत्राणि निर्वृतिं सुखमलं भृशमवापुः प्रापुः अनात्मनां न विद्यते आत्मा अन्तःकरणं स्ववशं येषां तेषामयोगिनां दुरुदयः दुरवगमः यो भगवानित्थमनुधारणे वा प्रतीतः दृष्टः अस्माभिरिति शेषः तस्मै भगवते तुभ्यं इदं नमः कुर्म इत्यर्थः ॥ ५० ॥

इतिश्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
पञ्चदशोऽध्यायः ॥ १५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वयमपि त्वदङ्घ्र्येकशरणत्वादिदमेवाकांक्षामहे नान्यदिति विज्ञापयन्तीत्याह । काममिति । अङ्घ्री शोभयन्तीत्यङ्घ्रिशोभाः स्तुतिद्वारेणेतिशेषः निरयेषु पश्वादियोनिषु वृजिनैर्दुःखैर्नष्टाः क्लिष्टाः

यावत्परमभक्तैस्तु भुज्यते दुःखमुल्बणम् ।
तावन्मुक्तौ सुखोद्रेकस्तत्रचेद्भक्तिवर्धनम् ।

इति वचनार्थमभिप्रेत्य निरयप्राप्तिप्रार्थनाक्रियते इत्यभिप्रायः ॥ ५६ ॥

सत्यां भक्तौ सर्वत्रानन्दोद्रेकःस्याद्यथा तवापरोक्षसंभवो दृष्टस्तथेहास्मदपराधमविगणय्येति भावेनाहुरित्याह । प्रादुरिति पुरु विस्तीर्णं हूतं यशो यस्य स तथा हेपुरुहूत! अलं निर्वृतिमापुरित्यनेनान्तर्दृष्टेर्बाह्यदृष्टेः स्पष्टत्वं सूचयति तस्येयं प्रत्युपाकृत्येत्याहुरित्याह । तस्मादिति। यो भगवान् प्रतीतः प्रेक्षितो भक्तैरितिशेषः यश्च दुरात्मनां दुरुदयः दुःप्रकाशस्तस्मै भगवते इदमुत्कृष्टं नमः विधेम कुर्म इत्यर्थः ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावलीटीकायां
पञ्चदशोऽध्यायः ॥ १५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

काममिति । अनेन तदधिगमउत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्"इतिन्यायेनासम्भवतद्भावानां ब्रह्मज्ञानिनामपि स्वेषां बहुतरकारिबहुवृजिनापातत्वमापणेन तयोरत्यर्थभूतगुणो हरिरितिवत् सर्व्वाद्भुतमहत्तमत्वं सूचितम् । अहो निरया अपि भवेयुरेव न तावतापि पर्य्याप्तं तेभ्यश्च नास्माकमपि भयम् । अत्र तु मूलं दुष्फलं भवत्पराङ्मुखीभाव एव स त्वस्माकं माभूदिति सकाकु प्रार्थयन्ते नु वितर्के यदि तु नश्चेतस्ते पादयो रमेत । तत्राप्यलिवदेव केवल--तन्माधुर्य्यास्वादापेक्षया न तु ब्रह्मानुभवापेक्षया । एवं वाचश्चेत्यादि । अत्र भक्तापराधस्य भगवता क्षमा तदिच्छामात्रकृततत्क्रोधजननात्तेषामपराधाभासत्वेन ज्ञेयम् । श्लोकद्वयेऽस्मिन् कैवल्यान्नरकोऽपि त्वद्भक्तिमात्रं तु कामयमानानामस्माकं तदविरोधित्वात् श्रेयानिति स्वारस्यलब्धम् ॥ ४६ ॥

तथापीत्थं कृतार्थत्वमस्माकमतिचित्रमित्याहुः । प्रादुरिति । अनात्मनामात्मनस्तव एकान्तभक्तिरहितानामप्रकटोऽपि इत्थं यः प्रीतोऽसि तस्मै तुभ्यं नम इदं विधेमेति । अत्रैतदुक्तं भवति एते ब्रह्मविद्यासिद्धानां परावरगुरूणामपि गुरवः । अतएव परमहंसमहामुनीनामित्युक्तम् । तं त्वामहं ज्ञानघनस्वभावम्

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मायागुणभेदमोहैः । सनन्दनाद्यैर्हृदि सम्विभाव्यमिति श्रीमदंशुमद्वाक्यादौ । इहात्मतत्त्वं सम्यक् जगाद मुनयो यदचक्षतात्मन्निति ब्रह्मवाक्यादौ "तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमार,,:इति श्रुतौ च तथाप्रसिद्धम्।आसन्नानुभवस्यैव तत्सिद्धस्याणिमादिभिर्विघ्नोऽपि सम्विभाव्यः । ननु सिद्धानुभवस्य । तं सप्रपञ्चमधिरूढसमाधियोगः स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुरिति श्रीकपिलदेव वाक्यात् अत एव तेषां प्रध्वस्तमायागुणभेदमोहानां क्रोधादिकमपि दुर्घटघटनकारिण्या श्रीभगवदिच्छयैव जातमिति तैरपि व्याख्यातम्। तदेव तेषां सततब्रह्मानन्दमग्नत्वं सिद्धम्।तदुक्तम् अक्षरजुषामपीति श्रूयते चान्यत्र ब्रह्मजुषामविक्षिप्तचित्तत्वम् । तथा सप्तमे श्रीनारदवाक्यम्।"कामादिभिरनाविद्धं प्रशान्ताखिलवृत्ति यत्। चित्तं ब्रह्मसुखस्पृष्टं नैवोत्तिष्ठेत कर्हिचित्,, इति । तथापि तेषां भगवदानन्दाकृष्टचित्तत्वमुच्यते एवमन्येषामप्यात्मारामाणां तादृशत्वं श्रूयते "स्वसुखनिभृतचेतास्तद्व्युदस्तान्यभावोऽप्यजितरुचिरलीलाकृष्टसार"इत्यादिषु । अथ लोकसङ्ग्रहार्थैवैषा तेषां भक्तिप्रक्रिया प्राचीनसंस्कारवशाद्वा । नैवम्। उभयत्रापि "वासो यथा परिकृतं मदिरामदान्ध" इतिवत्तत्रावेशासम्भवात् दृश्यते त्वन्यत्रानावेशः । "मानसा मे सुता युष्मत्पूर्वजाः सनकादयः । चेरुर्विहायसा लोकांल्लोकेषु विगतस्पृहा,, इत्याद्यभिधानात् भगवति त्वावेशः परमहंसमहामुनीनामन्वेषणीयचरणावित्यत्र यादृच्छिकता विवोध्यान्वेषणीयत्वाभिधानात् । पञ्चमे तु असङ्गनिशितज्ञानानलविधूताशेषमलानां भगवत्स्वभावानामात्मारामाणां मुनीनामनवरतपरिगुणितगुणगणेत्यत्र गद्ये तदेकनिष्ठत्वमप्युक्तम्। अजितरुचिरलीलाकृष्टसार इत्यत्रैव च । अत्रापि तेनेश निर्वृतिमवापुरलं दृशो न इत्यादौ सुखदत्वमपि साक्षादेवोक्तम् । अत्र पूर्वोक्तहेतोश्च स्तुतौ प्रस्तुतोपालम्भप्रसङ्गाच्च स्नेहावलोककलया हृदि संस्पृशन्तमिति साक्षादुक्तेश्च दृशामेव सुखमित्यनासक्तिरेव व्यञ्जितेत्यपि न व्याख्येयं तस्मादात्मारामाणां रमणास्पदत्वात् ब्रह्माख्यमात्मवस्त्वेव श्री भगवान् तत्रापि चकार तेषां संक्षोभमक्षरजुषामपि चित्ततन्वोरिति श्रवणात् ततोऽपि घनप्रकाशः तत्तद्विचित्रश्रीभगवदङ्गोपाङ्गाद्यभिनिवेशदर्शनादानन्दवैचित्री चोपलभ्यते । सा चान्यथानुपपत्त्या स्वरूपशक्तिविलासरूपैवेति। ननु भवतु तेषामानन्दाधिक्यात् तस्मिन्निर्विशेषस्वरूपानन्दस्यैव घनप्रकाशता उपाधिवैशिष्ट्यात् । यतः विशुद्धसत्त्वसम्भावितायां चित्तवृत्तौ यद्ब्रह्मस्फुरति । तदेव घनीभूताखण्डविशुद्धसत्त्वमये भगवति स्फुरत्तदध्यस्ततया तदैक्यमापन्नायां तस्यां विशेषत एव स्फुरति अतएव श्रीविग्रहादिपरब्रह्मणोरभेदवाक्यमपि तदत्यन्ततादात्म्यापेक्षयैव अतएव तत्र तत्रोपाधावेक एव निर्भेदपरमानन्दः समुपलभ्यते न तु विशेषाकारगन्धोऽपि तत्तदुपाधेरपेक्षणान्तु प्रतिपदतदानन्दसमाधिकौतुकनिबन्धनं तस्मात् कथमनेन प्रमाणेन तत्तदुपाधीनामपि परतत्त्वाकारत्वं साध्यत इति चेत् उच्यते। भवन्मते तावद्यच्छुद्धचित्तवृत्तौ परब्रह्म स्फुरति तत् सम्यगेव स्फुरति । भेदांशपरित्यागेनैव ब्रह्मविद्याङ्गीकारात् । असम्यग्ज्ञानस्य तत्त्वानङ्गीकारात्तेन कैवल्यासम्भवाच्च । अतो न विग्रहादावधिकाविर्भावाङ्गीकारो युज्यते । किञ्च । विशुद्धसत्त्वमया विग्रहा विलक्षणोपाधय इति वदतस्तव कोऽभिप्रायः । किं तत्परिणामास्ते तत्प्रचुरा वा । नाद्यः रजोऽसद्भावेन परिणामासम्भव इति ह्युक्तम् । नचान्त्यः येषु विग्रहादिषु तत्प्राचुर्यं ते मिश्रसत्त्वस्य कार्य्यभूता इत्यर्थापत्तौ । सत्त्वं विशुद्धं श्रयते भवान् स्थिताविस्यादिवचनजाते विशुद्धपदे वैयर्थ्यमिति चोक्तमेव । अस्तु वा विमिश्रत्वं तथापि तादृशे ब्रह्मस्फुरणयोग्यतैव न सम्भवेत् किं पुनर्विशेषेणोत्युद्दिश्य विस्मृतिश्च स्यात् । अथाखण्डविशुद्धसत्त्वाश्रयत्वेन तेऽपि तद्रूपतयैवोच्यन्ते । ततश्च तेष्वनुभूताखण्डशुद्धसत्त्वे तस्मिन् ब्रह्मानुभवन्तीति चेत् तदयुक्तं कल्पनागौरवात् । तेऽचक्षताक्षविषयं स्वसमाधिभाग्यमिति साक्षादेव गोचरीकृतत्वेनोक्ततया परस्परादृष्टत्वप्रतिघाताच्च तस्य शुद्धसत्त्वस्य प्राकृतत्वन्तु निषिद्धमेव तस्मान्न ते प्राकृतसत्त्वपरिणामा न वा तत्प्रचुराः किन्तु स्वप्रकाशतालक्षणशुद्धसत्त्वप्रकाशिता इति । प्राक्तनमेवोक्तं व्यक्तम् अतएव तेषामुपाधित्वनिराकृतेस्तत्तदनुभवानन्दवैचित्री च सम्पद्यते तथैव तमेवं भूतमचक्षतेति तत्तद्विषयसौन्दर्यवर्णनं प्रस्तुतोपकारित्वात् सार्थकं स्यात् अन्यथा अखण्डशुद्धसत्त्वमयत्वकथनमात्रेणैवाभिप्रेतसिद्धेः । अतएव निरीक्ष्य च न वितृप्तदृश इति दृक्सम्बन्धित्वाद्रूपकृतैवातृप्तिरुक्ता तथैव च शब्देनैवाक्षरजयित्वं पदारविन्दपरिमलात्मकवायुलक्षणस्य तद्विशेषस्य दर्शितम् । अन्यथा उभयत्रापि ब्रह्मानन्दस्यैव निर्विशेषतयोपलभ्यमानत्वे विद्याजुषामपीत्युपाधिप्रधानमेवोच्येत उपाधियुगलस्यैव मिथः स्पर्द्धित्वप्राप्तेः । अनेनाक्षरानुभवसुखजयित्वकथनेन वशिष्ठादीनां पुत्रशोकादिकमिव तदावेशाभास एवायमित्यपि निरस्तम् एवमेवोक्तं श्रीस्वामिभिरपि स्वरूपानन्दादपि तेषां भजनानन्दाधिक्यमाहेति । तस्मादस्ति वैचित्रमपि । अत एव । तैरपि विचित्रतयैव प्रार्थितं चेतोऽलिवद्यदि नु ते पदयो रमेतेत्यादौ अक्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेदिति न्यायेन तदुपाध्यन्तरान्वेषणवैयर्थ्यात् तेषामतदन्वेषणकौतुकाभावाच्च । किञ्च न तेषामतदात्मकोभावो वा दृश्यते प्रत्युत नेमुर्निरीक्ष्य न वितृप्तदृशो मुदा कैः । कामं भवः स्ववृजिनैर्निरयेषु नः स्तादित्यादौ तत्प्रतियोगिनमस्काराद्युपलक्षितभेदात्मकभक्तिसुखमेव दृश्यते तस्मान्मायिकोपाधिनिर्हीनत्वाद्धेयांशतया प्रतिभातत्वाच्च न तज्जातीयं सुखमन्यजातीयं कर्तुं शक्नोतीति सन्त्येवान्यथानुपपत्तिसिद्धयोः स्वरूपशक्तेरेवविलासाः । अस्तु तावज्जीवन्मुक्तिदशायां तन्मते विद्योपाधिप्रतिफलितस्यैव सतो ब्रह्मणः सकाशाच्छ्रीभगवतो घनप्रकाशता । सर्वोपाधिविनिर्मुक्तमुक्तिदशायामपि साक्षात्तादृशतास्त्येवेति सुव्यक्तं नात्यन्तिकं विगणयन्त्यपि ते प्रसादमित्यादौ । तस्मान्नोपाधितारतम्यान्निन्ता भगवतः कथायामित्यनेन निरुपाधि ब्रह्म भूयादुपरि च वैचित्री स्फुटमेवासौ स्वीकृता तस्मात् सान्तरङ्गवैभवस्य भगवतः । सुखैकरूपत्वं तद्रूपत्वेऽपि घनप्रकाशत्वं स्वरूपशक्तिविलासवैचित्री चेतिविद्वदनुभवप्रमाणेन निर्णीतम् अत्रमुक्ता अपि लीलयाविग्रहं कृत्वा भजन्त इति । यत् सर्व्ववेदा आनमन्ति मुमुक्षवो ब्रह्मवादिनश्चेत्यत्र श्रुतावद्वैतवादगुरवोऽपि । कृष्णोमुक्तैरिज्यते वीतमोहैरिति भारते। ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति । समः सर्व्वेषु भूतेषु मद्भक्तिं लभते परामिति श्रीभगवद्गीतोपनिषत्सु । मुक्तानामपि भक्तिर्हि नित्यानन्दस्वरूपिणीति भारततात्पर्य्यप्रमाणिता श्रुतिश्च । तथा । "आप्रयाणात्तत्रापि हि दृष्टम्" इत्यत्र च माध्वभाष्यप्रमाणिता सौपर्णश्रुतिः । " सर्व्वदैनमुपासीत यावन्मुक्तिर्मुक्ता ह्येनमुपासत " इति । अतएव श्रीप्रह्लादनारदप्रभृतिमहाभागवतसम्बन्धमभिप्रेत्य

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

श्रीविष्णुपुराणेऽप्युक्तम्। "पाताले कस्य न प्रीतिर्विमुक्तस्यापि जायते" इति अत्र विशेषो भगवत्सन्दर्भे ज्ञेयः॥ ५०॥

इतिश्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
पञ्चदशोऽध्यायः समाप्तः॥ १५॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं भक्तिमार्गानुसारेण भगवन्तं स्तुत्वा स्वस्यापराधाभावाय स्वदोषं कीर्तयन्ति शपथप्रकारेण। कामं भव इति। जयविजयावस्माभिर्व्याजेन शप्ताविति पक्षो नास्ति किन्तु भगवद्दर्शनलालसतया अन्यथा अस्माकमनिष्टं भवत्वित्याहुः। कामं भव इति। स्ववृजिनैः स्वकृतपापैः नियतदुःखदं पापं वृजिनमुच्यते नियमेन दुःखदं वा अतो यः परस्मै दुःखं प्रयच्छति स हि स्वयमपि दुःखं प्राप्नोति अतो नोऽस्माकं भवो निरयेषु स्तात् कामादीनां निरयद्वारत्वश्रवणात् पापीयसस्त्रय इति वाक्यात्तयोः कामादिदानं निरयेष्विति बहुवचनं न त्रित्वपरं देशादिविशेषे दानस्याधिकफलजनकत्वात् स्तादिति प्रार्थनायां लोट् अङ्गीकारेऽनङ्गीकारे चोभयथा हेतुमाह। चेतोऽलिवदिति। यथा भ्रमरः रसाविष्टः कालमपि न गणयति रात्रावपि तत्र स्थितो बद्धो भवति तथा नश्चेतस्ते पदयोर्यदि रमेत तदा देहस्य नरके स्थितिः नास्माकं बाधिका किञ्च तदैवास्माकं निरये वासो भविष्यति अलिवत् यदि पदयोर्नः रतिर्भवेत् स हि मधुलोभेन पुष्पपीडामविगणय्य मधु पिबति तथा वयमपि फलार्थिनश्चेत् दर्शनार्थं द्वारपालयोरपराधं कृतवन्तः अन्यथा माभवत्वित्यर्थः एवं मानसमुक्त्वा वाचनिकमाहुः। वाचस्त्विति। यदि नो वाचः तुलसीवत् सुरूपगन्धादिरहिता अपि चरणारविन्दे शोभते यथा तुलसी तथा वाचोऽपि पदचातुर्याद्यनपेक्षाः भगवद्गुणप्रतिपादकत्वेनैव यदि शोभा युक्ताः स्युः तदापि नरके वासो न बाधकः तुशब्दः पूर्वपक्षं व्यावर्तयति तेन न समुच्चयः किञ्च यथा तुलसी परप्रेरणया चरणाविष्टा भवति एवमन्यप्रेरणया भगवद्गुणा अस्मद्वाचि निविष्टा भवेयुः तदा नरको भवतु यदा स्वत एव निविष्टाश्चेत्तदा न भविष्यतीत्यर्थः कायिकमाहुः। पूर्येतेति गुणसमूहैर्गुणानामवान्तरजातिभेदैर्वा यदि कर्णरन्ध्रः पूर्येत न अलमिति मन्यते सर्वदा वा पूरितमेव तिष्ठति निरन्तरश्रवणेन यथान्यन्नप्रविशेत्तथा पूर्णवदित्यर्थः॥ ४९॥

एवं स्वापराधे स्वयमेव स्वदण्डमनूद्य समागतानां किमेतदेव फलमिति शङ्कायां समागमनफलं जातमित्याहुः। प्रादुश्चकर्थेति। यत् इदं रूपं हे पुरुहूत! प्रादुश्चकर्थ तेन प्रादुर्भूतरूपेण दृशः निर्वृतिमवापुः दृष्टीनां परमसन्तोषो जात इत्यर्थः एवं सुखदातुः प्रत्युपकारोऽपि नमस्कारेणैवेत्याहुः। तस्मा इदमिति। तस्मै भगवते इदं नम इव विधेम न हि शास्त्रानुसारेण कर्तुं शक्यते अतोऽनुकरणमात्रमिति इदित्युक्तम् इदित्यव्ययमिवार्थे पुरुहूतेति यज्ञात्मकता पुरुभिर्हूयत इति पुरुधा वा इन्द्रादिरूपेण हूयत इति स्वार्थे प्रादुर्भाव आगमनमेव अन्तः करणे तु सुखं न जातमिमि भावः शापदानेन चित्ते ग्लान्युत्पत्तेः न चैतत्फलमल्पमिति मन्तव्यं यतः अनात्मनां भवान् दुरुदयः प्रतीतः दृष्टः न विद्यते आत्मा येषां यैरात्मैव नाशितो बहिर्मुखत्वादिभिः तेषां दुरुदयः दुःखार्थमनुदयो वा इदमिति प्रदर्शयन्तो नमस्कुर्वन्ति भगवानुपकारकर्तेति आश्चर्यार्थं तस्मै भगवते इत्युक्तं प्रतीत इति प्रमाणम्॥ ५०॥

इतिश्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्वल्लभाचार्यकृतसुबोधिनीटीकायां
पञ्चदशाध्यायविवरणम्॥ १५॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

ननु मद्भक्ता सत्यमीदृशा एव मोक्षं न गणयन्त्येव। स्वेषां सम्प्रति का निष्ठा वः शुद्धभक्तौ मुक्तौ वा तां स्पष्टं ब्रूथ व्यञ्जनयालमित्यत आहुः। नोऽस्माकं भव एव स्तात् नतु मोक्ष इत्यर्थः। तत्रापि स्ववृजिनैः स्वाशुभकर्मभिर्निरयेषु नारकीष्वपि योनिषु कस्तत्राधिको लाभो मुक्तौ वा कः खल्वलाभस्तमाहुः। चेत इति। अलिर्यथा कण्टकैराविध्यमानोऽपि पुष्पेषु रमते तद्वत् विघ्नान् अविगणय्य यदि रमेतेति प्रेमा व्यञ्जितः। यदीत्यनेन नारकीष्वपि योनौ भक्तेः सम्भवः। सत्याञ्च भक्तौ नरकोऽपि मोक्षादुत्तमइत्याशीस्तातङा लभ्यते। अङ्घ्रिभ्यामेव शोभा यासां ता इति तुलसी यथा स्वशोभाया अभावादन्यत्र न तिष्ठति अङ्घ्र्योरेव शोभते तथैवास्माकं वाचोऽपि त्वदङ्घ्रिरूपगुणनामवर्णन एव शोभन्तां नान्यत्र। पूर्येतेति तत्रान्यवार्ता न प्रविशत्विति। यद्वा कर्णरन्ध्र इत्यल्पस्य पूरणमेव याचकरीत्या प्रार्थयन्ते अयन्तु गूढोऽभिप्रायः कर्णरन्ध्रस्याकाशत्वात् गुणानाञ्चामूर्त्तत्वात् न कदापि पूरणमतो नित्यमेव श्रवणं फलिष्यतीत्येवं श्रवणकीर्त्तनस्मरणानीत्यानन्दत्रयं मुक्तौ नास्त्येव भवेतु सम्भवेदपीति निकृष्टोऽपि भव एव प्रार्थितो न मोक्षः एवमेव नाथ योनिसहस्रेष्विति कीटेषु पक्षिषु मृगेष्वित्यादि प्रार्थना निष्कामभक्तानां स्वभाव एव तेषामनुसंहितं भजनानन्दमननुसंहितमपि भवक्षयञ्च कुरुते इति भगवतोऽपि स्वभावः सर्व्वत्र द्रष्टव्यः॥ ४९॥

एवं त्वदीयश्रवणाद्यानन्दत्रिकलोभेन त्वत्परोक्षमयो भवोऽपि प्रार्थ्यते। त्वया तु स्वसाक्षात्काराम्रतमपि वयं त्वद्भक्तापराधिनोऽपि पायिताः स्मेत्यहो ते क्षमाया एतावतीसीमा कारुण्यन्त्वपारमित्याहुः। प्रादुरिति। पुरु यथा स्यात् पुरुभिर्बहुभिर्भक्तैराहूत हे नारायण! विष्णो! गोविन्द कृपया दर्शनं देहीत्याहूत तेन स्वभक्ताह्वानोत्थ कृपापरवशेनैव भवता स्वरूपमाविष्कुर्वता वयमपि कृतार्थीकृता इति भावः। दृशो नेत्राणि बुद्धिवृत्तयो वा इदं नम इति मूर्धसु धृतानञ्जलीन् दर्शयन्ति। इत् इत्थं। यद्वा इदिति नम इत्यस्य विशेषणं श्रीचरणारविन्दं प्रतिगच्छ इदित्यर्थः। अनात्मनामात्मा त्वं सेव्यत्वेन नवर्त्तसे येषां तेषां दुरुदयः श्लेषेण येषां त्वं दुरुदयस्ते अनात्मानः आत्मशून्या मृतका एवेति भावः। अत्र प्रतीतः उलूकानां सूर्य्य इव दुर्दर्श एव निश्चित इत्यर्थः। अत्र समस्तात्मारामसुकुटमणीनां लब्धनिरन्तरब्रह्मानुभवानां श्रुतावपि तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमार इत्यादिवाक्येषु प्रसिद्धानां सनकादीनां भक्तावीदृश प्रार्थनालिङ्गेनैव ब्रह्मानन्दादपि भजनानन्दस्याधिक्येऽवगते भगवद्रूपनामगुणपरिच्छदभक्तधाम्नां चिद्घनाकारत्वं स्वतएव लब्धं

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

तथाभूतत्वं विना भक्तेरसिद्धेरग्रे च कापिलेये निर्गुणत्वञ्चास्या वक्ष्यते । "मुक्तानामपि भक्तिर्हि नित्यानन्दस्वरूपिणी„ इति भारततात्पर्य्ये प्रमाणिता श्रुतिश्च । तथा "आप्रयाणात्तत्रापि हि दृष्टम्„ इत्यत्र माध्वभाष्यप्रमाणिता सौपर्णश्रुतिः "सर्व्वैदेनमुपासीन यावन्मुक्तिरमुक्ता ह्येनमुपासत„ इति । अतएव प्रह्लादबलिप्रभृतिमहाभागवतसम्बन्धमभिप्रेत्य श्रीविष्णुपुराणेऽप्युक्तम् । पाताले कस्य न प्रीतिर्विमुक्तस्यापि जायत इति ॥ ५० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
तृतीये पञ्चदशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

लोकदृष्ट्याहुः।काममिति । कामं यथेष्टं भवो जन्म वाचः तुलसिवत् अङ्घ्रिभ्यां वर्ण्यमानाभ्यां शोभा यासां ता यदि स्युः ॥४९॥

एवं लोकदृष्ट्या संप्रार्थ्याथ स्वकृतार्थतामाहुः । प्रादुरिति । हेपुरुहूत ! विपुलकीर्ते ! प्रादुश्चकर्थ प्रकटितवानसि अनात्मनां विस्मृतपरमात्मतत्त्वानां दुरुदयः अप्रकटोऽपि इत् इत्थं यःप्रतीतोऽसि तस्मै इदं नमो विधेम ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तपदीपटीकायां
पञ्चदशोऽध्यायः ॥ १५ ॥

---

भाषाटीका ।

हेप्रभो ! आपके भक्तों के शाप के अपराध से हमारा नरकमें भी जन्म हो तोभी यदि हमारा चित्त भ्रमर सरीका आपके चरण कमल मे लगारहे तुलसीकी नाईं हमारे वचनों की शोभा आपके चरणों ही के वर्णन से होय हमारे कानों के छिद्र आपके गुण गणों से भरे रहैं तो हमको नरकादिकों मे कोई डर नहीं है ॥ ४९ ॥

हे ईश । हे ( पुरुहूत ) यज्ञों मे आवाहन करने योग्य ! जो लोग इन्द्रियों को नहीं जीतते हैं उनको नहीं प्राप्त होने वाले हो तौभी आज जो प्रगट भये तो इस रूपको दिखाते हो तिस से हमारे नेत्र तृप्त होगये हैं अब हम कुछ न करसकनेसे केवल यह नमस्कार मात्र आपको अर्पण करते हैं ॥ ५० ॥

इतिश्रीभागवततृतीयस्कन्धपञ्चदशाध्यायका
भाषानुवाद लक्ष्मणाचार्य कृत
समाप्त ॥ १५ ॥

---

इतिश्रीमद्भागवते महापुराणे तृतीयस्कन्धे पञ्चदशोऽध्यायः समाप्तः ॥ १५ ॥

## ॥ षोडशोऽध्यायः ॥

ब्रह्मोवाच ।

इति तद्गृणतां तेषां मुनीनां योगधर्मिणाम् ।
प्रतिनन्द्य जगादेदं विकुण्ठनिलयो विभुः ॥ १ ॥

श्रीभगवानुवाच ।

एतौ तौ पार्षदौ मह्यं जयो विजय एव च ।
कदर्थीकृत्य मां यद्वो (१) बह्वक्रातामतिक्रमम् ॥ २ ॥
यस्त्वेतयोर्धृतो दण्डो भवद्भिर्मामनुव्रतैः ।
स एवानुमतोऽस्माभिर्मुनयो ! देवहेलनात् ॥ ३ ॥
तद्वः प्रसादयाम्यद्य ब्रह्म दैवं परं हि मे ।
तद्धीत्यात्मकृतं मन्ये यत्स्वपुंभिरसत्कृताः ॥ ४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

हरिणा सान्त्वितैर्विप्रैरनुतप्तैस्तु षोडशे ।
तयोरसुरभावेऽपि कृतोऽनुग्रह ईर्यते ॥

इति गृणतान्तेषां तद्वाक्यं प्रतिनन्द्येदं जगाद एतावित्येकादशभिः ॥ १ ॥

यद्यस्मान्मां कदर्थीकृत्य तुच्छीकृत्य बहु यथा भवति तथा अतिक्रमं वः कृतवन्तौ ॥ २ ॥

तस्मात्स एव दण्डोऽङ्गीकृतः ॥ ३ ॥

हि यस्माद्ब्रह्म ब्राह्मणा एव मे परमं दैवं दैवतं तत्तस्मादद्य वः प्रसादयामि तव कोऽपराध इतिचेत्तत्राह । तद्धीति । मदीयैः पुंभिरसत्कृतास्तिरस्कृता इति यत्तदात्मकृतमेव मन्ये ॥ ४ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

गृणतां स्तुवताम् ॥ १ ॥

एतौ तौ अतिप्रसिद्धौ अतिक्रममपराधम् अक्रातामित्यार्षम् अत्र प्रत्ययोच्चारणमनार्थत्वेन क्रमुधात्वर्थस्याविवक्षितत्वात् कृञर्थस्य सर्वानुगतत्वात् कृतवन्ताविति व्याख्यातम् ॥ २ ॥

तस्माद्देवहेलनाद्धेतोः ॥ ३ ॥

मदीयैरिति तत्कृतस्य स्वकृतत्वमननञ्च तयोः स्वान्तरङ्गत्वं व्यञ्जयति ॥ ४ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

एवं मुनिभिरावेदितस्वरूपगुणरूपविभूतिस्तत्प्रसादितो भगवानाश्रितसुलभः ।

प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ।
ज्ञानीत्वात्मैव मे मतमिति ।

स्वगीतोक्तरीत्या निरतिशयस्वप्रीतिविषयान्मुनीन्प्रसादयितुमुवाचेत्याह ब्रह्मा । इतीति । मुनीनां शुभाश्रयसंशीलनशीलानां योगधर्मिणां भगवद्भक्तियोग एव धर्मो येषामस्तीति तेषामित्युक्तप्रकारेण गृणतां स्तुवतां तेषां सनकादीनां तद्भाषितं प्रतिनन्द्य शिरसा संश्लाघ्य विकुण्ठस्थानं निलयो यस्य स विभुर्भगवानिदं वक्ष्यमाणं जगाद उक्तवान् ॥ १ ॥

उक्तिमेवाह । एकादशभिः । एताविति । जयो विजय एव चेत्येतौ मह्यं मम पार्षदौ मां कदर्थीकृत्यावज्ञाय यद्यस्माद्युष्मभ्यं बहु भृशमतिक्रममपचारमकार्ष्टामकुरुताम् ॥ २ ॥

तस्मान्मामनुव्रतैर्भजद्भिर्भवद्भिरेतयोर्यो दण्डः धृतः कृतः स एव दण्डःअस्माभिर्हे मुनयः!देवहेलनाद्देवानां युष्माकं हेलनादवज्ञानान्निमित्तादनुमतोऽस्त्वित्यङ्गीकृतः ॥ ३ ॥

तत्तस्मादस्मद्भृत्यकृतयुष्मद्विषयापचरणाद्वः युष्मानद्याधुना प्रसादयामि क्षमापयामि ननु सत्यप्यपराधे उत्कृष्टा एव क्षमापयितव्या इत्यत्राह । हि यस्माद् ब्रह्म ब्राह्मणा मे मम परमुत्कृष्टं दैवमतो वः प्रसादयामि ननु किमपराद्धं भवता येन प्रसादयामीति भाषसे इत्यत्राह । स्वपुंभिः मदीयैः पुंभिरसत्कृता अवज्ञाता इति यत्तद्धि आत्मकृतं मया कृतमित्येव मन्ये ॥ ४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दुस्तरापत्तिपरिहाराय भक्त्या हरिरेव प्रार्थनीय इत्ययमर्थः प्रतिपाद्यतेऽस्मिन्नध्याये । तत्रादौ भक्तपराधीनोऽहमिति प्रकटयिष्यतो हरेः सनकादीन्प्रति स्नेहवचनप्रकारमाह । इतीति । योगः भक्तियोगः स एव धर्म एषामस्तीति योगधर्मिणः तेषामिदं

(१) बह्वक्रान्तामिति शुकदेव पाठः ।

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इयमाद्यं तत्स्तवनं प्रतिनन्द्य वैकुण्ठनिलय इत्यनेन प्रतीतं परिच्छिन्नत्वं निवारयति । विभुरिति । "विभुः सर्वगते पत्यौ„ इति यादवः ॥ १ ॥

मद्धामिति व्यत्ययेन जयविजययोः पार्षद्प्राधान्यं सूचयति मां कदर्थीकृत्याविगणय्याप्रयोजनीकृत्येति वा तत्कृत इति तत्राह । यद्व इति । बाह्यति क्रियाविशेषणं यथा बहुः पूर्णो भवति तथातिक्रममपराधमक्रान्तामकुर्वतां यत्तस्मादिति शेषः ॥ २ ॥

तर्हि भगवताप्येतौ दण्ड्याविति शङ्कित्वा युष्माकमस्माकं चैकमतस्कत्वाद्युष्माभिर्दत्त एव दण्डोऽस्माभिर्दत्त इत्याह । यस्त्विति ॥ ३ ॥

किं चात इति तत्राह । तद्ब इति । तत्तेन दण्डानुष्ठानेन किमेषां प्रसादनमत्राह । ब्रह्मेति । सर्वेषामिति पदमध्याहृत्यान्वेतव्यं मे मम भक्तियुक्तं ब्रह्म विप्रकुलं सर्वेषां परदैवं पूज्यं हि प्रसिद्धं मे परं मत्तात्पर्ययुक्तमिति वा अन्यकृतापराधस्य स्वात्मन्यारोपणं कथमत्राह । तद्धीति ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

एवमात्मीयत्वेन तौ भर्त्सयित्वा ब्राह्मणत्वेन तान् स्तौति यस्येति चतुर्भिः । कीर्त्तिः पूर्वोक्तं यशः यद्यपि लोकेश्वरास्ताङ्श्यामति निकृष्टा एव तथाप्यद्भुतलीलाच्छादनायैव टीकायां तथा व्याख्यतम् ॥ १—६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

> मुनिमानससन्तोषस्ततः स्तोत्रं तथाविधम् ।
> शापस्थापननिर्याणे षोडशे विनिरूप्यते ॥ १ ॥
> भक्तानां तु कृतिः सत्या सत्या वाक् ब्रह्मवादिनाम् ।
> मनो भगवतः सत्यमित्यध्यायविनिर्णयः ॥ २ ॥
> मनसः प्रबलत्वाद्धि तेषां नान्यविरोधिता ।
> पूर्वयोरनभिप्रेतं तृतीयादेव सुस्थिराद् ।
> एवं भगवतः सर्गलीलायां दुर्बला रतिः ॥

एवं पूर्वाध्याये अभेतुष्टानां मुनीनां स्तोत्रमुक्तं तेषां पूर्णसन्तोषार्थं भगवान् ब्राह्मणस्तोत्रं कृतवानित्याह । इतितद्गृणतामिति । पूर्वोक्तप्रकारेण गृणतां तेषां भीतानां मुनीनां शास्त्रानुसारिणां वचनं प्रतिनन्द्य तच्छब्देन वचनं प्राप्यते प्रतिनन्दनं बहिरेव कृतं प्रतिनन्दनस्यैवाग्रे वक्ष्यमाणत्वात् इदं वक्ष्यमाणं जगाद ननु किमित्येवं जगाद यतो भक्तानां दुःखं भवति तत्राह । वैकुण्ठनिलय इति । वैकुण्ठस्थानं निलयो यस्य गृहागतानां सन्तोषः कर्त्तव्यः नन्वेवं सति भक्ताः पीडिता भवेयुरित्याशङ्क्याह । विभुरिति । स्वभूत्वात् सर्वप्रकारेणापि मोचयितुं समर्थ इत्यर्थः ॥ १

प्रथमतः सेवकयोरपराधं समर्थयति । एताविति । एतौ जयविजयौ तौ पूर्वकल्पे मधुकैटभौ मह्यं वरदानात् मद्रूपसङ्गे मृताविति मया वैकुण्ठे समानीतौ तदानीं बहूनां सेवकानां विद्यमानत्वात् संदेहनिवृत्त्यर्थं नाम गृह्णाति । जयो विजय एवेति । मदर्थं यो जयः स एकः जयनामा च इन्द्रियादीनामन्यार्थं जयःज्ञानमार्गे मदर्थं जयो भक्तिमार्गे अन्तःकरणजय इत्यर्थः विविधो जय इन्द्रियादीनां द्वितीयः । अत एव एतौ मम पार्षदौ पर्षदि समायां योग्यौ यथान्तःकरणो तज्जयो भगवत्स्थितौ हेतुर्भवति तथा वैकुण्ठस्थितावेतावेव हेतुभूतौ । अत एवैतयोरुत्पत्तिविमर्शनेन अपराधकरणं युक्तमेव । न हि साक्षान्मनसा भगवान् गन्तुं शक्यः किन्तु जयेनैव शक्य इति भगवत आनन्दरूपस्य सहजसुखत्वेन मनसः प्रवृत्तियोग्यत्वेऽपि जयप्रतिबन्धात् भगवद्गमनम् अत एव मां कदर्थीकृत्य व्यवहारेऽपि ब्रह्मण्यत्वादिधर्मान् दूरीकृत्य वः युष्माकमतिक्रमं वह्नकाताम् ॥ २ ॥

अत एव एतयोर्दण्ड उचित इत्याह । यस्त्वेतयोरिति । तुशब्दो दण्डान्तर व्यावृत्त्यर्थः यो जन्मत्रयात्मको दण्डः स एवानुमतोऽस्माभिः भवद्भिर्मयाचेति सेवकसहितेन मया वा उभावपि दण्डनीयाविति एतयोरित्युक्तमनुमतः सद्धर्माः मत्कार्ये कृतमिति ममात्र महान् सन्तोष इति तेषां कृत्यभिनन्दनं मुनय इति सम्बोधनं काकतालीयकरणव्यावृत्त्यर्थमभिप्रायज्ञानार्थं वा नन्वेतयोः कोऽपराधः द्वाररक्षातु स्वधर्म इति तत्राह । देवहेलनादिति । अस्मद्देवाः ब्राह्मणाः परोक्षदेवो यज्ञः प्रत्यक्षदेवो यज्ञाधिष्ठाता विष्णुरिति स एवैतेवकारेण इदानीमन्यो न वक्तव्य इति सूचितम् ॥ ३ ॥

एवमपराधदण्डौ निरूप्य सेवकापराधं दूरीकृत्य दण्डापराधं स्वापराधं च दूरीकरोति । प्रार्थनया तद्वः प्रसादयामीति । युष्मानद्य प्रसादयामि यतोऽपराधो जात इति अपराधो हि महत्स्वल्पस्य भवति प्रकृते तु कथमपराध इति चेत्राह । ब्रह्म दैवं परमिति । मम दैवं देवता ब्रह्म ब्राह्मणजातिः परमिति विष्णवपेक्षयापि आधिदैविको विष्णुर्देवो भवति विष्णुर्वा अकामयत पुण्यं श्लोकं शृणवीय न मायावाकीर्तिरागच्छेदिति "स एतं विष्णवे श्रोणायै पुरोडाशं त्रिकापालं निरवात्„ इति श्रुतेः तद्व्यावृत्त्यर्थमाह । परमिति । प्रत्यक्षश्रुतौ देवापेक्षया ब्राह्मणानामुत्कर्षविधानात् । एते वै देवाः प्रत्यक्षं यद्ब्राह्मणा इति तदाह हिशब्देन ननु भवतः कोऽपराधस्तत्राह । तद्धिद्वात्मकृतं मन्य इति । यत् स्वपुंभिः स्वसेवकैरसत्कृतं तदहमात्मकृतमेव मन्ये हि युक्तोऽयमर्थः भृत्यकृता एव स्वामिकृता भवन्ति इति अन्यथा भृत्यापराधे स्वामिनो दण्डो न स्यात् । अनेन मयैव भवन्तो निवारिता इत्यप्युक्तं कृतमपि तद्युक्तमेव द्वारपालकधर्मत्वात् अत एव हि द्वयमन्योऽन्यहेतुभूतं यद्यप्येतादृशो लोकः स्वाम्यपराधं न मन्यते तथाप्यहं मन्ये यतः ते स्वपुरुषाः ॥ ४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

> भृत्येष्वात्मीयतामात्मस्वादरं जानतां हरिः ।
> षोडशे विभ्यतां तेषां शापमेवान्वमोदत ॥ ० ॥

इति गृणतां स्तुवतां तेषां तद्वाक्यम् ॥ १ ॥

अपराधाशङ्कया युष्माभिर्न भेतव्यमित्याह । एताविति । आभिर्मह्यं मम । यद्यस्मान्मां कदर्थीकृत्य तुच्छीकृत्य बहु यथास्यात्तथा अतिक्रमं वः कृतवन्तौ । मदभिप्रेतानाचरणमेव तुच्छीकरणम् ॥ २ ॥

अतो मया कर्त्तव्य एव दण्डो भवद्भिः कृत इत्याह । य इति । मामनुलक्षीकृत्य व्रतानि येषां तैः देवस्य मम हेलनादिति मद्विषयक एवायमनयोरपराधो वस्तुत इति भावः ॥ ३ ॥

किञ्च । युष्मासु ममैवापराधोऽभूदित्याह । तद्व इति । ननु कथं तवापराधस्तत्राह । तद्धीति । यदि जयविजयौ मद्भृत्यौ न स्यातामहं वा तत्र प्रीतिमान्न स्यां तदा अपराधो मे न स्यादिति भावः ॥ ४ ॥

---

यन्नामानि च गृह्णाति लोको भृत्ये कृतागसि ।
सोऽसाधुवादस्तत्कीर्तिं हन्ति त्वचमिवामयः ॥ ५ ॥

यस्यामृतामलयशः श्रवणावगाहः सद्यः पुनाति जगदाश्वपचाद्विकुण्ठः ।
सोऽहं भवद्भ्य उपलब्धसुतीर्थकीर्तिश्छिन्द्यां स्वबाहुमपि वः प्रतिकूलवृत्तिम् ॥ ६ ॥

यत्सेवया चरणपद्मपवित्ररेणुं सद्यः क्षताखिलमलं प्रतिलब्धशीलम् ।
न श्रीर्विरक्तमपि मां विजहाति यस्याः प्रेक्षालवार्थ इतरे नियमान् वहन्ति ॥ ७ ॥

नाहं तथाद्मि यजमानहविर्विताने श्च्योतद्घृतप्लुतमदन् हुतभुङ्मुखेन ।
यद्ब्राह्मणस्य मुखतश्चरतोऽनुघासं तुष्टस्य मय्यवहितैर्निजकर्मपाकैः ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तद्वाक्यं प्रतिनन्द्य इदं वक्ष्यमाणं जगाद ॥ १ ॥

कदर्थीकृत्य अवज्ञाय अपृष्ट्वेत्यर्थः वहु यथा भवति तथा वः अतिक्रममपचारम् आक्रान्तां कृतवन्तौ ॥ २ ॥ ३ ॥

स्वपुम्भिः मदीयैर्द्वारपालैर्वः वंहुवचनं छत्रिणो यान्तीतिवत् असत्कृता इति यत् तद्धि आत्मकृतं मन्ये ॥ ४ ॥

भाषाटीका ।

श्रीब्रह्माजी वोले इस प्रकार से योगधर्म वाले मुनियों के स्तुति की प्रशंसा करके वैकुण्ठवासी भगवान् सनकादिकों से वोले ॥ १ ॥

श्री भगवान् वोले ये जय विजय दोनो हमारे पार्षद हैं इन ने मेरी अवज्ञा करके आप लोगों का अपराध किया है ॥ २ ॥
हे मुनिहो आप हमारे अनुवर्तन करने वाले हो तिससे जो तुमने इनको दण्ड दिया है तिसमें हमारि भी संमति है क्योंकि इन्हो ने आपसे देवतों का अवज्ञा किया है ॥ ३ ॥

तिससे मैं आप से क्षमा मांगताहूं ब्राह्मण मेरे परम देवता हैं जो हमारे पुरुषों ने आप का अपमान किया है सो मैंने किया ऐसा में समझता हूं ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च ममैवैताभ्यामनिष्टं कृतमित्याह । यस्य स्वामिनो नामानि तस्य कीर्तिम् आमयोऽत्र श्वेतकुष्ठम् ॥ ५ ॥

यस्य मेऽमृतरूपेऽमले यशसि श्रवणेनावगाहः प्रवेशः श्वपचमभिव्याप्य जगत्सद्यस्तत्क्षणमेव पुनाति सोऽहं विकुण्ठो भवद्भ्यो हेतुभूतेभ्य उपलब्धा प्राप्ता सुशोभना तीर्थभूता कीर्तिर्येन सः स्ववाहुस्थानीयं लोकेश्वरमपि हन्याम् कान्यस्य कथेत्यर्थः स्वगुणानुवर्णनं तु ब्राह्मणोत्कर्षार्थमेव ॥ ६ ॥

स्वचरणपद्मयोः स्थितः पवित्रो रेणुर्यस्य अत एव क्षतोऽखिलस्य लोकस्य मलो येन यद्वा चरणपद्मालग्नः पवित्रो रेणुर्यस्मिन्निति क्षतोऽखिलो मलो यस्येति च विग्रहः प्रतिलब्धं प्राप्तं शीलं येन तेषां सेवया एते गुणा ममात एव श्रीर्मां न विजहाति प्रेक्षालवार्थे ऽवलोकनलेशार्थम् इतरे ब्रह्मादयः तेषां वः प्रतिकूलवृत्तिं छिन्द्यामिति पूर्वेणैव सम्बन्धः ॥ ७ ॥

किञ्च ब्राह्मणो ममैव श्रेष्ठं मुखमतो युष्मदवज्ञयामन्मुखतिरस्कार एव कृत इत्याह। नाहमिति। विताने यज्ञे यजमानस्य हविश्चरुपुरोडाशादि हुतभुगग्निस्तेन मुखेनादन्नश्नन्नपि तथा नाद्मि नाश्नामि यद्यथा श्च्योतता क्षरता घृतेन प्लुतं विलोडितं पायसादिप्रतिग्रासं रसास्वादपूर्वकं चरतो भुञ्जानस्य ज्ञानिनो ब्राह्मणस्य मुखतोऽश्नामि मयि समर्पितैः कर्मफलैस्तुष्टस्य निष्कामस्येत्यर्थः ॥ ८ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

भृत्यकृतं स्वामिनि प्रतिफलतीति न्यायान्ममैवेति स अपराधलक्षणः अत्र युष्मदपकृतिप्रकरणे ॥ ५ ॥

एवं स्वीयत्वेन तौ भर्त्सयित्वा ब्रह्मण्यत्वाद्ब्राह्मणत्वेन तान् स्तौति । यस्येति। विकुण्ठ उपाध्यनावृतः तीर्थभूता परमपावनी कीर्त्तिः ब्रह्मण्यताख्यातिः अत्र यद्यपि लोकेश्वरास्ताभ्यामतिनिकृष्टा एवेति प्राकरणिकं कैमुत्यं न सङ्गच्छते तथापि स्वरूपात्मकस्य तद्बाहोश्छेदनासम्भवात् अश्लीलताच्छादनायैव स्वबाहुस्थानीयमिति व्याख्यातम् ॥ ६ ॥

रेणोः पावित्र्यं यद्यपि नित्यं सदैव तथापि ब्रह्मण्यत्वगुणेन तत्प्राकट्यातिशय इत्यभिप्रायेण तथा प्रशंसनम् अत एव पवित्ररेणुत्वादेव पूर्वार्थे प्रतिपत्तिगौरवं स्वप्रशंसा साक्षात्कृता विप्रप्रशंसा तु परम्परयेत्यरुचौ यद्वेति चरणपद्मादर्थाद्ब्राह्मणानाम् इतिहेतोः मलश्चात्र निरपेक्षं मुनिं शान्तमित्यादेः पूयेयेत्यङ्घ्रिरेणुभिरित्यत्र भक्तिनिष्कृत्यभाव एवाभिप्रेतः स ऋणित्वरूपो मलस्तादृशब्राह्मणसेवया क्षतो नष्टो यस्य स तथाशीलं चात्र भक्तवात्सल्यादिसुखानुवभः एते कीर्तिपावित्र्यादितीर्थत्वशीलादयः अत एव तादृशगुणवत्त्वादेव ॥ ७ ॥

ज्ञानिनः भगवद्ज्ञानवतः नतु शुष्कज्ञानिनस्तस्य समदृष्ट्या रसास्वादपूर्वकभोजनासम्भवात् ॥ ८ ॥

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

भृत्यकृतमागः स्वामिन्येव पर्यवस्यतीत्याह । यदिति । भृत्ये कृतागसि कृतापराधे सति यन्नामानि यस्य स्वामिनो नामानि

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

जनः गृह्णाति अनेन स्वामिना भृत्यद्वारा एवमेवमसाधुकृतमतोऽयं दुरात्मेत्यादि विनिन्दकनामानि लोको वदति सःअसाधुवादः तत्कीर्त्तिं तस्य स्वामिनः कीर्तिं हन्ति नाशयति त्वचमामय इवामयोऽत्र श्वेतकुष्ठादिरोगः स यथा त्वच्युत्पन्नः तद्गतं सौन्दर्यं हन्ति तथेत्यर्थः भृत्यकृतापराधनिमित्तोऽसाधुवादः स्वामिनि पर्यवसन्नस्तत्कीर्त्तिमेव नाशयतीति भावः ॥ ५ ॥

तस्मादाश्रितसौलभ्यादिकल्याणगुण इति यशःसम्पन्नोऽहं निरतिशयप्रियाणां भवतां विरोधि चेत्स्वाङ्गमपि लुनामीत्याह । यस्येति।यस्य ममामलामृतयशःश्रवणावगाहःअमलं पवित्रममृततुल्यं यद्यशः तस्य श्रवणावगाहः श्रोत्रप्रवेशः आश्वपचं श्वपाकपर्यन्तं जगत्सद्यःपुनाति पवित्रयति सोऽहं विकुण्ठःश्रोत्रप्रवेशमात्रेण सद्यो जगत्पावनकरयशःसम्पन्नः विकुण्ठः प्रतिहतिरहितः भवद्भिर्निमित्तभूतैर्भवद्भ्य इति पञ्चम्यन्तपाठोऽपि तदा भवद्भ्यो हेतुभ्यः उपलब्धसुतीर्थकीर्तिः आश्रितदुर्लभ इत्यधिक्षिप्तकीर्तिरहं वः युष्माकं प्रतिकूला वृत्तिर्यस्य तं स्वबाहुमपि छिन्द्यां वः प्रतिकूलवृत्तिश्चेत्स्वबाहुमपि लुनीये इत्यर्थः ॥ ६ ॥

एवं स्वस्य भक्तेषु निरतिशयप्रीतिं तद्विरोधिनिरसनं चाभिप्रेतमाविष्कृत्य"प्रशस्तिः सा राज्ञो यदपि च पुरीकोशकथनम्"इति न्यायेन स्वप्रशंसार्थं स्वभक्तान्ब्राह्मणान्प्रशंसति । यत्सेवयेत्यादिपञ्चभिः । ननु कथमात्मप्रशंसा निन्दिता भगवता क्रियते इति न शङ्कनीयमविद्यमानगुणारोपणे नात्मप्रशंसाया निन्दितत्वादियं तु प्रशंसा "स्वाभाविकी ज्ञानबलक्रिया च"इति श्रुत्युक्तविधया स्वाभाविकगुणानुकथनरूपेति न दोषः यत्सेवया येषां ब्राह्मणानां सेवया चरणपद्मयोः स्थितः पवित्रो रेणुर्यस्य तं स्वपादरेणूनां पवित्रत्वं ब्राह्मणसेवया लब्धमिति भावः अत एव सद्यः हतो निरस्तः अखिलस्य लोकस्य मलो येन तं प्रतिलब्धं प्राप्तं शीलं येन तम् एते गुणा ब्राह्मणसेवयैव स्वेन लब्धा इति भावः एवं विधं विरक्तमनादृतमपि मां श्रीर्लक्ष्मीर्न जहाति तदत्यागोऽपि ब्राह्मणसेवयैवेति हृदयं कीदृशी चासौ लक्ष्मीर्या मां न जहाति इत्युच्यते तत्राह । यस्या लक्ष्म्याः प्रेक्षालवार्थं कटाक्षलेशप्रसारणायेतरे ब्रह्मादयः नियमान्व्रतानि वहन्ति कुर्वन्ति ब्रह्मादिभिरुपास्यासौ लक्ष्मीरनादृतवन्तमपि मां माब्राह्मणसेवाप्रभावेणैव न विजहातीत्यर्थः ॥ ७ ॥

किञ्च । विताने यज्ञे श्च्योतद्घृतप्लुतं श्च्योतता क्षरता घृतेन प्लुतं विलोडितं यजमानहविः यजमानसम्बन्धि हविः तेन देवतोद्देशेन त्यक्तं चरु पुरोडाशादिरूपं हविरित्यर्थः हुतभुङ्मुखेनाग्निमुखेनादन्नश्नन्नप्यहं तथा नाद्मि नाश्नामि यद्यथा मय्यवसितैरर्पितैर्निजकर्मपाकैः स्ववर्णाश्रमोचितकर्मफलैस्तुष्टस्य निजकर्मफलानि मयि समर्प्य स्वत एव तुष्टस्येत्यर्थः अनुग्रासं प्रति कवलं चरतो भुञ्जानस्य ब्राह्मणस्य मुखतः मुखेनाद्मि ।

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेवच ।

इत्युक्तरीत्या सर्वयज्ञफलप्रदः तदेवाग्निस्तद्वायुरिति श्रुत्युक्तरीत्याग्न्याद्यन्तर्यामित्वेन यागीयं हविर्भुञ्जानो भगवान् यथा ब्राह्मणमुखेन भुञ्जानस्तुष्यति तथा न तुष्यतीत्यर्थः यजमानहविर्विनानैरित्यपि पाठः तदा निजकर्मपाकैः स्वपुण्यफलरूपैः मय्यवसितैरर्पितैर्यजमानहविर्वितानैः यजमानसम्बन्धिहविर्विस्तारैर्हुतभुङ्मुखेन तथा नाद्मि यथा श्च्योतद्घृतप्लुतमनुग्रासं चरतः स्वत एव तुष्टस्य ब्राह्मणस्य मुखेनाद्मीत्यन्वयः फलाभिसन्धिरहितयज्ञैर्भगवदाराधकनिष्कामभगवद्भक्तब्राह्मण मुखेन भगवदाराधनस्य भगवत्सन्तोषातिशयाधायकत्वमत्रोक्तं भवति ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एतदेवोपपादयति । यन्नामानीति । ततः काहानिरित्यतआह। स इति । आमयः कुष्ठलक्षणः आमरोग इत्यस्माद्धातोः स्वार्थे यच् प्रत्ययः रोगमङ्गमङ्गं यापयतीति अस्मिन्नर्थे णिच्वा ॥ ५ ॥

लोके पूज्यत्वाय हरिर्ब्राह्मणेषु परमप्रियत्वं प्रतिपादयति । यस्येत्यादिना । यस्य ममामलामृतत्वप्रदयशःश्रवणादिलक्षणोऽवगाहः स्नानरूपप्रवेशः सद्यस्तत्क्षणादेवाश्वपचं जगत्पुनाति भवद्भ्य उपलब्धा विस्तृता सुतीर्था सुपावनी कीर्तिर्यस्य स तथा सोऽहं विकुण्ठः वो युष्माकं प्रतिकूलवृत्तिं स्वबाहुमपि छिन्द्यामित्यन्वयः सर्वोत्तमोऽपि भगवान् विप्रादेः पूजनाय च "गुणलब्धिं ततो ब्रूते नित्यपूर्णगुणोऽपि सन् । ब्रूयुश्चान्ये क्वचित्तु तदुक्तेरनुसारतः । उपादत्ते वरांश्चापि लोकानां मोहनाय च"इति वचनेन कथं पूर्णगुणस्य स्वतस्तृप्तस्य हरेरन्यतो गुणलब्धिरिति चोद्यं निरस्तम् ॥ ६ ॥

विप्राणां चरणपद्मपवित्ररेणोः सेवया सेवाविडम्बनेन प्रतिलब्धशीलं विडम्बिततत्स्वभावमिदं केवलं विडम्बनार्थं मोहनार्थमुच्यत इति भावेनात्मानं विशिनष्टि । सद्य इति । नामसङ्कीर्तनादिना सद्यस्तत्क्षणादेव क्षतं नष्टमखिलं जनस्य मलमघं येन स तथा तं "मलं किट्टाघयोर्नरि"इति यादवः स्वरतत्वेन विरक्तं तदपेक्षया रहितमिव स्थितमपि मां श्रीर्न जहातीति यद्यस्मात् स्वबाहुमपि छिन्द्यामिति पूर्वेणान्वयः "अनुक्ताश्च गुणा विष्णोरुक्ता दोषा न तस्य तु । अज्ञानाद्दोषविज्ञानं गुणज्ञानं यथार्थत" इति श्रुत्या विप्रचरणसेवया हरेर्नष्टमलत्वं किं न स्यादिति चोद्यं निरस्तं संदिग्धवचनं तु मोहार्थत्वादिति ज्ञायते "विप्राणां चापि भक्तानामन्येषां च जनार्दनः । ब्रह्मणःशङ्कराद्वापि देवताभ्यस्तथैव च । आत्मनश्च श्रियश्चैव सकाशात्प्रियतामपि । पूज्यतामत्ययुक्तं च वदेत्क्वापि विमोहयन्" इत्यनेन परिहर्तव्यं स्त्रीत्वाविशेषात् मां न जहातीति किं माहात्म्यं विशिष्योच्यत इति तत्राह । यस्या इति । मदितरेषां ब्रह्मादीनां नियमस्तपोलक्षणो यस्या श्रियः प्रेक्षालवार्थं कटाक्षनिरीक्षणलेशार्थमर्हत इत्यन्वयः यद्वा मदितरेषां नियमो यस्याः प्रेक्षालवार्थमर्हते सा श्रीर्मम चरणपद्मपवित्ररेणोः सेवया प्रतिलब्धशीलं निरन्तरं मदुपासनास्वभावमिति क्रियाविशेषणं मां न जहातीति यत्तस्मादेवं विधमाहात्म्योऽहं युष्मद्विरोधकरं स्वबाहुमपि छिन्द्यामिति विप्रेभ्यः किमपि प्रयोजनमपेक्षमाणं किन्नेत्याह । सद्य इति । सद्य इत्यनेनेतरसेवकेभ्यः स्वसेवकानां कालक्षेपमन्तरेण फलप्राप्तिं ध्वनयति श्रियो मत्तः प्रयोजनसद्भावेऽपि मम तस्या अर्थ इत्याह । विरक्तमिति । वौ विशिष्टे मयि रक्तं स्वरतमित्यर्थः स्वरतस्यान्यतः प्रयोजनापेक्षां धिक् करोति अपीति ॥ ७ ॥

वदान्यान् पुरुषान् शिक्षमाण इव पुनरपि विप्रान् स्तौतीत्याह । नाहमिति । अहं वितानैरुत्तमकल्पैर्यज्ञैः करणैश्च्योतद्वल-घृतं तेनाज्येन प्लुतं स्यन्दमानं यजमानस्य हविर्हुतभुङ्मुखेनादन् तथा तृप्तिं न यामि अहं यथा मय्यवहितैरर्पितैर्निजकर्मप

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पाकैः फलैस्तुष्टस्य चरतो भुञ्जानस्य ब्राह्मणस्य मद्भक्तिलक्षणस्य विप्रस्यानुग्रासम्प्रतिकवलं मुखेनाग्नि अदनेन प्रीतो भवामीति यत्तस्मान्मेऽतिप्रियत्वाद्विप्राः पूज्या इति भावः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कथमस्मत्तो भवतस्तादृशत्वं तत्राह । यत्सेवयेति । अयमर्थः विप्राणां देवदेवानां भगवानात्मदैवतमिति वक्ष्यमाणानुसारेण येषां ब्राह्मणानां स्वभावत एव मल्लक्षणब्रह्मभावनापराणां भवतां सेवया सम्बन्धेनैव भवच्चरणपद्मे स्थितपवित्ररेणुप्रकटितताहशशक्तिर्जातः । तथा यतोऽखिलोमल आत्मारामत्वाद्भजत्स्वप्यौदासीन्यादिरूपो येन तादृशो जातः । ततश्च प्रतिलब्धं शीलं भक्तवात्सल्यादिसुस्वभावो येन तथा भूतश्च जातो योऽहं तं मां विरक्तमपि लब्ध्वा श्रीर्ब्रह्माण्डपराद्धर्याधिष्ठात्री न जहाति न त्यजत्येवेत्यर्थः । ततश्च तस्या महिमापि महानेव जातस्तत्सेवया अन्येषामपीत्याह। यस्या इति। इतरे लोकपालाद्याः। तस्मात् साध्वेवोक्तं सोऽहं भवद्भ्य इत्यादीति भावः । तत्र भवद्भिर्यत्नमस्कारादिकमपि क्रियते तदपि भवदिच्छातिक्रमभयादेव न निवार्यत इति ॥ ७ ॥

अतो ममान्तःसन्तोषोऽपि ब्राह्मणसन्तोषेणैव स्यादित्याह । नाहमिति । मय्यवहितैरतिस्नेहेन मय्येव समर्पितैः ॥ ८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रसादश्चात्र सर्वथा कर्त्तव्यः अन्यथा महदनिष्टं स्यादित्याह । यन्नामानीति । महतामपि लोकापवादाद्भयं भवति । अत एव भृत्ये कृतागसि लोकः यस्य स्वामिनो नाम गृह्णाति नामानीति बहुवचनं तस्य सर्वसंबन्धेन अधिक्षेपार्थं सर्वाण्येव नामानि गृह्णाति चकारात्तस्य गुणान् कर्माणि च निन्दार्थमुद्घाटयति किमतो यद्येवमत आह। सोऽसाधुवाद इति । स लोकैरुच्यमानः असाधुवादः असाधुत्वेन कीर्त्तनमपकीर्त्तिरिति यावत्कीर्ति हन्ति यद्विषयकः स्वयं ननु विद्यमानां कीर्त्ति प्रसिद्धां कथं हन्यादित्याशङ्क्य दृष्टान्तेन समर्थयति । हन्ति त्वचमिति । आमयो रोगः श्वित्रादिः यथा शरीरे विद्यमान एव तस्य त्वचं हन्ति स्वस्य रूपमेव प्रकटयति ॥ ५ ॥

नन्वीश्वरस्य सर्वनियन्तुः दासानुदासस्य तुच्छस्यान्तः प्रवेशाभावे को वा अपराधः लोको हि तु महाराजगृहे क्षुद्राणां प्रवेशो नास्तीति कथमपकीर्तिं वदेदित्याशङ्क्याह । यस्येति । उपजीव्यत्वाद् ब्राह्मणातिक्रमे ममापकीर्तिं वदेदेव उपजीव्यत्वं च मम कीर्तिः तदधीनेति तदेवाह । यस्य मम अमृतममलं यशः तस्य श्रवणावगाहः आ श्वपचात् श्वपचं मर्यादीकृत्य जगदेव सर्वं पुनाति एवं जगत्पावित्र्यकीर्तिमत्वात् अहं विकुण्ठः कुण्ठरहितः कास्मिन्नप्यंशे दोषरहित इत्यर्थः एतादृशोऽप्यहं पुण्योत्तमः भवद्भ्य एव उपलब्ध्वा सुतीर्थरूपा कीर्तिर्यस्य तादृशः यशः पराक्रमजन्यं कीर्तिः सदाचारजन्या मम यशः जगति पावित्र्यमपि सम्पादयति महाम्ना दुष्टरूपपापनिग्रहात् पराक्रमो हि दोषनिवारणरूपः स चेद्दोषः सहजोऽपि भवेत्तोऽपि मङ्गलाश्रयं तद् सतश्चाण्डालदेह उत्पादकोऽपि दोषो नश्यति अतो वैकुण्ठस्थानं यशः पुञ्जेन विराजमानं मम सामर्थ्यसूचकं वर्तते तथापि कीर्तिः साधवश्चेत् कीर्तयेयुः तदैव भवति तेन कीर्त्या ये मम सेवकाः सदाचाराः ते मत्परायणा भवन्ति निरन्तरं कीर्तनेन कृतार्थाश्च भवन्ति अतस्तीर्थभूतकीर्तिसम्पादकत्वेन उपजीव्या ब्राह्मणाः अतस्तेषु योऽपराधं करोति मद्बाहुरूप इन्द्रोऽपि तमपि छिन्द्यामत एव बृहस्पत्यतिक्रमे इन्द्रस्य महती पीडा सम्वृत्ता राज्यभ्रंशादिरूपा अतो युक्तमेव प्रसादनमित्यर्थः ॥ ६ ॥

कीर्तिर्लक्ष्मीस्तथा भोगस्त्रयं विप्रप्रसादनः ।
भृगोः कन्या यतो लक्ष्मीं मुखं चापि द्विजा मम ॥

तत्र कीर्तिं निरूप्य ब्राह्मणाधीनां लक्ष्मीं निरूपयति । यत्सेवयेति ।

स्त्रियः स्वभावतो दुष्टाश्चञ्चलाश्चापि निस्त्रशः ।
आचारजनिता कीर्तिर्ब्राह्मणाश्च नियामकाः ॥
ईश्वरस्य तु याः पत्न्यस्ता विरक्तेन हि स्थिराः ।
भृगोराज्ञां ततः प्राप्य स्थिरा लक्ष्मीस्ततो मयि ॥

स्वोत्कर्षं वर्णयति ब्राह्मणोत्कर्षार्थं येषां ब्राह्मणानां सेवया चरणपद्मे पवित्रो रेणुर्यस्य सेवाजनितः संस्कारश्चरणे तिष्ठतीति चरणसम्बन्धी यः कश्चन रेणुः स गङ्गावत्पवित्ररूपो भवति रेणुरिति पाठे एतावद्भिन्नं वाक्यं द्वितीयान्तपाठे तु पूर्वार्द्धविशेषणान्युद्दृश्यानि ब्राह्मणसेवासाध्यानि विरक्तिरपि तत एव विरक्तिविपिधिनियतलक्ष्मीस्थितिलक्षणो धर्मोऽपि तत एव लक्ष्म्या माहात्म्यं ब्राह्मणमाहात्म्यार्थं सद्यः क्षतमखिलानां मलं येन प्रतिलब्धं शीलं येन यस्याः लक्ष्म्याः प्रेक्षालवार्थे इतरे ब्रह्मादयः नियमान् कृच्छ्रादीन् भगवद्व्रतानि वा वहन्ति लक्ष्मीकटाक्षकामनया तपः कुर्वन्तीत्यर्थः पापनाशकत्वमपि ब्राह्मणसेवया तद्वाक्यादेव नियमात् सारस्वतकल्पे सर्वस्य ब्राह्मणाधीनत्वाच्च वस्तुतस्त्वपहतपाप्मा भगवान् अत एव लोकानामपि तत्सम्बन्धात् पापनाशः लक्ष्म्या अपि दोषनिवृत्तिः प्रभूणां भोगाभिनिविष्टानां सदाचारपरिपालनलक्षणः स्वभावः महापुरुषागमनेन महापुरुषसेवया सम्पद्यते रागनिवृत्तिरपि तदनुरोधादेव वस्तुतस्तु धर्मो भगवत्येव प्रतिष्ठित इति । निर्दुष्टत्वाच्च रागानाचाराभावः ॥ ७ ॥

ब्राह्मणाधीनं स्वस्य भोगमाह । नाहं तथाद्मीति । स्वभावतोऽहं स्वमुखेनाश्नन्नेव तिष्ठामि 'अनश्नन्नन्योऽभिचाकशीति' इति श्रुतेः गौणं च मम मुखद्वयमग्निर्ब्राह्मणाश्च कार्यरूपं तत्रापि अन्यपेक्षयापि ब्राह्मणो मम मुखं समीचीनं तदाह । नाहं तथा हुतभुङ्मुखेन अद्मि तर्हि यज्ञानां वैफल्यं स्यादित्याशङ्क्याह । अदन्नपि तथा नाद्मीति । अदनमपि वह्नेः सर्वभक्षकत्वात् काष्ठादिभक्षकत्वाच्च तस्य मुखत्वे अनिष्टं भविष्यतीति न निषिध्यते किन्तु निषेधे अन्य एव हेतुरिति वक्तुमाह। यजमानहविर्विताने श्च्योतद्घृतप्लुतमिति। यजमानपदेन सत्रनिषेधः क्रूरत्वात् बहुकर्तृकत्वाच्च "किमेते सत्रिणः" इति श्रुतेः गणान्तत्वाच्च हविर्यज्ञाः पश्वादिव्यतिरिक्ताः अतो हविःशब्देन पश्वादिकं निषिध्यते विताने विस्तारयज्ञे श्च्योतद्घृतप्लुतमिति उभयतश्च्योतता घृतेन प्लुतं हविः हुतभुङ्मुखेन अदन् अग्नौ प्रथमतः आज्यश्च्योतनं पश्चात् हविषः प्रक्षेपः पुनश्च्योतनमिति तथापि हुतं भक्षयतीति मन्त्रहोत्राद्यपेक्षित्वात् महता शब्देन हुतत्वाच्च तथा न भक्षणं ब्राह्मणमुखे तु नाऽयं दोषः ब्राह्मणो विशेषणमनुग्रासं चरत इति प्रातःकवलं भक्षयतः तत्र "पुरो

**येषां बिभर्म्यहमखण्डविकुण्ठयोगमायाविभूतिरमलाङ्घ्रिरजः किरीटैः ।**
**विप्रांस्तु को न विषहेत यदर्हणाम्भः सद्यः पुनाति सह चन्द्रललामलोकान् ॥ ९ ॥**

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

याज्याये याज्याये देवताये वषट्काराय" इति एकस्याभ्राहुतौ चतुर्थो भागः अत्र एक एव प्रतिकवलं भक्षयति सहि मुखत एव भक्षयति मुखस्यापि मुखमिति विशिष्टं यथापूर्वविशेष उक्तः तथा ब्राह्मणमपि विशिनष्टि । तुष्टस्येति । मयि तुष्टस्य विपर्ययव्यतिरेकेणापि केवलं मय्येव प्राप्ते तुष्टस्य अवहितैरहितैरपि निजकर्मपाकैस्तुष्टस्येति कर्मवशात् प्राप्तेऽपि दुःखे अनुद्विग्नस्य भगवति वा समर्पितैः कर्मसमर्पणं कृत्वा तुष्टस्येत्यर्थः ॥ ८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु परमेश्वरस्य तव कथमपराधः अपराधित्वेऽपि को दण्डयितेति किं सङ्कुचसीति तत्र मास्तु दण्डयिता दुष्कीर्त्तिस्तु स्यादेव इत्याह । यस्य स्वामिनो नामानि अमुकस्य भृत्यो ऽयं कुकर्मकृदिति तस्य स्वामिन एव कीर्त्तिं हन्ति । आमयः श्वित्रं त्वचं हन्ति अथ च यस्य त्वक् तस्यैव कुष्ठी पुमानयमिति निन्दामुत्पादयतीत्यर्थः ॥ ५ ॥

नन्वस्मदपराधात्तव दुष्कीर्त्तिरस्मत्प्रसादनाच्च तव कीर्त्तिरिति त्वदसृग्जा अस्मद्विधजीवा एव त्वत्तः परमेश्वरादपि तर्ह्यधिका अभूमेति चेत् तत्र कः सन्देह इत्याह । यस्येति । सोऽहं विकुण्ठः भवद्भ्यो हेतुभूतेभ्य उपलब्धा प्राप्ता सुतीर्थरूपा कीर्त्तिर्येन सः । स्वबाहुमपीति । ममतास्पदयोर्जयविजययोः का वार्त्ताऽहन्तास्पदं स्वाङ्गमपि छिन्द्यां तदसमर्थो युष्मासु सापराध एवास्मीति भावः ॥ ६ ॥

नन्वस्माकं वैकुण्ठागमनस्येदमेव फलं वृत्तं यद्भवानस्मदभीष्टदैवतमप्यस्मान् प्रत्येवं ब्रूते इति तत्र किं विपरीतं ब्रूषे इत्याह । यत् सेवया मम चरणपद्मे अभूतां तत्रत्या रेणवोऽपि जगत् पवित्रयन्ति । अखिला अपि कामादयो मलाः मत्तो हेतोरस्मन्येषामपि क्षताः । सौशील्यानि लब्धानि लक्ष्मीरपारसम्पदपि मां न जहाति यस्या लक्ष्म्या अवलोकलेशार्थमपि इतरे ब्रह्माद्या अपि नियमांस्तप आदीन् भजन्तीत्येतत् सर्वं येषामेव सेवया तेषां वः प्रतिकूलवृत्तिं स्वबाहुमपि छिन्द्यामिति पूर्वेणैवान्वयः ॥ ७ ॥

एवमहं ब्राह्मणानेव सेवे मदुद्देश्या च ये ब्राह्मणान् सेवमाना सन्त्येव एव मत्प्रियका यतो ब्राह्मणमुखेनैवाहं भुञ्जे इत्याह । नाहमिति । यजमानस्य हविश्चरुपुरोडाशादि हुतभुगग्निस्तेन मुखेन अदन् अपि नाश्नामि तथा यथा ब्राह्मणस्य मुखेन मुखेनानुग्रासं प्रतिग्रासमेव इच्योतद्भिर्घृतैः प्लुतं व्याप्तमित्यत्राप्यनुवर्त्तनीयं चरतो भुञ्जानस्य मयि समर्पितैः कर्मफलैस्तुष्टस्येत्यनेन तथा विप्राणां देवदेवानां भगवानात्मदैवतमित्याग्नेयवाक्येन ब्राह्मणस्य भक्तिराहित्ये सत्यपूज्यत्वमागच्छत् "श्वपाकमिव नेक्षेत लोके विप्रमवैष्णवम्"इत्यादिवचनविरोधः परिहृतः अनेनायं वैष्णवप्रैयेमिति तात्पर्यं द्रष्टव्यः । एवं भक्तिमिश्रज्ञानमेवानेन ब्राह्मणो भवति यथा वसिष्ठादिः भक्तेः कैवल्ये प्राधान्ये सति जात्या ब्राह्मणोऽपि वैष्णव एवोच्यते । यथा श्रीनारदादिरिति विवेचनीयम् ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यद्यस्य स्वामिनः तत्तस्य स्वामिन एव ॥ ५ ॥

यस्य मम अमृतं मुक्तिप्रदं यदमलं शुद्धं यशः अवगणाम्भावगाहः अहणं यस्य तत् आश्वपचाज्जगत्पुनाति सोऽहं भवद्भ्यो हेतुभूतेभ्यो लब्धा सुतीर्थभूता कीर्त्तिर्येन स तथा भूतोऽहं वः प्रतिकूलवृत्तिं स्वबाहुमपि छिन्द्याम् ॥ ६ ॥

यत् येषां सेवया चरणपद्मयोः स्थितः पवित्ररेणुर्यस्यास्ततोऽखिलस्य लोकस्य मलो येन तम् तेषां वः प्रतिकूलवृत्तिं छिन्द्यामिति पूर्वेणैव सम्बन्धः ॥ ७ ॥

यजमानस्य हविः चरुपुरोडाशादि श्रोतता क्षरता घृतेन प्लुतं मिश्रितम् । विताने यज्ञे । नाश्नि नाश्नामि यथा निजकर्मणां पाकैः फलैः मयि । अवहितैः अर्पितैः तुष्टस्य चरतो भुञ्जानस्य मुखतो ऽनुग्रासं प्रतिग्रासम् अश्नामि ॥ ८ ॥

---

### भाषाटीका ।

भृत्यके अपराध से जिसके नाम को मनुष्य लेते हैं उसका वह अपवाद ही उसकी कीर्ति को नाश करदेता है जैसे कुष्ठ रोग त्वचा को विगाड़ता है ॥ ५ ॥

हमारा नाम विकुण्ठ है हमारे अमृत सरीके निर्मल यश रूपी जलमे प्रवेश करके चण्डाल पर्यन्त सब पवित्र हो जाते हैं यह यश हमारा आप लोगों से ही हुआ है तब जो आपका अपमान करेगा वह हमारा बाहु सरीका लोक पाल होतो भी नाश करदेंगे और की क्या बात है ॥ ६ ॥

जिन आप लोगों की सेवा करने से हमारा चरणकमल रेणु पवित्र होगया है तिस से हम सब जगत् के पाप को नाश करते हैं तैसेई इस प्रकार के स्वभाव को प्राप्त भये हैं जो ब्रह्मादिक जिस लक्ष्मी के कटाक्ष की इच्छा से नियम से तपस्या करते हैं सो लक्ष्मी मैं विरक्त हूं तौ भी मेरे कूं नहीं छोड़ती है सो ब्राह्मण हमारे बड़े प्रिय हैं ॥ ७ ॥

हे ब्राह्मणो हो मैं यज्ञों में यजमान के दिये हुये हवि को अग्नि के द्वारा ग्रहणकरता हूं सो ठीक है परन्तु मेरे में कर्मों को अर्पण करनेवाला निष्काम ज्ञानी ब्राह्मण के मुख में घृत युक्त भोजन के करने से जैसा सन्तुष्ट होता हूं तैसा यज्ञ में नहीं होता हूं ॥ ८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च येषाममलमङ्घ्रिरजोऽहं किरीटैर्बिभर्मि तान्विप्रानपकुर्वतोऽपि कोऽन्यो न विषहेत अखण्डानवच्छिन्ना विकुण्ठाऽप्रतिहता च योगमाया विलासभूता विभूतिर्यस्य सः तथा यस्य ममार्हणाम्भः पादोदकञ्चन्द्रललामेनेश्वरेण सहितान्लोका-

ये मे तनूर्द्विजवरान् दुहतीर्मदीया भूतान्यलब्धशरणानि च भेदबुद्ध्या ।
द्रक्ष्यन्त्यघक्षतदृशो ह्यहिमन्यवस्तान् गृध्रा रुषा मम कुषन्त्यधिदण्डनेतुः ॥ १० ॥
ये ब्राह्मणान् मयि धिया क्षिपतोऽर्चयन्तस्तुष्यद्धृदः स्मितसुधोक्षितपद्मवक्त्राः ।
वाण्यानुरागकलयाऽऽत्मजवद्गृणन्तः सम्बोधयन्त्यहमिवाहमुपाहृतस्तैः[1] ॥ ११ ॥
तन्मे स्वभर्तुरवसायमलक्षमाणौ युष्मद्व्यतिक्रमगतिं प्रतिपद्य सद्यः ।
भूयो ममान्तिकमितां तदनुग्रहो मे यत्कल्पतामचिरतो भृतयोर्विवासः ॥ १२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

न्सद्यः पुनाति एवं परमेश्वरः परमपावनोऽपि सन्नहं बिभर्मीति ॥ ९ ॥

किञ्च मे तनूरधिष्ठानानि कास्ताः द्विजवरान्दुहतीर्दोग्ध्रीः गा इत्यर्थः दुहितॄरिति पाठेऽपि गा एव विष्णुरूपात्सूर्यादुत्पन्नत्वात् सूर्यसुताश्च गाव इति वचनात् अलब्धशरणानि रक्षकहीनानि भेदबुद्ध्या मदधिष्ठानं न भवन्तीति पृथग्दृष्ट्या ये द्रक्ष्यन्ति अघेन क्षता नष्टा दृष्टिर्येषां तान् मदीयोऽधिकृतो दण्डनेतायो यमस्तस्य गृध्राकारा ये दूताः अहिवन्मन्युर्येषाम् रुषा क्रोधेन कुषन्ति चुञ्चुभिश्छिदन्ति ॥ १० ॥

एवं भूतास्तु मां वशी कुर्वन्तीत्याह । ये क्षिपतः परुषम्भाषमाणानपि ब्राह्मणान्सम्बोधयन्ति मयि या धीस्तया वासुदेवदृष्ट्याऽर्चयन्तः सन्तः तुष्यद्धृदः प्रीयमाणचित्ताः स्मितमेव सुधा तयोक्षितं सिक्तं पद्मतुल्यं वक्त्रं येषाम् अनुरागकलया प्रेमशोभया वाचा गृणन्तः स्तुवन्तः यथा कुपितमात्मजं स्निग्धः पिता सत्पुत्रोवा पितरम् अहमिव भृगुं युष्मान्वा तैरहमुपाहृतो वशीकृतः ॥ ११ ॥

तत्तस्मान्मेऽवसायमभिप्रायमलक्षमाणावजानन्तौ युष्मदपराधोचितां गतिं सद्यः प्राप्य मत्समीपमितां प्राप्नुताम् तदिति स मेऽनुग्रहः तमेवाऽऽह यत् भृतयोर्विवासोऽचिरतः शीघ्रं कल्पतां सम्पद्यतां समाप्यतामित्यर्थः ॥ १२ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिका टिप्पणी ।

अनवच्छिन्ना देशपरिच्छेदशून्या अप्रतिहता कालपरिच्छेदशून्या योगमायायाश्चिच्छक्तेः विलासभूता वृत्तिरूपा विभूतिर्वैकुण्ठादित्रिपाद्विभूतिर्यस्य सः ॥ ९ ॥

रक्षकहीनानि मदेकशरणत्वात् "नैते यदोपसदपुर्निखिलात्मकत्वाच्च अखिलामरमयो हरिराविरासीत्" इत्यादिवद्रक्षकान्तरापेक्षारहितानि अघेन मदधिष्ठानद्रोहरूपेण पापेन ॥ १० ॥

एवं भूताः वक्ष्यमाणविप्रभक्तिविशिष्टाः उक्षितं सिक्तम् ॥ ११ ॥ प्राप्नुतामागच्छताम् दुःखरूपस्य विवासस्य सम्प्रत्त्विहि तत्समाप्तिरूपा अतएव समाप्यतामिति व्याख्यातम् ॥ १२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च येषां ब्राह्मणानाममलं पवित्रं यदङ्घ्रिरजः पादरजस्तदहं किरीटैर्बिभर्मि तान् विप्रान्को न विषहेत तिरस्कुर्वतोऽपि ब्रह्मणान्कोनक्षाम्येत कथम्भूतोऽहमखण्डानन्ता विकुण्ठाप्रतिहतिरहिता योगमाया विभूतिः स्वापृथक् सिद्धत्वेन युक्तमानाश्चर्यशक्तिर्विभूति कार्यात्मका विभवा यस्य सः यस्य ममार्हणाम्भः तीर्थोदकरूपा गङ्गा सह चन्द्रललामलोकान् चन्द्रो ललाम चिन्हं यस्य स महादेवस्तत्सहितांल्लोकान् पुनाति तथाच वक्ष्यते ।

यच्छौचनिःसृतसरित्प्रवरोदकेन तीर्थेन
मूर्ध्न्यधिकृतेनशिवः शिवोऽभूदित्ये

वम् । परमपावनोऽप्यहन्तत्पादरजो बिभर्मीति भावः ॥ ९ ॥

एवं ब्राह्मणान्प्रस्तुत्यअथ तानेव स्तुवन् तेषु कृतापराधिनो मन्निग्रहविषयाः कृतोपचारास्तु मदनुग्रहविषया इत्याह । द्वाभ्याम् ये म इति । मे तनूः शरीरभूतान् द्विजवरान् मदीया मच्छरीरभूताः दुहतीः गाश्च प्रशंसाप्रसङ्गाद्दुहत्यायुक्तिः अलब्धशरणानि रक्षकहीनानि भूतानि मच्छरीराणि भूतान्तराणि च ये पुरुषा अघं पापं तेन क्षताः अनुविद्धाः दृशो नेत्राणि येषां तेऽत एवाहिमन्यवः अहेः सर्पस्येव मन्युः क्रोधो येषां तथाभूताः सन्तो बुद्ध्या मदात्मत्वविरुद्धबुद्ध्या द्रक्ष्यन्ति तान्मम मन्नियाम्यस्य दण्डनेतुः यमस्याधीनाः गृध्रा अयोमुखाः गृध्राः कुषन्ति तेषां नेत्राणि तुदन्तीत्यर्थः ॥ १० ॥

ये पुनः क्षिपतः तिरस्कुर्वतोऽपि ब्राह्मणानपि धिया मदात्मकबुद्ध्याऽर्चयन्तः पूजयन्तः तुष्यद्धृदः सन्तुष्टचित्ताः स्मितं हासः तदेव सुधा तयोक्षितं सिक्तं पद्ममिव मुखं येषां ते अनुरागकलया ऽनुरागेण कलया कलितया युक्तया वाचा गिरा आत्मजवत्पुत्रवत्पुत्रमिव भणन्तो भाषन्तः सम्बोधयन्ति तैरहमिव उपाकृतः उपकारितः ते मदनुग्रहविषया इति भावः ॥ ११ ॥

एवं ब्राह्मणान्प्रशस्याथ मुनिविहितं दण्डं स्वयमप्यनुमनुते । तन्म इति । तस्मात्स्वभर्तुः स्वयोरात्मनोर्भर्तुर्ममावसायमुक्तविधं निश्चयमलक्षमाणावजानन्तौ युष्मासु यो व्यतिक्रमोऽपराधस्तस्य गतिं फलं प्रतिपद्य सद्य आशु भूयः पुनः ममान्तिकं समीपमितां प्राप्नुतां यद्यस्मद्धृतो दण्ड एव भवतामनुग्रहो आशुकाभृत्यानुग्रहकारितेत्यत्राह । भृतयोर्भृत्ययोरचिरत यत् विवासः युष्मद्व्यतिक्रमगतिसमाप्तिः कल्पतां कल्पत इति यदेव मे ऽनुग्रहः महदतिक्रमफलमवाप्य पुनराशु मत्समीपागममेव मदनुग्रह इत्यर्थः ॥ १२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इदानीं स्पष्टमसुरजनमोहकवचनमिदमिति प्रकटयन् विप्रान् स्तौतीत्याह । येषामिति । अखण्डा पूर्णा विकुण्ठा विगतमोहा

( १ ) उपाकृत इति श्रीवीरराघवः ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

च योगमाया स्वरूपेच्छा तथा विभूतिर्विविधभवनम् आदित्यानामहं विष्णुरित्यादिस्वरूपं यस्य स तथोक्तः अहं किरीटैर्येषां विप्राणाममलाङ्घ्रिरजो विभर्मि कोऽनु पुमान् तान् विप्रान् न विषहेत सोढा न भवेदित्यन्वयः एकस्मिन्नवतारेऽपि विप्रावज्ञानं नास्तीति द्योतनाय किरीटैरिति वहुवचनं केवलं विप्रवहुमानार्थं तदङ्घ्रिरजोभरणमित्याशयेनात्मानं विशिनष्टि । यदर्हणेति । यदर्हणाम्भो यस्य मम ब्रह्मणा कृतपादप्रक्षालनोदकं गङ्गाख्यमम्भः चन्द्रललामेन चन्द्रशेखरेण सह वर्तमानान् लोकान् जनान् पुनाति ॥ ९ ॥

इदमपि महिमान्तरकथनं विप्रद्वेषोऽपि मद्द्वेष एवाधःपातहेतुत्वादित्याह । ये म इतीमे पुरुषा मे तनूः प्रतिमास्थानीयान् मदीयान् मद्भक्तान् द्विजवरान् तथा "शरणं ग्रहरक्षित्रोः" इत्यभिधानादलब्धशरणानि रक्षकरहितानि भूतानि भेदबुद्ध्या वैलक्षण्यबुद्ध्या दुद्रुहुः पीडयाञ्चक्रुः ये चाघेन क्षतदृशोऽन्धीकृतदृष्टयोऽभितो मन्युर्येषां ते द्रक्ष्यन्ति तान् ममाधिनेतुर्दण्डनायकस्य यमस्य गृध्राः श्येनाः कृषन्ति नेत्राण्युत्पाट्य भक्षयन्तीत्यन्वयः ॥ १० ॥

इदानीं मद्भक्तब्राह्मणसत्कारपरिपाकं वच्मीत्याह । ये ब्राह्मणानिति । तुष्यद्धृदः हृष्यन्मनसः स्मिताख्यसुधया उक्षितमासिक्तं पद्मवक्त्रं येषां ते तथा अनुरागकलया स्नेहवद्धया कलवंधन इति धातोः वाण्या आत्मजवत् गृणन्तः प्रशंसन्तः अहमिव यथाहं विप्रान्संवोधयामि तथा संवोधयन्ति ये मद्भक्ता रुषा क्षिपतो भर्त्सयतः ब्राह्मणानर्चयन्ति कथं मयि धिया हरिरेषु विशेषतः सन्निहित इति बुद्ध्याहं तैर्विप्रार्चकैरुपाकृतो वशीकृत इत्यन्वयः ॥११॥

नन्वेवमुभयेषां युष्माकं शापोऽभिमतश्चेत्कदापि शापमोक्षो नेत्यतस्तन्मोक्षमाह । तन्मे स्वभर्तुरिति । विप्राणां ममात्यन्तं प्रियत्वात्तद्विरोधिनो मद्विरोधिन एवेति यस्मात्तथापि युष्मद्व्यतिक्रमगतिं युष्मदपराधफलमसुरत्वादिलक्षणां प्रतिपद्य सद्यो भूयो ममान्तिकमितामागच्छतामित्यन्वयः भगवतोक्तमिदं तात्कालिकं नतु तत्त्वमित्यत्राह । मे स्वभर्तुरिति । स्वभर्तुर्मे अवसायं विप्रानुरागलक्षणं निश्चयमलक्षमाणौ विप्रार्चनादिलक्षणैरप्यजानन्तौ अज्ञानं च ब्रह्मशापनिमित्तं तयोरिति ध्वनयति नहि वैकुण्ठे अज्ञानादिसंभवोऽस्ति ननु ममान्तिकमितामित्यनेन शापमोक्षलक्षणः कोऽनुग्रहविशेषो ध्वनितः स्यादिति तत्राह । तदनुग्रह इति । इतयोर्युष्मच्छापेन सुरेतरगतिं गमितयोरेतयोर्विन्यासः वैकुण्ठादसुरादिव्यवस्थापनं कालतो वहुना कालेनाप्यविरमोऽवसानरहितमिति यत्तस्मात् स मेऽनुग्रहः पुनर्मम लोकप्राप्तिलक्षणः शापमोक्ष इत्यर्थः मदनुग्रहाभावे वलवता ब्राह्मणशापेन कदाप्यसुरयोनिमोक्षो न स्यादिति भावः हिशब्देन सनकादीनामपि शापमोक्षानुमतिरस्तीति द्योतयति यतः स्वामिनोऽभिमतं भृत्यैरप्यनुमन्तव्यम् ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यस्मादेवं तस्मात् येषामिति ॥ ९ ॥

ततो मदनुशरणा विप्रादिषु तथा वुद्धिमेव कुर्वीरन् न चेद्दण्डं प्राप्स्यन्तीत्याह । ये मे इति । तनुस्तन्निर्विशेषणत्वान्ममाहङ्कारास्पदानि । मदीया ममतास्पदानि । अलब्धशरणाः कृपास्पदानि । भेदबुद्ध्या तत्तदितरत्वबुद्ध्या ॥ १० ॥

पुनः प्राकृतानां ब्राह्मणानां भक्तिं विशिष्याह । य इति । मयि स्थिता या धीर्ब्राह्मणभक्तिलक्षणा तया तदनुसारिण्येवेत्यर्थः॥११॥

भगवत्कृपया तावदेव तौ ममान्तिकमिताम् आगच्छतां किन्तु एतयोर्भृत्ययोर्विवासः शीघ्रं कल्प्यतां भवत्विति यत् तन्मे मह्यं भवतामनुग्रहरूपमेव दण्डं विना तु मम सुखं न स्यादिति भावः॥१२॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं स्वोपकारेण ब्राह्मणान् स्तुत्वा स्वरूपतोऽपि ते महान्त इत्याह । येषामिति । महत्त्वं हि महतामनुवृत्त्या महत्त्वं द्विविधं लौकिकमलौकिकं च लौकिकमुत्तरोत्तरभावापन्नं भगवति विश्रान्तं सर्वलोकप्रसिद्धो हि भगवान् पुरुषोत्तमः वेदप्रसिद्धोऽपि तेन ज्ञापनं ब्राह्मणाधीनमिति अलौकिकज्ञानं येषां वर्तत इति ते भगवज्ज्ञापका इति ।

ये यथा मां प्रपद्यन्त इति

न्यायेन तदनुवृत्तिमपि भगवान् करोति तेषामवयवत्वात् तदुत्कर्षो न स्वापकर्षं करोति अधिकारोऽपि स्वेनैव दत्त इति स्वधर्म एव तत्र विद्यत इति स्वोत्कर्ष एव यथाच ते अलौकिकप्रकारेण भगवन्तमुत्कृष्टमाहुः तथा भगवानपि लोके तेषामुत्कर्षमाह येषामङ्घ्रिरजः किरीटैरहं विभर्मि अग्रे ब्राह्मणवृन्दं गच्छत् रज उत्थापयति तद्रजः किरीटेषु सम्बद्धं भवति पावित्र्यं नामैकं भगवत्स्वरूपं सर्वपदार्थेषु सहजं तिष्ठति संस्कारैराधीयते च तत्र ब्राह्मणेषु पावित्र्यं पादयोः सहजम् अतस्तेषां चरणरजः अमलं भवति किरीटैरिति सर्वदाधारणं सूचितमवतारभेदैर्मूलरूपेण वा तथा करोतीति वा अखण्डा विकुण्ठा योगमाया विभूतिश्च यस्य माययोत्पत्तिस्थितिप्रलयाः विभूत्या सर्वसौख्यमेवं सति न कस्याप्यपेक्षा सर्वैरपेक्षित एव भवति नच तयोर्नित्यशक्त्योर्विच्छेदो वा कार्याक्षमता वा सम्भवति येषामिति नान्यद्विप्रत्वाशेषां गुणान्तरमपेक्षत इति ज्ञापितं विप्रपदेन योगोऽपि सूचितः विशेषेण पूरणं च तेषां सहजो धर्मः ज्ञानभक्तिव्यतिरेकेण चिदानन्दौ न पूरितौ भवत इति ज्ञानभक्तिमन्त एव योगेन विप्रा इति निरूपिते तदुभयसद्भावेन नान्यदपेक्षितामिति संस्कारस्त्वानुषाङ्गिकः अनेनैवोपकारेण भगवता तथा क्रियते तुशब्देन योगरहिता व्यावर्त्यन्ते एतादृशान् ब्राह्मणान् को न विशेषेण सहेत को वा तद्भारं नाङ्गीकुर्यात् भारस्त्वतिक्रमादिरूप एव भवति अतस्त्वन्दलभ्यत्वात् विप्रापराध इति नोक्तं येषामतिक्रमो मया सह्यते तत्र कथमन्यो न सहेत इत्यर्थः ननु मायाविभूत्योर्विद्यमानत्वेऽपि पावित्र्यस्याभावात् भगवान्विप्रापराधं सहतु नाम कथमन्येन सोढव्य इत्याशङ्क्याह । यदर्हणाम्भ इति । यस्य ममार्हणाम्भश्चरणोदकं गङ्गा सहचन्द्रललामलोकान् महादेवसहितान् त्रीनपि लोकान्पुनाति धर्मः कृतः कर्त्तारमेव पुनाति संबद्धं वा ननु महत्कालपर्यन्तं परंपरासंवद्धान् दूरस्थान् वहून् सर्वतामासभेदसहितान् यत् पुनाति तदर्हणसम्बन्धेनैवेति ज्ञापयति । अर्हणाम्भ इति । "सद्य इति । सद्यः पुनाति गाङ्गेयम्" इति वाक्यात् भगवतः कालनियामकत्वात् न तत्सम्बन्धिनां कालापेक्षा चन्द्रललामेति सर्वदाहकत्वेन तामसी शक्तिः स्वीकृतेति तत्तापव्यावृत्त्यर्थम् अमृतमयश्चन्द्रः स्थापितः क्रियाजनितो दोषस्तु न तेन निवृत्त इति गङ्गा स्थापिता अन्यथा तावान् दोषो नान्येन निवर्त्तेत इति सूचयति ॥ ९ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं ब्राह्मणातिक्रमः सोढव्य इत्युक्त्वा ये न सहन्ते तेषां विपक्षे बाधकमाह। ये मे तनूरिति। ये द्विजवरादीन् भेदबुद्ध्या द्रक्ष्यन्ति तान् यमलोके गृध्राः कुषन्तीति सम्बन्धः "मृत्योः स मृत्युमाप्नोति" इति श्रुत्या क्वचिदपि भेददर्शने संसारो भवति एतादृशेषु भेददर्शने यमयातना भवतीत्यधिकमुच्यते "यदा ह्येवैष" इति श्रुतेः अत्र भेदो भगवद्भेदः स्वभेदस्य पूर्वसिद्धत्वात् ननु विद्यमाने भेदे लोकप्रसिद्धे द्रष्टृणां को दोष इत्याशङ्क्याह। मे तनूरिति। यदि योगी सहस्रं शरीराणि गृह्णाति तथापि स एक एव जीवस्यैकत्वात् तथानन्तमूर्तिः तत्रापि यज्ञरूप आधिभौतिकं शरीरद्वयं गृह्णाति हविर्मन्त्रात्मकत्वात् यागस्य तत्र मन्त्रा ब्राह्मणेषु प्रतिष्ठिताः हविर्धेनुषु ते चेद्ब्राह्मणा गावश्चान्ये भवेयुः तदा तेभ्यः उद्गतेषु मन्त्रत्वं हविष्ट्वं च न स्यात् भगवद्व्यतिरिक्तास्ते लौकिका एव भवन्तीति अत एवान्यैरुच्चारिता मन्त्रा एव न भवन्ति लौकिकवाण्योच्चारितत्वात् अतस्ते ममैव तन्वस्तान्निर्दिशति। द्विजवरान् दुहतीरिति। यज्ञोपयोगित्वात् नात्र विप्रपदं द्विजत्वमेवात्रोपयोगि जन्मोत्कर्षार्थं द्विजपदं कर्मोत्कर्षार्थं वरपदञ्च दुहतीरिति कर्त्तरि दुहधातोरिक्प्रत्ययः सहजदोहार्थः तास्वेव हविष उत्पत्तेः अग्निहोत्रार्थमेव च वत्सोत्पत्तेः मदीया इति गवामधिको गुणः मित्रत्वाद्भगवतोऽपि सर्वसखित्वात् तद्धर्मप्रतिष्ठया तदीयत्वमथवा मदीया इति भिन्न एव निर्देशः भक्तिमार्गानुसारेण भगवद्भोगौपयिकहविर्दोहकर्तृत्वम्। भूतान्यलब्धशरणानीति। रक्षकत्वेन ज्ञानमार्गानुसारेण धर्मो निरूपितः तत्रापि रक्षकत्वं भगवद्भिन्नमिति भेदाभाव उचित एव एवं मार्गत्रयोपयोगिपदार्थान् ये मत्तो भिन्नान् जानन्ति तेषां विशेषभयं ननु भगवत्त्वाज्ञानेऽपि वस्तुतस्तेषां भगवत्त्वादुद्दर्शने कथं नरकपातस्तत्राह। अघक्षतदृश इति। अघेन भेदजनितेन क्षता दृष्टिर्येषां ब्रह्मवध इव भेदोऽप्यधर्महेतुः अयं वधो ज्ञानमयः तथापि क्रियामयाद्विशिष्टः मूलविषयत्वात् दण्डोऽपि चक्षुष एव ननु व्यवहारे भेदोऽपेक्षित इति कथं तस्य दोषजनकत्वं तत्राह। अहिमन्यव इति। न व्यवहारमात्रं निषिध्यते किं त्वन्तःकरणारूढदोषत्वेन सर्पैः स्वल्पोऽप्यपराधो न विस्मर्यत इति वधान्तं च प्रयत्नं कुर्वन्ति तथा हृदये न चेद्दर्शनं तदा दण्ड इत्यर्थः गृध्रमुखे प्रविष्टं च चक्षुर्न कदाचिदप्यावृत्तं भवति इति निर्मोक्षः सूचितः रुषेति चक्षुषो विद्यमानत्वादेव तैर्भगवदपराधः कृत इति चक्षुषि रोषः मम रुषा सहिता वा गृध्राः कुषन्तीति तैर्जन्यते नाश एव नतूपघातमात्रमधिकदण्डान् नयतीत्यधिदण्डनेता यमः अल्पदण्डस्तु राजव्याध्यादिभिरेव क्रियत इति निरूपयति यमः॥१०॥

एवं विपरीते बाधकमुक्त्वा सन्माननायां प्रसादमाह। ये ब्रह्मणानिति। क्षिपतोऽपि ब्राह्मणान् अर्चयन्ति तैरहमेवोपाहृतः सर्वपुरुषार्थरूपोऽहं तत्सामीप्ये चेत् स्थितः सिद्धा एव सर्वेषु पुरुषार्थास्तेषु बन्धुत्वेनापकारभयात् लोकापकीर्त्तिभयाद्वा दम्भेन वा यदार्चयन्ति तदा नेदं फलं किन्तु मयि धिया भगवद्विषयिकबुद्ध्या मत्तनूरिति अथवा मयि या बुद्धिरस्ति ब्राह्मणाः सर्वथा उपास्या इति तादृशबुद्ध्या क्षिपतः गालीः प्रयच्छतः अर्चयन्तीति विरोधप्रदर्शनं न नायमर्थः क्वचित्सेत्स्यतीति भगवदुपाहृतिर्नातिप्रसक्तेति सूचितं तत्रापि तुष्यद्धृदः ते चेत् क्रोधमन्तरेऽवस्थापयेयुः तदा महदनिष्टं स्यादिति तेषां क्रोधस्य बहिर्निर्गमने महानुपकारो जात इति ज्ञानं हृदयतोषे हेतुः इदमतिमाहात्म्यज्ञाने भवति किञ्च स्मितेन सुधारूपेण उक्षितं पद्मसदृशं वक्त्रं येषां माहात्म्यज्ञाने विद्यमानेऽपि स्नेहे नैव दोषमहत्वं मन्दहासस्त्वन्तःक्षोभाद्यजननज्ञापकः तद्गतस्नेहरसः तन्निष्पीडनेन प्रकटो भवतीति बालवत्तेषामाक्रोशः परमसन्तोषहेतुर्भवतीति स्मितस्य सुधात्वं तस्यामृतत्वं स्वकार्यं जनयतीति तदुक्षितवक्त्रत्वमुक्तं तथा सति वक्त्रमति विकासितं भवतीति वर्णस्पर्शयोः धर्मजनितयोराविर्भाव इति ज्ञापनार्थं पद्मपदं एवमन्तःकरणकायिकसन्तोषमुक्त्वा वाचनिकसन्तोषमाह। वाण्येति। वाण्या अनुरागाः कला भवन्ति चन्द्रमस इव वृद्धिहेतवः एवं कायवाङ्मनःप्रीतिः पुत्र एव भवतीति दृष्टान्तेन तथा कर्तृणां ब्रह्मभावो निरूपितः अर्चनं कायिकद्रव्यैः गृणन्तं वाचा सम्बोधयन्तीति व्यवहारार्थं सम्यक् बोधार्थं वा आक्रोशेऽपि न तेषु वैषम्यं कदाचिदपीति सूचितं तादृशानां दृष्टान्तोऽहमेव ज्ञापनार्थमुक्तं ननु स्वोत्कर्षार्थं यथा भृग्वतिक्रमे मया कृतमित्यर्थः अहमुपाहृत इति फलवाक्यं भिन्नमतो न पौनरुक्त्यं तेषामुत्कर्षार्थमन्ते कीर्त्तनम्॥११॥

एतन्निरूपणस्य प्रकृतोपयोगमाह। तन्मे स्वभर्तुरिति। यत एवं ब्राह्मणानां स्वरूपं मया च तथा मन्यते तदज्ञानात् तौ युष्मद्व्यतिक्रमगतिं प्रतिपद्य भूयो ममान्तिकमितामथं ममानुग्रहो भक्तरक्षार्थः अत्र हेतुर्नास्तीति ममैवायमनुग्रह इत्युक्त अधिकोऽप्यनुग्रहः कर्त्तव्य इति चेत्तत्राह। यत्कल्पतामिति। यस्मादनुग्रहात्कृतयोः भृत्ययोर्भक्त्या पूरितयोर्वा विवासः परदेशवासः अचिरतः कल्पतां शीघ्रमेव परिसमाप्यतां जन्ममरणक्लेशाभावात् शापो विवासत्वेनैवोक्तः ममान्तिकमिति पुनर्दासभावं प्राप्नुताम्॥

जीवानां तु त्रयो भावा उत्कर्षोत्कर्षहेतवः।
जीवाः स्वभावतो दासा देहभावोऽधमस्ततः॥
ब्रह्मभावः स्वतः श्रेष्ठास्ते स्वभावा इह स्थिताः।
देहभावस्तु तच्छापः स्वभावोऽनुग्रहः स्मृतः॥
सायुज्ये ब्रह्मभावः स्यान्नान्यथेति विनिश्चयः।
सायुज्ययोग्यताकाले ब्रह्मभावो निरूप्यते॥
भगवानेव हि ब्रह्म नान्यो भवितु मर्हति।
एकं च ब्रह्म सर्वेषां तथात्वे तु विरुध्यते॥
भगवत्करणाल्लेके भावना दुर्बला मता।
दासभावादतो नान्यत्काम्यं भवति कस्य चित्॥
अतो हि भगवान् भर्त्ता जीवानामिति निश्चयः।
अभिप्रायस्तु तस्यापि ब्रह्मभावमभीप्सुभिः॥
ब्राह्मणातिक्रमो नैव कर्त्तव्य इति निश्चयः।
अतो दण्डस्तु सोढव्यो नोचेदग्रे फलं न तत्॥

एवं भगवता शापः स्थिरीकृतः॥ १२॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

किञ्च। ब्राह्मणकृतातिक्रमोऽपि सोढव्य एव न तु प्रतिकर्त्तव्य इत्याह। येषामिति। विप्रानपकुर्वतोऽपि को न सहेत अपि सर्वं एव तत्र कारणजिज्ञासायां स्वकिरीटं तर्जन्या दर्शयन् येषामङ्घ्रिरजः किरीटैरहं बिभर्मि यत्कारणप्रसादात् अ[illegible] णयोगमायासम्पत्तिरहमभूवं तथा यस्य मम अर्हणाम्भः[illegible] दकं चन्द्रललामेन महादेवेन सहितान् लोकान् सद्यः पुना[illegible]

ब्रह्मोवाच ॥

अथ तस्योशतीं देवीमृषिकुल्यां सरस्वतीम् ।
नास्वाद्यमन्युदष्टानां तेषामात्माप्यतृप्यत ॥ १३ ॥
सतीं व्यादाय शृण्वन्तो लघ्वीं गुर्वर्थगह्वराम् ।
विगाह्यागाधगम्भीरां न विदुस्तच्चिकीर्षितम् ॥ १४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तेन यो मच्चरणरजो मूर्द्धि धत्ते तस्यैव चरणामृतं ग्राह्यं नान्यस्येति ज्ञेयम् ॥ ९ ॥

ब्राह्मणकृतातिक्रममसहिष्णूनां का वार्त्ता ब्राह्मणेषु मद्बुद्धि-भेददर्शिन एव नारकिण इत्याह । ये जना मे तनूर्मम देहरूपान् दुहतीर्दोग्ध्रीर्गा इत्यर्थः । दुहितृरिति पाठे गा एव विष्णुरूपात् सुर्यादुत्पन्नत्वात् "सुर्यसुताश्च गाव" इति वचनात् । अलब्ध-शरणानि अनाथानि भेदबुद्ध्या मत्तनवो न भवन्तीति पृथग्दृ-ष्ट्या ये द्रक्ष्यन्ति तान् मदीयोऽधिकृतो दण्डनेता यो यमस्तस्य गृध्राकारा दूता अहिमन्यवः रुषा क्रुधन्ति नेत्रादिषु चञ्चुभि-श्छिन्दन्ति ॥ १० ॥

येतु कृतातिक्रमानपि ब्राह्मणान् प्रति कुर्वन्ति प्रत्युताधिकं प्रसादयन्ति तेषामहमेव वश इत्याह । ये मयि या धीस्तया भगवद्दृष्ट्या ब्राह्मणान् क्षिपतः परुषं भाषमाणानपि अर्चयन्तः कटूक्तिभिरपि तुष्यद्धृदः । अनुरागकलया प्रेमवैदग्धीमय्या वाण्या आत्मजवत् कुपितं पितरं सत्पुत्रा इव गृणन्तः परुष-मिदं न भाषध्वे किन्तु परमहितं कृपामृतमेव वर्षथेति स्तुवन्तः सम्बोधयन्ति हे स्वामिनः हे कृपासिन्धवः इत्यादि कोमलाम-न्त्रणेन प्रीणयन्ति अहमिव युष्मान् भृगुं वा तैरहमुपाकृतो वशीकृतः ॥ ११ ॥

तत्तस्मादेवं स्वभर्त्तुर्मम अवसायमभिप्रायमलक्षमाणौ दैवा-दपश्यन्तौ इतां युष्मदपराधोचितां गतिं सद्यः प्राप्य मत्समीपं इतं पुनः प्राप्नुतामितीयं मे प्रार्थनेति भावः । ननु प्रभो ! ब्राह्मणातिक्रमिणो मदपराधिन एवेति श्रीमुखेन स्वयमेव ब्रूषे तत्कथं पुनरपि तयोरेवं स्निह्यसीति तत्र सवैवश्यमाह । तदनु-ग्रहो मे इति । हियस्मात्तत्र जयविजययोर्ममानुग्रह एव ननु निग्र-ह इति नहि स्वाभाविको धर्मस्त्यक्तुं शक्यत इति भावः । तस्मात् भृतयोर्भृत्ययोर्विवासः विशिष्टो मया सह वासः अचिरादेव कल्पतां समर्थौ भवतु ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अखण्डा संपूर्णा विकुण्ठा प्रतिहतिरहिताच योगमायाख्यशक्तिर्विभू-तिर्यस्य सः यस्यार्हणाम्भः चरणक्षालनोदकं चन्द्रललामेन शिवेन सहितान् लोकान् सद्यः पुनाति सोऽहम् येषाममलमङ्घ्रिरजः किरीटैर्बिभर्मि तान् प्रतिकूलानपि को न विषहेत किन्तु सर्वोऽपि पुरुषार्थकामो विसहेतैव ॥ ९ ॥

दुहतीर्गाः अलब्धशरणानि निराश्रयाणि अघक्षतदृशः पापोपमर्दितदृष्टीन् क्रुधन्ति चक्षुरादौ चञ्चुभिश्छिन्दन्ति ॥ १० ॥

भृगुमहमिव अनुरागेण कला मधुरा तया गृणन्तः स्तुवन्तः मयि धिया मद्दृष्ट्या आत्मजाः पितॄन् यथा तद्वत् ये क्षिपतः परुषं भाषमाणानपि अर्चयन्ति तैः अहमुपाकृतः वशीकृतो ऽस्मि ॥ ११ ॥

तस्मात् पूर्वोक्तं विप्रभक्तिविषयमवसायन्निश्चयम् अलक्ष-माणौ अजानन्तौ युष्मद्व्यतिक्रमस्य गतिं गम्यते प्राप्यते इति गतिः फलं तां सद्यः प्राप्य भूयः मत्समीपमिताम् प्राप्नुताम् तदिति स मेऽनुग्रहः मां प्रति भवत्कृतोऽनुग्रहः अनुग्रहमेवाह । यत् भृतयोः विवासः अचिरत आशु कल्पतां सम्पाद्यतां समाप्यता-मिति ॥ १२ ॥

---

भाषाटीका ।

निरन्तर अखण्ड रूपसे रहने वाली योगमाया के ऐश्वर्य वाला मै हूं मेरे चरणों मे पूजा के निमित्त चढाया हुआ जल चन्द्रशेखर महादेवजी सहितसंपूर्ण लोकों को पवित्र करता है ऐसें प्रभाव वाला मै भी जिन ब्राह्मणो के निर्मल चरण के रजको अपने मस्त के किरीटों से धारण करता हूं उन ब्राह्मणों के किये अप मान-को भी कौन नहीं सहेगा ॥ ९ ॥

उत्तम ब्राह्मण दूध देने वाली गऊ अनाथ प्राणि मात्र ए तीनो हमारे शरीर हैं इनको जो पुरुष भेद बुद्धि से देखेंगे उनकी दृष्टि पापसे नष्ट भई जानो वे सर्पसे क्रोधी हैं उन पुरुषों को हमारेदण्ड के अधिकार मे रखे हुये यमराज के दूत गीध चोंचों से फाडैंगे ॥ १० ॥

जो पुरुष दुर्वचन कहेने वाले भी ब्राह्मणों पर परमेश्वर बुद्धि करके पूजन करते हुये सन्तुष्ट हृदय से मन्दहास रूपी अमृत से सींचा हुआ कमलसा मुखको प्रसन्न करके अनुराग युक्त मीठी वाणी से जैसे कुपित पिता को पुत्र संमुझावै तैसे हमारे सरीके क्षमा कराते हैं उनने हमको वशकर लिया जानो ॥ ११ ॥

तिसीसे इनका स्वामीजो मैतिस मेरे अभिप्राय को न जान कर जो इनों ने आपका अपराध किया है तिसकी गति को शीघ्र प्राप्त होकर हमारे पास आवेंगे हमारे पर भी यही अनुग्रह है जोकि जल्दी इनका वियोग संयोग होजावै ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

उशतीं कमनीयां प्रियां देवीं द्योतमानामृषिकुल्यामृषयो मन्त्रास्तत्प्रवाहरूपामृषिकुलयोग्यामिति वा सरस्वतीं वाचमास्वाद्य तन्माधुर्यमनुभूय सर्पप्रायेण मन्युना दष्टानामपि क्रोधवि-षव्याप्तानां हि मनोरसानुभवाभावात्प्रियभाषणमपि न सहते तेषां त्वात्मा मनो नातृप्यदलमिति नामन्यत ॥ १३ ॥

सतीं श्रेष्ठाम् व्यादाय प्रसार्य कर्णौ दत्त्वेत्यर्थः लघ्वीं मिताक्षराम् गुरुभिरर्थैर्गह्वरां दुष्प्रवेशाम् अगाधामभिप्रायतः गम्भीरामर्थतः विगाह्य विचार्याऽपि किमस्मानभिनन्दति निन्दति वास्मत्कृतं दण्डं वा संकोचयतीति न विदुः ॥ १४ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

अथ श्रवणानन्तरं तेषां ब्रह्मज्ञानिगुरूणाम् अलमिति नामन्यत किन्तु ललितवर्णविन्यासोच्चारणार्थमाधुरीश्रवणेच्छायुक्तमेवाभूदित्यर्थः ॥ १३ ॥

अभिप्रायतः भावतः अगाधामतलस्पर्शाम् अर्थतो वाच्यार्थमर्यादयापि गम्भीरां दुर्विबोधाशयाम् ॥ १४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

एवमाश्रितसौलभ्यसौशील्यादिगुणसंपन्नेन भगवतोक्तानि ब्रह्म दैवं परंहि मे यत्सेवया चरणपद्मपवित्ररेणुं न श्रीर्विरक्तमपि मां विजहाति येषाममलाङ्घ्रि रजः किरीटैर्विभर्मिइत्यादिवचांस्याश्रुत्य मुनयः "तं देवतानां परमं च दैवतम्" इत्यादिश्रुतिभिः परमदैवतत्वेन कीर्तितो भगवान् किमस्मद्वञ्चनायैव वदत्याहोस्विद्धर्मसंस्थापनाय

यद्यदा चरति श्रेष्ठस्तत्तदेवेतरो जन

इति स्वगीतानुसारेण वदतीति तात्पर्यमजानन्तो नूनमसौ न भक्तान्वञ्चयति किंतु धर्मसंस्थापनार्थायैव वदतीति पुनर्निश्चिचीषया तदुक्तानि वाक्यान्यन्यतात्पर्यकत्वेन प्रतिपादयिष्यन्तः सम्प्रत्यूचुरित्याह । ब्रह्मा त्रिभिः । अथोक्तविधभगवद्वाक्यश्रवणानन्तरं तस्य भगवतःऋषिकुल्यां वेदसजातीयामुशतीं कमनीयां दैवीममानुषां सरस्वतीं श्रुतां गिरमास्वाद्यानुभूय मन्युना विपसमानेन क्रोधेन दग्धानां व्याप्तानां तेषां मुनीनामात्मान्तःकरणं नातृप्यत तद्वाक्यतात्पर्याज्ञानान्मन्युदष्टत्वाच्च चित्तं नातिप्रसन्नमभूदित्यर्थः ॥ १३ ॥

सतीं साध्वीमल्पाक्षरां गुरुभिर्बहुभिर्दैरर्थैरभिधेयैर्गह्वरां दुर्विज्ञेयामगाधां गम्भीरामभिप्रायेणागाधामर्थतो गम्भीरां सरस्वतीमित्यनुषङ्गः शृण्वन्तः विगाह्य विलोड्यादायाहत्येदमेषां वाक्यानां तात्पर्यमिति परिष्कृत्येत्यर्थः तेन भगवता चिकीर्षितं कर्तुमिष्टं न विदुः विचार्य परिष्कृत्य न विदुः किन्तु तुष्णीमापाततो विदुरित्यर्थः ॥ १४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कोपाहिदष्टानां तेषां शापमोक्षानुमतिः कथं संगच्छत इति तत्राह । अथेति । तस्य हरेरुशतीमभीष्टप्रदामृषिकुल्यामृषिकुलस्तुतिपरामन्यत्र मुनिकुलप्रियां देवीमभिधेयमणिभिर्द्योतमानामन्यत्र देवादिस्नानक्रीडायोग्यां सरस्वतीं वाचमन्यत्र नदीमास्वाद्य श्रवणादिनान्यत्र स्नानादिना भगवद्दिदक्षाभङ्गाङ्कुरितेन मन्युना सर्पेण दष्टानां तेषां सनकादीनामात्मा मनोऽन्यत्र बाह्याभ्यन्तरविशिष्टो देहो तृप्यत कोपापगमेन भगवदुक्त्युद्भूतानन्दपूर्णोऽभूदन्यविषयापगमेन प्रकृतिस्थितोऽभूदित्यर्थः ॥ १३ ॥

वचनमाधुर्यास्वादनेन मनसस्तृप्तिर्नत्वर्थज्ञानेन तस्यानवगाहादिति भावेनाह । सतीमिति। मुखं व्यादाय शृण्वन्तः शब्दतो लध्वीं मितां गुरुणा महतार्थेन गह्वरामप्रवेश्यां वाचं विगाह्य विचार्य गाधप्रतिष्ठायामिति धातोरगाधमतलस्पर्शमत. एव गम्भीरमवगाढुमशक्यं तस्य हरेश्चिकीर्षितं किञ्चन कर्त्तुमिष्टं कश्चनक्षेप्तुं वेति न विदुः कृविक्षेपे इतिधातुः ॥ १४॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

देवीं प्रभावयुक्ताम् ॥ १३ ॥

सतीमकपटाम । गुरुर्योऽर्थः प्रयोजनं गह्वरामिव दुर्गमो यस्यां ताम। यतोऽगाधगम्भीराम्। अगाधां भावतोऽतलस्पर्शां गम्भीरामर्थतोऽपि दुरवगाहाञ्च । अतस्तां यथाशक्ति विगाह्य तृप्ता अपि तत्र तस्य कर्त्तुमिष्टं युद्धादिलीलालक्षणन्तु न विदुरित्यर्थः ॥ १४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं भगवान् प्रसन्नो जात इति ज्ञात्वा गताधयो मुनयः सम्यक् स्तोत्रं कृतवन्त इति वक्तुं प्रथमं भगवद्वाक्येन तेषामाधिर्गत इत्याह । अथ तस्योशतीमिति त्रिभिः । भगवतो वाक्यं शब्दार्थभेदेन चिन्तानिवारकं तत्र शब्देनैव निःसन्दिग्धं चिन्ता निवारिता अर्थस्तु भगवद्वाक्यानां सर्वतोमुखत्वादनिर्द्धारित इति स्वरूपतो निर्द्धारितोऽपि फलतो न निर्द्धारित इति सम्यक् चिन्तां न दूरीकृतवान् तथापि दृष्टसामग्र्या बलवत्त्वात् सर्वेषामन्तःकरणं चिन्तावत्त्वेऽपि निर्मलं जातमिति श्लोकत्रयं शब्दार्थसामग्रीभेदात् प्रथमं शब्देन तेषां सुखं जातमित्याह । अथेति । भिन्नप्रक्रमोऽर्थपर्यालोचनाभावाय उशतीं कमनीयामनेन तस्या दुःखदूरीकर्तृत्वं रूपमुक्तं युक्त्यर्थं विशेषणान्तरमाह । ऋषिकुल्यामिति । ऋषिकुलयोग्यामृषयो हि मन्त्रद्रष्टारः अलौकिकानुभवाश्च । मन्त्राः तत्र हितकर्त्री ततोऽप्यलौकिकानुभावा भवतीति स्वसामर्थ्यात् दुःखदूरीकर्तृत्वं किञ्च देवीमिति द्योतकत्वात् कान्त्यर्था भवति काऽन्यथा हृदयप्रकाशिका भवति अतोऽपि दुःखदूरीकरणं किञ्च सरस्वतीमिति सर इत्युदकनाम आधिदैविकीति तदुदकममृतम् भवति तेषां हृदयं मन्युना दष्टं मृतप्रायं तदमृतेन जीव्यते कान्त्या प्रकाश्यते अलौकिकभावेन कार्यसमर्थं क्रियते परमानन्दश्च प्राप्यत इति चत्वारि विशेषणानि एतादृशीं सरस्वतीमास्वाद्यापि स्थितानाम आत्मा नातृप्यत अलमिति नोक्तवान् यद्यर्थार्थं श्रुतं स्यात्तदार्थः पूर्ण इति इच्छा पूर्येत स्वरूपतः श्रवणे तु आनन्दे अलं बुद्ध्यभावात् न निवर्त्तते सर्पदष्टो हि मन्त्रेण जलं पाय्यते न च स तृप्यति विषज्वालाया भूयस्त्वात् आत्मनोऽपि दंशे सर्वाङ्गे ज्वाला जातेति स एव दंष्टा निरूपितः ॥ १३ ॥

एवं शब्दतः फलमुक्त्वा अर्थानुसंधानेनापि यज्जातं तदाह सतीमिति । सा हि सन्मार्गप्रतिपादिका अतः समुदायार्थपरिज्ञानेन सुखं जातमेव व्यादाय श्रवणमपावृतकर्णरन्ध्रैः श्रवणं लब्ध्वी सा स्वरूपतः तेनालोचयितुं शक्यत इति सुखदायिनी एवं विशेषणद्वयेनार्थद्वारापि सुखदातृत्वं निरूपितं फलतःसाधनतश्च न सुखदातृत्वं जातमित्याह । गुर्वर्थगह्वरामगाधगम्भीरामिति । अर्थो हि गम्भीरः पुरुषोत्तमस्य भगवतः हीनानां सेवकजीवानां च विपरीतधर्मप्रतिपादकत्वात् श्रुतपदार्थानां श्रुतार्थापत्त्या निर्णयं कृत्वा सन्देहो दूरीकर्त्तव्य इति तत्राह । अगाधगम्भीरामिति । अगाधत्वात् न तत्र श्रुतार्थापत्तिः कल्पते पदार्थानां तलस्पर्शे तत्कल्पना युक्ता गम्भीरत्वात् मज्जनेनापि तलस्पर्शो न भवति एतावता भगवान्किञ्चित्ज्ञात्वा गम्भीरमुक्तवानित्यध्यवसीयते तथापि किमर्थमेवं वदतीति तच्चिकीर्षितं न विदुः विगाहनमन्तःप्रवेशः विचार्यापि विदुरित्यर्थः ॥ १४ ॥

**ते योगमाययाऽऽरब्धपारमेष्ठ्यमहोदयम् ।**
**प्रोचुः प्राञ्जलयो विप्राः प्रहृष्टाः (१) क्षुभितत्वचः ॥१५॥**

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सरस्वतीं वाणीं नदीं च। उशतीं कमनीयां पक्षे स्वच्छां देवीं मुनीनां बुद्ध्या विनिर्णीतवितर्कादिमय्या सह क्रीडन्तीं पक्षे पूज्यामृषिकुलाय हितां पक्षे ऋषीणां कुल्यां जलाशयरूपामास्वाद्य माधुर्यमनुभूय मन्युना सर्पतुल्येन दष्टानां क्रोधविषव्याप्तानां मनोरसानुभवाभावात् प्रियभाषणमपि न सहते तेषान्तु आत्मापि बुद्धिरपि मनोऽपि नातृप्यत् अलमिति नामन्यत अत्र तेषां महानुतापत्वेऽपि यन्मन्युसर्पविषानपगमस्तद्भक्तापराधस्य दुर्वारत्वमेव ज्ञापयति सत्यपि तादृशे भक्तापराधे यो भगवच्चरणतुलसीगन्धादिमाधुर्यानुभवः स खलु ब्राह्मणातिक्रमानन्तरमनुतप्तयोर्जयविजययोर्यातेषु कृपा तदनुगामिन्या भगवत्कृपायाः प्रभावमेव ज्ञापयति अतो यद्येषां भक्तापराधो नाभविष्यत्तदा भक्तभगवतोः कृपापात्रीभूतानामेषां शुद्धदास्यप्रेमैवाजनिष्यत। तस्मादपराधसद्भावाच्छान्तभक्तत्वमेवैषामभूत्। यदुक्तं भावोऽप्यभावमायाति कृष्णप्रेष्ठापराधतः। आभासताञ्च शनकैर्न्यूनजातीयतामपीति ॥ १३ ॥

व्यादाय कर्णौ प्रसार्य शृण्वन्तः। सतीं सत्यां शोभनाञ्च लघ्वीं मिताक्षरां गुरुभिरर्थैर्गह्वरां दुष्प्रवेशामगाधाम् अगम्याभिप्रायां गम्भीरां दुर्बोधवाह्याभ्यन्तरार्थां विगाह्य विचार्यापि किमस्मानभिनन्दति निन्दति वा अस्मत्कृतं दण्डं व्यवस्थापयति सङ्कोचयति वा निरस्यति वा अस्मान् वापराधेन योजयति भूत्यौ वा प्रसादाधिक्येनेति तच्चिकीर्षितं न विदुः अत्राभिनन्दनपक्षो व्याख्यात एव निन्दनपक्षस्तु भगवदनभिप्रेतोऽपि बिभ्यद्भिर्मुनिभिरात्मनि सम्भावितत्वात् सरस्वत्या च दत्तावकाशत्वादेवं व्याख्येयः। तथाहि। एतौ द्वौ पार्षदौ मद्धर्मिति सर्वज्ञानपि मुनीन् यत् परिचाययति स्म तेन रे मूढा मत्पार्षदावप्यभिशपथ एतावदपि वलं धत्त इतिव्याञ्जितम्। कदर्थीकृत्य मां यद्वो वह्वक्रातामतिक्रममित्यत्र सनकाद्यतिक्रमात् पूर्वं भगवत्कदर्थनाभावादियं तेषु भगवतो वक्रोक्तिः कोपव्याञ्जिकैव। वस्तुतस्तु चतुर्थ्यतिशयोक्त्या प्रथमं मत्कदर्थनं कृतम्। ततो युष्मदतिक्रम इति कारणकार्ययोः पौर्वापर्यविपर्ययो भगवता प्रयुक्तः। स एवानुमतोऽस्माभिरिति। अस्मदनुमतिर्यद्यभाविष्यत् तदा युष्मत्कृतो दण्डोऽपि नासेत्स्यत् ब्रह्मतेजः समर्थोऽपि हन्तुं नेच्छे मतन्तु मे इत्यग्रिमोक्तेः ततश्च यूयञ्च वराटकार्द्धमूल्या अभविष्यतेति मद्ब्रह्मण्यतैव युष्मानुन्मादयतीति भावः। तद्विद्धात्मकृतं मन्य इति जयविजययोरात्मत्वेन स्वीकारात् प्रेमाधिक्यं सोऽहं भवद्भ्य उपलब्धसुतीर्थकीर्त्तिरिति मुनिष्वादरमात्रम्। छिन्द्यां स्वबाहुमपीति पुनरपि तयोः प्रेमास्पदता यत्सेवयेति मुनिषु पुनरप्यादरः सोऽपि वाह्य एव ब्राह्मण सेवयैव किं तस्य चरणरेणुः पवित्रोऽभूत् तयैव किं तस्याखिला मलाः क्षताः तयैव किं लक्ष्मीस्तं न त्यजतीति हेत्वसत्त्वादिति। नाहं तथाद्मीत्यादौ यूयं ब्राह्मणा भोजनप्रियाः केवलं भोजनीया एवेति। ब्राह्मणमुखेनाहं भुञ्जे इति ख्यातैर्लोकेषु विस्तारिता घासं चरत इति श्लेषेण ब्राह्मणाः खलु गौरिवादरणीयः पशुबुद्धित्वादेव मद्दत्तेन गौरवेण हृष्यति नतु युष्माभिर्मत्सुखतात्पर्या काचिन्मदीयपरिचर्या सम्भवेदिति। येषां बिभर्मीति किरीटेषु ब्राह्मणपादरजो धारणादेव मम योगमायैश्वर्यं तथा तस्मादेव हेतोर्मच्चरणोदकं सर्वजगत्पावनी गङ्गेति गौरवमुपहास एव फलितं दुहतीर्मदीया इति गोब्राह्मणयोर्भेदो नास्ति द्वयोरेव मत्तनुत्वादिति पुनरपि हास एव। ये ब्राह्मणानिति ब्राह्मणानां खलु क्रोध औत्पत्तिक एव धर्मस्तश्चाहं मद्भक्ताश्च सहन्त एवेति सहिष्णुता सुधा मद्भक्तेभ्य एव मया दत्तेति तयैवाहं वशीकृतः स्यामिति जयविजययोस्तु सहिष्णुतायाः सम्प्रत्यनुदयान्मम तत्रौदासीन्यं जातमतः शापोऽपि वः प्राभूदन्यथातु नैव प्राभविष्यदत एवाम्बरीषे ममौदासीन्याभावात् दुर्वाससः कोपात् क्षिप्तजटाया अपि वैफल्यं प्रत्युत मत्स्वरूपचक्रकृतः सन्तापः साक्षान्मया ब्रह्मण्येन कारितमम्बरीषेपादपतनादिकमिति। यं वानयोर्दममधीश भवान् विधत्ते वृत्तिं नु वा तदनुमन्महि निर्व्यलीकम्। अस्मासु वा य उचितो ध्रियतां स दण्डो येनागसौ वयमयुङ्क्ष्महि किल्विषेणेत्यग्रिमवाक्यदृष्ट्या च निन्दनपक्षोऽयं व्याख्यातः ॥ १४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ भगवद्वचनश्रवणानन्तरम् तस्य भगवतः उशतीं कमनीयां द्योतमानामृषिकुल्याम् "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते"। इति श्रीगीतानुसारेण लोकशिक्षायै ऋषिकुलयोग्यां सरस्वतीं वाणीमास्वाद्य तन्माधुर्यमनुभूय मन्युदष्टानामपि क्रोधव्याप्तातानामपि तेषामात्मा मनः न अतृप्यत अलन्नामन्यत ॥ १३ ॥

किंच सतीं साध्वीं लघ्वीं मिताक्षरां गुरुभिर्बहुभिरर्थैर्गह्वरां दुर्बोधाम् आगधामाशयतः गम्भीरां विषयतः सरस्वतीं व्यादाय विवृत्य कर्णमितिशेषः शृण्वन्तो विगाह्य विलोड्य धर्मरक्षायै लोकान् शिक्षयितुं तद्वः प्रसादयाम्यद्य ब्रह्मदैवं परं हि मे इत्यादि सरस्वतीभगवतोरितेति ज्ञात्वापीत्यर्थः तच्चिकीर्षितं भगवतः तयोः आत्मसु च निग्रहमनुग्रहं वा कर्तुमिष्टं मुनिशापद्वारैवस्वभृत्यविवासरूपं च न विदुः ॥ १४ ॥

---

भाषाटीका।

ब्रह्मा जी बोले इसके अनन्तर सुन्दर प्रकाशमान वेदों के प्रवाह रूपी भगवान् की वाणी को श्रवण करके क्रोध वाले उन मुनिजनों का सुनने मे से मन नहीं हटा ॥ १३ ॥

थोड़े अक्षरों वाली वडे अर्थ वाली गम्भीर वडे अभिप्राय वाली वाणी को श्रवण के पीछे विचार कर के भगवान् के अभिप्राय को नहीं जान सके ॥ १४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ततश्चाभिनन्दतीति ज्ञात्वा ते प्रहृष्टाः सन्तः प्रोचुः क्षुभिता रोमाञ्चिता त्वक् येषां कुपितेति पाठे सञ्जातरोमकूपोक्त्या रोमाञ्चितत्वमेवोक्तम् आरब्ध आविष्कृतः पारमेष्ठ्यस्य परमैश्वर्यस्य महोदयः परमोत्कर्षो येन तमधिराजत्वमाविष्कृत्य राजशिक्षार्थं ब्राह्मणान् मानयतीति ज्ञात्वेत्यर्थः ॥ १५ ॥

---

( १ ) कम्पितत्वच इति विजयध्वजतीर्थः।

ऋषय ऊचुः

न वयं भगवन्! विद्मस्तव देव ! चिकीर्षितम् ।
कृतो मेऽनुग्रहश्चेति यदध्यक्षः प्रभाषसे ॥ १६ ॥
ब्रह्मण्यस्य परं दैवं ब्राह्मणाः किल ते प्रभो! ।
विप्राणां देवदेवानां भगवानात्मदैवतम् ॥ १७ ॥
त्वत्तः सनातनो धर्मो रक्ष्यते तनुभिस्तव
धर्मस्य परमो गुह्यो निर्विकारो भवान् मतः ॥ १८ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

ततश्च ज्ञापनहेतुभगवदिच्छानन्तरम् ॥ १५ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

योगमाययात्मीयविचित्रसर्गकारिण्या प्रकृत्या आरब्धस्य कृत्स्नस्य जगतः यत्पारमेष्ठ्यं सर्वोत्कृष्टमाधिपत्यं तस्योदयो यस्मात्त-मस्मदाधिपत्यप्रदातारमित्यर्थः तं भगवन्तं ते विप्राः कुपितत्व-चः संशयावहवाक्यश्रवणेन क्रुद्धा त्वग्येषां ते प्रहृष्टाः निरति-शयकल्याणगुणगणाकरस्यात्मदैवतस्य भगवतो दर्शनतत्संभाष-णतत्कृपावलोकनादिजनितहर्षयुक्ताश्च प्राञ्जलयः प्रोचुः ॥ १५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तर्हि यावज्ज्ञानमपि किञ्चन नोचुः किमिति तत्राह । ते योगेति । सनकादयः योगमायया स्वरूपेच्छया जातेन भ्रूभङ्गे-नारब्ध उत्पादितः पारमेष्ठ्यमहोदयो ब्रह्मपदसम्बन्धिप्रभूतै-श्वर्यं यस्य; सः तथा तं हरिं प्रोचुरित्यन्वयः कम्पितत्वचो रोमाञ्चितगात्राः ॥ १५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

तेषामपि प्राञ्जलित्वादिमहाभक्तौ हेतुः । योगेति । योगमाया स्वरूपशक्तिः । कुपितेति पाठे रोममूलानामुच्छूनतया तदन्तरा-लेषु सञ्जाता कूपवन्निम्नप्रदेशाः यत्र तादृशत्वचः ॥ १५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं वाक्यं किञ्चिज्ज्ञात्वापि भगवन्तं दृष्ट्वा मुदिताः सन्तः स्तोत्रं कृतवन्त इत्याह । त इति । योगमाया हि भगवद्योग्यान् पदार्थान् सृजति न ते प्राकृताः ब्रह्मसृष्टाः अतः पारमेष्ठ्या-पेक्षयापि महोदयरूपाः योगमायया आरब्धः पारमेष्ठ्यमहो-दयाः यस्य अतः सामग्रीं दृष्ट्वा परमानन्दो बहुविधो भवत इति हृष्टा जाताः स्वयं विप्रा अपि मनसा अपि तादृशं नाक-लितमिति माहात्म्यज्ञानात् प्राञ्जलयः तद्दर्शनेनान्तः पूर्णानन्दः रोमकूपद्वारा निर्गच्छन् कुपितां त्वचं कृतवान् साहि वायुदेवता-का वायोश्चसञ्चारो नास्तीति कोप उचितएव क्षुभित इति पाठेऽपि समानोऽर्थः ॥ १५ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एवं निन्दनाभिनन्दनयोर्द्वयोरपि पद्ययोः पर्यवसाने कतरस्मिन् भगवदाभिमत्यविश्रान्तिरिति चिरं विमृश्याभिनन्दनमेव निश्चित्य हृष्यन्त आहुरित्याह ते इति । योगमाया स्वरूपशक्तिस्तयारब्ध-मनादित एव विस्तारितं पारमेष्ठ्यं परमैश्वर्यं महानुदयश्च यस्य तम् । तस्मादन्यानधीनमहामहैश्वर्य्येणानेन प्रभुणा कस्यानुरोधेन स्तुतिगर्भा निन्दा कर्त्तव्या यदि वयं दण्ड्या एव भविष्यामः तदा विप्रा इमे मद्भक्तापराधिनो नरके निपात्यन्तामिति प्रकटमेवा-वक्ष्यदिति विविच्य कुपिता क्षुभिता रोमाञ्चिता त्वग् येषां ते कुपितेति पाठे सञ्जातरोमकूपोक्त्या रोमाञ्चितत्वमेवोक्तम् ॥ १५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ॥

अतस्तत्सरस्वतीतात्पर्यलाभात् प्रहृष्टाः अनयोः अस्मासु च निग्रहमनुग्रहं वा कथं करिष्यतीति चिन्तया कुपितत्वचः योगः सङ्कल्पस्तद्युक्तया मायया कृपया ब्रह्माण्डमध्ये आरब्धः आविष्कृतः पारमेष्ठ्यस्य वैकुण्ठस्य महोदयो येन तम् प्राञ्जलयः प्रोचुः ॥ १५ ॥

---

भाषाटीका ।

योग मायासे प्रगट किया है परम ऐश्वर्य जिन्ने ऐसे भगवान्को मुनि पहिले क्रोधितथे तौभी सुनकर हाथ जोड़कर सब बोले ॥ १५ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अध्यक्षः सर्वेश्वरः संस्तल्लीलात्मकृतं मन्य इत्युक्त्वा मया-पराधः कृत इति तथा तदनुग्रहो मे इत्यादिवचनेन ममानुग्रह-श्चेति यत्प्रभाषसे तेन तव यच्चिकीर्षितं तन्न विद्मः ॥ १६ ॥

किलेति लोकशिक्षार्थं सूचितम् परमार्थमाहुः । विप्राणामिति देवदेवानां देवपूज्यानामपि भगवांस्त्वमात्मा च दैवतञ्च ॥ १७ ॥

लोकशिक्षार्थताप्रपञ्चस्त्वत्त इत्यादिभिः । धर्मस्त्वत्त एवप्रवर्तितः ते च त्वदवतारैः परमः फलरूपोऽतएव गुह्यो गोप्यः नच स्वर्गादि फलवाद्धिकारी भवान् किन्तु निर्विकारो मतः अत एवं भूतस्य तवेदं लोकशिक्षामात्रमिति भावः ॥ १८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

ममोपरि तेन तथा तथा वचनेन ॥ १६ ॥

आत्मा रश्मीनां सूर्यवन्मूलस्वरूपः दैवतमिष्टदेवत्वेन पूज्यः॥१७॥

अत एव भवत्फलकत्वादेव गोप्यः स्पष्टं फलन्तु स्वर्गादि निर्विकल्पक इति स्वाम्यसम्मतः पाठः अतः परमफलरूपत्वादेवं भूतस्य सर्वेश्वरस्य इदं नमनादि ॥ १८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उक्तिमेवाहुर्द्वाभ्याम् । नेति । हे भगवन् ! देव त्वया चिकीर्षितं वयं न विद्मः । किं भवानस्माननुजिघृक्षति उत निजिघृक्षतीति त्वत्तात्पर्यं विशिष्य न जानीमः किंतु मे मह्यं प्रत्येकाभिप्रायेणैकवचनम् अनुग्रहश्चेत्यनुग्रहः कृत इत्यापाततो विद्मः आपाततो वानुग्रहः कृतः कथं जानथेत्यत्राहुः । यद्यस्माद्ध्यक्षः वाङ्मनसागोचरस्त्वमक्षिविषयः प्रभाषसे ॥ १६ ॥

एवं स्वात्मनां तदभिप्रायानभिज्ञत्वमावेद्य तदुक्तीनां तात्पर्यं क्रोडी कुर्वन्तो ब्रह्म दैवं परं हि मे इत्याद्युक्तयो धर्ममर्यादास्थापनायैव प्रवृत्ता उपपन्ना नान्यथेत्याहुः । ब्रह्मण्यस्येति अष्टभिः । हे प्रभो ! ब्रह्मण्यस्य ब्राह्मणातन्मर्यादापालकस्य तव ब्राह्मणाः परं दैवतं किलेत्यनेन लोकशिक्षा सूचिता यदि भगवान् ब्राह्मणान् परदैवतभावेन नानुवर्तसे ततस्त्वत्तोऽवरजना ब्राह्मणान् बहु मन्यन्तो नदयेयुरतो लोकशिक्षार्थमेव ब्रह्म दैवं परं हि म इत्युक्तमिति भावः वस्तुतस्तु देवदेवानां देवेन त्वयापि देवानां बहुमन्तव्यानां विप्राणां भगवान् षाड्गुण्यपूर्ण आत्मदैवतमात्मदैवतमिति हेतुगर्भम् आत्मदैवतस्य तव न देवतान्तरम् सम्भवतीत्यर्थः तथा च श्रूयते "पतिं विश्वस्यात्मेश्वरं यस्मात्परं नापरमस्ति न तस्येशे कश्चन तस्य नाम महद्यशः स्वे महिम्नि प्रतिष्ठित„ इत्यादि ॥ १७ ॥

ब्रह्मण्यत्वमेव प्रपञ्चयन्ति । त्वत्त इति । धर्मश्चातुर्वर्ण्यचातुराश्रम्यव्यवस्थयावस्थितः सनातनो धर्मः त्वत्त एव प्रवृत्तः तव तनुभिरवतारैः रक्ष्यते चेद्दशस्य धर्मस्य परमः नित्यो निरतिशयगुह्यः फलं निर्विकारो भवानेव मतः ज्ञातः श्रुतिभिरिति शेषः तथा च श्रूयते "इष्टापूर्तं बहुधाजातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः एष भूतपाल एष सेतुर्विधरणः अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुत" इत्यादि निर्विकार इत्यनेन कर्मसु रुचिमात्रजनकानामवान्तरफलानां क्षयिष्णुत्वं सातिशयत्वं भगवत्यनन्तस्थिरफलत्वं च सूचितम् ॥ १८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

किमूचुरित्याशङ्क्य न विदुस्तच्चिकीर्षितमिति द्वन्द्वं वाचोद्धलयन्तीत्याह । न वयमिति । अध्यक्षः सर्वेश्वरस्त्वं स एवानुमतोऽस्तदनुग्रहो मे इत्यादिना ममानुग्रहः कृत इति प्रभाषसे इति यत्तस्मात्तव चिकीर्षितं न विद्म इति ॥ १६ ॥

अस्मदुक्तेरन्यथाकरणासंभवात्कस्मादज्ञानं भवतामित्याशङ्कायामाह्वचनादित्याहुरित्याह । ब्रह्मण्यस्येति । किलेत्यनेनास्मदितरेषां मोहकमस्माकन्तु स्तुतिपरमिदमिति सूचितं तत्कथमित्यत्राहुरित्याह । विप्राणामिति । हेदेव ! आत्मदैवतं कुलदेवता ॥ १७ ॥

कुतो हेतोरित्यत उक्तम् । त्वत्त इति । विप्रादिसर्ववर्णाश्रमब्रह्मचर्याद्याश्रमिभिरनुष्ठेयः सनातनो वेदवेद्यत्वेन नित्यो धर्मस्त्वत्तो भूत्वा वर्तते चेत्तर्हि वत्कालतो द्रव्यतो नोत्सायते कथं वृत्तिरत्राहुरित्याह । रक्ष्यत इति । तनुभिर्मत्स्याद्यवतारैः "यदा यदा हि धर्मस्य ग्लानिर्भवति भारत" इत्यादेर्दृष्टा सनातनत्वमवधारयति भवान्क इति तत्राहुरित्याह । धर्मस्येति । "वायुना वै गौतमसूत्रेण„ इत्यादिश्रुत्या सर्वधारकत्वेन मतो धर्मो वायुस्तस्य मातृत्वेन परोत्तमा मा श्रीर्यस्य स तथोक्तः लक्ष्म्यादिमुक्तसमुदायात् वाय्वाद्यमुक्तजगतोऽपि श्रेष्ठो भवानित्यर्थः अत्र किं प्रमाणमित्युक्तम् । गुह्य इति । धर्मस्येत्यनुवर्तते अपीति पदमध्याहृत्य वाक्ययोजना"गुहसंवरणे"इतिधातोः वायोरपि गुह्यःसंवार्यः दुर्ज्ञेय इत्यर्थः नीलिम्नाकाशादिवत् केनापि विकारेण ज्ञेयः किं न स्यादित्यत उक्तम् निर्विकार इति। उक्तचोद्यस्य किमुत्तरमित्यत उक्तम् मत इति भवानिति वर्तते"मन अवबोधन" इति धातोः एष सर्वेश्वर इत्यादिना निर्विकारः सदा शुद्ध इत्यादिना च भवानवबुद्धः सम्यग्ज्ञात इत्यादिकं मानमुत्तरमुक्तं भवति अनेन वायोरपि दुर्ज्ञेयत्वे शशशृङ्गतुल्यमिदमिति चोद्यं निरस्तं तेन तद्विषयज्ञानसाकल्यं निषिध्यते नतु ज्ञानमात्रमत एव गुह्य इत्युक्तं समाधिना ज्ञातुं शक्यो न घटादिवत् सुज्ञेय इति यद्वा धर्मस्य मुख्यविषयो भावनेव न स्वर्गादिरित्याहुरित्याह । धर्मस्येति । कुतो न स्वर्गादिरित्यत उक्तं निर्विकार इति स्वर्गादेः प्राकृतत्वेनानित्यत्वादस्य तु निर्गुणत्वेन स्वतोऽन्यतो वा तद्धर्मराहित्यात् धर्मकारयितृत्वेन निरुपमस्वातन्त्र्यात्तद्दत्तफलस्य च नित्यत्वसंभवादिति भावः ॥ १८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

न वयमिति । अयमर्थः । अनयोर्वैकुण्ठसेवकयोर्ब्राह्मणावज्ञा न सम्भवति अस्माकं च ब्रह्मनिष्ठानां सामान्यत एव क्रोधो न सम्भवति विशेषतो भगवद्भक्त्यात्रागतानां पार्षदेषु इति तवैव चिकीर्षितं न विद्मः । येन तत्तदघटनीयं घटितम् । तत्र हेतुः अध्यक्षः अन्तर्बहिरपि सर्वेश्वरत्वेन सर्वमन्यथा कर्तुं समर्थः । यदि वास्माकमेव दोषः स्यात् तदाध्यक्षेन त्वया पूर्वमेवैतयोरस्माकं चान्तःकरणं ततस्तत उद्धृत्य नियमितं स्यादिति । स्वय च निजाभीष्टसिद्धिरेवाभिप्रेतेत्याह । यत् यस्मात् मे मह्यमनुग्रहश्च कृत इति प्रभाषसे ॥ १६ ॥

यच्चोक्तं यस्यामृतेत्यादिना तत्राहुः । ब्रह्मण्यस्येति । किलशब्दो ह्यनृते । तच्चान्यथाख्यापनम् । तच्चेह लोकशिक्षार्थमेवेति तथा तैर्व्याख्यातम् । तत्र च ब्राह्मणस्येति यद्यपि सौशील्येनैव तव तादृशगुणत्वं तथापि लोकशिक्षार्थमपि कल्पत इति भावः । अत एव ब्रह्मण्यत्वेनैवास्माकं दैवतत्वं साध्यते तव तु दैवतत्वं स्वरूपेणैवेति विवक्षितम् ॥ १७ ॥ १८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

विरोधं परिहरन्त एव स्तोत्रं कुर्वाणाः प्रथमं विरोधमनुवदन्ति । नवयमिति । विरुद्धार्थप्रतिपादकत्वे सति न विरोधः किन्तु मनसा तदुभयस्थाशक्तौ सत्यां मनो हि वाचो भर्ता, स चेत्प्रभुः अविरोधं संपादयति किं दासीनां विरोधेन तदपि नास्ति इति स्वानुभवेनाहुः । हे भगवन् ! स एव तदनन्तरं देव तवचिकीर्षितं न विद्मः ज्ञातेरभिप्रायः कल्प्यते अकल्पनायां हेतुः

तरन्ति ह्यञ्जसा मृत्युं निवृत्ता यदनुग्रहात् ।
योगिनः स भवान् किंस्विदनुगृह्येत यत्परैः ॥ १९ ॥
यं वै विभूतिरुपयात्यनुवेलमन्यैरर्थार्थिभिः स्वशिरसा धृतपादरेणुः ।
धन्यार्पिताङ्घ्रितुलसीनवदामधाम्नो लोकं मधुव्रतपतेरिव कामयाना ॥ २० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सूतं विरोधमाह । कुतो मेऽनुग्रह इति । यस्त्वमध्यक्षः सर्वसाक्षी प्रभुः सेवकान् प्रति वदसि अनुग्रहः कृत इति तदर्थतो विरुद्धम् ॥ १६ ॥

विरोधान्तरमाह। ब्रह्मण्यस्येति। त्वं तु ब्रह्मण्यः ब्राह्मणानां हितः तेषां पुरुषार्थसाधकत्वेन तदुपास्यः अथापि ब्राह्मणाः किल ते परं दैवमिति प्रभाषसे किलेति प्रसिद्धेन हि तद्वाक्येन ब्राह्मणप्रभुत्वप्रतिपादकेन येषां विमर्शीत्यत्र संदेहोऽस्ति भागभेदेन तदुभयं संगच्छत इति पक्षं खण्डयन्ति । प्रभो इति । सर्वसमर्थो भवान् न केनाप्यंशेन ब्राह्मणापेक्षायुक्त इत्यर्थः किञ्च विप्राणां देवानां देवदेवानामपि भगवानात्मा दैवतं च आवश्यक उपास्यश्च आत्मनो वा दैवतं चिदंशानां भगवत्सेवकत्वात् ॥ १७ ॥

नन्वस्मदुक्तप्रकारेणैव वेदो वदतीति तथैव शास्त्रार्थोऽस्त्वित्याशङ्क्याहुः । त्वत्त इति । त्वमेव नः सनातनो धर्मः यज्ञरूपत्वात् ब्रह्मरूपत्वाच्च

यज्ञेन यज्ञमयजयन्त देवाः ।
अयं तु परमो धर्मो यद्योगेनात्मदर्शनमिति

त्वयैव तनुभिरवतारैः स्वधर्मो रक्ष्यते यदा यदा हि धर्मस्येतिवाक्यात् किञ्च त्वं धर्मस्य परमो गुह्यः धर्मस्यात्यन्तं गोप्यः त्वमेव धर्मो ह्यन्यगतः धर्मिणं गोपायति यथा जलगतमौष्ण्यं वन्हिर्गोपायतीति तथा जीवेष्वागतो धर्मः ब्रह्म गोपायति सहितस्यैव क्रियाशक्तिरूपत्वात् तस्य गोप्यो हि भक्तियोगोऽपि भवति तथापि भवान् परमो गुह्यः तस्य ब्रह्मैव गुह्यमिति कथं भगवानित्याशङ्क्याह । भवानेव निर्विकल्पो मत इति ॥ पूर्ववद्धेति सिद्धान्तेन सर्वकल्पनाशून्यं ब्रह्म तदेव पश्चात् धर्मरूपेणाविर्भूय तत्सहितं भगवानित्युच्यते भगवतो वा एकं रूपं निर्विकल्पकं ब्रह्म उभयथापि धर्मस्य परमो गुह्यः ॥ १८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तदेवं ज्ञाततत्त्वा अपि तदभिप्रायं तन्मुखादेव श्रोतुं पुनः प्रश्नगर्भमाहुः । न वयमिति । चिकीर्षितमनुग्रहं निग्रहं वेत्यर्थः यद् यस्मादध्यक्षः सर्वेश्वरः सत्तस्मान् अल्पापि कृतो मेऽनुग्रहो युष्माभिरिति भाषसे । तदसम्भाव्यत्वादस्मान्निजिघृक्षुरेव प्रथममुपहससि किम्वा ब्रह्मण्यत्वात् स्वकृतधर्मप्रवर्त्तनार्थमस्माननुजिघृक्षुरेव वास्तवमेव स्तौषीति त्वच्चिकीर्षितं ज्ञातुमसमर्थानज्ञानस्मान् स्वाभिप्रायं ज्ञापयेति ध्वनिः ॥ १६ ॥

श्रीमुखवाक्यानां दुर्ज्ञेयत्वं प्रपञ्चयन्त आहुः । ब्रह्मण्यस्य तव ब्रह्मण्यत्वेनैव ब्राह्मणा दैवं ननु स्वभावत इत्यर्थः । देवदेवानां देवपूज्यानामपि भगवांस्त्वमेवात्मना स्वभावेनैव दैवतमिति तवैव दैवतत्वं वास्तवं ननु ब्राह्मणानां श्लेषेणात्मा दैवतं चेति त्वां विना ते मृतका एव तदपि त्वं यत्सेवया चरणपद्मपवित्ररेणुमित्यादि यद्रूपे तत् किं स्विदिति भावः ॥ १७ ॥

किञ्चानुष्ठीयमानेन धर्मेणैव लोकाः पूज्या भवन्ति । स च धर्मस्त्वद्भक्तिलक्षण एव न वर्णाश्रमनिष्ठः । तञ्च धर्मं त्वद्भक्ता एव प्रवर्त्तयन्तीति त्वद्भक्ता ब्राह्मणेभ्योऽपि श्रेष्ठा इत्याहुः । त्वत्तः प्रादुर्भूतो भक्तिलक्षणः सनातनो धर्मः इष्टिः सतां दर्शनेऽपि भवत्तनूनामिति दृष्ट्या तव तनुभिर्भक्तैः रक्ष्यते सर्वत्र प्रवर्त्तनादित्यर्थः ।तस्य च धर्मस्य परमः फलरूपः न च स्वर्गादिफलवद्विकारी किन्तु निर्विकारः भवानेव मतः त्वत्प्राप्तिरेव त्वद्भक्तेः फलमित्यर्थः । अत्र सनातन निर्विकारपदाभ्यामन्यो धर्मो न व्याख्यातः ॥ १८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

चिकीर्षितं कर्तुमिष्टं न विद्मः तथा अनयोः अस्मासु च यथेष्टं निग्रहादिकं कुर्वीति वक्तुं तद्वः प्रसादयाम्यद्येत्यादिवाक्यस्यान्यथानुपपत्त्या लोकसंग्रहार्थत्वं विद्मः त्वं तु सर्वेषां स्वामी न तादृशवाक्येन तव तेजः क्षतं भवतीत्याहुः । कुतो मे इत्यादिना । अध्यक्षः सन् तदनुग्रहो मे इत्याद्युक्त्या ममानुग्रहः कृत इति यत्प्रभाषसे तल्लोकसंग्रहार्थमिति गम्यते अध्यक्षस्य सर्वस्वामिनः अनुग्राह्यत्वानुपपत्तेः ॥ १६ ॥

लोकशिक्षार्थता प्रपञ्चयते ब्रह्मण्येत्यादिना विप्राणां किम्बहुना देवदेवानां ब्रह्मशिवादीनामपि भगवान् त्वम् आत्मा मूलंदैवतमुपास्यं च तस्य तव ब्रह्मण्यस्य सतः ब्राह्मणाः परं दैवं हेप्रभो ! किलेति वार्तायां वार्ताव्यवहारः लोकशिक्षार्थ इत्यर्थः ॥ १७ ॥

तद्युक्तमेवेत्याहुः । त्वत्त इति । सनातनः वेदप्रोक्तः धर्मः त्वत्तः एव भवति तव तनुभिः मूर्त्तिभिः रक्षते च धर्मस्य च परमः फलरूपः गुह्यः इष्टात् ऐहिकादन्यः अविकारी आमुष्मिकादन्यः मुक्तगम्यः मतः सर्ववेदसम्मतः भवानेव अतो लोकशिक्षार्थं तादृशवाक्यं तव सङ्गतमिति भावः ॥ १८ ॥

भाषाटीका ॥

मुनिबोले हे ! भगवन् हे देव हमलोग आपके के अभिप्राय कोनहीं जान सकते हैं जोकि आप कहते हो हम पर अनुग्रह किये आपतो मालिकहौ ॥ १६ ॥

हे प्रभो आपतो ब्रह्मण्यहौ ब्राह्मण आप के परम देवता हैं हे देव आपको मानने वाले ब्राह्मणों के देवता आप हो ॥ १७ ॥

आप के शरीरों से आप सनातन धर्म को रक्षाकरते हैं आपधर्म के परम गोप्ताहौ निर्विकार हो ॥ १८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विपरीतं चेदमित्याहुः । तरन्तीति । यस्यानुग्रहादेव विरक्ता योगिनश्च सन्तो मृत्युन्तरन्ति स भवान् परैरनुगृह्येतेति किं स्वित् न किञ्चिदित्यर्थः ॥ १९ ॥

यच्चोक्तं यत्सेवया चरणपद्मपवित्ररेणुं सद्यः क्षताखिलमलं प्रतिलब्धशीलामित्यादि तदत्यन्तमसम्भावितमित्याहुः यं वै विभूतिर्लक्ष्मीरनुवेलमवसरेऽवसरे उपयाति सेवते धृतः पादरेणुर्यस्याः धन्यैः सुकृतिभिरर्पितमङ्घ्रौ यत्तुलस्यानवं दाम तदुद्गमस्थानं यस्य तस्य मधुव्रतपतेर्भ्रमरमुख्यस्य लोकं स्थानं मद्वाञ्च कामयमानेव ॥ २० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

इदं तदनुग्रहो मे इति वचनम् न किञ्चिद्घटितमित्यर्थः काकार्थलाभादित्यर्थोक्तिः ॥ १९ ॥

विभूतिर्लक्ष्मीश्चात्र जगदधिकारिण्येव व्याख्येया प्रेयस्यास्तस्याः परमभागवतशिरोमणित्वेन वक्ष्यमाणानादरानुपपत्तेस्तथा व्यव्यवहितपद्ये तथा भावार्थव्याख्यानमभेदाभिप्रायेणेति गम्यम् इवेति स्वाधिकारे जगति वैराग्याभावोऽपि दार्शितः अभेदपक्षेतु अन्तरङ्गाङ्घ्रिकामनायामपि वहिर्वाम्याविष्कारोऽपि दर्शितः ॥ २० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

प्रभो! धर्मसंस्थापनार्थायैव ब्रह्मदेवमित्युक्तमन्यथेदमनुपपन्नमित्याहुः । तरन्तीति । निवृत्ताः निवृत्तिधर्मनिष्ठाः योगिनः मृत्युं संसारं यदनुग्रहाद्यस्य तवानुग्रहादञ्जसा सुखेन तरन्ति तथा च श्रुतिः अमृतस्यैष सेतुरिति सेतुः प्रापकः स भगवान्परैरन्यैरनुगृह्णीत किं स्विदिति काकुः नानुगृह्णीत इत्यर्थः अनुग्राहयते परामिति पाठान्तरं तदा परं ब्राह्मणमनुग्रहकर्त्तारं करोषि किमित्यर्थः ॥१९॥

यदुक्तं न श्रीर्विरक्तमपि मां विजहातीति । तदपि यथाश्रुताभिप्रायकत्वेऽत्यन्तानुपपन्नमिति मत्वा तत्तात्पर्यं परिष्कुर्वन्त आहुः सार्द्धेन । यमिति । यं त्वां विभूतिर्लक्ष्मीः कथंभूता अर्थार्थिभिश्चतुर्विधपुरुषार्थार्थिभिः स्वशिरसा धृतः पादरेणुर्यस्याः सा तथाचोक्तम् आकिञ्चन्यैकशरणाः केचिद्भाग्याधिकाः पुनः । तत्पादाम्भोरुहद्वन्द्वं प्रपद्य प्रीतमानसाः । लक्ष्मीं पुरुषकारेण वृतवन्तोवरानने ! इति एवं भूता लक्ष्मीः धन्यार्चिताङ्घ्रितुलसीनवदामधाम्नः धन्यैर्भागवतैरर्चितं नूतनतुलसीमालायाः स्थानं यस्य तस्य मधुव्रतपतेर्भृङ्गराजस्य लोकं स्थानं श्रीपादपद्मं प्रकामयमानेव यं त्वामनुवेलं तत्तदुचितावसरेषु उपयाति सेवते ॥ २० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मुक्तामुक्तप्रपञ्चोत्तमत्वमर्थादुक्तं तदिदानीं घटयन्तीत्याह । तरन्तीति । निवृत्ता निवृत्तिधर्मनिष्ठा योगिनो ज्ञानिनो यस्यानुग्रहात् मृत्युं संसारमञ्जसा तरन्ति हि यस्य प्रसादादित्यादिश्रुतिसिद्धत्वात् संसारोन्मूलकत्वेन समुक्तामुक्तोत्तमो भवान् परैरन्यैर्ब्राह्मणादिभिरनुगृह्येतानुग्रहपात्रीक्रियेतेति यत्तत् किंस्वित् विप्रस्तुतिमन्तरेण न किमपीत्यर्थः ॥ १९ ॥

लक्ष्म्या उत्तमत्वं स्पष्टयन्तीत्याह । यंवा इति । वा इत्यनेन मम योनिरप्स्वान्तरित्यादिवाक्यं प्रमाणयन्ति विभूतिःश्रीरन्यैर्ब्रह्मादिभिर्विरक्तिभक्त्याद्यर्थार्थिभिः नित्यप्राप्तभगवदनुग्रहायानित्यमुक्तायाः प्राप्यप्रयोजनान्तराभावादुपयानं किमर्थमित्याशङ्क्य सेवायामानन्दैकरूपत्वेन स्वभावत्वेऽपि लोकविडम्बनमेव प्रयोजनमितिभावेन विशिषन्तीत्याह । धन्येति । धन्यैर्भक्तिज्ञानादिगुणपूर्णत्वेन स्वर्गादिफलानिच्छुभिरर्पितमङ्घ्रितुलसीनवदाम यत्तस्य धाम्नो धारकस्य तव तुलस्या लोकं स्थानं चरणयुगलमुख्योरसि स्थितां स्पर्धयेव कामयमाना ममैतत्स्थानं भूयादिति भावं दर्शयन्तीयं निषेवत इत्यर्थः नचेदमविज्ञातं हरिणेति भावेनोक्तं मधुव्रतपतेरिति मधुनोरसस्य व्रतं भुक्तिर्येषां ते मधुव्रताः सारभोजनास्तेषां पत्युः व्रतं वै विष्णुवर्पेज्यातपोमासाग्निभुक्तिष्वभिधानं लब्ध्वापि वक्षसि पदमित्यस्मादुक्त एवार्थः ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तरन्तीति । यदनुगृह्णीत तत् किं स्वित् तत्तुतर्कातीतमित्यर्थः ॥१९॥

। यमिति । अत्र च पूर्ववज्जगदधिकारिण्येव लक्ष्मीः न तु साक्षाम् प्रेयसी वैकुण्ठलक्ष्मीः । अस्याः परमभागवतशिरोमणित्वात् । उपयाति आराधयति । लोकं विषयं वैकुण्ठकीटविशेषस्यापि विषयं कामयमानेति तस्या वैकुण्ठलक्ष्मीतोऽतिन्यूनत्वं दर्शितम् । इवेति स्वविषये जगति वैराग्याभावोऽपि दर्शितः ॥ २० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ज्ञानस्यापि गुह्य इत्याह । तरन्तीति । निवृत्ताः परमहंसाः यस्यानुग्रहं प्राप्य अञ्जसा मृत्युं तरन्ति उभयतः कूलंकषा नदीव मृत्युः सर्वेषां मज्जनकर्त्ता अतस्तस्य तरणमुक्तं योगिन इत्यधिकारिविशेषणमनुग्रहे नतु तरणे योगो हेतुः एतादृशो भवान् सर्ववेदरहस्यः किमन्यैरनुगृह्णीत तत्राऽपि परैः अप्रयोजकैः गृह्णीत इत्यपिपाठे परैः कृत्वा यत् कर्म किं किमर्थं स्विदिति निश्चये अनुगृह्णीत किमर्थमनुगृह्णीयात् अन्यैः स्वस्य माहात्म्यं संपाद्य परानुग्रहं किमर्थं कुर्यादित्यर्थः । एतादृशस्यान्यानुग्रहवचनं बाधितार्थमिति प्रतिभाति सत्यवाक्यत्वाच्च तदपि न संगच्छते । अतः अज्ञानमेव ॥ १६ ॥

किञ्च ब्राह्मणकृपया लक्ष्मीस्थिरेति वचनं बाधितार्थमिति प्रतिभातीत्याहुः । यंवैविभूतिरिति । विभूतिर्लक्ष्मीः यं भगवन्तमनुवेलमन्यैरर्थार्थिभिः शिरसा धृतपादरेणुरपि उपयाति सेवार्थं गच्छति तत्रापि भक्तेव तां च भवान् नात्याद्रियत् स कथं द्विजानुपथपुण्यपादरजसा पूतः सन् श्रीवत्सलक्ष्म अगा इतिश्लोकद्वयान्वयः विप्रप्रसादाल्लक्ष्म्याः स्थैर्यमिति पक्षो न संगच्छते भक्त्यैव तस्याः स्थिरत्वात् न च तस्याः भक्तिः ब्राह्मणसाध्या भक्तौ ब्राह्मणानामपि भक्तत्वेनैवोपयोगात् ब्रह्मभावानन्तरम्भक्त्यधिकारात् ब्रह्मभावप्रापणार्थं तदपेक्षेति चेत् तस्याः सिद्ध एव ब्रह्मभावः मम योनिर्महद्ब्रह्मेति वाक्यात् ब्रह्मानन्दरूपत्वाच्च तच्छरीरस्य अतः साक्षात्परंपरया वा तस्या भक्तौ ब्राह्मणानामनुपयोगात् भक्त्यैव च स्थैर्यात् भगवद्वाक्यं चिन्त्यं किञ्च ब्राह्मणाः भिक्षुकाः अर्थार्थिनामिन्द्रादीनामुपसर्पकाः ते च लक्ष्म्याश्चरणरेणूपासकाः अतः उपजीव्योपजीव्यत्वात् तस्याःकथं ब्राह्मणाधीनत्वं किञ्च साहि भोग्यभावमेवत्यक्तवती तेन तस्याः फलत्वमेव नास्ति साहि रसान्तरे प्रविष्टा नहि भक्तिरसे कामरसः प्रविशति भगवानपि । ये यथा मां प्रपद्यन्त इति वाक्यात् भक्तत्वेनैव तां स्वीकरोति यथा तुलसीमतः तस्या गुणा अपि नापेक्ष्यन्ते सा हि तुलसीमपि निर्गुणां वहुमन्यते ततोऽपि हीनभावंच भ्रमरा नाना पुष्परसेष्वासक्ताः तेऽपि यदि भक्तिमाहात्म्यात् तुलसीरस एव मकरन्दाभासाभावेऽप्यासक्ताः तदा मयापि तथैव विधेयमिति भ्रमरलोकमेव कामयते एवमपि सति लब्धपदा सा पुनः स्वभावं प्राप्स्यतीति भक्तत्वेऽपितां नात्याद्रियत् तदपेक्षयापि ये स्वभावत एव निर्दुष्टा भगवति लब्धपदा अपि हेत्वभावात् न पूर्वावस्थां प्राप्नुवन्ति ते परमभागवताः तेष्वेव प्रकृष्टः सङ्गः एतादृशलक्ष्म्याः यदसाधारणधर्मत्वं तत्रापि भगवान् भगवच्छब्दार्थः नित्या एव भगवति षड्गुणाः ब्राह्मणानुग्रहजन्यत्वे कृत्रिमता स्यात् । व्यामोहनलीलापरत्वेन तु अलौकिकप्रकारेण वयं न व्यामोहनीयाः साधारणेन तु विशेषज्ञानस्य जातत्वात् न व्यामोहो-

यस्त्वां विविक्तचरितैरनुवर्तमानां नात्याद्रियत्परमभागवतप्रसङ्गः ।
स त्वं द्विजानुपथपुण्यरजः पुनीतः श्रीवत्सलक्ष्म किमगा भगभाजनस्त्वम् ॥ २१ ॥
धर्मस्य ते भगवतस्त्रियुग ! त्रिभिः स्वैः पद्भिश्चराचरमिदं द्विजदेवतार्थम् ।
नूनं भृतं तदभिघाति रजस्तमश्च सत्त्वेन नो वरदया तनुवा निरस्य ॥ २२ ॥
न त्वं द्विजोत्तमकुलं यदिहात्मगोपं गोप्ता वृषः स्वर्हणेन ससूनृतेन ।
तर्ह्येव नंक्ष्यति शिवस्तव देव ! पन्था लोकोऽग्रहीष्यदृषभस्य हि तत्प्रमाणम् ॥ २३ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भविष्यतीति तात्पर्यं विशेषेण भूतिर्यस्या इति भगवद्भजने भगवदुपयोगिनी सर्वा सामग्री निरूपिता तस्याः समीपगमनमेव नतु भोगपर्यवसानमित्युपेत्युक्तम् अन्यैरपि भगवद्विमुखैः भगवद्वैमुख्ये हेतुः अर्थार्थिभिरिति धनाभिनिविष्टचित्ता न भगवत्संमुखा भवन्ति बाला एव स्तनपानव्यग्राः मातरमेवमन्यन्ते स्वसिरसा धृतपादरेणुरिति भक्तैरेवान्येषां प्रवृत्तिः तेषां श्रेयमुपास्या देवता तस्याः अपि चरणे रेणवः तदीयशरीरसंपादकाः शिरसा स्थापनं तेषामेव प्रथमसम्बन्धार्थं तुलस्या अलौकिकत्वे तल्लोकाकांक्षित्वं न भक्तिहेतुकमिति धन्यार्पितेत्युक्तं कृत्रिममात्रत्वे भगवत्संबन्धो न संभवतीति धन्येति धनमर्हन्तीति धन्याः लक्ष्म्या आधिभौतिकं रूपमर्हन्तीति भगवद्भूतानि सेवका धन्या अन्ये धनिनोऽपि न धनमर्हन्ति श्वान इव गङ्गाजलमत एव न तस्य धनस्य भगवदुपयोगः धनस्य स्वोपयोगात् तदधिका तुलसी तैर्भगवति समर्प्यते अर्थोवसमर्पणं भक्तिहेतुकं तुलस्या नवदाम चरणे समर्प्यते अन्यथा बहुतुलसीदाने चरण आच्छन्नः स्यात् तद्भगवच्चरणारविन्द एव तिष्ठति भक्तप्रसादे वा तत्कण्ठेषु उभयथापि नैतादृशं स्थानमन्यदस्तीति तद्धाम भ्रमरस्य तथात्वे हेतुमाह । मधुव्रतपतेरिति । मध्वेव व्रतं यस्य नियमाद्धर्मइति पक्षे मधुव्रतेऽपि धर्मः मधुव्रतानां पतिरिति व्रतिनामिव तत्संबन्धित्वेन कृतार्थः परंपरयापीति सूचितम् इवेति ब्रह्मानन्दस्य हीनभावव्यावृत्त्यर्थमुपमा निरूपिता कामयानेवेति कामितोऽर्थः श्रद्धायुक्तो भवतीति ॥ २० ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तेष्वपि ब्राह्मणेषु मध्ये प्रवृत्तिनिष्ठेभ्यो निवृत्ताः श्रेष्ठास्तेभ्योऽपि योगिनस्तेऽपि यदनुग्रहान्मृत्युं तरन्ति स भवान् यत्परैरन्यैरनुगृह्येत तत् किं स्विदिति प्रश्नो विस्मयाधिक्येन ॥ १९ ॥

यथोक्तम् ।

> यत् सेवया चरणपद्मपवित्ररेणुं
> सद्यः क्षताखिलमलं प्रतिलब्धशीलम् ।
> न श्रीर्विरक्तमपि मां विजहाति

इति तदप्यसम्भवत्वादाति दुर्ज्ञेयमित्याहुर्द्वाभ्याम् । यं त्वां विभूतिः सम्पत्तिरूपा लक्ष्मीः अनुवेलमवसरे अवसरे उपयाति सेवते धृतः पादरेणुर्यस्याः सा । धन्यैर्भक्तैरर्पितमङ्घ्र्योर्यत्तुलस्या नव दाम तत्रैव धाम ऐश्वर्यं यस्य तस्य मधुव्रतपतेर्भ्रमरमुख्यस्य लोकमङ्घ्रिं कामयमाना इव त्वत्कान्तापि त्वद्भक्तैवेत्यर्थः ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अन्यथा त्वं यः संसारार्णवादन्यानुद्धरति स भवानन्यैः कथमनुगृह्येतेत्याहुः । तरन्तीति ॥ १९ ॥

यथोक्तं ।

> यत्सेवया चरणपद्मपवित्ररेणुं
> सद्यः क्षताखिलमलं प्रतिलब्धशीलम् ॥
> न श्रीर्विरक्तमपि माम्विजहाति यस्याः
> प्रेक्षालवार्थमितरे नियमान् वहन्ति ॥

इति येषां विभस्यर्हमखण्डविकुण्ठयोगमायाविभूतिरमलाङ्घ्रिरज इति च तदपि यथा श्रुतत्वेऽत्यन्तमनुपपन्नं लोकशिक्षार्थतया तु सङ्गच्छेत इत्याशयेनाहुः । यमिति द्वाभ्याम् । अर्थार्थिभिः पुरुषार्थकामैः शिरसा धृतः पादरेणुर्यस्याः सा विभूतिः लक्ष्मीः वक्षसि स्थितापि धन्यैःसुकृतिभिरर्पितमङ्घ्रौ यत्तुलस्याःनवदाम नूतना माला तद्धाम स्थानं मधुव्रतपतेः भ्रमरराजस्य लोकं स्थानमङ्घ्रिरसविशेषलोभेन कामयानेव अनुवेलम् अवसरे यमुपयाति सेवते ॥ २० ॥

भाषाटीका ।

जिन आपके अनुग्रह से संसार से निवृत्त योगिजन संसार को तरजाते हैं तिन आप के ऊपर क्या कोई दूसरा अनुग्रह कर सकता है ॥ १९ ॥

अर्थ के चाहाना वाले ब्राह्मादि कोने जिन के चरण रेणु को मस्तक से धारण किया है सो लक्ष्मी जी आप के चरण को चाहती हैं वह चरण कैसा है कि पुण्यात्मा पुरुषों की अर्पण करी जो तुलसीकी माला तिसका लोभी जो भौंरा तिसका स्थान है ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विविक्तचरितैर्विशुद्धैः परिचरणैरनुवर्त्तमानां सेवमानामपि यो नात्याद्रियन्नातीवादृतवान् स एवं भूतस्त्वम् अयं भावः इत्थं नात्यातिलम्पटतया लक्ष्मीस्त्वां सेवते कथम् एवं हि सा मेने अयं हि सारग्राही मधुव्रतश्चञ्चलश्च स चाङ्घ्रिगतायां तुलस्यां सपरिवारो निश्चलः सन् रमतेऽतोऽङ्घ्रिलावण्यमत्याधिकं स्यात्तोऽहं वक्षसि स्थितापि योगिजनादिबहुसेवकसंघसंघर्षमङ्गीकृत्यापि तुलस्यासह सापत्न्येनापि चरणौ सेविष्ये इति तदेवमौत्सुक्येनानुवर्त्तमानामपि तां त्वं नातीवाद्रियसे यतः परमभागवतेष्वेव प्रकृष्टसङ्गवान् स एव परमसौभाग्यनिधिस्त्वम् । अतो ब्राह्मणप्रसादान्मां श्रीर्नविजहातीत्यलभ्यलाभत्वेन निर्देशो न समञ्जस इति किञ्च स्वत एव त्वं भगभाजनः भजनीयानां गुणानामाश्रयः परमशुद्धं च त्वां द्विजानामनुपथं पथि पथि लग्नं यत्पुण्यं रजस्तथा श्रीवत्सलक्ष्म च किं पुनीतः पवित्रीकुरुतः किं किमर्थं च ते एते अगाः प्राप्तः भूषणत्वेन स्वीकृतवानासि अतो यत्सेवयेत्यादिचरणपद्मपवित्ररेणुमित्यादि वचनं लोकसङ्ग्रहमात्रमित्यर्थः ॥ २१ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

धर्ममूर्तेश्च तवेदमुचितमेवेत्याहुः । धर्मस्येति त्रिभिः । त्रिष्वेव युगेष्वाविर्भवतीति त्रियुगः यद्वा त्रीणि युगानि युगलानि त्रियुगाः षड्गुणा भगशब्दवाच्याः संत्यस्येति त्रियुगः हे त्रियुग ! धर्मरूपस्य तव त्रिभिः पद्भिः स्वैरसाधारणैस्तपःशौचदयाभिः सत्यस्य धर्मविप्लवेऽपि कलावनुवर्तमानत्वात्त्रिभिरित्युक्तम् किं कृत्वा नोऽस्माकं वरदया सत्त्वेन तनुवा तन्वा सत्त्वमूर्त्या तदभिघाति तेषां पादानामभिघातकं रजश्च तमश्च निरस्य निराकृत्य द्विजानां देवतानां च प्रयोजनाय नूनं भूतम् यद्वा हिलोपे रूपं निरस्येति अस्माकम् तन्निवर्तयेत्यर्थः ॥ २२ ॥

आत्मगोपं त्वयैव रक्षणीयं द्विजोत्तमानां कुलम् यदि ह स्फुटं त्वं न गोप्ता न रक्षिता तृन्प्रत्ययांतत्वान्नषष्ठीप्रयोगः वृषः श्रेष्ठः हेदेव! पन्था वेदमार्गो नंक्ष्यति नाशं यास्यति ऋषभस्य श्रेष्ठस्य हि यस्मात्तदनर्हणमसूनृतं चाग्रहीष्यत् तदुक्तं गीतासु 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः स यत्प्रमाणं कुरुते लोकस्तदनुवर्तत' इति॥२३॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या
दीपिकाटिप्पणी ।

योनात्याद्रियतस्स एव परमसौभाग्यनिधिस्त्वमसीति पृथक् वाक्यम् रजः श्रीवत्सलक्ष्मणी उभे कर्तृभूते त परमसौभाग्यनिधिं त्वां किं पुनीत इति तु पृथक् वाक्यम् ते उभे रजः श्रीवत्सलक्ष्मणी कर्मसुते भूषणाभूषणाङ्कस्त्वं किमर्थं भूषणत्वेन स्वीकृतवानसीति च पृथक् वाक्यम् किं पदस्य च स्याच्चैकस्यापि ब्रह्मशब्दवदिति न्यायेनोभयत्र योजना अतः रजःश्रीवत्सलक्ष्मणोः पावकत्वभूषणत्वासम्भवात् तं त्वामिति कर्मपदमध्याहृत्य व्याख्यातम् सत्त्वामित्यत्र तं त्वामिमि पाठे स त्वमित्यस्याध्याहाराज्ञेयः २१ ॥

इदं ब्राह्मणनमनादि पूर्वार्थे त्रीणि युगान्याविर्भावकालाः सन्ति यस्येति तथा व्याख्यानं क्लिष्टकल्पनामयम प्रकृतश्चेत्यरुचौ यद्वेति कलावनुवर्त्तमानत्वात् अनुगतत्वात् सत्यस्य प्रतियुगं नाशाभावात् तेन पालनमनुपयुक्तमिति तत्कथनेन किञ्चित्प्रयोजनमतस्त्रिभिरित्युक्तम् । तपआदिभिर्जगत्पालनं रजस्तमोनाश पूर्वकमेवेति पुनस्तन्निरासकथनमधिकमतो यद्वेति नः रज अपृष्टागमने प्रयोजकं तमश्च शापप्रयोजकं त्वं निरस्येति मध्यमपुरुषस्य हिलोपेरूपम् ॥२२॥

तत्तु सर्वश्रेष्ठभवत्कर्तृकमपूजनमप्रियवचनं च प्रमाणं प्रमाणत्वेनाऽग्रहीष्यत् तत् श्रेष्ठकृताचरणस्य प्रमाणत्वेन ग्रहणमुक्तम् ॥ २३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवचन्द्रचन्द्रिका ।

तां लक्ष्मीं विविक्तैः परिशुद्धैः चरितैः समर्हणैरनुवर्तमानां योभगवान्नात्याद्रियन्नात्याहतवान् कुतः यतस्त्वं परमभागवतैरेव प्रकृष्टसंगवान् अयंभावः एवं हि सा लक्ष्मीर्मेने अयं हि सारग्राही मधुव्रतोऽतिचञ्चलश्चार्चिताङ्घ्रिगतायां तुलस्यां सपरिवारो निश्चलःसन् रमतेऽतोऽङ्घ्रितलावयमधिकं स्यात्ततोऽहं वक्षसिस्थितापि योगिजनाद्विवस्त्रसेवकसंमर्दमङ्गीकृत्यापि तुलस्या सह सापत्न्येनापि चरणौ सेविष्ये इति एवमौत्सुक्येनानुवर्तमानामपि तां त्वं परमभागवतप्रसङ्गेनावसरमलभमानो नातीवादृतवानिति यदुक्तं यत्सेवया चरणपद्मपवित्ररेणुमिति तदपि पवित्र्यमिच्छद्भिर्ब्राह्मणाः सेवितव्या इत्येततात्पर्यकमित्यभिप्रेत्याय येपाममलाङ्घ्रिरजोविभर्मीत्यस्य तात्पर्यं परिस्फुरन्तः आहुरद्धेन । त्वमिति । तं धर्ममर्यादाप्रतिष्ठापयितारं श्रियोऽपि समाश्रणीयं लावण्यनिधिं त्वां द्विजानामनुपथं पथि पथि लग्नं यत् पुण्यं रजः तथा श्रीवत्सलक्ष्म च श्रीवत्सचिन्हं च किं पुनीतः पवित्री कुरुतः किं किमर्थं च ते उभे भगभाजनः निरतिशय सौन्दर्याश्रयः त्वमगाः प्राप्तवानसि भूषणत्वेन स्वीकृतवानसि पुनीतेति पाठान्तरं तदा द्विजानुपथपुण्यरजः पुनीते किं न पुनीत इत्यर्थः तर्हि कथं रजोविभर्मीति श्रीवत्सलक्ष्म किं किमर्थमगा भूषणत्वेनेति चेद्रजोऽपि तथैव विभर्मीति शङ्कोत्तरत्वेन व्याख्येयम् ॥ २१ ॥

एवमलंकारायैव रजो विभर्मीत्यभिधायाथ लोकमर्यादापालकेन भवतावश्यं तत्कर्तव्यमेवेति प्रतिपादयिषवोऽवश्यं लोकमर्यादा भवतापाल्यान्यथोत्सीदेयुरिमे लोका इत्यमुमर्थमन्वयव्यतिरेकाभ्यामुपपादयन्त आहुस्त्रिभिः । हे त्रियुग! त्रीणि युगानि युग्मानि ज्ञानशक्त्यादिगुणानां षण्णां यस्येति त्रियुगस्तस्य संबोधनं धर्मस्य धर्मरूपस्य ते तव त्रिभिः स्वैरसाधारणैः पद्भिस्तपोदानदयात्मकैर्द्विजदेवतार्थं द्विजदेवतासंरक्षणार्थं निजदेवतार्थमिति पाठे तु स्वकीयदेवतासंरक्षणार्थं तदभिघाति तेषां धर्मपादानामविघातुकं यद्रजस्तमश्च रजस्तमः प्रचुरांस्तान्सत्त्वेन शुद्धसत्त्वमयेन तन्वा मूर्त्या वतारैरित्यर्थः निरस्य चराचरात्मकमिदं जगद्भृतं नूनं स्वेच्छोपात्ताप्राकृतदिव्यमङ्गलशुद्धसत्त्वमयमूर्त्या द्विजदेवतार्थधर्मविरोधिनो रजस्तमःप्रचुरान्निरस्य कृत्स्नजगत्तपोदानदयाख्यैः धर्मपदैः पोषयसीत्यर्थः ॥ २२ ॥

नत्वमिति आत्मना भगवता गोपं गोपनीयं रक्षणीयं द्विजोत्तमानां कुलमर्हणेन समर्हणेन सूनृतेन प्रियवाक्येन च यदि श्रेष्ठस्त्वं गोप्ता रक्षिता नचेत्स्वयं धर्माननुतिष्ठंल्लोकांस्तेषु प्रवर्तयसे नचेदित्यर्थः तर्ह्येव तदैव शिवः श्रेयःसंपादकः तव त्वत्संबंधीवेदपथः वेदमार्गः कर्मोपासनात्मकः नंक्ष्यति हि यस्मादृषभस्य यदाचरितं तदेव लोकः प्रमाणं प्रमाणत्वेनाग्रहीष्यत् तदेवगीतं

यद्यदाचरित श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणंकुरुते लोकस्तदनुवर्तते इति ॥ २३ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एवमितरेभ्योऽधिकं निषेवमाणायामस्यां किमपि प्राप्यप्रयोजनान्तराभावात्पूर्वस्मादपरविशेषो नास्ति किन्तु भागवतानां गुणतारतम्यप्रस्तावे परमभागवतत्वेन प्रशंसाप्रसङ्ग एवेत्याह। यस्तामिति। विविक्तचरितैरनन्यैरसाधारणसेवाकरणैरनुवर्तमानां तां श्रियं नात्याद्रियत् गुणानां प्रतीयमानत्वात्त दधिकार्थीत्वया आदरं नाकरोत् किन्तु परमभागवतत्वेन प्रसङ्गो यस्य स तथोक्तः एवम्विधमाहात्म्यः स त्वं द्विजानामनुपथेनानुगमनेन तत्पादपुण्यरजसा पुनीतिः शुद्धिर्यस्य सद्विजानुपथपुण्यरजःपुनीतिः पद्मगताविति धातुः श्रीवत्सलक्ष्मश्रीवत्साख्यलाञ्छनमगाः किं भगभाजनत्वं सौभाग्यपात्रत्वं वा गच्छः किमित्याक्षेपः अत इदं भगवदुक्तं सर्वं विप्रस्तुतिपरमितिसिद्धं यद्ययं शास्त्रतात्पर्यार्थः स्यात्तर्हीदं स्तुतिपरं स्यात्स्फुटं इतीयमाशङ्का "हरिभक्तिर्हरेः प्रीतिर्ज्ञानानन्दादयो गुणाः। अधिकारे च मुक्तौ च ब्राह्मवाय्वोश्च तत्त्रियोः । शेषवीन्द्रहराणां वासवादिनां यथाक्रमंतु विज्ञेया भूमौ करणतोऽन्यथा । देहस्य लक्षणं चैव भूमावप्यन्यथा भवेत् । ब्राह्मादिषु क्रमेणैव नित्यं स्याद्देहलक्षणं श्रियोऽधिका गुणाः सर्वे सर्वेभ्यो नियमेन तु। उक्ताश्चैवाप्यनुकाश्च ततोविष्णोर्न संशय इत्यनेन परिहृतेति ॥ २१ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इतोऽपि द्विजकुलस्य गोपनीयत्वाभिप्रायेण भगवता द्विजावना दिकं क्रियते इति विज्ञापयन्तीत्याह । धर्मस्येति । नूनमन्यत्प्रयोजनमन्तरेण धर्मस्य सर्वधारकस्य धारणाद्भगवान् धर्म इत्यादेर्भगवतस्ते तव स्वैः स्वरूपभूतैस्त्रिभिरनन्तासनवैकुण्ठक्षीरसागरशायिभिः पद्भिरंशैर्मूर्तिभिश्चराचरमिदं विश्वं द्विजानां प्रयोजनमुद्दिश्य भूतं रक्षितमित्यन्वयः हे त्रियुग त्रियुगेष्ववतारो यस्य स तथा संबुद्धिः तत्प्रतिषेधपक्षनिर्मूलनाभावे रक्षणं कथं संगच्छते इत्यतउक्तं तदभिघातीति तपआद्यनुष्ठानविरोधिरजस्तमश्च तनुवा मूर्त्या निरस्याभिभूय कथंमूर्तिरित्यत उक्तं नोवरदयेति अस्माकं ज्ञानप्रदाननिरतया किमाख्ययेत्यस्यापि इदमेवोत्तरं वरदया कपिलाख्यया कपिलो वरदश्चैव विकल्पश्चेति कथ्यत इत्यतोगुणावाचकस्य विशेष्याभिधेयत्वं कथमिति निरस्तं तापसस्य शान्तस्य कपिलस्य क्षत्रियवदायुधाद्यग्रहणात्कथम्विरोधिविनाशकत्वमित्यतउक्तं सत्त्वेनेति सत्त्वेन सत्त्ववर्धनेन निरास इति शेषः तृतीयया सत्त्वगुणस्य कारणमात्रत्वं न मुख्यत्वं कपिलस्यैव मुख्यत्वं ज्ञायते शरेण रामइतिवत् एवंविशेषार्थः कस्मादयंकल्प्यत इति चोद्यम् । अनन्तासनवैकुण्ठक्षीरसागरगैस्त्रिभिः । रक्षाकरोति भगवान् कपिलः सत्त्ववर्धनात् । असत्त्वोऽपि रजश्चैव तमश्चापि निरस्यत्वित्यनेन निरस्तम् ॥ २२ ॥

हे वृष ! इन्द्र परमैश्वर्यवारिधे ! यो द्विजदेवतारक्षैकानिरतः स त्वं यद्यदीह जगति आत्मैव गोपो गोपकोयस्य तदात्मगोपं द्विजोत्तमकुलं सुसूनृतेन शोभना मधुरा वाग्यस्य तत्तथा तेन स्वर्हणेन लोकमान्यसत्कारेण न गोप्ता न रक्षितासि देव ! क्रीडादिगुणपूर्णः तर्हि तदानीमेव तव शिवः शुद्धः पन्थाः तत्त्वविषयो ज्ञानमार्गः शिष्टाचारश्च नंक्ष्यति उत्सन्नो भविष्यति तत्र हेतुगर्भविशेषणमाह । लोकइति । लोकइतरोजनः ऋषभस्य सद्धर्मप्रवृत्तिसमर्थस्य यत्प्रमाणं तद्धेवाग्रहीष्यत् यद्यदाचरति श्रेष्ठ इत्यादेः ॥ २३ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अतः पूतचरितैः परिचरन्तीमपि नात्याद्रियत् तल्लोकस्यादानात् जगति मुहुः स्थापनाच्च । परमो निष्कामः । अत्र टीकायामेकमेव किं पदमुभयथोभयत्र योजितं स्याच्चैकस्यापि ब्रह्मशब्दवदिति न्यायेन ॥ २१ ॥

अथ निर्वेदाद्भारतवर्षस्थितिः तत्तद्युगस्वभावाविष्टसाधारणविप्रवन्मान्यतया सदैन्यमाहुः । धर्मस्येति त्रिभिः । पद्भिरिति एकशेषो द्वन्द्वः । एकैकपादस्य त्रिभिस्त्रिभिरंशैरित्यर्थः । त्रियुगत्वात् कलौ तदाविर्भावाभावेन चतुर्थचतुर्थांशमात्रस्य स्थितत्वात् । ततश्च तेषां कालेन क्रमशो नश्यतामपि तदाविर्भावेनैव च मुहुः पूरणात्त्रिभिरित्युक्तम् । अतोऽभीष्टप्रदयानया तन्वा आकृत्या सत्त्वेन सह तत्पदत्रयात्मकं रजस्तमश्च नोऽस्माकं निराकुरु । यैः पार्षदानां निग्रहानुग्रहादौ प्रवर्त्तिता स्मः तान् गुणान् निजतनुतेजसा स्वयमपुनरुद्भवान् कुर्वित्यर्थः ॥ २२ ॥

तत्प्रमाणं मत्वेति योज्यम् ॥ २३ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवमपि भजने भगवतश्चेत्तत्फलं भवेत् तदापि ब्राह्मणवाक्यस्य हेतुत्वं कल्पेतापि तदपि नास्तीत्याह । यस्तामिति यः प्रसिद्धः लक्ष्म्याः प्रसादत्वं वदति सोऽपि वदत्येव नतु तां मन्यते यतः तां नात्याद्रियत् तत्र हेतुः परमभागवतेषु प्रकृष्टः सङ्गो यस्येति ते हि परमा असाधारणा लक्ष्मीसहितं नोपासते अंशेन सेवाया व्यभिचारात् अतः तदनुरोधेनापि न लक्ष्म्या सह रमणं एतादृशः त्वं द्विजानामनुपथं यत्पुण्यरजः भगवतो द्विजानुगमनमेव न सम्भवति ईश्वरत्वात् ते हि पादचारिणः अर्थाच्चानुवर्त्तकाश्च दूरे तद्रजसः पुण्यत्वं मार्गरजसः अपवित्रत्वात् तेन च पावित्र्यं ततोऽपि दूरे श्रीवत्सरूपं लक्ष्म चिह्न किमर्थं त्वमगाः प्राप्तवानसि यतस्त्वं भगभाजनः सहजश्चर्यादि धर्मयुक्तः ॥ २१ ॥

एवं विरोधमुक्त्वा तस्य तात्पर्यं कल्पयन्तः धर्मरक्षार्थं वचनमिति कल्पयितुं धर्मो भगवता सर्वथा रक्षित इति धर्मरक्षा हेतुत्वार्थमाहुः । धर्मस्येति । हे त्रियुग ! युगत्रय एव भगवदाविर्भावः न कलौ अत एव कलौ धर्मोऽपि नास्ति रक्षकाभावात् युगत्रय एव भगवदाविर्भावे तत्रैव रक्षायां च हेतुमाह । त्रिभिः स्वैः पद्भिरिति । भगवान् त्रिपात् यज्ञस्य सवनत्रयात्मकत्वात् स्वैरसाधारणैः अतो द्विपात् च तुष्पाच्च लोकासिद्ध इति तद्वैलक्षण्यं न दोषाय पद्भिरिति वा द्वित्वसंख्या तेन षड्गुणेषु द्वाभ्यां द्वाभ्यामेकैकस्मिन् युगे धर्मरक्षा ज्ञानवैराग्याभ्यां सत्ये यशः श्रीभ्यां त्रेतायामैश्वर्यवीर्याभ्यां द्वापर इति कलौ न कोऽप्यवशिष्यते धर्मो धर्मरक्षकः किञ्च सत्त्वेन पाल्यते धर्मः केवलसत्त्वस्य प्रवृत्तिः सत्ये रजसा सहितस्य त्रेतायां सत्त्वसम्बन्धयोग्येन रजसा तमसा च द्वापरे रक्षा कलौतु सत्त्वस्य तत्सम्बन्धिनश्चाभावात् न रक्षा जगदपि भगवता धर्मार्थमेव रक्षित मित्याह । चराचरमिदमिति । यद्यपि धर्मोऽपि भगवान् जगदपि तथापि धर्मार्थमेव जगत् पाल्यते तदाह द्विजानां देवानां चार्थे इदं जगत् नूनं भृतमिति ननु स्वरूपेणैवात्र धारणं किंसत्त्वेन गुणैर्वेत्याशङ्क्याह तस्य जगतः अभिघाति नाशकं रजस्तमश्च विक्षेपेण मारयति रजः आवरणेनतु तमः उभयथापि जगत् धर्मार्थं न भवति अतो रजस्तमश्च सत्त्वेन निरस्य नूनं भृतमितिसंबन्धः सत्त्वस्योभयनिराकरणे सामर्थ्यमाह । नो वरदया तन्वेति । ब्रह्मादीनां देवानामूर्ध्वंगतिदातृत्वात् वरदत्वमन्यदर्थान् प्रयच्छतीति च तदेव सत्त्वं तनुरूपं जातं तनोतीति तनुः अतोऽनन्तस्वरूपजननसामर्थ्यात् तयोर्निरसनसामर्थ्यमतस्त्वं धर्मरूपः देवब्राह्मणेषु प्रतिष्ठित इति ब्राह्मणोत्कर्षः तद्रक्षापरमेति अन्तः प्रीतिहेतुत्वात् तथोच्यत इति ॥ २२ ॥

विपरीते बाधकमाह । नत्वमिति । यदि त्वं द्विजकुलं गोप्ता तर्ह्येव तव शिवो वेदपन्थाः नंक्ष्यति तत्र हेतुः लोकोऽग्रहीष्यदिति ऋषभस्य प्रभोः यत्प्रमाणं तल्लोकः अग्रहीष्यत् द्विजोत्तमानां धर्मज्ञानसहितानां कुलं समूहः यद्यस्मात्कारणात् यः कुलमात्मानं स्वात्मानं वा भवन्तं गोपायतीति आत्मा स्थितः स्वमार्गे गच्छेत् अत आत्मा प्रथमतो रक्षणीयः तदनन्तरं स्वमार्गरक्षा स्वात्मानं प्रति ये समायान्ति येन मार्गेण सत्स्वमा- तत्रापि भक्तानामागमनप्रतिबन्धकानिवृत्तिरेव रक्षाते चेद्भगवद्रक्षणीया भवेयुः धर्मज्ञानयुक्ताश्चेत् भक्तिमार्गप्रवर्त्तकाः तदा ते रक्षणीया इत्यर्थः तेषां रक्षा त्रिविधा स्वरूपतः संतोषजननेनान्तः प्रतिष्ठाजननेन च वहिः तत्र स्वरूपतो रक्षाघातारैः क्रियते अथावशिष्यते अन्तर्बहिश्च तदाह स्वर्हणेन ससूनृतेनेति अर्हणं पूजाकायिकी तेन वहीरक्षा तेषां प्रयोजनसा- अन्यथा लोकसंमाननाभावे भगवन्मार्गोपदेशो न स्यात्

**तत्तेऽनभीष्टमिव सत्त्वनिधेर्विधित्सोः क्षेमं जनाय निजशक्तिभिरुद्धृतारेः ।**
**नैतावता त्र्यधिपतेर्बत विश्वभर्तुस्तेजः क्षतं त्ववनतस्य सते विनोदः ॥ २४ ॥**

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तेन च अन्तः परितोषोऽनेनोक्तः एतस्य सह भावः अतस्तोपस्य भगवत्कार्यहेतुत्वाय अतो मार्गप्रवर्त्तकरक्षाभावे मार्गो नश्येदेव तर्ह्येवेति पाखण्डप्रवृत्ते सुगमत्वात् नच बहूनां मार्गाणां विद्यमानत्वात् किं वेदमार्गेणेत्यत आह । शिव इति । अन्ये याद्दच्छिकाः कस्यचिदेव दुःखेनापि फलसाधकाः वेदमार्गस्तु शिवः कल्याणरूपः ननु ब्राह्मणानां संमाननाभावे कथं वेदो न रक्षितः स्यादित्याशङ्क्याह । लोकोऽग्रहीष्यदिति । लोकस्तु स्वामी भगवान् यं मन्यते तमेव मन्यते ब्राह्मणैरेव वेदमार्गो बोध्यते नान्यैरिति तेषां सम्माननाभावे अप्रवृत्तिः पाखण्डतुल्यता वा स्यात् वृषेति सम्बोधनं धर्मरूपत्वाय वर्षणाद्वा ॥ २३ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

विविक्तचरितैर्विशुद्धैः परिचरणैः नात्याद्रियत् नातीवाद्दतवान् अत्रातिशब्देन पत्नीत्वेनैव नाद्रियत भक्तत्वांशेन त्वाद्रियतैव यतः परमभागवतेष्वेव प्रकृष्टः सङ्ग आसक्तिर्यस्य सः । स त्वं लक्ष्म्या सदैवापेक्षमाणोऽपि तस्यां निरपेक्षोऽपि ब्राह्मणप्रसादादेव मां श्रीर्न जहातीति यद्ब्रूषे तत् किं स्विदिति भावः । तथा द्विजानामनुपथं पथि पथि लग्नं यत् पुण्यं रजः तथा श्रीवत्सलक्ष्म च किमगाः प्राप्तवानसि किं, तत एव हेतोस्त्वं भगभाजनः षडैश्वर्यवानभूः तथा पुनीतः ते एव पुण्यरजः श्रीवत्सलक्ष्मणी त्वां पवित्रीकुरुत एतत्सर्वं दुर्ज्ञेयं किं स्विदित्यर्थः ॥ २१ ॥

किंच विप्रा वयमितः पूर्वं त्वत्तः पराभवं नैव प्राप्ता इत्याहुः धर्मस्येति । त्रिष्वेव युगेषु स्पष्ट आविर्भवसीति हे त्रियुग ! यद्वा त्रीणि युगलानि षड्गुणाः भगवच्छब्दवाच्याः सन्त्यस्येति त्रियुग त्रिभिस्तपःशौचदयादिभिः स्वैः असाधारणैः पद्भिः इदं विश्वं भृतं पालितं सत्यस्य धर्मविप्लवेऽपि कलावनुवर्त्तमानत्वात्त्रिभिरित्युक्तं द्विजदेवतार्थं द्विजानां देवतानां च प्रयोजनायैव नूनं भृतं किं कृत्वा नोऽस्माकं वरदायिन्या तनुवा तन्वा तदभिघाति तेषां पादानामभिघातकं रजस्तमश्च सत्त्वेन सत्त्वगुणेन निरस्य निराकृत्य ॥ २२ ॥

तस्मादधुनाप्यस्मासु तवानुग्रह एवायम् नतु निग्रह इति निश्चित्य समाश्वसिम इत्याहुः । द्विजोत्तमानां कुलं आत्मगोपं त्वयैव रक्षणीयं त्वं यदि ह स्पष्टं न गोप्ता नागोपायिष्यः । वृषो धर्मरूपः श्रेष्ठो वा तर्हि हे देव ! पन्थाः वेदमार्गो नङ्क्ष्यति अनङ्क्ष्यत् ऋषभस्य हि यस्मात् तदनर्हणम् असूनृतञ्च अग्रहीष्यत् । यदुक्तं गीतासु । यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्त्तते इति । अतोऽस्मास्वघटमानमपि यत्सेवयेत्यादि त्वद्वचो लोकशिक्षार्थमेवेत्यभिप्रायः ॥ २३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ॥

यस्तु विविक्तचरितैः अन्योपासकसेवाप्रकारभिन्नैः तदसाधारणैः सेवाप्रकारैः अनुवर्तमानामपि नात्याद्रियत् नातीधाद्दतवान् परमभागतानां ब्रह्मशिवादीनामपि प्रकृष्टः शुद्धार्थे संगो यस्मिन् स त्वं द्विजानामनुपथं पथिपथि लग्नं यत्पुण्यं रजस्तेन पुनीतः पवत्रीकृतः किम् यश्च भगभाजनः स्वाभाविकैश्वर्यनिधिः स त्वं श्रीवत्सलक्ष्म अगाः ऐश्वर्यार्थं स्वीकृतवानसि किम् नहिभगवन् ! यथा श्रुतन्ते वाक्यमुपपन्नमपि तु लोकशिक्षार्थमिति भावः ॥ २१ ॥

किञ्च द्विजोत्तमानां रक्षार्थं विश्वं त्वयैव पालितं तद्रक्षाभावे तन्नाशे वेदमार्गनाशः स्यादतो लोकशिक्षार्थं विप्रेऽवनतस्य तव तेजोहानिर्नेत्याहुः । धर्मस्येति त्रिभिः । हेत्रियुग ! षाड्गुण्यनिधे द्विजेषु या देवता ब्राह्मणजातिस्तद्रक्षार्थम् धर्मस्य धर्मरूपस्य ते त्रिभिः सत्वेन सत्त्वगुणजन्येन सत्येन सहितैः चतुर्भिरित्यर्थः स्वैः स्वासाधारणैः तपःशौचदयाभिधैः इदं विश्वं नूनं निश्चितम् भृतं पालितम् किं कृत्वा नो वरदया तन्वा मूर्त्या जातावेकवचनं नानामूर्तिभिः तदवघाति तपआदिघातकं रजस्तमश्च निरस्य निराकृत्य ॥ २२ ॥

वृषः श्रेष्ठस्त्वमात्मगोपं भवतैव रक्षणीयमर्हणेन पूजनेन सूनृतेन प्रियवाक्यसहितेन यदि न गोप्ता न रक्षिता तर्ह्येव हे देव ! वेदमार्गः नंक्ष्यति नाशं यास्यति ऋषभस्य श्रेष्ठस्य तव तदिदमाचरणं प्रमाणम् अग्रहीष्यत् । "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरोजनः स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते । इतिश्रीमुखोक्तेश्च ॥ २३ ॥

---

भाषाटीका ।

लक्ष्मीजी आपकी सुन्दर उपचारों से सेवा करती हैं तौभी आप परम भागवतों मे स्नेह रहने से उनको आदरनहीं करते हो सो आप क्या ब्राह्मणों के मार्ग मे जोरज तिससे पवित्र होने से लक्ष्मी को प्राप्त भये तिसी से फिर ऐश्वर्य के पात्र भये हो ॥ २१ ॥

हे त्रियुग ! तीनों युगों मे अवतार लेने वाले भगवन् आप अपनी सत्त्वमयी वरदेने वाली मूर्तिसे, धर्म के पादों का नाश करने वाले रजो गुण तमोगुण को दूर करके धर्म के तपदान दयाशौचतीन अपने पादों से ब्राह्मण देवतों के अर्थ इस स्थावर जंगम रूप जगत्को पालन करते हो ॥ २२ ॥

अपने आपसे रक्षाकिया जोब्रह्मकुल तिसको यदि आप रक्षक होकर मनोरथपूरण करने वाले सुन्दर पूजन सुन्दरवचनसे यदि न करतेतो आपका धर्ममार्गनष्टहोजाता क्योंकि श्रेष्ठका आचरण प्रमाण होता है तिससे सबलोग उसीका आचरण करते हैं ॥ २३ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

नश्यत्विति चेत्तत्राऽऽहुः।तर्ह्येदमार्गनाशनम् इवेतिलोकोक्तिःसत्त्वनिधित्वाज्जनाय क्षेमं शं विधातुमिच्छोरतएव निजशक्तिभीराजादिभिरुत्पाटितधर्मप्रतिपक्षस्य अतस्तव ब्रह्मकुलेऽवनतिर्युक्तैव. ननु महतांऽन्येष्ववनतिस्तेजोहानिकरी तत्राऽऽहुः । एतावतातु धर्मत्राणप्रयोजनेनावनतस्य नमनं कृतवतस्तव तेजः प्रभावो न क्षतं न क्षीणम् यतः स नमनादिस्ते विनोदः ॥ २४ ॥

यं वाऽनयोर्दममधीश ! भवान् विधत्ते वृत्तिं नु वा तदनु मन्महि निर्व्यलीकम् ।
अस्मासु वा य उचितो ध्रियतां स दण्डो येऽनागसौ वयमयुंक्ष्महि किल्बिषेण ॥ २५ ॥

श्रीभगवानुवाच ॥

एतौ सुरेतरगतिं प्रतिपद्य सद्यः संरम्भसंभृतसमाध्यनुबद्धयोगौ ।
भूयः सकाशमुपयास्यत आशु यो वः शापो मयैव निमितस्तदवैत विप्राः ! ॥ २६ ॥

ब्रह्मोवाच ॥

अथ ते मुनयो दृष्ट्वा नयनानन्दभाजनम् ।
वैकुण्ठं तदधिष्ठानं विकुण्ठं च स्वयं प्रभम् ॥ २७ ॥
भगवन्तं परिक्रम्य प्रणिपत्यानुमान्य च ।
प्रतिजग्मुः प्रमुदिताः शंसन्तो वैष्णवीं श्रियम् ॥ २८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

शापाग्रहं परित्यज्य विज्ञापयन्ति यं वान्यं दण्डं विधास्यति भवान्वृत्तिं नु अधिकजीविकां वा तत्सर्वमनुमन्यामहे ये वयम् निरपराधावेतौ किल्बिषेण शापेनायुंक्ष्महि योजितवन्तः ॥ २५ ॥

मत्कारितत्वाच्छापस्य युष्माकं नापराध इत्याश्वासयन्नाह। एतौ सद्य एवासुरयोनिं प्राप्य भूयोऽप्याशु मत्समीपमागमिष्यतः सम्भ्रमेण क्रोधावेशेन संभृतः संवृद्धो यः समाधिरेकाग्रता तेनानुबद्धो दृढीकृतोयोगो ययोः हे विप्रा ! यो वः शापो युष्मत्कृतःशापस्तदिति स मयैव निमितो निर्मित इत्यवैत जानीत ॥ २६ ॥

नेत्रोत्सवजनकं विकुण्ठं हरिं तन्निवासं च वैकुण्ठं लोकं स्वयं प्रकाशं प्रकाशान्तरानपेक्षम् सत्त्वपरिणामत्वात् ॥ २७ ॥

अनुमान्यानुज्ञाप्य परिक्रम्य प्रदक्षिणीकृत्य वैष्णवीं श्रियं वैकुण्ठे वर्णिताम् ॥ २८॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

लोकोक्तिरिति। वस्तुतस्त्वनभीष्टमेवेत्यर्थः सत्त्वनिधेरिति हेतुगर्भं विशेषणम् सत्त्वनिधित्वात् समग्रसत्त्वाश्रयत्वात् अतएव क्षेमविधित्वादेव अत उत्पादितधर्मप्रतिपक्षत्वात् ब्रह्मकुले वेदोक्तधर्मानुष्ठातरि विश्वभर्त्तुरिति तेजसोऽक्षतत्वे हेतुगर्भं विशेषणम् अपरिच्छेद्यतेजस्त्वादितिभावः हेत्वन्तरं यतो हेतोः नहि कन्दुकादिविनोदेन राज्ञस्तेजः क्षतं स्यादिति भावः ॥ २४ ॥

पूर्वमेव वृत्तेःसत्त्वादाधिकामित्यध्याहृतम् तत्सर्वमधिकदण्डजीविकाप्रदानादि ॥ २५ ॥

योगो मय्येव चित्तवृत्तिनिरोधः ब्रह्मादिनापेक्षया आश्वित्युक्तम् मत्समीपमिति पूर्वं कृष्णसायुज्यं प्राप्येतिशेषः श्रीदशमे तथोक्तेः सामीप्यप्राप्तिश्च श्रीकृष्णान्तर्द्धाने सति तस्मिन्प्रविष्टस्य विकुण्ठासुतस्य वैकुण्ठलोकगमने तेनैव सहेति ज्ञेयम् ॥ २६ ॥

अथेति युग्मकम् । विकुण्ठम् उपाध्यावरणशून्यं सत्त्वपरिणामत्वाद्विशुद्धसत्त्वविलासत्वात् शंसन्तः प्रशंसन्त इति तत्स्पर्त्तेर्ब्रह्मानन्दतोऽपि वैशिष्ट्यं व्यञ्जितम् ॥ २७ ॥ २८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

न मेपार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन। नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥

यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥
उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
संकरस्य च कर्त्ता स्यामुपहन्यामिमाः प्रजाः ॥

इति त्वयैव गीतत्वाद्वेदमार्गनाशनं तवानुचितमेवेत्याहुः । तदिति। सत्त्वनिधेः शुद्धसत्त्वाश्रयात् एव जनाय क्षेमं विधातुं कर्तुमिच्छोः निजशक्तिभिः निजावतारैरुद्धृताः निर्मूलिताः अरयो धर्मविरोधिनो यस्य तव तद्वेदमार्गनाशनमनभीष्टमिवानभीष्टमेवेत्यर्थः हेऽध्यधिपते त्रिलोकाधिपते विश्वस्य भर्तुर्धारकस्य पोषकस्य वा वनतस्य ब्राह्मणान्प्रणतस्य अत्र प्रणतस्येति रजोधारणस्याप्युपलक्षणं तावता प्रणतिमात्रेण तेजः प्रभावः न क्षतं न विहतं किंतु स प्रणामः ते विनोदः लोकप्रेरणरूपः ॥ २४ ॥

एवं यथामति भगवदुक्तीनां तात्पर्यं परिष्कृत्य तच्चिकीर्षितमजानन्तः स्वापराधानुगुणं दण्डधारणं च निवेदयन्त आहुः । वयमिति । हे अधीश ! तवानयोर्भृत्ययोः यं वा दममस्माभिर्विहितमन्यं वा दण्डं वृत्तिं यथापूर्वमत्रलोकेवर्तनंच विधत्से तन्निर्व्यलीकं सत्यं यथानुमन्महेऽनुमान्यामहेऽस्मासु चोचितः स्वापराधानुरूपः यो दण्डः सक्रियतां भवद्भिःकिमपराद्धमितिचेत् ये वयमनागसौ निरपराधिनौ किल्बिषेण शापेनायुंक्ष्महि योजितवन्तः द्वाःस्थयोरपूर्वजननिवारणं स्वाभाविकमित्यभिप्रायेणानागसावित्युक्तम् ॥२५॥

एवं मुनिभिरावेदितहार्दो मुनीनां भृत्ययोश्चानुग्रहं कर्तुमना भगवान्मुनीन्प्रत्याहैकेन । एतौ पार्षदौ सुरेतरगतिमासुरं जन्म प्रतिपद्य जन्मप्रभृति मयि यः सरम्भः क्रोधस्तेन संभृतः संजातः समाधिरनवरतभावना तेनानुबद्धोऽनुवृत्तः योगः मत्संबन्धो ययोस्तावतएवपुनः सकाशंमत्समीपमुपयास्यतः हे विप्राः ! च युष्माकं यः शापः स मयैव युष्मन्मुखेन विहित इत्यवैतावगच्छत जानीतेति यावत् ॥ २६ ॥

एवं भगवतोक्ता मुनयो ययुरित्याहद्वाभ्याम् । अथानन्तरंनयनयोर्य आनन्दस्तस्य भाजनं विषयं वैकुण्ठं तस्याधिष्ठानं स्थानं स्वप्रकाशं विकुण्ठलोकं च दृष्ट्वा ते मुनयः ॥ २७ ॥

भगवन्तं परिक्रम्य प्रदक्षिणीकृत्य प्रणम्यानुमान्यानुज्ञाप्य वैष्णवीं भागवतीं श्रियं संपदं शंसन्तः प्रसंसन्तः मुदिताः प्रतिजग्मुः ॥ २८॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ततः किमनिष्टं तत्राह । तत्तदिति । यस्मादसुरा अप्रिया अपि लोकस्य यथा दुःखजनकत्वेन न तथा हरेः नित्यानन्दपूर्णत्वात् दुःखप्रवेशानवकाशात्किन्तु निषेध्ययोग्यज्ञानविषयमप्रियं भवगतोमतं तदुक्तम् असुराअप्रियाश्चापि नित्यानन्दान्नलोकवत् निषेध्यबुद्धिविषयमप्रियं हि हरेर्मतमिति तस्मादनभीष्टमिवेत्युक्तं सत्वनिधेरित्ययं हेतुः सुखकरमार्गनाशनं तत्तेतत्रानभीष्टमिव दुःखजनकत्वेन न किन्तु निषिध्यत्वेनैवानभीष्टं कुत इतितत्राह। विधित्सोरिति। असक्तस्येच्छया कोऽर्थं इति तत्राह।निजेति। नन्वेवंविधस्य तव मानभङ्गहेतुः विप्रप्रणामः किमिति क्रियत इति तत्राह। नैतावतेति। विप्रावनतस्य तवावनताइत्येतावता तेजः क्षतिः मानभङ्गलक्षणतेजो भङ्गो नास्ति तत्र हेतुगर्भविशेषणमाह ऽधधीति। न केवलं त्रिलोकीमात्रस्याधिपतिस्तत्रत्यानां समस्तानामविशेषा वोढेत्याह।विश्वभर्तुरिति।नचानेन किमपि प्रयोजनमित्याह। सतइति विप्रप्रणामो विनोदो लीलाविलासः तुशब्देन प्रयोजनान्तरं निवारयति ॥ ॥ २४ ॥

अधीश ! निरुपमचरिताखण्डेश भवाननयोर्यथावत् यं दमं-दण्डं विचष्टे पश्यति अथवानैव वृत्तिं स्थितिलक्षणां वयं तत्तयोरेकं निर्व्यलीकमनुमन्महि अनुजानीमहे पूर्वदण्डादल्पोऽभिमतश्चेत्सोऽस्त्वित्यभिप्रेत्य यं वा दममित्युक्तं ये वयमनागसौ स्वतोनिष्पापौ किल्बिषेण दोषेणायुंक्ष्महि योजितवन्तस्तत्त्वस्मासु यडचितो दण्डः स वा भ्रियतामित्यनेनापि हरेर्विप्रप्रियत्वमुक्तं दण्डावलत्वं च ध्वनितं किलेर्वुक्चेतिसूत्रात् किलश्वैत्यक्रीडनयोरित्यस्माद्धातोरिषच् प्रत्ययो भवति वुगागमश्च दोषेऽभिधेयेऽनेन किल्बिषमिति भवतीत्यनेन खत एतौ निर्दोषौ निमित्तात्सदोषाविति सूचितम् ॥ २५ ॥

सनकाद्युक्तेरुत्तरत्वेन पुनरुक्तिं करोति । एताविति । संरम्भोद्वेषोत्कर्षः तेन सम्भृतः संपादितो यः समाधिर्मनस एकाग्रतारूपस्तेनानुवद्धो योगो भक्तियोगो ययोस्तौ तथा उपयास्यतः उपयातामिति व्यत्ययस्तात्क्रियायाः "अन्तर्भक्ता वहिः क्रुद्धा हिरण्याद्या हरिंप्रति। सर्वक्रुद्धाः शंवराद्यामन्तः क्रोधवशास्तथा"इतिविशेषं सूचयति । तत्तयोः ॥ २६ ॥

अथोत्तरकथाप्रसङ्गः क इति तत्राह । अथेति । अथ शापमोक्षानन्तरम् ॥ २७ ॥

अनुमान्यानुज्ञाय श्रियं स्वरूपभूतां स्वरूपं श्रीस्तथाभार्या द्वेधा श्रीस्तु हरेर्मतेति ॥ २८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

सत्त्वस्य निधिः शेवधिरूपो यस्तस्य । तेजसक्षतत्वे हेतुः विश्वभर्त्तुरिति । अपरिच्छेद्यतेजस्त्वादिति भावः । तादृशस्यावनमनावौ हेतुः विनोद इति । सुखमय इत्यर्थः । सत्त्वनिधित्वादिति भावः ॥ २४ ॥

अत्र श्रीभगवतः किमपि चिकीर्षितमेव कारणं निश्चित्याहुः यं वेति । पुनः स्वापराधमेव निश्चित्याहुः । अस्मास्विति ॥ २५ ॥

तत्र तेषां तयोश्च चित्तप्रसक्तौ स्वचिकीर्षितमेव कारणमाह। एताविति । गतिश्रेष्ठा अनुकरणामिति यावत् । पूर्वं संरम्भेण समाधिः पश्चात् योगो भक्तियोगो यः स्वाभाविकः स एव ययोस्तौ । सकाशं समीपं श्रीकृष्णसायुज्यं प्राप्य तदन्तर्द्धानादनन्तरमिति ज्ञेयम् ॥ २६ ॥

अथेति युग्मकम् । स्वयम्प्रभं स्वप्रकाशं भगवद्धत्सच्चिदानन्दरूपत्वात् ॥ २७ ॥ २८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

नन्वेवं सति वैषम्यप्रतिपादनात् मम ब्रह्मत्वं न स्यादित्याशङ्क्याह। तत्तेऽनभीष्टमिति।तद्ब्राह्मणानां रक्षार्थं सन्माननं तेऽनभीष्टमिव अथवा पूर्वश्लोके वेदमार्गनाश उक्तः अतस्तद्वेदनाशनं तेऽनभीष्टमिव सर्वथा भीष्टाभावः अनभीष्टमल्पाभीष्टाभाव स्त्वनभीष्टमिव प्रथमपक्षे रक्षैवार्थः द्वितीये नाशः कालत्वात् च तत्र हेतुः सत्त्वनिधेरिति सत्त्वनिधेः रक्षाभीष्टाना शस्त्वनभीष्टः विधित्सोरिति स एव तथा विधातुमिच्छति जनाय हि क्षेमं विधातुमिच्छति जायमानाः स्वकृतेनैव सम्यग्भवन्तीति अथवा सत्त्वनिधेर्नाशः अनभीष्टः जनानां क्षेमकरणं तन्नाशः उत्पत्तेर्वेदनाश एव भवति उत्पत्त्यर्थं क्षेमः चेत् उत्पन्नानां वा वैदिकस्य संस्कारकत्वे पाषण्डात् दुर्वलत्वं पुरुषार्थप्रतिपादकत्वे देहनिर्वाहकपाषण्डात् वलिष्ठत्वं निजशक्तिभिः उद्धतारेरित्युभयत्र हेतुः स्वस्यासाधारणसामर्थ्येनैव उद्धता अरयो येन उभयत्रापि प्रतिवन्धकाभावो भगवच्छक्त्यैव सिद्धः ननु तथापि स्वस्य दोषजनने परोपकारः सिद्ध्यति धर्मरक्षायां तु एक एव दोष इति चेत्तत्राह । नैतावतेति । स्वस्य नमनमात्रं न दोषः नमतीति नमनमिति व्युत्पत्तेः न प्रभावः हीनानामेव हीनत्वबोधकः उत्कृष्टानां तु भारसूचक एव ये हि महाभारवन्तो भवन्ति ते नम्रा भवन्ति अतो नम्रत्वमनम्रत्वं वा नैकान्ततो दोषरूपं गुणरूपं वा अतस्तव महत्त्वं सिद्धमिति हीनावनतिः कौतुकार्थं भवति अभिनयरूपत्वात् स एव हि रसजनकः महत्त्वमाह। ऽधधिपतेरिति। वनेति हर्षः स्वस्ति सन्माननापरिज्ञानात् विश्वभर्त्तुरित्यपि माहात्म्यं विश्वं हि यो विभर्ति स हि लोके भाराक्रान्त इव नम्रो भवति अन्यथा लोकभर्तुर्भारं न ज्ञापयेयुः अतो नमनस्य प्रयोजनद्वयं लोके स्वस्य भर्तृत्वज्ञानं स्वार्थे तु विनोदः अवनतस्य स अवनतिरूपः पदार्थस्ते विनोद इति सम्बन्धः अनेन दोषः परिहृतः ॥ २४ ॥

एवं पूर्णान्तः करणा भूत्वा भगवता यो दण्डः स्थापितः तत्राप्यभिप्रायापरिज्ञानात् स्वापराधं दूरीकुर्वन्ति । यं वानयोरिति हे अधीश ! अस्माकं तयोश्च अधीशत्वं नाम वेदयुक्त्याद्यपेक्षयापि वेदादीनां नियामकत्वं वा अत एव अस्मदुक्तमप्रयोजकं अनयोर्भवान् वृत्तिं यं वा दमं विधत्से तदनुमन्महि वृत्तिर्जीविका द्वारि स्थित्वा सर्वेषां निवारणं कर्त्तव्यं तदा निवारिताः स्वप्रवेशार्थं स्वकीयं धनं धर्मं वा दास्यन्तीति वृत्तिदानं स्वयम्वा द्वारे परिपालनं करोतीति स्वतन्त्रतया वा वृत्तिदानम् अस्मदुक्तोवा दण्डः अन्यो वा यमेव दण्डं भवान्विधत्से तदनुमन्महि भवदिच्छानन्तरमस्माभिरपि स्वीक्रियत इति अनुमननं एतदपि नानुरोधात् किन्तु निर्व्यलीकं स्वस्यापि अपराधात् दण्डश्चेत् तदप्यङ्गीक्रियत इत्याहुः । अस्मास्विति । वेत्युभयज्ञानादरे सङ्कोचो न कर्त्तव्यइत्यभिप्रायेणाहुः। यडचितइति भ्रियतांसदण्डइति इदानीं वाक्यमात्रमुक्त्वाअन्येन तत्फलं सम्पादनीयमिति न किन्तु इदानीमेव स दण्डो ऽस्मासु स्थापनीयः अथवा स एव वा दण्डः जन्मत्रयात्मकः अस्मासु स्थापनीयः तत्र स्वस्यापराधमाहुः येन कारणेन अनागसौ निरपराधौ वयं किल्बिषेण अयुंक्ष्महि योजितवन्तः सदण्डः तेनैवास्माकं जन्मत्रयमिति अस्मासु वेति

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

पक्षे तेषां दण्डोऽस्तु वेत्यौदासीन्यं एवं सर्वभावेन भगवतो माहात्म्यं निरुपितम् ॥ २५ ॥

भगवांस्तु शापात् भीता इति तान् ज्ञात्वा शापं स्वकृतमित्याह । एताविति । सुरेतरगतिं दैत्यत्वं राक्षसत्वं मनुष्यत्वं च इतरत्वं समाने भवतीति असुरमनुष्ययोर्देवतुल्यत्वं तत्राह प्राजापत्या इत्यत्र निरूपितं राक्षसा अपि वीजपराक्रमाभ्यां देवतुल्या इति यक्षादयस्तु न स्वतन्त्राः कुवेरस्तु देव एव अतस्त्रिविधामेव सुरेतरगतिं प्रतिपद्य सद्य एव भूयो ममान्तिकमुपयास्यतः यो वः युष्माभिर्दत्तः शापः स मयैव निहित इति तदेवैत निमित इति पाठे नितरां मयैव मितः विप्रा इत्यदीर्घदर्शित्वं ननु सुरेतरगतिप्राप्तौ शीघ्रं कथं भवत्समीपागमनं तत्तज्जन्मकर्मणां भोक्तव्यत्वात् इत्याशङ्क्याह । संरम्भसम्भृतसमाध्यनुबद्धयोगाविति । क्रोधसंरम्भेण सम्यक् भृतो यः समाधिस्तेनानुबद्धो योगः योगेन सर्वपापक्षय इति पूर्वमवोचाम । भूयः सकाशमुपयास्यत । इति शापान्तः परिमितशापदानं मत्कृतः शाप इत्येवंत इति निर्भयार्थम् ॥ २६ ॥

एवमागतानां मुनीनां सर्वदुःखदूरीकरणमुक्तम् इदानीं सर्वेषां यथायथं प्रतिगमनमाह । अथेति । तत्र प्रथमं योगिनां प्रतिगमनं द्वाभ्यामाह कृतकरिष्यमाणप्रमेयभेदेन अथेति पुनस्ते स्वभावं प्राप्ताः यतो मुनयः यस्य या निष्ठा तस्य स एव गुणः विपरीतो दोषः तेह्यन्तरेव भगवन्तं पश्यन्ति न वहिः वहिर्दर्शनं च नोपकारीति प्रतिजग्मुः वहिर्दर्शन एको गुणो जात इत्याह । नयनानन्दभाजनमिति । इन्द्रियाणि हि परमैश्वर्यसम्बन्धात् सुखं पञ्चधा विभज्य रूपादिभेदेन तमानन्दमनुभवन्ति करणत्वाज्जीवस्यापि सुखजनकानि अयं च भगवानानन्दमूर्त्तिर्लावण्यपूर इति नयनानन्दस्य भाजनन्तद्भाजनं द्वयमपीत्याह । वैकुण्ठं तदधिष्ठानं विकुण्ठं चेति । ननु उभयोस्तुल्यतया नयनानन्दभाजनत्वं कथमुच्यते तत्राह । स्वयं प्रभुमिति । लोकः स्वयमेव वैकुण्ठोऽपि स्वयं तथापि प्रभुत्वेन भगवत्स्फुरणे लोकत्वेन तत् स्फुरणात् अक्षरस्य भगवत्त्वाच्च उभयोस्तथात्वमित्यर्थः ॥ २७ ॥

अग्रिमकृत्यमाह । भगवन्तं परिक्रम्येति । प्रदक्षिणा नमस्कार आज्ञा प्रार्थनमेव च । आगत्य तोषभावश्च गमने स्तोत्रमेव च । समागतानां पञ्चाङ्गं तोपलक्षणमुच्यते । यथागतिस्तथा कार्यं प्रसङ्गंवारयेदिति । प्रतिजग्मुः आगमनप्रकारेणैव पुनर्गता इत्यर्थः वहिर्दर्शनस्य अधिकत्वात् प्रकर्षेण मुदिताः वैष्णवीं श्रियमिति शान्तिप्रसादलक्षणां पूर्वस्मादयमेव विशेषः ॥ २८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु नश्यतु पन्थास्तत्राहुः । तत् वेदमार्गनशनार्मवेति लोकोक्तिः नशायेति क्रियायाः सम्प्रदानं क्रियाग्रहणमपिकर्त्तव्यमिति षष्ठ्यर्थे चतुर्थी वा अतएव निजसूक्तिभिर्लोके राजादिभिरुत्पाटित धर्मप्रतिपक्षस्य ननु तदपि परमोत्कृष्टस्य निकृष्टेष्ववनतिस्तेजोहानिकरी तत्राहुः । नैतावतेति । एतावता तु धर्मत्राणप्रयोजनेनावनतस्य नमनं कृतवतस्तव तेजः प्रभावः न क्षतं न क्षीणं अतः स नमनादिस्ते विनोदः कौतुकविशेष एव ॥ २४ ॥

वस्तुतस्तु दुरवगाह्याभिप्रायं त्वां कायमनोवाक्यैरवनता वयमिदं निवेदयाम इत्याहुः । यं वा दमं दण्डं ब्रह्मण्यत्वात्तथा भक्तवत्सलत्वाद्वृत्तिं यामधिकां जीविकां वा भवान् विधत्ते तत्सर्वं मन्युमन्यामहे स्वच्छन्देनैव प्रभो तां विधेहि । अस्मद्दत्तोऽभिशापस्तु रसातलं गच्छत्विति भावः । पुनश्च सभयाश्रुकम्पमाहुः । अस्मास्विति ये वयं निरपराधावेतौ किल्विषेण शापेनायुंक्ष्महि योजितवन्तः ॥ २५ ॥

माभैष्टेति तानाश्वासयन्नाह । एताविति । संरम्भेण क्रोधावेशेन सम्भृतः सम्पृष्टो यः समाधिर्मदीयध्यानपरिपाकस्तेनानुवद्धः प्रतिक्षणाभ्यस्तो योगो मत्संयोगो वा याभ्यां तौ विप्रा ! वो युष्माकं शापः स मयैव निमितो निर्मितः अनयोर्मत्परमभक्तयोरसुरभावमिद्ध्यर्थं युष्मान् वैकुण्ठमानीय द्वारपालाविमौ शुद्धसत्त्वस्वरूपावपि ब्राह्मणमात्रपरमभक्तावपि युष्मत्प्रातिकूल्ये प्रवर्त्य युष्माकमात्मारामचूडामणीनामपि क्रोधमुत्पाद्य शापदत्पादितो मयैव । ननु मत्पार्षदयोर्नापि युष्माकं कोऽप्यपराध इति भावः । ननु भक्तवत्सलस्यापि तव भक्ताभ्यामाभ्यामीदृशदुःखदाने प्रवृत्तौ किं कारणं तत्राह तत्कारणं हे विप्रा ! अवैत सर्वज्ञत्वेनैवावगच्छत मया प्रकाशितेन तेनालमिति भावः तच्च कारणं जयविजययोरेव प्रेमविजृम्भिता काचिदिच्छा साच भो प्रभुवर ! देवाधिदेव वैकुण्ठनाथ अन्यत्राल्पवलत्वात् अस्मासु प्रातिकूल्याभावात् यदि तत्र भवतो युयुत्सासुखं न सम्पद्यते तदा आवामेव केनापि प्रकारेण प्रतिकूलीकृत्य तद्युद्धसुखमनुभूयतामित्यावयोस्त्वत्सर्वसुखपरिपूर्णतायामणुमात्रमपि न्यूनत्वमसहमानयोः किङ्करयोः प्रार्थनाहठः स्वभक्तवात्सल्यगुणमपि लघूकृत्यनिष्पाद्यतामिति मनोऽनुलापमयी रसो वैस इति आनन्दमय इति सैषा आनन्दस्यमीमांसा भवतीत्यादि च श्रुतिविवृतिषु भगवतः शृङ्गारादिसर्वरसपरिपूर्तिविवेचनप्रसङ्गभवाज्ञेया । ततश्च स्वेच्छामयस्येति “ मद्भक्तानां विनोदाय करोमि विविधाः क्रियाः” । तत्प्रकारसम्पादने भगवतोऽपीच्छाप्यजनीति रहस्यस्य प्रकटानुक्तिरहोमहदपराधाद्वैकुण्ठादपि परमसिद्धानामप्यधःपातो भवेत् किं पुनर्मर्त्यलोकात् साधकाभासानामस्माकमिति साधकभक्तान्महापराधेषु सावधानीकर्तुं ज्ञेया ॥ २६ ॥

विकुण्ठं हरिं तदधिष्ठानं वैकुण्ठं च स्वयं प्रभं स्वप्रकाशं शुद्धसत्त्वमयत्वात् अनुमान्य अनुज्ञाप्य ॥ २७—२८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

क्षेमं कुशलं विधातुमिच्छोः इव शब्दएवार्थे तद्वेदमार्गनशनमनभीष्टमेव स्यात् अतोवेदमार्गरक्षार्थं ब्रह्मकुले अवनतिर्युक्तैव अवनतस्य तव एतावता अवनतिमात्रेण त्र्यधिपतेस्त्रिलोकस्वामिनः तेजः प्रभावः न क्षतं क्षीणं न भवति स वेदमार्गरक्षार्थः नमनादिस्ते विनोदः ॥ २४ ॥

अनुमन्महि अनुमन्यामहे किल्विषेण शापेन अयुंक्ष्महि योजितवन्तः ॥ २५ ॥

नात्र भवतां कश्चिदपराधः शापस्तु मयैव कारितः एतौ तु बहूनामसुरादीनामुपकाराय मदिच्छयैवासुरयोनिं प्राप्य शीघ्रमत्रागमिष्यत इति । मच्चिकीर्षितं ज्ञात्वा सुखिनोभवन्त्वित्याशयेनाह । भगवानेताविति । संरम्भेण क्रोधावेशेन सम्भृतः सम्वृद्धः यः समाधिः मनस ऐकाग्र्यं तेनानुवद्धो दृढीकृतो योगो ययोः तौ हे

भगवाननुगावाह यातं माभैष्टमस्तु शम् ।
ब्रह्मतेजः समर्थोऽपि हन्तुं नेच्छे मतं तु मे ॥ २९ ॥
एतत्पुरैव निर्दिष्टं रमया क्रुद्धया यदा ।
पुरापवारिता द्वारि विशन्ती मय्युपारते ॥ ३० ॥
मयि संरम्भयोगेन निस्तीर्य ब्रह्महेलनम् ।
प्रत्येष्यत निकाशं मे कालेनाल्पीयसा पुनः ॥ ३१ ॥
द्वाःस्थावादिश्य भगवान्विमानश्रेणिभूषणम् ।
सर्वातिशयया लक्ष्म्या जुष्टं स्वं धिष्ण्यमाविशत् ॥ ३२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विप्राः ! यो वः शापः युष्मत्कृतः शापः स मयैव निमितः निर्मितः कारितः तद् मम कृत्यमेवेति जानीत ॥ २६ ॥
स्वयं प्रभं स्वप्रकाशम् ॥ २७—२८ ॥

भाषाटीका ।

आपने अपनी शक्तिसे सवशत्रुओंका नाश किया है आप जगत्के कल्याणको विधान करना चाहतेहो तिससे धर्म का नाश अभीष्ट नहीं है ऐसे ब्राह्मणों के स्तुति करनेसे आपकी कुछ हानि नहीं है क्योंकि आपतो संसार के स्वामी हो नम्रहोना आपका केवलकौतुक मात्र है ॥ २४ ॥

हे अधीश ! इन दोनो का जो आप दण्डकरो अथवा अधिक पारितोषिक देते हो तिसबातको हम निष्कपट-होकर मानेंगे और हमारे ऊपर जो दण्ड देना हो सो दीजिये-क्योंकि हमने निरपराधी आपके भृत्यों को दुःखदियाहै ॥२५॥

श्री भगवान् बोले ए दोनो पार्षद शीघ्रही असुर योनि को प्राप्त होकर जन्महीसे क्रोधसे निरन्तर ध्यान करने से फिर-भी शीघ्रही हमारे पास चले आवेंगे हे विप्रो ! यदि तुमारा दिया शाप है सो मैंनेही नियमित किया है जानो ॥ २६ ॥

ब्रह्माजी बोले इसके अनन्तर वे मुनिजन नेत्रों के आनन्द के भाजन भगवान् के दर्शन करके वैकुण्ठलोक तथा स्वयं प्रभ विकुण्ठस्थान को देखकर भगवान् की परिक्रमा करके प्रणामकर के आज्ञा मागकरके भगवान् की सौभाग्य संपत्ति की प्रशंसा करते हुये उहां से चले गये ॥ २७—२८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ममैव तु मतं संमतम् इदमत्र तत्त्वम् ! यद्यपि सनकादीनां क्रोधो न संभवति न च भगवत्पार्षदयोर्ब्राह्मणप्रातिकूल्यम् नच भगवतः स्वभक्तोपेक्षा न च वैकुण्ठगतानां पुनर्जन्म तथापि भगवतः सिसृक्षादिवत्कदाचिद्युयुत्सा समजनि तदाऽन्येषामल्पबलत्वात्स्वपार्षदानां तुल्यबलत्वेऽपि प्रातिपक्ष्यानुपपत्तेरेतावेव ब्राह्मणनिवारणे प्रवर्त्य तेषु च क्रोधमुद्दीप्य तच्छापव्याजेन प्रतिपक्षौ विधाय युद्धकौतुकं संपादनीयमितिभगवतैव व्यवसितमतः सर्वं संगच्छते तदिदमुक्तं शापो मयैव निमितइति माभैष्टमिति अस्तु शमिति हंतुं नेच्छे मतं तु म इत्यादि च ॥ २९ ॥

यदा मय्युपारते योगनिद्रां गतवति सति द्वारि विशन्ती युवाभ्यां पुराऽपवारिता तदा क्रुद्धया रमया यतद्ब्राह्मणैरिदानीमुक्तं तत्पुरैव निर्दिष्टम् ॥ ३० ॥
प्रत्येष्यतं प्रत्येष्यथः निकाशं समीपम् ॥ ३१ ॥ ३२ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

अत्र नित्यपार्षदानां पुनरावृत्तौ तत्त्वं सिद्धान्तयायार्थ्यं क्रोधोऽपीत्यपि शब्दोऽसम्भवान्तरसमुच्चयार्थः तथापि क्रोधाद्यसम्भवेऽपि तदा युयुत्साकाले अन्येषां प्राकृतजीवानां प्रातिपक्ष्यं शत्रुत्वं तदनुपपत्तेस्तदसम्भवात् एतौ जयविजयौ तेषु सनकादिषु अतः श्रीभगवतस्तथा व्यवसायात् सर्वं क्रोधादि माभैष्टमस्तु शमित्यनेनासुरभावस्याभासमात्रत्वं व्यञ्जितम् यथा जीवन्मुक्तानां देहावेशस्याभासमात्रत्वं यथा च नटानां तत्तद्रूपत्वमनुकरणमात्रम् तद्वत् अन्यथाग्रेमे ।

नन्दः सुनन्दोऽथ जयो विजयः प्रबलो बल इति ।

युध्यमानपार्षदमध्ये तयोरुल्लेखो न श्रूयेत तावत्तयोः शापानिवृत्तेः अतो देहलीदीपकन्यायेन मायातं माभैष्टमिति मापदमुभयत्रान्वितमित्यपि व्याख्यानान्तरम् ॥ २९ ॥

अत्र एतत्पुरैव निर्दिष्टं रमया क्रुद्धया यदा । पुरापवारिता द्वारि विशन्ती मय्युपारत इति विगीतं पद्यं गुर्जरदेशे सटीकमस्तीति ज्ञेयम् ॥ ३० ॥

संरम्भः क्रोधाभासस्तस्य योगेन सम्बन्धाभासेन ॥३१-३२॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मुनिगमनानन्तरं द्वाःस्थौ सान्त्वयन्भगवानुवाचेत्याह त्रिभिः भगवाननुगौ भृत्यौ प्रत्याह उवाच उक्तिमेवाह । यातं गच्छतं माभैष्ट भयं मा कुरुतं शं सुखमेव गच्छतोरपि युवयोरस्तु यद्यावयोरनुग्रह एव भवता क्रियते तर्हि ब्रह्मदड एव किं न निरस्यते इत्यत्राह । ब्रह्मतेजः ब्रह्मदण्डस्तेजः कार्यत्वाद्दण्डस्यापि तेजःशब्देन निर्देशः हन्तुं निरसितुं समर्थोऽपि नेच्छे कुतः हि यस्मान्मे मम मतं संमतम् ॥ २९ ॥

न केवलं ममैवेदं ब्रह्मतेजोमतं किन्तु लक्ष्म्या अपीत्याह । एतदिति । एतद्युवयोरितो निर्गमनं पुरा पूर्वकाले क्रुद्धया रमया लक्ष्म्यैव निर्दिष्टं पुरा कदेत्यत्राह । मयि उपारते प्रणयकलह-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वशात्तूष्णीं शयाने सति मन्निलयाद्बहिर्निर्गत्य पुनरन्तः प्रविशन्ती द्वारि युवाभ्यां यदा निवारिता तदेत्यर्थः ॥ ३० ॥

अन्ते मयि सरम्भः क्रोधस्तस्य योगो ऽनवरतसम्बन्धः तेन ब्रह्म विद्पराधजन्यं फलं निस्तीर्य निरवशेषमपोह्याल्पीयसैव कालेन पुनर्मे निकाशं समीपं प्रत्येष्यतं प्रत्यागच्छतम् ॥ ३१ ॥

एवं द्वास्थावादिश्य भगवान्स्वस्थानमाविवेशेत्याह । भगवानृद्धास्थावादिश्याज्ञाप्य विमानश्रेण्य एव भूपणं यस्मिन्सर्वातिशयया निरतिशयया लक्ष्म्या संपदा जुष्टं यद्वा प्रियं स्वधिष्ण्यं स्वकीयस्थानं लक्ष्म्या सहाविशत् ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

माभैष्टं भयं न कुरुतं शं सुखमस्तु इच्छे इच्छामि ॥ २९ ॥

अपराधान्तरसद्भावान्मतामित्युक्तं कोऽसावपराध इति तत्राह । एतदिति । अपवारिता निवारिता योगनिद्रामुपागते ॥ ३० ॥

ब्रह्मशापनिवारकं संरम्भएव भक्तियोगत्वमुपदिशन्निवाह । संरम्भेति । एतयोर्भक्तियोगोऽस्तीति कस्मादवगतमितीदंचोद्यम् ।

अन्तर्भक्ता बहिर्वैरा हिरण्याद्या हरेर्मताः ।
तत्र भक्त्या भवन्पूता द्वेष आवेशकान्मतः ॥
ब्रह्मजा असुरा ये तु विष्णोः पार्षदतां गताः
बाणाद्याश्च हरेर्द्वेषं पमन्तः कृत्वा तमोगताः

इत्यनेन निरस्तम् अनेन संरंभो नीचफलो भक्तियोग एव ब्रह्मशापनिस्तारक इत्युक्तं भवति पुनः शापाद् व्यावृत्तौ स्वरूपावाप्तौ कालक्षेपोनास्तीत्याशयेनोक्तं कालेनेति ॥ ३१ ॥

द्वाः स्थौ द्वारपालौ ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तच्चिकीर्षितत्वमेव स्पष्टयति । भगवानिति । माभैष्टमस्तुशमित्यस्य आसुरभावोऽपि भवतोर्जीवन्मुक्तानां देहावेश इव नटानां तत्तदनुकरणमिव च तदाभास एव स्यादिति भावः । तथैव हि व्याख्यास्यते तैः । सप्तमे विष्णुचक्रहतांहसाविल्यत्र । तयोरंह एव हतं ननु ताविति । तदिदं षष्ठसन्दर्भे सप्तमवाक्यावतारिकायां कचिच्च लीलाशक्तिरेवेत्यारभ्य वस्तुतः तेन तथा उक्तत्वेन कोपादिहेत्वभावात् इत्येवेत्यन्तेन विवृतमस्ति तथाहि । कचिच्च लीलाशक्तिरेव स्वयं तल्लीलामाधुर्यपोषाय प्रतिकूलेष्वनुकूलेषु चात्मापकरणेषु तादृशशक्ति विन्यस्य तादृशतत्प्रियजनानामपि विपयावेशाद्याभासं सम्पादयति । यथा पूतना वर्णने । वल्गुस्मितापाङ्गविसर्गवीक्षितैर्मनोहरन्तीं वनितां व्रजौकसामिति तदाभासत्वविवक्षया च मनोहरन्ती मनोहरेवाचरन्तीति श्लिष्टमुक्तम् । तद्दत्तशक्तित्वञ्च तस्य तत्रैव सूचितम् ।

न यत्र श्रवणादीनि रक्षोघ्नानि स्वकर्मसु ।
कुर्वन्ति सात्वतां भर्त्तुर्यातुधान्यश्च तत्र हीत्यनेन ।

तथैवेदं घटते अमंसताम्भोजकरेण रूपिणीं गोप्यः श्रियं द्रष्टुमिवागतां पतिमिति । श्रियं प्राकृतसम्पदधिष्ठात्रीं । पतिं यं कञ्चित्तदुचितप्राचीनपुण्यभाजमित्यर्थः । पूर्ववदेव तां तीक्ष्णचित्तामित्यादौ तत्प्रभवाचर्चिते जननी अतिष्ठतामित्युक्तं एवमेव कचित्तादृशानामपि मायाभिभवाभासो मन्तव्यः । यथा प्रायो मायास्तु मे भर्त्तुर्नान्या मेऽपि विमोहिनीत्यादिषु श्रीबलदेवादीनाम् । यथा दैत्यजन्मनि जयविजययोः । अत्र पूर्वेषां स्वरूप एव तदाभासः तयोस्तु सम्यगिति विशेषः तत्प्रेमादीनामनावरणाच्च । अत्र तयोर्वैरभावप्राप्तौ खलु मुनिकृतत्वं न स्यात् । मतं तु मे इत्यत्र भगवदिच्छायास्तत्कारणत्वेन स्थापितत्वात् । नापि सा तदीयवैरभावाय सम्पद्यते स्वेच्छामयस्येत्यादिश्यः । त्रैवर्गिकायासविघातमस्मत्पतिर्विधत्ते पुरुषस्य शक्रेत्यादिभिः कैमुत्यापाताच्च । अतएवोक्तम् ।

तथा न ते माधव तावकाः कचिद्भ्रश्यन्ति मार्गात्त्वयि बद्धसौहृदा इत्यादि । न च तयोरपि स्वापराधभोगशीघ्रनिस्तारार्थमपि तादृशीच्छा जातेतिवाच्यम् । तादृशैः परमभक्तैर्हि भक्तिं विना सालोक्यादिकमपिनाङ्गीक्रियते तत्सम्भवे निरयोऽप्यङ्गीक्रियत इति नात्यन्तिकं विगणयन्तीत्यादेः कामं भवः स्ववृजिनैर्निरयेषु नः स्तादित्यादेश्च,, अतएवाभ्यामपि तथैव प्रार्थितम् । मावोऽनुतापकलया भगवत्स्मृतिघ्नो मोहो भवेदिह तु नौ व्रजतोरधोऽध इत्यनेन । न चानयोर्वास्तववैरभावसत्वे सति भक्तान्तराणामपि सुखं स्यादिति वाच्यम् । भक्तिस्वभावंभक्तसौहृदविरोधादेव । तस्मात्तयोर्वैरभावाभासत्व एव श्रीभगवतस्तयोरन्येषां भक्तानामपि रसोदयः स्यादिति स्थितम् । तत एवमर्थापत्तिलब्धं सर्व्वभक्तसुहृच्छ्रीभगवदभिमतयुद्धकौतुकादिसम्पादनार्थं वैराभावात्मकमायिकोपाधिं स्वाभाविकाणिमादिसिद्धिकेन शुद्धसत्वात्मकस्वविग्रहेण प्रविश्य स्वसान्निध्येनचेतनीकृत्य च विलीयस्थितया अपि भक्तिवासनायाः प्रभावेण तत्रानाविष्टावेव तिष्ठतः । अतो वैरभावजस्मरणेन वैरभावोऽपगत इत्युभयमपि वाह्यम् । एतदभिप्रेत्यैव श्रीवैकुण्ठनाथेनाप्युक्तम् । यातंमाभैष्टमस्तु शमिति । तथा हिरण्याक्षयुद्धे परानुषक्तमित्यादिपद्ये टीका । प्रचण्डमन्युत्वमधिक्षेपादिकञ्चानुकरणमात्रं दैत्यवाक्यभीतानां देवानां भयनिवृत्तये । वस्तुतस्तेन तथा उक्तत्वेन कोपादिहेत्वभावादित्येषा । ब्रह्मतेज इति । यावद् ब्राह्मणत्वोपहितभक्तीनां सान्निध्यमासीत् तावद्ब्रह्मण्यता गुण एव प्रबल आसीत् । अधुना शुद्धभक्तगुणसान्निध्ये तु शुद्धभक्तवात्सल्यमेव ॥ भक्तिविशेषं प्राप्यैव तद्गुणविशेषप्रकाशादिति भावः ।

एतत् पुरैव निर्दिष्टं रमया क्रुद्धया तदा ।
पुरापवारिता द्वारि विशन्ती मय्युपारते ।

एतादिति पद्यं विगीतमपि सर्वत्र दृश्यते गुर्जरदेशे तु टीका चास्ति ॥ २९ ॥ ३० ॥

तदपराधाभासदुःखफलभोगाभासानुवादेन मर्यादां रक्षन्नाह । मयीति । संरम्भस्य योगेन प्रतिफलेनाभासेनेत्यर्थः ॥३१-३२॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवतो निर्गमनं वक्तुं सेवकयोः समाधानमाह । भगवानिति । अनुरोधे हेतुः अनुगाविति तयोर्वाक्यविश्वासकारणं भगवानिति यातमित्याज्ञापने गमनाभावार्थमनेन तयोः स्वधर्मो रक्षितः अत एव माभैष्टं शापेन गमने सति भयं भवति ननु कृते कारणे कथं फलं न भविष्यतीत्याशङ्क्याह । अस्तु शमिति । भवतां कल्याणमस्तु इदानीं सालोक्यं गतानां तु सायुज्यं भविष्यतीत्यर्थः इदानीं लोके कौचिद्भवन्तौ पश्चाल्लोकरूपावेव भविष्यत इति लोकाय कल्पतामिति वाक्यं चरणपदमपि तमेवार्थं वक्ति प्रविष्टयोश्चरणाभावश्च सिद्धः नैकट्यन्तु तदा महत् किं ब्राह्मणानामनुरोधेनैवं क्रियते नेत्याह । ब्रह्मतेज इति । ब्रह्मास्त्रं किल दूरीक्रियते आधिदैविकं ब्रह्मतेजः

**श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।**

इदं त्वाधिभौतिकम् अतः समर्थोऽपि ब्रह्मतेजः हन्तुं नेच्छे स्वस्यानुपयोगित्वात् अतो मम मतं नु इति निश्चये अभिप्रायं तु भगवानेव जानाति वचनान्न कल्पते कल्प्यमानोऽपि कार्यानुरोधेन कल्पनीय इति ॥ २९ ॥ ३० ॥

तर्हि ब्रह्मशापस्य का गतिस्तत्राह । मयीति । ब्रह्मशापस्य प्रायश्चित्तं कर्त्तव्यं प्रायश्चित्तानन्तरं हि पुरुषः शुद्धः शुद्धस्यैव हि विहितं कर्त्तव्यं भगवद्भक्तानां च प्रायश्चित्तं भगवत्स्मरणमेव तच्च स्मरणं लौकिकं भवति शुद्धस्यैव हि वैदिकेऽधिकारात् लौकिकत्वात्प्रायश्चित्तत्वं च नित्यता तु स्मरणस्य प्रथमप्रवृत्तानां यावद्भगवदीया भवन्ति पश्चात्तु पापमेव नोत्पद्यते भगवदिच्छया तु तदुत्पत्तिः तदिच्छाया बलिष्ठत्वात् स्मरणं न सम्भवति लौकिके तु बाधाभावात् भगवत्सायुज्यादि साधकत्वाभावेऽपि प्रायश्चित्तत्वमस्ति दोषनिर्घातकत्वस्य स्मरणसहजधर्मत्वात् कामादयो हि केवललौकिकाः लौकिकपोषहेतवः क्रोधोऽत्र शापहेतुर्जात इति क्रोधेनैव स्मरणं भविष्यति अन्यथा विस्मरणमेव स्यात् एवं गोपिकानां कामोऽपि ब्रह्मणा हि कामेन वाक् शप्ता अत एव वाचा न प्रजापतेर्होमः वाक्चमनश्चार्त्तीयेतामित्युपाख्याने तथा निरूपणात् सैव वाक् गोपिकाः भयेन शुक्राचार्येण शप्ताः कालनेमिप्रभृतयः ते हि बृहस्पतिमुररीकृतवन्तः स्वयौरोहिण्यगमनभयात् क्षिप्ता इति भयेनैव स्मरणं कंसस्य अन्ये च देवा यथायथं तत्तत्सम्बन्धिनः बृहस्पतिदुर्वासःप्रभृतिभिः शप्ता इति सम्बन्धस्नेहादेव स्मरणं यादवादीनां एते चत्वारोऽपि शापात्तथोत्पन्नाः तथा स्मरणेन तत्तच्छापं हित्वा स्वभगवदीयेनैव रूपेण भगवत्पदं प्राप्ताः तथापि अस्तु शमिति वाक्यात् भगवत्पदप्राप्तिः भगवति च क्रोधसंरम्भयोगेन ब्रह्मावज्ञा लक्षणं दोषं निर्हृत्य मे निकाशं समीपमति नैकस्यंचा द्वारापेक्षया चरणे अल्पीयसा कालेन पुनः प्रत्येष्यतमिति क्रोधसम्बन्धस्य लोके अपुरुषार्थत्वात् पुरुषार्थत्वाय योग पदम् ॥ ३१ ॥

एवं तयोःसान्त्वनमुक्त्वा भगवान् यथा स्थानं गत इत्याह । द्वाःस्थाविति । आदिश्येति वचनात् नान्यथा करणं सम्भवति भगवतः खेदो भविष्यतीत्याशङ्क्याह । भगवानिति । ऐश्वर्यज्ञानवैराग्याणां खेदनाशकत्वात् नन्वेतावुभौ निष्कासितौ दुष्टौ चेत् अन्येऽपि तथा भविष्यन्तीति तन्निष्कासनमपि कर्त्तव्यमन्यौ च द्वारपालकौ कर्तव्यौ तदुभयमकृत्वा कथं गृहे गत इत्याशङ्क्याह । विमानश्रेणिभूषणमिति । विमानानां श्रेणयस्तासां भूषणमलंकारभूतं वैकुण्ठस्थितानि विमानानि सार्थकानि अतो विगतो मानो येषामिति तदतिरिक्ताः सर्वेऽभिमानरहिताः अतो निर्दुष्टा इत्यर्थः त एव तत्र साधारणा अपीति श्रेणिपदं तेषामपि भूषणमिति सर्वथा सर्वदोषरहितं स्थानमित्यर्थः अतएवान्ये न विनियुक्ताः एतौ सदोषाविति परं द्वारस्थत्वेन नियुक्तौ नत्वन्यप्रतिरोधार्थं मुनीनां वाक्येन तथा निर्णयात् पुनस्तत्रैव गमने हेतुः सर्वातिशयया लक्ष्म्येति सर्वेभ्योऽतिशयो लक्ष्म्यर्थं कृतत्वात् लक्ष्मीः तं सर्वभावेनालंकृतवती अतः सर्वातिशयया शोभया युक्तं भवति स्वकीयं स्वरूपभूतं च तत् स्थानामिति नान्यत्र गमनम् ॥ ३२ ॥

---

**श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।**

तदैवोपस्थितावचुगौ जयविजयौ दृष्ट्वाह । यातामितो मर्त्यलोकं गच्छतं तदैव विरहव्याकुलौ श्रुत्वकृत्य रुदन्तौ वीक्ष्य पुनः कृपाद्रवचित्तनवनीत आह । मा भैष्ट शं कल्याणं युवयोरस्तु । इतो मा यातमत्रैव वैकुण्ठे मां सेवमानौ सदा तिष्ठतमिति मापदमुभयत्रान्वितं पुनरानन्दितौ तौ वीक्ष्याह । ब्रह्मतेजः ब्रह्मशापं हन्तुं समर्थोऽप्यहं मे तु ममतु मतं नेच्छामि । ब्रह्मशापस्यामोघत्वमर्य्यादाया मयैव कृतत्वात् अतो वज्रस्यामोघत्वं रक्षणार्थं गरुडो यथा पत्रांशमेकं ददौ तथैवैकांशेन एकैकप्रकाशेन असुरभावं गच्छतं वैकुण्ठेऽपि स्वस्वरूपेण तिष्ठतमित्यतो वामनचरिते

> तानभिद्रवतो दृष्ट्वा दितिजानीकपान्नृप! ।
> प्रहस्यानुचरा विष्णोःप्रत्यषेध न्नुदायुधाः ।
> नन्दःसुनन्दोऽथ जयो विजयःप्रवलोवलः।
> कुमुदः कुमुदाक्षश्च विष्वक्सेनः पतत्रिराट् ।

इत्यादीनां युध्यमानानां भगवत्पार्षदानां मध्ये जयविजययोरप्युल्लेखः श्रूयते तदा च तयोर्हिरण्याक्षत्वहिरण्यकशिपुत्वानन्तरं रावणकुम्भकर्णत्वप्राप्त्युन्मुखता च लक्ष्यते तयोर्युगपदेव पार्षदत्वासुरत्वान्यथानुपपत्तेरेवमवश्यमेवव्याख्येयमत्रैतत्पुरेति पद्यं सर्वत्र इयमप्यसाम्प्रदायिकत्वान्न व्याख्यातम् ॥ २९ ॥ ३० ॥

न चैकांशेनासुरभावेऽपि चिन्ता कार्या यतोऽहमप्यवतारत्रयेण युवाभ्यां सह वीररसमयं युद्धं सुखमनुभविष्यामीत्यासुरभावे ऽपि मत्सेवैव भवद्भ्यां सम्पादयिष्यते तृतीये तु जन्मनि साक्षादेव वां स्वी करिष्ये इत्याह । मयीति । संरम्भेण क्रोधावेशेन योगः युद्धेषु मयि यः संयोगो ध्यानं वा तेन प्रत्येष्यतं प्रत्येष्यथः निकाशं समीपम् ॥ ३१ ॥ ३२ ॥

---

**श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।**

ब्रह्मतेजः सनकादिशापरूपं तेजः मे ममैव मतं समतनुयुवां निमित्तीकृत्य बहुजनकल्याणार्थं वाराहाद्यवतारैर्विहरिष्यामीति भावः अन्यथा सनकादीनां क्रोधः हरिद्वारपालयोर्मुनिप्रातिकूल्यं वैकुण्ठवासिनां पुनर्जन्मच नैव स्यात् ॥ २९—३० ॥

मे निकाशं समीपं प्रत्येष्यतं प्रत्यागच्छतम्॥ ३१ ॥ ३२॥

---

**भाषाटीका ॥**

भगवान् अपने भृत्योंसे बोले तुम भयमत करो जाओ अच्छा होगा ब्रह्म तेज को हटाने को समर्थ भी हूं तौ भी नहीं चाहताहूं यह मेरी इच्छा है ॥ २९ ॥

यह सब बात पहिलेही होचुकी है जब मैं योग निद्रा मे शयनकरताथा तब लक्ष्मीजी को तुमने रोका तब उनने क्रोध होकर तुमको शाप दिया ॥ ३० ॥

क्रोध के वेगसे निरन्तर हमारेध्यान के होने से ब्राह्मणों का अपराध छूटैगा तबथोडेहि काल में तुम मेरे पास आजाओगे ॥ ३१ ॥

श्रीभगवान् द्वारपालों को ऐसा आज्ञा दकर विमानों की पंक्ति से भूषित बड़ी भारी संपत्ति से युक्त जो अपना स्थान तिस मे प्रविष्ट भये ॥ ३२ ॥

तौ तु गीर्वाण ऋषभौ दुस्तराद्धरिलोकतः ।
हताश्रियौ ब्रह्मशापादभूतां विगतस्मयौ ॥ ३३ ॥
तदा विकुण्ठधिषणात्तयोर्निपतमानयोः ।
हाहाकारो महानासीद्विमानाग्र्येषु पुत्रकाः! ॥ ३४ ॥
तावेव ह्यधुना प्राप्तौ पार्षदप्रवरौ हरेः ।
दितेर्जठरनिर्विष्टं काश्यपं तेज उल्वणम् ॥ ३५ ॥
तयोरसुरयोरद्य तेजसा यमयोर्हि वः ।
आक्षिप्तं तेज एतर्हि भगवांस्तद्विधित्सति ॥ ३६ ॥
विश्वस्य यः स्थितिलयोद्भवहेतुराद्यो योगेश्वरैरपि दुरत्यययोगमायः ।
क्षेमं विधास्यति स नो भगवांस्त्र्यधीशस्तत्रास्मदीयविमृशेन कियानिहार्थः ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
पारमहंस्यां संहितायां वैयासिक्यां विदुरमैत्रेयसम्वादे जयविजयभ्रंशोनाम
षोडशोऽध्यायः ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

दुस्तराद्ब्रह्मशापात् हरिलोकतः पतन्ताविति शेषः हरिलोक एव हतश्रियावभूतामिति वा विगतस्मयौ नष्टगर्वौच ॥ ३३ ॥

विकुण्ठस्य धिषणात्स्थानात् पुत्रका हेदेवाः ! ॥ ३४ ॥

काश्यपन्तेजो वीर्यं प्राप्तौ ॥ ३५ ॥

सहैव गर्भे प्रविष्टौ यमौ तयोस्तेजसा वस्तेज आक्षिप्तं तिरस्कृतम् नचात्र प्रतिविधिः शक्यः यत एतर्हीदानीं भगवानेव तदेवं विधातुमिच्छति ॥ ३६ ॥

तथापि कोऽप्युपायोविचार्यतामिति चेत्तत्राह । विश्वस्येति । त्रयाणां गुणानामीशः स एवसत्त्वोत्कर्षकाले नः क्षेमं विधास्यति विमृशेन विमर्शनेन ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
षोडशोऽध्यायः ॥ १६ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

ब्रह्मशापान्तं व्याजीकृत्य भगवदिच्छयैवेत्यर्थः ॥ ३३—३४ ॥

प्राप्तौ अणिमाख्यसिद्ध्या प्रविष्टौ अत एव विष्णुचक्रहतांहसावित्यत्र स्वामिपादैर्व्याख्यास्यते तयोरंह एव हतं नतु ताविति ॥ ३५ ॥

अत्र तेजस्तिरस्कृतौ तत् तेजस्तिरस्करणम् एवं शापादिप्रकारेण किम्वा तदित्यस्यैव एवमित्यर्थः कृतः ॥ ३६ ॥

तत्र एवं विधभगवदिच्छायाम् ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीराधारमणदासगोस्वामिविरचितायां
दीपिन्याख्यदीपिकाटिप्पण्यां
षोडशोऽध्यायः ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

अथ तौ किमभूतां किमकुर्वातेत्यत्राह । ताविति । गीर्वाणऋषभौ पार्षदप्रवरौ तौ द्वाःस्थौदुस्तराद् ब्रह्मशापाद्धेतोर्हरिलोकतःहरिलोकएव हृतश्रियौ भ्रष्टतेजस्कौ अतएव विगतस्मयौ विनष्टगर्वौ अभूताम् ॥ ३३ ॥

तदा विकुण्ठस्थानादुभयोर्निपतमानयोः सतोः हे पुत्रकाः! देवाः विमानाग्र्येषु वसतां महानुच्चैर्हाहाकार आसीत् ॥ ३४ ॥

तावेव हरेः पार्षदश्रेष्ठौ दितेर्जठरे कुक्षौ निविष्टं प्रविष्टं कश्यपसम्बन्धि उल्वणमुग्रं तेजः वीर्यं प्रत्यधुना आशु प्राप्तौ भवतः ॥३५॥

तयोरसुरयोरासुरजन्मनोर्यमयोः सहैव गर्भे प्रविश्य उत्पत्स्यमानयोस्तेजसाद्य वः युष्माकं तेजः आक्षिप्तमभिभूतमेतर्हि इदानीं भगवान् तद्भवतां तेजः विधास्यति करिष्यतीत्यर्थः ॥ ३६ ॥

भगवान् कदा विधास्यति विधातुं सप्रभवेन्नवेति शङ्काद्वयं परिहरन्निति हासं निगमयति। विश्वस्येति। विश्वस्य जगतः स्थितिलयोत्पत्तिहेतुरत एवाद्यः सृष्टेः प्रागपि निर्विकारत्वेन स्थितः कथं निर्विकारस्य सृष्ट्यादिहेतुत्वमित्यत्राह । योगेश्वरैरपि योगपरिशुद्धमानसैरपि दुरत्ययो दुर्विवेचनीय आत्मीया विचित्रसर्गकारिणी शक्तिर्यस्मात्तेन संहारसृष्ट्यादिहेतुत्वमिति फलितम् एवंभूतस्त्र्यधीशः त्रिलोकाधिपतिः यो भगवान् स एव नोऽस्माकं क्षेमं विधास्यति सत्वगुणोत्कर्षकाले करिष्यति तत्रेह तथाभूते एतस्मिन् भगवत्यस्मदीयस्यास्मदिष्टस्य विमृशेन कियानर्थः कियत्प्रयोजनं कृत्स्नविश्वस्थितिलयोद्भवलीलस्याचिन्त्यविविधविचित्ररचनासमर्थमायाधीशस्य षाड्गुण्यपूर्णस्य त्रिलोकाधिपतेः स्वाश्रितास्मदीयविमर्शनमत्यल्पं प्रयोजनमित्यर्थः ॥ ३७ ॥

इतिश्रीभागवते महापुराणे तृतीयस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
षोडशोऽध्यायः ॥ १६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दुर्मदानां दण्ड एव मदघ्नोऽस्ति हेतुरिति भावेनाह । तौरिवेति । गीर्वाणऋषभौ इति संधिकार्याभावादेव ऐश्वर्यमौपचारिकमिति दर्शयति । दुस्तराद्ब्रह्मशापतो विगतस्मयौ नष्टमदावभूतामित्यन्वयः ॥ ३३ ॥

मदाभावात्तत्रैवात्रस्थानमभूत्किंनेत्याह । तदेति । विकुण्ठधिष्ण्यात् वैकुण्ठलोकात् विमानाग्र्येषु स्थितानामितिशेषः ॥ ३४ ॥ कथाप्रसङ्गं प्रकृते सङ्गमयति । तावेवेति । दितेरुदरं प्रविष्टं कश्यपस्य विद्यमानं काश्यपं तेजो वीर्यं प्राप्तौ ॥ ३५ ॥

असुरयोरसुराविष्टयोः आक्षिप्तमभिभूतं तस्य प्रतीकारं दिशति । एतर्हीति । एतर्हि इदानीं तत्तस्य प्रतीकारं विधित्सति कर्तुमिच्छति कालान्तरे क्रियमाणत्वादपराधपूरणस्य चापेक्षितत्वादिदानीमिच्छैवेत्यतो विधित्सतीति ॥ ३६ ॥

अधुनैव भवता कश्चिदुपायो निरूपणीय इत्याशङ्क्योक्तमेव विवृणोति । विश्वस्येति । विश्वस्य स्थित्यादिहेतुरित्यनेनास्य तत्कर्तृत्वं सूचयति । योगेश्वरैर्ब्रह्मादिभिरपि दुरत्ययो दुर्ज्ञेयो योगमार्गउपायप्रकारो यस्य स तथा क्षेमं प्राप्तरक्षां विधास्यतीत्यनेन नेदानीं काल इति सूचयति उक्तकाले को निश्चय इत्यत उक्तं त्रातेति । त्राणशीलत्वात्करिष्यत्येवेतिनिश्चयोपपत्तेः हेत्वन्तरंचाह । त्र्यधीश इति । त्रयाणां लोकानामीश्वरा इन्द्रादयस्तेषामीश्वर ऐश्वर्यैकर्तृत्वेन स्वामी त्राणोपेक्षायामिन्द्राद्यैश्वर्यमपि न स्यादिति फलितमाह । अस्मदीयेति । अस्मदीयेन विमर्शेनोपायनिर्मार्गणेन कियानर्थः न कोऽपीत्यर्थः स्यादप्यधिक ईश्वर इति यादवः॥३७॥

इतिश्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
षोडशोऽध्यायः ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

दुस्तरात् त्यक्तुमशक्याद्धेतोर्हतश्रियौ दुःखेन ग्लानौ स्मितरहितौ चाभूताम् । ब्रह्मशापात् ब्रह्मशापं लक्ष्यीकृत्य भगवदिच्छयैवेत्यर्थः ॥ ३३ ॥ ३४ ॥

तावेवेति । तौ पार्षदरूपावेव सन्तौ अणिमाख्यसिद्ध्या प्राप्तौ प्रविष्टौ ॥ ३५ ॥

तयोरित्यस्य टीकायां तदेव विधातुमिति तदित्यस्यैवार्थः नोऽस्माकं भक्तानान्तु सर्वदा क्षेममेव करिष्यति ॥ ३६—३७ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
षोडशोऽध्यायः ॥ १६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं भगवतो गृहप्रवेशमुक्त्वा तयोरन्यत्र गमनमाह । तौरिवेति । तत्र तयोर्निलीयस्थितिं व्यावर्त्तयति तु शब्दः तौ हि विचारकौ भगवदाज्ञापरिपालनादेव निस्तार इति तथाज्ञाने हेतुः गीर्वाणऋषभाविति । सुदुस्तरादिति तस्य लोकस्य तरणं दुःखेनापत्रशक्यं तत्रापि हरिलोकतः सहि सर्वदुःखनिवारकः तत्रापि प्रकाशमानो लोकः अन्यत्राज्ञानमेवेति भावः वैकुण्ठस्थितयोर्या शोभा स्थिता सा ब्रह्मशापाद्धेतोः अतः तत्र स्थातुमपि न शक्यते तत्रत्यैः सह साधर्म्याभावात् किञ्च विगतःस्मयो गर्वो ययोः अत एवैतयोः पूर्वं गर्वः स्थितः ननु निर्दुष्टौ ततो निष्काशिताविति लोकस्योपकारित्वख्यापनार्थं लोकत एव विगतस्मयाविति हेतुहेतुमद्भावो निरूपितः ३३ ॥

एवं तत्कृतमुपकारं प्राप्य तौ गतावित्याह । तदेति । विकुण्ठधिष्ण्यात्तयोर्निपतमानयोः सतोः तदा हाहाकार आसीत् अयुक्तं जातमिति विमानाग्र्येष्विति तेषां दर्शनयोग्यता निरूपिता हाहाकारवर्णनं तयोर्दयासूचकमत एवात्र प्रतीकारो न कर्तव्यः क्षिप्रयोरधिकक्लेशापत्तेः । पुत्रका ! इति । स्नेहेन सम्बोधनं स्वस्य दयावत्त्वज्ञापनार्थम् ॥ ३४ ॥

तयोर्निरूपणस्य प्रकृतोपयोगमाह ॥ तावेवेति ॥ अधुना तावेव दितेर्जठरनिर्विष्टं काश्यपं तेजः प्राप्तौ गर्भं प्रवश्य एवात्र ननु प्रकारान्तरेणाब्जादिषु संक्रमः सुरभावान्निर्गतत्वात् असुरत्वं तयोर्योग्यं बीजमित्याह । उल्बणमिति । स्वभावत एवोल्बणमन्यायेन निर्गतत्वात् तत्रापि दितेर्जठरनिर्विष्टं तयोरापद्धेयमिति ख्यापनार्थं पूर्वावस्थाकीर्त्तनं हरेः पार्षदप्रवराविति ॥ ३५ ॥

तर्ह्यन्धकारे किं कारणं तत्राह । तयोरिति । तौ ह्यधुनाऽसुरौ अतस्तत्तेजसा वः युष्माकं तेजः आक्षिप्तम् भगवत्तेजसा दैत्यतेज आक्षिप्तं भवति दैत्यतेजसा च देवानां किञ्च मुनीनामपकारसंस्मरणात् दिवः यमयोः हि व इति पाठे भवतामेव यमौ अत एव भवतां तेज आक्षिप्तं भवति । तर्हि प्रतीकारः कर्तव्य इति चेत्तत्राह । भगवांस्तद्विधित्सतीति । एतर्हि इदानीं भवतामुपद्रवं भगवानेव विधित्सति केन प्रतीकारः कर्तव्य इत्यर्थः ॥ ३६ ॥

तर्हि का गतिरित्याकांक्षायामाह । विश्वस्येति का भवतां चिन्ता स एव शान्तिं करिष्यति तत्र हेतुः यः विश्वस्य स्थितिलयोद्भवहेतुरिति यस्तूत्पादयति स एव पालयतीत्यधुनापि स एव पालयिष्यति अथ यदि न पालयिष्यति तदा प्रलयकर्तृत्वात् प्रलयं करिष्यतीति न चिन्ता कर्त्तव्या प्रलयस्यावश्यभावात् तथापि क्लेशाच्चिन्तेति चेत् तर्ह्युत्पादनमपि करिष्यतीति न चिन्ता कर्त्तव्या किञ्च न केवलं भवता मेव तेन कार्यं कर्तव्यं किन्तु विश्वस्यैव यतो विश्वस्यैव स उत्पत्त्यादिकर्ता ननु साधारणादहेऽपि यथा पलायनेन जङ्गालुर्न दह्यते तथास्मासु प्रतीकारस्त्वया कर्त्तव्य इत्याशङ्कयाह । योगेश्वरैरपि दुरत्यययोगमाय इति । भगवतो योगमाया सर्वक्लेशहेतुः सा हि दुरत्यया साधनेषु योगो महान् तस्यापि ये ईशाः स्वाधीनयोगाः तैरपि योगमायातिक्रमः कर्त्तुमशक्यः अतो न मया प्रतीकारः तर्हि त्वत्तोऽप्युत्कृष्टो वक्तव्य इति चेत्तत्राह । आद्य इति । न हि तदपेक्षया कश्चिदाद्योऽस्ति यो वक्तव्यः स्यात्तर्हि स एवोच्यतामित्याशङ्क्याह क्षेमं विधास्यतीति । स अनुक्तोऽपि स्वयमेव क्षेमं विधास्यति तत्र हेतुः । अधीश इति । अन्यथा लोकद्वयमेव स्यात् यदि ताभ्यां दिवोनाशः स्यात् । ननु ताभ्यां नाशे कृते पश्चात्कथं पालयिष्यतीत्याशङ्क्याह । भगवानिति । ननु तथापि त्वया शुभाशंसनं कर्त्तव्यमस्माभिर्वा त्वद्वचनेन तपस्यादिकं कर्तव्यमिति चेत्तत्राह । तत्रास्मदीयविमृशेनेति । यथा पर्जन्ये वर्षति ततः पूर्वं घटेन क्षेत्रसेचनं यदि देवो न वर्षेत् सेकेनापि न सस्योत्पत्तिः वृष्टौ सत्यां सेको व्यर्थ एव तत्रास्मदीयेन विमर्शेन तत्र सर्गे इहेदानीं कियान्वार्थः स सर्वार्थमेव शुभं करिष्यतीति किं प्रत्येकप्रयासेन फलासाधकेनेत्यर्थः ॥ ३७ ॥

इतिश्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्वल्लभाचार्यकृतसुबोधिन्यां
षोडशाध्यायविवरणम् ।

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

हरिलोकतः पतन्तावितिशेषः विगतस्मयौ नष्टानन्दौ॥३३॥

विकुण्ठस्य धिष्ण्यात् स्थानात् विमानाग्र्येषु सत्यादिलोकस्थविमानश्रेष्ठेषु पुत्रकाः ! हे देवाः ! ॥ ३४ ॥

काश्यपं तेजः कश्यपस्य वीर्यं प्राप्तौ स्वदेहत्वेनाङ्गीकृतवन्तावित्यर्थः ॥ ३५ ॥

यमयोः श्लेषेणान्तकतुल्ययोः तर्हि किमप्युपशमनं कुर्वीतिचेत् तत्र के वयं वराकाः शापभ्रष्टयोरपि भगवत्पार्षदयोरुपरि- नास्माकं प्रभुतेत्याह तत् खलूपशमनं स एव भगवान् विधातुमिच्छति ॥ ३६ ॥

ननु वयं सम्प्रति म्रियामहे स कदा उपशमं विधास्यतीतिचेत्तत्र भवन्तो म्रियन्तां जीवन्तु वा तस्यैवेच्छा कारणं किन्तु सम्प्रति पालनसमये स पालयिष्यत्येवेत्याह । विश्वस्येति । तत्र प्रकारन्तु वयं नैव जानीम इत्याह । योगेश्वरैरिति । तत्र सर्वज्ञानामपि न ज्ञानमिति भावः । ननु तदप्यत्र विपत्तावस्मदाश्वासनार्थं किमपि परामृशेति तत्राह । तत्रास्मदीयेन विमृशेन विमर्शेन कियानर्थ इति अस्मद्विमृश्यमन्यथापि स कुर्यादिति भावः ॥ ३७ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्
तृतीये षोडशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

दुस्तरात् ब्रह्मशापात् हरिलोकतः पतन्तौ हतश्रियौ विगतस्मयौ नष्टगर्वौ च असूताम् ॥ ३३ ॥

हेपुत्रकाः ! ॥ ३४ ॥

तेजो वीर्यं प्राप्तौ ॥ ३५ ॥

आक्षिप्तं तिरस्कृतम् वपुष्मत्तेजसस्तिरस्कारं भगवानेव विधातुमिच्छतीति ॥ ३६ ॥

विमृशेन विमर्शेन ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
षोडशाध्यायार्थप्रकाशः ॥ १६ ॥

---

भाषाटीका ।

वे तो दोनो देव श्रेष्ठ दुस्तर ब्रह्मशाप के लगने से विष्णु लोक मे से गर्व तथा शोभा से रहित होकर चले गये ॥ ३३ ॥

हे पुत्रो ! उस समय में विकुण्ठ लोक में से उनके गिर ने से विमानोपर बैठे हुये देवादिकोंने बडा हाहाकार शब्द किया ॥३४॥

भगवान् के पार्षदो मे श्रेष्ठ वो दोनों जय विजय दिति के गर्भ मे कश्यपके तेजमे बडे क्रूर होकर स्थित हैं ॥ ३५ ॥

ओदोनो यमल जोडा असुरों के तेज से आज आपलोगो का तेज नष्ट होगया है भगवान् ही इस बात को करना चहते- हैं ॥ ३६ ॥

जो भगवान् आद्य हैं जगत्के उत्पत्ति स्थिति संहार के हेतु हैं योगि जनों से भी जिनकी योग माया नहीं जानीजाती है सो भगवान् तीनो लोक के अधिपति हैं सोही दुःख निवारण करेंगे और हम लोगों के अधिक विचार करने से कुछ प्रयोजन सिद्ध नहीं होगा ॥ ३७ ॥

इति श्री भागवत तृतीयस्कंध षोडशाध्यायका
भाषानुवाद लक्ष्मणाचार्यकृत समाप्त ॥ १६ ॥

---

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे षोडशोऽध्यायः समाप्तः ॥ १६ ॥

## सप्तदशोऽध्यायः ।

### मैत्रेय उवाच ।

निशम्यात्मभुवा गीतं कारणं शङ्कयोज्झिताः ।
ततः सर्वे न्यवर्तन्त त्रिदिवाय दिवौकसः ॥ १ ॥
दितिस्तु भर्तुरादेशादपत्यपरिशङ्किनी ।
पूर्णे वर्षशते साध्वी पुत्रौ प्रसुषुवे यमौ ॥ २ ॥
उत्पाता बहवस्तत्र निपेतुर्जायमानयोः
दिवि भुव्यन्तरिक्षे च लोकस्योरुभयावहाः ॥ ३ ॥
सहाचला भुवश्चेलुर्दिशः सर्वाः प्रजज्वलुः ।
सोल्काश्चाशनयः पेतुः केतवश्चार्तिहेतवः ॥ ४ ॥
ववौ वायुः सुदुःस्पर्शः फूत्कारानीरयन् मुहुः ।
उन्मूलयन्नगपतीन् वात्यानीको रजोध्वजः ॥ ५ ॥
उद्धसत्तडिदम्भोदघटया नष्टभागणे ।
व्योम्नि प्रविष्टतमसा न स्म व्यादृश्यते पदम् ॥ ६ ॥
चुक्रोश विमना वार्धिरुदूर्मिः क्षुभितोदरः ।
सोदपानाश्च सरितश्चुक्षुभुः शुष्कपङ्कजाः ॥ ७ ॥
मुहुः परिधयो ऽभूवन् सराह्वोः शशिसूर्ययोः ।
निर्घाता रथनिर्ह्रादा विवरेभ्यः प्रजज्ञिरे ॥ ८ ॥
अन्तर्ग्रामेषु मुखतो वमन्त्यो वह्निमुल्बणम् ।
सृगालोलूकटङ्कारैः प्रणेदुरशिवं शिवाः ॥ ९ ॥
संगीतवद्रोदनवदुन्नमय्य शिरोधराम् ।
व्यमुञ्चन् विविधा वाचो ग्रामसिंहास्ततस्ततः ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ततः सप्तदशे जन्म तयोर्लोकभयंकरम् ॥
हिरण्याक्षप्रभावश्च वर्ण्यते दिग्जयेऽद्भुतः ॥१॥

क्षेमं विधास्यतीति ब्रह्मवचनानन्तरं शङ्कया त्यक्ताः ॥ १ ॥

भर्तुरादेशात्। लोकान्सपालांस्त्रींश्चंडि मुहुराक्रन्दयिष्यत' इति वाक्यात्। स्वापत्याभ्यां परिशङ्किनी देवोपद्रवं शङ्कमाना ॥ २ ॥

तत्र तदा निपेतुरुद्बभूवुः उरुभयमासमन्ताद्वहन्तीति ॥ ३ ॥

अचलैः सहिता भुवः प्रदेशाः केतवश्चोदयं चक्रुरिति शेषः ॥४॥

फूत्कारानिति तीव्रवायुशब्दानुकरणम् नगपतीन्महावृक्षान् वात्या एवानीकं यस्य रज एव ध्वजो यस्य ॥ ५ ॥

उच्चैर्हसन्त्य इव तडितो येषु तेषामम्बुदानां घटया समूहेन नष्टो-भागणः सूर्यादिप्रभासमूहो यस्मिन् पदं स्थानं न व्यादृश्यते स्म ईषदपि नादृश्यत ॥ ६ ॥

वार्धिः समुद्रो विमना इव उद्गता ऊर्मयो यस्मात् क्षुभिता उद-रस्था मकरादयो यस्मिन् उदपानैर्वापीकूपादिभिः सहिताः शुष्काणि पङ्कजानि यासु ॥ ७ ॥

परिधयः परिवेषाः सराहोराहुग्रस्तयोर्निर्घातानिरभ्रगर्जितानि रथनिर्ह्रादतुल्या ध्वनयः विवरेभ्यो गिरिगुहाभ्यः ॥ ८ ॥

सृगालानामुलूकानां च टङ्कारैर्ध्वनिभिः सह शिवाः शृगाल्यः ॥ ९ ॥

ग्रामसिंहाः श्वानः ॥ १० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

ततः षोडशाध्यायानन्तरम् तयोर्जयविजययोरसुररूपेण जन्म कारणं तादृशानर्थे तन्निवारणे च हेतुं भगवदिच्छारूपं शङ्कया सन्देहेन ततः मेरुस्थब्रह्मसदनात् ॥ १ ॥ २ ॥

तदा प्रसूतिकाले जायमानयोस्सतोः ॥ ३ ॥

त्रिविधानेवोत्पातान्दिवीति सहाचला इत्यादिद्वादशभिः केतवो लम्बायमानास्ताराः ॥ ४ ॥

अनीकं सैन्यम् ॥ ५ ॥

तमसा हेतुना ॥ ६ ॥ ७ ॥

परिवेषाः मण्डलानि ॥ ८ ॥

अशिवा अमङ्गलाः ॥ ९ ॥ १० ॥ ११ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमथात्रापीति हासोऽयं श्रुतो मे वर्णितः पुरा । ब्रह्मणा देवदेवेन देवानामनुपृच्छतामित्युपक्रान्तदेवब्रह्मसंवादरूपम् इति हासं प्रस्तुत्य तमेव निगमयन् परमप्रकृतं हिरण्याक्षवधं प्रतुष्टुषुर्ब्रह्मनारदसंवादोपोद्घातमितिहासान्तरं परमप्रकृतेन सङ्गमयन् हिरण्याक्षजन्मप्रभृतिवृत्तान्तमाह मैत्रेयः । आत्मभुवा ब्रह्मणा गीतं कारणं व्यसनकारणं निशम्य शङ्कया उज्झिताः क्षेमं विधास्यतीति वचनात् शङ्कया त्यक्ताः सर्वे त्रिदिवौकसः देवास्ततः ब्रह्मलोकात् त्रिदिवाय त्रिदिवं स्वर्गं प्रति जग्मुः ॥ १ ॥

दितिस्तु भर्तुः कश्यपस्यादेशात् लोकान्सपालांस्त्रींश्चण्डि मुहुराक्रन्दयिष्यत इति वाक्यात् स्वापत्याभ्यां देवोपद्रवमाशङ्कमाना सती वर्षशते पूर्णे सति यमौ द्वौ पुत्रौ प्रसुषुवे प्रसूतवती युगपज्जातौ यमावित्युच्येते । २ ।

तत्र तज्जन्मदेशे तयोर्जायमानयोः सतोर्दिवि भुवि अन्तरिक्षे बहवः विचित्राः लोकस्योरु भृशं भयावहाः भयंकराः उत्पाताः निपेतुः पतिता उद्बभूवुरित्यर्थः ॥ ३ ॥

तानेव प्रपञ्चयति । सहेत्यादिभिरेकादशभिः महाचला सपर्वता भुवः भूभागाः चेलुश्चलितवत्यः सर्वा दिशः प्रजज्वलुः वह्निज्वाला युक्ता बभूवुः सोल्काः साङ्गाराः अशनयश्च पेतुः पतिताः आर्तिहेतवः लोकपीडासूचकाः केतवः धूमकेत्वादयः उद्बभूवुरिति शेषः ॥ ४ ॥

मुहुःस्पर्शः कठिनस्पर्शः फूत्कारानिति तीव्रवायुशब्दानुकरणान्मुहुरीरयन् ध्वनयन्नगपतीन्वृक्षश्रेष्ठानुन्मूलयन् वात्याश्चक्रवायवः तेषामनीकः समूहो यस्य रज एव ध्वजो यस्य वात्यानीकेति पाठे वात्याभिरानीतमुद्धतं रज एव ध्वजो यस्येत्यर्थः एवं विधो वायुर्ववौ प्रासरत् ॥ ५ ॥

उद्धसन्त्य इव तडितो येषु तेषामम्भोदानां मेघानां घटया समूहेन नष्टो भागणः सूर्यादौ प्रभा समूहो यस्मिन् तस्मिन् व्योम्नि प्रविष्टतमसा प्रविष्टगाढान्धकारेणाततपदं तनुस्थानं न व्यादृश्यत ईषदपि नादृश्यतेत्यर्थः ॥ ६ ॥

वार्धिःसमुद्रः विमना दुःखितचित्त इव उदूर्मिभिः क्षुभितमुदरं उदरस्था मकरादयो यस्य स चुक्रोश शुष्कानि पङ्कजानि यासु ताः उदपानाः उदकानि पिबन्त्यस्मिन्निति वापीकूपतडागादयः तैः सहिता नद्यश्चुक्षुभुः ॥ ७ ॥

सग्राहौ राहुग्रस्तयोः शशिसूर्ययोः मुहुः पुनः पुनः परिधयः परिवेशाः अभवन् निर्घाता निरभ्रगर्जितानि रथनिर्ह्रादाः रथध्वनितुल्यध्वनयः विवरेभ्यः गिरिगह्वरेभ्यः प्रजज्ञिरे जाताः ॥ ८ ॥

अन्तर्ग्रामेषु ग्राममध्येषु मुखतो मुखैः उल्वणं वह्निं वमन्त्यः उद्गिरन्त्यः शिवा गोमायवः सृगालानामुलूकानां च टङ्कारैः ध्वनिभिः सहाशिवं यथा तथा प्रणेदुः ध्वनितवत्यः शिवाः शृगालजात्यवान्तरजातीयाः ग्रामेषु यासां ध्वनिमत्यन्तारिष्टसूचकं लोका वदन्ति ॥ ९ ॥

ग्रामसिंहाः श्वानः शिरोधरां कन्धरामुन्नमय्योद्धृत्य संगीतवद्रोदनवच्चविविधाः वाचो भाषणानि ततस्ततः तत्र तत्र व्यमुञ्चन्नकुर्वन्नित्यर्थः ॥ १० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अनन्यवध्ययोर्हिरण्यकशिपुहिरण्याक्षयोः निहन्तुर्हरेरमितमहिम्नो ऽवगतत्वादस्मिन्भगवति भक्तिः कर्तव्येति तन्महिमा प्रतिपाद्यते ऽस्मिन्नध्यायद्वये । तत्रादौ देवानां त्रिदिवगमनं वक्ति । निशम्येति । आत्मभुवा ब्रह्मणा गीतं कथितम् ॥ १ ॥

अपत्यपरिशङ्किनी अपत्ययोर्हरेर्नाशशङ्कावती यमौ यमलौ ॥ २ ॥

आभ्यां दैत्याभ्यां यथा जनोपद्रवा भवन्ति तथा सूचकानुत्पातानाह । उत्पाता इति ॥ ३ ॥

सहाचलाः सपर्वताः प्रदेशबहुत्वाद्भुव इति बहुवचनं सोल्कापातसहिता अशनयो निर्घाताः ॥ ४ ॥

"फट्कारश्चैव फूत्कारस्तथाकिलाकिलादयः । अनुकारार्थशब्दा विज्ञेया येचान्येतादृशामता" इत्यभिधानात् फट्कारो ऽनुकारशब्दः तद्वान् फट्कारारावान् तादृशा इति टङ्कारादयः वात्यानां मण्डलवायूनामनीकं समूहो यस्य स तथा रजएव ध्वजो यस्य स रजोध्वजः ॥ ५ ।

उल्लसन्त्यस्तडितो येषु ते तथा उल्लसत्तडितः ते च ते अम्भोदा मेघास्तेषां घटया मालया नष्टो भानां नक्षत्राणां गणो यस्मिंस्तत्तथा तस्मिन् तारकं तारकेतिवत् भं भेतिनाम द्वयम् ॥ ६ ॥

वार्धिः समुद्रः सोदपाना वापीकूपादिभिः सहिताः शुष्काणि म्लानानि पङ्कजानि यासु तास्तथा ॥ ७ ॥

परिधयः परिवेषाः निर्घातरवो निर्मेघगर्जनशब्दः तस्य निर्ह्रादाः प्रतिध्वनयः विवरेभ्यः पर्वतगुहादिभ्यः ॥ ८ ॥

सृगालाः पुमांसः शिवाः सृगालस्त्रियः अपिटङ्कारैर्निन्दितानुकारस्वरैः प्रणेदुरित्यनेन नाशं सूचयति तदुक्तम् अपिः संभावनाप्रश्नगर्हाशङ्कासमुच्चये । नाशस्तत्र सृगालानां शिवानां चान्यथा स्वर इति ॥ ९ ॥

ग्रामसिंहाः सारमेयाः शिरोधराः कण्ठास्तानुन्नमय्य ऊर्ध्वीकृत्य संगीतवन्नाट्यगानवत् ॥ १० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कारणं तस्योपद्रवस्योत्पत्तौ प्रतीकारे च हेतुम् । शङ्कया सन्देहेन ॥ १ ॥

अपत्यपरिशङ्किनीति । शङ्कमाना सुरार्दनादिति पूर्वोक्तत्वात् तस्मात् तत्र भययुक्ता ॥ २—१४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

कामादिना मार्गनाशाः उपोद्घातेन वर्णिताः ।
सृष्टिमात्रप्रयोगाय तत्फलं वर्ण्यते शुभम् ॥ १ ॥
उत्पत्तिस्तामसी प्रोक्ता स्थितिर्वै राजसी मता ।
सात्त्विकः प्रलयश्चेति विपरीतं फलं तयोः ॥ २ ॥
उत्पत्तिर्द्विविधा प्रोक्ता स्वरूपानिष्टभेदतः ।
यावद्बुद्धिरिहोत्पत्तिः कायवाग्दोषवर्णनम् ।
सजातीयविजातीयक्लेशदानाय जन्मनः ॥ ३ ॥
शापस्त्वेक इति प्रोक्तो हिरण्याक्षो न चापरः ।
आधारस्तु स एवोक्तो द्वितीये दोषवर्णनम् ॥ ४ ॥
उत्पत्तिरेव शापेन नीचयोनौ निरूपिता ।
स्थितिनाशौ तयोस्तस्माद्धरावेवात्र वर्ण्यते ॥ ५ ॥
कृष्णेन सहिता लीला स्थितिस्तस्य महात्मनः ।
निधनं चापि तस्यैवं कल्याणवचनान्मतम् ॥ ६ ॥
स्वरूपोत्पत्तिरन्यत्र हेतुरित्युच्यते बहु ।
अनिष्टसूचकं तत्र ज्ञानं दुःखप्रणाशकम् ॥ ७ ॥
अतः सप्तदशेऽध्याये दुःखाभावस्तथोद्गमः ।
अनिष्टसूचनं दोषो वर्ण्यते पश्चसम्भवे ॥ ८ ॥

तत्र प्रथमं निदानज्ञानेन भयनिवृत्तिमाह । निशम्येति । आत्मभुवा ब्रह्मणा गीतं कारणं निशम्य शङ्कयोज्झिता जाताः आत्मभुवेति कारणं गीतमिति हर्षेण सर्वजनीनमुक्तमिति फले निःसन्देहः शङ्कास्वनाशे पीडामात्रन्तु परिच्छिन्नत्वात् सोढव्यमिति शङ्कयैवोज्झिताः जाताः इष्टानिष्टयोः कालस्य च निर्धारितत्वात् शङ्कानिवृत्त्यनन्तरं च सर्वे त्रिदिवाय न्यवर्तन्त दिवौकस इति तत्रागमनमावश्यकम् ॥ १ ॥

उत्पत्तिमाह । दितिस्त्विति । ऋषिविचारेण सद्य एवोत्पादनीयौ तथापि दित्या तथा न कृतमिति तुशब्दः भर्तुः कश्यपस्य आदेशात् वाक्यात् आज्ञारूपात् अपत्यविषये परितः शङ्कायुक्ता जाता तया शङ्कया तयोर्दोषनिवृत्त्यर्थं मारकः कालः प्रतीक्षितः स हि वर्षशतात्मको भवति अतः पूर्णे वर्षशते पुत्रौ प्रसुषुवे उभौ पुत्रौ जनितवती तौ यमलावपि दुःखदातृत्वात् यमावित्युक्तौ पुत्रापराधेन भर्त्ता स्वात्मानं त्यक्ष्यतीतिभयात् शतवर्षधारणमिति बोधयति । साध्वीति । एते वर्षाः मनुष्याणाम् ॥ २ ॥

एवमुत्पत्तिमुक्त्वा तस्यास्तामसत्वं ज्ञापयितुमनिष्टसूचकान् बहूनुत्पातान् वर्णयति कालप्रतीक्षाकृतेति संवत्सरात्मकः कालः तत्रानिष्टसूचक इति द्वादशभिरनिष्टानि फलं चैकेन उच्यते । तत्र प्रथमं सामान्यमनिष्टमाह । उत्पाता इति । तत्राश्रमे तदा वा तयोर्जायमानयोः सतोः त्रिविधा अपि जाताः तेषां देशभेदेनैव त्रैविध्यमाह । दिवि भुव्यन्तरिक्षेचेति । सात्त्विकराजसतामसक्रमोऽत्र चकारादात्मनि भूतकृतानि च तेषां फलमाह । लोकस्योरुभयावहा इति । लोकस्येति सामान्यतः सतां वा उरुभयमावहन्तीति अधिकं भयं लोकनाशात् धर्मनाशाद्वा ॥ ३ ॥

उद्देशत उक्त्वास्वरूपतस्त्रिविधानाह । सहाचला इति । एतेऽपि द्विधा इति केचित् । पर्वतसहिता भुवः खण्डशश्चेलुः अनवच्छिन्ना चेत् भूः चचालेति वदेत् सहाचलेत्यचला नामपि पृथक् चलनं दिग्दाहोऽन्तरिक्षस्थः अन्तरिक्षे प्रतिष्ठिता दिश इति । सर्वा अष्टौ जज्वलुरिति न धूममात्रम् दिव्यानाह । सोल्काश्चाशनयइति । उल्का अग्निसदृशा नक्षत्ररूपाः तत्सहिता अशनयो वज्राः केतवः शतं धूमकेतुप्रभृतयः सर्वेषां साधारण्येन भयजनकत्वेऽपि केतूनामार्त्तिजनकत्वमधिकं यैः पातो दृश्यते तेषां शरीरे पीडाभवतीति विशेषः आर्तिहेतवो यमदूतादयो वा ॥ ४ ॥

भौतिकमाह । वायुरिति । वायुर्द्विविधः वात्यारूपः सदागतिश्च उभयविधोऽप्यनिष्टसूचक इत्याह । तत्र सदागतेरनिष्टसूचकरूपमाह । सुदुःस्पर्श इति । निरन्तरगमनमेव स्वभावतोऽनिष्टसूचकं तत्रापि सुष्ठुदुष्टः स्पर्शो यस्य फट्कारानीरयन्निति । दुष्टशब्दाननुकुर्वन् वातीत्यर्थः । मुहुरिति । एकस्मिन्नपि धाराप्रवाहे बहुधा शब्दजननं वात्यारूपस्यानिष्टलक्षणमाह । उन्मूलयन्निति । नगपतीन् वृक्षश्रेष्ठान् मूलत उत्पाटयन् भूमणवायुः गगनपर्यन्तं रज उत्थापयतीत्यर्थः ॥ ५ ॥

मेघानामनिष्टलक्षणमाह । उद्धसदिति । उर्द्धं हसन्त्य इव यास्तडितः तत्सहिता ये अम्भोदाः तेषां या घटा समूहः तया कृत्वा नष्टोभागणस्तेजस्समूहो यत्र एतादृशे व्योम्नि प्रविष्टं यत्तमस्तेन कृत्वा किमपि पदं ज्योतिषामन्येषां वा न व्यादृश्यते स्मस्मेति लौकिकं प्रमाणं संमत्यर्थमुच्यते तडितां हासतुल्यताऽनिष्टमत्यन्तं तमश्च तमस इति पाठे । तमसः पदं मेघादिकं न दृश्यत इत्यर्थः ॥ ६ ॥

समुद्रस्यानिष्टलक्षणमाह । चुक्रोशेति । विमना इव वार्द्धिः समुद्रः चुक्रोश ऊर्ध्वमूर्मयो यस्य क्षुभितमुदरं यस्य मकराद्युद्वेगेन ज्ञायते सोदपानाः कूपादिसहिताः सरितः पुष्करिण्यश्च शुष्कपङ्कजा जाताः सरित एव वा ॥ ७ ॥

मुहुरिति । चन्द्रसूर्ययोरेकदैव राहुग्रस्तयोः मुहुः परिधयः अभूवन् निर्घातो निरभ्रविद्युत्पातो जात इत्यर्थः निर्ह्रादाः शब्दाः रथघोषसदृशाः विवरेभ्यः प्रदरेभ्यः कन्दरादिभ्यः पातालादिभ्यः सर्पादिविलेभ्यो वा प्रकर्षेण जाताः ॥ ८ ॥

अन्तर्ग्रामेषु मुखत उल्वणं वन्हि च वमन्त्यः शिवाः शृगाल्यः शृगालोलूकटङ्कारैः सहिताः वाचः प्रणेदुः प्रकर्षेण नेदुः अशिवा इति । लोकेऽपि तेषाममङ्गलत्वं प्रसिद्धमिति ज्ञापितम् ॥ ९ ॥

शुनामाह । संगीतवदिति ॥ १० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तयोर्जन्मन्यरिष्टानि स्पष्टं सप्तदशेऽभवन् ॥
उपाहसच्च दिग्जेता हिरण्याक्षः प्रचेतसम् ।

शङ्कया उज्झिता भगवत्येव विश्वासेनेति भावः ॥ १ ॥

भर्त्तुरादेशात् लोकान् क्रन्दयिष्यतीति तद्वाक्यात् अपत्याभ्यां सर्वलोकोपद्रवमपत्यं प्रति विष्णुहस्ततो वधाद्वा शङ्कमाना ॥ २ ॥

निपेतुरुद्बभूवुः ॥ ३ ॥

केतवश्च उद्बभूवुरिति शेषः ॥ ४ ॥

फट्कारानिति तीव्रवायुशब्दानुकरणं वात्या एव अनीकं सेना यस्य सः ॥ ५ ॥

उच्चैर्हसन्त्य इव तड़ितो येषु तेषामम्बुदानां घटया नष्टो भागणः सूर्यादिप्रभा यस्मिंस्तस्मिन् व्योम्नि पदं स्थानम् ॥ ६ ॥

वार्धिः समुद्रः । सोदपानाः सकूपाः ॥ ७ ॥

निर्घाता निरभ्रगर्जितानि रथनिर्ह्रादतुल्या ध्वनयः विवरेभ्यः गिरिगुहाभ्यः ॥ ८ ॥

टङ्कारैर्ध्वनिभिः सह शिवाः शृगालस्त्रियः ॥ ९ ॥

ग्रामसिंहाः श्वानः ॥ १० ॥

खराश्च कर्कशैः क्षत्तः ! खुरैर्घ्नन्तो धरातलम् ।
खार्कार्ररभसा मत्ताः पर्यधावन् वरूथशः ॥ ११ ॥
रुदन्तो रासभत्रस्ता नीडादुदपतन् खगाः ।
घोषेऽरण्ये च पशवः शकृन्मूत्रमकुर्वत ॥ १२ ॥
गावोऽत्रसन्नसृग्दोहास्तोयदाः पूयवर्षिणः ।
व्यरुदन् दैवलिङ्गानि द्रुमाः पेतुर्विनानिलम् ॥ १३ ॥
ग्रहान् पुण्यतमानन्ये भगणांश्चापि दीपिताः ।
अतिचेरुर्वक्रगत्या युयुधुश्च परस्परम् ॥ १४ ॥
दृष्ट्वान्यांश्च महोत्पातानतत्त्वविदः प्रजाः ।
ब्रह्मपुत्रानृते भीता मेनिरे विश्वसंप्लवम् ॥ १५ ॥
तावादिदैत्यौ सहसा व्यज्यमानात्मपौरुषौ ।
ववृधातेऽश्मसारेण कायेनाद्रिपती इव ॥ १६ ॥
दिविस्पृशौ हेमकिरीटकोटिभिर्निरुद्धकाष्ठौ स्फुरदङ्गदाभुजौ ।
गां कम्पयन्तौ चरणैः पदे पदे कट्या सुकाञ्च्यार्कमतीत्य तस्थतुः ॥१७॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ॥

एवं दित्युदरगतयोरसुरयोः भावकारणमुक्तमथसप्तदशे तज्जन्मादि वर्ण्यंते उज्झितास्त्यक्ताः ॥ १ ॥

अपत्याभ्यां परिशङ्किनी देवाद्युपद्रवं शङ्कमाना ॥ २ ॥

तत्र तज्जन्मवेलायाम् निपेतुः प्रादुर्बभूवुः ॥ ३ ॥

भुवः नानाद्वीपरूपाः केतवः उद्बभूवुरितिशेषः ॥ ४ ॥

वात्याश्चक्रवायव एव अनीकं सेना यस्य रज एव ध्वजो यस्य सः ॥ ५ ॥

उद्धसन्त्यः प्रस्फुरन्त्यः ताडितो येषु तेषामम्बुदानां घटया समूहेन नष्टः भागणः भास्करादिर्दीप्तिसमूहो यस्मिन् पदं चक्षुर्विषयो न व्यादृश्यते स्म ईषदपि नादृश्यतेत्यर्थः ॥ ६ ॥

उद्धता ऊर्मयो यस्मात् क्षुभितोदरः विकृतान्तर्भागः ॥ ७ ॥

सराहोः सोपरागयोः निर्घाताः निर्मेघगर्जितानि रथनिर्ह्रादाः रथध्वनिनिभा ध्वनयः ॥ ८ ॥

अन्तर्ग्रामेषु ग्राममध्ये शृगालादिध्वनिभिः सह अशिवं यथा तथा प्रणेदुः किं कुर्वन्त्यः मुखतो मुखैर्वह्निं वमन्त्यः ॥ ९ ॥

ग्रामसिंहाः श्वानः ॥ १० ॥

---

भाषाटीका ॥

मैत्रेयजी बोले ब्रह्मा जी के कहने से उत्पात के कारण को सुनकर देवतों ने शङ्काको छोड दिये तब देवता सब निर्भय होकर स्वर्ग को चले गये ॥ १ ॥

पतिव्रता दितिने पति के आज्ञा से शङ्कित होकर सौ वर्ष बीतने पर जोडलादो पुत्रों को पैदा किया ॥ २ ॥

उनके पैदा होते समय मे बहुत से उत्पात भये वे आकाश मे पाताल मे मनुष्यों के बडे भय देने वाले भये थे ॥ ३ ॥

पर्वतोंके सहित पृथिवी कांपनेलगी सब दिशोंमें आग उठने लगा आगके सहित वज्र गिरे दुःखके देनेवाले केतु तारा टूटे ॥४॥

कठोर पवन चला फूफूकार सुन पडा पवन ने पेडों को उखाड़ दिया धूलको उडाकर भरदिया ॥ ५ ॥

गर्जन करने वाले मेघछाय गये तारा नहीं दीखे आकाश मे अँधेरा होगया कुछ नहीं दीखने मे आया ॥ ६ ॥

समुद्र का जल हलचल होगया ऊंचीं लहरें आनेलगीं सरोवर सब जल के सहित हलने लगे कमल सब सूख गये ॥ ७ ॥

वारं वार चन्द्र सूर्य के मण्डल होने लगे चन्द्र सूर्यका ग्रहण होगया गुफा कन्दरोंमेंसे बडे वज्रघात से शब्द होने लगे जैसे कि रथ चलता होवै ॥ ८ ॥

ग्रामके मध्य में भय जनाने वाली अग्निको उगिलते हुये स्यालों के उलूकों के शब्दों के सहित बडे शब्दों को सियारनी करने लगीं ॥ ९ ॥

श्वान सब मस्तक को ऊपर करके रोते सरीके गाते सरीके जगे जगे नाना प्रकार के शब्दों को करने लगे ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

कर्कशैस्तीक्ष्णैः हे क्षत्तः ! खार्कारो गर्दभजातिशब्दस्तस्मिन् रभसः संभ्रमो येषां वरूथशः सङ्घशः ॥ ११ ॥

रासभशब्दात्त्रस्ताः सर्वतः क्रोशन्तः ॥ १२ ॥

गावोऽत्रसन् त्रस्ताः असृग्दोहाश्च बभूवुः देवलिङ्गानि व्यरुदन् प्रतिमानामश्रुस्राव आसीदित्यर्थः ॥ १३ ॥

पुण्यतमान् गुरुबुधादीन्भगणान् बहूनि नक्षत्राणि चान्ये क्रूरग्रहा मङ्गलादयो ऽतिचेरुरतिक्रम्य जग्मुर्वक्रगत्या प्रत्यावृत्य युयुधुश्च ॥ १४ ॥

ब्रह्मपुत्रानृते विना तेषां शापादिज्ञानात् ॥ १५ ॥

व्यज्यमानमात्मपौरुषं पूर्वसिध्दं स्वपौरुषं ययोः ॥ १६ ॥

निरुध्दाव्याप्ता काष्ठादिशो याभ्याम् स्फुरंत्यङ्गदानियेषु तेभुजा ययोः अङ्गदेतिदावन्तत्वमार्षम् शोभना काञ्चीयस्यां तया कट्या॥१७॥

प्रजापतिर्नाम तयोरकार्षीद्यः प्राक्स्वदेहाद्यमयोरजायत ।
तं वै हिरण्यकशिपुं विदुः प्रजा यं तं हिरण्याक्षमसूत साग्रतः ॥ १८ ॥
चक्रे हिरण्यकशिपुर्दोर्भ्यां ब्रह्मवरेण च ।
वशे सपालाँल्लोकांस्त्रीनकुतोमृत्युरुद्धतः ॥ १९ ॥
हिरण्याक्षोऽनुजस्तस्य प्रियः प्रीतिकृदन्वहम् ।
गदापाणिर्दिवं यातो युयुत्सुर्मृगयन् रणम् ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यमयोर्मध्ये यः स्वदेहात्प्रथममजायत तं यथा हिरण्यकशिपुं विदुःसा दितिःप्रथमं यमसूत तं हिरण्याक्षं यथा विदुस्तथा नाम कृतवानित्यर्थः। अयंभावः। यदाहि गर्भाधानसमये योनिपुष्पं विशद्वीर्यं द्विधा विभक्तमादिपश्चाद्भावेन प्रविशति तदा यमौ भवतस्तयोश्च पितृतः प्रवेशक्रमविपर्ययेण मातृतः प्रसूतिः ।

यदा विशेद्द्विधाभूतं बीजं पुष्पं परिक्षरत् ।
द्वौ तदा भवतो गर्भौ सूतिर्वेशविपर्ययात् ॥

इति पिण्डसिद्धिस्मरणात् । अतः स्वदेहात्पूर्वं यो जातस्तस्य हिरण्यकशिपुरिति दितिः प्रथमं यमसूत तस्य हिरण्याक्ष इति नाम कृतवानिति ॥ १८ ॥

दोर्भ्यामुद्धतो ब्रह्मवरेणाकुतोमृत्युः ॥ १९ ॥

रणं युद्धम् ॥ २० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

रासभशब्दस्य तच्छब्देरूढलक्षणा ॥ १२ ॥

रोदनशब्दस्य प्रतिमास्वसंभवात् अश्रुस्रावे लक्षणा। अत इत्यर्थं इत्युक्तम् ॥ १३ ॥ १४ ॥

ब्रह्मपुत्रान् सनकादीन् तेषां सनकादीनां विश्वप्रलयमासन्नं मेनिरे ॥ १५ ॥

पूर्वसिद्धमिति व्याख्यानेन तयोरणिमाख्यसिद्ध्यासुरदेहे गूढ स्थितिर्व्यज्यते ॥ १६ ॥

चरणैस्तच्चालनैः ॥ १७ ॥

यथा तथेत्यध्याहारादित्यर्थोक्तिः तयोश्च यमयोः पितृतः सकाशाद्वीर्यस्य योनिपुष्पं प्रति यो द्विधा प्रवेशक्रमस्तस्माद्विपर्ययेण प्रथमप्रविष्टस्य पश्चात्प्रसूतिः पश्चात्प्रविष्टस्य प्रथमं प्रसूतिरित्यर्थः यथा संकुचितवीथ्यां प्रथमं प्रविष्टस्य रथादेः पश्चान्निःसृतिः पश्चात्प्रविष्टस्य तु प्रथमं निःसृतिस्तद्वदिति द्विधाभूतं पुंसो बीजं परिक्षरत्सत् यदा योनिपुष्पं प्रविशति तदा द्वौ गर्भौ भवतः वेशविपर्ययात्पितृतः प्रवेशक्रमविपर्ययेण मातृतः प्रसूतिर्भवतीति पिण्डसिद्धिनामकग्रन्थस्थपद्यार्थः अतःपूर्वं व्याख्यात नियमाद्धेतोः ॥ १८ ॥

उद्धतः समुद्धतोऽविनीत इति यावत् अविनीते समुद्धत इति विश्वप्रकाशात् चस्त्वर्थे ॥ १९ ॥

तस्य हिरण्यकशिपोः ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

खराः गर्दभाःकर्कशैः कठिनैः खुरैर्धरातलं घ्नन्तः ताडयन्तः खरकार्कारो गर्दभजातिशब्दः तस्मिन् रभसः सम्भ्रमस्तन्नामनाः रभसः सम्भ्रमो येषां त इति वा वरूथशः सङ्घशः पर्यधावन् ॥ ११ ॥

रासभत्रस्ताः रासभध्वनिभीताः खगाः रुदन्तो ध्वनिं कुर्वन्तो नीडात्कुलायादुदपतन्नुद्गम्य निपेतुः घोषे आभीरपल्ल्याम् अरण्ये च ये पशवः ते शकृत्पुरीषं मूत्रं चाकुर्वत उत्ससर्जुः ॥ १२ ॥

गावोऽसृग्दोहाः रक्तं दुहन्त्यः अत्रसन्नुद्वेजितवत्यः तोयदाः मेघाः पूयवर्षिणः कश्मलवर्षिणोऽभूवन् देवताप्रतिमाः व्यरुदन्नश्रूण्यमुचन्ननिलं वायुं विनान्तरेणापि द्रुमाः पेतुः ॥ १३ ॥

पुण्यतमान् शुभकरान् ग्रहान् गुरुबुधादीन् भगणान् बहूनि नक्षत्राणि चान्ये क्रूरग्रहा अङ्गारकादयोऽतिपीडिताः यद्वा कर्तरिक्तः आर्षत्वात्पीडाकराः अतिचेरुरतिक्रम्य जग्मुः वक्रगत्या प्रत्यावृत्य परस्परं युयुधुश्च ॥ १४ ॥

अन्यांश्चोक्तानन्यांश्च महोत्पातान् दृष्ट्वा अतत्त्वविदस्तदुत्पातफलमजानन्त्यः ब्रह्मपुत्रान्मरीच्यादीन् ऋते ऽन्तरेण सर्वाः प्रजाः भीताः विश्वसंप्लवं जगत्संहारं मेनिरे ऽमन्यन्त ब्रह्मपुत्रास्तु त्रैकाल्यवस्तुविषयज्ञानसम्पन्ना न भीता इत्यर्थः ॥ १५ ॥

तौ जातावादिदैत्यौ सहसा आशु व्यज्यमानमात्मपौरुषं पूर्वसिद्धं स्वपौरुषं ययो स्तावश्मसारेणायस्तुल्येन कायेनाद्रिवती इव पर्वतश्रेष्ठौ इव ववृधाते ॥ १६ ॥

पुनस्तावेव विशिनष्टि । दिवीति । हेमकीरीटकोटिभिः स्वर्णमयमुकुटाग्रैः दिवि स्पृशौ तौ निरुद्धा काष्ठा दिशो याभ्यां तौ निरुद्धकोष्ठाविति पाठे भूषणवद्धकोष्ठावित्यर्थः स्फुरन्त्यङ्गदानियेषु ते भुजा ययोस्तौ अङ्गदेत्यावन्तत्वमार्षं चरणैः पादैः पदे पदे प्रतिपादविन्यासं गां भूमिं कम्पयन्तौ सुशोभनाकाञ्ची मेखला यस्यां तया काञ्च्यार्कं सूर्यमतीत्यातिक्रम्य तस्थतुः स्थितवन्तौ ॥ १७ ॥

तयोर्यमयोर्मध्ये यः स्वदेहात्प्रथममजायत तं हिरण्यकशिपुं यथा विदुः सा दितिः यं प्रथममसूत तं हिरण्याक्षं यथा विदुः तथा नाम धेयं प्रजापतिः कश्यपः अकार्षीत्कृतवान् अयं भावः यदा हि गर्भाधानसमये योनिपुष्पं विशद्वीर्यंद्विधाविभक्तमादितः प्राक्पश्चाद्भावेन प्रविशति तदा यमौ भवतः स्वपितृतः प्रवेशक्रमविपर्ययेण मातृतः प्रसूतिः । यदा विशद्द्विधाभूतं वीर्यं पुष्पं परिक्षरत् द्वौ तदा भवतो गर्भौ सूतिर्वेशविपर्यायादिति । पिण्डसिद्धिस्मरणात् ।अतःस्वदेहात्पूर्वयो जातस्तस्य हिरण्यकशिपुरितिदितेः प्रथमं प्रसूतस्य हिरण्याक्ष इति नाम कृतवानित्यर्थः ॥ १८ ॥

हिरण्यकशिपुः स्वदोर्भ्यां भुजाभ्यामुद्धतः ब्रह्मणश्चतुर्मुखस्य वरेणाकुतोमृत्युः कुतश्चिदपि मृत्युरहितः सपालाँल्लोकपालसहितान् लोकान्वशे चक्रे स्वाधीनानकार्षीत् ॥ १९ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्य हिरण्यकशिपोरनुजः पितृक्रमादनुजः हिरण्याक्षः प्रियः प्रीतिविषयः अन्वहं स्वयमग्ने प्रीति कुर्वदापाणौ यस्य स युधःसुर्योद्धुमिच्छुरत एव रणं युद्धं मृगयन् दिवं यातः गतः ॥ २० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

खराः क्रूराः उष्ट्राः खारोष्ट्रा खात्कारोऽप्युत्कारशब्दः तस्य रभसा वेगेन ॥ ११ ॥

रासभा गर्दभा गर्दभादिध्वनित्रस्ताः खगाः पक्षिणो नीडादुद्पतन् ॥ १२ ॥

गावः सौरभेय्यः अत्रसन् भीता देवलिङ्गानि प्रतिमाः ॥ १३ ॥

अन्ये दुष्टग्रहाः ॥ १४ ॥

अन्यान् भूकम्पादीन् न तयोर्जयविजययोस्तत्त्वं शापादिनिमित्तं विदन्ति जानन्ति न तेषामुत्पातादीनां तत्त्वं जयविजयनिमित्तं विदन्तीति वा ॥ १५ ॥

इदानीं दैत्ययोर्भावं वक्ति । ताविति । सहसा बलेन पौरुषं पराक्रमः अश्मवत्सारेण दृढेन ॥ १६ ॥

कोटिभिरिति बहुवचनं चतुरस्रापेक्षया काष्ठा दिशः ॥ १७ ॥

तयोर्नामकरणं वक्ति। प्रजापतिरिति। प्रजापतिः कश्यपस्तयोर्नामाकार्षीदित्यन्वयः कथमत्राह। य इति। यमयोस्तयोर्मध्येयः स्वदेहाग्रागजायत जातस्तं हिरण्यकशिपुं विदुर्वैतयोर्माता सा ततःपश्चाद्यमसूत प्रजास्तं हिरण्याक्षं विदुरित्यर्थः ॥ १८ ॥

पूर्वजस्य जयस्य दिग्विजयं वक्ति। चक्र इति। न कुतोऽपि बहिरन्तःशुष्कादेरपि मृत्युर्यस्य सोऽकुतोमृत्युः ॥ १९ ॥

अनुजस्य दिशां जयं । विस्तृत्याह । हिरण्याक्ष इति युयुत्सुर्योद्धुकामः ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

दृष्ट्वेति । ब्रह्मपुत्रान् सनकादीनृते ब्रह्मसृष्टाः सर्वा एव प्रजा अतत्त्वविदो भीता विश्वसम्प्लवं मेनिरे । देवास्तु ब्रह्मवाक्यात्तत्त्वविदा भीता आसन् नतु विश्वसम्प्लवं मेनिरे इत्यर्थः ॥ १५ ॥

ताविति । अत्रानयोरणिमादिशक्त्या गूढस्थितौ टीकासम्मतिश्च ॥ १६ ॥

सोमपाशब्दवदङ्गदाशब्दोऽपि भवेत् ॥ १७ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यथा लोके गीतं भवति यथा वा रोदनं पाश्चात्यानां शिरोधरां ग्रीवामुन्नमय्य विविधा वाचो व्यमुञ्चन् ततस्ततः परितः ग्रामसिंहाः श्वानः गर्दभानामनिष्टलक्षणमाह । खराश्चेति । गर्दभाः कर्कशैः खुरैः धरातलं घ्नन्तः तज्जातिशब्देन खर्कारेण रभसमत्यन्तं मत्ताः रभसावमत्ताः पर्यधावन् ॥ ११ ॥

तच्छब्देनानिष्टान्तरमाह गावश्च द्रवन्तः खगाः रासभत्रस्ताः सन्तः नीडादूर्ध्वमपतन् रासभशब्देन तेऽपि भीता इत्यर्थः पशूनामनिष्टलक्षणमाह। घोषे आभीराणां गृहे अरण्ये च भयात् शकृन्मूत्रं च अकुर्वत गोमययुक्तं वा मूत्रमकुर्वत गावश्च आसन् असृग्दोहा रुधिरदोग्ध्र्यः तोयदा मेघाश्च पूयवर्षिणो जाताः

पूर्वं तेषामाच्छादकत्वमेवोक्तं देवलिङ्गानि देवप्रतिमाः विशेषेण अरुदन् शब्दं नेत्राज्जलं चात्यजन् द्रुमाश्चानिलव्यतिरेकेण पेतुः ॥ १२—१३ ॥

ग्रहयुद्धं च जातमित्याह । ग्रहानिति। पुण्यतमान् शुक्रादीन् अन्ये शनैश्चरादयः आलक्ष्य पेतुरिति संबन्धः । अपीडयन्निति वा अप्यर्थात् भगणाः सर्वाण्येव नक्षत्राणि दीपिता जाताः केनचित् ज्वलिता इव जाता इत्यर्थः ॥ १४ ॥

एवं निमित्तान्युक्त्वा तेषां फलमाह । दृष्ट्वेति । अन्याननुक्तानपि महोत्पातान् सूर्यपातचन्द्रपातरूपान् अतत्त्वविदः प्रजाः अस्य विश्वस्य संप्लवं प्रलयमेव मेनिरे परं ये चत्वारो मूलभूताः सनकादयः तद्व्यतिरेकेण सर्व एव भीता जाताः प्रलयं च मेनिरे ॥ १५ ॥

एवमनिष्टलक्षणानि सफलानि निरूप्य वृद्धिरूपामुत्पत्तिमाह। ताविति । मधुकैटभौ आदावेव दैत्यत्वं प्राप्ताविति वा दितिपुत्राणामादिभूतौ वा सहसा कारणाकालविलम्बव्यतिरेकेण व्यज्यमानमात्मनि पौरुषं ययोः व्यज्यमानात्मानौ पुरुषाविति वा दितिपुत्राणामादिभूतौ वा सहसा तौ हि पूर्वजन्मनि भगवत्सारूप्यं प्राप्तौ इदानीमपि तथैव व्यज्यमानदेहौ सन्तौ पुरुषौ जातौ ननु रूपान्तरेणेत्यर्थः अथवा व्यज्यमान आत्मनि पुरुषो याभ्यां अन्तश्चेत् भगवान् एतादृशरूपो भवति तदैव बहिरन्यः चतुर्भुजादिरूपो भवति तथेमावपि वैजयन्त्यादियुक्तौ अश्मवत्सारेण दृढेन कायेन अद्रिपती इव मेरू इव ववृधाते ॥ १६ ॥

तयोर्वृद्धिं वर्णयति ।दिविस्पृशाविति । हेमकिरीटयोः कोटिभिर्दिविस्पृशौ द्वितीयार्थे सप्तमी अलुक् स्फुरदङ्गदायुक्तौ भुजौ अङ्गदाविन्त्यं यदा सुपां सुलुगित्याकारादेशः पदे पदे गां कम्पयन्ताविति भूमिं रसातलं नेतुमुद्यताविव कार्येण तयोरूपमनुमेयमित्यर्थः सुकाञ्च्या शोभना काञ्ची यत्र तादृश्या कट्या अर्कमतीत्य तस्थतुः एतावदूर्ध्वप्रमाणौ यावता कटिः सूर्यमण्डला दूर्ध्वं भवति ॥ १७ ॥

एवं तयोर्वृद्धिमुक्त्वा नामकरणादि संस्कारानाह । प्रजापतिरिति । प्रजापतिः कश्यपः तयोर्नाम अकार्षीत्तन्मध्ये प्राग्यः स्वदेहाद्रेतोरूपेण अजायत यद्यपि स्वस्मिन्नप्रवेशः तथापि पश्चादपि तयोरपत्यबीजसंबन्धात् स्वदेहादजायतेत्युक्तं तत्रबीजमेव पुत्रत्वे कारणं यमयोर्मध्ये यः पश्चादुत्पद्यते मातृतः स पितृतः प्रथममुत्पन्न इति ज्ञेयं क्रमेण प्रविष्टयोः वैपरीत्येनैव निर्गमनसंभवात् तं हिरण्यकशिपुं विदुः प्रजाः सा दितिर्यमग्रे असूत तं हिरण्याक्षं विदुरित्यर्थः अतः हिरण्याक्षः प्रथमतः उत्पन्नोऽपि कनिष्ठः ॥ १८ ॥

तत्र हिरण्यकशिपोर्दोषरूपं वासनायां वक्तव्यमिति स्थितिमात्रंसूच्यते द्वितीयस्यातिक्रमाभावाय।चक्र इति। अयं द्विभुजोऽपि भुजद्वयेन ब्रह्मवरेण च सह लोकपालसहितांस्त्रीन् लोकान् वशे चक्रे तस्य धर्मो मोक्षश्च नास्तीत्याह । अकुतोमृत्युरुद्धत इव जात इति। मृत्युरेव नास्तीति मृत्युविशेषो मुक्तिः सुतरामेव नास्ति उद्धतत्वाद्धर्मः नम्रीभाव एव तदुत्पत्तेः ॥ १९ ॥

एवं सामान्यतो हिरण्यकशिपुपराक्रममुक्त्वा हिरण्याक्षस्य दोषवत्त्वज्ञापनाय तत्कृतमुपद्रवं स्वर्गादावाह । हिरण्याक्षोऽनुज इत्यादिषड्भिः । प्रयत्नश्चभयोत्पत्तिरूपं कार्यं च तस्य तत तेन गर्भस्ततोमादस्तस्मात्सर्वं भयं पुनः प्रथमं तस्य देवविरोधार्थं यत्नमाह। हिरण्याक्षोऽनुज इति।हिरण्यकशिपोरनुजःतस्येवास्यापि जगन्नयं वश इति उक्तं भवति । प्रिय इति । तस्य प्रीतिविषयत्वात्

**तं वीक्ष्य दुःसहजवं रणत्काञ्चननूपुरम्।**
**वैजयन्त्या स्रजा जुष्टमंसन्यस्तमहागदम् ॥ २१ ॥**

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

हिरण्यकशिपुकृतं जयादिकमप्येतन्नामीत्युक्तम् अयमपि प्रीतिकृत् समानशीलव्यसनाभावे प्रीतिर्नोत्पद्यत इति ज्येष्ठप्रीत्यर्थं देवविरोधार्थं यत्नं कृतवानित्याह। अन्वहं गदापाणिर्भूत्वा रणं मृगयन् दर्शनार्थं नारदवत् किन्तु युयुत्सुः देवैः सह युद्धं करिष्यन् दिवं ययौ ॥ २० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

हे वत्स ! खार्कारो गर्दभशब्दानुकरणं तेनैव रभसो हर्षो येषां ते ॥ ११ ॥

रासभात् गर्दभशब्दात् त्रस्ताः ॥ १२ ॥

असृग्दोहा रुधिरदुग्धाः। देवलिङ्गानि देवप्रतिमाः ॥ १३ ॥

पुण्यतमान् बृहस्पतिशुक्रादीन् अन्ये क्रूरग्रहा मङ्गलादयः अतिक्रम्य जग्मुर्वक्रगत्या प्रत्यावृत्य युयुधुः ॥ १४ ॥

ब्रह्मपुत्रान् सनकादीन् तेषां स्वशापादिज्ञानात् ॥ १५ ॥

ब्रह्मशापेऽपि भगवद्भक्तानां सर्वाधिक्यमिति बोधयितुं तयोरकृतैरतिसुकृतैः त्रैलोक्याधिपत्यबलप्रभावयोगैश्वर्यादीनि कृतैरपि बहुभिर्दुष्कृतैर्नरकयातनागन्धमात्राभावं च वक्तुमाह। ताविति ॥ १६ ॥

पञ्चकदिनवयस्त्व एव तावेवमभूतामित्याह। दिवीति काष्ठा दिशः। अङ्गदेति टावन्तत्वमार्षम् ॥ १७ ॥

दशमेऽह्नि नामकरणमाह। प्रजापतिः कश्यपः यमयोर्मध्ये स्वदेहात् यः प्रथममजायत तं हिरण्यकशिपुं यथा विदुः सा दितिः प्रथमं यमसूत तं हिरण्याक्षं यथा विदुस्तथा तयोर्नाम अकार्षीदिति। यथा तथयोरध्याहारेणान्वयः। यदा विशेद्विधाभूतं बीजं पुष्पं परिक्षरत्। द्वौ तदा भवतो गर्भौ सूतिर्वैशविपर्ययादिति पिण्डसिद्धिस्मरणात् पितृक्रमेण हिरण्यकशिपुर्ज्येष्ठः पित्रा कश्यपेन तस्यैवादावाहितत्वात्। तथा मातृक्रमेण हिरण्याक्षो ज्येष्ठः मात्रा दित्या तस्यैवादौ प्रसूतत्वात्। एवं क्रमद्वैविध्येन द्वयोरपि ज्येष्ठत्वे पितुः प्राधान्यात् हिरण्यकशिपुरेव ज्येष्ठत्वेन व्याहृतः ॥ १८ ॥

दोर्भ्यां बाहुबलेनैवेत्यर्थः। ब्रह्मवरेण चेति चकारात् ब्रह्मवरोऽपि तत्र सहायोऽभूदित्यर्थः ॥ १९-२०-२१ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

खार्कारे खरजातिशब्दे रभसः संभ्रमो येषां ते वरूथशः सङ्घशः संघीभूता इत्यर्थः ॥ ११ ॥

रासभत्रस्ताः गर्दभखुरमुखध्वनिभिर्भीताः ॥ १२ ॥

असृग्दोहाः रुधिरदोहाः अत्रसन् उद्वेजितवन्त्यः ॥ १३ ॥

पुण्यतमान् सौम्यान् अन्ये क्रूराः अतिचेरुः अतिक्रम्य जग्मुः वक्रगत्या प्रत्यावृत्य युयुधुश्च ॥ १४ ॥ ॥ १५ ॥ ॥ १६ ॥

निरुद्धाः व्याप्ताःकाष्ठा दिशोयाभ्यां तौ स्फुरन्त्यङ्गदानि येषु ते भुजे ययोस्तौ अङ्गदेति दैर्घ्यं छन्दोऽनुरोधेन ॥ १७ ॥

प्रजापतिः कश्यपः तयोर्यमयोर्मध्ये गर्भाधानवेलायां यो वीर्याद्भूतः स्वदेहात् प्रथममजायत तं यथा हिरण्यकशिपुं विदुः सा दितिः प्रवेशक्रमतो निर्गमक्रमस्य वैपरित्यात् यं प्रथममसूत तं हिरण्याक्षं यथा विदुः तथा नाम अकार्षीत् कृतवान् ॥ १८ ॥

ब्रह्मवरेण न कुतोऽपि मृत्युर्यस्य सः ॥ १९—२० ॥

भाषाटीका।

हे विदुरजी ! गधे सब कठिन खुरों से पृथिवी को खोदते हुये अपने जात के शब्दको करते हुए बडे वेग से मतवाले होकर झुण्ड के झुण्ड दौडने लगे ॥ ११ ॥

गधाओं के शब्दों से डरकर बेसुआ में से पक्षि गिरने लगे गोष्ठ में जङ्गल में सब पशु विष्ठा मूत्र निरन्तर गिराने लगे ॥ १२ ॥

गऊ सब डरकर रक्त स्तनों से चुवाने लगीं मेघों में पीव की वर्षा होने लगी देवतों की प्रतिमा रोदन करने लगीं बिना पवन के पेड गिरने लगे ॥ १३ ॥

क्रूरग्रह सब प्रदीप्त होकर सौम्य ग्रहों को तथा और नक्षत्रों को वक्र गति से अतिक्रमण करने लगे तथा परस्पर में युद्ध करने लगे ॥ १४ ॥

एसे अनेक महा उत्पातों को देखकर इसके कारण को न जानने से ब्रह्मपुत्रों के बिना सब प्रजा दुःखित भीत होकर संसार के नाश होने का संभावना करने लगी ॥ १५ ॥

वे दोनों आदि दैत्य आत्मपुरुषार्थ के अति प्रगट होने से पत्थर सरी के कठोर शरीर से बडे भारी पर्वत सरीके बढने लगे ॥ १६ ॥

उन दोनों के शरीर आकाश तक ऊंचे थे उन के सुवर्ण के किरीटों के अग्र भाग से सब दशों दिशा घिर जातीं थी उन के भुजों मे बाजूबन्द चमकते थे उन के चलते समय मे एक एक पैंड पर पृथिवी कांपती थी उन के खडे होने पर कमर सूर्य से भी ऊंची रहती थी ॥ १७ ॥

उन दोनों जमलों मे जो पहिले भया तिसका नाम हिरण्यकशिपु ऐसा कश्यप जी ने रखा जिस को दितिने पहिले पैदा किया तिस को प्रजा लोग हिरण्याक्ष कहने लगे ॥ १८ ॥

हिरण्याक्ष सब से निर्भय बडा अभिमानी हुआ उस ने ब्रह्मा जी के वरदान से अपने भुजों के बल से लोकपालों के सहित तीनों लोकों को अपने वश मे कर लिया ॥ १९ ॥

हिरण्याक्ष उस का छोटा भाई है सो उस का अत्यन्त प्रिय है सदा काल उस की प्रसन्नता को करता था सो हाथ मे गदा लेकर युद्ध कर ने की इच्छा से संग्राम को ढूंढता हुआ स्वर्ग को गया ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

दुःसहो जवो वेगो यस्य रणन्तौ काञ्चनमयौ नूपुरौ यस्य अंसेन्यस्ता महती गदा येन ॥ २१ ॥

मनोवीर्यवरोत्सिक्तमसृण्यमकुतोभयम् ।
भीता निलिल्यिरे देवास्तार्क्ष्यत्रस्ता इवाहयः ॥ २२ ॥
स वै तिरोहितान् दृष्ट्वा महसा स्वेन दैत्यराट् ।
सेन्द्रान् देवगणान् क्षीवानपश्यन् व्यनदद्भृशम् ॥ २३ ॥
ततो निवृत्तः क्रीडिष्यन् गम्भीरं भीमनिःस्वनम् ।
विजगाहे महासत्त्वो वार्धिं मत्त इव द्विपः ॥ २४ ॥
तस्मिन् प्रविष्टे वरुणस्य सैनिका यादोगणाः सन्नधियः ससाध्वसाः ।
अहन्यमाना अपि तस्य वर्चसा प्रधर्षिता दूरतरं प्रदुद्रुवुः ॥ २५ ॥
स वर्षपूगानुदधौ महाबलश्चरन्महोर्मीन् श्वसनेरितान्मुहुः ।
मौर्व्याभिजघ्ने गदया विभावरीमासेदिवांस्तात ! पुरीं प्रचेतसः ॥ २६ ॥
तत्रोपलभ्यासुरलोकपालकं यादोगणानामृषभं प्रचेतसम् ।
स्मयन्प्रलब्धुं प्रणिपत्य नीचवज्जगाद मे देह्यधिराज! संयुगम् ॥ २७ ॥
त्वं लोकपालोऽधिपतिर्बृहच्छ्रवा वीर्यापहो दुर्मदवीरमानिनाम् ।
विजित्य लोकेऽखिलदैत्यदानवान्यद्राजसूयेन पुरायजत्प्रभो ! ॥ २८ ॥
स एवमुत्सिक्तमदेन विद्विषा दृढं प्रलब्धो भगवानपाम्पतिः ।
रोषं समुत्थं शमयन् स्वया धिया व्यवोचदङ्गोपशमं गता वयम् ॥ २९ ॥
पश्यामि नान्यं पुरुषात्पुरातनाद्यः संयुगे त्वां रणमार्गकोविदम् ।
आराधयिष्यत्यसुरर्षभेहितं मनस्विनो यं गृणते भवादृशाः ॥ ३० ॥
तं वीरमारादभिपद्य विस्मयः शयिष्यसे वीरशये श्वभिर्वृतः ।
यस्त्वद्विधानामसतां प्रशान्तये रूपाणि धत्ते सदनुग्रहेच्छया ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
पारमहंस्यां संहितायां वैयासिक्यां हिरण्याक्षदिग्विजये आदिदैत्योत्पत्तिर्नाम
सप्तदशोऽध्यायः ॥ १७ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

मनसा शौर्येण वीर्येण बलेन वरेण चोत्सिक्तं गर्वितम् असृण्यं निरङ्कुशम् निलिल्यिरे लीना बभूवुः ॥ २२ ॥

स्वेन महसा तेजसा तिरोहितान्स दृष्ट्वा ज्ञात्वा क्षीवान्मत्तानपश्यन्सन् क्लीबानिति पाठे पौरुषहीनान् ॥ २३— २४ ॥

सन्ना अवसन्ना धीर्येषाम् वर्चसा तेजसा प्रधर्षिता अभिभूताः सन्तः ॥ २५ ॥

महोर्मीनभिजघ्ने मौर्व्या मारयतीतिमौर्वं कार्ष्णायसं तन्मय्या यद्वा मूर्वानामतृणविशेषः तन्मयरज्ज्वादृढनिबद्धयेत्यर्थः विभावरीसंज्ञाम् आसेदिवान् प्राप्तः ॥ २६ ॥

असुराणां लोकः पातालं।तत्पालकम् प्रलब्धुमुपहासितुं प्रणिपत्य ॥ २७ ॥

यद्यस्माद्राजसूयेन भवानयजत् ॥ २८ ॥

उपशमं युद्धादिकौतुकादुपरमम् ॥ २९ ॥

युद्धमार्गनिपुणं त्वां यस्तोषयिष्यति तमिह गच्छ गृणते स्तुवन्ति ॥ ३० ॥

आराच्छीघ्रम् ।विस्मयो नष्टगर्वः वीरशये रणाङ्गणे रूपाणि वराहाद्यवतारान् ॥ ३१

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
सप्तदशोऽध्यायः ॥ १७ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या
दीपिकाटिप्पणी ।

तमिति युग्मकम् । तार्क्ष्यो गरुडः ॥ २१ ॥ २२ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी

जीवाग्नौसमबुध्यत इति दशमे व्यासप्रयोगात् जीवोमत्त इत्येकवचनान्ततया व्याख्यानाज्जीवोऽपि जीवन् शब्दो ऽस्तीति गम्यते अकारान्ततच्छेदे तु बहुवचनत्वेन देवविशेषणता तेषां भीतत्वेन मत्तत्वासंभवान्न संगच्छत इति ज्ञेयम् ॥ २३ ॥

ततः स्वर्गात् ॥ २४ ॥

तस्मिन् हिरण्याक्षे समुद्रं प्रविष्टे सति । अवसन्ना खिन्ना तत्र हेतुः ससाध्वसाः सभयाः ॥ २५ ॥

मूर्धशब्दस्य लोहवाचकत्वमप्रसिद्धमतो यद्वेति एवंभूतपराक्रमोऽप्यनायासेनैव भगवता हत इत्याश्चर्यबोधार्थं तातेति संबोधनम् ॥ २६ ॥

तत्र विभावर्य्याम् ॥ २७ ॥

लोके त्रिभुवने ॥ २८ ॥

उत्सिक्तमदेन निरङ्कुशगर्वेण प्रलब्धः उपहसितः धिया बलवति दोषः स्वहानिकर इति व्यवसायेन शमयान्निरुन्धन् ॥ २९ ॥ ३० ।

धत्ते जगति प्रकटयति ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीराधारमणदासगोस्वामिविरचितदीपिन्याख्या दीपिका टिप्पण्यां सप्तदशोऽध्यायः ॥ १७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तं हिरण्याक्षं दुःसहजवं दुःसहबलं रणन्ती काञ्चनमये नूपुरे यस्य तं वैजयन्त्या स्रजा पुष्पपल्लवादिनिर्मितस्रग्विशेषो वैजयन्ती तया स्रजा जुष्टमलंकृतम् । अंसे स्कन्धे न्यस्ता निहिता महती गुर्वी गदा येन तम् ॥ २१ ॥

मनसा वीर्येण बलेन वरेण च उद्रिक्तं गर्वितमसुरमं निरङ्कुशमकुतोऽभयम् कुतश्चिद्भीतिमकुर्वाणं वीक्ष्य भीताः सन्तो निलिल्यिरे ऽन्तर्हिताः तत्र दृष्टान्तः तार्क्ष्यात् गरुत्मतः त्रस्ता अहयः सर्पा इवेति ॥ २२ ॥

स दैत्यराट् हिरण्याक्षः स्वेन महसा तेजसा तिरोहितानिन्द्रसहितान् देवसमूहान् ज्ञात्वा जीवो मत्तः नपश्यन् तानपश्यन् क्लीवानपश्यदितिपाठे पौरुषहीनानपश्यत् ज्ञातवान् अत एव भृशं व्यनदत् अध्वनत् ॥ २३ ॥

ततो दिवः निवृत्तः प्रत्यागतः क्रीडिष्यन् विहरिष्यन् गम्भीरमगाधं भीमःनिस्वनः तरङ्गजन्यो ध्वनिर्यस्मिंस्तं वार्द्धिं समुद्रं महासत्त्वो महाबलः हिरण्याक्षः द्विपो गज इव विजगाहे विलोडितवान् ॥ २४ ॥

तस्मिन् हिरण्याक्षे प्रविष्टे सति वरुणसैनिका यादोगणाः ससाध्वसा भययुक्ताः अत एव सन्नधियः विपन्नबुद्धयः यद्वा वसन्नबुद्धयः दुःखितचित्ता इति यावत् अहन्यमाना अपि तस्यासुरस्य वर्चसा तेजसा प्रधर्षिता अभिभूताः सन्तो दूरतरं प्रदुद्रुवुः पलायितवन्तः ॥ २५ ॥

वर्षपूगान् बहुतसंवत्सरानुदधौ समुद्रे चलन् चरन् श्वसनेनेरितानुत्थितान्महोर्मीनुच्चैस्तरङ्गान्मुहुर्मुहुःमौर्व्या ऽयो मय्या गदया अभिजघ्ने प्रजहार तत्र विभावर्यां प्रचेतसः वरुणस्य पुरीमासेदिवान्प्राप्तः ॥ २६ ॥

तत्र विभावर्यामसुराणां यो लोकः पातालः तस्य पालकं यादोगणानांसृषभमधिपतिं प्रचेतसं वरुणमुपलभ्य समीपं प्राप्य स्मयन्नीचवद्धसन् प्रलब्धुं नीचवत्प्रणिपत्य प्रणम्य हे अधिराज! वरुण मे मह्यं संयुगं देहीति जगाद मया सह युद्धं कर्त्तुमिच्छुरित्यर्थः ॥ २७ ॥

तस्य युयुत्सामुत्तिपादयिषुराह । त्वं लोकपालानामधिपतिः बृहच्छ्रवा महायशाः दुर्मदा ये वीरमात्मानं मन्यन्ते तेषां वीर्यापहर्ता कथमहमेवं विधस्त्वया निश्चित इत्यत्राह । यद्यस्मात्पुराखिलान् दैत्यान् दानवांश्च विजित्य राजसूयेनायजदिष्टवान् ॥ २८ ॥

हे प्रभो ! सः भगवानपांपतिः वरुणः उद्रिक्तमदेन विद्विषा असुरेणैवमुक्तः दृढं यथा तथा प्रलब्धो विप्रलब्धः समुत्थरोषं स्वया धिया शमयन् उवाच हे असुर ! वयं उपशमं युयुत्सायामुपरमं गताः प्राप्ताः ॥ २९ ॥

किञ्च सनातनात्पुरुषात्परमपुरुषात् हे असुरपंस ! युद्धमार्गेषु कोविदं निपुणं त्वां यः संयुगे आराधयिष्यति तमन्यं न पश्यामः अतस्त्वं पुरुषम् एहि गच्छ कीदृशोऽसौ पुरुषः यमिहीत्युच्यत इत्यत्राह । भवादृशा मनस्विनः स्वैराः यं पुरुषं गृणते स्तुवन्ति ॥ ३० ॥

वीरं तं परमपुरुषमारात्समीपेऽभिपद्य विस्मयो विगतगर्वः वीरशये रणप्रदेशे श्वभिर्वृतःपरिवेष्टितःशयिष्यसे भवानिव सोऽपिनयुयुत्सतिचेत्किंविधेयमित्यत्राह । योहिभगवांस्त्वद्विधानामसतां प्रशान्तये विनाशाय सतामनुग्रहेच्छया रूपाणि वराहाद्यवतारान् धत्ते बिभर्त्ति ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां सप्तदशोऽध्यायः ॥ १७ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

रणत्काञ्चननूपुरं क्वणत्कनकपादवलयम्, "पुष्पैश्चतुर्गुणां मालां वैजयन्ती" विदुर्बुधा इत्यभिधानाच्चतुर्गुणिता वैजयन्तीनाम ॥ २१ ॥

मनोऽभिमतवीर्यमदेनोत्सिक्तमुद्रिक्तं निलिल्यिरे निलीनाः तार्क्ष्यो गरुडस्तेन ॥ २२ ॥

सहसा बलेन ॥ २३ ॥ २४ ॥

सन्नधियो नष्टबुद्धयः प्रधर्षिता अभिभूताः ॥ २५ ॥

तात ! विदुर ! प्रचेतसो वरुणस्य नाम्ना विभावरी पुरमासेदिवान् प्राप्तः महत्या गदया विजघ्न इत्यन्वयः । २६ ।

प्रलब्धुं विप्रलब्धुं स्मयन् माद्यन् नीचवत् म्लेच्छवदेकह स्तेन नत्वा ॥ २७ ॥

बृहच्छ्रवा लोकव्याप्तकीर्तिर्दुःऽष्टो मदो दुर्मदस्तेन वीरा वयमित्यात्मानं मन्तुं शीलमेषामस्तीति दुर्मदवीरमानिनस्तेषां वीर्यमात्मन्यावहति सन्निधापयतीति वीर्यरहितान्करोतीति वीर्यावहः एतदेव विवृणोति । विजित्येति । राजसूयेन यज्ञेनायजदिति यदतो दुर्मदवीरमानिनां वीर्यावहत्वादधिराजत्वाच्च मे युद्धं देहीतिगतेनान्वयः ॥ २८ ॥

विनिषेधमेवावोचत् कथमित्यत उक्तमङ्गेति । यद्वा । विपृथक्भूतं पुरुषमयाचत ॥ २९ ॥

स क इति तत्राह । पश्यामीति । आवारयिष्यति आवृणोति सम्यक् निरोत्सतीति वा तत्र रुचिं जनयति । मनस्विन इति ॥ ३० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स कुत्रेति विचारो माभूदित्याह । तमिति । वीरं शूरमारात् निकटमधुनैव वीराः शेरतेऽस्मिन्निति बाहुलकादधिकरणे अच्प्रत्ययः । "पुंसि संज्ञायां घः प्रायेण„इत्यधिकरणे घः वीरशयो रणायज्ञस्तस्मिन् मम विरूपेण सङ्गमः कथं घटत इति शङ्का माभूदित्याह । यस्त्वद्विधानामिति प्रशान्तये विनाशाय वराहादिरूपाणि यस्त्वौत्पत्तिकजयभाजनानां देवादीनां जयोऽनयोः कथमिति शङ्केयम् "न देवानां प्रजापानां विजेता वरतो विना बलेन विद्यया वापि न समस्तत्पतीन्विना । वरोऽपि तादृशो यावच्छरीरं नान्यदेहग„इत्यनेन परिहर्तव्येति ॥ ३१ ॥

इतिश्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
सप्तदशोऽध्यायः ॥ १७ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

त्वमिति युग्मकम् ॥ २१—२६ ॥

असुरलोकाः दानवप्रायजनाः । तं गृहीत्वानयन्त्रलो वरुणस्यासुरोऽन्तिकमिति दशमात् ॥ २७-३१ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
सप्तदशोऽध्यायः ॥ १७ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो देवानां भयोत्पत्त्यर्थं देवदृष्टं तस्य रूपमनुवर्णयति । तं वीक्ष्येति ॥ प्रथमत एव तस्य दुःसहो जवो वेगः दूरादृष्ट एव क्षणेनैवागत्य मारयतीति प्रतीकारासामर्थ्यम् रणत्काञ्चननूपुरमिति । अंसन्यस्तमहागदमिति श्रमः स विरुदावली तस्य निरूपिता जयपरंपरा प्रतिपादिका वैजयन्त्या स्रजा-जुष्टमिति । भगवदीयत्वज्ञापकं स एव हि वैजयन्त्या जुष्टो भवति अंसन्यस्तमहागदमितिश्रमः साधनाधिक्यं चोक्तम् ॥ २१ ॥

एवं चतुर्भिर्विशेषणैर्भयजनकरूपमुक्त्वा भीता देवाः पलायितवन्त इत्याह । मनोवीर्येति । मन उत्साहः वीर्यं पराक्रमः मदो गर्वः तैः कृत्वा उत्सिक्तः उच्छलितः मर्यादामतिक्रान्त इति यावत् ब्रह्मणः निरङ्कुशः भ्रातुर्नियामकत्वेऽपि तस्यैव तथा कारकत्वादौद्धत्येनैव न नियामकत्वं सृष्टिरङ्कुशः अत एव न विद्यते कुतश्चिद्भयं यस्य एवं त्रिदोषयुक्तं दृष्ट्वा भीताः सन्तः युद्धमकृत्वैव निलिलियिरे लीना जाताः ननु स्त्रीधनादिकं विहाय कथं लीना इत्याशङ्क्याह । तार्क्ष्यत्रस्ता इवाहय इति । गरुडो हि सर्पान् जीवग्राहं मारयति न धनादिदानेनापि त्यजति तथायमिति मत्वा स्वप्राणरक्षार्थं लीना जाता इत्यर्थः ॥ २२ ॥

ततोऽपि गर्वो जात इत्याह । सवा इति ॥ समानतायां दात्रत्वं पुरुषस्य पुरुषो भवति समानो ननु क्लीवः देवत्वं शूरत्वं वा दूरे महाभिमानश्चैवं मन्यते ननु कालादिना सर्व एव तिरोहिताः भवन्ति किमाश्चर्यमिति चेत्तत्राह । महसास्वेनेति । अयुध्यमाना अपि तत्तेजसैव ते हि तिरोहिता यथा सौरप्रभयान्धकारः इन्द्रसहितान् सर्वानेव देवविशेषान् स्वकार्येणापि कार्यसाधकान् स्वरूपेणाप्यनुपयुक्तान् अत एवापश्यन् भृशं व्यनदत् तिरोहितज्ञानं क्लीवज्ञाने हेतुः स्वेनैव महसा तिरोहितान् दृष्ट्वा स्वेनैव महसा दैत्यराड् जात इति भिन्नं वाक्यमत एव क्लीवादिधर्मयुक्तानपि तान् अपश्यन् भृशं व्यनदत् निकटस्थाश्चेत् नादेनैव मरिष्यन्तीति ॥ २३ ॥

एवं हत्वा सुतरां गर्भस्थान् महागर्वेण ज्वलद्देहः समुद्रे जलक्रीडां कृतवानित्याह । तत इति । महामदं ज्ञापयति क्रीडिष्यन्तिति स्वर्गात् क्रीडार्थमेव समुद्रे आगतः क्रीडाति कामसाध्या भवतीति स्थिते क्रोधे युद्धाभिनिवेशे वा क्रीडा नभविष्यतीति ततो भवान्निवृत्तः देवापेक्षया समुद्रं महान्तं ज्ञात्वा समागत इति वक्तुं समुद्रं विशिनष्टि । गम्भीरं भीमनिःस्वनमिति भयजनकमगाधजलं गम्भीरम् अनेन समता शोषाभावश्च तस्य सूचितः भीमनिःस्वनमिति प्रतिपक्षवाक्यजननाद्युद्धार्थित्वमपि ज्ञातं मत्तत्वादेवं ज्ञानं तथापि न युद्धरसेन समागतः किन्तु क्रीडिष्यन्नेवेति तदाधिक्यं विगाहनं मध्ये पातः तथा करणे सामर्थ्यमाह । महासत्त्व इति । महासत्त्वं यस्येति तत्रैवं ज्ञातव्यं पद्मकल्पे पतावुत्पन्नौ सृष्टयोश्च जयान् कल्पान्ते मरणं तदैव लोकत्रयं वशे कृतवान् ततो मोहग्रस्तयो रसातले शयनमादिवराहकल्पे प्रलये च तत्रादि वराहकल्पः सम्पूर्णो न वृत्त इति भूम्युत्पत्तिः देवानां कियत् प्रजानां च मध्ये पुनर्भूमिर्निमग्ना ततोऽपि निवृत्तः प्रलयोदक एव पतितः देवानां सृष्टत्वाद्दैत्याधिपतित्वाच्च वरुणो रसातले समानकटाहांशपश्चिमभागे वा स्थितः मन्वादीनां जातत्वात् नारदादयोऽपि पद्मकल्प एवोत्पन्ना उपरिस्थिताः दितिः रसातले कश्यपस्तु उपरि मग्नायां पृथिव्यां जलस्य बाधकत्वाभावात् दत्यांपभोगः अतो नारदवाक्यात् वराह सम्बन्ध इति । सर्वमेव युक्तं पुराणानि च एकचतुर्युगवार्तामेव कथयन्ति विशेषतः सामान्यधर्मोश्चानूच्यन्तेचतुर्युगान्तरवार्ताकल्पान्तरवार्ताच मतान्तरमिति न तद्विरोधः शङ्कनीयः श्रुतार्थापत्तिरत्र प्रमाणं मत्तत्वादेव वार्द्धिमपि प्रविष्टः तत्र जलं निरन्तरमुत्पद्यते ह्विवेकसहितमदोन्मत्त इवेत्युक्तम् अन्यथा द्विप इत्येव वदेत् महाघोषं जनयन्नित्यर्थे दृष्टान्तः द्विपशब्देन च तस्य मज्जनाभावः सूचितः शुण्डाद्व्यतिरेकेण तस्यान्तर्जलाप्रवेशात् ॥ २४ ॥

ततोऽपि तत्रत्यानां महानुपद्रवो जात इत्याह । तस्मिन्निति । हिरण्याक्षे प्रविष्टे वरुणस्य सैनिकाः युद्धकुशलाः यादोगणाः जलेऽतिबलवन्तः निधिसहिताः सर्वाधिव्यतिरिक्ताः सर्वतः पूर्णा एतादृशा अपि ससाध्वसा जाताः अत एवाहन्यमाना अपि देववत्तस्य वर्चसा तेजसैव प्रकर्षेण धर्षिताः गतसत्त्वाः कृता इति दूरतरं प्रदुद्रुवुः ॥ २५ ॥

एवं तस्य सर्वोपद्रवकारित्वेन कायिकीं चेष्टामुक्त्वा वाचनिकीं वदत् पूर्वचरित्रसम्बन्धमेव वदतिःस वर्षपूगानिति षड्भिः ।तत्र पूर्वं समुद्र आत्मानं महान्तं मन्यत इति ज्ञात्वा तस्य हस्तप्रायांस्तरङ्गान् गदया ताडितवानित्याह । स हिरण्याक्षः वर्षपूगानिति कल्पान्तपर्यन्तं महावज्र इति कालेन तस्य बलक्षयाभाव उक्तः तत्रैव समुद्रे चरन् स्वश्वासवायुना निर्मितानप्यूर्मीन् तद्धस्तान् ज्ञात्वा मौर्ख्यात् तृणविशेषवद्धया महागदया अभितो जघ्ने उग्रश्वासेनैव यदोर्मयः तदा चलने ताडने वा किं वक्तव्यमेवं समुद्रनिग्रहे क्रियमाणे ततोऽप्यधिकोर्मीन् दृष्ट्वा तस्याधिपतिं वरुणं ताडयितुं तत्पुरीमासेदिवान् पुर्या निकटं प्राप्तवान् तत्रस्य एव वातन्नृहह्नत इत्यर्थः प्रचेतस इति प्रकृष्टचित्त्वात् न तस्य भयं पलायनं वा ॥ २६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तत्र गत्वा तमुपहसतीत्याह । तत्रोपलभ्येति । मारयेदेव तं परम् दैत्यानां रक्षक इति न मारितवानित्याह । असुरलोकपालकमिति । असुराणां यावन्तो लोका रसातलादिस्थिताः तेषामयं पालकः येऽसुरलोके उपद्रवकर्त्तारः तन्मारकाः यादोगणाः लोकपोषकाश्च अत्र लोके गजाश्वा इवैतेऽपि वरुणस्यैव वशे भवन्ति अतो न हन्तव्य इत्याह। यादोगणानामृषभमिति। किंच स्वभावतोऽपि प्रकृष्टचित्तयुक्तः गर्वादिर्हितः अतो मारणाद्यकृत्वा ततोऽपि गर्वयुक्तः स्मयन् अल्पं हसन् प्रलब्धुं वक्रोक्त्या वञ्चयितुं नमस्कृत्य सेवकादपि हीनवज्जगाद अल्पाक्षरैर्विनयपूर्वकं किंचिदुक्तवान् तदेवाह। हे अधिराज!संगरं देहीति अयं मां न जानातीति हास्यं कार्येण तद्ज्ञापनीय इति प्रलम्भवचनं प्रणिपातो गर्वोत्पादनार्थः स्वस्य नीचानुकरणमवगणनार्थमन्यथा संयुगेन प्रवृत्तो भविष्यतीति अधिराजेति संबोधनं तव भयं नास्तीति ज्ञापनार्थं त्वयैव सह युद्धं कर्त्तव्यमिति वरप्रार्थना संगरं युद्धम्।२७।

एवं याचयित्वा तूष्णींभूते तस्मिन्प्रोत्साहयति गुणान्वदन्। त्वं लोकपाल इति। त्वं यथा भगवान् तथा षड्गुणैश्वर्ययुक्तः तस्य षड्गुणानाह। आदौ त्वं लोकपाल ईश्वरः सर्वपत्यपेक्षयाधिपतिस्त्वं स वैपतिःस्यादितिवीर्यवानेवाधिपतिर्भवति अत एव वृहच्छ्रवाः अधिककीर्तिमान् स्पष्टमेव यशः दुर्मदवीरमानिनां वीर्यापह इति श्रीशः शत्रुजये श्रीर्भवतीति दुर्मदाश्च ते वीरा वयमिति मानिनश्च यावता च तेषां वीर्यं गच्छति तावत्कर्त्तेति चेत्तेचेन्निःश्रीका भवेयुः तदैवामिति स्वस्य श्रीमत्त्वं ज्ञानमाह । विजित्य लोके किल दैत्यदानवमिति मिथ्याज्ञानेन च तमः ज्ञानेन च परंपदमिति वाक्यात् दैत्यानां ज्ञानप्रतिपक्षत्वं तत्र दैत्या राजसाः दानवास्तामसा इति उभयेषां द्वन्द्वैक्यं ज्ञानेनैव हि ते निराकर्तुंशक्यन्त इति किंच कर्मणापि ते निराकर्त्तुं शक्या इति यद्राजसूयेन पुरायजदित्याह। देवनां लोकपालानां वीर्याधिकारात् क्षत्रियत्वं तषां परमोत्कर्षहेतू राजसूय इति तेन दैत्यजयः प्रभुरिति वैराग्यं सापेक्षमसमर्थं भवतीति निरपेक्ष एव प्रभुः ॥ २८ ॥

एवं कृते स्तोत्रे प्रार्थितमभिधातुं मुख्यषड्गुणैश्वर्यसम्पन्नमेव निर्देष्टुं प्रलम्भवाक्येनोत्पन्नमपि क्रोधं दूरीकृत्य तथोक्तवानित्याह। सएवमिति। ननु स्वयं दैत्यपतिःकथं दैत्यानामहितमुक्तवानूतआह।उत्सिक्तमदेनेति। दैत्यानां मदे विद्यमानेऽपि सर्वमज्ञनार्थं नतदुत्सेकः अस्यतूत्सेकात् सर्वनाशं करिष्यतीति तन्नाशः कर्त्तव्य इत्यर्थः शिक्षाभावायाह। विद्विषेति। विशेषेण द्वेष्टीति तथा दृढमिति मर्मोद्घाटनम् अशक्तोऽन्यथा कथयतीत्याशङ्काव्यावृत्त्यर्थमाह।भगवानिति॥तर्हि कथं न मारयतीत्याह। अपां पतिरिति नहि जलस्थितो वह्निर्ज्वलति अत एव समुत्थितमपि रोषमशमयत् आत्मज्ञानेन तदाह। स्वयाधियेति विशेषेण स्पष्टतया अवोचत् किं त्वया युद्धमात्रमपेक्षते मया सह युद्धं वा तत्र द्वितीये उत्तरमाह। हे अङ्गेतिकोमलसंबोधनं ज्ञानपूर्णत्वबोधकं नहि स्वाङ्गं केनचिदुपहन्यते वयमुपशमं शान्ति गताः शस्त्रसंन्यासं गृहीतवन्त इत्यर्थः ॥ २९ ॥

युद्धमात्रं चेदपेक्ष्यते तदाप्येक एवास्ति सर्वेच्छापूरकः नान्य इत्याह।पश्यामीति। तुच्छा हि त्वां न मन्यन्ते ज्ञानी हि आक्रोशं न करोतीत्याराधयिष्यतीत्युक्तम् अन्यस्तु अनात्मानं पूजयिष्यतीति अत्र प्रमाणं मम ज्ञानं तदाह। पश्यामीति। पुरुषात्पुरातनादन्यं न पश्यामीति भिन्नं वाक्यं ज्ञानपरमन्यथैवं भङ्ग्या न वदेत् पुरुषो हि पौरुषयुक्तः अन्ये सर्वे प्राकृतशरीरसम्बधात् स्त्रियः त एव हि परिदृश्यन्ते इति। पुरातनादिति । बलाधिक्यज्ञापनार्थं कालेन हि बलन्हासो भवतीति अत एव यः संयुगे युद्धे त्वामाराधयिष्यति सन्तोषोत्पादनं ह्याराधनं सन्तोषस्तु स्वज्ञानादधिकज्ञाने तदर्थं तस्य ज्ञानमाह ।रणमार्गकोविदमिति। युद्धमार्गेषु परम्परासिद्धेषु युद्धप्रकारेषु कोविदम् असुरर्षभेति सम्बोधनमात्मत्वेऽपि मारणार्थमासमन्तादीहितं यस्य सर्वप्रकारेण युद्धाभिज्ञमसुरर्षभेषु वा ईहितं यस्य यथा महान्तः असुरा भवन्ति तथा त्वमित्यर्थः असुरर्षभा ईहितं यस्येति वा वधे हेतुरेतद्वधे सर्व एवासुरा हता भवन्ति असुरर्षभेषु वा हिरण्यकशिपौ अहितं विधेयविशेषणमेतत् तस्यैवं करणे किं सामर्थ्यमित्यत आह ।मनस्विनो यं गृणत इति। मनस्विनः शूराः दृढमनसः यं भगवन्तं गृणते तेन सह युद्धं कृत्वा पराजिता अपि तमेव स्तुवन्ति एतद्वचनं प्रोत्साहकं महता हि सह युद्धं कर्तव्यं भवादृशा इति स्तुतिः ॥ ३० ॥

एवं युद्धार्थं प्रतियोगित्वेन भगवन्तं निरूप्य तस्य प्राप्तिमाह । तं वीरमिति । सोऽपि भगवान् वीरः युद्धमेवाभीप्सते तदर्थमेव शापादिदानमिति भावः । कालविलम्बोऽपि नास्तीत्याह । आराक्षिकट एवेति अभिपद्येति यथा शलभोऽग्नौपतति तद्वत्पतिष्यसीति भावः तथापि त्वं निर्भयः मृत्युभयरहितः नहि भगवन्तं प्राप्य कश्चिन्मृत्युना ग्रस्यते अतो मृत्युभयरहित इत्यर्थः विस्मय इति पाठे विगतगर्वः तावदेवगर्व इति ततः कस्य जयो भविष्यतीत्याशङ्कायामाह ।त्वमेव वीरशये शयिष्यस इति। रणाङ्गणे शयनं करिष्यसि इत्यर्थः। जित्वापि निर्भयत्वज्ञापनार्थं रणाङ्गणे शयनं सुखादपि संभविष्यतीति तन्निवृत्त्यर्थमाह। श्वभिर्वृत इति मृतमेव श्वानो वेष्टयन्ति इति ननु युद्धमात्रे प्रार्थिते कामितपूरको भगवान् किमिति मारयेदित्याशङ्क्याह।यस्त्वद्विधानामिति। यद्यपि त्वत्कामितं तावदेव तथापि देवानां कामितं त्वन्मरणमिति मारयिष्यति यतः असतां प्रशान्तये एवं नानाविधानि रूपाणि भगवान्विभर्त्ति वराहादीनि अन्यथा अवतारप्रयोजनं न स्यात् नन्वात्मा भगवान् किमिति मारणार्थमेव रूपाणि करोतीत्याशङ्क्याह॥ सदनुग्रहेच्छायेति । सतु रूपाणि सतामनुग्रहार्थमेव गृह्णाति धर्मस्तार्थमेव प्रवृत्तिः आनुषङ्गिकं त्वसतां मारणं नान्तरीयकमिति अनेन पुनरपि कामो नोत्पत्स्यत इत्युक्तम् अन्यथा पुनः कालान्तरे एवं भावे कः समाधानं कुर्यादितिभावः॥ ३१ ॥

इतिश्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्वल्लभाचार्यकृतसुबोधिन्यां
सप्तदशाध्यायविवरणम् ॥ १७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

मनोवीर्यवरैर्मनोबलदेहबलदेवताबलैरुत्सिक्तं गर्वितमश्रयं निरङ्कुशम्॥ २२ ॥

न पश्यन् सन् क्षीवान् मत्तान् । क्लीवानिति पाठे पौरुषहीनान् ॥ २३ ॥

स्वप्रतियोद्धारं दशादिक्षु क्वापि कमप्यदृष्ट्वा । स्वीयमहाबलस्योष्मणानुतप्तो वारिधिमध्ये कथंचित् कश्चिद्वा तिष्ठेत्तेन सह युध्येयेत्याकाङ्क्षया वार्धिं जगाहे ॥ २४ ॥ २५ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वर्षपूगान् वर्षसमूहान् व्याप्य महोर्मीनेव गदया जघ्ने चचन् चपलः मौर्वं कार्ष्णायसं मुर्वानाम तृणविशेषो वा तन्मय्या । अहो जलमध्ये काचित् पूरी वर्त्तते तदिमां प्रविशामीति विभावरीसंज्ञां प्राप्तः ॥ २६ ॥

असुरलोकस्य पातालस्य पालकं प्रलब्धुमुपहसितुं प्रणिपत्य ॥ २७ ॥

अयजद्भवानिति पृथग्वाक्यम् विजित्येति विपरीतलक्षणा तेन तदानीं दैत्यानामभावात् सर्वैरपि राजसूयः कर्त्तुं शक्यते स्म तेन संप्रति मां जित्वा पुनरपि राजसूयं कुर्विति भावः। यद्वा । कुतोऽपि राजसूयस्तदैव ते सिद्ध्यति यदि मां जयसीति भावः ॥ २८ ॥

स्वया धिया शमयन्निति अत्र मे रोषो न फलवान् भविष्यतीति परामर्शेनेत्यर्थः । उपशमं गता वयं सम्प्रति प्रवयसोऽभूमेत्यर्थः । तेन यौवनावस्थायां यदि त्वां प्राप्स्यं तदा त्वादृशानां सहस्रमप्यजेष्यमिति भावः यद्वा उपशमं सन्न्यासं तेन सन्न्यासं चेन्नाकरिष्यं तदाधुनापि त्वामजेष्यमिति भावः ॥ २९ ॥

तर्हि मे रणकण्डूयातः कथं निस्तारस्तत्राह । पश्यामीति। तस्मात् हे असुरर्षभ ! त्वम् इहि गच्छ मनस्विनः शूरा गृणते रणकण्डूयापहर्तृत्वेन स्तुवन्ति ॥ ३० ॥

ननु तं कतिभिर्दिनैर्लप्स्य इति तत्राह । तमिति । आरात् पञ्चषैरेव दिनैरित्यर्थः विस्मयो विगतगर्वः सन् शयिष्यसे सम्प्रति तु गर्वरोगपीडितो रणकण्डूयोद्वेगेन त्वं शेषे इति भावः वीरशये वीराः शेरते यत्र तत्र रणाजिरे इति तव शय्यापि समुचिता भविष्यतीत्यर्थः तदा चरणाचङ्गयन्त्रणाकारिणः परिचारका अपि वहवो भविष्यन्तीत्याह । श्वभिरिति। नन्वेवं चेत्तस्याकारं ज्ञापय यथाधुनैव ब्रह्माण्डस्यान्तर्वहिरपि अन्विष्य तं निष्कादय तेन सहाहं योत्स्ये कथं स मां हन्यादिति यूयं पश्यथेति तत्राह । य इति। प्रशान्तये नाशाय रूपाणि वराहनृसिंहाद्याकारान् धत्ते इति सामान्यतो जानामि त्वान्तु केन रूपेण वधिष्यतीति विशेषन्तु न जानामीत्यर्थः ॥३१॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
तृतीयेऽस्मिन् सप्तदशः सङ्गतः सङ्गतः सताम् ।

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

रणन्तौ काञ्चनमयौ नूपुरौ यस्य तम् । असृण्यं निरङ्कुशम् निलिल्यिरे तिरोहिता बभूवुः ॥ २१—२२ ॥

महसा तेजसा वीर्यात् मत्तात् अपदयन् सन् । अत्यर्थं व्यनदत् ॥ २३ ॥ २४

सन्नधियः । अवसन्नाधियः । वर्चसा तेजसा ॥ २५ ॥

आसेदिवान्प्राप्तः ॥ २६ ॥

असुरलोकस्य पातालस्य पालकम् ॥ २७ ॥ २८ ।

उपशमं युद्धादितः उपरमम् ॥ २९ ॥

हे असुरर्षभ ! यस्त्वामाराधयिष्यति तमीहि गच्छ गृणते स्तुवन्ति ॥ ३० ॥

विस्मयःनष्टगर्वः वीरशये रणाङ्गणे आरात् शीघ्रंशयिष्यसे॥३१॥

इती श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमच्छुकदेवकृतसिन्धान्तप्रदीपे ।
सप्तदशाध्यायार्थप्रकाशः ॥ १७ ॥

भाषाटीका ।

वडे कठिन वेगवाला है सुवर्ण के नूपुर के शव्दकरता हुआ वैजयन्ती माला को पहिरा हुआ कांधे पर वडीभारीगदाको रखा हुआ मनके उत्साहसे शरीरके वलसे ब्रह्मा केवरसे अभिमानी निरङ्कुश निर्भय एसेहिरण्याक्ष को देखकर देवता भागकर ऐसे छिपे कि जैसे गरुड से डरकर सर्प छिपते हैं। २१ । २२ ।

दैत्यराज हिरण्याक्षने देवतो को छिपजाने से जव नही देखा तव अपने तेजसे पौरुषहीनजानकर इन्द्रादिदेवतो को जीता समझ कर गर्जने लगा। २३ ।

फिरउहां से लौटा तो खेलनेकी इच्छासे वडा भारी गंभीर गर्जना करता हुआ समुद्रको जानकर महावली हिरण्याक्ष मत्तहस्ती सरीका समुद्र मे पैठ गया । २४ ।

उसके प्रवेश होते मात्र वरुण के सेना वाले यादोगण सव शिथिल वुद्धि वाले होकर डर गये विना मारे भी उस के तेज से डर कर दूरको भग गये ॥२५॥

वह दैत्य समुद्र के मध्यमे जो विभावरी नाम की पुरी है तिसमें जाकर वहुत दिन पर्यन्त उस पुरी मे विचरताथा उसके भयानक निश्वासके पवन के द्वारा वारं वार समुद्र मे तरंग आतीथी उसने कृष्णवर्ण लोह के गदा से उस जल मे प्रहार किया ॥ २६ ॥

तिसके अनंतर जल जंतुगण मे प्रधान और पाताल लोक के पति वरुण को देखकर नीचसरीका प्रणाम करके वोला कि हे अधिराज! मेरेको संग्राम दो ॥२७॥

तुम लोकपालहो वडे जशवाले अधिपति दुर्मद वीरमानी पुरुषों के वीर्य नाशकरने वाले हो जिससे आपने सव दैत्यदानवोंको जीत करके पूर्वकाल मे राजसूय यज्ञ से यजन कियाहै ॥ २८ ॥

उस वैरी के ऐसे कहने पर वञ्चित होकर भी भगवान् वरुण जीने उत्पन्न हुये क्रोध को अपनी वुद्धि से रोकलिया फिर वोले हे दैत्य!हमने तो अव शांति धारण करलीहै ॥ २९ ॥

आद्य पुराण पुरुष भगवान् के विना और किसी को हम नहीं जानते हैं समर मे ऐसा चतुर दूसरा नहींहै तुमको संतुष्ट वेही करेंगे आप सरीके उत्साही पुरुष उनको ढूडते हैं ॥ ३० ॥

हे वीर ! उनको प्राप्त होकर तुम गर्व रहित होकर संग्राममें कुत्तों से घिरे हुये वीरों की शय्या में सोवोगे जो भगवान् तुम सरीके दुष्टों के नाश करने के लिये सत्पुरुषों के अनुग्रह के लिये अवतारों को धारण करते हैं ॥ ३१ ॥

इति श्रीभागवत तृतीयस्कंध सप्तदश अध्याय का
भाषानुवाद लक्ष्मणाचार्य कृत समाप्त ॥ १७ ॥

---

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे सप्तदशोऽध्यायः समाप्तः ॥ १७ ॥

## अष्टादशोऽध्यायः ।

### मैत्रेय उवाच ।

तदेवमाकर्ण्य जलेशभाषितं महामनास्तद्विगणय्य दुर्मदः ।
हरेर्विदित्वा गतिमङ्ग! नारदाद्रसातलं निर्विविशे त्वरान्वितः ॥ १ ॥
ददर्श तत्राभिजितं धराधरं प्रोन्नीयमानावनिमग्रदंष्ट्रया ।
मुष्णान्तमक्ष्णा स्वरुचोऽरुणश्रिया जहास चाहो वनगोचरो मृगः॥ २ ॥
आहैनमेह्यज्ञ ! महीं विमुञ्च नो रसौकसां विश्वसृजेयमर्पिता ॥
न स्वस्ति यास्यस्यनया ममेक्षतः सुराधमासादितसूकराकृते!॥ ३ ॥
त्वं नः सपत्नैरभवाय किं भृतो यो मायया हन्त्यसुरान् परोक्षजित् ।
त्वां योगमायाबलमल्पपौरुषं संस्थाप्य मूढप्रमृजे सुहृच्छुचः ॥ ४ ॥
त्वयि संस्थिते गदया शीर्णशीर्षण्यस्मद्भुजच्युतया ये च तुभ्यम् ।
बलिं हरन्त्यृषयो ये च देवाः स्वयं सर्वे न भविष्यन्त्यमूलाः ॥ ५ ॥
स तुद्यमानोऽरिदुरुक्ततोमरैर्दंष्ट्राग्रगां गामुपलक्ष्य भीताम् ।
तोदं मृषन्निरगादम्बुमध्याद्ग्राहाहतः सकरेणुर्यथेभः ॥ ६ ॥
तं निःसरन्तं सलिलादनुद्रुतो हिरण्यकेशो द्विरदं यथा झषः ।
करालदंष्ट्रोऽशनिनिःस्वनोऽब्रवीद्गतह्रियां किं त्वसतां विगर्हितम् ॥ ७ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अष्टादशे हिरण्याक्षधरोद्धर्तृवराहयोः
निर्विशेषं महायुद्धं देवक्षोभि निरूप्यते ॥ १ ॥

प्रतियोद्धारं श्रुत्वा महामनाः शयिष्यस इति यदुक्तं तद्विगणय्यागणयित्वा यतो दुर्मदः ॥ १ ॥

अभितो जयतीत्यभिजित्तं श्रीहरिम् । प्रकर्षेणोर्ध्वंनीयमानावनिर्येन अग्रदंष्ट्रया दंष्ट्राग्रेण स्वरुचोहिरण्याक्षतेजांस्यरुणश्रियायुक्तं यक्षेनाक्ष्णा नेत्रेण मुष्णान्तं तिरस्कुर्वन्तम्। अहो चित्रं वनगोचरो मृगो वारिचरो वराहः ॥ २ ॥

एह्यागच्छ रसौकसां पातालवासिनां नोऽस्माकं समर्पिता अन्यथा पातालावतरणमस्या न घटत इतिभावः हिरण्याक्षेणाधिक्षेपार्थं प्रयुक्तापि भारती वस्तुतो भगवन्तं स्तौति । तथाहि । वनगोचरो जले शयानः श्रीनारायणः स एव योगिभिर्मृग्यते दुष्टान्वा हंतुं मृगयत इति मृगः अज्ञ ! नास्ति ज्ञो यस्मात्सर्वज्ञेत्यर्थः । सुरा अधमा यस्मात् हे सुरोत्तम ममेक्षमाणस्यापि सतो मामनादृत्यापि त्वमनया सहवर्तमानो नोऽस्मदीयं स्वस्ति समस्तं मङ्गलं राज्यं यास्यसि प्राप्स्यसि नात्र सन्देहस्तथाप्यस्मत्कृपया विमुञ्चेत्यर्थः आसादिता लीलया स्वीकृता सूकराकृतिर्येन ॥ ३ ॥

अभवाय नाशाय भृतः पुष्टः वस्तुतस्तु मोक्षाय भृतो धृत आश्रित इत्यर्थः। यो भवान्परोक्षेण चौर्येण जयतीति तथा वस्तुतस्तु दूरत एव स्थित्वा जयतीति संस्थाप्य हत्वा वस्तुतस्तु योगमायारूपमचिन्त्यं बलं यस्य अल्पमपौरुषं यस्मात् तं त्वां सम्यक् स्थापयित्वा भक्त्या हृदि स्थिरीकृत्येत्यर्थः। हेमूढप्र मूढान्प्रात्याप्याययतीति तथा । प्रापूर्ताविति धातुः सुहृदां शुचः संसारदुःखानि मृजे नाशयामि यतस्त्वं स्मर्तुर्बान्धवानपि मोचयसीतिभावः ॥ ४ ॥

अस्मद्भुजच्युतयापि गदयाऽशीर्णं शीर्षं यस्य तथा भूते त्वयि सुखं स्थिते सति ये तुभ्यमधुना बलिं हरन्ति नवीना भक्ता ये च पूर्वे भक्ता ऋषयो देवाश्च ते सर्वे स्वयमेवोद्यमं विनैवामूला न भविष्यन्ति । किन्तु दृढमूला एव भविष्यन्तीत्यर्थः ॥ ५ ॥

स हरिररेर्दुरुक्तान्येव तोमराः शस्त्रविशेषास्तैस्तुद्यमानो व्यथ्यमानो दंष्ट्राग्रगतां पृथ्वीं भीतामालक्ष्य तोदन्दुरुक्तव्यथां मृषन्सहमान एव निर्गतः करेणुर्हस्तिनी वस्तुतस्त्वरिदुरुक्ततोमरैर्निमित्तभूतैस्तुद्यमानः यथा श्रुतार्थग्राहिणां ब्रह्मादीनां व्यथां दृष्ट्वानुकम्पया पीड्यमान इत्यर्थः । तोदं मृषन्नित्यस्याप्ययमेवार्थः ॥ ६ ॥

सलिलान्निर्गच्छन्तमनुगतः सन् हिरण्यवत्कपिशाः केशा यस्य दैत्यस्य झषो मकरः करालास्तुङ्गा दंष्ट्रा यस्य अशनिवन्निःस्वनो यस्य निर्लज्जानामसतां किंगर्हितमस्ति निन्दाभयाभावात्पलायनमपि नायुक्तमित्यर्थः वस्तुतस्तु गतह्रियः प्राप्तह्रियः न सन्तो येभ्यस्तेषां कृपालूनां किं विगर्हितं न किञ्चित् । अतः कृपालुत्वाद्दंष्ट्राश्रितभूरक्षणार्थं किञ्चित्पलायनमपि नानन्दितमित्यर्थः

श्रीधरस्वामिकृतभावार्थदीपिका ॥

यद्वा लोकोपकाराय भुवमुद्धरतोऽनुद्रवणमनुचितं मन्वानो दैत्य आत्मानमेवाधिक्षिपति गतह्रियां स्वार्थैकपराणामसतामस्माकं किञ्चिद्विगर्हितगणनास्त्यपितु नास्त्येव धिगस्मानित्यब्रवीदित्यर्थः ॥ ७ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

निर्विशेषं जयादिविशेषरहितं सममित्यर्थः अत एव देवत्वाभिशङ्कया देवक्षोभकरं तादृशलीलाया दर्शनार्थं तत्पथ्येवा गच्छतः श्रीनारदात् गतिं स्थितिम् ॥ १ ॥

तत्र रसातले अरुणश्रियेति विशेषणे तृतीया अतएव युक्तं यद्दक्षीति व्याख्यतम् ॥ २ ॥

अन्यथा समर्पणाभागे अस्या मह्याः अधिक्षेपपक्षे अनन्विचेतिद्वित्वमाश्रित्य ममेक्षतस्ततोऽनया मह्या स्वस्ति सुखं नयास्यसीति योजनीयम् स्तुतिपक्षे तु वा शरीतिसकारपक्षमाश्रित्य नोऽस्माकमिति व्याख्यातमिति ज्ञेयम् ॥ ३ ॥

स्तुतिपक्षे मूढान् भक्तिविवशान् योगमायारूपं चिच्छक्तिविलासात्मकम् ॥ ४ ॥

निन्दापक्षे तु मूलं त्वमेव तच्छून्यास्सन्तः न भविष्यन्ति न जीविष्यन्ति मरिष्यन्तीत्यर्थः ॥ ५ ॥

अयमेवार्थ इति निगूढार्थमजानतां ब्रह्मादीनां स्वनिन्दानिमित्तकं तोदं व्यथां मृषन्सहमान इत्येवार्थः ॥ ६ ॥

वास्तवार्थे कृपालूनां परोपकृत्यर्थं पलायनमपि न निन्दितमिति कृपालुत्वस्यैव पोषकं नतु प्राप्तह्रीत्वस्येत्यरुचौ यद्वेति ॥ ७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं वरुणेनाभाषितोऽसुरस्तं भगवन्तमन्वेषयन् गतइत्याह मुनिः । तत् एवम् उक्तप्रकारेण जलेशभाषितं वरुणभाषितमाकर्ण्य निशम्य महामनाः प्रतियोद्धारं श्रुत्वा हृष्टचित्तः दुर्मद अत एव शयिष्यस इति यदुक्तं तदविगणय्य अङ्ग हे विदुर ! हरेर्भगवतो गतिं मार्गं नारदाद्विदित्वा ज्ञात्वा त्वरान्वितः रसातलं निर्विवेश प्रविष्टवान् ॥ १ ॥

तत्र रसातलेऽभितः सर्वतो जयतीत्यभिजित्तं हरिं कथं भूतं धराधरं भूधरं पर्वत इव स्थितमग्रदंष्ट्रया दंष्ट्राग्रेण प्रोक्षीयमाणोर्ध्वं नीयमानावनिर्येन तमरुणश्रियाक्ष्णा स्वरुचा हिरण्याक्ष तेजांसि हरन्तमम्बुरुहारुणश्रियामिति पाठेऽक्ष्णारुणाम्बुरुहश्रियं मुष्णन्तमित्यर्थः ददर्श अहो वनगोचरः वनेषु अलक्ष्यमाणः मृगोऽत्र दृश्यत इति जहासापहसितवांश्च ॥ २ ॥

तत एवं भगवन्तमाहोवाच च उक्तिमेवाह । एह्यागच्छाज्ञ ! महीं चिमुञ्च रसौकसां पातालवासिनां नोऽस्माकं विश्वसृजा ब्रह्मणा इयं समर्पितान्यथा पातालावतरणमस्या न घटत इति भावः । हिरण्याक्षेणाधिक्षेपार्थं प्रयुक्तापीयं भारती वस्तुतो भगवन्तं स्तौति । तथाहि वनगोचरः जलशयो नारायणः स एव योगिभिः मृग्यते इति मृगः दुष्टान्निहन्तुं मृगयत इति वा अघ नास्तिज्ञो यस्मात् सर्वज्ञेत्यर्थः हेसुराधम ममेक्षतः पश्यतः सत अनया भूम्या सह स्वस्ति मङ्गलं यथा तथा यास्यसि स्तुतिपक्षे तु सुरा अधमाः यस्मात् हे सुरोत्तम ! ममेक्षमाणस्यापि सतः मामनादृत्य त्वमनया सह वर्तमानो नोऽस्मदीयं समस्तं मङ्गलं राज्यं यास्यसि तथाप्यस्मत्कृपयाविमुञ्चेत्यर्थः आसादिता लीलया स्वीकृता सूकराकृतिर्येन सः तत्सम्बोधनम् ॥ ३ ॥

किंच त्वमिति । सपत्नैः सुरैर्नोऽस्माकमभवाय नाशाय त्वं भृतः पुष्टः किं परोक्षजित्परोक्षं जयतीति परोक्षजिद्यो मायया सुरान् हंसि त्वां योगमाया आत्मीयमायैव बलं यस्य तमत एवाल्पपौरुषमल्पबलं संस्थाप्य हत्वा हे मूढ सुहृदां शुचः अश्रूणि प्रमृजे स्तुतिपक्षे नः सपत्नैरभवाय मोक्षाय भृतःकिमाश्रितः योभवान्परोक्षेण इन्द्रादिद्वारेण जिन्मायया आत्मीयसङ्कल्पेनासुरान् हंसि नतु तवास्ति वैषम्यं किन्तु लीलयैवेत्यर्थः योगमायाबलमात्मीयमचिन्त्यबलम् अथवा ऽल्पपौरुषमल्पं पौरुषं यस्मात्तं त्वां संस्थाप्य हृदि सम्यक् भक्त्या स्थापयित्वा दृढीकृत्येत्यर्थः हेमूढम ! मूढान्माति आप्याययतीति मूढमः तत्संबोधनं मापूर्ताविति धातुः सुहृदां बन्धूनां शुचः संसारदुःखानि मृजे नाशयामि यतस्त्वं स्मर्तुर्बान्धवानपि मोचयसीत्यर्थः ॥ ४ ॥

त्वयीति । अस्मद्भुजच्युतया अस्मद्धस्तविसृष्टया गदया शीर्णा भिन्नं शिरो यस्य तस्मिन् स्वयं संस्थिते हते सति तुभ्यं बलिं पूजां ये च ऋषयो देवाश्च हरन्ति कुर्वन्ति ते सर्वे स्वयमेव प्रयत्नमन्तरेण अमूला अनाश्रयाः सन्त न भविष्यन्ति नंक्ष्यन्तीत्यर्थः स्तुतिपक्षे त्वस्मद्भुजच्युतया गदया शीर्णशीर्षण्यपि त्वयि संस्थिते सम्यक् स्थिते सति तुभ्यं बलिं हरन्ति ऋषयो देवाश्चते सर्वे अमूला न भवष्यन्ति किन्तु दृढमूला एवभाविष्यन्तीत्यर्थः ॥ ५ ॥

स भगवानरेरसुरस्य दुरुक्तय एवतोमराः शस्त्रविशेषास्तैस्तुद्यमानः व्यथ्यमानः भीतां दंष्ट्राग्रगतां गां भूमिमुपलक्ष्य तोदं दुरुक्तिव्यथां मृषन् सहमान अम्बुमध्यात् ग्राहेण मकरेण हस्तिनी सहितः इभो गज इव निरगान्निर्गतः ॥ ६ ॥

निः सरन्तं सलिलान्निर्गच्छन्तं भगवन्तं गजं यथा झषो मकरस्तथानुद्रुतः अनुधावत् हिरण्यकेशो हिरण्याक्षः कराला भयंकारा दंष्ट्रा यस्य सः अशनिरिव निःस्वनो यस्य सः अब्रवीत् तदेवाह । गतह्रियां निर्लज्जानामसतां किंतु विगर्हितमस्ति निन्दाभावात्पलायनं नायुक्तमितिभावः स्तुतिपक्षे तु गतह्रियामस्माकं किं विगर्हितमस्ति लोकोपकारार्थं भुवमुद्धरन्तं प्रत्यसतामस्माकमनुद्रवणमनुचितमेवत्यर्थः ॥ ७ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एकमर्थमनेकधाप्रतिपद्यमानो महामनास्तद्वरुणोक्तं विगणय्यावज्ञाय विचार्य वा आगच्छति यद्यपि विशतेः सम्पूर्वात स्वापार्थत्वं तथाप्यत्र जले नेत्रे निमील्य प्रवेशाभिप्रायेणोक्तम् ॥ १ ॥

अग्रदंष्ट्रया दंष्ट्राग्रेण प्रकर्षेणोर्ध्वं नीयमानावनिर्येनस तथा तं धराधरं पर्वतं किन्नेत्युक्तमविजितमिति अक्ष्णा अम्बुरुहारुणश्रियं रक्तपद्मदलकान्तिं मुष्णन्तं चोरयन्तं वने जले गवि-भूमौ चरतीति वनगोचरो मृगो वराहः ॥ २ ॥

ननु भुवि यतमानो वने जले च हग्विषयोऽभूदहो इति प्रहस्य तिरश्चीनं गतः किं नेत्याह । आहेति विश्वसृजा ब्रह्मणा रसौकसां दैत्यानामर्पिता दत्ता अमुया भूम्या सुरा अधमा यस्मात्स सुराधम इति तात्पर्यार्थः अनेन हिरण्याक्षस्यान्तर्भक्तिं ध्वनयति प्रातीतिकेन द्वेषं प्रकटयति यथा संभवमुत्तरत्राप्येवमूहनीयम् ॥ ३ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अस्माकं शत्रुभूतैर्देवैरभयाय धृतत्वान्मायया सूकरादिव्याजेनासुरान्नो हंसि मारयसि अन्यत्र नोऽभयाय सपत्नैर्धृतः किं यस्त्वं मायया असुरान् हंसीति कीदृशस्त्वं परोचजित् परोक्षेणाप्रत्यक्षतया चौर्येण जयतीति अक्षाणीन्द्रियाणि जयतीत्यक्षजित् अतएव परः योगमायाबलं कपटोपायबलमत एवाल्पपौरुषं त्वां संस्थाप्य हत्वा सुहृदां शुचः प्रमृज इत्यन्वयः स्वरूपेच्छाबलं स्वसमपुरुषसमूहरहितमेकचित्ते सम्यक् स्थापयितुं योग्यमूढं भक्त्या दृढं कृत्वा सर्वत्र सुहृदहं संसारशुचः प्रमृज इत्यन्वयः ॥ ४ ॥

इदानीं वाह्यद्वेषमुद्वलयति । त्वयीति । अमूला मूलाश्रयरहिताः ॥ ५ ॥

तस्यान्तरभक्तिं विदधान इव वाह्यद्वेषं सहमानो यदर्थं जलमज्जनं तत्करोमीति मन्वान उदमज्जदित्याह । स इति । उपलभ्य दृष्ट्वा करेणुर्हस्तिनी ॥ ६ ॥

हरेरभीष्टकार्यमध्ये हिरण्याक्षेण किमकारीत्याह । तमिति । अनुद्रुतोऽनुयातः हिरण्यकेशो हिरण्याक्षः ॥ ७ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विगणय्य विशेषेण गणयित्वा सम्मत्य ॥ १ ॥

अरुणश्रियेति अक्ष्णः सामानाधिकरण्यं पुंवत्त्वञ्च भाषितपुंस्कत्वात् ॥ २ ॥

दैत्यभावस्याभासमात्रत्वमेव श्लेषेण तदीयवाक्येन बोधयति । आहेति त्रिभिः । रसौकसामिति सम्प्रति तु धिजिते स्वर्गएवानयोर्वासः सम्पन्न इति गम्यते । रसाया अपि पृथ्वीविवरत्वात् न स्वस्तीत्यत्र अनचि चेति वाशरीति च सकारद्वयसिद्धेर्व्याख्याद्वयम् ॥ ३ ॥

वास्तवार्थे मूढान् भक्तिविवशान् प्रातीति ॥ ४–५ ॥

स तुद्यमानेति । अत्र वास्तवार्थेन तयोर्निगूढभक्तभावत्वं स्पष्टमेवाङ्गीकृतम् ॥ ६ ॥

तमिति । अत्र वस्तुतः कैमुतिकेनैव श्रीवराहदेवस्य हिरण्याक्षस्य च तज्ज्ञानादुभयस्यापि वास्तवार्थस्य स्तुतावेव पर्यवसानं गम्यते ॥ ७–८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अष्टादशे स्थितिस्तस्य भगवत्सन्निधौ स्फुटा ।
निरूप्यते तया शापात्पारुष्यं विजयस्ततः ।
स्थित्यध्यायोऽयमाख्यातो ब्रह्मणा तदस्थिरीकृतम् ।
उत्पत्तावेव शापो हि मारणं ब्रह्मवाक्यतः ।
युद्धमात्रे हरीच्छाहि कायवाङ्मनसा द्विधा ।
उभयोरुद्यमोक्तश्चैव युद्धं मानसमीरितम् ।
कायिकं चाग्रिमाध्याये मध्यमं मध्यमे मतम् ।
मनोविरोधवाक्यानामुभयेषां न दूषणम् ।
प्रसंगो दर्शनं वाक्यं त्रिभिर्भक्तानुरोधनम् ।
पुनराक्षेपवाक्यं च संरम्भकरणं तथा ।
वाक्योपक्रमणं वाक्यं त्रिभिर्मानसतथोद्यमः ।
युद्धं षड्भिर्भगवत्त्वाद् ब्रह्मप्रार्थनमन्ततः ।
उभयोर्वचनं षड्भिः युद्धं चैव तयोरुभयोः ।
स्थितिरेषा तस्य हरौ तत्पोषकमिहापरम् ॥

प्रथमं युद्धार्थं तयोः प्रसङ्गमाह । तदैवमिति । जलेशो वरुणः तदा एवं तद्वचनमाकर्ण्य महामना उत्साहयुक्तो जातः यद्यपि मरणं श्रुतं तथापि तद्विगणय्यैव महामना जात इति सम्बन्धः तत्र हेतुः । दुर्मद इति । दुष्टो मदः स्वानिष्टं न बोधयतीति भगवन्तं भक्त एव जानातीति नारदः पृष्टः भगवत्कार्यकर्तृत्वान्नारदस्यापि समागमनमतो नारदाद्धेतोः हरेर्गतिं विदित्वा तत्सद्भावदेशस्य श्रुतत्वात् युद्धाभिनिविष्टः त्वरान्वितो रसातलं निर्विविशे ॥ १ ॥

ततो दर्शनमाह । ददर्शेति । यथान्यदर्शने तस्यावज्ञोत्पन्ना न तथा भगवद्दर्शने इतिज्ञापयितुं भगवन्तं विशिनष्टि । तत्र रसातले अभिजितं धराधरं प्रोद्धीयमानं मुष्णन्तमिति चतुर्थी । पराक्रमस्तथाकार्यमति शूरत्वबोधनम् । शत्रोः पराजयश्चेति सहजं तच्चतुष्टयमभितो जितं यस्य आकारदर्शनेनैव तस्य सर्वतो जयो लक्ष्यते धरां बिभर्तीति तथा धरायां वा अधरं यस्य तत्र दृश्यत इति अतोऽपि भगवद्दर्शनेऽपि न स्वस्मिन् भगवति वा लोभः उत्पन्नः दंष्ट्राया अग्रं अग्रदंष्ट्रा पूर्वं निरूपिता तया प्रोद्धीयमाना अवनिर्येन अनेन शत्रुः कार्यासक्त इति सूचितं स्वस्य हिरण्याक्षस्य रुचः अरुणश्रिया अक्ष्णा मुष्णन्तं दैत्यः सुवर्णवर्णः कार्याभिनिविष्टस्य भगवतोऽप्यक्षि अरुणवर्णं रजोगुणप्राकट्यात् अनेन भगवदग्रे स्वात्मानं भगवन्तं च न दृष्टवान् इत्युक्तमेवं ज्ञात्वापि अग्रिमभगवल्लीलेच्छायाः प्राधान्यात् जहास ददर्श जहास च चकारादग्रिमवचनान्यपि संगृहीतानि तान्याह । अहो वनगोचरो मृग इति । हास्यरूपं चैतत् अहो आश्चर्यं मृगः अरण्यस्थवासी अवनगोचरः वनरहितभूमौ तिष्ठतीति वने जले वा चरतीति तादृशो मृगोऽयमिति भगवद्बुद्ध्या समागतमयं तु वनगोचरो मृग इत्यर्थः ॥ २ ॥

अस्तु यथा तथा रूपं युद्धं तु कर्तव्यमित्यभिप्रायेणाह । आहेति । एनं भगवन्तमेवमाह हे भगवन् ! एहि कदाचिदात्मानं न जानातीति तदा सम्बोधनं युद्धार्थमाकारयामि कार्यान्तरेऽहं व्यापृत इतिचेत्तत्राह । महीं विमुञ्चेति ननु प्रारब्धं कर्म परिसमाप्य पश्चादन्यत्कर्त्तव्यमिति चेत्तत्राह । नो रसौकसां विश्वसृजेयमर्पितेति । इयं भूमिरस्मदीया रसौकसामर्थे विश्वसृजा अर्पितत्वात् अतोऽन्यस्य भूमिर्न नेया क्षत्रियधर्मेण चेन्नयेत तदा युद्धं कृत्वा नेतव्येति । उभयथापि एनां विमुञ्च अस्मदीयैवेति न चिन्ताप्येतस्याः कार्या यतो नोऽस्माकमेषा न हि स्वामिनि विद्यमाने अन्यस्य चिन्ता युक्तेति भावः शरीरवत् न्यायतश्चेयं प्राप्तेति ज्ञापनार्थं ब्रह्मणा समर्पितत्वकीर्त्तनं तथाप्यत्यजन्तं प्रत्याह । न स्वस्ति यास्यसीति । मम ईक्षतः अनया सह स्वस्ति यथा भवति तथा न यास्यसीत्यर्थः । संबोधनद्वयमधिक्षेपजनकं क्रोधोत्पादनार्थं महद्भिरपि देवैः अस्मद्विरोधे कार्यं कर्तुं न शक्यते येषां रूपमत्युत्तमं रूपेणैव हि महत्त्वममहत्त्वं च ज्ञायते आसादिता स्वीकृता शूकरवदाकृतिर्येन पूर्वस्य हेतुः ॥ ३ ॥

देवप्रेरणाया समागतमिति चेत्तत्राह । त्वं न इति । नः सपत्नैर्देवैः त्वं किमभवाय भृत इति अधिक्षेपप्रश्नः कार्यं तु महद्भिरेव न भविष्यति कथं त्वयेति ते देवाः असाध्यकार्ये नियोजकाः तवाहिता एवेत्यर्थः नन्वहं विष्णुः स्वतन्त्रतया भवच्छत्रुः कथं देवप्रेरित इत्युच्यते इति चेत्तत्राह । यो मायया हंसीति । त्वं हि ज्ञातो विष्णुरेव सत्यमभिज्ञानमाह ।

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यस्त्वमसुरान्मायया कापट्येनैव हंसि मायैव करणं "ये यथा
मां प्रपद्यन्त" इति वाक्यात् मायेत्यसुरा इतिश्रुतेः मोक्षाभावार्थं
च अनिष्टनिवृत्त्यर्थं वा माययैव हंसि कापट्ययुद्धं न वीर-
त्वबोधकं तदाह । परोक्षजिदिति । परोक्षे समागत्य जयं सम्पा-
दयसीति अतः प्रत्यक्षे युद्धं न कर्तव्यं भूमिं त्यक्त्वा गच्छेत्यु-
पदेशः तथा न क्रियत इति चेत्तत्राह । त्वां योगमायाबलमिति ।
तव तु न सहजं बलं किन्तु योगमाया सा त्वस्मदीयेति अस्म-
त्स्थाने सा न प्रभविष्यतीति अल्पमेव पौरुषं स्वतो भविष्यती-
त्यर्थः अत एव सम्यक्स्थापयित्वा सुहृच्छुचः प्रमृजे ये त्वया
मारितास्तेषामनृणो भविष्यामीत्यर्थः अहं मारितशत्रूणां सम्ब-
न्धीति मां न जानातीति तथा सम्बोधनम् ॥ ४ ॥

ननु देवानां विद्यमानत्वात् कथं दैत्यानां शोकाभावस्तत्राह ।
त्वयीति । अस्मद्भुजच्युतया गदया शस्त्राभेद्येऽपि शरीरे प्रहा-
रेण व्यथिते सम्यक् स्थितिः अस्मद्भुजच्युतयेति महाबलस-
म्बन्ध उक्तः ततः किमत आह । ये च तुभ्यं बलिं हरन्ति ऋष-
यो देवाश्च अन्येऽपि स्वतन्त्रा येऽभिमानिनः तेऽपि सर्वे भवन्-
मूलका एवेति स्वयमेव मारिता अपि न भविष्यन्ति उद्भवं न
प्राप्स्यन्तीत्यर्थः तत्र हेतुरमूला इति ॥ ५ ॥

एवं दुष्टवचनान्यपि भक्तहितार्थमङ्गीकृतानीत्याह । स इति ।
अरिर्हिरण्याक्षः तस्य दुरुक्तय एव तोमराः मल्लविशेषा यैर्गजस्तु-
द्यते तथा तुद्यमानोऽपि भीतां गामुपलभ्य तोदं मृषन्नेव अम्बु-
मध्यान्निरगात् अयुक्तेऽपि तथा निःसरणे दृष्टान्तः ग्राहेण हतः
करेणुसहितो यथेभ इति ॥ ६ ॥

अत्र भगवतो युद्धलीला प्रतिपाद्यत इति विरोधिनोऽश्र
युद्धसम्भवात् गदाप्रहार इव विरोधिवचनान्यपि युक्तान्येव
यदि वचनान्यन्यथा व्याख्यायन्ते तदान्यया क्रियापि व्याख्येया
साचेन्नस्वद्व्याख्याता तुल्यं वचनेष्वपि तथापि भक्तानां श्रव-
णकटुत्वात् वचनान्यन्यथा व्याख्यायन्ते ननु स भागवतार्थः
वस्तुतो हिरण्याक्षो भक्तः भारतीच तथा सति तानि वाक्यानि
स्तुतिपराण्येवेति पुनर्व्याख्यायन्ते । अहो इति । स्वभाग्यमभिनन्द-
ति वने गोभिरुपनिषद्भिः चर्यते ज्ञायत इति । अधिकारि-
विशेषेण वेदान्तसमधिगम्यो यः सोऽस्मानिदानीं मृगयतीत्या-
श्चर्यमत एव भगवन्तं प्रत्याह । हे भगवन् ! एहि अस्मदुद्धारा-
र्थमागच्छ पृथिवी गमनं न मन्यत इति चेत्तदाह । अज्ञ ! महीं
विमुञ्चेति अज्ञाचासौ मही च साह्यस्मद्दुःखं न जानाति
भक्तो हि परदुःखाभिज्ञः अतः सा त्यक्तव्या नोरसौकसाम-
र्थे रस एव ओकः स्थानं येषां वयं रसिका भक्ताः अतोऽस्म-
दुद्धारं प्रथमतः कुर्वित्यर्थः तर्हि पृथिव्याः कागतिरिति चेत्त
त्राह । विश्वसृजेयमर्पितेति । इयं स्वभावतः न तव स्थाने समागता
किन्तु ब्रह्मणा अर्पिता अर्पितत्वात्पुनः प्रत्यर्पणं कर्त्तव्यं तदा
ब्रह्मैव तदुद्धारं करिष्यतीत्यर्थः वयं त्वनन्यगतिका इयं तु सगति-
केत्यपि विशेषः किञ्च यद्यस्मदुद्धारमकृत्वाऽनया सह गमि-
ष्यसि तदा परमदयालोस्तव सुखं न भविष्यतीत्याह । न स्वास्ति
यास्यसीति । अनुद्धृतस्य मम ईक्षत एव सतः अनया सह
सुखं न यास्यसीत्यर्थः नहि भक्तमनुद्धृत्य सदयः कश्चिद्भार्य-
या सुखमश्नुते देवास्त्वदुद्धारं न मन्यन्त इति चेत्तत्राह । सुरा-
धमेति । सुरा अधमा यस्मात् ते हि निकृष्टाः किं तेषां संमत्ये-
त्यर्थः ननु श्रान्तोऽहं स भूम्युद्धारेण रूपान्तरेणोद्धरिष्यामीति
चेत्तत्राह । आसादितशूकराकृत इति सम्बोधनं न सादिता अव
सादं प्रापिता सूकराकृतिर्येन इदानीमप्येतद्रूपत्वावसन्नमतो
भूम्युद्धारमकृत्वा मामुद्धरेत्यर्थः । ननु देवैर्भूम्युद्धारार्थं प्रार्थितोऽहं
तेऽपि भूमौ मामाराध्य मुक्ता भविष्यन्ति अतो बहूपकारसिद्धे
र्भूमिरेवोद्धर्त्तव्येति चेत्तत्राह । त्वं नः सपत्नैरिति । नः सपत्नैः
शत्रुभिः सनकादिभिः तत्सहितैर्देवैर्वा किमभवाय मोक्षाय भृतः
धृतः भूमौ भगवद्भजनेन मोक्षो भविष्यतीति तत्तु न भविष्य-
ति भक्तद्रोहात् यतोऽस्माकं ते सपत्नाः शत्रवः नहि भक्तद्रोहे
मुक्तिर्भवति नन्वहमपि भवतां शत्रुरेवेति चेन्नेत्याह । योमायया
हंसीति त्वं तु असुरान् कापट्येन मारयसे लोकव्यामोहार्थं
वस्तुतस्तेभ्यःसायुज्यं प्रयच्छसि यतस्ते असुराः असून् प्राणान्
रान्ति शब्दयन्ते शब्दयुक्तान् कुर्वन्ति प्राणघोषं शृण्वन्ति
योगिन इत्यर्थः प्राणं स्तुवन्तीति वा न ह्यासन्योपासका मृता
भवन्ति मृत्युमत्यमुच्यतेति श्रुतेः किञ्च परोक्षजिद्भवान्
पराणि अक्षाणि इन्द्रियाणि येषां तानेव जयतीति परोक्ष-
जित् इन्द्रियारामानेव मारयसीत्यर्थः असुरान् वा परोक्षजित्
असुरान् लक्ष्यीकृत्य परोक्षं यथा भवति तथा जयतीति लोका-
नां स्थाने असुरा जिता इति वदति वस्तुतस्तु तदधीना
भवति यथा बलिस्थाने तर्हि समागतेन त्वया किं कर्त्तव्य-
मित्यपेक्षायामाह । त्वामिति । त्वां संस्थाप्य सुहृच्छुचो मृजे
तर्हि समागतेन किं योगेन शास्त्रेण वा सम्यक् स्थापनं क्रियता-
मित्याशङ्क्याह । योगमायाबलमिति । योगमायाया अपि बलं यस्मात्
ज्ञानिनामपि चेतांसीति वाक्यात् योगादिभ्योऽपि योगमायैव
बलिष्ठा तस्या अपि बलं त्वत्तः स कथं योगेन वशीक्रियत
इत्यर्थः ननु पुरुषरूपं हृदये चिन्त्यतामेवं पुरा धारणयेति
वाक्यानुसारेण तत्राह । अल्पपौरुषमिति । पुरुषसम्बन्धिरूपं यस्मा-
त् ब्रह्माण्डकोटिविग्रहो भवान् अत एव त्वामेव संस्थाप्य
सकुटुम्बः कृतार्थो भविष्यामि ननु ज्ञानाभावात् तव कथं मोक्षः
तत्राह हेमूढधेति मूढेष्वपि प्रकर्षो यस्य अतः त्वं मूढानपि
कृतार्थान् करोषि इति न भक्तिमार्गे ज्ञानापेक्षेत्यर्थः । किञ्च । न
केवलमहमेव सकुटुम्बो मुक्तो भविष्यामि किन्तु सर्वे एव
भक्ता एवं कृते परमविश्वासेन कृतार्था भविष्यन्तीत्याह । त्वयि
संस्थित इति । अस्मद्धेतोः त्वयि संस्थिते सति भुजच्युतया गदया
शीर्णशीर्षणि च सति च ये तुभ्यमृषयो देवाश्च बलिं हरन्ति
चकारादन्येभ्योऽपि ते सर्वे अमूला न भविष्यन्ति सर्वे एव समू-
ला भविष्यन्तीत्यर्थः भगवांश्चेद्धृदये स्थिरो भवति तदा गदा सुषु-
म्णा नाडी गतिं दधातीति भुजानां क्रियाशक्तीनां तया च्युतिर्यथा
ब्रह्मरन्ध्रभेदे सति प्राणादीनां तेन मार्गेण गमने स्वस्य भग-
वति योगे सर्वे एव सायुज्यं प्राप्ताः समूला एव भविष्यन्तीत्यर्थः
एवमन्यपराणां शब्दानामन्यपरता योजनीया तुद्यमाना व्यथा-
युक्ता ये दैत्याः तत्सहितो भगवान् भक्तैः कृत्वा जातः अरयो दुरु-
क्तितोमरा येषामिति येषां परभेदकान्यसद्वाक्यानि कदापि न सन्ति
हि भक्ता नारदादयः तैः कृत्वा हिरण्याक्षादिसहितो भगवान्
जात इति तत्सम्बन्धेन स्वविस्मरणं भवतीति भूमेः भयं
दंष्ट्रायाश्च यमत्वात् तदन्ते स्थिता अपि भगवद्दृष्ट्यभावे पुनः
यमो ग्रसिष्यतीति दैत्यभाव एव तेषां तोदात्मकः तं भगवान्
वस्तुतो न सहते तेषां तद्भावदूरीकरणार्थं यदि दृष्टिर्व्यापृता
तदा भूमेर्भयं भविष्यतीति तेषां तोदं सहन्नेवाम्बुमध्यान्निर्गतः
जले ते यद्यपि संस्कर्तव्याः ननु किमिति तथा कृतवानित्या-

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

दृष्टान्तमाह। ग्राहेणाहतः तंगृहीत्वैव यथा करेणुसहितो महागजः गजस्तु कालाधीन एवेति ग्राहास्तत्र वाधका भवन्ति तेचेदवाधकास्तदा करेणुभिः सहितो मोदत इति दैत्यत्वं भगवतो न बाधकमिति सुखक्रियासाधकत्वात् सेवकस्त्रीसहित एव निर्गत इत्यर्थः॥ ७॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

असुरस्य वराहस्याप्युक्तिप्रत्युक्त्यनन्तरम्।
अष्टादशे गदायुद्धं ब्रह्मभीतिदमुच्यते॥ ०॥

प्रतियोद्धारं श्रुत्वा महामनाः सोत्साहचित्तः शयिष्यसे इति प्रशान्तय इति यदुक्तं तत् खलु स्ववधस्यासम्भवत्वाभिश्रयात् विगणय्य अगणयित्वा तमहं क प्राप्स्यामीत्यन्विष्यन् दैवात् पुरोऽग्रणनारदात् पृष्टात् हरेर्गतिं गमनं विदित्वा रसातलं गर्भोदमेव प्रविवेश॥ १॥

पूर्वोक्ते वराहचरिते युद्धलीलाविशेषतो न विवृतेति तां विवरीतुमाह। ददर्शेत्यादि। अभितो जयतीत्यभिजित्तम् अभिजिन्नक्षत्राधिदैवतं वा। प्रकर्षेणोर्ध्वं नीयमाना अवनिर्येन तं। स्वरुचः हिरण्याक्षतेजांसि वनगोचरः वारिचरः। हिरण्याक्षेनाभिक्षेपार्थं प्रयुक्तापि सरस्वती वस्तुतो भगवन्तं स्तौति। वनगोचरः जलशयनो नारायणः स एव मुनिभिर्मृग्यत्वान्मृगः यद्वा वने विविक्तारण्ये एव नतु ग्रामे भवद्भिर्दर्शनार्हत्वाद्वनगोचरः॥ २॥

विश्वसृजा ब्रह्मणा रसौकसां विमुक्तिपरिणामेन रसौकोभ्य एवार्पिता अन्यथा पाताळावतरणमस्या न घटत इति भावः ईक्षतः ईक्षमाणं मामनादृत्य अनया सह पक्षे न विद्यते श्रो यस्मात् हे सर्वश्रेत्यर्थः। नो इति निषेधे महीं मा विमुञ्चेत्यर्थः। हे विश्वसृज इशुपधत्वात् कः इयं मही अर्पिता तुभ्यमुपहारीकृता न केवलमियमेव किन्तु नोऽस्माकं स्वस्ति मङ्गलं राज्यादिकमनया सहैव यास्यसि प्राप्स्यसि नः स्वस्तीति अनंचिचेति वा शरीति च सकारद्वयसिद्धेर्व्याख्याद्वयं ननु कस्मान्मह्यं महीं ददासि तत्राह। मम ईक्षतः ईक्षणं तस्मात् मत्कर्मकात् कृपावलोकादीदृशाद्धेतोरित्यर्थः। सुराधमा यस्मात् हे सुरोत्तम आसादिता प्रापिता स्वभक्तेभ्यो दत्ता सेवार्थं शूकराकृतियेन॥ ३॥

सपत्नैर्देवैर्नोऽस्माकमभवाय नाशाय त्वं भूतः किं पालितः यो माययैव हन्ति अतः परोक्षं जयति नतु साक्षात् तं त्वां योगमायैव नतु दैहिकं बलं यस्य तं संस्थाप्य हत्वा सुहृदां शुचः शोकाश्रूणि प्रमृजामि पक्षे अभवाय मोक्षाय भूतः धृतः आश्रित इत्यर्थः। किन्तु मायया कृपया असुरानपि यो हन्ति स्वकर्तृकहननेन तेषामपि सद्गतिं करोति। अत एव कृपाधिक्यादेव परोक्षोऽपि सर्वेषां प्रत्यक्षीभूतोऽपि जयति देवतान्तरेभ्योऽल्पसाधनैनैव प्रत्यक्षीभूतेभ्योऽपि बहुतरसाधनैरप्यसाक्षाद्भूतस्त्वं तेभ्यः सर्वेभ्य उत्कर्षेण वर्त्तस इत्यर्थः। योगमायारूपमचिन्त्यं बलं यस्य तमल्पपौरुषं पुरुषस्य महत्स्रष्टुः कर्म पौरुषं विश्वसृष्ट्यादि तदपि अल्पमनंनुरूपं यस्य तं त्वां सम्यक् स्थापयित्वा स्वहृदयेमन्दिरे भक्त्या स्थिरीकृत्येत्यर्थः। हे मूढप्र! मूढान् प्राति स्वभक्तिदानेनाप्याययतीति तथा। प्रा पूर्त्तौ सुहृदः शुचः संसारदुःखानि मृजे नाशयामि यतस्त्वं स्वमतुर्वान्धवानपि मोचयसीति भावः॥ ४॥

संस्थिते मृते सति न भविष्यन्ति मरिष्यन्ति पक्षे अस्मद्भुजच्युतयापि गदया अर्शीर्णा शीर्षं यस्य तस्मिन् संस्थिते सति ये तुभ्यमधुना बलिं हरन्ति नवीना भक्ता येच पूर्वे भक्ता ऋषयो देवाश्च ते सर्वे स्वयमेव उद्यमं विनैव अमूला न भविष्यन्ति किन्तु दृढमूला एव भविष्यन्तीत्यर्थः॥ ५॥

स हरिः अरेरसुरस्य दुरुक्तितोमरैस्तुद्यमानः पक्षे हरिदुरुक्तितोमरैरेव निमित्तभूतैस्तुद्यमानः यथाश्रुतार्थत्राह्मणीयां ब्रह्मादीनांव्यथां दृष्ट्वा अनुकम्पया पीड्यमान इत्यर्थः। तोदपाक्षिकदुरुक्तिव्यथां मृषन् पाक्षिकसूक्तसुखं प्राप्त्या सहमान इत्यर्थः। अत एव ग्राहेणा आहतः अहतश्च करेणुर्हस्तिनी॥ ६॥

तं भगवन्तमनुद्रुतांऽनुधावद् गतह्रियां निर्लज्जानामसतामवीराणां किं विगर्हितमपितु नैव निन्दा प्रतियोद्धारं दृष्ट्वा पलायनं न युक्तमित्यर्थः। पक्षे गता प्राप्ता ह्रीर्यैस्तेषां ह्रीमनां नसन्तो येभ्यस्तेषां कृपालूनां किं विगर्हितमपितु कृपालुत्वात् दंष्ट्राश्रितभूरक्षणार्थं किञ्चित्पलायनमपि न निन्दितमित्यर्थः। यद्वा लोकोपकाराय भुवमुद्धरतो भगवतोऽनुद्रवणमनुचितं मन्वानो दैत्य आत्मानमेवाधिक्षिपति गतह्रियां स्वार्थैकपराणानामसतामस्माकं किं विगर्हितमस्ति अपितु नास्त्येव धिगस्मानित्यब्रवीदित्यर्थः॥ ७॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अष्टादशे श्रीवराहहिरण्याक्षयोर्युद्धं वर्णयति अयं संयुगेत्वां रणमार्गकोविदम्। अराधयिष्यतितिवं जलेशभाषितं श्रुत्वा महामनाः हृष्टचित्तःशयिष्यते वीरशये श्वभिर्वृत इति तन्नापितं विगणय्यागणयित्वा यतो दुर्मदः हरेः गतिं मार्गम्॥ १॥

अग्रदंष्ट्रया दंष्ट्राग्रेण स्वस्य दैत्यस्य रुचः कान्तीः मुष्णन्तं चोरयन्तंददर्श अहोवनगोचरो मृगः जलचरोचराह इतिजहासच॥ २॥

आसादिता गृहीता सूकराकृतिर्येन हे आसादितसूकराकृते!॥ ३॥

यः मायया दम्भेन हन्ति सः विष्णुः किन्त्वमभवाय असमृद्धये भृतः पुष्टोऽसि॥ ४॥

त्वयि मूलभूते अत्र एहि अज्ञ इत्यादि भाषणमासुरभावमूलम् विष्णुः सर्वमूलमित्यादिज्ञानन्तु मावोऽनुतापकलया भगवत्स्मृतिदिनः शापोस्त्वेदितिप्रार्थनयेतिदिक्॥ ५॥

गाम् भूमिम्॥ ६॥ ॥ ७॥

---

भाषाटीका।

मैत्रेयजी बोले इस प्रकार से वरुण के कथन को श्रवण करके बड़ा उत्साही हिरण्याक्षविष्णुको कुछ न गिनकर बड़ा अभिमानी जाते हुये रस्ता में नारदजी से विष्णुका खबर पाकर जल्दी से पाताल में पैठ गया॥ १॥

उहां पर सब के जीतने वाले पर्वत के से आकार वाले दंत के अग्र भाग में पृथिवी को धारण किये अपनी लाल वर्ण कांति वाले नेत्र से अपने तेज को नाश करते आते हुये वराह भगवान को देखकर बोलने लगा अहो य बनवासी मृग है; सो जल में कैसे आया है॥ २॥

उनसे बोला हे अज्ञ! मेरे को पृथिवी छोड़दे ब्रह्माने पाताल वासी हम लोगों को यह पृथिवी दी है हे सुराधम! हे सूकर मूर्ति मेरे देखते हुये इस पृथिवी को लेकर तुम कल्याण से नही जाओगे॥ ३॥

स गामुदस्तात् सलिलस्य गोचरे विन्यस्य तस्यामदधात् स्वसत्त्वम् ।
अभिष्टुतो विश्वसृजा प्रसूनैरापूर्यमाणो विबुधैः पश्यतोऽरेः ॥ ८ ॥
परानुषक्तं तपनीयोपकल्पं महागदं काञ्चनचित्रदंशम् ।
मर्माण्यभीक्ष्णं प्रतुदन्तं दुरुक्तैः प्रचण्डमन्युः प्रहसंस्तं बभाषे ॥ ९ ॥

॥ श्रीभगवानुवाच ॥

सत्यं वयं भो ! वनगोचरा मृगा युष्मद्विधान् मृगये ग्रामसिंहान् ।
न मृत्युपाशैः प्रतिमुक्तस्य वीरा विकत्थनं तव गृह्णन्त्यभद्र ! ॥ १० ॥
एते वयं न्यासहरा रसौकसां गतह्रियो गदया द्राविताස्ते ।
तिष्ठामहेऽथापि कथञ्चिदाजौ स्थेयं क्व यामो बलिनोत्पाद्य वैरम् ॥ ११ ॥
त्वं पद्रथानां किल यूथपाधिपो घटस्व नोऽस्वस्तय आश्वनूहः ।
संस्थाप्य चास्मान् प्रमृजाश्रु स्वकानां यः स्वां प्रतिज्ञां नातिपिपर्त्यसभ्यः ॥ १२ ॥

भाषाटीका ।

क्या तुमको हमारे शत्रुओं ने देवतों ने पैदा किया है जो कि तुम छिप करके असुरों को मारते हो हे मूढ योगमाया का बल रखने वाले अल्प पौरुष वाले तुमको मैं मारकर अपने सुहृदों के आसुओं को पोछूंगा ॥ ४ ॥

मेरी हाथ से चलाई जो गदा तिससे तुमारे मस्तक के स्पर्श से जब तुम अदृश्य होजाओगे तब तुमारी भेट पूजा करने वाले जो देवता ऋषि लोग सोभि बिना जड़के होजाने से नष्ट होजायंगे ॥ ५ ॥

परुष वचन रूपी शस्त्रों से जब भगवान व्यथा को प्राप्त हुये अपने दंत के अग्रमें जब पृथिवी को डरती हुई देखा तब उसके वचनको सहते हुये भगवान् जलके मध्य में से निकले जैसे ग्राहके चोट मारने से हथिनीओं के सहित हाथी निकले ॥ ६ ॥

उनको जल मे से निकलते देखकर हिरण्याक्ष दौडा जैसे हस्ती के पीछे मगर दौडे फिर बोला जिन लोगों को लाज नहीं है असत्पुरुष हैं उनको क्या निंदित है तुमै युद्ध मे से भगतेहो ॥ ७ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ॥

स भगवान्विश्वसृजाऽभिष्टुतोविबुधैश्च प्रसूनैरापूर्यमाणः पाठान्तरे विश्वसृजां प्रसूनैर्विबुधैर्रभिष्टुतइति सलिलस्योदस्तादुपरि व्यवहारगोचरे देशे गां पृथ्वीं विन्यस्य तस्यां स्वसत्त्वमाधारशक्तिं निहितवान् अरेस्तस्य पश्यत एव ॥ ८ ॥

परा पराक् पृष्ठतोऽनुषक्तं लग्नम् तपनीयोपकल्पं सुवर्णाभरणम् काञ्चनमयश्चित्रो दंशः कवचं यस्य तं दैत्यम् प्रचण्डमन्युत्वमधिक्षेपादिकं चानुकरणमात्रं दैत्यवाक्यभीतानां देवानां भयनिवृत्तये वस्तुतस्तेन तथाऽनुक्तत्वेन कोपादिहेत्वभावात् ॥ ९ ॥

ग्रामसिंहान् शुनः प्रतिमुक्तस्य बद्धस्य विकत्थनं श्लाघाम् ॥१०॥

न्यासहरा निक्षेपहरा द्राविताः पलायनं कारिता अथाप्यसमर्था अपि तिष्ठाम तत्किम् यतः स्थेयं स्थातव्यमेवास्माभिः तत्किमित्यत आह । क्यामः गन्तव्यदेशाभावात् ॥ ११ ॥

पद्रथानां पदातीनां ये यूथपास्तेषामधि मुख्यइत्यर्थं अस्वस्तये पराभवार्थमाशु घटस्व यतस्व अनूहो निर्वितर्कःयो नातिपिपर्ति नपूरयति पालयति वा असावसभ्यः सभायामनर्हः ॥ १२ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

विश्वसृजा ब्रह्मणा विश्वसृजामिति पाठे मरीच्यादीनां पुष्पैरापूर्य्यमाणः पश्यत एव तमनादृत्येत्यर्थः ॥ ८ ॥

वस्तुतः भारतीकृतस्तुतिपक्षे तेन हिरण्याक्षेण तथाधिक्षेपपरतयानुक्तत्वेन कोपादीत्यादिना भगवत्कर्तृकाधिक्षेपपरिग्रहः एवश्च सप्तमे श्वित्रो न जातो जिह्वायामित्यादिना श्रीयुधिष्ठिरेण तद्दुरुक्तिनिन्दनन्तु अनुकरणमात्रमेवाश्रित्य लोकशिक्षार्थमेवेति सर्वमनवद्यम् ॥ ९ ॥

सत्यमित्यादिभगवद्वाक्येऽधिक्षेपपरता तु देवानां सन्तोषार्थे स्फुटैव वास्तवार्थश्चायं तत्र वनगोचरमृगपदयोर्व्याख्यानन्तु तद्भारतीस्तुतिपक्षे कृतमेवेतीतरेषां यथा ग्रामसिंहान् ग्राम्यविषयिश्रेष्ठान् मृगये मृगयामहे मोचयितुमिति शेषः नानावतारदृष्ट्या बहुवचनं हेऽभद्र ! अमङ्गलविषयासक्त न गृह्णन्ति किन्त्वनुग्रहमेव कुर्वन्ति ॥ १० ॥

रसोभक्तिरस एवौको निवासो येषां भक्तानां ते न्यासो भावेनात्मनिवेदनन्तं हरन्ति स्वीकुर्वन्तीति तथा अत एव ऋणित्वेन गतह्रियः प्राप्तलज्जाः यद्यपिप्रातिकूल्येन ते गदया द्राविता अथापि पूर्वभक्तवात्सल्येन तिष्ठामहे मोचितुं स्वशक्तिवैभवं प्रकाशयामह इत्यर्थः प्रकाशनार्थे तिष्ठतेरात्मनेपादत्वात् मत्तं तु मे इत्युक्तत्वात्स्वाभीप्सिते संग्रामे कथंचित्स्थेयमेव बलिना स्वपार्षदेन त्वया सह स्वेच्छया वैरं द्वेषाभासमुत्पाद्य मुक्तिमदत्वा क्यामःयथा पूर्वं पार्षदत्वमाविर्भावयिष्याम एवेत्यर्थः ॥ ११ ॥

नोऽस्माकं पद्रथाः पार्षदास्तेषां मध्ये असूनां प्राकृतप्राणानां अस्तये त्यागाय यतस्व संस्थाप्य हृदये सम्यक् स्थापयित्वा स्वकानां समानजातीयपार्षदानामश्रु अहोऽत्रत्योऽपि कृगत इति शोकं प्रमृज योनातिपिपर्ति स एवासभ्यः भवांस्तु सभ्य एव तथा कर्त्तुं स्वयमुपस्थितत्वात् ॥ १२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स भगवान् सलिलस्योदस्तादुपरि गोचरे व्यवहारगोचरे देशे गां भूमिं विन्यस्य विनधाय तस्यां गावि स्वसत्त्वं स्वबलरूपामाधारशक्तिमदधात्निहितवान् अरेः शत्रोर्हिरण्याक्षस्य पश्यतः सतः विश्वसृजा ब्रह्मणाऽभिष्टुतः त्वया साधु कृतमित्येवमुक्तः विबुधैर्देवैः कर्दृमिः प्रसूनैः पुष्पैः करणौरापूर्यमाणः विकीर्यमाणः । यद्वाभिष्टुतः तं हिरण्याक्षं बभाषे इत्युत्तरेणान्वयः ॥ ८ ॥

परानुषक्तं परा पृष्ठतोऽनुषक्तमनुलग्नमनुद्रुतं तपनीयं सुवर्णं तन्मयान्युपकल्पानि भूषणानि यस्य तं महती गुर्वी गदा यस्य तं काञ्चनमयं चित्रं दंशं यस्य तं दुरुक्तैर्दुर्वाक्यैरभीक्ष्णं पुनः पुनः मर्माणि प्रतुदन्तं व्यथन्तमसुरं प्रति प्रचण्ड उत्कृष्टः मन्युः क्रोधो यस्य सः भगवान्प्रहसन्सन् बभाषे उवाच सोपालम्भमिति शेषः ॥ ९ ॥

तद्वचनमेवाह । सत्यमिति । भो ! असुर ! वयं वनगोचराः मृगा इति यदुक्तं तत्सत्यमेव किन्तु युष्मद्विधान् भवादृशान् ग्रामसिंहान् शुनः मृगयन् मृगः अन्वेषयन्मृगयितुमहं मृगो जात इत्यर्थः मृगय इति पाठे तु मृगये ऽन्वेषयामीत्यर्थः मृत्योः पाशैः प्रतिमुक्तस्य बद्धस्य तवामद्रमसङ्गलं विकत्थनं श्लाघनं वीराः शूरा न गृह्णन्ति नाभिनन्दन्ति मृत्युपाशैः प्रति मुक्तस्येतिहेतुगर्भं मृत्युपाशप्रतिबद्धत्वाद्विकत्थनं तव गृह्णन्तीत्यर्थः ॥ १० ॥

तदुक्तिं विपर्यये पर्यवसाययन्नाह । रसौकसां रसातलवर्तिनां युष्माकं व लवर्जिता न्यासहरा एते वयं न्यस्यन्ति निक्षिपन्ति पादावस्मिन्निति न्यास आधारः भवतामाधारभूहरा वयं अयं काकुः नहीयं भूमिः रसातलवर्तिनां न्यास इत्यर्थः एते वयं गतलज्जाः ते त्वया कर्त्रा गदया द्राविताः धाविताः अयमपि काकुः अस्माभिरेव यूयं द्रावयिष्यन्त इत्यर्थः अथापि गदया द्राविता अपि कथंचित् केनापि प्रकारेणाजौ तिष्ठामहे स्थातुमिच्छामहे बलिना त्वया सह वैरं विरोधमुत्पाद्य क्वयामः क गमिष्यामः अत्रापि भवदपेक्षया विलक्षणेनैव प्रकारेणाजौ तिष्ठामहे स्थातुमिच्छामहे बालिभिरस्माभिर्वैरंबधमुत्पाद्य क यास्यसीति विपर्यये पर्यवसानमभिप्रेतम् ॥ ११ ॥

त्वमिति । पद्रथानां पदातीनां ये यूथपास्तेषामधिपस्त्वं नोऽस्माकमस्वस्तयेपरिभवायाशु घटस्व यतस्व अनूहः अशङ्कस्त्वमस्मान्संस्थाप्य हत्वा स्वकानामश्रूणि प्रमृज यः पुमान्स्वप्रतिज्ञां नाति पिपर्ति न पूरयति प्रतिज्ञातार्थानिवर्तनेन न समापयति स असभ्यः सभायामनर्हः अत्रापि त्वं पद्रथानामित्यादिशब्दानां विपर्ययपर्यवसायित्वं भगवतो ऽभिप्रेतम् ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

त्रिलोक्यामेकीभूयागतायामप्यविभ्यतो हरेः किमेकेन हिरण्याक्षेणानुयातेनेति भावेन भूमेः प्रतिष्ठापनप्रकारं वक्ति । स गामिति । गां भूमिमुदस्तादुपरि गोचरे अदूरप्रदेशे स्वसत्त्वं स्थैर्यलक्षणं स्वबलम् ॥ ८ ॥

अथ जले भूमिं प्रतिष्ठाप्य पृष्ठतोऽनुद्रुतं रिपुमविगणय्य हरिणा किं कृतमत्राह । परानुषक्तमिति । परानुषक्तं पृष्ठतोऽनुगतं तपनीयोपकल्पा सुवर्णाभरणभूषिता महती गदा यस्य तथा तं काञ्चनैराभरणैश्चित्रितान्यलंकृतान्यङ्गान्यवयवा यस्य स तथा तं प्रहसितेनेन वाह्यकोपलक्षणं निरुणद्धि इदं महतां लक्षणम् ॥ ९ ॥

किमाहेत्यत आह । सत्यमिति । जलशायित्वाद्वनगोचरा जलविषयाः ज्ञानिभिर्मृग्यत्वात् मार्गणाच्च मृगा इत्येतत्सत्यं तत्र केषां मार्गणं क्रियत इत्यत उक्तम् । युष्मद्विधानिति । ग्रामसिंहान् शुनः मृत्युपाशैः प्रतियुक्तस्य बद्धस्य पुंसो विकत्थनमसंबद्धभाषणम् ॥ १० ॥

न्यासहरा निक्षेपहारिणः रसौकःसुस्थितेषु कथं निक्षेपापहरणमित्यत उक्तं गतह्रिय इति । तद्वद्गतह्रीत्वेन भवानपि द्रवति चेत्तुल्यः समाधिरित्यत उक्तं तिष्ठामह इति । बलिना रिपुणा वैरमुत्पाद्य कथंचिदाजौ स्थेयं स्यातव्यं क कुत्र यामो गन्तव्यप्रदेशाभावात् अथ तस्मात्तिष्ठामहे आत्मानं प्रकाश्य स्थितिं कुर्मः प्रकाशनस्थेयाख्ययोश्चेति सूत्रादात्मने पदप्रयोगः ॥ ११ ॥

नाहं बलीति नेत्याह । त्वमिति । रथानामिति । रथिनो लक्ष्यन्ते रथानां रथिनां यूथपाधिपस्त्वं नोऽस्मान् अस्वस्तये नाशाख्यामङ्गलायाधुद्वहः द्रोहमकार्षीरिति यत्तत् किल क्रीडनमसुराणां हिंसनं विहारस्वभावो ह्यतो युद्धाय घटस्वेत्यन्वयः । किल श्वैत्यक्रीडन इति धातुः । ततः क फलमत्राह । संस्थाप्येति । इयं तव प्रतिज्ञा अस्या अपालने तवाप्रशस्तकर्मत्वं स्यादित्याह । यः स्वामिति । अतिपिपर्ति प्रशस्य पालयति । पृपालनपूरणयोः । अतिः स्यादधिकार्थोक्तौ प्रशंसायामतिक्रम इति ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

परानुषक्तेति । अत्रापि तद्वत् । अग्रिमाध्याये करालेत्यादावपि । तथापि सप्तमस्कन्धे यच्छ्रीयुधिष्ठिरेण तद्दुरुक्तिनिन्दनं श्रीनारदेन च भगवतस्तदस्पृश्यतया सिद्धान्तितं तदौपाधिकानुकरणमात्रमवलम्ब्येति ज्ञेयम् ॥ ९ ॥

सत्यमित्यादि श्रीभगवद्वाक्यानि च केवलोपाधिदृष्ट्या तानि चोपहासपराण्यपि वास्तवार्थमपि वहन्ति । तत्र वनगोचरत्वमेकान्तवासत्वं ज्ञेयम् । तथापि कृपया युष्मद्विधान् ग्राम्यविषयासक्तश्रेष्ठान् मृगये मृगयामहे मोचयितुमन्वेषयामः नन्वविनीतानस्मान् कथं कृपयसि तत्राह । न मृत्स्यति ॥ १०-१९ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवमुभयसहितस्य भगवतश्चरित्रमुभयेषां हितरूपमाह द्वाभ्याम् । तमिति । प्रथमं हिरण्याक्षस्य कृतार्थतामाह । तं भगवन्तं सलिलाभिःसरन्तमनुद्रुतः यदैव भगवान् सलिलान्निर्गतः तदैव भगवत्सायुज्यार्थं सैन्धवखिल्यवत् अनुपश्चात् द्रुतः कठिनभावं त्यक्तवान् वैश्यत्वं गतमित्यर्थः यथाग्निसन्निधाने घृतं विलीनं भवति तथेति द्रुतपदं ज्ञापयति प्रातीतिकार्थे तु सङ्गे धावन् आगत इत्यर्थः ततः किञ्जातमित्याकांक्षायामाह । हिरण्य केश इति । सूर्यमण्डलस्थिता मूर्त्तिः भगवतो हिरण्यकेशरूपा भवति अतस्तादृशं रूपं गृहीतवानित्यर्थः ननु भगवत्साक्षाधमात्रेण कथमस्य दिव्यरूपप्राप्तिरित्याशङ्क्याह । ग्निरदं गजेन्द्रमनु यथा भषः हूहूगन्धर्वो दिव्यरूपं प्राप्तवान् तथेत्यर्थः । प्रासङ्गिकं फलमेतज्जातमित्युक्तमुत्तमं फलं वक्ष्यति सायुज्यात्मकं ननु तस्य मृत्युः किं जात इत्याशङ्क्याह । करालदंष्ट्र इति । करालेषु दंष्ट्रा यस्येति । करो भगवदीयः अलं येषां भगवद्बुद्ध्याः तेष्वेव दंष्ट्रारूपो यमो गत इत्यर्थः अथवा करालेषु सुदर्शनादिष्वेवास्यापि मृत्युः स्थितः ननु बाधका प्रहाः किं जातास्तत्राह । अशनि निःस्वन इति । अशनिरहितानामदुष्टानां ग्रहाणां नितरां स्वनो

## श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यत्र सर्व एव शुभग्रहा एकीभूता इति ग्रहदोषो निवृत्त इत्यर्थः अत एव भगवन्तं प्रत्याह । गतह्रियामिति । ह्रीशब्देन देहाद्यभिमानरूपा सर्व एव धर्मा उक्ताः तु शब्देन तेषां पूर्वधर्मराहित्यमुक्तम् एवमुक्तजीवानां निस्त्रैगुण्ये विचरतां किं विगर्हितामिति प्रश्नार्थः तत्राप्यकृष्णाः तस्य सतां परमभक्तानां यद्यपि निस्त्रैगुण्यास्तथापि भक्तिविरोधिनः पदार्थाः कर्त्तव्याः नवेति सन्देहात् प्रश्नः प्रतीयमानपक्षे तु शीघ्रं भगवन्तमनुद्रुतः तस्य तथा सामर्थ्यसूचकं हिरण्यकेश इति तस्य गतिप्रतिबन्धकोऽपि जात इति दृष्टान्तः ननु युद्धार्थिनो युद्धादाने कथं क्रोधस्तत्राह । करालदंष्ट्रा यस्येति स्वभावतः क्रोधयुक्त इत्यर्थः अनेन मारयितुमेव प्रवृत्त इत्युक्तं भवति तथापि स्वस्य वीर्यगर्वात् मारणमकृत्वैव मम वचनमेव वज्रतुल्यमिति दुष्टेनैव वचनेन तथोक्तवानित्याह । अशनि निःस्वनो ब्रवीदिति । आहूतो न निवर्त्तेतिशास्त्रात् युद्धार्थमाकारितस्य पलायनं शूराणां लज्जाजनकमपि भवति अतो मुख्यधर्मलज्जापरित्यागे केवलं प्राणरक्षकाणां किं विगर्हितमित्युपहासः असत्पदेन धर्मराहित्यमप्युक्तम् अनेन स्वानिवृत्त्यर्थं युद्धायोग्यता निरूपिता अत एव भगवान् सनिवर्तिष्यत इति तदा क्षेपकाणि वचनान्युक्तवान् यथा न निवर्त्तते एवमुक्तो भगवान् शीघ्रं भूमिस्थापनकार्यं कृतवानित्याह सगामुदस्तादिति। स भगवान् सलिलस्य उदस्तात् उपरिगोचरे निर्भयदेशे तत्रैव हि गावश्चरन्तीति वैकुण्ठे वा स्थित्वा यत्पश्यति तत्स्थानं गोचरमित्युच्यते ज्योतिर्मण्डलमध्ये वा अत एव तत्रान्तिप्रकाशः तादृशे स्थाने गां विन्यस्य तत्स्थानरक्षकदेवेषु न्यासमिव स्थापयित्वा तस्यां देवानां भगवदीयमिदमिति ज्ञापनार्थं स्वसत्त्वमदधात् अत एवास्यां पृथिव्यां सर्वत्र भगवन्मूर्त्तयः भगवद्गुणाश्च तिष्ठन्ति स्वसत्त्वं नाम शुद्धं सत्त्वगुणं तदेव हि धारकं सामर्थ्यरूपं च एवं कृते देवानां सन्तोषो जात इति तैः स्तोत्रं पुष्पवृष्टिश्च कृतेत्याह । अभिष्टुत इति । विश्वसृजा अभिष्टुतः विबुधैः प्रसूनवर्षैश्चाभिवर्षितः उभयमुभयेषां वा पूर्वं हिरण्याक्षस्य युद्धाकरणे अवज्ञा जातातां निराकर्त्तुमाह । पश्यतोरेरिति । उत्कर्षो ह्यरिदृष्टः परममुत्कर्षं सम्पादयतीति च स्तुतिपक्षे किमिति देवैरभितः स्तुतः पुष्पवृष्टिश्च कृतेत्याकांक्षायामाह । अरेः पश्यत इति । नैतत् स्तोत्रादिकं काम्यं नित्यत्वाद्यातिरिक्तमतो नैमित्तिकमिति ज्ञापयितुं निमित्तद्वयं निर्दिशति भूमौ समागतायां सर्वत्र यागादिधर्मा भविष्यन्ति ते सर्वे द्रष्टव्याः तथानुग्रहार्थं स्तोत्रकरणं पश्यतो हेतोः स्वस्यैव रूपं पश्यद्भविष्यतीति स्तुत्या प्रसन्नः तथा करिष्यति प्रसूनवृष्टिश्च अरेर्हेतोर्देवानां शत्रुभयं महत्तद्व्यावृत्त्यर्थमस्माःसमृद्धिर्भवत्विमित्तेति ज्ञापयितुं तथा करणम् ॥ ८ ॥

भगवानेवं भूमिं कृतार्थां कृत्वा भक्तहिरण्याक्षप्रश्ने उत्तरं दातुमुपक्रमं कृतवानित्याह। परानुपक्तमिति । ननु भगवान् किमर्थमुत्तरं प्रयच्छति इत्याशङ्क्याह । परानुपक्तमिति । परस्मिन् ब्रह्मण्यनुपक्तं यो हि सन्मार्गे गन्तुमिच्छति स उपदेष्टव्य इत्यर्थः ननु तथापि भगवदुक्तं न ग्रहीष्यतीत्याशङ्कां वारयति । तपनीयोपकल्पमिति । अत्यन्तं तापयोग्य उपकल्पो यस्येति तस्य देहेन्द्रियसामग्री सर्वापि परमतपसा सिद्धा अतस्ततपा एव तन्नाद्गुते किञ्च । महागदमिति महान् गदो यस्य सर्वरोगनिवर्तिका महती भक्तिस्तस्य वर्त्तत इति स एव तस्य महानगदः तथापि कालादिजनितबुद्धिदोषसम्भवात् कथमेकान्ततो वाक्यग्रहणमित्याशङ्क्याह । काञ्चनचित्रदंशमिति। काञ्चनां लौकिकीं भक्तिं प्रति विचित्रो दंशो यस्य भवता हि तथा चिह्नं कृतमस्ति येन परमा भक्तिरुत्पत्स्यते मुनीनां शापलक्षणो दंशः विचित्रो भवति देहस्थितमसमीचीनं दूरीकरोति स्वतन्त्रभक्तिं च स्थापयति लोके हि सर्पादिना दष्टो विपरीतो भवति अत एव मर्माणि स्वस्य पापच्छिद्राणि अभीक्ष्णं प्रकर्षेण तुदन्तं परममिन्द्रियनिग्रहं कुर्वन्तमतः सर्वसाधनयुक्तत्वादयमुपदेष्टव्यः नन्वीश्वरात् ज्ञानमन्विच्छेदिति वाक्यात् महादेव एव तमुपदेक्ष्यति किं स्वोपदेशेनेत्याशङ्क्याह।दुरुक्तैःप्रचण्डमन्युरिति यद्यपि महादेवो गुरुर्भवति तथापि दुरुक्तैः प्रचण्डो भवति अवाच्यानि बहूनि सन्तीति प्रकृष्टा वा चण्डिका यस्य तत्र गते सा व्यामोहयेत् लोकाश्चान्यथा वदेयुः प्रचण्डो मन्युर्यस्येति मन्युः शिवः सर्वथागुणातीतस्य भक्तिरसास्वादनं न भविष्यतीतिप्रकर्षेण हसन् व्यामोहनमपि फलपर्यवसायीति प्रकर्षः तं पूर्वप्रश्नकारिणं बभाषे उत्तरदानेन सन्देहं दूरीकृतवानित्यर्थः कथापक्षे तु भगवान् भूमिं स्थापयित्वा तद्वधं करिष्यन् वचनैः क्रुद्धं करोतीत्याह । परानुषक्तमिति । परा पृष्ठतः अनुषक्तं यदि देवानां पुरस्कारं दृष्ट्वा गच्छेत् गच्छेदेव न गच्छतीति मारणीयः ननु सर्वात्मा भगवान् कथं नोपेक्षते तत्राह । तपनीयोपकल्पमिति । तपनीयं सुवर्णमयमुपकल्पमङ्गदादिकं यस्य अनेन तस्य वाहङ्कारो निरूपितः तस्य वा उपकल्पं प्राप्तदैत्यादिसामग्री सम्यक् तपनीया अतो मारणीय इत्यर्थः युद्धयोग्योऽपि भवतीत्याह । महागदमिति । महती गदा यस्य काञ्चनं सुवर्णमयं विचित्रं दंशं यस्य स्वरक्षायां कवचं परमारणार्थं गदा परप्रोत्साहनार्थं च अभीक्ष्णं मर्माणि प्रकर्षेण तुदन्तं भक्तानुरोधेन यद्भगवान लौकिकं करोति तन्मर्मेत्युच्यते लौकिकभक्तवाक्यव्यावृत्त्यर्थं दुरुक्तैरिति एक एवार्थः सुशब्दैः अनिष्टशब्दैश्चोच्यते इष्टद्विष्टभेदेन यथा जेता यथा घातुक इति अतो निर्दुष्टपूर्णगुणा अपि भगवन्तं दुरुक्तैः उच्यमाना मर्मरूपतामापन्नाः अत एव तत्स्पर्शे तुदन्ति भगवदपकर्षं श्रुत्वा अन्तः स्थितो महादेवः तद्वधार्थं प्रचण्डो जात इति प्रचण्डमन्युरित्युक्तम् प्रहसितं युद्धसमारम्भोत्साहसूचकम् । तामिति । पूर्वोक्तदुष्टवाक्यं तमालक्ष्य बभाषे ॥ ९ ॥

शत्रुभावं पुरस्कृत्य यथा तेनावद्यान्युक्तानि तथा भगवानप्याह त्रिभिः । सत्यमिति । भो! इति सामान्यतः संबोधनं भगवद्विरोधिनो नाम न ग्राह्यमिति ज्ञापनार्थं वयं वन एव गोचरा दृश्याः न तु गृहे सत्यमेवैतत् वने जले वा तव गोचरा जाता इत्यपि सत्यं मृग इति यदुक्तं तदपि सत्यमेव मृगयन्तीति मृगाः अस्मासु सर्व एव यौगिकोऽर्थः सिद्ध्यति यतो वयं सर्वकर्त्तारः सर्वशब्दवाच्याश्च प्रकृते यदुक्तं मृगा वध्या इति तत्राप्यस्माकं योगोऽस्तीत्याह। मृगा इति।मृगयन्तीति मृगाः पारधावपि ये हन्यन्ते ते ग्रामसिंहान् मृगयन्ति श्वानो हि तन्मारकाः न हि तद्व्यतिरेके पारधिर्भवति श्वामृगग्रहणे शुचिरितिवाक्यसिद्धत्वात् परमत्र कश्चन विशेषोस्तीति सिद्धमर्थमनुवदति युष्मद्विधानिति । यादृशावयंमृगास्तादृशाएवग्रामसिंहा भवन्तीति यदि मृगत्वेन स्तूयते तदास्माभिरपि सिंहत्वेन स्तूयत इति तथा वचनं

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अथ यदि निन्दार्थमुच्यते तद्बाधितार्थत्वात् विपरीतार्थत्वाच्च तत्प्रमाणमिति न गृह्णीम इत्याह । न मृत्युपाशैरिति । देवदैत्ययोः साधारणविरोधप्रतिपादनार्थं बहुवचनम् उत्तरार्द्धे तु निन्दनं तेनैव कृतमित्येकवचनं सर्वे च निन्दिता इति देवपक्षे बहुवचनमेव यदि कोऽपि त्वद्वचनमङ्गीकुर्यात् तदास्माभिरप्यङ्गीक्रियेत अनङ्गीकारे हेतुः मृत्युपाशैः प्रतिमुक्तस्येति यथा सन्निपाती वल्गति तथा मृत्युपाशैः प्रतिमुक्तो बद्धः एकेनापि पाशेन बद्धो न मुच्यते किं पुनर्बहुभिः तस्य तस्मिन् दिवसे काल कर्मस्वभावा भगवांश्च सर्व एव मारकत्वेनोपस्थिता इति पाशबाहुल्यं प्रतिकूलतया मुक्तः प्रतिमुक्त इति किंच वीरा हि वाक्यं न गृह्णन्ति किन्तु कृतिमेव तत्रापि विकत्थनं न गृह्णन्ति युद्धभूमौ सिद्धं जयादिकमन्यत्र कीर्त्यते तत्रैव विकत्थनं कृतिविरुद्धं कोवा गृह्णीयात् तत्रापि तव एकाकिनोऽसहायस्य माहात्म्यं च चौरवदुपद्रवकर्तृत्वादित्याह । हे अभद्रेति अभद्रं पापं पाप कर्ता प्रसिद्धोऽपि अपकीर्त्तिहेतुरेव ॥ १० ॥

यदप्यधर्मैकर्तृत्वेन वयं निर्दिष्टा मह्यं विमुञ्चेति तत्राप्युत्तरमुच्यते । एते वयमिति । ये भवत्सम्बन्धिनो न्यासहराः ते वयमेते स्वरूपदर्शनेन चौरत्वं निराकृत्य प्रभुत्वं स्थापितं न तु चौरत्वस्यैवानुवादः अनेन यज्ञोऽहमित्युक्तं नवा यथोचितं कर्त्तव्यमिति निवेदनार्थः वक्रोक्तावपि सत्यत्वात् न्यासहरणस्य एतं वयमिति निर्देशः दूषणाङ्गीकारपरः स्यात् अनुवादत्वाभावात् यदप्युक्तं गतह्रियामिति तत्राह । गतह्रिय इति । युद्धमकृत्वा ये पलायन्ते विकत्थन्ते च ते गतह्रियः एतदपि सत्यमेव नाहं ह्रीमान् सेवकेन युध्यते गता प्राप्ता ह्रीर्येनेति वा त्रयो वै गतह्रिय इत्यत्र तथा निर्णयात् अन्तर्बाधहेतावपि स्वकीय एव बाधहेतुः पदार्थपरित्यागः गतह्रीत्वं बहिस्तथात्वमाह । गदया द्राविताश्त इति । अयुद्ध्यमानस्य ततोऽपसरणं पलायनमेव मृगा हि लकुटं दृष्ट्वा पलायन्त इत्युचितमेव द्रावणं लज्जाभावश्च तदनुरूप एव किमिति पलायनं न क्रियत इत्याशङ्क्याह । तिष्ठामहेऽथापीति । अथापि स्थापकत्वे विद्यमानेऽपि उत्कर्षो भविष्यतीति बुद्ध्या आजौ संग्रामे कथंचित्तिष्ठामहे कथञ्चिदिति कियत्कालं स जानाति भगवांस्तु संग्रामे बहिर्मुखानां पुरतो न तिष्ठति तथापि भक्तानां ग्लानिव्यावृत्त्यर्थं कथञ्चित्तिष्ठाम इत्यर्थः किञ्च बलिना वैरमुत्पाद्य क यामः गन्तव्यदेशाभावदपि स्थीयत इत्यर्थः बलिष्ठो हि पलायने अन्विष्यापि मारयेत् अतो निग्रहस्य सिद्धत्वात् युद्धमेव क्रियत इति कथञ्चित् स्थीयत इति वक्रोक्तिः न्यासहरणेन आज्ञाकरणेन च वैरोत्पादनम् ॥ ११ ॥

एवमुक्ते तद्बुद्धौ दीनभावः समायास्यति ततो युद्धमकृत्वैव गमिष्यतीत्याशङ्क्याह । त्वं पद्रथानामिति । पदातीनां रथानां च ये यूथपाः तेषामपि भवान् किलाधिपः पादरूपा रथा येषामिति वा अनेन यथासुखं रथबलसामर्थ्यवन्त इत्युक्तं तेषां यूथपाः सेनापतयः अतस्त्वया एकाकिना युद्धं न कर्तव्यं किन्तु सर्वैः सम्भूयागन्तव्यमिति स्वोत्कर्षः सूचितः न अस्मान् घटस्व वयमपि बहवः महिता हि महद्भिः सह युद्धं कर्त्तव्यमिति तदपि युद्धं न कौतुकरूपं किन्तु अस्वस्तये अकल्याणाय एकतरमारणस्यावश्यकत्वात् अथवा न इति सम्बध्यते तदा हि सः प्रोत्साहितो भवति विपरीतवाक्ये वेश्वनाक्तिः

उभयथाप्यस्माकं क्षतिरेव तुच्छजयात्सेवकमारणाच्च अत एव भगवता न इत्युक्तम् अस्तु यथा कथञ्चित् अनूहः सन् आशु घटस्व कस्मिन्नप्यंशे विचारो न कर्त्तव्यः ऊहो विचारः विघ्ना भावयुक्तो वा अनूहः अप्रत्यूह इत्यर्थः अतः किंस्यादत आह वक्रोक्त्या संस्थाप्य च अस्मान् चकाराद्देवानपि स्वकानाम् अश्रुप्रमृज संस्थापनमात्रेणैव अश्रूणि निवृत्तानीति कथंचित् क्लेशः स्थास्यतीति बहूनां सम्बन्धि एकमस्त्वित्युक्तं युद्धकरणपक्षे बहूनामुपकारः स्वस्य परमदर्पमारणेन मनसि हीनता युद्धे गुणान्तरमप्यस्तीत्याह । यः स्वां प्रतिज्ञामिति । यस्तु स्वस्य प्रतिज्ञामाधिक्येन न पिपर्त्ति न पूरयति स असभ्यः अतोऽस्मिन् पक्षे प्रतिज्ञापूरणात् सभ्यत्वस्य सिद्धत्वात् बहूनामुपकाराच्च युद्धं सर्वथा कर्त्तव्यमित्यर्थः ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पृथ्वीयं बिभेतीत्येतत्सहितस्य ममासुरेण सह युद्धं न साध्विति स भगवान् गां पृथ्वीं सलिलस्य उदस्तात् उपरि गोचरे स्वनयनगोचरे देशे विन्यस्य निधाय तस्यां गवि स्वमस्वं स्वशक्तिं न्यधात् यथा जले सा न मज्जेदित्यर्थः । विश्वसृजा ब्रह्मणा विश्वसृजामिति पाठे प्रजापतिभिर्विबुधैश्च प्रसूनैर्वृष्यमाणैरापूर्य्यमाणः । पश्यतः पश्यन्तमरिमनादृत्य ॥ ८ ॥

परा पृष्ठतो ऽनुपक्तं लग्नं तपनीयोपकल्पं स्वर्णालङ्कारं दंशं कवचं दुरुक्तैस्तुदन्तं ननु सूक्तैरिति भावः । अत एव दुरुक्तश्रवणेन प्रचण्डमन्युः सूक्तश्रवणेन प्रहसन् हिरण्याक्षवाक्यं सरस्वतीकृतस्य स्तुतिवचनस्य प्रतिवचनमवश्यमपेक्षत इत्यतो भगवद्वाक्येऽपि द्वितीयोऽर्थो व्याख्यायते ॥ ९ ॥

ग्रामसिंहान् शुनः वीरा अस्मद्विधाः प्रतिमुक्तस्य बद्धस्य पक्षे वनगोचराः वनस्थैस्त्यक्तविषयभोगैर्भक्तैरेव दृश्यास्तदपि कृपयैव ग्रामसिंहान् ग्रामस्था विषयसक्तास्तान्मुख्यानपि मृगये स्वपदं दातुमन्वेषयामि नन्वात्मश्लाघिनो दुर्विनीतानस्मान् कथं कृपयसीति तत्राह । वीराः अस्मद्विधा दयावीरास्तव विकत्थनं दोषं न गृह्णन्ति अत एव तव कथम्भूतस्य मृत्युपाशैः प्रतिमुक्तस्य अतिशयेन त्यक्तस्य अस्मदनुकम्पितजने मृत्योरनधिकारात् हे अभद्र ! न विद्यते भद्रं यस्मात् ॥ १० ॥

काकूक्त्या उपहसति । न्यासहरा न्यस्तवस्तुहरा द्राविताः पलायनं कारिता अथापि असमर्था अपि ननु किमनेन क्लेशेन यथेष्टं पलायध्वं तत्राह । स्थेयमेव यतः केत्यादि पक्षे रसौकसामसुराणामपि न्यासहरा भक्त्या समर्पितपूजोपहारग्राहिणः गतह्रियः भक्तवात्सल्यादेव हेतोर्नलज्जामहे इत्यर्थः । यतो गदया तव स्तुतिवाचा द्राविता द्रुतचित्तीकृता गद्गदं गदं द्रवदित्वादङ्‌ । अथापि तदपि त्वया सह आजौ युद्धेऽपि तिष्ठामहे स्वबलोद्रेकं प्रकाशयाम इत्यर्थः । प्रकाशने आत्मने पदम् । ननु हे प्रभवो वैकुण्ठं गत्वा सुखेन विराजध्वं किं युद्धक्लेशेन तत्राह । स्थेयमिति । सनकादिद्वारा अभिशापेन वैरमुत्पाद्य युद्धसुखार्थं बलिना त्वया सहाजौ स्थेयमेव क यामः ॥ ११ ॥

पद्रथानां पदातीनां ये यूथपास्तेषामधिपः अस्वस्तये पराभवार्थमाशु घटस्व यतस्व । अनूहो निर्वितर्कः । यो नातिपिपर्त्ति न पूरयति असौ असभ्यः सभायामनर्हः पक्षे त्वयैव प्रेम्णा मद्युद्धसुखोत्पादनार्थं प्रतिज्ञाय असुरभावोऽङ्गीकृतः अतो यः स्वामि-

॥ मैत्रेय उवाच ॥

सोऽधिक्षिप्तो भगवता प्रलब्धश्च रुषा भृशम् ।
आजहारोल्बणं क्रोधं क्रीड्यमानोऽहिराडिव ॥ १३ ॥
सृजन्नमर्षितः श्वासान् मन्युप्रचलितेन्द्रियः ।
आसाद्य तरसा दैत्यो गदयाऽभ्यहनद्धरिम् ॥ १४ ॥
भगवांस्तु गदावेगं विसृष्टं रिपुणोरसि ।
अवञ्चयत्तिरश्चीनो योगारूढ इवान्तकम् ॥ १५ ॥
पुनर्गदां स्वामादाय भ्रामयन्तमभीक्ष्णशः ।
अभ्यधावद्धरिः क्रुद्धः संरम्भाद्दष्टदच्छदम् ॥ १६ ॥
ततश्च गदयाऽरातिं दक्षिणस्यां भ्रुवि प्रभुः ।
आजघ्ने स तु तां सौम्य ! गदया कोविदोऽहनत् ॥ १७ ॥
एवं गदाभ्यां गुर्वीभ्यां हर्यक्षो हरिरेव च ।
जिगीषया सुसंरब्धावन्योऽन्यमभिजघ्नतुः ॥ १८ ॥
तयोः स्पृधोस्तिग्मगदाहताङ्गयोः क्षतास्रवघ्राणविवृद्धमन्व्योः ।
विचित्रमार्गांश्चरतोर्जिगीषया व्यभादिलायामिव शुष्मिणोर्मृधः ॥ १९ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

त्वादि । अत एव त्वमित्यादि नोऽस्मान् सुखयितुं चटस्व क्रियार्थोपपदस्येत्यादिना चतुर्थी । असूनामस्वस्तये स्वप्राणत्यागार्थं किं कृत्वा संस्थाप्य हृदये सम्यक् स्थिरीकृत्य स्वीयानां कानामानन्दानां सम्बन्धि अश्रु प्रमृज ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सलिलस्योदस्तादुपरि गोचरे व्यवहारार्हे देशे स्वसत्त्वमाधारशक्तिम् ॥ ८ ॥

परापृष्ठेऽनुपक्कमनुलग्नं तपनीयानि स्वर्णमयानि उपकल्पान्याभरणानि यस्य तम् काञ्चनमयः चित्रो दंशः कवचं यस्य तम् प्रचण्डमन्युर्युद्धक्रीडातुरूपः ॥ ९ ॥

प्रतिमुक्तस्य बद्धस्य ॥ १० ॥

न्यासो निक्षेपस्तद्धराः ॥ ११ ॥

पद्रथानां पदातीनाम् ॥ १२—१३—१४—१५—१६ ॥

---

भाषाटीका ॥

उन वाराह भगवान् ने शत्रु के देखते ही जल के ऊपर में पृथिवी को स्थापन किया उस में अपनी शक्ति स्थापना करी जिससे वह नहीं डूबी तब उस समय पर ब्रह्मादिक देवतों ने पुष्पों की वर्षा करी और स्तुति की ॥ ८ ॥

फिर भगवान् ने देखा कि सुवर्ण से तेज वाला बड़ी गदा वाला सुवर्ण के विचित्र कवच वाला वारम्वार पुरुष वचनों से अपने मर्मों को भेदन करने वाला हिरण्याक्ष पीछे लगा हुआ चला आता था तब भगवान् हंसकर बोले ॥ ९ ॥

श्रीभगवान् बोले कि ठीक है हम वनके मृग हैं परन्तु मैं तेरे से कुत्तों को ढूंढता हूं हे अभद्र ! मृत्यु पाशों से घिरे हुये तेरे अयुक्त वचनों को हम सरी के वीर लोग ख्याल नहीं करते हैं ॥ १० ॥

हम लोग पाताल वासियों के धरोहर वस्तु के हरने वाले निर्लज्ज हैं अब तेरी गदा से भगाये जाने परभी किसी प्रकार से खड़े हैं संग्राम में रहना चाहिये वलवान् के साथ में वैर करके फिर कहां जासकते हैं ॥ ११ ॥

तुमतौ प्यादेन के सेना के अधिपति हो हम लोगों के जीतने के लिये विना विचारे तैयार हो जाओ हमको जीतकर अपने बांधवों कि आंसू पोंछो जो अपनी प्रतिज्ञा को नहीं पाल सकता है सो सभा के योग्य नहीं रहता है ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सोऽधिक्षिप्तः सत्यं वयमिति श्लोकेन रुषा प्रलब्ध उपहसितश्च एते वयमिति द्वाभ्याम् क्रीडां कार्यमाणोऽहिरायमहासर्प इव ॥ १३ ॥

मन्युना प्रचलितानि क्षुभितानीन्द्रियाणि यस्य ॥ १४ ॥

अन्तकं मृत्युम् ॥ १५ ॥ ॥ १६ ॥

सौम्य ! विदुर ! तां गदामप्राप्तामेवाहनत् ॥ १७ ॥

हर्यक्षो हिरण्याक्षः ॥ १८ ॥

स्पृधोःस्पर्धमानयोः तिग्माभ्यां गदाभ्यामाहतान्यङ्गानि ययोः

**दैत्यस्य यज्ञावयवस्य मायागृहीतवाराहतनोर्महात्मनः ।
कौरव्य ! मह्यां द्विषतोर्विमर्दनं दिदृक्षुरागादृषिभिर्वृतः स्वराट् ॥ २० ॥**

### श्रीधरस्वामिकृतभावार्थदीपिका ।

क्षतादास्रवतीति क्षतास्रवं रुधिरं तस्य घ्राणमवघ्राणं तेन विवृद्धो मन्युर्ययोः विचित्रान्मार्गान्गदायुद्धभ्रमणभेदान् इला गौस्तस्यां निमित्तभूतायां शुष्मिणोर्मत्तयोर्वृषभयोः प्रस्तुतेऽपि इला पृथ्वी तदर्थं वृषभौ हि खलु बहूनि दिनानि संग्रथितोत्तुङ्गश्रृङ्गसङ्घर्षविदीर्णाङ्गगलद्रुधिरौ परस्परोपमर्दव्यग्रोग्रसंरम्भौ चमत्कारितगजयूथपौ युध्यमानौ तिष्ठत इति प्रसिद्धम् ॥ १६ ॥

यज्ञा एवावयवा यस्य तस्य च मह्यां महीनिमित्तं द्विषतोः एवंविधं विमर्दनं युद्धं दिदृक्षुः स्वराट् ब्रह्मा तत्रागात् ॥ २० ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

अधिक्षिप्तत्वादिकं द्वैचप्रतीत्यभिप्रायेणोक्तं वस्तुतस्तु पार्षदत्वाधिकारप्राप्त्यर्थं प्रयुक्तः रुषा लीलार्थं स्वेन प्रकर्षेण प्राप्तेति व्याख्येयम् आजहार प्राप ॥ १३ ॥

अमर्षितोऽसहिष्णुः ॥ १४ ॥

योगारूढ ऐच्छिकमृत्युः ॥ १५ ॥

संरम्भात्क्रोधात् ॥ १६ ॥

ततश्चाभिधावनानन्तरं सौम्येति तस्योग्रत्वं गृणिवत्स्यभिप्रायात् भुवमप्राप्तामेव गदया स्वगदया ॥ १७ ॥

हर्यक्षः हरितनेत्रः लोके तथाभूतस्य परमदुष्टत्वप्रसिद्धेः ॥१८॥

रुधिरं चात्र दैत्यस्यैव भगवदङ्गे संलग्नमिति तेन संरम्भावेशेन स्वीयत्वमेव तत्रानुमतमिति तदवघ्राणस्य मन्युहेतुत्वं ज्ञेयम् ॥ १९ ॥

मायया कृपया गृहीतत्वं प्रपञ्चे प्रत्यानीतत्वम् ॥ २० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भगवताधिक्षिप्तः तिरस्कृतः उक्तरीत्या सः रुषा भृशं प्रलब्धः प्रहसितश्चासुरः उल्वणं क्रोधमाजहार स्वीकृतवान् चुक्षोभेत्यर्थः यथा क्रीड्यमानः अहिराट् सर्पश्रेष्ठः तथेति दृष्टान्तः ॥१३॥

अमर्षितः क्रुद्धः अत एव निश्वासं सृजन् अत एव मन्युना प्रचलितानीन्द्रियाणि यस्य स दैत्यः आसाद्य समीपमागत्य तरसा बलेन गदया हरिमभ्यहनत् ताडितवान् ॥ १४ ॥

भगवांस्तु रिपुणासुरेण उरसि विसृष्टं गदाया वेगं तिरश्चीनः तिर्यग्गमनः सन् अन्तकं मृत्युं योगारूढः निष्पन्नयोगीवावञ्चयत् परिहृतवानित्यर्थः ॥ १५ ॥

पुनस्तामप्राप्तामेव गदामादायाभीक्ष्णशःपुनःपुनर्भ्रामयन्तमसुरं प्रति क्रुद्धो हरिरत एव संरम्भात् क्रोधाद्दष्टदच्छदः दष्टाधरः अभ्यधावत् अभिमुखमगात् ॥ १६ ॥

ततः अभिधावनानन्तरं प्रभुर्भगवान् स्वगदयारातिं शत्रुं दक्षिणस्यां भुवि दक्षिणपार्श्वे आजघ्ने प्रजहार हे सौम्य ! विदुर ! सत्वसुरः कोविदः गदायुद्धे कुशलोऽतएव तां स्वदक्षिणस्यां भुवि हरिणा युक्तामप्राप्तामेव गदयाभ्यहनदाजघ्ने ॥ १७ ॥

हर्यक्षो हिरण्याक्षः हरिश्च सुसंरब्धौ जिगीषयान्योऽन्यं जेतुमिच्छया गुर्वीभ्यां गदाभ्यामन्योऽन्यं परस्परमभिजघ्नतुः ॥ १८ ॥

तयोर्हर्यसुरयोः स्पृधोः स्पर्धमानयोः तिग्माभ्यां गदाभ्यामाहतानि ताडितान्यङ्गानि ययोरत एव क्षताद्गदाघातादास्रवतीत्यास्रवं रुधिरं तस्य घ्राणेन विवृद्धः मन्युर्ययोस्तयोरत एवेलायां भूम्यां निमित्तभूतायामिलार्थमित्यर्थः जिगीषया परस्परजयेच्छया विचित्रमार्गान् गदायुद्धक्रमणप्रभेदांश्चरतोर्मृधः संग्रामः शुष्मिणोर्मत्तवृषभयोरिव व्यभाद्बभौ ॥ १९ ॥

दैत्यस्य हिरण्याक्षस्य यज्ञावयवस्य यज्ञमूर्तेर्मायया स्वसंकल्पेन गृहीता वाराहतनुर्यस्य तस्य महात्मनः दैत्येऽप्यनुग्रहप्रवणचित्तस्य भगवतश्च हे कौरव्य ! विदुर ! मह्यां भूम्यां निमित्तभूतायां द्विषतोर्युध्यमानयोर्विमर्दनं युद्धं दिदृक्षुर्द्रष्टुमिच्छुः स्वराट् ब्रह्मा ऋषिभिर्मरीच्यादिभिर्वृतः अगात् आगतवान् ॥ २० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आविष्टासुरभावनिमित्तं वाह्यक्रोधभावमाह । स इति । प्रलब्धो वाचा वञ्चितः क्रीड्यमानोऽनिष्टक्रीडाविषयं क्रियमाणः पीड्यमान इति वा ॥ १३ ॥

मन्युना प्रचलितानि स्वस्थानच्युतानीन्द्रियाणि यस्य सः ॥१४

योगारूढो योगाविष्टः ॥ १५ ॥

दष्टो दच्छदोऽधरोष्ठो येन स तथा ॥ १६ ॥

आजघ्न इत्यस्याकर्मकत्वस्य द्योतनाय दक्षिणस्यां भुवीत्युक्तम् आङो यमहन इत्यात्मने पदं कोविदो गदायुद्धमार्गप्रभेदज्ञानपटुः ॥ १७ ॥

हर्यक्षो हिरण्याक्षः हरिरच्युतः ॥ १८ ॥

स्पृधोः स्पर्धमानयोः क्षतस्रवस्य रुधिरस्याघ्राणेन विवृद्धं युद्धं ययोस्तौ तयोः इलायां भुवि शुष्मिणोर्मत्तवृषभयोः ॥ १९ ॥

इदं युद्धं काकग्रास्यकर्मवदज्ञातं न किन्तु ब्रह्मादिदेवैर्दृष्टमिति भावेन ब्रह्मागमनं वक्ति । दैत्यस्येति । यज्ञास्तत्साधनानि चावयवेषु यस्य स तथा तस्य मायया स्वेच्छया स्वं स्वतन्त्रं परमात्मानं राजयति दीपयति प्रकाशयतीति स्वराट् ब्रह्मा तदुपदिष्टब्रह्मज्ञानेन हि सर्वेषां मुक्तिरिति ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

दैत्यस्येति । मायया कृपया गृहीतत्वं प्रपञ्चे प्रत्यानीतत्वम् ॥ २०—२१ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवमन्योऽन्यं वाक्ययुद्धं निरूपितं ततः कायिकं युद्धं जातमित्याह। सोऽधिक्षिप्त इति षड्भिः ।द्वाभ्यां युद्धं तु दैत्यस्य आरम्भो' युद्धमेव च । प्रतीकारश्च युद्धं च द्वयं भगवतः पुनः । मिश्रयुद्धं ततः स्थूलमुपसंहार एव च । तत्र प्रथमं हिरण्याक्षयुद्धं श्लोकद्वयेनाह । युद्धे हि क्रोधो मुख्यसामग्री सा प्रथम-

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ॥

मुच्यते। सोऽधिक्षिप्त इति। भगवता अधिक्षिप्त इति क्रोधे हेतुः स तु भक्ते वा अलेपे वा न भवतीति स इत्युक्तं स तु दैत्यो महाबलश्च तदा भगवता स्वभाव आविर्भावित इति भगवतेत्युक्तमधिक्षिप्तः ग्रामसिंहानिति प्रलब्धः वक्रोक्त्या वञ्चित एते वयमित्यादिभिः चकारात् युद्धार्थमाकारितश्च तत्रापि रोषेण प्रलब्धः न तु हितोपदेशेन अतो दोषत्रयस्य जातत्वात् तस्य त्रिदोषरूपो महान् क्रोधो जात इत्याह। आजहारेति। क्वचित् स्थापितमिवानीतवानित्यर्थः उल्बणमनिष्टपर्यवसायिसहजक्रोधयुक्तः साधने अनर्थपर्यवसायी भविष्यतीति किं वक्तव्यमित्यत्र दृष्टान्तमाह। क्रीड्यमान इति। यथा अहिराट् सर्पश्रेष्ठः कालीयोऽन्यो वा ॥ १३ ॥

स यथा स्वरोषं प्रकटयति तथा प्रकटितवानित्याह। सृजन्निति। अत्यमर्षितः श्वासान् सृजन् गदयाऽभ्यहनदिति सम्बन्धः अन्तःस्थितक्रोधेन श्वास उत्पन्नः बाह्यस्थितेन तु क्रोधेन मन्युशब्दवाच्येन प्रकर्षेण चलितानीन्द्रियाणि यस्य तादृशो जातः एवं तस्य क्रोधव्याप्तिरुक्ता अत एव शीघ्रमासाद्य भगवन्निकटे समागत्य भगवता सह युद्धमयुक्तमित्याशङ्क्य तस्य जातिं निर्दिशति। दैत्य इति। महान्तस्तु पश्चादेव मारयन्ति न प्रथममिति भगवदुत्कर्षकथनार्थं तस्य प्रथमं मारणमाह। गदयाऽभ्यहनदिति। सिंहो वा दुःखनिवारको वा मारितः स्वस्यैवानिष्टहेतुरिति सूचयितुं हरिमित्युक्तमेवं मारणान्तं तस्य युद्धं निरूपितम् ॥ १४ ॥

भगवत्कर्तृकं युद्धं श्लोकद्वयेनाह। भगवांस्त्विति। तु शब्दः तद्वत्क्रोधं न कृतवान् किन्तु शान्त एव तत्प्रतीकारं कृत्वा युद्धं कृतवानित्याह। भगवतः प्रतीकरे सामर्थ्यं स्वशब्देनोक्तं गदावेगमिति गदाह्यप्रत्याख्येयवेगा निकटे हि हन्यते इति तत्रापि उरसि विशेषेण स्पृष्टं तत्रापि रिपुणा अवञ्चने हेतुत्रयं निरूपितं तथापि वञ्चनं कृतवानित्याह। अवञ्चयदिति। कथमवञ्चयदित्याशङ्क्य प्रकारमाह। तिरश्चीन इति। अतिवेगेन भगवान् तिर्यग्जातः ननु निकटे जायमानः प्रहारः कथं तिर्यग्भावमात्रेणापगच्छेत्तत्राह। योगारूढ इवेति। योगो हि प्राणवशीकरणे हेतुः अन्तको हि प्राणहारकः स हि योगेन प्राणं लीनं करोति तदा मृत्युः प्राणमन्वेषयन्नपि न प्राप्नोति एवं भगवान् शत्रोः समक्षं स्वरूपं कृतवान् तावतैव तिरोहित इति प्रहारस्थाने लीनत्वात् वञ्चनं जातमित्यर्थः ॥ १५ ॥

एवं पूर्वमकृतप्रतीकार इति कृत्वा तूष्णीं स्थितेऽपि पुनर्मारणार्थं प्रवृत्तः पश्चाद्भगवता ताडित इत्याह। पुनरिति। स्वां मौर्वीमभीक्ष्णशो भ्रामयन्तमिति दृढप्रहारार्थं परिभ्रमणस्य पूर्वकालता च निरूपिता हरिर्वैराह्यः मारयितुमभ्यधावद्धावनं कृत्वा निकटे गत इत्यर्थः तस्य पूर्वप्रयासवैयर्थ्यात् अत्यन्तं क्रोधसंरम्भेण दष्टो दच्छदः दन्तानां छादनरूपमोष्ठं येन। ये यथा मां प्रपद्यन्त इत्येतदर्थं कृतवानिति भावः ॥ १६ ॥

ततः किं कृतवानित्याकांक्षायामाह। तत इति। गदया कौमोदक्या दक्षिणस्यां भ्रुवि आसुरी मृत्युः तस्य नश्यत्विति पुरुषत्वात् दक्षिणस्यां भ्रुवि ताडितः ननु कथं सूक्ष्मे स्थाने ताडयितुं शक्यत इत्याशङ्क्याह। प्रभुरिति। तां कौमोदकीं गदां हे सौम्य! स्वगदया मौर्व्यां गदायुद्धे कोविदः पण्डितः अहनत् ॥ १७ ॥

एवमन्योऽन्ययुद्धमुक्त्वा उपसंहरति। एवं गदाभ्यामिति। बहुकालयुद्धोपयोगाय गुर्वीभ्यामिति। हर्यक्षो हिरण्याक्षः हरेरिव अक्षिणी यस्य वर्त्तेते इति समानत्वाय हर्यक्षपदप्रयोगः हरिर्भगवानुभयत्र हरिपदप्रयोगः अवधाय जयार्थमेव यत्नो न वधार्थमिति जिगीषयेत्युक्तं सुष्ठु संरब्धाविति उभयोर्युद्धे हेतुरुक्तः अन्योऽन्यमभितो जघ्नतुः ॥ १८ ॥

एवं भगवतो युद्धलीलामुक्त्वा तां वर्णयति। तयोरिति। अन्योऽन्यस्पर्द्धिनोः तिग्मगदाभ्यामाहते अङ्गे ययोः दुःखानुभवेन युद्धान्निवृत्तिमाशङ्क्य क्रोधाधिक्यं सहेतुकमाह। क्षतास्रवद्घ्राणविवृद्धमन्व्योः गदाप्रहारेण यत् क्षतं तस्मात् स्रवत् यत् रुधिरं तस्य घ्राणनमास्वादनं तेन विवृद्धो मन्युर्ययोः गदया विचित्रमार्गांश्चरतोरिति। युद्धलीलायां रसाभिनिवेश उक्तः अत्रापि जिगीषैव हेतुः स्वरूपतोऽभिप्रायतश्च जिगीषेति ननु वैरिणोः कथं जयमात्रं हेतुरित्याशङ्क्याह। इलायामिव शुष्मिणोरिति इला भूमिः एकत्राधिकरणसप्तमी इतरत्र निमित्तसप्तमी यथा पृथिव्यां काममत्तौ वृषभावतिपुष्टौ अन्योऽन्यजिगीषया युद्धं कुरुतः वासितार्थेवा तयोर्मृधः यथा व्यभात् युद्धं शोभते स्म ॥ १९ ॥

एवं लीलया युद्धे क्रियमाणे भगवता तस्य मृत्युर्न भविष्यतीत्याशङ्क्य ब्रह्मा स्वयमागत्य तद्वधार्थं प्रार्थयति द्वाभ्यां दैत्यस्येति। आगमनप्रार्थनाभेदेन उभयोः समानबलत्वं निरूपयितुं स्वरूपं वर्णयति तत्र दैत्यत्वमेव युद्धादावुपयोगीति तदेवोक्तं यज्ञा अवयवा यस्य अनेन क्रियाशक्तिस्तत्र पूर्णेत्युक्तं ननु यो यज्ञावयवः स कथमेवं रूप इति दूषणं दूरीकुर्वन्नेव सामर्थ्यविशेषमाह। मायया गृहीतवाराहतनोरिति। महात्मन इति तादृशस्य युद्धकरणे हेतुर्न ज्ञायत इति सूचितं कौरव्येति सम्बोधनं महतां चरित्रे विश्वासार्थं जलयुद्धपक्षे तु तेन न दृश्यत इति तद्व्यावृत्त्यर्थं मह्यां पृथिव्यां क्षिपतोर्विशेषेण मर्द्दनं दिदृक्षुः स्वयमभ्यगात् ननु ब्रह्मणः हिरण्याक्षवधे किं प्रयोजनं सिद्ध्येदित्यत आह। स्वराडिति। स हि सर्वस्यापि स्वर्गस्य राजा इन्द्रादयः तदंशाः साक्षित्वाच्च ऋषीणामागमनम् ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

सोऽधिक्षिप्तः सत्यं वयमिति श्लोकेन रुषा प्रलब्ध उपहसितः। एते वयमिति द्वाभ्यां क्रीडां कार्यमाणोऽहिराट् महासर्प इव। पक्षे अधिक्षिप्तः ऽधिकारात् पार्षदत्वलक्षणात् क्षिप्तः अत एव रुषा कर्त्र्या प्रकर्षेण लब्धश्च। भगवदिच्छाप्रयुक्तब्रह्मशापवशात् शुद्धसत्त्वमयोऽपि तमोमयोऽभूदित्यर्थः। तदा तु युद्धकाले आ सम्यक् प्रकारेणैव उल्बणमत्युद्रिक्तं क्रोधं जहार जग्राह ॥ १३ ॥ १४ ॥

अन्तकं मृत्युम् ॥ १५—१६ ॥

सोऽसुरस्तु तां भगवद्गदामप्राप्तामेवाहन् ॥ १७ ॥

हर्यक्षो हिरण्याक्षः ॥ १८ ॥

स्पृधोः स्पर्द्धमानयोः क्षतादास्रवतीति क्षतास्रवं रुधिरं तस्य घ्राणेन विवृद्धो मन्युर्ययोः इलायां वासितायां गवि विषये शुष्मिणोर्मत्तयोर्वृषभयोरिव इलायां भुवि शुष्मिणोर्हरिहर्यक्षयोर्मृधो व्यभात् अशोभत "भूर्गोवाक्स्विडा इला" इत्यमरः ॥ १९ ॥

आसन्नशौण्डीरमपेतसाध्वसं कृतप्रतीकारमहार्यविक्रमम् ।
विलक्ष्य दैत्यं भगवान् सहस्रणीर्जगाद नारायणमादिसूकरम् ॥ २१ ॥

॥ ब्रह्मोवाच ॥

एष ते देव ! देवानामङ्घ्रिमूलमुपेयुषाम् ।
विप्राणां सौरभेयीणां भूतानामप्यनागसाम् ॥ २२ ॥
आगस्कृद्भयकृद्दुष्कृदस्मद्राद्धवरोऽसुरः ।
अन्वेषन्नप्रतिरथो लोकानटति कण्टकः ॥ २३ ॥
मैनं मायाविनं दृप्तं निरङ्कुशमसत्तमम् ।
आक्रीडबालवद्देव ! यथाशीविषमुत्थितम् ॥ २४ ॥
न यावदेष वर्धेत स्वां वेलां प्राप्य दारुणः ।
स्वां देव!मायामास्थाय तावज्जह्यघमच्युत ! ॥ २५ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

मायया शक्त्या गृहीता स्वस्वामित्वेनाङ्गीकृता वाराही तनुर्येन तस्य मायामर्त्तुर्वाराहस्येत्यर्थः । मायया कृपया गृहीतत्वं प्रपञ्चं प्रत्यातीतत्वमिति सन्दर्भः । स्वराट् ब्रह्मा ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे सौम्य ! ॥१७॥

हर्य्यक्षः हिरण्याक्षः ॥ १८ ॥

स्पृधोः स्पर्द्धमानयोः क्षतादास्रवतीति तद्रुधिरं तस्य घ्राणेनावघ्राणेन विवृद्धमन्व्योः इलायां गवि निमित्तभूतायां शुष्मिणोर्मत्तयोः वृषयोरिव मृधः संग्रामः व्यभात् बभौ ॥ १९ ॥

मायया वयुनेन सङ्कल्पेनेत्यर्थः मह्यां निमित्तभूतायां क्षितौ ॥ २० ॥

भाषाटीका ।

मैत्रेय जी बोले भगवान् श्री वाराह जी ने जब उस को क्रोध से परुष वचन सुनाये और परिहास से वंचना किया तब जैसे गरुड के खिलाने से सर्प को क्रोध होता है तैसे बड़ा क्रोधित हुआ ॥ १३ ॥

क्रोध के मारे दीर्घनिश्वास छोड़ने लगा सब इन्द्रिय उसकी चलायमान हो गईं तब तो दैत्यने जलदी से जाकर भगवान् के ऊपर गदा का प्रहार किया ॥ १४ ॥

भगवान् ने छाती पर आती हुई गदा के वेग को शत्रु की वंचना कर के टेढे हो कर बचा दिया जैसे योगि जन काल से बच जाते हैं ॥ १५ ॥

फिर अपनी गदा को ले कर निरन्तर हिरण्याक्ष घुमाता था और क्रोध के मारे ओष्ठ को दबाता था तब श्री वाराह उसी के ऊपर क्रोधित हो कर दौड़ा ॥ १६ ॥

तदनन्तर भगवान ने गदा से शत्रु के दक्षिण भ्रुकुटी पर प्रहार किया तब तो हे सौम्य ! विदुर जी उस बड़े चतुर हिरण्याक्ष ने अपनी गदा से मार कर उस गदा को हटा दिया ॥ १७ ॥

इस प्रकार से बड़ी भारी दोनों गदों से हिरण्याक्ष तथा वराह दोनो क्रोधित हो कर जीतने कि इच्छा से परस्पर में प्रहार करने लगे ॥ १८ ॥

तिग्म गदों के प्रहार से अङ्ग के पीड़ित होने से रक्त को सूंघ कर क्रोधि होने से उन दोनो ने जीत ने की इच्छा से विचित्र मार्गों की युद्ध की चालें दिखाईतब ऐसा युद्ध हुआ जैसा मतवाले वृषभों का गउकेवास्ते होता है तैसा पृथिवी के निमित्त युद्ध हुआ ॥ १९ ॥

हे कौरव्य ! विदुरजी माया से वाराह मूर्त्ति धारण करने वाले यज्ञमूर्त्ति भगवान् महात्मा का और दैत्य का पृथिवीके निमित्त जो युद्ध हुआ तिसको देखने के लिये ऋषिन के सहित ब्रह्माजी सत्यलोक से उहांपर आये ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

आगत्य च नारायणमाह । किं कृत्वा दैत्यं विलक्ष्य कथम्भूतम् आसन्नं प्राप्तं शौण्डीरं शौर्यं मदो वा येन अपेतं साध्वसं यस्मात् कृतः प्रतीकारो येन अहार्योऽप्रतिकार्यो विक्रमो यस्य सहस्रणीः सहस्राणामृषिसहस्राणां नेता ॥ २१ ॥

हेदेव ! तेऽङ्घ्रिमूलं प्राप्तानां देवादीनाम् एषोऽसुरः ॥ २२ ॥

आगस्कृत्तुर्थेवापराधारोपकः तत्परिहाराय प्रवृत्तौ भयकृत् भीतं ज्ञात्वा दुष्कृदर्थप्राणादिहर्ता अस्मत्तो राद्धो लब्धो वरो येन अन्वेषन्नप्रतिरथमवलोकयन् अप्रतिरथः प्रतिपक्षशून्यः ॥ २३ ॥

यद्यस्माद्देवं भूतोऽयं तस्माद्देनं माक्रीड माक्रीडय हेदेव ! यथोत्थितं क्षुभितमाशीविषं सर्पं बालः पुच्छाकर्षणादिना क्रीडयति तद्वत् ॥ २४ ॥

स्वामासुरीं हेदेव ! स्वां मायामघं पापरूपम् ॥ २५ ॥

एषा घोरतमा संध्या लोकछंबट्करी प्रभो ! ।
उपसर्पति सर्वात्मन् ! सुराणां जयमावह ॥ २६ ॥
अधुनैषोऽभिजिन्नाम योगो मौहूर्तिको ह्यगात् ।
शिवाय नस्त्वं सुहृदामाशु निस्तर दुस्तरम् ॥ २७ ॥
दिष्ट्या त्वां विहितं मृत्युमयमासादितः स्वयम् ।
विक्रम्यैनं मृधे हत्वा लोकानाधेहि शर्मणि ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे पारमहंस्यां
संहितायां वैयासिक्यां हिरण्याक्षयुद्धे
अष्टादशोऽध्यायः ॥ १८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

वेलामेवाऽऽह । एषेति । लोकानां छंबट्करी विनाशकरी छंबडि-त्यव्ययं विनाशे वर्तते ॥ २६ ॥

अभिजिन्मध्याह्नः स एव मौहूर्तिको योगः सन् मुहूर्तः शुभदः कालः अगादागतप्रायः अतो यावन्मुहूर्तशेषोऽस्ति तावदेव सुदुस्तरमेनं निस्तर जहि ॥ २७ ॥

त्वां मृत्युं त्वयैव शापानुग्रहकाले विहितं निर्मितमासादितः प्राप्तः शर्मणि सुखे आधेहि स्थापय ॥ २८ ॥

इतिश्रीभागवते महापुराणे तृतीयस्कन्धे
श्रीधरस्वामिकृत भावार्थदीपिकायाम्
अष्टादशोऽध्यायः ॥ १८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या
दीपिकाटिप्पणी ।

अप्रतिकार्य्यः दुर्निवार्य्यः नेता प्रवर्तकः ॥ २१ ॥

एष इति युग्मकम् ॥ २२ ॥ २३ ॥

एवं भूत आगस्कृदित्यादिलक्षणः यदाशीविषमित्येव पाठः स्वामिसम्मतो न तु यथाशीविषमुत्थितमिति यद्यस्मादिति व्याख्यानादग्रे यथेति तुल्यप्रत्ययस्यैवार्थः ॥ २४ ॥

यद्यपि भगवदग्रे तस्य वृद्धिवेलादिकमकिञ्चित्करं तथापि तस्य युद्धलीलाभिनिवेशं दृष्ट्वा प्रेमस्वभावेन ब्रह्मणा ऐश्वर्य्यज्ञानाच्छादनात्तथोक्तिरिति ज्ञेयम् ॥ २५ ॥

एषेति भयेन हृदि सन्निहितत्वस्फूर्त्तेः छंबडित्यत्र छंछडितिगौडीयपाठःसर्वात्मन्निति अस्याप्यात्मत्वादेतच्छक्तिं नाशयेति भावः॥२६॥

सुहृदां प्रेमस्वभावेन हितैषिणाम् ॥ २७ ॥

विहितं मयि संरम्भयोगेनेति स्ववाक्येन निर्मितम् ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीराधारमणदासगोस्वामिविरचितदीपिन्याख्य-
दीपिकाटिप्पण्यामष्टादशोऽध्यायः ॥ १८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

आगतश्च सहस्रणीः देवसङ्घं नयतीति देवसङ्घनेता भगवान् ब्रह्मा दैत्यमालक्ष्यादिसूकरं नारायणं जगाद कथंभूतं दैत्यम् आसन्नं प्राप्तं शौण्डीर्यं मदो येन तमपेतोऽपगतः साध्वसः यस्मात्तं कृतः प्रतीकारः प्रतीहरणरूपा प्रतिक्रियायस्यअसह्यः विक्रमो यस्य तमिति ॥ २१ ॥

उक्तिमेवाह । एष इत्यादिना यावदध्यायसमाप्ति एष दैत्यः हेदेव नारायण ! ते तवाङ्घ्रिमूलं पादमूलमुपेयुषां शरणागतानां विप्राणां सौरभेयीणां धेनूनामनागसां निरपराधिनामपि भूतानां सर्वजीवानां च ॥ २२ ॥

आगस्कृत्ननिर्निमित्तमपराधकृत् तत्परिहाराय प्रवृत्तौ भयकृत्भीतान् ज्ञात्वा दुष्कृदर्थप्राणादिहर्त्ता अस्मत्तो राद्धो लब्धो वरो येन सःस्वयमप्रतिरथः प्रतिपक्षरहितः अन्वेषयन्प्रतिरथं मृगयन् कपटइव लोकान्प्रत्यटति चरति ॥ २३ ॥

हे देव ! मायाविनं विचित्रचतुरङ्गादिबलोत्पादकाश्चर्यशक्तिसम्पन्नमत एव दृप्तं गर्वितं निरङ्कुशं निरङ्कुशगजमिव स्थितमसत्तमं दुरात्मानमेनं दैत्यं प्रत्युत्थितमाशीविषं सर्पं पुच्छाकर्षणादिना बालकवत् माक्रीड ॥ २४ ॥

दारुण उग्रः एष दैत्यः यावत्स्वां स्वबलकरीं वेलां संध्यां प्राप्य न वर्द्धेत तावदेव स्वामात्मीयां मायां बलमास्थायाश्रित्य जहि यद्वा स्वां पूर्वोक्त विधां मायामास्थाय स्वां वेलां प्राप्य यावदेष न वर्द्धेत तावज्जहीत्यन्वयः हे अच्युताश्रितान्नच्यवते इत्यच्युत ॥ २५ ॥

का सा वेला याऽऽयास्यति यां प्राप्यवर्द्धेतेत्युच्यते इत्यत्राह । हे प्रभो लोकछंबट्करी लोकानांप्रतिकूलकरीलोकचछंबट्करीतिपाठे मोहनकरीत्यर्थः घोरतमा भयंकरी एषा संध्या उपसर्पति सा आयास्यति हे सर्वात्मन् सुराणां जयमावह सम्पादयन्नसुराणां जयापहेति पाठे संध्याविशेषणम् ॥ २६ ॥

अधुना इदानीमेव अभिजिन्नामाभिजिदाख्यः मौहूर्तिकः मध्याह्नमुहूर्त्तरूपः योगयुक्तः कालः अगादागतः तत्तस्मात्सुहृदां त्वत्सुहृदां नः शिवाय स्वस्तये दुस्तरं दुर्जयं दैत्यमाशु निस्तर जहि ॥ २७ ॥

दिष्ट्येति । विहितं त्वयैव शापानुग्रहकाले विहितम् । यथा ।

तदा विश्वेश्वरः क्रुद्धो भगवांल्लोकभावनः ।
हनिष्यत्यवतीर्यासौ यथाद्रिं शतपर्वधृक् ॥

इति पित्रा कश्यपेनैव विहितं मृत्युं त्वामयमसुरः स्वयं दिष्ट्या दैवेनैवासादितः एतमसुरं मृधे युद्धे विक्रम्य परा-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कस्य हत्वेत्यर्थः लोकात् शर्मणि सुखे आधेहि सुखोचरान् कुर्वित्यर्थः ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
अष्टादशोऽध्यायः ॥ १८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

न केवलं युद्धदर्शनाय ब्रह्मण आगमनं किन्तु दैत्यवधोपायनिवेदनलक्षणकार्यान्तरज्ञापनाय चेत्यनेनाशयेन हरिं प्रति ब्रह्मविज्ञापनप्रकारं वक्ति । आसन्नेति । अनेन कोविदेनापद्यपि तत्परिहारप्रकारो वक्तव्य इति न्यायदर्शनार्थमुक्तं न तु हरेरुपायाज्ञानादिति तात्पर्यम् आसन्नशौण्डीरं प्राप्तपाटवम् अहार्यमाहर्तु मशक्यो विक्रमो यस्य स तथा तं विलक्ष्य दृष्ट्वा सहस्रणीः अनेककल्पजननेतृत्वात् ब्रह्मणो योगनाम ॥ २१ ॥

प्रथमतो दैत्यस्य वध्यत्वे दोषानाह । एष इति ।॥ २२ ॥

द्रव्यादानाद्यपहारेणागस्कृत् आगो मन्त्रश्च विप्रियमिति । वधादिना भयकृदपिद्रोहात्वादिदूषणेन दुष्कृत् तत्र निमित्तमाह । अस्मल्लब्धेति ॥ २३ ॥

क्रीडाया अकरणे कारणमाह । यदिति । आशीविषं कृष्णसर्पविषमुत्थितमुज्ज्वलितं यत्तस्मादिति ॥ २४ ॥

स्वां वेलामासुरीमपराह्णां तावत्ततः पूर्वमेव स्वां मायां महिमानं त्वदन्येन न हन्यत इत्यर्थः ब्रह्माच्युतेत्यनेन

> अच्युतः क्षतवद्विष्णुरसमः समवत्तथा ।
> अजितो जितवच्चैव ज्ञोऽज्ञवच्च प्रकाशयेत् ।
> सर्वरूपेष्वनन्तोऽपि ब्रह्माद्याश्चैव तन्मतेः ॥

अनुसारितया ब्रूयुः कुर्युश्च न स दुःखभागिति वाक्यं द्योतयति ॥ २५ ॥

कीदृग्यासुरी वेलेति तत्राह । एषेति ।
आदरं तु मुखं विद्याच्छ स्वद्कारं तु भक्षणमित्यभिधानात् ।
घोकरास्वद्करी सर्वजनभक्षिणी ॥ २६ ॥

इदानीं समीचीनो योगः क इति तत्राह । अधुनेति ।
मध्याह्नस्त्वभिजित्प्रोक्त आषाढोत्तर एव च
श्रवणस्यापि पूर्वांशौ विषुवच्चाभिजित्स्मृतम् ।
इत्यतोऽभिजियोगो मध्यंदिनमुहूर्तम् ॥ २७ ॥

अस्यानन्यवध्यत्वं स्पष्टं ध्वनयति । दिष्टयेति । मृत्युं मारकं त्वा त्वां शर्मणि सुखे आधेहि स्थापय ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
अष्टादशोऽध्यायः ॥ १८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एष इति युग्मकम् ॥ २२ ॥ २३ ॥

मैनमित्यादि श्रीब्रह्मणोवाक्यम् । तादृशभगवद्युद्धलीलावेशमयेन प्रेमविशेषेणैश्वर्यज्ञानसङ्कोचात् । टीकायां यद्यस्मात् इति व्याख्यानाद्यदाशीविषमित्येव पाठः । सर्वत्र चैष एव, अतो यथेत्यध्याहार्येण व्याख्यातम् ॥ २४ ॥

मायां शक्तिमास्थाय प्रकटीकृत्य ॥ २५ ॥

एषेति मयेन निकटत्वस्फूर्त्तेः ॥ २६ ॥

मुहूर्त्ते भवो मौहूर्त्तिकोयोगः कालविशेषः ॥ २७—२८ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
अष्टादशोऽध्यायः ॥ १८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तयोर्युद्धं दृष्ट्वा क्रीडां कुर्वाणावेताविति मत्वा वधार्थमर्थयत इत्याह ।

> आसन्नशौण्डीरमपेतसाध्वसं कृतप्रतीकारमहार्यविक्रमम् ।
> विलोक्य दैत्यं भगवान् सहस्रणीः ॥

आसन्नशौण्डीरमिति । भगवत उत्कर्षे युक्तः तस्यायुक्त इति तदेव वर्णयति आसन्नं स्वीकृतं शौण्डीरं येन शौण्डीरं साहसोत्साहः भगवतः सकाशादपास्तं साध्वसं यस्य कृतः प्रतीकारो येन न केनापि हार्यः हर्तुं योग्यो विक्रमो यस्य एतादृशं दैत्यं विलोक्य अयमजेय इति ज्ञात्वा स्वपितरं भगवन्तं सर्वावताराणां प्रथमावताररूपं भगवांश्चेन्मारयितुमिच्छेत्तदैवास्य मरणं भवेत् नतूदासीनतयेति मत्वा आदिशूकरमाहेति सम्बन्धः तादृशं ज्ञानमस्तीत्यत्र हेतुः । भगवानिति । नन्वेवमुच्यमाने सचेद्ब्रह्माणमेव मारयेत् तदा का गतिः स्यादित्याशङ्क्याह । सहस्रणीरिति । सहस्रं नयतीति ब्रह्मा हि स्वसदृशान् सहस्रं योद्धारयति अतो नास्यभयमित्यर्थः ॥ २१ ॥

ब्रह्मा मारणार्थं तस्य दूषणान्येवाह । एष इति द्वाभ्याम् । भक्तद्रोहे वधः स्मृत इति भगवद्धृदयात् अयं भक्तद्रोहमेव कृतवानित्याह । एष हिरण्याक्षः हेदेवेति सम्बोधनं देवपक्षपातबोधनार्थं देवद्रोहात् वधो न दोषायेति ज्ञापयितुं देवानामित्युक्तम् अङ्घ्रिमूलमुपेयुषामिति । मुख्यो हेतुः विप्राणां सौरभेयीणामिति ब्राह्मणानां गवां यज्ञोपयोगित्वात् तद्विरोधेन यज्ञवराहेणावश्यं मारणीय इति प्रकृतावतारोपयोगित्वेनोक्तं सामान्यतः विष्णोः रक्षाकर्तृत्वात् तत्त्वेन रक्षार्थं भूतानामप्यनागसामिति । उक्तं निरपराधीनि भूतानि सर्वथा रक्षकेण रक्षणीयानीति चतुर्भिर्हेतुभिरयं मारणीय इति हेतवो निरूपिताः ॥ २२ ॥

तस्यापि दोषचतुष्टयमाह । आगस्कृदिति । आगस्कृद्भयकृद्दुष्कृदस्मदिति प्रथमतो निरपाधिनं सापराधं बोधयति मिथ्यैवापराधं सम्पादयतीत्यर्थः ततो भयं जनयति निर्भर्त्सनादिभिः ततो दुष्टं मारणं सर्वस्वहरणादिकं वा करोति अन्येषामपि दोषाणामुत्पत्त्यर्थं तस्य बलमाह । अस्मद्राद्धवर इति । अस्मत्तः राद्धः सिद्धो वरो यस्येति देववरं प्राप्य कथं दुष्टो जात इत्याशङ्क्याह । असुर इति । सर्पाणां पयः पानवत् चतुर्थं दोषमाह । अयं कण्टक इति । गतिमेव नाशयति अल्पोऽपि परमदुःखद इत्यर्थः अप्रतिरथश्चायं न विद्यते लोके प्रतिरथो युद्धे समानो यस्य अत एव प्रतिरथमन्वेषयन् लोकानटति अतो हस्तो दुष्टात्मा हन्तव्य इत्यर्थः ॥ २३ ॥

अस्योपेक्षा न कर्त्तव्येत्याह । मैनमिति । एनं वा लक्ष्यीकृत्य क्रीडां माकुर्वित्यर्थः तत्र हेतवश्चत्वारः । मायाविनमिति । अयं च मायावी अस्य बलं न ज्ञायते अतो यदैव क्षीणबलो भविष्यति तदैव पलायनं करिष्यतीति इदानीमेव हन्तव्यः किञ्च दृप्तोऽयमितिमत्तः

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

उपेक्षायां जगदेव मारयिष्यतीति । किंच । निरङ्कुशमिति त्वद्व्यतिरिक्तोऽन्योऽस्य न नियामकोऽस्ति अतोऽस्य नान्यः प्रतीकारः स्वयमेव कालान्तरे बाल्यं त्यक्ष्यतीति न मन्तव्यं यतोऽयमसत्तमः अत एव धालवद्देव! माक्रीडवालो ह्युदर्कं न विचारयति । किंचा यं त्वय्यप्यपकारं करिष्यतीतयाह । यदाशीविषमुत्थितामिति । उत्थितः सर्पः चेष्टया यथा शयानः सर्पं उत्थापितश्चेत् हन्तव्य एव अन्यथापकारं कुर्यात् ॥ २४ ॥

किंच स्वभावत एवायं बलिष्ठः संध्याकाले अत्यन्तं बलिष्ठो भविष्यति अतः यावदस्य वृद्धिकालो नायाति तावदेव हन्तव्य इत्याह । नयावर्दति । वृद्धौ दोषमाह । दारुणा इति । स्ववेला संध्या तदा हि ते दैत्या उत्पन्नाः एतयोरपि तदैव जन्म कथं तर्हि मारणीय इत्यत आह । स्वां देवमायामिति देवमाया हि सत्त्वाधिका रजस्तमश्चाभिभूय सत्त्वं भवतिभारतेति वाक्यात् । वधे दोषो भविष्यतीति न मन्तव्यं यतो यमधरूपः एतद्युद्धे स्वस्मिन् संदेहो न कर्त्तव्य इत्याह । अच्युतेति ॥ २५ ॥

संध्या स्वतोऽपि नाशिकेत्याह। एषेति। एषा देवानां संध्या ज्योतिश्चक्रस्य स्थितत्वाद् मध्ये च पृथिव्याः स्थापितत्वाद् ब्रह्मादीनां देवतात्वाद् देवमानेनेत्यध्यवसीयते अथवा ब्रह्मणोवा एतद्दिनं लोकच्छंवद्करीति वचनात् तस्य संवत्सरान्तदिन एव कल्पप्रलयात् प्रथमपक्षे संध्याया लोकनाशकत्वं स्वाभाविकमिति तथोच्यते ज्योतिश्चक्रपरावृत्त्या मानुषमेव वा मानम् अधिष्ठान्यो देवता वा भगवत्सेवार्थमागतस्य कालस्य परंपरयैवाविर्भवन्तीति संध्या सैवोच्यते तथैवाभिजिदपि एवं चतुर्ष्वपि पक्षेषु समाधातुं शक्ये ऽप्ययमेव ज्यायान् छंवद्शब्दो वैदिकः नाशवाचकः रिक्तपर्यायः तेनैकाष्ठकाद् छंवट् कुर्वतीतिश्रुतेः अत एव संध्यापि लोकनाशिका दैत्योऽपि उभयोर्मेलने महाननर्थो भविष्यतीति ततः पूर्वमेव दैत्यो मारणीय इत्यर्थः तथा सामर्थ्यं सूचयति। प्रभुरिति । सर्वेष्वेवावतारेषु सत्त्वांशव्यवधानात् ज्ञानतिरोभावमिव मन्यते ततो बोधनं प्रहरत्रयं जातमस्ति अतो निकट एव संध्या भविष्यतीति उपसर्पतीत्युच्यते सर्वरक्षा तवावश्यकीति तथा संबोधयति। सर्वात्मन्निति । एकमारणेन बहूनां रक्षाजननात् सर्वात्मकत्वेऽपि मारणं न विरुद्धं तथापि सर्वथा न मारणीयः रक्षामात्रमेव कर्त्तव्यमिति तत्राह । सुराणां जयमावहेति । स्ववकाले सुराणां जयः कर्त्तव्यः ॥ २६ ॥

नन्वहमेव मारयिष्यामि किमिति बोध्यत इत्याशङ्क्याह । अधुनैष इति । तदधिष्ठात्री देवता प्रत्यक्षेति एष इत्युक्तम् अभिजिन्नक्षत्रं मध्याह्ने राशिद्वारा मिलतीति तथोच्यते तुलासंक्रमणस्य दिनाएके गते तस्मिन्नेव दिवसे उत्तराषाढाचतुर्थपादे मध्यंदिने सति मुहूर्त्तमात्रमभिजिद्योगो भवति ते देवास्तस्मिन्नक्षत्रेऽभ्यजयन् इत्युपाख्याने अभिजिन्नक्षत्रे देवानां जय उक्तः स तु निकट एव गतः तदैव मारणीयो भवेदिति अनपाय्यजयत्वात् अथवा पापपराजितमिवत्विति श्रुतेः अभिजिन्नक्षत्रं नात्यन्तमुत्कृष्टं पापेन पराजितत्वात् तस्मात् सोऽपि गतः संध्या च नागता अतो मारणीय इत्यर्थः सुहृदां देवानां नः शिवाय एवं दुष्टं दुस्तरं मृत्युरूप माशु निस्तर नितरां तर॥ २७ ॥

नन्वस्य जीवनादृष्टे विद्यमाने कथं म्रियत इत्याशङ्क्याह । दिष्टयेति पद्यमेतस्मिन्नवसरे त्वां प्राप्तः तेन ज्ञायते नास्त्यस्यजीवनादृष्टमिति अस्य मृत्युः त्वमेव अतोऽयं स्वयमेव त्वां मृत्युं दिष्ट्या आसादितः प्राप्तवान् यथा मृत्युः रोगादिना पराक्रमेण तं हन्ति एवमेनमपि विक्रमस्यैव संग्रामे हत्वा परमसुखे सर्वानेव लोकान् स्थापयेति प्रार्थना युद्धे मारणान्नदोषोऽपि ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्वल्लभाचार्यकृतसुबोधिन्याम्
अष्टादशाध्यायविवरणम् ॥ १८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

आसन्नं प्राप्तं शौण्डीरं शौर्य्यं मदो वा येन तम् । ऋषिसहस्राणां नेता सहस्रणीर्ब्रह्मा ॥ २१ ॥ २२ ॥

हे देव ! आगस्कृत् त्वय्येवापराधारोपकः तत्परिहाराय प्रवृत्तौ भयकृत् भीतान् ज्ञात्वा दुष्कृत् अर्थप्राप्त्यादिहर्त्ता ॥ २३ ॥

एनं मा आक्रीडय बालवद् अज्ञ इव स्वयम्भु विश्वचूडामणिरेवासीति भावः । यद्यथा आशीविषं सर्पमुत्थितं गरुड इति शेषः । अथवा यद्यस्मादाशीविषमुत्थितं एनं मन्य इति शेषः ॥ २४ ॥

स्वां वेलामासुरीं हे देव ! स्वां मायां तेनासुरवेलायां विवृद्धबलमेनं त्वं परमेश्वरोऽपि हन्तुं नैव प्रभविष्यसीत्यैश्वर्यज्ञानवतो ऽपि ब्रह्मणः प्रेम्णैवानिष्टाशङ्कित्वं ज्ञेयम् । यथैश्वर्यज्ञानपूर्णयोरपि वसुदेवदेवक्यो,,ः समुद्विजे भवद्धेतोः कंसादहमधीरधीरित्यादिवाक्यम् ॥ २५ ॥

छंवट्करी विनाशकरी छंवडित्यव्ययं विनाशवाचकम् ॥२६॥

अभिजित् मध्याह्नं मौहूर्त्तिकः मुहूर्त्तत्रयभवः । अगात् गतप्रायः अतो यावदस्यावधिर्योऽयोऽस्ति तावदेवासुरं दुस्तरमेनं निस्तर जहीत्यर्थः ॥ २७ ॥

त्वा त्वां विहितं त्वयैव शापानुग्रहसमये निर्मितमित्यर्थः॥२८॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
तृतीयेऽष्टादशोऽध्यायः सङ्गतः सङ्गतः सताम् ।

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ऋषिसहस्रं नयतीति स तथा श्रीब्रह्मा आसन्नं प्राप्तं शौण्डीरं शौर्य्यं येन तम् अपेतसाध्वसमपगतालसम् कृतः प्रतीकारः प्रतिक्रिया येन तम् अहार्य्यः सुरासुरैर्विक्रमो यस्य तम् दैत्यं विलक्ष्य नारायणं जगाद ॥ २१—२२ ॥

हेदेव ! एष दैत्य आगस्कृत् अपराधकृत् मनसा भयकृत् वाचया दुष्कृत् देहेन यत इत्थंभूतोऽयं तत एनं माक्रीड ॥२३-२४॥

स्वामासुरीम् हेदेव ! मायामद्भुतां शक्तिम् ॥ २५ ॥

आसुरीं वेलामेवाह । एषेति । लोकछंवट्करी प्राणिविनाशकरी छंवट् इतिविनाशार्थकमव्ययम् ॥ २६ ॥

अधुना इदानीमभिजित् मध्याह्नः स एव मौहूर्तिकोयोगः मुहूर्त्ते शुभदः काल अगादागतः शिवाय कल्याणाय दुस्तरम् अन्यैर्दुर्जयमेनं निस्तर जहि ॥ २७ ॥

विहितं वैपरीत्येन हितं प्रतिभटरूपेण हितकारिणम् । यद्वा
तदा विश्वेश्वरः क्रुद्धोभगवाँल्लोकभावनः ।
हनिष्यत्यवतीर्य्यासौ यथाद्रीन् शतपर्वधृक् इति ।
कश्यपेन विहितं त्वां मृत्युं मारकम् ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
अष्टादशाध्यायार्थप्रकाशः ॥ १८ ॥

भाषाटीका।

हजारों ऋषिगणों को साथ में लेकर भगवान् ब्रह्माजी ने देखा कि दैत्य संग्राम का वडा उत्साही है वरोवर प्रतीकार करने वाला है वडे असह्यपराक्रम वाला है निर्भय है तवतो ब्रह्माजी आदि सूकर नारायण के प्रति वोले ॥ २१ ॥

हे ! प्रभो ! यह असुरतो आपके चरण शरण होने वाले ब्राह्मण गऊ निरपराधी प्राणि इन सवों को दुख देने वाला है सवको भय दिखाता है पाप करता है हमारे वर देनेसे यह असुर अद्वितीय वली होकर वीरों को ढूंढता है सवका कण्टक रूप है ॥ २२ ॥ २३ ॥

हे देव ! यह वडा मायावी है गर्वित है निरङ्कुश है अधम इसके साथ आप वालक सी क्रीडा मतकरो क्रोधित सर्प के सरीके इसके साथ क्रीडा करना अच्छा नहीं है ॥ २४ ॥

हे अच्युत ! जव पर्यंत यह दारुण दैत्य अपनी आसुरी वेला को प्राप्त होकर वढै नहीं तवहीं पर्यन्त आप अपनी दिव्य शक्ति को आश्रय करके इसको मारडालो ॥ २५ ॥

हे सर्वोत्मन् ! यह घोर असुरों की संध्यावेला लोगों के नाश करने वाली है सो चली आती है हे प्रभो ! देवतों का विजय करो ॥ २६ ॥

इस वखतपर अभिजित् नामक मौहूर्त्तिक योग है हम सुहृद लोगों के कल्याण के वास्ते आप दुस्तर कष्ट से पार होजाओ ॥ २७ ॥

यह अच्छा हुआ कि मृत्यु रूप आप के आगे यह आगया आपही दैवयोग से अब पराक्रम करके इसको युद्ध में मारकर सव लोगोंको सुख में स्थापन करो ॥ २८ ॥

इति श्रीभागवत तृतीयस्कन्ध अष्टादश अध्याय का भाषानुवाद लक्ष्मणाचार्यकृत समाप्त ॥ १८ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धेऽष्टादशोऽध्यायः समाप्तः ॥ १८ ॥

## ऊनविंशोऽध्यायः ।

मैत्रेय उवाच ॥

अवधार्य विरिञ्चस्य निर्व्यलीकामृतं वचः ।
प्रहस्य प्रेमगर्भेण तदपाङ्गेन सोऽग्रहीत् ॥ १ ॥
ततः सपत्नं मुखतश्चरन्तमकुतोभयम् ।
जघानोत्पत्य गदया हनावसुरमक्षजः ॥ २ ॥
सा हता तेन गदया विहता भगवत्करात् ।
विघूर्णिताऽपतद्रेजे तदद्भुतमिवाभवत् ॥ ३ ॥
स तदा लब्धतीर्थोऽपि न ववाधे निरायुधम् ।
मानयन् स मृधे धर्मं विष्वक्सेनं प्रकोपयन् ॥ ४ ॥
गदायामपविद्धायां हाहाकारे विनिर्गते ।
मानयामास तद्धर्मं सुनाभं चास्मरद्विभुः ॥ ५ ॥
तं व्यग्रचक्रं दितिपुत्राधमेन स्वपार्षदमुख्येन विषज्जमानम् ।
चित्रा वाचोऽतद्विदां खेचराणां तत्रास्मासन् स्वस्ति तेऽमुं जहीति ॥ ६ ॥
स तं निशाम्यात्तरथाङ्गमग्रतो व्यवस्थितं पद्मपलाशलोचनम् ।
विलोक्य चामर्षपरिप्लुतेन्द्रियो रुषा स्वदन्तच्छदमादशच्छ्वसन् ॥ ७ ॥
करालदंष्ट्रश्चक्षुर्भ्यां संचक्षाणो दहन्निव ।
अभिप्लुत्य स्वगदया हतोऽसीत्याहनद्धरिम् ॥ ८ ॥
पदा सव्येन तां साधो ! भगवान् यज्ञसूकरः ।
लीलयामिषतः शत्रोः प्राहरद्वातरंहसम् ॥ ९ ॥
आह चायुधमाधत्स्व घटस्व त्वं जिगीषसि ।
इत्युक्तः स तदा भूयस्ताडयन् व्यनदद्भृशम् ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ऊनविंशे विरिञ्च्यादिप्रार्थितेन महामृधे ।
वराहेण हिरण्याक्षवधः श्लाघ्योऽनुवर्ण्यते ॥ १ ॥

निर्व्यलीकं च तदमृतं च पाठान्तरे निष्कपटाभिप्रायं च तद्दतं च कालात्मनोऽपि मम मुहूर्तवलमुपदिशतीति प्रहस्यापाङ्गालोकनेन स्वीकृतवान् ॥ १ ॥

मुखतः अभिमुखे हनौ कपोलस्याधोभागे अक्षजो ब्रह्मणो घ्राणेन्द्रियादाविर्भूतत्वात् ॥ २ ॥

सा स्वगदया तेन हता ततो विहता विच्युता सती विघूर्णिता भूत्वा पतद्रेजे च तद्भगवत्करात्पतनम् । यद्वा । तत्पदस्यावृत्त्या रेज इत्यनेनापि संवन्धः तद्दैत्यपौरुषं रेज इति ॥ ३ ॥

लब्धतीर्थो लब्धावसरः स च न ववाधे न प्राहरत् स मानयन् बभूवेति वाक्यभेदात्स इत्यस्यापौनरुक्त्यम् ॥ ४ ॥ ५ ॥

व्यग्रं ससंभ्रमं चक्रं यस्य विषज्जमानं विशेषेण संगं प्राप्नुवन्तं प्रति अतद्विदां तत्प्रभावमजानताम् आसमंतादासन्स्म ॥ ६ ॥

स दैत्यस्तमात्तचक्रं निशाम्य दृष्ट्वाग्रतो व्यवस्थितं च विलोक्यामर्षेण क्रोधेन परिप्लुतानि क्षुभितानीन्द्रियाणि यस्य सः आदशद्दष्टवान् ॥ ७ ॥

चक्षुर्भ्यां दहन्निव संचक्षाणः पश्यन् इवेति वस्तुतः क्रोधभावमाह । हतोऽसि ज्ञातोऽसीति वास्तवोऽर्थः ॥ ८ ॥

वातरंहसं वायुवेगाम् ॥ ९

घटस्वोद्यमं कुरु यतस्त्वं जेतुमिच्छसि ॥ १० ॥ ११ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ॥

वराहेण कर्त्रा । अमृतं तद्वदास्वाद्यं प्रेमैकमयत्वात् पाठान्तरे निर्व्यलीकमृतमितिपाठे पृथक् पदद्वयम् ऋतं सत्यं दिष्ट्या त्वां विहितमित्यादि ॥ १ ॥

उत्पत्य उत्प्लुत्य ॥ २ ॥

सा भगवता प्रक्षिप्ता । गदापतत् रेजे चेति चकारोऽध्याहृतः भगवदिच्छया स्वपार्षदबलेन तत्पतनं न वस्तुतोऽद्भुतमिति इवशब्देन द्योतितम् अतः शाल्वयुद्धे धनुःपतनमिवैतत्परमतं नाशङ्कनीयम् । पूर्वार्थे पराजितस्य पतितगदायाः प्रकाशनासम्भव इत्यस्वरसाद्धेति तद्दैत्यपौरुषं रेजे तद्भगवत्करात् पतनमद्भुतमिवाभवदिति तत्पदस्यावृत्त्यान्वयः ॥ ३ ॥

धर्मं निरायुधो न हन्तव्य इति ॥ ४ ॥

अपविद्धायां पतितायां सत्यां सुनाभं चेति चकारेण गदामपि पूर्वं सस्मारेति गम्यते ॥ ५ ॥

दितिजाभिधेनेति कचित्पाठः तत्र नाममात्रेण दितिजेन वस्तुतस्तु स्वपार्षदमुख्येन ॥ ६ ॥ ७ ॥

स्वगदयाहनत् क्षात्रधर्मेण सेवितवान् इति वास्तवोऽर्थः ॥ ८ ॥

तामागच्छन्तीम् ॥ ९ ॥

भगवता इत्युक्तः स दैत्यः ॥ १० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं ब्रह्मणा भाषितो भगवांस्तद्वचोऽभिनन्द्यासुराणां बलकर्यामपि वेलायां स्वपराक्रममेव प्रदिदर्शयिषया पुनर्युयुध इत्याह मुनिः । अवधार्येति । विरिञ्चस्य ब्रह्मणो निर्व्यलीकं निर्दोषममृततुल्यं च वचोऽवधार्य श्रुत्वा प्रहस्य कालात्मना सर्वसंहर्तुमेमापि शत्रुबलाद्भयं ब्रवीतीति विहस्य स भगवान्प्रेमगर्भेण प्रेमसहितेनापाङ्गेन कटाक्षेण तद्विक्रम्यैनं मृधे हत्वा लोकानाधेहि शर्माणीतिवचो गृहीतवान् ॥ १ ॥

ततः वचोग्रहणानन्तरमकुतोभयं कुतश्चिद्भीतिरहितमत एव मुखतः अभिमुखतश्चरन्तं सपत्नमसुरमजो ब्रह्मणो घ्राणेन्द्रियादाविर्भूतो भगवानुत्पत्योद्धृत्य गदया हनौ कपोलस्याधोदेशे जघान ॥ २ ॥

सा भगवत्प्रयुक्ताप्राप्तैव गदा तेनासुरेण कर्त्रा गदया हता भगवत्कराद्विहता च्युता सती विघूर्णिता ध्वनयन्ती अपतत् ततो रेजे रराज तद्भगवत्कराद्विहत्य पतनमद्भुतं पश्यतामाश्चर्यमिवाभवत् ॥ ३ ॥

सोऽसुरस्तदा लब्धतीर्थो लब्धावकाशोऽपि निरायुधमायुधरहितं विष्वक्सेनं भगवन्तं मृधे युद्धे धर्मं स मानयन्प्रकोपयन्नववाधे न प्राहरत् सम्मृधे इति पाठे तु स लब्धतीर्थोऽपि नववाधे समानयन् बभूवेति वाक्यभेदेनान्वयादपौनरुक्त्यं बोध्यम् ॥ ४ ॥

गदायामपविद्धायां स्वहस्ताद्विहतायां सत्यां पश्यतां हाहाकारे च विनिर्गते च सति विभुर्भगवांस्तस्य दैत्यस्य धर्मं निरयुधाबाधनरूपं धर्मं मानयामास बहुमन्यत सुनाभं चक्रमस्मरच्च स्मरणेन स्वहस्तगतमकरोदित्यर्थः ॥ ५ ॥

तं भगवता स्मृतं दितिपुत्राभिधेन दितिपुत्र इति नाम्ना व्यवह्रियमाणेन स्वपार्षदमुख्येन विपज्जमानं विशेषेण सङ्गं प्राप्नुवन्तं व्यग्रचक्रं संभ्रमयुक्तचक्रं प्रति दृष्ट्वेति शेषो वा अतद्विदां तच्चक्रप्रभावमविदां खेचराणां चित्रा बहुविधा वाचः अमुमसुरं जहि ते तुभ्यं स्वस्त्यस्त्वित्येवमादिकाः तत्र युद्धदेशे आसन्स्म बभूवुरित्यर्थः ॥ ६ ॥

सोऽसुरः पद्मपलाशाक्षमात्तं रथाङ्गं चक्रं येन तं भगवन्तं निशाम्य दृष्ट्वाग्रतो व्यवस्थितं च विलोक्यामर्षेण क्रोधेन परिप्लुतानि क्षुभितानीन्द्रियाणि यस्य सः रुषा क्रोधेन श्वसन् स्वदन्तच्छदं स्वाधरोष्ठमादशत् समन्ताद्दष्टवान् ॥ ७ ॥

करालदंष्ट्रः भयकरदंष्ट्रोऽसुरः चक्षुर्भ्यां दहन्निव संचक्षाणः सम्यक् पश्यन्नभिद्रुत्याभिमुखमागत्य हरिं भगवन्तं हतोऽसीत्युच्चरन् स्वगदयाहनत्प्रजघान ॥ ८ ॥

यज्ञसूकरः यज्ञमूर्तिरादिसूकरो भगवान् वातरंहसं वायुवेगां तामप्राप्तामेव गदां सव्येन पदा वामपादेन शत्रोर्मिषतः पश्यतः सतः लीलया प्राहरत् ॥ ९ ॥

तत आयुधमाधत्स्व गृहाण घटस्व यतस्व त्वमवश्यं जिगीषसीत्याह च उक्तवांश्च एवमुक्तः स असुरः तया पदा ताडितया पुनः गृहीतया गदया भूयः पुनर्भगवन्तं ताडयन् भृशं व्यनदत् नादं चकार१०॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ब्रह्मवचनं हरिणावधृतं किमत्राह । अवधार्येति । अपाङ्गेन कटाक्षेण ॥ १ ॥

विरिञ्चवाक्यग्रहणं हरिणा कृतमिति कथं ज्ञायत इति तत्राह । तत इति । मुखतः पुरतः हनौ कपोले हस्वेन वराहेणोन्नतस्यासुरस्य कपोले हननं कथमित्यत उक्तमुत्पत्येति ॥ २ ॥

दुष्टजनमोहनाय साहतेति विघूर्णिता विभ्राम्य त्यक्ता रेजे उल्कावदिति शेषः ॥ ३ ॥

तदा जनं प्रति असुरोऽपि स्वस्य धर्मयुद्धवित्त्वं प्रकाशयति । स इति। लब्धवीर्यः प्राप्तावकाशः मृधे धर्मप्रत्ययार्थं निरायुधे सायुधेनेतरेण न प्रति प्रहर्तव्यमिति लौकिकम् ॥ ४ ॥

अथान्यत् हरिप्रियं तदुक्तम् ।

धर्मः सत्यमिति प्रोक्तो धर्मश्चापि हरेः प्रिय इति ।

अनेन यो हरेः प्रियः स धर्मोऽन्यो लौकिक इत्युक्तं भवति अत एव मानयामासेत्युक्तं न तु प्रियमिति अपविद्धगदाप्रत्यादानं योधानां जुगुप्सितं किमुत हरेरतो हरिणा किमकारीति तत्राह । सुनाभमिति। सुनाभं सुदर्शनम् ॥ ५ ॥

महानपीतरप्रेरित एव स्वकर्तव्यं करोति न तु स्वयमिति भावज्ञाः खेचरा अस्य वधाय प्रेरयन्तीत्याह । तमिति । व्यग्रं शत्रुहननाय विभ्रमच्चक्रं यस्य स तथा तं तद्विदां तस्य हरेः स्वरूपज्ञानाम् ॥ ६ ॥

दैत्यस्य वीरस्वभावं दर्शयति । स इति । खेचराणां तद्वचनं निशम्यामर्षेण दुःसहद्वेषेण परिप्लुतानि स्वस्थानच्युतानीन्द्रियाणि यस्य स तथा स्वदन्तच्छदं स्वाधरोष्ठमदशद्दष्टवान् ॥ ७ ॥

वीरत्वादधरोष्ठदशनफलमाह । करालेति । संचक्षाणः पश्यन् हतोऽसीत्याभाष्येति ॥ ८ ॥

हरेर्युद्धलाघवं वक्ति । पदेति । शत्रोस्तां गदां वातरंहसा वायुवेगेन अनेन प्रतिवीरस्य परिहारायोग्यत्वप्रकाशेन हरेरतिमाहात्म्यं प्रकाशितम् ॥ ९ ॥

एतदेव ध्वनयति । आहेति । चः समुच्चये नह्यल्पमाहात्म्यस्यायुधमाधत्स्वेत्यादिप्रवचनं युज्यते भीत्या वागनुद्गलनाद्गूढ-

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

माक्षिपतीत्याह । त्वमिति । उक्तं सत्यमिति मन्वानः स्वपादं व्यनक्ति । इतीति ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

निर्व्यलीकमकपटमसृतं प्रियं च । प्रेमैकमयत्वात् । पाठान्तरे मृतमर्थतोऽपि निष्कपटम् ॥ १ ॥

अब्जजः योऽधोक्षजोऽपि । सम्प्रति नेत्रादिषु प्रकटीभूत इत्यर्थः ॥ २ ॥

तद्भगवत्करात् पतनमद्भुतमिवाभवदितीवशब्दो भगवदिच्छया तत्तत्सम्भवान्न वस्तुतोऽद्भुतमिति बोधयति ॥ ३ ॥

समृधे सयुद्धे जने यो धर्मस्तम् ॥ ४ ॥

सुनाभश्चेति चकारेण पूर्वं गदामपि सस्मारेति गम्यते ॥ ५ ॥

बर्हिर्दितिपुत्राधमेन अन्तस्तु स्वपार्षदमुख्येनेत्यर्थः । दितिजाक्षिप्तेनेति पाठे नाममात्रतस्तद्रूपेण ॥ ६—१२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं स्थितिर्हरौ तस्य पूर्वाध्याये निरूपिता ।
प्रलयो ब्रह्मणो वाक्याद्भगवत्कृत ईर्यते ॥ १ ॥
एकोनविंशे भगवान् क्रीडन्निव महासुरम् ।
सुराणां मदर्थाय हतवानिति वर्ण्यते ॥ २ ॥

एवं ब्रह्मणा स्तोत्रे क्रियमाणेऽपि भक्तत्वान्मारयिष्यति नवेति सन्देहे सत्याह । अवधार्येति । भगवांस्तद्वाक्यं विचारितवान् किमयं देवभावात् द्वेषेण वदति आहोस्विदेवमेवेति तन्निश्चित्य तथैव करिष्यामीत्यङ्गीकृतवान् विरिञ्चिशब्देनापि तस्यासत्यवाक्यत्वं निराकृतं रविशब्दो विपरीतः विरं रंविश्चिनोतीति विरुच्यः सूर्यादिनिर्मातायं नान्धकारनिर्मातेति अतो निर्व्यलीकमसृतं हितकारि मिष्टं च एवं गुणयुक्तं वचः सत्यमित्यवधार्य ब्रह्माणं भीतं मत्वा प्रहस्य सान्निध्ये ज्ञानोत्पत्त्यभावाय वा प्रेम्णा गम्भीरं तद्वचः कटाक्षेणैवाग्रहीत् प्रेमगर्भेणेति पाठे दृष्टिः प्रेमसहिता अधिकं च प्रेमोत्पादयिष्यतीति तेषां निर्भयत्वं बोधयति । स इति । भगवान् भूम्युद्धारं कृत्वा नान्तर्हितः तस्मिन् रूपेणान्तः प्रवेशित इति बोधयति ॥ १ ॥

एवं वधपूर्वभावं भगवदिच्छामुक्त्वा हननात्पूर्वं सर्वोत्सत्वात्तस्य कामनां पूरयति तस्य हि युद्धं कर्तव्यमिति महती कामना जयश्च भवत्विति अतः प्रथमं तदुभयं सम्पादयति तत्र प्रथमं युद्धे तस्य जयं सम्पादितवानित्याह । ततः सपत्नमिति । दैत्यजयोऽग्रे वक्तव्य इति प्रथमं भगवत्कर्तृकं युद्धमाह ।

युद्धे तस्य प्रतीकारो दैत्यधर्मश्च साधकः ।
सर्वलोकप्रसिद्धिश्च भक्तानामाशिषस्तथा ॥
सर्वेषामेव हृदये जयस्तस्य समागतः ।
इति दर्शयितुं देवास्तदाहुरिति रूप्यते ॥

अतो ब्रह्मवाक्यानन्तरं सपत्नं शत्रुं जघानेति संबन्धः प्राप्त्यर्थं मुखतश्चरन्तमिति मुखत इति संमुखे मुख्यत्वेन वा मुखादेव चरति अन्तस्तु मारणेच्छायामुत्पन्नायां तस्यापि हृदये मरणं समागतमिति मुखत एव युद्धं चरणमुक्तमेवं ज्ञात्वापि निर्भयः पलायनाभावायोक्तं उत्पत्योत्प्लुत्य उपरि पतित्वा च अक्षजो भगवान् ब्रह्मणो नासापुटाज्जात इति गदया हनावताडयत् हनुर्मुखाधोऽस्थि ॥ २ ॥

ततः प्रतीकारमाह । सा हता तेनेति । तदा सा कौमोदकी तेन हता भगवत्कराद्विगलिता आकाशे भ्रमणं प्राप्य विघूर्णिता अपतत् भूमौ पतिता न तु भिन्ना किन्तु भूमिं प्राप्य रेजे भगवतो हस्तात् कौमोदकीपातः अत्यद्भुतमित्याह । तदद्भुतमिति । अद्भुतादृष्टाश्चर्यमित्येत्यनेनोक्तं भगवद्धस्तादेव पात आश्चर्यं ततोऽपि कौमोदक्याः सा ह्यासन्यरूपा दैत्यास्तत एव विहता भवन्ति स हि अपहतपाप्मा अत आश्चर्यादप्याश्चर्यं भगवता चेत्कामना पूर्येत तदा मर्यादामुल्लङ्घ्यापि पूर्यत इति तथा जातम् ॥ ३ ॥

भगवत्कृतमेवैतदिति ज्ञापयितुं तस्य धर्मबुद्धिरुच्यते अन्यथा दुष्टो निष्कारणं लोकेषु आगस्कृत् भयकृत् दुःखकृत् कथं तदा तूष्णीं भवेत् नापीह भगवत्सामर्थ्यादिति अतो धर्मो निरूप्यते । स तदेति । तदा कौमोदकीपातानन्तरं लब्धतीर्थोऽपि भगवानशस्त्रः इदानीं जेतुं शक्यत इति लोकदृष्ट्या जयावसरे विद्यमानेऽपि निरायुधं भगवन्तं न बबाधे ननु जयाकांक्षी कथं न बबाधे तत्राह । मानयन् स मृधे धर्ममिति । संग्रामे निरायुधः शत्रुर्न मारणीय इति धर्मः तं धर्मं परिपालयन् न मारितवानित्यर्थः इमं धर्मं भगवत्कृतजयार्थं प्रतिपाद्य तस्य धर्मस्य सहजत्वाभावाय तस्याशीष्टमन्यदिव्याह । विष्वक्सेनं प्रकोपयन्निति । विष्वक् परितः सेना यस्य अनेन तस्य भ्रान्तत्वं सूचितं तूष्णीं भावेऽपि जयप्रतिपादकभावं चोद्दिरति जितं मयेति एवं दैत्यस्य जयबुद्धिर्निरूपिता ॥ ४ ॥

लोकानां जयबुद्धिमाह । गदायामिति । अपविद्धायां ताडनेन पतितायां सत्यां लोके सर्वत्र हाहाकारे चिन्तितैरते सति गदापातहेतुकः हाहाकारः भगवानपि लोकानुसारी तस्य जयमङ्गीकृतवानित्याह । मानयामास तद्धर्ममिति । तस्यायुधरहितवधाभावलक्षणं धर्मं मानयामास अन्यथा भगवदनङ्गी कृतो धर्मः फलदायी न भवेत् ततः किं कृतवानित्याह । सुनाभं चास्मरदिति । सुनाभं सुदर्शनं चकारात् स्वस्य भावं च ननु स्मरणमात्रेण कथं स्वभावस्य भगवत्त्वस्य सुदर्शनस्य चागमनमित्याशङ्क्य बोधयति विभुरिति स हि समर्थः ॥ ५ ॥

तदा भगवद्भक्तानामपि तस्य जयः हृदये समागत इति पुनर्भगवन्तं सायुधं दृष्ट्वा उपजीविता अविलम्बेन तद्वधार्थं प्रार्थयन्ति । तं व्यग्रचक्रमिति । तं पूर्वोक्तप्रकारेण क्रीडाकारिणं सुदर्शनमपि भगवल्लीलां न हृदयेन मानयति न वा गदायाः पातमतो दैत्यवधार्थं व्यग्रं चक्रं यस्य ननु भगवान् सृष्ट्यर्थं प्रवृत्तः कथं तं मारयति दितिपुत्राधमेनेति दैत्या अप्युत्पादनीया इत्याशङ्क्याह दितेः पुत्राणां मध्ये अधमेन महाधमेन सृष्टिरुत्तमा भवेदिति अधमत्वं च दैत्यमर्यादाभावादतो वध्य इति सुदर्शनादिस्मरणं ननु हीनेन तेन सह युद्धं किमर्थं करोति सुदर्शनेन वध एव परं कर्तुमुचित इति आशङ्क्याह । स्वपार्षदमुख्येनेति । स हि पार्षदानां मध्ये मुख्यः अतः स्वसेवकमुख्येन सह क्रीडा उचितेत्यर्थः युद्धार्थं तेन सह विशेषेण सज्जमानमासङ्ग्युक्तमत एव देवानामेतन्मर्माजानतां केवलमाकाशे स्थित्वा पश्यतां तत्र तस्मिन्नवसरे विचित्रा वाचो जाताः कश्चिदाह मारयिष्यति कश्चित् नेति कश्चित् शक्यः कश्चिदशक्य इति एवं चित्रा वाचः स्मेति प्रसिद्धे आशीर्वादमाहुः व्यग्राः सन्तः ते स्वस्त्यस्तु अमुं च जहीति कुशल शत्रुजयश्च इव प्रार्थयन्ति चित्रा वागेव वैयग्र्ये हेतुः

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

वैयग्र्याच्च तथा वचनमिदं तु वचनं न चित्रमिति इति शब्दस्य प्रकारवाचित्वेऽपि वाक्यत्रयनिरूपणं कर्त्तव्यं स्यात् ॥ ६ ॥

एवं सार्वजनीनं तस्य जयं निरूपयति । सतन्निशम्येति अष्टादशभिः । सर्ववाक्प्रतिपाद्या हि भगवतो लीलेति ।

दशभिः सत्ययुद्धं तु मायायुद्धं तथाष्टभिः ।
द्विविधेनापि युद्धेन क्रीडति स्मेति वर्ण्यते ।
दैत्यस्य युद्धसंरम्भः पश्चाद्युद्धं सवाचकम् ।

प्रतीकारोक्तिभिश्चैवं क्रोधाद्युद्धं पुनस्तथा । ततः पौरुषनाशोऽभूत् भगवल्लीलया रिपोः । एवं षड्भिर्गदायुद्धं द्वाभ्यां शूलेन चैव हि । मुष्टिभिश्च तथा द्वाभ्यां स्वदैवास्त्रात्तथा स्वतः । युद्धंनिरूपितं तस्य मायासामान्यवर्णनम् । चतुर्भिस्तद्विशेषाश्च तस्याप्युक्ता प्रतिक्रिया । माया युद्धं ततः षड्भिर्द्वयात्तूत्तरहेतुकम् । दुर्निमित्तं दशभिर्युद्धं मारणार्थमिहोच्यते । एकेन मारणं चैव मरणं च ततो महत् । मृतस्य वर्णन चैव त्रिभिरित्येष संग्रहः । स्तोत्रं भगवतोयानमुपसंहार एव च । माहात्म्यंद्विविधं तस्य श्रवणस्य निरूपितम् । गुणोपसंहृतिश्चैव दृष्टान्तार्थमिहोच्यते । जातं जनिष्यमाणं च फलमत्र निरूप्यते । द्वाभ्यां द्वाभ्यां ततः षड्भिः श्रवणस्य फलं ततः । प्रथमं स्वायुधगदया युद्धमाह द्वाभ्याम् । उद्योगयुद्धभेदेन स तं निशम्येति । जयानन्तरं प्राणिन उत्साहो भवति अकस्माद्भगवतः साधनान्तरप्राप्तौ भगवदुत्कर्षं दृष्ट्वा क्रुद्धो जात इत्याह । स दैत्यः अग्रतः तं भगवन्तमात्तरथाङ्गं निशम्य श्रुत्वा क्रोधादृष्टमपि श्रुतमिव मन्यते निशाम्येति वा पाठः स्पष्टः । पद्मपलाशलोचनमिति । चक्रायुधः कमलनयनः तस्यान्तकाले ध्येय इति वर्णितं शत्रोर्जये जातेऽप्यक्षोभदृष्टिं वा तादृशं दृष्ट्वा भगवतः अक्षोभलक्षणमुत्कर्षमसहमानः अमर्षपरिप्लुतेन्द्रियो जातः अमर्षेण क्रोधेन परिप्लुतानि मग्नानीन्द्रियाणि यस्य पुनरुद्गतेन क्रोधेन स्वदन्तच्छदमधरमदशत् दष्टवान् पुनः अन्तः प्रवृद्धेन क्रोधेन श्वसन्नपि जातः एवं युद्धार्थं क्रोधत्रयं कारणं निरूपितम् ।

उत्कर्षदृष्टौ मात्सर्याच्चक्रदृष्टेस्तु घातकः ।
स्वाभिमानान्महान् रोषः विलम्बं न सहेत्तथा ।

एवं युद्धार्थं तस्य क्रोधो वर्णितः ॥ ७ ॥

युद्धमाह । करालेति । कराला दंष्ट्रा यस्य दैत्यस्य यमस्तद्दंष्ट्रायामागत इति स्वाधिदैविकस्नामग्र्या साहित उक्तः चक्षुर्भ्यां व्याचक्षाण इति पूर्णा दृष्टिः तत्रैव निरूपिता तेनान्यत्र दृष्टिर्यावर्त्तते इतिविचारान्तरेणापि युद्धाभावशङ्का व्यावर्तिता सती दृष्टिं व्यावर्तितुमाह । दहन्निवेति । स्वाग्निर्यां जगद्वा रूपवदुष्णस्पर्शोऽपि चक्षुषोर्जात इति दहन्नित्युक्तं तथाप्यग्निराश्रयं दग्ध्वैव परं दहतीति इवेत्युक्तम् एवं क्रूरदृष्ट्या दृष्ट्वा स्वगदया सहितः आभिमुख्येन गत्वा अतो हतोऽसीत्याहनत् अयं हि यज्ञः यथा स्वधितेमैनं हिंसीरिति न वा उ वैतन्म्रियस इति विपरीतमिव वदन् अहनत् ननु विपरीतवादे को हेतुस्तत्राह । हरिमिति । स हि सर्वदुःखहर्ता कथं वा हतो भवेत् अथवा अयुध्यमानं कथं मारयिष्यसीत्याशङ्क्याह । हतोऽसीत्याहनत् । पूर्वं मासमन्तात् हतवानसीत्यर्थः सुखे नापि मारणं कृत्वा मारयतीति केचित् स्तुत्यर्थत्वे हतोऽसि प्राप्तोऽसीत्यगमादित्यर्थः ॥ ८ ॥

एवं तस्य युद्धमुक्त्वा तस्य प्रतीकारमाह । पदा सव्येनेति । पश्चात्तनो वामपादः सव्यपादुच्यते तां गदां भगवांल्लीलया प्राहरत् पादघातेन तां भूमौ पातितवानित्यर्थः । साधो इति सम्बोधनं विश्वासार्थं साधूनां रक्षार्थं वा तथा कृतवानिति-सूचितम् । भगवानिति । अवज्ञया प्रहारेण तथा करणे सामर्थ्यं यज्ञशूकर इति । तदर्थमेवावतार इति अवश्यं प्रतिक्रियाकरणं लीलयेति । पुनः क्रोधोत्पादनार्थं मिषत इति तस्यास्तथात्वाय वातरंहसमिति गदाया उत्कृष्टत्वं प्रतिक्रियाभावाय ॥ ९ ॥

एवं प्रतीकारं कुर्वन्नेव क्रोधं जनयित्वा वाचापि क्रोधं जनयति । आह चेति । उक्तवानपि आयुधं गृहाण तदनु घटस्व युद्धं कुरु युद्धार्थं वा सज्जो भव यतस्त्वं जिगीषसि वचनत्रयं तस्याभिमानभङ्गार्थं निरभिमानस्य कार्यं पतितस्य ग्रहणं निर्लज्जस्य कार्यं पुनर्युद्धकरणं भ्रान्तस्य कार्यम् एतादृशोऽप्यहं जेष्यामीति एव मुक्तेऽपि क्रोधवशाद्धङ्गमज्ञात्वा स एव दैत्यः तयैव गदया भूयस्ताडयन् भृशमनदत् इदं तस्य द्वितीयं युद्धं मध्यमभावेन ॥ १० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

युद्धे तस्यासमर्थस्य मायाः सृष्टवतो हरिः ।
स्वाङ्गेण हत्वा तमहन्नूनविंशे स्वपाणिना ॥

निर्व्यलीकं निष्कपटमस्मद्वाद्ध्वसेऽसुर इति । अमृतं न यावदेष वर्द्धेतेत्यादि प्रेममयत्वादमृततुल्यं वचस्तद्भगवताऽग्राद्रेणास्वादितं तदित्याह । प्रहस्येति । अहो मत्प्रेम्णः सर्वविस्मारकतासामर्थ्यं यत्कालात्मनोऽपि मम मुहूर्त्तवत्समुपदिशतीति प्रेमगर्भेणैवापाङ्गेन स्वीचकार सत्यं त्वं यथा दिशसि तथैव कुर्वन्निममधुनैव हन्मि । किन्तु ममास्य च युयुत्सासुखं पूर्यतामतोऽद्य रात्रावेवैनं हनिष्यामीति ज्ञापयामासेत्यर्थः ॥ १ ॥

मुखतः संमुख एव हनौ कपोलस्याधोभागे अक्षजः ब्रह्मणो घ्राणेन्द्रियादाविर्भूतः ॥ २ ॥

सा हरेर्गदा तेनासुरेण विहता विच्युता सती विघूर्णिता भूत्वा अपतत् विरेजे च तत् भगवत्करात् पतनम् ॥ ३ ॥

लब्धतीर्थः लब्धावसरोऽपि न ववाधे न प्राहरत् तत्र हेतुः मानयन्निति तेन च प्रकोपयन्निति । किमरे मामपि त्वद्बाहुबलादेव पतितगदं व्याकुलं जानासि यत् स्वधार्मिकत्वं प्रथयन्नप्रहरासि पश्य रे ! पश्य क्षणमात्रेणैव त्वत्प्राणानेवापहरामीति भगवांश्चुकोपेत्यर्थः ॥ ४ ॥

अपविद्धायां पतितायां नचैतत् शाल्वयुद्धे सार्ङ्गधनुः पतनमिव परमतमाशङ्कनीयम् । हिरण्याक्षस्य पार्षदत्वात् पार्षदस्यच भगवत्तुल्यबलत्वात् तुल्यबलत्वे च गदापतनस्यासम्भवत्वाभावात् तुल्यबलत्वं विना च युद्धसुखस्यानुत्पत्तेर्गदापतनमिदं भगवदुत्साहवर्धकत्वाद्भूषणमेव नतु दूषणम् । भक्तस्थाने भगवता प्रेमाम्बुधिना स्वपराभवस्य शतशोऽङ्गीकृतत्वादित्येतदर्थं गजकमुत्तरश्लोके स्वपार्षदमुख्येनेति पदमनुसन्धेयं सुनाभश्चेति चकाराद्गदामपि पूर्वं सस्मारैवेति गम्यते ॥ ५ ॥

व्यग्रं सम्भ्रमयुक्तं हन्त ! हन्त ! भगवान्मां स्मरति स्मेति स्वयमेवागत्य हस्ते लग्नं चक्रं यस्य तम् । अत्र दितिपुत्राभिधेन दितिजाभिधेन दितिपुत्राधमेनेति पाठत्रयम् । विषज्जमानं वीक्ष्येति शेषः ॥ ६ ॥

तां स आपततीं वीक्ष्य भगवान् समवस्थितः ।
जग्राह लीलया प्राप्तां गरुत्मानिव पन्नगीम् ॥ ११ ॥
स्वपौरुषे प्रतिहते हतमानो महासुरः ।
नैच्छद्गदां दीयमानां हरिणा विगतप्रभः ॥ १२ ॥
जग्राह त्रिशिखं शूलं ज्वलज्ज्वलनलोलुपम् ।
यज्ञाय धृतरूपाय विप्रायाभिचरन् यथा ॥ १३ ॥
तदौजसा दैत्यमहाभटार्पितं चकासदन्तःख उदीर्णदीधिति ।
चक्रेण चिच्छेद निशातनेमिना हरिर्यथा तार्क्ष्यपतत्रमुज्झितम् ॥ १४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ॥

प्रथममासुरथाङ्गं निशाम्य दृष्ट्वा पुनरग्रतो व्यवस्थितं च विलोक्य दन्तच्छदमधरम् ॥ ७ ॥

सभ्रूत्तायाः पश्यन् हतोऽसि पच्चे ज्ञातोऽसि ॥ ८ ॥

वातरंहसं वायुवेगाम् ॥ ९ ॥ १० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ऊनविंशे हिरण्याक्षवधं वर्णयितुमाह । अवधार्येति । सर्वेशं मां प्रति अधुनैवाभिजिन्नामेत्यादिविज्ञापयतीति प्रहस्यापाङ्गेनाक्षिप्तं कोचिन स्वीकृतवान् ॥ १ ॥

अध्वजः ब्रह्मप्राणेन्द्रियजः ॥ २ ॥

सा गदा विघूर्णिता भूना अपतत् रेजे च तत् असुरपौरुषतो भगवद्गदापतनमद्भुतमिवाभवत् ॥ ३ ॥

सः असुरः लब्धतीर्थः प्राप्तप्रहारावसरो बभूव स तदापि तस्मिन्नवसरेऽपि निरायुधो न हन्तव्य इति मृधे धर्मं मानयन् विष्वक्सेनं प्रकोपयन् च न प्राहरत् वाक्यभेदास्स इत्यस्य अपौनरुक्त्यम् ॥४॥

गदापतनस्याद्भुतत्वं प्रपञ्चयति गदायामिति । ५ ।

व्यग्रमनैकाग्र्ययुक्तं सर्वान् सुरासुरान् भस्मीकरिष्यतीतिप्रतीयमानं चक्रं यस्य तं दितिपुत्राधमेनैव विसज्ञमानं विशेषेण संगं प्राप्नुवन्तं प्रति अतद्विदां यथापात्रं निग्रहानुग्रहकारित्वं भगवतो जानतां ते त्वदीयानां ने त्वत्तो वा खेचराणामस्माकं स्वस्ति भवतु अमुं मुञ्जहीति तथा चित्रा अन्या अपि बहुविधा वाच आसमन्तात् आसन्नम् । ६ ।

आसुरथाङ्गं निशाम्य दृष्ट्वा अग्रतो व्यवस्थितं च विलोक्य ॥७-८॥

वातरंहसं वायुवेगाम् ॥ ९ ॥

घटस्व प्रयत्नं कुरु ॥ १० ॥ । ११ ।

भाषाटीका ।

मैत्रेयजी बोले ब्रह्मा का निष्कपट सत्यवचन को श्रवण करके किञ्चित् हँसकर कृपादृष्टि से भगवान् ने उस वचनको ग्रहण किया ॥ १ ॥

तदनन्तर निर्भय होकर सम्मुख में घूमते हुये शत्रुको देखकर आकाश में कूदकर भगवान् ने गदा से डाढ के ऊपर मारा ॥ २ ॥

उस गदा को असुर ने अपनी गदासे मारा सो भगवान् के हाथसे छूटकर घूमती हुई दीखपडी यह बडा आश्चर्य हुआ ३॥

उस असुरने उस वखत अपना दाव पानेपरभी युद्ध में विना आयुधवाले के साथ लडना धर्मनहीं है ऐसा समझ कर भगवान् को क्रोधकराने को युद्ध नहीं किया ॥ ४ ॥

गदा जब गिरगई देवादिकों ने हाहाकार शब्द करचुके तब भगवान् ने उसके धर्मकी प्रसंशा करी फिर सुदर्शन चक्रको स्मरण किया ॥ ५ ॥

भगवान् के पार्षदों में श्रेष्ठ दिति पुत्र अधम के साथ में चक्र चलाकर युद्ध में स्थित भगवान् को देखकर भगवान् के प्रभाव को न जानने वाले आकाश चारी देवादिकों ने विचित्र प्रकारके शब्द किये कि हे प्रभो ! आपका जय हो इसको जीतो ६

वह हिरण्याक्ष हाथ में चक्र लिये हुये सम्मुख स्थित पद्म दल लोचन भगवान् को देखकर सब इन्द्रियों में क्रोध से भरगया श्वास लेकर क्रोध से दांतों को पीसने लगा ॥ ७ ॥

वडे विकाल दांतों वाला जलातासा दोनों नेत्रों से देखने लगा कूदकर अपनी गदा से अब मरा ऐसा कहकर भगवान् पर गदा चलाताहुआ ॥ ८ ॥

हे साधो ! विदुरजी ! यज्ञ सूकर भगवान् ने शत्रु के देखते ही वायु सरीके वेग वाली उस गदा को बांये चरण से नीचे गिरा दिया ॥ ९ ॥

फिर भगवान् बोले आयुध ग्रहण कर तैय्यार हो तूं जीतने चाहता है ऐसा कहने पर असुर भगवान् को गदा से प्रहार करके गर्जने लगा ॥ १० ॥

श्रीधरस्वामिकृतभावार्थदीपिका

हतो मानो गर्वो यस्य ॥ १२ ॥

ज्वलन् यो ज्वलनस्तद्वल्लोलुपं ग्रसनव्यग्रम् यज्ञाय विष्णुमालक्ष्य अकार्यकरत्वे दृष्टान्तः विप्रमुद्दिश्याभिचारं कुर्वन् यथा ॥ १३ ॥

अन्तः खे आकाशमध्ये चकासत् प्रकाशमानम् उदीर्णोत्कटा दीधितिर्दीप्तिर्यस्य निशातनेमिना शितधारेण हरिरिन्द्रोयथा तार्क्ष्यस्य पतत्रमुज्झितं चिच्छेद देवान्विनिर्जित्यामृतकलशं नयता गरुडेनेन्द्रप्रयुक्तवज्रस्यामोघस्य मानं दातुं पिच्छमकं त्यक्तं तद्यथेन्द्रश्चिच्छेद छिन्नं च तद्यथा खे प्रचकाशे तद्वत्प्रकाशमानमित्यभिसन्धिः ॥ १४ ॥

वृक्णे स्वशूले बहुधारिणा हरेः प्रत्येत्य विस्तीर्णमुरो विभूतिमत् ।
प्रवृद्धरोषः स कठोरमुष्टिना नदन् प्रहृत्यान्तरधीयतासुरः ॥ १५ ॥
तेनेत्थमाहतः क्षत्तर्भगवानादिसूकरः ।
नाकम्पत मनाक् क्वापि स्रजा हत इव द्विपः ॥ १६ ॥
अथोरुधाऽसृजन्मायां योगमायेश्वरे हरौ ।
यां विलोक्य प्रजास्त्रस्ता मेनिरेऽस्योपसंयमम् ॥ १७ ॥
प्रववुर्वायवश्चण्डास्तमः पांसवमैरयन् ।
दिग्भ्यो निपेतुर्ग्रावाणः क्षेपणैः प्रहिता इव ॥ १८ ॥
द्यौर्नष्टभगणाभ्रौघैः सविद्युत्स्तनयित्नुभिः ।
वर्षद्भिः पूयकेशासृग्विण्मूत्रास्थीनि चासकृत् ॥ १९ ॥
गिरयः प्रत्यदृश्यन्त नानायुधमुचोऽनघ ! ।
दिग्वाससो यातुधान्यः शूलिन्यो मुक्तमूर्धजाः ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अराः सन्त्यस्येत्यरि चक्रं तेन बहुधा वृक्णे छिन्ने सति प्रत्येत्याभिमुखमागत्य हरेरुरो वक्षः प्रहृत्य ॥ १५ ॥

मनागीषदपि क्वाप्यंशे ॥ १६ ॥

अस्य जगतः उपसंयमं प्रलयम् ॥ १७ ॥

पांसुकृतं तमश्च प्रेरितवन्तः क्षेपणैर्यन्त्रैः ॥ १८ ॥

नष्टो भगणो नक्षत्रसमूहो यस्याम् । अनेन दैत्यबलातिरेकाद्ब्रह्मदत्तमुहूर्तातिक्रमो गम्यते अह्नि नक्षत्राणामसम्भवात् ॥ १९ ॥

नाना आयुधानि मुञ्चन्तीति तथा यातुधान्यश्च प्रत्यदृश्यन्त ॥ २० ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

अप्राप्तामेव स्वसमीपे प्राप्तां वा ॥ ११ ॥ १२ ॥

अभिचारं कुर्वन् यथाहवनीयद्रव्यं गृह्णाति कश्चित् ॥ १३ ॥

तद्वत् । छिन्नपक्षवत् प्रकाशमानमिति प्रकाशमात्रांशे दृष्टान्तो नतु गरुडेच्छावत् दैत्येच्छायामपि ॥ १४ ॥

प्रवृद्धरोषत्वादिकं वस्तुतस्तदाभास एव प्रहृत्येति क्वचित्पाठः प्रहारादिकञ्च भगवतोऽच्छेद्यत्वादिकं ज्ञात्वैवेति ॥ १५ ॥

तेन कठोरमुष्टिना अंशेऽङ्गे स्रजा हत इति दृष्टान्तेन तदेव स्पष्टीकृतम् ॥ १६ ॥

अथ कम्पाभावज्ञानानन्तरं प्रजा ब्रह्मपुत्रादयः ॥ १७ ॥

यन्त्रैर्गोफियेति ख्यातैः प्रहिताः प्रक्षिप्ताः ॥ १८ ॥

तादृशी द्यौर्बभूवेति शेषः अनेन विशेषणेन अतिरेक्याद्याधिक्यात् नक्षत्राणां ध्वंसाभावप्रतियोगिनां स्तनयित्नुर्गर्जितम् मेघ ज्योतिराख्यो वा ॥ १९ ॥ २० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तामसुरेण प्रयुक्तामापतन्तीमागच्छन्तीं गदां वीक्ष्य भगवान् गुरुत्मान् पन्नगीं सर्पमिव प्राप्तां समीपं प्राप्तां लीलया जग्राह ॥ ११ ॥

एवं स्वपौरुषे स्ववीर्ये प्रतिहते विहते सति हतः विगतः मानो गर्वो यस्य सोऽसुरः अत एव विगतप्रभः विनष्टतेजाः हरिणा दीयमानामपि गदां नैच्छत् ग्रहीतुमिति शेषः ॥ १२ ॥

किंतु त्रिशिखं तिस्रः शिखा अग्रभागा यस्य तं ज्वलन् यो ज्वलनः अग्निस्तद्वल्लोलुपं स्वकार्यकरणव्यग्रं शूलं धृतवाराहरूपाय यज्ञाय यज्ञमूर्त्तये जग्राह प्राहिणोत् यज्ञाय धृतरूपायेति सर्वयज्ञलिङ्गे सर्वयज्ञभोक्तरि तत्फलप्रदे स्वेच्छोपात्ताप्राकृतदिव्यवराहरूपे भगवति शूलस्य स्वकार्य्यकरणं सूचितम् एतदेव दृष्टान्तेन स्पष्टयति । विप्राय ब्रह्मविद्भिमुद्दिश्य अभिचरन्मारणायोगं कुर्वन् यथा न मारयति तथा इत्यर्थः ज्वलन् सामिद्धः ॥ १३ ॥

ओजसा वीर्येण दैत्यानां मध्ये महाभटेन महाशूरेणार्पितं प्रयुक्तम् उदीर्णा उद्गता दीधितयो यस्य तदन्तः खे आकाशमध्ये चकासतं प्रकाशमानं तत्रिशूलं निशातनेमिना निशितधारेण चिच्छेद हरिरिन्द्रो यथा तार्क्ष्यपतत्रं तार्क्ष्येणोज्झितं त्यक्तं पक्षमिवेत्यर्थः पुरा खलु देवान्निर्जित्यामृतकलशं नयता गरुडेनेन्द्रप्रयुक्तस्य वज्रायुधस्यामोघस्य मानं दातुं पत्रमेकं त्यक्तं तच्चेन्द्रो वज्रेण चिच्छेदेतीतिहासोऽत्रानुसन्धेयः ॥ १४ ॥

अरिणा चक्रेण स्वशूले बहुधा वृक्णे छिन्ने सति प्रवृद्धः रोषो यस्य सोऽसुरः प्रत्येत्याभिमुखमागत्य स्वकठिनतरमुष्टिना विभूतिमल्लक्ष्म्या आश्रयभूतं विस्तीर्णं हरेर्भगवतः उरः वक्षः प्रहृत्य प्रताड्यान्तरधीयतान्तर्हितवान् ॥ १५ ॥

हे क्षत्तः ! तेनासुरेणेत्थम् मुष्टिना आहतस्ताडित आदिवाराहो भगवान्मनागीषदपि नाकम्पत न चलितवान्स्रजा पुष्पदाम्ना हतो गज इवेति ॥ १६ ॥

अथान्तर्द्धानानन्तरं योगमायेश्वरे युज्यन्ते इति योगाः तासां मायानामीश्वरे स्वसम्बन्धिनीनामाश्चर्यशक्तीनां नेतरि हरौ भगवत्युरुधा माया असृजत् कथं भूतां मायामसृजदित्यत्राह ।, यां विलोक्य दृष्ट्वा त्रस्ता भीताः सर्वाः प्रजा अस्य विश्वस्योपसंयमं प्रलयं मेनेरि अमन्यन्त ॥ १७ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मायाः प्रपञ्चयति । प्रववुरित्यादिभिश्चतुर्भिः । प्रचण्डाः प्रचण्डवायवः पांसवं पांसुकृतं तम ऐरयन् प्रसृतवन्तः सन्तः प्रववुः ग्रावाणः अश्मानः दिग्भ्यः क्षेपणैः यन्त्रविशेषैः प्रहिताः प्रयुक्ता इव निपेतुः १८

पूयं दुर्गन्धि असृक् रक्तं विट्विष्ठा पूयादीनसकृत्पुनःपुनः वर्षद्भिः सविद्युत्स्तनयित्नुभिः विद्युत्सहितं यथा तथा ध्वनयद्भिर्मेघौघैः नष्टभगणा नष्टो नक्षत्रगणो यस्याः तथा भूताभूदित्यर्थः नष्टभगणोत्यनेन चतुर्मुखोक्तसंध्यावेलातिक्रमः सूचितः अहि नक्षत्राणामसम्भवादिति भावः ॥ १९ ॥

गिरयः पर्वताः नानायुधमुचः नानायुधानि मुञ्चन्तः प्रत्यदृश्यन्त दृष्टा बभूवुः तथा यातुधान्यश्च प्रत्यदृश्यन्त कथंभूता दिग्वाससः दिगम्बराः शूलिन्यः शूलधारिण्यः मुक्ताः प्रसारिता मूर्द्धजाः केशा यासांताः ॥ २० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हरिरपि युद्धलाघवं दर्शयतीत्याह । तां स इति ॥ ११ ॥

दैत्यस्याभिमानमुद्दलयति । स्वपौरुष इति ॥ १२ ॥

ततः किञ्चकारेति तत्राह । जग्राहेति । अभिचरन् कृत्यां प्रयुञ्जानः ॥ १३ ॥

स्मरणादागतं मां वैरिवधाय किमिति न प्रायुङ्क्त भगवानिति सुदर्शनचैत्यं जानन्निव तेन शूलमच्छिनदित्याह । तदेति । यदोजसा बलेन दैत्येन महाभटेनार्पितं मुक्तं तदा भगवान्निशातनेमिना उत्तेजितधारेणानेनानेकसंख्यापरिच्छेदनेऽप्यस्य नेशिस्वनाशो नास्तीति सूचनेन हरिचक्रस्य हरेरिवातिमाहात्म्यमुक्तं चक्रेण शूलं चिच्छेदेत्यन्वयः आत्मस्पर्शात्पूर्वमेवाच्छिनदिति द्योतनायोक्तमन्तः ख इति अन्तः खे आकाशमध्ये उदीर्णा दीधितिर्यस्य तत्तथोक्तमनेनं हरिचक्रादन्येनाच्छेद्यत्वमुद्द्योतितं मन्दबुद्धयवतारार्थं निकृष्टमपि दृष्टान्तयति । हरिरिति । दधीचेर्महामुनेरस्थ्ना विरचितवज्रस्यामोघत्वेन तदच्छेदे मुनेरवज्ञानिमित्तकोपभयात् गरुडेनोज्झितं त्यक्तं पतत्रमिन्द्रोऽच्छिनदिति तदिहोच्यते हरिरित्यादिना ॥ १४ ॥

किं दैत्य आयुधाभावादधावदिति तत्राह । वृक्ण इति । वृक्णे छिन्ने विभूतिर्लक्ष्मीरस्यास्तीति विभूतिमत् प्रहृत्य प्रहारं कृत्वा असुरः मायया असनशीलः असेरुरादिति सूत्रादसुक्षेपण इति धातोस्ताच्छील्यार्थे उरप्रत्ययो भवति ॥ १५ ॥

दैत्यमुष्टिप्रहारेण किं हरिणा पतितं मूर्च्छितं पलायितमिति विदुरस्य मानसीं शङ्कां परिहरति । तेनेति । द्वाभ्यां पिचलीनि द्विपो गजः ॥ १६ ॥

अन्तर्धानं दैत्येन किमकारीति तत्राह । अथेति । योगमायेश्वरस्वरूपभूतानामणिमादिमहिम्नामधिपतावित्यनेनासुर्यो माया हरेर्बाधिका न स्युरिति सूचितम् अस्य विश्वस्योपसंयमं प्रलयम् ॥ १७ ॥

पांसवं धूलिमयं क्षेपणैः पाषाणक्षेपणैः पाषाणक्षेपणयन्त्रैः ॥ १८ ॥

द्यौर्व्योमाभ्रौघैर्मेघजालैर्विद्युत्तडित्स्तनयित्नवो गर्जन्मेघा विद्युत्स्तनयित्नवस्तैः सह वर्तन्त इति तैः ॥ १९ ॥

युधसंप्रहार इति धातोः नानायुधानि नानाविधसंप्रहारात् मुञ्चन्तीति दिग्वाससां नग्नाः ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यज्ञायेति । यज्ञो विष्णुस्तदर्थं लक्ष्यीकृत्येत्यर्थः । विप्रार्थे विप्रमुद्दिश्य अभिचरन् यथा हवनीयद्रव्यं गृह्णाति तद्वत् ॥ ११ ॥

दैत्यमहाभटेन हिरण्याक्षेण अर्पितं क्षिप्तम् । उज्झितमिति तार्क्ष्यपतत्रस्य त्यक्तत्वमात्रांशे तात्पर्यम् । न तु तद्वदिच्छयैव तत्सिद्धमित्यंशेऽपि ॥ १२ ॥

वृक्ण इत्यादिषु पूर्वपूर्ववत् क्रोधादिकं तदाभास एव । प्रहारादिकञ्च भगवतो महासारत्वं ज्ञात्वैव ॥ १३ ॥

तथैवानन्तरमाह । तेनेत्थमिति । आदिः परमकारणरूपश्चासौ शूकराकृतिश्चेति ॥ १४ ॥ १५ ॥

प्रजाः ब्रह्मपुत्रादयः ॥ १६ ॥ १७ ॥

स्तनयित्नुरत्र मेघज्योतिराख्यः । कर्त्तरि प्रयोगात् ॥१८-२४॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अस्यापि प्रतीकारमाह । सतामिति । पूर्वं तस्य विचारो दैवगत्या भूमौ पतिता गदा न तु बुद्धिपूर्वकं तेन तथाकृतमिति अतो मारणमेतज्ज्ञात्वा द्वितीयवारं भगवान् प्रकारान्तरं कृतवानित्याह । स तामापततीं गदामुपरि पतन्तीं वीक्ष्य तिरोभावादिकमकृत्वा यथा पूर्वमेव सम्यगवस्थितः ततः प्राप्तां स्वोपरि समागतां तां गदां लीलया जग्राह उभयोरभिप्रायं समर्थयन् तथाकरणमुपपादयति दृष्टान्तेन । गरुत्मानिव पन्नगीमिति । पन्नगी हि गरुडो मया भक्षणीयः अस्मत्पतिपुत्रादि हन्तीति शीघ्रमायाति गरुडस्तु भक्ष्यं मया प्राप्तमिति मोदकवत्तां गृह्णाति एवं वेगेन समागतां मारणार्थमागतां क्रीडार्थं गृहीतवानित्यर्थः ॥ ११ ॥

एवं प्रतीकारमुक्त्वा तेन तस्य मध्यमभावोऽपि गत इत्याह । स्वपौरुष इति । पुरुषो हि स्वतन्त्रः तस्य परप्रतिबन्धरहितं यत्सामर्थ्यं तत्पौरुषं यदा पुनः पुरुषान्तरसामर्थ्येनोपहन्यते तदोपहतं भवति अन्तस्तस्य नाशो बहिश्च कार्यं न भवति पौरुषं तु पूर्वमेव नष्टमिदानीं ज्ञातमित्यर्थः बलवता वा प्रतिबद्धं स्वशब्देनात्र गदाकृतं तद्द्वारा स्वगतमस्य क्षत्रियत्वात् शस्त्रद्वारैवाभिमानो मुख्यः अतस्तस्मिन् प्रतिहते हतमानोऽपि जातः असुरस्तु क्रूरः अयन्तु महासुरः असुरः देवाल्लब्धवरः अतोऽस्य पौरुषद्वयमवशिष्यत इत्युक्तं भवति अत एव पुनर्दीयमानामपि गदां नैच्छत् यदि गृह्णीयात् कियत्कालं युद्धमपि कुर्यात् भगवत्तेजसा सम्बद्धत्वात् देवतान्तरसामर्थ्याविर्भावादग्रहणम् एवं ज्ञात्वैव भगवतापि दीयते देवतान्तरसम्बन्धोमास्त्विति वा दाने हेतुः । हरिणेति । तदा भगवतो दत्ता तस्मिन् जाता पूर्वं वैष्णवं तेजः तस्मिन् स्थितमिति प्रभा स्थिता गदाद्वारा च समागता पुनश्चेत् गृह्णीयात् पुनः प्रतिसंक्रामेत तदभावात् विशेषेण गता प्रभा यस्य तादृशो जात इत्यर्थः ॥१२॥

तदा देवान्तरवरप्राप्तं शूलं गृहीतवानित्याह । जग्राहेति । शूलं सूच्यग्रभेदकमग्रत्रययुक्तं त्रिशिखं त्रिशूलमिति यावत् शिखापदप्रयोगोऽग्निवद्दाहकमपि तदिति सूचयितुमन्यथा देवताप्राप्तं न स्यात् ज्वलत् यो ज्वलनः तद्वल्लोलुपम् अनेन सुदर्शनवदस्यापि लङ्घैव जाता नचेत्प्रतीकारार्थं स्वयमेव प्रवर्तितुमिच्छति देवताप्रेरणयेति सूचितं तामसी शक्तिर्वा कृत्यारूपात्र प्रवर्त्तत इति तथात्वात् देवताद्युपजीव्यव्यतिरेकेणान्यत्र शक्ता सर्वासामेव देवतानां यज्ञ उपजीव्यः तत्रापि साक्षात्प्रकटः तद्विरोधेनत्वात्मैव

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

न सिध्येत् तमेव मारयितुं तेनैव यो यतते स भ्रान्तः उपजीव्यत्वं दृष्टान्तेन स्पष्टयति । विप्रायाभिचरन्नृयथेति । अभिचारो हि मन्त्रसाध्यः स च ब्राह्मणाधीनः तेनैव मन्त्रेण तस्यैव ब्राह्मणस्यापराधकरणं न युज्यत इत्यर्थः ॥ १३ ॥

ततः किं जातमित्याकांक्षायामाह । तदोजसेति । ओजोऽत्र देवताप्राप्तं तेजः मनसि स्थितं देवताप्राधान्यख्यापनाय दैत्यस्य भटत्वं देवतायाः प्रेरणसामर्थ्याय महाभटत्वं भगवति विरोधख्यापनाय दैत्यत्वमर्पितमिति समर्पितमन्यथा देवतान्तरभजनदोषः स्यादिति परमार्थः खे आकाशे चकासत् प्रकाशयुक्तम् अन्तः उदीर्णा दीधितिर्यस्य रुद्रा ह्यन्तरिक्षदेवाः तत्रैव च तेषां शोभा अतः दीधितिवर्णनं तस्या देवतायाः उत्साहज्ञापनार्थं स्वस्थाने तस्य बलं बहुभवतीति स्थानान्तरे बलक्षये हानिर्युक्तेति शङ्का व्यावृत्यर्थं तत्रैव चक्रेण चिच्छेद ननूभयोस्सजातीयत्वात् कथमन्येनान्यस्य छेदनं तत्राह । निशातनेमिनेति । निशाता तीक्ष्णा नेमिर्यस्य ननु कल्पान्तरे सुदर्शनस्य महादेवांशत्वात् कथं तेन शूलप्रतिघात इत्याशङ्क्याह । हरिरिति । सर्वदुःखहरणार्थं भगवानेव तथा कृतवानित्यर्थः भगवतोऽपि देवतातिक्रमोऽयुक्त इतिचेत्तत्राह । हरिर्यथेति । यथा इन्द्रः तार्क्ष्यस्य गरुडस्य पतत्रं पक्षं तेनैवोज्झितं यथा छिनत्ति तद्वत् वज्रमप्यप्रतिहतं गरुडोऽप्यवध्यः तथाप्युभयरक्षार्थं । तेनैकपतत्रं त्यक्तं भगवतापि महादेवेन तच्छूलं त्यक्तं सुदर्शनसत्यत्वाय अतो न कोऽपि विरोधः देवता तच्छूलं परित्यज्य अन्यत्र गतेत्यर्थः एवं देवबलमपि निराकृतम् ॥ १४ ॥

ततः स्वसामर्थ्यं प्रकटितवानित्याह । वृक्ण इति । देवतायाः गतत्वात् स्वस्यैव शूलं वृक्णमरिणा चक्रेण तस्य सामर्थ्यं पूर्वमुक्तं हरेरिति संबन्धिसामर्थ्यात् नोपजीव्यविरोधः लक्ष्मीलोभादेवाहमुपेक्षित इति ज्ञापयन्निव विभूतिमदित्युक्तं भगवद्वक्षः मुष्टिना प्रहृत्यान्तरधीयतेति सम्बन्धः प्रतिकूलतया आगमनं मोक्षाभावं सूचयति अन्यथा मामुपेत्य तु कौन्तेयेति वाक्यात् भगवत्समीपं गतस्य कृतार्थतैव स्यात् उरो मर्मस्थानं विस्तीर्णमिति सर्वमुष्टिसम्बन्धार्थं विशेषेण तीर्णं वा संवरणाशक्यं ननु शस्त्रे हते किमनेन भविष्यतीत्याशङ्क्याह । प्रवृद्धरोष इति । प्रकर्षेण वृद्धो यो रोषः तेन विचारो न जात इति ननु क्रोधेऽपि कथं विचारस्य न प्रवृत्तिः तत्राह । स इति । पूर्वोक्तः अतो विवेकाद्यभावात् न विचारोत्पत्तिः मुष्टेः साधनत्वायाह । कठोरेति । अनेन तस्य महत्त्वं सूचितं नद्नन्निति स्वात्मानं ख्यापयन् अनवधानव्यावृत्यर्थं सर्वस्मिन्नपि बले क्षीणे असुरत्वात् प्रहृत्यान्तरधीयत अस्य प्रतीकारे किमवशिष्यत इति तिरोधानम् ॥ १५ ॥

अप्रतीकारे सति प्रहारेण किं कृतमित्याशङ्कायामाह । तेनेति । क्षत्तरिति सम्बोधनं विवेकित्वज्ञापनार्थं यथा पुष्पेण ताड्यते यथा वा स्त्रिया स्रजा भगवानिति अकिञ्चित्कारे हेतुः अवताररूपेऽपि विचार्यमाणो न मुष्टिप्रहारेण किञ्चिन्नश्यति तत्राप्यादिशूकरः अतिकठिनः मनागपि नाकम्पत पश्चाद्देहेषु मक्षिकोपवेशेन कम्पो भवति प्रहारस्याधमं कार्यं कम्पः तत्राप्येकदेशे तत्रापि श्वासेन देहचलनवन्मनाक् तदपि तत् साधनस्य साध्याजननं कथं सङ्गच्छत इत्याशङ्क्याह । स्रजा हत इव द्विपः । न हि स्रजा हतो हस्ती कम्पते न प्रहारमात्रं दुःखजनकं किन्त्वल्पस्य महतस्थाचेत् प्रकृतेऽपि तुल्यमित्यर्थः ॥ १६ ॥

एवं तस्य सहजं युद्धमुक्त्वा मायिकमाह । अथोरुधेति । प्रकारान्तरेण नाना प्रकारां दैत्यानामुपास्यभूतां मायामसृजत् मायेत्यसुराः तद्वैनान् भूत्वावतीतिश्रुतेः भगवन्मोहनार्थं मायानिर्माणे परं भ्रान्तः अन्यत्रैवैतत्कर्तव्यं न तु योगमायाया ईश्वरं सर्वा माया योगमायाया अंशाः तस्या अपि भगवानीश्वरो नियन्ता तत्रापि सर्वदुःखहर्ता अन्याश्च मायाः प्राणिनां दुःखदाः अतो विनाशयापि लीनामपि मायां परदुःखदांप्रहरन्ति तत्र स्वस्य सर्वस्वभूतां चेन्मायां भगवन्निकटे योजयेत् तदा तां मारयन् स्वस्य सर्वस्वमेव नाशयेदिति तस्य दुर्बुद्धित्वप्रतिपादनार्थं सप्तम्यन्तं पदद्वयं तर्हि किमिति प्रयुक्तवानित्याशङ्क्य लोके मायाजये परमसाधनमिति तस्याः स्वरूपं गुणाश्च वक्तव्याः तत्र गुणानाह । यां विलोक्येति । यां मायां विलोक्य सर्वा एव प्रजाः स्ववधशङ्कया प्रथमतो भीताः पश्चान्महतीं दृष्ट्वा अस्योपसंयममेव मेनिरे जगतः प्रलय एव जात इति ज्ञातवत्यः ॥ १७ ॥

मायायाः स्वरूपमाह चतुर्भिः । प्रववुरिति । चण्डा वायवः असह्याः प्रकर्षेण ववुः वान्ति स्म किञ्च पांसवन्तमः पेरयन् प्रकटितवन्तः तथा पांसुवृष्टिर्जाता यथा महानन्धकारो भवति तृतीयं रूपमाह । दिग्भ्यो निपेतुर्ग्रावाण इति । सर्वतः पाषाणा अपतन् ते पाषाणाश्च न करकावत्पतन्ति किन्तु क्षेपणेन दुर्गादिस्थयन्त्रेण ओषधबलेन तथा पतन्ति क्षेपणैः प्रहिताः प्राणिनो घातयन्ति तद्वदित्यर्थः एषा माया तामसी त्रिविधा ॥ १८ ॥

राजसीमाह । द्यौर्नष्टभगणेति । स्वर्गः मेघैः कृत्वा नष्टज्योतिश्चक्रो भवति । अभ्रौघैरिति । मेघानामवान्तरजातिभेदा उक्ताः विद्युतः तडितः स्तनयित्नवो गर्जितानि ताभ्यां सहितैः सात्त्विकैः राजसतामसयोर्द्धर्मयोरत्र सहभावः प्राणिगर्भवधार्थः मेघानां कार्यमाह । वर्षद्भिरिति । षट्‌मलानि वर्षन्ति पूयादीनि पूयकेशासृजः एकप्रकाराः भयानका बीभत्साः विण्मूत्रास्थीनि केवलबीभत्सानि चकारादन्यान्यपि भयानकानि असकृद्वारंवारमिति सहजत्वज्ञापकम् ॥ १९ ॥

सात्त्विकीमाह । गिरय इति । नानायुधमुचः खड्गादीन्यनेकानि आयुधानि मुञ्चन्तीति साक्षान्मारकत्वं साधनतोऽपीति अनघेति सम्बोधनं विश्वासार्थं भयाभावार्थं च सात्त्विकमायाया आधिदैविकान्याह । दिग्वासस इति । यातुधान्यः राक्षस्यः स्वभावतो भयानकाः दिगम्बराः स्वरूपतः अमङ्गलाः शूलिन्यः गृहीतशूलाः साधनतो घातुकाः मुक्तमूर्द्धजाः मुक्तकेशाः रूपतो भयानकाः ॥ २० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तां गदाम् ॥ ११ ॥ १२ ॥

ज्वलत् ज्वालायुक्तं ज्वलनो वह्निस्तद्वल्लोलुपं ग्रसन्नग्रे यज्ञाय मूर्त्तिमन्तं यज्ञमिव हन्तुम् । अत्यन्तानौचित्ये दृष्टान्तः । विप्राय विप्रं हन्तुम् ॥ १३ ॥

चकासद्दीप्यमानमन्तर्यस्य तथा खे आकाशे उदीर्णा उद्गता बहिरपि दीधितयो यस्य तत् । यद्वा । चकासत्यः अन्तः खे आकाशमध्ये उदीर्णा दीधितयो यस्य तत् निशातनेमिना तीक्ष्णधारेण हरिरिन्द्रो यथा तार्क्ष्यस्य गरुडस्य पतत्रं पक्षं उज्झितं त्यक्तं चिच्छेद । देवान् जित्वा अमृतकलशं नयता गरुडेन इन्द्रप्रयुक्तवज्रस्यामोघत्वरक्षणार्थं पिच्छमेकं त्यक्तं तद्यथा इन्द्रश्चिच्छेद छिन्नञ्च यथा खे प्रकाशते तद्वत् प्रकाशमानमित्यपि सम्बन्धः ॥ १४ ॥

बहुभिर्यक्षरक्षोभिः पत्त्यश्वरथकुञ्जरैः।
आततायिभिरुत्सृष्टा हिंस्रा वाचोऽतिवैशसाः ॥ २१ ॥
प्रादुष्कृतानां मायानामासुरीणां विनाशयत्।
सुदर्शनास्त्रं भगवान् प्रायुङ्क्त दयितं त्रिपात् ॥ २२ ॥
तदा दितेः समभवत्सहसा हृदि वेपथुः।
स्मरन्त्या भर्तुरादेशं स्तनाच्चासृक् प्रसुस्रुवे ॥ २३ ॥
विनष्टासु स्वमायासु भूयश्चाव्रज्य केशवम्।
रुषोपगूहमानोऽमुं ददृशेऽवस्थितं बहिः ॥ २४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

वृक्णे छिन्ने उरः प्रहत्य साक्षाद्युद्धे स्वसामर्थ्याभावमवधार्य्य मायाः स्रक्ष्यन्नन्तर्दधौ ॥ १५ ॥

मनाक् ईषदपि कम्पयंश्चे ॥ १६ ॥

असृजत् ससर्ज अस्य विश्वस्य उपसंयमं प्रलयम् ॥ १७ ॥

क्षेपणैर्यन्त्रैः ॥ १८ ॥

नष्टभगणोत्थनेन युद्धकुतूहलिना भगवता ब्रह्मदत्तमुहूर्तस्यातिक्रमो गम्यते ॥ १९ ॥

नानायुधमुचो यातुधान्यश्च प्रत्यदृश्यन्त ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

हतमानः हतगर्वः ॥ १२ ॥

अभिचरन् अभितोऽभिचरन् विप्राय ब्रह्मणो घ्राणेन्द्रियजातत्वाद्यज्ञाय विष्णवे यथा यथावत् शूलं जग्राह ॥ १३ ॥

अन्तःखे खमध्ये चकासत् प्रकाशमानम् उदीर्णा उत्कटा दीधिर्यस्य तत् शूलं चिच्छेदहरिरिन्द्र उज्झितं श्रीगरुडेन त्यक्तं तार्क्ष्यपतत्रं गरुडपिच्छं यथा चिच्छेद तद्वत् इदमादिपर्वणि भारते द्रष्टव्यममृताहरणप्रकरणे ॥ १४ ॥

अरिणा चक्रेण वृक्णे छिन्ने ॥ १५ ॥

कम्पयन् ॥ १६-१७ ॥

पांसवं रेणुकृतं तमश्च ऐरयन् प्रेरितवन्तः ॥ १८ ॥

नष्टो भगणो यस्यां सा दैत्यमाययैव रात्रिप्रतीतिः दिवि भगणनाशप्रतीतिश्च यत्तु अनेन दैत्यवधातिरेकात् ब्रह्मदत्तमुहूर्तातिक्रमो गम्यते आहि नक्षत्राणामसंभवादित्युक्तं तन्न। अवधार्य विरञ्चस्य निर्व्यलीकामृतं वचः। प्रहस्य प्रेमगर्भेण तदपाङ्गेन सोऽग्रहीदिति ब्रह्मणो मुहूर्तनिवेदनस्य भगवतस्तत्स्वीकारस्यच वैयर्थ्यप्रसंगात् ॥ १९ ॥ २० ॥ २१ ॥

---

भाषाटीका।

उस गदा को आती हुई देख कर भगवान् वाराह जी ने खड़े हो कर अनायास से जैसे गरुड़ सर्पिणी को पकड़े तैसे उस गदा को ले लिया ॥ ११ ॥

महा असुर अपने पुरुषार्थ के नष्ट हो जाने से कांति के नष्ट होने से मान के नष्ट होने से भगवान के देने पर भी गदा को नहीं लेता हुआ ॥ १२ ॥

प्रकाशमान अग्नि के तेज से युक्त तीन शिखा वाले शूल को हाथ में लेकर वराह रूपधारी यज्ञ भगवान के ऊपर चला या जैसे कोई ब्राह्मण के ऊपर मारण प्रयोग करे ॥ १३ ॥

महायोधा दैत्यने बडे जोरसे चलाया हुआ आकाशके मध्यमें प्रकाशमान किरणों से युक्त जो त्रिशूल तिसको भगवान् ने चक्र से काटि दिया जैसे कभी गरुडजी के गिरे पांख को इन्द्रने वज्रसे काटा था ॥ १४ ॥

भगवान् ने जब बहुत टुकडा करके त्रिशूल को काट दिया तब असुर भगवान् के सन्मुख आकर लक्ष्मी संयुक्त विस्तृत भगवान् के वक्षस्थल में बडे क्रोध के मारे कठोर मुका से प्रहार करके गर्जना करके अन्तर्धान होगया ॥१५॥

हे विदुरजी! उसके ऐसे मारने पर आदि सूकर भगवान् कुछभी नहीं कांपे जैसे माला के मारसे हस्ती तैसे ॥१६॥

इसके अनन्तर योग माया के ईश्वर भगवान् के ऊपर बहुत प्रकार की माया को सृजने लगा जिस माया को देखकर सब प्रजों ने समझा कि संसार का प्रलय होगा ॥१७॥

बडे प्रचंड पवन चले धूल के सहित अँधेरा हो गया दिशों में से गोफियों के फेंके से पाषाण गिरे ॥१८॥

आकाश मेघों के मारे तारादिज्योति रहित हो गया बिजुली सहित गर्जना होने लगी मेघों से पीप केश रक्त विष्ठा मूत्र हड्डी वारंवार गिरने लगीं ॥ १९ ॥

नाना आयुधों को फेंकने वाले पर्वत दीख पड़े हे अनघ! विदुरजी त्रिशूल लिये खुले बालोंवाली नंगी राक्षसी दीखपडीं २०

---

श्रीधरस्वामिकृतभावार्थदीपिका।

हिंस्राद्विर्निधिभिर्न्धीत्येवं भूता अतिवैशसा अत्युग्रा वाच उत्सृष्टा इत्यत्रैव वाक्यसमाप्तिः ॥ २१ ॥

प्रादुष्कृतानामिति। प्रकटिता माया विनाशयत्। विनाशनमिति पाठे यथा श्रुतैव षष्ठी। त्रीणि सवनानि पादा यस्य यज्ञमूर्तिरित्यर्थः। "त्रयो अस्य पादा" इति श्रुतेः ॥ २२ ॥

भर्तुरादेशं त्वत्पुत्रौ भगवान् हनिष्यतीत्येवंभूतम् ॥ २३ ॥

उपगूहमानो बाहोरन्तर्निधाय संघट्टयन् ॥ २४ ॥

अहन् जघान त्वाष्ट्रंवृत्रम् मरुत्पतिरिन्द्रः ॥ २५ ॥

परितोभ्रमद्भात्रं शरीरं यस्य उदस्ते बहिर्निर्गतेलोचने यस्य विधौ

तं मुष्टिभिर्विनिघ्नन्तं वज्रसारैरधोक्षजः ।
करेण कर्णमूलेऽहन् यथा त्वाष्ट्रं मरुत्पतिः ॥ २५ ॥
स आहतो विश्वजिता ह्यवज्ञया परिभ्रमद्गात्र उदस्तलोचनः ।
विशीर्णबाह्वङ्घ्रिशिरोरुहोऽपतद्यथा नगेन्द्रो लुलितो नभस्वता ॥ २६ ॥
क्षितौ शयानं तमकुण्ठवर्चसं करालदंष्ट्रं परिदष्टदच्छदम् ।
अजादयो वीक्ष्य शशंसुरागता अहो इमां कोऽनुलभेत संस्थितिम् ॥ २७ ॥
यं योगिनो योगसमाधिना रहो ध्यायन्ति लिङ्गादसतो मुमुक्षया ।
तस्यैष दैत्यऋषभः पदा हतो मुखं प्रपश्यंस्तनुमुत्ससर्ज ह ॥ २८ ॥
एतौ तौ पार्षदावस्य शापाद्यातावसद्गतिम् ।
पुनः कतिपयैः स्थानं प्रपत्स्येते ह जन्मभिः ॥ २९ ॥

॥ देवा ऊचुः ॥

नमो नमस्तेऽखिलयज्ञतन्तवे स्थितौ गृहीतामलसत्त्वमूर्तये ।
दिष्ट्या हतोऽयं जगतामरुन्तुदस्त्वत्पादभक्त्या वयमीश ! निर्वृताः ॥ ३० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

र्णा बाह्वादयो यस्य नगेन्द्रो महाद्रुमः लुलित उन्मूलितः नभस्वता वायुना ॥ २६ ॥

संस्थितिं मृत्युम् ॥ २७ ॥

असत आरोपिताल्लिङ्गशरीरान्मोक्तुमिच्छया वराहस्य पूर्वपादयोरेव करत्वात्करेणाहन्निति पदा हत इति चाविरुद्धम् ॥२८-२९॥

अखिलयज्ञानां तन्तवे विस्ताराय कारणायेति वा अरुन्तुदो मर्मभेत्ता ॥ ३० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

उत्सृष्टा उच्चारिता आसन्निति वाक्यसमाप्तिः ॥ २१ ॥

यथा श्रुतैव षष्ठी नतु द्वितीयार्थे षष्ठ्या आर्षत्वकल्पनम् वराहस्य चतुष्पादत्वाच्चयोऽस्य पादा इति मन्त्रे यज्ञस्यैव त्रिपात्त्वात्तद्रूपत्वेन तत्त्वमिति प्रतिपत्तिगौरवादित्यर्थ इत्युक्तम् ॥ २२ ॥

तदा सुदर्शनप्रयोगकाले ॥ २३ ॥

संघट्टयन् संमर्दयन् ॥ २४ ॥

मरुत्पतिरिन्द्रः वज्रेणेतिशेषः अत्र हननस्य परोक्षत्वं वीर्यातिशयस्य द्योतकमिति जघानेति लकारव्यत्ययो व्याख्यातः ॥२५ ॥

विशीर्णा व्याकुलत्वेन प्रसृताः ॥ २६ ॥

इमां मुक्तिजनिकाम् ॥ २७—२८ ॥

ह निश्चितम् कतिपयैः त्रिभिः ॥ २९ ॥

स्थितौ पालनार्थं गृहीता जगति प्रकटीकृता विशुद्धसत्त्वात्मिका मूर्त्तिर्येन तस्मै विष्णुरूपाय ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तथा आततायिभिर्हिंसाशीलैर्बहुभिर्यत्तुरक्षोभिः पत्तिः पदातिः पत्त्यादिभि श्चोत्सृष्टाः प्रयुक्ताः अतिवैशसा अत्युग्रा हिंस्राः क्रूराः छिन्धि भिन्धीत्येवं रूपाः वाचः प्रत्यसृज्यन्त अश्वादिशब्दैरश्वाद्यारूढा उच्यन्ते ॥ २१ ॥

प्रादुष्कृतानां प्रादुर्भूतानामासुरीणामसुरसम्बन्धिनीनां मायानां विनाशयन् विनाशयितुं मायानामिति द्वितीयार्थे षष्ठी विनाशनमितिपाठे तु यथा श्रुतैव षष्ठ्युपपन्ना दयितं स्वस्य निरतिशयप्रियं सुदर्शनाख्यं त्रिपाद्भगवान् त्रिपाच्छब्देन त्रिपाद्विभूतिमानुपचाराद्विवक्षितः प्रायुङ्क्त प्रयुक्तवान् ॥ २२ ॥

तदा भर्त्तुः कश्यपस्यादेशं लोकभावनो भगवानवतीर्योर्व्यामित्येवं रूपं निदेशं स्मरन्त्या दितेर्हृदि सहसा आशु वेपथुः कम्पः समभवदुत्पन्नः स्तनादसृग्रुधिरं च प्रसुस्रुवे ॥ २३ ॥

स्वमायासु विनष्टासु असुरः भूयः पुनश्चाभिमुखमागत्य रुषा केशवमुपगूहमानः बाह्वोरन्तरे निधाय संघट्टयन्नमुं केशवं बहिर्बाहुमध्याद्बहिरवस्थितं ददर्श ॥ २४ ॥

वज्रसारैर्वज्रवदेवाभेद्यैर्मुष्टिभिर्निघ्नन्तं ताडयन्तं तमसुरं करेण हस्तेन कर्णमूलेऽहन् जघान यथा मरुत्पतिरिन्द्रस्त्वाष्ट्रं विश्वरूपम् ॥ २५ ॥

विश्वसृजा भगवतावज्ञया निमित्तभूतया आहतः सोऽसुरः भगवद्भागवतावहेलनमेव तद्वधनिमित्तमित्यवज्ञयेत्यनेन सूचितं परिभ्रमद्गात्रं शरीरं यस्य उदस्ते बहिर्निर्गते लोचने यस्य विशीर्णा विक्षिप्ता बाह्वादयो यस्य सोऽपतत् यथा नभस्वता वायुना लुलित उत्पाटितः नगेन्द्रः महाद्रुमः ॥ २६ ॥

क्षितौ भूम्यां शयानं तथाप्यप्रतिहततेजस्कं भयङ्करदंष्ट्रं परितो दष्टाधरोष्ठं तमसुरमागता अजादयो दृष्ट्वा शशंसुः तदेवाह । आश्चर्यमिमामीदृशीं भगवतेत्यर्थः संस्थितिं मरणं को नु लभेत न कोऽपीत्यर्थः ॥ २७ ॥

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

एतदेव प्रपञ्चयति द्वाभ्याम् । योगिनोऽमतः अचेतनपरिणामालिङ्गाद्देहान्मुमुक्षया मोक्तुमिच्छया संसारनिवृत्तय इत्यर्थः योगसमाधिना समाधियोगेन यद्वा कर्मज्ञानयोगाभ्यां युक्तो यः समाधिस्तेन यद्वा युज्यन्ते इति योगा विवेकविमोकादयः तद्युक्तो यः समाधिस्तेन रह एकान्ते यं भगवन्तं ध्यायन्ति भजन्ति तस्यैव भगवतः पदा पादेन दैत्यश्रेष्ठो हतः वराहपूर्वपादयोरेव करत्वात्करेणाहनिति चाविरुद्धं मुखं भगवतो मुखं प्रपश्यंस्तनुं शरीरमुत्ससर्ज तत्याज हेलाश्चार्ये ॥ २८ ॥

एतौ हिरण्याक्षहिरण्यकशिपू अस्य भगवतः पार्षदौ शापाद्ब्राह्मणशापादसद्गतिमसुरयोनिं यातौ प्राप्तौ पुनः कतिपयैर्जन्मभिः स्थानं भगवत्स्थानं प्रपत्स्येते गमिष्यतः ॥ २९ ॥

एवं तत्संस्थितिं प्रशस्य भगवन्तं प्रणमन्त आहुर्देवाः । अखिलयज्ञतन्तवे समस्तयज्ञोत्पत्तिहेतवे प्रवर्त्तकायेत्यर्थः स्थितौ जगद्रक्षणे निमित्ते गृहीता स्वेच्छयोपात्ता अमला रजस्तमोभ्यामननुविद्धा सत्त्वमूर्तिर्येन तस्मै ते नमो नमः आदराद्विरुक्तिः जगतां लोकानामरुन्तुदः मर्मच्छेत्ता अयमसुरः दिष्ट्या दैवाद्धतः हे ईश! त्वत्पादयोर्भक्त्या वयं निर्वृताः । सुखिताः त्वत्पादभक्तिरेवाभिलषितश्रेयःसाधनी अत एव वयं निरस्तशत्रवः सुखिता इति भावः ॥ ३० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अतिवैशसा अतिक्रूराः यक्षादिभिरुत्सृष्टा उच्चरिता हिंस्रा वाचोऽश्रूयन्तेति शेषः ॥ २१ ॥

यथेच्छयैव सर्वं तु मनसा देहतोऽपि वा ।
कर्तुं शक्तोऽपि शस्त्राद्यालीलैवानन्तशक्तितः ।

इति वचनात्मन आदिनासुरमायाविनाशे समर्थोऽपि भगवान् लीलयैव तन्नाशाय सुदर्शनं प्रायुङ्क्तेत्याह । प्रादुष्कृतानामिति । विनाशनं विनाशकारणम् अमृतं क्षेममभयमिति त्रयः पादा यस्य स त्रिपात् ॥ २२ ॥

सुदर्शनप्रयोगेण भगवान् दितेः पुत्रमरणं संज्ञापयति । तदेति ॥ २३ ॥

प्रभाते नक्तंचरवत् स्वमायानाशे पराङ्वर्त्तिनेत्याह । व्युदस्ताखिलेति । शस्त्राद्यभावात्कथं युद्धाय प्राप्त इत्याशङ्क्य द्विमुखाहिवत् पदावेष्ट्य निष्पीड्य हन्मीति भावोऽप्रयोजक इत्याशयेनाह । उपेति । उपोपात्यन्तसमीपे वर्तमानमसुरमसुं भगवन्तं गृह्णमानः स्वहस्तवलयात् वहिरवस्थितं हरिं ददर्श इत्यन्वयः ॥ २४ ॥

मम शत्रुहननादावायुधग्रहणं मन्दजनानुकरणार्थं नत्वद्यस्वतः स्वहस्तादिनैव शक्तिरस्तीति ज्ञापयन् शत्रुं हन्तीत्याह । तमिति । अहन् प्राहरत् त्वाष्ट्रं त्वष्टुः पुत्रं वृत्रं मरुत्पतिरिन्द्रः ॥ २५ ॥

हरेरयं प्रहारो रिपोर्दीर्घनिद्राहेतुरित्याह । समाहत इति । विष्वग्भुजा हरिणा अवज्ञया निरायासेन समाहतः लुलित उन्मूलितः नभस्वता वायुना ॥ २६ ॥

वीराणां रणरङ्गे मरणं शस्तं किं पुनर्भगवन्निमित्तमिति भावेन ब्रह्मादयोऽस्यासुरस्य मरणं स्तुवन्तीत्याह । क्षिताविति । संस्थितिं मरणम् ॥ २७ ॥

इतरमरणादस्य मरणस्य वैशिष्ट्ये किं कारणमत्राह । यमिति । असतोऽमङ्गलात् सूक्ष्मशरीरात् मुमुक्षवः करपादयोरैक्याद्न्योऽन्यक्रियाशक्तिमत्वाच्च पदाहत इत्युक्तं योगिनामस्य दैत्यस्य महान्विशेषोऽस्तीति द्योतयितुं च हेत्यनेन एतद्देहत्यागेऽपि देहान्तरारम्भोऽस्तीति सूचनात् अतोऽस्य सुकृताधिक्यं हरिमुखं दृष्टा मरणेन स्यात्तदपि पार्षदस्यैव न तदाविष्टस्यासुरस्य ॥ २८ ॥

पार्षदत्वं स्मारयति । एताविति । असद्गतिमासुरीं योनिं जन्मभिरितिबहुवचनेन शापमोक्षानन्तरं जन्मान्तरं प्राप्य ज्ञानमापाद्य वैकुण्ठे मुक्तिस्थानप्राप्तिरिति सूचयति ॥ २९ ॥

इदानीमापरोक्षतः स्तुवन्तीत्याह । नम इति । अखिलयज्ञतन्तवेऽखिलयज्ञानां प्रवर्तने सन्तानभूताय स्थितौ निमित्तभूताय अरुन्तुदो व्यथकः अयं विक्रमोऽस्माकमपि परमानन्दहेतुरभूदित्याहुरित्याह । त्वत्पादेति ॥ ३० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तमिति । मरुत्पतिरिन्द्रः । वज्रेणेति शेषः ॥ २५ ॥ २६ ॥

अजादय इति । ऋषिसहितत्वात् ॥ २७—२९ ॥

देवा ऊचुरिति । देवा इन्द्रादयः । स्थितिसमये प्रकटितशुद्धसत्त्वात्ममूर्त्तये श्रीविष्णुरूपाय ॥ ३० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

लौकिकप्रकारेणापि मायाया युद्धोपयोगिस्वरूपमाह । बहुभिर्यक्षरक्षोभिरिति । यक्षराक्षसभेदः अग्रे वक्तव्यः बहुभिरिति तेषामवान्तरजातयो गृहीताः दैत्यत्वे एते योधाः स्वभावतश्चतुर्विधां सेनामाह । पत्त्यश्वरथकुञ्जरैरिति । पदातयः अश्ववारा रथा गजाश्च सेनाङ्गाः एवं रूपेणैव मारकत्वमुक्त्वा वचनेनापि तथात्वमाह । आततायिभिरिति । शस्त्रपाणिभिः सर्वैरेव ऊर्ध्वं सृष्टा वाचो जाताः मारय ताडयेत्याद्याः तासां विशेषणद्वयमाह । हिंस्राः स्वरूपतो हिंसाजनकाः यथा पट् फट् जहीत्याद्याः अतिवैशसाश्च प्राणिघातमन्त्ररूपाः यैर्नूनमेव मार्यन्ते ॥ २१ ॥

एवं चतुर्विधं मायारूपमुक्त्वा तस्याः प्रतीकारमाह । प्रादुष्कृतानामिति यास्तुमायास्तेन विसृष्टा अपि भगवद्भयात् प्रादुर्भूताः ता न मारिताः यास्तु प्रादुर्भूताः तत्र स्वकीया अपि सजातीयप्रतिबन्धार्थं प्रादुर्भूताः तद्व्यावृत्त्यर्थमाह । आसुरीणामिति । विशेषेण नाशनं यस्मात्पुनस्तासामन्यत्राप्यनुत्पत्तेः सुदर्शनास्त्रमिति शस्त्ररूपे सुदर्शने मन्त्रात्मकं सुदर्शनास्त्रं योजयित्वा पश्चात् सुदर्शनं प्रक्षिप्तवानित्यर्थः ननु सा देवता सात्त्विकीति न तां मारयेदिति आशङ्क्याह । दयितमिति । तदत्यन्तं प्रियं प्रियस्य हितं करिष्यत्येवेत्यर्थः त्रिपाद्यज्ञः सवनत्रयात्मकत्वात् माया विनाश एव यज्ञोत्पत्तेः तस्य तदावश्यकमित्यर्थः यज्ञस्य परकृतिसाध्यत्वव्यावृत्त्यर्थमाह । भगवानिति ॥ २२ ॥

एवं मायायुद्धमप्युक्त्वा तस्य कामनां पूरयित्वा मारणार्थमिच्छां कृतवान् तदा तस्य मृत्युसूचकं दुर्निमित्तं जातमित्याह । तदेति । तदा स्वस्थाने स्थितायाः दितेः तस्मिन्काले हृदये कम्पो

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी

जातः भयकार्यं कारणे प्रथमं प्रविष्टं कार्ये चेत्समायाति तदा नियतं भवतीति तथा वचनं वेपथुराराद्धिप्रियदानं पूर्वमुक्तं पुत्रमरणमेव भविष्यतीति च ज्ञातवती तदाह । स्मरन्त्या भर्तुरादेशमिति । "तदा विश्वेश्वरः क्रुद्ध" इति कश्यपवाक्यं स्मृत्वा अकस्माद्धृदये कम्पे जाते पुत्रनाशमेव निश्चितवतीत्यर्थः किञ्च निमित्तान्तरमपि जातमित्याह । स्तनाभ्यामसृक् प्रसुस्रुव इति । इदं पुत्रनाशसूचकमेव स्तन्यं दुग्धं तस्य पोषकं रुधिरं नाशकमिति चकारात् हृदयं तथैव वदतीत्युक्तम् ॥ २३ ॥

एवं निमित्ते जाते विनष्टायामपि मायायां सर्वस्मिन्नेव पौरुषे प्रतिहते यदि नागच्छेत्तदा भगवानाक्लिष्टकर्मा न मारयेदिति सूचनार्थं तस्य पुनरतिक्रममाह । विनष्टास्विति । सर्वा एव माया विनष्टाः स्वांशे यावन्त्यः पतिता इति ज्ञापयति स्वेति पूर्वं मुष्टिमारणे यथा समागतः भूयश्चापि तथैव समागत्य रोषेण भगवदुपगूहनं कृतवान् धृत्वा स्थानान्तरे नेष्यामीति तदा सूक्ष्मो भगवान् जातः तस्य हस्ताद्विनिर्मुक्तः बहिरेवावस्थितः तदा तं निकटे स्थितं भगवन्तं दृष्टवानित्याह । ददृशेऽवस्थितमिति ॥ २४ ॥

तं मुष्टिभिरिति । एवमपि मारयन्तं भगवन्तं पुनर्मुष्टिभिरताडयत् यथा बालको मातरं पितरं वा विशेषेण निघ्नन्तमिति तथा मारणे हेतुः हेत्वन्तरमाह । वज्रसारैरिति । वज्रपातादपि कठिनैः उद्वेगान्मारणं व्यावर्त्तयति । अधोऽक्षज इति । इन्द्रियजन्यं ज्ञानं कर्म वा न भगवन्तं स्पृशतीति बहिर्मुखत्वात् मारणमिति भावः मारणप्रकारमाह । करेण कर्णमूलेऽहन् इति । अग्रिमपादः करः सुदर्शनेन हनने मुक्तिः स्यादिति क्रियाशक्त्या हनने पुनर्भवः सूचितः एतद्वधे प्रयोजनमाह । यथा त्वाष्ट्रं मरुत्पतिरिति । वृत्रोहि तेजोऽस्त्रायुधसम्पदो गिलितवान् तद्वधे पुनः प्राप्ताः अन्यथा अतिप्रवृद्धो लोकानेवावृणुयात् अतो लोकरक्षार्थं देवहितार्थं स्वस्य सेवकसिद्ध्यर्थं च हतवानित्यर्थः ॥ २५ ॥

तस्य हिरण्याक्षस्य हननानन्तरं जातं स्वरूपमनुवर्णयति । स आहत इति । विश्वसृजा अवज्ञया हतो अपतदिति सम्बन्धः आ ईषत् ननु भगवतः तस्य वधे क उपकार इत्याशङ्क्याह । विश्वसृजेति । सृष्ट्यर्थं तस्य वध इत्यर्थः स हि रजोगुणाभिमानी रजः प्रतिबध्य तिष्ठति ईषद्धननं च तन्मात्रनिराकरणाय नतु रजसः इममेवार्थं हि शब्द उपपादयति तदमारणे रजसः कार्याक्षमत्वात् यद्यपि रज एव ततः पृथक् कर्त्तुं शक्यते न मारणमपेक्षितं तथापि प्रयत्नस्य तुल्यत्वात् हननमेव कृतं तदाह । अवज्ञयेति । मारणं भगवत उद्देश्यं न भवतीत्यर्थः परिभ्रमद्गात्रं यस्य करेण ताडितः भ्रमतीति उदस्ते लोचने यस्य ऊर्ध्वं निर्गते लोचने स हि केवलराजसोऽपि बीजवशात् सत्त्वसहितोऽपि भवति सत्त्वेन च उत्तरत्रोपकारः प्रकृते च नाशः अन्यथा रजःप्रतिबन्धः स्यात् अत एव प्रथमं रजसो विक्षेपमाह । परिभ्रमद्गात्र इति । लोचने तु सत्त्वं बीजजीवभेदादुभयविधमिति लोचने इति द्विवचनम् परिभ्रमणेन बहुधा रजसः प्रवृत्तेः बाह्वादीनां विक्षेपणं वर्णानामस्मिन्कल्पे नानाप्रकारेणोत्पत्त्यर्थं बाहवः अङ्घ्रयः शिरोरुहाश्च विकीर्णा येन विकीर्णेति क्रियाशक्तिर्गतिजन्मनिकीर्णं तस्येति विक्लवतया तस्य सर्वे संस्कारा निवारिताः अन्तरिक्ष एव प्राणा गता इति तस्याग्रे राक्षसत्वं भक्तत्वं च भूमौ तु प्राणा न गता इत्याह । व्यसुरपतदिति । तथात्वे ज्ञापकं दृष्टान्तेनाह । यथा नगेन्द्र इति वृक्षश्रेष्ठः यथा नभस्वता वायुना उन्मूलितः पततीत्यर्थः ॥ २६ ॥

मृतं वर्णयति । क्षितौ शयानमिति । मृत्युग्रस्तो हि विवर्णो भवति अयं तु भगवता उपसंहृत इति न कुण्ठं वर्चो यस्य कराला दंष्ट्रा यस्येति मरणसमये यमस्य करालत्वात् अग्रे राक्षसत्वमधरस्य लोभस्य स्नेहेन विरुद्धत्वान्मानुषत्वं च परितो विरुद्धत्वान्मरणान्तं लोभः अस्य मरणं सर्ववादिसंमतत्वेन समीचीनमिति ज्ञापयितुं ब्रह्मादीनां स्तोत्रं फलस्य कर्मविरुद्धत्वात् हिरण्याक्षेण तादृशी गतिः प्राप्ता इत्याश्चर्यं संस्थितिं मृत्युं विरुद्धकर्त्ता नैवं प्राप्नोतीति कोऽनु लभेतेत्याश्चर्योक्तिः फलविरुद्धा तस्य कृतिर्ब्रह्मणैव निरूपिता ॥ २७ ॥

न चैतत्फलं तादृशमेवेति शङ्कनीयं किन्तु परमोत्कृष्टयोगस्यैतत्फलमित्याह । यं योगिन इति । यं भगवन्तं जितयोगाः योगेनैव समाधिं प्राप्य एकान्ते तत्र ध्यायन्ति असतः प्राकृताल्लिङ्गात्समुदायान्मुमुक्षया अस्य वराहस्य मानस्यापि मूर्त्तिः मार्गान्तरस्थैरपि चिन्तिता समाधौ मोक्षमुत्पादयति तत्र साक्षाद्भगवान् तस्यापि गतिदायी भक्तानामाश्रयभूतः पादः अयं च स्वधर्मनिष्ठ इत्याह । दैत्यर्षभ इति । किञ्च मरणकाले ज्ञानपूर्णः यतो मुखं पश्यन् तनुमुत्ससर्ज तां सन्ततिमेव त्यक्तवानित्यर्थः ब्रह्मा देवान् प्रति तस्य फलमाहाश्चर्यमिति ॥ २८ ॥

एवमपि मरणे जन्मान्तरसम्बन्धे सति च विस्मयेन विस्मितान् प्रत्याह । एताविति । तौ पूर्वोक्तौ अस्यैव पार्षदौ इति एवं फलं नाश्चर्यमेवं भावे हेतुमाह । शापाद्यातावसद्गतिमिति । तर्हि कदा निस्तार इत्याकाङ्क्षायामाह । पुनः कतिपयैरिति । अनेन सह जन्मनां त्रैविध्य संभावनया बहुवचनं कर्मणां दुर्ज्ञेयत्वात् ॥ २९ ॥

एवं तं स्तुत्वा भगवतः अनवगाह्यमाहात्म्यमवगत्य तं नमन्ति । नमो नम इति । आदरे वीप्सा एकं भगवतः कार्यं बहूनि फलानि साधयतीति भगवतो बहुकार्यं निरूपयन्ति तत्र प्रथमं सृष्ट्यर्थं यज्ञाविर्भावो निरूप्यते अन्यदा कदाचित्केचन यज्ञाः केषाञ्चिदाविर्भूता भवन्ति अत्र तु सर्वे एवाविर्भाविता भवन्ति तदाहुः । अखिलयज्ञतन्तव इति । अखिला ये यज्ञतन्तवः यज्ञसंस्थाः तद्रूपो भगवान् किञ्च रक्षा भगवतो धर्मः साक्षाद्विशेषाकारेण तदप्ययंतन रूपेण सिद्धमित्याह । स्थित्यर्थं गृहीता अमला सत्त्वमूर्त्तिर्येन अमलं गुणान्तरासम्बद्धं धर्मग्लानिरपि निवर्तितेत्याह । दिष्ट्या हतोऽयमिति । परमभाग्येनायं गतः धर्मो हि भाग्यं धर्मस्य पोषकमेतद्वधे धर्मरक्षायां बीजमाह । जगतामरुन्तुद इति । अरुर्मर्म देवभक्तिरक्षाप्यनेन सिद्धेत्याह । त्वत्पादभक्त्येति । वयं देवाः ईशेति सम्बोधनं सर्वत्र सामर्थ्यबोधकमेकस्यैव सामर्थ्यस्य तथात्वबोधकं वा निर्वृताः सुखिताः हिरण्यकशिपोः रौद्रत्वाभावात् उपस्थितदुःखनाशाद्वा ॥ ३० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अतिनृशंसा अत्युग्रा वाचश्च उत्सृष्टा उदसृज्यन्त ॥ २१ ॥

मैत्रेय उवाच ॥

एवं हिरण्याक्षमसह्यविक्रमं स सादयित्वा हरिरादिसूकरः।
जगाम लोकं स्वमखण्डितोत्सवं समीडितः पुष्करविष्टरादिभिः ॥ ३१ ॥
मया यथाऽनूक्तमवादिते हरेः कृतावतारस्य सुमित्र! चेष्टितम्।
यथा हिरण्याक्ष उदारविक्रमो महामृधे क्रीडनवन्निराकृतः ॥ ३२ ॥

॥ सूत उवाच ॥

इति कौषारवाख्यातामाश्रुत्य भगवत्कथाम्।
क्षत्ताऽऽनन्दं परं लेभे महाभागवतो द्विज! ॥ ३३ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

विनाशनं विनाशकं विनाशयन्निति पाठे द्वितीयार्थे षष्ठ्यः त्रयस्तप आदयः पादा यस्य स त्रिपात् धर्म्ममूर्त्तिः। यद्वा त्रीणि सवनानि पादा यस्य। "त्रयोऽस्य पादा" इति श्रुतेर्यज्ञमूर्त्तिरित्यर्थः ॥ २२ ॥

भर्तुरादेशं त्वत्पुत्रौ भगवान् हनिष्यतीत्येवम्भूतम् ॥ २३ ॥

बाहोरन्तर्निधाय मर्द्दयिष्यन्नुपगूहमानोऽपि तं स्वस्माद्बहिरवस्थितं ददर्श ॥ २४ ॥

ततश्च तमसुरं त्वाष्ट्रं वृत्रं मरुत्पतिरिन्द्रः ॥ २५ ॥

नगेन्द्रो महाद्रुमः लुलितः उन्मूलितः ॥ २६ ॥

संस्थितिं मृत्युम् ॥ २७ ॥

पदाहत इति वराहस्य पूर्व्वपादयोरेव करत्वात् करेणाहन्निलनेनाविरोधः मुनिनां शापात् ह स्पष्टम् ॥ २८ ॥ २९ ॥

तन्तवे विस्तारकाय कारणायेति वा । अरुन्तुदः मर्म्मभेदी ॥ ३० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

त्रिपात् त्रीणि सवनानि पादा यस्य स तथा "त्रयोऽस्य पादा इति" श्रुतेः॥ २२ ॥

भर्तुः हनिष्यत्यवतीर्यासाविति कश्यपस्यादेशम् ॥२३॥२४॥

अहन् जघान ॥ २५ ॥

परिभ्रमत् गात्रं शरीरं यस्य सः ॥ २६ ॥

स्थितिं पञ्चताम् । २७ ।

असतः सूक्ष्मात् । २८ । २९ ।

अखिलयज्ञानां तन्तवे मूलाय । ३० । ३१ ।

---

भाषाटीका।

बहुत से यक्ष राक्षस पियादे घोडा रथके हाथी शस्त्रधारी पुरुष इन्होने बड़े भयंकर हिंसक वचनों को प्रघट किये ॥२१॥

तब त्रिपाद् विभूति वाले भगवान् ने सुदर्शन शस्त्र चलाया जो कि भगवान् का अति प्रिय है उससे असुरों की प्रकट करी हुई सब माया नष्ट होगई ॥ २२ ॥

तब तो दिती ने अपने पति की आज्ञाको स्मरण किया क्यों उसके स्तनों से रक्त गिरने लगा और शीघ्रही हृदय में कम्प होने लगा ॥ २३ ॥

तब असुर अपनी मायाओं के नष्ट होजाने से फिर भगवान् के पास में आकर भगवान् को आलिंगन करने लगा तब तक भगवान् बाहिर अलग दीख पडे ॥ २४ ॥

वह असुर जब बज्र सरी की मुष्टियों से मारने लगा तब भगवान् ने अपने हस्त से उसके कान में ऐसा प्रहार किया जैसा वृत्रासुर को इन्द्रने मारा था ॥ २५ ॥

भगवान् ने सहज ही मे उसको मारा तब उसका शरीर घूमने लगा नेत्र निकल आये बाहु पैर शिरके केश सब उसके बिखर गये जैसे पवन के गिरानेसे पेड गिरे तैसे जमीन मे गिरपडा ॥ २६ ॥

यह पृथिवी पर सोया है बडा तेजवाला है विकराल उसके दांत है ओष्ठो को दबाया तब ब्रह्मादिदेवता आकार बोले कि यह अवस्था किसको मिलने की है ॥ २७ ॥

जिन भगवान् को योगिजन असत लिंग देहसे छूटने की इच्छा से ध्यान करते हैं एकांत मे उसी भगवान् के चरण प्रहार से मारागया यह असुर भगवद् मुखदर्शन करता हुआ गया है ॥ २८ ॥

ए दोनों भगवान् के पार्षद हैं शाप से असद् गति को प्राप्त भये हैं फिर कितनेक जन्म से यहां पर अपने स्थानको चले जांयगें ॥ २९ ॥

देवता बोलने लगे हे ईश अखिल यज्ञों के विस्तारक आप के अर्थ नमस्कार है आप ने पालन में निर्मल सत्व मूर्ति धारण की है यह सब का मर्म घातक है इस को आपने मारा सो बडा अच्छा किया आप के चरण की भक्ति से हम लोक पवित्र होगये ॥ ३० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

सादयित्वा हत्वेत्यर्थः । पुष्करविष्टरादिभिर्ब्रह्मादिभिः संस्तुतः ॥ ३१ ॥

यथाऽनूक्तं गुरूक्तिमनतिक्रम्य मयाऽवादि तव कथितम् हेसुमित्र! यथा येन प्रकारेण ॥ ३२ ॥

हेद्विज! शौनक! ॥ ३३ ॥

अन्येषां पुण्यश्लोकानामुद्दामयशसां सताम् ।
उपश्रुत्य भवेन्मोदः श्रीवत्साङ्कस्य किं पुनः ॥ ३४ ॥
यो गजेन्द्रं झषग्रस्तं ध्यायन्तं चरणाम्बुजम् ।
क्रोशन्तीनां करेणूनां कृच्छ्रतोऽमोचयद्द्रुतम् ॥ ३५ ॥
तं सुखाराध्यमृजुभिरनन्यशरणैर्नृभिः ।
कृतज्ञः को न सेवेत दुराराध्यमसाधुभिः ॥ ३६ ॥
यो वै हिरण्याक्षवधं महाद्भुतं विक्रीडितं कारणसूकरात्मनः ।
शृणोति गायत्यनुमोदतेऽञ्जसा विमुच्यते ब्रह्मवधादपि द्विजाः! ॥ ३७ ॥
एतन्महापुण्यमलं पवित्रं धन्यं यशस्यं पदमायुराशिषाम् ।
प्राणेन्द्रियाणां युधि शौर्यवर्धनं नारायणोऽन्ते गतिरङ्ग! शृण्वताम् ॥३८॥
इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे पारमहंस्यां
संहितायां वैयासिक्यां हिरण्याक्षवधे
ऊनविंशोऽध्यायः ॥ १९ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

कथामुपश्रुत्य ॥ ३४ ॥

भक्तिमात्रेण पशूनामपि सुलभोऽन्यथा देवानामपि दुर्लभ इति तत्कथाश्रवणे कस्यानन्दो न स्यादित्याह । य इति द्वाभ्याम् । झषो-ग्राहः क्रोशन्तीनां सतीनामिति कृपालुत्वमुक्तम् सङ्कटादमोचयत् ॥ ३५-३६ ॥

कारणेन पृथिव्युद्धरणादिना सूकररूपस्य हरेः ॥ ३७ ॥

एतद्धरेर्विक्रीडितं शृण्वतामन्ते श्रीनारायणो गतिर्भवति महापुण्यं स्वर्गादिप्रदम् अलम्पवित्रमतिशयेन शोधकम् धन्यन्धनावहम् यशस्यं कीर्तिकरम् आयुषश्चाशिषां च पदं स्थानं परित्राणं वा प्राणानामिन्द्रियाणां च पदम् अङ्ग हेविदुर! ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
ऊनविंशोऽध्यायः ॥ १९ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या
दीपिकाटिप्पणी ॥

अत्रावसादनस्य तत्कार्य्ये हनने लक्षणात इत्यर्थोक्तिः स्वम्वा राहम ॥ ३१ ॥

येन प्रकारेण निराकृतो हतस्तत्प्रकारविशिष्टं चेष्टितं मया कथितमित्यन्वयः ॥ ३२ ॥

इति कौषारवेत्यादिकं शुकवाक्यादधिकं सूतवचनमिति ज्ञेयम् ॥ ३३ ॥ ३४ ॥

अन्यथा भक्त्यभावे तस्य भक्तिसुलभस्य कथाश्रवणे ॥३५॥

ऋजुभिरकुटिलैः असाधुभिः कुटिलैः ॥ ३६ ॥

पृथिव्युद्धरणादिनेत्यत्रादिना दैत्यवधभक्तविनोदनपरिग्रहः॥३७॥

स्थानं कारणं परित्राणं रक्षकम् ।

पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुष्वित्यमरः ।

टीकायामङ्ग हे शौनक ! इत्येव पाठः विदुरेति तु प्रामादिकः ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीराधारमणदासगोस्वामिविरचितदीपिन्याख्य-
दीपिकाटिप्पण्यामूनविंशोऽध्यायः ॥ १९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं विदुरेण । तेनैव तु मुनिश्रेष्ठ हरिणा यज्ञमूर्तिना इत्यादिनां पृष्टं हिरण्याक्षवधवृत्तं सप्रपञ्चमभिधाय तन्निगमयति मैत्रेयो द्वाभ्याम् । असह्यविक्रमं दुर्धर्षपराक्रमं हिरण्याक्षमेवमुक्तप्रकारेण सादयित्वा निहत्य आदिसूकरः भगवान् पुष्करविष्टरादिभिः समीडितः संस्तुतः अखण्डितः अनन्तः उत्सवो यस्मिन् तं स्वं स्वीयं लोकं वैकुण्ठं जगाम ॥ ३१ ॥

अतिदुष्करमिदं भगवता कृतमिति त्वया न विस्मयः कार्य्यं इत्याह । मयेति । हेसुमित्र! विदुर कृतावतारस्य धृतवराहरूपस्य हरेः चेष्टितं मे मया ते तुभ्यमनूक्तमुक्तस्योक्तं यथा तथा यथानायासेनैवावादि कथितं तथा उदारविक्रम उदारपराक्रमः हिरण्याक्षः मृधे युद्धे क्रीडनवत् क्रीडनमिव निराकृतः भगवता इतिशेषः यथा हिरण्याक्ष इति पाठे यथा येन प्रकारेण क्रीडनवद्भगवता हिरण्याक्षो निराकृतः तं प्रकारमनतिक्रम्यैव यथानूक्तं गुरूक्तिमनतिक्रम्य हरेश्चेष्टितं मयावादीति निगमनपरत्वेनान्वेतव्यम् ॥ ३२ ॥

एवं निशम्य वाचो वदतो मुनेरित्यादिनोपक्रान्तं भगवच्चरित्रप्रसक्तानुप्रसक्त्या स्वायंभुवमनुचरित्रतदनुप्रसक्तवराहचरित्रप्रश्नोत्तररूपं विदुरमैत्रेयसम्वादमुपसंहरति भगवान् श्रीशुकः यावदध्यायसमाप्ति इत्युक्तप्रकारेण कौषारवाख्यातां मैत्रेयकथितां भगवत्कथां भगवत्कथागर्भां स्वायंभुवकथामित्यर्थः भगवत्कथाया एव

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्राधान्येन कथनीयत्वाद्भगवत्कथामिति निर्देशः यद्वा भगवत्कथा-निगमनेनैव तदुपक्रमरूपा स्वायंभुवकथा निगमितप्रायैवेत्यभिप्रेत्य भगवत्कथामित्युक्तम् आश्रुत्याकर्ण्य महाभागवतः क्षत्ता विदुरः प्रकृष्टमानन्दं लेभे लब्धवान् हे नृप ! परिच्छिन्नराजन् ! महाभागवत इति हेतुगर्भं यतोऽसौ क्षत्ता महाभागवतस्ततो भगवत्कथा-माश्रुत्य परमानन्दं लेभे इत्यर्थः ॥ ३३ ॥

एतदेव कैमुत्यन्यायेनाह । अन्येषामिति । पुण्यशीलानां पुण्यै-काचाराणामुद्दामयशसामुदीर्णकीर्तीनामन्येषामपि कथामाश्रुत्य मोदो भवेच्छ्रीवत्साङ्कस्य भगवतः कथामुपश्रुत्य मोदोभवेदिति किंपुनर्वक्तव्यमित्यर्थः ॥ ३४ ॥

एवं कैमुत्यन्यायेन भगवत्कथाश्रवणादानन्दावाप्तिमभिधा-याश्रितार्तिनिरसनैकशीलस्याश्रितसुलभस्यार्थितपुरुषार्थदस्य भग-वतः कथां कृतघ्नमन्तरेण को न सेवेतेत्याह द्वाभ्याम् । य इति । करेणूनां प्रस्तं मकरेण गृहीतं स्वचरणाम्बुजं ध्यायन्तं गजेन्द्रं करे-णूनां हस्तिनीनां क्रोशन्तीनां रुदन्तीनां सतीनां यो भगवान् कृच्छ्रात् मकरग्रहणेन दुःखादुद्धृतमाशु अमोचयत् त्याजितवानित्यर्थः ॥ ३५ ॥

तं भगवन्तं कथंभूतमनन्यशरणैः रक्षकान्तररहितैः ऋषिभिरैः ऋजुभिरुपायैरिति शेषः सुखेनाराधयितुं शक्यमसाधुभिर्दुरारा-ध्यं कृतघ्नः को न सेवेत कृतघ्नमन्तरेण सर्वोऽपि सेवेतैवेत्यर्थः ॥३६॥

एवं भगवत्कथा सर्वैरुपादेयेत्यभिधाय प्रकृताहिरण्याक्षव-धवृत्तान्तश्रवणकीर्तनानुमोदनफलमवान्तरप्रधानं चाह । य इति द्वाभ्याम् । महाद्भुतं भृशं विस्मयनीयं कारणसूकरात्मनः जगद्र-क्षणाधृतसूकरशरीरस्य भगवतो विक्रीडितं क्रीडारूपं हिरण्या-क्षवधं यो द्विजः शृणोति गायति कथयति अनुमोदतेऽभि-नन्दति वा स अञ्जसा आशु ब्रह्मवधात् "ब्रह्महत्याश्वमेधाभ्यां नापरं पुण्यपापयोः" इति निरतिशयपापत्वेन कीर्तिताद्ब्रह्मवधादपि विमु-च्यते त्यज्यते ॥ ३७ ॥

एतद्धिरण्याक्षवधवृत्तान्तरूपं भगवच्चरितं महापुण्यसंपादक-मत एवालं च शौर्यवर्द्धनं सामर्थ्यवर्द्धनमत एवमवान्तरफल-युक्तं प्रधानफलमाह । अङ्ग हे राजन् ! शृण्वतां नृणामन्ते देहान्ते नारायणो गतिः फलं तत्प्राप्तिरेव फलमित्यर्थः ॥ ३८ ॥

इतिश्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकोनविंशोऽध्यायः ॥ १९ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हिरण्याक्षहननानन्तरं हरिणा को विक्रमोऽकारि सोऽस्ति चेन्ममाख्याहीति मानसीं विदुरशङ्कां प्रत्याह । एवमिति । संस्था दयित्वा निहत्य नितरां हनने स्वातन्त्र्यं दर्शयति । पुष्कराविष्ट-रादिभिर्ब्रह्मादिभिः ॥ ३१ ॥

हरेर्वराहावतारस्य चरितमुपहसंहरति । मयेति । यया येन प्रकारेण हिरण्याक्षो हतो निराकृतस्तथा तेन विधिना कृत-वराहावतारस्य हरेश्चेष्टितं मयानूक्तं श्रुतवत्कथितमादित आरभ्य "अथातोऽनन्तराण्यर्थविकल्पारम्भमङ्गल" इति यादवः ॥३२॥

शुकोऽप्येतां कथां श्रोतुं श्रोतृमेमुपीमनुकूलयति । इतीति यथा मम परानन्दोऽभूत्तथा विदुरस्यापि किमिति परीक्षितो मनःशङ्कां परिहरति शुक इत्यतो वाह । इतीति ॥ ३३ ॥

अत्र कैमुत्येन परमानन्दं सम्पादयति । अन्येषामिति ॥ ३४ ॥

इतोऽपि हरेः कथाश्रवणात्परमानन्दावाप्तिः स्यादित्याह । य इति । करेणूनां करिणीनां क्रोशन्तीनां रुदन्तीनां कृच्छ्राद्वासन्न-मरणात्कृतस्मरणानन्तरं कालक्षेपमन्तरेण ॥ ३५ ॥

एवं विधो हरिर्भक्त्यैकसाध्य इत्याह । तमिति । अन्ययोग-व्यवच्छेदार्थमाह । दुराराध्यमिति ॥ ३६ ॥

फलश्रवणे च्छिप्रं प्रवृत्तिः स्यादिति तद्वक्ति । यो वा इति । अपिशब्देनान्यदुष्कृतानां संग्रहात् ब्रह्मपरमात्मतत्त्वमञ्जनेन वध्यत इति ब्रह्मवधः संसारस्तस्मात् उक्तफलेऽधिकारिणमाह । द्विज इति । तस्यैव हरौ निरतिशयभक्तिसम्भवात् ३७ ॥

गानाद्यशक्तानां श्रवणैकरतानां किंफलमत्राह । एतदिति । अन्त इति विशेषणात् श्रवणाभ्यासेन मननादिशक्तिसम्भवात् अपरोक्षज्ञानसामर्थ्यां लिङ्गशरीरविनाशे नारायणो गम्यत इति गतिर्भवतीति ध्वनयति ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
एकोनविंशोऽध्यायः ॥ १९ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स्वं वाराहमेव ॥ ३१ ॥ ३२ ॥

इति कौषारवेत्यादिकं श्रीशुकवचनादधिकं सूतवचनमिति गम्यते ॥ ३३ ॥ ३४ ॥ ३५ ॥

तमिति । ऋजुभिरकुटिलैरत एवानन्यशरणैः असाधुभिस्ततो-ऽन्यादृशैः । कृतज्ञः शरणागतिमात्रे सुखाराध्यताविज्ञः । पुरुषा-र्थचतुष्टयदातृत्वात् । तदेवं सति को न सेवेत तस्यैव सेवा-परित्यागेन तत्तदन्यच्छाञ्छेदित्यर्थः ॥ ३६ ॥

सर्व्वकारणं तत्तत्त्वं तदेव शूकररूप आत्मा विग्रहो यस्य ॥३७॥

एतदिति । अङ्ग हे शौनक ! ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
एकोनविंशतितमोऽध्यायः ॥ १९ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं भगवानवतारं कृत्वा तदुपसंहारं चकारेत्याह । एवमिति । असह्यविक्रमं हिरण्याक्षं सम्यक्सादयित्वा मारयित्वा स्वं लोकं जगामेति संबन्धः असह्यविक्रममिति तद्धतो दोषो मारणे हेतुः हरिरिति तस्य तथाकरणे स्वधर्मो हेतुः आदिसूकर इति शीघ्रं तिरोभावे हेतुः आदिपदं चालौकिकपरं तेन तस्य दोषाभावः स्वमित्यावश्यकं यद्यप्यत्रापि स्थितिः कीर्त्तिजनिका भवति तथापि अखण्डितोत्सवो लोको वैकुण्ठाख्यः उत्सवा हर्षहेतवो न कदा-चिदपि खण्डिता भवन्ति इति अवतारकार्यसमाप्तिं सूचयति । पुष्करविष्टरादिभिः कमलासनब्रह्मादिभिः सम्यक् स्तुतः ॥ ३१ ॥

एवं वराहचरित्रमुक्त्वा तस्य चरित्रान्तरमप्येवं भविष्यती-त्याशङ्क्याह । मयेति । अस्तु वा मा वा यावत् यथानूक्तं गुरुपरम्परया प्राप्तमस्मद्गुरुणा यथोक्तं तथा ते तुभ्यमवादि आवश्यककं-रणे हेतुः हरेरिति कृतावतारस्येति गुरूणामपि ज्ञाने हेतुः सुमि-त्रेति संबोधनं गुह्यकथनार्थं सुष्ठुमित्रमिति यथाहं तथैतिनात्र गोप्यमिति सम्यक्कथने हेतुः परम्परायामन्धत्वं वारयति यथा हिरण्याक्षेति उदारो विक्रमो यस्य सर्वेषां गायकानां

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

सर्वेष्वेव वीरेषु कीर्तितः तेभ्यः स्वसामर्थ्यात् सर्वं प्रयच्छतीति महासृधेऽलौकिकसंग्रामे हिरण्याक्षेणाकृते सति क्रीडनवत् काष्ठपुत्रिकावत् निराकृतः यथा भगवता कृतं तथास्मद्गुरुभिरुक्तं तथैव प्रयोक्तमित्यर्थः ॥ ३२ ॥

अस्य चरित्रस्य त्रिविधं फलमाह । एतद्दृष्टमन्यद्दृष्टमदृष्टं च षड्भिः द्वाभ्यां द्वाभ्यामेकैकं तत्र प्रथमं तस्यां कथायां श्रुतायां विदुरदृष्टमाह । इयेन इतीति । कथनोपपादनाभ्यां तत्र प्रथमं कथायां श्रुतायां तस्य किं जातमित्याकाङ्क्षायामाह । इत्यमुना प्रकारेण कुषारोः पुत्रः कौषारवः मैत्रेयः पितृनाम्ना तादृशे कथने विश्वासार्थं भगवत्कथामिति कथाया अपि षड्गुणा निरूपिताः चक्तेति विचक्षणामाहकलीलां परित्यज्य मुख्यलीलाग्रहणार्थमुक्तं परमानन्दं कथायामेव विद्यमानं श्रोतृविशेषादभिव्यक्तं क्षेमे तयाप्ये हेतुः भागवत इति शौनकादीनां तथात्वाभावात् बाधितार्थत्वमाशङ्क्य निराकरोति इद्विजा! इति वेदोक्तकर्मादिभारवत्त्वात् तदस्फूर्त्तिरितिभावः ॥ ३३ ॥

अत एव तदुपपादयति । अन्येषामिति । पुण्यश्लोका कीर्त्तिर्येषां नलादीनां कीर्तियशसोः पूर्वं वैलक्षण्यमुक्तं सदाचारपराक्रमकृतं वैदिकलौकिकभेदेन भिन्नमुभयवत्त्वे सत्त्वं प्रमोदे वा त्रयं हेतुः कृपालुत्वादयः सद्धर्माः अन्तःकरणोत्कर्षहेतवः बहुधा वर्तितं सत्कर्म सानुभावं सत्पुण्यकीर्तित्वमापद्यते उद्दामं यशो येषामव्याहतपराक्रमजन्यमित्यर्थः तेषां कथामुपश्रुत्य मोदः श्रवणसुखं भवेत् श्रीवत्साङ्कपदेन सदाचारः सर्वे गुणाश्च निरूपिताः लक्ष्मीस्थानत्वात् तदप्युक्तं चिह्नमिव एतादृशान्यपि चिह्नानि बहूनीति कैमुतिकन्यायोऽप्युक्तः ॥ ३४ ॥

तस्य चरित्रान्तरं संवादार्थं तथाविधमाह । यो गजेन्द्रमिति द्वाभ्याम् । स्वरूपफलभेदेन तत्र स्वरूपमाह । यः हरिः झषग्रस्तं नक्रधृतं धरणेन निमग्नं वा कृच्छ्रतो ऽमोचयत् मोचने हेतुः ध्यायन्तमिति चरणाम्बुजमिति प्रेमभक्तिम । तेन ध्यानं निरूपितं क्रोशन्तीनां करेणूनामिति दीनता निरूपिता कृच्छ्रतः तस्मात्संकटात् शीघ्रममोचयत् दृष्टद्वारा भगवानेव फलप्रद इत्युक्तं तथा सति इष्टं परित्यज्य कोऽन्यमहष्टं भजिष्यतीति वक्ष्यति भजनीयसाधकं दयासाधकं चैतच्चरित्रमिति तदेव प्रकृतोपयोगित्वादानन्दजनकत्वेनोच्यते झषोऽत्र नक्रः जलचरविशेषः सर्व एव नक्रा झषा इत्युच्यन्ते तेन शरीरेणोद्धरणे करेणुकृता दया हेतुः सर्वथोद्धारे ध्यानमिति विशेषः अनेन साधनाभावोऽप्युक्तः गजश्रेष्ठो हि महामत्तो भवति झषग्रस्तः सर्वसाधनरहितो भवति जातिस्वरूपप्रतिबन्धानां दुष्टत्वात् भगवत्प्रसादो दुर्लभ इति गजेन्द्रनिरूपणम् अवस्थास्वरूपसंबन्धानां दुष्टत्वालौकिकत्वाच्च एकेनैव ध्यानेन तत् संबन्धिनामपि सुखं कृतवानिति करेणूनां कीर्त्तनम् ॥ ३५ ॥

एवमनेकार्थप्रतिपादकं चरित्रमुक्त्वा येनांशेनात्र दृष्टान्तत्वं तद्रूपं कीर्त्तयन् भजनं फलरूपं समर्थयति । तामिति । वैषयिकसुखादप्यधिकसुखसाधकानि यत्र साधनानि फलं चालौकिकं महत् स सुखाराध्यः सुखेनैवाराधयितुं शक्यः तत्रातिप्रसङ्गनिवारणाय विशेषणमाह । ऋजुभिरिति । अवक्रैः कायवाङ्मनोभिः न वक्रं गृह्णन्ति न वक्रमाचरन्तीति अयमपि तेषां स्वाभाविको धर्मः नत्वागन्तुकः साधनभूतः एतादृशा मार्गान्तरेऽपि भवन्तीति तद्व्यावृत्त्यर्थमाह । अनन्यशरणैरिति । न विद्यते अन्यत् शरणं येषामनेन शरणागतौ ब्रह्मास्त्रन्याय उक्तः अशरणाश्च न तिष्ठन्तीत्यर्थात् भगवच्छरणाः नृभिः साधारणैः मनुष्यैः अभिमानाभावाय प्रकृतोपयोगिविवेकाय चोक्तम् कृतघ्न इति । जनकत्वादन्तर्यामित्वात् पालकत्वात् पूर्वभजने विशेषोपकारकरणात् वा यो भगवत्कृतं जानाति स को वा न सेवेत अकृतज्ञस्तु न सेवते तत्र भगवद्रूपा एव हेतव इत्याह । दुराराध्यमिति । अन्यथा पाक्षिकभजनीयः स्यात् न हि ते न भजन्तीति किन्तु भगवानेव दुराराध्यः दुःखेनाप्याराधयितुमशक्यः असाधवः शिश्नोदरपराः ॥ ३६ ॥

एवं भजनसमर्थनमुक्त्वा अलौकिकं फलमाह । यो वै हिरण्याक्ष इति द्वाभ्याम् । पापनिवर्त्तकं फलजनकं च तत्र प्रथमं पापनिवर्त्तकत्वमाह । हिरण्याक्षवधमिति । अन्यथा हिरण्याक्षस्य ब्राह्मणत्वाद्वधः श्रोतव्यो न स्यात् । महाद्भुतमिति । मतान्तरसिद्धं वधस्य हितरूपत्वात् वा महानद्भुतो भवतीति महत्त्वं श्रोतॄणामप्युपकारसाधकत्वात् तथापि श्रोतव्यतायां हेतुमाह । विक्रीडितामिति । विशेषेण क्रीडितं यत्र भगवतो युद्धलीला हि तत्र रूपद्य भगवत्सम्बन्धेन शोधितत्वात् तथात्वं कारणसूकरात्मन इति । यज्ञार्थं सृष्ट्यर्थं च तथाकरणं युक्तमित्युक्तं कर्तुः शास्तुरनुज्ञातुरिति न्यायेन त्रयाणां फलमाह । शृणोति गायत्यनुमोदत इति । श्रवणं मुख्यं गानं शास्त्ररूपं सुखस्य तत्र हेतुकारणत्वात्तस्य प्रायश्चित्तत्वमाशङ्क्याह । गायतीति । अनुमोदनं तादृशं यदुभयनिर्वाहकं क्रियमाणस्तोत्ररूपमिति केचित् । अञ्जसेति । सर्वत्र सर्वभावेन श्रवणमर्यतः तात्पर्यतः शब्दतश्च कीर्तनेऽपि एतत्रयं हेत्वभावश्च अनुमोदनमपि हेत्वभावात् तदा वधमात्रदोषाद्विमुच्यते प्रधानपरं न भविष्यतीत्याह । ब्रह्मवधादपीति । द्विज इति ज्ञानार्थमुक्तं ज्ञाने सत्यन्यस्यापि भवतीति ज्ञातव्यं यज्ञसम्बन्धात् द्विजस्यैव भवतीति वा ॥ ३७ ॥

फलजनकत्वमाह । एतदिति । चतुर्विधपुरुषार्थसाधकमेतत् तत्र धर्मो द्विविधः स्वर्गादिफलसाधकः देहादिसंस्कारसाधकश्च तदुभयरूपमाह । महापुण्यमलं पवित्रमिति । अव्यभिचारिश्रेयःसाधनं महापुण्यं सर्वथान्तःकरणपवित्रहेतुरलं पवित्रमर्थो द्विविधः धनरूपो यशोरूपश्च यशः श्रियामेवेत्यत्र वक्ष्यते तदुभयमाह । धन्यं यशस्यमिति । कामः त्रिविधः जीवनभोगशत्रुजयात्मकः "शरीरारोग्यमैश्वर्यमरिपक्षक्षय" इति वाक्यात् तद्रूपमाह । आयुषामाशिषां च पदं प्राणेन्द्रियाणां युधि धैर्यवर्द्धनमिति आशिषः पुत्रादयोऽन्यविषयाः तेषामिदमेव पदमस्योपाख्यानस्य सृष्टिहेतुत्वात् प्राणो बलसाधनमिन्द्रियाणि करणानि पूर्वत्र वा सम्बन्धः मस्यभोगात्मको विषय इति युद्धे धैर्यवर्द्धनं यस्मादिति धैर्यादेव जयः धैर्यस्य बलेन्द्रियसहकारित्वात् तत्सम्बन्धित्वेन निरूपितं क्षेमशूरव्यावृत्त्यर्थं युधीति मोक्षसाधकत्वमाह । नारायण इति । अस्मच्छास्त्रे नारायणप्राप्तिरेव मोक्ष इति एकविध एवोक्तः तत्र भगवच्छास्त्रे नारायणप्राप्तिस्त्रिविधा ब्रह्माण्डविग्रहे नारायणे सायुज्यं मत्परे पुरुषोत्तमे वा तद्वयमपि नारायणशब्द एव वदतीति नारायणपदप्रयोगः ।

नराज्जातानि तत्वानि नाराणीति विदुर्बुधाः।

नराणां समूहो नारमिति आपो नारा इति प्रोक्ता इति च प्रथमार्थे पुरुषोत्तमः द्वितीयेऽक्षरं तृतीये मर्यादापता अस्य

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ॥

श्रवणात्त्रिविधो भवतीति नारायणपदमङ्गेति सम्बोधनम् अप्रतारणाय स्नेहबोधकं गतिर्भवति इत्यर्थः गतिशब्दः पर्यवसान फलवाचकः शृण्वतामिति प्रधानस्यैवैतत्फलमुक्तम् ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्वल्लभाचार्यकृतसुबोधिन्याम्
ऊनविंशोऽध्यायः ॥ १९ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पुष्करं पद्मं विष्टर मासनं यस्य स ब्रह्मा तदादिभिः ॥ ३१ ॥

यथानूक्तं गुरूक्रमनतिक्रम्य यद्वा यथा उक्तं श्रीगुरुणोत्यर्थतो लभ्यमा तथा अनु अनन्तरं ते तुभ्यमवादि उक्तम्। हे द्युमित्र ! चेष्टितमेव केन प्रकारेण ज्ञातं तत्राह। यथा येन प्रकारेण ॥३२-३३॥

पुण्यश्लोकानां युधिष्ठिरादीनां पुण्यश्लोकोः युधिष्ठिर इति प्रसिद्धः ॥ ३४ ।

कथाश्रवणमात्रेण मनुष्यानुद्धरतीति किं वक्तव्यं यतः स्मरणेनापि पशूनप्युद्धरति स्मेत्याह। य इति । क्षयो ग्राहः क्षयादिति किं वक्तव्यं, कृच्छ्रूतः संसारादपि । करेणूनामिति तासां पतिमित्यर्थः ॥ ३५ ॥

अतः स सदैवाराधयितुमुचित इत्याह । तमिति। कृतज्ञः शरणागतपालनाभिज्ञः । असाधुभिरनृजुभिरनन्यशरणैश्च ॥ ३६ ॥

सकामानपि कथाश्रवणे प्रवर्त्तयति । यो वा इति ॥३७-३८॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
तृतीये एकोनविंशः सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

हेद्युमित्र ! विदुर ! यथानूक्तं यथोपदेशं मया ते अवादि तुभ्यं कथितम् हे द्विज शौनक ! ॥ ३२—३६ ॥

एतद्वराहविक्रीडितं पदं रक्षकम् ॥ ३७ ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
एकोनविंशाध्यायार्थप्रकाशः ॥ १९ ॥

---

भाषाटीका ।

इस प्रकार से कठिन पराक्रम वाले हिरण्याक्ष को आदि सुकर भगवान् मार कर ब्रह्मादिकों से स्तुती को ग्रहण कर अखण्डित अपने वैकुण्ठ लोक को चले गये ॥ ३१ ॥

हेद्युमित्र विदुर जी ! मैने जैसे गुरू के मुख से सुना है तैसे वाराह रूपधारी भगवान् का चरित्र आप से कहा जैसे कि महापराक्रम वाले हिरण्याक्ष को महासङ्ग्राम मे खेलसा करके भगवान् ने नाश किया ॥ ३२ ॥

सूतजी बोले इस प्रकार से मैत्रेयजी की कही भगवत्कथा को श्रवण करके हे द्विज ! शौनकजी महाभागवत विदुरजी परम आनन्द को प्राप्त भये ॥ ३३ ॥

उत्तम यशवाले अन्यभी सत्पुरुषों के चरित्र को श्रवण करके आनन्द होता है तो श्रीवत्सचिन्ह वाले भगवान् की कथा से क्यों न होगा ॥ ३४ ॥

जिन भगवान् ने चरण कमल ध्यान करने वाले गजेन्द्र का हथिनियों के चिल्लाते समय मे उद्धार शीघ्र कियाहै ॥ ३५ ॥

वेह भगवान् सीधे स्वभाव वाले अनन्य शरण होने वाले जनों को सुलभ हैं असत्पुरुषों को दुर्लभ हैं ऐसे भगवान् को कृतज्ञ हो कर कौन नहीं सेवन करेगा ॥ ३६ ॥

हे द्विजो ! जो पुरुष हिरण्याक्ष के वध मे कारण सूकरमूर्ति भगवान् को महाअद्भुत क्रीडनको सुनै या गावै या अनुमोदन करै वह पुरुष ब्रह्मवधादि पापों से भी छूट जाता है ॥ ३७ ॥

यह चरित्र बडा पुण्य कारक है पवित्र है धन यश का दायक है आयु तथा सर्व मनोरथ इनके देनेका स्थान है युद्धमें प्राण इन्द्रियों का सूरता का बढाने वाला है सब होकर सुनने वालों को हे शौनकजी अन्तमें नारायण की ही गति रूप प्राप्त होते हैं ॥ ३८ ॥

इति श्रीभागवत तृतीयस्कन्ध उन्नीसवां अध्याय का
भाषानुवाद लक्ष्मणाचार्यकृत समाप्त ॥ १९ ॥

---

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे ऊनविंशोऽध्यायः समाप्तः ॥ १९ ॥

## विंशोऽध्यायः।

॥ शौनक उवाच ॥

महीं प्रतिष्ठामध्यस्य सौते ! स्वायम्भुवो मनुः।
* कान्यन्वातिष्ठद्द्वाराणि मार्गायावरजन्मनाम् ॥ १ ॥
क्षत्ता महाभागवतः कृष्णस्यैकान्तिकः सुहृत्।
यस्तत्याजाग्रजं कृष्णे सापत्यमघवानिति ॥ २ ॥
द्वैपायनादनवरो महित्वे तस्य देहजः।
सर्वात्मनाश्रितः कृष्णं तत्परांश्चाप्यनुव्रतः ॥ ३ ॥
किमन्वपृच्छन्मैत्रेयं विरजास्तीर्थसेवया।
उपगम्य कुशावर्त आसीनं तत्त्ववित्तमम् ॥ ४ ॥
तयोः सम्वदतोः सूत ! प्रवृत्ता ह्यमलाः कथाः।
आपो गाङ्गा इवाघघ्नीर्हरेः पादाम्बुजाश्रयाः ॥ ५ ॥
ता नः कीर्तय भद्रं ते कीर्तन्योदारकर्मणः।
रसज्ञः कोनु तृप्येत हरिलीलाऽमृतं पिबन् ॥ ६ ॥
एवमुग्रश्रवाः पृष्ट ऋषिभिर्नैमिषायनैः।
भगवत्यर्पिताध्यात्मस्तानाह श्रूयतामिति ॥ ७ ॥

॥ सूत उवाच ॥

हरेर्धृतक्रोडतनोः स्वमायया निशम्य गोरुद्धरणं रसातलात्।
लीलां हिरण्याक्षमवज्ञया हतं सञ्जातहर्षो मुनिमाह भारतः ॥ ८ ॥

। विदुर उवाच ।

प्रजापतिपतिः सृष्ट्वा प्रजासर्गे प्रजापतीन्।
किमारभत मे ब्रह्मन् ! प्रब्रूह्यव्यक्तमार्गवित् ॥ ९ ॥
ये मरीच्यादयो विप्रा यस्तु स्वायम्भुवो मनुः।
ते वै ब्रह्मण आदेशात्कथमेतदभावयन् ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

विंशे वराहजन्मादिव्यवधानादथादितः ॥
सर्गोऽनुस्मार्यते वक्तुमन्वयं प्रस्तुतं मनोः ॥ १ ॥

प्रतिष्ठां स्थानम् अध्यस्य प्राप्य सौते सूतस्य रोमहर्षणस्य पुत्र! अवरमर्वाचीनं जन्म येषां तेषामीश्वरे लीनानां मार्गाय निर्गमायकानि द्वाराणि कृतवान् अर्वाचीनान्प्राणिनः कैरुपायैः सृष्टवानित्यर्थः ॥ १ ॥

विदुरमैत्रेयसम्वादेनै तज्ज्ञास्यत इति तमेव सम्वादं प्रष्टुमाह। क्षत्तेति पञ्चभिः। श्रीकृष्णसुहृत्त्वे हेतुः। य इति। दुर्योधनादिभिरपत्यैः सहितमग्रजं धृतराष्ट्रमघवान्कृतापराध इति हेतोः श्रीकृष्णोक्तमन्त्रानादराद्यस्तत्याज ॥ २ ॥

अनवरोऽन्यूनः महित्वे माहिम्नि ॥ ३ ॥

कुशावर्ते गङ्गाद्वारे ॥ ४ ॥

यत्किमपि पृच्छतु किन्तवेति चेत्तत्राऽऽह। तयोरिति। अघघ्नीरघघ्न्यो नूनं कथाः प्रवृत्ताः ॥ ५ ॥

---

* कान्यध्यतिष्ठदिति श्रीवल्लभाचार्यः।

[ १२२ ]

श्रीधरस्वामिकृतभावार्थदीपिका ।

कीर्तन्यानि कीर्तनार्हाण्युदाराणि कर्माणि यस्य हरेः ॥ ६ ॥

एवमिति । व्यासवाक्यम् उग्रश्रवा रोमहर्षणस्य पुत्रः नैमिषमवनमाश्रयो येषां तैरर्पितमध्यात्मं मनो येन सः ॥ ७ ॥

गोरूद्धरणं लीलां हिरण्याक्षं चावज्ञया हतं निशम्य भारतो विदुरः ॥ ८ ॥

यस्मात्त्वमव्यक्तमार्गवित् ब्रह्मणो वा विशेषणम् ॥ ९ ॥

एतज्जगत् अभावयन्नुत्पादयामासुः ॥ १० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

प्रासङ्गिकेन वराहजन्मतच्चरितादिना यद्व्यवधानं तस्मादेव हेतोः अथ एकोनविंशाध्यायानन्तरमादितः प्रकृतित एव प्रस्तुतं वर्णनीयम् निर्गमाय ईश्वराच्निःसारणाय यथा गृहान्निःसरणेद्वारमुपायो भवति तथात्र कैरुपायैरिति गौण्या व्याख्यातत्वादित्यर्थं इत्युक्तम् ॥ १ ॥

एतत् सृष्टिप्रकरणम् ॥ २ ॥

सर्वात्मनानन्यवृत्त्या ॥ ३ ॥

प्रथमं दुःसङ्गप्रायश्चित्तेच्छया तीर्थसेवया विरजाः पश्चान्मैत्रेयमुपसङ्गम्य ॥ ४ ॥

पादाम्बुजाश्रयस्तद्विषयिण्यः ॥ ५—६ ॥

यद्यपि शौनकेन प्रष्टाः कृतस्तथापि सर्वैस्तत्प्रश्नस्यानुमोदनादपिभिरिति बहुवचनम् ॥ ७ ॥

हरेरिति सूतवाक्यं शुकवाक्यानुवादरूपम् गोरूद्धरणरूपां लीलां निशम्य तत्रापि अवज्ञया हतं हिरण्याक्षं च निशम्येति योज्यम् ॥ ८ ॥

यस्मात्त्वमव्यक्तमार्गवित् अस्मदाद्यगोचरवस्तुवेत्ता ब्रह्मविशेषणपक्षे ब्रह्मवर्त्मज्ञः ॥ ९—१० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

द्वितीयस्कन्धान्ते

यथा सौ भगवान् सूत ! क्षत्ता भागवतोत्तम

इत्यादिना विदुरमैत्रेयसम्वादे शौनकेन पृष्टे राज्ञा परीक्षिता पृष्टो यदवोचदित्यादिना त्वया पृष्ट एव विदुरमैत्रेयसम्वादो राज्ञा पृष्टः शुकेनोक्तः अतो राजशुकप्रश्नोत्तरानुसारेणैव विदुरमैत्रेयसम्वादं वर्णयामीत्युपक्रम्य सूतेनैकोनविंशत्यध्यायगणेन वर्णिते सति पुनः शौनकः सवै स्वायम्भुवः सम्राडित्यादिना विदुरपृष्टं यदा स्वभार्यया साकमिति मैत्रेयेणोपक्रान्तं स्वायंभुवचरित्रं प्रष्टुकामः परमप्रकृतान् दशमाध्यायादौ

अन्तर्हिते भगवति ब्रह्मा लोकपितामहः
प्रजाः ससर्ज कतिधा दैहिकीर्मानसीर्विभुरिति

विदुरपृष्टान् दैहिकमानसिकप्रजासृष्टिभेदान् कांश्चिन्मैत्रेयेण वर्णितानेव सूतमुखादाश्रुत्यावशिष्टान् तद्भेदान् प्रकृतमनुचरितं च पृच्छति शौनकः नवभिः श्लोकैः यद्यपि परीक्षित्प्रश्नोऽपि शौनकेन प्रष्टव्यः शुकोत्तरमेव सूतेनापि वक्तव्यं ननु विदुरपृष्टं नापि मैत्रेयणोक्तं सूतेन वक्तव्यं सूतशौनकसम्वादस्य शुकपरीक्षित्सम्वादरूपत्वात्तथापि विदुरप्रश्नेनैव परीक्षित्प्रश्नोऽपि पृष्टप्राय इत्यभिप्रेत्य साक्षाद्विदुरप्रश्नमेव पृच्छति शौनकः । महीमिति । हे सौते सूतस्य रोमहर्षणस्य पुत्र ! महीं भूमिं प्रतिष्ठां यथा स्थानमध्यास्य प्राप्य स्वायम्भुवो मनुरवरमर्वाचीनं जन्म येषां तेषां मार्गाय सृज्यते इति मार्गः धर्मादिचतुर्विधरूपः पुरुषार्थस्तस्मै कानि द्वाराण्युपायानन्वतिष्ठदनुष्ठितवान् यद्यदा चरति श्रेष्ठ इति न्यायेन कान्पुरुषार्थोपायान् लोकमर्यादापालनाय स्वयमन्वतिष्ठदित्यर्थः ॥ १ ॥

एवं प्रकृतं मनुचरितं पृष्ट्वा परमप्रकृतप्रजासृष्टिभेदाः वैदुरिकप्रश्नेनैव पृष्टप्राया इत्यभिप्रेत्य वैदुरिकप्रश्नेऽपि पिपृच्छिषया प्रथमं विदुरं प्रशंसति । क्षत्तेत्यादिद्वाभ्याम् । क्षत्ता विदुरः महाभागवतः निरतिशयभगवद्भक्तियुक्तः अत एव कृष्णस्य भगवतः ऐकान्तिकः असाधारणः सुहृन्निरतिशयप्रीतिविषयः अत्र "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय„ इतिभगवदुक्तरीत्या भगवानपि तस्य सुहृदिति वोद्धुं सुहृत्त्वमेव स्पष्टयति । यः क्षत्ता सापत्यं दुर्योधनाद्यपत्यसहितमग्रजं धृतराष्ट्रं कृष्णे भगवत्यघवान् सापराध इति तत्याज त्यक्तवान् श्रीकृष्णोक्तमन्वानादाराद्भगवदाश्रितेषु धर्ममर्यादानुवर्तिषु पाण्डुतनयेषु द्रोहाचरणाच्च कृष्णोऽघवानिति भावः ॥ २ ॥

किञ्च महत्त्वे माहात्म्ये द्वैपायनादूद्वैपायनाद्धेतोः विदुरः अनवरः अन्यूनः सर्वात्मना समस्तभावेन "माता पिता भ्राता निवासः शरणं सुहृद्गतिश्च नारायणः" इत्युक्तभावेनेत्यर्थः कृष्णं भगवन्तमाश्रितः तत्परां भगवत्परांश्चानुव्रतोऽनुवर्तमानः सेवमान इत्यर्थः ॥ ३ ॥

एवं विदुरं प्रस्तुत्य तत्पृष्टमनुपृच्छति किमित्यादिभिस्त्रिभिः । तीर्थानां गङ्गादिपुण्यतीर्थानां सेवया त्रिषवणस्नानादिना विरजाः विधूतवाह्याभ्यन्तरमलः विदुरः कुशावर्ते हरिद्वारकुशावर्तविल्वकनीलपर्वतकनखलाख्यानि पञ्चतीर्थानि गङ्गाद्वारि सन्ति तत्र कुशावर्ते आसीनं तत्त्वविद्वरेसरं मैत्रेयमुपसङ्गम्य किमन्यदपृच्छदनुपृष्टवानित्यर्थः ॥ ४ ॥

यत्किमप्यपृच्छत्किन्तदित्यत्राह । हेसूत ! तयोर्विदुरमैत्रेययोः सम्वदतोः सम्वादं कुर्वतोरमलाः अपवल्लोकपावन्यः कथाः भगवत्कथाः प्रवृत्ता भवेयुः अमलत्वे दृष्टान्तः हरेर्भगवतः पदाम्बुजाश्रयाः पादाम्बुजप्रसूताः अघघ्न्य उपस्पृशतामघनिवर्त्तकाः गाङ्गा गङ्गासम्बन्धिन्यः आप इवेति ॥ ५ ॥

कीर्त्तन्योदारकर्मणः कीर्त्तनीयजगद्व्यापारादिविस्तरचेष्टितस्य भगवतस्ताः कथाः नोऽस्मभ्यं कीर्त्तय कथय ते तुभ्यं भद्रं मङ्गलमस्तु पुनः पुनः भगवत्कथामेव किं पृच्छसीत्यत्राह । रसज्ञः भगवत्कथारसज्ञः हरेर्लीलामृतं तत्पिबन्कोनु तृप्येत न कोऽपीत्यर्थः अतोऽतृप्यन्पृच्छामीत्यभिप्रायः ॥ ६ ॥

नैमिषं निमिषक्षेत्रमयनं स्थानं येषां तैः नैमिषक्षेत्रवासिभिः शौनकादिभिरेवमुक्तप्रकारेण पृष्ट उग्रश्रवाः सूतः भगवत्यर्पितं निहितमध्यात्ममन्तःकरणं येन सः तान्निप्रायनान्प्रतिश्रूयतामित्याह । एवं विधानि वचनान्येतद्ग्रन्थकृता त्रैकाल्यज्ञानेन भगवता वादरायणेन स्वकृतग्रन्थस्य तच्छ्रोतृवक्तृक्रमेण भाविनीं प्रवृत्तिमालोच्य तत्सन्दर्शनार्थं न्यस्तानि अत इदं वचनं द्वैपायनीयमेवेति साम्प्रदायिकाः तच्छिष्यप्रशिष्यैः सन्दर्भाय विरचय्य न्यस्तानीत्यपरे ॥ ७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमापृष्टः सूतो वृत्तवाराहकथाश्रवणे जातहर्षो विदुरः प्रकृतस्वायंभुवचरितं प्रक्ष्यमाणः परमप्रकृतान् प्रजासृष्टिभेदानपृच्छदित्याहैकेन । हरेरिति । स्वमायया स्वसङ्कल्पेन धृतक्रोडतनोर्धृतवराहरूपस्य हरेर्लीलां लीलारूपं रसातलाद्भूमेरुद्धरणमवज्ञया हतं हिरण्याक्षं च निशम्य श्रुत्वा सञ्जातहर्षो भारतः विदुरः मुनिं मैत्रेयमाह ॥ ८ ॥

उक्तिमेवाह । त्रिभिः । प्रजापतीनां मरीच्यादीनां पतिः ब्रह्मा प्रजासर्गे निमित्ते प्रजापतीन् सृष्ट्वा किमारभत किमकुर्वत मे मह्यं ब्रूहि हे ब्रह्मन् ! यतस्त्वमव्यक्तमार्गविन्नव्यज्यत इत्यव्यक्तमतीन्द्रियं तस्य मार्गं स्वरूपं वेत्ति अतस्त्वं प्रभुः समर्थ इत्यर्थः ॥ ९ ॥

मरीच्यादयो ये विप्राः यः स्वायम्भुवो मनुश्चेति वै ब्रह्मणश्चतुर्मुखस्यादेशान्निर्देशादेतद्विश्वं कथमभावयन्नसृजन् ॥ १० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सृष्टिप्रलयानां स्फुटं विज्ञेयस्य देवादीनां तारतम्यज्ञानस्य हरिप्रीतिजनकत्वेन पुरुषार्थहेतुत्वादनुक्तसमुच्चयार्थं च पूर्वोक्तसृष्टिं प्रपञ्चयत्यस्मिन्नध्याये ।

सृष्टौ लये तारतम्यं देवानां ज्ञायते स्फुटम् ।
तारतम्यपरिज्ञाने महातात्पर्यमिष्यते ।
अतस्तद्बहुशः सूक्तमन्यच्चैतत्प्रकाशकमिति

वचनात् प्रवक्ता श्रोतुरभीष्टमर्थं ब्रूते । किमन्यद्धेति । ज्ञातुं न शक्यते तस्मात्तन्निरासार्थं तत्रादौ राजा शुकं पृच्छति । महीमिति । महीमध्यास्य मह्यां स्थित्वा । "अधिशीङ्स्थासां कर्म" इति सूत्रात्सप्तम्यर्थे द्वितीया अवरजन्मनां पश्चात्तनकाले जातानां प्राणिनां मार्गाय वर्णाश्रमस्वरूपभेदज्ञानाय कानि द्वाराणि सृष्टिसाधनानि अध्यातिष्ठत्तत्र स्थित्वासृजदित्यर्थः ॥ १ ॥

विदुरप्रश्नवचनानुसारेण मम वक्तव्यमितिभावेन पृच्छति । क्षत्तेति । सन्निकृष्टमृत्योस्तव विदुरप्रश्नो ग्राम्यविषयत्वेन कथं सङ्गच्छत इत्याशङ्क्य न मादृशोऽसाविति तद्गुणानाहास्त्वा महाभागवत इत्यादिना । अत्रैतानि विशेषणानि मिथो हेतुहेतुमद्भावसूचकानीति ज्ञायते "क्षत संचूर्णने" इति धातोः संसारगिरिसंचूर्णनात्क्षत्ता एकः प्रधानः सर्वोत्तमो हरिरन्तोनिर्णयोऽस्यास्तीति अस्मिन्नर्थे यथा विहितप्रत्ययः अघवानपराधवान् ॥ २ ॥

सर्वात्मनेति प्रोक्तहेतुनियमनरूपम् ॥ ३ ॥

किमन्वपृच्छन्मया पृष्टमन्यद्धेति कुशावर्ते गङ्गाद्वारे ॥ ४ ॥

तत्रान्यप्रसङ्गा दूरीभूता एवेति भावेनाह । तयोरिति ॥ ५ ॥

बहुशः श्रुतत्वात्तव तन्द्रा निद्रालुत्वं स्यादिति तत्राह । रसश्च इति ॥ ६ ॥

एतमर्थं सूतः शौनकादिभ्यः कथयति । एवमिति । अर्पिताध्यात्मः अर्पितं शरीरमधिकृत्य वर्तमानं मन आदीन्द्रियजातं येन सोऽर्पिताध्यात्मः ॥ ७ ॥

शुकोऽपि त्वत्पृष्टमर्थं प्रष्टुं विदुरो मैत्रेयं वक्तीत्याह । हरेरिति ८ किमाहेति तत्राह । प्रजापतीति । अव्यक्तानां परमात्मादितत्त्वानां मार्गं प्रकारं वेत्तीति ॥ ९ ॥

राजविदुरप्रश्नयोरेकविषयत्वं वक्ति । य इति । अभावयन् प्रावर्धयन् ॥ १० ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वराहलीलां प्रासङ्गिकीं श्रुत्वा प्रस्तुतं पृच्छति । महीमिति ॥ १ ॥ तदेवं स्वातन्त्र्येण प्रश्नं विदुरप्रश्नमयकथाशुश्रूषायामनुचितं मत्वा तत्प्रश्नमेव पृच्छति । क्षत्तेति पञ्चभिः ॥ २-३ ॥

तत्र च यदि कश्चित्तद्द्वारा विच्छिन्नास्ति तर्ह्यप्यावृत्य तामेवादितः प्रवर्तयेत्याह । विरजास्तीर्थसेवयेत्यादिना पादोनपद्यत्रयेण प्रथमं तावत् तीर्थसेवया विरजाः दुःसङ्गदुःखरहितः पश्चादुपगम्य ॥ ४ ॥

प्रवृत्ता इत्यादिना पुनरादित एव श्रवणेच्छा स्पष्टीकृता ॥ ५-६ ॥

ऋषिभिरिति । श्रीशौनकप्रश्नमनुमोदमानैः सर्वैरेव तदनुवादात् ॥ ७ ॥

श्रीसूतस्तु भगवत्क्रमवत् श्रीविदुरस्य क्रम इति कस्माद्धाराविच्छिद्यैनेत्यवं तत्प्रशंसागर्भमुत्तरमाह । हरेरिति । तदिदमपि श्रीशुकोक्तमेव सूतोऽयमनुकृतवानिति गम्यते । तदेवानुसृत्यासौ सर्वं कथयति गोरुद्धरणरूपां लीलां निशम्य तस्यामेव हिरण्याक्षमवज्ञया हतं निशम्येत्यर्थः ॥ ८ ॥

अव्यक्तमार्गवित् । अस्मदाद्यगोचरवस्तुवेत्ता ॥ ९—११ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी

भगवत्कृतसर्गस्तु सोपोद्घातो निरूपितः ।
चतुर्दशभिरध्यायैरुच्यते हरये परः ॥ १ ॥
गुणवैषम्यभावेन सर्गाः पूर्वं निरूपिताः ।
गुणवैषम्यभावोऽत्र द्विविधो वर्ण्यते स्फुटः ।
आधिदैविकभावोऽत्र नास्तीति द्वैधवर्णनम् ॥ २ ॥
आधिभौतिकमेकेन चतुर्भिश्च तथापरम् ।
भूतमात्रेन्द्रियधियां हरौ ज्ञानोपयोगिनाम् ॥ ३ ॥
गुणाः स्वभावतः केऽत्र पुष्टिमार्गोपयोगिनः ।
निरूप्यन्ते हरेरुक्त्या प्रत्येकं त्रिविधा यथा ॥ ४ ॥
आधिदैविकमाध्यात्ममाधिभौतिकमेव च ।
चतुर्भिश्च चतुर्भिश्च तथैकेनोच्यते क्रमात् ।
भक्तिसांख्यात्मविज्ञानयोगैश्चत्वार आद्यके ॥ ५ ॥
आध्यात्मिकः काल एव माहात्म्यं करणे तथा ।
तदधीनं जगत्सर्वमित्यथास्तु द्वितीयके ॥ ६ ॥
मुक्त एव हरेरर्थे भूतत्वेनोपयुज्यते ।
अतो मुक्तिस्त्रियाश्चैव पूर्वेषु द्विविधेष्वपि ॥ ७ ॥
धर्मादयोऽपि द्विविधाः तत्रोच्यन्ते क्रमादिमे ।
सर्गे तेषामनुत्पत्तौ मार्गस्तेषां न वै भवेत् ॥ ८ ॥
यादृशा भगवन्मार्गे जीवचिन्तनचिन्तिताः ।
एकविंशतिभिस्तेऽत्र निरूप्यन्ते क्रमात् स्फुटाः ॥ ९ ॥
भगवच्चिन्तितास्ते वै पञ्चविंशतिभिः स्तुतौ ।
अन्यत्सर्वं कालकृतं चत्वारस्तेऽपि वर्णिताः ॥ १० ॥
त्रिविधा अपि तेऽप्युक्ता मुख्यो मोक्षस्तथान्तिमः ।
मूलं सर्गत्रयाणां तु मुख्यो मोक्षः फलं तथा ।
चतुर्दशभिरध्यायैरतः सर्गो निरूपितः ॥ ११ ॥
तद्विंशतितमेऽध्याये संकीर्णः सर्ग उच्यते ।
षड्विधो हरिकार्यार्थमंशांशकाः सकला हरौ ॥ १२ ॥
सर्गमेकविधं ज्ञात्वा विसर्गे प्रश्न ईदृशः ।

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

तथापि शास्त्रमेवात्र वक्तव्यमिति निश्चयः
अभिप्रेतं न तस्यापि तथैवेत्यन्यथोच्यते ॥ १३ ॥
प्रश्नद्वयं तु कुरुते शौनकः प्रकृतौ महान्।
विसर्गविषयं त्वाद्यं भक्तानां तु तथापरम्।
एकेन पञ्चभिश्चैव मूलारम्भो हि भेदकः ॥ १४ ॥
परीक्षिच्छुकयोरत्र विरामो नैव दृश्यते।
सूत एव ततो वक्ता तुल्यार्थत्वान्न दूषणम् ॥ १५ ॥

तत्र शौनकः सर्गः सविशेषः श्रुत इति विसर्गं पृच्छति। महीं प्रतिष्ठामिति। पूर्वानुवादपूर्वकं हि प्रष्टव्यं हिरण्याक्षवधः उपोद्घात इति न स पूर्वोक्तत्वेन गृह्यते भूमिश्च मनोरर्थे समाहृतेति मनोरेव चरित्रं पृच्छति प्रकर्षेण स्थिता प्रतिष्ठा सर्वेषां जीवानामियमेव प्रतिष्ठेति देहस्य तन्मूलकत्वात् तदर्थमेवोद्धृतेति स एव नामधिष्ठाय स्थितः प्रतिष्ठां प्राप्तः सर्वं करोतीति कृतिप्रश्नावसरः शुकादिभिरिदं नोक्तमिति त्वया वक्तव्यमिति ज्ञापनार्थं सौत इति सम्बोधनं हेसूतपुत्र ! कथाकथनं तस्य कुलपरम्परागतो धर्मः मनोः सृष्ट्यावश्यकत्वाय स्वायंभुवेति पदं मनुरिति धर्मप्रवर्त्तकत्वात् नान्यथा करणं ब्रह्मणा तु द्वारद्वयमेव कृतं मनः शरीरं च यद्यन्येऽपि शरीरान्मनसश्च जाताः तथैव जनकाः स्युः तदा जगतस्त्रैविध्यं न स्यादिति विशेषप्रश्नः कान्यध्यातिष्ठद्द्वाराणीति अवरजन्मनां मनोः सकाशादर्वाचीनजन्मयुक्तानाम् ॥ १ ॥

एवं मनोर्धर्मात्मनः कार्यं पृष्ट्वा स्वापेक्षयापि विदुरं भक्तं ज्ञात्वा तत्पृष्टमेव त्वया वक्तव्यमित्यभिप्रायेण तेन सर्वथा पृष्टं भविष्यत्यर्थे प्रमाणमाह त्रिभिः। क्षत्तेति। सोपपत्तिकभक्तत्वं तस्य मूलं निरूप्यते उत्कृष्टप्रश्नकर्तृत्वं सोपपत्तिकमाह। हि प्रथमं विदुरस्य भागवतत्वं निरूपयति यस्त्वसिधाराव्रतं करोति स महाभागवतो भवति विदुरस्य भागवतत्वे मुख्यमेतत् वीजं तदाह। क्षत्ता महाभागवत इति। क्षत्ता ह्यसिधाराव्रतकर्त्ता पुराणान्तरे राजसूये युधिष्ठिरं प्रति भगवता तद्व्रतमुपदिष्टम्।

स्वयं पुष्टश्च तरुणः स कामः सन्निधौ स्त्रियाः।
नित्यं स्थितोऽपि मनसा विकारं यो न गच्छति।
स्त्रियः सर्वाङ्गसंहृद्याः सर्वाभरणभूषिताः
अप्राप्तकामास्तं प्राप्य साभिलाषा अपि स्वयम्।
स्वकीयासु तथान्यासु स्वभार्यास्वपि कुत्रचित्।
पञ्चाग्निमध्यवत्तिष्ठेदसिधाराव्रतं तु तत्।

क्षत्ता तथा भवतीति तस्य महाभागवतत्वं दृष्टप्रकारेणापि महाभागवतत्वमाह। कृष्णस्यैकान्तिक इति। एकान्ते हितः ऐकान्तिकः स्वामिकार्यप्रसङ्गानां तथात्वेऽपि यतो दृढः केवलं हरेरर्थे सर्वथा यत्नवान् स्वतः प्रसङ्गादपि न स्वार्थे महाभागवतस्तु स किञ्च सुहृत् सुष्ठु हृदयं यस्य अन्येऽपि दोषास्तत्र न सन्तीति सांसर्गिकोऽपि दोषो नास्तीत्याह। यस्तत्याजेति। अग्रे जातः पितृसमो भवति भ्रातृणामेकजातानामिति न्यायेन तत्पुत्रः स्वपुत्र एवेति पूर्वपरापेक्षापरित्यागेन भगवद्वैमुख्यमात्रं ज्ञात्वा धृतराष्ट्रं दुर्योधनादिसहितं त्यक्तवानित्यर्थः वस्तुतः कृष्णो अघवानपि न भवति तथापि भगवदङ्गीकृतपाण्डवविरोधात् अघवान् इति-शब्दः प्रकारवाची सम्भावनावाची च ॥ २ ॥

एवं सोपपत्तिकं भागवतत्वमुपपाद्य तथात्वं तस्योचितमेवेत्याह। द्वैपायनादिति। भगवदंश एव महाभागवतो भवतीति भगवदंशत्वनिरूपणार्थं वेदव्यासात् महित्वे अनवरः अवरो न भवति न्यूनो न भवतीत्यर्थः महोऽस्यास्तीति मही महिनो भावो महित्वं तादृशे धर्मे विचार्यमाणे यथा महित्वं वेदव्यासे तथैव विदुरे उत्सवोऽत्र भगवत्स्मरणादिकम्। "मह उद्धव उत्सव" इतिकोशात्। अकारान्तो महशब्दः यथा ज्ञानं भगवत्स्मरणं भगवद्धर्मप्रवर्त्तकत्वं वा वेदव्यासे तथेति तत्र हेतुमाह। तस्य देहज इति। वेदव्यासस्यायं वीजजः पुत्रः अत्यन्तरङ्गः अतो युक्तमेव तस्य तथात्वमिति। इदं तु ततोऽप्यधिकम् सर्वात्मनाश्रितः कृष्णमिति। वेदव्यासस्याधिकारित्वात् न सर्वात्मनाश्रितत्वं सर्वभावेन ऐहिकपारलौकिकदैहिकात्मीयानां कार्यफलार्थं भगवन्तमेवाश्रयतीति तथा सर्वरूपत्वं भगवतो वक्तुं नाम विशेषमाह। भक्तिमार्गे रसिकश्चायमिति। अधिकारिज्ञानिभक्ताद्विशेषमाह। तत्परांश्चाप्यनुव्रत इति। भगवत्परान् भक्तान् अनुव्रतः सेवमान एवं सर्वप्रकारेण तस्य भागवतत्वं युक्तम् ॥३॥

एवं विदुरं भक्तत्वेन स्तुत्वा तस्य प्रश्नस्योत्तमत्वमाह। किमन्वपृच्छदिति। पृष्टे कथनं रोषाभावश्च प्रतिपादयितुमाह। मैत्रेयमिति। स हि मित्रायाः पुत्रः नन्वत्यन्तभगवद्भक्तोऽपि गुणवशात्कालवशाद्वा लौकिकं प्राकृतं वा पृच्छेत् तद्व्यावृत्त्यर्थमाह। विरजास्तीर्थसेवयेति। यः साधनेन निष्पापः रजोगुणरहितो वा जातः स नान्यत् पृच्छति रजस एव निराकृतत्वात् दूरे तमः तत्रापि महता कष्टेन विषमे देशे गत्वा सत्सङ्गे सति कथमन्यत्पृच्छेदित्याह। उपगम्य कुशावर्त इति। गङ्गाद्वारस्थानान्तर्गतदेशविशेषः कुशावर्तः तस्मिन् आसीनमिति तत्रापि तत्त्वविदां मध्ये श्रेष्ठं न हि तादृशे देशे तादृशोऽन्यत्पृच्छति अलौकिकं गूढं स एव जानातीति तत्त्ववित्तममित्युक्तम् ॥ ४ ॥

किं प्रश्नमात्रं वक्तव्यमाहोस्वित् उत्तरमुभयं वा तथा सति तत्त्वेनाग्रहे भगवत्कथारसाभिनिवेशो न स्यादित्याशङ्क्य निरूपणं भगवत्कथार्थमित्याह। तयोर्विदुरमैत्रेययोः सम्वदतोः सतोर्मध्ये कथाः प्रवृत्ताः स्वत एव भवन्ति सूतेति सम्बोधनं तादृशकथाज्ञानार्थं तस्य सैव वृत्तिरिति यथा वीराणां युद्धे रुधिरप्रवाहाः ते समलाः एतास्त्वमला इति अमलत्वं कीदृशमित्यपेक्षायां दृष्टान्तेन स्पष्टयति। आपो गाङ्गा इवेति। आपः स्वभावत एव मेध्याः तत्राप्युत्कर्षो गङ्गायाः साक्षाद्भगवद्रूपा इत्यर्थः। अघघ्नीरिति। पापनाशिकाः अपराधनिवर्तिका वा स्वयं निर्मला एवान्यमपि तथा कुर्वन्ति ब्रह्मदण्डदग्धा अपि गङ्गया पाविता इति। तथात्वे उभयोरेकं हेतुमाह। हरेः पादाम्बुजाश्रया इति। चरणाम्बुजाश्रयाः उभयाः ॥ ५ ॥

ततः किमत आह। ता न इति। सूतत्वात् देयश्चेत्तत्राह। भद्रं त इति। ते भद्रमस्तु ब्राह्मणानामाशिष एव देयाः कथानामाधिक्ये हेतुमाह। कीर्त्तन्यान्युदाराणि कर्माणि यस्येति भगवतः कर्मणां स्वभावद्वयं यः कश्चन तानि कीर्त्तयेदेव अफलार्थी फलार्थी च अफलार्थिनो नित्यविधिः कीर्त्तन्यानीति फलार्थिनस्तु सर्वाण्येव फलानि पात्रापात्रविचारव्यतिरेकेणैव सर्वं फलदातृणयुदाराणि तस्मात् कीर्त्तनीयानि सर्वेषु पदार्थेषु सन्ति रसा रसज्ञं प्राप्याभिव्यक्ता भवन्ति भगवतस्तु कर्माण्यभिव्यक्तान्येव रसज्ञः परमपेक्ष्यते कथानां स्वविषयकरुच्युत्पादकत्व पूर्वमवोचाम यथाऽग्नेयेनौषधेन क्षुज्जायत एवमन्नेन च तृप्यते अन्नमेव चेत् क्षुज्जनकं स्यात् कथं तृप्येत

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

पीतेनामृतेनोत्तरेत्रुच्छोत्पादनात् स हि दुःखहर्त्ता स्मरणेच दुःखं चात्मनि तिरोभावात् तिरोभावकश्च प्राकृतो गुणः स भूयानिति कालादिरपि अतो निरन्तरोत्पद्यमानदुःखनिवृत्त्यर्थं हरिः स्मर्त्तव्यः किञ्च लोके आलस्योद्वेगादिषु लीलया स्वास्थ्यं भवति स्वस्यान्यस्य वा क्रियमाणया कीर्त्यमानया वा मृत्योर्भयं सर्वेषां तत्रावश्यापेक्ष्यमसृतं किञ्च पानस्य कियत्कालव्यवधाने कालादिना प्राकृतैर्वा मध्ये रसान्तरोत्पादने अलं मन्येतापि स्मरणाद्वा पिबन्नेव कथं तृप्येतेत्यर्थः ॥ ६ ॥

सर्गलीला प्रथत आरभ्यत इति ज्ञापयितुं व्यासः स्वय माह । एवमिति । उग्रं श्रवः कीर्तिर्यस्येति इदमुग्रत्वं भगवत्कीर्तिविरोधिनिराकरणार्थं रोमहर्षणस्यायं पुत्रः उग्रश्रवा इति नाम्ना ऋषयो हि ज्ञात्वा पृच्छन्ति अनेन कार्यसिद्धिर्भविष्यतीति नैमिषमेव अयनं येषां वैष्णवक्षेत्रे स्थिताः देशगुणेनापि वैष्णवा भवन्तीति आत्मनि यावान् परिकरो बाह्याभ्यन्तरभेदेन देहादिर्बुद्ध्यादिर्वा तत्सर्वं भगवत्येवार्पितं येन तादृशस्यैतदेव कृत्यमतस्तान् प्रत्याह । श्रूयतामिति । स्वस्य यत्कर्तव्यं सिद्धं तेषां श्रोतृत्वं स्थिरीकरोति । श्रूयतामिति । शुकस्तु मध्येन विरत इति न तस्य प्रश्नोनोत्तरं विदुरवाक्यं शुकोऽप्याहेति ज्ञातव्यम् ॥ ७ ॥

सूतस्तु विदुरः प्रश्नं कृतवानित्याह । हरेरिति । शुकस्तु प्रश्नमेवाहायं तूपोद्घातमनुवदति विदुरप्रश्नेनैव विशेषतः हिरण्याक्षवधस्योक्तत्वात् सर्वदुःखहरणार्थमेव क्रीडतनुर्भगवता धृता स्वमाययेति स्वाधीनया मायया यथा सुखं परिवर्त्तमानया लोकप्रदर्शनार्थं तथाभावं बोधयति सम्पादयति वा अत एव मायया धृतक्रोडतनोः तस्य चरित्रद्वयं भूम्युद्धरणमिष्टरूपं हिरण्याक्षहननमनिष्टनिवृत्तिरूपमुभयं श्रुत्वा संजातहर्षः अनुवादेऽपि भगवतो माहात्म्यज्ञापनार्थमुभयोर्लीलात्वमाह मध्ये । लीलामिति । उभयं लीलाहिरण्याक्षो भगवदीय इति स एव लीलात्वेनोक्तः विशेषणपर्यवसाने तु लक्षणागौरवं च स्यात् हिरण्याक्षचरित्रं चाधिकं स्यात् एवं सर्वं लीलैव भवति हर्षोत्पत्तिः रुच्युत्पादकत्वेन मुनिमित्यग्रिमज्ञानार्थं भारत इति प्राकृतैरसान्तराजननार्थम् ॥ ८ ॥

विदुरस्त्वेवं मन्यते भक्तो हि ब्रह्मा सृष्टिं कृतवानेव अतः परं भक्त्युपयोग्येव किञ्चित् कार्यं करिष्यतीति किमारभतेति ब्रह्मकार्यविषयकः प्रथमः प्रश्नः भक्तेन भगवदर्थमेव सृष्टा इति मरीच्यादयोऽपि कीदृशान् भक्तानुत्पादितवन्त इति द्वितीयः प्रश्नः तत्रापि प्रकारत्रयं भक्तजनने तारतम्यबोधनार्थं साद्वितीयाः सभायाः तथा सति प्राकृतभक्तोत्पत्तिः स्वतन्त्रा एकाकिनः तथासति ज्ञानिभक्तोत्पत्तिः संहता मिलिताः तथा सति परमभक्तोत्पत्तिरिति यदि ब्रह्मा प्रजापतिसृष्ट्यनन्तरं न किंचित्कुर्यात् प्रजापतिरेव भवेत् न तु प्रजापतिपतिः सर्गस्य प्रवाहवत्प्रवर्तमानत्वात् न मरीच्यादिभ्यो विशेषः प्रजापतिसृष्टिव्यतिरेकेण केवलं प्रजासृष्टौ रक्षकाभावात् प्रजा अमर्यादाः स्युः तत्सृष्टौ तु तैरेव प्रजा भविष्यन्तीति प्रजासर्गे प्रजापतीनेव सृष्टवान् सृष्टेरेवानुवादः पूर्वशेषव्यावृत्त्यर्थं किमारभतेत्युक्तं ब्रह्मस्थिति ज्ञानार्थं म इति स्वाधिकारिहानात् ब्रह्मणस्ततोऽप्यलौकिककरणज्ञानार्थमाह । अव्यक्तमार्गविदिति । अव्यक्त इति कारणरूपं ब्रह्म तस्य मार्गः उत्पत्तिप्रलयप्रकारः कथं तस्मादेते समायान्ति कथं प्रविशन्ति इत्येतद् ब्रह्मैव जानाति सर्वस्यापि कारणमव्यक्तमिति तथोक्तम् ॥ ९ ॥

द्वितीयं प्रश्नमाह । ये मरीच्यादय इति । मरीच्यादयः स्वतन्त्राः सृष्टाः मनुस्तु सभार्यः ते सर्वे सृष्टौ नियोजिताः निश्चयेन ब्रह्मणा आदेशात् एतत् जगत्कथमभावयन् उत्पादितवन्त इत्यर्थः ॥ १० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

विसर्गो यः समासेन पूर्वमुक्तः स एव हि ।
विंशे व्यस्योच्यते स्वायम्भुववंशविवक्षया ॥

प्रतिष्ठामाश्रयम् । सौते ! रोमहर्षणसूनो अवरजन्मनां सनकादिभ्यः उत्तरकालजन्मवतां जीवानामीश्वरे लीनानां मार्गाय निर्गमाय कानि द्वाराणि कृतवान् । अर्वाचीनान् प्राणिनः । कैरुपायैः सृष्टवानित्यर्थः ॥ १ ॥

एतत् प्रश्नोत्तरन्तु विदुरमैत्रेयसम्वादेनैव ब्रूहीत्याशयेनाह । यस्तेति । सापत्यं दुर्योधनाद्यैः पुत्रैः सहितम् ॥ २ ॥

अनवरः अन्यूनः ॥ ३ ॥

विरजाः विगतं रजो यस्मात् सः । तीर्थसेवयेति हेतूक्तेः प्रत्यासत्त्याच तीर्थानामेव रजोमालिन्यं विगतमित्यर्थः । कुशावर्त्ते गङ्गाद्वारे ॥ ४ ॥

अमलाः कथा इति तयोर्भक्तत्वात् भक्तानाञ्च कृष्णान्यकथाराहित्यात् गङ्गाया आपः गाङ्ग्यः अघघ्नीरघघ्न्यः ॥ ५ ॥

भद्रं ते इत्यौत्सुक्येनाशीर्वादः । कीर्त्तन्यानि उदाराणि कर्माणि यासु यस्य वेति कथाया हरेर्वा ॥ ६ ॥

अध्यात्मकं मनः ॥ ७ ॥

सुष्ठु अमायया धृता नित्यस्थिता क्रोडतनुर्यस्य तस्य हरेः तौदादिकस्य धृञ् स्थितावित्यस्य रूपम् । गोःपृथिव्याः । भारतो विदुरः ॥ ८—९ ॥

एतज्जगत् अभावयन् उत्पादयामासुः ॥ १० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं चतुर्मुखकर्तृकसर्गप्रकरणे सप्तभिरध्यायैः प्रासङ्गिकं वराहचरित्रं वर्णितं संप्रत्यवशिष्टश्चतुर्मुखकृतः सर्गः महदाद्युत्पत्त्यनुवादपूर्वकं वर्ण्यते विंशेनाध्यायेन प्रतिष्ठां स्थानं प्राप्य अवरमर्वाचीनं जन्म येषां तेषां मार्गायोत्पत्तये कानि द्वाराणि साधनानि अन्वतिष्ठत् अनुष्ठितवान् ॥ १ ॥

सापत्यं दुर्योधनादिसहितम् ॥ २ ॥ ३ ॥

कुशावर्ते धुनद्याः द्वारि ॥ ४ ॥

अघघ्नीः अघघ्न्यः हरेः कथाः प्रवृत्ताः ॥ ५—६ ॥

एवमिति श्रीव्यासोक्तिः अर्पितमध्यात्मं मनो येन सः ॥ ७ ॥

स्वमायया स्वेन वयुनेन संकल्पेनेत्यर्थः धृतक्रोडतनोः गोः भूमेरुद्धरणं लीलामवज्ञया हिरण्याक्षं हतं च निशम्य श्रुत्वा भारतो विदुरः ॥ ८—९ ॥

एतत् तत् पुत्रपौत्रादिकम् कथं केन प्रकारेण अभावयन् जनयामासुः ॥ १० ॥

---

सद्वितीयाः किमसृजन् स्वतन्त्रा उत कर्मसु ।
आहोस्वित्संहताः सर्व इदं स्म समकल्पयन् ॥ ११ ॥

मैत्रेय उवाच ।

दैवेन दुर्वितर्क्येण परेणानिमिषेण च ।
जातक्षोभाद्भगवतो महानासीद्गुणत्रयात् ॥ १२ ॥
रजःप्रधानान्महतस्त्रिलिङ्गो दैवचोदितात् ।
जातः ससर्ज भूतादिर्वियदादीनि पञ्चशः ॥ १३ ॥
तानि चैकैकशः स्रष्टुमसमर्थानि भौतिकम् ।
संहत्य दैवयोगेन हैममण्डमवासृजन् ॥ १४ ॥
सोऽशयिष्टाब्धिसलिले आण्डकोशो निरात्मकः ।
साग्रं वै वर्षसाहस्रमन्ववात्सीत्तमीश्वरः ॥ १५ ॥
तस्य नाभेरभूत्पद्मं सहस्रार्कोरुदीधिति ।
सर्वजीवनिकायौको यत्र स्वयमभूत्स्वराट् ॥ १६ ॥

भाषाटीका

शौनकजी बोले कि हे सूतजी स्वायम्भुवमनु ने सब का आधार रूप पृथिवी को प्राप्त होकर पीछे जन्महोंने वाले जीवों के उत्पन्न होंने के वास्ते कि न उपायों का आश्रय किया ॥ १ ॥

विदुरजी महाभागवत हैं श्रीकृष्णके अत्यन्त प्रिय हैं जिन ने श्रीकृष्ण के विषय में अपराधी जानकर पुत्रों के सहित अपने बडे भ्राता धृतराष्ट्र कूं त्यागदिया ॥ २ ॥

व्यासजी के पुत्र हैं महिमामें उनके तुल्य हैं सब प्रकार वे श्रीकृष्ण के आश्रित हैं श्रीकृष्ण के सेवकोंके अनुवर्तन करने वाले हैं ॥ ३ ॥

तीर्थों के सेवन करने से निर्मल हैं ऐसे जो विदुरजी हरिद्वार में तत्व वेत्ता मैत्रेयजी के समीपमें आकर क्या प्रश्न करते भये ॥ ४ ॥

हे सूतजी उन दोनों के सम्वाद में निर्मल भगवान् के चरणारविन्द के आश्रय लेनेवाली इसीसे गंगाजल के तुल्य पापों के नाश करने वाली जो कथा प्रवर्त भई हैं ॥ ५ ॥

तिन कथाओं को आप हमसे कथन करौ आपका कल्याण होवे क्या कीर्तन करने के योग्य उदार कर्मवाले भगवान् कीहै कथाका रसज्ञ होकर भगवान का लीलारूपी अमृत को पान करके कौन तृप्ती को प्राप्त होगा ॥ ६ ॥

इस प्रकार से नैमिषारण्य वासी ऋषियों के पूछने पर भगवान के चरणारविन्द में मन को अर्पण करके श्रीसूतजी उन ऋषियों से बोले कि आप श्रवण करो ॥ ७ ॥

सूतजी बोले कि अपनी माया से वाराह मूर्ती को धारण करने वाले भगवान का रसातल में से पृथिवी का उद्धार करना हिरण्याक्ष को अनायास से मारना इत्यादि लीला को श्रवण करके अत्यन्त हर्ष होकर विदुरजी मैत्रेयजी से बोले ॥ ८ ॥

विदुरजी बोले कि हे ब्रह्मन् प्रजापतिनके पति जो ब्रह्मा उन्ने प्रजापतीयों को उत्पन्न करके फिर क्या किया सो कहिये आप तो भगवान के मार्ग को जानने वालेहै ॥ ९ ॥

मरीचि आदिक जो ब्राह्मण हैं और जो स्वायम्भुवमनु हैं उनों ने ब्रह्मा की आज्ञा पाकर किस प्रकार से इस जगत को उतपन्न किया ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

सद्वितीयाः सभार्याः स्वतन्त्राः भार्यानपेक्षाः कर्मसुप्रजागादिषु संहताः परस्परापेक्षाः इदं जगत् ॥ ११ ॥

ब्रह्मा किमारभतेति प्रश्नस्य यक्षादीन्सृष्टवानित्युत्तरं वक्तुं पूर्वोक्तां सृष्टिमनुस्मारयति। दैवेनेति सप्तभिः । मन्वादिप्रश्नानां तूत्तराध्यायमारभ्योत्तरं भविष्यति दुर्वितर्क्येण दैवेन जीवादृष्टेन परेण प्रकृत्यधिष्ठात्रा महापुरुषेणानिमिषेण कालेन च हेतुना भगवतो निर्विकाराज्जातक्षोभं यद्गुणत्रयं प्रधानं तस्मान्महानासीत् तदुक्तम् तन्त्रे"विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः। प्रथमं महतः स्रष्टृद्वितीयं त्वण्डसंस्थितम् तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यत" इति ॥ १२ ॥

महतो जातो भूतादिरहङ्कारस्त्रिलिङ्गस्त्रिगुणः रजःप्रधानादिति स्वतः सत्त्वप्रधानस्यापि महतोऽहङ्कारोत्पत्तिकाले कार्यानुरूपं रजःप्रधानत्वं भवतीतिभावः पञ्चशः तन्मात्राणि महाभूतानि ज्ञानेन्द्रियाणि कर्मेन्द्रियाणिच तत्तद्देवताश्चेति पञ्च पञ्च ससर्जेत्यर्थः॥१३॥

भौतिकं हैममण्डमेकैकशः प्रत्येकं स्रष्टुमसमर्थानि सन्ति संहत्य ससृजुः ॥ १४ ॥

अन्ववात्सीदधिष्ठितवान् ॥ १५ ॥

सहस्रार्काणामिवोरुर्दीधितिर्यस्य तत् सर्वजीवनिकायानामोकः स्थानं पद्मम् स्वराड् ब्रह्मा ॥ १६ ॥

सोऽनुविष्टो भगवता यः शेते सलिलाशये ।
लोकसंस्थां यथा पूर्वं निर्ममे संस्थया स्वया ॥ १७ ॥
ससर्जच्छायया ऽविद्यां पञ्चपर्वाणमग्रतः ।
तामिस्रमन्धतामिस्रं तमो मोहो महातमः ॥ १८ ॥
विससर्जात्मनः कायं नाभिनन्दंस्तमोमयम् ।
जगृहुर्यक्षरक्षांसि रात्रिं क्षुत्तृट्समुद्भवाम् ॥ १९ ॥
क्षुत्तृड्भ्यामुपसृष्टास्ते तं जग्धुमभिदुद्रुवुः ।
मा रक्षतैनं जक्षध्वमित्यूचुः क्षुत्तृडर्दिताः ॥ २० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

यः सलिलाशये गर्भोदकस्यान्तः शेते तेन भगवतानुविष्टोऽधिष्ठितः सन् स स्वराट् स्वया संस्थया नामरूपादिक्रमेण ॥ १७ ॥

छाया प्रभाप्रतियोगिनी तया अबुद्ध्येत्यर्थः यस्त्वबुद्धिकृतः प्रभोरित्युक्तत्वात् महातमइति महामोहः स्वरूपनिर्देशमात्रविवक्षया मोहइति प्रथमान्तप्रयोगः ॥ १८ ॥

तदेवं प्रथमोक्तां साधारणीं सृष्टिमनूद्य केनचिद्विशेषेणासाधारणीं सृष्टिमाह। विससर्जेत्यादिना यावत्समाप्ति तद्विसृष्टं कायं रात्रिरूपं तत एव जातानि यक्षरक्षांसि जगृहुः क्षुत्तृषोः समुद्भवो यस्यास्ताम् अत्रच "यास्यतनुरासीत् तामपाहरत्सा तमिस्राभवदि" त्यादि श्रुतिरनुसंधेया ॥ १९ ॥

उपसृष्टा अभिभूताः जग्धुमत्तुं भक्षयितुम् यतो वयं क्षुत्तृड्भ्यामर्दिता अतएनं पितर्तात कृपया मा रक्षतेत्येके अन्येतु जक्षध्वं भक्षयतेति अब्रुवन् जक्षभक्षहसनयोरिति धातुः ॥ २० ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ॥

भार्य्यासहकारितया तदनपेक्षतया प्रजापत्यन्तरसहकारितयेति प्रश्नत्रयम् ॥ ११ ॥

पूर्वोक्तां ब्रह्मकल्पगतां भगवतः परमकारणात् महापुरुषेण द्वारेण जातः क्षोभो गुणसाम्यत्यागो यस्य तादृशं यत्प्रधानं तस्मान्महान्महत्तत्वमासीत्तत्र दैवं जीवादृष्टं निमित्तमेकम् तस्मादप्युत्तमः कालो निमित्तं तेन तेन च हेतुना तत् पुरुषरूपेण महत्स्रष्टृत्वम् अथो साकल्येन महतः स्रष्टृ संकर्षणाख्यमण्डसंस्थितं गर्भोदशायिरूपं प्रद्युम्नाख्यं सर्वभूतस्थमनिरुद्धाख्यं तानि ज्ञात्वोपास्य ॥ १२ ॥

रजः प्रधानत्वं सूत्राख्यस्य तद्भागस्येति ज्ञेयम् ॥ १३ ॥

दैवयोगेन भगवच्छक्तिसम्बन्धेन तदा संहत्यचान्योऽन्यं भगवच्छक्तिचोदिता इति द्वितीयोक्तेः हैमं प्रकाशबहुलम् ॥ १४ ॥

अब्धिसलिले कारणार्णवजले अण्डकोश एवाण्डकोशस्तदन्तर्वर्त्ती विराड्वा किञ्चिदधिकं वर्षसहस्रमभिव्याप्य अशयिष्टेत्यन्वयः निरात्मकत्वञ्च तस्य तदानीं तस्मिन्समष्टिजीवानुद्बोधात् ईश्वरः कारणार्णवशायी गर्भोदशायिरूपेण तमधिष्ठितवान् ॥ १५ ॥

तस्य गर्भोदशायिपद्मनाभानिरुद्धस्य स्वयमेक एव ॥ १६ ॥

स्वया वेदेन स्वस्मिन्ननेकधा विचारितया ॥ १७ ॥

प्रभाप्रतियोगिनी प्रकाशविरोधि तमस्तस्य चाज्ञानपर्य्यायत्वमिति नेयार्थलक्षणया व्याख्यातत्वादित्यर्थोक्तिः सर्वत्र सृष्टिक्रियाकर्मत्वेन द्वितीयासद्भावात् मोह इति प्रथमाप्रयोगः नाम्नास्वरूपकथनमात्रापेक्षया ॥ १८ ॥

साधारणीं पूर्ववर्णिततुल्यां केनचिद्यक्षरक्षस्तद्वृत्तकथनादिना विशेषेण वैलक्षण्येन द्विपरार्धायुषो ब्रह्मणः कायत्यागोहि क्रोधादिमानसविकारपरित्यागएव इन्द्रादिदेवान्तराणामपि नवमे विषयभोगार्थं नानारूपग्रहणत्यागदर्शनात् ततएव रात्रिरूपकायादेव अत्रच कायस्य रात्रिरूपत्वेच सा क्रोधादिभावरूपत्वेन प्रसिद्धा- या ब्रह्मणस्तनुरासीत्तामजहात्तत्याज तामिस्रा रात्रिः अनुसन्धेयाप्रमाणत्वेन स्मर्त्तव्या ॥ १९ ॥ २० ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

कथमिति स्वाभिपृष्टमेवं प्रकारं मुनिमुख्याञ्शिश्चचीपया विकल्पयति । सद्वितीयाः सभार्याः किमसृजन् किं शब्दः प्रश्नेऽउताहोस्वित् कर्मसु सृष्ट्यादिव्यापारेषु स्वतन्त्रा भार्यानिरपेक्षा आहोस्वित्सर्वे मरीच्यादयः संहताः परस्परसापेक्षा इदं विश्वं समकल्पयन्नसृजन्स्म ॥ ११ ॥

एवमापृष्टो मैत्रेयः सर्गभेदानां प्रतिपिपादयिषया पूर्वोक्तां महदाद्यविद्यापञ्चपर्वान्तां सृष्टिमनुवदति सप्तभिः । दैवेनेति । दुर्वितर्क्येणाचिन्त्यप्रभावेण दैवेनेश्वरेण कर्त्रा परेण प्रकृतिपुरुषविलक्षणपरमात्मकेनानिमिषेण च कालेन च हेतुना जातः क्षोभः-कार्योन्मुख्यरूपव्यापारो यस्य तस्माद्भगवतः भगवत्संबन्धिनः तच्छरीरभूतादित्यर्थः गुणत्रयात्मकात्प्रधानान्महत्तत्त्वमासीत् अत्र भगवतो गुणत्रयादित्यनेन ब्रह्मात्मकप्रधानस्योपादानत्वकथनेन विशिष्टोपादानत्वं दैवेनेत्यनेन केवलस्य ब्रह्मणो निमित्तत्वं परेण कालेनेति कालस्यापि परमात्मात्मकत्वकथनेन ब्रह्मणः सृष्ट्यादिव्यापारे उपकरणान्तरनैरपेक्ष्यमनिमिषेण गुणत्रयादिति कालप्रधानयोः सृष्टेः प्रागपि सद्भावावगमेन तदा विजातीयवस्तुसत्त्वं दुर्वितर्क्येणेत्यनेन निमित्तत्वोपादानत्वोपयुक्ताचिन्त्यसर्वज्ञत्वसर्वशक्तित्वसत्यकामत्वादिप्रभाववत्त्वावगमेन स्वगतभेदसत्त्वंतयोरुपलक्षणत्वेन सजातीयजीवभेदसत्त्वं चोक्तं भवति ॥ १२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

रज इति। दैवेन भगवता चोदितात्प्रेरिताद्रजःप्रधानान्महतः स्वतः सत्त्वप्रधानत्वेऽपि महतः कार्योन्मुखदशायां रजसःतमससत्त्वयोरुभयोरप्यनुग्राहकत्वेन रजःप्रधानादित्युक्तं जातः त्रिलिङ्गकः पञ्चमहाभूतज्ञानकर्मेन्द्रियात्मकः भूतादिरहङ्कारः वियदादीन्याकाशादीनि आदिशब्देन तन्मात्राणि ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि चोक्तानि पञ्चशः प्रत्येकं पञ्चसंख्याकानि ससर्ज ॥ १३ ॥

तानि च वियदादीनि एकैकशः परस्परमसमेतानि भौतिकमण्डं स्रष्टुमसमर्थान्यभूवन् अथ दैवयोगेन भगवदनुप्रवेशेन समेत्येत्यनेन पञ्चीकरणं विवक्षितं हैमं प्रकाशबहुलमण्डं ब्रह्माण्डमसृजन् ॥ १४ ॥

अण्डकोशः निरात्मकः अधिष्ठातृचेतनरहितः अधिसलिलं सलिले अनेनाण्डसृष्टेः प्रागुदकसृष्टिरर्थसिद्धा अशाणिद्याध्यवसमण्डकोशमीश्वरोऽनिरुद्धः साग्रं संपूर्णं सम्वत्सरसहस्रमन्ववात्सीज्जलवेष्टितं जलपूर्णमण्डं भगवानध्यशेत इत्यर्थः ॥ १५ ॥

कोऽसौ भगवान्योऽन्ववात्सीदित्यत्राह। यस्याण्डे शयानस्य भगवतो नाभेः सकाशात्सहस्रसंख्याकादित्यवद्बहुप्रकाशं पद्ममभूत् स ईश्वरोऽवात्सीदित्यर्थः कीदृशं पद्मं यन्नाभेरभूदित्यत्राह । सर्वेषां जीवानां देवादीनां निकायः समूहः तस्यौकः स्थानं यत्र पद्मे स्वराट् ब्रह्मा स्वयमभूदुत्पन्नः तत्पद्ममभूदित्यर्थः ॥ १६ ॥

सः ब्रह्मा भगवतानुविष्टः सङ्कल्परूपज्ञानेनानुप्रविष्ट इत्यर्थः कोऽसौ भगवान्येनानुप्रविष्ट इत्यत्राह । सलिलाशये गर्भोदकस्यान्ते यः शेते तेनेत्यर्थः भगवतानुप्रविष्टो ब्रह्मा यथापूर्वं पूर्वकल्पानुसारेण लोकसंस्था लोकानां संस्थानं विन्यासं स्वया असाधारणया संस्थया देवादीनामरूपात्मकयाप्राकल्पयत्कृतवान् ॥ १७ ॥

छायया तमो गुणेन पञ्चपर्वाणमविद्यां ससर्ज पञ्चपर्वाण्येवाह। तामिस्रमित्यर्थेन तामिस्रादिस्वरूपं तु पूर्वमेव प्रपञ्चितम् ॥ १८ ॥

एवं साधारणीं सृष्टिमनूद्यासाधारणान् सृष्टिमेवाह । विससर्जेत्यादिना यावदध्यायसमाप्ति नाभिनन्दन् अनभिनन्दन् तमोमयं तमःप्रचुरं कायं छायारूपां तनुं विससर्ज सर्वत्र तनुत्यागो नाम तत्तदवस्थापरपर्यायभावत्यागो विवक्षितः ग्रहणं चतत्तद्भावापत्तिः यत्ता रक्षांसि विसृष्टात्कायात्समुत्पन्नानि यत्तरक्षांसि तमेव कायं स्वात्मनं क्षुत्तृषोः क्षुत्पिपासयोः समुद्भवो यस्यां तां रात्रिं रात्रिधर्मरूपेण परिणम्यमाणां जगृहुः ॥ १९ ॥

ते यक्षादयः क्षुत्तृड्भ्यामुपसृष्टाः पीडितास्तं कायं जग्धुमभिदुद्रुवुरभ्यधावन् यतो वयं क्षुत्तृड्भ्यामर्दिताः तत एव तं कायं कृपया पितेति रक्षतेत्येके ऊचुरपरे पुनः पितरमपि जक्ष ध्वं भक्षयतेत्यूचुः ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

द्वितीया भार्या स्वतन्त्रा अन्यापेक्षारहिताः कर्मभिः प्रेरिता इतिशेषः संहताः सम्मिलिताः समेत्यनेन संहत्यसर्जनं प्रधानं स्मारयति ॥११॥

किमारभतेति यत्पृष्टं तस्योत्तरं वक्तुं पूर्वोक्तसृष्टिमाविस्मरणायादितोऽनुवदति। दैवेनेति । दुर्वितर्क्येण प्रायस्त्वदृष्टानां बहुत्वादनुमातुमशक्येनादृष्टेन नैपातर्केण मतिरापनेयेति श्रुतेरदृष्टान्तर्यामिणा हरिणा वा दुर्विकल्पेनेति पाठे इदमदो वेति संशयविपर्ययेणानिर्मिपेण सर्वतो विलक्षणेन सृष्टिकालेन तदन्तर्यामिणा हरिणा वा सर्वेषां मूलकारणस्य प्रलयसमुद्रे लक्ष्मीपर्यङ्के शयानस्य भगवतः प्रेरणया जातक्षोभात्कार्याभिमुखोत्पन्नविकाराद्विषमावस्थामुपगताद्गुणत्रयाद्यथासंख्यसंयुक्तसत्त्वादिगुणत्रयान्महान्महत्तत्त्वाभिमानी ब्रह्मासीत्तदभिमन्यमानमहत्तत्त्वं चाभूत् किञ्च भगवतो वीर्याधानेन जातक्षोभादुत्पन्नासिसृक्षात्वविशेषात् स्वजीवशक्त्यां गुणकर्मयोनौ इत्यतो गुणत्रयाभिमानिनोऽजाभिधानादक्षरान्महत्तत्त्वाभिमानी वायुश्च सरस्वती भारती च जाता इत्यर्थः

"महतो ब्रह्मवायू च तद्भार्ये चाभिमानिन„

इति वाक्यादयमर्थः कल्प्यत इति ॥ १२ ॥

महत्तत्वादहङ्कारस्योत्पत्तिमाह । रजःप्रधानादिति । साम्यावस्थायां मूले रजसि यद्रजो मूले तमसि मिश्रितं यद्रजो मूले सत्त्वे यद्रज इति त्रिधा विभक्तेन समस्तेन रजसा युक्तत्वाद्रजःप्रधानत्वं महत्तत्त्वस्य तस्मान्महतो महत्तत्त्वाद्दैवचोदिताद्विकुर्वाणाज्जातो वैकारिकतैजसाभ्यां सहितः त्रिलिङ्गस्त्रिरूपो भूतादिस्तामसाहङ्कारो वियदादीनि पञ्चभूतानि ससर्जेत्यन्वयः अनेनैतच्च सिद्धं तैजसाहङ्कारः श्रोत्रादिदशेन्द्रियाणि वैकारिकाहङ्कारो मनोदिगाद्यभिमानिदेवान् ससर्ज मूलाहङ्कारादनन्तगरुडरुद्राद्याः स्वभार्याभिः सह जाताः मनोभिमानिनावनिरुद्धचन्द्रौ वैकारिकाभिमानिदेर्वावशेषाज्जातौ तदुक्तम् ।

> अहमः शेषवीन्द्रौ च रुद्रेन्द्रौ कामतस्त्रियः ।
> मनसस्त्वनिरुद्धश्च चन्द्रश्चान्ये यथोदितम् ।
> एवं क्रमोऽव्यत्ययस्तु सूक्ष्मस्थूलादिभेदतः ।
> सृष्टौ गुणे च ज्ञानादौ मुक्तिस्वेष्वप्ययं क्रमः ।
> नियमेनान्यथोक्तिस्तु मोहायासुरजन्मनामिति ॥ १३ ॥

सूक्ष्मसृष्टिमनूद्य स्थूलसृष्टिं वक्तुमारभते । तानीति । यद्वा सद्वितीया इत्यादिप्रश्नं परिहरति । तानीति । तानि त्रयोविंशतितत्त्वानि भौतिकं हैमं ब्रह्माण्डं देवस्य क्रीडादिगुणसम्पन्नस्य हरेर्योगेन चेष्टकलक्षणप्रवेशसम्बन्धेन संहत्य संयुज्यावगम्य वासृजन्१४

सृज्यवस्तूनि विसृज्य स्रष्टव्यानि न सहसेतिन्यायमनुसन्दधतो हरेरण्डोत्पत्त्यनन्तरं तदन्तःसर्जनं क्रमेण स्यादित्यभिमतत्वेन जलावगाहेन दार्ढ्यादिकं च स्यादित्यण्डस्य जलावस्थानं वक्ति। सोऽशयिष्टेति । निरात्मकः अप्रकाशितपरमात्मस्वरूपः परमात्मा तत्र नास्तीति किं न स्यादत्राह । अन्ववात्सीदिति। अव्यक्ततया स्थितः ॥ १५ ॥

यो ब्रह्माण्डगर्भोदके श्रीमयपर्यङ्के कालनाम्ना ब्रह्मणा सह शयानस्तस्य हरेर्नाभौ पद्ममभूदित्यन्वयः इदमितरपद्माद्विशिनष्टि । सहस्रेति। सहस्रधा संख्यया संख्यातेभ्योऽर्केभ्य उर्वी दीधितिर्दीप्तिर्यस्य तत्तथोक्तम् अनेन सर्वप्रकाशकसूर्योत्पत्तेः पूर्वं तमसावगूढाकाशे कथं प्रवृत्तिरितिनिरस्तं सर्वजीवनिकायस्यौको गृहस्थानीयं यतो यस्मात्तस्मात्स्वयं सर्वजीवप्रधानः स्वराट् ब्रह्माभूदित्यन्वयः ॥ १६ ॥

यदर्थं ब्रह्मोत्पन्नस्तत्प्रयोजनमाह । सोऽनुविष्ट इति । यो हरिः सलिलाशये गर्भोदकलक्षणे वारिधौ श्रीसन्निहितशेषपर्यङ्के शेते तेन भगवतानुविष्टः स ब्रह्मा स्वया संस्थया परमात्मनि स्थितसामर्थ्येन यथापूर्वं लोकसंस्थानेन पद्मेन चतुर्दशलोकव्यवस्थां निर्मम इत्यन्वयः ॥ १७ ॥

चित्तैकापनोयत्वादविद्यायास्तज्ज्ञापनार्थं तत्सृष्टिं प्रथमतो वक्ति।

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ससर्जेति । छायया राज्यपरपर्यायया तन्वा पर्वाण्याह । तामिस्रमित्यनेनोक्तवक्ष्यमाणेन कान्यच्यतिष्ठत् द्वाराणीत्यस्योत्तरमुक्तं भवति ॥ १८ ॥

अधिष्ठात्रभावेन विसृष्टो देहो नष्टोऽभूत्किनेत्याह । जगृहुरिति । क्षुत्तृषोः समुद्भवो यस्याः सा तथोक्ता ताम् ॥ १९ ॥

क्षुत्तृषौ ज्ञानविरोधिन्यौ यतो ब्रह्मणः स्वोत्पादकत्वेन गुरुत्वमविज्ञाय यक्षादिभिस्तद्भक्षणार्थमद्रावीति भावेनाह । क्षुत्तृड्भ्यामिति । उपसृष्टा उपद्रुता अस्य विवरणं क्षुत्तृडर्दिता इति । इत्युच्चैर्वदन्तोऽभिदुद्रुवुः एनं ब्रह्माणं मा रक्षत किन्तु जक्षध्वं भक्षयतेति ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पाद्मीयविसर्गं कथयितुं सङ्गतये पूर्ववृत्तं ब्राह्मीयसर्गमपि स्मारयति । दैवेनेत्यादिना । भगवतः परमकारणान्महानासीत् । तच्च तत एव न साक्षात् किन्तु तच्छक्तेः प्रधानाख्यादूगुणसाम्यादेव । कीदृशात् दैवादिहेतुना जातक्षोभात् तत्रानिमिषेण कालेन दैवादप्युक्तमेन ॥ १२—१४ ॥

अण्डकोष एवाण्डकोषः तदन्तर्वर्त्ती विराड् वा । तस्य निरात्मकत्वं तदानीमपि जीवानामप्यनुद्बोधात् । ईश्वरो महत्स्रष्टा द्वितीयपुरुषरूपेण ॥ १५ ॥

य एवं ब्राह्मे कल्पे सृष्टवान् तस्य प्रविष्टस्य सतः पाद्मे कल्पे नाभेः सकाशात् पद्ममभूत् ॥ १६ ॥

स्वया संस्थया स्वस्मिंस्तत्तन्नामरूपाद्याविर्भावक्रमेण ॥ १७ ॥

तथा दर्शयति । ससर्जेति ॥ १८—२१ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी

कर्मसूत्पादनादिषु अन्येष्वपीति भिन्नं वाक्यं न ह्युत्पादनमात्रेणैव सर्वं भवति सर्वं इतिवचनात् त्रिचतुराः सर्वे वा कृतवन्त इति प्रश्नः इदमिति परिदृश्यमानस्य कार्यस्य विद्यमानत्वात् अवश्यं कृतिप्रकारः सन्दिग्ध इति प्रश्नः स्मेति प्रसिद्धे नेदं जगन्मायिकं भ्रमसृष्टं वेति कथनार्थमतः सम्यगकल्पयन् कात्स्न्येनाभिव्यक्तं केन प्रकारेण कृतवन्त इति प्रश्नः ॥ ११ ॥

सृष्टिभेदान्वक्तुं साधारणीं सृष्टिमनुवदति षड्भिः भगवत्त्वाय ।

> महत्तत्त्वमहङ्कारः स कार्योऽण्डं तथैव च ।
> नारायणत्वं पद्मं च ब्रह्मा चेत्यत्र षट् क्रमात् ।
> प्राकृताः षडिमे सृष्टाः एकादश तु वैकृताः ।
> सगुणास्तु नवैतेषु पुरुषोभगवत्कृतः ।
> निर्गुणः प्रोच्यते पुंभिः शब्दब्रह्मात्मनो मुनिः ।
> एवं सप्तदश प्रोक्ताः यज्ञात्मानो मता इमे ।
> तेनैव प्रथमं देवः तृप्यते सर्गलीलया ।
> अनस्तदर्थसर्गोऽयं नान्यथेति निरूपितम् ।
> वेदसर्गोऽयमेवोक्तस्तस्मादुभयतो महान् ।

प्रथमतो महतः सृष्टिमाह । दैवेनेति । अयं महान् न प्रकृतेः किन्तु ब्रह्मण एव गुणवैषम्याज्जातः अत्र त्रयो गुणाः दैवं परः कालश्चेति दैवं भगवदिच्छा काम इति यावत् तस्य तु स्वरूपमिदमित्थतया वक्तुमशक्यमिति दुर्वितर्क्यमुक्तं स कामो देवसंबन्धी "सो कामयत" इति श्रुतेः स च कामो न निरूपित इति निरूपकाणामतर्क्यः परोऽत्र पुरुषोऽक्षरं वा सराजसः अनिमिषः कालस्तामसः चकाराश्निमित्तमापद्यते कर्मस्वभावादयोऽपि कालादिभेदाः एतैस्त्रिभिर्गुणैरपि जातः क्षोभो यस्य तस्माद् भगवतः पुरुषोत्तमात् महानासीत् एते भगवद्रूपा एवेति न तत्त्वप्रयोगः गुणत्रयादिति सच्चिदानन्देभ्यः तदंशेभ्यो वा ॥ १२ ॥

महतः सकाशात् स कार्यस्याहङ्कारस्य सृष्टिमाह । रजःप्रधानादिति । महांस्त्रिगुणात्मकोऽपि अहङ्कारसृष्ट्यर्थं रजःप्रधानो जातः स त्रिविधोऽपि रजोभेदकृत एव तत्रापि भगवदिच्छाप्रेरितेत्याह । दैवचोदितादिति । स जात एव त्रिविधोऽपि पञ्चशः ससर्जेति सम्बन्धः तत्र भूतादिस्तामसः स आकाशादीनि भूतानि पञ्चमात्राश्च पञ्चेति एवमिन्द्रियादिरपि ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि प्राणादीनि च सृष्टवान् देवादिश्च तत्तदभिमानिदेवान् दिगादीन् पञ्च वह्न्यादींश्च मनः अन्तःकरणदेवताचतुष्टयं च एवं पञ्चशः त्रिलिङ्गोऽप्युत्पादितवानित्यर्थः ॥ १३ ॥

तैर्ब्रह्माण्डनिर्माणमाह । तानीति । असमर्थत्वान्नपुंसकनिर्देशः चकाराद्देवादयोऽप्येकैकं कार्यार्थं क्षोभयितुमशक्ता इत्युक्तम् एकैकशः प्रत्येकं ब्रह्माण्डनिर्माणे अशक्ताः यतः सर्वभूतात्मकं ब्रह्माण्डम् अतः संहत्य भगवादिच्छया प्रकाशबहुलं सुवर्णमयं ब्रह्माण्डमसृजन् अवोपसर्गः नानार्थोऽपि प्रकृते रक्षावाचकः दृढमनश्वरमवृद्धिक्षयमखण्डमसृजन्निति ॥ १४ ॥

तत्र प्रविष्टो भगवान् नारायणो जात इत्याह । स इति । अब्धिसलिल इति । प्रलयोदके पूर्वं वा समुद्रनिर्माणम् अप एव ससर्जेति वाक्यात् स एवाण्डः कमलकोशात्मको जातः यथाण्डात्पक्षी भवति एवं कोशात्मको जातः स अण्डकोश इत्युच्यते स हि भगवदर्थं सृष्ट इति नान्यस्तत्र प्रवेशमर्हति अतो निरात्मक एव सम्पूर्णं वर्षसाहस्रमशायिष्ट ततो भगवान् अनु उत्पत्त्यनन्तरमवात्सीत् तत्रैव वासं कृतवान् तं प्राविवेशेति वा तत्र प्रयोजनादिजिज्ञासा न कर्त्तव्येत्याह । ईश्वर इति ॥ १५ ॥

एवं नारायणत्वमुक्त्वा तस्मात्पद्मोद्भवमाह । तस्य नाभेरिति । प्राकृतपद्मवत्तस्य विकाशजनकसूर्याद्यपेक्षार्थमाह । सहस्रमर्कास्तेभ्योऽप्युरु अधिका दीधितिर्यस्य न केवलं तस्य जगत्प्रकाशकत्वं किन्तु जगदाधारत्वमपीत्याह । सर्वजीवानां समूहस्थानमिति । उत्पादकं च तदेवेत्याह । यत्र कमले स्वयं भगवानेव स्वराट् ब्रह्मा अभूत् ततः सर्वं भविष्यतीति भावः ॥ १६ ॥

यथा ब्रह्मणः सकाशात् सृष्टिर्भवति तथोपायमाह । सोऽनुविष्ट इति । भगवता सह अनुविष्टः प्रविष्टः को भगवानित्याशङ्क्याह । यः शेत इति । सलिलमेव आशयो गृहं नारायण इत्यर्थः ततः किञ्ज्ञातमत आह । लोकसंस्थामिति । लोकानां सम्यक् व्यवस्था जातिगुणस्थानभेदेन यथापूर्वकल्पं स्थिता नन्वस्याः सृष्टेः तथा साति को विशेष इत्याशङ्क्याह । संस्थया स्वयेति । अत्र स्वयमेव भगवान् तथा स्थितः आकृतिमात्रसमता तु पूर्वेण ॥ १७ ॥

एवं षड्विधा मूलसृष्टिर्निरूपिता कार्यसृष्टिनिरूपणे प्रथमं तामसीं सृष्टिमाह । ससर्जेति त्रिभिः । कार्यकारणतत्कार्यभेदेन तत्र प्रथमं स्वस्मिन्विद्यमानतमसा तामसं पञ्चविधं कार्यमाह छाययाविद्यामिति ।

> आत्मा देहस्तथा छाया सात्त्विकादिविभेदजाः
> तामसी तत्र वै छाया तस्यामपि हरिः स्वयम्
> ततश्छाया हि करणमविद्यां प्रति नान्यथा
> एतस्याः पञ्च पर्वाणि पूर्वस्यास्तु विशिष्यते

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ससर्जाग्रेऽन्धतामिस्रमिति पूर्वप्रकल्पना
अन्यथेयं समाख्याता महामोहफला मता

अत्र प्रथममविद्यायाः पर्वणां मध्ये तामिस्रं भगवतो वैमुख्ये महाभोगेच्छा परमं बाधकं तदनुभोगेच्छा ततोऽप्यज्ञानं स्वल्पं ततोऽपि पुत्रादिषु विकलेषु सकलेषु अहमेव विकलादिरिति एतस्य वैराग्यजनकत्वात् अज्ञानात् समीचीनता ततोऽपि देहाहङ्कारः भगवत्सेवौपयिकत्वात् उत्कृष्ट इति प्रकृत एव त्वयं क्रमः अग्रत इति अग्रिमेयं छायेति लक्ष्यते अन्यथा प्रथमनिरूपित अग्रिमो भवत्येव ॥ १८ ॥

यथा सूर्यात् एषाच्छाया भवति तां मूर्तिं जहौ विससर्जेति तस्यास्तामसत्वं कार्यवशादवगम्यते वस्तुत इयं सृष्ट्युपयोगिनीति तस्या अभिनन्दनमुचितं तदपि न कृतवान् तत्र हेतुः । तमोमयमिति । अस्यां स्थितायां भगवद्वैमुख्यं भविष्यतीति तां तनुं त्यक्तवान् अनेन हरिसांमुख्यं सुखकरमिति तामन्ये यक्षरक्षांसि जगृहुः सा राऽयभिमानिनी देवता जाता त्यक्तायाः तस्याः कार्यमाह । क्षुत्तृट्समुद्भवामिति । पूर्वकल्प एवोत्पन्नानि यक्षरक्षांसि अष्टदेवसर्गमध्ये गणनात् अथवा पूर्वोक्तायाः पञ्चपर्वायाः एतानि देवता अतः पञ्चपर्वा सदेवोत्पन्नेति अत्रैव तेषामुत्पत्तिः अत एव स्वकारणभूतां तां जगृहुः ॥ १९ ॥

तस्याः स्पर्शमात्रेण यक्षरक्षसां क्षुत्तृट्जातेत्याह । क्षुत्तृडिति ततः पूर्वस्मिन् कल्पे क्षुत्तृडुद्भवो न स्थितः स्थितावपि देवताधिष्ठानसहितौ न स्थिताविति कामादिवत् पूर्वं स्थितौ वृक्षाणामिव सह्यौ अतो महद्भ्यां क्षुत्तृड्भ्यामुपसृष्टाः भक्षान्तरस्यासृष्टत्वात् ब्रह्माणं जग्धुमेवाभिदुद्रुवुः पूर्वं नपुंसकत्वेन निर्दिष्टा अपि प्रतिनिर्देशे पुंस्त्वेन निर्देशः ब्रह्मापेक्षयापि बलिष्ठत्वात् अत्र केचिदाहुः मारक्षतैनमिति एनं ब्रह्माणं मा रक्षत इदानीं मायया-ऽविद्यया वा क्षुत्तृडुपशान्तिं कुर्यादपि तथाप्येनं मा रक्षत पुनरुपद्रवान्तरमुत्पादयिष्यतीति अन्येत्वाहुः जक्षध्वमिति जक्षभक्ष हसनयोरिति भक्षणार्थो जक्षिः जक्ष धातुर्वा भक्षणार्थः ननु कथं पितरमेवमूचुरित्याशङ्क्याह । क्षुत्तृडर्दिता इति । नहि पीडितः किंचिज्जानाति धर्माधर्मम् ॥ २० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सद्वितीयाः सभार्य्याः कर्म्मसु सृष्ट्यादिषु स्वतन्त्राः अन्यानपेक्षाः संहताः बहुतरसम्मेलनापेक्षाः ॥ ११ ॥

किमारभतेति प्रश्नस्योत्तरं विसर्गविस्तारं वक्ष्यन् तत्पूर्वभागं सर्गमुक्तमपि कथासौष्ठवार्थं संक्षेपेणानुवदति । दैवेन जीवादृष्टेन कीदृशेन दुर्विंतर्क्येण दुर्ज्ञेयमूलकेण परेण परमेश्वरेण च तदीयसिसृक्षयेत्यर्थः । अनिमिषेण कालेन जातक्षोभात् गुणत्रयात् प्रधानान्महानासीत् भगवतः सकाशात् भगवदीक्षितादित्यर्थः ॥ १२ ॥

रजः प्रधानादिति । सत्त्वप्रधानोऽपि महान् अहंकारोत्पत्तिकाले रजः प्रधानः सूत्राख्यो भवेदिति भावः । त्रिलिङ्गस्त्रिगुणो भूतादिरहङ्कारः । वियदादीनि महाभूतानि शब्दादीनि सूक्ष्मभूतानि ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि तत्तद्देवताश्च पञ्च पञ्च ससर्जेत्यर्थः ॥ १३ ॥

दैवयोगेन भगवच्छक्तियोगेन संहत्य मिलित्वा ॥ १४ ॥

अब्धिसलिले कारणार्णवजले निरात्मकः तत्रत्यसमष्टिजीवस्यानुद्बोधात् । साग्रं किञ्चिदधिकं वर्षसाहस्रमशायिष्ट । अनु तदनन्तरमीश्वरो महतः स्रष्टा गर्भोदशायिरूपेणावात्सीत् ॥१५

नाभेः सकाशात् यत्र पद्मं स्वराट् ब्रह्मा ॥ १६ ॥

स ब्रह्मा भगवता अनुविष्टः अधिष्ठितः भगवानेव कस्तआह । य इति । ततश्च स ब्रह्मा भगवत्प्रेरितः सन् लोकसंस्थां लोकरचनां स्वया संस्थया परिपाट्या नामरूपादिक्रमया ॥१७॥

यक्षराक्षसदेवमनुष्यादिदेहेषु ब्रह्मणा स्रष्टव्येषु जीवानामहङ्कारोऽविद्यया विना न सम्भवेदतः प्रथममविद्यावृत्तीः स्वयमेव ब्रह्मद्वारा आविर्भवतीस्तमआदिरूपेण ब्रह्मा ताः ससर्जेत्याह । ससर्जेति । छायया छायारूपया तामसस्वभावयुक्तया तया तमसेत्यर्थः अत्र तमोमोहमहामोहतामिस्रान्धतामिस्राः क्रमेणाज्ञानास्मितारागद्वेषाभिनिवेशा ज्ञेयाः ॥ १८ ॥

कायं छायारूपं नाभिनन्दन् हन्त हन्त सृष्ट्यारम्भे तमसैवावृतोऽभूवमिति विनिन्द्य तत्याज । स च तद्विसृष्टः कायो रात्रिरभूत्ताञ्च तत एव तदानीमेव जातानि यक्षरक्षांसि जगृहुः स्वीचक्रुरित्यविद्याधर्मावावरणविक्षेपौ यक्षरक्षसामत्यभिकाविति विवक्षितम् । कीदृशीं क्षुत्तृषोः समुद्भवो यस्यां तामत्र या अस्य तनुरासीतामजहात् सा तमिस्राभवदित्यादिश्रुतिरनुसन्धेया अत्र द्विपरार्धायुषो ब्रह्मणः कायत्यागो नाम भावत्याग एव विवक्षितः ततश्च ब्रह्मणो मनसि क्रोधादिस्तामसो भावः आविर्बभूव । तस्माद्यक्षरक्षांसि बभूवुः स च तामसो भावो रात्रिरभूत्ताश्च यक्षरक्षांस्येव जगृहुरित्येतावानेवार्थः । सृष्ट्यर्थं योगबलेन पृथक् पृथक् कायग्रहणत्यागवत्त्वेऽपि द्विपरार्द्धायुस्त्वं तस्य न व्याहन्यते विषयभोगार्थमपीति देवानां नानारूपग्रहणत्यागदर्शनादित्यपि केचिदाहुः ॥ १९ ॥

उपसृष्टा उपद्रुताः तं ब्रह्माणं जग्धुं भक्षयितुं तत्र केचिदेनं पितेति कृपया मा रक्षतेत्यूचुः अन्येतु यक्षध्वमिति जक्षभक्षहसनयोरित्यस्मात् ॥ २० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इदं ब्राह्मणादिकम् स द्वितीयाः सभार्याः किम्वा स्वतन्त्राः भार्यानपेक्षाः अहोस्वित्कर्मसु नानाव्यापारेषु संहताः इदं स्वानुरूपं कार्यं समकल्पयन् असृजन् ॥ ११ ॥

प्रजापतिपतिः सृष्ट्वा प्रजासर्गे प्रजापतीन् किमारभतेति प्रश्नप्रतिवचनार्थमवशिष्टं चतुर्मुखकृतं सर्गं वक्तुं महदाद्युत्पत्तिमनुवदति । दैवेनेति सप्तभिः । दुर्वितर्क्येण दैवेन जीवादृष्टेन परः भगवदवताररूपः पुरुषः त्वत्तः पुमान् समधिगम्य ययास्य वीर्यं धत्ते महान्तमित्येकादशे वक्ष्यमाणः तेन अनिमिषेण कालेन च शक्तिभूतेन हेतुना भगवतः चिदचिच्छक्तिमतः विश्वोपादाननिमित्तहेतोः जातक्षोभं यद्गुणत्रयं ब्रह्मात्मकं प्रधानं तस्मान्महानासीदित्यन्वयः ॥ १२ ॥

स्वतः सत्त्वप्रधानोऽपि महान् भूताद्युत्पत्तिसमये कार्यानुगुणः रजःप्रधानो भवति तस्मात् त्रिलिङ्गः त्रिगुणः भूतादिरहंकारः जातः सन् वियदादीनि पञ्चतन्मात्राणि पञ्चमहा-

देवस्तानाह संविग्नो मा मां जक्षत रक्षत ।
अहो मे यक्षरक्षांसि प्रजा यूयं बभूविथ ॥ २१ ॥
देवताः प्रभया या या दीव्यन्प्रमुखतोऽसृजत् ।
ते अहार्षुर्देवयन्तो विसृष्टां तां प्रभामहः ॥ २२ ॥
देवोऽदेवान् जघनतः सृजतिस्मातिलोलुपान् ।
त एनं लोलुपतया मैथुनायाभिपेदिरे ॥ २३ ॥
ततो हसन् स भगवानसुरैर्निरपत्रपैः ।
अन्वीयमानस्तरसा क्रुद्धो भीतः पराऽपतत् ॥ २४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भूतानि पञ्चज्ञानेन्द्रियाणि पञ्चकर्मेन्द्रियाणि पञ्चज्ञानेन्द्रियदेवताः पञ्चकर्मेन्द्रियदेवताः इत्येवं पञ्चशः ससर्ज्ज ॥ १३ ॥ १४ ॥

ईश्वरानधिष्ठितत्वात्पूर्वं निरात्मकः पुनः सात्मको जात इत्याह तमीश्वर इति । अन्ववात्सीत् तदन्तः प्रविश्य शयानआसीत्॥१५॥

सहस्रार्केभ्योऽप्युरुर्धिका दीधितिर्द्युतिर्यस्य तत् ॥ १६ ॥

अनुविष्टः अधिष्ठितः ॥ १७ ॥

छायया तमोमयेन कायेन अविद्यामनाद्यज्ञानरूपाम् तत्प्रपञ्चस्तामिस्रमित्यादि ॥ १८ ॥

एवं भगवत्कृतां महदादिसृष्टिं चतुर्मुखकृतां सृष्टिं च संक्षेपतोऽनूद्येदानीमवशिष्टां संक्षेपत आह । विससर्जेत्यादिनायावदध्यायसमाप्ति । तमोमयं तमःप्रधानम् विससर्ज्ज क्षुत्तृषोद्भवो यस्यां तां रात्रिं तेन विसृष्टं कायमेव तादृशरात्रिरूपेण संस्थितं तत एव जातानि यक्षरक्षांसि जगृहुः स्वीकृतवन्तः अनेन यास्य सा तनूरासीत् तमजहात् "सा तमिस्रावभवत्" इत्यादिश्रुतिरुपबृंहिता ॥ १९ ॥

यतस्तेषु एके रक्षोनामकाः अन्ये यक्षनामका जातास्तं हेतुं दर्शयति । क्षुत्तृड्भ्यामिति । ते सर्वे सामान्यतः क्षुत्तृडर्दिताः तं जग्धुमत्तुं भक्षयितुमभिदुद्रुवुः तेषु केचित्पितरं बुध्वा रक्षतेत्यूचुः अन्ये तु विशेषतः क्षुत्तृड्भ्यामुपसृष्टा अभिभूताः मा रक्षा नैव कार्या किन्त्वेनं यक्षध्वं भक्षयतेत्यूचुः ॥ २० ॥

---

भाषाटीका ।

प्रजापति लोग स्त्रीयों के सहित कर्म में प्रवृत्त भये अथवा अकेलेही प्रवर्त भये अथवा सबही मिल करके सृष्टि को कर्ते भये ॥ ११ ॥

मैत्रेयजी बोले कि नहीं जानने के योग्य प्रणियों का अदृष्ट से महा पुरुष से काल से भगवान के गुणत्रयरूप प्रधान का क्षोभ होने से महत्तत्त्व उत्पन्न हुआ ॥ १२ ॥

भगवत्प्रेरित रजोगुण प्रधान महत्तत्त्वसे त्रिगुणभूतादि अहङ्कार उत्पन्न हुआ उसने शब्दादिक पञ्चतन्मात्रा आकाशादिपञ्चभूत चक्षुरादिक पांच ज्ञानेन्द्रिय उनके पांच पांच देवता इनको उत्पन्न किया ॥ १३ ॥

वे आकाशादिक एक एक होने से ब्रह्माण्ड की उत्पत्ती करने में समर्थ नहीं भये फिर सब मिलकरके भगवान के प्रवेश होने से ब्रह्माण्ड को उत्पन्न करते भये ॥ १४ ॥

वह अण्डकोश विना चेतन का होकर कुछ अधिक हजार वर्ष पर्यन्त जलमें पडा रहा उसीके पीछे भगवान भी निवास करते रहे ॥ १५ ॥

उनके नाभी में से हजार सूर्य के अनेक किरणोंवाला सब जीवों का आश्रयभूत एक पद्म उत्पन्न हुआ जिसमें से स्वयं विराजमान ब्रह्मा उत्पन्न भये ॥ १६ ॥

तब जो भगवान जलमें शयन करते थे उनकी प्रेरणा से जैसी पूर्व कल्प में स्थिती रही तैसी ही लोक रचना को ब्रह्माने निर्माण किया ॥ १७ ॥

ब्रह्माजीने अपना तमोरूप अज्ञान से तामिस्र अन्धतामिस्र तम मोह महामोह इन भेदों वाली पंचपर्वा अविद्या को पहले उत्पन्न किया ॥ १८ ॥

फिर असन्तोष होंने से तमोमय उस शरीरका त्याग कर दिया वह क्षुधा तृषा की उत्पन्न करने वाली रात्री हुई उसको यक्ष राक्षसों ने ग्रहण किया ॥ १९ ॥

तब वे यक्ष राक्षस क्षुधा तृषा से युक्त होने से क्षुधा तृषा से पीडित होकर ब्रह्माको खाने को दौड़े और बोले कि इनको खाय ल्यो मत रखो ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

देवो ब्रह्मा संविग्नो भीतः सन्मा मा जक्षत माभक्षयत किन्तु रक्षत अहो हे यक्षरक्षांसि यूयं मे प्रजाः सुता बभूविथ जाताः स्थ एवमुग्रस्वभावा यक्षराक्षसा जाता इत्यर्थः तत्र ये जक्ष्ध्वमित्यूचुस्ते यक्षाः ये तु मा रक्षतेति ते राक्षसा इतिज्ञेयम् एतच्च तिर्यागादितामससर्गस्याप्युपलक्षणम् ॥ २१ ॥

प्रभया दीव्यन्द्योतमानो याया देवता द्युतिमत्यः सात्विक्यस्तास्ताः प्रमुखतः प्राधान्येनासृजत् ते देवाः देवता इतिस्त्रीत्वेन निर्दिष्टानामप्यर्थमात्रविवक्षयातइतिपुंस्त्वेन प्रतिनिर्देशः एवंयक्षरक्षांसीत्यत्रापि ज्ञेयम् तेन विसृष्टां त्यक्तां प्रभामहः दिवसरूपां सतींदेवयन्तः क्रीडयन्तोऽहार्षुर्जगृहुः ॥ २२ ॥

अदेवानिति च्छेदः स जघनादसुरानसृजतेतिश्रुतेः अतिलोलुपान्स्त्रीलंपटान् अभिपेदिरे प्राप्ताः ॥ २३ ॥

परापतत्पलायत ॥ २४ ॥

स उपव्रज्य वरदं प्रपन्नार्तिहरं हरिम् ।
अनुग्रहाय भक्तानामनुरूपात्मदर्शनम् ॥ २५ ॥
पाहि मां परमात्मंस्ते प्रेषणेनासृजं प्रजाः ।
ता इमा यभितुं पापा उपाक्रामन्ति मां प्रभो ! ॥ २६ ॥
त्वमेकः किल लोकानां क्लिष्टानां क्लेशनाशनः ।
त्वमेकः क्लेशदस्तेषामनासन्नपदां तव ॥ २७ ॥
सोऽवधार्यास्य कार्पण्यं विविक्ताध्यात्मदर्शनः ।
विमुञ्चात्मतनुं घोरामित्युक्तो विमुमोच ह ॥ २८ ॥
तां क्वणच्चरणाम्भोजां मदविह्वललोचनाम् ।
काञ्चीकलापविलसद्दुकूलच्छन्नरोधसम् ॥ २९ ॥
अन्योऽन्याश्लेषयोत्तुङ्गनिरन्तरपयोधराम् ।
सुनासां सुद्विजां स्निग्धहासलीलावलोकनाम् ॥ ३० ॥

श्रीधरस्वामिकृतभावार्थदीपिका

भक्तेच्छानुरूपमात्मानं दर्शयतीति तथा तमुपव्रज्य ॥ २५ ॥
पाहीत द्वाभ्यां प्रार्थितवान् यभितुं मैथुनेन धर्षयितुम् ॥ २६ ॥
लोकानां जनानाम् तवानासन्नावनाश्रितौ पादौ यैस्तेषाम्॥२७॥
विविक्तमसंदिग्धमध्यात्मदर्शनं परचित्तज्ञानं यस्य हरेःघोरां-कामकश्मलां स्वतनुं विमुञ्चेति उक्तवानिति शेषः इत्युक्तश्च ब्रह्मा-तां तनुं विमुमोच सर्वत्र तनुत्यागोनाम तत्तन्मानोभावत्यागो विवक्षितः ग्रहणंच तत्तद्भावापत्तिरिति द्रष्टव्यम् ॥ २८ ॥
"साहोरात्रयोःसंधिरभवत्, इतिश्रुतेः सा तेन विसृष्टा तनुः सायंतनी संध्या बभूव सा च कामोद्रेकवेला असुराश्च राजसत्वात्स्त्रीलम्पटा अतस्तां संध्यामेव स्त्रियं कल्पयित्वा ते संमोहं प्राप्ता इत्याह। तामिति त्रिभिः। नूपुराभ्यां क्वणती चरणाम्भोजे यस्याः मदेन विह्वले लोचने यस्याः काञ्चीकलापेन विलसद्दुकूलं तेन छन्नं रोधः कटितटं यस्यास्ताम् ॥ २९ ॥
अन्योऽन्यं श्लेषेणोपमर्दन हेतुनोत्तुङ्गौ निरन्तरौ पयोधरौ यस्याः सुद्विजां सुदतीम् स्निग्धो हासो लीलावलोकनं च यस्याः ॥ ३० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या
दीपिकाटिप्पणी ।

एतच्च यक्षराक्षससृष्टिकथनञ्च ॥ २१ ॥
प्रभया सात्त्विकबुद्ध्या । अर्थमात्रविवक्षयेति । उभयत्रापि देवस्वरूपाजातिस्तुल्य एवार्थः जातेरेव सर्वत्र प्रवृत्तिनिमित्तत्वादिति विवक्षयेत्यर्थः एवं यक्षरक्षांसीत्यत्रापि क्लीवत्वेन निर्दिष्टानां तेषां देवस्तानाहेत्यत्र पुंस्त्वेन प्रतिनिर्देशोऽप्यर्थमात्र विवक्षयैवेति ज्ञेयम् देवयन्त इति दिवुधातोश्चौरादित्वात्साधुः क्रीडयन्तइत्यर्थस्तु अनेकार्थत्वाद्धातोरिति ज्ञेयम् ॥ २२ ॥
अदेवानिति विरोधे नञ् तत्र श्रुतिः प्रमाणं जघनतः नाभेरधः प्रदेशात् ॥ २३ ॥ २४ ॥

प्रार्थितवानिति शेषः ॥ २५ ॥ २६ ॥
स्वसाम्मुख्यं कर्तुं क्लेशदः ॥ २७ ॥
तत्तदिति तेषु तेषु सृज्येषु यो मनो भाव आवेशस्तस्य त्याग एव विवक्षितः तदायुषोद्विपरार्द्धपरिमितत्वात् ॥ २८ ॥
तामितित्रिकम् लेखाशब्दवत् श्लेषाशब्दोऽपि दावन्तो ज्ञेयः ॥ २९ ॥ ३० ॥ ३१ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

देवो ब्रह्मा संविग्नः भीतः तान् यक्षादीन्प्रति मां मत्कायं मा जक्षत न भक्षयत किंतु रक्षतेत्याह। अहो हे यक्षरक्षांसि यूयं मे प्रजाः पुत्रा बभूविथ जाता एवं तमःस्वभावा जाता इत्यर्थः तत्र ये यक्षध्वमित्यूचुस्ते यक्षा येतु मा रक्षतेत्यूचुस्तेराक्षसा इति विज्ञेयम् ॥ २१ ॥
प्रभया छायाप्रतियोगिन्या तेजसेत्यर्थः दीव्यन्प्रकाशमानः ब्रह्मा प्रमुखतः प्राङ्मुखं या या देवताः देवास्तान् देवान् असृजत् देवाः देवयतेः द्योतमाना विसृष्टां त्यक्तामहः अहर्धर्मरूपां प्रभामहारिपुहृतवन्तः ॥ २२ ॥
देवः ब्रह्मा जघनतः जघनादतिलोलुपानतीव कामासक्तान् देवानसुरान्सृजतिस्मातिलौलुप्येन भावेनासृजत् तेऽदेवा अतिलोलुपतयातिकामासक्ततया मैथुनाय एनं ब्रह्माणमभिपेदिरेऽभितः प्राप्ताः ॥ २३ ॥
स भगवान् ब्रह्मा हसन्निरपत्रपैर्निर्लज्जैरसुरैरन्वीयमानःअभिपद्यमानः अत एव क्रुद्धोभीतश्च तरसा आशु परापतत्पर्यधावत् ॥ २४ ॥
स ब्रह्मा भक्तानामनुग्रहायानुरूपं तत्तद्भक्तबुद्ध्यनुरूपमात्मानं दर्शयतीति तं प्रपन्नदुःखहरं वरदमभीष्टदं हरिं भगवन्तमुपव्रज्य समीपमेत्याहेति शेषः ॥ २५ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

उक्तिमेवाह द्वाभ्याम्। हेपरमात्मन्!मा पाहि पालय ते तवप्रेच्छेन सङ्कल्पेन प्रजा अहमसृजं ताः त्वत्संकल्पेन मया सृष्टाः पापा इमा असुररूपाः प्रजा यभितुं मैथुनं कर्तुं मामुपक्रामन्ति परिवेष्टन्ते॥ २६॥

हेप्रभो! त्वमेकएवं क्लिष्टानां दुःखितानां लोकानां क्लेशनाशनः बाधानिवर्तकः किल तवानासन्नावनाश्रितौ पादौ यैस्तेषां तव पादमनाश्रितानां लोकानां त्वमेव क्लेशदः क्लेशसंपादकः॥ २७॥

विविक्ताध्यात्मदर्शनः विविक्तं विशदं यथा तथा ध्यात्मदर्शनः परासिप्रायज्ञः स भगवानस्य ब्रह्मणः कार्पण्यं क्लेशमुपधार्य ज्ञात्वा घोरामतिलोलुप्यरूपामात्मतनुमात्मनो भावं विमुञ्चेत्यादेतिशेषः एवमुक्तो भगवता ब्रह्मा तां तनुभावं विमुमोच विससर्ज सा तेन विसृष्टा तनुः सायन्तनी सन्ध्या बभूव सा च कामोद्रेकवेला॥ २८॥

असुरा राजसत्वाद स्त्रीलम्पटाः यतस्तां सन्ध्यामेव स्त्रियं कल्पयित्वा संमुमुहुरित्याह त्रिभिः। तां सन्ध्यारूपां स्त्रीत्वेन कल्पितां तनुं कथंभूतां कणच्चरणाम्भोजां नूपुराभ्यां ध्वनच्चरणकमलां मदेन विह्वले लोचने यस्यास्तां काञ्चिकलापेन मेखलारत्नभूषणेन विलसद्दुकूलं क्षौमवासस्तेन छन्नं पिहितं रोधः नितम्बप्रदेशो यस्यास्ताम्॥ २९॥

अन्योऽन्याश्लेषेण परस्परोपमर्दैन उत्तुङ्गावुन्नतौ निरन्तरौ स्निग्धौ पयोधरौ स्तनौ यस्यास्तां सुनासां तिलपुष्पतुल्यनासिकां सुद्विजां कुन्दकुड्मलशद्दंष्ट्रदन्तपाङ्क्तिं स्निग्धो हासो यस्मिंस्तल्लीलावलोकनं यस्यास्ताम्॥ ३०॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

तत्र ब्रह्मणा किं कृतमत्राह। देव इति। यूयं मा मां मा जक्षत किन्तु रक्षत आपदि मित्रजनो बोधनीय इति भावेनाह। अहो इति। अहो युष्माकमज्ञानम् यूयम् मे प्रजाः पुत्राः भविष्यथ तस्माद् जक्षणमयुक्तम् किन्तु रक्षणमेव कीदृश्यो युष्माकम् मध्ये ये यूयं मा जक्षत किन्तु रक्षतेत्यूचिध्वं ते यक्षा भविष्यथ ये केचिद्यूयम् मा रक्षत किन्तु जक्षतेत्यूचिध्वं तानि रक्षांसि भविष्यथ २१

देवानां विद्यायोग्यत्वेन तद्विरोध्यविद्यासृष्ट्यनन्तरं देवसृष्टिमाह। देवता इति। या या दिव्याः क्रीडादिगुणयुक्तास्तास्ता देवताः प्रभया भा दीप्ताविति धातोः सर्वप्रकाशकलक्षणया विद्यापरपर्यायया तन्वासृजदित्यन्वयः सर्वसृष्टिभ्यः प्रधानत्वात् प्रमुखत इति देवयन्तः क्रीडादिगुणान् द्योतयन्तो देवास्तां प्रभाख्यां तनुमहार्षुरङ्गीकृतवन्तस्तदहरभवच्च॥ २२॥

अदेवानसुरान् जघनतो जघननाम्ना देहेन॥ २३॥

क्रुद्धो भीत इति विडम्बनं परापतत्पलायितवान्॥ २४॥

पलायनावधिमाह। स इति। हरिं प्राप्य जगादेतिशेषः अनुरूपमुपासकानां योग्यतानुकूलमात्मनो दर्शनं यस्य स यथा तम् २५

ते तव यभितुं "यभ मैथुन" इति धातुः मैथुनं कर्तुम्॥ २६॥

नित्यं भगवत्प्रीतिकृत्प्रेप्स्येण आपदि हरिरेव स्तोतव्य इति भावेनाह। त्वमिति। अनासन्नौ न प्राप्तौ पादौ यैस्ते तथा तेषामनासन्नपदाम्॥ २७॥



स्वानिष्टवारणे समर्थस्यापि भगवान् स्वप्रियार्थं शरणं गतस्य ब्रह्मणस्तन्निवारणोपायमाह। स इति। सर्वज्ञस्यापि विरिञ्चस्याज्ञवदज्ञकवत्कार्पण्यमवधार्य। तदुक्तम्।

जानन्नपि समर्थोऽपि क्वचिद्ब्रह्मा हरेः प्रियम्।
ज्ञात्वा करोति कर्माणि ह्यज्ञवच्चाप्यशक्तवदिति॥

अनेन स्वापदं परिहर्तुं समर्थस्य तत्प्राप्तौ हरिद्वारणगतौ हरिप्रीतिः स्यादिति न्यायो दर्शितः विविक्तमनन्याधीनमध्यात्मदर्शनं शरीरादिकमधिकृत्य वर्तमानं ज्ञानं यस्य स विविक्ताध्यात्मदर्शनोऽशेषविशेषज्ञानवानित्यर्थः चेतनाचेतनराशेर्विविक्तोभिन्नोऽत एवाध्यात्मा सर्वजीवराशेरधिक ईश्वर इति दर्शनमपरोक्षज्ञानं यस्य स तथोक्तः"तद्ब्रह्मा वेदाहं ब्रह्मास्मि"इति श्रुतेरिति वा "स्यादध्यधिक ईश्वर"इति यादवः। हेत्वनेन स्वाज्ञाकरणाद्धरेरभ्यधिका प्रीतिरभूदिति सूचयति अत एव विमुञ्चेति भवतश्चेन्मदनुग्रहपात्रज्ञानसाधनयोग्या तनुरस्ति किमनया घोरयेति॥२८॥

निश्चेतना सा तनुः किमभूदिति तत्राह। तामिति। असुरास्तां तनुं स्त्रियं स्त्रीभूतामुपलभ्य दृष्ट्वा कीदृशीं शरीरपूर्वोत्तरयोः सन्धौ जघने जातत्वात्तन्नाम्ना सन्ध्यां सर्वैरसुरैरितां परिवृताम्। "कलापो भूषणे बर्हे" इत्यभिधानात्काञ्चीकलापेन काञ्चीभूषणेन विलसता दुकूलेन छन्नं पिहितं रोधः कटितटं यस्याः सा तथा ताम्॥ २९॥

अन्योऽन्याश्लेषेण परस्परसम्बन्धेन उत्तुङ्गौ उन्नतौ निरन्तरावनवकाशौ च पयोधरौ स्तनौ यस्याः सा तथा ताम्॥ ३०॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

देवयन्त इति। दिवु अर्दने इत्यस्मात् चौरादिकात् याचमान इत्यर्थः॥ २२—२६॥

क्लेशद इति स्वप्रत्युन्मुखीकर्तुमिति ज्ञेयम्॥ २७॥

सोऽवधार्य्येत्यस्य टीकायां भावो नाम सज्यावेशो ज्ञेयः। भावत्वमनन्तञ्च तदायुषोद्विपरार्द्धमितत्वात्॥ २८॥

तामिति त्रिकम्। अन्योऽन्येति लेखादिवद् श्लेषाप्यङ्गीकृता। यद्वा सुपां सुलुगित्यादिना यादेशः॥ २९—३३॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी

ततः किं जातमित्याकाङ्क्षायामाह। देवस्तानाहेति। देवत्वात्तस्य तथाज्ञानं तामसोत्पादनात् तस्य तथाभयं भगवदिच्छयैव तथा जातमिति तन्निराकरणार्थं स्वयं देहे त्यक्ते भगवतः कोपादेवं जातमिति लक्ष्यते अन्यथा दैन्यमात्रे कृते तें न त्यजेयुः मा मा जक्षत रक्षतेत्याह। मां मा जक्षत मा भक्षतेत्यर्थः किन्तु रक्षत तत्रोपपत्तिमाह। अहो मे यक्षरक्षांसीति। अहो इत्याश्चर्यं नहि पुत्राः पितरम् भक्षयन्ति यतः मे यक्षरक्षांसि प्रजाः पुत्रा इत्यर्थः ननु यक्षरक्षसाम् पुत्रत्वे किमस्माकं तत्राह। यूयमेव यक्षरक्षांसि बभूविथ "मारक्षतैनं जक्षध्वम्"इति वचनात् यूयं यक्षरक्षांसि अतएव मे प्रजा बभूविथ प्रजेति जातिवचनं सर्वेऽपि मम प्रजामात्रं तेन मध्यमपुरुषैकवचनमुपपद्यते एवं प्रार्थनया सह चतुर्भिः प्रथमसृष्टिर्निरूपिता२१

सात्त्विकीं सृष्टिमाहदेवता इति।प्रभा यथा दीपस्य यथा वामणेः सूर्यादेर्वा तथा ब्रह्मणोऽपि अतस्तया प्रभया देवता असृजत् प्रभया सृष्टादेवताविशिनष्टि या याः प्रमुखतोऽदिव्यन् सम्मुखतयाया देवताः

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

क्रीडन्ति उपास्या देवताः सूर्यादिरूपाः ता एव प्रमुखतः उपासकस्य क्रीडन्ति एवं ताः सृष्ट्वा दोषाभावेऽपि भिन्नभावोत्पत्तेः तामपि तनुं विससर्ज्ज ततः ब्रह्मणा विसृष्टान्तां प्रभारूपान्त एव देवताः पूर्वं स्त्रीत्वेनाप्युक्ताः ग्रहारिपुः हृतवन्तो गृहीतवन्त इत्यर्थः अहः अहोरूपां दिनरूपामहारिपुरिति पाठेऽप्यर्थः स एव ॥ २२ ॥

रजसा सृष्टिमाह। देव इति। पूर्वं तत्तद्भावापन्नः तत्तत्सृष्टिं करोति दैत्यसृष्टिं तु देवभावापन्नः करोतीत्याह। देव इति। अदेवाद् देवप्रतिपक्षाद् जघनत इति गुह्यस्थानात् कटिस्थानाद्वा कटिमारभ्य जानुपर्यन्ताद्वा यत्रैव कामसंबन्धः अतिलोलुपानिति उत्कटकामान् कामः स्त्रीसंभोगात्मको मुख्यः मैथुनं पुरुषेऽपि भवतीति ते असुराः एवं प्रजापतिं मैथुनार्थमभिपेदिरे यथा मातुः संगो निषिद्धः तथा पितृसंभोगोऽपि तथापि लोलुपतया तथा कृतवन्तः कामेनास्थिरत्वं लोलुपतया कामो हि विवेकादीनां नाशकः ॥ २३ ॥

ततः किं जातमत आह। तत इति। प्रथमतः हसन् जातस्तेषां लज्जाभावेन हास्यं तदनन्तरं स भगवान् भगवता सहितो जातः भगवद्धर्म एव तस्य स्थिरो जातो न दैत्यधर्मः अन्यथा तैः सह क्रीडां कुर्यात् रसाभावेन प्रवृत्ता इति निरपत्रपाः अन्यतो लज्जापत्रपा असुराश्च स्वभावतो रजःप्रधानाः अतः तैरन्वीयमानः तरसा प्रथमतः क्रुद्धो जातः क्रोधेन कामो निवर्तनीय इति तदनन्तरं भीतः अभीताननिवृत्तान् दृष्ट्वा ततः परापतत् पलायनं कृतवानित्यर्थः ॥ २४ ॥

स गच्छन्वैकुण्ठं गतः यत्र भगवानधिष्ठायास्त इत्याह। स उपव्रज्येति। लौकिकोपायेन नैते शान्ता भविष्यन्ति अलौकिकस्तूपायो भगवत एव भवतीति ज्ञापयितुमाह। वरदमिति। वरा हि अलौकिकपदार्थप्राप्त्युपायः ते वरा लोके इष्टप्राप्तिरूपा इति तद्व्यावृत्त्यर्थमाह। प्रपन्नार्तिहरमिति। दैत्या अपि गता इति तेषामपि कदाचिदार्तिं हरेदत आह। प्रपन्नेति। यतो हरिः किञ्च भक्तानामनुग्रहार्थमेव वैकुण्ठमधिष्ठाय स्थितः तदाहानुग्रहायेति। भक्तानामनुग्रहार्थं भक्तानां यादृशं रूपमनुरूपं तादृशमात्मनो दर्शनं यस्य आत्मा स्वरूपं लोके संघातः प्रकृते तु सच्चिदानन्दरूपमेव नान्तरात्मान्तरमस्ति पौराणिकास्त्वस्तीत्याहुः॥२५॥

एवं भगवन्तं गत्वा असुरैः पीडितत्वात् स्तोत्रनमस्कारादिकमकृत्वैव विज्ञापनामेवाह। पाहीति। तव प्रेरणेनाहं प्रजामसृजं तत्र दैत्यरूपा इमाः प्रजाः मामेव यभितुमुपाक्रामन्ति अतः पाहीति संबन्धः पालनसामर्थ्यं मम प्रेर्यत्वं तव प्रेरकत्वं च न संदिग्धं यतः त्वं परमात्मा परमश्चासावात्मा चेति नियामकभूत आत्मा अत एव त्वयाहं प्रेरितः एते एवंविधा उत्पत्स्यन्ति इति भवानेव जानाति नाहमतो दोषसमाधानमपि त्वयैव कर्त्तव्यमिति दोषविज्ञापना निकटे चातिक्रमणं जायत इति शीघ्रसमाधानं तत्र सामर्थ्यं ज्ञापकं प्रभो इति ॥ २६ ॥

ननु त्वयोपार्जिताः प्रजाः त्वं पिता ते च पुत्राः अतोऽन्यतरहितं कर्त्तुमशक्यमुभयोस्तु हितं विरोधे कथं भविष्यतीत्याशङ्क्य। दैत्येषु प्रसादाभावादन्यतरहितमेव प्रार्थयितुमाह। त्वमेक इति। अनासन्नपदामिति। विपरीते वचनात् आसन्नपदां त्वमेव एकः असहायः तेषामदृष्टादिकमप्यनपेक्ष्य क्लिश्नाति प्रसिद्धे क्लिष्टानां लोकानां क्लेशं नाशयसि कालादिकृतश्च क्लेशः तह्यंन्येपूपेक्षा स्यात् तद्व्यावृत्त्यर्थमाह। त्वमेकः क्लेशद इति। अनासन्नपदामिति वाक्यात् "सुखं दुःखं भवो भाव" इति शास्त्रानुसारेण नात्र क्लेशदानं किंतु भक्तिप्रवर्त्तकरूपेण यथा कालादयोऽधिकारिणो दुःखदाः तथा भगवानपि स्वतन्त्रतया दुःखद इति त्वमेकः क्लेशद इत्युक्तम् अनासन्नपदां त्वमेक एव क्लेशदः ननु कथमेवं शास्त्रार्था वैषम्यापादकः तत्राह। तवेति। तव भूत्वा ये अनासन्नपदः तेषामित्यर्थः अनेन त्वदीयानां नान्यः सुखदुःखदाता किन्तु त्वमेवेत्युक्तं कालस्य साधारणत्वात् दुःखदानेऽपि त्वं निवारक इति ततोऽस्मद्दुःखं दूरीकर्तव्यमेते च निराकार्या इति ॥ २७ ॥

तद्भगवतो नात्यन्तमभीष्टमित्युभयसमाधानमाह। सोऽवधार्य्येति। दोषस्य निदानापरिज्ञानेन तन्निवर्त्तकत्वे भगवतो मर्यादानाशकत्वं स्यादिति तदर्थमाह। विविक्ताध्यात्मदर्शन इति। विविक्तः सम्यक्तया इतरवैलक्षण्यपूर्वकं विवेचितः अध्यात्मा ब्रह्मसंघातस्थितसकलपदार्थः तत्र दर्शनं प्रत्यक्षतया ज्ञानं यस्येति एतादृशो भगवान् ब्रह्माणमाह। विमुञ्चात्म तनुमिति। यया तन्वा दैत्याः सृष्टाः सा घोरा भवति कारणान्यथात्वे तादृशकार्य्यानुत्पत्तेः एवमुक्तो ब्रह्मा तां विमुमोच विमोचनार्थं वा विविक्ताध्यात्मदर्शन इति ब्रह्मणो विशेषणं हेत्वाश्चर्यं ॥ २८ ॥

भिन्नस्वभावेनोत्पादितत्वात् सा देवतापि दैत्यहितकारिणी देवत्वाद्भामिका च जातेत्याह। तामिति अनुवर्णयति त्रिभिः। देवता हि यादृश्या भावनया दृश्यते तादृशी भवति ते च कामातुराः तां स्त्रियं रूपवतीं दृष्टवन्तः यादृशाश्च प्रकारास्तेषां मनसि रोचन्ते ते देवतात्वात् तस्यां दृष्टा अनुवर्णयन्ते यावच्च दैत्यैर्न स्पृष्टा तावद्बहिःस्थिता तथात्मानं प्रदर्शितवती यदा पुनः सा स्पृष्टा तदा तेष्वेव सन्निविष्टा सन्ध्याभिमानिनी देवतेति दृष्टाया वर्णनं स्तोत्रं निकटे गमनं कामलीलया च प्रश्नपूर्वकं वर्णनमित्यष्टभिस्तत्प्रशंसा निरूप्यते ततो ग्रहणमेकेन अर्द्धेन चानुभवः क्वणन्तौ चरणावेव अम्भोजतुल्यौ यस्याः तस्या देहे अनावृतं द्वयमेव पादौ मुखं च अन्यद्वस्त्रादिकमतस्तेषां हीनाङ्गे स्पृहेति प्रथमतश्चरणवर्णनं नेत्रयोः सुखजनकत्वादम्भोजत्वं ततो मुखवर्णनं स्वाभिलपितप्रकारेण मदेन विह्वले लोचने यस्याः काञ्चीकलापेन विलसत् दुकूलं तेन छन्नं रोधः कटिभागो यस्याः अनेन प्रकटाभरणं वस्त्रं च निरूपितं काञ्च्याः कलापत्वं कलां पातीति श्लथद्वस्त्रधारकत्वमित्यर्थः अंशानामप्यत्युत्कृष्टत्वात् कलापतुल्यसमूहरूपा वा रोधः शब्दः कामकुण्डे स्नानार्थिनां तटत्वबोधकः अन्योऽन्यश्लेषेणेति। अन्योऽन्यश्लेषेण उत्तुङ्गौ ऊर्ध्वमुद्गतौ निरन्तरौ मध्ये छिद्ररहितौ पयोधरौ स्तनौ यस्याः ॥ २९—३० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

देवो ब्रह्मा मां न भक्षयत किन्तु रक्षत, अहो आश्चर्य्यं हेयचरक्षांसि ! ॥ २१ ॥

प्रभया प्रभारूपया सत्त्वमय्या तन्वा दीव्यन् द्योतमानः। या या देवताः प्रमुखतः प्राधान्येनासृजत्। अत्र या इत्यस्यापि

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ते इत्यनेन प्रतिनिर्देशोऽर्थमात्रदृष्टचैव ज्ञेयः । विसृष्टां तेन त्यक्तां तां प्रभाम् अहः दिवसरूपां तत्तनुमहारिपुर्जगृहुः । किमर्थं तां देवयन्तः क्रीडयन्तः क्रीडयितुं यथा रात्रिर्यक्षरक्षोभिः सहैव तिष्ठति तथा अहोऽपि देवैर्दीव्यतीत्यर्थः । दिवु-अर्दन इत्यस्माच्चौरादिकात् याचमाना इत्यर्थः । इति सन्दर्भः । अत्र ब्रह्मणो मनसि प्रसादः सात्त्विकभावः आविर्बभूव । तस्मा द्देवा बभूवुः स च प्रसादो दिनं बभूव तच्च ते एव जगृहुरि त्येतावानेवार्थः ॥ २२ ॥

एवञ्च तस्य मनसि कामो राजसभावोऽभूत् तस्मादसुरा बभूवुः स च भावः सन्ध्या अभूत् तां चासुरा जगृहुरित्याह देव इति । अदेवानसुरान् "स जघनादसुरानसृजत्" इति श्रुतेः कामादनर्थो महान् भवतीत्याह । त एवमित्यादि ॥ २३ ॥

परापतत् पलायत ॥ २४ ॥

उपव्रज्य मनसैवोपसाद्य निवेदयामासेति शेषः ॥ २५ ॥

यभितुं पुमांसमपि मां सम्भोक्तुम् ॥ २६ ॥

तव अनासन्नपदां त्वत्पादावनाश्रितवतामभक्तानां स त्वं क्लेशदः तेन क्लिष्टानामपि त्वत्पादावाश्रितवतां भक्तानां त्वं क्लेशनाशन इति गम्यते एका इत्येवम्विधो भक्तवत्सलः कोऽपि नास्तीति भावः त्वच्चरणमनाश्रितवतां कालकर्मग्रहादिरूपेण त्वमेवैक; क्लेशदः तेषामेवाकस्माच्चरणाश्रितत्वे सति साक्षात् त्वमेव तत्तत्क्लेशनाशनः त्वदुक्तेषु कालकर्मादीनामनधिकारादित्याशयः त्वयि वैषम्याभावस्तु कल्पतरुदृष्टान्तेन ॥ २७ ॥

विविक्तमसन्दिग्धमध्यात्मदर्शनं परचित्तज्ञानं यस्य सः विमुञ्चेत्युक्तवानिति शेषः । इत्युक्तश्च ब्रह्मा तनुं विमुमोच ॥२८॥

मत्वा मूढधियः स्त्रियमित्यग्रिमोक्तेस्तां सन्ध्यामेव स्त्रियं कल्पयित्वा स्त्रीलम्पटा असुरा मुमुहुरित्याह । तां कणदिति । अत्र स्वखनीडं प्रतिगन्तुं नभसि सशब्दमुड्डीनान् चटकसारसादीनेव नूपुरकाञ्च्यादीन् कल्पयन्तिस्म तत्तदाकारान् मेघखण्डानेव चरणनयननितम्बस्तनादीन् अत एवैकत्र श्लेषेण पयोधरशब्द उपन्यस्तः सन्ध्याया आरुण्यमेवारुणदुकूलं रोधः कटितटं श्लेषयेति भिदाद्यङन्ताट्टाप्प्रत्ययः । ङित्यपि गुण आर्षः । अन्योऽन्यश्लेषया उपमर्देनैव हेतुना उत्तुङ्गौ निरन्तरावव्यवधानौ पयोधरौ "यस्यास्तां सुपां सुलुक्" इत्यादिना टाप्प्रत्ययस्य या देशो वा अन्तराच्छिद्रोत्थौ यत् किञ्चित् सूर्यप्रकाशावेव हासावलोकने कदाचित्तत्तन्मेघखण्डान्तर्धानमेव लज्जया निगूहेन मूर्द्धतस्तत्पर्यन्तपतितानि दीर्घश्याममेघखण्डान्येव नीलालकवरूथम् । हे धर्म ! विदुर तां स्त्रियमुपलभ्य मत्वा ॥ २९ ॥ ३१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

संविग्नः पुत्रस्वभावदर्शनात् देवो ब्रह्मा अहो हे प्रजाः ! पुत्रकाः मे मम यूयं ये यक्षध्वमित्यूचुः ते यक्षाः ये तु रक्षतेत्यूचुस्ते रक्षांसि इत्येवं यक्षरक्षांसि यक्षा राक्षसाश्च नामतः बभूविथ जाताः अतः मा मां पितरं मा जक्षत मा भक्षयत किन्तु रक्षतेत्याह ॥ २१ ॥

तमोरूपं कायविशेषं त्यक्त्वा प्रभया तन्वा दीव्यन् द्योतमानः या या देवताः द्युतिमत्यः सुररूपा प्रजास्तास्ताः प्रमुखतः प्राधान्यतः । असृजत् । तमोमयकायापेक्षया प्रभामयकायस्य प्राधान्यं तत इत्यर्थः ते देवतापरपर्यायाः पुत्राः तेन विसृष्टां त्यक्तां प्रभाम् अहः दिवसरूपां सतीं देवयन्तः क्रीडयन्तः अहारिपुर्जगृहुः ॥ २२ ॥

स जघनादसुरानसृजतेति श्रुत्युपबृंहणायाह । देव इति । अदेवानसुरान् ॥ २३ ॥

ततः तेषां व्यतिक्रमात् क्रुद्धो लोकविदूपकसुतोत्पत्त्या भीतः तद्वाल्यस्मरणात् हसन् परापतत् पलायितवान् ॥ २४ ॥

अनुरूपं भक्तेच्छानुसारिणमात्मानं दर्शयतीति तथा तम् उपव्रज्य प्रार्थयामासेति शेषः ॥ २५ ॥

मां पाहीति प्रार्थना तन्मूलं निवेदयति । यभितुं मैथुनेन धर्षयितुम् ॥ २६ ॥

तव अनाश्रितौ न शरणीकृतौ पादौ यैस्तेषाम् ॥ २७ ॥

विविक्तमध्यात्मदर्शनं तत्त्वदर्शनं यस्मात्सः यमेवैषवृणुते तेनलभ्यः "ददामि बुद्धियोगं तं येन मामुपयान्ति ते" इति श्रुतिस्मृतिभ्याम् विमुञ्चतेत्युक्तवानिति शेषः इत्युक्तो ब्रह्मापि तां विमुमोच ॥ २८ ॥

साहोरात्रयोः सन्धिरभवदिति श्रुत्युपबृंहणार्थं तेन त्यक्तां तनुं सन्ध्यारूपेण संस्थितामसुराः स्त्रियं मत्वा जगृहुरिति वर्णयति । तामिति नवभिः । नूपुराभ्यां कणन्ती चरणजलजे यस्यास्ताम् काञ्चीकलापविलसता दुकूलेन छिन्नमावृतं रोधः कटितटो यस्यास्ताम् ॥ २९ ॥

अन्योऽन्यश्लेषया परस्परोपमर्देनोत्तुङ्गौ निरन्तरौ च पयोधरौ यस्यास्ताम् ॥ ३० ॥

---

भाषाटीका

तब तौ ब्रह्माजी डरकर बोले मेरे को मत खाओ रक्षा करो हे यक्षराक्षस तुमें हमारे पुत्र होगे ॥ २१ ॥

तब ब्रह्माजी ने अपनी प्रभा से सात्विकता से जिनको उत्पन्न किये वह सब देवता भये उनने ब्रह्माकी छोडी भई दिवसरूपी प्रभा को हरण किया ॥ २२ ॥

ब्रह्म देवने अपनी जङ्घा से अत्यन्त लम्पट असुरौं को उत्पन्न किया वे असुर लोग लम्पट होने से इनको ही मैथुन करने को प्राप्त भये ॥ २३ ॥

तब भगवान् ब्रह्माजी निर्लज्ज असुरों के खेदने से क्रुद्ध होकर डरकर भगे ॥ २४ ॥

तब ब्रह्माजी वरदराज शरणागत के दुःख हर्ता भक्तों के अनुग्रह के लिये दिव्य मूर्ती को धारण करने वाले श्रीहरी के समीप गये २५ ॥

ब्रह्माजी बोले कि हे परमात्मन् मेरी रक्षा करौ आपकी आज्ञा से मैंने प्रजाओं को सृजा है सो ये दुष्ट तौ मेरेई को मैथुन करने को उद्यत भये ॥ २६ ॥

आपतो एकही दुखी जनन के दुःखनाशक हो जो आपके चरण से विमुख हैं तिनके दुःखदायक भी आप हौ ॥ २७ ॥

तब दिव्यज्ञान वाले भगवान् ब्रह्मा के उस कृपण

गूहन्तीं व्रीडया ऽऽत्मानं नीलालकवरूथिनीम् ।
उपलभ्यासुराधर्म ! सर्वे संमुमुहुः स्त्रियम् ॥ ३१ ॥
अहो रूपमहो धैर्यमहो अस्या नवं वयः ।
मध्ये कामयमानानामकामेव विसर्पति ॥ ३२ ॥
वितर्कयन्तो बहुधा तां सन्ध्यां प्रमदाकृतिम् ।
अभिसम्भाव्य विश्रम्भात्पर्यपृच्छन् कुमेधसः ॥ ३३ ॥
कासि कस्यासि रम्भोरु ! कोवाऽर्थस्तेऽत्र भामिनि ! ।
रूपद्रविणपण्येन दुर्भगान्नो विबाधसे ॥ ३४ ॥
या वा काचित्त्वमबले ! दिष्ट्या सन्दर्शनं तव ।
उत्सुनोषीक्षमाणानां कन्दुकक्रीडया मनः ॥ ३५ ॥
नैकत्र ते जयति शालिनि ! पादपद्मं घ्नन्त्या मुहुः करतलेन पतत्पतङ्गम् ।
मध्यं विषीदति बृहत्स्तनभारभीतं शान्तेव दृष्टिरमला सुशिखासमूहः ॥ ३६ ॥
इति सायन्तनीं सन्ध्यामसुराः प्रमदायतीम् ।
प्रलोभयन्तीं जगृहुर्मत्वा मूढधियः स्त्रियम् ॥ ३७ ॥
प्रहस्य भावगम्भीरं जिघ्रन्त्यात्मानमात्मना ।
कान्त्या ससर्ज भगवान् गन्धर्वाप्सरसां गणान् ॥ ३८ ॥
विससर्ज तनुं तां वै ज्योत्स्नां कान्तिमतीं प्रियाम् ।
त एव चाददुः प्रीत्या विश्वावसुपुरोगमाः ॥ ३९ ॥

भाषाटीका ।

ताको जान करके बोले कि इस घोर शरीर को छोडदो तव ब्रह्माजी ने छोड दिया ॥ २८ ॥

हे विदुरजी ! उस तनू को उन असुरों ने एक स्त्री समझकर मोहित होगये उसके चरण कमल दोनों शब्द युक्त नूपुरों से शोभित हैं उसके दोनों लोचन मद से विह्वल हैं कटि मेखलामें शोभायमान जो दिव्यवस्त्र तिससे कटितट आच्छादित है ॥ २९ ॥

परस्पर में उप मर्दन होने से अति उच्च संलग्न उसके दोनों स्तन हैं सुन्दर नासिका है सुन्दर दन्त हैं स्नेह युक्त हास सहित उसका अवलोकन है ॥ ३० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

गूहन्तीं वस्त्राञ्चलेनावृण्वानां नीलानामलकानां वरूथः स्तोमो विद्यते यस्याः हेधर्म ! विदुर तां स्त्रियमुपलभ्य मत्वा ॥ ३१ ॥

संमूढानां विभावनाक्रममाह । अहो इति ॥ ३२ ॥

अभिसम्भाव्य सत्कृत्य विश्रम्भात्प्रणयात् कुबुद्धयस्ते तां पप्रच्छुः ॥ ३३ ॥

कासीति त्रिभिः । काऽसि जात्या कस्य वा कन्या हेभामिनि! कोपनं! रूपमेव द्रविणमनर्घ्यं वस्तु तदेव पण्यक्रयार्हं तेन तदसमर्पणेन नो विबाधसे पीडयसि ॥ ३४ ॥

किंजातिकुलादिप्रश्नेन या वा काचिद्भवदिष्टैवेदं तावद्भद्रं जातं यत्तव दर्शनं किन्तु केवलं नो मन उत्सुनोपि विमथ्नासि ॥३५॥

क्षुभितचित्तानां वाक्यम् । नैकत्रेति । हेशालिनि ! श्लाघ्ये एकत्र न जयति न स्थिरीभवति यद्वा नैकत्रानेकगतिविलासेषु जयति सर्वोत्कर्षेण वर्तते पतत्पतङ्गमुच्चलन्तं कन्दुकम् बृहतोः स्तनयोर्भाराद्भीतं तव कृशं मध्यं विषीदति श्राम्यति शान्ता मन्थरेव प्रसरति सुशिखासमूहः शोभनः केशकलापस्ते पाठान्तरे सुशिखाः शोभनान्केशानवकीर्यमाणान् समूह बधानेति अत्र चास्तं गच्छन्सूर्य एव पतत्पतङ्गः मेघविच्छेदो मध्यविषादः तारकारूपा दृष्टिः तम एवकेशा इत्याद्यूह्यम् ॥ ३६ ॥

प्रमदेवाचरन्तीं स्त्रियं मत्वा जगृहुः ॥ ३७ ॥

प्रहस्यात्मानमात्मना जिघ्रन्त्या कान्त्या सौन्दर्येण प्रहसनमात्मावघ्राणं च सौन्दर्यानुभवचातुर्यविकारः ॥ ३८ ॥

ज्योत्स्नां चन्द्रिकारूपामत एव गन्धर्वादिगणाः विश्वावसुः पुरो गमो मुख्यो येषु ॥ ३९ ॥

**सृष्ट्वा भूतपिशाचांश्च भगवानात्मतन्द्रिणा।**
**दिग्वाससो मुक्तकेशान्वीक्ष्य चामीलयद्दृशौ ॥ ४० ॥**

### श्रीधरस्वामिकृतभावार्थदीपिका।

आत्मनस्तन्द्रिणा आलस्येन तांश्च नग्नान् मुक्तकेशान्वीक्ष्य नेत्रे निमीलितवान् ॥ ४० ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी।

मध्येऽन्तः इवशब्देन वास्यस्वभावस्सूचितः ॥ ३२ ॥

वितर्कयन्तो विभावयन्तः ॥ ३३ ॥

अत्रास्मत्सन्निधौ अर्थः प्रयोजनम् दुर्भगान् पतन्मूल्यद्रव्यहेतुभाग्यशून्यात् तदसमर्पणेन रूपदर्शनादानेन हेतुनेति शूरे कातरशब्दवन्निरुपाधिनि लक्षणा ॥ ३४ ॥

कुलादीत्यादिनार्थपरिग्रहः केवलमिति सङ्गं न ददासीत्यर्थः ॥ ३५ ॥

जयतेः खिदार्थेऽप्रसिद्धत्वाद्यद्वेति मन्थरेव घूर्णायमानेव पाठान्तरेऽविसर्गपाठे समूहेति हि लोपे रूपमत्र च सन्ध्यापत्ते विच्छेदोऽन्योऽन्यविभागः इत्यादीत्यादिना तन्नैविध्यमेव तद्वन्धनम् ॥ ३६ ॥

स्त्रियं मत्वेति कामोद्रेकवेलायां तस्यां स्त्रियाः स्फूर्त्तिर्जाता तया सा तैस्तदभिन्नत्वेनानुभूतेति मुनिनापि तथा वर्णितमिति ज्ञेयम् ॥ ३७ ॥

भावगम्भीरं व्यञ्जितस्वाभियोगं यथास्यात्तथा प्रहस्य यद्वा भावो ऽत्र सौन्दर्य्यजन्यो गर्वस्तेन गम्भीरं तेष्वदत्तदृष्टित्वादिकं यथा स्यात्तथा प्रहस्य आत्मना स्वयमेव आत्मानं स्वं जिघ्रन्त्या स्वस्मिन्नेव प्रेमातिशयात् सौगन्ध्यातिशयानुभवाद्यवघ्रातं कुर्वन्त्या कान्त्या सौन्दर्य्येण ननु सौन्दर्य्यस्याङ्गनिष्ठरूपत्वात्प्रहसनाऽवघ्राणकर्तृत्वं न सङ्गच्छत इत्याशङ्क्य व्याचष्टे। प्रहसनमिति। यत्राकृतिस्तत्र गुणा वसन्तीति न्यायात्सौन्दर्य्यस्यानुभावः कार्य्यं चातुर्य्यं तस्य विकारः कार्य्यं प्रहसनमवघ्राणञ्चातः स्वकर्तृकेति तत्रारोपिते असिश्छिनत्तीतिवत् सौन्दर्य्यानुभवेतिपाठे सौन्दर्य्यास्वादनचातुर्य्यचिन्हे इति व्याख्येयम् ॥ ३८ ॥

तां प्रहसनवघ्राणयोत्थां स्वसौन्दर्य्यानुभावावेशरूपां तत्याज ननु साक्षात्तत्तन्मनोभावत्यागस्य स्वामिभिः पूर्वं व्याख्यातत्वात् भावत्यागे चन्द्रिकारूपां भाव एव चन्द्रिकामुत्पादितवानित्यर्थः कान्तिमतीं सौन्दर्य्यवतीं त एवानन्तरपद्ये तत उत्पन्नत्वेन निर्दिष्टा एव जगृहुरिति सौन्दर्य्यादिविशिष्टा बभूवुरित्यर्थः ॥ ३९ ॥

यद्यपि तन्द्राकार्य्यत्वेनास्ति यस्य तत्तन्द्रि आलस्यमिति व्युत्पत्त्या तन्द्रिशब्द आलस्यवाचकस्तथापि तन्द्रा जृम्भिकानिद्रोन्मादहेतुत्वेनेत्यग्रिमव्याख्यानुसारादालस्यस्यापि तत्कार्य्यतन्द्रायां लक्षणया तन्द्र्येत्यर्थः उपलक्षणं चैतज्जृम्भानिद्रोन्मादानां तेषां क्रमेण तन्द्राकार्य्यत्वात् ॥ ४० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

व्रीडया लज्जया आत्मानं देहमुपगूहन्तीं वस्त्राञ्चलेनावृण्वतीं नीलानाममलकानां चूर्णकुन्तलानां वरूथः समूहो यस्यास्तां स्त्रियमुपलभ्य मत्वा सर्वेऽसुरा हे धर्म! विदुर! संमुमुहुः ॥ ३१ ॥

मोमुह्यमानानामसुराणां प्रलपनमाह। अहो इतिपञ्चभिः। अहो इत्याश्चर्यं रूपमाकारः स्थैर्यं लावण्यं वयः यौवनं कामयमानानामस्माकं मध्येऽकाममेवाकामयमानेव विसर्पति गच्छति ॥ ३२ ॥

बहुधा वितर्कयन्तः रूपगुणैरीदृशमीदृशमस्या रूपादिकमित्यूहयन्तः प्रमदाकृतिं स्त्रीरूपवत्त्वेन कल्पितां तां संध्यामभिसम्भाव्य सत्कृत्य विस्रम्भात्प्रणयात्कुमेधसः कुबुद्धयोऽसुराः पर्यप्रच्छन् ॥ ३३ ॥

पृच्छामेवाह। त्रिभिः। कासि किं देवता अथवा मानुषी उतान्या वा कस्य सम्बन्धिन्यसि हे रम्भोरु! रंभा कदली तद्वदूरू यस्याः हे भामिनि! कोपने ऽत्रास्मिन्मध्ये ते कोवार्थः किंप्रयोजनं रूपमेव द्रविणमनर्घ्यं वस्तु तदेव पुण्यं क्रयार्हं तेन तत्समर्पणेन दुर्भगान् भाग्यहीनान्नोऽस्मान् बाधसे क्लेशयसि ॥ ३४ ॥

किं जातिकुलादिप्रश्नेन या वा काचिद्भवसि हे अबले! दिष्ट्या ऽस्मद्भाग्यवशेन तव संदर्शनं जातमीक्षमाणानां पश्यतां नोऽस्माकं मनः कन्दुकक्रीडया उत्सुनोषि हरसि मथ्नासीति यावत् ॥ ३५ ॥

मथितमनसां वाक्यं हे शालिनि! सुन्दरि! पतत्पतङ्गमुत्प्लुत्य पतन्तं कन्दुकं मुहुः करतलेन घ्नन्त्या स्तव पादपद्ममेकत्र न जयति न तिष्ठति बृहतोः स्तनयोर्भाराङ्गीतं तव कृशं मध्यं विषीदति क्लिश्यति श्राम्यति वा दृष्टिः भ्रान्ता मन्दं प्रसरति शुचिशिखासमूहः शोभनः केशकलापः शुचिखा बधानेति पाठे-शोभनकेशान् वीकीर्यमाणान् बधानेत्यर्थः अत्र चास्तंगच्छन्सूर्य एव पतङ्गः मेघविच्छेदो मध्यविषादः तारकारूपा दृष्टिः तम एव केशा इत्याद्यूह्यम् ॥ ३६ ॥

इत्युक्तरीत्या प्रमदायतीं स्त्रीं वा चरन्तीं सायन्तनीं संध्यां प्रलोभयन्तीं मोहयन्तीं स्त्रीयं मत्वा मूढधियो मोहितबुद्धयोऽसुराः जगृहुरुपाददुः ननु कथं छाया प्रभालौलुप्यानां ब्रह्मणोपात्तत्यक्तानां राज्यहः संध्याकालरूपवत्त्वं कालो हि छायादीनामपि च्छेदकः तेभ्यो विलक्षण एव सत्वं छायादयो हि राज्यहःसंध्याकालैः परिच्छिद्यन्ते अतः परिच्छेद्यपरिच्छेदकयोरभेदविवक्षया रात्रि प्रभामहः लौलुप्यं संध्यामित्यभेदनिर्देशः परमार्थतस्तु यं यं धर्ममुपादाय यान्यानसृजत् ते ते तत्तद्धर्मप्रधाना जाताः राज्यादिकालविशेषाणां निद्रादि तमः कार्योदिहेतुत्वात्स्वगुणानुसारेण तत्तत्कालविशेषमेव स्व व्यवहारायोपाददुरित्यभिप्रायः ॥ ३७ ॥

भगवान्ब्रह्मा भावेनाभिप्रायविशेषेण गम्भीरं यथा तथा प्रहस्यात्मानं देहमात्मना स्वयं जिघ्रन्कान्त्या सौन्दर्येण गन्धर्वाणामप्सरसां च गणान्ससर्ज प्रहसनं स्वात्मा वघ्राणनं च सौन्दर्यानुभावचातुर्यविकारः ॥ ३८ ॥

तां कान्तिमतीं कान्तिबहुलां प्रियां स्वाभिमतां ज्योत्स्नां-

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

प्राक्सन्ध्यारूपां तनुं विससर्ज त एव गन्धर्वाप्सरसां गणाः विश्वावसुः पुरोगमो मुख्यो येषां ते प्रीत्या तां तनुमुपाददुः ॥ ३९ ॥ भगवान्ब्रह्मा आत्मतन्द्रिणा आत्मनस्तन्द्रिणा आलस्येन भूतानि पिशाचांश्च सृष्ट्वा एतान्मुक्तकेशान्विकीर्णकेशान् दिग्वाससः दिगम्बरान् भूतानि पिशाचांश्चान्वीक्ष्य दृशौ नेत्रेऽमीलयन्निमीलितवान् ॥ ४० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

नीलालकानां वरूथः समूहोऽस्या अस्तीति नीलालकवरूथिनी तामुलक्ष्य प्राप्य स्त्रियं जातां तां तनुमुद्दिश्य मुमुहुरिति वा ॥ ३१ ॥

अत्र मोहो नाम न मूर्च्छा किन्तु वैक्लव्यहेतुको वितर्क इतिभावेनाह ! अहो रूपमिति ॥ ३२ ॥

ततः किं चकुरिति तत्राह। वितर्कयन्त इति ॥ ३३ ॥

भामिनि। कान्तिमति रूपमेव द्रविणं द्रव्यं तदेव पण्यं क्रययोग्यं तेन दुर्भगान् त्वत्सङ्गोपभोगभाग्यरहितान् ॥ ३४ ॥

त्वत्संदर्शनमेवास्माकं सुरतक्रियेति भावेनाहुः। या वेति। एवमपि तवेयं कन्दुकक्रीडास्मन्मनः खेदयतीत्याहुः। उद्धुनोषीति ॥ ३५ ॥

इतरकन्दुकक्रीडाया इयं वैशेषिकीत्याह। नैकत्रेति। हेशालिनि आर्ये ! पतत्पतङ्गसुत्पमदवनमत् कन्दुकं जयति ते पादपद्मं प्राप्नोति विषीदति भङ्गं प्राप्नोति जटावरूथो वेणीभारोऽमलो मुक्तश्च "मलवन्धन" इतिधातोः ॥ ३६ ॥

सर्वसार्वैः स्त्रियो बन्धहेतव इति भावेन असुराणां तद्ग्रहणमाह। इतीति। संध्यां व्यावर्तयति। सायं तनीमिति। प्रातःकालीनायाः पुण्यहेतुत्वात् प्रलोभयन्तीमात्मनीच्छां कुर्वन्तीम् ॥ ३७ ॥

देवासुरसर्गयोरनन्तरं गन्धर्वादिसर्गस्याभ्यर्हितत्वात्तमाह। प्रहस्येति। भावगम्भीरमिति। क्रियाविशेषणं भावः शृङ्गारचेष्टा कथं ज्ञातुं शक्यत इति तमभिनयति जिघ्रन्त्यात्मानमात्मनेति नाम्ना कान्त्या तन्वा ॥ ३८ ॥

ज्योत्स्नां चन्द्रिकावदाह्लादकरीं संज्ञान्तरं वा प्रियां मनोदृष्टिसुखकरीम् ॥ ३९ ॥

भूतादीनां देवयोनित्वाद्गन्धर्वादिसृष्ट्यनन्तरं भूतादिसृष्टिमाह। सृष्ट्वेति। आत्मनो देहिनस्तन्द्री सुखव्यादानादिलक्षणामुत्पादयतीत्यात्मतन्द्री तेन जृम्भणाख्येन देहेन ॥ ४० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

विश्वासने हेतुः। दुर्भगान् एतन्मूल्यद्रव्यहीनान् ॥ ३४—३६ ॥

इतीति। सन्ध्या हि कामिनां स्त्रीस्फूर्तिं करोति। ततश्च तेषां स्फुरन्ती स्त्री तदभेदेन तैरवगता तदनुसारेण मुनीन्द्रेणापि वर्णितेति ज्ञेयम् ॥ ३७ ॥

भावः सौन्दर्य्यगर्वः तेन गम्भीरमन्यथादस्तदृष्टित्वादिकं यथा स्यात्तथा प्रहस्य स्वस्मिन्नेव प्रेमातिशयेन सौरभ्यातिशयानुभवेन च स्वयमात्मानं जिघ्रन्त्या कान्त्या कान्तिमत्या तन्वा ॥ ३८ ॥ ॥ ३९ ॥

आत्मतन्द्रिणा आत्मनस्तान्द्रायुक्तेन देहेन उपलक्षणं चैतत् जृम्भा निद्रोन्मानवत्त्वस्य तस्य एव कार्य्यक्रमरूपत्वात्तेषाम् ॥ ४० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं रूपं द्वाभ्यामुक्त्वा स्त्रीभावमनुवर्णयति अत्रात्मा स्त्रीभावमापन्नः स यथैव चेष्टया गुप्तो भासते क्रीडया तादृशीं चेष्टां करोतीत्यर्थः परिदृश्यमानावयवत्वात् वस्त्रेण गोपयतीति केचित् यथा बाह्याः पदार्थाः बुद्ध्या परिकल्पिताः तथा क्रीडाप्यत्र नीलवर्णा ये अलकाः तेषां समूहयुक्ता च अनेन तस्याः स्वलक्षणानि निरूपितानि केचिदेनामाध्यात्मिकीं वर्णयन्ति चरणकमलं पद्मादिशब्दाः अर्द्धोदयास्तसमययुक्तौ चन्द्रसूर्यौ लोचने आरक्ता मेघाः काञ्ची आकाशमेवाम्बरं तदा दिशः कामुकीकामुकयोर्मनोरथावेव स्तनौ चक्रवाकौ वा उत्तमा नासिका शुकाः दन्ताः कुन्दादयः शोभना द्विजाः यस्या इति पक्षिणो वा योगात् स्निग्धो यो हासः पुरुषेण सह सम्बन्धसूचकः तत्र या लीला तथा सहितमेवावलोकनं यस्याः तत्काले कामिनीनां विकसितपुष्पस्थभ्रमरादीनां वा भावाः प्रतिचरणं सन्ध्यातिरोभाव एव गूहनं लज्जा तदानींतनसत्कर्माणि अन्धकार एव केशपाशः एते धर्मा ज्ञापका एव नत्वेतन्मात्रम् अन्यथा वाक्यार्थो बाधितः स्यात् सर्ववाक्यविरोधश्च अतो ज्ञापकत्वेनैव एतेषां वर्णनमुचितं देवतायास्तथात्वाभावे लोके सन्ध्यायां तथा भावा न भवेयुरिति एवं तां वर्णयित्वा तद्दर्शनकार्यमाह। उपलभ्येति। धर्मेति विदुरसंबोधनं मोहाभावाय हि धर्मराजेत्यर्थः एकदेशसम्बन्धिनं साम्प्रतं राजत्वाभावात् विद्यमानधर्ममात्रबोधकं सर्वे असुराः संमुमुहुः मोहहेतुः स्त्रीत्वमेव अतोऽन्ते निरूपणम् ॥ ३१ ॥

दृष्टानां तद्भावेन मुग्धानां भावप्रतिपादकं वाक्यमाह। अहो रूपमिति। रूपमनूद्याश्चर्यत्वं विधीयते अहो धैर्यमित्यपि तथा चेष्टया कामस्वरूपा अपि महानिव लक्ष्यते तथापि सा न लोलुपा अत आश्चर्यमस्या धैर्यमित्यर्थः एतद्द्वयमपि भुक्तभोगायाः जरठाया वा नाश्चर्यहेतुरित्याशङ्क्याह। अहो अस्या नवं वय इति। नवमनुपभुक्तं प्रत्यग्रविकसितं वा वय उद्दिश्य आश्चर्यत्वं विधीयते एवं दोषत्रयं यस्याः कामलक्षणसन्निपातजनकं सा कथमकामेव अस्याः अकामत्वज्ञापकं विशेषणमेव स्तम्भोऽपेक्ष्यते मुख्यः भावादीनां दृश्यमानत्वादकामैव किञ्च न केवलमस्या आन्तरा एव दोषाः किन्तु बाह्या अपीत्याह। मध्ये कामयमानानामिति। वयं सर्वे एव कामयमानाः तेन कामस्यावश्यकत्वात् चेष्टकत्वाच्च मध्ये कथमकामा भवेदित्यर्थः ॥ ३२ ॥

परिचयाभावादिति चेत्तर्हि संवादेन परिचितां करिष्याम इत्यभिप्रेत्य संवादार्थं यत्नं कृतवन्त इत्याह। वितर्कयन्त इति। इतिप्रमदाकृतिं तां संध्यां बहुधा वितर्कयन्तः पर्यपृच्छन्निति संबन्धः बहुधेति स्वरूपसंबन्धाद्यर्थं ननु स्त्रीत्वे तस्याः संभाव्यत्वे वा संदेहः किन्तु संदेहरूपायाग्रे पृच्छन्ते प्रश्नापूर्वं स्वत एव ज्ञानार्थं वितर्कः प्रकर्षेण मदो यस्याः सकाशात् स्त्रीरूपा च सा देवता अभितः संभाव्य स्तुत्वा कुशलादिकं च पृष्ट्वेत्यर्थः विस्रम्भादिति विश्वासात् इयमस्मान् भजिष्यतीति परितो नाम-

## श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

गोत्रादिभेदेन कुमेधस इति देवनात्वाशनात् न हि देवता भोग्या भवति दृश्यैव सा नतु स्पृश्येत्यर्थः ॥ ३३ ॥

प्रश्नत्रयमाहुः । कासीति । जातिकुलप्रश्नः कस्यासि संबन्धिप्रश्नः पितुः भर्तुश्च अत्रागमने च किं प्रयोजनमिति तृतीयः परिचयार्थमेते प्रश्नाः नतूत्तरज्ञाने किञ्चित्प्रयोजनमस्ति भामिनीति स्तोत्रं हे भव्ये ! आपाततो ज्ञायते महती महतो महत्कार्यं तवेति परमेकमेव तवासामीचीन्यं यद्रूपद्रविणपण्येन दरिद्रानस्मान् बाधस इति रूपमेव द्रविणं सुवर्णादि तदेव च पण्यं बहुद्रव्येण च प्राप्यं वयं च दुर्भगाः तन्मूल्यद्रव्यरहिताः अतो बाधसे केचित्तामसा उपायमज्ञात्वा एवमुक्तवन्तः ॥ ३४ ॥

अन्ये त्वाहुः । या वेति । त्वं या काचि द्वा इत्यनादरं स्वादिति संभावनायां सम्बन्धे संभावनायां चानादरः हे अबले ! इति संबोधनेन बलरहितायाः सुश्रूषणं कर्तव्यमिति पादसंवाहनादिकं करिष्याम इति ज्ञापितं वयं न दुर्भगाः किन्तु सुभाग्या इति निश्चितं यतः संदर्शनं तव जातमेतद्दिष्ट्या सापराधां वदन्ति उत्सुनोसीति त्वं सर्वथा देवताभजनं देवतादर्शनं च नाल्पभाग्येनेत्यपि सूचयन्ति त्वं नोऽस्माकं कन्दुकक्रीडया मनः उत्सुनोषि यथा ग्रावभिः सोमोऽभिषूयते तथा मनः ऊर्ध्वमभिषुणोषि यत ऊर्ध्वमेव नोत्सर्पति कन्दुकक्रीडा तु देहचालनेन भवति तत्रावयवानां संवरणविवरणे भवतः अतो यद्दर्शनाकाङ्क्षि चित्तं तत्तच्चणे चणे संभृतं भवतीतिमनसः खेदः ॥ ३५ ॥

अन्ये सात्त्विकाः नैषा उपालभ्या किन्तु स्तुत्या अतः स्तोत्रेणैव प्रसन्ना भविष्यतीत्यभिप्रेत्य स्तोत्रं कृतवन्तः । नैकत्रेति । कामशास्त्रे हि कामिन्येव देवता ताः स्तुम इति वाक्याद्लौकिकरूपवर्णनमेव महत्त्वेन कथनं स्तोत्रमित्यादि तदाह । हे शालिनि ! मनोहरं विनययुक्तं वा ते पादपद्मं नैकत्र जयति प्रसिद्धं पद्मं तु जल एव शोभते तव तु सर्वत्रेति विशेषः पादपद्मपदं च भक्तिसूचकं च एकत्र न जयति किन्तु सर्वत्र नैकत्र अनेकत्र वा पादपद्मस्य चलने हेतुमाह । घ्नन्त्या इति । मुहुर्वारं वारं करतलेन पतत्पतङ्गं घ्नन्त्याः कन्दुकार्थं गच्छन्ती मध्ये समागतान् भ्रमरान् करतलेन घ्नन्ती तेऽपि पतङ्गाः पतन्तो जात्यपेक्षया त्वन्तिक वचनं सात्त्विकत्वाद्वा सूर्यमेव तथा मन्यन्ते अस्तंगच्छन् सूर्यः सन्ध्याकिरणैर्हन्यत इति मध्यं विषीदतीति खेदनिराकरणार्थं अस्माभिर्वा कलशौ स्तम्भनीयाविति भावः कृशत्वात् विषादः उत्तमस्त्रियाश्च लक्षणं कृशमध्यत्वमन्यथा तृतीयशास्त्रबन्धाः केऽपि न संगच्छेरन् विषादे हेतुः बृहत्स्तनभारेण भीतमिति न केवलं विषादमात्रं किन्तु भङ्गो भविष्यतीति भयमपि तेन सुप्त्वैव स्थातव्यमिति भावः किंच दृष्टिरपि ते श्रान्तेव रसेन पूर्णा आलस्ययुक्ता च जाता श्रमः बहिः कार्येण शारीरः आलस्यं मनसः सुष्ठु शिखा समूहो यस्याः अतः उत्सङ्गे शयनं कर्त्तव्यमितिभावः ॥ ३६ ॥

एवं स्तुत्वा तूष्णीं स्थितां तामप्रतिषिद्धमनुमतं भवतीति ज्ञात्वा सर्वे तां गृहीतवन्त इत्याह । इतीति । सायंतनीं पश्चिमां संध्यां प्रमदेवाचरन्तीमात्मनश्च प्रलोभयन्तीं काममुत्पादयन्तीं स्त्रीचेत्प्रलोभयन्ती जाता तदा सिद्धा जातेति ज्ञात्वा तां जगृहुः आलिङ्गितवन्तः यतः एते मूढधियः ब्रह्मणः पुत्रा अपि तत्त्वं न जानन्तीति तथा वचनम् ॥ ३७ ॥

ततः किं जातमित्याशङ्क्याह । प्रहस्येति । ते सर्वे तामालिङ्ग्य स्वस्मिंस्तस्यां प्रविष्टायां भूताविष्टा इव आत्मनैवात्मानं जिघ्रन्तिस्म प्रथमतस्तया आलिङ्गिता इव सन्तुष्टा क्षणात्तामदृष्ट्वा अस्मान्वञ्चयितुं लीनेति भावगम्भीरं यथा भवति तथा प्रहस्य पश्चादात्मानमेव स्त्रियं ज्ञात्वा नियामकं रूपादिकमदृष्ट्वा कमलगन्धां तां मत्वा घ्राणेन ज्ञातुं जिघ्रन्ति एकमेकप्रकारेण प्रथमं त्रिविधां सृष्टिमुक्त्वा द्वितीयेन प्रकारेणाह। कान्त्या ससर्जेति। कान्तिर्लावण्यमेषा सात्त्विकी सृष्टिः राजसीति केचित्साध्याः पितरश्च सात्त्विका इति तच्चिन्त्यं भगवानिति पुनर्मूलप्रवेशः आरब्धगुणानां समाप्तत्वात् गन्धर्वाप्सरसां गणानित्यवान्तरजातिभेदात् ॥ ३८ ॥

विससर्जेति । तामपि तनुं विससर्ज सा ज्योत्स्नाभवत् यतः कान्तिमयी सा कान्तिमतीमित्यपि पाठे तथा सा हि ब्रह्मणः प्रिया गन्धर्वाप्सरसां वा ते हि ज्योत्स्नायामेव रमन्त इति अत एव त एव गणास्तामाददुः चकाराद्भौतिकीं च ज्योत्स्नां विश्वावसुमुख्यो वेदे "विश्वावसुः पर्यमुष्मात्" इति श्रुतेः विश्वावसुः पूर्वचित्तिर्गन्धर्वाप्सरसाम्,, इति विभूतिवाक्याच्च ॥ ३९ ॥

तामसीं सृष्टिमाह । सृष्ट्वेति । तन्द्री आलस्यं निद्रा तया भूतानि पिशाचांश्चासृजत् न चैषासृष्टिरेतावती किंत्वधिकाप्यस्तीति ज्ञापयितुं सृष्ट्वेति क्त्वाप्रत्ययः दृशोर्मीलनं च आलस्यनिद्रायामवान्तरकारणं सृष्टाः पिशाचाः दिग्वाससो मुक्तकेशाश्च तानमङ्गलान् दृष्ट्वा दृशावमीलयत् ॥ ४० ॥

---

## श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

तेषां काममोहप्रलापमाह । अहो इति ॥ ३२ ॥

किमियमस्मास्वेवानुरागिणी अन्यत्र वा दैवी मानुषी वृषस्यन्ती ब्रह्मचारिणी वेत्येवं वितर्कयन्तः अभिसम्भाव्य सत्कृत्य ॥ ३३ ॥

रूपमेव द्रविणमनर्घ्यं वस्तु तदेव पण्यं क्रयार्हं तेनास्मान् दुर्भगान् त्वद्दास्यानर्हानपि विबाधसे बध्वा स्वसङ्ग एव जिघृक्षसि । यद्वा विबाधसे न क्रीणासि धिगस्मान् दुर्भगानिति भावः ॥ ३४ ॥

उत्सुनोऽसि मथ्नासि । कन्दुकक्रीडयेति अस्तंगच्छन् चञ्चलः सूर्य्य एव अरुणकन्दुकत्वेन कल्पितः ॥ ३५ ॥

कन्दुकक्रीडां वर्णयन्ति । हे शालिनि ! श्लाघ्ये एकत्र न जयति न स्थिरीभवति पतत्पतङ्गमधश्चलत्कन्दुकम् । पक्षे ऽस्तंगच्छन् सूर्य्यः । कृशत्वाद्विषीदति दृष्टिरमला निष्कामेव वस्तुतस्त्वन्तःसकामैवेत्यर्थः । श्रान्ता कन्दुकक्रीडाश्रमं व्यञ्जयन्ती अत एव सुशिखाः शोभनान् केशान् अवकीर्य्यमाणान् समूह बधान । सुशिखासमूह इति पाठे स्वित्यव्ययम् पृथक् पदं । ततश्च शिखासमूहश्च सुन्दर इत्यर्थः ॥ ३६ ॥

प्रमदेवाचरन्तीं स्त्रियं मत्वा जगृहुः ॥ ३७ ॥

यदा ब्रह्मणः सौन्दर्य्यं स्मृत्यारूढं बभूव तदा तस्मात् गन्धर्व्वादयो बभूवुस्तच्च सौन्दर्य्यं ज्योत्स्नाभूत्ताश्च त एव जगृहुरित्याह । प्रहस्येति । कान्त्या कीदृश्या भावगम्भीरं व्यञ्जितस्वाभियोगं यथा स्यात्तथा प्रहस्य आत्मनैवात्मानं जिघ्रन्त्येति

जगृहुस्तद्विसृष्टां तां जृम्भणाख्यां तनुं प्रभोः।
निद्रामिन्द्रियविक्लेदो यया भूतेषु दृश्यते।
येनोच्छिष्टान् धर्षयन्ति तमुन्मादं प्रचक्षते ॥ ४१ ॥
ऊर्जस्वन्तं मन्यमान आत्मानं भगवानजः।
साध्यान् गणान् पितृगणान् परोक्षेणासृजत्प्रभुः ॥ ४२ ॥
त आत्मसर्गं तं कायं पितरः प्रतिपेदिरे।
साध्येभ्यश्च पितृभ्यश्च कवयो यद्वितन्वते ॥ ४३ ॥
सिद्धान्विद्याधरांश्चैव तिरोधानेन सोऽसृजत्।
तेभ्योऽददात्तमात्मानमन्तर्धानाख्यमद्भुतम् ॥ ४४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ॥

कान्तिकान्तिमतोरैक्येनोपचारात् प्रहसनावघ्राणादीनि स्वसौन्दर्य्यास्वादनचिह्नानि ॥ ३८ ॥ ॥ ३९ ॥

कदाचिद्ब्रह्मण आलस्यमभूत्तस्माच्च भूतपिशाचाद्या बभूवुस्तदालस्यं जृम्भानिद्रादिरूपासूत्ताश्च त एव जगृहुरित्याह। जगृहुरिति। तन्द्रा यस्य कार्य्यत्वेनास्ति तत्तन्द्रि आलस्यं तेन। ४०।

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

नीलालकानां वरूथः स्तोमो विद्यते यस्यास्ताम् हे धर्म! विदुर! ॥ ३१—३२ ॥

अभिसम्भाव्य सर्वतः सन्मानवतीं विधाय विस्रम्भात्प्रणयात् ॥ ३३ ॥

रूपमेव द्रविणं तेन पणयेन व्यवहारार्हेण प्रक्षेपणीयेनेत्यर्थः ॥ ३४ ॥

उत्सुनोसि विमथ्नासि ॥ ३५ ॥

हे शालिनि! श्लाघ्ये ते पादपद्मं नैकत्र अनेकगतिविलासेषु जयति सर्वोत्कर्षेण वर्तते अमला विमला श्रान्तेव मन्थरेव दृष्टिश्च जयति सुशिखासमूहः शोभनः केशकलापश्च जयति पतत्पतन्नुमुच्चलन्तं कन्दुकं करतलेन भ्रान्त्या वृहतोः स्तनयोर्भाराद्गीतं मध्यं तु विषीदति क्लिश्यति अत्र अस्तं गच्छन् सूर्यः कन्दुकम् सन्ध्यायाः पूर्वभागस्य दिवसग्रस्तत्वादपरभागस्य रात्रिग्रस्तत्वात् तन्मध्यगतोऽल्पकालः विषीदन् मध्यमिव अदृश्यभास्करप्रभा अत्युष्णादोषरहिता विमला श्रान्तेव दृष्टिः तदानींतनो मेघसमूहः केशकलाप इत्यादूह्यम् ॥ ३६—३७ ॥

भगवान् चतुराननः भावेन अभिप्रायविशेषेण गम्भीरं यथा तथा प्रहस्य आत्मानमात्मना जिघ्रन्त्या अवघ्राणेनात्मानुभावातिशयं द्योतयन्त्या कान्त्या कान्तिमत्या ज्योत्स्नया ॥ ३८ ॥

ते एव गन्धर्वादिगणाः ॥ ३९ ॥

आत्मतन्द्रिणा निजालस्येन ॥ ४० ॥

भाषाटीका।

लज्जा से शरीर को छिपाती है नील केशों से शोभितहै हे विदुरजी! उस स्त्री को देखकर सब असुर मोहितभये॥३१॥ अहो धैर्य्य है अहो रूप है अहो इसकी नूतन अवस्थाहै कामना करने वाले हम लोगों के मध्य में विचरतीहै ॥ ३२ ॥

स्त्री का रूप धारण करने वाली उस संध्याको बहुत प्रकार से तर्कना करने लगे फिर उसका सत्कार करके दुर्बुद्धि होने से विश्वास से पूछने लगे ॥ ३३ ॥

हेरम्भोरु! तू कोन है किसकी है हे भामिनि! तेरा इहां क्या प्रयोजन है हम दुर्भागि लोगों को तू अपने रूपके मूल्य से वाधित करती है ॥ ३४ ॥

हे अवले! तू जो चाहे सो हो तेरा दर्शन हुआ सो अच्छा हुआ देखने वाले हम लोगों के मनको गेंद के खेल से हरण करती है ॥ ३५ ॥

हे शोभावाली! तु हाथ से सूर्य सरी के गेंद को जो चलाती है तिससे तेरा चरण कमल एक ठिकाने नहीं रहता है वडे स्तनों के बोझ से कमर तेरी टूटती सी है निर्मल दृष्टि शान्तसी है केश बन्ध तेरा बहुत सुन्दर है इहां मेघों का छूटना कमर मध्य है तारा दृष्टि हैं अंधकार केश हैं ॥ ३६ ॥

इस प्रकार से वे असुर सायंकाल की संध्या को स्त्री सरीका समुझकर लोभितकरती जानकर स्त्री के धोखे से पकडते भये ॥ ३७ ॥

भगवान् ब्रह्माजीने गंभीर भाव से हसकर अपने आप ही को आघ्राण करती हुई कांती से गंधर्व अप्सरों के गणों को उत्पन्न किया है ॥ ३८ ॥

उस ज्योत्स्ना कांतिमयी तनुको छोड दिया तब विश्वावसु आदि गंधर्वो ने उस तनु को ग्रहण कर लिया ॥३९॥

फिर भगवान् ब्रह्माजी ने अपने आलस्य से भूत पिशाचों को पैदा किया उन पिशाचों को खुले केश वाले नंगे देखकर ब्रह्माजी ने नेत्र बंद करलिये उन भूतोंने उस आलस्य को ग्रहण किया ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

इन्द्रियाणां विक्लेदः स्रावो यया तां निद्रां प्रचक्षते येनेन्द्रियविक्लेदेन हेतुनोच्छिष्टांश्च सतो धर्षयन्ति भ्रान्तान् कुर्वन्ति तम्भूता-

सकिन्नरान् किंपुरुषान् प्रत्यात्म्येनासृजत्प्रभुः ।
मानयन्नात्मनात्मानमात्माभासं विलोकयन् ॥ ४५ ॥
ते तु तज्जगृहू रूपं त्यक्तं यत्परमेष्ठिना ।
मिथुनीभूय गायन्तस्तमेवोषसि कर्मभिः ॥ ४६ ॥
देहेन वै भोगवता शयानो बहुचिन्तया ।
सर्गेऽनुपचिते क्रोधादुत्ससर्ज ह तद्वपुः ॥ ४७ ॥
येऽहीयन्तामुतः केशा अहयस्तेऽङ्ग ! जज्ञिरे ।
सर्पाः प्रसर्पतः क्रूरा नागा भोगोरुकन्धराः ॥ ४८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

दिग्गणमुन्मादं प्रचक्षते तन्द्रा जृम्भिका निद्रोन्मादहेतुत्वेन भूतादीनां तनूनाञ्च चातुर्विध्यमुक्तम् ॥ ४१ ॥

ऊर्जस्वन्तं बलवन्तम् परोक्षेणादृश्यरूपेण ॥ ४२ ॥

आत्मनः सर्गो यस्मात्तम् यद्येन कायेन सम्प्रदानत्वनिमित्तेन कवयः कर्मकोविदाः साध्येभ्यः पितृभ्यश्च स्वपितृरूपेभ्यः वितन्वते श्राद्धादिना हव्यं कव्यञ्च ददति ॥ ४३ ॥

तिरोधानेन दृश्यत्वे सत्यप्यन्तर्धानशक्त्या ॥ ४४ ॥

प्रत्यात्म्येन प्रतिबिम्बेन आत्माभासं प्रति बिम्बमात्मनात्मनो मानः प्रतिबिम्बदर्शिनः सुन्दरस्य शिरःकम्पादिचेष्टा अत एव तत्स्रष्टानां मिथः सम्माननेन नित्यं मिथुनीभावः ॥ ४५ ॥

तत्प्रतिबिम्बरूपम् कर्मभिस्तत्पराक्रमानुवर्णनैः ॥ ४६ ॥

भोग आभोगो विस्तारः पादादिप्रसरणं तद्वता देहेन अनुपचिते वृद्धिमप्राप्ते तत् भोगक्रोधादियुक्तम् ॥ ४७ ॥

अमुतोऽमुष्माद्देहाद्ये केशा अहीयन्त प्रच्युतास्तेऽहयो जाताः प्रसर्पतः पादाद्याकुञ्चनैः प्रचलतोऽमुष्मात्सर्पाः अत एव अगा न भवन्तीति नागाः अतिवेगवन्त इत्यर्थः भोगवतो जातत्वाद्भोगेन फणेनोरुर्विस्तीर्णा कन्धरा येषाम् सर्वे चैते तत्क्रोधयोगात् क्रूराः तेषामवान्तरजातिभेदः सर्पसिद्धान्ते प्रसिद्धः ॥४८॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

जगृहुरिति सार्द्धकम् तां तन्द्रारूपां स्वकार्याभेदेन जृम्भणाख्यां निद्रारूपामुपलक्षणेनोन्मादरूपां च तनुं तत्तदावेशे ये भूतादयो धर्षयन्ति तेषां भूतादीनां गणमुन्मादकत्वादुन्मादसंज्ञं प्रचक्षते तन्द्रेति तन्द्रादिजनकत्वेन भूतादीनां चातुर्विध्यं तच्चतुष्टयजनकत्वेनैव तनूनां तत्तद्भावरूपाणां च चातुर्विध्यमुक्तमुपलक्षणतयेत्यर्थः ॥ ४१ ॥

पितृभ्योऽन्नोदकदानेन तत्कृपया पुत्रो भवति तेन च स्वस्मै अन्नं दीयते इत्यभिप्रायेणान्नवन्तमिति व्याख्यातम् ऊर्जस्साध्यमात्रोत्पादकत्वमभिप्रेत्य पक्षान्तरमाह । बलवन्तं चेति तथा च साध्या बलवन्तस्तेभ्यो हव्यदानेन बलोपलब्धिरिति भावः अदृश्यरूपेण अदृश्यकायेन तु पितृगणानसृजदित्यन्वयः ॥ ४२ ॥

येनादृश्यरूपेण कायेन दानपात्रत्वनिमित्तेन तथाचादृश्येभ्य एव पितृभ्यो पिण्डानि देयानि नतु दृश्येभ्य इत्यर्थः अत एव शान्तनुर्भीष्मात्पिण्डग्रहणार्थं स्वहस्तं प्रसारितवांस्तदा भीष्मो न ददाविति पुराणान्तरप्रसिद्धिरिति एवं साध्येष्वपि ज्ञेयम् ॥ ४३ ॥

अन्तर्धानाख्यमददादिति । अन्तर्धानशक्तिस्तेषां जाता इत्यर्थः ॥ ४४ ॥

अत एव तादृशमानवतो देहाज्जातत्वादेव ॥ ४५ ॥

तमेव ब्रह्माणमेव ॥ ४६ ॥

बहुचिन्तया सृष्टिविषयिण्या ॥ ४७ ॥

अत एव प्रसर्पद्देहजातत्वादेव केशस्खलनमप्यस्य भावमयमेव ज्ञेयम् सर्पसिद्धान्तसंज्ञके ग्रन्थे ॥ ४८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तन्द्रिरालस्यजृम्भणनिद्रोन्मादरूपश्चतुर्विधःतत्रालस्यादीनामुत्तरोत्तरं हेतुत्वं सूचयन्निद्रोन्मादयोः स्वरूपं च कथयन् भूतपिशाचानां चातुर्विध्यं तन्द्रिप्रधानत्वमाह। जगृहुरिति सार्द्धेन । तेन ब्रह्मणा विसृष्टां प्रभोर्ब्रह्मणस्तां जृम्भणाख्यां तनुं जगृहुरुपाददुः तन्द्रिचातुर्विध्यसूचनाय तदवान्तरभेदेन जृम्भणाख्यामितीनिर्देशः यया जृम्भणाख्यया इन्द्रियविक्लेदः इन्द्रियविरसत्वमिन्द्रियवैक्लव्यं भूतेषु दृश्यते तां निन्द्रां प्रचक्षते इत्युत्तरान्वयः येनेन्द्रियविक्लेदेन उच्छिष्टानपरिशुद्धान् धर्षयन्ति सहन्ते स्वार्थे णिच् तं धर्षमुन्मादमिति प्रचक्षते भूतपिशाचा अप्येतच्चतुर्विधतन्द्रिप्रधाना इति भावः ॥ ४१ ॥

प्रभुर्भगवानजो ब्रह्मा आत्मानमूर्जस्वन्तं बलवन्तं मन्यमानः साध्यान् गणान् गुणगुणिनोर्भेदान्विवक्षया सामानाधिकरण्यनिर्देशः पितॄणां गणांश्च परोक्षेणाभिमुखानसृजत् ॥ ४२ ॥

आत्म सर्गमात्मनां साध्यानां पितॄणां च सर्ग उत्पत्तिर्यस्मात्तं तत्कार्यं ब्रह्मणा ऊर्ध्वं पितरः प्रतिपेदिरे पितर इति साध्यानामप्युपलक्षणमूर्जस्वन्तोऽभूवन्निति भावः अतएवोर्जस्वमिच्छद्भिस्ते इज्यन्त इत्याह।कवयः कर्मकुशलाः साध्येभ्यश्च पितृभ्यश्च यद्यदूर्जे वितन्वते यज्ञैराराधयन्ति साध्यान् संसाधको विशेष

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

मन्तुं तन्वन्द् पितृन् यजेदिति द्विनीयस्कन्धोक्तरीत्या विदुपतित्व-मन्ननिवृद्ध्यादिभिरात्मनो बलसम्पादनाय साध्यान्पितृंश्च यज-न्तीत्यर्थः यद्वा ऊर्ज्जं प्राणनं प्रकृष्ट जीवनं तद्वन्तं मन्यमानः साध्या-न्तीत्यर्थः यद्वा ... हीनमृतवत एव पितृपतित्वमन्तर्ध्यादिभिरिहामुत्र च प्राणन-मिच्छन्निरिज्यन्त इत्यर्थः ॥ ४३ ॥

स ब्रह्मा तिरोधानेन स्वेनादृश्यत्वशक्त्या सिद्धान्विद्या-धरांश्चासृजत्तेभ्यः सिद्धविद्याधरेभ्यः तमन्तर्द्धानाख्यमात्मानं कायमद्भुतमाश्चर्यं ददौ तेऽन्तर्द्धानाख्यशक्तिप्रधाना अभूवन्नि-त्यर्थः ॥ ४४ ॥

प्रभुर्ब्रह्मात्माभासमात्मप्रतिबिम्बं विलोकयन् तमात्मानं प्रति-बिम्बरूपं कायं मानयन् प्रत्यात्म्येन प्रतिबिम्बेन किन्नरसहितान् किं पुरुषानसृजत् ॥ ४५ ॥

तेतु किन्नरादयः परमेष्ठिना यत्त्यक्तं तत्प्रत्यात्मरूपं कायं जगृहुस्तत एव ते किन्नराः किंपुरुषाश्च परस्परं मिथुनीभूय बिम्बप्रतिबिम्ब योर्यादृशाभिमानस्तमाभमानं कृत्वा तमेव ब्रह्माणमुषसि कर्म-भिस्तच्चेष्टितस्तुतिरूपैस्ते गायन्तो बभूवुः आत्मभासं विलोक-यन्निति पाठेत्वात्मभासं स्वप्रकाशं विलोकयंस्तमात्मानं स्वविशेष-णत्वेन स्वाभिन्नं मन्यमानस्तेन प्रत्यात्म्येनात्मप्रकाशेनासृजदिति एत-त्सृष्टा गानाख्ये कर्मणि परस्परं गुणप्रधानभावेनाभि-न्नप्रयोजनात्मनो मत्वा मिथुनीभूय गायन्तो बभूवुरित्यर्थः ॥ ४६ ॥

भोगवता सौकुमार्यवता दैर्घ्यवता देहेन बहुचिन्तया शयानः सर्गोऽनुपचितेऽप्रवृद्धे सति क्रोधात्तद्वपुः भोगक्रोधबहु-चिन्तारूपं वपुः उत्ससर्ज ह ॥ ४७ ॥

अमुतः भोगवतो देहाद्ये केशा अहीयन्त प्रच्युताः ते केशा अहयो जज्ञिरे अङ्ग हे विदुर ! प्रसर्पतः पादाद्याकुञ्चनैः प्रचलतोऽ मुष्माद्देहात् सर्पाः प्रजज्ञिरे प्रसर्पतो जातत्वात्ते नागा न गच्छन्ती त्यगा न अगा नागा अतिवेगा इत्यर्थः क्रोधात्त्यक्तकायाज्जातत्वात् क्रूराः बहुचिन्ताक्रान्ता भोवतो जातत्वाद्भोगाः सुखस्पर्शदे-हा दीर्घाश्च शयानाज्जातत्वाद्दीर्घकन्धराः ॥ ४८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तस्याः स्वभावलक्षणमाह । निद्रादीति । विक्लेदो वैकल्यं तया तन्वोच्छिष्टन् प्रमत्तान् देहिनो धर्षयन्ति स्वचेष्टादिविशे-षाद् कारयन्ति तं चेष्टाविशेषमुन्मादं प्रचक्षते तज्ज्ञा इति शेषः

व्यसृजन्मलवद्देहं बाह्यं ननु निजं पुरा ।
ब्रह्मा तच्चाहरादित्वं प्राप देवादिदैवतम् ॥

इति वचनात् बाह्यमेव प्रभादिशरीरं त्यजति ब्रह्मा ननु निजं देहमितिज्ञायते पुरा सृष्टिसमये ॥ ४१ ॥

स्वयंग्यात्मदानेन तृप्ताः साध्यादिगणाः पितृपिशाचादि-महदोषं निवारयन्त्यतस्तत्सर्गानन्तरं साध्यादिगणसृष्टिं वक्ति । ऊर्जं स्वन्तीमति । अनेन प्रेतादिग्रहाणां मुख्याधिकत्संयामिति दर्शितम् ऊर्जस्वन्तं साराञ्चवन्तम् ॥

ऊर्जं साराश्चमुद्दिष्टं तदेव पितृभक्षणमितिच ।

नाम्ना परोक्षेण देहेन अत एवाद्यापि मांसदृष्टचगोचरेभ्यः पित्रादिभ्यस्तत्पुष्ट्यै पिण्डादिकं प्रयच्छन्ति ॥ ४२ ॥

आत्मनः सर्गः सृष्टिर्यस्मात्स आत्मसर्गस्तं यत्साराञ्चं वित-न्वते बलिहरणादिना विस्तृत्य वितरन्ति ॥ ४३ ॥

सिद्धादीनां साध्याद्यवरत्वादनन्तरं तत्सर्गमाह । सिद्धानिति । नाम्ना तिरोधानेन कायेन अन्तर्धानाख्यमन्तर्धानापरपर्यायमात्मानं देहमिति तस्मादद्भुतमदृश्यहेतुत्वादिनरेषां वरादिना अदृश्यत्व-मेतेषां स्वत एवेति विशेषः हरशक्तेरचिन्त्यत्वादिति भावः ॥ ४४ ॥

स्वबोधनविडम्बनाय स्वसन्निकृष्टपुरुषसृष्टेः प्राशस्त्यबुद्धि जननाय च पुरुषाभाससृष्टिमाह । सकिन्नरानिति । "किं प्रश्नाक्षे-पकुत्सायां नितर्काभामगोचर" इतिवचनात् किन्नराभासान् किं पुरुषान् पुरुषाभासान् आत्मना रूपेण कायेनासृजदित्यन्वयः येन भावेन ब्रह्मा पदार्थान् सृजति स चेष्टादिलक्षणो भावस्तेषामौत्प-त्तिकतया यावच्छरीरं वर्तत इत्यनन्तं भावं दर्शयतीत्याह । मानयन्निति । आत्मना मन आदिना आत्मानं स्वशरीरं गन्धपुष्पा-दिभिर्मानयन् पूजयन् दर्पणादिना आत्माभासं स्वच्छायां विलो-कयन्नसृजदिति पूर्वेणान्वयः अयं न्यायः पूर्वत्रोत्तरत्र चानुसं-धेयः ॥ ४५ ॥

परमेष्ठिना त्यक्तं तं किन्नरास्तद्रूपं स्वभावलक्षणकमाकारं जगृहुरित्यन्वयः ॥

रूपं शब्दे पशौ श्लोके ग्रन्थावृत्तौ हितादिषु ।
सौन्दर्ये च स्वभावेचेत्यभिधानम् ॥

तेषां कृत्यमाह । मिथुनीभूयेति । तं ब्रह्माणं कर्मभिश्चरितैः पद्यादिना ग्रथितैः अनेन पक्षिणां सृष्टिरपि व्याख्याता किन्नरा-दीनां मुखस्यैव नराकारत्वादण्डजत्वाविशेषात् ॥ ४६ ॥

सर्पादिसृष्टिप्रकारं वक्ति । देहेनेति । भोगवता सर्पशरीराका-रवता देहेन शयानो ब्रह्मा प्रजासर्गे अनुपचिते अलं भावर-हित बहुचिन्तया जातात्क्रोधात्तद्वपुरुत्ससर्ज हि शब्दो हेत्वर्थः यस्मात्क्रोधादस्राक्षीत्तस्माद्दीषदुपद्रुताः क्रुद्धाः सर्वान् लोकानु-पद्रवन्तीति ॥ ४७ ॥

एकस्माद्देहादुत्पन्नानामवान्तरभेदमाह । य इति । अमुतः अमुष्मा-च्छरीरात् केशा अहीयन्त त्यक्ता आसंस्तेऽहयो जज्ञिरे इत्यन्वयः क्रियापदस्य सुबन्तत्वं यदश्वत्तस्मादश्व इति वेदे दृष्टत्वादुक्तं विसर्पतो विविधसर्पणात्सर्पाः तत्स्वभावमाह । क्रूराः क्षिप्रं क्रोध-शीलत्वात् न गच्छन्तीत्यगा अगा न भवन्तीति नागाः क्षिप्रग-न्तृत्वात् तल्लक्षणमाह । भोगोरुकन्धरा इति । भोगबहुल्यो बृहत्यः कन्धरा येषां ते तथा भित्तिप्रदीपन्यायेनोरुशब्द उभयत्रान्वेतव्यः उरुभोगाश्चोरुकन्धराश्चोरुभोगोरुकन्धराः ॥

उरुभोगाय विद्महे महाकण्ठाय धीमहि ।
तन्नो नागः प्रचोदयादिति ॥

जाङ्गलिकतन्त्रे ॥ ४८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

जगृहुरिति सार्द्धकम् । अत एवाभेदेनाह । जृम्भणाख्यां निद्रामि-ति च । धर्मस्यैव प्राधान्यविवक्षया मत्वर्थीयश्च नाम्न कृतः । तमिन्द्रियविक्लेदं यमुन्मादं प्रचक्षते तत्रोन्मादोऽपि भवतीति तदभेदेन तमपि निर्दिशन्तीत्यर्थः ॥ ४१ ॥

ऊर्जस्वन्तं वरदानेनोत्साहादिलक्षणसत्त्वयुक्तम् ॥ ४२ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

त इति । तद्युक्तमेव ज्ञात्वा तेभ्यो ददतीति यत् येन खलत्वेन कायेनैव हेतुना ॥ ४३—४७ ॥

ये इति । केशस्खलनमप्यस्य भावमयमेव ज्ञेयम् ॥ ४८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

निमीलनेन उन्मादो गण उत्पन्न इति तनुद्वयं च त्यक्तं तत्रैकस्या विनियोगमाह । जगृहुरिति । भूतपिशाचा एव तां जगृहुः विशेषेण सृष्टा विसृष्टेति योगेन पूर्ववद्गृहणमपि सूचितं विसृष्टां त्यक्ता तयोर्भेदार्थे पूर्वस्या नामाह । जृम्भणाख्यामिति । आलस्यनिद्रायां हि समागतायां जृम्भा भवतीति असमीचीनाया अपि ग्रहणे हेतुः । प्रभोरिति । द्वितीयां पूर्वसन्दिग्धामिदानीं वक्ष्यति । निद्रामिति । निद्रा एव तनुर्द्वितीया पूर्वा तु जृम्भणाख्या तस्या देवतारूपाया निद्रायाः कार्यद्वारा लक्षणं निरूपयति । इन्द्रियविक्लेदो यया भूतेषु दृश्यत इति । निद्रया हि इन्द्रियाणि सर्वाणि लीनानि भवन्ति स्रवन्ति च निद्रया तयैवाधिदैविकया चक्षुःस्रावादिकमपि भवति अतस्त्रिविधमपि कार्यमिन्द्रियविक्लेदशब्देनोच्यते तां ये गृहीतवन्तस्तानाह । येनोच्छिष्टानिति । "येनोच्छिष्टान् धर्षयन्ति तमुन्मादं प्रचक्षते" गणाः सूचितवन्तः येन सा गृहीतेत्यर्थादुक्तं उच्छिष्टा भवन्ति तांस्ते धर्षयन्ति तत्तेन कारणेन तं गणमुन्मादं प्रचक्षते उद्गतो मादो यस्येति उन्मत्ता एव ज्ञानवर्हितान् धर्षयन्ति अतस्तं गणमुन्मादं प्रचक्षते यद्वा भूतपिशाचा एव जृम्भणाख्यां निद्रां च गृहीतवन्तः निद्रया द्वितीयतन्वा उत्पादितं गणं धर्षणार्थं करणत्वेन गृहीतवन्तः तथासति स गणः पिशाचमध्य एवान्तर्भूतो ज्ञेयः धर्षयन्ति पिशाचाः आचक्षते अभिज्ञाः ॥ ४१ ॥

राजसीं सृष्टिमाह । ऊर्जस्वन्तमिति । इडोर्जः शब्दौ शक्तिविशेषवाचकौ इन्द्रियाणां विषयग्रहणसामर्थ्यविशेषसम्पादिका आत्मनिष्ठा शक्तिः विचारकारणभूता च ऊर्जः शब्देनोच्यते क्षुत्पिपासाभिर्वृद्धिकर्त्री तु शक्तिः इट्शब्देनोच्यते अत एव शाखाच्छेदने एतं कामये इषेत्वोर्ज्जे चेति एते शक्ती भगवत एव जीवे ओषधिवनस्पतिषु च प्रतिष्ठिते ऊर्ग्वा अन्नाद्यं दधि ऊर्ग्वा उदुम्बर इति च इषे प्राणाय ऊर्जेऽपानायेति च यस्तु ऊर्ग्युक्तः स ऊर्जस्वान् यदैवं ब्रह्मणोऽभिमानो जातः भगवानिति मूलसम्बन्धज्ञापकः अज इत्यभिमाने हेतुः अन्यथा भगवान् सर्वरूपो नात्मानं तथाभिमन्यते तदापरोक्षेण भावेन साध्यान् गणान् पितृगणांश्चासृजत् अदृष्टं सर्वं परोक्षमत एव "साध्या अतिरिक्तभागिनो जाताः पितरश्च न्युब्जभागिनः परोक्षभागिनश्च लोका" इति श्रुतेः अत उभयेषां सृष्टिरदृष्टैव कृता तथा सृष्टौ सामर्थ्ये प्रभुरिति ॥ ४२ ॥

तामपि तनुं विससर्ज । तेन्वात्मेति । अत एव ते उभये आत्मसर्गं स्वोत्पादकं तस्य ब्रह्मणः कायं शरीरं मुख्यतया परितः प्रतिपेदिरे लोकेऽत्यन्तं पितर एव सिद्धा इति तेन शरीरेणोभयेषां विनियोगमाह । साध्येभ्यश्च पितृभ्यश्चेति । यद्येन शरीरेण वितन्वते लोका आर्तारिकेन श्राद्धेन च ॥ ४३ ॥

पुनस्तृतीयं गुणत्रयसर्गमाह । सिद्धानिति । एते सात्त्विकाः सिद्धा ज्ञानसिद्धाः विद्याधराः कर्मसिद्धाः उभयानपि तिरोधानेनैवासृजत् तिरोधानविद्यारूपो यो भावः तेनासृजदित्यर्थः तां च तनुं पूर्ववन्न त्यक्तवान् किन्तु तेभ्यो दत्तवानित्याह । तेभ्य इति । आत्मानं देहमददात् असन्देहार्थं तस्य नामाह । अन्तर्द्धानमित्याख्या यस्य अद्भुतामिति स्वतो दाने हेतुः ॥ ४४ ॥

राजसीमाह । स किन्नरानिति । किन्नराः किंपुरुषाश्च देवगायकाः तान् प्रत्यात्म्येन प्रतिबिम्बेनासृजत् प्रभुरिति पूर्ववन्न प्रतिबिम्बमात्रेण तेषां सृष्टिः किन्तु सन्मानपुरःसरमित्याह । मानयन्निति । आत्मना प्रतिबिम्बरूपेण आत्मानं बिम्बरूपं मानयन्नसृजदिति सम्बन्धः लोकोऽपि दर्पणादौ मुखं पश्यन्नात्मानं बहु मन्यते किंच नापि सन्माननमात्रसाहित्येन किन्त्वाभासं विलोकयन्नेवासृजत् तेन दर्शनेन सन्मानेन सहितप्रतिबिम्बेनासृजदित्यर्थः ॥ ४५ ॥

तेन कार्ये त्रिरूपता जातेत्याह । ते त्विति । इदं रूपं ब्रह्मणा त्यक्तमेव यतः स परमेष्ठी परमां निष्ठां प्राप्तवानिति "तेन स परमां काष्ठामगच्छत्" इति श्रुतेः ततो यज्जातं तदाह । मिथुनीभूयेति । ते उभयेऽपि स्त्रीपुरुषरूपेण जाताः मानवस्यायं धर्मः उषसि च प्रातःकाले कर्मभिर्ब्रह्मकृतैरुत्कर्षेणाभिः मिथुनीभूयैव रसाभिव्यक्त्यर्थं तमेव ब्रह्माणं गायन्तः जगृहुरिति सम्बन्धः गानं दर्शनकृतम् ॥ ४६ ॥

तामसीं सृष्टिमाह । देहेनेति । भोगवता स्थूलेन देहेन भोगो विषयोपभोगः तद्वान् स्थूलो भवत्येव इदं लोकप्रसिद्धमिति वै निश्चयेनेत्युक्तं बहुचिन्तया शयानो जातः पतित्वा स्थित इत्यर्थः चिन्तायां हेतुः सर्गोऽनुपचित इति कामस्यापूर्त्तौ क्रोधो जातः क्रोधाच्च तद्वपुरुत्ससर्ज ॥ ४७ ॥

त्यक्तात्तद्वपुषः सृष्टिर्जातेत्याह । येऽहीयन्तेति । अमुतः शरीरात् ये केशा अहीयन्त अनेन क्रोधात् स्वकेशाकर्षणमपि कृतवानिति ज्ञायते त एव केशा अहयो जाताः अहयः सर्पाः नागा इत्यवान्तरभेदः "क्रियावन्तोऽफणाद्याश्च सफणास्तु तथापरे। नागा अजगराः प्रोक्ताः मध्यमाः सविषाः स्मृताः"। यतः अहीयन्त अतः अहयः क्रोधात् यद्धावनं कृतवान् ततः प्रसर्पतो देहात् ये जाताः ते सर्पाः पतितात् क्रियारहिताद्ये जाताः ते नागाः स्थूलाकारात् देहात् क्रियारहितात् यज्जाताः अतः भोगोरुकन्धराः महान् भोगः उरु कन्धरा च येषां कन्धराः फणस्थानानि उरुशब्दस्य मध्ये प्रयोगादुभयसम्बन्धः भोगार्थं वा उरुकन्धराः भोगापेक्षया वा ॥ ४८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यया निद्रया भूतेषु मनुष्यादिषु इन्द्रियाणां मुखादीनां विक्लेदः येन चाविक्लेदेन हेतुना उच्छिष्टान् सतो धर्षयन्ति तत् धर्षणमुन्मादं प्रचक्षते अत एव भूतप्रेतादिधर्षिता जना उन्मत्ता उच्यन्ते ॥ ४१ ॥

कदाचिदात्मनो बलिष्ठत्वं पारोक्ष्यञ्च भावयामास ताभ्याञ्च साध्याः पितरश्च बभूवुस्ते च हव्यकव्ये बभूवतुरित्याह । द्वाभ्याम् । ऊर्जस्वन्तं सत्त्ववन्तं तेन सत्त्वेन साध्यान् गणान् परोक्ष्येण पारोक्ष्येण च पितृगणान् ॥ ४२ ॥

ते साध्याः पितरश्च तं कायमनुरूप..त्यर्थः । यद्यतो हेतो-

स आत्मानं मन्यमानः कृतकृत्यमिवात्मभूः ।
तदा मनून् ससर्जान्ते मनसा लोकभावनान् ॥ ४९ ॥
तेभ्यः सोऽत्यसृजत्स्वीयं पुरं पुरुषमात्मवान् ।
तान् दृष्ट्वा ये पुरा सृष्टाः प्रशशंसुः प्रजापतिम् ॥ ५० ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

वितन्वते साध्येभ्यो हव्यमन्नं पितृभ्यः कव्यमन्नं श्राद्धादिना सम र्पयन्तीत्यर्थः ॥ ४३ ॥

कदाचित् स अन्तर्द्धानं भावयामास तस्माच्च सिद्धविद्याधरा बभूवुरित्याह । सिद्धानिति ॥ ४४ ॥

आत्मनः प्रतिबिम्बं भावयामास तस्माच्च किन्नरकिंपुरुषा बभूवुरित्याह । स किमिति । प्रत्यात्म्येन प्रतिबिम्बेन अहं सुन्दर इत्या त्मनैवात्मानं मानयन् आत्माभासं सुन्दरम् ॥ ४५ ॥

तत्प्रत्यात्मं स्त्रीपुंसयोः पारस्परिकदर्शनरूपमभूत्तस्तेऽपि तदेव जगृहुरित्याह । तेस्विति ॥ ४६ ॥

मनसैव शयानं देहं तत्याज सचाहिसर्पादिरूपो बभूवेत्याह । देहेनेति । भोग आभोगो विस्तारस्तद्वता पादादिप्रसारणवतेत्यर्थः । बहुचिन्तया सर्गे अनुपचिते सति कथं मे सृष्टिः सिद्ध्येदिति भावनया । ततश्च चिन्तामध्य एव कश्चिदविवेकोऽभूत् यतो महान् क्रोधो बभूव क्रोधानन्तरं तद्वपुः उत्ससर्ज ॥ ४७ ॥

अमुतः अमुष्माद्देहात् ये केशा अहीयन्त विच्युतास्ते अहयो जाताः प्रसर्पतः पादाद्याकुञ्चनैः प्रचलतोऽमुष्माद्देहाद्येहस्तपादाद्या विच्युतास्ते सर्पाः ये च मुण्डकन्धराद्यास्ते नागाः कीदृशाः भोगवतो जातत्वात् भोगेन फणेन उरु विस्तीर्णा कन्धरा येषां ते सर्वे च क्रोधयोगात् क्रूरास्तेषामवान्तरजातिभेदः सर्पसिद्धान्ते प्रसिद्धः ॥ ४८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ततेन भगवता विसृष्टां तां तन्द्रां ते एव भूतादयो जगृहुः यया इन्द्रियाणां विक्लेद आस्रवः दृश्यते तां मनुष्यादिषु विजृम्भणाख्यां निद्रां च प्रचक्षते येनेन्द्रियविक्लेदेन हेतुना उच्छिष्टान् मनुष्यादीन् धर्षयन्ति भ्रान्तान् कुर्वन्ति ते एव भूतादयः तमिन्द्रियविक्लेदमुन्मादं विचक्षते भूतादिगणं वा ॥ ४१ ॥

ऊर्जस्वन्तमदृश्यतापादकबलवन्तम परोक्षेण अदृश्यरूपेण ॥ ४२ ॥

आत्मसर्गं स्वजनकम् यत् येन कायेन सम्प्रदानत्वनिमित्तेन कवयः वितन्वते श्राद्धादिना हव्यं कव्यं च ददति ॥ ४३ ॥

तिरोधानेन अन्तर्धानशक्त्या ॥ ४४ ॥

प्रत्यात्म्येन प्रतिबिम्बेन । आत्माभासं प्रतिबिम्बम् ॥ ४५ ॥

तत्प्रतिबिम्बात्मकं रूपम् तं परमेष्ठिनम् कर्मभिस्तत्पराक्रम वर्णनैः ॥ ४६ ॥

सर्गे अनुपचिते अप्रवृत्ते सति बहुचिन्तया भोगवता शयन वशाद्दैर्घ्यवता देहेन शयानः तद्दैर्घ्ययुक्तं वपुः क्रोधात् उत्ससर्ज ॥ ४७ ॥

हे अङ्ग ! विदुर अमुतः दैर्घ्यक्रोधबहुचिन्तायुक्तादमुष्माद्देहात् ये केशा अहीयन्त प्रच्युताः ते अहयो जज्ञिरे जाताः प्रसर्पतः उत्सर्जनवेलायां प्रचलतः सर्पाः अतिवेगाज्जज्ञिरे उत्सृष्टाद्वचलात् नागा गतिहीना अजगरा जज्ञिरे भोगवतो जातत्वात् भोगेन दीर्घेण शरीरेण सहिता उरु बहु विस्तीर्णा कन्धरा येषां ते स्थौल्ययुक्तदीर्घशरीरकन्धराः जज्ञिरे क्रोधांशात् ये जाताः ते विशेषतः क्रूरा इत्यर्थः ॥ ४८ ॥

---

भाषाटीका

हे प्रभो ! ब्रह्माजीकी छोडी उस तनुको भूत प्रेतोंने ग्रहण किया जिसका जृंभणा ऐसा नाम है उसी के निद्रा आलस्य इत्यादिक भी नाम है जिससे भूतों में इन्द्रियों का विक्लद दीखता है जिस दोष से उच्छिष्टों को डराते हैं तिस को उन्माद कहते हैं ॥ ४१ ॥

कभी भगवान् ब्रह्मा ने अपने आत्माको बलवान समझा तब अदृश्यरूप होकर साध्यगणपितृगण इन को ब्रह्मा ने सृजा ॥ ४२ ॥

तब उन साध्यों ने अपने उत्पत्ति का कारण उस शरीर को ग्रहण किया जिस शरीर से साध्य तथा पितरों को सब लोग कविजन हव्यकव्य देते हैं ॥ ४३ ॥

तिरोधान रूप से ब्रह्माजी ने सिद्ध विद्याधर इनको पैदा किये फिर उनको अंतर्धान नामक वह शरीर ब्रह्माजी ने दिया ॥ ४४ ॥

कभी ब्रह्माजी दर्पण मे अपने प्रतिबिंबको देखकर अपने को सुंदरमान कर उस प्रतिबिंब से किंनरकिंपुरुषों को सृजते भये ॥ ४५ ॥

तब ब्रह्मा का छोडा प्रतिबिंबरूपको उनने ले लिया फिर स्त्री पुरुष दोनो सब मिल कर प्रातः काल से ब्रह्मा के कर्मों से गान करने लगे ॥ ४६ ॥

फिर भोगवाले देह से बहुत चिंता से शयन करके सर्ग की जब वृद्धि नहीं हुई तब ब्रह्माजी ने भी क्रोधसे शरीर को छोडदिया ॥ ४७ ॥

हे विदुरजी ! इस शरीर में से जो गिरे उन मे से सर्प भये अही भये पादादिकों के चलाने से सर्प भये नाग बडे कन्धरावाले भये ॥ ४८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यदा मन्यमानोऽभूत्तदा मनून् ससर्ज ॥ ४९ ॥

तेभ्यः स्वीयं पुरुषं पुरुषाकारं पुरं देहमत्यसृजद्ददौ तान् मनून् ॥ ५० ॥

अहो एतज्जगत्स्रष्टः ! सुकृतं वत ते कृतम् ।
प्रतिष्ठिताः क्रिया यस्मिन् साकमन्नमदाम हे ॥ ५१ ॥
तपसा विद्यया युक्तो योगेन सुसमाधिना ।
ऋषीनृषिर्हृषीकेशः ससर्जाभिमताः प्रजाः ॥ ५२ ॥
तेभ्यश्चैकैकशः स्वस्य देहस्यांशमदादजः ।
यत्तत्समाधियोगर्द्धितपोविद्याविरक्तिमत् ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
पारमहंस्यां संहितायां वैयासिक्यां
विंशतितमोऽध्यायः ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ते त्वया यत्कृतं तत्सुकृतम् । सुकृतत्वमाहुः । यस्मिन्मनुसर्गे क्रिया अग्निहोत्राद्याः अतोऽस्मिन्सर्वे वयं साकं सहान्नं हविर्भागाद्यदाम भक्षयाम हे ब्रह्मन् ! ॥ ५१ ॥

कायसृष्टिमुक्त्वा ऋषीणां सृष्टिमाह । तपसेति । विद्या उपासना योगोऽत्रासनादिः सुसमाधिर्वैराग्यैश्वर्यादियुक्तः समाधिः तेन च युक्तः हृषीकेशः स्ववशेन्द्रियः सन् ऋषिर्ब्रह्मा ऋषीन्प्रजाः ससर्ज ॥ ५२ ॥

किं तद्देहं यस्यांशमदादित्यत आह । यदिति । समाधिश्च योगश्च ऋद्धिश्च ऐश्वर्यं तपश्च विद्या च विरक्तिश्च विद्यन्ते यस्मिंस्तत् ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
विंशोऽध्यायः ॥ २० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या
दीपिकाटिप्पणी ॥

कृत्यस्य परमार्थत्वाभावादिवेत्युक्तम् लोकभावनान् कर्मणा सर्वलोकोद्भवहेतून् ॥ ४९ ॥

आत्मवान् समष्टिजीवत्वात्सर्वाश्रयः आत्मन इति पाठे परमात्मनः प्रकाशस्थानं "पुरुषत्वे चाविस्तरामात्मा,, इति श्रुतेः ॥ ५० ॥

अतः प्रतिष्ठितक्रियाश्रयत्वात् ॥ ५१ ॥

कर्मिणां सृष्टिकर्तॄणां मनूनां सृष्टिकार्य्येति लेखकभ्रमः ॥ ५२ ॥

यत्समाध्यादिमत् तत्तस्य स्वस्य देहस्यांशं समाध्यादिकमेवादादित्यन्वयः ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीराधारमणदासगोस्वामिविरचितदीपिन्याख्य
दीपिकाटिप्पण्यां
विंशोऽध्यायः ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स आत्मभूर्यदात्मानं कृतकृत्यमिव मन्यमान आसीत्तदा अन्ते साक्षात्स्वकर्तृकसर्गान्ते मनसा लोकभावनान् प्रजासृष्टृन्मनूनसृजत् ॥ ४९ ॥



तेभ्यो मनुभ्यः स ब्रह्मा आत्मनः स्वस्य पुरुषं पुरुषाकारं पुरं देहमत्यसृजद्ददौ आत्मवत्पुरुषाकारदेहविशिष्टानकरोदित्यर्थः पुरा पुरुषाकारदेहेन तद्विशिष्टत्वेन रूपेणेत्यर्थः ये पुरा सृष्टा इति हेतुगर्भं यतः पुरुषाकारदेहविशिष्टत्वेन सृष्टा अतस्ते पुरं दृष्ट्वा प्रजापतिं प्रशशंसुः ॥ ५० ॥

प्रशंसामेवाह । अहो इति हे जगत्स्रष्टः ! ते त्वया कृतं निर्मितं एतत्पुरुषाकारं शरीरमहो सुकृतं सुष्ठुकृतं यस्मिन् पौरुषे देहे क्रियाः स्वर्गापवर्गसाधनभूताः क्रियाः प्रतिष्ठिताः सर्वाः क्रियाः पौरुषशरीरसाध्या इत्यर्थः अतः साकं पौरुषशरीरेण सहान्नं भोग्यजातमदामहेऽनुभवेम ॥ ५१ ॥

विद्या भगवदुपासना तपः विवेकादिसाधनसप्तकं ताभ्यां युक्तः हृषीकाणां व्यष्टीन्द्रियाणामीशः जितेन्द्रियः ऋषिर्ब्रह्मा योगेन प्रकृतिविविक्तात्मयाथात्म्यज्ञानयोगेन समाधिना चित्तैकाग्र्येण च ऋषीन् ऋषिरूपा अभिमताः प्रजाः ससर्ज ॥ ५२ ॥

अजः ब्रह्मा स्वस्य देहस्य शरीरस्य एकैकमंशं तेभ्य ऋषिभ्योऽदाद्ददौ किन्तच्छरीरं यस्यैकैकमदादित्यत आह । यच्छरीरं तपोविद्यासमाधियोगाः पूर्वोक्ताः ऋद्धिरणिमाद्यैश्वर्यं विरक्तिर्विषयेषु निःस्पृहत्वमेभिर्युक्तमित्यर्थः ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
विंशोऽध्यायः ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सृष्टानां सर्वेषां सर्वकर्माधिकारित्वेनोपकारकत्वेन मनुसृष्टिमाह । स आत्मानमिति । यदात्मभूर्ब्रह्मात्मानं देहं कृतकृत्यमिव मन्यमानोऽभूत्तदन्तेऽवसाने मनःपूर्वकं लोकभावनान् लोकवृद्धिकरान् मनून् ससर्ज स परः पुरुषो ब्रह्मात्मनस्तं देहं तेभ्यो व्यसृजदित्यन्वयः सर्वस्याः सृष्टेरियं सृष्टिः प्रशस्तेति भावेनाह। तां दृष्ट्वेति । ये पुरा सृष्टा देवास्ते तां मनुसृष्टिं दृष्ट्वा हो इति प्रजापतिं प्रशशंसुः ॥ ४९ ॥ ५० ॥

एतदेव विवृणोति । एतादिति । हे जगतः स्रष्टस्ते तवैतत्कृतं कर्म सुष्ठु कृतं पर्याप्तमितोऽधिकं नास्तीत्यर्थः वतेत्यनेन ता अनु-

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु सुकृतं बतेति श्रुतिर्मानमिति किंच यस्मिन्मनुसर्गे यागादिक्रियाः प्रतिष्ठिताः ततः प्रयोजनमाह । साकमिति । तैर्दत्तमन्नं भवता साकमदामहे तेनास्मत्प्रसादात्तेषामपि महतो प्रजावृद्धिः स्यादित्यदामहे इति व्यत्ययेन प्रयोजनमसूचि ॥

दृष्ट्वा तु पौरुषीं सृष्टिं देवाः सुकृतमूचिरे ।

इत्यनेन ये पुरा सृष्टा असुरास्ते तां सृष्टिं दृष्ट्वा प्रजापतिं प्रशशंसुरित्यपव्याख्यानं प्रत्युक्तं देवसृष्ट्यनन्तरत्वाच्च ॥ ५१ ॥

सुरसृष्टेः प्रथमतः कृतमप्यृषिसर्गं देवासुरादिसाधारणत्वप्रकटनाय तत्सर्गं पश्चादुक्ति । तपसेति । हृषीकेशो ब्रह्मान्तर्यामी तप आदिना युक्तः सर्वस्मादादौ सर्वाभिमताः प्रजा ऋषीन् ससर्जेत्यन्वयः सर्वत्रापि श्रीनारायण एव ब्रह्मान्तर्यामित्वेन स्रष्टा नान्य इति प्रकाशनाय हृषीकेश इति भगवत्येव रूढं नाम प्रायोजीति ज्ञातव्यमभेदाभिप्रायेण किं न स्यादिति चेन्न दैत्योपद्रवे तत्परिहाराय ब्रह्मणा क्रमेण विष्णुशरणोपगतेरुक्तत्वात् ॥

यत्रापि तु हरेर्नाम तदन्यत्र प्रयुज्यते । तदान्तरहरेस्तत्र गृहीतिर्नान्यथा भवेत् । स्वातन्त्र्यादवरत्वं च परस्यापि प्रयुज्यते । स्थितस्यापि यथा राज्ञः स्वानां जयपराजयौ ॥

इत्यनेन मुख्यार्थानुपपत्तावमुख्यार्थोपपत्तेः सिद्धत्वात् ॥ ५२ ॥

अजो ब्रह्मा यत्तत्स्वशरीरं समाधियोगपूर्तिमत्तपोविद्याविरक्तिमच्च तस्य शरीरस्यैकैकांशं समाध्यादिकं तेभ्य ऋषिभ्यः प्रादादित्यन्वयः ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां
विंशोऽध्यायः ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

कृतकृत्यमिवेति इव शब्दात् कृतं पूर्वंकृत्यमित्यर्थः । मनून् मनुष्यान् लोकभावनान् कर्मणा सर्वलोकोद्भवहेतून् अत एव श्रीमनोः प्रजा भविष्यन्ति ॥ ४९ ॥

तेभ्य इति आत्मवान् परमाश्रयः सन्नित्यर्थः आत्मनः इति पाठस्तु प्रायो दृश्यते । तत्र परमात्मनः पुरं प्रकाशस्थानमित्यर्थः ॥ ५०—५३ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
विंशोऽध्यायः ॥ २० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं नवविधां सृष्टिमुक्त्वा स्वस्य गुणातीतभावनया काश्चित् सृष्टिं कृतवान् तामाह । स आत्मानमिति ।

यदैव पुरुषः स्वस्मिन् गुणातीते च तिष्ठति ।
तदैव कृतकृत्योऽहमित्यात्मानं स मन्यते ॥

इवेतिभावनया तथात्वात् एवं भावे हेतुः आत्मभूरिति आत्मनो भगवतः सकाशाज्जातः तदा मनून् ससर्ज मनसा शरीरस्थानीयेन मनवोऽत्र चतुर्दशमुख्याः अन्येऽपि बहवः तद्विधाः स्वसृष्टेरन्तेनातः परं ब्रह्मणः सृष्टिः ऋषिसृष्टिस्तु वेदात्मकभगवतः एतेषामुत्कर्षमाह । लोकभावनानिति । लोकानुभावयन्ति धर्मादिभिरिति ॥ ४९ ॥

तदा ब्रह्मा स्वस्य सामर्थ्यं तेभ्यो दत्तवानित्याह । तेभ्य इति । पुरं ब्रह्माण्डात्मकं तदेव तेभ्यः कायतो विभज्य दत्तवान् यतः स पुरुषः ते हि पुरं पालयिष्यन्ति स्वयं शयिष्यत इति तदा बहवो मनवो ब्रह्मस्थानीया जाता इति पूर्वसृष्टानां सुखं जातमित्याह । तान् दृष्ट्वेति । येमन्वपेक्षया पुरा सृष्टाः ते प्रजापतिं प्रशशंसुः ॥ ५० ॥

प्रशंसामेवाह । अहो इति । सृष्टिरत्यन्ताश्चर्यरूपा वयमपि तेनैव सृष्टाः एतेऽपि तथापि कारणातुल्यत्वेऽप्युत्तमा जाता इति एतत्कृतमेव जगत् स्रष्टुः सुकृतं बतेति हर्षे स्वकारणादुत्तमं जातमिति हेत्वन्तरमप्याह । प्रतिष्ठिताः क्रिया यस्मिन्निति । यस्मिन् कृते मनुरूपे क्रिया धर्मादिरूपाः प्रकर्षेण स्थिताः अनेन धर्मो मोक्षश्च सिद्ध उक्तः साकमन्नमदामह इति वाक्यादर्थः कामश्च एवं सर्वपुरुषार्थसाधकत्वात् उत्कृष्टता ॥ ५१ ॥

भगवज्ज्ञानेन सृष्टिमाह । तपसेति । ज्ञानकर्मभक्तिभिः हृषीकेशो भगवान् ऋषीन् सर्ववेदादिप्रवर्त्तकानभिमतप्रजारूपान् ससर्ज तपोऽत्र ज्ञानं विद्याभक्तिः योगेन युक्तः भगवद्भावं प्राप्तः समाध्यन्तेन योगेन वा युक्तः सर्वैः भगवता च इन्द्रियपतित्वात् स्रष्टुः ऋषयो जितेन्द्रियास्त्रिविधाश्च ज्ञाननिष्ठाः कर्मनिष्ठा भक्तिनिष्ठाश्चेति ऋषिश्चासौ हृषीकेशश्च शब्दार्थब्रह्मरूप इत्यर्थः ॥ ५२ ॥

भगवतः षड्गुणा एकीभूताः कर्तृविशेषणभूता इति सृष्टेभ्यः एकैकमंशमदादित्याह । तेभ्य इति । हियुक्तश्चायमर्थः यदंशपुरस्कारेण ये सृष्टाः तेभ्यः सोंऽशो देय इति स्वार्थं तु नापेक्षते यतोऽयमजः अतः परं पुत्रादिरूपेण न भविष्यतीति तानेवांशानाह । यत्तदिति । यावदस्य तदेव तस्येत्यर्थः ऐश्वर्यादिषु षट्सु समाध्यादयः षडन्तर्भाव्याः तत्त्वेन वा व्याख्येया भिन्ना वा एते प्रकृतापयोगिभगवच्छब्दवाच्याः समाधिश्चित्तैकाग्र्यं योगस्तस्योपायः ऋद्धिः फलं तस्य इति त्रयमेकाकोटिः तपो ज्ञानं विद्या भक्तिः वैराग्यं चेत्यपरा त्रिधैव यशः ऋद्धिरेव श्रीः योगो बलं समाधिरैश्वर्यमिति सम्यगाधिः शत्रूणां यस्मादिति योगश्च ऋषयो हि भगवत एकैकमंशं सम्पादयन्तीति ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्वल्लभाचार्यकृतसुबोधिन्याम्
विंशाध्यायविवरणम् ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

चिन्तानन्तरं सृष्टिर्मे पूर्यैव सम्पद्येतेति मनसि यदा मिथुनं सिसृक्षतस्तस्य आनन्दो बभूव तदा तस्मात् मनवो अभूवंस्ते च सृष्टिपूर्त्तिमर्यों पुरुषाकारतां जगृहुरित्याह । स आत्मानमिति द्वाभ्याम् मनूनिति। तेषु तदानीं स्वायम्भुवो मनुः प्रकटं सर्वैरदृश्यत अन्ये च यथासमयं दृश्या इति ज्ञेयमत्रान्ते इति पद्योपन्यासान्मनुसर्गोऽयं सर्वान्तिमो ज्ञेयः अत एतदनन्तरं वक्ष्यमाणोऽपि ऋषिसर्ग एतत् पूर्वत्रैव ज्ञेयः । अत्र दशमद्वादशविंशाध्यायेषु कचित् क्रमेण कचिन्मण्डूकप्लुतिसिंहावलोकादिन्यायात् क्रमातिक्रमेणाप्युक्तानां सर्गाणामयं क्रमो ज्ञेयः प्रथमं पञ्चपर्वाविद्यासर्गः ततो वनस्पतिवृक्षादिसर्गः ततः सर्पादिसर्गः। ततो गोमहिष्यादिसर्गः । ततो यक्षराक्षसासुरकिन्नरकिंपुरुषादिसर्गः ततश्च सनकादिमरीच्यादिसर्गः ततो मनुष्यसर्गः सर्वान्ते मनुसर्गस्ततः पूर्वसृष्टा अपि स्त्रीपुंस्वरूपेण वर्द्धन्ते स्मेति ॥ ४९ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ॥

स्वीयं पुरं पुरुषाकारं देहमत्यसृजद्ददौ ॥ ५० ॥

हे जगत्स्रष्टस्ते त्वया यस्मिन्मनुसर्गे सति क्रिया अग्निहोत्राद्याः प्रतिष्ठिता भवेयुस्तैर्मनुभिः पालनादिति भावः । साकं सहैव वयं सर्वे अन्नं हविर्भागादिक मदाम भक्षयामहे इति पृथक् पदम् ॥ ५१ ॥

ततो विद्यया युक्तस्य ब्रह्मणो मानुषीं सृष्टिमाह । तपसेति । विद्या उपासना योगोऽष्टाङ्गः सुसमाधिर्ज्ञानवैराग्ये हृषीकेशः स्ववशेन्द्रियः सन्नृषीन्सनकादीन् ॥ ५२ ॥

किन्तेदं यस्यांशमदादित्यत आह । समाधिर्ज्ञानञ्च योगश्च अणिमादिरणिमाद्यैश्वर्यं च तपश्च विद्या च विरक्तिश्च विद्यन्ते यस्मिंस्तत् । एतदनन्तरं रुद्रोद्भवस्ततश्च मरीच्यादिसृष्टिर्द्वादशाध्याये ज्ञेयाः ॥ ५३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
तृतीये विंशतितमः सङ्गतः सङ्गतः सताम् ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यदात्मानं कृतकृत्यं मन्यमानः आसीत्तदा ॥ ४९ ॥

तेभ्यो मनुभ्यः स्वीयपुरुषं पुरुषाकारं पुरं देहम् अत्यसृजत् अत्यादरेण ददौ तान् मनून् ॥ ५० ॥

एतत्पुरुषाकारं शरीरं ते त्वया कृतं भवति यस्मिन् क्रियाः भुक्तिमुक्तिसाधनरूपाः प्रतिष्ठिताः अतः अस्मिन् साकं सह वयमन्नमदाम हविर्भागादि भक्षयामः हेवह्मन् ! ॥ ५१ ॥

तप आदियुक्तः हृषीकेशः जितेन्द्रियः विरक्तियुक्त इत्यर्थः तथा च पञ्चगुणयुक्तः पञ्चविधान् ऋषीन् प्रजाः ससर्जेत्यर्थः ॥ ५२ ॥

तेभ्यः पञ्चप्रकारेभ्यः एकैकशः स्वस्य तप आदिपञ्चगुणयुक्तस्य देहस्य अंशमेकैकतप आदिगुणभेदम् अदात् कः संदेहः यस्यांशमदादित्यत आह । यदिति । यत् शरीरम् समाधिश्च योगर्द्धिश्च तपश्च विद्या च विरक्तिश्च ताः विद्यन्ते यस्मिन् तत् ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
विंशाध्यायार्थप्रकाशः ॥ २० ॥

---

भाषाटीका ।

जब ब्रह्माजी ने अपने को कृतकृत्यमाना तब तो लोकों के पालन करने वाले मनूनको पैदा किया ॥ ४९ ॥

उन मनूनको ब्रह्माजी ने पुरुष का आकार दिया तब उन मनूओंको देख कर पहिले वाले सब जो थे वे ब्रह्माजी की प्रसंशा करने लगे ॥ ५० ॥

हे जगत् स्रष्टा ! आपने यह बात अच्छी करी जो कि आपने ऐसा शरीर दिया कि जिस मे रह कर हम लोग भोग भोगेंगे ॥ ५१ ॥

फिर तपसे विद्या से योग से समाधि से युक्त होकर ब्रह्माजीने ज्ञानी होने से ऋषियों की सृष्टि की जो इस के अभिमत है ॥ ५२ ॥

उन सबों को अपने देह का एक एक अंश ब्रह्माजी ने दिया जिसमे समाधि योग विद्या तप विरक्तता है ॥ ५३

इति श्रीभागवततृतीयस्कन्धबीसमा अध्यायका
भाषानुवाद लक्ष्मणाचार्यकृत
समाप्त ॥ २० ॥

---

इति श्रीमद्भागवते महापुराणे तृतीस्कन्धे विंशोऽध्यायः समाप्तः ॥ २० ॥



## एकविंशोऽध्यायः ।

॥ विदुर उवाच ॥

स्वायम्भुवस्य च मनोर्वंशः परमसम्मतः ।
कथ्यतां भगवन् ! यत्र मैथुनेनैधिरे प्रजाः ॥ १ ॥
प्रियव्रतोत्तानपादौ सुतौ स्वायम्भुवस्य वै ।
यथा धर्मं जुगुपतुः सप्तद्वीपवतीं महीम् ॥ २ ॥
तस्य वै दुहिता ब्रह्मन् ! देवहूतीति विश्रुता ।
पत्नी प्रजापतेरुक्ता कर्दमस्य त्वयाऽनघ ! ॥ ३ ॥
तस्यां स वै महायोगी युक्तायां योगलक्षणैः ।
ससर्ज कतिधा वीर्यं तन्मे शुश्रूषवे वद ॥ ४ ॥
रुचिर्यो भगवान् ब्रह्मन् ! दक्षो वा ब्रह्मणः सुतः ।
यथा ससर्ज भूतानि लब्ध्वा भार्यां च मानवीम् ॥ ५ ॥

॥ मैत्रेय उवाच ॥

प्रजाः सृजेति भगवान् कर्दमो ब्रह्मणोदितः ।
सरस्वत्यां तपस्तेपे सहस्राणां समा दश ॥ ६ ॥
ततः समाधियुक्तेन क्रियायोगेन कर्दमः ।
सम्प्रपेदे हरिं भक्त्या प्रपन्नवरदाशुषम् ॥ ७ ॥
तावत्प्रसन्नो भगवान् पुष्कराक्षः कृते युगे ।
दर्शयामास तं क्षत्तः ! शाब्दं ब्रह्म दधद्वपुः ॥ ८ ॥
स तं विरजमर्काभं सितपद्मोत्पलस्रजम् ।
स्निग्धनीलालकव्रातवक्त्राब्जं विरजोऽम्बरम् ॥ ९ ॥
किरीटिनं कुण्डलिनं शंखचक्रगदाधरम् ।
श्वेतोत्पलक्रीडनकं मनःस्पर्शस्मितेक्षणम् ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एकविंशे तपोविद्यातोषितेन तु विष्णुना ।
कर्दमस्य मनोः पुत्र्या विवाहघटनोच्यते ॥ १ ॥

एधिरे एधाञ्चक्रिरे ॥ १ ॥

धर्मं महीं च यथा जुगुपतुः ररक्षतुस्तन्मे वदेति तृतीयेनान्वयः ॥२॥

तस्य मनोः ॥ ३ ॥

योगलक्षणैर्यमादिभिर्युक्तायाम् कतिधा वीर्यं ससर्ज कति-पुत्रानुत्पादयामासेत्यर्थः ॥ ४ ॥

मानवीं मनोः कन्यामाकूतिं च प्रसूतिं च भार्यां लब्ध्वा यथा भूतानि ससर्ज तच्च वदेति चकारस्यार्थः ॥ ५ ॥

सहस्राणां समा दश दशसहस्राणि सम्वत्सराणीत्यर्थः ॥ ६ ॥

ततस्तस्मिंस्तपसि क्रियायोगेन पूजाप्रकारेण सम्प्रपेदे शिषेवे प्रपन्नेभ्यो भक्तेभ्यो वरदातारम् ॥ ७ ॥

शब्दैकवेद्यं यद्ब्रह्म तन्मयं वपुर्दधत्त्वं प्रत्यात्मानं दर्शयामास ॥ ८ ॥

## श्रीधरस्वामिकृतभावार्थदीपिका ।

स कर्दमस्तं खेऽवस्थितं दृष्ट्वा मूर्ध्ना क्षितावपतत् गीर्भिश्चाऽप्यगृणादिति चतुर्णामन्वयः पद्मोत्पले दिनरात्रिविकासे सितानां पद्मानामुत्पलानां च स्रक् यस्य तम् स्निग्धा नीलाश्च येऽलकास्तेषां व्राता वक्त्राब्जे यस्य ॥ ९ ॥

श्वेतोत्पलं क्रीडनकं यस्य मनःस्पर्शि मनस्यानन्दजनकं स्मितमीक्षणं च यस्य तम् ॥ १० ॥

---

## श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

विष्णुना विष्णुकर्तृका विवाहरचनोच्यते मैत्रेयेणेति शेषः यत्र मनुवंशे ॥ १ ॥

तत् तं प्रकारम् ॥ २ ॥

देवदूतीति पाठान्तरं हेयमप्रसिद्धत्वात् ॥ ३ ॥

वीर्य्यशब्दस्य वीर्य्यजन्यपुत्रेषु लक्षणा अत इत्यर्थोक्तिः तत्सं-ख्याविशिष्टं पुत्रोत्पादनम् ॥ ४ ॥

तत् तं रुचेः सृष्टिप्रकारम् ॥ ५ ॥

सहस्राणामिति बहुवचनमार्षम् सहस्रसङ्ख्यामात्रस्य विवक्षितत्वात् यथा सङ्ख्यायाः सम्वत्सरसम्बन्धित्वं तथा सम्वत्सराणामपि सङ्ख्यासम्बन्धित्वं सम्बन्धस्योभयनिष्ठत्वात्तथाच दशसहस्राणि सम्वत्सरानित्यार्थिकोऽर्थः ॥ ६ ॥

समाधियुक्तेन चित्तैकाग्र्यसम्पन्नेन पूजाप्रकारेण या सञ्जाता प्रेमभक्तिस्तया सिषेव इति योजनीयम् भक्त्या सञ्जातया भक्त्येतिवत् ॥ ७ ॥

तावत्तावता दश सहस्रवर्षपरिमितेन कालेन यद्ब्रह्म परब्रह्म तन्मयं तत्स्वरूपम् ॥ ८ ॥

स तामिति चतुष्कम् कर्दमसृष्टेः पूर्वं विनताया जन्माऽभावाद्गरुडस्य नित्यसिद्धत्वं व्यञ्जितम् ॥ ९—१२ ॥

---

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमसाधारणान् सृष्टिभेदानाकर्ण्य प्रकृतं स्वायंभुवमनुचरित्रं तद्वंशं च पृच्छति विदुरः। स्वायम्भुवमित्यादि पञ्चभिः। स्वायंभुवस्य मनोः परम उत्कृष्टः सत्तमः सतामिति शेषः कथ्यतां यत्र वंशे मैथुनेन कर्मणा प्रजा एधिरे वृद्धिरे ॥ १ ॥

स्वायम्भुवस्य मनोः पुत्रौ प्रियव्रतोत्तानपादौ धर्मं यथा तद्वत् तत्तद्वर्णाश्रमधर्माननतिक्रम्येत्यर्थः सप्तद्वीपयुक्तां पृथिवीं यथा जुगुपतुः यथा रक्षितवन्तौ तत्प्रकारश्च कथ्यतामित्यर्थः ॥ २ ॥

तस्य स्वायंभुवस्य दुहिता पुत्री देवहूतिरिति श्रुता त्वत्तो मयेतिशेषः हेब्रह्मन्नघेति द्वे सम्बोधने कर्दमस्य प्रजापतेः पत्नीति त्वयोक्ता च ॥ ३ ॥

योगलक्षणैः शमदमादिभिर्युक्तायां तस्यां देवहूत्यां महायोगी परिपक्वभगवदुपासनात्मकयोगनिष्ठः स वै कर्दमः कतिधा कतिभिः प्रकारैः वीर्यं ससर्ज्ज कत्यपत्यान्यसृजदित्यर्थः तच्छुश्रूषवे श्रोतुमिच्छवे मे मह्यं वद कथय ॥ ४ ॥

हे ब्रह्मन् मैत्रेय ! भगवान् षाड्गुण्यपूर्णः रुचिर्दक्षश्च ब्रह्मणश्च



तुर्मुखस्य सुतः मानवीं मनुपुत्रीमाकूतिं प्रसूतिं च भार्यां लब्ध्वा भूतान्यपत्यानि यथा ससर्ज तत्प्रकारं मे वदेति पूर्वेणान्वयः ॥५॥

एवमापृष्टो मैत्रेयः तद्यथावन्मनुपुत्रचरित्रं वक्ष्यमाणस्तावद्देवहूत्याख्यभार्यालाभाय कर्दमस्य तपश्चर्याप्रकारमाह । द्वाभ्याम् । ब्रह्मणा चतुर्मुखेन प्रजाः सृजेत्युक्तो भगवान् कर्दमः सरस्वत्याख्यायां नद्यां सहस्राणां दश समाः दशसहस्रसंवत्सरान् तपस्तेपे चकार पाकं पचतीति वन्निर्देशः ॥ ६ ॥

ततस्तस्मिन् तपसि कर्दमः समाधिश्चित्तैकाग्र्यं तेन युक्तेन क्रियायोगेन स्ववर्णाश्रमोचितानभिसंहितफलभगवदाराधनरूपक्रियायोगेन भक्त्या ध्रुवानुस्मृतिरूपोपासनया च प्रपन्नानां वरदाशुषं वरप्रदं हरिं प्रपेदे सिषेवे ॥ ७॥

कृतयुगे तावद्दशसहस्रवर्षपर्यन्ततपश्चर्यान्ते पुण्डरीकाक्षो भगवान् प्रसन्नः तपसा तोषितः हेक्षत्तः ! शाब्दं पञ्चोपनिषन्मात्रवेद्यं ब्रह्म सौगन्ध्यसौकुमार्य्यलावण्ययौवनाद्यनन्तकल्याणगुणाकरं वपुर्दिव्यमङ्गलविग्रहं दधद्बिभ्रत् कर्दमं प्रतिदर्शयामास स्वात्मानमिति शेषः यद्वात्मानमिति विग्रहापेक्षया पुल्लिङ्गनिर्देशः तं विग्रहं दर्शयामासेत्यर्थः ॥ ८ ॥

तमेव भगवन्तमनुवर्णयन् तं प्रणम्यास्तावीदित्याह । चतुर्भिः स इति । स कर्दमस्तं भगवन्तं दृष्ट्वा कथंभूतं तं विरजं निर्मलमर्काभमर्कस्य सूर्यस्येवाभा यस्य तं सितानां पद्मानामुत्पलानां च स्रजो यस्य तं स्निग्धा नीलाश्च येऽलकाः कुन्तलास्तेषां व्रातो वक्त्राब्जे यस्य तं विरजं निर्मलमम्बरं पीताम्बरं यस्य तम् ॥ ९ ॥

किरीटधारिणं कुण्डलधारिणं त्रिभिर्हस्तैः शङ्खचक्रगदाः वहन्तं श्वेतोत्पलं क्रीडनं क्रीडासाधनं यस्य तमेकेन करेण लीलार्थं श्वेतोत्पलं वहन्तमित्यर्थः मनःस्पर्शस्मितेक्षणं चित्तापहारिहासयुक्तावलोकनयुक्तम् ॥ १० ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अकामः सर्वकामो वा मोक्षकामो हरिं भजेदिति ॥

यदुक्तं पूर्वत्र तदिह कर्दमचरितव्याजेन प्रपञ्च्यते ऽध्यायत्रयेण तत्र मैत्रेयं विदुरः पृच्छति । स्वायंभुवस्येति । परमत्वेनोत्तमत्वेन संमतः संप्रतिपन्नस्तस्मात्कथ्यतामिति हेत्वर्थे च शब्दः एधिरे एधाश्चक्रिरे ॥ १ ॥

देवहूत्याः कथाया अवश्यश्रोतव्यत्वेऽपि प्रथमतस्तत्कथने मनोः कन्यैव नतु पुत्राविति प्रतीतायास्तस्या अभ्रातृमतीत्वेन परिणेतुः प्राशस्त्यबुद्धिर्न स्यादिति तत्प्रीत्यै तत्पुत्रावाह । प्रियव्रतेति । वा इत्यनेनौरसत्वमवधारयति। एतच्चरितं वक्तव्यमित्यस्मिन्नर्थे वा॥२॥

देवहूत्या भ्रातृमतीत्वमुक्त्वा तच्चरितं श्रोतुमुक्तमनूद्य शेषं पृच्छति । तस्य वा इति । अस्तु मनोः पुत्री ततः किमित्यत आह । प्रजापतेरिति । त्वया या कर्दमस्य प्रजापतेर्जायेत्युक्ता ॥३॥

स कर्दमस्तस्यां कतिधा वीर्यं ससर्ज तद्वीर्यसर्जनलक्षणं चरितं यमनियमादियोगलक्षणैः ॥ ४ ॥

अनन्तरं रुचिदक्षयोश्चरितं वक्तव्यमित्याह । रुचिरिति ॥ ५ ॥

मैत्रेयः प्रथमतो मनुपुत्रयोः कथाया वक्तव्यत्वेऽपि सूचीकटाहन्यायेन रुचिदक्षयोश्चरितयोरनन्तरं पृष्टत्वाच्च देवहूतिचरिताविनाभूतं कर्दमचरितं वक्तुमुपक्रमते । प्रजा इत्यादिना । सहस्राणां दश समाः ॥ ६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

किं विषयमिदं तप इति तत्राह । तत इति । समाधियुक्तेन क्रियायोगेन वैदिकतान्त्रिकलक्षणोपायेन दाशुषं दाश्वदाने वरदम् ॥ ७ ॥

साधनसामग्रीफलमाह । तावदिति । यः स्वयं चित्तीकृतस्तत्मात्मानं शाब्दं वेदैकवेद्यं ब्रह्म सर्वगुणपूर्णम् "अथकस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणा„ इति श्रुतिवेद्यत्वदर्शनाय ब्रह्मपदप्रयोगः वपुः शुभाकारं शुभाकारे तनौ वपुरिति न मायामयम् ॥ ८ ॥

शुभाकारत्वं विवृणोति । स तमिति ॥ ६ ॥

क्रीडनकं क्रीडासाधनं द्रष्टॄणां मनःस्पर्शौ मनोविषये स्मितेक्षणे यस्य स तथा तम् ॥ १० ॥ ११ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

देवहूतिरिति क्वचित्पाठः ॥ १—४ ॥ ५ ॥

प्रजा इति । दशानां समानां सहस्राणीति यदि स्यात् तदा सम्बन्धस्योभयाश्रयत्वे सहस्राणामित्याद्यपि स्यादिति भावः । सहस्राणां तु बहुत्वमार्षम् ॥ ६—७ ॥

तावदिति यावता कालेन सम्यक् प्रपेदे तावतेत्यर्थः । शाब्दं शब्दब्रह्मप्रतिपाद्यं यत्परं ब्रह्म तत्स्वरूपं दधत् प्रकाशयत् ॥ ८ ॥

स तमिति चतुष्कम् । स्निग्धश्च नीलश्च अलकव्रातो यत्र तादृशं वक्राब्जं यस्य ॥ ६—१० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एकविंशे तु सफलो धर्ममार्गो निरूप्यते ।
भूतसंस्कारकर्तृत्वाद्भूतसर्गोऽयमुच्यते ।
षड्विधं रूपमस्यापि तपोदर्शनसंस्तवाः ।
त्रिविधाः कारणे युक्ताः वाक्यागमसमृद्धयः ॥ २ ॥
फलेऽपि त्रिविधाः प्रोक्ता ऋषिवाक्यसमृद्धये ।

एवं सफलां ब्रह्मसृष्टिं पूर्वाध्याये श्रुत्वा तद्विशेषं श्रोतुं मनोर्वंशं पृच्छति । स्वायम्भुवस्येति पञ्चभिः । अस्य विशेषत्वं मैथुनजनितत्वमेव स्वयंभुवो वंशः श्रुतः स्वायंभुवस्य मनोर्वंशः श्रोतव्यः तत्र हेतुः परमसंमत इति परमस्यर्षेः संमतः सर्वसंमतं च श्रोतव्यं यत इदानींतनानां तथैव जन्म तदाह । मैथुनेनैधिरे प्रजा इति । भगवन्निति ज्ञानार्थं सम्बोधनं मैत्रेयस्य ॥ १ ॥

एवं वंशं सामान्यतः पृष्ट्वा पुत्रयोर्विशेषं पृच्छति । प्रियव्रतेतियौ स्वायंभुवस्य सुतौ प्रियव्रतोत्तानपादावुक्तौ तौ निश्चयेन धर्ममनतिक्रम्य सप्तद्वीपवतीं महीं जुगुपतुः जन्ममात्रं श्रुतं युक्त्या रक्षा च निर्द्धारिता तयोर्वंशस्तु वक्तव्य इतिभावः ॥ २ ॥

कन्यकानां वंशं पृच्छति । तस्येति । मध्यमाया द्वयेन शिष्टयोरेकेन मध्यमा सर्वत्र मूलभूतेति तस्याः प्रशंसा तन्मोच्चावधिरेव सर्गः ब्रह्मन्निति संबोधनमविकृतत्वाय देवानां हूतिर्यस्या इति सर्वदेवमयी सर्वदेवताधिष्ठिता वा सर्वतर्पणार्थं वा देवानामाह्वानं उपभोगार्थं वा मोहिता रूपेण समाहूता इति सर्वथा विशेषेण श्रुता प्रसिद्धा तस्या विवाहश्च श्रुतः कर्दमस्य प्रजापतेः त्वया पत्नीति निरुक्ता । अनघेति संबोधनात् स्त्रीकृतो भावः हृदयेनोत्पत्स्यत इत्युक्तं पापयुक्तानामेव तादृशः कामो भवति यो लौकिकेन क्षुभ्यति ॥ ३ ॥

अनूद्य तत्प्रश्नमाह । तस्यामिति । तस्य महायोगित्वात् बीजावापो योगप्रतिबन्धक इति तादृशस्यापि बह्वपत्यजनकत्वमाश्चर्यमिति प्रश्नः सापि योगलक्षणैर्युक्ता द्वात्रिंशल्लक्षणयुक्तो योगस्याधिष्ठानं भवतीति कर्दमस्य तु सिद्धो योगः तस्यास्तु लक्षणानि सन्ति योगस्त्वग्रे सेत्स्यति अत उभयोरपि सृष्टिविरुद्धत्वात्प्रश्नः महायोगित्वाच्च सर्गेऽपि न काचित् क्षतिरिति वै निश्चयेन तस्यां कतिधा वीर्यं ससर्जेति संख्यायां प्रकारविशेषे च प्रश्नः उत्तरे हेतुः शुश्रूषव इति श्रोतुमिच्छवे वदेति प्रार्थना ॥ ४ ॥

अवशिष्टयोरपि वंशप्रश्नमाह । रुचिर्य इति । रु[illegible] नपूर्व्यां इति पूर्वकल्पेषूर्चरितः ब्रह्मन्निति सर्वार्थपरिज्ञाने [illegible] तीयायाः भूतानीति तत्कन्यासु नानाविधोत्पत्तिः मानवीमिति मनोः पुत्रीं भार्यात्वेन लब्ध्वा चक्र[illegible] आख्याम् ॥ ५ ॥

सर्गे कर्दमस्यैवोपयोगात् देवहूत्याः सकाशात् सृष्टि[illegible] चतुर्भिरध्यायैः प्रजाः सृजेति ।

साधनं च विवाहश्च सृष्टिर्द्वेधा चिभेदतः ।
विसर्गे सर्ववस्तूनां धर्मादावुपयोगिनाम् ।
निरूपणं हि सर्गे तु सर्वं सर्गार्थमेवहि ।

ब्रह्मा भगवद्रूपः कर्दमोऽपि भगवद्रूपः अतः स्वकर्त्तव्यसृष्टौ कर्दममेव प्रेरितवान् स्वतुल्यत्वात् सृष्ट्युपयोगिनी हि ब्रह्मदैवत्या सरस्वती तस्यास्तीरे दशवर्षसहस्राणि दिव्यानि तपस्तेपे एतावता चतुर्युगानामावृत्तिर्जाता स्वतन्त्रब्रह्मसृष्ट्यर्थमपि सहस्रवर्षमात्रं तपः इदं तु ततोऽप्यधिकमिति तत्र हेतुं वक्ष्यति ॥ ६ ॥

न केवलं तपसा भगवान् परितुष्यति किन्तु भक्त्येति भगवद्भजनमाह । तत इति । समाधौ भगवानाविर्भावितः तत्र क्रियायोगः परिचर्या अतः समाधिना युक्तेन क्रियायोगेनेत्युक्तमेवं परिचर्यया सम्यक् प्रपेदे ततो भजनक्लेशनिवृत्तिर्भजनीयगुणास्तदाह । हरिमिति । ततः प्रेमभक्तिः तयापि संप्रपेदे भगवान् वा तया कृत्वा प्रपन्नानां वरदाता जातः दाशुषं दातारम् ॥ ७ ॥

ततो भगवत्साक्षात्कारो जात इत्याह । तावदिति । तावता कालेन प्रसन्नः प्रेम्णा वा प्रपन्नवरदातारं यावत् सेवते मनःपूर्णा सेवा यावन्न जाता तन्मध्य एव भगवान्प्रसन्नो जात इत्यर्थः । विलम्बे कारणं कृते युग इति स हि सत्ययुगे तपः कर्तुमुपविष्टः सत्यं तपसा शुद्धान्तःकरणो जातः ततस्त्रेतायां योगसिद्धो जातः तपस्त्वनुवर्त्तत एव सर्वत्र ततो भगवदाविर्भावः ततो द्वापरे परिचर्या ततः प्रेम कलौ तत्र चेदाविर्भावं प्राप्नुयात् ततः कलावुत्पन्ना सृष्टिरसङ्गता स्यात् ततो जातेऽपि स्नेहे प्रपन्नानां वरदातेति तदनाशार्थं कृतयुगे प्रादुर्भूतो जातः तत्र तु न विलम्ब इति द्योतितम् । तावदिति पुष्कराक्ष इति । दृष्टैवाप्यायनजनकः शाब्दब्रह्मणा वेदेन निष्पादितं छन्दोमयं वेदपुरुषो भगवान् तादृग्रूपं गृहीत्वा आविर्भूतस्तं दर्शयामास चक्षुरिति सम्बोधनमन्तःपुरात् बहुप्रकारेण प्रचुरताविर्भवतीति भगवतो रूपविशेषे संदेहाभावायोक्तं यद्यपि तदतीन्द्रियमेव तथापि भग-

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी

वातेव दर्शयामास न हि भगवतोऽशक्यं किञ्चित् स्वरूपमेव बहिरनेकधा कृतवतः ॥ ८ ॥

एवं दृष्टं भगवत्स्वरूपमनुवर्णयति त्रिभिः। सतमिति। स्वरूपाभरणोपकल्पैः प्रथमं स्वरूपमनुवर्णयति स कर्दमस्तं प्रसिद्धं दृष्ट्वा जातहर्षः सन् मूर्ध्ना अपतदिति सम्बन्धः।

> सृष्ट्यर्थं पुरुषार्थार्थं चतुर्दशविधो हरिः
> सृष्टिश्च द्विविधा तस्मादतो द्वाभ्यां तु पञ्चधा
> दशावस्थानि तस्माद्धि एक एव पुमान् यतः
> सर्गे च दोषव्यावृत्तिः पुरुषार्थेषु च स्वयम्
> शुक्लो हरिः प्रादुरासीदाद्योनवाहितः सताम्

प्रथमतो दोषाभावमाह। विरजमिति। रजोगुणो रागः कालुष्यं च नास्तीत्यर्थः अज्ञानान्धकारजडत्वव्यावृत्त्यर्थमाह । अर्काभमिति। अर्को हि देवतामण्डलं नारायणश्च अर्कस्येवाभा यस्य सितानि पद्मानि उत्पलानीव तेषां स्रक् यस्य अहोरात्रविकासयुक्तगणसमूहवान् भगवानुक्तः स्निग्धा नीला ये अलकव्रातास्तैरावृतं वक्त्राब्जं यस्य अनेन. भक्तिः सर्वसुखसहिता तस्मिन्प्रकाशिता सुखं चैहिकामुष्मिकमिति अलके विशेषणद्वयं विरजं शुक्लमम्बरं यस्य शुद्धा एव वेदभागास्तेन गृहीता इति अनेन पूर्णा ज्ञानशक्तिरुक्ता एवमेकेन दोषाभावो गुणाश्च त्रिविधा उक्ताः ॥ ९ ॥

पुनर्द्वितीयेन राजसान् गुणान् दोषाभावौ चाह। किरीटयुक्तं कुण्डलयुक्तं चक्रादियुक्तं च

> वेदान्तैः परमं वेद्यं प्रमेयबलमीरितम्।
> साङ्ख्ययोगौ प्रमाणं च तत्त्वानां कार्यतो बलम् ।
> त्रिविधान्यपि तत्त्वानि प्रोक्तानि त्रिभिरायुधैः

भूमावतीर्णो लीलां कुर्वाणः तद्वतदोषयुक्तो भवेदिति तन्निराकरणार्थं चतुर्थमायुधं पद्ममपि परित्यज्य श्वेतं यदुत्पलं तदेवक्रीडनकं यस्य तथा जातः क्रीडनकमिति वचनात् भ्रामणं लक्ष्यते कमले च भ्रामितं जगदेव भ्रामितं स्यात् उत्पले त्वज्ञानमतो लीलाप्यज्ञाननाशिकैवेत्युक्तं मनः स्पृशति मनोहरं यत्स्मितं तत्सहितमीक्षणं यस्य भगवतो मायासृष्टिश्च मनस्येवाल्पं किञ्चिद्विकारं जनयति नतु कायिकादि अनेनायं पुत्रो योगभक्तिज्ञानानि च नेष्यतीत्यपि सूचितम् ॥ १० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

> एकविंशे तपस्तुष्टः कर्दमेन स्तुतो हरिः ।
> विवाहघटनामाह मनुस्तत्राजगाम च ॥

एधिरे पप्रथिरे ॥ १ ॥

धर्मानतिक्रमेण यथा जुगुपतुस्तन्मे वदेति तृतीयेनान्वयः ॥२॥

देवहूतीति देवहूतिरित्यर्थः ॥ ३ ॥

योगलक्षणैर्यमनियमादिभिः कतिधा वीर्यं ससर्ज कत्यपत्यान्युत्पादयामासेत्यर्थः ॥ ४ ॥

मानवीं मनोः कन्यामाकूतीं प्रसूतीश्च ॥ ५ ॥

समा वर्षाणि दश सहस्राणीत्यर्थः ॥ ६ ॥

ततस्तपश्चरणान्तरं तावतापि तपसा दर्शनमप्राप्येत्यर्थः । समाधिश्चित्तैकाग्र्यं क्रियायोगेन पूजाप्रकारेण प्रसन्नेभ्यो भक्तेभ्यो वराणां दाशुषं दातारम् ॥ ७ ॥

तावदिति यावत् सम्प्रपेदे इति पूजायां सत्यां तत्प्रसादे विलम्बाभावः सूचितः । शाब्दं शब्दैकवेद्यं यद्ब्रह्म तन्मयं वपुर्दधदिति श्रीस्वामिचरणाः सच्चिदानन्दमयमाकारं दधत् प्रकटयन् कर्दमदत्तगन्धमाल्यनैवेद्याद्युपचारैः पुष्यन्निति वा ॥ ८—९ ॥

शङ्खचक्रगदाधरमित्युक्त्वा चतुर्थे हस्ते पद्मस्थाने श्वेतोत्पलमेव क्रीडनार्थं धृतवानित्याह श्वेतेति । मनःस्पर्शी द्रष्टृमनःप्रमोदजनकं स्मितमीक्षणञ्च यस्य तम्। प्रीतिरेव स्वभावः स्वतः सिद्धो धर्मो यस्य तादृश आत्मा मनो यस्य सः ॥ १०—११ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

इत्थमवशिष्टं चतुर्मुखकृतं सर्गं श्रुत्वा प्रकृतं मनुवंशादिकं पृच्छति । स्वायम्भुवस्येति ॥ १ ॥

धर्मं महीं च यथा जुगुपतुः एतद्वदेति तृतीयेनान्वय- ॥२॥३॥

योगलक्षणैर्यमादिभिः कतिधा कतिसंख्याकं वीर्यमपत्यं ससर्जोत्पादयामास ॥ ४ ॥

भार्यामाकूतीं रुचिर्दक्षः प्रसूतीं च ॥ ५ ॥

सहस्राणां समा दशसहस्राणि सम्वत्सराणीत्यर्थः ॥ ६ ॥

ततस्तस्मिन्तपसि समाधियुक्तेन चित्तैकाग्र्ययुक्तेन क्रियायोगेन अर्चनप्रकारेण भक्त्या परया च प्रपन्नेभ्यः स्वशरणेभ्यः वरदातारं प्रपेदे सिषेवे ॥ ७ ॥

शाब्दं वेदैकवेद्यम् ब्रह्म बृहत्स्वरूपगुणयुक्तं परं तत्त्वं तदेवाह । भगवान् वपुरप्राकृतं शरीरं दधत् कर्दमं प्रतिदर्शयामास ॥ ८ ॥

स कर्दमस्तं भगवन्तम् दृष्ट्वा मूर्ध्ना क्षितावपतत् गीर्भिश्चाभ्यगृणादिति चतुर्णामन्वयः अर्कस्येवाभा यस्य तम् सितानां शुक्लानां पद्मानामुत्पलानां च स्रक् यस्य तम् स्निग्धनीलालकानां व्रातो वक्त्राब्जे यस्य तम् मनःस्पर्शी मनोह्लादकरं स्मितमीक्षणं च यस्य तम् प्रीतिरेव स्वभाव औत्पत्तिको गुणो यस्य स आत्मा मनो यस्य सः अभ्यगृणात् स्वाभिप्रायं निवेदयन् अस्तौषीत ॥ ९ ॥ १०—१२ ॥

---

### भाषाटीका ।

विदुरजी बोले हे भगवन् !परमसंमत जो पूज्य स्वायंभुवमनु का वंश तिसको आप कहिये जिस वंश में कि मैथुन से प्रजा वृद्धि को प्राप्त भये ॥ १ ॥

स्वायंभुव मनु के प्रिय व्रत उत्तानपाद दो पुत्र भये तिनों ने जिस प्रकार से सप्तद्वीप वाली पृथिवी के धर्म का रक्षा किया सो कहिये ॥ २ ॥

हे ब्रह्मन् ! हे अनघ ! उन मनु महाराजकी पुत्री देवहूती करके विख्यात जो कर्दम प्रजापतीकी पत्नी आपने कही ॥ ३ ॥

योग लक्षणों से युक्त उस देवहूती के मध्य में महायोगी कर्दमजी ने वीर्य द्वारा कितने पुत्रादि उत्पन्न किये सो मैं सुनने चाहता हूं मेरे से कहिये ॥ ४ ॥

विन्यस्तचरणाम्भोजमंसदेशे गरुत्मतः ।
दृष्ट्वा खेऽवस्थितं वक्षःश्रियं कौस्तुभकन्धरम् ॥ ११ ॥
जातहर्षोऽपतन्मूर्ध्ना क्षितौ लब्धमनोरथः ।
गीर्भिस्त्वभ्यगृणात्प्रीतिस्वभावात्मा कृताञ्जलिः ॥ १२ ॥

ऋषिरुवाच ॥

जुष्टं बताद्याखिलसत्त्वराशेः सांसिध्यमक्ष्णोस्तव दर्शनान्नः ।
यद्दर्शनं जन्मभिरीड्य! सद्भिराशासते योगिनो रूढयोगाः ॥ १३ ॥
ये मायया ते हतमेधसस्त्वत्पादारविन्दं भवसिन्धुपोतम् ।
उपासते कामलवाय तेषां रासीश! कामान्निरयेऽपि ये स्युः ॥ १४ ॥
तथा स चाहं परिवोढुकामः समानशीलां गृहमेधधेनुम् ।
उपेयिवान् मूलमशेषमूलं दुराशयः कामदुघाङ्घ्रिपस्य ॥ १५ ॥
प्रजापतेस्ते वचसाऽधीश! तन्त्या लोकः किलायं कामहतो नु बद्धः ।
अहं च लोकानुगतो वहामि बलिं च शुक्लानिमिषाय तुभ्यम् ॥ १६ ॥
लोकांश्च लोकानुगतान् पशूंश्च हित्वा श्रितास्ते चरणातपत्रम् ।
परस्परं त्वद्गुणवादसीधुपीयूषनिर्यापितदेहधर्माः ॥ १७ ॥
न तेऽजराक्षभ्रमिरायुरेषां त्रयोदशारं त्रिशतं षष्टिपर्व ।
षण्नेम्यनन्तच्छदि यत्त्रिणाभिःकरालस्रोतो जगदाच्छिद्य धावत् ॥ १८ ॥
एकःस्वयं सन् जगतः सिसृक्षया द्वितीययात्मन्नधियोगमायया ।
सृजस्यदः पासि पुनर्ग्रसिष्यसे यथोर्णनाभिर्भगवन् ! स्वशक्तिभिः ॥ १९ ॥
नैतद्बताधीश!पदं तवेप्सितं यन्मायया नस्तनुषे भूतसूक्ष्मम् ।
अनुग्रहायास्त्वपि यर्हि मायया लसत्तुलस्या तनुवा विलक्षितः ॥ २० ॥

---

भाषाटीका

हे ब्रह्मन् ! और जो ब्रह्मा के पुत्र भगवान् रुचि हैं तिन ने जैसे मनुपुत्री को प्राप्त होकर सब भूतों को उत्पन्न किये सो कहिये ॥ ५ ॥

मैत्रेयजी बोले प्रजों को सृजो इस प्रकार ब्रह्माजीकी आज्ञा पाकर कर्दमजी सरस्वती नदी के किनारे दश हजार वर्ष पर्यन्त तपस्या करते रहे ॥ ६ ॥

तदनन्तर कर्दमजी समाधि युक्त क्रिया योग से युक्त होकर भक्ति से प्रपन्नों के वर देने वाले भगवान् को प्राप्तहोगये ॥ ७ ॥

हे विदुरजी ! जब कर्दमजी प्रपन्न भये तब ही सत्ययुग मे पुण्डरीकाक्ष भगवान् ने प्रसन्न होकर वेद प्रतिपाद्य शब्द ब्रह्म की मूर्तिको धारण कर अपना दर्शन कराया ॥ ८ ॥

भगवान् का स्वरूप अति निर्मल है सूर्य सरी का कान्तिमान हैं शुक्लपद्म उत्पल इनकी माला से भगवान् भूषित हैं अति चिक्कण नीलवर्ण के केश मुखारविन्द पर शोभित हैं जिन के निर्मल वस्त्र धारण किये है ॥ ९ ॥

किरीट कुण्डल शङ्ख चक्र गदादि से शोभित हैं क्रीडा के लिये श्वेतकमल एक हाथ मे लिये हैं मन को आनन्ददायक मन्दहास तथा दृष्टि से युक्त हैं ॥ १०

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

वक्षसि श्रीर्यस्य कौस्तुभः कन्धरायां यस्य ॥ ११ ॥
प्रीतिरेव स्वभावः स्वतः सिद्धो धर्मो यस्य तथाविध आत्मा मनो यस्य ॥ १२ ॥

त्वामृतं परमानन्दं धिगन्यवरकामुकम् ।
अथापि कृपया मानुगृहाण वरदानतः ॥ १ ॥

बतेति हर्षे हे ईड्य ! नोऽस्माभिः समग्रसत्त्वनिधेस्तव दर्शनादद्याक्ष्णोः सांसिध्यं साफल्यं जुष्टं सेवितम् । त्वद्दर्शनमेव

### श्रीधरस्वामिकृतभावार्थदीपिका ।

महाफलमित्युपपादयति । यस्य तव दर्शनं सद्भिरुत्तरोत्तरमापादितप्रकर्षैर्जन्मभी रूढो विरूढो योगो यैस्तेऽपि ॥ १३ ॥

सकामभक्तान्विगर्हयन्नाह । य इति । हे ईश ! ये निरयेऽपि स्युस्तेषां कामानां लवाय ये त्वन्मायया नष्टबुद्धयस्त एवोपासते त्वं तु तेषां तान् कामानपि रासि ददासि ॥ १४ ॥

यः सकामान्निन्दामि सोऽहमपि तादृश एवेत्याह । तथेति । गृहमेधो गृहाश्रमस्तत्र धेनुं त्रिवर्गदोग्ध्रीं भार्यां परिवोढुकामः परिणेतुमिच्छन्कामदुघाङ्घ्रिपस्य कल्पद्रुमस्य तव मूलमङ्घ्रिमुपेयिवानुपगतोऽस्मि । ननु कामाद्यर्थमन्यत्किमप्युपास्यताम् । न यतोऽशेषस्य पुरुषार्थस्य मूलमेतदेव ॥ १५ ॥

ननु तर्हि मुक्त्यर्थमेव किं न भजसि अनधिकारादित्याह । हे अधीश ! यस्त्वं प्रजापतिस्तस्य तव वचसा तन्त्यायं कामहतो लोकः पशुवद्बद्धः हे शुक्ल! शुद्धधर्ममूर्तेऽहं च किल लोकानुगतोऽतस्तुभ्यं बलिं वहामि कर्ममयीं त्वदाज्ञामनुवर्ते अनिमिषाय कालात्मने तदर्थं भार्यां चेच्छामीति चकारस्यार्थः न केवलं लोकानुगतो बलिं वहामि किन्तु ऋणत्रयापाकरणार्थमिति किलेत्युक्तम् ॥ १६ ॥

अनिमिषायेत्यनेन कालात्मकास्त्वत्तो भीतः कर्म करोमीत्युक्तमेतत्तु भयं त्वद्भक्तानां नास्तीत्याह । द्वाभ्यां लोकान्कामाभिभूतांस्तानुसृतान्पशूंश्च विवेके सत्यपि पुनः कर्मजडान्मादृशान्हित्वाऽनादृत्य ये तव चरणरूपमातपत्रं श्रिताः । तानेवाऽऽह । त्वद्गुणानां वादः कथा तदेव सीधु मदिरा संसारविस्मारकत्वात् । पीयूषं रुचिकरत्वात्तेन निर्यापिता विलापिता देहधर्माः क्षुत्पिपासादयो यैः एषामित्युत्तरेणान्वयः ॥ १७ ॥

तव यत्त्रिणाभि कालचक्रं तज्जगदाच्छिद्याऽऽकृष्य धावदपि एषां त्वद्भक्तानामायुराच्छिद्य धावन्न भवति । कथं भूतमजरं अक्ष तस्मिन्नक्षरूपे भ्रमिर्भ्रमणं भ्रमदिति वक्तव्येऽतिभ्रमणशीलत्वादुपचारेण भ्रमिरित्यभेदनिर्देशः अधिकमासेन सह त्रयोदशमासा अरा यस्य त्रिशतं षष्टिश्चाहोरात्राः पर्वाणि यस्य शतशब्दे विभक्तेरलुगार्षः।षड्ऋतवो नेमयो यस्य अनन्ताः क्षणलवादयश्छदाः पत्राणि पत्राकारा धाराः सन्ति यस्य त्रीणि चातुर्मास्यानि नाभय आधारभूतानि वलयानि यस्य करालस्रोतस्तीव्रवेगम् । एतैर्विशेषणैरेव संवत्सरात्मकं चक्रमुक्तमिति द्रष्टव्यम् ॥ १८ ॥

ननु निरुपाधिमुदासीनं मां किं याचसे तथापि मायया विश्वसृष्ट्यादिकर्तृत्वात्त्वमेव याच्य इत्याह।स्वयमेकएवसन्नप्यात्मन्यधिकृतया योगमायया हेतुभूतया याः स्वीकृताः शक्तयः सत्त्वाद्यास्ताभिः अदो विश्वं स्वव्यतिरिक्तसाधनानपेक्षत्वे दृष्टान्तः यथेति ॥ १९ ॥

यद्यपि मायिकत्वाद्भक्तेभ्यो विषयसुखं दातुं नेच्छसि तथाप्यस्मदभिप्रायानुसारेण तत्संपादयेत्याह।नैतादिति।हेअधीश ! नोऽस्माकं भजतां भूतसूक्ष्मरूपं पदं शब्दादिविषयसुखं मायया तनुषे विस्तारयसीति यदेतत्तव यद्यपीप्सितं न भवति तथाप्यस्मदनुग्रहायास्तु ऋणत्रयापाकरणानन्तरमेवापवर्गाय भवत्वित्यर्थः यर्हि यतो माययापरिच्छिन्न इव लसन्त्या तुलस्या युक्तस्त्वं विलक्षितोऽसि एवं भूतस्य तव दर्शनं यतो भुक्तिमुक्तिप्रदमित्यर्थः ॥ २० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

समस्तस्तुतिवाक्याभिप्रायमेकेन व्याचष्टे । त्वामृत इति । अनुगृहाण स्वानुरक्तं कुरु नोऽस्माभिः ॥ १३ ॥

भवसिन्धुपोतमित्यनेन कामान्दत्वापि मोक्षप्रदत्वं व्यञ्जितं तेन च तादृशहितकारिणि तस्मिन् शुद्धप्रीतिरेव योग्येत्यनुव्यञ्जितम् प्रीतिस्वभावात्मेत्युक्तत्वात् ॥ १४ ॥

तादृश एव । स काम एव मूलं मूलकारणमेतदेव चरणारविन्दमेव । "सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनम्,, इत्युक्तेः ॥ १५ ॥

अतः लोकानुगतत्वात् तदर्थं कर्माज्ञानुवर्त्तनार्थम् ॥ १६ ॥

शुद्धभक्तैर्लोकसङ्कोचादिना काम्यकर्माद्याग्रहो न कर्त्तव्य इति विवेके सत्यपि ॥ १७ ॥

आकृष्य संहृत्य एषां चरणाश्रितत्वादिलक्षणवतां भ्रमेर्धर्मत्वाच्चक्रस्य च धर्मित्वाद्यद्यपि भ्रमदिति वक्तव्यं तथापि आयुर्धृतमिति वदुपचारेण सादृश्यप्रतीत्याभेदनिर्देशः प्रयोजनञ्च भ्रमेरनुपरम इति प्रयोजनवती लक्षणा एतैरसाधारणैः ॥ १८ ॥

तथापि निरुपाधितयोदासीनत्वेऽपि अद्वितीयया शक्तित्वादेव स्वाश्रयमन्तरा स्वतन्त्रसत्ताशून्यया स्वस्मिन्नधिकारिणि अधिकृतया नियम्यत्वाधिकारं प्राप्तया भगवानिति क्वचित् पाठः ॥ १९ ॥

तत् । विषयसुखमनुग्रहपदस्य परमार्थं व्याचष्टे । ऋणत्रयेति । मायया स्वाभाविकाचिन्त्यशक्त्या भगवानित्यत्र तनुवेति क्वचित्पाठस्तु स्वाम्यसम्मतः लसत्तुलस्या तनुवेत्यन्वयसामञ्जस्ये युक्त इत्यध्याहारासम्भवात् एवं भूतस्य मूर्त्तब्रह्मणस्तव ॥ २० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

गरुत्मतो गरुडस्यांशदेशे स्कन्धप्रदेशे विन्यस्ते निहिते चरणे पदे येन तम् वक्षसि श्रीर्यस्य तं कौस्तुभः कन्धरायां यस्य तम् खे आकाशेऽवस्थितं दृष्ट्वा जातहर्ष इति । लब्धः दर्शनप्राप्तिरूपो मनोरथो येन सः अत एव जात उत्पन्नः हर्ष आनन्दो यस्य सः क्षितौ भूम्यां मूर्ध्ना शिरसापतद्दण्डवत्प्रणत इत्यर्थः ततः प्रीतिरेव स्वभावो यस्य सः आत्मा मनश्च यस्य सः कृत अञ्जलिर्येन सः गीर्भिस्तत्स्वरूपगुणमाहात्म्यप्रतिपादिकाभिर्गीर्भिर्वचोभिरभ्यगृणात्स्वाभिप्रेतं निवेदयन्नस्तावीदित्यर्थः ॥ ११ ॥ १२ ॥

तदेवाह । नवभिः। जुष्टमिति हे ईड्य ! स्तुत्य अखिलसत्त्वराशेः परिपूर्णशुद्धसत्त्वमयस्य तव दर्शनान्नोऽस्माकमक्ष्णोर्नेत्रयोः सांसिध्यं संसिद्धिविषयभूतं फलमद्य जुष्टं प्राप्तं वतेति हर्षे यदा तव दर्शनमिति पाठस्तदा नोऽस्माकं सांसिध्यं संसिद्धिस्तपसः फलाव्यवहितसाधनत्वद्दृशा तया साध्यं यत्फलं त्वद्दर्शनरूपं तदक्ष्णोरक्षिभ्यां जुष्टमित्यर्थः दर्शनस्य सांसिध्यत्वमुपपादयति यस्य तव दर्शनं योगरूढाः योगो रूढ आरूढो यैस्ते प्राप्तयोगा

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचान्द्रिका ।

इत्यर्थः सद्भिः सात्त्विकजन्मभिरपि यतस्तव दर्शनमेव प्राथ्यते स्वजन्मभिराशासत प्रार्थयन्ते आरूढयोगैर्बहुजन्मभिरतस्तदेव निरतिशयं सांसिद्धिकफलमित्यर्थः ॥ १३ ॥

ननु धर्मादिष्वन्यतम एव पुरुषार्थः नतु मद्दर्शनमित्यत्राह । य इति । ते मायया ये हतमेधसः कामानां लवार्थम् उपासते ये निरयेऽपि निरयप्रायेऽपि नीचयोनौ विषये कामाः स्युः तान्कामान्तेषां तान् सुखलेशानपि रासि ददासि तथापि ते सुमेरुमासाद्य वराटिकाद्यन्वेषयन्त इव नित्यनिरतिशयानन्दजलधिं त्वां प्रपद्य आनन्दलेशमाशासानास्त्वन्मायया हतबुद्धय एव अतो धर्मादिषु पुरुषार्थदृष्टया त्वां भजन्मूर्ख एवेति भावः ॥१४ ॥

योऽहं कामकामिनो निन्दयामि सोऽहमपि कामकामीत्याह । तथापीति । अहमपि गृहमेधधेनुं गार्हस्थ्यवर्द्धिनीं समानशीलां समानधर्मादिकुलशीलामित्यर्थः भार्याम् परिणोढुकामः उद्वोढुमिच्छन्नत एव दुराशयः दुष्टान्तःकरणः कामदुघाङ्घ्रिपस्य कल्पवृक्षवदर्थिनार्थदस्य तवाशेषपुरुषार्थानामूलमुपेयिवान्प्राप्तवानस्मि॥१५॥

नन्वेवं हेयोपादेयविभागकुशलस्त्वं कथं कामकामी मामुपेयिवानित्यत्राह । प्रजापतेर्गिरेति । हे अधीश ! प्रजापतेस्तव वचसा वेदात्मिकवचोरूपया तन्त्या दाम्नायं लोकः सांसारिकलोकः कामहतः कामैरभिभूतः अनुनद्धः पशुरिवबद्धः

> यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
> वेदवादरताः पार्थ ! नान्यदस्तीति वादिनः ॥
> कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।
> क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥

इति त्वदुक्तरीत्या कामात्मानः त्रैवर्गिकमेव फलं बहुमन्वानास्तत्रैवासक्ताः अहमपि लोकान् सांसारिकलोकाननुगतो अनुसृतः हे शुक्ल ! निर्मल भगवन् अनिमिषाय कालस्वरूपिणे तुभ्यं वलिं गृहाश्रमोचितधर्मरूपवलिं हरामि यद्यप्यहं हेयोपादेयविवेकसम्पन्नः तथापि त्वन्निर्देशानुवर्त्यसमत्पित्रा चतुर्मुखेन प्रजाःसृजेत्यनुशिष्टोऽहमत एव गृहमेधीयैरेव धर्मैस्त्वामाराधयितुं त्वाम् प्रार्थयामीति भावः अनिमिषायेति हेतुगर्भं यतस्त्वं कालरूपेण संसारिणां निरर्थकमायुः क्षपयस्यतोऽहं सांसारिकधर्माननुतिष्ठन् कालात्मकात्त्वत्तो भीतः सन् अस्मदायुषः सद्व्ययं चिकीर्षुः पितृनिर्देशं च पालयन् कालरूपाय तुभ्यमेव वलिं पूजां वहामि तव पूजां करोमीत्यभिप्रायः ॥ १६ ॥

अनिमिषायेत्यनेनाभिप्रेतं संसारिणामेव वृथायुः क्षपयितृत्वं व्यतिरेकमुखेनाप्याह । द्वाभ्याम् । ये लोकान् संसारिणस्तदनुगतानन्यांश्च हित्वा त्यक्त्वा परस्परं मिथः तव गुणानां वादः कथनं तदेव सीधु मधुरपीयूषममृतं तेन निर्वापिता निरस्ता देहधर्मा जरामरणादयो येषान्ते तत्र चरणावेवातपत्रं तापत्रयनिवर्त्तकत्वादातपत्रत्वरूपणामाश्रितास्ते तेन जराक्षुद्भिः जरामरणादिक्षुत्पिपासादिपरिवृत्तिमन्तः भ्रमिः भ्रमणं नहन्त इत्यर्थः एकवचनमार्षम् जराक्षुद्रूपेण भ्रमणं यस्येति कालचक्रविशेषणं वा कालचक्ररूपविशेष्यं विशेषणसामर्थ्यसिद्धम् अस्मिन्पक्षे ये आश्रितास्तेषामायुरिति सम्बन्धः ते तव सम्बन्धरूपात्मकं कालचक्रं जगदाच्छिद्य धावदित्यर्थः तेषामायुः सफलमित्युक्तं भवति ते जराक्षुद्भ्रमिरितिपाठे ऽअजराक्षभ्रमिरितिच्छेदः अजरः अनुपरतः अक्षभ्रमिरक्षभ्रमणं यस्येति चक्रविशेषणमेव यद्वाजरो ऽविशीर्णः अक्षो यस्य सचासौ भ्रमिर्यस्येत्यर्थः अजरमक्षरं ब्रह्म तस्मिन्नक्षरूपेण भ्रमिर्भ्रमणं यस्येति वा कथम्भूतं कालचक्रं त्रयोदशारमधिमाससहिता द्वादश मासा आरा यस्य तत् त्रिशतं षष्टिश्च अहोरात्राणि पर्वाणि यस्य शतविभक्तेरलुगार्षः षट्ऋतवो नेमयो यस्य अनन्ताः क्षणलवादयः छदा दलानि यस्य सन्तीति तथा त्रिणाभिसमाधिकन्यूनर्गातभन्ति त्रीणि चातुर्मास्यान्येव नाभयो रन्ध्रा यस्य करालं तीव्रं स्रोतो वेगः यस्य तत् ईदृशं त्वदात्मकं कालचक्रं केवलं संसारिणामेवायुराच्छिद्य धावत् वृथा तदायुर्हरति नतु त्वद्गुणानुभवपराणामतः कालचक्रशरीरकस्याश्रितकामदुघस्य भवत एव पादमूलमुपेयिवान् अहमिति भावः ॥ १७ ॥ १८ ॥

ननु ब्रह्मरुद्रादिषु बहुषु सत्स्वपिताननादृत्य मत्पादमूलमेवकिंविशेषेणोपेयिवानित्याशङ्कायां "कश्चध्येयः कारणं तुध्येयम्" इति श्रुत्यैव प्रश्नोत्तररूपेण जगत्कारणत्वस्यैवोपास्यत्वाभिधानात् जगत्कारणभूतस्त्वमेवोपास्य इत्यभिधास्यन् तावत्कारणत्वमुपपादयति । एक इति । स्वयमेकः सन् एकशब्देन "सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयं ब्रह्म"इति कारणत्वपरा श्रुतिः स्मारिता तथाचायमर्थः सृष्टेः प्रागेक एव नामरूपविभागानर्हसूक्ष्मचिदचित्कालशरीरः सन्नुपादानत्वेन विद्यमानः अत्रापि श्रुताविव एव कारार्थगर्भमिदम् एक एव उपादानकारणान्तरशून्यः एकत्वं च सृष्ट्यनन्तरभाविनामरूपविभागनिबन्धनबहुत्वप्रतिसंबन्धिनामरूपविभागाभावाधीनमेव विवक्षितं नतु प्रकृतिपुरुषादिराहित्यम् एक इति अद्वितीय इत्यस्याप्युपलक्षणं तथाच निमित्तकारणान्तरशून्यः सदित्यनेन कारणत्वेनावस्थितस्य प्रमाणसम्बन्धार्हत्वरूपसत्तायोगित्वकथनादसत्कार्यवादो निरस्तः एकमित्यनेन उपलक्षिताद्वितीयपदेन चोपादानत्वनिमित्तत्वोपयुक्तसर्वशक्तित्वसर्वज्ञतादयो धर्मा आक्षिप्यन्ते एवं च मृत्कुलालयोरिव निमित्तोपादानयोर्भेद एव नाभेद उपपद्यत इति शङ्का परास्ता मृदस्त्वज्ञत्वात्कुलालस्यासर्वज्ञत्वाच्च निमित्तत्वोपादानत्वयोरुभयोरपि मृत्कुलालयोरन्यतरस्मिन्नसम्भवः इह तु ब्रह्मणः परास्य शक्तिर्विविधैव श्रूयते स्वभाविकी यः सर्वज्ञःसर्वविदिति सर्वज्ञत्वसर्वशक्तित्वाद्यनन्तकल्याणगुणाकरत्वेन कीर्तितस्यैवोपादानत्वं चोभयमप्युपपन्नतरमेव एवं च नामरूपविभागानर्हसूक्ष्मचिदचिद्विशिष्टत्वाकारेणोपादानत्वेन प्रकृतिपुरुषकालनियन्तृत्वाकारेण निमित्तत्वेन च तदुपयुक्तसर्वज्ञत्वादिगुणविशिष्टत्वेन च सृष्टेः प्राग्विद्यमानः जगतः नामरूपविभागार्हस्थूलचिदचिद्विशिष्टपरमात्मकजगतः सिसृक्षया स्रष्टुमिच्छया हेतुना अनेन तदैक्षत बहुस्यां इत्यास्यार्थो विवृतः द्वितीयया स्वरूपतः स्वभावतश्च स्वस्मादत्यन्तभिन्नया योगमायया युज्यत इति योगा स्वसंबन्धिनी स्वशरीरभूतेत्यर्थः तया मायया प्रकृत्या अद्वितीयेत्यपि वक्तुं शक्यं तदा स्वापृथक्सिद्धया अनया योगमायया स्वशरीरभूतया मायया द्वारेण आत्मन्याधिस्वात्मन्येवाद: नामरूपविभागार्हचेतनाचेतनात्मकं जगत्सृजसि पासि रक्षसि पुनश्च लिप्स्यसि संहरसि मायाद्वारेण सृजति सद्द्वारकोपादानत्वकथनेन सर्गाद्यत्तविकाराणां द्वारभूतप्रकृतिगतत्वावगमात् निर्विकारश्रुतिविरोधः परिहृतः आत्मनि सृजसीत्यनेनाधारान्तरव्यावृत्तिः तथाच श्रुतिः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ब्रह्मवनं ब्रह्म स वृक्ष आसीद्यतो द्यावा पृथिवी निष्टतक्षुरिति अनया श्रुत्या निमित्तमुपादानमाधारउपकरणानि च स्वयमेवेत्युक्तम् एतदर्थोर्णनाभिदृष्टान्तेन स्पष्टयति हे भगवन्! उर्णा नाभौ यस्य सः उर्णनाभिस्तंतून्संतन्यमानः कीटविशेषः स यथा स्वशक्त्यासृजते तन्तूनिति शेषः तथात्वमपि स्वशक्तिभिरेव सृजसि रक्षसि ग्रसिष्यसे तस्माज्जगत्कारणमाश्रितकल्पद्रुमं त्वामेव कामलोकाननुसरन्परिवोढुकाम उपेयिवाहनहमिति भावः॥ १९ ॥

ननु कुत एतत्केचित्कामकामिनोऽन्येत्वस्मत्पदाभिलाषिण इत्यत्राह। नैतदिति। हे अधीश! मायया प्रकृत्या स्वसंकल्पेन वाहमहंकारं तस्माद्भूतसूक्ष्मं भूतान्याकाशादीनिभूतसूक्ष्माणि शब्दादीनि च तनुषे सृजसि भूतसूक्ष्ममिति समाहारद्वन्द्वः तस्तनुषे भूतसूक्ष्ममितिपाठे तु भूतानां सूक्ष्मकारणमहंकारमित्यर्थः कारणं हि कार्यात्सूक्ष्ममिति सूक्ष्मशब्देनाहंकारउक्तः मायया भूतसूक्ष्मं सृजसीति यत्तेन ते पदं तव स्थानं नेप्सितं नाभिलषितं त्वत्सृष्टाहंकारवश्यत्वादस्माभिस्त्वत्पदंनाभिलषितमित्यर्थः वतेति खेदे यद्यप्यहमहंकारग्रस्तस्त्वत्पदं नाभिलषामि तथापि मामनुगृह्य त्वत्पदमपि मह्यं दास्यतीति मे प्रति भातीत्याह। अपि तथापि मया त्वत्पदेऽनभिलषितेऽपि यर्हि यदा लसत्तुस्या लसन्ती तुलसी माला यस्यास्तया तन्वा आश्चर्यविग्रहेण भवान्विलक्षितः दृष्टः मयेति शेषः तदेवानुग्रहाय त्वत्पदप्रापणरूपानुग्रहार्थं भवान् अस्तु स्यादिति निश्चिनोमीत्यध्याहारः अस्त्वितीतिपाठे तु क्रियापदमात्रमध्याहर्तव्यम् ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्वभावात्मा अव्यग्रमनाः स्वतन्त्रो भावो यस्य स स्वभावो हरिः स आत्मनि मनसि यस्य स तथेति वा स्वभावे आत्मा यस्य स तथेति वा ॥ १२ ॥

स्तुतिरपि स्तुत्यस्य हरेः क्षिप्रप्रीतिकरी यथार्थत्वेनानुकम्पाहेतुत्वादुत्तरत्रफलोदयाच्चेति भावेनाह। जुष्टमिति । हे ईड्य! स तात्पर्यं वेदादिभिः स्तुत्य अद्य अखिलसत्वराशेः पूर्णज्ञानबलसमुद्रस्य तव दर्शनात्साक्षात्कारान्नोऽस्माकमक्ष्णोर्जुष्टं निषेवणं त्वन्नेत्रलिङ्गादिविषयं संसिद्धं सम्यक् फलितमभूत् । वताश्चर्यमिदं दुर्भगेष्वस्मासु अनुकम्पेति उपलक्षणमेतत् श्रोत्रादेस्तथा श्रवणादिनिषेवणम् "अक्षरावन्त" इत्यादिश्रुतेःतवानुग्रह एव मुख्यं निमित्तं तन्नास्मत्प्रयत्नमिति भावेनाह। यद्दर्शनमिति। रूढयोगा निरन्तरानुवृत्तध्यानयोगिनो यमादिमन्तः पुरुषा यद्दर्शनमाशासते वाञ्छन्ति तादृशमितिभावः । महता कालेन प्रयतमानानां योगिनामाकांक्षामात्रमस्माकं तु अल्पेनैव कालेनाभूदित्यतो वतेति ॥ १३ ॥

इदानीमनुग्रहकातरं भगवद्भावं पश्यन् कर्दमः स्वमनोरथं गर्हयन्विज्ञापयति । य इति। ईश! ऐश्वर्यवारिधे! तव मायया बन्धकशक्त्या हतचेतसो नष्टज्ञानान्तःकरणाः पुरुषा भवसिन्धुपोतं संसारसमुद्रस्योत्तरणे तरीभूतं त्वत्पादारविन्दं कामलवाय उपासते सेवन्ते ये कामा निरयेऽपि स्युः सुलभास्तांस्तेषां रासि। "रा दाने" इति धातुः। निरयः सूकरादियोनिरतिकृच्छ्रत्वद्योतनार्थदमुदितमनेनेदृशमपि भगवत्कटाक्षोपक्षितं किमुत राज्यादीति सूचितम् ॥ १४ ॥

किमनेन प्रकृते इत्याशङ्क्याह मध्येष्वेको लम्पट इत्याह । तथेति। तथा पूर्वोक्तकामोपासकवत् सोऽहं च कामदुघाङ्घ्रिपस्याभीष्टवर्षणशीलकल्पतरोस्तवाशेषमूलमपेक्षितसमस्तपुरुषार्थकारणं पादमूलमुपेयिवानित्यन्वयः। किं कामस्त्वमित्यत उक्तं परिवोढुकाम इति समानशीलां गृहमेधिधेनुं गृहस्थयज्ञाङ्गभूतां भार्यां परिवोढुकामः परिणेतुकामः तत्र निमित्तमाह। दुराशय इति। दुरशोभने विषये आशयो यस्य स तथा। "दुरशोभनदुःखयोः" इति यादवः ॥ १५ ॥

अघटितघटकमहिमा भगवान् यतः सकामोपास्ति निकृष्टां जानन्तोऽपि मादृशास्तव वेदाख्यवचनमायया नियताः संसरन्तीत्याह। प्रजापतेरिति । अधीशेति संबुद्धेः प्रजापतिर्हरिरेव न विरिञ्चस्तस्य तत्र मुख्यार्थानुपपत्तेरिन्द्रादिशब्दवत् अधय ईश्वरा ब्रह्मादयस्तेषामपीशजगत्सृष्ट्यादिविभूतिप्रवर्तकत्वात् । प्रजापतेस्तव वचसा वेदलक्षणतन्त्या "तस्य वाक्तन्तिर्नामानि दामानि" इति श्रुतेः अयं जनः स्वर्गादिकामहेतोर्निबद्धः किल तत्पूजालक्षणं बलिं वहतीति शेषः हे शुक्ल! संसारशुचं विलाप्यकं सुखमादाय ददातीति लोकानुगतत्वादहमप्यनिमिषाय । प्राणिनां पुण्यपापनिरीक्षणार्थमुन्मीलितनेत्रत्वात्तच्छब्दवाच्याय कालान्तर्यामिणे तुभ्यं बलिं वहामि उत्तरत्रसभार्यो वहेयमितिचार्थः ॥ १६ ॥

अयमेव बलिर्भगवदर्पणबुद्ध्या चिकीर्षितो भक्तिहेतुरपि भवतीति भावेनाह। लोकांश्चेति। "अस्माल्लोकात्प्रेत्य" इति श्रुतेः लोकान् जडशरीराणि च लोकानुगतान्पशून् प्राकृतेन्द्रियाणि च हित्वा ते तव चरणातपत्रं श्रिताः पुनश्च परस्परं तव गुणवाद एव सीधु पीयूषं सुखजनकनवसूतगवीदुग्धं यत्तेन निर्यापिताः प्रवर्तिता देहधर्माः सच्चिदानन्दात्मकशरीरधर्मा येषां ते तथा यद्वा। निर्यापिता निवारिता जननमरणादिलक्षणा देहधर्मा येषां ते तथा ॥ १७ ॥

लक्षणादर्शनाल्लुक्यमध्याहृत्यान्वेतव्यं ते तव चक्रमेषामायुर्नछिनत्तीतिशेषः। सुदर्शनाद्यावर्तयति। अजरेति। अजरे क्षुदादि जरादोषरहिते अक्षे नाभिद्वारे भ्रमतीत्यजराक्षभ्रमिः नियतलिङ्गत्वाद्गिरिशब्दवत् अधिमासैः सह त्रयोदशमासाः अराणि दलानि यस्य तत्तथा त्रीणि शतानि षष्टिसंख्यासहितानि अहोरात्रलक्षणानि दिनान्येव पर्वाणि यस्य तत्तथा त्रिशतं षष्टिपर्वं छान्दसत्वादनुस्वारलक्षणबिन्दुलोपो नास्ति षट् ऋतवो नेमयश्चक्रप्रान्तदेशा यस्य तत् पणनेमयः अनन्ताः परमाणुद्व्यणुकादिलक्षणाश्छिद्राः छिद्रा अतिशयितश्छिद्रा अवयवा यस्य सन्तीति अनन्तच्छदि "तृतीयोऽतिशये,,इति सूत्रादिकारो लोकवैलक्षण्यलक्षणातिशयार्थः यद्वा छद इत्यस्मिन्नर्थे छिदीति निपातनं "मथनान्मिथिलो जात" इति वद्युक्तं च त्रीणि चातुर्मास्यानि नाभिर्यस्य स त्रिनाभिः करालस्रोतोऽतिदुस्तरवेगं जगदाच्छिद्य कवलीकृत्य धावत् गच्छत् पुनः पुनरावर्तमानमित्यर्थः यदेवं विधं कालचक्रं तदिति शेषः एषामायुराच्छिद्य न धावत् जगदाच्छिद्य धावदित्यनेन गृहाश्रमं गृहीत्वा पामरवन्न संसरामि किन्तु त्वदनुग्रहकां

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कर्मकारं जरसं गच्छन्नन्ते निवृत्तिमार्गमनुतिष्ठामीति ध्वनितम् ॥ १८ ॥

भक्तजनविषयस्वेच्छानियतसंसारोन्मूलनं कैमुत्येन सिद्धमिति भावेनाह । एष इति । निर्गुणस्य गुणेषु सत्सु तदस्मृतपानेन निर्यापितदेहधर्मत्वं सम्भवति तत्तु चिन्त्यमित्यतोवाह । एक इति । ब्रह्माद्यन्यतमासाध्यजगन्मर्जनादेस्त्वत्कटाक्षलेशनियतत्वेन बन्धध्वंसनं किमुवक्तव्यं सार्वज्ञ्यादिगुणाभावे सृष्ट्यादिकमनुपपन्नमतोऽन्यथानुपपत्त्या गुणानामानन्त्यं सिद्धमत उक्तम् । युक्तामिति । आत्मनि स्वोदरे स्थितस्य जगतः सिसृक्षया स्वाधीनया योगमायया चित्प्रकृत्या जडप्रकृत्या च लोकविडम्बनार्थं द्वितीययेत्युक्तं द्वितीय आत्मन्निति पाठे पुरुषरूपो भूत्वेत्यर्थः स्वशक्तिभिः स्वरूपसामर्थ्योपेतमत्स्याद्यवतारैः पालनादिकं करोषीति सृष्ट्यादिलक्षणं वास्तवमिति ज्ञापनायोर्णनाभिनिदर्शनमुक्तम् "यथोर्णनाभिः सृजते गृह्णते च" इति श्रुतेः ॥ १९ ॥

यथा सृष्ट्यादिलक्षणज्ञानं पुरुषार्थसाधनमित्याशयेन सृष्ट्यादिकमुक्तमेवं स्रष्टृसृज्ययोर्भेदज्ञानं तत्साधनमित्यभिप्रायेणाह । नैतदिति । अधीश यत् भूतसूक्ष्मं ब्रह्माण्डं मायया स्वेच्छयानन्यप्रेरणया रूपत्वेन जगृहे अङ्गीकृतवान् भूतसूक्ष्मैर्निर्मितमपि मृद्धटवदित्युच्यते तवैव रूपमीप्सितम् "सत्यं ज्ञानमनन्तं ब्रह्म" इत्युपनिषदभीष्टं पदं रूपं न भवति यत एवं ज्ञानमेव तोषलक्षणपुरुषार्थकरमभेदेन ज्ञानं खेदलक्षणदुःखकरमित्यर्थः तर्हि किमित्यग्रहीदित्यत उक्तम् । अनुग्रहायेति । त्वयि भक्तिभाजां मन्दाधिकारिणां भगवति भक्त्युत्पादकानुग्रहायाग्रहीदित्यर्थः त्वयैतत्कुतो ज्ञातं यर्हीति विलक्षित इति पदमावृत्य योजनीयं स भगवान् यर्हि यदा लसन्ती तुलसी यस्यां सा लसत्तुलसी तया मालया उपलक्षणमेतन्मकरकुण्डलाद्यलङ्कारैश्च मया विशिष्टत्वेन लक्षिताङ्कितोऽन्यवस्तु वैलक्षण्येन लक्षितो ध्यानपदं गमितस्तथेदानीमपि लक्षितो दृष्ट इति यर्हि यस्मात्तस्मादिदमेवाभीष्टमिति ज्ञातम् । यद्वा ।"नृ नय"इति धातोर्नोपाययान् भगवान् भूतानां सूक्ष्मं द्रष्टुमशक्यं यद्रूपं जगृहे एतत्तवेप्सितं पदं तर्हि कथ दृष्टमिति तत्राह । अनुग्रहायेति । तर्ह्यनुग्रहोऽपि तथापि शिष्टः किमिति नाभूदत्राह । यर्हीति । यदा यादृशलक्षणवत्तया लक्षितोऽध्यातस्तथा मया विलक्षितो दृष्ट इति यस्मात्तस्मात् भक्त्यनुकम्पितत्वात्स्वतत्त्वाभिरवज्ञानं श्रेयः साधनमिति सूचितम् ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विन्यस्त इति । गरुत्मतो विनतापुत्रत्वमात्रं निरस्तं तस्या विनतायाः जन्माभावात् ॥ ११ ॥ १२ ॥

टीकायां कर्दमवाक्यवृन्दार्थं संक्षेपेणाह । त्वामिति । अनुगृह्णायेति । कार्पण्यदोषनाशार्थं वरं दत्त्वा पश्चादनुगृह्णायेत्यर्थः । प्रीतिस्वभावात्मेत्युक्तत्वाद्भवसिन्धुपोतमित्यनेन लोकानां तादृशोपकर्त्तरि तस्मिन् प्रीतिरेव समुचितेति सूचितम् ॥ १३ ॥ १४ ॥

अशेषमूलमिति ।"स्वर्गापवर्गयोः पुंसां रसायां भुवि सम्पदाम्। सर्व्वासामपि सिद्धीनां मूलं तच्चरणार्चनम्" इति ॥ १५ ॥

तर्हि प्रीत्यैव केवलया किं भजसि तत्राह । प्रजेति । ते तवाधीनो यः प्रजापतिरित्यादि श्रीगीतोक्तः सोऽपि त्वदाज्ञानुसारेणैव तथा वक्तीति भावः । ननु कामहतोऽनुबन्धो भवतु नाम त्वं न कामहतः कथं नारदादिवत्तन्नातिक्रामसि तत्राह । लोकानुगतः । तेषु लोकेषु प्रतिष्ठालिप्सुरित्यर्थः प्रतिष्ठात्यागस्तु दुष्कर इति भावः । तस्मादनिमिषाय कालात्मकत्वात् । सर्वप्रवर्त्तकाय तुभ्यं बलिं पूजोपहारञ्च वहामि समर्पयामि दुष्फले लब्धेऽप्यायत्यां तादृश दुर्वासना निवर्त्तनामिति विचिन्त्येति भावः । यद्यप्यसौ चामलस्वभावात् गुरुलोकतः सङ्कोचेनैव तादृशनिजदुःखमप्यङ्गीकरोति नतु प्रतिष्ठादीच्छया तथापि परमाश्चर्यशिरोमणिः स्वस्मिन् तत्तद्दोषत्वेनैव पश्यतीति ज्ञेयम् ॥ १६ ॥

शुद्धभक्तानान्तु लोकसङ्कोचहेतुकापि कामाद्यासक्तिर्निन्द्यापि तथैवाह । लोकांश्चेति ॥ १७ ॥

टीकायां त्रिगुणेत्यधिकमेवात्र भाति त्रिनाभिशब्दस्यान्यथैव व्युत्पाद्यत्वात् । पाठस्तु त्रिनाभीत्येव सत्पुस्तके ॥ १८ ॥

सकामैरपि सर्वात्मा भवानेव प्रार्थ्य इत्यभिप्रायेणाह । एक इति । सिसृक्षया हेतुना आत्मन् आत्मन्यधिकृता या योगमाया तया चाधिकृता याः स्वशक्तयः ताभिः सर्व्वत्रैव विशेषणं अद्वितीययेति अर्थवशाद्विभक्तिविपरिणामः भवानिति क्वचित् पाठः ॥ १९ ॥

अतः सकामत्वात्त्वत्तो बहिर्मुख एव मादृशस्त्वं तु तत्रापि परमकृपालुरित्याह । नैतदिति । यत् शब्दादिरूपं विषयमस्मभ्यं तनुषे एतत्तव ईप्सितं न स्यात् कथं तर्हि तनोमि तत्राह । मायया व्याजेनैव स्निग्धेनाग्रजेन स्वस्मिंस्तत्स्नेहवर्द्धनार्थमिति बालानुजाय खण्डलड्डुकदानवत् तद्व्याजेनात्मनि स्नेहमेव वर्द्धयितुमित्यर्थः । अतस्तद्दानमनुग्रहायास्तु भवेत् तत्र लिङ्गं । यर्हि यद्वरदानसमये मायया कृपया हेतुभूतया त्वं दृष्टोऽसि तत्रापि लसन्त्या भक्तजनदृष्टेः परमसुखदया तुलस्या युक्त इति भगवानित्यत्र तनुवेति पाठे तादृशतुलसिकया तन्वेत्यर्थः वरदानमात्रं पारोक्ष्येणापि भवेदिति भावः ॥ २० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

पुरुषार्थेषु दोषान्निराकुर्वन्नाह । विन्यस्तेति । धर्म्मे हि मृत्युश्चमात्मकोऽमृत्युरूपश्च निमित्तभूतश्च कालः बाधको भवतीति तन्निराकरणार्थं काले चरणकमलं भक्तिमार्गे विन्यस्य स्थितः अंसदेश इति मोक्षपर्यन्तं भक्तिरुक्ता शिरश्चतुर्थांश इति खे आकाशे अवस्थितं आकस्मिकोऽर्थः तस्य निरूपितः वक्षसि श्रीर्यस्य कामो यथेच्छं निरूपितः कौस्तुभो मणिः कन्धरायां यस्य जीवाः सर्वे स्वोपरि यथासुखं नयनार्थं स्थापिता इति सर्वविधा मुक्तिरुक्ता ॥ ११ ॥

जातहर्ष इति अत एव जातो हर्षो यस्य मूर्द्ध्ना क्षितावपतत उपरिस्थितस्य तिष्ठन्नेव चरणं न स्पृष्टवान् दर्शनाकाङ्क्षी च शिरोनमयेदिति दोषश्च व्यावर्त्तितः समागतो मदर्थमेवेति लब्धो भगवद्रूपो मनोरथो येन एवं कायिकं मानसिकं च भजनमुक्त्वा वाचनिकं भजनमाह । गीर्भिस्त्वभ्यगृणादिति । अभितो गृणनं सर्वसिद्धान्तनिरूपणपूर्वकम् भगवति प्रीतिः स्वभाव एव यस्य अतो भक्त्या गृणनं न वक्तव्यं सर्वकर्मस्वेव भक्तेर्विनियोगात् तादृश आत्मा यस्य जीवान्तःकरणस्वभाव एतादृश इति देहकार्ये दासकार्ये वा स्नेहो नावच्छिन्नो निरूपितः प्रार्थनार्थं कृताञ्जलिरिति प्रस्तुताञ्जलिरुक्तः प्रसादग्रहणार्थम् ॥ १२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

नवधा वर्णयामास सृष्ट्यर्थं गुणभावतः ।
आद्यास्तु रजसस्त्वेन तमसाप्यत्र योजितम् ॥
द्वाभ्यां सत्त्वं रजः सत्त्वात् त्रिभिरन्तिम ईर्यते ।
सत्त्वमिश्रं रजः पूर्वं तमोमिश्रं तथापरम् ।
फलं तु भगवानेव सर्वोत्कृष्टमिति स्थितिः ॥
तं परित्यज्य तस्माद्धि प्राप्यं प्रथममुच्यते ।
दोषज्ञाने तथा कामे विद्यमाने तु मध्यमः ।
विचार्य भगवान् दातेत्यतोवै शरणं गतः ॥

प्रथमं सत्त्वयुक्तरजोभावेन भगवानेव परमपुरुषार्थ इति निरूपयति । जुष्टमिति । नः अक्ष्णोः सांसिध्यं सम्यक् सिद्धेर्भावः तव दर्शनादेव जुष्टं सेवितं सिद्धिरुत्तमा सर्वफलात् यतः सर्वाणि फलानि स्वाधीनान्येव भवन्ति सा च सिद्धिरस्माकं जातेति सर्वप्रकारेण भविष्यतीति ज्ञायते यतः प्रथममक्ष्णोः सिद्धिर्जातास्मामिर्ज्ञाता न हि असिद्धा दृष्टिः अधोक्षजं द्रष्टुमर्हति तेन ज्ञायते अक्षिभ्यां सांसिध्यमाधिदैविकी सिद्धिः सेविताति अत एव वर्तेति हर्षे अथेति अलभ्यलाभोक्तिः सिद्धयः सर्वाः सत्त्वकार्याः अखिलानि च सत्त्वानि त्वयि राशीभूतानि तानि चेत्संनिकटे दृष्टानि तदा का सिद्धिरवशिष्यते इत्यभिप्रायेणाह । अखिलसत्त्वराशेरिति । न इति सर्वानेव सिद्धानात्मत्वेन ज्ञात्वा वदति एवं दर्शनान्यथानुपपत्त्या चक्षुषोः सिद्धिरुक्ता इदानीं दर्शनमेव सर्वसिद्धीनां फलमित्याह । यद्दर्शनमिति । हंहेति सम्बोधनात् नेदं स्तोत्रं क्रियते किन्तु वस्तुस्वरूपमेव तथेति ज्ञापितं भगवतः स्तोत्रं नित्यसिद्धं सर्वैरेव क्रियत इति अतः स्तोत्रस्याश्चर्यत्वाभावात् न वाक्यानां स्तोत्रपरत्वं रूढयोगा अपि बहुभिर्जन्मभिः कायव्यूहमपि कृत्वा देहदेशकालकृतसन्देहव्यावृत्त्यर्थं सद्भिरपि जन्मभिः यद्दर्शनमाशासते तेषां सिद्धयः स्वतः सिद्धाः दर्शनं तु दुर्लभमाकाङ्क्षितमेव ॥ १३ ॥

एवं भगवद्दर्शनं सूचकत्वेन फलत्वेन च निरूप्य दर्शनानन्तरं दर्शनदातुः सकाशाद् येऽन्यद् कामयन्ति तान्निन्दति । ये मायेति । ये तव पादारविन्दं कामलवायोपासते ते मायया हृतचेतसः बालो हि मायया मोहितो बहुसुवर्णं दत्वा भक्ष्यमुष्टिं गृह्णाति तद्वदिति तथा ग्रहणे हेतुः । हृतचेतस इति । पादारविन्दमिति सुसेव्यता ननु ये भजन्ति ते कार्यार्थमेव अतो वरप्रार्थनोचितेत्याशङ्क्याह । भवसिन्धुपोतमिति । सिन्धौ पोतोऽस्ति तत्तीरवासिनां पारोत्तरणहेतुः तदर्थमेव तस्य निर्माणात् नतु ग्रामवद्भोगार्थं अतो ये पारगमनेच्छवः तैरेवारोढव्यः न तु ग्रामवत् स्थित्यर्थं तथार्थमारोहे कर्णधारः क्रुध्यति ये पुनस्तत्र कार्यार्थं स्थापिताः ते भोगं प्राप्नुवन्तोऽपि निरोधेन क्लिष्टयातयामभोगानेव भुञ्जते ते तु नरकेऽपि भवन्ति निरोधादीनां विद्यमानत्वात् अतः पोतारूढः यथा कथञ्चित् पार एव गच्छेत् नतु ततो विषयभोगं वाञ्छेत् तत्र निरोधस्य सहजस्य विद्यमानत्वात् कामलव एव तत्र भोगेन भवति परमदयालुस्तु भगवान् तदपि प्रयच्छति यथा महता कष्टेन पोतारूढस्तत्र स्थितकर्णधारात् भक्ष्यमात्रं प्राप्नोति महानगराद्यपेक्षया तु तद्ग्रामादिकमपकृष्टमेव तद्वदित्यर्थः ॥ १४ ॥

एवं गुणदोषान् ज्ञात्वापि गत्यन्तराभावात् उद्यतकामस्य प्रतीकाराभावाच्च आत्मार्थमपि भगवन्तमेव प्रार्थयति । तथेति सवाहिमति । ज्ञात्वापि प्रकटकामः अत एव परिवोढुकामः स्वयोगबलेन कामिनीर्निर्माय न भोगकामः न वा तथोत्पादिताः ब्रह्मणः कार्ये प्रयोजकाः भवेयुः हीनास्ते तद्व्यावृत्त्यर्थमाह । समानशीलामिति । समानं शीलं यस्याः तदा पूर्णमपत्यं भवति अनेन भगवता मदानन्देनैव सा निर्मिता भवतीति ज्ञापितं किञ्च न केवलं कामार्थाः किन्तु धर्मादयोऽप्यपेक्ष्यन्ते अतो ये गृहमेधिनः गृहस्थितबुद्धयः धर्मार्थकामपराः तेषां धेनुः धर्मादिदोग्ध्री तादृशीं परिवोढुकामः ते कामदुघाङ्घ्रिपस्य मूलमुपेयिवान् कल्पवृक्षमूले गतः सर्वं प्राप्नोति यावती शक्तिः कल्पवृक्षे भगवत्स्थापिता तत्र सिद्धं भगवच्चरणारविन्दद्वयं तु ततो विशिष्टमित्याह । मूलमिति । न हि कल्पवृक्षः सर्वस्य मूलं न हि देवहूतिं दातुं समर्थो वा भवति ननु चित्तशुद्धिं प्रार्थ्य संपादय वा किमनयेत्याशङ्क्याह । दुराशय इति । अन्तःकरणशुद्ध्यभावात् न स पक्षः सिद्ध्यति यथा भवसिन्धुपोतः तथा कल्पवृक्षोऽपि भवान् अतो भार्यार्थमपि भजनं युक्तमितिभावः ॥ १५ ॥

नन्वन्तःकरणशुद्धिरेव वरः कथं न प्रार्थ्यते किं कामपूरणेनेत्याशङ्क्याह । प्रजापतेरिति । न केवलं कामः किन्तु पितुराज्ञा च स च वैष्णवः त्वत्पुत्रः अतस्तव यः प्रजापतिः तस्य वचसा लोकापेक्षया वा स एव भवान् यथा ग्रामवासिनां ग्रामाधिपतिरेव महाराजः लोकानां ब्रह्मवाक्यमनुलङ्घनीयमित्याह । ते वचसा तन्त्या अयं सर्वो लोकः कामहतोऽनुबद्धः ।

ऋणत्रयमपाकृत्य मनो मोक्षे निवेशयेत् ।
"जायमानो वै ब्राह्मणः त्रिभिर्ऋणवान् जायत" इति च

एवं विधानि श्रुतिस्मृतिवाक्यानि सकामपराणि अतः सकामश्चेदन्यथा कुर्यात् पतेदेव अतः हे अधीश ! अनुलङ्घ्य सामर्थ्य सर्व एव लोकः कामहतोऽनुबद्ध एव एवं सामान्यतः कामहतस्य ऋणत्रयापाकरणं कर्त्तव्यमित्युक्त्वा स्वस्य लोकत्वाभावेऽपि सकामत्वं लोकानुगतत्वं च वर्त्तत इत्याह । अहञ्चेति हे शुक्ल ! ते च बलिं वहामि इदमधिकं भक्तोऽहमपि यतः अतस्त्रियकार्यार्थं मह्यं स्वदियेति भावः शुक्लेति संबोधनात् न संसारकृतः कश्चन क्लेशो भविष्यतीति सूचितम् ॥ १६ ॥

एवं लोकानुसारिणं सकामभक्तमात्मानं निरूप्य मुख्यभक्तान्निरूपयितुं तेषां धर्ममाह । लोकांश्चेति । मुख्या भगवद्भक्तास्त्रिधर्मा भवन्ति प्रथमतो लोकान् त्यजन्ति तदनु ते चरणातपत्रमाश्रिता भवन्ति निरन्तरं च तादृशैः सह तथा भगवद्गुणपानं कुर्वन्ति यथा देहादीनामस्मरणं भवति यद्येतन्मध्ये एकमपि न्यूनं भवेत् न स वैष्णवो मुख्यः यथा लोकास्त्यक्तव्या एवमेव भगवद्भक्ता अपि लोकानुगताश्चेत्त्यक्तव्या एव लोकापेक्षयाप्येते विशेषतस्त्यक्तव्या इत्यत्र हेतुमाह । पशूनिति । अन्धश्चेत्कूपे पतति युक्तमेतत् चक्षुष्मांश्चेत्पतति स महानन्ध इति ज्ञेयं पश्चाच्चरणशरणता आतपत्रग्रहणात् इदानीमिव भगवान् यस्य प्रसन्नो भवति तथा सति शरणागतश्चेत् सन्मुखो भवति स्वत एव गुणकथने रसाविर्भावो न स्यादभिमानश्च स्यादिति समानाश्चेत्परस्परं वदेयुः तत्रापि त्वद्गुणानां वादो यत्र तादृशवाक् समुद्र एव मथनादिवोद्धृतं यदमृतं तेन कृत्वा नितरां यापिताश्चेत्क्षुत्पिपासादयः त एवं भगवद्भक्ताः ये कथामृते पीयमाने देहधर्मरहिता भवन्ति अमृतं च तदेव यद्देहधर्मनिवर्त्तकं येषाञ्च निवर्त्तेत तप्च त्यक्तलोका भवन्ति अन्येषां तदपेक्षाया विद्यमानत्वात् वादस्तदैवान्तस्तापं दूरीकुर्यात् यदि

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

चरणच्छायामाश्रितो भवेत् यस्य छायान्तरेणाधर्मनिवृत्तिः अन्नादिना च क्षुन्निवृत्तिः ते चेल्लोकाननुगताः पतिता एव तदा उभयभ्रंशादतो लक्षणत्रयमुक्तम् ॥ १७ ॥

तथा विधानां फलं वदन् कालादीनामबाधकत्वमाह । न तेजरेति। ते त्रिणाभि कालचक्रमेषामायुः आच्छिद्य धावत् न भवतीति सम्बन्धः कालस्य वलिष्ठत्वमनन्यप्रेर्यत्वं वक्तुं प्रवाहत्वेनोच्यते स्वरूपं चक्रेत्वन्यप्रेरणं भवति चक्रस्येव वा गतिविशेषस्य प्रवाहत्वं विधीयते कालचक्रं सम्वसत्सरात्मकमविकृते अक्षे अक्षररूपे प्रोतं भ्रमति नाशकमिति समलं त्रयोदशारमुच्यते त्रयोदशमासा एवाराः सारमेतच्चक्रं ननु प्रधियुक्तं एकैकस्यारस्य त्रिंशत्पर्वाणि भवन्ति तथा सति त्रिशतं षष्टि च पर्वाणि यस्य इदमाधिदैविकं चक्रं तुल्यमेव अन्यथा तस्यैव परिवर्त्तो न स्यात् आधिभौतिकं हि वृद्धिक्षयौ अतस्तावत्पर्वत्वं नानुपपन्नं षट् ऋतव एव नेमयो यस्य आरास्तु नाभिनेमिं च प्रविशन्ति अयं च त्रिणाभिर्भवति सर्पकुण्डलिकावन्नाभित्रयं परं चत्वार एवाराः एकस्यां नाभौ प्रविशन्ति अत एवास्य करालत्वं ते च वर्षातपहिमागमा नाभिस्थानीयाः किञ्च अनन्तच्छदि च भवति प्ररोहात्मा चायं सम्वत्सरः यतोऽस्य पत्राणि सन्ति न तु प्राकृतचक्रवत् शुष्ककाष्ठजनितम् अतो नास्य कदापि क्षयः करालं चास्य स्रोतः अत एव जगदाच्छिद्य धावद्भवति लोकमध्ये स्थितौ अवर्जनीयतयापि तस्यायुराच्छिद्येत्तच्छायाश्रयणेऽपि कदाचित्पातयेत् परिवृत्तौ तद्गतानां वैकल्यसंभवात् तदपेक्षया तन्निकटगमने पातयेदेव अपेक्षा च कथया चेद्देहधर्मोनिवर्तते निवृत्तिस्तदैव एवं द्वाभ्यां भक्तिमार्गनिष्कर्षो निरूपितः ॥ १८ ॥

तामसभावेन जगत्कर्तृत्वेनोक्त्वा तं च लीलाविग्रहं मत्वा तेन च वरं प्रार्थयते। एक इति त्रिभिः। त्वमेक एव स्वयं यदा जगतः सिसृक्षा जाता तदा तादृशोऽपि सन् आत्मनि स्वाधिष्ठाने अधिका योगमाया निर्मिता तदा सा द्वितीया करणत्वेन प्राप्ता तदा सर्वमेव जगत् अदः अव्यक्तरूपमपि सृजसि पासि पुनश्च ग्रसिष्यसे असहाय एव करणमात्रापेक्षायां दृष्टान्तः यथोर्णनाभिरिति । तथाकरणे सामर्थ्यं भगवानिति ऊर्णांशाः स्वशक्तयः सत्त्वादयः सर्वकर्तृत्वात्पालकत्वाच्चस्थ्यादिदानेन सृष्टिकारणं नाश्चर्यम् ॥१९॥

तथापि भक्तिमार्गे तथा करणं तस्याप्याश्चर्यमित्याह नैतदिति । एतद्विवाहादिलक्षणं पदं तवाभीप्सितं न भवति वर्तेति खेदे यस्त्वमधीशः अन्यथापि सर्वां सृष्टिं कर्त्तुं शक्तः भक्तेभ्यश्च संसारदायकं भूतसूक्ष्ममहङ्कारं तन्मात्रा वा यत्नस्तनुषे विस्तारयसि एतन्न तवेप्सितं सहजजगन्निर्माणे भक्तार्थं त्वया विषया न सृष्टा इत्यर्थः नन्वेवं सत्यन्यार्थं निष्पादिता विषयाः कथं प्रार्थ्यन्ते तत्राह । अनुग्रहायास्त्विति। अन्यार्थं कृता अप्यनुग्रहणान्यस्मै देयाः अत एतद्दानमनुग्रहाय भवतु अयीति संबोधनं स्नेहेन अव्ययं चैतत् नन्वनुग्रहेणापि कथमन्यथा कर्तुं शक्यते तत्राह। यर्हि मायया कृत्वा लसत्तुलस्या तनुवा भावान्विशेषेण लक्षितः त्वया न भक्तार्थं स्वार्थं वा किंचित्सृष्टं तत्र परार्थसृष्टैरेव सत्त्वकार्यैः स्वस्य तनुं संपाद्य तुलस्याद्याभरणानि च गृहीत्वा विष्णुरयमिति चेदात्मानं प्रकाशयसि तथा भक्तमपि यथाभिलषिताविषययुक्तं संपादयेत्यर्थः तामसभावेत्वेवं विधैव सृष्टिः ॥ २० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अहो मद्भाग्यस्य प्रभोः कारुण्यस्य च परमा काष्ठा यच्चिरेणैव दर्शनं लब्धवानस्मीत्याह । जुष्टमिति । वतेति विस्मये तव दर्शनान्नोऽस्माकमक्ष्णोः सांसिद्ध्यं ममाक्षिणी अद्यैव सम्यक्सिद्धे सफले जाते इतः पूर्वमपि सिद्धे अक्षिणी अप्यनक्षिणी एवेत्यास्तामिति भावः तच्च सांसिद्ध्यं जुष्टं सेवितं सर्वैरादृतमित्यर्थः । अहो धन्ये ते कर्दमस्य अक्षिणी नमस्ताभ्यां याभ्यां हरिर्दृष्ट इति सर्वे तोष्यन्तीति भावः । तव कीदृशस्य अखिलसत्त्वानामतिनिकृष्टसत्त्वानामित्यर्थः । राशेः राशिरूपस्येत्यर्थः नैतदनुरूपं मया साधनञ्च कृतमित्याह । यदिति । हे ईड्य ! सद्भिरुत्तरोत्तरश्रेष्ठैर्बहुभिरपि जन्मभिः रूढो योगो यैस्तेऽपि आशासते एव नतु लभन्ते ॥ १२ ॥ १३ ॥

हन्त हन्त एवं कृपासमुद्रमपि त्वां सकामतया भजन्तीत्यहो मौढ्यं लोकानामित्याह । ये तव मायया हतबुद्धयो भवन्ति त एव नान्ये कामलेशाय कामलेशमेव प्राप्तुमुपासते त्वन्तु तेषां कामान् बहूनेव अकामितानपि रासि ददासि अन्यथा भक्तिसुखानभिज्ञास्ते त्वद्भक्तिमपि त्यक्तुं नैव विलम्बेरन्निति भावः । भक्तेरत्यागे तु काले तेऽपि निष्कामा भवेयुरेवेत्याशयेन ददासि नतु तद्दाने तव तात्पर्यं यतस्ते कलत्रपुत्रकुटुम्बैश्वर्याद्याः कामा निरये नारक्यामपि योनौ स्युः किन्तु स्वर्गनरकयोः कर्मजन्यत्वनियमनात् त्वद्दत्तानां तु तादृशानामपि भोगानां कर्मजन्यत्वाभावेन बन्धकत्वाभावात् नैव वस्तुतः स्वर्गनरकशब्दव्यपदेशस्तदपि तत्तुल्यत्वात्तथोक्तिरिति ज्ञेयम् ॥ १४ ॥

योऽहं सकामान्निन्दामि सचाहमेव सकामेषु मुख्य इत्याह । तथेति । गृहमेधो गृहाश्रमस्तत्र धेनुं त्रिवर्गदोग्ध्रीं भार्यां परिणेतुमिच्छन् धेनुपदेन स्वस्य निर्बुद्धित्वाद्वृषत्वमुक्तम् । किञ्च सकामेष्वपि मध्ये अहं दुराशयः दुरभिप्रायत्वादतिनिर्बुद्धिरित्यर्थः यतःपरिवोढु काम एव कामदुघाङ्घ्रिपस्य तव मूलमङ्घ्रिमुपेयिवान् अशेषाः सर्वे एव पदार्था मूले तले यस्य तत् । स्वर्गापवर्गयोः पुंसामित्याद्युक्तेः ॥ १५ ॥

नन्वेवं चेदस्ति विवेकस्तर्हि निष्काम एव कथंत्वंन भजसीत्यत आह । प्रजापतेर्ब्रह्मणस्तव त्वदीयस्य प्रजाः सृजेति वचसा तन्त्या लोको मरीच्यादिः "स ह यज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः अनेन प्रसविष्यध्वम्" इति गीतोक्तेश्च सोऽपि त्वदाज्ञानुसारेणैव वक्तीति न तस्यापि दोष इति ते पदध्वनिः । ननु काम हतो लोको अनुबद्धो भवतु नाम त्वं त्वकामहतः कथं सनकादिवत्तन्नाति क्रामसि तत्राह। अहञ्च लोकानुगतः तदनुगामिबुद्धिर्नतु नारदादिसदृशो भवितुं समर्थ इत्यर्थः अतस्तन्त्या बद्धो वृष इव बलिं वहामि कर्ममयीं त्वदाज्ञामनुवर्ते तदर्थमेकां भार्यामिच्छामीत्यर्थः चक्रात् त्वद्भक्तिञ्च करोम्यायत्यां त्वत् प्रप्त्यर्थमिति भावः हे शुक्ल! अनिमिषाय कालरूपं त्वां प्रसादयितुमित्यर्थः ॥ १६ ॥

ननु लोकाः पित्रादयः तदा ज्ञानुवर्तिनः पुत्रभ्रात्रादयश्च लोकतो धर्मतश्च यशस्विनः सुखिनश्च दृश्यन्ते किमिति तान् सकामत्वान्निन्दसि पित्रादीन् दुःखयतां निष्कामभक्तानां निष्परिग्रहाणां किं सुखं किं वा यशो यतस्तानभिनन्दसि इति तत्राह । द्वाभ्याम् लोकानिति पशूनिति । तेषां पशुत्वात्तत्त्यागे दोषो नास्तीति भावः यद्वा लोकान् न्यायमीमांसादिशास्त्राभिज्ञान् तदनुगतांस्तदुपदेश-

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वाक्येषु विश्वसतः शास्त्रानभिज्ञान् तेषामुभयेषामपि पशुत्वं भक्तिराहित्यात् चरणमेवातपत्रमाश्रिता इति निरातपत्राः पशवस्तु जाज्वल्यन्त एवेति भावः तेषां सुखमपरमप्याह । त्वद्गुणानां वादः कथनमेव संसारविस्मारकत्वात् शीधुमृत्युदूरीकरणादतिस्वादुत्वाच्च पीयूषं तेनैव तत् पानेनैव निर्यापिता देहधर्मा बाल्यपौगण्डादयः क्षुत्पिपासादयो वा यैस्ते भवन्तीति क्रियया अन्वयः ॥ १७ ॥

त एव कालं जयन्ति नान्ये इत्याह। न ते इति । यत्त्रिनाभि कालचक्रं तज्जगदाच्छिद्य संहृत्य धावदपि एषां त्वद्भक्तानामायुराच्छिद्य धावन्न भवतीत्यन्वयः कथम्भूतमजरं ब्रह्म तस्मिन्नक्षरूपे भ्रमिः भ्रमदिति वक्तव्ये अतिभ्रमणशीलत्वात् उपचारेण भ्रमिरित्यभेदनिर्देशः अधिकमासेन त्रयोदशमासा अरा यस्य तत् त्रिशतं षष्टिश्चाहोरात्राः पर्वाणि यस्य तत् शतशब्दे विभक्तेरलुगार्षः षट् ऋतवो नेमयो यस्य अनन्ताः क्षणलवादयश्छदाः पत्राणि पत्राकारा धाराः सन्ति यस्य त्रीणि चातुर्मास्यानि नाभयः आधारभूतानि वलयानि यस्य करालस्रोतस्तीव्रवेगम् । एतैर्विशेषणैरेव सम्वत्सरात्मकं कालचक्रमुक्तमिति द्रष्टव्यम् ॥१८॥

नन्वेवं निष्कामभक्तानेव धन्यान् ब्रूपे अथ च निष्कामो भवितुं न शक्नोषि तर्ह्यन्यस्मादेव देवतान्तरात् शीघ्रफलप्रदात् कथं स्वकामं न साधयसि तत्र त्वां विना जगत्यस्मिन्नन्यं कमपि न पश्यामीत्याह । स्वयमेक एव सन्नपि इच्छाया द्वितीयत्वाभावात् अद्वितीयया सिसृक्षया यद्वा तव सिसृक्षा ब्रह्मादिसिसृक्षैव नान्यानुरोधवतीत्यर्थः आत्मनि स्वस्मिन्नधिगतः प्राप्त ईक्षणयोगात् योगो यस्यास्तया मायया सृष्ट्यादिकं करोषि यद्वा आत्मन्यधिकृतया योगमायया चिच्छक्त्या हेतुना याः स्वीकृताः सत्त्वाद्याः शक्तयस्ताभिरदो विश्वं स्वव्यतिरिक्तसाधनानपेक्षत्वे दृष्टान्तः अथेति अतस्तद्भिन्नस्य देवतान्तरस्याभावात् सकामेनापि मया त्वमेव सेव्यसे इति भावः ॥ १९ ॥

एवञ्चेत्तर्हि मत्प्रसादात् तव कलत्रापत्यभोगैश्वर्याणि परमोत्तमानि भवन्त्विति वरं ददानं भगवन्तं सप्रणाममाह । नैतदिति द्वाभ्याम् । हे अधीश ! एतत्पदं मत्काम्यमानं वस्तु तव स्वभक्तमात्रहितकारिणो दातुमीप्सितं न भवति न राति रोगिणोऽपथ्यं वाञ्छतोऽपि भिषक्तम इति त्वदुक्तेरवसीयते इति भावः। कथं तर्हि ददामीति तत्राह । यद्यस्मान्नोऽस्मभ्यं भूतसूक्ष्मं शब्दादीन्द्रियभोग्यं विषयसुखं तनुषे ददासि तत् खलु माययैव नत्वमायया अनभिज्ञभक्तोऽयमन्यथा विमनस्को भविष्यतीति मदनुरोधेनैवेत्यर्थः वासनामयं विषयसुखमन्तःकरणे वर्त्तत एव तदेव वरदानेन विस्तारयसीति तनु धात्वर्थः। नन्वेवञ्चेत् तर्हि न ददामीति तत्राह । अनुग्रहायास्तु दीयमानमेतदस्तु किं त्वदनुग्रहायेति हन्त हन्त मयैव दत्तेन विषयसुखवरेण भक्तोऽयमन्धे तमसि पातितस्तमिममुद्धरामीत्यायत्यां त्वत्कृपाप्राप्त्यर्थमप्यस्त्वित्यर्थः तत्र लिङ्गं यर्हि वरदानसमये सम्प्रति विलाचितः विशेषेण त्वं दृष्टस्तर्हि मायया कृपया मनः स्पर्शस्मितेक्षणमित्युक्तेः स्मितद्योतितकृपाकटाक्षेण विशिष्ट एवं दृष्टः तत्रापि लसन्त्या भक्तजनैः परिचर्यायां समर्पितया दृष्टेः परमसुखदया तुलस्या उपलक्षिता चिदानन्दमयी या तनुस्तया युक्त इति भक्तपरिचरणीयत्वमेव तनोरमायिकत्वे लिङ्गममायिकतनुदर्शनप्रदानमेव कृपायां लिङ्गं भगवानित्यप्यत्र पाठः ॥ २० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सांसिध्यं लब्धार्थत्वं जुष्टं सेवितमाशासते प्रार्थयन्ते ॥ १३॥

यद्यप्यर्थार्थं भजनं नातियुक्तं तथापि प्रजापत्यात्मनो भवतो वाक्तन्त्या बद्धोऽहं सकामभक्तः सन् तुभ्यं बलिं हरामीत्याह । य इति त्रिभिः । रासि ददासि ॥ १४ ॥

गृहमेधे गृहाश्रमे धेनुं त्रिवर्गदोग्ध्रीं भार्यां कामदुघाङ्घ्रिपस्य कल्पद्रुमस्य तव मूलमङ्घ्रिम् ॥ १५ ॥

हे अधीश!हे शुक्लधर्ममूर्ते ! लोकः कामहतोऽत एव सहोभौमधर्ममाचरतामित्यादिवाचा बद्धः अहमपि लोकानुगतः लोकमनुसृतः अनिमिषाय कालात्मने तुभ्यम् बलिं वहामि यथा-कामहतो लोकः कालवश्यतां वहति तथा हेयोपादेयविवेकवानहमपि लोकानुगतत्वात्कालवश्यतां वहामि न तु कालातीतं त्वां निष्कामभजनेन प्राप्यकालवश्यतां त्यक्ष्यामीति फलितोऽर्थः ॥ १६ ॥

लोकतदनुगतापेक्षकाणां त्वद्भजनरसिकानां तु न कालवश्यतेत्याह । लोकानिति द्वाभ्याम् । लोकानस्मद्विधान् लोकानुगतांश्च पशून् पशुतुल्यान् हित्वा भवद्भजने विघ्नभूतं कलत्रादि प्रावण्यं लोकतदनुगतमनादृत्येत्यर्थः ते चरणातपत्रं तापत्रयघ्नं तव चरणं ये श्रिताः अत एव परस्परं मिथः त्वद्गुणानां वादः सम्वादस्तदेव सीधु अति मधुरं पीयूषममृतं तेन निर्यापिता अनादितः प्रतीयमाना अपि आत्मनः सकाशात् निराकृताः देहधर्माः जन्ममरणादयो यैः एषामित्यग्रिमेणान्वयः ॥ १७ ॥

ते तव यत् त्रिनाभि त्रीणि चातुर्मास्यानि नाभयः आराधारभूतानि वलयानि यस्य तत्तथा कालचक्रं तत् जगदाच्छिद्य स्वैपरिच्छिन्नं कृत्वा धावदपि एषां त्वद्गुणसम्वादेन जन्ममरणरहितात्मयाथात्म्यविदां त्वायुराच्छिद्य धावन्नैभवति तेषां देहेन्द्रियादिविलक्षणनित्यस्वरूपनिष्ठानां कालवश्यत्वाभावात् कथम्भूतम् अजरे ब्रह्मण्यक्षरूपे भ्रमिर्भ्रमणं यस्य तत् सोरलुक्छन्दोऽनुरोधेन अधिकमासः अन्ये द्वादशमासाश्च आरा यस्य तत् त्रिशतं षष्टिश्च अहोरात्राणि पर्वाणि यस्य तत् त्रिशतशब्दे विभक्तेरलुगार्षः षट् ऋतवो नेमयो यस्य तत् अनन्ताः क्षणलवादयः छदाः पत्राणि पत्राकारा धाराः सन्ति यस्य तत् करालस्रोतः तीव्रवेगम् ॥ १८ ॥

सर्वकारणत्वं सर्वशक्तिमत्त्वं भुक्तिमुक्तिप्रदत्वं भक्तेच्छानुसारित्वम् सर्वोपास्यत्वं च भगवतो वदन् नमस्करोति । एक इति त्रिभिः । हे भगवन् ! आदौ स्वयमेकः सन् द्वितीयया जगतः सिसृक्षया आत्मन्यधिगतया अनन्तशक्तिमत्यात्मनि आविष्कृतया योगमायया युज्यते इति योगः सङ्कल्पः तेन सहिता तत्प्रवर्तिता माया प्रकृत्याख्या शक्तिस्तया कालादिरूपशक्तिभिश्च शक्तिपरिणामसिद्धान्तं द्योतयितुं दृष्टान्तमाह , यथोर्णनाभिरिति ॥ १९ ॥

तं त्वाऽनुभूत्योपरतक्रियार्थं स्वमाययावर्तितलोकतन्त्रम् ।
नमाम्यभीक्ष्णं नमनीयपादसरोजमल्पीयसि कामवर्षम् ॥ २१ ॥

॥ ऋषिरुवाच ॥

इत्यव्यलीकं प्रणुतोऽब्जनाभस्तमाबभाषे वचसाऽमृतेन ।
सुपर्णपक्षोपरि रोचमानः प्रेमस्मितोद्वीक्षणविभ्रमद्भ्रूः ॥ २२ ॥

॥ श्रीभगवानुवाच ॥

विदित्वा तव चैत्यं मे पुरैव समयोजि तत् ।
यदर्थमात्मनियमैस्त्वयैवाहं समर्चितः ॥ २३ ॥
नवै जातु मृषैव स्यात्प्रजाध्यक्ष ! मदर्हणम् ।
भवद्विधेष्वतितरां मयि संगृभितात्मनाम् ॥ २४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे अधीश ! नोऽस्माकं भक्तानां यत् भूतसूक्ष्मं पदं श्रोत्रादीन्द्रियविषयं शब्दादिकम् मायया कृपया तनुषे विस्तारयसीति एतत्तवेप्सितं न भवति तथाप्यस्मदनुग्रहायास्तु तवेप्सितं भवतु तत्र भवतो भक्तेच्छापरिपूरकत्वादिति हेतुं सूचयितुमाह । यर्हि यतः लसन्ती तुलसी यस्यां तया तनुवा तन्वा श्रीमूर्त्यां मायया कृपया विलक्षितोऽसि मया दृष्टोऽसीत्यर्थः "माया कृपायां दम्भे च" इति विश्वः । मुक्तिदोऽपि भक्ताग्रहतो भुक्तिदोऽसीति भावः ॥ २० ॥

---

भाषाटीका ।

गरुडजी के कांधे पर चरण कमल को स्थापन किये हैं वक्षःस्थल में लक्ष्मीजी को धारण किये हैं गले में कौस्तुभमणि की शोभा है आकाश में स्थित हैं ॥ ११ ॥

ऐसे भगवान् को देखकर अति हर्षित होकर सब मनोरथों को प्राप्त होकर अन्तःकरण से प्रीतियुक्त होकर हाथ जोडकर कर्दमजी स्तुति करने लगे ॥ १२ ॥

ऋषि बोले आज आपके दर्शन से हमारे नेत्रों को शुद्ध सत्त्वमय समूह की प्राप्ति होगई हे ईश ! आपके जिस दर्शन को उत्तम योगी लोग सुन्दर जन्मों से चाहते हैं ॥ १३ ॥

जो लोग आपकी माया से नष्टबुद्धि वाले होकर संसार सागर का नौका रूप आपके चरण कमल को क्षुद्र कामों के वास्ते उपासना करते हैं तिनकेभी मनोरथों को आप देते हौ जो कि नरक में भी होते ही हैं ॥ १४ ॥

तैसे ही अपने सदृश स्वभाववाली गृहस्थ के सब मनोरथों को पूरण करने वाली स्त्री के साथ विवाह करने के लिये अपनी दुष्टबुद्धि से सकल मनोरथ दायक जिनके चरणकमल हैं मैं तिन आपके शरण आया हूं ॥ १५ ॥

हे अधीश ! आप प्रजापति हौ आप के वचन रूपी डोरी में मनोरथों के परवश हो सब लोक बंधा हुआ है मैं भी लोकों के अनुगत होकर शुद्ध सत्त्वगुणी काल स्वरूप आप के अर्थ भेट देता हूं ॥ १६ ॥

लोक तथा लोकानुगत पशुओं को छोडकर आपके चरण कमलछत्र को आश्रय करने वाले महापुरुष परस्पर में आपके गुणानुवाद मादक अमृतके पान से जिनने सब देह धर्मों को छोड दिया है ॥ १७ ॥

हे प्रभो ! अजर जो ब्रह्म सोइ एक अक्ष तिस पर भ्रमण करने वाला सम्वत्सररूपचक्रहै तेरह महिना उसमें अराहैं तीन सौ साठ दिन उसके पर्व हैं छे ऋतु नेमि हैं क्षणादि अनेक धारा हैं चातुर्मास्यादि तीन नाभि हैं तीव्र वेग हैं जिसका ऐसा जो काल चक्र जगत्को ग्रास करता है परन्तु पूर्वोक्त आप के भक्तों के आयु को नहीं हरणकरता है ॥ १८ ॥

आप एकही होकर जगत्की सृष्टि के इच्छा से द्वितीय योग माया से युक्त होते हो इस जगत् को सृजते हो इसकी रक्षा करते हौ फिर संहारँ करोगे आप भगवान् अपनी शक्तियों से सब करते हो जैसे मकरी सूतको निकालकर समेटती है॥१९॥

हे अधीश ! हम लोगों के अभिलाषा के अनुरोध से माया के द्वारा जो भूतसूक्ष्म विषय का स्थान विस्तारित करते हौ वह यद्यपि आप का इष्ट नहीं है तथापि कृपा से हम लोगों के अनुग्रहकेवास्ते सब करतेहो जो आप शोभायमान तुलसीवाले शरीर से लक्षित होते हौ सोई आप के कृपा का चिह्नहै ॥ २०॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तन्त्वा त्वां भुक्तिमुक्तिप्रदं नमामि मुक्तिदत्वे हेतुः अनुभूत्या ज्ञानेनोपरतः क्रियार्थः कर्मफलभोगो यस्मिन् भोगदत्वे हेतुः स्वमायया आवर्तितं लोकतन्त्रं विश्वोपकरणं येन अतः सकामैर्निष्कामैश्च नमनीयं पादसरोजं यस्य तम् तत्राल्पीयसि सकामे पुंसि भजने वा कामान्वर्षतीति तथा तम् ॥ २१ ॥

अमृतेन सुखकरेण प्रेमस्मिताभ्यामीक्षणेन विभ्रमन्ती भ्रूर्यस्य ।२२।

चैत्यं हार्दं भावम् मे मया समयोजि संघटितम् यदर्थमेवाहं समर्चितस्तत् ॥ २३ ॥

मयि संगृभितः संगृहीत एकाग्रीकृत आत्मा चित्तं यैस्तेषां यन्मदर्हणम् त्वादृशेष्वतितरां सर्वथा मृषा निष्फलं न स्यात् ॥ २४ ॥

प्रजापतिसुतः सम्राट् मनुर्विख्यातमङ्गलः ।
ब्रह्मावर्तं योऽधिवसन् शास्ति सप्तार्णवां महीम् ॥ २५ ॥
स चेह विप्र! राजर्षिर्महिष्या शतरूपया ।
आयास्यति दिदृक्षुस्त्वां परश्वो धर्मकोविदः ॥ २६ ॥
आत्मजामसितापाङ्गीं वयःशीलगुणान्विताम् ।
मृगयन्तीं पतिं दास्यत्यनुरूपाय ते प्रभो ! ॥ २७ ॥
समाहितं ते हृदयं यत्रेमान् परिवत्सरान् ।
सा त्वां ब्रह्मन्! नृपवधूः काममाशु भजिष्यति ॥ २८ ॥
या त आत्मभृतं वीर्यं नवधा प्रसविष्यति ।
वीर्ये त्वदीये ऋषय आधास्यन्त्यञ्जसात्मनः ॥ २९ ॥
त्वं च सम्यगनुष्ठाय निदेशं म उशत्तमः ।
मयि तीर्थीकृताशेषक्रियार्थो मां प्रपत्स्यसे ॥ ३० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विख्यातं मङ्गलमभ्युदयः सदाचारादिलक्षणं यस्य ॥ २५ ॥ हे विप्र ! महिष्या सह ॥ २६ ॥ २७ ॥

यत्र यस्यां भार्यायाम् । समाहितमभिसंधानेन स्थितम् । नृपवधू राजकन्या ॥ २८ ॥

ते वीर्यमात्मनि भृतं धृतं या प्रसविष्यति सा भजिष्यति वीर्ये- वीर्यप्रसूतासु कन्यासु अञ्जसा आत्मनः पुत्रानाधास्यन्ति ॥ २९ ॥

निदेशमाज्ञाम् । उशत्तमः शुद्धसत्त्वः तीर्थं पात्रं तेन दानं लक्ष्यते मयि समर्पितसर्वकर्मफल इत्यर्थः ॥ ३० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

आवर्तितं पुनः पुनः कृतं विश्वोपकरणं विश्वभोगपरिच्छदः अतो भुक्तिमुक्तिप्रदत्वात् तत्र सकामनिष्कामयोर्मध्ये अभीक्ष्णं नमामीत्युक्त्या स्वस्य वस्तुतो भक्तीच्छुत्वं व्यञ्जितम् भार्य्यादीच्छा तु पित्राज्ञापालनार्थमिति ज्ञेयम् ॥ २१ ॥

भुवो भ्रमणञ्च गरुडादिनिजगणे तत्सारल्यसूचनार्थम् ॥२२॥

यदर्थमेव भार्य्यासम्पादनार्थमेव तद्भार्य्यासम्पादनं मया पुरैव त्वत्प्रार्थनात् पूर्वमेव सङ्कटितं योग्यघटनाविषयीकृतम् ॥ २३ ॥

सर्वथैव निष्फलं न स्यात् किन्तु भुक्तिमुक्त्युभयफलदं स्यादित्यर्थः ॥ २४ ॥

अभ्युदयः पारलौकिकोत्कर्षप्रदसदाचारदिशिष्टाचारः आदिना निषिद्धवर्जनपरिग्रहः तदुक्तं स्मृतौ ।

"अप्रशस्ताचरणं यस्मादप्रशस्तस्य वर्जनम् ।
एतद्धि मङ्गलं प्रोक्तमृषिभिस्तत्त्वदर्शिभिरिति ।

यद्यपि प्रियव्रतरथखातरूपाणामर्णवानां तदानीमुत्पत्तेरभावात् सप्तार्णवत्वं न सङ्गच्छते तथापि भाविनि भूतवदुपचारः ॥ २५ ॥ ॥ २६॥

हे अनघ ! दोषरहित ! प्रभो इति पाठे हेमदाराधनप्रभावयुक्त ॥२७॥

अभिसंधानेनेच्छया "नारी सीमन्तिनी वधूः" इत्यमरप्रामाण्यात् वधूशब्दस्य स्त्रीमात्रवाचकत्वात् स्त्रीत्वस्य कन्यायामपि सत्त्वाद्राजकन्येति व्याख्यातम् ॥ २८ ॥

"आत्मा वै जायते पुत्र इति वाक्यात् आत्मनः पुत्रानिति व्याख्यातम् ॥ २९ ॥

शुद्धसत्त्वः मदाराधनगृहस्थधर्मेण शुद्धान्तःकरणः तीर्थशब्दस्य क्षेत्रवाचकत्वं दानबीजस्य च क्षेत्रं दानपात्रमिति- तीर्थं पात्रमिति व्याख्यातम् तथाच विश्वप्रकाशः "तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु" इति दानक्रियापात्रयोरुद्देश्यतासम्बन्धः स्वस्मै कृतस्य दानस्य स्वामित्वमाहात्म्यं प्रयोजनमिति प्रयोजनवती लक्षणा एवं लक्ष्यार्थत्वादित्यर्थ इत्युक्तम् ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु स्वात्मानुभवानन्दपूर्णमुदासीनं मां कथं जगत्कारणम् प्रतिपादितवानसीत्याशङ्कां परिहरन् स्तुतिमुपसंहरति । तमस्मदनुग्रहैकनिरतं त्वामभीक्ष्णं पुनः पुनः नमामि कथंभूतमनुभूत्या स्वात्मानुभवेन उपरतः अनपेक्षितः क्रियार्थः जगद्व्यापाररूपक्रियाप्रयोजनं यस्य तमपि स्वमायया स्वलीलासङ्कल्पमात्रेण प्रवर्तितं लोकतन्त्रं जगद्व्यापारो येन तमल्पीयसि स्वल्पमप्यस्य धर्मस्य त्रायते महतोभयादिति त्वदुक्तरीत्या ईषद्भवदीयाराधनं कुर्वत्यपि पुरुषे कामान् वर्षतीति तथा तमत एव नमनीयं वन्दनीयं पादसरोरुहं यस्य तम् ॥ २१ ॥

एवं कर्दमेन स्तुतः तेन निवेदिताभिप्रायश्च भगवांस्तमुवाचेत्याह मैत्रेयः । इत्येवं व्यलीकं विगतालीकं सत्यं यथा तथा अव्यलीकमिति पाठेऽप्ययमेवार्थः प्रणुतः प्रकृष्टगुणविशिष्टत्वेन स्तुतः सुपर्णस्य गरुडस्य पृष्ठोपरि स्कन्धदेशे रोचमानः प्रकाशमानः प्रेम्णा स्मितेन उद्वीक्षणेन च विभ्रमन्ती भ्रूर्यस्य

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सोऽब्जनाभो भगवान् तेनामृततुल्येन वचसा तं कर्दमं प्रत्याबभाषे उवाचेत्यर्थः ॥ २२ ॥

उक्तिमेवाह दशभिः । विदित्वेति । तव चैत्यमभिप्रायं विदित्वा ज्ञात्वा मे मया तत्त्वदभिप्रेतं पुरैव समयोजि संघटितं किं तदित्यत्राह । यदर्थं यत्कन्यालाभार्थमात्मनो नियमैः शमदमादिभिः त्वयाहमेव समर्चितः सम्यगाराधितः ॥ २३ ॥

हे प्रजाध्यक्ष ! कर्दम मदर्हणं मदाराधनं जातु कदाचिदपि मृषा व्यर्थं न स्यात्तदपि सङ्गृभितः एकाग्रीकृतः आत्मा मनः यैस्तेषु भवद्विधेषु भवादृशेषु सुतरामपि मदर्हणं न मृषेत्यर्थः सङ्गृहितात्मनामिति षष्ठ्यन्तपाठे सङ्गृभितात्मनां मदर्हणं नृषेव भवद्विधेषु सुतरामपि न मृषेति योज्यम् ॥ २४ ॥

यः प्रजापतेर्ब्रह्मणः पुत्रः सम्राट् सार्वभौमो विख्यातं मङ्गलं मङ्गलाचारो यस्य सः श्रौतस्मार्तसदाचारनिष्ठो मनुः स्वायंम्भुवमनुः ब्रह्मावर्त्तं ब्रह्मावर्त्ताख्यं देशमध्यवसदधिष्ठायावसन्सप्त अर्णावाः समुद्रा यस्यां तां मह्रीं पृथ्वीं शास्ति धर्मतः पालयति ॥ ॥ २५ ॥

स च राजर्षिर्मनुः शतरूपया शतरूपाख्यया महिष्या भार्यया सह धर्मकोविदं धर्मेषु मदाराधनरूपेषु धर्मेषु कुशलं त्वां दिदृक्षुः द्रष्टुमिच्छुः परश्वः इतोऽनागते द्वितीयेऽह्न्यायास्यति आगमिष्यति ॥ २६ ॥

आयातु मम किमित्यत्राह। असितापाङ्गीमातिनीलकनीनिकायुक्तनेत्रां वयसा शीलेन सुस्वभावेन सद्वृत्त्या च गुणैर्जितेन्द्रियत्वादिभिश्चान्वितां पतिं स्वानुरूपं भर्तारं मृगयन्तीं दूतप्रेषणादिभिः परिशीलयन्तीमात्मजां देवहूत्याख्यां तनयामनुरूपाय ते तुभ्यं दास्यति हे प्रभो ! वश्येन्द्रिय ॥ २७ ॥

यत्र यस्यां मनुकन्यायामिमान् यावतः परिवत्सरान् सम्वत्सरान् अत्यन्तसंयोगे द्वितीया ते हृदयं चित्तं सम्यगाहितं भोगासक्तं तावत्सम्वत्सरपर्यन्तं सा नृपवधूर्नृपकन्या हे ब्रह्मन्। त्वामाशु क्षणवत्कामं भजिष्यति अनुभविष्यति त्वया सह बहुवर्षपर्यन्तं कामान् सेवमाना क्षणमात्रमिवानुभविष्यतीत्यर्थः ॥ २८ ॥

या देवहूतिः ते त्वयात्मभृतमात्मना धृतं त्वस्मिन् वीर्यं नवधा प्रसविष्यति त्वदीये वीर्ये त्वदुत्पन्नासु नवसु पुत्रीषु ऋषयः मरीच्यादयोऽञ्जसा विश्रुतात्मनः पुत्रान् "आत्मा वै पुत्रनामासि इति श्रुतेः आधास्यन्ति उत्पादयिष्यन्ति ॥ २९ ॥

त्वं मे मम निर्देशमाज्ञां सम्यगनुष्ठाय परिपाल्य उशत्तमः कमनीयमदाराधननिष्ठः मयि तीर्थीकृतः तीर्थशब्देन पात्रमुच्यते तेन दानं लक्ष्यते तीर्थीकृतः समर्पितः अशेषक्रियार्थः समस्तक्रियाफलं येन स मां प्रपत्स्यसे प्राप्स्यसि ॥ ३० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मदनुग्रहेण सच्चिदानन्दलक्षणं वपुर्दर्शयतो भवतो नमनोपायनदानेन नित्यतृप्तस्य प्रत्युकपरोमीति भावेनाहातन्वेति । यस्त्वमनायासेन जगत्सृष्ट्यादिकं करोषि अहं तं त्वा त्वां नमामीत्यन्वयः ननु यदि नन्तुर्नम्यो विशिष्टः स्यात्तर्हि स तत्क्रियाविषयः स्यादित्यतस्तं विशिनष्टि। अनुभूत्येति । अनुभूत्या स्वरूपानुभवेनोपरतो नित्यनिवृत्तः क्रियार्थः देहादिनिमित्तकर्मफलविषयो यस्य स तथा स्वरूपानन्दानुभवेन निवृत्तविषयसुखो वा तं स्वमायया स्वेच्छया वर्तितं लोकतन्त्रं देहादिलक्षणलोकप्रवृत्तिसाधनं येन स तथा तमभीक्ष्णशः पुनः पुनरित्यनेन तात्पर्यातिशयद्योतकेन इदमेव त्वत्प्रीतिसाधनमिति सूचयति भवानौषधपानवत् बलात्कर्मणा रुचिविषयो न किन्तु स्वत एवेति भावेनाह । नमनीयेति । इतोऽपि त्वमेव नन्तव्य इत्याह । अल्पीयसि जात्या गुणेन वाल्पतरभक्तं कीटव्यासमिवाभीष्टं वर्षन्तं कामस्याभीष्टस्य वर्षो यस्मात् स तथोक्तः तमित्यक्षरयोजना यद्वा महदहङ्कारादिजगत्स्रष्टृयद्रूपं तन्निजं न भवतीति यन्मतं तद्दूषयितुमेवाह । तन्त्वेनि। उक्तार्थों ऽयं श्लोकः आवर्तितः लोकाख्यराज्यव्यापारो येन स तथा तम् ॥ २१ ॥

कर्दमेन प्रणतरूपं सत्यज्ञानानन्दलक्षणमेव नमायाश्वलमितिभावेनाह । इतीति । प्रेम्णा युक्तेन स्मितेन सह सकृदुत्कृष्टवीक्षणं तेन विलोकनेन विभ्रमन्ती विस्फुरन्ती भ्रूर्यस्य स तथोक्तः ॥ २२ ॥

पुरा मे मया तव चैत्यं चित्तस्थमभिप्रायं विदित्वैव समयोजितं प्रेरितं तदेवाह । यदर्थमिति ॥ २३ ॥

पूजाकर्मणः क्षणभङ्गुरत्वेन तस्मादिदं फलमभूदिति निश्चेतुं न शक्यत इति शङ्कामाभून्मदर्पितत्वेनाक्षीणफलत्वादित्यभिप्रेत्याह न वा इति। जातु वै कदाचिदपि पाशुपतशास्त्रोक्तवन्मयि सङ्गृहीतात्मनां समाहितमनआदीन्द्रियाणां युष्माकं यन्मदर्हणं तदिदं भवद्विधेषु पुरुषेषु मृषा क्षणभङ्गुरत्वेन निष्फलं न स्यान्मदर्पणचिकित्सायुक्तत्वादभक्तव्यावृत्त्यर्थमतितरामिति सङ्गृहीतात्मनामिति षष्ठी सप्तम्यर्थे वा सन्निकृष्टत्वादुभयोः स्वस्वामित्वसम्बन्धो नित्यमनुसन्धेय इति तात्पर्यद्योतनाय प्रायोऽन्यथा मयि संगृहीतात्मस्विति प्रयोक्तुं शक्यते अनेन श्रेयोऽर्थिभिरभेदवार्ता दूरादेव परिहृत्य भेदज्ञानमेवापाद्यमिति सूचितम् ॥ २४ ॥

कर्दमं प्रशस्य प्रकृतमनुसरति । प्रजापतीति । प्रजापतयो मरीच्यादयस्तेषां पतिः । सप्तार्णवामिति । अनेन सम्राट्त्वं विवृतं ब्रह्मावर्तं क्षेत्रमधिवसन् "अधिशीङ्स्थासाङ्कर्म,, इत्यतः सप्तम्यर्थे द्वितीया ॥ २५ ॥

ततः किमस्माकमत्राह । सचेति । हे विप्र ! ॥ २६ ॥

वनवासिनो मम सम्राजा किं तत्राह । आत्मजामिति । असितापाङ्गीं नीलद्युतिनेत्रान्तां नीलेनाञ्जितत्वेनापि तत्स्वभावः स्यादिति गुणान्तरायाह । वय इति । कियद्वय इति प्रश्नमन्तरेण वयो लक्षयति । मृगयन्तीमिति । आसन्नरजःकामुकत्वेन पाणिग्रहणयोग्यामित्यर्थः ॥ २७ ॥

राजपुत्र्यास्तापसोऽहं कथमनुरूपः स्यामिति तत्राह । समाहितमिति । राजपुत्रीत्वादिविशेषमन्तरेण यत्र यस्यां वध्वामिमानतीतान् परिवत्सरान् ते हृदयं समाहितं ममानुकूला भार्या स्यादिति संक्लृप्तम् ॥ २८ ॥

इदं च त्वत्सङ्कल्पान्तर्भूतं सत्यं भवतीति भावेन कन्यां विशिनष्टि । येति । या चात्मधृतं ते वीर्यं रेतोलक्षणं गर्भं नवधा प्रसविष्यति नवधा विभक्ततया प्रसूतं तव वीर्यं वंशवृद्धिकरं चेत्याह । वीर्ये इति । मरीच्यादययोऽपि त्वदीयेवीर्ये नवधा विभज्य पुत्रीभूते आत्मनस्तेजो गर्भलक्षणमाधास्यन् यदि भवान्

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मदुक्तमकरिष्यत्तर्हीतिशेषः सा नृपस्य वधूः कन्या त्वां कामं भजिष्यति संसेविष्यत इत्यन्वयः आशु कालक्षेपो नैवेति ॥ २९ ॥

मदर्पणबुद्ध्या चिकित्सितस्य स्वधर्मानुष्ठानस्य मत्प्राप्तिरेव फलमित्याह । त्वं चेति ॥ ३० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तं परमप्रीतिदं तत्र हेतुः भक्तानां निजानुभवेन शिथिलितकर्मफलभोगं तदनुभवादन्यत्र तु स्वेत्यादिरूपं तस्मान्महतां स्वभावत एव नमनीयपदाब्जं अतिक्षुद्र एव कामवर्षित्वेन स्फुरन्तमिति ॥ २१ ॥

प्रेमपूर्वकं यत् स्मितं तत्पूर्वकं यद्वीक्षणं तस्य गरुडादिषु तत्सौजन्यव्यञ्जनाय विभ्रमन्त्यौ भ्रुवौ यस्य ॥ २२ ॥

चेत्थं लोकव्यवहारानुसृतावपि मत्प्रीत्यैकतात्पर्यमयं हार्दं तव ज्ञात्वा तदुचितमेव समयोजि पर्यवसानतः स्वयमेव पुत्रः स्यामिति अतः सकामत्वेऽपि मत्प्रीत्यैकतात्पर्यत्वात्त्वयैवाहं सम्यगर्चितः तथा नान्यैर्निष्कामैरपीत्यर्थः ॥ २३ ॥

तत्र कैमुत्येन हेतुः । न वा इति । सत्यं दिशत्यर्थितमर्थितो नृणामित्यादि न्यायेन मदर्हणमात्रं मृषैव तुच्छफलदमेव न स्यात् किंत्वेतेषां परमार्थफलमपि स्यात् मयि संगृभितात्मनां मध्ये त्वादृशेषु त्वतितरामित्यर्थः ॥ २४ ॥

सप्तार्णवामिति । भाविनि भूतवदुपचारः प्रियव्रतरथखातत्वात्तेषाम् ॥ २५ ॥ २६ ॥

प्रभो ! हे मदाराधनभावयुक्त ! ॥ २७ ॥

इमान् एतान् वत्सरान् व्याप्य समाहितं मदर्पितं यत्तव हृदयं तद्यत्र वर्तते यस्यामेव सधर्मचारिणीत्वयोग्यं त्वदीयहृदयतुल्यं हृदयं वर्त्तते इत्यर्थः । वक्ष्यते च श्रीमनुना सर्व्वात्मनानुरूपां त इति ॥ २८ ॥ २९ ॥

अहं तावत् पात्रत्वात्तीर्थं ततो मयि यत् समर्पितं तदपि मदन्तःपातातिशयविवक्षया तीर्थमेवोच्यते इति भावः ॥ ३० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं स्वाभिलषितं ज्ञापयित्वा तद्दानार्थं नमस्यति । तं त्वेति । सर्वप्रकारेणोक्तं त्वां नमामीति संबन्धः भगवान् हि स्वतः बोभूयमानस्वानन्देनैव पूर्णः स्वार्थं कामपि क्रियां न करोति अतः अनुभूत्यैव उपरतक्रियार्थो भवति क्रियायाश्चार्थद्वयं दुःखाभावः स्वसुखं चेति जगत्करणव्यावृत्तिरपि न तस्य स्वतः किंतु माययेत्याह। स्वमाययेति । बहुधा आवर्तितं लोकतन्त्रं लोकरचना येन स्वाधीनया माययैव बहुधा सृष्टिः क्रियत इति अत एतादृशमभीक्ष्णं नमामि इदं च नमनं नापूर्वमित्याह । नमनीयमेव पादसरोजं सर्वेषां यस्येति । प्रकृतोपयोगाय विशिनष्टि अल्पीयसि कामवर्षमिति । अल्पीयस्यप्यर्थे पुरुषे वा कामं यथेष्टं वर्षतीति मया तु गार्हस्थ्यमात्रं प्रार्थ्यते अलौकिकं दास्यसीतिभावः ॥ २१ ॥

अद्भुतकर्मा भगवान् प्रार्थिते सति किं कृतवानित्याकाङ्क्षायामाह । इत्यव्यलीकमिति यथा हृदयं कथनात् अव्यलीकत्वं रूपनिरूपणमेतत् भगवांस्तु प्रकर्षेण नुतस्तपोभक्त्यादिकं त्वग्रे फलिष्यति इदं तु स्तोत्रफलमेवेति ज्ञापितमब्जनाभ इति जगत्कर्तृत्वादेवं करणमभीष्टमेव विषयदाने कदाचिन्मृत्युर्भवेदित्याशङ्क्यामृतेन वचसेत्युक्तं तथात्वसिद्ध्यर्थं सुपर्णपक्षोपरि रोचमान एव बभाषे पक्षपदेन कालपक्षपातोऽपि लक्षितः येन परित्यागादिसाधनानि च कृतवान् भगवता सह संवादे अस्य मायापगतिर्मा भवत्विति स्मितपूर्वं दर्शनं संसारभावापत्तिव्यावृत्त्यर्थं प्रेम च उद्वीक्षणमुत्कर्षाधायकं तदर्थं विभ्रमयुक्ता भ्रूयंस्य मोक्षे देहपरित्याग उत्कर्षाधायको भवति एवं सर्वमेव भाव्यर्थं सूचयन् बभाष इत्यर्थः ॥ २२ ॥

स्वसिद्धान्तं कामनायाः पूरणं द्विविधं तथा ।
तव च त्वपि तुष्टैव मदाज्ञान्यास एव च ॥
एवं कृते त्वहं तुष्टः पुत्रस्ते भविता शुभः ।
द्वाभ्यां भगवच्छास्त्रसिद्धान्तमाह । विदित्वेति ॥
भक्तस्य हृदये कामस्तदैव स्याद्यदा पुरा ।
भगवान् पूरकं कुर्यात् सिद्ध एव हि साधनम् ॥
अतो हि सर्वमार्गाणां भगवन्मार्ग उत्तमः ।
सफलान्येव सर्वाणि साधनान्यत्र सर्वदा ॥

तव चेत्थं चित्तभावं विदित्वा त्वद्याचनात्पूर्वमेव तन्मया समयोजि किंत्वया योजितमित्याशङ्क्य भयाभावार्थमाह। यदर्थमिति । यत्कामनार्थमात्मनियमैः तपस्यादिभिः सह भक्त्या त्वयैवाहं समर्चितः यदि मया तन्न कृतं स्यात्तदान्तर्यामिप्रेरणया अहमेव त्वया कथमर्चितःस्यामतो मदर्चनायाः सफलत्वाय पुरैव मया कृतं सफलैवोत्पत्स्यतामिति ॥ २३ ॥

नन्वर्चना पश्चात्कुतो न फलतीत्याशङ्क्याह। नवाइति। मदर्चनंकदाचिदपि मृषा फलरहितं न स्यात् कालभेदनापि मद्भजनस्य न फलाभावसंबन्धः भगवच्छास्त्रेऽदृष्टादेरभावात्भगवतोऽव्यापारत्वाभावात् तदानींफलानि नभवेयुः भजनस्यनिवृत्तत्वात्सामग्रीपूर्वसिद्धा कामितेति न समकालमपि फलोत्पत्तिः सर्वेष्वेव पक्षेषु फलस्यैकोंऽशो बाध्येत यदि पूर्वं न क्रियेत अतो मद्भजनस्य स्वभाव एव तादृश इति पूर्वमेव फलजननं किंच अभक्तेषु मदर्हणमन्यथापि भवेत् भक्ताविरोधाद्भवद्विधेषु त्वन्यथा भावशङ्कानास्त्येवेत्याह। भवद्विधेष्विति। अतितरां सर्वथा न केनाप्यंशेनान्यथाभावः तमेव प्रकारमाह। मयि संगृभितात्मस्विति। मयि सम्यक् गृभितः गृहीतः आत्मा येषां तेषु ॥ २४ ॥

एवं सिद्धान्तकथनेन सामान्यतः तस्य कामनां पूरयित्वा विशेषतः पूरयति प्रजापतेः सुत इति चतुर्भिः

श्वसुराधिक्य कथनं तत्समागम एवच ।
कन्यादानं ततः कन्या रुचिस्तस्य च वर्ण्यते ॥

प्रथमं मनोरुत्कर्षमाह।प्रजापतेः ब्रह्मणः सुतः अनेनोत्तमो वंशो निरूपितः सम्राडिति राजसंपत्तिरुक्ता मनुरिति धर्मः विख्यातमङ्गल इति कीर्तिः विख्यातं मङ्गलं सदाचारो यस्य देशस्वधर्मावाह। ब्रह्मावर्ते देशे अभितो वसन् सप्तार्णवामेव पृथ्वीं शास्ति ॥

सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् ।
तं देव निर्मितं देशं ब्रह्मा वर्तं प्रचक्षत इति ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

इदानीं कुरुक्षेत्रमिति प्रसिद्धमेवं मनुः सर्वत उत्कृष्ट उक्तः ॥ २५ ॥

तस्यागमनमाह । सचेति । नाहि भक्ताः स्वयं याचन्ते विप्रेतिसंबोधनम् आगते स्वागतकरणार्थं विप्रा हि पश्चिमयुद्धयः असम्माननेऽभिमानो दोषो भवेत्तदभावार्थं सम्बोधनेनोपदेशः । राजर्षिरिति । योग्यता भार्याया अपि सम्मत्यर्थं तया सहागमनं तस्याः प्रतिबन्धकत्वाभावाय त्रिचक्षणत्वनिरूपणार्थं शतरूपा इत्युक्तं विवाहस्याज्ञातत्वादिदच्चरेव त्वामायास्यति अयमर्थोनातिदूर इत्याह । परश्च इति धर्मकोविद इति ।

अभिगम्य स्वयं कन्या मलंकृत्य यथाविधि ।
सद्वराय प्रयच्छेद्यः स कोविद इति स्मृतः ।

अतो कन्यादानधर्मं जानातीति ॥ २६ ॥

आगत्य कन्यां दास्यतीत्याह । आत्मजामिति । पिता हि कन्यादाने मुख्योऽधिकारी असितापाङ्गीमिति स्वभावतो नेत्रप्रान्तकार्ष्ण्यं सर्वसल्लक्षणसूचकं वयस्तारुण्यं शीलं पातिव्रत्यं गुणा स्त्रीलक्षणानि विरक्ताया विवाहानौचित्यात् पतिं मृगयन्तीमिति त्वमपि तादृश इति अनुरूपाय ते दास्यति प्रभो इति सम्बोधनं स्वसामर्थ्यं तत्र दत्तवानिति ज्ञापनार्थमतः स्त्रीणां यावानपेक्ष्यते भोगपदार्थः स सर्वोऽपि मया दत्त इतिबोधितम् ॥ २७ ॥

एतदज्ञानेऽपि सा त्वां भजिष्यतीत्याह । समाहितमिति । यस्यां देवहूत्यां ते हृदयं सम्यगाहितमिमान्परिवत्सरानिति दशसहस्रसंख्यान् अत्यन्तसंयोगे द्वितीया सा देवहूतिस्त्वां भजिष्यति ऋषिर्हि राजकन्यायाः न रोचते तथापि मदिच्छया भजिष्यति ब्रह्मन्निति निरूपितार्थसम्वादार्थं नृपवधूर्नृपकन्या वधूरेव सुरक्षिता पितृगेहे चाञ्चल्यसम्भवात् तन्निवृत्त्यर्थमुक्तं कामं यथासुखं नत्वतिक्रमेण रति प्रीतयोर्भवतीत्युभयोरतिरुक्ता ॥ २८ ॥

याते इति ततस्त्वया सर्वभावेन सा भोक्तव्या भिन्नभिन्नभावेन स्थापितान्यपि बीजानि स्वसामर्थ्यादेकधा एकभावापन्नमात्मनि धृतं नवधा प्रसविष्यति ता नवापि कन्या एव भविष्यन्ति ततस्त्वदीयवीर्ये कन्यासु मरीच्यादयः ऋषयः आत्मनः पुत्रान् आधास्यन्ति अतस्तेभ्यो देया इति भावः ॥ २९ ॥

त्वया च ततः संन्यासो ग्राह्य इत्याह । त्वञ्चेति । न तु यावज्जीवश्रुत्यनुरोधेन गार्हस्थ्येनैव स्थातव्यमितिभावः ममाज्ञा पूर्वोक्तैव त्वञ्चेति चकारस्त्वप्यर्थे सापि प्रपत्स्यत इति ज्ञापितं निदेशमाज्ञां सम्यगुक्तप्रकारेणानुष्ठाय मां प्रपत्स्यन इति सम्बन्धः उशत्तमेति सम्बोधनं मत्प्रवेशयोग्यार्थं ननु कर्मणां विद्यमानत्वात्कथं भगवति प्रवेशस्तत्राह । मयीति । तीर्थीकृतास्तीर्थे समर्पिताः अशेषक्रियार्थो येन तादृशो मां प्रपत्स्यस इत्यर्थः ॥३०॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

नन्वेतस्वय्यसम्भवमित्याह । तं त्वामनुभूत्या उपरतः क्रियार्थः कर्मफलभोगो यस्मात्त्वं यदा कृपया स्वमाधुर्यानुभवं दास्यसि तदैव भोगेच्छा स्वयमेवापयास्यतीति भावः स्वमायया स्वीयमायाशक्तिप्रेरणया वर्तितं जनितं लोकानां देवतिर्यगादीनां तन्त्रं कर्मफलसुखदुःखसम्बन्धिपरिच्छदो येन, तं यावदविद्यां प्रेरयसि तावद्भोगेच्छा भवत्येवेति भावः । तेन सम्प्रति सृष्टिं विवर्द्धयिषुरस्मान् कामसम्वलितान् करोषीति सतापि विवेकेन कामांस्त्यक्तुं न शक्नुम इत्याह । अल्पीयसीति निकृष्टेऽपि मद्विधे जने कामान् वर्षसीति तथा तम् ॥ २१ ॥

अव्यलीकं निष्कपटम् ॥ २२ ॥

चैलं चित्ताभिप्रायं दिगादियदन्तात् स्वार्थेऽण् मे मया समयोजि सङ्घटितं त्वया अहमेव नान्यः ॥ २३ ॥

नच मद्भजनं कामं दत्त्वैव केवलमुपक्षीयते किन्तु मत्पदमपि ददातीति समाख्यसिहीत्याहासत्यं दिशत्यर्थितमर्थितो नृणाम्" इति न्यायेन महदर्हणमात्रं मृषैव तुच्छफलदमेव न स्यात् किन्त्वन्ते मत्पदप्रदमेव स्यात् अत्रापि मयि संगृभितात्मनां निहितमनसां भक्तानां मध्ये त्वादृशेषु त्वतितरामित्यर्थः । "ह्रग्रहोर्भश्छन्दसि" इति भकारः ह्रस्वत्वमार्षम् ॥ २४ ॥ २५ ॥

हे विप्र ! ॥ २६ ॥

वयःशीलादिभिरनुरूपाय ॥ २७ ॥

यत्र यस्यां तव हृदयं समाहितमासक्तं नृपवधूः राजकन्या ॥ २८ ॥

ते वीर्यमात्मनि भृतं नवधा नवापत्यरूपेणेत्यर्थः ।

वीर्ये वीर्यप्रसूतासु कन्यासु अञ्जसा आत्मनो वीर्यमाधास्यन्ति ॥ २९ ॥

अनुग्रहायास्त्विति यत् प्रार्थितं तत्राह । त्वञ्चेति द्वाभ्याम् ।

तीर्थं पात्रं तेन दानं लक्ष्यते मयि समर्पितसर्वकर्मफल इत्यर्थः ॥ ३० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सामान्यतः सर्वलोकोपकारकर्तुः स्वभक्तकामपरिपूरकत्वं सुतरामस्तीत्याह । तमिति । तं त्वा त्वामभीक्ष्णं पुनः पुनर्नमामि कथंभूतं स्वानुभूत्या स्वकीयनिरतिशयानन्दानुभूत्या उपरतः अनीप्सितः क्रियार्थः क्रियायाः प्रयोजनं यस्य तम् । तथापि स्वमायया स्वासाधारणया कृपया आवर्तितं लोकतन्त्रं सर्वलोकोपकरणं येन तन्नमनीये पादसरोजे यस्य तमल्पीयसि क्षुद्रे सकामभक्तेऽस्मद्विधे कामान् वर्षतीति तथा तम् ॥ २१ ॥

अव्यलीकं निष्कपटं यथा तथा प्रणुतः स्तुतः प्रेमस्मिताभ्याम् यद्वृद्वीक्षणं तेन भ्रमन्ती भ्रूर्यस्य सः ॥ २२ ॥

चैलं चित्तगतम् मे समयोजि मया संपादितम् ॥ २३ ॥

सङ्गभितः समाहितः आत्मा मनो यैस्तेषाम् ॥ २४ ॥

विख्यातं मङ्गलं सुचरितं यस्य सः ॥ २५ ॥ २६ ॥

हे प्रभो ! हे वश्येन्द्रिय ! ॥ २७ ॥

हे ब्रह्मन् ! ब्रह्मवित् अत्र यस्यां प्रजापतिरूपस्य ममाज्ञया सृष्ट्यर्थं ते हृदयं मनः समाहितं सा नृपवधूः नृपकन्या इमान् बहूनपि परिवत्सरान् अत्यन्तसंयोगे द्वितीया बहुषु सम्वत्सरेषु । अपि कामं यथेष्टमपि बहुकालीनवत्सुखं दर्शयन्त्यपीत्यर्थः । आशु क्षणमिव त्वां भजिष्यति तव मुमुक्षोः स्वतो गार्हस्थ्यमनिच्छतो बहुसम्वत्सरात्मकोऽपि कालः क्षणमिव गमिष्यतीति भावः ॥ २८ ॥

कृत्वा दयां च जीवेषु दत्वा चाभयमात्मवान्।
मय्यात्मानं सह जगद्रक्ष्यस्यात्मनि चापि माम्॥ ३१॥
सहाहं स्वांशकलया त्वद्वीर्येण महामुने!।
तव क्षेत्रे देवहूत्यां प्रणेष्ये तत्त्वसंहिताम्॥ ३२॥

मैत्रेय उवाच॥

एवं तमनुभाष्याथ भगवान् प्रत्यगक्षजः।
जगाम विन्दुसरसः सरस्वत्या परिश्रितात्॥ ३३॥
निरीक्षतस्तस्य ययावशेषसिद्धेश्वराभिष्टुतसिद्धमार्गः।
आकर्णयन् पत्ररथेन्द्रपक्षैरुच्चारितं स्तोममुदीर्णसाम॥ ३४॥
अथ सम्प्रस्थिते शुक्ले कर्दमो भगवानृषिः।
आस्ते स्म विन्दुसरसि तं कालं प्रतिपालयन्॥ ३५॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

या नृपकन्या आत्मनि भृतं धारितं ते वीर्यं नवधा प्रसविष्यति। वीर्यं नवधा कन्यारूपेण विभक्ते आत्मनः पुत्रान् "आत्मा वै पुत्रनामासि" इति श्रुतेः॥ २९॥

मयि अर्पणेन तीर्थीकृतः पवित्रतां नीतोऽशेषाणां लौकिकीनां वैदिकीनां च क्रियाणामर्थः फलं येन सः प्रपत्स्यसे ध्यानेनाप्स्यसि॥ ३०॥ ३१॥

भाषाटीका

अपने स्वरूपानुभव से आप किसी क्रिया की सामग्री को नहीं चाहते हो अपनी शक्ति से सब संसार चक्र को चलाते हो आप के चरण कमल सबके वंदन करने के योग्य हैं थोडे सेवन से भी आप मनोरथ पूरण करते हो तव मैं आपको निरन्तर नमस्कार करता हूं॥ २१॥

मैत्रेयजी बोले इस प्रकार से निष्कपट भाव से स्तुति करने से पद्मनाभ भगवान् गरुडजी के कांधे पर विराज मान हुये प्रेम युक्त मन्द हास से ऋषिके देखने को भौं को चंचल करते हुये अमृत रूपी वचन से बोलने लगे॥ २२॥

श्रीभगवान् बोले हे कर्दमजी! जिस प्रयोजन से तुमने हमारी आराधना की तिस बात को मैंने जान कर पहिले ही उसका योग बांध दिया है॥ २३॥

हे प्रजापति! मेरा पूजन कुछ व्यर्थ नहीं होता है और जो मेरे में निरन्तर चित्त लगाने वाले तुम सरीके पुरुष हैं उनो को तो क्यों न फल होगा॥ २४॥

ब्रह्मा के पुत्र विख्यात मङ्गल जो महा मनु हैं ब्रह्मा वर्त क्षेत्र मे रह कर सप्तद्वीप की पृथिवीको पालते हैं॥ २५॥

सो राजर्षि तुमारे देखने की इच्छा से परसों के दिन शतरूपा भार्या को साथ लेकर इहां पर आवैं गे॥ २६॥

हे प्रभो! सब गुणों से संयुक्त अवस्था शील से संयुक्त अपने सदृश पति को ढूंढती हुई पुत्री को लेकर आवैंगे सो तुम को देदेंगे॥ २७॥

जब पर्यन्त तुमारा चित्त योग मे स्थिर रहैगा तब तक वह राज पुत्री तुमारी सेवा करती रहैगी॥ २८॥

जो कि तुमारे वीर्य को नौ प्रकार से धारण करैगी तिन मे कि ऋषि लोग अपने वीर्यों को स्थापन करैंगे॥ २९॥

तुमभी हमारी आज्ञा का यथार्थ अनुष्ठान करके अन्त मे सब कर्मों को समर्पण करके मेरे को प्राप्त हो जाओ गे॥ ३०॥

श्रीधरस्वामिकृतभावार्थदीपिका।

गार्हस्थ्येन दयां कृत्वा सन्यासेनाभयं दत्वा मय्यात्मानं जगच्च सहैकीभूतं द्रक्ष्यसि॥ ३१॥

त्वद्वीर्येण सह देवहूत्यामवतीर्येति शेषः॥ ३२॥

प्रत्यग्भूतेष्वक्षेषु जायते आविर्भवतीति प्रत्यगक्षजः सरस्वत्या नद्या परिश्रितात् परिवेष्टितात्॥ ३३॥

अशेषैस्तपोमन्त्रादिसिद्धेश्वरैरभिष्टुतः सिद्धमार्गो वैकुण्ठमार्गो यस्य यद्वा अशेषसिद्धेश्वराभिष्टुतश्चासौ सिद्धैर्मृग्यत इति सिद्धमार्गश्च स ययौ पत्ररथेन्द्रो गरुडस्तस्य पक्षैरुदीर्णमभिव्यक्तं सामाकर्णयन् "बृहद्रथन्तरे पक्षौ" इति श्रुतेः उच्चारितं स्तोमश्च सामाधारभूतानामृचां समुदायं शृण्वन् "स्तोम आत्मा" इति श्रुतेः समासपाठे उच्चारितः स्तोमः स्तोत्रीयसमुदायो यस्य सास्न इति॥ ३४॥

तं कालं परश्व इत्युक्तं प्रतीक्षमाणः॥ ३५॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी॥

एकीभूतमधिष्ठानाभिन्नं कल्पितस्याधिष्ठानमात्रात्मकत्वादित्यद्वयवादसम्मतोऽर्थः वैष्णवमते तु एकीभूतं परमाश्रयात्

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या
दीपिकाटिप्पणी ।

मत्तोऽभिन्नम् "एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा। परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत्" इति विष्णुपुराणोक्तेः तत्रापि श्रीवैष्णवमते चिदचितोस्तच्छरीरत्वाच्छरीरवाचकानाञ्च शब्दानां शरीरिपर्य्यन्तधावनान्मुख्यमेव सामानाधिकरण्यं माध्वमते तु तद्व्याप्यत्वात्तदायत्तवृत्तिकत्वात् तत्तदभेदः श्रीकृष्णचैतन्यमते तु जगतो वहिरङ्गशक्तिमयत्वाज्जीवानाञ्च तटस्थशक्तित्वाच्छक्तिशक्तिमतोरभेदादेकीभूतत्वं ज्ञेयम् तत्र यथारुचि ग्राह्यम् वासनावैचित्र्यादेवमन्यत्रापि व्याख्येयम् ॥ ३१ ॥

स सर्वोपादानीभूतोऽहं त्वद्वीर्य्येण त्वत्तपः प्रभावेण तज्जन्येन यशसा सहेत्यर्थः वक्ष्यते च कर्दमेन "स त्वया राधितः शुक्लो वितन्वन्मामकं यशः" इति ॥ ३२ ॥

प्रत्यग्भूतेषु निरुद्धेषु अन्तर्भूतेष्वित्यर्थः ॥ ३३ ॥

सिद्धशब्दस्य वैकुण्ठवाचकत्वमप्रसिद्धमतो यद्वेति वृहद्रथन्तरे तन्नामकसामवन्तौ गरुडस्य पक्षौ स्तः उच्चारितमिति पृथक्पदपाठे स्तोमं चेति चकारोऽध्याहृतः स्तोम ऋक्समुदायः आत्मा मध्यभागः समासपाठे उच्चारितस्तोममित्येकपदपाठे साम्नो विशेषणमेतत् ॥ ३४ ॥ ॥ ३५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

आत्मवान् जितान्तःकरणस्त्वं भूतेषु चराचरात्मकेषु दयां कृत्वा अभयं च दत्त्वा मय्यन्तःप्रविष्टधारके मयि कृत्स्नं चराचरात्मकं जगदात्मानं च सहैव द्रक्ष्यसि व्याप्तं धार्यं च द्रक्ष्यसि धार्ये स्वात्मनि च मां धारकं व्यापकं च द्रक्ष्यसीत्यर्थः ॥ ३१ ॥

स्वांशकलया स्वांशेन सहाहं च त्वद्वीर्येण द्वारभूतेन हे महामुने ! तव क्षेत्रे क्षेत्रभूतायां देवहूत्यामवतीर्येतिशेषः तत्त्वसंहितां तत्त्वानां प्रकृतिपुरुषेश्वराणां स्वरूपविवेचनीं संहितां प्रणेष्ये कथयिष्यामि ॥ ३२ ॥

एवं कर्दममाभाष्य स्वस्थानं प्रतिभगवान् गत इत्याह । मैत्रेयः प्रत्यगक्षजः प्रत्याहृतेष्विन्द्रियेषु जायते आविर्भवतीति प्रत्यगक्षजो भगवान् तं कर्दममनुभाष्याथानन्तरं सरस्वत्या नद्या परिश्रितात्परिवेष्टितात्विन्दुसरसः सरोवरतीरस्थात्कर्दमाश्रमाज्जगाम॥ ३३ ॥

कथं जगामेत्यत्राह । निरीक्षत इति । तस्य कर्दमस्य निरीक्षतः पश्यतः सतः अशेषसिद्धेश्वरैः सर्वयोगीश्वरैरभिष्टुतः सिद्धः स्वतः सिद्धः मार्गः कल्याणगुणगणरूपप्रकारो यस्य सः पत्ररथेन्द्रो गरुडः तस्य पक्षैरुच्चारिते उदीर्यो अभिव्यक्ते सामनी वृहद्रथन्तरे यस्मिन् तं स्तोमं सामाधारभूतमृक्समुदायं "वृहद्रथन्तरे पक्षौ स्तोम आत्मा„इति श्रुतेः आकर्णयन् श्रावयन् ययौ जगाम ॥ ३४ ॥

गते भगवति कर्दमः किमकरोदित्यपेक्षायामनन्तरवृत्तान्तमाह । अथेत्यादिना । शुक्ले भगवति संप्रस्थिते सम्यक् प्रयाते सति भगवान् कर्दम ऋषिस्तं कालं दिदृक्षुस्त्वां परदव इति भगवता निर्दिष्टं कालं प्रतिपालयन् प्रतीक्षमाणः विन्दुसरसि विन्दुसरस्तीरे आस्ते स्म उपविष्टः किल ॥ ३५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गार्हस्थ्यानन्तरं चतुर्थाश्रमोऽवश्यमनुष्ठेय इत्याशयेनाह । कृत्वेति । अभयं दत्त्वा भूतेभ्य इति शेषः आत्मवान् मदेकशरणः संन्यासाश्रमानुष्ठानफलमाह । मयीति । सह जगदिति क्रियाविशेषणं यथा जगता सह वर्तमानस्तथात्मानं त्वां मयि द्रक्ष्यसि मदाधारं द्रक्ष्यसीत्यर्थः आत्मनि त्वयि स्थितं मां च द्रक्ष्यसि अनेनाधाराधेयभावेनोपासितं कुर्वत एवंविधज्ञानेन मत्प्राप्तिरुक्तेत्यतो भेदज्ञानमेव परमपुरुषार्थसाधनमुक्तं भवति ॥ ३१ ॥

पिण्डविच्छेदात्पितृशापः स्यादित्यातङ्को माभूदिति भावेनाह । सम्भूयेति । तव क्षेत्रे भार्यायाम्

क्षेत्रं पुरे गृहे देहे केदारे योनिभार्ययोः
पुण्यस्थाने समूहे च इति यादवः

त्वद्वीर्येण सह गर्भे प्रविश्येति शेषः स्वांशकलया शुक्ररक्तसम्बन्धरहितया सच्चिदानन्दलक्षणया सम्भूय सम्यगभिव्यज्य तत्त्वसंहितां तत्त्वसङ्ख्यानलक्षणां साङ्ख्यशास्त्रं प्रणेष्ये करिष्य इत्यन्वयः ॥ ३२ ॥

कर्दमायाशेषपुरुषार्थसाधनमभीष्टं हरिरुपदिश्य पुनः किमकार्षीदिति तत्राह । एवं तमिति । प्रत्यगक्षमन्तर्यामिविषयमिन्द्रियं विषयत्वेन गच्छत्येनं प्रतीति प्रत्यगक्षगः अपरोक्षज्ञानविषय इत्यर्थः प्रत्यक् स्थितोऽपीदानीमिन्द्रियविषयगतो वा ॥ ३३ ॥

अशेषसिद्धेश्वरैः समस्तब्रह्मादिभिरभिष्टुतः सिद्धैः सनकादिभिर्मृग्यत इति सिद्धमार्गश्च "मार्गौ मृगपदे मासि सौम्यर्क्षेऽन्वेषणेऽध्वनि„इतियादवः पत्ररथाः पक्षिणस्तेषामिन्द्रो गरुडस्तस्य पत्रैः पक्षैरुदीर्णमुत्कृष्टं साम यस्मिन् तथा तं स्तोमं स्तुतिविशेषम् ॥ ३४ ॥

अनन्तरं कर्दमोऽपि तपश्चेत्सम्पन्नं किमत्रेत्यन्यत्र वागमत् किं तत्राह । एवमिति । प्रतिपालयन् प्रतीक्षमाणः ॥ ३५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मयि परमाश्रये आत्मानं द्रक्ष्यसि आत्मनि तदधिष्ठाने मां तच्च सह जगद्यथा स्यात्तथैव जगदपि द्रक्ष्यसीत्यर्थः ॥ ३१ ॥

वीर्यं प्रभावं तेन सह व्यक्तीभूयेति शेषः । मद्व्यक्तौ त्वत्तपः प्रभावो व्यक्तीभविष्यतीत्यर्थः । वक्ष्यते च प्रजापतिना "शुक्लो वितन्वन् मामकं यशः" इति ॥ ३२—३३—३४—३५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततः पूर्वमभिज्ञापकं तत्र ज्ञानं भविष्यतीत्याह । कृत्वेति । सर्वसाक्षात्कारो हि तस्याभिज्ञापकं ब्रह्मविद् एव भगवत्प्राप्तिः ज्ञानस्य च निदर्शनं यस्मिन्विदिते सर्वमिदं विदितमिति तस्यापि दर्शनमाह । जीवेषु दयां कृत्वा अभयं च दत्त्वेति स्वयं हि ब्रह्मभावमापन्नः अन्ये तु तद्रहिता दीना दयापात्रं भवन्ति आत्मत्वे स्फुरिते तु अभयदानं च आत्मविदो हि तत्कृत्यं तदाह । आत्मवानिति। आत्मवत्त्वं नाम मूलचिद्रूपस्य स्वस्मिन्नाविर्भावः इन्द्रियजयस्तत्र नोपयुज्यत एव पूर्वमेव सिद्धत्वात्तदा सर्वाधिष्ठानत्वे

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

मां पश्यन्तीत्याह । मय्यात्मानं सह जगदिति । भगवति स्वात्मानं जगच्च द्रक्ष्यसि आत्मनि चकाराज्जगति च मां द्रक्ष्यसि एतावता आधाराधेयभूतो भगवान् ज्ञातः स्वाधारश्चेति पूर्णब्रह्मज्ञानं तस्योक्तम् ॥ ३१ ॥

एवं तस्मै आज्ञामुक्त्वा तदङ्गीकारे स्वस्य प्रसादमाह । सहेति । स्वांशकलया सह अशाः आनन्दरूपाः भगवतस्त एव स्वांशभूताः जीवास्त्वंशाः कला ज्ञानक्रियाशक्तयः तत्रानन्दांशोज्ञानकलासहितः त्वद्वीर्येण सह तव क्षेत्रे देवहूत्यां तत्त्वसंहितां सांख्यसिद्धान्तप्रतिपादिकां प्रकर्षेण नंष्ये कथयिष्यामि वीर्यक्षेत्रसम्बन्ध एव नतु जीववदुत्पत्तिरस्तीति पुराणे वेदवन्मूलसंहिताश्चतस्रः सांख्ययोगपशुपतिमतवैष्णवसिद्धान्तप्रतिपादकमन्त्ररूपाः सर्वाण्येव पुराणानि तस्यापेक्षितषडङ्गभूतकालादिप्रतिपादकानि ब्राह्मणस्थानीयानि तत्र मूलसंहिताः कालेन ग्रस्ता इति तत्राद्यां प्रकाशयिष्यामीत्यर्थः स्वस्यांशवीर्यस्य च भेदप्रतिपादनाय प्रथमत एव सहेत्युक्तं महामुने इति सम्बोधनं तथा स्वाधिकारज्ञानाय ॥ ३२ ॥

एवं कामनां पूरयित्वा स्वसंनिधाने जीवस्य कामना न सिद्ध्यतीति भगवान् वरं दत्त्वा प्रस्थित इत्याह । द्वाभ्यामेवमिति । तं कर्दममनुभाष्य करिष्यति सर्वं स्वयमेव अनुभाषणमात्रं तु क्रियते अथ भिन्नप्रक्रमेण पूर्वं दयापरीतः समागतः इदानीं भक्तमुद्धृत्य पूर्णमनोरथ इव गतः अतो भिन्नप्रक्रमः तस्मिन् स्थापितं ब्रह्मभावं गृहीत्वा गत इति ज्ञापयितुं भगवानित्युक्तं पुनराविर्भावः कदा भविष्यतीत्याशङ्क्य तामेवावस्थां कथयन्निव भगवन्तं विशिनष्टि । प्रत्यगक्षज इति । प्रत्यग्भूतेष्वक्षेष्वाविर्भवतीति यदैवायमन्तर्मुखो भविष्यति तदैव भगवदाविर्भाव :इत्यर्थः तद्धितीर्थं बिन्दुसर इति भगवतैव निर्मितं सरस्वती च ब्रह्मदेवस्या तयाच परिश्रितं भगवद्भावः सृष्टिश्च द्वयं तत्र सिद्धं भविष्यतीति स्थानादेव तस्य द्वयश्चसेत्स्यतीति सरस्वतीपरिवेष्टितबिन्दुसरसो जगामेत्युक्तम् ॥ ३३ ॥

अन्यचित्ते तदानीं देशोऽप्यनुपयुक्तो भाविष्यतीति हृदये भगवत्स्थापनार्थं च निरीक्षत एव तस्य सतो ययावित्याह । अशेषसिद्धेश्वरैरभितः स्तुतः सिद्धः स्वत एव सिद्धो मार्गो यस्य वैकुण्ठमार्गो वा सिद्धैः मृग्यत इति भगवतो गमनागमने च सिद्धानां सम्मते अतो भगवति गते न तस्य काचिदप्रतिष्ठा पुनरागमनस्य सम्भवात् सिद्धैः सह भगवतो व्यवहार एव तादृशः सर्वसम्मतिरत्रेत्यशेषपदं येषामपि सिद्धिर्जाता स्वयञ्च सिद्धिदातारः तेषामपि भगवन्मार्गाभिष्टवः ततोऽप्यधिकफलापेक्षित्वात् ननु सिद्धेश्वरा भगवन्तं निरन्तरं स्तुवन्तीति तेषां स्तोत्राण्यश्रुत्वा कथं गत इत्याशङ्क्याह पत्रं रथो यस्य गरुडस्य पक्षैः पृष्ठरूपैर्बृहद्रथन्तरादिभिरुच्चारितं स्तोम स्तोत्रीयसमुदायो यस्मिन् उदीर्णं यत्साम ऋगधिरूढगीतं त्रिवृदादयः स्तोमाः चत्वारः बृहदादयोऽपि तत्र ऋचः प्रधानभूताः पक्षैरुदीर्णं यत्साम तदा कर्णयन्निति सम्बन्धः उच्चारितस्तोममिति विशेषणगतो वेदैः साक्षाद्भगवानेव स्तूयते तदेव शृणोति अन्ये तु मार्गमेव स्तुवन्तीति भावः ॥ ३४ ॥

एवं भगवत्कृतमुक्त्वा तदुक्तं तथैव जातमित्याह । अथेति । अथानन्तर्यवाचकः यस्मिन्नेव क्षणे शुक्लः नारायणः प्रस्थितः तदैव मनुः स्वगृहान्निर्गतः कर्दमोऽपि ऋषित्वात्तमर्थं जानन्भगवत्वाच्च अदीनः सन् तं कालं परिपालयन् एव स्थितः कदा दिनद्वयं यास्यतीति दीनो हि तत्र प्रयत्नं कुर्यात् कामापेक्षयापि भगवद्वाक्यं महदिति विश्वासो भगवद्भावापन्नस्यैव ॥ ३५ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

गार्हस्थ्ये,अन्नाच्छादनादिदानैर्जीवेषु दयां कृत्वा वैराग्ये अभयं मद्भक्त्युपदेशेनेत्यर्थः । मय्यधिष्ठानतत्त्वे परमेश्वरे सर्वं जगदात्मसहितमस्तीति यत् शास्त्रदृष्ट्या साम्प्रतं जानासि तदेव तदा साक्षादेव द्रक्ष्यसि प्रथममादिपुरुषं कारणार्णवशायिनं सहस्रशीर्षादिरूपं मां द्रक्ष्यसि ततस्तस्यैव मम रोमकूपेषु अनन्तकोटिब्रह्माण्डान्यात्मसहितानि साक्षात् द्रक्ष्यसीत्यर्थः तथा आत्मनि स्वस्मिन्नन्तर्यामिणं मां सन्तमधुना जानास्येव तदा तु "केचित् स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तं चतुर्भुजं शङ्खगदा" इति द्वितीस्कन्धोक्तं तृतीयपुरुषं क्षीरोदनाथं मामेव साक्षाद्द्रक्ष्यसीति सृज्यासृज्यं सर्वं वस्तु त्वामहं दर्शयिष्यामीति फलितोऽर्थः । यद्वा मयि पुत्रभूते श्रीयशोदेव जगदात्मानं द्रक्ष्यसि तथात्मनि चापि मां श्रीगोपीवत्तं काचिन्नेत्ररन्ध्रेण हृदि कृत्य निमील्य च पुलकाङ्ग्युपगुह्य आस्ते योगीवानन्दसम्प्लुता,,इत्युक्तरीत्या द्रक्ष्यसीति ॥ ३१ ॥

किञ्चान्याञ्च काञ्चिदानन्दस्य वार्त्तां श्टणित्याह । सहाहमिति । त्वद्वीर्येण त्वत्कन्यापत्यवृन्देन सह आविर्भूयेति शेषः ३२॥

प्रत्यग् भूतेष्वक्षेषु जायते आविर्भवतीति सः सरस्वत्या नद्या परिश्रितात् परिवेष्टितात् ॥ ३३ ॥

तस्य कर्दमस्य निरीक्षमाणस्य सतः अशेषैः सिद्धेश्वरैरभिष्टुतः सिद्धमार्गो वैकुण्ठमार्गो यस्य सः पत्ररथेन्द्रो गरुडस्तस्य पक्षैरुच्चारितं स्तोमम्रक् समुदायं शृण्वन् कीदृशमुदीर्णमभिव्यक्तं साम यत् तत् स्वरूपं समासपाठे उच्चारितः स्तोमः स्तोत्रीयसमुदयो यस्य तथाभूतं यदुदीर्णं साम तत् "बृहद्रथन्तरे पक्षौ,,इति श्रुतेः ॥ ३४ ॥

तं कालं परश्व इत्युक्तं प्रतीक्षमाणः ॥ ३५ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे महामुने ! त्वद्वीर्येण यत्र ऋषयः पुत्रानाधास्यन्ति तेन तत्त्वसंहिताधिकार्युत्पत्तिस्थानेन नवकन्यारूपेण सहावतीर्येति शेषः ॥ ३२ ॥

प्रत्यग्भूतेषु प्रत्याहृतेषु स्वाभाविकीं प्रवृत्तिं विहाय भगवद्ग्राहकतां नीतेष्विन्द्रियेषु जायते आविर्भवतीति प्रत्यगक्षजः परिश्रितात्परिवेष्टितात् ॥ ३३ ॥

अशेषैः समग्रैः सिद्धः ईश्वरः येभ्यः प्रतिपादकेभ्यस्तैर्वेदैः "वेदैश्च सर्वैरहमेव वेद्य" इतिश्रीमुखोक्तेः सिद्धैः श्रेष्ठैर्वा अभिष्टुतः सिद्धो निष्पन्नो यो ज्ञानभक्तिरूपो मार्गो यस्य सः पत्ररथेन्द्रस्य पक्षिराजस्य पक्षैः उदीर्णमभिव्यक्तं साम तैरेवोच्चारितं स्तोमं सामाधारभूतानामृचां समुदायं चाकर्णयन् शृण्वन् ॥ ३४ ॥ ३५ ।

---

मनुः स्यन्दनमास्थाय शातकौम्भपरिच्छदम् ।
आरोप्य स्वां दुहितरं सभार्यः पर्यटन्महीम् ॥ ३६ ॥
तस्मिन् सुधन्वन्नहनि भगवान् यत्समादिशत् ।
उपायादाश्रमपदं मुनेः शान्तव्रतस्य तत् ॥ ३७ ॥
यस्मिन् भगवतो नेत्रान्न्यपतन्नश्रुविन्दवः ।
कृपया सम्परीतस्य प्रपन्नेऽर्पितया भृशम् ॥ ३८ ॥
तद्वै विन्दुसरो नाम सरस्वत्या परिप्लुतम् ।
पुण्यं शिवामृतजलं महर्षिगणसेवितम् ॥ ३९ ॥
पुण्यद्रुमलताजालैः कूजत्पुण्यमृगद्विजैः ।
सर्वर्तुफलपुष्पाढ्यं वनराजिश्रियान्वितम् ॥ ४० ॥

भाषाटीका ।

सब जीवों के ऊपर दया करके सबको अभयदेकर जितेन्द्रिय होकर रहने से मेरे विषय में अपने को तथा सब जगत को देखोगे और अपने में मेरे को देखोगे ॥ ३१ ॥

हे महा मुनी हम तुमारी भार्या देवहूती के गर्भ मे तुमारे वीर्य से होने वाली जो कन्या तिन के साथ उत्पन्न होकर सांख्य शास्त्र को प्रघट करेंगे ॥ ३२ ॥

मैत्रेयजी बोले भगवान् इस प्रकार कर्दमजी से कह कर सरस्वती नदीसे घिरा हुआजो विन्दु सरोवर तिससे चलेगये ॥३३॥

कर्दमजी के देखते देखते जब भगवान् गये तब सर्वसिद्धेश्वरभगवान् की स्तुती करते थे गरुडजी के पङ्खों में से सामवेदकी ध्वनी सुनपडतीथी ॥ ३४ ॥

तिसके अनन्तर भगवान् के चले जाने पर भगवान् कर्दमरूपी उस समयकी प्रतिक्षा करते भये विन्दु सरोवर पर बैठे थे ॥ ३५ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

शातकौम्भाः सौवर्णाः परिकरा यस्मिंस्तं रथमास्थाय दुहितरं चारोप्य वरान्वेषणार्थं पर्यटन् ॥ ३६ ॥

हे सुधन्वन् विदुर ! यदहः ॥ ३७ ॥

तत्प्रवेशमात्रेण परमानन्दं प्राप्त इति दर्शयितुमाश्रमं वर्णयति यस्मिन्नित्यादिभिः सप्तभिः श्लोकैः प्रपन्ने कर्दमे ॥ ३८ ॥

शिवमारोग्यममृतवत्स्वादु जलं यस्मिन् ॥ ३९ ॥

कूजन्तः पुण्या मृगा द्विजाश्च येषु तैः पुण्यद्रुमलतानां जालैः समूहैर्युक्तम् ॥ ४० ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

मनुरिति युग्मकं तस्मिन्नहनि तत्प्रसिद्धम् ॥ ३६-३७ ॥

यस्मिन्निति सप्तकम् । तथापि बहुवाक्यैकवाक्यत्वाद्गर्भेऽङ्का विन्दुमस्तका इति न्यायो घटितटीकाक्रमबोधायानुसरणीयः प्रपन्ने शरणापन्ने " १ „ विन्दुसरोनामकं सर अस्तीति शेषः आरोग्यमारोग्यजनकमित्यर्थः आयुर्घृतमितिवत् आरोग्याव्यभिचारः प्रयोजनम् अरोगमित्यपि क्वचित्पाठः " २ „ युक्तमित्यान्वितमित्यस्यैवार्थः " ३ „ मिथ आहूयन्तः परस्परमाकारयन्तः अत एव मत्ताः " ४ " अशनो विजयसारः चूतपोतैर्बालाम्रैः " ४ " ५ " ६ " तद्विशेषाः मर्कटभेदाः ॥ ३८—४४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मनुः स्वायम्भुवः शातकौम्भाः सुवर्णमयाः परिच्छदा अलंकारा यस्मिंस्तं स्यन्दनं रथमास्थायाधिष्ठायारुह्येत्यर्थः तत्र स्वां दुहितरमारोप्य सभार्यः शतरूपया सहितः महीं दुहितुः पत्यन्वेषणार्थं परितः सञ्चरन् ॥ ३६ ॥

भगवान् यदहः समादिशन्निर्दिष्टवान् तस्मिन्नहनि हे सुधन्वन् ! विदुर शान्तव्रतस्योपशमशीलस्य मुनेराश्रमपदं स्थानं प्रति उपायादुपागात् ॥ ३७ ॥

आश्रमपदं वर्णयति सप्तभिः । यस्मिन्निति । प्रपन्ने कर्दमे भृशमत्यन्तमर्पितया निहितया कृपया संपरीतस्य सम्यक् परितो व्याप्तस्य भगवतो नेत्राद्धर्षविन्दव आनन्दाश्रूणि यस्मिन् सरस्यपतन् ॥ ३८ ॥

तत्सरः विन्दुसरो नाम इति प्रसिद्धम् इदमेव विन्दुसरः शब्दस्य प्रवृत्तिनिमित्तं यद्धरिहर्षविन्दुनिपतनात्तदाविर्भावः कथंभूतं सरस्वत्या नद्या परितः श्रितं वलयितं पुण्यमुपस्पर्शनादिभिः पुण्यसाधनं शिवममृततुल्यं जलं यस्मिंस्तन्महर्षिगणैः सेवितमहरहरुपस्पृश्यमानम् ॥ ३९ ॥

कूजन्तः पुण्याः मृगा द्विजाः शकुनयश्च येषु तैः पुण्यानां द्रुमाणां लतानां च जालैः समूहैः सर्वर्तुषु षड्ऋतुषु यानि फलानि पुष्पाणि च तैराढ्या शालिनी या वनराजिर्वनपंक्तिस्तस्याः श्रिया शोभयान्वितं युक्तम् ॥ ४० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ऋष्याद्युक्तमपि न मृषा भवति किमुतेश्वरभाषितमितिभावेन मनोगमनं वक्ति । मनुरिति । पर्यटन्महीमिति ॥ ३६ ॥

अनेन पित्रा दुहित्रर्थं वरानुगमनं न लौकिकमिति राज्यपरीक्षाव्याजेन यदृच्छया प्राप्त इति भावं सूचयति । हेसुधन्वन् ! विदुर ! शान्तव्रतस्य पूर्णव्रतस्य ॥ ३७ ॥

कर्दमाश्रमस्य विन्दुसर इति नाम कस्मादिति तत्राह । यस्मिन्निति ॥ ३८ ॥

विन्दूनां सरणं प्रसरणं यत्र तद्विन्दुसर इति कन्यादानकार्यमन्तरेणापि श्रेयोऽर्थिना गन्तुं योग्यमित्याशयेन तदाश्रमगुणानाह । पुण्यमिति । शिवं चामृतमयाचितं च जलं यस्मिंस्तत्तथा ।

अमृतं व्योम्नि देवान्ने यज्ञशेषे रसायने
अयाचिते च दुग्धाब्धावित्यभिधानम् ॥ ३९ ॥

पुण्यद्रुमा अश्वत्थादयः लता माधव्यादयः तेषां जालैः समूहैः मुकुलैश्च युक्तमिति शेषः पुण्यमृगाः कृष्णसारङ्गादयः द्विजा जरितर्यादिपक्षिणः ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मनुरिति युग्मकम् ॥ ३६—३७ ॥

यस्मिन्निति सप्तकम् । प्रपन्ने प्रपन्नमात्रे अर्पितया तदेकसत्कृतयेत्यर्थः । यस्मिन्नेव तत् अश्रुबिन्दुवृन्दस्वरूपं बिन्दुसरो नामसरोऽभूदित्यर्थः टीकायां शिवमारोग्यमिति आयुर्घृतमितिवत् आरोग्यजनकमित्यर्थः । अरोगमिति क्वापि ॥ ३८—४४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

मनुस्तु सभार्यः समागत इत्याह । मनुरिति । शातकौम्भपरिच्छदमिति सौवर्णपरिकरयुक्तं स्यन्दनं विवाहं सूचयति । आरोप्य स्वां दुहितरमिति । विवाहे कृतनिश्चयः अन्तर्यामिप्रेरणया तत्रैव भविष्यतीति विनिश्चित्य स्वकन्याया नान्यः प्रष्टव्य इति दम्पत्योः प्राधान्यात् सभार्यः देयत्वेन तां गृहीत्वा तामज्ञापयन् तस्याः पश्चात् कौतुकदर्शनं न भविष्यतीति महीं व्यचरत् उत्तमस्थानानि सर्वाणि प्रदर्शितवान् इत्यर्थः ॥ ३६ ॥

एवं दिनद्वयमतीतं तृतीये दिवसे कुरुक्षेत्रात् बिन्दुसरसि समागत इत्याह । तस्मिन्निति । हेसुधन्वन्निति स्वपौरुषं ख्यापयन् स्वस्य जितेन्द्रियत्वं बोधयतीति विदुरप्रीत्यर्थं संबोधनं भगवदाज्ञा नान्यथा भवतीति तस्मिन्नेव दिने समागतः यद्भगवान् समादिशत् ननु काकतालीयन्यायेन तदा समागतः एतद्वाच्यस्वयमेव भगवदाज्ञाकीर्तनमाश्रमो यस्मिन् प्रदेशे तमुपायात तस्य निकटे समागतः ननु तपसा तप्यमाने तस्मिन् तत्तेजसा कथं निकटे समागत इति तत्राह । शान्तव्रतस्येति । परिसमाप्तं तपोलक्षणं व्रतं यस्य तत् प्रसिद्धं न ज्ञानार्थं प्रश्नापेक्षा ॥ ३७ ॥

भगवन्निरूपितः कालः स एवेति निरूप्य देशोऽपि भगवत्कृत इत्याह । यस्मिन्निति । बिन्दुसरोनिर्वक्ति स्रुतस्त एव बिन्दवः सरसि यस्मिन्निति तेषां बिन्दूनामुत्पत्तिमाह । यस्मिन्सरसि भगवतो नेत्रादश्रुबिन्दवो न्यपतन् बिन्दुपाते निमित्तं कृपया संपरीतस्येति कृपायां निमित्तं प्रपन्नेऽर्पितयेति शरणागतश्चेत्क्लिष्टः तदा तत्र कृपा भवति कृपया यो व्याप्रियते स्वस्थानात्प्रच्याव्यते तदा नेत्राद् बिन्दवो भवन्ति भगवान् स्वरूपं शरणागतेष्वेवार्पितवान् अतो न दीनमात्रे भगवतो दया यतः प्रपन्नाय दत्तवान् तदाहार्पितयेति मृशमिति सर्वभावेन ॥ ३८ ॥

एवं देशकालयोर्भगवन्निरूपितत्वमुक्त्वा भगवत्कृपाकार्यं तस्मिन्देशे वर्णयति कन्यायाः सुखस्थित्यर्थं तद्वै बिन्दुसर इति भगवद्गुणाकृतत्वाय तत् बिन्दुसर इति नाम प्रसिद्धं सरस्वत्या परिश्रितमिति तत्र धर्मसिद्धिः परिप्लुतमितिपाठे सरस्वतीमध्य एव कालीयह्रद इव तत्कुण्डं प्रथमतो जलं वर्णयति । पुण्यमदृष्टजनकं शिवमारोग्यकरममृतं स्वादु प्रमाणमाह । महर्षिगणसेवितामिति । महर्षयो ये सर्वपदार्थयाथात्म्यद्रष्टारस्तेषां संघेन सेवितमतो महाफलमेवैतज्जलम् ॥ ३९ ॥

जलप्रान्तभागमृषिगणसेवितत्वेनोक्त्वा तस्यापि वेष्टनरूपं वनमनुवर्णयति । पुण्येति । द्रुमाः वृक्षाः लताश्च स्वभावतोऽपि पुण्याः आम्रादयः द्राक्षादयश्च पुण्यजनकाश्च पुण्याः तत्फलभक्षकाः कूजन्तो मृगा हरिणादयः द्विजाः मयूरादयश्च यत्र तत्र तादृशानि द्रुमलतानां जालानि तैः कृत्वा सर्वर्तुषु तत्स्थानं फलैः पुष्पैश्चाढ्यं वनपङ्क्तिश्च तत्र शोभमाना परितस्तदाह । वनराजिश्रियान्वितमिति ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यदहो भगवान् समादिशत् तस्मिन्नहनि महीं पर्यटन् मुनेराश्रमपदमुपायादित्यन्वयः ॥ ३६ ॥

हे सुधन्वन् । हे विदुर ! ॥ ३७ ॥

आश्रमं वर्णयति । यस्मिन्निति सप्तभिः श्लोकैः । प्रपन्ने कर्दमे ॥ ३८ ॥ ३९ ॥

लताजालैरन्वितम् ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हेसुधन्वन् ! विदुर ! आश्रमपदमाश्रमप्रदेशम् ॥ ३६–३७ ॥

तद्वर्णयति । यस्मिन्नितिसप्तभिः । कूजन्तः पुण्या मृगादयो येषु तैः पुण्यद्रुमादीनां जालैः समूहैर्युक्तम् मत्तभ्रमराणां विभ्रमो विलासो यस्मिन् मत्तार्बर्हिणा एव नटास्तेषामाटोपो नृत्यविलासो यस्मिन् तत् हुतः हुताशनः ब्रह्मचारियोग्यो येन तम् भार्याभावे अग्निहोत्राधिकाराभावात् तपसि चिरमुग्रस्तीव्रो युक् योगो यस्य तेन नातिक्षामं नातिकृशम् तस्य भगवतो व्याहृतमेवामृतकला अमृतस्य सुखकलानिधेः कला तन्मयस्य पीयूषस्य श्रवणेन च प्रांशुमुन्नतम् असंस्कृतमनिर्णिक्तम् अर्हते अनेनेति अर्हणं महारत्नं यथा तथा मलिनमकृतोद्वर्तनादिकं मुनिमुपसंसृत्य निकटं गत्वा ददर्शेति सार्द्धत्रयाणामन्वयः ॥ ३८–४७ ॥

मत्तद्विजगणैर्घुष्टं मत्तभ्रमरविभ्रमम् ।
मत्तबर्हिनटाटोपमाह्वयन्मत्तकोकिलम् ॥ ४१ ॥
कदम्बचम्पकाशोककरञ्जबकुलासनैः ।
कुन्दमन्दारकुटजैश्चूतपोतैरलंकृतम् ॥ ४२ ॥
कारण्डवैः प्लवैर्हंसैः कुररैर्जलकुक्कुटैः ।
सारसैश्चक्रवाकैश्च चकोरैर्वल्गु कूजितम् ॥ ४३ ॥
तथैव हरिणैः क्रोडैः श्वाविद्गवयकुञ्जरैः ।
गोपुच्छैर्हरिभिर्मर्कैर्नकुलैर्नाभिभिर्वृतम् ॥ ४४ ॥
प्रविश्य तत्तीर्थवरमादिराजः सहात्मजः ।
ददर्श मुनिमासीनं तस्मिन् हुतहुताशनम् ॥ ४५ ॥

भाषाटीका ।

इतने में सुन्दर सुवर्ण के आभरणों से भूषित रथके उपर बैठ कर अपनी पुत्री को बैठा कर भार्या के सहित पृथ्वी में घूमते भये हे विदुर! भगवान् ने जो दिन कहा था उसी दिन शान्तव्रत वाले उन कर्दमजी के आश्रम पर मनु महाराज पहुंच गये ॥ ३६ ॥ ३७ ॥

जिस स्थान में मुनि के ऊपर अत्यन्त कृपा के व्याप्त होने से श्रीभगवान् के नेत्र से आंसू के विन्दु गिरे ॥ ३८ ॥

वही विन्दुसरोवर नाम से प्रसिद्ध है उसके चारों तरफ सरस्वती नदी है अत्यन्त पवित्रतीर्थ है निर्मल जल है महर्षि गणों से सेवित है ॥ ३९ ॥

अति पवित्र वृक्ष लता के समूह से शब्द करते भये पक्षी मृगों से युक्त है वहां पर बनों की बड़ी पङ्क्ती है सब ऋतुओं में फूल फलोंसे युक्त है ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

घुष्टं नादितम् मत्तभ्रमराणां विभ्रमो विनोदो यस्मिन् मत्ता-बर्हिण एव नटास्तेषामाटोपो नृत्यसम्भ्रमो यस्मिन् आह्वयन्तो मिथो मत्ताः कोकिला यस्मिन् ॥ ४१ ॥

कदम्बादिभिर्वृक्षैरलंकृतम् ॥ ४२ ॥

कारण्डवादिभिः पक्षिभिर्वल्गु यथा तथा कूजितम् ॥ ४३ ॥

हरिणादिभिर्वृतम् तत्र क्रोडः सूकरः श्वाविच्छल्लकः मर्को-मर्कटः तद्विशेषा गोपुच्छाः हरिर्वानरः सिंहो वा नाभिः कस्तूरी-मृगः ॥ ४४ ॥

हुतो हुताशनो ब्रह्मचारियोग्यो येन ॥ ४५ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

प्रविश्येति सार्द्धत्रिकम् । तस्मिंस्तीर्थवरे तपसा कृशमित्यादि अतिशब्दबलाद्व्याख्यातम् ॥ ४५—४७ ॥

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

मत्ता ये द्विजास्तैर्घुष्टं नादितं मत्ता मधुपानमत्ता ये भ्रमरास्तेषां विभ्रमो विलासो यस्मिन् मत्ता बर्हिणो मयूरा एव नटास्तेषा-माटोपो नृत्यसम्भ्रमो यस्मिन्नाह्वयन्तो मिथः मत्ताः कोकिला यस्मिन् ॥ ४१ ॥

कदम्बादिभिः पुष्पवृक्षैरलंकृतम् ॥ ४२ ॥

कारण्डवादिभिः पक्षिभिः वल्गु मधुरं सुन्दरं वा यथा तथा कूजितम् ॥ ४३ ॥

तथा हरिणादिभिर्मृगैर्वृतं तत्र क्रोडः सूकरः श्वावित् शल्यकः मर्को मर्कटः तद्विशेषो गोपुच्छः हरिः सिंहः नाभिः कस्तूरी-मृगः ॥ ४४ ॥

सहानुगः सभृत्यः आदिराजो मनुः तत्तीर्थश्रेष्ठं प्रविश्य तस्मिंस्तीर्थे हुतः हुताशनो येन तं कृताग्निकार्यमित्यर्थः आसीनमुपविष्टं मुनिं ददर्श ॥ ४५ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मत्तेन द्विजगणेन विशिष्टपक्षिसमूहेन उद्घुष्टमाघोषितं मत्ता-नां भ्रमराणां विभ्रमः शृङ्गारविशेषो यस्मिंस्तत्तथा बर्हाणि येषां सन्तीति बर्हिणो मयूरास्त एव नटास्तेषामाटोपो नृत्य-संभ्रमो यस्मिंस्तत्तथा मिथ आह्वयन्तो मत्ताः कोकिला यस्मिं-स्तत्तथा ॥ ४१ ॥

न केवलमश्वत्थादयो यत्राऽन्येऽपि सन्तीत्याह । कदम्बेत्या-दिना ॥ ४२ ॥

सामान्येनोक्तान् पक्षिणो विशेषनाम्ना निर्दिशति । कारण्डवैरि-त्यादिना । कारण्डवाख्यमहापक्षिभिः ॥ ४३ ॥

श्वविशो वृका गवया वन्या गावः गोपुच्छाश्चमर्यः हरिभिः सिंहैः मर्कैर्वनमार्जारैः नाभिभिर्मृगनाभिभिः ॥ ४४ ॥ ४५ ॥

विद्योतमानं वपुषा तपस्युग्रयुजा चिरम्।
नातिक्षामं भगवतः स्निग्धापाङ्गावलोकनात्।
तद्व्याहृतामृतकलापीयूषश्रवणेन च ॥ ४६ ॥
प्रांशुं पद्मपलाशाक्षं जटिलं चीरवाससम्।
उपसंसृत्य मलिनं यथाऽर्हणमसंस्कृतम् ॥ ४७ ॥
अथोटजमुपायातं नृदेवं प्रणतं पुरः।
सपर्यया पर्यगृह्णात् प्रतिनन्द्यानुरूपया ॥ ४८ ॥
गृहीतार्हणमासीनं संयतं प्रीणयन् मुनिः।
स्मरन् भगवदादेशमित्याह श्लक्ष्णया गिरा ॥ ४९ ॥
नूनं चङ्क्रमणं देव ! सतां संरक्षणाय ते।
वधाय चासतां यस्त्वं हरेः शक्तिर्हि पालिनी ॥ ५० ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

प्रविश्येति सार्द्धत्रिकम्। नातीति नैवेत्यर्थः ॥ ४५—५१ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं धर्मजनकत्वं वनस्य निरूप्य रसालत्वं निरूपयति। मत्तेति। द्विजगणाः पक्षिगणाः सर्व एव तत्रत्या रसेन मत्ताः अनेन तल्लोभेन सेवन्त एव अतस्तैर्जुष्टं मत्तानां भ्रमराणां विभ्रमो विलासो मधुरस्वानं गतिविशेषो वा यत्र मत्ता ये बर्हिणः त एव नटाः नर्त्तकाः तेषामाटोपः सम्भ्रमो यस्मिन् निश्चिन्तता अहिंसकत्वाचेषां निरूपिता आह्वयन्तो मत्ताः कोकिला यस्मिन् ॥ ४१ ॥

एवं रसालतां निरूप्य पुष्पप्रधानान् वृक्षान् गणयति। कदम्बेति। असनोऽपि वृक्षः पुष्पप्रधानः चूतपोताः सूक्ष्माम्राः तैरप्यलंकृतम् ॥ ४२ ॥

कारण्डवैरिति। कारण्डवादयः पक्षिविशेषाः तैर्वल्गु कूजितं हरिणादयो मृगविशेषास्तैर्वृतः श्वावित् शल्यकः गोपुच्छादयो मर्कटविशेषाः हरयः सिंहा वानरा वा नाभिभिः कस्तूरीमृगैः ॥ ४३—४४ ॥

तादृशं वनं निःशङ्कं प्रविश्य तत्र विद्यमानं मुनिं दृष्टवानित्याह। प्रविश्येति। विन्दुसरोनिकटे तस्य पर्णशाला अत एव तीर्थवरं प्रविश्येत्युक्तं नदीमुत्तीर्य तदाश्रमे गत इति प्रविश्येति पदात् ज्ञायते तीर्थश्रेष्ठ्यपरिज्ञानार्थमादिराज इत्युक्तमादिराजो मनुः सहानुगः ससेवकः राजत्वपरिज्ञानार्थं दूरादेव ददर्श हुतो हुताग्नो येन अनेन कर्मसमाप्तिश्च सूचिता ॥ ४५ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

घुष्टं नादितं मत्ता बर्हिण एव नटास्तेषामाटोपो नृत्यसम्भ्रमो यस्मिंस्तं मिथ आह्वयन्तो मत्ताः कोकिला यस्मिंस्तम् ॥ ४१ ॥ ४२ ॥

तत्रत्यान् वृक्षानुक्त्वा पक्षिण आह कारण्डवैरित्यादि ॥ ४३ ॥

मृगानाह। तथैवेति। क्रोडः शूकरः। श्वावित् शल्लः मर्कों मर्कटः गोपुच्छस्तद्विशेषः हरिः सिंहः नाभिः कस्तुरीमृगः ॥ ४४ ॥ ४५ ॥

भाषा टीका

उस सरोवर के किनारे मतवारे भ्रमरों का शब्द होरहा है मतवारे पक्षियों का शब्द होता है मतवारे मोरों के नाच हो रहे हैं मतवारे कोयल आपस में शब्द कर रहे हैं ॥ ४१ ॥

कदम्ब चम्पा अशोक करंज मोरसली असन कुन्द मन्दार जङ्गल की मल्ली आम इनके वृक्षों से सरोवर शोभित है ॥ ४२ ॥

कारण्डव प्लव हंस कुरर जल मुर्गा सारस चकवा चकवी चकोर इनके मनोहर शब्द होते हैं ॥ ४३ ॥

तैसेही हरिण सुअर स्योही रोज हाथी गोपुच्छ सिंह वन्दर न्योला कस्तूरीमृग इनों से युक्त है ॥ ४४ ॥

आदिराज मनु महाराज उस उत्तम तीर्थ में प्रविष्ट भये अपनी पुत्री को साथ में लिये थे उहां जाकर देखा कि प्रातःकाल होम करके फिर हवन करके मुनि कर्दम बैठे हैं ॥ ४५ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

उग्रोयुक् योगो यस्य तेन वपुषा विद्योतमानम् तस्य भगवतो व्याहृतं भाषणमेवामृतकला अमृतमयस्य चन्द्रस्य कलातन्मयं पीयूषं तस्य श्रवणेन च नातिक्षामं तपसा कृशं सन्तमप्यकृशम् ॥ ४६ ॥

प्रांशुमुन्नतम् उपसंसृत्य समीपं गत्वा मलिनं ददर्शेति पूर्वेण क्रिया अर्हतेऽनेनेत्यर्हणं महारत्नं तदसंस्कृतमनिर्घृष्टं यथा मलिनं दृश्यते तद्वत् ॥ ४७ ॥

उटजं पर्णशालां प्राप्तं पुरः पादसमीपे प्रणतमाशीर्भिरभि-

श्रीधरस्वामिकृतभावार्थदीपिका ।

नन्द्य सपर्यया पूजया प्रत्यगृह्णात्सत्कृतवान् ॥ ४८ ॥ ४९ ॥

ते चंक्रमणं पर्यटनम् हि यस्मात् ॥ ५० ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

अनुरूपया राजयोग्यया ॥ ४८ ॥

प्रीणयन् हर्षयन् भगवदादेशमायास्यति दिदृक्षुस्त्वामित्यादि ॥ ४९—५१ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पुनर्मुनिमेव विशिनष्टि सार्द्धद्वयेन। तपसि चिरमुग्रो युग्योगो यस्य तेन वपुषा विद्योतमानं भगवतः स्नेहयुक्तं यदपाङ्गावलोकनं कटाक्षप्रसरणं तस्मात् ॥ ४६ ॥

तस्य भगवतो व्याहृतं भाषणमेवामृतकलामृतमयस्य चन्द्रस्य कला तन्मयं पीयूषं तस्य स्रवेण च नातिक्षामं तपसा कृशमपि नातिकृशमित्यर्थः प्रांशुमुन्नतं जटिलं सञ्जातजटं उपसंसृत्य समीपमागत्य मलिनं ददर्शेति पूर्वेण क्रिया अर्हते ऽनेनेत्यर्हणं महारत्नं तदसंस्कृतमनिर्णिक्तं यथा मलिनं भवति तद्वत् ॥ ४७ ॥

अथानन्तरं उटजं पर्णशालामुपायान्तं प्राप्तं पुरः पादयोः समीपे प्रणतं नमस्कुर्वन्तं नृदेवं मनुं प्रतिनन्द्याशीर्भिरभिनन्द्यानुरूपया सपर्यया पूजया प्रत्यगृह्णात्सत्कृतवान् ॥ ४८ ॥

गृहीतं प्रतिगृहीतमहर्णं पूजनं येन तमासीनमुपविष्टं संयतं स्ववाक्यश्रवणे सम्यक् यतमानं मुनिं मुनिः कर्दमः श्लक्ष्णया मधुरया गिरा स्वागतप्रश्नरूपया वाचा नृपं प्रीणयन् तर्पयन्निति वक्ष्यमाणप्रकारेणाह जगाद ॥ ४९ ॥

हे देव मनो ! ते तव चंक्रमणं पर्यटनं सतां रक्षणायासतां वधाय च यद्यस्मात्त्वं पालिनी जगत्पालिनी हरेर्भगवतः शक्तिः हरेर्जगत्पालकत्वशक्तियुक्तस्त्वमित्यर्थः ॥ ५१ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तपसि विषये उग्रतर इत्युग्रयुक् तीव्रवेगवतेत्यर्थः उग्रयोगतपस्त्वे वपुःकार्श्येन दृष्टिसुखाजनके कन्यादाने वैराग्यं स्यादिति तत्राह । नातिक्षाममिति । तत्र हेतुद्वयमाह । भगवत इति ॥ ४६ ॥

पुरुषलक्षणाभावेनातिक्षामत्वमप्रयोजकमितितत्राह। प्रांशुमिति । प्रांशुमुन्नतं तपोवेषगूढत्वेनान्यल्लक्षणमत्र न दृश्यत इति भावेनाह । जटिलमसंस्कृतमनलंकृतम् ॥ ४७ ॥

उटजं पर्णशालामनुरूपया राजयोग्यया ॥ ४८ ॥

"तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता"इति। अस्यार्थमनुसंदधानो मुनिर्वाचापि तं मानयतीत्याह । गृहीतेति । श्लक्ष्णया मधुरया ॥ ४९ ॥

किमर्था सुरसां वाणीमाहेत्यत्राह । नूनमिति । मुकुरे मुखस्येवास्मिन् राज्ञि हरेर्विशेषसन्निधानस्य प्रतीयमानत्वाद्देवेति वक्ति हि शब्दो हेत्वर्थः सप्तसु प्रथमेति सूत्रात्स्वमितिसप्तम्यर्थे त्वयि हरेः पालिनी सात्त्विकी शक्तिः सन्निहिता हि अस्माच्चे तव चंक्रमणं सम्यक् पर्यटनं सतामस्मादृशानां संरक्षणायासतामस्मद्विरोधिनां च वधाय नूनं निश्चय इत्यन्वयः ॥ ५० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

कन्यादानयोग्यत्वाय वर्णयति । सार्द्धाभ्यां विद्योतमानमिति । उग्रयुजा तपसि वपुषा विद्योतमानमुग्रो युक् योगो यस्य तपसि तस्य महान् योगः तपसः परमधर्मत्वात् चिरकालकृतेनापि तपसा वपुर्विद्योतमानमेव अनेन वर्णोत्तमता निरूपिता कृशत्वं परिहरति । नातिक्षाममिति । भगवतो यदस्निग्धापाङ्गावलोकनं तेनात्यन्तं न कृशः "दुरन्तसर्गो यदपाङ्गमोक्ष" इति वाक्याद्भगवत्कटाक्षः सर्वपदार्थजनको भवति स हि देहपुष्टिमपि जनयेत् दुरन्तत्वव्यावृत्त्यर्थं स्निग्धता निरूपिता देहे स्थूलत्वापादकावयवाः भगवत्स्नेहसहिता दृष्ट्या जनिता इति नोत्तरत्रान्यथा भावः तेचावयवाः कियन्त एव भवन्ति इति नातिक्षामता साक्षाद्दृष्टिजनितत्वाय सर्वावयवेषु दृष्टिसम्बन्धार्थं बहुवचनं तथाप्यासन्यो न तृप्यतीति कारणान्तरमप्याह । तद्व्याहृतेति । भगवतो यद्व्याहृतं वाक्यं स एवामृतकलः चन्द्रः तस्यासमन्तात्पीयूषं तस्य श्रवणेन च भगवद्वाक्यं निरन्तरामृतोत्पत्तिरूपमिति वाक्यश्रवणेनापि पुष्टिप्रतिपादनार्थममृतकलत्वेन निरूपितमतोनात्र द्राविडमयडकः तत्रापि प्रयोजकं रूपं वक्तुममृतकलप्रयोगः तस्य च श्रवणमात्रमिति नातिक्षामता अन्यथा पुष्टिरेवोक्ता स्यात् चकाराद्दलौकिककृपया ॥ ४६ ॥

एवं दोषाभावमुक्त्वा गुणान्वर्णयति । प्रांशुमिति । प्रकृष्टा अंशवः पर्वाणि यस्य आजानुबाहुत्वं क्षत्रियत्वं च निरूपितं पद्मपलाशवदक्षिणी यस्येति सौन्दर्यं प्रकृतोपयोगि जटिलं चीरवाससमिति तपः ऋषित्वज्ञापकं महत्त्वाय उपसंसृत्य निकटं गत्वा ददर्शेति पूर्वेणैव सम्बन्धः अथवा उप निकटं संसृत्य संसारं प्राप्य मलिनं कामेन हि प्राणी मलिनो भवति धूमेनाव्रियते वह्निरिति वाक्यात् तत्र दृष्टान्तमाह सहजदोषत्वाभावात् यथार्हणमसंस्कृतमिति महारत्नमनिर्णिक्तं यथा स्वभावतउज्ज्वलमपि बहिःसंस्काराभावे न सुवर्णे योजयितुं शक्यते तथात्र प्रकृते विद्योतमानमिति विशेषणविरोधात् ऋषीणां तथात्वस्य बाधकत्वाभावाद्द्वितीयः पक्षः ॥ ४७ ॥

एवं दूराद्दृष्टं तं वर्णयित्वा तस्य लौकिकधर्मं वक्तुमाह। अथोटजमिति । पर्णशालां प्रत्यायान्तं राजानं पुरः पादसमीपे प्रणतं क्षत्रियस्य तथैव धर्म इति राजपूजार्थं पूर्वमेव संपादितया सपर्यया प्रत्यगृह्णात् प्रतिनन्द्याशीर्भिः कुशलप्रश्नैर्वा तुल्यताज्ञानार्थं चानुरूपया महाराजयोग्यया अर्घ्यादिरूपया इत्यर्थः परिग्रहोष्वात्मीयतया ग्रहणेन ॥ ४८ ॥

एवं बहिस्तस्य पूजां विधाय आधिनिराकरणार्थं सर्वसंदेहनिवृत्त्यर्थं च वाचा पूजां कृतवानित्याह। गृहीतार्हणमिति । ऋषिदत्तां पूजां स्वीकृत्य स्थितं ज्ञात्वा अग्रिममपि स्वीकरिष्यतीति निश्चित्य सम्यक् यत्नं सावधानं विनीतं प्रीणयन्निति प्रथमं स्तोत्रं कुर्वन् मुनिरिति आज्ञयर्थज्ञानं तथापि निश्चयरूपेण कथं तदुक्तं करिष्यामीति प्रतिजानीते सचेदन्यदेव किंचिद्वदेदित्याशङ्काह । स्मरन्भगवदादेशमिति । आत्मजामसितापाङ्गीमिति । भगवद्वाक्यात्कन्यां दातुमेवायमागतः लज्जया च स्वयं न वक्ष्यति अतः स्वयमेव श्लक्ष्णया मनोहरया वाचा अग्रिमवाक्यरूपमिदमाह ॥ ४९ ॥

योऽर्केन्द्रग्नीन्द्रवायूनां यमधर्मप्रचेतसाम्।
रूपाणि स्थान आधत्से तस्मै शुक्लाय ते नमः ॥ ५१ ॥
न यदा रथमास्थाय जैत्रं मणिगणार्पितम्।
विस्फूर्जच्चण्डकोदण्डो रथेन त्रासयन्नघान् ॥ ५२ ॥
स्वसैन्यचरणक्षुण्णं वेपयन् मण्डलं भुवः।
विकर्षन् बृहतीं सेनां पर्यटस्यंशुमानिव ॥ ५३ ॥
तदैव सेतवः सर्वे वर्णाश्रमनिबन्धनाः।
भगवद्रचिता राजन्! भिद्येरन् बत दस्युभिः ॥ ५४ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

वाक्यान्येवाह सप्तभिः। यद्यपि त्वया किमर्थमागतमिति न प्रष्टव्यम् प्रसङ्गादप्यागमनसम्भवात् प्रसङ्गश्च वक्तव्यः षड्भिः तथापि विशेषाकारेण मत्समीपमागत इति लक्षित इति तथात्वे यद्भवानाज्ञापयिष्यति तत्करिष्यामीति समुदायार्थः प्रसङ्गमाह। हे देव! तव चंक्रमणं सतां संरक्षणायासतां वधाय च देवेति सम्बोधनमुपपादयति यद्यस्मात्त्वं हरेः पालिनी शक्तिः स्थानेऽथ धर्मेति वाक्यात् सतामसतां चानुग्रहनिग्रहौ स्वतन्त्रौ धर्मत्वात् तत्त्वेकार्यमन्यत् ॥ ५० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

तपसि तपोमध्य एव उग्रो युक् योगो यत्र तेन तदपि न अतिक्षाममनतिकृशं तत्र कृपापाङ्गेति तद्वचामृतेति हेतुद्वयं तद्वचामृतमेवामृतकलस्य चन्द्रस्य आसस्यक् पीयूषं तस्य श्रवणेनेत्यनेन त्वन्मुखस्यामृतकलत्वमुक्तम् ॥ ४६ ॥

प्रांशुमध्वितस्तिप्रमाणातनुमुपसंसृत्य निकटं गत्वा मलिनं ददर्शेति पूर्वेव क्रिया अर्हतेऽनेनेत्यर्हणं महारत्नं तद् असंस्कृतं यथा मलिनं दृश्यते तद्वत् ॥ ४७ ॥

उटजं पर्णपालां प्राप्तं पुरः पादसमीपे प्रणतं पुनरपि पादौ गृह्णन्तमनुरूपया आतिथ्योचितया सपर्यया सहितः प्रत्यगृह्णात् भुजाभ्यामुत्थाप्यालिलिङ्ग किं कृत्वा प्रतिनन्द्य अद्य मूर्त्तमेव तपोमयं तेजः साक्षात्कृत्य कृतकृत्योऽस्मीत्यभिनन्दन् तं राजानं राजश्च भागवती विश्वपालिनी शक्तिस्त्वमवलोक्यसे इति प्रत्यभिष्टुत्वेत्यर्थः क्षालितचरणमुचितदर्भासने आसीनं गृहीतानि अर्हणानि पुष्पचन्दनदुर्वादलफलादीनि येन तं संयतं तूष्णीं स्थितम् ॥ ४८ ॥ ४९ ॥

हे देव! यस्य चंक्रमणमित्यादि स एव त्वं हरेः पालिनीशक्तिर्भवसि ॥ ५० ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

उटजं पर्णशालामुपायान्तं प्राप्तम् पुरः प्रणतमाशीर्भिः अनुरूपया ब्रह्मर्षिणा राजर्षये कर्तुमुचितया प्रत्यगृह्णात् सत्कृतवान् ॥ ४८ ॥

श्लक्ष्णया मधुरया ॥ ४९ ॥
चंक्रमणं विचरणम् ॥ ५० ॥

### भाषाटीका।

चिर काल पर्यंत उग्रतपस्या मे युक्त शरीर से प्रकाशमान होरहे हैं भगवान् के दृष्टि पडने से कुछ कृश नहीं दीखते हैं और भगवान् के वचन रूपी अमृत के श्रवण से भी पुष्ट हैं ॥ ४६ ॥

शरीर से ऊंचे हैं कमल सरीके उनके नेत्र हैं जटा धारण किये हैं वकला के वस्त्र को पहिरे हैं तेजस्वी होकर भी मलिन होरहे हैं ऐसे मुनिके समीप मे जाकर मनुजी ने दर्शन किया ॥ ४७ ॥

इसके अनन्तर कर्दमजी अपनी पर्णकुटी के पास मे आये मनुजी को नमस्कार करते देखकर उनका अभिनंदन करके उनके लायक सत्कार से उनको पास मे लाये ॥ ४८ ॥

जब मनुजी ने आसन ग्रहण कर लिया अपने वचन सुनने को सावधान हो गये तब कर्दमजी उनके मनको प्रसन्न करने के लिये भगवान् की आज्ञा को स्मरण करते हुये सुन्दर वाणी से बोले ॥ ४९ ॥

हे देव! आपका जो विचरना है सो सत्पुरुषों के रक्षा के लिये और असत्पुरुषों के नाश के लिये है क्यों कि आप साक्षात् भगवान् की जगतपालन करने वाली कला हो ॥ ५० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

मनुरूपं विष्णुं प्रणमति। य इति। स्थाने तत्तत्कार्यावसरे शुक्लाय विष्णवे ॥ ५१ ॥

न यदेति पञ्चानामयमर्थः यद्यपि धर्मरक्षार्थं सर्वतः पर्यटतस्तव प्रसङ्गादप्यागमनं भवति तथापि विशेषकार्यं चेदस्ति तत्कथ्यतामिति जैत्रं जयप्रदं मणिगणा अर्पिता यस्मिंस्तं रथमारुह्य त्वं यदा भुवो मण्डलं न पर्यटसि तदा सेतवो भिद्येरन्निति त्रयाणामन्वयः विस्फूर्जन्नादं कुर्वंश्चण्डं कोदण्डं धनुर्यस्य ॥ ५२ ॥

स्वसैन्यस्य चरणैः क्षुण्णं संघट्टितम् ॥ ५३ ॥
वर्णाश्रमाणां निबन्धनं यैः बत अहो ॥ ५४ ॥

अधर्मश्च समेधेत लोलुपैर्व्यङ्कुशैर्नृभिः ।
शयाने त्वयि लोकोऽयं दस्युग्रस्तो विनङ्क्ष्यति ॥ ५५ ॥
अथापि पृच्छे त्वां वीर ! यदर्थं त्वमिहागतः ।
तद्वयं निर्व्यलीकेन प्रतिपद्यामहे हृदा ॥ ५६ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे पारमहंस्यां संहितायां वैयासिक्यां मनुकर्दमसम्वादे
एकविंशतितमोऽध्यायः ॥ २१ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

निरङ्कुशैर्नृभिर्निमित्तभूतैः शयाने निश्चिन्ते ॥ ५५ ॥
निर्व्यलीकेन सहर्षेण प्रतिपद्यामहे स्वीकुर्महे ॥ ५६ ॥

इतिश्रीमद्भागवते महापुराणे तृतीयस्कन्धे
एकविंशतितमोऽध्यायः ॥ २१ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या
दीपिकाटिप्पणी ।

न यदेति सार्द्धत्रिकम् । रथेन रथनादेन ॥ ५२ ॥ ५३ ॥ ५४ ॥
शयान इत्यर्द्धकम् ॥ ५५ ॥
यद्यपि प्रसङ्गादागमनमथापि यदर्थं यद्विशेषकार्य्यार्थम् ॥ ५६ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीराधारमणदासगोस्वामिकृतभावार्थदीपिकाटिप्पण्याम्
एकविंशोऽध्यायः ॥ २१ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रसङ्गात्स्मृतं भगवन्तं प्रणमति । य इति । यो विष्णुरर्कादीनां रूपाणि शिलापुत्रकस्येदं शरीरमितिवदभेदसंसर्गे षष्ठी अर्कादिरूपाणि शरीराणि स्थाने तत्तदुचितजगत्परिपालनावसरे आधत्से बिभर्षि तस्मै विष्णवे शुक्लाय निर्मलाय ते तुभ्यं भगवते नमः ॥ ५१ ॥

एवं विष्णुं प्रणम्य मुनिर्मनोरागमनप्रयोजनं प्रष्टुकामः प्रथमं तत्प्रश्ने जगद्रक्षणाय पर्यटन्तं मां किमर्थमागतोऽसीति किंपृच्छसीति मा वादीरित्यभिप्रायेण प्रधानप्रयोजनं जगद्रक्षणमेवानुषङ्गिकमिहागमनप्रयोजनं यत्किंचिदस्ति चेत् कथ्यतामित्याह । यावदध्यायसमाप्ति । जैत्रं जयशीलं मणिगणैरर्पितं खचितं रथमास्थायाधिरुह्य चण्डं परेषां भयजनकं कोदण्डं धनुर्यस्य स विस्फूर्जन् ध्वनयन् कोदण्डमिति शेषः द्वितीयान्तपाठे तु कर्मधारयः चण्डकोदण्डं विस्फूर्जन् रथेनाघान् धर्म विरोधिनः त्रासयन् उद्वेजयन् ॥ ५२ ॥

स्वसैन्यानां चरणैः क्षुण्णं संघट्टितं भुवो मण्डलं वेपयन् कम्पयन्महतीं सेनां विकर्षन्नाकर्षयन् सूर्य इव यदा यर्हि न पर्यटसि ॥ ५३ ॥

तत्तदैव वर्णाश्रमप्रयुक्ता भगवता रचिताः कल्पिताः सर्वे सेतवः धर्ममर्यादा हे राजन् ! दस्युभिः धर्मविरोधिभिर्भिद्येरन्नश्येरन् बतेति खेदे ॥ ५४ ॥

व्यङ्कुशैः निष्प्रतिपक्षैः लोलुपैः केवलार्थकामपरायणैः नृभिरधर्मश्च समेधेत वर्द्धेत त्वयि शयाने सत्ययं लोकः दस्युग्रस्तः विनङ्क्ष्यति नाशं यास्यति ॥ ५५ ॥

अतो लोकरक्षणमेव तवाटनस्य प्रधानं प्रयोजनं तथापि हे वीर ! त्वं यदर्थमिहास्मदाश्रमे आगतः तत्प्रयोजनं त्वां प्रति पृच्छे वयं तत्त्वदागमनप्रयोजनं निर्व्यलीकेन निष्कपटेन हृदा चित्तेन प्रतिपद्यामहेऽङ्गीकुर्महे ॥ ५६ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकविंशोऽध्यायः ॥ २१ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एतदेव विवृणोति । य इति । अर्कस्य रूपं प्रकाशकत्वं चन्द्रस्याह्लादकत्वमग्नेरधृष्टत्वमिन्द्रस्यैश्वर्यकरत्वं वायोः श्रेष्ठत्वं यमस्य दुष्टजनदमने निर्घृणत्वं धर्मस्य पुण्यापुण्यविवेकवैशद्यं प्रचेतसो वरुणस्य गाम्भीर्यं यस्त्वमेतानि रूपाणि स्थाने तत्तद्विनियोगकाले प्राप्ते आधत्से धारयसि तस्मै शुक्लस्य हरेरात्मने प्रतिमारूपाय विशेषावेशसन्निधानस्थानाय नम इत्यन्वयः प्रतीयमानं तादात्म्यं विहाय तत्प्रतिमात्वकल्पना नाप्रामाणिकी "स्वायंभुवो मनुश्चैव पृथुरैलोऽर्जुनावपि । ब्रह्मशेषविपा रुद्र इन्द्र ऋष्यादयस्तथा । विष्ण्वावेशयुताः सर्वे नतु विष्णुस्वरूपकाः" इति वचनात् युक्तमुक्तम् ॥ ५१ ॥

जगद्रक्षणार्थमुत्पन्नत्वात्तत्र हरेर्विशेषावेशो युक्त इत्यभिप्रेत्य व्यतिरेकमुखेन राजानं प्रशंसति । न यदेति । जैत्रं जयशीलमघान् पापपुरुषान् त्रासयन् कम्पयन् ॥ ५२ ॥

अंशुमानादित्यः ॥ ५३ ॥

दस्युभिर्हिंसाशीलैः पुरुषैः सेतुभेदः स्यात् ॥ ५४ ॥

ततः किमत्राह । अधर्मश्चेति । व्यङ्कुशैः निरङ्कुशैः अतोऽपि किमत्राह । शयान इति । शयानेन्या*यान्यायविचारशून्ये ॥ ५५ ॥

ऋषित्वाभिमानभङ्गभयात् किञ्चिज्ज्ञानन्निव कर्दमः कार्यविशेषं पृच्छति । अथापीति । अनेन राज्ञोऽर्थनाशभङ्गभयं निवृत्तमिति

* न्यायान्यायाविचारित्वं राज्ञः शयनमुच्यत इति प्रमाणात्

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ध्वनयति ॥ ५६ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
एकविंशोऽध्यायः ॥ २१ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

न यदेति सार्द्धत्रिकम् । रथेन रथसान्निध्यमात्रेण ॥ ५२—५४ ॥ शयान इत्यर्द्धकम् । धर्माधर्मयोः पालनसंहारौ त्वदृष्टावेव सम्यक् स्यातां दस्युनिवारणं त्वदनुसन्धानमात्रेण स्यादिति ॥ ५५ ॥ ५६ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य ।
एकविंशोऽध्यायः ॥ २१ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु लोकपालकैरेव पालने सिद्धे किं मन्वादिभिरित्याशङ्क्य परिपालिकां शक्तिं निरूपयन् तथा कर्त्तारं भगवन्तं नमस्यति । योऽर्केति । यः अर्कादीनां लोकपालानां रूपाणि स्थाने तत्तत्कार्यावसरे मनुशरीरे वा आधत्से तस्मै ते शुक्लाय नम इति अयं शुक्लःनारायण एव मनौ तिष्ठतीति तस्मै नमः सर्वाणि रूपाणि अन्यस्तत्र स्थापयितुं न शक्नोति न वा भगवत्स्थितिव्यतिरेकेण तत्र सर्वदेवतासान्निध्यं भवति अतो मनुमधिष्ठाय पालनार्थं भगवानेव स्थितः ॥ ५१ ॥

विपरीते बाधकमाह चतुर्भिः । साधनाभ्यां फलाभ्यां च स्वतश्च सेनया च परिपालनं द्वयेन सेतुधर्मरक्षा अधर्मनिवृत्तिश्च फले प्रथमतः स्वतो रक्षाभावं बाधकत्वेनाह । न यदेति । यदा त्वं जैत्रं रथमास्थाय न पर्यटसि तदा सेतवो भिद्येरन्निति सम्बन्धः रथस्य मुख्यासनत्वं जैत्रमिति जयशीलमतो न क्वापि पराभवशङ्का मणिगणार्पितमिति । महाराजयोग्यत्वात् दृष्टयैव भयमसतां ज्ञापितं विशेषेण स्फूर्जन् चण्डः कोदण्डो यस्य अनेन धनुष्टङ्कारेण दूरादेव भयं जनयतीति ज्ञापितं पापानां पापिष्ठानां न मारणं शस्त्रेण किन्तु रथेनैव त्रासं जनयन् ॥ ५२ ॥

दुष्टानां बहुत्वात्तदर्थं साधनान्तरमप्याह । स्वसैन्यानां चतुर्विधानां चरणैः क्षुण्णं भुवो मण्डलं वेपयन् महतीं सेनां दृष्टापि महान्तो दोषा निवर्त्तन्त इति भूकम्पने निमित्तान्तरत्वज्ञानाभावाय बृहतीं सेनां विकर्षन् तत्र तत्र नयन् पूर्वोक्तधर्मे धर्माधर्मनिवृत्तिसाधकत्वेन निरूपयन् दृष्टान्तमाह। अंशुमानिवेति। स हि सहस्रकिरणः तमो दूरीकरोति अग्निहोत्रादिधर्मं च जनयति नहि सूर्ये अनुदिते कश्चन धर्मादिः सेत्स्यति ॥ ५३ ॥

तदैव सर्वे सेतवो मर्यादा वर्णकृताः आश्रमकृताश्च भगवद्रचिता औदासीन्याभावाय राजन्निति तस्य स्वधर्म इति ज्ञापितं दस्युभिरेव भिद्येरन् चौरभये वर्णाश्रमवतां भीतत्वान्न मर्यादा सिद्ध्यतीति ॥ ५४ ॥

न केवलं धर्महानिरेव किन्तु अधर्मश्च समेधेत वृद्धिं गच्छेत् चकारात्पापरूपअधर्मो अपि तत्र हेतुः लोलुपैरिति । धर्मं निरन्तरं क्रियमाणे इन्द्रियाणि व्यापृतानि भवन्ति तदा लौकिके भोगेनासक्तानि भवन्ति अन्यथा त्वासक्तानि योग्यैः कामैरपूर्णानि अयोग्ये लोलुपानि भवन्ति तथापि राजभयं चेन्न कार्यनिष्पत्तिः स्यात् अन्यथा त्वतिप्रसङ्गः स्यादित्याह । व्यङ्कुशैरिति । विगतोऽङ्कुशो नियामको येषां नृभिरिति त एव हि भगवदाज्ञोल्लङ्का वेदेनोक्ता अशयनप्रसङ्गे राज्ञो व्यवस्था विषयभोगः परिपालनं च अद्यैव शयनं यदि चोभयोः समता यदि वा कालविभेदेन व्यवस्था यदि वा भोगप्राधान्यं सर्वप्रकारेणापि त्वयि शयाने सति अयं लोको दस्युभिरेव ग्रस्त आच्छिन्नदारद्रविणः स्वरूपादपि विनंक्ष्यति अतस्त्वया पर्यटनमवश्यं कर्त्तव्यमतः प्रसङ्गादागमनमत्रापि चौरादिनिराकरणार्थं च ॥ ५५ ॥

अथापि हे वीर ! स्वधर्मनिष्ठ ! यदर्थं त्वमिहागतः तत्प्रयोजनं पृच्छामि मां प्रार्थयितुमिति यदि तदा तद्वाक्यं निर्व्यलीकेन हृदा प्रतिपद्यामहे स्वीकुर्महे न तु त्वत्प्रार्थनां न करिष्यामीति सन्देहः एवं वचनं हि भगवत्प्रसादादेव महाराजादप्युत्कर्षवचनात् ॥ ५६ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्वल्लभाचार्यकृतसुबोधिन्याम्
एकविंशोऽध्यायः ॥ २१ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अर्कादीनां रूपाणि स्थाने युक्तमेव त्वमासम्यक्तया धत्से तत्र प्रतापेन त्वमर्कः यशसा चन्द्रः अधृष्यत्वेनाग्निः ऐश्वर्येणेन्द्रः । सर्वत्र प्रवेशवत्त्वेन वायुः दुष्टनिग्रहवत्त्वेन यमः । शिष्टपालनेन धर्मः गाम्भीर्येण गुप्तवित्तत्वेन च प्रचेताः अत एव तस्मै मदभीष्टदेवाय त्वद्रूपेण पुनरपि ममोटजमागताय शुक्लाय तुभ्यं नमः ॥ ५१ ॥

हे राजन् ! किमर्थमायातोऽसीति त्वां कथं पृच्छामो यतस्तत्कारणं जानाम्येवेति व्यतिरेकेणाह । न यदेति । यदा भुवो मण्डलं न पर्यटसि तदा सेतवो भिद्येरन्निति त्रयाणामन्वयः । मणिगणानामर्पितमर्पणं यत्र तं जैत्रं जयशीलं जैत्रत्वमेवाह । रथेन रथसान्निध्यमात्रेण अधान् दुष्टान् ॥ ५२—५५ ॥

अथापि यद्यपि सामान्यतो जानामि तदपि पृच्छे पृच्छामि इह मत्पर्णशालायां यदर्थमिति नहि दुष्टनिग्रहार्थं पर्यटनं मत्पर्णशालायां सफलीभवतीति भावः । निर्व्यलीकेन निष्कपटेन सहर्षेण वा हृदा प्रतिपद्यामहे स्वीकुर्महे ॥ ५६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्
एकविंशस्तृतीयस्य सङ्गतः सङ्गतः सताम्

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्थाने तत्तद्रूपधारणावसरे अर्कादिरूपाणि आधत्से तस्मै ते शुक्लाय विष्णवे नमः "राजर्षीणां मनुरहम्„इति श्रीमुखवचनात् ॥ ५१ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यद्यपि धर्मत्राणार्थं तव चंक्रमणं सामान्यतः सर्वत्र युक्तमेव तथाप्यत्रागमने किंचित्प्रयोजनं चेत्तद्गयतामित्याह । नेति पञ्चभिः । विस्फूर्ज्जत् स्वासाधारणं टङ्कारं कुर्वत् चण्डं शत्रुभयवर्द्धनं कोदण्डं धनुर्यस्य सः जैत्रं जयावहम् अघान् पापिनः ॥ ५२ ॥

क्षुण्णं संघट्टितम् वेपयन् कम्पयन् यदि अंशुमानिव न पर्यटसि इति पूर्वश्लोकस्थनकारेण संबन्धः ॥ ५३ ॥

वर्णाश्रमाणां निबन्धनाः स्थापकाः दस्युभिश्चौरैर्भिद्येरन् ॥५४॥

व्यङ्क्षैर्नियन्तृरहितैर्निमित्तभूतैः समेधेत सम्यक्वर्द्धेत ॥५५॥

निर्व्यलीकेन हृदा शुद्धेन चित्तेन प्रतिपद्यामहे अङ्गीकुर्महे॥५६॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
एकविंशाध्यायार्थप्रकाशः ॥ २१ ॥

---

भाषाटीका ।

जो आप सूर्य चन्द्र अग्नि इन्द्र वायू धर्म यम वरुण इनकी कला को जगत्के पालन में धारण करते हो शुद्धस्वरूप हो तिनको नमस्कार है ॥ ५१ ॥

जब आप मणिगणों से भूषित जीतने योग्य रथ पर बैठकर प्रचण्ड धनुषका टङ्कार करते हुये पापी पुरुषों को डराते हुये अपनी सेना के संचार से चूर्णित पृथिवी मंडल को करते हुये बड़ी सेना को खैंचते हुये सूर्य सरीके होकर नहीं विचरोगे तब तो हे राजन् ! भगवान् के रचे वर्णाश्रम धर्मों के सब सेतु चोरों के मारे नष्ट होजायंगे ॥५२-५३-५४॥

तब मनुष्यविना अङ्कुशके होजायंगे तो लोभी मनुष्य अधर्म की वृद्धि करेंगे तुमारे सोजाने से यह सब लोक चोरों के ग्रास से नष्ट होजायगा ॥ ५५ ॥

हे वीर ! तौ भी मै आपसे पूछताहूं कि जिस कारण से आप यहां आये हौ तिस कार्य के करने को हम अपने चित्त से निष्कपट होकर अङ्गीकार करते हैं ॥ ५६ ॥

इति श्रीभागवत तृतीय स्कन्ध एकवीशमा
अध्याय का भाषानुवाद लक्ष्मणाचार्यकृत
समाप्त ॥ २१ ॥

---

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे एक विंशोऽध्यायः समाप्तः ॥ २१ ॥

## द्वाविंशोऽध्यायः।

मैत्रेय उवाच।

एवमाविष्कृताशेषगुणकर्मोदयो मुनिम्।
सव्रीड इव तं सम्राडुपारतमुवाच ह ॥ १ ॥

मनुरुवाच।

ब्रह्मासृजत् स्वमुखतो युष्मानात्मपरीप्सया।
छन्दोमयस्तपोविद्यायोगयुक्तानलम्पटान् ॥ २ ॥
तत्त्राणायासृजच्चास्मान् दोःसहस्रात् सहस्रपात्।
हृदयं तस्य हि ब्रह्म क्षत्रमङ्गं प्रचक्षते ॥ ३ ॥
अतो ह्यन्योऽन्यमात्मानं ब्रह्म क्षत्रं च रक्षतः।
रक्षति स्माव्ययो देवः स यः सदसदात्मकः ॥ ४ ॥
तव संदर्शनादेव च्छिन्ना मे सर्वसंशयाः।
यत् स्वयं भगवान् प्रीत्या धर्ममाह रिरक्षिषोः ॥ ५ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

द्वाविंशे कर्दमायादाद्यथादिष्टं हि विष्णुना ॥
मनुर्दुहितरं देवहूतिमित्युपवर्ण्यते ॥ १ ॥

एवमाविष्कृतोऽभिष्टुतोऽशेषाणां गुणानां कर्मणां चोदय उत्कर्षो यस्य स सम्राण्मनुः सव्रीड इव स्वकीर्तिश्रवणात् प्रत्याख्यानशङ्कया वा तं मुनिमुवाच उपारतं निवृत्तिनिरतम् ॥ १ ॥

मदीया कन्या त्वया परिणेयेति विज्ञापयिष्यन् युष्मदस्मत्सम्बन्धस्तावदीश्वरेण पूर्वमेव घटित इत्याह। ब्रह्मेति सार्धाभ्याम्। आत्मनः परीप्सया पर्याप्तुमिच्छया छन्दोमयस्यात्मनः पर्याप्तिः पालनं वेदप्रवर्तनं तस्येच्छया युष्मान् ब्राह्मणान् ॥ २ ॥

तत्त्राणाय ब्राह्मणपालनाय ब्रह्म ब्राह्मणजातिः क्षत्रं क्षत्रियजातिः ॥ ३ ॥

एवं स देव एव रक्षतिस्म कोऽसौ यः सदसदात्मकः सर्वात्मकः तथाप्यव्ययो निर्विकारः ॥ ४ ॥

तं विज्ञापयितुमेव तद्दर्शनादिकमभिनन्दति। तवेतित्रिभिः ५ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी।

प्रत्याख्यानं निषेधः ॥ १ ॥

ब्रह्मा विराडभिमानीश्वरः स्वमुखत इति ब्राह्मणजात्यभिप्रायेण अन्यथा छायायाः कर्दमो जज्ञे इत्यनेन विरोधः स्यात् अत एवदोःसहस्रात् सहस्रपादित्युक्तम् ॥ २ ॥

हृदयं ज्ञानशक्तिप्राधान्यात् अङ्गं क्रियाशक्तिप्राधान्यात् ॥ ३ ॥

अतः हृदयाङ्गत्वात् स एव ईश्वर एवान्तर्यामितया तत्र तत्र प्रविश्येति शेषः तथापि उपादानतया सर्वात्मकत्वेऽपि "श्रुतेस्तु शब्दमूलत्वात्" इति न्यायेन निर्विकारः ॥ ४ ॥

स्वयं प्रश्नं विनैव भगवान् सर्वज्ञो भवान् मे धर्ममाहेति यत्तत्त्वधिकं कृपासूचकमित्यर्थः ॥ ५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवं कर्दमेनोक्तो मनुस्तमुवाचेत्याह मैत्रेयः। एवमिति आविष्कृतानां गुणानां च कर्मणां च उदय उत्कर्षो यस्य स अत एव सव्रीड इव स्वकीर्तिश्रवणाल्लज्जित इव सम्राट् मनुरुपारतं निवृत्तिधर्मनिष्ठं तं मुनिमुवाच हेति हर्षे ॥ १ ॥

उक्तिमेवाह त्रयोदशभिः। मदीयेयं कन्या त्वया परिणेयेति विज्ञापयिष्यन् तावद्युष्मदस्मत्संबन्ध ईश्वरेण ब्रह्मणा पूर्वमेव संघटित इत्याह मनुः। ब्रह्मेति सार्द्धद्वयेन। छन्दोमयो वेदप्रचुरः ब्रह्मा स्वमुखात् तपः कर्मयोगः विद्या भगवदुपासना योगो ज्ञानयोगः एतैर्युक्तान् अलंपटान् विषयेष्वलम्पटान् युष्मान् वेदमयान् ब्राह्मणान् आत्मपरीप्सया वेदमयस्यात्मनः रिरक्षिषयावेदमयस्यात्मनः परीप्सा रिरक्षिषैव आत्मपरीप्सया आत्मज्ञानप्रवर्तनश्रद्धया वा चतुर्मुखशरीरकः परमात्मा स्वमुखादसृजत् ॥ २ ॥

तेषां ब्राह्मणानां त्राणाय रक्षणायास्मान् क्षत्रियान् सहस्रपात्सर्वतः पाणिपादादिकार्यकर्ता भगवान् दोःसहस्रादसृजत् तस्य ब्रह्मणः हृदयं ब्रह्मकुलं क्षत्रं क्षत्रियकुलमङ्गं प्रचक्षते ॥ ३ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अतो वेदपालनाय ब्राह्मणान् ब्राह्मणपालनायास्मांश्च यतः सृष्टवानतः ब्रह्मक्षत्रं च अन्योऽन्यं मिथः रक्षतः रक्षां कुर्वतः एवं परस्परं रक्षिष्यमाणे उभयमपि सदसदात्मकः कार्यकारणरूपः एवमव्ययः कार्यगतविकारैरस्पृष्टः यद्वा सदसदात्मकः चेतनाचेतनशरीरकः अत एवाव्ययः नहि शरीरगतैर्विकारैः शरीरी स्पृश्यते यो देवः स रक्षति ॥ ४ ॥

तस्मै स्वाभिप्रायं निवेदयितुकामः तद्दर्शनादिकं प्रस्तौति । त्रिभिः । तव दर्शनादेव मे सर्वे संशयाः प्रष्टव्यार्थविषयाः छिन्नाः हे भगवन् ! कर्दम ! यद्यस्मात्स्वयमेव भवान् रिरक्षिषोः प्रजाः पालयितुमिच्छोर्मम धर्ममाह न यदा रथमास्थायेत्यादिनोक्तवान् ॥ ५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

राज्ञा कर्दमपृष्टं श्रुत्वा च तूष्णीमास्थायि कश्चन वाग्व्यवहारोऽकारीति तत्राह। एवमिति। सव्रीड(१) मिवेति विनयगुणं भूषयति उपारतं यावदपेक्षितमुक्त्वा तूष्णीं स्थितं यद्वा (२)उपाधिके सर्वेश्वरे हरावकारशब्दवाच्ये रतं निरतं श्रीनारायणध्यानोपेतमित्यर्थः "अ आ अं अः पुराणर्षिः,, इति पाद्मे ॥ १ ॥

हेत्यनेन विप्रक्षत्रिययोः सूचितां समानसम्बन्धप्रसिद्धिं प्रपञ्चयति । ब्रह्मेति । अस्मत्परीप्सयास्मद्रक्षणेच्छया छन्दोमयान् वेदप्रधानान् तपः कायक्लेशः विद्या शास्त्रज्ञानं योगो भगवद्भक्तिलक्षणः अनेन क्षत्ररक्षासामर्थ्यमुक्तं भवति अलम्पटान् विरक्तान् शमदमादिगुणसम्पन्नानित्यर्थः ॥ २ ॥

विप्राणां त्राणाय रक्षणाय अनन्तत्वद्योतनाय दोःसहस्रादिति उभयोर्हरेः किं प्रियतममिति तत्राह । हृदयमिति । तस्य हरेर्ब्रह्मकुलं हृदयमतिप्रियं हि छिन्द्यां स्वबाहुमपीत्युक्तं हि तर्हि किं क्षत्रेणोत्यत उक्तम् क्षत्रमिति अङ्गाङ्गिभावेन तारतम्येनातिप्रियत्वम् ॥ ३ ॥

यत एवाङ्गाङ्गित्वमत एव ब्रह्मक्षत्रं रक्षति क्षत्रं च ब्रह्म रक्षति आत्मानञ्चोपदेशादिना रक्षति यः सदसदात्मकः कार्यकारणव्यापी देवो द्वयमपि रक्षतीत्यन्वयः ॥ ४ ॥

स्वप्रार्थनां ग्राहयितुं कर्दमं प्रशंसति । तवेति । दर्शनादित्यनेन चक्षुःसन्निकर्षः शास्त्रीयवचनं चेति द्वयं विवक्षितं धर्मं राज्यपालनादिकम् ॥ ५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ब्रह्मा विराड्रूपः स्वमुखत इति जातिमात्रापेक्षयोक्तम् ॥१-२॥

एवं दोःसहस्रादिति च हृदयं ज्ञानशक्तिप्राधान्यात् अङ्गं क्रियाशक्तिप्राधान्यात् ॥ ३ ॥ ४ ॥

यत्तु: स्वयं भगवान् धर्ममाह तदिदं त्वधिकमिति शेषः । यद्वा यत् यस्मात् सन्दर्शनादेव मद्योग्यतायां कारणात् स्वयं धर्ममप्याह । संशयोऽत्र तत्कारणं चित्तमलम् ॥ ५—६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

द्वाविंशे कर्दमस्यार्घः सिद्धः स्त्रीधनरूपवान्
अथमेन्द्रियगणः कृष्णार्थं सुविनिश्चितः ॥ १ ॥

अर्थस्य सत्त्वं चाख्यातुं मनोर्धर्मस्य वर्णनम्
भगवत्कृपयैवार्थं उत्तमो नान्यथेति च ॥ २ ॥
आकूतिः पुत्रिकात्वेन दत्ता येन निजेच्छया ।
स एवात्यन्तदैन्येन देवहूतिं प्रयच्छति ॥ ३ ॥
कृतकृत्यं च मनुते ततो धर्मं च सेवते ।
यज्ञश्रवणभेदेन द्विरूपमपि सर्वदा ॥ ४ ॥

पूर्वाध्यायान्ते त्वद्वाक्यं कर्त्तव्यमिति ऋषिमुखाच्छ्रुत्वा संतुष्टः विज्ञापयितुमादौ तं स्तौतीत्याह । एवमिति । आविष्कृताः प्रकटीकृताः सर्वे गुणाः कर्मण्यभ्युदयश्च यस्य गुणकर्मणां वाभ्युदयो यस्य गुणोदयः सर्वदेवाधिष्ठानात् धर्मादिपालनात् कर्माभ्युदयः अन्यथा कथनं व्यावर्त्तयति । मुनिमिति । सव्रीड इति स्वकीर्त्तिश्रवणात् प्रत्याख्यानशङ्कया वा कन्यार्थं प्रार्थनायामपि सम्राडिति महतः सर्वमेव वचनं शोभाकरमुपारतं तूष्णींभूतमुपसमीपे कन्यायामासमन्ताद्रतं वा हेत्वाश्चर्यं न हि महाराजः कंचिदेवं प्रार्थयति ॥ १ ॥

प्रथमं ब्राह्मणक्षत्रिययोर्विवाहो नोचित इत्याशङ्क्य भगवत्कृत एव तयोः सम्बन्ध इत्यन्योऽन्योपकारेण तुल्यतामापादयति । ब्रह्मासृजादिति त्रिभिः । प्रथमतो ब्रह्मा वेदमयः स्वमुखतो युष्मान् ब्राह्मणानसृजत् आत्मपरीप्सया आत्मनः स्वस्य वेदस्य पर्याप्तुमिच्छया रक्षार्थं वा ब्राह्मणव्यतिरेकेण वेदानां यज्ञानां वा पर्याप्तिः पूर्त्तिर्न भवति । छन्दोमयइति । सर्ववेदात्मकास्ते ब्राह्मणाः त्रिविधाः विद्यायुक्ताः तपोयुक्ताः योगयुक्ताः भगवदुपासनायुक्ता वा त्रितययुक्ता मुख्याः अलम्पटानिति विषयलाम्पट्यं ब्राह्मणानां दोषः तपस्यादयो गुणाः ॥ २ ॥

एवं गुणदोषाभावयुक्तान् ब्राह्मणान्निरूप्य क्षत्रियान्निरूपयति । तत्त्राणायेति । ब्राह्मणानां त्राणाय अस्मान् क्षत्रियान् दोःसहस्रात् वरेण्यान्यस्यापि सहस्रं बाहवो भवन्तीति तद्व्यावृत्त्यर्थमाह । सहस्रपादिति । वेदो हि ब्राह्मणेषु स्थितो भगवता रक्ष्यते रक्षणे बाहवः करणं तत्र जाताः क्षत्रियाः शब्दप्राधान्येन ब्राह्मणानां सृष्टिः अर्थप्राधान्येन क्षत्रियाणामिति योनिभेदोऽपि विवाहार्थः सूचितः उभयोरन्योऽन्योपयोगमाह । हृदयं तस्य हि ब्रह्मेति । तस्य भगवतः ब्रह्म ब्राह्मणाभिमानिनी देवता हृदयमन्तःकरणमात्मा मध्यमिति यावत् क्षत्रं क्षत्रियाभिमानिनी देवता अङ्गमवयवाः प्रचक्षत इति प्रमाणं यथाङ्गव्यतिरेकेण आत्मावसीदति एवमात्मव्यतिरेकेणाप्यङ्गानि अवसीदन्ति ॥ ३ ॥

अतो हीति अतोऽन्योऽन्यं ब्रह्म क्षत्रं च रक्षतः तथा सत्यात्मानमेव रक्षतः हि युक्तोऽयमर्थः यो हि आत्मार्थमन्यान् पालयति स ह्यात्मानमेव पालयति एवमन्योऽन्यपालनमुक्त्वा उभयोः साकाङ्क्षत्वेनापालकत्वमाशङ्क्य स्वतन्त्रेण भगवता पाल्यमानाः अन्योऽन्यं पालयन्तीति वक्तुमाह । रक्षतिस्मेति स हि देवः स्वतन्त्रः सर्वानेव पालयति पालने हेतुः । सदसदात्मक इति । सर्वात्मकोऽपि निर्विकार इत्याह । अव्यय इति । स्मेति प्रमाणमेवं च भगवता कृत्वा यथान्योऽन्यरक्षा तथा कामकन्यकाभ्यामप्युभयोः रक्षा कर्त्तव्या तव कामोऽस्माभिः पूरणीयः कन्यादानेन अस्मत्कामोऽपि त्वया पूरणीयो विवाहेनेति भावः ॥ ४ ॥

स कामो विवाहात्मक एवेति वक्तुमन्यानि फलानि तव वचनादेव सिद्धानीति तानि गणयति । तव सन्दर्शनादेवेति

---

(१) सव्रीड इवेत्यत्र कन्याप्रसक्तिः कार्याचेद्धनासक्तिश्च वानरैः ॥ परोक्षयैव कर्तव्यामिति जाबालिरब्रवीत् । इति वचनात्सव्रीड इति यक्तं(२)उं रुद्रं पातीति उपः तदुपलक्षितसर्वेश्वरे अकारशब्दवाच्ये रतमिति भावः ।

**दिष्ट्या मे भगवान् दृष्टो दुर्दर्शोयोऽकृतात्मनाम् ।**
**दिष्ट्या पादरजः स्पृष्टं शीर्ष्णा मे भवतः शिवम् ॥ ६ ॥**

श्रीमद्वल्लभाचार्य्य कृत सुबोधनी ।

त्रिभिः । ब्राह्मणानां स्थाने राजादयो धर्मनिर्णयार्थमभ्यागच्छन्ति तदस्माकं प्रथमत एव जातं यतः तव संदर्शनादेव सर्वे संशयाः संछिन्नाः एवमेव तपः कार्यं भगवत्सेवा च तथा-सत्येवं प्रसन्ने भगवति सर्व एव पुरुषार्थः सेत्स्यति । नाम्य-र्यति । पूर्वं ये सन्देहाः स्थिताः सर्वार्थेषु ते सर्वे त्वद्दर्शनेनैव जातेन निश्चयेन छिन्ना इत्यर्थः कां धर्मो राज्ञामित्यपि सन्देहो गत इत्याह । यत्स्वयमिति । यद्यस्मात्संदर्शनानन्तरं प्रीत्या रिरक्षिषोः पालकस्य पालनेच्छोर्वो भवानेव धर्ममाह । अतः क्षत्रियाणां धर्मः प्रजापालनं परमो धर्म इति अतो वाक्यादेव धर्मसंदेहो गतः ॥ ५ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

द्वाविंशे प्रियभाषी स्वां ज्ञाततत्वाय कन्यकाम् ।
कर्दमाय नृपो दत्वा स्वं धामागादितीर्यते ॥

आविष्कृतोऽशेषाणां गुणानां कर्मणाञ्च उदय उत्कर्षो यस्य सः । वचनादुपरतं निवृत्तिनिरतं वा मुनिं सव्रीड इवेति स्वकी-र्त्तिश्रवणात् परमार्थपरायणे तस्मिन् व्यवहारवार्त्तया वक्तव्य-त्वाच्च ॥ १ ॥

सहसा स्वकन्याप्रदानप्रसङ्गस्य तत्प्रत्याख्यानशङ्कया प्रथमं ब्राह्मणक्षत्रियोः कमपि सम्बन्धं सन्यायमाह । ब्रह्मेति सार्द्धा-भ्याम् । आत्मनश्छन्दोमयस्य स्वस्य परीप्सया वेदप्रवर्त्तनेन पाल-नेच्छया युष्मान् ब्राह्मणान् असृजत् पर्याप्तिः पालनम् ॥ २ ॥

ब्राह्मणान् के पालयेयुरित्यत आह । तदिति । दोः सहस्रादिति । परमेश्वरेणैक्यात् ननु क्षत्रियानपि कः पालयेत्तत्राह । ब्रह्म ब्राह्मणाः अङ्गं भुजः अयमर्थः लोके हि हृदये प्रहार आपतिते भुजाभ्यां हृदयस्य गोपनं दृश्यते भुजे च प्रहार आपतिते देहं कुञ्चितीकृत्य हृदयमध्ये एव भुजो गोप्यते इति हृदयस्य पालको भुजः भुजस्य पालकं हृदयम् ॥ ३ ॥

एवं ब्रह्म ब्राह्मणास्तपोबलेन क्षत्रियं पालयति । क्षत्रं क्षत्रियः शारीरबलेन ब्राह्मणमिति वस्तुतस्तु देवः परमेश्वर एवोभयं रक्षति । सदसदात्मकः तदप्यव्ययो निर्विकारः ॥ ४ ॥

अतोऽहं यस्य पालकं त्वामागतस्त्वया च स्वसन्दर्शनेनैवाहं पालित इत्याह । तवेति । रिरक्षिषोः क्षत्रियस्य ॥ ५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

द्वाविंशेन तु महतादरेण देवहूतीं कर्दमायादादित्युच्यते एवं मुनिना आविष्कृतः अशेषाणां गुणानां कर्मणां चोदय् उत्कर्षो यस्य सः स्वगुणकर्मोदयश्रवणेन सव्रीड इव सम्राट् मनुः मनुगुणकर्मोत्कर्षकथनादुपारतं मुनिमुवाच ॥ १ ॥

ब्रह्म जगत्कारणं परमात्मेत्यर्थः छन्दोमयो वेदमयः आत्मनः वेदस्य परीप्सया रक्षणेच्छया युष्मान् ब्राह्मणान् मुख-तोऽसृजत् वेदरक्षणेनैव क्षत्रियरक्षणमपि सिद्धम् वेदाभावे क्षत्रियाणामपि प्रजापालनयज्ञाद्यनुष्ठानासंभवान्नाशप्रसंगात् ॥२॥

तत्त्वपां ब्राह्मणानाम् अस्मान् क्षत्रियान् तस्य परमा-त्मनः ब्रह्म ब्राह्मणजातिः हृदयमन्तरङ्गम् क्षत्रं क्षत्रियजातिः अङ्गं बहिरङ्गम् भगवता मुखतः ब्रह्मजातिः दोःसहस्रतः क्षत्रियजातिश्च सङ्कल्पमात्रेणोत्पादितात्र वर्णिता चतुराननेन तु ब्राह्मणाः मनुना सहिता येन प्रकारेणोत्पादिताः स प्रकारः प्राक् प्रपञ्चित एव ॥ ३ ॥

अतो ब्रह्मक्षत्रं च आत्मानं परस्परं रक्षतः एवं यः पूर्वोक्तः उभयजनकः सदसदात्मकः सर्वात्मा स एव रक्षति ॥ ४ ॥

क्षत्रियकुलोपकारिणि ब्राह्मणकुले प्रत्युपकाराय स्वां कन्यां दातुं ब्राह्मणक्षत्रिययोरन्योऽन्यतः उपकारित्वं सर्वरक्षित्र भगवतैव कृतमित्युक्तमिदानीं विशेषतः पात्रभूतमुनिदर्शना-भिनन्दनपूर्वकं मदीया कन्या त्वया परिणेयेति स्वाभिप्रायं निवेदयति । तवेति दशभिः ब्राह्मणोपदेशतः संशयच्छेदः प्रसिद्धः तव तु दर्शनादेव मे सर्वे संशयाः छिन्नाः अद्भुतप्रभावोऽसी-तिभावः दयालुत्वादिगुणानाह । रिरक्षिषोः प्रजारक्षणेच्छोः राज्ञः यत् ये धर्माः तान् न यदा रथमास्थायेत्यादिना स्वयं न तु शिष्याद्विद्वारेण भगवान् प्रीत्याह अहो तवाद्भुतं दयालुत्वं निर-भिमानित्वं प्रीतिजनकत्वं चेतिभावः ॥ ५ ॥

---

भाषाटीका ।

मैत्रेयजी बोले इस प्रकार से जब मनु ने संपूर्ण गुण-वर्णन किये तब मनु के चुप होने पर कुछ लज्जित से होकर मनु महाराज कर्दमजी से बोले ॥ १ ॥

मनुजी बोले ब्रह्मा ने सब की आत्माके रक्षाके अर्थ वेद-मय तपोमय विद्या योग युक्त अलम्पट आप ब्राह्मण लोगों को मुख से सृजा है ॥ २ ॥

तिन सबों के रक्षाके वास्ते सहस्रपाद भगवान् ने सहस्र भुजोंमें से हमको सृजा है उस भगवान् का हृदय ब्राह्मण है क्षत्रिय शरीर है ॥ ३ ॥

इसी हेतु से क्षत्रिय ब्राह्मण दोनों परस्पर में रक्षा करते हैं औ सत् असत् कार्य कारण रूप भगवान इन दोनोंकी रक्षा करते हैं ॥ ४ ॥

आपके दर्शन ही से हमारे सब संशय नष्ट होगये जो कि भगवान आप रक्षा करने के लिये मेरे को स्वयं ही धर्म उपदेश करते हैं ॥ ५ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अकृतानामवशीकृतचित्तानाम् ॥ ६ ॥

दिष्ट्या त्वयाऽनुशिष्टोऽहं कृतश्चानुग्रहो महान् ।
अपावृतैः कर्णरन्ध्रैर्जुष्टा दिष्ट्योशतीर्गिरः ॥ ७ ॥
स भवान् दुहितृस्नेहपरिक्लिष्टात्मनो मम ।
श्रोतुमर्हसि दीनस्य श्रावितं कृपया मुने ! ॥ ८ ॥
प्रियव्रतोत्तानपदोः स्वसेयं दुहिता मम ।
अन्विच्छति पतिं युक्तं वयःशीलगुणादिभिः ॥ ९ ॥
यदा तु भवतः शीलश्रुतरूपवयोगुणान् ।
अशृणोन्नारदादेषा त्वय्यासीत् कृतनिश्चया ॥ १० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अनुग्रहोऽनुशासनादिरूप एव उशतीरुशत्यः ॥ ७ ॥

विज्ञापयति । स भवानिति सप्तभिः । दुहितुः स्नेहेन परिक्लिष्ट आत्मा यस्य श्रावितं विज्ञापनम् ॥ ८ ॥

प्रियव्रतोत्तानपदोः स्वसेति पुत्रिकाकरणशङ्का निरस्ता मम सुतेति क्षत्रियकन्या तव योग्येति दर्शितम् ॥ ९ ॥

एषा देवहूतिः ॥ १० ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

अकृतात्मनां मलिनचित्तानाम् ॥ ६ ॥

अनुशासनादीत्यादिना तत्तद्ग्रहणे शक्तिसंचारः अपावृतैर्वा-धिर्यानवधानादिदोषाच्छन्नैः बहुत्वं स्पृहयानेकायमानत्वात् ॥७॥

स कृतानुग्रहः ॥ ८ ॥

अत्र स्वपुत्र्या वयआद्यनुसंधानकथनं स्वलज्जाहेतुस्तथापि धर्मापेक्षकाणां तथा विधानां धर्मोत्कण्ठार्थमेवेति ज्ञेयम् ॥ ९ ॥

नारदान्नैष्ठिकादपीति तत्प्रोत्साहनार्थम् ॥ १० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

अकृतात्मनामकृतसुकृतै र्दुर्दर्शः द्रष्टुमशक्यो भगवान् त्वं मे मया दिष्टचास्मद्भाग्येन दृष्टः भवतः शिवं मङ्गलकरं पादरजः मे शीर्ष्णा शिरसा स्पृष्टं धृतम् ॥ ६ ॥

अनुशिष्टोऽनुशिक्षितः महाननुग्रहोऽनुशासनादिरूपः त्वया कृतः अपावृतैरनावृतैः कर्णरन्ध्रैरुशतीरुशत्यः कमनीयाः गिरः दिष्ट्या जुष्टाः ॥ ७ ॥

एवमात्मनः कृतार्थतामावेद्य तं प्रसादयन् स्वाभिप्रेतं निवेदयति । स इति सप्तभिः । दुहितरि स्नेहेन परिक्लिष्टः आत्मा मनो यस्य अत एव दीनस्य मम मया श्रावितं विज्ञापितं भगवान् कृपया श्रोतुमर्हति किं तदित्यत्राह । इयं देवहूतिः प्रियव्रतोत्तानपदोः स्वसा भगिनी मम दुहिता च प्रियव्रतोत्तानपदोः स्वसेत्यनेन पुत्रीकरणशङ्का निरस्ता मम दुहितेत्यनेन क्षत्रियकन्या तव योग्येति दर्शितं वयःशीलादिभिर्युक्तं पतिमन्विच्छतीत्यनेन स्वयंवरेति सूचितम् ॥ ८ ॥ ९ ॥

तदेव विशदयति । यदेति । यदा तु यह्येव भवतः शीलादीन्नारदो-पदेशादशृणोत् तर्ह्येव त्वयि कृतः निश्चयः तवैवाहंभार्येति निश्चयो यया सा ॥ १० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भगवद्दर्शनं सुपूतानामेव लभ्यते नापुण्यानामित्याह । दिष्टचेति । अङ्गसङ्गस्तु ततोऽप्यधिकपुण्याल्लभ्यत इति भावेनाह । दिष्टयेति ॥ ६ ॥

अपावृतैर्विवृतैरुशतीरुशत्यो निर्मलाः ॥ ७ ॥

अलमनुलापेन किमिच्छुरागतोऽसि तद्ब्रूहीति तत्राह । स भवानिति । ८ ।

भ्रातृमतीत्वेन ग्राह्यत्वे हेतुं पुत्रिकापुत्रधर्मराहित्यं ध्वनय-न्नाह । प्रियव्रतेति । सामान्यविशेषाभ्यां व्यवहारः संभवति अत एव कथमस्यावरविचार इति तत्राह । अन्विच्छतीति । यदा वयः शीलगुणादिभिर्युक्तं पतिमन्विच्छती संभोगवयः प्राप्तासीत न हि कन्या स्वयं पतिं मृगयते प्रत्युत बान्धवा एवातोऽन्विच्छ-तीत्यनेन वय एव लक्ष्यते । ९ ।

यदा तु नारदाद्भवतः शीलादिगुणानशृणोत्ततः किम-त्राह । सैषेति । या श्रुतवती सैषा स एव मम पतिः स्यादिति कृतनिश्चयासीत् ॥ १० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अनुग्रहः स्वशिक्षाग्रहणसामर्थ्ये हेतुः कृपादृष्ट्यादिरूपः। अपा-वृत्तैर्बाधितकार्यानवधानादिदोषेणाच्छन्नैर्बहुत्वं स्पृहयानेकायमा-नत्वात् ॥ ७—८ ॥

वय आद्यनुसन्धानं तत्कथनं च तादृशां धर्मसाचिव्यप्राधा-न्येनैवेति न लज्जाकरम् ॥ ९—११ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

महापुरुषाणां दर्शनमेव स्वतन्त्रफलमिति वेत्तदपि वचनव्यतिरेकेणैव जातमित्याह । दिष्टचेति । भगवान् भवात् अकृतात्मनां दुर्दर्शोऽपि मे मया दिष्ट्या दृष्टः यैः सङ्घातात् पृथगात्मा न कृतः भगवदर्थं वान्तःकरणं न कृतं तेऽकृतात्मानः

**तत्प्रतीच्छ द्विजाग्र्येमां श्रद्धयोपहृतां मया।**
**सर्वात्मनाऽनुरूपां ते गृहमेधिषु कर्मसु ॥ ११ ॥**

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

आत्मयोग्यदेहार्थं वा यैर्भूतानि न संस्कृतानि तादृशस्य तव दर्शने परलोकोपयोगिसर्वमेव कार्यं सिद्धमिति परलोकसंदेहोऽपि गतः पापक्षयार्थं प्रायश्चित्तमिति किमपि न प्रष्टव्यम् इत्याह। दिष्ट्येति। ते पादरज एव शिवं कल्याणरूपं मे मया शीर्ष्णा स्पृष्टं मच्छिरसा वा "पुनन्तु मां ब्राह्मणपादपांसव" इति सर्वप्रायश्चित्तापेक्षया इदमेव वरं किञ्च न केवलं पापनिवर्त्तकं किन्तु कल्याणकरमपीति शिवमित्युक्तं शिरसा चेत्स्पृष्टमज्ञानामपि पापं गच्छत्येव प्रधानत्वात् दैवगत्या जातमिति दिष्ट्या ॥ ६ ॥

ब्राह्मणो हि क्षत्रियमनुशास्ति यथाचार्योऽन्तेवासिनं सत्यं वदेत्यादिभिः तदपि अवचनादेव जातमित्याह। दिष्ट्येति।

वचनव्यतिरेकेण प्रजापालनं कर्त्तव्यमिति धर्मोऽप्युपदिष्टः तद्वयं निर्व्यलीकेनेति वाक्यात् अनुग्रहश्च कृतः महतां मुखात् भगवद्गुणाः श्रोतव्या इत्यप्यस्माकं जातमित्याह। अपावृतैरिति। योऽर्केन्दग्नीन्द्रेति। एते हि भगवतः सर्वपालका गुणास्तत्प्रतिपादिका एव कमनीया गिरः ताः पुनः शब्दान्तरैः आवरणरहितैः कर्णरन्ध्रैः अकस्माद्भाग्येनैव जुष्टाः सेविताः ॥ ७ ॥

एवं सद्दर्शनेन यावद्भाव्यं तावत्सर्वं जातमतः परमन्यद् विज्ञापयामीत्याह। समवानिति। सामान्यतः इयं प्रार्थना स महान् भवान् कन्यापितृत्वं दुःखायेति न्यायेन दुहितृस्नेहेन परितः क्लिष्टः आत्मा यस्य न केवलं दुहितृमात्रं बाधकं किन्तु स्नेह इति तथोक्तम्। ममेति। दीनतायामयोग्यता अतः कृपायां मुन इति प्रकृतार्थपरिज्ञानाय सम्बोधनं आवितस्विज्ञापितं नारदादिद्वारा भगवता पूर्वं आवितं श्रवणार्थमुक्तं वा ॥ ८ ॥

एवं श्रोतव्यमित्युक्त्वा तद्वाक्यमाह। प्रियव्रतेति।

यस्यास्तु न भवेद्भ्राता न विज्ञायेत वै पिता।
नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया ॥ म० ॥३॥११॥

भ्रातुरभावे विवाहो न भवतीति प्रियव्रतोत्तानपदोः स्वसेत्युक्तमुभयोस्तु कीर्त्तनं नैकः पुत्रः पुत्रो भवतीति वाक्यात् पिता प्रसिद्ध इति वक्तुं दुहिता ममेत्युक्तमकामायाः कामनमयुक्तमित्यन्विच्छति पतिमिति दोषाभावाय युक्तमिति कामार्थयोगो मास्त्विति वक्तुं वयःशीलगुणादिभिरित्युक्तं वयः कामार्थं शीलं धर्मार्थं गुणाः अर्थार्थाः आदिशब्देन ज्ञानादयो मोक्षार्थाः एवं चतुर्विधपुरुषार्थसिद्ध्यर्थं स्त्रियाः सर्वं पुरुषाधीनमिति तादृशं पतिं वाञ्छति ॥ ९ ॥

तादृशश्चेदन्यस्तया मनसा स्वीकृतः स्यात् तथापि निषिद्धेति तन्निवृत्तिं वदन् त्वदग्रहणे नास्त्येवास्याः पतिरिति अभिप्रायेणाह। यदा त्विति। सर्वान् वरान् स्वयोग्यान् श्रोतुं प्रवृत्ता यदा तु भवतः शीलादिकं श्रुतवती ततः प्रभृति त्वय्येव कृतनिश्चया आसीत् शीलमाचारः श्रुतं विद्यादिजनितज्ञानं रूपं सौन्दर्यं वयस्तारुण्यं गुणा औदार्यादयः एतान् यदा अशृणोत् नारदो हि देवकार्यकर्त्ता प्रसङ्गमुत्पाद्य वदति त्वय्येव कृतः निश्चयः ममायमेव पतिरिति ॥ १० ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

अकृतात्मनामपुण्यात्मनाम् ॥ ६ ॥
उशतीरुशत्यः ॥ ७ ॥

एवं च त्वद्दर्शनान्मे सर्वे क्लेशा गता एव किन्त्वेकः क्लेशस्तु दुर्वारो हृदि वर्त्तत एव तमपि त्वत्कृपया दत्ताश्वासो विगतभीरेवोद्घाटयामीत्याह। स प्रसिद्धः कृपासिन्धुरित्यर्थः परिक्लिष्ट इति एष क्लेशो मे विवेकेनापि नापयातीति भावः ॥ ८ ॥

प्रियव्रतोत्तानपदोः स्वसेति पुत्रिकाकरणशङ्का निरस्ता मम दुहितेति क्षत्रियकन्या तव योग्यैवेति भावः ॥ ९—११ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

स्वभाग्यं प्रसंगादभिनन्दन् मुनिदर्शनादिकमकृतात्मनां दुर्लभमित्याह। दिष्ट्येति। ६।
उशतीः उशत्यः कमनीयाः। ७।
मम आवितं प्रार्थनावाक्यम् ॥ ८ ॥ १० ॥

———

भाषाटीका।

जो आप विना पुण्य वालों को नहीं दीखते हो तिन का जो मैंने दर्शन कर लिया सो बडे मंगल की बात है और आप के चरण का मंगलरजको जो मैंने मस्तक से स्पर्श किया सो भी मंगल है ॥ ६ ॥

आपने जो मेरे को शिक्षा दिया सो वडा अनुग्रह किया और खुले कर्णों से मैंने आपके सुंदर वचन सुने सो भी वडा मंगल है ॥ ७ ॥

हे मुने! सो आप कृपा से मेरे वचनों को सुनने के योग्य हो मैं आर्त होकर सुनाता हूं और पुत्री के स्नेह से अति दुःखित हूं ॥ ८ ॥

प्रियव्रत उत्तानपाद दोनों की बहिन हमारी पुत्री यह है सो अवस्था शील गुणादिकों से युक्त अपने सदृश पति को चाहना करती है ॥ ९ ॥

जब से इसने नारदजी के मुख से आप के अवस्था रूप ज्ञान शील गुणों को सुना है तब से तुमारे बीच में इसका निश्चय हो गया है ॥ १० ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका।

प्रतीच्छ स्वीकुरु ॥ ११ ॥

उद्यतस्य हि कामस्य प्रतिवादो न शस्यते ।
अपि निर्मुक्तसङ्गस्य कामरक्तस्य किं पुनः ॥ १२ ॥
य उद्यतमनादृत्य कीनाशमभियाचते ।
क्षीयते तद्यशः स्फीतं मानश्चावज्ञया हतः ॥ १३ ॥
अहं त्वाश्रृणवं विद्वन्! विवाहार्थं समुद्यतम् ।
अतस्त्वमुपकुर्वाणः प्रत्तां प्रतिगृहाण मे ॥ १४ ॥

ऋषिरुवाच ।

बाढमुद्वोढुकामोऽहमप्रत्ता च तवात्मजा ।
आवयोरनुरूपोऽसावायोवैवाहिको विधिः ॥ १५ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

उद्यतस्य : स्वतः प्राप्तस्य विषयस्य प्रतिवादः प्रत्याख्यानम् ॥ १२ ॥

कीनाशं कृपणम् । अवज्ञया परापमानेन ॥ १३ ॥

यस्य सावधि ब्रह्मचर्यं स उपकुर्वाणः मे प्रत्तां मया दत्ताम्॥१४॥

अप्रत्ता चेति मय्येव कृतनिश्चयत्वात्कस्मैचित्प्रतिश्रुता च नभवतीत्यर्थः आद्यः प्रथमः ततः पूर्वं विवाहाभावात् । मुख्य इतिवा॥१५॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

श्रद्धयादरेणोपाहृतां समर्पितां सर्वात्मना सर्वथा ॥ ११ ॥

निर्मुक्तसङ्गस्य धर्मार्थं विषयोपार्जनेऽपि मनस्यनासक्तस्य॥१२॥

वैराग्यप्रतिष्ठादम्भेनानादृत्य परापमानेन परस्य दातुः प्रत्याख्यानाद्योऽपमानः कृतस्तेन किम्वा परकृतेनापमानेन ॥ १३ ॥ १४ ॥

विवाहाभावाद् रुचेः प्रथमतो दानाद्विवाहविध्यभावादित्यर्थः अत एव पक्षान्तरम् ॥ १५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्तस्माद्धे द्विजाग्र्य! मया श्रद्धयोपाहृतां समर्पितां तव गृहमेधिषु गार्हस्थ्येषु कर्मसु सर्वात्मना सर्वप्रकारैरनुरूपामनुकूलामिमां कन्यां प्रतीच्छ प्रतिगृहाण ॥ ११ ॥

प्रतिग्रहप्रत्याख्यानशङ्कया तं प्रोत्साहयन्नाह । त्रिभिः उद्यतस्य दैवात् स्वतः प्राप्तविषयस्य कामस्याभिलापस्य प्रतिवादः प्रत्याख्यानं निर्मुक्तसङ्गस्यापि न शस्यते कर्त्तुमिति शेषः कामासक्तस्य किं पुनः प्रतिवादो न शस्यत इति किंपुनर्वक्तव्यमित्यर्थः ॥ १२ ॥

प्रतिवादे किंस्यादित्यत्राह । यइति। यः पुमानुद्यतं काममनादृत्य पश्चात्कीनाशं कृपणमभियाचेत स्फीतं प्रवृद्धमपि तस्य पुंसो यशः क्षीयते नश्यति अवज्ञया परावमानेन मानः बहुमानश्च हतः विनष्टो भवेत् ॥ १३ ॥

ननु सत्यं त्वदुक्तं सर्वं परिवोढुकामस्याहं तु न तादृश इत्यत्राह । अहमिति । हेविद्वन् ! त्वामुद्वाहार्थं समुद्यतं यतमानमहमश्रृणवं श्रुतवान् अतस्तस्मादुपकुर्वाणः नैष्ठिकेतरब्रह्मचारी सावधिकब्रह्मचर्यवान् त्वं मे मया प्रत्तां दत्तां कन्यां प्रतिगृहाण ॥ १४ ॥

एवं मनुनाविज्ञापितः कर्दमस्तदुक्तमङ्गीकुर्वन्नाह । वाढमिति षड्भिः वाढमित्यङ्गीकारे अहमुद्वोढुकामः परिणेतुकामः तवात्मजा पुत्री अप्रत्ता कस्मैचिदप्रतिश्रुता चात आवयोरनुरूप आद्यः ब्राह्मः वैवाहिकः विवाहरूपः विधिर्विधानमस्त्विति शेषः॥१५।

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अत्रापि कीदृशोऽसौ कुत्रास्त इत्यादिविशेषप्रश्नादिना निश्चयो लभ्यत इत्यत एकोंऽशो निरणायि अतो द्वितीयोऽपि निर्धार्य इति भावेनाह । तत्प्रतीच्छेति । कन्येच्छायाः प्रतिनिधित्वेनेच्छां कुरु गृहाणेत्यर्थः अत्रान्योऽपि गुणोऽस्तीत्याह । श्रद्धयेति । उपहृतां दत्तामतोऽपि गुणात् गृहाणेत्याशयेनाह । सर्वात्मनेति । गृहमेधेषु गृहस्थाश्रमयोग्ययज्ञाख्येषु कर्मसु ते तव सर्वात्मना युक्तायुक्तविचारमन्तरेण स्वत एवानुरूपामनुकूलशब्दादिगुणां "रूपं शब्दे पशौ श्लोके ग्रन्थावृत्तौ हितादिषु सौन्दर्ये च स्वभावे च„इति ॥ ११ ॥

किंच नेदानीमिति प्रतिवादेन न "काञ्चन स्त्रियं परिहरेत्तद्व्रतम्"इति श्रुतिविरोधोऽपि स्यादिति भावेनाह । उद्यतस्येति । निर्मुक्तसङ्गस्य विषयसङ्गमनिच्छतोऽपि न तु सर्वात्मनासङ्गस्य निषिद्धत्वादनर्थहेतुत्वाच्च तदुक्तम् ।

यस्तु प्रव्राजितो भूत्वा पुनः सेवेत मैथुनम् ।
षष्टिवर्षसहस्राणि विष्ठायां जायते क्रिमिरिति ।

कामरक्तस्य योग्यस्य प्रतिवादः प्रत्याख्यानं निषेध इत्यर्थः ॥ १२ ॥

भवन्तमन्तरेणान्यः कश्चित्प्रत्याख्याति चेद्बाधकं चास्तीत्याह । य उद्यतमिति । कीनाशं कदर्यं कर्षकं वा ॥ १३ ॥

अनापृच्छ्यागमनमात्मदोषं परिहरति । अहं चेति । अनेन बहिर्मुखेषु अयं दोषो न पण्डितेष्विति दर्शितम् उपकुर्वाणो विवाहकामः "वेदानधीत्य यो वर्णी विवाहार्थं गुरोः कुलात् । कृतानुज्ञो निवर्तेत उपकुर्वाण उच्यते„ ॥ १४ ॥

प्रतिबुद्धप्रत्युत्तरो मुनिः किमकार्षीदितिराज्ञोऽन्तः शङ्कां निवारयति । वाढमिति । वाढमित्युक्तं विवृणोति । उद्वोढुकाम इति । "वाढं त्वभिमते भृश„ इति च तव पुत्री वोढुं योग्येत्याह । अप्र-

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

प्रत्तेति। "पतिशुश्रूषणे यत्ता विषयासक्तिनिस्पृहा। धर्मार्थकामहेतुत्वेनाप्रमत्तेति तां विदुः" इति त्वप्रत्तेति पाठेऽर्थितायान्यस्मै वाचाप्यदत्तत्वात् परासृष्टशङ्काभावात् उपयन्तुं योग्येत्याह। अप्रत्तेति च शब्दो हेत्वर्थः किं नामायं विवाह इति तत्राह। आवयोरिति। चतुर्णां विवाहविधीनामयं वैवाहिको विधिराद्यो ब्राह्मः "शक्त्या कन्यामलंकृत्याहूय यत्र प्रदीयते स ब्राह्म" इति स्मार्तः मुहूर्तं प्रतीक्ष्य न क्षेयमित्यतो वाह। आवयोरिति। आद्योऽद्यतनो दिवस एव विवाहयोग्यो विधीयत इति विधिः विभक्तिप्रतिरूपकं चाव्ययं भवति इति वचनादद्येत्यव्ययं सुवन्तरूपमपि विवक्षावशाद्भवति प्रतिः प्रतिनिधिप्रतिदानयोरिति सूत्राच्च। १५।

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

उद्यतस्य धात्रा स्वयमुपसादितस्य निर्मुक्तसङ्गस्य केवलं धर्मार्थं विषयोपार्जनमिति मनस्यासक्तिरहितस्य ॥ १२ ॥

अवज्ञया परकृतापमानेन ॥ १३—१४ ॥

बाढमिति। रुचेः प्रथमतो दानेऽपि वैवाहिकविधेरत्रैव प्रारब्धत्वादाद्य इत्युक्तम् ॥ १५ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवमपि सति पित्राधीना कन्येति पित्रा देया इति मया दीयमानां गृहाणेत्याह। तत्प्रतीच्छेति। द्विजाग्र्येति ब्राह्मणानां पित्रादिदत्ताया एव विवाहो मुख्यः न तु गान्धर्वादिरिति सूचितम्। इमामिति। कालान्तरविवाहं व्यावर्त्तयति रूपप्रदर्शनेन प्रलोभयति च अन्यथा दत्तमनभिप्रेतमपि गृह्णीयादिति ग्रहणार्थमाह। श्रद्धयोपाहृतामिति। सर्वात्मनानुरूपामिति। भगवता त्वदर्थमेव निर्मितेति ज्ञापितं न तु साधारणी न केवलं कामार्थमनुरूपा किन्तु गृहमेधेषु कर्मसु गृहेषु मेधा बुद्धिर्यैः यैश्च कर्मभिर्गार्हस्थ्यं सिद्ध्यतीत्यर्थः ॥ ११ ॥

एवं कन्याविषयकं सर्वमुपपाद्य वरविषयकमुपपादयति। उद्यतस्येति त्रिभिः। बहिर्गतो हि विषयः कामे सत्येव गृह्यते उभयोर्योगसिद्धौ हि विश्लेषोऽशक्य एव च उभयोः कामकाम्ययोरेकपदेन निरूपणमैक्यबोधाय उद्यतस्य कार्योन्मुखस्य कामस्य प्रतिवादो निराकरणं नशक्यते कर्तुं न शक्यत इत्यर्थात् स एव वा शक्तिविषयो न भवति उद्यतस्य स्वतः प्राप्तस्य कामस्य काम विषयस्य प्रतिवादो नास्ति सङ्गत्यागेन कामः काम्यो वा निराकर्तुं शक्य इत्याशङ्क्याह। अपि निर्मुक्तसङ्गस्येति। कामेन रक्तस्य व्याप्तस्य प्रतिवादो दूरादपास्त इति किं वक्तव्यमित्यर्थः ॥ १२ ॥

काम्ये उद्यतानङ्गीकारे बाधकमाह। य उद्यतमिति। उद्यतं स्वतः प्राप्तमनङ्गीकृत्य अनुद्यतं योऽभियाचते तस्य स्फीतमपि यशः क्षीयते मानश्चावज्ञया हतो भवति अनुद्यतमिति वक्तव्ये कीनाशं कृपणमिति वचनं महतोऽप्यनुद्यतत्वसूचनार्थं कृपणगत एव विषयः सर्वेषामप्राप्यो भवति कृपणो हि विषयमप्यदत्वापकीर्त्तिं च ख्यापयति स्वोत्कर्षार्थमतस्तद्यशः क्षीयते स्फीतमपीति कृपणजनिताकीर्त्तेः पुष्टत्वात् एवं बहिरपचारमुक्त्वान्तरमप्यपचारमाह। मानश्चेति "मानो हि महतां धनम्" इति "अनङ्गीकृतग्लानौ माननाशो ह्यवज्ञया हत" इति पुनः प्ररोहाभावाय ॥ १३ ॥

एवं काम्यनिराकरणे बाधकमुक्त्वा तस्मिन् कामनं साधयति। अहमिति। त्वां विवाहार्थं समुद्यतमिति अहमेव साक्षाद्गृणवं विद्वन्निति सम्बोधनमयुक्तनिराकरणाय विवाहं कृत्वैव कामः पूरणीय इति अतो विवाहेच्छुर्ब्रह्मचारी उपकुर्वाणो भवति स एव पित्रादिभ्य उपकरोतीति सावधिब्रह्मचारी उपकुर्वाणः प्रत्तां दत्तां प्रकर्षेण भार्यात्वेन गृहाण मे मयेति ॥ १४ ॥

भगवद्गुणा एवात्राङ्गीकारे हेतुरिति षड्भिरङ्गीकारमाह। बाढमिति।

इयं हि भगवद्दासी भगशब्दनिरूपिता।
ऐश्वर्यादिप्रसिद्ध्यर्थमस्या वर्णनमुच्यते ॥
अनङ्गीकरणे त्वस्याः स्वतः कामेन बाधनात्।
तुल्यत्वं चाभिलषितमत आद्यो निरूपितः ॥
धर्मो वीर्यं द्वितीयेन विख्यादरणवर्णनात्।
यशो हि वर्ण्यते तस्याः विश्वावसुनिरूपणात् ॥
कान्त्याधिक्यस्य कथनाल्लक्ष्म्याश्चैव निराकृतेः
सोमसंबन्ध एवोक्तो गान्धर्वस्तु ततः स्फुटः।
लक्ष्मीवद्वर्णनं तस्याः श्रियमिच्छन्हुताशनात्
इति वाक्याच्च तस्यापि संबन्धो विनिरूपितः
ज्ञानवैराग्ययोर्वाक्ये स्पष्टे एव निरूपिते
अतोऽस्या वर्णनं तत्र न निषिद्धमिति स्थितिः ॥

बाढमिति वचनं विवाहे प्रसिद्धं "बाढं वृणीध्वम्" इति वचनात् अव्ययमेतद्यथासुखमित्यर्थे सत्यार्थेवा अहंतूद्वोढुकाम एव तव चात्मजा कन्या न कस्मै चिद्दत्ता "दत्तायास्तु विवाहोऽत्र लौकिकः परिकीर्त्तितः। अप्रत्ताया विवाहो हि ब्राह्म एव निरूपितः उद्वोढुकाम इति वचनात् ममापि पूर्वं न विवाहः अतः आवयोरयमाद्यः वैवाहिको विधिः विवाहसंबन्धी अपूर्वजनकप्रकारः

दत्तामपि हरेत्कन्यां श्रेयांश्चेद्वर आव्रजेत्।
नष्टे मृते प्रव्रजिते क्लीबे च पतिते सति ॥
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयत

इति वाक्यात् आपद्विवाहः प्राजापत्यश्च सन्तत्यर्थं निरूपितः सोऽत्र निराक्रियते विधिर्भूयादिति ॥ १५ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

न चाहं विरक्तस्तपस्वी त्वत्कन्यां कथं स्वीकरोमीति वाच्यमित्याह। उद्यतस्य स्वतः प्राप्तस्य विषयस्य प्रतिवादः प्रत्याख्यानं कामरक्तस्येति तवान्तर्गतं कामं ज्ञात्वैवाहमिहागच्छमतो मयि कामो नापलपनीय इति भावः ॥ १२ ॥

तत्र व्यावहारिकीं नीतिमाह। य इति। अनादृत्य प्रतिष्ठानुरोधाल्लज्जया प्रत्याख्याय पुनः कृपणमदातारमपि जनं तमेव कामं याचते कामेनैवाचिरादेव प्राबल्यवता लज्जाप्रतिष्ठयोर्ग्रस्यमानत्वादिति भावः मानश्च हतो भवतीत्यर्थः। तेन परिणामदर्शिना विदुषा वर्त्तमानमपि वैराग्यं स्वमनोमध्यवर्तिना कामेनाग्रतो ग्रसिष्यमाणमनुमाय प्रथममेव दैवादयाचित एवायातोऽनिषिद्धो विषयोऽङ्गीकर्त्तव्य एवेति ध्वनिः ॥ १३ ॥

कामः स भूयान्नरदेव ! तस्याः पुत्र्याः समाम्नायविधौ प्रतीतः ।
क एव ते तनयां नाद्रियेत स्वयैव कान्त्या क्षिपतीमिव श्रियम् ॥ १६ ॥
यां हर्म्यपृष्ठे क्वणदङ्घ्रिशोभां विक्रीडतीं कन्दुकविह्वलाक्षीम् ।
विश्वावसुर्न्यपतत् स्वाद्विमानाद्विलोक्य सम्मोहविमूढचेताः ॥ १७ ॥
तां प्रार्थयन्तीं ललनाललाममसेवितश्रीचरणैरदृष्टाम् ।
वत्सां मनोरुच्चपदः स्वसारं को नानुमन्येत बुधोऽभियाताम् ॥ १८ ॥
अतो भजिष्ये समयेन साध्वीं यावत्तेजो बिभृयादात्मनो मे ।
अतो धर्मान् पारमहंस्यमुख्यान्शुक्लप्रोक्तान् बहुमन्येऽविहिंस्रान् ॥ १९ ॥
यतोऽभवद्विश्वमिदं विचित्रं संस्थास्यते यत्र च वावतिष्ठते ।
प्रजापतीनां पतिरेष मह्यं परं प्रमाणं भगवाननन्तः ॥ २० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु :मन्मनो मध्यवर्तिनं कामं त्वं केन लक्षणेनाशासीस्तत्र ज्ञानस्य का कथा श्रवणमपि मे जातमित्याह । अहं त्वेति । त्वा त्वामशृणवमिति श्रवणमिदं स्फूर्तिप्राप्तस्य भगवत एव मुखादित्यवगन्तव्यम् । यस्य सावधि ब्रह्मचर्यं स उपकुर्वाणः प्रत्तां मया दत्ताम् ॥ १४ ॥

अप्रत्ता कस्मैचिन्न प्रतिश्रुता आद्यः ततः पूर्वं विवाहाभावात् ॥ १५ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तत्तस्मात् प्रतीच्छ प्रतिगृहाण । ११ ।

काम्यते इति काम इष्टपदार्थः तस्योद्यतस्याकस्मात्प्राप्तस्य प्रतिवादः निवारणम् ॥ १२ ॥

कीनाशं कृपणं स्फीतं समृद्धम् अवज्ञया कीनाशादिकृते नासत्कारेण हतो विनष्टोभवेत् । १३ ।

मे मया प्रत्तां दत्ताम् । १४ ।

अप्रत्तेति मय्येव कृतनिश्चयत्वात् कस्मैचिदप्रतिश्रुता न भवतीत्यर्थः । १५ ।

भाषाटीका

तिस कारण से हे द्विजश्रेष्ठ ! इस कन्या को आप ग्रहण करो मैं श्रद्धा पूर्वक इसको देता हूं आपके गृहस्थ धर्म में सब प्रकार यह अनुकूल रहने वाली है ॥ ११ ॥
आपही से प्राप्त हुआ जो अभिलषित कार्य है तिसका तिरस्कार करना उचित नहीं है यदि विरक्त भी हो तौभी ठीक नहीं है यदि कामना वाला होतो फिर क्या कहना है ॥ १२ ॥

जो पुरुष प्राप्तवस्तु का अनादर करके फिर गरीब से मांगता है अति विस्तृत भी उसका यश हो तौभी नष्ट हो जाता है और अवज्ञा से मान भी नष्ट हो जाता है ॥ १३ ॥

हे विद्वन् ! हमने सुना है कि आप विवाह के लिये यत्न करते थे इससे आप यदि विवाह पर्यन्त ब्रह्मचर्य धारण किये हो तो श्रद्धा से इसको ग्रहण करो ॥ १४ ॥

ऋषि बोले ठीक है मैं विवाह की इच्छा वाला हूं आपकी कन्या भी किसी को नहीं दी है तब हम दोनों का प्रथमही यह विवाह विधि होगा ॥ १५ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

भूयाम्नदेव प्रतीतः "गृभ्णामि ते सौभगत्वाय हस्तं मया पत्ये" त्यादिमन्त्रप्रसिद्धः स्वयाङ्गकान्त्यैव श्रियं भूषणादिशोभाम् ॥१६॥

यां विलोक्य न्यपतत् सम्मोहेन विमूढं व्याकुलं चेतो यस्य क्वणद्भ्यामङ्घ्रिभ्यां शोभा यस्याः ॥ १७ ॥

तां ललनानां ललामं भूषणभूताम् असेवितौ श्रियश्चरणौ यैस्तैरदृष्टां द्रष्टुमप्ययोग्याम् उच्चपदः उत्तानपादस्य अभियातां स्वयं प्राप्ताम् ॥ १८ ॥

भजिष्ये स्वीकरिष्ये यावदपत्योत्पत्तिस्तावद्गार्हस्थ्यं ततः परं संन्यास इति भाषाबन्धः समयः तमेवाह । यावदात्मनो मम तेजो गर्भं बिभृयात् यद्वा ममात्मनो देहाच्च्युतं तेजो वीर्यं बिभृयादिति अतः परं पारमहंस्यं ज्ञानं तस्मिन् मुख्यान् शुक्लेन विष्णुना साक्षात्प्रकर्षेणोक्तानविहिंस्रान् हिंसारहितान् शमादीन् बहु यथा भवत्येवमनुष्ठेयान् मन्ये ॥ १९ ॥

ननु तव पितुः प्रजापते राज्ञा सृष्टावेव न संन्यासे तत्राऽऽह यत इति । संस्थास्यते च लयं यास्यति वावेति पदार्थे ऋणत्रयापाकरणानन्तरं संन्यास एव माहशानां भगवतोक्त इत्यर्थः ॥२०॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

सौभगत्वाय सधवत्वादिसौभाग्याय हेप्रिये! ते हस्तमहं गृह्णामि मया पत्या सहज रद्दष्टिर्यथा सेति मन्त्रशेषो ज्ञेयः त्वंजरदष्टिर्वृद्धाभवेति

श्रीराधारमणदासगोस्वामिविरचितादीपिन्याख्या दीपिकाटिप्पणी ।

इवेति लोकोक्तिः ॥ १६ ॥

यामितियुग्मकम् उभयोरपि कामादूषितचित्तत्वेनालौकिकत्वात्सरलत्वाच्च न लज्जावकाशः प्रियव्रतस्य तदानीं विरागश्रवणादुत्तानपादमात्रकथनम् ॥ १७--१८ ॥

आत्मनः स्वस्य मम च तेजो वीर्य्यमियं गर्भत्वेन यावद्बिभृयात् पूर्वार्थे आत्मन इति अधिकं पदमपुष्टार्थत्वाच्चकाराध्याहारश्चातो यद्वेति ॥ १९ ॥

भगवानेव परं प्रमाणं ननु भगवतो प्रमाणत्वेऽपि सृष्टिः कुतो न कर्त्तव्येत्याशङ्क्य व्यङ्ग्यार्थं व्याचष्टे । अनन्तयति ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे नरदेव ! ते तवास्याः पुत्र्याः यः समाम्नायविधौ वेदरूपचोदनायां प्रतीतः प्रख्यातः स कामः विवाहः भूयात् एवं तद्विज्ञापितमनुमत्य नाहं त्वत्प्रोत्साहेन प्रतिग्रहीष्याम्यपि त्वस्याः सौन्दर्य्यवयःशीलादीन् श्रुत्वास्यामेव कृतनिश्चयः भगवतादिष्टश्च प्रतीच्छामीति वदन् तां वर्णयति । क इत्यादिना । तं सार्वभौमस्य तव तनयां को नाम नाद्रियेत कथम्भूतां स्वयैवाभरणादिभिर्विना कान्त्या सौन्दर्य्येण श्रियं भूषणादिकृतशोभां क्षिपतीमिव स्थितां भूषणभूषणाङ्गीमित्यर्थः ॥ १६ ॥

किंच हर्म्यपृष्ठे प्रासादोपरि क्वणतोर्नूपुराभ्यां शब्दं कुर्वतो रङ्घ्रयोः पादयोः शोभा यस्यास्तां विक्रीडतीं कन्दुके विह्वले चञ्चले अक्षिणी यस्यास्तां यां तव कन्यां विलोक्य संमोहेन विमूढं व्याकुलं चेतो यस्य सः विश्वावसुर्नाम कश्चिद्गन्धर्वः स्वाद्विमानान्न्यपतत्तां को नानुमन्येतेत्युत्तरेणान्वयः ॥ १७ ॥

पुनः कथम्भूतां प्रार्थयन्तीं पतिमिति शेषः ललनाललामं ललनानां ललामं योषितां भूषणभूतां श्रेष्ठामित्यर्थः असेवितौ श्रियो लक्ष्म्याश्चरणौ यैस्तैरदृष्टां द्रष्टुमशक्यां मनोर्वत्सां पुत्रीम् उत्तानपदः तव पुत्रस्य भगिनीं स्वयमेव प्राप्तां बुधः कुशलः को नाम नानुमन्येत नाङ्गीकुर्यात् ॥ १८ ॥

अत उक्तहेतुभ्यः मे मम तेजः वीर्यं यावद्बिभृयात्तावता समयेन कालेन साध्वीमिमां भजिष्ये स्वीकरिष्ये अपत्यजननावधि स्वीकरिष्य इत्यर्थः अथो अनन्तरं पारमहंस्ये परमहंसाश्रमे मुख्यान् प्राधान्येनोपादेयान् शुक्लेन भगवता प्रोक्तानविहिंस्रान् हिंसारहितान् सात्त्विकान् धर्मान् विवेकाविमोकादीन् बहुमन्ये अनुष्ठास्यामि अपत्योत्पत्त्यनन्तरं निवृत्तिधर्मनिष्ठोऽहमिमां त्यक्ष्यामीतिभावः ॥ १९ ॥

अयं भाषाबन्धो न केवलं मयैव कृतः किन्तु समस्तजगदुदयविभवलयलीलेन भगवतैव निर्दिष्ट इत्याह । यत इति । एवं देवतिर्यङ्मनुष्यस्थावरादिभेदेन विचित्रं विश्वं यतो भगवतः अभवदुदपद्यत यत इति हेतौ पञ्चमी हेतुत्वस्य निमित्तोपादानसाधारणत्वात्तथाच यतो निमित्तभूतादुपादानभूताच्चेत्यर्थः यत्र यस्मिन् कारणभूते भगवति संस्थास्यते संहारं यास्यति यत्र यस्मिन्नन्तः प्रविश्य प्रशासनेन धारके भगवति अवतिष्ठते प्रशासितव्यत्वेन धार्यत्वेनावतिष्ठते तिष्ठति स एष प्रजापतीनां ब्रह्मादीनामपि पतिरनन्तः "सत्यं ज्ञानमनन्तम्" इत्युक्तलक्षणो भगवान् परं केवलं प्रमाणमस्मदुक्तभाषाबन्धे प्रमाणमित्यर्थः तथैव हि भगवताभिहितं समाहितं ते हृदयमित्यारभ्येति भावः ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

संतानलक्षणस्त्रीणां मुख्यकामः सविधिना स्यात्तादृशो भूयादिति राज्ञोऽभिप्रायं जानन्निव कर्दमो नियुङ्क्ते । काम इति । यः कामः समाम्नायविधौ वेदवाक्ये "दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि" इति प्रतीतो व्याख्यातो हे नरदेव ! स कामस्ते तवास्याः पुत्र्याः स्यादित्यन्वयः अनन्तरमपि भवता मत्पुत्री लालनीयेति न प्रार्थनीयमिति भावेनाह । क एवेति । स्वयौत्पत्तिक्या कान्त्यान्याः स्त्रियः क्षिपन्तीं निरस्यन्तीं श्रियं लक्ष्मीमिव स्थिताम् अनादरहेतुरूपलावण्याद्यभावादित्यर्थः ॥ १६ ॥

यथा पुरास्या नारदवाक्यादस्मद्गुणविषयाभिरुचिरभूत्तथास्माकमपि केनचित्पथिकेन श्रावितायामस्यां शृङ्गारादिगुणपङ्क्तिमाकर्ण्याकाङ्क्षा समुत्पन्नेति भावेन तल्लावण्यं स्तौति । यामित्यादिश्लोकद्वयेन विश्वावसुर्गन्धर्वः समांचीनो मोहो यस्मात्सौन्दर्यात्तथा तेन समोहेन तत्सौन्दर्येण विमूढं कृत्याकृत्यशून्यं चेतो यस्य स तथा यद्वा संमोहो दर्शनाज्जातं पारवश्यं तेन मूढचेताः अनेन कर्दमस्य ऋषित्वमन्वर्थमिति दर्शितं यद्वा सम्मोहो नाम वस्तुनि स्नेहविशेषस्तेन ॥ १७ ॥

प्रार्थयन्तीमित्यादीनि पञ्च विशेषणानि स्वीकारे कारणानि ललनानां विलासिनीनां स्त्रीणां ललनातिलकभूतां न सेवितौ श्रियो लक्ष्म्याश्चरणौ यैस्ते तथा तैः पुरुषैरदृष्टामित्यनेन दृष्टिविषयीकारयोग्यतापि न किं पुनः स्वीकार इति सूचयति । मनोः सुतामिति । कुलमुख्यपद उत्तानपादस्य स्वसारं भगिनीमिति भ्रातृमतीत्वं कोऽप्यस्थाने जातोऽपि बुधः स्यादभिजात इति अनेनात्मनो योग्यतातिशयं ध्वनयति ॥ १८ ॥

किमनुलापेनोक्तं सर्वं सत्यं प्रत्यक्षं च परं किं क्रियते इति तत्राह । अत इति । यत एवं विधगुणा अत इति समयेन कालेन कालं च वक्ति । यावदिति । इयं तव पुत्री यावद्यदा मे आत्मनः शरीरस्य भुक्तान्नविकारकृतरेतोलक्षणं तेजो विभृयाद्बिभर्ति अहमपि तावदेव विभर्मीति शेषः ततः परं किमत्राह । अत इति अतोऽत्रापत्योत्पत्त्यनन्तरं पारमहंस्यमुख्यान् परमहंससम्बन्धिनोऽत एव मुख्यान् शुक्लेन नित्यशुद्धेन हरिणोपदिष्टानविहिंस्रान् पश्वाद्यालम्भनविधुरान् यमान् बहु मन्ये अनुतिष्ठामि सम्प्राप्स्यामीत्यर्थः ॥ १९ ॥

अस्मिन्नर्थे हरिरेवावयोः साक्षीत्याह । यत इति येन संस्थाप्यते स्वसेतौ निधाय रक्ष्यते प्रलये यत्र यस्योदरे स च प्रमाणं साक्षी अनन्त इति साक्षिणः कालत्रयेऽप्यवस्थानमाह ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कामः स भूयादित्यादित्रयस्यायमर्थः तादृशीयं मां तपस्विनमपि प्रार्थयते । तत एनां शुद्धभक्तां कथं त्यजेयमिति वक्ष्यते च पितृभ्यां प्रस्थित इत्यादिभिः श्रियं जगल्लक्ष्मीम् ॥ १६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यामित्यादि युग्मकम् । उभयोरपि कामादूपिनश्चित्तत्वेन सर्वैः प्रतीयमानत्वात् न लज्जाकरं प्रियव्रतस्य तदा विरज्य गतत्वात् उत्तमपद इत्युक्तम् ॥ १७—१८ ॥

आत्मनः परमात्मनः कपिलाख्यं तेजो मे मत्तो यावद्वि- भूयात् ॥ १९——२० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

केवलमदृष्टजनकः शोभाकरो न भवतीति शोभा अपि यथा सुखम्भवत्वित्याह । काम इति । स एव विधिः कामोभूयात् कामितप्रकारेण भवत्वित्यर्थः तत्र हेतुः नरदेवेति राज्ञां हि न ब्राह्मणानामिव विवाहः शोभारहितः परं स न सर्वात्मना लौकिकः कर्त्तव्यः किन्तु समाम्नायविधौ प्रतीतः कर्त्तव्यः समाम्नायो नामाभ्यासः यथा पूर्वं सर्वैः कृतः तादृशविधौ प्रतीतः समाम्नायो वेद इति केचित् ननु तदा कन्यायाः महत्त्वप्रतीतेर्मात्सर्यादग्रहणं स्यादित्याशङ्क्याह । क एवंति । कस्ते तनयां नाद्रियेत एवंत्यनादरे तत्र हेतुः स्वया असाधारण्या कान्त्यैव श्रियमिव लक्ष्मीं क्षिपन्तीमस्या अपि भगवच्छक्तित्वात्तथा कथनं न दोषाय लक्ष्मीं क्षिपतीमिवेति भक्तिरूपतात्यस्याः सूचिता ॥ १६ ॥

तस्याः कीर्त्तिमाह । यां हर्म्यपृष्ठ इति । विश्वावसुर्गन्धर्वः यां देवहूतिं हर्म्यपृष्ठे क्रीडन्तीं कन्दुकेन विह्वलं अक्षिणी यस्याः अप्सरसां सान्निध्येऽपि शोभया गृहीतचित्तः उपरि गच्छन् विमानात्तस्याः पुरतः पतित इति नारदादिवाक्यैर्ज्ञायते हर्म्यपृष्ठेन व्यवधानं कणदङ्घ्रिशोभामिति उद्दीपनादयो निरूपिताः कन्दुकविह्वलाक्षीमिति चाञ्चल्यं मुग्धभावश्च निरूपितः सम्यक् मोहेन विमूढं चेतो यस्य गन्धर्वत्वान्न दोषः ॥ १७ ॥

तस्याः स्त्रीत्वं वर्णयति । संप्रार्थयन्तीमिति । प्रथमतः प्रार्थयन्तीं स्वयमेव चाभियातां वुधः सन् को वा नाभिमन्येत प्रार्थयन्ती सर्वथा ग्राह्या या काचित् तत्रापि "स्त्रीरत्नं दुष्कुलादपि" इति न्यायेनापि सा ग्राह्येत्याह । ललनाललामेति । ललना स्त्री तासां मध्ये ललामा श्रेष्ठा भगवत्प्रसादरूपत्वाच्च सर्वथा ग्राह्येत्याह । न संविती श्रीयुक्तौ भगवच्चरणौ यैस्तैरदृष्टां ते तां द्रष्टुमपि न शक्नुवन्ति अत इयं भगवत्प्रसादरूपा मनुर्धर्मरूपः स चेत्फलं दोग्धि तदियं वत्सा प्रिया कन्येत्यर्थः उत्तमपदः स्वसारमिति भ्रातृमतीं प्रसिद्धकन्यां च को वा सर्वशास्त्रार्थवेत्ता नानु मन्येत एतादृशी स्त्री ब्रह्मविद्याया अप्यधिकेति आभिमुख्येन यातेति एतादृश्याः परित्यागे दोषश्रवणात् ॥ १८ ॥

परमेको दोषोऽस्ति तं चेत् स्वीकुर्यात्तदा भजिष्य इत्याह । अतो भजिष्य इति । यस्मादेषा सर्वोत्कृष्टा अतो भजिष्ये परं समयेन कालनियमेन ननु प्रथमत एव किमित्येवं निर्बन्धः क्रियते यदैव वैराग्यं तदैव परं त्यक्तव्या तत्राह । साध्वीमिति । एषा हि पतिव्रता "मृते म्रियेत या नारी सा स्त्री ज्ञेया पतिव्रता" इति मरणपर्यन्तं तस्याः धर्मसंरक्षार्थं संग्राह्या स्यात् अन्यथा शरणागतायाः धर्मो नश्येत् अतः पूर्वमेव पणबन्धे परिग्रहसमये तया तथा व्रतं न गृहीतं स्यात् समयमाह । यावत्तेजो विभृयादात्मनो मे इति मे तेजो बीजात्मकं ब्रह्मत्वात् तावतैव तस्याः कृतार्थत्वायाह । आत्मन इति । अहमात्मा तस्या अपि आत्मा तेजः चेद्धृतं तदैव पातिव्रत्यं सिद्धं पतिः स्वस्मिन्नेव स्थित इति तदनन्तरं पारमहंस्यधर्मानेव भजिष्य इत्याह । अत इति । पारमहंस्ये आश्रमे मुख्यान् प्रमाणमाह । शुक्लप्रोक्तानिति । शुक्लनारायणेन प्रोक्तान् तानेव बहु मन्ये तेषां धर्माणां प्रमेयतोऽप्युत्कर्षमाह । अविहिंस्रानिति । गार्हस्थ्यं यज्ञादयो हिंस्राः ॥ १९ ॥

ननु "यावज्जीवमग्निहोत्रं जुहुयात्" इति श्रुतेः अत एव ब्रह्मचर्यादेव प्रव्रजेदिति स्मृतेश्च गार्हस्थ्यानन्तरं न प्रव्राज इति चेत्तत्राह । यत इति । अस्मिन्नर्थे एष भगवानेव प्रमाणम् ॥

सर्वथादरणीयो यः स प्रमाणमिहोच्यते ।

तत्संबन्धात् कृतिस्तस्य प्रमाणं वाक्यमेव च ॥

वेदानां प्रामाण्यं भगवद्वाक्यत्वात् सह्यनन्तः अनन्तमूर्त्तिः देशाद्यपरिच्छिन्नश्च स हि तत्तदधिकारानुसारेण बहुधा शास्त्रार्थमाह । भक्तेभ्यश्च पृथक् पृथगाह अतो यन्मां प्रत्याह विशेषाकारेण तदेव प्रमाणं "विशेषो बलवान्" इति वेदात् स्वतन्त्रादपि भगवान् महानिति वक्तुं जगत्कर्तृत्वमाह । यतो भगवतः सकाशादिदं विश्वमभवदुत्पन्नं विचित्रमिति अलौकिककर्तृत्वं तस्य बोधितं यत इति कारणमविकृतं चिन्तामण्यादेः सकाशादुत्पादितानां घटादीनां समवाय्यादिकिञ्चिदपि कारणमन्यत् दृश्यते तथा यावदपेक्षितकारणानि भगवानेव नान्यदित्यव्ययनिर्देशः यत्रैव संस्थाप्यते लीनं भवति यत्र वा अवतिष्ठते स्थितं भवति एककारणत्वं गुणानां तदभिमानिनश्च संभवतीति त्रितयकीर्त्तनं नियामकत्वं चाह । प्रजापतीनां पतिरिति । तत्राप्येष इदानीमपि निकटे भासते "अनेनोल्लङ्घनमपि न शक्यमित्युक्तमत एव वेदाद्यपेक्षयापि पर प्रमाणं भगवानिति अविकृतं ब्रह्मेति अनन्त इति प्रामाण्ये हेतुः अन्यस्यानादरणीयत्वात् ॥ २० ॥

---

श्रीविश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अस्याः कामो भूयात् भवतु सम्यगाम्नायोक्तविवाहविधौ प्रतीतः गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्भवेथा इत्यादि मन्त्रः प्रसिद्धः श्रियं भूषणशोभाम् ॥ १६ ॥

क्षिपतीमिव श्रियमिति व्यतिरेकालङ्कारेण तस्याः सौन्दर्यसाड्गुण्यादिकं निरुपममुक्त्वा स्वाभाविकं प्रभावमप्याह । यामिति । क्वणद्भ्यामङ्घ्रिभ्यां शोभा यस्यास्तां विमानात् नितरां भूमितले अपतत् विलोक्य सम्मोहेति तत्रापि सम्यगचेतनो मृतक इव भूत्वेति भावपूर्वकतदवलोकनमहापराधफलं सद्यः प्रापेत्यर्थः । ननु विलोक्येति क्त्वाप्रत्ययोक्तेर्विश्वावसुना सा दृष्टैवेति ॥ १७ ॥

तत्र नहि नहीत्याह । असेवितश्रीचरणैर्जनैरदृष्टां मदभीष्टदेवश्रीमन्नारायणकान्तायाश्चरणौ मयैव सेवितावतो ममैव सादृश्या भवेन्नान्येषां केषामपीति भावः । "तेन चाकाशचारिणा तस्याः कान्तिरेव विश्वावसुना विलोकिता न तु सैवायातं आभिजात्येऽप्युत्कर्षमाह । मनोस्तव वत्सां वात्सल्यपात्रीं कन्याम् उत्तमपदः उत्तानपादस्य प्रियव्रतस्य तदा विरज्य गतत्वान्नोल्लेखः । तत्राप्यभियातां स्वयं प्राप्ताम् ॥ १८ ॥

॥ मैत्रेय उवाच ॥

स उग्रधन्वन्नियदेवाबभाष आसीच्च तूष्णीमरविन्दनाभम् ।
धियोपगृह्णन् स्मितशोभितेन मुखेन चेतो लुलुभे देवहूत्याः ॥ २१ ॥
सोऽनुज्ञात्वा व्यवसितं महिष्या दुहितुः स्फुटम् ।
तस्मै गुणगणाढ्याय ददौ तुल्यां प्रहर्षितः ॥ २२ ॥
शतरूपा महाराज्ञी पारिबर्हान् महाधनान् ।
दम्पत्योः पर्यदात्प्रीत्या भूषवासःपरिच्छदान् ॥ २३ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

समयेनेति यावदपत्यांत्पत्तिस्तावदगार्हस्थ्यं ततः परं सन्न्यास इति भाषाबन्धमयः समयस्तेन । यद्वा यावत् ममात्मनो देहाच्च्युतं तेजो विभृयात् तावद्भजिष्ये तत्रापि समयेन मम तपःशेषसमाप्त्यनन्तरं यदात्रकाशं लप्स्ये तदैवेत्यर्थः । अत्र ममात्मनो मत्प्रियश्चद्देवस्य तेजः कपिलदेवाख्यमिति वस्त्वर्थश्च ज्ञेयः। अतोऽनन्तरं पारमहंस्येषु मुख्यान् पारमहंस्यात् ज्ञानादपि मुख्यान् निष्पारिग्रहभक्तिरूपान् शुक्लेन विष्णुना साक्षात् प्रकर्षेणोक्तान् अवि हिंस्रान् हिंसारहितान् बहु यथा स्यादेवमनुष्ठेयान्मन्ये ॥ १९ ॥

अत्रार्थे प्रमाणं तव मम च स्मृत्यारूढो भगवानेवेत्याह । यत इति । यद्वा ननु तव पितुः प्रजापतेराज्ञा मृषैव न वैराग्ये तत्राह । यत इति । संस्थास्यते लयं यास्यति वाक्येवार्थे प्रजापतीनां मत्पित्रादीनामपि पतिरतः स एव परं प्रमाणं तस्याज्ञैव मया पालनीया न तु पितुरेवेति भावः ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

समाम्नायोविधौ गृह्णामि ते सौभगत्वाय हस्तमित्यादिवेदविधौ यः कामः प्रतीतः स भूयात् भवेत् श्रियमन्यकान्तिम ॥ १९ ॥

विश्वावसुः गन्धर्वः कणद्भ्यां नूपुरध्वनिमद्भ्यामङ्घ्रिभ्यां शोभा यस्यास्ताम् ललनाललामं स्त्रीरत्नम् न सेवितौ श्रीचरणौ श्रीयुक्तचरणौ भगवत्पादपद्मे यैस्तैरदृष्टाम् यस्येयं भार्या स भगवतोऽपि पुत्रीभूतस्यानुग्रहभाजनो भविष्यति सेयं भगवत्प्रसादलभ्येतिभावः अभिप्रयातां स्वयमागताम् ॥ १७ ॥ १८ ॥

यतः इयं भगवत्प्रसादलभ्या अतो हेतोः साध्वीमिमां भजिष्ये स्वीकरोमि एवंभूतादपि कलत्रस्वीकारात्तत्त्यागपूर्वको भगवद्भजनमार्गस्वीकारः श्रेष्ठः इति द्योतयितुमाह । समयेनेति समयमेवाह यावदियमात्मनो मे तेजो गर्भं विभृयात् तावदेव भजिष्ये अतः परं तु शुक्लेन विष्णुना प्रोक्तान् पारमहंस्यमुख्यान् धर्मान् विष्णुध्यानतत्साधनभूततच्छ्रवणकीर्तनपञ्चकालयजनादिरूपान् तत्प्रापकान् बहु यथा भवति तथानुष्ठेयान् मन्ये तथोक्तं श्रीमुखेन ।

सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।
इष्टोऽसि मे दृढमितिस्ततो वक्ष्यामि ते हितम् ।
मन्मना भवमद्भक्तो मद्याजी मां नमस्कुरु ।
मा मेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ।
सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ १६ ॥

ननु प्रजासृजेति प्रजापत्याज्ञा जीवनपर्यन्तं पालनीया किंशुक्लप्रोक्तधर्मानुष्ठानेनेत्यत्राह यत इति ॥ २० ॥

---

भाषाटीका ।

हे नरदेव ! तुमारी पुत्री का वेद मे विहित जो विवाह सो होगा अपनी कान्ति से सब की शोभा को जीतने वाली आपकी पुत्री को कौन आदर नहीं करैगा ॥ १६ ॥

जिसके कि महलमे गेंद खेलने समय पैरों मे घूंघुरूं का शब्द होता था क्रीडासें नेत्र विह्वल थे उस समय मे इसको देखकर विश्वावसु गन्धर्व अपने विमान मे से चित्तके मोहित होने से नीचे गिर पडा ॥ १७ ॥

लक्ष्मीजी के चरण सेवा जिनने नहीं किया है वे लोग जिसको नहीं देख सकते हैं ऐसी जो मनुकी पुत्री उत्तान पाद की बहिन अपनी इच्छा से आई प्रार्थना करती हुई को देखकर यदि आप ज्ञानी होगा तो कौन नहीं चाहैगा ॥ १८ ॥

इस हेतु से जब पर्यन्त हमारे वीर्य को धारण न करेगी तब पर्यन्त हम इसका सन्तोष करेंगे फिर तो विष्णु भगवान् के कहे परमहंसों के अहिंसादिक धर्मों को हम बहु मानसे धरण करेंगे ॥ १९ ॥

जिसमें से यह विचित्र जगत् हुआ है जिसमें स्थित है जिसमे लयहोगा वह भगवान् अनन्त प्रजापतियों का पति ईश्वर ही हमको परम प्रमाण है जैसी उनकी आज्ञा है तैसा करैंगे ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

हे उग्रधन्वन्विदुर ! लुलुभे मुनेर्मुखेन प्रलोभ्यतेस्म यद्वा मुखेन प्रलोभितवान् ॥ २१ ॥

स मनुः अन्वनन्तरम् महिष्याश्च व्यवसितं निश्चयं ज्ञात्वा । २२ ।

पारिबर्हान्विवाहकाले प्रदेयान् भूषाः भूषणानि । वासांसि । परिच्छदान् गृहोपकरणानि च ॥ २३ ॥

प्रत्तां दुहितरं सम्राट् सदृक्षाय गतव्यथः।
उपगुह्य च बाहुभ्यामौत्कण्ठ्योन्मथिताशयः ॥ २४ ॥
अशक्नुवंस्तद्विरहं मुञ्चन् बाष्पकलां मुहुः।
आसिञ्चदम्ब ! वत्सेति नेत्रोदैर्दुहितुः शिखाः ॥ २५ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

प्रत्तां दत्ताम्! सदृक्षाय सदृशाय। गता व्यथा चिन्ता यस्य औत्कण्ठ्येनोन्मथितः क्षुभित आशयो यस्य ॥ २४ ॥

तस्या विरहं सोढुं। हे अंब! हे वत्से! इतिब्रुवन्। संधिरार्षः शिखाः केशानाभिञ्चत् ॥ २५ ॥ २६ ॥

---

### श्रीराधरमणदासगोस्वामिविरचिता। दीपिन्याख्या दीपिकाटिप्पणी।

पूर्वार्थे करणभूते मुखे कर्तृत्वमारोपितं तच्च मुख्यार्थसम्भवेऽनुपपन्नमतो यद्वेति तथाच कर्दमस्य कर्तृत्वान्नारोपः ॥ २१ ॥

तुल्यां तादृशगुणगणाढ्याम् ॥ २२—२३ ॥

प्रत्तामितियुग्मकम् सोढुमितिशेषः ॥ २४—२५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

कर्दमोक्तिमुपसंहरति मैत्रेयः। स इति। हे उग्रधन्वन्! विदुर! स कर्दम इयदेव एतावदेव आवभाषे उक्तवान् अनन्तरमरविन्दनाभं भगवन्तं धियोपगृह्णन् चिन्तयन् तूष्णीं मौनेनासीत् स्थितवान् स्मितेन मन्दहासेन शोभितं यन्मुखं तेन देवहूत्याश्चित्तं लुलुभे मोहितवान् ॥ २१ ॥

अनु अनन्तरं स मनुः महिष्या भार्यायाः दुहितुश्च व्यवसितं निश्चितं स्फुटं व्यक्तं यथा तथा ज्ञात्वा गुणगणैराढ्याय युक्ताय तस्मै कर्दमाय तुल्यां वयःशीलादिभिस्तुल्यां कन्यां प्रहर्षितः ददौ दत्तवान् प्रधर्ष इति पाठे गुणविवश इत्यर्थः ॥ २२ ॥

महाराजस्य मनोःस्त्री शतरूपा पारिबर्हानुपायनरूपान् भूषादीन् वासांसि वस्त्राणि परिच्छदाः क्रीडोपकरणानिदम्पत्योर्दुहितृजामात्रोः पर्यदात् ॥ २३ ॥

सदृक्षय सदृशाय प्रत्तां दत्तां दुहितरं सम्राट् मनुः गतव्यथः निरस्तदुहितृपत्यन्वेषणदुःखःबाहुभ्यामुपगुह्यालिङ्ग्य औत्कण्ठ्येन पुत्र्यां प्रेमातिशयेन उन्मथितः क्षुभितः आशयोऽन्तःकरणं यस्य सः ॥ २४ ॥

अत एव तस्या दुहितुर्विरहं विश्लेषमशक्नुवन् सोढुमिति शेषः अत एव मुहुः बाष्पकलाः नेत्राम्बुकणान् मुञ्चन् हे अम्ब! हे वत्सेति संबोधयन्नेत्रजलैर्दुहितुःशिखामासिञ्चन् ॥ २५ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

मैत्रेयो विदुरं प्रति कर्दमस्य मितभाषित्वगुणं वक्ति। स उग्रधन्वन्निति। इयदेव एतावदेव स्वमनीषितं चेदभूदतो हरिणाक्रिमिति [illegible]दरतुङ्गिनाभूत्प्रसादादेवेदं समस्तं कार्यं जातमभूदिति सततं श्रीनारायणस्मृतिर्मानिति भावेन उक्तमरविन्दनाभमिति। नवोद्वाहयोग्यायाः कन्यायाः प्रथमः कर्षणमन्त्रः पत्युः स्मितशोभिमुखमन्यथेदानीमङ्गारलिप्तमिवोत्तरत्र किमुत वैमुख्यादिकं स्यादित्यत इदमौत्पत्तिकं न नैमित्तिकमिति भावेनायमेव पतिः स्यान्नान्य इति स्मितशोभिना मुखेन देवहूत्या मन आकर्षितमित्याह। स्मितशोभितेनेति लुभगार्ध्ये गृधु अभिकाङ्क्षायामित्याकाङ्क्षणमप्याकर्षणविशेषः ॥ २१ ॥

महिषीदुहित्रोः पूर्वसम्वाद इदानीमपि सन्नेतद्दर्शनेनान्यथा भूदिति विविदिषुरिव राजा तन्निश्चयज्ञानपूर्वकं कन्यामस्मा अदादित्याह। स इति। अन्वनन्तरम् ॥ २२ ॥

तत्र राज्ञा किमदायीति तत्राह। शतरूपेति। पारिबर्हान् वरवध्वोर्दीयमानद्रव्याणि तानि लोकविलक्षणानि किन्नेत्याह। गृहेति ॥ २३ ॥

पुत्रीं दत्वा किञ्चित्कालमत्रैव तत्स्नेहादवात्सीत्किन्नेत्याह। प्रत्वेति। सदृक्षाय समानाय अनेन मनुः स्वकुमारीं राजकुमाराभावाच्छान्दसाय दत्तवानित्यपवादमपाकरोति ॥ २४ ॥

बाष्पकला अश्रुविन्दून् नेत्रोदैर्नेत्रजलैः शिखाः केशभारान् ॥ २५ ॥ २६ ॥

---

### श्रीमज्जीवगोस्वामीकृतक्रमसन्दर्भः

अरविन्दनाभानुभवजातप्रसादरूपेण स्मितेन यत् शोभितं शोभाविशेषं प्राप्तं तेन मुखेन लुलुभे। अयमेव महाभागवतो मत्पतित्वयोग्य इति लोभं चकार ॥ २१—२३ ॥

प्रत्तामिति युग्मकम् ॥ २४—२५ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एतावदुक्त्वा चेदङ्गीकरिष्यति तदा विवाहं करिष्यामीति निश्चित्य तूष्णीं स्थित इत्याह। स इति। उग्रधन्वन्निति संबोधनमत्रोभाय स्त्रिया भावितायाा अपि क्षोभयितृत्वात् इयदेव एतावदेवावभाषे एतत्साधकमपि वक्तव्यं पक्षान्तरे वान्यद्वक्तव्यमिति न तस्य हृदयमित्याह। आसीच्च तूष्णीमिति। पाक्षिकदोषस्य विद्यमानत्वात् तत्परिहारार्थमरविन्दनाभं धियोपगृह्णन्नित्युक्तं स हि कमलनाभो जगदेव भिन्नतया कर्तुं शक्तः किं मेतावन्मात्रं शक्यमिति तावतैव भगवता कश्चन उपायः कृत इत्याह। धिया उपगृह्णन्नेव स्मितेन शोभितं यन्मुखं तेन देवहूत्याश्चेतो लुलुभे न हि मायामोहितः वस्तुनि लुब्धो वा भाविगुणदोषान् पश्यति ॥ २१ ॥

अतो मनोः संदिग्धमपि मनः भार्याया हृदयं समीचीनो दुहितुः पतिरिति दुहितुश्च चित्तं ज्ञात्वा निःसंदिग्ध जातमिति तस्मै कन्यां दत्तवानित्याह। सोऽनुज्ञा[illegible]। [illegible]सायं निश्चयं

आमन्त्र्य तं मुनिवरमनुज्ञातः सहानुगः।
प्रतस्थे रथमारुह्य सभार्यः स्वपुरं नृपः॥ २६॥
उभयोर्ऋषिकुल्यायाः सरस्वत्याः सुरोधसोः।
ऋषीणामुपशान्तानां पश्यन्नाश्रमसम्पदः॥ २७॥
तमायान्तमभिप्रेत्य ब्रह्मावर्तात्प्रजाः पतिम्।
गीतसंस्तुतिवादित्रैः प्रत्युदीयुः प्रहर्षिताः॥ २८॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

स्फुटमिति वचनादिभिः अत एव तस्मै ददौ स्वस्यानिवारणे हेतुः। गुणगणाढ्यायेति। बाधकं च साधकं जातमिति तुल्यामिति इयमपि मुक्ता भविष्यतीत्यर्थः भगवतान्यथा तुल्या नोत्पादिता स्यादत एव प्रहर्षितः॥ २२॥

सङ्कल्प्यायं दत्तवान् उत्सवं तु शतरूपा कृतवतीत्याह। शतरूपेति। सामर्थ्यं महाराज्ञीति पारिबर्हान् विवाहसमये दानयोग्यान् महाधनानमूल्यान् न केवलं दुहितुः किन्तु दम्पत्योः न सङ्कल्पेन नापि दयया किन्तु प्रीत्या भूषा अलङ्काराः कुण्डलादयः वासांसि नानाविधानि परिच्छदा उपकरणानि॥ २३॥

कन्यां दत्वा गृहं गन्तुं मनोः कृत्यमाह। प्रत्तामिति। दत्तापि दुःखदा कन्या विसदृशा यत्तदभावान्निश्चिन्तो जात इत्याह। सदृशाय गतव्यथ इति। दत्त्वेति च वक्तव्ये सिद्धत्वात्तदनुवादमकृत्वा उपगूहने ईप्सितत्वात् प्रत्तामिति द्वितीयैवोक्ता शीघ्रगमने हेतुः। सम्राडिति। चकाराद्वाक्यान्यपि तदानींतनानि योग्यानि सूचितानि उपगृह्येति पाठे समीपे ग्रहणमात्रमुभयथापि शिरस एव ग्रहणमतिस्नेहो द्विवचनेन ज्ञापितः प्रेम्णा च विह्वलो जात इत्याह। औत्कण्ठ्येति। उन्मथितः अत्यन्तं क्षोभितः आशयो यस्य॥ २४॥

गन्तुमप्यशक्तो जात इत्याह। अशक्नुवन्निति। सोढुमित्यर्थात् स्वस्मिन् सम्बद्ध एव हि विरहः शक्यः अशक्यो वा भवति अत एव बाष्पकलां मुञ्चन् अन्तस्तापेन हि मुखतो बाष्पनिर्गमनं बाष्पस्य क्षोभायमानत्वात् कलात्वं मुहुरिति प्रतिस्मरणं विरहाधिक्यं द्योतयति नेत्रे च जलं बहु निर्गतमित्याह। आसिञ्चदिति। तस्या अपि रोदनं मम्ब वत्सेति सम्बोधनं मारोदीरित्यादिवक्तुमशक्तः नेत्रजैर्जलैः दुहितुः शिखा आसिञ्चत॥ २५॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

हे उग्रधन्वन्निति। त्वं यथा वीरो युद्धान्न प्रत्यावर्तसे तथा सोऽपि स्वाभिमताद्भगवद्धर्मादिति भावः। ततश्च देवहूत्याः स्मितशोभितेन मुखेन चेतो लुलुभे अर्थात् कर्दमस्य चेतस्तस्यां लुब्धं बभूव तेन च हन्त हन्तातिविरक्ते कन्यार्पितेति मनुशतरूपयोरनुतापो नाभूदिति व्यञ्जितम्॥ २१॥

स मनुः अनु अनन्तरं दुहितुर्देवहूत्तेर्महिष्यास्तन्मातुश्च व्यवसितमभिप्रायम्॥ २२॥

पारिबर्हान् विवाहे प्रदेयान् महान्ति मूल्यानि येषांताननर्घ्यानित्यर्थः॥ २३॥

प्रत्तां प्रदत्तां हे वत्से! इति ब्रुवन्॥ २४---२६॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

हे उग्रधन्वन्! स मुनिः इयदेवावभाषे ततोऽरविन्दनाभं धियोपगृह्णन् तूष्णीमासीत् तूष्णीमासीनश्च स्मितशोभितेन मुखेन देवहूत्याः चेतो लुलुभे प्रलोभितवान्॥ २१॥

अनु अनन्तरं व्यवसितं निश्चितम्॥ २२॥

दम्पत्योः वरवध्वोः प्रीत्या पारिबर्हान् विवाहे देयान् भूषा अलङ्कारांश्च च वासांसि च परिच्छदान् गृहोपकरणानि च परितः सर्वतः अदात्॥ २३॥

सदृशाय सदृशाय हे अम्ब! हे वत्से! इति संबोधयन् सन्धिरार्षः शिखाः केशान् आसिञ्चत्॥ २४॥ २५॥

---

भाषाटीका।

मैत्रेयजी बोले हे उग्रधन्वन्! विदुरजी कर्दमजी इतना ही कह कर भगवान् पद्मनाभ का स्मरण कर के चुप होगये परन्तु ऐसा मन्दहास किया कि जिससे देवहूति का चित्त मुनि के ऊपर क्षोभित होगया॥ २१॥

उन मनु महाराज ने भार्या तथा पुत्री के अभिप्राय को जान कर सर्वगुणयुक्त उन कर्दमजी के अर्थ उन के तुल्य गुणवाली कन्या का प्रदान किया आनन्दित भये॥ २२॥

महारानी शतरूपा ने बहुत धन के दायजे दिये वर दुलहिन दोनों को भूषण वस्त्रों से और सब सामग्री से सन्तुष्ट किये॥ २३॥

महाराज मनुजी पुत्री के सदृश वर को कन्या देकर निश्चिंत होगये दोनो भुजों से कन्या को आलिङ्गन कर के उत्कंठा के मारे व्यथित होगये॥ २४॥

कन्या के विरह को न हि सह सके वारम्वार आंसु गिराये हे पुत्री! कहकर आंसुओं से पुत्री के मस्तक के बालों को भिजादिया॥ २५॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

ऋषिकुलहितायाः उभयोः सुरोधसोः शोभनतटयोः।२७।

**बर्हिष्मती नाम पुरी सर्वसम्पत्समन्विता।**
**न्यपतन् यत्र रोमाणि यज्ञस्याङ्गं विधुन्वतः॥ २९॥**
**कुशाः काशास्त एवासञ्छश्वद्धरितवर्चसः।**
**ऋषयो यैः पराभाव्य यज्ञघ्नान् यज्ञमीजिरे॥ ३०॥**

श्रीधरस्वामिकृतभावार्थदीपिका।

अभिप्रेत्य ज्ञात्वा। ब्रह्मावर्तादेशात्प्रजाः पतिं प्रत्युज्जग्मुः॥२८॥

कोऽसौ ब्रह्मावर्त इत्यपेक्षायामाह। यत्र बर्हिष्मती नाम पुरीति। सापि कुत्र यत्र यज्ञस्य यज्ञवराहस्य रोमाणि न्यपतन्निति। यत्रेति सर्वत्र संबध्यते॥ २९॥

बर्हिष्मतीनामनिरुक्तिं ब्रुवन्प्रसङ्गाद्देशस्य श्रैष्ठ्यमाह। द्वाभ्याम्। कुशाः काशाश्चासन्। शश्वन्नित्यं हरितं वर्चो वर्णो येषाम्। यज्ञघ्नान् राक्षसादीन् पराभवं नीत्वा यज्ञं विष्णुम्॥ ३०॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी।

आमन्त्र्येति युग्मकम् अनुज्ञां प्रार्थयित्वा आश्रमसम्पद आश्रमसमृद्धीः॥ २६—२७—२८॥

यत्र ब्रह्मावर्ते सापि कुत्रेत्यपेक्षायां तन्नाम निर्वक्तियत्रेति॥२९॥

तानीति वक्तव्येऽपि तच्छब्दस्य विधेयपरामर्शकत्वात् त एवेति पुंस्त्वम् त एव रोमरूपा एव॥ ३०॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

मुनिवरं कर्दममामन्त्र्यानुज्ञाप्य तेनानुज्ञातः सभार्यो रथमारुह्य नृपो मनुः सहानुगः स्वपुरं प्रति प्रतस्थे गतवान्॥ २६॥

गच्छन्तमनुवर्णयति द्वाभ्यां ऋषिकुल्यायाः ऋषिकुलहितायाः ऋषिकुलसहितायाः सरस्वत्याः उभयोः सुरोधसोः शोभनतटयोः उपशान्तानां शमदमादिगुणसंपन्नानामृषीणामाश्रमेषु संपदः भगवदाराधनोपयुक्ततुलसीपुष्पफलादिसमृद्धीः पश्यन्प्रतस्थ इति पूर्वेणान्वयः॥ २७॥

आयान्तमागच्छन्तं पतिं मनुमभिप्रेत्य ज्ञात्वा प्रजाः प्रहर्षिताः ब्रह्मावर्तादेशाद्गीतसंस्तुतिमृदङ्गादिवाद्यध्वनिभिः प्रत्युदीयुः प्रत्युज्जग्मुः ब्रह्मावर्त्तानिति द्वितीयान्तपाठे ब्रह्मावर्त्तान्प्रत्यायान्तमित्यन्वयः प्रजापतिमिति स समस्तपाठे प्रजानां पतिं मनुं ब्रह्मावर्तात्तत्स्थालोकाः प्रत्युदीयुरित्यन्वयः॥ २८॥

कासौ पुरी यां प्रतस्थ इत्युक्तमित्यत्राह। बर्हिष्मती नाम पुरी कथम्भूता सर्वाभिः संपद्भिरैश्वर्यैः युक्ता सापि कुत्रेत्यत्राह। यज्ञस्यादिवराहस्याङ्गं शरीरं विधुन्वतः कम्पयतः सतः रोमाणि तनूरुहाणि यत्रापतंस्तत्रेत्यर्थः॥ २९॥

पतितानि रोमाणि किमासन्नित्यत्राह। त एव पतितान्येव रोमाणि शश्वत् सदा हरिद्वर्णाः कुशाः काशाश्चासन्नुत्पन्नाः कस्तेषामुपयोग इत्यत्राह यैः कुशैः काशैश्च यज्ञघ्नान्यज्ञविरोधिनो राक्षसान् पराभाव्य यज्ञम् ईजिरे कृतवन्तः पाकं पतीति वन्निर्देशः यद्वा यज्ञं भगवन्तमीजिरे इष्टवन्तः भगवदाराधनरूपयज्ञेऽपयुक्ता इत्यर्थः॥ ३०॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

राजा महति गहने कक्षे स्थिताय कस्मैचिन्मूलफलाशनाय तापसाय पुत्रीं दत्त्वा यास्यहमित्यनुशोकात्तुत्पादकं स्वराजधानीविशिष्टसम्पत्समुद्रमृषीणामाश्रममण्डलं ददर्श स्वपुरीमयादित्याह। उभयोरिति। ऋषिकुल्याया ऋषिकुलप्रियाया रोधसोस्तीरयोः स्थितानामुपशान्तानामतिशयितभगवन्निष्ठानाम्॥ २७॥

मनोः राजेति शब्दार्थं लक्षयति। तमायान्तमिति। अनेन प्रजानुरागेण रञ्जनाद्राजेति शब्दो निरुक्त इति ध्वनयति॥ २८॥

इयमपि नगरीतरक्षेत्रेभ्योऽपि पुण्यतमेति श्रैष्ठ्यमाह। न्यपतन्निति। जलार्द्रमङ्गं विधुन्वतो यज्ञवराहस्याङ्गाद्रोमाणि ज्ञानानन्दलक्षणानि यत्र बर्हिष्मत्यां न्यपतन् सहस्रशोऽवतारा अभिव्यक्ता अभूवन्नित्यर्थः॥ २९॥

रोम्णामवतारत्वे कुशकाशात्मकत्वं कथमिति तत्राह। त इति। सत्सु प्रथमेति सूत्राचेभ्यः ज्ञानानन्दलक्षणेभ्योऽवतीर्णेभ्यो रोमभ्य एव कुशकाशा आसन्नित्यन्वयः। प्रथमप्राप्तपरित्यागे किङ्कारणमिति चेन्न हरेर्हेयोपादेयराहित्यात् न्यपतन्नित्युक्त्वा किन्नस्यादिति चेन्न "ज्ञानानन्दस्वरूपेभ्यो रोमभ्योऽस्य कुशादयः। विधुन्वतः प्रयागे तु वाराहवपुषोऽभवन्। तानि रोमाणि देवस्य रूपाण्ययासन्सहस्रशः" इति वाक्यविरोधात् रोम्णां कर्कशत्वात्कुशकाशानामकर्कशत्वेन सुकुमारकान्तिमत्त्वात् न रोमत्वं युक्तमिति भावेनाह। त्वसदिति। त्वसद्धरितवर्चसो भास्वद्दूर्वाङ्कुरद्युमरीचिषः यथायोदाहकत्वमन्यनियतमेवं कुशादीनामवध्यराक्षसपरिभावकत्वं भगवद्रोमशक्तिनियुक्तमतस्त एवासन्निति व्यपदेश इति भावेनाह। ऋषय इति। पराभाव्य पराभूय यज्ञं भगवन्तम्॥ ३०॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

आमन्त्र्येति युग्मकम्॥ २६—२९॥

कुशकाशा इति त एव तद्रूपा एव॥ ३०—३२॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

मुनिवरं च आमन्त्र्य तेनैवानुज्ञातः सहानुगः सभार्यश्च रथमारुह्य स्वपुरं प्रतस्थ इति श्लोकत्रयसम्बन्धः मुनिवरत्वादेव न विशेषतः समर्पणं स्वपुरं प्रति नृप इति रक्षार्थं गमनमावश्यकं निरूपितम्॥ २६॥

दुहितुः सह वासो नास्तीत्यपि शङ्कां निवारयति। उभयोरिति। ऋषिकुलयोग्यायाः सरस्वत्याः उभयोः रोधसोः स्थितानामुपशान्तानामृषीणामाश्रमसम्पदः पश्यन् प्रतस्थ इति पूर्वेणैव सम्बन्धः उभयोरोधसोरिति परस्परदर्शनार्थमृषि-

कुशकाशमयं वर्हिरास्तीर्य भगवान् मनुः।
अयजद्यज्ञपुरुषं लब्धा स्थानं यतो भुवम् ॥ ३१ ॥
बर्हिष्मतीं नाम विभुर्यां निर्विश्य समावसत्।
तस्यां प्रविष्टो भवनं तापत्रयविनाशनम् ॥ ३२॥
सभार्यः सप्रजः कामान् बुभुजेऽन्याविरोधतः।
सङ्गीयमानसत्कीर्तिः सस्त्रीभिः सुरगायकैः।
प्रत्यूषेष्वनुबद्धेन हृदा शृण्वन् हरेः कथाः ॥ ३३ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

कुलयोग्यत्वात् सरस्वत्याः प्रार्थनयापि जामातुः स्वनिकटे गमनं निवारितं स्पष्टयं च सा उपयुज्यत इति उत्तमरोधस्त्वं सुव्यवहार्यत्वात् कलहाभावायोपशान्तानामिति सम्पद इति सम्रुद्धिर्निरूपिता ॥ २७ ॥

एवमितो गमनमुक्त्वा तस्य स्वनगरे प्रवेशे सम्भ्रममाह। तमायान्तमिति। ब्रह्मावर्त्तादिति सरस्वतीतीरं सर्वमेव ब्रह्मावर्त्तत्वेनोच्यते ब्रह्मावर्त्तानिति पाठः सुगमः प्रजापतिं मनुं योगोऽत्र प्रजापतीनिति पाठः प्रहर्षिताः प्रजाः गीतादिभिः प्रत्युदीयुः आभिमुख्येन गताः ॥ २८ ॥

विन्दुसरः परित्यज्य स्थलान्तरे मनुः कथं गतः किमिति तत्रैव राजधानीं न कृतवानित्याशङ्क्य मनुस्थिता नगरी विन्दुसरस्तुल्येति वक्तुं तामनुवर्णयति। त्रिभिः वर्हिष्मतीति। यथेदं विन्दुसरः तथा सा बर्हिष्मती नाम ननु तुल्यत्वेऽपि अत्रैव कथं नावस्थानं तत्राह। पुरीति। पुर्यामेव हि राजानो वसन्ति नतु स्थानमात्रे किञ्च एषा सर्वसम्पत्समन्विता प्राणिनो हि पुरुषार्थचतुष्टयं तदपि बहुविधं सर्वप्रकाराणां सर्वा सम्पदस्यामस्तीति अतो राज्ञः सर्वोपकारित्वात् अत्र स्थितिर्युक्ता वर्हिष्मतीत्वं साधयति। न्यपतन्निति। वर्हिर्वर्त्तते यस्यामिति सा पुरी बर्हिष्मती वर्हिश्च वैदिकं यज्ञावयवोत्पन्नं मन्त्रादिना कुशकाशादिषु तत्त्वमारोप्यते यथा पितरो ब्राह्मणेषु तद्धि देवानामासनं यद्यत्र तत्रैव हि देवाः यत्र पुनः तत्स्वाभाविकं तत्रावाहनापेक्षापि नास्ति तच्च वर्हिः तस्यामेव पुर्यामुत्पन्नमिति निरूपयितुं कथामाह। यज्ञवराहस्य अङ्गं विधुन्वतः सतः यत्र रोमाणि न्यपतन् स हि यज्ञात्मा रोमाणि च वर्हिः ॥ २९ ॥

त एव कुशाः काशा अभवन् तेषां यज्ञियत्वपरिज्ञानार्थमलौकिकं रूपमाह। शश्वद्धरितवर्चस इति। सर्वेष्वेव कालेषु कुशा उत्पद्यन्ते हरितवर्णाश्च भवन्ति नत्वन्ये व्रीहियवादयः अतस्त एवासनरोमाणि कुशकाशा एवासन्नित्यर्थः ननु यज्ञियाः पश्वादयो बहव एव पदार्थास्ते च सर्वत्रैव यथायथमुत्पद्यन्त इति कथं बर्हिष एवाधिक्यं कथं वा तेन वर्हिष्मत्या माहात्म्यमिति तत्राह। ऋषयो यैरिति। यैः कुशकाशैः यज्ञघ्नान् राक्षसान् पराभाव्य यज्ञमीजिरे कुशानां यज्ञप्रतिपक्षनाशकत्वं शाखान्तरेषु चिन्त्यम् ॥ ३० ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

ऋषिकुल्याया ऋषीणां सरितः ऋषिकुलहिताया वा उभयोः सुरोधसोः शोभनतटयोः ॥ २७ ॥

प्रत्युदीयुः प्रत्युज्जग्मुः ॥ २८ ॥

कोऽसौ ब्रह्मावर्त्त इत्यपेक्षायामाह। यत्र वर्हिष्मती नाम पुरी यत्र च पुर्य्यां यज्ञस्य यज्ञवराहस्य ॥ २९ ॥

वर्हिष्मती नाम निर्वक्ति। रोमाण्येव कुशास्ते आसन्नित्यन्वयः३०॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

आमन्त्र्य पृष्ट्वा ऋषिकुल्यायाः ऋषिसमूहहितायाः सुरोधसोः शोभनतटयोः ॥ २६ ॥ २७ ॥

तं पतिं रचितारमायान्तम् अभिप्रेत्य अभिधाय ब्रह्मावर्तात् देशात् प्रजाः प्रत्युज्जग्मुः ॥ २८ ॥

कः स देश इत्यत्राह। यत्र ब्रह्मावर्ते वर्हिष्मती नाम पुरी यज्ञस्य वराहस्य रोमाणि न्यपतन् ॥ २९ ॥

वर्हिष्मती नाम निरुक्तिं दर्शयति। कुशा इति द्वाभ्याम्। शश्वत् निरन्तरं हरितं वर्चो वर्णो येषां ते कुशाः काशा आसन् यज्ञं विष्णुम् ॥ ३० ॥

भाषाटीका।

फिर उन मुनि से आज्ञा मागकर अनुचरों सहित आज्ञा पाकर रथ में चढकर भार्या सहित अपने पुर को मनुजी चले गये ॥ २६ ॥

ऋषियों के निवास के योग्य सरस्वती नदी के दोनो तटों में शान्तस्वरूप ऋषियों के आश्रमों की संपत्ति को देखते हुये गये ॥ २७ ॥

ब्रह्मावर्त्त से उन प्रजापति को आते देखकर गीत से स्तुति वाजों से प्रहर्षित होकर सब प्रजा आयें ॥ २८ ॥

वाराह भगवान् के अंग हिलाने से जहां पर रोम गिरे हैं वह वर्हिष्मती नामकी पुरी सब संपत्तियों से परिपूर्ण है। २९॥

जो रोम गिरे थे वही कुश काश होगये वे हरे वर्ण के हैं जिन कुशों से ऋषियों ने यज्ञ के विरोधि राक्षसों को जीत कर यज्ञ किया है ॥ ३० ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

यज्ञपुरुषं विष्णुं यत इति यत्रायजत् भुवं स्थानम्। लब्धेति तृन्प्रत्ययान्तं यतो लब्धवांस्तं यज्ञपुरुषमितिवा एतेन स्वर्गादपिभूमिः श्रेष्ठा तत्रापि तत्स्थानं श्रेष्ठमित्युक्तं भवति ॥ ३१ ॥

निष्णातं योगमायासु मुनिं स्वायम्भुवं मनुम् ।
यदा भ्रंशयितुं भोगा न शेकुर्भगवत्परम् ॥ ३४ ॥
अयातयामास्तस्यासन् यामाः स्वान्तरयापनाः ।
शृण्वतो ध्यायतो विष्णोः कुर्वतो ब्रुवतः कथाः ॥ ३५ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रस्तुतमाह । यां बर्हिष्मतीं नाम पुरीं समावसत् पूर्वं यस्यामुषित स्तस्यां निर्विश्य भवनं प्रविष्टः सन् भोगान् बुभुजे इत्यन्वयः ॥ ३२ ॥

अन्येषां धर्मादीनामविरोधेन प्रत्यूषेषु उषःसु संगीयमानास्तत्कीर्तिर्यस्य तथापि स्वयं हरेरेव कथाः शृण्वन् भोगान् बुभुजे ॥३३॥

योगमायासु ऐच्छिकभोगरचनासु यद्यतः आभ्रंशयितुम् आईषदपि भ्रंशयितुमभिभवितुम् ॥ ३४ ॥

अतो याता यामो यस्य पक्वस्यान्नस्य तद्गतसारं भवत्यतोऽन्यदपि गतसारं यातयाममुच्यते अयातयामा अगतसारा आसन् । स्वान्तरं तदीयं मन्वतरं यापयन्ति गमयन्ति ते यामाः कालावयवाः कुर्वतः स्ववाक्यैरुपनिबध्नतः ॥ ३५ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

यत्र बर्हिष्मत्यां पूर्वार्थे सन्नित्यध्याहारः अत एव पश्चान्तरम् ॥ ३१ ॥ ३२ ॥

सभार्य्य इति सार्द्धकमनुबन्धेन तदेकासक्तेन ॥ ३३ ॥

निष्णातमिति युग्मकम् । यतो हेतोः अतो भोगानां भ्रंशयितुमशक्तत्वात् अतः यातयामपक्वान्नस्य गतसारत्वगुणकत्वात् अन्यदपि वस्तु लिङ्गो देवदत्त इति वद्गौण्या वृत्त्या यातयामशब्देनोच्यते श्रवणादिकं तु यथाक्रममेव ज्ञेयं योग्यतया उपनिबध्नतः ग्रथयतः ॥ ३४ ॥ ३५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अत एव भगवान् मनुः कुशकाशरूपं बर्हिरास्तीर्य यतो भगवतो वराहाद्भुवः स्थानं प्रतिष्ठां लब्धवान् तमेव यज्ञपुरुषमयजत् यज्ञैराराधितवान् अनेन इदमेव बर्हिष्मतीशब्दस्य प्रवृत्तिनिमित्तं यत्कुशकाशरूपबर्हिषा युक्तत्वमित्युक्तं भवति ॥ ३१ ॥

विभुर्मनुर्यां बर्हिष्मतीं नाम पुरीं निर्विश्य प्रविश्य पूर्वं समावसत्तस्यां पुर्यामाध्यात्मिकाधिभौतिकाधिदैविकरूपतापत्रयरहितं भवनं गृहं प्रविष्टः सभार्यः सपुत्रश्चान्याविरोधतः वर्णाश्रमप्रयुक्तभगवदाराधनरूपधर्माविरोधेन कामान् बुभुजे अनुवभूव ॥३२॥

एतदेव प्रपञ्चयति । सङ्गीयमानेत्यादिषड्भिः । प्रत्यूषेषु प्रत्युषःसु सस्त्रीभिः स्त्रीभिः सहितैः सुरगायकैः सुरा गन्धर्वाः किन्नरादयः त एव गायकास्तैः सम्यक् गीयमाना सती निर्मला कीर्तिर्यस्य सोऽपि अनुबन्धेन प्रेमानुबन्धेन हृदा हरेः कथाः शृण्वन् कामान् बुभुजे इति पूर्वेणान्वयः ॥ ३३ ॥

मुनिं शुभाश्रयसंशीलनपरं भगवत्परं भगवद्गुणानुचिन्तनपरं स्वायम्भुवं मनुं भोगाः कामभोगा योगमायासु भगवदाश्चर्यशक्तिकासु निष्णातमासक्तं यथा तथा आभ्रंशयितुमीषदपि पातयितुं यद्य स्मान्न शेकुः न समर्थाः अतस्तस्य यामा अयातयामा आसन्नित्युत्तरेणान्वयः ॥ ३४ ॥

विष्णोः कथा शृण्वतः ब्रुवतः कथयतः कुर्वतः भगवदाराधनमिति शेषः ध्यायतः विष्णुमिति शेषः तस्य मनोः स्वान्तरं मन्वन्तराख्यकालं यापयन्ति नयन्ति यामाः कालावयवाः प्रहरा अयातयामाः सफला आसन् यामा इत्यन्तेनैकस्मिन्नपि यामे भगवदाराधनाभावराहित्यं सूच्यते ॥ ३५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इतोऽपि कुशादीनां रोमव्यपदेशो युज्यते यज्ञाङ्गत्वेन विष्णुपदप्राप्तिहेतुत्वादित्याशयेनाह । कुशेति । कुशकाशमयं कुशकाशनिर्मितं यत्र कुशकाशाकरे पुरे स्थित्वा मनुर्यज्ञपुरुषमयजत्तेन मनुना यतो यस्य बर्हिषो गुणात्स्थानगुणाद्वा दृढमाश्रयं स्थानं विष्णुपदं लब्धमनेन बर्हिष्मतीति शब्दार्थो निरुक्त इति ज्ञायते ॥ ३१ ॥

स मनुरेवं विधां बर्हिष्मतीं नाम पुरीं निर्विश्य सुखमावसदित्यन्वयः तस्य विषयभोगाभावे शून्यागारस्थवर्तिकसुखमत्राह । तस्यामिति । तस्यां पुर्यां विद्यमानं भवनं प्रविष्टः कामान् भोगान् विषयभोगो धर्मादिपुरुषार्थविरोधेन दुःखहेतुरित्यत उक्तमन्याविरोधतइति अन्यस्य धर्मादेरविरोधेन ॥ ३२ ॥

धर्माद्यविरोधेन विषयभोगः कथमत्राह । संगीयमानेति । अनुबन्धेन स्निग्धेन ॥ ३३ ॥

आह्यस्तस्यैव विषयासक्तस्य हरिकथाश्रवणेन किं फलमत्राह । निष्णातमिति । योगमायासु योगसामर्थ्येष्वणिमादिषु मुनिं सर्वज्ञं "वेत्ता वेद्यस्य सर्वस्य मुनिः सद्भिरुदाहृत" इत्यभिधानं स्रंसयितुं हरिकथाश्रवणात् श्लथयितुम् ॥ ३४ ॥

विषयसेवायाः प्राबल्ये कथं न शेकुरिति वचनमित्याशङ्क्य हरिकथाश्रवणादेर्निरन्तरत्वेन संवर्द्धितोपचयत्वेन ततोऽपि प्राबल्यातिशयादिति भावेनाह । अयातयामा इति । "यातयामं गतरसं "गतसारं यातयामंयामः सार इहोच्यत" इति वचनादयातयामा अगतसारा न निष्फला इत्यर्थः यामाः कालावयवाः स्वान्तरयापनाः स्वावसानकारिणः ॥ ३५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सभार्य इति सार्द्धकम् ॥ ३३ ॥

निष्णातमिति युग्मकम् । अयातयामा न जीर्णा वृथा नापचीयमाना इत्यर्थः । अम्याघ्राता इति वा । "जीर्णञ्च परिभुक्तञ्च यातयामीमिदं द्वयम्" इत्यमरः । शृण्वत इत्यादिकं यथाक्रममेव ज्ञेयं ध्यायतस्तद्वैशिष्ट्येन स्मरतः कुर्वतस्तत्कथाग्रन्थान् रचयतः ब्रुवतस्तानुपदिशतः ॥ ३४—३६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं बर्हिष्मतीत्वमुपपाद्य विशेषतस्तत्र स्थितौ प्रयोजनमाह। कुशकाशमयमिति। अश्ववालः काशः स हि प्रस्तरो भवति पश्वादिष्वातिथ्यादिषु च कुशकाशप्रकृतिकं बर्हिरास्तीर्य स्वयं दीक्षितो भगवद्रूपो भूत्वा मनुर्यज्ञपुरुषमयजत् यतो भुवः स्थानं प्राप्तवान् अधिकारित्वाविशेषेऽपि इन्द्रादयः स्वर्गाधिकारिणः मनुस्तु भूमेः सा च देवयजनरूपा देवयजनं प्राप्यावश्यं यज्ञाः कर्त्तव्या इति लब्ध्वायजदिति लाभस्य यज्ञमात्रोपयोगित्वाय क्त्वा प्रत्ययः यतो वा यज्ञात् यज्ञवराहेणैव सा दत्ता अतो यज्ञार्थमेव मया प्राप्तेत्ययजत् ॥ ३१ ॥

एवं बर्हिष्मत्यां स्थितौ प्रयोजनमुक्त्वा तां प्रविष्ट इत्याह। बर्हिष्मतीति। इतिताहशस्थाने क्षितिसामर्थ्याय विभुरिति अत एवोत्तमाधारे शत्रूणां बाधाभावात् एकत्रैव सर्वदा स्थित इत्याह। यां निर्विश्य समावसदिति। बर्हिष्मतीं प्रसिद्धां भुवः स्थानं लब्ध्वेति पूर्वेणैव सम्बन्धः यामित्यादिभिर्न्नं सम्यगावसत् किञ्च न केवलं पुर्येव सर्वोत्तमा किन्तु तस्यां भवनमपि सर्वोत्तममिति। तस्यां प्रविष्ट इति तस्यां विद्यमानं भवनं प्रविष्टः। तापत्रयविनाशनमित्युत्कर्षः स्थानस्य भक्तिजनकत्वात्। तापत्रयाभावे हि बाह्याभ्यन्तरबाधाभावाद्यथा शास्त्रं पुरुषार्थाः साधयितुं शक्याः तदाह सभार्यः सप्रजः कामान्विषयान् धर्माद्यविरोधेन बुभुज इति। बाधकत्वादेव भार्यापुत्रास्त्यज्यन्ते पुरुषार्थविरोधे ॥ ३२ ॥

तथात्वे नियतं ज्ञापकमाह। सङ्गीयमानेति। सुरगायकैः गन्धर्वादिभिः स्त्रीसहितैः सङ्गीयमाना सत्कीर्त्तिः यस्य देवास्त्वसत्यं न गायन्ति नापि धर्मविरुद्धां कीर्तिं गायन्ति शृण्वन्ति वा अस्याः कीर्त्तेः पुरुषार्थचतुष्टयरूपत्वं प्रतिपादयति। सम्यक्त्वं मोक्षपर्यवसानात् औदार्याद्दानं सदिति धर्मः कीर्त्तिः कामः अतः कामजनकत्वात् स्त्रीभिः सह गानं सुरा हि धर्मफलाः गायकाः कामार्थप्रधानाः विशिष्टा मोक्षोपयोगिनश्चेति पूर्वोक्तस्य सर्वस्य साधकमाह। प्रत्यूषेष्विति। प्रातः कालेषु अनुषक्तेन हृदा हरेः कथां शृण्वन् बुभुज इति पूर्वेणैव सम्बन्धः ॥ ३३ ॥

प्रेम्णा भगवत्कथायाः श्रवणस्य सर्वपुरुषार्थसाधकत्वे मध्ये निदर्शनमाह। निष्णातमिति। योगमायासु निष्णातं स्वायंभुवं मनुं भोगा यदा भ्रंशयितुं न शेकुः तदा अयातयामास्तस्य यामा आसन्नित्युत्तरेण सम्बन्धः योगमाया नानाविधविषयभोगप्रकाराः अणिमादयः तत्र निष्णातं सर्वभोगभोक्तारं मननशीलत्वात्क्रियमाणमीक्षं तेन मोक्षभयादपि न भोगनिवृत्तिः परलोकभयं तु नास्त्येव स्वयम्भूपुत्रत्वात् अत एव न ऋणनिवृत्त्यपेक्षा नापि परलोकभयम् एवं सति निःशङ्को भोगो भवति तथा च सति तदभिनिवेशात् भ्रंशः संभवतिः परं ते भ्रंशयितुं न शक्ताः तत्र हेतुः भगवत्परमिति कथाश्रवणादिना भगवत्परत्वं भगवत्परत्वे च विषयासक्त्यभावः अनासक्तौ न भ्रंशः मननब्रह्मसुतत्वादिकं वा योगमायानिष्णातत्वे हेतुः ॥ ३४ ॥

विषयासक्त्यैव कालो व्यर्थो भवति नान्यथा प्रकृते तदभावात् तस्य यामाः कालविशेषाः अयातयामाः अगतसाराः एवाभवन् सम्पूर्ण एव कालस्ताहशो ज्ञात इत्याह। स्वान्तरयापना इति। स्वमन्वन्तरस्य यापनाः यापयन्ति समापयन्ति ये कालखण्डाः ते सर्व एव अयातयामा इति एकसप्ततियुगानि हि मन्वन्तरं भोगानां भ्रंशजनकत्वमात्रेण नायातयामत्वं किन्तु हेत्वन्तरमस्तीत्याह। शृण्वत इति। विष्णोः कथाः शृण्वतः कथा एव ध्यायतः योगबलेन भगवद्गुणान् ज्ञात्वा तन्निबन्धनेन कथाः कुर्वतः गोष्ठ्यां च राजसभायां तत्कथामेव कुर्वतः श्रोतॄणामर्थं ब्रुवतश्च जागरणानन्तरं देहशुद्धेः पूर्वं कथानां श्रवणं ततो ध्यानम् आवश्यकसमाप्त्यनन्तरं तत्र च सद्भिः सह तत्कथाकरणं ततोऽनुशिक्षार्थं प्रातःसायं भगवत्कथाकथनमिति एवं प्रत्यहम् ॥ ३५ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

कुशकाशमयमिति। बर्हिःशब्देनोभयोक्तेः भुवं भूरूपं स्थानं लब्ध्वेति तृन् प्रत्ययान्तम् ॥ ३१ ॥

प्रस्तुतमाह। यां समावसत् यस्यां पूर्वमुषितस्तस्यां प्रथमं निर्विश्य स्वीयं भवनम् ॥ ३२ ॥

अन्यस्य धर्मस्याविरोधेन प्रत्यूषेषु प्रत्युषःसुः प्रत्यूष आरभ्येत्यर्थः। कथयैव स्वमाधुर्येणानुषिक्तेन वशीकृतेन हृदा ॥ ३३ ॥

योगादष्टाङ्गयोगाभ्यासादेव मायासु मायाज्ञानेषु निष्णातं पारगं यथासौ विषयान् भोक्तुं जानाति तथा सम्यग्भुक्ता अपि विषयाः स्वेष्वासक्तिमुत्पादयितुं न शक्नुवन्तीत्यर्थः। तदा तस्य यामा अयातयामा अव्यर्थाः। "जीर्णञ्च परिभुक्तञ्च यातयाममिदं द्वयम्"इत्यमरः। कीदृशाः स्वान्तरं स्वीयं मन्वन्तरं यापयन्तीति ते। कुर्वतः स्ववाक्यैर्हृद्यश्राव्यकाव्यरूपेणोपनिबध्नतः ॥ ३४-३५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

यतो यज्ञपुरुषात् भुवं स्थानं लब्ध्वा तृन् प्रत्ययान्तम् लब्धवान् तं यज्ञपुरुषमादिवराहम् कुशकाशमयं बर्हि आस्तीर्य अयजत् ॥ ३१ ॥

अन्याविरोधतः कर्माद्यविरोधतः ॥ ३२ ॥ ३३ ॥

योगः ध्यानयोगस्तेन हेतुभूतेन याः मायाः शब्दस्पर्शादिविभूतयः तासु निष्णातं प्रविष्टमपि भोगाः शब्दादयः भगवत्परं ततो भ्रंशयितुं न शेकुः यदा तदा तस्य विष्णोः कथाः शृण्वतः अवशिष्टं साधनरूपां विष्णुभक्तिं कुर्वतः। ध्यायतः। परां भक्तिं ध्रुवस्मृतिलक्षणां लब्धवतः स्वान्तरयापनाः मन्वन्तरपूरकाः यामाः कालांशाः अयातयामाः। अगतसाराः आसन् ॥ ३४ ॥ ॥ ३५ ॥

---

भाषाटीका

जिस हेतु से कि मनु भगवान् ने पृथिवी मे स्थान प्राप्त होकर कुश काशों का आस्तरण कर के यज्ञ भगवान्का यजन किया है इसी से उसका नाम बर्हिष्मती है ॥ ३१ ॥

मनु महाराज बर्हिष्मती नामकी जो पुरी तिसमे पहिले निवास करते थे अब उसी पुरी में गृह मे प्रवेश हो कर रहे जो कि गृह दैहिक दैविक भौतिक तीनों तापों का नाश करने वाला है ॥ ३२ ॥

स एवं स्वान्तरं निन्ये युगानामेकसप्ततिम्।
वासुदेवप्रसङ्गेन परिभूतगतित्रयः ॥ ३६ ॥
शारीरा मानसा दिव्या वैयासे! ये च मानुषाः।
भौतिकाश्च कथं क्लेशा बाधन्ते हरिसंश्रयम् ॥ ३७ ॥
यः पृष्टो मुनिभिः प्राह धर्मान्नानाविधाञ्छुभान्।
नृणां वर्णाश्रमाणाञ्च सर्वभूतहितः सदा ॥ ३८ ॥
एतत्त आदिराजस्य मनोश्चरितमद्भुतम्।
वर्णितं वर्णनीयस्य तदपत्योदयं शृणु ॥ ३९ ॥
इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे पारमहंस्यां
संहितायां वैयासिक्यां देवहूतिप्रदान
द्वाविंशतितमोऽध्यायः ॥ २२ ॥

भाषाटीका।

वहां पर स्त्रियों के सहित किन्नर गण उनकी कीर्ति को गान करते थे तब प्रातः काल के समय मे श्रीहरि की कथा को श्रवण करते हुये पुत्रों के सहित भार्या के सहित धर्मादिकों काभी पालन करते हुये कामों को भोगते थे ॥ ३३ ॥

जिस हेतु से कि योग माया मे कुशल मुनि व्रत धारि भगवद्भक्त मनुजी को उन भोगों ने चलायमान नहीं किया तब उनके अनन्तर विताने वाले काल के जो पहर हैं सो सब सदा सफलहो रहे हैं क्योंकि वे मनुजी निरन्तर भगवान् का ध्यान करते थे कथा को कहते थे कथा को सुनते थे ॥ ३४ ॥ ३५ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

परिभूतं गतित्रयं जाग्रदादिसात्त्विकादि वा येन ॥ ३६ ॥

दिव्यास्त्वान्तरिक्षाः मानुषाः शत्रुप्रभवाः भौतिकाः शीतोष्णादिप्रभवाः वैयासे! हे विदुर! ॥ ३७ ॥

तस्य ज्ञानातिशयमाह। य इति। नृणां साधारणधर्मान् ॥ ३८ ॥

तस्य यदपत्यं देवहूतिस्तस्योदयं प्रभावम् ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या
दीपिकाटिप्पणी।

एवं श्रवणादिप्रकारेण ॥ ३६ ॥

शारीरा मानसाश्चाध्यात्मिकाः आन्तरिक्षादचाधिदैविका एव ग्रहयक्षभूतादिजदुःखस्याकस्मिकत्वात् शत्रुप्रभवादचाधिभौतिका एव एवं शीतोष्णादिप्रभवाश्च भीष्मो हि देवः सहसः सहीयानित्युक्तेराधिदैविका एवेति त्रैविध्यमेवक्लेशानां व्याख्येयम् ३७

य इति। यच्छब्दस्योत्तरवाक्यस्थत्वात्तच्छब्दापेक्षा नास्ति तस्य स्वस्मृतौ धर्मवर्णनं तु शुद्धभक्त्यनधिकारिणो भक्तौ प्रवेशयितुमेव तत्र हेतुः सर्वभूतहित इति ॥ ३८ ॥

गार्हस्थ्येऽपि मुक्तत्वादद्भुतम् ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीराधारमणदासगोस्वामिविरचितायां दीपिन्याख्यदीपिकाटिप्पण्यां
द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

स मनुरेवं भगवत्कथाश्रवणकीर्तनध्यानतदाराधनादिभिर्युगानामेकसप्ततिपरिमाणं स्वान्तरं कालं वासुदेवे प्रकृष्टासङ्गेन परिभूतं गतित्रयम्। "ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः। जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसा" इत्युक्तगतित्रयं येन सः निन्ये यापयामास यद्वा गतयोऽवगतयः क्लेशावगतयस्तासां त्रयं निरस्ताध्यात्मिकादितापत्रय इत्यर्थः ॥ ३६ ॥

एतदेव विशदयति। शारीरा इति। हे वैयासे! विदुर! शारीरा व्याधिरूपा मानसा आधयः एते आध्यात्मिकाः क्लेशा दिव्या अन्तरिक्षा अशनिशीतोष्णवातवर्षादिप्रभवा एते आधिदैविकाः क्लेशाः भौतिकाः शत्रुव्याघ्रचोरसर्पादिभूतप्रभवाः एते आधिभौतिकाः एते सर्वे मानुषा मनुष्यैरनुभाव्याः क्लेशाः हरिःसंश्रयः आश्रयो यस्य तं कथं बाधेरन् आश्रितः क्लेशहरभगवदाश्रयं मनुं न कथंचिदपि बाधेरन्नित्यर्थः ॥ ३७ ॥

हरिसंश्रयमित्यनेन सूचितं तस्य ज्ञानातिशयमाह। य इति। सर्वभूतहितः यो मनुः मुनिभिः पृष्टः नृणां तत्रापि वर्णाश्रमाणां चात एव नाना विधान् शुभान् स्वर्गापवर्गसाधनभूतान् धर्मान्प्राह ॥ ३८ ॥

एवं वर्णितं मनुचरित्रं निगमयंस्तदपत्यचरित्रमवतारयति। एतदिति। वर्णनीयस्य कथनीयकीर्तेरादिराजस्य मनोरद्भुतं विस्मयनीयमेतच्चरित्रं ते तुभ्यं वर्णितं मयेति शेषः अथ तस्य मनोः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अपत्यं देवहूतिस्तस्या उदयं प्रभवमुत्कर्षं वा शृणु मत्त इति शेषः ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्वकालावधिः कियानित्यत्राह । स एवमिति । स्वान्तरं स्वकालावधिं परिभूतं निरस्तं गतीनां तिर्यग्यातनातमसां त्रयं येन स तथा ॥ ३६ ॥

शारीरादिक्लेशोपद्रुतत्वेन यामानामगतसारत्वं कथमत्राह । शारीरा इति । पर्यासे मानुषत्वेनावस्थानेऽपि मानुषा मनुष्येभ्यो जाताः भौतिका भूतप्रेतादिभ्यो जाताः ३७ ॥

धर्मशास्त्रप्रणेतृत्वाल्लोकहितकरस्य न कोऽप्युपद्रव इत्याशयेनाह । यः पृष्ट इति ॥ ३८ ॥

मनुचरितमुपसंहृत्य वक्तव्यांशं प्रति जानीते । एतत्त इति । तस्य मनोरपत्यस्य देवहूत्या उदयं समृद्धिं श्रृणिवति ॥ ३९ ॥

इतिश्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

शारीरा मानसाश्चाध्यात्मिकाः । दिव्या आधिदैविकाः । मानुषा भूतान्तरजाश्चाधिभौतिकाः । तत्तदवान्तरभेदविवक्षया तु द्वयोर्भेदः ॥ ३७ ॥

अतो यच्च स्मृतिमकरोत् तदध्यधिकारानुसारेण क्रमशो भगवद्भक्तौ तान् प्रवेशयितुमिच्छयैवेति ज्ञेयमित्याह । य इति । ननु तादृशश्चेद्भक्तानेवाशु गृह्णातु किं तद्विमुखैरित्याशङ्क्याह । सर्वभूतहितः सदेति ॥ ३८ ॥

तस्यापत्यानां देवहूत्यादीनामुदयम् ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततः किं जातमित्यत आह । स एवेति । मनुरेव तत्र प्रथममन्वन्तरे राजा जातः स्वाधिकारकाले अन्यस्तथा धर्मं न पालयिष्यतीति स एव स्वान्तरम् एवं प्रकारेण नित्ये नीतवान् प्रियव्रतस्य महाराजस्य कथा कल्पान्तरीया उत्तानपदस्तु मन्वन्तरान्तरे प्रियव्रतपुत्राणामेव मन्वन्तराधिपतित्वात् कल्पान्तरे वा मनोर्बहुकल्पजीवित्वमनेन ज्ञापितं कालो न बाधक इति च भगवद्दत्ताधिकारे हि कालो नायुर्गणनायां प्रविशति अतोऽधिकाराभावसमय एव शतायुष्ट्वं पितृदेवमनुष्येषु वा नास्य प्रवेशः । मन्वन्तरस्य परिमाणमाह । युगानामिति । सहस्रकल्पेषु चतुर्दशधा विभागेन वशतं चतुर्नवतिश्चयुगानां भवति षड्युगानि च समसंख्यया नायान्तीति न गणितानि अस्य सृष्ट्यन्तरत्वात् भगवद्गुणानामुपभोगार्थं षड्गुणानि च ततः किं जातमित्याकाङ्क्षायामाह । वासुदेवप्रसङ्गेनेति । वासुदेव एव मानसो वाचिकः कायिकश्च यः सङ्गः ध्यानकीर्त्तनपरिचर्यादिरूपः तेनैव परिभूतं तिरस्कृतं गतित्रयं येन ऊर्ध्वाधोमध्ये गतयो गुणत्रयसाध्याः ते त्रयोऽपि गताः अतो भगवत्येव गतिरवशिष्यते न हि मोक्षदातुरेवं सङ्गे धर्मार्थकामरूपा गतिर्भवति ॥ ३६ ॥

ननु निरन्तरं कथं भगवत्कथादिसिध्येत् क्लेशादीनां बाधकत्वादित्याशङ्क्याह । शारीरा इति । शारीराः व्याधिरूपाः मानसा आधिरूपाः दिव्या अशनिवृष्ट्यादिजनिताः विश्वासार्थं वैयास इति सम्बोधनं व्यासो हि तस्य चरित्रं बहुधा आह । मानुषा आज्ञातिक्रमादयः यद्यपि शारीरमानसमध्ये सर्वस्याप्यनुप्रवेशः तथापि परदृष्ट्या धनाद्यभावे आज्ञाद्यकरणे प्रजानां भूताद्युपद्रवे च राजा क्लिष्ट इति लोका मन्यन्ते राजत्वाच्च तन्निराकरणार्थं यत्नकरणाच्च अतः क्लेशाः दुःखानि अहङ्कारा ज्ञानादीनि च कथं बाधन्ते तत्र हेतुः । हरिसंश्रयमिति।उक्तोऽपि हेतुर्बहुधोच्यते प्रासङ्गित्वाभावाय ॥ ३७ ॥

तस्य भगवदाश्रयत्वं निःसंदिग्धं फलतः साधयति । यः पृष्ट इति । भगवद्भक्ता एव गुह्यं धर्मं विदुः अतो मुनिभिरयं भक्त इति ज्ञात्वा धर्मान् पृष्टः अतः मुनिभ्यो धर्मानाह । एकविधधर्मकथने स्वभावगुणाभिन्नानां सर्वेषां संग्रहो भवतीति ततो नानाविधानाह। सर्वं एव च कल्याणकराः विशेषधर्मा नप्युक्तवानिति विशेषान् गणयति । नृणां मनुष्याणां वर्णानामाश्रमाणां च एतत्कथनं न लाभपूजाख्यात्यर्थं किन्तु सर्वभूतहितः सन्नाह । राज्ञा हि सर्वभूतहितं कर्त्तव्यमित्येवाभिसन्धाय तथाह सर्वदा चायं तथा ॥ ३८ ॥

एवं मनुचरित्रमुक्तोपसंहरति । एतत्त इति । आदिराजस्येति राज्ञामग्रे महत्वं मनोरिति व्राह्मणानामद्भुतमिति विषयभोगो भक्तिः वैराग्यं च त्रितयमेकस्थितमिति तेन मनोरेव चरित्रं पृष्टमिति वर्णितमिति तस्यैवोपसंहारः न केवलं प्रश्नानुरोधेन वर्णितं किन्तु वर्णनीयस्येति तस्य हि चरित्रं वर्णनीयमेव भगवच्चरित्राश्रयात् अग्रे प्रश्नान्तरव्यावृत्त्यर्थमाह । तदपत्योदयं शृणिवति तस्यापत्यानि पञ्च तत्र प्रकृता देवहूतिः तस्या उदयः कन्यादीनामुत्पत्तिविवाहौ तस्याश्च भाविनी मुक्तिः सर्वमुदयत्वेनोच्यते तत्रादरार्थं शृणिवति विधिः ॥ ३९ ॥

इतिश्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्वल्लभाचार्यकृतसुबोधिन्यां
द्वाविंशाध्यायविवरणम् ॥ २२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

गतित्रयं जाग्रदादि सत्त्वादि वा तापत्रयं वा ॥ ३६ ॥

तत्र भक्तिरेव कारणमित्याह।शारीरा इति दिव्या आन्तरीक्षाः मानुषाः शत्रुप्रभवाः भौतिकाः शीतोष्णादिप्रभवाः वैयासे हे विदुर! ॥ ३७--३८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

उदयं प्रभावम् ॥ ३६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्
द्वाविंशोऽयं तृतीयस्य सङ्गतः सङ्गतः सताम्

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

परिभूतं गतित्रयं सत्त्वादिगुणगतियंत्र येन स सत्त्वादय उक्ताः श्रीमुखेन गुणगतयः"ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः । जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसा"इति ॥ ३६ ॥ हे वैयासे ! विदुर ॥ ३७ ॥ ३८ ॥ ३९ ॥

इतिश्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
द्वाविंशाध्यायार्थप्रकाशः ॥ २२ ॥

---

भाषाटीका ।

इस प्रकार से मनु महाराज ने भगवान् के ही प्रसंग से तीनों तापों को जीतकर इकहत्तर युगका अपना मन्वन्तर को भोग किया ॥ ३६ ॥

हे व्यासपुत्र विदुरजी ! शरीरके मनके तथा दिव्यताप उन को नहीं लगे हरिके आश्रय करने वाले को भौतिक क्लेश कैसे बाधा करेंगे ॥ ३७ ॥

जिनने मुनियों के पूछने से नानाप्रकारके धर्म मनुष्यों के वर्णाश्रमके उपदेश किये सदा काल सब के हितमें रहतेहैं ॥ ३८ ॥

इस प्रकार से तुमारे आगे हमने आदिराज मनुजी का अद्भुत चरित जो वर्णन के योग्य हैं तिनका वर्णन किया अब उन के सन्तानों का प्रभाव सुनो ॥ ३९ ॥

इति श्रीभागवततृतीयस्कन्ध बाईसमांध्याय
का भाषानुवाद लक्ष्मणाचार्य कृत
समाप्त ॥ २२ ॥

---

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे द्वाविंशोऽध्यायः समाप्तः ॥ २२ ॥

## त्रयोविंशोऽध्यायः।

——:०:——

॥ मैत्रेय उवाच ॥

पितृभ्यां प्रस्थिते साध्वी पतिमिङ्गितकोविदा।
नित्यं पर्यचरत्प्रीत्या भवानीव भवं प्रभुम् ॥ १ ॥
विश्रम्भेणात्मशौचेन गौरवेण दमेन च।
शुश्रूषया सौहृदेन वाचा मधुरया च भोः !॥ २ ॥
विसृज्य कामं दम्भं च द्वेषं लोभमघं मदम्।
अप्रमत्तोद्यता नित्यं तेजीयांसमतोषयत् ॥ ३ ॥
स वै देवर्षिवर्यस्तां मानवीं समनुव्रताम्।
दैवाद्गरीयसः पत्युराशासानां महाशिषः ॥ ४ ॥
कालेन भूयसा क्षामां कर्शितां व्रतचर्यया।
प्रेमगद्गदया वाचा पीडितः कृपयाऽब्रवीत् ॥ ५ ॥

॥ कर्दम उवाच ॥

तुष्टोऽहमद्य तव मानवि!मानदायाः शुश्रूषया परमया परया च भक्त्या ॥
यो देहिनामयमतीव सुहृत्स्वदेहो नावेक्षितः समुचितः क्षपितुं मदर्थे ॥ ६ ॥
ये मे स्वधर्मनिरतस्य तपःसमाधिविद्यात्मयोगविजिता भगवत्प्रसादाः ॥
तानेव ते मदनुसेवनयावरुद्धान् दृष्टिं प्रपश्य वितराम्यभयानशोकान्। ७।
अन्ये पुनर्भगवतो भ्रुव उद्विजृम्भविभ्रंशितार्थरचनाः किमुरुक्रमस्य।
सिद्धासि भुंक्ष्व विभवान्निजधर्मदोहान् दिव्यान्नरैर्दुरधिगान्नृपविक्रियाभिः ॥ ८ ॥
एवं ब्रुवाणमबलाखिलयोगमायाविद्याविचक्षणमवेक्ष्य गताधिरासीत्।
संप्रश्रयप्रणयविह्वलया गिरेषद्व्रीडावलोकविलसद्धसिताननाऽऽह ॥ ९ ॥

॥ देवहूतिरुवाच ॥

राद्धं बत द्विजवृषैतदमोघयोगमायाधिपे त्वयि विभो! तदवैमि भर्त्तः ! ।
यस्तेऽभ्यधायि समयः सकृदङ्गसङ्गो भूयाद्गरीयसि गुणः प्रसवः सतीनाम् ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

त्रयोविंशे ततो योगनिर्मिते सर्वसम्पदि।
विमाने कामगे चित्रा तयोरतिरुदीर्यते ॥ १ ॥

प्रस्थिते गमने कृते सति ॥ १ ॥ २ ॥

दम्भं कपटम् अघं निषिद्धाचरणम् तेजीयांसमातितेजस्विनम् ॥ ३ ॥

दैवाद्गरीयसो दैवादपि गुरुतरात् दैवमप्यन्यथाकर्तुं समर्थादित्यर्थः ॥ ४ ॥

व्रतचर्यया कर्शितां तत्रापि भूयसा कालेनातिक्षामामित्यर्थः। ५।

सुहृत्प्रियः मदर्थं क्षपयितुं नावेक्षितो न गणितः समुचितः श्लाघ्योऽपि मत्सेवासक्तयोपेक्षित इत्यर्थः ॥ ६ ॥

तपश्च समाधिश्च विद्या च उपासना तासु च य आत्मयोगश्चित्तैकाग्र्यं तेन विजिताः प्राप्ता भगवत्प्रसादा दिव्यभोगास्तानेव तेऽवरु-

### श्रीधरस्वामिकृतभावार्थदीपिका।

द्यांस्त्वयापि वशीकृतान्प्रपश्य ते दिव्यां दृष्टिं वितरामि यया-दृष्ट्या द्रक्ष्यसि ॥ ७ ॥

अन्ये पुनर्भोगाः किं न किमपि अतितुच्छा इत्यर्थः तत्र हेतुः भगवत उरुक्रमस्य या भ्रूस्तस्या उद्विजृम्भो वक्रीभावस्तेन विभ्रंशिता अर्थरचना मनोरथा येषु निजधर्मेण पातिव्रत्येन दुह्यन्त इति तथा तान् दुरधिगान् दुष्प्रापान् नृपा वयमिति या विक्रीयास्तत्तद्भोगविक्रतयस्तामिः ॥ ८ ॥

अखिला योगमायाश्च विद्याश्च तत्तदुपासनास्तासु विचक्षणं निपुणमेवं ब्रुवाणं पतिमवेक्ष्य गताधिर्निश्चिन्ता जाता संप्रश्रयो विनयः प्रणयः प्रेम ताभ्यां विह्वला गद्गदा तया गिरा ईषद्व्रीडासहितो यो ऽवलोकस्तेन विलसद्विकसितं हसितं जातहासं चाननं यस्याः सा आह जगाद ॥ ९ ॥

वतेति हर्षे द्विजवृष! द्विजश्रेष्ठ! हे भर्तः! त्वय्येतत्सर्वं राद्धं सिद्धमेव तदहमवैमि जानामि किंतु यत्ते त्वया समयोऽभिहितः स तावद्भूयात् सकृदिति गर्भसम्भवमात्रपर्यन्त इत्यर्थः यस्माद्गरीयसि श्रेष्ठे भर्तरि हेतुभूते स्त्रीणां प्रसवो गुणो महान् लाभः समासपाठे गरीयसि पत्यौ सति सतीनां यतो गुणप्रसवो गुणविस्तारो भवति अतः पुत्रोत्पत्त्या मम गुणविस्तारे जाते पश्चात्त्वदुक्तं सर्वं भवत्विति भावः ॥ १० ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी।

सर्वाः सम्पदो यस्मिन् तयोर्देवहूतिकर्दमयोः प्रीत्या शृङ्गाररत्या १

विश्रम्भेणेति युग्मकम्। श्रीकर्दमवाक्यविश्वासेन आत्मशौचेन शुचितया पावित्र्येण गौरवेण तन्निष्ठगुरुत्वबुद्ध्या दमेन वहिरिन्द्रियनियमनेन शुश्रूषया पादसेवया सौहृदेन हिताचरणेन २-३

सवै इति युग्मकम्। दैवमदृष्टमपि तत्रापि व्रतकर्शितत्वेऽपि समानार्थकपदद्वयेन तदतिशयस्य व्यङ्ग्यत्वादित्यर्थोक्तिः ॥ ४ ॥ ५ ॥

भक्त्या मद्विषयकैकान्तभावेन तस्याःपरत्वे हेतुः। यो देहिनामिति। न नावेक्षित इति योजनीयम् यत्तदोर्नित्यसम्बन्धात् समाहृत्य व्याख्यानादित्यर्थोक्तिः ॥ ६ ॥

स्वधर्मो भगवदर्पितः तपः वर्षातपादिसहनात्मकं ततः समाधिश्चित्तवृत्तिनिरोधः तदनन्तरमपि विद्या उपासना तदर्चनकीर्त्तनादिरूपा तथा व्याख्यातं यं सर्वे देवा नमन्तीत्यत्र सर्वैर्भोग्यकृद्भिः मुक्ता अपि लीलयाविग्रहं कृत्वा भजन्त इति तज्जनितभोगानां भगवत्प्रसादत्वनिर्देशात् धर्मादीनां तदर्थविनियोक्तृत्वं व्यज्यते ॥ ७ ॥

अत्र काका क्षिप्तत्वादित्यर्थोक्तिः तत्रातितुच्छत्वे तत्तद्भोगानां विकृतयः कार्यरूपाहङ्काराः ॥ ८ ॥

योगमाया अष्टाङ्गयोगप्रभावाः तत्तदुपासनाः तत्तत्सिद्ध्युपयोगिन्यस्तद्वारणाः व्रीडायाः सङ्कोचकत्वादीपदिति अवलोकनविशेषणम् हसितं स्मितं तादृशावलोकनेन विलासितत्वात् ॥ ९ ॥

एतत्सर्वं तत्तद्दिव्यभोगप्रदर्शनादिव्यदृष्टिप्रदानादिसिद्धमेव वर्त्तत एव नात्रासम्भावना तत्सर्वसिद्धत्वं समयो भाषाबन्धः प्रसवोऽपत्योत्पत्तिः अतस्त्वद्विधपतिसङ्गस्य गुणविस्तारकत्वात्तदुक्तम्। परमहंसधर्मानुष्ठानादि ॥ १० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तदपत्योदयं शुश्रूषिवति प्रतिज्ञातमेव वर्णयितुमारभते मैत्रेयः पितृभ्यामिति। मनुशतरूपाभ्यां प्रस्थिते गमने कृते सति साध्वीङ्गितकोविदा पत्युरभिप्रायज्ञा देवहूतिः प्रभुं भवं रुद्रं भवानीव पतिं कर्दमं प्रीत्या पर्यचरदाराधितवती ॥ १ ॥

एतदेव प्रपञ्चयति द्वाभ्याम्। विश्रम्भेणेति। विश्रम्भेण विश्वसितेनात्मशौचेनात्मनोऽन्तःकरणस्य शौचेन शमेनेत्यर्थः गौरवेण सर्वातिशयबुद्ध्या दमेन बाह्येन्द्रियनिग्रहेण शुश्रूषया हिताहितयोः श्रोतुमिच्छया च सौहार्देन मधुरया वाचा च पतिमतोषयदित्युत्तरेणान्वयः ॥ २ ॥

कामादीन् विसृज्य तत्र दम्भः कापट्यमघं निषिद्धाचरणं मदो गर्वः अप्रमत्ता अनवधानरहिता उद्यता तन्निदेशाचरणोद्युक्ता तेजीयांसमतिशयिततेजःसम्पन्नं पतिं कर्दममतोषयत् ॥ ३ ॥

स वै देवर्षिवर्यः कर्दमः तामनुवर्त्तमानां मानवीं मनोः पुत्रीं देवहूतिं प्रेम्णा गद्गदस्वरया वाचा गिरा पीडितः अविनिसृतवाक् कृपयाऽब्रवीत् कथम्भूतां मानवीं दैवादपि गरीयसः गरीयस्त्वेनानुसंहितात् यद्वा दैवभावेनानुसंहितात् श्रेष्ठतमात् पत्युर्भर्तुर्महाशिषमपत्यप्राप्तिरूपां महतीमाशिषं पुरुषार्थमाशासानां प्रार्थयन्तीं व्रतचर्यया कर्शितां तत्रापि भूयसा कालेन क्षामामतिकृशाङ्गीमित्यर्थः ॥ ४—५ ॥

उक्तिमेवाह त्रिभिः। हे मानिनि! परमया शुश्रूषया परया भक्त्या च मयि सम्मानमेव कुर्वन्त्यास्ते तुभ्यमद्याधुनाहं तुष्टः प्रीतोऽस्मि देहिनामतीव सुहृत्प्रियतमो यो देहः स्वदेहः समुचितः श्लाघ्योऽपि मदर्थे क्षपितुं कर्शितुं नापेक्षितः उपेक्षितः उचितमपि देहमनादृत्यस मदर्थे क्षपित इत्यर्थः ॥ ६ ॥

स्वधर्मनिरतस्य स्ववर्णाश्रमोचितधर्मेषु निरतस्य मे मया तपः कर्मयोगः समाधिश्चित्तैकाग्र्यं विद्या भगवदुपासना आत्मयोगः प्रकृतिविविक्तात्मयाथात्म्यज्ञानयोगः एतैर्विजिताः लब्धा भगवत्प्रसादाः भगवत्प्रसादहेतुकाः प्रसादादिति पाठान्तरं तदा तपआदिभिर्यो भगवत्प्रसादस्तस्माद्धेतोः निर्जिता येभोग्यभोगोपकरणभोगस्थानादयस्तानेव न विद्यते भयं येषु तान् अत एवाशोकानशोच्यानित्यर्थः मदनुसेवया मत्सेवयावरुद्धान् त्वया विवशीकृतान् प्रपश्य ते तव दिव्यां दृष्टिं वितरामि ददामि ॥ ७ ॥

ननु सर्वोप भोग्यादीननादृत्य तपआदिभिरार्जितान्विलक्षणान् भोग्यान् वितरामीति किमुच्यते इत्याशङ्कायामभयानशोकानितिसूचितमितरभोग्यादीनां तुच्छत्वं वदन्स्वसंपादितानामेव सर्वोत्तमत्वमाह। अन्यदिति। उरुविक्रमस्य भगवतः या भ्रूस्तस्या उद्विजृम्भः विक्षेपः तेन विभ्रंशिताः अर्थरचनाः प्रयोजनाभिलाषा येषु ते अन्ये पुनः किं तैः अति तुच्छास्त इत्यर्थः अतो यतस्त्वं सिद्धासि पातिपारार्थ्यादिभिः धर्मे मदनुग्रहविषयातीततत्त्वैर्दुरधिगमान् दुष्प्रापान् निजधर्मैः पतिपारार्थ्यादिभिर्दुह्यन्ते प्रपूर्यन्ते स्त्राव्यन्ते इति यावत् तान् विभवान् भोगविस्तारान् नृपविक्रियाभिः नृपाणां सार्वभौमाणामपि विक्रिया भोगाभिलाषो यासु ताभिर्भोग्यादिर्भिः पङ्क्तिरिति शेषः भुङ्क्ष्वानुभव ॥ ८ ॥

भर्त्रैवमुक्ता देवहूतिस्तमुवाचेत्याह। मैत्रेयः एवमित्येकेन। एवमिति ब्रुवाणं भाषमाणमखिला या योगमाया विचित्रसर्गकारिण्यः

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

सम्बन्धिसामर्थ्यापरपर्यायाः शक्तयः तासां विदा स्वकार्यजननप्रवर्तनानुगुणज्ञानं तस्मिन्विचक्षणां निपुणांपतिमवेक्ष्य अबला देवहूतिर्गताधिर्गतमनोव्यथा आसीद् ततः संप्रश्रयः विनयः प्रणयः प्रेमा ताभ्यां विह्वला गद्गदा तया गिरा वाचा ईषद्व्रीडासहितो योऽवलोकस्तेन विलसद्धसितं यस्मिन् तदाननं मुखं यस्याः सती आह ॥ ९ ॥

उक्तिमेवाह द्वाभ्याम् राद्धमिति । हे द्विजवर अमोघाः सप्रयोजना या योगमायाः पूर्वोक्तास्तासामधिपे विभौ त्वय्येतत्सर्वमुक्तं सर्वं राद्धं सिद्धमेवेत्यवैमि जानामि वर्तते हर्षे हे भर्तः ते त्वया यः सकृद् अपत्यजननपर्यन्तमङ्गसंगो यस्मिन् समयः कालोऽभिहितः भूयात् यस्माद्गरीयसि श्रेष्ठे भर्तरि हेतुभूते सतीनां स्त्रीणां प्रसवः अपत्यं गुणः महान् लाभः गुणप्रसव इति समस्तपाठे गरीयसि पत्यौ सतीनां यतो गुणप्रसवः गुणविस्तारो भवति अतः पुत्रोत्पत्त्या गुणविस्तारे जाते सति हर्षं प्रपद्य वितरामीति यदुक्तं तत्सर्वं भवेत् ॥ १० ॥

---

श्रीमद्विजयध्वजतीर्थकृतरत्नावली ।

पितृभ्यां मातापितृभ्यां "मातापितरौ पितरौ" इत्यभिधानम् इङ्गितकोविदा चित्तस्थविज्ञाननिपुणा भवानी पार्वती ॥ १ ॥

विस्रम्भेण पत्युरेवाभीष्टसिद्धिः निश्चयलक्षणेन विश्वासेन आत्मशौचं मनःशुद्धिः शुश्रूषया हितश्रवणेच्छया सौहृदमनिमित्तस्नेहः ॥ २ ॥

कामो विषयेच्छा दम्भ आत्मनि अविद्यमानमाहात्म्यप्रकटनम् अघं पापव्यसनं तेजीयांसमतीन्द्रियकरणशक्तिमन्तम् ॥ ३ ॥

सन्तोषलक्षणमादिमसंभाषणं तदभूदित्याह । सवा इति । पुत्रादिमहाशिष आशासानामिच्छन्तीम् ॥ ४ ॥

क्षामां म्लानामत एव कर्शितां लघ्वीभूतशरीरयष्टिम् ॥ ५ ॥

परमभक्त्यादिकमस्तीति कुतो लक्ष्यत इति तत्राह । य इति । यो देहिनामत्यन्तसुहृद् अयं स्वदेहः समुचितं स्नानालङ्कारभोजनादिलक्षणं प्रति नापेक्षितः किमिति तत्राह । क्षपितुमिति । यदर्थे यस्य मम प्रीत्यर्थं क्षपितुं कृशीकर्तुं मम कृशदेहदर्शनेनैव अयं तुष्टः स्यादिति यदतोऽहं तव तुष्ट इत्यन्वयः ॥ ६ ॥

किमनया गुडजिह्विकया मधुरया वाचया पुरुषार्थानुपयोगिन्येत्याशङ्क्य तुष्टिफलं प्रत्यक्षयति । ये मे इति । स्वधर्मनिरतस्य मे मम तपश्चादिसाधनैर्धिजितोपार्जिता तस्य हरेरनुभावनया उत्पन्ननिरन्तरोपासनया भगवत्प्रसादादवरुद्धा वशीकृता या तां मे मम विद्यमानां दृष्टिं प्रपद्य सन्निकृष्टफलत्वात्तुभ्यं वितरामि तया किं तत्राह । अभयामिति । अभयप्रदामशोकां दुःखविनाशिनीं मदनुभावनयेति पाठे मम नित्यशुश्रूषालक्षणयोपासनया त्वयावरुद्धा उपदेशयोग्यता कारितेत्यर्थः आत्मोगश्चित्तनिरोधलक्षणः ॥ ७ ॥

मोक्षव्यतिरिक्तपुरुषार्थानां क्षणभङ्गुरत्वेन तत्साधनमायासेन न पृथगनुष्ठेयमेतदविनाभूतत्वाच्चेत्यभिप्रेत्याह । अन्य इति । स्वर्गाद्यवाप्तिसाधनोपदेशं विहाय चतुर्थपुरुषार्थप्राप्त्युपायोपदेशः कस्मादित्यतोवाह । अन्ये पुनरिति । उरुक्रमस्य भगवतो भ्रुव उद्विजृम्भतो विनाशकलक्षणस्फुरणेन विभ्रंशिता विनाशिता अर्थरचना विषयभोगचमत्कारा येषां ते तथोक्ता इति यस्मात्तस्मात्तदुपदेशेन किं न किमपीत्यर्थः स्वर्गादीनां भगवद्विजृम्भानुगृहीतावस्थानत्वाचदनुग्रहेण तत्प्राप्तिः किंवाच्येति स्वनियमितं कपठोक्ती करोति सिद्धासीति न केवलं चतुर्थपुरुषार्थेन त्वं सिद्धासि किंत्वपेक्षिताशेषपुरुषार्थैनापि तत्कथमत्राह । भुङ्क्ष्वेति । निजधर्मस्य दोहो येषां ते तथा तान् अश्वमेधादिविशिष्टक्रियाभिः साधनैरपि नरेर्दुरधिगान् अधिगन्तुमशक्यान् अनेन भगवदनुग्रह एवालमेतदवाप्तये न कर्मादिकमित्युक्तं भवति ॥ ८ ॥

एवमुपदिष्टाया देवहूत्या मनसि किमभूदिति तत्राह । एवमिति । अखिलासु योगमायाविद्यासु अणिमाद्यष्टाङ्गयोगसामर्थ्यसिद्धिकरीषु विचक्षणं निपुणं भर्तुः प्रसन्नतामवेत्यावेक्ष्य सदा शुश्रूषानिरतत्वेन तदवसरोऽपि नास्तीति गताधिः निरस्तमनःपीडा एतत्कथमवगतमत्राह । संप्रश्रयेति । प्रश्रयेण विनयगुणेन सह वर्तत इति संप्रश्रयः स चासौ प्रणयः स्नेहप्रसरः तेन विह्वला स्खलन्ती तया व्रीडयावलोकेन विलसच्चक्षुङ्गारविशेषं कुर्वद्धसितं मंदस्मितं यस्य तत्तथा व्रीडावलोकविलसद्धसितमाननं यस्याः सा तथा ॥ ९ ॥

स्वयं प्रसन्नेन्द्रियत्वात् श्रोतुश्च प्रसादजनकवाक्यमाहेत्याह । राद्धमिति । हे द्विजवृष ! ब्राह्मणश्रेष्ठ ! यद्ब्रवीष्येतत्तव राद्धं सिद्धं हे भर्तः ! अमोघयोगमायाया अधिपे त्वयि यद्योगसामर्थ्यं तदहमवैमीति अथ किं तवापेक्षितमत्राह । यस्त इति । ते तव सकृदङ्गसङ्गः शरीरस्पर्शलक्षणो ग्राम्यधर्मः समयोऽभ्यधायि स भूयादिति प्रार्थये इति शेषः सकृदङ्गसङ्गेन किं फलं स्यादिति तत्राह । वरीयसीति । सतीनां पतिव्रतानां स्त्रीणां वरीयसि गुणोत्तमे पत्यौ सकृदङ्गसङ्गो गुणप्रसवः गुणाढ्यं पुत्रं प्रसूते इति सफल एवेत्यर्थः ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विस्रम्भेणेति युग्मकम् ॥ १ ॥ २ ॥ ३ ॥

स वै इति युग्मकम् । महाशिषस्तादृशसंततिपर्यवसानाः ॥ ४ ॥

क्षामां क्षीणशक्तिं कर्शितां तनुकृतदेहां कर्दम उवाचेति कचित् ॥ ५ ॥ ६ ॥

ये म इति । पूर्वं स्वधर्मः तत्प्रधानपूजा ततस्तपः ततः समाधिरेकाग्रता ततो विद्यानुभवः ततः आत्मना भगवता शुक्लेन योगः संयोगः तैर्विजिता इति स्वधर्मादीनामपि तत्परत्वेन कृतिर्गम्यते ॥ ७ ॥

नृपाणां विक्रियाभिः सामाद्युपायैः ॥ ८ ॥

एवमित्यत्र हसितस्यैव ईषदित्यपि विशेषणम् ॥ ९ ॥

अङ्गसङ्ग इत्यनेन प्राप्तां मदनोद्भवद्योतनजां लज्जां वारयति गरीयसीति ॥ १० ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

कर्दमस्य हि कामोऽत्र स्वीकृतत्वात्तदिच्छया ।
त्रयोविंशे तु चाध्याये वैराग्यावधिरुच्यते ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवद्भोगसृष्टौ हि पूर्वं मात्रा निरूपिताः ।
तद्ग्राहकाणीन्द्रियाणि निरूप्यन्तेऽधुना स्फुटम् ।
भगवत्कृतभोगो हि नाल्पसत्त्वेन भुज्यते ।
अतस्तस्या योग्यतायै पतिसेवा निरूप्यते ।
ततः प्रसादे विज्ञप्तिर्भोग्यसाधननिर्मितिः ।
अन्तः स्थितहरेर्ज्ञप्त्या तत्त्वानां ज्ञापनं तथा ।
भोगो नानाविधश्चैव सर्वभावेन चैव हि ।
भार्येच्छया कन्यकानां जननं चापि वर्ण्यते ।
वैराग्यमुभयोश्चैव कामस्तेनैव पूर्यते ।

तत्र प्रथमं तस्याः पतिसेवामाह । पितृभ्यामिति । मातापितृभ्यां प्रस्थाने कृते सति दीनापि सती खेदमकृत्वा पतिं पर्यचरत् पतिसंबन्धपर्यन्तमेव पित्रोः संबन्धः यतः साध्वी पतिव्रतायाः स एव धर्मः सैव सेवा या भर्त्रे रोचते रुचिं च महान् न वदतीति तदिङ्गितैर्ज्ञातव्येति तज्ज्ञानं च पातिव्रत्यादेव जातमित्याह । इङ्गितकोविदेति । इङ्गिते कोविदा पण्डिता दीर्घकालादरनैरन्तर्यै सेवा फलदा भवतीति तदाह । नित्यं प्रीत्येति नित्यमिति । दीर्घनैरन्तर्ये प्रीतिरादरः स्नेहश्च सेव्यवश्यत्वे हेतुः निष्कामकामनायामावश्यकत्वे च दृष्टान्तः । भवानीव भवमिति । विवाहात्पूर्वं प्रभुत्वेनैव पार्वत्या सेवितः केवलं मनसा पतिरिति जानाति पूर्वसंस्कारात् तद्वदियमपि संबन्धरहिता काम्यालङ्कारादिकामनारहिता चावश्यकत्वेनैव सेवां कृतवतीत्यर्थः ॥ १ ॥

सेवायां गुणान् दोषाभावांश्चाह द्वयेन गुणानाह । विश्रम्भेणेति । विश्रम्भेण विश्वासेन अनेन मम सर्वपुरुषार्थः सेत्स्यतीति आत्मनो देहस्यान्तःकरणस्य शौचेन शुद्ध्या सन्तः शुद्ध्यैव प्रसीदन्ति विश्वासः सर्वत्राङ्गं पुत्रपित्रादिष्विव न सेवा किंतु देववदित्याह । गौरवेणेति । गौरवमादरविशेषः महत्त्वपूर्वकः यथा गुरौ क्रियते दम इन्द्रियनिग्रहः इन्द्रियचाञ्चल्ये सेवा न फलतीति लोकवेदसिद्धं शुश्रूषा चरणसंवाहनाद्यन्तरङ्गसेवा सौहृदं सुहृदो भावः सर्वैरेव मित्रधर्मैरित्यर्थः गुह्यगूहनगुणप्रकटीकरणादिभिः मधुरा च वाणी पूर्वोक्तसर्वगुणेषु प्राणभूता सत्यस्त्वयि प्रियवादिनीमिति तद्विरोधिनस्त्यागहेतुत्वाच्चकारादन्येऽपि क्षमादयः भो इति केवलं संबोधनं सावधानार्थं ॥ २ ॥

दोषाभावानाह । विसृज्येति । कामादयः षट् दोषाः पापापराधौ चाधिकौ तत्र काम आद्यः कामपूरणार्थमेव कामिनी भजते मानसिति पाठे अहङ्कारः राजपुत्र्यहमिति कामस्थानीयः दम्भो लोभात्मकः धनकार्यादिलोभाभावे दम्भं न कुर्यात् अत्र तु तदीयं सर्वं तस्या एवेति साक्षाल्लोभो न सम्भवतीति राजपुत्र्याः तदग्रे पश्चाच्च नैकरूपता सेवायां संभवतीति दम्भो निर्दिष्टश्चकारादपराधो निवारितः द्वेषो मत्सरात्मकः क्रोधश्च संगृहीतो लोभः स्पष्टः अघमपराधः मदो गर्वः एवमष्टापि निवारिताः अप्रमत्ता चासावुद्यता च नित्योद्यमः प्रमादाभावश्चान्तरङ्गौ एवं कृते यज्जातं तदाह । तेजीयांसमतोषयदिति । अतितेजस्विनं दुर्धर्षमप्यतोषयदित्यर्थः ॥ ३ ॥

तुष्टस्य प्रसादं वक्तुं तस्या दीनत्वमति प्रसादाय तद्दृष्टं निरूपयति । स वा इति द्वाभ्याम् । महत्त्वं हि दैन्यसमानाधिकरणं दयाहेतुर्भवतीति प्रथमं महत्त्वमाह । मानवीमित्यादिविशेषणत्रयेण । तथाज्ञाने हेतुः । देवर्षिवर्य इति । देवा हि हृदयस्थं जानन्ति ऋषयः अलौकिकं ततोऽप्युत्तमो बाह्यमाभ्यन्तरमलौकिकं जानाति तत्र मानवीमिति बाह्योत्कर्षः सम्यगनुव्रतामिति । यथा स्वस्यानुभावादिः अन्तःकरणबाह्यधर्मो वा दैवमदृष्टं कालो वा ततोऽपि गरीयान् पतिः दैवमप्यन्यथा कर्तुं शक्त इत्यर्थः ततः महाशिषः आशासानां दुर्लभामपि कामनां पूरयिष्यतीत्याभ्यन्तरमेतत् ॥ ४ ॥

दैन्ये हेतुद्वयमाह । कालेनेति । महता कालेन विषयरहितेन क्षामां दुर्बलां व्रतचर्यया च कर्शितां यथा पतिर्महातपसि तिष्ठति तथा पतिव्रतेयं स्थितेति क्लिष्टां परमखेदं प्राप्तवतीमेतादृशीं दृष्ट्वा कृपया पीडितः तद्गतप्रेम्णा गद्गदया वाचाऽग्रे वक्ष्यमाणं प्रसादरूपं वाक्यमब्रवीदित्यर्थः ॥ ५ ॥

तान्येव वाक्यान्याह । त्रिभिः तुष्टोऽहमद्येत्यादिभिः
सन्तोषः सर्वदानं च दुर्लभत्वं च तस्य वै ।
अयं भगवता देयं नान्येनेति निरूप्यते ॥

प्रथमं सन्तोषमाह । तुष्टोऽहमिति । सुहृत्प्रियः मदर्थे क्षपितुं नावेक्षितः न गणितः समुचितः श्लाघ्योऽपि मत्सेवया उपेक्षित इत्यर्थः हे मानवि ! महतः पुत्रि अद्य तवाहं तुष्टः न केवलं पितृमातृमाहात्म्यात्तवापि स्वतो माहात्म्यादित्याह । मानदायाः यो हि निरन्तरं मानं सन्माननां प्रयच्छति स हि पात्रे दानात् स्वयमपि मानं प्राप्नोति एवमाधारगतं गुणद्वयं तोषे हेतुः करणद्वयमाह । शुश्रूषया परमया परया च भक्त्येति । परमा लोकोत्तरा शुश्रूषा अन्तरङ्गसेवा इदं बाह्यं करणं परा माहात्म्यज्ञानपूर्विका उत्कृष्टा भक्तिः प्रीतिः अन्तरङ्गं करणं किंच न केवलं करणद्वयेनैव कार्यं सिद्ध्यति आजन्मभजनाभावात् किंत्वाजन्मैतद्द्वयं यत्र व्यापृतं तस्यापि तदर्थं क्षपणमपेक्षितमिति तदाह । यो देहिनामिति । तत्र पूर्वोक्तं करणद्वयं सर्वथा व्यापृतमिति वक्तुमयं देहो देहिनां देहाभिमानिनाम् अतीव सुहृन्मित्रमात्मभूतमित्ररूपं सोऽपि मदर्थं क्षपितुं क्षपयितुं कर्तृद्वयस्याप्येकत्वादन्तर्भावितणिच्प्रयोगः स्वार्थमनुपयुक्तस्य लोकोपकारार्थं क्षपणं दृष्टमिति तद्व्यावृत्त्यर्थमाह । समुचित इति । सम्यगुचितः स्वस्य सर्वपुरुषार्थसाधकः अतो गुणत्रयस्य पूर्णप्रसादहेतोर्जातत्वात् अहं तुष्टः ॥ ६ ॥

तुष्टस्य कृत्यमाह । ये म इति । मे मम ये भगवत्प्रसादाः भगवता मह्यं दत्ताः तानेव ते तुभ्यं वितरामि प्रसन्नो हि सर्वस्वं यच्चोत्कृष्टं तत्प्रयच्छति मम तु सर्वस्वमुत्कृष्टं च सर्व एव भगवत्प्रसादाः तेऽपि प्रसिद्धाः न त्वप्रयोजकाः तत्र हेतुः स्वधर्मे निरतस्येति । स्वधर्मो भगवद्धर्मः तत्र निरतः प्रतिष्ठितः ते चेदन्यथा प्राप्ताः स्युः तदान्यस्मै दीयमाना न कार्यक्षमा भवेयुः अतः तद्व्यावृत्त्यर्थमाह । तपः समाधिविद्यात्मयोगविजिता इति । तपो धर्मरूपः धर्मेण ये केचन प्रसादाः सिद्ध्यन्ति ते तेन विजिताः समाधिः योगोत्कर्षः तेन सिद्धा अणिमादयोऽर्थाः तद्रूपा अपि भगवत्प्रसादास्तेन जिताः विद्याभक्तिरुपासना वानप्रस्थसाध्याः तत्साध्या अपि भगवत्प्रसादाः ज्ञानादिरूपाः तेऽपि विजिताः आत्मयोगो यतिधर्मो मोक्षसाध्यः तेनापि विजितास्तथा तानेव वितरामि एवकारो नान्यव्यवच्छेदकः किंत्वर्थविशेषे अदेयत्वेन सिद्धा इति तेषामुत्कर्षवाचकः ननु भगवत्प्रसादाः स्वतन्त्राः दीयमाना अपि कथं मयि समायास्यन्तीत्याशङ्क्याह । मदनुसेवनयावरुद्धा-

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

निति । मम या अनुसेवा मामेव गृहीतवती कः सन्देहः परिकरगुणेषु अवरुद्धाश्च स्वाधीना भवन्ति अलौकिके विश्वासार्थमाह । दृष्टिं प्रपश्येति । दृष्टिं वितरामि तद्दर्शनार्थमतः प्रपश्येत्यर्थः प्रथमतस्तेषां दानं पश्चात् दृष्टेर्दानमात्मगामित्वात्फलस्य प्रसादानामपि विषयत्वादौत्पत्तिकदोषसहिता एव भविष्यन्तीत्याशङ्क्य दोषद्वयं परिहरति । अभयान् इहामुत्र भयरहितान् अशोकांश्च स्वापगमेन शोकं च न जनयन्तीत्यर्थः ॥ ७ ॥

राजकन्यात्वात् राज्यविषयकानेव भोगान् बहु मन्यते न त्वलौकिकानित्याशङ्क्य पूर्वं भोग्यत्वेनैव ज्ञातान् विषयान्निन्दति । अन्ये पुनरिति । अन्ये राज्यादयः स्वर्गादयो वा किं न किञ्चिदित्यर्थः तत्र हेतुमाह । उरुक्रमस्य भगवतः भ्रुव उद्विजृम्भविभ्रंशितार्थरचनाः भगवत इति सामर्थ्यमुरुक्रमस्येति अद्भुतकर्मत्वम् अन्यथा स्वदत्तं स्वयमेव कथं हन्यात् कथं वापकारी भवेत् आत्मा वा भूत्वा कथमेवं कुर्यादिति अनेन सर्वे दोषाः परिहृताः चिकीर्षितापरिज्ञाने हेतुश्चोक्तः अत एव तस्य भ्रुवः कालस्य या उद्विजृम्भा आलस्येनापि ग्रहणं तेनैव विभ्रंशिता अर्थरचना येषां राज्यादीनां स्वरूपतोऽपि नश्यन्ति यदर्थं क्रियन्ते तदपि न सम्पादयन्ति अर्थार्थं रचनानिर्माणं नन्वहमपि तादृश्येवेति यथायोग्यं फलं भवत्विति चेत्तत्राह । सिद्धासीति । नत्वमसिद्धा पूर्ववत् अतः पूर्वसिद्धविषयभोगे पातित्यं भवति न केवलं पूर्वनिषेधः क्रियते किन्तु विभवान् भुङ्क्ष्व विगतो भवो जन्म येभ्यः विषयत्वेऽपि मोक्षसाधकान् नाप्येते धर्मफलरूपाः अन्यथा कुतो धर्मः क्षीयेत प्रत्युत निजधर्मं पातिव्रत्यादिकं दुहन्तीति निजधर्माणां दोहो येभ्य इति न केवलं फलत एवोत्कृष्टाः स्वरूपतोऽपीत्याह । नरैर्दुरधिगानिति । वयं नृपा इति विक्रियासन्निपातकार्यं तैः करणैर्मनुष्या उपभोक्तारस्तान्विषयान् ग्रहीतुं न शक्नुवन्तीत्यर्थः ॥ ८ ॥

एवं वरे दत्ते सहसा तद्धृदये सर्वं न समागतमिति पूर्वविचारितमिव किञ्चित्प्रार्थयितुमारभत इत्याह । एवं ब्रुवाणमिति । आदौ तस्याः खेदनिवृत्तिमाह । एवं ब्रुवाणमवेक्ष्य गताधिरासीत् केवलं माहात्म्यार्थं न वचनं स्त्रीष्वनृतं न दोषायेति तन्निवृत्त्यर्थमाह । अखिलयोगमायाविद्याविचक्षणमिति । अखिला या योगमाया नानाविधसर्वविषयरूपाः तस्या वशीकरणमन्त्रादिरूपा विद्याः तत्र विचक्षणोऽतिनिपुणः अतस्तादृशं ज्ञात्वा तादृशं च वक्तारं विचक्ष्य विचारेण सत्यं वदतीति ज्ञात्वा गताधिरासीत् प्रार्थयितुमाह । सम्प्रश्रयेति । प्रश्रयो विनयः प्रणयः स्नेहः प्रश्रितेति पाठे प्रकर्षेण यो यमाश्रितः तस्य यः प्रणयः तेन विह्वलाङ्गी विनयोऽपि वर्णोद्गमप्रतिबन्धकः स्नेहोऽपि वाक्यार्थस्मरणेन ईषत् यत् स्मितं कुलवधूत्वात् तेन व्रीडापूर्वको योऽयमवलोकः भावितार्थसूचकः तेन विकसद्धसितानना सती वक्ष्यमाणमाह ॥ ९ ॥

अभिप्रेतं ससाधनमाह द्वाभ्याम् । राद्धमिति । यद्यपि भर्त्रा भगवत्प्रसादा इत्युक्तं तथापीयं भगवत्त्वेनैव तं सेवितवतीति तदुक्तानां धर्माणां तस्मिन् स्वाभाविकत्वमनूद्य तस्मिन् स्वज्ञानं प्रमाणीकरोति हे द्विजवृष ! एतत्त्वदुक्तं त्वयि राद्धं सिद्धमेव घतेतिहर्षं द्विजानां मध्ये ये श्रेष्ठाः ब्रह्मविदस्तेषामेतत्सर्वं सिद्धमिति ज्ञापनार्थं संबोधनं कामपूरणार्थं वा पश्यो हि कामः अमोघा या योगमाया तस्या अधिपे त्वयि सर्वं सिद्धमेव काचित् योगमाया प्रदर्शनार्थेऽपि भवतीति तद्व्यावृत्त्यर्थममोघोक्ता तादृशस्यैव तथा वचनं सत्यं भवतीति तथानुवादः तद्वैमीति प्रमाणं विभो इति सम्बोधनं च तत्साधकं भर्तुरिति सम्बोधनं स्वस्य तथाज्ञाने सामर्थ्यजननाय भर्तुरेव धर्मेण भार्यायाः सामर्थ्यं भवतीति विवाहे पणस्य कृतत्वात्तदतिरिक्तयाचने स्वधर्मः क्षीयेत इति पूर्वोक्तमेव स्मारयति यस्तेऽभ्यधायीति सकृदङ्गसङ्ग इति यस्त्वया पूर्वमुक्तः यावत्तेजो बिभृयादिति स एकान्तः सङ्गः अमोघवीर्यश्च भवान् अतः अर्थात् सकृदेवाङ्गसङ्गोऽभ्यधायि स च समयः समयबन्धः उभयोरनुल्लङ्घनार्थः स भूयादिति प्रार्थना ततः किं स्यादित्याशङ्क्याह । स एव सकृदङ्गसङ्गः सतीनां गुणप्रसवः पतिव्रतास्तु न कामुक्यः पतिव्रतमेव च व्रतं तासामतस्तावदेवापेक्षितं तद्गताश्च गुणा आनन्दादयस्तदैव भर्त्रेऽभिव्यक्ता भवन्ति अग्रे च पुत्रद्वारा प्रकर्षेण सूयन्ते तदैव च तासां जन्मसाफल्यमिति ॥ १० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

देवहूत्यां वरस्तस्या वाञ्छिता दिव्यसम्पदः ।
सृष्टा रतिः कर्दमस्य त्रयोविंशे निरूप्यते ॥ ० ॥

अघमपराधम् ॥ १ ॥ २ ॥ ३ ॥

दैवाद्गरीयसः दैवादपि गुरुतरात् दैवमप्यन्यथा कर्तुं समर्थात् यद्वा विसृज्य काममित्युक्तम् तदपि कियत्समयानन्तरं दैवात् परमेश्वरप्रेरणावशात् महाशिषः कामान् आशासानाम् इच्छन्तीम् ॥ ४ ॥

कृपया पीडितस्तस्याः कार्श्यदर्शनेन सन्तप्तः ॥ ५ ॥

स देहो नावेक्षितः तिष्ठतु नश्यतु वेत्येवं न गणित इत्यर्थः परमपतिव्रतायास्तवैतत् युक्तमेवेति देहं विशिनष्टि । मदर्थे मत्सेवार्थे एव क्षपयितुं क्षीणीकर्तुं समुचितः ॥ ६ ॥

तस्मादेतन्निरुपाधिसेवा ऋणपरिशोधनार्थमन्यत् किञ्चन तुभ्यं दातुं नोपयुज्यते किन्त्वेतदेव परमदुर्लभं वस्त्वित्याह । ये इति । समाधिर्ध्यानपरिपाकः विद्या उपासना तावेवात्मयोगौ ताभ्यां विजिताः प्राप्ताः अवरुद्धान् त्वयापि वशीकृतान् न्यायतो लब्धानेवेत्यर्थः । प्रपश्य ते दिव्यां दृष्टिं वितरामि यया दृष्ट्या तानेवाधुना साक्षाद्द्रक्ष्यसि । यद्वा मत्कृपया दृष्टिं प्रकर्षेण पश्य अलमत्र लज्जयेति भावः । अत्र स्वधर्मतपोमिश्रभगवद्ध्यानादिभिर्ये भगवत्प्रसादास्तेभ्यो भोगमोक्षाववाधि तावेव स्यातामित्यभिप्रायेणाह । अभयानशोकानिति ॥ ७ ॥

अन्ये शच्यादिभिरपि भुज्यमानाः स्वर्गीया अपि भोगा भयशोकव्याप्ता एवेत्याह । अन्ये इति । किं न किमपि तुच्छा इत्यर्थः । निजधर्मेण पातिव्रत्येन दुह्यमानान् नृपोऽहं नृपपत्नी चाहमिति या विक्रियास्ताभिर्दुरधिगमान् दुर्लभानित्यर्थः ॥ ८ ॥

योगमाया योगोत्थविभूतयः विद्या उपासनाश्च तासु च विचक्षणं मद्भर्ता मत्पारलौकिकीर्भोगमोक्षसम्पदो मह्यं ददाति नत्वैहिकीरिति मनसि विमृशन्ती संप्रश्रयो विनयः प्रणयः प्रेमविशेषस्तावेव विह्वलं यथा स्यात्तथा यान्ती कर्दमं प्रति गच्छन्ती या गीस्तया विह्वलयेति सोमपाशब्दवत् ईषद्व्रीडायुक्तोऽ

तत्रेति कृत्यमुपशिक्ष यथोपदेशं येनैष मे कर्शितोऽतिरिरंसयात्मा ।
सिद्ध्येत ते कृतमनोभवधर्षिताया दीनस्तदीश ! भवनं सदृशं विचक्ष्व ॥ ११ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

वलोक एव विलसद्धसितमाननं यस्याः सा आह । पत्यौ प्रकटसम्भोगप्रार्थनाया रसाभासत्वात् तस्या देवहूतेश्चोत्तमाङ्गनामुकुटमणित्वात् राद्धमित्यादि पद्यद्वयस्य मुखेन वक्तुमशक्यत्वात् तद्वाचनार्थं लज्जाहसितप्रक्षितमवलोकमेव मुखश्चकार । तत्र दृश्यमानौ विनयप्रणयावेव गद्गदवाणीचकार तथा यथा राद्धमित्यादि पद्यद्वयं स्पष्टमुच्यमानं बभूव मुखेन तु सा तूष्णीमेव तदा तस्थावित्यर्थः ॥ ६ ॥

देवहूतिरुवाचेति नेत्रेङ्गितेनेति शेषः । हे द्विजवृष ! ब्राह्मणश्रेष्ठ ! एतत् त्वयि राद्धं सिद्धमेव तदहमेवावैमि जानाम्येव किन्तु यस्ते त्वया समयोऽभ्यधायि उक्तः स भूयात् सकृदिति सकृदङ्गसम्भवपर्य्यन्तोऽङ्गसङ्ग इत्यर्थः । यस्माद्गरीयसि श्रेष्ठे पत्यौ हेतुभूते सतीनां स्त्रीणां गुणः खलु प्रसवोऽपत्योत्पत्तिरेव यदभावाद्वन्ध्येयमिति स्त्रीषु निन्दैवेति भावः । निर्विसर्गपाठे गुणानां प्रसव इति समासेऽपत्यमिपेण पत्युर्गुणा एव प्रसूयन्ते ताभिरिति मे त्वत्तः सदपत्यानि भवन्त्विति भावः ॥ १० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तदपत्योदयं शृण्वत्युकं तत्र देवहूत्याः पातिव्रत्यं पतिप्रसादलब्धे विमाने भर्त्रा सह क्रीडां कन्योत्पत्तिं च वर्णयति । पितृभ्यामिति त्रयोविंशेनाध्यायेन । इङ्गितकोविदा चेष्टाभिज्ञा ॥१॥

विस्रम्भेण विश्वासेन तेजीयांसमतितेजोयुक्तम् ॥ २ ॥ ॥ ३ ॥

देवाद्धेतोः सम्यगनुवृत्ताम् गरीयसः गुरुतरात् पत्युः सकाशात् अतिसुखदाङ्गसङ्गं तदुपकरणगर्भसम्भवादिरूपाशिषः आशासानां प्रार्थयन्तीम् भयसा कालेन क्षामां परिम्लानदेहेन्द्रियां व्रतचर्यया कर्शितां कृशाम् ॥ ४ ॥ ५ ॥

यो देहिनामतीव प्रियः समुचितः सुखोचितोऽपि स्वदेहः स मदर्थे चापतुं नावेक्षितः मत्परिचर्यायां तिरस्कृत इत्यर्थः अतस्तव परमया शुश्रूषया परया वासुदेवदृष्ट्या कृतया भक्त्या च अहं तुष्टः ॥ ६ ॥

स्वधर्मे भगवदाराधने निरतस्य मे मत्तः यः स्वाश्रमकर्मानुष्ठानजन्यकायक्लेशः समाधिभंगवत्यात्मार्पणं तद्भक्तिरित्यर्थः विद्या भगवत्स्वरूपगुणादिज्ञानं च अर्थात्कर्मभक्तिज्ञानान्येवात्मयोगाः आत्मनि आराध्ये योगा उपायाः तैर्विजिताः स्वाधीनीकृताः भगवत्प्रसादाः दिव्याः भोगाः तान् ते त्वयापि मदनुसेवनयावरुद्धान् स्वाधीनीकृतान् प्रपद्य तद्दर्शनार्थं ते दृष्टिं वितरामि ददामि॥ ७ ॥

भ्रुवः कालस्योद्विजृम्भेण वेगेन विभ्रंशिता अर्थरचना येषां ते अन्ये भोगाः किं न किमपि अबला देवहूती एवं ब्रुवाणम् अखिलासु योगमायासु योगशक्तिषु तदापादिकासु च विचक्षणमवेक्ष्य गताधिः गतव्यथा आसीत्संप्रश्रयः स्नेहोद्रेकः प्रीतिस्ताभ्यां विह्वलया गद्गदया गिरा ईषद्व्रीडावलोकाभ्यां विलसद्धसितमाननं यस्याः सा ॥ ८ ॥ ६ ॥

हे द्विजवृष ! द्विजश्रेष्ठ ! हेभर्तः ! हे विभो ! विपुलज्ञान यद्वा भर्तरि वासुदेवदृष्ट्यासिप्रायेणेदं संबोधनं तत्र हे विभो ! हे सर्वव्यापक ! अमोघयोगमायाधिपे योगशक्त्यधिपे त्वयि एतत् राद्धं सिद्धम् तदहमवैमि जानामि किन्तु यस्ते त्वया समयः अभ्यधायि अभिहितः तदर्थं सकृदङ्गसङ्गो भूयात् गरीयसि भर्त्तरि सतीनां यः प्रसवः स गुणः ॥ १० ॥

भाषाटीका ।

मैत्रेयजी बोले पतिव्रता देवहूतीजी अपने पिता माता के चले जाने के पीछे पतिके अभिप्राय को जानकर सेवा करती थी जैसे कि पार्वतीजी महादेवजी की सेवा करती थीं ॥ १ ॥

हे विदुरजी ! विश्वास से शरीर के शौच से आदर से संयम से सेवासे सुहृदपना से मधुरवचन से काम दम्भ वैर लोभ पाप मद इन सबों को छोडकर सदा सावधान होकर अतितेजस्वी मुनि को भी देवहूतीने सन्तोष कर लिया ॥ २ ॥ ३ ॥

देवर्षियों में श्रेष्ठ कर्दमजीने देखा कि मनुकी पुत्री सदा अनुवर्तन करती है दैवसे अधिक पतिसे मनोरथको चाहती है बहुत काल कष्ट करनेसे कृशहोगई है तब कृपाकेपरवश होकर प्रेमसे गद्गद वाणीसे देवहूतीके प्रति बोले ॥ ४ ॥ ५ ॥

कर्दमजी बोले हे मनुपुत्री ! अत्यन्त मान देने वाली तू है तेरी परम सेवा भक्तिसे मैं प्रसन्न हुआ हूं क्यों कि अत्यन्त सब प्राणिमात्र को प्रिय जो देह है तिसको हमारे निमित्त खपणा करनेको तुमने कुछ नहीं विचारा है ॥ ६ ॥

हम तप समाधि उपासना इनमें चित्तकी एकाग्रता करने से भगवान् की कृपा होनेसे जो भोग हमारे स्वाधीन हुये और हमारी सेवा करनेसे जो तुमने उनको वशकरलिया-है तब मैं दिव्य दृष्टि देताहूं तिससे उनभोगों को तुम देखो वे सब भोग शोक भयसेरहित हैं ॥ ७ ॥

और भोग भगवान् के कटाक्ष से नष्ट होजाते हैं तुम सिद्ध हो अपने पुण्य से प्राप्त इन भोगों को अन्य राजों को ये भोग प्राप्त नहीं होते हैं ॥ ८ ॥

संपूर्ण योगमाया विद्याके चतुर इस प्रकार बोलते हुये कर्दमजी को देखकर देवहूतीजी निश्चिन्त होगई विनय प्रेमके सहित विह्वल वाणीसे थोडीसी लज्जित दृष्टि विलासयुक्त मुख वाली होकर बोलने लगी ॥ ९ ॥

देवहूतीजी बोली हे द्विजश्रेष्ठ ! हे भर्तः ! सब योगमाया के नियन्ता आपहो आप में ये सब आपकी कहीं बाते सिद्ध हैं मैं इस बातको जानती हुं परन्तु जो आपने प्रतिज्ञा कीथी एक वखत भी अङ्गसङ्ग देनेकी सो होनी चाहिये क्योंकि उत्तम पतिसे गुणका प्रसव होना ही पतिव्रतोंका महालाभ है ॥ १० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अङ्गसङ्गार्थं च प्रथममितिकर्तव्यतां संपादयेत्याह । हे ईश ! तत्राङ्गसङ्गे इति कृत्यं साधनं यथोपदेशं कामशास्त्रानुसारेणोपशिक्ष सञ्जानीहि उपकल्पयेत्यर्थः येन साधनेनाभ्यङ्गभोजनपानादिनातीव रन्तुमिच्छया कर्शितो दीनश्च ममैष आत्मा देहः सिध्येत रतिसमर्थो भवेत् कथम्भूतायाः ते त्वयैव कृतः क्षोभितो यो मनोभवस्तेन धर्षितायाः तत्ततोऽनुरूपं भवनं विचक्ष्व चिन्तय विचारयेति यावत् ॥ ११ ॥

मैत्रेय उवाच ।

प्रियायाः प्रियमन्विच्छन् कर्दमो योगमास्थितः ।
विमानं कामगं क्षत्तस्तर्ह्येवाविरचीकरत् ॥ १२ ॥
सर्वकामदुघं दिव्यं सर्वरत्नसमन्वितम् ।
सर्वर्द्ध्युपचयोदर्कं मणिस्तम्भैरुपस्कृतम् ॥ १३ ॥
दिव्योपकरणोपेतं सर्वकालसुखावहम् ।
पट्टिकाभिः पताकाभिर्विचित्राभिरलंकृतम् ॥ १४ ॥
स्रग्भिर्विचित्रमाल्याभिर्मञ्जुसिञ्जत्षडङ्घ्रिभिः ।
दुकूलक्षौमकौशेयैर्नानावस्त्रैर्विराजितम् ॥ १५ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तर्हि तत्क्षणमेव आविरचीकरदाविर्भावयांबभूव ॥ १२ ॥

तदेव विशिनष्टि । सर्वकामदुघमिति नवभिः । सर्वैश्च रत्नादिभिः समन्वितम् सर्वर्द्धीनां सर्वसंपदां च उपचयस्तस्योदर्कं उत्तरोत्तराभिवृद्धिर्यस्मिन् उपस्कृतं शोभितम् ॥ १३ ॥

उपकरणं परिकरः पट्टिका अल्पविस्तारपट्टवस्त्रविशेषाः पताका विस्तृतास्ताभिः ॥ १४ ॥

विचित्राणि माल्यानि पुष्पाणि यासु मञ्जु यथा भवत्येवं सिञ्जन्तः कूजन्तः षडङ्घ्रयो यासु ताभिः स्रग्भिः ॥ १५ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

तत इति कृत्योपदेशानन्तरमनुरूपं रत्यनुकूलम् ॥ ११ ॥

प्रियाया इति दशकम् । योगमास्थितः योगप्रभावमाविष्कुर्वन् सन् (१) तदेव विमानमेव उपचयोऽत्र समूहः अन्यथा पुनरुक्तिः प्रसज्येत(२)परिकरस्सामग्री(३)यद्यपि दुकूलं क्षौममस्त्रियामित्यमरसिंहात् द्वयोस्सपर्यायत्वं तथापि परिधानीयोत्तरीयत्वेन भेदो ज्ञेयः कौशेयं पट्टवस्त्रसामान्यम्(४)क्षितिः स्थापितैः(५)तत्र तत्र तेषु तेषूपर्य्युपरिरचितगृहेषु विनिक्षिप्तत्वं रचितत्वं(६)(७)पूर्वार्थेपद्मरागस्थप्रकाशादीनां चक्षुष्ट्वेन रूपणं कथञ्चित्कल्प्यमित्यरुचौ वक्षेति(८)तत्र तत्र उपर्य्युपरिगृहाभित्तिशिखरादिषु(९)अत्राविर्भावनक्रियायां कर्दमस्य कर्तृत्वात्स्वशब्दस्य च कर्तृपरामर्शकत्वात् आत्मशब्दस्य च स्वशब्दार्थत्वान्मायाविन इति व्याख्यातम् वस्तुतस्तु तत्र भगवत्प्रसादत्वमनेन नातिचित्रत्वाभावादित्युक्तम् (१०) मलिनदेहत्वादिद्वयं भावानुद्दीपनद्वारा हेतुः ॥ १२ ॥ २२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अङ्गसङ्गार्थमितिकर्त्तव्यतां च संपादयेत्याह । तत्रेति । हे ईश ! तत्र अङ्गसङ्गे इतिकृत्यम् इतिकर्त्तव्यतां साधककलापं यथोपदेशं कामतन्त्रोक्तानुसारेण उपशिक्ष सम्पादय किं तदितिकृत्यं यदुपशिक्षणीयं तत्राह । ते त्वयैव कृतः उत्पादितः यो मनोभवः कामस्तेन धर्षितायाः पीडितायाः मे मयातिरिरंसया भृशं रन्तुमिच्छया कर्शितः अत एव दीनः एष आत्मा देहः येनेतिकृत्येन सिद्ध्येत कार्श्यदैन्यादिपरिहारेण स्वस्थो भवेत्तदितिकृत्यमुपशिक्षयेत्यर्थः तस्मात् सद्दशमनुरूपं भवनं भोगस्थानमिदं भोग्यादीनामप्युपलक्षणं विचक्ष्व कल्पय॥११॥

एवमुक्तः कर्दमो भोग्यादीनसृजदित्याह मैत्रेयः । हे क्षत्तः ! प्रियायाः भार्यायाः प्रियमन्विच्छन् कर्तुमिति शेषः कर्दमः योगम् उक्तयोगमायामाश्रितः कामं यथेच्छं गच्छतीति तद्विमानं तर्ह्येव तत्क्षणमेव आविरचीकरदाविर्भावयामास ॥ १२ ॥

तदेव विमानं वर्णयति नवभिः । सर्वकामदुघं सर्वाभिलपितपूरकं दिव्यममानुषं सर्वर्द्धीनां सर्वसम्पदां च उपचयस्तस्योदर्कं उत्तरोत्तराभिवृद्धिर्यस्मिन्मणिमयैः स्तम्भैरुपस्कृतं परिकृतम्॥१३॥

दिव्यैरुपकरणैः परिकरैरुपेतं युक्तं सर्वस्मिन् काले सुखमेवावहति प्रापयति तथा पट्टिकाः अल्पविस्ताराः पट्टवस्त्रविशेषाः पताका विततः ताभिश्च विचित्राभिरलंकृतम् ॥ १४ ॥

विचित्राणि माल्यानि मालानिर्माणयोग्यानि पुष्पाणि यासु ताभिः मञ्जु मधुरं यथा तथा सिञ्जन्तः ध्वनन्तः षडङ्घ्रयो भ्रमरा यासु ताभिः स्रग्भिरलंकृतं दुकूलैः क्षौमैः धौतैः कौशेयैरन्यैश्च नानाविधैर्वस्त्रैर्विशेषेण राजितम् ॥ १५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तर्हि तथास्त्वित्याशङ्क्य कृत्यं किंचिदस्तीत्याह । तत्रेति । तत्र सकृदङ्गसङ्गविषये यथोपदेशं शास्त्रोपदेशमनतिक्रम्य कृत्यमितिकर्तव्यतामुपशिक्ष विद्यामुपादत्स्व कुतो विद्योपादानमत्राह । । येनेति । अतिरिरंसया ग्राम्यधर्मेच्छया कर्शित एष मे मम आत्मा देहो येन विद्योपादानेन सिध्येत सफलो भूयात्सकामोऽस्तु किमुद्दिश्येत्यत उक्तं ते कृत इति त्वत्कृतमनोभवेन त्वन्निमित्तकामेन धर्षिताया अभिभूतायाः कीदृक् विद्योपादानकाम इति तत्राह । तदीशेति । यत्सार्वभौमपुत्र्या मम सदृशं योग्यं तद्भवनं विद्यासामर्थ्येन विचक्ष्व दृष्ट्वा कुर्वित्यन्वयः अतितरां रिरंसया रन्तुमिच्छया ते तव मनोभवधर्षिताया मे एष कामः कमनीय आत्मा कायो येन विद्याबलेन रचितेन गृहादिना सिध्येत तादृशं भवनं विचक्ष्वेति वा ॥ ११ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विषयेभ्य आहृत्यात्मन्येवाधिष्ठापितसर्वेन्द्रियग्रामोऽपि कर्दमः आश्रितवत्सला महान्त इति भावं दर्शयन् प्रियावचनं पालयन् योगविद्याबलेन तत्क्षण एव गृहं निर्मम इत्याह । प्रियाया इति । यादृशेन भगवद्ध्यानेनाभीष्टं स्यात्तादृशं योगमनुतिष्ठन् आविरचीकरत् प्रकाशयामास ॥ १२ ॥

श्रोतॄणां भगवद्ध्यानमाहात्म्ये श्रद्धातिशयजननायाप्राकृतं प्राकृतमिव वर्णयति । सर्वकामेत्यादिना । सर्वासां समृद्धीनां उपचयेन समाहारेण उदर्कमुत्कृष्टं एतदेव विशिनष्टि । मणिस्तम्भैरिति । उपस्कृतमलङ्कृतम् ॥ १३ ॥

दिव्यानि कुलालादिरचनारहितान्युपस्कराणि भाण्डादिगृहसाधनानि तैर्युक्तं पट्टिकाभिः पट्टवस्त्रकृताभिः ॥ १४ ॥

विचित्रमाल्याभिः नानाविधपुष्परचिताभिः स्रग्भिर्मालाभिर्मञ्जु मधुरं सिञ्जन्तः शब्दं कुर्वन्तः षडङ्घ्रयो भ्रमरा यासु तास्तथोक्तास्ताभिः ॥ १५ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्र सत्पुत्रोत्पत्तिकामनायामितिकर्त्तव्यं शिक्षय । यथोपदेशं त्वच्छिक्षानुरूपं येन च तत्कर्त्तव्येन हेतुना तत्कृतकामधर्षितीभवन्त्या मे मम एष आत्मा देहः तपआदिना अति कर्शितो दीनश्चापि रिरंसया सिध्येत योग्यः स्यात् तदनन्तरञ्च ॥ ११ ॥

प्रियाया इति दशकम् ॥ १२–१४ ॥

दुकूलक्षौमे अतसीतन्तुसम्भवत्वेन समानेऽप्यवान्तरभेदे ज्ञेये । "दुकूलं क्षौमम्" अस्त्रियामित्यमरः ॥ १५—२० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

साधनमाह । तत्रेति कृत्यमिति । तत्र इति कृत्यमुपशिक्ष सचेद्रसात्मक एव भवति सङ्गः स पुरुषार्थो भवति सङ्गोक्तेव सा सामग्री का वा भवेत् रसश्च विभावानुभावव्यभिचारिभिरुत्पद्यते ते सर्वे विस्तरेणोक्ताः कामशास्त्रे तन्निकट एव ज्ञानदार्ढ्यार्थं द्रष्टव्यमिति भावः अत एव यथोपदेशमित्युक्तम् इन्दुमंदिरा मृगमद इत्यादि उद्धतरागो नान्यथा निवर्तत इत्याह । येनेति । एष मे आत्मा रिरंसयाऽतिकर्शितः क्लिष्टः एष आत्मेति देहोऽन्तःकरणं च न कामशास्त्रव्यतिरेकेणायं रसयोग्यो भविष्यति एतादृशोऽप्यात्मा रिरंसया क्लिष्टो येनैव सिद्ध्येत स एवोपायः कर्तव्य इत्यर्थः किंच ते त्वया कृतो यो मनोभवः तेन धर्षितायाः मनोभवेन निर्भर्त्सिताहं तत्पराभवोऽपि दूरीकर्तव्यः अयं च देहः स्वाधीनः विज्ञापनान्तरमाह । हे ईश ! सदृशं भवनं विचक्ष्वेति ॥ ११ ॥

तदा कर्दमोऽपि विचारितवान् नेयं संबन्धमात्रमपेक्षते किन्तु वैभवसहितमतस्तथैव कर्त्तव्यमित्यभिप्रेत्य भगवद्दत्तयोगसामर्थ्येन तथैव कृतवानित्याह । प्रियाया इति । प्रेमविषया भार्या प्रिया तस्याः प्रीतिं वाञ्छन् कर्दमो भगवद्दत्तं योगमास्थितो योगबलेन कामगं विमानमाविरचीकरत् आविष्कारं कृतवान् योगसिद्धस्य सर्वमेवेच्छया प्रादुर्भवति गृहात्मकमपि तत्कामगं क्षत्तः इति संबोधनम् अन्तःपुरवैभवसाक्षित्वाय ॥ १२ ॥

तद्विमानमनुवर्णयति भावनवकेन नवविधक्रीडार्थं नवभिः श्लोकैः । सर्वकामदुघमिति । सर्वान्कामान् दोग्धीति दिव्यमलौकिकं सर्वरत्नसमन्वितं स्पष्टं सर्वाः ऋद्धयः सम्पत्तयः तासामुपचयः आधिक्यं तदेव उदर्को यस्य तस्मिन् गृहे ऋद्धीनामुपभोगेन उपचय एव भवति नापचयः उत्तरफलं लोके सर्वत्रापचयः मणिमयैः स्तम्भैः उपस्कृतं यथा शोभातिशयो भवति तथा रचितम् ॥ १३ ॥

दिव्यानि यान्युपकरणानि वस्त्रपीठादीनि तैरुपेतं शीतादिसर्वकालेषु सुखकरं बहिःशोभातिशयमाह । पट्टिकाभिरिति । पट्टिका लम्बायमानपट्टवस्त्रनिर्मिताः पताका जयपत्राङ्किताः ताः सर्वा एव विचित्राः ताभिरलंकृतम् ॥ १४ ॥

स्रग्भिर्मालाभिः विचित्राणि माल्यानि पुष्पाणि यत्र सर्वदा अम्लानत्वाय आमोदमकरन्दसहितत्वाय च मञ्जुसिञ्जन्तः षडङ्घ्रयो भ्रमरा यत्र दुकूलक्षौमकौशेयाः पट्टाम्बरविशेषाः कीटजाः तृणजाः वल्कलजाश्च नानाविधानि च वस्त्राणि तैर्यथा योग्यं विराजितम् ॥ १५ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु तर्हि प्रविश पर्णशालां तत्ते वाञ्छितं करवाणीति चेन्न तदीदृशमलिनकृशशरीरेण नैतादृशपर्णशालायां नैतादृशपरिच्छदेन सिद्ध्येदित्याह । तत्रेति । तत्र अङ्गसङ्गे इतिकृत्यं साधनं यथोपदेशं वात्स्यायनादिशास्त्रोपदेशमनतिक्रम्य उपशिक्ष स्वस्मादेव जानीहि कामप्रक्रियायाः स्त्रैकगम्यत्वात् ज्ञात्वा च तत्तत्समुचितवस्तुजातं रसोद्दीपनादिकमभ्यङ्गभोजनपानादिकञ्च साधु सम्पादयेत्यर्थः येन एष आत्मा देहः अतिरिरंसया कर्शितः क्षोभितः सन् सिद्ध्येत रतिसमर्थो भवेत् मम कीदृश्याः ते त्वयैव कृतः स्वदर्शनादिना जनितो यो मनोभवस्तेन धर्षितायाः दीनः सम्प्रति तु दरिद्र एव तत्तस्मात् हे ईश ! योगबलेन सर्वं स्रष्टुं समर्थ सदृशं रत्यनुरूपं भवनञ्च विचक्ष्व विचारय ॥ ११ ॥

तूष्णीं स्थितया देवहूत्या नेत्रेङ्गितेनैव एतद्यदुक्तं कर्दमोऽपि तूष्णीं स्थित एव तदैव तत्तत्सर्वं सम्पादयामासैव नतु प्रत्युत्तरं ददावित्याह । प्रियाया इत्यादिना ॥ १२ ॥

न च देवमनुष्यादिकृतमिव तदपूर्णसुखमयमित्याह । सर्वेति न च सामान्यविमानमिव उत्तरोत्तरकालकृतापचय एव उदर्कः उत्तरोत्तरफलं यत्र तत् ॥ १३ ॥

उपस्करणं परिकरः नचौष्ण्यशैत्यादिकालिकदुःखसहितमित्याह । सर्वकालेति । पट्टिकाभिः क्षुद्रपताकाभिः पताकाभिर्बृहतीभिः ॥ १४ ॥

स्रग्भिरतिपुष्टदीर्घाभिर्गोपानसीलग्नाभिः विचित्राणि रक्तपीतादिवर्णानि माल्यान्यन्तराप्रोतानि यासु ताभिः । दुकूलैः क्षुद्रकृमिकोषोत्थपट्टवस्त्रैः क्षौमैरतसीतन्तुभवैः कौशेयैर्बृहत्कृमिकोषोत्थैर्नानावस्त्रैराङ्कवैः कार्पासैश्च चतुष्किका वेद्यास्तरणरूपैः ॥ १५ ॥

---

उपर्युपरि विन्यस्तनिलयेषु पृथक् पृथक् ।
चित्रैः कशिपुभिः कान्तं पर्यङ्कव्यजनासनैः ॥ १६ ॥
तत्र तत्र विनिक्षिप्तनानाशिल्पोपशोभितम् ।
महामरकतस्थल्या जुष्टं विद्रुमवेदिभिः ॥ १७ ॥
द्वास्सु विद्रुमदेहल्या भातं वज्रकपाटवत् ।
शिखरेष्विन्द्रनीलेषु हेमकुम्भैरधिश्रितम् ॥ १८ ॥
चक्षुष्मत्पद्मरागाग्र्यैर्वज्रभित्तिषु निर्मितैः ।
जुष्टं विचित्रवैतानैर्महार्हैर्हेमतोरणैः ॥ १९ ॥
हंसपारावतव्रातैस्तत्र तत्र निकूजितम् ।
कृत्रिमान्मन्यमानैः स्वानधिरुह्याधिरुह्य च ॥ २० ॥
विहारस्थानविश्रामसंवेशप्राङ्गणाजिरैः ।
यथोपजोषं रचितैर्विस्मापनमिवाऽऽत्मनः ॥ २१ ॥
ईदृग् गृहं तत्पश्यन्तीं नातिप्रीतेन चेतसा ।
सर्वभूताशयाभिज्ञः प्रावोचत् कर्दमः स्वयम् ॥ २२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तत्र अङ्गसङ्गे इतिकृत्यं साधनम् यथोपदेशमुपदिश्यते इत्युपदेशः शास्त्रं कामशास्त्रं तदनुसारेणोपशिक्ष संपादय येन साधनेन स्नानादिरूपेणाति रन्तुमिच्छया कर्षितः दीनो व्याकुलश्च आत्मा देहः सिध्येत अङ्गसङ्गयोग्यो भवेत् हेईश! तत्सद्दशमङ्गसङ्गयोग्यम् भवनं च विचक्ष्व वितर्कय कल्पयेति यावत् ॥ ११ ॥

आविः प्रकटमचीकरत् चकार ॥ १२ ॥

सर्वासामृद्धीनां संपदामुपचयो वृद्धिरेवोदर्कमुत्तरोत्तरं फलं यस्मिन् मणिस्तम्भैः मणिमयैः स्तम्भैः उपस्कृतं शोभितम् ॥ १३ ॥

दिव्यैरलौकिकैः उपस्करैः भोगोपकरणैरुपेतम् पट्टिकाभिः अल्पविस्तारवस्त्रनिर्मिताभिः पताकाभिः विस्तृतपटनिर्मिताभिः॥१४॥

विचित्रमाल्याभिः नानावर्णपुष्पाभिः मञ्जु मधुरं यथा भवत्येवं सिञ्जन्तः ध्वनन्तः षडङ्घ्रयो यासु ताभिः स्रग्भिः दुकूलैः कार्पासतन्तुमयैः क्षौमैः क्षुमाविकारैः कौशेयैश्च नानावस्त्रैर्विराजितम् ॥ १५ ॥

---

भाषाटीका ।

हे ईश! तिस अङ्गसङ्ग मे अपेक्षित जो होवे सो संपादन कीजिये जैसा कि कामशास्त्र मे लिखा है जिस उपयोगसे रति के इच्छासे अतिकर्षित हमारा यह शरीर समर्थ होजावे आपके निमित्तके कामसे मेरा मन अति क्षुभित होरहाहै तिससे शरीर दुःखित है भोगके लायक स्थान भी कल्पना कीजिये ॥ ११ ॥

मैत्रेयजी बोले अपनी प्रियाके प्रीति करने की इच्छासे उसी समय मे योग शक्तिको धारण करके कर्दमजी ने एक काम चारी विमान को बनाया ॥ १२ ॥

जोकि सब मनोरथों का देनेवाला है दिव्यहै सब रत्नोंसे युक्त है सब ऋद्धियोंकी वृद्धि उत्तरोत्तर उसमें होतीहैं मणिके खम्भोंसे भूषित है ॥ १३ ॥

दिव्य सामग्रियोंसे युक्त है सब कालोमें सुख देने वाला है ध्वजा पताकोंसे अलङ्कृतहै ॥ १४ ॥

नाना प्रकारके पुष्पोंकी मालोंसे युक्त है मनोहर शब्दवाले भ्रमरोंसे युक्त है शनके अलसी के कीटों के रेसनके वस्त्रोंसे युक्त है ॥ १५ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

उपर्युपरि विरचितगृहेषु कशिपुभिः शय्याभिः कान्तं कमनीयम् पर्यङ्कादिभिश्च कान्तम् ॥ १६ ॥ १७ ॥

द्वास्सु द्वारेषु विद्रुमनिर्मिता देहली उदुम्बरस्तया भातं शोभितम् वज्रखचितकपाटयुक्तम् इन्द्रनीलमयेषु शिखरेषु प्रासादाग्रभागेषु ॥ १८ ॥

चक्षुष्मन्त इव ये पद्मरागाग्र्यास्तैः यद्वा चक्षुष्म दिव कैः पद्मरागाग्र्यैः विचित्रैर्वैतानैर्वितानसमूहैः ॥१९॥

कृत्रिमानपि हंसादीन् स्वान् सजातीयान् मन्यमानैस्तत्र त त्राधिरुह्याधिरुह्य निकूजितम् ॥ २० ॥

विहारस्थानं क्रीडाप्रदेशः विश्रामः शयनगृहम् संवेश उपभोगस्थानम् प्राङ्गणं गृहाद्बहिः अजिरं प्राकाराद्बहिः यथोप-

निमज्यास्मिन् ह्रदे भीरु! विमानमिदमारुह।
इदं शुक्लकृतं तीर्थमाशिषां यापकं नृणाम्॥ २३॥
सा तद्भर्तुः समादाय वचः कुवलयेक्षणा।
सरजं बिभ्रती वासो वेणीभूतांश्च मूर्धजान्॥ २४॥
अङ्गञ्च मलपङ्केन संछन्नं शवलस्तनम्।
आविवेश सरस्वत्याः सरः शिवजलाशयम्॥ २५॥

श्रीधरस्वामिकृतभावार्थदीपिका।

ज्ञेयं यथासुखमात्मनः स्वस्य मायाविनोऽपि विस्मयजनकमिव॥२१॥

जातिप्रीतेन मलिनदेहत्वात्परिचारिकाभावाच्च॥ २२॥

अस्मिन् ह्रदे विन्दुसरसि आरुहाधिरोह शुक्लेन विष्णुना कृतमानन्दविन्दुनिपातनेन यापकं प्रापकम्॥ २३॥

समादायाऽऽदाय सरजं मलिनम् वेणीभूतान् जटिलान्॥ २४॥

शवलौ विवर्णौ स्तनौ यस्मिंस्तत् सरस्वत्याः शिवानि जलान्याशेरते यस्मिन् शिवा जलाशया जलचरा यस्मिन्निति वा॥ २५॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी।

इतिकृत्यं शिक्षयति। निमज्येति॥ २३॥

सेतियुग्मकम्। सरजमित्यत्र मध्ये सरजसमित्यसमाधाय मलिनमितिव्याख्यानादकारान्तोऽपि रजशब्दोऽस्तीति गम्यते द्वितीयपक्षे सरस्वत्याःसंबन्धि सरं इतियोज्यम् शिवा भक्त्या स्नातुरवाचकाः॥ २४॥ २५॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

उपर्युपरि न्यस्तेषु विरचितेषु गृहेषु पृथक् पृथक् विभक्तं कल्पितैः कशिपुभिः शय्याभिः कान्तं कमनीयं तथा पर्यङ्कादिभिश्च कान्तम्॥ १६॥

तत तत्र भित्त्यादिषु विनिक्षिप्तैः विरचितैर्नानाविधैः शिल्पैरुपशोभितं महामरकतस्थल्याम् इन्द्रनीलमणिमयभूम्यां रचिताभिर्विद्रुमवेदिकाभिर्जुष्टं युक्तस्थल्येतिपाठे तया विद्रुमवेदिकाभिश्च युक्तम्॥ १७॥

द्वास्सु द्वारेषु विद्रुममयदेहल्यामुदुम्बरेण भातं शोभितं वज्राचितकपाटयुक्तमिन्द्रनीलमणिमयेषु शिखरेषु सुवर्णमयकलशैरधिष्ठितं चक्षुष्मन्त इव ये पद्मरागश्रेष्ठाः वज्रभित्तिषु खचितास्तैर्जुष्टं विचित्रैर्वैतानैर्वितानसमूहैरनर्घैर्हेममयतोरणैश्च जुष्टम्॥ १८॥ १९॥

कृत्रिमानपि हंसादीन्स्वान् सजातीयान्मन्यमानैर्हंसानां पारावतानाञ्च समूहैस्तत्र तत्राभिख्यावरुह्य च विकूजितम्॥ २०॥

यथोपजोषं यथा सुखं रचितैः कल्पितैः विहारस्थानादिभिर्युक्तमिति शेषः यद्वा विहारस्थानादिभिरात्मनः स्वस्य मायाविनोऽपि विस्मापनमिव विस्मयजनकमिवावस्थितमाविरचीकरदिति पूर्वेणान्वयः तत्र विहारस्थानं क्रीडाप्रदेशः विश्रामः शयनगृहं सम्वेश उपभोगस्थानं प्राङ्गणं गृहाद्बहीरचितम् अजिरं प्राकाराद्बहिः॥ २१॥

ईदृगेवंविधं तद्गृहं विमानं नातिप्रीतेनानतिसन्तुष्टेन चेतसा पश्यन्तीं देवहूतिं स्वयं सर्वभूतानामाशयमभिप्रायं जानातीति सः कर्दमः स्वयं प्रावोचत्॥ २२॥

हे भीरु! इदं तीर्थं शुक्लकृतं शुक्लेन भगवता कृतमानन्दाश्रुनिपातेन कृतं नृणामाशिषां काङ्क्षितानां प्रापकमतोऽस्मिन् ह्रदे विन्दुसरसि निमज्य स्नाहि इदं विमानमारुहाधिरुह॥२३॥

सा कुवलयेक्षणा देवहूतिः भर्त्तुः कर्दमस्य वचः समादाय गृहीत्वा सरजं मलिनं वासः वस्त्रं वेणीभूतान्मूर्द्धजान्केशान्॥ २४॥

मलपङ्केन सम्यक् छन्नौ अत एव शवलौ विवर्णौ स्तनौ यस्मिंस्तदङ्गं शरीरं च बिभ्रती सती शिवानां निर्मलानां जलानामाशयमाश्रयं सरस्वत्या परिश्रितमिति शेषः पञ्चम्यन्तपाठे तन्मध्यस्थमित्यर्थः सरः विन्दुसरः आविवेश प्रविष्टवती॥ २५॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

कशिपुभिः शय्याभिः पर्यङ्कैर्मञ्चैः॥ १६॥ ॥ १७॥

द्वास्सु द्वारेषु विद्रुमदेहल्या निर्मितद्वारबन्धेन देहलीद्वारबन्धः स्यादिति च वज्ररत्नकृताः कपाटयो यस्मिन् सन्तीति वज्रकपाटिमत्॥ १८॥

चक्षुष्मन्तो दीप्तिमन्तः पद्मरागाद्या मणयः विचित्राणां वितानानां समूहैः॥ १९॥

कृत्रिमान् शोभार्थं कृतान् स्वान् अकृत्रिमान् मन्यमानैः॥२०॥
शयननिवेशनं संवेशः प्राङ्गणं गृहपूर्वभूमिरजिरं गृहबाह्यसंस्कृतभूमिः यथोपजोषं यथासुखम्॥ २१॥

परिचारिकाभावान्नातिप्रीतेन सर्वभूतानामाशयमभिप्रायमितो जानातीति सर्वभूताशयाभिज्ञः॥ २२॥

आशिषां शुभानां चाप्तये प्राप्तये एवं विधे ह्रदे तीर्थे॥ २३॥
सरजं धूलिधूसरम्॥ २४॥
मलेन किट्टेन दृढबद्धेन पङ्केन कर्दमेन कल्मषेण वा शवलौ

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कृष्णपाण्डुरौ स्तनौ यस्मिंस्तत्तथा तत् सरस्वत्याः सरो ह्रदं शिवानां जलानामाशयं स्थानम् ॥ २५ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

आत्मन इति । विमानस्यापि विस्मापनमिवेत्युत्प्रेक्षामात्रम् ॥२१॥

मलिनदेहादित्वेन भावानुद्दीप्तेर्नातिप्रीतने स्वयमित्यत्र प्रियामिति क्वचित् ॥ २२ ॥

इतिकृत्यं शिक्षयति । निमज्ज्येति युग्मकम् । वेणीभूतान् स्वमूर्द्धजानिति क्वचित् ॥ २३-२५ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी

उपर्युपरि च गृहाः उत्तरोत्तरं विरचिताः तत्र शतशः सन्ति सर्वेष्वेव गृहेषु पृथक् पृथक् क्लृप्तैः कशिपुभिः उत्तमशय्याभिः कान्तं रमणीयं नतु गृहान्तरस्थिताः शय्याः पुनरन्यत्र नेतव्याः पर्यङ्काः खट्वाविशेषाः व्यजनविशेषाः आसनविशेषाश्च तैः सर्वैरेव कान्तम् ॥ १६ ॥

कामशास्त्रानुसारेण सर्वबन्धबोधकानि चित्राणि तत्र वर्णयति । तत्र तत्रेति । विशेषेण निःक्षिप्तानि यानि नानाशिल्पानि तैरुपशोभितं तत्र तत्र गृहेषु महामरकतमणिभिः कृता स्थली भवति तया च जुष्टं विद्रुमाः प्रवालाः तैश्च वेदयो निर्मिता भवन्ति वेदिरत्रोपवेशनभूमिः ॥ १७ ॥

द्वास्सु द्वारेषु विद्रुमाणामेव देहली भवति तथापि भातं प्रकाशमानं वज्रमयकपाटयुक्तं च शिखरेषु गृहाणां शिरोभागेषु इन्द्रनीलमणिविरचितेषु स्थापितैः सुवर्णकुम्भैः अधिश्रितं हेमकुम्भास्तमाश्रित्यैव तिष्ठन्ति तेषामपि तत एव शोभा ॥ १८ ॥

चक्षुष्मन्तः तेजस्वन्तः पश्यन्तीव प्रतीयमानाः पद्मरागश्रेष्ठाः वज्रमयीषु भित्तिषु निर्मिताः तैरपि जुष्टं विचित्राणि वितानानि चन्द्रातपाः मुक्ताहारसहिताः पत्राकारसुवर्णैः तोरणरूपैः सहिताः तैरपि जुष्टम् ॥ १९ ॥

हंसादयः पक्षिविशेषाः तेषां समूहैस्तत्र तत्र कूजितं चित्रपटेष्वपि हंसादयो विरचिता एते सत्याः कृत्रिमान् चित्रगतान् स्वान् अकृत्रिमानेव मन्यमानैः कूजितमिति पूर्वेणैव सम्बन्धः अधिरुह्याधिरुह्येति काष्ठपाषाणनिर्मिता अपि हंसादयः सकृदधिरुह्यापि मुह्यन्तीति अधिरुह्याधिरुह्येति बहुवारमप्यधिरुह्य मुह्यन्तीति शिल्पनैपुणम् ॥ २० ॥

विहारस्थानं क्रीडास्थानं विश्रामस्थानं बाहुयुद्धादिकं कृत्वा श्रमापनोदनार्थमुपवेशस्थानं संवेशनं सुखोपवेशनस्थानं प्राङ्गणं कोष्ठाद्बहिरङ्गणमजिरमङ्गणं तैर्यथोपजोषं रचितैः यथायोग्यं निर्मितैः आत्मनो योगाधीशस्य कर्दमस्यापि विस्मापनमिव यद्यपि योगमायावैभवं जानाति तथापि तादृक् कदापि न दृष्टमिति विस्मापनमिवेत्युक्तम् ॥ २१ ॥

अभिलषितगृहे दृष्टेऽपि स्वस्य शरीरं तथा न योग्यमिति तस्या अनुशयं मत्वा तस्यापि तथात्वाय तामुपदिशतीत्याह । ईदृग् गृहमिति । पुर्वोक्तरूपं गृहं नातिप्रीतेन चेतसा पश्यन्तीं स्वयोगबलेन सर्वभूतहृदयाभिज्ञः तुष्णीमेव स्थितां तां स्वयमेव कर्दमः अवोचत् ॥ २२ ॥

तद्वचनमाह । निमज्ज्येति । हे भीरु ! उत्तमे ! भयं च न कर्त्तव्यं ज्ञात्वैव भीरुत्वं यतः स्नानार्थं प्रेष्यत इति अस्मिन् ह्रदे निमज्ज्य इदं विमानमारुह किं शीतोदके असंस्कृताया यज्ञनेनेत्याशङ्क्याह । इदं शुक्लकृतं तीर्थमिति । शुक्लनारायणेन निर्मितं तीर्थं सर्वेषामाशिषां कामनानां प्रापकमस्मिन् प्रविष्टे यथा तव मनोरथः तादृशं तव शरीरं भविष्यतीति भावः नित्यं स्नाने च महतां तथाभ्यनुज्ञा नास्तीति न पूर्वं सिद्धिः ॥ २३ ॥

तथैव कृतवतीत्याह । सा तद्भर्तुरिति । सा देवहूतिर्भर्तुर्वाक्यमादाय सरजं वासो वेणीभूतान् च मूर्द्धजान् मलपङ्केन छन्नमङ्गं च बिभ्रती सरस्वत्याः सरः आविवेश वाक्यग्रहणे हेतुः । भर्त्तुरिति । सर्वो हि भारस्तस्यैव सम्यगादानं देह सिद्धाविदमेव साधनमिति ज्ञानपूर्वकं ग्रहणं कुवलयेक्षणा उत्पलदलायताक्षी अनेन क्रोधेर्ष्याखेदादयो भावा निवारिताः वाक्यविश्वासादेव नेत्रप्रसादः न तु सामग्री तादृशीति वक्तुं विपरीतां सामग्रीं वर्णयति । रजःसहितं मलिनं वस्त्रं बाह्यं साधनमावश्यकम्समीचीनमिति सूचितं वेणीभूता मूर्द्धजा बहिरङ्गभूताः ॥ २४ ॥

अङ्गं च प्रत्यहं जायमानं मलं जलसंबद्धं पङ्कप्रायं जातम् अतस्तद्युद्धाराः कठिन इत्यर्थः शबलौ विवर्णौ स्तनौ यस्येत्यङ्गविशेषणम् उपभोग्यावयवानां सुतरामयोग्यत्वं सूचितं सरस्वतीसृष्टिहेतुः अतोऽनया नूननं भविष्यतीति तत्र प्रवेशः शिवं कल्याणकरं स्नानेऽपि नापकारं जनयतीति उपकारस्तु वाक्यात् भविष्यत्येव अपकारस्तु न भविष्यत्येवेत्यर्थः ॥ २५ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

कशिपुभिः शय्याभिः ॥ १६ ॥ १७

विद्रुममय्या देहल्या भातं द्वास्सु वज्रकवाटवत् हीरककवाटयुक्तं शिखरेषु सर्वोर्ध्वप्रासादचूडासु ॥ १८ ॥

हीरकमयभित्तिषु अर्पितैः पद्मरागाग्र्यखण्डैश्चक्षुष्मदिव वैतानैर्वितानसमूहैः हेमस्तोरणैर्वन्दनमाल्येति ख्यातैः ॥ १९ ॥

कृत्रिमानपि हंसादीन् स्वान् सजातीयान्मन्यमानैस्तत्र तत्र खगगणध्ये अधिरुह्य नितरां कूजितम् ॥ २० ॥

विहारस्थानं क्रीडाप्रदेशः विश्रामः शयनगृहं संवेशः सम्भोगान्तनिद्रागृहं प्राङ्गणं गृहाद्बहिः अजिरं प्राचीराद्बहिः यथोपजोषं यथासुखमात्मनः स्वस्य कर्दमस्यापि इवेति स्वनिर्म्मितत्वात् स्वस्य वस्तुतो न विस्मापनमिति ॥ २१ ॥

नातिप्रीतेनेति मलिनदेहत्वात् परिचारिकाभावाच्चेति भावः ॥ २२ ॥

ह्रदे विन्दुसरसि यापकं प्रापकम् ॥ २३ ॥

समादाय आहृत्य ॥ २४-२६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उपर्य्युपरि विशेषतो न्यस्तेषु रचितेषु निलयेषु गृहेषु पृथक् पृथक् क्षिप्तैः संस्थापितैः कशिपुभिः पर्य्यङ्कादिभिश्च कान्तं कमनीयम् ॥ १६ ॥

साऽन्तः सरसि वेश्मस्थाः शतानि दश कन्यकाः ।
सर्वाः किशोरवयसो ददर्शोत्पलगन्धयः ॥ २६ ॥
तां दृष्ट्वा सहसोत्थाय प्रोचुः प्राञ्जलयः स्त्रियः ।
वयं कर्मकरीस्तुभ्यं शाधि नः करवाम किम् ॥ २७ ॥
स्नानेन तां महार्हेण स्नापयित्वा मनस्विनीम् ।
दुकूले निर्मले नत्ने ददुरस्यै च मानद ! ॥ २८ ॥
भूषणानि परार्ध्यानि वरीयांसि द्युमन्ति च ।
अन्नं सर्वगुणोपेतं पानं चैवामृतासवम् ॥ २९ ॥
अथादर्शे स्वमात्मानं स्रग्विणं विरजाम्बरम् ।
विरजं कृतस्वस्त्ययनं कन्याभिर्बहुमानितम् ॥ ३० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विनिःक्षिप्तैः विशेषतो रचितैर्नानाशिल्पैरुपशोभितम् महामरकतरचितया भूमिकया ॥ १७ ॥ ॥ १८ ॥

वज्रभित्तिषु निर्मितैः खचितैः पद्मरागाग्र्यैः चक्षुष्मदिव विचित्रैर्वितानैर्वितानसमूहैः हेमतोरणैश्च जुष्टं युक्तम् ॥ १९ ॥

हंसपारावतसमूहैः कृत्रिमानपि हंसादीन् स्वान् सजातीयान् मन्यमानैः तत्र तत्र कृत्रिमहंसादिनिकटे अधिरुह्याधिरुह्य निकूजितम् ॥ २० ॥

विहारस्थानं क्रिडास्थानं विश्रामः शयनस्थानं संवेश उपभोगस्थानं प्राङ्गणं गृहाद्बहिः अजिरं प्राकाराद्बहिस्तैः यथोपजोषं यथासुखं रचितैः आत्मनः स्रष्टुरपि विस्मापनमिव ॥ २१ ॥

ईदृक् एवं विधमपि तद्गृहं विमानं नातिप्रीतेन चेतसा पश्यन्ती स्वदेहस्य कृपत्वादिना तदनुरूपत्वाभावात् ॥ २२ ॥

हृदे विन्दुसरसि यापकं प्रापकम् ॥ २३ ॥

भर्तुर्वचः समादाय गृहीत्वा शवलौ विवर्णौ स्तनौ यस्मिन् ॥ २४ ॥ २५ ॥

---

भाषाटीका ।

विमानके ऊपर में अलग अलग मकांनों में रखे हुये खाट विछौना आसनादिकोंसे अति मनोहर है ॥ १६ ॥

जहां तहां रखे हुये नाना प्रकार के कामोंसें शोभित है वडी भारी मरकतमणिकी भूमिसे युक्त है विद्रुमकी वेदिकाओं से संयुक्त है ॥ १७ ॥

द्वारोंमे मूगोंकी देहलीयों से अति प्रकाशमान है हीरोंके किवाडोंसे शोभित है शिखरों मे इन्द्र नीलमणि हैं तिनोंपर सुवर्णके कुम्भोंसे अति शोभित है ॥ १८ ॥

हीराकी दिवालोंमें नेत्रोंवाले स्तरीके जो पद्मराग मणिहैं तिनसे अति शोभित है नाना प्रकारकी चांदनियों से सुवर्ण के तोरणों से शोभित है ॥ १९ ॥

हंस कबूतर इनोंके समूहसे शब्दायमान है जो पाक्षि कि वहा वहां चढकर वने हुये पक्षियोंको अपने जातका पाक्षि के समान मानते हैं ॥ २० ॥

जिस विमान मे विहार के स्थान विश्राम के स्थान शयनस्थान घरके वाहिरका अंगना दिवालके वाहिर का अंगना सव सुख देने लायक यथायोग्य वने हैं जो कि कर्दमजी कांभी विस्मय कराते हैं ॥ २१ ॥

इस प्रकार के इस घरको देखकर जव देवहूतीके शरीर की मलिनता रहनेसे उसका चित्त प्रसन्न न हुआ तव सव प्राणियोंके आशयको जानने वाले कर्दमजी स्वयं वोले ॥ २२ ॥

हे भीरु ! इस सरोवर मे स्नान करके इस विमान पर आरोहणकरो यह शुक्ल नामक विष्णु भगवान् का तीर्थ है सव मनुष्यों के सव कामनों का पूर्ण करने वाला है ॥ २३ ॥

वह सुन्दर नेत्रवाली श्रीदेवहूतीजी पतिके उसवचनको ग्रहण करके मलिन वस्त्र जटावाले केशों को धारण की हुई है ॥ २४ ॥

शरीर सव मैलसे लिप्तहै तिसीसे स्तनभी दोनों अशोभित होरहे हैं इस प्रकार की भी सरस्वती नदीसे व्याप्त सुन्दर जल वाला जो विन्दुसरोवर तिसमे वैठ गई ॥ २५ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सा तत्र निमग्ना सती विस्मयं ददर्श तमाह । साऽन्तःसरसीति दशभिः उत्पलगन्धयः कमलगन्धीः ॥ २६ ॥

तुभ्यं तव कर्मकरीः परिचारिका वयमस्मानाज्ञापयेति स्त्रियः प्रोचुः ॥ २७ ॥

ततश्च स्नानेन स्नानयोग्यतैलादिना ॥ २८ ॥

परार्ध्यान्युत्कृष्टानि वरीयांसि तत्प्रियाणि द्युमन्ति दीप्तिमन्ति च पानं पेयममृतं स्वादु आसवं मादकम् ॥ २९ ॥

आदर्शे स्वमात्मानं ददर्शेति शेषः आत्मानं विशिनष्टि चतुर्भिः। कृतं स्वस्त्ययनं मङ्गलं यस्य पुंस्त्वमात्मशब्दसामानाधिकरण्यात् ॥ ३० ॥

स्नातं कृतशिरःस्नानं सर्वाभरणभूषितम् ।
निष्कग्रीवं वलयिनं कूजत्काञ्चननूपुरम् ॥ ३१ ॥
श्रोण्योरध्यस्तया काञ्च्या काञ्चन्या बहुरत्नया ।
हारेण च महार्हेण रुचकेन च भूषितम् ॥ ३२ ॥
सुदता सुभ्रुवा श्लक्ष्णस्निग्धापाङ्गेन चक्षुषा ।
पद्मकोशस्पृधा नीलैरलकैश्च लसन्मुखम् ॥ ३३ ॥
यदा सस्मार ऋषभमृषीणां दयितं पतिम् ।
तत्र चास्ते सह स्त्रीभिर्यत्राऽऽस्ते स प्रजापतिः ॥ ३४ ॥
भर्तुः पुरस्तादात्मानं स्त्रीसहस्रवृतं तदा ।
निशाम्य तद्योगगतिं संशयं प्रत्यपद्यत ॥ ३५ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका

विरजामित्यस्य प्रपञ्चः स्नातमुद्वर्त्य क्षालितम् कृतं शिरः- स्नानमभ्यङ्गो येन, भूषितत्वमेवाऽऽह । निष्कं पदकं ग्रीवायां यस्य ॥ ३१ ॥

बहूनि रत्नानि यस्यां तया रुचकेन मङ्गलद्रव्येण कुङ्कुमादिना तदुक्तम् । विश्वप्रकाशे "रुचकं मङ्गलद्रव्ये ग्रीवाभरणदन्तयोः" इति ॥ ३२ ॥

सुदता सुभ्रुवा चक्षुषेति च जातावेकवचनानि एतैर्लसच्छोभमानं मुखं यस्य कथम्भूतेन चक्षुषा श्लक्ष्णो मनोहरः स्निग्धोऽपाङ्गो नेत्रप्रान्तो यस्य पद्मकोशेन स्पर्धत इति पद्मकोशस्पृक्तेन ॥३३॥

दृष्ट्वा च यदा पतिं सस्मार तदा यत्रासौ तत्रैव स्वयमप्यास्ते ॥३४॥

आत्मानं निशाम्य दृष्ट्वा तां च तस्य योगगतिं योगप्रभावं दृष्ट्वा संशयं किमिदमिति विस्मयम् ॥ ३५ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

उत्पलगन्धय उत्पलगन्धीरिति टीका ज्ञेया तदभावे अनादि- लेखकदोषो ज्ञेयः अन्यथार्षत्वाऽविशेषात् वाक्यद्वयस्यैक्येन युग्मकत्वोक्तिगौरवमेव लेखकदोषामनने तु सान्तरिति युग्मकम् उत्पलगन्धय उत्पलगन्ध्यः स्त्रियः प्रोचुरिति योजनीयम् सा तत्रेत्यादिः श्लोकाभास एव न तु योजना मूले विस्मयपदाऽभावात् ॥२६॥२७॥

स्नानेनेतियुग्मकम् । महार्हेण सुगन्धादिना परमश्रेष्ठेन ॥ २८ ॥ २९ ॥

अथादर्श इति चतुष्कम् । अभ्यङ्गस्सुगन्धतैलादिना शिरस्संस्कारः ॥ ३० ॥ ३३ ॥

दृष्टाचेति पूर्ववाक्येन सहैकवाक्यत्वायाध्याहृतम् सस्मार उत्कण्ठया स्मृतवती आस्ते स्म ॥ ३४ ॥

तां विमानाविर्भावमारभ्य सरसो निष्क्रम्य तदग्रे स्वस्थितिपर्यन्तां संशयस्य विस्मयाधायकत्वाद्विस्मये लक्षणा तत्प्रकारकतदभावप्रकारकज्ञानरूपमुख्यार्थस्याऽसम्भवात् ॥ ३५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सा अन्तःसरसि निमग्ना सती तत्र वेश्मस्थाः मन्दिरस्थाः दशशतानि कन्यकाः ददर्श कथम्भूताः सर्वाः किशोरवयसः उत्पलस्येव देहगन्धो यासां ताः ॥ २६ ॥

तां देवहूतिं दृष्ट्वा दशशतानि स्त्रियः सहसा आशु प्रोत्थाय जलस्थाद्वेश्मनो बहिर्विनिर्गत्य प्राञ्जलयःवयं तुभ्यं कर्मकरीःकिङ्करीः नोऽस्मान् शाधि अनुशिक्षय । किं दास्यं करवामेति प्रोचुः ॥ २७ ॥

महार्हेण श्रेष्ठतमेन स्नानेन स्नानयोग्येन सुगन्धितैलादिना तां मनस्विनीं देवहूतिं स्नापयित्वा मानदाः स्त्रियः अस्यै देवहूत्यै एव निर्मले तूले नवीने दुकूले ददुः दत्तवत्यः ॥ २८ ॥

तथा परार्ध्यानि श्रेष्ठतमानि द्युमन्ति दीप्तिमन्ति वरीयांसि तत्प्रियाणि भूषणानि सर्वगुणोपेतं षड्रसोपेतमन्नममृतं स्वाद्वासवं मादकं पानं पेयं च अस्यै ददुः ॥ २९ ॥

असौ देवहूतिः स्वमात्मानं देहमादर्शे दर्पणे ददर्शेति शेषः कथम्भूतं स्रग्विणं स्रजः विभ्रतं विरजं निर्मलमम्बरं वासो यस्य तं विरजस्कं मलहीनं कृतं स्वस्त्ययनं मङ्गलानामाचरणं यस्य तं कन्याभिः संमानितम् ॥ ३० ॥

स्नातमुद्वर्तनक्षालितं कृतं शिरः स्नानमभ्यङ्गो येन तं सर्वैराभरणैर्भूषितमलङ्कृतम् एतदेव प्रपञ्चयति निष्कं पदकं ग्रीवायां यस्य तं कूजन्ती काञ्चनमये नूपुरे यस्य तम् ॥ ३१ ॥

श्रोण्योर्नितम्बयोरध्यस्तया धृतया काञ्चनमय्या बहूनि रत्नानि यस्यां तया काञ्च्या मेखलया महार्हेण हारेण रुचकेन मङ्गलद्रव्येण च कुङ्कुमादिना तदुक्तं विश्वप्रकाशे "रुचकं मङ्गलद्रव्ये ग्रीवाभरणदन्तयोः"इति विभूषितम् ॥ ३२ ॥

सुभ्रुवा सोभनया भ्रुवा सुदता सुन्दरदन्तपङ्क्त्या श्लक्ष्णो मनोहरः स्निग्धोऽपाङ्गः नेत्रप्रान्तो यस्मिन् पद्मकोशस्पृधा पद्मकोशस्पर्धिना चक्षुषा नेत्रेण सुभ्रुवा चक्षुषेति जातावेकवचनं तथा नीलैरलकैश्च लसन्मुखं यस्य तम् ॥ ३३ ॥

एवं भूतमात्मानं दृष्ट्वा यदा ऋषीणामृषभं श्रेष्ठं दयितं

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रियं पतिं भर्तारं सस्मार स्मृतवती तथा यत्र स प्रजापतिः कर्दमः आस्ते तत्र स्वयमपि स्त्रीभिः सहास्ते उपविवेशेत्यर्थः ॥ ३४ ॥

भर्तुः पुरस्तादग्रे स्त्रीसहस्रैर्वृतमात्मानं निशाम्य दृष्ट्वा तस्य भर्तुर्योगगतिं योगप्रभावं प्रति संशयं प्रत्यपद्यत कीदृशीयं योगगतिरितिसंशयं विस्मयं प्राप्तवतीत्यर्थः ॥ ३५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हृदं प्रविश्य किमकरोदित्यत्राह । अन्तःसरसीति । वेश्म गृहं तत्र स्थिता दशशतानि सहस्रं कैशोरवयसः षोडशवर्षवयस उत्पलगन्धवद् गन्धो यासां ता उत्पलगन्धयः ॥ २६ ॥

पथि दृष्टादर्शनवदेतद्दर्शनेन किमस्याः प्रयोजनमिति तत्राह । तां दृष्ट्वेति । अनेनाभ्युत्थानप्रणामसंभाषणादिप्रयोजनमुक्तं भवति कर्मकरीः कर्मकर्यः शाधि अनुशासनं कुरु ॥ २७ ॥

कीदृशं परिचारकर्माकुर्वन्निति तत्राह । स्नानेनेति । महत्या राज्या अर्हेण योग्येन मनस्विनीं प्रसन्नमनसं नूत्ने नूतने । २८ ।

वरीयांसि वरणीयतमानि द्युमन्ति कान्तिमन्ति सर्वगुणैर्भक्ष्यभोज्यचोष्यलेह्यलक्षणैरुपेतं मधुरादिषड्गुणोपेतं वा अमृतवत्स्वादु मद्यं यस्मिंस्तदमृतासवम् ॥ २९ ॥

भर्तृसान्निध्याभावे शरीरशृङ्गारेण किं तत्र वक्ति । अथेति । आदर्शे दर्पणे आत्मानं शरीरं विरजं निर्मलं कृतस्वस्त्ययनं दासीभिः कृताशीर्वचनम् ॥ ३० ॥

कुलस्त्री तु शिरः स्नानमुत्सवे स्नातु तैलतः ।
वारे वा पैतृके कर्मण्यन्यदा कण्ठसंप्लुवा ॥

इति स्मार्ताः ॥ ३१ ॥

पूर्वपश्चिमभागापेक्षया श्रोण्योरिति रुचकेन वृत्ताकारेण कण्ठाभरणेन ॥ ३२ ॥

सुभ्रुवादिभिश्च लसच्चकासन्मुखं यस्मिंस्तत्तथोक्तं पद्मकोशं स्पर्धत इति पद्मकोशस्पृर्धेन ॥ ३३ ॥

एवं विधमात्मानं दृष्ट्वा यदा ऋषीणामृषभं दयितं प्रेष्ठं पतिं पतिसमीपे इदं सर्वं शोभत इति सस्मार ततस्तदा स प्रजापतिर्यत्रास्ते स्वयं च ताभिः स्त्रीभिः सह तत्रैवास्त इत्यन्वयः ॥ ३४ ॥

यदा सा भर्तुः पुरस्ताद् स्थितं स्त्रीसहस्रैश्च वृतमात्मानमद्राक्षीत्तदा तस्य कर्दमस्य योगगतिं भगवद्ध्यानफलं निशाम्य किमिदं चित्रमिति संशयं विस्मयं प्रत्यपद्यत न तु कोटिद्वयावलम्बि विकल्पं प्रागेव निश्चायकधर्मदर्शनादित्यर्थः ॥ ३५ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सान्तरिति युग्मकम् । कर्म्मकरीर्नः शाधि । वयं किं करवामेत्यन्वयः ॥ २६-२७ ॥

स्नानेनेति युग्मकम् । पराद्ध्यानीति पाठो बहुत्र ॥ २८-२९ ॥

अथादर्श इति चतुष्कम् ॥ ३० ॥

कृतशिरःस्नानं तैलादिना आशिर आरभ्य सर्वाङ्गस्नानम् ॥ ३१—३३ ॥

ततश्च भावो जात इत्याह । यदेति ॥ ३४-३५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततः किमासीत्तदाह । सान्तः सरसीति । स्वस्यानन्दांशो देवहूतिः तस्याः तत्त्वमितस्तिरोहितं योगं निमित्तीकृत्य सहस्रस्त्रीरूपेण जातमतो न ताभिः काचिद् क्षतिः सरोमध्ये गृहमेकमद्भुतमिदं तु भगवत्कृतमेव ऋषिणा निर्मितमित्यवचनात् स्वनिर्मितस्त्रीणामुपभोगे दोषो देवहूतिविवाहश्च व्यर्थः स्यात् तद्गतोऽप्यानन्दः पुनः अस्यामेव संक्रमिष्यति बहिरुपचारास्तु सेत्स्यन्ति ताः पुनर्भगवदीया इति देवहूतिदेहस्थितिपर्यन्तं स्थित्वा पुनर्भगवद्योगमायामेव प्रवेक्ष्यन्ति तस्मिन् गेहे विद्यमानाः दशशतानि कन्यकाः ददर्श सर्वासामेकवयस्त्वं भगवत्कृतमेवेति ज्ञापयितुमाह । सर्वाः किशोरवयस इति । सहस्रसंख्या कामशास्त्रानुसारेण तत्रत्योत्कर्षप्रतिपादनार्था लोहितोत्पले स्त्रीस्वभावे रागासक्तिः सूचिता गन्धनिरूपणमन्यत्र संक्रमणार्थम् ॥ २६ ॥

ततो यज्जातं तदाह । तां दृष्ट्वेति । देवहूतिं दृष्ट्वा ताः स्त्रियः परिचर्यार्थं विश्वासार्थं च प्राञ्जलयो भूत्वा प्रोचुः तासां वचनमाह । वयमिति । कर्मकरीः तुभ्यं त्वत्सेवार्थं वयं कर्मकरीः दासीः अत एव शाधि आज्ञापय ते किं करवामेति अभीप्सितार्थो वक्तव्यः शरीरसंस्कारस्त्वस्माकं स्वधर्म एवेति स एव चेत् न वक्तव्य इति भावः ॥ २७ ॥

अतस्तथैव सर्वाः कृतवत्य इत्याह । द्वाभ्याम् स्नानेनेति । आदौ अमूल्येन स्नानेन स्नापयित्वा मलापकर्षणं स्नानमादौ सुखकरमङ्गमर्दादिस्नानं द्वितीयं कर्पूराद्यमूल्यद्रव्यैः स्नानं तृतीयं स्नानशब्दः क्रियावाची तद्रूपेष्वपि वर्त्तते अग्निहोत्रशब्दवत् अतः स्नानेन स्नापयित्वेत्युक्तं मनस्विनीं मानवतीं मनोः पुत्रीं मानवीमितिपाठे चकारादुद्वर्त्तनादिसर्वे संस्काराः अन्तः परिधानार्थमुपरिधानार्थं च दुकूले निर्मले इति नूतनयोरीत्पत्तिकमलसम्भवात् पक्षान्तरव्यावृत्त्यर्थमाह । नूत्ने इति । अस्यै न ददुरिति तस्याः सम्माननार्थं पुरतो बहून्येव दुकूलानि स्थापितानि सर्वाभ्यः सखीभ्यो दत्वा परिधेहीति तथा सति तस्याः सम्माननं भवति यत एता मानदाः ॥ २८ ॥

भूषणानि नानाविधानि च दत्तवत्यः पराद्ध्यानि अमूल्यानि गुणतोऽप्यमूल्यानि भवन्तीति वरीयांसीत्युक्तमतिसुन्दराणि कान्तियुक्तानि च अन्नं भोजनार्थं सर्वे गुणा व्यञ्जनादयः पानं च पानकादि अमृतरूपमासवरूपं च मादकानि हि द्रव्याणि कामशास्त्रे रसोत्पत्त्यर्थमुक्तानि अनिषिद्धानि जातीफलादीनि न तु मदिरादीनि निषिद्धानि अन्यथा भर्त्रा सह स्मरणामो न स्यात् ॥ २९ ॥

दर्पणं च दर्शनार्थं दत्तवत्यः प्रमाणार्थं तद्रूपमेतस्या अपि वर्णयति । अथेति चतुर्भिः । कामपूतनारूपायाः तस्याश्चतुरत्वात् सर्वालंकरणानन्तरमथ भिन्नप्रक्रमेण स्वरुच्यनुसारि विरचनार्थमथेत्याह । आत्मानं देहं स्वं स्वकीयं सखित्व्यात्मभावो जात इति तद्व्यावृत्त्यर्थं स्वपदप्रयोगः आनिष्क मालायुक्तं विरजानि अम्बराणि यस्याः देहोऽपि विरजः इ

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

स्वस्त्ययनं शुश्रूषणं यस्य प्रतिविश्वेऽपि कन्यानां सांनिध्यात् कन्याभिर्येंद्दुमानितम् ॥ ३० ॥

पुनः कृतं शिरःस्नानं येन अनेन स्त्रीणां सर्वदा न शिरःस्नानं स्नानद्वयं च सूचितं भिन्नप्रकारेण सर्वाभरणानि नित्यावश्यकानि निष्कं पदकं ग्रीवायां यस्य वलयिनमिति स्वाभाविकाभरणातिरिक्तो वलयः कूजती शब्दायमाने काञ्चननिर्मिते नूपुरं यस्य ॥ ३१ ॥

श्रोण्योरध्यस्ता या काञ्ची सुवर्णमयी बहुरत्नयुक्ता हारः मुक्तानाममूल्यः रुचकः कुङ्कुमबिन्दुश्चकारात् सर्वाण्येवानुक्तानि तैः सर्वैरेव भूषितम् ॥ ३२ ॥

पद्मकोशस्पृधा मुखेन उपशोभितं लसन्मुखमिति पाठेऽपि वक्रेण पद्मकोशस्पृधा लसत् संपूर्णमेव मुखं सुदतेति वक्रविशेषणं शोभना दन्ता यस्मिन्निति शोभना या भ्रूः श्लक्ष्णः स्निग्धः अपाङ्गो यस्मिन् तादृशचक्षुषा नीलैरलकैश्च मुखस्थैः पार्श्ववर्त्तिभिः सर्वैरेव लसन्मुखं यस्य ॥ ३३ ॥

एवमात्मानं दृष्ट्वा तस्य भोग्यतां मत्वा भोक्तारं सस्मारेत्याह । यदेति । आत्मनः पतिं दयितं परमप्रेमास्पदमृषीणामृषभं स्वधर्मेण लौकिकधर्मेण वैदिकधर्मेण च भजनीयः कर्दमो भवतीति विशेषणत्रयं सिद्धस्थानत्वात्मनःसिद्धिर्जातेत्याह । तत्र चास्त इति । पूर्वं यत्र प्रजापतिरास्ते तत्रैव स्त्रीभिः सह स्वयमप्यास्ते ॥ ३४ ॥

एवं स्वानुभूतं वैभवं दृष्ट्वा भर्तृमाहात्म्ये परमाश्चर्यं प्राप्तवतीत्याह । भर्तुरिति । भर्तुरग्रे स्वात्मानं स्त्रीसहस्रयुतं यदा अपश्यत् तदा तस्य योगगतिं दृष्ट्वा साधनापरिज्ञानात् परमं संशयमापद्यत निर्द्धारणे प्रमाणाभावात् संशयकार्यमाश्चर्यं वा आपद्यत ॥ ३५ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तुभ्यं तव कर्मकरीः किङ्कर्य्यः यद्वा तुभ्यं त्वां परिचरितुं त्वमस्मान् शाधि आज्ञापय ॥ २७ ॥

स्नानेन स्नानयोग्यतैलादिना भूषणादीनि परिधातुं ददुः । अन्नपाने च भोक्तुं ददुः ॥ २८-२९ ॥

स्वमात्मानं ददर्शेति शेषः । काश्चित् पाश्चात्याः स्त्रियः शिरसा न स्नान्तीति तद्वारणार्थमाह । कृतशिरःस्नानमिति । श्रोण्योः कोष्ठ्योरध्यस्तया उपरि विन्यस्तया काञ्च्या रुचकेन मङ्गलद्रव्येण "रुचकं मङ्गलद्रव्ये ग्रीवाभरणदन्तयोर" इति विश्वः सुदता सुभ्रुवा चक्षुषेति जातावेकवचनानि श्लक्ष्णो मनोहरः स्निग्धोऽपाङ्गो यत्र तेन पद्मकोषेण सह स्पर्द्धत इति पद्मकोषस्पृत् तेन ॥ ३०-३३ ॥

दृष्ट्वा च पत्युस्तस्य रमणयोग्यमात्मानं मत्वा यदा तं सस्मार तदा यत्र स प्रजापतिस्तत्रैव स्वयमप्यास्ते इति तत्रात्मानं पत्युरेकासने आसीनमेव विवेद । ननु जलह्रदात् पदव्यापारेण यान्तमिति तस्याद्भुतेव योगगतिः ॥ ३४ ॥

निशाम्य दृष्ट्वा तस्यैव योगगतिं योगप्रभावञ्च दृष्ट्वा संशयं कथमेतदभूदिति विस्मयम् ॥ ३५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

तुभ्यं किं करवाम सोऽस्मान् साधि आज्ञापय ॥ २६-२८ ॥

पराद्ध्यानि अमितमूल्यानि वरीयांसि श्रेष्ठानि अमृतासवं स्वादु मादकं च पानं पेयम् ॥ २९ ॥

तस्याः सौन्दर्यं वर्णयति । अथेति चतुर्भिः । स्वमात्मानं ददर्शेतिशेषः ॥ ३० ॥

स्नातमुद्वर्त्य प्रक्षालितं कृतमलस्नानमित्यर्थः कृतं सुरभ्योषधिजलेन शिरःस्नानं येन तम् कृतशुद्धस्नानमित्यर्थः निष्कं पदक ग्रीवायां यस्य तम् कूजन्ती काञ्चनमये नूपुरे यस्य तम् ॥ ३१ ॥

श्रोण्योर्नितम्बयोरध्यस्तयाऽवधृतया बहूनि रत्नानि यस्यां तया रुचकं कुङ्कुमादिमङ्गलद्रव्यं तेन तदुक्तम् विश्वप्रकाशे

रुचकं मङ्गलं द्रव्ये ग्रीवाभरणदन्तयोरिति ॥ ३२ ॥

सुदता सुभ्रुवा चक्षुषेति चैकवचनं जात्यभिप्रायेण कीदृशेन चक्षुषा श्लक्ष्णः सुन्दरः स्निग्धोऽपाङ्गो नेत्रप्रान्तो यस्य तेन पद्मकोशेन स्पर्द्धते इति पद्मकोशस्पृत्तेन एतैः लसच्छोभमानं मुखं यस्य तम् ॥ ३३ ॥ ३४ ॥

भर्तुः पुरस्तात् स्त्रीसहस्रवृतमात्मानं निशाम्य दृष्ट्वा तां योगगतिं च निशाम्य किमिदमिति संशयं प्रत्यपद्यत ॥ ३५ ॥

---

भाषाटीका ।

उस देवहूतीने सरोवर के घरके मध्यमे दश सौ कन्या देखीं वे सब कन्या किशोर अवस्था वाली है उत्पल सरीखे जिनके गन्ध हैं ॥ २६ ॥

वे सब स्त्री देवहूतीजी को देखकर हाथ जोडकर बोलने लगीं हम तुमारी दासी हैं हम को आज्ञा दो हम क्या करैं ॥ २७ ॥

फिर उनदासियोंने स्वयं जानकर दिव्य सुगन्धित जल से स्नान कराया निर्मल नवीन वस्त्र पहराये हे विदुरजी ! अतिश्रेष्ठ प्रकाश मान उत्तम भूषण पहिराये ॥ २८ ॥

अन्न भोजन को उपस्थित किया दिव्य पेयवस्तु पीने को दिया जो कि अमृत के तुल्य है ॥ २९ ॥

तब देवहूतीजी ने अनेक कन्योंसे सन्मान पाकर दर्पण में अपने शरीरको देखा कि दिव्यमाला गले में पडी है दिव्य वस्त्र पहिरे हैं शरीर तिलकादिक मङ्गल पदार्थ युक्त है निर्मल है ॥ ३० ॥

स्नान करने से शिर निर्मल हुआ है सब आभारणों से शरीर भूषित है गलेमे पदक भूषित है कंकण पहिरे हैं शब्दाय मान सुवर्ण के नूपुर हैं ॥ ३१ ॥

कटि भागमे कौंधनी पहरी है तिसमे बहुत रत्न जटित हैं बडे मूल्य का हार पहिरा है मुक्ता द्रव्य से शरीर भूषित है ॥ ३२ ॥

स तां कृतमलस्नानां विभ्राजन्तीमपूर्ववत्।
आत्मनो बिभ्रतीं रूपं सम्वीतरुचिरस्तनीम् ॥ ३६ ॥
विद्याधरीसहस्रेण सेव्यमानां सुवाससम्।
जातभावो विमानं तदारोहयदमित्रहन्! ॥ ३७ ॥
तस्मिन्नलुप्तमहिमा प्रिययाऽनुरक्तो विद्याधरीभिरुपचीर्णवपुर्विमाने।
बभ्राज उत्कचकुमुद्गणवानपीच्यस्ताराभिरावृत इवोडुपतिर्नभःस्थः ॥ ३८ ॥
तेनाष्टलोकपविहारकुलाचलेन्द्रद्रोणीष्वनङ्गसखमारुतसौभगासु।
सिद्धैर्नुतो द्युधुनिपातशिवस्वनासु रेमे चिरं धनदवल्ललनावरूथी ॥ ३९ ॥
वैश्रम्भके सुरसने नन्दने पुष्पभद्रके।
मानसे चैत्ररथ्ये च स रेमे रामया रतः ॥ ४० ॥
भ्राजिष्णुना विमानेन कामगेन महीयसा।
वैमानिकानत्यशेत चरन् लोकान् यथाऽनिलः ॥ ४१ ॥
किं दुरापादनं तेषां पुंसामुद्दामचेतसाम्।
यैराश्रितस्तीर्थपदश्चरणो व्यसनात्ययः ॥ ४२ ॥
प्रेक्षयित्वा भुवो गोलं पत्न्यै यावान्स्वसंस्थया।
बह्वाश्चर्यं महायोगी स्वाश्रमाय न्यवर्तत ॥ ४३ ॥
विभज्य नवधाऽऽत्मानं मानवीं सुरतोत्सुकाम्।
रामां निरमयन् रेमे वर्षपूगान्मुहूर्तवत् ॥ ४४ ॥
तस्मिन् विमान उत्कृष्टां शय्यां रतिकरीं श्रिता।
न चाबुध्यत तं कालं पत्याऽपीच्येन सङ्गता ॥ ४५ ॥

भाषाटीका।

दंतपंक्ति सुन्दर हैं भ्रुकुटी मनोहर है श्लक्ष्ण मनोहर दृष्टि-कटाक्ष हैं सुंदर चक्षु हैं जोकि पद्मको भी जीतने को उद्यत है नील वर्ण की अलकावली से मुख अति शोभित है॥ ३३॥

जिस समय में देवहूती ने ऋषियों में श्रेष्ठ अपने प्रिय-पतिको स्मरण किया तब ही जहां पर कर्दम प्रजापति थे उहां-पर स्त्रियों के सहित उपस्थि होगई ॥ ३४॥

पति के आगे अपने को हजारों स्त्रियों के सहित देख कर पति की योगगति को स्मरण करके देवहूति को बड़ा संशय हुआ ॥ ३५ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

स मुनिर्विवाहात्प्राग्यदात्मनो रूपं तदेव पुनर्बिभ्रतीम् सम्वीतौ प्रावृतौ रुचिरौ स्तनौ यस्याः पाठान्तरे तु रूपविशेषणम् ॥ ३६॥

शोभने वाससी यस्याः जातो भावः प्रेम यस्य हे अमित्रहन्! जितकाम ! ॥ ३७ ॥

तस्मिन्विमाने मुनिर्बभ्राजे न लुप्तो महिमा स्वातन्त्र्यं यस्य उपचीर्णं शुश्रूषितं वपुर्यस्य विकसितकुमुद्गणवानपीच्योऽतिसुन्दरः पूर्णचन्द्र इव मुनिर्नभ इव विमानं तारा इव ताः स्त्रियः कुमुदानीव तासां नेत्राणीति ज्ञेयम् ॥ ३८ ॥

तेन विमानेन अष्टलोकपालानां विहारो यस्मिन्कुलाचलेन्द्रे मेरौ तस्य द्रोणीषु दरीषु अनङ्गस्य सखा यो मारुतः शीतसुगन्धमन्दाऽनिलस्तेन सौभगं सौन्दर्यं यासु सिद्धैर्नुतः स्तुतः सन् द्युधुनिर्गङ्गा तस्याः पातेन शिवः स्वनो यासु तासु रेमे ललनावरूथी स्त्रीरत्नसमूहवान् ॥ ३९ ॥

वैश्रम्भकादिषु देवोद्यानेषु मानसे च सरसि रतः प्रीतः सन् ॥ ४० ॥

अत्यशेतातिक्रम्य स्थितः ॥ ४१ ॥

उद्दामचेतसां धीराणाम् व्यसनं संसारस्तस्य अत्ययो यस्मात् ॥ ४२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

प्रेक्षयित्वा दर्शयित्वा गोलस्य मण्डलम् स्वसंस्थया द्वीपवर्षादिरचनया यावांस्तावन्तम् बहून्याश्चर्याणि यस्मिंस्तम् ॥ ४३ ॥
नवधा विभज्य नवप्रभेदमात्मानं कृत्वा ॥ ४४ ॥ ४५ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी

विवाहात्प्रागित्यादि वत्प्रत्ययस्वारस्यात् व्याख्यातम् पूर्ववत्तु तपोमयदशापेक्षया पाठान्तरे रुचिरम्मनमितिपाठे ॥ ३६ ॥ ३७ ॥
उडुः रोहिणी सा इव देवहूतिरिति ज्ञेयम् ॥ ३८ ॥
शीतत्वादिकमनङ्गसखत्वेनाक्षिप्तम् ॥ ३९ ॥
रामया देवहूत्या सह ॥ ४० ॥
महीयसा विपुलेन ॥ ४१ ॥
उद्दामस्विपयान्तरापेक्षाराहित्येनोत्कृष्टं निजाश्रये धैर्यं गतं चित्तं येषां तथा च धीराणामिति फलितोऽर्थः ॥ ४२ ॥
स्वाश्रमाय स्वाश्रमङ्गन्तुम् ॥ ४३ ॥
नवप्रभेदेन तत्तदपत्योत्पत्तौ तत्तद्गुणप्रधानत्वप्रयुक्तनवभेदेन विशिष्टम् आत्मानं स्वं कृत्वा ध्यात्वा ॥ ४४
अपीच्येन सर्वाङ्गसुन्दरेण ॥ ४५ ॥ ४६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

हे अमित्रहन्! विदुर जितारिषड्वर्ग सः कर्दमः जातभावः सन् पूर्ववत् विवाहात्प्रागवत् आत्मनः स्वस्या रूपं बिभ्रतीमत एव विशेषेण भ्राजमानां सम्वीतौ प्रावृतौ रुचिरौ स्तनौ यस्याः तां पाठान्तरे रूपविशेषयां शोभने वाससी यस्यास्ताम् ॥ ३६ ॥ ३७ ॥

अलुप्तमहिमा अलुप्तप्रभावः प्रियया भार्ययानुसक्त अनुसक्तः विद्याधरीभिरुपचीर्णां शुश्रूषितं वपुर्यस्य स मुनिः कर्दमः तस्मिन्विमाने वभ्राजे रराज तत्र दृष्टान्तः उत्कचकुमुद्गणवान् विकसत्कुमुद्गणवान् अपीच्यो दर्शनीयः तारकाभिरावृतो नभःस्थः उडुपतिः पूर्णचन्द्र इवेति पूर्णचन्द्र इव मुनिः नभ इव विमानं तारा इव स्त्रियः कुमुदानीव तासां नेत्राणि इति विज्ञेयम् ॥ ३८ ॥

तेन विमानेनाष्टलोकपालानां विहारा यस्मिन् सः कुलाचलेन्द्रो मेरुः तस्य द्रोणीषु दरीषु कथंभूतासु अनङ्गस्य यः सखा मारुतः शीतसुगन्धमन्दानिलः तेन सौभगं सौन्दर्यं यासु घुधुनी गङ्गा तस्याः पातेन शिवः स्वनो यासु तासु ललनावरूथी स्त्रीरत्नसमूहवान्मुनिर्धनदवत्कुवेर इव रेमे ॥ ३९ ॥

वैस्रम्भकादिषु देवोद्यानेषु मानसे च सरसि रतः प्रीतः सन् रमया स्त्रिया सह रेमे रमितवान् ॥ ४० ॥

भ्राजिष्णुना प्रकाशमानेन महीयसा श्रेष्ठेन कामगेन विमानेनानिल इव सर्वत्राप्रतिहतगत्या चरन् वैमानिकान् लोकानत्यशेतातिक्रम्य स्थितः ॥ ४१ ॥

कीदृशोऽयं मुनेः प्रभाव इति न विस्मयनीयमित्याह। किमिति। यैः पुम्भिस्तीर्थपदः भगवतः व्यसनाप्ययः तापत्रयनाशनशरणः पादः आश्रितः तेषामुद्दामचेतसां योगपरिशुद्धमनसां पुंसां किं दुरापादनं दुष्प्रापं किमस्तीत्यर्थः ॥ ४२ ॥

स्वसंस्थया द्वीपवर्षादिसंस्थानेन यावान् भूगोलस्तावन्तं बह्वाश्चर्यमिति विस्मयनीयं भुवो गोलं पत्न्यै मायायै दर्शयित्वा महायोगी कर्दमः पुनः स्वाश्रमाय न्यवर्तत स्वाश्रमं प्रत्यागतवान् ॥ ४३ ॥

नवधात्मानमपत्यं विभज्य नवधापत्यमुत्पादयिष्यामीति मनसा स्ववीर्यं विभज्येत्यर्थः सुरते उत्सुकामुत्साहवतीं मनोः पुत्रीं रामां स्त्रियं विशेषेण रमयन्वर्षपूगान्वर्षगणान्मुहूर्तवद्रेमे ॥ ४४ ॥

तस्मिन्विमाने उत्कृष्टां निरतिशयसुखस्पर्शां रतिकरीं रतिवर्द्धिनीं शय्यां श्रिता अपीच्येन सुन्दरेण पत्या भर्त्रा सङ्गता संयुक्ता सती तमनेकवर्षसमूहात्मकं कालं नाबुध्यत एतावान् कालो व्यतीत इति न ज्ञातवती ॥ ४५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अर्थक्रियायोग्यत्वान्न विकलापरपर्यायः संशयोऽभूत् किंतु विस्मय एवेति भावेन व्यवायोपक्रमं वक्ति। स तामिति। स्तनपट्टिकया सम्वीतौ रुचिरौ स्तनौ यस्य तत्तथा ॥ ३६ ॥
जातभावः प्रादुर्भूतव्यवायलीलारम्भः ॥ ३७ ॥

जातभाव इत्युक्तं विवृणोति। तस्मिन्निति। स तस्मिन्विमाने वभ्राजे चकास इत्यन्वयः प्रकाशयोग्यगुणानाह। अलुप्तेत्यादिना। अलुप्तमहिमा अपरिच्छिन्नमाहात्म्यः ग्राम्यकर्मासक्तस्यापि सामर्थ्यलोपो नास्तीत्यर्थः "सर्वेन्द्रियाणां जरयन्ति तेज इति" श्रुतेरितरेषां स स्यादिति माहात्म्यलोपशङ्काकारणमाह। प्रिययेति। "आलिङ्गने चुम्बने वाप्यनुषङ्गोऽनु वर्तते" इति अनुमर्दनादिना उपचीर्णामपचूर्णितं शुश्रूषितं वपुर्यस्य स तथा अनेन सुरतालये स्त्रिय एव परिचारिका इति सूचितम् "कचः कलङ्के दोषे च कुन्तले भ्रमरे तथा" इत्यभिधानादुत्कचक उद्धृतदोषः उत्कृष्टो गुणो यस्य तदुडुगणं तच्च पानं पातुं योग्यमधरामृतं तदुडुगणपानं तस्य वीचिः परम्परास्यास्तीत्युडुगणपानवीच्यः मत्वर्थे यत्प्रत्ययः यद्वा उडुगणपानः उत्तमाधरामृतश्च वीचयः एवाचीच्यः प्राप्तषोडशवर्षः "प्राप्तषोडशवर्षः स्यादाचीच्य इति कथ्यते" इति च बुद्ध्यवतारार्थं दृष्टान्तमाह। ताराभिरिति। उडुपतिश्चन्द्र उक्तविशेषणानि यथा सम्भवं चन्द्रेऽपि घटनीयानि ॥ ३८ ॥

वनजलक्रीडादीनां सुरताङ्गत्वात् तदप्यनेनानुष्ठितमिति भावेन कामगमित्युक्तं विवृणोति श्लोकद्वयेन। तेनेति। तेन विमानेनाष्टानां लोकपालानामिन्द्रादीनां विहारः क्रीडा यासु तास्तथोक्ताः कुलाचलेन्द्राणां सप्तकुलपर्वतानां द्रोणयो नितम्बगुहास्तासु अष्टलोकपविहारकुलाचलेन्द्रद्रोणीषु वैश्रवणवच्चिरं रेमे इत्यन्वयः पाषाणसन्धिषु सूर्यकिरणसन्तापसम्भृतनिदाघेषु स्वतः कामाग्निना तत्स्य सुरतोत्सवानुभवः कथं घटत इत्यत उक्तमनङ्गेति अनङ्गसखो मारुतो वायुस्तेन सौभगासु सुन्दरसुखासु घुधुनी आकाशगङ्गा तस्याः पातेन प्रस्रवणेन शिवः कर्णसुखः स्वनः शब्दो यासु तास्तासु अनेन विशेषणद्वयेन मान्द्यशैत्यमिति गुणद्वयमुक्तं ललनाः स्त्रियः वरूथः समूहः उभयत्र समम् ॥ ३९ ॥
इदानीं सौरभ्यं ध्वनयति वैस्रम्भके सुरवन इति ॥ ४० ॥
इतरेषां वैमानिकानां स्वाधिकृतेष्वेव प्रदेशेषु सञ्चारादस्य विमानस्य विशेषाभावादयं सर्वातिशयीत्याह। भ्राजिष्णुनेति। विमानेन चरन्तीति वैमानिकास्तान् ॥ ४१ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एतदैश्वर्यं न स्वनियतं श्रीनारायणप्रसादायत्तमित्याशयेनाह । किं दुरापादनमिति । उद्दामचेतसामगाधबुद्धीनां तीर्थं शुद्धजलं गङ्गा पदोर्यस्य स तीर्थपात्तस्य ॥ ४२ ॥

यद्वाश्चर्याद् भूगोलकादधिकैश्वर्यातिशयः स्वाश्रम इतिभावेन ततस्तस्य निवृत्तिं वक्ति । प्रेक्षयित्वेति । स्वसंस्थया स्वसमाध्या यावांस्तावत्प्रदेशोपेतं भूगोलकं भूमण्डलम् ॥ ४३ ॥

विन्दुसरः स्वाश्रमं प्राप्य किमकार्षीत्कर्दम इति तत्राह । विभज्येति । महायोगित्वाद्बहुशरीरग्रहणसमर्थः कर्दम आत्मानं स्वं नवधा विभज्य योगशक्त्या नवसंख्याविशिष्टानि शरीराणि गृहीत्वा सुरतोत्सुकां मानुषरतिकामुकीं मानवीं मनुपुत्रीं रामामपि तावद्रूपवतीं नितरां रमयन् वात्स्यायनोक्तविधिना वर्षपूगान् मुहूर्तवद्रेम इत्यन्वयः ॥ ४४ ॥

तृतीयपुरुषार्थानुभव ईदृगिति व्यनक्ति । तस्मिन्निति । मनस्वात्वाद्रतिकरीं यो बहुतिथस्तं कालम् ॥ ४५ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स तामिति युग्मकम् । अपूर्ववत्वे हेतुः आत्मन इति टीकायां विवाहात् प्रागित्यादिकमपूर्ववदिति वतिप्रत्ययस्वारस्याल्लभ्यते अपूर्वत्वं हि तपोमयदशामात्रापेक्षया ॥ ३६ ॥ ३७ ॥

उडुपतिरिति उडुः रोहिणी सा च प्रियास्थानीया ज्ञेया प्रियाशब्द एवोभयत्रोन्नीयते ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥

किमिति । उद्दामचेतसामपेक्षान्तरायद्धचित्तत्वेन निजाश्रयं धैर्यं गतानाम् । यद्वा । सर्वत्र कुण्ठतारहितचित्तानामिति तीर्थपद इति व्यसनात्यय इति च दुःसाध्यत्वमेव व्यावर्त्तयति । सर्वविघ्नात्ययपूर्वकं सर्वसम्पादनस्य विवक्षितत्वात् ॥४२॥४३॥

तत्तदपत्योत्पत्तौ तत्तद्गुणप्रधानत्वेन नवधा ॥ ४४ ॥ ४५॥ ४६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

स्वमाहात्म्ये ज्ञाते पश्चात्तया सह सङ्गं कृतवानित्याह । स तामिति । कृतं मलस्नानं ययेति बाह्यशुद्धिरुक्ता तामित्यान्तरी अपूर्ववत् नूतनवद्विभ्राजन्तीमिति नूतनरसोत्पादनार्थमुक्तम् एतावताप्यलङ्कारेण विवाहकालरूपमेव प्राप्तवती नत्वलौकिकं किञ्चिज्जातमिति वदन् तस्याः स्वभावसौन्दर्यं वर्णयति । आत्मनो बिभ्रतीं रूपमिति । सम्यक् वीतौ कञ्चुकादिना वेष्टितौ रुचिरौ स्तनौ यस्याः ॥ ३६ ॥

स्वदत्तं वैभवमधिकमाह । विद्याधरीति । ताः भगवदीया विद्याधर्यः "सिद्धा विद्याधराश्चैव योग एव प्रतिष्ठिता" इति सुवाससमिति कामाभावे उद्दीपनार्थं तथा वर्णनायाः फलमाह । जातभाव इति । जातो भावः कन्दर्पो यस्य तद्विमानं तामारोहयत् अमित्रहन्निति श्रोतुः कामाभावार्थमन्यथाकामलीलाश्रवणेन जायमानः कामः दुष्टो भवतीति अमित्रत्वं तस्य ॥ ३७ ॥

कामलीलामाह । तस्मिन्नितिचतुर्भिः । रागो हि महत्त्वनाशको भवति दृष्टादृष्टविभेदेन तदभावार्थमाह । अलुप्तमहिमेति । स्वयमपि विद्याधरीभिः उपचीर्णवपुः रञ्जकद्रव्येणेव प्रियया अनुरक्तः प्रियागतरागेण प्रियत्वात् रक्त इत्यर्थः उत्कचकुमुद्गणवान् विकसितकुमुद्गणयुक्तश्चन्द्रः उद्गताः कचा यासां कौ मुदं याश्च केशवत्यः सुखदायिन्यो याः स्त्रियः तद्गणावृतः अपीच्यः स्त्रीणां प्रियः सौन्दर्यं गुणसूचकं रसालंबनत्वं स्त्रीरुच्याः तासामपि रसविकाशकत्वं तच्छास्त्राभिज्ञत्वं बोधयति स्त्रीभिश्च सेवितवपुः तत्कार्योपयोगिकोमलत्वापादिका हि ताः तासु रागाभावार्थं तथा रञ्जनमुक्तं तस्मिन् प्रसिद्धे विमाने बभ्राजे राजकन्या इह वैभवमपेक्षते अतः प्रथमतः शोभाऽतिशयो वर्णितः सर्वलोकप्रसिद्धाश्च ते जाता इति दृष्टान्तेन स्पष्टयति । ताराभिरावृत इवोडुपतिर्नभःस्थ इति । आकाशवद्विमानस्य विशालता च सूचिता प्रदेशान्तरे यथा ताराः अन्या एवावरका भवन्ति तथा तत्रापीति यथा शय्यादिपदार्थाः तत्र तत्र तथा स्त्रियोऽपीति ज्ञापितम् ॥ ३८ ॥

विहारमाह । तेनेति । अष्ट ये लोकपालाः तेषां विहारस्थानभूताः कुलाचलेन्द्रस्य मेरोः द्रोण्यस्तासु रेम इति संबन्धः यथा धर्मे देशादयःअङ्गभूता एवं कामेऽपि अन्यथा हि स रसः तत्रतत्राभिव्यज्यते यथाऽऽकरेष्वर्थः तस्य देशस्य रसोत्पादने अनुभावसांनिध्यमाह । अनङ्गसखमारुतः दाक्षिणात्यो वातः कामजनकोऽन्यो,वा रमणो वा तस्यात्यन्तापेक्षा अतः तेन सौभगासु सिद्धानां स्तोत्राणि च प्रोत्साहकानि अन्यथा वैराग्यादिभिः रस उपहन्येत, द्युधुनी गङ्गा तस्याः पाताः शीतादयः प्रवाहाः पतितानां वातैः शिवः स्वनो यासु अशुद्धे हि भौतिकानि पापानि संक्रान्तानि भवन्ति तदभावार्थमुक्तं धनदवदिति द्रव्यक्षत्यभावः ललना स्त्री तत्समूहयुक्तः परितः स्त्रीणां दर्शनम्॥३९॥

न केवलं तानि स्थानानि दृष्टानि किन्तु तत्र रमणमपि कृतवानित्याह । वैश्रम्भक इति । भ्राजिष्णुना विमानेन महीयसा वैमानिकानत्यशेत चरन् लोके वैस्रम्भकादीनि दिक्पालानां भोगोपवनानि षट्स्थानानि गणितानि भगवद्दत्तानीति ज्ञापयितुं सा हि रामात्वं प्राप्ता बन्धादिकरणात् स्वयमपि तया रतः ॥ ४० ॥

एवमलौकिकोत्कर्षमुक्त्वा तत्रत्यसजातीयेभ्य उत्कर्षमाह । भ्राजिष्णुनेति । वैमानिकानयमत्यशेत सर्वप्रकारेण तानतिक्रम्य स्थितः तेषां विमानानि न स्वप्रकाशभूतानि तेषां च मर्यादा विमानस्य न हि ते भूमौ समायान्ति नापि सिद्धपदादग्रे गच्छन्ति इदं तु कामगमपरिमितं चैतत् अतश्चतुर्भिर्गुणैरत्यशेत क्रियाप्यतिक्रममाह । चरन् लोकानिति । लोकाल्लोकान्तरं गच्छन् अनिल इव तानत्यशेतेत्यर्थः ॥ ४१ ॥

एवं भोगमुपपाद्य यत एतावत्त्वं तदाह । किं दुरापादनमिति । प्रतिनियतभोगाः यस्य कस्यापि न भवन्ति तथा सति मर्यादाभङ्गः स्यात् सर्वं च भवति तेन सह तत्रापि मर्यादा अतोऽस्य कथमेतज्जातमित्याशङ्क्य तदुपपादयति । येराश्रितः तीर्थपदश्चरणः"चरणं पवित्रं विततं पुराणम्"इति श्रुत्या चरणस्य व्यापकत्वं सनातनत्वमपहतपाप्मत्वं च आश्रितानामपि तथात्वसम्पादकत्वं च अतः सर्वगतो भोगश्चरणाश्रये न विरुद्ध्यते तारतम्यं च पापात् तदप्यपहतपाप्मत्वान्न भवति पुराणत्वाच्च न तत्र कालस्य प्रतिबन्धकत्वमतः स्वभावत एव सर्वे भोगाश्चरणाश्रये भवन्ति किञ्च कामिता अपि भवन्ति तीर्थानि हि

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

कामितदानार्थं कृतानि तान्यपि चरणे सन्तीत्याह । तीर्थानि पादे यस्येति सर्वाणि च फलानि विचित्रव्यसने संसारे भोक्तुमशक्यानि व्यसनानां बाधकत्वात् तान्यपि चरणो दूरीकरोतीत्याह । व्यसनात्यय इति । व्यसनानामत्ययो यस्मात् "अतिपाप्मानमरार्ति तरेम" इति वाक्यात् चरणस्य व्यसननाशकत्वं सिद्धं तस्याश्रयणं च सर्वेषां न भवति किन्तु केषाञ्चिदेवेति तदर्थं देहान्तःकरणयोर्गुणद्वयमाह । पुंसामिति । स्वातन्त्र्यं तेषामिति प्रसिद्धिः तदुभयधर्मकत्वेन केचनैव लोकादिभ्यः स्वतन्त्रा भवन्ति अन्तःकरणधर्ममाह । उद्दतं दाम चित्ते येषां बन्धकं हि दाम अपरिमितश्चरणः न हि बद्धे परिच्छिन्ने स्थापयितुं शक्यते अतोऽन्तःकरणस्य देहस्यापि प्रतिबन्धकत्वाभावात् उभयोपभोग्यः तेषां न कोऽपि दुरापः दुःखेनापादनं यस्येति परिच्छिन्नस्यैव भवति ॥ ४२ ॥

एवं सोपपत्तिकं भोगमुक्त्वोपसंहरति । प्रेक्षयित्वेति । तस्याः कामपूरणे पत्नीत्वमेव साधकं योगबलेन नैकत्र प्रदर्शनं किन्तु स्वसंस्थया यावान् यो यत्र वर्तते तावान् तां तत्रैव नीत्वा प्रदर्शितवान् बहून्याश्चर्याणि यत्र अन्यथा न पश्येत् तथा दर्शने सामर्थ्यं महायोगीति स्वाश्रमः सिद्धचेत्रम ॥ ४३ ॥

अन्तरिक्षे अपत्यजनने रुद्रदैवत्यो भवतीति ऋषीणामुत्पत्तिसिद्ध्यर्थं भूमावागत्य प्रजामुत्पादितवानित्याह । विभज्येति । नवधा आत्मानं विभज्य भिन्नभावेन नव रूपाणि कृत्वा तस्याः तथा सहने सामर्थ्यं मानवीमिति बहुधा करणे हेतुः । सुरतोत्सुकामिति । भिन्नभावे वैलक्षण्ये ज्ञातेऽपि तस्याः शङ्काभावायाह । रामामिति । रामायां हि लज्जाभयं च नोत्पद्यते तथाभावादेव तस्या रामात्वमतस्तां नितराम् रमयन् स्वयं च वर्षपूगान् मुहूर्तवत् रेमे कालस्य गणनायां हि वर्षा भवन्ति आनन्दानुभवाभावे च गणना अतः सुरतान्तकालः सुखानुभवहेतुः मुहूर्तमात्रमिति तथैव सर्वं कालं मेने ॥ ४४ ॥

तस्या अपि कालज्ञानाभावमाह । तस्मिन्निति । आश्रयधर्मादेव प्रकाशमानात् सूर्योदगत्या कालाज्ञानं शय्या च निद्रादिजनन्मोहिका तत्रापि सा रतिकरी अन्तःस्थितमानन्दं प्रकटयति अतो भोगकालो यावान् जातः तं च नावुध्यत आत्मानं पूर्वावस्थां च पतिरत्र परमसुन्दरः तत्कालगुणेष्वनुकूलः ॥ ४५ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

स मुनिः आत्मनो रूपं विवाहात् प्राक् यादृशमासीत्तदेव पुनर्बिभ्रतीमित्यर्थः । संवीतौ प्रावृतौ रुचिरौ स्तनौ यस्यास्तां नपुंसकपाठे रूपविशेषणं हे अग्निहन् ! जितकाम ॥ ३६ ॥ ३७ ॥

तस्मिन् विमाने मुनिर्बभ्राजे । उपचीर्णं शुश्रूषितं वपुर्यस्य सः विकसितकुमुद्गणवान् अपीच्योऽतिसुन्दरः पूर्णचन्द्र इव मुनिः नभ इव विमानं तारा इव ताः स्त्रियः कुमुदानीव तासां नेत्राणीति ज्ञेयम् ॥ ३८ ॥

तेन विमानेन रेमे कुलाचलेन्द्रो मेरुः द्युधुनिर्गङ्गा तस्या ऊर्मिकृतः पातेन शिवः स्वनो यासु तासु ललनासमूहवान् ॥ ३९ ॥

वैश्रम्भकादिषु देवोद्यानेषु मानसे सरसि ॥ ४० ॥

अत्यशेत अतिक्रान्तवान् ॥ ४१ ॥

उद्दामचेतसां तच्चारणादन्यत्राबद्धमनसाम् ॥ ४२ ॥

गोलं मण्डलं स्वसंस्थया द्वीपवर्षादिरचनया यावान् तावन्तम् ॥ ४३ ॥

नवधा नवप्रभेदेनात्मानं कृत्वा ॥ ४४ ॥ ४५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कृतमलस्नानां कृतकण्ठस्नानामुपलक्षणमेतच्छुद्धस्नानस्यापि स्नानद्वयस्य पूर्वत्रोक्तत्वात् विवाहात्प्राक् यदात्मनो रूपं तदेव बिभ्रतीं ततोऽप्याधिक्यं दर्शयति अपूर्ववत् बिभ्राजन्तीमिति संवीतौ कुचपट्टिकावृतौ रुचिरौ स्तनौ यस्यास्ताम् जातो भावो भक्तिर्यस्य सः हराविति शेषः अयमर्थः ब्रह्माज्ञापालनार्थं स्त्रीसङ्गं करिष्यामि वस्तुतस्त्वदं हेयमेव परमपुरुषार्थस्तु हरिभक्तिरेवेति तत्पूर्ववर्णितगुणं विमानमारोहयत् हे अग्निहन् ! जितषड्वर्ग ! ॥ ३६ ॥ ३७ ॥

जातभावत्वादेव तस्मिन् विमाने विद्याधरीभिरुपचीर्णं शुश्रूषितं वपुर्यस्य स तथाभूतोऽपि प्रियया हेतुभूतया अनुरक्तोऽपि तस्यामनुरक्तिविडम्बनं कुर्वाणोऽपि अलुप्तमहिमैव बभ्राज अशोभत उत्कचो विकसितो यो कुमुत्समूहस्तद्वान् अपीच्यो निर्मलः कुमुद्गणवानासक्तिरहितः ताराभिरावृतः उडुपतिश्चन्द्रो यथा भ्राजते तद्वत् कुमुद्गणतुल्यदेवहूतिनेत्राद्यङ्गगणवान् तदनासक्तः तारायुक्तनभस्तुल्यविद्याधरीयुक्तविमानस्थः मुनिर्द्विजपतिरित्यर्थः ॥ ३८ ॥

तेन विमानेन अष्टलोकपालानां विहारो यस्मिन् कुलाचलानामिन्द्रे मेरौ तस्य द्रोणीषु दरीषु अनङ्गस्य सखा वसन्तस्तस्मान्मारुतेन शीतसुगन्धमन्देन सौभगं सौन्दर्ययासु द्युधुन्याः गङ्गायाः पातेन शिवः मङ्गलप्रदः स्वनः शब्दो यासु तासु सिद्धैर्नुतः स्तुतः ललनानां वरूथः समूहोऽस्यास्तीति स तथा धनद इव रेमे ॥ ३९ ॥

वैस्रम्भकादिषु देवारामेषु मानसे सरसि च रामया प्रियया चरतः प्रीतः सन् ॥ ४० ॥

यथा अनिलश्चरन् लोकानतिक्रामति तथा वैमानिकानत्यशेत अतिक्रम्य स्थितः ॥ ४१ ॥

उद्दामचेतसां वनमालीनिविष्टचेतसां यैस्तीर्थपदः श्रीहरेः व्यसनानामत्ययो नाशो यस्मात्स चरण आश्रितस्तेषां किं दुर्लभम् ॥ ४२ ॥

स्वसंस्थया द्वीपादिरचनया यावान् तावन्तं भुवो गोलं मण्डलं पत्न्यै प्रेक्षयित्वा दर्शयित्वा ॥ ४३ ॥

आत्मानं स्वरूपं नवधा नवप्रकारेण विभज्य नवापत्यरूपं स्वरूपं करिष्यामीति सङ्कल्प्येत्यर्थः सुरते संभोगे उत्सुकां नितरां रमयन् वर्षसमूहान् मुहूर्तवद्रेमे ॥ ४४ ॥

अपीच्येन सुन्दरेण ॥ ४५ ॥

---

एवं योगानुभावेन दम्पत्यो रममाणयोः ।
शतं व्यतीयुः शरदः कामलालसयोर्मनाक् ॥ ४६ ॥
तस्यामाधत्त रेतस्तां भावयन्नात्मनात्मवित् ।
नोधा विधाय रूपं स्वं सर्वसङ्कल्पविद्विभुः ॥ ४७ ॥
अतः सा सुषुवे सद्यो देवहूतिः स्त्रियः प्रजाः ।
सर्वास्ताश्चारुसर्वाङ्ग्यो लोहितोत्पलगन्धयः ॥ ४८ ॥
पतिं सा प्रव्रजिष्यन्तं तदा लक्ष्योशती सती ।
स्मयमाना विक्लवेन हृदयेन विदूयता ॥ ४९ ॥
लिखन्त्यधोमुखी भूमिं पदा नखमणिश्रिया ।
उवाच ललितां वाचं निरुध्याश्रुकलां शनैः ॥ ५० ॥

भाषाटीका ।

तब कर्दमजीने देखा कि देवहूतीजीने स्नान करलिया है तो मलनिवृत्त होगयाहै पहिलेसे दूसरा रूप होगया है अपना रूप दिव्यधारण किया है स्तन दोनों सुन्दर वस्त्रसे आच्छादित करलिये हैं ॥ ३६ ॥

हजारों विद्याधरियों से सेवित हैं सुन्दर वस्त्र पहिरे हैं तब कर्दमजी के क्रीडा का भाव उत्पन्न हुआ तो हे विदुरजी ! उस विमान पर उनने उनको आरोहण कराया ॥ ३७ ॥

आतप्रकाशमान महिमावाले श्रीकर्दमजी हजारों विद्याधरियों से शरीर की सेवा को प्राप्त होकर उस विमान में विराजमान होने से ऐसे शोभित भये जैसे खिलीं हुई कुमोदिनी समूह के सहित तारों के मध्य मे स्थित चन्द्रमा आकाश में शोभित होवे ॥ ३८ ॥

कर्दमजी उस विमान मे चढकर अष्टलोकपाल इन्द्रादिकों का विहारस्थान जो मेरुपर्वत तिसकी जो अनेकों कन्दरा कन्दर्प का सखा जो शीतल वायु तिससे सुन्दर सुखदायक तथा आकाश गङ्गा के जलों के गिरने से पापहारक शब्द जिनमें होरहा है ऐसी कन्दारों में अनेक स्त्रीयों को साथ में लेकर सिद्धोंसे भी स्तुत होकर अनेक वर्षों तक विहार करते रहे ॥ ३९ ॥

वैश्रम्भक सुरसन नन्दन पुष्पभद्र मानस चैत्ररथ्य इन वनों में अपनी प्रिया के साथ रत होकर कर्दमजीने विहार किया ॥ ४० ॥

बडे भारी प्रकाशमान कामचारी विमानसे विचरने से पवन के तुल्य होकर जितने विमानवाले देवता हैं तिनकों कर्दमजीने जीत लिया ॥ ४१ ॥

जिन्हों ने संसार दुःख के नाश करने वाले तीर्थपाद भगवान् का आश्रय लिया है उन धीर पुरुषों को क्या दुर्लभ है ॥ ४२ ॥

बहुत आश्चर्ययुक्त अपनी स्थितिसे जितना बडा भूगोल है तिस को पत्नी को दिखा कर महायोगी कर्दमजी लौटकर अपने आश्रम को आगये ॥ ४३ ॥

रतिमे अत्यन्त उत्कण्ठावाली मनुपुत्री को रमण कराते समय अपने वीर्य से नौ कन्याओं को उत्पन्न कर के मुहूर्त मात्रके तुल्य सब काल को कर्दमजीने बिता-दिया ॥ ४४ ॥

देवहूतीजीने उस विमानपर उत्तम शय्या मे रहकर रति का अत्यन्त सुख भोगने से सुन्दर पति के साथ में रह कर जो काल बीत गया तिस का ख्याल नहीं किया ॥ ४५ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

शरदः सम्वत्सराः मनागीषदिव व्यतीयुः ॥ ४६ ॥

आत्मना स्वदेहार्धरूपेणातिप्रीत्या भावयन् तथा सति सदपत्यं भवेदिति नोधा नवधा सर्वसङ्कल्पविदिति तस्या बह्वपत्यसङ्कल्पं जानन्नित्यर्थः विभुस्तथाकर्तुं समर्थश्च आत्मविदिति च तस्या-मनासक्तत्वात्स्त्रियो जाता इति भावः"पुमान्पुंसोऽधिके शुक्रे स्त्रीभवत्यधिके स्त्रिया इति" स्मृतेः ॥ ४७ ॥

अतोऽनन्तरमेव सद्य एकस्मिन्नेवाहनि चारूणि सर्वाण्यङ्गानि यासाम् ॥ ४८ ॥

प्रव्रजिष्यन्तमालक्ष्य वितर्क्य स्मयमाना बहिरन्तस्तु विक्लवेन व्याकुलेन विदूयता सन्तप्यमानेन हृदा उवाचेत्युत्तरेणान्वयः ॥ ४९ ॥

नखा एव मणयस्तै श्रीः शोभा यस्य तेन पदा भुवं लिखन्तीति दुरन्तचिन्तालक्षणम् ॥ ५० ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

तथासति अतिप्रीत्या देहार्द्धत्वेन भावने सति ॥ ४७ ॥

अतस्तत्तद्गुणप्रधानत्वेन नवधात्मनो ध्यानेन वीर्य्याधानानन्तरमेवात्मविस्त्वेन तस्यामनासक्तत्वात् स्त्रियएव प्रजाः सा देवहूतिरुत्पादितवती एकस्मिन्नेवाहनीति योगप्रभावो दर्शितः ॥ ४८ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

पतिमितियुग्मकम् तदा नवपुत्र्युत्पत्त्यनन्तरकाले । ४९ । ५० ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कियान्कालो व्यतीत इत्यत्राह । एवमिति । योगानुभावेन योगप्रभावेण कामासक्तयोः दम्पत्योः रममाणयोः सतोः शतं शरदः सम्वत्सराः मनागीषत्कालमिव व्यतीयुः अतिक्रान्ताः ४६ ॥

आत्मवित् जीवपरमात्मयाथात्म्यवित् कर्दमः तां प्रियामात्मना स्वदेहार्धरूपेणातिप्रीत्या आत्मना मनसा भावयन्नभिप्रयन्सर्वसङ्कल्पवित्तस्याःबहुपत्यसङ्कल्पं जानन् विभुस्तथाकर्तुं समर्थः स्वं स्वीयं रूपं वीर्यं नोधा नवधा विधाय विभज्य तद्रेतः तस्यां पत्न्यामाधत्त निहितवान् ॥ ४७ ॥

ततः अनन्तरं सा देवहूतिः सद्य आशु स्त्रियः स्त्रीप्रजाः अपत्यानि सुषुवे प्रसूतवती कथम्भूताः प्रजाः ताः सर्वा नव स्त्रियः चारूणि सर्वाण्यङ्गान्यवयवा यासां लोहितोत्पलस्य रक्तोत्पलस्येव गन्धो यासां ताः ॥ ४८ ॥

तदापत्योरन्यनन्तरं प्रव्रजिष्यन्तं सन्न्यस्यन्तं पतिमालक्ष्य वितर्क्य उशती कमनीया सा सती देवहूतिः बहिः स्मयमाना ईषद्धसमाना अन्तस्तु विक्लवेन व्याकुलितेन चेतसा विदूयता परितप्यमानेन हृदयेन मनसा अधोमुखी नखा एव मणयः तेषां श्रीः शोभा यस्मिंस्तेन पदा चरणेन भुवं लिखन्ती अनेन दुरन्तचिन्ता सूच्यते अश्रुकणान् शनैः निरुध्य ललितां मृद्वीं वाचमुवाच ॥४९॥५०॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इदानीं कालं संख्याति । एवमिति । शरदो वत्सराः व्यतीयुरतिक्रान्ताः कामलालसयोश्चन्द्रोदये वर्धमानसमुद्रतरङ्गवद्विषयभोगाभिलापयोः ॥ ४६ ॥

सुरतफलितमाह । तस्यामिति । आत्मविश्वं विवृणोति । सत्येति । सत्यसङ्कल्पो हरिः तं सत्यसङ्कल्पत्वादिगुणविशिष्टत्वेन वेत्तीति येन यो गुणो हरावुपसंहियते स तद्गुणविशिष्टो भवतीति न्यायात् स्वयमपि सत्यसङ्कल्पः स्वं स्वरूपं नवधा विधाय तामप्यात्मना मनसा नवधा भावयन् तस्यां गर्भलक्षणं रेत आधत्तेत्यन्वयः योगशक्त्या नवसु स्वस्य व्याप्तिसामर्थ्यं सूचयति । विभुरिति । अर्धमात्मन इति पाठे आत्मनोऽर्धं पत्नीं भावयन्नित्यर्थः "अर्धो वा एष आत्मनो यत्पत्नी"इति श्रुतेः ॥ ४७ ॥

शुक्लेन हरिणा ऋषय अध्यास्यंस्तेज आत्मन इत्यादावभिहितत्वादाहितः स गर्भः स्त्रीलिङ्ग इति निश्चितेऽपि कतिपु कालावयवेषु गतेषु सा किमसूतेति तत्राह । तत इति । सद्य इत्यनेन निरस्यति कतिष्विति शङ्काम् ॥ ४८ ॥

महतां यदुत्तरं कार्यं तत्प्रार्थनापूर्वकं कर्तव्यमित्यतो देवहूतिः पुत्रीणां दानं पुत्रं च पतिं प्रार्थयते । पतिमिति । प्रव्रजिष्यन्तं संन्यासं कर्तुमिच्छन्तमालक्ष्य विषयारागादिलक्षणेन ज्ञात्वा उशती पुत्रं कामयमानाऽत एव स्मयमाना विषयाभिलाषिणीवात्मानं दर्शयन्ती उत्पत्स्यमानभर्तृविरहजेन विक्लवेन ॥ ४९ ॥

विषयाभिलाषं व्यनक्ति । लिखन्तीति । नखा एव मणयः नखमणयस्तेषां श्रीर्यस्य स तथा तेन अनेन कामार्ताः पदाङ्गुष्ठेन भूमिमुल्लिखन्तीति वात्स्यायनप्रसिद्धमिति सूचयति ॥ ५० ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तस्यामिति सर्वेषां ब्रह्मणो मरीच्याद्प्रजापतीनाञ्च सृष्टिकामनया यः सङ्कल्पस्तद्वित् तथा आत्मानं भगवन्तञ्च निजोपदेशक वेत्तीति तथा या त आत्मभूतं वीर्यं नवधा प्रसविष्यति "वीर्यं त्वदीये ऋषय आधास्यन्त्यञ्जसात्मनः । सहाहं स्वांशकलया त्वद्वीर्येण महामुने !। तव क्षेत्रे देवहूत्यां प्रणेष्ये तत्त्वसंहिताम्" इति हि तदुपदेशः यद्यपीत्थं तथापि तदसमाप्तौ प्रव्रजिष्यन्तमिति ततोऽप्यग्रिमतत् प्रार्थनान्तरमाशङ्क्येति गम्यते श्रीदेवहूत्या तु यावत्तेजो विभृयादात्मनो मे इत्यत्रार्थविशेषो नावगत इति ॥ ४७ ॥ ४८ ॥

पतिमिति युग्मकम् ॥ ४९ ॥ ५० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

उभयोः कालाज्ञानेऽपि स्वयं भोगकालमाह । एवमिति । योगानुभावेन दम्पत्योः रममाणयोः सतोः शतं शरदो व्यतीयुः शतं वर्षा जाताः भोगे शरत्काल उत्तम इति शरत् प्रयोगः तथापि कामेन तृप्तेरनलत्वात्तस्य अतस्तावान् कालो मनागेव जातः अतिसूक्ष्मः कालो मनाक् ॥ ४६ ॥

एवं रमणान्ते तस्यां बीजाधानं कृतवानित्याह । तस्यामिति । तामेव भावयन्निति स्त्र्यपत्यसिद्ध्यर्थमुक्तं न हि भावनामात्रेण तथा भवतीत्याशङ्क्याह । आत्मविदिति । सद्यात्मानं जानाति अतः सर्वज्ञत्वात्तथा करणं च एतच्च स्वत एव नत्वन्योपदेशात् तदाह । आत्मनेति । स्वरूपं च नवधा विधाय अन्यथा एकैव कन्या एकरूपा वा स्युः अतः नोधा विधाय नवधेत्यत्र परोक्षकथनार्थं कृतसंप्रसारणस्य प्रयोगः स्वमेवरूपं कृतमिति न दूषणं सर्वेषां मरीच्यादीनां सङ्कल्पः भार्याप्राप्त्यर्थः तं जानातीति तथा करणे हेतुर्विभुरिति सामर्थ्यम् ॥४७॥

एवं पितृत उत्पत्तिमुक्त्वा मातृत आह । अत इति । सद्य एव सुषुवे न तु दशमासानन्तरं देहनिष्पत्तिस्तु आधानकर्तुविभुत्वात् तत्त्वमतः शब्देनोक्तं प्रकर्षेण जाता अपि स्त्रिय एव सुषुवे यतः सा देवहूतिः देवप्रकृतिकैव ता वर्णयति । सर्वास्ता इति । चारुसर्वाङ्ग्य इति । अङ्गवैकल्याभावः सौन्दर्यातिशयश्चोक्तःजातिस्त्रियश्च ता जाता इत्याह । लोहितोत्पलगन्धय इति । रागार्थं भोगसमय एव गन्धप्राकट्यार्थं चलोहितोत्पलपदम् ॥४८॥

एवं कृत्वा कर्दमश्चलितुमारम्भं कृतवान् तदा तस्याः तज्ज्ञानं जातमित्याह । पतिमिति । प्रव्रजिष्यन्तं संन्यासप्रकारेण गमने कृतनिश्चयं तद्गमनमालक्ष्य इङ्गितैर्ज्ञात्वा कमनीया सती प्रतिबन्धमकृत्वा विज्ञापनामेव कृतवतीत्याह । उवाच ललितां वाचमिति । द्वितीयश्लोके संबन्धः विक्लवश्चित्तखेदः स्वस्यैव तथा दोषो जात इति स्मयमाना कण्ठहास्यं कुर्वाणा हृदयेन च विशेषेण दूयता दुःखं प्रापयता उपलक्षिता स्वचिन्तां ख्यापयितुमधोमुखी भूत्वा भूमिं लिखन्ती देहकान्तिसहितैव

। देवहूतिरुवाच ।

सर्वं तद्भगवान्मह्यमुपोवाह प्रतिश्रुतम् ।
अथापि मे प्रपन्नाया अभयं दातुमर्हसि ॥ ५१ ॥
ब्रह्मन् ! दुहितृभिस्तुभ्यं विमृग्याः पतयः समाः ।
कश्चित्स्यान्मे विशोकाय त्वयि प्रव्रजिते वनम् ॥ ५२ ॥
एतावताऽलं कालेन व्यतिक्रान्तेन मे प्रभो ! ।
इन्द्रियार्थप्रसङ्गेन परित्यक्तपरात्मनः ॥ ५३ ॥
इन्द्रियार्थेषु सज्जन्त्या प्रसङ्गस्त्वयि मे कृतः ।
अजानन्त्या परं भावं तथाऽप्यस्त्वभयाय मे ॥ ५४ ॥
सङ्गो यः संसृतेर्हेतुरसत्सु विहितोऽधिया ।
स एव साधुषु कृतो निःसङ्गत्वाय कल्पते ॥ ५५ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तथा वदतीति ज्ञापयितुं नखमणिश्रिया पदेति लेखने करणमुक्तं नखा एव मणयः तेषां च तथैव श्रियः यत्र ललितां मनोहरां रोदने नहि कार्यं सेत्स्यतीत्यश्रुकलां निरुध्य शनैरिति पूर्वभावापगमः सूचितः ॥ ४९ ॥ ५० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

मनाक् ईषदिव व्यतीयुः ॥ ४६ ॥

तां स्त्रियं भावयन्निति आधानकाले स्त्रीध्यानेन स्त्र्यपत्यं स्यादिति तस्याः स्त्र्यपत्यकामनां जानन्नित्यर्थः । आत्मना बुद्ध्या आत्मविद्भिरक्त इति तस्य कामाल्पत्वात् शुक्राल्पत्वमतोऽपि स्त्र्यपत्यं भवेदयुक्तं । "पुमान् पुंसोऽधिके शुक्रे स्त्रीभवत्यधिके स्त्रियाः" इति नोधा नवधा सर्व्वसङ्कल्पविदिति तस्या बह्वपत्यसङ्कल्पं जानन्नित्यर्थः । विभुः सर्व्वत्र समर्थः ॥ ४७ ॥

सद्य एकस्मिन्नेवाहनि ॥ ४८ ॥

स्मयमानेति पतिदर्शनस्वाभाव्यात् वस्तुतस्तु विश्लेषेन विद्यमानेन चिन्ताभिरित्यर्थः ॥ ४९—५० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मनाक् अतितुच्छकामलालसयोः योगानुभावेन अतियत्नसाध्ययोगप्रभावेन रममाणयोः शतं शरदः शतसंख्याकाः सम्वत्सराः व्यतीयुः धिक् कामलालसाः इति भावः ॥ ४६ ॥

आत्मविरपरमात्मतत्त्वविद् आत्मना तेनैव परमात्मना विभुर्विपुलज्ञानवान् अत एव ब्रह्मा मरीच्यादीन् सदारान् कर्तुमिच्छति तेऽपि सृष्ट्यर्थं दारान् कर्तुमिच्छन्तीति सर्वेषां सङ्कल्पं वेत्तीति तथा अतः स्वरूपं नोधा नवधा विधाय नवकन्यारूपं करिष्यामीति सङ्कल्प्येत्यर्थः "आत्मा वै पुत्रनामासि" इति श्रुतेः तां भावयन् कन्योत्पत्त्यानुकूल्ये स्थापयन् तस्यां रेतः आधत्तेत्यन्वयः ॥ ४७ ॥

अतः सर्वसङ्कल्पविन्मुनिः सङ्कल्पाद्धेतोः ॥ ४८ ॥

उशती कान्तिमती अत एव स्मयमाना स्वभावतः स्मितमुखी ॥ ४९ ॥ ५० ॥

भाषाटीका ।

इस प्रकार से योग प्रभाव से पतिपत्नी दोनो के रमण करने में काम का लालसा होने से सौ वर्ष थोडे-काल के तुल्य वीतगये ॥ ४६ ॥

तब सबके सङ्कल्प को जानने मे समर्थ कर्दमजीने देवहूतीजी को सन्तुष्ट करने के लिये अपने स्वरूप वीर्य को नौ भाग कर के उस के गर्भ मे बीज धारण किया ॥ ४७ ॥

इसी से देवहूतीजीने शीघ्रही लाल कुमोदनी के गन्ध वाली सुन्दर शरीर वाली कन्या रूपी सन्तानो को उत्पन्न किया ॥ ४८ ॥

जब श्रीकर्दमजी सन्यास लेकर जाने लगे तब देवहूती पति को देख कर हृदयमे कम्पयुक्त होकर मुख से मन्दहास कर के बोली ॥ ४९ ॥

मणि सरी की शोभावाले नखों युक्त चरण से पृथिवी को कुरेदती हुई आंसु की विन्दुओं को रोककर अति मधुर वचन बोलने लगी ॥ ५० ॥

श्रीधरस्वामिकृतभावार्थदीपिका

उपोवाह सम्पादितवान् अभयमिति भाविनो दैन्यात्संसाराच्च यद्भयं तन्निवर्तयेत्यर्थः ॥ ५१ ॥

तत्र दैन्यं निवेदयति । तुभ्यं तव दुहितृभिः स्वयमेवात्मनः समा योग्याः पतयो विमृग्या इति दैन्यं प्राप्तम् । संसारभयमुररीकृत्याह । कश्चिदिति । विशोकाय ज्ञानोपदेशाय स्त्रीभिर्ऋणानपाकरणात्कश्चित्कालं त्वदवस्थानेन ब्रह्मवित्पुत्रः कश्चित्किं स्यादित्यर्थः ॥ ५२ ॥

विषयान् भुंक्ष्व किं ब्रह्मविद्ययेति चेत्तत्राह । एतावताऽलं पूर्यताम् । परित्यक्तः पर आत्मा यया तस्या मम ॥ ५३ ॥

नेह यत्कर्म धर्माय न विरागाय कल्पते ।
न तीर्थपदसेवायै जीवन्नपि मृतो हि सः ॥ ५६ ॥
साऽहं भगवतो नूनं वञ्चिता मायया दृढम् ।
यत्त्वां विमुक्तिदं प्राप्य न मुमुक्षेय बन्धनात् ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे पारमहंस्यां संहितायां वैयासिक्यां देवहूत्यनुतापो नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्वकृतमनुशोचन्त्याह । इन्द्रियार्थेष्विति चतुर्भिः । मे मया परं भावं त्वं ब्रह्मविदिति ॥ ५४ ॥

प्रसङ्गः कथमभयायास्तु तत्राह । सङ्ग इति । अधियाऽज्ञानेन ॥ ५५ ॥

स्वभावतः प्रवृत्तं यस्य कर्म धर्मार्थं न कल्पते धर्माभिमुखं न भवेत्तत्रापि निष्कामधर्मद्वारा विरागाय न कल्पते । तद्द्वारा च तीर्थपदस्य हरेः सेवार्थं न पर्यवस्येदित्यर्थः ॥ ५६ ॥

न मुमुक्षेय मोक्तुमिच्छां न कृतवत्यस्मि ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीधरस्वामिकृतभावार्थदीपिकायां त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी

प्रतिश्रुतं प्रतिज्ञातं दिव्यदृष्टिदानादि भाविनो भविष्यात् स्वयम्वरान्वेषणरूपाद्दैन्यात् ॥ ५१ ॥

तत्र दैन्यसंसारयोर्मध्ये ॥ ५२ ॥

परित्यक्तो विस्मृतः ॥ ५३ ॥

भावं ब्रह्मवित्त्वमभयाय संसारभयनिवृत्तये ॥ ५४ ॥

स एवेत्येवकारेण "आमयो येन भूतानाम्" इतिन्यायो दर्शितः ॥ ५५ ॥

तत्रापि धर्माभिमुखत्वेऽपि तद्द्वारा विरागद्वारा अन्यवेशपरित्यागेन भक्तिवेशोपयोगित्वं द्वारत्वम् तथाच शुष्कवैराग्यस्य हेयत्वं व्यञ्जितम् जीवन्मृतत्वोक्तेः तत्तद्वार्तायाः आप्तत्वादित्यर्थोक्तिः ॥ ५६ ॥

सा यथा कथञ्चित्कृतभवत्सङ्गापि वञ्चिता त्वन्महिमज्ञानांशे वञ्चनं प्राप्ता ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीराधारमणदासगोस्वामिविरचितदीपिन्याख्यदीपिकाटिप्पण्याम् त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे भगवन् ! मह्यं यत्प्रतिश्रुतं तत्सर्वमुपोवाह उपावहत् सम्पादितवान् तथापि प्रपन्नायाः मे अभयं दातुमर्हसि अभयप्रदानं करोषीति चेत्कथयामीति भावः ॥ ५१ ॥

श्रोतत्किमित्यत आह । हे ब्रह्मन् ! दुहितृभिः समाः वयःशीलगुणादिभिः तुल्याः पतयः तासां भर्तारः तुभ्यं त्वया विभक्तिव्यत्यय आर्षः विमृग्या अन्वेषणीयाः त्वयि वनं प्रति प्रव्रजिते सति सन्यस्य गते सति मम विशोकाय विगतः शोको यस्मात् सः विशोकः ब्रह्मज्ञानं "तरति शोकमात्मवित्" इतिश्रुतेः तेन तदुपदेशो लक्ष्यते तस्मै काश्चित्पुत्रः स्यात्किमित्यर्थः कच्चिदिति पाठान्तरं तदा किं स्यात्पुत्र इति शेषः ॥ ५२ ॥

एवं स्वाभिप्रेतं निवेद्याथ संसारात् स्वनिर्वेदमावेदयन्त्याह । यावदध्यायं हे विभो इन्द्रियार्थेषु शब्दादिविषयेषु प्रसङ्गेन प्रकृष्टासङ्गेन परित्यक्त अनुपासितः परात्मा परमात्मा यया तस्याः मे मम व्यतीतेनातिक्रान्तेन एतावता शतवर्षपरिमितेन कालेनालम् ॥ ५३ ॥

स्वकृतमनुशोचन्त्याह । इन्द्रियार्थेषु सज्जन्त्या आसक्ताया मे मया त्वयि प्रसङ्गः प्रकृष्टासङ्गः कृतः तथापि परं भावमुत्कृष्टम् भावं त्वं ब्रह्मविदिति भावम् अजानन्त्या अपि मे ममाभयायास्तु स्यात् त्वयि कृतःसङ्ग इत्यनुषङ्गः ॥ ५४ ॥

कथमिन्द्रियार्थप्रसङ्गो मयि कृतोऽपि अभवाय स्यादित्यत्राह । सङ्ग इति । अधियाऽज्ञानेनासत्सु विहितः कृतः यः सङ्गः संसृतेर्हेतुः स एवाधिया कृतोऽपि सङ्गः साधुषु भवादृशेषु कृतश्चेन्निःसङ्गत्वाय विरागत्वायैव कल्पते अन्ततो वैराग्यमेव जनयतीत्यर्थः धियेति छेदे तदा बुद्धिपूर्वकोऽप्यसत्सु विहितः सङ्गः संसृतेर्हेतुः किमुताधिया साधुषु तूभयविधोऽपि सङ्गः निःसङ्गत्वायैव भवतीत्यर्थः ॥ ५५ ॥

इह लोके यत्कर्म यस्य पुंसः स्वभावतः प्रवृत्तमपि कर्म धर्माय न कल्पते निसर्गतः प्रवृत्तमप्याहारविहारचेष्टितनिद्रादिरूपं कर्म "युक्ताहारविहारस्य युक्तचेष्टस्य नित्यशः । युक्तस्वप्नावबोधस्य योगो भवति दुःखहा" इत्युक्तरीत्या सात्त्विकान्नं सेवेत ऋतावुपेयादित्यादिशास्त्रानुमतद्रव्यकालादिविशेषविषयं स प्रत्यवायपरिहारेण भगवदाराधनरूपकर्मयोगाख्यधर्मनिवृत्तये न भवेदित्यर्थः स एव धर्मः विरागाय विगतो रागो यस्मात्सः ज्ञानयोगः रसोऽप्यस्य परं दृष्ट्वा निवर्तत इति भगवता गीतत्वात् तस्मै न कल्पते चेदित्यर्थः तस्य जीवनं व्यर्थमिति भावः यद्यपि कर्मयोगस्य भक्तियोगाङ्गस्य ज्ञानयोगाङ्गत्वमनुपपन्नं तथापि "कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः" इत्युक्तरीत्या कर्मयोगज्ञानयोगयोः परस्परोपकर्तृत्वमप्यस्तीति बोध्यं स च धर्मो विरागश्च तीर्थपदस्य भगवतः सेवायै भक्त्यै न कल्पते चेत्सः जीवन्नेव मृतो हि जीवच्छवः स्यादित्यर्थः तस्य जीवनं व्यर्थमिति भावः ॥ ५६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्वात्मानं प्रति निर्विद्यते सा इन्द्रियार्थेष्वेव सज्जन्त्यहं भगवतो मायया दैव्याख्यया गुणमय्यायुक्तविधया दृढं वञ्चिता मोहिता याहं विमुक्तिदं मुक्तिसाधनप्रदं त्वां प्राप्यापि बन्धनात्संसारान्न मुमुक्षुयं मोक्तु नेच्छामिस्म ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्वीर-
राघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
त्रयोविंशोऽध्यायः ॥ २३ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

किमाहेति वृत्तमनुवदति । सर्वमिति । उपोवाहोपचकार अथ किं तत्राह । अथापीति । अभयमभयलक्षणं पुत्रम् ॥ ५१ ॥

किंच तुभ्यं तव दुहितृभिः समाः अभयमिति सामान्यत उक्तं स्पष्टयति । अपीति । त्वयि वनं प्रव्राजिते संन्यस्य वनं गते सति मम विशोकाय संसारदुःखप्रहाणाय पुत्रः स्यादपि सम्भवेत्किंतत्सम्भवाय भवदनुग्रहो भूयादिति शेषः सच्चिदिति पाठे सच्चिदानन्दलक्षणः परमात्मेति ध्वनयति कश्चिदिति पाठे अयमेवार्थः सुदृढ्छान्दसः ॥ ५२ ॥

अथापि पुत्रप्रार्थनव्याजेनेयं विषयाभिलाषुरिति शङ्कामाभूदित्याह । एतावतेति । इन्द्रियार्थेषु शब्दादिषु प्रसङ्गो गुणबुद्ध्यातिस्नेहलक्षणो यस्तेन परित्यक्तो विस्मृतः परमात्मा सर्वोत्तमो हरिर्यया सा तथोक्ता तस्याः ॥ ५३ ॥

मम गतकालोऽपि पुरुषार्थहेतुः स्यादिति प्रार्थयते इत्याह । इन्द्रियार्थेष्विति यद्यपि इन्द्रियार्थेषु सज्जन्त्या भवतः परमितरविलक्षणं भावं योगैश्वर्यमजानन्त्या मे त्वयि कृतो यः प्रसङ्गः स तथापि परमभागवतत्वेन त्वत्सङ्गत्वान्मे अभवाय अपुनर्भवायास्त्वित्यन्वयः ॥ ५४ ॥

ज्ञानं विना सङ्गस्य पुरुषार्थहेतुत्वं कथमित्यतस्तं विशिनष्टि । संगोय इति । साधुषु भागवतेषु निःसङ्गत्वाय संसारविरागाय अनेन वैराग्यभक्तिज्ञानद्वारा सत्सङ्गः पुरुषार्थहेतुरित्युक्तम् भवति ॥ ५५ ॥

सत्सङ्गत्योत्पन्नब्रह्मार्पणबुद्ध्या चिकित्सितस्य कर्मणो द्वारद्वारिकया परमपुरुषार्थहेतुत्वं न केवलस्य क्षणिकत्वेन चाचेतनत्वेन च स्वाभीष्टफलदानसामर्थ्याभावादित्याह । नेहेति । इह कर्मभूमौ येन पुरुषेण यत्क्रियमाणं कर्म धर्माय धर्माख्यपुरुषार्थप्राप्तये न स्यात् विरागाय न कल्पते वैराग्योत्पत्तौ न समर्थं स्यात् तीर्थपदस्य हरेः सेवायै च न स्यात्तादृशकेवलस्य कर्मणः कर्ता स पुरुषो जीवन्मृत इत्युच्यते अपिशब्देन तस्य जन्म गर्हयति यस्मात्तस्माद्भागवतसङ्गत्या शिक्षितं कर्मेव कर्तव्यमित्यर्थः ॥ ५६ ॥

तर्हि किमर्थं सकृदङ्गसङ्गो भूयादिति विषयाभिलाषःप्रार्थित इति तत्राह । साहमिति । सा तादृश्यहं भगवतो हरेर्मायया वन्धकशक्त्या वञ्चिता नूनं तर्कयामि "तर्कनिश्चययोर्नूनम्" इति च तत्र हेतुमाह । या त्वामिति । संसारविमुक्तिदं त्वां प्राप्य संसारबन्धनान्न मुमुक्षे मुक्तिं नेच्छामीति यस्मादत इति हेत्यनेन संसारप्रवृत्त्यारम्भमेवेच्छामीति सूचयति ॥ ५७ ॥

इतिश्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां
त्रयोविंशोऽध्यायः ॥ २३ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथ श्रीदेवहूतिरुवाचेति कचित् अभयं पुनः प्रार्थनाक्षमारूपम् ॥ ५१ ॥

प्रार्थनामेवाह । ब्रह्मन्निति । तुभ्यं त्वया दुहितृभिः समास्तासां योग्याः ॥ ५२ ॥ ५३ ॥ ५४ ॥

सङ्ग इति । स एव सोऽपि अज्ञानपूर्वकोऽपीत्यर्थः ॥५५॥

तीर्थपदाः साधवः । तीर्थीकुर्वन्ति तीर्थानीत्याद्युक्तेः ॥ ५६ ॥

सा यथाकथञ्चित् कृतभगवत्सङ्गाप्यहं तन्महिमाज्ञानांशेन वञ्चिता अतो भगवन्मायैवात्र कारणमित्यर्थः ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे तृतीस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
त्रयोविंशोऽध्यायः : ॥ २३ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी

सप्तभिस्तस्या वाक्यान्याह । सर्वं तदित्यादिभिः । परलोकार्थविज्ञप्तिर्विवाहः कन्यकासु च । भोगाभावस्य कथनं तत्सङ्गश्च प्रसङ्गतः । फलमावश्यकं तस्य सर्वं व्यर्थं ततोऽन्यथा । स्वदोषाभावकथनं कृपासिद्ध्यै निरूपितं । यथा पूर्वं सुरतः प्रार्थितः एवमिदानीमभयं प्रार्थयति सतां हि सकृदेव प्रार्थनोचिता तथापि स्वदैन्यात् पुनः प्रार्थनमिति ज्ञापयितुं पूर्वप्रार्थिते शेषो नास्तीति आह । सर्वं तदिति । यत्प्रतिश्रुतं तत्सर्वमेव भवान् मह्यमुपोवाह समीपे उढ्वा समानीय दत्तं तथा च न दातव्यमवशिष्यते अथापि शरणागतायाः अभयं दातुमर्हसि यथा शरणागतस्य वाक्यं प्रार्थितं क्रियते तथा शरणागतसिध्यर्थमभयमपि देयमन्यथा प्रपन्नः पालितो न भवेदिति अनेन मम परलोकार्थमुपायः कर्त्तव्य इति विज्ञापितम् ॥ ५१ ॥

दुहितृणां च विवाहः कर्तव्य इत्याह । ब्रह्मन्निति । दुहितृभिः पतयो विमृग्याः स्वसमास्तुभ्यं तव दैन्यमुक्तमिति केचित् कन्यानां पतिसंबन्धस्त्वन्मनोरथसिद्ध्ये तथापि संशयो भावी तस्मात्त्वं ताः प्रयच्छ हि प्रार्थनान्तरमाह । त्वयि वनं प्रव्राजिते मे विशोकाय कश्चित् स्यादिति कन्यकास्तु गामिष्यन्ति पुत्रो देय इत्यर्थः ॥ ५२ ॥

नन्वेतान्मिपेक्ष्य पुनर्भोगं याचस इत्याशङ्क्याह । एतावतालमिति । एतावतैव व्यर्थं व्यतिक्रान्तेन कालेन अलं अतः परमवशिष्टे काले पुरुषार्थः साधनीय इत्यभिप्रायः गतकालस्य दोषमाह । इन्द्रियार्थप्रसङ्गेनेति । इन्द्रियार्थेषु प्रकृष्टः सङ्गो यस्मात् तादृशेन कालेन कृत्वा परित्यक्तः परो भगवान् आत्मा येन तादृशस्य स्वार्थनाशकस्य एतावतैवालम् ॥ ५३ ॥

तर्हि किं कर्त्तव्यमित्याकाङ्क्षायामाह । इन्द्रियार्थेष्विति । साधनं तु सत्सङ्गः तन्मम प्रसङ्गादेव जातं यथा कस्यचिद्भोगार्थं

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भाविता शर्करा औषधं भवति तथा इन्द्रियार्थेषु विषयभोगेषु सजन्त्या मया प्रसङ्गस्त्वयि प्रकृष्टः सङ्गः कृतः तथापि सत्सङ्गो भवत्येव यद्यपि सत्त्वेन ज्ञानं न वृत्तं सत्प्रकारकश्च सङ्गो न भवति तथापि वस्तुतः सत्संगो भवतीति फलिष्यतीत्याह । अजानन्त्येति ते परमो भावः अतिसामर्थ्यं यद्यपि न ज्ञातं सेवादिषु सत्प्रकारेणापि सङ्गोऽस्ति पतिव्रतात्वात् न सेवाया भोगोपयोगः भोगश्चानिषिद्धः परं माहात्म्याज्ञानमेवावशिष्यते अज्ञानेऽपि सत्सफलमस्त्विवति प्रार्थनापि मे अभयाय अस्त्विति ॥ ५४ ॥

ननु क्रियातः फलं न तु द्रव्यतः सतापि द्रव्येण असत्कार्यकरणे असदेव फलम् असतापि सत्कार्यकरणे सदेवेति तस्मात् कुतो न सत्सङ्ग इति चेत्तत्राह । संयोग इति । भवेदेतदेवं यदि कार्यं सदसतोर्भिन्नं भवेत् द्रव्यसामर्थ्यादेव कार्यस्य सत्त्वमन्यथात्वसत्त्वमेव यतः सर्व एव सङ्गः धिया विहितः संसृतेर्हेतुर्भवति अर्थात्तदसत्सु भवति अतः सङ्गः न समीचीनः स्वतः स एव साधुषु चेत् क्रियते तदा निःसङ्गत्वाय कल्पते साधवो हि स्वसंबन्धात् क्रियात्वमेव निवारयन्ति फले का चिन्ता अतः सतां बलिष्ठत्वात् न क्रियाफलवती अतो मम सत्सङ्गोऽस्त्वितिसिद्धम् ॥ ५५ ॥

तर्हीतादृशोऽन्योऽपि किमपेक्ष्यत इत्याशङ्क्याह । नेह यत्कर्मेति । त्रिविधकर्मणा एव सफलत्वं येन कर्मणा धर्मो भवति वैराग्यं भक्तिर्वा यत्तु न तादृशकर्मकर्ता सजीवन्नपि मृत एव जीवतो मृताल्लक्षणं कर्मकरणं तच्च कर्म स्वार्थं स्वास्थ्यं दृष्टार्थं वा चेत् यदि भवेत्तदा सफलं रोचनार्थं चेद्विपरीतफलं तैर्मरणस्यावश्यकत्वात् अतो मृत एवेत्युक्तम् ॥ ५६ ॥

तादृशं च मया कृतमित्याह । साहमिति । तथा करणे त्वन्मायामोहितत्वमेव हेतुः तदाह । सा एतादृश्यप्यहं विवेकवती मत्तोऽप्यधिकस्य तव भगवतः मायया नूनं वञ्चिता कार्यवशाद्वञ्च्यते अन्यथा त्वां विमुक्तिदं प्राप्य संसारबन्धनादपि कथं न मुमुचेय न मुक्ताजातास्मि सत्यं मोक्षदाता बन्धनं कामादिः विमुक्तिः कालान्मुक्तिः तस्मान्न केवलं स्वदोषादहमेवं जाता किं तु त्वया मोहितेति त्वयैवोद्धारः कर्तव्य इति भावः ॥ ५७ ॥

इतिश्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्वल्लभाचार्यकृतसुबोधिन्याम्
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

उपोवाह सम्पादितवान् ॥ ५१ ॥

तुभ्यं तव स्वयमेव विमृग्या इत्यासां विवाहचिन्तापि मेनास्तीति भावः । विशोकाय शोकदूरीकरणाय तेन कमपि योग्यं पुत्रमपि त्वत्तोऽहं प्राप्नुयामिति कृपया कतिचिद्दिनानि तिष्ठेति भावः ॥ ५२ ॥

ननु किमैतदुक्तिभङ्ग्या पुनरपि मत्तो विषयसुखं वाञ्छसीति तत्र सलज्जमाह । एतावता कालेन य इन्द्रियार्थप्रसङ्गस्तेनालं यतः परित्यक्तः पर आत्मा परमेश्वरो यया तस्या इति तेनैतावान् कालो मे व्यर्थ एव गत इति भावः ॥ ५३ ॥

महाभागवतस्य तव क्षणिकेनापि सङ्गेन लोका निस्तरन्ति मम त्वेतावद्वार्षिकेणापि यन्निस्तारो नाभूत्तत्रैतदेव हेतुद्वयमित्याह । इन्द्रियार्थेष्विति । परं मावं तवैवं महावैराग्यं महाभागवतत्वञ्च यत् क्षणमात्रेणैव सर्वं ममतास्पदं त्यक्तुं प्रवृत्तोऽसीति भावः । तथापीति तदपि मय्यपराधिन्यां कृपां कुर्विति भावः ॥ ५४ ॥

किञ्च । वस्तुशक्तिर्बुद्धिं नापेक्षत इत्यतो भवद्विधसाधुसङ्गो विफलो भावितुं सर्वथैव नार्हतीत्याह । सङ्ग इति । अधिया अज्ञानिनापीत्युभयत्राप्यन्वेति ॥ ५५ ॥

ननु किमेवं निर्विद्यसे तवैतावती सम्पत्तिरतो विषयान् भुङ्क्ष्वेति तत्राह । नेहेति । यस्य कर्मदेहेन्द्रियादिव्यापारो धर्मादयर्थं न भवेत् ॥ ५६ ॥

तत्रोदाहरणमहमेवेत्याह । साहं जीवन्मृता न विमुमुचेय मोक्तुमिच्छामात्रमपि न कृतवत्यस्मीति साश्रु सगद्गदवाक्यम् ॥ ५७ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
त्रयोविंशस्तृतीयस्य सङ्गतः सङ्गतः सताम् ॥ २३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उपोवाह सम्पादयामास अथानन्तरमपि निश्चितं प्रपन्नाया मुक्त्यर्थं त्वां शरणं गताया अभयं मुक्त्युपायम् ॥ ५१ ॥

लौकिकव्यवहारसिद्धये प्रार्थयते ब्रह्मन्नित्यर्द्धेन तुभ्यं तव दुहितृभिः तुल्याः पतयः विमृग्या अन्वेषणीयाः अथ पुनर्मुक्त्युपायलाभार्थं प्रार्थयते यावदध्यायसमाप्ति विशोकाय ज्ञानभक्त्युपदेशाय ॥ ५२ ॥

हे प्रभो ! इन्द्रियार्थेषु शब्दादिषु यः प्रकृष्टः सङ्गस्तेन परित्यक्तः न जिज्ञासितः परः आत्मा यद्विज्ञानेन सर्वं चिदचिदात्मकं विज्ञातं स्यात्सर्वकारणकारणो भगवान् श्रीवासुदेवो यया तस्या मे अतिक्रान्तेन एतावता भोगकालेनालं पर्याप्तम् अवशिष्टे काले मुक्त्युपायं संपादयिष्यामीति भावः ॥ ५३ ॥

परं मुक्तौ गम्यं भावं भजनयिम् अजानन्त्या अत एवेन्द्रियार्थेषु सज्जन्त्या मे मया त्वयि तत्त्वज्ञे सङ्गः कृतः तथापि अधुना मे अभवाय मोक्षोपायलाभाय त्वयि सङ्गोऽस्त्वित्यन्वयः ॥ ५४ ॥

अधिया असत्सु विहितः कृतो यः सङ्गः संसृतेर्हेतुरस्तु साधुषु अधियापि कृतः यः सङ्गः स एव निःसङ्गत्वाय निर्गतः सङ्गः प्रकृतदेहगेहादिसङ्गो यस्मात्स निःसङ्गो भगवान् तस्य भावस्तत्त्वं तस्मै भगवद्भावाय मुक्तये कल्पते योग्यो भवति अधियापि मया त्वयि साधौ कृतः सङ्गः मुक्तये भवत्विति भावः ॥ ५५ ॥

मुक्तिविरुद्धे कर्मणि पूर्वमासक्तमात्मानं निन्दयन्त्याह । नेति द्वाभ्याम् ॥ ५६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यत् यस्माद्विमुक्तिदमपि प्राप्य बन्धनात् संसारात् न मुमुक्षेय मोक्तुमिच्छां न कृतवती ॥ ५७ ॥

इतिश्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे त्रयोविंशाध्यायार्थप्रकाशः ॥ २३ ॥

---

भाषाटीका ।

देवहूतीजी बोलीं हे प्रिय आप भगवान् हो आपने जो प्रतिज्ञा की थी सो सब समाप्त करदी तौभी मैं आप की शरण आई हूं मेरे को अभय दान दीजिये ॥ ५१ ॥

हे ब्रह्मन् ! आप की इन पुत्रियों के लिये सुन्दर पति ढूंढने चाहियें और आप के वन को चले जानेपर मेरे शोक दूर करने को कोई ज्ञानी पुत्र भी होना चाहिये ॥ ५२ ॥

हे प्रभो ! इन्द्रियों के विषय प्रसङ्ग से जो मेरा इतना काल बीतगया मैंने परमात्मा को छोडदिया अब मेरे को इन भोगों से निवृत्ति है ॥ ५३ ॥

मैंने इन्द्रियों की आसक्ति से आप के माहात्म्य को नहीं जानकर आप के साथ सुख भोग किया है तथापि यह आप का संग मेरेको अभयकारक होवै ॥ ५४ ॥

जो संग अज्ञानसे असत्पुरुषोंके साथ होनेसे संसारका हेतु होता है वही संग सत्पुरुषोंके साथ अज्ञानसे भी किया होतो संसारनिवृत्तिका हेतु होता है ॥ ५५ ॥

इस संसारमें जिन प्राणिओंके कोई कर्म धर्म के वैराग्यके लिये नहीं होते हैं तथा श्रीहरिके सेवा के लिये नहीं होते हैं वे पुरुष जीते हुये भी मरेही से हैं ॥ ५६ ॥

सो मैंतो अवश्यही भगवान् की मायासे ठगाई गई हूं जो कि मुक्तिके बताने वाले आपको प्राप्त होकरभी संसार से नहीं छूटी ॥ ५७ ॥

इतिश्री भागवत तृतीयस्कंध तेईसमा अध्यायका भाषानुवाद लक्ष्मणाचार्यकृत समाप्त ॥ २३ ॥

---

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे त्रयोविंशोऽध्यायः समाप्तः ॥ २३ ॥

## ॥ चतुर्विंशोऽध्यायः ॥

मैत्रेय उवाच ।

निर्वेदवादिनीमेवं मनोर्दुहितरं मुनिः ।
दयालुः शालिनीमाह शुक्लाभिव्याहृतं स्मरन् ॥ १ ॥

ऋषिरुवाच ।

मा खिदो राजपुत्रीत्थमात्मानं प्रत्यनिन्दिते ! ।
भगवांस्तेऽक्षरो गर्भमदूरात्संप्रपत्स्यते ॥ २ ॥
धृतव्रतासि भद्रं ते दमेन नियमेन च ।
तपोद्रविणदानैश्च श्रद्धया चेश्वरं भज ॥ ३ ॥
स त्वयाराधितः शुक्लो वितन्वन्मामकं यशः ।
छेत्ता ते हृदयग्रन्थिमौदर्यो ब्रह्मभावनः ॥ ४ ॥

मैत्रेय उवाच ।

देवहूत्यपि संदेशं गौरवेण प्रजापतेः ।
सम्यक् श्रद्धाय पुरुषं कूटस्थमभजद्गुरुम् ॥ ५ ॥
तस्यां बहुतिथे काले भगवान् मधुसूदनः ।
कार्दमं वीर्यमापन्नो जज्ञेऽग्निरिव दारुणि ॥ ६ ॥
अवादयंस्तदा व्योम्नि वादित्राणि घनाघनाः ।
गायन्ति तं स्म गन्धर्वा नृत्यन्त्यप्सरसो मुदा ॥ ७ ॥
पेतुः सुमनसो दिव्याः खेचरैरपवर्जिताः ।
प्रसेदुश्च दिशः सर्वा अम्भांसि च मनांसि च ॥ ८ ॥
तत्कर्दमाश्रमपदं सरस्वत्या परिश्रितम् ।
स्वयम्भूः साकमृषिभिर्मरीच्यादिभिरभ्ययात् ॥ ९ ॥
भगवन्तं परं ब्रह्म सत्त्वेनांशेन शत्रुहन् ! ।
तत्त्वसंख्यानविज्ञप्त्यै जातं विद्वानजः स्वराट् ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

चतुर्विंशे ततो जन्म कपिलस्याऽऽह तत्पितुः ।
प्रव्रज्यां तमनुज्ञाप्य ऋणत्रयविमोक्षतः ॥ १ ॥

शालिनीं श्लाघ्याम् शुक्लेनाभिव्याहृतं सहाहं स्वांशकलयेत्यादि ॥ १ ॥

इत्थं मा खिदः खेदं माकार्षीः आत्मानं प्रत्यहम्भाग्यहीनेति मदूरात्शीघ्रम् ॥ २ ॥

दमेनेन्द्रियसंयमेन स्वधर्मेण तपांसि द्रविणदानानि च तैः ॥ ३ ॥

हृदयग्रन्थिं चिज्जडात्मकमहङ्कारलक्षणं बन्धं छेत्ता छेत्स्यति औदर्यः पुत्रः सन् ब्रह्म भावयत्युपदिशतीति तथा ॥ ४ ॥

श्रद्धाय विश्वस्य ॥ ५ ॥

बहुतिथे बहुतरे कालेऽतिक्रान्ते सति कार्दमं कर्दमसम्बन्धि ॥ ६ ॥

घनाघना इत्येकस्पदम् वर्षन्तो मेघाः गायन्ति स्म नृत्यन्ति स्म ॥ ७ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अपवर्जिता मुक्ताः ॥ ८ ॥

परिश्रितं परिवेष्टितम् ॥ ९ ॥

आगत्य किं कृतवांस्तदाह । भगवन्तमिति द्वाभ्याम् । तत्त्वानां सङ्ख्यानं यस्मिंस्तस्य सांख्यस्य विज्ञप्त्यै विशेषेण ज्ञापनाय भगवन्तं जातं विद्वानजो ब्रह्मा स्वराट् स्वतः सिद्धज्ञानस्तस्यांचकीर्षितं सभाजयन्पूजयन् प्रहृष्यमाणैरसुभिरिन्द्रियैरुपलक्षितः कर्दमञ्चेदमभ्यधादिति द्वयोरन्वयः चकाराद्देवहूतिं च ॥ १० ॥ ११ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

तत्पितुः कपिलपितुः कर्दमस्य नं कपिलम् ऋणत्रयविमोक्षनो हेतोः"ऋणत्रयमपाकृत्यमनोमोक्षेनिवेशयेत्"इतिस्मृतेः शालिनीमिति"शाङृश्लाघायाम्"शाडनं शालः सोऽस्या अस्तीतिशालिनी ताम् ॥ १ ॥

इत्थं कश्चित्स्यान्मे विशोकायेत्यादिप्रकारेण ॥ २ ॥

दमादिभिरीश्वरं भजेति तदर्पणेनैव तेषां सार्थकत्वं व्यञ्जितम् ॥ ३ ॥

ब्रह्म स्वरूपेण गुणैश्च बृहत्तमं भगवत्तत्त्वं तथोपदेशस्याग्रे वक्ष्यमाणत्वात् ॥ ४ ॥

गुरुं तथोपदेष्टृत्वेन चिन्त्यमानम् ॥ ५ ॥

बहुतिथे बहूनां दिनानां पूरणे काले "बहुपूगगणसंघस्ये"तितिथुगितिस्मृतेः अत एव बहुतर इतिव्याख्यातम् वीर्यं भक्तिप्रभावं वश्यत्वेनापन्नस्तद्भक्तिवशीकृतस्सन्नित्यर्थः अपव्यख्याने दृष्टान्तासङ्गतिरनीश्वरत्वप्रसक्तिश्चेति चिन्त्यम् ॥ ६ ॥

"वर्षुकाब्दा घनाघना,,इत्यमरसिंहः ॥ ७ ॥ ८ ॥

तत् प्रसिद्धं पूर्ववर्णितं वा ॥ ९ ॥

भगवन्तमिति युग्मकम् तदाह तत्राह । सत्त्वेन विशुद्धसत्त्वेन ज्ञानमाविर्भूतं तस्य भगवतश्चिकीर्षितं कर्त्तुमिष्टं सांख्यप्रवर्त्तनादि प्रहृष्यमाणैर्हर्षेण विक्रियमाणैः ॥ १० ॥ ११ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं निर्विद्यमानां भार्यां प्रत्याह कर्दम इत्याह मैत्रेयः । एवमिति । निर्वेदं कथयन्तीं मनोर्दुहितरं शालिनीं स्वगृहिणीं प्रति मुनिः कर्दमः दयालुः शुक्लाभिव्याहृतम् अहं च स्वांशकलयेति भगवद्वचनं स्मरन्नाह ॥ १ ॥

उक्तिमेवाह । त्रिभिः हे राजपुत्रि! अनिन्दिते! अनवद्याचारे! आत्मानं प्रतीत्यं मा खिदः खेदं माकार्षीः अक्षरो निरस्तप्राकृतगुणो भगवाननन्तकल्याणगुणो हरिरदूरादाशु ते तव गर्भं प्रपत्स्यते ॥ २ ॥

ते तुभ्यं भद्रं मङ्गलमस्तु धृतं व्रतं भगवदाराधनरूपं व्रतं यया सा सती त्वं दमेन बाह्येन्द्रियनियमनेन नियमेनान्तरिन्द्रियनियमनेन पातिव्रत्यस्योचिततपसा द्रविणानां हिरण्यादीनां दानैश्च श्रद्धया प्रारीप्सितभगवदाराधनत्वरया चेश्वरं भगवन्तं भज ॥ ३ ॥

त्वया आराधितः स शुक्लो भगवान्मदीयं यशो वितन्वन् विस्तारयन्नौदर्यः त्वदुदरे जातः ब्रह्मभावनः तव ब्रह्मोपदेष्टा भूत्वा ते हृदयग्रन्थिमज्ञानं छेत्स्यति ॥ ४ ॥

एवमुक्ता देवहूतिस्तथाकरोदित्याह मैत्रेयः । देवहूतिरपि प्रजापतेः कर्दमस्य संदेशं निदेशं गौरवेण सम्यक् श्रद्धाय विश्वस्य कूटस्थं निर्विकारं गुरुमज्ञाननिवर्त्तकं पुरुषं परमपुरुषमभजत् ॥ ५ ॥

बहुतिथे बहुतरे काले गते सति भगवान्मधुसूदनः तस्यां देवहूत्यां कार्दमं कर्दमसम्बंधि वीर्यमापन्नः प्राप्तः दारुण्यग्निरिव जड़े कार्दमवीर्यसंश्लिष्टजीवविशेषमाविष्टः अवततारेत्यर्थः अयमावेशावतारो जामदग्न्यवत् आवेशावतारो नाम जीवान्तरात्मतयावस्थितस्यैव भगवतः जीवद्वारा ज्ञानशक्त्यादिगुणविशेषान्यतमाविर्भावः तावतैव तस्मिन् जीवे स्वस्यान्येषां चेश्वरत्वाभिमानः ॥ ६ ॥

तदावतरणसमये व्योम्नि वादित्राणि शङ्खमृदङ्गदुन्दुभ्यादीन्यवादयन् अध्वनयन् देवा इति शेषः घनाघना इत्येकं पदं वर्षन्तो मेघाः अभूवन्नित्यर्थः सगन्धर्वाः किन्नरादयः गायन्तिस्म गीतवन्त अप्सरसः मुदा हर्षेण नृत्यन्तिस्म अनृत्यन् ॥ ७ ॥

खेचरैर्दिविजैरपवर्जिता मुक्ताः सुमनसः पुष्पाणि पेतुः पतितवन्ति सर्वादिशः अम्भांसि जलानि मनांसि सर्वेषां चित्तानि च प्रसेदुः प्रसन्नान्यभूवन् ॥ ८ ॥

सरस्वत्या परिवेष्टितं तत् कर्दमस्थानं प्रति स्वयम्भूश्चतुर्मुखो मरीच्यादिभिः ऋषिभिः सहाभ्यागच्छत् ॥ ९ ॥

हे शत्रुहन् ! विदुर ! अंशेन स्वापृथक्सिद्धविशेषणेन सत्त्वेन नित्यासङ्कुचितज्ञानगुणेन परं ब्रह्मैव तत्त्वानां प्रकृतिपुरुषेश्वराणां संख्यानं याथात्म्यकथनं तेन विज्ञप्त्यै ज्ञापनाय प्रकृत्यादियाथात्म्यकथनेन तद्याथात्म्यं लोकं प्रति ग्राहयितुमित्यर्थः जातमतीर्वर्णं भगवन्तं विद्वान् जानन् तद्द्रष्टा स्वराडजो ब्रह्मा भगवदावेशागतारत्वाद्भगवद्दृष्ट्या ब्रह्मणः स्वराट्त्वमकर्मवश्यत्वमुक्तम् ॥ १० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

हरेरवतारा अपि सच्चिदानन्ददेहत्वाच्छुक्रशोणितसंपर्कप्रारब्धशरीरा न भवन्तीत्याद्यर्थतात्पर्यावबोधायास्याध्यायस्यारम्भः तत्रादौ कर्दमेन देवहूत्युक्तस्य किमुत्तरत्वेनाभाणीति तत्राह । निर्वेदवादिनीमिति । निर्वेदं वैराग्यं वदितुं प्रतिपादयितुं शीलमस्या अस्तीति निर्वेदवादिनीं शालिनीं भार्यां "शालिनी मालिनी मालया चार्या भार्येति चोच्यते" इत्यभिधानात् शुक्लनाम्नो हरेरभिव्याहृतं वचनम् ॥ १ ॥

आत्मानं त्वां च मां च प्रति पितुः शुक्ररूपेण मातृयोनौ न चरतीत्यक्षरः तत्र हेतुर्भगवानिति ॥ २ ॥

कदा प्रतिपत्स्यत इत्याशङ्क्य मदुक्तनियमानन्तरमाविर्भविष्यतीति भावेन नियममाह । धृतव्रतेति ॥ ३ ॥

अपिस्यान्मे विशोकायेति प्रश्नं प्रत्याह । स त्वयेति । ब्रह्माणं चतुर्मुखं विभावयत्युत्पादयतीति ब्रह्म परमात्मतत्त्वं ग्राहयतीति वा तपश्चर्याबुद्धिमुत्पादयतीति वा ब्रह्मभावनः औदर्यः पुत्रतयावतीर्णः हृदयग्रन्थिमहङ्कारबन्धं संसारम् ॥ ४ ॥

देवहूत्यपि दमादीनां दुःसहत्वादिदानीं तत्करणं प्रकारान्तरं चेदुपादिश्यतामिति भावेन भर्तृवचनं नोदास्ते किंतु श्रद्धया

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

न्वतिष्ठदित्याह । देवहूतीति । संसारिचेतनव्यावृत्तये कूटस्थामिति सर्वव्यापिकपवर्गोदासीनं ब्रह्मादिज्ञानोपदेष्टारमिति भावेनोक्तं गुरुमिति ॥ ५ ॥

बह्वयामपि साधनसामग्र्यां कार्यानुत्पत्तिवदत्रापि तथा किंनेत्याह । तस्यामिति । बहूनां तिथिविशेषाणां कालावयवानां पूरणे काले गते सति कार्दमं कर्दमभुक्तान्नविकारं र[१]मणीयोगवीर्यरेत आपन्नः प्रविष्टस्य रेतस आपदं विलापनलक्षणां नयतीति आपन्नो वा तस्यां देवहूत्यां जज्ञे प्रादुर्बभूव अस्यायमेवार्थ इत्यत्र तादृशं दृष्टान्तमाह । अग्निरिवेति । अग्निर्दारुणि स्थितो दारुमथ्याभिव्यक्तो भवति अत एव तस्यामित्युक्तं पूर्वमपि तत्र सत्त्वात् एतस्मनैव नावतारेष्वपि हरेर्देहः शुक्रादिसंभवः "तथापि शुक्रसंस्थः सन्मातृदेहं प्रविश्य च । विलाप्य शुक्रं तत्रैव केवलज्ञानरूपतः । उदेति भगवान्विष्णुः काले लोकं विडम्बयन् । इत्यादि ग्रन्थान्तरसिद्धं काले दशमे मासे ॥ ६ ॥

तत्र साक्षान्नारायण एव रूपान्तरेणाभिव्यक्तो लोकविलक्षणोत्सवदर्शनादिति भावेन तं कालं विशिनष्टि । अवादयन्नित्यादिना । घनाघनाः गर्जन्मेघा जगर्जुरितिशेषः ॥ ७ ॥

तस्मिन्हरौ व्यज्यमाने अपवर्जिता अधः पातिताः ॥ ८ ॥

इतोऽपि हरिरेवाभिव्यक्त इतरथा ब्रह्माद्यागमनासंभवादित्याशयेनाह । तत्कर्दमेति ॥ ९ ॥

सरस्वत्या परिप्लुतमिति विशेषितत्वात्तीर्थस्नानार्थं तेषामागमनं किं तत्राह । भगवन्तमिति । आद्यब्धियोर्जात इत्यजस्य चतुर्मुखत्वे सिद्धेऽपि तस्य भक्त्याद्यतिशयत्वद्योतनाय स्वराडिति मनोवाक्कायकर्मभिः स्वतन्त्रे राजत इति स्वेन राजत इति वा न भारती मेऽङ्ग मृषेत्यादेः सत्त्वेन सर्वगुणपरिपूर्णत्वेन सिद्धेनांशेन किंप्रयोजनोऽयमवतार इत्यत उक्तम् । तत्त्वेति । चतुर्विंशतितत्त्वानां संख्यानं सम्यग्ज्ञानं तस्य विज्ञप्त्यै विज्ञापनाय सत्त्वस्य प्रकृतिगुणेष्वेकत्वात्तेन प्राकृतदेहेन जात इत्येवार्थं इतीदं चोद्यं"महागुणाभिपूर्णत्वं सत्त्वमित्युच्यते बुधै"रित्यनेन परिहर्तव्यं केवलो निर्गुणश्चेति श्रुतेश्च अत्र संख्यानमित्यनेन सम्यग्ज्ञानमेव कथ्यते न तु दुष्टकपिलोक्तं शास्त्रं कुतः "सम्यक् ज्ञानं तु सांख्यं स्यात्तदर्थो योग उच्यत,, इति वचनात् ॥ १० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

शाङ्गिनीमिति शाङृ श्लाघायां शाङनं शाङः सोऽस्या अस्तीति शाङ्गिनी तां शुक्राभिव्याहृतं स्मरन्निति तदेकध्यानत्वात् ॥१-३॥

स त्वयेति । कदाचिदपि तद्विस्मर्तुं न शक्नोति यः स इत्यर्थः । ब्रह्म भगवत्तत्त्वम् ॥ ४ ॥

सन्देशमुपदेशं गुरुं गुरुतया चिन्त्यमानम् ॥ ५ ॥

बहुतिथे बहूनां पूरणे काले बहुपूगगणसङ्घस्य तिथुगिति पूरणप्रकरणे पाणिनिसूत्रम् । वीर्यं भक्तिप्रभावः तदापन्नस्तेन वशीभूत इत्यर्थः ॥ ६—९ ॥

भगवन्तमिति युग्मकम् ॥ १०—१५ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

चतुर्विंशे तथाध्याये मोक्षो बुद्धिश्च वर्ण्यते ।
कपिलो हि हरिर्बुद्धिरुपदेशो भजिस्तथा ॥
ऋणत्रयपरित्यागो मोक्षार्थं तस्य वर्ण्यते ।

पूर्वाध्याये देवहूतेर्वैराग्यं प्रार्थना चोक्ता अन्ते च आशाभावः सूचितः तत्र प्रथममाशाभावं निराकरोतीत्याह । निर्वेदवादिनीमिति । निर्वेदो वैराग्यं विषयभोगेन निर्विण्णा सा स्वस्य तावत्पर्यन्तमेव पतित्वमिति संकेतात् मनोरेणा दुहितेत्युक्तं मुनिरिति भाव्यर्थज्ञानं सान्त्वने हेतुः । दयालुरिति । शालिनीं विनीतां मनोहरां वा यद्यपि देवगुह्यं न वक्तव्यं तथाप्येषा विरक्ता सत्कुलप्रसूता विनीता चेति गुह्यकथनं किंच शुक्लाभिव्याहृतं स्मरन् शुक्लनारायणेन अथाहं स्वांशकलयेति पुत्रो भविष्यामीत्युक्तं तदपि स्मरन् । १ ॥

सतामपि मोक्षसाधकत्वं भगवत्संबन्धजननात् मोक्षदस्तु भगवानेव सचेत्पुत्रो भविष्यति तदा सर्वमेव कार्यं सेत्स्यतीति तां बोधयन् आश्वासयति । मा खिद इति । इत्थं स्वजन्मवैफल्यादिवचनैः हे राजपुत्रि ! त्वं मा खिदः आत्मानं स्वात्मानं मां वा लक्ष्यीकृत्य कृतस्य कर्मणो नाशकत्वाभावात् अन्यथा अन्ते वैराग्यं न स्यात् तदाह । हे अनिन्दिते ! इति । अनिन्दितत्वस्य निदर्शनमाह । भगवान् ते गर्भमदूरात् संप्रपत्स्यत इति । अक्षर इति ज्ञानरूपः अन्तर्याम्यधिकरूपश्च अदूरादिति मद्गमनात् पूर्वमेव गर्भमिति पुत्रो भविष्यति यदि स्वच्छन्दक्रीडया काप्युपहतिर्भवेत् तदा भगवान् पुत्रत्वेन नाविर्भवेत् आविर्भावावश्यकत्वं च भगवद्वाक्यान्निश्चितमिति भावः ॥ २ ॥

तर्हि साधनं न कर्त्तव्यमित्याशङ्क्याह । धृतव्रतासीति । साधनानि सिद्धे भगवति प्रवर्त्तन्ते यदा भगवान् स्वयमेवागमिष्यामीति मन्यते तदा साधनानि कृतानि भगवन्तं बोधयन्ति प्राप्नुवन्ति वशीकुर्वन्ति उत्पादयन्ति यथा लोके स्वभावतो भोक्तारमतिथिं निमन्त्रणादिना वशीकृत्य भोजयन्ति नत्वभोक्तारमुपायशतैरपि यतः भगवान् स्वयं समागन्ता अतः साधनानि दिव्यानि कर्त्तव्यानि तत्र कानिचिदैहशुद्ध्यर्थमादौ कर्त्तव्यानि तव न कर्त्तव्यानीत्याह । धृतव्रतासीति । पातिव्रत्यव्रतं धृतमेव त्वया वर्त्तते अतः परं त्वयि गते गमिष्यतीति चेत्तत्राह । भद्रन्त इति । ते भद्रमस्तु अस्मद्वाक्यादेव व्रताकरणे व्रतिन इव तव फलं भविष्यतीति आशीः सिद्धे व्रते भगवत्प्रसादार्थं पञ्चसाधनानि कर्त्तव्यानीत्याह । दम इन्द्रियनिग्रहः कर्त्तव्यः नियमो भगवदीयैरेव धर्मैर्व्यवहर्त्तव्यमिति नियमाः स्नानादयो वा देहस्य तदा चकारेण प्रथमा आज्ञाः तपः प्रसिद्धं कृच्छ्रादिरूपं द्रविणानि द्रव्याणि सुवर्णादीनि भगवदर्थं कर्त्तव्यानीत्येकं साधनं द्रविणदानं चान्यत् दानमेव वा अन्यथा अवान्तरबहुत्वे बहुवचनं व्यर्थं स्यात् प्रयतात्मन इति वाक्यात् दमो नियमः व्रतानां हरितोषजनकत्वात् आविर्भावे तेऽपि प्रयोजकाः यज्ञो दानं तपश्चैवेति भगवदुक्तशास्त्रार्थकरणे भगवान् परितुष्यतीति तपःप्रभृतीनां ग्रहणं द्रविणपदेन च यज्ञाः भगवन्मखक्रियारूपा उक्ताः श्रद्धा सर्वत्राङ्गं ननु सिद्धे किमित्येतावन्ति साधनानि तत्राह । ईश्वरामिति । स न येन केनापि नियम्यः अतः असिद्धवदेव साधनानि कर्त्तव्यानीत्यर्थः ॥ ३ ॥

---

१ इदं विचार्यम् ।

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततः किं भविष्यतीत्याशङ्क्याह । स त्वयेति । मया आराधितोऽपि त्वया चेदेवमाराधितः स हि शुक्लः निर्दोषपूर्णगुणविग्रहो मामकं यशः वितन्वन् लोके कर्दमस्य पुत्रो जात इति कीर्त्ति वितन्वन् ते हृदयग्रन्थिं छेत्स्यति अदोषार्थे आवश्यकार्थे विश्वासार्थे चाह । औदर्य इति । उदरे भव औदर्यः ननु तस्य मत्पुत्रस्य कथं मदज्ञानदूरीकरणसामर्थ्यं तत्राह । ब्रह्मभावन इति । ब्रह्म भावयति अनुभावयति स्वास्मिन्नन्यास्मिंश्चेति अतस्त्वय्यपि ब्रह्माविर्भाव्य हृदयग्रन्थिं छित्त्वा एवमाश्वासनमुक्तवान्॥४॥

भर्तृवाक्यात् तथैव कृतवतीत्याह । देवहूत्यपीति । मध्ये कर्दमोऽपि ध्यानारूढ इति ज्ञातव्यं देवहूत्यपि प्रजापतेः संदेशमत्यादरेण सम्यक् श्रद्धाय तद्वाक्ये विश्वासं कृत्वा तमेव पुरुषं शुक्लनारायणरूपं कूटस्थमन्तर्यामिणमविकृतं वा ज्ञानमार्गेऽपि भगवत्त्वेन सेव्यं गुरुमभजत् उक्तेनैव प्रकारेणेति ज्ञातव्यम् ॥५॥

तदा भगवानाविर्भूत इत्याह । तस्यामिति । वहुकालं तया भजने क्रियमाणे तस्यां भगवान् अन्ते आविर्भूतः तस्यां वा वहुकालं स्थित्वा भगवान् वहिराविर्भूत इति आद्य एवार्थः कोऽयमाविर्भूत इति अंशव्यावृत्त्यर्थं भगवान्मधुसूदन इत्युक्तं यो हि योगनिद्रानिमीलाक्षः स मधुसूदनः स एवायमिति पुत्रप्रकारेण च आविर्भविष्यतीत्याह । कार्दमं वीर्यमापन्न इति । तेन हि गुरुणा भाव्यमतो मर्यादारक्षार्थं प्रथमं कर्दमवीर्ये आविर्भूतः पश्चादाविर्भविष्यति न चैवं सति प्राकृतत्वं शङ्कनीयमित्याह । अग्निरिव दारुणीति । काष्ठं गोमयपिण्डं वा प्राप्य आविर्भवन् उच्चावचत्वं वृद्धिक्षयौ च प्राप्नुवन् अग्निः प्राकृतो भवति जायते वा किं त्वाविर्भाव एव तत्रैव स्थितस्तत्रैवाविर्भवतीति ज्ञापयितुं दारुणीत्युक्तम् ॥ ६ ॥

भगवदवतारो जात इति ज्ञापनार्थं तदभिज्ञानान्याह । अवादयन्निति । भगवतः समागमनमेकं देवानां वाद्यादि वादनानि च वहूनि तान्याह । द्वयेन । व्योम्नि घनाघना निविडमेघाः वादित्राणि मेघरूपाण्येव अवादयन् गन्धर्वांश्च गायन्ति स्म अप्सरसश्च नृत्यन्ति स्म उत्सवे यथान्यत्रान्यप्रेरिताः न तथेत्याह । मुदेति ॥ ७ ॥

पुष्पवृष्टिश्च जातेत्याह । पेतुरिति । अन्यकृतव्यावृत्त्यर्थं दिव्या इति खेचरैर्देवैर्द्रष्टुकामैरागतैरपवर्जितास्त्यक्ताः वृष्टिकरणे प्रेम्णा विकला अपि ते इति सूचितं दिशः प्रसेदुः अम्भांसि च प्राणिनां मनांसि च त्रितयप्रसादः अलौकिकः आधिदैविकरूपः वादित्रादीन्याधिभौतिकानि ॥ ८ ॥

ब्रह्मणः समागमनमाधिदैविकं तदाह । तत्कर्दमेति । तद्बिन्दुसरोरूपं कर्दमस्याश्रमपदं सरस्वत्या परिश्रितमिति ब्रह्मणो निःशङ्कागमने हेतुः तस्या लौकिकं ज्ञानमस्तीति ज्ञापयितुं स्वयंभूरित्युक्तम् ऋषिभिः सनकादिभिर्मरीच्यादिभिश्च सह अभ्यगात् ॥ ९ ॥

न केवलं कर्दमदर्शनार्थं किंतु भगवानाविर्भूत इति ज्ञात्वेत्याह । भगवन्तमिति । भगवान् स्वयं परब्रह्मभूत एव सत्त्वेन स्वांशेन सत्त्वं गृहीत्वा ज्ञानकलया तत्त्वानां संख्यानं सांख्यशास्त्रं तस्य विज्ञप्त्यै ज्ञापनार्थमज एव स्वयंजात इति विद्वान् यतोऽयं स्वराट् स्वास्मिन्नेव राजते ॥ १० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

चतुर्विंशे जनुः प्रोक्तं कपिलस्य विधोर्वचः ।
कन्योद्वाहः कर्दमस्य प्रव्रज्यास्तुत्यनन्तरा ॥

शालिनीं श्लाघ्यां शुक्लेनाभिव्याहृतं सहाहं स्वांशकलयेत्यादि ॥ १ ॥

हे अनिन्दिते ! इत्थं मा खिदः खेदं माकार्षीः ॥ २ ॥

न चान्या प्राकृतीव त्वमकृतपुण्येत्याह । धृतव्रतासि । पूर्वजन्मनि कृतव्रतादिनियमास्यत इहापि जन्मनि ते भद्रं भविष्यति ॥ ३ ॥

हृदयग्रन्थिमहङ्कारलक्षणं बन्धमौदर्य्यः उदरजातः सन् ब्रह्मभावनः ब्रह्मोपदेष्टा ॥ ४ ॥

संदेशमुपदेशं गुरुं यः पुत्रो भूत्वा गुरुर्भविष्यति तम् ॥ ५ ॥

वहुतिथेति वहूनां पूरणे वहुतरे काले अतिक्रान्ते सतीत्यर्थः।"वहुपूगगणसङ्घस्य तिथुक्,,इति सूत्रं कार्दमं वीर्य्यं कर्दमस्य भक्तिप्रभावमापन्नस्तेन वशीकृत इत्यर्थः । अग्निरिव दारुणीति तस्यामन्तर्यामिरूपेण स्थित एव स पुत्ररूपेण प्रकटीवभूवेत्यर्थः ॥ ६ ॥

घनाघना गर्जन्तो मेघा इति देवा इत्यर्थः । "वर्षुकाब्दा घनाघना" इत्यमरः ॥ ७ ॥

अपवर्जिता विसृष्टाः ॥ ८ ॥

परिश्रितं वेष्टितम् ॥ ९ ॥

सत्त्वेन शुद्धसत्त्वस्वरूपेण अंशेन ननु पूर्णस्वरूपेणेत्यर्थः । तत्त्वस्य सङ्ख्यानं यस्मिन् तस्य साङ्ख्यस्य विज्ञप्त्यै विशेषेण ज्ञापनाय जातमाविर्भूतं जानन् सभाजयन् पूजयन् प्रहृष्यमाणैरसुभिरिन्द्रियैरुपलक्षितः कर्दमश्चकाराद्देवहूतिश्च ॥ १०—११ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

चतुर्विंशे भगवदाविर्भावः ब्रह्ममरीच्यादीनां सन्तोषः कर्दमस्य वैराग्यज्ञानभक्तिसाधनसंपत्तथा भगवद्भावापत्तिरूपा मुक्तिश्च वर्ण्यते एवमुक्तप्रकारेण निर्वेदवादिनीं शालिनीं श्लाघ्यां सहाहं स्वांशकलयेत्यादि शुक्लेन व्याहृतं स्मरन्नाह ॥ १ ॥

अदूरादल्पकालेन ॥ २ ॥

तावत्तदाराधनं कुरु स त्वयाराधितः पुत्रीभूतस्त्वद्बन्धनं छेत्स्यतीत्याह । धृतव्रतासीति द्वाभ्याम् ॥ ३ ॥

औदर्यः पुत्रः सन् ब्रह्मभावनः ब्रह्म वृहत्स्वरूपगुणादिपरमात्मतत्त्वं भावयत्युपदिशतीति स तथा हृदयग्रन्थिं देहे अहंतां गृहादौ ममतां छेत्ता छेत्स्यति त्वां संसारान्मोचयिष्यतीति भावः॥४॥

संदेशमुपदेशं सम्यक् श्रद्धाय स्वीकृत्य कूटस्थं निर्विकारं गुरुमज्ञाननिवर्तकं पुरुषमभजत् ॥ ५ ॥

वहुतिथे काले इति । अतः सा सुषुवे सद्यो देवहूतिःस्त्रियः प्रजा इतिवत्सद्यो. जातत्वशङ्कानिराकरणार्थं भगवतः स्वच्छन्दजातत्वद्योतनार्थं च वस्तुतस्तु "भगवांस्तेऽक्षरो गर्भमुपात

सभाजयन्विशुद्धेन चेतसा तच्चिकीर्षितम् ।
प्रहृष्यमाणैरसुभिः कर्दमं चेदमभ्यधात् ॥ ११ ॥

ब्रह्मोवाच ।

त्वया मेऽपचितिस्तात ! कल्पिता निर्व्यलीकतः ।
यन्मे संजगृहे वाक्यं भवान्मानद ! मानयन् ॥ १२ ॥
एतावत्येव शुश्रूषा कार्या पितरि पुत्रकैः ।
बाढमित्यनुमन्येत गौरवेण गुरोर्वचः ॥ १३ ॥
इमा दुहितरः सभ्य ! तव वत्स ! सुमध्यमाः ।
सर्गमेतं प्रभावैः स्वैर्बृंहयिष्यन्त्यनेकधा ॥ १४ ॥
अतस्त्वमृषिमुख्येभ्यो यथाशीलं यथारुचि ।
आत्मजाः परिदेह्यद्य विस्तृणीहि यशो भुवि ॥ १५ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

संप्रपत्स्यते,,इति स्वभर्त्रेनोक्ते अंशेन इत्यर्थः वीर्यं प्रभावं भक्तिबलमापन्नः श्रेष्ठपुत्रार्थं तद्भजनं स्वीकृत्वेत्यर्थः तस्यां जज्ञे प्रादुर्बभूव अन्यथा"हिरण्यकेशः पद्माक्षः पद्ममुद्रापदाम्बुजः एष मानवि ! ते गर्भं प्रविष्ट"इत्यनेन विरोधः स्यात् ॥ ६ ॥

तदा आविर्भावबेलायां तं भगवन्तमुद्दिश्य वादित्राणि दुन्दुभ्यादीनि अवादयन् गायन्ति च घनाः निविडाः सघना इत्यर्थः मेघा बभूवुरिति शेषः ॥ ७ ॥

अपवर्जिताः मुक्ताः प्रसेदुः प्रसन्नतां प्रापुः ॥ ८ ॥

परिश्रितं वेष्टितमाश्रमपदमाश्रमस्थानं साकं सह ॥ ९ ॥

तत्त्वानि वक्ष्यमाणानि चिदाचिद्ब्रह्माख्यानि संख्यायन्ते यस्मिन् येन वा तस्य वैष्णवस्य सांख्यशास्त्रस्य विवक्षयै विशेषतः अब्रह्मात्मकप्रधानप्रतिपादकसांख्यशास्त्रवैलक्षण्ययतः ज्ञापनाय सत्त्वेन ऋषिकुलानुरूपेण सत्त्वस्वभावेन जातमाविर्भूतं विद्वानजो ब्रह्मा स्वेनोपास्येन भगवता राजते इति स्वराट् भगवदधीनस्थितिवृत्तिकः तस्य भगवतश्चिकीर्षितं सभाजयन्प्रहृष्यमाणैरसुभिरिन्द्रियैरुपलक्षितः कर्दमं चकारात् देवहूतिमिदमभ्यधात् अवोचत् इति द्वयोरन्वयः ॥ १० ॥ ११ ॥

---

भाषाटीका

मैत्रेयजी बोले इस प्रकार से वैराग्य को कथन करती देवहूतीजी मनुकी पुत्री को देखकर अतिदयालु कर्दमजी उनका वचनप्रशंसनीय समझकर भगवान् के वचन को स्मरण कर के बोले ॥ १ ॥

हे राजपुत्रि ! हे प्रशंसा योग्य गुणवाली तू अपने को इस प्रकार मत शोच कर अक्षर भगवान् विष्णु थोडे दिनों मे तेरे गर्भ में प्राप्त होंगे ॥ २ ॥

तेरा कल्याणहोगा तू व्रतधारण करने वाली है तौ भी शमदमनियमों से तप धन दान से श्रद्धासे ईश्वर का भजन कर ॥ ३ ॥

भगवान् तुमारे आराधना करने से हमारे यश को विस्तार करने के लिये स्वयं ब्रह्मतत्त्व के उपदेष्टा तुमारे उदर मे से उत्पन्न होकर तुमारी हृदय की संशय ग्रन्थि को छेदन करेंगे ॥ ४ ॥

मैत्रेयजी बोले देवहूतीजी भी बडी गौरव से कर्दमजी के वचनको ग्रहण करके अच्छी श्रद्धा से जगद्गुरु निर्विकार परम पुरुष भगवान् का भजन करने लगी ॥ ५ ॥

बहुतकाल बीतने पर मधुसूदन भगवान् कर्दमजी के वीर्य मे प्राप्त होकर जैसे काष्ठ मे अग्नि पैदा होता है तैसे उत्पन्न भये ॥ ६ ॥

तिस समय पर वर्षते हुये मेघों ने विचित्र बाजे बजाये आकाश मे भगवान् को गन्धर्व गान करने लगे अप्सरा आनन्द से नाचने लगीं ॥ ७ ॥

देवतों के गिराने से आकाश से फूल गिरे सब दिशा बडी प्रसन्न हो गईं जल और मन सब प्रसन्नहोगये ॥ ८ ॥

सरस्वती से व्याप्त हुआ जो कर्दम का आश्रम तिस पर मरीच्यादि मुनियों के सहित ब्रह्माजी आये ॥ ९ ॥

हे विदुरजी सत्त्वगुण से तत्त्वसंख्यान के ज्ञान के वास्ते उत्पन्न भये परब्रह्म भगवान् को ब्रह्माजी ने जाना ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्र त्वयेति पञ्चभिः कर्दमं प्रत्याह । अपचितिः पूजा कृता यद्यस्मात् निर्व्यलीकतो निष्कपटं सम्यग्गृहीतवान् ॥ १२ ॥

अनुमन्येतेति यदेतावत्येव ॥ १३ ॥

अनेकधा प्रभावैर्वैर्बृंहयिष्यन्ति वर्धयिष्यन्ति ॥ १४ ॥

ऋषिमुख्येभ्यो मरीच्यादिभ्यः १५ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी

तत्र कर्दमदेवहूत्योर्मध्ये मानयन् सत्कुर्वन् ॥ १२ ॥
एतावती गुरुवचनानुमतिरूपा ॥ १३ ॥ १४ ॥
अतो दुहितॄणां वंशवृद्धिशक्तिमत्त्वात् ॥ १५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्यावतीर्णस्य भगवतः चिकीर्षितं विशुद्धेन मनसा सभाजयन् संमानयन्नभिनन्दयन्नितियावत् अत एव प्रहृष्यमाणैरसुभिरिन्द्रियैरानन्दाश्रुपूर्णरोमाञ्चितगद्गदस्वरादियुक्तनेत्रत्वग्वागादीन्द्रियैरुपलक्षितः कर्दमं चकाराद्देवहूतिं च मर्तादं वक्ष्यमाणमभ्यधादभ्यभाषत ॥ ११ ॥

तत्र त्वयेति पञ्चभिः कर्दमं प्रत्याह । हे तात ! पुत्र त्वयाऽपचितिः पूजा निर्व्यलीकेन प्रेमातिशयेन मे मह्यं कल्पिता विहिता काऽपचितिर्मया कल्पितेत्यत्राह । हे मानद ! भवान्वाक्यं मद्वचः मानयन् जगृहे गृहीतवानिति यत्तदेव ममापचितिः ॥ १२ ॥

त्वद्वाक्यकरणमात्रेण कथमपचितिः कल्पितेत्यत्राह । पितरि पुत्रैः कार्या शुश्रूषा अपचितिरेतावत्येव यद्गुरोः पितुर्वचः वाक्यं गौरवेण वाढमनुमन्येताङ्गीकुर्येतेति प्रजाः सृजेति मयाभिहितस्त्वं तथैवाकार्षीरतो मदपचितिः कल्पितेति भावः ॥ १३ ॥

हे वत्स ! सुमध्यमाः शोभनाङ्ग्यः इमाः सत्यः साधुशीलाः तव दुहितरः स्वैः प्रभावैरंशैः सर्गमनेकधा तत्तदपत्यपरंपराभिर्वृंहयिष्यन्ति वर्द्धयिष्यन्ति ॥ १४ ॥

अतस्त्वमृषिमुख्येभ्यो मरीच्यादिभ्यः आत्मजा दुहितॄः तत्तद्दुहितृरुचिशीलाननिक्रमेण परिदेहि प्रयच्छ अद्याधुना भुवि यशः विस्तृणीहि वितनु ॥ १५ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ब्रह्मणागत्य किं वचनमुक्तं तत्राह । सभाजयन्निति । तस्य हरेश्चिकीर्षितं सम्यक् ज्ञानसाधनशास्त्रनिर्माणेच्छां सभाजयन् साध्विति वहु मानयन् हरेर्भक्तानुकम्पितत्वेन प्रहृष्यमाणैरसुभिरिन्द्रियैरुपलक्षितश्चशब्देन हरेश्चिकीर्षा सभाजनं कर्दमसंभाषणं च समुच्चिनोति ॥ ११ ॥

सामान्येनोक्तं विशिनष्टि । त्वयेति । अपचितिः पूजा केयमपचितिरत्राह यन्मे सञ्जगृह इति ॥ १२ ॥

एतावता कथमपचितिरभूदित्यत्राह । एतावतीति । वाढमाभिमतमनुमन्येत करोमीति यावत् तावत्येव ॥ १३ ॥

किमनया स्तुत्या प्रजाः सृजेति भवदाज्ञा न निस्तीर्णेति तत्राह । इमा इति । सत्यः सन्तीति शेषः सतीगुणेन किं फलं तत्राह । सर्गमिति । सर्गमवशिष्टमिति शेषः अनेन मदाज्ञा च कृता स्यादित्युक्तं भवति ॥ १४ ॥

मानुपसर्गस्तु मिथुनेन भाव्यत इति यस्मादत आसां योग्येभ्यो यथारुचि देहीत्याह । अत इति । अनेनोभौ लोकौ च प्राप्नोषीत्याशयेनाह । विस्तृणीहीति । विस्तृणीहि विस्तृतं कुरु ॥ १५ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

आगत्य प्रथमं कर्दमं सभाजितवानित्याह । सभाजयन्निति । यावत्तेन कृतं तत्सर्वं विशुद्धेन चेतसा सभाजयन् साध्वेव कृतमित्यङ्गीकुर्वन् तच्चिकीर्षितं प्रव्रज्यादिकं च सभाजयन् प्रहृष्यमाणैरसुभिरिन्द्रियैः प्राणैरेव वा उत्फुल्लैः वक्ष्यमाणं कर्दमं प्रत्यभ्यधात् ॥ ११ ॥

तेन हि पूर्वम् ऋणत्रयापाकरणं कृतं तत्र पितृऋणे ब्रह्मा पिता तदभीष्टं कर्त्तव्यं तत्कृतमित्याह । त्वयेति । जाता मम वहवः पुत्राः त्वयैव मे परमापचितिः प्रत्युपकारलक्षणपूजा कृता तत्रापि निर्व्यलीकतः भगवति प्रसन्ने शास्त्रार्थे च ज्ञाते उत्कटे च कामे असति यो मद्वाक्यानुरोधेन विपरीत इव अपकर्षमपि सोढा महता कष्टेन आज्ञां कृतवान् तदेवाह । यन्मे संजगृहे वाक्यमेतदेव सम्यक् ग्रहणमन्तःकरणपूर्वकं ग्रहणात् मानयन् मानदेति संबोधनं वैपरीत्येऽपि ब्रह्मणा महानुपकारः कृत इति हृदये संमाननं वाक्यकरणं स्वस्मिन् रागाभावे सति करणं तस्मिन् दोषाननारोप्य करणं तदुपकारित्वेनकरणं सोपकारत्वेन करणं चेति एवं पञ्चाङ्गीकरणं सर्वोत्कृष्टम् ॥ १२ ॥

एतावदेव करणमित्याह । एतावत्येवेति । पितरि पुत्रकैरेतावत्येव शुश्रूषा कर्त्तव्या कायिकसेवा या सानुरोधाह्लौकिकी अतः पितृत्वेन गुरुत्वेन च यत्करणं तदलौकिकमेव कर्त्तव्यं तद्वाक्यमेव मनस्तु तत्रैव तस्येति निश्चीयते पूर्वरूपत्वात् पुत्रकैरिति वहुवचनं सर्वैः सम्भूय वा कर्तव्यम प्रत्येकाशक्ताविति ज्ञापितं गुरोर्वचो वाढमित्यनुमन्येत गौरवेणेति स्वकृतार्थता वाढमिति मत्सराभावः अनुमननं तथैव करणं गुरोरिति तस्मिन् दोषाभावः पश्चादेव वचनात् स्वस्मिन् रागाभावश्च प्रजाः सम्यक् सृष्टा इति तात्पर्यम् ॥१३॥

तस्य विनियोगमाह । इमा दुहितर इति । सत्येति तस्य स्वतो रागाभावो द्योतितः वत्सेत्यादरे सुमध्यमा इति सौन्दर्येण गुणा उक्ताः अत एव स्वैरेव प्रभावैः स्वस्मिन् भर्तृग्रहणधर्मैः एतं सर्गमनेकधा वृंहयिष्यन्ति अतः कन्याभिरेव जगत् पूर्यत इति नातः परं किंचित् कर्त्तव्यम् ॥ १४ ॥

अतः तदर्थमृषिभ्यः प्रयच्छेत्याह । अतस्त्वमिति । ऋषिमुख्येभ्यः मरीच्यादिभ्यः यथाशीलं यथारुचीति भगवत्कृतसंवन्धं स्वाभाविकसंवन्धं च अनतिक्रम्य अद्येति विशिष्टः कालः यद्यपि भगवत्कृतत्वात् सहजत्वाच्च संवन्धस्य न त्वत्कृतिरपेक्ष्यते तथापि स्वयं दानेन भुवि यशो विस्तारय ॥१५॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अपचितिः परिचर्य्या कृता ॥ १२ ॥

पुत्रकैः सत्पुत्रैः । वाढमिति यथाज्ञापयसि तथा करवाणीति ॥ १३ ॥

तव पुत्रा यद्यजनिष्यन्त तदाप्येवं सर्गो नावर्द्धिष्यत । यथा आभिर्दुहितृभिः सर्गो विस्तारयिष्यते इत्याह । इमा इति । प्रभावैः प्रभाववद्भिर्वंशैः ॥ १४-१५ ॥

---

वेदाहमाद्यं पुरुषमवतीर्णं स्वमायया ।
भूतानां शेवधिं देहं बिभ्राणं कपिलं मुने [१] ! ॥१६॥
ज्ञानविज्ञानयोगेन कर्मणामुद्धरन् जटाः ।
हिरण्यकेशः पद्माक्षः पद्ममुद्रापदाम्बुजः ॥ १७ ॥
एष मानवि ! ते गर्भं प्रविष्टः कैटभार्दनः ।
अविद्यासंशयग्रन्थिं छित्त्वा गां विचरिष्यति ॥ १८ ॥
अयं सिद्धगणाधीशः साङ्ख्याचार्यैः सुसंमतः ।
लोके कपिल इत्याख्यां गन्ता ते कीर्तिवर्धनः ॥ १९ ॥

मैत्रेय उवाच ।

तावाश्वास्य जगत्स्रष्टा कुमारैः सह नारदः ।
हंसो हंसेन यानेन त्रिधाम परमं ययौ ॥ २० ॥
गते शतधृतौ क्षत्तः ! कर्दमस्तेन चोदितः ।
यथोदितं स्वदुहितृः प्रादाद्विश्वसृजां ततः ॥ २१ ॥
मरीचये कलां प्रादादनसूयामथात्रये ।
श्रद्धामङ्गिरसेऽयच्छत्पुलस्त्याय हविर्भुवम् ॥ २२ ॥
पुलहाय गतिं युक्तां क्रतवे च क्रियां सतीम् ।
ख्यातिं च भृगवेऽयच्छद्वसिष्ठायाप्यरुन्धतीम् ॥ २३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तत्र कर्दमं प्रत्याह । त्वयेति पञ्चभिः। हे तात! पुत्र! अपचितिः पूजा कल्पिता कृता ॥ १२ ॥

यद्गुरोः पितुः वच आज्ञावाक्यं बाढमित्यनुमन्येत एतावत्येव शुश्रूषा पुत्रकैः पितरि कार्य्या ॥ १३ ॥ १४ ॥

ऋषिमुख्येभ्यो मरीच्यादिभ्यः न तु भगवदवतारेभ्यः सनत्कुमारादिभ्यः ।

सनकाद्या नारदश्च ऋभुर्हंसो रुणिर्यतिः ।
नैते गृहान् ब्रह्मसुता ह्यावसन्नूर्ध्वरेतसः ।

इति तेषामूर्ध्वरेतस्त्वात् ॥ १५ ॥

भाषाटीका।

भगवान् के कर्तव्य को विशुद्ध अन्तःकरण से प्रसंशा कर के सब इन्द्रियों से आनन्दयुक्त होकर ब्रह्माजी कर्दमजी से यह वचन बोले ॥ ११ ॥

ब्रह्माजी बोले हे तात ! कर्दम तुमने निष्कपट भावसे हमारा पूजन किया जिससे तुमने हमारे वाक्य को ग्रहण किया सन्मान सहित तिससे तुम मानदायक हो ॥ १२ ॥

पुत्रों को पिता के विषय में इतनी ही शुश्रूषा कर्तव्य है जो कि बहु मानपूर्वक पिता के वचन को ग्रहण करलेना है ॥ १३ ॥

हे वत्स ! ये तुमारी पुत्री सर्व सुन्दरी हैं ये अपने प्रभावों से अनेक प्रकार से इस सृष्टिको बढ़ावैंगी ॥ १४ ॥

इसी से तुम मुनियों को रुचि के अनुरूप इन पुत्रियों को देदो पृथिवी में यशका विस्तार करो ॥ १५ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

पुत्रस्तु साक्षादीश्वर इत्याह। वेदाहमिति। शेवधिं निधिं सर्वाभीष्टदम् ॥ १६ ॥

देवहूतिं प्रत्याह । त्रिभिः । ज्ञानं शास्त्रोक्तं विज्ञानमपरोक्षं च तें एव योग उपायस्तेन कर्मणां जटा मूलानि वासना उद्धरन्नुत्पाटयिष्यन् पद्ममुद्रायुक्तं पदाम्बुजं यस्य ॥ १७ ॥

हे मानवि! अविद्या स्वरूपाज्ञानं संशया मिथ्याज्ञानानि तन्मयं तव हृदयग्रन्थिम् ॥ १८ ॥

सुसम्मतः सुपूजितः सन् गन्ता प्राप्स्यति ॥ १९ ॥

कुमारैः सहेति शेषः सह नारदो नारदसहितश्च मरीच्यादीन्विवाहार्थमवस्थाप्य नैष्ठिकैरेतैः पञ्चभिः सहितो हंसो ब्रह्मा ययौ त्रिधाम तृतीयं धाम स्वर्गस्तस्य परां काष्ठां सत्यलोकम्॥२०॥

शतधृतौ ब्रह्मणि ॥ २१ ॥ २२ ॥

युक्तां योग्यामयच्छद्ददात् ॥ २३ ॥

---

[१] मुनिमितिश्रीवल्लभाचार्य पाठः ।

अथर्वणेऽददाच्छान्तिं यया यज्ञो वितन्यते ।
विप्रर्षभान् कृतोद्वाहान् सदारान् समलालयत् ॥ २४ ॥
ततस्त ऋषयः क्षत्तः ! कृतदारा निमन्त्र्य तम् ।
प्रातिष्ठन्नन्दिमापन्नाः स्वं स्वमाश्रममण्डलम् ॥ २५ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

वितन्यते समृद्धः क्रियते शान्त्यधिष्ठात्रीं देवतामित्यर्थः समलालयत्संतोषितवान् ॥ २४ ॥

निमन्त्र्य पृष्ट्वा नन्दिं हर्षं प्राप्ताः सन्तः ॥ २५ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

स्वमायया स्वेषु भक्तेषु कृपया बिभ्राणं प्रकटयन्तम् १६ ॥ १७ ॥

यद्यपि भगवन्मातुः शुद्धसत्त्वात्मकत्वेनाविद्यादिकं न संभवति तथापि तथोपदेशस्य लोकहितत्वात् तन्मात्रादरार्थमुद्धवादाविव तत्र तदारोपितमितिज्ञेयम् वस्तुतस्त्वन्येषामाविद्यादिकं छित्त्वेति व्याख्येयम् ॥ १८ ॥

अयं तु सांख्याचार्यैः सुसंमत इत्युक्त्यान्योऽप्यसंमतः कपिलोऽग्निवंशजो निरीश्वरसांख्यप्रवर्त्तको ज्ञेयः तदुक्तं पाद्मे "कपिलो वासुदेवाख्यस्तत्त्वं सांख्यं जगाद ह । ब्रह्मादिभ्यश्च देवेभ्यो भृग्वादिभ्यस्तथैवचातथैवासुरये सर्ववेदार्थैरुपबृंहितम् । सर्ववेदविरुद्धं च कपिलोऽन्यो जगाद ह । सांख्यमासुरयेऽन्यस्मै कुतर्कपरिबृंहितम्" इति ॥ १९ ॥

त्रिलोकीपक्षे तृतीयं स्वर्गं सत्यलोकपर्यन्तम् ॥ २० ॥

शतधृतिशब्दस्य ब्रह्मवाचकत्वे सिद्धपदसान्निध्यं हेतुर्ज्ञेयः विश्वसृजां विश्वसृड्भ्यः ततस्तदनन्तरमेव ॥ २१ ॥ २२ ॥

योग्यां तदनुरूपां सतीम् विहितक्रियाधिष्ठातृत्वाच्छ्रेष्ठाम् ॥२३॥

समृद्धः साङ्गतया सम्पूर्णः ॥ २४ ॥

ततस्संतोषानन्तरम् ॥ २५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्र पुत्रस्तु साक्षादीश्वर इत्याह । हे मुने ! स्वमायया आत्मीयसंकल्पेनावतीर्णं किमर्थं भूतानां शेवधिं निधिं देहं बिभ्राणं निधिमिवाभीष्टप्रदानाय देहं बिभ्राणं कपिलमाद्यं जगत्कारणं परमपुरुषमेवाहं वेद जानामि ॥ १६ ॥

देवहूतिं प्रत्याह त्रिभिः।हे मानवि ! मनुपुत्रि ! कैटभार्दनः कैटभारिर्भगवान् ज्ञानविज्ञानयोगेन जीवपरयाथात्म्यज्ञानयोगोपदेशेन कर्मणां शुश्रूषतां पुंसामनादिपुण्यपापरूपकर्मणां जटा मूलानि उद्धरन्नुत्पाटयितुमित्यर्थः ते तव गर्भं प्रविष्टो जात इत्यर्थः कथम्भूतः हिरण्यकेशः हिरण्यवत्प्रकाशमानाः केशा यस्य स पद्माक्षः पुण्डरीकाक्षः पद्माकारा मुद्रा रेखा यस्मिंस्तत्पदाम्बुजं यस्य स एष अविद्या देहात्माभिमानः संशयः अब्रह्मात्मकस्वतन्त्राभिमानः उभयात्मको यस्तव ग्रन्थिः हृद्गतमज्ञानं तं छित्त्वा निरस्य गां भूमिं विचरिष्यति ॥ १७ ॥ १८ ॥

अयं त्वत्पुत्रः सिद्धगणानां योगिसमूहानामधीशः सांख्याचार्यैः संख्या बुद्धिः बुद्ध्यावधारणीयमात्मतत्त्वं सांख्यं तत्प्रतिपादकं शास्त्रमपि सांख्यमेव तस्याचार्याः स्वयमनुष्ठानेनोपदेष्टारः तैः सुसंमतः बहुमतः लोके कपिल इत्याख्यां नामधेयं गन्ता गमिष्यति प्राप्स्यतीत्यर्थः ते तव कीर्तिवर्धनः ॥ १९ ॥

एवमुक्त्वा ब्रह्मा स्व लोकं ययावित्याह मैत्रेयः । तौ कर्दमदेवहूती आश्वास्य सान्त्वयित्वा जगत्स्रष्टा हंसो ब्रह्मा कुमारैःसहेति शेषः सह नारदः नारदसहितश्च हंसेन यानेन वाहनेन त्रिधाम्नः स्वर्गात्परमुपरिस्थितं सत्यलोकं प्रति ययौ ॥ २० ॥

शतधृतौ ब्रह्मणि गते सति क्षत्तः ! तेन ब्रह्मणा चोदितः आदिष्टः कर्दमः ततः स्वदुहितॄः विश्वसृजां विश्वसृड्भ्यः यथोचितं यथानुरूपं प्रादात्प्रायच्छत् ॥ २१ ॥

कस्मै कां प्रादादित्यत्राह । मरीचय इति । मरीच्यत्र्यङ्गिरःपुलस्त्यपुलहक्रतु भृगुवशिष्ठाथर्वभ्यो यथाक्रमं कलानुसूयाश्रद्धाहविर्भूगति क्रियाख्यात्यरुन्धती शान्त्याख्या दुहितॄःप्रायच्छदित्यर्थः।२२।

तत्र युक्तां वय आदिभिरिति शेषः इदं सर्वासामप्युपलक्षणम्।२३।

यया शान्त्या यज्ञः क्रतुर्वितन्यते विस्तार्यते बहुयज्ञवर्द्धिनीत्यर्थः दम्पत्योः सहाधिकाराद्ययेत्युक्तं कृतोद्वाहान् कृतविवाहान् सदारान् मरीच्यादीन्समलालयत् वै वाहिकवस्त्राभरणादिप्रदानेन संतोषितवान् इत्यर्थः ॥ २४ ॥

हे क्षत्तः ! विदुर ! ततः कृतदाराः प्रगृहीतदारास्ते मरीच्यादय ऋषयस्तं कर्दमं निमन्त्र्यानुज्ञाप्य नन्दिं हर्षमापन्नाः प्राप्ताः सन्तः स्वस्वमाश्रमं स्थानं प्रातिष्ठन् प्राविशन् ॥ २५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अयं तव गृहेऽवतीर्णः साक्षान्नारायण एव नान्यस्तल्लक्षणसद्भावादित्यहं वेद्मि त्वमपि तथा विद्धीत्यभिप्रेत्याह । वेदाहमिति । भूतानां जीवानां शेवधिं पुरुषार्थसाधनानिधिं देहं बिभ्राणं कम्पिवति लाति चेति कपिलं नाम्नाऽहं वेदेत्यन्वयः ॥१६॥

यो ज्ञानविज्ञानयोगेन कर्मणां स्वरूपमुद्धरन् प्रकाशयन् उन्मूलयन्वा यश्च हिरण्यकेशादिलक्षणलक्षितस्तामितिशेषः "हिरण्यश्मश्रुः हिरण्यकेश" इत्यादिश्रुतेः ॥ १७ ॥

स्वस्य जगद्गुरुत्वादिसिद्धये देवहूत्या अपि स्वविज्ञानमुपदिशति । एषमानवीति । तव तत्त्वविज्ञापनेनाविद्यासंशयग्रन्थिम् अज्ञानमविद्याविकल्पः संशयस्ताभ्यामुत्पन्नग्रन्थिं बन्धनं पाशलक्षणं छित्त्वा गां भूमिं विचरिष्यति स्वपादैकशरणानां तत्त्वज्ञापनायेतिशेषः ॥ १८

न केवलं तवाविद्या संशयग्रन्थिं छिनत्ति किन्त्वन्येषामपीति भावेनाह । अयमिति । अयं भगवान् लोके कपिल इत्याख्यां गन्ता इत्यन्वयः संसारकम्पलयहेतुत्वात्कपिल इत्यस्मिन्नर्थे

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विप्रतिपत्तिर्नास्तीत्याह । सांख्येति । सांख्यशास्त्रं कृत्वा प्रवर्तकत्वेन तदाचार्याणां पुरुषाणां परमगुरुत्वेन तैः सुसंमतोऽविप्रतिपन्नः कुतर्कदूंहितसांख्यकर्ता नायमित्याह । सिद्धेति । सिद्धाः मुक्तास्तेषां गणस्याधीशः अन्यकपिलस्यैतदभावात् । इतोऽपि न दुष्टकापिलोऽयमित्याह । ते कीर्तिवर्धन इति ॥ १६ ॥

मानुषैः सह बहुलं संभाषणं न न्याय्यमिति भावेन जगत्स्रष्टुस्त्रिधामाभिगमनं वक्ति । तावेति । हंसो निर्मलः ॥ २० ॥

कर्दमेन पुत्राननदर्शनेन धातुर्वचनं न विस्मृतमिति भावेन तदुक्तं कृतमित्याह । गत इति । शतधृतौ शतानन्दे चतुर्मुखे तत इत्यनेन न विलम्बः कृत इति ध्वनयति ॥ २१ ॥

मन्दमतीनां सम्यगवबोधाय वरानुव्यनक्ति मरीचय इति ॥ २२ ॥ २३ ॥

कर्दमो जामातॄणां दुहितृषु प्रीत्यर्थं किमकार्षीदिति तत्राह । विप्रर्षभानिति । समलालयद्धनमानाभ्यामिति शेषः ॥ २४ ॥

तल्लालिता जामातरस्तत्प्रीत्यर्थं तदाश्रम एव किमवसन्नुत स्वाश्रममयासिषुरुभयमपि संभावितमिति तत्राह । तत इति ।

कृतदारा विहितभार्या भार्यान्तरप्राप्तीच्छारहिता वा"युगे क्षपाते पर्याप्ते कृतं क्लीवे हितेऽर्थवत्"इति यादवः नन्दं धनमानाभ्यां समृद्धिमापन्नाः प्राप्ताः ॥ २५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स्त्रेषु माया कृपा तया ॥ १६—१७ ॥

अविद्यादिकमन्येषां छित्त्वेति ज्ञेयं भगवत्प्रादुर्भावस्थानस्य शुद्धसत्त्वात्मकत्वात् । तत्र न सम्भवति उपदेशादिकन्तु लोकहितार्थं यथोद्धवादाविति विवेचनीयम् ॥ १८ ॥

अयमिति । अन्यस्तु विशेषः कपिलो दर्शनकर्त्ता न सुसम्मतः वेदविरुद्धानीश्वरवादात् तथैव हि पाद्मवचनम् । भाष्यकृद्भिरुद्धृतम् ।

> कपिलो वासुदेवाख्यस्तत्त्वं साङ्ख्यं जगाद ह ।
> ब्रह्मादिभ्यश्च देवेभ्यो भृग्वादिभ्यस्तथैव च ।
> तथैवासुरये सर्व्ववेदार्थैरुपबृंहितम् ।
> सर्व्ववेदविरुद्धञ्च कपिलोऽन्यो जगाद ह

साङ्ख्यमासुरयेऽन्यस्मै कुतर्कपरिबृंहितमिति ॥ १९-२१ ॥

कलायाः सर्व्वा एव भगवच्छक्तित्वेन योज्याः ॥ २२ ॥

अरुन्धती च पातिव्रत्यशक्तिर्ज्ञेया तन्नमा हि पतीच्छारोधमनाकरणात् युक्तामिति सतीमिति च सर्व्वत्र योज्यं ॥ २३ ॥

एवं ययेति च ॥ २४-२५ ॥ २६ ॥ २७ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवमग्रिमाज्ञां दत्वा कपिलं भगवानयमिति ज्ञापयति । वेदाहमिति । अहं वेदेति प्रमाणमाद्यः पुरुषो भगवान् स्वमायया स्वेच्छापूरिकया लोकानामन्यथात्वं ज्ञापयन्त्या तादृश्या प्राणिनां निधिरूपं देहं बिभर्त्ति कपिल इति लोके प्रसिद्धः अनेन पुत्रगताः सर्वे गुणा उक्ताः मुनिमिति तस्मिन् तव न किंचित् कर्त्तव्यमिति सूचितम् ॥ १६ ॥

स्वरूपमुक्त्वा कार्यमाह । ज्ञानेति । स हि ज्ञानं विज्ञानं योगं च प्रकटयिष्यति ज्ञानं सांख्यं विज्ञानं ससाधनमनुभवः यत्रासङ्गः यानि कर्माण्याधिभौतिकानि तानि सांख्येनोन्मूलितानि भवन्ति यान्याध्यात्मिकानि तान्यनुभवेन यान्याधिदैविकानि तानि योगेनेति त्रिभिः कृत्वा कर्मणां परस्परमिश्रणेन या जटाः ताः उद्धरन् ऊर्ध्वमुत्पाटयन् भविष्यतीत्यर्थात् त्रितयप्रवर्त्तकत्वाय लक्षणान्याह । हिरण्यकेश इति । सुवर्णवर्णाः केशाः सांख्यसिद्धिहेतवः पद्मसदृगे ईक्षणे यस्य अनुभवलक्षणमेतत् पद्ममुद्रा पदाम्बुजे यस्य एतद्योगलक्षणम् ॥ १७ ॥

एवं कर्दममुक्त्वा देवहूतिमाश्वासयति । एष मानवीति । मनोः पुत्रीति सम्बोधनात् स्ववंशे भगवदाविर्भावो न दोषाय कैटभार्दन इति मूलपुरुष उक्तः क्रियापरो मधुसूदनः ज्ञानपरः कैटभार्दन इति उभयोः प्रतिबन्धकयोर्नाशात् अत एवाविद्याकृतं संशयग्रन्थिं सर्वशास्त्रार्थश्रवणेऽपि हृदये संशयापादकं मोहग्रन्थिं छित्वा स्वयमपि लोके तत्प्रचारं कुर्वन् गां विचरिष्यति ॥ १८ ॥

किञ्च अयं च महान् भविष्यति परमार्थतः अलौकिकलौकिकप्रसिद्धिभ्यां च महान् भविष्यति तत्र परमार्थे स्वरूपमाह । अयमिति । सिद्धा योगादिना तेषां नियामको यः परमार्थत एव सिद्धो भवति सांख्याचार्या ये सांख्यप्रवर्त्तकाः तैरभिष्टुतः इत्यलौकिकोत्कर्षः लोके च कपिल इत्याख्यां गमिष्यति एवं विधोऽपि ते कीर्त्तिवर्द्धनो भविष्यति देवहूत्याः पुत्रः कपिल इति ॥ १९ ॥

एवमाश्वासनं कृत्वा अग्रिमकार्यसिद्ध्यर्थं ततो गत इत्याह । तावाश्वास्येति । नन्वल्पे कार्ये कथं स्वयमागतो गतश्चेति तत्राह । जगत्स्रष्टेति । यस्मिन्कार्ये क्रियमाणे जगत्स्रष्टुरभिवृद्धिर्भवति तदेव कर्त्तव्यमतो गमनं कार्यान्तरार्थं चागमनमिति कुमारैः सनकादिभिः सह नारदश्च एतेषां विवाहे उपयोगाभावात् हंस इति क्षीरनीरविवेककर्त्ता अतोऽयं मरीच्यादीन् स्थापयित्वा अन्यांश्च गृहीत्वा गतः हंस एव यानं तेन प्रसंगादप्यन्यत्र गमनाभावः त्रिधाम त्रयाणां लोकानां धाम तेजोरूपं गुणानां वा साम्यस्थानं ब्रह्मणो बहूनि स्थानानि सन्तीति तद्व्यावृत्त्यर्थं परममिति सत्यलोकं ययौ ॥ २० ॥

ततः शतधृतौ ब्रह्मणि गते ब्रह्मणा प्रेरितः यथा ब्रह्मणा उदितं तथा सादृश्यं तु विचार्य विश्वसृजां मध्ये एकस्मै एकैकां प्रादात् ब्रह्मणो गाम्भीर्यकथनाय शतधृतिप्रयोगः शतं धृतयो यस्येति ॥ २१ ॥

विवाहानाह । मरीचय इति सार्द्धाभ्याम् । हविर्भूरितिकन्या गतिरिति नाम युक्तं यथायोग्यमन्यथा पुलहपुलस्त्यौ राजसप्रकृतिकौ क्रियेति नाम कर्तोर्दक्षिणाया एव तुल्यत्वेऽपि सत्य क्रियाया अपि तुल्यत्वमिति सतीं क्रियामित्युक्तमथर्वा वेदाभिमानी देवः अथर्वाङ्गिरसां ब्रह्मप्रतिपादकत्वात् तद्भार्या शान्तिः सोऽपि ब्रह्मपुत्र एवेति ज्ञातव्यं नन्वस्य निवृत्तिपरत्वात् किं भार्यया कर्त्तव्यमित्याशङ्क्याह । यया यज्ञो वितन्यते इति । यया ब्रह्मप्रतिपादकत्वं तथा यज्ञोपयोगित्वमपि तथा सति यया शान्त्या यज्ञविस्तारः क्रियते सेयमित्यर्थः तेभ्यः कन्याः दत्वा

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भूषणादिभिरुपालालयदित्याह। विप्रर्षभानिति। ते ब्राह्मणाः स्वस्वमतानुसारेण विवाहं कृतवन्तः अतः स्वतन्त्रविवाहे सामर्थ्यं विप्रर्षभानिति स्वकन्या अपि तेषु स्त्रीभावमेव प्राप्ता इति सदारान् सस्त्रीकान् सम्यगलालयत् ॥ २२ ॥ २३ ॥ २४ ॥

ततस्ते सर्वं एव मन्त्रद्रष्टारः अलौकिकं ज्ञात्वा तासु सृष्टिं चिकीर्षवः कृतदाराः तासु कन्यासु कृतं दारत्वं यैरिति धर्मधर्मिणोरभेदात् कृतदारा इत्युक्तं तं श्वशुरं निमन्त्र्य गच्छामीत्युक्त्वा नन्दिं परमां मुदमापन्नाः तत एव प्रत्येकं विभक्ताः स्वं स्वमाश्रममण्डलं प्रातिष्ठन् ॥ २५ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स्वमाययैव भूतानां शेवधिं निधिं सर्व्वाभीष्टप्रदं सात्त्विकज्ञानादिप्रदातारं विप्राणां वस्तुतस्तु नित्यदेहमेवमतीर्णमित्यर्थः ॥ १६ ॥

देवहूतिं प्रत्याह ज्ञानं परोक्षं विज्ञानमपरोक्षं ते एव योग उपायस्तेन कर्म्मणां जटा मूलानि वासना उद्धरन् उत्पाटयितुमित्यर्थः। अविद्या स्वरूपाज्ञानं संशया मिथ्याज्ञानानि तन्मयं हृदयग्रन्थिम ॥ १७–१८ ॥

अयं सुसम्मत इत्यन्यस्तु सिद्धविशेषः कपिलो दर्शनकर्त्ता न सुष्ठु सम्मतः वेदविरुद्धानीश्वरवादात्तथैवहि पाद्मवचनम् भाष्यकृद्भिरुद्धृतम्।

कपिलो वासुदेवाख्यस्तत्त्वं साङ्ख्यं जगाद ह।
ब्रह्मादिभ्यश्च देवेभ्यो भृग्वादिभ्यस्तथैव च।
तथैवासुरये सर्व्ववेदार्थैरुपबृंहितम्।
सर्व्ववेदविरुद्धञ्च कपिलोऽन्यो जगाद ह।
साङ्ख्यमासुरयेऽन्यस्मै कुतर्कपरिबृंहित

मिति ॥ १९ ॥

कुमारैः सहेति शेषः। मरीच्यादीन् विवाहार्थमवस्थाप्य नैष्ठिकैरेतैः पञ्चभिः सहितो हंसो ब्रह्मा त्रिधाम तृतीयं धाम स्वर्गस्तस्मादपि परमं सत्यलोकम् ॥ २० ॥

शतधृतौ ब्रह्मणि यथोदितं शास्त्रोदितमनतिक्रम्य विश्वसृजां विश्वसृड्भ्यः ॥ २१ ॥ २२ ॥

युक्तां योग्याम् ॥ २३ ॥

ययेति शान्त्यैव तपोयज्ञज्ञानयज्ञा विस्तृताः सफला भवन्तीत्यर्थः ॥ २४ ॥

निमन्त्र्य पृष्ट्वा नन्दिम् हर्षम् ॥ २५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आद्यं विश्वहेतुं भूतानां शेवधिं निधिं सर्वार्थदं देहमप्राकृतं बिभ्राणं मायया कृपया अवतीर्णमहं वेद ॥ १६ ॥

अथ देवहूतिं प्रत्याह। ज्ञानेति त्रिभिः। कर्मणां जटाः तन्मूलभूता वासनाः ज्ञानविज्ञानयोर्योगेनोपदेशेन उद्धरन् उद्धरिष्यन् हिरण्यकेशः हिरण्यकेशोपलक्षितनित्यदेहयुक्त एव ते गर्भं प्रविष्टः ते अविद्या संशयग्रन्थिम् अज्ञानजन्य संशयग्रन्थिम् छित्त्वा अन्येषामज्ञानजन्यसंशयग्रन्थिं छिन्दन् गां विचरिष्यतीत्यन्वयः॥ १७ ॥ १८ ॥ १९ ॥

हंसः हेयोपादेयवित् ब्रह्मा सह नारदः नारदेन सहितः कुमारैः सहेति शेषः त्रिधाम परमं लोकत्रयात्परे महरादयो लोकाः तेभ्योऽपि श्रेष्ठत्वात् त्रिधाम्नः लोकत्रयात् परमः अत्युत्कृष्टः सत्यलोकस्तम् ॥ २० ॥ २१ ॥ २२ ॥

युक्तां योग्याम् ॥ २३ ॥

शान्तिं शान्त्याख्यगुणश्रेष्ठस्य अधिष्ठात्रीं देवताम् यया यज्ञो विष्णुः तितन्यते तत्प्रतिपादकशास्त्राध्ययनादिद्वारा लोके विस्तार्यते इत्यर्थः कर्दमोऽपि तथैव सदारान् समलालयत्सन्तोषितवान् ॥ २४ ॥

नन्दिं हर्षं प्राप्ताः निमन्त्र्य पृष्ट्वा ॥ २५ ॥

---

भाषाटीका

हे मुनि! अपनी माया से अवतार लेने वाले प्राणिमात्र के धनरूप देह को धारण करनेवाले आद्य पुरुष भगवान् कपिलजी को मैं जानता हूं ॥ १६ ॥

ज्ञान विज्ञान योगसे कर्मों की वासना को नाश करने वाले हिरण्यकेश पद्माच चरण कमल में पद्मके चिन्हवाले भगवान् हैं ॥ १७ ॥

हे देवहूतीजी ! यह कैटभनाशक भगवान् तुम्हारे गर्भ में प्रविष्ट भये हैं अज्ञान की संशय ग्रन्थि को छेदन करि के पृथिवी में विचरैंगे ॥ १८ ॥

ये कपिल भगवान् सिद्धगणों के ईश्वर हैं सांख्यशास्त्रवेत्ता आचार्यों के मान्य हैं ये तुंमारी कीर्तिको बढावैंगे लोकमें कपिल ऐसा इनका नाम प्रसिद्ध होगा ॥ १९ ॥

मैत्रेयजी बोले जगत्के सृजने वाले ब्रह्माजी कर्दम देवहूती दोंनों को सांत्वन कर के सनत्कुमारादि नारदादि सहित हंस विमान में बैठकर तीनलोकसे परे अपने सत्यलोक को गये ॥ २० ॥

हे विदुरजी ! ब्रह्माजीके चले जाने पर कर्दमजीने ब्रह्माजीकी आज्ञासे उनके कहने के माफिक अपनी पुत्रियों को प्रजापतियों को प्रदान किया ॥ २१ ॥

कला नाम कन्या मरीचीको दी अनसूया अत्रिको दी श्रद्धा अंगिराको दी हविर्भू पुलस्त्यको दी ॥ २२ ॥

गति पुलहको दी लायक जानकर क्रतुको क्रिया दीनी ख्याति भृगुको दी अरुन्धती वसिष्ठ को दीनी ॥ २३ ॥

शांति अथर्वणा को दी जिससे कि यज्ञों की वृद्धि होती है सब उत्तम ब्राह्मणों का विवाह करके स्त्रियों के सहित उन का बडा आदर किया ॥ २४ ॥

हे विदुरजी! तिसके पीछे वे सब ऋषि भार्यों का ग्रहण करके कर्दमजी से विदा मांगकर आनन्द होकर अपने अपने आश्रम को चले गये ॥ २५ ॥

---

स चावतीर्णं त्रियुगमाज्ञाय विबुधर्षभम् ।
विविक्त उपसङ्गम्य प्रणम्य समभाषत ॥ २६ ॥
अहो पापच्यमानानां निरये स्वैरमङ्गलैः ।
कालेन भूयसा नूनं प्रसीदन्तीह देवताः ॥ २७ ॥
बहुजन्मविपक्वेन सम्यग्योगसमाधिना ।
द्रष्टुं यतन्ते यतयः शून्यागारेषु यत्पदम् ॥ २८ ॥
स एव भगवानद्य हेलनं न गणय्य नः ।
गृहेषु जातो ग्राम्याणां यः स्वानां पक्षपोषणः ॥ २९ ॥
स्वीयं वाक्यमृतं कर्तुमवतीर्णोऽसि मे गृहे ।
चिकीर्षुर्भगवान् ज्ञानं भक्तानां मानवर्द्धनः ॥ ३० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

स च मुनिः त्रियुगं विष्णुम् । विविक्ते रहसि ॥ २६ ॥

पापच्यमानानां भृशं दह्यमानानाम् । निरये संसारे स्वीयैरमङ्गलैः पापैः ॥ २७ ॥

कुतः सर्वा देवताः प्रसन्ना इति ज्ञातमलभ्यलाभादित्याह । द्वाभ्याम् । बहुषु जन्मसु विपक्वेन सुसिद्धेन सम्यग्योगो भक्तियोगस्तस्मिन्समाधिरैकाग्र्यं तेन शून्यागारेषु विविक्तस्थानेषु यस्य तव पदम् ॥ २८ ॥

हेलनमवज्ञां लाघवं न गणय्यागणयित्वा उचितमेव तवैतदित्याह । यस्त्वं स्वानां भक्तानां पक्षं पुष्णासीति तथा सः ॥ २९ ॥

एतत्प्रपञ्चयति । द्वाभ्याम् । स्वयमेवावतीर्णोऽसि स्ववाक्यं तव पुत्रो भविष्यामीति यत्तत्सत्यं कर्तुं ज्ञानं ज्ञानसाधनं साङ्ख्यं च चिकीर्षुः सन् ॥ ३० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

कलौ छन्नत्वात्त्रियुगम् सर्वप्रत्यक्षे पुत्रे नत्यसम्भवाद्रहसि-प्रणम्येति तस्य दास्यनिष्ठा दर्शिता ॥ २६ ॥

कालेन तपसा संस्कृतेनेति देवताप्रसादस्य कारणत्वमलभ्यलाभरूपभगवज्जन्मनः कार्यत्वं तथाच फलेन फलकारणमनुमीयत इति न्यायात् भगवज्जन्मना सर्वदेवताप्रसादोऽनुमीयते । तदुक्तं द्वितीये"एतावानेव यजतामिह निःश्रेयसोदयः । भगवत्यचलो भावो-यद्भागवतसङ्गत,,इति ॥ २७ ॥

बह्विति युग्मकम् । ज्ञातमनुमितम् पदं स्वरूपं यतन्त एव नतु पश्यन्तीत्यलभ्यत्वमुक्तम् श्रीभगवत्यवज्ञाया असम्भवाल्लाघवे लक्षणा पुत्रतयाविर्भूते तस्मिंल्लाघवस्यौचित्यात् एतत् लाघवागणनेन जन्मस्वीकरणं भक्तानां शुद्धानाम् ॥ २८ ॥ २९ ॥

एतद्भक्तपक्षपोषणम् भक्तानामस्मदाद्याश्रयाणां ब्रह्मादीनाम् ॥ ३० ॥

---



श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे भरतर्षभ ! सः कर्दमः त्रीणि युगानि ज्ञानशक्त्यादिगुणयुग्मानि यस्य तं भगवन्तं कपिलरूपेणावतीर्णमाज्ञाय विदित्वा विविक्ते एकान्ते उपसङ्गम्य समीपमेत्य प्रणम्य सम्यक् मधुराक्षरं यथा तथा ऽभाषत ॥ २६ ॥

भाषणमेवाह । अहो इत्यष्टभिः । तावत्सामान्येन देवताप्रसादो दुर्लभ इत्याह । स्वीयैरमङ्गलैः दुष्कृतैः निरये संसारे पापच्यमानानां भृशं दह्यमानानां भूयसा कालेन देवताः प्रसीदन्ति प्रसन्ना भवन्ति नूनं निश्चयः अहो आश्चर्यम् ॥ २७ ॥

वाङ्मनसागोचरस्वरूपस्वभावस्त्वं भक्तेषु स्वसौलभ्यं प्रदर्शयन्नस्मद्भाग्यवशान्नयनविषयतां गतोऽसीत्याह । बह्वित्यादिना त्रयेण । बहुभिर्जन्मभिर्विपक्वेन परिपाकदशामापन्नेन बहुजन्मानुष्ठितज्ञानकर्मयोगाभ्यामनुगृहीतेनेत्यर्थः सम्यग्योगसमाधिना सम्यग्योगो भगवद्भक्तियोगो यस्मिंस्तेन समाधिना चित्तैकाग्र्येण यस्य तव पदं स्वरूपं शून्यागारेषु रागादिरहितेषु हृदयस्थानेषु द्रष्टुं साक्षात्कर्तुं यतन्ते अनेन प्राकृतमनआद्यगोचरत्वमुक्तम् ॥ २८ ॥

स एष भगवान् भवान् हेलनं कथमहं निःसमाभ्यधिको ग्राम्याणां गृहेषु निरयप्रायेषु जायेयेत्यवज्ञामविगणय्य ग्राम्याणां नो ऽस्माकं गृहेषु जातोऽवतीर्णः भक्तसुलभस्य भवतस्त्विदमुचितमेवेत्याह यस्त्वं स्वानां स्वभक्तानां पक्षं पोषयति तथा सः अनेन भक्तसौलभ्यमुक्तम् ॥ २९ ॥

स्वीयं वाक्यमहं च स्वांशकलयेतिवाक्यमृतं सत्यं कर्तुं मम गृहेऽवतीर्णोऽसि इदं सङ्कल्पितकरणमस्मद्भाग्यमेवेति भावः अवतारप्रयोजनमाह । ज्ञानं ज्ञायतेऽनेनेति ज्ञानसाधनं सांख्यं तन्त्रं तच्चिकीर्षुः कर्तुमिच्छुः भक्तानां मानं बहुमानं वर्द्धयतीति तथा सन् अवतीर्णोऽसि साधून्परित्रातुं लोकोज्जिजीविषया सांख्यतन्त्रं च कर्तुमवतीर्ण इत्यर्थः ॥ ३० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सूचीकटाहन्यायेन कर्दमजामातॄणामनवसरादुक्तं कथाप्रसंगं

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विभाव्य पुनरपि कर्दमचरितशेषं वक्ति । सचेति । कृतादिषु त्रिषु युगेषु प्रादुर्भावो यस्य स त्रियुगस्तं "युगत्रयावतारेण त्रियुगश्चेति कथ्यते" इति च आत्मना ब्रह्मवचनेन च सम्यक् ज्ञात्वा विविक्ते एकान्ते ॥ २६ ॥

स्वाभीष्टश्रवणायोपोद्घातं रचयति । अहो इति । निरये नरकतुल्ये संसारे देवतास्तारिवका इन्द्रियाभिमानिदेवताः ॥ २७ ॥

भगवत्प्रसादं विना देवताप्रसादेन किं स्यादित्याशङ्क्य तत्प्रसादाविना भूतोऽन्यथा तत्प्रसाद एव न स्यादतस्तस्य श्रीनारायणस्य प्रसादो नैकेन जन्मना किन्तु बहुभिर्जन्मभिः योग्यानामेवोपासकानां स्यादित्याह । बहुजन्मेति । यतयो निर्जितेन्द्रियग्रामाः शून्यागारेषु एकान्तस्थानेषु मधुवनादिषु समीचीनेन निर्दोषेण भक्तियोगेनाष्टाङ्गयोगेन वा युक्तेन समाधिना संप्रज्ञातसंज्ञेन यस्य पदं स्वरूपम् ॥ २८ ॥

यश्च स्वानां स्वभक्तानां पक्षं पुष्णातीति पक्षपोषण :स एव भगवानद्य अस्माकं विषयलोलानां नो हेलनमवज्ञां न गणय्यानादृत्य केवलानुग्रहलक्षणबुद्ध्या गृहेषु जातः प्रादुर्भूत इत्यन्वयः न इत्युक्तानुसारेण गृहेष्विति बहुवचनं यद्वा मादृशानामिति वा ॥ २९ ॥

किंच भक्तानामभिवर्द्धनस्तेषामेव शर्म सुखं चिकीर्षुस्त्वं तव पुत्रत्वेनावतरिष्यामीति स्वीयं वाक्यमृतं सत्यं कर्तुं मे गृहे भार्यायामवतीर्णोऽसीत्यन्वयः भक्तशर्मकरणाय तदभिमानवर्द्धनाय स्ववाक्यसत्यत्वकरणाय चेत्यवातर इति गम्यते ॥ ३० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

साधारणोऽपि देवता भूयसा कालेन प्रसीदन्ति त्वं न तथेत्याह । बह्विति युग्मकेन । तत्रासाधारणत्वमाह प्रथमेन योगोऽष्टाङ्गः स्वभक्तसम्बन्धमात्रवशत्वमाह । द्वितीयेन स्वानां शुद्धभक्तानां पक्षानुगतः ॥ २८—२९ ॥

तादृशवाक्यत्वे हेतुः । भक्तानामसमदाद्याश्रयरूपाणां ब्रह्मादीनामपि ॥ ३० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवमैहिकं सर्वं समाप्य तस्य मुक्तिमाह । यावदध्यायसमाप्ति सचावतीर्णमित्यादिना ।

आज्ञां भगवतो लब्ध्वा तस्यैवाज्ञानुसारतः ।
यदा सर्वं परित्यज्य विचरेत्स हि मुच्यते ॥

भगवन्तं ज्ञात्वा स्तुत्वा पश्चात्प्रार्थनीयमिति नियमात् आदौ ज्ञानमिति वक्तुं तस्य पुत्रे प्रणिपत्तिमाह । सचावतीर्णमिति । त्रियुगो धर्मः यज्ञात्मको भगवान् यथा सृष्टौ क्रियात्मा वराहः तथा ज्ञानात्मकः कपिल इति अन्यथा सृष्टिरनन्ता स्यात् भगवल्लीलात्वात् विबुधर्षभं देवोत्तमं विष्णुं सैव हि परमा देवतेति वैदिके मार्गे देवतैव सर्वोत्तमा ब्रह्मापि देवतैव तथा आत्मा अतो विबुधश्रेष्ठत्वमुक्तं प्रतिवासिषु ऋषिषु परिज्ञाना-

भावार्थं भार्यायाश्च दुःखाभावार्थं विविक्ते एकान्ते उपसङ्गम्य निकटे गत्वा पादौ स्पृष्ट्वा प्रणम्य भगवानिति निश्चित्य सम्यक् स्तोत्ररूपं वाक्यमभाषत ॥ २६ ॥

अहो इति । स्वगृहे भगवदवतारः न स्वधर्मसाध्यः तादृशधर्माभावात् किन्तु सर्वदेवानां प्रसादसाध्यः यतस्ते भगवदवयवाः प्रसादेऽपि नास्माकं धर्मोऽस्ति किन्तु बहुकालदुःखानुभवे दीनत्वे सति दयया प्रसादः शास्त्रे तु देवतानां न दयया प्रसादः किन्तु कर्मणैवेति विपरीतदर्शनादहो इत्याश्चर्यं स्वैरमङ्गलैः पापैः अनन्यभोग्यैः अत्यन्तं च पच्यमानानां महता कालेन देवताः प्रसीदन्ति नूनं सात्त्विकस्वभाववत्वात् अस्य च निस्तारोपायाज्ञानात् प्रसाद आवश्यकः ॥ २७ ॥

ननु किमेतत् दुर्लभं यतः प्रसादफलत्वेन वर्ण्यते तत्राह । बहुजन्मेति । बहुभिरेव जन्मभिः साधितो योगः पक्वश्चेद्भवति तदा चित्तं निर्मलं भवति तदा भगवति दिदृक्षा जायते ननु दर्शनमेवं दुर्लभदर्शनश्चेत् गृहे अवतरति तदा किं भाग्यं वर्णनीयं योगेन यः समाधिः ननु चिन्तनादिना । शून्यागारेष्विति । प्रव्रज्या तद्धर्मनिरतत्वं निर्भयश्चोक्तं यत्पदं हृदये स्फुरितम् ॥ २८ ॥

तर्हि नायं स भविष्यतीत्याशङ्क्याह । स एवेति । स एवायं भगवान् ब्रह्मवाक्यात् स्वानुभवाद्भगवद्वाक्याच्चावसीयते ननु पुरुषोत्तमः कथमपमानं सोढ्वा अस्मत्स्ववतरिष्यति न हि वाधितमर्थं वेदोऽपि बोधयति स हि सर्वतो मानपात्रमत आह। अद्य नः हेलनमविगणय्य इतः पूर्वमेव मर्यादा स्थिता अद्यैवैवं जातमत एव अस्माकं गृहेषु जातः कस्यचित्पुत्रः कस्य चिद्भ्राता कस्यचित् श्यालको मातुल इति बहुधा सम्बन्धोत्पत्तेः गृहेष्विति बहुवचनमद्य तथा करणे हेतुः यः स्वानां पक्षपोषण इति पूर्वं भगवान् सर्वत्र समः इदानीं भक्तिमार्गमुत्पाद्य विषमो जात इति स्वानां भक्तानां पक्षस्य पोषणं यस्मात् ॥ २९ ॥

किञ्च यथा वेदाः प्रमाणं तथैव भगवद्वाक्यमिति अथाहं स्वांशकलयेति वाक्यात् अवतीर्ण इत्याह । स्वीयं वाक्यमिति। अवतीर्णस्तु लोके ज्ञानप्रचारार्थं भक्तानां मानं च वर्द्धयितुं काष्ठवृत्त्यादिकं परित्यज्य मे गृहेऽवतीर्णोऽसि ननु स्वभाग्येन वा कारणान्तरेण वेति ॥ ३० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

स च मुनिः ॥ २६ ॥

मद्गृहे त्वदाविर्भावे निरुपाधिस्त्वत्कृपैव कारणं ननु मयि किञ्चिल्लक्षणमस्तीत्याह । अहो इति त्रिभिः । अत्र लोके त्रिविधा जना दृश्यन्ते देवतान्तरोपासका ब्रह्मोपासका भगवदुपासकाश्च तत्राद्यानामुपासनाफलदशां दर्शयति । पापच्यमानानां निरये संसारे दन्दह्यमानानां भूयसेति एकस्मिन्नपि जन्मनि चेत् प्रसीदन्ति तदपि भूयसैव कालेन न तु शीघ्रमेव ततश्च तत्तत्कामितानि फलान्यपि ददाति ॥ २७ ॥

द्वितीयानान्तु बहुभिरेव जन्मभिः सिद्धिः सम्भाव्यते इत्याह। बह्विति । सम्यगेव योगैर्यः समाधिस्तेन यस्य तव पदं निर्विविच्य

तान्येव तेऽभिरूपाणि रूपाणि भगवंस्तव।
यानि यानि च रोचन्ते स्वजनानामरूपिणः ॥ ३१ ॥
त्वां सूरिभिस्तत्त्वबुभुत्सयाऽद्धा सदाऽभिवादार्हणपादपीठम्।
ऐश्वर्यवैराग्ययशोऽवबोधवीर्यश्रिया पूर्तमहं प्रपद्ये ॥ ३२ ॥
परं प्रधानं पुरुषं महान्तं कालं कविं त्रिवृतं लोकपालम्।
आत्मानुभूत्यानुगतप्रपञ्चं स्वच्छन्दशक्तिं कापिलं प्रपद्ये ॥ ३३ ॥
आस्माभिपृच्छेऽद्य पतिं प्रजानां त्वयावतीर्णर्ण उताप्तकामः।
परिव्रजत्पदवीमास्थितोऽहं चरिष्ये त्वां हृदि युञ्जन्विशोकः ॥ ३४ ॥
॥ श्रीभगवानुवाच ॥
मया प्रोक्तं हि लोकस्य प्रमाणं सत्यलौकिके।
अथाजनि मया तुभ्यं यदवोचमृतं मुने! ॥ ३५ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

स्वरूपं द्रष्टुं साक्षात् कर्तुं यतन्ते तृतीयेषु मध्ये वयमतिमन्दास्तदपि तत्कृपा महिमा अपार एवेत्याह। स एवेति। हेलनं लोककृतावज्ञां स्वलाघवं न गणयन्य अगणयित्वा स्वभाव एवायं ते यद्भक्ताभासानप्युत्कर्षयसीत्याह। यस्त्वं स्वानां भक्तानां पक्षं पुष्णासीति तानेवात्मीयान् जानासीति भावः ॥ २८—२९ ॥

एतदेव प्रपञ्चयति द्वाभ्याम्। ज्ञानं ज्ञानसाधनं साङ्ख्यं चिकीर्षुस्तदपि ज्ञानिभ्यः सकाशादपि भक्तानां मानमादरं वर्द्धयतीति सः भक्तिं विना भूतज्ञानस्याकिञ्चित्करत्वेन व्यवस्थापनादिति भावः ॥ ३० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

त्रीणि युगानि ऐश्वर्य्यादि लक्षणानि यस्य तम् ॥ २६ ॥

निरये संसारे अमङ्गलैः रागादिभिः पापच्यमानानां सन्तप्यमानानाम् ॥ २७ ॥

योगे भक्तियोगे समाधिश्चित्तैकाग्र्यं तेन ॥ २८ ॥ २९ ॥ ३० ॥

---

भाषाटीका।

कर्दमजी ने जाना कि तीनो युगोंमे प्रगट होने वाले भगवान् देवोंमें श्रेष्ठ हमारे इहां अवतीर्ण भये ऐसा जानकर एकान्तमें जाकर प्रणाम करके कपिलजीसे बोले ॥ २६ ॥

अहो अपने किये पापकर्मोंसे दुखित पुरुषोंपर देवता लोग बहुत कालमे प्रसन्न होते हैं ऐसा निश्चय है ॥ २७ ॥

जिस ईश्वरके चरणके दर्शन करनेके लिये मुनिजन एकान्तगृहमे रहकर बहुत जन्म तक समाधियोग करके यत्न करते हैं तौ भी नहीं मिलता है ॥ २८ ॥

सोई भगवान् हम लोगों के निरादरको भी नहीं गिनकर अपने भक्तों के पक्षको पुष्ट करने के लिये हम क्षुद्रलोगोंके घरमे उत्पन्न भये ॥ २६ ॥

हे प्रभो! आप भगवान् हो अपने वचन को सत्य करने के लिये ज्ञान को प्रगट करने के लिये मेरे गृहमे आपने अवतार लिया है सो अपने भक्तोंके मान को बढाते हो ॥ ३० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

यानि तवालौकिकानि चतुर्भुजादिरूपाणि तान्येव तेऽभिरूपाणि योग्यानि यानि च स्वजनानां रोचन्ते मनुष्यसरूपाणि तान्यपि ते रोचन्त इत्यर्थः। अरूपिणः प्राकृतरूपरहितस्य ॥ ३१ ॥

अभिवादार्हं पादपीठं यस्य ऐश्वर्यादिभिः पूर्तं पूर्णम् ॥ ३२ ॥

ऐश्वर्यादिकं विवृण्वन्नाह। परं परमेश्वरम्। तत्र हेतुः। स्वच्छन्दाः स्वाधीनाः शक्तयो यस्य त एवाह। प्रधानं प्रकृतिरूपं पुरुषं तदधिष्ठातारं महान्तं महत्तत्त्वरूपं कालं तेषां क्षोभकं त्रिवृतमहङ्काररूपं लोकात्मकं तत्पालात्मकं च तदेवं मायया प्रधानादिरूपतामुक्त्वा चिच्छक्त्या निष्प्रपञ्चतामाह। आत्मानुभूत्या चिच्छक्त्याऽनुगतः स्वस्मिन् लीनः प्रपञ्चो यस्य तम्। कविं सर्वज्ञम्। प्रधानाद्याविर्भावलयसाक्षिणमित्यर्थः ॥ ३३ ॥

संन्यासानुज्ञां प्रार्थयते। आस्माभिपृच्छे यत्किञ्चिदभिपृच्छामीत्यर्थः। त्वया पुत्ररूपेणावतीर्णानि निवृत्तानि ऋणानि देवादिरूपाणि यस्य स आप्तकामश्चाहं परिव्रजतां संन्यासिनां पदवीं मार्गमाश्रितः संस्त्वां युञ्जन् स्मरन्विचरिष्यामि ॥ ३४ ॥

अहं तावज्ज्ञानोपदेशायैव त्वद्गृहेऽवतीर्णः अतस्तव गृहे वसतोऽपि मुक्तिः सुलभैव। यद्यवश्यं गन्तव्यमेवेत्याग्रहस्तथापि मामेवानुस्मरन् गच्छेत्याशयेनाह। मयेति षड्भिः। सत्यलौकिके वैदिके लौकिके च कृत्ये स्वोक्तस्य प्रामाण्यमभिदर्शयति। यद्यस्मात्तुभ्यं तव पुत्रो भविष्यामीत्यवोचम्। अथ अत एव तदृतं सत्यं यथा भवति तथा मयाऽजनि जन्म स्वीकृतम् ॥ ३५ ॥

---

श्रीराधारमणदासगोस्वामिविरचितादीपिन्याख्या
दीपिकाटिप्पणी

अभिरूपत्वस्वजनरुचिविषयत्वाभ्यां विशेषणाभ्यां रन्तिदेव-

श्रीराधारमणदासगोस्वामिविरचितादीपिन्याख्या दीपिकाटिप्पणी ।

प्रदर्शितमायिकरूपाणां व्यावृत्तिः कृता तान्यपि रोचन्त इत्यावृत्त्या-व्याख्यानादित्यर्थोक्तिः ॥ ३१ ॥

ऐश्वर्यादिभिः पूर्त्तमिति व्याख्यानात् श्रिया पूर्त्तमित्येकं पदं गालवमते इयङादेशस्य वैकल्पिकत्वात् ॥ ३२ ॥

मायया निमित्तशक्त्या ज्ञानाभासक्रियाभासेच्छाभासरूपया प्रधानमुपादानशक्तिस्तदादिरूपतां चिच्छक्त्या स्वरूपशक्त्या ॥ ३३ ॥

अभिप्रेतस्य श्रीभगवत्संतोषार्थत्वेन तन्निष्ठत्वात्परस्मैपदमेवोचितामिति इत्यर्थ इत्युक्तम् यद्यपि शुद्धभक्तानां देवर्षिभूतात्तनृणां पितृणां न किङ्करो नायमृणी च राजन्नित्यादेः न कदाचिदाणित्वं तथापि अधिकृतभक्तस्य पितुराज्ञापालनमेव ऋणमिति अवतीर्णार्थं इत्युक्तम् आप्तकामश्चाहमिति स्वस्य निष्काममक्तत्वं दर्शितम् तथापि संन्यासमार्गाश्रयणं लोकशिक्षार्थमेव एतां स आस्थाय परात्मनिष्ठामध्यासितां पूर्वजैर्महद्भिरित्याद्युक्तेः अयं भावः यद्यपि वत्सलभाव एव वरीयस्त्वेनेदानीमुचितस्तव पुत्रतयाविर्भावात्तथापि"रतिर्वासनया स्वाद्वी भासते कापि कस्य चित्"इतिन्यायात् जन्मनो मम भवति दास्यनिष्ठैव वरीवर्त्तते सा त्यक्तुं न क्यते तव तुनयाविर्भावेन मे वात्सल्यमेवोदेति इति द्वयोर्विरुद्धयोस्समवायेरसाभाव एव स्यात्तस्मात्तथा प्रार्थय इति ॥ ३४ ॥

अत एव श्रीभगवदभिप्रायमपि तदनुरूपमेव व्याचष्टे । अहं तावदिति । मुक्तिरत्र"विष्णोरनुचरत्वं हि मोक्षमाहुर्मनीषिणः"इत्युक्तेः सप्रेमपार्षदत्वं सत्यलौकिके वैदिकलौकिककर्मणि मया प्रोक्तमेववाक्यम् सर्वलोकस्य प्रमाणं भवति तदुदाहरणत्वेन परार्द्धं व्याचष्टे स्वोक्तस्येति यस्मात्तव पुत्रो भविष्यामीति वाक्यं तुभ्यमहमवाचमत इत्यादियोज्यम् ॥ ३५ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पुनर्भक्तानुग्राहकत्वमेवाह । तान्येवेति । अरूपिणः कर्माद्यत्तदेवमनुष्यादिरूपरहितस्य तव यानि चतुर्भुजादिरूपाणि स्वानां स्वभक्तानां रोचन्ते तान्येव रूपाणि ते तवाप्यभिरूपाण्यभिमतानि रूपाणि स्वजनाननुग्रहीतुमेव तद्रुच्यनुसारेण दिव्यानिरूपाणि बिभर्षीत्यर्थः ॥ ३१ ॥

एवं सौलभ्यादिगुणविशिष्टत्वेन पुनः प्रस्तुत्य पुनः शरणवरणोपयुक्तकल्याणगुणान्तरविशिष्टत्वेन प्रस्तुवन् शरणं व्रजति द्वाभ्याम् सूरिभिः सुधीभिः तत्वबुभुत्सया स्वावगताधिकप्रकृतिपुरुषेश्वरयाथात्म्यं बोद्धुमिच्छया सदा अभिवादनयोग्यं पादपीठं यस्य तमैश्वर्यादिभिः पूर्णं तत्रावबोधः ज्ञानं श्रीतेजः एतन्मूतं त्वां प्रपद्ये शरणं व्रजामि ॥ ३२ ॥

परं प्रकृतिपुरुषविलक्षणं प्रधानं प्रकृतिशरीरकं पुरुषं जीवशरीरकं कालं कालशरीरकमनेन कारणावस्थप्रकृतिपुरुषकालशरीरकत्वमुक्तमथ कार्यावस्थतच्छरीरकत्वमुच्यते महान्तं महच्छरीरकं त्रिवृतं त्रयाणां सत्त्वरजस्तमसां वृतवर्द्धनं यस्मिन्कार्यावस्थे जीवे तच्छरीरकमित्यर्थः शरीरवाचकशब्दः शरीरिपर्यन्तमभिधत्ते इत्यत्रोपपत्तिः पूर्वमेवासकृदुक्ता अनेन कार्यावस्थकारणावस्थचिदचिदन्तरात्मत्वकथनेन कारणत्वमुक्तं तदुपयुक्तसर्वज्ञत्वादिगुणयोगमाह । कविं सर्वज्ञं स्वच्छन्दशक्तिं स्वायत्तसर्वशक्तित्वादियुक्तं पालकत्वमाह । लोकपालं लोकपं चिदचिदात्मकप्रपञ्चं पालयतीति नं संहर्तृत्वमुच्यते । आत्मानुभूत्यानुगतप्रपञ्चमिति । आत्मनः स्वस्यानुभूत्या संहारोपयुक्तज्ञानशक्त्याऽनुगतः स्वस्मिन् लीनः प्रपञ्चो यस्य तमात्मानुभूत्येति पूर्वत्रान्वेति काकाक्षिन्यायात् ततश्च जगत्पालनोपयुक्तस्वकीयज्ञानशक्त्या लोकपालकमित्यर्थः एवम्विधं कपिलं त्वां प्रपद्ये ॥ ३३ ॥

एवं भगवन्तं प्रस्तुत्याभिप्रेतमावेदयति । आस्मा इति । प्रजानामधिपतिं त्वामहमभिपृच्छे स्म ईषदाभिपृच्छामि स्मेत्यर्थः किंतदित्यत्राह । त्वया प्रजारूपेण त्वयाऽवतीर्णः अवतारितऋणत्रयःआप्तः अनुभूतः कामः सांसारिको भोगो येन सोऽहमिदानीं त्वामेव हृदि युञ्जन् ध्यायन्नत एव विगतः शोकः तापत्रयजनितदुःखं यस्य स तीव्रशोकमिति पाठान्तरं तदा त्वामित्यस्य विशेषणं तच्चाऽपहतपाप्मत्वादिगुणाष्टकोपलक्षणं हृदीत्यनेन दहरविद्याप्रत्यभिज्ञानात् परिव्रजां तुर्याश्रमिणां पदवीं मार्गं संन्यासं धर्ममाश्रितः चरिष्ये चरिष्यामि ॥ ३४ ॥

कर्दमेनैदमुक्तो भगवान्कपिलः स्वचिकीर्षितसाङ्ख्य तन्त्रस्य प्रामाण्यं तावन्निदर्शनेन प्रदर्शयन्स्वावतारप्रयोजनं च कथयन्नभिप्रेतार्थे पितरमादिशति पड्भिः श्लोकैः । मयेति । सत्यलौकिके सत्यं पुण्यमृतपर्यायत्वादृतं च पुण्यमेव अपुण्यस्य कर्मणः एवममृतादात्मानं जुगुप्सोर्दित्युक्तेः"ऋतं पिबन्तौ सुकृतस्य लोके„ इति चोक्तेः तच्च पुण्यं कर्मोपासनं चेति द्विविधमत्र विवक्षितं कथं कर्मवाचिपुण्यशब्देनोपासनमभिधीयत इति न शङ्कयमुपासनस्यापि मनोव्यापाररूपत्वेन तेनाभिधानसंभवादत एव हि ।

वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् ।
शारीरजैः कर्मदोषैर्याति स्थावरतांनरः ।

इति मानसव्यपारस्यापि कर्मदोषैरित्यनेन क्रियारूपत्वमवगतं भगवदनुग्रहविशेषस्यैव पुण्यस्वरूपत्वेनोपासनस्यापि तदनुग्रहहेतुत्वेन तदभिधानस्य न्याय्यत्वाच्च लोक्यत इति लोकः फलं तत्साधनं लौकिकं तच्चापि स्वर्गापवर्गसाध्यभेदेन कर्मोपासनं चेति द्विविधं तस्मिन्विषये यन्मया प्रोक्तं साङ्ख्यं तत्प्रमाणमेवेत्यर्थः वक्ष्यमाणे हि साङ्ख्ये भगवद्भक्तियोगनिष्ठनामचिरादिगत्याभगवत्प्राप्तिर्निवृत्तिधर्मनिरता इत्यारभ्य"सूर्यद्वारेण ते यान्ति" इत्यनेन अथ ये गृहमेधीयान् धर्मानित्यारभ्य "गत्वा चान्द्रमसं लोकं सोमपाः पुनरेष्यती" ति स्वर्गासक्तमनसां तत्साधनानुष्ठानेन पितृयाणगत्या तद्भोगानुभवश्च वक्ष्यते यद्वा सत्यं ब्रह्म सत्यं ज्ञानमनन्तम्" इति श्रुतेः लोक्यते साक्षात्क्रियते इति लोकः फलं तत्साधनं लौकिकं सत्यं च लौकिकं चेति समाहारद्वन्द्वः तस्मिन् ब्रह्मस्वरूपतदनुभवरूपफलतत्साधनादिविषय इत्यर्थः तत्र यन्मया प्रोक्तं साङ्ख्यं तत्प्रमाणमेव हीत्यर्थः एतन्निदर्शयति । हे मुने ! अथात एव तुभ्यमहं यदहं च स्वांशकलयात्वद्वीर्यैणत्यवोचं तदृतं सत्यं कर्त्तुमिति शेषः अत्राऽवितथवाचीऋतशब्द औचित्यादृतं यथा तथा मयाऽजनि अवातारित्र्यवान्तरक्रियाविशेषणं वा ॥ ३५ ॥

———

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अर्थान्तरं चास्तीति कथयति । तान्येवेति । स्वजनानां स्वभक्तानां वसुदेवदेवक्यादिरूपाणि अभिव्यक्त्यर्थं रोचन्ते अभीष्टानि भवन्ति तान्येव न रूपं प्राकृतमस्यास्तीत्यरूपी तस्य तवाभिरूपाणि प्रियाण्यत इदानीं ब्रह्मादिभक्तानामस्मद्गृहेऽवतारस्येष्टत्वादस्मत्पुत्रत्वेनावतीर्णोऽसीति पूर्वेणान्वयः "रुच्यर्थानां प्रीयमाणः" इति सूत्रात् स्वजनेभ्य इति वक्तव्ये स्वजनानामिति षष्ठी स्वस्वामित्वज्ञापनायेति ज्ञातव्यं यत्तु ब्रह्मादिरूपाणीति श्रीमद्भगवत्पादाचार्यवचनं तत्प्रतिमात्वेन तद्योग्यानां भवेदुपासनादिसद्ग्रहार्थत्वद्योतनाय "सत्त्वं विशुद्धं वसुदेवशब्दितम्" इत्यादिनैव तत्सिद्धेश्चेति सन्तोष्टव्यं यद्भक्तानामभीष्टं रूपं तत्रावतार इत्यत्रं किं प्रमाणमवलम्ब्यावध्रियत इत्यत एव कारणे व्यक्तौ भवेद्धरिस्तत्र यत्स्थानं रुचितं सतामिति सूचितम् ॥ ३१ ॥

कर्दम आत्मनः पुत्रत्वाभिमानं विहायापरोक्षज्ञानी तं विजानन्ननन्यसाधारणैर्लक्षणैस्तं स्तौतीत्याह । त्वां सूरिभिरिति । ब्रह्मादिसूरिभिः "अद्धा प्रत्यक्षसत्ययोः"इति च श्रियेत्येकवचनमेषामन्योन्यमभेदद्योतनाय अत्र हरेर्वैराग्यं नाम स्वेतरस्य समस्तस्यासारतादर्शनम् ॥ ३२ ॥

प्रधानं पुरुषं प्रकृतिपुरुषयोः परमुत्तमं यद्वा पिपर्ति पूरयति जनं संपदेति परस्तं सृष्ट्या पूरकत्वं ब्रह्मादेरप्यस्तीत्यतः प्रधानं प्रकर्षेण धीयते जगदिति प्रधानं "भर्ता सन् भ्रियमाणो बिभर्ति"-इति श्रुतेः कार्यानुप्रविष्टतया प्रकृतेरपि प्रधानत्वमस्तीत्यतः पुरुषमिति पुरुगताविति धातोर्गमनशीलत्वात्पुरुषस्तं ताच्छील्येऽथैष्यन्प्रत्ययः प्रकृतेरचेतनत्वेन गमनशक्त्यभावात् तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतेरनुविश्य मुख्याधारकत्वं हरेरेव "द्वाविमौ पुरुषौ लोके" इति पुरुषशब्दवाच्यत्वात् चित्प्रकृतेरपि कथंचित्पुरुषलक्षणयोग्यता इत्यत उक्तं महान्तमिति त्रिविधानन्त्यमुक्तं त्रिधानन्त्यं कालगुणादिनेति भावेनाह। कालं कविं त्रिवृतमिति न हि कालस्य कारणत्वं इष्टः कविशब्दस्यातिक्रान्तदर्शित्वार्थत्वेन गुणानन्त्यमप्रतिहतं त्रीणि पृथिव्यप्तेजांसि आवृत्य व्याप्य तिष्ठतीति स्वरूपानन्त्यमपि अथवानेनोक्तार्थे प्रमाणमुच्यते "त्रिभिर्वेदैर्भ्रियत"-इति" वेदैर्वृतत्वाद्भगवांस्त्रिवृदित्युच्यते बुधैः"इति तथाच"सर्वे वेदा यत्पदमामनन्तित्यादिश्रुतेः न चेदं लोकविलक्षणमत्राह । लोकपालमिति।लोकपालत्वमिन्द्रादीनामप्यस्त्यत आत्मानुभूत्येति आत्मानुभूत्या स्वरूपज्ञानेनैव सम्यगशेषविशेषतया ज्ञातः प्रपञ्चो येन स तथा तम् इदमपि लक्षणं तस्यैव युक्तमित्याह । स्वच्छन्दशक्तिमिति।स्वेच्छानुसारिजगत्सृष्ट्यादिशक्तियुक्तं कं ब्रह्माणं पिं पिनाकिनं रुद्रं च लालयतीति कपिलस्तं "यस्मादुत्पद्यते ब्रह्मा पद्मयोनिः पितामहः । ब्रह्मादिषु प्रलीनेषु इति" मोक्षधर्मवचनादत एतानि लक्षणानि बहुधैव ज्ञातव्यानि नास्माद्दर्शैरिति स्थितम् ॥ ३३ ॥

एवं स्तुत्वा भगवन्तं प्रसाद्य स्वाभीष्टानुज्ञां प्रार्थयत इत्याह । तं त्वामिति । उताव्ययार्थविकल्पयोरित्युक्तेरवाप्यर्थः अवतीर्णेन त्वया पतामोऽपि तथापि य एवं विधलक्षणस्तं त्वानुपृच्छे अनुज्ञां प्रार्थये किमर्थं तत्राह । परिव्राजामिति । परिव्राजां संन्यासिनां पदवीमास्थितः संन्यस्तो हृदि त्वां युञ्जन् त्वामुद्दिश्य मनोयोगं कुर्वन् अत एव विशोकः त्वद्वियोगनिमित्तशोकरहितो ग्रामेकरात्रविधिना चरिष्ये अटिष्यामीत्यन्वयः ॥ ३४ ॥

कर्दमस्तुत्या प्रसन्नो भगवांस्तस्मै ज्ञानमुपदिशति । मयेति । "आभासो ज्ञानमालोको लोकाभासश्च कथ्यते" इत्यभिधानादत्र लोकशब्देन ज्ञानं विवक्षितं सत्यलौकिके यथार्थज्ञानविषय यन्मया प्रोक्तं तदेव लोकस्य जनस्य प्रमाणं कारणं हि शब्देनाप्ततमत्वादिहेतुं सूचयति "ब्रह्मा विष्णुर्हि लोकस्य"इति स्मृतेः द्वितीयं ब्रह्मलोकमपि प्रमाणमिति ध्वनयति । अज्ञानविप्रलम्भादिदोषराहित्यमाप्तत्वं तदस्माकमस्तीति तव सिद्धमिति भावेनाह । अथेति । अहं तुभ्यमवोचं तव पुत्रत्वेनावतरिष्य इति यच्चस्मात्तदृतं कर्तुं मयाऽजनि त्वत्कृत इति शेषः अतोऽहमपि न विप्रलम्भक इति तव सिद्धमिति अतोऽहमाप्ततम इत्यर्थः ॥ ३५ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यानि यानि त्वदीयस्वजनेभ्यो रोचन्ते तानि तान्येव रूपाणि तव अभिरूपाणि योग्यानि नान्यानीत्यर्थः अन्यानि च यादृशं रन्तिदेवाय कुत्सितं रूपं प्रपञ्चितं तादृशानि ज्ञेयानि तादृशस्य च मायिकत्वमेव हि तत्रोक्तं "तस्य त्रिभुवनाधीशाः फलदाः फलमिच्छताम् । आत्मानं दर्शयाञ्चक्रुर्माया विष्णुविनिर्मिता" इति टीका च त्रिभुवनाधीशाः ब्रह्मादयः माया तदीयधैर्यपरीक्षार्थं प्रथमं मायया वृषलादिरूपेण प्रहिताः सन्त इत्येषामनभिरूपत्वे हेतुः । अरूपिण इति । प्राकृतरूपरहितस्येति टीका च अप्राकृतत्वेन कुत्सितत्वासम्भवात् स्वजनेभ्यो रोचमानत्वादेवं रूपं योग्यं न भवतीत्यपि नेति भावः ॥ ३१—३२ ॥

कविं जीवम् ॥ ३३ ॥

ऋणमत्र पितुराज्ञापालनरूपम् ॥ ३४ ॥

यन्मया प्रोक्तं सर्वत्रैव प्रमाणमथ अतो हेतोरेव मया अजनि त्वद्गृहे जातं तस्य हेतुमेव दर्शयति । यत्तुभ्यमवोचं तदपि कृतमिति अन्यथा मत्प्रोक्तस्य प्रामाण्यं व्यभिचरेदिति भावः । सति च प्रामाण्ये ममोपदेशमेव गृहाणेति तात्पर्यम् ॥ ३५–३६ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु तथापि हीनभावः कथं भगवत उपपद्यते तत्रोपपत्तिमाह । तान्येवेति । पुरुषोत्तमस्य हीनभावो नोचितः नचायं हीनभावः उभयविधानि भगवतो रूपाण्युचितानि यानि सर्ववेदप्रसिद्धान्यानन्दमयानि च भक्तानां रोचन्ते एतावतापि भगवानरूप एव तान्येवानन्दमयानि रूपाणि हे भगवंस्तेऽसिरूपाणि योग्यानि यानि च भक्तानां रोचन्ते नराकृतीनि तानि च भगवतः अभिरूपाणि यथा पूर्वं 'यानि रूपाणि कृतवान् तानि भगवतो वेद आह यानि पश्चाद्भक्तानुरोधेन कृतवान् तान्यप्यनुरूपाण्येव सामग्र्याः तुल्यत्वाद्वचनं त्विदानीं तनत्वाद्वैतात्वस्वनिषेधश्च नास्त्येव अन्यथा भानं तु बुद्धिदोषादन्येषां भक्तानां तु तदानन्दरूपमेव अन्यथा रुचिर्न स्यात् ॥ ३१ ॥

एवं भगवदवतारं समर्थयित्वा तं नमस्यति । तं सूरिभिरिति । तमहं प्रपद्ये फलद्वयसाधकं तत्र मोक्षसाधकत्वमाह ।

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सूरिभिस्तत्त्वबुभुत्सया तत्त्वज्ञानेच्छया तत्त्वज्ञानार्थं सदा अभिवादनयोग्यं पादपीठं यस्य ज्ञानेन मोक्षः सद्गुरुणा सोऽपि सेवितः ज्ञानं प्रयच्छति अतः अभिवादार्हाणामभिवादयोग्यं भवत्येव चरणपीठमैहिकं च तस्मादेव सिद्ध्यतीत्याह । ऐश्वर्येति । ऐश्वर्यादयः षड्गुणाः तेषां पूर्तं तैः पूर्णमित्यर्थः विद्यमानमेव हि कश्चित्प्रयच्छति नत्वत्यन्तं दाताप्यविद्यमानमतो भगवानेवैहिकार्थमपि सेव्यः ॥ ३२ ॥

भगवतः फलरूपत्वं फलसाधकत्वं चोपपाद्य सर्वरूपत्वमुपपादयति अक्षरत्वाय । परं प्रधानमिति । सर्वरूपं कपिलं प्रपद्ये तानि रूपाणि गणयति परमक्षरं प्रधानं प्रकृतिः पुरुषस्तदधिष्ठाता महान्मुख्यः पुत्रः कालो गुणक्षोभकः कविः महतोऽभिमानी मूलब्रह्मा सूत्रात्मको वा त्रिवृदहङ्कारः लोकपालाः सर्व एव देवाः एवं कारणरूपत्वमुक्त्वा कार्यरूपत्वमाह । आत्मानुभूत्येति । अनुगतः स्वस्मिन् लीनः स्थित उत्पन्नो वा यस्य ज्ञानशक्त्याद्युत्पत्तिपक्षे उत्पत्तिः अन्यथा तु प्रलयः ततश्च प्रपञ्चरूपो निष्प्रपञ्चरूपश्च फलत उक्तो भवति तथात्वे सामर्थ्यं स्वच्छन्दशक्तिमिति स्वेच्छावशवर्तिनी तस्य शक्तिः ॥ ३३ ॥

एवं स्तुत्वा नमस्कृत्य विज्ञापनामाह । आस्माभिपृच्छ इति । प्रजानां पतिं त्वामाभिपृच्छे स्म आप्रश्नः गन्तुः गमने सम्मतिसूचकः स्मेति प्रसिद्धे पुत्राज्ञया भगवदाज्ञया च गन्तव्यमिति अभिशब्दः सर्वप्रकारवाची गमने सर्वं प्रकाराश्च वक्तव्या इति प्रजापतित्वमनुशासनवत् स्वस्य तथाधिकारात् वेदाधिकारो हि त्वं यज्ञ इत्यादि तदप्याह वचनेनैव । त्वयावतीर्णायां इति । त्वया कृत्वा अवतीर्णानि उत्तारितानि स्वयमेव गतानि ऋणानि यस्य किञ्च उताप्तकामोऽपि त्वयैवाहं जातः पुत्रो भगवानात्मेति पुत्रकामनापि आत्मकामनैव जाता अतः स्वाधिकारं त्वयि समर्प्य ऋणत्रयापाकरणं कृत्वा पूर्णकामो भूत्वा ब्रह्मविदहं परिव्रजत्पदवीं संन्यासपदवीमिदानीमास्थितः परमहंसो भूत्वा देहपातपर्यन्तं ब्रह्मविदो जीवतः स्तुत्यं त्वां पुराणपुरुषोत्तमं हृदि युञ्जन् हृदये ध्यायन् चरिष्ये देहस्य प्रतिपत्तिरेषा यतः शोकादुत्तीर्णः गतशोकत्वाच्च नान्यत्कर्त्तव्यम् एतेन ज्ञाने जातेऽपि शोकश्चेत्सर्वथा न निवृत्तः तदा सम्यग्ज्ञानं न जातमित्यध्यवसेयमित्युक्तम् ॥ ३४ ॥

एवमाज्ञायां प्रार्थ्यमानायां भगवान् स्वावतारे प्रयोजनमयं विशेषाकारेण न जानातीति तं वदन् आज्ञां प्रयच्छति । मयेतिषड्भिः । मयि परमो विश्वासः कर्त्तव्य इति वक्तुं स्ववाक्यस्य सत्यत्वमुपपादयति अग्रे फलावश्यकत्वविश्वासाय हे सत्य ! सत्यरूप लोके मया प्रोक्तमेव लोकस्य प्रमाणं यतोऽहमेव जगत्कर्ता पोषकश्च मद्वाक्यमेव च वेदश्च सत्ये अलौकिके लौकिके चेति वा सत्यरूपे लौकिके वा अनेन असुरान् प्रति न प्रमाणमित्युक्तमतः स्ववाक्यप्रामाण्यसिद्ध्यर्थमथ भिन्नप्रक्रमेण लौकिकजडजीवव्यतिरिक्तस्य ममापि जन्म कृतं तदाह । मयाजनीति । पूर्वप्रतिज्ञामाह । तुभ्यं यद्वोचमिति । अथाहं स्वांशकलयेति तुभ्यं त्वदर्थं तदतमेव मुन इति सम्बोधनमुभयपरिज्ञानार्थम् ॥ ३५ ॥

———

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ते तव नित्यसच्चिदानन्दस्य तान्येव रूपाणि अभिरूपाणि समुचितानि सच्चिदानन्दघनानीत्यर्थः यानि तव स्वजनानां स्वजनेभ्यः रोचन्त इति अन्यान्यरोचकानि वस्तुतस्त्वदीयानि रूपाणि न भवन्ति किन्तु मायिकान्येव यतोऽरूपिणः प्राकृतरूपरहितस्येति स्वामिचरणानां व्याख्या वैराजरूपस्य कैश्चिद्भक्तैः प्रथमदशायां ध्येयत्वेन रोचकत्वेऽप्यायत्यामरोचकत्वात् तदपि रूपं प्राकृतत्वान्न भगवतः स्वीयरूपमित्याशयात् ॥ ३१ ॥

भक्तजनरोचकस्याभिरूपस्य लक्षणं वदन्नेव श्रीकपिलदेवं विशिनष्टि । स्वामिति । ऐश्वर्यादीनां षण्णां भगशब्दवाच्यानां चिन्मयगुणानां पूर्त्तं महातडागं तेन भक्तानामभिवादनार्च्चनपरिचर्य्यादिविषयीभूतं षडैश्वर्य्यपूर्णं स्वरूपमेवाप्राकृतमेवं रूपमिति द्योतितम् ॥ ३२ ॥

ऐश्वर्य्यं विवृण्वन्नेवानाभिरूपमप्याह । परं त्वत्तोऽन्यं बहिरङ्गरूपं प्रधानादिकमपि त्वां कपिलमेव प्रपद्ये तत्तु प्रधानं प्रकृतिरूपं पुरुषं जीवं महान्तं महत्तत्त्वरूपं कालं तेषां क्षोभकं कविं सूत्रतत्त्वरूपं त्रिवृतमहङ्काररूपं लोकपालमिन्द्राद्यात्मकं किञ्च प्रपञ्चान्तर्यामित्वात् प्रपञ्चरूपत्वमाह । आत्मानुभूत्या चिच्छक्त्या प्रपञ्चाबहिःस्थितेनापि अनुगतोऽनुप्रविष्टः प्रपञ्चो येन तं प्रपञ्चहेतुत्वादपि प्रपञ्चरूपत्वमाह । स्वच्छन्दाः स्वाधीनाः शक्तयो मायाद्या यस्य तं त्वदिच्छया मायादिभिः शक्तिभिरेव सर्व्वप्रपञ्चस्य निर्म्मितत्वात् मायादीनां तच्छक्तित्वेनाभिन्नत्वात् तत्कार्य्याणाञ्च तदभिन्नत्वात् तवैवेदं सर्व्वं मायिकं रूपमनाभिरूपमित्यर्थः ॥ ३३ ॥

आस्माभीति पादपूरणार्थम् आपृच्छे अद्य सम्प्रति सन्न्यसार्थमाज्ञां प्रार्थये त्वया हेतुना अवतीर्णं निवृत्तं प्रजाः सृजेति पितुराज्ञारूपमृणं यस्य सः प्राप्तकामः पूर्णमनोरथश्चाहं परिव्रजतां सन्न्यासिनां पदवीमास्थितस्त्वां हृदि युञ्जन् स्मरन् चरिष्ये यतस्ततः पर्य्यटिष्यामि अत्र श्रीकर्द्दमेन मनस्येवं परामृष्टं शुक्लाभिधाने श्रीनारायणे मत्प्रभौ ममाजन्मत एव दास्यनिष्ठा वरीवर्त्ति सम्प्रति पुत्रीभूते चास्मिन् दुर्व्वारवात्सल्यमप्युदेष्यत्येवेति दास्यवात्सल्ययोर्यौगपद्यं न रसावहं किञ्चायमीश्वरः स्वतन्त्र एव मां शोकसमुद्रे निमज्याचिरादेव प्रव्राजिष्यत्यतः प्रथममहमेव किं न प्रव्रजामि न च गृहेऽवतीर्णं प्रभुं विहाय गच्छतो ममात्रापराधो यतोऽस्माकं वैष्णवानां मते भजनीयः प्रभुः खलु भजनाधीन इति भजनीयादपि भजने भूयानाग्रहः कर्तुमुचित इति तस्य भजनमेवाष्टयामिकं विविक्तारण्ये निष्प्रत्यूहं चिकीर्षामीति ॥ ३४ ॥

भो महामुने ! त्वं मदभिप्रेतमेव चिकीर्षसि सर्व्वं त्यक्त्वा मद्भजनस्य मयैव कर्त्तव्यत्वेन प्रोक्तत्वादित्याह । हि निश्चितं मया यत् प्रोक्तं "सर्व्वधर्म्मान् परित्यज्य"इत्यादि गीतोपनिषदादिभिस्तदेव लोकस्य प्रमाणं क्व सत्यलौकिके सति सर्व्वोत्तमेऽलौकिके अयमर्थः लौके भवो लौकिकस्त्रिवर्गप्राप्तिलक्षणो धर्म्मस्तत्र मन्वादिभिरपि प्रोक्तं लोकस्य प्रमाणम् । अलौकिकस्तद्भिन्नो मत्प्राप्तिलक्षणो यो धर्म्मस्तत्र सति सर्व्वोत्तमभागवतधर्म्मे मया प्रोक्तमेव लोकस्य प्रमाणम्। यदुक्तम् । "ये वै भगवता प्रोक्ता उपाया आत्मलब्धय" इति अतस्त्वया साधु विचारितं यत् सर्व्वं त्यक्त्वा यामीति भावः । स्वोक्तस्य प्रामाण्यमभिदर्शयति अथ अत एव

एतन्मे जन्म लोकेऽस्मिन् मुमुक्षूणां दुराशयात् ।
प्रसंख्यानाय तत्त्वानां सम्मतायात्मदर्शने ॥ ३६ ॥
एष आत्मपथोऽव्यक्तो नष्टः कालेन भूयसा ।
तं प्रवर्तयितुं देहमिमं विद्धि मया भृतम् ॥ ३७ ॥
गच्छ कामं मया पृष्टो मयि संन्यस्तकर्मणा ।
जित्वा सुदुर्जयं मृत्युममृतत्वाय मां भज ॥ ३८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

मया अजनि यत्तुभ्यं तव पुत्रो भविष्यामीत्यवोचं तत् ऋतं सत्यमेव ॥ ३५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अरूपिणः प्राकृतरूपरहितस्य तव यानि यानि द्विभुजचतुर्भुजादीनि रूपाणि तान्येव तेऽभिरूपाणि योग्यानि तान्येव स्वजनानां रोचन्ते अप्राकृतपरममङ्गलरूपेण यदा यदा भक्तमनोरथपूर्णार्थमाविर्भवसि तदा तदा तत्तद्रूपेण ते कृतार्था भवन्ति इदानीमनेन रूपेणाहं कृतार्थोऽस्मीति भावः ॥ ३१ ॥

"सदा पश्यन्ति सूरय" इति श्रुतिमुपबृंहयन् अप्राकृतरूपं भगवन्तं शरणं व्रजति सूरिभिर्नित्यमुक्तैः सदा अभिवादार्हेणपादपीठम् ऐश्वर्यादिभिः पूर्णं पूर्णं तमेव त्वामहं तत्त्वबुभुत्सया प्रपद्ये शरणं व्रजामि ॥ ३२ ॥

शक्तिशक्तिमतोः कार्यकारणयोश्च स्वाभाविको भेदाभेदः अतश्चेतनाचेतनरूपः भगवानेवोपासनीयः" सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इत्यादिश्रुतिमुपबृंहयन् स्वभावतः सर्वभिन्नाभिन्नं सर्वशक्तिं सर्वकारणकारणं भगवन्तं शरणं व्रजति । परमिति । परं स्वरूपतः सर्वचिदचिद्विलक्षणं पुरुषं प्रधानप्रेरकावताररूपं प्रधानं प्रकृत्यभिन्नम् महान्तं त्रिवृतम् च कार्यावस्थापन्नं कालं सर्वप्राकृतक्षोभककालशक्त्यभिन्नम् लोकपालं नानाधिकारयुक्तजीवाभिन्नमंशांशिनोः स्वाभाविकभेदाभेदसंबन्धात् स्वच्छन्दाः स्वाधीनाः स्वापृथक्स्थित्यादिमत्त्वेन स्वतो भिन्नाः शक्तयो यस्य तम् कविं सर्वज्ञं स्वानुभूत्या आत्मज्ञानशक्त्या सृष्टिसंहारविवेकरूपया अनुगतः प्रविष्टः प्रपञ्चो यस्मिन् तं कपिलं पुत्रीभूतं प्रपद्ये ॥ ३३ ॥

एवमात्मानं भगवच्छरणं निरूप्य भगवच्छरणस्यान्यऋणित्वाभावात् त्वां स्मरन् त्यक्तगार्हस्थ्यः परिव्राड्रूपेण त्वदाज्ञया विचरिष्यामीति प्रार्थयते त्वया शरणेन अवतीर्णानि ऋणानि यस्यस आप्तकामः आप्तः प्राप्तः काम्यते महामुनिभिरिति कामः शरणभूतो भवान् येन सः परिव्रजतां पदवीमास्थितः त्वां युञ्जन् स्मरन् विशोकः चरिष्ये इति आरूमामिपृच्छे अभिमुखेन पृच्छामि शरणागतस्य ऋणित्वाभावः वक्ष्यते ।

देवर्षिभूताप्तनृणां पितॄणां न किंकरो नायमृणी चराजन् ।
सर्वात्मना यः शरणं शरण्यं गतोमुकुन्दं परिहृत्य कर्तम् ।
इति ॥ ३४ ॥

स्वोकस्य सर्वग्राह्यत्वं स्वस्य सत्यप्रतिज्ञत्वं स्वप्रादुर्भावप्रयोजनं विशोकः गच्छ गत्वा च मद्भजनपरो भव मद्भजनेन मुक्तिमद्भावापत्तिलक्षणां प्राप्स्यसि मातरं च कृतार्थां करिष्यामीत्याह । भगवान् । मयेति षड्भिः । हे मुने ! सत्यलौकिके सत्ये नित्ये मोक्षे लौकिके अनित्ये भोगे च इदं मुक्तिसाधनमिदं मुक्तिसाधनमित्येवं यन्मयोक्तं तल्लोकस्य प्रमाणम् अथात एव तुभ्यं तव पुत्रो भविष्यामीति यदवोचं तत् ऋतं सत्यं यथा स्यात्तथा मया अजनि जन्म स्वीकृतम् ॥ ३५ ॥

---

भाषा टीका ।

यद्यपि आपके प्राकृतरूप नहीं हैं तथापि हे भगवान् ! आपके भक्तों को जो रूप रुचते हैं सोइ आपके रूप हो जाते हैं ॥ ३१ ॥

तत्त्व जाननेकी इच्छासे जिनके चरण कमल को विद्वान् लोग नमस्कार करते हैं वे चरण आपके कैसे हैं कि सब पुरुषों के ऐश्वर्य वैराग्य यश ज्ञान वीर्य लक्ष्मीके देने वाले हैं तिनके मे शरणागत हूं ॥ ३२ ॥

आप प्रपंच से दूरहो प्रकृति स्वरूप हो पुरुष रूप हो कालरूप हो सर्वज्ञ हो त्रिवृत् अहङ्कार रूप हो लोकपाल रूपहो आप आत्मानुभवसे प्रपंच को अपने में लीन करते हो स्वाधीन शक्तिवाले हो ऐसे आप कपिल मूर्ति को हम भजैं हैं ॥ ३३ ॥

आप प्रजाओं के पति हो आपसे मैं जाने की आज्ञा मांगता हूं आपके अवतार होनेसे मैं तीनों ऋणोसे छूटगया हूं और मेरे मनोरथ भी पूरे होगये इसीसे सन्यासियों की पदवीको मैं प्राप्त होना चाहता हूं आपको हृदयमे धारण करके निश्चिन्त होकर विचरूंगा ॥ ३४ ॥

श्रीभगवान् कपिलजी बोले हे मुनि ! सत्यलौकिक वैदिक विषयमे हमारा वचन हीं प्रमाण है जो वचन हमने कहा था तिसके सत्य करने को हम प्रगट भये हैं ॥ ३५ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

दुराशयाल्लिङ्गान्मुमुक्षूणाम्मुनीनामात्मदर्शने सम्मताय तत्त्वानां प्रसंख्यानाय विद्धीत्युत्तरस्यानुषङ्गः ॥ ३६ ॥

नन्वयमात्मज्ञानमार्गः पूर्वसिद्ध एव नेदानीमपूर्ववत्प्रवर्तनीयस्तत्राऽऽह । एष इति । अव्यक्तः सूक्ष्मः ॥ ३७ ॥

मामात्मानं स्वयंज्योतिः सर्वभूतगुहाशयम् ।
आत्मन्येवात्मना वीक्ष्य विशोकोऽभयमृच्छसि ॥ ३९ ॥
मात्रे आध्यात्मिकीं विद्यां शमनीं सर्वकर्मणाम् ।
वितरिष्ये यया चासौ भयं चातितरिष्यति ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

कामं यथेच्छम् आपृष्टोऽनुज्ञातः यद्वा यथा त्वं गन्तुं मां पृष्टवांस्तथात्रावस्थातुं मयापि त्वमापृष्ट इत्यर्थः मयि सन्यस्य-समर्पितेन कर्मणा "अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुत" इति श्रुतेः ॥ ३८ ॥

ततश्च मां परमं परमात्मानमात्मनि स्वस्मिन्नात्मना मनसा अन्वीक्षमाणोऽभयं मोक्षं प्राप्स्यसि ॥ ३९ ॥

मात्रे देवहूत्यै शमनीमुन्मूलनीम् भयमतिशयेन तरिष्यति परमानन्दं प्राप्स्यतीति चकारार्थः ॥ ४० ॥

---

श्रीराधारमणदासगोस्वामिविरचितादीपिन्याख्या दीपिका टिप्पणी ।

अनुषङ्गः उत्तरवाक्यान्वितस्याप्याकृष्य संबन्धः ॥ ३६ ॥

तमात्मज्ञानमार्गं भूतं प्रकाशितम् ॥ ३७ ॥

पूर्वार्थेऽनुज्ञापने पितरि गौरवाप्रतीतेर्यद्वेति । कर्मणा मृत्युजये प्रमाणं श्रुतिः अविद्यया वर्णाश्रमाद्युपाधिप्राप्तकर्मणा विद्योपासनया अमृतं मोक्षम् ॥ ३८ ॥

ततश्च भजनानन्तरमात्मनि त्वंपदार्थे विस्फुलिङ्गे वह्निमिव-व्याप्य स्थितमन्वीक्षमाणोऽनुभवन् ॥ ३९ ॥

परमानन्दं सुतरेन भगवत्साक्षात्कारलक्षणम् ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अवतारप्रयोजनमाह । एतदिति । दुराशयात् दुष्ट आशयोऽन्तःकरणं यस्मिन् तस्मादात्मत्वेनानुसंहिताद्देहान्मुमुक्षूणां मोक्तुमिच्छतां संसृतिमनिच्छतामित्यर्थः तेषामात्मदर्शने प्रकृतिविविक्तजीवात्मपरमात्मयाथात्म्यविज्ञाने सम्मतायाभिमताय उपयुक्तायेति यावत् तत्त्वानां प्रकृतिपुरुषेश्वरयाथात्म्यरूपतत्त्वानां प्रसंख्यानाय प्रकथनाय विवेचनायास्मिन् लोके एतन्ममजन्माभूदित्यर्थः ॥ ३६ ॥

ननु पूर्वमेवाविच्छिन्नतत्तच्छ्रोतृवक्तृपरम्पराभिस्त्वयोक्त आत्मपथोऽविकल एवावतिष्ठते किमिदानीं त्वदवतारसाध्यमित्यत्राह एष इति । एष आत्मपथः आत्ममार्गः आत्मतत्त्वमिति यावत्स अव्यक्तः सूक्ष्मः परमदुर्ज्ञेयः अत एव मया पूर्वमुपदिष्टोऽपि भूयसा कालेन बहुकालविलम्बेन नष्टः परिभ्रष्टः तमेवात्मपथं प्रवर्त्तयितुमयेमं देह कृतमिति विद्धि जानीहि ॥ ३७ ॥

एवमवतारप्रयोजनमभिधाय तमादिशति । गच्छेति । मया आपृष्टः आदिष्टः कामं यथेच्छं गच्छ याहि मयि सन्यस्तेन समर्पितेन कर्मणा अनभिसंहितफलेन मदाराधनैकवेषेणानुष्ठितेन कर्मणा सुदुर्जयमुपायान्तरैर्जेतुमशक्यं मृत्युं ज्ञानोत्पत्तिविरोधिपुण्यपापरूपं प्राचीनं कर्म जित्वा अपोह्यामृतत्वाय मत्प्राप्तिरूपामृतत्वविरोधिप्राचीनकर्मनिरसनायेति भावः मां भज अत्रेदं वेदितव्यं मे अनादिपुण्यपापरूपं कर्म किंचिन्मोक्षोपायभूतभगवदुपासनोत्पत्तिविरोधि किंचिच्च कर्मोपेयभगवत्प्राप्तिविरोधि तत्रोपायविरोधिनः कर्मणोऽनभिसंहितफलकर्मणा निवृत्तिः "धर्मेण पापमपनुदति अविद्यया मृत्युं तीर्त्वा विद्यया मृतमश्नुते कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्त्तते" इत्यादिश्रुतिभिरुक्ता अत्राविद्ययाऽनाभिसंहितफलकर्मणा मृत्युमुपायोत्पत्तिप्रतिबन्धककर्म तीर्त्वा अपोह्य विद्यया ज्ञानेनामृतत्वमेति प्राप्नोतीति श्रुत्यर्थः तथाच च स्मृतिः "इयाज सोऽपि सुबहून्यज्ञान् ज्ञानव्यपाश्रयः । ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया" इति उपेयविरोधिनस्तु कर्मणः भगवदुपासनांश भक्त्याद्यपरपर्यायज्ञानेनैव निवृत्तिः "तमेव विदित्वाति मृत्युमेति नान्यः पन्था एवमेवं विदि पापं कर्म न श्लिष्यते । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे । निचाय्य तं मृत्युमुखात्प्रमुच्यते । ज्ञात्वा देवं मुच्यते सर्वपाशैः । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा" इत्यादिश्रुतिस्मृतिसिद्धा तदेतदत्रापि मयि सन्यस्तकर्मणेत्यादिनोच्यते इतिसंक्षेपः ॥ ३८ ॥

तेन मद्भजनेन मामात्मन्येव स्वात्मन्ये वात्मना मनसाऽन्वीक्ष्यन् साक्षात्कुर्वन् विशोकः विगतः शोकः शोकहेतुमत्प्राप्तिविरोधिप्राचीनंकर्म यस्य सः अभयं न विद्यते भयं यस्मात्तं मामृच्छसि प्राप्स्यसि कथम्भूतं मा मात्मानं जीवान्तरात्मानं स्वयं प्रकाशं सर्वभूतानां गुहायां हृदयकुहरे शयानम् ॥ ३९ ॥

मयि गते सति किं भवान् करीष्यतीत्यत्राह । मात्र इति । असौ मम माता यया च ब्रह्मविद्यया मदुपदिष्टया भयं मृत्युमतितरिष्यति तामाध्यात्मिकीं सर्वकर्मशमनीं पूर्वोत्तराघविनाशिनीं विद्यां मात्रे वितरिष्ये उपदेक्ष्यामीत्यर्थः ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्वानां पक्षपोषण इति यदुक्तं तत्राह । एतन्म इति । "स्थानाभिप्राय आशय" इत्यभिधानाद्दुराशयादुःस्थानात्संसारान्मुमुक्षूणां पुंसां देहमधिकृत्य वर्तमानानां परमात्मादितत्त्वानां प्रसंख्यानाय सम्यक् ज्ञापनायाप्तकामस्यापि मे एतस्मिन्भूलोके जन्मावतार इति ज्ञातव्यं तर्ह्यपरोक्षज्ञानिनां नानेनार्थ इति तत्राह । समत्वायेति । आत्मदर्शिनामात्मज्ञानिनां समत्वाय यथार्थज्ञानस्थिरीकरणाय चेति ॥ ३६ ॥

लोके साङ्ख्यशास्त्रप्रवृत्तिदर्शनात्पुनस्तत्करणेन किं कार्यमिति तत्राह । एष इति । सम्यग्ज्ञानप्रवर्तकशून्येन भूयसा महता कालेनाव्यक्तः सूक्ष्म एष वक्ष्यमाणात्मपथः परमात्मतत्त्वविषयो मार्गो नष्टास्तिरोहितोऽभूत् यथार्थज्ञानसाधनसाङ्ख्यशास्त्रनिर्माणेन तमात्ममार्गं प्रवर्तयितुं मया भृतमिमं देहं विद्धीत्यन्वयः ॥ ३७ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अवतारप्रयोजनमुक्त्वा तं त्वानुपृच्छ इत्यस्योत्तरमाह । गच्छेति । आपृष्टोऽनुज्ञातः कामं यथासुखं गत्वाप्येवं कुर्वित्याह । मयीति । मयि संन्यस्तेनार्पितेन कर्मणा सुदुर्जयं मृत्युमिन्द्रियग्रामं जित्वामृतत्वाय मां भजेत्यन्वयः ॥ ३८ ॥

भजनप्रकारमुपदिशति । मामात्मानमिति । सर्वभूतानां हृदयगुहायां शेत इति सर्वभूतगुहाशयस्तं स्वयंज्योतिः स्वप्रकाशमात्मानमादानादिकर्तारमात्मनि चिद्रूपे त्वय्येवात्मना लिङ्गशरीरव्यतिरिक्तत्वेन नित्यकैङ्कर्यलक्षणेन चिदानन्दस्वरूपेण वीक्ष्य विशोको विनष्टसंसारक्लेशस्त्वमभयममृतमृच्छसि मुक्तो भविष्यसीत्यन्वयः ॥ ३९ ॥

भयरहितं मुक्तत्वमीदृशमित्याह । विश्वमेतदिति । विश्वमेतदेतादृशमनित्यमसारमिति तव सिद्धं हि यस्मादतः शास्त्राचार्योपदेशेनात्मानमन्तर्यामिणमीश्वरमखण्डैश्वर्यगुणाकरं विज्ञाय मुनिरपरोक्षज्ञानी शान्तमनो वाक्यो निवृत्तलिङ्गशरीररूपमन आदीन्द्रियो यर्हि तदोपप्लवो दुःखाज्ञानभयशोकादिलक्षण उपद्रवो नाख्याति न प्रकाशते एतादृशं मुक्तत्वमित्यर्थः मातुः का गतिरिति शङ्का मा भूदित्याह । मात्र आध्यात्मिकीमिति । अहमाध्यात्मिकीं परमात्मादितत्त्वविषयां सर्वकर्मणां शमनीं विद्यां मात्रे वितरिष्ये उपदेक्ष्यामि यया विद्यया सा माता भयमतितरिष्यति चशब्दात्संसारं तीर्त्वा नित्याभयं हरिं प्लवति गच्छतीति सूचयति ‘तॄप्लवनतरणयोः’ इतिधातुः प्लुगताविति धातुश्च ॥ ४० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स्पष्टं प्रकटीकृतम् ॥ ३७—४२ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रयोजनमपि पूर्वोक्तमेवेति तदाह द्वाभ्याम् । एतन्मे इति । मे एतज्जन्मदुराशयात् मुमुक्षूणामर्थे आशयः संघातात्मा स चेत् दुष्टः तदात्मानं नाशयति अत एवं भावादुत्क्रमिष्यतः प्राणिनः उद्धारार्थं तत्त्वानां सङ्ख्यानं कर्त्तव्यं साक्षादपि हि दृश्यमाना अत्यन्ताः सङ्कीर्णाः स्थावरादयः वक्रकोटरादिभिः पुरुषादिभ्यो विविच्यन्ते नत्वन्यथा किं पुनरतीन्द्रियाः मिथोमिश्रीभूताः कालाकाशादयः अत एतेषां तत्त्वानां प्रसङ्ख्यानं कर्त्तव्यमुद्देशलक्षणाभ्यां तस्यापि प्रयोजनमात्मदर्शने निमित्तसप्तमी आत्मज्ञानार्थं तत्त्वानामपि सङ्ख्यानं कर्त्तव्यमन्यथा सङ्घाते पतित आत्मा न तेभ्यो विवेकमर्हति न च अद्वयात्मज्ञानप्रतिपादकश्रुतिविरोधः विद्यमाने हि भेदव्यवहारे साङ्ख्यप्रवृत्तिः न हि स्वभावतो यादृशं जगत् अनिर्द्धारितमात्मज्ञान उपयुज्यते उद्देश्यापरिज्ञानात् अत उद्देश्यपरिज्ञानद्वारा आत्मज्ञानार्थमिति तत्त्वविदः इतरभिन्नतया आत्मज्ञानार्थमित्यन्ये तेषां तु स्त्रीशूद्रद्विजबन्धूनां परलोकेप्सूनां श्रुतिश्रवणाभावात् वेदविरोधो नाशङ्कनीयः तेषां संघातजनितदोषरूपाहङ्काराभाव एव फलमतः तादृशधर्मोपचितकालान्तरोत्पन्नब्राह्मणदेहे पुनः श्रुत्यनुसारेणात्मविचारो भविष्यतीति न किञ्चिदनुपपन्नमत एव प्रसङ्ख्यानमात्मदर्शने सम्मतं नह्यात्मविदः साङ्ख्ये विप्रतिपद्यन्ते ॥ ३६ ॥

नन्विदं प्रसंख्यानमाधुनिकं चेत्कृतमनेन अथ परम्परागतं कृतमवतारेणेत्याशङ्क्याह । एष इति । अयमनादिसिद्ध एव आत्ममार्गः भूयसा कालेन क्षीयमाणो नष्टः पश्चादव्यक्तः लोके काप्यप्रकटः पुराणानां कृशरतया निरूपकत्वात् न व्यक्तिः सर्वथा अव्यक्तौ तज्ज्ञातॄणां स्मृतिसंस्कारनाशात् नाशः तं पुनः प्रवर्त्तयितुं सर्वेषामुद्धारार्थमिमं देहं मयाभृतं विद्धि ॥ ३७ ॥

अतः सर्वे एवानेन मार्गेण मुच्यन्त इति देवहूतिप्रभृतीनामपि मुक्तिर्भविष्यतीति इतरचिन्तां परित्यज्य भवान्मुक्तो भवत्वित्याह । गच्छेति । मया आदिष्टः आज्ञप्तः गच्छ इतो गत्वा सर्वदा परिभ्रमणं कर्त्तव्यं ततः कर्त्तव्यमाह । मयि संन्यस्तकर्मणा सुदुर्जयं मृत्युं जित्वा अमृतत्वाय परमानन्दप्राप्तये मां भज कर्माणि बहुविधानि मृत्युजये साधनत्वे निरूपितानि बहून्यपि कर्माणि सर्वकर्माणि भगवति समर्पणीयानीत्येके भगवद्भजनविरोधीनि तदर्थं त्यक्तव्यानीत्यपरे तत्र प्रथमेन मयि समर्पितेन कर्मणा सुदुर्जयमपि मृत्युं जयति तदा बाधकस्य मृत्योरभावात्परमानन्दप्राप्त्यर्थं पश्चान्मद्भजनं कर्त्तव्यं परिभ्रमणं सर्वकर्मसमर्पणमादौ कर्त्तव्यं तस्मिन् कृते देहपरिणामः पलितता क्षुत्पिपासे चेन्न भविष्यन्ति तदा पश्चाद्भजनं कर्त्तव्यं स्वस्थकार्यत्वाद्भजनस्य पलिताद्यभावश्च मृत्युजयबोधकः ॥ ३८ ॥

भयं तु द्वैतकार्यं शोकश्च सङ्घातकार्यं तदुभयं ततो निवर्त्तिष्यत इत्याह । मामात्मानमिति । साङ्ख्ये आत्मैव चिद्रूपो भगवच्छब्दवाच्यः तमात्मनैव सङ्घातान्निवृत्त आत्मा भजति आत्मनैव भजनं मुख्यं यथा शरीरेण लोके द्रव्यादिना च गौणं तथात्मना मुख्यं देहेन्द्रियादिभिर्गौणमिति तस्योपास्यत्वाय गुणावाह । स्वयंज्योतिः सर्वभूतगुहाशयमिति । तत्स्वप्रकाशं सर्वभूतान्तःकरणे विद्यमानं च अतः प्राप्त्यर्थं परिज्ञानार्थं वा तत्र यत्नो न कर्त्तव्यः सङ्घाताद्विवेके भाव्यमाने स्फुरितः स्वात्मा व्यापकं च तमात्मानं स्फुटं करोति यथा वह्निः स्थितो वह्निःकाष्ठेसंबद्धः काष्ठान्तर्गतवह्निमपि मथनादिव्यतिरेकेणैव शीघ्रं प्रकाशयति ऐक्यं च प्राप्नोति तथात्राप्यनुसन्धेयं तदा सर्वमात्मैवेति भयं शोकश्च निवर्त्तते उद्देश्ये त्वपरिज्ञाते तस्यैव त्वं सुतरामज्ञातं भवति संसर्गे वह्नावेव काष्ठस्थितोऽपि वह्निस्तिष्ठति काष्ठस्योपभुक्तत्वात् तेनैव च प्रकाशितस्तदाह । आत्मन्येवात्मसंस्थिति । एवं दृष्ट एव पुनः सङ्घातपातशङ्काभावात् विशोको भवति अभयोपपत्तिरुक्ता स्वयमेव सर्वो भवतीति ॥ ३९ ॥

एवं तमनुशास्य मात्रे कर्त्तव्यमाह । मात्रे चेति । एषा त्वाधिदैविकी विद्योक्ता मात्रे पुनः आध्यात्मिकीं विद्यामत्र विवेकेन स्वात्मदर्शनमेव अत एव सर्वकर्मणां शमनी सा तस्याः साधनेन यद्यपि न भविष्यति तथापि अहमेव वितरिष्ये वितरणगुणेनैव दास्यामि यया विद्यया मत्कृपया चाञ्जसा सामस्त्येन भयमतितरिष्यति चकारात् शोकातितरणं पुनः सङ्घातप्रत्यापत्त्यभावः ॥ ४० ॥

---

मैत्रेय उवाच ।

एवं समुदितस्तेन कपिलेन प्रजापतिः ।
दक्षिणीकृत्य तं प्रीतो वनमेव जगाम ह ॥ ४१ ॥
व्रतं स आस्थितो मौनमात्मैकशरणो मुनिः ।
निःसङ्गो व्यचरत्क्षोणीमनग्निरनिकेतनः ॥ ४२ ॥
मनो ब्रह्मणि युञ्जानो यत्तत्सदसतः परम् ।
गुणावभासे विगुण एकभक्त्याऽनुभाविते ॥ ४३ ॥
निरहंकृतिर्निर्ममश्च निर्द्वन्द्वः समदृक् स्वदृक् ।
प्रत्यक्प्रशान्तधीर्धीरः प्रशान्तोर्मिरिवोदधिः ॥ ४४ ॥
वासुदेवे भगवति सर्वज्ञे प्रत्यगात्मनि ।
परेण भक्तिभावेन लब्धात्मा मुक्तबन्धनः ॥ ४५ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स्वावतारप्रयोजनं ज्ञापयति । दुराशयात् दुष्टलिङ्गशरीरात् मुमुक्षूणामात्मदर्शने सम्मताय तत्त्वानां प्रसङ्ख्यानाय विद्धीत्युत्तरस्यानुषङ्गः ॥ ३६ ॥

अव्यक्तः सूक्ष्मः ईश्वरे देहिदेहविभागाभावेऽपि बुद्धिर्हि भगवती अभेदेऽपि भेदं जनयतीति न्यायेन देहं मया भृतमिति लोकरीत्यैवोक्तिः "सत्त्वं रजस्तम इति निर्गुणस्य गुणास्त्रयः स्थितिसर्गनिरोधेषु गृहीता मायया विभोः" इतिवज्ज्ञेया ॥ ३७ ॥

मया पृष्ट इति । त्वं गन्तुं यथा मामापृष्टवान् तथात्राव-स्थातुं मयापि त्वमापृष्ट इत्यर्थः कथं मया गच्छेति निष्ठुरं वक्तव्यमत्रावस्थितस्यापि तव वाञ्छितं सेत्स्यत्येवेति भावः । तदपि गन्तुमेव ते मनश्चेत् कामं गच्छ अमृतत्वाय भज "अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते" इति श्रुतेः । यद्वा अमृतत्वाय मरणराहित्याय भगवतो रामकृष्णादित्वेन जन्मवन्नत्पादितां प्राप्तस्यापि तव मत्सङ्गितया जन्म तु भविष्यत्येवेति भावः ॥ ३८ ॥

आत्मानं "केचित् स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम् । चतुर्भुजम्" इत्याद्युक्तप्रकारमन्तर्यामिणं त्वदिष्टदेवं शुक्लमात्मनि स्वस्मिन् आत्मना बुद्ध्या ॥ ३९ ॥

पुत्रस्य ममेश्वरत्वात् कलत्रस्य देवहूतेश्च कृते चिन्तां न कुर्वित्याह । मात्रे इति ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

दुष्टः आशयो यस्मिन् तस्मात्संसारान्मुमुक्षूणामात्मदर्शने मदीयज्ञाने सम्मताय तत्त्वानां प्रसङ्ख्यानाय मे जन्म विद्धीत्युत्तरस्यानुषङ्गः ॥ ३६ ॥

आत्मपथः मदीयज्ञानमार्गः अव्यक्तः गूढः अत एव नष्टः ॥ ३७ ॥

मया आपृष्टः अनुज्ञातः मयि सन्न्यस्तेन समर्पितेन कर्मणा मृत्युं पुनर्मरणहेतुभूतां गृहासक्तिं जित्वा कामं यथा सुखं गच्छ अमृतत्वाय मोक्षाय मां भज ॥ ३८ ॥

आत्मनि स्वस्मिन् आत्मना मनसा मामन्वीक्ष्य अभयं मद्भावमृच्छसि प्राप्स्यसि ॥ ३९ ॥

भयं संसारमतितरिष्यति चकारान्मद्भावं प्राप्स्यति ॥ ४० ॥

---

भाषाटीका ।

यह जो हमारा जन्म इस संसार में है मुमुक्षु जनोंके बन्धन रूप देह मेंसे छोडाने के लिये है आत्म ज्ञानमें सम्मत जो तत्त्व है तिनके कथन करने के लिये है ॥ ३६ ॥

यह आत्म ज्ञानका मार्ग बहुत काल बीतनेसे लुप्त होकर नष्ट होगया तिसीको फिर प्रवृत्त करने को हमने यह देह धारण किया है ऐसा जानो ॥ ३७ ॥

अब मैं आज्ञा देता हूं यथेच्छ आप जाओ सन्यास कर्मसे अतिदुर्जय मृत्यु को जीतकर मुक्त होने के लिये मेरेको भजो ॥ ३८ ॥

मैं आत्मा हूं स्वयं ज्योति हूं सर्व भूतों के अन्तः करणमे रहने वाला हूं ऐसे मेरे स्वरूप को अपने भीतर मनसे जो देखता है सो शोकसे छुट कर निर्भय हो जाता है ॥ ३९ ॥

अब मैं सब कर्मोंकी नाशकरने वाली जो अध्यात्मविद्या तिसको माता के अर्थ उपदेश करूंगा तिसी से वह माता भी संसार को तर जायगी ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

समुदितः सम्यगुक्तः सन् तं प्रदक्षिणीकृत्य ॥ ४१ ॥

मुनीनामिदं मौनं व्रतमहिंसालक्षणम् ॥ ४२ ॥

सदसतः परं यत्तस्मिन् ब्रह्मणि गुणावभासके निर्गुणे एकभक्त्या ऽव्यभिचारिण्या भक्त्या ऽनुभाविते ऽपरोक्षी कृते ॥ ४३ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अतो देहादिष्वहङ्कारादिरहितः अत एव निर्द्वन्द्वः शीतोष्णाद्यनाकुलः समदृग्भेदाग्राहकः किन्तु स्वदृक् स्वमेव पश्यन् प्रत्यक्प्रवणा शान्ता विक्षेपरहिता धीर्यस्य ॥ ४४ ॥

तदेवंविधकल्पितोपाधिनिवृत्तिमुक्त्वा परमेश्वरपदप्राप्तिमाह । वासुदेव इति त्रिभिः । प्रतीचो जीवस्याऽऽत्मनि लब्ध आत्मा चित्तं येन यतो मुक्तं बन्धनमज्ञानं यस्य ॥ ४५ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

प्रीतः संभ्रमप्रीतरसाविष्टः वनमेवेति एवकारेण अहो पुत्रतयाविर्भूतेऽपि तस्मिन्दास्यभाव एव कृत इति मैत्रेयमनसि शोकानुलापः सूचितः ॥ ४१ ॥

अनग्निः अग्निसाध्यकर्मरहितस्मान्निति भागवतपरमहंसत्वं परमात्मैकशरणतया कर्मपरित्यागात् ॥ ४२ ॥

मन इति पञ्चकम् । अत्र निर्विकल्पकसाक्षात्कारानन्तरं श्रीभगवत्साक्षात्कारो हि श्रीशुकादीनां प्रसिद्ध इति तेनारोहभूमिकाक्रमेण तस्योत्कर्षमाह । भक्त्या साधनलक्षणया तां विना ब्रह्मसाक्षात्कारस्याप्यसिद्धेः"स्वर्गापवर्गयोः पुंसाम्"इत्यादेः श्रेयस्सृतिं भक्तिमुदस्य ते प्रभो"इत्यादेश्च अतो ब्रह्मसाक्षात्कारात् अत एव अहंकारादिरहितत्वादेव स्वमेव ब्रह्मत्वेन पश्यन् प्रकृत्यप्रवणा अन्तर्मुखी तदेवंविधा पूर्वोक्तप्रकाराया कल्पितोपाधेर्निवृत्तिस्तामुक्त्वा अस्मयगाविर्भावाद्ब्रह्मणोऽपि परस्य परमेश्वररूपस्य प्राप्तिमाह । तस्य तस्मात्परत्वं गीतायां ब्रह्मणो हि प्रतिष्ठाहमित्यत्र रुद्रवाक्ये च यः परंरहसः साक्षान्निर्गुणाद्ब्रह्मसंज्ञितात् । भगवन्तं वासुदेवं प्रपन्न स प्रियो हि मे । इत्यत्र प्रतीचः प्रत्यग्वृत्तिलभ्यस्य आत्मनि मूलस्वरूपान्तर्यामिणि भागवती गतिः सप्रेमभगवत्पार्षदत्वरूपा ॥ ४३ ॥ ४४ ॥ ॥ ४५ ॥ ४६ ॥ ४७ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं कपिलेनोक्तः कर्दमस्तदुक्तमेवाकरोदित्याह मैत्रेयः । एवमिति । तेन कपिलेन समुदितः सम्यगुक्तः प्रजापतिः कर्दमस्तं कपिलं प्रदक्षिणीकृत्य परिक्रम्य प्रीतस्तुष्टो वनं प्रत्येव जगाम हेत्यनेन सर्वसम्पत्समृद्धगृहत्यागो विस्मीयते ॥ ४१ ॥

सः कर्दमः मौनं व्रतमास्थितः आश्रितः आत्मा परमात्मैव एकं शरणमुपायो रक्षकश्च यस्य सः मुनिः शुभाश्रयसंशीलनपरः निःसङ्गः इन्द्रियार्थेष्वासक्तिरहितः संसारिजनसङ्गरहितो वा अनग्निः परित्यक्तगृहाश्रमत्वादाहवनीयाद्यग्निरहितः अनिकेतनः नियतावसथरहितः क्षोणीं भूमिं व्यचरत् ॥ ४२ ॥

यत्सदसतः चिदचितोः परं विलक्षणं तस्मिन् ब्रह्मणि गुणावभासे गुणैरवभासो यस्येति बहुव्रीहिः मङ्गलगुणावभासिते विगुणे हेयगुणरहिते मनो युञ्जानः एकाग्रीकुर्वन् ॥ ४३ ॥

निरहंकृतिर्देहात्माभिमानरहितः निर्ममः देहापत्यकलत्रादिषु स्वीयत्वबुद्धिरहितः निर्द्वन्द्वः शीतोष्णादिदेहधर्मैरनाकुलः समदृक् ॥

विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि
शुनि चैव श्वपाके च समदृक् पण्डितो मतः

इत्याद्युक्तरीत्या समदर्शनः स्वदृक् प्रकृतिविलक्षणब्रह्मात्मकत्वात्मदर्शी प्रत्यक् प्रशान्तधीः प्रत्यगात्मनि ब्रह्मात्मके जीवात्मनि प्रशान्ता धीर्यस्य सः ब्रह्मात्मकस्वात्मानुभवतः निस्तरङ्गितोदधिरिव स्वयमप्यशनायापिपासाशोकमोहजरामृत्य्वाख्योर्मिषट्करहितः ॥ ४४ ॥

सर्वज्ञे प्रतीचः जीवस्यात्मन्यन्तः प्रविश्य नियन्तरि षाड्गुण्यपूर्णे सर्वभूतधारके परमपुरुषे परेण ध्रुवानुस्मृतित्वप्रत्यक्षतापन्ननिरतिशयप्रीतिरूपत्वादिदशामापन्नेन भक्तियोगेन लब्धात्मा लब्धमतिः ॥ ४५ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मैत्रेयस्तत्रैवमुपदिष्टः कर्दमः पुत्रस्नेहात् किमकार्षीदिति विदुरस्य हार्दं चोद्यं परिहरति । एवमिति । एवं समुदित उपदिष्टः दक्षिणीकृत्य प्रदक्षिणीकृत्य भिक्षार्थं ग्रामप्रवेशं विनान्यदा नास्तीत्येवकारार्थः ॥ ४१ ॥

वनमित्यनेन नैकत्रावस्थानं प्रतीयते न भूवलयभ्रमणं तथा च संन्यासाचारभङ्ग इति तत्राह । व्रतमिति । मौनं वागिन्द्रियनिग्रहलक्षणं तेन हि प्रियाप्रियव्यवहारेण स्नेहद्वेषसम्भवेन स्वतो दुःस्थस्य मनसः कालुष्येण तयोः प्रियाप्रिययोर्निवृत्तिर्न स्यादयमेव संसार इति प्रथमतस्तन्निग्रहः कर्तव्य इति दर्शितं मुनिर्मननशीलः निःसङ्गोऽद्वितीयः अग्नीनामात्मसमारोपणादनग्निर्गृहाद्याश्रमरहितः आत्मा हरिरेकः शरणं रक्षिता गृहं च यस्य स तथा च ॥ ४२ ॥

एवं विचरन् किं मनुते तत्राह । मन इति । यत्सदसतो मूर्तामूर्तलक्षणात्प्रपञ्चात्परं विलक्षणं तस्मिन्ब्रह्मणि मनो युञ्जानः अनेन पर्यटतश्चित्तविक्षेपेण तदुपासनानुपपत्तिः परिहृता नन्वेवमपि स्वरूपमात्रप्रतिपत्तावपि विशिष्टगुणोपसंहारः सर्वोत्तमत्वविरोधिगुणपर्युदासश्च न स्त इति तत्राह । गुणावभासे विगुण इति । ज्ञानादिगुणानामवभासः प्रकाशो यस्मिन् स तथा ज्ञानादिगुणात्मत्वेन प्रकाशमान इत्यर्थः तस्मिन् यद्वा गुणेषु सृष्ट्याद्युपकारकेषु महदादिषु नियामकत्वेनावभासो यस्य स तथा-दृश्यमान इत्यर्थस्तस्मिन् अनेनाधिष्ठानविशिष्टत्वेनापि तदुपास्तिरस्तीति द्योतितम् विगता निषिद्धाः सत्त्वादिगुणा येन स तथोक्तस्तस्मिन् अनेन रागद्वेषादिदोषराहित्यं ध्वनयति दुर्निग्रहस्य मनसोऽन्यत्रागमने कारणमाह । एकभक्त्येति । एको मुख्यः सर्वोत्तमो हरिर्नान्य इति सम्यक्ज्ञानपूर्विकया भक्त्यानुभाविते अधिवासिते अनेकजन्मभिः प्रचितसंस्कारेण दृढीयस्तया शृङ्खलितत्वादन्यत्र न यातीत्यर्थः किमत्र प्रमाणमित्यतो वाह । एकभक्त्येति । एकभक्त्या एकया केवलया अनीशत्वादिदोषलेशशून्यया भक्त्यानुभाविते सम्यक् ध्याते सतां भावनात्र प्रमाणमित्यर्थः ॥ ४३ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

एवमादिश्यास्य कर्दमस्य देहावसानमथवा कश्चन विशेषोऽभूदिति मन्दाशङ्कां परिहरन् कपिलोपदिष्टानुष्ठानान्मुक्तियोग्यापरोक्षज्ञानोदयं वक्ति। निरहङ्कृतिरिति। स कर्दमः सर्वभूतेष्ववस्थितं सदैवाप्तगुणत्वादात्मानं भगवन्तं सर्वसौभाग्यगुणाकरं भूतगर्भं नारायणमपश्यदपरोक्षीचकार सर्वभूतानि चात्मनि सर्वगते हरौ तदाधारतयास्थितान्यपश्यदित्यन्वयः अनेन भूतगर्भो भूतस्थ इति रूपद्वयमात्मशब्दोक्तमिति ज्ञायते 'भूतगर्भश्च भूतस्थः पूर्ण एव द्विरूपवान्। अत आत्मेति तं प्राहुः सदैवाप्तगुणो यत" इति वचनात् निर्द्वन्द्वः शीतोष्णादिद्वन्द्वसहिष्णुः समदृक् यथा स्थितवस्तुदर्शी यथार्थज्ञानीत्यर्थः स्वं स्वतन्त्रं दृष्टवान् स्वदृक् तदुक्तम्। "अनन्याधीनशक्तित्वाद्धरिः स्व इति चोच्यत,, इति प्रत्यग्रः प्रत्यग्रतिः स्वान्तर्यामिणि रतिमानयं निरहङ्कारादौ हेतुरत एव शान्तधीः क्रोधग्रहाविष्टबुद्धिरहितो धीरः सम्पदि विपदि च निश्चलः अत्र दृष्टान्तः प्रशान्तोर्मिरिति।४४।४५।

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

मन इति पञ्चकम्। आरोहभूमिकाक्रमेणापि तस्यैवाधिक्यमाह। मनो ब्रह्मणीति। एकभक्त्या अव्यभिचारिण्या साधनलक्षणया भक्त्या अनुभाविते निरन्तरमपरोक्षीकृते तां विना कस्यचिदप्यर्थस्यासिद्धेः ॥ ४३ ॥

निरहङ्कृतत्वादेव निर्ममः। तद्द्वयाभावादेव मन आदीनामप्यभावः सिद्ध्यति समदृक् भेदाग्राहकः स्वदृक् स्वस्वरूपाभेदेन ब्रह्मैव पश्यन् प्रत्यक् अन्तर्मुखी प्रशान्ता विक्षेपरहिता धीर्ज्ञानं यस्य सः ॥ ४४ ॥

तदेवं ब्रह्मज्ञानमिश्रभक्तिसाधनवशेन ब्रह्मानुभवे जातेऽपि भक्तिसंस्कारबलेन लब्धप्रेमादेस्तदूर्ध्वमपि श्रीभगवदनुभवमाह। वासुदेव इति। प्रत्यगात्मनि सर्वेषामाश्रयभूते परेण प्रेमलक्षणेन भक्तिभावेन तच्छक्त्यैव लब्धात्मानस्तदीयात्मका अहङ्कारादयो येनेति। ब्रह्मज्ञानेन प्राकृताहङ्कारादिलयानन्तरमाविर्भूतान् प्रेमानन्दात्मकशुद्धसत्त्वमयान् लब्धवानित्यर्थः। ननु त एव प्रत्यावर्त्तन्तां किम्वा पूर्ववदमी अपि बन्धहेतवो भवन्तु नेत्याह। मुक्तबन्धनः "अनावृत्तिः शब्दात्।४।४।२३।" इतिन्यायात् ॥ ४५ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं स्वगृहीतदेहद्वयस्य सात्मनः प्रतिपत्तिं श्रुत्वा स्वरूपप्राप्तिपर्यन्तं कृतवानित्याह। एवमिति सप्तभिः।

आदौ ततो निर्गमनं व्रतानि च वहिस्तथा<br>
आन्तरं मनसा ध्यानं दोषाभावस्तथान्तरः।<br>
ततो गुणाश्च तत्रैव ततो ज्ञानोदयस्तथा<br>
ततः फलस्य सम्प्राप्तिः प्राप्ते ज्ञाने स्थियं क्रिया।

आदौ ततो निर्गमनमाह। एवमिति। तेन कपिलेन पूर्वोक्तप्रकारेणोदितः तथा स्वयं चेन्न कुर्यादन्योऽपि न करिष्यति स्वयं प्रजापतिः पुत्रं प्रदक्षिणीकृत्य तद्वाक्यात्प्रीतः वनमेव जगाम हेत्याश्चर्यं भगवन्तं विहाय वनं गत इति वाक्याच्च गतः ॥ ४१ ॥

गतस्य व्रतान्याह। व्रतमिति। मौनं वाग्व्यापारपरित्यागः तद्व्रतत्वेन गृहीतम् आदेहपातपर्यन्तमनेन नामप्रपञ्चः परित्यक्तो भवति रूपप्रपञ्चपरित्यागमप्याह। आत्मैकशरण इति। आत्मैवैकं शरणं यस्य आदेहपातपर्य्यन्तमयमात्मा ब्रह्मेति मुनिरिति वासनामयप्रपञ्चनिवृत्तिः एवं स्वकर्त्तृकप्रपञ्चपरित्यागमुक्त्वा अन्यकृतस्यापि सम्बन्धाभावमाह। निःसङ्ग इति। निर्गतः सङ्गो यस्मात् परिभ्रमः स्वधर्मःअनग्निः पाकादिराहितः अनिकेतनो गृहादिरहितश्च अग्निगृहसम्बन्धराहित्यं यथा भवति तथा व्यचरत् नाग्निस्पृष्टं भक्षयति न क्वापि गृहं प्रविशतीत्यर्थः ॥ ४२ ॥

आन्तरमाह। वैदिकोऽयमुपनिषत्प्रकारेण आवृत्तचक्षुर्भूत्वा मनो ब्रह्मणि नियम्य अहङ्कारादिरहितः सन् भक्तिं प्राप्य ज्ञानं च भागवतीं गतिं प्राप्त इति पञ्चमेन सम्बन्धः तद्ब्रह्मप्रपञ्चातीतमुभयरूपं परिज्ञाय माहात्म्यार्थमेकं परिज्ञाय अपरस्मिन्मनो निवेश्य तच्च ब्रह्मकार्यकारणातीतमपि गुणानामवभासो यत्रेति कारणगुणप्रवर्त्तकं सदाद्यंशैश्च गुणानुत्पादकमिति तत्र मनसः स्थापने उपायमाह। एकभक्त्यानुभावित इति। अनन्यया भक्त्या प्रेम्णैव तत्र मनः स्थिरं भवति भक्त्या च तत्रानुभावो जनित इति न निःसङ्गत्वादयो ब्रह्मधर्मा बाधकाः ॥ ४३ ॥

मनश्चेत्संसक्तं ब्रह्मणि देहादावहङ्कारः स्वत एव निवृत्तो भवतीत्याह। निरहङ्कृतिरिति। अहङ्कारस्य वृत्तिद्वयमहंममेति तदुभयमपि नास्तीत्याह। निरहं कृतिर्निर्ममश्चेति। चकारादाकृत्यादिष्वपि तदध्यासाभावः तदनन्तरमूर्म्यभावोऽपि जात इत्याह। निर्द्वन्द्व इति। यद्येकस्मिन्नागते अपरमागच्छति तत्द्वन्द्वं यथा लौकिकसुखानन्तरं दुःखमावश्यकमिति यथा क्षुत्पिपासे जरामृत्यू शोकमोहौ इत्यादीनि द्वन्द्वानि तदा विषयेषु वैषम्यग्रहणे प्रयोजनाभावात् सर्वत्र समदृक् समं ब्रह्म पश्यति आत्मानमात्मनि वा पश्यतीति स्वदृक् तदा तस्य वहिर्मुखतयात्मस्फूर्त्तिर्न जातेत्याह। प्रत्यगिति। स स्वयमन्तर्मुखतयैव स्फुरतीत्यर्थः बुद्ध्या हि विक्षिप्तया वहिर्मुखो भवति तदपि नास्तीत्याह। प्रशान्तधीरिति। वहिस्तादृशस्य ज्ञापकं दृष्टान्तेनाह। प्रशान्तोर्मिरिवोदधिरिति। प्रशान्ता ऊर्मयो यस्य यथा निस्तरङ्गः समुद्रश्चाञ्चल्यरहितः ॥ ४४ ॥

एवं सर्वदोषरहितस्य भक्तिर्जातेत्याह। वासुदेव इति। अन्तःकरणे शुद्धसत्त्वात्मके आविर्भूते भगवति षड्गुणसंपन्ने ज्ञानशक्तियुक्ते ज्ञानसहितो भगवान् परमहंसैश्वर्य इति सर्वज्ञ इत्युक्तं स च स्वस्य स्वरूपमेवेत्याह। प्रत्यगात्मनीति। प्रत्यक्त्वमात्रे भगवानेव तथा स्फूर्त्तियुक्तोऽपि भवेत् अत आत्मनीति परेण माहात्म्यज्ञानपूर्वकस्नेहेन भक्तिभावेन मानसभजनक्रियया सह परमादरेण तस्मिन् लब्धात्मा जातः तत्रात्मभावं प्राप्तः वहिर्निवर्त्तकानि बन्धनानि ततो निवृत्तानीत्याह। मुक्तबन्धन इति ॥४५॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

सम्यगुक्तस्तं प्रदक्षिणीकृत्य ॥ ४१-४२ ॥

यत् सदसतोः भद्राभद्रात् व्यावहारिकवस्तुनः परं तस्मादतीतं तन्मनो ब्रह्मणि युञ्जानः कीदृशे गुणानां सौन्दर्यादि

आत्मानं सर्वभूतेषु भगवन्तमवस्थितम् ।
अपश्यत्सर्वभूतानि भगवत्यपि चात्मनि ॥ ४६ ॥
इच्छाद्वेषविहीनेन सर्वत्र समचेतसा ।
भगवद्भक्तियुक्तेन प्राप्ता भागवती गतिः ॥ ४७ ॥
इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
पारमहंस्यां संहितायां वैयासिक्याम्
चतुर्विंशोऽध्यायः ॥ २४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

माधुर्य्यैश्वर्य्यरूपाणां चिन्मयानामवभासः प्रकाशो यत्र तस्मिन् विगुणे विगतप्राकृतगुणे एकभक्त्या अव्यभिचारिण्या भक्त्यैव अनुभाविते नेत्रादिसर्व्वेन्द्रियानुभवगोचरतां प्रापिते ॥ ४३ ॥

ततश्च व्यावहारिके सर्व्ववस्तुनि निरहंकृतीत्यादि स्वास्मिन्नेव भक्तिः कियत्युद्भवति भविष्यतीति हर्षाद्दृष्टिर्यस्य सः प्रत्यक् बहिर्वृत्तिरहिता अत एव प्रशान्ता धीर्यस्य सः ॥ ४४ ॥

एतावदद्भुतस्वभावत्वं तस्य सहसैव कथमभूत्तत्राह । वासुदेव इति । प्रतीचो जीवस्यात्मनि भक्तिभावेन भजनोत्थेन भावेन परेण श्रेष्ठेन प्रेम्णा हेतुना लिङ्गदेहनाशात्तद्वा अपि पुनर्लब्धा आत्मानश्चित्तमनोबुद्ध्यादयोऽप्राकृता येन सः ननु पूर्व्ववदमी अपि बन्धहेतवो भवन्ति तत्राह । मुक्तबन्धनः
अनावृत्तिः शब्दात् ।४।४।२२। इति न्यायात् ॥ ४५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सम्यगुक्तः ॥ ४१ ॥

आत्मा परमात्मैवैकः शरणं यस्य सः मौनमन्तर्वृत्तित्वम् ।४२ ॥

गुणावभासे कल्याणगुणवति विगुणे हेयगुणरहिते यद्ब्रह्म सदसतोः स्थूलसूक्ष्मयोः परं तस्मिन् ॥ ४३ ॥

निरहङ्कृतिः देहात्माभिमानशून्यः निर्ममः देहादौ ममतारहितः समदृक् अभिसमदृक् स्वदृक् देहेन्द्रियमनोबुद्धिप्राणादिविलक्षणज्ञानस्वरूपज्ञातृत्वादिधर्मकाणुपरिमाणभगवद्दायत्तस्वरूपानुसन्धानवान् अत एव प्रत्यगात्मनि जीवे प्रशान्ता धीर्यस्य सः ॥ ४४ ॥

वासुदेवे ब्रह्मणि प्रत्यगात्मनि प्रत्यञ्चो जीवस्य आत्मनि आश्रये अंशिनि यः परः ध्रुवानुस्मृत्याख्यः भक्तिभावस्तेन लब्धः साक्षाद्दृष्टः आत्मा वासुदेवपरब्रह्मादिशब्दाभिधेयो येन सः मुक्तानि बन्धनानि वासुदेवादन्यत्र रागादीनि यस्य सः ॥ ४५ ॥

---

भाषाटीका ।

मैत्रयजी बोले कपिल भगवान् के ऐसें कहने पर प्रजोंकेपति कर्दमजी परिक्रमा करके प्रसन्न होकर वनहीं को चले गये ॥ ४१ ॥

मौन व्रतको धारण किया केवल आत्मा के ध्यानमे रहे संसार से आसक्ति को छोडदिया होमकी अग्नि तथा घर इनको छोडकर कर्दममुनि पृथिवी मे विचरते रहे ॥ ४२ ॥

कार्य कारण दोनोंसे परे परगुणों के प्रकाशक जो ब्रह्मप्राकृतगुण रहित जो ब्रह्म एकाग्र भक्तिसे साक्षात्कृत जो ब्रह्म तिनमे मनको लगाकर रहे ॥ ४३ ॥

अहङ्कार ममकार शीत उष्ण आदि द्वन्द्वों को छोकर सम दृष्टि आत्म दृष्टि अन्तर्मुख शान्त बुद्धि वाले धीर होकर जैसे विना लहरों का समुद्र होवे तैसे होगये ॥ ४४ ॥

सर्वज्ञ तथा जीवके अन्तर्यामी भगवान् वासुदेव मे परम भक्तिभावसे अन्तःकरण को स्थापनकर के सब बन्धनोंसे रहित होगये ॥ ४५ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

लब्धात्मनामेवा ह । आत्मानमिति ॥ ४६ ॥

तदेवं तेन भागवती गतिः प्राप्ता पाठान्तरे स एव तां गतिं प्राप्त इति ॥ ४७ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
चतुर्विंशोऽध्यायः ॥ २४ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या
दीपिका टिप्पणी

इति श्रीमद्भागवते महापुराणे तृतीस्कन्धे श्रीराधारमणदासगोस्वामिकृतदीपिकाटिप्पण्याम् ।
चतुर्विंशोऽध्यायः ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

धार्येषु सर्वभूतेषु अवस्थितं भगवन्तमात्मानं धारके परमात्मनि भगवति भूतानि धार्याधारपक्षत्व पूर्वोत्तराधार्भ्यां भगवतो व्याप्तिर्धारकत्वंचोच्यते ॥ ४६ ॥

इच्छाद्वेषादिप्राकृतगुणरहितेन सर्वत्र भूतेषु समचेतसा तत्तत्कर्मायत्तदेवत्वमनुष्यत्वादिवैचित्र्यानादरेण प्रकृतिपरिणामरूपान् देहान्प्रति शरीरं जीवानां भेदेऽपि सर्वत्र ज्ञानैकाकारतया एकरू-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पाद् जीवान् ततत्तत्कर्मानुसारेण नियन्तृत्वासेदेऽप्यन्तर्यामिरवनिरस्तसमस्तदोषत्वानन्तकल्याणगुणाकरत्वेन चैकरूपमीश्वरं च वद्यति यच्चित्तं तत्समचेतस्तेन भगवद्भक्तियोगेन च भागवतीं गतिः मुक्तिः प्राप्ता लब्धा पाठान्तरे स एव तां भागवतीं गतिं प्राप्तः ॥ ४७ ॥

इतिश्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीवीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिकायां चतुर्विंशोऽध्यायः ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

१ फलितमाह । वासुदेव इति । वासुदेवे सर्वत्र स्थित्वा क्रीडति अशेषविशेषाकारेण सर्वं जानाति प्रत्यगात्मनि स्वान्तर्यामिणि भगवति परेण पूर्णेन भक्तिभावेन लब्धात्मा लब्धमना अत एव मुक्तबन्धनः मुक्तदेहाभिमानः यद्वा प्रथमं वासुदेवे श्रीकृष्णे भगवति लब्धात्मा समनन्तरं सर्वज्ञे सर्वज्ञत्वात्सृष्ट्यादिकर्तरि भगवति लब्धात्मा क्रमेण प्रत्यगात्मनि सूक्ष्मे स्वबिम्बभूते भगवति लब्धात्मा ॥ ४६ ॥

एवं हरौ लब्धात्मनस्तस्य कर्दमस्य संसारापत्तिर्नास्ति किन्तु पुनरनावृत्तिरूपा श्रीनारायणावाप्तिलक्षणा मुक्तिरेवेति दर्शयति । इच्छाद्वेषेति । इच्छाद्वेषाभ्यां निषिद्धेच्छावैष्ण्यद्वेषाभ्यां विहीनेन सर्वत्र सर्वपदार्थेषु स्थितभगवद्रूपेषु निर्दोषत्वसर्वगुणपूर्णत्वादिसमत्वज्ञानयुक्तेन चेतसा ज्ञानेन भागवतीं गतिं भगवत्प्राप्तिरूपां मुक्तिं प्राप्त इत्यन्वयः ॥ ४७ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम् चतुर्विंशोऽध्यायः ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भक्त्यतिशयेन लब्धात्मकत्वमेव प्रतिपादयति । आत्मानमिति । आत्मात्र परमात्मा सर्व्वथा तस्य भगवानेवास्फुरदिति वाक्यार्थः ॥ ४६ ॥

ततः साक्षादेव तत्प्राप्तिमाह । इच्छेति । तदेवं भागवती गतिः प्राप्ता हेयत्वादन्यत्रेच्छाद्वेषविहीनेन तस्मादेव हेतोः सर्व्वत्र समचेतसा तदुक्तं "नारायणपराः सर्व्वे" इत्यादि यद्वा मया लक्ष्म्या सह वर्त्तते इति सम इति सहस्रनामभाष्यात् भगवच्चेतसेति प्राप्तो भागवतीं गतिमिति पाठे सं कर्दम एव तां गतिं प्राप्तः अत्र भगवद्भक्तियोगेनेत्येव विशेष्यमिति एवमेवोक्तं श्रीभगवदुपनिषत्सु ॥

बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ।
शब्दादीन् विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ।
विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ।
अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्म्ममः शान्तो ब्रह्मभूयाय कल्पते ।
ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्व्वेषु भूतेषु मद्भक्तिं लभते पराम् ।
भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ।

इति अत्र विशतेर्मिलनार्थः यथा दुर्योधनं परित्यज्य युधिष्ठिरं प्रविष्टवानयं राजेति श्रीदशमे श्रीगोपैर्ब्रह्मसंपत्त्यनन्तरमेव वैकुण्ठो दृष्ट इति श्रीस्वामिभिरेव च व्याख्यातम् ॥ ४७ ॥

इतिश्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य चतुर्विंशोऽध्यायः समाप्तः ॥ २४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तदा तस्य जातस्य ज्ञानस्य स्वरूपमाह । आत्मानमिति । भगवानेव स्वात्मा स सर्वेषु समवस्थित एवं सर्वत्र स्वात्मानं भगवद्रूपं दृष्टवान् सर्वाणि च भूतानि भगवद्रूपे आत्मनि चापश्यत् जगतः आधाराधेयभूतं स्वात्मरूप भगवन्तं साक्षात्कृतवानित्यर्थः ॥ ४६ ॥

एवं जाते पूर्णज्ञाने फलमाह । इच्छाद्वेषेति । चित्तं तदैव ब्रह्मरसस्पृष्टं लौकिकान्निवर्त्तते यदा इच्छाद्वेषश्च विषयेभ्योऽपगच्छति सर्वत्र च चित्तं वैषम्यं न गृह्णाति चित्तदोषादेव विषये वैषम्यं स्फुरति अन्यथा एकस्मिन्नेव विषये क्रमाद्रागद्वेषौ न भवेतां ब्रह्मरसस्पृष्टं सर्वत्र ब्रह्मस्थितामिति सममेव गृह्णाति अनेन ब्रह्मभावस्तस्योक्तः ततो मुख्यां भक्तिमाह । भगवद्भक्तियुक्तेनेति । यावान्यश्चास्मि यादृश इति ज्ञानसहितां प्रेमलक्षणा भक्तिरुत्पन्ना भगवच्छब्दाच्च विषयपरिज्ञानलक्षणं ज्ञानमायाति ततः भगवत्संबन्धिनीं गतिं प्राप्तवान् यया गत्या भगवान् गच्छति भगवति वा गतिर्भगवद्भावं सायुज्यं वा प्राप्तवानित्यर्थः ॥ ४७ ॥

इति श्रीद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्वल्लभाचार्यकृतसुबोधिन्याम् चतुर्विंशाध्यायविवरणम् ॥२४॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ततश्च तस्य भगवत्साक्षात्कारोऽभूदित्याह । आत्मानं सर्व्वान्तर्यामिणं तृतीयपुरुषं क्षीरोदशायिनमित्यर्थः भगवन्तं तमेव स्वेच्छदेवं शुक्लं चतुर्भुजमपश्यत् तथा आत्मनि प्रकृत्यन्तर्यामिणि प्रथमपुरुषे कारणार्णवशायिनि सर्व्वभूतानि तदीयरोमकूपगतशतकोटिब्रह्माण्डस्थानि योगजनेत्रेणात्रैव स्थित्वा अपश्यत् तेन द्वितीयस्कन्धोक्तात् क्रममुक्तयोगिनः सकाशात् अस्य उत्कर्ष उक्तः सहि ब्रह्माण्डस्थसर्व्ववस्तुदिदृक्षुस्तत्र तत्र स्थूलदेहं त्यक्त्वा गच्छति अयं त्वत्रैव स्थित्वा सर्व्वब्रह्माण्डबहिः कारणार्णवशायिनं तद्रोमकूपेषु सर्व्वभूतान्यपि निष्काम एवापश्यत् भगवत्यपि चेति तमेवात्मानं स्वेच्छदेवं शुक्लं भगवन्तमपश्यत् । तस्मिन्नपि सर्व्वभूतानि श्रीकृष्णो यशोदेवापश्यदित्यैश्वर्य्योपासके श्रीकर्दमे तादृगैश्वर्य्यदर्शनमुचितमेवेति ज्ञेयम् ॥ ४६ ॥

सर्व्वत्र जगति हेयत्वादिच्छाद्वेषविहीनेन तस्मादेव हेतोः समचेतसा कर्दमेन भागवती भगवत्पार्षदत्वलक्षणा गतिः प्राप्ता भागवतीं गतिं प्राप्त इति पाठे समचेतसा युक्तः कर्दमः ॥ ४७ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
चतुर्विंशस्तृतीयस्य सङ्गतः सङ्गतः सताम् ॥ २४ ॥

---

१ अत्रैतत्पाठे श्लोकयोर्व्यत्ययस्तस्मादत्रैतद्व्याख्यास्ति

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

आत्मानं सर्वाश्रयं भगवन्तं सर्वभूतेषु एवं भूतानि भगवति च यः अपश्यत् ॥ ४६ ॥

स भागवतीं गतिमर्चिरादिगतिं प्राप्तः अर्चिरादिमार्गेण भगवद्भावापत्तिरूपां मुक्तिं प्राप्त इत्यर्थः ॥ ४७ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
चतुर्विंशाध्यायार्थप्रकाशः ॥ २४ ॥

भाषाटीका

भगवान् आत्मा को सर्वत्र स्थित देखने लगे तैसे ही सब भूतोंको भगवान् आत्मा के विषय देखने लगे ॥ ४६ ॥

इच्छा द्वेषसे हीन सर्वत्र समान भगवद्भक्तियुक्त चित्त होनेसे भागवती गति को प्राप्त हो गये ॥ ४७ ॥

इति श्रीभागवत तृतीयस्कन्ध चौबीसमा अध्यायका
भाषानुवाद लक्ष्मणाचार्य कृत समाप्त ॥ २४ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे चतुर्विंशोऽध्यायः समाप्तः ॥ २४ ॥

## पञ्चविंशोऽध्यायः ।

—(:०:)—

शौनक उवाच ।

कपिलस्तत्त्वसंख्याता भगवानात्ममायया ।
जातः स्वयमजः साक्षादात्मप्रज्ञप्तये नृणाम् ॥ १ ॥
नह्यस्य वर्ष्मणः पुंसां वरिम्णः सर्वयोगिनाम् ।
विश्रुतौ श्रुतदेवस्य भूरि तृप्यन्ति मेऽसवः ॥ २ ॥
यद्यद्विधत्ते भगवान् स्वच्छन्दात्माऽऽत्ममायया ।
तानि मे श्रद्दधानस्य कीर्तन्यान्यनुकीर्तय ॥ ३ ॥

सूत उवाच ।

द्वैपायनसखस्त्वेवं मैत्रेयो भगवांस्तथा ।
प्राहेदं विदुरं प्रीत आन्वीक्षिक्यां प्रचोदितः ॥ ४ ॥

मैत्रेय उवाच ।

पितरि प्रस्थिते ऽरण्यं मातुः प्रियचिकीर्षया ।
तस्मिन्बिन्दुसरेऽवात्सीद्भगवान् कपिलः किल ॥ ५ ॥
तमासीनमकर्माणं तत्त्वमार्गाग्रदर्शनम् ।
स्वसुतं देवहूत्याह धातुः संस्मरती वचः ॥ ६ ॥

देवहूतिरुवाच ।

निर्विण्णा नितरां भूमन्नसदिन्द्रियतर्षणात् ।
येन सम्भाव्यमानेन प्रपन्नान्धं तमः प्रभो ! ॥ ७ ॥
तस्य त्वं तमसोऽन्धस्य दुष्पारस्याद्य पारगम् ।
सच्चक्षुर्जन्मनामन्ते लब्धं मे त्वदनुग्रहात् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

पञ्चविंशे जनन्या तु पृष्टो बन्धविमोचनम् ।
आदावाह परं भक्तिलक्षणं कपिलः सुतः ॥ १॥
कपिलेनार्पिता मात्रे गूढभावनियन्त्रिता ।
योगमाणिक्यमञ्जूषा स्फुटमुद्घाट्यते ऽधुना ॥ २ ॥

उक्तानुवादपूर्वकं कपिलं योगं पृच्छति । कपिल इति त्रिभिः । तत्त्वानां सङ्ख्याता गणकः साङ्ख्यप्रवर्तक इत्यर्थः अत एव स्वयं जातः आत्मप्रज्ञप्तये आत्मतत्त्वज्ञापनाय ॥ १ ॥

पुंसां मध्ये वर्ष्मणो वृद्धस्योत्तमस्येत्यर्थः सर्वयोगिनां मध्ये वरिम्णः वरस्य भावो वरिमा मत्वर्थीयलोपप्रधानोऽयं निर्देशः वरिष्ठस्येत्यर्थः यद्वा वरीयस्त्वादित्यर्थः विश्रुतौ कीर्तौ असव इन्द्रियाणि भूर्यलं न तृप्यन्ति श्रुतेन श्रवणेन दीव्यति द्योतत इति तथा तस्य यद्वा भूरि बहुशः श्रुतो देवो येन तस्यापि मेऽसव इति सम्बन्धः ॥ २ ॥

स्वानां पुंसां छन्देनेच्छया आत्मा देहो यस्य सः यद्यत्कर्म विधत्ते तानि कर्माणि कीर्तनार्हाण्यनुकीर्तय ॥ ३ ॥

यथा त्वं मां प्रचोदयस्येवं प्रचोदितः सन् तथा तत्प्रश्नानुसारेण आन्वीक्षिक्यामात्मविद्यायाम् ॥ ४ ॥

बिन्दुसरे बिन्दुसरसि ॥ ५ ॥

तत्त्वमार्गस्याग्रं पारं दर्शयतीति तथा तम् "एष मानवि ते गर्भं प्रविष्टः कैटभार्दन" इत्यादि धातुर्वचः ॥ ६ ॥

असतामिन्द्रियाणां तर्षणाद्विषयाभिलाषान्निर्विण्णा श्रान्ताऽस्मि येन सम्भाव्यमानेन पूर्यमाणेन ॥ ७ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

पारं गमयतीति पारगं त्वमेव श्रेष्ठं चक्षुर्मे मया लब्धम् त्वदनुग्रहाज्जन्मनामन्ते भाग्ये सति ॥ ८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

परं साध्यं योगाः भक्तियोगाष्टाङ्गयोगसाङ्ख्यरूपा उपायास्त एव माणिक्यानि तेषां मञ्जूषा निधानपेटिका गूढाभिप्रायलक्षणौडॉरकैस्संवद्धा मात्रे अर्पितेदानीं स्फुटं यथा स्यात्तथा मया तत्कृपयोद्घाट्यते तदन्तर्गतमाणिक्यानि निःसार्य्य दर्श्यन्ते आत्ममायया स्वस्य भक्तविषयककृपया"मायादम्भे कृपायां च"इति विश्वप्रकाशः॥१

निर्द्देशो द्विविधः भावप्रधानो भवितृप्रधानश्च तत्र प्रकृतिजन्यबोधे प्रकारीभूतोऽर्थो भावः प्रकृतिर्हि भवितेति ज्ञेयम् तथाच धर्मितात्पर्य्यको निर्द्देश इति फलितोऽर्थः अत एव इत्ययं इत्युक्तम् किन्त्वस्यार्थस्य लाक्षणिकत्वान्मुख्यार्थं वक्तुं यद्वेति । यद्यपि श्रोत्रमात्रस्यात्रापेक्षा तथापि श्रोत्रद्वारा तदीयरूपरसादीनामपि तत्तदिन्द्रियेषु स्फूर्त्तिस्स्यादिति बहुत्वनिर्द्देशः अलं न तृप्यतीत्युक्तेः किञ्चित्तृप्यतीत्यपि प्रतीतिस्स्यादित्यरुचौ यद्वेति । तथा च पुष्टार्थत्वाद्भूरीतिपदं नाधिकमिति पूर्वतः स्वारस्यम् ॥ २ ॥

आत्ममायया स्वरूपशक्त्या ॥ ३ ॥

एवं श्रीकृष्णतात्पर्य्यरीत्या ॥ ४—५ ॥

अकर्माणम् । जीववत्कर्मलेपशून्यम् । स्वसुतमिति । ऐश्वर्य्यदर्शनेऽपि वात्सल्यातिशयो दर्शितः ॥ ६ ॥

अत्र देवहूतिरुवाचेति क्वचित्पाठोऽनवहितश्रोत्रवधापनार्थम् येन विषयाभिलाषेण पूर्य्यमाणेन न त्विदानीमपि पूर्त्तेन ॥ ७ ॥

तस्यापूर्य्यमाणविषयाभिलाषसञ्जातस्य तमसो मोहस्य त्वमेव त्वद्रूपम् ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमाकर्णितमनुतदपत्यचरित्रः शौनकः कपिलोक्तसाङ्ख्यशुश्रूषुरुक्तानुवादपूर्वकं पृच्छति त्रिभिः । कपिल इत्यादिना । ननु शारीरकमीमांसायाम्"ईक्षतेर्नाशब्दम् । रचनानुपपत्तेश्च नानुमानम् । विप्रतिषेधाच्चासमञ्जसम्,,इत्यादिष्वब्रह्मात्मकप्रधानोपादानकारणत्वस्यानुपपत्तिपरस्परविरुद्धार्थत्वादिभिर्दूषितं सांख्यं केवलब्रह्मस्वरूपरूपगुणविभूतिनदुपासनताद्विरोधितत्प्राप्त्यादिप्रतिपादकवेदान्तायोपबृंहणपरेऽस्मिन्स्वकर्तृके पुराणे कथं भगवता बादरायणेन निवेशितम् उच्यते दूषितांशपरिहारेण तदुक्तवैदिकपरिगृहीतसत्कार्यवादादिपरिग्रहेण च कापिलमपि मतं शिक्षयितुं तदेवमतं समीचीनन्यायोपपन्नं कर्तुं च तदुक्तज्ञानयोगस्य भगवद्भक्तियोगाङ्गत्वकथनायात्र निवेशितमत एव शारीरकाविरुद्धार्थाः कापिलोक्ता अत्र न निवेशिताः कथं पुनर्भगवदवतारूपेण कपिलेन वैदिकापरिगृहीताब्रह्मात्मकप्रधानकारणत्ववादिवादाः परिगृहीता इति चेत्तस्य विशिष्टभगवच्छक्तित्वेऽपि स्वस्य चेत्रज्ञत्वेन स्वाज्ञानमूलत्वाद्वेदाविरुद्धार्थपरिग्रहस्य यथा हिरण्यगर्भस्य भगवदवतारत्वेऽपि चेत्रज्ञस्वाज्ञानमूला योग-

स्मृतिस्तेन रचिता तथैवेदमपीति ज्ञेयम् अजः कर्मायत्तजन्मरहितः भगवानात्ममायया स्वयं स्वसङ्कल्पेन नृणामात्मप्रज्ञप्तये आत्मपरमात्मयाथात्म्यविशदीकरणाय तत्त्वसङ्ख्याता तत्त्वत्रयप्रकथकः कपिलः जातः अवतीर्णः ॥ १ ॥

पुंसां वर्ष्मणः श्रेष्ठस्य सर्वयोगिनां वरिष्ठस्य वरिष्ठस्यास्य कपिलस्य विश्रुतौ कीर्त्यौ कीर्त्तिश्रवणे इत्यर्थः श्रुतो देवः कपिलो येन तस्य ममासवः इन्द्रियाणि भूरि भृशं न तृप्यन्ति ॥ २ ॥

स्वच्छन्दात्मा स्वेच्छोपात्तशरीरो भगवान् कपिलः आत्ममायया आत्मीयसङ्कल्पेन यद्यच्चरितं विधत्ते करोति अकरोदित्यर्थः तानि कीर्तनीयानि चरितानि श्रद्दधानस्य शुश्रूषात्वरान्वितस्य मे मह्यं कीर्त्तय ॥ ३ ॥

एवमापृष्टः सूतो विदुरेणैवमेव पृष्टो मैत्रेय उक्तवानित्याह । द्वैपायनसखः द्वैपायनस्य सखा भगवान्मैत्रेय एवमान्वीक्षिक्यां तत्त्वनिरूपणे प्रचोदितः प्रवर्त्तितः विदुरं प्राह उवाच ॥ ४ ॥

उक्तिमेवाह । पितरीत्यादिना पितरि कर्दमे अरण्यं प्रति प्रस्थिते गते सति भगवान्कपिलः मातुर्देवहूत्याः प्रियं कर्त्तुमिच्छया तस्मिन्नेव बिन्दुसरस्तीरेऽवात्सीदुषितवान् ॥ ५ ॥

आसीनमुपविष्टं तत्त्वमार्गस्याग्रं पारं पश्यतीति तं स्वसुतं कपिलं देवहूतिः धातुर्वचः "एष मानवि ! ते गर्भे प्रविष्टः कैटभार्दनः । अविद्यासंशयग्रन्थिं छित्वा गां विचरिष्यति"इति ब्रह्मवाक्यं छेत्ता ते हृदयग्रन्थिमौदर्यो ब्रह्मभावन इति कर्दमवाक्यं वा संस्मरन्त्याह ॥ ६ ॥

तदेवाह । हे भूमन्नसतां प्रकृतिपरिणामरूपाणामिन्द्रियाणां तर्पणात् नितरां भृशं निर्विण्णा खिन्ना इन्द्रियतर्पणान्मोदेनैव भवितव्यं कथं निर्वेद उदित इत्यत्राह हे प्रभो ! सम्भाव्यमानेन सम्पाद्यमानेन येनेन्द्रियतर्पणेनान्धमन्धयतीत्यन्धन्तमः अज्ञानं प्रविष्टास्मि ॥ ७ ॥

दुष्पारस्यापारस्य तस्यान्धस्य तमसः पारं गमयतीति पारगं त्वमेव श्रेष्ठं चक्षुः मे मया जन्मनामन्ते बहुजन्मान्ते त्वत्प्रसादाल्लब्धम्॥८॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आत्यन्तिकभक्तियोगस्य हरौ मनोयोगप्रकारस्य भक्त्यधिकारिणस्तत्साधनस्य च प्रतिपादनायास्याध्यायस्य प्रारम्भः । अत्रादौ कपिलदेवहूतीसंलापसंहितां श्रोतुकामः परीक्षिच्छुतमनूद्य प्रश्नस्य वक्तव्यशेषं प्रार्थयत इत्याह । कपिल इति । "अजा विष्णुहरच्छागा" इत्यभिधानात्कोऽजाभिधीयत इति संशयनिरासाय साक्षादिति विशेषणं "साक्षात्प्रत्यक्षतुल्ययोः" इत्यतस्तुल्योऽजः श्रीनारायणः स्वयमावेशं विनात्ममायया स्वेच्छयैव नृणामात्मप्रज्ञप्तये स्वस्वरूपज्ञानाय तदर्थं तत्त्वसङ्ख्याता अव्यक्तादितत्त्वविषयं सम्यक् ज्ञानं करिष्यन् कपिलनामा जात इति भवतोक्तं श्रुतं चेति शेषः ॥ १ ॥

श्रीनारायणसच्चरितश्रवणादौ प्रवर्तमानस्याशनादीच्छारहितस्यापि लोकस्य चित्तनिरोधेनालं बुद्धिर्जायते न मम तथा प्रत्युत रसायनसेविन इवाशनादिभोगरहितस्यापि इन्द्रियाणि हृष्यन्तीत्याह । अर्हस्येति । निवृत्तिलक्षणमोक्षधर्मा एषां स्वरूपभूताः सन्तीति धर्मिणस्तेषां पुंसामर्हस्य संमान्यस्य "अर्हतौ

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

जिनसंमान्यैः" इत्यभिधानं सनकादिसर्वयोगिनां गरिम्णः गुरुतमस्य शास्त्रेण श्रुता देवाः क्रीडादिगुणाः श्रीनारायणस्य विद्यमाना यस्य स श्रुतदेवस्य तस्य कपिलनाम्नो हरेर्महिम्नो विश्रुतौ विशेषेण श्रवणे मे असव इन्द्रियाणि भूरि तृप्यन्ति परमानन्दं प्राप्नुवन्तीत्यन्वयः ॥ २ ॥

इदं चेच्छ्रुतं प्रथमतः परं किं नु प्रार्थ्यते इत्यत्राह । यदिति । स्वच्छन्दः स्वतन्त्र आत्मा मनो यस्य स तथा भागवतानां कीर्तन्यानि नित्यं कीर्तनीयानि ॥ ३ ॥

तत्र शुको विदुरमैत्रेयसम्वादेन राज्ञः प्रश्नं परिहरतीत्याह । द्वैपायनसखस्त्वेति । यथाहं त्वया आन्वीक्षिक्यां तत्त्वविद्याविषये प्रचोदितस्तथा विदुरेणापि पृष्टो मैत्रेयो मया वक्ष्यमाणमर्थं प्राहेत्यन्वयः ॥ ४ ॥

कोऽयमर्थं इति तत्राह । पितरीति ॥ ५ ॥

तत्र देवहूतिरयमवसर इति मत्वा कपिलं वक्तीत्याह । तमासीनमिति । आसीनमकर्माणमिति विशेषणद्वयेन सर्वदा निश्चलबुद्धिः सा च स्वतस्तथापि लोकदृष्ट्यापि तथेति सूचयति आसीनमित्यनेनाकर्मत्वे सिद्धे पुनस्तद्वचनं कण्डूयनादिविधिर्नास्तीति सूचनेन हरेः सच्चिदानन्दाद्यात्मत्वं विज्ञायते एवंविधस्य हरेः स्ववक्तव्यत्वे विज्ञानमस्तीति किं वक्तव्यमिति भावेनाह । तस्त्वेति । स्वसुतमिति सिद्धमास्तत्वं धातुः संस्मरती वच इत्यनेन च पोष्यते ॥ ६ ॥

श्रोतव्यार्थेऽस्यास्तात्पर्यमस्तत्युपोद्घातं रचयतीत्याह । निर्विण्णेति । भूमन् ! स्वतः पूर्णं असतामसज्जनानामिन्द्रियाणां तर्पणादतितरां निर्विण्णा विरक्ता विषयेष्विति शेषः असत्त्वं कथमत्राह । येनेति । सम्भाव्यमानेन साल्यमानेन येनेन्द्रियप्रीणनेनान्धं तमस्तत्त्वाज्ञानं प्रपन्नेत्यन्वयः अनेनाधिकारिगुणो विद्वत्तार्थितेति दर्शिताचिति ज्ञायते ॥ ७ ॥

आत्मनो विद्वत्तां स्फोरयति । तस्येति । अतीतानामनेकेषां जन्मनामन्ते चरमक्षणे जन्मनि तस्य दुष्पारस्य दूरीकृततीरान्तरस्यान्धस्य तमसः पारं गमयन्तीति पारगं १ त्वंनाम सच्चक्षुस्त्वदनुग्रहान्मया लब्धमित्यन्वयः एतत्सन्निकृष्टं न दूरस्यमित्यर्थः अनेन प्रोक्तार्थग्रहणे सामर्थ्यगुणोऽप्यसूचि प्राचीनचीर्णपुण्यनिचयेन चक्षुर्लाभात् ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स्वयमजोऽपि भक्तविषयया यत्कृपा तया साक्षाज्जातः प्रकटो बभूव ॥ १ ॥

उरोर्भावः वरिमा धर्मितात्पर्यकः श्रोत्रमात्रावेशे वक्तव्ये असवो न तृप्यन्ति इति बहुत्वश्चक्षुरादीनामपि तद्वक्तर्यावेशत्वात् यद्वा श्रोत्रद्वारा तादृशभगवद्रूपादीनामपि स्फूर्तेः श्रोत्रस्यैव चक्षुरादिमयत्वं निर्दिष्टम् ॥ २ ॥

तस्मात् यद्यदिति यदेतद्यान्यदित्यर्थः आत्ममायया स्वरूपशक्त्या भगवान् श्रीकृष्णः ॥ ३ ॥

द्वैपायनेति । एवं श्रीकृष्णतात्पर्यरीत्या ॥ ४-५ ॥

स्वसुतमिति । ऐश्वर्यदर्शनेऽपि स्नेहातिशयो व्यञ्जितः ॥ ६ ॥

निर्विण्णेत्यस्य प्राक् देवहूतिरुवाचेति क्वचित् ॥ ७ ॥

सच्चक्षुर्न साधारणं किन्त्वनन्यापेक्षं सर्वप्रकाशकत्वात् सूर्य इव ॥ ८ ॥ ९ ॥ १० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

उक्तश्चतुर्भिरध्यायैः सप्रसङ्गो हरेर्भवः ।
ज्ञानरूपं चरित्रं तु नवभिस्तस्य वर्ण्यते ॥ १ ॥
प्रकाराः सगुणाः सर्वे नवाध्यायास्ततोऽत्र हि ।
नव भावं गता सापि तदन्ते त्वभवो भवेत् ॥ २ ॥
भगवद्रूपनिष्पत्तौ भक्तिर्भूतानि सर्वथा ।
मात्रास्तत्त्वानि सर्वाणि भुङ्क्ते सर्वं यतो हरिः ॥ ३ ॥
आत्मा तस्येन्द्रियं प्रोक्तं येन सर्वं स पश्यति ।
योग एव हरेर्बुद्धिस्तस्मात्सर्वं प्रकाशते ॥ ४ ॥
पञ्चविंशे तथाध्याये भक्तियोगो निरूप्यते ।
वैतृष्ण्यं तस्य चाङ्गं हि इतरज्ञानमेव च ॥ ५ ॥
परमं साधनं भक्तिर्यथा भवति मुक्तये ।
तथा शास्त्रस्य कथनं सन्तो भक्तेश्च साधकाः ॥ ६ ॥
वंश एव मनोः पृष्टस्तेन ज्ञानं न वर्ण्यते ।
अतः शौनकसंप्रश्नश्चरित्रत्वं च बुध्यते ॥ ७ ॥

पूर्वाध्याये कपिलोत्पत्तिर्निरूपिता तस्य चरित्रं ज्ञानरूपं न निरूपितमिति शौनकस्तत्पृच्छति । कपिल इति त्रिभिः । कपिल इति

चरित्रकथनप्रश्नस्तत्रातृप्तिस्तथात्मनः ।
सामान्यतोऽप्यतृप्तिश्च प्रकृतौ साधिका मता ।

प्रथमं चरित्रं पृच्छति । तत्त्वसङ्ख्याता तत्त्वसङ्ख्यानकर्त्ता तत्त्वानां संदिग्धत्वान्नान्यो वक्तुमिहार्हतीति भगवान् ज्ञानस्य स्वगुणत्वात् स्वावतारव्यतिरेकेण न प्रकटं भवतीति स्वात्ममायया सर्वभवनसामर्थ्येन कपिलरूपेण जातः आविर्भूतः साक्षात् स्वयमजोऽपि सन् स्वसजातीयत्वेनापरिज्ञाते लोको न मन्यत इति नृणामात्मप्रज्ञप्तये आत्मनः सम्यक् ज्ञानाय स्वयं मनुष्यरूपेण जात इत्यर्थः अनेन तेन जीवानामात्मज्ञानार्थं किञ्चित् कृतवानिति निश्चितं तद्वक्तव्यमित्यर्थः ॥ १ ॥

उक्तमुपपत्त्या साधयति । नह्यस्येति । पुंसां वर्ष्मणः श्रेष्ठस्य सर्वयोगिनां वरिम्णः वरेण्यस्य विश्रुतौ कीर्तौ निरन्तरं श्रूयमाणायामपि श्रुताद्येव देवः प्रकाशते श्रुतेन दीव्यतीति वा कीर्त्तिप्रियस्य कीर्त्तिगम्यस्य वा मे असवः प्राणाः भूरि न तृप्यन्ति अतः सामान्यतो वर्णितमपि विशेषाकारेण वर्णनीयमिति भावः ॥ २ ॥

सामान्यतः सर्वमेव भगवच्चरित्रं पृच्छति । यद्यद्विधत्त इति । स्वानां भक्तानां छन्द इच्छा तदनुसारी आत्मा यस्य चरित्रकरणेऽपि स्वात्ममायाकरणं यद्यदिति ज्ञानक्रियादिविशेषो नापेक्षितः तानि सर्वाण्येव सर्वथा कीर्त्तनीयानीति कथने तवावश्यकानि श्रद्दधानस्येति श्रवणे ममावश्यकानि मच्छ्रद्धाणि तव कथने हेतुः ॥ ३ ॥

यथा शौनकः पृच्छति तथैव विदुरः पृष्टवानिति वदन् मैत्रेयद्वारैव तच्चरित्रं कथयति । द्वैपायनसख इति । आन्वीक्षिक्यां विदुरेण प्रचोदितो मैत्रेयः विदुरं प्रत्याहेति सम्बन्धः विदुर

---

१ त्वच्चरणम् ।

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रश्ने अवश्यकथनार्थं मैत्रेये धर्मत्रयमाह पितृमित्रत्वात् जगन्मित्रत्वात् भगवत्त्वाच्च विदुरो हि द्वैपायनपुत्रः प्राणी भक्तश्चेति आन्वीक्षिकी आत्मविद्या मननरूपा विधेयेके ॥ ४ ॥

मैत्रेयः देवहूतिकपिलयोः सम्वादं वक्तुं कर्दमगमनानन्तरं कपिलस्तत्रैव स्थित इत्याह । पितरीति । महतां गृहे स्थितिः पित्रोरर्थं इति ज्ञापयितुं पितरि अरण्यं प्रस्थिते सति मातुः प्रियचिकीर्षया तस्मिन्नेव बिन्दुसरे अवात्सीत् बिन्दुः सरसि यस्मिन्निति टच् समासान्तः वासमेव कृतवान् जिज्ञासानन्तरमेव वक्तव्यमिति क्षुधितायैव ह्यन्नदानं भाव्यर्थज्ञानार्थं भगवानिति कपिल इति तदर्थमेवावतारः सूचितः किलेति भगवतः सापेक्षतया क्वचिदपि स्थितिरयुक्तेति किलेति प्रसिद्ध्या स्वदोषो निवारितः ॥ ५ ॥

तदा देवहूतिर्भर्त्तरि निर्गते उत्कटशोकापगमनानन्तरं तं पुत्रमासीनमाहेति सम्बन्धः प्रसिद्धिर्ज्ञानोपदेशसमर्थेन आसीनामित्यव्ययत्वाय अकर्माणमिति तपोयोगादिरूपं कस्मिन्नपि कर्मण्यप्रवृत्तमन्यथा तादृशे प्रश्नो न युक्तः प्रश्ने योग्यं रूपमाह । तत्त्वग्रामस्याग्रं पर्यवसानं तस्य दर्शनं यस्य स्वसुतमिति विश्वासो निर्भयत्वं दोषाभावश्चोक्तः भक्तो यद्यप्युक्तं तथाप्याश्वासनार्थमपि तत् भवतीति ब्रह्मोक्तमेव प्रमाणीकरोति । धातुः संस्मरती वच इति । स हि विधाता सर्वेषां पितृस्थानीय इति न तत्र कश्चिद्धेतुः सम्भवति "एष मानवि ! ते गर्भम्,, इति वचः ॥ ६ ॥

तस्याः प्रार्थनां वक्तुं स्वस्य प्रश्नकर्तृत्वं तस्य चोत्तरदानार्थमेवावतीर्णत्वं समर्थयन्ती भगवन्तं स्तौति त्रिभिः । तत्र प्रथमं स्वस्य वैराग्यमाह । निर्विण्णेति । भूमन्निति सर्वसामर्थ्यं सूचितं असदिन्द्रियतर्पणादहं निर्विण्णा इन्द्रियाणि स्वार्थे नोपयुज्यन्ते सर्वात्मको भगवानिति यदि भगवद्बुद्ध्यापि पोष्यन्ते तदाप्येते स्वगुणं कुर्वन्त्येव असत्त्वात् सत्स्वेव भगवद्भजनमिति हि सिद्धान्तः अत एवासत्सु अपरिचितभगवच्चरणाः सेवां न कुर्यात् अनभिव्यक्ते भगवति आश्रयधर्माणां बलिष्ठत्वादत आह । असदिन्द्रियतर्पणात् निर्विण्णा निर्वेदे कारणमिन्द्रियकृतमपराधमाह । येनेति । येन इन्द्रियतर्पणेन निरन्तरं सम्भाव्यमानेन सम्भावना आदरपूर्वकं तत्पूरणमसतां कार्यपोषकनाशनमिति अन्धंतमो महामोहं प्रविष्टा प्रभो ! इति क्रोशनं यथान्यैः पीडितः प्रभोः स्थाने आक्रोशनं करोति ॥ ७ ॥

त्वं त्वेतदर्थमेवावतीर्ण इत्याह । तस्येति । इन्द्रियादिभिः कृतस्यान्धतमसः देशतः कालतश्चापरिच्छिन्नस्यालौकिकसामर्थ्येन यच्चक्षुः तस्य पारं गच्छति तदेव भवान् बहूनां जन्मनामन्ते मे मया लब्धं तत्रापि कारणं त्वदनुग्रह एव ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ॥

मात्रा पृष्टः पञ्चविंशे कपिलो भक्तिमाह ताम् ।
तल्लक्षणं तत्प्रभावं तदुत्कर्षञ्च सर्वतः ॥

तत्त्वसंख्याता तत्त्वसङ्ख्यानकर्त्ता साङ्ख्यप्रवर्त्तकः स्वयमजस्तदपि आत्ममायया जातः अतर्क्ययोगमायाशक्त्या प्रादुर्भाविताप्राकृतजन्मलील इत्यर्थः । "जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वत,, इति भगवदुक्तेर्भगवज्जन्मनो मायिकत्वस्य व्याख्यातुमशक्यत्वात् ॥ १ ॥

पुंसां क्षीरोदशायिप्रभृतिपुरुषाणां तथा सर्वयोगिनां दत्तात्रेयादीनाञ्च मध्ये अस्य वर्ष्मणः कपिलाकारस्य देहस्य यो वरिमा श्रेष्ठत्वं तस्य विश्रुतौ ख्यातौ मे असवः प्राणाः श्रवणादीन्द्रियाणि वा भूरि अलं न तृप्यन्ति मम कीदृशस्य श्रुतेन श्रवणेन दीव्यति द्योतत इति तथा तस्य भूरि बहुशः श्रुतो देवो येन तस्यापीति वा ॥ २ ॥

स्वच्छन्दः स्वाधीनो नतु जीववत् कर्माधीनः आत्मा देहो यस्य सः स्वानां छन्देन इच्छया आत्मा देहो देहाविर्भावो यस्येति वा आत्ममायया योगमायया यद्यत् कर्म विधत्ते नतु बहिरङ्गमायया "जन्म कर्म च मे दिव्यम्"इत्युक्तेः यद्यदित्येकत्वेऽपि वीप्सया बाहुल्यात्तानीत्यनेन बहुवचनान्तेन सह सम्बन्धः । कीर्त्तन्यानि कीर्त्तनार्हाणि ॥ ३ ॥

एवमिति । यथा त्वं मां पृच्छसीत्यर्थः आन्वीक्षिक्याम् आत्मविद्यायाम् ॥ ४ ॥

बिन्दुसरसि मातुः प्रियचिकीर्षयेत्यनेन कौमारोचितस्तनपानादिलीलापि ज्ञेया ॥ ५ ॥

तत्त्वमार्गस्याग्रं पारं दर्शयतीति तथा "एष मानवि ! ते गर्भं प्रविष्टः कैटभार्दन" इत्यादिधातुर्वचः ॥ ६ ॥

तर्षणात् विषयाभिलाषात् निर्विण्णा प्राप्ताधिकारा येन तर्पणेन सम्यक् भाव्यमानेन एतावत्कालपर्यन्तं क्रियमाणेन अन्धंतमः संसारम् ॥ ७ ॥

पारगं पारं गमयतीति तत् सच्चक्षुः तमः परिभविष्णुनेत्रम्॥८॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ नवभिरध्यायैः कपिलदेवहूतीसम्वादः परमाद्भुतो वर्ण्यते तत्र तावत्पञ्चविंशे मात्रा पृष्टः श्रीकपिलो मोक्षोपायं परमभक्तिलक्षणं ध्यानं तत्साधनं ज्ञानवैराग्ययुक्तं सत्सङ्गबलभ्यं भक्तियोगं चाहेति वर्ण्यते तत्रादौ कपिलोक्तसिद्धान्तशुश्रूषुः शौनकः पृच्छति । कपिल इति त्रिभिः । आत्ममायया स्वकृपया आत्मप्रज्ञप्तये परमात्मस्वरूपगुणादिज्ञापनाय ॥ १ ॥

अस्य प्रस्तुतस्य कपिलस्य

कपिलो वासुदेवाख्यः साङ्ख्यं तत्त्वं जगाद ह ।
ब्रह्मादिभ्यश्च देवेभ्यो भृग्वादिभ्यस्तथैव च ॥
तथैवासुरये सर्ववेदार्थैरुपबृंहितम् ।
सर्ववेदविरुद्धं च कपिलोऽन्योजगाद ह ॥
साङ्ख्यमासुरये ऽन्यस्मै कुतर्कपरिबृंहितम् ।

इतिपाद्मात् वासुदेवस्य अत एव वर्ष्मणः वृद्धस्य वरिम्णः वरिष्ठस्य श्रुतेन शास्त्रश्रवणेन दीव्यति श्रोतृहृदि प्रकाशते इति स तथा तस्य विश्रुतौ कीर्तौ मे मम सर्वेषां योगिनां भगवज्ज्ञानभक्तियोगसम्पन्नानामितरेषां पुंसां च असवः इन्द्रियाणि भूरि अलं न तृप्यन्ति ॥ २ ॥

स्वच्छन्दात्मा स्ववशोऽपि आत्मसु जीवेषु या माया कृपा तया

य आद्यो भगवान् पुंसामीश्वरो वै भवान्किल ।
लोकस्य तमसान्धस्य चक्षुः सूर्य इवोदितः ॥ ९ ॥
अथ मे देव ! संमोहमपाक्रष्टुं त्वमर्हसि ।
योऽवग्रहोऽहंममेतीत्येतस्मिन्योजितस्त्वया ॥ १० ॥
तं त्वा गताहं शरणं शरण्यं स्वभृत्यसंसारतरोः कुठारम् ।
जिज्ञासयाहं प्रकृतेः पूरुषस्य नमामि सद्धर्मविदां वरिष्ठम् ॥ ११ ॥

॥ मैत्रेय उवाच ॥

इति स्वमातुर्निरवद्यमीप्सितं निशम्य पुंसामपवर्गवर्धनम् ।
धियाभिनन्द्यात्मवतां सतां गतिर्बभाष ईषत्स्मितशोभिताननः ॥ १२ ॥

॥ श्रीभगवानुवाच ॥

योग आध्यात्मिकः पुंसां मतो निःश्रेयसाय मे ।
अत्यन्तोपरतिर्यत्र दुःखस्य च सुखस्य च ॥ १३ ॥
तमिमं ते प्रवक्ष्यामि यमवोचं पुरानघे ! ।
ऋषीणां श्रोतुकामानां योगं सर्वाङ्गनैपुणम् ॥ १४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

यद्यच्चरित्रं विधत्ते तानि चरित्राणि कीर्तन्यानि कीर्तनार्हाणि अनुकीर्तय ॥ ३ ॥

यथा त्वयाहमान्वीक्षिक्यामात्मविद्यायां प्रचोदितः एवं चोदितो विदुरेणेति शेषः इदं वक्ष्यमाणमाह ॥ ४ ॥ ५ ॥

भ्रातुर्ब्रह्मणः ॥ ६ ॥

असतां दुष्टानामिन्द्रियाणां तर्पणाद्विषयलोभात् निर्विण्णा श्रान्तास्मि सम्भाव्यमानेन सम्पाद्यमानेन अन्धंतमः आत्मपरमात्मस्वरूपाज्ञानं प्राप्तास्मि ॥ ७ ॥

पारं गमयतीति तत् ॥ ८ ॥

---

भाषाटीका ।

मनुष्यों को तत्त्व का ज्ञान कराने को तत्त्वों के कथन करने को साक्षात् भगवान् अजन्मा होकर भी अपनी माया से कपिल रूप से अवतीर्ण भये ॥ १ ॥

सवयोगियों में श्रेष्ठ सव पुरुषों में उत्तम पूर्व में सुने हुये देव के श्रवण करने में मेरे प्राण तृप्त नहीं होते हैं ॥२॥

स्वच्छन्द भगवान् आत्ममाया से जो जो कार्य करते हैं वे कार्य सव कीर्तन करने के योग्य हैं मेरे को अति श्रद्धा है मेरे से कीर्तन करो ॥ ३ ॥

सूतजी वोले वेदव्यासजी के सखा भगवान् मैत्रेयजी तिस प्रकार वचन को सुनकर अध्यात्मविद्या में प्रेरित होने से प्रसन्न होकर विदुरजी से वोले ॥ ४ ॥

मैत्रेयजी वोले पिताके जङ्गल को चले जाने पर कपिल भगवान् माता की प्रसन्नता के लिये विन्दु सरोवर में निवास करके रहे ॥ ५ ॥

तत्त्वमार्ग के दिखाने वाले कर्म मार्ग से निवृत्त ऐसे अपने पुत्र कपिलजी को देखकर ब्रह्माजी के वचनको स्मरण करके देवहूतीजी वोलीं ॥ ६ ॥

देवहूतीजी वोलीं हे ब्रह्मन् ! असत् इन्द्रियों के तृप्त करने से मै वहुत खिन्न होगई हूं हे प्रभो ! जिसके कि निरन्तर करने से मै अत्यन्त अज्ञान कूं प्राप्त होगई हूं ॥ ७ ॥

अत्यन्त दुष्पार उस अन्धंतम के पार गमन करने वाले सुन्दर चक्षुरूप आपको मैं वहुत जन्मके अन्तमें आपके अनुग्रह से प्राप्तभई ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्प्रपञ्चयति । स भगवान् भवांश्चक्षूरूप उदितः सूर्यो यथा ॥ ९ ॥

अपाक्रष्टुमपनेतुम् को ऽसौ संमोहस्तमाह । एतस्मिन्देहादौ त्वयैव योजितोऽहंममेत्यवग्रह आग्रहः द्वितीय इति शब्दस्तत्कार्यरागादिग्रहणार्थः ॥ १० ॥

प्रकृतेः पुरुषस्य च जिज्ञासया त्वामहं शरणं गता सती नमामीत्यन्वयः कुठारं छेत्तारम् ॥ ११ ॥

अपवर्गवर्धनं मोक्षे रतिजनकम् ईषत्स्मितेन शोभितमाननं यस्य ॥ १२ ॥

आध्यात्मिक आत्मनिष्ठः यत्र यस्मिन् ॥ १३ ॥ १४ ॥

---

चेतः खल्वस्य बन्धाय मुक्तये चाऽऽत्मनो मतम् ।
गुणेषु सक्तं बन्धाय रतं वा पुंसि मुक्तये ॥ १५ ॥
अहंममाभिमानोत्थैः कामलोभादिभिर्मलैः ।
वीतं यदा मनः शुद्धमदुःखमसुखं समम् ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्र सर्वाङ्गनैपुण्यं चित्तसंयमाधीनमिति दर्शयन्नाह । चेत इति । अस्यात्मनो जीवस्य गुणेषु विषयेषु पुंसि परमेश्वरे वाशब्दस्तुशब्दार्थे ॥ १५ ॥

यथा च चित्तसंयमे पुरुषार्थसिद्धिस्तद्दर्शयति । अहमिति त्रिभिः । मलैर्वीतं विरहितं यदा शुद्धं मनो भवति मनःशुद्धिज्ञापकमाह । अदुःखमिति ॥ १६ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

तत् । चक्षुष्टं चक्षुपस्सापेक्षप्रकाशकत्वादुपमानान्तरं सूर्य्योयथेति । तथा निरपेक्षसर्वप्रकाशकस्त्वमुदितोऽसि ॥ ९ ॥

अथ प्रकाशकत्वात् तत्कार्य्यमहंममकार्य्यम् ॥ १० ॥

तं चक्षूरूपं सर्वप्रकाशकं स्वेषां भक्तानां ये भूत्वा चेतनेनापि भरणीयास्तेषामपि संसारतरोः कुठारं स्वभक्तकर्तृकच्छेदनेऽनन्यसाधनं पुरुषस्य च परमेश्वरस्य तत्र प्रकृतेः जिज्ञासा तत्त्यागेन पुरुषानुमतिस्सम्भवेन्नान्यथेति ॥ ११ ॥

स्वमातुर्वचनं निरवद्यं रागादिदोषखण्डकं साधारणानामेव पुंसां मोक्षे रतिजनकं स्वमात्रे तु मद्भक्त्याख्यं परमसुखमपि दास्यामीति स्मिततात्पर्य्यम् ॥ १२ ॥

तत्र तावत्साधारणजनानां मोक्षमात्रोपायमाह । योग इति । आत्मनिष्ठः परमात्मनिष्ठः यस्मिन् योगे ॥ १३ ॥

सर्वाङ्गेषु यमनियमादिषु भक्तियोगसंयोकृत्वलक्षणं नैपुणं यत्र तत् उर्वङ्गनैपुणमिति सम्बन्धोक्तिसम्मतः पाठः ॥ १४ ॥

रतं रतिमात्रं प्राप्तम् ॥ १५ ॥

अहमितित्रिकम् । पुरुषार्थसिद्धिः परमात्मसाक्षात्कारः तदिति तं प्रकारं सममन्यत्र हेयोपादेयज्ञानरहितम् आत्मानं परमात्मानं निर्भेदं सजातीयादित्रिविधभेदरहितम् सूक्ष्मं दुर्ज्ञेयमित्यर्थः अपरिच्छिन्नं त्रिविधपरिच्छेदशून्यम् उदासीनं सर्वसाक्षिणम् ॥१६—१८॥१९॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेव प्रपञ्चयति । य इति । पुंसां जीवानामीश्वरो नियन्ता आद्यो जगत्कारणभूतो यो भगवान् स एव भवान् तमसा अन्धस्य लोकस्य चक्षुः चक्षुरधिष्ठाता सूर्य इवोदितः यद्वा सूर्य इवेत्येतस्योत्तरत्रान्वयः तदा चक्षूरूप उदितः ॥ ९ ॥

उदितसूर्य इवमे मम सम्मोहमपाकृष्टमपनेतुं हे देव ! त्वमर्हसि कोऽसौ सम्मोहः योऽपाकृष्टव्य इत्यत्राह । अस्मिन् देहेऽहं ममेत्येवं रूपोऽवग्रहोऽभिमानः त्वयैव योजितः स एवेत्यर्थः त्वत्सङ्कल्पादेव उत्पन्नो मोहस्त्वयैव निवर्त्यः यो बन्धकः स एव मोचक इति न्यायादिति भावः ॥ १० ॥

तमुक्तविधं स्वभक्तानां संसार एव तरुस्तस्य कुठारं कर्तुरेव साधकत्वं विवक्षितं सद्धर्मविदां निवृत्तिधर्मविदां वरिष्ठं श्रेष्ठं शरण्यं शरणार्हं त्वामहं प्रकृतेः पुरुषस्य जीवस्येदं परमात्मनोऽप्युपलक्षणं जिज्ञासया ज्ञातुमिच्छया शरणं गता सती नमामि ॥ ११ ॥

एवमुक्तः कपिलस्तामावभाष इत्याह । मैत्रेयः पुंसामपवर्गवर्द्धनं मोक्षरुचिकरं निरवद्यं निर्दुष्टं स्वमातुर्देवहूत्या इप्सितमभिप्रेतमेवं निशम्य श्रुत्वा धिया मनसा भिनद्धात्मवतां निगृहीतमनसां सतां गतिः मुक्त्युपायः कपिलः इत्युत्स्मितेन मन्दहासेन शोभितमाननं मुखं यस्य सः तां मातरमावभाषे ॥ १२ ॥

तत्र ज्ञानकर्मयोगादिभिरनुगृहीतभगवद्भक्तियोगस्यैव साक्षान्मुक्त्युपायत्वमुत्तराध्यायेषु विस्तरेण प्रतिपादयिष्यमाणमत्र सङ्क्षेपेण प्रतिपादयंस्तावज्ज्ञानयोगमवतारयति । योग इति द्वाभ्याम् । आध्यात्मिकः प्रकृतिविविक्तात्मयाथात्म्यज्ञानरूपो योगः पुंसां मुमुक्षूणां निःश्रेयसाय मोक्षाय मे मया मतः ज्ञानयोगो मुमुक्षूणां मोक्षसाधनमिति मन्मतमित्यर्थः आत्मज्ञानयोगं प्रशंसन्नाह । अत्यन्तेति । यत्र यस्मिन् आध्यात्मिके योगे निष्पन्ने सति दुःखस्य सुखस्य च वैषयिकसुखदुःखयोरत्यन्तमुपरतिर्विनाशो भवति ॥ १३ ॥

आत्मयोगं श्रोतुकामानां शुश्रूषूणामृषीणां पूर्वकाले ऽहमवोचमुक्तवानस्मि तमिममात्मयोगमुरुभिर्बहुभिरङ्गैः शमदमादिभिर्नैपुणं यथा भवति तथा ते तुभ्यं प्रवक्ष्यामि ॥ १४ ॥

एवमध्यात्मयोगमवतार्य तत्र प्रकृतिविविक्तात्मस्वरूपग्रहणयोग्यमनसः स्वरूपं कथयिष्यन् तावन्मनस एव बन्धमोक्षकारणत्वमाह । चेत इति । अस्यात्मनो जीवस्य बन्धाय मोक्षाय च चेत एव मतं खलु कारणमितिशेषः कीदृशं बन्धाय मुक्तये च कीदृशमित्यत्राह । गुणेषु गुणकार्येषु शब्दादिविषयेषु सक्तमासक्तं चेतः बन्धाय भवति पुंसीश्वरे रतं वा आसक्तं मुक्तये भवतीति विवेकः ॥ १५ ॥

प्रकृतिविविक्तात्मस्वरूपग्रहणयोग्यमनःस्वरूपमाह । अहमिति त्रिभिः । अहं ममाभिमानाभ्यामनात्मनि देहे आत्माभिमानः अहमभिमानः अस्त्रीये स्त्रीयाभिमानः ममाभिमानः तथाच स्मर्यते ।

अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः ।
अविद्यातरुसम्भूतं बीजमेतद्द्विधा स्थितमिति ॥

आभ्यामभिमानाभ्यामुत्पन्नैः कामलोभादिभिः मलैः कामादिहेतुकैः पुण्यापुण्यरूपैर्मलैर्यदा वीतं रहितमनभिसंहितफलेश्वराराधनरूपतद्वर्णाश्रमोचितैर्धर्मैः कामादिभिरीहितमत एव शुद्धमत एवादुःखमसुखमैन्द्रियिकदुःखैरनभिभूतमत एव समं मदेकरूपं यदा भवति तदा पुरुष उक्तविधमनस्कः पुमान् ज्ञानवैराग्ययुक्तेन ज्ञानम्

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

शास्त्रजन्यमात्मस्वरूपयाथात्म्यावगाहि ज्ञानं वैराग्यं विषयेष्वनासक्तिः ताभ्यां युक्तेन विशेष्यभूतभगवद्भक्तियुक्तेन चात्मना मनसा च प्रकृतेः प्रकृतिकार्यशरीरेन्द्रियमनःप्राणादिभ्यः परं स्वरूपतः स्वभावतश्चात्यन्तविलक्षणमत एव केवलं सत्त्वादिगुणरहितं प्रकृतिपरिणामगतदेवत्वमनुष्यत्वाद्याकाररहितमत एव निरन्तरं प्रतिशरीरं भिन्नत्वेऽपि सर्वत्र ज्ञानैकाकारतया वैषम्यरहितं निर्दोषं हि समं ब्रह्मेति ह्युच्यते अणिमानमणुतरं स्वरूपकथनमिदं ज्ञानस्वरूपत्वस्याप्युपलक्षणमिदम् अणिमत्वादेवाखण्डितं खण्डनानर्हमिदमदाह्यत्वाक्लेद्यत्वादीनामप्युपलक्षणं खण्डनदहनच्छेदनसाधनभूता हि परश्वग्निजलादयः छेद्यं दाह्यं क्लेद्यं प्राप्य च्छेदनादीन्निर्वर्त्तयन्ति आत्मनस्तु निरतिशयाणुत्वेन सर्वान्तःप्रवेशयोग्यतया व्यापकत्वाद्व्याप्यपरश्वधादिसाध्यैश्छेदनादिभिर्नविनाश इत्यर्थः स्वयंज्योतिः स्वयंप्रकाशं दीपादिवदिति दृष्टान्तोऽत्राभिप्रेतः तत्र यथादीपादिस्तेजःस्वरूपं तेजो धर्मकश्च स्वयंप्रकाशस्तद्वदयमात्मापि ज्ञानस्वरूपो ज्ञानगुणकः स्वप्रकाशश्चेति भावः एवंविधमुदासीनं निर्व्यापारमात्मानं प्रत्यागात्मानं हतौजसं संसारयितृत्वरूपबलहीनां प्रकृतिं च पश्यति ॥ १६ ॥ १७ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

न केवलं ममैवैतदनुग्रहायोदितं चक्षुर्मन्निमित्तं लोकस्याप्यनोऽहं पुण्यसागरा इत्याशयेनाह। य आद्य इति। यः पुंसां ब्रह्मादीनां पुरुषाणामाद्यस्तेषामीश्वरः ऐश्वर्यप्रदः भगवानैश्वर्यादिगुणसमुद्रः स वै स एव भवांस्तमसान्धस्य लोकस्य दृष्टिप्रदः सूर्य इवोदितः किल सम्भावितमित्यन्वयः"वार्ता सम्भाव्ययोः किल"इति यादवः ॥ ६ ॥

एवं भगवन्तं स्वामीष्टार्थेऽभिमुखीकृत्य स्वाभिप्रायं विज्ञापयति। अथेति। यथा विहितक्रियाकरणे महता प्रत्यवायेनानर्थरूपनरकप्राप्तिस्तथा ज्ञानस्य ग्राहके त्वादृशे सूर्ये सन्निहिते सति तदग्रहणेऽनुत्थानतमःप्राप्तिः स्यादिति यस्मादथ तस्मात्त्वया य एतस्मिन्देहगेहादावहंममेत्यवग्रहो ज्ञानदृष्टिप्रतिबन्धको मिथ्याभिमानो योजितः पूर्वादृष्टानुसारेणेतिशेषः तं सम्मोहं मिथ्याज्ञानलक्षणं भ्रमं मे विद्यमानमपाकर्तुमुत्कृत्य त्यक्तुमर्हसि तत्त्वज्ञानोपदेशेनेत्यन्वयः ॥ १० ॥

"उपसन्नाय शिष्याय वक्तव्यं ब्रह्मशाश्वतम्"इति वचनादुपसन्नभावात्तव कथमुपदिशामीति शङ्कामाभूदिति भावेनाह। तम्त्वेति। यस्त्वमिह सिद्धिज्ञानोपदेशायावतीर्णस्तं त्वां शरणं गतेत्यन्वः केन हेतुनेत्यत उक्तं जिज्ञासयेति

> नारायणो ब्रह्मवायूवीन्द्रशेषौ हरस्तथा।
> कामः शक्रो गुरुर्दक्षो मन्वाद्या भास्करादयः॥
> सर्वजीवाश्च क्रमशः पुरुषाख्याभिशब्दिताः।
> एतत्पत्न्यो बन्धशक्तिः स्त्रियः सर्वास्तथा जडे॥
> क्रमात्प्रकृतिशब्दोक्तास्तज्ज्ञानाद्विप्रमुच्यते।

इति वचनात्पुरुषस्य नारायणादेः प्रकृतेर्लक्ष्म्यादेश्च विवेकलक्षणतारतम्यजिज्ञासया ज्ञातुकामेन हेतुनेत्यर्थः त्वं च समग्रानुग्रहं कर्तुं समर्थ इत्याशयेनाह। स्वभृत्येति। न केवलमिदम्प्रसादनंवाचिकं किन्तु कायिकं चेत्याह। नमामीति। संसारतरोः कुठारस्य नैशत्याभावे तदुक्तिः स्तोत्रं स्यादित्यत उक्तं सद्धर्मेति ॥ ११ ॥

अत्र मैत्रेयो मात्रा प्रार्थितः कपिलस्तां प्रति वक्तीति विदुरं प्रत्याह। इतीति। ईप्सितं ज्ञातुमिष्टम् अपवर्गस्य संसारविनाशस्य चोदनं सूचकम् ईषद्भाषे स्मितमाह। महतामल्पभाषितं गुणमनेन द्योतयति ॥ १२ ॥

नन्वहं मोक्ष्ये किं पितृवत्प्रव्रजिष्यामि किं चरको भवानीति किं तत्राह। योग इति।"परमात्मादिकं देहे यदध्यात्मकमीरितम्"इति वचनादाध्यात्मिकः देहमधिकृत्य वर्तमानानां परमात्मादितत्त्वानां स्वरूपलक्षणो योगो मया पुंसां निःश्रेयसाय मतो निरूपितो यत्र मोक्षे शरीर (१) भोग्यस्य सुखस्य दुःखस्य साकल्येनोपरतिर्नाशस्तमिमं योगं तव वक्ष्यामीत्यन्वयः ॥ १३॥

आप्तत्वायाह। यमवोचमिति। ऋषीणां ब्रह्मादिज्ञानिनामुरुभिरङ्गैर्यमनियमादिसाधनैर्नैपुणं पाटवगुणोपेतं सुखं नास्ति चेन्मुक्तौ सुखमाप्तवाश्च दुःखमित्याशीः कथं जागर्तीत्याशङ्का चशब्दसूचितया

> सुखं शरीरभोग्यं तु दुःखं सर्वं तथैव च।
> मुक्तौ विलयमायाति नित्यानन्दस्तु भुज्यत

इत्यनया परिहृतेति मुक्तावतः स्वरूपानन्द एवाशास्यते न भौतिक इति सर्वत्र द्रष्टव्यं चैशब्देन स्वरूपानन्दावाप्तिलक्षणं निःश्रेयसं ध्वनयति न स्वर्गादिकं तस्य हेयत्वेनोक्तत्वाद्व्यपमाणत्वाच्च ॥ १४ ॥

प्रतिज्ञातयोगसाफल्यसाधनाय मनोवशीकरणं प्रथमसाधनमित्याह। चेत इति। चिनोति आत्मनि मलमिति चेतो मनः अस्यात्मनो जीवस्य चेतः संसारबन्धाय तस्मान्मुक्तये चात्मनो मम मतमेकस्य कार्यद्वयापादनसामग्री कथमत्राह। गुणेष्विति। शब्दादिगुणेषु सक्तं बन्धाय तेषु गुणेष्वसक्तं मुक्तये ॥ १५ ॥

शब्दादिगुणेष्वसक्तयैवालं किमित्याशङ्क्य विशिनष्टि। अहंममेति। यदात्मनोऽहंममाभिमानोत्थैः कामलोभादिभिर्मलैर्वीतं रहितं शुद्धं चित्स्वरूपं दूरीभूताचिन्मनःसम्पर्कं परतत्त्वानुभवेन बाह्ये शब्दादिसुखे स्नासक्तेरिच्छाभावादसुखमत एव दुःखास्पर्शाददुःखं समं निश्चलं भक्तिरसायनेनैव नित्यानन्दं भवति ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

स्वेषां भक्तानां ये भृत्या वेतनेनापि भरणीयास्तेषामपि संसारतरोः कुठारं भक्तिकर्त्तृकच्छेदनानन्यसाधनं संसारशब्देन चात्र लोभनीयतुच्छकुलकण्टकजालमयतया बन्धकत्वं ज्ञायते प्रकृतेर्मायायाः पुरुषस्य परमेश्वरस्य जिज्ञासयेति प्रकृतौ ज्ञातायां तत्त्यागेन पुरुषानुगतेः सम्भवात् ॥ ११ ॥

इतीति। पुंसां साधारणानामेव अपवर्गवर्द्धनम् अस्यै तु मद्भक्त्याख्यं परमं सुखमपि दास्यामीति स्मिततात्पर्यं यद्वा। तेषामपि अपवर्गाख्यभक्तियोगवर्द्धनं यतः सतां गतिः तत्त्वस्त्वन्येनेति भावः। किमुतास्याः स्वमातुरिति ॥१२॥

(१) अन्तःकरणपरिणतरूपस्य।

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

तत्र प्रथमं तावन्मुक्तिमात्रोपायमाह । योग इति । आध्यात्मिकः परमात्मनिष्ठः ॥ १३ ॥

योगमुर्वङ्गनैपुण्यमिति पाठः सम्बन्धोक्तिसम्मतः सर्वाङ्गेति तु स्वामिलिखितम् ॥ १४ ॥

पुंसि परमात्मनि रतं रतिमात्रं प्राप्तम् ॥ १५ ॥
अहमिति त्रिकम् ॥ १६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

किञ्च साक्षाद्भगवान् भवानित्याह । य आद्य इति । आद्यः पुरुषः सर्वेषां ब्रह्मादीनां पुंसां त्वमेवाद्यः कारणं कारणमेव च ब्रह्म कालादिव्यावृत्त्यर्थमाह । भगवानिति । कवलजनकत्वे ब्रह्मत्वं न सेत्स्यतीति नियामकत्वमप्याह । पुंसामीश्वरो भवानिति । किञ्चेति प्रमाणं किञ्च पालनार्थं भवानवतीर्णश्च यतस्तमसोऽन्धस्य लोकस्य चक्षूरूपः सूर्यरूपश्च भवानुदितः तमसः सकाशादन्धस्य चक्षुः प्रकाशकः सूर्यो भवानिति वा ममापि भवान् चक्षुः लोकानां चक्षुरित्यपौनरुक्त्यमात्मानं प्रति चक्षुष्ट्वं सर्वान् प्रति सूर्यत्वमिति वा ॥ ९ ॥

एवं भगवन्तं स्तुत्वा विज्ञापनामाह । अथेति । हे देव ! मोहनाशक ! मे मोहमपाकर्तुं त्वमर्हसि तवैवात्र सामर्थ्यं यतः त्वयैव अहं ममेत्यस्मिन् शरीरे आग्रहः अवग्रहो योजितः अतः त्वयैव दूरीकर्त्तव्यः ॥ १० ॥

ननु सर्वेष्वेव मया योज्यते न तु दूरीक्रियत इति चेत्तत्राह । तं त्वागता इति । शरणागतस्य तु दूरीक्रियते तं मोहदूरीकरणसमर्थं त्वां दैवात्प्राप्तम् अतोऽहं शरणं गता शरणार्हस्य भवान् ।

> यथा विद्यासु या विद्या यस्य तत्रैव सा भवेत् ।
> शरणागतधर्मोऽपि शरण्ये सोऽपि कश्चन ।
> स्वस्वामी हरिरेवैकः शरण्य इति तद्वचः ।

किञ्च स्वभावतोऽपि भगवान् स्वभृत्यानां संसारं दूरीकरोति शरणागताश्च भृत्यतुल्याः अतः शरणागतौ संसारदूरीकरणं स्वयमेव करिष्यतीत्याह । स्वभृत्यसंसारतरोः कल्पादारभ्य मोक्षपर्यन्तमनुवर्त्तमानस्य अनादिशान्तस्य वा कर्मकालनियतान्तरहितस्य कुठारं छेदकं तस्मिन् संसारे भगवांश्चेत्प्रविशेत्तदा स नश्येत् यथा कुठारे प्रविष्टे स हि भक्तानामेव संसारं प्रविशति नान्यस्य पतिपुत्रादिरूपेण अतः स्वभृत्येत्युक्तं ते हि भरणीयाः कालः कर्म वा तान्न विभर्त्ति अतः संसारप्रवेशः अद्भुतकर्मत्वाच्च छेदकः सम्पद्यते तरोरित्येकवचनं सर्वेषां भक्तानां भगवदीयत्वेन मायाद्वैतादिधर्मवत्त्वात् एक एव संसार इति सूचितं यद्यपि स्वप्रयत्नव्यतिरेकेणैव स्वयमेव करिष्यति अन्तःप्रविष्टः प्रवेशनप्रयत्नश्च नायं तथापि औत्कण्ठ्यात् सर्वतत्त्वपरिज्ञानार्थं यत्नतः क्रियत इत्याह । नमामीति । प्रकृतेः पुरुषस्य च ज्ञानेच्छया गुरुत्वेन त्वां नमामि मातुरपि नमस्कारः उपाधिभेदात् न दोषाय यथा देहस्तत उत्पन्नः पुष्टो वा तथाज्ञानं गतिर्वा यस्मात् उत्पद्यते स सेवकः पुत्रः अन्यो वा नमस्करणीय एव भिन्नोपाधित्वादिति प्रकृतिपुरुषविवेको हि सर्वथा कर्त्तव्यः पुरुष एव सेव्यो न प्रकृतिरिति ज्ञानार्थं गुरोर्लक्षणमाह । सद्धर्मभृतां वरिष्ठमिति सद्धर्मा ब्रह्मधर्माः शमादयः तान् ये बिभ्रति नतु केवलं कदाचित्कुर्वन्ति येषु शमादयो नियता इत्यर्थः तेषां श्रेष्ठः त एव गुरवो भवितुमर्हन्ति किं पुनस्तेषां गुरुः ॥ ११ ॥

एवं युक्तिपूर्वकं मातृवचनं श्रुत्वा पृष्टमात्रस्वरूपे कथिते ज्ञातुं न शक्यत इति सर्वमेव शास्त्रार्थमाहेत्याह । इतीति । स्वमातृत्वाद्गुरुत्वेन तद्वचः आदरणीयं निरवद्यं च तस्यांऽस्तं संसारातीतविषयत्वात् यदर्थमवतीर्णस्तद्वचनमपि एकरूपमेव जातमिति सन्तोषादपि कथनं बोधयति । पुंसामपवर्गवर्द्धनमिति । यद्येकः साधनेन मुच्यते तदान्योऽपि तं दृष्ट्वा साधने प्रवर्त्तत इति अपवर्गं वर्द्धयतीति सुखेनाभिनन्दने कृते स्त्रीत्वात्कदाचिदभिमानमवलम्बेत अतो धियाभिनन्द्य प्रष्टुर्धर्मविचारेण कथनं निरूप्य स्वधर्मविचारेणापि निरूपणमावश्यकमित्याह । आत्मवतां सतां गतिरिति । आत्मवन्तः सकृष्णाः तस्यैव वहिर्ज्ञापकं जितेन्द्रियत्वं सन्तः तद्धर्मवन्तः भगवद्धर्मधर्मिवतां पूर्णसाधनायया गतिः प्राप्यः तेन फलरूपोऽयं तत्साधने सिद्धे प्राप्य इति स्वरूपदानौपयिकं साधनमवश्यं वक्ष्यतीत्युक्तमीषत्स्मितेन शोभितमाननं यस्येति सन्तोषो ज्ञापितः प्रसन्नोक्तमेव हि फलायेति मन्दहासस्यापि मन्दत्वमल्पमोहकत्वं यतः पुत्रत्वं स्थापयति ॥ १२ ॥

सांख्ये परित्यागो नित्य इति तदनुक्त्वा अङ्गत्वेन च तद्वक्ष्यामीति विचार्य योगानुसारेणैव शास्त्रार्थमाह । योग इत्यादि पञ्च दशभिः ।

> योगः प्रशंसारूपेण प्रमाणेनापि वर्ण्यते ।
> चित्तालम्बनरूपो हि योगस्तत्र प्रतिष्ठितः ॥ १ ॥
> अन्तरात्मा स्वयं चित्तमिन्द्रियाणि तथा तनुः ।
> वेदे सांख्ये च योगे च शैवे वैष्णव एव च ॥२॥
> मूलरूपाणि शास्त्राणां नियमार्थं निरूपणात् ।
> आत्मशेषां ह्यहङ्कारः स सांख्ये विनिरूप्यते ॥३॥
> एकीकृत्य मनश्चित्तं योगो ह्यत्र प्रवर्त्तते ।
> ज्ञानक्रियारूपभेदात् शास्त्रार्थे ज्ञानमुख्यता ॥४॥
> अतश्चित्तं पुरस्कृत्य योगमाह हरिः स्वयम् ।
> चित्तस्य रूपभेदश्च यच्च रूपमिहोचितम् ॥५॥
> तादृशस्य फलं चापि साधनानि बहूनि च ।
> तत्राप्येकस्य निर्द्धारस्तस्य साधनमेव च ॥६॥
> तस्यापि विषयः प्रोक्तश्चतुर्भिः षोडशात्मकः ।
> तस्य साधनतारूपं तथा त्वं मोक्षसाधने ॥ ७ ॥
> बालिष्ठात्तु फलं सिद्धेस्तस्मादिति विनिर्णयः ।

आदौ योगप्रशंसामाह। द्वाभ्याम्। तत्र प्रथमं स्वरूपेणोत्कर्षमाह। । योग इति । योगो हि बहुविधः भगवत्साक्षात्कारे य उपयुज्यते स आधिदैविकः आत्मसाक्षात्कारे आध्यात्मिकः आधिभौतिकस्त्रिविधः अणिमादिसाधकः शरीरसाधकः प्राणशोधकश्च आद्यस्तु शास्त्रान्तराङ्गं द्वितीयोऽत्र मुख्यः तमाह । आध्यात्मिक इति । अतः पुंसां निःश्रेयसाय मतः ये स्वरूपं प्रकृतितो भिन्नं ज्ञातवन्तः ते लब्धविषयाः आध्यात्मिकयोगे अधिकारिणः स योगस्तेषां फलं साधयति अतस्तेषां निःश्रेयसाय मतः सम्मतः आध्यात्मिकयो-

### श्रीमद्वल्लभाचार्यकृतसुबोधनी ।

गस्य तथात्वे हेतुमाह । अत्यन्तोपरतिरिति । यत्र योगे दुःखस्य च अत्यन्तमुपरतिः निवृत्तसजातीयस्य पुनरनुत्पादः चकारात्सुखस्य साधनानाम् आत्मातिरिक्तसर्वनिवृत्तिर्यत्रेत्यर्थः ॥ १३ ॥

योगान्तरेभ्यो व्यावर्त्य तमेव तेऽभिधास्यामीत्याह । तमिममिति । अस्यानादित्वमाह । यमवोचमिति । अनघे ! इति निष्पापानामेवायं फलतीति ज्ञापयितुमृषीणां श्रोतुकामानां योगमुखेङ्गैवात्र विश्वासो भवतीति ऋषिग्रहणं श्रोतुकामानामिति तेषामप्यपेक्षितमुखभिरङ्गैर्निपुणता यत्र तदेव स्थिरो भवति ॥ १४ ॥

ननु भगवदिच्छयाज्ञानाद्वा संसारः तत्र योगेन किमित्याशङ्क्य चित्ताधीनः संसार इति शास्त्रार्थं निरूपयति । "योगश्चित्तवृत्तिनिरोध" इति हि योगलक्षणं यदि संसारश्चित्तमूलक एव स्यात्तदा योग उत्पद्यते नान्यथेति चित्तं बन्धमोक्षहेतुत्वेन निरूपयति । चेत इति । खल्विति सर्वलोकप्रसिद्धमनुभवं प्रमाणयति अस्यैकस्यैव बन्धाय मुक्तये च स्वस्यैव चेतो मतं तत्र रूपभेदमाह । गुणेषु सक्तं बन्धायेति गुणेषु विषयेष्वासक्तं रतं वा बन्धाय पुंसि भगवति आसक्तं रतं वा मुक्तये भवति स्वभावत एकरूपमपि करणं स्वधर्मविषयभेदात् बन्धमोक्षौ साधयति ।

चित्तस्वभाव आसक्तिर्यस्त्यक्तुं नैव शक्यते ।
स्नेहोरतिरितिप्रोक्तः संस्काराच्छास्त्रतश्च सः ॥ १५ ॥

लोके विषयोऽनुभवसिद्ध इति तमसाधयित्वा आत्मनि शुद्धेरत्यर्थमनुभवं साधयति । अहम्ममेति त्रिभिः । यादृशं मनः आत्मानं गृह्णाति तादृशत्वसिद्ध्यर्थं साधनान्याह । अहमिति । निर्मलमेव मनः आत्मानं गृह्णाति मलानि च मनसः कामलोभादीनि तानि च देहादावहंममाभिमानात् तैर्यदा वीतं भवतीति साधनानामावृत्तिः सूचिता तानि च साधनान्यग्रे वक्ष्यति "लिङ्गं व्यपोहत्कुशलोऽहमाख्यम्" इति फलं हंसे गुरावित्यादिसाधनानि असङ्कल्पाज्जयेत्काममित्याद्युपायाश्च वक्ष्यन्ते तैरुपायैर्यदा मलानि नश्यन्ति तदा तैर्वीतं मनः शुद्धं भवति शुद्धस्याभिज्ञानम् अदुःखमसुखमिति तस्मिन्मनसि प्रसक्ते वैषयिके सुखदुःखे न स्फुरतः तदेव कथं भवतीत्याशङ्क्याह । सममिति । यदा विषयगतं वैषम्यं न गृह्णाति सर्वत्र ब्रह्मभावनया तदा समं मनो भवति तत एव सुखदुःखेन विगृह्णाति ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

न केवलं ममैव चक्षुरपि तु सर्वस्यैवेत्याह । य इति । सूर्य इव सर्वतमो हन्ता ॥ ९ ॥

अथ अत एव प्रथमं मम सम्मोहान्धकारमपाकृष्य दूरीकर्तुं यः खलु सम्मोहोऽवग्रहः भक्त्यमृतवृष्टेः प्रतिबन्धकः कीदृशः एतस्मिन् देहगेहादावहंममेतीति प्रथम इति शब्दः समाप्तौ द्वितीय इति शब्दः प्रकारे अहं सुखी मम गेहं समृद्धिमदित्येतावत्प्रकार इत्यर्थः त्वन्मायया कल्पितत्वात्त्वयैव योजितः॥१०॥

त्वा त्वां प्रकृतेः पुरुषस्य च जिज्ञासया पुरुषः खलु को यः संसारी प्रकृतिश्च का यतोऽस्य संसार इति ज्ञातुमिच्छया न चात्र कश्चिदन्यः प्रष्टव्य इत्याह । सतां यो धर्मस्तादृशसंसार निवर्त्तकम् निरूपस्तद्विदां मध्ये श्रेष्ठम् ॥ ११ ॥

अपवर्गस्य मोक्षस्य वर्द्धनं वृद्धिः श्लेषेण अपकृष्टवर्गस्य त्रिवर्गस्य छेदनं यतस्तत् आत्मा स कपिल एव सेव्यत्वेन वर्त्तते येषां तेषां सतां भक्तानां गतिः ईषद्विस्मितेति मम परमेश्वरस्य त्वं माता भवसि तवापि कः संसारो भवतु तदपि त्वां लक्ष्यीकृत्य लोकानुद्धर्तुं किमप्युपदिशामीति भावः ॥ १२ ॥

आध्यात्मिकः जीवात्मनिष्ठः योगः निःश्रेयसार्थमुपायः स च भक्तिर्ज्ञानं योगश्चेति त्रिविधो वक्तव्यः तत्र भक्तिपक्षे निःश्रेयसमननुसंहितं फलं ज्ञेयम्। यत्र योगे सति सांसारिकस्य दुःखस्य सुखस्य चोन्मूलनम् ॥ १३ ॥

ऋषीणामृषीनारदादीन् उरुपयश्वानि नैपुण्यानि तदनुष्ठानचातुर्याणि च यत्र तत् ॥ १४ ॥

जीवात्मानं खलु मन एव दुःसङ्गसुसङ्गाभ्यां बध्नाति मोचयति चेत्याह । चेत इति । गुणेषु स्वबन्धनसाधकतमेषु सक्तमासक्तमिति बन्धने न्याय उक्तः पुंसि पुरुषोत्तमे निर्गुणे गुणबन्धध्वंसके रतं रतिमदिति मोचने च न्यायः वाशब्दस्तुशब्दार्थः अत्र श्रीपुरुषोत्तमविषयिण्या रतेः कारणं भक्तिरेव भवेन्न ज्ञानं नापि योगो मोचकत्वेन केवला भक्तिरेव समुचिता ज्ञेया ॥ १५ ॥

ज्ञानयोगयोरपि मोचकत्वं भक्तिसाहाय्येनैवाह । अहमिति त्रिभिः । वीतं रहितं कामादिमलराहित्यञ्च मनसः शमदमादिभिः यमनियमादिभिश्च भवतीति ज्ञानयोगयोरङ्गानि सूचितानि शुद्धेर्ज्ञापकत्वमाह । अदुःखमित्यादि स्यादिति शेषः ॥१६॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

बाह्यतमो निर्नाशकः सूर्य इव आन्तरियतमोघ्नः चक्षुरूपो भवानुदितः ॥ ९ ॥

एतस्मिन् देहे अहमिति गेहादौ ममेति च अवग्रहः आग्रहः यस्त्वया योजितस्तं मे संमोहमपाकृष्य अपनेतुं मोक्षोपायं प्रकाशयितुमिति फलितोऽर्थस्त्वमर्हसि ॥ १० ॥

प्रकृतेः पुरुषस्य जीवात्मपरमात्मभेदाद्द्विविधस्य स्वभृत्यानां संसारतरोः कुठारं छेदकं तं त्वां शरणं गता सती नमामि ॥ ११ ॥

पुंसामपवर्गे मोक्षे वर्द्धनं प्रवर्त्तकम् ॥ १२ ॥

पुंसां निःश्रेयसाय मोक्षाय आध्यात्मिकः आत्मनि परमात्मनि निष्ठा योगः ध्यानयोगः "आत्मा वा अरे द्रष्टव्यो मन्तव्यो निदिध्यासितव्य,, इति श्रुतिप्रोक्तः मे मतः यत्र यस्मिन् योगे सुखस्य प्राकृतस्य ॥ १३ ॥ १४ ॥

पुंसि परमात्मनि अस्य जीवस्य चेतो रतं मुक्तये भवति भगवद्ध्यानेन मुक्तिर्भवतीत्यर्थः ॥ १५ ॥

एवं ध्रुवास्मृतिपरभक्तियोगाद्यपरपर्यायं भगवद्ध्यानं मोक्षसाधारणकारणमुक्त्वाथ तत्साधनानि ज्ञानवैराग्यसाधनरूपभक्त्याख्यानि भक्तेः श्रेष्ठत्वं सर्वेषां ज्ञानादीनां साधकं सत्सङ्गं सतां लक्षणं चाह । अहमित्यादिना । मलैर्यदा वीतं विरहितं शुद्धं भवति तदा पुरुषः आत्मानं स्वयंज्योतिश्च प्रकृतिं च पश्यतीति त्रयाणामन्वयः ॥ १६ ॥

---

तदा पुरुष आत्मानं केवलं प्रकृतेः परम् ।
निरन्तरं स्वयंज्योतिरणिमानमखण्डितम् ॥ १७ ॥
ज्ञानवैराग्ययुक्तेन भक्तियुक्तेन चात्मना ।
परिपश्यत्युदासीनं (१) प्रकृतिं च हतौजसम् ॥ १८ ॥
न युज्यमानया भक्त्या भगवत्यखिलात्मनि ।
सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये ॥ १९ ॥
प्रसङ्गमजरं पाशमात्मनः कवयो विदुः ।
स एव साधुषु कृतो मोक्षद्वारमपावृतम् ॥ २० ॥
तितिक्षवः कारुणिकाः सुहृदः सर्वदेहिनाम् ।
अजातशत्रवः शान्ताः साधवः साधुभूषणाः ॥ २१ ॥
मय्यनन्येन भावेन भक्तिं कुर्वन्ति ये दृढाम् ।
मत्कृते त्यक्तकर्माणस्त्यक्तस्वजनबान्धवाः ॥ २२ ॥
मदाश्रयाः कथा मृष्टाः शृण्वन्ति कथयन्ति च ।
तपन्ति विविधास्तापा नैतान्मद्गतचेतसः ॥ २३ ॥
त एते साधवः साध्वि ! सर्वसङ्गविवर्जिताः ।
सङ्गस्तेष्वथ ते प्रार्थ्यः सङ्गदोषहरा हि ते ॥ २४ ॥

भाषाटीका ।

जो आप सब पुरुषोंके ईश्वर हो भगवान् हो सो अज्ञानसे अन्धजन के वास्ते सूर्यसरीके उदित भये हो ॥ ९ ॥

हे देव ! आप मेरे सम्मोह को दूर करनेके योग्य हो जो अहन्ता ममता रूप अभिमान इस देहादिकों में हमारे को आपने लगा दिया है ॥ १० ॥

आप शरणागत के रक्षक हो अपने जनके संसाररूप वृक्ष के काटने को कुल्हाडी सेहो तो मैं प्रकृति पुरुषके तत्त्वको जाननेकी इच्छासे आपके शरण आई हूं उत्तम धर्मों को जानने वालों में आपही सर्वथा वडे हो ॥ ११ ॥

मैत्रेयजी बोले इस प्रकार से अपनी माता का निर्दोष मनोरथको श्रवण करके जाना कि यह वात मनुष्यों के मोक्ष को देनेवाली है तव मनसे प्रशंसा करके आत्मज्ञानी सत्पुरुषों के गतिदायक भगवान् कपिलजी कुछ मन्दहास युक्तहोकर वचन बोले ॥ १२ ॥

श्रीभगवान् बोले पुरुषोंके लिये आध्यात्मयोग मोक्षका साधन है ऐसा हमारा मन है जिस योग के होने से सुख दुःख दोनों का नाश होजाता है ॥ १३ ॥

हे अनघे ! पूर्वकाल में सुनने की इच्छावाले ऋषियों से जिस योग को मैंने कहाथा जोकि सब अङ्गों से निपुणहै तिस योग को आपसे मैं कहूंगा ॥ १४ ॥

मनही इस मनुष्य के बन्धमोक्ष का हेतु है विषयों में आसक्त हुआ चित्तबन्ध का हेतु है परमपुरुष में रत होनेसे मुक्तिका हेतु होता है ॥ १५ ॥

जिस वखत अभिमान से उत्पन्न हुये काम लोभादिक मलों से रहित होकर शुद्ध होजाता है तव सुखदुःख में सम होताहै ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

निरन्तरं निर्भेदम् अणिमानं सूक्ष्मम् अखण्डितमपरिच्छिन्नम् ॥ १७ ॥

हतौजसं क्षीणबलाम् ॥ १८ ॥

मनः शुद्धौ च भक्तिरेवान्तरङ्गसाधनमित्याह । नेति ॥ १९ ॥

अस्य सर्वस्यापि सत्सङ्गो मूलमित्याह । प्रसङ्गमिति । अपावृतं निरावरणम् ॥ २० ॥

साधूनां लक्षणमाह । तितिक्षव इति चतुर्भिः । साधवः शास्त्रानुवर्तिनः साधु सुशीलं तदेव भूषणं येषाम् ॥२१-२२॥

एतानुक्तलक्षणान् भक्तान् तापा आध्यात्मिकादयो न तपन्ति न व्यथयन्ति कुतः मद्गतं चेतो येषां तान् ॥ २३ ॥

ये तापैर्नाभिभूयन्ते ते साधव इत्यर्थः ॥ २४ ॥

(१) उदासीनामिति श्रीविजयध्वजतीर्थपाठः ।

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकादिप्पणी ।

अस्य । मत्तःश्रुतिविज्ञानवैराग्याद्यैः ॥ २० ॥

तितिक्षव इति चतुष्कम् । तत्र सन्तो द्विविधाः ज्ञानिनो भक्ताश्चेति तत्रैकेन ज्ञानिसाधुलक्षणं शान्ताः "शमो मन्निष्ठताबुद्धेः,, इति श्रीभगवद्वाक्याच्छान्तिरतियुक्ताः ज्ञानिनः साधव उच्यन्ते मुख्यभक्तिलक्षणोद्धारार्थं तटस्थलक्षणं तितिक्षव इत्यादि स्वरूपलक्षणं तु शान्तिरतित्वमेव भक्तसाधुलक्षणं मयीति सार्द्धेन । नास्त्यन्यः ज्ञानकर्मादिसम्बन्धो यस्मिन् तेन शुद्धेन दास्याद्यन्यतमेन भावेनोपलक्षितां दृढां दास्यसख्याद्युतां प्रेमलक्षणां भक्तिं ये कुर्वन्ति कथां शृण्वन्ति कथयन्तिचेति स्वरूपलक्षणं कर्मत्यागमारभ्य तापानिलयपर्यन्तं तटस्थलक्षणं सर्वसङ्गविवर्जिताः पुरुषार्थचतुष्टयवासनाशून्या इत्यपि तदेव ॥ २१ ॥ २२ ॥ २३ ॥

सङ्ग इत्यर्थकम् हि शब्द उत्तरवाक्येऽपि हेतुः ॥ २४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमात्मस्वरूपप्रदर्शनयोग्यमनःस्वरूपशिक्षा अन्यत्राप्यन्यशिक्षा च कृता अत्र भगवद्भक्तियुक्तात्मनां पश्यतीत्यनेन न केवलं प्रकृतिविलक्षणतयात्मस्वरूपचिन्तनमात्रेण प्रत्यगात्मसाक्षात्कारः किन्तु ब्रह्मात्मकप्रत्यगात्मानुसन्धानेनैव प्रत्यगात्मसाक्षात्कारोऽपि भवतीति सूच्यते ब्रह्मात्मकत्वमेव तस्य प्रत्यगात्मनः स्वाभाविकं स्वरूपं तत्र विशेष्यभूतब्रह्मणोऽननुसन्धाने विशेषणभूतप्रत्यगात्मानुसन्धानासम्भव एव न हि व्यक्तिगुणादीन् विना जातिगुणादयः पृथगुपलभ्यन्ते तस्मात् प्रकृतिविलक्षणप्रत्यगात्मचिन्तनमपि ब्रह्मशरीरतयैव कार्यम् एवंविधं चिन्तनमेव पश्चाद्विशेष्यभूतभगवद्भक्तिरूपापन्नं मुक्तिसाधनं न केवलमित्याह । नेति । अखिलात्मन्यखिलानां जीवानामात्मभूते भगवति युज्यमानया भक्त्या सदृशस्तुल्यः ब्रह्मसिद्धये भावप्रधानो ब्रह्मशब्दः "द्वंद्वकर्षाः,, इत्यादिवत् ब्रह्मत्वसिद्धये इत्यर्थः ब्रह्मत्वं प्रकारः ब्रह्मप्रकारसिद्धये ब्रह्मवदपहतपाप्मत्वादिगुणाष्टकाविर्भावसिद्धये इति यावत् योगिनां शिवः अन्यानपेक्षः पन्था उपायः अन्यो नास्ति ब्रह्मात्मकप्रत्यगात्मानुसन्धानपूर्वकप्रत्यगात्मशरीरकभगवद्भक्तिसदृशो मुक्त्युपायः कश्चिदन्यो नास्तीत्यर्थः । एवमनभिसंहितफलस्वधर्मनिरस्तकामादिदोषविशुद्धान्तःकरणानुसंहितब्रह्मात्मकप्रत्यगात्मयाथात्म्यज्ञानयोगपूर्वकभगवद्भक्तिर्मोक्षसाधनमित्युक्तम् ॥ १८ ॥ १९ ॥

अथास्य सर्वस्य निवृत्तिधर्मस्य रुचिजनने सत्सङ्गतिरेव प्रथमं कारणमसत्सङ्गतिः संसृतिहेतुरिति वदन् सतां स्वरूपं चाह । प्रसङ्गमिति पञ्चभिः । प्रसङ्गमसंस्विति शेषः असत्स्विन्द्रियार्थेषु तत्परायणेषु प्रसङ्गं प्रकृष्टासक्तिमात्मनो जीवस्याजरमशिथिलं पाशं बन्धं कवयः सुधियो विदुः स एव प्रसङ्ग एव स एवेत्यनेनासद्रूपविषयपरिहारेण प्रसङ्गमात्रस्य परामर्शः साधुषु कृतः अपावृतमविघ्नोपहतं मोक्षद्वारं मोक्षोपायः ॥ २० ॥

के ते साधव इत्यत्राह । तितिक्षवः मूर्खेष्वपि क्षान्तिरसहनशीलाः कारुणिकाः स्वार्थनिरपेक्षपरदुःखनिराचिकीर्षवः अत एव सर्वदेहिनां सुहृदः मित्राणयत एवाजाताः अविद्यमानाः शत्रवो येषां ते शान्ताः इदं यमादीनामुपलक्षणं शमदमादिसम्पन्नाः साधवः परकार्यसाधकाः साधुशीलं तदेव भूषणं येषां ते साधव इति शेषः यद्वा साधव इति विधेयविशेषसाधव इत्यर्थः ॥ २१ ॥

किञ्च मयीश्वरे कपिलस्यानुप्रवेशावतारत्वेऽपि जीवशक्तेरभिमूर्त्याङ्गवच्छक्तेरेवोद्भूतत्वाच्च मयीति व्यपदेशः अनन्येनान्यानिवर्तिना भावेनान्तःकरणेनाभिप्रायविशेषेण वा ये दृढामविचाल्यां भक्तिं कुर्वन्ति ते साधव इत्युत्तरत्रान्वयः तानेव विशिनष्टि । मत्कृते मदर्थं त्यक्तानि कर्माणि यैस्ते परित्यक्तमदाराधनाविधिप्रवृत्तिधर्मास्तथा त्यक्तमत्कृतजनविरोधि स्वजनबान्धवाः ॥ २२ ॥

मदीयमेवाश्रयो विषयो यासां ताभिः कथाभिः हृष्टाः कथा हृष्टत्वेन प्रपञ्चयति शृण्वन्ति कथयन्ति गायन्ति चेति मदाश्रयकथाश्रवणकथनादिभिर्हृष्टा इत्यर्थः यद्वा कथास्मरणेन हृष्टाः पुनस्त एव शृण्वन्ति कथयन्ति यद्वा हृष्टा इति व्यस्तं पदं हृष्टाः सन्तुष्टाःसन्तो मदाश्रयकथाः शृण्वन्ति कथयन्ति चेत्यर्थः मय्येव गतं न्यस्तं चेतो येस्ते तान् दैवेनात् विविधा नानाविधास्तापाः आध्यात्मिकादयः न तपन्ति न क्लेशयन्ति ऐकात्म्यगतचेतस इति पाठान्तरम् एकस्य भगवत एवात्मत्वम् अन्येषां चेतनाचेतनानां तच्छरीरत्वात् एक एव परमपुरुषः आत्मेति तस्मिन् गतं चेतः येषां तानित्यर्थः ॥ २३ ॥

हे साध्वि ! त एते सर्वैः सङ्गैर्विषयसङ्गैर्विवर्जिता विरहिताः साधवः तेषु साधुषु भवेति प्रार्थये प्रथमं तेषु त्वया सङ्गः प्रार्थ्यः प्रार्थनीयः हि यस्मात्ते साधवः सङ्गदोषहराः इन्द्रियार्थप्रसङ्गहेतुकानादिदुरन्तपापरूपदोषहरा इत्यर्थः ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तदा पुरुष आत्मानं स्वबिम्बभूतं हरिं पश्यतीत्यन्वयः परीत्युपसर्गोऽग्राणपर्यन्तं परितो वर्तमानाः स्वबिम्बदेवताश्चापरोक्षीकृत्य तत्प्रसादादिति ग्राह्यम्

> बाह्यसुखे त्वनासक्तेरसुखं दुःखवर्जनात् ।
>
> अदुःखं हरिभक्त्यैव नित्यानन्दं यदात्मनः ।
>
> तदा तं परमात्मानं पश्यत्यात्मप्रसादतः ।

इति विशेषवचनाददुःखमसुखं सममिति प्रतीतार्थोऽनुपपन्न इति आत्मप्रसादत इत्यत्रात्मशब्देन प्राणादयोऽपि ग्राह्याः तस्य तेष्वपि वृत्तेः । इयन्तं कालं परोक्षीभूतमात्मानं स्वं पश्यतीति मन्दाशङ्कां परिहरति । केवलमित्यादिविशेषणेन

> अभेदात्स्वावतारेषु निरन्तर उदाहृतः ।
>
> गुणादेहेन्द्रियाभेदात्केवलोऽसदृशत्वतः ।
>
> अखण्डपूर्णशक्तित्वादहमेकः सदा मतः ।

इत्यनेन व्याख्यातोऽयं ग्रन्थः उक्तं सुष्ठु स्यात्प्रकृतेः परत्वे तदेव कथमित्यत उक्तं प्रकृतेः परमिति । चिज्जडप्रकृत्योः परमतल्लक्षणं न कस्यापीत्यतोऽसाधारणमित्यर्थः अणिमानमित्यनेन स्वबिम्बरूपमेवोच्यते य आत्मनि तिष्ठन्नित्यादेः केनेत्यत उक्तमात्मना चिन्मनसेति अस्य सदातनत्वात् ॥ १७ ॥

इतः पूर्वं किमिति नापश्यदत उक्तम् । ज्ञानेति । प्रकृतिज्ञानाभावे तत्परत्वदर्शनं कथमित्यत उक्तं उदासीनामिति । प्रयोजकाभावेन परिणामलक्षणकार्यानभिमुखी कुतोऽनुदितमिदमित्यत उक्तं । हतौजसमिति । हतमोजो बन्धकशक्तिर्यस्याः सा तथा तां तदुक्तम् "बन्धशक्तिः प्रकृत्याख्या विष्णुशक्त्या नियुज्यत" इति ॥ १८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मुक्तेरन्तरङ्गसाधनं भक्तेरन्यन्नास्तीत्याह । न युज्यमानयेति ॥ १९ ॥

इदानीं ब्रह्मज्ञानोत्पत्तौ प्रतिबन्धकमाह । प्रसङ्गमिति । असङ्गार्यादिषु प्रसङ्गमतिस्नेहमजरं पुनर्नवत्वेनाक्षयम् । स एवेति । तर्ह्ययमेव सत्सु कृतश्चेत् किं कार्यंत्वम इति तत्राह । अपावृतमुद्घाटितं विवृतमित्यर्थः ॥ २० ॥

किंलक्षणाः साधवो येन तत्सङ्गो भक्तिज्ञानद्वारा मुक्तिसाधनं स्यादिति तत्राह । तितिक्षव इति । अजाशब्देन तत्कार्यं देह उपलक्ष्यते "अतसातत्यगमन" इति धातोस्तेन सहैव सततं वर्तमानत्वात्तस्मिन् गते गच्छन्ति स्थिते तिष्ठन्ति इत्यतो जाताः कामलोभादयस्तेषां शत्रवः अत्र हेतुरयं शान्ताः श्रीनारायणे निष्ठावन्तोऽत एव साधवो निष्ठासाधनशीलाः साधुरुचिना भगवद्भक्तिः सैव भूषणं येषां ते साधुभूषणाः "साधुस्त्रिषूचिते सौम्ये" इति यादवः ॥ २१ ॥

एतदेव विशिनष्टि । मयीति । अनन्यभावेनान्यस्मिन्विष्णोः अन्यस्मिन् ब्रह्मादौ तादृशो भावः स्नेहो नास्तीति अनन्यभावस्तेन । तदुक्तम् ।

> यादृशी मयि भक्तिः स्यात्तादृश्यन्यत्र नैव चेत् ।
> अनन्यभक्तिरुद्रेकात्सा यथैव तरेत्सृतिमिति ।

दृढां मरणसङ्गावेऽप्यचलां तदेव विशदयति । मत्कृत इति । स्वजनबान्धवा लौकिका नतु पारलौकिकाः ॥ २२ ॥

एवं निःसङ्गानां कालयापनाकथमत्राह । मदाश्रया इति । तपआदिकर्माभावे विश्वेषु कथं तिष्ठतीति तत्राह । तपन्तीति तापात् तपांसि ब्रह्मीं वाव तप उपनिषदं ब्रूमेति तस्यैव तपो दम इत्यादिश्रुतिः नन्वेवंविधतपः संचरणसमये शीतोष्णोपवासादिना इन्द्रियदौर्बल्यहेतुना हरेः सर्वोत्तमत्वादिज्ञानं तिरोहितं भवतीति मन्दाशङ्कां परिहरति । ऐकात्म्येति ।

> एकः पूर्णो हरिर्नान्यस्तदन्ये तद्वशा मताः ।
> इति ज्ञानं स्थिरं यत्तदैकात्म्यज्ञानमुच्यत

इति स्मृतेः ऐकात्म्यं हरेः सर्वोत्तमत्वपूर्णज्ञाने गतं स्थिरं स्थितं चेतो येषां ते तथोक्ताः ॥ २३ ॥

उपसंहरति । त एत इति । त्यक्तस्वजनबान्धवा इत्युक्तम् विशदयति । सर्वसङ्गेति । दुष्टसर्वसङ्गवर्जिता इत्यर्थः सन्त्वेवंविधाः साधवस्तत्र किं ममोपदिशसीति तत्राह । सङ्गस्तेष्विति । अथ तस्मात्तत्र हेतुमाह । सङ्गदोषेति ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

निरन्तरं नित्यं यतोऽखण्डितं छेदादिराहितम् । यतोऽणिमानं दुर्ज्ञेयमित्यर्थः ॥ १७ ॥

ज्ञानं विवेकः स च वैराग्यं च अहं ममेत्यादिराहित्येन प्रतिपादितं भक्तिर्भागवती तां विना सर्वार्थासिद्धेः हतौजसं स्वस्मिन् किञ्चिदपि कर्तुमशक्ताम् ॥ १८—२० ॥

शान्ताः शमदमादिसाधनचतुष्टयसम्पन्ना ज्ञानिनः साधव उच्यन्ते वक्ष्यते च "महान्तस्ते समचित्ताः प्रशान्ता„ इत्यादिना तेषामानुषङ्गिकान् गुणानाह । तितिक्षव इत्यादिना । स्वयं साधवोऽपि ये साधूनन्यान् भूषयन्ति मानयन्ति स एव एव वा भूषणानि परिच्छदा येषां ते तथा प्रसङ्गतः साधुविशेषानप्याह । मयीति सार्द्धेन ॥ २१—२३ ॥

तस्मात्त तपन्तीति उपसंहरति । त इति । सर्वसङ्गविवर्जिताः पुरुषार्थचतुष्टयासक्तिशून्याः सङ्ग इत्यर्द्धकम् । हि शब्द उत्तरवाक्येऽपि हेतुः ॥ २४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तादृशेन मनसा आत्मनं पश्यतीत्याह । तदा पुरुष इति । विविक्तात्मसाक्षात्कारस्तदैव भवति अन्यदा सङ्घाते प्रविष्ट आत्मा प्रतीयते केवलं सङ्घातविनिर्मुक्तं स्वभावोऽत्र प्रकृतिशब्देनोच्यते प्राकृतेषु प्रसक्त आत्मा प्रकृतिस्वभावो भवति तस्य यदा नियन्ता भवेत् स्वभावजयो भवेदित्यर्थः अन्यथा पूर्वमेव केवलत्वं निरूपित पुनरुक्तं स्यात् नियामकत्वे च प्रकृतिपरत्वं स्यात् भगवता सह निरन्तरं जीवब्रह्मविभागशून्यं नापि सायुज्येन किन्तु ब्रह्मभावेनेत्याह । स्वयंज्योतिरिति । स्वयमेव स्वप्रकाशो जातोऽस्ति अणिमानमतिसूक्ष्मं प्रतीतौ अहङ्कारादीनां सह स्फुरणाभावात् सूक्ष्ममुच्यते यथा विरलत्वेनाकाशेन त्वणु परिमाणमपि सर्वत्र देवतिर्यङ्मनुष्यादीनामात्मभूतकेनाप्यंशेन न खण्डनं सर्वात्मकमात्मानं पश्यति ॥ १७ ॥

एतादृशात्मस्वरूपसाक्षात्कारे मनसः न शुद्धत्वमात्र प्रयोजकं किन्तु कारणत्रयमस्तीत्याह । ज्ञानवैराग्येति । ज्ञानवैराग्ये भक्तेरङ्गभूते ते च फलोपकार्यङ्गे नतु भक्तिजनके भक्तिरपि योगरूपा साधनत्वेन निरन्तरं क्रियमाणा चकाराद्भक्तिसाधनैरन्यैरपि युक्तेन आत्मना मनसा आत्मैक्यं प्राप्तेन विषयाभिलाषतया ततो न निर्गतेन आत्मानं परिपश्यति जाते ज्ञाने प्रकृतिप्रेरणसामर्थ्यं भवति तदा महाभोग उपपद्यते अतः प्रकृतिप्रवर्त्तकत्वं सम्भवति तन्निषेधार्थमाह । उदासीनमिति । प्रकृतेस्तु न किञ्चिद्बलमित्याह । हतौजसं प्रकृतिं च पश्यति वासनामात्रेण प्रकृतिस्तिष्ठतीत्यर्थः ॥ १८ ॥

एवमात्मज्ञानं सपरिकरमुपपाद्य तत्र रतिरासक्तिर्वा चित्तस्य चेद्भवति तदा तन्मनो मुक्तये भवतीत्युक्तम् । इदं परम्परया साक्षाच्च बहुसाधनसाध्यमिति एकमेव साधनं सर्वसाधनरूपं सर्वसाधनसाधकं सर्वफलसाधकं च सौकर्यार्थं निरूपयति । न युज्यमानयेति । भगवति युज्यमानया भक्त्या सदृशः पन्था नास्ति सिद्धान्तान्तरत्वात् न भगवन्मार्गेण सह विरोधः पूर्वं योगाभ्यासपराणां ब्रह्मभावार्थं साधनप्रेप्सूनां भक्तिरेव साधनमखिलात्मनीति विराड्रूपे नारायणे सर्वात्मकत्वे ज्ञाते पश्चाद्भक्तिः कर्त्तव्येति केचित् सर्वत्र भगवतो भक्तिः कर्त्तव्येत्यपरे . स्पर्द्धासूयादिव्यावृत्त्यर्थं तथा ज्ञात्वा कर्त्तव्यं भगवानत्र ब्रह्मैव सत्त्वमूर्त्तिर्वा ब्रह्मसिद्धिर्ब्रह्मप्राप्तिः ॥ १९ ॥

तस्या भक्तेः कारणमाह । प्रसङ्गमिति । न हीयं भक्तिस्त्यागे भवति किन्तु चित्तवत् सङ्गो यदा विषयभेदेन भिद्यते तदा भक्तिं जनयति तस्य चित्ततुल्यतामाह । प्रसङ्गमिति । अजरं जरारहितं पाशं बन्धकं नतु देहादेः किन्तु आत्मनो विदुः प्रकृष्टः सङ्गो यस्मिन् कस्मिंश्चित् कवयो विदुरिति प्रमाणं स एव प्रसङ्गः साधुषु चेत्कृतस्तदा मोक्षद्वारमपा-

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

वृतं भवति यथा भगवति स्नेहो मुक्तये तथा सत्सङ्गः मोक्षद्वारं यथा ज्ञानादिषु सहजः सङ्गादः कपाटरूपः कश्चन संसर्गी दोषोऽस्ति तदाह । अपावृतमिति ॥ २० ॥

तदुद्घाटने ज्ञानादिभिर्मोक्षो भवति नैवम् सत्सङ्गे सहजः तासां लक्षणान्याह । तितिक्षव इति

सन्तः षोडशधर्मा वै धर्मास्ते त्रिविधा मताः ।
भौतिकादिविभेदेन एकस्तु सहजः स्मृतः ॥ १ ॥
उपयोगी तथा चैको भौतिकास्त्रय एव हि ।
आध्यात्मिकास्तु चत्वारः सप्त चैवाधिदैविकाः ॥ २ ॥
पञ्चधा चेद्गुणा न स्युः सर्वेषां सिद्धयो न हि ।
भौतिकानामभावे तु लौकिकास्ते न संशयः ॥ ३ ॥
अलौकिका हि ते सेव्या निर्दुष्टास्तदनन्तरैः ।
सप्तभिस्ते महात्मानस्तद्भावेन तैः फलम् ॥ ४ ॥

आदौ भौतिकान् त्रीन् गुणानाह । सर्वेषां प्राणिनामपराधं महन्त इति तितिक्षवः तेषु कृतापराधेष्वपि करुणावन्तो भवन्ति तद्दुःखदूरीकरणाय यत्नं कुर्वन्ति । किञ्च । तेषामन्येषां च सुहृदो मित्राणि सर्वदा हितमाचरन्ति भावयन्ति च लोके मित्रं देवताणाश्च सुहृदो भवन्ति न हि ते सर्वेषां दुःखाभावार्थं यतन्ते लौकिकाश्च दयालवः हेत्वर्था वा कारुणिका भवन्ति निवृत्ते तु दुःखेन तेषां हितं भावयन्ति मातापितरो बालेषु तितिक्षवो भवन्ति नतु ते कारुणिकाः न वा सर्वसुहृदः तस्मात्रितयधर्मयुक्ताः अलौकिका एव तादृशेषु दोषाभावमाह । अजातशत्रव इति । गुणास्त्रयो विपरीतरूपाः सन्तो दोषाः ते कामक्रोधलोभात्मकाः भवन्ति तत्र क्रोधो बहुविधः प्रकटाप्रकटधर्मादिविभेदेन स्वक्रोधः स्वरूपेण साधनरूपेण वा परक्रोधे निमित्तत्वमापद्यते तदा स शत्रुर्भवति तस्यापि चेद्धर्मः स्वस्य क्रोधहेतुर्भवेत्तदान्योऽन्यं शत्रवो भवन्ति ते च पश्चाद्रागादिजनकधर्मैर्बाधिताश्चेत् निवर्तन्ते येषां तु शत्रवो नोत्पन्ना एव जन्मान्तरीयाणामगतदोषाणां नोत्पत्तिः अस्मिंस्तु जन्मन्यनिष्पत्तिः अनेन पूर्वमनेकजन्मस्वपि निवृत्तक्रोधास्त इत्युक्तं राजसो दोषः कामादिः सोऽपि नास्तीत्याह । शान्ता इति । लयविक्षेपरहितचेतसोऽवस्था शान्तिः तया सह अभेदं स्वभावतः प्राप्ताः शान्ता एतदपि बहुजन्मसाधनैरेव भवति एवमन्तःकरणजीवयोर्दोषाभावो निरूपितः दैहिकं दोषाभावमाह । साधव इति । साधवः सदाचाराः स एव सन् आचारः यः आत्मानं परं च न खेदयति आत्मात्वन्तःकरणजीवात्मकः शरीरस्तु वेदनयः परोऽपि तथा सर्वथा वा येषामाचरणेन कोऽपि कस्याप्युपकारः स सदाचारो भवति तेनापि धर्मेण देहस्वभावात् ऐक्यं प्राप्ताः साधवः तादृश एव धर्मः येषामलङ्करणहेतुर्भवति लोके तेनैव प्रतिष्ठा भवति अनेन सर्वोऽपि परिकरस्तेषां साधुरूपो भवति ॥ २१ ॥

एवं सर्वदोषपरिहारमुक्त्वा । सर्वेषां सर्वपुरुषार्थसाधकत्वसिद्ध्यर्थं स्वस्मिन् आधिदैविकान् गुणानाह । मयीति । भक्तिरग्रे वक्तव्या सर्वेन्द्रियाणां मनसा सह अहमहमिकतया भगवत्कार्यपरत्वमिति इन्द्रियाणि च निर्दुष्टानि सगुणानि चेति न विद्यते अन्यस्मिन् यो भावः भावो नामान्तःकरणधर्मः अभिप्रायापरनामा सर्वत्र हेतुः स भक्तिजनकोऽपि भवति भावान्तरेणापि भक्तिं जनयति तत्फलविषयकमेव भवति भावान्तर सहितो वा स हि देवतान्तरविषयः पदार्थान्तरविषयो मार्गान्तरविषयो वा तत्सहभावोऽत्र निषिध्यते फलभावश्च अत एव मार्गान्तरेण न चाल्यत इति दृढा यस्यां भक्तौ प्रमाणादिचतुर्द्धापि बाधा नास्ति सा दृढा तदर्थमेव पूर्वसिद्धपदार्थानां त्यागः कर्त्तव्यः ते च वेदलोकात्मकास्तदाह । मत्कृते भगवत्कार्यार्थमेव त्यक्तानि विहितानि कर्माणि यैः निरन्तरं भगवत्स्मरणे सेवायां च सर्वाण्येव कर्माणि बाधकानि ज्ञानपूर्वकं सेवमानानामनन्यभावप्रतिबन्धकानि च मत्कृत इति नालस्यादिना तत्परित्यागः लौकिकाः स्त्रीपुत्रादयः स्वजनाः बान्धवात् सजातीयास्ते उभये त्यक्तव्यास्तेषामपि सत्त्वे तु न स्वजनबन्धुत्वं परित्यागलक्षणमेकमपि साधनं लौकिकवैदिकभेदेन द्विधा परिगणितलौकिकानां परित्यागासामर्थ्यबोधनार्थं वा एवं रूपा भक्तौ त्रयो गुणा उक्ताः ॥ २२ ॥

नास्ति त्रयमाह । मदाश्रयेति । भगवद्गतचित्तेन ये श्रुता भगवद्गुणाः ये वा संकीर्तिता नित्यं यावत्ते रसतां ययुः तावत्यक्तैस्तदीयैश्च बाधा भवति सर्वथा विविधा अपि ते तापाः सोढव्यास्तापसत्त्वतः बलात्कृत्वा तपस्यन्ते ततः प्राप्ताः स्वतो वराः भजनापेक्षया ते वै भगवत्प्रीतिहेतवः "दुःखेषु भगवांश्चापि नित्यं साक्षात्क्रियते वै । देहादिविषयांस्त्यक्त्वा चित्तं तद्गतमेव यत्"। याः कथा भगवन्तमेवाश्रित्य वर्त्तन्ते नतु प्रसङ्गाद्भगवद्विषयाः मृष्टाः उज्ज्वलाः निर्दोषपूर्णगुणरूपाःभाववर्णनेन वा भक्तैरुज्ज्वलीकृताः ॥ २३ ॥

एवं तेषां लक्षणान्युक्त्वा तादृशेषु साधुत्वं विधत्ते । ननु केऽपि स्वभावतः साधवः तेऽपि भगवत्सन्निकटे वर्तन्त इति एत इत्युक्तं त एव प्रसिद्धाः एते विश्वासार्थं साध्वीति सम्बोधनम् ननु तादृशाश्चेत् सन्ति बहवः कथं जगदमुक्तं तिष्ठतीत्याशङ्क्याह । सर्वसङ्गविवर्जिता इति । लौकिकास्तु स्वतो न तान् जानन्ति ते तु सर्वापेक्षारहिता इति न केनापि प्रकारेण कस्यचित्सङ्गोऽपेक्षितः अतस्तेषां योगाभावादेव न मुच्यन्ते किं तेषां निरूपणेनेत्याशङ्क्याह । सङ्गस्तेष्विति । तेषु संगः ते प्रार्थ्यः सङ्गस्त्यक्तव्यो भवति स त्वया न शक्य इति सङ्गजनितदोषनिवर्तकं सङ्गत्यागजनितगुणजनकं च किञ्चिदपेक्ष्यते अन्यथा सङ्गत्यागस्य कारणता न स्यात् शास्त्रान्तरेऽपि सङ्गस्त्यागानुकल्पत्वेन सत्सङ्गो निरूपितः पूर्वोक्तोभयसाधकः तेऽपि तवाशक्यसङ्गा इति तेषां सङ्गप्रार्थनैव कर्तव्या प्रार्थनापि तावत्करिष्यतीति तद्धर्माणां तथात्वं वक्तुं सङ्गदोषदूरीकरणं तेषां सहजो धर्म इत्याह । सङ्गदोषहरा इति । सङ्गस्य हि कामजनकत्वं सङ्गेन हि कामादिदोषा जन्यन्ते तांश्च दोषान् सन्तो दूरीकुर्वन्ति तदाह । हीति । तथा सामर्थ्यं तेषामाह । त इति । ते हि भगवदीयाः प्रसिद्धाः ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तदा पुरुषो जीव आत्मानं स्वं प्रकृतेरविद्यातः परं निरन्तरं देहद्वयव्यवधानशून्यमत एव स्वयंज्योतिरनावृतप्रकाशमाणिमानं सूक्ष्मं "सूक्ष्माणामप्यहं जीव" इति भगवदुक्तेः स्वरूपत एव परमाणुप्रमाणमित्यर्थः । विषयवासनाभिरखण्डितम् ॥१७॥

ज्ञानवैराग्ययुक्तेनात्मना मनसा भक्तियुक्तेन चेति चकाराद्भक्तेस्तत्र साहाय्यमेव तद्विना ज्ञानस्य स्वीयफलसाधकत्वा-

सतां प्रसङ्गान्मम वीर्यसम्विदो भवन्ति हृत्कर्णरसायनाः कथाः ।
तज्जोषणादाश्वपवर्गवर्त्मनि श्रद्धारतिर्भक्तिरनुक्रमिष्यति ॥ २५ ॥
भक्त्या पुमान् जातविराग ऐन्द्रियादृष्टश्रुतान्मद्रचनानुचिन्तया ।
चित्तस्य यत्तो ग्रहणे योगयुक्तो यतिष्यते ऋजुभिर्योगमार्गैः ॥ २६ ॥
असेवयाऽयं प्रकृतेर्गुणानां ज्ञानेन वैराग्यविजृम्भितेन ।
योगेन मय्यर्पितया च भक्त्या मां प्रत्यगात्मानमिहावरुन्धे । २७ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ॥

शक्तेः उदासीनमनासक्तं प्रकृतिं स्वाविद्यां हतौजसं स्वस्मिन् किञ्चिदपि कर्त्तुमशक्ताम् ॥ १८ ॥

त्रयाणां मध्ये केवला भक्तिरेव श्रेष्ठा सुखमयी परममङ्गला चेत्याह । नेति । युज्यमानयेति भगवति भक्तिरेव युज्यते समुचिता भवतीत्यर्थः । क्वाचित्कत्वयुचिता भक्तिरित्युत्तरोक्तेः । योगिनामुपायवतां ब्रह्मणि परमेश्वरे विषयीभूते सिद्धिर्दास्यसख्यादिनिष्पत्तिस्तस्यै ॥ १९ ॥

तस्या भक्तेः साधुसङ्ग एव मूलमिति सयुक्तिकमाह । प्रसङ्गमिति । मोक्षस्य सालोक्यादेर्द्वारमपावृतं निरावरणमैकान्तिकभक्तानामपि मोक्षो भक्तेरनुसंहितं फलं भवतीति तथोक्तम् ॥ २० ॥

साधूनां लक्षणमाह चतुर्भिः । तत्र तटस्थलक्षणमाह । तितिक्षव इति । शान्ता अनुग्राः साधवः सरलाः साधून् भूषयन्ति मानयन्तीति ते यद्वा साधव एव भूषणानीव प्रिया येषां ते स्वरूपलक्षणमाह । मयीति । अन्यादिपदानां सदर्थग्राहकत्वात् न विद्यतेऽन्योऽहमिवाराध्यो ब्रह्मरुद्रादिर्विषयो यस्य तेन भावेन दास्यसख्यादिना अत एवैकमात्रविषयत्वात् दृढां मत्कृते मत्प्राप्त्यर्थं सर्वधर्मान् परित्यज्येत्यादि मदुक्तेस्त्यक्तकर्माणः ये दारागारेत्यादौ कथं तांस्त्यक्तुमुत्सहे इति मदुक्तेस्त्यक्तस्वजनाद्याः ॥ २१ ॥ २२ ॥

मृष्टाः शुद्धा अमायिकीः एतान् मत्कान् तापा आध्यात्मिकादयो न तपन्ति न व्यथयन्ति । एते तापैर्नाभिभूयन्ते चेन्मद्गतचेतसः स्मरणादार्द्ध्यवन्तो ज्ञेयाः सर्वसङ्गविवर्जिताः पुरुषार्थचतुष्टयासक्तिशून्याः ॥ २३ ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पुरुषो जीव आत्मानमुपासकस्वरूपं कथम्भूतमणिमानमणुपरिमाणम्“अणुर्ह्येष आत्मा चेतसा वेदितव्य”इति श्रुतेः स्वयंज्योतिः अन्यप्रकाशानिरपेक्षं ब्रह्मणा उपास्यस्वरूपं कथंभूतं केवलं सजातीयभेदशून्यं पुनर्ब्रह्मविशेषणं निरन्तरं सर्वव्यापकम् । प्रकृतेः परमखण्डितं चेत्युभयोर्विशेषणम् ॥ १७ ॥

उदासीनं प्राकृतपदार्थेभ्यो निर्विण्णं जीवमत एव प्रकृतिं च हतौजसं पराजिताम् ॥ १८ ॥

मनः शुद्धौ भगवज्ज्ञाने च प्रकृतिजये च ज्ञानपरभक्तियोगद्वारा ब्रह्मप्राप्तौ च भक्तिरेव हेतुरित्याशयेनाह ॥ १९ ॥

अपावृतं निरावरणम् ॥ २० ॥

साधूनि ऊर्ध्वपुण्ड्रादीनि भूषणानि येषां ते ॥ २१—२४ ॥

---

भाषाटीका ।

तब पुरुष निरन्तर स्वयंज्योति अतिसूक्ष्म अपरिमित प्रकृति से परे केवल उदासीन आत्मा को ज्ञानवैराग्ययुक्त भक्तियुक्त मनसे देखता है और प्रकृति को क्षीणबल हुई देखता है ॥ १७-१८॥

सर्वान्तर्यामी भगवान् में युक्त करी भक्तिके सदृश योगियों के लिये कल्याणकारी मार्ग ब्रह्म प्राप्ति का दूसरा नहीं है ॥ १९ ॥

पुत्रादिक में जो आसक्ति है सो आत्मा का बन्धन है सोई आसक्ति महात्मों में होवे तो खुला हुआ मोक्ष का द्वार हो जाता है ॥ २० ॥

सहनशील कृपावाले सब प्राणी के सुहृद् जगत् में शत्रु रहित शान्तस्वरूप साधु सुन्दर गुणों से भूषित ॥ २१ ॥

तथा मेरे में अनन्यभावसे दृढभक्ति करने वाले मेरे निमित्त सब कर्मों को छोडने वाले अपने सब बंधु ओं को छोडने वाले॥२२॥

मेरे विषय की मधुर कथा ओं के कहने सुनने वाले हमारे में चित्त को रखने से विविधताप जिन को नहीं सताते हैं ॥ २३ ॥

हे साध्वि ! इन लक्षणों वाले जो हों तिनको तुम साधु जानो वे सब संगों से वर्जित हैं उन के साथ चर्चा की संगति की इच्छा तुम रखना क्यों कि वे संसार संग के दोष हरने वाले हैं ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सत्सङ्गस्य भक्त्यङ्गतामुपपादयति । सतामिति। वीर्यस्य सम्यग्वेदनं यासु ता वीर्यसम्विदः हृत्कर्णयो रसायनाः सुखदाः तासां जोषणात्सेवनादपवर्गोऽविद्यानिवृत्तिर्वर्त्म यस्मिंस्तस्मिन्हरौ प्रथमं श्रद्धा ततो रतिस्ततो भक्तिरनुक्रमिष्यति क्रमेण भविष्यतीत्यर्थः ॥ २५ ॥

देवहूतिरुवाच ।

काचित्त्वय्युचिता भक्तिः कीदृशी मम गोचरा ।
यया पदं ते निर्वाणमञ्जसाऽन्वाश्नवा अहम् ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ततः किमत आह। भक्त्येति । मम रचना या सृष्ट्यादिलीला तस्या अनुचिन्तया या भक्तिस्तया ऐन्द्रियात्सुखाज्जातविरागः सन् दृष्टश्रुतादैहिकामुष्मिकात्ततो यत्त उद्युक्तः संश्चित्तस्य ग्रहणे यतिष्यते ऋजुभिर्भक्तिप्रधानत्वादनायासैः ॥ २६ ॥

तदेवं प्रकृतेर्गुणानामसेवया ज्ञानादिभिश्चायं जीव इहैव देहे मामेवावरुन्धे प्राप्नोति ॥ २७ ॥

काचिदिति। काश्चिदित्यर्थः उचिता योग्या तत्रापि मम स्त्रियाः कीदृशी गोचरा योग्या निर्वाणं मोक्षात्मकं तव पदं स्वरूपमन्वाश्नवै अनन्तरमेव सर्वात्मना प्राप्स्यामि अञ्जसाविति पाठे अहं त्विति संबन्धः ॥ २८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

भक्त्यङ्गताम्। प्रेमभक्त्युत्पादकतां सुखदा इति रुचिजनकत्वं श्रद्धा विश्वासः रतिर्भावपरपर्याया प्रेम्णः पूर्वावस्था तदुक्तम् पञ्चरात्रे "प्रेम्णस्तु प्रथमावस्था भाव इत्यभिधीयते" इति भक्तिः प्रेमा तल्लक्षणं यथा श्रीभक्तिरसामृतसिन्धौ "शुद्धसत्त्वविशेषात्माभाव एव पाकावस्थां प्राप्तः प्रेमेति लक्षितः

सम्यङ्मसृणितस्वान्तो ममत्वातिशयाङ्कितः ।
भावः स एव सान्द्रात्मा बुधैः प्रेमा निगद्यते

इति ॥ २५ ॥

अथ। मातुरुत्कण्ठानन्तरं मुख्यां भक्तिं निर्देष्टुं सङ्गसिद्धां योगमिश्रत्वेन गौणीं निर्दिशति । भक्त्येति । ततः । गौणभक्तेः तथाच भक्त्यैव योगसिद्धिर्नान्यथेति सूचितं युञ्जानानां भक्तानां "प्राणायामादिभिर्मन,, इत्युक्तेः ॥ २६ ॥

असेवया। हेयत्वविचारेण ज्ञानेन त्वंपदार्थनिर्णयेन योगेनाष्टाङ्गेन कीदृशेन वैराग्यं विषयवैतृष्ण्यं तेन प्रकाशितेन मय्यर्पितया मदनन्यविषयेति मोक्षेऽपि अनन्यभक्तिरेवान्तरङ्गसाधनमिति व्यञ्जितम् प्रत्यगात्मानं तत्पदार्थं मां त्वंपदार्थतादात्म्येन प्राप्नोति योगमिश्रत्वाद्भक्तेः ॥ २७ ॥

एवं सर्वजीवनरूपां भक्तिं श्रुत्वात्युत्कण्ठया दैन्येन,तामेव पृच्छति काचिदिति । अत्र चित्प्रत्ययस्य स्विदित्यर्थकरणं कल्पनागौरवमत इत्यर्थ इत्युक्तम् अहो त्वयि का योग्येत्यनेन शुद्धाया एवोद्देशः कृतः पुनर्दैन्येनाह । तत्रापि । शुद्धाया योग्यत्वेऽपि ॥ २८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कथं सतां प्रसङ्गान्निवृत्तिधर्माभिरुचिरुत्पद्यत इत्यत्राह । सतामिति । सतां साधूनां प्रसङ्गान्मम वीर्यसंविदः वीर्याणि संवेदयन्तीति वीर्यसंविदः णिजर्थगर्भमिदं यद्वा भावे क्विप् वीर्याणां संविन्संवेदनं यासु ताः कथा यद्वा वीर्येण नित्यासंकुचितज्ञानगुणेन संवेत्ति सर्वं स्वरूपतः स्वभावतश्च साक्षात्करोतीति तथा तस्य सर्वज्ञस्य ममेत्यर्थः कथा हृत्कर्णयोः रसायना अमृताद्रुचिकर्यो भवन्ति प्रवर्तन्ते तज्जोषणात्तासां कथानां जोषणात्सेवनादाशु अपवर्गवर्त्मन्यपवर्गस्य मोक्षस्य वर्त्मनि द्वारभूते गुरूपसदने श्रद्धा त्वरा भवत्युत्पद्यते सत्सन्निधौ भगवत्कथाश्रवणे सति "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् ।

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ! ।
मामुपेत्य तु कौन्तेय ! पुनर्जन्म न विद्यते इति ।

स्वर्गादीनां सुखानां सातिशयित्वं क्षयिष्णुत्वं ब्रह्मोपासनस्यानन्तस्थिरफलत्वं केवलकर्मणामनन्तत्वाद्दुष्करत्वात्परिमितफलत्वाच्च तुच्छत्वं निवृत्तिधर्माणां तद्विपरीतत्वं च श्रुतवतः जातविरागस्य पुंसस्तादृशनिवृत्तिधर्मो जायत इत्यर्थः प्रत्येकाभिप्रायेणानुक्रमिष्यतीत्येकवचननिर्देशः ॥ २५ ॥

सत्सङ्गतिप्रभृतिप्रणाड्या भगवति प्रीतिरूपापन्नभक्तावुत्पन्नायां तत्रैव चित्तं सावधानेन नियम्यैतेत्याह । भक्त्येति । मम रचनानां सृष्ट्यादिव्यापाराणां चिन्ता यस्यां तया भक्त्या अनेन ब्रह्मस्वरूपवत्तद्गुणानामप्युपास्यत्वमुक्तं दृष्टश्रुतादैहिकामुष्मिकाद्भूषणस्रक्चन्दनपशुपुत्रस्वर्गादिरूपात्फलात्तस्मिन्नित्यर्थः जात उत्पन्नो विरागो यस्य स पुमान् योगयुक्तः अनभिसंहितफलधर्मयोगज्ञानयोगाभ्यां युक्तः स ऋजुभिः चित्तैकरूप्यसंपादकैः योगस्य भगवद्भक्तियोगस्य मार्गैः साधनैर्विवेकविमोकाभ्यासादिभिः चित्तस्य ग्रहणे नियमने यत्तः समाहितः यतिष्यते यत्नं कुर्यात् इत्यर्थः ॥ २६ ॥

योगमार्गानेव दर्शयन्ननयैव भक्त्या पुमान् मां प्राप्नोतीत्याह। प्रकृतेर्गुणानां सत्त्वादिगुणपरिणामरूपाणामविहितप्रतिषिद्धनिषिद्धानां कलञ्जगृञ्जनचण्डालपतितादिसंबन्धिकेशोच्छिष्टाद्युपहतरूपजात्याश्रयनिमित्तदुष्टानामन्नादीनामसेवया [१] अनेन विवेक उक्तः वैराग्येण विजृम्भितं यज्ज्ञानं तेन वैराग्यं कामानभिष्वङ्गशमदमादिरिति यावत् ज्ञानशब्देन प्रकृतिविलक्षणात्मयाथात्म्यज्ञानयोगः शुभाश्रयसंशीलनरूपं ज्ञानं च विवक्षितं अनेनाभ्यास उक्तः योगेनानभिसंहितकर्मफलयोगेन अनेन क्रिया उक्ता चकारेण कल्याणानवसादानुद्धर्षा विवक्षिताः तत्र सत्यार्जवदयादानाहिंसानभिध्याः कल्याणानि अनभिध्या परकृतदोषाचिन्तनं पुत्रविपत्त्यादिस्मरणजनितखेदाभावेन अवसादः अनुद्धर्षः पुत्रजन्मादिनिमित्तातिसन्तोषः एतैः प्रकृतिगुणासेवादिभिर्मय्यर्पितया समर्पितया ऐश्वर्यकैवल्यादिप्रयोजनविधुरया इत्यर्थः भक्त्या इहैवतद्देहावसाने प्रतीचो जीवस्यात्मानमन्तरात्मानं मामवरुन्धे प्राप्नोति यद्वा प्रत्यगात्मशरीरिणं मामित्यर्थः यद्वा प्रत्यग्जीवः आत्मानं मामवरुन्ध इत्यर्थः अत्र गुणासेवादिभिर्भक्त्येति न सहोपायसमुच्चयः किन्त्वसेवादिभिरनुगृहीताया भक्तेरेव साक्षात्साधनत्वम् इतरेषां तदनुग्राहकत्वेनैव

[१] एतेन परमते साधनचतुष्टयवत् विशिष्टाद्वैतमते साधनसप्तकमङ्गीक्रियत इति ख्यापितम् तथाचोक्तं रामानुजश्रीभाष्ये लघुपूर्वपक्षसमाधाने जिज्ञासाधिकरणे "वाक्यकारश्च ध्रुवानुस्मृतेर्विवेकादिभ्य एव निष्पत्तिमाह । तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः संभवान्निर्वचनाच्चेति" इति।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

परम्परया साधनत्वमित्यभिप्रायेण गुणासेवादिभिर्भक्त्येत्युक्तम् इहावरुन्धे इत्यनेनेह देहे जीवद्दशायामेव मुक्तिं लभत इति जीवन्मुक्तिरप्युच्यते इति व्याख्यानं नादर्तव्यं जीवन्मुक्तेरप्रामाणिकत्वात् तथाह्यापस्तम्बेन जीवन्मुक्तिर्निरस्ता ।

वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत्
बुद्धे क्षेमप्रापणं तच्छास्त्रैर्विप्रतिषिद्धम् ।
बुद्धे चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेत ।
एतेन परं व्याख्यातमिति

काचेयं जीवन्मुक्तिः सशरीरस्यैव मोक्ष इति चेन्मातामे वन्ध्येति वदसङ्गतार्थमिदं यतः सशरीरत्वं बन्धः अशरीरत्वमेव मोक्ष इति
नह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत
इत्यादिश्रुतिभिस्तेनैवोपपादितत्वादितिदिक् विस्तरस्तु (१) भाष्यादिष्वनुसन्धेयः ।

अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इति श्रुतिर्जीवन्मुक्तिमभिदधाति इति चेन्न अत्रोपासनदशायामपि ब्रह्माश्नुते अनुभवतीतिश्रुत्यर्थवर्णनात् अन्यथा देहपातावधिविलम्बपराया
स्तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्य इति श्रुतेर्विरोधापत्तेः तस्माद्यथोक्त एवार्थः ॥ २७ ॥

एवं विवेकादिभिर्ज्ञानेन योगेन चानुगृहीतभगवद्भक्तियोगस्यैव मुक्त्युपायत्वं संग्रहेणाश्रुत्य पुनः तद्विस्तरबुभुत्सया पृच्छति देवहूतिः । यद्वा ज्ञानयोगप्रतिपादनसाधुस्वरूपप्रतिपादनप्रसङ्गात्संग्रहेणोक्तभगवद्भक्तियोगस्य प्राधान्येन तत्स्वरूपतदङ्गस्वरूपविस्तरबुभुत्सया पृच्छति त्रिभिः । उचिता मुक्तिं साधयितुं योग्या त्वयि भक्तिः कावेति भक्तिस्वरूपप्रश्नः काश्चिदित्यपि पाठान्तरं तदाप्ययमेवार्थः कीदृशीति मम मतेर्गोचरा योग्यानेनभक्त्यधिकारानुसारेण सम्भावितावान्तरभेदश्च पृष्टः यया भक्त्याहं तापत्रयातुरा ते तव निर्वाणं निरतिशयसुखं पदमञ्जसा सुखेनान्वश्नवै अनुप्राप्नुवानि अत्राहमित्युपासकप्रश्नः ते पदं स्वरूपमित्यनेन प्राप्यप्रश्नः निर्वाणमिति प्राप्तिफलप्रश्नः अञ्जसेति विघ्नप्रतीत्या विरोधिवर्गप्रश्नः ॥ २८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

त्वच्चरित्रश्रवणादिना दुष्टसङ्गदोषनाशो दुष्करः सत्सङ्गात्कथमित्याशङ्क्य सत्सङ्गे हरिकथाश्रवणादिसम्भवेन तत्साङ्गाद्दुष्टसङ्गदोषविनाशः प्रतिज्ञायते तेषामन्यप्रसङ्गाभावादिति भावेनाह । सतां प्रसङ्गादिति । प्रसङ्गात्प्रकृष्टसङ्गात् वीर्याणां पराक्रमाणां संपदो यासु तास्तथा हृत्कर्णानां रसमानन्दमायन्तीति हृत्कर्णरसायनाः । अयगतौ इतिधातुस्ततः किं तत्राह । तज्जोषणादिति । तच्छब्देनोभयं च ग्राह्यास्तेभ्यः सद्भ्यस्तासां कथानां जोषणात्सेवणादपवर्गवर्त्मनि हरौ श्रद्धावती आस्तिक्यबुद्ध्युपेता भक्तिः अनुक्रमिष्यति पदं निधास्यतीत्यन्वयः ॥ २५ ॥

भक्त्या किं फलं स्यादिति तत्राह । भक्त्येति । पुमानर्थी समर्थो विद्वान् मद्विषयशास्त्रश्रवणादिनोत्पन्नया मद्भक्त्या ऐन्द्रियात् शब्दादिविषयाज्जातविरागः ब्रह्मादिस्तम्बपर्यन्तपदार्थानामसारत्वानित्यत्वसुखदुःखत्वज्ञानवांस्तथा जातः वौ परमात्मनि रागः स्नेहः सारत्वानित्यत्वनिर्दुःखत्वज्ञानपूर्वको यस्य स तथा कैश्चिदुत्तमाधिकारिभिर्दृष्टस्य कैश्चिदवराधिकारिभिः श्रुतस्यात्मद्रविणस्य परमात्माख्यवस्तुनोऽनुचिन्तया निरन्तरध्यानेन तथाचित्तस्यानवस्थानस्य मनसो ग्रहणे विषयाद्व्यावर्तने यत्तः प्रयत्नवानृजुभिरक्लेशदैर्योगमार्गैर्यमादिसदुपायप्रकारैर्योगयुक्तः सत्संगवान्यतिष्यते परमात्मापरोक्षायेति शेषः केषांचिद्दृष्टानाम् केषांचिच्छ्रुतानामात्मद्रविणानां जीवादिपदार्थानामसारत्वादनुचिन्तया ऐन्द्रियाज्जातविराग इति वा ॥ २६ ॥

अधिकारिणामेवंविधः प्रयत्नो न निष्फलः किन्तु सफल एव भवतीत्याह । असेवयेति । प्रकृतेर्गुणानां सेवा मुमुक्षुणा क्षुरधारावत्तृणपिहितमुखकूपवदलं परिहर्तव्येति पुनर्वचन वैराग्येण विजृम्भितेन प्रवर्धितेन परमात्मादीनामान्तरतत्त्वानां तारतम्यज्ञानेन च मय्यर्पितया भक्त्या योगेन मयि मनोनिधानलक्षणेन प्रत्यगात्मानं स्वान्तर्यामिणं मामिह प्रारब्धप्रतिबन्धकाभावेऽस्मिन् जन्मनि अवरुन्धे वशीकृतवत्पश्यतीत्यन्वयः विरक्तिभक्त्युपासितजनितज्ञानमेव पुरुषार्थसाधनं न कर्मेत्यतो वाह । असेवयेति । मय्यर्पितया भक्त्या योगेन समुत्पन्नेन योगध्यानोत्पन्नेन ज्ञानेन प्रत्यगात्मानं स्वबिम्बभूतं मां पश्यतीति कीदृशेन भक्तियोगेन प्रकृतेर्गुणानामसेवयोत्पन्नेन वैराग्यविजृम्भितेन ॥ २७ ॥

देवहूतिं मय्यर्पितयेति विशेषणेनोत्पन्नोत्कण्ठया दत्तावसरा पृच्छति । काञ्चिदिति । कीदृशी मम गोचरा ज्ञातुं शक्येति निर्वाणं नित्यनिवृत्तम् ॥ २८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सतामिति । रसायनत्वेन प्रथमं रुचिः । तत्रापि पतितोद्धरणादिचरितश्रवणेन श्रद्धा विश्वासः ततो रतिभक्ती भक्तेः पूर्वापरावस्थे ॥ २५ ॥

तत्र तत्र सङ्गिनो द्विविधाः सत्सु ज्ञानादिसाधारणदृष्टयस्तेभ्योऽप्युत्कृष्टदृष्टयश्च । तत्रान्त्यानां मुख्यां भक्तिमग्रे वैशिष्ट्येन मातुरुत्कण्ठानन्तरं निर्देष्टुं साधारणदृष्टीनां गौणीं निर्दिशति । भक्त्येति द्वाभ्याम् । भक्त्यैव विरक्तत्वमुद्युक्तत्वं योगे योग्यत्वं चेत्यधिकारिविशेषणानि ॥ २६ ॥

असेवया हेयत्वविचारेण ज्ञानेन तत्त्वंपदार्थमवरुन्धे । त्वंपदार्थनिर्णयेन विषयवैतृष्ण्यप्रकाशितेन योगेनाष्टाङ्गेन मय्यर्पितया मदनन्यविषयया च भक्त्या मां प्रत्यगात्मानं तत्पदार्थमवरुन्धे त्वंपदार्थेनादात्म्येन प्राप्नोति ॥ २७ ॥

अथ पूर्वपूर्वनिर्दिष्टभक्तेरेव सर्वजीवत्वमधिगम्य तामेव पृच्छन्ती तत्रापि दैन्येन सर्वत्र निजानधिकारितां मन्वाना तद्विशेषं पृच्छति । काचिदित्यादिना । भक्तिर्नाम कीदृशी किं लक्षणेत्यर्थः तस्यां च भक्तिजातौ काचिद्भक्तिस्त्वयि ममोचिता सती गोचरीकर्तुं शक्या स्यादिति ॥ २८—३१ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं भक्तिसाधनत्वेन सन्तो निरूपिताः कथं तेषां साधक-

(१) समन्वयाधिकरणे रामानुजश्रीभाष्ये मीमांसकनिष्प्रपञ्चीकरणवादिध्याननियोगवाद्यादिप्रघट्टके तत्रत्यश्रुतप्रकाशिकायां चेत्यर्थः ।

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

त्वमित्याशङ्क्य तं प्रकारमाह। सतां प्रसङ्गादिति। सतां सम्बन्धी यः प्रकृष्टः सङ्गः तस्माद्धेतोः मम वीर्यज्ञापकाः कथा भवन्ति तासां प्रीतिपूर्वकसेवया क्रमेण श्रद्धा रतिर्भक्तिश्च भवति भक्त्या च वैराग्यं ततोऽपि निरन्तर स्मृतिः ततो योगप्रवृत्तिः एवं पात्यागज्ञानवैराग्ययोगभक्तिभिः विद्याङ्गभूताभिः भगवत्स्वरूपप्राप्तिरिति समाधनं फलं साधनसाधिकापि भक्तिर्निरूप्यत इति न विरोधः। सतामिति। बहुवचने सत्वे प्रमाणां सतां साङ्गत्वे सङ्गो भवति द्वितीयः सन् तदेव युज्यते यदि प्रथमः सन् भवति तेषां प्रकृष्टः सङ्गः सजातीय एव भवति एकमतानिविष्टानामेकस्वभावानां वा प्रसङ्गपदेन चैतत्सूचयति तेषामन्योऽन्यं प्रकृष्टः सङ्गः अन्यस्य प्रासङ्गिक इति संसारिणामपि तेषां प्रसङ्गात् कथान्तरेषु वक्तव्यत्वेनोपस्थितादपि भगवत्कथा भवन्तीति च ज्ञापितं यद्यपि भगवत्कथाः सर्वत्र भवन्ति तथापि न ता भगवत्पराक्रमप्रतिपादिकाः तेषां मुखान्न भगवतः सामर्थ्यं लौकिकं निगनं भवति सतामेव तु प्रसङ्गात् भगवत्पराक्रमप्रतिपादिका भवन्ति तैरेव वीर्याणि ज्ञायन्ते स्वाभाविककथानां निरन्तर श्रवणात् तत्संस्काराभिनिविष्ट हृदयं श्रोत्र च जातं न भगवत्कथां गृह्णाति न हि हिमालयस्थिताः प्राणिनः आतपं ग्रहीतुं शक्नुवन्ति ते च पुनः देशान्तरे गताः यथातपप्रेप्सवो भवन्ति तद्देशस्वभावापन्नाः तद्देशस्थद्रव्यैः तथा भगवत्कथा अपि हृत्कर्णयोः पूर्वस्वभावोपमर्दनेन रसोत्पादिका भवन्तीत्यर्थः प्रथमतः श्रुताः हृदये रसमुत्पादयन्ति पुनः पुनः श्रुताः कर्णयोः यथा कामाभिनिविष्टस्य चक्षुः कामिन्यां रसाविष्टं सत् बलान्निवर्त्यमानमपि न निवर्त्तते किन्तु दिदृक्षेव निरन्तर भवति तथा कथा एव बलादपि भावयति शुश्रूषापि निरन्तरमुत्पद्यत इत्यर्थः अतस्तासां प्रीत्या श्रवणं भवति आवृत्त्या प्रीतिरुत्पद्यते तदा लोकान्निवृत्तं मनः अपहतपापं सन्मार्गे निविशते तदा आशु सर्वलोकनिवृत्तिरूपे आत्मनि मोक्षाख्ये भगवति वा तन्मार्गे वा प्रथममास्तिक्यबुद्धिर्भवति ततो रतिः स्नेहो भवति सर्वथैतत्प्राप्तव्यमिति ततो वक्ष्यमाणा भक्तिर्भवतीत्यर्थः ॥ २५ ॥

विषयाः त्यक्ता अपि वासनया हृदि स्थिता रागापगम एव गच्छन्ति स च भगवति स्नेहेन संजातया सेवया फलरूप प्राप्तया इतररसविस्मारिकया निवर्त्तते तदा जातविरागो भवति ऐन्द्रियादिति विरागे हेतुः न ते विषया आत्मपर्यवसिताः ऐन्द्रियत्वे प्रमाणमपि वदन् विषयाणां भेदमाह। दृष्टश्रुतादिति। दृष्टा राज्यादयः श्रुताः स्वर्गादयः तस्या भक्तेरनुवृत्त्यर्थं साधनमाह। मद्रचनानुचिन्तयेति। भगवत्कर्तृकाया रचना कृतिः रचनाशब्देनालौकिकं निर्माणमुच्यते तेनालौकिकभगवच्चरित्रस्मरणेन भक्तिः तिष्ठति तदा चित्तस्य ग्रहणे यत्तो भवति चित्तं हि चञ्चलस्वभावं न स्वतोऽवतिष्ठते प्रयोजकं च उपेक्षायां च न गृहीतं भवति अतोऽत्र यत्तः सावधानः सन् चित्तस्य ग्रहणार्थं योगयुक्तो भवति योगस्य चित्तवृत्तिनिरोधरूपत्वात् योगेन चित्तनिरोधः कर्त्तव्य इति निश्चितार्थो भवतीत्यर्थः तदा ऋजुभिरेव योगमार्गैर्हठक्लेशादिरहितैः भगवद्ध्यानरूपैः अचिन्तनदशायां प्राणायामादिरूपैर्वा अतो भक्तौ सिद्धायामितरत्सुलभमिति भक्तिरेव पञ्चमी विद्या मोक्षे अन्तरतमा ॥ २६ ॥

एवं ससाधनं शास्त्रार्थमुक्त्वा साधनपरम्परां निरूपयन् फलकीर्त्तनेनोपसंहरति। असेवयेति। अथ पूर्वोक्तः अधिकारी मां प्रत्यगात्मानमिहैव देहे जन्मनि ब्रह्माण्डभेदनादिकमकृत्वा अवरुन्धे सद्यो मुक्तिं प्राप्नोतीत्यर्थः तस्य प्रथमं प्रकृतेर्गुणानामसेवाप्राकृतविषयाणां बन्धकानामसकृदनुभवाभावः ततो विषयाभिनिवेशाभावे अन्तर्मुखं चित्तमात्मानं गृह्णाति. तदा ज्ञानं भवति आत्मकामश्च तदा विषयगतो रागो निवर्त्तते तेन च पुनर्ज्ञानमुल्लासितं भवति त्रयमेतदेकं योगः स्वतन्त्रः चाञ्चल्यनिवृत्तिहेतुः मय्यर्पिता च भक्तिः विषयवशीकर्त्री विषयेभ्य आत्मानं विमुच्य भक्त्या च भगवन्तं वशीकृत्य लक्ष्यमिव स्थापयित्वा तत्र सर्वमेव प्रकारं ज्ञात्वा जीवं सङ्घातात् लक्ष्यप्रापणयोग्यं च ज्ञात्वा योगारूढं विधाय लक्ष्ये योजनं युक्तमेव अतो विषयभेदात् पञ्चानामुपयोगः मामिति प्राप्यरूपोऽहमेव तत्तु सिद्ध इति शास्त्रार्थज्ञापनमात्रं क्रियत इति. बोधितं बाहिः प्रवेशशङ्कां वारयितुमाह। प्रत्यगात्मानमिति। प्रत्यगन्तर्मुखतया परिस्फुरन् नापि स्वात्मनो भिन्नम् ॥ २७ ॥

पूर्वमत्र भक्तिर्भजनमात्रमुक्तं न विशेषत इति विशेषतो भक्तिं पृच्छति। काचिदिति। श्रद्धा आराध्यत्वेन ज्ञानं सेवा माहात्म्यज्ञानपूर्वकः स्नेहश्च तेषु त्वयि युक्तः को भक्तिशब्दार्थ इति प्रश्नः यद्यपि क्रमाच्चत्वारोऽपि युक्तास्तथापि या साक्षात्त्वां विषयीकरोति सा वक्तव्येति सप्तम्या सूचितं भक्तियोगोऽपि बहुविध इति जीवाधिकारमपुरस्कृत्य त्वद्योग्या वा केति प्रश्नः उचितेत्यविहिता भक्तिर्व्यावर्त्तिता कीदृशी सगुणा अगुणा वा तत्रापि मम योग्या कीदृशीत्याह। मम गोचरेति। गोचरशब्दो विशेष्यनिघ्नोऽपि भवति त्वय्येव सर्वे मार्गाः प्रकीर्तिताः भवांश्च सर्वरूपः अतः सर्व एव भक्तिमार्गा यद्यपि त्वयि युज्यन्ते तथापि यया भक्त्या निर्वाणरूपं ते पदमञ्जसा अनायासेनैव अहमश्नवै अश्नवानीति वा पाठः दैवगत्या सर्वेऽपि मार्गाः कदाचित् सुगमा भवन्ति तद्व्यावृत्त्यर्थमाह। एवेति। निर्वाणाख्यं पदं व्यापिवैकुण्ठः तत्र या भक्तिः सर्वाधिकारशून्यमपि पुरुषं नयति गतश्च तल्लोके आनन्दानुभवसमर्थो भवति तत्र इव तादृशी वक्तव्येत्यर्थः ॥ २८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

साधु संङ्गत एव भगवति मनोरतिं वहतीत्यत्र क्रममाह। सतामिति। सङ्गः प्रार्थ्य इति पूर्वोक्तेः प्रथमं श्रद्धा ततः सतां प्रकृष्टात् संगान्मम कथा भवन्तीत्यादावप्रकृष्टात् संगाद्धजनक्रियामात्रं नतु कथाः ततः प्रकृष्टात् संगादनर्थनिवर्त्तिकाः कथा भवन्ति ततस्ता एव कथा निष्ठामुत्पादयन्त्यो मम वीर्यस्य मन्माहात्म्यस्य सम्वित् सम्यग्वेदनं यतस्तथाभूता भवन्ति ततो रुचिमुत्पादयन्त्यो हृत्कर्णरसायना भवन्ति ततस्तासां कथानां जोषणात् प्रीत्या आस्वादनात् अपवर्गो वर्त्मन्येव यस्य तस्मिन् भगवति श्रद्धा आसक्तिः रतिर्भावः भक्तिः प्रेमा अनुक्रमिष्यति अनुक्रमेण भविष्यति। सम्प्रति मया प्रवर्त्यमाना भक्तिरेवमनुक्रमेण लोके प्रचरिष्यतीत्यर्थः ॥ २५ ॥

शुद्धां भक्तिमुक्त्वा योगमाह। भक्त्येति। दृष्टश्रुतादैहिकामुष्मिकात् सुखात् मद्रचनानां मल्लीलानामनुचिन्तया योगयुक्तः

योगो भगवद्बाणो निर्वाणात्मंस्त्वयोदितः।
कीदृशः कति चाङ्गानि यतस्तत्त्वावबोधनम् ॥ २९ ॥
तदेतन्मे विजानीहि यथाऽहं मन्दधीर्हरे!।
सुखं बुद्ध्येय दुर्बोधं योषा भवदनुग्रहात् ॥ ३० ॥

मैत्रेय उवाच।

विदित्वाऽर्थं कपिलो मातुरित्थं जातस्नेहो यत्र तन्वाऽभिजातः।
तत्त्वाम्नायं यत्प्रवदन्ति साङ्ख्यं प्रोवाच वै भक्तिवितानयोगम् ॥ ३१ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

सत्र चित्तस्य ग्रहणे स्ववशीकारे यत्तो यत्नवानपि ऋजुभि-र्भक्तिसम्वलितत्वेन सुगमैर्योगमार्गैः सम्प्रति मत्प्रवर्त्तयिष्यमाणै-र्यतिष्यते अग्रे जनिष्यमाणः पुमानित्यर्थः ॥ २६ ॥

योगमुक्त्वा ज्ञानमाह। असेवयेति। प्रकृतेर्गुणानां विषयाणां या असेवा निष्कामकर्मलभ्या तया यज्ज्ञानं तेन मां प्रत्यगा-त्मानं तत्पदार्थम् अवरुन्धे प्राप्नोति योगेनेति शमादीनामपि ज्ञानाङ्गत्वात् भक्त्येति भक्तिं विनाभूतस्य ज्ञानस्य वैफल्यात्॥२७॥

काचिदिति। काञ्चिदित्यर्थः। त्वय्युचिता त्वयि युज्यत इत्यर्थः न युज्यमानयेत्यनेन युज्यमानाया भक्तेरुत्कर्षश्रवणात् मम स्त्रियाः कीदृशी गोचरा ज्ञातुं कर्त्तुञ्च शक्येत्यर्थः। पदं त्वच्च-रणारविन्दं निर्वाणं निवृत्तिस्वरूपम्। "निर्वाणमस्तं गमने निर्वृत्तौ गजमज्जने। सङ्गमेऽप्यपवर्गे च" इति मेदिनी। यद्वा। निर्वाणं निष्क-एटकं यथा स्यात्तथा अन्वाश्नवै प्राप्स्यामि अञ्जसा त्वादृनवा इति पाठ अहंत्विति सम्बन्धः ॥ २८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

सतां प्रकृष्टसङ्गात् मम वीर्य्यस्य सम्यग्वेदनं यासु ताः हृदः कर्णयोश्च रसायनाः सुखदाः तासां जोषणात्सेवनात् अपवर्गस्य मुक्तेर्वर्त्मनि प्रापके मुक्तिप्रदे आशु श्रद्धा विश्वासः ततो रतिः रुचिस्ततो भक्तिः अनुक्रमिष्यति क्रमतो भवि-ष्यति ॥ २५ ॥

श्रद्धादिक्रमतो भक्त्युत्पत्त्यनन्तरं पुमान्मुमुक्षुः मद्रचनायाः विश्वनिर्माणादिरूपायाः अनुचिन्तया अनुस्मरणेन या भक्ति-स्तया दृष्टाद्दैहिकात् श्रुतादामुष्मिकात् ऐन्द्रियात् ऐन्द्रियविषयात् जातविरागः अत एव यत्तः सावधानः योगयुक्तः ज्ञानवैराग्यभक्ति-युक्तः ऋजुभिः सुखसाध्यैः योगमार्गैर्भक्तियोगमार्गैः परमात्मस्वरूप-गुणश्रवणमननादिभिः चित्तस्य ग्रहणे पुंसि योजने यतिष्यते ध्रुवास्मृतिरूपं ध्यानयोगं प्राप्स्यतीत्यर्थः ॥ २६ ॥

निष्कृष्टार्थमाह। असेवयेति। गुणानामिन्द्रियविषयाणाम-सेवया मय्यर्पितया भक्त्या यद्वैराग्यविजृम्भितं ज्ञानं भक्त्या मामभिजानातीति श्रीमुखवचनात् तेन यो योगः ध्यानयोगः तेन इहैव मां प्रत्यञ्चो जीवास्तेषामात्मानमाश्रयमवरुन्धे प्रा-प्नोति साक्षात्पश्यतीत्यर्थः "अत्र ब्रह्मसमश्नुते" इति श्रुतेः तद-नन्तरं प्रारब्धक्षये सति मुक्तो भवति ॥ २७ ॥

न युज्यमानया भक्त्या भगवत्यखिलात्मनि
सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये इति
भक्तिमाहात्म्यं श्रुत्वा पृच्छति। त्वयि काचित् भक्तिः उचिता योग्या तत्रापि मम गोचरा मया कर्त्तुं योग्या कीदृशी यया स्वानुरूपया निर्वाणं निरतिशयं ते पदं धाम अञ्जसा सुखेन अन्वाश्नवै अन्वनन्तरमेव प्राप्स्यामि ॥ २८ ॥

---

भाषाटीका।

उन सत्पुरुषों के संग में हमारे चरित्रों की हृदयकर्णों को रसदायक कथा होती हैं उन कथाओं के सेवन से मोक्ष मार्गदायक परमात्मा में शीघ्रही श्रद्धा प्रीति भक्ति बढती है ॥ २५ ॥

भक्ति के होने से हमारी जगत् रचना के देखने से स्मरण से पुरुष को इन्द्रिय विषयों से वैराग्य होजाता है तो फिर योगमें युक्त होकर चित्त के रोकनेमें सावधान होता है तब सरल योगमार्गों से यतन करने वाला होता है ॥ २६ ॥

तब यह पुरुष प्रकृति के गुणों के त्याग करने से वैरा-ग्ययुक्त ज्ञान के बढने से योगसे मेरेमें अर्पित भक्ति से प्रत्यगात्मा मेरे को वश करलेता है ॥ २७ ॥

देवहूतीजी बोलीं आपके विषय में उचित भक्ति कौनसी है किसप्रकार की है हमको कैसे मालूम हो जिस भक्ति से आपके निर्वाणपदको सहज में हम प्राप्त होजावें सो कहिये ॥ २८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

भगवद्बाणो यो भगवन्तं लक्ष्यीकरोतीत्यर्थः यतो यस्माद्यो-गात् ॥ २९ ॥

विजानीहि। विशेषेण ज्ञापय सुखमनायासेन ॥ ३० ॥

इत्थं मातुरर्थं प्रयोजनं विदित्वा जातस्नेहत्वे हेतुः यत्र यस्यां तन्वा देहेनाविर्भूतः तत्त्वान्याम्नायन्तेऽनुक्रम्यन्ते यस्मिन्-किन्तत् यत्साङ्ख्यं प्रवदन्ति तत्प्रोवाच भक्तिवितानञ्च योगं च ॥३१॥

काचित्त्वय्युचिता भक्तिरिति पृष्टामुत्तमां भक्तिं लक्षयति। गुणा विषया लिङ्ग्यन्ते ज्ञायन्ते यैस्तेषां देवानां द्योतनात्मकानामिन्द्रियाणां तदधिष्ठातॄणां वा सत्त्वे सत्त्वमूर्तौ हरावेव या वृत्तिः सा भक्तिः सिद्धे-र्मुक्तेरपि गरीयसीत्युत्तरेणान्वयः कथम्भूता अनिमित्ता निष्कामा

**श्रीभगवानुवाच ।**

**देवानां गुणलिङ्गानामानुश्रविककर्मणाम् ।**
**सत्त्व एवैकमनसो वृत्तिः स्वभाविकी तु या ॥ ३२ ॥**

### श्रीधरस्वामिकृतभावार्थदीपिका ।

स्वाभाविकयत्नसिद्धा तेषामेवंविधवृत्तौ हेतुमाह । गुरोरुच्चारणमनुश्रूयत इत्यनुश्रवो वेदस्तद्विहितमानुश्रविकं तदेव कर्म येषामत एवैकमेव रूपमविकृतं मनो यस्य पुंसः शुद्धसत्त्वस्येत्यर्थः ॥ ३२ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

वैष्णवं योगं पृच्छति । यो योग इति । कीदृशः किंलक्षणः भगवति लक्ष्ये बाण इव तथा च तद्विषयत्वमात्रस्य विवक्षितत्वादित्यर्थोक्तिः तत्त्वावबोधनं त्वंपदार्थतादात्म्येन तत्पदार्थसाक्षात्कारो भवतीत्यर्थः ॥ २९ ॥

तदेतत् भक्तियोगादिलक्षणम् ॥ ३० ॥

देहेनाविर्भूत इत्युक्त्वा देहस्य स्वरूपाभिन्नत्वमभिप्रेतम् विकारतया जन्मानङ्गीकारात् अपृष्टस्यापि साङ्ख्यस्याभिधानं भक्त्युपयुक्तस्वरूपप्रतिपत्त्यर्थं योगं चाष्टाङ्गम् ॥ ३१ ॥

देवानामितियुग्मकम् । हरावेव ननु हरावपि देवतान्तरेऽपीति अनन्यावृत्तिस्तदानुकूल्येन प्रवृत्तिस्तत्र हस्तादीनां तथा प्रवृत्तिः करौ हरेर्मन्दिरमार्जनादावित्यादिनाम्बरीषादौ प्रसिद्धैव पायूपस्थयोर्नात्युपयुक्तयोस्तु तथा वृत्तौ विष्णुधर्मोत्तरमानम्

मलमूत्रपरित्यागाच्चित्तस्वास्थ्यं यतो भवेत् ।
अतः पायुरुपस्थश्च तदाराधनसाधनम् इति

अयत्नसिद्धा इति । विषयसौन्दर्य्यमेव हेतुरुपपत्तिः एवं विधवृत्तौ निष्कामस्वाभाविकप्रवृत्तौ वेदविहिततदर्पितकर्मणो भक्तिजनकत्वे "यदत्र क्रियते कर्म भगवत्परितोषणम् । ज्ञानं यत्तदधीनं हि भक्तियोगसमन्वितम्" इत्यादिमानं ज्ञेयमत एव वेदोक्तकर्मपरेन्द्रियवत्त्वात् प्रासङ्गिकी आनुषङ्गिकी मुक्तेरपि गरीयसीत्यनेन तस्या गुणातीतत्वं ततोऽपि घनपरमानन्दत्वं श्रीभगवत्प्रसादविशेषेणैव मनस्युदितत्वं तत्तादात्म्येनैव तद्वृत्तिव्यपदेश्यत्वं दर्शितम् ॥ ३२ ॥ ३३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे निर्वाणात्मन् ! निरतिशयानन्दरूप! भगवद्बाणः लक्ष्यरूपे भगवति बाणरूपेण प्रयुक्तो योगस्त्वयोदित उक्तः स कीदृशः किं प्रकारः तस्याङ्गानि कति कति सङ्ख्याकानि यतो येभ्योऽङ्गेभ्यः तत्त्वस्यात्मतत्त्वस्यावबोधनम् अवबुध्यते अनेनेत्यवबोधनं साक्षात्कारसाधनमुपासनं निर्वर्त्यत इत्यर्थः कीदृश इति प्रकारप्रश्नः कति चाङ्गानीत्यङ्गगणनाप्रश्नः एवमर्थपञ्चकं पृष्टं भवति ॥ २९ ॥

तदेतदुपायोपेयोपेतृविरोधिफलस्वरूपं दुर्ज्ञेयं हे हरे! योपा अत एव मन्दधीरहं भवदनुग्रहात् सुखं बुध्येय जानीयां तथा मे मह्यं विजानीहि ज्ञापय ॥ ३० ॥

एवमापृष्टः कपिलो भगवद्भक्तियोगमवतारयामासेत्याह मैत्रेयः । विदित्वेति । कपिलो मातुर्देवहूत्याः अर्थं भक्तियोगादिरूपार्थसम्बन्धि शुश्रूषितं स्वरूपं विदित्वा जातस्नेहः मातर्युत्पन्नस्नेहः तत्र हेतुः यत्र यस्यां तन्वा देहेन जातः तत्त्वाम्नायं तत्त्वशास्त्रं सांख्यतत्त्वसंख्या तेनात्मस्वरूपप्रकाशकं यद्वदन्ति तद्भक्तिवितानयोगं भक्तिविस्तररूपं योगमुवाच ज्ञानयोगस्य भक्तियोगाङ्गत्वादेकीकृत्योक्तम् ॥ ३१ ॥

तत्र भगवान् कपिलः साङ्गं सविस्तरं मुक्त्युपायं भक्तियोगमष्टाविंशाध्यायेन प्रतिपिपादयिषुस्तदङ्गभूतात्मयोगविषयभूतप्रत्यगात्मस्वरूपं सविस्तरं सप्तविंशाध्यायेन शोधयिष्यन् भजनीयस्य परस्य ब्रह्मणो माहात्म्यसूचनाय जगत्सृष्ट्यादिलीलाः षड्विंशेन कथयिष्यंस्तावद्भक्तियोगं संग्रहेणैतत्स्वरूपकथनपूर्वकं प्रशंसति । देवानामिति । गुणलिङ्गानां गुणाः शब्दादिविषयाः तेषां लिङ्गानां ज्ञापकानां देवानां देवाधिष्ठितानां स्वस्वदेवताधिष्ठितानां ज्ञानेन्द्रियाणामित्यर्थः तथा आनुश्रविककर्मणामनुसूत्याविच्छिन्नपाठपरम्परया श्रूयते इत्यनुश्रवो वेदः तद्विहितमानुश्रविकमानुश्रविकं कर्म येषां शास्त्रप्रसिद्धव्यापारानुष्ठानपराणां कर्मेन्द्रियाणामित्यर्थः तेषामुभयविधेन्द्रियाणामेकाग्रस्य मनसश्च सत्त्वे शुद्धसत्त्वमये भगवद्विग्रहे या स्वाभाविकी अनिमित्ता फलाभिसन्धिरहितेति यावत् वृत्तिर्व्यापारः ॥ ३२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ऋजुभिर्योगमार्गैरित्युक्तयोगलक्षणं पृच्छति । यो योग इति । निर्वाणात्मन् ! परमानन्दमूर्त्ते ! यतो यस्माद्योगात् ॥ २९ ॥

तदेतद्योगलक्षणं भक्तिलक्षणं विजानीहि विशेषेण ज्ञापय योषेति हेतुगर्भविशेषणं स्वच्छास्त्रज्ञानाभावादित्यर्थः ॥ ३० ॥

मैत्रेयो विदुरायेमां कथां कथयतीति शुकः परीक्षिते वक्ति । विदित्वार्थमिति । यत्र यस्यां सच्चिदानन्दमयकरचरणादिमत्या तन्वाभिजातः शुक्रशोणितसंस्पर्कं दूरीकृत्य प्रकाशितः तस्या मातुरित्थमर्थमभिप्रायं विदित्वा मन्मातुर्भगवद्भक्तिश्रवणे तात्पर्यमभून्नान्यत्रेति जातः प्रवृद्धः स्नेहोऽनुग्रहलक्षणो यस्य स तथा कपिलो भगवान् यत्तत्त्वाम्नायं परमात्मादितत्त्वप्रतिपादकं सांख्यशास्त्रं प्रवदन्ति तद्भक्तियोगवितानं भक्तियोगविस्तारलक्षणं शास्त्रं मात्रे प्रावोचत् व्याख्यातवानित्यन्वयः हरेरितरवज्जननाङ्गीकारे

शुक्लेन जनिरन्येषां हरेः स्वतनुवैव तु ।
नित्योदितज्ञानतनोः कुतः स्याच्छुक्लतो जनिः इति

प्रमाणविरोधो दुर्निगमः अत एव पुरा स्वयैव तन्वेत्युक्तमितरेषां प्रागशरीराणां पश्चाच्छरीरत्वेन जन्मदर्शनात् ॥ ३१ ॥

यद्यपि सत्त्वादिगुणभेदेन भक्तिरप्यनेकविधा तथापि सात्त्विकसंज्ञमुत्तमाधिकारियोग्यं भक्तियोगं निरूपयति । देवानामिति । सत्त्वे एकमनस इत्येतत्पदद्वयं तन्त्रेणोपात्तन्यायेन द्विरावृत्त्या व्याख्येयं "सदा सर्वगुणात्मत्वात्सत्त्वो विष्णुरुदीर्यते,, इति वचनात् सत्त्वे सर्वगुणाढ्ये एव हरावेव एकमनस एकाग्रमनसः पुरुषस्य मनुष्याद्यन्यतमस्य गुणलिङ्गानां शब्दादिज्ञापनलक्षणानामिन्द्रियाभिमानिनामानुश्राविककर्मणाम्

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वेदोक्तकर्मानुष्ठानेन तदुक्तानतिलङ्घिनाम् ।
आनुश्राविककर्मासौ श्रुत्युक्तं यो न लङ्घयेत् ।

इत्युक्तेः देवानां तात्त्विकसंज्ञानां सत्त्वे भगवति एकमनसः एकाग्रतयान्यव्यापारमन्तरेणान्तःकरणस्य या वृत्तिः सा भक्तिरित्युच्यते कीदृशी स्वाभाविकी गङ्गाप्रवाहलक्षणा अनिमित्ता फलसङ्कल्परहिता अत्यन्ताचित्तनिरोधरूपत्वाद्दुःखहेतुशङ्का न कार्या प्रत्युतपूर्णानन्दरूपत्वादप्येकभक्त्या वास्तमुक्तेरुत्तमेत्याह सिद्धेरिति । यस्मिन्काले पूर्णभक्तयः सब्रह्माद्यो मुक्तिमेष्यन्ति तस्मिन्नेव समये मुक्तिप्राप्तियोग्यस्य भक्तिपरिपाकमनवाप्तस्य पुंसो या सिद्धिरपूर्णसुखलक्षणा मुक्तिस्तस्याः सिद्धेर्गरीयसी तदुक्तम्

अपूर्णभक्तेर्मुक्तौ तु न सुखं पूर्तिमेष्यति ।
अतस्तादृशमुक्तेश्च भक्तिः पूर्णा गरीयसीति ।

पूर्णसुखहेतुत्वात् ज्ञानवदन्तरङ्गत्वाच्च गरीयस्त्वं युक्तमित्याह । जरयतीति । कोशं लिङ्गशरीरं "कोशो ऽस्त्री कुड्मले दिव्ये शस्त्रेऽर्थ तनौ„इतियादवः समूलतूलनाशस्य विवक्षितत्वात् तस्मिन्नेवार्थे दृष्टान्तमाह । निगीर्णमिति । निगीर्णं सर्वतोग्रस्तं देवानामसुरेन्द्रियाभिमानित्वेन च पापकर्मणि प्रेरणया तद्दर्शनेन जुगुप्सादिना चित्तविक्षेपसंभवेन भक्तेरात्यन्तिकत्वायोगादन्यत्रेभ [ १ ] येषामपि भगवति मनोवृत्तेर्गङ्गाप्रवाहवत् सिद्धत्वेन त [ २ ] दभावात् सत्त्वे एव एकमनसः पुंसो गुणलिङ्गानामिति विशिष्योक्तेरभिप्रायः संभावनामात्राभिप्रायेणोक्तमिदमित्येतावता भक्तेर्न्यूनातिरेकभावो न कल्पनीयः इर्याज्ञाकारित्वेन तत्प्रीतिहेतुत्वात् देवजातिमात्रपरिहाराय गुणलिङ्गानामिति कल्याद्यासुरव्यावृत्तये आनुश्राविककर्मणामिति तेषां वेदोक्तानुष्ठाननियमाभावात् उक्तविशेषणवतां देवानां सत्त्वे भगवत्येकमनसो वृत्तिर्भक्तिरित्युक्तेऽधमाधिकारिभिः क्रियमाणाया अभक्तित्वमात्यन्तिकाभावश्च स्यात्तस्मात् कीदृशी मम गोचरेति पृष्टत्वात्तत्परिहाराय च विभागो वक्तव्यः देवानां सत्त्व एकमनसो वृत्तिरित्येतदेव सामान्यभक्तिलक्षणं गुणलिङ्गानामितितद्विशेषभक्तिलक्षणम् आनुश्राविककर्मणामिति सर्वसामान्यभक्तिलक्षणं स्वाभाविक्यनिमित्तेति सर्वत्र समम् अधमाधिकारिभिः क्रियमाणा भक्तिरीदृशी सिद्धेर्मुक्तेर्गरीयसी प्रधानसाधनभूता ॥ ३२।३३ ।

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

देवानामिति युग्मकम् । ततः करुणया तदुचितं भक्तिविशेषमपि प्रतिपादयिष्यन्मुख्यामेव भक्तिं लक्षयति । देवानामिति सार्द्धेन"पूर्वं श्रद्धारतिर्भक्तिरनुक्रमिष्यति"इत्युक्तम् । तत्र यद्यपि रतिभक्त्योर्द्वयोरपि तारतम्यमात्रभेदयोः प्रीतित्वमेव तथापि प्रीत्यतिशयलक्षणायां प्रेमाख्यायां भक्तौ तदतिस्फुटं स्यादिति कृत्वा भक्तिपदेन तामुपादाय लक्षयति । अयमर्थश्चायम् । गुणलिङ्गानां गुणत्रयोपाधीनामानुश्रविकं श्रुतिपुराणादिगम्यं कर्माचरितं येषां ते तथोक्ताः तेषां देवानां श्रीविष्णुब्रह्मशिवानां मध्ये सत्त्वे

[ १ ] सात्त्विकजीवतदिन्द्रियाभिमानिदेवानाम् ।
[ २ ] चित्तविक्षेपाभावात् ।

सान्निध्यमात्रेण सत्त्वगुणोपकारके स्वरूपशक्तिवृत्तिभूतशुद्धसत्त्वात्मके वा विष्णौ । एतच्चोपलक्षणं श्रीभगवदाद्यनन्ताविर्भावेष्वेकस्मिन्नपीत्यर्थः । एवकारेण नेतरत्र न च तत्रापि च एकमनसः पुरुषस्य या वृत्तिः तदानुकूल्यप्रायात्मको ज्ञानविशेषः । अनिमित्ता फलाभिसन्धिशून्या स्वाभाविकी स्वरसत एव विषयसौन्दर्योदयत्वेनैव जायमाना । न बलादापद्यमाना सा भागवती भक्तिः प्रीतिरित्यर्थः । प्रीतिसम्बन्धादेवास्या भक्तेः स्वाभाविकत्वं स्यात् तस्माद्वृत्तिशब्देन प्रीतिरेवात्र मुख्यत्वेन प्राप्नोति सा च सिद्धेर्मोक्षाद्गरीयसी सालोक्यसार्ष्ट्यादिश्रवणात् । अत एव ज्ञानसाध्यस्यापि तिरस्कारप्रसिद्धेर्ज्ञानादिति व्याख्यानमसहशमत्र मोक्षाद्गरीयस्त्वेन तस्या वृत्तेर्गुणातीतत्वं ततोऽपि घनपरमानन्दत्वं श्रीभगवत्प्रसादविशेषेणैव मनस्युदितत्वं तत्तादात्म्येनैव तद्वृत्तिव्यपदेश्यत्वं च दर्शितम् ॥ ३२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

योगं च पृच्छति । यो योग इति । भगवल्लक्षणलक्ष्ये आत्मनो योजनार्थं यो वाणरूपो योगः सोऽपि वक्तव्यः भगवान् सर्वत्र नयेदित्यत्र भक्तिर्हेतुः स्वतो गमने सामर्थ्यहेतुः योगः स्वयोदित इति योगेन मामवरुन्ध इत्यत्र तस्य स्वरूपमङ्गानि च वक्तव्यानि शास्त्रे नानाविधानां निरूपणात् स्वतन्त्रतया योगस्य कारणत्वाभावात् भक्तेश्च पृष्टत्वात् किं योगेनेत्याशङ्क्याह । यतस्तत्त्वाववोधनमिति । ज्ञानसाधनं योग अनेन चत्वारोऽर्थाः पृष्टाः भक्तिः योगः स्वरूपतस्तदङ्गानि फलसाधकत्वेन तदङ्गं सांख्यं ज्ञानं च योगो योगाङ्गानि चैकम् अन्यानि त्रीणि ॥ २९ ॥

एतत्सर्वं वक्तव्यमिति निरूप्योपसंहरत्यावश्यकत्वाय तदेतदिति शास्त्रे प्रसिद्धम् अनुभवारूढपर्यन्तं वक्तव्यं विजानीहि ज्ञापय ज्ञापने प्रयत्नाधिक्यार्थं स्वस्य निकृष्टाधिकारमाह । मन्दधीरहं हरेः सुखं स्वरूपं सर्वैरेव दुर्बोधं भवदनुग्रहात् बुध्येयं हरेः सम्बन्धि वा पूर्वोक्तं सुखं यथा भवति तथा बुद्ध्येयमिति नापि वचनमात्रेण बुध्यते किं त्वनुग्रहादेवेति तयोक्तम् ॥ ३० ॥

यद्यपि मात्रा गूढतया निर्दिष्टं चतुष्टयं तथापि ज्ञात्वा तन्निरूपयतीत्याह । विदित्वेति । योगो भक्तिः क्रियारूपा ज्ञानं सांख्यं च वेदनं तेषां यत्रोपयोगः स्यात्तदग्रे वक्ष्यते स्फुटं चतुर्णां यत्प्रयोजनं सोऽर्थः ।

विवेचनं तु सङ्घातात् सांख्यकार्यं प्रचक्षते ।
विविक्तस्य तु विज्ञानं ज्ञानकार्यं निरूपितम् ।
भक्त्या प्रसक्ते तु हरौ तं योगेनैव योजयेत् ।

एतज्ज्ञाने सामर्थ्यं कपिल इति मातुरिति कथनावश्यकत्वं जातस्नेह इति गुप्तकथने हेतुः यत्र मातरि तन्वा कपिलदेहेनाभिजातः अधिकस्नेहे हेतुः यद्वक्ष्यति तत्परिगणयति । तस्यांमनायं तस्वानामाम्नायः आवृत्तिर्यत्र उद्देशलक्षणभेदेन कारणत्वेन कार्ये चानुप्रवेशेन ३१॥ तत्र भक्तिं लक्षयति । देवानामिति द्वयेन । तस्य च परिकरः सर्वोऽप्यग्रे वक्ष्यते एकादशभिः एकमनसः पुरुषस्य सर्वेन्द्रियाणां सत्त्वमूर्तौ भगवति या स्वाभाविकी वृत्तिः सा भक्तिरिति इन्द्रियाणि हि द्विविधानि स्वभावतः "द्वयाह प्राजापत्या" इत्यत्र निरूपितानि एकानि देवरूपाणि एकान्यसुररूपाणि यान्यलौकिकं वेदोक्तमेव कर्म ज्ञानं वा जनयन्ति तानि देवरूपाणि यानि लौकिकं

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

कर्माणि जनयन्ति तान्यासुराणि तेषामन्योऽन्यं स्पर्द्धा तत्र बलिष्ठान्यासुराणि तैर्दैवरूपाणि न स्वकार्यं प्रवर्त्तितुं शक्नुवन्ति तानि चेद्भगवन्योपासनादिना आसङ्गादिदोषान्निवृत्तानि स्वस्य देवस्य भावं प्राप्नुवन्ति तदा कार्यतोऽपि देवरूपाणि भवन्ति तत्र ऋषीणां बहुजन्माभ्यासात् इन्द्रादिदेवानां च देवरूपाण्येवेन्द्रियाणि भवन्ति ये वा दैव्यां संपदि जाताः तेषामपि देवरूपाणि भवन्ति आसुराण्यपि भवन्ति एकस्मिन्नेव गोलके उभयमपि तिष्ठति यानि निषिद्धाद्विचिकित्सन्ते यथा मेध्यं दृष्ट्वा तथा कामिन्यामपि दृष्टायां यानि पुनः निषिद्धे लौकिके च रज्यन्ते तानि बलाद्विहिते प्रवर्त्तमानान्यपि न परितुष्टानि भवन्ति इति आसुराणि तत्र भक्तिर्दैवैरेव भवति नासुरैरिति देवपदेन करणानि निर्णीतानि तेषां परिज्ञानार्थं लक्षणमाह। गुणलिङ्गानामिति। गुणा रूपादयः तैर्लिङ्ग्यन्ते गुणा लिङ्गानि येषामिति देवरूपाणामिन्द्रियाणामेतल्लक्षणं तानि लयविक्षेपशून्यानि ततो विक्षेपाभावात् न कार्येषु कृत्या स्पष्टमुपलभ्यन्ते नापि लयाभावात् मूढानि पदार्थमपि न गृह्णन्तीत्यपि किं तु रूपमात्रं चक्षुर्गृह्णाति पश्यतीति कृत्वा चक्षुरस्तीति ज्ञायते एवमन्यानि तादृशानि कथं भवन्तीत्याकाङ्क्षायामाह। आनुश्रविककर्मणामिति। गुरोरुच्चारणानन्तरं श्रूयत इति अनुश्रवो वेदः तेन प्रोक्तानि कर्माणि आनुश्रविकाणि तान्येव कर्माणि येषां लोके दर्शनादिमात्रं कार्याणि तु वैदिकान्येव तेषां दैवात् येषामेतादृशानीन्द्रियाणि भवन्ति येषां भक्तिर्भवतीत्युक्तम्। किञ्च तान्यपि कर्मयोगज्ञानादिबहुरूपे वैदिके कर्मणि प्रवर्त्तमानानि पूर्ववासनयाऽभ्यासात् भवन्ति तेषामपि यदि फलावस्था भवति तदा सत्त्व एव शुद्धसत्त्वरूपे भगवत्स्वरूपे प्रवर्त्तमानानि स्वभावतो भवन्ति सत्त्व इति साङ्ख्यमतानुसारेणोक्तं वस्तुतस्तु गुणातीते भगवति स्वाभाविकी वृत्तिरिति भगवच्छास्त्रं मन्निष्ठं निर्गुणं स्मृतं हरिर्हि निर्गुणः साक्षादित्यादिवाक्यैः सर्वा भगवतः सामग्री निर्गुणा एवकारो राजसतामसव्युदासार्थः एकमनस इति एकमेव मनो यस्य मनोऽपि द्विविधं दैवासुरविभेदेन तत्रासुरं सङ्कल्पविकल्पात्मकं नानाभावापन्नं गुणांश्च क्षोभमेति दैवं तु एकस्वभावापन्नं मननात्मकमेव इन्द्रियाणि तु उभयविधान्येव भवन्तु नाम कार्यमेव असुराणां बाध्यते मनसा तु द्वितीयेन न भाव्यमेव तथा सर्वान्द्रियाणां पूर्वोक्ता वृत्तिर्न स्यात् अत एकमेकस्वभावापन्नं यस्य तस्यैव भक्तिः अन्येषां तु यथा कथं चित्क्रियमाणा भगवति खण्डशो वृत्तिः अक्षयत्वात् बहुभिर्जन्मभिः पुष्टिं गता अन्तिमजन्मनि भक्तिरूपां वृत्तिं जनयिष्यतीति न काप्यनुपपत्तिः वृत्तिः तन्निष्ठता ननु ग्रहणमात्रं सापि वृत्तिः औत्पत्तिकी यथा प्रह्लादस्य अन्येषां वा भक्तानाम् एतावत् दूरे नास्मिन् जन्मनि साधनसाध्यता किन्तु पूर्वजन्मवशादेवैवं भूतो भवति अग्रे विशेषं वक्तुं तु शब्दमाह। जन्मान्तरेण व्यवधानाद् पूर्वजन्मवृत्तिर्यच्छब्देन परामृश्यते ॥ ३२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यद्यपि त्वत्सम्मतायां भक्तावेव मम जिज्ञासा चिकीर्षा च तदपि "जिज्ञासुना निजमतं ज्ञेयं परमतं बुधैः" इति नित्ययोगश्च ज्ञानश्च मम जिज्ञास्यमित्याह। यो योग इति। भगवति बाणस्तत्र क्षिप्तः शर इव यो भगवन्तं लक्ष्यीकरोतीत्यर्थः। निर्वाणार्थः मोक्षप्रयोजकः। तथा यतस्तत्त्वानामवबोधनं तज्ज्ञानञ्च कीदृशम् ॥ २९ ॥

तत्तस्मात् एतन्मे मां विजानीहि विज्ञापय ॥ ३० ॥

अर्थे प्रयोजने स्नेहे हेतुर्यत्र तन्वा देहेनाविर्भूतः तत्त्वान्याम्नायन्ते अनुक्रम्यन्ते यस्मिन् किं तत् यत् सांख्यं प्रवदन्ति तत् प्रोवाच भक्तिवितानं योगश्च ॥ ३१ ॥

तत्र भक्तिवितानं वक्तुं काचित् त्वय्युचिता भक्तिरिति पृष्टां भगवति युक्तामुत्तमां निर्गुणां भक्तिं लक्षयति। देवानामिति। सत्त्व एव शुद्धसत्त्वमूर्त्तौ हरावेव नतु देवतान्तरे। एकमेकस्वरूपमेव सेवाबुद्धिमयत्वेन त्वद्रूपनामाद्युपादित्सु नतु योगिजनादेरिवारत्यां तज्जिहासु मनो यस्य पुरुषस्य। तथा एकस्मिन् भजन एव नतु ज्ञानकर्मादिषु मनो यस्य तस्य पुंसः। गुणाः शब्दादयो विषयाः लिङ्ग्यन्ते ज्ञाप्यन्ते यैस्तेषां देवानामिन्द्रियाधिष्ठातॄणां सद्विषयत्वाद्दीव्यतां क्रीडतामिन्द्रियाणां वा सत्त्वे हरावेव या वृत्तिस्तदीयशब्दादिग्रहणरूपा व्यापृतिरनिमित्ता निष्कामा सा भागवती भक्तिरित्यन्वयः। अत्र सत्त्व एव एकमनस इति सत्त्व एव इन्द्रियाणां वृत्तिरिति काकाक्षिगोलकन्यायेनोभयत्रान्वितम्। अत्र सत्त्व इत्यनेन सत्त्वगुणवति ब्रह्मरुद्रादाविति नाशङ्क्यं भागवतीत्यनेन तद्व्यावृत्तेः। यद्वा सतां भावः सत्त्वं वैष्णवत्वं तत्र एकमनसः वैष्णवो भवेयमित्येकान्तमनसो वैष्णवत्वे एव या इन्द्रियाणां वृत्तिः सा भक्तिः। नच स्वच्छन्देनैव प्रवर्त्तमानानां तेषां वृत्तिर्भक्तिः किन्तु श्रीगुरूपदिष्टमन्त्रोचिताचरणवतामित्याह। गुरोरुच्चारणमनुश्रूयत इत्यनुश्रवो मन्त्रस्तद्विहितमानुश्रविकं तदेव कर्म नित्यकृत्यं येषां तेषाम्। किञ्च।

> उत्सर्गान्मलमूत्रादेश्चित्तस्वास्थ्यं यतो भवेत् ।
> अतः पायुरुपस्थश्च तदाराधनसाधनम् इति ।

विष्णुरहस्योक्तेः पायूपस्थयोरपि वृत्तिर्भक्तिसम्बन्धेन भक्तिरिति वैधी साधनभक्तिर्लक्षिता। अथ तुकारेण पृथक्कृत्य तत्साध्यां भावभक्तिं" रागानुगाख्याञ्च भक्तिं तन्त्रेणैव लक्षयति या तु तेषामिन्द्रियाणां तथा भूतानामेव स्वाभाविकी वृत्तिः सा सिद्धेर्मुक्तेरपि गरीयसि श्रेष्ठतरेत्यस्वाभाविक्यपि वृत्तिर्मुक्तेर्गुरुः श्रेष्ठेत्यर्थो लभ्यते स्वाभाविकी वृत्तिश्च द्विविधा कस्यचित् शास्त्रशासनेनैव श्रीगुरूपदिष्टशुद्धभक्तौ प्रवृत्तिमतो भजनाभ्यासपौनःपुन्येन निष्ठा रुच्यासक्तिभूमिका अधिरूढस्येन्द्रियाणां वृत्तिर्हरौ स्वाभाविकी भवति यथा प्राकृतलोकानां पतिपुत्रादिषु कस्यचिच्च प्राचीनार्वाचीनतादृशमहत्सङ्कृपाजनितविलक्षणसंस्कारवशेन गुरूपदेशात् पूर्वमेवानन्तरमेव वा शास्त्रशासनं विनैव स्वभावत एवेन्द्रियाणां भक्तिशास्त्रोक्ताचरणवती एव या हरौ वृत्तिः सापि स्वाभाविकी ज्ञेया पूर्वस्या वैधभक्तेः प्रमाणेनैवोत्कर्षं उदाहरणञ्च नैकात्मतामित्यादि पद्यचतुष्टयं ज्ञेयम् ॥ ३२॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यो भगवद्बाणः भगवद्दर्शनहेतुः योगो ध्यानयोगः निर्वाणार्थः मोक्षप्रयोजकः यतो ध्यानयोगात् तत्त्वावबोधनं भगवत्स्वदर्शनम् ॥ २९ ॥

यथाहं सुखं बुध्येयं जानीयां तथा विजानीहि विज्ञापय॥ ३० ॥

अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी ।
जरयत्याशु या कोशं निगीर्णमनलो यथा ॥ ३३ ॥
नैकात्मतां मे स्पृहयन्ति केचिन्मत्पादसेवाऽभिरता मदीहाः ।
ये ऽन्योऽन्यतो भागवताः प्रसज्य सभाजयन्ते मम पौरुषाणि ॥ ३४ ॥
पश्यन्ति ते मे रुचिराण्यम्ब ! सन्तः प्रसन्नवक्त्रारुणलोचनानि ।
रूपाणि दिव्यानि वरप्रदानि साकं वाचं स्पृहणीयां वदन्ति ॥ ३५ ॥
तैर्दर्शनीयावयवैरुदारविलासहासेक्षितवामसूक्तैः ।
हृतात्मनो हृतप्राणांश्च भक्तिरनिच्छतो मे गतिमण्वीं प्रयुङ्क्ते*॥ ३६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अपृष्टमपि भक्तभजनीययोर्ध्यातृध्येययोर्विविक्तस्वरूपध्यानार्थं यत्साङ्ख्यं वदन्ति तत्तत्त्वाम्नायं तत्त्वान्याम्नायन्ते । अनुकम्प्यन्ते यस्मिन् तत्प्रोवाच भक्तेर्वितानं योगं ध्यानयोगं च प्रोवाच ॥ ३१ ॥

तत्र साङ्ख्यं षड्विंशे भक्तिं सप्तविंशे विस्तरत एकोनत्रिंशे योगमष्टाविंशे वर्णयिष्यन् श्रवणादिरूपां भक्तिं भगवद्दर्शनहेतुं ध्यानं चैकीकृत्य देवानामित्यादिना अध्यायसमाप्तिपर्य्यन्तं संक्षेपतो वर्णयति । एकमनसः पुंसो मुमुक्षोः गुणाः शब्दादिविषयास्तल्लिङ्गानां तज्ज्ञापकानाम् । यद्वा । गुणाः शब्दादिविषयाः लिङ्गानि स्वोपलब्धिद्वारानुमापका येषां ज्ञानेन्द्रियाणाम् । अनुश्रवो वेदः । तद्व्याख्यारूपत्वात् स्मृतिग्रहणम् तद्विहितं श्रुतिस्मृतिप्रोक्तमानुश्रविकं तदेव कर्म येषां कर्मेन्द्रियाणां च देवानां स्वस्वविषये द्योतनात्मकानामुभयेन्द्रियाणां सत्त्वे शुद्धेऽप्राकृतशरीररिणि भगवति या स्वाभाविकी अनिमित्ता । अनभिसंहितफला वृत्तिः सा भक्तिरिति द्वयोरन्वयः सा सिद्धेर्मुक्तेरपि गरीयसी अयमर्थः । मुक्तौ भगवान् न कस्यचित्सारथिर्भवति । नच "उवाह कृष्णो भगवान् श्रीदामानं पराजितः" इत्येवं केनजित्पराजितो भवति न च दामभिः श्रीयशोदयेव केनापि बद्धो भवति । अतोमुक्तेर्गरीयसीति सिद्धान्तोक्तिः तथापि भक्त्या मुक्तिः प्रासङ्गिकी स्यादेवेत्याह । या भक्तिः कोशं लिङ्गशरीरं जरयति क्षपयति ॥ ३२ ॥ ३३ ॥

---

भाषाटीका ।

हे मुक्तिदाता ! भगवान् को लक्षित करानेवाला आपका कहाहुआ जो जोग है सो किस प्रकार का है कितने उसके अङ्ग हैं सो कहिये जिससे तत्त्वों का ज्ञान प्राप्त होवै ॥ २९ ॥

हे हरे ! यह सब हमसे कहिये जिसप्रकार से मैं मन्द बुद्धि वाली स्त्री जाति कठिन से जानने योग इस योग को आपके अनुग्रह से जान सकोंगी ॥ ३० ॥

मैत्रेयजी बोले श्रीभगवान् कपिलजी इसप्रकार माताके अभिप्राय को जानकर जिस माता के उदर से आप प्रगट भये तिस माता पर बडे स्नेह के होने से भक्ति के विस्तार का योग जिसको सांख्य कहते हैं तिस तत्त्व का निरूपण माता के अर्थ कथन करने लगे ॥ ३१ ॥

श्रीभगवान् बोले अविकृत एकमन वाला जो जीव तिसके वैदिक भगवत्सेवा रूप कर्म करने के योग्य तथा विषयों के भोगनेवाले इन्द्रियों की वृत्तिकी स्वभावही से सत्त्व मूर्ति भगवान् में स्थिति जो है सो स्थिति निष्काम होने से भगवत् सम्बन्धी होती है वह स्थिति मुक्ति से भी अधिक है वह स्थिति लिङ्गदेह के दोषों को ऐसे जला देती है जैसे भोजन किये अन्नादिकों को जठराग्नि भस्म करता है ॥ ३२ ॥ ३३ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

मुक्तिश्च प्रासङ्गिकी भवत्येवेत्याह । या भक्तिः कोशं लिङ्गशरीरं जरयति क्षपयति । स्वप्रयत्नं विनैव सिद्धौ दृष्टान्तः । निगीर्णं भुक्तमन्नमनलो जाठरो यथा जरयतीति ॥ ३३ ॥

भक्तेर्गरिष्ठत्वमेवोपपादयति । नैकात्मतामिति पञ्चभिः । एकात्मतां सायुज्यमोक्षं मदर्थमीहा क्रिया येषाम् । प्रसज्ज्यासक्तिं कृत्वा पौरुषाणि वीर्याणि ॥ ३४ ॥

प्रसन्नानि वक्त्राण्यरुणानि लोचनानि च येषु तैर्मद्रूपैः साकं सह नित्यं परमेश्वरानुभवसुखं भक्तावधिकमिति भावः ॥ ३५ ॥

आत्मानन्दस्त्ववश्यं भावीत्याह । तैरिति । दर्शनीया मनोहरा अवयवा मुखनेत्रादयो येषु तैः हृत आत्मा चित्तं येषाम् । हृता आकृष्टाः प्राणाश्चेन्द्रियाणि येषां तान्भजतोऽनिच्छत इच्छाहीनानप्यण्वीं गतिं मुक्तिं प्रयुङ्क्ते प्रापयति । कैः साधनैर्हृतात्मनः उदारैर्विलासादिभिः तत्र विलासो लीला वामं मनोहरं सूक्तं मधुरभाषणम् ॥ ३६ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

केचिदसाधारणभक्तिरसिकाः सायुज्यं न स्पृहयन्तीत्युक्त्या मोक्षलघुताकृत्योक्त्या भावरूपेयमिति गम्यते यच्च पूर्वं मोक्षं प्रतिसाधनत्वं तत्तु तां विनाकस्याप्यर्थस्यासिद्धेरेवेति निबन्धया ॥ तस्मान्मोक्षाद्यभिसन्धिना या भक्तिस्साभासरूपा ज्ञेया ॥ ३४ ॥

---

* प्रयुङ्क्ते इति श्रीविजयध्वजतीर्थपाठः ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

रुचिरायतस्व सन्त इत्येव पाठः स्वामिसम्मतः प्रसन्नपदमारभ्यैव समासाङ्गीकाराद् रुचिरावतंसेति तु आगन्तुकः परमेश्वरानुभवसुखस्याधिकत्वोक्त्या तस्य घनत्वं परमनिर्गुणत्वादिकञ्च व्यञ्जितम् ॥ ३५ ॥

तै रूपैरिति विशेष्यम् मुक्तिमात्मानन्दरूपां साधनैः कार्यैः ॥ ३६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सानिमित्ता भागवती भगवत्सम्बन्धिनी भक्तिरित्यर्थः उभयविधेन्द्रियाणां मनसश्च सत्वे वृत्तिर्नाम श्रवणकीर्त्तनस्मरणादिः अथ भक्तिं प्रस्तौति । सिद्धेः ऐश्वर्यकैवल्यादिसिद्धेः गरीयसी श्रेष्ठा निरतिशयानन्दरूपभगवदनुभवफलसाधनत्वादिति भावः सिद्धेर्गरीयस्त्वमेवाह । या भागवती भक्तिः कोशमनादिपुण्यापुण्यरूपकर्मवासनाकोशं जरयति जीर्णं करोति नाशयति इति यावत्तत्र दृष्टान्तः निगीर्णं भुक्तमन्नपानादि अनलो जाठराग्निर्यथेति ॥ ३३ ॥

पुनर्भक्तिमेव प्रस्तोतुं निरतिशयानन्दभगवदनुभवरूपभक्तियोगनिष्ठास्तत्साधर्म्यरूपमुक्तिमपि नेच्छन्तीत्याह । केचिन्मत्पादयोः सेवायामभिरता आसक्ता मय्येव ईहा सर्वेन्द्रियचेष्टा येषां ते भागवताः अन्योऽन्यतः परस्परं मम पौरुषाणि कल्याणगुणप्रकाशकानि चेष्टितानि प्रसज्य प्रस्तूय सभाजयन्तः सम्यगनुमोदयन्तः पौरुषप्रसङ्गजनितानन्दसम्प्लुताः सन्तः मे ममैकात्मतां एकस्वभावतां मत्समानगुणकतां "मम साधर्म्यमागता" इति श्रूयते न स्पृहयन्ति नेच्छन्ति ॥ ३४ ॥

किन्तु हे अम्ब ! ते सन्तः मे मम रुचिराणि सुन्दराणि प्रसन्नानि वक्त्रारुणलोचनानि येषु तानि दिव्यान्यमानुषाणि वरप्रदानि अभिमतार्थप्रदानि रूपाणि दिव्यमङ्गलशरीराणि पश्यन्ति ध्यायन्ति रूपैः साकं सह वा स्पृहणीयां वाचं मधुरोक्तिं वदन्ति परस्परं कथयन्ति ॥ ३५ ॥

यद्यपि मुक्तिस्तैर्न प्रार्थ्यते तथापि तेषामवश्यं मद्भक्त्या मुक्तिर्भवित्रीत्याह । तैरिति द्वाभ्याम् । दर्शनीया अवयवा येषु तैः विलासश्चेष्टा मन्दहासयुक्तमीक्षणमवलोकनं वाम सूक्तं मधुरभाषणम् उदाराणि सुन्दराणि विलासादीनि येषु तैर्मद्रूपैः हृत आत्मा मनो येषां तान् हृताः प्राणाः ज्ञानकर्मेन्द्रियाणि येषां तान् अनिच्छतः मुक्तिमप्रार्थयमानानपि भक्तिः पूर्वोक्ता मद्भक्तिरणवीं सूक्ष्मामेकपदीमित्यर्थः गतिमर्चिरादिकां गतिं प्रति आर्चिरादिगतिहेतुभिरणुपणत्वादणवीमित्युक्तं प्रयुङ्क्ते प्रारब्धावसाने प्रवर्त्तयति गमयतीति यावत् ॥ ३६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अनेन के ते आत्यन्तिकभक्तिकर्त्तारो येन तद्भक्तेर्मुक्तेर्गरीयस्त्वं स्यादिति तत्राह । नैकात्म्यतामिति । ये भागवता अन्योऽन्यतः प्रसज्य मिलित्वा मम पौरुषाणि पराक्रमान् सम्भाजयन्ते संभाव्य वदन्ति शृण्वन्ति च ते मे मया दीयमानामप्यैकात्म्यतां मुक्तिं न स्पृहयन्ति नेच्छन्ति यदि भक्तिसन्तुष्टो हरिः किमपि ददाति तदपि तदाज्ञात्वेनैव गृह्णन्ति न भक्तिफलत्वेन दीयमानं बालोऽपि सन् गृह्णाति किमुत प्रेक्षावानत इदं भगवता स्तूयते ननु तत्त्वमिति मन्दाशङ्का "नेच्छन्ति सायुज्यमपि फलत्वेन हरिर्यदि । ददाति भक्तिसन्तुष्ट आज्ञात्वेनैव गृह्णते । तादृशानां सुखाधिक्यं पुनर्मुक्तौ भविष्यती" त्यनेन परिहृत्नोति कुतो नेच्छन्तीति तत्राह । मत्पादेति । मम चरणनिषेवायाः पूर्णानन्दहेतुत्वादित्यर्थः भगवदङ्घ्रिसेवायाः पूर्णानन्दहेतुत्वं कथं तद्व्रतानामप्यन्यत्र प्रवृत्त्या दुःखसम्भवादित्यत उक्तम् मदीहा इति । अनेन च प्रासङ्गिकान्यप्रवृत्तावप्यन्ते मदर्पणेन सापि मत्कर्मवत् मत्प्रीतिजनकत्वेन मदीहैवेत्युक्तं भवति ते च कियन्त इति तत्राह । केचिदिति ॥ ३४ ॥

ऐकात्म्याकाङ्क्षाभावे हेत्वन्तरमाह । पश्यन्तीति । भगवद्रूपसंल्लापादेः कोऽन्योऽस्ति सुखहेतुरिति अतो नेच्छन्तीत्यर्थः ॥ ३५ ॥

ननु कालशक्तेर्दुरतिक्रमत्वेन किञ्चित्कालं भगवति भक्तिं कुर्वतोऽन्यथापि सम्भवेन संसारस्यानिवृत्तिसम्भवेन भक्तेर्न किमपि प्रयोजनमित्याशङ्क्याह । तैर्दर्शनीयेति । यैः सह वाचं वदन्ति यानि च पश्यन्ति तैरूपैर्हृतात्मनः अपहृतमनसो हृतप्राणास्य तद्विषयीकृतसर्वेन्द्रियचेष्टस्य भक्तिमेवानिच्छतोऽपि पुंसः प्रसन्नोऽहमणवीं सूक्ष्मां सायुज्यलक्षणां गतिं मुक्तिं प्रयुञ्जे ददामीत्यन्वयः उदारशब्दः प्रत्येकमभिसम्बध्यते उदाराणि विलासहासेक्षितवामसूक्तानि येषां तानि तथा वामान्यनुकूलानि सूक्तानि शोभनवचनानि ।३६।

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तस्यामानुषङ्गिकगुणमाह । जरयतीत्यर्द्धेन ॥ ३३ ॥

ननु पूर्वं मुक्तिः फलत्वेनोक्ता कथं तस्या गरीयसीत्वं । तत्राह । नैकात्मतामित्यादि केचिदसाधारणभक्तिरसिका ईहाभिलाषस्तस्माद्भक्त्याभास एव पूर्वेषां जायते इति भावः ॥ ३४ ॥

रूपाणीति । वासना प्रसङ्गयोर्नानाभेदेन साकमिति । मिथो मिलित्वेत्यर्थः ॥ ३५ ॥

स्वकर्म्मफलनिर्दिष्टामित्यादिरीत्या दैन्येन शुद्धभक्तिमात्रेच्छुत्वादनिच्छतोऽपि अणवीं सूक्ष्मां प्रकृत्यतीतत्वेन दुर्ज्ञेयां पार्षदत्वलक्षणाम् ॥ ३६ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

फलरूपे जन्मनि सा अनिमित्ता भवति स्वतन्त्रा भगवन्निमित्ता वा भगवतः सकाशात् फलानि निमित्तानि या वा अनिमित्ता सा भक्तिरिति उत्तरेण सम्बन्धः किञ्च सा चेद् भागवती भवति साक्षाद्भगवन्तं विषयीकरोति । भगवद्भावं वा पञ्चरूपतामापद्यते पूर्वं सत्त्वरूपे देवे विष्णौ वृत्तिः सैव जन्मान्तरे भागवती भवतीति वा पञ्चाग्निविद्यायां ज्ञानौपयिकदेहसिद्धिर्निरूपिता तस्मिन् देहे ज्ञाने जाते मुक्तिर्भवतीति तस्य च ब्रह्मविदः जीवतो म्रियमाणस्य गच्छतः सङ्गतस्य च व्यापारा निरूपिताः सद्यो मुक्तावपि सायुज्यं निरूपितम् तद्वस्तुतो भक्तानामेव भवतीति सिद्धान्तः प्रकारान्तरेण प्राप्यासिद्ध्यभावात् तथापि मुक्तेः सायुज्यादपि इयं भक्तिर्गरिष्ठेत्याह सिद्धेर्गरीयसीति । सिद्धिः पूर्वोक्ता गरीयस्त्वं निरूपयति जरयतीति या कोशं लिङ्गशरीरं जीर्णं करोति बीजात्मकमि-

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ॥

त्यन्ये यद्यपि सिद्धावपि कोशजीर्णता वर्तते तथापि आशु जरयति । अनायासार्थं दृष्टान्तः निगीर्णमनलो यथेति । न हि भुक्तकवलस्य परिपाकार्थमौदर्यादग्नेरन्यत्साधनं विधीयते । औपधादिकमप्यग्निमेव बोधयति एतया मे पदं प्राप्यत इति भावः ॥ ३३ ॥

तादृशभक्तानां ज्ञानिनामिवाग्रिमकृत्यमाह । प्रकारद्वयेन । तत्र प्रथममाह त्रिभिः । नैकात्मतामित्यादिभिः । जीवतां साधनावस्था फलरूपा तथा परा सायुज्यं च तृतीयं स्यात् अतो नोत्क्रान्तिप्रापणे । तत्र प्रथमं भक्तानां साधनावस्थामाह । नैकात्मतामिति । इयं हि फलरूपा भक्तिर्ज्ञातव्या ते भक्ता यावज्जीवन्ति तावत्फलरूपां भक्तिं कुर्वन्तीत्यर्थः फलरूपता तदैव भवति यदा भजनानन्दरसोऽभिव्यक्तो भवति बहुधा तस्या अभिव्यक्तेर्निदर्शनं भगवत एकात्मतां सायुज्यरूपफलं न स्पृहयन्ति प्रार्थना दूरे । ते भक्तेषु विरलाः प्रसङ्गान्निरूप्यन्ते केचिदिति दुर्लभाः तेषां कायवाङ्मनोवृत्तिः स्वभावत एव भगवति भवतीत्याह । मत्पादसेवेत्यादिना । मम पादसेवायामेवाभिरतिर्मनोवृत्तिर्येषां सर्वतो गत्वा भगवत्कार्यं कर्तव्यमिति पद्भ्यां सेवेत्यर्थः अन्यत्तु सुगमं गमनानन्तरसाध्यमियं मनोवृत्तिर्निरूपिता कायिकीमाह । मदीहा इति । ममं सम्बन्धिन्येव ईहा चेष्टा येषां तेषां वाचनिकीमाह । येऽन्योऽन्यत इति । सर्वे भागवता एकरूपाः भगवदीयाः प्रसज्यासक्तिं कृत्वा मम भगवतः पौरुषाणि समाजयन्ते अन्योन्यमुक्तान्यतिपौरुषाणि सम्मानयन्ति प्रकटं सुहृदः ॥ स्वकार्यनिर्द्धारविचारहेतौ प्रमाणमेतद्गणयन्ति नान्यत् ॥ ३४ ॥

तेषां फलावस्थामाह । पश्यन्तीति । ते मे रूपाणि पश्यन्ति निरन्तरं भगवत्साक्षात्कारो भवति यथा मित्रैः सह क्रीडन्ति प्रथमतः पश्यन्ति भगवत्त्वाय रूपाणि वर्णयति । रुचिराणि अवतंसानि कर्णाभरणानि येषामनेन वृन्दावनादौ भगवत्साक्षात्कारो भवतीत्युक्तम् । प्रसन्नानि वक्त्राणि अरुणानि लोचनानि येषामिति राममिव नृसिंहमिव पश्यन्तीत्यर्थः । तेषामिष्टोत्पादनार्थं राजसभावमिष्टानां स्थित्यर्थं च सात्त्विकभावं प्रकटयन्तीति वा रूपाणीति । परमोपासकानामेकं कदाचित्साक्षात्कृतं भवति तेषां तु बहूनि तानि च दिव्यानि लौकिकबुद्ध्या न गृहीतानि । अलौकिकभावं वा प्रकटयन्ति तान् प्रत्येव प्रकटानीति तथा सति नातिप्रसक्तिः । तेषामन्यदीयव्यावृत्त्यर्थं निदर्शनान्तरमाह । वरप्रदानीति । नह्यन्येन वरं दातुं शक्यते प्रसन्नात् रूपादेतेषां वैलक्षण्यमाह । साकं वाचमिति । जीवन्त एवैते एतस्मिन्नेव लोके भगवता सह स्पृहणीयां वाचं वदन्ति यथा मित्रैः सह इष्टालापाः क्रियन्ते ॥ ३५ ॥

ततस्तेषां सायुज्यमाह । तैरिति । तैः पूर्वोक्तरूपैः अनुभवसमय एवानन्दजनकैः दर्शनीया अवयवा येषामुदारो विलासः हासपूर्वकमीक्षितं वामं मनोहरं सूक्तं वाक्यं च येषां तैर्हृतान्तःकरणानां वशीकृतेन्द्रियाणां सा पूर्वोक्ता भक्तिः तानतिच्छन्नोऽपि अपवर्गी गतिं सायुज्यं प्रापयति । भक्तस्य चतुर्विधपुरुषार्थसिद्ध्यर्थं चतूरूपत्वं साध्यते । तत्र दर्शनीया अवयवाः कामपूरकाः उदारो विलासः अर्थजनकः हासपूर्वकमीक्षितं धर्मजनकं वामसूक्तानि मोक्षजनकानि । कामोहि विषयसौन्दर्येण अन्तःशक्त्या च सिद्ध्यति । अतो दर्शनीयेति विशेषणं बहिर्लौकिकसौन्दर्यार्थं विलासो ह्यर्थस्य नानाप्रकारत्वाय । उदारत्वं तस्य सर्वोपकारकत्वाय भगवतो हि लीला सर्वेषां सर्वपुरुषार्थदायिनीति भगवत्त्वं हासो देहाद्यध्यासजनकः अन्यथा निरन्तरं धर्मो न सिद्ध्येत् हासपूर्वकं च ज्ञानं धर्मजनकमेव सूक्तं हितकारि अविद्यानाशकं वामं परमानन्ददायकमिति । सूक्ष्मा हि गतिः एकरूपानन्दस्वरूपा रूपाणि चानन्तानन्दरूपाणि । अत एवानिच्छा अत एवान्तःकरणेन्द्रियाणां च तैराकर्षणं सर्वेन्द्रियसुखरूपत्वात् स भगवान् स्वगृहं गच्छन् तानपि नयति । ते तु इन्द्रियाणि मनश्च नयन्ति भक्तिस्तु फलावश्यंभाविनी कालादीनामगम्यमतिसूक्ष्ममेव भगवदात्मकं फलं प्रयच्छति ॥ ३६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

परस्या रागानुगायास्तु जात्यैवोत्कर्षः उदाहरणञ्च न कर्हिचिदिति पद्यम् । अस्वाभाविक्यास्तु स्वाभाविकीश्यां सकाशात् प्रमाणेन जात्या च निकर्षः उदाहरणञ्चेमं लोकं तथैवामुमित्यादि पद्यद्वयमस्या द्विविधाया अपि भक्तेर्निष्कामत्वादनुसंहितं फलं सैव भक्तिरननुसंहितं फलं तु मोक्षस्तमाह । जरयतीति । या भक्तिः कोशं लिङ्गशरीरं जरयति क्षपयति किञ्च ज्ञानहेतुकान्मोक्षादस्य मोक्षस्य दृष्टान्तेन वैलक्षण्यमाह । निगीर्णभुक्तमन्नादिकमनलो जाठरो यथा जरयतीति स हि जाठरानलो देहपुष्टचन्यथानुपपत्त्येभुक्तस्याशादेरसारांशमेव जरयति सारांशेन तु प्राणेन्द्रियादीनि सप्तधातूंश्च पुष्यति येनैवोजःसहोबलवान् देहो भवति तथैव भक्तिर्मायिकानेव शब्दादींस्तत्करणकर्त्रादींश्चासारांशानेव जरयति नतु सारांशान् भगवत्सम्बन्धिनः शब्दादीन् प्राकृतांस्तादिन्द्रियादींश्च जरयति "चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रम्" इत्यादि श्रुतेः यैरेव भक्तानां देहः सिद्धो भवति अत एव मायिको ऽसारांश एव लिङ्गकोशो देहेन्द्रियादिशब्दैः शास्त्रेषूच्यते । यथा "देहेन्द्रियासुहीनानां विकुण्ठपुरवासिना"मित्यादि यथा च पुरुषप्रयत्नं विनैव जाठरोऽग्निर्भुक्तान्नादिकं जरयति येन प्रकारेण जरयति तं प्रकारञ्च पुरुषो न जानात्येवं मोक्षार्थं किमप्ययतमानं श्रवणकीर्त्तनादिकमेव नित्यं कुर्व्वाणं तन्माधुर्य्यास्वादवन्तं भक्तजनं भक्तिः संसारान्मोचयति भक्तस्तु केन प्रकारेण कदा मे मुक्तिरभूदिति नानुसंधत्ते यद्वक्ष्यते । "त्वत्पादपोतेन महत्कृतेन कुर्व्वन्ति गोवत्सपदं भवाब्धि" मिति पथि गच्छतः पुंसो गोष्पदलङ्घनानुसन्धानं यथा न भवति तथेति भक्तानां त्रिभूमिकब्रह्मज्ञानाभावेऽपि ।

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम् ॥

इति श्रुतेर्भगवत्कारुण्याद्भक्त्या तद्रूपगुणलीलैश्वर्य्यमाधुर्य्यानुभवरूपाऽज्ञानादेव मोक्षः "तमेव विदित्वा अतिमृत्युमेति" इति श्रुतावप्येवकारेण मुक्तौ तस्यैव ज्ञानस्य कारणत्वेनैकत्वस्तज्ज्ञानं चोक्तप्रकारकमेव सर्व्वथा तत्स्वरूपज्ञानन्तु "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इति "यस्यामतं तस्य गतं मतं यस्य न वेद स" इति "द्युपतय एव ते न ययुरन्तमनन्ततया" इत्यादिश्रुतिस्मृतिभ्यो न कस्यापि सम्भवत्येव जीवब्रह्मैक्यरूपा मुक्तिस्तु भक्त्युत्सत्याज्यैवेत्यग्रे वक्ष्यते । किञ्च भुक्तमन्नादिकं

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शनी ।

जाठरानलो भोजनक्षणात एव जरयितुं प्रवृत्तोऽपि त्रिचतुर्यामानन्तरमेव सम्यक्तया जरयति यथा तथा भजनक्षणात एव शोकमोहाद्यात्मकं संसारं नाशयितुं प्रवृत्तापि भक्तिः किञ्चित् कालविलम्बेनैव सम्यकया नाशयतीत्यतो भजनदशायां शोकमोहाद्यनपगमेऽपि भक्तेषु संसारोऽयमिति न प्रत्येतव्यमिति ज्ञेयम् । तदेवं गुरूपदिष्टमन्त्रवती भक्तिशास्त्रोक्तविध्यनुसारिणी अन्याभिलपिता शून्या ज्ञानकर्म्मादिरहिता भगवति श्रोत्रादीन्द्रियाणां वृत्तिर्भक्तिः साचाल्पप्रमाणा साधनभक्तिरस्वाभाविकी भवति सैव पूर्णप्रमाणा साध्यभक्तिः स्वाभाविकी भावभक्तिर्भवति सैव काचिदल्पप्रमाणापि जात्यैवाधिक्यात्स्वाभाविकी चेद्रागानुगा नाम्नी साधनभक्तिः सा च जाति प्रमाणाभ्यां पूर्णा रागानुगीयभावभक्तिर्भवतीति विवेको भक्तिरसामृतसिन्धौ ज्ञेयः ॥ ३३ ॥

लक्षणमुक्त्वा उदाहरणमाह सप्तभिस्तत्र प्रथमं स्वाभाविक्या भावभक्तेरुदाहरणं चतुर्भिर्वदन्नेवानिमित्तेत्येतत्सहेतुकं स्पष्टयति । नेति । एकात्मतां ब्रह्मैक्यरूपायै मुक्त्यै न स्पृहयन्ति इति सिद्धेः सकाशाद्गरीयस्त्वं ननु केन सुखेन पूर्णास्ते ब्रह्मसुखं न रोचयन्ति तत्राह । मम पादयोः सर्वेन्द्रियैर्या सेवा तस्यामेव न तु कर्म्मज्ञानादिषु अभि शास्त्राभिमुख्येन रता अत्यासक्तिमन्तः अनेन भक्तेर्भगवद्विषयत्वं सर्व्वेन्द्रियवृत्तिरूपत्वं कर्म्मज्ञानादिराहित्यं शास्त्रानुसारित्वं स्वाभाविकत्वञ्चोक्तम् मय्येव मत्सौन्दर्य्यमाधुर्य्याद्यास्वादन एव ईहा वाञ्छा येषां ते इत्यन्याभिलापशून्यत्वं प्रसज्यासज्य पौरुषाणि श्रीगोवर्धनोद्धरणादिलीलामृतानि सभाजयन्ते सस्तुतिकमास्वादयन्ति तेन चरणसेवानन्दाभावात् सौन्दर्य्यसौरभ्याद्यनुभवाभावात् लीलामृतास्वादनाभावाच्च ब्रह्मसुखं न रोचयन्तीति मुक्तावस्पृहायां हेतुत्रयमुक्तम् ॥ ३४ ॥

यतः सायुज्यपर्य्यन्तेषु फलेषु स्पृहारहिता अतस्ते मत्त एतत्प्राप्नुवन्तीत्याह द्वाभ्याम् । पश्यन्तीत्युपलक्षणं शृण्वन्ति जिघ्रन्ति स्वादयन्तीत्याद्यपि रूपाणीत्युपलक्षणं शब्दगन्धरसस्पर्शादीनां च दिव्यान्यप्राकृतानि वरप्रदानि अभीष्टसेवाप्रदानि यद्वा हे भक्ताः ! वरं वृणुतेत्याद्युक्तिमन्ति साकं मया सार्धं वदन्ति । "न कामयेऽन्यं तव पादसेवनादकिञ्चनप्रार्थ्यतमाद्वरं विभो" इति "न पारमेष्ठ्यं न महेन्द्रधिष्ण्यमित्याद्युच्चारयन्ति स्पृहणीयामिति तद्वचःशुश्रूषयैव मया वरं वृणुतेत्याद्युच्यते नत्वन्यवरदित्सा ममापि तेभ्य इति भावः नित्यं परमेश्वरानुभवसुखं भक्तावधिकमिति श्रीस्वामिचरणाः ॥ ३५ ॥

मद्दर्शनादिमाधुर्य्येणैव सचमत्कारमनुभूयमानेन ब्रह्मसायुज्यस्यारोचकत्वमुत्पाद्यत इत्याह । तैरिति । दर्शनीया अतिमनोहरा ये अवयवाः श्रीकृष्णरामाद्यङ्गानि तैः उदारा भक्ताभीष्टप्रदातारो विलासादयो येषु तैर्हृतमनःप्राणत्वादनिच्छतोऽपि भक्तान् भक्तिः अण्वीं गतिं प्रयुङ्क्ते भो भक्ताः ! ब्रह्मैकरूपां मुक्तिं गृह्णीतेति प्रयोगमात्रं करोति नतु दातुमवकाशं लभते भगवतो लीलाविलाससहासावलोकमधुरभाषणैस्तेषामात्मनां चोरितत्वेन सम्प्रदानाभावादिति भावः ।

नन्वेवं चेत्तर्हि परमविज्ञा भक्तिरनिच्छतः तान् कथमेवं प्रयुङ्क्ते उच्यते कश्चिच्चिन्तामणिस्पर्शहीरकपद्मरागादिमहारत्नानां दाता खल्वर्थिभ्यः कनकमपि दातुं दर्शयत्यन्यथा कनकमस्य दातुर्नास्तीति कनकमात्रार्थिभिर्मन्दधीभिरप्रतिष्ठा क्रियेतेतिवद्भक्तिरपि मुक्तिमात्रार्थिज्ञानिमानिलोकावज्ञाननिरासार्थं स्वीयांस्तानपि तथा प्रयुङ्क्ते न पुनर्मुक्तिमेव तेभ्यो दित्सतीत्यवधेयम् । यद्वा भक्तिरेव तान् हृतात्मनो जनान् अण्वीं गतिमनिच्छतः प्रयुङ्क्ते अण्वीं गतिं न एषयति नाभिलाषयति अनिच्छायाः प्रयोजिका भवतीत्यर्थः । यथा कुर्वन्तं प्रयुङ्क्ते इति कारयतीत्यनयोर्णिच्प्रत्ययवाक्ययोर्णिजन्तयोस्तुल्य एवार्थः । तथाहि न पाचयत्ययमिति वक्तव्ये न पचन्तं प्रयङ्क्ते इति न पचन् प्रयोजकोऽयमिति च यथोच्यते तथैव भक्तिर्भक्तजनान् अण्वीं गतिं नैषयति नाभिलाषयतीति वक्तव्ये अण्वीं गतिमनिच्छतः प्रयुङ्क्ते इत्युक्तं यद्वा "स्वकर्मफलनिर्दिष्टां यां यां योनिं व्रजाम्यहम्" इत्यादिरीत्या दैन्येन शुद्धभक्तिमात्रेच्छुत्वादनिच्छतोऽपि अण्वीं प्रकृत्यतीतत्वेन दुर्ज्ञेयां पार्षदत्वाख्यां गतिं प्रयुङ्क्ते प्रापयतीति सन्दर्भः अण्वीं गतिमनिच्छतो जनान् विलासादिभिर्हृतमनःप्राणान् कुरुत इति श्रीरूपगोस्वामिचरणाः अनिच्छतः इच्छाहीनानपि अण्वीं गतिं प्रयुङ्क्ते प्रापयतीति श्रीस्वामिचरणाः एतद्व्याख्यानमपि नात्यसङ्गतं यथेन्द्रियैः पृथग्द्वारैरित्यत्र भक्तानां सर्व्वसुखानां सर्व्वसुखानुभवस्याग्रे व्याख्यास्यमानत्वात् । ततश्च भक्तिरिच्छाहीनानपि तान् बलाद्ब्रह्मसुखमप्यनुभावयितुं भक्तिं प्रापय्य "ते तु ब्रह्महृदं नीता मग्नाः कृष्णेन चोद्धृता" इतिरीत्या ततो निष्क्रमय्य भगवद्धाम्नि तांस्तत्पार्षदान् विधाय भजनानन्दैः सदा निमज्जयतीति तात्पर्य्यमुत्तरश्लोकार्थावगाहनाज्ज्ञेयमिति च केचिदाहुः ॥ ३६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मुक्तितोऽपि भक्तेर्गरिष्ठत्वं प्रपञ्चयति । नैकात्म्यतामिति । एको निःसमानातिशयः आत्मा एकात्मा भगवान् तस्य भावस्तत्ता तां तत्साम्यं तत्साधर्म्यमित्यर्थः न स्पृहयन्ति नेच्छन्ति पौरुषाणि परमपुरुषासाधारणानि चरित्राणि अन्योऽन्यतः प्रसज्य सभाजयन्ते अनुमोदयन्ति ॥ ३४ ॥

हे अम्ब ! ते सन्तः प्रसन्नानि वक्त्राणि अरुणानि लोचनानि च येषु तानि मे रूपाणि पश्यन्ति ध्यायन्ति रूपैः साकं सह अन्योऽन्यं वा स्पृहणीयां वाचं वदन्ति अवतारवेलासु च तत्रत्यास्तानि रूपाणि पश्यन्ति तैः सह वा वाचं वदन्ति चेति बोध्यम् ३५

यद्यपि ते मुक्तिं नेच्छन्ति तथापि भक्तिस्तान् मुक्तिं प्रापयत्येवेत्याह । तैरिति । दर्शनीया ये अवयवाः पादपद्मादयस्तैर्विलासो लीला हासो मंदहासश्च ईक्षितं च वामं मधुरं सूक्तं च तैरुदारैः परमानन्ददैर्विलासादिभिश्च हृत आत्मा चित्तं येषां तान् हृताः प्राणाः इन्द्रियाणि येषां तान् अनिच्छतः मुक्तीच्छाहीनानपि भक्तिः अण्वीं भगवत्पराङ्मुखैः नाना कुतर्कविमोहितैरलक्ष्यां गतिं गम्यते इति गतिः भगवद्भावापत्तिस्तां प्रयुङ्क्ते प्रापयति ॥ ३६ ॥

---

### भाषाटीका

जो भागवत मेरी चरण सेवा मे रत हैं मेरे वास्ते सब क्रियों को करते हैं जो आपसमे मिलकर मेरे चरित्रों की प्रशंसा करते हैं वे महा पुरुष मेरी सायुज्य मुक्तिको नहीं चाहते हैं॥३४॥

अथो विभूतिं मम[१] मायाविनस्तामैश्वर्य्यमष्टाङ्गमनुप्रवृत्तम् ।
[२]श्रियं भागवतीं वा ऽस्पृहयन्ति भद्रां परस्य मे ते ऽश्नुवते[३]तु[४]लोके ॥३७॥
न कर्हिचिन्मत्पराः[५] शान्तरूपे नङ्क्ष्यन्ति नो मे निमिषो लेढि हेतिः ।
येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टम् ॥ ३८ ॥
इमं लोकं तथैवामुमात्मानमुभयायिनम् ।
आत्मानमनु ये चेह[६] ये रायः पशवो गृहाः ॥ ३९ ॥
विसृज्य सर्व्वानन्यांश्च मामेवं विश्वतोमुखम् ।
भजन्त्यनन्यया भक्त्या तान्मृत्योरतिपारये ॥ ४० ॥

भाषाटीका ।

हे माता ! वे महात्मा सन्त हमारे सुन्दर मुखारविन्द वाले सुन्दर लोचन वाले वरदायक दिव्य रूपों का दर्शन करते रहते हैं और मेरे साथ मे सुन्दर वचनोंसे भाषण करते हैं ॥ ३५ ॥

हमारे उन दर्शन योग्य शरीरके अवयवोंसे सुन्दर विलास हासादिकों से कटाक्ष से मनोहर वचनसें उनभक्तों के मन तथा इन्द्रिय मोहित होजाते हैं तब मुक्तिको नहीं चाहते हैं तौ भी स्वयं भक्ति ही उनको हमारी सूक्ष्म गति को प्राप्त करदेती है ॥ ३६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

विभूत्यादिकं च तत्राधिकमित्याह। अथो अविद्यानिवृत्त्यनन्तरं विभूतिं सत्यलोकादिगतां भोगसम्पत्तिमणिमाद्यष्टाङ्गमैश्वर्यमनुप्रवृत्तं भक्तिमनु स्वत एव प्राप्तमपि भागवतीं च श्रियं वैकुण्ठस्थां सम्पत्तिमस्पृहयन्ति ते यद्यपि न स्पृहयन्तीत्यर्थः तथापि लोके वैकुण्ठे अश्नुवते तु प्राप्नुवन्त्येव ॥ ३७ ॥

नन्वेवं तर्हि लोकत्वाविशेषात्स्वर्गादिवद्भोक्तृभोग्यानां कदाचिद्विनाशः स्यात्तत्राऽऽह । हे शान्तरूपे ! यद्वा शान्तं शुद्धसत्त्वं तद्रूपे वैकुण्ठे मत्पराः कदाचिदपि न नङ्क्ष्यन्ति भोग्यहीना न भवन्ति अनिमिषो मे हेतिर्मदीयं कालचक्रं च नो लेढि तान्न ग्रसति तत्र हेतुर्येषामिति सुत इव स्नेहविषयः सखेव विस्राम्भास्पदं गुरुरिवोपदेष्टा सुहृदिव हितकारी इष्टं दैवमिव पूज्यः एवं सर्वभावेन मां ये भजन्ति तान्मदीयं कालचक्रं न ग्रसतीत्यर्थः ॥३८॥

एवं भूतां तु मुक्तिमेकान्तभक्तेभ्यो ददामीत्याह । इममिति द्वाभ्याम् । उभयायिनं लोकद्वयगामिनमात्मानं सोपाधिकमात्मानमनु ये पुत्रकलत्रादयो ये च पश्वादयः रायः धनानि ॥ ३९ ॥

अन्यांश्च परिग्रहान् मृत्योः संसारादतिपारयेऽतितारयामि ।४०।

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

तत्र । भक्तौ मुक्तेरधिकं यद्यपि सत्यलोकादिभोग्यसम्पत्तिस्तत्पानामतितुच्छा तथापि सा तदधीनैवेति विवक्षितम् "त्वत्पादुके अविरतं परिये चरन्ति" इत्यादौ "आशासते यदि त आशिष ईश ! नान्य" इत्युक्तेः "तेषां सर्वेषु लोकेषु कामचारो भवति" इति श्रुतेश्च क्रियया सह नञ्समासस्यासार्वत्रिकत्वादित्यर्थं इत्युक्तम् मायया भक्तविषयककृपयाऽऽचितां सम्पादितामिति तेषामनर्थरूपत्वं व्यावृत्तं मायाविन इति पाठस्त्वागन्तुकः प्रकृतानुपयोगात् तु एव ॥ ३७ ॥

लोकत्वाविशेषात् । वैकुण्ठस्यापि लोकत्वेन तुल्यत्वात् पूर्वार्धं सम्बोधनस्य प्रकृतानुपयुक्तत्वेनाधिकत्वाद्यद्वेति । शुद्धसत्त्वं स्वप्रकाशशक्तिविशेषस्तद्रूपे तत्र कालकृतग्रासाभावे प्रियोलक्ष्म्यादीनामिव कान्तभावेन भावनीयः । एवमात्मा परमात्मा सनकादीनामिव शान्तभावेन भावनीयः । गुरुः प्रद्युम्नादीनामिव सुहृद एक एव नानाप्रकारतया हितकारी पाण्डवानामिव दैवमिव पूज्यो दासानामुद्धवादीनामिवेति दास्यभावस्य द्वैविध्यं तत्र गौरवदास्यभावः श्रीप्रद्युम्नादीनां गुरुरयमितिबुद्ध्यालम्बनत्वात् ॥ सम्भ्रमदास्यभाववन्तश्चतुर्विधा अधिकृता ब्रह्मादयः आश्रिताः कालियजरासन्धबद्धनृपादयः पार्षदाः श्रीमदुद्धवादयः ॥ अनुचराः सुनन्दादय इति एवं सर्वभावो व्याख्यातः तेन स्वस्वासनोचितेनैकतमादिना मां ये भजन्तीति व्याख्येयम् अन्यथा विरुद्धसमवाये रसाभासः प्रसज्येत किम्वा गोलोकादौ तत्तन्नियतभावानां गोपादीनां सत्त्वात्तदपेक्षयैव व्याख्येयम् । तथा च तन्वाभिजाते मयि शुद्धसुतस्नेहरूपापरा भक्तिरेव तवोचितेति काचित्त्वय्युचिता भक्तिः कीदृशी मम गोचरेति प्रश्नस्योत्तरमपि फलितमितिभावः अत्र प्रमाणादिविशेषजिज्ञासा चेत्प्रीतिसन्दर्भो दृश्यः ॥ ३८ ॥

इममिति युग्मकम् एवं । भूतां नित्यां मुक्तिं तत्तद्भावेन तत्तद्रूपमत्साक्षात्काररूपां सोपाधिकमशुद्धमाध्यात्मिकावस्थं जीवं विसृज्य शुद्धं तत्तद्भाववन्तं त्वम्पदार्थं स्वरूपत्वेनोपादायेत्यर्थः । विश्वतोमुखं तत्तद्भावानुसारेणानन्ताविर्भावमनन्यया एकान्तया संसारादतितारयामि न ते पुनरावर्त्तन्त इत्यर्थः "अनावृत्तिः शब्दात्" इतिन्यायात् "न स पुनरावर्त्तत" इतिश्रुतेः तथा परमं यः परायणमित्यत्र शङ्करभाष्यम् परमुत्कृष्टमयनं स्थानं पुनरावृत्तिशङ्कारहितमिति परायणं पुल्लिङ्गपक्षे बहुव्रीहिरिति ॥ ३९ ॥ ४० ॥

(१) माययाचितेति विजयध्वजटिप्पण्योःपाठः मायाविसृष्टामितिश्रीवीरराघवः । (२) श्रियं न देवीं स्पृहयन्ति । (३) हिलोके । (४) नुलोके इति चक्रवर्त्तिटिप्पण्योःपाठः । (५) शान्तरूपा । (६) येचेमं । इति श्रीविजयध्वजतीर्थपाठाः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथोऽर्चिरादिगत्या गमनारम्भानन्तरं मम मायया विसृष्टां विशेषेण सृष्टां विभूतिं ब्रह्मलोकपर्य्यन्तभूतिं तथानुप्रवृत्तं भक्तिमनुसृत्य प्रवृत्तमष्टाङ्गमणिमाद्यष्टप्रकारकमैश्वर्यं भागवतीं श्रियं मुक्तिं न स्पृहयन्ति भागवतीं श्रियमिति दृष्टान्तार्थं यथा भागवतीं श्रियं न स्पृहयन्ति तथा मायाविभूत्यादीनित्यर्थः कैमुत्यन्यायद्योतनार्थं वा भागवतीं श्रियमेव न स्पृहयन्ति किं मायाविभूत्यादीन् स्पृहयन्तीति वक्तव्यमिति अथवा ब्रह्माण्डान्तर्भूतभगवल्लोकस्थश्रियमपि नेच्छन्ति किन्तु ते परस्य प्रकृतिपुरुषविलक्षणस्य मे मम लोके नित्यविभूतावश्नुवते प्राप्नुवन्ति क्षयिष्णून् सातिशयसुखान् लोकान् प्राप्नुवन्ति किन्तु निरतिशयसुखं मल्लोकं प्राप्नुवन्तीत्यर्थः ॥ ३७ ॥

ननु लोकत्वाविशेषात् स्वर्गादिवन्मल्लोकस्थभोग्यभोगोपकरणानां नाशः स्यात्तत्राह । नेति । हे शान्तरूपे ! यद्वा शान्तरूपे शुद्धसत्त्वमयात्मके मल्लोके मदनुभवपराः कर्हिचित्कदाचिदपि न नंक्ष्यन्ति न मदनुभवहीना भवन्ति मे मदीयमनिमिषो हेतिः कालचक्रं न लेढि न ग्रसति तत्र हेतुः । येषामिति । येषां निरतिशयप्रीतिविषय आत्माहं सुत इव स्नेहविषयः सखेव विश्वासास्पदं गुरुरिव हितोपदेष्टा सुहृद इव हितकारी इष्टदेवमिव पूज्यः एवं सर्वभावेनोपासीनानहरहरनुष्ठीयमानवर्णाश्रमधर्मानुगृहीतमनुपासनरूपमत्समाराधनप्रीतोऽहं मद्याथात्म्यानुभवरूपानन्दं प्रापय्य पुनर्नावर्त्तयामीति भगवतोऽभिप्रायः तथाच भगवता स्वयमेवोक्तम्

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥
आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ! ।
मामुपेत्य तु कौन्तेय ! पुनर्जन्म न विद्यते इति च

श्रुतिरपि "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते" इत्यादिका

एतेन यदि परमपुरुषायत्तं मुक्तैश्वर्यं तर्हि तस्य स्वतन्त्रत्वेन तत्सङ्कल्पान्मुक्तस्य पुनरावृत्तिसम्भावनाशङ्का परास्ता नहि परमपुरुषः सत्यसंकल्पः अत्यर्थप्रियं ज्ञानिनं लब्ध्वा कदाचिदावर्तयिष्यति य एवमाह ।

प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ।
उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ॥
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ।
बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभ इति ॥ ३८ ॥

नन्वपहतपाप्मत्वादेः सत्यसंकल्पत्वपर्यन्तस्य गुणगणस्य प्रत्यगात्मनः स्वाभाविकस्यैवाविर्भावः अतो न मुक्तैश्वर्यं परमपुरुषायत्तमिति चेदुच्यते तस्य तथा विधत्वमेव परमपुरुषायत्तं तस्य नित्यस्थितिश्चेश्वरायत्ता परमपुरुषस्यैतान्नित्यतया नित्येच्छत्वान्नित्यतया वर्त्तत इति न कश्चिद्विरोधः एवमेव परमपुरुषभोगोपकरणस्य लीलोपकरणस्य च नित्यतया शास्त्रावगतस्य परमपुरुषस्य नित्येच्छत्वादेव तथावस्थानमस्तीति शास्त्रादवगम्यते एतत्सर्वमभिप्रेत्याह । इममित्यादि द्वाभ्याम् । इमं लोकममुं लोकं परलोकं च विसृज्य उभावपि लोकौ हेयाविति निश्चित्येत्यर्थः उभौ लोकौ यात्यनेनेत्युभयायिनमात्मानम् उभयलौकिकधर्मसाधनं देहमित्यर्थः विसृज्य तस्मिन् देहे आत्माभिमानं परित्यज्येत्यर्थः तथात्मानं देहमनुयेऽनुबन्धिनो ये पुत्रकलत्रादयः ये च रायः धनानि पशवो गृहाश्च तानन्यांश्च परिग्रहादीन् विसृज्य तेषु ममतामपोह्येत्यर्थः विश्वतोमुखं सर्वज्ञं मामेवं सुतसखिगुरुत्वादिभावेनानन्यया विषयान्तरवितृष्णया भक्त्या भजन्त्याश्रयन्ति तान्मृत्योः संसारादतिपारयेऽत्यन्तं पारं नयामि पुनर्न संसारयामि एतन्मम नित्यव्रतमिति भावः ॥ ३९ ॥ ४० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु सायुज्यभाजामन्तर्धूमदाहवद्दुःखरूपं स्यादिति तत्राह । अथो इति । ये मम मायया चितां निर्मितां ध्वजच्छत्रव्यजनादिलक्षणां विभूतिमथो तथा अष्टाङ्गयोगमनुप्रवृत्तमनुप्राप्तमणिमाद्यैश्वर्यं तथा भद्रां सर्वाङ्गसम्पन्नां द्योतमानां श्रियं गवाश्वादिसंपदं न स्पृहयन्ति ते परस्य सर्वोत्तमस्य मे लोके सच्चिदानन्दलक्षणे देहे ऽश्नुवते व्याप्य सुखमेवानुभूय तिष्ठन्तीत्यन्वयः हिशब्दो मुक्तेर्विलक्षणत्वान्न लोकवदित्यर्थद्योतनार्थः । यद्वा । सालोक्यमुक्तिमनेन वक्ति । तथा हि भक्तिज्ञानफलत्वेन विभूतिं सर्वं महल्लोकेऽनुवृत्तमष्टाङ्गैश्वर्यमिह लोके च समृद्धामनुत्तुङ्गप्रासादादिसंपदं च नेच्छन्ति परिपक्ववैराग्यसमुद्भवत्वात्ते मे लोके वैकुण्ठादावतिसुखमश्नुवते इत्यतस्त्वमपि स्वर्गादीच्छां हित्वा सर्वोत्तमः सच्चिदानन्दलक्षणो ममात्यन्तमुपकारकत्वेन सर्वस्मात्प्रेष्ठो हरिरिति कृत्वा भजस्व त्वयापीदृशो लोकः प्राप्यत इति कीदृशी मम गोचरेत्यस्य परिहार उक्त इति ॥ ३७ ॥

कालस्य सर्वत्र सत्वात्स्वतन्त्रत्वात्ततोऽपि केनाचिद्धेतुना तान्निवर्तयतीति तत्राह । न कर्हिचिदिति । हेत्वभावादित्याह । मे नो इति । मे हेतिरायुधमनिमिषः कालचक्रं तान् लोके नो लेढि नाशयति नाशलक्षणं कार्यं न करोतीत्यर्थः अत्रापि हेतुरस्तीत्याह । येषामिति । आत्मा स्वामी "ज्ञानवतोऽभिव्यक्तो भवति" इति श्रुतेः चशब्दात् पिता च अनेकविधव्यसनप्राप्तावहमेवानिमित्तबन्धुरिति सुहृद इति बहुवचनम् ॥ ३८ ॥

किं बहुना वैराग्यविजृम्भितया भक्त्या भजतां संसारतारकोऽहमेवेत्याह । इमं लोकमिति । आत्मानं जीवमुभयायिनं लोकद्वयसंचारिणं विहायेति शेषः ये चेम इत्युक्तं विवृणोति । ये राय इति । रायो निष्कादयः यद्वा ये चेमे सुतादयः ॥ ३९ ॥

विश्वतोमुखं सर्वस्मान्मुख्यं सर्वज्ञं वा मृत्योः संसारादतीत्य पारये पारं प्रापयामि यद्वा पारसमाप्ताविति धातोः संसारसमाप्तिं कृत्वा मुक्तान् करोमीति ॥ ४० ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तामेव दर्शयति । अथो इति द्वाभ्याम् । अथोत पार्षदत्वानन्तरं । मम मायया भक्तविषयककृपया चितां तदर्थं प्रकटितां विभूतिं भोगसम्पत्तिं तथाणिमाद्यैश्वर्य्यमनुप्रवृत्तं स्वभावसिद्धं तथा भागवतीं श्रियं साक्षाद्भगवत्सम्बन्धिनीं सार्ष्टिसंज्ञां सम्पत्तिमपि अस्पृहयन्ति भक्तिसुखमात्राभिलाषेण यद्यपि तेभ्यो न स्पृहयन्तीत्यर्थः । तथापि तु ते मम लोके वैकुण्ठाख्ये अश्नुवते एवेति स्वावात्सल्यविशेषो दर्शितः यथा सुदाममालाकारवरे

सोऽपि वव्रेऽचलां भक्तिं तस्मिन्नेवाखिलात्मनि ।
तद्भक्तेषु च सौहार्दं भूतेषु च दयां पराम् ।
इति तस्मै वरान् दत्त्वा श्रियं चान्वयवर्धिनीमित्यादि ।

अतस्तेषां तत्रानासक्तिश्च द्योतिता अविद्यानन्तरमिति । मम

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

कृपयाचितामिति च तेषामनर्थरूपत्वं खण्डितं किं वा मायया-चितां ब्रह्मलोकादिगतां सम्पत्तिमपीति तेषां सर्वैवशीकारत्व-मेव दर्शितं ननु तद्भोगः तस्यातितुच्छत्वेन तेष्वनर्हत्वात् श्रुति-श्च "तद्यथेह कर्म्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः चीयते" । इत्यनन्तरमथ य इहात्मानमनुविद्य व्रजन्त्ये-तांश्च सत्यान् कामांस्तेषां सर्व्वेषु लोकेषु कामचारो भवतीति॥ ३७ ॥

नन्वेवं तर्हि लोकत्वाविशेषात् स्वर्गादिवद्भोक्तृभोग्यानां कदाचिद्विनाशः स्यात् तत्राह। शान्तरूपे शान्तमविकृतं रूपं यस्य तस्मिन् वैकुण्ठे मत्परास्तद्वासिनो लोकाः कदाचिदपि न नङ्क्ष्यन्ति भोगहीना न भवन्ति अनिमिषो मे हेतिमदीयं कालचक्रं नो लेढि तान् ग्रसते "न स पुनरावर्त्तते" इति श्रुतेः॥

आब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्ज्जुन!।
मां प्राप्यैव तु कौन्तेय! पुनर्जन्म न विद्यते इति

गीतोपनिषद्भ्यः सहस्रनामभाष्येऽप्युक्तम् परमसुत-कृष्टमथनं स्थानं पुनरावृत्तिशङ्कारहितमिति परायणं परायणा इति पुल्लिङ्गपक्षे बहुव्रीहिरिति न केवलमेतावत्तेषां माहात्म्य-मित्याह। येषामिति। प्रियो लक्ष्म्यादीनामिव तत्तया भावनीयः एव-मात्मा परमात्मा सनकादीनामिव सुतो भवदादीनामिव सखा श्रीदामादीनामिव गुरुः प्रद्युम्नादीनामिव सुहृदः एक एव नानाप्रकारः पाण्डवानामिव दैवमिष्टमुद्धवादीनामिव भ्रतस्त-त्स्वामिजाते मयि सुतस्नेहरूपैव भक्तिस्तवोचितेति च दर्शितम् अन्तिमनिष्ठा च तस्यास्तथा "ज्ञाततत्त्वाप्यभूत्कृष्णे वत्से गौरिव वत्सलेति । येषां मां विना न कश्चिदपरप्रेमभाजनमस्तीत्यर्थः यद्वा गोलोकादिकमपेक्ष्यैव मुक्तं तत्र हि तथा भाव एव श्रीगोपा नित्या विद्यन्ते अथवा तं लोकं कीदृग्भावा अविद्यानन्तरं प्राप्नुवन्ति तत्राह । येषामिति । ये केचित्पाद्मोत्तरखण्ड-दर्शितमुनिगणसवासनाः प्रियः पतिरिति मां भावयन्ति ये केचिच्च सनकादिसवासनाः आत्मा ब्रह्मैवायं साक्षादिति मां भावयन्ति एवमन्ये च ये ये त एव प्राप्नुवन्तीत्यर्थः। सुहृद इति बहुत्वं सौहृदस्य नानाभेदापेक्षया एवं चतुर्थे श्रीनारदवाक्ये "शान्ताः समदृशः शुद्धाः सर्वभूतानुरञ्जनाः । यान्त्यञ्जसाच्यु-पदमच्युतप्रियबान्धवा इति ॥ ३८ ॥

तथैवोपसंहरति । इममिति युग्मकेन । एवं प्रियत्वादि-प्रकारेण ॥ ३९ ॥

विश्वतोमुखं तत्तद्भावानुसारेणानन्तविर्भावमनन्यया भावा-न्तरामिश्रितया ॥ ४० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं सायुज्यरूपं फलमुक्त्वा सालोक्यादिरूपं फलमाह। अथो इति सापेक्षिकमध्यमा भवेत् ततोऽयं भिन्नः प्रक्रमः अथो अथ मम मायाविनो विभूतिं पुत्रधनादिरूपा स्वर्गादिरूपां च न तत्र भोग्य-मस्तीति मायाविन इत्युक्तं सर्वस्यापि विषयस्य भगवदीयानां भगव-द्धीनत्वाय षष्ठी तामित्यलौकिकीं सर्वलोकप्रसिद्धां वा ऐश्वर्यमणि-मादि अष्टाङ्गानि यस्येति सर्वैश्वर्यप्राप्तिः भगवद्भजनमनु भगवन्त-मनु वा प्रविष्टां श्रियं सर्वामेव सम्पत्तिं मोक्षपर्यन्तां भागवतीं च भगवत्कृतसम्पत्तिं च वेत्यनादरे सर्वमेव वा स्पृहयन्ति भद्रां मोक्षसम्पत्तिमपि मध्यमा भक्तिः फलमवश्यं प्रयच्छतीति यद्यन्यत्र तेषां भोगो न रोचते तदा वैकुण्ठ एव तेभ्यो भोगं प्रयच्छतीत्याह। परस्य मे तेऽश्नुवते तु लोक इति। परस्य कालाद-परात्र लोके व्यापि वैकुण्ठे सर्वमैश्वर्यादिकमश्नुवत इत्यर्थः ॥ ३७ ॥

ननु लोकानां कालभयस्य विद्यमानत्वात् "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इति च स्थानत्यागात् किं वैकुण्ठ-लोके विषयानुभवेनेत्याशङ्क्याह। न कर्हिचिदिति। हे शान्त-रूपे! मातः! शान्तं रूपं यस्येति सर्वदोषविवर्जिते वैकुण्ठे वा अहमेव परो येषां ते न नङ्क्ष्यन्ति क्षीणपुण्यया नश्यन्ति पतन्ति वा नवा हेतिः कालचक्रं तान् लेढि कालोऽपि तान् न भक्षयति तत्र हेतुः। येषामहमिति। कालस्य यत्र विषयः तत्र प्रवर्त्तते तस्याष्टौ विषयाः विषयः देहः पुत्राः मित्राणि गुरवः सम्बन्धिनः इष्टदेवता कामश्चेति तस्मिन् लोके न एते सन्ति किन्त्वेतेषां कार्यमहमेव करोमि अत एव तेषामहमे-वाष्टविधः न हि कालो मां विषयीकरोति तेषां मदन्यः कोऽपि नास्ति देहादिः प्रियो हि विषयो भवति वैकुण्ठस्तु मद्रूपः इति तत्राहमेव विषयः सारूप्यस्य च प्राप्तत्वात् देहोऽप्यहमेव देहेन विषयेषु भुज्यमानेषु प्रकृतिः सूयत इति सुता भवन्ति तत्र विषयभोगेनाप्यहमेव भवामि पुत्रस्नेहस्तत्रत्यैर्मय्येव क्रियते तत्र बाह्योऽपि सखाहमेव तत्रत्यानां पुरुषाणां मद्रूपत्वात् एते चत्वारः ऐहिकाः पारलौकिकाश्चत्वारः तत्र गुरुरुपदेष्टा वैकुण्ठे त्वहमेव गुरोरुपदेशनान्तरं ये तत्र हितार्थं यतन्ते ते बान्धवाः सुहृदः सुहृत्कार्यं तु तत्रत्यैरेव क्रियत इति दैवं देव-ता पूज्यः फलदाने सप्रयोजकः फलं चेष्टमतस्तेषां नाशाभाव उचित एव ॥ ३८ ॥

ततोऽपि प्रथमां भक्तिं सफलां निरूपयति। इमं लोकमिति। ये पूर्वोक्ताधिकाररहिताः तादृशशरीरादिरहिताश्च केवलं पुण्य-परिपाकवशात् एवं भूता वक्ष्यमाणप्रकारेणोपासते तेषां भक्त्य-भावात् अहं तान् मृत्योरतिपारय इति द्वयोःसम्बन्धः साङ्ख्य-सिद्धान्तत्वात् परित्यागोऽत्र मुख्यः मुख्ये सिद्धान्ते तु इह लोकादिषु अपेक्षाभाव एव हेतुः त्याज्यान् गणयति इह लोक-स्त्याज्यः चतुर्धा प्रमाणप्रमेयसाधनफलभेदेन ऐहिकानां प्रमा-णानि न प्रमाणानि यदेषां प्रमेयं विषयाः ज्ञेयाः ग्राह्या वा ते न ग्राह्याः यदेषां फलसाधनम्। यद्वा। फलं तदुभयमपि न नेयं यस्त्वेवं करोति स इमं लोकं त्यजति तथैवामुं चतुर्धा लोकं त्यजति उभयलोककामी लौकिको वैदिकश्च उभयस्वभावापन्न आत्मा देहादिचतुर्विधः सर्वत्र त्यागं औदासीन्यमात्मानं देहा-दिकमनु ये पुत्रादयः चकारात् गृहपरिच्छदादयश्च इहेति सर्वे एव ममतास्पदाः प्रत्यक्षत उपलभ्यन्त इति सूचितम् रायो धनानि पशवो गवादयश्च ॥ ३९ ॥

एतान्विसृज्य अन्यांश्चानुकान् प्रतिष्ठादीन् धर्मान् सर्वा-निति सर्वत्र विशेषणं चकारादभिमानादि ननु सर्वत्यागे सर्वैः क्रियमाणानामुपकाराणामपेक्षितत्वात् कथं निस्तारो भविष्य-तीत्याह । मामेवं विश्वतोमुखमिति। अहं हि सर्वात्मा मदर्थं यावत्त्यजन्ति तेषामर्थे तावद्रूपो भवामीति एवं रूपं मां ये भजन्ति विश्वतोमुखमिति नूतनतया भगवतः न किञ्चित्क-र्तव्यमस्तीति सूचितं तत्र भजने साधनं भक्तिरेव तत्रानन्यतापेक्ष्यते परलोकार्थं भगवत्कृपार्थमन्यार्थं भक्तिव्यतिरेकेण भगवद्व्यतिरे-

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

केण वा येषामन्यत्रास्ति मृत्योरनिपारणं पुनः तस्यात्मनो मृत्युग्रस्तदेहसम्बन्धाभावः न मुक्तिर्नापि मृत्युरिति सनकादय इव तिष्ठन्ति एवं भेदत्रयं निरूपितं सायुज्यं वैकुण्ठः जीवन्मुक्तिश्चेति ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

किञ्च कर्मज्ञानयोगादीनां भक्त्यविनाभावमिद्धत्वात्तद्भिन्नाभूताया अपि भक्तेस्तत्तत्फलदायित्वेन यत्कर्मभिर्यत्तपसेत्यादौ श्रुतत्वात् सर्गादीन्यपि वस्तुनो भक्तेरेव फलानीति शुद्धभक्तिमन्तो मल्लोकवासिन एव मद्भजनानन्दभूतान्येव सर्व्वसुखान्यनुभवन्तीत्याह । अथो अविद्यानिवृत्त्यनन्तरमेव माययाचितां विभूतिं सर्व्वब्रह्माण्डगतसुखानि मायिनस्तानिति च पाठः अणिमाद्यष्टयोगैश्वर्य्यसुखञ्चानुप्रवृत्तं भक्तिमनु स्वत एव प्राप्तुं तथा भागवतीं श्रियं वैकुण्ठस्थां सार्ष्टिसंज्ञां सम्पत्तिं तु निश्चितं चकारात् ब्रह्मानन्दञ्च अस्पृहयन्ति मदीयहासावलोकादिहृतात्ममनःप्राणत्वाद्यद्यपि तेभ्यो न स्पृहयन्तीत्यर्थः । तथापि परमेश्वरस्य मे मम लोके वैकुण्ठे अश्नुवते प्राप्नुवन्त्येवेति स्ववात्सल्यविशेषो दर्शितः ॥३७॥

नन्वेवं तर्हि लोकत्वाविशेषात् स्वर्गादिवद्भोक्तृभोग्यानां कदाचिद्विनाशः स्यात्तत्राह । शान्तमविकृतं रूपं यस्य तस्मिन् मल्लोके मत्परास्तद्वासिनो लोकाः कदाचिदपि न नङ्क्ष्यन्ति भोगहीना न भवन्ति अनिमिषो मे हेतिर्मदीयं कालचक्रं नो लेढि तान्न ग्रसते "न स पुनरावर्त्तत" इति श्रुतेः ।

आब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्ज्जुन ! ।
मामुपेत्य तु कौन्तेय ! पुनर्ज्जन्म न विद्यते इति

गीतोपनिषद्भ्यः । सहस्रनामभाष्येऽपि परमुत्कृष्टमयनं स्थानं पुनरावृत्तिशङ्कारहितमिति परायणपदं व्याख्यातं येषामहं प्रिय इति प्रेयसीभाववतामात्मेति शान्तभक्तानां सुत इति वात्सल्यभाववतां सखेति सख्यवतां गुरुरिति दास्यविशेषवतां सुहृद् इति बहुत्वमार्पं सख्यभेदवतामिष्टं देवमिति दास्यभाववतां तथाचोक्तं नारायणव्यूहस्तवे "पतिपुत्रसुहृद्भ्रातृपितृवन्मित्रवद्धरिम् ये ध्यायन्ति सदोद्युक्तास्तेभ्योऽपीह नमो नमः" इति "यमेवैष वृणुते तेन लभ्य" इत्यस्याः श्रुतेरपि यं प्रियत्वेन वा पितृत्वेन वा भ्रातृत्वेन वा सखित्वेन पुत्रभृत्यादित्वेन वा वृणुते तेन लभ्य इत्यर्थो वेदितव्य इतिरागानुगायाः स्वाभाविक्या भक्तेरुदाहरणं ज्ञेयम् ॥ ३८ ॥

अस्वाभाविक्याः साधनभक्तेरुदाहरणमाह द्वाभ्याम् । इमं दृष्टभोगासक्तिममुम् अदृष्टभोगासक्तिमुभयायिनं तदुभयगामिनम् आत्मानमित्यहन्तास्पदे भोक्तरि चासक्तिं विसृज्येति यथैव भोगाद्यासक्तिर्भोगादिप्रशंसागम्या तथैव तत्तदासक्तित्यागस्तन्निन्दागम्य इति यथोक्तम् "जुषमाणश्च तान् कामान् दुःखोदर्कांश्च गर्हयन्,, इति तथात्मानमनुलक्ष्यीकृत्य ये पुत्रकलत्रादयः ये च व्यावहारिका रैश्वभृतयः रायो धनानि ॥ ३९ ॥

विश्वतोमुखं ते यस्यां दिशि यान्ति तत्रैवाहं तेषामभिमुख एव वर्त्ते इत्यर्थः अनन्यया देवतान्तरभक्तिज्ञानकर्म्मादिशून्यया मृत्योः संसारसिन्धोः अतिपारये भक्तिमात्राभिलाषित्वेन संसारपारमनिच्छतोऽपि तानतिक्रम्य पारये पारं प्रापयामीति तानेवमज्ञापयित्वैवेत्यर्थः । यदुक्तं जरयत्याशु या कोशमित्यादि ॥ ४० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तेषां मुक्तीतरपदार्थेच्छाहीनत्वं कैमुतिकन्यायेन दर्शयति । अथेति । ते भक्तिमात्रेणैव सिद्धार्था अपि उक्तरीत्या परस्य लोके भागवतीं श्रियं मुक्तौ प्राप्तां "यक्षत् क्रीडन् रममाण" इत्यादिश्रुतिप्रसिद्धां संपत्तिं च अश्नुवते प्राप्नुवन्ति स्वतस्तु तां भद्रामपि अस्पृहयन्ति अथो किमुत मायिनः ॥

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् इति

श्रुतेः प्रकृतिस्वामिनः विभूतिं मायामयीं ब्रह्मलोकावित्स्तत्रपर्य्यन्तां श्रियं भद्राम् "आब्रह्मभुवनाल्लोकाः पुनरावर्तिन" इति श्रीमुखोक्तामनित्यां तथानुवृत्तं भक्तिमनुस्वत एव प्राप्तम् अष्टाङ्गमणिमाद्यैश्वर्यं च अस्पृहयन्तीति नैव स्पृहयन्तीत्यर्थः ॥ ३७ ॥

स्वलोकस्य तद्गतभोगोपकरणं च नाशाशङ्का नास्ति तत्र कालप्रभावस्याभावादित्याह । नेति । शान्तिरूपे प्राकृतदोषवर्जिते मल्लोके मत्पराः कर्हिचिदपि न नङ्क्ष्यन्ति भोगहीना न भवन्ति अनिमिषः कालो मे हेतिर्मदीयं चक्रं नो लेढि नो ग्रसति यस्मात्तेषामहमेव प्रिय आत्मादिरूपश्च

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥
मामुपेत्य तु कौन्तेय ! पुनर्जन्म न विद्यते इति

श्रीमुखोक्तेः "ये स्वर्गे लोके अमृतत्वं भजन्ते स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न स पुनरावर्तते" इति श्रुतेः केचित्तु स्वर्गलोकशब्देन च चतुर्मुखलोकं प्रतिपादयन्ति त उपेक्षणीयाः आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्ज्जुनेति श्रीमुखोक्तिविरोधात् सर्वशास्त्रेषु तल्लोकस्य विनाशित्वप्रसिद्धेश्चेत्यलं विस्तरेण ॥ ३८ ॥

तं लोकं स्वानन्यभक्तान्प्रापयामीत्याह । इममिति द्वाभ्याम् ॥ इमं लोकममुं च उभयायिनमहंममाभिमानम् आत्मानं देहं तत्पालनपोषणचिन्तां सर्वथा देहत्यागे भजनानुपपत्तेः आत्मानं देहं ये अनु पुत्रकलत्रादयः रायः धनानि ये पशवो गृहाश्च तान् अन्याननुक्तान् सर्वान् भक्तिविरोधिपदार्थांश्च हित्वा ये मां भजन्ति तान् मृत्योः सकाशादति अतिरिक्तं विलक्षणं नित्यं निजलोकं नयामीत्यर्थः ॥ ३९. ॥ ४० ॥

---

भाषाटीका ।

उस सूक्ष्म गतिके प्राप्त होने पर विचित्र शक्ति रूप मायाके अधिपति मेरेसे सत्यलोकादि विभूति अथवा अष्टसिद्धिका ऐश्वर्य अथवा वैकुण्ठ की विभूति को भक्त नहीं चाहते हैं तौ भी मेरे लोकमे सुन्दर आनन्द को करते हैं ॥ ३७ ॥

मेरे तत्पर वे भक्त कभी भी उस शान्तरूप वैकुण्ठ से पृथक् नहीं होते हैं तिससे हमारा कालरूप चक्र उनके ऊपर प्रभाव नहीं करता है ॥ ३८ ॥

जिन भक्तोंने यह लोक तथा परलोक दोनों छोड दिये हैं और दोनों लोकों के जानने वाले शरीरकाभी मोह छोड दिया है और देह के पीछे जो धन पशुगृहादि अन्य भी सब छोड दिये हैं केवल विश्वव्यापी मेरे ही को अनन्य होकर भजते हैं तिनको मैं स्वयं ही संसार से छुटाकर रखता हूं ॥ ३९ ॥ ४० ॥

नान्यत्र मद्भगवतः प्रधानपुरुषेश्वरात् ।
आत्मनः सर्वभूतानां भयं तीव्रं निवर्तते ॥ ४१ ॥
मद्भयाद्वाति वातोऽयं सूर्यस्तपति मद्भयात् ।
वर्षतीन्द्रो दहत्यग्निर्मृत्युश्चरति मद्भयात् ॥ ४२ ॥
ज्ञानवैराग्ययुक्तेन भक्तियोगेन योगिनः ।
क्षेमाय पादमूलं मे प्रविशन्त्यकुतोभयम् ॥ ४३ ॥
एतावानेव लोकेऽस्मिन् पुंसां निःश्रेयसोदयः ।
तीव्रेण भक्तियोगेन मनो मय्यर्पितं *स्थिरम् ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
कापिलेयोपाख्याने पञ्चविंशति-
तमोऽध्यायः ॥ २५ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अभक्तानां तु कथञ्चिदपि न मोक्ष इत्याह । नेति । मद्भगवतोऽन्यत्र भगवतो मत्तो विना सर्वभूतानामात्मनः भगवदादिविशेषणत्रयेण सामर्थ्यं निरपेक्षत्वं हितकारित्वं चोक्तम् ॥ ४१ ॥

ऐश्वर्यं स्फुटयति । मद्भयादिति । श्रुतिश्च
भीषास्माद्वातः पवते भीषोदेति सूर्यः
भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः इति ॥ ४२ ॥

मद्भजनादेव मोक्ष इत्यत्र सदाचारं प्रमाणयति । ज्ञानेति ॥ ४३ ॥

उपसंहरति । एतावानिति । मय्यर्पितं सन्मनः स्थिरं भवतीति यदेतावानेव ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
पञ्चविंशो ऽध्यायः ॥ २५ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

विशेषणत्रयेण यथासंख्यतयेति ज्ञेयं निरपेक्षत्वं प्रधानपुरुषापेक्षारहितत्वम् ॥ ४१ ॥

अनन्यया भक्त्येत्युक्ते देवतान्तरभजनाभावात् कुप्यन्तोऽन्ये देवाः किं त्वद्भक्तं पीडयन्तीत्याशङ्क्यैश्वर्यं स्फुटयति । मद्भयादिति ॥ ४२ ॥

क्षेमायेति अत "आत्यन्तिकं क्षेमं पृच्छामो भवतोऽनघा" इत्युक्तेरनवरतं मत्स्फूर्त्तिरेव क्षेमं तदर्थं प्रविशन्ति निरन्तरं तद्ध्यायन्तीत्यर्थः यद्वा क्षेमाय मोक्षाय प्रविशन्ति भजन्ति ॥ ४३ ॥

स्वसम्मतां शुद्धां भक्तिमुपसंहरति । एतावानिति । तीव्रेण ज्ञानकर्माद्यपेक्षारहित्यादू दृढेन शुद्धेनेत्यर्थः निःश्रेयसस्य परमपुरुषार्थस्योदय आविर्भावः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीराधारमणदासगोस्वामिकृतदीपिकाटिप्पण्यां
पञ्चविंशोऽध्यायः ॥ २५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अनन्ययेत्यनेन सूचितं देवतान्तरभक्तेरमुक्तिसाधनत्वं वक्तुं देवतान्तराणां क्षेत्रज्ञत्वात्कर्मवश्यत्वान्मन्निदेशानुवर्तित्वाच्च न तद्भजनान्मुक्तिरित्याह । नान्यत्रेति । सर्वभूतानां सर्वजीवानामात्मनः धारकस्य अनेन सर्वभूतानां धार्यत्वेन शरीरत्वमुक्तं प्रधानपुरुषयोः सर्वावस्थावस्थितचेतनाचेतनयोरीश्वरादन्तःप्रविश्य नियन्तुरनेन कर्मायत्तसर्वावस्थावस्थितप्रधानपुरुषयोर्नियाम्यत्वमुक्तं मद्भगवतः अहं चासौ भगवांश्च तस्मात्पूर्णषाड्गुण्यान्मत्त इत्यर्थः अनेन स्वस्यैव मुक्तिप्रदत्वमितरेषां दुर्भगत्वेनानुत्तारकत्वं च सूचितमन्यत्रान्यस्मिन्सेव्यमाने इति शेषः तीव्रं दुःसहं भयं गर्भजन्मजरामरणादिसांसारिकभयं न निवर्तते ॥ ४१ ॥

प्रधानपुरुषेश्वरादित्यनेन सूचितमितरेषामाब्रह्मपर्यन्तक्षेत्रज्ञानां स्वनियाम्यत्वमाह । मद्भयादिति सार्द्धेन । वायुसूर्यादयः मन्निर्दिष्टस्वस्वव्यापाराकरणे मत्संजातमहाभयनिमित्तदण्डनमुद्भावयन्तः स्वकीयव्यापारेषु जागरूकास्तिष्ठन्तीत्यर्थः अत्र "भीषास्माद्वातः पवत" इत्यादिश्रुत्यर्थ उक्तः ॥ ४२ ॥

मद्भजनादेव मोक्ष इत्यत्र सदाचारं प्रमाणयति । ज्ञानेति । तस्माद्योगिनो मदुपासका ज्ञानवैराग्याभ्यां ज्ञानयोगविवेकादिसाधनप्राप्ताभ्यां युक्तेन मद्भक्तियोगेन क्षेमाय नित्यनिरतिशयानन्दरूपमदनुभवात्मकक्षेमायाकुतोभयं कुतश्चिद्भयरहितं मत्पादमूलमेव प्रविशन्ति भजन्ते प्राप्नुवन्तीति वा ॥ ४३ ॥

आलोड्य सर्वशास्त्राणीति न्यायेन उक्तं वक्ष्यमाणं च कृत्स्नशास्त्रार्थं सुखग्रहणाय संगृह्य निर्दिशति । एतावानिति । तीव्रेणान्तरायानुपहतेन भक्तियोगेन मनश्चित्तं मय्यर्पितं सत् तत्रैव स्थिरं सुनिश्चलं भवतीत्येतावानेवास्मिन्प्रकृतिमण्डले पुंसां बद्धजीवानां निःश्रेयसोदयः परमपुरुषार्थोत्कर्षः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
पञ्चविंशोऽध्यायः ॥ २५ ॥

---

*स्थितमिति श्रीविजयध्वजतीर्थपाठः ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मत्तोऽन्यः संसारतारकोऽस्तीति शङ्कां माकार्षीरित्याह । नान्यत्रेति । प्रधानपुरुषयोः प्रकृतिहिरण्यगर्भयोः ईश्वरादात्मनः आदानादिकर्तुः ॥ ४१ ॥

वाय्वादीनां स्वाधिकारप्रवृत्तिर्न स्वनियता किमुत मुक्तिदानप्रवृत्तिः अत उक्तार्थे तच्छङ्का दूरोत्सारितेत्याशयेनाह । मद्भयादिति ॥ ४२ ॥

अहमेव मुक्तिदाने नियतः अत इदमेवात्र मुख्यसाधनमित्याह । ज्ञानेति । योगिनो ज्ञानिनः वाय्वादिवदन्यनियतत्वे तव मुक्तिदानशक्तिः महती स्यादित्यत उक्तमकुतोभयमिति ॥ ४३ ॥

एकग्रामप्रवेशे बहुमार्गवदनेके मार्गाः संभवेयुरित्याशङ्कां परिहरन्नन्ययोगं व्यवच्छिनत्ति । एतावानेवेति । स्थितमचलत्वेनेति शेषः ॥ ४४ ॥

इतिश्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
पञ्चविंशोऽध्यायः ॥ २५ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यच्च भवत्या जिज्ञासया प्रकृतेः पूरुषस्येत्युक्तं तत्तु केवलं न किंचिदित्याह । नान्यत्रेति ॥ ४१ ॥ ४२ ॥ ४३ ॥

ज्ञानवैराग्ययुक्तेनेत्यादिवत्स्वस्य तु ( स्यात्तु ) मतमाह । एतावानिति । तीव्रेण दृढेन योगकर्मादिभिरसङ्कुरेण शुद्धेनेत्यर्थः । तेनैवार्पितम् । सत्स्थिरं भवतीति यत् एतावानेव निःश्रेयसस्य परमपुरुषार्थस्याविर्भावः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
पञ्चविंशोऽध्यायः ॥ २५ ॥

———

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

मार्गान्तरेणाप्येतद्भविष्यतीत्याशङ्क्य निराकरोति । नान्यत्रेति ।

भक्त्यैव तुष्टिमभ्येति विष्णुर्नान्येन केनचित् ।
स एव मुक्तिदाता च भक्तिस्तत्रैव कारणम् ॥

मत् मत्तः अन्यस्मात्तीव्रं संसारात्मकं भयं न निवर्तते संसारनिवृत्तिर्ज्ञानादिना ते च भगशब्दवाच्याः भगवत्येव भवन्ति तदाह । भगवत इति । किञ्च संसारो जायते प्रकृतिपुरुषाभ्यां तयोर्नियामकः तस्मादेव निवर्तत इति युक्तम् । किञ्च । आत्मनः सर्वभूतानामिति आत्मैवैतादृशमुपकारं करोति नह्यन्योऽन्यस्मा उपकरोति स्वार्थव्यतिरेकेण अतो ज्ञानादिरूपत्वात् निवर्तकरूपत्वं प्रकृत्यादिनिवारकत्वात् पुनः संसाराजननमात्मत्वादवश्यहितकारित्वं च भगवत एवेति अन्यस्माद्भयं न निवर्तत इत्युक्तम् तीव्रमिति । शीघ्रमागन्तृ निकटस्थितादेव नियामकान्निवर्तत इति निकटस्थितत्वमात्मत्वात्सिद्धम् ॥ ४१ ॥

नियामकत्वं साधयति । मद्भयादिति ।

भीषास्माद्वातः पवते भीषोदेति सूर्यः ।
भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम इति

श्रुत्यर्थमाह । मद्भयादेवायं वातो वाति अन्यथा तस्य गमने प्रयोजनाभावात् सर्वत्र सर्वदा न वायात् सूर्योऽपि मद्भयादेव तपति श्रुतावुदेतीत्युक्तं तत्रोदयशब्देन तपनमेवोच्यते अन्यथा ज्योतिश्चक्रगत्याप्युदयो भवतीति व्यर्थं भयं स्यात् अग्नीन्द्रयोः क्रिया नोक्तेति स्वयमाह । वर्षतीन्द्र इति । अन्यथा स्वगृहस्थं जलमिन्द्रः कथं व्ययीकुर्यात् । दहत्यग्निरिति । सर्वानेवाशुचिपदार्थानसंमतानपि कथं दहेत् मृत्युरपि दयालुः मद्भयादेव चरति मारयितुं यतते वाय्वाद्युपासनया मृत्युर्दूरीकर्तव्य इति मतमपास्तम् । अन्येन निवार्यमाणोऽपि मृत्युर्न निवर्तत इत्यपि सूचितम् ॥ ४२ ॥

एवमितरनिषेधेन स्वसिद्धान्तं निरूप्य तत्र पूर्वाचारं प्रमाणयति । ज्ञानेति । ज्ञानवैराग्ये भक्तेः सहकारिणी योगोऽधिकारिविशेषणं भक्तिरेव कारणं क्षेमाय मोक्षाय स्वरूपसंरक्षार्थं वा मे पादमूलं पादपीठमचरं प्रविशन्ति न विद्यते कुतश्चिद्भयं यस्मात् प्रवेशे हेतुः ॥ ४३ ॥

एवं सर्वं शास्त्रार्थं निरूप्य स्पष्टपरिज्ञानार्थं कर्तव्यमनुवदन् उपसंहरति । एतावानेवेति । पुंसां परलोकार्थं यतताम् अस्मिन् लोके एतावानेव निःश्रेयसोदयः निःश्रेयसस्योदयो यस्मात् मोक्षेऽपि मोक्षहेतुरेतावानेव पूर्वं मनोमूलकः संसार उक्तः मोक्षेऽपि तदेव निमित्तमुक्तमिति तच्चेद्भगवति स्थिरीभवति तदा कृतार्थतेति तत्स्थिरीकरणार्थं भक्तिरेवेत्याह । तीव्रेणेति । शीघ्रं फलसाधकेन भक्तियोगेन सर्वप्रतिबन्धकरहितेन मनश्चेन्मय्यर्पितं सत् स्थिरं भवेत् एतावानेव निःश्रेयसोदयः केनापि प्रकारेण भगवति स्थिरं मनः परमपुरुषार्थसाधकमिति योगसिद्धान्तः तत्र भक्तिरेव स्थिरीकरणहेतुरिति स्वसिद्धान्तानुसारेणापि भक्तिर्निरूपिता भागवतानुसारेणापि तस्माद्भक्तिः सर्ववादिसंमतेति सैव कर्तव्येति सिद्धम् ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्वल्लभाचार्यकृतसुबोधिन्याम्
पञ्चविंशाध्यायविवरणम् ॥ २५ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मद्भक्तिं विना तु नैव निस्तार इत्याह । मत्तोऽन्यत्र मां विनेति मद्भक्तिं विनेत्यर्थः भक्तिविषयीभूतस्य स्वस्यानन्तस्वरूपत्वेऽपि विशेषणत्रयेण पूर्वपूर्वमुख्यानि सेव्यस्वरूपाणि कानिचित् सूचयति भगवान् प्रथमतः पूर्णःश्रीकृष्ण एव ततः श्रीरामः प्रधानपुरुषेश्वरः परमव्योमनाथः तत आत्मा प्रकृत्यन्तर्यामी समष्ट्यन्तर्यामी व्यष्ट्यन्तर्यामी चेति पुरुषत्रयं पुरुषावतारा मत्स्यकूर्मादयोऽपि ज्ञेयाः॥४१॥

नन्वनन्यया भक्त्येति त्वयोक्तमतः अन्ये खल्वसेविता देवाः कुप्यन्तस्त्वद्भक्तं कदाचिद्दुःखयन्ति नवेति तत्र साटोपमाह । मदिति ।

श्रुतिश्च भीषास्माद्वातः पवते भीषोदेति सूर्य्यः ।
भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम इति ॥

तेन यदि कमपि ते मद्भक्तं कदाचिदपि दुन्वन्ति तदा तांस्तत्तदधिकारादप्यधः पातयितुं नैवाहं विलम्बे इति भावः ॥ ४२ ॥

शुद्धां भक्तिमुक्त्वा ज्ञानादिमिश्रां भक्तिमाह । ज्ञानेति ॥ ४३ ॥

तदपि मम शुद्धैव भक्तिः सर्वतः श्रेष्ठेत्याह । एतावनेवेति । इतोऽधिको निःश्रेयसोदयो नैव कोऽप्यस्ति किं त्वितो न्यून एव सर्व इति भावः । तीव्रेण दृढेन ज्ञानकर्मादिभिरसङ्कुरेण शुद्धेनेत्यर्थः निःश्रेयसस्य परमपुरुषार्थस्योदयः ॥ ४४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
तृतीये पञ्चविंशोऽयं सङ्गतः सङ्गतः सताम् ॥२५॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

प्रधानदेवत्वपतिर्गुणेशः यमेवैष वृणुते तेन लभ्यः

भीषास्माद्वातः पवते भीषोदेति सूर्यः भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः।

इत्यादिश्रुतिमुपबृंहयन् स्वस्य सर्वेश्वरत्वसर्वनियन्तृत्वादीन् गुणान् दर्शयति। नान्यत्रेति द्वाभ्याम् ॥ ४१ ॥ ४२॥

उक्तार्थे शिष्टाचारं प्रमाणयति। ज्ञानेति ॥ ४३ ॥

उपसंहरति। एतावानिति। तीव्रेण भक्तियोगेन मय्यर्पितं सत् मनःस्थिरं भवतीति यत् एतावानेव पुंसां मुमुक्षूणां निःश्रेयसोदयः निःश्रेयसाय मोक्षाय उदयः उद्यमः उपाय इत्यर्थः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे पञ्चविंशोऽध्यायः ॥ २५ ॥

भाषाटीका

प्रकृति पुरुष दोनों के ईश्वर सब भूतोंके आत्मा मेरेको छोडकर अन्यत्र कहीं पर भय निवृत्त नहीं होता है ॥ ४१ ॥

मेरे भयसे यह पवन वहता है मेरे भयसे सूर्य तपताहै इन्द्रवर्षता है अग्नि जलाता है मृत्यु भी मेरे भयसे घूमताहै।४२।

योगि लोग ज्ञान वैराग्य युक्त भक्ति योगसे अपने कल्याण के वास्ते निर्भय मेरे पाद मूलमे प्रविष्ट होते हैं ॥ ४३ ॥

इस लोक में पुरुषों का इतना हीं कल्याणका उदय है जोकि तीव्र भक्ति योगसे स्थिर मनको मेरे मे अर्पण करे।४४।

इति श्रीभागवत तृतीयस्कन्ध पच्चीसमे अध्यायका भाषानुवाद लक्ष्मणाचार्यकृत समाप्त ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे पञ्चविंशोऽध्यायः समाप्तः॥ २५ ॥

# षड्विंशोऽध्यायः ।

श्रीभगवानुवाच

अथ ते सम्प्रवक्ष्यामि तत्त्वानां लक्षणं पृथक् ।
यद्विदित्वा विमुच्येत पुरुषः प्राकृतैर्गुणैः ॥ १ ॥
ज्ञानं निःश्रेयसार्थाय पुरुषस्यात्मदर्शनम् ।
यदाहुर्वर्णये तत्ते हृदयग्रन्थिभेदनम् ॥ २ ॥
अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः ।
प्रत्यग्धामा स्वयंज्योतिर्विश्वं येन समन्वितम् ॥ ३ ॥
( न जातो न म्रियेतात्मा स हि देहाद्युपाधिभिः ।
निमित्तैरात्तधर्म्मोऽयं यथा स्वप्ने तदीक्षिता ॥ )
स एष प्रकृतिं सूक्ष्मां दैवीं गुणमयीं विभुः ।
यदृच्छयैवोपगतामभ्यपद्यत लीलया ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

षड्विंशे पुंप्रकृत्योस्तु विवेकायोपवर्ण्यते ।
सांख्येन सर्वभावानां जन्म लक्षणभेदतः ॥ १ ॥
धात्रा पुत्राय यत्प्रोक्तं चक्रे मित्रासुतेन यत् ।
मात्रे सांख्यं तदध्यात्मं प्राधान्येनाह तत्त्ववित् ॥ २ ॥

"तत्त्वाम्नायं यत्प्रवदन्ति सांख्यम्" इत्यत्र सांख्यं भक्तियोगश्चाति प्रयमुपक्षिप्तं तत्र भक्तिमुक्त्वेदानीं सांख्यमाह । अथेति ॥ १ ॥

ननु मुक्तिरात्मज्ञानादेव न तु तत्त्वलक्षणज्ञानात् "तमेव विदित्वाति मृत्युमेति" इति श्रुतेरत आह । ज्ञानमिति । आत्मदर्शनरूपं ज्ञानमत एव हृदयग्रन्थिभेदनमहङ्कारनिवर्तकं निःश्रेयसप्रयोजनाय यदाहुस्तत्ते वर्णयामि तत्त्वलक्षणज्ञानादेव विविक्तात्मज्ञानं भवतीति भावः ॥२॥

तत्र पुरुषं लक्षयति । अनादिरिति । आत्मैव पुरुषः कोऽसावात्मा प्रत्यक्प्रतिलोमं धाम स्फूर्तिर्यस्य च क्षणिकपक्षं व्यावर्तयति । अनादिरिति । संसारित्वपक्षं व्यावर्तयति । प्रकृतेः परः अन्योऽसङ्गः ज्ञानादिगुणत्वं वारयति । निर्गुणः मीमांसकाद्यभिमतज्ञानविषयत्वं वारयति । स्वयंज्योतिः अनेनैव प्राभाकराभिमतं ज्ञानाधारत्वेन स्फुरणमपि निरस्तम् । स्वयंज्योतिष्ट्वे हेतुः विश्वं येन समन्वितं प्रकाशित इति शेषः एतैरेव हेतुभिः पुरुषस्य प्रकृतेः परत्वमपि सिद्धम् ॥ ३ ॥

अत्रावरणविक्षेपशक्तिभेदेन प्रकृतिर्द्विविधा तत्रावरणशक्त्या सैव जीवोपाधिरविद्या विक्षेपशक्त्या सैव माया परमेश्वरि पुरुषश्च जीवेश्वररूपेण द्विविधः तत्र यः प्रकृत्यविवेकेन संसरति स जीवः यस्तु प्रकृतिं वशीकृत्य विश्वसृष्ट्यादि करोति स ईश्वरः तत्र प्रकृत्यविवेकेन जीवस्य संसारप्रकारमाह । स एष इति पञ्चभिः । सूक्ष्मामव्यक्तां दैवीं देवस्य विष्णोः शक्तिं लीलयोपगतां यदृच्छयैवाभ्यपद्यतेत्यन्वयः ॥ ४ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

लक्षणानां भेदो विवेकस्तत्पूर्वकं सर्वभावानां प्रकृतिपुरुषादि सर्वतत्त्वानां जन्मोपवर्ण्यते धात्रा ब्रह्मणा पुत्राय नारदाय द्वितीये यत् साङ्ख्यं प्रोक्तं प्राधान्येन मुख्यतया तत्त्ववित् कपिलः तत्र त्रिषु मध्ये अथेत्यारम्भे लक्षणं व्यावर्त्तको धर्मः यत् लक्षणम् ॥ १ ॥

तमेवात्मानमेव विदित्वा मृत्युमत्येति मुक्तो भवति आत्मदर्शनरूपं सत्त्वपुरुषान्यताप्रत्ययरूपं निःश्रेयसप्रयोजनाय कैवल्यलक्षणं प्रयोजनं साधयितुं ननु तर्हि तत्त्वानां लक्षणं संप्रवक्ष्यामीति पूर्वं कथं प्रतिश्रुतमत्र भावं व्याचष्टे । तत्त्वलक्षणज्ञानादेवेति । विविक्तस्य सर्वस्मात्पृथक्त्वेन शुद्धतया ज्ञातस्यात्मनो ज्ञानं तत्त्वलक्षणज्ञानादेव भवति तदुक्तं श्रीकृष्णाचार्य्येण । एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम् । अविपर्य्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानमिति ॥ २ ॥

तत्र । तेषु तत्त्वेषु मध्ये आत्मैव परमात्मैव मूलपुरुषः आत्मशब्दस्य परमात्मपरत्वं व्यञ्जयितुं व्याचष्टे । कोऽसाविति । प्रतिलोमं सर्वेन्द्रियागम्यं स्वप्रकाशमिति यावत् स्फूर्तिस्स्वरूपज्ञानं समासे षष्ठी राहोःशिर इतिवद्भेदे ज्ञेया । क्षणिकपक्षं । विज्ञानवादिमतं तन्मते क्षणिकविज्ञानमेवात्मा तस्योत्पत्तिमत्त्वाज्ञानादित्वाभिमितव्यावृत्तिर्ज्ञेया वस्तुनो जीवात्मनोऽपि तथात्वात्तत्रातिव्याप्तिं वारयितुंव्याचष्टे । संसारित्वेति । तथा च ।

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

स ईशो यद्वशे माया स जीवो यस्तयार्दितः इति विष्णुस्वामिवचनात्तस्य प्रकृतिसङ्गित्वाच्च तत्रातिव्याप्तिरित्यर्थः तार्किकमते स्वतो जडाश्चियोगाच्चेतना आत्मानो भवन्ति तन्मतं निराकर्तुं व्याचष्टे । ज्ञानादिगुणत्वमिति । ननु बाह्येन्द्रियाऽविषयत्वात्प्रतिलोमस्फूर्तित्वं भवतु तस्य किन्तु ।

अहं प्रत्ययविज्ञेयो ज्ञातव्यः सर्वदैव हि ।
विक्रियाज्ञानरूपास्य न नित्यत्वे विरोत्स्यते इति

जैमिनीयसिद्धान्तात् ज्ञानविषयत्वम् अहमित्यान्तरीयज्ञानविषयत्वन्तु भवत्येव तद्वारयितुं व्याचष्टे । मीमांसकादीति । स्वयंज्योतिः स्वयंप्रकाशस्तथा च तस्यैवाहङ्कारादिसर्वेन्द्रियप्रकाशकत्वान्नाहमिति ज्ञानविषयत्वं स्वव्यवहारे परानपेक्षत्वमेव हि तत्त्वं वैष्णवाभिमतास्मदर्थस्तु स्वयंप्रकाश एव तस्य प्रकृतिकार्यत्वाभावात् अनेनैव स्वयंज्योतिरिति पदेनैव ज्ञानाधारत्वेनेति । आत्मनश्शरीरार्थातिरिक्तत्वाद्यत्र ज्ञानपरिणामो दृश्यते तत्रात्मास्तीत्यनुमीयते इत्येव ज्ञानाधारत्वेन स्फुरणं तदपि निरस्तं स्वरूपज्ञानस्य परिणामासम्भवात् नीलाद्याकारा वृत्तय एव परिणमन्ते नात्मेति न तदाधारत्वमपेक्षते तत्स्फुरणं स्वप्रकाशत्वादिति भावः येन समन्वितमिति तस्योपादानत्वमपि स्वीकृतं निरीश्वरसाङ्ख्यमते तदभावेऽपि सेश्वरसाङ्ख्यमते तदङ्गीकारात् एतैर्निर्गुणत्वादिभिरेव ॥ ३ ॥

अत्र । सेश्वरसांख्यमते तत्र रजस्सत्त्वानभिभूतं तम आवरणशक्तिः तमस्सत्त्वानभिभूतं रजोविक्षेपशक्तिस्तद्भेदेन तत्र भेदद्वये पारमेश्वरी जगत्सृष्टिर्निमित्तं तदुक्तमभिज्ञैः "विक्षेपशक्तिर्लिङ्गादिब्रह्माण्डान्तं जगत्सृजेत्"इति तत्र । जीवेश्वरयोर्मध्ये प्रकृत्यविवेकेन प्रकृतकार्यदेहाद्यध्यासेन वशीकृत्य चिच्छक्त्या स्वाधीनीकृत्य 'मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनि" इति श्रीमदर्जुनवाक्यात् तत्र एवं सति स एष जीवात्मा लीलया जीवमोहनरूपया व्यामोहनशक्त्या यदृच्छयेति तत्सम्बन्धस्य दुर्निरूप्यत्वं दर्शयति अभ्यपद्यत तादात्म्याध्यासेन प्राप ॥ ४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं मुक्त्युपायभूतं भगवद्भक्तियोगं प्रस्तुत्य तस्य जगत्कारणविषयत्वस्य "कारणन्तु ध्येय" इति श्रुत्यैवोक्तत्वाज्जगज्जनीयस्य भगवतः सृष्ट्यादिव्यापारान् विवक्षुस्तस्य लक्षणभूतसृष्ट्यादिकारणत्वं प्रकृतिपुरुषकालशरीरकस्य प्रकृतिपुरुषादिस्वरूपशोधनमन्तरेण तच्छरीरकस्य तस्य सृष्ट्यादिकारणत्वकथनायोगात्प्रथमं प्रकृत्यादिस्वरूपशोधनं तद्विवेकस्य मुक्त्युपायकथनपूर्वकं प्रतिजानीते । अथेति । तत्त्वानां प्रकृतिपुरुषकालादीनां लक्षणं स्वरूपनिरूपकनिरूपितस्वरूपप्रतिपन्नधर्मजातं पृथगसङ्करेण ते तुभ्यं वक्ष्यामि अप्रस्तुतप्रसङ्गाशङ्कां वारयति । यदिति । यत्प्रकृत्यादितत्त्वानां लक्षणं विदित्वा पुरुषः मुमुक्षुः प्रकृतेर्गुणैः सत्त्वादिभिः सत्त्वादिगुणकार्यानादिबन्धकपुण्यपापरूपैर्गुणैरितीत्यर्थः विमुच्येत प्रकृत्यादिविवेकहेतुकहेयोपादेयविवेकेन भगवदुपासनद्वारा विमुच्यत इति भावः ॥ १ ॥

यत्साक्षान्मुक्त्युपायभूतं ज्ञानं तदपि वक्ष्यामीत्याह । ज्ञानमिति । आत्मदर्शनमात्मा परमपुरुषः दृश्यते साक्षात् क्रियतेऽनेनेत्यात्मदर्शनं यज्ज्ञानं पुरुषस्य मुमुक्षोर्निःश्रेयसाय मोक्षायाहुः वेदान्तास्तज्ज्ञाश्च तज्ज्ञानं हृदयग्रन्थिभेदनमज्ञाननिवर्तकं ते तुभ्यं यद्वा ते तव हृदयग्रन्थिभेदनं वर्णये ॥ २ ॥

तावत्प्रकृतिविलक्षणात्मस्वरूपं शोधयति । अनादिरितिद्वाभ्याम् । पुरुषो जीवः तस्य स्वरूपनिरूपकधर्मद्वयमाह । स्वयंज्योतिः स्वयंप्रकाशः यः स्वात्मानमन्यांश्च प्रकाशयतीति तत् स्वयं ज्योतिरित्युच्यते यथा दीपादिस्तद्वदयमपि स्वयंज्योतिः तर्हि तद्वदेव किं जडस्वरूप इत्यत आह । प्रत्यग्धामा स्वस्मै भासमानत्वं प्रत्यक्त्वं परस्मै भासमानत्वं पराक्त्वम् एतदेव जडत्वं प्रत्यक् स्वस्मै प्रकाशमानं धाम स्वरूपं यस्य सः अनेन पराग्धामदीपादिभ्यो जडेभ्यो वैलक्षण्यसिद्ध्या ज्ञानस्वरूपत्वसिद्धिः स्वयंज्योतिरित्यनेन ज्ञानगुणकत्वसिद्धिः तेन हि स्वपरप्रकाशकत्वमुच्यते तत्र यथा दीपादिश्चतुरङ्गुलपरिमितस्तेजोरूप एकदेशस्थः स्वापृथक्सिद्धधर्मभूतया प्रभया अन्यान् प्रकाशयति स्वधर्मभूतप्रभामनपेक्ष्यैव स्वयमपि प्रकाशते तद्वदात्मापि स्वधर्मभूतज्ञानेनान्यान्प्रकाशयति स्वधर्मभूतज्ञाननिरपेक्षमेव स्वयमपि प्रकाशते इति ह्युच्यते एतावांस्तु विशेषः पराग्धामा दीपादिः स्वात्मानमन्यांश्च परस्मै प्रकाशयति आत्मा तु प्रत्यक्त्वेन स्वात्मानमन्यांश्च स्वस्मा एव प्रकाशयतीति प्रकाशो नाम व्यवहारानुगुण्यापादनम् एवं च स्वयंप्रकाशत्वं दीपादिष्वात्मनि चाविशिष्टं प्रत्यग्धामत्वं त्वात्मन्येवासाधारणमिति ज्ञानगुणकं ज्ञानस्वरूपं चेति जडाद्विलक्षणमात्मस्वरूपमिति फलितं तदेवाह । प्रकृतेः प्रकृतिपरिणामरूपाच्छरीरेन्द्रियमनःप्राणादेः परः स्वरूपतः स्वभावतश्चात्यन्तविलक्षणः अत एव निर्गुणः प्राकृतसत्त्वादिगुणरहितः तथाप्यात्मा शरीरान्तःप्रवेशेन तद्धारकः येनात्मस्वरूपेण विश्वमाब्रह्मस्तम्बपर्यन्तं स्थूलसूक्ष्मशरीरात्मकं विश्वं व्याप्तं येनेत्येकवचननिर्देशः "एको व्रीहिः सुसम्पन्नः सुपुष्टं कुरुते प्रजा" इति वज्जात्यभिप्रायकृतः अनेन देवादिशरीराणां व्याप्यत्वमात्मनो व्यापकत्वं निरतिशयसूक्ष्मत्वं चोक्तम् ॥ ३ ॥

अत एव व्यापकत्वान्निरतिशयसूक्ष्मत्वादनादित्वाद्देहादिविलक्षणत्वाच्च देहादीनामुपाधिभिरुत्पत्तिविनाशादिभिर्देहादिरूपैरुपाधिभिर्वा सह न जायते न म्रियते न नश्यति ननु देवोऽहं देवोऽयं मनुष्योऽहं मनुष्योऽयं स्थूलोऽहं स्थूलोऽयमिति स्वस्य परेषाञ्च देहात्मनोरभेदेनैव प्रतीतेः कथं देहादिभिः सह जननादिरात्मन इत्यत्राह । निमित्तैः पुण्यपापरूपैः आत्तः देवोऽहं स्थूलोऽहमित्यारोपितः देहधर्मो यस्य स अतो न देहादिभिः सह जननादिरित्यर्थः एतदेव दृष्टान्तेन स्पष्टयति । यथेति । यथा स्वप्नद्रष्टा स्वाप्नपदार्थनाशेऽपि न नश्यतीत्येवं जागराद्यवस्थासु दृश्यते देहादिनाशेऽपि न नश्यतीत्यर्थः ॥ ० ॥

एवं प्रकृतिविलक्षणात्मस्वरूपं विशोध्यैवंविधस्य तस्य कथं कर्तृत्वभोक्तृत्वादिकमित्याशङ्कायां प्रकृतिसंसर्गकृतत्वादिवैचित्र्यमिति वक्तुं प्रकृतिसंसर्गप्रकारमाह । स इति । स एव उक्तलक्षणः विभुर्निरतिशयसूक्ष्मत्वेन सर्वान्तर्व्यापनसमर्थः प्रत्यगात्मा सूक्ष्मां नामरूपविभागानर्हनिरतिशयसूक्ष्मदशामापन्नामित्यर्थः अनेन जगदादाविति सामर्थ्याल्लभ्यते तदैव प्रकृतेः सूक्ष्मदशापन्नत्वात् दैवीं देवस्य विष्णोर्लीलायामत एव लीलया देवसम्बन्धिपरमार्थलीलया हेतुभूतया परामिच्छयानेनेति वक्ष्य-

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मायाम्‌धाहृदैवीमित्युक्तत्वाच्च यदृच्छयैवोपगतां प्राप्तां जीवस्य प्रकृतिसम्बन्धस्य सहजत्वाभावात्कादाचित्कीमित्यर्थः गुणमयीं सत्त्वादिगुणप्रचुरां मायामभ्यपद्यत अपश्यत् अत्र केचिदावरणविक्षेपभेदेन प्रकृतिं द्वेधा विभज्य पुरुषमपि जीवेश्वररूपेण द्वेधा विभज्य एकस्य प्रकृत्यविवेकेन संसारः इतरस्य प्रकृतिं स्ववशीकुर्वतः सृष्ट्यादिव्यापारस्तत्र प्रकृत्यविवेकेन यः संसरत्यावरणशक्त्या तिरोहितस्तस्य संसारप्रकारोऽनेन श्लोकेनोच्यते इति व्याचक्षते तदयुक्तं नित्यमविद्याप्रत्यनीकस्वप्रकाशस्वरूपस्य प्रकृत्यविवेकानुपपत्तेः स्वलीलारूपसृष्ट्यादिव्यापारनिवृत्तये आवरणशक्त्या मुह्यतीति चेन्न विकल्पासहत्वात्किं भ्रान्तिहेतुर्लीला उत भ्रान्तिकार्या उतभ्रान्तिरेव नाद्यः लीलायाः स्वभ्रमसम्पादनानुपपत्तेः बहुस्यामिति सङ्कल्पेन हीश्वरो लीलारूपं सृष्ट्यादिकं करोति नहि कश्चिद्भ्रान्तः स्यामिति सङ्कल्प्य भ्राम्यति किञ्चेश्वरः सर्वज्ञश्चेत्स्वानर्थरूपसंसारं न प्रवर्तयति अज्ञश्चेत्सर्वज्ञत्वश्रुतिविरोधः विवेकनिष्पादनेन स्वानर्थपरिहाराय जगत् सृजतीति चेत्तथाऽपि लीलात्वमनुपपन्नं नहि व्याध्युपहतस्यौषधानयनप्रवृत्तिर्लीला भवति न द्वितीयः प्रथमसंकल्पस्य लीलात्वानुपपत्तेस्तद्वदेवोत्तरत्रापि लीलान्तरेण भ्रमोपपत्तेश्च नापि तृतीयः द्विचन्द्रज्ञानस्य लीलात्वाप्रसिद्धेः स्वयमभ्राम्यन्नीश्वरो लीलया परान्मोहयतीति चेन्न त्वन्मते भ्रान्त्यादिना परदर्शनायोगात्परदर्शने सम्भवति तेषां स्वानन्यत्वज्ञानाच्च निर्विशेषसन्मात्रस्य ब्रह्मणो निर्विशेषत्वादेव न लीलासम्भवः ईश्वरस्य तु सर्वज्ञत्वेन संसाररहितत्वेन जीवान् स्वानन्यत्वेन च जानतो जन्ममरणादिनिवर्तननरकपातनादिव्यापारो न लीला भवितुमर्हति तस्मान्निखिलहेयप्रत्यनीकानन्तकल्याणगुणमहोदधेरीश्वरस्य लीलोपकरणभूतया तन्नियाम्यया मायया तन्नियाम्यस्य तच्छरीरभूतस्यानादित्वाद्युक्तधर्मकस्य तस्माद्विलक्षणस्य प्रत्यगात्मनः परमार्थभूतेश्वरलीलारूपजगत्सृष्ट्यादिव्यापारनिर्वृत्तये अभिपत्तिरनेन श्लोकेन प्रतिपाद्यत इत्यभ्युपगन्तव्यमत्र लीलया यदृच्छयाऽभ्युपगतामभ्यपद्यतेत्यप्यन्वेतुं शक्यं तदा लीलयेत्यध्ययनेन वसतीति वत्फलस्यैव हेतुत्वेन विवक्षया हेतुतृतीया लीलया भगवल्लीलारसनिर्वृत्त्यर्थं यदृच्छया यादृच्छिकभगवत्सङ्कल्पेनोपगतां प्राप्तामित्यर्थः ॥ ४ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अस्मिन्नध्याये प्रसंख्यानाय तत्त्वानामिति यदुक्तं तत्प्रपञ्चः क्रियते इति प्रतिजानीते । अथ त इति । अथ भक्तिनिरूपणानन्तरं यत्पुरुषार्थोपयोगि तदेव वक्तव्यं किं तत्त्वानां लक्षणज्ञानेन प्रयोजनमिति तत्राह । यद्विदित्वेति । गुणैः सत्त्वादिभिः ॥ १ ॥

परमात्मज्ञानमेव निर्विचारं मुक्तिसाधनं श्रुतं तत्त्वलक्षणज्ञानस्य च कथं तत्साधनत्वं स्यादित्याशङ्क्य तत्त्वलक्षणज्ञानं परमात्मज्ञानाविनाभूतं तेषां मुख्यकारणत्वात् परमात्मन इति तज्ज्ञानमेव वर्णाय इति प्रति जानीते । ज्ञानमिति । आत्मानं परमात्मानं दर्शयतीति आत्मदर्शनं यत् ज्ञानं पुरुषस्य श्रेयोऽर्थिनो निःश्रेयसाय मोक्षादिसर्वपुरुषार्थायाहुस्तत् हृदयग्रन्थिभेदनं संसारपाशच्छेदकरं ज्ञानं तव वर्णये इत्यन्वयः ॥ २ ॥

यज्ज्ञानं हृदयग्रन्थिभेदनमुक्तं तज्ज्ञानं किं गुणविशिष्टमुदीर्यमाणं संसारमनुच्छेदसमर्थं स्यादिति तत्राह । अनादिरिति । य अनादिराद्यन्तरहितः कारणमात्रशून्यो वात्मा विज्ञानादिगुणराशिः पुरु पूर्णानन्दं सनोति ददातीति पुरुषः सर्वान्तर्यामी वा निर्गुणः गुणसंबन्धरहितः चेतनप्रकृतेः परः प्रत्यग्धामाभिमुखपद्माख्यधाम । स्वयंज्योतिः स्वप्रकाशेन दीप्यमानो विश्वं स्थावरजङ्गमात्मकं जगद्येन समन्वितं व्याप्तम् ॥ ३ ॥

स आत्मा परमात्मा न जातो न म्रियेत "अज आत्मा महान् ध्रुवः न जायते म्रियते वा कदाचित्" इत्यादिश्रुतिस्मृतिप्रसिद्धमाद्यन्तरहित इत्यनेनापि जन्माद्यभावे सिद्धे न जात इत्यादि पुनर्वचनं प्रमाणप्रसिद्धिद्योतनाय युक्तिपूर्वश्रुत्यादेर्बलीयस्त्वं न केवलस्येति भावेन कैमुत्यन्यायमाह । देहाद्युपाधिभिरिति । देहाद्युपाधिलक्षणैर्निमित्तैरारोपितद्धर्मा स्वीकृतजननादिधर्मा जीवोऽपि न स्वरूपतो जायते किं तु भ्रान्त्याभिमानेन जायते म्रियते भ्रान्तत्वाद्देहात्मत्वस्य अत्र दृष्टान्तमाह । यथेति । यथा स्वप्ने तस्य स्वप्नस्योत्थिता द्रष्टा जाग्रति दृष्टश्रुतजननादिसंस्कारवशाज्जातो मृत इति पश्यति न हि ते जननमरणे सत्ये स्तः किन्तु भ्रान्त्यात्मनो मन्यते तथा प्रकृतेः किमु सर्वज्ञत्वस्वतन्त्रत्वप्राकृतवैकृतदेहरहितत्वदूरीकृताविद्यत्वादिवैलक्षण्ययुत ईश्वरो न जात इति तदुक्तम् ।

परस्य जन्म मृत्य्वाद्याः स्युः स्वतन्त्रस्य किं पुनः ।
जीवस्यापि यतो भ्रान्तिर्जन्ममृत्य्वादिसंगतिः इति ॥

निरवयवस्य जीवस्योपाधिसम्बन्धः ईशेच्छया घटत इत्यङ्गीकारेण न युक्तिविरोधोऽपि शङ्कनीयः "यद्धि युक्त्या विरुध्येत तदीशक्तमेवहि" इति वचनाच्च ॥०॥

अधुना जीवेश्वरयोः पारतन्त्र्यापारतन्त्र्यादिवैलक्षण्यज्ञापनाय परस्य जगत्सृष्ट्यादिमाहात्म्यादिकथनपूर्वकं जीवस्य तदधीनत्वेन प्रकृतिबद्धत्वं वक्तुमाह । स एवेति । योऽनादिगुणविशिष्टो यश्च जन्मादिरहितो जन्मादिमज्जीवविलक्षणः स सूक्ष्मां दैवीं क्रीडादिगुणवर्तीं देवस्य विष्णोरियमिति वा गुणमयीं सत्त्वादिगुणाभिमानिनीं यदृच्छया हरेरिच्छयोपगतां सदा समीपस्थितां प्रकृतिं श्रियमभ्यपद्यत लीलयेति प्रयोजनान्तरं निवारयति । अत्र प्रकृतिशब्देन चिदचिदात्मके उभे ग्राह्ये विभुः सर्वगत इत्यनेन प्रकृत्यभिपादनं नौपचारिकं किन्तु सृष्ट्यभिमुखीकरणं कार्यं सूचयति तदपि स्वप्रयोजनं नेत्यत उक्तं लीलयेति ॥ ४ ॥

---

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदेवं कृतार्थयित्वा विवेकमात्राय सांख्यज्ञानयोगादिमार्गानप्याह यावत् समाप्ति । अथेति ॥ १ ॥ २ ॥

अनादिरिति आत्मा परमात्मैव पुरुषः निर्गुणः प्राकृतगुणरहितः विश्वं येन समन्वितमिति सर्वकारणत्वं तेन विचित्रप्रकाशकतया अनन्तशक्तित्वं दर्शितम् ॥ ३ ॥

स एष परमात्मा यदृच्छया स्वैरतया या लीला तया अभ्यपद्यत ऐक्षत । लोकवत्तु लीलाकैवल्यम् । २ । २ । २१ । इति न्यायात् "स ऐक्षत इति" श्रुतेः ॥ ४ ॥

---

## श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

आत्मानात्मविवेकाय षड्विंशे साङ्ख्यमुच्यते ।
तत्त्वानां लक्षणान्यत्र निरुक्तिश्चेयमत्र च ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

जीवब्रह्मविभागार्थं प्रक्रियाह्निनयं स्मृतम् ।
संसारे मूलभावे च पुरुषः प्रकृतिर्मता ॥

पूर्वाध्याये उत्तमभक्त्या हृदयप्रविलापनमुक्त्वा अन्यासां च फलं निरूप्य ताः सत्संगादेव भवन्तीति देवहूतेस्तदसंभवात् शास्त्रार्थपरिज्ञानार्थमेव तन्निरूपिणमिति मत्वा साङ्ख्यं तदर्थमेव कथयितुमाह। अथेति। अथेत्यपराधीनत्वाय मिश्रः प्रक्रमः साङ्ख्यं न तुभ्यमेवाभिधास्यामि साङ्ख्यस्वरूपमाह। तत्त्वानां लक्षणं पृथगिति। यथान्योऽन्यसंश्लेषो न भवति तथा तत्त्वानि लक्षणीयानि लक्षणैरेवेतरभेदपरिज्ञानमित्यवोचाम अतः तत्त्वानां लक्षणं पृथक् पृथक् प्रवक्ष्यामि नन्वन्तःस्थितसंसारस्य बहिःस्थितैः तत्त्वादिपदार्थैर्ज्ञातैरपि किं स्यात्तत्राह। यद्विदित्वेति। पृथक् पृथक् लक्षणं विदित्वा स्वयं पुरुषः प्राकृतैर्गुणैः आध्यात्मिकतत्त्वैः विमुच्येत संघाते विद्यमानः तत्तल्लक्षणैः तं तं पृथक्कृत्य केवलो भवितुं शक्नोति॥ १॥

एतदात्मानात्मविवेचनं यदर्थं तच्च ज्ञानं तुभ्यं कथयिष्यामीत्याह। ज्ञानमिति। यज्ज्ञानं निःश्रेयसार्थाय पुरुषस्य मोक्षं साधयति तत्ते वर्णयिष्यामीति सम्बन्धः नन्वात्मज्ञानात् न संसार इति आत्मज्ञानमेव वक्तव्यं किमन्येन ज्ञानेनेत्याशङ्क्याह। आत्मदर्शनं यदाहुरिति। आत्मनो दर्शनं यस्मादात्मसाक्षात्कारे हेतुः साक्षात्कार एव वा तत्स्वरूपतः कारणतश्च ते तुभ्यं वर्णये एतदपि भक्तिवत् हृदयप्रविलापकमित्याह। हृदयग्रन्थिभेदनमिति। हृदये चिदचितोर्ग्रन्थनं यस्मात्स हृदयग्रन्थिः मोहः शोको वा तस्य भेदनं यस्मादिति॥ २॥

साङ्ख्येन सहितं ज्ञानं स्वतन्त्रं साधनमित्युक्तं तत्र प्रथमं पुरुषस्य लक्षणमाह। यस्मिन् ज्ञाते इतरभिन्नतया ज्ञानमिति तल्लक्षणं यत्रैव भविष्यति तदेव दूरीकर्त्तुं शक्यत इति मुख्यतया आत्मलक्षणं पुरुषो लक्ष्यः आत्मेति लक्षणं योऽयमहंप्रत्ययवेद्यः देहेन्द्रियान्तःकरणानि लोका ममतास्पदाः योगादिसाध्याः परलोकाश्च सोपकारिसर्वमेव अतति व्याप्नोति इति आत्मा अस्मत्प्रत्ययवेद्यः स एवपुरुष इति तस्य देहाद्युत्पत्त्या जीवभावापन्नस्योत्पत्तिर्भविष्यतीति तद्व्यावृत्त्यर्थमाह। अनादिरिति। जननसमागमाविर्भावभेदेन भिन्ना काप्युत्पत्तिर्यस्य नास्ति स अनादिः तस्योत्पत्त्यभावे हेतुमाह। निर्गुण इति। निर्गता गुणा यस्मात्सर्वोत्पादकाः गुणाः ते चेत्तत एवोत्पन्नाः कस्तस्योत्पत्तिं साधयिष्यति सुतरामेव निवृत्तिपक्षे गुणसम्बन्धरहित इत्यर्थः स्वस्य गुणहेतुत्वे स्वतो वा गुणसम्बन्धाभावे प्रकृतेरेव गुणा आत्मन्यादिमत्त्वं साधयिष्यन्तीत्याशङ्क्याह। प्रकृतेः पर इति। न हि प्रकृतिनियन्ता प्राकृतैर्गुणैः सम्बध्यते प्रकृतेरन्यः प्रकृतिसम्बन्धरहितो वा तत्र प्रमाणमाह। प्रत्यग्धामेति प्रत्यक् अन्तर्मुखतया धामस्फूर्त्तिर्यस्य अहंचित्तिवेद्य इत्यर्थः नन्वहङ्कारोऽपि तादृशो भवतीति चेत्तत्राह। स्वयंज्योतिरिति। स्वयमेव ज्योतिः प्रकाशरूपम् अनेन प्रमाणान्तरं तत्र नास्ति नापेक्षत इत्यप्युक्तमहङ्कारस्तु स्वप्रकाशो न भवति तदुत्तराध्याये वक्ष्यते आत्मनः असाधारणं धर्मान्तरमाह। विश्वं येन समन्वितमिति। येनात्मना सर्वमेव विश्वं समन्वितं तत्त्वानामन्योऽन्यं व्यभिचारित्वात् स्वभावकालकर्मणां नानात्वात् एकेन सर्वजगतः सम्यक् सम्बन्धः आत्मनैव भवति नान्यस्येति सम्यगन्वयश्च तद्गतगुणदोषसम्बन्धाभावेन समन्वितमित्येव संसर्गः अत्र पुरुषस्य आत्मेत्येव लक्षणमात्मनः संघातव्यावृत्त्यर्थमन्यानि लक्षणानि अनादिपदेन देहो व्यावर्त्तितः निर्गुणपदेन प्राकृताः सत्त्वे प्रकृतेर्नियामकत्वेन प्रकृतिर्व्यावर्त्तिता प्रत्यग्धामत्वेन कालो व्यावर्त्तितः एवं चत्वारि पदान्येकं लक्षणं लौकिकं स्वयंज्योतिरित्यलौकिकं लक्षणं ज्ञाने साक्षादुपयोगलक्षणं विश्वं येन समन्वितमिति एवमात्मनः त्रीणि लक्षणानि प्रत्यग्धामत्वं देहात्मविवेकात्पूर्वं देहेऽपि भवतीति प्रत्यग्धामेति न देहव्युदासः तथा प्रकृतेः परे कालावयश्च न व्यावर्त्तिता भवन्ति शास्त्रसहकृतबुद्धेरपि स्वभावनियामकत्वदर्शनात्॥ ३॥

तस्यात्मरूपस्य पुरुषस्य वस्तुतो निर्लेपत्वात् प्रकृतिनियामकत्वाच्च जीवत्वं सहजं न भवतीति वक्तुं जीवोपाधिमाह। स एष इति। स एवं लक्षितः कारणत्वेनोक्तः पुरुषः एष आत्मा अहं प्रत्ययवेद्यः तस्य कथमेव विपर्यय इत्याशङ्क्य प्रकृतिरात्मव्यतिरिक्ता साङ्ख्यैकदेशिनां मते पुरुषवत्स्थिता भगवदीयसाङ्ख्यं तु भगवतः शक्तिः साङ्ख्यशास्त्रं तु न भगवन्तं विपरीकरोति तत्प्रवर्त्तकत्वात्तन्नियामकत्वाच्च अक्षरादर्वागेव तच्छास्त्रप्रवृत्तेः पञ्चधा भगवाननादिरिति पुरुषोत्तमः अक्षरं कालः प्रकृतिपुरुषाविति इदं मतमाश्रित्य यत्र साङ्ख्यसिद्धान्तप्रवृत्तिः ननु प्राकृतं तत्र पुरुषस्यैव प्रकृतिनियमनावस्थां परित्यज्य प्रकृत्यधीनावस्थया जीवत्वं तदुच्यते। प्रकृतिमिति। सूक्ष्मां दुर्ज्ञेयां कोमलाङ्गीम् एष इत्यनेन कामोऽप्यस्य प्रथमं भगवदिच्छया संजात इति ज्ञातव्यम् अन्यथा तस्यामासक्तिर्न स्यात् "काममय एवायं पुरुष" इति श्रुतेश्च अतः कामवशात् भगवच्छक्तिरूपां प्रकृतिं दैवस्य सम्बन्धिनीं मोहिकां बन्धनहेतुभूतगुणमयीमादौ विभुः समर्थः तां भोक्तुं यदृच्छयेति सापि भगवत्प्रेरणया स्वयमेव भोग्यत्वेन समागता भोक्तुं प्रभोः सा लीला उचितेति तामभ्यपद्यत उपभोक्तुं तया सहैक्यं प्राप्तवानित्यर्थः॥ ४॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

षड्विंशे महदादीनामुत्पत्तिर्लक्षणं तथा।
तैर्विराट् तस्य चैतन्यमुकमात्मप्रवेशतः॥

मात्रा पृष्टेषु भक्तिज्ञानयोगेषु भक्तिमुक्त्वा मातरं तयैव कृतार्थीकृत्यापि कर्म्मज्ञानयोगादिभिः स्वर्गमोक्षादिफलानां भक्त्या विना दातुमशक्यत्वात्तेष्वपि भक्तिमहादेव्या अधिकारात् सर्व्वत्र साम्राज्यवत्त्वात्तस्या उपासकजनैरपि कौतुकवशात् कर्म्मज्ञानादयोऽपि जिज्ञासनीया एवेति साम्प्रतं ज्ञानं वक्तुमाह। अथेति॥ १॥

ननु तत्त्वलक्षणज्ञानेन किं भविष्यतीत्यत आह। ज्ञानमिति। तत्त्वलक्षणज्ञानादेव विविक्तात्मज्ञानं भवतीति भावः॥ २॥

तत्र पुरुषं लक्षयति। अनादिर्नित्यः आत्मा परमात्मैव पुरुषः निर्गुणः प्राकृतगुणरहितः यतः प्रकृतेः परः प्रत्यक् सर्व्वेन्द्रियागम्यं धाम कारणार्णवो यस्य सः अत एव स्वयंज्योतिः स्वप्रकाशः स्वयंज्योतिष्ट्वे हेतुः विश्वं येन समन्वितं सत् प्रकाशत इति शेषः॥ ३॥

गुणैर्विचित्राः सृजतीं सरूपाः प्रकृतिं प्रजाः ।
विलोक्य मुमुहे सद्यः स इह ज्ञानगूहया ॥ ५ ॥
एवं पराभिध्यानेन कर्तृत्वं प्रकृतेः पुमान् ।
कर्मसु क्रियमाणेषु गुणैरात्मनि मन्यते ॥ ६ ॥
तदस्य संसृतिर्बन्धः पारतन्त्र्यं च तत्कृतम् ।
भवत्यकर्तुरीशस्य साक्षिणो निर्वृतात्मनः ॥ ७ ॥
कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः ।
भोक्तृत्वे सुखदुःखानां पुरुषं प्रकृतेः परम् ॥ ८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एव परमात्मा यदृच्छयैव स्वैरतयैव स्वशक्तित्वादुपगतां कर्मबन्धजगत्सिसृक्षासमय एव लीलया अभ्यपद्यत जीवशक्तिरूपं वीर्यं तस्यामादधान एवेत्यर्थः ॥ ४ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भजनीयादिस्वरूपज्ञानार्थं साङ्ख्यमाह षड्विंशेन । अथेति । तत्त्वानां प्रकृतिपुरुषादीनां यत्तत्त्वानां लक्षणं विदित्वा । प्राकृतैः सत्त्वादिभिर्विमुच्यते ॥ १ ॥

ननु यद्विज्ञानेन सर्वं विज्ञातं भवति
आत्मा वा अरे द्रष्टव्यः विजिज्ञासितव्यः
सोऽन्वेष्टव्यः तमेव विदित्वातिमृत्युमेति ।

इत्यादिश्रुतिभ्यः परमात्मैव वेद्यत्वेनोक्तस्तद्वेदनोपासनापरपर्यायेन ज्ञानेन मोक्षश्चोक्तः किं प्रकृत्यादिनानातत्त्वलक्षणज्ञानेनेत्यत आह । ज्ञानमिति । पुरुषस्य जीवस्य निःश्रेयसार्थाय मोक्षप्रयोजनाय यदात्मदर्शनम् । आत्मा परमात्मा दृश्यते साक्षात् क्रियतेऽनेनेति तत् अत एव हृदयग्रन्थिभेदनम् उपलक्षणं चैतत् सर्वसंशयच्छेदस्य कर्मक्षयस्य च एवंभूतं यज्ज्ञानं श्रुतय आहुस्तत्ते तुभ्यं वर्णये परमात्मन एव शक्तीनां प्रकृत्यादीनां जडत्वादिलक्षणम् । अंशभूतस्य जीवस्य च अल्पज्ञत्वादिलक्षणं तस्य चिदचिदात्मत्वसर्वकारणत्वादिगुणकथनाय ज्ञातृज्ञेयादिविविक्तस्वरूपज्ञानाय च क्रियते नतु प्रकृत्यादीनां स्वातन्त्र्यप्रतिपादनायेति भावः ॥ २ ॥

तत्र तत्त्वानि "भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्" इति श्रुत्युक्तानि त्रिविधानि तत्र नियन्तारं मुख्यं भगवन्त वर्णयति । अनादिरिति द्वाभ्याम् । अनादिः सृष्टेः पूर्ववर्ती सर्वकारणभूतः आत्मा सर्वात्मा प्रत्यक् जीवतत्त्वं धाम लगे यस्य सः "अन्तःप्रविष्टः शास्ता जनानाम्" इति श्रुतेः पुरूणि कर्मफलानि जीवेभ्यो भोक्तृभ्यः सनोति ददातीति पुरुषः । षणुदाने जीवनियन्तेत्यर्थः प्रकृतेः भोग्यरूपायाः स्वशक्तेः परः आश्रयः नियन्तेत्यर्थः एवं चेतनाचेतननियन्ता निर्गुणः चेतनाचेतनासाधारणगुणरहितः यतः स्वयंज्योतिः स्वप्रकाशः येनैव भगवता विश्वं सर्वं चिदचिदात्मकं समन्वितम् । "येनैव पूर्णं पुरुषेण विश्वम्" इति वाक्यात् स एव उक्तलक्षणः विभुः सर्वव्यापी दैवीं स्वस्य देवस्य शक्तिं सृष्ट्यादिलीलया अभ्यपद्यत ॥ ३—४ ॥

भाषा टीका ।

श्रीभगवान् बोले अब हम अलग् तत्त्वोंके लक्षण कहेंगे जिनके जानने से प्राकृत गुणोंसे पुरुष छूटजाते हैं ॥ १ ॥

आत्माका साक्षात्काररूप जो ज्ञान है सो मनुष्य के कल्याणके वास्ते कहा गया है जोकि हृदयके अज्ञान ग्रन्थिके भेदन करने वाले हैं तिसको मै वर्णन करूंगा ॥ २ ॥

आत्मा अनादि है पुरुष है प्रकृतिसे परे है तिसी से निर्गुण प्रकृति के सत्त्वादि गुणों से रहित है अपने को आप ही प्रकाशमान स्वयं ज्योति है जो अति सूक्ष्म होनेसे सब पदार्थ मे व्याप्त होरहा है ॥ ३ ॥

वही ज्ञान गुणसे व्यापक विभु आत्मा जब दैव योगसे आई देव ईश्वरकी त्रिगुणमयी सूक्ष्मप्रकृति को देखकर लीला की इच्छासे उस प्रकृतिको स्वीकार करता हुआ ॥ ४ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्या लीलामाह । गुणैरिति । ज्ञानं गूहयत्यावृणोतीति ज्ञानगूहा तया तथा च श्रुतिः ।

अजामेकां लोहितशुक्लकृष्णां वह्वीः प्रजाः जनयन्तीं सरूपाम् ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ।
इति मुमुहे आत्मानं विस्मृतवान् ॥ ५ ॥

पराभिध्यानं प्रकृत्यध्यासस्तेन प्रकृतेर्गुणैः कर्मसु क्रियमाणेषु कर्तृत्वमात्मनि मन्यते ॥ ६ ॥

तदिति । कर्तृत्वमननमेव अस्य पुरुषस्य साक्षिमात्रत्वादकर्तुरेव सतः कर्मभिर्बन्धः ईशस्यापरतन्त्रस्यैव कर्मबन्धकृतं भोगे पारतन्त्र्यं निर्वृतात्मनः सुखात्मकस्यैव संसृतिर्जन्ममृत्युप्रवाहः प्रकृत्यविवेककृतमेतत्सर्वं भवतीत्यर्थः ॥ ७ ॥

ननु चैतन्यसामानाधिकरण्येनैव कर्तृत्वादिप्रतीतेः स्वस्यैव तदङ्गीक्रियतां नेत्याह । कार्यं शरीरं कारणमिन्द्रियं कर्ता देवतावर्गः तद्भावापत्तौ पुरुषस्य प्रकृतिं कारणं विदुः कूटस्थस्य स्वतो विकाराभावात्प्रकृतिपरिणामभूतदेहाद्यहङ्कारकृतमेव कर्तृत्वादिकमित्यर्थः भोक्तृत्वे तु पुरुषं कारणं विदुरित्यस्यायं भावः यद्यप्यहङ्कारगतमेव कर्तृत्वादिकं भोक्तृत्वं च तथापि विकारस्य जडावसानत्वादुपाधिप्राधान्यं भोगस्य चिदवसानत्वादुपहितप्राधान्यमिति ॥ ८ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

अत्र विलोक्येत्यनेन मुमुहे इत्यनेन च तस्य स्वरूपभूतज्ञानधर्मशालित्वं व्यज्यते तदभावे घटवत् ज्ञानमात्रस्य तदुभयासंभवात् यथार्थज्ञानभ्रंश एव हि मोह इत्युच्यते तदुक्तम् श्रीगीतासु "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तव" इति अत एवात्मानं विस्मृतवानिति स्वामिभिर्व्याख्यातम् पूर्वमात्मस्मरणवतस्तत एव विस्मृतिस्संभवतीति ज्ञेयम् इह शरीरे वर्त्तमानस्सन्मुमुह इति योजनीयम् ॥ ५ ।

अत्र स्वरूपभूताहंभावशून्यस्य पराभिध्यानासम्भवात् तदनुस्मृतिनेः "सुखमहमस्वाप्सम्" इत्यादौ अहङ्कारलयावस्थायां सुषुप्तौ अपि स्वरूपभूताहमर्थपरामर्शाच्च प्राकृताहङ्कारादन्यस्स्वरूपात्मकोऽहङ्कारोऽस्तीत्यवगम्यते प्रकृतेः गुणैरिन्द्रियैः कर्मसु उपाधिप्राधान्येन क्रियमाणेषु केवलमात्मनि कर्तृत्वमात्मनि मन्यते "आत्मानं केवलन्तु य" इति गीतोक्तेः ॥ ६ ॥

तत् साक्षिणोऽकर्त्तुरस्य बन्धो भवति ईशस्य तत्कृतं पारतन्त्र्यं भवति निर्वृतात्मनः संसृतिर्भवतीति टीकानुसारी मूलान्वयः एतत्सर्वं कर्तृत्वभोक्तृत्वजन्ममरणादि ॥ ७ ॥

शङ्कते । नन्विति । चैतन्येनात्मधर्मेण सामानाधिकरण्यं तेन सह कर्तृत्वादेरेकाधिकरणवृत्तित्वं प्रतीयते यस्मिन्देहे चैतन्यं तस्मिन्नेव कर्तृत्वभोक्तृत्वादि प्रतीयते ननु मृते यदि प्रकृतेः कर्तृत्वं तदा चैतन्याभावे कुतो न प्रतीयते तस्मात्तस्यैव चेतनस्यैव तत् कर्तृत्वादि अङ्गीक्रियतां न प्रकृतेरित्याशङ्कायां नेति सिद्धान्ती प्राह । शरीरेन्द्रियदेवता हि अधिभूताध्यात्माधिदैवानि तद्भावापत्तिर्हि पुरुषस्याविवेकतो भवति तत्र प्रकृतिं कारणं मुनयो विदुः तत्संयोग एव तद्भावापत्तौ कारणमित्यर्थः ब्राह्मणोऽहमित्यादिशरीरभावापत्तिः पश्यामि शृणोमीत्यादीन्द्रियभावापत्तिः अत्र चक्षुः प्रकाशयामीत्यादिदेवताभावापत्तिः अयमर्थः चैतन्याश्रयो हि आत्मा कर्तृत्वाश्रयं हि प्रकृतिकार्य्यं लिङ्गमिति चैतन्यकर्तृत्वयोर्भिन्नाधिकरणत्वे चेतनोऽहं करोमीति कृतिचैतन्ययोः सामानाधिकरण्यं भ्रान्तिनिबन्धनमेवेति शङ्का दूरोत्सारिता तदुक्तं साङ्ख्यतत्वकौमुद्याम् ॥

तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम्
गुणकर्तृत्वे च तथा कर्त्तेव भवत्युदासीन इति ॥

ननु लोके कर्तृत्वभोक्तृत्वयोर्नियतसामानाधिकरण्यं दृश्यते इत्याशङ्कायामयं भाव इति अहङ्कारगतमेवेति हेतुत्वमप्यसतिकर्त्तरि दुःखयोर्यत्स्वात्मन् विधत्त उपलब्धपरात्मकाष्ठ इति विकारस्य कर्तृत्वनिमित्तकस्य जडे देहेन्द्रियादावेव पर्य्यवसानात् कर्तृत्वं प्रति उपाधेः प्राधान्यं भोगस्य सुखाद्यनुसंधानस्य चैतन्यात्मनि पर्य्यवसानात् भोगं प्रति उपाधिविशिष्टस्य चिदात्मनः प्राधान्यमिति तत्र तत्र प्राधान्यविवक्षयैव तत्तद्व्यपदेश इत्यर्थः ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

अस्तु प्रकृत्यभिपत्तिः कर्तृत्वादेः किमायातमित्याशङ्कायामभिपत्तिहेतुकस्वस्वरूपतिरोधानकृतमोहनिमित्तं कर्तृत्वादिकमितिद्रं प्रकृतिं सूक्ष्मामित्युक्तसूक्ष्मावस्थाप्रतिसम्बन्धिस्थूलावस्थां वदन् तया प्रकृत्या प्रत्यगात्मनः स्वस्वरूपतिरोधानेन मोहमाह । गुणैरिति । विचित्रा देवमनुष्यादिरूपेण बहुविधाः सरूपाः सर्वासां प्रकृतिपरिणामरूपत्वेनैकरूपाः प्रजा गुणैः सत्वादिभिः सृजतीं कार्यदशायां स्रष्ट्रीं प्रकृतिं विलोक्य तया ज्ञानगूहया ज्ञानतिरोधायिन्या सद्यः स इव मुमुहे तस्यां स्वान्यताबुद्धिमकरोदित्यर्थः ॥ ५ ॥

एवं पराभिध्यानेन प्रकृत्या तिरोहितस्वस्वरूपविस्मरणपूर्वकप्रकृतिचिन्तनेन पुमान् जीवः प्रकृतेर्गुणैः कर्मसु क्रियमाणेषु सत्सु तानि कर्माणि आत्मनि मन्यते तानि स्वकर्तृकाणीति मन्यत इत्यर्थः सांसारिकप्रवृत्तिरस्य कर्तृता सत्वरजस्तमोगुणसंसर्गकृता न स्वरूपप्रयुक्तेति भावः ॥ ६ ॥

तत्तस्मात्सत्वरजस्तमोगुणसंसर्गकृतात्कर्तृत्वादस्य जीवस्य संसृतिर्बन्धः संसाररूपो बन्धः तत्कृतं कर्तृत्वप्रयुक्तमेव पारतन्त्र्यं कर्मवश्यत्वं च भवति ननु स्वरूपप्रयुक्तमिति भावः स्वरूपप्रयुक्तत्वाभावमेव विशदयितुं तस्य मुक्तावस्थायामवस्थितं प्रकृतिवियुक्तं स्वरूपं विशिनष्टि । अकर्तुरिति । अकर्तुः नत्वत्र प्रयत्नाश्रयत्वं निषिध्यते किन्तु गमनादिसांसारिकप्रवृत्तिरहितस्येत्यर्थः तत्र हेतुरीशस्याकर्मवश्यस्य साक्षिणः ज्ञानाश्रयस्य ज्ञानगुणकस्येत्यर्थः साक्षात्वमेव हि साक्षित्वम् । साक्षाद्द्रष्टरि संज्ञायाम् । इत्यनुशासनानुरोधात् अनेन ज्ञानगुणकत्वमुक्तं ज्ञानस्वरूपत्वमाह । निर्वृतात्मन इति । निर्वृत्तं निर्वृतिर्मोक्षः आनन्दस्वरूपस्येत्यर्थः तथाच श्रुतिः "निर्वाणमयएवायमात्मा" इति अनुकूलज्ञानमेव ह्यानन्दः ईशस्येत्यनेनाकर्मवश्यत्वोक्त्या अनादिपुण्यापुण्यकर्मतिरोहितापहतपाप्मत्वादिस्वाभाविकगुणाष्टकस्य मुक्तिदशायां तिरोधाननिवृत्याविर्भावः सूच्यते अनेन ज्ञानगुणकत्वज्ञानस्वरूपत्वापहतपाप्मत्वादिगुणाष्टकविशिष्टं प्रकृतिवियुक्तं प्रत्यगात्मस्वरूपमित्युक्तम् अत्रायमर्थोऽनुसन्धेयः जीवात्मानः स्वयमसङ्कुचितापरिच्छिन्ननिर्मलज्ञानस्वरूपाः सन्तः कर्मरूपाविद्यावेष्टिताः तत्तत्कर्मानुरूपज्ञानसङ्कोचमापन्ना ब्रह्मादिस्तम्बपर्यन्तविविधविचित्रदेहेषु प्रविष्टास्तत्तद्देहोचितज्ञानप्रसरास्तत्तद्देहात्माभिमानिनस्तदुचितकर्माणि कुर्वाणास्तदनुगुणसुखदुःखोपभोगरूपसंसारप्रवाहं प्रतिपद्यन्ते । ननु ज्ञानस्वरूप आत्मा स्वयंप्रकाशश्च तस्य देहादिस्वरूपात्माभिमाने स्वरूपप्रकाशतिरोधानमवश्याश्रयणीयं स्वरूपप्रकाशे सत्यात्मन्याकारान्तराध्यासायोगात्ततश्च स्वरूपप्रकाशतिरोधाने स्वरूपनाशप्रसङ्गः । मैवं नहि स्वरूपभूतज्ञानस्य तिरोधानमुच्यते अपितु धर्मभूतज्ञानस्यैव ननु धर्मभूतज्ञानस्यापि वा तिरोधानमवश्यमाश्रयणीयं तिरोधानञ्च कर्मरूपाविद्यया प्रकाशोत्पत्तिप्रतिबन्धो वा विद्यमानप्रकाशनिवृत्तिर्वेति कोटिद्वयमेवहि सम्भावितमुभयथापि नित्यत्वेनाभिमतधर्मभूतज्ञानस्यापि नाशप्रसङ्ग इति चेदुच्यते आत्मधर्मभूतस्य चैतन्यस्य स्वाभाविकस्यापि कर्मणा पारमार्थिकं सङ्कोचं विकाशं चाभ्युपगच्छामः तत्र देहादिभ्रमस्याधिष्ठानस्फुरणसापेक्षत्वाद्धर्मिस्वरूपं स्वयंप्रकाशरूपमधिष्ठानतया स्फुरति नात्र ज्ञानान्तरापेक्षा जडत्वाद्धि शुक्त्यादेर्ज्ञानान्तरापेक्षा एवं धर्मिस्वरूपमधिष्ठानं स्फुरति भ्रमविरोधिनो नित्यत्वाणुत्वाद्याकाराः ते ज्ञानान्तरवेद्याः इति तिरोधानाद्भ्रम उपपद्यते तिरोधानं च प्रकाशनिवृत्तिः प्रकाशश्च न ज्ञानस्वरूपमपितु प्रसरणाख्यो धर्मभूतज्ञानस्य धर्मः प्रकाशः प्रकाशरूपप्रसराभावश्च सङ्कोचः भावस्यैवाभावाभावत्वात् सङ्कोचाभावः प्रसरः स एव तिरोधाननिवृत्तिः नच तदा भ्रमः एवं च

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सति ज्ञानं धर्मिस्वरूपं च नित्यं ज्ञानधर्मभूतप्रसरस्यैव प्रकाशत्वात्तदभावस्य च सङ्कोचत्वात्प्रसराख्यप्रकाशनिवृत्तिरूपतिरोधानमुपपद्यते निर्विशेषप्रकाशस्वरूपात्मवादेतु प्रकाशस्यैवात्मस्वरूपत्वात्तत्र धर्मान्तरानभ्युपगमात्तिरोधाने स्वरूपनाशो दुष्परिहरः नच ज्ञानस्य ज्ञानान्तराश्रयत्वं न दृष्टमिति चेत् तत् किंव्याप्त्या उत श्रुत्या नाद्यः ज्ञानस्य कस्यचिद्धर्मत्वेनैव दृष्टत्वात्तस्य स्वतन्त्रवस्तुत्वमनुपपन्नमतो ज्ञानस्वरूप आत्मा कस्यचिद्धर्मः स्यात् श्रुत्या चेत् तयैव ज्ञानस्यज्ञानाश्रयत्वमपि प्रतिपाद्यते तथाच श्रुतिः

"कर्ता बोद्धा विज्ञानात्मेति" नन्वत्र प्रकृतेः
पुमान् कर्मसु क्रियमाणेषु गुणैरात्मनि मन्यते ।

इत्यनेन स्वयमकर्तैव सन् प्रत्यगात्मा चेतनानां गुणानां कर्तृत्वमात्मन्यध्यवस्यतीत्यवगम्यते युक्तं चैतत् आत्मनो ह्यकर्तृत्वं गुणानामेव च कर्तृत्वमध्यात्मशास्त्रेषु श्रूयते तथाहि कठवल्लीषु न जायते म्रियत इत्यादिना जन्मजरामरणादिकं सर्वं प्रकृतिधर्मं प्रतिषिध्य हननादिषु क्रियासु कर्तृत्वमपि प्रतिषिध्यते ।

हन्ताचेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते इति ।

हन्तारमात्मानं जानन् जानात्यात्मानमित्यर्थः तथा च भगवता स्वयमेव जीवस्याकर्तृत्वस्वरूपं कर्तृत्वाभिमानस्तु व्यामोह इत्युच्यते ।

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्ताहमिति मन्यते ॥
नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानु पश्यति ।
कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ॥
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते इति च ।

अतः पुरुषस्य भोक्तृत्वमेव प्रकृतेरेव कर्तृत्वं एवञ्च । कर्ता शास्त्रार्थवत्वात् । २ । ४ । ३३ । इत्यधिकरणेन विरोधः तत्र ह्यात्मैव कर्ता न गुणा इत्युच्यते तथा हि "यजेत स्वर्गकामः मुमुक्षुर्ब्रह्मोपासीत" इत्येवमादीनि शास्त्राणि स्वर्गमोक्षादिफलस्य भोक्तारमेव कर्तृत्वे नियुञ्जते नह्यचेतनस्य कर्तृत्वेऽन्यो नियुज्यते शासनाच्च शास्त्रं शासनं प्रवर्तनं शास्त्रस्य प्रवर्तकत्वं बोधजननद्वारेण अचेतनं च प्रधानं न बोधयितुं शक्यमतः शास्त्राणामर्थवत्त्वं भोक्तुश्चेतनस्यैव कर्तृत्वे भवेत् तदुक्तम्" शास्त्रफलं प्रयोक्तरि" इति अतः कथमयं विरोधः परिहरणीय इतिचेदत्रोच्यते कर्त्रधिकरणे हि शरीराधिष्ठातृरूपकर्तृत्वमात्मन एवेत्युच्यते हन्ता चेदित्यत्रात्मनो नित्यत्वाद्धननाद्यभावउक्तः अत्र प्रकृतेः क्रियमाणानीति गीतायां च सांसारिकप्रवृत्तिषु जीवस्य कर्तृता अन्वयव्यतिरेकाभ्यां सत्त्वरजस्तमोगुणसंसर्गकृता न स्वरूपप्रयुक्तेति गुणानामेव कर्तृत्वमित्युच्यते न हि सांसारिकप्रवृत्तिषु कर्तृत्वं गुणसंसर्गकृतमित्येतावन्मात्रकथनेन स्वतः क्रियाश्रयत्वरूपकर्तृत्वं प्रतिषिध्यते तथा च तत्रैव गीतायाम् ।

कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु इति ।

सांसारिकप्रवृत्तिषु कर्तृत्वं गुणसंसर्गकृतमित्यभिहितं तथा च तत्रैवात्मनश्च कर्तृत्वमभ्युपेत्य उच्यते ।

शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः ।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥
तत्रैवं सति कर्तारमात्मानं केवलं तु यः ॥
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः इति ।
अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् इति ॥

दैवमीश्वरः अधिष्ठानादिदैवपर्यन्तसापेक्षत्वे सत्यात्मनः कर्तृत्वे आत्मानमेव केवलं कर्तारं मन्यते न स पश्यतीत्यर्थः अतः कर्त्रधिकरणे पुरुषस्याधिष्ठानभूतस्वशरीराधिष्ठातृत्वरूपकर्तृत्वमुच्यते प्रकृतेः क्रियमाणेष्वित्यादौ तु सांसारिकव्यापाराश्रयत्वरूपकर्तृत्वं प्रकृतिसंसर्गकृतं न स्वरूपप्रयुक्तमित्युच्यत इत्यतो न तदधिकरणविरोध इति अलमतिविस्तरेण ॥ ७ ॥

एतदेव सांसारिकप्रवृत्तिषु कर्तृत्वं प्रकृतिसंसर्गकृतं न स्वरूपकृतमिति विशदयन् सांसारिकप्रवृत्तिष्वपि स्वशरीराधिष्ठातृत्वरूपकर्तृत्वाश्रयत्वात्प्रवृत्तिफलसुखदुःखाश्रयत्वमात्मन एवेत्याह। कार्येति । कार्यं शरीरं कारणानि समनस्कानीन्द्रियाणि तेषां कर्तृत्वे बहिर्गमनादिक्रियाकारित्वे प्रकृतिं पुरुषाधिष्ठितां शरीराकारेण परिणतां प्रकृतिं कारणं हेतुं विदुः पुरुषाधिष्ठितशरीराकारपरिणतप्रकृत्याश्रयभोगसाधनभूताः क्रिया इत्यर्थः पुरुषस्य स्वाधिष्ठातृत्वमेव तदपेक्षयाधिकं कर्ता शास्त्रार्थवत्वात्" इत्यादिपूक्तं शरीराधिष्ठानरूपप्रयत्नहेतुत्वमेवाह पुरुषस्य कर्तृत्वमत एव सुखदुःखानां पुरुषाधिष्ठितशरीराकारपरिणतप्रकृतिहेतुकव्यापारजन्यसुखदुःखानां भोक्तृत्वे प्रकृतेः शरीरात्परं विलक्षणं तदधिष्ठातारं पुरुषमात्मानं कारणं विदुः स्वशरीराधिष्ठानरूपप्रयत्नाश्रयत्वात्तदधिष्ठेयहेतुकक्रियाफलसुखदुःखाश्रय इत्यर्थः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अभिपद्य किमभूदिति तत्राह । गुणैरिति । स्वप्रेरणया सत्त्वादिगुणैः सात्त्विकादिभेदेन विचित्राः करचरणादिमत्त्वेन समानरूपाः प्रजाः सृजतीं प्रकृतिं विलोक्य स हरिरिह संसारे जीवस्य ज्ञानगूहया ज्ञानगूहेच्छया जीवज्ञानं गूहयन्त्या प्रकृत्या वा सद्यः संभावनानन्तरमेव तं जीवं मुमुहे मोहयामास "तदेतन्मे विजानीहि कृत्वा विवाहं तु कुरुप्रवीरा" इत्यादाविवान्तर्गतणिजर्थो वेदितव्यः अन्यथा सदा निरस्तकुहकमित्यादिकं विरुद्धं स्यात् प्रकृतिविषयत्वे ज्ञानगूहशब्दो ज्ञानशब्दवदकारान्तः स्वस्वातन्त्र्यप्रकटनार्थं च मुमुह इति तदुक्तम् ।

यत्र कारयिता जीवः स्वतन्त्रस्तत्र कर्तृता ।
प्रोच्यते तु यथा ब्रह्म त्वज्ञः संसारभागिति ।
लये वाप्यथ वा सृष्टावन्तरालेऽपि न क्वचित् ।
प्रकृत्या रहितं ब्रह्म कदाचिदवतिष्ठत इति
वचनात् समीपत्वं च सिद्धम् ॥ ५ ॥

ज्ञानगूहने फलमाह । एवमिति । पराभिध्यानेन परमात्मेच्छयैव मुग्धत्वादेव प्रकृतेः सत्त्वादिगुणैः सात्त्विकादिकर्मसु क्रियमाणेषु सत्सु पुमान् जीवः प्रकृतेः कर्तृत्वमहं कर्तेत्यात्मनि मन्यते ॥ ६ ॥

अभिमानफलमाह । तदस्येति । तस्मादविद्यमानकर्तृत्वाभिमानादस्य जीवस्य संसृतिलक्षणो बन्धस्तत्कृतं पारतन्त्र्यं च स्वाधमाद्यधीनता च भवति कस्मात्प्रयोजकादिति तत्राह । अकर्तुरिति । अक्लिष्टकारित्वान्न क्रियत इति वा अकर्तुः साक्षिणः पुण्यपापे

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

साक्षादीक्षमाणस्य निर्वृतात्मनः परमानन्दस्वरूपस्येश्वरस्य सकाशाद्भवतीत्यर्थः

विष्णोः सुराणां गुरूणां नित्या जीवस्य तन्त्रता ।
यत्तु तस्यान्यतन्त्रत्वं तदज्ञानाद्विनिवर्तते । इति

वचनेन तत्र तात्पर्यार्थोऽवगन्तव्य इति अक्लिष्टत्वादकर्ता स्याद्कार्यत्वादथापि वेति वचनाच्च क्रियामात्रशून्यत्वार्थोऽत्रेष्यत इति एव कर्ता न क्रियते कारणं च जगत्प्रभुरिति च ॥ ७ ॥

अत्र कर्तृत्वविशेषं विवेचयति । कार्यकारणेति । कार्यं शरीरं कारणमिन्द्रियं कर्तृ मनः एषां कारणं प्रकृतिं प्रधानाभिमानिनीं श्रिय जीवानां सुखादिभोक्तृत्वे कारणं प्रकृतेः परः पुरुषो विष्णुरिति परमेष्ठिशाक्तिप्रकारं प्रतीयमानं विहायाप्रसिद्धार्थकथनं कथमितीदं चोद्यम्

ब्रह्मादिभिः सर्गकरी श्रीर्विष्णुबलसंश्रयात् ।
सुखदुःखप्रदो विष्णुः स्वयमेव सनातनः ॥
कर्तृत्वं सुखदुःखानामन्येषां च तदाज्ञया ।
भोक्तृत्वं सुखदुःखानां करोत्येको हरिः स्वयम् ।
भोक्तृत्वमात्रहेतुत्वं जीवेनान्यत्र कुत्रचित् ॥

इत्यनेन परिहृतं प्रकृतिंपुरुषं चैव विद्धचनादी इति चोक्तार्थे प्रमाणम् ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ततश्च पुरुषान्तरस्यावस्थामाह । गुणैरिति । तां चैकांशेन सृजन्तीमिह शरीरे प्रसिद्धो जीवाख्यः पुरुषस्तु मुमुहे ज्ञानगूहया तस्याः प्रकृतेरेवाविद्याख्यया वृत्त्या अत्र विलोक्येत्यनेन मुमुह इत्यनेन च पराग्भूतायाः प्रकृतेः तत्कृतादज्ञानाच्च प्रत्यग्भूतं यज्ज्ञानं तत्तस्य स्वरूपशक्तिरेव स्यादिति गम्यते श्रीगीतोपनिषदि च तथा "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तव"इति॥ ५ ॥

पराभिध्यानेन प्रकृत्यावेशेन प्रकृतिरेवाहमितिमननेन प्रकृतेर्गुणैः क्रियमाणेषु कर्म्मसु कर्तृत्वमात्मनि मन्यते अत्र निरहंभावस्य पराभिध्यानाभावात् परावेशजाताहङ्कारस्य चावरकत्वादस्त्येव तस्मिन्नन्योऽहंभावविशेषः स च शुद्धस्वरूपमात्रनिष्ठत्वान्न संसारहेतुरिति स्पष्टम् एतदेवाहङ्कारद्वयम् ।

सत्त्वे यदिन्द्रियगणोऽहमिव प्रसुप्ते
कूटस्थ आशयमृते तदनुस्मृतिर्नः ।

इत्यत्र दर्शितम् उपाध्यभिमानात्मकस्याहङ्कारस्य प्रसुप्तत्वात् तदनुस्मृतिर्न इत्यनेन सुखमहमस्वाप्समित्यात्मनोऽहंतयैव परामर्शाच्च अत एव मामहं नाज्ञासिषमित्यत्र परामर्शेऽपि उपाध्यभिमानिनोऽनुसंधानाभावः । अन्यस्य त्वज्ञानसाक्षित्वेनानुसन्धानमिति दिक् ॥ ६ ॥ ७ ॥

तदुपाधिप्राधान्येन प्रवर्त्तमानमुपाधिधर्मत्वेन व्यपदिश्यत इत्याह कार्येति । "कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः" इत्यादौ परमात्मप्राधान्येन प्रवर्त्तमानं तु निरुपाधिकमेव । अथ भोक्तृत्वं संवेदनरूपत्वेन यथा तथा तत्रैव चिद्रूपे पर्यवस्यतीत्याह । भोक्तृत्व इति । कारणं विदुरिति पूर्व्वेणैवान्वयः अत्र टीकामते प्रतिबिम्बदृष्टान्तो ज्ञेयः । तत्र हि कम्पादिक उपाधेर्धर्मः प्रकाशस्तु रहितस्य स्वमतं तु तदपि नेष्यते क्रियापि चैतन्यं विना न सम्भवति इति दृष्टान्तवैषम्यात् ॥ ८ ॥

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

तयोपभुज्यमानस्यावस्थामाह । गुणैरिति । सा हि गुणैः कृत्वा नित्यनूतना विचित्रा भवति वशीकर्त्तुं सरूपाः सृजतीमिति पुरुषान्तरङ्गभूतानां स्वान् स्वसदृशान् करोतीति अंशद्वारा पुरुषे स्वरूपापादनमत एव सर्वेष्वेवांशेषु तद्भावापन्नेषु सत्सु स्वयमपि तद्भावापन्नो जात इत्याह । विलोक्य मुमुह इति । नन्वस्य भगवद्रूपत्वेन नित्यसिद्धज्ञानशक्तिमत्त्वात् कथं तस्या दर्शने मोहस्तत्राह । ज्ञानगूहयेति । ज्ञानं हि गूहते आच्छादयति सद्य इति विचारास्फुरणं स इति विभुरपि इहास्यां प्रविष्टः मोहः स्वरूपविस्मृतिः ॥ ५ ॥

मोहानन्तरं पूर्णो जीवभावो जात इत्याह । एवमिति । परा स्वतो भिन्ना या प्रकृतिः तस्या अभिध्यानेन तामेवात्मत्वेन मन्यत इति आत्मन्येव ज्ञानमभिध्यानं सा हि सर्वं करोति क्रियाशक्तिस्तदीयेति पुरुषस्य तु ज्ञानशक्तिरेव सा मोहेन कृशरीभूता प्रकृतेः कर्त्तृत्वमात्मनि मन्यते यतोऽयं पुमाँल्लोकेऽपि पुमान् स्त्रीकृतमात्मकृतमेव मन्यते सा हि गुणैः कृत्वा कर्माणि करोति तत्फलसुखं कर्त्तृत्वमात्मनि मन्यत इत्यर्थः ॥ ६ ॥

आत्मनि कर्तृत्वाभिमान एव संसारमूलमित्याह । तदस्येति । तत्कर्तृत्वमेवास्य जीवस्य संसृतिः संसरणं जीवस्य कर्मभिर्बन्धः प्रकृतिपारतन्त्र्यं च तदपि कर्त्तृत्वाभिमानकृतमेव न तु केवलं प्रकृतिकृतं तत् सर्वं तस्य स्वाभाविकं न भवतीति वक्तुमात्मनो विशेषणानि चत्वारि स हि चिदानन्दरूपः भगवदंशत्वादैश्वर्यादियुक्तश्च दोषाभावार्थमकर्त्तुरिति ईशस्येति भगवत्सम्बन्धात् साक्षिण इति चिद्रूपत्वात् निर्वृतात्मनः इत्यानन्दरूपत्वात् अकर्त्तुः संसारः ईशस्य बन्धः साक्षिणः पारतन्त्र्यं निर्वृतात्मनः त्रितयं चकरादुक्तं दुःखित्वं वा ॥ ७ ॥

ननु ज्ञानेच्छाप्रयत्नानामेकाश्रयत्वात् उपादानगोचरापरोक्षज्ञानवत एव कर्तृत्वात् कथमन्यगतं कर्तृत्वमित्याशङ्क्याह । कार्येति । यद्यपि कर्त्तृत्वभोक्तृत्वयोः सामानाधिकरण्यं प्रतीयते तदुभययोर्मिलितत्वात् कस्य किमिति निश्चेतुं न शक्यते भगवति तु सर्वमूलभूते कर्त्तृत्वं भोक्तृत्वं सहजमेव तथापि कर्तृत्वं प्रकृतिगतं भोक्तृत्वं पुरुषगतमेव तत्र वृद्धाः प्रमाणं कर्त्तृत्वस्य प्रकृतिधर्मत्वे हेतुः कार्यकारणकर्तृत्वे इति कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः भोक्तृत्वे सुखदुःखानामधिभूतं देहः कारणानीन्द्रियाणि आध्यात्मिकानि कर्त्ता अन्तःकरणमाधिदैविकं चिद्रूपस्य पुरुषस्य त्रिविधजडभावापत्तौ प्रकृतिरेव कारणं न हि निष्कारणमन्योऽन्यद्भवति भगवदिच्छाकारणत्वेन कल्पेत यदि त्रिविधा धर्माः प्राकृताः स्युः प्राकृतत्वे स्वरूपापत्तौ स्वयमेव हेतुरस्तु किं विशेषकल्पनया भोगस्तु सुखदुःखसाक्षात्कारात्मकः तत्र सत्त्वात्संजायते ज्ञानमिति ज्ञानमपि प्रकृतिगतं कल्प्येत यदि पुरुषो ज्ञानरूपो न स्यात् अतः पुरुषसम्बन्धादेव प्राकृतमपि ज्ञानमित्याह । भोक्तृत्व इति । सुखदुःखानां भोक्तृत्वे पुरुषमेव कारणं विदुः ज्ञानरूपत्वात् सत्त्वात्संजायत इति तु सत्त्वोपाधौ पुरुषस्य ज्ञानमुदेतीत्युच्यते ननु ज्ञानं प्रकृतेः स्वरूपं धर्मो वा ननु प्रथमतः कर्तृत्वं तत्प्रकृत्यध्यासेन प्रकृतिविशिष्टश्चेत् पुनः

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

प्रकृतावध्यस्यते भोक्तृत्वं तथा सति न ज्ञायते किं गतं भोक्तृत्वमिति स्वकृतं भुङ्क्ते इति वाक्याच्च प्रकृतिगतमेव युक्तमित्याशङ्क्याह । प्रकृतेः परामिति । नहि भोग्यापत्तौ भोक्तृत्वं भवति अतो भोगदशायां प्रकृतिनियतैव भवति । नहि स्वात्मनो भोगो भवति अन्यं प्रत्येव रसत्वात् एवं कर्त्री व्यामोहिका प्रकृतिः भोक्ता भोगदशायां प्रकृतिनियामकः कर्तृत्वे प्रकृतिमुख्यः देहादिभावापत्तौ च पुरुष इत्युभयोर्लक्षणमुक्तं भवति ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तत्र जीवस्य मोहमाह । प्रकृतिं विलोक्य स जीवात्मा इह प्रकृतौ खिन्नः सद्यः प्रकृतिसंसर्गसमय एव ज्ञानगूहया प्रकृतेरेवाविद्याख्यवृत्त्या युक्तो मुमुहे स्वरूपं विसस्मार सदैवानाद्यविद्यया युक्तोऽपि जीवः सुषुप्तौ यथा स्वरूपं किञ्चिदुपलभते तथैव सृष्टेः पूर्वं प्रलयेऽपि स्वरूपमुपलभमान एवासीत् सृष्ट्यारम्भे तु तद्विसस्मारेत्यर्थः । कीदृशीं गुणैः सत्वादिभिर्विचित्राः प्रजाः सृजन्तीं तथा च श्रुतिः ।

अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजा जनयन्तीं सरूपाः अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य इति ॥ ५ ॥

एवं नृत्यतो गायतः पश्यन् यथैवानुकरोति तानिति रीत्या पराभिध्यानेन प्रकृत्याध्यासेन सा च प्रकृतिर्देह एवेति देह एवाहमिति मननेन प्रकृतेर्गुणैः क्रियमाणेषु कर्म्मसु रूपादिग्रहणेषु कर्तृत्वमात्मनि मन्यते तत्र निरहंभावस्य पराभिध्यानासम्भवात् परावेशजाताहङ्कारस्य चावरकत्वादस्त्येव तस्मिन्नन्योऽहंभावविशेषः स च शुद्धस्वरूपमात्रनिष्ठत्वान्न संसारहेतुरिति स्पष्टं विप्रकुमारस्य साहङ्कारस्यैव भूतावेशत्वे सति भूतोऽहमितिवदति विवेचनीयम् ॥ ६ ॥

तदिति कर्तृत्वमननमेवास्य जीवस्य वस्तुतः साक्षिमात्रत्वादकर्त्तुरेव सतः कर्म्मभिरेव बन्धः । यथा राजकीयः पुरुषो राजोच्यते तथैव ईशस्य ईशशब्दवाच्यस्येश्वरशक्तिरूपस्यापि कर्मबन्धकृतं भोगपारतन्त्र्यं निर्वृतात्मनः सुखस्वरूपस्यापि संसृतिर्जन्ममृत्युप्रवाहः ॥ ७ ॥

जीवस्य कर्म्मभिरेव बन्धस्तेषां कर्म्मणाञ्च साधने फलभोगे च क्रमेण प्रकृतिपुरुषावेव कारणे इत्याह । कार्येति । भूतेन्द्रियदेवताभिरेव कर्मसिद्धेस्तेषां भूतेन्द्रियदेवतानाञ्च कार्य्यकारणकर्तृत्वे प्रकृतिमेव कारणं विदुः । प्रकृत्यैव तेषां तद्भावस्य सृष्टत्वाज्जीवस्य कर्म्मकरणं मायाधीनमित्यर्थः कर्म्मफलदाता च परमेश्वर एवेति जीवस्य कर्मफलभोक्तृत्वमीश्वराधीनमेवेत्याह । भोक्तृत्वे जीवस्य कर्म्मफलानां भोगे पुरुषं कारणं विदुरित्यन्वयः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ भोग्यरूपामचेतनपदार्थविशेषभूतां मायां भोक्तारं चेतनपदार्थविशेषं बद्धं जीवं चाह । गुणैरिति चतुर्भिः । इह संसारे बद्धत्वेन प्रसिद्धो यो जीवः ।

प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः ।
क्षोभयामास संप्राप्ते सर्गकाले व्ययाव्ययौ इति स्मृतेः

तदनादिकर्मफलदात्रा भगवतैव सृष्टिकाले क्षोभिताः प्रजाः देहेन्द्रियादिरूपाः परमेश्वराधिष्ठितया सृष्ट्युन्मुखीं विलोक्य ज्ञानगूहया ज्ञानावरणकर्त्र्या सद्यो मुमुहे देहेन्द्रियादिरूपोऽस्मीति बुद्धिमकरोदित्यर्थः ॥ ५ ॥

तदा प्रकृतेस्त्रिभिर्गुणैः त्रिविधेषु कर्मसु आत्मना कर्त्रा क्रियमाणेषु पराभिध्यानेन देहाद्यात्माभिमानेन हेतुना एवं विधे आत्मनि देहेन्द्रियादिरूपे कर्तृत्वमित्युपलक्षणं भोक्तृत्वस्यापि कर्तृत्वं भोक्तृत्वं च मन्यते "विज्ञानं यज्ञं तनुते कर्माणि कुरुतेऽपि च "कर्ता शास्त्रार्थवत्त्वात्" इत्यादिश्रुतिसूत्रप्रोक्तं चेतनधर्ममचेतने मन्यते इत्यर्थः ॥ ६ ॥

अस्य पराभिध्यानवतः मम देहादय इत्येवं साक्षिणः साक्षिमात्रस्यापि अकर्तुः आत्मानुसन्धानाकर्तुः तत्तस्मात्पराभिध्यानात् कृतैः स्वकर्मभिर्बन्धो भवति निर्वृतात्मनः सुखात्मनः संसृतिः जन्ममरणप्रवाहश्च भवति ईशस्य कर्मादिस्वामिनः तत्कृतं पराभिध्यानकृतं पारतन्त्र्यं कर्मादिवश्यत्वं च भवति॥७॥

ननु जीवस्य देहेन्द्रियादिभावापत्तौ किं कारणमित्यत्राह । कार्य्यकारणकर्तृत्वे इति । कार्यं शरीरं कारणमिन्द्रियाणि कर्ता जीवः कर्तृत्वप्रकाशनिमित्तं मन एतदग्रे स्फुटीभविष्यति तेषां भावस्तत्वं तस्मिन् देहादिभावे देहाद्यात्माभिमाने यां विलोक्य मुमुहे तां प्रकृतिं प्रकृतेर्भोग्यभूतायाः परं भोक्तारं सुखदुःखानां भोक्तृभावेन बद्धं जीवं यस्तां दृष्ट्वा मुमुहे तं च कारणं विदुः इत्यन्वयः ॥ ८ ॥

---

भाषाटीका ।

वह प्रकृति ज्ञानके आच्छादन करने वाली है गुणों से अपने सदृश विचित्र प्रजों को सृजने वाली है तिसको देखकर पुरुष ऋभिही मोहको प्राप्त होगया ॥ ५ ॥

इस प्रकार से प्रकृति के अध्यास होने से प्रकृति के गुणों को भोग करते समय अपने में कर्तापना मान लेता है ॥ ६ ॥

यद्यपि यह आत्मा अकर्ता है सुख स्वरूप है स्वतन्त्र है तथापि कर्ता के अभिमानही से इसको परतन्त्रता संसार बन्धन सब होजाते हैं ॥ ७ ॥

कार्य कारण कर्ता याने शरीर इन्द्रिय अहंकार इनका हेतु तो प्रकृति है सुख दुःखोंके भोगने में प्रकृति से परे पुरुषही है ऐसा ज्ञानीजन जानते हैं ॥ ८ ॥

---

देवहूतिरुवाच ॥

प्रकृतेः पुरुषस्यापि लक्षणं पुरुषोत्तम ! ।
ब्रूहि कारणयोरस्य सदसच्च यदात्मकम् ॥ ९ ॥

श्रीभगवानुवाच ॥

यत्तत्त्रिगुणमव्यक्तं नित्यं सदसदात्मकम् ।
प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत् ॥ १० ॥
पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा ।
एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः ॥ ११ ॥
महाभूतानि पञ्चैव भूरापोऽग्निर्मरुन्नभः ।
तन्मात्राणि च तावन्ति गन्धादीनि मतानि मे ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवं संसारिणं पुरुषं तद्धेतुं प्रकृतिं च ज्ञात्वेदानीं जगत्कारणमीश्वरं तत्प्रकृतिं च पृच्छति । प्रकृतेरिति । अस्य विश्वस्य सदसच्च स्थूलं सूक्ष्मं च कार्यं यदात्मकं तयोः प्रकृतिपुरुषयोः ॥ ९ ॥

तत्र प्रकृतिं लक्षयति । यत्प्रधानं तदेव प्रकृतिं प्राहुः किं तत्प्रधानम् । स्वतोऽविशेषं विशेषवद्विशेषाणामाश्रयः तर्हि किं ब्रह्म । न त्रिगुणं किं महत्तत्त्वादि । न अव्यक्तमकार्यम् किं कालादि । न सदसदात्मकं कार्यकारणरूपं किं जीवः प्रकृतिः । न नित्यम् ॥१०॥

अन्येषां तत्त्वानां लक्षणं वक्तुं तानि गणयति । पञ्चभिरित्यादि । सङ्ख्याभेदेनैतच्चतुर्विंशतिकम् एतानि चतुर्विंशतिर्यस्मिन्गणे तं गणं प्राधानिकं प्रधानकार्यात्मकं ब्रह्म विदुः ॥ ११ ॥

एतद्विवृणोति । महाभूतानीति त्रिभिः । तावन्ति पञ्चैव ॥१२॥१३॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

तदेवम् कपिलोक्तिश्रवणप्रकारेण तद्धेतुं संसारकारणं तस्येश्वरस्य प्रकृतिं जगदुपादानशक्तिं यद्यपि भक्तियोगश्रवणेन कृतार्थासीत्तथापि सुतस्य चिरस्थितिवाञ्छया पुनः पुनः प्रश्नो ज्ञेयः ॥ ९ ॥

तत्र प्रकृतिपुरुषयोर्मध्ये यत्प्रधानं महदादिभ्यः श्रेष्ठतया प्रधानशब्दवाच्यमुपादानशक्तिस्वरूपं तदेव सर्वोपादानत्वात्प्रकृतिशब्दाभिधेयमाहुर्मुनयः अविशेषं गुणत्रयसाम्यावस्थत्वादनभिव्यक्तविशेषं विशेषाणां स्वांशकार्यरूपाणां महदादिविशेषाणामाश्रयः एतल्लक्षणस्य ब्रह्मण्यतिव्याप्तिमाशङ्कते । तर्हि किमिति । त्रिगुणं सत्त्वादिगुणसमाहाररूपं ब्रह्मणो निर्गुणत्वान्न तत्रातिव्याप्तिरित्यर्थः स्वतोऽविशेषत्वेन सर्वविशेषाश्रयत्वे सति त्रिगुणत्वं महत्तत्त्वेऽतिव्याप्तमित्याशङ्कते । किं महत्तत्त्वादीति । अहमादेरादिना ग्रहः महत्तत्त्वादेः कार्यत्वान्न तत्रातिव्याप्तिरित्यर्थः तावत्यपि लक्षणे कालेऽतिव्याप्तिमाशङ्कते । किं कालादीति । आदिना मतान्तराभिमतपरमाणुपरिग्रहः । निराकरोति । नेति । तथा च कालस्य निमित्तमात्रत्वात्परमाणूनाञ्चासत्कार्यमते कार्यकारणरूपत्वाभावान्न तत्र तत्रातिव्याप्तिरित्यर्थः अविद्यायामतिव्याप्तिमाशङ्कते । किं जीवः प्रकृतिरिति । निराकरोति । नेति । तस्यास्तु ज्ञाननाश्यत्वेनानित्यत्वान्न तत्रातिव्याप्तिरित्यर्थः ॥ १० ॥

ब्रह्म विदुः ब्रह्मत्वेनोपासत इत्यर्थः ॥ ११ ॥

एतद्गणनम् ॥ १२ ॥ १३ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

एवं प्रकृतिविलक्षणे तत्संसृष्टे आत्मस्वरूपे कार्यकारणभावेनावस्थिते प्रकृतिस्वरूपे चाभिहिते पुनस्तयोरेव संसृष्टयोः प्रकृतिपुरुषयोः कार्यावस्थाः सप्रपञ्चं शुश्रूषमाणा पृच्छति देवहूतिः । हे पुरुषोत्तम ! प्रकृतेः कार्यावस्थप्रधानस्य तथा पुरुषस्यापि कार्यावस्थावस्थितस्य ब्रह्मात्मकस्य कथम्भूतयोरस्य जगतः कारणयोः कार्यावस्थायाः पूर्वं कृत्स्नजगत्कारणत्वेन नामरूपविभागानर्हसूक्ष्मदशापत्त्या भगवच्छरीरत्वेनावस्थितयोः लक्षणं स्वरूपं ब्रूहि ब्रह्मात्मकयोः प्रकृतिपुरुषयोः कार्यभेदान्कथयेत्यर्थः सदसच्च यदात्मकं कारणभूताः पित्रादयः कार्यभूताः पुत्रादयश्च यत्प्रकृतिपुरुषात्मकं तयोर्लक्षणं ब्रूहीत्यर्थः नहि केवलप्रकृतेः केवलात्मस्वरूपस्य वा पितृपुत्रत्वादि अत उभयात्मकत्वं सदसदिति चिदचित्समुदायरूपं विश्वं वा विवक्षितम् ॥ ९ ॥

एवं पृष्टो ब्रह्मात्मप्रकृतिपुरुषकार्य्यावस्थाः सप्रपञ्चमुपपादयिष्यन् तावत्प्रकृतेः कारणावस्थां कार्यावस्थां च सङ्क्षेपेणाह । यत्तदिति । यत्प्रधानं तदेव प्रकृतिं प्राहुरित्यन्वयः किन्तत्प्रधानमविशेषं कारणावस्थायां पृथिव्यादिविशेषरहितमत एवाव्यक्तं नामरूपविभागानर्हं त्रिगुणं सत्त्वरजस्तमोगुणात्मकं नित्यं त्रिगुणात्मकमित्यनेन जीवात्मपरमात्मवैलक्षण्यमुक्तं नित्यमित्यनेन महदाद्यवस्थानामनित्यत्वेऽप्यवस्थावतो द्रव्यस्य नित्यत्वमुक्तमेवं प्रकृतेः कारणावस्थोक्ता कार्यावस्थामाह । विशेषवत्कार्यावस्थायां पृथिव्यादिविशेष-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ब्रःसदसदात्मकं महदादिपृथिव्यन्तकारणरूपेण ब्रह्मादिस्तम्ब-पर्यन्तशरीररूपकार्यरूपेण च कार्यकारणमित्यर्थः ॥ १० ॥

एवमवस्थाद्वयमभिधाय तस्यैव प्रधानस्य कार्याणां महदादीनां सृष्टिमनुक्रमिष्यन् तावत्तत्कार्याणि गणयन्सुखग्रहणाय संगृह्णाति । पञ्चभिरिति । पञ्चभिः पञ्चभिः पञ्चभिर्भूतैः पञ्चभिस्तन्मात्रैश्चतुर्भिर्मनोऽहङ्कारमहदव्यक्तैर्दशभिर्ज्ञानकर्मोभयैरिन्द्रियैरित्येवं संख्याभेदेन एतच्चतुर्विंशतिकम् एतानि चतुर्विंशतिर्यस्मिन् तं प्राधानिकं प्रधानकार्यात्मकं गणं समूहं विदुः ॥ ११ ॥

एतद्विवृणोति । महाभूतानीति त्रिभिः । महाभूतान्याकाशादीनि पञ्चैव एवकारोऽधिकसङ्ख्याव्यवच्छेदार्थः तानि गणयति । भूरिति । स्पष्टोऽर्थः गन्धादीनि गन्ध आदिर्येषां तानि तन्मात्राणि द्रव्याणीत्यर्थः गन्धादयो हि पृथिव्यादीनामवस्थाविशेषाः तान्नन्ति पञ्चैव मे मया मतानि ज्ञातानि इदं मम भगवतो मतमित्यर्थः एवं च तेजोऽवन्नात्मकं भूतत्रयमेवेति मतान्तरव्यावृत्तिः ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अत्र देवहूतिः प्रकृतिपुरुषयोः कारणत्वविशेषं श्रुत्वा लब्धावसरा विवेकविवित्सया लक्षणं पृच्छति । प्रकृतेरिति । अस्य जगतः कारणयोः सदसत्स्थूलसूक्ष्मलक्षणं जगद्यदात्मकं याभ्यां व्याप्तम् ॥ ९ ॥

कपिलो भगवान् तत्र हरेरनन्तत्वेन तत्स्वरूपे वुद्ध्यनारोहात्प्रकृतिलक्षणज्ञानेन तल्लक्षणस्य ज्ञातप्रायत्वात्प्रकृतिलक्षणं वक्ति । यत्तदिति । यत्तत्त्वं सत्त्वादिगुणत्रयरूपमव्यक्तं सूक्ष्मं नित्यमविनाशि सदसदात्मकं व्यक्ताव्यक्तात्मकं ज्ञानिनस्तत्तत्त्वं प्रधानं नाम्ना प्रकृतिमाहुरित्यन्वयः अत्र त्रिगुणमित्येतदितरव्यावर्तकं लक्षणम् इतराणि तु स्वरूपाख्यानपराणि अविशेषमकार्यं विशेषवन्महदादिकार्यवत् अत्रोभयेषाम् अभिमन्यमानाभिमानिनां प्रकृत्यादिशब्दवाच्यत्वमङ्गीकार्यं तथाहि शब्दादिगुणवतो जगदुपादानत्वं सत्त्वादिगुणाभिमानिन्याः श्रीभूदुर्गाभिधायाः श्रियश्च सत्त्वादिगुणप्रवर्तकत्वेन ततो विप्रकर्षेण जगद्गुरुः महदादिशरीरब्रह्मादिजनिकर्तृत्वेन तच्छब्दवाच्यत्वं विवक्षितं केवला सृतिकर्मोदासीनाव्यक्ता सिसृक्षुत्वविशेषेता व्यक्ताव्यक्ता महदादिकार्यव्यापिनी व्यक्तैवेति विशेषात् त्रिरूपिणी श्रीरुच्यते एवं जडरूपा प्रकृतिरपि प्रधानरूपाव्यक्ता उपादानरूपा व्यक्ताव्यक्ता महदादित्वेन परिणीयमाना व्यक्तैव सर्वकार्येषु प्रधानत्वात्प्रधानं न चेदं स्वकपोलकल्पितं किन्तु प्रमाणान्तरसिद्धत्वात् । तदुक्तम् ।

> व्यक्ताव्यक्तात्मकं यत्तद्विद्यात्सदसदात्मकम् ।
> असर्गा केवला व्यक्ता सिसृक्षुरुभयात्मिका ॥
> व्यक्तैव कार्यरूपा तु प्रकृतिस्त्रिविधा मता ।
> कार्येनः सा प्रधानत्वात्प्रधानमिति कीर्त्यते ।
> अविशेषा ह्यकार्यत्वात्सा च श्रीर्विष्णुसंश्रया इति ।

विशेषं कार्यमुद्दिष्टं विशेषो दृश्यते यत इति ॥ १० ॥

तत्त्वानि प्रधानकार्याणीत्याह । पञ्चभिः प्रञ्चभिरिति । चतुर्विंशतितत्त्वैः ब्रह्म पूर्णं नातोऽधिकसङ्ख्यावत् प्राधानिकं प्रधानकार्यम् ॥ ११ ॥

तानि कानीत्यतो निर्दिशति । महाभूतानीति ॥ १२ ॥ १३ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एवं पुरुषद्वयस्य प्रकृतेश्च विवेकं श्रुत्वा विशेषतः परमात्माख्यपुरुषस्य तदीयशक्तेः प्रकृतेश्च लक्षणं पृच्छति । प्रकृतेरिति । प्रश्नपरम्परा चेयं सुतस्य चिरस्थितिवाञ्छया केवलमिति ज्ञेयम् । पूर्व्वमेव ज्ञाताभीष्टत्वात् ॥ ९ ॥

अथोपादानांशस्य प्रधानस्य लक्षणमाह । यत्तदिति । यत् खलु त्रिगुणं सत्त्वादिगुणत्रयसमाहारस्तदेवाव्यक्तं प्रधानं प्रकृतिश्च प्राहुः । तत्राव्यक्तसंज्ञत्वे हेतुः अविशेषं गुणत्रयसाम्यरूपत्वादनभिव्यक्तविशेषमत एव अव्यक्तसंज्ञश्चेति गणितम् प्रधानसंज्ञत्वे हेतुः विशेषवत् स्वांशकार्य्यरूपाणां महदादिविशेषाणामाश्रयरूपतया तेभ्यः श्रेष्ठं प्रकृतिसंज्ञत्वे हेतुः सदसदात्मकं सदसत्सु कार्य्यकारणरूपेषु महदादिषु कारणत्वादनुगत आत्मा स्वरूपं यस्य तत् तथापि नित्यं प्रलये कारणमात्रात्मनावस्थितसर्व्वांशत्वेन सृष्टिस्थित्योश्चापञ्चीकृतांशत्वेन विकृतं स्वरूपं यस्य तादृशमिति ब्रह्मत्वं महदादिरूपत्वञ्च व्यावृत्तं ब्रह्मणो निर्गुणत्वात् महदादीनां चाव्यक्तापेक्षया कार्य्यरूपत्वात् यद्वा सर्व्वतोऽप्याश्चर्य्यरूपत्वेन निर्व्वक्तुमशक्यत्वात् यत्तच्छब्देनोक्तमत एव सर्वश्रेष्ठत्वात् प्रधानशब्देन ख्यातं वस्तु प्रकृतिं प्राहुः श्रौताः स्मार्त्ताश्च । आश्चर्य्यरूपत्वमेव दर्शयति । त्रिगुणमप्यव्यक्तं स गुणं खलु व्यक्तीभवत्येव तथासत् कार्य्यमसत् कारणं तत्तदात्मकमपि नित्यं नैवं गृहादि तथा सत्त्वादिभिर्विशेषवदपि गुणसाम्यरूपत्वेनाविशेषं नैवमन्यदिति तदेवं सिद्धे पूर्ववाक्यर्थेऽतिव्याप्तयस्तु यथा योगमेकत्वादि धर्म्मैः परिहर्त्तव्याः ॥ १० ॥

ब्रह्म विदुरित्यन्वयः । ब्रह्मत्वेनोपासत इत्यर्थः ॥ ११-१२-१३ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

तत्र देवहूतिराशङ्कते । प्रकृतेरिति । देहभावे निष्पन्ने पश्चात्कर्तृत्वं देह एव तु कथं निष्पद्येत नानात्वाच्च जीवानां स्वतः करणे जगदानन्त्यं हिताद्यकरणमसम्बद्धकरणं चापद्येत अत एतदुक्तं कर्तृत्वं भोक्तृत्वं च प्रकृतिपुरुषांशयोरेव नतु मूलभूतप्रकृतिपुरुषयोः अतस्तयोर्लक्षणप्रश्नः उभयोरपि भगवद्रूपत्वात् न सम्बन्धो विचारणीयः पुरुषोत्तमेति तस्मादपि भगवन्तं परमाह । परिज्ञानार्थम् अस्य जगतः कारणभूतयोः उपादानभूतावपि तावेवेत्याह । सदसच्च यदात्मकमिति । कार्यं कारणं मोक्षहेतुर्बन्धहेतुर्वा अलीकं सद्वा सर्वमेव यदात्मकं मूलभूतप्रकृतिपुरुषात्मकं अतस्तयोर्ज्ञाने सर्वं ज्ञातं भवतीत्याशयः ॥ ९ ॥

पुरुषस्त्वेक एव "पुरुषेश्वरयोरत्र न वैलक्षण्यमण्वपि तदन्यकल्पनापार्था" इति अतो जीवेश्वरावस्थाभेदनैव भिन्नौ नतु स्वत इति यदेव पुरुषलक्षणं तदेव लक्षणं प्रकृतेरपि सैव यदि भवेत् अवस्थाभेदो न स्यात् सा हि व्यामोहिकैव भेदे तु यदा तामभिमन्यते तदा जीवावस्थां प्राप्नोति यदा तु मूलभूतां प्रकृतिं तदा स्वरूपस्थित एव जगत्कारणं भवति प्रदेशभेदेन वा ते उभे पुरुषगते यथा आकाशे क्वचिद्गृहादि क्वचिन्नेति अतस्तस्यापि मोहकप्रकृतिव्युदासे कारणतुल्यतैव भवति परं मूलभूतप्रकृतिसम्बन्धाभावात् न कर्तृत्वमुभयोः सम्बन्धो यथैवोपपद्यते तादृश एव पुरुष इति मन्तव्यमुभयोः दृष्टत्वाज्जीवानां पृथक्त्वे श्रुतिस्मृतिविरोध आपद्येत प्रपञ्चस्य मिथ्यात्वे शास्त्रविरोधः अनिर्वाच्य-

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एकमुक्तौ च सर्वमुक्तिः अविश्वासश्च स्यात् अत उभयं यत एवोपपद्यते तथा मूलपुरुषः प्रकृतिद्वयं गृह्णातीति गन्तव्यं मूलभूतां प्रकृतिं लक्षयति । यत्तदिति । यत्पूर्वमुक्तं तदेवैतादृशगुणविशिष्टं मूलप्रकृतिर्भवति यान्त्रिगुणं सा प्रकृतिः सत्त्वरजस्तमोगुणाः यस्य मूलभूता यथा सच्चिदानन्दं ब्रह्म क्रियाज्ञानानन्दाः धर्मा अपि भवन्ति तथा सच्चिदानन्दरूपं प्रधानमुद्गतास्त्वं शतो गुणा अपि भवन्ति अव्यक्तं न केनापि प्रकारेणाभिव्यक्तं कार्यमेव तस्याभिव्यक्तं न स्वरूपमिति नित्यं सदैकरूपं सदसदात्मकं कार्यकारणरूपं प्रधानं मुख्यं प्रकृतिमिति लक्ष्यं प्राहुरिति प्रमाणं ब्रह्मवद्विशेषं विशेषाः सर्वे गुणकृताः नस्या एव अनो विशेषवत् प्रधानमिति लक्षणमेकमेव प्रधानमिति मुख्यं भगवता जगत्कारणत्वेन निर्मितं तद्रूपं वा तस्य जगत्कर्तृत्वं निर्नाहार्थं भगवत इव षड्गुणानाह । त्रिगुणादिषड्भिः पदैः । त्रिविधा हि सृष्टिरन्यथा न भवेत् यथा भगवत ऐश्वर्यमन्यथा समानेऽपि कर्मणि उच्चनीचगतयो न स्युः मूलधर्मा एते सच्चिदानन्दाभासाः भगवत उत्पन्नायां प्रतिष्ठिताः एवं सत्येव मुख्यं भवति यद्यप्येकैकमेव लक्षणं तथापि भगवत्त्वाय षडुच्यन्ते अव्यक्तमिति द्वितीयं तस्य हि एवं सामर्थ्यं न केनाप्यभिव्यक्तं भवति अन्यथा कालादिनाभिव्यक्तौ अनित्यतायां पुनः सृष्टिर्न स्यात् सदैकरूपमिति कीर्तितस्य यज्जीवप्रकृतिव्युदासार्थमिति केचिदाहुस्तदुत्तराध्यायेन विरुध्यते नित्यत्वादुभयोरिति सदसदात्मकमिति श्रीः तस्यैषा शोभा यत्सर्वात्मकमिति अविशेषमिति ज्ञानहेतुः अन्यथा संसारिणो मुक्ता न स्युः तस्य सर्वकारणत्वात् विशेषवदिति सर्वे विशेषास्तदीयाः न तस्य किंचिदाश्चर्यकारणमिति वैराग्यहेतुः ॥ १० ॥

प्रधानं लक्षयित्वा प्राधानिकं निर्दिशति । पञ्चभिरिति । प्राधानिकं गणं चतुर्विंशतिकं प्राहुः चतुर्विंशतिभेदभिन्नं चतुर्विंशतीनां समुदायः प्राधानिको गणः विदुरिति प्रमाणं चतुर्विंशतिसंख्यासिद्धियैः तान्याह गणशः । पञ्चभिः पञ्चभिर्ब्रह्मेति । परिज्ञानार्थं एतच्चतुर्विंशतिभेदभिन्नं जगत् ब्रह्मैव चतुर्भिर्दशभिरिति चतुर्णां प्रवर्त्तकत्वात् प्रथमं निर्देशः साङ्ख्यशास्त्रत्वात् संख्ययैव पूर्त्तिः ॥ ११ ॥

तानि नामतो निर्दिशति । महाभूतानीति । प्रथमं पञ्चसंख्यापूरकाणि महाभूतानि एवकारेण दिगादीनामाकाशादिष्वन्तर्भावः सूचितः तानि गणयति । भूरित्यादि । अग्निस्तेजः अग्निरेव वा सौरादीनि तेजांसि अग्नावन्तर्भवन्तीत्येके भगवत्तेज इत्यपरे मरुद्वायुः नभ आकाशं तन्मात्राणि शब्दादीनि तावन्ति पञ्चैव खराः सर्वे शब्दमध्ये गन्धादीनि गन्धरसरूपस्पर्शाः शब्दाः मे मतानीति अस्मत्सिद्धान्ते गन्धादीनां तन्मात्रत्वमन्येषां मते गन्धादयो गुणाः भूतेभ्य उत्पद्यन्ते भूतसमवेता इति ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ततश्च तावेव प्रकृतिपुरुषौ विशेषतो जिज्ञासमानाह । प्रकृतेरिति । अस्य विश्वस्य सदसच्च स्थूलं सूक्ष्मश्च कार्यं यदात्मकम् ॥ ९ ॥

तत्र प्रकृतिं लक्षयति । यत् खलु त्रिगुणं सत्त्वादिगुणत्रयसमाहारस्तदेवाव्यक्तं प्रधानं प्रकृतिश्च प्राहुः । तत्राव्यक्तसंज्ञत्वे हेतुः अविशेषं गुणत्रयसाम्यरूपत्वादनभिव्यक्तविशेषं प्रधानसंज्ञत्वे हेतुः विशेषवत् स्वांशकार्य्यरूपाणां महदादिविशेषाणामाश्रयरूपत्वेन तेभ्यः श्रेष्ठं प्रकृतिसंज्ञत्वे हेतुः सदसदात्मकं सदसत्सु कार्यकारणरूपेषु महदादिषु कारणत्वात् अनुगत आत्मा स्वरूपं यस्य तत् प्रलयेऽपि कारणमात्रात्मनावस्थितत्वान्नित्यम् । यद्वा । यत्तदनिर्वचनीयं श्रेष्ठत्वात् प्रधानं तत् प्रकृतिं प्राहुः अनिर्वचनीयत्वमेवाह । त्रिगुणमप्यव्यक्तं सगुणं खलु व्यक्तीभवत्येव तथा सत्कार्यमप्यतत्कारणं तत्तदात्मकमपि नित्यम् तथाभूतं मृदादि खल्वनित्यमेव दृष्टं तथैव महदादि विशेषवदपि गुणसाम्यरूपत्वादविशेषं पृथिव्यादि विशेषवत् द्रव्यं खलु तदन्यद्रूपमविशेषं न दृष्टमिति ॥ १० ॥

अन्येषां तत्त्वानां लक्षणं वक्तुं तानि गणयति । पञ्चभिरित्यादि । पञ्चभिस्तथा पञ्चभिश्चतुर्भिर्दशभिश्च यो गणस्तं प्राधानिकं विदुरित्यन्वयः प्रधानानुस्यूतं गणं ब्रह्म ब्रह्मत्वेनोपास्यं विदुर्ज्ञानिनः गणं कीदृशम् एतानि महाभूतानि चतुर्विंशतिरित्यत्र तत्त्वम् ॥ ११ ॥

तानि विवृणोति त्रिभिः । तावन्ति पञ्चैव ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अस्य विश्वस्य कारणयोः उक्तप्रकारेण भोग्यभोक्तृसम्बन्धेन विश्वात्मना स्थितयोः यदात्मकं सदसत् स्थूलसूक्ष्मरूपं सकलं विश्वं तस्य परमकारणस्य ब्रह्मणश्च लक्षणं ब्रूहि ॥ ९ ॥

प्रकृतेः पुरुषस्य च लक्षणमाह । यदित्यादिना । यत्प्रधानं तदेव प्रकृतिः ननु प्रधानत्वं नाम मुख्यत्वं प्रकृतित्वं सर्वमूलत्वं च ब्रह्मणि सङ्गच्छते अतो ब्रह्म किं नेत्याह । त्रिगुणम् । अनेनैव कालजीवादिभ्यो वलक्षण्यं दर्शितम् । ननु प्रत्यहं जायमानप्रजापेक्षया प्रधानत्वं प्रकृतित्वं त्रिगुणत्वं च ब्रह्माण्डे सङ्गच्छते तत्किंनेत्याह । नित्यम् । ननु स्वस्वकार्य्यापेक्षया कारणानां महदहङ्कारादीनां प्रधानत्वादिकमस्ति अत आह । अव्यक्तं सूक्ष्ममविशेषं कार्यावस्थामनापन्नं विशेषवत् विशेषा महदादयः विद्यन्ते यस्य तत् किम्बहुना स्थूलसूक्ष्मसर्वप्राकृतपदार्थरूपत्वात् सदसदात्मकम् ॥ १० ॥

परोक्तसङ्ख्याप्रसिद्धात्मकप्रधानाद्वैलक्षण्यं दर्शयन् प्राकृततत्त्वानि गणयति । एतानि चतुर्विंशतिर्यस्मिन् स एतच्चतुर्विंशतिकस्तं गणं प्राधानिकं ब्रह्म आहुः प्रकृत्याख्यब्रह्मशक्तिकार्यरूपत्वाद्ब्रह्माभिन्नमाहुरित्यर्थः ॥ ११ ॥

तदेव विवृणोति । महाभूतानीति त्रिभिः ॥ १२ ॥ १३ ॥

भाषाटीका

देवहूती जी बोलीं हे पुरुषोत्तम ! यह स्थूल सूक्ष्म रूप जगत् जिस से है ऐसे जगत् के कारण जो प्रकृति पुरुष तिन के लक्षण आप हम से कहौ ॥ ९ ॥

इन्द्रियाणि दश श्रोत्रं त्वग्दृग्रसननासिकाः ।
वाक्करौ चरणौ मेढ्रं पायुर्दशम उच्यते ॥ १३ ॥
मनो बुद्धिरहङ्कारश्चित्तमित्यन्तरात्मकम् ।
चतुर्धा लक्ष्यते भेदो वृत्त्या लक्षणरूपया ॥ १४ ॥
एतावानेव सङ्ख्यातो ब्रह्मणः सगुणस्य ह ।
सन्निवेशो मया प्रोक्तो यः कालः पञ्चविंशकः ॥ १५ ॥
प्रभावं पौरुषं प्राहुः कालमेके यतो भयम् ।
अहङ्कारविमूढस्य कर्तुः प्रकृतिमीयुषः ॥ १६ ॥

भाषाटीका ।

श्री भगवान् बोले जो वह त्रिगुण अव्यक्त है नित्य है सत् असत् रूप है विशेष स्थूलाकार रहित विशेष स्थूलाकार सहित भीजो है तिसी को प्रधान तथा प्रकृति कहते हैं ॥ १० ॥

पांच पांच चार और दश इसप्रकार से चौवीस प्रकृति का गया है ॥ ११ ॥

तिसमें पांच महा भूत हैं तिनके नाम पृथिवी जल वायु अग्नि आकाश पांच ही तन्मात्रा हैं वे गन्धरस रूप स्पर्श शब्द ॥१२॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

अन्तरात्मकमन्तःकरणम् । लक्षणरूपया व्यवच्छेदिकया ॥१४॥

यावान्मया प्रोक्त एतावानेव सङ्ख्यातो गणितस्तत्त्वज्ञैः काले तु मतद्वयमाह । यः कालः स पञ्चविंशकः अल्पार्थे कप्रत्ययः प्रकृतेरेवावस्थाविशेष इत्यर्थः ॥ १५ ॥

एके तु पौरुषं पुरुषस्येश्वरस्य प्रभावं विक्रमं कालमाहुः तमेव कालं द्वेधा लक्षयति । यतो भयं भवति । कस्य प्रकृतिमीयुषः प्राप्तस्य अत एव देहेऽहङ्कारेण विमूढस्य कर्तुर्जीवस्य अनेन संहारकत्वेन लक्षितः ॥ १६ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

व्यवच्छेदिकया । व्यावर्तिकया वृत्त्या । धर्मेण ॥ १४ ॥

ब्रह्मणस्तत्त्वेनोपास्यस्य प्रधानस्येत्यर्थः चतुर्विंशतिगणस्य कारणं हि प्रकृतिः साहि पञ्चविंशकाऽतःकालस्य पञ्चविंशकत्वाभिधानं कथं तत्रार्थिकोऽर्थः प्रकृतेरेवावस्थाविशेष इति ॥ १५ ॥

तमेव पुरुषप्रभावलक्षणं कालमेव द्वेधा संहारकत्वेन स्रष्टृत्वेन च प्रकृतिमविद्यामत एव अविद्याप्राप्तत्वादेव अनेन पद्येन ॥ १६ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इन्द्रियाणि दश गणयति । इन्द्रियाणीति । श्रोत्रादीनि ज्ञानेन्द्रियाणि वागादीनि कर्मेन्द्रियाणि तत्र पायुर्गुदम् ॥ १३ ॥

अन्तःकरणं विभजति । मन इति । अन्तरात्मकमन्तःकरणं वृत्त्या स्वगुणवृत्त्या सङ्कल्पाध्यवसायाभिमानचिन्तारूपया लक्षणरूपया चिह्नभूतया मनोबुद्धिरहङ्कारश्चित्तमिति चतुर्धा लक्षत इत्यन्वयः अत्रायं भावः एकमेवान्तरिन्द्रियं सङ्कल्पादिवृत्तिभेदेन चतुर्विधं तत्र चित्तबुद्ध्यहङ्काराणां क्रमेण मूलप्रकृतिमहदहङ्कारानुग्राहकाः मूलप्रकृत्याद्यनुग्राह्यत्वनिबन्धनश्चित्तादिभेदव्यपदेशः अनुग्राह्यानुग्राहकयोरभेदविवक्षया क्वचिद्भेदनिर्देशो महान्वैबुद्धिलक्षण इत्यादिः एषां चाव्यक्तमहदहङ्काराणामधिष्ठातारो वासुदेवादयो वक्ष्यन्ते एवं चात्र बुद्धिशब्देनान्तरिन्द्रियस्य स्ववृत्तिरूपाध्यवसायजननेनानुग्राहकं महत्तत्वं च विवक्षितं चित्तशब्देन चिन्ताजनकस्यान्तरिन्द्रियस्यानुग्राहकत्वाच्चिन्तनीयत्वाच्च व्यक्ताख्या मूलप्रकृतिर्विवक्षिता तत्रानुग्राह्यानुग्राहकयोरभेदविवक्षया चतुर्विंशतिकं गणं विदुरित्युक्तं भेदविवक्षायां तु सप्तविंशतिको गणो बोद्धव्य इति ॥१४॥

एवं तत्त्वानि सङ्कल्प्य संगृह्णन् कालस्वरूपं लक्षयति । एतावानिति । सगुणस्य सत्त्वादिगुणकस्य ब्रह्मणः प्रधानस्य "तस्मादेतद्ब्रह्म नामरूपमन्नञ्च जायते द्वे ब्रह्मणी वेदितव्ये" इत्यादिश्रुतौ "मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्" इति स्मृतौ च प्रकृतावपि ब्रह्मशब्दप्रयोगात् उपक्रमानुगुण्याय च यद्वा उक्तानां तत्त्वानां यः पृथिव्यां तिष्ठन्यश्चक्षुषितिष्ठन्" इति ब्रह्मात्मकत्वश्रवणात् सत्त्वादिगुणात्मकप्रकृतिकार्यभूतपृथिव्यादिशरीरकस्य परब्रह्मणः परमात्मन इत्यर्थः सन्निवेशः अवस्थाविशेषः मया प्रोक्तः एतावानेव चतुर्विंशतिसंख्याक एव सङ्ख्यातः गणितः तत्त्वज्ञैरिति शेषः अथ कालस्वरूपं लिलक्षयिषुस्तस्य तावत्तत्त्वान्तरत्वमाह । यः कालः स पञ्चविंशकः पूर्वं परिगणितः चतुर्विंशतिभिः सहास्य परिगणनेऽयं पञ्चविंशतिको भवतीत्यर्थः ॥ १५ ॥

तत्र कालो न तत्त्वान्तरमिति मतान्तरमुपन्यस्यति । प्रभावमिति । पौरुषं परमपुरुषसम्बन्धिनं प्रभावमेव कालमेके आहुः । कोऽसौ पौरुषः प्रभाव इत्यत्राह । यतः पौरुषप्रभावाद्भयं जगतः सर्गसंहारादिरूपं संसारभयं भवति परमपुरुषस्य सर्गसंहारादिषु जगन्नियमनसामर्थ्यं कालं न तत्त्वान्तरमित्यर्थः एक इत्युक्त्वा मतान्तरत्वं गम्यते स्वमतमाह । अहङ्कारेति । अनात्मन्यात्माभिमानोऽहङ्कारस्तेन मूढस्य तिरोहितस्य स्वरूपस्य प्रकृतिम् "अक्षरं तमसि लीयते" इति तमःशब्दवाच्यं निरतिशयसूक्ष्मदशापन्नं प्रधानं प्रकृति-

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

कारणं परमात्मानं वा ईयुषः संसारदशायां प्राप्तस्य कर्तुर्जीवस्य ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अन्तरात्मनोऽन्तःकरणस्य मनसः ।

बुद्धिरध्यवसानाय संशयं कुरुते मनः ।
अभिमानो ह्यहङ्कारश्चित्तं स्मरणकारणम् । इति

लक्षणरूपया वृत्त्या वर्तनया मनोबुद्धिरहङ्कारश्चित्तमिति चतुर्धा भेदो लक्ष्यते दृश्यत इत्यन्वयः ॥ १४ ॥

तत्त्वसंख्यानमुपसंहरति । एतावानेवेति । सगुणस्य ब्रह्मणः प्रधानस्य तदभिमानिन्याः श्रियश्च यः सन्निवेशः संस्थानविशेषः स एतावानेव चतुर्विंश एव संख्यातस्तव मया प्रोक्तः कालात्मा परमात्मा किमित्येतेषु न गणित इत्याशङ्कयानन्याधीनत्वद्योतनायेति भावेनाह । यः काल इति । यः काल इत्याख्यायते स पञ्चविंशक इति ज्ञातव्यं ननु श्रियोऽपि हरिं विनानन्याधीनत्वात्किमिति तत्र गणनं कृतमित्याशङ्का न कार्या

हरिस्तु निर्गुणं ब्रह्म श्रीब्रह्म सगुणं स्मृतम् ।
तदङ्गजानि तत्त्वानि तस्मात्तद्रूपमुच्यते ।
इति वचनात्तेषु गणनीयत्वाभिप्रायेणेति ॥ १५ ॥

अनुत्पन्नस्य पुत्रस्य नामकरणमिव कालः परमात्मेति संज्ञया व्याक्रियत इति एतत्कथं शोभत इति तत्राह । प्रभावमिति

पुरुषो हृदिस्थः परमः कालः सर्वगतो हरिः ।
अथवा रुद्रदेहस्थो हरिः काल इतीरित इति

वचनात् पौरुषं पुरुषस्य हृदि स्थितस्य हरेर्विद्यमानं प्रकर्षेण भावं व्याप्तरूपं पुरुषाकारं रुद्रदेहस्थं वा कालसंज्ञमाहुः क इत्यत उक्तम् । एक इति । एके सम्यक् ज्ञानिनो न प्राकृता इत्यर्थः अहं कर्तेत्यहङ्कारेण ममेदमिति ममकारेण च विमूढस्य मिथ्याज्ञानिनः प्रकृतिमीयुषः प्रकृतिबद्धस्यात एव पराधीनकर्तुर्जीवस्य यतो यस्माद्भयं जननमरणलक्षणं भवति तदितिशेषः ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

प्राधानिकं गणं दर्शयित्वा पौरुषं गणं दर्शयति । एतावानिति । य एव पुरुषः कालः स एव पञ्चविंशको जीवश्च तदंशावेव तावित्यर्थः ॥ १४ ॥ १५ ॥

तत्र कालस्य पौरुषगणत्वं द्विधा दर्शयति । प्रभावमिति द्वाभ्याम् ॥ १६ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

दशसंख्यां पूरयति । इन्द्रियाणीति । ज्ञानेन्द्रियाणि प्रथमं गणयति श्रोत्रं शब्दग्राहकं त्वक् त्वगिन्द्रियं दृक् दृष्टिः चक्षुरिति यावत् रसनेन्द्रियं घ्राणेन्द्रियं चेति वागादीनि कर्मेन्द्रियाणि मेढ्रं गुह्यम् ॥ १३ ॥



चतुष्टयं गणयति । मनोबुद्धिरिति । ननु पर्याया एत इत्याशङ्कयाह । अन्तरात्मकमिति । एकमेवान्तरात्मकमन्तःकरणं मनोबुद्ध्यादिभेदेन चतुर्द्धा लक्ष्यते एकस्यानेकधा लक्षणे हेतुः लक्षणरूपया वृत्त्या भेदो लक्ष्यत इति वृत्तिभेदाद्भेदः वृत्तिश्च लक्षणरूपा व्यावर्तकं हि लक्षणं सामान्यवृत्तेर्भेदकत्वाभावात् ॥ १४ ॥

नन्वयं चतुर्विंशतिभेदभिन्नो गणितः अपरश्च गणनीय इत्याशङ्कयाह । एतावानेवेति । सगुणस्य ब्रह्मणः एतावत्येव सङ्ख्या शास्त्रे एतावानेव वा सङ्ख्यातः सगुणस्य ब्रह्मणः सन्निवेशः सम्यक् निवेशो नाम असम्भावितान्यप्रवेशो स्वधर्मवत्तया निरूपणम् । नन्वस्ति कालोऽधिकस्तत्राह । यः कालः प्रोक्तः स पञ्चविंशकः प्राकृत एवेत्यर्थः प्रकृतेः प्रथमो भावः कालः अन्यानि चतुर्विंशतिरिति ॥ १५ ॥

एवमेकदेशिमतेन कालं निरूप्य पुनरेकदेशिमतेन निरूपयति । प्रभावमिति । प्रभावं पौरुषं प्राहुः कालमेके यतो भयम् । अहङ्कारं केचित्पौरुषं प्रभावं कालं प्राहुः पुरुषस्य धर्मः कश्चित् सामर्थ्यविशेषो वा तथात्वे हेतुः । यतो भयमिति । यस्मात् कालात् लोके भयं भवति कस्य भयमित्याशङ्कयाह । अहमिति । अहङ्कारेण यो विमूढः वञ्चितः आत्मानमेवाहङ्कारं मन्यते अहङ्कारविमूढत्वे हेतुः कर्तुरिति यः कर्मादिकर्ता सोऽहङ्कारविमूढो भवति कर्मकर्तृत्वेऽपि हेतुः । प्रकृतिमीयुष इति । यस्तु प्रकृत्या सहैक्यं प्राप्य कर्माणि करोति पश्चादहङ्कारेण विमूढो भवति तस्य कालाद्भयं भवतीत्यर्थः ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अन्तरात्मकमन्तःकरणं लक्षणरूपया व्यवच्छेदिकया वृत्त्या ॥ १३ ॥ १४ ॥

सगुणस्य महदादिप्रपञ्चस्य काले तु मतद्वयमाह । यः कालः स पञ्चविंशकः प्रकृतेरेवावस्थाविशेष इत्यर्थः ॥ १५ ॥

एकं तु पौरुषं पुरुषस्येश्वरस्य प्रभावं विक्रमं कालमाहुः कर्त्तुर्जीवस्य यतो भयमिति जीवक्षोभकत्वेन कालो लक्षितः ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अन्तरात्मकमन्तःकरणमेकमेवमननहेतुत्वान्मनः बोधनहेतुत्वाद्बुद्धिः देहादावहङ्करणहेतुत्वादहङ्कारः । चिन्तनहेतुत्वाच्चित्तमिति चतुर्धा भेदः लक्षणरूपया मननबोधनादिवृत्त्या लक्ष्यते ॥ १४ ॥

सगुणस्य सत्त्वादिगुणयुक्तस्य ब्रह्मणः प्रधानस्य "मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्" इति प्रकृतावपि ब्रह्मशब्दप्रयोगात् यावान् मया प्रोक्तः एतावानेव सन्निवेशः अवस्थाभेदः तत्त्वज्ञैः संख्यातः गणितः प्रकृतिभिन्नम् अचेतनविशेषं कालतत्त्वमाह । य इति ॥ १५ ॥

कालोऽपि प्रकृत्यवस्थाविशेष इति कालो वस्तुत एव नास्तीति च पक्षं निवारयितुमाह । प्रभावमिति । एके मुख्याः पुरुषस्य परमात्मनः सम्बन्धिनं शक्तिभूतं प्रभावं सत्पदार्थं कालमाहुः । अहङ्कारेण देहात्माभिमानेन विमूढस्य प्रकृतिमीयुषः बद्धजीवस्य तत्रापि विशेषतः स्वर्गाद्यर्थं कर्तुः कर्म्मकर्तुः यतो भयं नतु मुक्तानां मुमुक्षूणां च भयं यतो भवतीति भावः ॥ १६ ॥

प्रकृतेर्गुणसाम्यस्य निर्विशेषस्य मानवि ! ।
चेष्टा यतः स भगवान् काल इत्युपलक्षितः ॥ १७ ॥
अन्तः पुरुषरूपेण कालरूपेण यो बहिः ।
समन्वेत्येष सत्त्वानां भगवानात्ममायया ॥ १८ ॥
दैवात्क्षुभितधर्मिण्यां स्वस्यां योनौ परः पुमान् ।
आधत्त वीर्यं साऽसूत महत्तत्त्वं हिरण्मयम् ॥ १९ ॥
विश्वमात्मगतं व्यञ्जन् कूटस्थो जगदङ्कुरः ।
स्वतेजसाऽपिवत्तीव्रमात्मप्रस्वापनं तमः ॥ २० ॥

भाषा टीका ।

श्रोत्र त्वचा दृक् रसना नासिका वाक् हस्त चरण मेढ्र गुदा ए दश इन्द्रिय हैं ॥ १३ ॥

मन बुद्धि अहङ्कार चित्त ए चार अन्तःकरणहैं वृत्तिके भेदो से चार तरहका भेदलक्षित होता है ॥ १४ ॥

सगुण ब्रह्मका जो सन्निवेश है सो इतनाही जो मेने कहाहै जो काल है सोपच्चीसमा तत्त्व है ॥ १५ ॥

कोई मुनि परमात्मा के प्रभावको काल कहते हैं जिस कालसे प्रकृतिको प्राप्त होने वाले मोहित पुरुषको भय होताहै ॥ १६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

सृष्टिहेतुत्वेन लक्षयति । प्रकृतेरिति ॥ १७ ॥

कोऽसौ भगवांस्तमाह । अन्तरिति । अन्तः सर्वप्राणिनां यः पुरुषरूपेण नियन्तृत्वेन समन्वेति सम्यक् तद्विकाररहित एवानुस्यूतो वर्तते बहिश्च कालरूपेण एष भगवान् यद्वा यः पुरुष इति प्रसिद्धः कालः स पञ्चविंशः एके तु पुरुषस्य प्रभावं कालमाहुः प्रभावस्यैव लक्षणम् । यत इति । पुरुषस्यैव कालत्वे हेतुः प्रकृतेरिति उभयथा विवक्षायां हेतुः अन्तरिति शेषं समानम् तदेवं प्रकृतेश्चतुर्विंशतिभेदाः जीवेश्वरयोश्चैक्याविवक्षातः पञ्चविंशतितत्त्वानि भवन्ति तयोर्भेदविवक्षया च षड्विंशतिर्भवन्ति १८ ॥

इदानीं तत्त्वानामुत्पत्तिपूर्वकं लक्षणान्याह । दैवादित्यादिना एतान्यसंहत्येत्यतः प्राक्तनेन ग्रन्थेन । तत्र चित्तस्योत्पत्तिपूर्वकं लक्षणमाह चतुर्भिः । दैवाज्जीवादृष्टात्क्षुभिता धर्मा गुणा यस्याः योनावभिव्यक्तिस्थाने प्रकृतौ वीर्यं चिच्छक्तिम् सा प्रकृतिर्महत्तत्त्वमसूत महतः स्वरूपमाह । हिरण्मयं प्रकाशबहुलम् ॥ १९ ॥

विश्वमहङ्कारादिप्रपञ्चम् । आत्मगतं स्वस्मिन्सूक्ष्मरूपेण स्थितं व्यञ्जन्प्रकटयन्महांस्तीव्रं प्रलयकालीनं तमो ऽपिवत् कूटस्थोलयविक्षेपशून्यः कथम्भूतं तमः आत्मानं प्रस्वापयति प्रच्छादयतीति तथा यत्पूर्वं प्रलयसमये महान्तं प्रकृतौ विलापयामासेत्यर्थः ॥ २० ॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

यतः प्रभावरूपकालात् चेष्टा महदाद्युत्पत्तिहेतुस्साम्यत्यागः भगवत्प्रभावस्य तदभेदविवक्षया भगवानित्युक्तम् । तदुक्तं विष्णुपुराणे ।

ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः इति ।
वीर्यं प्रभावः ॥ १७ ॥

तद्विकारेति । श्रमादिविकाररहित एव । पूर्वार्धे कालस्य प्रकृत्यवस्थारूपत्वं मूले न स्फुटं भगवत्प्रभावस्य भगवत्त्वेन विवक्षायामपि अन्तःपुरुषरूपेणेति पद्यमसम्बद्धार्थमेव स्यादित्यरुचौ यद्वेति । उभयथा पुरुषत्वेन प्रभावत्वेन च विवक्षायां हेतुरन्तरिति नियन्तृत्वेनानुस्यूतत्वात्कालस्य पुरुषत्वं कलयति नियच्छतीति काल इति निरुक्तेः मृत्युहेतुत्वाद्भयजनककालरूपेण यो बहिस्समन्वेतीति कालस्य प्रभावरूपत्वम् कलयति नाशयतीति काल इति निरुक्तेरित्यर्थः ॥ १८ ॥

चिच्छक्तिं जीवाख्यचिद्रूपशक्तिम् "इमास्तिस्रो देवता" इति श्रुतेः ॥ १९ ॥

स्वस्मिन्कारणरूपे चित्तरूपत्वान्मनोवल्लयविक्षेपशून्यः तेजसा प्रभावेण ॥ २० ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तथा हे मानवि! प्रकृतेः प्रधानस्य यद्गुणत्रयसाम्यं तस्य निर्विशेषस्य नामरूपादिविशेषशून्यस्य नामरूपादिविशेषपरिहारेण संहारदशायां साम्यावस्थापन्नगुणत्रयस्य प्रधानस्य चेत्यर्थः यतश्चेष्टा व्यापारो भवति स भगवान्भगवदात्मकः कालः इत्युपलक्षितः संहारदशायां नामरूपविभागानर्हनिरतिशयसूक्ष्मावस्थामापन्नयोः प्रकृतिपुरुषयोः परमात्मात्मकयोस्तस्मिन्नेव लीनयोः पुनः सृष्टिदशायां जगदाकारेण परिणामरूपो यो व्यापारस्तद्धेतुभूतः स कालः स च भगवदात्मक इत्यर्थः ॥ १७ ॥

एवं प्रकृतिपुरुषकालस्वरूपं शोधितं ते त्रयोऽपि भगवद्रूपाणि "प्रधानपुरुषाव्यक्तकालास्तु प्रविभागशः । रूपाणि" इत्युक्तेः तेषु पृथिव्यादिस्थूलरूपेण परिणतत्वात्प्रायेण प्रकृतिः स्फुटस्वरूपा पुरुषकालयोस्तु तादृशस्थूलपरिणामाभावात्तयोः प्रतीयमा-

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका।

नन्वं युक्त्या दर्शयन् तयोः शास्त्रैकसमधिगम्यं भगवदात्मकत्वमन्तरिति श्लोकेनाह। य आत्ममायया स्वसङ्कल्पेन सत्त्वानां पृथिव्यादिसम्भूतदेहानामन्तः पुरुषरूपेण इच्छामि द्वेष्मि सुख्यामि दुःख्यामीतीच्छाद्वेषसुखाद्याश्रयजीवाख्यरूपेणान्तः प्रविश्य तथा भवत्यभूद्भविष्यतीति तेषामेव सत्त्वानां विशेषणत्वेन वहिः कालाख्यरूपेण च समन्वेति अवभासते स भगवान् परमपुरुषः॥१८॥

एवं सृष्ट्युपयोगितया प्रकृतिपुरुषकालशरीरकत्वं भगवत उक्तम् अथ सृष्टिमाह। दैवादिति। परः पुमान् परमपुरुषः भगवान् स्वस्यां स्वीयायां योनौ जगद्योनौ प्रकृतौ दैवात्स्वसङ्कल्पात् क्षुभितधर्मिण्याम्

रजस्तमश्चाभिभूय सत्त्वं भवति भारत!।
रजःसत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा।

इत्युक्तरीत्या क्षुभितसत्त्वादिगुणायां वीर्यं महदादिप्रपञ्चसृष्टिसामर्थ्यं चेतनसमष्टिं वा आधत्तागुङ्क ततः सा योनिः हिरण्मयं प्रकाशबहुलं महत्तत्त्वमसूत प्रसूतवती क्षुभितधर्मिण्यामित्युक्तसत्त्वादिगुणक्षोभो नाम गुणानां साम्यावस्थाप्रहाणेनान्यतमगुणाभिभवपूर्वकमन्यगुणाविर्भावः॥ १९॥

तत्र महत्तत्त्वसृष्टिः कस्य गुणस्याभिभवादित्यत्राह। विश्वमिति। जगदङ्कुरः जगदङ्कुरस्थानीयं यस्य जगदङ्कुरः तथा सः जगत्कारणभूतः कूटस्थोऽद्वारको निर्विकारो भगवानात्मगतं "सोऽभिध्याय शरीरात् स्वात्" इति प्रकारेण स्वशरीरभूतप्रकृतिलीनं विश्वं व्यञ्जयन् व्यञ्जयितुं स्वतेजसा स्वसंकल्परूपज्ञानेनात्मप्रस्वापनं जीवात्मनां ज्ञानसंकोचकं तमस्तमोगुणमपिबदभिभूतमकरोदित्यर्थः॥ २०॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

इतोऽपि हरिरेव कालनामा न त्रुटिलवात्मक इत्याह। प्रकृतेरिति। निर्विशेषस्य कार्योदासीनाया गुणसाम्यस्य ब्रह्मप्रलयावस्थाविशिष्टायाः प्रकृतेः प्रधानाभिमानिन्या मूललक्ष्म्याः पुनः श्रीभूदुर्गादिरूपभेदेन सिसृक्षुत्वादिविशेषलक्षणा चेष्टा यतो भवति स भगवान्काल इत्युपलक्षित इतीदं लक्षणं लक्ष्यमात्रव्यापकत्वान्नाव्याप्त्यतिव्याप्त्यसंभवदुष्टमिति ज्ञातव्यम्॥ १७॥

अनेन * कालरूपात्पुरुषरूपं न भिन्नमित्याह। अन्तरिति। यो भगवानात्ममायया स्वरूपेच्छया सत्त्वानां सर्वप्राणिनामन्तः पुरुषरूपेण वहिःकालरूपेण सर्वान्तर्यामिसर्वव्यापकरूपभेदेन व्याप्नोतीत्यतोऽप्यन्तमेष एक एवेति नात्र दोषशङ्का कार्येति॥ १८॥

प्रकृतेश्चेष्टाप्रदत्वप्रकारं वक्ति। दैवादिति। दैवात्प्रकृतिक्षोभकनारायणाख्यात्क्षुभितधर्मिण्यां स्वस्यां योनौ परः पुमान्वीर्यमाधत्तेत्यन्वयः इदमुक्तं भवति दैवाख्यमूलरूपादभिव्यक्तो नाम्ना परः पुमान् तस्य नारायणस्य प्रेरणया सिसृक्षुत्वविशेषधर्मवत्याः प्रधानाभिमानिन्या लक्ष्म्या अभिव्यक्तायां नाम्ना श्रियां प्रागुक्तविशेषवत्यां स्वभार्यायां रेतोलक्षणं वीर्यमधादिति। तदुक्तम्।

प्रकृतेः क्षोभकं रूपं दैवं नारायणाभिधम्।
प्रकृतौ महतः स्रष्टा परमः पुरुषोत्तम इति॥

अमोघवीर्यो हरिरिति भावेन तत्फलमाह। सासूतेति। सा श्रीनाम्नी हिरण्मयं महत्तत्त्वमसूतेति॥ १९॥

प्रकृत्या गूढमिदं जगद्दैवाख्याङ्कुरः कथङ्कारं व्यज्यत "तमसा गूढमग्र" इति श्रुतिरिति तत्राह। विश्वमात्मगतमिति। ब्रह्मादिसर्वजीवानां कूटस्थ आत्मोदरगतं विश्वं व्यञ्जन् व्यक्तं कर्तुंकामो जगतोऽङ्कं रमयितृत्वात् जगदङ्कुरः परमः पुरुष आत्मप्रस्वापनं योगनिद्राकारणं तीव्रं निबिडं तमः स्वतेजसा स्वरूपप्रभया अपिबत् विनष्टमकरोदित्यन्वयः जगतोऽङ्कुरो जगदङ्कुर इति विग्रहे तद्विकारो हरिरित्यर्थोऽनुपपन्नः "निर्विकारोऽक्षरः शुद्ध" इत्यादिश्रुतिविरोधात् अतः

अङ्के रमयते यस्मात्केशवो जगदङ्कुरः।
महान्तं योऽसृजज्जीवमोहकं च तमोऽग्रसत्।

इतिप्रमाणबलादुक्त एवार्थः॥ २०॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तत्र स्वमतमाह। प्रकृतेरिति। स भगवान् पुरुष एव स्वांशेन कालः तदेवमनेन लक्षणेन कालस्य प्राधानिकत्वं प्रत्याख्यातम्। तस्यापि क्षोभहेतुत्वात्॥ १७॥

कालस्य जीवस्यापि तद्वदंशत्वमेवाह। अन्तरिति। सत्त्वानां देवाद्याख्यानामुपाधीनामेवं पौरुषे गणे द्विसंख्याकः कालो जीवश्चेति। प्रकृतिपुरुषौ तु द्वौ प्राधानिकश्चतुर्विंशतिसंख्यः। ततो विवेके सत्यष्टाविंशतिरेव तत्त्वानि॥ १८॥

दैवमत्र काल एव पूर्वसम्वादात् जीवादृष्टस्यापि प्रकृतौ लीनत्वात् वीर्य्यं जीवाख्यचिद्रूपशक्तिम् "इमास्तिस्रो देवता" इति श्रुतेः॥ १९॥

कूटस्थः मनोवल्लुयविक्षेपराहितः स्वतेजसा स्वप्रभावेण तमः अज्ञानम्॥ २०॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

स्वमते कालं लक्षयति। प्रकृतेरिति। गुणानां साम्यावस्था प्रकृतिः प्रकृतेः सम्बन्धिनो ये गुणाः सत्त्वादयः तेषां साम्यं गुणक्षोभात्पूर्वावस्था सा च क्षोभात्पूर्वं निर्विशेषः मानवीति सम्बोधनं महत उत्पन्ना अलौकिकं जानातीति एतादृशस्य यतश्चेष्टा स कालः कालादेव गुणानां क्षोभः स कालो भगवानेव रूपपञ्चकमध्ये गणनात् ननु भगवतः काल इति संज्ञा कुत इत्याकाङ्क्षायामाह। इत्युपलक्षित इति। कलयस्याकलयतीति सर्वो हि प्राणी येन रूपेण कृत्वा सर्वमाकलयति मृत्युभीत एव हि सर्वमाकलयति अतः काल इति भगवानेवोपलक्षितः उपलक्षणविधया बोधितः न हि काल इति साक्षाद्भगवन्नाम किन्तु प्राणिनां बोधनहेतुत्वेन निरूपित इति॥ १७॥

एवं कालं भगवद्रूपत्वेनोक्त्वा तस्योपलक्षणतां निरूपयति। अन्तः पुरुषरूपेणेति। एक एव भगवान् सर्वप्राणिनामन्तः पुरुषरूपेण वर्त्तते वहिःकालरूपेण अन्यथा भगवतो व्याप्तिर्न स्यात् वहिर्मुखान् कालरूपेण भक्षयति अन्तर्मुखान् पुरुषरूपेणाप्याययतीति अत एव सत्त्वानां सर्वेषां भगवान् स्वमायया सर्वभवनसामर्थ्येन उभयविधो भूत्वा समन्वेति सम्यगन्वयं प्राप्नोति वहिःकाले लयं प्राप्नोति अन्तःपुरुष इति कालो भयजनकः अभयरूपश्च पुरुष इति विशेषः॥ १८॥

एव मुद्देशेन तत्त्वानि निरूप्य उत्पत्तिपूर्वकं लक्षणान्याह।

* पद्येन।

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

दैवादिति। प्रथमतः चित्तस्योत्पत्तिमुक्त्वा तस्याधिदैविकादिभेदान्निरूपयता लक्षणान्युच्यन्ते आदावुत्पत्तिः तत आध्यात्मिकलक्षणं तत आधिदैविकस्य तत आधिभौतिकस्येति एवमेकः पदार्थश्चतुर्भिरुच्यते तत्र प्रथमं महत्तत्त्वस्योत्पत्तिमाह। दैवात्कालात् क्षुभिता धर्मा यस्याः सा पुरुषस्य योनिः क्षेत्रं तस्यां परः पुमान् प्रथमपुरुषः वीर्यमाधत्त यथा स्वभार्यायां पुरुषः तस्येन्द्रियाणि भगवत इवानन्दमयानि रेतस्तु सच्चिदंशः चिदंश एवैकके सदंशस्तु प्रकृतेः सकाशात् सम्बद्धते ततः सा प्रकृतिर्महत्तत्त्वमसूत तस्य शरीरं हिरण्मयं यथासूर्यान्तर्गतस्य नारायणस्य आनन्दतनोः ऐक्ये हिरण्यरूपता भवति॥ १६॥

आध्यात्मिकं लक्षयति। विश्वमिति। स हि महान् सर्वजगत्प्रसवहेतुः विश्वाधारत्वं तस्य लक्षणं ब्रह्माण्डस्याप्यंशतो भवतीति कूटस्थ इत्युक्तम्। प्रकृतिव्युदासार्थं जगदङ्कुर इति। यथा वृक्षस्य प्रथमावस्था अङ्कुरः तथा जगत् सा हि विश्वमात्मगतं व्यनक्ति तत्किङ्कुर्वाणस्याकाङ्क्षायामाह। स्वतेजसा आत्मप्रख्यापनं तमः पिबतीति येन तमसा पूर्वं महत्तत्वं प्रख्यापितं लयं प्रापितमासीत् तन्मूलभूतं तमः महत्तत्त्वेन पीयते अन्यथा जगत्केनापि प्रकारेण नाभिव्यक्तं स्यात् अस्य महत्तत्त्वस्य माहात्म्यत्रयमुक्तं जगत्प्रकाशकत्वेन जगज्जनकत्वेन अतिसमर्थतमोनाशकत्वेन च त्रिगुणत्वेनानि लक्षणानि कारणगुणत्रयसूचकानि सात्त्विकराजसतामसानि क्रमेणैव॥ २०॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

प्रकृतिक्षोभकत्वेनापि तं लक्षयति। प्रकृतेरिति॥ १७॥

अत एव अन्तःपुरुषरूपेणान्तर्यामिरूपेण नियन्ता समन्वेति सम्यक् तद्विकाररहित एवानुस्यूतो वर्त्तते बहिश्च कालरूपेण नियन्ता सत्त्वानां सर्व्वप्राणिनां तदेवं प्राधानिको गणश्चतुर्विंशतिसङ्ख्यः कालो जीवश्चेति द्वौ प्रकृतिपुरुषौ च द्वौ मिलित्वा अष्टाविंशतिस्तत्त्वानि भवन्ति॥ १८॥

इदानीं तत्त्वेषु लक्षयितव्येषु प्रथमं चित्तस्योत्पत्तिपूर्व्वकं लक्षणमाह। दैवात् कालात् क्षुभिता धर्म्मा गुणा यस्यास्तस्यां योनावभिव्यक्तिस्थाने वीर्य्यं जीवशक्त्याख्यं चैतन्यं सा प्रकृतिर्महत्तत्त्वमसूत हिरण्मयं प्रकाशबहुलम्॥ १६॥

विश्वमहङ्कारादिप्रपञ्चमात्मगतं स्वस्मिन् सूक्ष्मरूपेण स्थितं व्यञ्जयन् प्रकटयन् सर्व्वत्र पुंस्त्वं तत्त्वपदस्यागेन महानित्येतस्यैव विशेष्यीकृतत्वात्। कूटस्थः मनोवल्लयविक्षेपशून्यः आत्मानं प्रख्यापयतीति-तथा यत्तमः पूर्वप्रलयसमये महान्तं प्रकृतौ विलापयामासेत्यर्थः॥ २०॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

मब्रह्मात्मककालवादिमतं निराकुर्वन्प्रकृत्यादिक्षोभकत्वं कालस्याह। प्रकृतेरिति। प्रकृतेरित्युपलक्षणं तद्बद्धजीवतत्कार्यादीनाम् यतः चेष्टा स कालः इत्युपलक्षितः इत्यनेन भयदत्वक्षोभकत्वादिलक्षणेन उपलक्षितः प्रतिपादितः स च शक्तित्वेन भिन्नोऽपि स्वाधीनस्थितिप्रवृत्त्याद्यभावात् भगवान् भगवदभिन्न इत्यर्थः॥ १७॥

एवं सङ्क्षेपतः प्रकृतिलक्षणं जीवविशेषस्य प्रकृतिकालवश्यत्वं लक्षणं च प्रसङ्गात् काललक्षणं चोक्त्वाथ स्वशक्तिं तां महदाद्युत्पादकस्य सर्वात्मनो भगवतो लक्षणमाह। अन्तरिति। आत्ममायया वयुनेन सङ्कल्परूपेण अन्तः पुरुषरूपेण निजरूपेण शास्त्रभूतेन "अन्तः प्रविष्टः शास्ता जनानाम्" इति श्रुतेः बहिः कालरूपेण कालाख्यशक्तिरूपेण सम्यगन्वेति॥ १८॥

एवं भोग्यभोक्तृनियन्तृरूपाणां त्रयाणां तत्त्वानां सृष्ट्युपयोगित्वेन लक्षणान्युक्तान्यधुना चतुर्विंशतिप्राकृततत्त्वानामुत्पत्तिपूर्वकं लक्षणान्याह। दैवादित्यादिना। स्वस्यां स्वशक्तौ दैवात्स्वकीयसङ्कल्पात् क्षुभितधर्मिण्यां वीर्यं स्वावतारप्रवेशेन सृष्टिसामर्थ्यम्॥

प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः।
क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाव्ययौ इति॥

स्मृतेः हिरण्मयं प्रकाशबहुलम् शारीरकमीमांसायामुत्तरोत्तरकार्याणामुत्पादकः पूर्वपूर्वकारणरूपो भगवानेवेति अतो हिरण्मयकूटस्थादीनि विशेषणानि तदभिप्रायाणीति बोध्यम् अन्यथा प्रकृतिकार्य्ये महति कूटस्थत्वं विरुद्धं स्यात् अतः हिरण्मयत्वं नाम अप्राकृतनित्यविग्रहयुक्तभगवदधिष्ठितत्वम्। अभेदनिर्देशस्तु शक्ति शक्तिमतोर्भिन्नाभिन्नसम्बन्धाभिप्रायः महदादीनामपि भगवच्छक्तिकार्याणां भगवच्छक्तित्वम् "इति तासां स्वशक्तीनाम्" इत्यनेनोक्तम्॥ १६॥

जगज्जायमानमङ्कुरः कार्यं यस्य सः अत एव विश्वं चिदचिदात्मकं जगत् आत्मगतमात्मनि सूक्ष्मरूपेण स्थितं व्यञ्जयन् स्थूलतयोत्पादयन् आत्मानं जीवं ज्ञानावरकतया प्रख्यापयतीति तत्तमः अपिबत् तमोऽभिभूय रजःसत्त्वोपबृंहितो जात इत्यर्थः तथोक्तं द्वितीयस्कन्धे "महतस्तु विकुर्वाणाद्रजः सत्त्वोपबृंहितात्" इति॥ २०॥

———

भाषाटीका।

हेमानवि! तीनों गुणों के सामान अवस्था वाला निर्विशेष जो प्रधान तिसकी चेष्टा जिससे होती है सो भगवान् कार्य ऐसा लक्षित होता है॥ १७॥

सबजीवों के भीतर पुरुषरूप से बाहिर कालरूप से जो आत्मा-माया से प्राप्त होता है सो भगवान् हीं है॥ १८॥

परमात्माके वीर्यस्थापन करने की योनि के तुल्य जो प्रधान है उस प्रधान में काल के योग से चालन होने से भगवान् ने चैतन्य शक्तिरूप जीव को स्थापन किया तब तिस प्रकृति ने हिरण्मय महत्तत्त्व को पैदा किया॥ १९.॥

जगत्का अङ्कुररूप विकार रहित महतत्त्व नें पूर्व में अपने को प्रकृति में लय कराने वाले अन्धकार को नाश करदिया॥ २०॥

———

यत्तत्सत्त्वगुणं स्वच्छं शान्तं भगवतः पदम् ।
यदाहुर्वासुदेवाख्यं चित्तं तन्महदात्मकम् ॥ २१ ॥
स्वच्छत्वमविकारित्वं शान्तत्वमिति चेतसः ।
वृत्तिभिर्लक्षणं प्रोक्तं यथाऽपां प्रकृतिः परा ॥ २२ ॥
महत्तत्त्वाद्विकुर्वाणाद्भगवद्वीर्य्यसम्भवात् ।
क्रियाशक्तिरहङ्कारस्त्रिविधः समपद्यत ॥ २३ ॥
वैकारिकस्तैजसश्च तामसश्च यतो भवः ।
मनसश्चेन्द्रियाणां च भूतानां महतामपि ॥ २४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रसङ्गाच्चतुर्व्यूहोपासनामाह । यत्तदिति । सर्वागमप्रसिद्धत्वमाह । स्वच्छं विशदम् । शान्तं रागादिरहितम् । भगवतः पदमुपलब्धिस्थानम् । अत एव वासुदेवाख्यं यदाहुः । अयमर्थः । अधिभूतरूपेण तस्यैव महानिति संज्ञा अध्यात्मरूपेण चित्तमिति उपास्यरूपेण वासुदेव इति अधिष्ठाता तु तस्य क्षेत्रज्ञः एवमहङ्कारं सङ्कर्षण उपास्यः रुद्रोऽधिष्ठाता मनस्यनिरुद्ध उपास्यः चन्द्रोऽधिष्ठाता बुद्धौ प्रद्युम्न उपास्यः ब्रह्माधिष्ठातेति ज्ञातव्यम् ॥ २१ ॥

स्वच्छत्वं भगवद्बिम्बग्राहित्वम् । अविकारित्वं लयविक्षेपराहित्यम् । अपां प्रकृतिः फेनतरङ्गादिरहिताऽवस्था परा भूसंसर्गात्प्राक्तनी सा यथा मधुरा स्वच्छा शान्ता च तद्वदित्यर्थः ॥ २२ ॥

अहङ्कारस्योत्पत्तिपूर्वकं लक्षणमाह । महत्तत्त्वादिति चतुर्भिः । क्रियासु शक्तिर्यस्य स क्रियाशक्तिः ॥ २३ ॥

त्रैविध्यमाह । वैकारिक इति । तस्य कार्यमाह । यतो यस्मान्मनआदीनां भव उत्पत्तिः ॥ २४ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

अत एव । भगवदुपलब्धिस्थानत्वादेव अधिष्ठानाधिष्ठात्रोरभेदविवक्षया यदेव चित्तं वासुदेवाख्यमाहुः । एकस्यैव तत्तत्संज्ञायामभिप्रायं व्याचष्टे । अयमर्थ इति । अधिभूतरूपेण गोलकाधिष्ठानरूपेण अध्यात्मरूपेणेन्द्रियरूपेण चित्तमित्यनन्तरं क्रियाशक्तिरूपेण सूत्रमिति पूरणीयम् ॥ २१ ॥

वृत्तिभिर्धर्मैः । लक्षणं स्वरूपम् । भूसंसर्गात् भूसंयोगात् । २२ ।
क्रियासु मनआद्युत्पादनरूपासु ॥ २३ ॥

मनसश्चेति चकारेण देवतापरिग्रहः महतामपीति भूतसूक्ष्मक्रमोऽप्यवान्तरो ज्ञेयः ॥ २४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कस्य गुणस्याविर्भावादित्यपेक्षायां तद्दर्शयन्मूलप्रकृतिमहतोर्वासुदेवाख्यव्यूहाधिष्ठितत्वं तयोरन्तःकरणभेदचित्तबुद्ध्यनुग्राहकत्वं चाह । यत्तदिति । भगवतः पदम् "तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम्" इत्युक्तरीत्या सत्त्वस्य प्रकाशकत्वात्तद्गुणकस्य चित्तस्य भगवदुपलम्भस्थानत्वमित्यर्थः शान्तमभिभूततमस्कमत एव स्वच्छं प्रकाशकं सत्त्वगुणकं यच्च वासुदेवाख्यं वासुदेवाख्यभगवद्व्यूहाधिष्ठितं यच्चित्तमन्तःकरणभेदश्चित्तानुग्राहकं मूलप्रकृत्यपरपर्यायमव्यक्तं तदेव महदात्मकं महत्तत्त्वात्मनावस्थितमित्यर्थः अत्र वासुदेवाख्यं चित्तमित्यधिष्ठात्रधिष्ठेययोरनुग्राह्यानुग्राहकयोश्चाभेदविवक्षया निर्देशः नात्र चित्तस्य वैकारिकाहङ्कारकार्य्यान्तःकरणभेदस्य वासुदेवाधिष्ठितत्वं महदात्मकत्वं चोच्यते चित्तं चैत्यस्ततोऽभवदिति चित्तस्य क्षेत्रज्ञाधिष्ठितत्वस्य वक्ष्यमाणत्वात् महत्कार्याहङ्कारकार्यस्य चित्तस्य महदात्मनावस्थानायोगाच्च कारणं हि कार्यात्मनावतिष्ठते न तु कार्यं कारणात्मना तत्तु संहारदशायां यद्यपि संभवति तथाप्यत्र सृष्टिप्रकरणे तथावस्थानमयुक्तं वक्तुं नापि महदात्मकमिति चित्तस्यान्तःकरणभेदस्य महदनुग्राह्यत्वमुच्यते महतो बुद्ध्यनुग्राहकत्वान्महान् वै बुद्धिलक्षण इत्युक्तेः नचात्र चित्तशब्देन बुद्धिरेवान्तःकरणभेदो विवक्षित इति वक्तुं शक्यम् बुद्धेर्वासुदेवाधिष्ठितत्वानुपपत्तेः बुद्धेर्गिरांपतिरिति वक्ष्यमाणत्वात् तस्मादत्राभिभूततमस्कमुद्भूतसत्त्वगुणमव्यक्तमेव वासुदेवाधिष्ठितं महदात्मना परिणतमित्यवधारणीयं तत्र योऽव्यक्तस्याधिष्ठाता वासुदेवः स एव महतोऽप्यधिष्ठाता अधिष्ठात्रन्तरानुक्तेः ॥ २१ ॥

कदान्तःकरणमव्यक्तानुगृहीतं सच्चित्तमिति लक्ष्यत इत्यत्राह । स्वच्छत्वमिति । स्वच्छत्वं भगवद्बिम्बग्राहित्वमविकारित्वं विक्षेपादिराहित्यमत एव शान्तत्वं रजस्तमोभ्यामनभिभूतत्वमित्येवं रूपैः स्वच्छत्वादिभिश्चेतसो वृत्तिभिर्लक्षणं प्रोक्तं यदा स्वच्छत्वादिगुणकं मनस्तदा सत्त्वोत्तराव्यक्तानुगृहीतमितिचेतोवृत्तिभिर्लक्ष्यत इत्यर्थः स्वच्छत्वादौ दृष्टान्तमाह । यथेति । अपामम्भसां परा प्रकृतिरनारोपितस्वस्वभावो यथा अपां स्वभावरूपं स्वच्छत्वं फेनतरङ्गादिराहित्यमेवं स्वच्छत्वादिकं यदा भवति तदाव्यक्तानुगृहीतं मन इत्यर्थः ॥ २२ ॥

एवमध्यवसायादिवृत्तिभिर्बुद्धेर्महत्तत्त्वानुगृहीतत्वं वेदितव्यम् अथाहङ्कारोत्पत्तिप्रकारं वदन् तत्स्वरूपं तदवान्तरभेदं तदधिष्ठातारं चाह त्रिभिः । महत्तत्त्वादिति । भगवतो वीर्येण सङ्कल्परूपज्ञानेन चोदितात्प्रेरितादत एव विकुर्वाणात् महत्तत्त्वाद्वैकारिकतैजसतामस-

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

भेदेन त्रिविधः क्रियाशक्तिः क्रियाशब्देन प्रवर्तकरजोगुण उच्यते गुणोद्रिक्त इत्यर्थः अहङ्कारः समपद्यत उदभूदित्यर्थः ॥ २३ ॥

कोऽसावहङ्कार इत्यत्राह । वैकारिक इति । यतः त्रिविधादहङ्कारान्मनसः इन्द्रियाणां ज्ञानकर्मोभयेन्द्रियाणां महतां भूतानामाकाशादीनामपिशब्दाच्छब्दादितन्मात्राणां च भव उत्पत्तिः मनआदीनां कारणमित्यर्थः ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दैवनाम्नो हरेरभिव्यक्तात्परमपुरुषान्महत्तत्त्वसृष्टिमुक्त्वा महत्त्वेनाभिमन्यमानस्य चित्तस्य सृष्टिं वक्ति । यत्तत्सत्त्वगुणमिति । सत्त्वगुणं पूर्णानन्दादिगुणं स्वच्छं धवलं शान्तमकलुषं स्तिमितं भगवतो हरेः पदं स्वरूपं यच्च ज्ञानिनो वासुदेवाख्यमाहुः । तस्मान्महत्तत्त्वाभिगताद्वासुदेवात् महत्तत्त्वेनाभिमन्यमानं सर्वप्राणिनां चित्तं जायत इति शेषः । तदुक्तम् । "तदेव वासुदेवाख्यं महत्तत्त्वनियामकम्" इति "सत्त्वशब्देन चोच्यन्ते पूर्णानन्दादयो गुणा" इति च

> महत्तत्त्वगतो योऽसौ वासुदेवाभिधो हरिः ।
> स चित्तजनकः प्रोक्तः प्राणिनां हि पृथक् पृथग् ॥

इति वचनात् न चित्तस्य वासुदेवादन्यो जनकोऽस्तीति ज्ञायते ॥२१॥ कारणगुणाः कार्येऽपि सङ्क्रमन्त इति भावेनास्य चित्तस्य लक्षणमाह । स्वच्छत्वमिति । स्वच्छत्वं निर्मलत्वमविकारित्वं स्तिमितोदकवदल्पविकारत्वं न सर्वात्मना विकाराभावः "स्तिमितोदकचित्तादेरविकारोऽल्पविक्रिया" इति वचनात् शान्तत्वं प्रसन्नता यथापां परा विशिष्टा प्रकृतिरुपाधिमन्तरेण धावल्यस्वभावस्तथा चित्तस्य वृत्तिभिः स्वभावैर्लक्षणं कथितमित्यन्वयः "वृत्तिः स्वभावो वृत्तं च स्थितिरित्यभिधीयत" इति वचनात् स्वाभाविकं लक्षणमुक्तमित्यर्थः ॥ २२ ॥

महत्तत्त्वादहङ्कारसृष्टिमाचष्टे । महत्तत्त्वादिति ।

> ज्ञानप्रधानस्तु महानहङ्कारः क्रियाधिकः ।
> इतरापेक्षया सोऽपि ज्ञानाधिक उदाहृत इति ॥

विवक्षया क्रियाशक्तिर्नतु ज्ञानशक्तिरहितत्वादन्यथाहङ्कारस्य शक्तिद्वयकथनं व्यर्थं स्यादिति ॥ २३ ॥

पृथक् नाम्ना त्रैविध्यं वक्ति । वैकारिक इति । यतो यस्मात्त्रिविधाहङ्कारान्मनआदीनां भव उत्पत्तिः स इति महतां भूतानां पृथिव्यादीनाम् ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स्वच्छत्वादेव भगवत्पदत्वं ततो द्रव्यादिमात्रग्रहणहेतुत्वं ज्ञेयम् । यदाहुर्वासुदेवाख्यमित्युपास्यतदधिष्ठानयोरभेदोक्तिस्तादात्म्यभावनयोपचारात् टीकायां चित्तमित्यनन्तरं क्रियाशक्त्यात्मत्वेन सूत्रमिति च ज्ञेयम् ॥ २१ ॥ २२ ॥

क्रियासु मनआद्युत्पादनेषु शक्तिर्यस्य सः ॥ २३ ॥

मनस इत्युपलक्षणं देवानामपि भूतानां महतामपीत्यत्र भूतसूक्ष्मादिक्रमस्त्ववान्तरो ज्ञेयः ॥ २४ ॥

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

आधिदैविकं लक्षयति । यत्तदिति । तस्याधिदैविकं रूपं वासुदेव इति वासुदेवाविर्भावस्थानत्वात् वसुदेवे आविर्भवतीति वासुदेवः विशुद्धं सत्त्वं वसुदेवः तदेवास्याधिदैविकं रूपं यत्सर्वोपास्यत्वेन प्रसिद्धं तदेवैतत् सत्त्वं गुणो यस्य सत्त्वस्यापि सत्त्वं तस्य रूपत्रयमाह । सच्चिदानन्दत्वाय तत्र सद्रूपतामाह । स्वच्छमिति । स्वच्छमतिनिर्मलं शान्तं चिद्रूपं ज्ञानमेव हि शान्तरूपं भगवतः पुरुषोत्तमस्य परमानन्दरूपम् एवं सच्चिदानन्दरूपं सत्त्वस्य सत्त्वं तच्चित्तं सर्वेषु प्राणिषु चेतनारूपेण स्थितं तस्योपासनार्थं नामान्तरमाह । यदाहुर्वासुदेवाख्यमिति । वासुदेव इत्याख्या यस्य वासुदेवशरीररूपत्वात् वासुदेवाधारत्वाद्वा यस्मादिति विग्रहः आहुरिति प्रमाणम् । ननु चित्तस्य तादृशस्योत्पत्तिर्नोक्तेत्याशङ्क्याह । तन्महदात्मकमिति । महत्तत्त्वरूपमेव चित्तं तेन महदुत्पत्त्यैव तस्योत्पत्तिरुक्तेत्यर्थः ॥ २१ ॥

आधिभौतिकं लक्षयति । स्वच्छत्वमिति । स्वच्छत्वं निर्मलत्वंविकाराहित्यं शान्तत्वं ज्ञानरूपत्वं बुद्धिमनोऽहङ्कारव्युदासार्थं त्रीणि विशेषणानि बुद्धिर्ज्ञानरूपापि विषयाकारेति न स्वच्छा चित्तं तु निर्विषयं केवलात्मावबोधरूपमिति स्वच्छं मनसस्तु विकारात्मकत्वं स्पष्टमेव शान्तत्वं नाहङ्कारस्य सात्त्विकाहङ्कारस्य तथात्वेऽपि पदार्थस्यैकत्वात् शान्तघोरविमूढात् केवलशान्तत्वं व्यावर्त्तत एव अत एव चेतसो वृत्तिभिर्लक्षणं प्रोक्तं नैता वृत्तयो अहङ्कारादेर्भवन्ति । ननु चित्तमपि बुद्ध्यादिभिर्विषयग्रहणे कलुषितं जायते अन्यथा तन्निरोधे यत्नो न कर्त्तव्यः स्यादत आह । यथापामिति । यद्यपि फेनतरङ्गादयोऽप्यपां भवन्ति तथापि न तासां सहजस्वभावोऽयं किन्तु वाय्वादिकृतं स्वभावतो निर्मलत्वमेव अत एव परा प्रकृतिरपां स्वच्छैव लक्षणं त्वकृत्रिमम् औपाधिकास्तु कृत्रिमाः न हि कदाचिदपि पृथिवी निर्मला भवति वायुर्वा विकाररहितो भवति रजो वा शान्तं भवति अतस्तत्सम्बन्धे अपां तद्भावापत्तिः ॥ २२ ॥

अहङ्कारस्योत्पत्तिपूर्वकं पूर्ववल्लक्षणान्याह । महत्तत्त्वादिति चतुर्भिः । विकुर्वाणात्कार्योन्मुखात्कालेन हि गुणक्षोभे विकृतं सत्कार्यमुत्पादयति न केवलं विकारमात्रेण किन्त्वन्तर्भगवच्छक्तिरपि सर्वजनिकापेक्ष्यते तदाह । भगवद्वीर्यसम्भवादिति । भगवद्वीर्यस्य सम्भवो यस्मिन् न हि जले मथ्यमाने तत्राविद्यमानं घृतमुत्पद्यते किन्तु दुग्धे दधिन वा अनेनैव वैनाशिकप्रक्रिया निराकृता अन्यथा सर्वस्मादेव सर्वं जायेत स्वभावस्य नियामकत्वे तु स्वभावस्यापि तथात्वे प्रमाणं वक्तव्यम् अचेतना हि सर्वं नियन्तुं शक्याः ईश्वर एव केवलमनियम्यः शास्त्रतः स्वभावस्यान्यथा भावोऽपि नोपपद्येत पटादौ तन्त्वादिसामग्री चिन्तामण्यादयश्च कारणत्वेन कल्प्यमानाः व्यभिचारिणः स्युः अतो भगवच्छक्तिरेकैव सर्वभवनरूपा प्रतिनियता समुदाये प्रत्येकं वा यत्रैवावतिष्ठते भगवन्नियमात् तत एवोत्पद्यत इति युक्तं भगवानेव तथाविर्भवतीति न वैनाशिकगन्धोऽपि श्रुतिरपि सम्वादिन्यत्र अन्यत्र श्रुतिविरोधश्च तस्माद्युक्तमुक्तं भगवद्वीर्यसम्भवादिति । ज्ञानप्रधानात् महत्तत्त्वात् क्रियाशक्तिरहङ्कार उत्पन्नः सच त्रिविधः उत्पत्त्यैव तथैव सम्पद्यते क्रियाहि भेदिका कारणभूतं गुणत्रयं कार्ये भिन्नतयैवोत्पादितवती ॥ २३ ॥

( वैकारिकोऽधिदैवानु बुद्धिः प्राणश्च तैजसः ।
तामसस्त्वर्थमात्रं च गुणव्यतिकरस्त्रिवृत् ॥ ) *
सहस्रशिरसं साक्षाद्यमनन्तं प्रचक्षते ।
सङ्कर्षणाख्यं पुरुषं भूतेन्द्रियमनोमयम् ॥ २५ ॥
कर्तृत्वं करणत्वं च कार्यत्वं चेति लक्षणम् ।
शान्तघोरविमूढत्वमिति वा स्यादहंकृतेः ॥ २६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

आध्यात्मिकस्वरूपमेव तान् भेदान् गणयति । वैकारिक इति । वैकारिकः सात्त्विकः तैजसो राजसः तामसश्च आध्यात्मिकं गुणा एव स्वधर्मा लक्षणानि यतस्त्रिविधात् मनस इन्द्रियाणां भूतानां च सम्भवः महतामिति तन्मात्राणां महतामपि कार्यजननमपि लक्षणं मनःप्रभृतिकार्यजनकसत्त्वादिगुणवत्त्वं वा लक्षणमव्यभिचारात् ॥ २४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यत्तत् । प्रसिद्धं चित्तं तन्महदात्मकं महत्तत्त्वमेव देहं चित्तरूपेण तिष्ठतीत्यर्थः स्वच्छं निर्मलं शान्तं रागादिशून्यं भगवतः पदमुपासनापीठं यद्यं भगवन्तं वासुदेवाख्यमाहुरिति चित्ताहङ्कारबुद्धिमनःसु क्रमेण वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धा उपास्यदेवताः चित्तादिशुद्ध्यर्थं ज्ञेयाः विष्णुरुद्रब्रह्मचन्द्रास्त्वधिष्ठातारः ॥ २१ ॥

ननु देहस्थस्य चित्तस्य सर्वत्र स्वच्छत्वादिगुणो लभ्यते तत्राह । स्वच्छत्वं भगवद्बिम्बग्राहित्वमविकारित्वं लयविक्षेपराहित्यं शान्तत्वं रागादिराहित्यमिति लक्षणं चेतसश्चित्तस्य वृत्तिभिः स्वाभाविकीभिरेव प्रोक्तं यथा अपां परा प्रकृतिरुत्कृष्टः स्वभावः । तेन खल्वापः स्वच्छाः फेनतरङ्गादिरहिता मधुराः शान्ता भवन्ति यथा च भूम्यादिसंसर्गादस्वच्छत्वादिमत्यो भवन्ति तथैव चित्तमपि दुर्विषये आसक्तं चेतनासंसर्गादस्वच्छमपि भवतीत्यर्थः ॥ २२ ॥

अहङ्कारस्योत्पत्तिपूर्वकं लक्षणमाह । महत्तत्त्वादिति । क्रियाशक्तिरित्युपलक्षणं ज्ञानक्रियाद्रव्येष्वपि तस्य शक्तिमत्त्वात् ॥ २३ ॥

यतो येभ्यो वैकारिकतैजसतामसेभ्यो मनइन्द्रियभूतानां क्रमेणैव उत्पत्तिः ॥ २४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ प्रसङ्गात् चतुर्व्यूहोपासनमाह । अत्रेयं प्रक्रिया अन्तःकरणचतुष्टयोत्पत्तिर्वैकारिकाहङ्कारात् तत्र चित्ते वासुदेवः उपास्यः क्षेत्रज्ञोऽधिष्ठाता अहङ्कारे सङ्कर्षण उपास्यः रुद्रोऽधिष्ठाता बुद्धौ प्रद्युम्नः उपास्यः ब्रह्माधिष्ठाता मनस्यनिरुद्धः उपास्यश्चन्द्रोऽधिष्ठातेति तत्राहङ्कारे उपास्यस्य सङ्कर्षणस्योपासनतो वासुदेवोपासनस्य महदात्मकचित्ते क्रियमाणत्वात् श्रैष्ठ्यमित्याशयेनाह । यदिति । यच्चित्तं तन्महदात्मकम् अहङ्कारं वैकारिकं महतोयः श्रेष्ठोंऽशस्तन्मयमित्यर्थः अत एव तत्सत्त्वगुणं सत्त्वगुणबहुलं स्वच्छं शान्तं च यत् यत एव हेनोः भगवतः पदमुपलब्धिस्थानम् यत एव वासुदेवाख्यं वासुदेवोपासनस्थानमाहुरित्यन्वयः ॥ २१ ॥

स्वच्छत्वं परमात्मग्राहकत्वम् अविकारित्वं निर्विकारस्वरूपभगवदधिष्ठितत्वं शान्तत्वं रजस्तमोऽनभिभूतत्वम् एवं भूताभिः स्वच्छत्वादिवृत्तिभिः चेतसः चित्तं तन्महदात्मकमित्युक्तेर्महदात्मकस्य लक्षणं स्वच्छत्वे दृष्टान्तः यथापामम्भसां परा भूसंसर्गात्प्राक्तनी बुद्बुदादिरहिता प्रकृतिः स्वभावः ॥ २२ ॥

एवं महत्तत्त्वमन्तःकरणभेदेन चित्तेन सहैकीकृत्यैकं तत्त्वं चित्ताख्यमुक्त्वाथाहङ्काराख्यं द्वितीयं तत्त्वमाह । महत्तत्त्वादिति चतुर्भिः भगवतो वीर्येण सङ्कल्पेन चोदितात् प्रेरितात् क्रियासु शक्तिर्यस्य तथा ॥ २३ ॥

यतोऽहङ्कारात् मनआदीनामुद्भवः ॥ २४ ॥

भाषाटीका ।

जो वह निर्मल शान्त सत्त्वगुण है सो भगवान् का स्थान है जिसको वासुदेव कहते हैं सो चित्त है सोई महत्तत्त्व रूप है ॥ २१ ॥

जैसे पृथिवी के संसर्ग से जलका स्वभाव निर्मल है तैसे ही निर्मल निर्विकार शान्त रूपों से चित्त की वृत्ति को जानै ॥ २२ ॥

भगवान् की चेतन शक्ति से विकार को प्राप्त होने वाले महत्तत्त्व से क्रिया रूप शक्तियों वाला त्रिप्रकार का अहंकार उत्पन्न हुआ ॥ २३ ॥

सो सात्त्विक राजस तामसतीनप्रकारका है जिसमे से महाभूत पांच इन्द्रिय दश मन इनकी उपत्पत्ति है ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्मिन्नुपास्यव्यूहमाह । सहस्रशिरसमिति ॥ २५ ॥

लक्षणमाह । कर्तृत्वमिति । कर्तृत्वं देवतादिरूपेण करणत्वमिन्द्रियरूपेण कार्यत्वं भूतरूपेण शान्तत्वादिकं तु तत्तत्कारणगुणत्रयरूपेण ॥ २६ ॥

* अयं श्रीविजयध्वजेऽधिकः ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिका टिप्पणी ।

तस्मिन्नहङ्कारे उपास्यं व्यूहं मूर्त्तिभेदं यमहङ्कारं साक्षादनन्तमनन्ताधिष्ठानत्वादनन्ततुल्यं वदन्ति "साक्षात्प्रत्यक्षतुल्ययोः" इत्यमरः । अहङ्कारविशेषणं भूतेति । अनन्तविशेषणं सहस्रशिरसमित्यादिपदत्रयेण पुरुषं प्रथमपुरुषम् ॥ २५ ॥

अहमस्मीति योऽभिमानः सोऽसाधारणव्यापारत्वात् अहङ्कार इति स्वरूपलक्षणम् । तटस्थं लक्षणन्तु कर्तृत्वमित्यादि देवतानां प्रवर्तकत्वात् कर्तृत्वं तद्रूपेण प्रयोजककर्तृत्वम् इन्द्रियाणां करणत्वात्करणत्वं तद्रूपेण भूतानां शरीरतया कार्य्यत्वात्कार्य्यत्वं तद्रूपेणेतिज्ञेयं तत्कारणेति शान्तत्वादिकारणं यत्सत्त्वादिगुणत्रयं तद्रूपेण ॥ २६ ॥

—— ——

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्याहङ्कारस्य सङ्कर्षणाधिष्ठितत्वमाह । सहस्रशिरसमिति । सहस्रशिरसं सहस्रफणमनन्तमनन्तशब्दवाच्यं साक्षात्सङ्कर्षणाख्यभगवद्व्यूहं पुरुषं परमपुरुषं भूतेन्द्रियमनोमयं भूतादीनां कारणमहङ्कारं प्रचक्षते सङ्कर्षणाधिष्ठितमहङ्कारं प्रचक्षत इत्यर्थः ॥ २५ ॥

अहङ्कारस्य लक्षणं तस्य स्वकार्यभूतान्तःकरणभेदादहङ्कारानुग्राहकत्वं तद्वृत्तिभिर्लक्ष्यत्वं चाह । कर्तृत्वमिति । कर्तृत्वाभिमानः आत्मनि गमनाद्याश्रयत्वाभिमानो यदा मनसि स्यात्तदाहङ्कारानुगृहीतं मन इत्यर्थः एवं करणत्वमिन्द्रियत्वं कार्यत्वं देहत्वं चेति लक्षणमहङ्कारस्य लक्षणं चिह्नभूतेन्द्रियकारणत्वादहङ्कारस्येत्यर्थः शान्तत्वं प्रकाशत्वं घोरत्वं विक्षिप्तत्वं मूढत्वं चेति वाहंकृतेर्लक्षणं तत्तत्कारणगुणत्रयरूपेणाहङ्कारो लक्षित इत्यर्थः ॥ २६ ॥

——————

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रकारान्तरेण त्रैविध्यं वक्ति । वैकारिक इति । "सप्तम्तु प्रथमा यत्र स्वातन्त्र्यं यद्विवक्षितम्" इतिवचनात् वैकारिकात् अधिदैवमित्यादिप्रथमा पञ्चम्यर्थे वक्तव्या "दैवताधिकृतं यत्तदधिदैवमिति स्मृतम्" इति वचनात् दिगादिदेवतासर्गमधिकृत्य वर्त्तमानाद्वैकारिकाहङ्कारात् दिगादिदेवता जाता इत्यर्थः तैजसात् तैजसाहङ्कारात् बुद्धिर्बुद्धितत्त्वं तदभिमानिन्युमाहङ्कारिकः प्राणश्च जात इतिशेषः अर्थमात्रं शब्दादितन्मात्रा च तामसात्तामसाहङ्कारादभूदितिशेषः तामसोऽहङ्कारोऽर्थानां शब्दादीनां मात्रं निर्मातेति वाऽनेन किमुक्तं स्यादित्यत उक्तं गुणव्यतिकर इति । गुणानां सत्त्वादीनां शान्तत्वादिव्यञ्जकानां व्यतिकरो यस्मिन्स तथा सोऽहङ्कार एवं त्रिवृत्त्रिविधः ॥ ० ॥

अहङ्कारतत्त्वस्य सूक्ष्मस्थूलरूपभेदेन स्थितस्याभिमानिविशेषमाह । सहस्रशिरसमिति । भूतेन्द्रियमनोमयमित्यत्र मयट्प्रत्ययः प्राधान्यार्थः तथा च भूतादीनां प्रधानकारणं मुख्यं प्रवर्तकमित्यर्थः

संकर्षणाख्यस्तु हरिः सूक्ष्माहङ्कारयामकः ।
स्थूलाहङ्कारनियमी विष्णुः प्रद्युम्ननामकः ।
अनिरुद्धो मनस्तत्त्वनियन्ता भगवान् हरिः ।
महत्तत्त्वादिजीवास्तु ब्रह्मशेषोऽङ्गजस्तथा ।
सूक्ष्मस्थूलविभेदेन कामजश्चानिरुद्धकः इति

विशेषवचनादर्थविशेषोऽत्र बुभुत्सुभिर्ज्ञातव्य इति साक्षादिति विशेषणात् संकर्षणादिनाम्ना त्रिधाभिव्यक्तेन हरिणा प्रेरितः संकर्षणनामानन्तः त्रिविधाहङ्काराभिमानीति सम्यगवगन्तव्यम् ॥ २५ ॥

अहङ्कारलक्षणं वक्ति । कर्तृत्वमिति । वैकारिकाहङ्कारस्य मनोरूपेण परिणतत्वात् मनो व्याप्तित्वेन देहाद्यहंममतोत्पादकत्वेन कर्तृत्वं नाम लक्षणं तैजसाहङ्कारस्य करणानामिन्द्रियाणां कारणत्वादिन्द्रियाभिमानिनियतेन्द्रियद्वारा ज्ञानजनकत्वेन करणत्वं तामसाहङ्कारस्य कार्यापरपर्यायदेहकारणत्वाद्देहस्य च पाञ्चभौतिकत्वात् देहरूपेण कार्यत्वं च इतिशब्दः प्रकारवाची तदुक्तम्

मनोरूपेण कर्तृत्वं देहरूपेण कार्यता ।
इन्द्रियात्मतया चैव करणत्वमहङ्कृतेः ॥
यतो मनस्यहंभावस्तस्मात्कर्ता मनः स्मृतम् ।
स्वभावकर्तृजीवस्य त्वासन्नोपाधि तद्यतः ॥
कर्मज्ञाने करणता यतः करणमिन्द्रियम् ।
कार्यं देहः समुद्दिष्टमुत्पाद्यत्वात्पुनः पुनः इति

स्वोत्पन्नपदार्थेषु तत्तत्स्वभावस्फुरणात् स तल्लक्षणमिति भावेन लक्षणान्तरमाह । शान्तेति । देवपितृजनकवैकारिकस्य सत्त्वांशप्राचुर्येणोत्पन्नत्वात् शुक्लात्मनो भगवन्निष्ठोपेतत्वात् शान्तत्वं करणापरपर्यायेणेन्द्रियाणां स्रष्टुस्तैजसाहङ्कारस्य सत्त्वरजोंऽशप्राचुर्येण जातत्वात् ज्ञानेन्द्रियैर्नानाविधघोरपदार्थविषयज्ञानजनकत्वात् कर्मेन्द्रियैर्घोरतरनानाविधकर्मकारयितृत्वात् घोरत्वं वैकारिकतैजसयोर्यावत् ज्ञानस्य जनकत्वं तावत् ज्ञानजनकत्वाभावेन तमोंऽशप्राचुर्येणोद्भूतत्वात् भूतादेश्च तामसाहङ्कारस्य विमूढत्वं

शान्तरूपो देवपिता घोरः करणसृङ्मतः ।
तावज्ज्ञानस्याप्रकाशान्मूढो भूतपिता स्मृतः ॥
त्रिरूपोऽयमहङ्कारः शेष इत्येव तं विदुः ।
इतिवचनात् अर्थविशेषः कल्प्यत इत्यर्थः ॥ २६ ॥

——————

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यमहङ्कारं साक्षादनन्तं प्रचक्षते उपास्यतदधिष्ठानयोस्तादात्म्यापत्तिं दृष्ट्वा तत्तुल्यं वदन्तीत्यर्थः "साक्षात् प्रत्यक्षतुल्ययोः" इत्यमरः । अहङ्कारं विशिनष्टि । भूतेति । अनन्तं विशिनष्टि । सहस्रशिरसमित्यादिपदत्रयेण तत्र सङ्कर्षणाख्यं पुरुषं प्रथमं पुरुषमित्यर्थः ॥ २५ ॥

कर्तृत्वं हेतुकर्तृत्वम् ॥ २६-२७ ॥

——————

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

आधिदैविकं लक्षयति । सहस्रशिरसमिति । यथा पूर्वं वासुदेवः तथात्र सङ्कर्षणः स्वभावतोऽयं तामसः प्रलयकर्ता च अहङ्कारेणोत्पादितं नाशकमेव तस्य नैकधोत्पत्तिज्ञापनार्थं देवतायामनन्तशिरांसि निरूप्यन्ते । सहस्रशिरसमिति । सुखभेदा वा सहस्रसंमितः स्वर्गो लोक" इति श्रुतेः अत एवाहंकारेण

वैकारिकाद्विकुर्वाणान्मनस्तत्त्वमजायत ।
यत्सङ्कल्पविकल्पाभ्यां वर्त्तते कामसम्भवः ॥ २७ ॥
यद्विदुर्ह्यनिरुद्धाख्यं हृषीकाणामधीश्वरम् ।
शारदेन्दीवरश्यामं संराध्यं योगिभिः शनैः ॥ २८ ॥
तैजसात्तु विकुर्वाणाद्बुद्धितत्त्वमभूत्सति ! ।
द्रव्यस्फुरणविज्ञानमिन्द्रियाणामनुग्रहः ॥ २९ ॥
संशयोऽथ विपर्यासो निश्चयः स्मृतिरेवच ।
स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तितः पृथक् ॥ ३० ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

कालनिरूपितकर्माणि सफलान्यनन्तानि अनन्तशब्दः काले सङ्कर्षणे शेषे च प्रवर्त्तते । प्रचक्षत इति प्रमाणं सात्वता यं सङ्कर्षणाख्यं प्रचक्षत इति सम्बन्धः सा काचिदन्या देवता भविष्यतीत्याशङ्क्याह । पुरुषमिति । पुरुष एव सङ्कर्षणः न मूलभूतः कालः तस्य त्रिविधाहङ्काराधिष्ठातृत्वाय रूपत्रयमाह । भूतेन्द्रियमनोमयमिति । तत्र विद्यमानानिभूतेन्द्रियमनांसि कार्ये आविर्भवन्ति मयट्प्रत्ययः प्रत्येकमभिसम्बध्यते प्राचुर्येचायम् ॥ २५ ॥

आधिभौतिकं लक्षयति । कर्त्तृत्वमिति । कर्त्तृत्वं प्राणिषु विद्यमानाहङ्कारस्य सात्त्विकस्य लक्षणं करणत्वं राजसस्य कार्यत्वं तामसस्य एतद्धर्मपुरःसरं लक्षणं धर्मिपुरःसरमाह । शान्तघोरविमूढत्वमिति । शान्तत्वं सात्त्विकस्य स्वरूपलक्षणम् अत एवाहङ्कारेण शान्तिरप्रयोजिका घोरत्वं राजसस्य विमूढत्वं तामसस्य निरहङ्कारस्य नैते भावा उत्पद्यन्ते अत एव भगवत्परः त्रितयविलक्षणो भवति वेति विकल्पार्थः अहङ्कृतेरहङ्कारस्य भौतिकस्य दुर्बलत्वात् स्त्रीत्वम् ॥ २६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तत्रोपास्यदेवतामाह । सहस्रेति । यमिति मञ्चाः क्रोशन्तीति न्यायेन यत्स्थमित्यर्थः ॥ २५ ॥

कर्त्तृत्वं देवतारूपेण करणत्वमिन्द्रियरूपेण कार्यत्वं भूतरूपेण शान्तत्वादिकं त्रिगुणमयत्वेन ॥ २६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मनसि वैकारिकाहङ्कारकार्य्ये अनिरुद्धाख्यो व्यूह उपास्यः मनोवृत्तिभेदेऽहङ्काराख्येऽन्तःकरणे सङ्कर्षण उपास्यः तस्यानिरुद्धात् श्रैष्ठ्यं दर्शयितुं समष्ट्यहङ्कारात्मनोपास्यत्वं दर्शयति । सहस्रशिरसमिति । यमहङ्कारं साक्षादनन्तं शेषाख्यानन्तस्यांशिनं प्रचक्षते अनन्तोपासनस्थानं प्रचक्षते इत्यर्थः ॥ २५ ॥

कर्तृत्वं मनोरूपेण कर्माणि जीवो मनसा करोति अतो जीवद्वारा करणे मनस्यपि कर्तृत्वोपचारः कर्ता तु जीव एव । कर्ता शास्त्रार्थवत्त्वात् ।२।३।३३। इति न्यायात् करणत्वमिन्द्रियरूपेण कार्यत्वं भूतरूपेण अहङ्करणस्य लक्षणं शान्तत्वादि तु वैकारिकत्वादिना ॥ २६ ॥



भाषाटीका ।

सात्त्विक अहंकार से दिग् आदि देवता भये राजसअहंकारसे बुद्धि भई तामस अहंकार से शब्दादि तन्मात्रा भये इसप्रकार से अहंकार तीन प्रकारका है ॥ ० ॥

जो हजारमस्तक वाले हैं जिनको साक्षात् अनन्तकहते हैं वेही भूतेन्द्रिय मन रूप जो हैं सोई सङ्कर्षण भगवान् हैं ॥ २५ ॥

देवतारूपसे कर्ता इन्द्रियरूपसे करण भूतादिरूपसे कार्य एतीन अहङ्कारके लक्षण हैं अथवा शान्त सात्त्विक घोर राजस मूढता मस ए तीन लक्षण हैं ॥ २६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

मनस उत्पत्तिपूर्वकं लक्षणमाह । वैकारिकादिति द्वाभ्याम् । सङ्कल्पश्चिन्तनम् । विकल्पो विशेषचिन्तनम् । यस्य मनसः सङ्कल्पविकल्पाभ्यां कामसम्भवो वर्तत इति कामरूपा वृत्तिर्लक्षणत्वेनोक्ता नतु प्रद्युम्नव्यूहोत्पत्तिः तस्य सङ्कल्पादिकार्यत्वाभावात् उपास्यव्यूहस्य चानिरुद्धस्योक्तेः ॥ २७ ॥

शारदं शरत्कालीनमिन्दीवरं नीलोत्पलं तदिव श्यामं यच्छनैः संराध्यं वशीकर्तुं योग्यं दुर्ग्रहत्वात् ॥ २८ ॥

बुद्धेरुत्पत्तिपूर्वकं लक्षणमाह । तैजसादिति द्वाभ्याम् । हे सति ! द्रव्यस्फुरणरूपं विज्ञानमिति चित्तव्यावृत्त्यर्थमुक्तम् । इन्द्रियाणामनुग्रह इति सविकल्पज्ञाने हृषीकाणामधीश्वरमिति यदुक्तं तत्तु निर्विकल्पज्ञाने ॥ २९ ॥

द्रव्यस्फुरणस्यैव प्रपञ्चः संशयादिः विपर्यासो मिथ्याज्ञानम् । निश्चयः प्रमाणज्ञानम् स्वापो निद्रा । प्रमाणविपर्ययविकल्पनिद्रास्मृतयः । १ । १ । ६ । इतिपातञ्जलोक्तेः ॥ ३० ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

सङ्कल्पविकल्पाभ्यां हेतुभूताभ्यां कामस्य मनोरथरूपकार्यस्य सम्भव उत्पत्तिर्भवति कामरूपा । मनोरथरूपा वृत्तिः परिणामविशेषः लक्षणत्वेन । असाधारणधर्मत्वेन तस्य । प्रद्युम्नव्यूहस्य सङ्कल्पविकल्पजन्यत्वाभावात् मनसि चोपास्यमूर्त्तेरनिरुद्धस्याग्रिमश्लोके उक्तेः । कथनात् ॥ २७ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

अधिष्ठानोपास्ययोरभेदविवक्षया यदेव मनः अनिरुद्धाख्यं मुनयो विदुः दुर्ग्रहत्वाद्वशीकर्त्तुमशक्यत्वात् ॥ २८ ॥

तैजसादिति युग्मकम् । तैजसाद्राजसाहङ्कारात् द्रव्यस्य घटादेः स्फुरणरूपं विज्ञानं वक्ष्यमाणसंशयादिरूपं यस्य बुद्धितत्त्वस्य धर्मः चित्तस्यानुसन्धानमात्रं धर्मस्तस्माद्व्यावर्त्तनार्थमिदं लक्षणमुक्तम् सविकल्पकज्ञाने । नामजातिगुणक्रियालक्षणचतुर्विधविशेषणावगाहिनि ज्ञाने इन्द्रियाणामनुग्रहो वृत्तितः कार्यद्वारा बुद्धेर्लक्षणा भवति निर्विकल्पके ज्ञाने नामजात्यादियोजनाशून्ये निष्प्रकारके ज्ञाने मनसोऽनुग्रह इति न लक्षणसाङ्कर्यमित्यर्थः यथाहुरभिज्ञाः

अस्ति ह्यालोचितं ज्ञानं प्रथमं निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥
ततः परं पुनर्वस्तुधर्मैर्जात्यादिभिर्यथा ।
बुद्ध्यावसीयते सापि प्रत्यक्षत्वेन सम्मता इति ॥ २९ ॥

प्रमाणेति । योगशास्त्रप्रथमपादगतं षष्ठं सूत्रम् प्रत्यक्षानुमानागमाः प्रमाणानि । मिथ्याज्ञानं विपर्ययः । संशयोऽप्यतद्रूपप्रतिष्ठत्वान्मिथ्याज्ञानमेव वस्तुनि भेदाभावेऽपि देवदत्तस्य कम्बलमिति वत्पुरुषस्य चैतन्यमितिशब्दजनिते षष्ठ्यर्थज्ञाने योऽध्यवसितोऽभेदस्स विकल्पः । अभावप्रत्ययालम्बना वृत्तिर्निद्रा । इति सौत्रलक्षणम् । एवमनुभूतविषयासंप्रमोषः स्मृतिः इत्यपि तथा सूत्रम् असम्प्रमोषः बुद्धावारोहः बुद्धौ प्रद्युम्न उपास्यो ज्ञेयस्तदकथनं तु उपासनायामनिरुद्धाभेदविवक्षयेति ज्ञेयम् ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ मनस उत्पत्तिपूर्वकं तल्लक्षणमधिष्ठातारञ्चाह । वैकारिकादिति । विकुर्वाणाद्वैकारिकात्सात्विकाहङ्कारान्मनस्तत्त्वमजायत यन्मनः संकल्पविकल्पाभ्यां वर्त्तते संकल्पः समित्येकीकारे देहादिभिरात्मनोऽपृथक्त्वेन चिन्तनं विकल्पो विविधविषयचिन्तनं यदान्तःकरणे तैजसाहङ्कारानुग्रहात्संकल्पविकल्पौ भवतः तदा तदेवान्तःकरणं मन इति जानीयादित्यर्थः तस्य प्रद्युम्नाधिष्ठितत्वमाह । कामसंभव इति । वैकारिक इति शेषः कामः प्रद्युम्नः तस्य संभवः सम्यग् भवतीति सम्भवस्तस्य विभूतिरित्यर्थः अयमधिष्ठाता प्रद्युम्नो मनःकारणस्य वैकारिकाहङ्कारस्य नतु मनसः "मनसश्चन्द्रमा जात" इति तदधिष्ठातुर्वक्ष्यमाणत्वात् अस्य मनसोऽनुग्राहकस्तु तैजसोऽहङ्कारः ।

लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।
रजस्येतानि जायन्त इति ॥

स्पृहादीनां रजःकार्यत्वावगमात् तस्य प्रवर्तनात्मकक्रियाशक्तियुक्तत्वाच्च एवं तामसाहङ्कारकार्यस्याकाशादेरपि स्वस्वकार्यजनने तैजसोऽहङ्कारोऽनुग्राहको वेदितव्यः एवं सामान्येनोक्तमहङ्काराधिष्ठातृत्वं संकर्षणस्य तत्तामसाहङ्काराधिष्ठातृत्वमेवेति विशेषे पर्यवसन्नं बोध्यम् ॥ २७ ॥

अस्य तैजसाहङ्कारस्याधिष्ठातारं वदन्कोऽसाविन्द्रियेषु तत्कृतोऽनुग्रह इत्यपेक्षायां ज्ञानस्वरूपमात्रजननसामर्थ्यादिरेव सर्वेन्द्रियेष्वनुग्रहत्वं वृत्तिभिर्लक्ष्यत इत्याह । यमितित्रिभिः हृषीकाणामिन्द्रियाणामधीश्वरमधिष्ठातारमनिरुद्धाधिष्ठेयतैजसाहङ्कारानुग्राह्यत्वादिन्द्रियाणामप्यनिरुद्धाधिष्ठितत्वमुक्तं शरत्कालीनेन्दीवरवच्छ्यामम्राधाभिः शनैः सम्यगाराधनीयमनिरुद्धाख्यव्यूहं यं तैजसाहङ्कारं विदुः अनिरुद्धाधिष्ठितं तैजसाहङ्कारं विदुरित्यर्थः ॥ २८ ॥

तस्मात्तैजसाद्विक्रियमाणात् हे सति ! इन्द्रियाणामनुग्रहरूपं बुद्धितत्त्वं बुध्यतेऽनेनेति बुद्धिः ज्ञानस्वरूपजननसामर्थ्यमभूत् कथं बुद्धितत्त्वस्येन्द्रियानुग्रहत्वमवगम्यते इत्याशङ्कायां स्ववृत्तिभिरित्याह । द्रव्येति । द्रव्यस्फुरणविज्ञानादयो बुद्धितत्त्वस्य वृत्तयः तत्र द्रव्यस्फुरणविज्ञानं द्रव्यमात्रावभासरूपं ज्ञानं व्यावर्तकाकारज्ञानाभावात् । संशय इति । शंसयो विकल्पज्ञानं विपर्यासशब्देनान्यथाज्ञानविपरीतज्ञाने विवक्षिते तत्र धर्मान्तरस्य धर्म्यन्तरे प्रतीतिरन्यथाज्ञानं यथा पीतः शङ्ख इति धर्म्यन्तरस्य धर्म्यन्तरत्वेन प्रतीतिर्विपरीतज्ञानं यथेदं रजतमिति । शुक्तिशकले निश्चयः प्रमाणरूपं स्मृतिरनुभूतवस्तुविशयं ज्ञानं स्वापो निद्रा संशयादिस्वापान्ताभिः पृथगसङ्करेण वृत्तितः वृत्तिभिर्बुद्धेर्बुद्धितत्त्वस्य लक्षणमिन्द्रियानुग्रहत्वरूपलक्षणमुच्यते यदेन्द्रियाणां द्रव्यस्फुरणविज्ञानादिजनकत्वं तदा तानीन्द्रियाणि बुद्धितत्त्वानुगृहीतानीत्युच्यन्ते इत्यर्थः यद्वा इन्द्रियाणामिति कर्तरि षष्ठी इन्द्रियाणां कार्यभूतं द्रव्यस्फुरणविज्ञानं द्रव्यस्फुरणमर्थेन्द्रियं सम्बन्धस्फुरणं तज्जन्यविज्ञानशब्दवाच्यं बुद्धितत्त्वं तैजसाहङ्कारादभूत्तदनुग्राह्येन्द्रियकार्यत्वादित्यर्थः संशयादयो ज्ञानविशेषाइत्याह । संशय इति । बुद्धेर्लक्षणं बुद्धेः प्रकारःवृत्तितः सदोषनिर्दोषेन्द्रियवृत्तिभिरित्यर्थः ॥ २९–३० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वैकारिकाद्यहंकारेभ्यो मनआदीनामुक्तानामुत्पत्तिमधुना स्पष्टयति । वैकारिकादिति । तल्लक्षणमाह । यत्सङ्कल्पेति । यन्मनः सङ्कल्पविकल्पाभ्यां वृत्तिविशेषाभ्यां वर्तते देह इति शेषः लक्षणान्तरमप्याह । कामसम्भव इति । यदिति वर्तते यद्यस्मान्मनसः कामानां नानाविधानां सम्भवो जन्मेत्यनेन ज्ञातुं शक्यत इति ॥ २७ ॥

तस्याभिमानिनमाह । यद्विदुरिति । स्थूलान्तर्यामित्वेनावतीर्णात्प्रद्युम्नरूपादभिव्यक्तमनिरुद्धाख्यं यद्यस्य मनसोऽभिमानिनः कामपुत्रस्यानिरुद्धस्यान्तर्यामित्वेन प्रादुर्भूतं विदुर्ज्ञानिन इति शेषः मनसः सर्वेन्द्रियनेतृत्वात्तन्नियन्तृत्वोक्त्यास्य सर्वेन्द्रियनेतृत्वमपि सिद्धमित्याह । हृषीकाणामिति । तद्ध्यानार्थमाह । शारदेन्दीवरश्याममिति । शरत्कालीननीलोत्पलनीलम् अधिकारिणमाह । संराध्यमिति । शनैरव्यग्रमनसा सनकादियोगिभिः यद्वा यन्मनो निरोधरहितत्वेन प्रसिद्धमत एव सर्वेन्द्रियाणां नियन्तृत्वे समर्थं तद्वर्णमाह शारदेति । एवंविधं मनः कस्य वशे भवतीत्यत उक्तं संराध्यमिति योगिभिः पवनाभ्यासिभिः संराध्यं वशीकर्तुं शक्यमित्यर्थः ॥ २८ ॥

चक्षुरादीन्द्रियाणां काचकामलादिदोषाभावलक्षणानुग्राहद्रव्यस्फुरणे सति यद्विज्ञानं विशेषज्ञानं जायते तादृशं बुद्धितत्त्वमभूदित्यर्थः हेसति ! सामान्यमनसा ज्ञानं विशेषाद्बुद्धिजं भवेदिति वचनाज्ज्ञानस्य सामान्यविशेषलक्षणे विशेषणे स्त इति ॥ २९ ॥

तादृशबुद्धितत्त्वलक्षणमाह । संशय इति । न केवलमेकमेव लक्षणं किन्त्वन्यान्यपि लक्षणानि सन्तीति भावेनोक्तमर्थेति विप-

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यांसो मिथ्याज्ञानमिदमेव तत्त्वं नान्यदिति अतत्त्वे यत् ज्ञानं तन्मिथ्येति मनसोऽपि संशयोऽस्ति अतः कथं बुद्धेः संशयलक्षणमुच्यत इतिचेदुच्यते निश्चायकलक्षणादर्शनेन मनःसंशयो निवर्तते न बुद्धेः संशयः कदापीति तदुक्तम्

अचलः संशयो बुद्धेश्चलो मानस उच्यते ।
चञ्चला तु स्मृतिर्बुद्धेश्चित्तजैव स्थिरा स्मृतिः इति

येन धर्मेण यद्वस्तु ज्ञायते स धर्मस्तस्य लक्षणं यथा सास्नादिमत्त्वमिति

येन यज्ज्ञायते वस्तु तत्तल्लक्षणमुच्यते ।
तत्स्वरूपं पृथक् चेति द्विविधं कवयो विदुः ।

इति वचनादस्वरूपाणां संशयादीनां निवृत्तिर्युक्ता न स्वरूपाणामिति तात्पर्यमवगन्तव्यं स्वापोऽज्ञानम् ॥ ३० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यद्विदुरिति पूर्ववत् ॥ २८ ॥

तैजसादित्यादि युग्मकम् । चित्तस्य ग्रहणमात्रं बुद्धेस्तु द्रव्यस्फुरणरूपं विज्ञानं विज्ञानमात्रविचारः मनसस्तु चिन्तनमात्रं तदिदञ्च सविकल्पज्ञानानन्तरं तदिदमिति स्मृतिः ॥ २९ ॥

बुद्धेस्तु संशयादिज्ञानानन्तरं तत्तद्विशेषचिन्तनरूपतेति भेदः अत्र तु बुद्धावधिष्ठाता ब्रह्मा उपास्यः प्रद्युम्नो ज्ञेयः पूर्ववदुपासनार्थमभेद उक्तः ॥ ३० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

मनस उत्पत्तिमाह । वैकारिकादिति द्वयेन । अर्द्धेनोत्पत्तिः आध्यात्मिकलक्षणं चार्द्धेन चरणत्रयेणाधिदैविकलक्षणं चरणं चान्यत् वैकारिकात्सात्त्विकाद्विकुर्वाणात् कालकृतगुणक्षोभयुक्तात् भगवद्वीर्यसम्भवादिति सर्वत्रानुसन्धेयं सात्त्विकस्य विकारो न भविष्यतीत्याशङ्क्य पुनरुक्तं विकुर्वाणादिति मनसो दुष्टत्वमन्नमयत्वं वाशङ्क्य तन्निराकरणार्थं तत्त्वपदप्रयोगः "मनस्तत्त्वमजायत" इति तस्यापि आध्यात्मिकस्य कार्यस्वरूपलक्षणे आह । यत्सङ्कल्पविकल्पाभ्यामिति । सङ्कल्पविकल्परूपत्वं स्वरूपलक्षणं कामजनकत्वं कार्यलक्षणमिति ॥ २७ ॥

आधिदैविकं लक्षयति । यद्विदुरिति । अनिरुद्धः पालकः तस्य देवः यतः न केनापि निरुद्धः स एव पालको भवति यद्यस्मात् हृषीकाणामिन्द्रियाणामधीश्वरमनिरुद्धाख्यं विदुरिति सम्बन्धः इन्द्रियनियामकत्वं तस्य लक्षणं बलिष्ठत्वं प्रभुत्वं च तत्प्रतीकारकरणार्थमाधिदैविके लक्षणं तत्र प्रतीकारार्थं भगवदुपासनैव कर्त्तव्येति शारदेन्दीवरश्याममित्युक्तम् इन्दीवरं रात्रिविकासि शारत्वं सर्वदोषविवर्जितं श्यामश्च गुणः शृङ्गारात्मको भवति तेन स्नेहेन सर्वकालेषु सर्वदोषाभावेन भगवत्सेवायां मनोदोषा निवर्त्तन्त इत्युक्तं भौतिकं लक्षयति । योगिभिः शनैः संराध्यं वशीकरणयोग्यं मनः देवता न शनकैराराध्य दीर्घकालादरनैरन्तर्येण सर्वत्र भजनहेतुत्वेन निरूपणात् ॥ २८ ॥

बुद्धेरुत्पत्तिमाह । तैजसादिति । बुराद्धः सात्त्विकोत्पत्तिपक्षं व्यावर्त्तयति विकुर्वाणात्तैजसाद्बुद्धितत्त्वमभूत् सतीति सम्बोधनं तैजसत्वेऽपि सद्बुद्धिरेवोत्पद्यत इति निरूपणार्थं सति विपर्यये वा रसविषयिकैव बुद्धिरुत्पद्यत इति अत एवास्या आधिदैविकं रूपं न निरूप्यते आध्यात्मिकं लक्षयति । द्रव्यस्फुरणविज्ञानमिति । यथेन्द्रियप्रेरकत्वं मनसः तथेन्द्रियानुग्राहकत्वं बुद्धेः बुद्ध्यैवानुगृहीतानीन्द्रियाणि पश्यन्ति कुर्वन्ति च अत एव बुद्धितारतम्येन ऐन्द्रियज्ञानक्रिययोस्तारतम्यम् एतत्कार्यानुसारिलक्षणं द्रव्यस्फुरणविज्ञानमिति स्वरूपलक्षणं द्रव्यस्य घटादेः स्फुरणं सति शब्देन संस्कारेण आलोकेन वा यद्विशिष्टज्ञानं यस्मात्केवलं चक्षुषा ज्ञाने तारतम्यं न स्यात् स्वतः स्फुरणं योगजधर्मादिभिरपि भवति अतो द्रव्यस्फुरणमेव विज्ञानं बुद्धेर्लक्षणम् ॥ २९ ॥

आधिभौतिकं विभागनिरूपणेनैव लक्षयति । संशय इति । द्रव्यस्फुरणतारतम्यात् बुद्धिर्नानाविधा संस्कारतेजसोः तुल्यप्रकाशकत्वे विशेषास्फूर्तौ समः संशयः अल्पविशेषस्फूर्तौ उत्कटकोटिकः विपर्यासः संस्कारप्राबल्यतेजस्तदनुगुणमेव धर्मं प्रकाशयति अर्थस्यैकस्फुरणानियामकत्वाय विपर्यासो भिन्नार्थप्रतिपादकः क्रियाज्ञानयोश्च भिन्नविषयत्वम् अनेनान्यख्यातिरेव सिद्धान्त इत्युक्तम् अन्यथात्वे यथार्थत्वं स्यात् रजतमहं जानामीत्येवानुभवो न तु रजतत्वेन जानामीति बुद्धेस्तत्स्वरूपत्वान्नात्मख्यातिः संस्कारशब्दयोः पदार्थमात्रापेक्षित्वान्न देशकालादिवैशिष्ट्यं नियामकं रजतमनुभवामीत्यनुव्यवसायात् न प्रमुष्टतत्ता रूपा स्मृतिः एकज्ञानतुल्यत्वाच्च न ज्ञानद्वयं संस्कारप्राबल्यात् नानिर्वचनीयरजतापेक्षा अत एव नासत्ख्यातिः तस्मादन्यख्यातिरेव सर्वजनीना । निश्चयः । यथार्थानुभवः अर्थो हि ज्ञानस्याधर्मकं अत एव स्मृतिर्न निश्चयात्मिका अर्थाभावात् अनुमितिरपि सम्बन्धिव्यवधानेनार्थजनितैव सादृश्यं च रूपादिवत् पदार्थो धर्मरूपः निरूपकभेदसहिष्णुः तद्धर्मसजातीयो वा सलक्षणत्वेन ज्ञातो द्रव्यस्फुरणेन स्फुरितः संस्कारेण शब्दाभिव्यक्तौ वाक्यप्रामाण्यादध्यवसीयते गवयोऽयमिति चक्षुःसहकारित्वाद्वयं वाक्यसहकृतं सादृश्यं वा अनुग्राहकाणां न प्रमाणान्तरत्वं शब्दोऽपि निश्चय एव धर्मसादृश्यातिरिक्तसंस्कारजनकत्वात् शब्देन च द्रव्यस्फुरणात् चक्षुषोऽपेक्षाभावात् प्रमाणान्तरं तथा च त्रीण्येव प्रमाणानि इन्द्रियाणि शब्दो मनश्चेति चक्षुःश्रोत्रं मनो वा स्पर्शादीनामन्यशेषत्वं मनस्तु योगजधर्मसहितमेव प्रमाणमन्यत्रान्यप्रमाणमत एवस्मृतिरप्रमाणं सङ्घातात्मज्ञानं चाप्रमाणं विपर्ययरूपत्वात् स्मृतिः स्वतन्त्रा बुद्धिः संस्कारजनिका स्वापः स्वप्नरूपः भिन्नसृष्टिविषयत्वात् न पूर्वोक्तेष्वन्तर्भावः सुषुप्तिस्तु न बुद्धिः मौढ्यत्वेन परं बुद्ध्यवस्था आत्मनः स्फुरणं तु स्वतः स्वप्नभेद एव वा निद्रानिमित्तत्वात् एवं पञ्चधा बुद्धेर्वृत्तिः लक्षणं पृथक् ज्ञेयमित्यर्थः अनेन उभयमेकं ज्ञानमिति पक्षा निवारिताः अत इदमंशोऽपीदं रजतमिति ज्ञानप्रमाणं नहि ज्ञाने अंशोऽस्ति सोऽयं देवदत्त इत्यनुभव एव अभ्यासज्ञाने पूर्वज्ञानसंस्कारवत् पूर्वस्मृतिः चक्षुषः सहकारिणी भ्रमप्रमासमूहावलम्बनम् एकदेशविकृतमनन्यवद्भवतीतिन्यायेन भ्रमाधिक्ये विपर्यय एव प्रमाधिक्ये निश्चयः समानरूपत्वे तु सम्भावनावत् संशयः सम्भावनादीनां संशयान्तःपातित्वमप्रमाणमेव तत् सिद्धार्थवाक्ये तु प्रत्यक्षसहकारित्वात् प्रत्यक्षहेतुत्वमेव साध्यार्थे तु लौकिके वाक्यार्थो बुद्धिकल्पित इति प्रमाणाभावेनाप्रामाण्यमपि

तैजसानीन्द्रियाण्येव क्रियाज्ञानविभागशः ।
प्राणस्य हि क्रियाशक्तिर्बुद्धेर्विज्ञानशक्तिता ॥ ३१ ॥
तामसाच्च विकुर्वाणाद्भगवद्वीर्यचोदितात् ।
शब्दमात्रमभूत्तस्मान्नभः श्रोत्रं तु शब्दगम् ॥ ३२ ॥
अर्थाश्रयत्वं शब्दस्य द्रष्टुर्लिङ्गत्वमेव च ।
तन्मात्रत्वं च नभसो लक्षणं कवयो विदुः ॥ ३३ ॥
भूतानां छिद्रदातृत्वं बहिरन्तरमेवच ।
प्राणेन्द्रियात्मधिष्ण्यत्वं नभसो वृत्तिलक्षणम् ॥ ३४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रमेयबलात्प्रमाणमेव लोके वाक्यार्थो नापूर्वः वक्तृज्ञानविषयविषयित्वात् तद्बोधनसमर्थपदसमूहस्यैव प्रयोगात् पदेभ्यः पदसमूहो भिन्नः स एव वाक्यार्थे करणमन्यथा पदे वृत्तिद्वयमापद्येत पदार्थकरणपक्षे तु वाक्यार्थः शब्दो न स्यात् सम्भावितं सर्वमेवाप्रमाणमित्यग्रे वक्ष्यते ॥ ३० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यद्यतो मनसः सङ्कल्पः सामान्यतो विषयजिघृक्षा सामान्यविषयस्यैव विविधसङ्कल्पनेन विशेषतो जिघृक्षा विकल्पश्च ताभ्यां कामस्य मनोरथस्य सम्भवो भवति ॥ २७ ॥

यत् यत्स्थम् ॥ २८ ॥

द्रव्यस्फुरणरूपं विज्ञानमिति चित्तव्यावृत्त्यर्थं चेतनारूपं विज्ञानन्तु चित्तधर्मो ज्ञेयः । इन्द्रियाणामनुग्रह इति बुद्ध्या विना पञ्चेन्द्रियाणि न प्रवर्त्तितुं शक्नुवन्तीत्यर्थः । यद्यपि चित्ताहङ्कारमनांस्यपीन्द्रियानुग्राहकाणि तदपि बुद्ध्या तदनुग्रहविशेषो ज्ञेयः तथाहि शब्दं शृणोमीत्यत्र प्रथमं चित्तेन चेतनामात्रं निधीयते बुद्ध्या शब्दोऽयमिति स्फूर्त्तिः मनसा शब्दे जिघृक्षा अहङ्कारेण तत्र स्वाभिमानार्पणमिति भेदः द्रव्यस्फुरणस्यैव प्रपञ्चः संशयादिः । विपर्य्यासो मिथ्याज्ञानं निश्चयः प्रमाणज्ञानं स्वापो निद्रा "प्रमाणविपर्य्ययविकल्पनिद्रास्मृतय"इतिपातञ्जलोक्तेः ॥ २९- ३० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ तृतीयं चतुर्थं चाह । वैकारिकादिति चतुर्भिः । यत् यतः कामस्य सम्भवः अत एवमनोभव इति कामस्य संज्ञा ॥ २७ ॥

हृषीकाणामिन्द्रियाणामधीश्वरं यन्मनस्तदेवानिरुद्धोपासनस्थानम् ॥ २८ ॥

तैजसादिति । तैजसशब्दोऽत्र तैजसाहङ्कारवाचको नास्ति ततो बुद्ध्युत्पत्तेरसंभवात् सर्वस्यैकस्यैवान्तःकरणस्य वृत्तितः बुद्ध्यादिरूपत्वात् मनोबुद्धिरूपत्वात् "मनोबुद्धिरहङ्कारश्चित्तमित्यन्तरात्मकम् । चतुर्धा लक्ष्यते भेदो वृत्त्या लक्षणरूपया"इत्युक्तिविरोधाच्च अहङ्कारस्य अन्तःकरणभेदस्य पृथगुत्पत्त्यनुक्तेश्च चित्तस्याप्युक्तप्रयोजनार्थं महदात्मकत्वमुक्तं नतु पृथगुत्पत्तिरुक्ता ततस्तत्पृथगुक्त्यभावात् एवं सति तैजसाद्बुद्ध्याख्यान्तःकरणभेदजनकाद्रजोगुणयुक्ताद्वैकारिकांशादित्यर्थः ननु "वैकारिकान्मनो जज्ञे" इत्यनेनैव सर्वेषामन्तःकरणानां सङ्ग्रहाद्बुद्धितत्त्वमभूदित्युक्तिर्निरर्थिका स्यादिति चेन्न तस्याः मनोबुद्ध्यादिगुणतारतम्यसूचनार्थत्वात् हे सति ! यत इति शेषः यतो बुद्धितत्त्वात् इन्द्रियाणामनुग्रहः अनुग्रहमेवाह । द्रव्यादीनां श्रोतव्यादीनां स्फुरणरूपं विज्ञानमिति ॥ २९ ॥ ३० ॥

---

भाषाटीका ।

विकारको प्राप्तभये सात्त्विक अहङ्कारसे मन तत्त्व भया जिसमनके सङ्कल्पवृत्तिसे कामकी उत्पत्ति होती है ॥ २७ ॥

जिसमनमें सम्पूर्ण इन्द्रियों के ईश्वरशरत्कालके चंद्रमा सरीके श्याम योगियों के आराधनकरनेके योग्य अनिरुद्ध भगवान् हैं ॥ २८ ॥

हे सति ! विकृत राजसअहङ्कार से बुद्धितत्त्व हुआ द्रव्यों का प्रकाशज्ञानेन्द्रियों की सहायता ही बुद्धिका लक्षण है ॥ २९ ॥

संशय विपर्यय निश्चय स्मरण स्वाप ये चारलक्षण वृत्तियांसे बुद्धिके भिन्न भिन्न हैं ॥ ३० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

इन्द्रियाणामुत्पत्तिमाह । तैजसानि । तैजसाहङ्काराज्जातानि ज्ञानेन्द्रियाणां वैकारिकत्वशङ्कानिवृत्त्यर्थमेवकारः द्विविधान्यपीन्द्रियाणि तैजसान्येवेत्यन्वयः तत्र हेतुः । प्राणस्येति । हि यस्मात्प्राणस्य क्रियाशक्तिर्बुद्धेश्च विज्ञानशक्तिता अतः प्राणस्य तैजसत्वात्तत्क्रियाशक्तिमतामिन्द्रियाणां तैजसत्वम् । तथा बुद्धेस्तैजसत्वात्तदीयज्ञानशक्तिमतामपीन्द्रियाणां तैजसत्वमित्यर्थः ॥ ३१ ॥

तन्मात्रोत्पत्तिपूर्वकमाकाशादिमहाभूतोत्पत्तिं तल्लक्षणं चाऽऽह । तामसादिति पञ्चदशभिः । श्रोत्रं तु शब्दगमित्यादिभिर्विषयोत्पत्त्यनन्तरं तत्सम्बन्धमात्रं कथ्यते नतूत्पत्तिः प्रागेवोत्पन्नत्वात् शब्दं गच्छति प्राप्नोतीति शब्दगम् ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

शब्दस्य लक्षणमाह । अर्थाश्रयत्वमर्थवाचकत्वं द्रष्टुर्लिङ्गत्वं कुड्यान्तरितस्य वक्तुर्ज्ञापकत्वम् । तदुक्तम् लिङ्गं यद्द्रष्टृदृश्ययोरिति । नभसस्तन्मात्रत्वं सूक्ष्मत्वं शब्दस्य लक्षणमित्यन्वयः ॥ ३३ ॥

नभसो लक्षणमाह । भूतानामिति । छिद्रदातृत्वमवकाशदातृत्वम् बाहिरन्तर्व्यवहारास्पदत्वम् आत्मा मनः प्राणादीनां धिष्ण्यत्वमाश्रयत्वं नाड्यादिच्छिद्ररूपेण वृत्तिः कार्यमेव लक्षणं वृत्तिलक्षणम् एवमुत्तरत्राप्येकेन श्लोकेन तन्मात्रमहाभूतयोरुत्पत्तिः द्वितीयेन तन्मात्रलक्षणम् । तृतीयेन महाभूतलक्षणमित्यनुसन्धेयम् ॥ ३४ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

वैकारिकत्वशङ्केति। यद्यपि सांख्यनये ज्ञानेन्द्रियाणां वैकारिकत्वमेव तथापि सविकल्पकज्ञानत्वेन रजःप्रचुरत्वात् तैजसत्वमेवेति भगवतो मतमित्यर्थः तत्र । तैजसत्वे ॥ ३१ ॥

भगवद्वीर्य्यम् । कालरूपस्तत्प्रभावः शब्दतन्मात्रं शब्दलक्षणं तन्मात्रं श्रोत्रं च शब्दगमित्यनेन शब्दस्य सामान्यतटस्थलक्षणं श्रोत्रग्राह्यत्वं शब्दत्वमिति ॥ ३२ ॥

अर्थवाचकत्वन्तु वर्णात्मकस्यैव नतु भेर्य्यादिध्वन्यात्मकस्य नभसः सूक्ष्मरूपत्वं तु स्वरूपलक्षणं परन्त्वभेदविवक्षयेति गम्यम् शब्दादयो द्विविधाः सूक्ष्मास्तन्मात्राशब्दवाच्या भूतानां कारणरूपाः स्थूलास्तु इन्द्रियाणां विषयरूपास्तेषामेवार्थाश्रयत्वादिलक्षणानीत्यपि परत्र गम्यम् ॥ ३३ ॥

नाड्यादीत्यादिना मुखनासिकानाभ्यादिपरिग्रहः ॥ ३४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उभयेन्द्रियाणामुत्पत्तिं तेषां लक्षणं चाह । तैजसानीति । क्रियाज्ञानविभागशः ज्ञानेन्द्रियकर्मेन्द्रियविभागेनोभयविधानीन्द्रियाणि तैजसान्येव एवकारोऽहङ्कारान्तरकार्यत्वव्युदासार्थः ननु पूर्वमिन्द्रियाणामनुग्रह इति तैजसाहङ्कारस्येन्द्रियानुग्राहकत्वमुक्तम् अत्र त्विन्द्रियाणां तत्कार्यत्वमेवोच्यत इति विरोधः मैवं पूर्वत्र कोऽसाविन्द्रियेषु तैजसकृतोऽनुग्रह इत्यपेक्षायां द्रव्यस्फुरणविज्ञानरूपोऽनुग्रह इत्युक्तं न च तत्रान्तःकरणभेदस्य बुद्धितत्त्वस्यैवोत्पत्तिरुच्यत इति वक्तुं शक्यं महत्तत्त्वानुगृहीतान्तःकरणाध्यवसायात्मकवृत्तिविशेषस्यैव बुद्धित्वात् "वैकारिकाद्विकुर्वाणान्मनस्तत्त्वमजायत" इति मनस उत्पत्तिकथनेनैव सिद्धत्वात्पृथग्बुद्ध्युत्पत्तिकथनस्यानपेक्षितत्वादन्यथा चित्ताहङ्कारयोरपि पृथगुत्पत्तिकथनापत्तेश्च न च तत्र निश्चयः स्मृतिरेव चेति बुद्धेर्वृत्तिविशेषस्य निश्चयस्य कथनादध्यवसायात्मिका बुद्धिरेव बुद्धितत्त्वमभूत् सतीत्युच्यत इति चेन्न अध्यवसायात्मकान्तःकरणवृत्तिविशेषाया बुद्धेः पुनर्वृत्त्यन्तरानुपपत्तेः अन्यथा तस्या अपि पुनर्वृत्त्यन्तरं स्यादित्यनवस्थाप्रसङ्गस्तस्माद्बुद्धितत्त्वमभूदित्यनेन ज्ञानस्वरूपमात्रजननसामर्थ्यमभूत् निश्चयः प्रमात्मकं ज्ञानमिति यथोक्त एवार्थः साधुस्तस्मात्पूर्वत्र बुद्धितत्त्वरूप एवेन्द्रियेषु तैजसकृतोऽनुग्रह इति दर्शितम् अत्र तु सर्वेन्द्रियाणामिन्द्रियकारणस्य वैकारिकस्य च तैजसानुग्राह्यत्वमेव नत्वहङ्कारान्तरानुग्राह्यत्वमित्युच्यते अत एवोत्पत्तिवाचकशब्दोऽत्र न प्रयुक्तः युक्तं चैतत् नहि तैजसस्य प्रवर्तनात्मकक्रियाशक्तियुक्तस्यानुग्राहकत्वमन्तरेण पृथक्कार्यजननसामर्थ्यमस्ति नचैवं बुद्धितत्त्वस्यापि तैजसादुत्पत्तिरनुपपन्ना कथमुक्तेति वाच्यं तस्य तैजसकृतानुग्रहप्रकारप्रदर्शनमात्रपरत्वात् तस्मात्तैजसानीन्द्रियाण्येवेत्यस्यायमर्थः तैजसाहङ्कारानुगृहीतवैकारिकाहङ्कारकार्याण्येवोभयविधानीतीन्द्रियाणां तजसानुगृहीतवैकारिकादेवोत्पत्तिर्हि द्वितीयस्कन्धेऽभिहिता एतदेव सहेतुकमुपपादयति । प्राणस्य हीति । हि यस्मात्प्राणस्य कर्मेन्द्रियगणस्य "प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इति सर्वेन्द्रियाणां प्राणशब्दाभिधेयत्वेऽपि बुद्धेरिति ज्ञानेन्द्रियगणस्य पृथगुपादानात् गोबलीवर्दन्यायेनात्र कर्मेन्द्रियवर्गपरः प्राणशब्दः तस्य कर्मेन्द्रियगणस्य क्रिया गमनादिक्रियारूपा शक्तिर्दृश्यते यतश्च बुद्धेर्बुध्यतेऽनेनेति बुद्धिर्ज्ञानेन्द्रियवर्गः तस्य विज्ञानमत्र प्रकाशनं प्रकाशनरूपशक्तिता दृश्यते ततस्तैजसाहङ्कारानुगृहीतसात्त्विकाहङ्कारकार्याण्येवोभयेन्द्रियाणि इत्यर्थः बुद्धेर्विज्ञानशक्तितेत्यनेनात्रापि ज्ञानेन्द्रियगणस्य वैकारिकत्वं स्पष्टमेवोक्तं "तत्र सत्त्वं निर्मलत्वात् प्रकाशकम्" इति सत्त्वस्यैव प्रकाशकत्वात् ननूभयेन्द्रियाणामपि तैजसानुगृहीतवैकारिकत्वे उभयेषामपीन्द्रियाणां ज्ञानक्रियाशक्तिद्वयवत्त्वमेव स्यात्तत्तु न दृष्टमिति चेन्न सत्त्वरजसोरुद्भवाभिभवयोगेन ज्ञानेन्द्रियोत्पादनवेलायां वैकारिके सत्त्वस्योद्भवः रजसोऽभिभवः कर्मेन्द्रियोत्पत्तिवेलायां तु रजस उद्भवः सत्त्वस्याभिभव इत्याशयात् ॥ ३१ ॥

अथ तन्मात्रोत्पत्तिपूर्वकमाकाशादिमहाभूतोत्पत्तिं तयोः कार्यापरपर्यायं लक्षणं चाह । तामसादिति पञ्चदशभिः । भगवद्वीर्यचोदिताद्भगवत्सङ्कल्पप्रेरितादत एव विकुर्वाणात्तामसादहङ्कारात् शब्दतन्मात्रद्रव्यमभूदुदभूत् तस्माच्छब्दमात्रान्नभः उदभूत् स शब्दः केन गृह्यते इत्यत्राह । श्रोत्रमिति । श्रोत्रं तु शब्दगमित्यादिना श्रोत्रादीनां नभआदिभ्यो नोत्पत्तिरुच्यते श्रोत्रादीनां तैजसानुगृहीतवैकारिकादुत्पत्तेरुक्तत्वात् किं तु शब्दादिरूपविषयोत्पत्त्यनन्तरं श्रोत्रादीनां तत्सम्बन्धमात्रमुच्यते श्रोत्रं श्रोत्रेन्द्रियं शब्दगं शब्दतन्मात्रज्ञापकमित्यर्थः ॥ ३२ ॥

किं तच्छब्दतन्मात्रं कीदृशं तन्नभ इत्यपेक्षायां तयोः कार्यमुखेन स्वरूपं शोधयति द्वाभ्याम् । अर्थाश्रयत्वम् अर्थवाचकत्वं द्रष्टृलिङ्गत्वं तस्य भावस्तत्त्वं द्रष्टुः सर्वज्ञस्य परमात्मनः लिङ्गत्वं प्रमाणभूतत्वं भगवतः शास्त्रयोनित्वात् द्रष्टुः घटपटाद्यर्थद्रष्टुः लिङ्ग्यते प्रतीयते इति द्रष्टृलिङ्गं तस्य भावस्तत्त्वमिति वा घटपटाद्यर्थद्रष्टुर्हि तद्वाचकः शब्दः प्रतीयते यद्यपि शब्दश्रवणादप्यर्थः प्रतीयते तथापि तदपि शब्दस्य लक्षणमेव तदेव हि अर्थाश्रयत्वमित्युक्तम् अर्थाश्रयत्वं नाम श्रोतुरर्थप्रत्यायकत्वमेव वक्तुर्द्रष्टृत्वेनानुमापकत्वं वा अर्थं दृष्ट्वा हि वक्ताभिवदति कुड्याद्यन्तरितस्यापि वक्तुर्ज्ञापकत्वं वा नभसस्तन्मात्रमाकाशस्यासाधारणगुणत्वं सूक्ष्मत्वं वा शब्दस्य लक्षणं कार्यं कवयो विदुः ॥ ३३ ॥

नभसो लक्षणमाह । भूतानामिति । भूतानां ब्रह्मादिस्तम्बपर्यन्तभूतानां छिद्रदातृत्वमवकाशदातृत्वं बहिरन्तर्व्यवहारास्पदत्वं प्राणानामिन्द्रियाणामात्मनश्च धिष्ण्यत्वं स्थानत्वं नाड्यादिच्छिद्ररूपेण नभस आकाशस्य वृत्तिलक्षणं वृत्तिः छिद्रदातृत्वादि कार्यमेव लक्षणमेवमुत्तरत्राप्येकेन श्लोकेन तन्मात्रमहाभूतयोरुत्पत्तिः द्वितीयेन तन्मात्र लक्षणं तृतीयेन महाभूतलक्षणमित्यनुसन्धेयम् ॥ ३४ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इन्द्रियाणि तैजसानि तैजसाहङ्कारादुत्पन्नान्येव तद्विवेकमाह । क्रियाज्ञानेति । क्रियाज्ञानविभागेन कर्मेन्द्रियज्ञानेन्द्रियसंज्ञाभेदेन तदभिमानिविशेषं वक्ति । प्राणस्य हीति । प्राणस्याहङ्कारिकस्य क्रियाशक्तिः कर्मेन्द्रियप्रेरकत्वशक्तिः बुद्धेरुमाया विज्ञानशक्तिता श्रोत्रादीन्द्रियैर्विज्ञानजनकत्वशक्तिः ॥ ३१ ॥

शब्दमात्रं शब्दाख्यो गुणस्तस्माच्छब्दाख्यगुणान्नभः उत्पन्नं शब्दं गमयति ज्ञापयतीति शब्दगं श्रोत्रेन्द्रियमुत्पन्नमिति शेषः ॥ ३२ ॥

शब्दतन्मात्रालक्षणमाह । अर्थाश्रयत्वमिति । अर्थाश्रयत्वमर्थविषयत्वमभिधेयैकानिष्ठत्वमित्यर्थः द्रष्टुः सर्वज्ञस्य लिङ्गत्वं ज्ञापकत्वं नभस आकाशस्य तन्मात्रत्वं स्पर्शाद्यभावात्तदेकनिष्ठत्वं शब्दस्य लक्षणं कवयो विदुरित्यन्वयः तदुक्तम्

शब्देनैव यतो ज्ञेयो हरिर्लिङ्गं तु तस्य तत् ।
स्पर्शाद्यभावात्तन्मात्रा नभसश्चेति कीर्त्यते ॥
स्पर्शादयश्च तन्मात्रा इतरे पूर्वसंस्थिते ।
तिष्ठत्येको गुणो भूते प्रत्येकं पञ्चसु स्थितः ॥
शब्दो वर्णात्मको नित्यो ध्वनिराकाशसम्भवः ।
आकाश एव सूक्ष्मस्तु ध्वनिरित्येव शब्द्यते ॥
स एव व्यज्यमानस्तु भवेत्कर्णैकगोचर इति ॥ ३३ ॥

आकाशलक्षणं वक्ति । भूतानामिति । भूतानां जीवानां छिद्रदातृत्वं गमनाद्यर्थमवकाशदातृत्वं वहिरन्तर्दिगादिरूपत्वमेकं प्राणापानादीनामिन्द्रियाणामात्मनां जीवानां धिष्ण्यत्वमावासस्थानत्वं च नभसो वृत्तिलक्षणं स्वभावलक्षणं कवयो विदुरिति शेषः ॥ ३४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ज्ञानेन्द्रियाणामपि तैजसत्वं सविकल्पकज्ञानत्वेन रजःप्रचुरत्वात् ॥ ३१ ॥

भगवद्वीर्यं कालरूपस्तत्प्रभावः श्रोत्रन्तु शब्दगमित्यनेन तटस्थलक्षणं लक्ष्यते । श्रोत्रग्राह्यत्वं शब्दत्वमिति । अन्यदन्यत्तु विवरणमात्रम् एवमुत्तरत्रापि ॥ ३२ ॥

अर्थाश्रयत्वं शब्दविशेषस्य द्रष्टुलिङ्गत्वञ्च । स्वरूपलक्षणन्तु तन्मात्रत्वं नभस इति लक्षणञ्चेदमभेदविवक्षयैव । वस्तुतस्तु शब्दादयो द्विविधा । आकाशादिद्रव्याणां सूक्ष्मावस्था गुणावस्थाश्च । तत्राद्यास्तन्मात्ररूपाः अर्थाश्रयादिरूपास्त्वन्ये इति ॥ ३३—३७ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एवमन्तःकरणचतुष्टयोत्पत्तिमुक्त्वा इन्द्रियोत्पत्तिमाह । तैजसानीति । ज्ञानकरणकानि क्रियाकरणकानि च उभयविधान्यपि राजसान्येव न तु ज्ञानकरणकानि सात्त्विकानि क्रियाकरणकानि तामसानि वा ज्ञानक्रियान्यतरकरणमिन्द्रियमिति करणमतीन्द्रियमिन्द्रियमिति वा तत्त्वानि दशापि भिन्नानीति नैकं लक्षणं निर्दिष्टम् उभयेषां राजसत्वे हेतुमाह । प्राणस्य हीति । क्रियायां प्राणो मूलं ज्ञाने बुद्धिः उभयं राजसमित्यर्थादुक्तं भवति प्राणो नामासन्यः महत्तत्वभेदः भगवद्रूपो वा राजसाहङ्कारे तु तस्यावतार इति न तत्त्वता नाप्युत्पत्तिर्निरूपिता मतान्तरसिद्धानां वैदिकानां वा प्राणानामत्र ग्रहणं इन्द्रियाणामाध्यात्मिकरूपो वा प्राणः बुद्धिः राजसीति तदनुगृहीतानि सर्वाणि राजसानि प्राणस्तु क्रियाप्रधान इति राजसत्वं प्राणोऽपि सर्वेन्द्रियानुग्राहकः क्रियाजनिका शक्तिः विज्ञानरूपा शक्तिर्यस्याः तस्या बुद्धेर्भावः वक्ष्यत्यग्रे इन्द्रियाणां लक्षणानि भिन्नानि ॥ ३१ ॥

भूतानां सृष्टिमाह । तामसादिति । तामसाहङ्कारात्पूर्ववद्विकुर्वाणात्तामसत्वादेव भगवद्वीर्येण प्रेर्यते न तु भगवद्वीर्यसत्तामात्रं प्रथमतः शब्दमात्रमभूत्तस्मात्पश्चान्नभः शब्दे प्रमाणमाह । श्रोत्रगमिति । श्रोत्रस्य गम्यं श्रोत्रसमधिगम्यः शब्दः शब्दधर्मा अपि शब्द एवेति लक्षणं नातिप्रसक्तं श्रोत्रं गच्छतीति वा शब्दाधाराणां न स्वतन्त्रतया गतिरिति तद्व्यावृत्तिः ॥ ३२ ॥

शब्दस्य लक्षणान्याह । अर्थाश्रयत्वमिति । अर्थो हि शब्दमाश्रित्य तिष्ठति अर्थस्य घटपटादे रूपत्रयं तत्र यदाधिदैविकं रूपं तच्छब्दनिष्ठं शब्दैकसमधिगम्यं शब्देन नित्यसम्बद्धं आधिभौतिकं तु प्रकटरूपं तस्य न शब्दाश्रयत्वं किं तु पृथिव्याद्याश्रितमेव आध्यात्मिकं तु ज्ञानेच्छाप्रयत्नाश्रितं त्रितयमभेदेन सर्वत्र लक्ष्यते शब्दस्यार्थाश्रयत्वं लक्षणं न त्वाकाशस्य लक्षणान्तरमाह । द्रष्टृलिङ्गत्वमेव चेति । द्रष्टा ह्यर्थाना माध्यात्मिकं त्वर्थं सम्बन्धित्वेन ज्ञापयति यथा भित्तिव्यवहितः गजं दृष्ट्वा गजोऽयमिति वदति तदन्तःस्थितवाक्यप्रयोक्ता गजदर्शनवानिति लक्ष्यते स्वरद्वारा देवदत्तोऽयमिति धर्मतो लक्षणं चकाराद्दृश्यज्ञापकत्वं च भौतिकमपि घटादिकं बोधयतीत्यर्थः । लक्षणान्तरमाह । तन्मात्रत्वं च नभस. इति । नभसः तन्मात्रत्वं सूक्ष्मरूपत्वं शब्दस्य लक्षणं सूक्ष्मावस्था शब्दः स्थूलावस्था नभ इति केचिदन्यथा मन्यन्ते इति श्लोके प्रमाणमाह । कवयो विदुरिति ॥ ३३ ॥

आकाशं लक्षयति । भूतानामिति । भूतानां प्राणिनां छिद्रदातृत्वं वहिरन्तः स्वरूपत्वं प्राणेन्द्रियान्तःकरणाधारत्वं चेति नभसो लक्षणत्रयं छिद्रमवकाशः वहिरन्तर्व्यवहार आकाशविषय एव पृथिव्यादेः आवरणरूपस्य न वहिरन्तर्व्यवहारविषयत्वं परिच्छेदकत्वं परं प्रदेशोऽपि न व्यवहारहेतुस्तुल्यत्वात् विवरे च व्यवहारः अत आकाशस्यैव चकारात्पृथिव्यादिसर्वाधारत्वं च लक्षणं लक्षणान्तरमाह । प्राणेन्द्रियात्मधिष्ण्यत्वमिति । प्राणानामिन्द्रियाणामन्तःकरणस्य च धिष्ण्यमाधारभूतं स्थानं धिष्ण्यशब्देन वैदिकत्वं तस्य स्थानस्य द्योतितं नभसो वृत्तिलक्षणमिति । नभो हि त्रिधा वर्त्तते स्वस्याधिभौतिकं रूपं स्वयं प्रयच्छतीति आधिदैविकत्वं वहिरन्तर्व्यवहाराश्रयत्वमित्याध्यात्मिकत्वं देहान्तःस्थितपदार्थाश्रयत्वेनाधिभौतिकत्वम् ॥ ३४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

इन्द्रियाणि तैजसान्येव तैजसाहङ्काराज्जातानि ज्ञानेन्द्रियाणां वैकारिकत्वशङ्कानिवृत्त्यर्थमेवकारः द्विविधानामपीन्द्रियाणां तैजसत्वं हेतुः । प्राणस्येति । हि यस्मात् प्राणस्य क्रियाशक्तिरतः प्राणस्य तैजसत्वात्तत्क्रियाशक्तिमतामपीन्द्रियाणां तैजसत्वं तथा बुद्धेर्विज्ञानशक्तिता अतो बुद्धेः सविकल्पकज्ञानवृत्तित्वेन रजःप्रचुरत्वात् तैजसत्वेन तदीयज्ञानशक्तिमतामिन्द्रियाणामपि तैजसत्वम् ॥ ३१ ॥

नभसः शब्दतन्मात्रात्कालगत्या विकुर्व्वतः ।
स्पर्शोऽभवत्ततो वायुस्त्वक्स्पर्शस्य च सङ्ग्रहः ॥ ३५ ॥
मृदुत्वं कठिनत्वं च शैत्यमुष्णत्वमेव च ।
एतत्स्पर्शस्य स्पर्शत्वं तन्मात्रत्वं नभस्वतः ॥ ३६ ॥
चालनं व्यूहनं प्राप्तिर्नेतृत्वं द्रव्यशब्दयोः ।
सर्व्वेन्द्रियाणामात्मत्वं वायोः कर्म्माभिलक्षणम् ॥ ३७ ॥
वायोश्च स्पर्शतन्मात्राद्रूपं दैवेरितादभूत् ।
समुत्थितं ततस्तेजश्चक्षूरूपोपलम्भनम् ॥ ३८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भगवद्वीर्यं कालरूपस्तत्प्रभावस्तेन प्रेरितात् । स शब्दः केन गृह्यते इत्यपेक्षायामाह । श्रोत्रं तैजसाहङ्कारकार्य्यं श्रोत्रेन्द्रियं कर्तृ शब्दं गच्छति प्राप्नोतीति तत् ॥ ३२ ॥

शब्दस्य लक्षणं कवय आहुः किन्तत् । अर्थाश्रयत्वं अर्थवाचकत्वं द्रष्टुर्लिङ्गत्वं रामकृष्णादिलीलाद्रष्टृव्यासशुकादिज्ञापकत्वं यद्वा कुड्यान्तरितस्यापि वक्तुर्ज्ञापकत्वं तथा नभस्तन्मात्रत्वम् आकाशसूक्ष्मरूपत्वम् ॥ ३३ ॥

आकाशस्य लक्षणमाह । छिद्रदातृत्वम् अवकाशदातृत्वं बहिरन्तरं बहिरन्तरश्च व्यवहारास्पदत्वं प्राणेन्द्रियमनसां धिष्ण्यत्वं नाड्यादिच्छिद्ररूपेणाश्रयत्वं नभसो वृत्तिभिर्धर्मैर्लक्षणम् ॥ ३४ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

दशेन्द्रियोत्पत्तिमाह । तैजसानीति । तैजसानि तैजसाहङ्कारकार्याणि । प्राणस्येनि "तमुत्क्रामन्तं सर्वे प्राणा उत्क्रामन्ति" इति श्रुतौ सर्वेन्द्रियाणां प्राणसंज्ञा यद्यपि । तथापि वायुविशेषस्य प्राणस्य कर्मेन्द्रियगणे बहुप्रयोगादत्र कर्मेन्द्रियगणः प्राणस्तस्य क्रियायाः-शक्तिः बुद्धेर्ज्ञानेन्द्रियगणस्य विज्ञानशक्तिता विज्ञाने शक्तिर्यस्य स तथा तस्य भावस्तत्ता ॥ ३१ ॥

इदानीं पञ्चतन्मात्रोत्पत्तिपूर्वकमाकाशादिपञ्चमहाभूतोत्पत्तिं तल्लक्षणं चाह । तामसादित्यादिपञ्चदशभिः । शब्दमात्रं शब्दतन्मात्रमभूत्ततः शब्दतन्मात्रात् श्रोत्रं तु शब्दं नभोगुणं गच्छति प्राप्नोतीति शब्दगम् । एवमग्रेऽपि विषयोत्पत्त्यनन्तरं तत्सम्बन्धमात्रम् कथ्यते । उत्पत्तिस्तु श्रोत्रादीनां तैजसाहङ्कारादेव शब्दाद्युत्पत्तिश्च तद्गुणयुत्पत्त्यैव ज्ञेया ॥ ३२ ॥

शब्दस्य लक्षणमाह । अर्थाश्रयत्वमिति । अर्थाश्रयत्वमर्थबोधकत्वं तथा कुड्याद्यन्तरितस्येदं मया दृष्टमिति द्रष्टुरुच्चैर्वदतो लिङ्गत्वं ज्ञापकत्वं नभसस्तन्मात्रत्वमवस्थाभेदेन पूर्वरूपत्वं च शब्दस्य लक्षणम् । शब्दतन्मात्रादीनि पञ्चतन्मात्राणि आकाशादिमहाभूतकारणानि शब्दादयस्तु महाभूतगुणाः इत्यवस्थाभेदः ॥ ३३ ॥

भूतानां वाय्वादीनां वहिरन्तरं यथा भवति तथा छिद्रदातृत्वमवकाशप्रदत्वं प्राणानां ब्रह्मादिमत्कुणपर्यन्तदेहगतवातविशेषाणामिन्द्रियाणामात्मनां देहादीनाञ्च धिष्ण्यत्वं स्थानत्वं नभसः वृत्तिश्छिद्रदातृत्वादिरूपैव लक्षणम् ॥ ३४ ॥

भाषाटीका ।

कर्मेन्द्रिय तथा ज्ञानेन्द्रिय दोनों राजस अहंकार से हुये हैं प्राण क्रियाशक्ति वाला है बुद्धि विज्ञानशक्ति वाली है तिस से ए सब राजस ही हैं ॥ ३१ ॥

कालमाया संयुक्त भगवान् की चित्शक्ति के प्रेरणा से तामसाहंकार में से शब्द तन्मात्रा हुआ तिस से आकाश हुआ उसी के साथ शब्द और श्रोत्र रहने लगे ॥ ३२ ॥

अर्थ का प्रकाश कराना देखने वाले का ज्ञान करा देना और आकाशका तन्मात्रा होना यह शब्द का लक्षण है ऐसा कवि लोग जानते हैं ॥ ३३ ॥

सब भूतों को अवकाश देना बाहिर भीतर का व्यवहार कराना प्राण इन्द्रिय मन का आश्रय होना यह सब आकाशकी वृत्तियों से लक्षण है ॥ ३४ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

सा त्वक् । स्पर्शस्य सङ्ग्रहः सम्यग्ग्रहणं यया पुंस्त्वं नियतलिङ्गत्वात् । यद्वा स्पर्शस्य सङ्ग्रहस्ततो भवतीति शेषः शब्दतन्मात्रादित्यादि तन्मात्राणामुत्तरोत्तरान्वयार्थमुक्तम् ॥ ३५ ॥

स्पर्शलक्षणमाह । मृदुत्वमिति । स्पर्शत्वं स्वरूपलक्षणमित्यर्थः नभस्वतो वायोस्तन्मात्रत्वं च ॥ ३६ ॥

चालनं वृक्षशाखादेः व्यूहनं मेलनं तृणादेः प्राप्तिः संयोगो द्रव्यस्य गन्धवतो घ्राणं प्रति तथा शैत्यादिमतः स्पर्शनं प्रति शब्दस्य श्रोत्रं प्रति नेतृत्वं सर्वेन्द्रियाणामात्मत्वमुपोद्बलकत्वम् कर्मणा कार्येणाभिलक्षणम् । भावे ल्युट् । कर्मैवाभिलक्षणमिति विग्रहे तु करणे ॥ ३७ ॥ ३८ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

पूर्वार्थे सङ्ग्रहशब्दस्य त्वग्विशेषणताङ्गुपता तत्र स्त्रीलिङ्गत्वं विवक्षितं पुंस्त्वे नियतलिङ्गत्वं सम्भावितमतो । यद्वेति तथाच त्वग्ग्राह्यत्वं स्पर्शलक्षणमप्युक्तम् ॥ ३५ ॥

तन्मात्रत्वं स्वरूपलक्षणं किन्तु सूक्ष्मस्येति ज्ञेयम् ॥ ३६ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी।

चालनादिकर्मणाभिलक्षणं वायोर्ज्ञापनम् विग्रहे समासावबोधके वाक्यं अभिलक्ष्यतेऽनेनेति अभिलक्षणं वृक्षचालनादिक्रियैव वायोरसाधारणो धर्म इत्यर्थः ॥ ३७ ॥

दैवेरितादन्तर्यामिप्रेरितात् पूर्वोत्पन्नं चक्षूरूपग्राहकमासीदिति तथाच चक्षुर्मात्रग्राह्यत्वं रूपलक्षणं रूपग्राहकत्वं च चक्षुर्लक्षणमिति द्वयोरपि लक्षणमूह्यम् एवं पूर्वत्र परत्र च ज्ञेयम् ॥ ३८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

नभस इति शब्दतन्मात्रात् शब्दस्तन्मात्रमसाधारणो यस्य तस्मात्कालगत्या कालशरीरकभगवत्सङ्कल्पेन विकुर्वतो विक्रियमाणान्नभस आकाशात् स्पर्शः स्पर्शतन्मात्रमभवत् ततः स्पर्शाद्वायुरभवत् कोऽसौ स्पर्शस्य ग्राहक इत्यत्राह। त्वक् त्वगिन्द्रियं स्पर्शस्य सङ्ग्रहः सम्यग् ग्राहकः सम्यक् ग्रहो यया सेति वा ( सम्यग् ग्रहो यया सेति वेति व्याख्यानं तु स्त्रीलिङ्गपाठाभिप्रायेण ) ॥ ३५ ॥

मृदुत्वादयः नभस्वतोवायोस्तन्मात्रत्वमसाधारणगुणत्वं च स्पर्शस्य स्पर्शत्वं लक्षणमित्यर्थः ॥ ३६ ॥

चालनं वृक्षशाखादेः व्यूहनं विभागकरणं प्राप्तिश्च चलितयोः संयोजकत्वं द्रव्यशब्दयोर्नेतृत्वं द्रव्यनेतृत्वं शब्दनेतृत्वं तत्र द्रव्यनेतृत्वं द्रव्यस्य गन्धवतो घ्राणं प्रति शब्दस्य नेतृत्वं दूरस्थशब्दस्य श्रोत्रग्राह्यत्वकरणं सर्वेन्द्रियाणामात्मत्वं धारकत्वं वायोः कर्मैवाभिलक्षणम् ॥ ३७ ॥

वायोरिति। स्पर्शस्तन्मात्रोऽसाधारणगुणो यस्य तस्माद्दैवेरितादीश्वरप्रेरिताद्वायोरूपं रूपतन्मात्रमभूत्ततो रूपात्तेजः समुत्थितम् उत्पन्नमभूत् किन्तद्रूपस्य ग्राहकमित्यत्राह। चक्षुश्चक्षुरिन्द्रियं रूपोपलम्भनं रूपग्राहकम् ॥ ३८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

नभसः स्पर्शोत्पत्तिं ब्रूते। नभस इति। शब्दाख्या तन्मात्रा यस्य तत्तथा तस्मान्नभसः कालगत्या भगवत्प्रेरणया विकुर्वतः स्पर्शोऽभवत् स्पर्शतन्मात्राया वायुरभूत्।

> प्रधानवायुः सूत्रात्मा महता सह जायते।
> तैजसश्च रजः स्पर्श इत्याद्यास्तत्सुताः स्मृताः।
> तदा विष्टा अन्यजीवास्तदाधाराश्च तद्वलाः ॥

इति वचनात्तैजसो वायुराकाशाज्जातः स्पर्शवायुश्च मुख्यवायोः सुत इति ज्ञातव्यं तैजसादिवायुभिराविष्टत्वात्तदुद्भूतत्वात्तद्बलत्वाच्च तद्भिरिष्टा इत्युच्यन्ते "स्पर्शादयोऽपि वाय्वादेः सूक्ष्मावस्थाः प्रकीर्तिता" इतिवचनादत्र कार्यकारणभाव उपचयविवक्षयेति ज्ञायते तदुक्तम्

> सूक्ष्मेन्द्रियाणि सन्त्येव स्युः स्थूलान्यप्यहंकृतेः।
> भूतेभ्यश्चोपचीयन्ते पुनर्ब्रह्म शरीरत इति

स्पर्शस्य स्पर्शतन्मात्रायाः संग्रहो ज्ञातृ त्वगिन्द्रियं चोपचितमभूदिति शेषः ॥ ३५ ॥

स्पर्शतन्मात्रालक्षणमाह। मृदुत्वमित्यादिना मृदुत्वमित्यादीनि नभस्वतो वायोः स्वभावलक्षणानि ॥ ३६ ॥

स्वरूपलक्षणमाह। चालनमित्यादि "स्वरूपमपि कर्मेति विषयत्वादुदीर्यते" इति वचनादेतानि चालनादीनि कर्मनिमित्तलक्षणानि चालनं चलनकर्तृत्वं व्यूहनं पृथक् स्थितानामेकीकरणं प्राप्तिः सर्ववस्तुव्याप्तिः

> प्राप्नोति वायुः सर्वं तु स्वत एव हरेस्तथा।
> अतः प्राप्तिरिति प्राहुर्वायुं भूतपतिं प्रभुम् ॥
> प्रधानवायुरन्येषु नित्याविष्टो यतः स्वतः।
> तद्गुणास्तेषु चोच्यन्ते नीचता नास्य तत्कृता ॥

इति वचनात् द्रव्यशब्दयोः पर्णादिद्रव्यस्य शब्दस्य वर्णात्मकस्य च नेतृत्वं देशान्तरप्रापकत्वं सर्वेन्द्रियाणामात्मत्वं स्वामित्वं तदविनाभूतप्रकाशित्वं वा कर्माभिलक्षणं स्वरूपलक्षणम् ॥ ३७ ॥

स्पर्श एव तन्मात्रो गुणो यस्य सः स्पर्शतन्मात्रः तस्माद्वायो रूपं रूपतन्मात्राभूत् ततो रूपतन्मात्रायास्तेजः समुत्थितं रूपस्योपलम्भनं ज्ञानं यस्मात्तादृशं चक्षुरिन्द्रियं चोत्पन्नमित्यर्थः ॥ ३८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तेजसस्तेजस्त्वमसाधारणत्वमिति तद्बोधकमित्यर्थः। रूपेणैव हि तेजसोऽसाधारणत्वं गम्यते असाधारणरूपवद्द्रव्यं तेज इति ॥ ३९—४२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

स्पर्शवायोरुत्पत्त्यादिकमाह। नभस इति। शब्दतन्मात्रादिकं न विशेषणं किं तु स्थूलात् सूक्ष्मादपि नभसः स्थूलं सूक्ष्मं कार्यं भवतीति ज्ञापनार्थं कालगत्या विकुर्वत इति कालप्रेरणया जातगुणक्षोभादित्युभयोर्विशेषणं प्रथमं स्पर्शतन्मात्रा अभवत् ततो वायुः त्वगिन्द्रियं स्पर्शस्य सङ्ग्रहो यस्मात् त्वगेव सङ्ग्रहः चकाराद्वायोरपि न तु श्रोत्रवच्छब्दमात्रग्राहकम् ॥ ३५ ॥

स्पर्शभेदा एव प्रत्यक्षसिद्धाः स्पर्शलक्षणानीति तान् गणयति। मृदुत्वमिति। स्पर्शश्चतुर्विधः। मृदुत्वं कार्पासादौ काठिन्यं पाषाणादौ शैत्यं शीतलता उष्णत्वं चेति एतच्चतुर्विधं कारणरूपमेव कार्ये एकैकमभिव्यक्तं उष्णत्वं तेजसि शीतलत्वं जले पक्वपृथिव्यां कठिनत्वम् अपक्वे मृदुत्वमिति। एतत् स्पर्शस्य स्पर्शत्वमिति। स्पर्शो नाम स्पृश्यत इति व्युत्पत्त्या स्पर्शनेन्द्रियग्राह्यत्वे वा वायावपि स्यात् व्याकरणादौ कादयोऽपि स्पर्शाः संयोगोऽपि स्पर्श इति लोकः एतदेकमप्यस्माकं विवक्षितं न भवति। किं तु यदेवास्माभिरुक्तं मृदुत्वादिकं तदेव स्पर्शस्य स्पर्शत्वं लक्षणान्तरमाह। तन्मात्रत्वं नभस्वत इति नभस्वतो वायोः तन्मात्रत्वं सूक्ष्मरूपत्वम् ॥ ३६ ॥

वायोर्लक्षणमाह। चालनमिति। वायोः कर्मलक्षणं तत्कर्म पञ्चविधमिति पञ्चलक्षणानि चालनं शाखादेः व्यूहनं पतित-

द्रव्याकृतित्वं गुणता व्यक्तिसंस्थात्वमेव च ।
तेजस्त्वं तेजसः साध्वि ! रूपमात्रस्य वृत्तयः ॥ ३९ ॥
द्योतनं पचनं पानमदनं हिममर्दनम् ।
तेजसो वृत्तयस्त्वेताः शोषणं क्षुत्तृडेव च ॥ ४० ॥
रूपमात्राद्विकुर्वाणात्तेजसो दैवचोदितात् ।
रसमात्रमभूत्तस्मादम्भो जिह्वा रसग्रहः ॥ ४१ ॥
कषायो मधुरस्तिक्तः कट्वम्ल इति नैकधा ।
भौतिकानां विकारेण रस एको विभिद्यते ॥ ४२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तृणादेः वात्ययैव मेलनं प्राप्तिर्गन्धस्य घ्राणप्रापणं द्रव्यशब्दयोर्नेतृत्वं देशान्तरस्थितवस्त्वादेर्देशान्तरे नयनं शब्दश्च भेरीदण्डसंयोगे जातः कर्णशष्कुलीपर्यन्तं स्वभावतो गच्छति तत्प्रतिकूलवायौ न गच्छति निकटेऽपि न श्रूयते अनुकूले तु दूरादपि श्रूयत इति शब्दस्यापि देशान्तरप्रापणं सर्वेषामिन्द्रियाणामात्मा चायं एतदभावे किमपीन्द्रियं न कार्यक्षमं भवतीति एतत्पञ्चविधं वायोः कर्मतः अभितो लक्षणम् ॥ ३७ ॥

तेजस उत्पत्तिमाह । वायोरिति । पूर्ववत् स्पर्शतन्मात्रादिति रूपतन्मात्रं दैवेन कालेन ईरितादित्युभयोर्विशेषणं प्रथमतो रूपं समुत्थितं ततस्तेजः चक्षुस्तु रूपोपलम्भनं रूपमुपलभ्यतेऽनेनेति रूपे प्रमाणमुक्तम् ॥ ३८ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

शब्द एव तन्मात्रं यस्य तथाभूतान्नभसः सकाशात् सङ्ग्रहः सम्यक् गृह्यतेऽनयेति करणे अप् । त्वक् त्वगिन्द्रियं स्पर्शग्रहणे करणमित्यर्थः ॥ ३५ ॥

स्पर्शस्य लक्षणमाह । स्पर्शत्वं स्वरूपलक्षणमित्यर्थः । नभस्वतो वायोस्तन्मात्रत्वम् ॥ ३६ ॥

वायोर्लक्षणमाह । चालनं वृक्षशाखादेः । व्यूहनं मेलनं तृणादेः । प्राप्तिर्वस्तुमात्रेण संयोगः द्रव्यशब्दयोः द्रव्यस्य गन्धवतो घ्राणं प्रति शैत्यादिमतस्त्वचं प्रति । शब्दस्य श्रोत्रं प्रति नेतृत्वम् । अत्र प्राप्तिः संयोग एव चालन-व्यूहन-नेतृत्वानि संयोगविशेष इति ज्ञेयम् । सर्वेन्द्रियाणामात्मत्वं सञ्जीवकत्वं वायोः कर्मैव अभिसर्वतो भावेन लक्षणं लक्ष्यतेऽनेनेति लक्षणं करणे ल्युट् ॥ ३७—३८ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शब्दतन्मात्रात् शब्दतन्मात्रकार्यात् स्पर्शः स्पर्शतन्मात्रं ततो वायुः स्पर्शस्य वायुगुणस्य सङ्ग्रहः सम्यक् ग्रहः ग्रहणं यया सा त्वक् सङ्ग्रहः इति पुंस्त्वं नियतलिङ्गत्वात् ॥ ३५ ॥

स्पर्शस्य कारणावस्थया नभस्वतो वायोस्तन्मात्रत्वं पूर्वरूपत्वं गुणावस्थया मृदुत्वादिकं स्पर्शत्वं तदसाधारणं लक्षणम् ॥ ३६ ॥

चालनं वियोजनं व्यूहनमन्योऽन्यतो द्रव्यादीनां योजनं प्राप्तिः स्वस्यान्यं प्रति द्रव्यगन्धयोः अन्यं प्रति नेतृत्वं कर्मलक्षणं कर्मद्वारा लक्षणम् ॥ ३७ ॥

स्पर्शतन्मात्रात् तत्कार्यात् रूपं रूपतन्मात्रं रूपोपलम्भनं तेजोऽसाधारणरूपाख्यगुणग्राहकम् ॥ ३८ ॥

———

भाषाटीका ।

कालकी गति से विकार को प्राप्त भये शब्द तन्मात्रावाले आकाश से स्पर्श तन्मात्रा भई तिससे वायु भया उसके साथ त्वगिन्द्रिय तथा स्पर्श संयुक्त भये ॥ ३५ ॥

कोमलपना कठिनपना शीतलता गर्मी वायु का तन्मात्रा यही सब स्पर्श के लक्षण हैं ॥ ३६ ॥

वृक्षादि कों का कम्पाना तृणादि कों का जोडना सर्वत्र गमन गन्ध वाले द्रव्य तथा शब्द को ले जाना प्राण द्वारा सब इन्द्रियों को पुष्ट करना ये कर्म से वायु के लक्षण हैं ॥ ३७ ॥

दैवप्रेरित स्पर्श तन्मात्रा वाले वायु से रूप हुआ तिस से तेज हुआ तिसी के साथ रूप ग्राहक चक्षुभी है ॥ ३८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

द्रव्याकृतित्वं द्रव्यस्याकारसमर्पकत्वम् । गुणता द्रव्योपसर्जनतया प्रतीतिः शब्दस्य तु स्वातन्त्र्येणैव प्रतीतिः अप्रत्यक्षद्रव्यस्य स्पर्शादेरपि स्वातन्त्र्येणैव प्रतीतिः रूपस्य तु नैवमिति तत्त्वार्थं विशेष उक्तः व्यक्तिसंस्थात्वं द्रव्यस्य-या संस्था सन्निवेशः सैव संस्था यस्य तत्परिणामतया प्रतीतिरित्यर्थः तेजसस्तेजस्त्वमसाधारणत्वम् ॥ ३९ ॥

द्योतनं प्रकाशनं पचनं तण्डुलादेः क्षुत्तृडशना पिपासा च तद्द्वारेण पानमदनं च ॥ ४०

जिह्वा रसनेन्द्रियम् । रसो गृह्यतेऽनयेति रसग्रहः यद्वा रसग्रहस्ततो भवतीति शेषः ॥ ४१ ॥

कषायादिषु लवणोऽपि द्रष्टव्यः भौतिकानां संसर्गिद्रव्याणाम्

## श्रीधरस्वामिकृतभावार्थदीपिका ।

य एको मधुर एव सन्नेवमनेकधा भिद्यते स रस इत्यर्थः ॥४२॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

द्रव्योपसर्जनतया द्रव्ये गुणतया प्रथमं संयोगसम्बन्धेन चक्षुषा द्रव्यज्ञानं ततः संयुक्तसम्बन्धेन रूपज्ञानमित्यर्थः लक्षणप्रयोजनभूतां व्यावृत्तिं व्याचष्टे । शब्दस्य त्विति । आकाशस्य श्रोत्रग्राह्यत्वाभावात् केवलं समवायसम्बन्धेन शब्दस्यैव प्रतीतिरित्यर्थः । अप्रत्यक्षद्रव्यस्येति । न प्रत्यक्षं द्रव्यं वाय्वादि यस्य तस्य स्पर्शादेरपि स्वातन्त्र्येणैव वाय्वादिद्रव्यप्रत्यक्षमनपेक्ष्यैव प्रतीतिः त्वगादिना ज्ञानमित्यर्थः आदिना रसगन्धपरिग्रहः रसनाघ्राणेन्द्रियाभ्यां जलपृथिव्योर्ग्रहणासम्भवात् स्वातन्त्र्येणैव रसगन्धयोस्तत्तदिन्द्रियाभ्यां प्रतीतिर्नतु जलपृथिवीप्रत्यक्षमपेक्ष्येत्यर्थः रूपस्य तु एवं शब्दादिवत्स्वातन्त्र्येण न प्रतीतिः किन्तु रूपवद्द्रव्यप्रत्यक्षानन्तरं द्रव्यविशेषणतया प्रतीतिरित्येवं तस्य रूपस्यायं द्रव्योपसर्जनता रूपो विशेषोऽसाधारणो धर्म उक्तः कपिलेन असाधारणत्वम् । असाधारणधर्मत्वम् ॥ ३९ ॥

हिममर्द्दनं शैत्यनाशनं वृत्तयोऽसाधारणधर्माः ॥ ४० ॥

तस्माद्रसमात्रात् रसो गृह्यतेऽनया सा रसग्रहा जिह्वेति वक्तव्ये पूर्ववत्पुंस्त्वं नियतलिङ्गत्वात्तथापि तत्र मानाभावाद्धेति । तथा च या पूर्वोत्पन्ना जिह्वा ततो रसग्रहो भवतीत्यन्वयः ४१।

अत्र यत्तदोरध्याहारेण रसलक्षणादित्यर्थं इत्युक्तम् ॥ ४२ ॥

---

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

द्रव्याकृतित्वं द्रव्यस्य भूतान्तरव्यावर्तकत्वं गुणता नित्यं द्रव्याश्रयत्वं व्यक्तिसंस्थानं व्यक्तेर्व्यक्त्यन्तरव्यावर्तकत्वं तेजसः तेजस्त्वमसाधारणगुणत्वं च हे साध्वि ! रूपमात्रस्य रूपतन्मात्रस्य वृत्तयः लक्षणानीत्यर्थः ॥ ३९ ॥

द्योतनं प्रकाशनं पचनं तण्डुलादेः क्षुत्तृडशनायापिपासे च तद्द्वारेण पानमदनं च हिममर्द्दनं हिमाभिभवः शोषणं च तेजसो वृत्तयः लक्षणानि कार्याणीति यावत् ॥ ४० ॥

रूपमात्रादिति । दैवेन चोदितात्प्रेरिताद्विकुर्वाणाद्रूपमात्राद्रूपं तन्मात्रं यस्य तस्मात्तेजसः रसमात्रं रसतन्मात्रमभूत् तस्माद्रसतन्मात्रादम्भः अभूत् का रसतन्मात्रस्य ग्राहिकेत्यत्राह । जिह्वा रसनेन्द्रियं रसस्य ग्रहः ग्राहिका ॥ ४१ ॥

कषाय इति । कषायादिषु लवणोऽपि द्रष्टव्यः भौतिकानां सांसर्गिकद्रव्याणां विकारेण एक एव रसः कषायादिभेदेनानेकधा विभिद्यत इत्यर्थः ॥४२ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

रूपतन्मात्राया लक्षणमाह । द्रव्याकृतित्वमिति । द्रव्याकृतित्वं यावद्द्रव्यव्याप्तित्वं गुणता प्रकाशित्वं व्यक्तिसंस्थात्वं व्यक्तित्वेन स्थितिः तेजस्त्वमुग्रत्वं "आलोको गुण इत्येव प्रकाशश्चापि कथ्यत इति तेजस्त्वमथ चोग्रत्वं कौर्यमित्यपि चोच्यत" इति चोक्तार्थेऽभिधानं रूपमात्रस्य रूपतन्मात्राया वृत्तयः स्वभावलक्षणानि ॥ ३६ ॥

तेजसो लक्षणमाह । द्योतनमिति । द्योतनं प्रकाशनं "द्युतप्रकाशन" इति धातुः पचनं पाककरणं पानं रसादनमदनं भक्षणं हिममर्द्दनं शीतानिवारकत्वं शोषणं शुष्कीकरणं क्षुत्तृड्भवः प्राणिनां क्षुत्तृड्जनकत्वं वृत्तयः स्वभावलक्षणानि ॥ ४० ॥

क्रमप्राप्तां तेजसो वारिसृष्टिं वक्ति । रूपतन्मात्रादिति । रूपमेव तन्मात्रा यस्य तद्रूपतन्मात्रं तस्मात्तेजस रसमात्रं रसतन्मात्राभूत् यया रसग्रहो भवति सा जिह्वा जिह्वेन्द्रियं चाभूत् ॥ ४१ ॥

रसगुणलक्षणं वक्ति । कषाय इत्यादिना । कटुयुक्तोऽम्लः कट्वम्लः अत्र लवणोऽपि ग्राह्यः भौतिकानां भूतकार्याणां पदार्थानां विकारेण एको रसः षडात्मना भिद्यते ॥ ४२ ॥

---

## श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

रूपस्य लक्षणान्याह । द्रव्याकृतित्वमिति । द्रव्यस्य घटादेः या आकृतिः सैव रूपस्य पृथुबुध्नोदराकारं रूपमपि आतानवितानात्मकत्वञ्च द्रव्यस्यैवाकृतिरिति द्रव्यस्य तु नोपमेयत्वमतो रूपस्यैव लक्षणं गुणता सर्वदोपसर्जनतया प्रतीतिः नैवं शब्दादिषु स्वतन्त्रतयापि प्रतीयमानत्वात् व्यक्तेः संस्था एव संस्था यस्य यदि व्यक्तिर्वक्रा भवेत् रूपमपि वक्रं भवेदिति उपविष्टे रूपवति रूपमुपविशति उपविष्टं भवति आतानवितानात्मकसङ्कुचीकरणयोर्भेदात् तेजसश्च तेजस्त्वं रूपतन्मात्रत्वं सूक्ष्मावस्थेत्यर्थः साध्वीति सम्बोधनं रूपेणामोहार्थं रूपमात्रस्य सर्वगतरूपस्य वा चतस्रो वृत्तयः ॥ ३६ ॥

तेजसो लक्षणान्याह । द्योतनमिति । द्योतनं प्रकाशनं सूर्यादेरिव पाचनमौदर्यवह्नेः पाककरणं वा वह्नेः पानं जलादेः तेजोव्यतिरेकेण नान्यः पिबति अदनम् भक्षणम् अत्राग्निरेव हिममर्द्दनं हिमदूरीकरणं शोषणं चेति तेजसः पञ्च वृत्तयः पञ्च कार्याणि तत्र त्रयं प्रत्यक्षसिद्धं द्योतनं पाचनं हिममर्द्दनमिति शोषणं चानुमीयते वाय्वपेक्षया आतपे वस्त्रादिषु जलाकर्षणस्य शैघ्र्यात् पानमदनं च न तेजः कार्यं चेतनकर्तृकत्वात् क्षुत्पिपासाभ्यामेव तज्जननाच्चेत्याशङ्क्याह । क्षुत्तृडेव चेति । क्षुत्तृद्रूपं तेज एव अतः पानमदनं च तस्यैव कार्यमिति युक्तमित्यर्थः ॥ ४० ॥

जलस्योत्पत्तिमाह । रूपमात्रादिति । रूपमात्रात्तेजसः विकुर्वाणात् दैवनोदितादित्युभयोर्विशेषणे प्रथमतो रसमात्रमभूत तस्मादम्भः जिह्वा रसङ्गृह्णातीति तथा रसे जिह्वैव प्रमाणम् ॥ ४१ ॥

रसानां भेदकथनेनैव लक्षणमाह । कषाय इति । कषायः खदिरादि मधुरो गुडादिः तिक्तो निम्बादिः कटुर्मरीचादिः अम्लः तिन्तिण्यादिः इतोऽप्यनेकप्रकारोऽस्तीत्याह । इति नैकधेति । एवमनेकप्रकारो भवतीत्यर्थः ननु यदि रसः स्वभावत एवंविधः स्यात जलेऽप्युपलभ्येत मधुरः पाकादिना तिक्तश्च न भवेत्तत्राह । भौतिकानां विकारेणेति । एक एव रसः भौतिकानां पृथिव्यवयवानां संश्लेषात् अनेकधा भिद्यते वस्तुतस्तु अव्यक्तमधुर एक एव रसः ॥ ४२ ॥

---

क्लेदनं पिण्डनं तृप्तिः प्राणनाप्यायनोन्दनम् ।
तापापनोदो भूयस्त्वमम्भसो वृत्तयस्त्विमाः ॥ ४३ ॥
रसमात्राद्विकुर्व्वाणादम्भसो दैवचोदितात् ।
गन्धमात्रमभूत्तस्मात्पृथ्वी घ्राणस्तु गन्धगः ॥ ४४ ॥
करम्भपूतिसौरभ्यशान्तोग्राम्लादिभिः पृथक् ।
द्रव्यावयववैषम्याद्गन्ध एको विभिद्यते ॥ ४५ ॥
भावनं ब्रह्मणः स्थानं धारणं सद्विशेषणम् ।
सर्वसत्त्वगुणोद्भेदः पृथिवीवृत्तिलक्षणम् ॥ ४६ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

रूपस्य लक्षणमाह । द्रव्यस्याकृतित्वमाकारसमर्पकत्वे गुणता द्रव्योपसर्ज्जनतया प्रतीतिः शब्दस्य तु स्वातन्त्र्येणैव प्रतीतिः । अप्रत्यक्षद्रव्यस्य स्पर्शादेश्च स्वातन्त्र्येणैव प्रतीतिः । रूपस्य तु नैवं व्यक्तिसंस्थात्वं व्यक्तेर्द्रव्यस्य या संस्था सन्निवेशः सैव संस्था यस्य तस्य भावस्तत्त्वं द्रव्यपरिमाणे-नैव यत्परिमाणप्रतीतिरित्यर्थः । तेजसस्तेजस्त्वं तन्मात्रत्वम् । वृत्तयो धर्म्माः ॥ ३९ ॥

तेजसो लक्षणमाह । द्योतनं प्रकाशनम् । पचनं तण्डुलादेः क्षुत् क्षुधा तृट् तृष्णा तद्द्वारेण अदनं पचनं च ॥ ४०—४१ ॥

रसस्य लक्षणमाह । कषाय इति । कषायादिषु लवणोऽपि द्रष्टव्यः । भौतिकानां संसर्गिद्रव्याणां य एको मधुर एव सन् एवमनेकधा भिद्यते स रस इत्यर्थः ॥ ४२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

द्रव्याकृतित्वं द्रव्यस्य ह्रस्वदीर्घाद्याकारसमर्पकत्वम् गुणता द्रव्याश्रयत्वेन प्रतीयमानत्वम् । व्यक्तिसंस्थात्वं द्रव्यव्यक्तिसम-संस्थानत्वं तेजसस्तेजस्त्वं गुणत्वं हे साध्वि ! रूपमात्रस्य रूपतन्मात्रस्य रूपस्येत्यर्थः वृत्तयो लक्षणानीत्यर्थः ॥ ३९ ॥

क्षुत् अशना तद्द्वारेण अदनं तृट् पिपासाद्वारेण पानम् ॥४०॥

रूपं मात्रा गुणो यस्य यद्वा रूपं मात्रं तन्मात्रं यस्य तस्मात् एव रसग्रहः स्यादिति शेषः जिह्वा रसेन्द्रियः ॥ ४१ ॥ ४२ ॥

---

### भाषाटीका ।

हे साध्वि ! द्रव्य कीसी आकृति और गुणता व्यक्ति के रूप से स्थिति रूप मात्र से स्थिति ये तेज के लक्षण हैं ॥ ३९ ॥

प्रकाश करना पकाना खाना पीना शीतका मिटाना शोखना क्षुधा तृषा ये सब तेज तत्त्व कि वृत्ति हैं ॥ ४० ॥

भगवत्प्रेरित रूप मात्र वाले विकृत तेज से रस तन्मात्रा भई तिस से जल हुआ तब जिह्वा और उस का ग्रहण होता है ॥ ४१ ॥

कषाय मधुर तिक्त कडुआ खट्टा ऐसे अनेक प्रकार से भौतिक पदार्थों के विकार से रसके भेद हो जाते हैं ॥४२॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

क्लेदनमार्द्रीकरणं पिण्डनं मृदादेः पिण्डीकरणं तृप्तिस्तृप्ति-दातृत्वं प्राणनं जीवनम् "आपो मयः प्राणः" इतिश्रुतेः आप्याय-यनं तृड्वैक्लव्यनिवर्त्तनम् उन्दनं मृदूकरणम् ओदनमिति पाठेऽपि स एवार्थः भूयस्त्वं कूपादावुद्धृतस्यापि पुनः पुनरुद्भवः ॥ ४३ ॥

गन्धगो गन्धं प्राप्नोति ॥ ४४ ॥

करम्भो मिश्रगन्धः यथा व्यञ्जनादीनां हिङ्ग्वादिसंस्कारेण पूतिर्दुर्गन्धः सौरभ्यं कर्पूरादेः शान्तः शतपत्रादेः उग्रो लशुनादेः अम्लस्तिन्तिण्यादेः संसर्गिणां द्रव्यावयवानां वैषम्याद एवं विभि-द्यते स गन्ध इत्यर्थः ॥ ४५ ॥

ब्रह्मणो भावनं प्रतिमादिरूपेण साकारतापादनं स्थानं जलादिविलक्षणतया ऽऽश्रयान्तरनैरपेक्ष्येण स्थितिः धारणं जला-द्याधारत्वं सतामाकाशादीनां विशेषणमवच्छेदकत्वं सर्वेषां सत्त्वानां प्राणिनां तद्गुणानां च पुंस्त्वादीनामुद्भेदः परिणामविशेषैः प्रकटीकरणम् ॥ ४६ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

अम्भसो लक्षणमाह । क्लेदनमिति । अम्भसो जीवनधर्म्मत्वं श्रुतिर्मानम् अन्नयं जीवनमित्यर्थः वृत्तयोऽसाधारणधर्माः तथा च क्लेदनादिधर्म्मवत्त्वमम्भसो लक्षणम् ॥ ४३ ॥

तस्माद्गन्धतन्मात्रात् पूर्वमेव जातो घ्राणस्तु स्वविषयं गन्धं प्राप्तोऽभूदिति विषयेन्द्रिययोर्द्वयोरपि लक्षणं पूर्ववदूह्यम् इन्द्रि-यसामान्यलक्षणन्तु "शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञान-कारणमनस्संयोगाश्रयत्वम्" इन्द्रियत्वमिति ॥ ४४ ॥

य एक एव एवं विभिद्यते स गन्ध इति यत्तच्छब्दाध्या-हारेण गन्धलक्षणादित्यर्थ इत्युक्तम् शान्तोग्राम्लादिभिरिति क्वचित्पाठः तत्राम्लश्चिञ्चिणादेरिति टीकाप्यस्ति ॥ ४५ ॥

प्रतिमादीत्यादिना शालग्रामगोमतीचक्रादिपरिग्रहः । नैरपे-क्ष्येण । जलाद्याधारापेक्षाराहित्येन विशेषणं विशेषणत्वमवच्छे-दकत्वं घटाकाशो घटजलं काष्ठवह्निरित्यादिभेदकत्वमिति यावत् परिणामविशेषैः रूपान्तरापत्तिप्रकारैः वृत्त्या कार्य्येण लक्षण-मिति भावे ल्युट् पृथिव्या वृत्तिर्धर्मस्य लक्षणमिति विग्रहे तु करणे ॥ ४६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

क्लेदनमार्द्रीकरणं पिण्डनं मृदादेः पिण्डीकरणं तृप्तिः तृप्तिदातृत्वं प्राणनं जीवनम् "आपोमयः प्राणा" इति श्रुतेराप्यायनं तृड्वैक्लव्यनिवर्तनमौन्दनं मृदूकरणं भूयस्त्वं कूपादावुद्धृतस्यापि पुनरुद्गमः पाञ्चभौतिकेष्वपि जलांशस्य भूयस्त्वं च। तथा च सूत्रकारः । "त्र्यात्मकत्वात्तु भूयस्त्वात्" ।३।१।२। इति इमाः क्लेदनादयः तेजसो वृत्तयः ॥ ४३ ॥

दैवचोदितात् विकुर्वाणाद्रसमात्रादम्भसः गन्धमात्रमभूत्तस्माद्गन्धमात्रात्पृथ्वी अभूत् घ्राणः। घ्राणेन्द्रियं गन्धगः गन्धग्राहकः॥४४॥

एक एव गन्धः द्रव्याणां सांसर्गिद्रव्याणां वैषम्याद्विकुर्वाणात् पृथक्करम्भादिभेदेन विभिद्यते तत्र करम्भो मिश्रगन्धः यथा व्यञ्जनादीनां हिङ्ग्वादिसंस्कारैः पूतिर्दुर्गन्धः सौरभ्यं कर्पूरादेः शान्तः शतपत्रादेः उग्रो लशुनादेः अम्लः पर्युषितभुक्तान्नादेः ॥ ४५ ॥

भावनं घटादिनिष्पादनं ब्राह्मणस्थानं ब्राह्मणसब्दश्चराचरोपलक्षणार्थः सर्वेषामाधारत्वमित्यर्थः ब्रह्मणः इतिपाठे तु ब्रह्मणः ब्रह्मकुलस्य स्थानमिति स एवार्थः सन्निवेशणं सतां कारणानां विशेषकत्वं ब्रह्मादिकार्याणां देशभेदेन सारासारवत्त्वदर्शनात् सर्वसत्त्वगुणोद्भेदः तत्तद्देशस्थप्राणिनामाकारविशेषहेतुत्वं यद्वा शब्दादिसर्वसत्त्वगुणवत्त्वं चेति पृथिव्या वृत्तिः कार्यमेव लक्षणमित्यर्थः ॥ ४६ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उदकलक्षणं वक्ति । क्लेदनमित्यादिना । क्लेदनमार्द्रीकरणं पिण्डनं पिण्डीकरणं तृप्तिरलंबुद्धिजनकत्वं प्राणनं चेष्टाहेतुत्वमाप्यायनं सुखकरत्वमुन्दनं विन्दुभावः तापापनोदस्तापनिवारणत्वमन्येभ्यो भूतेभ्यः कार्येषु भूयस्त्वमाधिक्यमिमा अम्भसो वृत्तयः जलस्य स्वरूपलक्षणानि "उदि विन्दुभाव" इति धातुः "उन्दनं विन्दुभावः स्यात्स्यन्दनं स्रवणं स्मृतम्" इत्यभिधानात् पृथिवी तेजःपरमाणुयोगादम्भस उन्दीभाव इति ॥ ४३ ॥

अद्भ्यः पृथिव्युत्पत्तिं वक्ति । रसमात्रादिति । रस एव मात्रा यस्य तत्तथा तस्मादम्भसो गन्धमात्रं गन्धतन्मात्राभूत् तस्मात् गन्धात् पृथिव्यभूत् गन्धं गमयति ज्ञापयतीति गन्धगो घ्राण इन्द्रियविशेषोऽप्यभूत् ॥ ४४ ॥

गन्धलक्षणानि ब्रूते । करम्भेति । करम्भो दग्धपार्थिवविषयः पूतिः क्लिन्नक्षतविषयः शान्तो मिश्रगन्धः उग्रो वचादिविषयः अम्लः आरनालादिविषयः आदिशब्देन कषायादिलक्षणो विवक्ष्यते एकस्य गन्धस्य नानाविधत्वं कथमित्यत उक्तम् । द्रव्येति । द्रव्याणामवयवानामंशानां च वैषम्यात् विशेषलक्षणात् एको गन्धो नानाविधो भवतीत्यर्थः ॥ ४५ ॥

पृथिवीलक्षणं वक्ति । भावनमित्यादिना । भावनमुत्पादकत्वं ब्रह्मस्थानं तु पृथिवीशरीरे ब्रह्मदर्शनादिति वचनात् पार्थिवशरीरेषु ब्रह्मणः सन्निधानात् तत्रैव ब्रह्मदर्शनाच्च यः पृथिव्यां तिष्ठन्नित्यादेश्च धारणं मूर्तद्रव्याणामिति शेषः सन्निवेशणं भूतत्रयमपेक्ष्य विशेषेण व्यक्तत्वं तदुक्तम् "असद्व्यक्तनाम स्याद्व्यक्तं सदिति चोच्यत" इति सर्वसत्त्वगुणोद्भेदः सर्वेषां सत्त्वानां प्राणिनां शरीरे सर्वगुणानामुद्भेदो व्यक्तिः सापि संसारावस्थायामिति ज्ञातव्यम् ।

शरीरं पार्थिवं ज्ञेयमिन्द्रियाण्यौदकानि तु ।
तेजसः कोष्णगोवह्निश्छिद्रमाकाशसंभवम् ॥
प्राणा वायुमयाः सर्वे प्रत्येकं पञ्चधा पुनः ।

इति वचनात् पृथिव्याः प्राधान्यादितरेषामल्पत्वाद्युक्तमुक्तं पृथिव्याः वृत्तिलक्षणम् ॥ ४६ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भूयस्त्वं चन्द्रादिदर्शनेन समुद्रादाविव ॥ ४३—४५ ॥

भावनमिति । ब्रह्मणः परमेश्वरस्य तस्य भावनमिन्द्रनीलादिरूपायास्तस्या रूपादिदृष्टान्तत्वेन स्मरणहेतुत्वं जलादौ गन्धाद्यभावात् असम्यक्त्वमिति । यद्वा विराड्रूपेण तस्य भावनं भावनोपाधित्वम् ॥ ४६—४७ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अम्भसो लक्षणान्याह । क्लेदनमिति । क्लेदनमार्द्रीकरणं वस्त्रादेः पिण्डनं चूर्णीभूतानां पिण्डतासम्पादनं यथा सक्तूनां तृप्तिः क्षुदादिनिवृत्त्या पुरुषसन्तर्पणं भुक्त्वापि जले अपीतेन तृप्तो भवतीति प्राणनाप्यायनं प्राणनं जीवनमाप्यायनं प्राणसन्तर्पणमुन्दनं प्रेरणं जलेन हि पदार्थाः प्रवाहेण नीयन्ते कूलादिश्च पात्यत इति तापापनोदः सन्तापदूरीकरणं भूयस्त्वमेकस्मिन् देशे सजातीयप्रचुरस्यैवावस्थानम् । यद्वा यत्रापः प्रविशन्ति तद्रूपा भवन्तीति अम्भस इमा अष्टौ वृत्तयः ॥ ४३ ॥

पृथिव्या उत्पत्तिमाह । रसमात्रादिति । स्थूलसूक्ष्मादम्भसः क्षुभितगुणात् कालप्रेरितात् प्रथमतो गन्धमात्रमभूत्तस्मात् पृथ्वी घ्राण इन्द्रियं गन्धग्राहकमिति प्रमाणम् ॥ ४४ ॥

गन्धस्य भेदानाह । करम्भेति । करम्भो मिश्रो गन्धः व्यञ्जनादिषु प्रसिद्धः पूतिर्दुर्गन्धः सौरभ्यं चन्दनादिगन्धः पूतिसौरभ्ययोरेव शान्तोग्रौ भेदौ शतपत्रादिगन्धः शान्तः उग्रः चम्पकादेः लशुनादेश्च अम्लः पर्युषितसूपादेः आदिशब्देन धूपादीनामनेकविधो गन्ध उक्तः गन्धानां न. जातिसाङ्कर्यं किन्तु ते भेदाः पृथगेव चित्ररस इव चित्रगन्धाभावात् सजातीयरसस्य गन्धस्य वा कारणगतस्यानभिव्यक्तस्य कार्ये रसगन्धजननात् अत एव हरीतक्यादेरपि रसो भिन्नः धूपादेश्च गन्धः अवान्तरानन्त्यं न दोषाय अन्यथा पदार्थविभाजकोपाधीनां पञ्चविंशतिभेदा न स्युः एतदाह । पृथगिति । तत्त्वे हेतुमाह । द्रव्यावयवेति । द्रव्यस्याधारभूतस्य येऽवयवाः ते विजातीयरसगन्धवन्त इति गन्धो विभिद्यते अथवा यथा योजिताः अवयवाः गन्धमुत्पादयन्ति स्वभावतः सुरभिः ते चेत् विषमा योजिता भवन्ति तदा तं गन्धं नोत्पादयन्तीति गन्धनाशः सम्यगनभिव्यक्तिर्वा गन्धाभासः करम्भादिशब्दैरुच्यते वैषम्यस्य नैकविधत्वात् जलादीनां बहूनां तत्सम्पादकत्वात् गन्धानन्त्यमेव तदाह । एकोऽपि गन्धो विभिद्यत इति ॥ ४५ ॥

नभोगुणविशेषोऽर्थो यस्य तच्छ्रोत्रमुच्यते ।
वायोर्गुणविशेषोऽर्थो यस्य तत्स्पर्शनं विदुः ॥ ४७ ॥
तेजोगुणविशेषोऽर्थो यस्य तच्चक्षुरुच्यते ।
अम्भोगुणविशेषोऽर्थो यस्य तद्रसनं विदुः ॥
भूमेर्गुणविशेषोऽर्थो यस्य स घ्राण उच्यते ॥ ४८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

पृथवीं लक्षयति । भावनमिति । पृथिव्याः पञ्चवृत्तयः स्वभावतः आधारभूता भवति आधेयभूता च देहवृक्षादिरूपा तेषां कारणभूता च प्रतिमारूपा च मनसोपासनार्थं कल्प्या च एवं पञ्चविधा भवन्ति तत्र भावनं मानसं ब्रह्मणः स्थानं प्रतिमा धारणरूपा स्थूला सतां घटादिपदार्थानां विशेषणं नानाविधकारणरूपता सर्वेषां भवति स्थानं नियतमिति विशेषः सतामाकाशादीनामवच्छेदकत्वं सर्वेषां सत्त्वानां प्राणिनां तत्तद्गुणानां धारणमाधारत्वमनियतं सर्वेषां भवति स्थानं नियतमिति विशेषः सतामाकाशादीनामवच्छेदकत्वं सर्वेषां सत्त्वानां प्राणिनां तत्तद्गुणानां च पुंस्त्वादीनामुद्भेदः परिणामविशेषैः प्रकटीकरणं वस्तुतस्तु पूर्वमुत्पन्नायाः पृथिव्या एतानि लक्षणानि जलादिभ्यो वा व्यावृत्तानि वक्तव्यानि प्रतिमाचित्रादेश्चाकृतिमात्रेण भवतीति ब्रह्मण इति वैयर्थ्यं स्यात् नापि स्थानं पृथक्तया स्थितिः तत्सूर्यादेरपि सम्भवतीति न पृथिव्या विशेषलक्षणं तस्माद्भावनं सर्वपदार्थरूपापादकत्वं सर्वमेव भावयतीति ब्रह्मणः शब्दब्रह्मणः परब्रह्मणश्च हृदयकण्ठादिस्थानरूपत्वं धारणं सर्वस्यापि जगतः सतां सर्वेषामेव तत्त्वानां विशेषणं व्यावर्त्तकमवयवभूतं वा काष्ठादावग्निं प्रकटीकृत्य इतरव्यावृत्तिं जनयति। इतरथा तेजसः स्वरूपमेव क्वापि नाभिव्यक्तमिति कुतो व्यावृत्तिर्भवेत् एवं जलमपि स्वान्तर्गतं रसरूपं नद्यादौ प्रकटीकृत्य, प्रदर्शयति । एवं व्यञ्जनादिना वायुं गर्त्तादिना आकाशं शरीरादावहङ्कारादिसर्वाण्येवेन्द्रियाण्यात्मा च किञ्च सर्वसत्त्वानां जीवानां यावन्तो गुणाः आब्रह्मतृणस्तम्बपर्यन्तं भेदाः तेषामुद्भेदः पृथिव्यामेव ॥ ४६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अम्भसो लक्षणमाह । क्लेदनमार्द्रीकरणं पिण्डनं मृदादेः पिण्डीकरणं तृप्तिस्तृप्तिदातृत्वं प्राणनं जीवनम् "आपोमयः प्राण" इति श्रुतेः । आप्यायनं तृड्वैक्लव्यनिवर्त्तनम् औन्दनं मृदूकरणम् । उन्दनमिति पाठेऽपि स एवार्थः । भूयस्त्वं कूपादावुद्धृतस्यापि पुनः पुनरुद्गमः ॥ ४३—४४ ॥

गन्धस्य लक्षणमाह । करम्भो मिश्रगन्धः । यथा व्यञ्जनादीनां हिङ्ग्वादिसंस्कारे पूतिर्दुर्गन्धः ॥ ४५ ॥

पृथिव्या लक्षणमाह । ब्रह्मणः परमेश्वरस्य भावनं प्रतिमानिर्माणकारणत्वं स्थानं जलादिविलक्षणतया नैरपेक्ष्येण स्थितिः। धारणं जलाद्याधारत्वम् । सतामाकाशादीनां विशेषणं विशेषणे हेतुः मलिनमाकाशं धूसरोऽनिलः इत्यादिप्रतीतिर्यत इत्यर्थः सर्व्वेषां सत्त्वानां प्राणिनां तद्गुणानाञ्च पुंस्त्वादीनामुद्भेदः परिणामविशेषः प्रकटीकरणम् ॥ ४६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

क्लेदनमार्द्रीकरणं पिण्डनं चूर्णादेः पिण्डीकरणम् । तृप्तिः अम्भःसेवनफलरूपसुखदातृत्वं प्राणनं जीवनम् । आप्यायनं तृट्तापनिवर्तनमुन्दनं मृदूकरणम् ॥ ४३ ॥

रसः मात्रं तन्मात्रं यस्य तस्मात् ॥ ४४ ॥

करम्भो मिश्रः गन्धः पूतिः दुर्गन्धः सौरभ्यं सुगन्धः शान्तो गम्भीरः उग्रस्तीव्रः ॥ ४५ ॥

भावनं गृहरथादिनिष्पादनम् ब्रह्मणः भगवतः उपास्यस्य स्थानं धारणं जलाद्याधारत्वम् । सतां कार्याणां विशेषणमवच्छेदकत्वं सर्वेषां सत्त्वानां तद्गुणानां पुंस्त्वादीनां च उद्भेदः उत्तरोत्तराकारभेदः पृथिव्या वृत्तिलक्षणम् ॥ ४६ ॥

---

### भाषाटीका ।

भिजादेना गोला करदेना तृप्तिकरना जीवन करना पोषण करना कोमल करना तापको नाश करना पदार्थको अधिक कर देना ये सब जलकी वृत्ति है ॥ ४३ ॥

भगवत्प्रेरणा से विकारको प्राप्त हुये रस तन्मात्रा वाले जल से गन्ध तन्मात्रा भई तिससे पृथिवी तिससे गन्ध का सहायक घ्राण है ॥ ४४ ॥

यद्यपि एक ही गन्ध है तथापि मिश्रित गन्ध दुर्गन्ध सुगन्ध शान्तगन्ध उग्रगन्ध इत्यादि द्रव्यों के अवयवों के भेद से नाना प्रकार भिन्न हो जाता है ॥ ४५ ॥

ब्रह्म का प्रतिमारूप से साकार करना स्थान होना आधार होना घटादि पदार्थों का विशेषण होना सब प्राणियों का पुरुष आदि भेद प्रगट करना ए सब पृथिवी के लक्षण हैं ॥ ४६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

श्रोत्रादीनां शब्दादिग्राहकत्वमुक्तं तेषां च लक्षणं तदेवेत्याह । पञ्चभिः श्लोकार्धैः नभसो गुणविशेषः शब्दो यस्यार्थो विषयः ॥ ४७ ॥ ४८ ॥

---

परस्य दृश्यते धर्मो ह्यपरस्मिन् समन्वयात् ।
अतो विशेषो भावानां भूमावेवोपलक्ष्यते ॥ ४९ ॥
एतान्यसंहत्य यदा महदादीनि सप्त वै ।
कालकर्मगुणोपेतो जगदादिरुपाविशत् ❋॥ ५० ॥
ततस्तेनानुविद्धेभ्यो युक्तेभ्योऽण्डमचेतनम् ।
उत्थितं पुरुषो यस्मादुदतिष्ठदसौ विराट् ॥ ५१ ॥
एतदण्डं विशेषाख्यं क्रमवृद्धैर्दशोत्तरैः ।
तोयादिभिः परिवृतं प्रधानेनावृतैर्बहिः ॥
यत्र लोकवितानोऽयं रूपं भगवतो हरेः ॥ ५२ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

तेषां च श्रोत्रादीनां लक्षणमसाधारणधर्मस्तदेव शब्दादिग्राहकत्वमेव यस्येन्द्रियस्य तदिन्द्रियम् ॥ ४७ ॥
तेज इति सार्द्धकम् ॥ ४८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

श्रोत्रादीनां शब्दादिग्राहकत्वमुक्तं तेषां च लक्षणं तदेवेत्याह पञ्चभिरर्धैः । नभस आकाशस्य गुणविशेषः शब्दो यस्यार्थः विषयः ग्राह्य इति यावत् तच्छ्रोत्रमुच्यते आकाशासाधारणगुणशब्दग्राहकत्वमेव श्रोत्रत्वमित्यर्थः एवमुत्तरत्रापि वेदितव्यम् ॥ ४७ ॥ ४८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रोत्रादीनां लक्षणं वक्ति । नभ इत्यादिना । यस्य नभो गुणविशेषः शब्दोऽर्थो विषयस्तच्छ्रोत्रमिन्द्रियमित्यादिज्ञातव्यं नभो गुणविशेषोत्थ इति पाठे यस्य विषयः शब्दोद्भवशब्द एवार्थ इति ॥ ४७ ॥ ४८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तेजस इति सार्द्धकम् ॥ ४८—४९ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

श्रोत्रादीनां शब्दादिग्राहकत्वं प्रमाणत्वेनोक्तं तदेव तेषां लक्षणमित्याह सार्द्धद्वाभ्याम् । नभोगुण इति । तन्मात्ररूपोऽपि शब्दः आकाशस्य गुणभूतो भवति यथा कार्ये कारणप्रतीतिः । एवं स्वगुणप्रतीतिविवक्षया आकाशस्य शब्दो गुणः एवमग्रे हि नभोगुणः शब्दः असाधारणः ननु संयोगादिरूपः स एवार्थो विषयो यस्य तच्छ्रोत्रमुच्यत इति प्रमाणमनेनान्ये व्याख्याताः वायोर्गुणविशेषः स्पर्शः तेजोगुणविशेषो रूपम् अम्भोगुणविशेषो रसः एवं भूमेर्गुणविशेषो गन्धः ॥ ४७ ॥ ४८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

श्रोत्रादीनां शब्दादिग्राहकत्वमुक्तं तेषाञ्च लक्षणं तदेवेत्याह । नभसोगुणविशेषः शब्दो यस्यार्थो विषयस्तत् श्रोत्रम् ॥ ४७ ॥ ४८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रोत्रादिलक्षणानुवादः नभो गुण इति सार्द्धद्वाभ्याम् । नभोगुणविशेषः शब्दोऽर्थो विषयो यस्य तच्छ्रोत्रमुच्यते एवमग्रे स्पर्शनं त्वक् ॥ ४७ ॥ ४८ ॥

भाषाटीका ।

आकाश का गुण जो शब्द सो जिसका विषय है तिसका नाम श्रोत्र है वायु का गुण जो स्पर्श सो जिसका विषय है तिसका नाम त्वचा है ॥ ४७ ॥
तेज का गुण रूप जिसका विषय है तिसका नाम चक्षु है जलका गुण रस जिसका विषय है तिसका नाम रसना है ॥ ४८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

गुणविशेषशब्दव्यावर्त्यं दर्शयति । परस्येति । परस्य कारणस्य धर्मः शब्दादिरपरस्मिन्कार्ये वाय्वादौ कारणान्वयाद्दृश्यते अतो भावानामाकाशादीनां विशेषो गुणः सर्वोऽपि शब्दादिर्भूमावेवोपलभ्यते चतुर्णां तत्रान्वयात् जलादिषु यथान्वयमेव न सर्वः आकाशे त्वन्यान्वयाभावादेक एव ॥ ४९ ॥
एवं कारणोत्पत्तिमुक्त्वा कार्योत्पत्तिमाह सार्धैस्त्रिभिः । एतान्यसंहत्यामिलित्वा यदा स्थितानि तदा जगदादिरीश्वरः प्राविशत् सप्तेति च प्राधान्याभिप्रायेणोक्तं प्रवेशस्तु सर्वेष्वपि विवक्षित एव ॥ ५० ॥
अनुविद्धेभ्यः क्षुभितेभ्यः यस्मादण्डादसौ विराट् पुरुष उदतिष्ठत् ॥ ५१ ॥
भगवतो रूपमिति पुरुषाभेदाभिप्रायेण ॥ ५२ ॥

❋ न येकः पुरुषं स्रष्टुं भोगायतनमञ्जसा इत्यधिकं श्रीविजयध्वजतीर्थपाठे

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

गुणविशेषशब्दव्यावर्त्यमिति । यथाकाशस्य गुणविशेषः शब्दस्स वाय्वादावप्यनुगत इति वाय्वादौ स शब्दः सामान्यगुणो न तु विशेषः एवं वायोः स्पर्श एव विशेषगुणो न तु शब्दादिः एवमनुगतोऽपि कारणगुणो न विशेषगुणशब्दाभिधानयोग्यः किन्तु सामान्यगुणस्स एव विशेषशब्दव्यावर्त्यस्तमाहेत्यर्थः कारणान्वयात् कारणस्याकाशादेः वाय्वादौ कार्येऽनुगतत्वात् अतः कारणधर्मस्य कार्ये दर्शनात् तत्र भूमौ यथान्वयमेव कारणान्वयमनतिक्रम्यैव आकाशे वाय्वादिकारणेऽन्यस्य वाय्वादिकार्यस्यान्वयासम्भवादेकः शब्द एव ॥ ४९ ॥

कार्यस्याण्डस्योत्पत्ति कालः सृष्टिसमयः कर्म जीवानामदृष्टं गुणा उपादानम् ॥ ५० ॥

ततः । प्रवेशानन्तरमेव तेनानुप्रवेशेन । विराट् हिरण्यगर्भात्मकः सूक्ष्मस्समष्टिजीवः उदतिष्ठत्सुषुप्तिमिवातिक्रम्य सचेतनो बभूव ॥ ५१ ॥

बहिः सर्वतः प्रधानेनावृतैस्तोयादिभिः परिवृतं यथोत्तरमावृतम यत्रेत्यर्द्धकम् । यत्राण्डे लोकानां चतुर्दशभुवनानां समूहः हरेरनिरुद्धस्य रूपं नवीनोपासकानां चित्तस्थैर्यार्थं पातालमेतस्य हि पादमूलमित्याद्यनुसारेण रूपत्वेन वर्णितम् ॥ ५२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यदुक्तं पृथिव्याः सर्वसत्त्वगुणोद्भेद इति लक्षणं तद्विशदयति । परस्येति । हि यस्मात्परस्य कारणस्य धर्मः शब्दादिरपरस्मिन् कार्ये वाय्वादौ समन्वयात् समवायात् दृश्यते अतस्तस्माद्भावानामाकाशादीनां विशेषः शब्दादिः भूमौ पृथिव्यामेवोपलक्ष्यते दृश्यते ॥ ४९ ॥

एवं महदादिपृथिव्यन्तभूतसृष्टिमभिधाय तेभ्योऽण्डोत्पत्तिमभिधास्यन् "नोवीर्याः पृथग्भूतास्ततस्ते संहतिं विना" इत्युक्तरीत्या ईश्वरानुप्रवेशमन्तरेण कार्यासामर्थ्यं वदंस्तेष्वीश्वरानुप्रवेशमाह । एतानीति । एतानि महदादिपृथिव्यन्तानि सप्ततत्त्वानि तन्मात्राणि भूतेषु इन्द्रियाणामहङ्कारे चान्तर्भाव्यसप्तेति निर्देशः यदासंहत्यामिलित्वा स्थितानि तदा कालकर्मगुणोपेतः कर्म अदृष्टं गुणः सत्वादिः कालादिभिरुपेतः जगदादिरीश्वरः तानि महदादितत्त्वानि उपाविशत् ॥ ५० ॥

मेलनं संहतत्वसमागतत्वभेदेन द्विविधं संहतत्वं नाम पृथक्स्थित्यर्हसंयोगमात्रं समागतत्वं पृथक्स्थित्यनर्हसंश्लेषविशेषः एतद्द्वयाभावात् स्रष्टव्यसमर्थान्यवस्थितानीश्वरानुप्रवेशादुभयं प्राप्तेभ्यस्तेभ्योऽण्डम् सृष्टमित्याह । ततः इति । ईश्वरानुप्रवेशानन्तरन्तेनेश्वरानुप्रवेशेन हेतुनानुविद्धेभ्यः समागतेभ्यः युक्तेभ्यः संहतेभ्यस्तत्त्वेभ्य अचेतनमधिष्ठातृचेतनरहितमण्डमुत्थितम् उत्पन्नं कीदृशं तदेतदण्डमित्यत्राह । यस्मादण्डादसौ विराट् समष्टिपुरुषो ब्रह्मोदतिष्ठदुदभूत् ॥ ५१ ॥

पुनरण्डमेव विशिनष्टि । एतदिति । एतद्विशेषाख्यमण्डं बहिः प्रधानेन प्रकृत्या आवृतैः क्रमवृद्धैः क्रमश उत्तरोत्तरमधिकैः किं यदाधिक्यं तत्राह । दशोत्तरैर्दशगुणितोत्तरैः उत्तरोत्तरं दशगुणाधिकैरित्यर्थः तोयादिभिः तोयग्रहणं पृथिव्या उपलक्षणं पृथिव्यादिभिरित्यर्थः परिवृतं परिवेष्टितं यत्र यस्मिन्नण्डे लोकवितानः देवमनुष्यादिलोकविस्तरः भवति तद्भगवतो रूपं शरीरमित्यर्थः ॥ ५२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शब्दादय आकाशादीनां विशेषगुणत्वेन व्यावर्तकधर्मा नव्यभिचारिण इति या वैशेषिकाणां प्रक्रिया तां विघटयितुमाह । परस्येति । परस्य पूर्वस्य कारणस्याकाशादेर्धर्मः शब्दादिगुणोऽपरस्मिन्पश्चात्तने कार्ये वाय्वादौ दृश्यते हि कुतः समन्वयात्सम्बन्धात् ॥ ४९ ॥

ततः किं तत्राह । अत इति । य एवं गुणानां सम्बन्धोऽस्त्यत आकाशादिसर्वभावानां विशेषगुणो भूमावेवोपलक्ष्यत इति सर्वसत्त्वगुणोद्भेद इत्युक्तं साधु वैशेषिककल्पनायाः स्वमनीषोत्थत्वादप्रमाणत्वमित्यतो दृश्यत इति दृष्टेर्बलवत्प्रमाणत्वात्तद्विरोधोऽपि दुर्वार इति महदाद्यभिमानिदेवतास्तुतिप्रसन्नश्रीनारायणाविष्टैरुज्जृम्भितशक्तिभिस्तैरन्त्यावयविनिर्माणात् परमाणुभिर्द्व्यणुकादिक्रमेण खण्डावयव्यन्त्यावयवी च जायत इति कल्पनापि निर्मानेत्यभिप्रेत्याह । एतानीति । यदैतानि महदादीनि सप्त तत्त्वानि भोगायतनं ब्रह्माण्डं स्रष्टुं पुरुषं विराट्पुरुषशरीरं च स्रष्टुं न शेकुः कुत इत्यत उक्तमसंहत्येति असंहत्या चेतनत्वेन स्वतः संयोजनशक्त्यभावेन विश्लिष्यास्थितत्वादित्यर्थः अत एवाऽसेत्युक्तं तदा कालकर्मगुणोपेतो जगदादिः श्रीनारायणो महदादीन्युपाविशद्यथा कार्योत्पत्तिक्षमाशक्तिः स्यात्तथा सन्निहितवानित्यर्थः ॥ ५० ॥

तत्फलमाह । तत इति । तदनन्तरं तेन हरिणानुविश्यानुविद्धेभ्यः प्रेरितेभ्यस्तत्त्वेभ्योऽचेतनमण्डं ब्रह्माण्डमुत्थितमुत्पन्नम्

अचेतनाद्यतस्त्वण्डात् ब्रह्मा समजनि स्फुटम् ।
अतो ब्रह्माण्डमित्याहुर्विराट् ब्रह्मा प्रकाशनात् ॥

इतिवाक्यमस्मिन्नर्थे मानमिति भावेनाह । पुरुष इति । यस्मादण्डादसौ विराट् विशेषेण प्रकाशमानः पुरुषः हिरण्यगर्भं उदतिष्ठदुत्पन्न इत्यन्वयः ॥ ५१ ॥

अस्याण्डस्य पृथिव्यंशानां भूयस्त्वं नामान्तरं च युक्तमिति भावेनाह । एतदण्डमिति । तोयाद्यावरणविशेषविशेषितत्वाच्च विशेषाभिधानं युक्तमिति भावेनाह । क्रमवृद्धैरिति । क्रमवृद्धिमेव विशिनष्टि । दशोत्तरैरिति । ततो बहिर्गुणत्रयेण प्रधानेन मूलप्रकृत्या चावृतमन्तश्चतुर्दशभुवनलक्षणैर्विशिष्टत्वाद्विशेषाख्यमित्याशयेनाह । यत्रेति । यत्र यस्मिन्नण्डेऽयं लोकवितानः पातालादिलोकविस्तारो विशेषित इति शेषः अयमपि कश्चन विशेषोऽस्तीत्याह । रूपमिति । रूपं मूर्तिः प्रतिमासन्निधानविशिष्टत्वात् ॥ ५२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एतानीति । अधुना कालादिविशेषैरुपेत इति ज्ञेयम् ॥ ५० ॥ उत्थितमुत्पन्नं विराट् पुरुषो हिरण्यगर्भात्मकः समष्टिजीवः उदतिष्ठत्सुषुप्तमिवातिक्रम्य सचेतनो बभूव ॥ ५१ ॥ ५२ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

कारणानुप्रवेशात् उत्तरोत्तरं धर्माधिक्यमाह । परस्येति । परस्य कारणस्य धर्मः अपरस्मिन् कार्ये कारणसमन्वयात् धर्मो दृश्यते अतः स्वधर्मः कारणधर्मश्च कार्ये भवति सर्वेऽपि विशेषाः पञ्चापि गुणाः अन्तिमकार्ये पृथिव्यामेवेत्याह । अतो विशेष इति । साङ्ख्यशास्त्रत्वात् नास्य विशेषतः सर्वबोधकत्वं वीणादिशब्दः वाङ्मित्तक इति कारणसम्बन्धेन तथात्वं चित्राणि च रूपाणि परप्राप्तानि सर्वेऽपि विशेषा भूमावेवोपलभ्यन्ते दृश्यन्ते ॥ ४९ ॥

एतेषामुत्पत्तिस्वरूपलक्षणान्युक्त्वा कार्यतोऽपि तानि वक्तुं तेभ्यो ब्रह्माण्डोत्पत्तिमाह । एतानीति । यद्यचेतनेभ्य एव तत्त्वेभ्यः कार्यमुत्पद्येत तदा तस्मिन्सङ्घाते नात्मा मृग्यः स्यात् सर्वस्यैव जडत्वात् अतः सङ्घातश्चेतनसहितानामिति वक्तुं केवलानामकारणत्वमाह । एतानि यदा असंहत्य अमिलित्वा मुख्यानि सप्त महदादीनि स्थितानीत्यर्थात् तदा भगवान् कालप्रायण्यदृष्टसत्त्वादिगुणैर्मिलितः सर्वजगत्कार्यकारणभूतः एतान्युपाविशत् अत्रैकं वाक्यमार्थिकं व्यवच्छिप्यते अथवा भगवानेव असंहत्य एतान्यमेलयित्वा पश्चादुपाविशदिति अग्रे उत्पद्यमानं जगत् यथा चतुर्णामधीनं भवति आत्मकालकर्मस्वभावानां तदर्थं कालादिभिः सह प्रवेशः ॥ ५० ॥

ततो ब्रह्माण्डमुत्पन्नमित्याह । तत इति । ततः भगवत्प्रवेशानन्तरं तेन भगवता अनुविद्धेभ्यः योजनार्थं गुणान् गृहीत्वा सूच्येव विद्धेभ्यः प्रथमतः अचेतनमेवाण्डमुत्थितं यस्मादण्डादसौ पुरुषः पूर्वं तत्त्वेषु प्रविष्टः स एव विराड्रूपो भूत्वा उदतिष्ठत् ॥ ५१ ॥

ब्रह्माण्डे चेतनाचेतनोत्पत्तिमुक्त्वा तस्य नामस्वरूपे आह । एतदण्डमिति । विशेष इत्यस्य नाम स्वयं सर्वतः पञ्चाशत्कोटियोजनविस्तृतं स्वतः ततः उत्तरोत्तरं पूर्वस्मात् दशगुणं वृद्धैः तोयादिभिः सर्वतः परिवृतमन्ततः प्रधानेन च आवृतमेवमस्य महत्त्वमत्र स्थितसर्वजगतः भगवत्त्वेनापि महत्त्वमाह । यत्र लोकवितानोऽयमिति । अयं सर्वोऽपि जीवलोकविस्तारः भगवतो रूपं तस्मादेतद्भगवदाधारभूतम् ॥ ५२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

किञ्च पञ्चसु भूतेषु मध्ये यथोत्तरं गुणाधिक्यमाह । परस्य कारणस्य धर्मः शब्दादिः अपरस्मिन् कार्य्ये वाय्वादौ कारणान्वयात् दृश्यते तत्राकाशेऽन्यान्वयाभावादेक एव शब्दः वायौ द्वौ शब्दस्पर्शौ । तेजसि त्रीणि शब्दस्पर्शरूपाणि । जले चत्वारः शब्दस्पर्शरूपरसाः भूमौ पञ्चैव शब्दस्पर्शरूपरसगन्धाः इत्याह । अत इति । भावानामाकाशादीनां विशेषः सर्व एव गुणः ॥ ४९ ॥

एवं कारणोत्पत्तिमुक्त्वा कार्य्योत्पत्तिमाह । एतानि तत्त्वानि असंहत्य अमिलित्वा यदा स्थितानि तदा जगदादिरीश्वरः प्राविशत् प्रथमं संहननकारिण्या शक्त्या सर्व्वतत्त्वसम्मेलनार्थमविशत् ततो वर्षसहस्रान्ते तदन्तर्य्यामित्वेन प्राविशदिति ज्ञेयं कालः क्षोभकः कर्म्म जीवादृष्टं गुणाः प्रकृतिस्तैः सहितः सन्नेति प्राधान्याभिप्रायेणोक्तं प्रवेशस्तु सर्वेष्वेव विवक्षितः ॥ ५० ॥

तेन तत्प्रवेशेन अनुविद्धेभ्य आदौ क्षुभितेभ्यस्तत्त्वेभ्यस्तदेव युक्तेभ्यो मिलितेभ्यस्तत्त्वेभ्योऽण्डमुत्थितमुत्पन्नम् । यस्माद्विराट् पुरुषो हिरण्यगर्भात्मकः समष्टिजीवः उदतिष्ठत् निद्रामिवातिक्रम्य सचेतनो बभूव ॥ ५१ ॥

अण्डमिति । विशेष इत्याख्या नाम यस्य तत् दशगुणाधिकैरुत्तरोत्तरैः बहिः स्थितप्रकृत्या वरणेनावृतैः रूपं मायिकम् ॥ ५२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

परस्य कारणस्य धर्मः शब्दादिः । अपरस्मिन् कार्ये समन्वयाद्दृश्यते तथाहि नभसि शब्द एव वायौ शब्दस्पर्शौ तेजसि शब्दस्पर्शरूपाणि जले शब्दस्पर्शरूपरसाः अतः एवम्भूतात् समन्वयात् सर्वभावानां विशेषः शब्दस्पर्शादिरूपो भूमावेवोपलभ्यते ॥ ४९ ॥

एवं चतुर्विंशतिप्राकृततत्त्वगुणो दर्शितः प्रकृतेस्तत्रैवान्तर्भावात् ब्रह्माण्डोत्पत्तिं दर्शयति । एतानीत्यादिना जगदादिः परमात्मा ॥ ५० ॥

अनुविद्धेभ्यः प्रेरितेभ्यः युक्तेभ्यो यूथीकृतेभ्यः ॥ ५१ ॥ ५२ ॥

भाषाटीका ।

भूमी का गुण गन्ध जिसका विषय है तिसका नाम नासिका है कारण आकाशादिकों का धर्म कार्य वायु आदिकोंमें दीखता है इसीसे सबभूतों के गुण पृथिवी में दीखते हैं ॥ ४९ ॥

ए सब महदादिक जब विना मिले सृष्टि में समर्थ न भये तब काल कर्म गुण के सहित जगत्के आदि भगवान् प्रवेश हो गये ॥ ५० ॥

तब भगवान् के प्रवेश होने से अचेतन अण्ड उत्थित भया तब तिसमेंसे विराट् प्रगट भया ॥ ५१ ॥

ए विराट् नाम जो अण्ड है क्रम से वृद्ध दशोत्तर जलादिकों से वेष्टित है बाहिर प्रधान से युक्त है इसी में ब्रह्म भगवान् हरिका लोक विस्तार है ॥ ५२ ॥

हिरण्मयादण्डकोशादुत्थाय सलिलेशयात् ।
तमाविश्य महादेवो बहुधा निर्बिभेद खम् ॥ ५३ ॥
निरभिद्यतास्य प्रथमं मुखं वाणी ततोऽभवत् ।
वाण्या वह्निरथो नासे प्राणोतो घ्राण एतयोः ॥ ५४ ॥
( १ ) घ्राणाद्वायुरभिद्येतामक्षिणी चक्षुरेतयोः ।
तस्मात् सूर्योन्यभिद्येतां कर्णौ श्रोत्रं ततो दिशः ॥ ५५ ॥
निर्बिभेद विराजस्त्वग्रोमश्मश्र्वादयस्ततः ।
तत ओषधयश्चासन् शिश्नं निर्बिभिदे ततः ॥ ५६ ॥
रेतस्तस्मादाप आसन्निरभिद्यत वै गुदम् ।
गुदादपानोऽपानाच्च मृत्युर्लोकभयङ्करः ॥ ५७ ॥
हस्तौ च निरभिद्येतां बलं ताभ्यां ततः स्वराट् ।
पादौ च निरभिद्येतां गतिस्ताभ्यां ततो हरिः ॥ ५८ ॥
नाड्योऽस्य निरभिद्यन्त ताभ्यो लोहितमाभृतम् ।
नद्यस्ततः समभवन्नुदरं निरभिद्यत ॥ ५९ ॥
क्षुत्पिपासे ततः स्यातां समुद्रस्त्वेतयोरभूत् ।
अथास्य हृदयं भिन्नं हृदयान्मन उत्थितम् ॥ ६० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्मिन्नध्यात्मादिविभागमाह । हिरण्मयादिति नवभिः । उत्थायौदासीन्यं विहाय तमाविश्याधिष्ठाय महांश्चासौ देवश्च खं छिद्रम् ॥ ५३ ॥

वाण्या सह वह्निरभवत् प्राविशत् नासे निरभिद्येताम् प्राणोतः प्राणेन ऊतः स्यूतः सन् घ्राण एतयोर्नासिकयोरभवदित्यनुषङ्गः ॥ ५४ ॥

घ्राणादनन्तरं वायुश्च प्राणोत इति विशेषणं सर्वेन्द्रियेष्वपि द्रष्टव्यं न्यभिद्येतामन्वभिद्येतामिति पाठद्वयेऽप्येक एवार्थः ततो दिशः प्राविशन् ॥ ५५ ॥

आदिशब्देन केशाः ॥ ५६ ॥ ५७ ॥

स्वराडिन्द्रः हरिर्विष्णुः ॥ ५८ ॥

आभृतं जातम् ॥ ५९ ॥ ६० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

तस्मिन्नण्डे प्रविष्टस्य तस्य शयनानभिधानादुत्थानासंभवादौदासीन्यं विहायेति लाक्षणिकोऽर्थः छिद्रमिन्द्रियाधिष्ठानरूपं निर्बिभेद पृथक् पृथक् कृतवान् ॥ ५३ ॥

मुखं व्यष्टिमुखानां कारणांशं ततस्तस्मिन्मुखे अभवत्प्राविशत् तत्र मुखमधिभूतं वाणी अध्यात्मं वह्निरधिदैवम् एवं परत्रापि ज्ञेयम् घ्राणेन्द्रियमभवत्प्राविशत् ॥ ५४ ॥

घ्राणादनन्तरमिति व्याख्यानादग्रेऽपि पञ्चम्यन्तानां तदनन्तरमिति व्याख्या ज्ञेया तस्मात्तस्मिंश्चक्षुषि सूर्यः प्राविशत् ततः श्रोत्रप्रवेशानन्तरमभवन् प्राविशन्निति व्याख्यानादत्र सर्वत्र भवतेः प्रवेशार्थो विवक्षितः अस्तिभूकृञर्थास्सर्वत्रानुगता इति सामान्यार्थो धातुः काष्ठानि कुर्वित्यत्राहरेति वद्विशेषपरो दृष्टः ॥ ५५ ॥

त्वक् चर्माधिष्ठानमधिभूतं रोमादयोऽध्यात्मं ततः रोमश्मश्र्वादिभ्योऽनन्तरमोषधयः ओषध्यः महीरुहाभिमानिदेवताः अधिदैवं शिश्नं रेतोऽधिष्ठानं ततस्तदनन्तरम् ॥ ५६ ॥

रेत इन्द्रियम् । तस्माद्रेतसोऽनन्तरम् आपस्तदभिमानिन्यो देवता आसन्प्राविशन् गुदादनन्तरमपानेन्द्रियं कर्तृ गुदं प्राविशत् अपानानन्तरं मृत्युर्देवता प्राविशत् ॥ ५७ ॥

ताभ्यामनन्तरं बलं दानादानक्रियाख्यमिन्द्रियं निर्भिन्नं गतिः गत्याख्यकर्मेन्द्रियं हरिस्तदावेशावतारो देवताविशेषः ॥ ५८ ॥

नाड्य इत्यर्द्धकम् । लोहितं रक्तादिसञ्चारकशक्तिः नद्यस्तदभिमानिन्यो देवताः प्राविशन् ॥ ५९ ॥

क्षुत्पिपासे तदुद्दीपकशक्तिविशेष इन्द्रियम् समुद्रस्तदभिमानिदेवः अभूत्प्रविवेश ततः हृदयाधिष्ठानादनन्तरं मन इन्द्रियं जातम् ॥ ६० ॥

---

( १ ) प्राणादिति श्रीवल्लभाचार्यपाठः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं महदादिचतुर्मुखान्तसृष्टिरुक्ता अथ समष्टिभूतचतुर्मुखशरीरस्य तत्तदवयवाद्दिशादिव्यष्टिशरीराणामिन्द्रियतत्स्थानतदभिमानिदेवतानां विभागं विवक्षुः सोऽपि विभागश्चतुर्मुखशरीरकपरमात्मकर्तृक एवेत्याह । हिरण्मयादिति । सलिलेशयात् उषितात् हिरण्मयात्प्रकाशबहुलादण्डकोशादुत्थायाण्डकोशे शयानोऽनिरुद्धरूपी भगवान् तत उत्थाय प्रवृत्त्युन्मुखो भूत्वा तं चतुर्मुखमाविश्य महादेवो भगवान् खमिन्द्रियगणं बहुधाऽनेकधा निर्बिभेद समष्टिभूतचतुर्मुखशरीरस्थमिन्द्रियगणं व्यष्टिरूपेणानेकधा विभक्तमकरोदित्यर्थः ॥ ५३ ॥

विभागमेवाह । निरभिद्यतेत्यष्टभिः । अस्य ब्रह्मणः प्रथमं मुखं निरभिद्यत नटस्य शृणोतीतिवदस्येति पञ्चम्यर्थस्यैव शेषत्वाविवक्षया षष्ठी बोध्या समष्टिभूतब्रह्मशरीरमुखाद्देवादीनां वागिन्द्रियाधिष्ठानं व्यष्टिमुखं विभक्तमभूदित्यर्थः ततो वाणी वागव्ययाधिष्ठानं ... विभक्तोऽभिरभवत् वाण्या वागिन्द्रियात्तदधिष्ठाता वन्हिरभवद्विभक्तोऽभून् अथोऽनन्तरनस्य नासे घ्राणेन्द्रियाधिष्ठाने नासाबिले व्यष्टीनां निरभिद्येताम् अतः नासाभ्यां घ्राणः घ्राणेन्द्रियव्यष्टिः एतयोरेतस्या- घ्राणेन्द्रियस्याधिष्ठानापेक्षया एतयोरिति द्विवचननिर्देशः यद्वा एतयोर्नासिकयोः प्राणः प्राणाधीनः घ्राण एतयोरभवदित्यनुषङ्गः ॥ ५४ ॥

घ्राणादनन्तरं तदधिष्ठाता वायुश्च प्राणाधीनत्वं सर्वेन्द्रियेष्वपि द्रष्टव्यं तथाहि छन्दोगवाजसनेयिनां प्राणविद्यायाम्„एता ह वै देवता अहं श्रेयसे व्यूदिरे अहं श्रेयसे विवदमाना„ इति चोपक्रम्य वागाद्येकैकापक्रमणे अन्येषां सप्राणानामिन्द्रियाणां शरीरस्य च स्थितिं तत्कार्यं चाविकलं प्रतिपाद्य प्राणोत्क्रमणे सर्वेषां विशरणमकार्यकरत्वं चाभिधाय सर्वेषां प्राणाधीनस्थितित्वमभिहितम् अक्षिणी चक्षुरिन्द्रियाधिष्ठाने भिद्येतां विभक्तेऽभवतामनयोरक्ष्णोश्चक्षुरिन्द्रियं निरभिद्यत तस्माच्चक्षुषः सूर्यश्चक्षुषोऽधिष्ठाता अभवत् कर्णौ श्रोत्रेन्द्रियाधिष्ठाने निरभिद्येतां ततः श्रोत्रेन्द्रियं तदधिदेवता दिशश्च निरभिद्यन्त ॥ ५५ ॥

विराजो ब्रह्मणः रोमश्मश्र्वादयः त्वगिन्द्रियाधिष्ठानभूताः ततस्त्वगिन्द्रियं ततस्तदधिदेवता ओषधयश्चासन् एवं शिश्नमुपस्थेन्द्रियाधिष्ठानम् ॥ ५६ ॥

रेत उपस्थेन्द्रियं तदधिदेवता आपः गुदं पाय्विन्द्रियाधिष्ठानं पाय्विन्द्रियरूपोऽपानः प्राणस्तदधिष्ठाता लोकसंहर्ता मृत्युः ॥ ५७ ॥

हस्तौ पाणीन्द्रियाधिष्ठानं बलाख्यं प्राणेन्द्रियं तदाधिष्ठाता स्वराट् स्वराडत्रेन्द्रः "स्वराडिन्द्रः प्रथममासीत्" इति श्रुतेः पादौ पादेन्द्रियाधिष्ठानं गत्याख्यं प्राणेन्द्रियं तदधिदेवता हरिरुपेन्द्रः ॥ ५८ ॥

अस्य ब्रह्मणः नाड्यः अधिष्ठानम् आभूनं पूर्णं लोहितमिन्द्रियस्थानीयं तदधिदेवता नद्यः उदरमधिष्ठानम् ॥ ५९ ॥

क्षुत्पिपासे इन्द्रियस्थानीये समुद्रोऽधिदेवता हृदयपुण्डरीकाकारमधिष्ठानं मनः सङ्कल्पात्मकवृत्त्यवच्छिन्नान्तरिन्द्रियम् ॥ ६० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इदानीमुदतिष्ठदसौ इत्युक्तं विवृणोति । हिरण्मयादिति । प्रासादात्प्रेक्षत इति वत् द्वितीयार्थे पञ्चमी महादेवो देवोत्तमो हरिः सलिलेशयं हिरण्मयाण्डकोशमुत्थायोत्थाप्य तदन्तः प्रविश्य स्वस्मादुत्पन्नस्य विराट्पुरुषस्याण्डगत् स्थितं शरीरं पुनः समाविश्य यथा सान्निधानविशेषो भवति तथान्तः स्थित्वा मुखविवरादिलक्षणं खमाकाशं निर्बिभेद व्यक्तमकरोदित्यन्वयः॥५३॥

ब्रह्मशरीरस्य मुखादिव्यक्तिप्रकारं वक्ति । निरभिद्यतेत्यादिना । अस्य ब्रह्मणः प्रथमं मुखं निरभिद्यत व्यक्तमभूत् ततो मुखाद्वाणी वागिन्द्रियं तस्माद्वागिन्द्रियात्तदभिमानी वह्निरभूदित्येवमेवोत्तरत्रानुसन्धेयं नासे नासापुटे घ्राणो नाम नासिका अध्यात्माधिदैवभेदेन एकस्य प्राणो वायुरिति नामद्वयम् ॥ ५४ ॥

दिशः दिग्देवताः ॥ ५५ ॥

विराजः ब्रह्मणः ततो रोमादिभ्यः शिश्नं लिङ्गं तत उपस्थेन्द्रियम् ॥ ५६ ॥

ततो रेतः तस्माद्रेतसो गुदशब्दस्तु गोलकेन्द्रिययोरपि वाचकः गुदात्पाय्विन्द्रियं ततोऽपानो मृत्युर्मरणलक्षणः ॥ ५७ ॥

स्वराडिन्द्रस्ताभ्यां पादाभ्यां गतिर्गन्तव्यमिन्द्रियं तदिन्द्रियाद्धरिरित्यत्रेदं तात्पर्यमिन्द्रियाद्यज्ञदेवनामाभिमानी तदन्तर्यामी हरिश्च (१) ब्राह्मणाङ्गुष्ठजलपायिनां फलदानार्थत्वेन कृतसन्निधानविशेषत्वाद्धरिरिति ।

यज्ञनामा तु देवोऽन्यो विज्ञेयः पाददेवता ।
तमाविष्टो हरिर्नित्यं तमाहुः पाददैवतम् ।

इतिवचनात् ॥ ५८ ॥

विरिञ्चशरीरान्नाड्युत्पत्तिं वक्ति । नाड्यश्चेति । आहृतमुत्पन्नं ततो रुधिरात्तत उदरात् ॥ ५९ ॥

तयोः क्षुत्पिपासयोः अथोदरोत्पत्त्यनन्तरं भिन्नं व्यक्तम् ॥६०॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

खमाकाशं बहुधा निर्बिभेद पृथक् पृथक् कृतवान् ॥ ५३ ॥
मुखं व्यष्टिमुखानां कारणांशमेवं वाण्यपि ॥ ५४ ॥ ५५ ॥
ओषध्य आपश्च तत्तदभिमानिन्यः ॥ ५६ ॥ ५७ ॥
हरिस्तदावेशावतारो देवताविशेषः ॥ ५८ ॥
नाड्य इत्यर्धकम् । लोहितं रक्तादिसञ्चारिका शक्तिः ॥५९ ६०॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

स बहुकालं पुरुषत्वसम्पादनार्थं तस्यां पुरि शयनं कृतवान् पुरि शेत इति पुरुषपदनिर्वचनात् यावदयं शयनं कृतवान् तावत्पूर्वमनुवेदरूपेण प्रविष्टाः भगवदंशा भोगं न प्राप्नुवन्तः यदा तु पुनस्तत उत्थाय तस्मात्पृथग्भूताः सन्तः तत्र निविष्टाः तदा सर्वांशानां भोगार्थं तत्र स्थानानि जातानीत्याह । हिरण्मयादिति । प्रकाशबहुलात् सुवर्णमयात् सलिले विद्यमानात् नारायणशब्दवाच्यात् विराट् देहादुत्थाय पुनः तमाविश्य सर्वत्र विद्यमानमाकाशं बहुधा निर्बिभेद बहूनि छिद्राणि कृतवान् भगवदुत्थानेऽपि कोशस्य नाशाभावार्थं हिरण्मयत्वमुक्तं रक्षसां

(१)यथा वैष्णवसिद्धान्ते शिवार्चनादेर्विधानाभावेऽपि तत्कुर्वतां तद्योग्यानित्यफलादिदातृत्वमुख्यतोहरेरेव तथात्रापि पादाभिमानि यज्ञस्य तज्जलपायिनां फलदाने स्वातन्त्र्याभावात्तादृशफलदानाय हरिसंन्निधानं ननु वैष्णवानां कर्तव्यत्वेन विधायकमिति सत्संप्रदायः। अस्मिन्विषये विष्णुसंहितोक्तप्रमाणानिसन्ति ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

बाधाभावार्थं सलिलेशयत्वमुक्तं महादेवो हि अल्पनिरूप्यो भवतीति अल्पैः सहितः समर्थः तत्र शरीरे छिद्राणि कृतवान् पुनरपि प्रविष्टोऽयं भेदमात्रं कृतवानिति पुरुषत्वमेव स्थितं नानेन विराजः कार्यकारणसामर्थ्यं भवति यथा प्रतिमादौ भगवान् तिष्ठति तथैवायं स्थित इति ज्ञातव्यमन्यथा तत्त्वेभ्यः आत्मविवेको न स्यात् ॥ ५३ ॥

छिद्राणां विनियोगमाह। निरभिद्यतेत्याद्यष्टाभिः। प्रथमत आस्यं निर्भिन्नं विवरात्मकं तस्य मुखमिति नाम अस्येति पाठः प्रथममस्य मुखं निर्भिन्नं ततो वाणी वागिन्द्रियं तत्राभवत्प्रविष्टं वाण्या सह वह्निरपि तत्राभवत् अथो छिद्रान्तरे भिन्नप्रक्रमेण नासापुटे निरभिद्येतां तयोर्घ्राण इन्द्रियं निविष्टं तच्च देवतया विद्धमित्याह। प्राणोत इति। प्राणेन ऊतः स्यूतः सम्बद्धः उभयोरेक एव निविष्टः अयं प्राणः नेन्द्रियदेवतारूपः किन्तु सर्वनियामकः आसन्यात्मकः ॥ ५४ ॥

तस्य तत्र कथनप्रयोजनमाह । प्राणाद्वायुरिति। तस्मात् प्राणाद्वायुः इन्द्रियदेवतारूपः निरभिद्यत भगवत्कृतसृष्टौ अश्विनीकुमारौ इन्द्रियदेवते भगवदर्थसृष्टौ तु वायुरिति विशेषः ततो अक्षिणी गोलके उभयोरपि चक्षुरेकमिन्द्रियं तस्मात्सूर्य आविर्भूतः कर्णावन्वभिद्येतां ततः श्रोत्रं ततो दिशः ॥ ५५ ॥

विराजस्त्वक् निर्भिन्ना निर्विभेद आविरभूदित्यर्थः तत्र लोमयं इन्द्रि श्मश्रुकेशाश्च लोमविशेषाः तत्र देवता ओषधयः अस्यां सृष्टौ त्वक्चर्मणोरैक्यं स्पर्शः त्वगिन्द्रियेण वायुदेवताकेन गृह्यत इति पूर्वमुक्तं शिश्नं गोलकम् ॥ ५६ ॥

रेत इन्द्रियमापो देवता आप एव पुरुषाकारा भवन्तीति पूर्वं को देवः सर्वत्र वैलक्षण्ये सृष्टिभेदो नियामकः गुदं पायुस्थानमपान इन्द्रियं तत्र मृत्युर्देवः स च लोकभयङ्कर इति वैराग्यार्थमुक्तं मृत्युरूपेणैव तिष्ठति मध्ये मृत्युरिति च ॥ ५७ ॥

हस्तौ गोलकस्थानीयौ बलमिन्द्रियं ताभ्यां सहैव निर्गतमिति तृतीया ततो बलात् स्वराट् इन्द्रः एवं पादावपि गतिरिन्द्रियं ततो गतिरूपात् हरिर्विष्णुर्देवः ॥ ५८ ॥

नाड्यो गोलकमासमन्तात भृतं लोहितमिन्द्रियं भृतं जातमिति वा नद्यो देवताः। उदरं गोलकम् ॥ ५९ ॥

क्षुत्पिपासे इन्द्रियं समुद्रो देवता हृदयं चतुर्णां गोलकं तत्रैकं मन इन्द्रियम् ॥ ६० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तस्मिन्नध्यात्मादित्रिभागमाह । हिरण्मयादिति। आविश्य अधिष्ठाय महांश्चासौ देवश्च बहुविधं खं छिद्रं निर्विभेद पृथक् पृथक् चकार ॥ ५३ ॥

वाण्या सह वह्निरभवत् प्राविशत् नासे निरभिद्येतां प्राणोतः प्राणेन स्यूतः सन् घ्राणः एनयोर्नासयोरभवदित्यनुषङ्गः । प्राणोत इति विशेषणं सर्वेन्द्रियेषु लिङ्गविपरिणामेन द्रष्टव्यम् ५४।

घ्राणादनन्तरं वायुराविशत् । एवमेवाग्रेऽपि पञ्चम्यन्तानां तदनन्तरमिति व्याख्या ज्ञेया सूर्य्योऽनुभिद्यतां न्यभिद्येतामिति पाठद्वयम् ॥ ५५ ॥ ५६ ॥ ५७ ॥

स्वराट् इन्द्रः हरिः हरिणा आविष्टो देवविशेष इति सन्दर्भः ॥ ५८ ॥

लोहितं रक्तादिसञ्चारकमिन्द्रियमाभृतं जातम् ॥ ५९ ॥

हृदय एव मनआद्यन्तःकरणचतुष्टयस्याधिष्ठानं गिरांपति ब्रह्मा ॥ ६० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हिरण्मयात् । भगवत्प्रकाशयुक्तात् महादेवः सर्वदेवदेवो भगवान् उत्थाय आत्मानं पृथक् विभाव्य आविश्य अधिष्ठाय खं छिद्रम् ॥ ॥ ५३ ॥

अस्य विराजः प्रथमं मुखं निरभिद्यत ततस्तत्र वाणी वागिन्द्रियं तया सह वह्निश्चाभवत् विभक्तोऽभूत् नासे निरभिद्येताम् एतयोः नासयोः प्राणेनोतः स्यूतः अभवदित्यनुषङ्गः प्राणोत इति विशेषणं सर्वेषु इन्द्रियेषु योज्यम् ॥ ५४ ॥

घ्राणाद्वायुरभवत् दिशः श्रोत्रेन्द्रियदेवता निरभिद्यन् ॥ ५५ ॥

आर्द्रता केशाः ततस्तत्र ॥ ५६ ॥

रेतस्तस्मात् आपः जलानि ॥ ५७ ॥

स्वराडिन्द्रः हरिर्विष्णुः ॥ ५८ ॥

आभृतं जातम् ॥ ५९ ॥

गिरां पतिः ब्रह्मा ॥ ६० ॥

---

भाषाटीका ।

तब उस हिरण्मय सलिल अण्डकोश को उठाकर के उस मे प्रवेश होकर परमेश्वर ने बहुत प्रकार छिद्रभेदन किये ॥ ५३ ॥

पहिले उनका मुख निकला तिस में से वाणी भई तिसके साथ अग्नि प्रविष्टभया नासिका के सहित फिर प्राण घ्राण इन्द्रियभई ॥ ५४ ॥

नासिकाके पीछे वायु प्रविष्ट भया फिर दो नेत्र गोलक निकले तब चक्षु इन्द्रिय निकला तिसके पीछे सूर्य देवता प्रविष्ट भया फिर कर्ण गोलक निकले जिनमे श्रोत्र इन्द्रिय भयातिस मे दिशा देवता प्रविष्टभया ॥ ५५ ॥

फिर विराट् मे से त्वचा निकली तब रोमश्मश्रु आदि इन्द्रिय भये उसमे औषधि देवता प्रविष्ट भये फिरलिङ्गनिर्भिन्न भया ॥ ५६ ॥

तब रेत इन्द्रिय भया उसमे जल देवता प्रविष्टभया फिर गुदा भया उसमे अपान इन्द्रिय भई तिसमे लोकभयङ्कर मृत्यु प्रविष्टभया ॥ ५७ ॥

फिर हस्त निकले जिनमे बल इन्द्रियं भया तिसमे इन्द्र देवता प्रविष्टभया फिर पैर निकले उनमे गति इन्द्रियभया उसमे उपेन्द्र देवता प्रविष्ट भये ॥ ५८ ॥

फिर इस विराटकी नाडी उत्पन्न भई जिनसे रक्त इन्द्रिय भया उनके नदी देवता भये फिर उदरभया ॥ ५९ ॥

क्षुधा प्यास इन्द्रिय भये समुद्र उनका देवता भया तदनन्तर इस विराट् का हृदय भया जिसमे से मन इन्द्रिय भया ॥ ६० ॥

---

मनसश्चन्द्रमा जातो बुद्धिर्बुद्धेर्गिरां पतिः ।
अहङ्कारस्ततो रुद्रश्चित्तं चैत्यस्ततोऽभवत् ॥ ६१ ॥
एते ह्यभ्युत्थिता देवा नैवास्योत्थापनेऽशकन् ।
पुनराविविशुः खानि तमुत्थापयितुं क्रमात् ॥ ६२ ॥
वह्निर्वाचा मुखं भेजे नोदतिष्ठत्तदा विराट् ।
घ्राणेन नासिके वायुर्नोदतिष्ठत्तदा विराट् ॥ ६३ ॥
अक्षिणी चक्षुषादित्यो नोदतिष्ठत्तदा विराट् ।
श्रोत्रेण कर्णौ च दिशो नोदतिष्ठत्तदा विराट् ॥ ६४ ॥
त्वचं रोमभिरोषध्यो नोदतिष्ठत्तदा विराट् ।
रेतसा शिश्नमापस्तु नोदतिष्ठत्तदा विराट् ॥ ॥ ६५
गुदं मृत्युरपानेन नोदतिष्ठत्तदा विराट् ।
हस्ताविन्द्रो बलेनैव नोदतिष्ठत्तदा विराट् ॥ ६६ ॥
विष्णुर्गत्यैव चरणौ नोदतिष्ठत्तदा विराट् ।
नाडीर्नद्यो लोहितेन नोदतिष्ठत्तदा विराट् ॥ ६७ ॥
क्षुत्तृड्भ्यामुदरं सिन्धुर्नोदतिष्ठत्तदा विराट् ।
हृदयं मनसा चन्द्रो नोदतिष्ठत्तदा विराट् ॥ ६८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

बुद्ध्यादिषु हृदयमेवाधिष्ठानं गिरांपतिर्ब्रह्मा चैत्यः क्षेत्रज्ञः ॥ ६१ ॥

अन्वयव्यतिरेकाभ्यां क्षेत्रज्ञं विवेक्तुं सर्वेषां पुनः प्रवेशमाह । एत इति नवभिः ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

अहमित्यर्द्धकम् । क्षेत्रज्ञः हिरण्यगर्भान्तर्यामी प्रद्युम्नः नतु जीवः हिरण्यगर्भस्य जीवत्वेन कर्तृत्वाद्देवतात्वानुपपत्तेः चित्तेनेत्यादिना सर्वोत्थापनक्षमत्वेन तस्यैव वक्ष्यमाणत्वाच्च ॥ ६१ ॥
अन्वयव्यतिरेकाभ्यामन्तर्यामिक्षेत्रज्ञप्रवेशसत्त्वे ब्रह्माण्डोत्थानसत्त्वमन्वयस्तत्प्रवेशाभावे तदुत्थानाभावो व्यतिरेकस्ताभ्याम् अभ्युत्थिताः स्वस्वाधिष्ठानसंयोगं प्राप्ता अपि उत्थापने वहिश्चेष्टा सम्पादने आविविशुः प्रयत्नं चक्रुः ॥ ६२ ॥ ६३ ॥ ६४ ॥ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

चन्द्रमा अधिदेवता हृदयादेवाधिष्ठानाध्यवसायाख्यवृत्त्यवच्छिन्नबुद्धिरूपं तदिन्द्रियं तदधिदेवता गिरां पतिर्ब्रह्मा तथा हृदयमेवाधिष्ठानं तत्राभिमानाख्यवृत्त्यवच्छिन्नाहङ्काराख्यमन्तः करणमिन्द्रियं तदधिदेवता रुद्रस्तथा हृदयमेवाधिष्ठानं चित्ताख्यवृत्त्यवच्छिन्नचित्ताख्यमन्तःकरणमिन्द्रियं तदभिमानी चैत्यः क्षेत्रज्ञः निरभिद्यत इत्यर्थः अत्र चतुर्मुखशरीराच्चतुर्मुखस्योपेन्द्रस्य विभागोक्तिरिन्द्रियाभिमानिदेवतात्वाकारेणेति न विरोधः ॥ ६१ ॥

एवं समष्टिभूतचतुर्मुखदेहस्थवागादीन्द्रियतदधिष्ठानेभ्यो देवादिव्यष्टीनामिन्द्रियतत्स्थानतदधिदेवतासृष्टिरुक्ता अथ क्षेत्रज्ञभोगायतनत्वाद्देवादिशरीराणां तत्र प्राधान्यं भोक्तुः क्षेत्रज्ञस्येत्यन्वयव्यतिरेकाभ्यां प्रतिपिपादयिषुर्वागादीन्द्रियतदधिष्ठातृदेवतानां च व्यष्टीनां देवादिव्यष्टिशरीराधिष्ठानेषु प्रविष्टानामपि क्षेत्रज्ञानुप्रवेशमन्तरेण व्यष्टिशरीरभूतजातस्य प्रवृत्तिक्षमत्वसम्पादनासामर्थ्यमाह । एत इति । एते देवा इन्द्रियसहितास्तदभिमानिवागादिदेवा अभ्युत्थिताः समष्टिचतुर्मुखशरीरादुत्पन्ना अस्य देवादिव्यष्टिशरीररूपभूतजातस्य प्रविश्येति शेषः उत्थापने प्रवृत्त्युन्मुखीकरणे नाशकन्न समर्था बभूवुः एतदेव प्रपञ्चयति । पुनराविविशुरित्यादिना । पुनः शब्दोऽसामर्थ्यप्रतिपादनारम्भद्योतकः तं देवादिव्यष्टिशरीरं मुखानि देवाधिष्ठितानीन्द्रियाणि उत्थापयितुं प्रवृत्त्युन्मुखं कर्तुं क्रमादाविविशुः तत्तदाधिष्ठानं प्रविविशुः ॥ ६२ ॥
का देवता केनेन्द्रियेण कुत्र प्रविष्टा उत्थापनाशक्ताभूदित्यत्राह । वन्हिरित्यादिभिः सप्तभिः । वन्हिरधिदेवता वाचा वागिन्द्रियेण सह मुखं देवादिव्यष्टिमुखं भेजे आविशत् तदासौ विराट् कार्यभूतव्यष्टिशरीरजातं नोदतिष्ठन्न प्रवृत्त्युन्मुखोऽभूत

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमुत्तरत्रापि द्रष्टव्यं सर्वत्र विराट्छब्देन विराट् कार्यभूतत्वाद्व्यष्टिशरीरजातं लक्ष्यते अन्यथा चतुर्मुखसृष्टानां वन्ह्यादीनां चतुर्मुखशरीरोत्थापकत्वाशक्तेः ॥ ६३—६६ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

तस्मात् हृदयात् मनोभेदरूपा बुद्धिर्जाता तस्या बुद्धेर्गिरांस्पतिर्बृहस्पतिर्जात इत्यर्थः ततो हृदयादेव मनोभेदरूपोऽहङ्कारोऽपि तदभिमानी रुद्रश्च तत एतस्मात् हृदयान्मनो विशेषरूपं चित्तं ततश्चित्ताश्चित्यश्चित्ताभिमानी विरिञ्चो रूपान्तरेणासीत् अत्र चित्ताभिमानित्वेन विष्णुरपि चैत्य इति ग्राह्यं ब्रह्मान्तर्यामिणोऽपि स्वेच्छया तदभिव्यक्तरूपान्तरेण तज्जत्वं च युक्तं प्रामाणिकत्वादुक्तं च ।

चैत्योऽपि भगवान् विष्णुरन्तर्यामी चतुर्मुखात् ।
स्वेच्छया व्यक्तिमगमत्ततोऽसौ ब्रह्मजः स्मृतः इति ।

इदं सर्वस्याभितस्तस्य मुखं निरभिद्यतेत्याद्यैतरेय्यामुपनिषद्युक्तम् ॥ ६१ ॥

ब्रह्मवाय्वोरेकत्वेनैकस्योत्तमत्वकथनेऽन्यस्य तदविनाभूतमिति कृत्वा प्राणस्य सर्वचेतनोत्तमत्वं ज्ञापयितुमन्यादिदेवानां विवादेन तन्निर्णयप्रकारं वक्ति । एते हीति । एतेनाहमुक्थमस्मीत्यादिवाक्यार्थोऽपि विवृत इति ज्ञातव्यमस्य ब्रह्मशरीरस्योत्थापने स्वानि गोलकस्थानानि ॥ ६२ ॥ ६३ ॥ ६४ ॥ ॥ ६५ ॥ ६६ ॥ गत्यैवेत्येवकारेण विष्णोरुत्थापनाशक्तिर्न विधीयते किन्तु ब्रह्मवाय्वोर्बलज्ञापनायैवेति ।

ब्रह्मान्तस्थः स्वयं पादौ विशन्नोत्थापयद्धरिः ।
शक्तोऽपि ब्रह्मवाय्वोस्तु बलज्ञप्त्यै जनार्दनः ॥
ततस्य उत्थापयामास ब्रह्मदेहं विशन्प्रभुः

इतिवचनादनेन श्रियस्तदुत्तमत्वं तस्या हरेरनन्तगुणोत्तमत्वं ध्वनितमहं स्रुवे पितरमस्य मूर्धन्नित्यादेः ॥ ६७ ॥ ६८ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अहमिति । अत्र चैत्यः क्षेत्रज्ञो हिरण्यगर्भान्तर्याम्यवस्थ ईश्वरः प्रद्युम्नरूपोऽयं ज्ञेयः । जीवस्य कर्तुः करणत्वाभावादेवतात्वाभावाच्च ईश्वरपुरुषगतत्वेनैव प्रश्नोत्तराभ्यां च अतोऽस्यैव सर्वाधिकसामर्थ्यं दर्शयिष्यते चित्तेनेत्यादिना ॥ ६१ ॥

अभ्युत्थिताः स्वस्वाधिष्ठानसंयोगं प्राप्ता अपि अस्य विराजः । उत्थापने वहिश्चेष्टासम्पादने आविविशुः प्रयत्नं चक्रुः ॥ ६२-६६ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

मनसः सकाशाज्जातश्चन्द्रमाः तस्य देवः बुद्धिरपीन्द्रियं गिरां पतिर्देवः अहङ्कार इन्द्रियं रुद्रो देवता चित्तमिन्द्रियं चैत्यो जीवो देवतेति ॥ ६१ ॥

एते सर्वे तत्तत्स्थाने अभिव्यक्ताः भगवदंशाः चैत्यो मुख्यो भगवदंशः सर्वेऽभ्यस्तं विवेक्तुं पुनः सर्वेषां निर्गमनप्रवेशावाह । एत इति । एते देवाः स्वयमभ्युत्थिताः अस्य देहस्योत्थापने न शक्ताः य एवेमं देहमुत्थापयति स जीव आत्मेति ज्ञातव्यं सामर्थ्ये विद्यमानेऽपि नोत्थापयन्तीति न मन्तव्यं किन्तु सामर्थ्यमेव नास्तीति तदर्थमुपाख्यानमाह । पुनराविविशुरित्यादिना । तदेव शरीरं स्वस्वस्थाने पूर्वं भगवता सह निविष्टा अपि पुनराविविशुः खानि छिद्राणि प्रयोजनं तमुत्थापयितुमिति क्रमादिन्ति स्वस्वबलपरीक्षार्थम् ॥ ६२ ॥

वह्निर्देवो वाचेन्द्रियेण सह प्रथमतो मुखं भेजे ततो निर्गत्य तस्मिन् प्रविष्टः तस्मिन्प्रविष्टे विराट् सलिलान्नोदतिष्ठत् सर्वत्रेन्द्रियेण सह देवता गोलके निविष्टा विराट् ततो नोत्थितः विष्णुर्गत्यैवेति इन्द्रियेण प्रविष्टो विष्णुः तावन्मात्रप्रयोजनको नाधिकं करोति एवं सर्वत्र ज्ञातव्यं मन्त्राधिष्ठातृरूपेष्वपि मर्त्त्यादेषा पुरुषोत्तमस्तु सर्वं करोति स चेत्सेवितुं शक्यते प्राप्यते वा रुद्रपर्यन्तं देवाः सर्वे निविष्टाः प्रत्येकं ततो विराट् नोदतिष्ठत् ॥ ६३—६६ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

चैत्यः चित्ताधिष्ठाता वासुदेवः स एव चित्ते उपास्यः देवता च । स एव समष्टिजीवस्य हिरण्यगर्भस्य प्रद्युम्नत्वेनान्तर्यामी स एव व्यष्टिजीवानामनिरुद्धत्वेनान्तर्यामीति भागवतामृतमिति ज्ञेयम् नतु चित्ताधिष्ठाता क्षेत्रज्ञो जीव इति वाच्यं तस्य कर्तृत्वकरणत्वाद्यभावस्य सर्वत्र प्रतिपादितत्वात् "आचार्य्यचैत्यवपुषा स्वगतिं व्यनक्ति" इत्यादावपि चैत्यशब्देनान्तर्यामिण एवोक्तिः क्वाचिच्च चैत्यशब्देन जीवाभिमानं तु चित्तोपाधित्वादेव नतु चित्ताधिष्ठातृत्वादिति ज्ञेयम् ॥ ६१ ॥

अन्वयव्यतिरेकाभ्यामन्तर्यामिण एव सर्वशक्तिमत्त्वं दर्शयितुमुक्तमेव प्रवेशं सर्वेषां पुनराह । एत इत्यादिना ॥ ६२ ॥ ६६ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

चित्तं समष्टिचित्तं वासुदेवाख्योपास्यदेवाधिष्ठितं चैत्यः समष्टिचित्तयुक्तसमष्टिदेहाभिमानी क्षेत्रज्ञ इत्यर्थः ॥ ६१ ॥ ॥ ६६ ॥

———

भाषाटीका ।

मनसे चन्द्रमा उत्पन्नभया तिसमे बुद्धि इन्द्रिय भया तिसका देवता ब्रह्मा भया अहङ्कार इन्द्रियभया रुद्र उसके देवता हैं चित्त इन्द्रिय है तिसके देवता वासु देव हैं ॥ ६१ ॥

इतने जो निकले देवता जब उस विराट् को उठाने में समर्थ न भये तब फिर उसके उठाने को इन्द्रियों में प्रविष्ट भये ॥ ६२ ॥

अग्नि देवता वांक् इन्द्रियके सहित मुखमें प्रविष्ट भया तब विराट् नहीं उठा घ्राण इन्द्रिय के सहित वायु देवता नासिका मे प्रविष्ट भया तौभी विराट् नहीं उठा ॥ ६३ ॥

आदित्य चक्षुके सहित नेत्रोंमें प्रविष्ट भये तौभी विराट् पुरुष नहीं उठा श्रोत्र इन्द्रियके सहित दिशा देवता कानोंमें प्रविष्ट भये तौभी विराट् नहीं उठा ॥ ६४ ॥

बुद्ध्या ब्रह्मापि हृदयं नोदतिष्ठत्तदा विराट् ।
रुद्रोऽभिमत्या हृदयं नोदतिष्ठत्तदा विराट् ॥ ६९ ॥
चित्तेन हृदयं चैत्यः क्षेत्रज्ञः प्राविशद्यदा ।
विराट् तदैव पुरुषः सलिलादुदतिष्ठत ॥ ७० ॥
यथा प्रसुप्तं पुरुषं प्राणेन्द्रियमनोधियः ।
प्रभवन्ति विना येन नोत्थापयितुमोजसा ॥ ७१ ॥
तमस्मिन्प्रत्यगात्मानं धिया योगप्रवृत्तया ।
भक्त्या विरक्त्या ज्ञानेन विविच्याऽऽत्मनि चिन्तयेत् ॥ ७२ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे कापि-
लेये तत्त्वसमाम्नाये षड्विंशति-
तमोऽध्यायः ॥ २६ ॥

भाषाटीका ।

ओषधी के देवता रोमों के सहित त्वचामे प्रविष्ट भये-तौभी विराट् नहीं उठा रेतइन्द्रिय के सहित लिङ्ग इन्द्रिय में जलाभिमानी देवता प्रविष्ट भये तौभी विराट् नहीं उठा ६५ ॥

अपानके सहित गुदा इन्द्रिय मे मृत्यु प्रविष्ट भया तौ भी विराट् नही उठा बल के सहित इन्द्र हस्तों मे प्रविष्ट भये तौ भी विराट् नहीं उठा ॥ ६६ ॥

गति क्रिया के सहित श्रीविष्णु चरणों मे प्रविष्ट भये तौभी विराट् नहीं उठा लोहित के सहित नाडियों मे नदी प्रविष्ट भई तौभी विराट् नहीं उठा ॥ ६७ ॥

क्षुधा तृषा के सहित सिन्धु उदर मैं प्रविष्ट भया तौ भी विराट् नहीं उठा मनके सहित चन्द्रमा हृदयमें प्रविष्ट भये तौ भी विराट् नहीं उठा ॥ ६८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

विराट् देहस्य व्यष्टिदेहं दृष्टान्तत्वेन दर्शयन्साङ्ख्यानुकथनस्य प्रयोजनमाह । यथेति द्वाभ्याम् ॥ ७१ ॥

प्रथमं परमेश्वरे भक्तिस्ततोऽन्यत्र विरक्तिस्ततो योगप्रवृत्ता धीः एकाग्रं चित्तं ततो यज्ज्ञानं तेन प्रत्यगात्मानं क्षेत्रज्ञमस्मिन्नात्मनि कार्यकारणसंघाते विविच्य चिन्तयेत् ॥ ७२ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
षड्विंशोऽध्यायः ॥ २६ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

क्षेत्रज्ञः हिरण्यगर्भस्यान्तर्यामी प्रद्युम्नः व्यष्टिजीवानामन्तर्यामी अनिरुद्धः चैत्यः श्रीवासुदेवेन रूपेण चित्ते उपास्यः प्राविशद्बहिश्चेष्टासम्पादनार्थमिच्छात्मकमुद्यमं पुनः कृतवान् पुरुषोऽध्यासेन तत्तादात्म्यं प्राप्तो विराट् समष्टिदेहः उदतिष्ठत् बहिश्चेष्टामाप ॥ ७० ॥

यथेति युग्मकम् । प्रसुप्तं व्यष्टिदेहाभिमानिनं पुरुषं जीवं यथा येनान्तर्यामिणा विना यथा प्राणादय ओजसाप्युत्थापयितुं न प्रभवन्ति तं तथा येन विना समष्टिदेहमपि नोत्थापयितुं प्रभवन्ति प्रत्यगात्मानमन्तर्यामिणमस्मिन्नात्मनि विविच्य चिन्तयेदिति द्वयोरन्वयः क्षेत्रज्ञं सर्वक्षेत्रान्तर्यामिणम् ॥७१॥७२॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीराधारमणदास-
गोस्वामिकृतदीपिकाटिप्पण्याम्
षड्विंशोऽध्यायः ॥ २६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं स्वतः सेन्द्रियाणां देवानामुत्थापनाशक्तिमभिधाय क्षेत्रज्ञाधीनं तेषामुत्थापकत्वमित्याह । चित्तेनेति । चैत्यः चित्ताधिदेवः क्षेत्रज्ञः हृदयमधिष्ठानं चित्तेन सह यदा प्राविशत्तदैव विराट् पुरुषः विराट्कार्यभूतो देवादिरूपः पुरुषः सलिलात्सलिलकार्यभूतब्रह्माण्डात् इयं ल्यब्लोपे पञ्चमी सलिलमाविश्येत्यर्थः उदतिष्ठत प्रवृत्तिक्षमोऽभूदित्यर्थः ॥ ७० ॥

एतदेव सदृष्टान्तमाह । यथेति । यथा प्राणादय ओजसा स्वबलेन प्रसुप्तं पुरुषं येन विना क्षेत्रज्ञेन विना यदिच्छामन्तरेणेत्यर्थः उत्थाप-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

यितुं न प्रभवन्ति न समर्थाः तथा वह्न्यादयोऽपि स्वाधिष्ठेयैरिन्द्रियैः सह देवादिशरीराणि प्रविश्यापि क्षेत्रज्ञानुप्रवेशमन्तरेणोत्थापनाशक्ता इत्यर्थः ॥ ७१ ॥

एवमन्वयव्यतिरेकाभ्यां मोक्तुः क्षेत्रज्ञस्यैव प्राधान्यमुक्तं तस्यैतस्य क्षेत्रज्ञस्यानुचिन्तनं भगवद्भक्तियोगाङ्गत्वेन कार्यमित्याह। तमिति। प्रत्यगात्मानं जीवं परिशुद्धस्वरूपं योगं तद्याथात्म्यविवेचनरूपयोगे प्रवृत्तया धिया अस्मिन् देहे विविच्य शरीरबुद्ध्यन्द्रियप्राणादिभ्यः पृथक्कृत्य भक्त्या ईश्वरभक्त्या विरक्त्या कामानभिष्वङ्गेण ज्ञानेन ब्रह्मात्मकत्वज्ञानेन चात्मनि मनसि चिन्तयेत्। यद्वा प्रत्यगात्मानं धिया विविच्यात्मनि तस्मिन्प्रत्यगात्मनि परमात्मानमिति शेषः विरक्त्या अविहिताप्रतिषिद्धनिषिद्धविषयवैराग्येण अनेन कर्मयोग उक्तः ज्ञानेन प्रत्यगात्मयाथात्म्यज्ञानयोगेन भक्त्या ईश्वरभक्त्या ज्ञानकर्मयोगाभ्यामनुगृहीतया भक्त्येत्यर्थः चिन्तयेत् ॥ ७२ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
षड्विंशोऽध्यायः ॥ २६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

ब्रह्मा बृहस्पतिः यस्मिन्ब्रह्मा राजनि पूर्वे पतीति श्रुतेः "बृहस्पतिः पुरोगश्च ब्रह्मा च ब्रह्मणस्पतिः" इति चाभिधानम् ॥६९॥ नन्वेवं तर्हि सलिले पतितं ब्रह्मशरीरमुत्थापकाभावात् क्लिन्नप्रायं भवेदित्याशङ्क्य वायुना सह निर्गमात् शरीरमपतत् स एव क्षेत्रज्ञो ब्रह्मान्तर्यामी वायुब्रह्मभ्यां सह प्रवेशेन शरीरमुदस्थापयदित्याह। चित्तेनेति ॥

अंशेन सुप्तो ब्रह्मा तु अंशेन निरगात्तथा।
स्वदेहाद्वायुसहितो विष्णुना च जगत्प्रभुः॥
तमुत्थापयितुं देवास्तावृते श्रीन्महाबलान्।
नाशक्नुवन्नेकसंस्कास्ततस्ते त्वविशंस्त्रयः॥
उदतिष्ठद्ब्रह्मदेहस्तदा तेषां प्रभावतः।
विशेषेण हरेरेव प्रभावेण श्रियः पतेः॥
चित्ताभिमानी ब्रह्मैव क्षेत्रज्ञस्तद्गतो हरिः।
प्राणो वायुरिति प्रोक्तस्तयोरीशो हरिः स्वयम्॥

इत्यनेन शुद्रोपद्रवशङ्का परिहृतेति सन्तोष्टव्यम् ॥ ७० ॥

नन्वत्र विष्णोः सर्वोत्तमत्वेन सर्वशक्तिमत्त्वं सम्यक् न प्रतीतं बलादाकृष्य प्रवेश्यते इत्याशङ्क्य प्रातीतिकौ प्राणस्योक्तौ अन्वयव्यतिरेकौ विष्णोरेवेति विशदयंस्तदुपास्तिं विदधाति यथेति। अनेन प्रसुप्तं पुरुषं ब्रह्माणं प्राणेन्द्रियमनोधियः प्राणेन्द्रियाद्यभिमानिनो देवास्तत्तदिन्द्रियार्थक्रियावत्त्वेनौजसा येन क्षेत्रज्ञेन विनोत्थापयितुं न प्रभवन्तीदं यथा यथार्थं सत्यं यस्मात्तस्मात्तं सर्वोत्तमं प्रत्यगात्मानं क्षेत्रज्ञं श्रीनारायणमस्मिञ्छरीरेऽन्तर्यामित्वेन स्थितं विरक्त्याष्टाङ्गयोगविपक्वक्रमविवृद्धया भक्त्या च जातधिया निश्चयलक्षणबुद्ध्या जातेन ज्ञानेनात्मनि हृदये चिन्तयेदेवेत्यन्वयः ॥ ७१ ॥ ७२ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
षड्विंशोऽध्यायः ॥ २६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

चित्तेनेति। प्राविशत् बहिश्चेष्टासम्पादनार्थं स्वयमेव सर्वोत्थापनं पुनरुद्यमं कृतवान्। उदतिष्ठत् बहिरपि चेष्टां प्राप्तवान् ॥ ७० ॥

यथेति युग्मकेन तथा येन विना विराट् नोदतिष्ठत् तमिति द्वाभ्यामन्वयः। प्रत्यगात्मानमन्तर्यामिणम् ॥ ७१ ॥ ७२ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
षड्विंशोऽध्यायः ॥ २६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

यदा पुनः चित्तेनेन्द्रियेण सह हृदयं चैत्यो जीवः क्षेत्रज्ञः देहाभिमानी यदैव प्राविशत् तदैव पुरुषः भगवत्साहितो देहः सलिलादुदतिष्ठत् ॥ ७० ॥

अन्तरङ्ग एव सेवकः महाराजमुत्थापयितुं शक्नोति नान्य इति दृष्टान्तेन स्पष्टयति। यथेति द्वाभ्याम्। यथा स्वस्मामग्न्या सुप्तं पुरुषं बहिः स्थिताः प्राणेन्द्रियमनोधियः येन अन्तःस्थितेन जीवेन विना उत्थापयितुं न प्रभवन्ति तमेव प्रत्यगात्मानं शरीराभिमानिनं जीवं तस्मिन् सङ्घाते इतरव्यावृत्त्या विचिन्तयेत् तत्र चिन्तने बुद्धिः करणं सापि न प्राकृती किन्तु योगेन विपक्वा योगेन प्रवृत्ता वा योगसिद्ध्यर्थः तस्य सहायभूतं भक्त्यादित्रयं तैः सहितया बुद्ध्या इतरान् दूरीकृत्य तमेव चिन्तयेत् बुद्ध्यभ्यासं तत्र कुर्यात् तथा सत्युत्तरत्र तस्य ब्रह्मभावः भावयितुं सुकर इति भावः ॥ ७१ ॥ ७२ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्वल्लभाचार्यकृतसुबोधिन्याम्
षड्विंशाध्यायविवरणम् ॥ २६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

चैत्यो वासुदेवः स एव क्षेत्रज्ञोऽन्तर्यामी क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेष्ववस्थितम्" इतिगीतोक्तेः ॥ ७० ॥

समष्टिविराड्देहस्य व्यष्टिदेहं दृष्टान्तयति। यथेति। येन चित्ताधिष्ठात्रा परमेश्वरेण विना प्रसुप्तं व्यष्टिं यथो उत्थापयितुं न शक्नुवन्ति तथैव येन विना समष्टिं विराडपि नोदतिष्ठदिति पूर्वेणान्वयः ॥ ७१ ॥

सांख्यानुकथनस्य प्रयोजनमाह। तं प्रत्यगात्मानं प्रत्यग्ज्ञानगम्यं परमात्मानमस्मिन् कार्य्यकारणसंघाते आत्मनि देहे जीवात्मन्येव वा चिन्तयेत् ॥ ७२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
षड्विंशोऽयं तृतीयस्य सङ्गतः सङ्गतः सताम् ॥ २६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

चित्तेन सर्वनियन्तृवासुदेवाख्योपास्यदेवाभिष्ठितेन युक्तस्यैव उक्तप्रकारः क्षेत्रज्ञः यदा प्रविष्टः तदा विराट् समष्टिशरीरमुदतिष्ठत् विराजोऽचेतनत्वधार्य्यत्वभोग्यत्वादयो धर्माः वासुदेवस्योपास्यत्वनियन्तृत्वादयः क्षेत्रज्ञस्य चेतनत्वभोक्तृत्वदेहधारकत्वोपासकत्वभगवन्नियम्यत्वादयश्चानेन दर्शिताः ॥ ७० ॥

व्यष्टिक्षेत्रज्ञदृष्टान्तेनापि उक्तमर्थं द्रढयति । यथेति । यथा प्रसुप्तं पुरुषं देहं प्राणादयो येन क्षेत्रज्ञेन विना उत्थापयितुं न प्रभवन्ति स तु प्रभवति तद्वत् ॥ ७१ ॥

अस्मिन् चिन्तनयोग्ये क्षेत्रे तं वासुदेवं प्रत्यञ्चो जीवस्य क्षेत्रज्ञस्य आत्मानमन्तर्य्यामिणम् आत्मनि हृदि चिन्तयेत् ॥ ७२ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
षड्विंशाध्यायार्थप्रकाशः ॥ २६ ॥

भाषाटीका ।

बुद्धिके सहित ब्रह्माजी हृदय में प्रविष्ट भये तौभी विराट् नहीं उठा अभिमान के सहित रुद्र हृदय मे प्रविष्ट भये तौ भी विराट् पुरुष नहीं उठा ॥ ६९ ॥

चित्त के सहित जब मन मे चेतना वाला आत्मा प्रविष्ट भया तब विराट् पुरुष जल मे से उठ खडा होगया ॥ ७० ॥

जिस प्रकार सोये हुये पुरुष को प्राण इन्द्रिय मन जीव के विना बल से भी उठाने नहीं सकते हैं तैसे नहीं उठा सके ॥ ७१ ॥

जीव सहित उस परमात्मा को इस देह मे योग युक्त बुद्धि से भक्ति से वैराग्य से ठीक जान कर ध्यान करै ॥७२॥

इति श्रीमद्भागवत तृतीयस्कन्ध छव्वीसवां अध्यायका
भाषानुवाद लक्ष्मणाचार्यकृत समाप्त ॥ २६ ॥

---

इति श्रीमद्भागवते महापुराणे तृतीय स्कन्धे षड्विंशोऽध्यायः समाप्तः ॥ २६ ॥

## सप्तविंशोऽध्यायः ।

श्रीभगवानुवाच ॥

प्रकृतिस्थोऽपि पुरुषो नाज्यते प्राकृतैर्गुणैः ।
अविकारादकर्तृत्वान्निर्गुणत्वाज्जलार्कवत् ॥ १ ॥
स एष यर्हि प्रकृतेर्गुणेष्वभिविषज्जते ।
अहंक्रियाविमूढात्मा कर्तास्मीत्यभिमन्यते ॥ २ ॥
तेन संसारपदवीमवशोऽभ्येत्यनिर्वृतः ।
प्रासङ्गिकैः कर्मदोषैः सदसन्मिश्रयोनिषु ॥ ३ ॥
अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ।
ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥ ४ ॥
( १ ) ( प्रबुद्ध्य स्वप्नसुप्तिभ्यां संस्मरन्नात्मवैशसम् ।
वैतथ्यं व्यभिचारञ्च नासौ ध्यायेद् यतो भयम् ॥ )
अत एव शनैश्चित्तं प्रसक्तमसतां पथि ।
भक्तियोगेन तीव्रेण विरक्त्या च नयेद्वशम् ॥ ५ ॥
यमादिभिर्योगपथैरभ्यसन् श्रद्धयान्वितः ।
मयि भावेन सत्येन मत्कथाश्रवणेन च ॥ ६ ॥
सर्वभूतसमत्वेन निर्वैरेणाप्रसङ्गतः ।
ब्रह्मचर्य्येण मौनेन स्वधर्म्मेण बलीयसा ॥ ७ ॥
यदृच्छयोपलब्धेन सन्तुष्टो मितभुङ्मुनिः ।
विविक्तशरणः शान्तो मैत्रः करुण आत्मवान् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सप्तविंशे ततः सम्यग्बहुसाधनयोगतः ।
पुंप्रकृत्योर्विवेकेन मोक्षरीतिर्निरूप्यते ॥ १ ॥

विवेकज्ञानेन मोक्षमुपपादयितुं शुद्धस्यैव पुरुषस्य प्रकृत्यविवेकतः पूर्वोक्तं संसारमनुस्मारयति । प्रकृतिस्थोऽपीति त्रिभिः । देहस्थोऽपि नाज्यते न लिप्यते गुणैस्तत्कृतैः सुखदुःखादिभिः निर्गुणत्वादकर्तृत्वं ततोऽविकारित्वं तस्मात् ॥ १—२ ॥

अनिर्वृतः सन् प्रासङ्गिकैः प्रकृतिसङ्गकृतैः सदसन्मिश्रयोनिषु देवतिर्यङ्नरादिषु संसारपदवीं प्राप्नोति ॥ ३ ॥

ननु तर्ह्यवास्तवत्वात्संसृतेः किं तन्निवृत्तिप्रयासेन तत्राह । अर्थे हीति ॥ ४ ॥

यतो विषयध्यानमनर्थहेतुरतो मनो नियन्तव्यमित्याह । अत एवेति । असतामिन्द्रियाणां पथि विषयमार्गे तीव्रेण दृढेन विरक्त्या च तीव्रया ॥ ५ ॥

भक्तिविरक्त्योस्तीव्रत्वे कारणानि वर्णयन् ज्ञानेन मोक्षप्रकारमाह षड्भिः । यमादिभिर्योगमार्गैश्चित्तमभ्यसन्पुनः पुनरेकाग्रीकुर्वन्नात्मानमुपलभ्य सर्वानुस्यूतमद्वयं परमात्मानं प्रतिपद्यत इति षष्ठेनान्वयः सत्येन निष्कपटेन भावेन प्रेम्णा ॥ ६ ॥

अप्रसङ्गतः सङ्गत्यागेन बलीयसा ईश्वरेऽर्पितेन ॥ ७ ॥

विविक्तशरण एकान्तवासी ॥ ८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

बहुसाधनयोगतः नानासाधनोपायैः तत्सम्बन्धाद्वा जले दृष्टोऽप्यर्को यथा वस्तुतस्तद्गुणैरार्द्रत्वादिभिर्न लिप्यते तद्वत् ॥ १ ॥

एवं वस्तुतः शुद्धत्वमुक्त्वा प्रकृत्यविवेकतस्संसारमाह । स एष इति द्वाभ्याम् । स एष शुद्धः प्रकृतेर्गुणेषु कर्तृत्वसुखदुःखादिषु अहमेव देह इत्यहङ्कारेण विमूढस्सन्नभिविषज्जते धर्म्यध्यासं प्राप्नोति तदा कर्त्तास्मीति अभिमन्यते धर्माध्यासं प्राप्नोतीत्यर्थः ॥ २ ॥

तेन कर्तृत्वाभिमननेन कर्मदोषैः शुभाशुभकर्मरूपैर्दोषैः संसारपदवीं जन्ममरणादिपरम्पराम् ॥ ३ ॥ ४ ॥

---

( १ ) अयं श्रीविजयध्वजतीर्थमतेऽधिकः ।

श्रीराधारमणदासगोस्वामिविरचिता

दीपिन्याख्या दीपिकाटिप्पणी ।

अत एव । विषयध्यानस्यानर्थहेतुत्वादेव अत्र भक्तियोगेनेति तृतीयाश्रुत्या तस्य साधनत्वमात्रपर्यवसायनेन स कैतवत्वमभिप्रेतम् ॥ ५ ॥

अत एव ज्ञानकर्ममिश्रत्वमाह । यमादीति पद्येन । निष्कैतवेन विषयेच्छाकैतवशून्येन मोक्षेच्छाकैतवन्तु मोक्षप्रकारमाहेत्यवतारिकयोक्तमेव न च मोक्षेच्छायाः कैतवत्वं नास्तीति वाच्यं प्रशब्देन मोक्षाभिसन्धिरपि निरस्त इति प्रथमपद्यव्याख्यायां तथापि कैतवत्वमननादिति ( १ ) ( २ ) बहुवाक्यैकवाक्यत्वाद्भेदेऽपि यदृच्छयेति साङ्कमिति अङ्कवैशिष्ट्यं ज्ञेयम् अहंममतामकुर्वन्निति स्वपदार्थस्य स्वरूपज्ञानं व्यज्यते ( ३ ) तदेव ज्ञानम् "अन्यार्थश्च परामर्श" इति न्यायात् तत्पदार्थज्ञानार्थत्वेनोपपादयितुं स्पष्टयति । ज्ञानेनेति ( ४ ) उपलक्ष्येति साङ्कम् एकस्यैव त्वंपदार्थस्योपाधिनावच्छेद उपहितत्वमनवच्छेदो निरुपहितत्वं शुद्धत्वमिति यावत् तत्रोपहितस्य करणत्वं शुद्धस्य कर्मत्वं गगनस्थं चक्षुरनवच्छिन्नं निरुपाधिकमुपाधिस्पर्शशून्यं सद्रूपेणास्तित्वरूपेण घटोऽस्ति अहङ्कारोऽस्ति इत्येवं सर्वस्यैव सत्ताघटितत्वात् प्रधानस्याधिष्ठानं कार्य्यस्य प्रकाशकमिति विशेषणाभ्यां शुद्धजीवाद्विशेषो व्याख्यातस्तत्र प्रधानानियम्यत्वेन "जगद्व्यापारवर्ज्जम्" इतिन्यायेन चोभयासम्भवादिति भावः ॥ ५ ॥ ६ ॥ ११ ॥

———

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

एवं जगत्सृष्ट्यादिव्यापारकथनेन भजनीयस्य भगवत ऐश्वर्यमाविष्कृत्य तत्प्राप्त्युपायभूतभक्तियोगाङ्गात्मयाथात्म्यज्ञानयोगमुपपिपादयिषुरतीन्द्रियमात्मस्वरूपं कथमनुसन्धातुं शक्यमित्याशङ्कां वारयितुं तस्य प्रत्यगात्मनो जागराद्यवस्थासु विशदतरावभासं कथयिष्यन् तत्स्यैतस्यात्मनः प्रकृतिसंसर्गकृतमेव जागराद्यवस्थारूपसांसारिकप्रवृत्तिषु कर्तृत्वं तदायत्तसुखदुःखभोक्तृत्वञ्च न स्वरूपप्रयुक्तमिति पूर्वोक्तमनुवदति । प्रकृतिस्थाति । पुरुषो जीवः प्रकृतिस्थोऽपि देहस्थोऽपि प्राकृतैर्गुणैर्धर्मैर्देवत्वमनुष्यत्वादिहेतुकैः सुखदुःखादिभिश्च नाज्यते स्वतो न स्पृश्यते कुतः अविकारात् स्वतो देवमनुष्यादिरूपेण परिणामाभावात् अकर्तृकत्वाद्गमनादिवाह्यसांसारिकव्यापाराश्रयत्वाभावात् निर्गुणत्वात् स्वतः सत्त्वादिगुणान्वयाभावात् स्वतो नाज्यते इत्यत्र दृष्टान्तः । जलार्कवदिति । मठाकाशादेरप्युपलक्षणमिदं ननु जलादिषु सूर्यादयो भ्रान्त्या तत्रस्था इव गृह्यन्ते न परमार्थतस्तत्रस्थाः अतो जलगतवृद्धिह्रासकम्पनादिदोषास्पर्शः सूर्यादिषु युक्तः प्रत्यगात्मनस्तु देवादिशरीरेष्ववस्थितेः कथं तद्गुणैर्नाज्यते इत्युच्यते इतिचेदुच्यते देशविप्रकर्षः कालविप्रकर्षः स्वभावविप्रकर्षश्चेति त्रिधा विप्रकर्षः अत्रैकविप्रकर्षोऽपि दोषास्पर्शस्य हेतुः अत्र देशविप्रकर्षस्योदाहरणं जलसूर्यादिः स्वभावविप्रकर्षस्योदाहरणमाकाशादिः तत्र देशविप्रकर्षवत् स्वभावविप्रकर्षस्यापि दोषास्पर्शहेतुत्वात् यथा घटकरकादिषु वृद्धिह्रासभाक्षु पृथक् पृथक् संयुज्यमानमप्याकाशं वृद्धिह्रासादिदोषैः न स्पृश्येत यथा जलाधारेषु स्वपिण्डेषु दृश्यमानोऽप्यंशुमान् देशविप्रकर्षात्तत्तद्गतवृद्धिह्रासादिभिर्न स्पृश्यते तथायंप्रत्यगात्मापि देवादिचतुर्विधशरीरेष्ववस्थितस्तद्गतैर्द्धर्मैः स्वतो नाज्यते स्वभावविप्रकर्षादिति तर्ह्याकाश एव दृष्टान्तो कर्तव्यो नार्क इति चेन्न दोषास्पर्शमात्राभिप्रायकत्वाद्दृष्टान्तस्य दृश्यते चैवं सर्वात्मना साधर्म्याभावेऽपि विवक्षितांशसाधर्म्याद्दृष्टान्तोपादानं सिंहोमाणवक इत्यादौ यद्वा प्रकृतिगता देवत्वमनुष्यत्वादयः प्रकृतेरेव धर्मा नात्मनः तस्य देवमनुष्याद्याकारस्य स्वतोऽभावात् देवोऽयं मनुष्योऽयमिति प्रतीत्या तेऽप्यात्माकारा इति चेत् सा प्रतीतिर्भ्रान्तिरूपेति सदृष्टान्तमाह । प्रकृतिस्थ इति । देहस्थोऽपि पुरुषो जीवः अकर्तृत्वादिभ्यो हेतुभ्यः प्राकृतैर्गुणैर्देवत्वादिधर्मैर्नाज्यते अत्राञ्जिरत्यर्थः स्वतो देवत्वादिवैशिष्ट्येन न गम्यते तथा नानुसन्धीयत इति यावत् तत्र दृष्टान्तः । जलार्कवदिति । यथा जले प्रतिबिम्बितः सूर्यो जलगतैर्द्धर्मैर्विशिष्टत्वेन परमार्थतो न प्रतीयते तेषां जलगतत्वात् एवं प्रकृतिधर्मैरात्मापि परमार्थतो न प्रतीयते तेषां प्रकृत्याकारत्वेनात्माकारत्वाभावात्तेषामात्मगतत्वेन प्रतीतिर्भ्रान्तिरूपेत्यर्थः ॥ १ ॥

एवं विभस्यात्मनः कथं देवमनुष्यादिदेहयोगः कथंवा सांसारिकप्रवृत्तिषु कर्तृत्वं सुखदुःखानुभवश्चेत्या शङ्कायां सर्वमिदं देहात्माभिमानस्वतन्त्रात्माभिमानकृतमित्याह । स इति । स एव प्रकृतिविलक्षणोऽप्यात्मा अहंक्रियाविमूढात्मा अहंक्रियानात्मनि देहे आत्माभिमानः तया विमूढं तिरोहितमात्मस्वरूपं यस्य स यर्हि यदा प्रकृतेर्गुणेषु शब्दादिषु विषज्जते शब्दादिविषयप्रवणः स्यात् यदा च कर्तास्मीति स्वतन्त्र इत्यभिमन्यतेऽनेन स्वतन्त्राभिमानोऽपि बन्धहेतुरित्युक्तम् ॥ २ ॥

तदा तेन उभयविधाभिमानेनावशः कर्मपरतन्त्रः सन्नत एवानिर्वृतः कर्मायत्तसुखदुःखोपभोगेन नितरां सुखमलभमानः प्रासङ्गिकैः प्रकृतिसंसर्गकृतैः कर्मदोषैः पुण्यापुण्यरूपैर्दोषैः सदसन्मिश्रयोनिषु उत्तमाधममध्यमभूतेषु देवतिर्यङ्नरादिषु संसारपदवीमभ्येति प्राप्नोति ॥ ३ ॥

ननु देवाद्याकाराणामात्मनः स्वाभाविकाकारत्वाभावात् तैःकोऽनर्थ आत्मन इत्यत्राह । अर्थेति । अर्थे आत्मनो देवत्वमनुष्यत्वाद्याकारे स्वतो विद्यमानेऽपि अस्यात्मनः विषयान् शब्दादीन् ध्यायतश्चिन्तयतः संसृतिर्न निवर्तते संसाररूपोऽनर्थो न निवर्तते यथा स्वप्नशरीराणामात्माकारत्वाभावेऽपि स विषयचिन्तनद्वारा सुखदुःखरूपानर्थहेतुत्वं तद्वज्जागरेऽपि देहाकाराणामात्मत्वाभावेऽपि विषयप्रावण्यजननद्वारानर्थरूपबन्धहेतुत्वमित्यर्थः हियस्मात्तदेवम् ॥ ४ ॥

एवं मनोनियन्तव्यमित्याह । अत एवेति । असतां प्रकृतिपरिणामरूपाणामिन्द्रियाणां पथि शब्दादिविषये प्रसक्तं नितरामासक्तं चित्तं तीव्रेणान्तरायानुपहतेन भगवद्भक्तियोगेन विरक्त्या कामानाभिष्वङ्गेण च शनैः वशं नयेत्स्ववशं कुर्याद्विरक्तिःसाधनसप्तकोपलक्षणं विरक्त्यानुगृहीतभगवद्भक्त्या स्वसमीहितभगवदनुचिन्तनपरं कुर्यात् एवंचेत्बन्धो निवर्तेत इति भावः ॥ ५ ॥

भक्तियोगानुग्राहकायैव वर्णयन्भक्त्या मोक्षप्रकारमाह । यद्भिः श्रद्धया मनोनियमनविषयया त्वरया युक्तः योगपथैः भक्तियोगेतिकर्त्तव्यताभूतैर्यमादिभिः शमदमादिभिः मयीश्वरे भावेन माता पिता भ्राता इत्युक्तविधभावेन सत्येन सत्यवचनेन ॥ ६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

सर्वभूतेषु समत्वेन प्रकृतिपुरुषशरीरकेश्वरात्मकत्वानुचिन्तनेन अत एव निर्वैरेण प्रसङ्गतः शब्दादिविषयानामसक्त्या ब्रह्मचर्येण स्त्रीसङ्गादिराहित्येन मौनेन मितवाक्येन बलीयसा भक्तियोगानुग्राहकाणां मध्ये बलवत्तरेण स्वधर्मेण स्ववर्णाश्रमोचितधर्मेण चाभ्यसन् भक्तियोगमिति शेषः ॥ ७॥

यदृच्छयोपस्थितेन दैवादुपनतेनान्नादिना सन्तुष्टः दैवादुपनतमपि मितमेव भुञ्जानः मुनिः भोजनादिदशायामपि शुभाश्रयसंशीलनपरः विविक्तशरणः एकान्तवसतिः शान्तः भयादिरहितः मैत्रः भयजनकैरपि भूतैर्मैत्रीमेव कामयमानः करुणः तेष्वपि कारुणिकः आत्मवान् प्रशस्तमनस्कः ॥ ८॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

श्रोतृप्रवक्तृभेदाद्बुद्धानिकायात्तात्पर्यातिशयजननाय उक्तमेव प्रपञ्चयनेऽस्मिन्नध्याये तत्र जीवपरमयोरेकशरीरस्थत्वात् जीववत्तद्वन्दुःखादिभोगः परस्य कथं न स्यादित्याशङ्क्य परिहरति। प्रकृतिस्थ इति। "तं वा एतं पूर्णमाचक्षते पुरुष" इति श्रुतेः पूर्णत्वात्पुरुषो विष्णुः प्रकृतिस्थः जडप्रकृतौ तत्कार्यशरीरेषु अवस्थितोऽपि प्राकृतैः प्रकृतिनिर्मितशरीरगतैः सुखदुःखादिगुणैर्जननादिभिर्नाज्यते न लिप्यते तत्र हेतुमाह। अविकारादिति। अविकारात् षड्विकाररहितत्वादकर्तृत्वात्परतन्त्रकर्तृत्वरहितत्वान्निर्गुणत्वात्सत्त्वादिगुणराहित्याच्च जलार्कवत् यथा जलगतः सूर्यो जलदोषैः कम्पभेदादिभिर्न सम्बद्ध्यते तथा प्रकृतेऽपीत्यर्थः ॥ १॥

ननु यदि परमस्य सुखदुःखादिसम्बन्धो नास्ति तर्हि सुखी-दुःखी जातो मृतो दरिद्र इति व्यवह्रियमाणः क इति तत्राह। स एष इति। यर्हि यदान्तरातीताध्याये प्रत्यगात्मानमात्मनि चिन्तयेदिति प्रकृतः सोऽहमिति प्रत्यक्षसिद्धत्वादेष जीवः प्रकृतेर्गुणेषु सत्त्वादिगुणरचितशरीरेषु अभिविषज्जते शरीरवान् जायते तदा तेषां त्रयाणां गुणानां सन्निपातजाताहङ्कारममकाराभ्यां विमूढात्मा विस्मृतपरमात्मस्वरूपः सन् पराधीनकर्तृत्वमन्तरेण स्वतःकर्तृत्वाभावेऽप्यहं कर्तास्मीत्यभिमन्यते ॥ २॥

तत्फलमाह। तेनेति। तेनाविद्यमानकर्तृत्वाभिमानेन मनसा शब्दादिषु क्षणभङ्गुरत्वेनानिर्वृतोऽल्पबुद्धिगोचरानन्दरहितोऽपि प्रासङ्गिकैर्विषयासक्तिजातैः कर्मदोषैः सदसन्मिश्रयोनिषु देवासुरमनुष्ययोनिषु जातः सुखदुःखलक्षणां संसारपदवीमभ्येतीत्यन्वयः॥३॥

आभिमानिकसंसारानिवृत्तौ किं निमित्तमित्याशङ्क्य विषयाभिध्यानमित्याह। अर्थे हीनि। स्वतः चित्सुखरूपस्यास्य जीवस्यार्थे सुखी दुःखी अहमित्यादिव्यवहारे अविद्यमाने सत्यपि हितेऽपि संसृतिर्न निवर्तते ध्यायतो विषयान् इति हेतुगर्भविशेषणं "ध्यायतो विषयान्पुंसः संगस्तेषूपजायते" इत्यादिप्रसिद्धिं हिशब्द आपादयति विषयध्यानसंस्कारपरम्परया बीजाङ्कुरन्यायेनान्योऽन्यकारणत्वस्यानादित्वेन भगवत्प्रसादमन्तरेणानुच्छेदादित्यर्थः। एतमर्थं निदर्शयति। स्वप्न इति। यथा जाग्रदवस्थायां नानाविधपदार्थान् ध्यायतः स्वप्ने गर्दभाद्यारोहणादिना मरणाद्यनर्थागमो न निवर्तते पुरुषं कृष्णं कृष्णादन्तं पश्यति स एनं हन्तीत्यादिरनेनार्थक्रियाकारित्वात्स्वप्नस्य मिथ्यात्वमपि प्रयुक्तम्। यद्वा अर्थेऽबाधितप्रयोजने असत्यपीति ॥ ४॥

अस्य संसारस्य निवृत्त्युपायमाह। प्रयुञ्ज्येति। "अज्ञासुप्तिशब्दोक्तं स्वप्नश्चैव विपर्यय" इति वचनात् स्वप्नसुषुप्तिभ्यां विपरीतज्ञानाज्ञानाभ्यां विषयाणां सेवया स्वतः स्वतो (१) न निवर्तते इति शास्त्राद्युपदेशेन प्रबुध्य प्रकृष्टं बोधं प्राप्यात्मवैशसं दुर्विषयसेवयात्मनाशं संस्मरन्नसौ पुरुषो विषयाणां वैनश्यं निष्फलत्वं व्यभिचारमनित्यत्वं च ज्ञात्वा यतो विषयात् भयं संसारलक्षणं स्यात् तत्र ध्यायेन्न संस्मरेदित्यर्थः आत्मसंसृतेरिति पाठे तस्या मिथ्यात्वमनैकान्तत्वं च दृश्यमानं संस्मरन्नित्यर्थः ॥ १॥

मनसि विजिते सर्वं विजितं स्यादिति कृत्वा मनो विजयप्रकारं वक्ति। अत इति। यत एवं मनसो विषयेषु सङ्गः संसारहेतुरत एव विषयसङ्गिनामसतां पथि प्रसक्तं चित्तं शनैर्हरौ तीव्रेण भक्तियोगेन विषयविरक्त्या चात्मवशं नयेदित्यन्वयः। असतामसङ्कुलानां विषयाणां पथीति वा ॥ ५॥

मनसः स्ववशानयनमेव नालं किन्तु यमादिसाधनसामग्र्या समुत्पन्नेनापरोक्षज्ञानेनानावृत्तिलक्षणश्रीनारायणप्राप्तिः स्यादित्याह। यमादिभिरिति। अभ्यसन्प्रणवमिति शेषः। सत्येन भूतहितवचनेन ॥ ६॥

सर्वभूतसमत्वेन सर्वान्तर्यामिणो मम पूर्णत्वादिज्ञानेन तत्तद्वस्तुयोग्यतानुकूलदर्शनेन वा निर्वैरेण वैष्णवाद्वेषरहितेनाप्रसङ्गतः विषयरागिभिः सह संलापादिप्रसङ्गराहित्येन मौनेन उपासनेन स्वधर्मेण स्वविहितवर्णाश्रमधर्मानुष्ठानेन ॥ ७॥

यदृच्छयोपलब्धेन दैवतः प्राप्तधनेन सन्तुष्टोऽल्पबुद्धिमान् शान्तः मदेकनिष्ठः सनामापदं गित्वा ज्ञात्वा त्रायत इति मित्रं सा बुद्धिर्यस्यास्ति स मैत्रः मित्रादिदेवतानिष्ठ इति वा करुणो मित्रोदासीनेषु सत्सु कृपावान् वशीकृतमनाः ॥ ८॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

अथ जीवाख्यं पुरुषमपि प्रकृतेर्विविनक्ति। प्रकृतिस्थोऽपीत्यादिना यथा जले दृष्टोऽप्यर्कस्तेन न लिप्यते तथेत्यर्थः ॥ १॥

किन्त्वत्र जलार्कदृष्टान्तत्वेन दर्पणमुखदृष्टान्तो लक्ष्यस्तस्मात् स्वमुखस्य दर्पणदोषोपाधित्ववत्त तल्लिप्तत्वेन मिथ्यैवाभिमानं कुरुते इत्याह। स इति। भक्तियोगेनेति ॥ २ ॥ ३ ॥ ४ ॥

तस्य साधनत्वमुक्त्वा फलन्तरतात्पर्यत्वात् सकैतवत्वं दर्शितम् ॥ ५॥

अतएव ज्ञानकर्ममिश्रत्वमाह। यमादीति पट्केन। भावेन भक्त्या। सत्येन यथार्थव्यवहारेण तदेवं सिद्धं जीवस्य शुद्धत्वज्ञानमीश्वरोपलब्ध्यर्थत्वेन योजयति ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

साङ्ख्यं नेतरभिन्नस्य ज्ञाने जाते तथात्मनः।
ब्रह्मरूपेण तज्ज्ञानं सप्तविंशे निरूप्यते ॥ १॥
साधनानि स्वरूपं च चिन्तनार्थमिहोच्यते।
युक्तयोऽप्यत्र कथ्यन्ते विपर्ययनिवृत्तये ॥ २॥

(१) संसृतिः॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

पूर्वाध्याये सङ्घाते विद्यमान आत्मा भिन्नतया निरूपितः तस्य मोक्षो निरूप्यते स चेद्बहुकालं प्रकृतौ स्थितः मञ्जिष्ठादिभिरिव रञ्जकद्रव्यैः वस्त्रमिव रक्तः स्यात् तदा तस्य मोक्षो न सम्भावित इति सूचयन् तस्य स्थितिमाह । प्रकृतिस्थोऽपीति । सर्वदायं जीवः प्रकृतावेव प्राकृते सङ्घाते वर्त्तते तथापि प्रकृतेः सत्त्वरजस्तमोगुणैः नाज्यते अक्तो न भवति यथा पुरुषस्तैलादिना नाज्यते अञ्जनाभावे हेतुचतुष्टयमाह । अविकारादिचतुर्भिः पदैः प्रकृतेर्गुणाः स्वस्मिन् प्रविष्टं वस्तुतः अक्तं कुर्वन्ति स्वयं वा तत्र प्रविष्टाः तत्र प्रवेशे विकृतमेव प्रविशतीति विकाराभावात् न प्रवेशः भावस्य हि विकारा भवन्ति यो हि भवनमनुभवति स तु न केनापि प्रकारेण भवतीति विकाराभावः किञ्च कर्त्ता हि क्रियाधर्मैरदृष्टप्रकारेण रज्यते अकर्त्तृत्वात् नादृष्टप्रकारेणापि विकाररहितोऽपि सजातीयग्राहक इति यदि स गुणः स्यात् तदा परगुणैरपि स्वसजातीयैः विद्धानिव रक्तो भवेत् एतद्रसाभिनिवेशाद्रञ्जनं फलतो रञ्जनमुच्यते साधनतो व्यापारतः फलतश्च रञ्जनाभाव उक्तः स्वस्मिन् प्रवेशे सति रञ्जनं भविष्यतीत्याशङ्क्य प्रवेशं दृष्टान्तेनान्यथा निरूपयति । जलार्कवदिति । सहि प्रकृतौ प्रतिबिम्बन्यायेन प्रविशति नतु कुण्डं बदरमिव अन्यथा प्रकृतौ तत्प्रतीतिर्न स्यात् प्रकृत्यपेक्षया व्यापकत्वाच्च अतः स्वच्छा प्रकृतिः पुरुषच्छायां गृह्णातीति पुरुषो न तद्धर्मैः सूर्यवत् रज्यते ॥ १ ॥

तर्हि कथं संसार इत्याशङ्क्याह । स एष इति । स एव प्राकृतगुणैः असम्बद्धोऽपि एषः संसारी भवति कथमित्याकाङ्क्षायामाह । यर्हीति । प्रकृतेर्गुणेषु यर्हि स्वयमभिरज्यते यद्यपि गुणाः किञ्चित्कर्त्तुं न शक्ताः तथापि स्वयं चेतनः तान् गुणान् वशीकर्त्तुं स्वधर्मेण रञ्जयितुं शक्नोति यथा सूर्यो जलं स्वगुणैस्तप्तं करोति जलं तु सूर्यं शीतलं कर्त्तुं न शक्नोति तदा किरणैः शुष्यत् जलं सूर्यं प्रविशति तदा तत्र गतं बहुधा प्रसूयते एतदेव गुणेषु अभिविषक्तिर्नाम तदा वशीकृतेषु अहङ्कारेण विमूढः सन् कर्तास्मीति आत्मानमभिमन्यते प्रकृतेर्गुणाः स्वात्मन्यागताः सर्वमेव कार्यं कुर्वन्ति तत्र कर्त्ता अहङ्कारो गुणव्याप्तः स चाहङ्कारो मोहात्मको भवति यतो जीवो मूढः सन् अहमित्यात्मानं मन्यते अहंक्रिया अहङ्कारः मोहे क्रिया उपयोगात् स्त्रीलिङ्गनिर्देशः अहंक्रिया विमूढः आत्मा अन्तःकरणं स्वरूपं वा यस्य अहङ्करोतीत्यहङ्कारः तेन कर्त्तृत्वमहङ्कारस्यैव तेन तदैक्यादात्मानमपि कर्त्तास्मीति मन्यते ॥ २ ॥

ततः किमत आह । तेन संसारपदवीमिति । कर्त्तृत्वाभिमानात् कर्ता भोक्ता भवतीति संसारभोगार्थं संसारपदवीमेति अवशः कर्माधीनः अत एवाभिमुख्येनैति नन्वेवं सति नित्यः संसारः स्यादत आह । अनिर्वृत इति । कर्मफले निर्वृतिरहितः निर्वृतस्तु संसाराद्विमुच्यत इत्युक्तं भवति ननु संसारमार्गे गमनमात्रेण किं स्यादित्यत आह । प्रासङ्गिकैरिति । प्रसङ्गेन हि कर्मणो दोषा जायन्ते स्वभावतः कर्माणि न दुष्टानि किन्तु प्रसङ्गादेव यथान्नभोजनं न निषिद्धं किन्तु दुष्टान्नभोजनमेव कर्ममार्गस्तु सद्सन्मिश्रयोनिरूपः सदसदादियोनिर्देवतिर्यङ्मनुष्ययोनिः ॥ ३ ॥

नन्वयं संसारः किं सत्यो मिथ्या वा आद्ये अनिर्मोक्षः द्वितीये साधनवैयर्थ्यमित्याशङ्क्याह । अर्थे हीति । यद्यप्यत्र संसारे संसरणरूपोऽर्थो नास्ति देवतिर्यङ्मनुष्ययोनिषु देह एवोत्पद्यते देहे च आत्मनो न कोऽपि सम्बन्धः असङ्गत्वादात्मनः संयोगो नास्ति सुतरां न समवायः स्वरूपसम्बन्धोऽपि नास्ति उभयोरेकत्र निरूपणाभावात् महाराजवराकयोरिव किं त्वाध्यासिकः स तु मोहादित्यलीकः अतः संसारः अलीकभूत एव तथापि न निवर्त्तते यो हि मिथ्याभूतः सन् बाधते स कथं निवर्त्तते अन्यथा बाधनमेव न स्यात् नन्वेतादृशस्य बाधने किं बीजं तत्राह । ध्यायतो विषयानस्येति । अस्य संसारस्य ये विषयाः तान् भोग्यत्वेन ध्यायतः विषयभोगवासनायां सत्यामविद्यमानोऽपि संसारो बाधत इत्यर्थः असतोऽपि बाधकत्वे दृष्टान्तः यथा स्वप्ने अनर्थागमः स्वप्नस्तु मायिक इति सिद्धान्तः यद्यपि तत्र ताडनं मिथ्याभूतं तथापि जागरणात्पूर्वं वर्त्तत एव अतः संसारनिवृत्त्यर्थं यत्नः कर्त्तव्य इति सिद्धम् ॥ ४ ॥

तत्र स्वप्नदृष्टान्तेनैव बोधस्तस्य निवर्त्तक इत्यवसीयते स बोधः कथं भवतीत्याकाङ्क्षायामन्तर्मुखं चित्ते भवतीति वेदान्तिनिश्चितं "कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्" इति श्रुतेः संसारान्निवृत्तं चित्तमात्मगामि भवतीति निश्चितं सदसन्मार्गे प्रवृत्तं न निवर्त्तत एव नापि निवर्त्तयितुं शक्यते असतां बहुत्वात् बलिष्ठत्वाच्च तत्रापि प्रकर्षेणासक्तं तथाप्येतादृशमपि निवर्तनीयमिति आदौ तस्य वशीकरणे हेतुमाह । अत एवेति । यतः अनिवृत्तमनर्थहेतुः अत एव बहुकालमासक्तत्वात् शीघ्रमनिवृत्तावपि शनैर्निवर्त्तनीयं यथा असन्तः परिपन्थिनो न भवन्ति यथा वा चित्तमासक्तिं त्यजति तत्र द्वयं हेतुः भक्तियोगो विरक्तिश्चेति भगवति स्नेहः विषयेषु रागाभावश्च पूर्वस्माद्वैपरीत्यमुभाभ्यां चित्तं वशे भवेत् ॥ ५ ॥

उभयोः साधनान्याह । यमादिभिरिति । पूर्वं भक्तिसाधनान्युक्तानि सत्सङ्गादीनि तानि दुर्लभानीति ज्ञानमेव भक्तिसाधनमिति निरूप्यते यमादिसाधनैरात्मानं चेज्जानाति तदा भगवति स्नेहः पश्चाद्भगवति चित्तस्थैर्यं तदा विषयध्यानाभावात् संसारो निवर्त्तते तत्र प्रथमं यमाः अहिंसादयः ततो नियमाः स्नानादयः तत आसनादियोगमार्गाः तैः कृत्वा चित्तमभ्यसेत् चित्तं तत्परं कुर्यात् संयमनाभ्यासं वा मार्गे साधनेषु च श्रद्धयान्वितः मयि भगवति भावेन श्रद्धादिना सत्येन सत्यभावेन कायवाङ्मनःसु सत्यप्रतिष्ठया निरन्तरं भगवत्कथाश्रवणेन चकारात्कीर्त्तनेन ॥ ६ ॥

सर्वभूतेषु समदृष्ट्या सर्वप्राणिषु वैराभावेन सर्ववस्तुषु सर्वप्राणिषु च प्रसङ्गाभावेन अष्टाङ्गब्रह्मचर्येण मौनेन वृथालापपरिवर्जनरूपेण महीयसा निष्ठाप्राप्तेन स्वधर्मेण वर्णाश्रमधर्मेण यदृच्छया उपस्थितेनान्नादिना सन्तुष्टो भवेत् एतानि सर्वाणि साधनानि पूर्वेण पूर्वेण सिद्धान्युत्तरोत्तराणि द्वादश भवन्ति अन्यैः सहितेन ॥ ७ ॥

यदृच्छयोपस्थितेनान्नादिना यः सन्तोषः साध्यः पूर्वोक्तानि स्वरूपोपकार्यङ्गानि कस्य चिन्मते सन्तोष एव मुक्त्यङ्गमिति फलोपकार्यङ्गानि वा अतः सन्तोषस्य करणता नोक्ता पृथक् स्थित्यभावार्थं वा कर्तृविशेषत्वेनोक्तं तत्रापि मितभोजनं मननं

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

च एकान्ते स्थितिः परमा शान्तिः सर्वत्र मैत्री करुणा स्वाधीनान्तःकरणत्वं पुत्रादिसहिते देहे निश्चयाभिनिवेशाकरणं चेति अन्तरङ्गान्यष्टावङ्गानि यमादयो द्वादश एकः सन्तोषः मितभोजनादीन्यष्टौ एवं त्रिविधैः साधनैः अत्यन्तरङ्गसाधनैः त्रिभिश्च आत्मदृग्भवति ॥ ८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

सप्तविंशे भक्तिमिश्रज्ञानसाधनविस्तृतेः।
पुंप्रकृत्योर्विवेकाच्च मोक्षरीतिरुदीर्यते ॥

विवेकज्ञानेन मोक्षमुपपादयितुं जीवात्मानं प्रकृतेर्विविक्तत्वेन दर्शयति। प्रकृतिस्थोऽपि। पुरुषो जीवः सुषुप्तिप्रलययोर्निर्गुणत्वादकर्तृत्वं ततोऽविकारित्वं तस्माद्धेतोर्नाज्यते। जलार्कवत् जलस्थः सूर्य्यमण्डलकिरण इव न वस्तुतो जलधर्म्माक्रान्तः यदाहि पवननिबन्धनो जलस्याकम्पः स्यात् तदा तदनुगतस्य जलार्कस्यापि कम्पः स्यात्। यदुक्तं "ज्योतिर्यथैवोदकपार्थिवेष्वदः समीरवेगानुगतं विभाव्यत" इति अत एव मनसः सम्यक् शुद्धौ सत्यां त्वंपदार्थोऽपि शुद्ध्यतीति। मन एव मनुष्याणां कारणं बन्धमोक्षयोः" इति शास्त्रम् ॥ १ ॥

तस्याभिमाननिबन्धन एव संसार इत्याह। स एवेति द्वाभ्याम्। यर्हि जागरस्वप्नयोः ॥ २ ॥

प्रासङ्गिकैः प्रकृतिप्रसङ्गभवैः ॥ ३ ॥

ननु तस्य जीवस्य कर्तृत्वकारणत्वाद्यभावाद्वस्तुतः कर्म्माभावेऽपि देहकृतैः कर्म्मभिः कथं बन्धस्तत्राह। अर्थे कर्मरूपे वस्तुनि वस्तुतोऽविद्यमानेऽपि कर्तृत्वाभिमानेन विषयान् ध्यायतः। तत्र दृष्टान्तः स्वप्ने खल्वनर्थस्याप्यधिगमः स्वाभिमानविषयध्यानपरिपाकादेवेत्यर्थः ॥ ४ ॥

यतो विषयध्यानमनर्थहेतुरतो नियन्तव्यमित्याह। अत इति। भक्तिश्च योगश्च तयोर्द्वन्द्वैक्यं तेन तीव्रेण बलिष्ठेन ॥ ५ ॥

उक्तमर्थं प्रपञ्चयन् ज्ञानेन मोक्षप्रकारमाह। यमादिभिर्योगपथैः अभ्यसन् अभ्यासेन चित्तमेकाग्रं कुर्वन् जीवात्मा परमात्मानमुपलभ्य सर्व्वानुस्यूतमद्वयं तं प्रतिपद्यते इति षष्ठेनान्वयः। मयि सत्येन भावेन मद्रूपनामलीलादीनां सत्यत्वदृष्ट्या मयि यः सत्यो भावः सत्यत्वभावना तेन नतु मायाशबलितब्रह्मत्वदृष्ट्या मय्यायत्यामसत्यत्वभावनयेत्यर्थः तथात्वे "त्वय्यस्तभावादविशुद्धबुद्धयः। आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधोनादृतयुष्मदङ्घ्रय इति नैष्कर्म्यमप्यच्युतभाववर्ज्जितम्" इति अवजानन्ति मां मूढा मानुषीं तनु माश्रितम् इति न भजन्त्यवजानन्ति स्थानाद्भ्रष्टाः पतन्त्यधः" इत्यादिभ्यो भगवद्भिर्ब्रह्मादौ चिदानन्दभिन्नत्वभावनालक्षणावज्ञया ज्ञानिनामपि मोक्षाभावावगतेः ॥ ६ ॥

महीयसा ईश्वरार्पितेन ॥ ७ ॥

विविक्तशरणः एकान्तवासी। आत्मवान् धृतियुक्तः असद्ग्रहं अहंममताम् ॥ ८ ॥

---



### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तमस्मिन् प्रत्यगात्मानं धिया योगप्रवृत्तया। भक्त्या विरक्त्या ज्ञानेन विविच्यात्मनि चिन्तयेत्" इति श्लोकं विवृणोति। प्रकृतिस्थोऽपीति सप्तविंशेनाध्यायेन। आत्मानात्मादिविवेकं वक्तुं तावद् गुणासक्त्या संसारं जीवस्य वर्णयति। प्रकृतिस्थोऽपीति चतुर्भिः। यथा जलार्कः जलस्थसूक्ष्मप्रतिबिम्बरूपः सूर्य्यः जलैरेव नाज्यते स्वसंसर्गीक्रियते तथा प्रकृतिस्थोऽपि पुरुषो जीवस्तद्गुणैरेव नाज्यते न स्वसंसर्गीक्रियते कुतः अविकारात् पुरुषस्य गुणविकाररूपत्वाभावात् ये गुणविकाररूपाः देहादयस्ते गुणसंसर्गिणः गुणसामर्थ्याद्भवन्तीत्यर्थः। अकर्तृत्वात् कर्तात्र निमित्तं न विद्यते कोऽपि प्राकृतो गुणः कर्ता निमित्तं यस्य तस्य भावस्तत्त्वं तस्मात् ये गुणनिमित्ताः शान्तघोरविमूढत्वादयो भावास्ते गुणसंसर्गिणो गुणसामर्थ्याद्भवन्तीत्यर्थः। नितरां गताः पुरुषधर्मत्वेन दूरीभूताः गुणाः यस्मात्तस्य भावस्तत्त्वं तस्मात् या गुणवती प्रकृतिः सा गुणसंसर्गिणी भवतीत्यर्थः ॥ १ ॥

कथं तर्हि पुरुषस्य संसारित्वमत्राह। स इति। तथा विधोऽपि अभिविसज्जते अनादितः गुणतादात्म्यं स्वत एव कुरुते इत्यर्थः अत एव अहंक्रियया देवोऽहं मनुष्योऽहमित्यभिमानेन विमूढबुद्धिः कर्तास्मि आत्मतदनुबन्धिस्थित्यादिहेतुरस्मीत्यादि मन्यते ॥ २ ॥

तेनाभिमानेन संसारपदवीं जन्ममरणप्रवाहमार्गं कर्मदोषैः प्रासङ्गिकैः अभ्येत्य सदसन्मिश्रयोनिषु शान्तघोरविमूढयोनिषु जन्मसु निर्वृतः सुखितो भवति नतु विरज्यते ॥ ३ ॥

अर्थे अविद्यमानेऽपि गुणतादात्म्याभावेऽपि ॥ ४ ॥

एवं गुणासक्त्या पुरुषस्य संसार इत्युक्तमथ परमपुरुषे चित्तसमाधानान्मुक्तिरित्याह। अत एवेति। वशं नयेत् गुणासक्तिं विहाय परमपुरुषे संयोजयेत्। गुणेषु सक्तं बन्धाय रतं वा पुंसि मुक्तये। इत्युक्तत्वात् एतदेवाह। यमादिभिरिति षड्भिः यमादिभिः भक्तिप्रधानैः अभ्यसन् चित्तं परमपुरुषे स्थिरीकुर्वन् अद्वयं प्रतिपद्यते इति षष्ठेनान्वयः ॥ ५ ॥ ६ ॥ ७ ॥

विविक्तं चित्तसमाधानविरोधिजनवर्जितं शरणं स्थानं यस्य सः ॥ ८ ॥ ९ ॥

---

### भाषाटीका।

श्रीभगवान् बोले प्रकृति मे स्थित रहने से भी पुरुष अविकारी होने से प्रकृति सम्बन्ध विना अकर्ता होने से लौकिक गुणों से रहित होने से जल मे स्थित सूर्य सरीका प्रकृति के गुणों से लिप्त नहीं होता है ॥ १ ॥

यह जीव जब प्रकृति के गुणों में आसक्त होता है तब अहङ्कार से मोहित होने से कर्ताहूं ऐसा अभिमान करता है ॥ २ ॥

अभिमानी होनेसे देहादिकृत कर्म दोषों से सुखित न होकर सत् असत् मिश्रयोनियोंमें संसार जन्मादिक को प्राप्त होता है ॥ ३ ॥

जन्मादिक अर्थ आत्माको नहीं है तौ भी जैसे स्वप्न में अनर्थ की प्राप्ति होती है तैसे विषयों के ध्यान करने से पुरुष का संसार नहीं निवृत्त होता है ॥ ४ ॥

स्वप्न सुषुप्ति दोनों अवस्थों के देखने से दुर्विषयसेवासे आत्मनाश को जानकर विषयों का सुख को अनित्य झूठा समझकर जिस विषय से भय होता है तिसका फिर ध्यान नहीं करना चाहिये ।७।

सानुबन्धे च देहेऽस्मिन्नकुर्व्वन्नसदाग्रहम्।
ज्ञानेन दृष्टतत्त्वेन प्रकृतेः पुरुषस्य च ॥ ९ ॥
निवृत्तबुद्ध्यवस्थानो दूरीभूतान्यदर्शनः।
उपलभ्याऽऽत्मनाऽऽत्मानं चक्षुषेवार्कमात्मदृक् ॥ १० ॥
मुक्तलिङ्गं सदाभासमसति प्रतिपद्यते।
सतो बन्धुमसच्चक्षुः सर्व्वानुस्यूतमद्वयम् ॥ ११ ॥
यथा जलस्थ आभासः स्थलस्थेनावदृश्यते।
स्वाभासेन यथा सूर्यो जलस्थेन दिवि स्थितः ॥ १२ ॥
एवं त्रिवृदहङ्कारो भूतेन्द्रियमनोमयैः।
स्वाभासैर्लक्षितोऽनेन सदा भासेन सत्यदृक् ॥ १३ ॥
भूतसूक्ष्मेन्द्रियमनो बुद्ध्यादिष्विह निद्रया।
लीनेष्वसति यस्तत्र विनिद्रो निरहंक्रियः ॥ १४ ॥
मन्यमानस्तदाऽऽत्मानमनष्टो नष्टवन्मृषा।
नष्टेऽहंकरणे द्रष्टा नष्टवित्त इवातुरः ॥ १५ ॥
एवं प्रत्यवमृश्यासावात्मानं प्रतिपद्यते।
साहङ्कारस्य द्रव्यस्य योऽवस्थानमनुग्रहः ॥ १६ ॥

भाषाटीका।

इसी हेतुसे असत्पुरुषों के मार्गमे प्रसक्त चित्तको धीरेसे तीव्र भक्तियोग तथा वैराग्यके द्वारा वश करै ॥ ५ ॥

यम नियमादि योगमार्गोंसे श्रद्धायुक्त अभ्यासकरता हुआ मेरेमें प्रेम करै सत्यव्रतहोवै मेरी कथाओंका श्रवणकरै ॥ ६ ॥

सर्वभूतों मे समदृष्टि करै निर्वैर रहै आसक्ति न करै ब्रह्मचर्य करै मितभाषण करै वलवान् स्वधर्ममे स्थित रहै ॥ ७ ॥

दैवयोगसे जोमिलै तिसीसे सन्तुष्ट रहै थोडा भोजन करै एकांत में स्थितिकरै शांतहोवै सबका मित्र करुणावान् होवै आत्मज्ञानी होवै ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

असदाग्रहमहंममतामं। प्रकृतेः पुरुषस्य च दृष्टं तत्त्वं येन तेन ज्ञानेन ॥ ९ ॥

निवृत्तानि बुद्ध्यवस्थानानि जाग्रदादीनि यस्य सः अत एव दूरीभूतमन्यदर्शनं यस्य आत्मनाहंकारावच्छिन्नेनाऽऽत्मानं शुद्धमुपलभ्य एकस्यैवावच्छेदानवच्छेदाभ्यां करणकर्मत्वे दृष्टान्तमाह। चक्षुषा चक्षुरवच्छिन्नेनार्केण गगनस्थमर्कमिव एवमात्मदृक् शुद्धमात्मानं पश्यन् ॥ १० ॥

मुक्तलिङ्गं निरुपाधिकमसति मिथ्याभूतेऽहंकारे सदाभासं सद्रूपेणाऽऽभासमानं ब्रह्म प्राप्नोति शुद्धजीवस्वरूपाद्विशेषमाह। सतः कारणस्य प्रधानस्य बन्धुमधिष्ठानम् असतः कार्यस्य चक्षुरिव प्रकाशकं सर्वेषु कार्यकारणेष्वनुस्यूतम् अद्वयं परिपूर्णम् ॥ ११ ॥

अहंङ्कारोपहितेन शुद्धब्रह्मप्रतिपत्तौ सदृष्टान्तमाह। यथेति। जले स्थित आभासः सूर्यप्रतिविम्बो यदा गृहान्तर्वर्तिभित्तौ स्फुरति तदा गृहकोणस्थितैः पुरुषैर्भित्त्यादौ स्थले स्थितेन स्वाभासेन सूर्यप्रतिविम्बेन यथा प्रथमं जलस्थ आभासो ऽवदृश्यते लक्ष्यते गगनस्थस्य गृहमध्ये प्रतिविम्बायोगात् चार्थे तथा शब्दः यथा चेत्यर्थः यथा च जलस्थेन दिवि स्थितः सूर्यो लक्ष्यते ॥ १२ ॥

एवं भूतेन्द्रियमनोमयैर्देहेन्द्रियमनोभिरवच्छिन्नैः स्वाभासैरात्मप्रतिविम्बैस्त्रिवृत्त्रिगुणोऽहङ्कारः सतो ब्रह्मण आभासो यस्मिंस्तेन रूपेण लक्षितः अहङ्कारस्याभासं विना विषयाभासानुपपत्तेः अनेन चाहङ्कारेण सदाभासवता सत्यदृक् परमार्थज्ञप्तिरूप आत्मा लक्षित इत्यर्थः ॥ १३ ॥

इदानीं सुषुप्तिसाक्षित्वेन शुद्धात्मप्रतिपत्तिमनुभवतो दर्शयति त्रिभिः। भूतादिष्वसत्यसत्तुल्येऽव्याकृते निद्रया लीनेषु सत्सु यस्तत्र तदा विनिद्रो निरहंक्रियस्तमात्मानं प्रति पद्यत इति तृतीयेनान्वयः ॥ १४ ॥

---

ननु यदि तदा विनिद्रोऽसावस्ति तर्हि जाग्रत्स्वप्नयोरिव स्फुटः किं नावभासते तत्राह। पूर्वं स द्रष्टातो द्रष्टृत्वेन सविक-

श्रीधरस्वामिकृतभावार्थदीपिका ।

द्रष्टतया स्फुटं प्रतीतः सुषुप्तौ तु भूतादेरहङ्कारविषयस्य लीनत्वात्तद्विषयेऽहङ्कारे नष्टे सति स्वयमनष्टोऽपि मृषैवाऽऽत्मानं नष्टवन्मन्यमानो यः । अन्यस्य नाशेऽन्यस्य नष्टतुल्यत्वे दृष्टान्तः नष्टवित्तो यथा आतुरो विवशः नष्टवद्भवतीत्यर्थः ॥ १५ ॥

ननु सुषुप्तौ न किंचिदनुभूयते । मैवम् सुखमहमस्वाप्सं न किंचिदवेदिषमिति विशेषज्ञानं विना केवलस्याऽऽत्मनः प्रतिसन्धाना-दित्याह । एवमिति । ननु प्रतिसन्धाने साहङ्कारस्य प्रतीतेः कथं निरहंक्रियत्वं तत्राऽऽह । साहङ्कारस्य द्रव्यस्य कार्यकारणसंघातस्यानुग्रहः प्रकाशकः अवस्थानं च द्रव्यविशेषणतयाऽहङ्कारस्यापि दृश्यत्वाच्च तद्द्रष्टाऽऽत्मा तद्व्यतिरिक्तः तमात्मानमित्यन्वयः ॥ १६ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता

दीपिन्याख्या दीपिकाटिप्पणी ।

यथेतियुग्मकम् । देहादिभिरवच्छिन्नैस्तत्र स्थितैः सदाभासवता अदाभासवता लक्षित इत्यस्यावृत्तेरित्यर्थं इत्युक्तम् ॥ १२ ॥ १३ ॥

भूतसूक्ष्मेतित्रिकम् । अध्याकृतेऽज्ञाने तदा सुषुप्तौ तं शुद्धात्मानं सुषुप्तावात्मानुभवाभावमाशङ्कते । नन्विति । अतो जाग्रत्स्वप्नयोर्दृश्यसम्बन्धात् सविकल्पकतया ज्ञानादिविशेषणविशिष्टतया तद्विषये भूतेन्द्रियादिविषयके अन्यस्याहंकारादेः नाशेऽन्यस्यात्मनः नष्टतुल्यत्वे । अनष्टत्वे शङ्कते । नन्विति । परिहरति । मैवमिति । विशेषज्ञानं विनेति । यथा जाग्रत्स्वप्नयोर्दृश्यद्रष्टृदर्शनात्मकं विशेषज्ञानमस्ति तथा विशेषज्ञानं सुषुप्तौ नास्तीत्यर्थः । किन्तु सुखं यथा स्यात्तथा अहमस्वाप्समिति सुखस्वापसाक्षितया तथा न किं-चिद्घटादिवस्तुजातमवेदिषमित्यज्ञानसाक्षितया श्रुत्युक्तया केवलस्य शुद्धस्यानुभूतस्य जाग्रदवस्थायां स्मरणात् अनुभवस्मृत्योस्सामानाधिकरण्येनान्येनानुभूतस्यान्येन स्मरणानुपपत्तेः सुषुप्तौ अस्त्येवात्मानुभवः विषयसम्बन्धाभावात् न स्पष्ट इत्यर्थः सुषुप्तावुक्तं निरहंक्रियत्वं शङ्कते । ननु प्रतिसन्धान इति । यदि सुषुप्तावहङ्कारो नास्ति तदा जाग्रति कथं स्मर्य्यते अनुभवमन्तरा स्मरणानुपपत्तेः सति च तस्मिन्निरहंक्रियत्वं कथमित्याशङ्कायामाह । साहङ्कारस्येति । अवस्थानस्याधारः । द्रव्यविशेषणतयेति । जाग्रत्स्वप्नयोर्योऽहङ्कारस्तस्य द्रव्यस्य कार्यकारणसङ्घातरूपदेहस्य विशेषणं कथंभूतोऽयं देहः अहमेवेति तस्मात्प्राकृताहङ्कारस्यापि दृश्यत्वं तस्मादपि हेतोः तद्द्रष्टा ततो भिन्न एव चकारेण नष्टेऽहङ्कारे इत्यनेनोक्तोऽहंकारनाशरूपो हेतुः समुच्चितः तस्मात्तत्र द्रव्यविशेषणीभूतप्राकृताहङ्काराभावेन निरहंक्रियत्वमुक्तम् न तु स्मर्य्यमाणस्वरूपात्मकाभावेन द्वयोरविविक्तत्वन्तु स्वरूपाज्ञानेनैवेति भावः । मूले एवं प्रत्यवमृश्य सुखमहमस्वाप्समिति श्रुत्युक्तप्रकारेणात्मानं प्रतिसन्धाय ॥ १४ ॥ १५ ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सानुबन्धे पुत्रकलत्राद्यनुबन्धसहितेऽस्मिन् देहेऽसदाग्रहं-ममाभिमानमकुर्वन् दृष्टं तत्त्वं याथात्म्यं यस्मिन् तेन प्रकृतेः पुरुषस्य च ज्ञानेन प्रकृतिपुरुषयोर्हेयोपादेयत्वज्ञानेनेत्यर्थः ॥ ९ ॥

निवृत्तानि बुद्धेर्मनसोऽवस्थानानि सङ्कल्पविकल्पादीनि यस्य सः अत एव दूरीभूतमन्यस्य भगवद्व्यतिरिक्तस्य दर्शनं यस्य सः आत्मदृक् प्रकृतिविविक्तात्मदर्शी ॥ १० ॥

असति देहे चक्षुषा आदित्याधिष्ठितचक्षुरिन्द्रियेणार्कमधिष्ठातारमादित्यमिवात्मना परमात्माधिष्ठितेन प्रत्यगात्मना आत्मानं परमात्मानमुपलभ्य साक्षात्कृत्य पश्चान्मुक्तलिङ्गः प्रारब्धावसाने मुक्तदेहादिशरीरः द्वितीयान्तपाठे मुक्तकर्मायत्तदेहादिशरीरं सदाभासं नित्यासंकुचितज्ञानस्वरूपं सतः प्रत्यगात्मनः बन्धुं "पिता च रक्षकः शेषी भर्ता" इत्याद्युक्तसर्वविधबन्धुमसच्चक्षुःअसतो देहादेरपि चक्षुरिव प्रकाशकं "तस्य भासा सर्वमिदं विभाति" इति श्रुतेः सर्वानुस्यूतं सर्वान्तर्यामिणमद्वयं स्वसमाभ्यधिकरहितं परमपुरुषं प्रतिपद्यते प्राप्नोति ॥ ११ ॥

आत्मदृगात्मनात्मानमुपलभ्येत्यनेन प्रकृतिविविक्तस्वात्मस्वरूपं पश्यन्नेव तदन्तर्यामिणं परमात्मानमुपलभ्य तं प्रतिपद्यत इत्युक्तं तत्र कथमतीन्द्रियं निरतिशयसूक्ष्ममात्मस्वरूपं दर्शनयोग्यमित्याशङ्कायां देहेन्द्रियादिभ्यो विलक्षणात्मस्वरूपप्रत्यक्षदर्शनप्रकारमात्मोपलम्भस्य जागराद्यवस्थास्वतिविशदतरत्वकथनमुखेन सदृष्टान्तमाह । यथेति । प्रथमं दृष्टान्तं शिक्षयति यथेत्येकेन स्वलक्षेनाभासेन सूर्यालोकादिप्रकाशकेनादित्यालोकेनेत्यर्थः जलस्थ आभास आदित्यप्रतिबिम्बं दृश्यते अनादित्ये आदित्यबुद्धिर्हि सा तथा स्वाभासेन स्वालोकेन जलस्थेन जलेऽपि प्रतिबिम्बं प्रकाशयता तेनैव दिवि स्थितः साक्षादादित्यो दृश्यतेऽनादित्यादित्ययोरादित्यावलोकेनैव प्रतीतिरित्यर्थः ॥ १२ ॥

दृष्टान्तेन शिक्षितमर्थं दार्ष्टान्तिके दर्शयति । एवमिति । एवं भूतेन्द्रियमनोमयैः भूतेन्द्रियमनआत्मकैस्त्रिभिः स्वकार्यैस्त्रिप्रकारोऽहङ्कारास्यः प्रकृतिपरिणामविशेषः स्वाभासैः स्वधर्मभूतज्ञानैः आत्मव्यतिरिक्तोऽप्यात्मतया गृह्यते सा हीन्द्रियमनोऽहङ्कारपञ्चभूतस्वरूपदेहात्मविषयात्मबुद्धिर्भ्रान्तिः तथा तेनैव स्वाभासेन स्वाभाविकस्य प्रभाभूतज्ञानेन सत्यदृक् निर्विकारज्ञानस्वरूप आत्मा गृह्यत इत्यर्थः स्वाभासैरिति बहुवचनं देवोऽहं मनुष्योऽहं कृशोऽहमित्यादिनानाकारविषयत्वाभिप्रायम् अयमर्थः नष्टान्धकारे प्रतिबिम्बज्ञानमतोऽनादित्ये आदित्यभ्रान्तिः साक्षादादित्ये आदित्यबुद्धिश्चादित्यधर्मभूतालोकेनैवं एवमनात्मनि देहे आत्मभ्रान्तिः साक्षादात्मन्यात्मप्रतिपत्तिश्चात्मधर्मभूतज्ञाने नैव भवति ॥ १३ ॥

अथेन्द्रियाद्यलयावदशायामप्यात्मावभासमाह । भूतेति । बुद्धिर्महान् आदिशब्दादहङ्कारद्रव्यं भूतसूक्ष्मादिषु निद्रया लीनेषु अनवभासमानेष्वव्याकृते(र्)ष्वित्ति वा तदा असति देहे यः निर्निद्रः वीतनिद्रः निरहंक्रियः देहात्माभिमानरहितः तमात्मानं प्रतिपद्यत इति तृतीयेनान्वयः ॥ १४ ॥

ननु यदि तदा विनिद्रोऽसावस्ति तर्हि जाग्रत्स्वप्नयोरिव स्फुटं किं नावभासते तत्राह । मन्यमान इति । पूर्वं स द्रष्टा देहादेर्द्रष्टृत्वेन सविकल्पकतया स्फुटं प्रतीतस्तदा सुषुप्तौ देहादेरनात्मन्यात्माभिमानरूपाहङ्कारविषयस्य लीनत्वात्तद्विषयेऽहङ्कारे नष्टे सति स्वयमनष्टोऽपि मृषैवात्मानं नष्ट इव मन्यमानो यः अन्यस्य नाशे अन्यस्य नष्टतुल्यत्वे दृष्टान्तः । नष्टवित्तो यथातुरो विवशः नष्टवद्भवति तथेत्यर्थः ननु सुषुप्तौ न किञ्चिदनुभूयते तथा च श्रुतिः "नाहं खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मि" इति मैवं तमोगुणाभिभवात्पराग्र्थानुभवा-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भावाच्चाहमर्थस्यात्मनो विविक्तब्राह्मणत्वादिस्फुटप्रतिभासाभावेऽप्यप्रबोधादहमित्येकाकारेणात्मनः स्फुरणात्सुषुप्तावपि नाहमर्थस्यात्मनो विगमः अत एव हि सुप्तोत्थितस्यैवं परामर्शः सुखमहमस्वाप्सं न किञ्चिदवेदिषं मामप्यहं न ज्ञातवानिति अनेन प्रत्यवमर्शेन तदानीमप्यहमर्थस्यैवात्मनः सुखित्वं ज्ञातृत्वं च ज्ञायते सुखमहमस्वाप्समिति परामर्शो हि सुखमित्यनेन तदानीमनुकूलतया भासमानस्वरूपमनुसंहितं भवति अहमित्यनेन स्वस्मै भासमानस्वरूपप्रत्यक्त्वं चानुसंहितं भवति यथा मन्दमगच्छं मधुरमगायमिति परामर्शो पूर्वं गमनेन सह तदानीन्तनतन्मान्द्यं गानेन मह तदानीन्तनतन्माधुर्यं चानुसंहितं भवति तद्वत् नन्वेतावन्तं कालं किञ्चिदहमज्ञासिषमिति च परामृशतीतिचेत्तनः किं न किञ्चिदिति कृत्स्नप्रतिषेध इतिचेन्न अहमवेदिषमिति वेदितुरहमर्थस्यानुवृत्तेः वेद्यविषयो हि स प्रतिषेधः मामप्यहं न ज्ञातवानिति अहमर्थस्यापि तदानीमननुसंधानं प्रतीयत इति चेन्न मामप्यहं न ज्ञातवानिति परामर्शेहि अहमर्थस्य ज्ञातुरनुवृत्तेन स्वरूपं निषिध्यतेऽपितु प्रबोधसमयेऽनुसन्धीयमानस्याहमर्थस्य व्यावर्तकब्राह्मणत्वादिबाह्यधर्मविशिष्टत्वेन बुद्धिसुखाद्यनन्तरधर्मविशिष्टत्वेन च प्रतिभासाभावोऽहं मां न ज्ञातवानित्युक्तेर्विषयो विवेचनीयः जागरितावस्थानुसंहितजात्यादिविशिष्टोऽस्मदर्थो मामित्यंशस्य विषयः स्वापाप्ययावस्थाप्रसिद्धाविशदस्वानुभवैकतानश्चाहमर्थोऽहमित्यंशस्य विषयः अत्र सुप्तेऽहमीदृशोऽहमिति च मामपि न ज्ञातवानहमित्येव खल्वनुभवप्रकारः नाहं खल्वयमेवं संप्रतीत्युदाहृतश्रुतावहमित्यनेन अहमयमीदृशजात्यादिविशिष्ट इति न जानातीत्युच्यते तस्मादहमर्थस्यात्मनः सुषुप्तौ स्फुरणमस्त्येव ॥ १५ ॥

एतदेवाभिप्रयन्नाह । एवमिति । एवं सुषुप्तावहमर्थस्यात्मनो वृत्तिं प्रत्यवमृश्य परामृश्यासौ प्रकृतिविविक्तात्मस्वरूपजिज्ञासुरात्मानं प्रकृतिविविक्तं प्रत्यगात्मानं प्रतिपद्यते यथावज्जानीयात् पुनरात्मानमेव विशिनष्टि । साहङ्कारस्य द्रव्यस्य पञ्चभूतसमुदायस्य यः अवस्थानमवस्थापक इत्यर्थः आत्मविश्लेषे देहस्य विशरणस्वभावत्वादनुग्रहः अनुग्राहकः देहस्य प्रवृत्तिहेतुरित्यर्थः नहि निरात्मको देहः प्रवर्त्तते ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पुत्राद्यनुबन्धसहितेऽस्मिन् देहेऽसदाग्रहं मदीयं तदीयमिति भेदज्ञानमकुर्वन् प्रकृतेः पुरुषस्य दृष्टतरेण यथावत् ज्ञानस्वरूपेण ज्ञानेन ॥ ९ ॥

निवृत्तबुद्ध्यवस्थानः निवृत्तं बुद्धेरर्वाक्स्थानं निद्रादिलक्षणं यस्य स तथा दूरीभूतमन्यदर्शनं शब्दादिविषयज्ञानं दुःशास्त्रं वा यस्य स तथा चक्षुषार्कमिवात्मना बाह्यान्तःकरणेनाविमिश्रस्वरूपान्तःकरणेन आत्मानं स्वस्वरूपमुपलभ्य दृष्ट्वा द्रष्टव्यनामादिप्राणान्तदेवतानां च स्वस्वरूपं दृष्ट्वा तत्प्रसादादात्मानं स्वान्तर्यामिणं च एका मुख्या दृगेव ज्ञानमेव यस्य स तथा ॥१०॥

प्रारब्धक्षये सति मुक्तलिङ्गः समुत्सृष्टलिङ्गशरीरः देवयानेन विरिञ्चलोकमुपागम्यासति ब्रह्मप्रलये अनिरुद्धद्वारेण विरिञ्चं प्रविशति तेन सह सत्प्राण आभासः प्रतिबिम्बो यस्य तद् ब्रह्म प्रतिपद्यते इत्यन्वयः "शेषस्य प्रतिबिम्बास्तु देवाः शेषश्च ब्रह्मणः । स परब्रह्मणश्चैव ते स्वबिम्बप्रदर्शकाः । ततः स्वबिम्बद्वारेण परमात्मप्रदर्शनम्" इत्यनेन सर्वोऽप्युक्तार्थो ज्ञायते सदाभासं विशिनष्टि । सतो बन्धुमिति । पितृत्वादिना सतः प्राणस्य बन्धुभूतं सतो बन्धुमसति निरविदन्नित्यादेः सर्वरूपेषु पुंगुणत्वादिना समं चक्षुः सर्वज्ञं सर्वेषु मुक्तामुक्तप्रपञ्चेषु मणिषु सूत्रमिव धारकत्वेनानुस्यूतं प्रोतमद्वयमसमाधिकम् ॥ ११ ॥

मुख्यप्राणादिप्रतिबिम्बस्य बिम्बभूतपरमात्मप्रदर्शकत्वमुक्तं तत्र प्रतिबिम्बानां बिम्बप्रदर्शकत्वप्रकारः कथमिति । तत्राह । यथेति । गगनतलवर्तिनः सूर्यस्य भासो जले भवति जलस्यापि कदाचित्स्थले भित्त्यादौ भवत्येवं स्थिते यथा स्थलस्थेन भित्त्यादिगतेनाभासेन जलस्य आभासो दृश्यते ज्ञायते यथा यथा च जलस्थेन स्वाभासेन प्रतिबिम्बेन दिवि स्थितः सूर्यः बिम्बभूतोऽवगम्यते एवं वा योजनाभेदः जलस्य आभासः स्थलस्थेन जले प्रतिबिम्बितं मुखं तीरस्थपुरुषमुखमेतादृशलक्षणमिति यथा ज्ञापयति यथा जलस्थेन स्वाभासेन प्रतिबिम्बेन दिवि स्थितः सूर्यो दृश्यते जलेस्थितसूर्यमण्डलं व्योम्नि स्थितं बिम्बभूतं सवितृमण्डलमवगमयति ॥ १२ ॥

एवं तथा त्रिवृद्वैकारिकतैजसतामसाहङ्काराभिमानी शेषः स्वाभासे स्वप्रतिबिम्बैः भूतेन्द्रियमनोगुणैरभिमानिभिरिन्द्रादिदेवैर्लक्षितो भवत्यनेन शेषाख्येन प्रतिबिम्बेन सत् ब्रह्म लक्षितस्तेन महाभासेन चतुर्मुखाख्यप्रतिबिम्बेन सत्यदृक् यथार्थज्ञानी श्रीनारायणो लक्षितो भवति ॥ १३ ॥

ननु स्वतः सत्यदृक्त्वेऽप्याभासेनास्यासत्यदृक्त्वमभ्युपेयम् अन्यथा स्वतोऽसङ्गस्य सम्बन्धाभावेन लक्षणानुपपत्तिस्तदनुपपत्तावुक्तार्थानुपपत्तिरिति तत्राह । भूतसूक्ष्मेति । इह संसारे भूतसूक्ष्मेन्द्रियमनोबुद्ध्यादिषु लीनेषु निद्रया नष्टवृत्तिषु सत्सु अतिसुप्तेषु यो विनिद्रः उत्फुल्ललोचनः स सत्यदृक् * अनेन कदाप्यस्य ब्रह्मणोऽज्ञानासम्भवो दर्शितोऽत उक्तानुपपत्तिः प्रेक्षावतां हृदि पदं न धत्ते ॥ १४ ॥

परमात्मस्थितिं निरूप्य जीवस्थितिमाह । मन्यमान इति । योऽनष्टोऽपि मनोधर्मे अहङ्करणे नष्टे सत्यात्मानं नष्टवन्मृषा मन्यमानः कदा तदा सुप्तावस्थायां नष्टवित्तं इवातुरो द्रष्टा जीव इत्यन्वयः अनेन कदाप्यविनष्टद्रष्टृत्वं परस्य लक्षणमितरस्य तदन्यथेति वैलक्षण्यमुभयोरुक्तम् ॥ १५ ॥

जीवपरयोर्वैलक्षण्यज्ञानस्य फलमाह । एवमिति । एवमुक्तप्रकारेण ब्रह्मादिजीवराशेः परस्य हरेर्जीवाद्वैलक्षण्यं प्रत्यवमृश्य युक्त्यालोच्य निश्चित्यासावुपासको जीवः । साहङ्कारस्य द्रव्यस्य योऽवस्थानं स्थितिहेतुरनुग्रहश्च सत्ताप्रतीतिदानेनानुगृह्णातीति ज्ञातः तमात्मानं विष्णुं प्रतिपद्यत इत्यन्वयः एकस्यैव परब्रह्मणोऽवस्थाद्वयमत्रोच्यते न तु वैलक्षण्यं निश्चायकप्रमाणाभावादितीयमाशङ्का

"नित्यदृक् परमात्मासौ मृतवद्यो न किञ्चन ।
जानाति जीवः स ज्ञेयः परमात्मा तदाश्रय" ॥

इत्यनेन निश्चायकेन परिहर्तव्या ॥ १६ ॥

---

* पूर्वश्लोकस्थेनान्वयस्तात्पर्यप्रदर्शितः ।

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

उपलभ्येति सार्धकेन । असति औपाधिकेऽहङ्कारे आत्मना तदुपाधिकेनैव द्वारभूतेन ॥ १० ॥

मुक्तलिङ्गम् । उपाधिस्पर्शशून्यम् अतएव सद्रूपेण आ सम्यक् भासमानमात्मानमुपलभ्य ततस्तस्यापि भासनाद्युपकारकतया तत्रैव स्थितं परमात्मानमपि प्रतिपद्यते जानाति तमेव विशिनष्टि । असतां तदन्येषामपि चक्षुर्भासकं सर्वत्र सति असति च अनुस्यूतम् अनपत्राद्वयं ततो मुख्यत्वात्तदुपलब्धार्थमेव शुद्धात्मदर्शनमितिभावः । "अन्यार्थश्च परामर्शः" इतिन्यायेन ॥११॥

एवं स्वाप्नपरम्परया मूलदर्शनं दृष्टान्तयति । यथेति युग्मकेन निगमयति । एवमिति । भूतादिमयैः सङ्घातोपाधिकैः स्वाभासैः स्वस्याहङ्कारोपाधिकस्याभासो येषु तैः गृहकोणस्थितपुरुषस्थानीयैः पुरुषैस्त्रिवृदहङ्कार उपाधिकत्वेन वर्त्तते यस्य स लक्षितः । ततश्च क्रमादनेनाहङ्कारोपाधिकेन पारंपरिकद्वारभूतेन तथा सदाभासेन शुद्धेन च साक्षाद्द्वारभूतेन सत्यदृक् परमात्मापि लक्षित इत्यर्थः ॥ १२ ॥ १३ ॥

भूतसूक्ष्मेतित्रिकम् । असति सतः शुद्धजीवादितरस्मिन् अव्याकृते ॥ १४ ॥ १५ ॥

साहङ्कारे सति मामहं नाज्ञासिषमिति सुषुप्त्यनन्तरमेव प्रतिसन्धानान्तरे मात्पदोक्तभूतसूक्ष्मादिसङ्घातलक्षणद्रव्यविशेषणतया तदहङ्कारस्याप्यन्यदा दृश्यत्वापत्तेरहंपदोक्तस्तद्द्रष्टात्मा तद्व्यतिरिक्तो यः प्रकाशकः आश्रयश्चेत्यर्थः ॥ १६ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तानि नीयथाह । ज्ञानेनेति । साङ्ख्यमेकं तुरीयावस्थाभेदाज्ज्ञानाभावश्च प्रकृतेः पुरुषस्य च दृष्टं तत्त्वं येन तादृशेन ज्ञानेन सांख्य जनितेन ॥ ९ ॥

निवृत्तानि बुद्ध्यवस्थानानि यस्य दूरीभूतमन्यदर्शनं यस्य एवं क्रमेण जाते आत्मनैवात्मानमुपलभ्य आत्मदृग्भवति एकस्यैव करणकर्मत्वे कथमित्याशङ्क्य दृष्टान्तमाह । चक्षुषेवार्कमिति । चक्षुरपि तैजसमर्कोऽपि परमिदमध्यात्मभूतमाधिदैविकश्च सूर्यः तत्र यथा वस्त्वन्तरग्रहणे विषयप्रकाशकत्वेन सूर्यमपेक्षते एवं न सूर्यग्रहणे सूर्यापेक्षा नापि चक्षुर्गतान्धकारनिवृत्त्यर्थं तदपेक्षा किन्तु तेनैव प्रकाशितं चक्षुस्तदंशभूतमात्मानं गृह्णाति एवं जीवेन भगवदंशभूतेन सर्वात्मस्वरूपं भगवल्लक्षणमात्मानं यः पश्यति आत्मदृग्भवतीत्यर्थः ॥ १० ॥

नन्वेवमात्मनाऽऽत्मदर्शने किं स्यात्तत्राह । मुक्तलिङ्गमिति । एवं मानसभावनाज्ञानेन असति अस्मिन् एव सङ्घाते मुक्तलिङ्गं सदाभासं प्रतिपद्यते मुक्तं लिङ्गं यस्य अन्तरावरणं लिङ्गात्मकं तस्य निवर्त्तते तदा सतो मूल एव जीवस्य आभासरूपं शारीरमात्मानं प्रतिपद्यते अयमहमिति साक्षात्प्रतिपद्यते एतावत्कालमाभासस्यापि न साक्षात्कारः बहिरावरणानामनिवृत्तत्वात् नन्वाभासे प्राप्ते कः पुरुषार्थस्तत्राह । सतो बन्धुमिति । अयमाभासः सतो मूलभूतात्मनः बन्धुर्भवति पुत्रो भ्रातेव वा भवति । तत्प्रतिबिम्बत्वात् सम्यक् मूलज्ञापको भवतीति भावः नन्वस्य सतो बन्धुत्वे किं प्रमाणं तत्राह । असच्चक्षुरिति । असतो देहादेश्चक्षुः यथा मांसरूपमपि चक्षुः विषयप्रकाशकं भवति तेन ज्ञायते सूर्याभासोऽयमिति । नन्वसत्प्रकाशकत्वमात्रेण सौरादितुल्यत्वात् न सदाभासत्वं सिद्ध्यतीत्याशङ्क्याह । सर्वानुस्यूतमिति । सर्वत्रैव सङ्घाते अनुस्यूतः सम्बद्धो वर्तते व्यापकाभासव्यतिरेकेण सर्वत्रानुस्यूतता न भवति आभासभेदेन तदुपपद्यत इति चेत्तत्राह । अद्वयमिति । सर्वत्र सङ्घाते एक एव प्रतिबिम्बः अन्यथा य एवाहं पश्यामि स एवाहं शृणोमीत्यनुसन्धानं न स्यात् एवमस्य शारीरस्य सदाभासता निरूपिता ॥ ११ ॥

तेनात्मज्ञाननिरूपणार्थं दृष्टान्तोपपत्ती निरूपयति द्वाभ्याम् । यथेति । गृहमध्ये स्थितः पुरुषः बहिर्जलादौ सूर्यप्रतिबिम्बे संमुखगृहान्तर्भित्तौ तत्प्रतिफलनं भवति घर्म इव तत्र भवति । तेन स जानाति साक्षादत्र सूर्यसम्बन्धो न भवति किन्तु बहिर्दर्पणादौ प्रतिबिम्बस्येदं प्रतिफलनमिति एवं चक्षुरादौ प्रतिफलनं पूर्वोक्तसाधनैरेव नान्यथेति मन्तव्यं नहि बहिः पीठादौ घर्मरूपेण सम्बद्धोऽपि सूर्यः दर्पणादिस्थित इव प्रतिफलति । तथा सति सर्व एव संघातः अन्तः साक्षात्क्रियेत अतः साधनेष्वेव जातेषु यद्भविष्यति तत्दृष्टान्तेन प्रथममसम्भावनानिवृत्त्यर्थं प्रदर्श्यते स्थलस्थेनान्तर्भित्त्यादिप्रतिफलितेन बहिः स्थितो जलस्थ आभासः अवदृश्यते ज्ञायते तेनापि जलस्थितेन स्वाभासेन दिवि स्थितः सूर्योऽवदृश्यते ॥ १२ ॥

एवं त्रिवृदहङ्कारस्थित आत्मा सदाभासो भूतेन्द्रियमनःसु प्रतिफलितैः आभासाभासैः लक्ष्यते तेन त्रिवृदहङ्कारास्थितेन सत आभासरूपेण सत्यदृक् आत्मा जीवभूतो लक्ष्यते ॥ १३ ॥

एवं दृष्टान्तेनात्मासम्भावनां दूरीकृत्य दृष्टान्तस्याप्रामाण्यमाशङ्क्य अनुभवेनोक्तमर्थं द्रढयति । भूतसूक्ष्मेति । जाग्रद्दशायां संघातेन सह स्फुरणात् कोऽयमात्मेति यद्यपि विशेषतो न ज्ञायते तथा सुषुप्तौ केवल आत्मा संघातव्यतिरिक्तो भासत इति तन्निरूपयति । भूतानि स्थूलानि सूक्ष्माणि च तन्मात्रारूपाणि इन्द्रियाणि मनोबुद्धिश्च आदिशब्देनाहङ्कारः स्वप्नराहितनिद्रया एतेषामाभासाः दूरीक्रियन्ते तदैते न प्रकाशन्ते आभासलय एवैषां लयः तदा आभासप्रकाशराहिते असति मूढदेहे यस्तत्र प्रकाशते स आत्मा ज्ञातव्य इत्यवगन्तव्यम् ननु तत्र न कोऽपि भासत इतिचेत्तत्राह । तत्र विनिद्र इति । तस्य तु निद्राव्याप्तिर्नास्ति नन्वहं प्रत्ययवेद्य आत्मा स चेद्विनिद्रः स्यात् अहमिति जानीयात् तत्राह । निरहंक्रिय इति । अहमितिप्रत्ययः अहङ्कारसम्बन्धे भवति तस्य च लीनत्वात् निद्रायां नाहमिति मन्यते ॥ १४ ॥

ननु तर्हि आत्मा न भासत एवेति चेत्तत्राह । मन्यमान इति । तदा आत्मानमनष्टमपि नष्टं मन्यमानो भवति यस्तु मन्यते स आत्मा नष्टत्वेन यन्मन्यते अतो न प्रकटप्रकाशः अन्यथा नष्टं को वा मन्येत स्वप्ने शिरश्छिन्नं को वा शिरश्छेदं पश्येत् अतः कश्चित्तद्द्रष्टा य आत्मानमनष्टमपि नष्टं मन्यते नाहमस्मीति अनष्टस्य नष्टप्रतीतौ उपपत्तिदृष्टान्तावाह । नष्टेऽहङ्करण इति । स त्वहङ्कारसम्वलितः अहङ्कारे नष्टे तद्भेदप्रतीतिदार्ढ्यादात्मानमेव नष्टं मन्यते अहङ्काराध्यस्तस्यैव दृश्यत्वात् केवलस्तु द्रष्टा अत आत्मानं दृश्यरूपमहङ्कारसहितं नष्टं मन्यत एवेति युक्तम् अन्यनाशेऽन्यनाशप्रतीतिमाह । नष्टवित्त इति । धनात्मायं पुरुषो लौकिकः धने नष्टे तद्व्यतिरेकेण स्वानि-

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

र्षाहाभावात् आत्मानमेव नष्टं मन्यते आतुरो रोगी स वा यथा देहे नष्टे आत्मानमेव नष्टं मन्यते आतुरो वा भवति वित्ते नष्टे ॥१५॥

एवमात्मानं निरूप्योपसंहरति । एवमिति । पूर्वोक्तप्रकारेणात्मानं प्रतिपद्यते ननु अहङ्कारनाशोऽपि न प्रतीयते स्मरणे साहङ्कारस्य स्मरणात् सुखमहमस्वाप्समिति नाहङ्कारनाश इतिचेत्तत्राह । साहङ्कारस्येति । अहङ्कारसहितस्य द्रव्यस्य आत्मनोऽवस्थानं पश्चात् स्मरणमनुग्रहो भवति पश्चादहङ्कारः संवद्धः यथा सोऽयं देवदत्तः कुण्डलीति पूर्वं कुण्डलाप्रतीतावपि प्रतीयते यः अनुग्रहः तदवस्थानमिति सम्बन्धः अनुग्रहस्य प्रसिद्धिः प्रकृतोपयोगिनी ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

प्रकृतेः पुरुषस्य च दृष्टं तत्त्वं येन तादृशेन ज्ञानेन निवृत्तानि बुद्ध्यवस्थानानि जाग्रदादीनि यस्य सः अत एव दूरीभूतमन्यस्य विषयस्य दर्शनं यस्य सः ॥ ९ ॥

ततश्च ज्ञानी शुद्धेन जीवात्मनैव परमात्मानं भक्त्यैवानुभूय तमेव प्राप्नोतीत्याह । उपलभ्येति । आत्मना शुद्धजीवेन चित्कणेन आत्मानं परमात्मानं पूर्णचैतन्यनिधिमुपलभ्य भक्त्यानुभूय चक्षुषा पटलादिदोषरहितेन ज्योतिः कणेन अर्कं ज्योतिर्निधिमिव आत्मदृक् ज्ञानी प्रतिपद्यते प्राप्नोति । अत्र पटलादिदोषरहितेनापि चक्षुषा यथोलूकादिरर्कं न पश्यति किन्तु तद्भिन्नो मनुष्यादिरेवार्कं पश्यति तथैव शुद्धेनापि जीवात्मना भक्तिरहितो ज्ञानी परमात्मानं नानुभवति किन्तु भक्तिमानेवानुभवति । "भक्त्याहमेकया ग्राह्य" इति भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरमिति भगवदुक्तेः ॥ १० ॥

तं कीदृशं मुक्तैर्लिङ्ग्यते ज्ञायते इति तमित्यनेनानुभवज्ञानविषयीभूतत्वं तस्योक्तम् असति नश्वरे जगति सदैव भासतेऽन्तर्यामित्वेनेति तं सतः कारणस्य बन्धुं पतिमसतः कार्यस्य महदादेश्चक्षुरिव प्रकाशकं सर्वेषु कार्यकारणेष्वनुस्यूतं परिपूर्णम् अद्वयमेकमिति विशेषणपञ्चकेनानुभवज्ञानपूर्वदशायां तस्य शास्त्रोत्थज्ञानविषयीभूतत्वं ज्ञापितम् ॥ ११ ॥

प्रथमं जीवात्मैव केन प्रकारेण ज्ञातव्यस्ततस्तेन परमात्मा चेत्यत्र सदृष्टान्तमाह । यथेति । जले स्थितः आभासः प्रतिबिम्बाकारो निष्कम्पः सूर्यप्रकाशो यदा गृहान्तर्वर्त्ती स्वच्छभित्त्यादौ स्थले स्फुरति तदा गृहकोणस्थितैः पुरुषैः प्रथमं स्थलस्थ आभासो दृश्यते ततश्च कुतोऽयं प्रकाश इति परामृशद्भिस्तैः तेन स्थलस्थेन स्वाभासेन शोभनसूर्यप्रकाशेन जलस्थो निष्कम्पः आभासोऽवदृश्यते लक्ष्यते पुनश्चायमप्याभासः कुत इति तथा तेनैव प्रकारेण तेन जलस्थेन स्वाभासेन शोभनप्रकाशेन दिवि स्थितः सूर्योऽवदृश्यते ॥ १२ ॥

एवमेव विवेकिभिः प्रथमं भूतेन्द्रियमनांसि चैतन्यत्वात् परमात्मप्रकाशवन्ति दृश्यन्ते ततश्च जडेष्वेषु परमात्मप्रकाशोऽयं कुतस्त्य इति भूतेन्द्रियमनोमयैः भूतेन्द्रियमनोवर्तिभिः स्वाभासैस्तैस्त्रिवृदहङ्कार उपाधित्वेन वर्त्तते यस्य स जीवात्मा परमात्मनः प्रकाशसंभूतः किरणरूपो लक्षितः तज्ज्ञानेन जीवात्मना सदाभासेन सता भक्तिमता प्रकाशेन सत्यदृक् सत्यज्ञानानन्दः परमात्मा लक्षित उपलब्धः ॥ १३ ॥

ननु आर्केण चक्षुषैवार्क इवात्मनैव भक्तिमता ज्ञानिना परमात्मानुभूयत इति सत्यं जानीमः किन्तु चक्षुःश्रोत्रादिकमिव तं जीवात्मानं त्रिवृदहङ्कारात् पृथग्भूतं साक्षाद्दर्शयेत्यपेक्षायामाह । भूतेति त्रिभिः । भूतादिषु असति अनभिव्यक्तत्वादसत्तुल्ये प्रधाने निद्रया लीनेषु सत्सु यस्तत्र तदा विनिद्रो निरहंक्रियः तमात्मानं जीवं प्रतिपद्यते लोकोऽनुभवतीति तृतीयेनान्वयः ॥ १४ ॥

नन्वलं तर्हि योगाभ्यासेन मनोबुद्धीन्द्रियादिलये सति यः केवलात्मानुभवो योगाभ्यासफलरूपस्तं खलु निद्रैव कारयतीति तत्राह । मन्यमान इति । तदा भूतादीनामहंकार्याणामहङ्कारस्य च लयादहङ्करणे नष्टे सति द्रष्टा जीवो दृश्यानामभावाद्दर्शने च नष्टे सति स्वयमनष्टोऽपि आत्मानं नष्टवन्मृषा मन्यमानो य इत्यविद्यावन्तं जीवं सुषुप्तावुत्प्रेक्ष्यते नष्टवित्त इवातुर इति । नष्टवित्तासक्तिरित्यर्थः । अयमर्थः योगाभ्यासेन जीवोपाधिभूतानां तत्त्वानामात्यन्तिके लये सत्येव जीवः स्वीयरूपानन्दमयो भवति ननु नैमित्तकयोः सुषुप्तिप्रलययोः यथा वित्ते नष्टे सत्याकिञ्चन्यं सुखं न भवति किन्तु वित्तासक्तावेव नष्टायां सत्यां तथैव जीवस्य नैष्कर्म्यं विना सुषुप्तिप्रलययोरुपाधिनाशेऽपि न स्वरूपप्राप्तिर्नैष्कर्म्यं च भक्तिज्ञानाभ्यां विना न भवेदिति सुषुप्तौ अविद्यातत्संस्काराणाञ्च विद्यमानत्वात् केवलात्मानुभवोऽप्यकिञ्चित्कर इति ॥ १५ ॥

ननु सुषुप्तौ न किञ्चिदनुभूयते । मैवं सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति विशेषज्ञानं विना केवलस्यात्मनः प्रतिसन्धानादित्याह । एवमिति । किञ्च साहङ्कारस्य भूतेन्द्रियादिसङ्घातस्य देहस्य योऽवस्थानमाश्रयः यमेव जीवात्मानमाश्रित्य अहङ्कारादयो भोग्येषु विषयेषु प्रवर्त्तन्त इत्यर्थः । तथा य एव जीवात्मा अनुग्रहः स्वीयभोक्तृत्वलक्षणधर्मप्रदानादनुग्राह्य इत्यर्थः ॥ १६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निवृत्तानि बुद्ध्यवस्थानानि रागद्वेषादिद्वन्द्वानि यस्य सः चक्षुषा अर्कप्रकाशितेन अर्कमिव आत्मना स्वप्रकाशितेन अन्तःकरणेन आत्मानं प्रकृतिविविक्तस्वस्वरूपमुपलभ्य अद्वयं प्रतिपद्यते इत्युत्तरेण सम्बन्धः ॥ १० ॥

मुक्तलिङ्गं सर्वदोषास्पृष्टरूपं सदाभासं नित्यापरिच्छिन्नज्ञानम् सतः पुरुषस्य प्रकृतेश्च बन्धुं "प्रधानक्षेत्रज्ञपतिः" इति श्रुतेः असतः कार्यस्य चक्षुः प्रकाशकम् "तस्य भासा सर्वमिदं विभाति" इतिश्रुतेः सर्वानुस्यूतं सर्वात्मानम् अद्वयं निःसमानातिशयम् भगवन्तं विश्वकारणमसति कार्ये विश्वस्मिन् प्रतिपद्यते प्राप्नोति ॥ ११ ॥

आत्मनात्मानमुपलभ्येत्युक्तं तत्र प्रकृतिविविक्तं जीवात्मानं वर्णयति । यथेति पञ्चभिः । यथा गृहकोणस्थेन द्रष्ट्रा स्थलस्थेन स्वसमीपवर्तिभित्त्यादिस्थेन आभासेन जलस्थ आभासोऽवदृश्यते लक्ष्यते तेन जलस्थेन स्वाभासेन सूर्यप्रतिबिम्बेन दिवि स्थितःसूर्यो लक्ष्यते॥१२॥

एवमनेन प्रस्तुतेन सर्वाचेतनविलक्षणेन ज्ञात्रा सदाभासेन नित्यज्ञानेन स्वाभासैः स्वप्राज्ञप्रकाशितैरचेतनैः भूतेन्द्रियमनोमयैः तामसराजससात्त्विकैः कार्यैः तत्कारणभूतः अचेतनः त्रिवृदहङ्कारो लक्षितो भवति स स्वदृक् स्वाभाविकज्ञानस्वरूपा ज्ञाता चेत्यर्थः ॥ १३ ॥

देवहूतिरुवाच

पुरुषं प्रकृतिर्ब्रह्मन्न विमुञ्चति कर्हिचित् ।
अन्योऽन्यापाश्रयत्वाच्च नित्यत्वादनयोः प्रभो ! ॥ १७ ॥
यथा गन्धस्य भूमेश्च न भावो व्यतिरेकतः ।
अपां रसस्य च यथा तथा बुद्धेः परस्य च ॥ १८ ॥
अकर्तुः कर्मबन्धोऽयं पुरुषस्य यदाश्रयः ।
गुणेषु सत्सु प्रकृतेः कैवल्यं तेष्वतः कथम् ॥ १९ ॥
क्वचित्तत्त्वावमर्शेन निवृत्तं भयमुल्बणम् ।
अनिवृत्तनिमित्तत्वात्पुनः प्रत्यवतिष्ठते ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सुषुप्तिसाक्षित्वेन जीवं दर्शयति । भूतेति त्रिभिः । भूतसूक्ष्मादिषु निद्रया लीनेषु यस्तत्र तदा असति मृतकतुल्ये देहे निरहंक्रियः देहाभिमानशून्यः विनिद्रः स प्रत्यवमृश्यात्मानं प्रतिपद्यते इति तृतीयेनान्वयः ॥ १४ ॥

ननु यदि सुषुप्तौ विनिद्रस्तर्हि जाग्रत्स्वप्नयोरिव कुतो नावभासते इत्यत आह । मन्यमान इति । अहं भूतादेर्द्रष्टैवेवमहंकरणं द्रष्टृत्वाहङ्कारविषये भूतसूक्ष्मादौ नष्टे लीने सति अनष्टोऽपि द्रष्टा नष्टवित्तः आतुरो व्याकुलः मृत इव यथा भवति तद्वत् आत्मानं मृषैव नष्टवन्मन्यमानो यः ॥ १५ ॥

असौ एवंभूतं सुषुप्तौ सन्तमात्मानं प्रत्यवमृश्य सुखमहमस्वाप्सं न किञ्चिदवेदिषमित्येवं प्रबोधवेलायां परामर्शं कृत्वा आत्मानं सर्वावस्थानुगतत्वेन प्रतिपद्यते कथंभूतः स आत्मा यः साहङ्कारस्य सान्तःकरणस्य द्रव्यस्य देहस्य अवस्थानम् धारक इत्यर्थः अत एव अनुग्रहः अनुग्राहकः ॥ १६ ॥

भाषाटीका ।

पुत्रादि सहित देह में असत् आग्रह न करै तत्त्व को जान कर प्रकृति पुरुष का ज्ञान करै ॥ ९ ॥

बुद्धि की अवस्थाओं से निवृत्त रहै अन्य विषय पदार्थ पर दृष्टि न करै जैसे सूर्य के सहायता से चक्षु का प्रकाश ज्ञान होता है तैसे अपने मनसे आत्मा को जान कर रहै तब आत्मा की उपलब्धी होती है ॥ १० ॥

आत्म स्वरूप कैसा है कि देहादि उपाधियों से रहित अहंकार से भासमान् सत् परमात्मा का बन्धु असत्संसार का प्रकाशक सब देह व्याप्त अद्वय एक आकार से सर्वत्र स्थित है ॥ ११ ॥

जैसे सूर्य का प्रतिबिंब जल में पडता है फिर घर के दिवाल में पडता है उसको देखने वाले पुरुष पहिले दिवाल के सूर्य को देखते हैं फिर तलाश करके जल के सूर्य को देखते हैं फिर उसी के द्वारा आकाश के सूर्य को देखते हैं ॥ १२ ॥

तैसे ही शरीर में पहिले इंद्रियों का प्रकाश मालूम होता है फिर उनके द्वारा अहंकार का प्रकाश दीखता है फिर सबका प्रेरक होने से आत्मा का प्रकाश दिखाता है ॥ १३ ॥

इस निद्रा अवस्था में पञ्चमहाभूतों की तन्मात्रा दश इन्द्रिय-मनबुद्धि इन सबों के लीन होजाने पर अव्याकृत के लीन होनेपर जो निद्रा बिना अहङ्कार बिना स्थित रहता है ॥ १४ ॥

आप नष्ट न होकर भी नष्ट सरीका झूठे ही मानता है अहङ्कार के नष्ट होजाने से धन नष्ट होनेपर दुखी मनुष्य सरीका उदास रहता है ॥ १५ ॥

परन्तु जगने के पीछे अहङ्कार सहित पदार्थ का जो आश्रय है जो उसका प्रकाशक है सो कोई है ऐसा बिचार करने वाला पुरुष आत्मा को जानजाता है ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

भक्तिविरक्तिभ्यां सत्यपि विवेके प्रकृतिपुरुषयोः परस्परत्यागाभावात्कथं मुक्तिरिति पृच्छति । पुरुषमिति चतुर्भिः । पुरुषव्यतिरेकेण प्रकृतेः स्वरूपलाभाभावात्प्रकृतिव्यतिरेकेण पुरुषस्याभिव्यक्त्यभावादित्यन्योऽन्यापाश्रयत्वान्नित्यत्वाच्च पुरुषं प्रकृतिः कदाचिन्न मुञ्चतीत्यर्थः ॥ १७ ॥

व्यतिरेकाभावमात्रे दृष्टान्तः यथा व्यतिरेकतो भावः सत्ता नास्ति गन्धस्य कदाचिदपक्षयदर्शनाद्दृष्टान्तान्तरम् अपामिति बुद्धेः प्रकृतेः परस्य पुरुषस्य च ॥ १८ ॥

ततः किमत आह । अकर्तुरिति । ये गुणा आश्रयो यस्य सः तेषु प्रकृतेर्गुणेषु सत्सु पुरुषस्य कैवल्यं कथम् ॥ १९ ॥

अत एव क्वचिन्निवृत्तप्रायस्यापि संसारभयस्य पुनरुद्भवो दृश्यत इत्याह । क्वचिदिति ॥ २० ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

अन्योऽन्यापाश्रयत्वेऽप्येकस्यानित्यत्वे स्वयमेव विमुक्तिस्स्यान्न च तदपीत्याह । नित्यत्वादिति ॥ १७ ॥

व्यतिरेकाभावमात्र इति । मात्रपदेन गुणगुणिभावव्यावृत्तिः गन्धस्योद्भूतस्य ॥ १८ ॥

मूले अतः । बन्धनहेतुप्रकृतिगुणसद्भावात् ॥ १९ ॥
अतः । पूर्वोक्तहेतोरेव ॥ २० ॥

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

एवमिन्द्रियाद्यनवधानदशायां तदवधानदशायां चात्मनो विशद-तराबभास उपपादितः अथैवंविधप्रत्यगात्मस्वरूपचिन्तनं भगवद्भ-क्तियोगानुग्रहद्वारा मोक्षसाधनमिति पुत्रस्य विवक्षामालोच्यान्तरा प्रकृतिपुरुषयोरनादित्वाचयोर्मिथः सम्बन्धस्याप्यनादित्वात्कथ-मुभयोर्विश्लेष इति मुक्तसम्भावनामुद्भावयन्ती पृच्छति देवहूतिः । पुरुषमिति चतुर्भिः ! हे ब्रह्मन् ! पुरुषं जीवं प्रकृतिः कदाचिदपि न विमुञ्चति न त्यजति कुतः अनयोः प्रकृति-पुरुषयोरन्योऽन्यापाश्रयत्वात्परस्परं दृढतरसम्बन्धत्वात् नचान्य-तरविनाशेनापि विश्लेषः सम्भाव्येत यतस्तयोः नित्यत्वं चो हेतौ यत इत्यर्थः हे प्रभो ! पृथगवस्थानं न सम्भवति इति प्रश्नाभिप्रायः ॥ १७ ॥

इदमेव पृथगवस्थानं दृष्टान्तेन दृढीकरोति । यथेति । यथा भूमेः पृथ्व्याः गन्धस्य तदपृथक्सिद्धस्य गन्धगुणस्य च व्यतिरे-कतः पृथग्भावः अवस्थानं न सम्भवति यथा च अपां रसस्य तदपृथक्-सिद्धरसगुणस्य च पृथग्भावो नास्ति तथा बुद्धेः प्रकृतेस्ततः पर-स्यात्मनश्च पृथग्भावो नास्ति । यद्वा बुद्धेः परस्य बोद्धुरात्मनः प्रकृतेश्चेत्यध्याहारेण योजना ॥ १८ ॥

किञ्चाकर्तुः स्वतः सांसारिकगमनादिप्रवृत्त्यनाश्रयस्य पुरुषस्या-त्मनः अयं कर्मबन्धः कर्मरूपो बन्धः यदाश्रयः यत्सम्बन्धाधीनः यच्छन्दः प्रकृतिपरः तस्याः प्रकृतेर्गुणेषु सत्त्वित्यन्वयः यच्छब्दः सत्त्वादिगुणपरो वा तेष्वित्यन्वयस्त्वारस्यात्तेषु प्रकृतेर्गुणेषु सत्त्वा-दिषु सत्स्वतः गुणेभ्यः प्रकृतेर्वा कैवल्यं विमुक्तत्वं कथं भवेत् ॥१९॥

तत्त्वज्ञानेनात्मानं विमुञ्चति प्रकृतिरिति चेत्तत्राह । क्वचिदिति । उल्बणं संसाररूपभयं क्वचित्तत्त्वावमर्शेन पूर्वोक्ततत्त्वावमर्शेन निवृत्तं निवृत्तप्रायमपि अनिवृत्तनिमित्तत्वादनिवृत्तप्रकृतिसम्बन्धत्वात्पुनः प्रत्यवतिष्ठते उपस्थितं भवति ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

जीवपरयोर्भेदज्ञानमेव प्रकृतिबन्धमोचकारणं श्रुत्वा देवहू-तिस्तदर्थ*मापृच्छति । पुरुषं प्रकृतिरित्यादिना । त्रिगुणात्मिका प्रकृतिः पुरुषं पापपुण्यलक्षणानि कर्माणि सनन्तं भजन्तं "वनषणसम्भक्तौ" इति धातुः कर्हिचित्कदापि न विमुञ्चति तत्र हेतुरन्योऽन्येति अनयोः प्रकृतिपुरुषयोर्नित्यत्वादविनाशित्वाद-न्योऽन्यापाश्रयत्वाच्च शरीरं विना पुरुषस्य चेष्टाभावात्पुरुषमन्त-रेणाचेतनत्वेन प्रकृतेरपीतरेतरोपकारित्वाच्च ॥ १७ ॥

तत्र दृष्टान्तमाह । यथेति । भूमेस्तद्गुणस्य च व्यतिरेकतो भावः विनाभावो नास्ति अपामित्यनेनैव व्याख्यातं बुद्धेः प्रकृतेः परस्य जीवस्य तथा पृथग्भावो नास्ति ॥ १८ ॥

इतोऽपि प्रकृतिबन्धमोक्षौ न घटत इत्याह । अकर्तुरिति । अकर्तुः स्वातन्त्र्येण कर्तुमशक्तस्य पुरुषस्यायं संसारबन्धो यदाश्रयः यः प्रकृतिगुणसमुदाय आश्रयो यस्य बन्धस्य स यदाश्रयः तेषु प्रकृतेर्गुणेषु सत्सु पुरुषस्यातः गुणेभ्यः कैवल्यं मोक्षलक्षणं कथं न कथमपीत्यन्वयः प्रकृतिगुणानिवृत्त्या तत्कृतसंसारबन्धा-निवृत्तिरित्यर्थः ॥ १९ ॥

वैलक्षण्यज्ञानेन बन्धो निवर्तत इति अनेन मयायं प्रश्नोऽपि परिहृतो नन्विति तत्राह । सकृदिति । भवतो वचनश्रवणात्तत्त्वा-वमर्शेन तत्त्वालोचनेनोत्पन्नं प्रकृतिबन्धभयं सकृन्निवृत्तं भय-निमित्तस्य बाह्यान्तःकरणस्यानिवृत्तत्वात्पुनः संशयरूपं भयं प्रत्यवतिष्ठते प्रत्यवस्थानं करोति नापसरतीत्यर्थः ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अन्योऽन्यापाश्रयत्वेऽप्येकस्य नश्वरत्वे विमुञ्चतु नाम तच्च नेत्याह । नित्यत्वादिति ॥ १७ ॥ १८ ॥

अकर्तुरिति । अतः पूर्वोक्ताद्धेतोः ॥ १९ ॥

अन्याश्रयत्वेऽपि नमोवदन्यास्पृष्टत्वं पुरुषस्येति तत्त्ववि-वेकः कर्त्तव्य इत्यप्यकिञ्चित्करमित्याह । क्वचिदिति क्वचित् पाठः एष एव सर्वसम्मतः ॥ २० ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एवमात्मज्ञानं मोक्षार्थमुपदिष्टं तत्प्रकृते नोपयुज्यते प्रकृति-सम्बन्धो हि संसारे हेतुः साङ्ख्ये प्रकृतिर्नित्या पुरुषोऽपि नित्यः सम्बन्धश्च तत्र ज्ञानं किं करिष्यति नहि ज्ञानेन प्रकृतिः सम्बन्धो वा नाशयितुं शक्यते अतो ज्ञानं कर्मवदभ्युदयहेतुरेव न मोक्षहेतु-रित्याशङ्कते । पुरुषमिति चतुर्भिः । प्रकृतिपुरुषयोः नित्यसम्बन्धः नापि कश्चित् प्रकृतिपुरुषविशेषः अनित्यो भवति नापि प्रकृ-तिसम्बन्धः कश्चिद्वाधकः अथ ज्ञानेन प्रकृतेर्बाधकत्वमपोह्यत इति मतं तदपि त्रिगुणावस्थायित्वात् ज्ञानस्य तस्मिन्निवृत्ते पुनः प्रकृतिर्बाधिष्यत इति मोक्षमार्गोऽसङ्गतः स्वेच्छया पुरुषप्र-कृत्योः सम्बन्धः तत्र प्रथमं सम्बन्धे पुरुषो हेतुः कामो निमित्तं तत्र पुरुषः काममय एवेति स्वयं प्रकृतिं न मुञ्चति प्रकृतिरेव कदाचित्पुरुषं परित्यज्य गच्छेत् चेत्तदा मुक्तिर्भवेदित्याशङ्क्याह। पुरुषं प्रकृतिः कदाचिदपि न विमुञ्चतीति । ब्रह्मन्निति सम्बोधनं प्रकृतिपुरुषयोः स्वरूपपरिज्ञानार्थमुभयोरुभयापेक्षितत्वात् किञ्च अन्येनाप्युभयोर्विश्लेषः कर्तुं न शक्यते अन्योऽन्यापाश्रय त्वात् यद्युभयौ स्वभावतो भिन्नौ मिलितौ स्यातां तदा विश्लेषः कर्तुं शक्येतापि तौ तु परस्परं मिलितौ सन्तौ संबद्धौ यथा पट्टकार्पासाभ्यामेकस्तन्तुरुत्पद्यते तेन निर्मिते पटे तन्तुद्वय-विश्लेषेऽपि न पट्टकार्पासयोर्विश्लेषः तथा प्रकृतौ प्रविष्टः पुरुषः प्रकृतिरूपो जातः प्रकृतिरित्युच्यते पुरुषेऽपि प्रकृतिः प्रविष्टा पुरुषरूपा जाता पुरुष इत्युच्यते एतादृशोऽयं संबन्धः स कथं त्याजयितुं शक्यत इत्यर्थः नाप्येकस्य नाशे विश्लेषः सम्भवति उभयोर्नित्यत्वात् प्रभो ! इतिसम्बोधनमघटमानघटनासमर्थो भवा-निति बोधयितुम् ॥ १७ ॥

नापि कंचित्पुरुषं काचित्प्रकृतिस्त्यजतीति शङ्कनीयमित्याह । यथा गन्धस्येति । भूमेर्गन्धः स्वाभाविको गुणः स कदाचिदपि भूमिं न त्यजति आश्रयपरित्यागे स्वरूपनाशप्रसङ्गात् तदाह । व्यतिरे-कतो न भाव इति । नहि भूमिव्यतिरेके गन्धः कस्य चिद्गुणो-योऽन्यत्र तिष्ठेत् गन्धस्य चन्दनादौ कदाचिद्गुप्तत्वेन व्यतिरे-कश्चेच्छङ्क्येत तदा दृष्टान्तान्तरमुच्यते । अपां रसस्य चेति । न कदा-चिदपि जले रसः अनभिव्यक्तोऽपि भवति अपाकजत्वेन नियत-सम्बद्धत्वात् तथैव बुद्धेः परस्यापि प्रकृतिसम्बन्धो दूरे प्राकृती या बुद्धिस्तस्या अपि सम्बन्धः सहज इत्यर्थः ॥ १८ ॥

---

* जीवबन्धान्मोक्षो भवतीत्यर्थम् ।

श्रीभगवानुवाच

अनिमित्तनिमित्तेन स्वधर्मेणामलात्मना ।
तीव्रया मयि भक्त्या च श्रुतसम्भृतया चिरम् ॥ २१ ॥
ज्ञानेन दृष्टतत्त्वेन वैराग्येण बलीयसा ।
तपोयुक्तेन योगेन तीव्रेणात्मसमाधिना ॥ २२ ॥
प्रकृतिः पुरुषस्येह दह्यमाना त्वहर्निशम् ।
तिरोभवित्री शनकैरग्नेर्योनिरिवारणिः ॥ २३ ॥
भुक्तभोगा परित्यक्ता दृष्टदोषा च नित्यशः ।
नेश्वरस्याशुभं धत्ते स्वे महिम्नि स्थितस्य च ॥ २४ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

न च सम्बन्धे सत्यपि मोक्षो भविष्यतीति मन्तव्यमित्याह । अकर्त्तुरिति । अयमात्मा स्वभावतः अकर्त्ता प्रकृतिसम्बन्धादेव कर्त्तृत्वं कर्त्तुः कर्माण्यनन्तानि तेषां च फलभोगेन विनाशे पुनस्तद्धेतुना कर्मान्तराणीति न कदाचिदपि मोक्षः तदाह । अकर्त्तुरात्मनः अयं संसारलक्षणः कर्मबन्धः प्रकृत्याश्रयः तस्याश्च प्रकृतेर्गुणेषु सत्सु कथं कैवल्यं न च बन्धका गुणा अन्ये मोचकाश्चान्य इति मोचकसम्बन्धे मुक्तिः स्यादिति चेत्तत्राह । तेष्विति । य एव बन्धकास्तेष्वेव सत्सु कथं मुक्तिरित्यर्थः ॥१९॥

न च तत्त्वज्ञानेन प्रकृतिबाधकत्वं दूरीक्रियत इति मन्तव्यमित्याह । क्वचिदिति । क्वचित्पुरुषविशेषे अवस्थाविशेषे वा उत्पन्नं ज्ञानं संसारभयं निवर्त्तयति तदपि न सङ्गच्छते भयहेतोः प्रकृतिसम्बन्धस्यानिवृत्तत्वात् पुनर्भयं प्रत्यवतिष्ठत एव उल्बणमसह्यम् ॥२० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु भक्तैरपि ज्ञानवैराग्यादिभिर्मोक्षो दुर्लभ एवेत्यत्र युक्तिमाह । पुरुषमिति । अन्योऽन्येति । पुरुषः शक्तिमत्त्वात् विश्वसृष्ट्यादिलीलार्थं स्वशक्तिं प्रकृतिमुपाश्रयते । प्रकृतिरपि शक्तित्वात् स्वीयं पुरुषमाश्रयत एवेत्यर्थः । द्वयोरेकतरस्य नश्वरत्वे विमुञ्चतु नाम तच्च नेत्याह । नित्यत्वादिति ॥ १७ ॥

व्यतिरेकतो भावः सत्ता नास्ति गन्धस्य कदाचिदपक्षयदर्शनाद्दृष्टान्तान्तरमपामिति । बुद्धेः प्रकृतेः परस्य पुरुषस्य ॥१८॥

ततः किमत आह । अकर्त्तुरिति । ये गुणा आश्रयो यस्य सः तेषु प्रकृतेर्गुणेषु सत्सु पुरुषस्य जीवस्य अत एव हेतोः कथं कैवल्यम् ॥ १९ ॥

अत एव क्वचिन्निवृत्तप्रायस्यापि संसारभयस्योद्भवो दृश्यते इत्याह । क्वचिदिति ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं जडत्वचेतनत्वाभ्यां ज्ञेयज्ञातृत्वादिभिश्च सत्यपि विवेके



प्रकृतिपुरुषयोर्नित्ययोः गुणगुणिवत् संयुक्तयोः परस्परावियोगाभावात् कथं पुरुषमुक्तिरिति पृच्छति । पुरुषमित्यादिना ॥१७॥

बुद्धिः अन्तःकरणादिरूपा प्रकृतिः परः देहेन्द्रियमनोबुद्ध्यादिविलक्षणः पुरुषः ॥ १८ ॥

अकर्त्तुः नास्ति संसारप्रापककर्मकर्त्तान्यो यस्मात्तस्य बद्धजीवस्य संसारप्रापककर्मकर्त्तुरित्यर्थः ये गुणा आश्रयो यस्य सः कर्मबन्धः तेषु गुणेषु सत्सु कैवल्यं कथम् ॥ १९ ॥ २० ॥

---

भाषाटीका ।

देवहूतीजी बोलीं हे ब्रह्मन् ! हे प्रभो ! प्रकृति तो पुरुष को कभी नहीं छोड़ती है क्योंकि ये तो परस्पर आश्रित हैं और नित्य भी हैं ॥ १७ ॥

जिस प्रकार पृथिवी और गन्ध का वियोग नहीं होता है तथा जलका रसका वियोग नहीं होता है तिसी प्रकार प्रकृति पुरुष का भी वियोग कभी नहीं होता है ॥ १८ ॥

पुरुष के अकर्ता होने पर भी जिन गुणों के आश्रय से पुरुष को बन्ध होता है प्रकृति के उन गुणों के रहते ही कैसे पुरुष का मोक्ष होगा ॥ १९ ॥

किसीसमय में तत्त्व के विचार से कठिन संसार भय निवृत्त होता है तौभी भय के निमित्तगुणों के निवृत्त न होने से फिर भी दुःख उपस्थित होजाता है ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

नहि प्रकृतिसम्बन्धमात्रं बन्धहेतुः किन्तु गुणबुद्ध्या तदासक्तिस्तन्निवृत्तौ सत्यां मोक्षो घटते क्वचिदुद्भवस्तु साधनवैकल्यादित्यभिप्रेत्य साधनातिशयं कथयन्परिहरति त्रिभिः । निमित्तं फलं तत्र निमित्तं प्रवर्तकं यस्मिंस्तेन निष्कामेण धर्मेण अमलात्मना निर्मलेन मनसा श्रुतेन कथाश्रवणेन सम्भृतया पुष्टया ॥ २१ ॥ २२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

दह्यमानाऽभिभूयमाना तिरोहिता भवति ॥ २३ ॥

एवं च सति पुनरुद्भवो नास्तीत्याह। भुक्तो भोगो यस्याः नित्यशः सदा दृष्टो दोषो यस्याः अत एव परित्यक्ता सती-ईश्वरस्यापरतन्त्रस्य स्वे महिम्नि स्थितस्य स्वानन्दं प्राप्तस्य॥ २४ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी।

अनिमित्तेति त्रिकम्। गुणबुद्ध्या। श्रेष्ठत्वज्ञानेनाविद्याकृता प्रकृतिकार्यदेहाद्यासक्तिर्बन्धहेतुः। तन्निवृत्तौ। आसक्तिनिवृत्तौ दृष्टं निर्द्धारितं तत्त्वं स्वरूपं येन तादृशेन ज्ञानेन मन्तव्य इत्युक्त-विचारेण बलीयसा तीव्रेण तपोयुक्तेन शमदमादियुक्तेन योगेन ध्यानेन "योगः संहननोपायध्यानसङ्गतियुक्तिषु" इत्यमरः ध्यानमेव ध्यातृध्येयविवेकरहितं समाधिः तस्य तीव्रत्वं चिरकालोदिरवत्त्वं प्रकृतिस्तत्कार्यलिङ्गदेहः अत्र तृतीयाश्रुतिसामान्यात् "सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनम्" इत्यादिप्रामाण्येन भक्तेर्मूलत्वेनाङ्गित्वेऽपि अङ्गसामान्यनिर्देशो मोक्षमात्रं फलं व्यनक्ति ॥ ॥ २१ ॥ २२ ॥ २३ ॥

एवं च सति साधनैः प्रकृतितिरोधाने सति भोगोऽत्र बहुधा नरकस्वर्गादिः दोषो जीवस्वरूपानन्दावरणादिः ॥ २४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

सत्यमेवं तथापि बह्वङ्गोपकृतभक्तियोगाराधितपरमपुरुषप्रसादादात्मानं विमुञ्चति प्रकृतिः कचिदुद्धवस्तु साधनवैकल्यादित्याह कपिलः। अनिमित्तेति। निमित्तं फलं तदनिमित्तम-प्रवर्तकं यस्मिन्फलाभिसन्धिरहितेनेत्यर्थः स्वधर्मेण स्ववर्णाश्रमोचितधर्मेणामलात्मना विशुद्धान्तःकरणेन "धर्मेण पापमपनुदति" इति श्रुतेः श्रुतसंभृतया मत्कथाश्रवणेन संभृतया वर्द्धितया तीव्रया विघ्नानुपहतया मयि भक्त्या अनभिसंहितफलकर्मयोगपरिशुद्धान्तःकरणनिष्पाद्यया मत्कथाश्रवणादिभिरुपकृतया मद्भक्त्या प्रकृतिस्तिरोभविश्रीत्यन्वयः ॥ २१ ॥

अन्यान्यपि भक्तियोगाङ्गान्याह। दृष्टं तत्त्वं प्रकृतिपुरुषयोर्याथात्म्यं हेयोपादेयस्वरूपं यस्मिंस्तेन ज्ञानेन बलीयसा वैराग्येण कामानभिष्वङ्गेण तपोयुक्तेन देहशोषणादितपोयुक्तेन योगेन प्रकृतिविविक्तात्मयाथात्म्यचिन्तनेन तीव्रेणात्मसमाधिना चित्तैकाग्र्येण चोपकृतया मद्भक्त्या ॥ २२ ॥

अहर्निशं दह्यमाना पीड्यमाना पुरुषस्य प्रकृतिरात्मबन्धकरी प्रकृतिः शनकैस्तिरोभविश्री अबन्धकरी भविष्यति निःशेष-निवर्तिष्यतीत्यर्थः तत्र दृष्टान्तः। अग्नेरिति। तिरोधायिका प्रकृतिः अग्न्याविर्भावहेतुररणिर्यथाग्निना दह्यते तथा तत्त्वज्ञानस-म्पत्तिहेतुरपि प्रकृतिस्तेन दह्यत इत्यर्थः यद्वाग्नेस्तिरोधायिकारणिरिवात्मतिरोधायिका प्रकृतिर्दह्यत इत्यर्थः ॥ २३ ॥

एवं सति न पुनः संसारयत्यात्मानं प्रकृतिरित्याह। भुक्तभोगेति। भुक्तः भोगो यस्याः नित्यशः सदा दृष्टो दोषो यस्याः अत एव परित्यक्ता सती प्रकृतिरीश्वरस्य कर्मवश्यस्य स्वे महिम्नि स्थितस्यापहतपाप्मत्वादिगुणाष्टकलक्षणमहिमवतः आत्मनः अशुभं संसारं न धत्ते न सम्पादयतीत्यर्थः ॥ २४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

प्रकृतावपसृतायां तद्गुणाः स्वत एवापसरन्तीति भावेन तन्निवृत्तिरव्यसंकल्प्तफलस्वधर्मादिना स्यादिति पूर्वोक्तमेव तत्परिहारत्वेनाह। अनिमित्तप्रवृत्तेनेति। अनिमित्तेन फलाभिसन्धिराहित्येन प्रवृत्तेन निरन्तरमनुष्ठितेनात एवामलात्मनातिशुद्धस्वरूपेण चिरं श्रुत्वा वेदान्तशास्त्रश्रवणेन संभृतया सम्पादितया ॥ २१ ॥

दृष्टतत्त्वेनापरोक्षीकृतविष्ण्वादिदेवतास्वरूपेण योगेनाष्टाङ्गयोगेनात्मसमाधिना मनस एकाग्रतालक्षणेन ध्यानेन एव मुक्तसाधनसामग्रीसम्पन्नज्ञानाग्निनाहर्निशं दह्यमाना पुरुषस्य प्रकृतिः शनकैस्तिरोभवित्री नाशं गन्त्री स्यादित्यन्वयः योनि-रुत्पत्तिस्थानमग्नेर्ज्वालयेति शेषः १ गन्धरसयोः पृथिवीजलसमवेतत्वेन यावद्द्रव्यभावित्वसम्भवेऽपि प्रकृतिपुरुषयोर्द्रव्यत्वेन तद् २ भावात्संयोगमात्रसम्बन्धलक्षणस्य नाशलक्षणविभागोपपत्तेर्विपमस्त्वदुक्तो दृष्टान्त इति द्योतनायाग्न्यरणिदृष्टान्तकथनमन्यथा तदुपपादनं व्यर्थं स्यादिति ॥ २२ ॥ २३ ॥

समूलतूलसमुच्छ्रायाः प्रकृतेर्भयं पुनरागतचोरादिवन्नास्तीत्याह। भुक्तभोगेति। भुक्तभोगत्वं नित्यशो दृष्टदोषत्वं परित्यागहेतुः स्वे महिम्नि ज्ञानानन्दात्मके अच्छेद्याभेद्याक्लेद्यादिस्वरूपमाहात्म्ये स्थितस्यापरोक्षीकृतस्वबिम्बभगवत्प्रसादादीश्वरस्य समर्थस्याशुभं दुःखलक्षणं संसारभयं न धत्त इत्यन्वयः ॥ २४ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

अत्रोच्यते। यदि तदविवेक एव पूर्वोक्तहेतुस्तदा तत्त्वावमर्शमात्रं तत्रोपयुक्तं स्यात् पूर्वं त्वीश्वरवैमुख्यमेव। भयं द्वितीयाभिनिवेशतः स्यादित्यादेः। ततः सर्वत्रेश्वराराधनपूर्वकत्वमेवोपयुक्तमित्युपदिष्टमपि निर्द्धारयति षड्भिः। अत्र अनिमित्तेति त्रिकम्। ज्ञानं विचारः। दर्शनं निर्द्धारणं। तपः शमदमादि। योगो जीवात्मपरमात्मनोर्ध्यानं "योगः संहननोपायध्यानसंगतियुक्तिषु" इति नानार्थवर्गात्। ध्यानमेव ध्यातृध्येयविवेकरहितं समाधिः अग्नेः प्राबल्ये सति तन्निर्वापणार्थं तदाविर्भावकारणमरणिर्यथा जनैस्ततोऽप्यन्तरिता क्रियते। तथा सापि माया स्वांशेन ततस्तिरोभवतीति। अत्र सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनमित्युक्त्या भक्तेरङ्गित्वे अङ्गवन्निर्देशः तेषां तत्र सधनान्तरसामान्यदृष्टिरित्यभिप्रायेण। अत एव तेषां मोक्षमात्रफलमिति ॥ २१—२३ ॥

ईश्वरस्य भगवच्छक्त्यंशो शक्तिमतः स्वे महिम्नि महिमहेतावीश्वरत्वे स्थितस्य प्राप्तस्फूर्तेरिति जीवस्य स्वरूपद्योतकत्वं दर्शितं स यदजयामित्यादेः ॥ २४—२६ ॥

१ गुणस्वरूपयोः।
२ यावद्द्रव्यभावित्वाभावात्।

यथा ह्यप्रतिबुद्धस्य प्रस्वापो बह्वनर्थभृत् ।
स एव प्रतिबुद्धस्य न वै मोहाय कल्पते ॥ २५ ॥
एवं विदिततत्त्वस्य प्रकृतिर्मयि मानसम् ।
युञ्जतो नापकुरुत आत्मारामस्य कर्हिचित् ॥ २६ ॥
यदैवमध्यात्मरतः कालेन बहुजन्मना ।
सर्वत्र जातवैराग्य आब्रह्मभुवनान्मुनिः ॥ २७ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ज्ञानस्य क्षणिकत्वेऽपि सम्बन्धस्य नित्यत्वेऽपि प्रकृतेरपि नित्यत्वे तथा कानिचित्साधनानि सन्ति यैः कृत्वा प्रकृतिस्तिरोभावं प्राप्नोति सम्बन्धश्च पुनर्नोद्गतो भवति तानि साधनान्याह । अनिमित्तेति द्वाभ्याम् । अनिमित्तेन निष्कामेण निमित्तेन कर्मणा सर्वत्र कर्मैव निमित्तमिति निमित्तपदप्रयोगः स्वधर्मः वर्णाश्रमधर्मः निर्मलान्तःकरणं च साधनमुभाभ्यां वा निर्मलान्तःकरणत्वमेतानि ज्ञानोत्तरं पुनः कर्त्तव्यानि अन्तःकरणस्य च नैर्मल्यं तारतम्येन भगवतो भक्तिश्च तीव्रा निरन्तरं सर्वभावेन प्रवृत्ता स्नेहपूर्विका सेवा स्नेहपूर्वकश्रवणादिकं वा चकाराद्गुरुभक्त्या सापि भक्तिः निरन्तरसाधनेन पुष्टा कर्त्तव्येत्याह । श्रुतसम्भृतयेति । चिरकालं भगवद्गुणश्रवणेन सम्यक् भृता पूर्णा हृदये आपूरिता वा ॥ २१ ॥

ज्ञानेनेति । सर्वतत्त्वसाक्षात्कारेण साङ्ख्यानुभवेन यज्जनितं ज्ञानं तत्पुनरावर्त्तनीयं साधनानुवृत्त्या बलीयसा वैराग्येण विषयैः कदाचिदपि रागजननात्यन्ताभावयुक्तेन तपसा युक्तेन योगेन च अष्टाङ्गेन आत्माविर्भावसमर्थेन समाधिना एवं दश साधनानि उत्तरोत्तरं संजातानि मिलितानि वा पुरुषस्य सम्बन्धिनीं प्रकृतिमन्वहं दहन्तीति ॥ २२ ॥

तथा सति यत्स्यात्तदाह । प्रकृतिरिति । अन्वहं दह्यमाना अहर्निशं वा दह्यमाना शनैस्तिरोभवित्री नन्वेतानि साधनानि प्राकृतान्येव कथं तैः प्रकृतिर्नश्यति प्रत्युत पुष्टैव भवेदित्याशङ्क्य तथात्वे दृष्टान्तमाह । अग्नेर्योनिरिति । यथाग्ररणेः सकाशादेवाग्निरुत्पद्यते तथापि स तां नाशयत्येव न तु बर्द्धयति तथैतानि साधनानि नतु काष्ठादिनिर्मितं पीठादिकं यथा काष्ठपोषकं तथाग्निर्भवति तस्माल्लौकिकान्येव कर्मादीनि प्रकृतिपोषकाणि नत्वेतानीति भावः ॥ २३ ॥

तस्याः पुनरुद्गमशङ्कां वारयति । भुक्तभोगेति । अभुक्ता चेत् वासनया हृदयं प्रविष्टा कदाचिन्न निवर्तेतापि भुक्तभोगा तु निवृत्तैव भवेत् तत्राप्यलम्बुद्ध्या परित्यक्ता तत्रापि दृष्टदोषा यथा अमेध्यत्वेन परित्यक्तमन्नादिकं न रागं जनयति कदाचिद्दोषे स्फुरितेऽपि रागश्चेत् अन्तःस्थो न निवर्त्तेत कदाचित्तस्यादोषो न स्फुरत्यपि तद्व्यावृत्त्यर्थमाह । नित्यश इति । सर्वदा दृष्टदोषा तथात्वे तस्यां रागाभावो हेतुः किञ्च यथा गृहस्थस्य भार्या गृहस्थं बाधते न तथेश्वरं शतशोऽपि भार्या बाधितुं शक्नुवन्ति तथेयं प्रकृतिरपि दासभूतमेव जीवं बाधते नत्वीश्वरभूतमैश्वर्यं च भगवत्कृपया तद्धर्मप्राप्त्या भवति तदाह । नेश्वरस्याशुभं धत्त इति । किञ्च स्वे महिम्नि स्थितस्य च अशुभं न धत्त यस्तु स्वानन्द एव रमते तं प्रकृतिर्न बाधते प्रकृत्यपेक्षाभावात् यथा सर्वतो विरक्तं भार्या बाधितुं न शक्नोति नाप्यात्मारामामिति चकारार्थः ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

हे मातर्न प्रकृतिर्जीवस्य बन्धहेतुः किन्तु तदीयगुणाध्यास एव स चाविद्याकृत एव अत एवाविद्यानिवृत्तौ मोक्षो घटते कचिदुभयस्योद्भवस्तु साधनवैकल्यादित्यभिप्रेत्य साधनातिशयं कथयन् परिहरति । निमित्तं फलं तदभावोऽनिमित्तमेव निमित्तं प्रवर्त्तको यत्र तेन अमलः शुद्ध आत्मा अन्तःकरणं यतः स्यात्तेन तीव्रया स्वभावादेव सर्वतस्तेजस्विन्या श्रुतसंभृतया मत्कथाश्रवणपरिपुष्टया ॥ २१—२२

प्रकृतिर्लिङ्गदेहः पुरुषस्य एभिः साधनैर्दह्यमाना अभिभूयमाना तिरोभवति । अग्नेरिति । अरणिः काष्ठमग्निर्यथा काष्ठादेवोत्पद्य काष्ठं दहति तथैव ज्ञानं लिङ्गदेहादुत्पद्य तमेव दहति ॥ २३ ॥

किञ्चावशिष्टापि दह्यमानारणिवल्लिङ्गदेहरूपा प्रकृतिः खल्वेवंभूता चेन्नापकुरुत इत्याह । भुक्तो भोगो बहुधा स्वर्गनरकादिर्यस्या अत एव विवेकिना चर्वितवत्त्यक्ता तदपि दैवादापतन्ती चेद्दृष्टो दोषो यस्याः सा ईश्वरस्य नित्यमेवं सदसद्विवेचने भुक्त्वा परित्यजने दोषदर्शने च समर्थस्य स्वे महिम्नि स्थिये महत्त्वे गुरूपदिष्टसाधुवर्त्मनि ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

न केवला प्रकृतिरेव बन्धहेतुः किं तु तदासक्तिः अतस्तद्विरक्तिपूर्वकेन भगवज्ज्ञानभक्तिप्रधानेन साधनसमूहेन मुक्तिरित्याह । अनिमित्तनिमित्तेनेत्यादिना । न निमित्तं फलं निमित्तं प्रवर्तकं यस्मिन् तेन श्रुतसम्भृतया हरिकथाश्रवणलब्धया ॥२१॥२२॥

पुरुषस्य प्रकृतिः बन्धनभूता माया दह्यमाना अभिभूयमाना तिरोभवित्री पुरुषान्निवर्तिष्यति अरणिः भस्मीभूता यथा अग्नितो वियुक्ता भवति तद्वत् ॥ २३ ॥

ईश्वरस्य हेयोपादेयविवेकसंपन्नस्य ॥ २४ ॥ २५ ॥ २६ ॥

---

भाषाटीका ।

श्रीभगवान् बोले निष्काम वर्णाश्रमकर्मों के करनेसे निर्मल मनहोने से कथाश्रवण से चिरकाल से बढ़ी हुई मेरे विषय में भक्तिके होनेसे ॥ २१ ॥

भाषाटीका ।

तत्त्व जिसमें दीखगया हो ऐसे ज्ञान से तीव्र वैराग्य से आत्मा की उत्तम समाधि से ॥ २२ ॥

इन उपायो से इसी शरीर मे निरन्तर दग्ध होती हुई प्रकृति अदृश्यहोतीहुई जैसे अग्निका अरणि नष्ट होजाता है तैसे पुरुष की प्रकृति नष्ट होजाती है ॥ २३ ॥

जब यह प्रकृति भोगलीजाती है फिर छोडदीजाती है वह प्रतिदिन दोषो के देखने से अपने महिमा में स्थित समर्थ आत्माको अशुभ युक्त नहीं करसक्ती है ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अविवेकावस्थायामनर्थहेतुरपि विवेकानन्तरं न भवतीति सदृष्टान्तमाह । यथेति द्वाभ्याम् । प्रस्वापः स्वप्नः बह्वनर्थान्विभर्ति पुष्णाति प्रतिबुद्धस्य संस्कारवशेन स्फुरन्नपि ॥ २५ ॥ २६ ॥

उपसंहरति । यदैवमिति त्रिभिः । बहूनि जन्मानि यस्मिन् काले ॥ २७ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिका टिप्पणी ।

अनर्थान् चौरसर्पाद्युपद्रवान् ॥ २५ ॥

मयि मानसं युञ्जत इति सर्वसाधनमुख्यनिर्देशः ॥ २६ ॥

यदैवमिति त्रिकम् । भक्तस्त्वञ्जसेति पूर्वोक्ततत्तत्साधनानपेक्षत्वं दर्शितम् । अहमेवाश्रयो यस्य तन्मदाश्रयं तदुक्तं श्रीगीतासु "ब्रह्मणो हि प्रतिष्ठाहम्" इति । श्रीमत्स्यदेवेन च मदीयं महिमानञ्च परंब्रह्मेति शब्दितमित्यादि नष्टलिङ्गादिति तथैवार्थिकोऽर्थः ॥ २७ ॥ २८ ॥ २९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यस्य प्रकृतिसम्बन्धः ज्ञानस्य तु न सम्बन्धः इत्यत्र दृष्टान्तमाह । यथेति । यथा अप्रतिबुद्धस्य निद्रामुपगतस्य पुंसः स्वप्नो बह्वनर्थकृत् स्वशिरश्छेदादिबह्वनर्थकारी स एव प्रस्वापः प्रबुद्धस्य जाग्रतः मोहायानर्थाय न कल्पते न समर्थो भवेत् अनर्थस्यास्थिरत्वाय स्वप्नदृष्टान्तः ॥ २५ ॥

एवं विदिततत्त्वस्य विदितप्रकृतिपुरुषेश्वरतत्त्वत्रयस्य मयि मानसं युञ्जतः आत्मारामस्यात्मन्येव रममाणस्य प्रकृतिविलक्षणत्वात् परमात्मानुभवपरस्य कर्हिचित्कदाचिदपि प्रकृतिर्नापकुरुते न बन्धं करोतीत्यर्थः ॥ २६ ॥

उक्तमुपसंहरति । यदेति । यदैवमुक्तरीत्यात्मरतः आत्मारामः बहूनि जन्मानि यस्मिन् तेन कालेन प्रतिबुद्धार्थः विदिततत्त्वहितपुरुषार्थः आब्रह्मभुवनात्सत्यलोकपर्यन्तेषु लोकेषु जातवैराग्यः सातिशयित्वक्षयिष्णुत्वबुद्ध्या भोग्यताबुद्धिरहितः ॥ २७ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एतदेव सदृष्टान्तं विवृणोति । यथाहीति । अप्रतिबुद्धस्य निद्रितस्य प्रस्वापो निद्रा बह्वनर्थकृत् व्याघ्रादिनिमित्तभयजनकः स्यात् प्रतिबुद्धस्य निद्राया उत्थितस्य जाग्रतः ॥ २५ ॥

दृष्टान्तार्थं दार्ष्टान्तिके योजयति । एवमिति । विदितमपरोक्षितं नामादिमदनन्तदेवतानां तत्त्वं निजं रूपं येन स तथा तस्य ॥ २६ ॥

इदानीमनुष्ठीयमानश्रेयःसाधनफलं वक्ति । यदैवमिति । यदैवमुक्तप्रकारेण बहुजन्मना कालेनाध्यात्मरतः स्वोत्तममारभ्यमदन्ततत्त्वेषु रतस्तदितरत्रानित्यत्वेनासारत्वेनाब्रह्मभुवनात्सत्यलोकपर्यन्तं जातवैराग्यो भूत्वा मुनिर्निरन्तरमनुपासनाशीलो मद्भक्तो भूयसा मत्प्रसादेन प्रतिबुद्धार्थोऽपरोक्षीकृतनामादिमदन्तविषयोऽत एव स्वदृशा स्वरूपज्ञानेन छिन्नसंशयो निश्चिततत्त्वः स्वसंस्थानं स्वरूपावस्थानं मदाश्रयं कैवल्याख्यं निःश्रेयसं पुरुषार्थमञ्जसा प्राप्नोति तं विशिनष्टि । यद्गत्वेति । योगी लिङ्गशरीरविनिर्गमे यद्गत्वा न निवर्तेत तादृशं पुरुषार्थमित्यर्थः ॥ २७ ॥ २८ ॥ २९ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यदैवेति त्रिकम् । मद्भक्तस्तु मत्प्रसादेनाञ्जसैव निःश्रेयसं प्राप्नोतीत्याह । मद्भक्त इति । यदि मद्भक्तसङ्गेन मद्भक्तो भवति तदैवेत्यर्थः भूयस्या सर्वत्र बलवत्तरयेत्यर्थः अहमेवाश्रयो यस्य तत् तदुक्तं गीतासु । यो मामव्यभिचारेणेत्यारभ्य ब्रह्मणो हि प्रतिष्ठाहमिति ॥ २७ ॥ २८ ॥ २९ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

किञ्च इयं प्रकृतिर्निद्रावत् पुरुषस्य बाधिका तथा सति यथा निद्रा स्वप्नं जनयित्वा पुरुषं बाधते तथेयमपि संसारं जनयित्वा बाधते सोऽपि स्वप्नः भगवन्मायाजनितसर्वप्रपञ्चात्मकः भगवदिच्छया विद्यमानोऽपि अप्रतिबुद्धस्यैव बह्वनर्थकृद्भवति नतु प्रतिबुद्धस्य कस्यचिदपि कदाचिदपि कस्मिन्नपि देशे निश्चयेन मोहाय कल्पते किन्तु स्मृतिमात्रं जनयति ॥ २५ ॥

एवमेव विदिततत्त्वस्यापि पुरुषस्य प्रकृतिः संसारजननेन नापकारं कर्त्तुं शक्नोतीत्याह । एवमिति विदिततत्त्वस्येति । स्वभावतो मोहकत्वाभावे हेतुः । मयि भगवति मानसं युञ्जत इति । बलाद्दृष्टादिद्वाराप्यपकाराभावे हेतुः कामादिजननद्वारापि नापकर्तृत्वमित्याह । आत्मारामस्येति । आत्मन्येव रमणं यस्य अत एव प्रकारत्रयेणापि बाधाभावात् कर्हिचिदित्युक्तम् ॥ २६ ॥

एवं प्रकृतेर्बाधकत्वाभावमुक्त्वा विदिततत्त्वस्य प्रकृतिबाधाभावानन्तरं साधनपूर्वकं भगवत्प्राप्तिलक्षणं मोक्षमाह । चतुर्भिर्यदैवमित्यादिभिः ।

> साधनं च फलं चैव फलत्वं चापि तस्य च ।
> प्रतिबन्धनिवृत्त्यैव तत्प्राप्तिर्बाधनाशतः ॥ १ ॥
> एतच्चतुष्टयं प्राह चतुर्भिर्नान्यथा फलम् ।
> तादृशस्यापि हि भवेदिति ज्ञानोत्तरक्रिया ॥ २ ॥

प्रथमं साधनान्याह । यदैवमिति । पूर्वं यावन्ति साधनानि निरूपितानि ज्ञानार्थं प्रकृतिजयार्थं च तान्युभयविधान्यपि बहुजन्मसु आवृत्तानि भवन्ति अध्यात्मे आत्मज्ञाने रतिरुत्पद्यते ज्ञानं तु बहुधा जायते प्रमाणवस्तुपरतन्त्रत्वात् । ज्ञानस्य रतिस्तु कदाचिदेव जायते तस्याः कालनियमाभावात् यदैवमित्युक्तम्

मद्भक्तः प्रतिबुद्धार्थो मत्प्रसादेन भूयसा ।
निःश्रेयसं स्वसंस्थानं कैवल्याख्यं मदाश्रयम् ॥ २८ ॥
प्राप्नोतीहाञ्जसा धीरः स्वदृशा छिन्नसंशयः ।
यद्गत्वा न निवर्तेत योगी लिङ्गाद्विनिर्गमे ॥ २९ ॥
यदा न योगोपचितासु चेतो मायासु सिद्धस्य विषज्जतेऽङ्ग ! ।
अनन्यहेतुष्वथ मे गतिः स्यादात्यन्तिकी यत्र न मृत्युहासः ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे कापि-
लेयोपाख्याने तत्त्वसमाम्नाये सप्तविंशति-
तमोऽध्यायः ॥ २७ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एवमाकाङ्क्षायुक्तः वहुजन्मना कालेन अध्यात्मरतो भवेत्तदैव सर्वत्र जातवैराग्यो भवेत् ततोऽपि वा वहुजन्मना सर्वत्र वैराग्यं क्रममुक्तावपि वैराग्यमित्याह । आब्रह्मभुवनादिति । तत्रापि निरन्तरं मननं साधनं वहिः पदार्थनिवृत्तेरावश्यकत्वात् ॥ २७ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अविवेकावस्थायामनर्थहेतुर्यः स खलु विवेके सति न तथैवेत्याह । यथेति द्वाभ्याम् । प्रस्वापः स्वप्नः वहूनर्थान् व्याघ्रसर्पादिदंशान् विभर्त्ति प्रतिबुद्धस्य संस्कारवशेन स्फुरन्नपि ॥ २५-२७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उपसंहरति । यदेति त्रिभिः । वहूनि जन्मानि यस्मिन् तेन ॥२७॥

---

भाषा टीका ।

सोते हुये पुरुषको स्वप्न वहुत दुःख दायक होताहै सोई स्वप्न आत्मारामको जगेपर मोहकारक नहीं होताहै ॥ २५ ॥

इस प्रकार से तत्त्व को जानने वाला मेरे में मन लगाने वाला जोपुरुष तिसको प्रकृति कभी मोहित नहीं कर सकती है ॥ २६ ॥

जब अनेक जन्म वाले कालसे इसप्रकार अध्यात्मज्ञान में युक्तहोता है जब वह मुनिहोजाता है तब इहां से ब्रह्मलोकपर्यन्त उसको तब वैराग्य उत्पन्न होजाताहै ॥ २७ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रतिबुद्धार्थो विदितात्मतत्त्वः कैवल्याख्यं स्वसंस्थानं देहादिव्यतिरिक्तं स्वरूपं मदाश्रयं निःश्रेयसं निरतिशयानन्दम् ॥२८॥

स्वदृशा आत्मज्ञानेन छिन्नाः संशया मिथ्याज्ञानानि यस्य लिङ्गाद्विनिर्गमे लिङ्गशरीरनाशे सतीत्यर्थः ॥ २९ ॥



तदा त्वणिमादिसिद्धयोऽन्तरायरूपाः भवन्ति तासु योगेनोपचितासु समृद्धासु न योगादन्यो हेतुर्यासां तासु यदा सिद्धस्य चेतो न विषज्जते अङ्ग ! हे मातः ! अथ तदान्तमतिक्रान्तोऽत्यन्तो योऽहं तत्सम्बन्धिनी यत्र यस्यां गतौ मृत्योर्हासो न भवति विषक्तौ तु सिद्धोऽपि मया वशीकृत इति मृत्योर्हासो गर्वो भवतीत्यर्थः ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे तृतीस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपकायाम्
सप्तविंशोऽध्यायः ॥ २७ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

यद्वा मत्प्रसादे सति
तावन्न योगगतिभिर्यतिरप्रमत्तो ।
यावद्गदाग्रजकथासुरतिं न कुर्य्यात् इति ॥
वक्ष्यमाणत्वात् ॥ ३० ॥

इतिश्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीराधारमणदास-
गोस्वामिविरचिता दीपिन्याख्यदीपिकाटिप्पण्याम्
सप्तविंशोऽध्यायः ॥ २७ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

मद्भक्तः निरतिशयप्रीतिरूपमद्भक्तियुक्तः भूयसा मत्प्रसादेन निःश्रेयसं पुरुषार्थरूपं मदाश्रय अनेन निष्कृष्टजीवस्वरूपस्य भगवद्धार्यत्वमुक्तम् ॥ २८ ॥

इह प्राप्नोत्युपासनदशायां साक्षात्करोति ततः स्वदृशा भगवदात्मकस्वात्मसाक्षात्कारेण छिन्नसंशयः विगतदेहात्माभिमानः योगी मद्भक्तियोगनिष्ठः लिङ्गविनिर्गमे प्रारब्धावसाने यत्स्थानं गत्वा प्राप्य न निवर्तेत न पुनरावर्तेत तत्परमस्थानं प्राप्नोति ॥२९॥

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

पूर्वश्लोकोक्तसाक्षात्कारवतोऽवान्तरसिद्धिवितृष्णस्य भगवत्प्राप्तिमाह । यदेति । अम्ब हे मातः ! सिद्धस्य परिनिष्पन्नभक्तियोगस्य तस्य पुंसश्चेतः योगोपचितासु योगसमृद्धासु अनन्यहेतुषु योगादन्यो हेतुर्नास्ति यासु यत्र यासु मृत्योः संसारस्य ह्रासो नाशो न भवति तासु मायासु आश्चर्यरूपाणिमादिसिद्धिषु यदा न विषज्जते अथ तदा आत्यन्तिकी निरतिशया मे गतिः मत्प्राप्तिः स्यात् ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिकायाम् ।
सप्तविंशोऽध्यायः ॥ २७ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

प्राप्तस्वान्तरायानुपहतश्चेतुकपुरुषार्थमाप्नोतीत्याह * यदा नेति । यदैवं साधनसिद्धस्य योगोपचितासु अष्टाङ्गयोगप्राप्तासु मायासु अणिमादिविभूतिषु बुद्धिर्न विषज्जते अनुभवानीति न विलम्बते अथ तदा यत्र यस्यां गतौ मृत्योरन्तकस्य ह्रासः पुनरावृत्तिलक्षणो न स्यात् आत्यन्तिकी गतिर्मुक्तिलक्षणा स्यादित्यन्वयः नान्यो हेतुर्यासां तास्तथा तासामप्यहमेवाश्रय इत्यर्थः तास्वनेनाणिमाद्यैश्वर्यमनुभूय पश्चान्मुक्तावासेनं मद्भक्तिर्निष्फलेति ध्वनितम् ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
सप्तविंशोऽध्यायः ॥ २७ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यदा मत् प्रसादे सति ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य सप्तविंशोऽध्यायः ॥ २७ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एवं बहुजन्मनि जाते मद्भक्तो भवति पश्चात्प्रतिबुद्धार्थो तावत्कः पुरुषार्थ इत्येव न जानाति यावद्भक्तिर्न भवति तदा भगवानेव परमपुरुषार्थ इति ज्ञाने महान् भगवत्प्रसादो भवति तदा वैकुण्ठं प्राप्नोति तदेव हि नितरां श्रेयोरूपं स्वस्य भगवतो जीवस्यापि सम्यक् स्थानभूतं तत्रैव हि पुरुषः केवलो भवति सर्वस्यात्मत्वात्प्रतीतत्वाच्च तदेव हि मम स्थानम् ॥ २८ ॥

यस्तु मम स्थानं प्राप्नोति सोऽहमेव भवति अञ्जसा अनायासेन इहैव शरीरे न तु ब्रह्माण्डभेदाद्यपेक्षा ननु वैकुण्ठस्य भगवतो वा परमपुरुषार्थत्वं शास्त्रान्तरैर्युक्त्या च विरुद्धं भातीति बहुविधोऽपि संदेहः स्वयं यदा तत्र पश्यति तदा निवर्त्तत इति स्वदृष्ट्या छिन्नसंशयो भवति तस्य शास्त्रार्थत्वाय श्रुतिसूत्राभ्यां निरूपितशास्त्रपर्यवसानमाह । यद्गत्वा न निवर्त्ततेति । न च पुनरावर्त्तते"अनावृत्तिः शब्दात् ।४।४।२३। इति तत्रैव परिसमाप्तिरूप्याः शास्त्रस्य च यत् मत्स्थानं गत्वा मदीयो न निवर्त्तत एव योगी च लिङ्गाद्विनिर्गमे सति लिङ्गभङ्गे वा न निवर्त्तते॥ २९ ॥

अन्तिमजन्मयोगिनः विघ्नाः सम्भवन्ति "श्रेयांसि बहुविघ्नानि इति स्मृतेः तैर्विघ्नैश्चेन्नाभिभूयते तदा कालमतिक्रम्य तत्र गच्छतीत्याह । यदेति । योगेनोपचितासु निकटे समानीतासु मायास्वणिमादिषु सिद्धस्य चेतो यदा न विषज्जते अनन्यहेतुष्विति न विद्यते योगव्यतिरिक्तः हेतुर्यत्र अनेनायासाभाव उक्तः तदैव मे गतिः स्यात् वैकुण्ठाख्या फलान्तरेण सम्बद्धो मुक्तब्रह्मण इव मुख्येन फलेन युज्यते आगतास्वपि सिद्धिषु चित्तं चेन्न युज्यते अथ तदनन्तरमेव भगवत्प्राप्तिर्भवति यद्यपि भगवतो बहुविधा गतिर्भवति सगुणापि तथापीयमात्यन्तिकी यत्र च फले मृत्योर्गर्वो न भवति मृत्युर्हि सर्वप्रकारेण फलसाधनप्रमेयप्रमाणैर्भ्रामयित्वा स्ववशेन पातितस्य यदि सर्वोऽपि प्रयासो व्यर्थो भवति तदा गर्वो गच्छति तदा यत्र मृत्योर्ह्रासः गर्वो नास्तीति अत एवात्र भ्रमो न कर्त्तव्यः यस्मिन्नेव शास्त्रे मते वा साधनेषु वा कदाचिदपि प्राणी म्रियते तदेवासच्छास्त्रं साधनं च एतदेव निदर्शनमिति भावः ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्वल्लभाचार्यकृतसुबोधिन्याम्
सप्तविंशाध्यायविवरणम् ॥ २७ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स्वसंस्थानं देहादिव्यतिरिक्तं स्वरूपं कैवल्याख्यं ब्रह्म अहमेवाश्रयो यस्य तत् । यदुक्तं ब्रह्मणो हि प्रतिष्ठाहमिति । स्वदर्शशुद्धान्तर्ज्ञानेन लिङ्गाद्विनिर्गमे लिङ्गशरीरे नष्टे सतीत्यर्थः ॥२८।२९॥

किञ्चाणिमादिसिद्धिपर्य्यन्ता विविधा भोगा अन्तरायरूपा भवन्ति तासु योगी न विषज्जेदित्याह । यदा योगी उपचितासु समृद्धासु मायासु विविधभोग्यवस्तुषु सिद्धस्य चेतो न विषज्जते तदा आत्यन्तिकी गतिर्मुक्तिः स्यात् मायासु कीदृशीषु न योगादन्यो हेतुर्यासां तासु यत्र यस्यां गतौ सत्यां मृत्योर्ह्रासो न भवति विषयासक्तौ तु सिद्धोऽपि मया वशीकृत इति मृत्योर्ह्रासो गर्वो भवतीत्यर्थः ॥ ३० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्
तृतीये सप्तविंशोऽपि सङ्गतः सङ्गतः सताम् ॥ २७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कैवल्याख्यं देहेन्द्रियादिव्यतिरिक्तं स्वसंस्थानं स्वस्वरूपं यतो मद्भक्तोऽतो भूयसा मत्प्रसादेन मदाश्रयं मद्भावापत्तिलक्षणं निःश्रेयसं मोक्षं च प्राप्नोतीत्युत्तरेणान्वयः ॥ २८ ॥

लिङ्गस्य लिङ्गशरीरस्य विनिर्गमे नाशे सति ॥ २९ ॥

---

* शीघ्रमाप्नोति अन्यथा विलम्बेन ।

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे अम्ब ! सिद्धस्य मम ज्ञानभक्तिभ्यां सिद्धस्य चेतः अनन्यहेतुषु हेत्वन्तरशून्यासु योगाभ्यां मज्ज्ञानभक्तिभ्यामुपचितासु प्राप्तासु मायासु मद्भुतासु अणिमादिसिद्धिषु यदा न विषज्जते अथ तदा अन्तमतिकान्तोऽत्यन्तोऽहं तत्सम्बन्धिनी यत्र यस्यां मृत्योर्हासः प्रभुत्वगर्वः न सा मद्गतिर्भवति अन्यथा तु मद्भावाप्तावन्तरायः स्यादिति भावः ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे सप्तविंशाध्यायार्थप्रकाशः ॥ २७ ॥

भाषा टीका ।

जब हमाराभक्त होताहै परम पुरुषार्थ को जान जाता है तब अनायास से अधिक हमारे प्रसाद से अति शय आनन्द वाले स्वरूप स्थिति रूप हमारे मोक्षको प्राप्तहोता है ॥ २८ ॥

तब वह धीरपुरुष अपनी दृष्टि से सन्देह छेदन होजाने से जिसको प्राप्तहोकर लिङ्गदेह के छूटजाने से योगी फिर संसार को नहीं लौटता है ॥ २९ ॥

हे माता ! जब केवल योगही जिनका हेतुहै ऐसे योग से बढी हुई सिद्धियों मे सिद्धयोगी का मन नहीं आसक्त होता है तब वह योगी उस अत्यन्त सिद्धि को प्राप्त होता है जिसमे मृत्युका गर्व नहीं रहता है ॥ ३० ॥

इति श्रीभागवततृतीय स्कन्ध सत्ताईसमा अध्यायका भाषानुवाद लक्ष्मणाचार्यकृत समाप्त ॥ २७ ॥

इति श्रीमद्भागवते महापुराणे तृतीय स्कन्धे सप्तविंशोऽध्यायः समाप्तः ॥ २७ ॥



## अष्टाविंशोऽध्यायः ।

॥ श्रीभगवानुवाच ॥

योगस्य लक्षणं वक्ष्ये सबीजस्य नृपात्मजे ! ।
मनो येनैव विधिना प्रसन्नं याति सत्पथम् ॥ १ ॥
स्वधर्माचरणं शक्त्या विधर्माच्च निवर्तनम् ।
दैवाल्लब्धेन सन्तोष आत्मविच्चरणार्चनम् ॥ २ ॥
ग्राम्यधर्मनिवृत्तिश्च मोक्षधर्मरतिस्तथा ।
मितमेध्यादनं शश्वद्विविक्तक्षेमसेवनम् ॥ ३ ॥
अहिंसा सत्यमस्तेयं यावदर्थपरिग्रहः ।
ब्रह्मचर्यं तपः शौचं स्वाध्यायः पुरुषार्चनम् ॥ ४ ॥
मौनं सदासनजयः स्थैर्यं प्राणजयः शनैः ।
प्रत्याहारश्चेन्द्रियाणां विषयान्मनसा हृदि ॥ ५ ॥
स्वधिष्ण्यानामेकदेशे मनसा प्राणधारणम् ।
वैकुण्ठलीलाभिध्यानं समाधानं तथात्मनः ॥ ६ ॥
एतैरन्यैश्च पथिभिर्मनो दुष्टमसत्पथम् ।
बुद्ध्या युञ्जीत शनकैर्जितप्राणो ह्यतन्द्रितः ॥ ७ ॥
शुचौ देशे प्रतिष्ठाप्य विजितासन आसनम् ।
तस्मिन्स्वस्ति समासीन ऋजुकायः समभ्यसेत् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अष्टाविंशे ततोऽष्टाङ्गयोगेन ध्यानशोभिना ।
सर्वोपाधिविनिर्मुक्तं स्वरूपज्ञानमीर्यते ॥ १ ॥
भक्तिं संक्षेपतः प्रोच्यसाङ्ख्यमाख्याय विस्तृतम् ।
अथाह वैष्णवं योगमष्टाङ्गं कपिलां हरिः ॥ २ ॥

सबीजस्य सालम्बनस्य प्रसन्नं सत् ॥ १ ॥

तत्र यमनियमानाह त्रिभिरक्षरद्वयाधिकैः । शक्त्या स्वधर्माचरणम् ॥ २ ॥

ग्राम्यस्त्रैवर्गिको धर्मस्तस्मान्निवृत्तिः मितं च तन्मेध्यं शुद्धं च तस्यादनम् । तत्र मितं नाम

द्वौ भागौ पूरयेदन्नैस्तोयेनैकं प्रपूरयेत् ।
मारुतस्य प्रचारार्थं चतुर्थमवशेषयेत् इति ॥

स्मृतिप्रसिद्धम् विविक्तं विजनं क्षेमं निर्बाधं तस्य स्थानस्य सेवनम् ॥ ३ ॥

यावताऽर्थः प्रयोजनं तावन्मात्रस्य परिग्रहः ॥ ४ ॥

आसनादीन्यङ्गान्याह त्रिभिः । सत आसनस्य जयेन स्थैर्यम् ॥ ५ ॥

स्वधिष्ण्यानां प्राणस्थानानां मूलाधारादीनां मध्ये एकस्मिन्देशे मनसा सह प्राणस्य धारणं धारणा । आत्मनो मनसः समाधानमात्माकारता ॥ ६ ॥

अन्यैश्च व्रतदानादिभिः पथिभिरुपायैः ॥ ७ ॥

आसनादीनि प्रपञ्चयति । शुचाविति यावत्समाप्ति । आसनं कुशाजिनचैलोत्तरं प्रतिष्ठाप्य स्वस्तिकासनेन यथासुखमिति वा समभ्यसेत्प्राणामिति शेषः ।

ऊरू जङ्घान्तराधाय पादाग्रे जानुमध्यगे ।
योगिनां यदवस्थानं स्वस्तिकं तद्विदुर्बुधाः ॥ ८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

ध्यानशोभिनेति । विशेषणेन निर्बीजयोगव्यावृत्तिः वैष्णवं विष्णुध्यानमयं येनैव विधिना । प्रकारेण मनः प्रसन्नमानन्दितं सत् सत्पथं भक्तिमार्गं याति तत्प्रकारकं योगस्य लक्षणं स्वरूपं वक्ष्य इत्यन्वयः ॥ १ ॥

स्वधर्मेति पद्यम् । तत्र बहुवाक्यैकवाक्यत्वादृमें द्विबिन्दुमत्पकाङ्क्षा ज्ञेयाः तत्राऽङ्गमध्ये ( १ ) ( २ ) तत्राऽहिंसा सत्यास्तेयापरिग्रहब्रह्मचर्यमौनानि यमाः । तदन्यानि स्वधर्माचरणादीनि नियमा इति ज्ञेयम् पुरुषार्चनम् श्रीभगवत्पूजनम् ( ३ )

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

सतः । कुशाजिनचैलोत्तरत्वात्सुखप्रदस्य (४) आत्माकारता वृत्तिनिरोधः समाधिः (५) असत्पथं विषयोन्मुखं यतो दुष्टं बुद्ध्या विषयाणां हेयत्वनिश्चयेन (६) ॥ ७ ॥

स्वस्तिकमासीन इत्येव स्वामिसम्मतः पाठः सुष्टु शोभनमस्ति स्थितिर्यत्र तद्यथा स्यात्तथेति यथासुखमित्येव फलितोऽर्थः प्रथमपक्षोऽपि सङ्गच्छत एव स्वस्ति समासीन इति सम्बन्धोक्तिसम्मतस्तत्र यथासुखमिति व्याख्यानं सङ्गच्छते स्वस्तिकासनेनेति तु क्लिष्टकल्पनयैवेति ज्ञेयम् तदवस्थानमेव स्वस्तिकासनं योगिनो विदुः ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं "पुरुषं प्रकृतिर्ब्रह्मन्" इति पृष्टस्य वह्वङ्गोपकृतभक्तियोगाराधितभगवत्प्रसादेन ब्रह्मात्मकस्वात्मसाक्षात्कारपूर्वकपरमात्मप्राप्त्या प्रकृतिर्विमुञ्चतीत्युत्तरमुक्तं भक्तियोगाङ्गभूतब्रह्मात्मकप्रत्यगात्मानुचिन्तनरूपज्ञानयोगश्चोक्तः अथ सविस्तरं भक्तियोगं तदङ्गजातं च विवक्षुः प्रतिजानीते कपिलः । योगस्येति । हेनृपात्मजे ! मनुपुत्रि ! सवीजस्य सकारणस्य ससाधनकस्येत्यर्थः योगस्य भगवद्भक्तियोगस्य गतिं स्वरूपं प्रकारं च वक्ष्ये सप्रपञ्चं कथयिष्यामि कोऽसौ योग इत्यत्राह । येन विधिना विधीयत इति विधिः कर्मणि "उपसर्गे घोः किः" विहितेन येन दैवयोगेन मनः प्रसन्नं रागाद्यकलुषितं सत्सत्पथं शुभाश्रयं याति तत्रैव स्थिरं भवतीत्यर्थः ॥ १ ॥

तत्र प्रथमं यमनियमासनप्राणायामप्रत्याहारधारणाध्याननिदिध्यासनरूपाष्टाङ्गयोगान्विवक्षुर्यमनियमान्तर्भूतविवेकादिसाधनसप्तकमाह । स्वधर्मेति । शक्त्या स्वशक्त्यनुसारेण स्वधर्माचरणमनभिसंहितफलस्ववर्णाश्रमोचितधर्मानुष्ठानं विधर्माच्च निवर्तनमविहिताप्रतिषिद्धनिषिद्धव्यापारान्निवर्तनं दैवाल्लब्धेनान्नादिना सन्तोषः आत्मविच्चरणार्चनं भागवतसमाराधनम् ॥ २ ॥

ग्राम्यधर्मनिवृत्तिः त्रैवर्गिकधर्मान्निवृत्तिः मोक्षधर्मेषु रतिश्च एवं साधनसप्तकान्तर्भूतक्रियोक्ता अथ विवेकमाह । शश्वत्सदा विविक्तक्षेमसेवनं जात्याश्रयनिमित्तदुष्टेभ्योऽन्नादिभ्यः विविक्तानां पृथक्कृतानां क्षेमाणां सात्त्विकानामन्नादीनां सेवनं तदपि मितमेध्यादनं मितं यथाभवति तथा मेध्यानां जात्यादिभिरदुष्टानामदनरूपं तत्र जातिदुष्टाः कलञ्जगृञ्जनादयः आश्रमदुष्टं चण्डालपतितादिद्रव्यं निमित्तदुष्टं केशोच्छिष्टाद्युपहतम् ॥ ३ ॥

कल्याणमाह । अहिंसेति । एवं विवेकादिष्वेवास्तेयादयोऽपि यथा सम्भवमन्तर्भाव्याः तत्रास्तेययावदर्थपरिग्रहतपःशौचस्वाध्यायपुरुषार्चनादयः क्रियायामन्तर्भाव्याः ब्रह्मचर्यं विमोके अन्तर्भाव्यं मौनमभ्यासशुभाश्रयसंशीलनरूपः एवमन्येऽप्यनवसादादयो विवक्षिता द्रष्टव्याः यावदर्थपरिग्रहः यावतार्थेनान्नादिना देहयात्रा भवेत्तावतोऽर्थस्य परिग्रहः ब्रह्मचर्यं जितेन्द्रियत्वं तपः कृच्छ्रचान्द्रायणादिः शौचमाचारः स्वाध्यायः वेदाध्ययनादिः पुरुषार्चनं भगवत्पूजनम् ॥ ४ ॥

आसनादीन्यङ्गान्याह त्रिभिः । सदा आसनजयेन स्थैर्ये शनैः प्राणजयः प्राणवायोः स्ववशीकरणमिन्द्रियाणां मनसा विषयात् शब्दादिविषयात् हृदि प्रत्याहारः मनसा इन्द्रियाणि विषयेभ्यः प्रत्याहृत्य हृद्यवस्थापनमित्यर्थः ॥ ५ ॥

तथा स्वधिष्ण्यानां प्राणापानादिस्थानानां हृदयगुदादिस्थानानां मध्ये एकस्मिन्मनसा सह प्राणानां धारणं वैकुण्ठस्य भगवतो लीलानां जगत्सृष्ट्यादिव्यापाररूपाणां लीलानामभिध्यानं तथा आत्मनो मनसः समाधानमेकाग्रीकरणम् ॥ ६ ॥

एतैरुक्तैः स्वधर्माचरणादिभिरन्यैश्च व्रतदानादिभिः पथिभिरुपायैरसत्पथमिन्द्रियार्थप्रवणमत एव दुष्टं मनो बुद्ध्या शनकैः युञ्जीत शुभाश्रयप्रवणं कुर्यात् कथम्भूतो युञ्जीत जितप्राणः अतन्द्रितः तन्द्रारहितः ॥ ७ ॥

आसनादीनि प्रपञ्चयति । शुचाविति । विजितासनः चिरमुपविष्टोऽपि क्लमरहितः शुचौ देशे आसनं चैलाजिनकुशोत्तरमास्तरणं प्रतिष्ठाप्य तस्मिन्नासने स्वस्तिके स्वस्तिकासने ऋजुकायः अकुटिलदेहः आसीनः समभ्यसेत्प्राणामिति शेषः

ऊरुजङ्घान्तरापादौ पादाग्रे जानुमध्यगे ।
योगिनो यदवस्थानं स्वस्तिकं तद्विदुर्बुधाः ।

इति स्वस्तिकासनलक्षणम् ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कपिलो भगवानेवं तावद्विरक्तस्य भगवद्भक्तिसम्पन्नस्य परमात्मोपासनया जनितज्ञानेन स्वरूपाविर्भावलक्षणं कैवल्यं भवतीत्युक्तमिदानीं तस्य ज्ञानस्य साधनभूताष्टाङ्गयोगप्रकारं वक्ष्यामीति प्रतिजानीते । योगस्येत्यादिना । बीजं विष्णुस्तेन सहितस्य वैष्णवस्येत्यर्थः योगस्य लक्षणं वक्ष्येऽस्मिन्नध्याय इत्यन्वयः ।

स बीजो वैष्णवो योगो निर्बीजस्त्वन्यदैवतः ।
बीजं विष्णुर्हि जगतः शाखाद्या अन्यदेवताः ।

इति "सदिति ब्रह्म" इति श्रुतेः सतो ब्रह्मणः पन्थानं यातीत्यतश्च योगस्य विष्णुविषयत्वं ज्ञायते ॥ १ ॥

योगस्तु ज्ञानसाधनमेव तस्य किं साधनमिति तत्राह । स्वधर्माचरणमित्यारभ्य समाधानं तथात्मन इत्यन्तेन ग्रन्थेन । विधर्माच्च निवर्तनं धर्मवदवभासमानानां च शास्त्रनिषिद्धानां पञ्चविधधर्मादीनां त्यागः सन्तोषोऽलम्बुद्धिः दैवं स्वादृष्टप्रेरको भगवान् तदनुग्रहतः प्राप्तेनात्मविदां ब्रह्मज्ञानिनां श्रीपादार्चनम् ॥२॥

ग्राम्यधर्मो विषयसेवा ततो निवृत्तिः प्रवृत्तिधर्मत्यागो वा मोक्षधर्मरतिर्निवृत्तिधर्मसेवा शश्वन्मितस्य सव्यं* जनस्याशनस्यार्धमुदकस्य तृतीयं वायोः संचरणार्थं चतुर्थमवशेषयेदित्येवं परिमितस्य मेध्यस्य शास्त्रविहितस्यान्नस्यादनं विविक्तो हरिस्तस्य क्षेत्रसेवनम् ॥ ३ ॥

---

* द्वौ भागौ पूरयेदन्नैस्तोयेनैकं प्रपूरयेत् । मारुतस्य प्रचारार्थं चतुर्थमवशेषयेदितिस्मृतिसिद्धार्थमनुवदति ।

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अहिंसा शास्त्रनिषिद्धहिंसावर्जनं सत्यं मिथ्यावादवर्जनं भूतहितकथनं वा अस्तेयं स्वाम्यननुज्ञातस्य तृणाग्रस्याप्यग्रहणं यावता शरीरावस्थितिर्भवति तावत्परिमाणोऽर्थो यावदर्थस्तस्य परिग्रहः स्वीकारो यावदर्थपरिग्रहः अष्टाङ्गं ब्रह्मचर्यम् ।

स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ।<br>
सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च ॥<br>
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ।<br>
विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम् ॥

तप उपवासादि तत्त्वपर्यालोचनं वा शौचं बाह्याभ्यन्तरशुद्धिः स्वाध्यायो ब्रह्मयज्ञः पुरुषस्य श्रीनारायणस्य वैदिकतान्त्रिकार्चनम् ॥ ४ ॥

सदा पद्माद्यासनजयः वैष्णवसिद्धान्तादचलनं स्थैर्यं विपद्यप्यात्मावष्टम्भनं धैर्यं वा प्राणायामैः प्राणानां जयः श्रोत्रादीन्द्रियाणां शब्दादिविषयेभ्यो मनसा हृदि स्थितं हरिं प्रत्याहरणं नामेन्द्रियस्थापनं प्रत्याहारः ॥ ५ ॥

स्वस्य विष्णोर्धिष्ण्यानां पदादिस्थानानामेकदेशे एकैकावयवे मनसा प्राणस्य वृत्तेर्धारणं वैकुण्ठस्य हरेर्लीलायाः सृष्ट्यादिरूपायाः अभिध्यानं निरन्तरस्मरणं तथात्मनो मनसः समाधानमप्रयत्नेन हरौ स्थितिः । तदुक्तम् । "समाधिरप्रयत्नेन मनसः संस्थितिर्भवेदित्" इति ॥ ६ ॥

स्वधर्माचरणाद्युक्तस्य प्रयोगप्रकारमाह । एतैरिति । असद्विषयसङ्गेन दुष्टमत एवासत्पथं दुर्मार्गवर्ति मनः ॥ ७ ॥

योगे इतिकर्तव्यतामाह । शुचावित्यादिना । योगमभ्यसेदित्यन्वयः ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

येनैव विधिना प्रकारेण तत्प्रकारकं लक्षणमित्यन्वयः ॥१–७॥

स्वस्तिकमासीन इत्यत्र तु यथा सुखमिति न सङ्गच्छते स्वस्तिसमासीन इति सम्बन्धोक्तिसम्मतः अत्र तु स्वस्तिकासनेनेत्यपि सङ्गच्छते समानार्थत्वात् स्वस्तिकशब्दस्य तथैव निरुक्तिरिति भावः । सु शोभनमस्ति स्थितिर्यत्रेति व्याख्याने तु यथासुखमिति व्याख्यानेऽपि स्वस्तिकमिति घटते ॥ ८–११ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

चित्तं चेद्भगवत्स्पृष्टं भक्तिज्ञानविरक्तिभिः ।<br>
तदा शुद्धं स्वसम्बन्धिपुरुषं गमयेत्फलम् ॥ १ ॥<br>
योगेनापि भवेच्छुद्धमितियोगो निरूप्यते ।<br>
अष्टाविंशे ध्यानयुक्तः सर्वसाधनसंयुतः ॥ २ ॥<br>
यत्रैव भगवद्देशः तत्प्रमाणादिकं भवेत् ।<br>
स्वतः शुद्धो हरेर्नान्यः स्वाध्याय इव सर्वथा ॥ ३ ॥

भक्तिसाङ्ख्यज्ञानानि निरूप्य योगं फलपर्यन्तं निरूपयति । योगस्येति । योगा बहुविधाः सध्यानोऽपि द्विविधः सबीजो निर्बीजश्चेति सबीजोऽप्यनेकविधः नानाविधार्थध्यानविषयः तत्र भगवद्ध्यान एव चित्तं सन्मार्गे विशति स्वदेवतायामेव प्रसादात्तदाह । सबीजस्य योगस्य लक्षणं वक्ष्य इति । निर्बीजो योगो गीतायामुक्तः "यतो यतो निश्चरति" इत्यादिना सबीजस्तु ध्येयसहितः सुगमश्चायं यतस्त्वं नृपात्मजा येनैव विधिना मनः शीघ्रमेव प्रसन्नं सत् सत्पथे याति प्रसादस्तस्य स्वदेवताभिनिवेशात्तदैव सन्मार्गं गच्छति सत आत्मनः भगवतो वा मार्गः वेदोक्तो वा ॥ १ ॥

तत्र पञ्चविंशति साधनान्याह । यमनियमरूपाणि कृशराणि कृत्वा सर्वतत्त्वानामतिक्रमार्थं तावन्ति साधनानि एकेन च साधनेन एकस्य तत्त्वस्यातिक्रमो न भवतीति साधनान्तराण्यपदिश्यन्ते । स्वधर्मेति । स्वधर्माणां देहधर्माणां वर्णाश्रमाधिकारसिद्धानामाचरणं यथाशक्ति कर्तव्यं न तु शक्तावपि सङ्कोचः शास्त्रमपि यच्छक्नुयात्तत्कुर्यादिति विधर्माच्च निवर्त्तनं द्वितीयं साधनं धर्मबाधो विधर्मः यस्मिन् क्रियमाणे स्वस्य धर्मस्य बाधो भवति स यथाधिकारमवसेयः यावद्देहोऽयं तावद्वर्णाश्रमधर्मा एव स्वधर्माः भगवद्धर्मादयोऽपि विधर्माः परधर्मा वा यदा पुनरात्मानं जीवं मन्यते सङ्घातव्यतिरिक्तं तदा दास्यं स्वधर्मः अन्ये वर्णाश्रमधर्मा एव स्वधर्माः यदा पुनर्भगवद्भावं प्राप्तः तदाऽलौकिकधर्मा एव ऋषभादिष्विव गोचर्यादयः स्वधर्मा अन्ये परधर्मा इति चकारात्परधर्मादयश्चत्वारोऽपि सङ्गृहीताः अयं च प्राप्तज्ञान इति स्वशक्त्या भगवत्प्रेरणया स्वज्ञानेन वा ज्ञानबाधाभावे शरीरशक्त्या वा उभयात्मकस्वधर्मानुष्ठानं नत्वेकतरविरोधि तृतीयं साधनं दैवाल्लब्धेन सन्तोषः दैवादिति वचनादावश्यकप्राप्तिः सूचिता अलब्धे वा महाहिरिवाप्रयत्नोऽपि सन्तुष्येदिति ज्ञातव्यमन्यैश्चेत्यतिदेशात् आत्मविदां चरणार्चनं चरणपूजा दास्यमितियावत् आत्मवित्त्वं च तेषां ज्ञातव्यमलोभादिना ॥ २ ॥

ग्राम्येति । ग्राम्यधर्मा लौकिका इन्द्रियग्रामवन्तो वा ग्राम्याः चकारात् स्वधर्मा अपि ग्राम्यधर्माश्चेत्यक्तव्या इति मोक्षधर्मा अहिंसादयः तेषु रतिस्तथेत्येतदपि ग्राम्यधर्मनिवृत्तिवत्साधनं परधर्मत्वेनाधर्मशङ्कायां तथोक्तं मितं परिमितं मेध्यं पवित्रं च अशनं भोजनं कर्त्तव्यं शश्वदिति सर्वदा मितमेध्यस्यादनमिति पाठे चर्व्यमेव फलादिकं भक्षणीयमित्युक्तं भवति विविक्तस्यैकान्तस्य क्षेमस्य भयरहितस्य सेवनं तादृशे देशे तद्देशं शुद्धं कुर्वन् सेवमान एव तिष्ठेदित्यर्थः ॥ ३ ॥

अहिंसा सर्वप्राणिषु कायवाङ्मनोभिर्द्रोहाकरणमापतितेऽप्यल्पद्रोह इति केचित् अतो न परिज्ञाते स्थातव्यमिति सत्यं यथार्थभाषणमस्तेयं परस्वग्रहणाभावः यावानर्थो योगं साधयति तावदेव परिग्रहः ब्रह्मचर्यमष्टाङ्गं तपः कृच्छ्रादि शौचमन्तर्बहि शुद्धिहेतूनां करणं स्वाध्यायो वेदाध्ययनं पुरुषार्चनं भगवत्पूजा ॥ ४ ॥

मौनं जनैः सह सम्भाषणाभावः वृथालापपरिवर्ज्जनं च सदा चित्तस्याभितो जयः कर्तव्यः यथा कदाचिदपि चित्तं परवशं न भवति स्थैर्यमेकनिष्ठा चाञ्चल्याभावः शनैः प्राणजयः प्राणायामादिना इन्द्रियाणां च विषयेभ्यो व्यावर्त्तनं वशात्प्रत्याहारो जयश्च चकारात् विषयान्मोहकान्मनसा सहेन्द्रियाणां वशीकरणं प्रत्याहारे आहृतानां हृदये स्थापनम् ॥ ५ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एकदेशे धिष्ण्यानां स्थानानां मूलाधारादीनामेकदेशेन सर्वधिष्ण्येभ्यः प्राणानाकृष्य क्वचिद्धृदयादिस्थाने एकदेशेन मनसा प्राणानां धारणामिन्द्रियजयादिष्वपि मनसो योजनं प्राणायामादिष्वपि एकदेशे वा सप्तम्यर्थे तृतीया वैकुण्ठस्य भगवतो लीलानामभिध्यानं सर्वावस्थासु वैयग्र्याभावः अन्तःकरणस्य समाधानम् ॥ ६ ॥

एतानि स्वसिद्धान्ते प्रोक्तानि साधनानि अन्यानि च मतान्तरसिद्धानि सर्वैरेव पथिभिर्मार्गैः असत्पथे लौकिके मार्गे दुष्टं मनो बुद्ध्या युञ्जीत असन्मार्गं त्याजयित्वा आत्मनि विवेकवत्या बुद्ध्या योजयेत् नात्र बलं विधेयमन्यथा मनः कलुषितं स्यादित्याह । शनकैरिति । जिताश्च प्राणाः इन्द्रियाणि च सदा मृग्यन्ते ॥ ७ ॥

एवं खण्डशः कृतैः साधकैर्बहुजन्मसिद्धैः यदा मनः इन्द्रियाणि प्राणा देहश्च सिद्धानि भवन्ति तदा फलपर्यवसायिनि योगे योजयेत्तदाह । शुचौ देश इति । बहुधा आवर्तिताः पूर्वोक्ता एव यमनियमा जाताः आसनं व्यते शुचौ देश इति गङ्गातीरादिदेशे केशकीटास्थ्यादिवर्ज्जिते आसनं चैलाजिनकुशरूपं प्रतिष्ठाप्य अभ्यसनेन विजितासनो भवेत् सर्वाण्येवासनानि तत्र शिक्षेत यदा भवेद्विजितासनः तदा तस्मिन्नासने स्वस्तिकासन आसीनः ऋजुकायो भूत्वा सम्यक् योगमभ्यसेत् यावन्ति जीवजातानि तावन्त्येवासनानि तत्र स्वस्तिकं पद्मासनं च श्रेष्ठं स्वस्तिकासने स्थित्वा प्राणस्यार्जवेन गत्यर्थमृजुकायो भूत्वा प्राणायाममभ्यसेत् ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अष्टस्वङ्गेषु योगस्य ध्यानं विस्तार्य्य वर्ण्यते ।
अष्टाविंशे यतो योगी मुक्तिं विन्देदयत्नतः ।
स्वभक्तिमुपदिश्यैवं साध्यमुक्त्वा तदन्वितम् ।
अष्टाङ्गयोगं तन्निश्रमारेभे वक्तुमीश्वरः ॥ ० ॥

सबीजस्य सावलम्बनस्य ॥ १ ॥ २ ॥

तत्र यमनियमानाह त्रिभिरक्षरद्वयाधिकैः । तथाहिंसासत्यास्तेयापरिग्रहब्रह्मचर्य्यमौनानि यमाः । तदन्यानि स्वधर्माचरणादीनि नियमाः । आम्यस्त्रैवर्गिको धर्म्मः । मितमेध्यादनमिति तत्र मितं नाम ।

द्वौ भागौ पूरयेदन्नैस्तोयेनैकं प्रपूरयेत् ।
मारुतस्य प्रचारार्थं चतुर्थमवशेषयेत् ॥
इति स्मृतिप्रसिद्धम् ।
विविक्तं निर्ज्जनं क्षेमं निर्भयश्च यत्स्थानं तत्र स्थितिः ॥३॥

यावता अर्थः प्रयोजनं तावन्मात्रस्य न त्वधिकस्य वस्तुनः परिग्रहः ॥ ४ ॥

आसनादीन्यङ्गान्याह त्रिभिः । सत आसनस्य जयेन स्थैर्य्यम् ॥५॥

स्वधिष्ण्यानां प्राणस्थानानां मूलाधारादीनां मध्ये एकस्मिन् देशे मनसा सह प्राणस्य धारणं धारणा लीलाभिध्यानं लीलासहितपादाद्यवयवध्यानम् । आत्मनो मनसः समाधानं समाधिरात्माकारता ॥ ६ ॥

अन्यैश्च दानव्रतादिभिः पथिभिरुपायैः युञ्जीत ध्याने योजयेत् ॥ ७ ॥

आसनादीनि विवृणोति । आसनं कुशाजिनचैलोत्तरं तस्मिन् स्वस्तिकं स्वस्यैव यथा स्यादेवमासीनः यद्वा स्वस्तिकासनेनोपविष्ट इत्यर्थः । यथा च ।

ऊरू जङ्घान्तराधाय पादाग्रे जानुमध्यगे ।
योगिनो यदवस्थानं स्वस्तिकं तद्विदुर्बुधाः ।

समभ्यसेत् प्राणमिति शेषः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अष्टाविंशे भगवद्ध्यानयोगमाह । योगस्येति । योगस्य ध्यानयोगस्य सबीजस्य बीजं ध्येयं वस्तु तत्सहितस्य । यद्वा बीजं साधनं यमनियमादितत्सहितस्येत्यर्थः येनैव विधिना विधीयते इति विधिः क्रियमाणेन प्रसन्नं सत् मनः सत्पथं ध्येयं भगवन्तं याति ॥ १ ॥

तत्र स्वधर्मेत्यादिना मौनमित्यन्तेन यमनियमानाह । शक्त्या यथाशक्ति स्वधर्माचरणं विधर्मान्निविद्धात् आत्मविदां भगवत्स्वरूपानां चरणार्चनं ग्राम्यधर्मात् त्रैवर्गिकधर्मात् निवृत्तिः मोक्षधर्मे निष्कामकर्मज्ञानवैराग्यहरिकथाश्रवणादिरूपे धर्मे रतिः मितं स्वल्पं मेध्यं शुद्धं यददनं भोजनं विविक्ते एकान्ते क्षेमे अभये स्थितिः ॥ २ ॥ ३ ॥ ४ ॥

मानमयुक्तानुचाराणाम् आसनादीन्यङ्गान्याह । सदासनजय इत्यादिना । सतः स्वस्तिकादेर्विहितस्य यथारुचिकृतस्य वा आसनस्य जयेन स्थैर्यं प्राणायामेन प्राणजयः विषयात् जातवंकवचनं विषयेभ्यः इन्द्रियाणां हृदि मनसा प्रत्याहारः ॥ ५ ॥

तथा यानि स्वधिष्ण्यानि प्राणस्थानानि तेषां मध्ये एकदेशे अर्थात् हृदि एव मनसा प्राणधारणमात्मनो मनसः ॥ ६ ॥

अन्यैर्व्रतमहत्सेवादिभिः युञ्जीत ध्येयप्रवणं कुर्यात् ॥ ७ ॥

उक्तान्यासनादीनि विशदयति । शुचाविति यावत्समाप्ति । आसनं चैलाजिनकुशोत्तरं प्रतिष्ठाप्य तस्मिन् स्वस्तिकमासनमुद्रां विधायेति शेषः । यद्वा स्वस्तिकं यथा सुखमासीनः तथा च श्रुतिः "सुखासनस्थः शुचिः समग्रीवशिरः शरीर" इति विजितासनः चिरमुपविशन्नप्यक्लमः समभ्यसेत् प्राणमिति शेषः ॥ ८ ॥

---

भाषा टीका ।

श्रीभगवान् बोले हे राजपुत्रि! सालम्बनयोगका लक्षणमैं आपसे कहूंगा जिसविधिसे मन निर्मल होकर भगवान्केमार्गमें प्रवृत्तहोजाता है ॥ १ ॥

शक्तिके अनुसार अपने वर्णाश्रमका आचरण करना अपने विरुद्धधर्मसे निवृत्तहोना प्रारब्धसे लब्धवस्तुसे संतोषकरना आत्मज्ञानीके चरणोंका पूजन करना ॥ २ ॥

कामादिधर्मोंसे निवृत्तहोना मोक्षधर्ममें प्रवृत्तिरखना परिमित पवित्र भोजनकरना निरन्तर एकान्तनिर्विघ्नस्थानका सेवन करना ॥ ३ ॥

प्राणस्य शोधयेन्मार्गं पूरकुम्भकरेचकैः।
प्रतिकूलेन वा चित्तं यथास्थिरमचञ्चलम् ॥ ९ ॥
मनोऽचिरात्स्याद्विरजं जितश्वासस्य योगिनः।
वाय्वग्निभ्यां यथा लोहं ध्मातं त्यजति वै मलम् ॥ १० ॥
प्राणायामैर्दहेद्दोषान्धारणाभिश्च किल्बिषान्।
प्रत्याहारेण संसर्गान्ध्यानेनानीश्वरान्गुणान् ॥ ११ ॥
यदा मनः स्वं विरजं योगेन सुसमाहितम्।
काष्ठां भगवतो ध्यायेत्स्वनासाग्रावलोकनः ॥ १२ ॥
प्रसन्नवदनाम्भोजं पद्मगर्भारुणेक्षणम्।
नीलोत्पलदलश्यामं शङ्खचक्रगदाधरम् ॥ १३ ॥
लसत्पङ्कजकिञ्जल्कपीतकौशेयवाससम्।
श्रीवत्सवक्षसं भ्राजत्कौस्तुभामुक्तकन्धरम् ॥ १४ ॥
मत्तद्विरेफकलया परीतं वनमालया।
परार्ध्यहारवलयकिरीटाङ्गदनूपुरम् ॥ १५ ॥
काञ्चीगुणोल्लसच्छ्रोणिं हृदयाम्भोजविष्टरम्।
दर्शनीयतमं शान्तं मनोनयनवर्धनम् ॥ १६ ॥

भाषाटीका।

हिंसाका परित्यागसत्यकथन परद्रव्यसे इच्छाकीनिवृत्ति प्रयोजनमात्रवस्तुका सङ्ग्रहकरना ब्रह्मचर्य्य तप वाहिरभीतरकीशुद्धी वेदपाठादिक नारायणका पूजन ॥ ४ ॥

थोडा भाषण सदा आसन का जीतना शरीरकी स्थिरता धीरे-धीरे प्राणायामसे प्राणवायुका जीतना मनके द्वारा विषयों से इन्द्रियों को जीतकर हृदय में लगाना ॥ ५ ॥

प्राणके कोई एकस्थान से मनके सहित प्राणको रोकना नारायण की लीलाओं का ध्यानकरना आत्माकी स्थिरता (समाधि) ॥६॥

इन उपायों से तथा और व्रतादिक उपायों से असत्मार्गमें प्रवृत्त मन को जीतकर सावधानता से धीरे से बुद्धि के साथ युक्तकरे ॥ ७ ॥

जब आसन स्थिर होजाय तब पवित्र देशमें आसनको विछाकर स्वस्तिक आसन लगाकर शरीर को सीधा रखके प्राणायाम का अभ्यास करे ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

बाह्यवायोरन्तःप्रवेशनं पूरकः प्रवेशितस्य धारणं कुम्भकः धृतस्य वहिर्निःसारणं रेचकः प्रतिकूलेन वा रेचककुम्भकपूरकैः। यद्वा इडयापूर्य पिङ्गलया रेचनं पिङ्गलयापूर्य इडया रेचनमित्येवं प्रतिकूलेन वाशब्दश्चार्थे स्थिरं सत्पुनरपि चञ्चलं यथा न भवति तथा शोधयेत् ॥ ९ ॥

ध्मातं सन्तप्तमित्यर्थः लोहं सुवर्णं यथा मलं त्यजति तथा मनो विरजं स्यात् ततश्चञ्चलं न स्यादिति भावः ॥ १० ॥

प्राणायामादीनां समाधौ द्वारकार्याण्याह। प्राणायामैरिति। दोषान्वातश्लेष्मादीन् संसर्गान्विषयसंसर्गान् अनीश्वरान् रागादीन् वायुना सह मनसः स्थिरीकरणं धारणा स्थिरस्य वृत्तिसन्ततिर्ध्यानम्। वृत्तिनिरोधः समाधिरिति भेदः ॥ ११ ॥

सुसमाहितं स्थिरं जातं काष्ठां कलां मूर्तिमित्यर्थः। स्वनासाग्रेऽवलोकनं यस्य एतच्च लयविक्षेपयोः परिहाराय ॥ १२ ॥

ध्येयं हरिमाह सप्तभिः। प्रसन्नं वदनाम्भोजं यस्य तं ध्यायेदिति षष्ठेनान्वयः। पद्मगर्भवदरुणे ईक्षणे नेत्रे यस्य नीलोत्पलदलवच्छ्यामम् ॥ १३ ॥

लसत्पङ्कजस्य किञ्जल्कवत्पीते कौशेये वाससी यस्य श्रीवत्सो लाञ्छनं वक्षसि यस्य भ्राजत्कौस्तुभेनामुक्ता संश्लिष्टा कन्धरा यस्य ॥ १४ ॥

मत्तद्विरेफाणां कला मधुरो ध्वनिर्यस्यां तया परीतं व्याप्तम् परार्ध्यान्यमूल्यानि हारादीनि यस्य ॥ १५ ॥

काञ्चीगुणेनोल्लसन्ती श्रोणी यस्य भक्तानां हृदयाम्भोजमेव विष्टरमासनं यस्य भक्तानां मनोनयनानि वर्धयति हर्षयतीति तथा ॥ १६ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

पूर्वार्थे तावत् प्रातिकूल्ये प्रामाण्यं न सङ्गच्छतेऽतो यद्वेति इडया वामनासिकया पिङ्गलया दक्षिणया "इडया पूरयेद्वायुं त्यजेद्दक्षिणया पुनः" इति योगशास्त्रोक्तेः ॥ ९ ॥

ध्माधातोरग्निसंयोगो मुख्यार्थः तेन च सन्तापो भवत्येवेति लक्ष्यार्थत्वेनेत्यर्थं इत्युक्तम् ॥ १० ॥

समाधौ द्वारभूतानि प्राणायामादीनां कार्य्याणि समाधिरङ्गी प्राणायामादयस्तदङ्गानि सर्वत्र च साधने व्यापारोऽपेक्षितः स एव द्वारं तथात्र दोषादिदाहनमेवेत्यर्थः वृत्तिर्ध्येयाकारेण परिणामस्तस्य सन्ततिर्नैरन्तर्य्यम् वृत्तिनिरोधः ध्यातृध्येयविभागाभावेन शुद्धब्रह्मरूपता ॥ ११ ॥

योगेन प्राणायामाद्युपायेन एतच्च नासेत्यादिविशेषणम् ॥१२॥

प्रसन्नेति षट्कम् । ( १ ) ( २ ) ( ३ ) ( ४ ) अपीच्यशब्दस्यातिसुन्दररूपेऽर्थे शक्तिग्रहस्सिद्धपदसान्निध्यात् कौपादीनामप्रसिद्धेः भक्ता विषया अधिकारिणो यस्य किम्वा भक्तकर्मकं सकरुणावलोकत्वात् चित्तं निलयतयेति शेषः तदुक्तं श्रीरसामृतसिन्धौ

वयसो विविधत्वेऽपि सर्वभक्तिरसाश्रयः ।
धर्म्मी किशोर एवात्र नित्यनानाविलासवान् ।

इति । ध्यग्रमिति । प्रतिक्षणमधिकाधिकसुखदानेऽप्यपरितोषात् ( ५ ) एवं समग्राङ्गं तावद्ध्यायेद्यावन्मनो न च्यवते (६)॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

बाह्यवायोरन्तःप्रवेशः पूरः धारणं कुम्भकः धृतस्य बहिर्निःसरणं रेचकः प्रतिकूलेन रेचकपूरककुम्भकैर्वा यद्वा इडया रेचनं पिङ्गलया पूरणं पुनः पिङ्गलया रेचनमिडया पूरणमित्येवं प्रतिकूलेन चित्तं स्थिरं सत्पुनरप्यचञ्चलं यथा स्यात्तथा प्राणस्य मार्गं शोधयेत् प्राणे स्ववशे तत्प्रबन्धनं मनोऽपि स्ववशं भवेत्तथा च श्रूयते छान्दोग्ये "यथा शकुनिस्सूत्रेण प्रबद्धो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा बन्धनमेवोपश्रयत एवं मनोऽपि" इत्यारभ्य "प्राणमेवोपश्रयते प्राणबन्धनं हि सौम्य ! मन" इति ॥ ९ ॥

किञ्च जितश्वासस्य जितप्राणस्य योगिनः अचिरादाशु विरजं विगतरजोगुणं रजोगुणेनाविक्षिप्तं निर्मलं वा स्यात् ॥ १० ॥

यथा लोहं सुवर्णादि वाय्वग्निभ्यां ध्मातं सुतप्तं सन्मलं त्यजति तथा प्राणायामादीनां समाधौ द्वारकार्यमाह । प्राणायामैरिति । प्राणायामैः प्राणनियमैः दोषान्वातपित्तश्लेष्मादीन् दहेत् धारणाभिः किल्बिषं पापं प्रत्याहारेण संसर्गान् शब्दादिविषयसंसर्गान् ध्यानेनानीश्वरान् गुणान् क्लेशादीन् दहेत् मनसः शुभाश्रयेऽवस्थापनं धारणं धृतस्य मनसो वृत्तिसन्ततिर्ध्यानं सन्ततिर्विजातीयप्रत्ययान्तराव्यवहितत्वं समाधिरिति भेदः ॥ ११ ॥

अथ धारणापूर्वकं ध्यानमाह । यदेति । यदा स्वं स्वीयं मनः योगेन प्राणायामादियोगेन विरजं सुसमाहितं सम्यक्शुभाश्रये निहितं स्यात्तदा स्वनासाग्रारोपितदृष्टिः भगवतः काष्ठां विग्रहं ध्यायेत् ॥१२॥ विग्रहमेव विशिनष्टि । प्रसन्नेति सप्तभिः । प्रसन्नं वदनाम्भोजं यस्य तं ध्यायेदिति षष्ठेनान्वयः पद्मगर्भवदरुणे नेत्रे यस्य नीलोत्पलदलवत्श्यामं शङ्खादिधरम् ॥ १३ ॥

लसत्पङ्कजकिञ्जल्कवत्पीते कौशेयवाससी यस्य श्रीवत्सलाञ्छनं वक्षसि यस्य भ्राजत्कौस्तुभेनामुक्ता संश्लिष्टा कन्धरा यस्य ॥ १४ ॥

मत्तद्विरेफाणां कलो मधुरो ध्वनिर्यस्यां तया वनमालया परीतं व्याप्तं परार्द्ध्यान्यमूल्यानि हारादीनि यस्य तम् ॥ १५ ॥

काञ्चीगुणेन *हिरण्मयमेखलासूत्रेणोल्लसन्ती श्रोणिर्यस्य भक्तानां हृदयाम्भोजमेव विष्टरमासनं यस्य भक्तानां मनोनयनानि वर्द्धयति हर्षयतीति तथा ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रतिकूलेन रेचकादिक्रमेण ॥ ९ ॥

प्राणायामादिफलमाह । मन इति । विरजं रजोगुणरहितमेतदेव सोदाहरणमाह । वाय्वग्निभ्यामिति ॥ १० ॥

प्राणायामैरिति । रागादिदोषान् किल्बिषान् जन्मान्तरसञ्चितपापानि दुर्जनसंसर्गावाप्तदुरितानि अनीश्वरानैश्वर्यविरोधिनः प्रकृतेःसत्त्वादिगुणान् ॥ ११ ॥

मनसि विरजसि सति कर्तव्यमाह । यदा मन इति । यदा मनो विरजं स्यात्तदा भगवतो हरेः काष्ठां पूर्णां मूर्तिं ध्यायेत् नासाग्रेणावलोकनं निरीक्षणं यस्य स तथा ॥ १२ ॥

"काष्ठोत्कर्षे स्थितौ दिशि" इत्यभिधानात्काष्ठाशब्दस्य अनेकार्थत्वादत्र विवक्षितः क इत्याशङ्क्य सर्वगुणोत्कृष्टं भगवद्रूपं विवक्षितमिति तत्स्वरूपं वक्ति । प्रसन्नवदनेति ॥ १३ ॥

लसतः पङ्कजस्य किञ्जल्कं केसरस्तद्वत्पीतं कौशेयं वासो यस्य स तथा तं श्रीवत्सो वक्षसि यस्य स तथा तं भ्राजता कौस्तुभेनामुक्ता बद्धा कन्धरा यस्य स तथा तम् ॥ १४ ॥

मत्तैर्द्विरेफैर्भृङ्गैराकुलया व्याप्तया परार्ध्यान्यनर्घत्वेन श्रेष्ठानि हारश्च वलयश्च किरीटं चाङ्गदं च नूपुरं च परार्ध्यहारवलयकिरीटाङ्गदनूपुराणि यस्य स तथा तम् ॥ १५ ॥

काञ्चीगुणेनोल्लसन्ती श्रोणी यस्य स तथा तं भक्तानां हृदयाम्भोजमेव विष्टरं यस्य स तथा तम् ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

काष्ठा दिक् अवधिः परमस्वरूपमिति यावत् ॥ १२ ॥

प्रसन्नेति षट्कम् । भृत्यानुग्रहकातरं सदैवाधिकाधिकस्वभक्तिसुखदानेऽप्यपरितोषात् ॥ १३-१७ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

तस्मिन्नेवाऽभ्यासे प्राणस्य मार्गं शोधयेत् भौतिक्यो नाड्यः मलादिना आपूरितास्तिष्ठन्ति ताः पूरकुम्भकरेचकैः शोधयेत् तत्र

---

* मणिमयेतितैलङ्गाक्षरपुस्तकपाठः ।

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

वायुं पूरयित्वा संस्तभ्य कुम्भकेन नाडीः शोषयित्वा पश्चा विधाय ततो मलं वायुं च रेचयेत् एवं पुनः पुनः पूरणादिना प्राणस्य मार्गं शोधयेत् प्राणायामभेदैर्वा कुम्भकादिभिः शोधयेत् प्रतिकूलेन वा शोधयेत् रेचकपूरककुम्भकैः किं बहुना यथैव चित्तं चाञ्चल्यं परित्यज्य स्थिरं भवेत् तथा प्राणस्य मार्गं शोधयेत् प्राणायामेनैव शोधनं न प्रकारान्तरेण कर्त्तव्यमविहितत्वात् न तैः चित्तं शुद्धं भवति ॥ ९ ॥

एवं कृते योगिनः मनो जितश्वासस्य विरजं भवेत् अचिरात् ननु प्राणायामेन कथं मनःशुद्धिः तत्र दृष्टान्तेनाह । वाय्वग्निभ्यामिति । यथा लोहं सुवर्णादिकं वाय्वग्निभ्यां ध्मातं मलं त्यजति तथा प्राणायामैः तज्जनितधर्मेण च दृष्टादृष्टोपायैर्मनो मलं त्यजति ॥ १० ॥

सर्वदोषाणां निवृत्तिप्रकारानाह । प्राणायामैरिति । दोषाः पापानि प्राणायामैर्दूरीकर्त्तव्यानि वातादिजनितदोषान्वा धारणाभिर्भगवन्मूर्तिचिन्तनैः किल्बिषान् वासनासहितमहापातकादीन् दहेत् प्रत्याहारेण इन्द्रियाणां संसर्गजनितान् दोषान् दहेत् ध्यानेन पुनः अनीश्वरान् संसारित्वापादकान् अज्ञानादीन् दहेत् तत्र ये संसारदशायां गुणाः ब्राह्मणादिशरीरापादकानि तानि अपि कर्माणि भगवद्ध्यानं दहति ॥ ११ ॥

एवं कृते यदैव स्वं मनो विरजं भवति योगेन च सुष्ठु सुसमाहितं भवति तदा भगवतः काष्ठां वैकुण्ठं हृदयं वा हृदये वैकुण्ठं वा स्वनासाग्रे निरीक्षणं यस्य तादृशो भूत्वा ध्यायेत् अन्यथा दृष्टिश्चञ्चला मनसो व्यासङ्गमुत्पादयेत् मीलिता निद्राम् ॥ १२ ॥

तत्र भगवन्तं ध्यायेदिति वक्ष्यति को भगवानित्याकाङ्क्षायां पुरुषोत्तमस्यैतद्रूपमिति मनसा तद्रूपं परिकल्प्यनिरन्तरं चिन्तनीयमिति तद्रूपं कल्पनार्थमनुवर्णयति । प्रसन्नवदनाम्भोजमिति षड्भिः । षड्गुणत्वाद्भगवतः प्रसन्नं वदनाम्भोजं यस्य प्रसादो वरदानार्थमम्भोजत्वं दृष्ट्यैव सन्तोषजननार्थं मध्वर्थं च पद्मस्य गर्भे स्थितपत्रवत् अरुणवर्णे ईक्षणे यस्य तत्रापि प्रसादः संतापदूरीकरणं योगसिद्धिश्च सूचिता नीलोत्पलानां दलवच्छ्यामं सौन्दर्यशुद्धी उग्रत्वाद्यभावः शृङ्गाररूपरसता च सूचिता शङ्खचक्रगदाधरमिति । अतेजोवायूनां शुद्धिदोषाभावार्थं शङ्खचक्रगदानां धारणम् ॥ १३ ॥

लसन्ति पङ्कजकिञ्जल्कानीव प्रान्ते मुक्ताफलगुम्फितमन्ते आरक्तं परिधानयोग्यार्थं कंसराकारेण कृतं यत्पीताम्बरं तदपि कौशेयं पट्टप्रकृतिकं सर्वं दैवत्यं वासो यस्य भगवांस्त्रिभुवनसारभूतः तस्य छन्दोमयं गूढरसाच्छादकं मुक्तान् रजोगुणं सत्त्वभेदांश्च गृहीत्वा स्थितं पीताम्बरयुक्तं श्रीवत्सं वक्षसि यो ब्रह्मानन्दः स हृदये प्रकाशते भ्राजत्कौस्तुभेनामुक्ता कन्धरा यस्य मुक्तान् भक्तान् जीवान् अतिप्रियत्वेन कण्ठस्थान् करोति ॥१४॥

मत्ता ये द्विरेफाः भ्रमराः तेषां कला पङ्क्तिर्यत्र तादृश्या वनमालया परीतं व्याप्तं षड्दर्शनीयतां गतैः निरन्तरं स्तुतया कीर्त्या व्याप्तं परार्ध्यान्यमूल्यानि हारवलयकिरीटाङ्गदनूपुराणि यस्य परार्ध्यानि भगवतः सम्बन्धीनि पञ्च भवन्ति भगवद्भक्ता भगवदर्थक्लेशः भगवदीयं ज्ञानं भक्तिर्गीतिश्चेति ॥ १५ ॥

काञ्चीगुणेन उल्लसन्ती श्रोणिर्यस्य पृथिव्यां स्त्रीधनाभ्यां सत्त्वरजस्तमोगुणैः संसारः सुप्रसिद्धो भवति स्वस्य हृदयाम्भोजमेव विष्टरं स्थानं यस्य अनेन सर्वप्राणिषु विद्यमानो भगवान् ध्येयः नत्वधिष्ठानादिषु परिच्छिन्नः दर्शनीयतममतिसुन्दरं सर्वप्रापञ्चिकरसविस्मारकं शान्तं कामादिसर्वदोषविनाशकं ज्ञानमयं मनोनयनयोर्वर्द्धनं यस्मात् सकृच्चेद्भावयति मनः पश्यति वा पुनर्भावनामेवोत्पादयति दिदृक्षां च अनेन विषयबलादपि प्रत्याहारः साधितः योगज्ञानयोश्च वृद्धिः ॥ १६॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

बाह्यवायोरन्तर्वामया नासया प्रवेशनं पूरकः । प्रवेशितस्य धारणं कुम्भकः । दक्षिणया नासया रेचनं रेचकः । प्रतिकूलेन रेचककुम्भकपूरकैः अस्थिरमपि चित्तं यथा अचञ्चलं स्यात् ॥९॥

लोहं स्वर्णं । ध्मातं सन्तप्तम् ॥ १० ॥

एतेषां कार्य्याण्याह । प्राणायामैरिति । दोषान् वातश्लेष्मादीन् किल्बिषाणि पापानि संसर्गान् विषयसङ्गान् अनीश्वरान् रागद्वेषादीन् ॥ ११ ॥

योगेन यमादिना समाहितं स्थिरम् । काष्ठामुत्कृष्टस्वरूपं । लयविक्षेपपरिहाराय स्वनासाग्रदर्शी ॥ १२ ॥

नवाङ्गभक्तावपि यं तृतीयमाहुर्महान्तः पुरुषार्थसारम्
ध्यानं हरेः सप्तमतामगात्तदष्टाङ्गयोगोऽत्र च मोक्षसिद्ध्यै ।

प्रसङ्गतो भक्तानां योगिनाञ्च ध्येयं स्वरूपमाह । प्रसन्नेति । शङ्खेत्यत्र चतुर्थं पद्मगपि अन्वेष्टव्यम् ॥ १३ ॥

भ्राजत्कौस्तुभेन तदीयस्वर्णसूत्रेण आमुक्ता प्रतिबद्धा रुद्धा कन्धरा ग्रीवा यस्य तम् ॥ १४ ॥

मत्तानां द्विरेफाणां कलो मधुरो ध्वनिर्यस्यां तथा परार्द्ध्यं परार्द्धमूल्यक्रीतम् ॥ १५ ॥

काञ्चीसूत्रेणोल्लसन्ती श्रोणिः कटिर्यस्य तं भक्तानां हृदयाम्भोजमेव विष्टरमासनं यस्य तं शान्तमनुप्रम् ॥ १६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पूरकादिक्रमेण प्रतिकूलेन रेचकादिक्रमेण वा प्राणस्य मार्गं प्राणायामं शोधयेत् स्वनुष्ठितं कुर्यात् यथा येन स्वनुष्ठितेन प्राणायामेन चित्तमचञ्चलं सत् स्थिरं भवेत् मनसः प्राणायत्तत्वं श्रूयते छान्दोग्ये "यथा शकुनिःसूत्रेण प्रतिबद्धो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा बन्धनमेवोपश्रयते एवं मनोपि"इत्युपक्रम्य प्राणमेवाश्रयते प्राणबन्धनं हि सौम्य ! मन इति॥९॥

लोहं सुवर्णं ध्मातं तप्तम् ॥ १० ॥

दोषान् वातश्लेष्मादीन् किल्बिषान् पापानि संसर्गान् शब्दादिविषयचिन्तनानि अनीश्वरान् अनाथत्वादीन् मनसः परमात्मनि स्थिरीकरणं धारणा स्थिरस्य तत्रैव वृत्तिसन्ततिर्ध्यानम् भगवद्ध्यानानन्दसंप्लवे निमग्नत्वं समाधिरिति भेदः ॥ ११ ॥

योगेन प्राणायामादिना भगवतः काष्ठां मूर्तिं मूर्तिमन्तं भगवन्तं ध्यायेदित्यर्थः ॥ १२ ॥

अपीच्यदर्शनं शश्वत्सर्वलोकनमस्कृतम् ।
सन्तं वयसि कैशोरे भृत्यानुग्रहकातरम् ॥ १७ ॥
कीर्तन्यतीर्थयशसं पुण्यश्लोकयशस्करम् ।
ध्यायेद्देवं समग्राङ्गं यावन्न च्यवते मनः ॥ १८ ॥
स्थितं व्रजन्तमासीनं शयानं वा गुहाशयम् ।
प्रेक्षणीयेहितं ध्यायेच्छुद्धभावेन चेतसा ॥ १९ ॥
तस्मिँल्लब्धपदं चित्तं सर्वावयवसंस्थितम् ।
विलक्ष्यैकत्र संयुञ्ज्यादङ्गे भगवतो मुनिः ॥ २० ॥
सञ्चिन्तयेद्भगवतश्चरणारविन्दं वज्राङ्कुशध्वजसरोरुहलाञ्छनाढ्यम् ।
उत्तुङ्गरक्तविलसन्नखचक्रवालज्योत्स्नाभिराहतमहद्धृदयान्धकारम् ॥ २१ ॥
यच्छौचनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिकृतेन शिवः शिवोऽभूत् ।
ध्यातुर्मनःशमलशैलनिसृष्टवज्रं ध्यायेच्चिरं भगवतश्चरणारविन्दम् ॥ २२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मूर्तिमन्तमेव ध्येयं भगवन्तं वर्णयति । प्रसन्नवदनाम्भोजमिति सप्तभिः । प्रसन्नं वदनमेवाम्भोजं यस्य तं ध्यायेदिति षष्ठेनान्वयः पद्मगर्भवदरुणे ईक्षणे लोचने यस्य तम् ॥ १३ ॥

लसत्पङ्कजकिञ्जल्कवत् पीते कौशेयवाससी यस्य तम् श्रीवत्सं वक्षसि यस्य भ्राजत्कौस्तुभेन आमुक्ता युक्ता कन्धरा यस्य तम् ॥ १४ ॥

मत्तद्विरेफाणां कं सुखं लातीति सा तया परीतं व्याप्तम् परार्ध्यानि अनर्घ्यमूल्यानि हारादीनि यस्य तम् ॥ १५ ॥

काञ्ची हिरण्मयी मेखला तद्गुणेनोल्लसन्ती श्रोणी यस्य ध्यातॄणां हृदयाम्भोजमेव विष्टरमासनं यस्य मनोनयनानां वर्द्धनमुत्साहकरम् ॥ १६ ॥

———

भाषाटीका ।

पूरक कुम्भक रेचकों से प्राण के मार्गको शोधन करै अथवा रेचक कुम्भक पूरक क्रमसे शोधन करै जिस से कि चञ्चल मन स्थिर हो जावे ॥ ९ ॥

श्वास जीतने वाले योगी का मन थोडे दिनो में निर्मल होता है जैसे कि वायू अग्नि दोनों से तपाया हुआ सुवर्णादि धातू मल को छोड देता है ॥ १० ॥

प्राणायामों से वात पित्तादि दोषों को जलावै धारणाओंसे पापों को जलावै प्रत्याहार से शब्दादि विषयों के सम्बन्ध को जलावै ध्यान से रागादि दोषों को दूर करै ॥ ११ ॥

जब अपना मन सावधान होकर योग से निर्मल होजावे तब नासिका के अग्रभाग में दृष्टि करके भगवान् की मूर्ति का ध्यान करै ॥ १२ ॥

भगवान् कैसे हैं कि मुख कमल उन का अति प्रसन्न है पद्म के पुष्प के भीतर सरी के लाल उन के नेत्र हैं नील कुमोदिनी के दल सरीके श्यामल वर्ण वाले हैं शङ्ख चक्र गदापद्म को धारण किये हैं ॥ १३ ॥

प्रकाशमान कमल पुष्प के केसर सरीके पीत रेशमी वस्त्र धारण किये हैं वक्षस्थल मे श्रीवत्स के चिन्ह से शोभित हैं प्रकाश मान कौस्तुभ मणि को गले में धारण किये हैं ॥ १४ ॥

मतवाले भौंरो के मधुर शब्द से संयुक्त जो वनमाला तिस से भूषित हैं वडे मूल्य वाले धन के हार कडूला किरीट वाजू वन्द नूपुरों से शोभाय मान हैं ॥ १५ ॥

कौंधनी के डोरा से उन के कमर में वडी शोभा हो रही है ध्यान करने वाले के हृदय कमल रूप आसन में विराज मान हैं अत्यन्त दर्शन के योग्य हैं भक्तों के नयन और मन के सन्तुष्ट करने वाले हैं ॥ १६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

अपीच्यमतिसुन्दरं भक्तविषयं दर्शनं यस्य कैशोरे तारुण्ये वयसि सन्तं स्थितम् भृत्यानामनुग्रहे कातरं व्यग्रम् ॥ १७ ॥

कीर्तन्यं कीर्तनार्हं तीर्थं यशो यस्य पुण्यश्लोका बलिप्रमुखास्तेषां यशस्करम् । समग्राण्यङ्गानि यस्मिन् न च्यवते नापयाति न पर्येति वा ॥ १८ ॥

प्रेक्षणीयमीहितं लीला यस्य ॥ १९ ॥

तदेवं समग्रध्यानमुक्त्वैकैकावयवध्यानमाह । तस्मिँल्लब्धं पदं स्थितिर्येन तच्चित्तं विलक्ष्य विशेषेण लक्ष्यीकृत्य एकत्रैकैकस्मिन्नङ्गे इत्यर्थः ॥ २० ॥

* जानुद्वयं जलजलोचनया जनन्या लक्ष्म्याऽखिलस्य सुरवन्दितया विधातुः।
ऊर्वोर्निधाय करपल्लवरोचिषा यत्संलालितं हृदि विभोरभवस्य कुर्यात्॥ २३॥
ऊरू सुपर्णभुजयोरधिशोभमानावोजोनिधी अतसिकाकुसुमावभासौ।
व्यालम्बिपीतवरवाससि वर्तमानकाञ्चीकलापपरिरम्भि नितम्बबिम्बम्॥ २४॥

श्रीधरस्वामिकृतभावार्थदीपिका।

तदेव पादादिक्रमेणाह त्रयोदशभिः। सम्यक् चिन्तयेत् पादतले रेखात्मकानि वज्रादीनि लाञ्छनानि तैराढ्यं युक्तम् उत्तुङ्गाश्च रक्ताश्च विलसन्तो नखास्तेषां चक्रवालं मण्डलं तस्य ज्योत्स्नाभिराहतो महतां ध्यातॄणां हृदयान्धकारो येन एतच्च सर्वमुपादेयविशेषणं ध्येयत्वेनैवोच्यते॥ २१॥

किञ्च यस्य शौचेन क्षालनेन निःसृतायाः सरित्प्रवरायाः गङ्गाया उदकेन तीर्थेन संसारतारकेण मूर्ध्न्यधिकृतेन धृतेन शिवोऽपि शिवोऽभूत् अत्यधिकं सुखं प्राप्तवान् इत्यर्थः ध्यातुर्मनसि यः शमलशैलः पापपर्वतस्तस्मिन्निसृष्टं क्षिप्तं वज्रमिव यत्। यद्वा। शमलशैले निसृष्टं खलाञ्छनरूपं वज्रं येन तत्॥ २२॥

विभोर्जानुद्वयं तत्पर्यन्तं जङ्घाद्वयमखिलस्य विधातुर्ब्रह्मणो जनन्या लक्ष्म्या संलालितं स्पर्शचातुर्येण संसेवितम्। संसारित्वमिव प्रतीतं वारयति। अभवस्येति। हृदि कुर्याद्ध्यायेत्॥ २३॥

सुपर्णस्य भुजयोः स्कन्धयोरधि उपरि ओजसो बलस्य निधी आधारौ अतसिकायाः कुसुमवत्कान्त्यावभासमानौ व्यालम्बि आगुल्फं लम्बमानं यत्पीताम्बरं वासस्तस्मिन्वर्तमानो यः काञ्चीकलापस्तेन परिरम्भः संश्लेषो विद्यते यस्य तद्विभोर्नितम्बबिम्बं च हृदि कुर्यादिति पूर्वेणैवान्वयः॥ २४॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी।

मनसि च्युतेतु प्रकारान्तरेण ध्यायेदित्याह। स्थितमिति प्रेक्षणीयेहितमिति लीलाध्यानमभिप्रेतम्॥ १९॥

तस्मिन् भगवद्रूपे आवृत्त्या व्याख्यानाद्विशेष्याध्याहाराद्वेत्यर्थं इत्युक्तम्॥ २०॥

तदेव। एकैकाङ्गध्यानमेव अन्धकारोऽसामर्थ्यम् एतच्च वज्राङ्कुशेत्यादि उपादेयं वास्तवत्वेन ग्राह्यं न तु ध्यानार्थं विराड्रूपवदारोपितमित्यर्थः न केवलं वस्तुस्थितिमात्रतयोच्यते किन्तु ध्येयत्वेनैवोच्यते॥ २१॥

पर्यायरूपाः शब्दा द्विरुच्चारिताः स्वार्थाधिक्ये पर्यवस्यन्तीत्यालङ्कारिकाः अत एवात्यधिकं सुखमित्यर्थिकोऽर्थः पूर्वार्थे पद्मकोमलचरणारविन्दस्य वज्रोपमाऽश्लीला इत्यरुचौ यद्वेति॥ २२॥

जानुद्वयमिति युग्मकम्। वाससि वर्त्तमानो यः काञ्चीकलाप इति व्याख्यानं पदैकदेशान्वयाभ्युपगमादेव चैत्रस्य गुरुकुलमिति वत् यथोक्तमभिज्ञैः

प्रतियोगिपदादन्यद्यदन्यत्कारकादपि।
वृत्तशब्दैक देशार्थे न तस्यान्वय इष्यत
इति॥ २३॥ २४॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अपीच्य दर्शनम् अपीच्यमतिसुन्दरं भक्तिविषयं दर्शनं यस्य तं कैशोरे कौमारे वयसि सन्तं भृत्यानामनुग्रहे कातरं व्यग्रम्॥ १७॥

कीर्तन्यं कीर्तनार्हं तीर्थं यशो यस्य पुण्यश्लोका बलिभीष्मादयस्तेषां यशस्करं समग्राणि अङ्गानि यस्मिन् यथा भवति तथा एवं ध्यायेत्॥ १८॥

तत्रोपासकः स्वेच्छानुसारेण स्थितमुत्तिष्ठन्तमासीनमुपविष्टं शयानं वा गुहाशयं हृदयकुहरे वसन्तं प्रेक्षणीयमीहितं लीला यस्य तं भगवन्तं शुद्धः रागाद्यकलुषितः भावः वृत्तिर्यस्य तेन चेतसा ध्यायेत्॥ १९॥

एवं ध्येयरूपसमुदाय उक्तः अथ दिव्याङ्गेष्वेकैकत्रोपासना कार्येत्याह। तस्मिन्निति। तस्मिन् विग्रहे लब्धं पदं स्थितं स्थितिर्येन तत्सर्वावयवेषु सम्यक् स्थितं चित्तं विलक्ष्य विशेषेण लक्ष्यीकृत्य भगवत एकत्रैकस्मिन्नङ्गे संयुञ्ज्यात्संयोजयेत्॥ २०॥

एतदेव पादादिक्रमेण प्रपञ्चयति। सञ्चिन्तयेदिति त्रयोदशभिः भगवतश्चरणारविन्दं सम्यक् चिन्तयेत्कथम्भूतं पादतलरेखात्मकानि वज्रादीनि लाञ्छनानि तैराढ्यं युक्तमुत्तुङ्गाश्च रक्ताश्च विलसन्तो ये नखास्तेषां चक्रवालं मण्डलं तस्य ज्योत्स्नाभिराहतो महतां ध्यातॄणां हृदयान्धकारो येन तं महत्त्वमन्धकारविशेषणं वा एतच्च सर्वमुपादेयविशेषणं ध्येयत्वेनोच्यते॥ २१॥

किञ्च यस्य चरणारविन्दस्य शौचेन प्रक्षालनजलेन निःसृतायाः सरित्प्रवरायाः गङ्गाया उदकेन तीर्थेन संसारतारकेण मूर्ध्न्यधिकृतेन शिवो रुद्रः शिवः मङ्गलयुक्तोऽभूदित्यर्थः ध्यातुर्मनसि यः शमलशैलः पापपर्वतः तस्मिन्विसृष्टं क्षिप्तं वज्रमिव यद्वा शमलशैले निसृष्टं खलाञ्छनरूपं वज्रं येन तद्भगवतश्चरणारविन्दं चिरं ध्यायेत्॥ २२॥

---

* जानुद्वयमितिश्लोकः श्रीविजयध्वजतीर्थमतेनास्ति।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

जानुद्वयमिति । अखिलस्य जगतः जनन्या मात्रा "नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी" इत्युक्तेः सुरवन्दितया ब्रह्मादिभिराराधितया जलजलोचनया लक्ष्म्या स्वस्याः ऊर्वोर्निधाय करपल्लवरोचिषा प्रकाशमानकरपल्लवेन संलालितं स्पर्शनचातुर्येण संसेवितं संसारित्वप्रतीतिं वारयति । अमवस्येति । विशातुजंगकतुर्विभोः भगवतः जानुद्वयं पादपर्यन्तजङ्घाद्वयं हृदि कुर्यात् ध्यायेत् ॥ २३ ॥

ऊरू इति सुपर्णस्य गरुत्मतः भुजयोः स्कन्धयोरधि उपरि शोभमानावोजसः बलस्य औज्वल्यस्य वा निधी आश्रयावतसिकाकुसुमकान्तिवत् कान्त्या भासमानौ ऊरू हृदि कुर्यादिति पूर्वेणान्वयस्तथा व्यालम्बि आगुल्फं लम्बमानम् यत्पीतं परमनर्घवासस्तस्मिन् वर्त्तमानो यः काञ्चीकलापस्तेन परिरम्भः संश्लेषो विद्यते यस्य तद्विभोः नितम्बबिम्बञ्च हृदि कुर्यात् ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अपीच्यदर्शनं प्राप्तषोडशवर्षवद्दृश्यमानं स्वतः कैशोरे वयसि द्वादशवर्षलक्षणे सन्तं वर्तमानम् ॥ १७ ॥

कीर्तन्यं कीर्तनीयं तीर्थं शुद्धं यशो यस्य स तथा तं पुण्यश्लोकाः ब्रह्मादयस्तेषां सृष्ट्यादिना यशः करोतीति पुण्यश्लोकयशस्करस्तं मनो यावन्न च्यवते न चलति सर्वाङ्गध्यानसंकं यथा स्यात्तथा ध्यायेदित्यर्थः ॥ १८ ॥

हृदयगुहायां शेत इति गुहाशयं प्रेक्षणीयमीहितं चेष्टितं यस्य स तथा तम् ॥ १९ ॥

एवं समग्राङ्गध्यानमुक्त्वा तदशक्तौ एकैकाङ्गध्यानप्रकारमाह । तस्मिन्निति । तस्मिन्हरौ समग्राङ्गे लब्धपदं प्राप्तास्पदं सर्वावयवसंस्थितं सर्वावयवं व्याप्य स्थितं चित्तं विलोक्य भगवतः सर्वावयवसंस्मरणाशक्तावेकत्राङ्गे एकस्मिन्नवयवे पादमारभ्योत्तमाङ्गपर्यन्ते चित्तं संयुञ्ज्यादित्यन्वयः "सर्वं स्मर्तुमशक्तः सन्नेकाङ्गं चिन्तयेद्बुध" इति वचनात् ॥ २० ॥

नन्वत्र पृथक् पृथगवयवस्थितं चित्तमेकत्रैक्येन भावनायां संयुञ्ज्यात् तत्वेकैकावयवध्यानं विधीयतेऽशक्तस्येत्याशङ्क्यैकैकाङ्गध्यानविधानायुक्तं युक्तमिति भावेन तद्विशिनष्टि । वज्रेत्यादिना । उत्तुङ्गान्युन्नतानि रक्तानि विलसन्ति * नखान्युत्तुङ्गरक्तविलसन्नखानि तान्येव चक्रवालं चन्द्रमण्डलं तस्य ज्योत्स्नाभिराहतो निर्दलितो महतां योगिनां हृदयान्धकारोऽज्ञानाख्यो येन तत्तथोक्तं नखानां चक्रवालमावलिस्तस्य ज्योत्स्नाभिरिव निर्मलाभिर्दीप्तिभिर्वा ॥ २१ ॥

यस्य चरणारविन्दस्य शौचात् प्रक्षालनलक्षणान्निःसृता सरित्प्रवरा गङ्गा तस्या उदकेन तीर्थेन पावनेन मूर्ध्न्यधिधृतेनाधिगमजटाबन्धधृतेन शिवो महादेवः शिवोऽतिशयितपुण्यभाजनीभूतोऽभूत् ध्यातुः पुरुषस्य मनसि वर्तमानं यच्छमलं पापं तदेव शैलः पर्वतस्तस्य विदारणाय नितरां सृष्टं कल्पतं वज्रमिव वज्रं लुप्तोपमा ॥ २२ ॥ २३ ॥

जङ्घान्तं तु तच्चरणारविन्दान्तर्भूतं जानुनी पूर्वोत्तरान्तर्भूत

---

नखानां क्षीवत्वं चिन्त्यम् ।

इति भावेनोरूपास्तिमाह । ऊरू इति । हरेरूरू ध्यायेदित्यन्वयः सुपर्णो गरुडस्तस्य भुजयोरध्युपरि स्कन्धे ओजसा बलानां निधी "ओजोऽवष्टम्भबलयोः" इत्यभिधानं स्वतसिकाकुसुमं प्रोत्फुल्लकल्पकुसुमं तद्वदवभासो ययोस्तौ तथोक्तौ हे अम्ब ! हरेर्नितम्बं ध्यायेदित्यन्वयः व्यालम्बि चाप्रपदान्तं च वर्णेन पीतं च वरं च यद्वासस्तद्व्यालम्बिपीतवरवासस्तत्र वर्त्तमानो यः काञ्चीकलापः सन्तगुणितरसनाभूषणं तस्य परिरम्भोऽस्यास्तीति तदन्तर्वर्तमान इत्यर्थः ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एवं समग्राङ्गं च तावद्ध्यायेत् यावन्मनो न च्यवते । मनसि च्युते सति प्रकारान्तरेण ध्यायेदित्याह । स्थितमित्यादिभिः ॥ १८ ॥ १९ ॥

विलक्ष्य निश्चित्य ॥ २० ॥

महतां ध्यातृणां हृदयस्यान्धकारमसामर्थ्यम् ॥ २१ ॥ २२ ॥

जानुद्वयमिति त्रिकम् ॥ २३ ॥ २४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अपीच्यं सुन्दरं दर्शनं यस्य स्त्रीणामपि स्वासक्त्या मोक्षदायी दर्शनेनैव परमानन्दजनकं च भगवदनुभव आनन्दाविनाभूत इति च सूचितम् । शश्वदिति । वयोवृद्धत्वादिना कदाचिदप्यन्यथा दर्शनं निवारितं सर्वलोकनमस्कृतं सर्वप्रमाणसिद्धं सर्वफलरूपं च कैशोरे वयसि सन्तमिति । दशमवर्षमारभ्य षोडशवर्षपर्यन्तं किशोरावस्था रसप्रादुर्भावस्तावत् दूरे अग्रे लावण्यस्य ह्रासः अनेन देवोत्तमत्वमुक्तं भृत्येष्वनुग्रहार्थं कातरं व्यग्रं फलदानावश्यकत्वं सूचितम् ॥ १७ ॥

कीर्त्तनीयं तीर्थरूपं यशो यस्य भगवानतिकृपालुत्वेन स्वस्य कीर्त्तिं कीर्त्तनीयां तीर्थरूपां च कृतवान् लोके सन्ति तीर्थानि पापनिवर्त्तकानि न तु तेषां सम्बन्ध आवश्यकः उक्तिविशेषवाक्यानि कीर्त्तनीयानि भवन्ति सर्वोऽपि रसाविष्टः कीर्त्तयति सर्वपापनाशकं सर्वफलदात् चेन्नित्यसम्बद्धं भवेत् सर्वोऽपि कृतार्थः स्यात्तादृशी च कीर्त्तिः किञ्च स्वकीयानामपि तादृशीं कीर्तिं सम्पादयतीत्याह । पुण्यश्लोकयशस्करमिति । पुण्याः श्लोकाः कीर्तिर्येषां भक्तानां तेषामपि स्वसमानतां सम्पादयतीति यशस्करः ।

एवं विंशतिधर्मात्मा ध्येयो हरिरिहोदितः ।
एकविंशो हि पुरुषः विंशत्यङ्गुलयः आत्मैकविंश

इति एते ध्येया धर्मा विंशतिः स्वयं भगवानेकविंशः एवमेतादृशं भगवन्तं निरूप्य तत्र कर्त्तव्यमाह । ध्यायेदेवमिति । एवं समग्राङ्गं सर्वावयवपूर्णं ध्यायेत् यावन्मनः एकमप्यवयवं न त्यजति सम्पूर्णमेव रूपं स्फुरति तावदेव ध्यायेदित्याह । यावन्न च्यवते मन इति । यावत् सम्पूर्णादङ्गात् न च्यवते नापगच्छति मनस्तु चञ्चलं नैकत्र स्थिरमिति तथोक्तम् अन्यथा मुख्ययोगे सर्वदैव स्थिरं भवेत् ॥ १८ ॥

अवस्थासु विकल्पमाह । स्थितमिति । स्थितमुत्थितं वा ध्यायेत् व्रजन्तं वा स्वासीनमुपविष्टं शयानं वा चतुर्विधोऽपि गुहाशय

## श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एव स्वहृदय एव सर्वतो विलोकनार्थमुत्थितः कार्यकरणार्थं चलति पूजां गृह्णन्नुपविशति कृतकार्यश्च शेते किञ्च प्रेक्षणीयेहितो भगवान् ध्येयः प्रेक्षणीयमीहितं यस्य चेष्टापि भगवानिव प्रेक्षणीया तेन भगवतः बालैर्गोभिर्गोपालैर्गोपिकाभिरन्यैश्च नानाविधाः क्रीडा अपि ध्येया इत्युक्तं । तत्र क्रीडासु तत्तद्रागेण स्वकामादिनापि ध्यानं सम्भवतीति तन्निवृत्त्यर्थमाह । शुद्धभावेन चेतसेति । शुद्धो भावो यस्य चेतसः सर्वकामनादिदोषरहितेन एवा हि धारणा निरूपिता ॥ १९ ॥

एकैकावयवस्य रसं ज्ञातुं ध्यानं निरूपयति । तस्मिंल्लब्धपदमिति । तस्मिन् सम्पूर्णे लब्धपदं तत्र स्थिरीभूतं चित्तं सर्वावयवेषु सुप्रतिष्ठितं विलक्षणं ज्ञात्वा व्यतिरेकतया वा लक्षयित्वा किञ्चिन्न्यूनं ज्ञात्वा भगवतः एकस्मिन्नेवाङ्गे संयुञ्ज्यात् यतोऽयं मुनिः युक्त्यैव पदार्थान् स्थिरीकृत्य ध्यायति अतोऽत्राप्येकैकस्यावयवस्य माहात्म्यं ज्ञात्वा सर्वज्ञानं करिष्यतीति भावः ॥ २० ॥

तदेकमेकमङ्गं निरूपयति त्रयोदशभिः । मतान्तरत्वात् सम्वत्सरात्मकः स इति । अतिक्रमस्य वक्तव्यत्वाच्च तत्र प्रथमं चरणारविन्दं तद्गुणाविष्कारेण वर्णयति द्वाभ्याम् स्वतः कार्यतश्च माहात्म्यप्रतिपादनेन तत्र प्रथमं स्वतो माहात्म्यमाह । सञ्चिन्तयेदिति । भगवतश्चरणारविन्दं सम्यक् चिन्तयेत् सम्यक्त्वं दीर्घकालादरनैरन्तर्यं माहात्म्यज्ञानपूर्वकं च चरणौ भक्तिप्रतिपादकः अरविन्दं सर्वतापनाशकं वज्राङ्कुशध्वजसरोरुहलाञ्छनाढ्यं चिह्नचतुष्टयनाढ्यं सम्पन्नं भक्तानां पापपर्वतपक्षच्छेदनार्थं वज्रः भक्तानां मनोगजवशीकरणार्थमङ्कुशम् अत्र स्थितानां सर्वभयनाशनज्ञापनार्थं ध्वजः सुखसेवार्थं चाम्बुजम् एतानि लाञ्छनानि चिह्नानि चतुर्विधपुरुषार्थज्ञापकानि एतादृशान्यनन्तानि चिह्नानि सन्तीति आढ्यता ज्ञापयति अनेन भजनीया गुणा उक्ताः फलदातारः दोषनिवर्त्तकानाह । उत्तुङ्गेति । उत्तुङ्गानि रक्तानि यानि विलसन्ति नखानि तेषां चक्रवालं मण्डलं तस्य ज्योत्स्नाभिराहतः महतां हृदयान्धकारो येन बहिःस्थितेन प्रकाशेनान्तःस्थितोऽन्धकारोऽपगच्छति महतां चाहङ्काराधिक्यं तत्रत्यश्चान्धकारः अवश्यं दूरीकर्त्तव्यः स च नैकेन चन्द्रमसा भवति सौरश्च प्रकाशस्तापजनकः तेन दशनखात्मकाः चन्द्रा दशावस्थासु सर्वदोषनिवारकाः उत्तुङ्गाः ऊर्ध्वतुङ्गाः अतितुङ्गेऽप्यहङ्कारे विद्यमानमज्ञानं नाशयन्ति रक्ताः तदर्थमेवोद्यन्तः उद्यन्तश्चारक्ता भवन्ति विलासयुक्तत्वाच्चित्तनमप्यावरणं दूरीकुर्वन्ति यथा कामिन्यावरणं कामुकः स एव विलासः चन्द्रा भवन्ति परं नखाः न विद्यते खमाकाशं येषाम् क एव चन्द्रः आकाशे भासते एते तु नाकाशसम्बन्धिनः एतेषां चक्रमायुधं बालसम्मतपोषकं न तु केवलमन्धकारमेव नाशयन्ति । चमसृतमलं यत्रेति वा कलङ्करहितं ज्योत्स्नाभिरिति बहुवचनं नानाविधान्धकारनिवृत्त्यर्थम् अनेन स्वतः आनन्दरूपता अज्ञाननिवृत्त्या च आनन्ददायकत्वं निरूपितम् ॥ २१ ॥

एवं स्वरूपोत्कर्षमुक्त्वा कार्यत उत्कर्षमाह । यच्छौचेति । भगवतश्चरणे पदार्थद्वयं परममाहात्म्यसूचकमस्ति गङ्गा भक्तिरसश्चेति । तत्र गङ्गाया माहात्म्यं प्रायश्चित्तानधिकृतानापि सर्वपूज्यान् करोति तदाह । ययोः चरणयोः शौचे प्रक्षालने सति निःसृतं यज्जलं तत्सरित्प्रवरा जाता सरितां मध्ये गङ्गा श्रेष्ठा तस्या यदुदकमेकदेशः तेनापि मूर्द्धनि निहितेन अधिकारवत्प्राप्तेन शिवः परमकल्याणरूपोऽपि शिवोऽभूत् यस्तु साधनेन सिद्धमेव स्वरूपं प्राप्नोति स आधिदैविकं प्राप्नोतीत्यध्यवसीयते अपहतपाप्मन एवैतत्सामर्थ्यमाधिदैविकत्वप्रापणं यथा "सवाचमेव प्रथमामत्यमुच्यत स वागग्निरभवत्" इति । एवं शिवोऽपि स्वां देवतां प्राप्तवान् अन्यथा भगवत इव तस्य स्वतन्त्रता न स्यात् प्रमाणादिचतुष्टयेनापि अतो गङ्गा स्वस्याधिदैविकं रूपं प्रापयतीति चरणसम्बन्धिनामपि यत्रैतन्माहात्म्यं तत्र साक्षाच्चरणस्य ध्यातस्य तथात्वसम्पादकत्वं किं वक्तव्यमिति भावः । एतच्च गङ्गाया माहात्म्यं न गङ्गाजलस्थं नापि तदभिमानिन्या देवतायाः शिवापेक्षया अन्येषामचेतनाधिष्ठातृदेवतानां हीनत्वात् किं तु भगवच्चरणस्थमलस्यैतन्माहात्म्यं तानि रजांसि पूर्वं निरूपितानि भक्तानां पुण्यसंस्कृतभौतिकानीति तानि चरणस्य मलरूपाण्येव भवन्ति अन्यथा सेवकरूपदेहोत्पत्तिर्न स्यात् अत एतज्जलं शौचे पादप्रक्षालने सति तद्रजःसहितं निःसृतं महत्त्वात् रजःसम्बन्धात् देवताशरीरं तज्जातमित्याह । सरित्प्रवरेति । निःसृता सरित्प्रवरा जाता सर्वभक्तोद्धारार्थे उपायभूता सा चेद्रजोविशिष्टा भूता स्यात् तदा भक्तानां देहोत्पत्तिर्न स्यात् इत्युदकमेव निरूपितं तस्मिन्नुदके रजःसामर्थ्याभावे शिवत्वसम्पादकत्वं न स्यादित्याशङ्क्य तीर्थत्वमाह । तत्साधारणमेव । सर्वजगतामाधिदैविकत्वसम्पादकरूपं तीर्थं जातं नन्वेतेन जलेन आधिदैविकत्वमेव कुतः सम्पादितं यानदस्थिमनुष्याणामित्यादिवाक्यैः फलसाधकत्वं श्रूयते तत्राह । मूर्द्ध्न्यधिकृतेनेति । उत्तमाङ्गं शिरः स्वमस्तके तज्जलमधिकारि कृतवान् अत उत्तमाङ्गे स्वस्य सर्वाधिकारं दत्त्वा स्थापितवतः साधारणं फलं प्रयच्छति सर्वस्वनिवेदने आधिदैविकत्वप्रापणमेव युक्तं शिवत्वादेव न पापादिसम्बन्धः अमङ्गलरूपस्यैव भजनीयत्वात् नापि तद्रूपनिवृत्तिः अत आधिदैविक एवायं जातः माहात्म्यान्तरमाह । ध्यातुर्मन इति । यो ध्यायति तस्य मनसि ये शमलशैलाः पापपर्वताः तेषामर्थे विसृष्टो वज्रो येन भगवतश्चरणे ये वज्रादयो निर्मिताः तत्र स चरणः ध्याने परमासक्तियुक्तस्तान् प्राणिनः पापेनातिगुरुतरान् मत्वा बहुजन्मार्जितपापपर्वतान् दूरीकरोति अनेन भक्त्यधिष्ठात्री देवतेयमिति निरूपिता पक्षपातोऽपि निरूपितः एवमङ्कुशादिकार्यमपि करिष्यतीति सूचितं मनःपदेन ध्यानस्य तत्र सम्बन्धात्सम्बन्धिन एव पापं नाशयतीति तथोक्तं नतु देहपापं नाशयतीति देहस्याग्रे गमनापेक्षाभावाच्च पापानामतिदार्ढ्यप्रचयात् पर्वतत्वम् एवं भगवतश्चरणमाहात्म्यं ज्ञात्वा चरणं ध्यायेत् चिरध्याने मनसोऽप्याधिदैविकत्वमापद्येत उपसंहारेऽपि भगवतश्चरणारविन्दकीर्तनं मध्ये पदार्थान्तरध्यानव्यावृत्त्यर्थं प्रत्येकध्यानानि गुरुध्यानं वा निवारितम् ॥ २२ ॥

चरणध्यानानन्तरं जानुद्वयं ध्यायेदित्याह । जानुद्वयमिति । जानुद्वयस्य माहात्म्यं सर्वजगत्फलरूपाया ब्रह्मानन्दरूपायाश्च सेवकत्वेन यथा वा सुवर्णे मरकतमणियोजितः स्वरूपतोऽपि सुन्दरो भवति जानुद्वयस्योर्वोर्निरूपणात् शयानो भगवान् लक्ष्यते शय्यागता च लक्ष्मीः अनेन तस्यामनुग्रहोऽपि सूचितः अतस्तज्जनितश्रमस्तयैव दूरीकर्त्तव्यः जलजलोचनयेति कमलनयनया तद्रससौन्दर्यनिरूपणायोक्तं दोषाभावाय तथात्वप्रयोजनाय चाह । अखिलस्य जनन्येति । अन्यथा जगत्स्रष्टिर्न स्यात्

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
सम्भवः सर्वभूतानां ततो भवति भारत इति ।

भगवद्वाक्यात् लक्ष्म्येति सा ज्ञानशक्तिरित्यपि सूचितं लक्षधातुनिष्पन्नत्वात् अनेन मातापित्रोर्ध्यानं निरूपितं तस्य ध्यानं योगिनो न कर्त्तव्यमिति शङ्कायामाह । सुरवन्दितयेति । सर्वैर्देवैर्वन्दिता सा परमा देवता अतो ध्येयदेवताध्यानाभावे इष्टसिद्धिर्न स्यादिति ऊर्वोरुभयोर्निधानं लक्ष्म्याः कृतकृत्यताभावनार्थं स्नेहाधिक्यैक्यभावनार्थं च निधायेति । भगवच्छ्रवनं लक्ष्यते भगवदपेक्षाभावो वा करपल्लवाः अङ्गुलयः तेषां रोचिर्दीप्तिः लीलायाः शनैः स्थापनमन्यथा भगवज्जान्वपेक्षया ऊरू करपल्लवयोः कठिनत्वात् पीडा स्यात् यथा शीतलस्पर्शेन तापो गच्छति तथा हस्तानन्दस्यान्तः प्रवेशेनैव श्रमो गच्छतीत्यर्थः । यत्प्रसिद्धं जानुद्वयमेतद्धृदये आव्यमिति । न तु बहिःस्थितं मनसा स्मर्त्तव्यं नन्वल्पे हृदये कथमेषां भावना भविष्यतीत्याशङ्क्याह । विभोरिति । स हि समर्थो ध्यातः हृदयं पुष्कलं कर्त्तुं समर्थः ननु संसार एव निरूपणात् किमेतादृशेन ध्यानेनेत्याशङ्क्याह । अभवस्येति । न विद्यते भवः संसारो यस्मात् यो हि भगवद्धर्मः सजातीयः स तस्याधिदैविक इति तन्नाशसमर्थो भवति यथा तस्याऽरणेरेव तत्रोत्पन्नोऽग्निर्दाहको भवति न ह्यन्यो विजातीयं दहति अत एव पुराविदां वचनम् "स्तेयं हरेर्हरति यन्नवनीतचौर्यम्" इति ॥ २३ ॥

तत ऊरू ध्यायेदित्याह । ऊरू इति । गच्छन् भगवान् गरुडाधिरूढो ध्येयः गरुडस्य पृष्ठे उपविष्टः स्कन्धयोर्लम्बितपादः गरुडहस्तयोः स्थापितचरणो यो भगवान् तस्य ऊरू ध्येयौ सुपर्णभुजयोरध्युपरि अधिकं शोभमानौ यथा विन्ध्येन्द्रनीलमणेः अधिकः प्रकाशो भवति तथा ओजोनिधी अतसिकापुष्पवदवभासो ययोः नितम्बबिम्बमपि ध्येयमित्याह । व्यालम्बीति । विशेषेण आलम्बि यत्पीताम्बरमुत्कृष्टं वासः तस्मिन्वर्त्तमाना या काञ्ची तस्याः कलापः समूहः बहुसूत्रनिर्मितत्वात् चित्ररूपाणि वा मयूरकलापसदृशपदकयुक्ता वा काञ्ची तस्याः परिरम्भयुक्तं नितम्बबिम्बं गरुडो हि कालात्मा ऊरू च दैत्योत्पत्तिस्थानभूतौ तेषामाधिदैविकमूरुद्वयं तत्कालाधीनगतिमत् कालस्य स्कन्धद्वयं कर्मस्वभावौ कालस्याप्ययं गरुड आधिदैविकः अत एव सुपर्णत्वम् अधिकशोभमानत्वं कालकर्मस्वभावोपमर्देनेन तद्भावनायां स्वस्यापि तथात्वं भविष्यति यथा संसारनिवृत्तिः पूर्वं फलति तथात्र स्वभावादिजयः सुपर्ण एव स्थित इति नितम्बबिम्बं मुख्यतया कालातिक्रमहेतुः अनेन विश्वातिक्रमोऽपि विश्वरूपभगवद्भावनयेत्युक्तं वेदैश्च कालातिक्रमरूपमाच्छादितं वेदत्रयबहिर्भूतस्य यज्ञादिकं कालसम्बद्धं भवतीति कर्मणां कालोपाधिकत्वम् अहोरात्रातिक्रमोऽग्निहोत्रेण मासातिक्रमो दर्शपूर्णमासाभ्याम् एवं ऋत्वातिक्रमश्चातुर्मास्यैः अयनातिक्रमः पशुना वर्षस्यातिक्रमः सोमेनेति जगज्जननहेतुस्थानं च तद्ध्यानेनैव जगति जन्मातिक्रमश्च, ओजोनिधित्वं तेजसोऽतिक्रमाय अतसिका पृथिवीजलात्मिका तत्र यो नीलो भागः पुष्पस्य तत्पृथिव्याः यः शुक्लः स जलस्य अतस्तत्पुष्पावभासत्वं तदुभयातिक्रमाय भगवांस्तु सर्वैरेवोपमीयत इति न प्राकृतोपमादोषः विशेषेण पीताम्बरस्य लम्बता आच्छादनाधिक्यख्यापनाय वेदो हि बहुपरिकरो भवतीति पीतो ह्यर्थः धर्मसहितः स श्रुतिरूपो भवतीति अग्निवेदाभ्यां कर्म साध्यते आवरकसौन्दर्य्यवच व्यामोहार्थं वरत्वं वासश्चाच्छादकं तत्रैव माया व्यामोहयति काञ्ची माया कलापो जगद्वैचित्र्यं तत्परिरम्भो जगद्वैचित्र्यजननार्थं बिम्बत्वमाधिदैविकत्वख्यापनार्थम् ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अपीच्यमतिसुन्दरं कैशोरे पञ्चदशवर्षे वयसि नित्यस्थितम् ॥ १७ ॥

कीर्तनार्हं तीर्थरूपञ्च यशो यस्य तम् ॥ १८ ॥

प्रसङ्गतस्तन्त्रेण रागानुगीयभक्तानामपि ध्येयां लीलामाह । स्थितं वैकुण्ठे वृन्दावनीयकल्पतरुमूले च व्रजन्तं वैकुण्ठात् गोष्ठाच्च वनाय आसीनं रत्नसिंहासने गोवर्द्धनशृङ्गे च शयानं शेषपर्यङ्के गोवर्द्धनगुहायाञ्च शुद्धभावं चेच्चतस्तदा तेन प्रेक्षणीयं जालरन्ध्राद्बहिः स्थित्वैव द्रष्टुमर्हम् ईहितं क्रीडाचेष्टितं यस्य तम् ॥ १९ ॥

समग्रध्यानमुक्त्वा एकैकावयवध्यानमाह । तस्मिन् भगवद्विग्रहे ॥ २० ॥

पादादिक्रमेणैकैकावयवध्यानमाह । वज्रेति । दक्षिणचरणतलध्यानं तस्यैव कल्पतरुमूले तिष्ठतस्त्रिभङ्गललितस्य कृष्णस्य भक्तैर्दृश्यत्वात् तस्य दक्षिणचरणस्य कनिष्ठातलेऽङ्कुशं ध्यायेत् अङ्कुशतले वज्रम् अनामिकातले सरोरुहं सरोरुहतले ध्वजम् एवमङ्गुष्ठतले यवचक्रादिकं ज्ञेयम् एतैर्लाञ्छनैश्चिह्नैः राढ्यमन्धकारं पापम् ॥ २१ ॥

चरणारविन्दस्य माधुर्यमुक्त्वा ऐश्वर्यमाह । यस्य शौचेन क्षालनेन निःसृता या सरित्प्रवरा गङ्गा तस्या उदकेन मूर्ध्नि आधिक्येन कृतेन यद्वा मूर्ध्नि धर्तुमधिकृतेन अधिकारेण प्राप्तेन शिवोऽपि शिवोऽभूदद्यैवाहं शिवोऽभूवमित्यभिमन्यते स्मेत्यर्थः । ध्यातुर्जनस्य मनःशमलानि रागद्वेषादीनि तेष्वेव शैलेषु निसृष्टं स्वलाञ्छनरूपं वज्रं येन तत् एवमेव यच्चरणारविन्दम् ध्यातुर्भक्तस्य मनोहस्तिनं स्ववर्त्मन्यानेतुमङ्कुशं धत्ते मनःसरसीमलं कर्त्तुं कमलं मनसे सर्व्वोत्कर्षसाम्राज्यं दातुं ध्वजं सर्व्वोत्कृष्टयशो दातुं यवं त्रिविधतापोपशमनाय छत्रं सर्व्वतो रक्षणार्थं चक्रादिकमपि धत्ते इत्यपि ज्ञेयम् ॥ २२ ॥

शयानं ध्यायेदित्युक्तमतः शेषपर्य्यङ्के शयानस्य विभोर्जानुद्वयं तत्पर्यन्तं जङ्घाद्वयं हृदि कुर्य्यात् यत् खलु अखिलस्य विधातुर्ब्रह्मणः जनन्या लक्ष्म्या सम्वाहनचातुर्य्यवतोः करपल्लवयोः रोचिषा अरुणिम्ना पीतिम्ना च संलालितं शोभितीकृतं जलजलोचनयेति तल्लोचनाभ्यां निर्वाधमेवास्वादितलावण्यमित्यर्थः एवमेव जङ्घयोर्जानुनोश्च माधुर्य्यमैश्वर्य्यञ्चाग्रेऽपि ज्ञेयम् । अभवस्य न विद्यते भवो यस्मात्तस्य ॥ २३ ॥

व्रजन्तं ध्यायेदित्युक्तमतः पृथुधुवादिभ्यो वरं दातुं गच्छतो गरुडारूढस्य हरेरूरुद्वयं हृदि कुर्यात् भुजयोरधि उपरि स्कन्धयोरित्यर्थः । नितम्बबिम्बं नितम्बमण्डलम् ॥ २४ ॥

नाभिह्रदं भुवनकोशगुहोदरस्थं यत्रात्मयोनिधिषणाखिललोकपद्मम् ।
व्यूढं हरिन्मणिवृषस्तनयोरमुष्य ध्यायेद्द्वयं विशदहारमयूखगौरम् ॥ २५ ॥
वक्षोऽधिवासमृषभस्य महाविभूतेः पुंसां मनोनयननिर्वृतिमादधानम् ।
कण्ठं च कौस्तुभमणेरधिभूषणार्थं कुर्यान्मनस्यखिललोकनमस्कृतस्य ॥ २६ ॥
बाहूंश्च मन्दरगिरेः परिवर्तनेन निर्णिक्तबाहुवलयानधिलोकपालान् ।
सञ्चिन्तयेद्दशशतारमसह्यतेजः शङ्खं च तत्करसरोरुहराजहंसम् ॥ २७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शश्वत्सर्वदा अपीच्यं सुन्दरं दर्शनं यस्य भृत्येषु अनुग्रहेण कातरं व्यग्रम् ॥ १७ ॥

कीर्तन्यं कीर्तनार्हं तीर्थं पावनं यशो यस्य यावन्मनो न च्यवते तावदेवं समग्राङ्गं ध्यायेत् ॥ १८ ॥

उत्तिष्ठन्तं गच्छन्तमुपविष्टं शयानं वा स्वेच्छानुसारेण हृदि ध्यायेदित्याह । स्थितमिति ॥ १९ ॥

एवं समग्राङ्गध्यानमुक्त्वा एकैकाङ्गध्यानमाह । तस्मिन्निति । तस्मिन् भगवति लब्धं पदं स्थितिर्येन तत् चित्तं विलक्ष्य विशेषेण लक्ष्यीकृत्य भगवत एकस्मिन् अङ्गे सम्यक् योजयेत् ॥ २० ॥

तदेवाह । सञ्चिन्तयेदिति त्रयोदशभिः । वज्रादिलाञ्छनैराढ्यं युगम् उत्तुङ्गाश्च रक्ताश्च ये विलसन्तो नखास्तेषां चक्रस्य समूहस्य वालज्योत्स्नाभिः नूतनचन्द्रिकाभिः आहतो महतां ध्यातॄणां हृदयान्धकारो येन तत् ॥ २१ ॥

मूर्द्धन्यधिकृतेन मस्तकेन भक्त्या धृतेन मनःशमलशैलेषु मनोगतपापपर्वतेषु निसृष्टं स्वलाञ्छनरूपं वज्रं येन तत् ॥ २२ ॥

नास्ति भवः संसारो ध्यातॄणां यस्मात्तस्य ॥ २३ ॥

भुजयोर्विषये आधि अधिकं शोभमानौ अतसिकाकुसुमस्येवावभासो ययोस्तौ ओजोनिधी अपरिमितबलनिधी विभोः ऊरू तया व्यालम्बि आगुल्फं लम्बमानं यत्पीताम्बरं श्रेष्ठं वासस्तस्मिन् वर्तमानेन काञ्चीकलापेन परिरम्भः संश्लेषो विद्यते यस्य तत् नितम्बबिम्बं च हृदि कुर्यात् ॥ २४ ॥

---

भाषा टीका ।

सुन्दर उनका स्वरूप है सबके नमस्कार के योग्य हैं सदा पन्द्रहवर्ष की अवस्था में रहने वाले हैं भक्तों पर कृपा करने में बडे व्यग्र हैं ॥ १७ ॥

कीर्तन करने के योग्य पवित्र यशवाले हैं पुण्यश्लोक भक्तों के यश बढाने वाले हैं सब अङ्गों से मन न हटै तब तक सब अङ्गों मे देव का ध्यान करै ॥ १८ ॥

भगवान् खडे हों या चलते हों बैठे हों सोते हों ऐसी दर्शनीयचेष्टा वाले भगवान् को अपने हृदय में स्थित जान कर निर्मल मन से ध्यान करै ॥ १९ ॥

इस भगवान्के विग्रह में जब मन ठहरै फिर यदि सबअवयवों में स्थित हो जावे ऐसा जान कर योगी फिर उस मन को भगवान् के एकही अङ्ग में स्थिर करके युक्त करै ॥ २० ॥

फिर श्रीभगवान् के चरण कमल का स्मरण करै वह चरण कैसा है कि वज्र अङ्कुश ध्वजा कमल इनके चिन्हों से युक्त है अति ऊंचे प्रकाश मान लालवर्ण के जो नख तिनका जो मण्डल तिस के तेजसे महत्पुरुषों के हृदय के अन्धकार को नाश करने वाला है ॥ २१ ॥

जिस चरण के प्रक्षालन किये हुये नदियोंमे श्रेष्ठ तीर्थ रूप गंगाजीकेजलके मस्तकमें धारण करने से श्रीशिवजी पवित्र हो गये हैं और ध्यान करने वालों के पापपर्वतों के ऊपर वज्र सरीके छूटने वाले भगवान् के चरणारविन्द को खूब देर तक ध्यान करै ॥२२॥

सम्पूर्ण जगत के विधाता विष्णु भगवान् के जो दोनों जानु तिनको हृदय में धारण करै जिन दोनों जानुओंको सब देवों से वन्दित सब की माता कमललोचना लक्ष्मीजी ने अपने जङ्घों पर रखकर करपल्लवों की कान्ति से अति लालन किये हैं ॥ २३ ॥

गरुड जी के कांधे पर विराजमान अति तेजसी अतसी के पुष्प सरीके शोभायमान जो कौंधनी तिससे वेष्टित भगवान् की कटि को ध्यान करै ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अमुष्य हरेर्नाभिह्रदं ध्यायेत् कथम्भूतम् भुवनानां कोशस्य समूहस्य गुहाधिष्ठानं यदुदरं तत्र स्थितम् । यत्र नाभिह्रदे आत्मयोनेर्ब्रह्मणो धिषणं धिष्ण्यमखिललोकात्मकं पद्मं व्यूढमुत्थितम् तथा हरिन्मणिवृषौ मरकतमणिश्रेष्ठाविव यौ स्तनौ तयोर्द्वयं ध्यायेत् विशदहाराणां मयूखैर्गौरं श्वेतम् ॥ २५ ॥

ऋषभस्य श्रेष्ठस्य महाविभूतेर्महालक्ष्म्या अधिवासं स्थानं वक्षः कण्ठं च मनसि कुर्यात् । कथम्भूतं कण्ठम् कौस्तुभमणेर्यो भूषणार्थं धृतस्तस्याधिकं भूषणमर्थः प्रयोजनं यस्य कौस्तुभमणिमेव स्वयमलं कुर्वन्तमित्यर्थः पुंसां समस्तानां द्रष्टॄणां च मनोनयनानां निर्वृतिमादधानमित्युभयोर्विशेषणम् ॥ २६ ॥

निर्णिक्तान्युज्ज्वलीकृतानि बाहुवलयान्यङ्गदानि येषु अधिश्रिता लोकपाला येषु दशशतारं चक्रम् न सह्यं तेजो यस्य करसरोरुहे राजहंसमिव ॥ २७ ॥

अरातयो ये भटा योद्धारस्तेषां शोणितमेव कर्दमस्तेन दिग्धां लिप्ताम् अस्य कण्ठे मालां मालां च स्मरेत् मधुव्रतानां वरूथस्य

कौमोदकीं भगवतो दयितां स्मरेत दिग्धामरातिभटशोणितकर्दमेन ।
मालां मधुव्रतवरूथगिरोपघुष्टां चैत्यस्य तत्त्वममलं मणिमस्य कण्ठे ॥ २८ ॥
भृत्यानुकम्पितधियेह गृहीतमूर्तेः सञ्चिन्तयेद्भगवतो वदनारविन्दम् ।
यद्विस्फुरन्मकरकुण्डलवल्गितेन विद्योतितामलकपोलमुदारनासम् ॥ २९ ॥
यच्छ्रीनिकेतमलिभिः परिसेव्यमानं भूत्या स्वया कुटिलकुन्तलवृन्दजुष्टम् ।
मीनद्वयाश्रयमधिक्षिपदब्जनेत्रं ध्यायेन्मनोमयमतन्द्रित उल्लसद्भ्रु ॥ ३० ॥
तस्यावलोकमधिकं कृपयाऽतिघोरतापत्रयोपशमनाय निसृष्टमक्ष्णोः ।
स्निग्धस्मितानुगुणितं विपुलप्रसादं ध्यायेच्चिरं विपुलभावनया गुहायाम् ॥ ३१ ॥
हासं हरेरवनताखिललोकतीव्रशोकाश्रुसागरविशोषणमत्युदारम् ।
सम्मोहनाय रचितं निजमाययाऽस्य भ्रूमण्डलं मुनिकृते * मकरध्वजस्य ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

गिरा उपघुष्टां नादितां चैत्यस्य जीवस्य तत्त्वम् । तदुक्तं वैष्णवे ।

आत्मानमस्य जगतो निर्लेपमगुणामलम् ।
बिभर्ति कौस्तुभमणिं स्वरूपं भगवान् हरिः इति ॥ २८ ॥

भृत्येष्वनुकम्पिता कृतानुकम्पा या धीस्तया गृहीता मूर्तिर्येन तस्य विस्फुरती ये मकरकुण्डले तयोर्वल्गितेन प्रचलनेन विद्योतितावमलौ कपोलौ यस्मिंस्तत् । उदारा उन्नता नासा यस्मिंस्तत् ॥ २९ ॥

यच्च स्वया भूत्या शोभयालिभिः परिसेव्यमानं मीनद्वयाश्रयं च श्रीनिकेतनं पद्ममधिक्षिपद्वर्तते तद्ध्यायेत् तत्र कुन्तलैरलीनामधिक्षेपः नेत्रद्वयेन मीनद्वयस्येति द्रष्टव्यम् । अब्जे इव नेत्रे यस्मिन्नित्युपमानान्तरम् उल्लसन्त्यौ भ्रुवौ यस्मिन् मनोमयं मनस्याविर्भवत् ॥ ३० ॥

कृपयाधिकमत्यर्थमक्षिभ्यां निसृष्टं प्रयुक्तं स्निग्धस्मितेनानुगुणितं संयुक्तम् । विपुलः प्रसादो यस्मिन् गुहायां हृदि ॥ ३१ ॥

अवनता येऽखिललोकास्तेषां तीव्रशोकेन यान्यश्रूणि तेषां सागरं विशोषयतीति तथा तं हरेर्हासमत्युदारं भ्रूमण्डलं च ध्यायेत् कथम्भूतं निजमायया मकरध्वजस्यापि सम्मोहनाय रचितम् । मुनिकृते मुनीनामुपकाराय मुनीनां सम्मोहने प्रवृत्तं काममेव सम्मोहयितुमित्यर्थः ॥ ३२ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

मयूखै रश्मिभिः श्यामस्यापि श्वेतत्वं चाकचिक्येनाभिरूप्यात् ॥ २५ ॥

स्थानमिति । तस्या अपि परमलोभविषयत्वं दर्शितम् । कौस्तुभवमणिमेव स्वयमलं कुर्वन्तमित्यनेन भूषणभूषणाङ्गमिति न्यायो दर्शितः न च तर्हि तदाद्याभरणानां वैयर्थ्यमिति शङ्क्यम् अङ्गैरेवाभरणपटली भूषिता दोग्धि भूषामिति पश्चात्तेषामलङ्कारत्वापत्तेः ॥ २६ ॥

यद्यपि बाहुवलयानां नित्योज्ज्वलत्वमेव तथापि अत्यन्ततिरस्कृतवाच्यध्वनिना शौटीर्यमात्रं तात्पर्यं परिवर्तनस्य च सुष्ठु स्थापनादिकमेव प्रयोजनमिति गम्यम् राजहंसमिवेत्युपमितिसमासः ॥ २७ ॥

एवं शोणितकर्दमेन दिग्धामित्यत्रापि भक्तरक्षाव्यग्रतायामेव तात्पर्यम् । अत्यन्ततिरस्कृतवाच्यध्वनित्वात् जीवस्य तत्त्वं मूलस्वरूपं परमात्मानं "तत्त्वं वाद्यप्रभेदे स्यात्स्वरूपे परमात्मनि" इति विश्वः तथैवाग्रे वैष्णववाक्यं मानम् अगुणत्वाद्गुणातीतत्वादमलम् अगुणात्मकमिति क्वचित्पाठः एवं तद्भूषणानामपि परब्रह्मत्वे तदाश्रयस्य कैमुत्यमानीतम् ॥ २८ ॥

गृहीता अप्रपञ्चात्प्रपञ्चे आनीता ॥ २९ ॥

यच्च वदनारविन्दं तत्र अलिमीनद्वयमध्ये एकोपमा नेत्रयोः मीनद्वयस्य द्वितीयोपमा अब्जयोरित्युपमानान्तरमित्युक्तम् ॥ ३० ॥

स्निग्धस्मितेन । स्नेहातिशयाभिव्यञ्जकस्मितेन अत एव विपुल इत्यादि ॥ ३१ ॥

निजमायया स्वेच्छया "आत्ममाया तदिच्छा स्याद्गुणमाया जडात्मिका" इति महासंहितोक्तेः मुनिकृते किंरचितमिति काकोरप्रेक्षा व्यङ्ग्या तस्य परमसुन्दरत्वेन नित्यसिद्धत्वात् मुनिशब्दस्य तदुपकारे लक्षणा तस्याश्च कामोपद्रवान्मुनित्वरक्षणमेव प्रयोजनमित्यत एव मुनीनां सम्मोहने इत्याद्यार्थिकोऽर्थः ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नाभिह्रदमिति । अमुष्य भगवतः नाभिह्रदं ध्यायेत्कथम्भूतम्भुवनानां कोशस्य गृहमधिष्ठानं यदुदरे तत्र स्थिरं यत्र नाभिह्रदे आत्मयोनेर्ब्रह्मणः धिषणां धिष्ण्यमधिष्ठानमखिललोकात्मकं पद्मं व्यूढमुत्थितं तथा हरिन्मणिवृषौ मरकतमणिश्रेष्ठाविव

* मनुस्तुरे इति श्रीविजयध्वजतीर्थं पाठः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यौ स्तनौ तयोर्द्वयं विशदहारस्य मयूखैः गौरं श्वेतं ध्यायेत् वक्षोविशेषणं वा ॥ २५ ॥

वक्ष इति। महाविभूतेर्महालक्ष्म्या अधिवासं स्थानं पुंसां ध्यातॄणां मनोनयनयोर्निर्वृतिमानन्दमादधानमृषभस्य श्रेष्ठस्य भगवतः वक्षः ध्यायेत्तथाखिलैर्लोकैर्ब्रह्मादिभिर्नमस्कृतस्य संवितस्य भगवतः कण्ठं च मनसि कुर्याद्ध्यायेत् कथम्भूतं कौस्तुभमणियौं भूषणार्थं कृतस्तस्याधिकं भूषणमर्थः प्रयोजनं यस्य तं कौस्तुभमणिमेव स्वयमलङ्कुर्वन्तमित्यर्थः ॥ २६ ॥

बाहूनिति । मन्दरगिरेः परिवर्तनेन परिभ्रमणेन निर्णिक्तान्युज्ज्वलीकृतानि बाहुवलयान्यङ्गदानि येषु अधिश्रिता लोकपालाः येषु तान् बाहून् सञ्चिन्तयेत्तथा दशशतारं सहस्रारं न सह्यं तेजो यस्य तच्चक्रं तस्य भगवतः करसरोरुहस्य राजहंसमिव स्थितं शङ्खं च सञ्चिन्तयेत् ॥ २७ ॥

कौमोदकीमिति । तथा भगवतो दयितां प्रियामरातयः शत्रवो ये योद्धारस्तेषां शोणितमेव कर्दमस्तेन दिग्धां लिप्तां कौमोदकीं गदां स्मरेत तथास्य भगवतः कण्ठे मालां मणिं च स्मरेत कथम्भूतां मालां मधुव्रतानां भृङ्गाणां वरूथस्य सङ्घस्य गिरा उपघुष्टां नादितां मणिं कथम्भूतममलं चैत्यस्य जीवस्य तत्त्वं स्वरूपं जीवस्वरूपाधिष्ठातृदेवतारूपमित्यर्थः तदुक्तं वैष्णवे पुराणे

आत्मानमस्य जगतो निर्लेपमगुणामलम् ।
बिभर्ति कौस्तुभमणिं स्वरूपं भगवान् हरिः इति ॥ २८ ॥

भृत्येति। भृत्येष्वनुकम्पिता कृतानुकम्पा या धीस्तया गृहीता मूर्तिर्येन तस्य भृत्यानुग्रहाय स्वेच्छोपात्ततनोरित्यर्थः भगवतः यद्वदनारविन्दं सञ्चिन्तयेत् कथम्भूतं विस्फुरन्ती ये मकरकुण्डले तयोर्वल्गितेन प्रचलितेन विद्योतितावमलौ कपोलौ यस्मिन्नुदारा उन्नता नासा यस्मिंस्तत् ॥ २९ ॥

यच्च स्वया विभूत्या शोभयालिभिः परिसेव्यमाणं मीनद्वयाश्रयञ्च श्रीनिकेतं पद्ममधिक्षिपदतिवर्तयत्तद्ध्यायेत् तत्र कुन्तलैरलीनामधिक्षेपः नेत्रद्वयेन मीनद्वयस्येति द्रष्टव्यं अब्जे इव नेत्रे इत्युपमानान्तरम् उल्लसन्त्यौ भ्रुवौ यस्मिन्मनोमयं योगपरिशुद्धमनोग्राह्यं वदनारविन्दमतन्द्रितोऽवहितमनाः ध्यायेत् ॥ ३० ॥

तस्येति । तस्य भगवतः अवलोकनं हृदि विततभावनया चिरं ध्यायेत् पाकं पचतीतिवद्भावनया ध्यायेदिति निर्देशः भावनां कुर्यादित्यर्थः कथम्भूतमवलोकमधिकमत्यर्थं कृपया अस्योरत्विष्यामतिदुःसहाध्यात्मिकादितापत्रयोपशान्तये निसृष्टं प्रयुक्तं स्निग्धेन स्मितेनानुगुणितं संपृक्तं विपुलः प्रसादो भक्तेष्वनुकम्पारूपो यस्मिंस्तमित्यर्थः ॥ ३१ ॥

हासमिति । अवनता ये अखिललोकास्तेषां तीव्रशोकेन यान्यश्रूणि तेषां सागरं विशोषयतीति तथा हरेर्हासं ध्यायेत् अस्यात्युदारं भ्रूमण्डलं ध्यायेत्कथम्भूतं मुनिकृते मुनिसम्मोहनाय प्रवृत्तस्य मकरध्वजस्य कामस्य सम्मोहनाय निजमायया आत्मीयसङ्कल्पेन रचितं परिगृहीतम् ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हरेर्नाभिह्रदं ध्यायेदित्यन्वयः । निम्नत्वद्योतनाय लोकपद्मजन्महेतुत्वाद्ध्रदमिति चतुर्दशभुवनानां कोशो गृहं भुवनकोशो ब्रह्माण्डं तत् गूहयति ग्रसतीति भुवनकोशगूहं तदुदरं जठरं तत्र स्थितं यद्वा । भुवनकोशनिगरणगुहास्थानीयोदरे तिष्ठतीति यद्वा भुवनकोशगुहोदरब्रह्माण्डगर्भोदके रत्वा स्थितं यत्र यस्मिन्नाभिह्रदे आत्मयोनेश्चतुर्मुखस्य धिषणं धिष्ण्यं चाखिललोकात्मकं च पद्ममात्मयोनिधिषणाखिललोकपद्मं व्यूढमुत्पन्नमित्यर्थः। हरिन्मणिमुषः हरिन्मणिरिन्द्रनीलरत्नं तस्य प्रभां मुष्णतोऽमुष्य हरेस्तनयोर्द्वयं ध्यायेत् । विततस्य विस्तृतस्य हारस्य मयूखेन गौरमतिधवलम् ॥ २५ ॥

स्मर्तॄणां पुंसां मनोनयनानां निर्वृतिमानन्दमादधानमुत्पादयन्तं महाविभूतेर्लक्ष्म्या अधिवासस्थानमृषभस्य हरेर्वक्षो मनसि कुर्यादित्यन्वयः । कौस्तुभमणेरधिकं भूषणमेवार्थः प्रयोजनं यस्य तथा तं कण्ठं च मनसि कुर्यात् । अखिललोकनमस्कृतत्वादस्य भत्वं युक्तम् ॥ २६ ॥

हरेर्बाहूंश्च दशशतारं च शङ्खं च सञ्चिन्तयेदित्यन्वयः । मन्दरगिरेः परिवर्तनेन परिभ्रमणेन निर्णिक्ताः शोभिताः बाहुवलया अङ्गदादयो येषां ते तथा तान् अधिश्रिता लोकपाला इन्द्रादयो येषु ते तथा तान् दशशतं सहस्रमराणि दलानि यस्य तत्तथोक्तं शत्रूणामसह्यं सोढुमशक्यं तेजो वीर्यं यस्य तत्तथोक्तं तस्य हरेः करा एव सरोरुहाणि पद्मानि तेषु राजहंसमिव वर्तमानम् ॥ २७ ॥

भगवतो दयितां कौमोदकीं गदां हरेः कण्ठे मालाममलं मणिं च स्मरेतेत्यन्वयः । कथम्भूतां गदामरातयो दैत्या एव भटास्तेषां शोणितं रुधिरमेव कर्दमस्तेन दिग्धां रूषिताम् अरातीनां भटानां च इत्यभिधानात् । कथम्भूतां मालां मधुव्रतानां नित्यसुखानां भृङ्गाकारमितानां भक्तानां वरूथाः समूहास्तेषां स्तुतिलक्षणया गिरोपघुष्टां शब्दायमानां कथम्भूतं मणिं चैत्यस्य चित्ताभिमानिनश्चतुर्मुखस्य तत्त्वं (१) स्वरूपम् ।

ब्रह्मा चित्ताभिमानेन चैत्यस्तन्नियमाद्धरिः ।
स च ब्रह्मा हरेः कण्ठे कौस्तुभत्वेन भासत ॥

इति वचनात् ॥ २८ ॥

भगवतो वदनारविन्दं सञ्चिन्तयेदित्यन्वयः । किम्विशिष्टस्य इह जगति सत्सु भृत्येषु अनुकम्पितया द्रवीभूतचित्ततया गृहीता मूर्तिराकारविशेषो येन स तथा तस्य वदनारविन्दस्य चिन्तनीयत्वे गुणानाह । यदिति । यद्वदनारविन्दं विस्फुरती किञ्चित्सञ्चलती मकरकुण्डले विस्फुरन्मकरकुण्डले तयोर्वल्गितेन नृत्तेन विद्योतितावमलौ च कपोलौ यस्मिंस्तत्तथा उदारो निर्दुष्टो हासो यस्मिंस्तत्तथा ॥ २९ ॥

यच्च श्रीनिकेतनं परममङ्गलायतनं यच्च सौरभ्यलोलैरलिभिः परितः सेव्यमानं यस्य स्वया स्वरूपभूतया भूत्या श्रिया सेवितं (२)"साक्षाच्छ्रीस्तु हरे रूपमिन्दिरा तु तदाश्रयात्„इति वचनात् पत्नीभूतायाः श्रीत्वं भगवदाश्रयादित्यतः स्वयेत्युक्तं यच्च कुटिला

(१) अभिमन्यमानमिति यावत् । अभिमान्यभिमन्यमानयोरभेदो महतश्चतुर्मुखादौ प्रसिद्धः ।

(२) मुख्यया वृत्त्येत्यर्थः ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वक्राः कुन्तला ललाटरङ्गे नृत्यन्तः केशविशेषास्तेषां वृन्देन समूहेन जुष्टं सम्वृतं किञ्चाब्जनेत्रं पद्मदलसदृशनेत्रं ध्यायेदित्यन्वयः । कीदृशं मीनद्वयस्यायामत्वपृथुमध्यत्वतनूभयभागत्वश्वेतत्वादिलक्षणां श्रियं कान्तिविशेषमधिक्षिपत् धिक्कुर्वत् किञ्च मनोमयं ध्यातृसङ्कल्पनात्मकम् उल्लसन्ती भ्रूर्यस्य तत्तथोक्तम् । अतन्द्रितो निरालस्य इत्यनेन ध्यानस्य निरन्तरं कर्तव्यत्वं सूचयति ॥ ३० ॥

हृदयगुहायां निहितस्य हरेरवलोकं विततभावनया पूर्णभक्त्या चिरं ध्यायेदित्यन्वयः । कटाक्षनिरीक्षणं विशिनष्टि । अधिकमिति । अधिकं कृपयानन्यसाध्यकार्यसाधनपटीयस्या करुणयातिघोरस्य तापत्रयस्याध्यात्मिकादिलक्षणस्योपशमनाय विनाशाय नितरां सृष्टं निर्मितं किञ्चित् स्निग्धेन स्मितेनानुगुणितं सान्द्रीकृतं विपुलः पुष्कलः प्रसादः प्रसन्नता यस्य स तथा तम् ॥ ३१ ॥

हरेर्हासं मन्दस्मितं ध्यायेदित्यन्वयः कीदृशमवनतस्याखिलस्य लोकस्य यस्तीव्रोऽत्युल्वणः शोकस्तापत्रयोद्भूतस्तन्निमित्तान्यश्रूणि यानि तेषां सागरः समुद्रस्तं विशेषेण शोषयतीत्यवनताखिललोकतीव्रशोकाश्रुसागरविशोषणस्तम् अत्युदारमनुग्रहाभिप्रायं किञ्च हे मनुसुते ! निजमायया स्वेच्छया मकरध्वजस्य कामस्य सम्मोहनाय रचितम् अस्य हरेर्भ्रूमण्डलं चिन्तयेदित्यन्वयः ॥ ३२ ॥

स्निग्धं स्नेहातिशयाभिव्यञ्जकं यत् स्मितं तेनानुनिरन्तरं गुणितं पुनः पुनः स्फीतीकृतम् । अत एव यत एव वा विपुलः प्रसादो यस्य यत्र वा तथाभूतम् । गुहायां परमरहस्यगृहरूपे चित्ते ॥ ३१ ॥

तीव्रशोकाश्रुसागरविशेषणत्वेन हासस्य परमानन्दाश्रुसागरवर्द्धनत्वं ध्वन्यते । तेन चन्द्रत्वेऽप्यपूर्वत्वं प्रसिद्धचन्द्रे क्षारक्षीरोदधिवर्द्धनत्वाविशेषात् । कमङ्गलं वर्णयति । सम्मोहनायेति । एषा चोत्प्रेक्षा ज्ञेया । काका हिंसा व्यज्यते ॥३२॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

गुहा प्रवेशस्थानं स्तनयोर्द्वयं तदुपलक्षितवक्षोऽधः ॥ २५ ॥

अधिवासमिति । तस्या अपि परमलोभनीयत्वं दर्शितम् ॥२६॥

मन्दरगिरेरिति । सौटीर्य्यमात्रे तात्पर्य्यम् नतु निर्योजने निर्णिक्तत्वस्य नित्यसिद्धत्वात् । तस्मादत्यन्ततिरस्कृतवाच्य एवायं ध्वनिरुत्प्रेक्षया गम्यते । परिवर्त्तनं चात्र सुष्टु स्थापनार्थम ज्ञेयम् ॥ २७ ॥

दिग्धामिति पूर्ववत् लिप्तत्वस्यैव पौनःपुन्यात् जीवस्य तत्त्वं महासमष्टिरूपस्य तस्याविर्भावास्पदं महापुरुषस्यैवाविर्भावविशेष इत्यर्थः । अमलं गुणातीतम् । तदुक्तम् वैष्णवे ।

आत्मानमस्य जगतो निर्लेपमगुणात्मकम् ।
बिभर्त्ति कौस्तुभमणि स्वरूपं भगवान् हरिः इति ।

एवं तस्य भूषणानामपि परब्रह्मत्वे तदाश्रयस्य तस्य कैमुत्यमानीतम् ॥ २८ ॥

भृत्याः स्वस्वाभीष्टमूर्त्तेर्भावुकाः तेषु अनुकम्पायुक्ता या श्रीस्तया इह जगति गृहीता आकृष्टा वैकुण्ठादानीता मूर्त्तयो येन तस्य ॥ २९ ॥

यत्खलु श्रीनिकेतं सर्वोत्कृष्टाब्जान्तरमाधिक्षिपद्वर्त्तते । तदब्जाकारं नेत्रं ध्यायेत् । यद्वा अब्जेत्यब्जं सुपां सुलुगित्यादिना छान्दसः सुलुक् । तस्य विशेषणं श्रीनिकेतमिति मीनद्वयं चात्र भ्रूद्वयेनाधिक्षिप्तं ज्ञेयम् येन मुखेनाब्जमधिक्षिप्तम् । अत्र नेत्रस्याब्जत्वे शोभाविशेषापोपादनं व्याख्यायते । मनोमयं श्रीभगवदन्तर्नानाकृपाविलाससूचकं श्रीभक्तान्तर्नानाभक्तिविलासाविष्टं वा ॥ ३० ॥

———

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

ततो नाभीह्रदं ध्यायेदित्याह । नाभीह्रदमिति । शयान एव भगवान् ध्येय इति वक्ष्यते तादृशे एव रूपे भगवतो नाभिकमलात् ब्रह्मोत्पद्यत इति ह्रदत्वेनातिगम्भीरत्वं सर्वजीवाधारत्वं च तस्मिन्नेव ध्याते भौतिको जीवभावो गच्छतीति । भुवनात्मको यः कमलकोशस्तस्य गुहा गुप्तस्थानं तादृशं भगवदुदरम् उदरे हि जगत्तिष्ठति कोशाश्रितश्च न जलादिभिरुपहन्यते तथा भगवदुदरे स्थिताः प्राणिनः न सङ्घातैरुपहन्यन्ते एतावता तुन्दिलो भगवानिति ज्ञापितं तादृशस्यैवोदरमध्ये नाभिर्भवति नाभेर्माहात्म्यमाह । यत्रेति । आत्मयोनेर्ब्रह्मणः तस्य या धिषणा बुद्धिः आध्यात्मिकं रूपं तदेव अखिललोकात्मकं पद्मं नाभौ ब्रह्मा बुद्धिः पद्मं चेत्याधिदैविकादयः त्रयोऽपि नाभौ निरूपिताः भगवतः स्तनयोर्द्वयं च ध्यायेत् हरिद्वर्णमणिवृषौ यौ स्तनौ हरिन्मणिः कामपूरकः चिन्तामणिस्तत्र श्रेष्ठो भगवद्धर्मलक्षणः स उभयविधोऽपि द्वयत्वेनोक्तस्तस्य व्यूढता भगवद्वयवेष्वः स्वतन्त्रतया प्रकाशमानत्वं विशदो यो हारो मुक्तानां विशदानां निर्मलानां वा यो हारस्तस्य मयूखैर्गौरं भगवद्धर्माः शुक्रादिभिः परिषेव्यमाणाः सर्वेषां रागहेतवो भवन्ति विशदत्वं नानायोगचर्याद्यभावः अलौकिककरणाभावो वा ॥ २५ ॥

वक्षो भावयेदित्याह । वक्षोऽधिवासमिति । ऋषभस्य वक्षः महाविभूतेः स्थानं निवासं पुंसां मनोनयनयोर्निर्वृतिमादधानं वक्षो हि स्वरूपतः कार्यतश्च सर्वोत्तमं तत्र स्वरूपमृषभस्य श्रेष्ठस्येति श्रेष्ठता हि हृदयधर्माद्भवति यादृशमन्तर्हृदयं तादृशमेव गोलकं भवति भगवतस्त्वानन्दमयस्य नैवम्विधोऽपि भेदो विद्यते अतो यावन्तो भगवद्गुणाः पुरुषोत्तमत्वज्ञापकाः ते सर्वे वक्षसीति ऋषभसम्बन्धेनैव स्वरूपमाहात्म्यमुक्तं कार्यतो माहात्म्यं द्विविधम् ऐहिकं स्त्रीधनाद्यात्मकं पारलौकिकं परमानन्दहेतुत्वं तत् क्रमादाह विभूतेर्लक्ष्म्याः सर्वैहिकपुरुषार्थरूपायाः निवासं स्थानमिति आनन्दोऽपि बाह्याभ्यन्तरभेदेन द्विविधस्तदुभयमाह । मनसो नयनयोश्च निर्वृतिमासमन्तादधानमिति कामादिकृतदोषवशात्तथा त्वं वारयति पुंसामिति बहुवचनं काकतालीयव्युदासाय सर्वेषामेव पुंसां कण्ठं च ध्यायेदित्याह । कण्ठमिति । कण्ठो हि द्विविधः बाह्यः आभरणाधारभूतः आन्तरः सर्ववेदोद्गमहेतुः जगद्गुरुः आभरणानि चातिप्रियाणि कण्ठे धार्यन्ते भगवतस्तु मुक्तभक्तापेक्षया नान्यः प्रिय इति तेषां तत्त्वरूपस्य कौस्तुभमणेः अधिकभूषणमर्थो यस्य मणिना हि कण्ठो न भूष्यते किन्तु कण्ठेन मणिः सुवर्णादिकं तस्यापि भूषणं

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

भवति तद्व्यावृत्त्यर्थमधिकभूषणमित्युक्तं चकारात् स्कन्धद्वयमपि अखिललोकनमस्कृतस्येति वेदोद्गमहेतुः अखिलगुरुर्भगवान्निरूपितः ॥ २६ ॥

बाहूंश्च ध्यायेत् चकारात् बाहुस्थिता देवाः बाहवो हि अमृतमथने व्यापृताः देवेभ्योऽमृतं पायितवन्तः तथा वलयास्तत्र वेष्टनरूपाः पुरुषार्थाः मन्दरगिरेः परिवर्तनेन परितो भ्रामणेन निर्णीकानि अन्योऽन्यं मिलितानि घर्षणेनोज्ज्वलीकृतानि वा बाहुवलयानि येषामधिकृता लोकपालाश्च येषु तेषु हस्तेषु च चक्राद्यायुधानि ध्येयानि तत्र प्रथमं सुदर्शनं ध्येयमित्याह। सञ्चितयेदिति। दशशतारं चक्रं दशशतान्यारा यस्य कालचक्रं निर्दिष्टं शतमित्यपरिमितनाम दश प्राणा भवन्ति प्रत्येकं दशानां शतान्याराः कालावयवा भवन्ति तेन सर्वप्राणाहारिकालात्मकं सुदर्शनं चक्रं प्रतीकाराभावायाह। असह्यतेज इति। तस्य तेजः षडूर्मयः कालगुणांश्च सोढ्वा प्रतीकारः कर्तव्यः तदेव त्वसह्यं शङ्खं च ध्यायेत् चकारात्सर्ववेदांश्च तद्गतान् तस्य भगवतः करसरोरुहे करकमले राजहंसरूपं भगवतः ओष्ठकान्त्या आद्यन्तयोरारक्तिमासगब्दश्चेति लोहितास्यचरणः कूजन् हंसः कमलमध्यस्थो निरूपितः स हि क्षीरनीरविवेककर्त्ता भगवत्प्रीतिबोधकश्च ॥ २७ ॥

कौमोदकीमपि स्मरेत सा ह्यासन्यरूपेति भगवतः प्रिया अपहतपाप्मत्वात् च सर्वदैत्यहननहेतुरुक्तः तदाह। दिग्धां व्याप्तां अरातीनां शत्रूणां ये भटास्तेषां शोणितकर्दमेन यथा निष्पापः पुरुषो महान् भगवत्प्रियः एवं दैत्यहन्तापि भगवत्प्रियो भवति मालामपि ध्यायेत् मधुव्रतसमूहगिरा उपघुष्टां मधुव्रताः मनोहरनियमयुक्ताः मध्वेव व्रतं यस्येति वेदा अपि भगवत्प्रतिपादनमेव कुर्वन्तीति तेषां समूहः स एव वेदः तेषां गीर्धर्मज्ञानरूपा तया उपघुष्टा भगवत्कीर्तिर्भवति यद्धर्मादिभिर्न भवंति तत्कीर्त्या भवतीति मालायाः कण्ठ एव स्थानमिति। पूर्वोक्त एव कण्ठः कौस्तुभभूषणत्वेनोक्तः पुनः स्मार्यते चैत्यस्य चित्ताधिष्ठातुर्जीवस्य तत्त्वं यत्सङ्घाते अप्रविष्टं निजं रूपं स एव कौस्तुभमणिः तदस्य भगवतः कण्ठे मालां मणिं च कण्ठे ध्यायेदिति सम्बन्धः भक्तैः सह भगवत्कीर्त्तिर्ध्येयेति यावत् ॥२८॥

अतः परं वदनारविन्दं ध्यायेदित्याह। भृत्येति। तदेव वदनारविन्दं ध्येयं यत्सर्वजनीनं तदैव च सर्वजनीनं भवति यदि भूमाववतरति अवतारश्च तदैव भवेत् यदि भृत्यानां दुःखं भवति तदाह। भृत्यानामनुकम्पितधिया गृहीता मूर्तिर्येन अवतीर्णस्यान्यथा शङ्काव्युदासायाह। भगवत इति। दृष्टिमात्रेणैव तापापनोदादरविन्दत्वं तन्मुखारविन्दमनुवर्णयति सार्द्धेन। यद्विस्फुरदिति। यन्मुखारविन्दं विशेषेण स्फुरती मकराकृते कुण्डले ताभ्यां मण्डितेन गण्डयुगलेन वलितेनेति पाठे मकरकुण्डलयोर्यद्वलितं चालनेनोत्पन्नं तेजः तेन विद्योतिते अमलकपोले यत्र। उदारा नासा यत्र ॥ २९ ॥

यत्पुनर्मुखारविन्दमलिभिः परिषेव्यमाणं स्वयैव भूत्य असाधारणकान्त्या च परिषेव्यमाणं कुटिलानां कुन्तलानां वृन्दैर्जुष्टं मीनद्वयस्य श्रियमधिक्षिपत् दूरीकुर्वत् अब्जसदृशं नेत्रद्वयं यत्र मनोमयं सर्वेषामेव मनांसि तत्र निरन्तरं वर्त्तन्त इति मनःप्रचुरम् अतन्द्रितं सावधानतया उल्लसन्त्यौ भ्रुवौ यत्र एवं नव विशेषणानि मुखे निरूपितानि नवरसजननाय सर्वेषां च वशीकरणाय नवविधा भक्तिश्च निरूप्यते मुखं ह्यानन्दरूपस्य भगवतो भक्तिरसात्मकं फलं भवति विषयश्चरणौ आश्रयो जीवः नव रसा अपि मुखे अभिव्यक्ताः कपोलौ च भक्तिरसानुभवे भक्तानां समाजस्थानमेव भवति तत्र क्रियापरा ज्ञानपराश्च भक्ता उल्लसन्ती साङ्ख्ययोगौ मकरकुण्डले शाब्दं प्रमाणं श्रोत्रम् अनुभवरूपं चक्षुः शाब्दे प्रमाणे साङ्ख्ययोगयोः योऽयमनुभावः तद्वलितं कीर्त्तनं कीर्त्तनस्य सर्वपुरुषार्थदातृत्वादुदारत्वं मुखे हि नासिकैव प्रधानं जगति सौन्दर्यदानात् भगवन्नासिकाया उदारत्वं भगवति स्थित्यैव सर्वेषां पुरुषार्थसिद्धिः स्थितिप्रतिपादिकाया नासिकाया उदारत्वं श्रीनिकेतमिति लक्ष्म्याः स्थितिः स्मृतिरूपा भक्तौ श्रीः स्मृतिरेव अलीनां परितः सेवनं प्रकारान्तरेण भक्तानां पादसेवनं स्वया भूत्या सेवनं चार्चनं स्पष्टमेव कुटिलानि वक्राणि कुन्तलानि वन्दनात्मकानि भवन्ति वन्दने हि पुरुषः कुटिलाकृतिर्भवति अन्यथा भगभनि कुटिलानां स्थितिर्न स्यात् कुं पृथिवीं तरन्तीति यथा जले तरन्तः याहग्रूपा भवन्ति तथैव पृथिव्यां नमन्तः वृन्दं शतादिसङ्ख्यावृत्तिः तेनापि जुष्टमिति रसनमनं प्रतिपादितं दास्यं प्रत्यचं परोक्षमन्तर्बहिश्च अन्तर्मलदूरीकरणरूपं बहिः सौन्दर्य्यरूपं च मीना जलस्थमलनाशकाः तच्च मलं बाह्याभ्यन्तरभेदेन भवतीति मीनद्वयं शोधकद्वयं पापाविद्यानाशकरूपं दास्यं तु भयसामर्थ्यमपि क्षिपद्भवति आकृतौ वर्णना तु स्पष्टैव रसार्थं परिभ्रामणो तथैव प्रतीतिः बहिः शोभार्थमब्जमित्याह। नेत्रद्वयं सर्वानुभवहेतुः तथैव दास्यमिति मध्ये पुनर्ध्यानकथनं सप्तानां स्वाधीनानां भिन्नतया ज्ञापनार्थं मनोमयं सख्यं नहीश्वरेण वस्तुतः सख्यं भवति भ्रुवोरुल्लासः आत्मसमर्पणम् भवति फलमुखं चैत्तल्लक्षणं "तद्भ्रूविजृम्भः परमेष्ठिधिष्ण्यम्" इति आत्मस्थाने ब्रह्मा निवेशित इति "ये यथा मां प्रपद्यन्त" इति वाक्यात् आत्मसमर्पणमुक्तं तत्फलनिरूपणेन ॥ ३० ॥

एवं नवविधभक्त्यनन्तरं भगवतो ज्ञानशक्तिं मायाशक्तिं च निरूपयति द्वयेन। तस्येति। भगवतोऽवलोकमाधिकं ध्यायेत् तस्यानिष्टनिवारकत्वमिष्टसाधनत्वं च निरूपयति अक्ष्णोरवलोकनं लौकिकालौकिकामृतरूपम् आध्यात्मिकादित्रिविधमपि तापमुभयविधं नाशयति यतः कृपया तापत्रयोपशमनाय निसृष्टं कृपाहेतुर्भक्तिरुक्ता फलार्थमाह। स्निग्धं यत् स्मितं भक्त्यर्थं यो मोहः तेन अनुगुणितं ज्ञानशक्तिर्भक्तिसहिता न भक्त्यर्थाध्यासेन विरुध्यते विपुलप्रसादः स्वतन्त्रभक्तिपर्यन्तः तावज्ज्ञानं सिध्यति तद्बहुजन्मनि भवतीति तस्य स्वरूपं ज्ञातुं ध्यायेचिरमित्युक्तं वितता भावना तदुपयोगिसर्वपदार्थानां विचारार्थं गुहायामित्यन्येषां विचाराभावाय ॥ ३१ ॥

ज्ञानेऽपि जाते तदुत्तरा भक्तिश्चेन्न भवेत्तदा फलं न भवेदिति सर्वथा मोहाभावे भक्तिर्न भवेदिति हासं ध्येयत्वेनाह। हासमिति। भगवतो हासं ध्यायेत् अतिक्लिष्टानां क्लेशाभावहेतुत्वात् हरेरित्युक्तं तदाह। अवनता ये अखिला लोकाः तेषां तीव्रो यः शोको भगवद्विरहजनितः सर्वभक्तप्रत्ययसाक्षी तज्जनिताश्रूणां सागरस्य शोषणं येन मायामोहेनैव एवं भवति अन्यथा निरन्तरमनिर्वृत्त एव तिष्ठेत् न च परमपुरुषार्थ-

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

हानिरित्याह । अत्युदारमिति । विरहानवृत्तिः शीघ्रं परमपुरुषार्थदायिनी तथापि प्रतीत्या दुःखात्मिका भवतीति तां निराकृत्य स्वयमेव तं पुरुषार्थमधिकारमपि सम्पाद्य प्रयच्छतीत्युदारो हासः ननु दीनेषु भक्तेषु कथं हास उत्पन्न इत्याह । सम्मोहनायेति । मकरध्वजस्य सम्मोहनाय मुनयो हि भगवन्तं ध्यायन्ति तत्र भगवदैश्वर्यं दृष्ट्वा मुनीनां स्पृहा भवत्विति पूर्वं तैर्निर्जितः कामः बाधकत्वेन भगवत्सान्निध्ये उपतिष्ठति तदा स चेन्न मुग्धो भवेत् मुनीनां सर्वमेव कार्यं नश्येदिति कन्दर्पसम्मोहनाय हासोत्पत्तिः सोऽपि भगवन्मुखसौन्दर्यं दृष्ट्वा विस्मितः मुनीनां मोहं न सम्पादयति । निजमाययेति । आधिदैविकमपि कामं मोहयितुं हासस्य बलं निरूपितमस्य भ्रूमण्डलमपि ध्यायेत् तस्यापि हासवत् कार्यसाधकत्वं मृत्युरूपत्वात् परं नाशकत्वं दुष्टविषयकमेव मोहे जीवानां स्वत एव दुःखाभावः भ्रूमण्डलध्याने तु भगवत्कर्तृक इति द्वयं निरूपितं मकरो हि क्रूरात्मा ततस्तस्य क्रौर्यं निरूपितं मण्डलं मण्डलीकृतकार्मुकत्वाय ॥ ३२ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

गर्भोदशायिनो नाभीहृदं ध्यायेत् । भुवनानां कोशस्य समूहस्य गुहा अधिष्ठानं यदुदरं तत्र स्थितं तत्रात्मयोनेर्धिषणां धिष्ण्यम् अखिललोकात्मकं पद्मं व्यूढमुत्थितं हरिन्मणिवृषौ मरकतमणिश्रेष्ठाविव यौ चक्रिकाकृती स्तनौ तयोर्द्वयं हरिन्मणिवर्णौ वृषौ धर्म्मौ यत्र तथा भूतयोः स्तनयोरिति वा यतस्तद्दक्षिणस्तनस्य धर्म्मत्वात् विशदानां हाराणां मयूखैर्गौरं श्वेतमिति दक्षिणस्तनोपरि दक्षिणावर्त्तश्वेतश्रीवत्सरेखामपि हारकान्तिमिव ध्यायेदित्यपि सूचितं ज्ञेयम् ॥ २५ ॥

महाविभूतेर्महालक्ष्म्या अधि अधिको वामभागे वासो यत्र एताद‍ृशम् वक्षो मनसि कुर्य्यात् कौस्तुभमणेरपि अधिकं भूषणमर्थः प्रयोजनं यस्य कौस्तुभमणिरपि येन भूषितः स्यात्तं कण्ठं चेत्यर्थः ॥ २६ ॥

समुद्रं मथ्नतो हरेर्बाहून् चिन्तयेत् । निर्णिक्तानि उज्ज्वलीकृतानि बाहुवलयान्यङ्गदादीनि च येषु तान् अधि अधिकृता भक्ता लोकपाला भवन्ति येभ्यस्तान् वैकुण्ठनाथस्य भगवतश्चतुर्षु हस्तेषु चक्राद्यस्त्रचतुष्कं मालां कौस्तुभञ्च स्मरेदित्याह । सञ्चिन्तयेदिति सार्द्धेन । दशशतारं चक्रम् ॥ २७ ॥

स्निग्धां लिप्ताम् उपघुष्टां नादितां चित्ते भवत्याविर्भवतीति चैत्यशब्देन सर्व्वत्र यद्यपि परमात्मैवोच्यते तदप्यत्र तच्छक्तित्वाज्जीवात्मैवोच्यते । चैत्यस्य जीवस्य जीवशक्तेस्तत्त्वं तदुक्तं वैष्णवे

आत्मानमस्य जगतो निर्लेपमगुणामलम् ।
बिभर्त्ति कौस्तुभमणिं स्वरूपं भगवान् हरिः ॥

इति । कौस्तुभस्यैवानन्ताः किरणा जीवा इति भावः ॥ २८ ॥

अनुकम्पा सञ्जातास्या इत्यनुकम्पिता तारकादित्वादितच् । यद्वा अनुकम्पितमनुकम्पा कृपा तदात्मिका तन्मयी धा या धीस्तया स्ववासार्थं गृहीता मूर्त्तिर्यस्य हे भरस्वरूपशक्तिसारभूते ! अनुकम्पे ! इह मर्त्यलोके मन्मूर्त्तिषु मध्ये यामिच्छसि तां स्वनिर्भरनिवासार्थं गृहाणेत्युक्ते तया विविच्य रामकृष्णमूर्त्ती एव विशेषतो गृहीते इत्यर्थः । यदिति मकरकुण्डलयोर्वल्गनं खलु पार्श्वद्वयस्थपार्षदसञ्चालितचामरहेतुकेन मारुतेन वा वयस्यगणनर्म्मोक्तिप्रत्युक्तिहेतुकेन शिरःकम्पेन वा सहचरीगणनृत्यगीतवाद्यतालतानाद्यास्वादनसाधुत्वख्यापनहेतुकया ग्रीवाभङ्ग्या वा ज्ञेयम् अमलेति कपोलयोर्मरकतमणिदर्पणायमानत्वं तयोश्चलन्मकरकुण्डलद्वयप्रतिबिम्बेन नटन्तौ नयनखञ्जनौ नृत्योपाध्यायौ भूत्वा स्वतलस्थलमायातं मकरचतुष्टयं नर्त्तयत इव इत्युत्प्रेक्षा गम्या । उदारनासं समुन्नतनासिकम् "उदारो दातृमहतोः" इत्यभिधानान्नासिकायास्तदास्वादनसभ्यत्वेन स्वसर्व्वस्वदातृत्वम् ॥ २९ ॥

यच्च श्रीनिकेतनं वदनारविन्दमलिभिः * परिषेव्यमाणमपि मीनद्वयाश्रयमधिक्षिपत् । अर्थादरविन्दान्तरं स्वया विभूत्या तिरस्कुर्व्वद्भवति । तद्ध्यायेदित्यन्वयः । तत्र कुटिलकुन्तलवृन्दनालीनामाक्षेपः अब्जदलतुल्यनेत्राभ्यां मीनद्वयस्याक्षेपः मनोमयं स्वमनसा तादात्म्यमिव स्वादाधिक्यात् प्राप्तमित्यर्थः । स्वभक्तविषयककृपाद्योतनादुल्लसन्त्यौ भ्रुवौ यत्र तत् ॥ ३० ॥

तस्य हरेरवलोकं ध्यायेत् अक्ष्णोरक्षिभ्यां निसृष्टं निर्म्मितं ध्यातुरतिघोरं यत्तापत्रयं तस्योपशमाय स्निग्धं यत् स्मितं तदेव स्मितोपलक्षितं माधुर्य्यमन्वनुगुणितं प्रथमं द्विगुणितं ततस्त्रिगुणितादिक्रमेण कोटिकोटिगुणितं यत्र तम् ॥ ३१ ॥

हरेर्हासं ध्यायेत् अवनता भक्ता येऽखिला लोकास्तेषां दास्यसख्यादिभाववतां तद्विरहोत्थत्वात्तीव्रो यः शोकाश्रुसागरस्तं विशेषेण शोषयतीति तमत्युदारमिति शोकसागरादुद्धृत्यानन्दसागरे निमज्जनं ददानमित्यर्थः । यद्वा सांसारिकतीव्रदुःखशोकाश्रुसागरशोषणत्वेन हासस्य संसारातीतप्रेमानन्दाश्रुसागरवर्द्धनत्वं ध्वन्यते तेन चन्द्रत्वेऽप्यद्भुतत्वं प्रसिद्धश्चन्द्रो हि क्षीरोदञ्च क्षारोदञ्च वर्द्धयतीति । अस्य भ्रूमण्डलञ्च ध्यायेत् निजमायया सकपटनिक्षेपेणैव सर्व्वमोहनस्यापि मकरध्वजस्य सम्मोहनाय रचितं प्रस्तुतीकृतं ननु मकरध्वजं किमिति मोहयेत्तत्राह । मुनिकृते । पत्राम्बुभोजिनस्तपस्यतोऽपि मुनीन् भयमुद्वेजयेदिति कोपेनेवेत्युत्प्रेक्षा ॥ ३२ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आत्मयोनेर्ब्रह्मणः धिषणां स्थानमखिललोकात्मकं पद्मं यत्र व्यूढं समुत्थितं तन्नाभ्यात्मकं ह्रदं तथा विशदमुक्ताहारमयूखगौरं हरिन्मणिवृषौ मरकतमणिश्रेष्ठाविव यौ स्तनौ तयोर्द्वयं ध्यायेत् ॥ २५ ॥

ऋषभस्योपास्यस्य यक्षस्तथा कौस्तुभमणेः भूषणस्यापि अधिकं भूषणमर्थः प्रयोजनं यस्य तत् कण्ठं च मनसि कुर्यात् ॥ २६ ॥

---

* यद्यपि नागराक्षरसर्वपुस्तकेषु परिसेव्यमानमित्येव पाठ उपलभ्यते तथापि तैलङ्गादिषु दर्शनात् "परिनिविभ्यः इति सूत्रसङ्गात्य परिषेव्यमाणमित्येवोचितः पाठः वा मूले ।

ध्यानायनं प्रहसितं बहुलाधरोष्ठभासारुणायिततनुद्विजकुन्दपङ्क्ति ।
ध्यायेत्स्वदेहकुहरे(१)ऽवसितस्य विष्णोर्भक्त्यार्द्रयाऽर्पितमना न पृथग्दिदृक्षेत् ॥३३॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मन्दरगिरेः परिवर्तनेन निर्णिक्तान्युज्ज्वलीकृतानि बाहुवलयान्यङ्गदादीनि येषु अधिश्रिताः लोकपालाः येषु तान् विभोः बाहून् असह्यं सुरासुरदुःसहं तेजो यस्य तद्दशशतारं चक्रं च तत्करसरोरुहे राजहंसमिव सन्तं शङ्खं च सम्यक् चिन्तयेत् ॥ २७ ॥

भगवतो दयितां प्रियामरातयः शत्रवः ये भटाः प्रतियोद्धारस्तेषां शोणितमेव कर्दमस्तेन दिग्धां प्रलिप्तां कौमोदकीं मधुव्रतवरूथस्य भ्रमरसमूहस्य गिरा उपघुष्टां नादिताम् अस्य भगवतः कण्ठे मालां च अमलं सकलप्राकृतदोषरहितं चैतन्यस्य जीवस्य तत्त्वं जीवस्वरूपं मणिं कौस्तुभं च स्मरेत् तथोक्तं वैष्णवे ।

आत्मानमस्य जगतो निर्लेपमगुणामलम् ।
बिभर्ति कौस्तुभमणिं स्वरूपं भगवान् हरिः ॥

इति ॥ २८ ॥

भृत्येषु अनुकम्पितधिया गृहीता आविष्कृता मूर्तिर्येन तस्य यत् विस्फुरतोर्मकरकुण्डलयोर्वल्गितेन नर्तनेन विद्योतितौ अमलौ कपोलौ यस्मिन् तत् उदारा नासा यस्मिन् तद्वदनारविन्दं सम्यक् चिन्तयेत् ॥ २९ ॥

यद्वदनारविन्दं स्वया स्वासाधारणया मूर्त्या शोभया युक्तमनुपममित्यर्थः अत एव अलिभिः परिसेव्यमानामीनद्वयाश्रयं श्रीनिकेतं पद्मनश्रियमित् उपमात्वेन नाङ्गीकरोतीत्यर्थः तत्र कुन्तलवृन्देन अलीनामधिक्षेपः नेत्रद्वयेन मकराकृतकुण्डलद्वयेन वा मीनद्वयस्येति ज्ञेयम् । अब्जे इव नेत्रे यस्मिन्नित्युपमान्तरम् उल्लसन्त्यौ भ्रुवौ यस्मिन् तन्मनोमयं मनस्याविर्भवत् अतन्द्रितः एकाग्रचित्तः ध्यायेत् ॥ ३० ॥

अधिकमत्यर्थं कृपया अक्ष्णोरविभ्यां निसृष्टं स्निग्धेन सस्नेहेन स्मितेन मधुरहासेन अनुगुणितमुपशोभितं विपुलः प्रसादो यस्मिन् तं गुहायामन्तःकरणे चिरं ध्यायेत् ॥ ३१ ॥

अवनतानामवनतिमात्रसापेक्षाणामखिललोकानां जात्यादिनिरपेक्षाणां तीव्रशोकाश्रुसागरं शोषयतीति तथा तं हरेर्हासं मन्दहासं निजेषु भक्तेषु माया कृपा तया मुनिकृते निजमननपरायणजनकृते तन्मोहने प्रवृत्तस्य मकरध्वजस्य सम्मोहनाय विरचितं भ्रूमण्डलं ध्यायेत् ॥ ३२ ॥

---

भाषा टीका ।

सबभुवनोंका समूह जिसमें रहता है ऐसे उदरके ऊपर स्थित जो नाभिहृद तिसका ध्यान करै जिस नाभिमें ब्रह्माके उत्पत्ति का स्थान सकलजगतका आधार ब्रह्म है और निर्मलहारोंके कान्ति से गौरवर्ण तथा हरे मणिश्रेष्ठके तुल्य जो भगवान् के दोनों स्तन तिनका ध्यान करै ॥ २५ ॥

पुरुषों के मन तथा नयनके पक्षुखदेनेवाला श्रीमहालक्ष्मी का स्थान जो सकललोक नमस्कृत श्रेष्ठ भगवान् का हृदय तिसका ध्यान करै और कौस्तुभमणि के भूषण करनेके योग्य भगवान् के कण्ठ का ध्यान करै ॥ २६ ॥

मन्दराचल पर्वत के घुमाने मे जिन के कङ्कण ऊजले हो गये हैं और लोकपालों ने जिनका आश्रय लिया है ऐसे भगवान् के चारों भुजोंका ध्यान करै और बडे असह्य तेजवाले अनन्तकिरण वाले सुदर्शन चक्र को तथा उनके कर कमल में स्थित राजहंस सरीके शङ्ख को ध्यान करै ॥ २७ ॥

भगवान् की अत्यन्त प्रिया तथा शत्रु ओं के जोधोंके रक्तसे लिपटी हुई कौमोदकी गदा को स्मरण करै भ्रमरों के समूह के शब्द से शब्दायमान भगवान् की वनमाला को स्मरण करै तथा जीव के तत्त्व मणि को भगवान् के कण्ठ में स्मरण करै ॥ २८ ॥

भक्तोंपर कृपा करने की बुद्धि से मूर्ति धारण करने वाले भगवान् के मुखारविन्द का ध्यान करै जिस मुखारविन्द में चमकीले मकराकृत कुण्डलों के हिलनेसे प्रकाशमान दोनों कपोल हैं और अतिसुन्दर नासिका है ॥ २९ ॥

जो मुखारविन्द भ्रमरों से सेव्यमान है टेढी अलकावली से युक्त है दो मत्स्यों से युक्त शोभा का आश्रय कमल को अपनी शोभा से तिरस्कार करने वाले नेत्र जिस में हैं और जिसमें प्रकाशमान भ्रुकुटी है ऐसे मुखारविन्द को मनमें प्रगट करके ध्यान करै ॥ ३० ॥

भक्तों के अतिघोर तापत्रय के नाश करने को नेत्रों से निकला है जिस में अत्यन्तकृपा है और स्नेह युक्त मन्दहास से वर्धित है ऐसे भगवान् के अवलोकन को वडी भावना से हृदय में ध्यान करै ॥ ३१ ॥

शरणागत सब मनुष्यों के तीव्र शोक के अश्रुओं का सागर तिस के शोषण करने वाले अति उदार भगवान् के हास का ध्यान करै और मुनिजनों के उपकार के वास्ते कामदेव के मोहित करने को अपनी माया से रचित भगवान् के भ्रूमण्डल का ध्यान करै ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

मन्दहासध्यानमुक्त्वा स्फुटहासध्यानमाह । विष्णोः प्रहसि-

(१) दहकुहरे इति श्रीवीरराघव पाठः ।

एवं हरौ भगवति प्रतिलब्धभावो भक्त्या द्रवद्धृदय उत्पुलकः प्रमोदात्।
औत्कण्ठ्यबाष्पकलया मुहुरर्द्यमानस्तच्चापि चित्तबडिशं शनकैर्वियुङ्क्ते ॥३४॥
मुक्ताश्रयं यर्हि निर्विषयं विरक्तं निर्वाणमृच्छति मनः सहसा यथाऽर्चिः।
आत्मानमत्र पुरुषो व्यवधानमेकमन्वीक्षते प्रतिनिवृत्तगुणप्रवाहः ॥ ३५ ॥
सोऽप्येतया चरमया मनसो निवृत्त्या तस्मिन्महिम्न्यवसितः सुखदुःखबाह्ये।
हेतुत्वमप्यसति कर्तरि दुःखयोर्यत्स्वात्मन्विधत्त उपलब्धपरात्मकाष्ठः ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

तमुखेर्हसितं ध्यायेत्। कीदृशम्। ध्यानायनमतिसुन्दरतया प्रयत्नं विनैव ध्यानस्य विषयभूतम्। सौन्दर्यमेवाह। बहुलया ऽधिकया-ऽधरोष्ठस्य भासा कान्त्या ऽरुणीभूतास्तनवः सूक्ष्मा द्विजा एव कुन्दमुकुलानि तेषां पङ्क्तिः स्फुरति यस्मिंस्तत्। देहकुहरे हृद-याकाशेऽवसितस्य ज्ञातस्य प्रेमरसेनार्द्रया भक्त्या तस्मिन्नेवा-र्पितमतः सन्पृथक् तद्व्यतिरिक्तं द्रष्टुं नेच्छेत् न चित्तं विचा-लयेदित्यर्थः ॥ ३३ ॥

समाधिमाह। एवमिति द्वाभ्याम्। निर्बीजः सबीजश्चेति द्विविधो योगः तत्र निर्बीजयोगे

यतो यतो निश्चरति मनश्चञ्चलमस्थिरम्।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत्।

इति गीताद्युक्तमार्गेण क्रियमाणोऽपि दुष्करः समाधिः सबीजे तु सुकरः तत्र हि परमानन्दमूर्तौ हरौ ध्यायमानेऽयत्नत एव चित्तो-परमो भवति। तदुक्तम्। "इतात्मनो हृतप्राणांश्च भक्तिरनिच्छतो मे गतिमण्वीं प्रयुङ्क्ते" इति। अतः स एवोपचितो "योगस्य लक्षणं वक्ष्ये सबीजस्य" इति तदेवायत्नसिद्धत्वं दर्शयति। एवं ध्यानमा-र्गेण हरौ प्रतिलब्धो भावः प्रेम येन तथा भक्त्या द्रवद्धृदयं यस्य प्रमोदादुद्गतानि पुलकानि यस्य औत्कण्ठ्यप्रवृत्ताश्रुकल-या च मुहुरर्द्यमानः आनन्दसंप्लवे निमज्जमानो दुर्ग्रहस्य भगवतो ग्रहणे बडिशं मत्स्यवेधनमिवोपायभूतं चित्तमपि ध्येयाद्वियुङ्क्ते तद्धारणे शिथिलप्रयत्नो भवतीत्यर्थः ॥ ३४ ॥

यर्हि यदैवं निर्विषयं भवत्यत एव मुक्ताश्रयं च ध्येयसम्बन्धं विना ध्यातृत्वलक्षणासम्भवात् न च पूर्ववच्छब्दादिर्विषयः स्यात् यतस्तत्र विरक्तं परमानन्दानुभवेन अतो निर्वाणं लयमृच्छति वृत्तिरूपतां परित्यज्य ब्रह्माकारेण परिणमत इत्यर्थः यथाऽर्चि-ज्वालाश्रयविषयापगमे महाभूतज्योतीरूपेण परिणमते अत्रास्यां दशायामव्यवधानं ध्यातृध्येयविभागशून्यमेकमखण्डमात्मानमनु-गतमीक्षते। अत्र हेतुः। प्रतिनिवृत्तोऽपगतो गुणप्रवाहो देहाद्युपा-धिर्यस्य ॥ ३५ ॥

न च सुप्तोत्थित इव पुनः संसरतीत्याह। सोऽपि स एव पुरुषस्तस्मिन्महिम्नि ब्रह्मरूपेऽवसितोऽवसानं निष्ठां प्राप्तः कया मनसो निवृत्त्या चरमयाऽविद्यारहितयेति सुषुप्त्यादिविशेषः तत्र ह्यविद्याऽस्ति नत्विदानीम्। अत्र हेतुः। एतया योगाभ्यासकृतये-त्यर्थः ननु एवमपि सुखदुःखयोरात्मधर्मत्वे कुतो ब्रह्मैक्यं तत्राह। दुःखयोः सुखदुःखयोर्हेतुत्वं भोक्तृत्वं च यत्पूर्वमासीत्तदप्यस-त्यविद्याकृते कर्तर्यहङ्कारे विधत्ते तन्निष्ठमेव पश्यतीत्यर्थः यत उपलब्धपरात्मकाष्ठोऽपरोक्षीकृतात्मतत्त्वः ॥ ३६ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिका टिप्पणी।

स्फुटहासस्य कारणं तु "हसद्भिः प्रहसन्बालैः परिहास-मुवाच ह" इत्यादिलीलाविशेषो ज्ञेयः भक्त्या आदरेण तस्मिन् स्फुटहासे भगवति वा अर्पितमना निवेदितचित्तः अतस्तद्वि-चारे कृते मनसि स्वत्वाभावात्कथं वियोजयेदन्यथा कृतापहारि-त्वमेव तत्र पर्यवस्येदिति भावः ॥ ३३ ॥

तत्र। योगद्वयमध्ये तत्र हि। सालम्बनयोगे हि अतः। सालम्ब-नयोगे समाधिः सुकरत्वात् उपक्षिप्तः। समारब्धः अत्र योग-मिश्रत्वे भक्तेः शुद्धत्वाभावान्गोप्याभिसन्धिलक्षणं कैतवसद्भा-वात् श्लेषेण प्रतिरूपतया एव न त्वनुरूपतया लब्धो भावो येन अत एव तस्य भावस्य स्थिरत्वाभावात्साधनत्वमात्रत्वदृष्ट्या द्रवद्धृदय इत्युक्तं न तु द्रुतहृदय इति तच्चित्तस्य वज्रत्वेऽपि भावसामर्थ्यमुक्तम् सर्वप्रकारमेवेदं चित्तं विद्रावयत्यलमिति अपि तथापि तच्च परमसुन्दरमङ्गध्यानाविष्टमपि चित्तं ध्येयाद्वियुङ्क्ते तत्र हेतुः बडिशतुल्यत्वमेव तस्य च पूर्वपदार्थ-प्रधानत्वाद्दुःखप्रदत्वांशो व्यावृत्तः अत एव ग्रहणमात्रांशे दृष्टान्तो व्याख्यात इति द्रष्टव्यम्। चित्तं बडिशमिवेत्युपमितस-मासः बडिशशब्देन चेदं व्यज्यते यथा धीवरो गङ्गादितीर्थे बडिशेन मत्स्यं गृह्णाति तावत्कालमेव तीर्थे मज्जनं तदनन्तरं तु तत्त्यजति तथा योगी भगवति तत्तुल्येन, बडिशतुल्येन चित्तेन मत्स्यतुल्यमसम्यगाविर्भावं ब्रह्मैव गृह्णाति श्रीभगवन्तं तु त्यज-तीति तस्य धीवरत्वमुपलब्धं शुद्धभक्तास्तु न कदाचित्तं त्यजन्ति "धौतात्मा पुरुषः कृष्णपादमूलं न मुञ्चति" इत्यादेः ननु "येऽन्येऽरविन्दाक्ष विमुक्तमानिन" इत्यादौ "पतन्त्यधो नादृतयुष्म-दङ्घ्रय" इति ॥

जीवन्मुक्ताः प्रपद्यन्ते पुनः संसारवासनाम्।
यद्यचिन्त्यमहाशक्तौ भगवत्यपराधिनः॥

इति वासनाभाष्योक्तेश्च ध्येयाद्वियोगेऽपराधापत्तौ वक्ष्य-माणा जीवन्मुक्तिः कथं सङ्गच्छेतत्राह। तद्धारणेति। अयं भावः यथा विषयिणां निद्रावशाद्विषयानादराभावेऽपि तत्से-

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिका टिप्पणी ।

पने शैथिल्यं स्यात्तथा तदनादराभावेऽपि मुक्तिवासनावशांत्तद्धारणे शिथिलप्रयत्नो भवतीत्यर्थः ॥ ३४ ॥

तद्धारणशैथिल्ये प्रकारमाह। मुक्ताश्रयामिति। एवं सबीजयोगानुष्ठानप्रकारेण मुक्तिवासनया निर्मुक्तो विषयो ध्येयभगवद्विग्रहो यतः अत एव। निर्विषयत्वादेव निर्मुक्तः परित्यक्तो ध्यातृलक्षण आश्रयो येन निर्विषयत्वस्य मुक्ताश्रयत्वे हेतुत्वं व्याचष्टे। ध्येयसम्बन्धं विनेति। तत्र शब्दादिविषये वृत्तिरूपतां ध्यानव्यापारावेशम् "एकादशास्मनसो हि वृत्तय" इत्युक्तेः यद्यपि सुषुप्तावपि लयः सम्भवति तथापि अज्ञानाकारावृत्तिस्तिष्ठत्येवेति वृत्तिरूपतापरित्यागो ह्यर्थाक्षिप्त इत्यर्थं इत्युक्तं तत्र दृष्टान्तं व्याचष्टे। यथेति। अत्राश्रयो दारु विषयश्च घटादिस्तयोरपगमे विनाशे सति दशायां जीवन्मुक्त्यवस्थायामखण्डं त्रिविधपरिच्छेदशून्यमनुगतं सर्वाध्यस्तपदार्थेष्वधिष्ठानसदनुभूतितया व्याप्तं घटोऽस्ति पटोऽस्ति घटोऽनुभूयते पटोऽनुभूयते इति सर्वे पदार्थास्सत्तानुभूतिघटिता एव दृश्यन्ते अत्र एताहशज्ञाने तथा च जीवस्वरूपनादात्म्यापन्नब्रह्मसाक्षात्कारो हि जीवन्मुक्तिरिति तल्लक्षणं निर्गलितम् ॥ ३५ ॥

सुषुप्तेः सकाशाज्जीवन्मुक्तेर्विशेषमाह। न चेति। स च जीवन्मुक्तः चकारः पूर्ववाक्येनैकवाक्यत्वाय निवृत्त्या। लयेन तत्र हि सुषुप्तौ इदानीं जीवन्मुक्त्यवस्थायाम् अत्र अविद्यारहितत्वे एतया समीपं वर्त्तिनया योगेनेति फलितोऽर्थः अन्यैर्दृश्यमानस्य प्रारब्धभोगस्य प्रतिबन्धकत्वमाशङ्कते। नन्विति। अत्र मिथुनगणद्वारा मिथुनलक्षणग्राहनीत्यादिवल्लिङ्गसमवायन्यायेन दुःखयोरिति द्विवचनं तथा च सुखदुःखयोरिति व्याख्यातम् ॥ ३६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मन्दहासध्यानमुक्त्वा स्पष्टहासध्यानमाह। ध्यानायनमिति। विष्णोः प्रहसितमुच्चैर्हसितं ध्यायेत्कीदृशमतिसुन्दरतया प्रयत्नं विनैव ध्यानविषयभूतं सौन्दर्यमेवाह। बहुलया अधिकयाधरोष्ठस्य भासाऽरुणीभूतास्तनवः सूक्ष्मा द्विजा दन्ता एव कुन्दमुकुलानि तेषां पङ्क्तिर्यस्मिन् तत् एवं ध्यानमुक्त्वा समाधिमाह। स्वदहृत्कुहरे। हृदयविवरेऽवसितस्य ध्यातस्य विष्णोः प्रेमरसेनार्द्रया भक्त्या तस्मिन्नेवार्पितमनाः सन् पृथग्व्यतिरिक्तं भगवद्विग्रहव्यतिरिक्तं न दिदृक्षेद्विजातीयप्रत्ययं न कुर्यादित्यर्थः ॥ ३३ ॥

एवं दिव्यविग्रहचिन्तावसाने दिव्यात्मस्वरूपचिन्ता तत्प्रकारत्वेन प्रत्यगात्मचिन्ता च कार्येत्याह। एवमिति द्वाभ्याम्। एवमुक्तविधया हरौ भगवति प्रतिलब्धः भावः प्रेमातिशयो येन भक्त्या द्रव द्रवद्धृदयं यस्य प्रमोदादुद्गतानि पुलकानि यस्य औत्कण्ठ्यप्रवृत्ताश्रुकलया मुहुरर्द्यमानानन्दसम्प्लवे निमज्जमानः चित्तबडिशं बडिशं मत्स्यबन्धनम् दुर्ग्रहस्य भगवतो ग्रहणे मत्स्यबन्धनमिवोपायभूतं चित्तमपि ध्येयाद्भगवद्विग्रहात् शनकैर्वियुङ्क्ते वियुञ्ज्यात् यद्वा चित्तस्य बडिशं चित्तापहारिणं भगवद्विग्रहं प्रति अपादानस्यैव कर्मत्वविवक्षया द्वितीया ततश्चिरं वियुङ्क्ते इत्यर्थः ॥ ३४ ॥

ततः यथार्चिः निर्धूमदीपशिखेव विरक्तं शब्दाद्यप्रवणमत एव निर्विषयं शब्दादिविषयशून्यं यर्हि यदा मुक्ताश्रयं मुक्तविग्रहचिन्तनं मनः निर्वाणं बाह्यव्यापारोपरतिमृच्छति तदात्र परमात्मन्यव्यवधानं साक्षादेव प्रकारतया सम्बन्धमेकं देहादिभेदरहितमात्मानं विशुद्धस्य रूपं प्रति निवृत्तगुणप्रवाहः अपगतदेहात्माभिमानस्वतन्त्रात्माभिमानः सन् ईक्षते परमात्मप्रकारतया जीवस्वरूपं चिन्तयेदित्यर्थः ॥ ३५ ॥

एवं सप्रपञ्चं भक्तियोगमुपपाद्याथानया भक्त्याप्रयाणादनुवर्त्तमानया प्रारब्धावसाने परमात्मानं प्राप्तस्य न पुनः संसार इत्याह। सोऽपीति। चरमया प्रत्याहाराद्यपेक्षया चरमया यद्वा प्रारब्धावसानपर्यन्तमनुवर्तमानया एतयोक्तया मनसोऽनिवृत्त्या निवृत्तिर्निर्व्यापारः तदितराऽनिवृत्तिःमनोव्यापाररूपया भक्त्येत्यर्थः निवृत्त्येति छेदे मनसो निवृत्त्या न विद्यते वृत्तिः शब्दादिविषया यस्यां तया एतया भक्त्योपलब्धा परमात्मनः काष्ठा स्वरूपं यस्य सः अत एव सुखदुःखातिगे स्वे महिम्नि अपहतपाप्मत्वादिगुणाष्टकलक्षणे महिम्नि अवसितोऽध्यवसितः स्थित इत्यर्थः परमात्मानमुपसम्पद्याविर्भूतस्वस्वरूप इत्यर्थः परमात्मप्राप्तिपूर्वको हि स्वस्वरूपाविर्भावः तथा च श्रूयते "एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत" इति स्वात्मन् स्वात्मनि पूर्वं दुःखयोः सुखदुःखयोर्यद्धेतुत्वं हेतुर्देहात्माभिमानस्वतन्त्रात्माभिमानादिस्तस्य भावस्तत्त्वं तदपि कर्त्तरि गमनादिबाह्यव्यापाराश्रयेऽसति देहे निमित्तभूते विधत्ते करोति कर्मायत्तप्रकृतिपरिणामरूपदेहसम्बन्धायत्तमेव सुखदुःखादिहेतुदेहात्माभिमानादिकं पश्यतीत्यर्थः देहात्माभिमानादिकं पूर्वसिद्धं पुनर्न भजतीत्यर्थः ॥ ३६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एवमेकैकावयवध्यानानायासाचिरस्य समग्रावयवविशिष्टवपुर्ध्यानं निर्दिशति। ध्यानायनमिति। रहस्येकान्ते स्थित्वा स्वहृत्कुहरके निजहृदयगुहायामवसितस्य निश्चितावस्थानस्य विष्णोस्तद्ध्यानायनमेकैकावयवध्यानास्पदं वपुर्ध्यायेदित्यन्वयः किं विशिष्टं बहुलया सान्द्रयाधरोष्ठभासाऽरुणायिता रक्तवद्वर्तमानाश्च ते तनवः सूक्ष्माग्राश्च ते द्विजा दन्ता एव कुन्दकुड्मलानि तेषां पङ्क्तिर्यस्मिन् तत्तथोक्तं ध्यातुरिति कर्तव्यतामाह। भक्त्येति। आर्द्रया स्नेहलक्षणजलक्लिन्नया भक्त्या यस्मिन्नेवार्पितमनाः स्थिरीकृतचित्त एवं ध्यायंस्तदेव दिदृक्षेत् द्रष्टुमिच्छेत् पृथक् तदितरन्मुक्तिदातृत्वेन न चिन्तयेदित्यन्वयः ॥ ३३ ॥

एवं ध्यानारूढस्य तत्फलं वक्ति। एवं हराविति। एवमुक्तप्रकारेण हरौ भगवति प्रतिलब्धो भावो मनो यस्य स तथा द्रवद्धृदयस्तस्मिन्नेकस्मिन्नेवार्द्रीयमानहृदय उत्कृष्टौ पुलकप्रमोदौ रोमाञ्चहर्षौ यस्य स तथा औत्कण्ठ्येनाविर्भूतया बाष्पकलयाश्रुधारया मुहुरर्द्यमान आर्द्रीक्रियमाणः पुमान् यच्चित्तबडिशं लक्ष्यं प्रति प्रायुङ्क्त तच्चित्तबडिशमपि शनकैर्वियुङ्क्ते चिरपरिचयात्स्ववशत्वेन विशिष्टं योजयति। अप्रयत्नेन ध्यानानन्तरं समाधिं करोति ॥ ३४ ॥

प्राकृतान्तःकरणे नष्टे भगवदितरस्मरणत्यागेन निरायाससमाधिफलमप्रयत्नेन यद्धरिध्यानं तत्फलं ब्रूते। मुक्ताश्रयमिति।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यथार्चिर्दीपस्तैलवर्त्यभावे महसा नश्यति तथा यर्हि यदा स्व(१) चित्तं स्वरूपचितिजीवचैतन्ये तं तन्मयमित्यर्थः मनो निर्विषयं शब्दादिविषयेभ्यो निर्गत्य मुक्ताश्रयं नित्यमुक्तभगवद्विषयं भवति तदा निर्वाणमृच्छति स्वचिदभिमानेन स्थूलसूक्ष्मशरीराभिमानं जहाति अस्यामवस्थायां पुरुष उपासको जीव आत्मानं परमात्मानमेकं सर्वोत्तममव्यवधानं स्वस्य च तस्य च मायालक्षणाभित्तिराहित्येन अनुवीक्षते करतलामलकवदपरोक्षीकरोति यद्बिम्बादि द्रष्टव्यं सर्वं तत्पश्यतीत्यर्थः अतोऽपरोक्षज्ञानं तत्फलमिति प्रतिबन्धकसंसारसद्भावे कथं स्वबिम्बादिदर्शनमत्राह । प्रतिनिवृत्तेति । प्रतिनिवृत्तो गुणप्रवाहः संसारधर्मो यस्मात्स तथोक्तः यदा बाह्यमनो निर्वाणं विनाशमृच्छति यथार्चिर्दीपज्वाला तैलाद्यभावे तदा स्वचित्तं स्वरूपचैतन्यं स्वरूपान्तःकरणं निर्वाणं परमानन्दमाप्नोति यथास्तिमिततैलपात्रे स्थितो मनुष्याद्यभावे दीपो ज्वलनाख्यानन्दमाप्नोति ततः किमत्राह । आत्मानमिति । अत्र ज्वलनदीपवदन्तःकरणे विजृम्भमाणे सति घटादिपदार्थमिव एकं प्रधानमव्यवधानं स्वरूपाच्छादकमायाव्यवधानरहितमात्मानं स्वरूपं स्वस्य प्रियतमं परमात्मानं चानुसृष्ट्यादिलक्षणवत्तया ईक्षते इति वा योजनाभेदः ॥ ३५ ॥

जीवन्मुक्त्यवस्थामाह । सोऽपीति श्लोकद्वयेन । स जीवन्मुक्तोऽपि भगवन्तमपरोक्षं पश्यन्नेतया मनसो निवृत्त्या बाह्यान्तःकरणविनाशलक्षणया पुरा यो ज्ञानेनावृतः पश्चाद्ब्रह्मज्ञानेन प्रकाशितस्तस्मिन्महिम्नि स्वरूपज्ञानानन्दलक्षणेऽवसितोऽहं निर्दोषज्ञानानन्दादिरूपो भगवदधीनोऽस्मीति निश्चितः स्वात्मन् स्वात्मनि २) दुःखयोर्दुर्नाम्नो दुःखस्य स्वनाम्नः सुखस्य हेतुत्वं न विधत्तेऽभिमानं न करोति ।

> दुर्दुःखमिति विज्ञेयं खं सुखं च नयोर्यतः ।
> प्रदाता परमो विष्णुस्तस्माद्दुःखदनामवान् ॥

इति वचनात्सुखदुःखयोर्वा कर्तरि बाह्यान्तःकरणेऽसति नाशं गते ननु मनसो निवृत्तेः सुषुप्तावपि सम्भवाद्दुःखाभिमानाभावविशेषवचनं कथमित्यत उक्तम् । चरमयेति । चरमया संसारावसानजातया ॥ ३६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भक्त्या आदरेण ॥ ३३ ॥

एवं हराविति । एवं पूर्वोक्तयोगमिश्रभक्त्यनुष्ठानेन हरौ प्रतिलब्धभावो भवति । तत्र लिङ्गं भक्त्येत्यादि । भक्त्या स्मरणाविना । अपि एवमपि तच्च ध्येयमधुरत्वस्य भावेन तादृशतापन्नञ्च तस्य चित्तम् । शनकैर्वियुङ्क्ते वियुक्तमपि भवति । येन योगाङ्गतया भक्तिरनुष्ठिता तस्मात् कैवल्येच्छाकैतवदोषाद्वेति भावः । यथोक्तम् । धर्मः प्रोज्झितकैतव इत्यत्र प्रशब्देन मोक्षाभिसन्धेरपि कैतवत्वम् । अत एव बडिशशब्देन काठिन्यमरसत्वं कौटिल्यं दाम्भिकत्वं स्वार्थमात्रसाधकत्वञ्च व्यञ्जितं शुद्धभक्तास्तु न कदाचित्तथा तं ध्येयं त्यजन्ति यथोक्तं राज्ञा ।

> धौतात्मा पुरुषः कृष्णपादमूलं न मुञ्चति ।
> मुक्तसर्वपरिक्लेशः पान्थः स्वशरणं यथा ।

इति श्रीनारदेन च "न वैजन" इत्यादौ । "स्मरन् मुकुन्दाङ्घ्र्युपगूहनं पुनर्विहातुमिच्छेन्नरसग्रहो जन" इति यो रसग्रहः स तन्न त्यजतीत्यनेनान्येषां लौहपाषाणादितुल्यत्वं सूचितम् । न तु भगवानपि ततोऽन्यथा कुर्यात् । यदुक्तं श्रीब्रह्मणा । "भक्त्या गृहीतचरणः परया च तेषां नापैषि नाथ ! हृदयाम्बुरुहात् स्वपुंसाम्" इति आविर्होत्रेण च । विसृजति हृदयं न यस्य साक्षादिति । अत एव पूर्वत्र स्वपुंसामित्यत्र स्वेति विशेषणम् । यद्वा । भगवति प्रतिलब्धभावादिरूपोऽपि तच्चित्तवडिशम् । अपिशब्दात् भगवन्तमपि कैवल्यवासनया भावादेराभासितत्वाद्वियुङ्क्ते त्यजतीत्यर्थः । वडिशशब्देन चेदं ध्वन्यते । गङ्गादिमहातीर्थस्थानीये भगवति वडिशस्थानीयेन चित्तेन ग्राह्यत्वान्मत्स्यस्थानीयस्य स्वप्रकाशानन्दरूपे ह्रासे तदंशे सजातीयतया व्यक्तस्य निर्विशेषब्रह्मण उपलम्भात् सिद्धार्थतया कृतत्यागस्य तस्य धीवरत्वमेव लब्धम् । ननु तदवगाहमात्रसुसुखजडसाधुलोकत्वम् । ततश्च । वडिशजीविकसाहश्येन तस्य निकर्ष एव ज्ञापितः ननु स्वसुखनिभृतेत्यादौ रुचिरपदेन श्रीव्याससूनोर्लोभनीयां लीलां प्रशंसति वाक्ये तद्विधस्यैव तस्योत्कर्षः प्रतिपादितः ।

> आराधनं भगवत ईहमाना निराशिषः ।
> ये तु नेच्छन्त्यपि परं ते स्वार्थकुशला नराः ।

अथोरनयोरधिकारिणोरुत्तरत्र विलक्षणायां निष्ठायां परमनिदानं तु महत्सङ्गवैलक्षण्यमेव ज्ञेयम् । यदेव सर्वत्र मूलमिति तैर्दर्शनीयावयवैरित्यादौ । हृतात्मन इत्यादिकं तु नात्रोदाह्रियते तस्य नैकात्मतामित्यादिशुद्धभक्तप्रकरणपाठाद्यथा दर्शितमेव व्याख्यानं युक्तमिति । तदेतत् सोदाहरणं श्रीकपिलदेववाक्यम् । "भक्त्या पुमान् जातविराग" इत्यादिकमपि ज्ञेयम् । तथाहि । अस्य पूर्वत्र "श्रद्धा रतिर्भक्तिरनुक्रमिष्यति" इति भक्तिमात्रं दर्शितम् । उत्तरत्र तस्य लक्षणे दृष्टे । तल्लक्षणं वदता तेन "भक्तिः सिद्धेर्गरीयसी" इति "नैकात्मतां मे स्पृहयन्ति केचित्" इति च । मोक्षनिरपेक्षतयैव तस्य मुख्याभिधेयत्वमुक्तम् । "जरयत्याशु या कोशम्" इत्यनेन कोशध्वंसनस्य तु तदानुषङ्गिकगुणत्वमुक्तम् । अत्र भक्त्या पुमानित्यादौ तु तादृश्या अपि तस्या भक्तेर्ज्ञानादिसाहाय्ये नैव मोक्षमात्रसाधकत्वमुक्त्वा गौणाभिधेयत्वमुक्तम् । तस्मादत्रापि तस्या भक्तेराभास एव प्रथमतो दर्शितः । एवम्

> दृष्ट्वा तमवनौ सर्वे ईक्षणाह्लादविक्लवाः ।
> दण्डवत् पतिता राजन् ! शनैरुत्थाय तुष्टुवुः ।

इत्यत्र वृत्राख्यनाशस्वराज्यप्राप्तितात्पर्यवतां देवानां भक्त्याभासत्वमुदाहार्यम् ॥ ३४ ॥

त्यागप्रकारं योजयितुमाह । मुक्ताश्रयमित्यादिकं तु षष्ठसन्दर्भस्य चतुर्थवाक्यस्यावतारिकायां दृश्यं तथाहि । जीवत एवाविद्याकल्पितमायाकार्यसंबन्धमिथ्यात्वज्ञापकजीवस्वरूपसाक्षात्करणतादात्म्यापन्नब्रह्मसाक्षात्कारो जीवन्मुक्तिविशेष इत्यर्थः । ईदृशमेव तन्मुक्तिलक्षणं श्रीकापिलेये मुक्ताश्रयमित्यादिचतुष्टये दर्शितं तत्र हि । प्रतिनिवृत्तगुणप्रवाहः सन् आत्मानं परमात्मानमीक्षते ॥ ३५ ॥

स्वस्वरूपभूते महिम्न्यवसितो निष्ठां प्राप्तः सम्युपलब्धपरात्मकाष्ठ इति सोऽप्येतयेत्यादौ ॥ ३६ ॥

---

(१) चिदित्यस्य चैतन्ये इत्यर्थः तकारार्थः ततमिति । यथा चस्वरूपभूतचिदानन्दात्मकदेह एव ममायमिति अभिमानयुक्तमिति यावत् ।

(२) दुर्दुःखञ्चखं सुखञ्चदुःखे तयोः ।

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवतश्च प्रहसितं ध्यायेत् पूर्वध्यानेषु सर्वबाधकव्यामोहार्थं ध्यानायनमिति । तत्सर्वेषामेव ध्यानानां स्थानं सर्वं हि तत्तत्प्रतिबन्धनिवृत्त्यर्थं भगवतः प्रहसितं ध्यायन्ति अत्यानन्दे हि भगवतः प्रहसितं भवति तत्सर्वविस्मारकं कालादीनपि कथं न मोहयेत् बहुला अधरोष्ठयोः या भा दीप्तिः लज्जालोभयोः स्वरूपधनसङ्कोचः कार्य्यमिति तेन कृत्वा अरुणायिता तनुर्यस्य द्विजा एव कुन्दपुष्पाणि तेषां पङ्क्तिर्यत्र प्रहसिते हि दन्ता अपि प्रकटा भवन्ति ते च कुन्दपुष्पसन्निभाः पृथिव्यां स्नेहहंतवो दन्ताः पुत्रादिस्नेहरूपाः त्रिभिश्च सर्वसङ्कोचः नन्वेतादृशं प्रहसितं स्वात्मानमपि व्यामोहयतीति कथं ध्येयमित्यत आह । स्वदेहकुहरेऽवसितस्येति । यदि भगवान् स्वहृदये प्रकट एव तदा स्वस्य मोहो न भवतीति सिद्धं सिद्धे भगवति मुख्ये सख्यात्मनिवेदने आह । आर्द्रया भक्त्या अर्पितं मनो यस्य अपृथग्दर्शनं चात्मनिवेदनम् ॥ ३३ ॥

एवं पूर्णा भगवति नवधा भक्तिः सिद्धा ध्यानेन तस्यां सिद्धायां मोक्षः फलमावश्यकमिति तदुत्पादकध्यायमानस्य भगवद्रूपस्य निवृत्तिमाह । एवं हराविति । सर्वदुःखनिवर्त्तके सर्वपुरुषार्थदायके भगवति प्रतिलब्धः एवं पूर्वोक्तो भावो येन भक्तेरवान्तरकार्यमाह । द्रवद्धृदय इति । यथा तापेन हिमघृतादिकं द्रवति तथा भक्त्या हृदयं तस्य द्रवणे देहे वैक्लव्यं भवति आनन्दप्रतिबन्धकस्य हृदयस्य द्रुतत्वात् प्रमोदे जाते उत्पुलको भवति तदा भगवति प्रेमाधिक्यात् कण्ठनिरोधोऽपि भवति तत औत्कण्ठ्ये या वाष्पकला उत्पद्यते तया मुहुरर्द्यमानः सफलायां भक्तौ सिद्धायां तच्चापि चित्तस्य वडिशं वशीकरणहेतुर्भगवद्रूपं मनःकल्पितमिति शनकैर्वियुङ्क्ते त्याजयति ॥ ३४ ॥

अन्यतो निवृत्तं मनः भगवन्मूर्त्तिं कल्पयित्वा तत्र निवृत्तं स्थितं तस्मिंस्तु गते मुक्ताश्रयं निर्विषयं च जातमाश्रयत्वविषयत्वे एतावत्कालमत्रैव स्थिते पूर्वविषयास्तु पूर्वमेव त्यक्ताः भगवद्रसस्य चास्वादितत्वादिदानीं तत्र विरक्तमेवं सर्वथा विषयाभावे निर्वाणं कारणे लयं स्वयमेव ऋच्छति अपगच्छति । सङ्गते विद्यमाने न गच्छेदित्याशङ्क्य दृष्टान्तमाह । यथार्चिरिति । यथार्चिः काष्ठार्चिर्वा विद्यमानायामेव सामग्र्यां शाम्यति तथा मनोऽपीत्यर्थः ततः किमत आह । आत्मानमिति । उपाधिरूपे अन्तःकरणे गते अत्रैव शरीरे पुरुषो जीवः आत्मानं भगवन्तमव्यवधानं व्यवधायकधर्मरहितम् एकं न तु सजातीयमन्वीक्षते ननु सत्त्वादिगुणैराध्यात्मिकैर्निरन्तरं रागादिप्रवाहा उत्पाद्यन्ते भगवदीयैश्च विषयाः उभयोर्व्यवधायकत्वात्कथमेकत्वप्रतीतिस्तत एव श्रुतिराह न तं विदाथेति तत्राह । प्रतिनिवृत्तगुणप्रवाह इति । उभयविध इत्येके अन्यतर इत्यन्ये एवमात्मज्ञानार्थं चरमा मनसो वृत्तिरपेक्षिता तदभावे ब्रह्मात्मानुभवो न भवति ॥ ३५ ॥

जाते ज्ञाने तन्निवृत्तिमाशङ्क्याह । सोऽप्येतयेति । एवं चरमामेव मनसो वृत्तिं स्थापितवान् यः स्वानुभवार्थं सोऽपि एतयैव चरमया मनसो वृत्त्या स्वस्मिन्नेव महिम्नि अपवर्गाख्ये स्वयमवस्थितो भवति तत्रैव स्थिरो भवति पुनः पूर्ववत् पूर्वावस्थां प्राप्नोतीत्यर्थः तस्या अवस्थायाः पूर्ववैलक्षण्यमाह । सुखदुःखबाह्य इति । वैषयिकसुखदुःखे तस्यामवस्थायां न भवतः ननु चित्तगतं कर्तृत्वादिकं चित्ते लीने आत्मनिष्ठश्चेत् पुनः सुखदुःखे आवश्यके इत्याशङ्क्याह । हेतुत्वमपीति । यथा सुखदुःखे तत्र न स्तः तथा सुखदुःखयोर्हेतुरपि तत्र नास्ति तत्र हेतुः यतः सुखदुःखहेतुत्वे असति मिथ्याभूते दुष्टे वा कर्त्तरि अन्तःकरण एव नन्वात्मन्यपि सुखदुःखहेतुत्वं प्रतीयत एव तत्राह । यत् स्वात्मनि विधत्ते इति । चित्तगतमेव कर्तृत्वं पूर्वमात्मन्यारोपितमिदानीं तु उपलब्धा परात्मनः काष्ठा स्वरूपं येन अधुना परमानन्दः प्राप्त इति नान्यगतकर्तृत्वारोपेण प्रयोजनमेवमन्तःस्थितिः सर्वा निरूपिता ॥ ३६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रेक्षणीयेहितं ध्यायेदित्युक्तमतः क्वापि रहसि कुसुमतल्पमध्यासीनस्य स्वप्रेयसीमतिसौरभलोभेन श्रवणनयननासामुखादिसमीपमजहतः कस्यचिद्भ्रमरस्य झङ्कारेण त्रस्तां शश्वद्भुजोत्क्षेपवसनोन्नमनग्रीवानयनादिचापलयवतीं रसिकशेखर ! पदयोस्ते पतामि दुष्टमिमं विद्रावयेति सकाकु व्याहरन्तीं पश्यतः शृणु भो भृङ्गाधिप ! इमामद्यमाजहीहि भुङ्क्ष्वेति निगदतो भगवतः प्रहसितमुच्चैर्हसितं ध्यायेत् । ध्यानायनं प्रयत्नं विनैव स्वयमेव ध्यानस्य विषयीभविष्णु तत्रापि माधुर्यमाह । बहुलया अधरोष्ठस्य भासा अरुणीभूतास्तनवः सूक्ष्मा द्विजा एव कुन्दमुकुलानि तेषां पङ्क्तिः स्फुरति यस्मिन् तत् । स्वदेहकुहरे हृदयाकाशेऽवसितस्य प्रतीतस्य नास्मात् पृथग्दिदृक्षेत् द्रष्टुं नेच्छेत् ज्ञातुञ्च नेच्छेदित्यतः पुरुषार्थसारादन्यस्याधिकवस्तुनोऽसम्भवाद्भक्तानामेतदास्वादानन्दमोह एव परमः समाधिरिति भावः । एवं नवाङ्गभक्तेस्तृतीयमङ्गमेतद्भगवदवताररूपगुणलीलामाधुरीधुरीणमपि . ध्यानमष्टाङ्गयोगप्रसङ्गे यदुक्तं तत् खलु योगमहागह्वराद्योगिनोऽप्याकृष्य भक्तिरससुधार्णवे निमज्जयितुमेव दृश्यन्ते च परिनिष्ठितोऽपि । नैर्गुण्ये उत्तमश्लोकलीलया । गृहीतचेता राजर्षे ! आख्यानं यदधीतवानिति ।

> अद्वैतवीथीपथिकैरुपास्याः स्वानन्दसिंहासनलब्धदीक्षाः ।
> हठेन केनापि वयं शठेन दासीकृता गोपवधूविटेन ।

इति तत्तदुक्तिभिर्महायोगिनोऽपि वैयासकिविल्वमङ्गलादयो महदनुग्रहवशाद्भक्तिरस एव निमज्जन्त एवेति ॥ ३३ ॥

यस्त्वतिमन्दो महदननुगृहीत एतामपि ध्यानमाधुरीमुपभुज्याप्यलब्धास्वादनिष्ठो जिहासति स तु योगी योग एव प्राप्तनिष्ठोऽपि योगिष्वतिनिकृष्ट एव भक्तिरसवञ्चित एव भक्त्यैव दीयमानमेकविंशतिप्रकारदुःखनाशपूर्वकप्रत्यगात्मानुभवात्मकं मोक्षं प्राप्नोति न तु ब्रह्मानुभवात्मकं मोक्षमित्याह । एवमित्यादि यावदध्यायसमाप्ति । हरौ भगवतीति । मनोहरत्वात् भगवद्गुरुकवत्त्वाच्च माधुर्यैश्वर्यामृतपरिपूर्णेऽपि प्रतिलब्धभावः श्लेषेण प्रतिरूपतयैव न त्वनुरूपतया लब्धो भावो येन सः । अत्र खल्वपिशब्दः सर्वत्रान्वेति प्रतिलब्धभावोऽपि द्रवद्धृदयोऽपि उत्पुलकोऽपि औत्कण्ठ्यहेतुकया वाष्पकलयाश्रुभागेन मुहुरर्द्यमानोऽपि तच्चापि तस्मादपि स्वरूपात् चित्तवडिशं वियुङ्क्ते वियोजयति ज्ञानञ्च मयि संन्यसेदिति विधिवद्भक्तिसन्न्यासे विध्यभावात् प्रत्युत भक्त्यार्द्रयार्पितमना न पृथग्दिदृक्षेदिति निषेधविधेः सद्भावादयम् मन्दधीः

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

स्वेच्छयैव वियोजयतीत्यर्थः। वियुञ्ज्यादिति विध्यप्रयोगात् यतोऽस्य चित्तं बडिशमतस्तादृशोऽपि सन् तस्मादपि माधुर्य्यमयस्वरूपाद्वियोजयनीति विषयरसौत्कण्ठ्यदूरीकरणार्थं भगवन्माधुर्य्ये निक्षिप्तं यच्चित्तं तस्य तन्माधुर्य्यौत्कण्ठ्यस्यापि निवृत्तये तच्चित्तं ततोऽपि निवर्त्तयतीत्यर्थः। शनकैरिति चित्तस्य सम्यग्युक्तत्वे वियोजनं खलु दुर्घटमेवातोऽसम्यग्योग एव सत्यभ्यासेन शनैः शनैर्द्वित्रिवारेण चतुष्पञ्चवारेण वा सप्ताष्टवारेण वा अवश्यमेव वियोजयनीति बडिशं ह्यश्मसारमयं भवति अतः स्वर्णरूप्यादिवन्न नवनीतादिवन्न द्रवीभवति किन्तु वह्नितापाधिक्यवशात् किञ्चिद्द्रवदेव तत्क्षण एव पुनः कठोरश्च भवत्यतो द्रवद्धृदय इति न तु द्रुतहृदय इत्युक्तं यथा बडिशं खलु गङ्गादितीर्थजलनित्यस्नानपरमपि कुटिलमरसज्ञं यथा च मीनलोभनमिष्टपिष्टान्नखण्डेनावृतमुखत्वाद्दाम्भिकश्च तथैव विगीतयोगिनश्चेतोऽपि तीर्थपूतमपि कठोरं कुटिलं भगवदाकर्षकध्यानभक्त्यावृतमुखत्वाद्दाम्भिकश्च धर्म्मः प्रोज्झितकैतव इत्यत्र श्रीस्वामिचरणैः प्रशब्देन मोक्षाभिसन्धेरपि कैतवत्वेन व्याख्यानात् कैवल्येच्छाकैतवदोषादेव येन सर्वश्रेष्ठापि ध्यानरूपा श्रीभक्तिदेवी योगाङ्गत्वेनोपासितापि पश्चात्त्यक्ता । तस्य योगिचित्तबडिशस्य स्पर्शो भगवतोऽपि कष्टकर एवातस्तद्वियोगे भगवानेव तस्मै हारिततादृशचित्तबडिशाय योगिधीवराय मोक्षमेकाविंशतिप्रकारदुःखनिवृत्तिपूर्वकप्रत्यगात्मानुभवरूपं ददाति न तु परमात्मानुभवरूपं मोक्षम्। यस्तु भगवद्गीतोक्तोऽष्टाङ्गयोगी भगवद्ध्यानमजहदेव दृष्टस्तस्मै तु परमात्मानुभवरूपमपि मोक्षं ददातीत्याहुर्भागवतरसिकाः यतः स कदाचिदपि न ध्येयाद्भगवन्मधुररूपाद्वियोक्तुमीष्टे । यथोक्तं राज्ञा ।

> धौतात्मा पुरुषः कृष्णपादमूलं न मुञ्चति ।
> मुक्तसर्वपरिक्लेशः पान्थः स्वशरणं यथा इति ॥

उद्धवेन च "तन्त्वाखिलात्मदयितेश्वरमाश्रितानां सर्वार्थदं स्वकृतविद्विसृजेत कोनु" इति । श्रीनारदेन च "स्मरन्मुकुन्दाङ्घ्र्युपगूहनं पुनर्विहातुमिच्छेन्न रसग्रहो जन इति"। रसग्रह इत्यनेन योगिष्वपि मध्ये श्रीशुकप्रभृतय एवाभिनन्दिताः अत्रैव पूर्वश्लोके "भक्त्यार्द्रयार्पितमना न पृथग्दिदृक्षेत्" इति । अर्पितमना इति भगवते मनः समर्प्य तस्मिन्मनसि स्वत्वाभावात् कथं तस्मात्तद्वियोजयेत् । कथं वा दत्तापहारी भवेदिति तथात्वे निन्दा दुर्निवारैव। भगवानपि भक्तानामेव हृदि तिष्ठेन्न योगिनः यदुक्तं ब्रह्मणा "भक्त्या गृहीतचरणः परया च तेषां नापैषि नाथ ! हृदयाम्बुरुहात् स्वपुंसाम्" इति श्रविर्हो(?)त्रेण च विसृजति हृदयं न यस्येत्यादि ॥ ३४ ॥

अतिनिकृष्टयोगिपद्धत्युक्ते भगवत्स्वरूपत्यागे सति मनसः का दशा स्यादित्यपेक्षायामाह। मुक्तेति। एवं यर्हि मनोनिर्विषयं भवति तदा मुक्ताश्रयञ्च स्यात् ध्येयसम्बन्धं विना तस्य ध्यातृत्वेऽवस्थानासम्भवात् न च पूर्ववद्व्यावहारिकः शब्दादिविषयः स्यात् यतस्तत्र विरक्तं परमानन्दानुभवेन। न च परमानन्दरूपमेव पुनरपि विषयीकुर्यात् । शनकैर्वियुङ्क्त इत्यत्र शनैःपदेन पुनरपि ततो वियोजनीयत्वादतो निर्वाणं लयमृच्छति प्राप्नोति। यथार्चिर्दीपकलिका तैलवर्त्तिभ्यां वियुक्ता निर्वातीत्यर्थः । अत्र अस्यां दशायां पुरुषः जीवः मनोलये सति लिङ्गरूपावरणभङ्गादव्यवधानं शुद्धमात्मानं प्रत्यगात्मानमेकमन्वीक्षते । ततश्च न संसरतीत्याह प्रतिनिवृत्तो गुणप्रवाहो देहाद्युपाधिर्यस्य सः ॥३५॥

न चासावुपाधिलयः सुषुप्तिदशायामिवेत्याह । सोऽपि। स च पुरुषो जीवः मनसो निवृत्त्या हेतुना तस्मिन् महिम्नि यः स्वीयो महिमा पूर्वम् मनसो बलादपहृत आसीत्तस्मिन्महिम्नि मनोनाशात् प्राप्ते ज्ञानानन्दस्वरूपे अवसितः अवसानं निष्ठामाप्तः मनसो निवृत्त्या कीदृश्या चरमया अविद्यया रहितयेति सुषुप्ताद्विशेषः तत्र ह्यविद्यास्ति नत्विदानीं तत्र हेतुः एतया योगाभ्यासकृतयेत्यर्थः। तस्मिन्महिम्नि कीदृशे सुखदुःखबहिर्भूते तस्य स्वरूपत एव सुखदुःखबाह्यत्वात् जीवात्मा सुखदुःखबाह्यो भवेदित्यर्थः ननु सुखदुःखयोरात्मधर्म्मत्वमेव दृष्टमतस्ततो बहिर्भूतत्वं कथमात्मन इत्यत आह। असति अविद्याकृते कर्त्तरि अहङ्कारे दुःखयोः सुखदुःखयोर्हेतुत्वं सुखदुःखहेतुकर्म्मकर्तृत्वम् । तदभिमानात् पूर्वदशायां स्वात्मनि कर्तृत्वं भोक्तृत्वञ्च यदासीत् तत्सर्वमुपलब्धपरात्मकाष्ठोऽयमपरोक्षीकृतात्मतत्त्वः शुद्धः पुरुषः तस्मिन्नेवासति विधत्ते तन्निष्ठमेव पश्यति स्वस्मिन्नहङ्काराभावादित्यर्थः ॥ ३६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ध्यानायनमतिसुन्दरतयाल्पप्रयत्नेनैव ध्यानास्पदम् बहुलया विपुलया अधरोष्ठयोः भासा दीप्त्या अरुणायितास्तनवः सूक्ष्मा द्विजा दन्ता एव कुन्दमुकुलानि तेषां पङ्क्तिर्यस्मिन् तत् स्वदेहकुहरे हृदयाकाशेऽवसितस्य शान्तस्य विष्णोः प्रहसितं प्रकृष्टं हसितं ध्यायेत् समाधिमाह। आर्द्रया भक्त्या तत्रैवार्पितमनाः सन् न पृथक् दिदृक्षेत् ध्येयं ध्यातारं च न पश्यतीत्यर्थः आनन्दसम्प्लवे लीनत्वात्तदुक्तं प्रथमे "आनन्दसंप्लवे लीनो नापश्यमुभयं मुने ! " इति ॥ ३३ ॥

एवं समाधिमुक्त्वा अथैवं ध्यानसमाधिनिष्ठस्य ध्यानाद्यावृत्तिपरत्वं दर्शयन् कृतकृत्यतां प्रपञ्चयति । एवमिति एकादशभिः। एवमुक्तप्रकारेण ध्यानसमाधिसाधनेन हरौ प्रतिलब्धः भावः ध्रुवास्मृतिलक्षणा भक्तिर्येन सः तया भक्त्या द्रवत् द्रवीभूतं चित्तं यस्य सः प्रमोदादुद्भूतानि पुलकानि यस्य सः औत्कण्ठ्येन या वाष्पकला तया मुहुरर्द्यमानध्यानः समाध्यावृत्तौ योज्यमानो भवति ननु दुर्वृत्तं मनस्तं संसारकर्मणि कुतो न नियोजयति तत्राह। तच्चापीति। यथा मत्स्यग्रहणसाधनं लोहकण्टकं तत्तथाविधं विषयग्रहणसाधनं चित्तबडिशं शनकैरयत्नत एव विषयेभ्यो वियुङ्क्ते उपरतं भवति किन्तु ध्यानादिरूपहरिप्राप्तिसाधनावृत्तिप्रवणं भवति "आवृत्तिरसकृदुपदेशात्" इति न्यायात् ॥३४॥

मनसो विषयेभ्य उपरतत्वं भगवद्ध्यानादिप्रवणत्वमेवाह । मुक्ताश्रयमिति । यर्हि यदैव भगवद्ध्यानसमाधिप्रावण्याद्यामेव यथार्चिः निर्धूमाग्निशिखेव शुद्धं विरक्तं त्यक्तविषयं मुक्ताश्रयं सत् नित्यमुक्तपरमपुरुषाश्रयं सत् तद्ध्याननिष्ठं सत् निर्वाणं समाधिरसे लयमृच्छतीत्यर्थः यतः पुरुषोऽन्तःकरणस्वामी जीवः आत्मानं स्वान्तरात्मानं भगवत्संज्ञकं निःसमानातिशयमव्यवधानं सर्वानुस्यूतम् अन्वीक्षते पुनः पुनः ध्याने पश्यति न तु संसारासक्तो भवति यतो निवृत्तः गुणानामिन्द्रियाणां प्रवाहो विषयप्रावण्यं यस्य स तथाभूतः गुणातीतो वा ॥ ३५ ॥

देहं च तं न चरमः स्थितमुत्थितं वा सिद्धो विपश्यति यतोऽध्यगमत्स्वरूपम् ।
दैवादुपेतमथ दैववशादपेतं वासो यथा परिकृतं मदिरामदान्धः ॥ ३७ ॥
देहोऽपि दैववशगः खलु कर्म यावत्स्वारम्भकं प्रतिसमीक्षत एव सासुः ।
तं सप्रपञ्चमधिरूढसमाधियोगः स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुः ॥ ३८ ॥
यथा पुत्राच्च वित्ताच्च पृथङ्मर्त्यः प्रतीयते ।
अप्यात्मत्वेनाभिमताद्देहादेः पुरुषस्तथा ॥ ३९ ॥
यथोल्मुकाद्विस्फुलिङ्गाद्धूमाद्वापि स्वसम्भवात् ।
अप्यात्मत्वेनाभिमताद्यथाग्निः पृथगुल्मुकात् ॥ ४० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सोऽपि । स च पुरुषः चरमया बहुजन्मान्ते जातया तस्मिन् महिम्नि भगवति परब्रह्मणि सुखमपि दुःखं यस्मिन् स सुखदुःखः संसारः स बाह्यो भवति यस्मादुपास्यात्तस्मिन् अवसितः अवसानं निष्ठां प्राप्तः यतः उपलब्धा शास्त्राचार्योपाश्रयणाल्लब्धा परात्मकाष्ठा येन सः परस्य ब्रह्मणः सर्वात्मत्वस्वबोपास्यस्वरूपा आत्मनः ब्रह्मात्मकत्वब्रह्मोपासकत्वरूपेति विवेकः एवम्भूतः भागवतः प्रारब्धकर्मसमापनार्थमिह तिष्ठति "तस्य तावदेव चिरं यावन्न विमोक्ष्ये" इत्यादिश्रुतेस्तत्क्षयानन्तरं तु मुक्त एव स्यादित्याशयेनाह । असति दुष्टे संसारे यद् यस्य कर्मणः दुःखयोः सुखदुःखयोर्हेतुत्वं भवति तत्कर्म स्वात्मन् स्वात्मनि कर्त्तरि विधत्ते स्वीकरोति अवश्यमेव प्रारब्धकर्मफलं मया भोक्तव्यमिति मन्यत इत्यर्थः सुखदुःखयो रागद्वेषादिरहितो भवतीति भावः ॥ ३६ ॥

---

भाषा टीका ।

अपने शरीरके भीतर मे प्रत्यचित ध्यानके सुन्दर विषय अधरोष्ठकी कान्तिसे लालभये अतिसूक्ष्मदांतों की कुन्दसदृशीकी पङ्क्तिहै जिसमें ऐसे भगवान् के हास को ध्यानकरें अत्यन्त प्रेमकी भरी भक्तिसे उनहीं मे मनको अर्पणकरे अलग कुछ नहीं देखे ॥ ३३ ॥

इस प्रकारसे हरि भगवान्में भावको प्राप्तहोकर भक्तिसे कोमलहृदयके होजानेसे आनन्दकेमारे रोमावली खडी होजावेंगी तब उत्कण्ठ के आंसुओंसे वारम्बार डूबता हुआ पीछे मत्स्यग्रहण वंशीके उसी चित्तके भी धारणा मे असमर्थ होजाता है ॥ ३४ ॥

जबमन अपने विषयसे छूटजाता है तब विरक्त होकर जैसे विना बाती के दीपक शान्तहोजाता है तैसे मनभी शान्त होकर रहजाता है तब पुरुष गुणप्रवाह से निवृत्तहोकर व्यवधान रहित निरन्तर परमात्माका अनुभव करता है ॥ ३५ ॥

परमात्माके तत्त्वको प्रत्यक्षकरनेवाला यह पुरुष इस अंतकी योगकृतमनकी निवृत्तिसे सुखदुःखदोनो से रहित स्वयं महिमा रूप ब्रह्मस्वरूपमें स्थित होकर पहिले अपने में आरोपित जो अभिमान तिसको प्रकृति संसर्गकृत मानकर निवृत्त हो जाता है ॥ ३६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्य जीवन्मुक्तिमाह । देहं चेति द्वाभ्याम् । चरम उत्कलक्षणः सिद्धो देहमपि न विपश्यति कुतः सुखदुःखे । आसनादुत्थितमुत्थाय तत्रैव स्थितं तत्स्थानादपेतं ततो दैववशात्पुनरप्युपेतं वा न विपश्यति यतः स्वरूपं प्राप्तः यतो देहात्स्वरूपमध्यगमत्तं देहमिति वा । सतोऽप्यननुसन्धाने दृष्टान्तः वासः परिकृतं कटितटे परिवेष्टितं स्थितं गतं वा मदिरामदेनान्धो यथा न पश्यति ॥ ३७ ॥

ननु तर्हि देहस्य कथं प्रवृत्तिनिवृत्ती जीवनं वा तत्राह । देहोऽपीति । दैवं पूर्वसंस्कारस्तद्वशो गच्छन् यावत्स्वारम्भकं कर्मास्ति तावत्प्रतिसमीक्षते जीवत्येव सासुः सेन्द्रियः ननु तर्हि तस्मिन्पुनः सङ्गः स्यात्तत्राह । तं देहं स्वाप्नदेहादितुल्यं सप्रपञ्चं पुत्रादिसहितं पुनर्न भजतेऽहंममेति नाभिमन्यते अधिरूढः प्राप्तः समाधिपर्यन्तो योगो येन अत एव प्रतिबुद्धं वस्त्वात्मतत्त्वं येन सः ॥ ३८ ॥

प्रतिबोधप्रकारमाह षड्भिः । यथेति । अतिस्नेहवशादात्मत्वेनाभिमतादपि पुत्रादेः मर्त्यः पित्रादिः पुरुषो देहादेर्द्रष्टा ॥ ३९ ॥

पृथगवस्थानाभावेऽपि भेदं सदृष्टान्तमाह । यथोल्मुकादिदानीं ज्वलतः काष्ठात् स्वसम्भवादग्नेः सम्भूतात् आत्मत्वेनाग्नेः स्वरूपत्वेनाभिमतादपि अत्यन्ताविविक्तो हि धूमेऽप्यग्न्यभिमानोऽस्ति उल्मुकात्पूर्वसिद्धादपि तद्दाहकः प्रकाशकश्चाग्निः पृथगेव ॥ ४० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

तस्य । अपरोक्षीकृतात्मतत्त्वस्य चरमोऽविद्यारहितः तत्रैवास्ते ॥ ३७ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिका टिप्पणी ।

प्रवृत्तिनिवृत्ती विहितनिषिद्धयोर्यथाक्रमं तस्मिन् देहे ॥ ३८ ॥ प्रतिबोधो विवेकः ॥ ३९ ॥

यथोल्मुकादिति युग्मकम्। वक्ष्यमाणोल्मुकेन पौनरुक्त्यमाशङ्क्येदानीं ज्वलतः काष्ठादिति विशेषपरतया व्याख्यातम् । पूर्वसिद्धात् इदानीं ज्वलत्काष्ठस्य कारणीभूतात् । तद्दाहक । उल्मुकद्वयदाहकः दार्ष्टान्तिकं योजयति । अत्र पूर्वसिद्धोल्मुकस्थानीया निमित्तशक्तिर्मायाख्या तस्याः सकाशात्तथेदानीं ज्वलत्काष्ठस्थानीयात् प्रधानादपि आत्मा विस्फुलिङ्गस्थानीयो जीवः पृथक् तस्मादपि अग्नेर्यथाऽसम्यगाविर्भावो ब्रह्मसंज्ञितः पृथक् । ननु ब्रह्मणोऽकर्तृत्वात्पृथक्त्वं सङ्गच्छते सृष्ट्यादिकर्तुरीश्वरस्य तस्य स्वसृष्ट्युपादानशक्तेः प्रधानात्परत्वं कथं सङ्गच्छते इत्याशङ्क्य व्याचष्टे । तथा प्रधानादपीति । अग्निरत्र जीवात्पृथक्त्वं समुच्चिनोति ॥ ४० ॥ ४१ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

किमु वक्तव्यं पूर्वसिद्धदेहात्माभिमानादिकं न करोतीति यतः प्राक्तनं देहमपि न स्मरतीत्याह । देहमिति । चरमः प्रारब्धावसानपर्यन्तमनुवृत्तप्रत्ययः ततः सिद्धः परमात्मोपसंपत्त्याविर्भूतस्वस्वरूपः दैवादीश्वरसङ्कल्पादुपेतं प्राप्तं पुनर्दैवादपेतमपगतमवस्थितं दाहादिसंस्काररहितत्वेन स्थितमुत्थितं दाहादिभिः संस्कृतं वा उत्थानं दाहादीनामप्युपलक्षणं देहं च न पश्यति न स्मरति अत्र "यदु चास्मिञ्शव्यं च कुर्वन्ति यदु च न नोपजनं स्मरन्निदं शरीरम्" इत्यादिश्रुत्यर्थोऽभिप्रेतः शव्यं शवसम्बधि कर्म उपजनं स्वजनानां समीपे उपशोच्यं कुतो न पश्यति यतः स्वरूपमानन्दरूपमाविर्भूतगुणाष्टकं स्वस्वरूपमध्यगमत्प्राप्तवान्नित्यनिरतिशयानन्दब्रह्मस्वरूपं तत्प्रकारं प्रत्यगात्मानं चानुभवन्नानन्दसम्प्लवे निमज्जन् प्राक्तनदेहादिकं न स्मरतीत्यर्थः न पश्यतीत्यत्र दृष्टान्तः मदिरायाः सुराया मदेनान्धः परवशः परिकृतं परिधृतं वासः वस्त्रं न पश्यति तद्वत्केचिदिमं श्लोकमुपासनादशायामेव तज्जनितानन्दपूर्णः किमपि देहादिकं न पश्यतीत्येवं परत्वेन व्याचक्षते तन्मन्दं यतोऽध्यगमत् स्वरूपमितिहेतूपन्यासात् "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत" इति परमात्मप्राप्त्यानन्तर्य्यश्रवणात्स्वरूपप्राप्तेः साक्षात्कृतपरमात्मस्वरूपाणामपि सनकादीनां देहादिदर्शनाच्चातो यथोक्त एवार्थः साधीयान् ॥ ३७ ॥

एवम्विधभक्तियोगनिष्ठस्य कदा मुक्तिः किमुमुक्तस्य पुनरावृत्तिः स्यादित्याशङ्कां शमयन्नाह । देहोऽपीति । दैववशग ईश्वरसङ्कल्परूपपुण्यापुण्यायत्तः देहोऽपि स्वारम्भकं स्वसत्तानिमित्तं कर्म यावद्यावन्न नश्यति तावत् सासुरिन्द्रियप्राणसहितः प्रतिसमीक्षत एव खलु यावत् स्वारम्भकं कर्म प्रतिसमीक्षत इति वान्वयः खलुशब्देन श्रुतिप्रसिद्धिर्द्योत्यते तथाच श्रुतिः "तस्य तावदेव चिरं यावन्न विमोक्ष्यऽथ सम्पत्स्य इति प्रारब्धावसानावधिविलम्ब इत्यर्थः अधिरूढः समाधियोगो येन सः ततः प्रतिबुद्धमाविर्भूतं वस्तु गुणाष्टकविशिष्टमात्मस्वरूपं यस्य सः प्रारब्धावसाने मुक्तिं प्राप्त इत्यर्थः स्वाप्नं स्वप्नपदार्थतुल्यं तद्वदनित्यमित्यर्थः सप्रपञ्चं पुत्रकलत्रादिसहितं तं देहं पुनर्न भजते न प्राप्नोति "न च पुनरावर्त्तते सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च" इत्याद्यत्रानुसन्धेयम् ॥ ३८ ॥

एवं का चित्वय्युचिता भक्तिः कीदृशी मम गोचरेत्यस्योत्तरमुक्तम् । अथ पुरुषं प्रकृतिर्ब्रह्मन्न विमुञ्चतीति प्रश्नस्य यदुत्तरमुक्तं प्रकृतिविलक्षणात्मस्वरूपचिन्तनपूर्वकस्ववर्णाश्रमधर्माद्यनुगृहीतभगवद्भक्तियोगात्प्रकृतिसम्बन्धराहित्यरूपकैवल्यसिद्धिरिति तदुपसंहर्त्तुं पूर्वोक्तमेव प्रकृतिपुरुषेश्वराणां मिथोऽत्यन्तवैलक्षण्यं सदृष्टान्तमनुवदति । यथेति पञ्चभिः । तत्रैकेन देहात्मनो वैलक्षण्यं ततो द्वाभ्यां प्रकृतिपुरुषाभ्यां परमात्मनः तत एकेन जीवानां परस्परसाम्यं तत एकेन जीवानां देहकृतो देवादिभेदो न स्वत इत्युच्यते इति विवेकः यथात्यन्तप्रीतिविषयात्पुत्राद्वित्ताच्च मर्त्यः पृथगेव प्रतीयते तथात्यन्तप्रियत्वेनात्मत्वेन स्वाभिन्नत्वेनाभिमताद्देहादेरपि पुरुषः प्रत्यगात्मा पृथगेवेत्यर्थः ॥ ३९ ॥

यथेति । आत्मत्वेनाभिमतादत्यन्ताविवेकिनोऽन्याभिन्नत्वेनाभिमतात्स्वसम्भवादग्नेरुत्पन्नाद्धूमादुल्मुकाद्विस्फुलिङ्गाच्चाप्यग्निर्यथा पृथगुच्यते ॥ ४० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एवमपरोक्षज्ञानिनो देहपोषणादौ प्रयत्नोऽपि नास्ति सच्चिदानन्दात्मकनारायणसंदर्शनसुधासमुद्रमग्नत्वादित्याह । देहं त्विति । येन देहेन स्वयं सिद्धोऽभूत्स सिद्धस्तं चरमं देहं न विपश्यति मदीयोऽयमिति नाभिमन्यते किं तु कपालमुक्तनारिकेलफलवद्देहात्मनो विविक्तत्वाद्दूरमेव पश्यति अनेन यतोऽध्यगमत्स्वरूपमिति विवृतमनभिमानप्रकारमाह । स्थितमिति । स्वप्रेरणालक्षणगुरुत्वात् स्थितं तदभावादुज्झितं पतितमिति तत्रोदाहरणमाह । यथा मदिरापानेनोत्पन्नमदेनान्धः पुमान् दैवादुपेतं दैववशादपेतं परिकृतं परिवृतं वासो न जानाति तथेत्यर्थः ॥ ३७ ॥

एवंविधस्य ज्ञानिनो देहस्तु ज्ञानोदयसमय एव पतत्युत किञ्चित्कालं प्रतीक्षत इति संशये प्रारब्धकर्मक्षय एव देहपातसमय इत्याशयेनाह । देहोऽपीति । यावत् स्वारम्भकं कर्म तावद्देहोऽपि सासुः सेन्द्रियः प्रतीक्षते तस्मिन्स्वारम्भके क्षीणेऽधिरूढसमाधियोगः प्राप्तसमाधियोगफलः सप्रपञ्चमिन्द्रियादिप्रपञ्चसहितं देहं पुनर्न भजते तद्रक्षणादौ न प्रयतते इत्यर्थः कथमिव प्रतिबुद्धवत् यथा स्वप्नादुत्थितः स्वाप्नं स्वप्नदृष्टं देहं न पुनर्भजते तथेति ॥ ३८ ॥

देह एव सर्वेषामहं गच्छामीत्यात्मत्वेनाभिमतो यतस्तस्मात्तद्भजनं मरण एव भवतीति देहात्मत्वमतनिरासायाह । यथेति । यथा पुत्रादेरात्मत्वेनाभिमतान्मर्त्यो मरणशीलो देहः पृथक् प्रतीयते तथा पुरुषो जीव आत्मत्वेनाभिमताद्देहाद्भिन्न इत्यन्वयः अपिपदेन देहात्मवादस्य निन्दितत्वं सूचयति "रेतो धातुर्वटकणिका" इत्यादिवाक्यात् ॥३९ ॥

इदानीं जीवपरमात्मनोरपि भेद एवेत्याह । यथोल्मुकादिति । यथात्मत्वेनाभिमतादुल्मुकादेस्तद्दाहकोऽग्निः पृथङ् मतः ॥ ४० ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स्वरूपं जीवब्रह्मणोर्याथार्थ्यमध्यगमत् ॥ ३७ ॥

एवं प्रतिबुद्धवस्तुरिति । देहोऽपीत्यादौ चेति । तस्मादस्य प्रारब्धकर्म्ममात्राणामनभिनिवेशेनैव भोगः एवमेवोक्तम् "तत्र को मोहः कः शोक एकत्वमनुपश्यत" इति ॥ ३८ ॥

सा च जीवन्मुक्तानां प्रतिपत्तिर्युक्तैव । यतस्त्वंपदार्थस्तादृश एवेत्याह । यथा पुत्राच्चेति ॥ ३९ ॥

तत्पदार्थस्तु सुतरामित्याह । यथेति । अथ तस्य मायाशक्तिकार्य्यं मायाजीवेभ्योऽन्यत्वं च स्पष्टयति । यथोल्मुकादिति द्वयेन । अयमर्थः स्वसम्भवात् स्वोपादानकारणात् उल्मुकात् काष्ठमुख्यपाधिकादग्नेर्हेतोर्यो विस्फुलिङ्गो यश्च धूमस्तस्माद्यथा तत्तदुपादानमग्निः पृथक् यथा च तस्मादप्युल्मुकात्तदुपादानमसावग्निः पृथक् कीदृशादपि तन्नयात् । अप्यात्मत्वेनाभिमतात् । तापकतया धूमेऽप्यग्न्यंशसद्भावेनाग्निस्वरूपतया प्रतीतादपि ॥ ४० ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

याद्दशं निरूपयति । देहमिति द्वाभ्याम् । स्वानुपयोगो देहस्थितिश्च भेदेन निरूप्यत इति तत्र प्रथमं स्वानुपयोगमाह । देहं तु नश्यति तत्राभिमानो दूरं तं पूर्वमुपलालितमपि यतोऽयं चरमः देहोपकारानपेक्षः घटादिवदपि तस्यावस्थामपि न जानातीत्याह । स्थितमुत्थितं वेति । यत्र पूर्वमासने स्थितः तत्रैव स्थितः तत उत्थितो वेति न वेद यतोऽयं जीवः स्वरूपं ब्रह्मभावमध्यगमत् गार्हस्थ्यदशायां स्थितं गृहादिकं यथा महाराजत्वे जातेनानुसन्धत्ते तर्ह्यधिष्ठातृव्यतिरेकेण कथं देहस्तिष्ठेदुच्छेद्वेत्याशङ्क्याह । दैवादुपेतमिति । कालादिप्रेरणयैव वासनावशात् कचिद्देशान्तरे उपेतं भवति तस्मादपेतं च असम्भावितं मत्वा दृष्टान्तमाह । मदिरया य उन्मादः तेनान्धो महामत्तः यथा स्वयमेव परिहृतं वासो न वेद किं स्वस्मिन् गते गच्छति अपगच्छति वेति देहं तु नश्वरमिति पाठे नश्वरमित्यनुपयोगे हेतुः ॥ ३७ ॥

देहस्य स्वरूपमाह । देहोऽपीति । दैववशगोऽयं देहः कालकर्मस्वभावाधीनः खल्विति निश्चये यावत्स्वारम्भकं कर्म तावत् सासुः प्राणसहितः स्वस्थित्याद्यर्थं तत्कर्मापेक्षते बहुकालमपि तिष्ठति तथापि तन्नानुसन्धत्त इत्याह । तमिति । प्रपञ्चसहितं तं देहमधिरूढः समाधिपर्यन्तं योगो येन अनेन नित्यारूढसमाधिरुक्तः तादृशस्य बहिः संवेदनाभावात् युक्तमेव तस्यादर्शनं किं च स्वाप्नम् अयं हि प्रतिबुद्धवस्तुः स्वतः स्फुरित आत्मरूपः तस्य स्वाप्नं स्वप्न इव प्रतीतं तुच्छमतो रागाभावाल्लौकिकवदप्यनुसन्धानं नास्ति ॥ ३८ ॥

इदानीं देहादिव्यतिरिक्तमात्मानं साधयति । तदभावे पूर्वोक्तं नैव सिद्ध्येत् । यथा पुत्राच्चेति । पुत्रवित्तयोर्लोके आत्मबुद्धिः शास्त्रतश्च आन्तरो देहः पुत्रः बाह्याः प्राणा वित्तं तत्र यथा पुत्राद्वित्तादपि मर्त्यः मरणधर्मा पुत्रे वित्ते विद्यमानेऽपि स्वयं म्रियत इति तस्मात्पृथक् नन्वत्र भेदः स्वतः सिद्धः किमत्र साध्यत इत्याशङ्क्याह । अप्यात्मत्वेनाभिमतादिति । येषां तु नात्मत्वेनाभिमतिः तान्प्रति न साधयामः ये पुनः आत्मत्वेनैव मन्यन्ते तेषामपि देहात्ते भिन्ना इत्यर्थ एवं देहादेः देहेन्द्रियप्राणान्तःकरणात् पुरुषो भिन्नः ॥ ३९ ॥

अत्रात्मनो लोके पृथक् प्रतीत्यभावात् युक्त्या उक्तमपि न सम्यगवगतं भवतीति दृष्टान्तेन स्पष्टयति । यथोल्मुकादिति । अग्नेस्त्रयोऽन्ये सम्बन्धिनः आधारभूतं काष्ठं कार्यं धूमः स्वाधाराः स्वांशाः विस्फुलिङ्गाः त्रयोऽपि अग्नेर्यथा भिन्नाः यद्यप्यग्नित्वेनाभिमताः उल्मुकं ज्वलत्काष्ठमग्नेरेव राजसं रूपं धूमः तामसमुल्मुकं विस्फुलिङ्गाः सात्त्विकाः स्वसम्भवादिति त्रयाणां विशेषणमग्निसम्बन्धादेवोल्मुकत्वम् अन्यथा काष्ठत्वम् अप्यात्मत्वेनाभिमतादित्यपि पाठः तथापि पृथगुल्मुकादिति धूमादिषु भेदः प्रत्यक्षसिद्धः उल्मुके संदिग्ध इति स एवोक्तः ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तस्य जीवन्मुक्तिमाह । देहञ्चेति द्वाभ्याम् । चरमः चरमदशापन्नः सिद्धो देहं न पश्यति कुतः सुखदुःखे इत्यर्थः अध्यगमत् प्राप्तः । परिकृतं परिहितमासनादुत्थितमुत्थाय तत्रैव स्थितं गतं वा मदिरामदान्धो यथा न पश्यतीति ॥ ३७ ॥

ननु तर्हि तस्य देहः कथं जीवेत्तत्राह । देहोऽपीति । दैवं पूर्वसंस्कारः तद्वशेन गच्छन् यावत् स्वारम्भकं कर्म्मास्ति तावत् प्रतिसमीक्षत एव जीवत्येव सासुः सेन्द्रियः ननु तस्मिन् पुनरासक्तिः स्यात्तत्राह । तं देहं सप्रपञ्चं पुत्रादिसहितम् पुनर्नभजते यतः स्वाप्नं स्वप्नदेहादितुल्यमहंममेति नाभिमन्यते तत्र हेतुः । अधिरूढः समाधिपर्य्यन्तो योगो येन सः अतः प्रतिबुद्धं वस्तु आत्मतत्त्वं येन सः ॥ ३८ ॥

प्रतिबोधार्थं मुमुक्षुभिर्नित्यमेवं विभाव्यमित्याह । यथेति त्रिभिः । अतिस्नेहवशादात्मत्वेनाभिमतादपि पुत्रादेः पृथगेव मर्त्यः पित्रादिर्यथा तथैव पुरुषो जीवः ॥ ३९ ॥

ननु यथा पुत्रवित्तादिभ्यो मर्त्यः पृथगवस्थितो दृश्यते न तथा देहेन्द्रियादिभ्यो जीवात्मा जीवात्मनोऽपि सकाशात् परमात्मा पृथक् कथमवगन्तव्य इत्यत आह । यथोल्मुकादिति । पृथगवस्थानाभावेऽपि मायातत्कार्य्याभ्यां पृथग्भूतो जीवात्मनश्च सकाशात् परमात्मा पृथगेवेत्यत्रायं दृष्टान्तः । अत्र यथाशब्दस्योल्मुकशब्दस्य च पौनरुक्त्यादेवं व्याख्येयम् । उल्मुकाद्दह्यमानात् काष्ठाद्यथा अग्निः पृथग् भवति । यथा च उल्मुकात् पृथक् तथा विस्फुलिङ्गादपि पृथक् यथा च विस्फुलिङ्गात् पृथक् तथा धूमादपि स्वकार्य्यात् पृथक् कीदृशात् आत्मत्वेनाग्निस्वरूपत्वेनाभिमतादपि अविवेकेन हि उल्मुको विस्फुलिङ्गो धूमोऽप्यग्निरित्यमित्यभिमन्यते । यद्वा । द्वितीययथाशब्दस्य यथावदित्यर्थः । द्वितीयोल्मुकादिति उल्मुकमत्ति ज्वालयतीत्यग्निविशेषणम् ॥ ४० ॥

---

भूतेन्द्रियान्तःकरणात्प्रधानाज्जीवसंज्ञितात् ।
आत्मा तथा पृथग्द्रष्टा भगवान् ब्रह्मसंज्ञितः ॥ ४१ ॥
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
ईक्षेतानन्यभावेन भूतेष्विव तदात्मताम् ॥ ४२ ॥
स्वयोनिषु यथा ज्योतिरेकं नाना प्रतीयते ।
योनीनां गुणवैषम्यात्तथाऽऽत्मा प्रकृतौ स्थितः ॥ ४३ ॥
तस्मादिमां स्वां प्रकृतिं दैवीं सदसदात्मिकाम् ।
दुर्विभाव्यां पराभाव्य स्वरूपेणावतिष्ठते ॥ ४४ ॥
( अन्वयव्यतिरेकाच्च साक्ष्यात्मा व्यभिचारिणः ।
वैतथ्यं व्यभिचारं च निद्रान्तेऽस्यानुचिन्तयेत् ॥ ० ॥ )

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे कापि-
लेये साधनानुष्ठानं नामाष्टाविंशति-
तमोऽध्यायः ॥ २८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

चरमः चरमजन्मा देहमपि न पश्यति कुतः रागद्वेषादिविषयं बाह्यं पदार्थमिति भावः यथा परिकृतं कट्यां परिवेष्टितं वासः उपेतमपेतं वा न पश्यति तद्वत् ॥ ३७ ॥

तस्य देहोऽपि सासुः सेन्द्रियः दैववशगः दैवाधीनः यावत्स्वारम्भकं कर्म तावत्प्रतिसमीक्षते जीवत्येव तं जीवन्तं सप्रपञ्चं स्वाप्नं स्वप्नदेहादितुल्यमनित्यमारूढः प्राप्तः समाधिपर्यन्तो योगी येन सः प्रतिबुद्धवस्तुः प्रतिबुद्ध वस्तु आत्मानात्मपरमात्मतत्त्वं येन सः न भजते नोपास्ते ॥ ३८ ॥

प्रतिबुद्धवस्तुत्वसिद्ध्यर्थं आत्मानात्मपरमात्मविवेकमाह । यथेति त्रिभिः । देहादेः अनात्मवर्गात्पुरुषः आत्मा पृथगेव ॥ ३९ ॥

आत्मनः अनात्मनश्च सकाशात् परमात्मा भिन्न इत्याह । यथोल्मुकादिति द्वाभ्याम् । यथोल्मुकात्कार्यभूतादङ्गाराकारात् तत्कारणभूताद्दह्यमानादुल्मुकात्तथा स्वसम्भवादुल्मुकाग्निसंयोगसम्भवात् दोषरूपाद्धूमाच्च आत्मत्वेनाभिमतात्स्वात्मकात्स्वांशभूताद्विस्फुलिङ्गाच्च यथाग्निः पृथगेव ॥ ४० ॥

---

भाषा टीका ।

अन्त शरीर को प्राप्त वह योगी अपने आत्म स्वरूपको प्राप्त हो जाने से अपना देह चाहे खडा होवे चाहे बेठा होवे वह सिद्ध नहीं जान सका है प्रारब्ध के अधीन देह चलता रहता है जैसे कि मदिरा के मद से अन्धपुरुष अपने शरीर के वस्त्र का रहना व गिरना नहीं जानता है ॥ ३७ ॥

देहभी प्रारब्धके अधीनहै जबतक अपना कर्महै तबतक प्रतीचा करके प्राणा सहित रहता है समाधियोग मे आरूढ होने वाला वह योगी आत्म स्वरूप के ज्ञान होजाने से उन देहादिकों को स्वप्न के तुल्य मान कर फिर नहीं भजता है ॥ ३८ ॥

जिस प्रकार से पुत्र और धन से अपना अलग प्रतीत होता है तैसे ही आत्मा करिके अभिमत जो देह तिससे भी आप अलग ही है ॥ ३९ ॥

जैसे जलते हुपे काष्ठ से तथा अग्नि के कोइला से अग्नि से पैदा होने वाले धुमां से विवेकी पुरुष को दाहक अग्नि पृथक मालूम पडता है तैसेदेहादि से आत्मा है ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

भूतादेर्द्वेषा तेभ्यः पृथक् तस्मादपि जीवसंज्ञिताद्ब्रह्मसंज्ञितः पृथक् तथा प्रधानादपि तत्प्रवर्तको भगवान् पृथगित्यर्थः ॥४१॥

उपाधितो विवेकमुक्त्वा तस्यैक्यमाह । सर्वभूतेष्विति । भूतेषु चतुर्विधेषु तदात्मतां महाभूतात्मताम् ॥ ४२ ॥

धर्मभेदस्याप्यौपाधिकतां सदृष्टान्तमाह । स्वयोनिषु काष्ठेषु ज्योतिरग्निः गुणवैषम्याद्दीर्घह्रस्वादिभेदात् प्रकृतौ देहे ॥ ४३ ॥

स्वां स्वांशस्य जीवस्य वन्धहेतुं दैवीं देवस्य विष्णोः शक्तिं पराभाव्य तत्प्रसादेनैव जित्वा स्वरूपेण ब्रह्मत्वेनावतिष्ठते ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे तृतीस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
अष्टाविंशोऽध्यायः ॥ २८ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

उपाधितः प्रकृत्यादेः विवेकं पृथक्त्वं तस्यात्मनः ऐक्यं तत्त्वंपदार्थयोरभेदमनन्यभावेन तत्त्वंपदार्थयोरभेदभावनया ॥ ४२ ॥

धर्मभेदस्य विपर्य्ययश्च भवति ब्रह्मत्वस्थावरत्वयोरित्युक्तेः ब्रह्मत्वादेः औपाधिकतां प्रकृतिकार्य्यदेहाद्यध्यासकार्य्यत्वं योनीनां वह्निव्यञ्जककाष्ठाद्युपाधीनां दार्ष्टान्तिकपक्षे ब्राह्मणादिदेहलक्षणोपाधीनां गुणवैषम्यात् उत्तमत्वमध्यमत्वादिभेदात् नानोत्तमत्वादिधर्मवानिव प्रतीयते ॥ ४३ ॥

तस्माद्भेदस्यौपाधिकत्वात् ब्रह्मत्वेनावतिष्ठते जीवस्य वस्तुतो ब्रह्मरूपत्वात् वैष्णवास्तु अन्यस्यान्यत्वाऽसम्भवाद्ब्रह्मणि लीयत इति व्याचक्षते ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्यदीपिकाटिप्पण्याम्
अष्टाविंशोऽध्यायः ॥ २८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तथाभूतेन्द्रियान्तःकरणरूपात्प्रधानाज्जीवसंज्ञितात्क्षेत्रज्ञाच्चात्मा तयोरन्तः प्रविश्य प्रशासनेन धारकः द्रष्टा सर्वज्ञो भगवान् षाड्गुण्यपूर्णो ब्रह्मसंज्ञितः साक्षाद्ब्रह्मपदवाच्यः पृथगेवेत्यर्थः अत्र दृष्टान्तो धूमः प्रधानस्थाने उल्मुकादिकं जीवस्थाने वेदितव्यम् ॥ ४१ ॥

सर्वभूतेषु देवादिचतुर्विधशरीरेष्वात्मानं तेष्वन्तःप्रविश्य धारकत्वेनावस्थितं जीवात्मानमनन्यभावेन सर्वत्र ज्ञानैकाकारत्वाणुपरिमाणत्वादैकरूप्येणैवेक्षेत ब्रात्मानमित्येकवचननिर्देशः एको व्रीहिरित्यादिवज्जात्यभिप्रायकः तथा आत्मनि धार्यतयावस्थितानि सर्वभूतानि देवादिचतुर्विधभूतान्यनन्यभावेन कर्मायत्तावान्तरवैचित्र्यं परित्यज्य प्रकृतिपरिणामरूपत्वेनैकरूपेण पश्येत् भूतेष्वपि अपिशब्दाज्जीवेष्वपि तदात्मतां परमात्मकत्वमीक्षेत ॥४२॥

स्वयोनिषु । तृणदार्वादिषु एकमेव ज्योतिरग्निर्योनीनां गुणवैषम्याद्योनिभूततृणदार्वादिगतह्रस्वदीर्घत्वकुटिलत्वादिगुणकृतवैषम्याद्यथा नाना प्रतीयते तथा प्रकृतौ देवादिशरीरे स्थितः आत्मा प्रत्यगात्मापि देवादिकृतभेदेन नाना प्रतीयते वस्तुतस्तु सर्वत्र ज्ञानैकाकारतयैकरूप एवेत्यर्थः ॥ ४३ ॥

पुरुषं प्रकृतिर्ब्रह्मन्निति प्रश्नस्योत्तरमुपसंहरति । तस्मादिति । देवीं देवस्य विष्णोः सम्बन्धिनीं सदसदात्मिकां कार्यकारणरूपेणावस्थितां दुर्विभाव्यां दुरत्ययामिमां स्वप्रकृतिं स्वसम्बन्धिनीं प्रकृतिं पराभाव्य उक्तविधभगवद्भक्तियोगेन तिरोभाव्य स्वरूपेण गुणाष्टकाविर्भावस्वरूपेणावतिष्ठते न पुनः संसरतीत्यर्थः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिकायाम् ।
अष्टाविंशोऽध्यायः ॥ २८ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तथाभूतेन्द्रियान्तःकरणात्पञ्चभूतदशेन्द्रियमनोभ्यः प्रधानात्प्रकृतेः जीवसंज्ञितात्संसारिणश्च द्रष्टा सर्वज्ञो ब्रह्मसंज्ञित आत्मा परमात्मा भगवान् पृथगेवेत्यन्वयः ॥ ४१ ॥

भिन्नेषु जीवेषु स्थितस्य परमात्मन उपास्तिप्रकारं कथयति। सर्वभूतेष्विति । सर्वभूतेष्वन्तर्यामित्वेनात्मानं हरिमीक्षेत सर्वभूतान्यात्मनि हरावाधारत्वेनेक्षेत किञ्चानन्यभावेन सर्वान्तर्यामिरूपाण्यभेदेनेक्षेत अभेदेनेत्युक्तिं विहायानन्यभावेनेति वचनमनर्थहेतुत्वात्तद्रूपाणामन्यत्वभावना सर्वथा न कार्येति द्योतनाय किं च भूतेष्वपि जीवेष्वपि तदात्मतां तस्य हरेरादानादिकर्तृतां चेक्षेत अनेनानुग्रहानुग्राहकत्वद्योतनेन जीवपरमात्मनोर्भेदः पारमार्थिक इत्युक्तं भवति आदानकर्तृत्वं भूतविषये न स्वविषये नित्यतृप्तत्वात् ॥ ४२ ॥

अधिष्ठानवैलक्षण्यादधिष्ठातृरूपाणां वैलक्षण्यं न शङ्कनीयमिति इममर्थं सदृष्टान्तं समर्थयते । स्वयोनिष्विति । यथैकं ज्योतिरग्न्याख्यं स्वयोनिषु कारणेषु काष्ठेषु योनीनां दारूणां गुणवैषम्यादार्द्रशुष्कत्वादिवैलक्षण्यात् नानाविधलक्षणमिव प्रतीयते तथा प्रकृतौ प्रकृतिकार्ये जगति स्थितो आत्मा हरिः विलक्षण इव प्रतीयते क्वचिद्बहुसामर्थ्याभिव्यक्तिमान् क्वापि अल्पसामर्थ्याभिव्यक्तिमानित्यादिरूपेण ॥ ४३ ॥

मथितार्थमाह । तस्मादिति । यस्मात्सर्वस्मादन्यः श्रीनारायणः तस्मात्स्वां स्वाधीनां जडप्रकृतिं देवीं कार्यरूपेण द्योतमानां तदभिमानिनीं देवीं चित्प्रकृतिं च सदसदात्मिकां कार्यकारणव्यापिनीं दुर्विभाव्यां ब्रह्मादिभिरपि निरूपयितुमशक्यां पराभाव्यातिक्रम्य तदुत्तमत्वेनैव स्थित्वा निरस्तसाम्यातिशयेन सर्वदोषविवर्जितेन सर्वगुणपूर्णेन त्रिकालेष्वेकप्रकारेण स्वरूपेणावतिष्ठत इत्यन्वयः तदुक्तम् ।

> सर्वभूतस्वमीशेशं ज्ञेतारं प्रकृतेरपि ।
> अविशेषं सदैवैकं चिन्तयन्प्रविमुच्यत

इति ॥ ४४ ॥

सिंहावलोकनन्यायेनोपासकस्येत्थं भावान्तरं वक्ति । अन्वयेति । अन्यदेशेऽन्यरहितदेशेऽन्यकालेऽन्यरहिते काले च सत्वलक्षणादन्वयव्यतिरेकात्सिद्धो यश्च साक्षादीक्षत इति साक्षी "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत" इति श्रुतेः आत्मा यश्चाप्नोति यदादत्त" इत्यादेः सर्वव्यापी परमात्मेति यल्लक्षणं तल्लक्षणं व्यभिचारिणः अनित्यस्यास्य प्रपञ्चस्य वैतथ्यं निष्प्रयोजनत्वं व्यभिचारमनित्यत्वं च निद्रान्ते ब्राह्मे मुहूर्ते उत्थाय चिन्तयेदेतद्धरिप्रसादजनकमिति शेष इत्यर्थः ॥ ० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
अष्टाविंशोऽध्यायः ॥ २८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्र विस्फुलिङ्गस्थानीयाज्जीवसंज्ञितात् जीवात् उल्मुकस्थानीयात् । प्रधानोपाधिकभगवत्तेजसः । धूमस्थानीयभूतादेः । सर्व्वोपादानरूपो भगवान् पृथक् । य एवात्मा स्वांशेन तदन्तर्य्यामितया परमात्मा क्वचिदधिकारिणि निर्विशेषचिन्मात्रतया स्फुरन् ब्रह्मसंज्ञितश्च यत एव द्रष्टा तेषामादिमध्यान्तावस्थानसाक्षीति अत्रोल्मुकादित्वमन्यांशाविष्टेन्धनांशत्वं तत्र प्रकाशकत्वं स्वांशस्य दाहकत्वमिन्धनांशस्येति विवेचनीयम् ॥ ४१ ॥

तत्र ज्ञानी तु त्वंपदार्थाभेदेन तत्पदार्थमेवं पश्येदित्याह । सर्व्वेति त्रिभिः ॥ ४२—४३ ॥

अवतिष्ठते ब्रह्मणि लीयत इत्यर्थः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य अष्टाविंशोऽध्यायः ॥ २८ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

दार्ष्टान्तिकमाह । भूतेन्द्रियान्तःकरणादिति । भूतानि देहः इन्द्रियाणि अन्तःकरणं च प्रधानं स्वभावात्मकं जीवसंज्ञितं लिङ्गशरीरशब्दवाच्यम् एतस्माच्चतुष्टयाद्द्रष्टात्मा अग्निवत्पृथक् । यतो द्रष्टा इदं च दृश्यं स चात्मा भगवान् भगवत्प्रकृतिकः न तु तत्त्वप्रकृतिकः अविकृतकार्य्यत्वादंशत्वाद्वा भगवत्सम्बन्धेनोक्तः भगवानित्येवोच्यत इतिकेचित् भगवच्छब्दः कार्य्येऽपि वर्त्तत इति तद्व्यावृत्त्यर्थमाह । ब्रह्मसंज्ञित इति । ब्रह्मेति संज्ञा यस्य अतो वैलक्षण्यस्य स्पष्टत्वात् सङ्घातादात्मा पृथक् ॥ ४१ ॥

एवं पृथगात्मज्ञानानन्तरं यत्कर्त्तव्यं तदाह । सर्व्वभूतेष्विति । यद्यपि सङ्घातात्पृथगात्मा प्रतीतः तथापि परिच्छिन्नः प्रतीत इति न कार्य्यसिद्धिः न हि परिच्छिन्नज्ञानादपरिच्छिन्नं फलं भवति अतः सर्व्वभूतेष्वाब्रह्मतृणस्तम्बपर्य्यन्तेषु स्वात्मानं पश्येत् स्वयमेव सर्व्वत्र वर्त्तत इति यथा स्वस्मिन् आत्मनि अयं देहादिसङ्घातः केनचित्संम्बन्धेन वर्त्तते एवमेव सर्व्व एव सङ्घाताः स्वस्मिन्नेव वर्त्तन्ते नान्यस्मिन्निति ईक्षेत उपचारात् स्नेहाद्वा नैवं द्रष्टव्यमित्याह । अनन्यभावेनेति । न विद्यते अन्यो भावो यस्य अन्या बुद्धिर्यस्मिन् मनसि न स्फुरति तादृशमनसा यथा सङ्घाते निरूपितं तथाभूतेष्वपि ज्ञातव्यमित्याह । भूतेष्वपि तदात्मतामिति । भूतेषु स्वात्मा द्रष्टव्यः भूतानि च स्वस्मिन् द्रष्टव्यानीति तदात्मता भूतात्मता भूतेष्विवेति पाठे भूतेषु तत्त्वप्रतीतेः तद्भावापन्नानीति ज्ञानवतो दृष्टान्तः ॥ ४२ ॥

नन्वेकस्य कथं नानात्वप्रतीतिः कथं वा सुखदुःखाद्युपपत्तिरित्याशङ्क्याह । स्वयोनिष्विति । यथा एक एवाग्निः स्वयोनिषु काष्ठेषु नाना प्रतीयते वक्रऋज्वादिभेदेन श्वेतरक्तादिभेदेन च तत्र हेतुः योनीनां गुणवैषम्यम् आकारो जातिश्च तथा आत्मापि प्रकृतौ विद्यमानः आत्मनः सकाशात् यद्यपि तत्त्वानि जायन्ते ततश्च न तुल्यदृष्टान्तता तथापि यदा तेषु प्रविश्योद्गच्छति तदा दृष्टान्त इति ज्ञापयितुं तथात्मा प्रकृतौ स्थित इत्युक्तम् ॥ ४३ ॥

शास्त्रार्थमुपसंहरति । तस्मादिति । इदं हि शास्त्रं साङ्ख्यं योगस्त्वङ्गत्वेनोक्तः यथा भक्तिः अतः प्रकृतिव्युदासमेवोपसंहरति इमामनुभूयमानां स्वभावत्वेन स्वां प्रकृतिं स्वस्य जायेव स्वसंसारप्रवर्त्तिनीं दैवीं भगवत्सम्बन्धिनीं विना भगवत्कृपया भगवद्भावाभावे वा अनिवर्त्तमानां सदसदात्मिकां कार्य्यकारणरूपामनेकविधां वा अस्थापने हेतुः । दुर्विभाव्यामिति सम्बन्धिनिरूपणे हेतुः अतः स्वतो निवृत्त्यभावः एतादृशीं पराभाव्य स्वस्वरूपेणैवावतिष्ठत इति शास्त्रम् प्रकृतितद्विकारोपधानविलये पुरुषस्य स्वरूपावस्थानं मोक्ष इति सिद्धम् ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्वल्लभाचार्यकृतसुबोधिन्याम्
अष्टाविंशाध्यायविवरणम् ॥ २८ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

दार्ष्टान्तिकं योजयति । प्रधानादुल्मुकस्थानीयात् जीवसंज्ञिनात् जीवरूपो यः संज्ञितः संज्ञां चेतनां प्राप्तः तस्मात् विस्फुलिङ्गस्थानीयात् भूतेन्द्रियान्तःकरणात् धूमस्थानीयात् आत्मा परमात्मा अग्निस्थानीयः पृथग् यतो द्रष्टा स हि दृश्यात् पृथगेव सह स्थितोऽप्यसङ्गो यतो भगवानचिन्त्यैश्वर्य्यः भगवानेव ब्रह्मसंज्ञां प्राप्तः कस्मिंश्चिदधिकारिणि निर्विशेषचिन्मात्रत्वेन ज्ञातश्च भवतीत्यर्थः ॥ ४१ ॥

एवं सर्व्वस्मात् परमात्मानम् पृथग्भूतम् विभाव्य तस्य सर्व्ववस्तूनां कारणत्वं लयस्थानत्वञ्च पश्येदित्याह । सर्व्वभूतेष्विति । कारणस्यैव कार्य्यात्मत्वमित्यर्थः । कार्य्याणामपि लयस्थानत्वात् कारणरूपत्वमित्याह । सर्व्वेति । तदात्मतां महाभूतात्मताम् ॥ ४२ ॥

परमात्मनः प्रतिदेहवर्त्तित्वेन नानात्वप्रतीतिर्भद्राभद्रादिप्रतीतिश्च न वास्तवीत्याह । स्वयोनिषु काष्ठेषु ज्योतिरग्निः गुणवैषम्यात् दैर्घ्यह्रस्वत्ववक्रिमार्जवगन्धरूपादिभेदात् । प्रकृतौ देह आत्मा परमात्मा तथैव ॥ ४३ ॥

तस्मात् प्रकृतिरेव नानात्वदर्शयितृत्वादनर्थकारिणीति तां जयेदित्याह । स्वां स्वीयां स्वोपाधिमित्यर्थः । दैवीं कर्म्ममयीम् ।
यद्वा देवस्य विष्णोः शक्तिं दुर्विभाव्यां दुरत्ययां पराभाव्य ।

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ।

इति भगवदुक्त्यैव जित्वा स्वरूपेणानावृतचैतन्यरूपेणावतिष्ठते ॥ ४४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्
अष्टाविंशस्तृतीयस्य सङ्गतः सङ्गतः सताम् ॥ २८ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तथा भूतादितः कार्य्यात् प्रधानात् तत्कारणात् कार्य्यकारणरूपायाः प्रकृतेः सकाशात् धूमतुल्यात्माकृतदोषात् जीवसंज्ञि-

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तात् स्वांशभूताच्च आत्मा परमात्मा द्रष्टा सर्वज्ञः ब्रह्मसंज्ञकः भगवान् पृथक् ॥ ४१ ॥

अथ भगवतः सर्वबहिरन्तरवस्थितत्वं चाह। सर्वेषु भूतेषु चेतनाचेतनेषु आत्मानं परमेश्वरं भूतानि च आत्मनि परमेश्वरं अनन्यभावेन भक्त्या ईक्षेत ।

यो मां पश्यति सर्वत्र सर्वञ्च मयि पश्यति।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति॥

इति श्रीमुखोक्तेः इव पदार्थे भूतेषु चेतनाचेतनेषु तदात्मताञ्च ईक्षेत शक्तिशक्तिमतोः अंशांशिनोश्च भेदाभेदसम्बन्धात्सर्वमनवद्यम्॥४२॥

ननु जीवस्य निर्विकारस्य देहादिप्रकृतिविलक्षणत्वे उत्तममध्यमत्वादि कथं घटेतेत्यत्र प्रकृतितादात्म्यभ्रान्त्येत्याह। स्वयोनिष्विति। स्वयोनिषु स्वप्रस्फुरणस्थानेषु ॥ ४३ ॥

उपसंहरति। तस्मादिति। दैवीं देवस्य शक्तिम् स्वांशबन्धकरीम् पराभाव्य देवप्रसादेनैव जित्वा स्वरूपेण ब्रह्मात्मकेन निजरूपेणावतिष्ठते ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
अष्टविंशाध्यायार्थप्रकाशः ॥ २८ ॥

भाषाटीका।

पञ्चभूत इन्द्रिय अन्तःकरण जीवनामक प्रधान इनों से द्रष्टा आत्मा अलग है तिस आत्मा से भी ब्रह्मसंज्ञक भगवान् अलग हैं ॥ ४१ ॥

योगी सब भूतों को अपने मे तथा आपको सब भूतों मे एकाकार भाव से देखें जैसे जरायुजादि देह पञ्चभूतों से पृथक् नहीं हैं ॥ ४२ ॥

जैसे काष्ठ में अग्नि काष्ठों के विषमता से एक होकर भी अनेक प्रकार दीखता है तैसही प्रकृति मे स्थित आत्मा नाना प्रकार प्रतीत होता है ॥ ४३ ॥

तिस हेतु से परमेश्वर की शक्ति स्थूल सूक्ष्म रूप नहीं जीतने योग्य इस प्रकृति को जीतकर योगी अपने स्वरूपानन्द में स्थित होजाता है ॥ ४४ ॥

सब देश मे सबकाल में नहीं रहने वाले जो देहादि तथा अवस्था तिन सबों के साथ सब देश मे सब काल मे रहनेवाला आत्मा है ऐसा अनुभव निद्रा के अन्त मे करके आत्मा को सब का साक्षी जानना चाहिये ॥ ० ॥

इति श्रीभागवत तृतीयस्कन्ध अट्ठाईसमा अध्यायका
भाषानुवाद लक्ष्मणाचार्यकृत समाप्त ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे अष्टाविंशोऽध्यायः समाप्तः ॥ २८ ॥

## ऊनत्रिंशोऽध्यायः ।

॥ देवहूतिरुवाच ॥

लक्षणं महदादीनां प्रकृतेः पुरुषस्य च ।
स्वरूपं लक्ष्यतेऽमीषां येन तत्पारमार्थिकम् ॥ १ ॥
यथा सांख्येषु कथितं यन्मूलं तत्प्रचक्षते ।
भक्तियोगस्य मे मार्गं ब्रूहि विस्तरतः प्रभो ! ॥ २ ॥
विरागो येन पुरुषो भगवन्! सर्वतो भवेत् ।
आचक्ष्व जीवलोकस्य विविधा मम संसृतीः ॥ ३ ॥
कालस्येश्वररूपस्य परेषां च परस्य ते ।
स्वरूपं बत कुर्वन्ति यद्धेतोः कुशलं जनाः ॥ ४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

एकोनत्रिंशके भक्तियोगस्तु बहुधोच्यते ।
कालस्य च बलं घोरा संसृतिश्च विरक्तये ।

उक्तानुवादपूर्वकं भक्तिमार्गभेदान्पृच्छति द्वाभ्याम् । लक्षणं महदादीनां यथा सांख्येषु तथा कथितम् । येन लक्षणेन तत्पारमार्थिकं परस्परविभक्तमित्यर्थः यो भक्तियोगो मूलं प्रयोजनं यस्य तद्यन्मूलम् तत्कथितम् । तस्य भक्तियोगस्य मार्गं प्रकारं विस्तरतो मे ब्रूहि ॥ १-२ ॥

येन संसृतीनामाख्यानेन विगतरागो भवेत् ॥ ३ ॥

ईश्वररूपस्य महाप्रभावस्य ते त्वदात्मकस्य यद्धेतोर्यद्भयात्कुशलं पुण्यं कुर्वन्ति ॥ ४ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

बहुधा सगुणनिर्गुणतदवान्तरभेदेनानेकधा लक्षणमिति युग्मकम् । परमार्थशब्दोऽत्र लक्षणस्यातिव्याप्त्यादिनिरासेन याथार्थ्यपरः तस्य च "व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्" इत्युक्तेः परस्परविभाग एव प्रयोजनमिति तथा व्याख्यातम् तत्कथितं लक्षणं कवयो यन्मूलं यद्भक्तियोगप्रयोजनकं प्रचक्षते वर्णयन्ति तस्य भक्तियोगस्येति योजनीयम् ॥ १—२ ॥

विराग इति युग्मकम् । येनेत्यस्य संसृतीनामाख्यानेनेति व्याख्यानात् अर्थक्रममनुसृत्य यच्छब्दस्योत्तरवाक्येनान्वयमभ्युपगतमिति तच्छब्दापेक्षा निरस्ता अन्यथा यच्छब्दस्यासम्बद्धार्थता स्यादिति विवेचनीयम् स्वस्वरूपत्वात्त्वदात्मकस्य कालस्य स्वरूपमाचक्ष्व ॥ ३—४ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं सप्रपञ्चमुपपादितं साङ्गं मोक्षसाधनभक्तियोगमाश्रुत्य पुनरुक्तानुवादपूर्वकं तस्यैव भक्तियोगस्य भेदान् तदङ्गवैराग्योत्पत्तिहेतुं जीवस्य स्वर्गनरकादिगमनादिरूपसंसृतिं कालस्वरूपं च पृच्छति देवहूतिः । लक्षणमिति प्रकृतेः । मूलप्रकृतेः तत्कार्यभूतानां महदादीनां पुरुषस्य प्रत्यगात्मनश्चकारात्परमात्मनश्चेत्यमीषां पारमार्थिकमबाधितं स्वरूपं येन लक्ष्यते ज्ञायते तल्लक्षणं कथितं त्वयेति शेषः ॥ १ ॥

एवमुक्तानुवादः कृतः साङ्ख्येषु सिद्धान्तेषु तत्प्रकृत्यादीनां लक्षणं यन्मूलं यस्य भक्तियोगस्य मूलं प्रचक्षते तस्य भक्तियोगस्य मार्गं भेदं यथा यथावद्विस्तरतः मे मह्यं ब्रूहि कथय हे प्रभो! कथनसमर्थ कपिल ! ॥ २ ॥

येन संसृतिवर्णनेन पुरुषः मुमुक्षुः सर्वत्र इहामुत्र च विरागः वीतरागः भवेत् ताः जीवलोकस्य विविधाः संसृतीः ममाचक्ष्व कथय ॥ ३ ॥

तथा ईश्वररूपस्येश्वरशरीरस्य परेषां ब्रह्मादीनामपि परस्य प्रभोः कालस्य स्वरूपं वद मे कथय यद्धेतोः यस्मात्कालाद्धेतोः कुशलं निवृत्तिधर्मं जनाः कुर्वन्ति यत्कालहेतुकजन्ममरणादिसांसारिकधर्मनिवृत्तये कुशलमनुतिष्ठन्ति तस्य कालस्य स्वरूपं कथयेत्यर्थः ॥ ४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एवं तावज्ज्ञानान्मोक्षो ज्ञानं चाष्टाङ्गयोगेन प्राप्ततया भगवदुपासनया जायत इत्यभिहितम् । अधुना भक्तियोगस्य तारतम्यमभिधीयतेऽस्मिन्नध्याये । तत्प्रसञ्जयितुं सामान्यतो ज्ञातमपि विविच्य ज्ञातुं महदादिलक्षणं पृच्छति देवहूतिः । लक्षणमित्यादिना । येन लक्षणेनामीषां महदादीनां पारमार्थिकं स्वरूपं लक्ष्यते ज्ञायते ॥ १ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वक्तव्यार्थे नियममाह । यथेति । यथा सांख्यपूक्तं तथा कथितं महदादिलक्षणज्ञानं पुरुषार्थोपयोगि स्यादिति शेषः अन्यशास्त्रोक्तं किं न स्यादिति तत्राह । यन्मूलमिति । यस्सांख्य( १ ) मूलं तल्लक्षणं प्रचक्षते प्राज्ञा इति शेषः तल्लक्षणं मम गृहीतमित्यन्वयः । यद्वा यथा यथावत् साङ्ख्यपूक्तं तथा कथितं मे गृहीतमित्यन्वयः सांख्यमूलत्वाल्लक्षणस्येत्यर्थमिति उक्तमपीममर्थं विस्तरेण गृहीतवाह । भक्तियोगस्येति । मार्गं प्रकारम् ॥ २ ॥

न केवलं भक्तियोगमार्गेणालं वैराग्याभावे तस्य चञ्चलत्वसम्भवादतो विरक्तिमना भाव्यमतस्तत्प्रकारोऽपि वक्तव्य इत्याह । विराग इति । पुरुषः सर्वतो विरागो विगतरागो भवेदिति येनातो जीवलोकस्य गर्भवासादिलक्षणा विविधाः कर्मसंसृतीर्मामाचक्ष्वेत्यन्वयः । यद्वा येन संसृतीनां ज्ञानेन विरागो भवेत्ताहक् ज्ञानोत्पत्तिमाचक्ष्वेति ॥ ३ ॥

कालस्वरूपज्ञानमपि पुरुषार्थोपयोगीति तद्विषयप्रश्नं करोति । कालस्येति । जनाः यञ्चतोऽस्य कालनाम्नस्तव भयनिमित्तात्कुशलं कुर्वन्ति परेषामुत्तमानां सकाशादपि परस्योत्तमस्य च ते तव ईश्वररूपस्यैश्वर्यमूर्तेः कालस्य स्वरूपमाचक्ष्वेत्यन्वयः यत्नाज्ञातं त्वीत्वादिदं बोद्धुमशक्यं तथापि त्वत्प्रसादाच्छका स्यामित्याभन्त्रयामि "वा त्वामन्त्रणेऽद्भुत" इति यादवः ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

लक्षणमिति युग्मकम् । तन्महदादीनां कथनम् । यो भक्तियोग एव मूलमुद्देशं यस्य तादृशं प्रचक्षते ॥ १ ॥ २ ॥

विराग इति युग्मकम् ॥ ३ ॥

कालस्य स्वरूपमाचक्ष्व ॥ ४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं ज्ञानप्रकरणं साङ्ख्यं वै सुनिरूपितम् ।
अतः परं तु वैराग्यं चतुर्भिर्विनिरूप्यते ॥ १ ॥
वैराग्ये कारणं कालः परिच्छेदक ईरितः ।
कालस्य भक्तिहेतुत्वं माहात्म्यार्थं स्वतोऽपि तत् ॥ २ ॥
ततो जीवस्य गतयो लोकशास्त्रविभेदतः ।
लोको हि द्विविधः प्रोक्तः परलोकस्तथैहिकः ॥ ३ ॥
वैदिको ब्रह्मपर्यन्तः कालश्चैवं चतुर्गतिः ।
यावन्निरूपितं पूर्वं तत्कालात्पृथगेव हि ॥ ४ ॥
अग्रे सर्वं कालमाध्यमनो वैराग्यहेतुकम् ।
कालस्तु सर्वत्र समः स्वतन्त्रैः स विरुध्यते ॥ ५ ॥
दण्डनेतुर्यथा सर्वे हरिरेव तथा यतः ।
अतः कालवशानां हि वार्त्ता प्रकरणे तथा ॥ ६ ॥

एकोनत्रिंशदध्याये कालभक्तिः ससाधना ।
माहात्म्यं चापि कालस्य विस्तरेण निरूप्यते ॥ ७ ॥
सर्गो यत्रास्य नोत्पत्तिः वैराग्यं तु भवेत्ततः ।
आधिभौतिकभूतादीन्येतानीत्यपि बोध्यताम् ॥ ८ ॥

पूर्वप्रकरणे ज्ञानं साङ्ख्यं सुज्ञानरूपितं वैराग्याभावे तन्नोपपद्यत इति पूर्वानुवादपूर्वकं वैराग्यहेतुं पृच्छति । यद्यपि भक्त्या वैराग्यं भवतीति पूर्वं सूचितं तथापि कीदृशी भक्तिः वैराग्यं जनयतीति भक्तिभेदानपि पृच्छति तत्र प्रथमं पूर्वानुवादमाह सार्द्धेन । लक्षणमिति । त्वया महदादेः प्रकृतिपुरुषयोश्च लक्षणं कथितं येन लक्षणेन स्वरूपमात्मरूपं लक्ष्यते ज्ञायते अमीषां च स्वरूपं ज्ञायते अनेन ज्ञानोपायः सर्वोऽप्युक्त इत्युक्तम् ॥ १ ॥

तत्र प्रमाणमप्युक्तमित्याह । यथा साङ्ख्येषु कथितमिति । सांख्यस्य माहात्म्यमाह । यन्मूलं तत्प्रचक्षत इति । तत्पूर्वोक्तं लक्षणादिकं यत्साङ्ख्यमूलमिति प्रचक्षते यो भगवान् वा तस्य साङ्ख्यस्य मूलमिति प्रचक्षते एवमनूद्य वैराग्यहेतुभूतां भक्तिं पृच्छति । भक्तियोगस्येति । मे मह्यं मार्गं नानाविधं विस्तरतो बहुसाधनभेदतो ब्रूहि प्रभो ! इति तथा कथने सामर्थ्यम् ॥ २ ॥

किं ततः स्यात्तत्राह । विरागो येनेति । भगवज्ज्ञाति संबोधनं वैराग्यस्यापि भगवद्धर्मत्वेन भक्तिसाध्यत्वेऽपि दोष इति ख्यापनार्थं येन भक्तिमार्गेण कृत्वा पुरुषः सर्वतो विरागो भवेत् इवमेव वाक्यभेदेऽपि युज्यते भक्तिर्ह्यलौकिकप्रकारेण वैराग्यहेतुः लौकिकप्रकारेण वैराग्यहेतुं पृच्छति । आचक्ष्वेति । जीवलोकस्य लौकिकप्राणिनो विविधाः संसरणमार्गाः देवतिर्यङ्मनुष्यादियोनिप्राप्त्युपायाः मे मह्यम् ॥ ३ ॥

कालश्च वैराग्यहेतुरिति तस्य स्वरूपं कथयेत्याह । कालस्येति । ईश्वररूपमिव रूपं यस्य ऐश्वर्यांशो भगवता काले स्थापितः अतः कालस्य स्वरूपं ज्ञातव्यं किं च परेषां ब्रह्मादीनामपि परो नियन्ता किं च यतेनि हर्षे सर्वे जनाः कालहेतोः कुशलं कुर्वन्ति कालाज्ञयाभावे कोऽपि कुशलं न कुर्यात् ॥ ४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एकोनत्रिंशके भक्तिः सगुणा निर्गुणापि च ।
लक्ष्यते प्राणिसम्मान क्रमः कालबलञ्च तत् ॥ ० ॥

साङ्ख्यं योगञ्च श्रुत्वा पुनरुक्तानुवादपूर्वकं स्वानुष्ठेयत्वात् श्रुतमपि भक्तियोगं सप्रभेदं शुश्रूषमाणः पृच्छति । महदादीनां लक्षणं साङ्ख्येषु साङ्ख्यशास्त्रेषु यथा तथा कथितं येन लक्षणेन अमीषां महदादीनां स्वरूपं तत्प्रसिद्धं लक्ष्यते ज्ञायते कीदृशं पारमार्थिकं परस्परविभक्तमित्यर्थः । तत्स्वरूपज्ञानं यन्मूलं यत्कारणकं प्रचक्षते यं विना तेषां स्वरूपं ज्ञातमप्यज्ञातमेव भवतीत्यर्थः । तस्य भक्तियोगस्य मार्गं प्रकारं ब्रूहि ॥ १ ॥ २ ॥

भक्तौ प्रवेशाय किञ्चिद्वैराग्यमपेक्ष्यत इति तदर्थं पृच्छति । विराग इति । ताः संसृतीराचक्ष्व येन संसृत्याख्यानेन ॥ ३ ॥

कालस्य च स्वरूपमाचक्ष्व तेत्वद्रूपस्य । यद्धेतोः यतः कालभयाद्धेतोः ॥ ४ ॥

---

( १ ) सांख्यं मूलं प्रतिपादकं यस्य तत् ।

लोकस्य मिथ्याभिमतेरचक्षुषश्चिरं प्रसुप्तस्य तमस्यनाश्रये।
श्रान्तस्य कर्मस्वनुविद्धया* धिया त्वमाविरासीः किल योगभास्करः ॥ ५ ॥

मैत्रेय उवाच ॥

इति मातुर्वचः श्लक्ष्णं प्रतिनन्द्य महामुनिः ॥
आबभाषे कुरुश्रेष्ठ! प्रीतस्तां करुणार्दितः ॥ ६ ॥

श्रीभगवानुवाच ॥

भक्तियोगो वहुविधो मार्गैर्भामिनि! भाव्यते।
स्वभावगुणमार्गेण पुंसां भावो विभिद्यते ॥ ७ ॥
अभिसन्धाय यो हिंसां दम्भं मात्सर्यमेव वा।
संरम्भी भिन्नदृग् भावं मयि कुर्यात्स तामसः ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

एकोनत्रिंशे भक्तिर्विस्तरतः कालबलादिकं च वर्ण्यते तत्रादौ श्रीदेवहूतिः उक्तानुवादपूर्वकं भक्तेर्भेदान् वैराग्योदयाय संसृतिं कालस्वरूपं च पृच्छति। लक्षणमित्यादिना। येन अमीषां महदादीनां पारमार्थिकं यथार्थं स्वरूपं लक्ष्यते ज्ञायते तल्लक्षणं महदादीनां प्रकृतेः पुरुषस्य जीवस्य चकारात् परमात्मनश्च ॥ १ ॥

सांख्येषु सम्यक् ख्यायन्ते तत्त्वानि येषु तेषु वेदान्तेषु यथास्ति तथा कथितं त्वयेति शेषः तल्लक्षणं यन्मूलं यस्य भक्तियोगस्य मूलं प्रचक्षते तस्य भक्तियोगस्य मार्गं विस्तरतो मे मह्यं ब्रूहि कथय ॥ २ ॥

संसृतीः आचक्ष्व आख्याहि येन संसृतीनामाख्यानेन पुरुषो मुमुक्षुः सर्वतः ऐहिकादामुष्मिकाच्च विगतरागो भवेत् ॥ ३ ॥

ते तव प्रजाः यद्धेतोः यद्भयात् कुशलं कुर्वन्ति तस्य परेषां ब्रह्मादीनामपि परस्य ईश्वररूपस्य शक्तितद्वतोरभेदविवक्षया परमात्मरूपस्य कालस्य स्वरूपं च आचक्ष्व ॥ ४ ॥

---

भाषा टीका।

देवहूतीजी बोलीं हे प्रभो! इन महदादिकों का जैसा लक्षण साङ्ख्यशास्त्र में कहा है और जिस लक्षण से इनका स्वरूप पृथक् जाना जाता है सो प्रकृति पुरुष महदादिकों का लक्षण आपने मोसे कहा है यह सांख्य जिस भक्ति का साधन है तिस भक्ति योग के मार्ग को विस्तार पूर्वक मेरे से कहिये ॥ १ ॥ २ ॥

हे प्रभो! जिनके सुनने से पुरुषको संसार से वैराग्य होवै ऐसी संसार की नाना प्रकारकी गति कथन करो ॥ ३ ॥

ब्रह्मादिकों के पर आपही तिन आपका स्वरूप जो काल तिस के स्वरूप का कथन करो जिस काल के भय से सब ज्ञानी पुरुष धर्मादि यत्न करते हैं ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

अचक्षुषोऽज्ञस्य अतो मिथ्याभूते देहादावभिमतिरहङ्कारो यस्य अतः कर्मस्वनुविद्धया आसक्तया धिया श्रान्तस्य अत एवानाश्रयेऽपारे तमसि संसारे चिरं प्रसुप्तस्य लोकस्य प्रबोधाय त्वं योगप्रकाशको भास्करः किलाविर्भूतोऽसि ॥ ५ ॥

श्लक्ष्णं सुन्दरम् ॥ ६ ॥

मार्गैः प्रकारविशेषैः तानेवाह। स्वभावभूता ये गुणास्तेषां मार्गेण वृत्तिभेदेन भावोऽभिप्रायः फलसङ्कल्पभेदाद्भक्तिभेद इत्यर्थः ॥ ७ ॥

अभिसन्धाय सङ्कल्प्य संरम्भी क्रोधी भिन्नदृक् भेददर्शी यो भावं भक्तिं कुर्यात्स त्रिविधोऽपि तामसः ॥ ८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी।

अत्र मिथ्याभिमत्यादिचतुर्णामपि विशेषणानां साकूतत्वात्परिकरालङ्कारः मिथ्याभिमतेरज्ञानजाड्यनिवर्त्तनाद्भास्करसादृश्यं पुष्टं तथाचक्षुषश्चक्षुः प्रकाशनात् प्रसुप्तस्य स्वापतमो निवर्त्तनात् श्रान्तस्य च श्रमपल्वलसंशोषणाच्च तत्पुष्टमिति योगप्रकाशकः भक्तिज्ञानयोगरूपपञ्चविकाशकः ॥ ५ ॥

भक्तियोगस्य मूलत्वोक्त्या प्रीतः दैन्येन तु करुणार्द्दितः ॥ ६ ॥

गुणाः सत्त्वादयस्तेषां वृत्तिभेदेन शमादिकार्य्यभेदेन निर्गुणभक्तेरपि वक्ष्यमाणत्वात् तस्याश्च क्रियात्वेन भावत्वेन च द्वैविध्यात् श्लेषेणायमप्यर्थः स्वं चैं भावश्च गुणाश्च तेषां मार्गेण वृत्तिभेदेन तत्र स्वशब्दवाच्यभक्तियोगस्य वृत्तिभेदः श्रवणादिः भावस्य वृत्तिभेदः दास्यादिः गुणानां वृत्तिभेदो हिंसादिसङ्कल्पः तेन पुंसां भावोऽभिप्रायो भिद्यते इति ॥ ७ ॥

तत्र तावद्गुणमार्गेण भक्तिभेदानाह। अभिसन्धायेत्यादि त्रिभिः। मम शत्रुर्म्रियतामिति सङ्कल्प्य भक्तिं जपादिरूपां भाव-

* अनुवद्धयेति वीरराघव पाठः।

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या श्रीदीपिकाटिप्पणी।

शब्दस्यात्र रतिपर्य्यायत्वे क्रोधाद्यसम्भवात् भावनं जपादि-नोपासनं भाव इत्यभिप्रेत्य भक्तिरिति व्याख्यातम्। वस्तुतस्तु भावं रत्याभासमिति वा व्याख्येयम् परत्र स्वर्चनयागावेवोक्ताविति प्रक्रमसाजात्यात् क्रियारूपैव भावशब्देनापि विवक्षिता दम्भं स्वस्य धर्मध्वजित्वेन महत्त्वदर्शनाल्लोकप्रतिष्ठां मात्सर्य्यन्तज्जन्यं परोत्कर्षनाशम् ॥ ८ ॥ ९ ॥

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका।

एवं प्रष्टव्यं पृष्ट्वा पुत्रं प्रसादयति। लोकस्येति। मिथ्याभिमतेः मिथ्याभिमतिरभिमानो यस्य मिथ्याभूतदेहात्माभिमानस्वतन्त्रात्माभिमानस्येत्यर्थः अत एवाचक्षुषः स्वात्मपरमात्मयाथात्म्यज्ञानरहितस्यात एव कर्मसु स्वर्गनरकादिसाधनेषु कर्मस्वनुबद्धया आसक्तया धिया श्रान्तस्यात एव अनाश्रये अपारे तमसि संसारे प्रसुप्तस्य लोकस्य प्रबोधाय त्वं योगभास्करः आविरासीराविर्भूतोऽसि किल ॥ ५ ॥

एवमापृष्टः कपिलो भक्तियोगमार्गादीन् कथयितुमाबभाष इत्याह मैत्रेयः। इतीति। हे कुरुश्रेष्ठ! विदुर इत्युक्तविधं श्लक्ष्णं सरसं सुन्दरं वा मातुर्वचः प्रतिनन्द्य महामुनिः कपिलः प्रीत समीचीनप्रश्नेन जातानन्दः मातरि करुणयार्दितः परिप्लुतः तां मातरं प्रत्याबभाषे ॥ ६ ॥

तदेवाह। भक्तियोग इति। हे भामिनि! पुंसां स्वभावगुणमार्गेण सत्त्वादिगुणवृत्तिवशेन मार्गैः प्रकारविशेषैर्भक्तियोगो बहुधा नाना भाव्यते निष्पाद्यते हि यतः पुंसां भावः मनोवृत्तिर्भिद्यते ततस्तदधीनोऽपि भक्तियोगस्तामसराजससात्त्विकादिभेदेन भिद्यत इत्यर्थः ॥ ७ ॥

तानेव भेदानाह। अभिसन्धायेति। हिंसादम्भमात्सर्याणामन्यतमं द्वयं त्रितयं वाभिसंधाय सङ्कल्प्य संरम्भी क्रोधी भिन्नदृग् अब्रह्मात्मकस्वतन्त्रवस्तुदर्शी मयीश्वरे भावं भक्तिं यः कुर्यात्स त्रिविधोऽपि तामसः तामसभक्तियोगयुक्तः तत्रापि हिंसादम्भमात्सर्यादिभिरधममध्यमोत्तमत्वं बोध्यम् एवमन्यत्रापि ज्ञेयम् ॥ ८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अरिदेवादिष्वेकं प्रत्ययं प्रश्नः किं न स्यात्किमिति मां प्रतीत्याशङ्क्य तस्य तादृशप्रश्नवचनस्यानुपयुक्त्वाभावादिह लोके तव ज्ञानप्रवर्तनायावतीर्णत्वाच्च त्वमेव सर्वज्ञः इति भावेनाह। लोकस्येति। 'लुक् प्रकाश' इति धातोः प्रकाशो ज्ञानं लोकस्य परमात्मज्ञानप्राप्तियोग्यस्य जनस्य संसारान्मुमुक्षोरित्यर्थः। हिताय योगभास्करः ज्ञानयोगादित्यस्त्वमाविरासीः किल लोकवेदादिवार्तां अन्यस्येदृक् सामर्थ्याभावादिदं सम्भावितं च "वार्तासम्भाव्ययोः किल" इति च अवतारसाफल्यमेवोपपादयति। अचक्षुष इत्यादिना। प्रत्यक्षतो दृश्यमानत्वाच्चक्षुर्हीनत्ववचनं व्याहतमित्यत उक्तम्। चिरं प्रसुप्तस्येति। अनाश्रयेऽपारे तमस्यविद्यालक्षणेऽनादित एव प्रसुप्तस्य शयानस्य तत्फलमाह। मिथ्याभिमतेरिति। बोधकाभावादन्यथा ज्ञानिनो देहाद्यभिमानित्वादेतत्फलमाह।

श्रान्तस्येति। कर्मसु पुण्यपापलक्षणेष्वनुविद्धयानुरक्तया धिया श्रान्तस्यानवस्थितेरिति ॥ ५ ॥

मातुर्वचः श्रुत्वा कपिलेन भगवता किमुत्तरं प्रत्यूचे इतीतरचोद्यं परिहरति। मैत्रेय इति। अर्दगताविति धातोः करुणामर्दितो गतः अनेन करुणैव वक्तव्यत्वे कारणमित्यसूचि ॥ ६ ॥

पुरुषार्थसाधनेषु भक्तियोगस्य प्राधान्यादत्र प्रथमतस्तत्प्रकारम् निरूपयति। भक्तियोग इति। भामिनि! सौन्दर्यादिगुणपूर्णे! मन्मातः! शास्त्रमार्गैर्भाव्यते निरूप्यते बाहुविध्ये निमित्तमाह। स्वभावेति। तामसादिस्वभावोद्बोधकसत्त्वादिगुणभेदेन भावो भक्तिर्विभिद्यते तामसादिभेदेन नाना भवतीत्यर्थः ॥ ७ ॥

बाहुविध्यं दर्शयति। अभिसन्धायेति। यो हिंसां परोपद्रवं दम्भं धर्मध्वजवृत्तिं मात्सर्यं चाभिसन्धाय मनसि कृत्वा हरिभक्तेषु संरम्भी गूढद्वेषो भिन्नदृक् वस्त्वयथार्थदर्शी मयि भावं कुर्यात्स तामसभक्त इत्युच्यत इत्यन्वयः ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

योगस्य भास्करः परमप्रकाशक इत्यर्थः ॥ ५ ॥

इति भक्तिमहिमज्ञानजत्वात् प्रतिनन्द्य प्रीतः प्रश्नसौष्ठवेन करुणा तु दैन्येन ॥ ६ ॥

अनन्यनिमित्ता निर्गुणा भक्तिरपि वृत्तिभेदेन बहुविधेत्याह। मार्गैः प्रकारविशेषैः यतः स्वस्य भक्तियोगस्यैव मार्गेण वृत्तिभेदेन श्रवणादिना भावस्याभिमानस्य। तद्भेदेन दास्यादिना गुणानां तम आदीनाञ्च तद्भेदेन हिंसादिना पुंसां भावोऽभिप्रायो भिद्यते अत्र मुक्ताफलटीका च अयमात्यन्तिकः ततः परं प्रकारान्तराभावात्। अस्यैव भक्तियोग इत्याख्या। अन्वर्थेन भक्तिशब्दस्यात्रैव मुख्यत्वात् इतरेषु फलेषु एव अनुरागः न तु विष्णौ फलाभावे भक्तित्यागादित्येषा श्रीगोपालतापनीश्रुतौ च। भक्तिरस्य भजनं तदिहामुत्रोपाधिनैरास्येनामुष्मिन्मनःकल्पनमेव तदेव च नैष्कर्म्यमिति। अत्र भाविनीति भावयुक्ते पुरुष इत्यर्थः ॥ ७

अत्र विशेषो भक्तिसन्दर्भे दृश्यः। तत्र स्वमार्गेण भावमार्गेण च भेदाः सतां प्रसङ्गादित्यादिना येषामहं प्रिय आत्मेत्याद्यन्तेन दर्शिताः अथ केवलस्वरूपासिद्धा उदाह्रियते तत्र सकामा कैवल्यकामा च उपासकसङ्कल्पगुणैस्तत्तद्गुणतेनोपचर्यते। तत्र सकामां द्विविधा तामसी राजसी च तत्र पूर्वस्या गुणमार्गेण भेदमाह। अभीति त्रिभिः। अभिसन्धाय सङ्कल्प्य संरम्भी सक्रोधः भिन्नदृक् स्वस्मिन्निव सर्वत्र यत् सुखदुःखं तदवेत्ता निरनुकम्प इत्यर्थः। अत्र संरम्भीति क्षोभादीनामुपलक्षणं ज्ञेयम् ॥ ८ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

ननु मया सर्वं वक्तव्यमिति कोऽयं निर्बन्धस्तत्राह। लोकस्येति। लोकस्य निस्तारार्थं योगभास्करः किल त्वमाविरासीः अतस्त्वयैव सर्वमज्ञाननिवर्त्तकं वक्तव्यं सूर्येणैव हि सर्वं तमो बाध्यते ननु लोकाः स्वयमेव स्वाज्ञानं कथं न दूरीकुर्वन्ति तत्राह।

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

मिथ्याभिमतेरिति । मिथ्याभिमतिरभिमानो यस्य अभिमानेन ग्रस्ता न सन्मार्गे जानन्तीत्यर्थः किं च चक्षुषा हि मार्गपरिज्ञानं लोकास्त्वचक्षुषः चक्षुरत्र सच्छास्त्रमन्यथा सूर्येणापि न कार्यं किञ्चिदित्यन्ताविवेकार्थमाह । अनाश्रयेऽरत्नके तमस्यज्ञाने चिरं प्रसुप्तस्य पूर्वापरानुसन्धानव्यतिरेकेण संसार एव रमतः तत्रापि कर्मस्वनुविद्धया धिया श्रान्तस्याकर्मश्रान्तस्य शयानोऽज्ञः अन्धः सुप्तस्तमस्यन्धः दीनो भवति सर्वेषां ये समर्थाः दयालवस्तेषां योगप्रकाशको भास्करः अतश्चक्षुरपि प्रयच्छति तमोऽपि दूरीकरोति सुप्तमपि प्रबोधयति श्रमापनोदनं च करोति कर्मासक्तिं च त्याजयति मिथ्याभिमानं च दूरीकरोति आश्रयश्च भवति शीघ्रं च कृतार्थं करोतीति अष्टाङ्गोद्धारहेतुरयं भास्करः ॥५॥

सन्मार्गं पृच्छतीति सन्तुष्टः वैराग्यहेतुर्नोक्त इति श्रोतृत्वमवगत्यापि प्रीतः मातृत्वादनुरुद्धः तस्या दीनत्वं दृष्ट्वा करुणया पीडितः अग्रे इयं कृतार्था भविष्यतीति महामुनित्वाज्ज्ञात्वा अभिनन्दनेन संमुखीकृत्य बभाष इत्याह । इतीति । श्लक्ष्णं मनोहरं मातुर्वचः तथात्वेनाभिनन्द्य तां पुरुषार्थोपयोगिनीमाबभाषे प्रत्युत्तरं दत्तवान् ॥ ६ ॥

मुख्यां भक्तिं वक्तुमादौ गुणैर्भिन्नां भक्तिमाह । मार्गैर्मतभेदैः पुरुषस्वभावभेदैश्च बहुविधो भाव्यते यतः स्वभावगुणमार्गेण पुंसां स्वभावो विभिद्यते स्वभावो जीवभेदनिमित्तः जीवा ह्यनेकविधाः नानास्वभावाः गुणा अपि भेदकाः अन्तःकरणस्वभावहेतवः मार्गा देशकालनियमेन देहनियामकाः वर्णाश्रमधर्मपाखण्डादिप्रतिपादनशास्त्ररूपा मार्गास्तेषामनुवृत्त्या प्राणिनां भावो विभिद्यते अन्यथा श्रुत्वापि स्वभाववशादन्यथार्थं कल्पयन्ति तदनुसारिणश्च तथैव प्रवर्तन्ते अतो बहुविधा मार्गा भक्तौ ॥ ७ ॥

तत्र प्रथमं तामसान् भक्तिभेदानाह । अभिसन्धायेति । शत्रूणां हिंसामुद्दिश्य यस्तु मयि भावं भक्तिं कुर्यात्स तामसो भवति तस्माद्दम्भेन यः करोति परप्रतारणार्थं स राजसतामसः परस्य बुद्धिर्धनं चाप ह्रियते इति तामसत्वं मात्सर्येण परोत्कर्षासहनेन लोकानामसाधारणबुद्धिनिवृत्त्यर्थं यो मयि भावं कुर्यात्स सात्त्विकतामसः अयं भावः आन्तरबुद्ध्यात्मकः अभिध्यानरूपस्तपोरूपो वा न तु श्रवणादिरूपः तत्र तस्यानधिकारात् भिन्नदृगिति अभिन्नदृष्ट्याप्येते भावा भवन्तीति तद्व्यावृत्त्यर्थमुक्तम् ॥

> यथा हि भगवानेव वस्तुतः सदसच्च यत् ।
> सत्येनानेन नः सर्वे यान्तु नाशमुपद्रवाः ॥

इति वाक्यात् तमसो मूलं संरम्भीति भगवत्स्तोत्रेषु सर्वेषां सङ्ग्रहार्थं बहूनि फलान्युच्यन्ते अतः फलविशेषकामनयैव स्तोत्रादीनां श्रवणं सम्भवतीति तामसी भक्तिरुक्ता ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

लोकस्य मिथ्याभिमतेरभिमानजाड्यानिदर्शनाय अचक्षुषश्चक्षुःप्रकाशदानाय तमसि संसारे प्रसुप्तस्य स्वापतमोनाशाय कर्मस्वासक्तया बुद्ध्या श्रान्तस्य श्रमपल्वलसंशोषणाय योगभास्करः भक्तिज्ञानयोगकमलप्रकाशको भास्करः ॥ ५ ॥ ६ ॥

देवानां गुणलिङ्गानामित्यनेन निर्गुणाया भक्तेरुक्तत्वादिह प्रथमं सगुणां भक्तिं लक्षयितुमाह । भक्तियोगः एक एव भामिनि भावोऽभिप्रायस्तद्वति पुरुषे मार्गैः प्रकारविशेषैर्बहुविधो भाव्यते चिन्त्यते ज्ञायत इत्यर्थः । स च भावः स्वभावभूता ये गुणास्तन्मार्गेण वृत्तिभेदेन विभिद्यते नाना विभेदवान् भवति । भक्तिः स्वरूपतो निर्गुणापि पुंसां स्वाभाविकतमआदिगुणोपरक्ता सती तामस्यादिनामभिः सगुणा भवतीति भावः ॥ ७ ॥

तत्र प्रथमं तामसीं भक्तिं लक्षयन् भक्तिस्तामसी स्यादिति वक्तुमनौचित्यं परामृशन् तद्वान् पुरुष एव तामसादिशब्दैरुच्यत इत्याह । अभिसन्धाय सङ्कल्प्य संरम्भी क्रोधी भिन्नदृक् भेददर्शी स्वस्मिन्निव परस्मिन्नपि सुखदुःखं समानं न पश्यतीति निरनुकम्प इत्यर्थः । यो मयि भावं भक्तिं कुर्यात् स त्रिविधोऽपि तामसः अस्यास्तामस्या भक्तेस्त्रैविध्यं स्पष्टमुक्तम् बृहन्नारदीये यथा ।

> यस्त्वन्यस्य विनाशार्थं भजते श्रद्धया हरिम् ।
> फलवत् पृथिवीपाल ! सा भक्तिस्तामसाधमा ॥
> योऽर्च्चयेत् कैतवधिया स्वैरिणी स्वपतिं यथा ।
> नारायणं जगन्नाथं सा वै तामसमध्यमा ॥
> देवपूजापरान् दृष्ट्वा स्पर्द्धया योऽर्च्चयेद्धरिम् ।
> शृणुष्व पृथिवीपाल ! सा भक्तिस्तामसोत्तमा ॥

एवं राजस्याः सात्त्विक्याश्च भक्तेस्त्रैविध्यमुक्तं द्रष्टव्यम् ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अचक्षुषोऽनादिमायावृतज्ञानस्य अतो मिथ्याभिमतेः देहात्मवादिनः अतः कर्मसु अनुविद्धया अनुगतया धिया श्रान्तस्य अत एवानाश्रयेऽपारे तमसि संसारे चिरं प्रसुप्तस्य लोकस्य तमोनिवारणाय योगभास्करो योगप्रकाशकस्त्वमाविरासीः ॥ ५ ॥

श्लक्ष्णं मधुरम् ॥ ६ ॥

स्वभावानां गुणानां च मार्गेण द्वारेण पुंसां भावोऽभिप्रायः विभिद्यते अतः भक्तियोगोऽपि मार्गैः प्रकारविशेषैः बहुधा बहुप्रकारः भाव्यते निष्पाद्यते ॥ ७ ॥

यो भक्तः हिंसादिकमभिसंधाय सङ्कल्प्य संरम्भी क्रोधी भिन्नदृक् आत्मनः ब्रह्मात्मकत्वदर्शी भावं भक्तिं कुर्यात् स त्रिविधोऽपि तामसः ॥ ८ ॥

---

भाषाटीका ।

देहादिकर्मे निरत ज्ञान रहित निराधार अन्धकार में चिरकाल से सोते हुए कर्मों में लगी हुई बुद्धिसे अधिकश्रान्त लोक के ज्ञानदेने के लिये आप साक्षात् योग सूर्य उदय भये हो ॥ ५ ॥

मैत्रेयजी बोले हे विदुरजी ! महामुनि श्रीकपिलजी इस प्रकार सरस माता के वचन को सुनकर प्रसंसा करके कृपा से पीडित होकर प्रसन्न भये फिर यह वचन बोले ॥ ६ ॥

श्रीभगवान् बोले हे मातः ! भक्ति योग बहुत प्रकार का

विषयानभिसन्धाय यश ऐश्वर्यमेव वा।
अर्चादावर्चयेद्यो मां पृथग्भावः स राजसः॥ ९॥
कर्मनिर्हारमुद्दिश्य परस्मिन्वा तदर्पणम्॥
यजेद्यष्टव्यमिति वा पृथग्भावः स सात्त्विकः॥ १०॥
मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये।
मनो गतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ॥ ११॥
लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम्।
अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे॥ १२॥

भाषा टीका।

होता है क्योंकि स्वभाव के तथा सत्त्वादि गुणों के भेद से पुरुषों का अभिप्राय नाना प्रकार का होजाता है॥ ७॥

जो पुरुष हिंसा मात्सर्य दम्भको मनमें रखकर क्रोधी अतिभेददृष्टि वालाहोकर मेरेमें भक्ति करताहै वह तामसभक्त है॥ ८॥

———

श्रीधरस्वामिकृतभावार्थदीपिका।

पृथग्भावो भेददर्शी॥ ९॥

कर्मनिर्हारं पापक्षयं परस्मिन् परमेश्वरे तदर्पणं कर्मार्पणम् भगवत्प्रीतिमुद्दिश्येत्यर्थः। यष्टव्यमिति। विधिसिद्धिमुद्दिश्येत्यर्थः भेददर्शित्वमर्चादावर्चनं च त्रिष्वपि समानम् तदेवं तामसादिभक्तिषु त्रयस्त्रयो भेदाः तासु यथोत्तरं श्रैष्ठ्यम् एवं च श्रवणकीर्तनादयो नवापि प्रत्येकं नव नव भेदाः तदेवं सगुणा भक्तिरेकाशीति भेदा भवति॥ १०॥

निर्गुणा भक्तिरेकविधैव तामाह। मद्गुणश्रुतिमात्रेणेति द्वाभ्याम्। मद्गुणश्रुतिमात्रेण मयि पुरुषोत्तमे मनोगतिरिति या भक्तिः सा निर्गुणस्य भक्तियोगस्य लक्षणमित्यन्वयः। अविच्छिन्ना सन्तता॥ ११॥

लक्षणं स्वरूपम्। अहैतुकी फलानुसन्धानशून्या अव्यवहिता भेददर्शनरहिता च॥ १२॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी।

पापक्षयं मोक्षम्। "तस्मिन्समर्पितं कर्म स्वाभाविकमपीश्वरे। भवेद्भागवतं कर्म तत्कर्म किमुतार्पितम्" इत्युक्तमाहात्म्यं कर्मार्पणमुद्दिश्य तत्र श्रीवैष्णवानां मते कर्मार्पणस्यैव दास्यत्वात्तस्य च तत्प्रीतिफलत्वाल्लक्षणया भगवत्प्रीतिमुद्दिश्येत्यार्थिकोऽर्थः विधिसिद्धिमुद्दिश्य न तु भक्तितत्त्वज्ञानेन यो यजेत्परमेश्वरं पूजयति अत्र भेददर्शित्वं भक्तेर्मोक्षस्य पृथक् पुरुषार्थत्वभावनम्॥ १०॥

मद्गुणेति युग्मकम्। प्रत्येकं नवभेदा इति। यथा श्रवणं त्रिविधं तामसं त्रिविधं राजसं त्रिविधं सात्त्विकम् एवं नवविधमेवं कीर्त्तनादिकमपि नव नवविधमेवं सगुणा भक्तिरेकाशीति भेदा मद्गुणश्रुतिमात्रेणेत्यत्र मात्रशब्देनोद्देश्यान्तरासिद्धेर्व्यावृत्तिः मनोगतिः मनसः स्वकर्त्तृकतदानुकूल्याभिलाषरूपा प्रवृत्तिरिति या भक्तिस्तद्रूपा या भक्तिस्तत्प्रेरिता श्रवणादिरूपां च या भक्तिरिति भावरूपा चेष्टारूपा चेति द्विविधापि संगृहीता सा निर्गुणस्य भक्तियोगस्य लक्षणं स्वरूपमित्यन्वयार्थः॥ ११॥ १२॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

विषयान्। शब्दादिविषयलाभं यशः ऐश्वर्यं वान्यतमं यथारुचि द्वयं त्रयं वाभिसन्धाय पृथग्भावः परमात्मनः स्वात्मशरीरकत्वमज्ञात्वा देवतामात्रबुद्धित्वं पृथग्भावत्वमेवंविधः अर्चादौ मां योऽर्चयेत्सराजसः॥ ९॥

कर्मनिर्हारं पापक्षयं परस्मिन् परमपुरुषे तदर्पणं कर्मसमर्पणं भगवत्प्रीतिमुद्दिश्येत्यर्थः। यष्टव्यमिति। शेषिण ईश्वरस्याज्ञारूपत्वाद्विधेर्वैधमवश्यं स्वरूपानुबन्धि कर्तव्यमकरणे भगवता निगृहीतःस्यामिति वाभिसन्धायापृथग्भावः स्वात्मनो ब्रह्मशरीरत्वं जानन् यो मां यजेत् स सात्त्विको भक्तः अत्र पृथग्भाव इति छित्त्वा भेददर्शित्वं त्रिष्वपि समानमिति केचिद्योजयन्ति तत्र सात्त्विकत्वमसङ्गतं सत्त्वस्य यथावस्थितवस्तुप्रकाशकत्वस्य सत्त्वात्सञ्जायते ज्ञानं तत्र सत्त्वं निर्मलत्वात्प्रकाशकमिति भगवता गीतत्वेन पृथग्भावस्य सत्त्वकार्यत्वाभावादतोऽपृथग्भाव इत्येव छेदोऽथमपि सात्त्विकः कर्मनिर्हाराद्यभिसन्धिभेदादधममध्यमोत्तमभेदेन त्रिविधः॥ १०॥

एवं च तामसादयस्त्रयोऽप्यवान्तरभेदैर्नवविधा तत्र नवमस्यैव भक्तियोगस्य साक्षान्मुक्त्युपायत्वं वक्ष्यन् तस्य फलाव्यवहितदशारूपलक्षणमाह द्वयेन। मद्गुणेति। सर्वगुहाशये सर्वेषां हृदयकुहरे वर्तमाने पुरुषोत्तमे मयि मद्गुणश्रवणमात्रेण गङ्गाम्भसोऽम्बुधाविव अविच्छिन्ना विजातीयप्रत्ययान्तराव्यवहिताहैतुकी फलाद्युपाधिरहिताव्यवहिता मोक्षं प्रत्युपायान्तरव्यवधानरहिता भक्तिः प्रीतिपूर्वकानुस्मरणरूपा मनोवृत्तिरिति या सा निर्गुणस्य सत्त्वादिगुणत्रयसम्पादकस्य मुक्तिसाधनस्येत्यर्थः भक्तियोगस्य लक्षणं स्वरूपमित्यर्थः॥ ११॥ १२॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शब्दादिविषयान् दिक्षु व्याप्तं यशश्छत्रचामराद्यैश्वर्यं वा मनसाभिभाय सङ्कल्प्य योऽर्चादौ प्रतिमादौ मामर्चयेत् स पृथग्भावस्तद्रूपाणाम् भेददर्शी अर्चादिस्थितानां तेषां रूपाणां भेदं पश्यन् राजसो भक्तः ॥ ९ ॥

यः कर्मनिर्हारं पापक्षयमुद्दिश्य मां यजेत् परस्मिन्सर्वोत्तमे मयि तदर्पणं कर्मार्पणमुद्दिश्य यजेत् यष्टव्यं विहितत्वान्ममेदं कर्तव्यमिति वा मां यजेदपृथग्भावः मद्रूपाणामभेददर्शी स सात्त्विको भक्तः राजससात्त्विकयोर्भेदं पृथगपृथग्भावावेव निमित्तं नत्वर्चादावर्चनमज्ञस्य विहितत्वात्तज्ज्ञस्य गुणहेतुत्वात् तदुक्तम्

अज्ञोऽर्चयेदेवार्चायामन्यथा दोषवान् भवेत् ।
ज्ञस्त्वर्चयन् सुगुणवानन्यथा दोषवांस्तु इति ॥ १० ॥

निर्गुणभक्तिलक्षणं वक्ति । मद्गुणेति । यथाम्बुधौ गङ्गाम्भसो गतिरविच्छिन्ना तथा मद्गुणश्रवणमात्रेण यस्य सर्वगुणाश्रये सर्वगुणानामाश्रयो निषेवणं यस्मिन् स तथा सर्वगुणमूर्तिरित्यर्थः तस्मिन्मयि मनोगतिरविच्छिन्ना निरन्तरा ॥ ११ ॥

तेन क्रियमाणस्य निर्गुणस्य भक्तियोगस्य लक्षणमुदाहृतम् हीत्यन्वयः आत्यन्तिकभक्तिलक्षणं ब्रूते । अहैतुकीति । ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

उत्तरा यथा विषयानिति । पृथक् मत्तोऽन्यत्र विषयादिष्वेव भावः स्पृहा यस्य नतु मयीति राजसत्वहेतुता दर्शिता ॥ ९ ॥

अथ कैवल्यकामा सात्त्विक्येव सा यथा कर्म्मनिर्हारमिति । कर्म्मनिर्हारं मोक्षमुद्दिश्य परस्मिन् परमेश्वरे यो वा कर्म्मार्पणं कुरुते यो वा यष्टव्यं सर्वेषां नित्यविधिप्राप्तत्वेनावश्यमेव तत्पूजनं कर्त्तव्यमिति बुद्ध्या नतु भक्तितत्त्वज्ञानेन यो यजेत् परमेश्वरं पूजयति अत एव पूर्ववत् पृथग्भावः भक्तेः पृथक् मोक्षमेव पुरुषार्थत्वेन भावयन् स सात्त्विक उच्यते । उत्तरस्यापि तात्पर्यं कर्म्मनिर्हार एव भवेदिति । उक्तञ्च । सात्त्विकः कारकोऽसङ्गीति कैवल्यं सात्त्विकं ज्ञानमिति । सात्त्विकं सुखमात्मोत्थमिति च तत् साधनसाध्ययोः सगुणत्वम् । अत्रत्योदाहरणं यजेदिति उदाहरणमेव ॥ १० ॥

अथ यस्या एव सर्वोत्कर्षज्ञानार्थमेते भक्तिभेदा निरूपिताः सा भक्तिमात्रकामत्वान्निष्कामा निर्गुणा केवला स्वरूपसिद्धा निरूप्यते । इयमेवाकिञ्चनाद्याख्यात्वेन सर्वोर्ध्वमप्यभिहिता । तामाह । मद्गुणेति युग्मकेन । मद्गुणश्रुतिमात्रेण नतु तत्रोद्देश्यान्तरसिद्ध्यभिप्रायेण प्राकृतगुणमयकरणानां सर्वेषां गुहाकरणागोचरपदवी तस्यां शेते गुह्यतया निश्चलतया च तिष्ठति यस्तस्मिन् मयि अविच्छिन्ना विषयान्तरेणावच्छेत्तुमशक्या या मनोगतिः सा अविच्छिन्नत्वे दृष्टान्तः यथेति । गतिरिति पूर्व्वस्मादेवाकृष्यते छान्दसत्वात् । लक्षणं स्वरूपम् । ननु तस्या गुणश्रुतेः का वार्ता उद्देश्यान्तराभावेन मनोगतित्वाभावेन च द्विधापि निर्देष्टुमशक्यत्वात् तत्राह । अहैतुकी फलानुसन्धानरहिता अव्यवहिता स्वरूपसिद्धत्वेन साक्षाद्रूपा नतु आरोपादिसिद्धत्वेन व्यवधानात्मिका तादृशी या भक्तिः श्रोत्रादिना सेवनमात्रं सा च तस्य स्वरूपमित्यर्थः । मात्रपदेनाविच्छिन्नेत्यनेन च मनोगतेरहैतुकीत्वादिसिद्धेः पृथग् योजनार्हत्वात् । सात्त्विकः कारको सङ्गीत्यादिषु निर्गुणो मदपाश्रय इत्यादिभिः । तदाश्रयक्रियादीनां निर्गुणत्वख्यापनात् ।

मां भजन्ति गुणाः सर्वे निर्गुणं निरपेक्षकम् ।
सुहृदं प्रियमात्मानं साम्यासङ्गादयो गुणाः ॥

इत्यत्र तद्गुणानामप्यप्राकृतत्वश्रवणात् ॥ ११ ॥ १२ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एवं राजसीं त्रिविधामाह । विषयानिति । विषयान् स्रक्चन्दनादीन् यशः कीर्तिमैश्वर्यं वा क्रमेणाभिसन्धाय गुणैर्भिन्नो राजसः प्रतिमादौ यो मां पूजयेत्स राजसः पृथग्भाव इति पूर्ववत् एवेति समुदायव्यावृत्त्यर्थं वेति विकल्पार्थमन्यथा चत्वारो भेदाः स्युः आदिशब्देन सूर्यादयः ॥ ९ ॥

सात्त्विकभेदानाह । कर्मनिर्हारमिति । कर्मणः पापस्य निर्हारो दूरीकरणं प्रायश्चित्तमिति यावत् पूर्वकृतकर्मणो वा रोगादिना परिज्ञाने तन्निवृत्त्यर्थं यो भगवन्तं यजेत् वैदिकतान्त्रिकमार्गेण पूजां कुर्यात् स तामससात्त्विकः परस्मिन् भगवति वा कृतानां सर्वकर्मणामर्पणं समर्पणमुद्दिश्य यो हरिं यजेत् स राजससात्त्विकः विधानेन भगवन्तमिष्ट्वा तत्र सर्वाणि कर्माणि समर्पणीयानीति यो यजेत् स तथोक्तः यस्तु नित्यकर्मवद्यष्टव्य एव भगवान् इति यजेत् स सात्त्विकसात्त्विकः पृथग्भावः पूर्ववत् ॥ १० ॥

निर्गुणां भक्तिमाह । मद्गुणेति । परिच्छेदका हि गुणाः सत्त्वादयः भगवद्गुणास्तु सर्वोत्कृष्टहेतुत्वेन श्रुताः स्वाश्रयं भगवन्तमनवच्छिन्नमेव बोधयन्ति अन्यथा स्वस्य उत्कर्षहेतुत्वं न स्यात् अतः सर्वगुहाशये मयि भगवति प्रतिबन्धरहिता अविच्छिन्ना या मनोगतिः पर्वतादिभेदनमपि कृत्वा यथा गङ्गाम्भः अम्बुधौ गच्छति तथा लौकिकवैदिकप्रतिबन्धान् दूरीकृत्य या भगवति मनसो गतिः मनस इत्युपलक्षणं दुर्लभत्वाय वा यथा कायिकगतिर्गोपिकानां सा गतिर्निर्गुणस्य भक्तियोगस्य भगवति प्रेम्णो गतिर्लक्षणं ज्ञापकमित्युत्तरेण सम्बन्धः ॥ ११ ॥

स्वरूपमुक्त्वा लक्ष्यलक्षणसम्बन्धमाह । लक्षणमिति । निर्गुणस्य भक्तियोगस्य तल्लक्षणमुदाहृतमिति प्रमाणम् आत्यन्तिकभक्तिलक्षणमाह । अहैतुकीति सार्द्धाभ्याम् । या अहैतुकी पुरुषोत्तमे भक्तियोग आत्यन्तिकः उदाहृत इति सम्बन्धः पुरुषोत्तम एव भक्तिर्न तु पुरुषेष्ववतारेषु वा भक्तिश्च प्रेमपूर्विका सेवाहेतुः फलाभिसन्धानं तद्रहिता अहैतुकी अनिमित्ता वा अनेन सगुणा निवारिता अव्यवहितेति कालेन कर्मणा वा यत्र सेवायां व्यवधानं नास्ति न तु निद्राभोजनादिना तस्य सेवाहेतुत्वात् या भक्तिरिति लोकवेदप्रसिद्धा न तु चौर्यादिना विषयान् सम्पाद्य भगवत्सेवाकरणम् ॥ १२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पृथक् मत्तोऽन्यत्र विषयादिष्वेव स्पृहा यस्य सः ॥ ९ ॥

सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत ।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥ १३ ॥
स एष भक्तियोगाख्य आत्यन्तिक उदाहृतः ।
येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यते ॥ १४ ॥
निषेवितेनानिमित्तेन स्वधर्मेण महीयसा ।
क्रियायोगेन शस्तेन नातिहिंस्रेण नित्यशः ॥ १५ ॥
मद्धिष्ण्यदर्शनस्पर्शपूजास्तुत्यभिवन्दनैः ।
भूतेषु मद्भावनया सत्त्वेनासंगमेन च ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

कर्म्मनिर्हारं कर्म्मक्षयमुद्दिश्य यो यजेत् यस्य भक्तेः कर्म्मक्षय एव प्रयोजनमित्यर्थः। परस्मिन् परमेश्वरे तदर्पणं तस्य कर्म्मणोऽर्पणं यत्र तद्यथा स्यात्तथा यो यजेत् स्वधर्म्मार्पण-प्रचुरां श्रवणादिभक्तिं यः कुर्य्यादित्यर्थः। यष्टव्यं सर्वेषां नित्य-विधिप्राप्तत्वेनावश्यमेव कर्त्तव्यं स्वाश्रमकर्म्मवत्तद्यजनमिति बुद्ध्यैव स्वाश्रमधर्म्माचरणपूर्व्वकं यो यजेत् पृथग्भावः भक्तेः पृथग्भूते मोक्षे भावोऽभिप्रायो यस्य सः। एवमेषा नवविधैव सकामा यथोत्तराधिक्या ज्ञेया तत्र सात्त्विकी भक्तिः कस्यचिज्ज्ञानं जनयति तत्रापि ज्ञानस्य गुणभावे स्वप्राधान्ये ज्ञानमिश्राभिधाना शान्तिरतिं निर्गुणामेवोत्पादयति ज्ञानस्य प्राधान्ये स्वयं तदङ्ग-भूता तु सायुज्यमुक्तिमेव। कस्यचिदश्वमेधादिसफलकर्म्मार्पण-वती भक्तिर्न तु कर्म्मार्पणमयी सुखैश्वर्य्यमयं सालोक्यमोचं निष्फलकर्म्मार्पणवती तु शान्तिरतिं राजस्यास्तामस्याश्च भक्तेः फलप्राप्तौ सत्यां भक्त्यभावे प्रायस्तत्तत्फलमेव फलं भक्तिमाहिम्ना किञ्चिदधिकमपि फलप्राप्तौ सत्यामपि कस्यचिद्भक्तिसत्त्वे तु "सत्यं दिशत्यर्थितमार्थितो नृणाम्" इत्यादिदृष्ट्या सापि काले निर्गुणैव स्यादिति ज्ञेयम् ॥ १० ॥

देवानां गुणलिङ्गानामित्यत्र लक्षितामेव निर्गुणां भक्तिं सुख-बोधार्थं पुनर्लक्षयति। मद्गुणश्रवणमात्रेणैव मय्येव सर्वगुहाशये सर्व्वान्तःकरणवर्त्तित्वेन सुखध्येयमूर्त्तौ श्रीपुरुषोत्तमे मनसो गतिरविच्छिन्ना भवति। यथा अम्बुधौ गङ्गाम्भसो गतिरिति हेतो-रेतदर्थमेव भक्तियोगस्य लक्षणमुदाहृतमित्यन्वयः यतो निर्गुण-श्रवणादिभक्तियोगेनैव मयि मनोगतिरविच्छिन्ना भवेदतो भक्ति-योगं सलक्षणमुदाहृतमिति फलितोऽर्थः। अम्बुधिना स्वलहरीभिः परावर्त्तितस्याप्यम्भसो यथा अम्बुधावेव गतिस्तथा मयापि पारमेष्ठ्यसार्ष्टिसालोक्यादिफलैः प्रलोभितस्यापि तस्य मय्येव गतिरिति। एवञ्च भक्तमनसो गङ्गाजलदृष्टान्तेन त्रैलोक्य-पावित्र्यजगत्पूज्यत्वादीन्युक्तानि तदेव लक्षणं किमित्यपेक्षाया-माह। अहैतुकी हेतुः कारणं फलान्तराभिसन्धिश्च तद्रहिता स्वप्रकाशत्वात् स्वतः फलरूपत्वाच्च नेयं ज्ञानयोगादिवदिति भावः साधुसङ्गप्रेम्णोस्तु प्रथमद्वादशभूमिकात्वान्न तयोर्हेतुफलत्वे वस्तुत इति प्रथमस्कन्ध एव व्याख्यातम् अव्यवहिता ज्ञानकर्म्मा-द्यव्यवधानशून्या या भक्तिः सैव निर्गुणेत्यर्थः। भक्तेरास्पद-श्रद्धानिवासमुखादीनामपि निर्गुणत्वं निर्गुणो मदपाश्रय इति मत्सेवायां तु निर्गुणेति मन्निकेतं तु निर्गुणमिति निर्गुणं मदपाश्रयमित्येकादशस्कन्धाज्ज्ञेयम् ॥ ११ ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

पृथग्भावः भेददर्शी स्वस्य भगवदंशत्वमजानन् केवल-भेददर्शी ॥ ९ ॥

कर्मनिर्हारं पापक्षयमुद्दिश्य अथवा परस्मिन् भगवति अर्पणं यथा भवति तथा अथवा यष्टव्यमेव अंशेनांशि-पूजनं कर्तव्यमेवेति बुद्ध्या ह्यपृथग्भावः आत्मनः ब्रह्मात्मकत्व-भावयुक्तो यदा यजेदर्चांवार्चयेत्तदा भक्तियोगस्त्रिविधोऽपि सात्त्विकः अत्र तामसादिभक्तिषु गुणतारतम्येन त्रयस्त्रयो भेदाः तत्र च प्रत्येकं श्रवणादिनवभेदाः तदेवं सगुणभक्तेरेका-शीति भेदाः ज्ञेयाः ॥ १० ॥

साधनरूपां भक्तिमुक्त्वा परां भक्तिमाह। मद्गुण इति द्वाभ्याम् ॥ ११ ॥ १२ ॥

भाषा टीका।

विषयों का यश का ऐश्वर्य का सङ्कल्प करके आत्माओं में भेद बुद्धि से केवल मूर्तिमात्र में ही मेरे को जो पूजता है और का अपमान करता है सो राजस भक्त है ॥ ९ ॥

पापक्षय की इच्छा से अथवा परमेश्वर में कर्म को अर्पण करके अथवा भजन की विधि समझ कर जो पूजता है और पृथग् दृष्टि वाला है सो सात्त्विक भक्त है ॥ १० ॥

मेरे गुणों के श्रवण मात्र से सर्वान्तर्यामि मुझमें निर-न्तर चित्त की वृत्ति का होना जैसे कि गङ्गा का प्रवाह समुद्र को जाता है तैसा होकर निष्काम निरन्तर परमात्मा में जो भक्ति हो जाना वही निर्गुण भक्ति योग का लक्षण है ॥ ११ ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

भक्तानां निष्कामतां कैमुत्यन्यायेनाह। सालोक्यं मया सहैकस्मिंल्लोके वासम्। सार्ष्टिं समानैश्वर्यम्। सामीप्यं निक-

श्रीधरस्वामिकृतभावार्थदीपिका ।

टवर्तित्वम् । सारूप्यं समानरूपताम् । एकत्वं सायुज्यम् । उत अपि दीयमानमपि न गृह्णन्ति कुतस्तत्कामनेत्यर्थः ॥ १३ ॥

किमिति तर्हि भजन्ते भक्तेरेव परमफलत्वादित्याह । स एवेति । ननु त्रैगुण्यं हित्वा ब्रह्मप्राप्तिः परमफलं प्रसिद्धम् । सत्यम् तत्तु भक्तावानुषङ्गिकमित्याह । येन भक्तियोगेन मद्भावाय ब्रह्मत्वाय ॥ १४ ॥

एवंभूतायाः भक्तेः साधनान्याह । पञ्चभिः । निषेवितेन सम्यगनुष्ठितेन अनिमित्तेन स्वधर्मेण नित्यनैमित्तिकेन महीयसा श्रद्धादियुक्तेन क्रियायोगेन पञ्चरात्राद्युक्तपूजाप्रकारेण शस्तेन निष्कामेण ॥ १५ ॥

मद्धिष्ण्यं मत्प्रतिमादि तस्य दर्शनादिभिः सत्त्वेन धैर्येण असङ्गेन वैराग्येण ॥ १६ ॥ १७ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिका टिप्पणी ।

मत्सेवनं विना न गृह्णन्तीत्युक्त्या यत्र सेवा तत्सालोक्यादिचतुष्टयं मत्सेवार्थमेव गृह्णन्ति न तु स्वसुखैश्वर्योत्कर्षार्थम् एकत्वन्तु भगवत्सायुज्यब्रह्मसायुज्यलक्षणं द्विविधमपि न गृह्णन्ति सदा मत्सेवाविनाभूतत्वादिति व्यज्यते तदुक्तम् श्रीरसामृतसिन्धौ

सुखैश्वर्योत्तरा सेयं प्रेमसेवोत्तरेत्यपि ।
सालोक्यादिर्द्विधा तत्र नाद्या सेवाजुषां मता ॥

इत्यादिर्दीयमानस्यापि अग्राहका एते दानवीररसास्वादवन्तो ज्ञेयाः ॥१३ ॥

स एव निर्गुणभक्तियोग एवात्यन्तिकः अन्तिमफलतया पञ्चमपुरुषार्थतया भवतीत्यात्यन्तिक उदाहृतः तत्तु ब्रह्मकैवल्यमानुषङ्गिकमनायासलभ्यं मुमुक्षूणां भवतीत्याह । यद्यपि मुमुक्षुर्येन भक्तियोगेन ब्रह्मत्वाय ब्रह्मप्राप्तये योग्यो भवति तथापि "न परिलषन्ति केचिदपवर्गमपीश्वरते" । इत्यादेः नात्यन्तिकं विगणयन्त्यपि ते प्रसादमित्यादेश्च शुद्धभक्तानामनभीष्टं तत्तेभ्यो भगवान्न ददाति तत्क्रतुन्यायात् "ये यथा मां प्रपद्यन्ते" इति भगवद्वाक्याच्च ॥ १४ ॥

एवंभूतायाः निरन्तरोक्तमोक्षप्रापिकायाः इति शुद्धात्वं प्रत्याख्यातम् तेन ज्ञानकर्ममिश्रात्वं व्यञ्जितम् निषेवितेनेति पञ्चकम् । तत्रापि बहुवाक्यैकवाक्यत्वाद्वैकाक्रमलाभाय मध्ये द्विबिन्दुमत्का अङ्काः कल्पनीयाः अतिहिंसारहितेनेति आतिशब्देन फलपत्रादिजीवावयवस्वीकारोऽभिव्यज्यते पूजाप्रकारे तस्यावश्यापेक्ष्यत्वात् नित्यश इति तस्य नित्यविधित्वं दर्शितम् ( १ ) प्रतिमादीत्यादिना गोब्राह्मणाद्यधिष्ठानपरिग्रहः भूतेष्वन्तर्यामित्वेन मद्भावनया (२) "अहिंसासत्यब्रह्मचर्यापरिग्रहा यमाः" शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ( ३ ) आध्यात्मिकमात्मविवेकशास्त्रमार्जवेन सारल्येन आर्याणां वैदिकाचारवतां साधूनां सङ्गेन निरहङ्क्रियया गर्वपरित्यागेन ( ४ ) मद्धर्मेण इत्येव पाठः न तु मद्धर्मिण इति चित्तं मामङ्गेति मद्गुणानुस्मृतिं प्राप्तो-

तीत्यर्थः अत्र शुद्धाया उपक्रान्तत्वेन वर्णनीयत्वेऽपि यन्मूलं तत्प्रचलत इति देवहूतिप्रश्नानुरोधादेव ज्ञानकर्ममिश्रावर्णनं स्वमतन्तु सतां प्रसङ्गादित्यादिना वर्णितमेव देवहूत्या तथा प्रश्नेऽपि मुमुक्षूणामुपकारायैवेति ज्ञेयम् ( ५ ) १५ ॥१६ ॥ १७ ॥ १८ ॥ १९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अहैतुकीत्यनेनोक्तं निर्गुणभक्तियोगनिष्ठानां फलकामनाराहित्यं कैमुत्यनयेन द्रढयति । सालोक्येति । सेवनं मदनुभवमन्तरेण मया दीयमानं सालोक्यादिरूपं पञ्चविधं मोक्षमपि न गृह्णन्ति जनाः निर्गुणभक्ताः किमुत सांसारिकफलं न गृह्णन्तीति अत्रैकत्वमेकाकारकत्वं सायुज्यमित्यर्थः सालोक्यं समानलोकवासित्वं सार्ष्टिः समानभोगः सामीप्यं निकटवर्तित्वं सारूप्यं समानविग्रहवत्त्वं ननु "विकल्पोऽविशिष्टफलत्वात्" इति मुक्तौ फलतारतम्यं प्रतिषिद्धं मैवम् एते सर्वे सायुज्य एवान्तर्भूताः तत्र सायुज्यं नाम समानगुणयोगः गुणाष्टकाविर्भावरूपः युज्यत इति युग्धर्मः धर्मो हि धर्मिणा युज्यते समानः युग् यस्य स सयुक् सयुजो भावः सायुज्यं साधर्म्यं तथा च गीतं भगवता "मम साधर्म्यमागताः" इति अत्र सालोक्यादिचतुष्टयस्यापि ब्रह्मसायुज्यान्तर्भूतत्वज्ञापनाय सालोक्यादीनां भेदेनोपादानं साधर्म्ये सति हि सालोक्यादिकं सर्वं सम्पन्नमेवेति सालोक्यादेः सायुज्यान्तर्भूतत्वं युक्तं देवतान्तरप्राप्तौ हि सालोक्यादिभेदावाप्तिः ब्रह्मप्राप्तौ तु सायुज्यान्तर्भूतत्वेनैव सालोक्यादिप्राप्तिरिति विशेषः । यद्वा भगवत्प्राप्तावपि श्रीविष्णुलोकादिषु द्वारकादिष्विव तथाविधभेदोऽस्तीति तदपेक्षया प्राप्य भेदद्योतनाय पृथङ्निर्देशः यदाहुः

लोकेषु विष्णोर्निवसन्ति केचित् समीपमृच्छन्ति च केचिदन्ये ।
अन्ये तु रूपं सदृशं भजन्ते सायुज्यमन्ये स तु मोक्ष उक्तः ।

इति तस्मान्मुक्तौ फलतारतम्याशङ्का न कार्या ॥ १३ ॥

अस्य भक्तियोगस्य लक्षणमुपसंहरति । स एवेति । येन त्रिगुणान् सत्त्वादीनतिक्रम्य प्रकृतिसम्बन्धनिर्मुक्त इत्यर्थः । अनेन निर्गुणस्येति पूर्वमुक्तं निर्गुणत्वं स्पष्टीकृतं मद्भावाय मत्स्वभावाय मत्साम्यापत्तय इत्यर्थः उपपद्यते योग्यो भवति । स एव भक्तियोगः आत्यन्तिकः चरमकाष्ठां गत इत्युदाहृतः मत्स्वभावापत्तिरूपफलाव्यवहितसाधनत्वदशैव नवमस्य भक्तियोगस्य स्वरूपमुदाहृतमित्यर्थः ॥ १४ ॥

तस्य साधनान्याह । पञ्चभिः । निषेवितेनानुष्ठितेन अनिमित्तेन फलाभिसन्धिरहितेन स्वधर्मेण स्ववर्णाश्रमोचितधर्मेण महीयसा अङ्गानां मध्ये बलवत्तरेण शस्तेन प्रशस्तेन क्रियायोगेन पञ्चरात्राद्युक्तपूजायोगेन ॥ १५ ॥

मद्धिष्ण्यं मत्प्रतिमायतनादिस्तस्य दर्शनादिभिः भूतेषु मद्भावनया मदात्मकत्वबुद्ध्या सत्त्वेन धैर्येणासङ्गेन वैराग्येण ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सार्ष्टिः समानैश्वर्यम् ॥ १३ ॥

तद्भक्तिफलमाह । येनेति । येनात्यन्तिकभक्तियोगेन त्रिगुणान्

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

त्रिलिङ्गशरीरेन्द्रियाणि अतिव्रज्यातिक्रम्य संत्यज्येत्यर्थः मद्भावाय चिदानन्ददेहेन मयि सत्तायै औन्नत्यस्थित्यै उपपद्यते योग्यो भवतीत्यर्थः॥ १४॥

एतादृशभक्त्युत्पत्तौ किं साधनमत आह। निषेवितेनेति। निषेवितेनानिमित्तेन निष्कामेन नितरां सेवितेन। अनिमित्त इति पाठे यथा फलाभिसंधिरहितो भवति तथा निषेवितेनेत्यर्थः। "अष्टवर्षं ब्राह्मणमुपनयीत" इत्यादिवेदविहितेन स्वधर्मेण क्रियायोगेन भगवत्पूजालक्षणयोगेन कर्मयोगेन वा नातिहिंस्रेण प्राण्युपद्रवरहितेन॥ १५॥

मद्धिष्ण्यानां केशवादिप्रतिमानां दर्शनादिभिर्भूतेषु जीवेष्वन्तर्यामित्वेन मद्भावनया मम स्मरणलक्षणोपासनया सत्त्वेन भूगहितेन वचसासङ्गेन दुर्जनसङ्गराहित्येन॥ १६॥

———

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

अहैतुक्यत्वमेव विशेषतो दर्शयति। जना मदीयाः सालोक्यादिकमपि उत अपि दीयमानमपि न गृह्णन्ति मत्सेवनं विनेति गृह्णन्ति चेत्तर्हि मत्सेवनार्थमेव गृह्णन्ति नतु तदर्थमेवेत्यर्थः सार्ष्टिः समानैश्वर्यम् एकत्वं भगवत्सायुज्यं ब्रह्मसायुज्यञ्च। अनयोस्तल्लीलात्मकत्वेन तत्सेवनार्थत्वाभावादग्रहणावश्यकत्वमेवेति भावः॥ १३॥

तस्मात् स एव निर्गुणभक्तियोगो भक्तियोगाख्य आत्यन्तिकः स एष च अन्तिमफलतया भवतीत्यपवर्ग इत्यर्थः नात्यन्तिकं विगणयन्तीत्यादेः आत्यन्तिकफलतया तत्प्रसिद्धेश्च। ननु गुणत्रयात्ययपूर्वकं भगवत्साक्षात्कार एवापवर्ग इति चेत् तस्यापि तादृशधर्मत्वं स्वतः सिद्धमेवेत्याह। येनेति। येन कदाचिदप्यपरित्याज्येन मम भावाय विद्यमानतायै साक्षात्कारायेत्यर्थः। उपपद्यते समर्थो भवति। तद्वदन्येषां मत्साक्षात्कारो न भवतीत्यर्थः। यद्वा। मद्भावाय मत्प्रेमविशेषायेति प्रेममात्रशून्यं तु सालोक्यादिकमपि नास्तीतिभावः। यच्च व्रजन्त्यनिमिषामित्यादेः ब्रह्मकैवल्यं तु तेषां न भवत्येव। "ये यथा मां प्रपद्यन्ते" इत्यादिना सनिर्द्धारणभगवत्प्रतिज्ञानात् तत्क्रतुन्यायाच्च। राजन् पतिर्गुरुरित्यादौ तादृशभक्तेरेव दुर्लभत्वाच्च यथोक्तं पञ्चमे। यथावर्णविधानमपवर्गश्च भवति। योऽसौ भगवतीत्यादिकम् अनन्यनिमित्तभक्तियोगलक्षणनानागतिनिमित्ताविद्याग्रन्थिबन्धनद्वारेण यदाहि महापुरुषपुरुषप्रसङ्ग इत्यन्तेन॥ १४॥

ज्ञानकर्ममिश्रा यथा निषेवितेनेति पञ्चकम्। शस्तेन उत्तमदेशकालादिमता निष्कामेण च। नातिहिंस्रेण अतिहिंसारहितेन। अतिशब्दः प्राणादिपीडापरित्यागफलपत्रादिजीवावयवस्वीकारार्थः॥ १५॥

मद्धिष्ण्यं मदर्चादिभूतेष्वन्तर्यामित्वेन मद्भावनया अहिंसास्तेयब्रह्मचर्यापरिग्रहा यमाः। शौचसन्तोषतपः स्वाध्यायेश्वरप्रणिधानानि नियमाः॥ १६॥ १७॥

———

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

तस्या निदर्शनमाह। सालोक्येति। सैवात्यन्तिकी या स्वतो रसभावं प्राप्ता सैव नान्यत्फलमङ्गीकारयति अत्यन्तप्रेमोत्पत्तावेवं भवति सालोक्यं वैकुण्ठे वासः सार्ष्टिः समानैश्वर्यं सामीप्यं भगवत्समीपे स्थितिः. सालोक्येऽप्येवं विशेषः सारूप्यं स्वस्यापि चतुर्भुजत्वम् एकत्वं सायुज्यम् उतेति तस्य मुख्यफलत्वं ज्ञापयति तदपि दीयमानं न गृह्णन्ति इत्यत्यन्तानादरे दीयमानत्वं स्नेहात् मत्सेवनमिति सेवैवानन्दरूपा जातेति समासाद्बोध्यते यतस्ते जनाः सेवकाः॥ १३॥

भक्तियोग इति तस्यैव नाम स एव भक्तियोगाख्य आत्यन्तिकः इत्युदाहृतः तस्य स्वातन्त्र्याय भगवत इव फलसाधकत्वमाह। येनेति। येन भक्तियोगेन त्रिगुणमतिव्रज्य मद्भावाय भगवत्त्वाय उपपद्यते योग्यो भवतीत्यर्थः॥ १४॥

एतस्याः भक्तेः साधनान्याह। निषेवितेनेति चतुर्भिः। मुख्यं साधनमन्तःकरणं बुद्धिः तदन्तःकरणं षोडशकलं भवतीति तस्य शुद्ध्यर्थं षोडशसाधनान्युच्यन्ते तान्यपि त्रिविधानि आधिभौतिकान्येव तानि कृतानि अन्तःकरणशुद्धिं सम्पादयन्ति परमां धर्मार्थी तान्येवाध्यात्मिकानि ज्ञानार्थं शुद्धिं सम्पादयन्ति परमां तान्येव च पुनः आधिदैविकानि परमां शुद्धिं सम्पादयन्ति भक्त्यर्थं सा च भक्तिरात्यन्तिकी इदं वैलक्षण्यं वक्ष्यति। मद्धर्माचरणैरेतैरिति। अन्यथा उक्तानां मद्धर्मत्वं न विहितं स्यात् अत एव प्रथमं धर्मत्रयमाह। स्मार्त्तं श्रौतं तान्त्रिकं चेति साङ्केन। प्रथमं श्रौते रुचिर्न भवतीति स्मार्त्तं विधत्ते स्वधर्मेण परिशुद्धाशयः पुरुषः मत्सम्मुखमेतीति सम्बन्धः एवमन्येष्वपि साधनेषु स्वधर्मो वर्णाश्रमधर्मः देहप्रयुक्त्या निष्पन्नः सोऽपि सम्यक् नितरां सेवितश्चेत् तत्त्वनुकल्पेन तत्राऽपि कामनारहितेन तत्रापि सजातीयप्रचयसहितेन महीयसा त्रिविधगुणयुक्तश्चेत्स्वधर्मः स्नानादिरूपः स्मार्त्तः स तु पार्थिवांशदोषं दूरीकरोतीति षोडशांशोपकारं करोति एवं क्रियायोगो वैदिको यज्ञात्मकः प्रशस्तः येषु ब्राह्मणवाक्यानि अतिप्रशंसकानि भवन्ति न तु द्वादशाहाहीनवत् निन्दितान्यपि भवन्ति तत्रापि हिंसाप्रचुरं न कर्तव्यं अल्पहिंसा इध्मावर्हिषामर्थे आलम्भेऽपि तादृशपशुसद्भावे अल्पहिंसा भवति "मृत्यवे वा एष नीयत" इति श्रुतेः अतो नातिहिंस्रेणेत्युक्तं सोऽपि सर्वदा कर्त्तव्यः एवं क्रियायोगोऽपि गुणत्रयसहितः अयमाध्यात्मिकं दोषं दूरीकरोतीति अपां चाध्यात्मिकत्वात् तच्छोधको भवति॥ १५॥

एवं स्मार्त्तश्रौताभ्यां परिसंशुद्धः तान्त्रिकेऽभिनिविष्टः पञ्चाङ्गं भगवद्भजनं करोतीत्याह। मद्धिष्ण्येति। भगवद्धिष्ण्यान्यधिष्ठानानि धिष्ण्यपदेन प्रमाणमूलकानि श्रीरङ्गादीनि तेषां प्रथमतो दर्शनं ततश्चरणस्पर्शः ततः पूजास्तुतिरभिवन्दनं चेति पञ्च पञ्चानां प्रत्येकसामर्थ्यद्योतनाय बहुवचनम् अनेन सर्वतैजसशुद्धिरुक्ता पञ्चाग्न्यावयं जात इति चतुर्थं साधनमाह। भूतेष्विति। सर्वेष्वेव संघातेषु भगवद्भावना कर्त्तव्या भगवानेवैवं जातावस्य इति वा यथा वायोः साधनान्तरं सत्त्वेनेति सत्त्वगुणः साधनं तत्त्रिविधं सात्त्विककर्मरूपं सतां स्वरूपत्वापादकं वसुदेवरूपान्तःकरणसाधकं च अनेनाकाशशरीरत्वाद्भगवतः तच्छुद्धिरुक्ता इन्द्रियशुद्धिमाह। असङ्गमेनेति। सर्वसंगनिवृत्तिः कर्त्तव्या चकारात्तदिच्छापरित्यागः॥ १६॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अस्तुधौ गङ्गाम्भसो गतिरिति दृष्टान्तव्यञ्जितमर्थं स्पष्टयन्नुक्तलक्षणभक्तिमतां जनानां निष्कामत्वं कैमुत्यन्यायेनाह । सालोक्यं मया सहैकस्मिँल्लोके वासः । सार्ष्टिः समानैश्वर्य्यम् । सामीप्यं निकटवर्तित्वम् । सारूप्यम् समानरूपत्वम् । एकत्वं सायुज्यं उत अपि दीयमानमपि न गृह्णन्ति कुतस्तत्कामनेति भावः मत्सेवनं विनेति केचिद्गृह्णन्ति । चेन्मत्सेवार्थमेव गृह्णन्तीत्यर्थः ॥ १३ ॥

किमिति तर्हि भजन्ते भक्तेरेव परमफलत्वादित्याह । सएवेति । अत्यन्ते सर्व्वान्ते भव आत्यन्तिकः नन्वात्यन्तिकशब्देन सायुज्यमुच्यत इत्याह । भक्तियोगाख्यः भक्तियोगनामायं ततोऽप्यधिकं फलमित्यर्थः । अत एवापवर्गशब्देन क्वचिद्ब्रह्मणि निर्वाणशब्देन चायमुच्यते यदुक्तं पञ्चमे "अपवर्गश्च भवति योऽसौ भगवत्यनन्यनिमित्तभक्तियोगलक्षणः" इति सप्तमे च । "अधोक्षजालम्भमिहेत्यादौ तद्ब्रह्म निर्व्वाणसुखं विदुर्बुधा" इति । "हरावैकान्तिकीं भक्तिं मोक्षमाहुर्मनीषिणः" इति पुराणान्तरे च । "भक्तिरस्य भजनं तदिहामुत्रोपाधिनैरास्येनामुष्मिन् मनःकल्पनमेतदेव च नैष्कर्म्यम्" इति गोपालतापनी श्रुतिश्च । ननु त्रिगुणमयाद्बन्धात् मोक्ष एव परमफलं प्रसिद्धम् । सत्यं तत्तु भक्तावानुषङ्गिकमित्याह । येन भक्तियोगेन अतिव्रज्य अतिक्रम्य उल्लङ्घ्येति यावत् । मच्चरणाश्रयणमात्रेणैव त्रिगुणात्मकसंसारसिन्धोर्गोष्पदायमानत्वे जाते तदुल्लङ्घनमनुसन्धानं विनैव भवतीति भावः । मद्भावाय मद्विषयकप्रेम्णे ॥ १४ ॥

अस्या भक्तेरङ्गान्याह । निषेवितेनेति निषेवितश्चासौ अनिमित्तरूपश्चेति तेन पूर्व्वपूर्व्वैः शुद्धभक्तैर्निषेवितोऽङ्गीकृतो यः स्वधर्मस्तेनेत्यर्थः । स च स्मृतिशास्त्रोक्तप्रमाणैर्मृज्जलादिभिर्देहवस्त्रपात्रादिद्रव्यशुद्धिविधिरूपो निर्मन्त्रक एव श्रेयस्तेन महीयसा अर्चनादिभक्त्युपयोगित्वात् प्रशस्तेन । व्याख्यान्तरे मत्कृते त्यक्तकर्म्मणः इति मया दिष्टानपि स्वकान् धर्म्मान् सन्त्यज्येत्यादिभगवदुक्तिविरोधस्तथात्र निषेवितपदस्य वैयर्थ्यञ्च स्यात् क्रियायोगेन पञ्चरात्रायुक्तपूजाप्रकारेण शस्तेन उत्तमदेशादिमता नातिहिंसेण अतिहिंसारहितेनेत्यतिशब्देन भगवन्मन्दिरमार्ज्जनलेपनतदर्थोद्यानादिविविधनैवेद्यसाधनादिष्वतिदुर्व्वारदुर्लक्ष्यसूक्ष्मजीवहिंसनशाकपत्रमूलफलादित्रोटनादावपि न क्षतिरिति ज्ञापितम् ॥ १५ ॥

सत्त्वेन धैर्य्येण असङ्गेन दुःसङ्गत्यागेन ॥ १६ ॥ १७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उत्तमभावानां निष्कामत्वं कैमुत्यन्यायेन द्रढयति । सालोक्येति । जनाः उत्तमभक्ताः सालोक्यादि तत्रापि मया दीयमानमपि न गृह्णन्ति अपिशब्दः प्रसिद्धपदार्थपरः उतशब्दः कैमुतिकन्यायद्योतकः अव्ययानामनेकार्थपरत्वात् यत्प्रसिद्धं स्वर्गं नरके प्राकृतं वस्तु मत्सेवनं विना न गृह्णन्तीति किमुत वक्तव्यमित्यन्वयः तत्र सालोक्यं मया सहैकस्मिँल्लोके वासः सार्ष्टिः समानैश्वर्यम् सामीप्यं निकटवर्त्तित्वम् सारूप्यं समानरूपता एकत्वं वक्ष्यमाणरीत्या स्वरूपतो भिन्नस्यापि जीवस्य ब्रह्मभिन्नावस्थानाभावात् समानगुणत्वाच्च ब्रह्मणा प्राप्येण सहैकता तदेव सायुज्यम् । अत्रेदमवधेयम् मुक्तिः स्वस्वमनीषया बहुभिर्बहुधोक्ता तत्र बौद्धैः क्षणिकविज्ञानप्रवाहात्मवादिभिः प्रवाहशान्तिर्मुक्तिः स्वीकृता तार्किका एकविंशतिदुःखात्यन्ताभावो मुक्तिरित्याहुः मीमांसका निर्बोधतयात्मावस्थानं मुक्तिमाहुः पातञ्जलाः समनस्केन्द्रियवृत्तिजयं मुक्तिमाहुस्ते सर्वे निर्मूलत्वादुपेक्षणीयाः औपनिषदाः "निरञ्जनः परमं साम्यमुपैति" इति मुक्तिमाहुः अयं पक्षः श्रुतिमूलत्वात्साधुः "मम साधर्म्यमागता" इति श्रीमुखवचनात् तथा च अनादिमायापरियुक्तरूपो जीवोऽब्रह्मात्मकं स्वात्मानं मन्यमानः एष परस्यांशः "ममैवांशो जीवलोके जीवभूतः सनातन" इति श्रुतिस्मृत्युपदेशतः आत्मनो ब्रह्मांशत्वमवधार्य "तत्त्वमसि क्षेत्रज्ञञ्चापि मां विद्धि" इति श्रुतिस्मृत्युपदेशतः अंशस्य अंशिनिरपेक्षस्थितिप्रवृत्त्यभावेन ब्रह्मात्मकस्य स्वस्य ब्रह्माभिन्नत्वमवधार्य अनादिसिद्धमात्मनोऽपहतपाप्मत्वादिगुणगणं भगवज्ज्ञानभक्तिसाधनेन भगवत्कृपया कार्यकारणप्रकृतिसम्बन्धध्वंसे प्राप्नोति स च निरञ्जनत्वादिपदवाच्यः आविर्भूतापहतपाप्मत्वादिगुणः ब्रह्मांशत्वेन ब्रह्माभिन्नस्वरूपोऽपि अंशस्यांशिभिन्नावस्थानाभावादभिन्नभूतः प्राप्येण नित्याविर्भूतापहतपाप्मत्वादिगुणगणार्णवेन भगवता समतां प्राप्नोति एवंभूता मुक्तिः ब्रह्मप्राप्तिभगवत्प्राप्तिभगवद्भावप्राप्तितत्साधर्म्यकत्वसायुज्यादिशब्दैरुक्ता शास्त्रे तत्र युज्यते धर्मिणीति युक् अपहतपाप्मत्वादिधर्मः समानः युक् धर्मो यस्य स सयुक् मुक्तो जीवः तस्य सयुजो भावः सायुज्यम् तदेवंभूतायामेव मुक्तौ सालोक्यादिभेदाः अन्तर्भूता इति दिक् । ये तु मायावादिनः जीवपरयोः स्वरूपैक्यं मुक्तिरित्याहुः तत्पक्षस्य अध्यासगिरिवज्रादौ निराकृतत्वादत्रोपरम्यते ॥ १३ ॥

यद्यपि मुक्तिं न गृह्णन्ति तथापि भक्तिस्तेभ्यो मुक्तिं ददात्येवेत्याह । स एवेति । उत्तमाधिकारमते स उक्तप्रकारः आत्यन्तिकः परमपुरुषार्थः भक्तियोगाख्य एवोदाहृतः येन भक्तियोगेन त्रिगुणं कार्यकारणरूपप्रकृतिमण्डलमतिव्रज्य अतिक्रम्य मद्भावाय ब्रह्मसाम्याय उपपद्यते "हृतात्मनो हृतप्राणांश्च भक्तिरनिच्छतो गतिमण्वीं प्रयुङ्क्ते" इत्युक्तत्वात् ॥ १४ ॥

तस्याः साधनान्याह । निषेवितेनेति पञ्चभिः । स्वधर्मेण स्वाश्रमधर्मेण क्रियायोगेन अर्चनप्रकारेण च अनिमित्तेन निष्कामेण महीयसा श्रद्धावियुक्तेन शस्तेन दास्त्रप्रसिद्धेन ॥ १५ ॥

मद्धिष्ण्यानां मत्प्रतिमादीनां दर्शनादिभिः सत्त्वेन धैर्य्येण ॥ १६ ॥ १७ ॥

---

भाषाटीका ।

सालोक्य सार्ष्टि सामीप्य सारूप्य एकरूपतारूपमोक्षकों भी जब मैं देताहूं तब भक्तजन मेरे सेवन के विना इनको नहीं लेते हैं ॥ १३ ॥

वही अत्यन्त समाप्ति का भक्तियोग कहागया है जिस से की तीनो गुणों को लांघकर हमारे प्रेममें रत होजावे ॥ १४ ॥

महतां बहुमानेन दीनानामनुकम्पया ।
मैत्र्या चैवात्मतुल्येषु यमेन नियमेन च ॥ १७ ॥
आध्यात्मिकानुश्रवणान्नामसङ्कीर्तनाच्च मे ।
आर्जवेनार्यसङ्गेन निरहङ्क्रियया तथा ॥ १८ ॥
मद्धर्मणो* गुणैरेतैः परिसंशुद्ध आशयः ।
पुरुषस्याञ्जसाभ्येति श्रुतमात्रगुणं हि माम् ॥ १९ ॥
यथा वातरथो घ्राणमावृङ्क्ते गन्ध आशयात् ।
एवं योगरतं चेत आत्मानमविकारि यत् ॥ २० ॥

भाषाटीका ।

मुक्ति के उपाय ये हैं जैसे कि फल की इच्छा से रहित उत्तम अपना वर्णाश्रमधर्मका करना हिंसारहित प्रशस्तयागों का नित्यकरना ॥ १५ ॥

मेरीमूर्तिमन्दिरादिकों का दर्शन स्पर्शन पूजा स्तुति नमस्कारोंका करना सब प्राणियों में मेरीभावना करना वैराग्य रखना धैर्यधरना ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

आर्जवेनाकौटिल्येन ॥ १८ ॥
सद्धर्मणो भगवद्धर्मानुष्ठातुः पुरुषस्याशयस्य ॥ १९ ॥
प्रयत्नं विनैव प्राप्तौ दृष्टान्तः । वातो रथः प्रापको यस्य गन्धस्य आशयात्स्थानात् घ्राणमावृङ्क्ते आत्मसात्करोति अविकारि यत् चेतः ॥ २० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिनीव्याख्या दीपिकाटिप्पणी ।

आशयात्स्थानादित्यनेन आत्मसात्करोति स्वेन व्याप्तं करोति चित्तं च आत्मानं परमात्मानं मामात्मसात्करोति स्वाधीनं करोति ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

महतां स्वाधिकानां बहुमानेन दीनानां स्वापेक्षयाऽधमानामनुकम्पया विषये यद्वा आत्मतुल्येषु मैत्र्या तथा च वक्ष्यति "गुणाधिकान्मुदं लिप्सेदनुक्रोशं गुणाधमात् । मैत्रीं समानादन्विच्छेन्न तापैरभिभूयते" इति यमेन नियमेन च योगासनादीनामप्युपलक्षणम् ॥ १७ ॥

आध्यात्मिकस्य वेदान्तशास्त्रस्यानुश्रवणादार्जवेन मनोवाक्कायानामेकरूप्येणार्यसङ्गेन सत्सङ्गेन निरहङ्क्रियया देहात्माभिमानादिराहित्येन ॥ १८ ॥

इत्येतैर्गुणैर्मद्धर्मिणः भगवद्धर्मानुष्ठातुः पुरुषस्याशयश्चित्तं परिसंशुद्धः निर्मलः श्रुतमात्रः गुणो यस्य तं मामञ्जसा अप्रयत्नेनैवाऽभ्येति मद्गुणश्रवणमात्रेण मय्यासक्तो भवतीत्यर्थः ॥ १९ ॥

प्रयत्नं विनैवाऽभ्येतीत्यत्र दृष्टान्तः । यथेति । वातो वायुः रथः प्रापको यस्य स गन्धः आश्रयात्पुष्पादेः सकाशाद् घ्राणेन्द्रियं प्रयत्नेनैवावृङ्क्ते प्राप्नोति एवं योगरतमत एवाविकारि यच्चेतस्तदात्मानं मामावृङ्क्ते आत्मसात्करोतीत्यर्थः ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

महतां श्रेष्ठानां बहुमानेनार्चनेन दीनानां स्वापन्नानामनुकम्पया तुल्येषु स्वसमेषु मैत्र्या मित्रभावेन आत्मा तद्गुणना[illegible]त्यर्थः ॥ १७ ॥

आध्यात्मिकानुश्रवणाद्वेदान्तशास्त्रश्रवणात् आर्जवेनावक्रबुद्धिश्रेष्ठानां पण्डितानां सङ्गेन निरहङ्क्रियया देहाद्यहंममतावर्जनेन ॥ १८ ॥

सद्धर्मणो धर्मपुत्रादिश्रावणादिना स्वधर्मानुष्ठानफलमाह । मद्धर्मेति । पुरुषस्योपासकस्य यर्हि यदा कथितैरेतैः धर्मादिभिर्गुणैः अन्तःकरणमाशयः परितः शुद्धः स्यात्तदाञ्जसा कालक्षेपमन्तरेण श्रुतमात्रगुणं केवलं गुणा एव श्रुता न दोषा यस्येति स श्रुतमात्रगुणस्तमञ्जसा तत्त्वं मामभ्येतीत्यन्वयः गुणाः श्रुताः सर्वेश्चास्य देव इत्यादिवाक्यं हिशब्दगृहीतम् ॥ १९ ॥

परिशुद्धाशयस्य हरौ मनःप्रसादप्रकारं वक्ति । यथेति । यथाशयात्पुष्पादागत्य वातरथो वात एव रथो यस्य स तथा गन्धो घ्राणमावृङ्क्ते आवृणोति वशीकरोति एवमुक्तसाधनाख्ययोगेन हरौ रतं यदविकारि विषयविकाररहितं तच्चेत आत्मानं हरिप्रसादाभिमुखं करोतीत्यन्वयः अनेन निर्गुणभक्तियोगवानात्यन्तिकभक्तियोगवान् भूत्वा परमात्मापरोक्षवान् भवतीत्युक्तम् ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

आध्यात्मिकमात्मानात्मविवेकशास्त्रं निरहङ्क्रियया गर्वराहित्येन ॥ १८ ॥

(१ मद्धर्मणेति तु श्रीविजयध्वज तीर्थ पाठः । (२) मद्धर्मिण इतिश्री वीरराघव पाठः ॥

**अहं सर्वेषु भूतेषु भूतात्मावस्थितः सदा ।**
**तमवज्ञाय मां मर्त्यः कुरुतेऽर्चाविडम्बनम् ॥ २१ ॥**

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मद्धर्मणः मद्धर्मानुष्ठातुः पुरुषस्याशयः श्रुतमात्रगुणं मामञ्जसाऽभ्येति । मद्गुणश्रुतिमात्रेणेत्याद्युक्तलक्षणां ध्रुवानुस्मृतिं प्राप्नोतीत्यर्थः । अत्राध्यात्मिकश्रवणादिना ज्ञानाङ्गेन ज्ञानमिश्रत्व-मपि । अत्र शुद्धभक्तेः साध्यत्वेऽपि ज्ञानकर्ममिश्रभक्तिसाधनतया निर्देशो यन्मूलं तत्प्रचक्षते इति श्रीदेवहूतिप्रश्नानुसारात् ।स्वभक्तेः साध्यत्वेऽपिज्ञानकर्ममिश्रभक्तिसाधनमयत्वमेव दर्शितम् । अनया तु यत्तथा पृष्टं तदपि भक्तिमूलं निर्दिष्टं स्वमतन्तु सतां प्रसङ्गादिति प्रकरणे शुद्धभक्तिसाधनमग्रमेव दर्शितम् । अनया तु यत्तथा पृष्टं मुमुक्षुमार्गश्रवणाय स्वपतिशयेनैवेति ज्ञेयम् ॥ १९ ॥

यथेति । आत्मानं परमात्मानं मामनुकरोतीति सम्ब-न्धोक्तिः ॥ २० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

स्वापेक्षया महतां बहुमाननं पीडितानां दीनानां स्वापेक्षया हीनानामनुकम्पा तुल्येषु च मैत्री न तु मात्सर्यम् अन्यगणाना स्पर्द्धा च कर्त्तव्येति चार्थः चक्षुषो दर्शनस्य स्पर्शनस्य च दोषा व्यावर्त्तिताः यमेन नियमेन चेति प्रत्येकं द्वादशविधेनापि करौ पादौ शोधितौ अहिंसादयो यमाः स्नानादयो नियमाः चकारादवान्तरभेदा गृहीताः ॥ १७ ॥

आध्यात्मिकानां शास्त्राणां साङ्ख्ययोगादीनामनुश्रवणं गुरु-मुखाच्छ्रवणं श्रोत्रसंस्कारकं भगवतो निरन्तरं नामकीर्त्तनं च वाक्संस्कारकं चकाराद्गुणकर्मणामपि म इति विषयो व्यावर्तितः सर्वत्रार्जवम् ऋजुत्वं प्राणसंस्कार उक्तः आर्य्याणां सतां सङ्गः जिह्वासंस्कारकः त एवेतररसनिवारकाः अहङ्काराभावस्तु मनः-शोधकः सुप्रसिद्धः ॥ १८ ॥

एते सर्वे ये भक्तिजनकाः ते मद्धर्माः तैः परितः शुद्ध आशयो भवति तदैव पुरुषः अञ्जसा सामस्त्येन श्रुतमात्रगुणं मामभ्येति यथा चिरकाङ्क्षितविदेशगतपुत्रगुणे श्रुते भर्तृगुणे वा सर्वतो निवृत्तं मनस्तत्र प्रविशति स्वय अभिमुखो भव-तीति युक्तमुक्तमिति हिशब्दार्थः पुरुषस्याञ्जसेति पाठे आशय एव कर्त्ता ॥ १९ ॥

एकञ्च साधनमाह । यथा वातरथ इति । निरन्तरं सेव्यमानो योग एक एव सर्वसाधकः तत्र शुद्धिरपि नापेक्ष्यत इति दृष्टान्तेन तथात्वमाह । यथा गन्धः वातारूढः स्वभावत एव घा वातो रथो यस्य स तु घ्राणमेवावृङ्क्ते घ्राण एव तस्य ग्राहको भवतीति एवं योगरतमपि चित्तमात्मानमेव गृह्णातीति आत्म-गाम्येव भवति अत्र पूर्वसाधनान्यप्यपेक्ष्यन्त इत्याशयेनाह । अवि-कारि यदिति । यच्चित्तं सर्वमेव विकारं त्यक्तवत् ॥ २० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

आध्यात्मिकस्य अन्तःकरणभावस्य दोषस्य गुणस्य च अनु-श्रवणात् अन्तःकरणस्य भक्तौ प्रवर्त्तनार्थं तद्दोषगुणाववश्य-श्रोतव्यौ । दम्भाद्यन्तःकरणदोषस्य स्वस्मिन् वर्त्तमानत्वज्ञाने सति दम्भं महदुपासनया जयेदित्यादिविधौ भक्तः प्रवर्त्तेरन्नि-त्येतदर्थञ्च ॥ १८ ॥

मद्विषयकश्रवणकीर्त्तनादिरेव धर्म्मोऽनुष्ठेयो यस्य तस्य पुरुषस्य आशयो मनः । श्रुतमात्रगुणं मामेतीति मद्गुणश्रुति-मात्रेणेत्युक्तलक्षणं साध्यं भक्तियोगं प्राप्नोतीति भावः ॥ १९ ॥

प्रयत्नं विनैव प्राप्तौ दृष्टान्तः । वातो रथः प्रापको यस्य स गन्ध आशयात् स्वस्थानात् सकाशात् घ्राणं नासिकामावृङ्क्ते भजते प्राप्नोति एवं भक्तियोगयुक्तं चेतः आत्मानं परमात्मानं यथा वातः पद्मा-करस्थं गन्धं नासिकां प्रापयति तथैवायं भक्तचङ्गसमुदायो योगरतं भक्तियोगनिष्ठं चित्तं परमेश्वरं प्रापयतीत्यर्थः ॥ २० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आध्यात्मिकं वेदान्तशास्त्रं तदनुश्रवणात् ॥ १८ ॥

मद्धर्मणः मद्धर्मनिष्ठस्य आशयश्चित्तं मामञ्जसा प्रयत्नं विनै-वाभ्येति मयि अविच्छिन्ना चित्तवृत्तिः ध्रुवा. स्मृतिलक्षणा भवतीति फलितोऽर्थः ॥ १९ ॥

प्रयत्नं विनैव प्राप्तौ दृष्टान्तमाह । यथेति । यथा वातारूढःगन्ध आशयात्पुष्पादितः घ्राणमावृङ्क्ते प्राप्नोति तथा अविकारि यत् योगरतं चेतः आत्मानं परमात्मानमावृङ्क्ते ॥ २० ॥

---

### भाषा टीका ।

महत् पुरुषों का सन्मान करना दीनोंपर दया करना अपने बरोबर पुरुषों मे मित्रता करना यम नियमादि साधन करना ॥ १७ ॥

वेदान्त शास्त्र का श्रवण करना हमारे नामों का श्रवण मन का सरल भाव करना सत्पुरुषों का संग करना अह-ङ्कार का त्यागना ॥ १८ ॥

मेरे वास्ते सब धर्म करना इन गुणों से पुरुष का मन शुद्ध हो जाता है तब मेरे गुणों के श्रवण करने से अना-यासही से मेरे में मन लग जाता है ॥ १९ ॥

जैसें पवनके साथ जाने वाला गन्ध अपने स्थान से नासि-का में पहुच जाता है तैसे ही योग मे निरत निर्विकार जो मन वह आत्मा को प्राप्त हो जाता है ॥ २० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

चित्तशुद्धिश्च सर्वभूतात्मदृष्ट्यैव भवतीति वक्तुं केवलप्रतिमा-

यो मां सर्वेषु भूतेषु सन्तमात्मानमीश्वरम्।
हित्वार्चां भजते मौढ्याद्भस्मन्येव जुहोति सः॥ २२॥
द्विषतः परकाये मां मानिनो भिन्नदर्शिनः।
भूतेषु बद्धवैरस्य न मनः शान्तिमृच्छति॥ २३॥
अहमुच्चावचैर्द्रव्यैः क्रिययोत्पन्नयानघे!।
नैव तुष्येऽर्चितोऽर्चायां भूतग्रामावमानिनः॥ २४॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

द्विनिष्ठां निन्दन्नाह। अहमिति सप्तभिः। अर्चैव विडम्बनमनुकरणमर्चायां पूजाविडम्बनमिति वा अवज्ञोपेक्षाद्वेषनिन्दाः क्रमेण चतुर्भिर्निषिध्यन्ते॥ २१॥

हित्वा उपेक्ष्य॥ २२॥ २३॥

द्रव्यैरुत्पन्नया क्रियया भूतग्रामावमानिनस्तन्निन्दकस्य॥ २४॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी।

भूतेषु वक्ष्यमाणानुसारादप्राणभृज्जीवगारभ्य मदर्पितात्मजीवपर्य्यन्तेषु भूतात्मा तत्तदन्तर्यामी अहं सदावस्थितः तं मामवज्ञाय मदधिष्ठानस्यावजानने ममैवावज्ञां कृत्वेत्यर्थः अत्र चित्तशुद्ध्यर्थमेव सर्वत्रान्तर्यामिदृष्ट्योपासनं विधीयते न तु प्रतिमापूजनं निन्द्यते "अनिन्द्ये निन्दा निन्दयितुं न प्रवर्त्तते किन्तु विधेयं स्तोतुम्" इति न्यायात् टीकायामुक्ता अवज्ञादिनिषेधास्तु तदुपासनाङ्गमेवेति ज्ञेयम्॥ २१॥

मां हित्वा शैली काष्ठमयी वा काचित्प्रतिमास्ति न तु भगवानिति बुद्ध्या मयैक्यमज्ञात्वेत्यर्थः योऽर्च्चां प्रतिमां भजते लोकदृष्ट्या स्वप्रतिष्ठार्थं जलादिकमर्पयति स भस्मन्येव जुहोति तस्यां शिलादिबुद्धेर्नरकपातकत्वात् यथोक्तमग्निपुराणे मृगयायां श्रीदशरथमारितपुत्रस्यान्धर्षिप्रस्य विलापे "शिलाबुद्धिः कृता किम्वा प्रतिमायां हरेर्मया। किं मया पथि दृष्टस्य विष्णुभक्तस्य कर्हिचित्। तन्मुद्राङ्कितदेहस्य चेतसानादरः कृतः। येन कर्मविपाकेन पुत्रशोको ममेदृश" इति पुराणान्तरे च "अर्च्ये विष्णौ शिलाधीर्गुरुषु नरमतिर्वैष्णवे जातिबुद्धिर्विष्णोर्वा वैष्णवानां कलिमलमथने पादतीर्थेऽम्बुबुद्धिः। शुद्धे तन्नाम्नि मन्त्रे सकलकलुषहे शब्दसामान्यबुद्धिर्विष्णौ सर्वेश्वरेशे तदितरसमधीर्यस्य वा नारकी स" इति यद्यपि भक्त्याभासस्याप्यवश्यं फलवत्ता तथापि झटिति तदभावात्तत्तद्दोषवारणाय तथोक्तमिति ज्ञेयम्॥ २२॥

यद्यवज्ञामात्रे दोषस्तर्हि द्वेषे सुतरामित्याह। द्विषत इति। हिंसकस्य भिन्नदर्शिनः सर्वत्रान्तर्याम्यैक्यदृष्टिरहितस्य अत एव मानिनः अत एव बद्धवैरस्य, अत एव महाभारते व्यतिरेके गुणः श्रूयते "पितेव पुत्रं करुणो नोद्वेजयति यो जनम्। विशुद्धस्य हृषीकेशस्तूर्णं तस्य प्रसीदति" इति॥ २३॥

यद्यपि निन्दा द्वेषसमैव तथापि "न तथा तप्यते विद्धः पुमान् बाणैर्हि मर्मगैः। यथा तुदन्ति मर्मस्था असतां परुषेषव" इत्युक्तेः निन्दा ततोऽप्यधिकेत्युत्तरं निर्दिष्टेति न क्रमवैजात्यम्॥ २४॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका।

एवं निर्गुणभक्तियोगस्य साङ्गस्य स्वरूपमभिधाय तमेव प्रस्तोष्यंस्तामसादिभक्तियोगान्निन्दति। अहमितिषड्भिः। योऽहं सदा सर्वेषु भूतेषु भूतात्मावस्थितः भूतानामात्मनि प्रत्यगात्मन्यवस्थितः अन्तरात्मतयावस्थितः तं मामवज्ञायाभिभूयाज्ञात्वेत्यर्थः मर्त्यः संसारी अर्चायां पूजायां विडम्बनं कुरुते ईश्वरत्वमिहपुष्कलमिति ज्ञानरहितानामर्चनं विडम्बनमित्युच्यते न त्ववतारप्रभावतिरस्कार इह क्रियते॥ २१॥

एतदेव स्पष्टयति। य इति। सर्वेषु भूतेषु आत्मानं सन्तमन्तरात्मतयावस्थितं मां हित्वा 'हि गतौ' अज्ञात्वेत्यर्थः अर्चां भजते यः स भस्मन्येव जुहोतीश्वर इह स्थित इति ज्ञानरहितानामर्चार्चनादिकं भस्महुतमतोऽर्चावतारे परत्वं ज्ञातव्यमित्यर्थः अन्यथा मद्दर्शनस्पर्शः पश्यन्ति मे रुचिराणि अतोरूपाणि दिव्यानि वरप्रदानीत्यादि प्राकरणिकग्रन्थविरोधात्॥ २२॥

मानिनो देहात्माभिमानिनः अत एव परकाये मां द्विषतः भिन्नदर्शिनः अर्चादौ भेददर्शिनः भूतेषु नियद्धवैरस्य मनः शान्तिं नाच्छेति न प्राप्नोति॥ २३॥

हे अनघे! उच्चावचैर्द्रव्यैरुत्पन्नया अनुष्ठितया क्रियया पूजया अर्चायामर्चितोऽप्यहं भूतसमूहावमानिनः नैव तुष्ये नतुष्टोऽस्मि॥ २४॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

एवं विधैर्योगिभिः कुत्रध्येय इति तत्राह। अहंसर्वेष्विति। भूतानां जीवानामादानादिकर्तृत्वाद्भूतात्मान्तर्यामित्वेन ध्येय इति भावः तामसराजसभक्तयोरधमत्वे कारणमेकोक्त्याहातभिति। सर्वेष्वेतदित्यनुवर्तते योऽहं सर्वभूतेष्ववस्थितस्तं मामवज्ञाय मर्त्यस्तामसो राजसश्चार्चायामर्चया विडम्बनं कुरुत इति यस्मादतस्तामसो राजसश्चाधममित्यर्थः॥ २१॥

एतदेव विवृणोति। योमामिति। भस्मनीत्युक्त्वा तामसात्किञ्चिदुत्तमत्वमवबोद्धव्यं मन्त्रावृत्त्या फलसंभवात्॥ २२॥

तामसस्य न किञ्चित्फलमित्याह। द्विषतइति परकाये मां द्विषत

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इत्यस्य विवरणं भिन्नदर्शिन इति । शान्तिर्नाम मनिष्ठा भूतेषु वैष्णवेषु बद्धवैरस्य ॥ २३ ॥

मत्प्रीत्यभावादर्चाविडम्बनत्वं स्पष्टमाह । अहमिति । भूतग्रामे भूतसमूहे स्थितं मामवमन्तुं शीलमस्यास्तीति भूतग्रामावमानी तस्य ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अहमिति । भूतेषु वक्ष्यमाणरीत्या अप्राणभृज्जीवमारभ्य भगवदर्पितात्मजीवपर्यन्तेषु भूतात्मा तत्तदन्तर्यामी तमवज्ञाय मां तेषामवज्ञया तदधिष्ठानकस्य ममैवावज्ञां कृत्वेत्यर्थः । ततस्तां कृत्वा योऽर्च्चां मत्प्रतिमां कुरुते स तद्विडम्बनं तस्या अवज्ञामेव कुरुत इत्यर्थः ॥ २१ ॥

तामेवाह । यो मामिति । मौढ्यात् शैली दारुमयी वा काचित् प्रतिमेयमिति मूढबुद्धित्वात् यः सर्व्वेषु भूतेषु वर्त्तमानं परमात्मानमीश्वरं मां हित्वा तस्या मयैक्यमविभाव्य अर्च्चां मदीयां प्रतिमां भजते केवललोकरीतिदृष्ट्या तस्यै जलादिकमर्पयति । यथाग्निपुराणे श्रीदशरथमारितपुत्रस्य तपस्विनो विलापे

शिलाबुद्धिः कृता किम्वा प्रतिमायां हरेर्मया ।
किं मया पथि दृष्टस्य विष्णुभक्तस्य कर्हिचित् ॥
तन्मुद्राङ्कितदेहस्य चेतसा नादरः कृतः ।
येन कर्म्मविपाकेन पुत्रशोको ममेदृशः ॥

इति । यथोक्तम्

अर्च्चे विष्णौ शिलाधीर्गुरुषु नरमतिर्वैष्णवे जातिबुद्धि-
र्विष्णोर्वा वैष्णवानां कलिमलमथने पादतीर्थेऽम्बुबुद्धिः ॥
शुद्धे तन्नाम्नि मन्त्रे सकलकलुषहे शब्दसामान्यबुद्धि-
र्विष्णौ सर्व्वेश्वरेशे तदितरसमधीर्यस्य वा नारकी सः

इति तस्य मूढस्य मद्दृष्ट्यभावात् सर्व्वभूतावज्ञापि भवति ततस्तद्दोषेण भस्मनि यथा जुहोति कश्चित्तथा तस्याश्रद्धानस्य फलाभाव इत्यर्थः । "ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विता" इत्याद्युक्तरीत्या लोकपरम्परामात्रजातं यत्किञ्चित् श्रद्धासद्भावे तु कनिष्ठभागवतत्वमेव ।

अर्च्चायामेव हरये पूजां यः श्रद्धयेहते ।
न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः

इत्याद्युक्तेः । यद्यपि यथाकथञ्चित् भजनस्यैवावश्यफलावसानतास्त्येव तथापि झटिति न भवतीत्येव तथोक्तं वक्ष्यते च साफल्यम् अर्चादावर्च्चयेत्तावदित्यादिना ॥ २२ ॥

अवज्ञामात्रस्य तादृशत्वे सुतरां तु द्विषत इति भिन्नदर्शिनः सर्व्वत्रान्तर्यामिन्येकत्वदृष्टिरहितस्य अत एव मानिनः अत एव बद्धवैरस्य तथा च महाभारते ।

पितेव पुत्रं करुणो नोद्वेजयति यो जनम् ।
विशुद्धस्य हृषीकेशस्तूर्णं तस्य प्रसीदति इति ॥ २३ ॥

किञ्च । अहमिति । अवमानिनो निन्दाकर्त्तुः निन्दापि द्वेषसमा किम्वा ।

न तथा तप्यते विद्धः पुमान् बाणैस्तु मर्म्मगैः ।
यथा तुदन्ति मर्म्मस्था ह्यसतां परुषेषवः ॥

इत्युक्तरीत्या ततोऽधिकेति नायं व्युत्क्रम इत्यभिप्रेत्य न द्वेषात्पूर्व्वमसौ पठिता ॥ २४ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एवमुत्तमां भक्तिं ससाधनां साधयित्वा पूर्वोक्तां सगुणां त्रिविधामपि निन्दति । अहमिति चतुर्भिः ।

करोति यत्तन्नटवन्मुख्यस्यातिक्रमस्तथा ।
दोषोत्पत्तिश्च प्रचुरामत्प्रीतेश्च न साधकम् ॥

तत्र प्रथमं पूर्वभक्तिरनुकरणमात्रं न तु भक्तिरित्याह । सर्वेषु भूतेष्वहमात्मा "अवस्थितेरिति काशकृत्स्न„ इत्यत्र प्रतिपादितं भगवत एवावस्थाविशेषो जीव इति तदाह । अवस्थितः सदेति । अहमेव वा भूतात्मा सर्वभूतरूपः तत्त्वरूपो जीवरूपश्च संघातरूपश्चेति अवस्थितः सदेत्यन्तर्यामी अतः सर्वभावेन सर्वेषु भूतेषु विद्यमानं मामवज्ञाय भेदबुद्धिं हिंसादिकं च तत्र जनयित्वा स्वात्मानमपि केवलं मर्त्यं शरीरं मत्वा यत्कुरुते तत् अर्चाविडम्बनमेव ॥ २१ ॥

अथ भगवदाकाराभावात् स्वबुद्ध्या शास्त्रमुल्लङ्घ्य यदि भजते तदा यत्तस्य फलं तदाह । यो मामिति । संघाते अहं त्रिरूपो वर्त्ते प्रथमं सर्वेषु भूतेषु तद्रूपः तत आत्मरूपः तत ईश्वरोऽन्तर्यामी नियामकः एवं पुरुषे सर्वभावेन विद्यमानं भगवन्तं हित्वा अर्चां प्रतिमां यो भजते भजने प्रमाणाभावमाह । मौढ्यादिति । न तु स्वतन्त्रो भगवन्मार्गो निषिद्धः स गुणातीत इत्येकादशे वक्ष्यते । मन्निकेतं तु निर्गुणमित्यादिभिः प्रकरणेन च वाक्यानि संबद्धानि तत्प्रकरणस्थमेव गुणदोषं वदन्ति तत्र पृथग्भावस्तु नोक्तः द्वादशानुसारेण वा पुरुषो नारायण इज्यः उभयत्रापि भेदगुणयोरभावान्नैतानि दूषणानि संबद्धानि भवन्ति किं त्वत्रैव तानि पूर्वोक्तसगुणभक्तिदूषकाणि अर्चायां ज्ञानक्रियाचैतन्यानन्दानामभावात् निष्पादनार्थं व्यापृतान्यप्येतानि पश्चात्त्यक्त्वा गतानीति भस्महुतप्रायं भवति स इति पूर्वोक्त एव पूर्वमग्निस्तत्र दृष्ट इति शान्तेऽप्यग्नौ भ्रमाद्धोम इति सोऽत्र दृष्टान्तीकृतः ॥ २२ ॥

परद्वेषादिना अर्चायां भगवद्भजने कामाद्युत्पत्तेः कदाचिदपि न मनःशान्तिर्भवतीत्याह । द्विषत इति । स हि मामेव द्वेष्टि यतो भूतेष्वहमेव वर्त्ते इति अतः परकाये मां द्विषतः मनः कदापि न शान्तिमृच्छतीति सम्बन्धः ननु जीवः द्वेषाश्रयः संघातो वा अन्यथा व्यवहारो न स्यात् अतो भेदो व्यवहारार्थं मृग्य एव "यं द्विष्यात्तं ध्यायेत्" इति श्रुतेश्च तत्र कथमाह भगवान्मां द्विषत इति चेत् सत्यं तद्गतापकारक्रियया हि तस्मिन्द्वेषः सा क्रिया मत्कृता मत्प्रेरणया वा जातेति तन्निमित्तं चेदन्यं द्वेष्टि तर्हि मामेव द्वेष्टि भेदे हि यज्ञपरिपन्थिनो दैत्याः मदधिष्ठिता अपि रोगा इव निवर्तनीयास्तुषादिरिव व्रीह्यादिषु अतो यज्ञार्थं द्वेषः न तु द्वेषार्थं यज्ञ उचितः श्येनादावप्येवमेव यज्ञभ्रातृव्य एव स्वभ्रातृव्य इति तत्र तु यज्ञो निरभिमान इति तावदपि कर्त्तव्य[illegible] तु भगवान् साभिमान इति द्विषन्तमपि न द्विष्यात् कार्यं तु प्रल्हाद इव सेत्स्यति अतोऽत्र मार्गे सर्वथापि द्वेषोऽनुचितः भगवदर्थसृष्टिश्चेयं अतोऽत्र भगवद्द्वेष एव भवति किञ्च मानिनो भूतेषु बद्धवैरस्येति दोषत्रयं सात्त्विकराजसतामसा दोषा निरूपिताः न हि त्रिदोषव्याप्तस्य शान्तिरस्ति अभिमानस्तु सात्त्विकदोष एव उत्कृ-

अर्चादावर्चयेत्तावदीश्वरं मां स्वकर्मकृत् ।
यावन्न वेद स्वहृदि सर्वभूतेष्ववस्थितम् ॥ २५ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

ष्टकर्मणैवाभिमानो भवतीति क्रियया हि भेद इति राजसं भेदज्ञानं वैरं तु तामसमिति ॥ २३ ॥

अहं तु न सन्तुष्टो भवामीति मुख्यं दूषणमाह । अहमिति । यद्यपि बहुसुवर्णपुष्पादिकं प्रयच्छति तथाप्युच्चावचैरनेकविधैर्द्रव्यैः पुष्पादिभिरुत्पन्नया क्रियया अहं नैव तुष्ये तत्र हेतुः । भूतग्रामावमानिन इति । अर्चायामित्युपलक्षणं पुरुषविशेषेऽपि भजने भूतग्रामावमानिनो न तोष एव परं तत्र तादृश एव भजतीति अर्चायामित्युक्तम् ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

किञ्चैतादृशीमपि भक्तिमपराध एव सङ्कोचयति । स चापराधः प्रायो महदवज्ञानमूलक एव ते च महान्तो लोके दुर्लभ्या अपि बहवस्तिष्ठन्त्यतस्तदपराधाभावार्थं सर्व्वभूतान्येव स्वेष्टदेवाधिष्ठानबुद्ध्या सम्माननीयानि तदभावे श्रीभगवद्विग्रहसेवापि न सम्यक् फलदेति वदन्नीश्वरत्वात् प्राणिसम्माननमकुर्व्वते स्वभक्ताय हितकारित्वेन वात्सल्यात् कुप्यन्निव श्रीकपिलदेव आह । अहमित्यादिषड्भिः । तत्रावज्ञोपेक्षाद्वेषनिन्दाः क्रमेण चतुर्भिर्निषिध्यन्ते अर्च्चा मत्प्रतिमा तस्यां मत्पूजनं मद्विडम्बनमेव कुरुते ॥ २१ ॥

भस्मन्येव जुहोतीति प्रभुत्वात् स्वभक्तान् शिक्षयितुं तान् प्रति सतर्ज्जनोक्तिरियं तथैव स्वयं भगवतोऽपि यस्यात्मबुद्धिः कुणप इत्यत्र भौम इज्यधीरित्युक्त्वा स एव गोखर इत्याक्षेपः । यथैवाधुनिका अपि सद्गुरवः प्रियमपि स्वाशिष्यं स्वसेवारतमपि काप्यन्यत्र हरिभक्तेष्वपराधलेशमात्रं दृष्ट्वैव मत्सेवां करोषि भस्म करोषि मां दुःखयस्येव केवलमित्याक्षिपन्ति वस्तु तस्तु ऋषयः क्वापि नैवमाहुः । यथा ।

> अर्च्चायामेव हरये पूजां यः श्रद्धयेहते ।
> न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः

इति । व्याख्या च श्रीस्वामिचरणानाम् । न तद्भक्तेषु चान्येषु सुतरामेव न करोति प्राकृतः प्रकृतिः प्रारब्धः अधुनैव प्रारब्धभक्तिः शनैरुत्तमो भविष्यतीत्येषा । अत्रापि वक्ष्यते अर्च्चादावर्च्चयेत्तावदित्यादीति ॥ २२ ॥

भिन्नदर्शिनः स्वस्य दुःखमिवान्यस्यापि दुःखंसमानमिति न जानतः ॥ २३ ॥

अवमानिनो निन्दकस्य

> न तथा तप्यते विद्धः पुमान् वाणैर्हि मर्म्मगैः ।
> यथा तुदन्ति मर्म्मस्था ह्यसतां परुषेषवः ।

इत्युक्तरीत्या निन्दाक्षेपादप्याधिक्येत्याहुः ॥ २४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं सगुणा निर्गुणा च भक्तिर्दर्शिता निर्गुणायाः साधनानि चोक्तानि तस्याः साधनेषु भूतेषु मद्भावनयेत्यनेन हरिभक्तिदूषकभूतद्वेषादिदोषनिवारणार्थं भूतेषु भगवदुपासनं महतां बहुमानेनेत्यनेन महत्सु विशेषतो भक्तिपोषकं तदुपासनमुक्तम् तत्र मन्दाः केचिद्रुचिं न करिष्यन्ति तच्छिक्षार्थम् सर्वभूतेषु विशेषतः ज्ञानभक्तिमत्सु महत्सु च भगवद्दृष्टिः कर्तव्येति प्रपञ्चयति । अहं सर्वेष्वित्यारभ्य ईश्वरो जीवकलया प्रविष्टो भगवानितीत्यन्तेन ग्रन्थेन । तं सर्वात्मानमविज्ञाय अर्चाविडम्बनमर्चायां पूजाविडम्बनं कुरुते अत्र सर्वशास्त्रसम्मतमर्चायां भगवदाराधनं नैव निन्द्यते किन्तु तस्य मर्त्यस्य दुरात्मता प्रकाश्यते यथा कश्चिदनेकानपराधान् कुर्वंश्चरणार्चनविडम्बनं करोति तद्दुरात्मतावत् ॥ २१ ॥

आत्मानं सर्वात्मानमुपादानतया सन्तमीश्वरं नियन्तृत्वेन सन्तं हित्वा अर्चां यो भजते स भस्मन्येव जुहोति अस्वीकारात् "न भजति कुमनीषिणां स इज्याम्" इति वक्ष्यमाणाच्च ॥ २२ ॥ २३ ॥ २४ ॥

---

भाषा टीका ।

सब भूतों का अन्तर्यामी मैं सब भूतोंमें सदा स्थितहूं उहां पर जो मनुष्य मेरी अवज्ञा करता है और केवल मूर्ति को पूजता है सो केवल विडम्बनामात्र करता है ॥ २१ ॥

सब भूतों में स्थित ईश्वर आत्मा मेरे को अवज्ञा कर के मूढता से केवल अर्चाही को जो भजता है सो केवल भस्म मे होमकरता है ॥ २२ ॥

परशरीरमें मेरे से द्वेषकरने वाले भेद दर्शीका भूतों में वैर करने वाले का मन शान्ति को नहीं प्राप्त होता है ॥ २३ ॥

हे अनघे ! माता जोपुरुष भूतोंका अपमान करता है वह अर्चा में अनेक प्रकार के द्रव्यों से क्रिया द्वारा पूजन करै तौभी मै नहीं प्रसन्न होताहूं ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तर्हि किमर्चादावर्चनमनर्थकमेव नेत्याह । अर्चादाविति । सर्वभूतेष्ववस्थितं मां स्वहृदि यावन्न वेद स्वकर्मकृत्कर्माविरोधेन यथावकाशम् अनेन कर्मनिष्ठाया अपि स एवावधिरित्युक्तं भवति ॥ २५ ॥

अन्तरा अन्तरं भेदम् उत अपि अरमल्पम् अल्पमपि भेदं यः पश्यतीत्यर्थः । यद्वा । अन्तरा मध्ये उदरं शरीरम् मृत्युरहं तस्य भयं विदधे करोमि ॥ २६ ॥

आत्मनश्च परस्यापि यः करोत्यन्तरोदरम्।
तस्य भिन्नदृशो मृत्युर्विदधे भयमुल्बणम् ॥ २६ ॥
अथ मां सर्वभूतेषु भूतात्मानं कृतालयम्।
अर्हयेद्दानमानाभ्यां मैत्र्याभिन्नेन चक्षुषा ॥ २७ ॥
जीवाः श्रेष्ठा ह्यजीवानां ततः प्राणभृतः शुभे !।
ततः सचित्ताः प्रवरास्ततश्चेन्द्रियवृत्तयः ॥ २८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

अथ अतः सर्वभूतेषु कृतालयं कृतावासम्। तत्र हेतुः। भूतानामात्मानमन्तर्यामिणम्। अभिन्नेन चक्षुषा समदर्शनेन ॥२७॥

तत्रापि यथोत्तरं मानाद्यतिशयः कर्तव्य इति वक्तुं तारतम्यमाह। जीवा इति सार्धैः षड्भिः। अजीवानामचेतनेभ्यः ततस्तेष्वपि प्राणभृतः प्राणवृत्तिमन्तः सचित्ता ज्ञानवन्तः इन्द्रियाणां वृत्तयो येषु इन्द्रियवृत्तयो वृक्षाणामपि सूक्ष्माः सन्त्येव तथाहि महाभारते मोक्षधर्मेषु स्मर्यते

तस्मात्पश्यन्ति पादपाः तस्माज्जिघ्रन्ति पादपाः।

इत्यादि प्रसिद्धा तु स्पर्शनेन्द्रियवृत्तिरेव ॥ २८ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी।

पूर्वोक्तदोषचतुष्टयसद्भावेऽर्चनस्य सर्वथा वैफल्यमाशङ्क्य निराचष्टे। तर्हीति। अनेन स्वकर्मकृदित्यधिकारिविशेषणेन। स एव सर्वत्रान्तर्यामितया तद्दर्शनलक्षणः एव तथा च तत्तद्दोषयुक्तस्यार्चनं तत्तद्दोषशान्तिपूर्वकं सर्वत्र तज्ज्ञानजनकमिति नार्चनस्य वैफल्यमित्यर्थः ॥ २५ ॥

स्वकर्मानुष्ठानपूर्वकमर्चनं कुर्वतोऽपि न भूतदयां विना सिद्धिरित्याह। आत्मनश्चेति। अत्र साध्याहारादिव्याख्यानादरुचेः पक्षान्तरम्। भयं संसारम् ॥ २६ ॥

अतो भूतदयामन्तरासिद्धेः तत्र कृतालयत्वे मैत्र्या हिताचरणेन ॥ २७ ॥

तत्रापि मानादिभिरर्चनेऽपि अचेतनेभ्यो जीर्णसस्यादिभ्यः जीवा जीवत्सस्यादयः भूमिष्ठजलाकर्षणगमनादिलिङ्गेन प्राणवृत्तिमन्तो जीवत्पाषाणादयः तेष्वपि मध्ये उड्डयनादिचेष्टावत्वात् अन्तर्ज्ञानवन्तः पर्वताः प्रभूताः प्रत्यक्षत्वप्रयोजकधर्मावच्छिन्नाः ॥ २८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अतः स्वहृदि सर्वभूतेषु चावस्थितमीश्वरं मां यावन्न वेद तावत् स्वधर्मकृत् स्वधर्मनिष्ठः अर्चादावर्चयेत् अर्चादावर्चनं हृत्पद्मे साक्षात्कारसाधनमतस्तत्सिद्धितः प्रागर्चायामर्चनविच्छेदो न कर्तव्य इत्यर्थः ॥ २५ ॥

आत्मन इति। स्वात्मनः परमात्मनि उदरम् उत् अपि अरमल्पमीषदपीत्यर्थः अन्तरा भेदं यः करोति ब्रह्मात्मकानां जीवानां ज्ञानैकाकारतया साम्ये सति कर्मायत्तदेवादिशरीरकृतवैचित्र्यमात्मगतत्वेन योऽनुसन्धत्ते तस्य भिन्नदृशः मृत्युर्यमः उल्बणं भयं विदधे स नरकपातीत्यर्थः ॥ २६ ॥

निर्गुणस्यानुष्ठानप्रकारमाह। अथ अतः सर्वेषु भूतेषु कृतालयं कृतावासं तत्र हेतुः भूतात्मानं भूतशब्दो देवादिदेहविशिष्टजीवपर्यन्तः तस्य तत्रैव स्वारस्यात् तेषामात्मानमन्तर्यामिणं मामभिन्नेन समेन चक्षुषा ज्ञानेन मैत्र्या दानमानाभ्यां चार्हयेत् स्वाधिकेषु बहुमानं समेषु मैत्री अधमेषु दानं सर्वेषु ज्ञानैकाकारत्वब्रह्मात्मकत्वानुसन्धानमविशेषेण कर्तव्यमित्यर्थः मामर्हयेदित्यनेन मदात्मकत्वबुद्ध्या भूतेषु कृतं दानादिकं मत्सन्तोषकरमित्युक्तं भवति ॥ २७ ॥

अथ भूतेषु यथोत्तरं दानमानाद्यतिशयः कर्तव्य इति वक्तुं निर्गुणकस्य सर्वात्मत्वञ्च वक्तुं भूतानां तारतम्यमाह। सार्द्धैः षड्भिः। जीवन्तीति जीवाः सर्गप्रलयान्तरकालस्थितिजीवनाः शरीरिणः ते पृथिव्याद्यचेतनेभ्यः श्रेष्ठाः इत्यर्थः अजीवानामिल्पपादानस्य शेषत्वविवक्षया षष्ठी तत्रापि प्राणभृतः प्राणवन्तः हे शुभे ! ततः सचित्ताः ज्ञानवन्तः प्रवराः ततस्तेभ्यः इन्द्रियवृत्तयः इन्द्रियाणां वृत्तयो येषु ते वृक्षादयः वृक्षाणामपि इन्द्रियवृत्तयः सूक्ष्माः सन्त्येव तथाहि महाभारते स्मर्यते "तस्मात् पश्यन्ति पादपास्तस्माज्जिघ्रन्ति पादपा" इति ॥ २८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

तर्ह्यर्चादिपूजाविधायकशास्त्रं व्यर्थमिति तत्राह। अर्चादाविति। आदिशब्दात्स्थण्डिले स्वकर्मकृद्विहितं कुर्वन्निषिद्धं परित्यजन्स्वहृदि स्थितं देवदत्तादिसर्वभूतेष्ववस्थितं मामभेदतो न वेद सर्वभूतान्तर्यामिरूपेषु भेददर्शनस्यानर्थफलत्वमिति च ॥ २५ ॥

अन्तर्यामिरूपाणि भिन्नानि पश्यतीति भिन्नदृक्त्वमित्याह। आत्मनश्चेति। य आत्मनः स्वस्य हृदि स्थितं परस्य देवदत्तादेर्हृदि गतमन्तरेण भेदेन युक्तमुदरं ब्रह्म करोति स्वतस्त्वभिन्नं ब्रह्माभिन्नं पश्यतीत्यन्वयः "उदरं ब्रह्म" इति श्रुतेः उदरमन्तरं कुरुत इति अन्तर्यामिरूपाणि भिन्नानि

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

पश्यतीति भिन्नदृकस्य मृत्युः संसाराख्यदुर्जनमारयिता श्रीनृसिंहस्वरूपी उल्बणं भयं नित्यदुःखलक्षणमन्धन्तमो विधत्त इत्यन्वयः ॥ २६ ॥

उक्तार्थोपसंहारमुखेन सर्वान्तर्यामिपूजाप्रकारं वक्ति। अथेति। अन्तर्यामिरूपाणां भिन्नत्वज्ञानमनर्थकमिति यस्मादथ तस्मात्सर्वेषु भूतेषु कृतालयं हरेरन्तर्यामिरूपं भूतात्मानं मां द्रव्यादिदानमानाभ्यां मैत्र्या स्वस्मादयमेव ममार्हः सुहृदिति भावेन निमित्तेनाभिन्नेन चक्षुषा अभेददर्शनेनार्हयेदर्चयेदित्यर्थः ॥ २७ ॥

हरेरन्तर्यामिरूपाणां तत्र तत्र सन्निधानविशेषात्तत्कलत्वाच्च चेतनानां तारतम्यं तज्ज्ञानं च पुरुषार्थसाधनमिति द्योतयंस्तत्तारतम्यं वक्ति। जीवा इत्यादिना। संसारावस्थायां व्यत्ययेऽपि पशुवृक्षादिभेदेन स्थितानां जीवानां मुक्तौ निजमेव रूपमपेक्ष्य तारतम्यमत्रोच्यते तदुक्तम्

पशुवृक्षादिभेदेन जीवा एव स्वतः स्थिताः।
संसृतौ व्यत्ययस्तेषां मुक्तौ तत्तत्स्वरूपतः॥
तत्र स्थावरमुक्तेभ्यो वरा जङ्गममुक्तकाः।
तेभ्यो मानुषमुक्ताश्च विप्रा मुक्तास्ततोऽधिकाः॥
तत्रोपदेशमात्रेण मुक्तेभ्यो वेदवादिनः।
अर्थज्ञा ऋषयस्तेभ्यो देवताः संशयच्छिदः॥
पूर्णाधर्मास्ततस्त्विन्द्रो निःसङ्गो गरुडस्ततः।
भक्तिपूर्णो हरेर्ब्रह्मा तस्मान्नान्योऽधिकस्ततः॥
मुक्तौ वा संसृतौ वापि सम्यगेषु हि ते गुणा इति।

अजीवाश्चलनरहिताः स्थावरमुक्तास्तेषां सकाशाज्जीवाः जङ्गममुक्ताः श्रेष्ठाः अत्रापि विशेषद्योतनार्थं इष्ठन्प्रत्ययः हिशब्देनेश्वरशक्तेरचिन्त्यत्वं सूचयति प्राणं प्रकृष्टचेष्टां बिभ्रतीति प्राणभृतः श्रेष्ठा इत्यनुवर्तते सचित्ता मनोव्यापारयुक्ता इन्द्रियवृत्तयश्चक्षुरादीन्द्रियैः प्रवर्त्तमानाः ॥ २८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तदेवमीश्वरज्ञानाभावाद्भक्तावश्रद्दधानस्य दोष उक्तः। अथ भक्त्यश्रद्धाहेतुतज्ज्ञानस्य स्वधर्मसंयुक्तं तदर्चनमेव कारणमुपदिशन् तादृशार्चनस्याप्यव्यर्थतामङ्गीकरोति। अर्चादाविति। तावदेव स्वकर्मकृत् सन् अर्चादावर्चयेत् यावत् सर्वभूतेष्ववस्थितमीश्वरं मां न वेद न जानाति। अत्र स्वकर्मसहायत्वम् अजातश्रद्धस्य शुद्धभक्तावनधिकारात् तत्प्रतिपादयिष्यते। जातश्रद्धो मत्कथास्वित्यादिना अतो भगवज्ज्ञानादूर्द्ध्वं जातश्रद्धस्तु स्वकर्मकृत् सन् नार्चयेत्। किन्तु शुद्धमर्चादिकमेव कुर्वीतेत्यप्यायातम्। तच्च प्रतिपादयिष्यते "तावत् कर्माणि कुर्वीत" इत्यादिना नत्वर्चा परित्यजेदित्यर्थः।

प्रतिष्ठितार्चा न त्याज्या यावज्जीवं समर्चयेत्।
वरं प्राणपरित्यागः शिरसो वापि कर्त्तनम्

इति श्रीहयशीर्षपञ्चरात्रविरोधात् ॥ २५ ॥

अथ स्वकर्मपूर्व्वकमर्चनं कुर्व्वंश्च भूतदयां विना न सिद्ध्यतीत्याह। आत्मन इति। अन्तरोदरं उदरभेदेन भेदं करोति न तु मदधिष्ठानत्वेनात्मसमं पश्यति। ततश्च क्षुधितादिकमपि दृष्ट्वा स्वोदरादिकमेव केवलं सम्बिभर्त्तीत्यर्थः। तस्य भिन्नदृशो मृत्युरूपोऽहमुल्बणं भयं संसारम् ॥ २६ ॥

निगमयति। अथेति। अथ अतो हेतोः यथायुक्तं यथाशक्तिदानेन तदभावे मानेन च अभिन्नेन चक्षुषेति पूर्व्ववत् यथोक्तं सनकादीन् प्रति वैकुण्ठदेवेन। "ये मे तनूर्द्विजवरान् दुहतीर्मदीया भूतान्यलब्धशरणानि च भेदबुद्ध्या" इत्यादि। एष च प्रस्तावः पूर्व्वमभिसन्धाय यद्धिंसामित्यादिकं यदुक्तम्। तत्तत्पोषकत्वेन निर्दिष्टम् ॥ २७ ॥

तत्र सर्वेषां साधारण्येनैव प्राप्तेर्विशेषयति। सार्द्धैः षड्भिः। अजीवा जीर्णसस्यादयः जीवा जीवत्सस्यादयः। ततः तेष्वपि प्राणभृतः भूमिष्ठजलाकर्षणगमनादिलिङ्गेन प्राणवृत्तिभृतो जीवत्पाषाणादयः सचित्ताः पूर्व्वमुड्डयनादिचेष्टाः पश्चादिन्द्रवज्रेण स्तब्धाः इति श्रवणात्। अन्तः सज्ञानाः पर्व्वता इन्द्रियवृत्तयः दृष्ट्यादितुल्यया दूरतोऽपि स्पर्शवृत्त्या स्वोद्गमावकाशज्ञानिनो वृक्षादयः पूर्व्वपूर्व्वस्मादुत्तरोत्तरस्मिन्नेकैकगुणाधिक्येनाधिक्यम् ॥ २८ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

तर्ह्यर्चाविधायकानि वाक्यानि व्यर्थानि स्युरित्याशङ्क्याह। अर्चादाविति। यावत्सर्वात्मकं भगवन्तं न जानाति तावदर्चायामर्चयेत् यतोऽहमीश्वरः अन्यथा मारयेत् सार्चा धर्मरूपेत्याह। स्वकर्मकृदिति। सन्ध्यावन्दनवत् भगवत्पूजापि नित्या ब्राह्मणादीनामतः स्वकर्मकृत् शालग्रामादौ मां पूजयेत् यावन्मां सर्वभूतेष्ववस्थितं स्वहृदि न वेद अनुभवो न भवतीत्यर्थः नतु शाब्दं ज्ञानं प्रयोजकं यथा साक्षाद्भगवति समागते बुद्धिर्भवति एवं कृमिकीटादावपि चेद्बुद्धिस्तदा कर्मनिवृत्तिः अर्चानिवृत्तिश्चेति साधारणमेतद्वाक्यं गुणप्राधान्याभावात् ॥ २५ ॥

ज्ञानोत्तरं तु न कर्त्तव्यमित्यत्र हेतुमाह। आत्मन इति। यदि ज्ञानोत्तरमपि पूजां कुर्याद्भेदबुद्ध्या स्वसेवामिव कुर्वन् तुष्यते स्वसेवया च स्वयं संतुष्यते" यदि अन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति यथा पशुरेवं सदेवानां पशुः" इति श्रुतेः आत्मेत्येवोपासीत यस्तु पुनः आत्मनः परस्यापि अन्तरा उदरमपि ईषदप्यरं भेदं करोति अरं हि भेदकाश्चक्रस्य "यदा ह्येवैष एतस्मिन् उदरमन्तरं कुरुते अथ तस्य भयं भवति" इति श्रुतेः तद्भयमहमेव प्रयच्छामीत्याह। तस्य भिन्नदृश इति। उल्बणं भयं विदधे विशेषेण तस्मिन् स्थापयामि तद्भयं मृत्युरेव न ह्यन्येन भयेन प्राणांस्त्यजति सहजो हि प्रयत्नः प्राणधारकः अतो भक्तिफलं दूरे मृत्युस्तु सेत्स्यतीति ज्ञानोत्तरं मूर्त्तेरभावादेतन्न कर्त्तव्यमिति फलितम् ॥ २६ ॥

अज्ञानदशायामपि अर्चापेक्षया ज्ञानार्थिनः सर्वभूतेष्वेव भजनं श्रेष्ठमित्याह। अथ मामिति। अथेति भिन्नक्रमार्थः पूर्वं ज्ञानिनो निरूपणात्सर्वभूतेषु भजनं भक्तिमार्गेऽपि वर्त्तत इति तन्निवृत्त्यर्थमाह। भूतात्मानमिति। भूतानामात्मा जीवः। ननु स सर्वत्र वर्त्तत इति कोऽयं भूतेषु विशेषस्तत्राह। कृतालयमिति। यथा कश्चिद्गृहं कृत्वा क्वचित्तिष्ठति तदुपलब्धिस्तत्र सुलभा

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

अत्र आत्मनोऽपि सङ्घातरूपं गृहं कृत्वा स्थितस्य तत्रोपलब्धिः सुलभा लोकेऽपि गृहे पदार्थसमर्पणे गृहस्थः प्रीतो भवति अतः भूतेष्वेव मामर्हयेत् यथायोग्यं च पूजा येनैव यः सन्तुष्यति तत्र मुख्यं दानं मानं च मैत्री च निकृष्टे दानमुत्कृष्टे मानं समे मैत्री एतदप्यभिन्नचक्षुषा सर्वत्रात्मज्ञानेन कर्त्तव्यं न तु लोकदृष्ट्येत्याह। अभिन्नेति ॥ २७ ॥

विशेषपूजायामुत्कृष्टब्राह्मणलक्षणमधिष्ठानं वक्तुं सर्वजीवापेक्षया तस्योत्कर्षमाह। जीवा इति सार्द्धैः षड्भिः। जीवाः श्रेष्ठाः प्राणयुक्ताः अजीवानां पाषाणादीनां मध्ये श्रेष्ठाः वृक्षादयः ततः प्राणभृतः श्वासोच्छ्वासवन्तः जङ्गमाः श्रेष्ठाः शुभे! इति सम्बोधनमुक्तविश्वासाय देहापेक्षया स्थूलः प्राण उत्कृष्टस्ततोऽप्यासन्यः एवमेते त्रयो निरूपिताः क्रियाशक्तिप्रधानाः ततो ज्ञानशक्तिप्रधाना उत्तमा इत्याह। ततः सचित्ता इति। चेतनाधारभूतमन्तःकरणं चित्तं ज्ञानवन्त इति यावत् ततश्चेन्द्रियवृत्तय इति सविषयज्ञानवन्तः इन्द्रियाण्येतानि क्रियामयानि ॥ २८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

शुद्धभक्तिमतां स्वत एव शुद्धान्तःकरणत्वात् प्राणिमात्रावज्ञा प्रायो न सम्भवेत् कर्म्ममिश्रभक्तिमतां तु सा सम्भवेदेव यावदन्तःकरणस्याशुद्धिस्तस्य शुद्धौ सत्यां तु सा न तिष्ठेत् तेन कर्म्मापि न कर्त्तव्यमित्याह। अर्चादाविति। स्वकर्म्मकृत् कर्म्ममिश्रां सात्त्विकीं भक्तिं कुर्व्वाणः यावदिति सर्व्वभूतात्मदर्शित्वदशायामुद्भूतायां सत्यां कर्म्मानधिकारात् न स्वकर्म्मकृत् किन्तु ज्ञानमिश्रां भक्तिं कुर्व्वाणः सन्नर्चायां मामर्च्चयेदित्यर्थः ॥ २५ ॥

आत्मन उदरं परस्यापि उदरं यः अन्तरा भिन्नं करोति। तस्य मृत्युस्वरूपोऽहमेव। उदरं खलु जाठरानलज्वालायुक्तं यथा आत्मनस्तथा परस्यापीति ज्ञात्वा क्षुधार्त्तं जीवमात्मानमिव भोजयेदेवान्यथा मृत्युभयं न तरतीत्यर्थः ॥ २६ ॥

ननु पृथिव्यामनन्ता एव क्षुधार्त्ता जीवास्ते च भोजयितारं श्रुत्वा तत्समीपमायान्त्येव तान् भोजयितुं कः खलु रन्तिदेवनृप इव धैर्य्यं धत्ते इत्यत आह। अथ अथवा तेभ्यो यथेष्टदानासामर्थ्येऽपि दानादिभिरर्हयेत् "अथाथो संशये स्यातामधिकारे च मङ्गले। विकल्पानन्तरप्रश्नकात्स्न्योरम्भसमुच्चय" इति मेदिनी। किञ्च। तेषु बुभुक्षुषु गालिप्रदानादिभिस्तिरस्कुर्व्वत्स्वपि प्रति तिरस्कारं न कुर्य्यात् किन्तु तेष्वात्मनोऽप्यधिकमानेन स्तुत्यादिभिरादरेणार्हयेत्। यदुक्तं भगवता "ये ब्राह्मणान् मयि धिया क्षिपतोऽर्च्चयन्तस्तुष्यद्धृदः स्मितसुधोक्षितपद्मवक्त्राः" इत्यादि। आत्मनस्तुल्यान् मैत्र्याभिन्नेनाविदीर्णेनाकुटिलेनेति यावत्। एवं निष्कैतवस्य व्यवहृत्यापि तेषु कुप्यत्स्वपि तदन्तःस्थितः प्रभुस्तु न कुप्येदेवेति भावः ॥ २७ ॥

न च केवलज्ञानीव मद्भक्तः सर्व्वत्र तुल्यदृष्टिः साधारण्येनैवार्हयेदपि तु तारतम्येनैवेति तत्तारतम्यं दर्शयति। सार्द्धैः षड्भिः। अजीवानामजीवेभ्यो जीर्णसस्यादिभ्यः सकाशात् जीवा अजीर्णसस्यादयः श्रेष्ठास्ततः प्राणभृतः भूमिष्ठजलाकर्षणवमनादिलिङ्गेन प्राणवृत्तिभृतो जीवत्पाषाणादयः ततः सचित्ताः पूर्व्वमुकुलनादिचेष्टाः पश्चादिन्द्रवल्लेऽप्य स्तब्धा इति श्रवणादन्तःसंज्ञानाः पल्लवाः तेभ्योऽपि "तस्मात् पश्यन्ति पादपास्तस्माज्जिघ्रन्ति पादपा" इति मोक्षधर्मवचनादिन्द्रियवृत्तिमन्त उद्भावकाशादिज्ञानवन्तो वृक्षादयः ॥ २८ ॥ २९ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

भूतग्रामावमानिनः अर्चायामुच्चावचैर्द्रव्यैरुत्पन्नया क्रिययापि आर्चितस्त्वं न तुष्यसि चेत्तदा तादृशः सर्वभूतेषु त्वज्ज्ञानोत्पत्त्यर्थं किं कुर्यात् येन सर्वभूतेषु त्वज्ज्ञानं तदनन्तरमर्च्चायां त्वदर्चनाधिकारः स्यादित्यत्र क्रममाह। अर्चादाविति। यावत्सर्वेषु भूतेषु अवस्थितं मां स्वहृदि न वेद तावत् स्वकर्मकृत् भवेत् मज्ज्ञानहीनस्य मदर्चने श्रद्धाद्यसम्भवात् अन्यदा तु अर्च्चादौ मामर्चयेत् ॥ २५ ॥

सर्वत्रार्चने हेतुं दर्शयितुं भगवतः सर्वात्मत्वमाह। आत्मनः आत्मैवेदं सर्वमित्यादि श्रुतिप्रोक्तस्य सर्वकारणस्य परस्य कार्यस्य स अन्तरा मध्ये उदरं भेदं करोति तस्य भिन्नदृशः भेददर्शिनः मृत्युरहम् उल्वणं भयं विदधे ॥ २६ ॥

अथ अतो हेतोः कृतालयमन्तर्यामिणम् भूतानामात्मानं कारणं च अभिन्नेन चक्षुषा समदर्शनेन अर्हयेत्पूजयेत् ॥ २७ ॥

तेष्वपि यथोत्तरमर्हणं कार्यमिति वक्तुमुत्तरोत्तरं श्रेष्ठ्यमाह। जीवा इति सार्द्धैः षड्भिः। अजीवानामचेतनेभ्यः इन्द्रियाणां वृत्तियेषु ते इन्द्रियवृत्तियुक्ता ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥

---

### भाषा टीका।

जब पर्यन्त सर्व भूतोंके हृदय में स्थित मोकों निज हृदय में नहीं देखै तब पर्यन्त अपने वर्णाश्रम धर्म को करता हुआ मेरे को अर्चा में पूजन करै ॥ २५ ॥

अपने और पराये में जो पुरुष सुख दुःखादिकों में भेद देखता है उस भिन्नदृष्टि वाले को मैं मृत्यु रूप होकर बहुत कठिन भय देता हूं ॥ २६ ॥

इसी हेतु से सर्व भूतों में निवास करने वाले मोकूं सब भूतों के आत्मा होने से दान मान आदि से मित्रता से अभिन्न दृष्टि से पूजन करै ॥ २७ ॥

हे शुभे! अचेतन पाषाणादिकों सें चेतन वृक्षादिक उत्तम हैं तिनसे भी श्वास वाले कीटादिक उत्तम हैं तिनसे भी भले बुरे के ज्ञान वाले उत्तम हैं तिनसे भी रूप रसादि जानने वाले उत्तम हैं ॥ २८ ॥

---

तत्रापि स्पर्शवेदिभ्यः प्रवरा रसवेदिनः ।
तेभ्यो गन्धविदः श्रेष्ठास्ततः शब्दविदो वराः ॥ २९ ॥
रूपभेदविदस्तत्र ततश्चोभयतोदतः ।
तेषां बहुपदाः श्रेष्ठाश्चतुष्पादस्ततो द्विपात् ॥ ३० ॥
ततो वर्णाश्च चत्वारस्तेषां ब्राह्मण उत्तमः ।
ब्राह्मणेष्वपि वेदज्ञो ह्यर्थज्ञोऽभ्यधिकस्ततः ॥ ३१ ॥
अर्थज्ञात्संशयच्छेत्ता ततः श्रेयान् स्वकर्मकृत् ।
मुक्तसङ्गस्ततो भूयानदोग्धा धर्ममात्मनः ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका

अतस्तेभ्यः स्पर्शवेदिभ्यो रसवेदिनो मत्स्यादयः श्रेष्ठाः गन्धविदो भ्रमरादयः शब्दविदः सर्पादयः ॥ २९ ॥

रूपभेदविदः काकादयः उभयतो दन्ता येषाम् ते । अपादेभ्यो बहुपादास्तेभ्यश्चतुष्पादा इत्यर्थः । ततो द्विपान्मनुष्यः ॥ ३० ॥

ततस्तेषु वर्णाः ॥ ३१ ॥

संशयच्छेत्ता मीमांसकः । ततोऽपि केवलात्स्वकर्मकृत् मुक्तसङ्गस्य लक्षणमात्मनो धर्ममदोग्धा निष्काम इत्यर्थः ॥ ३२ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

अत एकेन्द्रियप्राधान्यादेव तत्रेत्यस्य व्याख्या तेभ्य इति वैजात्यापत्त्या श्रुतेव पञ्चमी मत्स्यादीनां स्पर्शज्ञानवत्वे रसज्ञानातिरेकाद्वैशिष्ट्यम् एवमुत्तरत्रापि तत्तज्ज्ञानप्रयुक्तं वैशिष्ट्यमूह्यम् । उभयतोदतः शालग्रामशिलायां तत्तल्लिङ्गोद्भेदनकर्तारो कीटविशेषाः परमार्थमाहात्म्येन श्रेष्ठाः ॥ २९ ॥ ३० ॥ ३१ ॥

मीमांसकः कर्मज्ञानभेदेन द्विविधः केवलात्स्वधर्मानुष्ठानशून्यात् दोहनं हि गवामेव प्रसिद्धमिति गौण्या वृत्त्या व्याख्यानादित्यर्थोक्तिः ॥ ३२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तेभ्यः स्पर्शवेदिनः स्पर्शवेदिताद्यवान्तरभेदास्तिर्यक्षु द्रष्टव्याः प्रभूता तु स्पर्शनेन्द्रियवृत्तिरेव तेभ्यः स्पर्शवेदिभ्यः रसनेन्द्रियवृत्तयः मत्स्यादयः श्रेष्ठाः गन्धविदो भ्रमरादयः शब्दविदः सर्पादयः रूपविदः काकादयः तेभ्य उभयतोदतः तेभ्यः बहुपदाः तेभ्यश्चतुष्पादः ततो द्विपान्मनुष्यः ॥ २९ ॥ ३० ॥

द्विपात्स्वपि चत्वारो ब्राह्मणादयो वर्णाः वर्णानां मध्ये ब्राह्मणः ब्राह्मणेष्वपि वेदाध्यायी ततोऽपि वेदार्थज्ञः अधिकश्रेष्ठ इत्यर्थः ॥ ३१ ॥

अर्थज्ञादपि संशयच्छेत्ता मीमांसकः ततोऽपि केवलात् स्वकर्मकृत् श्रेष्ठः ततो मुक्तसङ्गः भूयान् श्रेष्ठः तस्य लक्षणमात्मनो धर्ममदोग्धा निष्काम इत्यर्थः ॥ ३२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अत्रापीन्द्रियवृत्तिष्वपि स्पर्शज्ञाः प्रवरास्तेभ्यो माधुर्यादिरसज्ञाः गन्धविदो गन्धगुणज्ञाः शब्दविदः शब्दज्ञाः ॥ २९ ॥

रूपभेदविदः शुक्लादिरूपविशेषज्ञाः उभयतोदत उत्तराधरदन्तयुक्ता बहुपदः शरभादयः चतुष्पादो गवादयः द्विपान्मनुष्यो वर्णहीनः ॥ ३० ॥

ब्राह्मणादिलक्षणाश्चत्वारो वर्णाः ब्राह्मणो वेदसम्बन्धयोग्यः तत्र ब्राह्मणेष्वप्युपदेशमात्रानुष्ठानेन जातापरोक्षज्ञानेन वेदज्ञो विप्र उच्यते । अर्थज्ञो वेदार्थज्ञः ऋषिरुक्तः ॥ ३१ ॥

वेदार्थसंशयच्छेत्ता देवः जातावेकवचनं स्वस्य स्वतन्त्रस्य हरेर्धर्मं करोतीति स्वधर्मकृत् त्रैलोक्यरक्षणलक्षणपूर्णधर्मकर्तृत्वादिन्द्रः मुक्तसङ्गो गरुडः अस्य विवरणं न दोग्धेति आत्मनः स्वस्य धर्मं न दोग्धा भगवत्प्रसादमन्तरेण कर्मफलमनकाङ्क्षमाणो भूयानुत्तरः ॥ ३२ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अतस्तेभ्यः स्पर्शवेदिभ्यो रसवेदिनः रसास्वादेन मृत्तिकादिस्वस्वभोज्याभोज्यज्ञानिनो गण्डूपदादयः श्रेष्ठाः । गन्धविदो जलकीटमत्स्यादयः । तत्र केचित् संगमनपलायनादिहेतुशब्दविदोऽपि भवन्ति । तत्र केचिद्रूपभेदविदोऽपि भवन्ति ॥ २९ ॥

उभयतो दन्ताः सर्पादयः पुष्पकाष्ठादिकर्त्तनसामर्थ्यादुभयतो दन्तत्वं चैषाम् । चतुष्पादः पशवः गमनसाधनपक्षाभ्यां पक्षिणश्च द्विपाद मनुष्य इत्यर्थः । अन्येषां चतुष्पात्त्वद्विपात्त्वादौ सत्यपि तादृशतत्तद्गुणाभावान्न्यूनत्वमेषां तु पादहीनत्वं सचित्तत्वाद्यतिशये बुद्ध्यतिशये हस्तादिशालित्वेऽपि लिङ्गमिति पूर्वतो गुणोत्कर्षमयम् । पूर्वपूर्वस्मादुत्तरोत्तरस्मिन्नेकैकगुणाधिक्येनाधिक्यम् । तदेवमन्यत्राप्युत्तमगुणाधिक्यहानिभ्यां तारतम्यं ज्ञेयम् । यथा देवताधिष्ठानादिना हिमालयादिषु तुलस्यादिषु गवादिषु च परमाधिक्यम् ॥ ३० ॥ ३१ ॥

धर्ममदोग्धा निष्कामकर्मा ॥ ३२ ॥

तस्मान्मय्यर्पिताशेषक्रियार्थात्मा निरन्तरः ।
मय्यर्पितात्मनः पुंसो मयि संन्यस्तकर्मणः ।
न पश्यामि परं भूतमकर्तुः समदर्शनात् ॥ ३३ ॥
मनसैतानि भूतानि प्रणमेद्बहुमानयन् ।
ईश्वरो जीवकलया प्रविष्टो भगवानिति ॥ ३४ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततोऽपि ज्ञानवतां श्रैष्ठ्यमाह । तत्रापीति । ज्ञानेन्द्रियेषु निकृष्टः स्पर्शः ततो रसना उत्कृष्टा मधुरादयो हि रसाः स्पर्शापेक्षया मोहका इति ततोऽपि गन्धविदः पृथिवीगुणत्वात् दूरादपि ज्ञानजनकत्वाच्च स्पर्शवेदिनः प्रायेण सर्वे कृमयः ततो मत्स्या रसवेदिनः गन्धविदो भ्रमरादयः ततः शब्दविदो हरिणाः गन्धापेक्षयापि शब्दो दूरादेवार्थं ज्ञापयतीति ॥ २९ ॥

ततोऽपि चक्षुरतिदूरादर्थं ज्ञापयतीति रूपभेदविदः काकादयः श्रेष्ठाः ततश्चोभयतोदतः साधनाधिक्यवन्तः मर्कटादयः श्रेष्ठाः मूषकादयो वा तच्च करणमन्तर्नयनार्थमेवेति ततोऽपि बहिःकरणवन्तः श्रेष्ठाः इत्याह । तेषां बहुपदाः श्रेष्ठा इति गोजरादयो बहुपदाः ततोऽपि चतुष्पादः सर्वे मूषकमार्जाराश्वादयः ततो द्विपाद् सर्वे पक्षिणः मनुष्याश्च ॥ ३० ॥

ततो ब्राह्मणादिवर्णा उत्तमाः धर्मवत्त्वात् तेषामाद्यः मुख्यधर्मवत्त्वात् जातिब्राह्मणापेक्षया वेदाध्यायी महान् ततोऽपि वेदार्थवित् ॥ ३१ ॥

ततोऽपि वेदार्थे सर्वसन्देहनिवारकः ततोऽपि यज्ञादिकर्त्ता श्रेष्ठः ततोऽपि मुक्तलिङ्गो गलितदेहाभिमानः श्रेष्ठः ततोऽपि निरभिमानो भूत्वा ऐहिकामुष्मिकार्थं किञ्चिन्न करोति नापि वाञ्छति स उत्तमः तस्मात्तादृशो भूत्वा यो भगवद्भक्तः स महानित्याह । तस्मादिति । व्यर्थत्यागापेक्षया भगवति समर्पणमुत्तममिति मयि समर्पितः अशेषः क्रियार्थः आत्मा च येन आत्मनिवेदी तादृशो भूत्वा यं आत्मत्वेनैव भगवन्तं जानाति स महान् ॥ ३२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तत्रापि तेभ्योऽपि स्पर्शवेदिभ्यो वृक्षादिभ्यो रसवेदिनो मृत्तिकादिस्वस्वभोज्याभोज्यज्ञानिनो गण्डुपद्यादयः । गन्धविदो वकुलादिपुष्पसूक्ष्मकीटाः शब्दविदः शब्दश्रवणेन पलायनवन्तः केचिज्जलकीटाः ॥ २९ ॥

रूपविदः काकादयः । उभयतोदन्ताः । सर्पादयः । बहुपदा भ्रमरादयः तेषां पुष्पकाष्ठादिकर्त्तनलिङ्गेन उभयतो दन्तत्वं ज्ञेयं चतुष्पादः पशवः द्विपान्मनुष्यः एतेषां पूर्व्वपूर्व्वत उत्तरोत्तरेषां सामान्यत एव गुणाधिक्याद्वाधिक्यं देवाधिष्ठानादिविशेषगुणाधिक्यविचारेण श्रीगोवर्द्धनवेङ्कटाचलादिषु तुलस्यादिषु च सर्वत एव परमाधिक्यादर्हणीयत्वाधिक्यं शास्त्रप्रसिद्धमेव ज्ञेयम् ॥ ३० ॥

ततस्तेषु ॥ ३१ ॥

ततस्तादृशादपि स्वकर्म्मकृत् सम्यगकर्त्तुः सकाशात् स्वकर्म्मकृत् । ततोऽपि मुक्तसङ्गो ज्ञानी यतः स्वस्वधर्म्मदोग्धा पूर्व्वदशाकृतस्वधर्मफलस्याग्रहीता ॥ ३२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मुक्तसङ्गः निष्कामकर्मकर्ता तदेवाह । आत्मानः धर्मदोग्धा फलानभीप्सुः ॥ ३२ ॥

---

### भाषाटीका ।

तिनमें भी स्पर्श के जानने वालों से रसके जानने वाले उत्तम हैं तिनसे गन्ध जानने वाले उत्तम हैं तिनसे शब्द जानने वाले उत्तम हैं ॥ २९ ॥

तिन में रूपों के भेदों के जानने वाले उत्तम हैं तिनसे ऊपर नीचे दोनों तरफ दात वाले उत्तमहैं तिनमें बहुत पैरों वाले उत्तम हैं तिनसे चार पांव वाले उत्तम हैं तिनों में दो पांव वाले उत्तम हैं ॥ ३० ॥

तिनसे चारों वर्ण वाले उत्तम हैं तिनमें ब्राह्मण श्रेष्ठ है ब्राह्मणों में भी वेद का जानने वाला उत्तम है तिनसे भी वेदों के अर्थ के जानने वाले उत्तम हैं ॥ ३१ ॥

अर्थ जानने वाले से भी संदेह के दूर करने वाला श्रेष्ठ है तिस से अपने वर्णाश्रम कर्म को करने वाला श्रेष्ठ है तिस से भी निष्काम श्रेष्ठ है जो कि फलों की इच्छा नहीं करता है ॥ ३२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अर्पिता अशेषाः क्रिया अर्थास्तत्फलान्यात्मा देहश्च येन अत एव निरन्तरोऽव्यवहितः अकर्त्तुः कर्तृत्वाभिमानशून्यात् ॥ ३३ ॥

जीवानां कलया परिकलनेन अन्तर्यामितया प्रविष्ट इति दृष्ट्वेत्यर्थः ॥ ३४ ॥

उक्तं भक्तियोगं पूर्वोक्तेनाष्टाङ्गयोगेन सहोपसंहरति । भक्तियोगश्चेति । हेमानवि । पुरुषं परमेश्वरम् ॥ ३५ ॥

यदन्यत्पृष्टं जीवस्य संसृतीः 'कालस्य स्वरूपं चाचक्ष्वेति' तदाह । एतदिति सार्धेन । एतत्सर्वनियन्तृ यद्भगवतो रूपम् । कीदृशम् । प्रधानपुरुषात्मकं परं तद्व्यतिरिक्तं च एतदेव दैव-

भक्तियोगश्च योगश्च मया मानव्युदीरितः ।
ययोरेकतरेणैव पुरुषः पुरुषं व्रजेत् ॥ ३५ ॥
एतद्भगवतो रूपं ब्रह्मणः परमात्मनः ।
परं प्रधानं पुरुषं दैवं कर्म विचेष्टितम् ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

मित्यभिधीयते । कीदृशम् । कर्मणो विचेष्टितं नानासंसृतिलक्षणं यस्मात्तत् दैवप्रेरितकर्मकृताः संसृतयो विचित्रा इत्यर्थः ॥ ३६ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

तस्मादित्यर्द्धकम् । तस्मात्केवलनिष्कामात् अव्यवहितः ज्ञानाद्यव्यवहितभक्तिर्भूयात् मदर्पितत्वेन करणात्स्वभरणचिन्ताशून्यत्वात्कर्तृत्वाभिमानरहितादिति व्याख्यातम् ॥ ३३ ॥

पूर्वोक्तसमदर्शनत्वस्यान्तर्यामिविषयकत्वमुपसंहरति । मनसेति । इति दृष्ट्वा । एवं भावनया ॥ ३४ ॥

एकतरेणैवेति साधनान्तरव्युदासः यद्यपि भक्तिमिश्रत्वेन योगस्यापि साधकतमत्वमिति द्वयोः साम्यमेव तथापि साधास्सत्वानादासत्वाभ्यां दौर्बल्यप्राबल्यप्रतिपत्तेः प्राप्यतत्त्वेऽप्यसम्यगाविर्भावसम्यगाविर्भावभेदेन च तारतम्यमवर्जनीयमिति ज्ञेयम् ॥ ३५ ॥

तदाह । संसृतिस्वरूपं कालस्वरूपं चाह । एतदिति सार्द्धकम् । कथम्भूतस्य भगवतः ज्ञानिषु ब्रह्मत्वेन प्रकाशमानस्य योगिषु च परमात्मत्वेन प्रकाशमानस्य प्रधानपुरुषयोस्तच्छक्तित्वात्तदात्मकम् दैवं रूपं कीदृशं कर्मविचेष्टितं कालरूपं च कीदृशं रूपभेदास्पदं दिव्यं चेति योज्यम् प्रधानपुरुषमिति स्वामिसम्मतः पाठः प्रधानमिति तु सर्वत्र दृश्यते ॥ ३६ ॥

———

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

तस्मादपि मय्यर्पिताशेषक्रियार्थात्मा अर्पिताः अशेषाः क्रियाः क्रियार्थाः क्रियाफलान्यात्मा देहः स्वात्मा च येन स ओमित्यात्मानं युञ्जीतेत्युक्तरीत्या न्यस्तात्मरक्षाभर इत्यर्थः अत एव निरन्तरः भेदरहितः "ज्ञानीत्वात्मैव मे मतम्"इत्युक्तरीत्या ममात्मत्वेनाभिमत इत्यर्थः एतस्मात्कश्चिन्नाधिकोऽस्तीत्याह । मयीति । मयि शेषिणि रक्षकेऽन्तर्यामिण्यर्पितात्मनः न्यस्तात्मरक्षाभरस्य मयि प्रयोजककर्त्तरि क्रियाफलप्रदे सन्न्यस्तं कर्म येन सः"मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा । निराशीर्निर्ममो भूत्वा"इत्युक्तरीत्या सर्वेषामात्मनामात्मभूते सर्वक्रियाप्रवर्त्तके मय्येवानुसंहिताक्रियाकर्तृत्वादित्यर्थः अत एवाकर्त्तुः स्वस्मिन् कर्त्तृत्वाभिमानरहितात् समदर्शनात् चेतनाचेतनात्मकं कृत्स्नं जगद् ब्रह्मात्मकमित्येवमनुसन्धानवतः परमुत्कृष्टं भूतं न पश्यामि ॥ ३३ ॥

समदर्शित्वमेव स्पष्टयन्नाह । मनसेति । ईश्वरो भगवान् जीवकलया परिकलनं कला अन्तः प्रवेशनं जीवानां कलया जीवान्तर्यामिनयेत्यर्थः प्रविष्ट इति मनसा बुद्ध्या एतानि चराचराणि भूतानि बहु मानयन् प्रणमेत् ॥ ३४ ॥

एवं साङ्गस्य सावान्तरभेदस्य भक्तियोगस्य स्वरूपं प्रतिपादितं तदङ्गभूतप्रकृतिविविक्तब्रह्मात्मकप्रत्यगात्मानुसंधानरूपज्ञानयोगश्च पूर्वमुक्तः इदानीं तयोरन्यतरोऽपि मुक्तिं साधयतीति वदन्नुपसंहरति । भक्तियोगश्चेति । हे मानवि ! मया भक्तियोगः भगवदुपासनात्मकभक्तियोगस्तथा ज्ञानयोगः प्रकृतिविविक्तब्रह्मात्मकप्रत्यगात्मानुचिन्तनरूपो ज्ञानयोगश्च उदीरितः कथितः ययोर्भक्तियोगज्ञानयोगयोर्मध्येऽन्यतरेणैव पुरुषः ब्रह्मप्रेप्सुः पुरुषं,परमपुरुषं व्रजेत् प्राप्नुयात् । ननु पूर्वं ज्ञानयोगस्य भक्तियोगाङ्गत्वमुक्तम् अत्र तु साक्षाज्ज्ञानस्यैव मुक्तिसाधनत्वमुच्यत इति विरोध इति चेदुच्यते त्रिविधं हि प्रत्यगात्मोपासनम् अब्रह्मात्मकस्वतन्त्रात्मोपासनं भगवदुपासनाङ्गतया अप्राधान्येनोपासनं ब्रह्मात्मकस्वात्मोपासनं चेति तत्राद्यस्य न भगवत्प्राप्तिसाधनत्वं "सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभाक्" इति तन्निष्ठस्य च्यवनधर्मत्वोक्तेः अप्राधान्येनात्मानुचिन्तनन्तु भगवद्भक्तिनिवर्त्तकमिति पूर्वमुक्तं प्राधान्येन ब्रह्मात्मकप्रकृतिवियुक्तात्मस्वरूपोपासनं तु साक्षादेव मुक्तिसाधनमित्यत्रोच्यते तथा हि छान्दोग्ये पञ्चाग्निविद्यायां परब्रह्मोपासीनान् ब्रह्मात्मकस्वात्मानं चोपासीनांश्च "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासत" इति निर्दिश्य "तेऽर्चिषमभिसम्भवन्ति" इत्यर्चिरादिगत्या ब्रह्मप्राप्तिराम्नायते ॥ ३५ ॥

अथ"आचक्ष्व जीवलोकस्य विविधा मम संसृतीः"इति प्रश्नस्योत्तराध्यायत्रयेणोत्तरं विवक्षुः कालस्येश्वररूपस्येति प्रश्नस्योत्तरमाह यावदध्यायपरिसमाप्ति । एतदिति । प्रधानं प्रकृतिः पुरुषो जीवः दैवमीश्वरसंकल्पः कर्मादृष्टं प्रधानादिभ्यः परमित्यर्थः दैवकर्मात्मचेष्टितमिति पाठे दैवकर्मात्मवस्तुस्वभावानुगुणचेष्टितं प्रधानपुरुषाभ्यां परं विलक्षणं कालाख्यं भगवत एतद्रूपं शरीरमभिधीयते भगवानेव कालशरीरकत्वेनावस्थितः इति भावः प्रधानं पुरुषमिति आर्षत्वात् व्यत्ययेन पञ्चम्यर्थे द्वितीया दैवं कर्मविचेष्टितमिति पाठे कर्मणा विचेष्टितम् संसृतिलक्षणं यस्मात्प्रधानादिभ्यः परं भगवतो रूपं काल इत्यर्थः कालप्रेरितकर्मकृता हि संसृतिः पुनर्भगवदात्मकं कालं विशिनष्टि । महदादीनां भूतानां रूपभेदास्पदं रूपविशेषहेतुः परिणामहेतुः काल इत्यर्थः उक्तं हि "कालाद्गुणव्यतिकरः" इति वक्ष्यते च "गुणव्यतिकरः काल" इति भिन्नदृशां सर्वत्र ज्ञानैकाकारे आत्मनि देवमनुष्यादिवैचित्र्यं पश्यतां देहात्माभिमानिनामित्यर्थः यतः कालरूपाद्भगवतः भयं जन्ममरणादिभयं भवति ॥ ३६ ॥ ३७ ॥

———

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तस्मात् गरुडान्मय्यर्पिताशेषक्रियार्थश्च मय्यर्पितसमस्तक्रियाफलश्चात्मरतिश्च मय्येव मनोरतिश्च स मय्यर्पिताशेषक्रियार्थात्मरतिः भक्त्या न रीयते न क्षीयत इति नरः पूर्णभक्तिः ब्रह्मा श्रेष्ठः पूर्वभक्तेभ्य इव चतुर्मुखब्रह्मणोऽप्युत्तमोऽस्ति किं नेत्याह । मयीति ॥ ३३ ॥

परमुत्तमम् अः हरिः कर्ता स्रष्टा जनको यस्य सोऽकर्ता तस्मात्समदर्शनान्निर्दोषब्रह्मज्ञानवतः । यद्वा । परमुक्तौ संसारावस्थायां भूतमुत्पन्नं पुरुषं ब्रह्मणः सममधिकं वा न पश्यामीति समदर्शनाच्छास्त्रेषु सम्यग्दर्शिनः एवं तारतम्यज्ञानवता किं कर्तव्यमित्याह । मनसेति । अत्र जीवकलयेति । द्विरावृत्त्या व्याख्येयं जीवकलया सहैतानि स्थावरादिब्रह्मान्तानि भूतानि मनसा बहुमानयन्नीश्वरो भगवान् जीवकलयाऽनिरुद्धाख्यांशेनैषु प्रविष्टस्तदालयत्वेन स्थित इति तमीश्वरं प्रणमेदियमुपास्तिर्योग्यस्येति शास्त्रान्तरासिद्धमिति ज्ञातव्यम् ॥ ३४ ॥

उक्तार्थमुपसंहरति । भक्तियोगश्चेति । हे मानवि ! मया तव भक्तियोगश्च ज्ञानयोगश्च चशब्दादर्चादावित्यादिना कथितकर्मयोगश्च गृह्यते स च कथित इत्यन्वयः । एतद्द्वयमेव पुरुषार्थसाधनं नान्यदिति निर्धारयति । ययोरिति । ययोर्ज्ञानभक्त्योरेकतरेणैव ज्ञानयोगेनैव पुरुषः पुरुषं परमात्मानं व्रजेदित्यन्वयः एकतरोऽलं चेदितरविधानं व्यर्थं स्यात् एकभावेऽन्यतरस्य नियतत्वात् एकतरेणैवेत्युक्तं धूमाग्न्योरिवाविनाभावात् ॥ ३५ ॥

भक्तियोगप्रश्नानन्तरं पृष्टजीवसंसृतेर्वक्तव्यत्वेऽपि बाहुल्यात् तदुल्लङ्घ्य सूचीकटाहन्यायेन कालस्वरूपं वक्ति । यत्तदित्यादिना । ब्रह्मणः पूर्णस्य परमात्मनः सर्वान्तर्यामिणो भगवतो भाग्यनिर्धेयैःप्रधानात्प्रकृतेः पुरुषाद्धिरिश्चात्परमुत्तमं दैवं सर्वदेवोत्तमं यच्च कर्म विचेष्टितं सर्वकर्माणि यस्य विशिष्टचेष्टानिमित्तानि तत्तथोक्तम् ॥ ३६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तस्मादित्यर्द्धकम् । निरन्तरः ज्ञानाद्यव्यवहितभक्तिः अकर्त्तुः अर्पितात्मत्वेन स्वभरणादिकर्म्मानपेक्षमाणात् यद्भगवति भक्तिः क्रियते । तत्रापि स्वस्य भगवदधीनत्वं ज्ञात्वा तदभिमानशून्याश्च समदर्शनात् भगवदधिष्ठानतारतम्येनात्मवत् परेष्वपि हितमाशंसतः "जीवाः श्रेष्ठाः ह्यजीवानाम्" इत्यादिना भेदो हि विवक्षितः ततो मद्भक्तेषु एवादरबाहुल्यादिकं कर्त्तव्यम् । अन्यत्र तु यथा प्राप्तं यथाशक्ति वेति भावः वक्ष्यते च "मनसैतानि भूतानि" इत्यादि ॥ ३३ ॥

मनसैतानीति । तदेवं प्रथमोपासकानां सर्व्वभूतादरो विहितः सश्रद्धसाधकानां तु भगवद्वैभवसार्व्वत्रिकता स्फूर्त्या भगवत्येवासौ । यथोक्तं स्कान्दे ।

> एते न ह्यद्भुता व्याध ! तवाहिंसादयो गुणाः ।
> हरिभक्तौ प्रवृत्ता ये न ते स्युः परतापिनः ।

इति वक्ष्यमाणरीत्या शुद्धबन्धुत्वादिभावः साधकानामपि बन्धुभावसिद्धश्रीगोकुलवास्यादिशीलानुसारेण तादृशभगवद्गुणानुसारेण चासौ जायते । जातभावानां त्वहिंसा चोपरमश्च स्वीय एव स्वभावः । यथा ।

> यत्रानुरक्ताः सहसैव धीराः व्यपोह्य देहादिषु सङ्गमूढम् ।
> व्रजन्ति तत् पारमहंस्यमन्त्यं यस्मिन्नहिंसोपरमः स्वधर्म्मः ।

इति ततः परमसिद्धानाम् "सर्व्वभूतेषु यः पश्येद्भगवद्भावमात्मनः" इत्याद्यनुसारेण सिद्ध एव सः । तत्र साधकानां यत्तु "यथा तरोर्मूलनिषेचनेन" इत्यादौ तदन्योपासनानां पुनरुक्तत्वमुपलभ्यते तत्पुनः केवलं स्वतन्त्रतत्तद्दृष्ट्योपासनानामेव अत्र तु तत्तदधिष्ठानकभगवदुपासनमेव विधीयते तदादरावश्यकत्वञ्च तत्सम्बन्धेनैव सम्पाद्यते । तच्चान्यत्र झटिति रागद्वेषविश्लेषार्थमिति ज्ञेयम् । अत एव केवलभूतानुकम्पया श्रीभगवदर्चनं त्यक्तवतो भरतस्यान्तरायः परमात्मदृष्ट्या रन्तिदेवादीनां तु कृतार्थत्वम् । तस्माद्भूतदयैव भगवद्भक्तिमुख्या नार्चनमिति निरस्तम् । तथैवाव्यवहितपूर्व्वं निर्गुणभक्त्युपायत्वेन "क्रियायोगेन शस्तेन नातिहिंस्रेण नित्यशः" इत्यत्रातिशब्देन पाञ्चरात्रिकार्चनलक्षणक्रियायोगार्था पत्रपुष्पावचयादिलक्षणा किञ्चिद्धिंसापि विहिता तस्मादन्येषामनादरो न कर्त्तव्यः । भगवत्सम्बन्धेनादरादिकश्च कर्त्तव्यं स्वातन्त्र्येणोपासनं तु धिक्कृतम् । साध्वेवोक्तम् "अविस्मितं तं परिपूर्णकामम्" इत्यादि । एष एव प्रस्तावः पूर्व्वमभिसन्धाय यद्धिंसामित्यादिकं यदुक्तं तत्पोषणत्वेन निर्द्दिष्टः । जीवकलया तत्कलया तदन्तर्यामितयेत्यर्थः ॥ ३४ ॥

भक्तीति । योगस्यापि सबीजत्वेन भक्तिमिश्रत्वात् साधकतमत्वम् । किन्तु साधकतमद्वयेऽस्मिन् अनायाससायासकृततत्त्वभेदेन यथाक्रमं बलित्वदुर्व्वलित्वावगमात् साध्ये पुरुषेऽपि आविर्भावभेदेन तारतम्यं ज्ञेयम् ॥ ३५ ॥

तदेव दर्शयति । एतदिति सार्द्धकेन । एतद्भक्त्यादियोगद्वयगम्यं पुरुषाख्यतत्त्वमेव भगवतो ब्रह्मणः परमात्मनश्च रूपं स्वरूपं भगवदादिसंज्ञं रूपत्रयं न ततो भिन्नमित्यर्थः । पुरुषो ह्यत्र वदन्ति तत्तत्त्वविद इत्यत्रोक्तमद्वयज्ञानमेव "पूर्व्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्वम्" इति श्रुतेः अत्र रूपरूपिणोरभेदेऽपि भेदविवक्षा शिलापुत्रस्य शरीरमितिवत् तत्तत्स्वरूपं परं निरुपाधिकमेव । एकस्यैव तस्य तत्त्वस्य स्वरूपधर्म्मविशेषाविर्भावानाविर्भावाभ्यां तत्तदाविर्भावभेद इति भावः । तदेवं प्राधान्येन शुद्धरूपत्रयं निरूप्यान्यत्त्रयं निरूपयति । एतदेव प्रधानपुरुषं प्रधानोपाधिकं पुरुषरूपमित्यर्थः । पुरि शेते पुरुष इति निरुक्तेः । प्रधानमिति बहुत्र पाठः किन्तु स्वाम्यसम्मतः । अत्र परमात्मनः साक्षित्वमस्य तु कर्तृत्वमिति भेदः स्वीकृतः । भगवद्ब्रह्मणोर्भेदश्च व्याख्यात एव एतदेव च पूर्व्वोक्तं तत्त्वं प्रकृत्युपाधिपुरुषरूपं भगवद्वृत्तिभेदेन दैवं कालश्चेत्यभिधीयते । तत्र दैवस्य लक्षणं कर्म्मणो विचेष्टितं यस्मात्तदिति । कालस्य लक्षणम् रूपेति । यद्वा । तदिदमेतदित्यस्यैव विशेषणम् तत्तद्रूपाश्रय इत्यर्थः तत्र हेतुः । दिव्यमचिन्त्यशक्तीत्यर्थः ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अतोऽपि कश्चिन्महानस्तीत्याशङ्क्य परिहरति । मय्यर्पितात्मन इति । मदर्थे सन्न्यस्तकर्मणां पुंसां मध्ये मय्यर्पितात्मनः अकर्त्तुः समदर्शनात् अन्यं परमुत्कृष्टं न पश्यामि । यद्यपि तत्तच्छास्त्रे ते ते श्रेष्ठाः निरूपिताः तथापि विचारकाणां हृदये ते नाया-

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

न्तीति न पश्यामीत्युक्तं सर्वापेक्षया भक्तिज्ञानयोरुत्कर्षः भक्ताव-न्यात्मसमर्पणं ज्ञानं तु साङ्ख्यं ब्रह्मज्ञानं च यद्यप्येते त्रयः केच-लपरित्यागिनश्च सर्वे परित्यागिनो भवन्ति तथाप्यात्मनिवेदनं ज्ञानद्वयं च यस्यास्ति ततः किमधिकं भविष्यति तत्पदत्रये-णोक्तम् । मय्यर्पितात्मनः अकर्तुः समदर्शनादिति ॥ ३३ ॥

नन्वेवं सति स एव भजनीयः स्यात्स च सर्वैरेव स्वत एव सेव्यत इति शास्त्रवैफल्यं पूर्वदोषानिवृत्तिश्चेत्याशङ्क्याह । मनसेति । स्वार्थमेवैतज्ज्ञानं निरूपितं न त्वधिकारिणोऽन्यपूजार्थम् अत एवम्विधोऽपि एतानि परिदृश्यमानानि भूतानि प्रणमेत् स्वापे-क्षयापि बहुमानयेत् तत्र हेतुः ईश्वरो भगवान् जीवकलया जीवकलारूपेण सह वा षड्गुणैः सह प्रविष्ट इति इतिशब्दो हेतौ ईश्वरत्वादन्यथा स्वस्थानात्प्रच्यावयेत् जीवे तु न हीन-बुद्धिः कर्त्तव्या स हि कला लीलार्थं सा कलेत्यर्थः ॥ ३४ ॥

एवं भक्तिज्ञाने निरूप्य नमस्कारभगवद्दर्शनाभ्यां च व्यव-हारेऽपि तदुभयमुपपाद्य भक्तिज्ञानयोः समुच्चयः विकल्पो वा फल-हेतुरित्याशङ्क्याह । भक्तियोगश्चेति । हे मानवि ! भक्तियोगः अष्टा-ङ्गयोगश्च मया द्वयमुदीरितं मानवीति परिज्ञानार्थं ययोर्मध्ये एकतरेणैव पुरुषः पुरुषमात्मानं भगवन्तं व्रजेत् ज्ञाने योग उक्तः उत्तराङ्गं साक्षात्कारावृत्त्यर्थं प्रवेशार्थं च भक्तिस्तु स्वतन्त्रा एकप्राधान्ये अन्यद्गौणभावमेवावलम्बते अतो न समुच्चयः शास्त्रार्थः ॥३५॥

एवं पृष्टां भक्तिं निरूप्य वैराग्यार्थं कालस्य पराक्रमं वक्तुं प्रथमतः कालस्य स्वरूपमाह । एतद्भगवत इति द्वयेन । कालस्य कार्यं स्वरूपं चोच्यते कार्यं निविष्टः स्वरूपं प्राप्नोतीति ज्ञाप-नार्थमेतज्जगत्सर्वं भगवतो रूपमन्यथा कालस्य भगवत्त्वात् कालत्वं विघातुं न शक्येत अत एव तज्जगद्भगवतो रूपमित्युक्तम् श्रुतौ हि प्रकारद्वयेन निरूपणमात्मत्वेन ब्रह्मत्वेन च आत्मैवेदं सर्वं ब्रह्मैवेदं सर्वमिति । बृंहणात्वं व्याप्तिं चापेक्ष्य पदद्वयं प्रवृत्तम् उभयोः स्वरूपमानन्दः तथापि सप्रकार आत्मा निष्प्रकारं ब्रह्म आत्मनोऽपि ब्रह्मविधानात् अयमात्मा ब्रह्मविज्ञानमय इति विचारे ब्रह्मैव प्रतिज्ञातम् "अथातो ब्रह्मजिज्ञासा" इति । जगत उभयरूपत्व-माह । ब्रह्मणः परमात्मन इति मतत्रयं वा सङ्गृहीतम् "ब्रह्मेति परमा-त्मेति भगवानिति शब्द्यत" इति लोके ऐश्वर्यादिधर्मान् पुरस्कृत्य भगवत्त्वमाहुः । वैलक्षण्यं पुरस्कृत्यात्मत्वं सद्रूपतां पुरस्कृत्य ब्रह्म-त्वमिति तद्रूपं कियदित्याकाङ्क्षायां गणयति परं प्रकृतिपुरुष-नियामकं प्रधानं प्रकृतिः पुरुषश्च दैवं कालो भगवदिच्छा वा कर्मादृष्टं विचेष्टितं विविधचेष्टायुक्तः स्वभावः रूपभेदास्पदं सर्वमेव जगत् परिदृश्यमानं दिव्यमपरिदृश्यमानं च एतत्सर्वं काल इत्यभिधीयते कालाधारत्वात्कालाधीनत्वाच्च कालस्य कालत्वं साधयति । भूतानामिति । महदादीनामपि । यस्मात्कालाद्भयं स कालः मये भिन्नदर्शनं हेतुः बहिर्मुखान्कालो ग्रसतीति ॥ ३६ ॥ ३७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तस्मादपि सकाशात् मयि मन्नामरूपादिषु अर्पिता अशेषाः क्रियाः श्रवणनयनादिव्यापारा अर्था आयश्च आत्मनोऽहन्तास्पद-ममतास्पदमनोबुद्ध्यादयो येन सः । निरन्तरः कर्मज्ञानादिव्यवधा-नशून्यः मयि मत्प्राप्त्यर्थं सन्न्यस्तकर्माणः त्यक्तवर्णाश्रमधर्मात् मत्कृते त्यक्तधर्माण इति पूर्वोक्तेः अकर्त्तुः मद्भक्तावपि भगवानेव मे भक्तिं कारयतीति बुद्ध्या स्वातन्त्र्येण कर्तृत्वाभिमानशून्यात् समदर्शनात् स्वस्य सममेव सुखदुःखादिकं सर्वत्र पश्यतः । यदुक्तं भगवता ॥

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ! ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥

इति । न च

विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥

इत्युक्तं समदर्शित्वं वाच्यं जीवाः श्रेष्ठा ह्यजीवेभ्य इत्यादि प्रक्रान्तवाक्यविरोधात् ॥ ३३ ॥

जीवरूपा या कला तया सह ॥ ३४ ॥

उक्तं भक्तियोगं पूर्वोक्तेनाष्टाङ्गयोगेन सहोपसंहरति । भक्तीति । पुरुषं व्रजेत् परमेश्वरं मां प्राप्नुयात् भक्तियोगेन चिद्घनमदीय-श्रीमूर्त्तिसाक्षात्कारः । अष्टाङ्गयोगेन च मन्निर्विशेषस्वरूपसाक्षा-त्कार इत्युभयोरेव मत्प्राप्तिशब्देन शास्त्रेपूक्तेः ॥ ३५ ॥

ननु तयोरेकतरेणैव पुरुषः पुरुषं व्रजेदिति प्रब्रवीषि ननु पुरुषो मां व्रजेदिति ब्रूषे इत्यतः स पुरुष एव कस्तत्र स्वतर्जन्या स्ववक्षः स्पृशन्नाह । एतदिति । अयमर्थः यः खलु भक्तेषु भग-वान् भवति ज्ञानिषु ब्रह्म योगिषु परमात्मा तस्यैव परं यदप्राकृतम् रूपं तदेतदेव त्वत्पुत्रोऽहमेव परमेश्वर इत्यर्थः न केवलमेता-वदेव किन्तु प्रकृतिपुरुषजीवादृष्टकालाद्यपि मदीयमेतद्रूप-मेवेत्याह । प्रधानश्च तत्प्रवर्त्तकः पुरुषश्चेति द्वन्द्वैक्यम् । दैवं जीवादृष्टं कीदृशं कर्मभिः पुण्यपापैर्विविधं चेष्टितं यतस्तत् तथा काल इत्यभिधीयते यत्तदपि दिव्यमद्भुतप्रभावं मत्स्वरूपमेव रूपभेदस्य वस्तूनामन्यथाभावस्य आस्पदमाश्रयः कारणम् । उक्तं हि कालाद्गुणव्यतिकर इति त्वया पृष्टं कालस्य लक्षणमुक्तमुच्यते चेत्याह । यतः सकाशान्महदादीनां तत्तदभिमानिनां जीवानां सृष्ट्यादिमध्यान्तभावानां भिन्नदृशामज्ञानिनां सर्वेषां भयं भयप्रकारमाह । य इति । भूतैरेव भूतान्यत्ति संहरति अधियज्ञः यज्ञाधिकारित्वेन तत्फलदाता कलयतां वशीकुर्वतामपि ॥३६॥४०॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तस्मादपि

आत्मात्मीयभरन्यासो विधिना पुरुषोत्तमे ।
सा प्रपत्तिरिति ख्याता षडङ्गा वै मनीषिभिः ।

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः

इत्युक्तप्रकारः प्रपन्नः श्रेयस्ततो न कोऽपि श्रेष्ठ इत्याह सार्द्धेन । तस्मादिति । मयि अर्पिताः अशेषाः सपरिकराः क्रियाः अर्थाः देह-गेहादयः आत्मानः मनोबुद्धिचित्ताहङ्काराश्चेन्द्रिया येन सः निर-न्तरः मदात्मकः अकर्त्तुः सर्वं वासुदेव एव करोति कारयति

रू१भेदास्पदं दिव्यं काल इत्यभिधीयते ।
भूतानां महदादीनां यतो भिन्नदृशां भयम् ॥ ३७ ॥
योऽन्तःप्रविश्य भूतानि भूतैरत्त्यखिलाश्रयः ।
स विष्ण्वाख्योऽधियज्ञोऽसौ कालः कलयतां प्रभुः ॥ ३८ ॥
न चास्य कश्चिद्दयितो न द्वेष्यो न च बान्धवः ।
आविशत्यप्रमत्तोऽसौ प्रमत्तं जनमन्तकृत् ॥ ३९ ॥
यद्भयाद्वाति वातोऽयं सूर्यस्तपति यद्भयात् ।
यद्भयाद्वर्षते देवो भगणो भाति यद्भयात् ॥ ४० ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नाहं स्वातन्त्र्येण किञ्चित्करोमीति दृढज्ञानवान् समदर्शनः सर्वं सर्वात्मा वासुदेव एवेति ज्ञानवान् परं श्रेष्ठं न पश्यामीति "वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ज्ञानी त्वात्मैव" इत्यादिवचनाच्च ईश्वरः प्रेरकः भगवान् षडैश्वर्यसम्पन्नः भुक्तिमुक्तिप्रदः प्रेरकत्वेन भुक्तिमुक्तिप्रदत्वेन च स्वयं प्रविष्टः जीवोऽपि तस्यैव कला नान्यः अतस्तद्रूपेणापि प्रविष्टः इतिशब्दो हेत्वर्थः इति हेतोर्बहुमानयन् भूतानि प्रणमेदेव । ननु पुत्रशिष्यादिविषये प्रणतिर्लोकविरुद्धा इत्यत आह । तत्र मनसैवेति ॥ ३३ ॥ ३४ ॥

भक्तियोगः श्रवणध्यानादिरूपो नानाविधः योगः चिदचिद्ब्रह्मविवेकरूपः ज्ञानयोगः मया उदीरितः तयोरेकतरेण पुरुषो जीवः पुरुषं परमेश्वरं व्रजेत्

ज्ञानस्य वा मन्निष्ठो नैर्गुण्यो भक्तिलक्षणः ।
द्वयोरप्येक एवार्थो भगवच्छब्दलक्षणः ॥

इति वक्ष्यमाणाच्च अयमर्थः ज्ञानं विना भक्त्यसम्भवाद्भक्त्युत्पादकतया ज्ञानस्यैव प्राधान्यविवक्षया किं च ज्ञानस्यैव ध्रुवास्मृतिरूपभक्त्याकारतया तेनैव व्रजेदित्यर्थः ज्ञानस्य साधनत्वेन भक्त्युपयोगित्वविवक्षया भक्त्यैव व्रजेत्

स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः ।
येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यते ॥

इत्युक्तत्वादिति ॥ ३५ ॥

जीवकलया प्रविष्ट इत्यनेन जीवस्यैव ब्रह्मात्मकत्वं न किं तु सर्वपदार्थजातस्येति सिंहावलोकनन्यायेनाह । एतदिति । प्रधानं त्रिगुणं पुरुषं जीवं दैवं देवनिष्पादितं कर्मभिर्विचेष्टितं विविधं चेष्टितं यस्मिन् तत्सर्वं विश्वं परमन्यदपि कालादिकम् एतत्सर्वं भगवतो रूपम् । सर्वस्य तन्मूलत्वात् "सर्वं खल्विदं ब्रह्म तज्जलान्" इत्यादिश्रुतय आहुः ॥ ३६ ॥

---

### भाषा टीका ।

तिसहेतु से मेरे में सब क्रियोंका अर्पण करनेवाला सबाविभेदोंस रहित श्रेष्ठ है मेरे में मनको अर्पण करने वाले मेरे में कर्मोंके त्याग करने वाले कर्ताके अभिमान त्यागने वाले समदृष्टि वाले पुरुष से अधिक मैं किसीको नहीं देखताहूं नित्यसमदर्शीजन वैकुण्ठको जाते हैं ॥ ३३ ॥

मनसे इन भूतोंका बहुमानकरके प्रणामकरै ईश्वर भगवान् जीवकलासे इनमें प्रविष्ट है एसा जाना ॥ ३४ ॥

हे मानवि ! भक्तियोग तथा योग मैंने आपके आगे कहा है तिन दोनों मेंसे एकके होने से भी पुरुष परमात्मा को प्राप्तहो जाता है ॥ ३५ ॥

ब्रह्मपरमात्मा भगवान् का यह रूप है जोकि प्रकृतिपुरुष महत्तत्त्व इन्द्रियदेवता वर्ष विविधचेष्टावाला कर्म रूपोंके भेदको करनेवाला दिव्यकाल है ॥ ३६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

एतदेव भगवतो रूपं काल इति चाभिधीयते । कीदृशम् । रूपभेदस्य वस्तूनामन्यथात्वस्यास्पदमाश्रयः कारणम् उक्तं "हि कालाद्गुणव्यतिकर "इति वक्ष्यते च" गुणव्यतिकरः काल" इति दिव्यमद्भुतप्रभावम् । तदेवाह । भूतानामिति यावत्समाप्ति । महदादीनां तत्तदभिमानिनां जीवानाम् ॥ ३७ ॥

भयहेतुत्वमाह । य इति । भूतैरेव भूतान्यत्ति संहरति अधियज्ञो यज्ञफलदाता कलयतां वशीकुर्वताम् ॥ ३८ ॥ ३९ ॥ ४० ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

तदेवाद्भुतस्वभावत्वमेवाह । भूतानामिति सार्द्धकम् । प्रभुर्वशीकर्ता ॥ ३७ ॥ ३८ ॥

आविशति रोगरूपेण प्रविशति ॥ ३९ ॥

कालस्य भीषणत्वमाह । यदिति पद्येन । भगणो नक्षत्रसङ्घः ( १ ) जडानां भीत्यसम्भवात्तदधिष्ठातृरूपेणेति ज्ञेयम् ( २ ) सगिरिभिः गिरिभिस्सह ( ३ ) एवं श्वासक्रियाणामवकाशं यदाज्ञां विना तु भूतानां न ददातीति सर्वत्र ज्ञेयम् लोकमिति विधेयमतो लोकत्वेनेति 'तृतीयान्ततया व्याख्यातम् ( ४ ) ब्रह्मादीनां प्रतियुगमन्यान्यत्वाभावाद्वारस्वारमित्यर्थि-

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

कोऽर्थः ( ५ ) अव्ययश्च मारणादौ भ्रमादिविकारशून्यः ( ६ ) ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यः कालरूपी भगवानन्तःप्रविश्य भूतैरेव भूतान्यत्ति अभिसंहरति असौ कालः योऽखिलाश्रयः अखिलाधारो विष्ण्वाख्यो भगवान् स एव शरीरशरीरिभावनिबन्धनमिदं सामानाधिकरण्यम् पूर्वमेतद्भगवतो रूपमिति व्यधिकरणनिर्देशेनात्र सामानाधिकरण्यनिर्देशेन च शरीरात्मभावस्य नियतत्वं विवक्षितं शरीरवाचिशब्देन शरीरिपर्यन्तबोधनमाकृत्यधिकरणसिद्धमित्यन्यत्र विस्तरः अधियज्ञः यज्ञात्मकः काले हि कर्म चोद्यते कलयतां सर्वं स्ववशीकुर्वतां ब्रह्मादीनामपि प्रभुः स्ववशीकर्त्ता ॥ ३८ ॥

अस्य कालात्मनो भगवतः कश्चित्प्रियो द्वेष्यो बान्धवो वा न विद्यतेऽस्त्ययमप्रमत्तोऽसौ कालात्मको भगवान् प्रमत्तं जनमन्तकृत् संहर्ता सन्नाविशति परिच्छिनत्ति ॥ ३९ ॥

यद्भयात् यस्य कालात्मनो भगवतो भयात् वातो वाति प्रसरति "भीषास्माद्वातः पवते" इति श्रुत्यर्थोऽत्राभिप्रेतः देवः पर्जन्यः भगणो नक्षत्रगणः ॥ ४० ॥ ४१ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यच्च रूपभेदास्पदं शुक्लादिरूपभेदानां ब्रह्माण्डादिपदार्थभेदानां चास्पदं दिव्यमप्राकृतं यतो यस्मात्कालाद्भिन्नदशामलपक्षानिनां महदादिजीवानां भयं भवति तद्वस्तु काल इत्यभिधीयते "भिन्नमल्पं विजानीयादभिन्नं पूर्णमिष्यते" इति वचनादीश्वरापेक्षयात्र भिन्नशब्दोऽल्पवाची ॥ ३७ ॥

केचित्पूर्वापरकलाविकलः क्षणः काल इत्यादिलक्षणमाचक्षते तन्नेति भावेनाह । योऽन्तरिति । यो भूतानामन्तःप्रविश्य भूतैर्भूतान्यत्ति संहरति यश्चाखिलानामाश्रयः यश्च कलयतां संहरतां रुद्रादीनां प्रभुः संहारसमर्थः स विष्ण्वाख्यः कालो भिया साक्षिज्ञानेन ज्ञेय इत्यन्वयः । यमादिव्यवच्छेदार्थं विष्ण्वाख्य इति ॥ ३८ ॥

चेतनत्वाच्चेतनोक्तलक्षणः कालोऽत्रोच्यत इति भावेनाह । न चास्येति । "यथा योग्यातिरेकेण न द्वेष्यश्च प्रियो हरेः" इति वचनात् योग्यतातिरेकेण दयितो द्वेष्यश्च नास्तीत्यर्थः अन्तकृत् संहारकर्त्ता ॥ ३९

इतरेषां तदाज्ञानियतकर्तृत्वाच्च विष्णुरेवायं काल इति भावेनाह । यद्भयादिति । भगणो नक्षत्रगणः ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

"भीषास्माद्वातः पवते" इत्यादिश्रुतिप्रसिद्धमेतस्य भीषणत्वमपि कालरूपेणैवेत्याह । यदिति षड्केन । यद्भयात् यस्य प्रेरणात् वाति स्वल्पत्वेन बहुत्वेन दिग्भेदेन च चलति तपति कुत्रचित् कदाचित्तापनपूर्वकं प्रकाशयति उदयास्तमयत्वात् एवं भाति च ॥ ४० ॥ ४१ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

कालस्योपासनानिमित्तं कालस्याधिदैविकं रूपमाह । योऽन्तःप्रविश्येति । यो भगवान् स कालः स को भगवानित्यपेक्षायां यस्त्वधियज्ञः यज्ञाधिष्ठात्री देवता विष्णुः "यज्ञो वै विष्णुः" इति श्रुतेः एकस्यैव काल इति संज्ञाविष्णुरिति च तत्र विष्णुसंज्ञा कथमित्याकाङ्क्षायां व्याप्तिं निरूपयन् अन्तःप्रवेशं निरूपयति । यः भूतैः सहान्तःप्रविश्य अखिलाश्रयो जातः अन्तर्व्याप्तिः प्रवेशात् बहिर्व्याप्तिराश्रयत्वात् । कलयतां प्रभुरिति यस्तु कलयति आकलयति जानाति भक्षयति वा क्रियया ज्ञानेन वा यो व्याप्नोति स कालः कलयन्तीति कलयन्तः तेषां कलयतां ब्रह्मादीनामपि नियन्ता अतः काल इत्यर्थः ॥ ३८ ॥

इदं भगवतः केवलं मारणैकस्वभावमिति वक्तुं तस्य सर्वसाधारणत्वमाह । न चास्येति । अस्य कालस्य कश्चिदपि उपासकोऽपि दयितो नास्ति यो वा द्वेष्टि सोऽपि न द्वेष्यः सर्वं एव काले उत्पन्न इति सम्बन्धविशेषाभावात्कोऽपि न बान्धवः परमयं सर्पप्रकृतिः यः पश्यति तं न गृह्णाति किं तु प्रमत्तमेव जनमसावप्रमत्तः अन्तकर्त्ता आविशति भक्षणार्थं तं प्रविशति व्याघ्र इव ॥ ३९ ॥

अस्य कालत्वं सर्वं एव जानन्तीति तेषां तज्ज्ञानकार्यं भयमाह । यद्भयादिति पञ्चभिः । वातादयः स्वस्वकार्यं कालभयादेव कुर्वन्ति तत्र किं वक्तव्यं प्राणी स्वधर्मं न करिष्यतीति ।

अधिकारिणो महान्तो ये ये वा मूढा अचेतनाः
तत्त्वानि देवाः सर्वे च कालाधीना इतीर्यते

अयं वात यत्काले काले वाति सूर्योऽपि यस्मिन्नक्षत्रे यथा ताप उचितः तथा तपति देवः पर्जन्यः स्वकाले वर्षति नक्षत्राणां, गणोऽपि ज्योतिश्चक्रं स्वकाले भाति तद्वताः शुक्रादयो यथाधिकारं भान्तीत्यर्थः ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यत्पृष्टं जीवस्य संसृतीः कालस्वरूपं चाचक्ष्वेति तत्र जीवसंसृतिप्रश्नस्योत्तरमुत्तराध्यायत्रयेण विवक्षुः कालस्वरूपप्रश्नस्योत्तरमाह। रूपभेदास्पदमित्यादिना यावदध्यायसमाप्ति । रूपभेदस्य प्रधानादीनां महदाद्यवस्थाभेदस्य आस्पदमाश्रयो निमित्तं दिव्यं देवस्यैव शक्तिभूतं वस्तु काल इत्यभिधीयते यतः महदादीनां संहारनिमित्तत्वेन भिन्नदृशामात्मनो ब्रह्मात्मकत्वमजानतां देहाद्यात्मवादिनां च जन्मादिनिमित्तत्वेन भयं भवति ॥ ३७ ॥

कालस्य ब्रह्मशक्तित्वेन तदभिन्नत्वमाह । य इति । अधियज्ञः यज्ञफलदाता कलयतां चोभकानां प्रभुर्नियन्ता यः विष्ण्वाख्योऽखिलाश्रयः एव कालः कालशक्तिः ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥

यद्वनस्पतयो भीता लताश्चौषधिभिः सह ।
स्वे स्वे कालेऽभिगृह्णन्ति पुष्पाणि च फलानि च ॥ ४१ ॥
स्रवन्ति सरितो भीता नोत्सर्पत्युदधिर्यतः ।
अग्निरिन्धे सगिरिभिर्भूर्न मज्जति यद्भयात्॥ ४२ ॥
नभो ददाति श्वसतां पदं यन्नियमाददः ।
लोकं स्वदेहं तनुते महान् सप्तभिरावृतम् ॥ ४३ ॥
गुणाभिमानिनो देवाः सर्गादिष्वस्य यद्भयात् ।
वर्तन्तेऽनुयुगं येषां वश एतच्चराचरम् ॥ ४४ ॥
सोऽनन्तोऽन्तकरः कालोऽनादिरादिकृदव्ययः ।
जनं जनेन जनयन् मारयन् मृत्युनान्तकम् ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे कापिलेयोपाख्याने साधनानुष्ठानं नाम ऊनत्रिंशत्तमोऽध्यायः ॥ २९ ॥

भाषा टीका।

महदादिक जितने भूत और भिन्नदृष्टिवाले तिनको जिससे भय होता है जो सबका आश्रय है सबभूतों के भीतरप्रवेश होकर सबभूतोंका संहारकरता है वह यज्ञों का फलदाता सबको वशकरने वालों में श्रेष्ठ विष्णुनामक काल है ॥ ३७ ॥ ॥ ३८ ॥

इस परमात्मा कालका न कोई प्रिय है न वैरी है न बन्धु है यह सावधान होकर असावधान जनों में प्रविष्ट होकर नाशकरता है ॥ ३९ ॥

जिसके भयसे यह पवन वहता है जिसकेभयसे यह सूर्य तपता है जिसके भयसे इन्द्र वर्षा करताहै जिसके भयसे नक्षत्र प्रकाशितहोते हैं ॥ ४० ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

यच्चस्माद्भीताः ॥ ४१ ॥

यतो भीताः सरितः स्रवन्ति इन्धे दीप्यते सह गिरिभिर्भूः ॥ ४२ ॥

अदो नभो यन्नियमाद्यस्याज्ञया महान् महत्तत्त्वमङ्कुरात्मकं स्वदेहं लोकत्वेन तनुते विस्तारयति ॥ ४३ ॥

गुणाभिमानिनो गुणानियन्तारो देवा ब्रह्मादयोऽस्य विश्वस्य सर्गादिषु प्रवर्तन्ते। अनुयुगं वारम्वारमित्यर्थः ॥ ४४ ॥

जनेन पित्रादिना जनं पुत्रादि जनयन्नादिकृत् मृत्युनान्तकमपि मारयन्नन्तकरः स्वयं त्वनादिरनन्तोऽव्ययश्च ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीधरस्वामिकृतभावार्थदीपिकायाम् ऊनत्रिंशोऽध्यायः ॥ २९ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी।

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीराधारमणदासगोस्वामिविरचितदीपिन्याख्यदीपिकाटिप्पण्याम् ऊनत्रिंशोऽध्यायः ॥ २९ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्वे स्वे काले वसन्तादावृतौ यतो भीताः सरितः प्रस्रवन्ति यतो भीत उदधिः समुद्रः नोत्सर्पति न पृथिवीं प्लावयति यतो भीतोऽग्निरिन्धे दीप्यते सह गिरिभिर्भूर्न निमज्जति ॥४१॥४२॥

अदो नभः यन्नियमनात् श्वसतां प्राणिनां मार्गमवकाशं ददाति महान् महतामपि महत्तमः कालात्मको भगवान् सप्तभिः पृथिव्यादिसप्तावरणैरावृतं स्वदेहं स्वशरीरभूतं ब्रह्माण्डं तनुते उत्पादयति। यद्वा। यन्नियमनादित्यनुवर्तते महान् महत्तत्त्वं सप्तभिः

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

पृथिव्यप्तेजोवाय्वाकाशाहङ्कारेन्द्रियैरावृतं स्वदेहं स्वपरिणामरूपं जगत्तनुते विस्तारयति । यद्वा । सप्तभिर्द्धातुभिरावृतम् ॥ ४३ ॥

गुणाभिमानिनः रजस्तमोगुणप्रधाना देवाः ब्रह्मादयः अस्य विश्वस्य सर्गादिषु सृष्ट्यादिष्वनुयुगं प्रतिकल्पं वर्त्तन्ते येषां देवानां वशे एतच्चराचरात्मकं जगद्वर्त्तते चराचरात्मकं जगत्स्ववशीकुर्वन्तोऽपि ब्रह्मादयः कालात्मनो भगवतो भयात् स्वस्वव्यापारेषु जागरूका वर्त्तन्त इत्यर्थः ॥ ४४ ॥

सः कालात्मा भगवाननन्तः अन्येनापरिच्छिन्नः जनेन पित्रादिना जनं पुत्रादिकं जनयन् आदिकृत् मृत्युना मृत्योरपि मृत्युना स्वेनान्तकं मृत्युमपि मारयन्नन्तकरः स्वयं त्वनादिरनन्तोऽव्यय इत्यर्थः॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिकायाम् ।
ऊनत्रिंशोऽध्यायः ॥ २९ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यद्यस्माद्भीताः ॥ ४१ ॥

स्रवन्ति स्यन्दन्ते यतो यस्य भयान्नोत्सर्पति वेलामतीत्य न गच्छति इन्धे ज्वलति न मज्जति जल इति शेषः ॥ ४२ ॥

अदो नभो यन्नियमात् श्वसतां प्राणिनां मार्गं ददाति सप्तभिस्तत्त्वादिभिरावृतो महान् ब्रह्मा लोकस्य जनस्य देहं तनुते सृजति ॥ ४३ ॥

गुणाभिमानिनो रुद्रादिदेवाः यद्भयादस्य जगतोऽनुयुगं सर्गादिषु वर्तन्ते एतच्चराचरं येषां वशे तिष्ठति ॥ ४४ ॥

स कालः कालशब्दनिर्वचनभावेन कालं विशिनष्टि । अनन्त इत्यादिविशेषणैः ।"कल ज्ञान" इति धातोर्ज्ञानरूपत्वात् भौतिकवदन्तवान्न भवतीत्यनन्तः कलच्छेदनं इत्यतः छेदनाख्यं सर्वेषामन्तं करोतीत्यन्तकरः अन्ताभावादनादिः "जातस्य हि ध्रुवो मृत्युः"इत्यादेः अन्तकरत्वादादिकृत् कलकामधेनावित्यतोऽव्ययः अर्थिष्वासक्तेषु सम्भृतो निलीनो न भवतीति जन्ममरणे चाज्ञयैव राजवत्करोतीत्याह । जनमिति । स्वसन्निहितेन ब्रह्मादिजनेनात्मनो वशेन मृत्युना रुद्रदुर्गादिना अत एवंविधगुणविशिष्टः कालात्मा नारायणो मुमुक्षुभिरुपास्य इति सिद्धम् ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम् ।
ऊनत्रिंशोऽध्यायः ॥ २९ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स्रवन्ति "कचिच्छना कलौ गङ्गा भविष्यति" इति न्यायात् कदाचिन्न स्रवन्त्यपीति इन्धे कदाचित् कुत्रचित् अव्यक्तमपि तिष्ठतीति ॥ ४२ ॥

अदः शारीरं नभः श्वसतां देहानां पदं श्वासक्रियायामवकाशं ददाति मृतानां तेषां तु न ददाति तदास्पदं न भवतीत्यर्थः ॥ ४३ ॥ ४४ ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृत-
क्रमसन्दर्भस्य ऊनत्रिंशोऽध्यायः ॥ २९ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

अतिमूढाः वनस्पतयो लताश्चाश्वत्थादयः कूष्माण्डादिफलप्रधाना लताः पुष्पप्रधानाश्च चकारात्पत्रप्रधाना अपि ओषधिभिः व्रीह्यादिभिः सह स्वे स्वे काले स्वस्वनक्षत्रं देशविशेषेषु अनतिक्रम्य पुष्पाणि फलानि च गृह्णन्ति ॥ ४१ ॥

चैतन्यरहिता अपि भीता इत्याह । सरितो नद्योऽपि भीताः सत्यः स्रवन्ति उदधिर्भूमेरुच्चोऽपि मर्यादातः अग्रे नोत्सर्पति अग्निरपि इन्धे काष्ठादिभिर्ज्वलितो भवति अन्यथा स्वयोनिं न दहेत् गिरिभिः सह यद्भीत्या भूरपि न मज्जति अग्निर्ज्वलति यद्भीत्येति वा पाठः ॥ ४२ ॥

तत्त्वान्यपि भीतानीत्याह । नभो ददातीति । यस्य कालस्य नियमात् नभः आकाशं पदं स्वर्गादिलोकानाम् । स्थानम् । अदः तत्प्रसिद्धं दधाति आकाशोऽपि धारको जातोऽस्तीत्यर्थः श्रुतावाकाशादिसृष्टिरित्याकाशो निरूपितः । पुराणादौ महदादिरिति । सोऽप्युच्यते महान् स्वदेहमेव लोकात्मकं तनुते सप्तभिः प्रकृत्यहङ्कारपञ्चमहाभूतैरावृतः ॥ ४३ ॥

ब्रह्मादयोऽपि भीता इत्याह । गुणाभिमानिन इति । गुणाभिमानिनो देवाः ब्रह्मादयः रजःप्रभृतयो गुणाः रजोऽभिमानी ब्रह्मा सत्त्वाभिमानी आधिभौतिको विष्णुः तमोऽभिमानी शिव इति त्रयोऽप्युत्पत्तिस्थितिप्रलयान् सर्वेषां कालानुसारेण कुर्वन्ति अनुयुगं च एते वशे वर्त्तन्ते अनेकधा अवतीर्यापि कार्यं कुर्वन्ति येषां ब्रह्मादीनां वशे एतच्चराचरं जगदिति माहात्म्यम् ॥ ४४ ॥

एवं कालस्य माहात्म्यमुक्त्वा तस्य कार्यं वदन्नुपसंहरति । सोऽनन्त इति । स्वयमनन्तः सर्वेषामन्तकरः स्वयमनादिः सर्वेषामादिकृत् कार्यं जनयन्नप्यव्ययः इतरजीवादिवद्व्ययरहितः उत्पत्तिरपि तस्य विचित्रा जनेनैव उत्पन्नेनैव पित्रादिना जनं पुत्रादिकं जनयन् मृत्युना मरणरूपेण मारकमन्तकमपि मारयन्निव वर्त्तत इति माहात्म्यमत एतत्परिज्ञाने वैराग्यं भवतीत्युक्तं यस्त्वस्मान्न बिभेति यस्मिन्नेव च तिष्ठति तस्य गतिरुत्तरत्र वक्ष्यते ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्वल्लभाचार्यकृतसुबोधिन्याम्
ऊनत्रिंशाध्यायविवरणम् ॥ २९ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

यद्यस्मात् विष्णवाख्यात् ॥ ४१ ॥

इन्धे दीप्यते सोऽग्निः गिरिभिः सह भूर्बहुपापात्मकपुरुषभारेणापि न मज्जति किन्तु कष्टेनापि धैर्य्यमेव धत्ते अतिकष्टे तु द्वापरान्ते तया गोरूपिण्या ब्रह्मणे स्वभावज्ञापनमिति भावः ॥४२॥

अदो नभः यन्नियमात् यन्निदेशात् श्वसतां जीवतां प्राणिनां श्वासक्रियावतां पदमवकाशं न तु मृतानां ददाति महान् महत्तत्त्वं ब्रह्मा स्वदेहं वैराजं लोकं भूरादिलोकत्वेन विस्तारयति ॥ ४३ ॥

गुणाभिमानिनो ब्रह्मधर्मरुद्रादयः। अनुयुगं प्रतिकल्पम् ॥ ४४ ॥

जनेन पित्रादिना जनयन् सन्नादिकृत् ॥ ४५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्
ऊनत्रिंशस्तृतीयस्य सङ्गतः सङ्गतः सताम् ॥ २९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

इन्धे दीप्यते ॥ ४२ ॥

नियमात् आज्ञातः महान् स्वदेहं सप्तभिरावृतं लोकं ब्रह्माण्डं तनुते विस्तारयति ॥ ४३ ॥

गुणाभिमानिनः ब्रह्मा शिवश्च अंशः विष्णुः कालशक्तेर्भगवतोऽवतारः तस्य गुणाभिमानित्वं छत्रिणो यान्तीतिवदस्ति अस्य विश्वस्य सर्गादिषु अनुयुगं वारम्वारं यद्भयात् वर्त्तन्ते प्रवर्त्तन्ते ॥४४॥

स उक्तप्रभावोऽव्ययः कालः जनं पुत्रादिजनेन पित्रादिना जनयन् अनादिकृद्भवति मृत्युना अन्तकमपि मारयन् अन्तकरो भवति स्वयं तु अनादिरनन्तश्च ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
ऊनत्रिंशाध्यायार्थप्रकाशः ॥ २९ ॥

---

भाषा टीका।

जिससे डरकर बडे वृक्षलता ओषधियों के सहित अपने अपने कालमें फूल तथा फलों को धारणकरते हैं ॥ ४१ ॥

जिससे डरकर नदी बहती है समुद्र नहीं उछलता है अग्नि प्रकाशकरता है जिसके भयसे पर्वतों के सहित पृथिवी जलमें नहीं डूबती है ॥ ४२ ॥

जिसकी आज्ञासे यह आकाश जीवित प्राणियोंको श्वास स्थानदेता है जिसके डरसे महत्तत्त्व सात आवरण युक्त अपने शरीरको लोकरूपसे विस्तार करता है ॥ ४३ ॥

स्थावर जङ्गम रूप यह संसार जिन के वशमें है ऐसे जो गुणोंके अभिमानी देवता रुद्रादिक जिस के भय से सबयुगों में उत्पत्त्यादिकों में प्रवृत्त होते हैं जिन देवताओं के वश में यह संसार है ॥ ४४ ॥

सोई सब का अन्त करने वाला अनन्त सब के आदि करने वाला अनादि अव्यय दूसरे जन से जन को मरवाता हुआ दूसरे के मारने वाले को भी मारता हुआ भगवान्‌रूप काल है ॥ ४५ ॥

इति श्रीमद्भागवत तृतीयस्कन्धे उनतीसमे अध्यायका
भाषानुवाद समाप्त ॥ २९ ॥

---

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे ऊनत्रिंशोऽध्यायः समाप्तः ॥ २९ ॥

## त्रिंशोऽध्यायः ।

### कपिल उवाच

तस्यैतस्य जनो नूनं नायं वेदोरुविक्रमम् ।
काल्यमानोऽपि बलिनो वायोरिव घनावलिः ॥ १ ॥
यं यमर्थमुपादत्ते दुःखेन सुखहेतवे ।
तं तं धुनोति भगवान् पुमान् शोचति यत्कृते ॥ २ ॥
यदध्रुवस्य देहस्य सानुबन्धस्य दुर्मतिः ।
ध्रुवाणि मन्यते मोहाद्गृहक्षेत्रवसूनि च ॥ ३ ॥
जन्तुर्वै भव एतस्मिन् यां यां योनिमनुव्रजेत् ।
तस्यां तस्यां स लभते निर्वृतिं न विरज्यते ॥ ४ ॥
नरकस्थोऽपि देहं वै न पुमांस्त्यक्तुमिच्छति ।
नारक्यां निर्वृतौ सत्यां देवमायाविमोहितः ॥ ५ ॥
आत्मजायासुतागारपशुद्रविणबन्धुषु ।
निरूढमूलहृदय आत्मानं बहु मन्यते ॥ ६ ॥
सन्दह्यमानसर्वाङ्ग एषामुद्वहनाधिना ।
करोत्यविरतं मूढो दुरितानि दुराशयः ॥ ७ ॥
आक्षिप्तात्मेन्द्रियः स्त्रीणामसतीनां च मायया ।
रहोरचितयालापैः शिशूनां कलभाषिणाम् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्रिंशे तु कायकान्तादिलालनाकुलचेतसाम् ।
कामिनां तामसी पापादधोगतिरुदीर्यते ॥ १ ॥

कालप्रभाववर्णनपूर्वकं वैराग्याय विचित्रकर्मकृतां संसृतिमध्यायत्रयेण प्रपञ्चयति। तस्यैतस्य बलिनः कालस्य बलिनेति वा पाठः। काल्यमानो विचाल्यमानोऽपि वायोर्विक्रमं यथा मेघपङ्क्तिर्न वेद ॥ १ ॥

विक्रममेवाह। यं यमर्थं दुःखेन प्रयासेनोपादत्ते आपादयति तं तमर्थं भगवान् कालो धुनोति विनाशयति। यत्कृते यन्निमित्तम् ॥२॥

शोके हेतुः। यद्यस्मात्सानुबन्धस्य कलत्रादिसहितस्य देहस्य सम्बन्धीनि गृहादीनि वसु द्रव्यम्। अनुक्तसमुच्चयार्थश्चकारः ॥३॥

दुर्मतित्वं दर्शयन् दुःखं प्रपञ्चयति। जन्तुरिति चतुर्दशभिः ॥४॥

नारक्यां नरकाहारादिभिर्जातायाम् ॥ ५ ॥

निरूढमूलं प्रसृतमनोरथं हृदयं यस्य बहु मन्यते कृतार्थोऽहमिति श्लाघते ॥ ६ ॥

उद्वहनाधिना पोषणचिन्तया ॥ ७ ॥

दुराशयत्वमाह। आक्षिप्त आत्मा इन्द्रियाणि च यस्य कया असतीनां पुंश्चलीनामपि रहसि रचितया सम्भोगादिरूपया मधुरभाषिणां शिशूनामालापैश्च सुखवन्मन्यत इत्युत्तरेणान्वयः ॥ ८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

कायकान्तादिनिमित्तकात्पापात् तस्य पूर्ववर्णिताद्भुतप्रभावस्य एतस्य वर्ण्यमानस्य ॥ १ ॥

यन्निमित्तम्। नष्टार्थनिमित्तम् ॥ २ ॥

क्षेत्रम्। धान्यादेः ॥ ३ ॥

एतस्मिन्। प्रपञ्चे निर्वृतिं सुखम् ॥ ४ ॥

देहम्। नारकिशरीरम् ॥ ५ ॥ ६ ॥ ७ ॥

आक्षिप्तेति युग्मकम्। आत्मा मनः मायया विक्षेपशक्त्या ॥ ८ ॥ ९ ॥

## श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका।

एवं कालस्येश्वररूपस्येति प्रश्नस्योत्तरमुक्तमथ कालप्रभाववर्णनपूर्वकप्राप्यभूतपरब्रह्मव्यतिरिक्तवस्तुवैतृष्ण्यरूपवैराग्यरूपोपासनारम्भाभ्यर्हितोपायसिद्ध्यर्थमिहामुत्र संचरतो जीवस्य गर्भजन्मबाल्यकौमारपौगण्डयौवनजरामरणजाग्रत्स्वप्नसुषुप्तिमूर्च्छादिषु क्लेशान् "आचक्ष्व जीवलोकस्य विविधा मम संसृतीः" इति पृष्टानेव प्रपञ्चयत्यध्यायत्रयेण कपिलः। तत्र जीवास्त्रिविधाः केचन बद्धाः इष्टापूर्त्तदत्ताद्यकारिणः केवलपापकर्माणः अन्ये पुनरिष्टादिकारिणः पुण्यकर्माणः अपरे त्विष्टादिपूर्वकब्रह्मोपासकाः तत्र केवलेष्टादिकारिणां भगवदुपासकानां च यावज्जीवं स्वानुष्ठेयपराणां धूमार्च्चिरादिगतिभ्यां चन्द्रमसः स्थानं भगवल्लोकं च प्राप्तानां तत्र भोगानुभवं तत्र भगवन्तं प्राप्तानामपुनरावृत्तिः चन्द्रमसः स्थानं प्राप्तानां तु पुनरावृत्तिरिति द्वात्रिंशेनाध्यायेन वक्ष्यन्ननिष्टादिकारिणां केवलपापकारिणां यावद्देहमधर्मेण देहकलत्रपुत्रादिपोषणारति तद्धेतुकक्लेशान् ततो मृतानां यमयातनानुभवप्रकारं पुनर्गर्भजन्मादिक्लेशानुभवप्रकारं चोपपादयत्यध्यायद्वयेन। न तस्येति। तस्य भगवदात्मकस्य एतस्य प्रकृतस्य बलिनः कालस्य उरुविक्रममयं जनः काल्यमानोऽपि स्वयं तेन परिच्छिद्यमानोऽपि न वेद नूनं ध्रुवं वायोर्विक्रमं यथा मेघपङ्क्तिर्न वेद तद्वत् ॥ १ ॥

विक्रममेवाह। यं यमिति। अयं पुमान् दुःखेन प्रयासेन सुखहेतवे सुखार्थं यं यमर्थमुपादत्ते संपादयति तं तमर्थं कालात्मको भगवान् धुनोति विहतं करोति यत्कृते यदर्थं यन्निमित्तं पुमान् शोचति ॥ २ ॥

शोके हेतुः यद्यस्मात् सानुबन्धस्य कलत्रादिसहितस्याध्रुवस्य देहस्य संबन्धीनि गृहादीनि वसु धनम् अनुकस्मुच्चयार्थश्चेकारः दुर्मतिरयं जनः मोहात् ध्रुवाणि मन्यते अतस्तद्विहतौ शोचतीत्यर्थः ॥ ३ ॥

दुर्मतित्वं दर्शयन् यौवनजरयोः शोकं प्रपञ्चयति। जन्तुरिति चतुर्दशभिः। एतस्मिन् भवे संसारेऽयं जन्तुर्जीवः यां यां देवमनुष्यादियोनिं प्राप्नुयात्तस्यां तस्यां योनौ निर्वृतिं सुखं लभते न विरज्यते न विरक्तो भवति च ॥ ४ ॥

नरकस्थोऽपि पुमान् भगवन्मायाविमोहितः नारक्यां नरकाहारादिभिर्जातायां निर्वृतौ सत्यां देहं नारकदेहमपि त्यक्तुं नेच्छति ॥ ५ ॥

आत्मा देहः अगारं गृहं द्रविणं धनं बन्धवः कुटुम्बिनः आत्मादिषु निरूढमूलं प्रसन्नमनोरथं हृदयं यस्य स आत्मानं बहु मन्यते मादृशः कश्चिद् सुखी नास्तीति श्लाघते इत्यर्थः ॥ ६ ॥

एषामात्मादीनामुद्वहनादिना पोषणचिन्तया परितप्तसर्वाङ्गः अत एव मूढः दुराशयः दुर्धचित्तः दुरितान्येवाविरतं करोति ॥ ७ ॥

दुराशयत्वमाह। आक्षिप्तेति। स्त्रीणां मायया असतीनां पुंश्चलीनामपि रहसि रचितया संभोगादिरूपया मायया कलभाषिणां मधुरभाषिणां शिशूनामालापैश्चाक्षिप्तान्यासक्तान्यात्मेन्द्रियाणि समनस्कानीन्द्रियाणि यस्य सः ॥ ८ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

भक्तिसाधनवैराग्यजननाय विविधाः कर्मसंसृतीराचक्ष्वेति देवहूत्याः प्रश्नः परिह्रियतेऽस्मिन्नध्याये। तदर्थं जीवस्य संसारस्य मूलकारणं ब्रूते। तस्यैतस्येति। यो जगत्सृष्ट्यादिकं करोति तस्यैतस्य कालनाम्नो बलिना कालेन काल्यमानो द्राव्यमाणः कल द्रावणे वायोरिव घनावलिरित्येतत्तदभिमानिदेवतापेक्षयोक्तं विद्वान्यमाणत्वमात्रेण वायं दृष्टान्तः अनेन जनस्य परमात्माज्ञानं संसारकारणमुक्तं भवति ॥ १ ॥

उरुविक्रममेव दर्शयति। यं यमिति। अर्थं सुखसाधनं धुनोति विनाशयति यत्कृते यस्यार्थस्यार्थे नष्टोऽभूदिति शोचति ॥ २ ॥

जनस्यायमप्यज्ञानातिरेक इत्याह। यदध्रुवस्येति। अध्रुवस्यानित्यस्य देवमानुषादिलक्षणस्य भोगसाधनानि गृहक्षेत्रधनानि मोहादज्ञानात् ध्रुवाण्यनश्वराणि पुरुषो मन्यत इति यस्मादतो दुर्मतिः दुष्टज्ञानवान् ॥ ३ ॥

गृहादीनामनित्यत्वं पश्यन् न ततो विरक्तिमानिति यस्मादतोऽज्ञानातिरेकोऽयमपीत्याह। जन्तुर्वा इति ॥ ४ ॥

अत्रकैमुत्यन्यायमाह। नरकस्य इति। नरकस्थोऽपि पुमान् नारक्यां निर्वृतौ सत्यां तं नारकं देहं त्यक्तुं नेच्छति किमुत देवमानुषादिशरीरस्थ इति तत्र हेतुर्देवमायेति ॥ ५ ॥

. रागसागरमग्नत्वाच्च विरागानुदय इति भावेनाह। आत्मजायेति। निरूढमूलं समुत्पन्नरागादिकं हृदयं यस्य स तथा ॥ ६ ॥

आत्मजायादिष्वहंममताज्ञानफलमाह। संदह्यमानेति। एषामात्मजायादीनाम् ॥ ७ ॥

कश्चिद्दुर्व्याजाभादिना मनोदुःखाग्निना संदीप्ताङ्गत्वादसारोऽयं संसार इति विरक्तो भविष्यति स्वयमेवेति तत्राह। आक्षिप्तात्मेति। मायया मोहकशक्त्या ॥ ८ ॥

---

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

बलिनेति पाठे तेन कालेनैवेति शेषः ॥ १—६ ॥

सन्दह्येति क्वचित् पाठः नैष पुण्यारण्यसम्मतः ॥ ७ ॥

आक्षिप्तात्मेति युग्मकम् ॥ ८-१३— ॥

---

## श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

अभीतः कालकार्येषु यो मूढो वर्त्तते गृहे।<br>नदीप्रवाहे गृहवत् स दुःखीति निगद्यते ॥१॥

बहिर्मुखो हि कालस्य विषयो नात्मदर्शनः।<br>अतो बहिर्मुखं कालो लोकयोर्दुःखदः स्मृतः ॥ २ ॥

त्रिंशत्तमे तथाध्याये गृहस्थस्योभयोर्महत्।<br>लोकयोरुच्यते दुःखं पुनर्जन्मावधि स्फुटम् ॥ ३ ॥

अष्टादशभिराद्यन्तमरणावधि वर्ण्यते।<br>पुनर्जन्मावधि परं श्लोकैः षोडशभिः पुनः ॥ ४ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

कालस्य भगवतो विष्णोर्बहिर्मुखत्वे बाधकत्वमज्ञात्वा दुःखं प्राप्नोतीति वक्तुं प्रथममज्ञानमाह । तस्यैतस्येति । यः पूर्वं सर्वजनकत्वेनोक्तः स एवायं कालः एवमपि जनः तत्रैवोत्पन्नः प्राणी नूनं विक्रमं न वेद । ननु यावन्न बाध्यते तावत्कथं जानीयादित्याशङ्क्याह । काल्यमानोऽपीति । प्रेर्यमाणः पीड्यमानो वा तद्वशवर्त्यपि न जानाति असम्बन्धिनः पीडा सोढुं शक्या कादाचित्की अयं तु वायोरिव घनावलिस्तस्य वशे ॥ १ ॥

सर्वकार्येषु तस्य पीडामाह । यं यमर्थमिति । सुखहेतवे महतापि दुःखेन यं यमर्थं भार्यागृहादिकमुपादत्ते तं तमर्थं कालो धुनोति भगवत्त्वात्समर्थो जानाति च । ननु कैषा भगवतो लीला यत्सर्वेभ्यो दुःखं प्रयच्छतीत्याशङ्क्याह । पुमान् शोचति यत्कृत इति । यस्य भगवतः कृते अर्थे तदधीनं सर्वमिति तूष्णीं स्थातव्यं तदा स ईश्वरः पश्चात्र कुर्यात् यदयं शोचति अतो धुनोतीति भावः अनेन भगवतो दोषाभावो निरूपितः ॥ २ ॥

तथापि महतः किमेतत्कृत्यमत आह । यदध्रुवस्येति । तस्य वैराग्यार्थमेवं करोति यतोऽयमध्रुवस्य देहस्य नश्वरस्य अनुबन्धपुत्रादिसहितस्य सम्बन्धीनि गृहश्रीक्षादिक्षेत्रधनानि ध्रुवाणि मन्यते तदर्थमायुश्च वृथा व्ययीकरोति यतोऽयं दुर्मतिः तदपि न प्रमाणात् किन्तु मोहादेव अतो दूरीकरणार्थं तथा करोतीति भावः ॥ ३ ॥

ननु किं धनादिदूरीकरणेन निकृष्टयोनौ जातः स्वयमेव विरक्तो भविष्यतीत्याशङ्क्याह । जन्तुरिति । एतस्मिन् संसारे स्वभावत उत्कर्षापकर्षरहिते स्वयं जन्तुः प्राणी यां यां योनिं श्वयोनिं शूकरयोनिं वा अनुव्रजेत् कर्मवशाद्गच्छेत् तस्यां तस्यामेव निर्वृतिं सुखं स लभते स्त्रियमन्नं निद्रां च प्राप्नोति यथा राजशरीरे वा इन्द्रशरीरे वा अतो न विरज्यते तस्माच्च नीचयोनिसम्बन्धे वैराग्यम् ॥ ४ ॥

कर्मणा नरके जाते दारुणं दुःखं दृष्ट्वा वैराग्यं भविष्यतीत्याशङ्क्याह । नरकस्थोऽपीति । कुम्भीपाकादिनरका उक्ताः तत्र नारकदेहा अपि निरूपिताः तादृशानपि देहांस्ते त्यक्तुं न वाञ्छन्ति नरकसम्बन्धिनी या निर्वृत्तिर्नरकस्थमज्जादिभक्षणसुखं यथाग्रामेध्यगर्त्ते कीटानाम् अतस्तस्यां निर्वृतौ सत्यां तस्मिन् देहे गते सा गमिष्यतीति भयाच्च त्यक्तुं वाञ्छति । नन्वेतद्दुःखात्मकं प्रत्यक्षसिद्धं कथं निर्वृतिरित्युच्यते इत्याशङ्क्याह । देवमायाविमोहित इति । मायाविमोहितो विपरीतमेव मन्यते तीव्रवेदनामपि सुखत्वेन मन्यते इति मायाया माहात्म्यख्यापनार्थं देवपदम् ॥ ५ ॥

नन्वास्मिन्मानुषे जन्मनि पुत्रभार्यादिभिः अवश्यं पोष्यैः दुःखे दत्ते वैराग्यं भविष्यतीत्याशङ्क्याह । आत्मजायेति । आत्मा देहः जाया स्त्री सुताः पुत्राः अगारं गृहं पशवो द्रविणानि बान्धवाश्च षडङ्गोऽयं प्राकृत आत्मा साङ्ग तस्मिन्निरूढं मूलं यस्य तादृशान्तःकरणो भूत्वा माराक्रान्तोऽपि दुःखं प्राप्नुवन्नपि आत्मानं बहुकृतार्थं मन्यते अतस्तैः प्रत्युत राग एव तस्य ननु वैराग्यमिति भावः ॥ ६ ॥

न च मन्तव्यं ते सुखदायिन एवेत्याह । सन्दह्यमानेति । एषां भार्यादीनामुद्वहनं पोषणं तदर्थं य आधिस्तेन सन्दह्यमानानि सर्वाङ्गानि यस्य न केवलमिह लोके तत्कृतं दुःखं प्राप्नोति किं तु परलोकेऽपीत्याह । करोतीति । सर्वदा मूढः सन् बाधकवाक्यान्यविचार्य स्वतोऽप्यन्तःकरणशुद्धिरहितः दुरितानि दुष्टप्रकारेण धनोपार्जनादीनि ऐन्द्रियकानि वा पापानि करोतीत्यर्थः ॥ ७ ॥

एतावदपि कृत्वा ऐहिकं सुखं न प्राप्नोतीत्याह । आक्षिप्तेति त्रिभिः । असतीनां व्यभिचारिणीनामुभयलोकनाशिकानां स्त्रीणां मायया कपटेन वञ्चनार्थमेव कृतेन आक्षिप्तानि स्त्रीवशे जातानि आत्मा इन्द्रियाणि च यस्य न हि परवशैरिन्द्रियैः सुखं भवति स्त्रीसुखस्यैव प्रधानत्वात् सा माया भगवद्भजनादिनापि नापगच्छतीति ज्ञापयति । रहो रचितयेति । एकान्ते सा माया रचिता एकान्तभक्त्यैवापगच्छति सा तु गृहस्थस्य न सम्भवतीत्युल्लङ्घ्य कलभाषिणां सूक्ष्मपुत्राणामव्यक्तमधुरवाक्यानामालापैः आक्षिप्तात्मेन्द्रियः आक्षिप्तानि आत्मा इन्द्रियाणि च यस्य अनेनैवैहिकसुखाभावो निरूपितः ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

निर्गुणां सगुणां भक्तिं ज्ञानयोगौ च सात्त्विकौ ।
हरिः पञ्चभिरध्यायैर्दर्शयामास मातरम् ॥

अध्यायत्रितयेनाथ क्रमेण किल कर्मणाम् ।
तामसीं राजसीञ्चापि सात्त्विकीं गतिमैच्चयत् ॥

त्रिंशे तारुण्यवृद्धत्वमृतिनारकयन्त्रणाः ।
प्राह सांसारिकाणां स्त्रीपुत्राद्याकुलचेतसाम् ॥ ० ॥

अथ हरिभक्तिं विना विचित्रकर्म्मकृतं सांसारिकं दुःखमध्यायत्रयेण प्रपञ्चयति । तस्य कालस्य बलिनो बलिनेति च पाठः ॥ १ ॥

भगवान् कालः ॥ २ ॥

शोके हेतुः यद्यस्मात् सानुबन्धस्य कलत्रादिसहितस्य ॥ ३ ॥

दुर्म्मतित्वं दर्शयति । जन्तुरिति ॥ ४ ॥

नारक्यां नारकाहारस्त्रीसङ्गादिभिर्जातायाम् ॥ ५ ॥

निरूढं मूलं यस्य तादृशं हृदयं यस्य सः ॥ ६ ॥

उद्वहनाधिना रक्षणपोषणानुरञ्जनविवाहप्रदानादिचिन्तया ॥ ७—८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ त्रिभिरध्यायैर्विविधाः संसृतयो वैराग्योत्पत्तये वर्ण्यन्ते तत्र त्रिंशे देहादिरागिणोऽधोगतिमाह । तस्येति । तस्योक्तप्रभावस्य कालस्य काल्यमानः विचाल्यमानोऽपि जनः उरुविक्रमं न वेद वायोर्घनावलिरिव ॥ १ ॥

पुमान् यं यमर्थं दुःखेनातिप्रयासेन उपादत्ते स्वीकुरुते तं तं भगवान् कालः धुनोति अपनयति यत्कृते यन्निमित्तं शोचति ॥ २ ॥

नन्वागमापाय्यर्थकृते शोकोऽनुचित इत्यत आह । यद्यस्मात् सानुबन्धस्य कलत्रादिसहितस्य सम्बन्धीनि गृहादीनि ध्रुवाणि

गृहेषु कूटधर्मेषु दुःखतन्त्रेष्वतन्द्रितः ।
कुर्वन् दुःखप्रतीकारं सुखवन्मन्यते गृही ॥ ९ ॥
अर्थैरापादितैर्गुर्व्या हिंसयेतस्ततश्च तान् ।
पुष्णाति येषां पोषेण शेषभुग्यात्यधः स्वयम् ॥ १० ॥
वार्तायां लुप्यमानायामारब्धायां पुनः पुनः ।
लोभाभिभूतो निःसत्त्वः परार्थे कुरुते स्पृहाम् ॥ ११ ॥
कुटुम्बभरणाकल्पो मन्दभाग्यो वृथोद्यमः ।
श्रिया विहीनः कृपणो ध्यायन् श्वसिति मूढधीः ॥ १२ ॥
एवं स्वभरणाकल्पं तत्कलत्रादयस्तथा ।
नाद्रियन्ते यथा पूर्वं कीनाशा इव गोजरम् ॥ १३ ॥
तत्राप्यजातनिर्वेदो भ्रियमाणः स्वयंभृतैः ।
जरयोपात्तवैरूप्यो मरणाभिमुखो गृहे ॥ १४ ॥
आस्तेऽवमत्योपन्यस्तं गृहपाल इवाहरन् ।
आमयाव्यप्रदीप्ताग्निरल्पाहारोऽल्पचेष्टितः ॥ १५ ॥
वायुनोत्क्रमतोत्तारः कफसंरुद्धनाडिकः ।
कासश्वासकृतायासः कण्ठे घुरघुरायते ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नित्यानि मन्यते तस्मात् तदपगमे शोचतीत्यर्थः ॥ ३ ॥

तस्य दुर्मतित्वं तन्निमित्तानि नानादुःखानि च वर्णयति । जन्तुरिति चतुर्दशभिः । निर्वृतिं सुखसम्प्राप्तिम् ॥ ४ ॥

नारक्यां स्वमांसमूत्रादिभक्षणपानादिभिः नरके जातायाम् ॥ ५ ॥

निरूढं सुदृढं वासनारूपं मूलं यस्य तत् हृदयमन्तःकरणं यस्य सः बहुमन्यते कृतार्थं मन्यते ॥ ६ ॥

एषां देहगेहादीनामुद्वहनार्थं पालनार्थं च आधिश्चिन्ता ज्वरस्तेन ॥ ७ ॥

स्त्रीणां मायया शिशूनामालापैश्च आक्षिप्तः वशीभूतः आत्मा मन इन्द्रियाणि च यस्य सः सुखवन्मन्यते इत्युत्तरेण सम्बन्धः ॥ ८ ॥

---

भाषाटीका ।

श्रीकपिलजी बोले यद्यपि मनुष्य जैसे पवन से मेघ चलाये जाते हैं तैसे इस कालसे चालित होता है तौभी इस कालके प्रभावसे नहीं डरता है ॥ १ ॥

जिस जिस पदार्थको बडे दुःखसे यह पुरुष अर्जनकरता है तिस अथका भगवान् काल नाश करदेता है तिसके वास्त पुरुष शोचता है ॥ २ ॥

जिस हेतु से कुबुद्धिवाला पुरुष अनित्य देहके सम्बन्धि गृह क्षेत्रधनादि पदार्थों को मोहसे स्थिर समुझता है तिसीसे दुःख पाता है ॥ ३ ॥

इस संसार में यह जन्तु जिस जिस योनिमें जाता है तिसी तिसी योनिमें सुख मान लेताहै तिसीसे इस को वैराग्य नहीं होताहै ॥ ४ ॥

देव की मायासे मोहित पुरुष नरक में रहनेसे भी नरकही के आनन्दको प्राप्तहोकर देहको छोडने नहीं चाहता है ॥ ५ ॥

शरीर स्त्री पुत्र घर पशु धनबन्धु इनों में मनके बंधजाने से अपने को बहुत कृतार्थ मानता है ॥ ६ ॥

इन देहादिकों के पोषणादिक चिन्तासे इसके सब अङ्ग जलते रहते हैं वह मूर्ख दुर्बुद्धि निरन्तर पापों को करता है ॥ ७ ॥

व्यभिचारिणी स्त्रियोंकी एकान्तमें रचित जो रति आदि माया तिससे इसका मन खिंच जाता है और मृदु बोलने वाले बालकों के बोलसेभी मन खिचता है ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

कूटाः वित्तशाठ्यादिबहुला धर्मा येषु दुःखप्रधानेषु ॥ ९ ॥

येषां पोषणेनाधो याति तान् पुष्णाति । शेषभुगिति । भोगोऽपि तस्य दुर्लभ इत्यर्थः ॥ १० ॥

वार्तायां जीविकायां निःसत्त्वोऽशक्तः परार्थे परस्वे ॥ ११ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अकल्पोऽसमर्थः ॥ १२ ॥

पूर्वं यथाऽऽद्रियन्ते तथादरं न कुर्वन्ति कीनाशाः कृपणाः कृषीवलाः गोजरं वृद्धं बलीवर्दम् ॥ १३ ॥

म्रियमाणः पुष्यमाणः ॥ १४ ॥

अवमत्याऽवज्ञयोपन्यस्तं समीपे प्रक्षिप्तं गृहपाल इवा आहरन् भुञ्जानः आमयावी रोगी ॥ १५ ॥

उत्तारो बहिर्निर्गतनेत्रः कफेन संरुद्धा नाड्यो मार्गभूता यस्य कासश्वासाभ्यां कृत आयासो यस्य घुरघुर इति शब्दं करोति ॥१६॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

गुर्व्या । बहुप्रयोगिन्या भोगोऽपि दुर्लभ इत्यपिना किं पुनः कुटुम्बकर्तृकं पोषणमिति सूच्यते ॥ १० ॥

लुप्यमानायामिति । धानचारम्भकालीनत्वं लोपस्य व्यञ्जितम् ॥ ११ ॥

मन्दभाग्यत्वादुद्यमस्य वैयर्थ्यं तद्वैयर्थ्यादेव श्रिया विहीनः अत एव कृपण इत्यादियोजनीयम् ॥ १२ ॥

स्वशब्दस्य वाक्यस्थकर्तृवाचकत्वात् स्वभरणाकल्पं कलत्रादिपोषणेऽशक्तम् इत्थं सर्वत्र स्वशब्दस्य शक्तिर्गम्या ॥ १३ ॥

तत्रापीति सार्द्धकम् । तत्रापि अनादरेऽपि गृह एवास्ते नतु विरज्यातुरसन्न्यासमपि करोतीत्यर्थः ॥ १४ ॥

आमयावीति सार्द्धकम् । आमयाव्यादिपदानां यथोत्तरं हेतुहेतुमद्भावः उत्क्रमता ऊर्ध्वश्वासरूपेण वहता वायोर्मार्गभूताः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

गृही । गृहाश्रमी कूटा अविचाल्या धर्मा येषु दुःखप्रधानेषु गृहेष्वतन्द्रितः दुःखनिवृत्तिकरमिव किञ्चित्कर्म कुर्वन् तत्सुखमिव मन्यते ॥ ९ ॥

इतस्ततः गुर्व्या बहुलया हिंसया हिंसादिनोपायेनापादितैः संपादितैरर्थैः वित्तादिभिस्तान् पुत्रकलत्रादीन् पुष्णाति येषां पुत्रादीनां पोषेण शेषभुक् तत्पोषणोपयुक्तविशिष्टमनुभवन् सुखलेशोऽपि तस्य दुर्लभ इति भावः स्वयमधः निरये याति ॥ १० ॥

वार्त्तायां जीविकायां पुनःपुनरारब्धायां लुप्यमानायां दैवेन विहतायां सत्यां लोभेनाभिभूतः व्याप्तो निःसत्त्वः अशक्तः परार्थे परस्वे स्पृहां कुरुते ॥ ११ ॥

कुटुम्बभरणेऽकल्पः असमर्थः मन्दभाग्यः भाग्यहीनः अत एव वृथोद्यमः व्यर्थप्रयत्नः क्रियाविहीनः सत्क्रियारहितः कृपणो दीनः ध्यायन् वृथा चिन्तयन् मूढधीर्वसति ॥ १२ ॥

एवं स्वभरणे विकलं तत्कलत्रादयः पूर्वं कुटुम्बपोषणदशायां यथा आद्रियन्ते तथा नाद्रियन्ते नादरं कुर्वन्ति यथा गोजरं वृद्धबलीवर्दं कीनाशाः कृषीवला नाद्रियन्ते तद्वत् गोरजरमिति पाठान्तरं तदा यथा गां हित्वा अजं नेच्छन्ति तद्वदित्यर्थः ॥ १३ ॥

तत्राप्यनादरेणोऽप्यजातनिर्वेदः अनुत्पन्नपरितापः स्वयमात्मना पूर्वं भृतैः पुष्टैर्म्रियमाणः पोष्यमाणः जरया उपात्तं प्राप्तं वैरूप्यं पलितवलितादि यस्य सः मरणायाभिमुखः सम्मुखमरणः सन् गृहे आस्ते ॥ १४ ॥

अवमत्योपन्यस्तं परिभवपूर्वकमग्रे पातितमन्नादिकं गृहपालः श्वेवाहरन् अदन् आमयावी रोगी अप्रज्वलितजाठराग्निरत एवाल्पाहारः अत एवाल्पं चेष्टितं व्यापारो यस्य सः ॥ १५ ॥

कफेन श्लेष्मणा संरुद्धा नाड्यो यस्य तेन वायुना कफनिरुद्धनाडिरूपमार्गेण वायुना उत्क्रामिते बहिर्निर्गते तारे नेत्रे यस्य कासश्वासाभ्यां कृत आयासो यस्य सः कण्ठे घुरघुरायते घुरघुरशब्दं करोति ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कुटुम्बवञ्चनमेव धर्मो यत्र तेषु वञ्चनधर्मयुक्तेषु वा दुःखानां तन्त्रेषु साधनेषु दुःखानां प्रतीकारं सुखवन्मननाद्विरक्तो न स्यादित्यर्थः ॥ ९ ॥

ननु वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः ।
अप्यकार्यशतं कृत्वा भर्त्तव्या मनुरब्रवीत् ।

इति यया कयापि विधया कुटुम्बभरणस्य विहितत्वाद्विरक्त्या तत्यागे महान् दोषः स्यादतो न विरागो भूषणमित्याशङ्क्याशास्त्रविहितहिंसादिना प्राप्तमहापातकेनाधः पात एवेत्याह । अर्थैरिति । "विप्रादेः सेवादिकमकार्यशतं महाविपदि विहितत्वात्तत्कृत्वा न दोष इत्यर्थपरं स्मार्तवचनं पोष्यजनभुक्तशेषस्य भोक्ता ॥ १० ॥

अतिवृष्ट्यनावृष्टिव्याधिगोजरनाशादिना कुण्ठितजीवनस्य वृत्तिं कथयति । वार्तायामिति । पुनः पुनरारब्धायामृणाद्रव्याद्यानीतगोवृषादिनोपक्रान्तायां वार्तायां कृषिगोरक्ष्यवाणिज्यादिलक्षणायां लुप्यमानायां विनाशं गच्छन्त्यां "लुप गार्ध्ये" इति धातोर्लोभेन परद्रव्यादित्सालक्षणेनाभिभूतोऽत एव निःसत्त्वः सत्त्वगुणशून्यो बलरहितो वा परार्थे चौर्यादिना परद्रव्यादाने स्पृहां कुरुत इत्यन्वयः ॥ ११ ॥

परार्थप्राप्त्यशक्तत्वेन स्वकुटुम्बभरणाकल्पस्य चरमावस्थामाह । कुटुम्बभरणाकल्प इति । श्रिया सम्पदा शरीरकान्त्या वा श्वसिति दीर्घश्वासं करोति मूढधीः कर्तव्यबुद्धिरहितः ॥ १२ ॥

कीनाशः कर्षकः गोजरमुल्लेखनासमर्थं वृषभम् ॥ १३ ॥

स्वकलत्राद्यनादरं दृष्ट्वा विरक्तो मोक्षाय यतिष्यत इति चेत्तत्राह । तत्रापीति । तस्यामवस्थायामपि ॥ १४ ॥

अपत्याद्यैरवमत्या अवज्ञानेन दत्तान्नमाहरन् गृहपालः श्वेव गृह आस्त इत्यन्वयः संसारिण आसन्नमरणावस्थायामपि विरागो नोत्पद्यत इत्याशयेनाह । आमयेनेत्यादिना ॥ १५ ॥

यस्य कासश्वासाभ्यां कृतायासः पूर्णक्लेशः कण्ठो घुरघुरायतेऽनुकारशब्दं करोति स आतुरः किमपि न ब्रूत इत्यन्वयः उत्क्रमता निर्गच्छता उत्तारमुद्गतं कफश्लेष्म० तेन संरुद्धा नासिका यस्य स तथा अनेनासनशयनाद्ययुक्तावस्थायामपि विरागो नाभूदहो हरमाहात्म्यमित्यदाय ॥ १६ ॥ १७ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्रापीति सार्द्धकम् ॥ १४ ॥ ॥ १६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

स्पष्टं परलोकाभावमाह । गृहेष्विति । गृहा धर्मप्रधाना इति लोकप्रसिद्धिः परं तत्र कपटरूप एव धर्मः धर्मच्छलो धर्माभासो वा यथा प्रतिष्ठार्थं जनसमक्षमेवौदार्यं ख्यापयति अन्यदा समागतेऽभ्यः जलमपि न प्रयच्छति स तथोच्यते दुःखमेव तन्त्रं परिकरो येषामिह लोके दुःखं परलोकेऽपि कपटधर्मात् दुःखं तत्रैवातन्द्रितः सावधानः स्त्रीणाम् अर्थे धर्मे महत्कार्यं कृत्वा तासामाश्रमे समागतः तृषया म्रियमाणः यथा कथञ्चित्पानीयं पीत्वा आत्मानं सुखितं मन्यते कृतार्थश्च तदाह । कुर्वन्दुःखप्रतीकारं सुखवन्मन्यत इति । अत्र सुखं श्रुतमन्यगतं वा गृहीति सर्वदा गृहभाराक्रान्तः शिरस्थभारस्य जलपानवत्तस्य सुखमिति निरूपितम् ॥ ६ ॥

ननु लोकद्वये सुखाभावेऽपि दुःखमपि न भविष्यतीति नात्यन्तं गृहं निन्दितमित्याशङ्क्याह । अर्थैरिति । इतस्ततः स्वकीयानां परकीयानां च या गुर्वी हिंसा पीडा तया आपादितैरर्थैस्तान् पुत्रादीन् पुष्णाति येषां पोषेण अधो नरके गच्छति नरकविशेषेषु सामान्यतः कुटुम्बपोषकः रौरवे पततीत्युक्तम् ।

> यो राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्त्तिनः ।
> स पर्यायेण यातीमान्नरकानेकविंशतिम् ॥
> तामिस्रमन्धतामिस्रम् । इत्यादिमनुवाक्यानि
> कुम्भीपाके महाघोरे पुनरावृत्तिवर्जिते ।

तुलापुरुषप्रतिग्राही ऋत्विग्भिः सह मज्जति

इत्यादिशतशो वाक्यानि अहिंसयाप्युत्पादितधने श्रूयन्ते ये पुनर्घातकाः तेषां किं वक्तव्यमतः अर्थैः तत्कृतपोषणेन च सर्वथाधो याति न चात्र भोगः यतः शेषभुक् उच्छिष्टभोजी ब्राह्मणादीन् हत्वा स्त्रीणां मलनिवृत्तिस्थानकतोरोऽपि लोके दृश्यन्ते कस्तेषामिह लोकः परलोको वा भविष्यति । पुमानिति समर्थोऽपि भूत्वा एवं नष्टो भवतीति ज्ञापितम् स्वयमिति पाठे न पुत्रादयो गच्छन्ति नरके किन्तु स्वयमेवेत्यर्थः ॥ १० ॥

एवं सामर्थ्यदशायां न कोऽपि धर्मो भोगो वा सिद्ध इत्युक्त्वा असामर्थ्ये तु सुतरां नरकः भोगाभावश्चेत्याह द्वयेन । वार्त्तायामिति । प्रायेणायं गृहस्थः वार्त्ताजीविनः सा वार्त्ता कालवशात्पुनः पुनरारब्धापि लुप्यमाना भवति धनव्यतिरेकेण च न पोषः सिद्ध्यति अतः लोभेनाभिभूतः विवेकधैर्यरहितश्च परस्य श्रेष्ठस्य अर्थे गुर्वर्थे देवतार्थे वा स्पृहां कुरुते चोरयितुं विचारयति प्राप्तिस्तु दुर्लभेति स्पृहैवोक्ता अनेन पारलौकिकं महद्दुःखमुक्तम् ॥ ११ ॥

ऐहिकसुखाभावमाह । कुटुम्बेति । पूर्वोक्तन्यायेन कुटुम्बपोषणे असमर्थो भवति दैवादपि तस्य धनप्राप्त्यभावमाह । मन्दभाग्य इति । अतः अल्पेऽपि वृथा उद्यमो यस्य सर्वथा अनेन कान्त्या च विहीनो भवति ततः अनालोचितयाचकः कृपणो भवति तदा पूर्वसिद्धान्विषयान्केवलं ध्यायन् श्वसिति अतोऽयं मूढधीः तत्रापि परलोकार्थे यत्नरहितः ॥ १२ ॥

एवं स्वतः सुखाभावं दुःखं चोक्त्वा परकृते आह । एवमिति । स्वपोषणासमर्थं तत्कलत्रादयः पूर्ववत् आदरमपि न कुर्वन्ति भक्ष्यादिकमपि न प्रयच्छन्तीत्यर्थः अत्र दृष्टान्तमाह । कीनाशा दुष्कृपीवलाः गोजरं वृद्धबलीवर्दं नाद्रियन्ते तस्यान्नं छायां वा यथा न सम्पादयन्तीत्यनुभवार्थं दृष्टान्तः ॥ १३ ॥

एवमपकृतोऽपि न विरक्तो जायत इत्याह । तत्रापीति । पूर्वं स्वयं भृतैरधुना म्रियमाणो भवतीत्यवैराग्ये हेतुः अनेन निरभिमानतया तिष्ठतीति दोषार्थमभिमाननाश उक्तः एवमवश्यं मरणलक्षणानि च तस्य जातानीत्याह । जरयोपात्तवैरूप्य इति । वलीपलितादिकं वैरूप्यं तदायं मरणाभिमुख इति निश्चयः ॥ १४ ॥

तथापि गृह एवास्ते अवमत्यावमानेन उपन्यस्तमोदनादिकं गृहपाल इव श्वेव आहरन् स्वयमेव गृहीत्वा भक्षयन्नपि गृह एवास्ते एवं बाह्यक्लेशमुक्त्वा आन्तरं क्लेशमाह । आमयावीति । आमयावी रोगवान् अजीर्णाणो वा तत्र हेतुः न प्रदीप्तोऽग्निर्यस्येति तदा अल्पाहारो भवति भोगाभावः पुरुषार्थाभावश्चोक्तः चेष्टाप्यल्पैव भवति अनेन स्वसिद्धान्यपि करणानि न सुखप्रदानि जातानीत्युक्तम् ॥ १५ ॥

अतिक्लेशमाह । वायुनोत्क्रमतोत्तार इति । उत्क्रमता देहं परित्यज्य गच्छता ऊर्ध्वं गच्छता प्राणेन उद्गते तारे अक्षिणीयस्य तादृशो भवति तत्र हेतुः कफेन संरुद्धा नाड्यो यस्य तादृशेन वायुना वायोर्मार्गः मुखगतो नासागतो वा कफेन संरुद्धः अतः कफरहितेन मार्गेण गच्छामीति विचार्य नेत्रयोराघातं करोति तदा पुरुष उत्तारो भवति लोकदृष्ट्या तस्य खेदो निरूपितः तस्यापि दुःखानुभवमाह । कासेति । कासश्वासौ रोगविशेषौ ताभ्यां कृत आयासो यस्य तादृशोऽपि न विरज्यत इत्युक्तं कण्ठः पुनः घुरघुरायते वाय्वनुकरणशब्दोऽयं घुरघुरवदाचरति विड्डाद्यनुकरणशब्दोऽव्ययं तेनास्य दुर्गतिः ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

कूटा वित्तशाठ्यादिबहुला धर्मा येषु दुःखतन्त्रेषु दुःखप्रधानेषु ॥ ६ ॥

शेषभुक् तद्भुक्तावशिष्टभुगिति भोगोऽपि तस्य दुर्लभ इत्यर्थः ॥ १० ॥

वार्त्तायां जीविकायाम् ॥ ११ ॥

पुत्रादिजिवनोपायं ध्यायन् ॥ १२ ॥

कीनाशाः कृषीवलाः । गोजरं वृद्धबलीवर्दम् ॥ १३ ॥

पूर्वं भृतैः पुत्रादिभिर्म्रियमाणः पुष्यमाणः पोषणप्रकारमाह । अवमत्या अवज्ञया उपन्यस्तं प्रक्षिप्तं गृहपालः श्वेव आहरन् भुञ्जानः आमयावी रोगी ॥ १४ ॥ १५ ॥

उत्क्रमता कासाद्याधिक्येन ऊर्ध्वमुत्तिष्ठता कफरुद्धनाडीमार्गेण वायुना हेतुना ऊर्द्धमिता तारा अक्ष्णः कनीनिका यस्य सः । घुर्घुर इति शब्दं करोति ॥ १६ ॥ १७ ॥

---

शयानः परिशोचद्भिः परिवीतः स्वबन्धुभिः।
वाच्यमानोऽपि न ब्रूते कालपाशवशं गतः॥ १७॥
एवं कुटुम्बभरणे व्यापृतात्माऽजितेन्द्रियः।
म्रियते रुदतां स्वानामुरुवेदनयाऽस्तधीः॥ १८॥
यमदूतौ तदा प्राप्तौ भीमौ सरभसेक्षणौ।
स दृष्ट्वा त्रस्तहृदयः शकृन्मूत्रं विमुञ्चति॥ १९॥
यातनादेह आवृत्य पाशैर्बद्ध्वा गले बलात्।
नयतो दीर्घमध्वानं दण्ड्यं राजभटा यथा॥ २०॥
तयोर्निर्भिन्नहृदयस्तर्जनैर्जातवेपथुः
पथि श्वभिर्भक्ष्यमाण आर्तोऽघं स्वमनुस्मरन्॥ २१॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

गृही गृहाभिमानी कूटाः सकपटाः धर्मा येषु दुःखतन्त्रेषु दुःखव्यासेषु दुःखानां प्रतीकारं निवृत्त्युपायं कुर्वन् सुखवन्मन्यते॥ ९॥

गुर्व्या महत्या हिंसया भूतद्रोहेण आपादितैः सञ्चितैः येषां पोषेण अधो याति तान् पुष्णाति स्वयं शेषभुक् तदुच्छिष्टभुक् भवति अतिथ्यादेस्तु का कथा श्वादिभ्योऽपि तदुच्छिष्टमपि दातुं नेच्छतीति भावः॥ १०॥

पुनः पुनरारब्धायां सम्पाद्यमानायामपि वार्तायां जीविकायां सत्यां निःसत्त्वः गतधैर्यः यतो लोभाभिभूतः परार्थे स्पृहां कुरुते॥ ११॥

परार्थालाभे सति कुटुम्बभरणे अकल्पः अशक्तः श्वसिति रुदन् इव श्वासान्मुञ्चति॥ १२॥

कीनाशाः कृपणाः कृषीकाराः गोजरं वृद्धं वृषमिव॥ १३॥

तत्रापि एवमनादरेऽपि म्रियमाणः पाल्यमानः मरणाभिमुखो भवति॥ १४॥

आमयावी रोगी अत एव अप्रदीप्ताग्निः अत एवाल्पाहारः अत एवाल्पचेष्टितः अवमत्या अवज्ञया उपन्यस्तमन्नादि आहरन् भुञ्जन् आस्ते॥ १५॥

उत्क्रमता कृच्छ्रान्निःसरमाणेन उच्चारः उद्गलितनेत्रः कण्ठे घुरघुरायते घुरघुर इत्येवं शब्दं करोति॥ १६॥

---

भाषा टीका।

कपटसहित धर्मवाले अतिदुःखके हेतु इन घरोंमें सावधानतासे लगकर दुःखोंका निवारणकरता हुआ भी गृहस्थ दुःखोंको सुखसरीके मानता है॥ ९॥

बड़ी हिंसा करके इधर उधर से लाये हुए धन से उन पुत्रादिकों को पालता है फिर पापके फलको भोगने के वास्ते स्वयं नरक में जाता है॥ १०॥

किसी जीविका को वारम्वार आरम्भ करने पर भी न होने से पराये धनमें इच्छा करता है॥ ११॥

मन्द भाग्यवाला होने से उसके सब उद्यमव्यर्थ होजाते हैं तब कुटुम्बके पालन में समर्थ नहीं होता है लक्ष्मी से रहित होने से अति दरिद्र होकर दुःखसे मोहित होकर दीर्घश्वासों को छोडता रहता है॥ १२॥

ऐसे अपने पालन मे समर्थ नहीं होता है तब उस के भार्या आदिक पहिले सरीके उसका आदर नहीं करते हैं जैसे खोटे किसान लोग बूढे बैलका निरादर करते हैं॥ १३॥

आपने जिनको सब दिन पाला है उन पुत्रादिकों से आप पालित होता है बुढापे से जिसका कुरूप होगया है तौभी वैराग्य उस को नहीं होता है घरही में मरने की बस की तय्यारी होती है॥ १४॥

रोगी होनेसे जठराग्नि मन्द होजाती है थोडाकाम थोडा आहार कर सक्ता है बडे अपमान से पुत्रादिकों के दिये अन्न को कुत्ताकी नांई खाता रहता है॥ १५॥

ऊर्ध्वश्वास के चलने से नेत्रोंके तारे उसके निकल आते हैं कफसे सब नाडी रुकजाती हैं खांसी और श्वाससे बड़ा दुःख होता है उस के कण्ठ में घुर घुर शब्द होने लगता है॥ १६॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

परिवीतः परिवेष्टितः वाच्यमानो बन्धो! तातेत्याहूयमानः॥ १७॥

अस्तधीर्नष्टमतिः॥ १८॥

मृतस्य पुण्यपापाभ्यां द्वे गती तत्र पापगतिमाह। यमदूतावित्यादि यावत्समाप्ति। सरभसं सक्रोधमीक्षणं ययोस्तौ दृष्ट्वा॥ १९॥

क्षुत्तृट्परीतोऽर्कदवानलानिलैः सन्तप्यमानः पथि तप्तवालुके।
कृच्छ्रेण पृष्ठे कशया च ताडितश्चलत्यशक्तोऽपि निराश्रमोदके ॥ २२ ॥
तत्र तत्र पतन् श्रान्तो मूर्च्छितः पुनरुत्थितः।
पथा पापीयसा नीतस्तमसा यमसादनम् ॥ २३ ॥
योजनानां सहस्राणि नवतिं नव चाध्वनः ॥
त्रिभिर्मुहूर्तैर्द्वाभ्यां वा नीतः प्राप्नोति यातनाः ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

आवृत्य निरुध्य ॥ २० ॥

तयोस्तर्जनैर्निर्भिन्नं हृदयं यस्य आर्तः संश्चलतीति द्वितीयेनान्वयः ॥ २१ ॥

क्षुत्तृड्भ्यां परीतो व्याप्तः तप्ता वालुका यस्मिन् निर्गत आश्रमो विश्रामस्थानमुदकं च यस्मिन् ॥ २२ ॥

यमसादनं नीतो भवति ॥ २३ ॥

तत्रैव विशेषमाह । अध्वनः सम्बन्धिनां योजनानां नवतिं नव च सहस्राणि पापाधिक्ये द्वाभ्यां वा नीतः सन् ॥ २४ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी।

तत्र। गतिद्वयमध्ये तदा। मरणकाले ॥ १९ ॥

प्रवेशनपूर्वकं निरुध्य ॥ २० ॥

तयोरिति युग्मकम् ॥ २१ ॥ २२ ॥

साध्यक्रियामन्तरा वाक्यसमाप्तिविरहाद्भवतीत्यध्याहृतम्॥२३॥

योजनानामिति चतुष्कम् । तत्रैव। तरसा नयन एव (१) यत्तच्छब्दाध्याहारादात्ममांसपदस्य सुपां सुलोपश्चेत्यनेन पृथक्त्वाङ्गीकारादित्यर्थ इत्युक्तम् (२) जीवतश्च जीवतोऽपि स्वस्य गृध्रकर्तृकमन्त्राभ्युद्धारं प्राप्नोति सर्वत्र द्वितीयान्त एव पाठः सर्पादिकर्तृभिः स्वसम्बन्धिनीं पीडां प्राप्नोति (३) अवयवशः प्रत्यवयवं कृन्तनं छेदनं प्राप्नोति भेदप्रापणस्य गजादादिकर्तृकत्वात्प्राप्तेश्च नारकिकर्तृकत्वादपौनरुक्त्यम् ॥ २४—२७ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

शयानः परितः शोचद्भिः स्वजनैः परिवेष्टितः वाच्यमानोऽपि संबोध्य तात ! तातेत्याहूतोऽपि किञ्चिदपि न ब्रूते यतः कालपाशवशं मृत्युपाशवशं गतः प्राप्तः एवं यौवनजरयोः क्लेशा उक्ताः ॥ १७ ॥

अथ मरणक्लेशानाह द्वाभ्याम् । एवं कुटुम्बभरणे व्यापृता व्यापारिताः आत्मानः देहेन्द्रियाणि येन सः अत एवाजितेन्द्रिय उरुवेदनया बहुलया मरणवेदनयास्तधीनष्टमतिः स्वानां स्वबन्धूनां रुदतां सतां म्रियते ॥ १८ ॥

तदा मरणसमये प्राप्तावागतौ सरभसं सक्रोधमीक्षणौ ययोस्तौ भीमौ भयङ्करौ यमस्य दूतौ दृष्ट्वा सः म्रियमाणः त्रस्तहृदयः शकृन्मलं मूत्रं च विमुञ्चति ॥ १९ ॥

मृतस्य पुण्यपापाभ्यां द्वे गती तत्र पापगतिमाह। यावदध्यायसमाप्ति। तौ यमदूतौ मृतं यातनादेहे आवृत्य निरुध्य कण्ठे पाशैर्बद्ध्वा दीर्घमध्वानं नयतः गमयतः यथा लोके दण्डनार्हं राजभृत्यास्तद्वत् ॥ २० ॥

तयोर्दूतयोस्तर्जनैर्भिन्नं हृदयं यस्य सः अत एव सञ्जातशरीरकम्पः पथि श्वभिर्भक्ष्यमाणः दह्यमानशरीरः आर्त्तः सन् स्वीयमघं पापमनुस्मरंश्चलतीति द्वितीयेनान्वयः ॥ २१ ॥

क्षुत्तृड्भ्यां परीतो व्याप्तः तप्ताः वालुका यस्मिंस्तस्मिन् पथि सूर्यदवाग्निभ्यामनिलेन च सन्तप्यमानः पृष्ठे कशया चर्ममय्या रज्वा ताडितः अशक्तो गन्तुमसमर्थोऽपि निराश्रमोदके निर्गतः आश्रमः विश्रमादिस्थानमुदकञ्च यस्मिंस्तस्मिन् पथि कृच्छ्रेणातिप्रयासेन चलति ॥ २२ ॥

तमसा तमःप्रचुरेण तामसकर्मप्राप्येण वा पापिष्ठेन पथा मार्गेण यमसादनं यमसन्निधिं प्रति नीतो भवति ॥ २३ ॥

तत्रैव विशेषमाह । योजनानामिति । अध्वनः सम्बन्धिनां योजनानां नवतिं नव च सहस्राणि त्रिभिर्मुहूर्तैः पापाधिक्ये द्वाभ्यां मुहूर्त्ताभ्यां नीतः यातनां प्राप्नोति ॥ २४ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

तस्यान्त्यामवस्थामाह। एवमिति ॥ १८ ॥

मरिष्यतः प्रथमलक्षणमाह। यमदूताविति। यदा मरिष्यन्नास्ते तदा मूत्रं शकृत्पुरीषं च विमुञ्चति रभसेन क्रोधवेगेन सह वर्तमाने ईक्षणे ययोस्तौ तथोक्तौ,॥ १९ ॥

नरकदुःखभोगक्लृप्तो देहो यातनादेहस्तस्मिन्नावृत्य प्रवेश्य ॥ २० ॥ २१ ॥

नरकं प्रतिगच्छतो दशामाह। क्षुत्तृडिति। वालुकाः सिकताः ॥ २२ ॥

यमसादनं यमगृहं नरकमित्यर्थः ॥ २३ ॥

द्वाभ्यां वेति वाशब्देन दश दिनानि पक्षो मासश्च गृह्यंत तदुक्तम्।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

त्रिभिर्मुहूर्तैर्द्वाभ्यां वा दिनैर्दशभिरेव वा ।
पक्षान्मासेन वा याति यमलोकमितो मृतः ॥
इति यातनां नरकम् ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यातनादेहे तमावृत्य प्रवेशनपूर्व्वकं निरुध्येत्यर्थः नयतः ताविति शेषः ॥ २० ॥

तयोरिति युग्मकम् ॥ २१ ॥ २३ ॥

योजनानामिति चतुष्कम् ॥ २४ ॥ २५ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

तदापि गृहमध्य एव शयानो भवति बन्धुभिश्च परितः शोचद्भिः परिवीतो भवतीति लौकिकव्यवहारेऽपि व्यर्थमयं प्राणी स्वात्मानं नाशितवानिति अनुकरणमिव वर्ण्यते न हि कृतकार्यं कश्चिच्छोचति तदाकालपाशेनावृतः तातेत्युच्यमानोऽपि न ब्रूते ॥ १७ ॥

एवं पूर्वावस्थामुक्त्वा मुख्यं तस्य मरणमाह । एवमिति । कुटुम्बभरणे व्यापृतात्मा योजिताचित्तः अग्रेऽपि खेदं प्राप्तुमजितेन्द्रियश्च अन्यकृतभगवन्नामश्रवणाभावार्थं स्वानां रुदतां सतां स्वयमपि स्मरणरहितः उरुवेदनयाऽस्तबुद्धिः म्रियते प्राणांस्त्यजति अनेनाष्टादशविद्यानां वैय्यर्थ्यमुक्तम् ॥ १८ ॥

तस्य परलोकदुःखमाह । यमदूतावित्यादिषोडशभिः । प्राणत्यागे यदि शुद्धो भवेत्तदा पुत्रादिकृतसंस्कारैरपि सिद्धिं गच्छेत् तदभावार्थं यमदूतयोरागमने भीतस्तयोर्दर्शने शकृन्मेध्यं मूत्रं च त्रस्तहृदयः सन् विमुञ्चति प्राणोत्क्रमणसमय एवैतज्जातमिति न शौचादिविलम्बः ॥ १९ ॥

अतः पुण्याभावात्तृणजलौकावद्देहसम्बन्धाच्च यमनिर्मितो यातनादेहः ताभ्यामेवानीतः स्वदेहपरित्यागानन्तरमेव तं गृह्णातीत्याह । यातनादेह इति । तदा यमदूतौ अपानद्वारा निर्गतप्राणं यातनादेहे निरुध्य आज्ञाकारिणमपि बलात्पाशैर्गले बद्ध्वा दीर्घमध्वानं नयतः यातनापदेन देहसम्बन्ध एव क्लेशो निरूपितः । ननु बद्ध्वा नयनं किमर्थं नरकस्त्वग्रे वक्तव्य इत्याशङ्क्याह । दण्ड्यं राजभटा यथेति । प्रवृत्तिमार्गस्थितं सर्वमेव यमदूतौ नयतः तत्र यो दण्ड्यः स बद्ध्वा नीयते दण्डज्ञापकं बन्धनं यथाधिकारिणं राजभटा नयन्त्येव दण्ड्यं तु बद्ध्वा नयन्तीति ॥ २० ॥

मार्गेऽपि तत्कृतं क्लेशमाह । तयोरिति चतुर्भिः । पुरुषार्थचतुष्टयनाशक इति मार्गे चतुर्भिः क्लेशो निरूप्यते दूतौ पुण्यपापयोरधिष्ठातृरूपौ पुण्यस्याप्यकरणात् स क्रुद्धः पापस्य करणात् द्वितीयः उभाभ्यां निर्भिन्नं हृदयं यस्य । तयोरिति स्वरूपेणैव भयोत्पादकत्वात्षष्ठी निर्दिष्टा महाभयेन हृदये भेदः तर्जनैः वाग्दण्डपूर्वकं ताडनं तर्जनं जातो वेपथुः कम्पो यस्य अहोरात्राभिमानिन्यो देवता विकर्मसाक्षिण्यः श्वानस्तैश्च पथि भक्ष्यमाणो भवति आर्त्तश्च भवति रोगादिभिरिव व्याप्तः स्वस्य अघमनुस्मरन्निति देवतासान्निध्यात्तस्य पूर्वज्ञानमुत्पद्यत इति ज्ञापितं प्राणोत्क्रमणाच्चणप्रभृतिक्लेशावश्यकत्वात्पथि शुनां भक्षणमुक्तम् ॥ २१ ॥

मार्गे दुःखान्तराण्यप्याह । क्षुत्तृट्परीत इति । क्षुत्तृषावपि यातनासम्बन्धिन्यौ अतस्ताभ्यां व्याप्तः अर्कदावानलावपि तथा अनिलश्च तैः सम्यक् तप्यमानः सर्वतः क्लेशो निरूप्य इति अन्तःस्थकृततापो बहिः स्थितकृततापश्च वर्णितः मार्गकृतमप्याह । पथि तप्तवालुक इति । मार्गे सर्वत्र वालुका एव सापि तप्ता कृच्छ्रेण चलतीति तत्कृतपीडानुभवो निरूपितः महावेदनाभावमाशङ्क्य ताडनेनैव तथात्वमिति वक्तुं ताडनमाह । पृष्ठे कशया च ताडित इति । वेत्रताडनं मुख्यं तत्र सहजङ्कशा अश्वप्रहरणी तयापि ताडितः । निराश्रमोदक इति । यमदूताभ्यां नीयमानमार्गे न छाया गृहवृक्षादिकृता नापि जलम् ॥ २२ ॥

गतिसाधनानां क्लेशरूपत्वमुक्त्वा तस्य क्लिष्टां गतिमाह । तत्र तत्रेति । प्रतिपदं पतन् श्रान्तो भवति अतिवेदनया मूर्छितश्च तथापि यातनादेहत्वात्पुनरुत्थितो भवति तथा नयने तारतम्यं ज्ञापयन् हेतुमाह । पथा पापीयसा नीत इति । पापीयसा घातकेन अरण्ये वधार्थं नीतो भवति व्याघ्रादिना वा यथा पापयुक्तो वा यथा पापीयान् स्वकृतपापानुसारेण यो जातो देहः यथा पापीयान् तेन तरसा शीघ्रमेव यमसादनं नीत इति पापतारतम्येन दुःखतारतम्यं निरूपितम् ॥ २३ ॥

बहु दूरं शीघ्रं नीयमानः क्लिश्यतीति प्रकारकृतमपि क्लेशमाह । योजनानामिति । कर्मभूमेः सकाशात् यातनास्थानमेकसहस्रयोजनन्यूनलक्षयोजनानि सन्ति तदाह । सहस्राणि नवतिं नव चेति । भूमेर्दलं तावदेव अधस्ताद्भूमेरिति वचनात् सहस्रयोजनानि तस्या अधोभागः यातनाभूमेर्वा अर्वाक् वराहकल्पानुसारेण चैतदुक्तं ब्रह्मकल्पेनापि न विरुध्यते । त्रिभिर्मुहूर्त्तैरिति । पापाल्पत्वे । द्वाभ्यामिति पापाधिक्ये एतावद्दूरमेतावत्कालेन नीतो यातनाः प्राप्नोति तावद्दुःखं प्राप्नोतीत्यर्थः ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अस्तधीर्नष्टमतिः ॥ १८ ॥

मृतस्य पापात्मनो गतिमाह । यमदूताविति । स म्रियमाणः ॥ १९ ॥

स्थूलदेहान्निष्काश्य यातनामयदेहे तं प्रवेश्य आवृत्य निरुध्य तौ नयतः प्रापयतः ॥ २० ॥

तयोस्तर्जनैः स्वमघं तस्यैव पापस्य फलमिदमनुभवामीति स्मरन् ॥ २१ ॥

निराश्रमोदके विश्रामस्थलजलरहिते पथि ॥ २२ ॥ २३ ॥

अध्वनः सम्बन्धिनां योजनानां नवतिं सहस्राणि नवसंख्याधिकानि पापाधिक्ये द्वाभ्यामेव मुहूर्त्ताभ्यां नीतः सन् ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

परिवीतः आवृतः ॥ १७ ॥

आदीपनं स्वगात्राणां वेष्टयित्वोल्मुकादिभिः ।
आत्ममांसादनं क्वापि स्वकृत्तं परतोऽपि वा ॥ २५ ॥
जीवतश्चान्त्राभ्युद्धारः श्वगृध्रैर्यमसादने ।
सर्पवृश्चिकदंशाद्यैर्दशद्भिश्चात्मवैशसम् ॥ २६ ॥
कृन्तनं चावयवशो गजादिभ्यो भिदापनम् ।
पातनं गिरिशृङ्गेभ्यो रोधनं चाम्बुगर्तयोः ॥ २७ ॥
यास्तामिस्रान्धतामिस्रा रौरवाद्याश्च यातनाः ।
भुङ्क्ते नरो वा नारी वा मिथः सङ्गेन निर्मिताः ॥ २८ ॥
अत्रैव नरकः स्वर्ग इति मातः ! प्रचक्षते ।
या यातना वै नारक्यस्ता इहाप्युपलक्षिताः ॥ २९ ॥
एवं कुटुम्बं बिभ्राण उदरम्भर * एव वा ।
विसृज्येहोभयं प्रेत्य भुङ्क्ते तत्फलमीदृशम् ॥ ३० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

व्यापृतात्मा जन्मप्रभृतिव्याप्रियमाणबुद्धिः . मरणवेलायां उरुवेदनया भ्रस्ता मूर्च्छिता बुद्धिर्यस्य सः ॥ १८ ॥

पापिनः पापां गतिमाह । यमदूताविस्यादि यावदध्यायसमाप्ति । सरभसे सक्रोधे ईक्षणे ययोस्तौ ॥ १९ ॥

यातनादेहं आवृत्य सन्निवेश्य ॥ २० ॥

तयोस्तर्जनैर्निर्भिन्नं विदीर्णं हृदयं यस्य सः अशक्तोऽपि चलतीत्युत्तरेण सम्बन्धः ॥ २१ ॥

क्षुत्तृड्भ्यां परीतो व्याप्तः अर्कश्च दावानलश्च तत्संसक्तो वायुश्च तैस्तप्ता वालुका यस्मिन् निर्गतः आश्रमः उदकञ्च यस्मिन् ॥ २२ ॥

तमसा निष्प्रकाशेन पापीयसा बहुक्लेशदेन पथा यमस्य सादनमालयं नीतो भवति ॥ २३ ॥

दीर्घमध्वानमित्युक्तस्याध्वनः एकदेशगतानि पापतारतम्येन त्रिभिर्द्वाभ्यां वा नवतिं नव च सहस्राणि नीतः अनेन क्रमेण यातनाः प्राप्नोति ॥ २४ ॥

---

भाषा टीका ।

रोगके मारे सोता रहता है चारोंतरफ उसके बन्धु शोच करते रहते हैं कालपाशके वशहोनेसे बुलानेसे नहीं बोलता है ॥ १७ ॥

इस प्रकार कुटुम्बके पोषणमे उसका मन लगारहता है इन्द्रियों कों वशमे नहीं रखसकता है अपने मनुष्योंके रोते वखत वडीभारी पीडासे उसकी बुद्धिनष्ट होजाती है फिर मरजाता है ॥ १८ ॥

मरते समय पापपुण्यके दो यमराजके दूत वडे भयङ्कर क्रोधितनेत्रों वाले आते हैं उनको देख डरजाता है तिससे उसके विष्ठा मूत्र गिरने लगता है ॥ १९ ॥

वे यमदूत उसको दण्डके योग्य दूसरे देहमे रखकर गलेमे पाशोंसे बान्धकर जबरदस्ती वडे दूररस्ताको जैसे राजा के सिपाही दण्डके योग्यपुरुषकों लेजावैं तेसे लेजाते हैं ॥ २० ॥

रस्तामें इनदोनों के ताडनसे उसका शरीर काम्पताहै हृदय फटजाता है कुत्ता उसके शरीरको काटते हैं तव अपने पापको स्मरणकरके महादुःखी होता है ॥ २१ ॥

क्षुधा तृषाके मारे पीडित होता है अग्निसूर्यका वहुत ताप होता है पवन वहुत चलाताहै रस्तामे गरमवालु रहताहै तिस से अत्यन्त दुःखपाता है पीछे चावुकोंकी मारपडतीहै असमर्थहोने परभी चलता है रस्तामें कहीं बैठने का स्थान अथवा जल कुछ नहीं मिलता है ॥ २२ ॥

श्रान्त होने से जहां तहां मूर्छित होकर गिरताहै फिर उठता है इसप्रकार वडे खोटे पापियोंके योग्यरस्तासे उसको यमराजके स्थानको दूत लेजाते हैं ॥ २३ ॥

एकक्रमसैं ९९ योजन पर्यन्त रस्तामे दोमुहूर्त अथवा तीन मुहूर्तमें लेजाते हैं फिरउहां उसको यथायोग्य दण्ड होताहै ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यातनाः संक्षेपतो दर्शयति चतुर्भिः । आदीपनं प्रज्वलनं प्राप्नोति स्वेन कृत्तमन्येन वा कृत्तं छिन्नं यत्स्वस्य मांसं तस्य भक्षणमित्यर्थः ॥ २५ ॥

---

* उदरम्भरिरिति श्रीमद्वल्लभाचार्य्यपाठः ।

श्रीधरस्वामिकृतभावार्थदीपिका ।

आत्मनो वैशसं पीडाम् ॥ २६ ॥

भिदापनं भेदप्रापणम् ॥ २७ ॥ २८ ॥

न चैतदसंभावितमत्रापि दृश्यमानत्वादित्याह । अत्रैवेति ॥ २९ ॥

उभयं कुटुम्बं स्वं देहं च ॥ ३० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

मिथः सङ्गोऽत्र पापिष्ठगृहस्थसङ्गहेतुकत्वात्पापातिशयहेतुर्ज्ञेयः ॥ २८ ॥

एतत् । यातनाप्रदर्शनम् अत्रैव । मर्त्यलोक एव ॥ २९ ॥

तत्फलम् । पापकृतकुटुम्बभरणादिफलम् ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यातनाः संक्षेपतो दर्शयति चतुर्भिः। आदीपनमिति । उल्मुकादिभिर्वेष्टयित्वा च स्वाङ्गानामादीपनं प्रज्वलनं स्वेन कृत्तं यत्स्वमांसं तस्यादनं भक्षणम् ॥ २५ ॥

यमसादने श्वगृध्रैः जीवत एव स्वस्यान्त्राणामभ्युद्धारः बहिर्निष्कासनं दशद्भिः सर्पादिभिरात्मवैशसमात्मपीडाम् ॥ २६ ॥

अवयवशः कृन्तनं छेदनं गजादिभ्यः भिदापनं भेदप्रापणमम्बुगर्तयोः निरोधनमित्येवं रूपाः ॥ २७ ॥

याश्च तामिस्रादयः पञ्चमे स्कन्धे विस्तरेण वक्ष्यमाणा यातनाः स्त्री पुरुषो वा परस्परं संगेन निर्मिताः सम्पादिताः यातनाः भुङ्क्तेऽनुभवति ॥ २८ ॥

नैवैतदसम्भावितामिति मन्तव्यमत्रापि दृश्यमानत्वादित्याह । अत्रैवेति । हे मातः ! स्वर्गो नरकश्चात्रैव लोके वर्त्तते इत्याचक्षते नारक्यः नरकसम्बन्धिन्यो या यातनास्ता इहाप्युपलक्षिताः दृष्टाः वै निश्चितम् ॥ २९ ॥

एवं कुटुम्बभरणः कुटुम्बपोषणपरः उदरम्भरः स्वदेहपोषणमात्रपरो वा उभयं कुटुम्बं स्वदेहं च विसृज्य प्रेत्य परलोकं प्राप्य ईदृशमुक्तविधं केवलकुटम्बपोषणादिफलं भुङ्क्ते ॥ ३० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्वानुष्ठितदुष्कृतानुसारेण नरकदुःखानुभवं वक्ति । आदीपनमित्यादिना । स्वगात्राणां स्वावयवानाम् ॥ २५ ॥

आत्मवैशसमात्मनो हिंसाम् ॥ २६ ॥

रोधनं शृङ्खलाबन्धे विष्ठागर्ते ॥ २७ ॥

बाहुल्यात्संक्षिप्य यातनां ब्रवीति । यास्तामिस्रेति ॥ २८ ॥

ता नातिदूरे वर्तन्ते किन्तु समीप एवेत्याह । अत्रैवेति । तदुपपादयति । यातना इति । इहास्मिँल्लोके राजादिभिर्दण्डकेषूपलक्षिता दृष्टा इत्यर्थः वैशब्देन दण्डकेषु स्वर्गिष्वपीति दर्शितम् "सामीप्ये च प्रधाने च एवशब्दोऽवधारणे" इति च ॥ २९ ॥

कीदृशाः पापिन एवंविधनरकभोगयोग्या इति तत्राह । एवमिति । उभयं कुटुम्बमुदरञ्च विसृज्य तयोः कुटुम्बोदरपोषणयोःफलम् ॥ ३० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

उद्धारमिति सम्मतः पाठः । प्राप्नोतीति योजनया पीडामित्यपि द्वितीयान्तेन व्याख्या सामान्यत्वात् ॥ २६ ॥

कृन्तनं कर्त्तनम् ॥ २७ ॥

या यातना ताश्च भुङ्क्ते । मिथः सङ्गेनेति । पापिष्ठगृहस्थप्रसङ्गान्नरनार्य्योस्तयोः पापिष्ठत्वं प्राप्तेः परस्परसङ्गः पापातिशयहेतुरिति ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

तत्र प्रकीर्णपापानां यथापापं त्रिविधं नरकमाह त्रिभिः । आदीपनमिति सात्त्विके पापे । जीवत इति राजसे । कृन्तनमिति तामसे । ज्वलदुल्मुकानि गात्रेषु वेष्टयित्वा आदीपनं ज्वालनम् आदिशब्देन तृणवस्त्रादिभिरपि वेष्टयित्वा दाहः महापातकानामेतत् अन्येषां स्वात्ममांसादनं क्वापि देशे स्वेनैव कृत्तं कृन्तनं स्वदेहादुद्धृतं परतोऽपि वा अन्योद्धृतं वा स्वत एव कृते पापे अन्यप्रेरणया कृते ॥ २५ ॥

जीवतः स्वस्य गात्राणां शरीरावयवानामभ्युद्धारः श्वगृध्रादिभिः कृत्तः तैरेव भक्ष्यत इति विशेषः यमसादन इति सर्वतो भयानकत्वं सूचितं श्वानः पूर्वमुक्ताः गृध्राः पाखण्डाभिमानिनः। सर्पवृश्चिकदंशाद्यैरिति। दंशाः स्थूलमशकाः आदिशब्देन मत्कुणादयः आत्मवैशसं पूर्वं स्वमरणं तैरपि कृतो गात्राभ्युद्धार इति योजना ॥ २६ ॥

इक्षुदण्डानामिवावयवशः कृन्तनं गजव्याघ्रादिभ्यः निपातनं भक्षणार्थं प्रक्षेपः गिरिशृङ्गेभ्यश्चाधः पातनं जले च निरोधनं गर्ते च यथायथमेतानि पापफलानि ॥ २७ ॥

प्रकीर्णान्युक्त्वा मुख्यान्याह । या इति । अष्टाविंशतियातना या उक्ताः ता भुङ्क्ते तासां लक्षणमुत्तरत्र वक्ष्यते स्त्रिया भोग्यत्वेन नरकाननुभवाभावमाशङ्क्याह । नारी वेति । भोग्यत्वांशेऽपि नरकसंबन्धार्थमाह । मिथः सङ्गेनेति । अन्योऽन्यसंबन्धजनितपापेन निर्मिता यातनाः ॥ २८ ॥

भयमात्रत्वमित्याशङ्क्य लोकदृष्टान्तेन सत्यत्वं साधयति । अत्रैव नरकः स्वर्ग इति । इष्टाधिकारिणां राज्यादयः अनिष्टाधिकारिणां राजदण्डादयश्च प्रत्यक्षमुपलभ्यन्ते एतत्सर्वं यतः अस्मिन्नेव लोके दृश्यत इति अत्रत्या यातनास्तदुपलक्षकाः ॥ २९ ॥

एतत्सर्वं कुटुम्बपोषनिमित्तमेवेत्याह । एवमिति । यस्य वा कुटुम्बं नास्ति सोऽप्येवमनुभवतीत्याह । उदरम्भरिरेव चेति । इहैव कुटुम्बमुदरं च त्यक्त्वा पश्चात् प्रेत्य तदुभयपोषनिमित्तं फलमीदृशमनुभवति ॥ ३० ॥

एकः प्रपद्यते ध्वान्तं हित्वेदं स्वकलेवरम् ।
कुशलेतरपाथेयो भूतद्रोहेण यद्भृतम् ॥ ३१ ॥
दैवेनासादितं तस्य शमलं निरये पुमान् ।
भुङ्क्ते कुटुम्बपोषस्य * हृतवित्त इवातुरः ॥ ३२ ॥
केवलेन ह्यधर्मेण कुटुम्बभरणोत्सुकः ।
याति जीवोऽन्धतामिस्रं चरमं तमसः पदम् ॥ ३३ ॥
अधस्तान्नरलोकस्य यावतीर्यातनादयः ।
क्रमशः समनुक्रम्य पुनरत्राव्रजेच्छुचिः ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे कापिलेयोपाख्याने साधनानुष्ठानं नाम त्रिंशत्तमोऽध्यायः ॥ ३० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यातना प्रवाह । आदीपनं प्रज्वलनमित्यादीनां प्राप्नोतीत्यनेनान्वयः । स्वेन कृत्तं छिन्नं परतः परेण वा ॥ २५ ॥

वैशसं पीडाम् ॥ २६ ॥

भिदाया विदारणस्य आपनं प्रापणम् ॥ २७ ॥ २८ ॥

न चैतदसम्भावितमत्रापि राजदण्डे कासांश्चित् प्रत्यवयवकृन्तनादियातनानां तथा स्रक्चन्दनवनितादिसुखभोगानाञ्च दृश्यमानत्वादित्याह । अत्रैवेति ॥ २९ ॥

उभयं कुटुम्बमुदरञ्च । प्रेत्य मृत्वा ॥ ३० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यातना प्रवाह । आदीपनमिति चतुर्भिः । तत्र स्वगात्राणामादीपनं ज्वलनं प्राप्नोति कृत्तं छिन्नं यदात्मनो मांसं तस्य अदनं भक्षणं च ॥ २५ ॥

आन्त्राणामभ्युद्धारो निःसारणं यस्तमपि प्राप्नोति आत्मनो वैशसं पीडाम् ॥ २६ ॥

भिदापनं छेदप्रापणम् ॥ २७ ॥ २८ ॥ २९ ॥

इह अत्रैव उभयं देहं कुटुम्बं च विसृज्य ईदृशं तत्फलं भुङ्क्ते ॥ ३० ॥

भाषाटीका ।

उसके सरीरमे चारों तरफ जलतेलकडियों को बांधकर शरीर को जलातेहैं कभी उसके मांसको और जन्तुकाट करखातेहैं कभी भूखके मारे आपही अपने मांसको खाता है ॥ २५ ॥

यमस्थान मे जीतेहीमे उसकी आंतडीको गृध्रादिक निकाललेते हैं कभी सांप विच्छुओंके काटने से पीडा को पाता है ॥ २६ ॥

कभी हथियारों से कोई उसके शरीरकोकाटते हैं कभी हाथिआदिकशरीरको चीरते हैं कभी कोई पर्वतों के शिखरोंपर से गिरा देते हैं कभी जल मे या गढों में डालकर वंदकर देते हैं ॥ २७ ॥

पुरुष हो अथवा स्त्री हो आपके सङ्गके हेतु से संगादित जो दण्ड हैं तामिस्र रौरव आदिकातिनको प्राप्त होता है ॥ २८ ॥

हे माता! इहां ही पर इसी शरीर मे भी नरके तुल्य पापों के फल दण्ड राजादिद्वारा मिलते दीखते हैं तिससे इहां पर ही नरक और स्वर्ग है ऐसा विवेकी जन कहते हैं ॥ २९ ॥

इस प्रकार से जो कुटुम्बमात्र को पालता है या अपने पेटही पालता है सो पुरुष उनदोनों को इहां ही छोडकर चला जाता है फिर पर लोक मे तिस के फलको इसी प्रकार भोगता है ॥ ३० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

पापार्जितं धनं भुञ्जते बहवः कर्तैव नरकं यातीत्याह । एक इति । भूतद्रोहेण यद्भृतं तत्स्थूलं स्वकलेवरमिहैव हित्वा कुशलादितरत् पापं तदेव पाथेयं भोग्यं यस्य ॥ ३१ ॥

ननु पापमपि विहाय गच्छतु तत्राह । दैवेनेति । तस्य कुटुम्बपोषणस्य शमलं पापं दैवेनेश्वरेण प्रापितं भुङ्क्ते ॥ ३२ ॥

ननु कुटुम्बपोषणं विहितमेव तत्राह । केवलेनेति । तमसो नरकस्य चरमं पदं स्थानम् ॥ ३३ ॥

* गतवित्त इति श्रीमद्वल्लभाचार्यपाठः ।

### श्रीधरस्वामिकृतभावार्थदीपिका ।

पुनर्मनुष्यशरीरप्राप्तिप्रकारमाह । नरलोकस्य मनुष्यदेहस्य प्राप्तेरधस्तादर्वाग्यावत्यो यातनाः आदिशब्देन श्वसूकरादियोनयश्च यास्ताः सर्वाः क्रमेण संप्राप्य भोगेन क्षीणपापः शुचिः सन्नत्र पुनर्नरत्वं प्राप्नोतीत्यर्थः ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
त्रिंशत्तमोऽध्यायः ॥ ३० ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

यत्कलेवरं भृतं पोषितमिदं तत् यच्छब्दसान्निध्ये इदमादिशब्दानां तच्छब्दार्थत्वात् ॥ ३१ ॥

ईश्वरेण प्रापितमित्युक्तेऽपि नेश्वरस्य नैर्घृण्यं शङ्क्यमीश्वरस्तु पर्जन्यवद्दृश्य इति न्यायात् ॥ ३२ ॥ ३३ ॥

अत्र नरजातौ मर्त्यलोके गवादिदेहानामपि सत्त्वात्तद्व्यवच्छेदार्थं नरत्वं प्राप्नोतीत्यार्थिकोऽर्थः ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीराधारमणदासगोस्वामिविरचितदीपिन्याख्यदीपिकाटिप्पण्याम्
त्रिंशोऽध्यायः ॥ ३० ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

पापार्जितं धनं भुञ्जते बहवः कर्तैव नरकं यातीत्याह । एक इति । भूतद्रोहेण यद्भृतं पुष्टं तत्स्वकलेवरं चेहैव हित्वा कुशलात्पुण्यादितरत्पापं तदेव पाथेयं भोग्यं यस्य सः अध्वानं निरयमार्गमेक एव प्रपद्यते ॥ ३१ ॥

ननु पापमपि विहाय गच्छतु तत्राह । दैवेनेति । तस्य कुटुम्बपोषणस्य शमलं पापं दैवेनेश्वरेण प्रापितं निरये नरके पुमान् भुङ्क्ते अपहृतवित्त इवातुरः ॥ ३२ ॥

ननु कुटुम्बपोषणं विहितमेव तत्राह । केवलेन ईषदपि धर्मलेशरहितेनाधर्मेण कुटुम्बभरणासक्तः जीवः तमसो नरकस्य चरमं पदं स्थानम् अन्धतामिस्राख्यं याति ॥ ३३ ॥

पुनर्मनुष्यशरीरप्राप्तिमाह । अधस्तादिति । नरलोकस्य मनुष्यदेहप्राप्तेरधस्तादर्वाग्यावत्यो यातनास्ताः क्रमेण सर्वाः संप्राप्य शुचिः भोगेन कर्मक्षयाच्छुचिः सन्नत्र पुनर्नरत्वं प्राप्नोतीत्यर्थः ॥३४॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिकायाम्
त्रिंशोऽध्यायः ॥ ३० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यः पापकृत्स एक एव नारकं पन्थानमाप्नोति नान्य इत्याह । एक इति । कुशलादितरत्पापं तदेव पाथेयं शम्बलं यस्य स तथा यत्कलेवरं भूतद्रोहेण भृतं पोषितम् ॥ ३१ ॥

ननु देहादिवत्पापमपि परित्यज्य गच्छति किं नेत्याह । दैवेनेति । कुटुम्बपोषणस्य तस्य यच्छमलं दैवेन पुण्यपापयोर्नियन्त्रा हरिणासादितं प्रापितं पुमान्निरये तदेव भुङ्क्ते परित्यक्तुं न शक्नोति दैवाधीनत्वात् यथा हृतवित्त आतुरो वा दैवोपनीतं दुःखं भुङ्क्ते तथेति ॥ ३२ ॥

यास्तामिस्राद्या यातनाः प्रस्तुतास्तासां मध्ये तामिस्रान्धतामिस्रप्राप्तियोग्यं तत्साधनं चाह । केवलेनेति । योऽसुरप्रकृतिर्जीवः केवलं नैकेनाधर्मेण हरिभक्तद्वेषलक्षणेन तमसः पदमन्धकारस्यैकस्थानं चरमं पश्चात्तनं पुनरावृत्तिरहितमन्धतामिस्रं तामिस्रप्राप्तियोग्यं यातीत्यन्वयः हिशब्दः अनुत्थानवाची दुःखानुभवे तारतम्यवाची वा "तामिस्रश्चान्धतामिस्रौ द्वौ नित्यौ सम्प्रकीर्तितौ" इति वाक्यं सूचितं तामिस्रं यातीत्येतदर्थसूचको वा ॥ ३३ ॥

अन्येषां पुनरावृत्तिरस्तीत्याह । अधस्तादिति । अत्र मनुष्यलोके पुनः पुनः स्वकर्मानुसृतां योनिमायाति पापफलभोगाच्छुचिः पुनः स्वर्गं याति अशुचिश्चेन्नरकं याति "पुनर्दरिद्रः पुनरेव पापी" इति वचनात् ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
त्रिंशोऽध्यायः ॥ ३० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

दैवेनेत्युक्तेऽपि नेश्वरस्य नैर्घृण्यमीश्वरस्तु पर्जन्यवद्दृश्य इति न्यायात् ॥ ३२ ॥ ३३ ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य त्रिंशोऽध्यायः ॥ ३० ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

सर्वेषां पापकर्तृद्रव्यानुभवेऽप्येक एव तत्फलं भुङ्क्ते इत्याह । एक इति । कलेवरसहितमेतत्सर्वं परित्यज्य एक एव यमलोकाध्वानं प्रतिपद्यते कुशलपाथेयः इतरपाथेयो वा उभयविधानामपि प्रवृत्तिपराणां यमलोक एव गमनमिति ज्ञापयितुं कुशलेतरपदं पाथेयं पथि शंबलं भूतानां प्राणिनां द्रोहेण यद्भृतं तदवश्यं भोक्तव्यमिति ज्ञापनार्थं पुनरुक्तम् ॥ ३१ ॥

ननु यमलोके वा प्रायश्चित्तं कुर्याद्विवादं वा न मयैवं भावितमिति तथा सति तस्य नरको न स्यादित्याशङ्क्याह । दैवेनासादितमिति । तत्र भगवदिच्छयैव तस्य शमलमुपस्थितं भुङ्क्ते च न तु तदन्यथा कर्तुं शक्यते शमलं पापफलं निरये नर

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

कमूमौ पुमानिति स्वतन्त्रः। ननु भगवदिच्छया चेत्कस्य दोषोऽयमित्याशङ्क्याह। कुटुम्बपोषस्येति। अन्तर्दुःखमपि तस्येत्याह। गतवित्त इति। यथा रोगग्रस्तदेहः वित्ते गते दुःखमनुभवति एवं कुटुम्बे देहेऽपि गते तद्वासनाया विद्यमानत्वाच्छमलं भुङ्क्ते धर्माधर्माभ्यां कुटुम्बपोषकस्यैतदुक्तम् ॥ ३२ ॥

केवलाधर्मेण कुटुम्बपोषकस्य फलमाह। केवलेनेति। पापोपार्जितेनैव द्रव्येण व्याध इव घातक इव वा यः कुटुम्बं पोषयति उत्सुको वा सोऽन्धतामिस्रं याति अस्मादन्धतामिस्राद तद्भिन्नं दैत्यानामन्ते फलरूपं तदाह। चरममिति। तत्र गतो न निवर्त्तते तत्र च निवृत्त्यभावार्थमाह। तमसः पदमिति ॥ ३३ ॥

तत्र कल्पान्तं स्थित्वा पुनरायातीत्याह। अधस्तादिति। नरलोकस्याधस्तात् यावतीर्यातनाः ताः सर्वा एव क्रमेण ऊर्ध्वमुखः सन्ननुभूय न तु सर्वाः सकृत् किन्तु समनुक्रम्य एकं नरकमारभ्य तत्सम्यग्भुक्त्वा पुनर्नरकान्तरं भोक्तुमारभत इत्यर्थः पुनरत्रैव लोके शुद्धो भूत्वा आव्रजेदित्यर्थः ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्वल्लभाचार्यकृतसुबोधिन्याम्
त्रिंशाध्यायविवरणम् ॥ ३० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

कुशलेतरत् पापमेव पाथेयं मरणपर्यभोग्यम् यस्य सः। भूतद्रोहेण यद्भृतं पुष्टीकृतं तत् स्थूलं कलेवरं हित्वा ॥ ३१ ॥

तस्य पापकृतस्य कुटुम्बपोषस्य शमलं मालिन्यं दैवप्रापितं कुटुम्बविरहित एव भुङ्क्ते हृतवित्त इव ॥ ३२ ॥

तमसो नरकस्य पदं स्थानम् ॥ ३३ ॥

यावत्यो यातनाः यावच्छब्देन श्वसूकरादियोनयो यास्ताः क्रमेण प्राप्य भोगेन क्षीणपापः शुचिः सन् पुनर्नरत्वं प्राप्नुयात् ॥ ३४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्
त्रिंशोऽध्यायस्तृतीयस्य सङ्गतः सङ्गतः सताम् ॥ ३० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

भूतद्रोहेण यद्भृतं तदिदं कलेवरं इहैव हित्वा कुशलेतरत् पापमेव पाथेयं पथि भोग्यं यस्य स एकस्त्यक्तकुटुम्बः ध्वान्तं नरकं प्रपद्यते प्राप्नोति ॥ ३१ ॥

तस्य भूतद्रोहेण कुटुम्बपोषस्य शमलं पापं दैवेनेश्वरेण आसादितमर्पितं भुङ्क्ते ॥ ३२ ॥

तमसो नरकस्य चरममवधिभूतं पदं स्थानमन्धतामिस्रं केवलेन अधर्मेण याति अधर्ममिश्रिताधर्मेण तु तत्तारतम्यानुरोधेन तमसः पदानि यातीति भावः ॥ ३३ ॥

नरलोकस्य नरदेहप्राप्तेः अधस्तादर्वाक् यावत्यो यातना आदिना सूकरादियोनयः ताः स्वपापानुरूपाः क्रमेण सम्प्राप्य भोगेन क्षीणपापः शुचिः सन् अत्र पुनर्नरलोकं व्रजेत् ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
त्रिंशाध्यायार्थप्रकाशः ॥ ३० ॥

---

भाषाटीका।

इस अपने शरीर को छोडकर इकेला ही पाप फलही जोकि भूतद्रोह से किया है तिसही को रस्ताका खर्च लेकर नरक को जाता है ॥ ३१ ॥

जैसे धन के लुटजाने वाला आतुर होता है तैसे जो उसके कुटुम्बके पोषणमात्र से पाप का फल दैवसे प्राप्त होता है तिसको पुरुष नरक मे भोगता है ॥ ३२ ॥

केवल अधर्मसे कुटुम्बके पोषण मे जो उत्साही पुरुष है सो जीव सब के अन्त मे जो अन्धतामिस्रनामं का नरक स्थान है तिस को जाता है ॥ ३३ ॥

मनुष्यलोक के नीचे जितनी यातना हैं तिन सबों को भोगकर कुछ पवित्र होने से फिर इहां मनुष्य योनिमें आता है ॥ ३४ ॥

इति श्रीमद्भागवत तृतीयस्कन्ध तीसमे अध्यायका
भाषानुवाद लक्ष्मणाचार्यकृत समाप्त ॥ ३० ॥

---

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे त्रिंशोऽध्यायः समाप्तः ॥ ३० ॥

# एकत्रिंशोऽध्यायः ।

## श्रीभगवानुवाच ।

कर्मणा दैवनेत्रेण जन्तुर्देहोपपत्तये ।
स्त्रियाः प्रविष्ट उदरं पुंसो रेतःकणाश्रयः ॥ १ ॥
कललं त्वेकरात्रेण पञ्चरात्रेण बुद्बुदम् ।
दशाहेन तु कर्कन्धूः पेश्यण्डं वा ततः परम् ॥ २ ॥
मासेन तु शिरो द्वाभ्यां बाह्वङ्घ्र्याद्यङ्गविग्रहः ।
नखलोमास्थिचर्माणि लिङ्गच्छिद्रोद्भवस्त्रिभिः ॥ ३ ॥
चतुर्भिर्धातवः सप्त पञ्चभिः क्षुत्तृडुद्भवः ।
षड्भिर्जरायुणा वीतः कुक्षौ भ्राम्यति दक्षिणे ॥ ४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

एकत्रिंशे त्रिमिश्रैस्तु पुण्यपापैरिहान्तरा ।
मनुष्ययोनिसंप्राप्तिर्वर्ण्यते राजसी गतिः ॥ १ ॥

पुनरत्राव्रजेदित्युक्तं तदेव विशेषतो दर्शयति । कर्मणा पूर्वकृतेन दैवमीश्वरस्तदेव नेत्रं नेतृ प्रवर्तकं यस्य प्रविष्टो भवति ॥ १ ॥

कललं शुक्रशोणितमिश्रितं भवति बुद्बुदं वर्तुलाकारम् । कर्कन्धूर्बदरीफलं तदाकारं कठिनम् । पेशी मांसपिण्डाकारमण्डं वा योन्यन्तरे ॥ २ ॥

बाह्वङ्घ्र्यादीनामङ्गानां विग्रहो विभागः लिङ्गं च छिद्राणि च तेषामुद्भवः ॥ ३ ॥

जरायुणा गर्भवेष्टनेन वीतः प्रावृतः ॥ ४ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

तदेव । पुनरत्राव्रजनमेव रेतःकणाश्रयः सन्नुदरं प्रविष्टो भवतीति साध्यक्रियाध्याहारः ॥ १ ॥

तद्वासनामयं शरीरं शुक्रशोणितमिश्रं भवति एवं परत्रापि योन्यन्तरे पक्षिशरीरे ततः परं बदरीफलवत्काठिन्यानन्तरम् ॥ २ ॥

लिङ्गं पुंस्त्वाद्यभिव्यञ्जकचिन्हम् "लिङ्गं चिह्नेऽनुमाने च" इति विश्वः इन्द्रियाणां चिन्हानि च ॥ ३ ॥

"पुत्री दक्षिणकुक्षौ स्याद्वामे कन्या भवेद्ध्रुवम्" इति प्रसिद्धेः दक्षिणे इति पुंप्राधान्येनोक्तम् ॥ ४ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

एवं यौवनजरामरणानन्तरक्लेशाः कथिताः अथ गर्भजन्मादिक्लेशानाह कपिलः । तत्र पुनरत्राव्रजेदित्युक्तं तदेव विशेषतो दर्शयति । कर्मणेति । दैवमीश्वरः स एव नेतृ प्रवर्त्तकं यस्य तेन पूर्वकृतेन कर्मणा जन्तुर्जीवः देहोपपत्तये देहप्राप्तये पुंसः कस्यचित् पुरुषस्य रेतःकणाश्रयः इदमिष्टादिकारिणोऽप्युपलक्षणं सोऽपि स्वपुण्यफलभोगावसाने रेतोद्वारा स्त्रिया उदरं प्रविष्टो भवति रेतःकणाश्रयः रेतःकणः आश्रयो यस्य व्रीह्याद्युपाधिद्वारा रेत आश्रित्य रेतोद्वारा स्त्रिया उदरं प्रविष्टो भवति । ननु भोगेन सर्वकर्मणां विनष्टत्वात् कर्मणा दैवनेत्रेणेति कथमेतदुच्यते श्रुतिरपि कृत्स्नकर्मफलोपभोगमाह "यावत् सम्पातमुषित्वा अथैनमेवाध्वानं पुनर्निवर्तन्ते" इति सम्पतत्यनेन स्वर्गनरकादिकमिति सम्पातः कर्मोच्यते श्रुत्यन्तरं च ।

प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम् ।
तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे ॥

इति अत इदं विप्रतिषिद्धं कृत्स्नकर्मोपभोगेन शुचित्वं पुनरत्रागमनञ्चेति मैवम् अभुक्तफलानामकृतप्रायश्चित्तानाञ्च कर्मणां कर्मान्तरफलानुभवेन नाशासम्भवात्तेभ्यः पुनरत्रागमनोपपत्तेः शुचित्वस्योपभुक्तफलकर्मविषयत्वाच्च तथाचाभुक्तफलैः कर्मभिर्विशिष्टः पुनरायातीति श्रुतिः स्मृतिश्चाह श्रुतिस्तावत्

य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्

ब्राह्मणयोनिं क्षत्रिययोनिं वैश्ययोनिं वा अथ० य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं सूकरयोनिं चण्डालयोनिं वा

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

इति अमुष्माल्लोकाद्ये अभ्याशः अभ्यागन्तारः तेषां मध्ये ये रमणीयकर्माणः ते रमणीयां ब्राह्मणादियोनिं कपूयचरणाः कुत्सितकर्माणः कुत्सितां श्वसूकरादियोनिं प्रतिपद्यन्त इत्यर्थः स्मृतिरपि

"वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुः श्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते विश्वञ्चो विपरीता नश्यन्ति तथा तत्परिवृत्तौ कर्मफलशेषे जातिं रूपं वर्णम्

इत्यादिका यावत् सम्पातमिति फलदानप्रवृत्तकर्मविशेषविषयम् "यत्किञ्चेह करोत्ययम्" इत्यपि तद्विषयमेव भवति॥ १॥

तज्जीवेनाश्रितं रेतः स्त्रिया उदरं प्रविष्टं सदेकरात्रेण कललं शोणितमिश्रं भवति पञ्चरात्रेण बुद्बुदं वर्तुलं भवति दशाहानन्तरं कर्कन्धूः बदरीफलाकारं किञ्चित्कठिनं पेशी मांसपिण्डाकारम् अण्डं वा तीर्यगादियोन्यन्तरापेक्षया इदमुक्तम्॥ २॥

ततो मासेन शिरः द्वाभ्यां मासाभ्यां बाह्वाद्यङ्गानां विग्रहः विभागो भवति ततस्त्रिभिर्मासैर्नखादीनि लिङ्गं छिद्राणि च तेषामुद्भवः॥ ३॥

ततश्चतुर्भिर्मासैः सप्त धातवः ततः पञ्चभिः क्षुत्तृड्समुद्भवः ततः षड्भिर्मासैर्जरायुणा गर्भवेष्टनेन वीतः प्रावृतः कुक्षौ दक्षिणपार्श्वे भ्राम्यति सर्वत्र 'पञ्चरात्रदशरात्रमासादिसङ्ख्या उदरप्रवेशकालमारभ्यैव न तु पूर्वपूर्वकालमारभ्य षोडशदिनाधिकसप्तविंशतिमासगणनापत्तेरिति बोध्यम्॥ ४॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अस्मिन्नध्याये संसारासारज्ञानलक्षणवैराग्याय गर्भवासादिदुःखानुभवः प्रतिपाद्यते तस्माद्विरक्तो भक्तिसाध्यब्रह्मज्ञानाय प्रयतेत इति तत्र नरके कर्मफलं भुक्त्वा वृष्टिरूपेण नरलोकं प्राप्तो व्रीह्यादीन्नरजीवदेहगतो दैवाधीनेन कर्मणा शरीरस्त्रीकाराय पुरुषभुक्तान्नपरिणतरेतो बिन्दुप्रवेशरूपेण ऋतुकाले योनिद्वारा स्त्रिया उदरं प्रविष्टो भवतीत्यन्वयः "सूक्ष्मलेशलवश्लक्ष्णक्षुद्रदभ्रकणाणवः" इति हलायुधः "स्त्रियां मात्रा त्रुटिः पुंसि लवलेशकणाणव" इत्यमरः कणति निमीलतीति कणः॥ १॥

स्त्रिया उदरं प्रविष्टस्य रेतसः काले क्रमेण शरीराकारतया परिणामप्रकारं वक्ति। कलिलमिति। तुशब्दाच्छोणितसंपर्कमाह। कलिलं रक्तधातुरसमिश्रत्वान्निर्यासतुल्यं भवति कर्कन्धूरीषत्काठिन्योपेतमयःपिण्डतुल्यः पेशी मांसखण्डी तद्वान् भवति मनुष्यादीनामयं विशेषः न पक्ष्यादीनामण्डं पिण्डाकारवत्।

नानाविधा गर्भवृद्धिः कर्मभेदाद्भविष्यति।
अतो नानाविधं ग्रन्थे गर्भसंस्थानमुच्यते॥

इति वचनात् अण्डं वेति विकल्पयोक्तम्॥ २॥

बाहुङ्घ्र्यादिभिरङ्गैरवयवैर्युक्तो विग्रहो देहो भवति लिङ्गस्य पुंलिङ्गादिलक्षणस्य छिद्रस्येन्द्रियद्वारस्य चोद्भव उत्पत्तिः॥ ३॥

धातवस्त्वगादयः सप्त आवीतः संवेष्टितः॥ ४॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

कललमिति। अत्र निरुक्तमुदाहार्यम्॥ १॥ २॥ ३॥

दक्षिणं कुक्षाविति। पुरुषमधिकृत्योक्तत्वात् पुङ्गर्भो दक्षिणे स्त्रीगर्भो वामे भवतीति प्रसिद्धिः॥ ४॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एकत्रिंशे पुनस्तस्य गर्भादिकृतयातनाः।
जानतोऽपि पुनर्मोहाद्दुःखं चापि तथोच्यते॥ १॥
कृतिः प्रधानं न ज्ञानं यावद्देहस्मृतिर्भवेत्।
अनस्त्यागो विधातव्यो ज्ञानं तस्मात्तु दुर्लभम्॥ २॥
क्रियाचेद्विषमा जाता ज्ञानं तस्य न साधकम्।
क्रियां चजनयेत्तद्धि तदुक्तमिहोच्यते॥ ३॥
अधर्मापेक्ष्यतो धर्मं यः करोति गृही सदा।
बहुजन्मविपाकेन गर्भे तस्य भवेन्मतिः॥ ४॥
तामसत्वात्तु धर्मस्य न भूमौ नोत्तरे फलम्।
अतो गर्भे ज्ञानसिद्धिस्तादृशस्योच्यते हितम्॥ ५॥

पूर्वाध्यायान्ते नरकादिह लोके पुनरागमनमुक्तं तनश्च तस्य देहसंबन्धः कथमित्याशङ्क्य यदा योनौ रेतः निर्जीवमेव तिष्ठति तदा स आगत्य कर्मणा प्रविशन इत्याह। कर्मणेति। भगवदिच्छाधीनेन कर्मणा जन्तुरयं जायमानः देहोत्पत्त्यर्थं पुंसो रेतःकणमाश्रित्य स्त्रिया उदरं प्रविष्टो भवति प्रथमत उदरप्रवेशः पश्चाद्रेतःकणाश्रयः मुखद्वारा च प्रवेशः तस्मिन्प्रविष्ट एव तत्प्रयत्नेन धारितं रेतस्तिष्ठति दैववशात्समानकाले प्रवेशो रेतःसंभवश्च भवतः॥ १॥

तत्र दिनमात्रे स्थिते तद्रेतः कललं भवति शुक्रशोणिते मिलिते भवतः पञ्चरात्रेण बुदबुदाकारमुच्छूनं भवति दशाहेन तु कर्कन्धूर्भवति बदरीफलबीजसदृशं भवति ततः परं पेशी अण्डं वा भवति अण्डाकारं वृत्तं वा अपूपाकृतिर्भवति पुरुषश्चेद्दण्डमितरो चेत्पेशी यो वा ऊर्ध्वं गच्छेत् सोऽण्डाकृतिर्भवति यस्तु पुनरधस्तत्र वा तिष्ठेत् स पेशी भवति ततः परं दशदिवसान्तरम्॥ २॥

मासेन तु शिरो निष्पद्यते एकदेशेन मासयोर्द्वाभ्यां बाहुङ्घ्र्यादिसहितस्य अङ्गस्य देहस्य विशेषेण ग्रहः देहाकृतौ निष्पन्नायां तत्राभिमानोऽपि विशिष्टो निष्पद्यत इत्यर्थः बाहवः अङ्घ्रयश्चाङ्गानि यस्मिन् विग्रहे तादृशो भवतीति वार्थः नखानि लोमान्यस्थीनि च चर्माणि च त्रिभिर्मासैर्भवन्ति लिङ्गस्य नव छिद्राणां चोद्भवः त्रिभिरेव मासैः॥ ३॥

धातवस्त्वगादयः यद्यप्यस्थि पूर्वं जातं तथाप्युत्तरोत्तरभावेन जातमिति चतुर्भिः। तथोद्भवः क्षुत्तृषोः पञ्चभिरुद्भवः षड्भिः जरायुणा वीतो भवति पुरुषत्वाद्दक्षिणे कुक्षौ भ्राम्यति॥ ४॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

एकत्रिंशे गर्भजन्मबाल्यपौगण्डयातनाः।
श्रुणोनैव जीवस्य भक्तिर्गर्भेऽपि दर्श्यते॥ ०॥

मातुर्जग्धान्नपानाद्यैरेधद्धातुरसम्मते ।
शेते विण्मूत्रयोर्गर्ते स जन्तुर्जन्तुसम्भवे ॥ ५ ॥
कृमिभिः क्षतसर्वाङ्गः सौकुमार्यात्प्रतिक्षणम् ।
मूर्च्छामाप्नोत्युरुक्लेशस्तत्रत्यैः क्षुधितैर्मुहुः ॥ ६ ॥
कटुतीक्ष्णोष्णलवणरूक्षाम्लादिभिरुल्बणैः ।
मातृभुक्तैरुपस्पृष्टः सर्वाङ्गोत्थितवेदनः ॥ ७ ॥
उल्बेन संवृतस्तस्मिन्नन्त्रैश्च बहिरावृतः ।
आस्ते कृत्वा शिरः कुक्षौ भुग्नपृष्ठशिरोधरः ॥ ८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पुनरत्रागजेदित्युक्तम् तत्प्रकारं दर्शयति । कर्मणा प्राचीनेन दैवमीश्वरस्तदेव नेत्रं नेतृ प्रवर्त्तकं यस्य तेन प्रविष्टो भवति ॥१॥

कललं शुक्रशोणितमिश्रितं भवति । बुद्बुदं बुद्बुदाकारं । कर्कन्धूर्बदरीफलाकारं कठिनं पेशी मांसपिण्डं जरायुप्रकृतिः । अण्डं पक्ष्यादियोनिषु ॥ २ ॥

द्वाभ्यां मासाभ्यां विग्रहो विभागः ॥ ३ ॥

जरायुणा गर्भवेष्टनेन वीतः प्रावृतः । दक्षिणे कुक्षाविति । पुरुषमधिकृत्योक्तत्वात् "पुङ्गर्भो दक्षिणे स्त्रीगर्भो वाम" इति प्रसिद्धेः ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एकत्रिंशे विमिश्रपुण्यपापनिमित्ततः मनुष्यदेहप्राप्तिरूपां गतिमाह । पुनरत्रागजेदित्युक्तं तस्य गर्भवासादिकं वर्णयति कर्मणेत्यादिना । दैवमीश्वरो नेत्रं प्रवर्तकं यस्य तेन पूर्वकृतेन स्वकर्मणा ॥ १ ॥

कलिलं शुक्रशोणितमिश्रितम् बुद्बुदं वर्त्तुलाकारम् कर्कन्धूः बदरीफलाकारम् अतः परं दशाहादुपरि पेशी मांसपिण्डम् पक्षिण्यादिगर्भे वा अण्डं भवति ॥ २ ॥

बाह्वाद्यङ्गानां विग्रहो विभागो भवति ॥ ३ ॥

जरायुना उल्बेण वीतो वेष्टितः ॥ ४ ॥

---

भाषा टीका ।

जीव दैवके अधीन कर्म से देहके उत्पत्ति होनेके वास्ते पुरुषके द्वारा स्त्रीके उदर में प्रविष्ट होकर वीर्य के कणों मे आश्रित होता है ॥ १ ॥

एक रात में वीर्य रजका मिला हुआ कलल होता है पांच रात्र में गोल आकार वाला होता है दश दिन में बेरके फल सरीका होता है तिसके पीछे मांसका गोला या अण्डा सरीका होता है ॥२॥

एक महिना में उसका मस्तक होता है दो महीनों में हाथ आदि अवयव होते हैं तीन महिना में नख रोम चर्म लिङ्ग के छिद्र होते हैं ॥ ३ ॥

चार महिने में मांसादिक सात धातु होते हैं पांच महिनो में क्षुधा तृषा की उत्पत्ति होती है छठे महीने में जरायु चर्म से लिपट जाता है और दहिने कुक्ष में घूमने लगता है ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

मातुर्जग्धेन भक्षितेनान्नेन पानाद्यैश्चैधमाना धातवो यस्य जन्तूनां सम्भवो यस्मिंस्तस्मिन्नसम्मते गर्ते शेते । तथाच मार्कण्डेयपुराणे ।

> नाडी चाप्यायनी नाम नाभ्यां तस्य निबध्यते ।
> स्त्रीणां तथान्त्रसुषिरे सा निबद्धोपजायते ॥
> क्रमन्ते भुक्तपीतानि स्त्रीणां गर्भोदरे तथा ।
> तैराप्यायितदेहोऽसौ जन्तुर्वृद्धिमुपैति वै इति ॥ ५ ॥

तत्रत्यैः कृमिभिः खादद्भिः सौकुमार्यात्कोमलत्वेन क्षतानि सर्वाङ्गानि यस्य ॥ ६ ॥

उल्बणैर्दुःसहैः सर्वेष्वङ्गेषूत्थिता वेदना यस्य आस्त इत्युत्तरेणान्वयः ॥ ७ ॥

उल्बेन जरायुणा भुग्नं कुटिलीभूतं पृष्ठं शिरोधरा ग्रीवा च यस्य ॥ ८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

तस्य बालस्य अन्त्रसुषिरे अन्त्रच्छिद्रे स्त्रीणां स्त्रीभिर्भुक्तपीतान्यन्नपेयानि कर्तृभूतानि गर्भस्य बालस्योदरे सञ्चरन्ति तैर्भुक्तपीतैः ॥ ५

तत्रत्यैः । गर्भस्थैः ॥ ६ ॥

कट्विति सार्द्धयुग्मकम् । तस्मिन् गर्भे जरायुणा गर्भवेष्टनत्वचा ॥ ७ ॥ ८ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मातुर्जग्धेन भक्षितेनान्नेन पानाद्यैश्च एधन्तः वर्द्धमाना धातवो यस्य सः जन्तूनां सम्भवो यस्मिन् असम्मते विण्मूत्रयोर्गर्ते गर्भे शेते ॥ ५ ॥

तत्रत्यैः क्षुधितैः पुनः पुनः कृमिभिः क्षतानि खाद्यमानानि सर्वाण्यङ्गानि यस्य सः सौकुमार्याद्गुरुः अधिकः क्लेशो यस्य सः प्रतिक्षणं मूर्च्छामाप्नोति ॥ ६ ॥

उल्बणैः दुःसहैः मातृभुक्तैः कट्वादिभिरुपस्पृष्टः अत एव सर्वेष्वङ्गेषूत्थिता वेदना यस्य सः आस्त इत्युत्तरेणान्वयः ॥ ७ ॥

उल्बेन जरायुणा वीतः बहिरान्त्रैरावृतः भुग्नं कुटिलीभूतं पृष्ठं शिरोधरा ग्रीवा च यस्य सः शिरः कुक्षौ निधाय स्वाङ्गानां चेष्टायां व्यापारे पञ्जरे निबद्धः शकुन्तः पक्षीव अकल्पः असमर्थः आस्ते शेते इत्यर्थः ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

(१) सप्तमे मासे गर्भस्थस्य ज्ञानोत्पत्तिरित्याह । सप्तम इति । जगत्यां कर्मभूमौ यानि गतानि जन्मानि कर्माणि च स्वकृतानि तथाच देवस्य हरेर्माययेच्छया कदाचित्तमात्मनः स्वस्य बन्धं च ऋषिर्ज्ञानवान् स्मरते क्वचित् स्मरति क्वचिद्विस्मरति वेदनया ग्रस्तत्वादिति द्योतनाय आत्मनेपदं सन्धिकार्याभावश्च ॥ ० ॥

तत्र तस्य देहयात्राप्रकारं वक्ति । मातुरिति । आतुरो रोगी तस्य सम्मतः यथासौ परतः स्वदेहयात्रामाप्नोति तथायमिति अन्नादीनां प्रवेशस्तु आप्यायिनी नाम नाडी नाभिमूलादुत्पन्ना जरायुमुल्वं च निर्भिद्यास्य द्वारसम्बद्धोष्ठपुटचुम्बिकमलदण्डनाडीवत् तद्द्वारेत्यर्थः तस्य निवासस्थानमाह । स जन्तुर्जन्तुभिः सह वर्तमानः (२) अनेनैवात्रैवेति विवृतं जन्तूनां सम्भवो यस्मिन् स तथा तस्मिन् अनेन जन्तूनामनवसानभयपरंपरोत्पत्तिः सूचिता ॥ ५ ॥

इदानीं तस्य दुःखानुभवप्रकारमाह । कृमिमित्यादिना । क्षतं च कण्डूश्चाङ्गेषु यस्य स क्षतकण्ड्वङ्गः ॥ ६ ॥

कटुर्मरीचिसंज्ञः द्रव्याश्रितधर्मो वा तीक्ष्णः सर्षपः उष्णमग्निमद्द्रव्यं क्षारं दग्धमत्स्यास्थिचूर्णमाम्लश्चूतादिसंज्ञः उल्बणैरतिक्रूरैरेतैरुपस्पृष्ट उपतप्तः सर्वाङ्गेषूत्थितोत्पन्ना वेदना यस्य स तथा ॥ ७ ॥

भुग्ने कुटिले पृष्ठशिरोधरे यस्य स तथा ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

असम्मते अनभीष्टे ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तस्य जीविकामाह । मातुरिति । भक्षितान्नपानाद्यैरेव एधद्धातुर्भवति तस्यावस्थामाह । असत्तमे स्वस्यात्यन्तमयोग्ये विण्मूत्रयोर्गर्ते शेत इति अन्येऽपि जन्तवस्तत्र शेरते सजन्तुर्जन्तुभिः सहितः ननु क्व तत्र जन्तव इत्याशङ्क्याह । जन्तुसम्भव इति । जन्तूनां सम्भवा यस्मिन् गर्ते ॥ ५ ॥

तत्र क्लेशमाह । कृमिभिः क्षतसर्वाङ्ग इति । शरीरमत्यन्तं सुकुमारमिति कृमिभिः क्षतसर्वाङ्गः प्रतिक्षणं मूर्च्छामाप्नोति मूर्च्छाप्राप्तिदशायामुरुक्लेशो भवति कृमीणां क्षते हेतुमाह । क्षुधितैरिति । मुहुर्दशान्निरन्तरं दुःखम् ॥ ६ ॥

आध्यात्मिकं दुःखमाह । कट्विति । मधुर एव न बाधकः अन्ये कट्वादयो बाधका एव आदिशब्देन द्रव्यान्यपरिणामतो बाधकानि तेषां सम्बन्धार्थमाह । मातृभुक्तैरुपस्पृष्ट इति । जीवननाडिकाद्वारा मुखे रसः समायाति बहिरपि स्पर्शो भवतीति सर्वाङ्गोत्थितवेदनो भवति ॥ ७ ॥

आधिदैविकीं पीडामाह । उल्बेनेति । बन्धनरज्जुवदुल्बेन गर्भवेष्टकेन तस्मिन्नेव गर्ते सम्यग्वृतः अन्त्रैश्च उल्बाद्बहिरप्यावृतः एवं पीडितोऽपि शिरः स्वकुक्षौ कृत्वा भग्नपृष्ठशिरोधर आस्ते अयमुपद्रवो दैविकः उपद्रवाणां फलमाह । अकल्प इति । स्वाङ्गचेष्टायामप्यकल्पः स्वतः सामर्थ्यनाशाभावायाह । शकुन्त इवेति । बाधककृतमेवासामर्थ्यं न तु स्वत इत्यर्थः पूर्वोक्तप्रकारेण पूर्वोपार्जितधर्मवशाद्भगवदिच्छया ऊर्ध्वं गन्तुः सगर्भे सर्वज्ञानं भवतीत्याह । तत्रेति । स्वस्यैव जन्मशतोद्भवं कर्म स्मरन् उत्पन्नेन शोकेन दीर्घं श्वसन् किं नाम शर्म विन्दति अपि तु न विन्दतीत्यर्थः कर्माणि तु पूर्वोक्तानि येषां स्मरणेन सुखसम्भावनापि भवति एतादृशस्मरणे हेतुः दैवाल्लब्धस्मृतिरिति ॥ ८ ॥ ९ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एधद्धातुरिति ।

> नाडी चाप्यायनी नाम नाभ्यां तस्य निबध्यते ।
> स्त्रीणां तथान्त्रसुषिरे सा निबद्धोपजायते ।
> क्रमन्ते भुक्तपीतानि स्त्रीणां गर्भोदरे तथा ।
> तैराप्यायितदेहोऽसौ जन्तुर्वृद्धिमुपैति च ।

इति मार्कण्डेयपुराणात् ॥ ५ ॥ ६ ॥

उल्बणैः दुःसहैः उल्बेन जरायुणा कुटिलीभूतपृष्ठग्रीव आस्ते । शकुन्तः पक्षी ॥ ७ ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एधमाना धातवो यस्य सः जन्तूनां कृमीणां सम्भवः यस्मिन् ॥ ५ ॥ ६ ॥

उल्बणैः दुःसहैः उपस्पृष्टः आस्ते इत्युत्तरेणान्वयः ॥ ७ ॥

भुग्नं नम्रीभूतं पृष्ठं शिरोधरा ग्रीवा च यस्य सः ॥ ८ ॥

---

(१) सप्तमे जन्मकर्माणि गतानि स्मरते ऋषिः । जगत्यां निजदेहस्य मायया बन्धमात्मनः ॥ अयं श्लोकः श्रीवीरराघवग्रन्थे- निष्टीकः श्रीविजयध्वजतीर्थग्रन्थेसटीकश्च विद्यते

(२) अत्रैव नरकः स्वर्ग इत्यत्रोक्तम् ।

अकल्पः स्वाङ्गचेष्टायां शकुन्त इव पञ्जरे ।
तत्र लब्धस्मृतिर्दैवात् कर्म जन्मशतोद्भवम् ।
स्मरन् दीर्घमनुच्छ्वासं शर्म किं नाम विन्दते ॥ ९ ॥
आरभ्य सप्तमान्मासाल्लब्धबोधोऽपि वेपितः ।
नैकत्रास्ते सूतिवातैर्विष्ठाभूरिव सोदरः ॥ १० ॥
वार्तायां लुप्यमानायामारब्धायां पुनः पुनः ।
नाथमान ऋषिर्भीतः सप्तवध्रिः कृताञ्जलिः ।
स्तुवीत तं विक्लवया वाचा येनोदरेऽर्पितः ॥ ११ ॥

जन्तुरुवाच

तस्योपसन्नमवितुं जगदिच्छयात्तनानातनोर्भुवि चलच्चरणारविन्दम् ।
सोऽहं व्रजामि शरणं ह्यकुतोभयं मे येनेदृशी गतिरदर्श्यसतोऽनुरूपा ॥ १२ ॥

भाषाटीका ।

माता के खाये पिये अन्न जल आदि कों से उसके धातु बढते हैं फिर विष्ठा मूत्र कीडों में वडे दुःख के स्थान गढेले सरीके पेट मे रहता है ॥ ५ ॥

तहां पर क्षुधित जो कीडे हैं वे भूख के मारे इसके शरीर को काटते हैं तब क्षण क्षण में अति सुकुमार होने से उहांके जन्तुओं के काटने से बडे क्लेश से मूर्च्छित होता है ॥ ६ ॥

कडुआ तीखा उष्ण खारा रूखा खट्टा आदि जो कठिन चीजों को माता खाती है तिनके शरीर में लगने से उस के सब अङ्गोंमें पीडा होती है ॥ ७ ॥

जरायु तथा आन्तडियों से वाहिर से वेष्टित रहता है पेट में मस्तक करके रहने से सिर गला पीठ ये सब टूटते हैं जैसे पींजरे में से पक्षी नहीं उड सकता है तैसे अपने अङ्गोंकी चेष्टा में असमर्थ रहता है ॥ ८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

दैवात्पूर्वकर्मवशात् लब्धा स्मृतिर्येन सः दीर्घं दुरन्तमनुच्छ्वासं यथा भवति तथा तत्र स्थितः सन् ॥ ९ ॥

सूतिहेतुभिर्वातैर्वेपितः सोदरः समानोदरजन्मा विष्ठाभूः कृमिरिवेति ॥ १० ॥

नाथमानो याचमान उपतप्यमान इति वा ऋषिर्देहात्मदर्शी भीतः पुनर्गर्भवासात् सप्त वध्रयो बन्धनभूता धातवो यस्य सः विक्लवया व्याकुलया ॥ ११ ॥

उपसन्नं जगद्रक्षितुं स्वेच्छया गृहीतनानामूर्तेर्भगवतश्चरणारविन्दमकुतोभयं सोऽहं शरणं व्रजामि भुवि चलदिति श्रीकृष्णावताराभिप्रायेण असतो मेऽनुरूपा योग्या येनेदृशी गर्भवासलक्षणा गतिर्दर्शिता तस्य ॥ १२ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

अनुच्छ्वासमिति निर्मक्षिकमितिवदव्ययीभावः तत्र गर्भे ॥ ९ ॥

नास्ते स्थातुं न शक्नोति ॥ १० ॥

यद्यपि

सकृदेव प्रपन्नो यस्तवास्मीति च याचते ।
अभयं सर्वदा तस्मै ददाम्येतद्व्रतं मम ॥

इति श्रीरामायणे भगवत्प्रतिज्ञावाक्यम् तथा

सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वदा तस्मै ददाम्येतद्व्रतं हरेः

इति गारुडवाक्यम्

तथा आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन् ।

इति शौनकवाक्यम्

तथा जीवितं विष्णुभक्तस्य वरं पञ्चदिनानि वै ।
न तु कल्पसहस्राणि भक्तिहीनस्य केशवे ।

इति विष्णुधर्मोत्तरवाक्यम्

तथा। अकामादपि ये विष्णोः सकृत्पूजां प्रकुर्वते
न तेषां भवबन्धस्तु कदाचिदपि जायते

इत्यादीनि परस्सहस्रवाक्यानि भक्तसंसरणे व्याकुप्यन्ति तथापि विषयभेदेनाविरोधो व्याख्येयः तथा हि नैरुक्तिकमते हि गर्भस्थानां त्रैविध्यं श्रूयते केषाञ्चित्पूर्वपूर्वकर्मजन्मस्मृतिमात्रं केषाञ्चित्साङ्ख्ययोगाद्यभ्यासः कस्यचिद्विरलस्य तु विष्णुस्मरणमिति अयन्तु शुकसदृशः कश्चिद्भाग्यवानेव स्तौति तस्य च संसारो न भविष्यत्येव अत एव जीव उवाचेति अतीतनिर्देश एकवचनं च जीवकालसामान्यविवक्षायां तु जीवो वदतीत्येव युज्येत एवञ्च लिङ्प्रत्ययश्चात्र सम्भावनायामेव यदि कश्चित्प्राचीनमहत्सङ्गभाग्यवशाद्देहात्मदर्श्यपि श्रीभगवद्दर्शी

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

स्यात्तदा तरत्यपि अन्यथा संसरत्येवेत्यर्थः ॥ ११ ॥

भुवो भारावतारस्य श्रीकृष्णे प्राधान्यात् श्रीकृष्णावतारा-भिप्रायेणेति व्याख्यातम् चलदिति वर्त्तमानशतृनिर्देशश्च श्रीकृ-ष्णावतारस्य तदानींतनत्वमभिप्रैति तत्र हेतुः आत्तनानातनो-रिति । तस्यैव स्वयं भगवत्त्वेन सर्वावतारकर्तृत्वान्मत्स्याश्वक-च्छपनृसिंहवराहहंसेत्यादिप्रसिद्धेश्च ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

तत्र गर्भे दैवात्पूर्वकर्मवशाल्लब्धा स्मृतिर्येन सः जन्मश-तोद्भवं बहुजन्मसञ्चितं कर्म स्मरन् दीर्घं ० दीर्घतरमनु-च्छ्वासं यथा भवति तथा तत्र स्थितः सन् किंनाम शर्म सुखं विन्दते लभते न किञ्चिदित्यर्थः ॥ ९ ॥

सप्तमान्मासादारभ्य लब्धो बोधः सुखदुःखादिज्ञानं येन सः सूतिहेतुभिर्वातैरतिवेपितः अतिदुःखितः सोदरः समानो-दरजन्मा विष्ठाभूः कृमिरिव नैकत्रास्ते ॥ १० ॥

नाथमान उपतप्यमानः याचमान इति वा ऋषिर्जीवः सप्तवध्रिर्गर्भ-वासे सप्त वध्रयो बन्धनभूता धातवो यस्य स भीतः उक्त-विधगर्भवासादिभयाद्भीतः विक्लवया व्याकुलया वाचा येन उदरेऽर्पितः तं भगवन्तं कृताञ्जलिः सन् स्तौति ॥ ११ ॥

स्तुतिमेवाह । तस्येति । उपपन्नं स्वेनैव सृष्टमिदं जगदवितुं रक्षितुं स्वेच्छयैव गृहीतनानामूर्तेः तस्य भगवतो भुवि चलच्चरणारवि-न्दमकुतोभयं सोऽहं शरणं व्रजामि असतो ममानुरूपा योग्या ईदृशी गतिर्येनादर्शिता तस्य चरणारविन्दं व्रजामीत्यन्वयः । नन्वेवं शरणागतं कथं भगवान् परित्यजतीति शङ्क्यं सदाचार्यानु-ग्रहाभावात्पुरुषकारसांनिध्याभावाच्चेति द्रष्टव्यम् ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मार्कण्डेये पितृपुत्रसम्वादे कथितमेतत् ।
नाडी चाप्यायिनी नाम नाभ्यां तस्य निबध्यते ।
स्त्रीणां तथान्त्रसुषिरे सा निबद्धाथ जायते ॥
क्रमन्ते भुक्तपीतानि स्त्रीणां गर्भोदरे तथा ।
तैराप्यायितदेहोऽसौ जन्तुर्वृद्धिमुपैति वै ॥
नारिकेलफलं यद्वत्सकोशं वृद्धिमृच्छति ।
तद्वत्प्रयात्यसौ वृद्धिं सकोशोऽधोमुखस्थितः ॥
एवं वृद्धिं क्रमाद्याति जन्तुः स्त्रीगर्भसंस्थितः ।
तले तु जानुपार्श्वाभ्यां करयोर्न्यस्य वर्तते ॥
अङ्गुष्ठौ चोपरि न्यस्य जान्वोरग्रे तथाङ्गुलीः ।
जानुपृष्ठे तथा नेत्रे जानुमध्ये च नासिकाम् ॥
स्फिचौ च पार्श्वद्वन्द्वस्थौ बाहूजङ्घायहिःस्थिताविति ।

शकुन्तोऽनुत्पन्नपक्षः पक्षी शितस्तनूकृतः अर्धोत्पन्नः कुन्तः पक्षो यस्य स तथोति वा एवं क्लिश्यमानस्य तस्य नानाजाति-संज्ञा च लक्ष्यत इत्याह । तत्रेति । तत्र गर्भे दैवाल्लब्धा स्मृतिर्येन स तथा जन्मशतोद्भवं कर्म पुण्यपापलक्षणं स्मरन् दीर्घमनुच्छ्वासं कुर्वन् देही तस्मिन् गर्भे किंनाम विन्दते स्वक-र्मवान्नानाजातिगर्भस्थत्वात् ब्राह्मणादिनानाजातिनाम लभत इत्यर्थः ॥ ९ ॥

लब्धस्मृत्या च गर्भवासासारतां विजानतस्तस्य ततो निष्क्रम-णप्रयत्नं वक्ति । आरभ्येति । विष्ठाभूः कृमिः सोदरः किं मे स्यादिति संशयोपेतः "उदरं संशयः प्रोक्तः" इत्यभिधानात् ॥ १० ॥

इतोऽपि निर्गमनाय स्वप्रयत्नो निष्फलः किन्तु हरेः प्रसाद एव प्रयोजक इतिभावेन तं भगवन्तं स्तौति । नाथमान इति । "नाथनाध" याच्ञायामिति धातुः एवंविधगर्भवासो माभूदिति नाथमानः याचमानः विक्लवया श्रोतृमनोद्रवणहेतुभूतया ऋषि-रितिपदेन

तत्त्वज्ञानं तु देवानां गर्भस्थानां भविष्यति ।
उत्तमानामृषीणां चाप्यन्येषां बहुजन्मगम् इति

वाक्यं सूचयति सप्तवध्रय इन्द्रियाणि यस्य स तथोक्तः वध्रयस्त्विन्द्रियाण्याहुर्हृषीकाणीति चाप्युतेति ॥ ११ ॥

स्तुतिस्तत्र सिद्धैर्गुणैरुत मन्त्रगतैर्वा द्वावपि पक्षौ नोपपन्नौ तस्य बुद्धेर्जन्मशतोद्भवकर्मविषयत्वेन चरितार्थत्वादनवगाहत्वेन गुणोच्चनारोहादत इयं स्तुतिर्या काचिदित्याशङ्क्य हरिशक्तेर-चिन्त्यमहिमत्वेन सर्वं युक्तमिति भावेन तदुचितैर्गुणैः स्तौति । तस्येत्युपसन्नमित्यादिना । योऽसौ दैवाल्लब्धस्मृतिः सोऽहं येन हरि-णासतोऽशुभस्य ममेदृशी गर्भवासलक्षणा गतिरदर्शितस्य हरेर्लसच्चरणारविन्दं शरणं व्रजामि किंविशिष्टस्य तस्योपपन्नं शरणागतं जगदवितुः अव रक्षण इति इच्छया भक्तानुग्रहल-क्षणया भुवि आत्तलीलातनोः स्वीकृतरामकृष्णादिलीलावतारस्य प्राप्यस्य देवदत्तवत् सभयत्वे किं शरणं व्रजनेन प्रयोजनमित्यत उक्तं न कुतोभयमिति "अभयं प्रतिष्ठां विन्दते युक्ता ह्यस्य हरयः शता दश"इत्यादिश्रुतिरत्र प्रमाणम् ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

दीर्घं चिरकालं व्याप्य अनुच्छ्वासं यथा भवति तथा स्मरन् ॥ ९ ॥

वेपितश्चालितः सन्नेकत्र नास्ते स्थातुं न शक्नोति ॥ १० ॥

नाथमान इति । तात्पर्यं यथा सकृद्भजनेनैव सर्वमप्यायुः सफलमित्युदाहृतमेव श्रीशौनकवाक्येन । "आयुर्हरति वै पुंसाम्" इत्यादिग्रन्थेन । एवं भक्त्याभासेनाप्यजामिलादौ पापघ्नत्वं दृश्यते । तथा सर्व्वकर्म्मादिध्वंसपूर्व्वकपरमगतिप्राप्तौ स्वल्पायासेनैव भक्तेः कारणत्वं श्रूयते । लघुभागवते ।

वर्त्तमानञ्च यत्पापं यद्भूतं यद्भविष्यति ।
तत्सर्व्वं निर्दहत्याशु गोविन्दनामकीर्त्तनात् ।

इति । तथैव च तत्र यथा कथञ्चिद्भक्तिसम्बन्धस्य कारणत्वं दृश्यते । ब्रह्मवैवर्त्ते ।

स समाराधितो देवैर्मुक्तिकृत् स्याद्यथा तथा ।
अनिच्छयापि हुतभुक् संस्पृष्टो दहति द्विज ! ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स्कान्दे उमामहेश्वरसम्वादे ।

दीक्षामात्रेण कृष्णस्य नरा मोक्षं लभन्ति वै ।
किं पुनर्ये सदा भक्त्या पूजयन्त्यच्युतं नराः ।

बृहन्नारदीये ।

अकामादपि ये विष्णुं सकृत् पूजां प्रकुर्व्वते ।
न तेषां भवबन्धस्तु कदाचिदपि जायते ।

पाद्मे । सम्पर्काद्यदि वा मोहाद्यस्तु पूजयते हरिम् ।
सर्व्वपापविनिर्मुक्तः प्रयाति परमं पदम् ।

इतिहाससमुच्चये श्रीनारदपुण्डरीकसम्वादे ।

ये नृशंसा दुराचाराः पापाचाररताः सदा
तेऽपि यान्ति परं धाम नारायणपराश्रयाः ।
लिप्यन्ते न च पापेन वैष्णवा वीतकल्मषाः ।
पुनन्ति सकलाँल्लोकान् सहस्रांशुरिवोदितः ।

अत एव । सकृदेव प्रपन्नो यस्तवास्मीति च याचते ।

अभयं सर्व्वदा तस्मै ददाम्येतद्व्रतं मम

इति च । श्रीरामायणे श्रीरामचन्द्रवचनम् ।

सकृदेव प्रपन्नो यस्तवास्मीति च याचते ।
अभयं सर्व्वभूताय ददाम्येतद्व्रतं हरेः

इति गारुडवचनम् ।

जीवितं विष्णुभक्तस्य वरं पञ्चदिनानि वै ।
न तु कल्पसहस्राणि भक्तिहीनस्य केशवे

इति विष्णुधर्मोत्तरवचनम् ।

अतो यदत्र गर्भस्थस्य जीवस्य भगवत्स्तुतिः श्रूयते तस्यैव च संसारोऽपि वर्ण्यते । तत्रोच्यते । जात्येकत्वेन तद्वर्णनमिति । वस्तुतस्तु कश्चिदेव जीवो भाग्यवान् स्तौति स च निस्तरत्यपि । न तु सर्व्वस्यापि भगवज्ज्ञानं भवति तथा चेति नैरुक्तमतें च त्रिविधा जीवा लभ्यन्ते । एके पूर्व्वपूर्व्वजन्ममात्रं स्मरन्ति । एके साङ्ख्ययोगादिकमप्यस्यन्ति । एके तु परमपुरुषमिति । यथोक्तम् तत्रैव तैः "नवमे सर्व्वाङ्गपूर्णो भवति" इति पठित्वा । "मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृत" इत्यादितद्भावनापाठानन्तरम् ।

अवाङ्मुखः पीड्यमानो जन्तुश्चैव समन्वितः ।
साङ्ख्यं योगं समभ्यस्येत् पुरुषं पञ्चविंशकम् ।

ततश्च दशमे मासि प्रजायते ।

इत्यादि पुरुषं वेति, वाशब्दात् कस्यचिदेव भगवज्ज्ञानमिति गम्यते । सर्व्वास्वप्यवस्थासु भक्तेः समर्थत्वं वर्णितं चतुःश्लोकीव्याख्यायां भेदेऽप्येकवद्वर्णनमन्यत्रापि दृश्यते । तृतीये यथा पाद्मकल्पसृष्टिकथनेऽपि सनकादीनां सृष्टिवर्णनम् । टीकायाञ्च । ब्रह्मकृतसृष्टिकथनमात्रसाम्येनैकोक्त्योक्तिरियमिति योजितम् । श्रीवाराहावतारश्च । तत्र प्रथममन्वन्तरस्यादौ पृथिवीमज्जने ब्रह्मनासिकातोऽवतीर्णः वराहस्तामुद्धरन् हिरण्याक्षेण सङ्ग्रामं कृतवान् इति वर्ण्यते । हिरण्याक्षस्तु षष्ठमन्वन्तरावसानजातप्राचेतसदक्षकन्याया दितेर्जातः । तस्मात्तथा वर्णनं तदवतारमात्रस्वपृथिवीमज्जनमात्रस्यैक्यविवक्षयैव घटते ।

तद्वदत्रापीति कश्चिदेवान्यो जीवः स्तौति इत्यन्यः संसरतीत्येवं मन्तव्यम् । अत्र पूर्व्ववत् परगतिप्राप्तौ भक्तेः परम्पराकारणत्वञ्च दृश्यते । बृहन्नारदीये ।

यतीनां विष्णुभक्तानां परिचर्य्यापरायणैः ।
ईक्षिता अपि गच्छन्ति पापिनोऽपि परां गतिम् ।

एवं विष्णुधर्म्मे ।

कुलानां शतमागामि समतीतं तथा शतम् ।
कारयन् भगवद्धाम नयत्यच्युतलोकताम् ।
ये भविष्यन्ति येऽतीता आकल्पात् पुरुषाः कुले ।
तांस्तारयति संस्थाप्य देवस्य प्रतिमां हरेः ।

इति । दूतान् प्रति यमाज्ञा चेयम् ।

येनार्च्चा भगवद्भक्त्या वासुदेवस्य कारिता ।
नवायुतं तत्कुलजं भवतां शासनातिगम् इति ।

यथाह । त्रिः सप्तभिः पिता पूतः पितृभिः सह तेऽनघ ! ।

यत् साधोऽस्य कुले जातो भवान् वै कुलपावनः ।

त्रिःसप्तभिः प्राचीनकल्पगततदीयपूर्व्वपूर्व्वजन्मसम्बन्धिभिः पितृभिः सह ।

अस्मिन् जन्मनि हिरण्यकशिपुकश्यपमरीचिब्रह्माण एव तत्पितर इति अवतारिकारम्भे तद्वदत्रापीति कश्चिदेवान्यो जीवः स्तौत्यन्यः संसरतीत्येवमुन्नेयम् । स्तुवीतेति लिङ्प्रत्ययः स च सम्भावनामेव स्पष्टयति । अत एव तादृशभाग्ययुक्तमतीतमेकं जीवं लक्ष्यीकृत्य जीव उवाचेत्येकत्वलिट्प्रत्ययाभ्यां निर्द्देशः । जीवकालसामान्यविवक्षायान्तु जीवो वदतीत्येव युज्यते ॥ ११ ॥

भुवि चलदिति । नूनं तदानीं श्रीकृष्णावतारादत्र लिङ्गं गृहीतनानातनोरिति । तस्यैव सर्व्वावतारित्वात् । श्रीकपिलोक्तिश्चेयं पूर्व्वकल्पगततदवतारापेक्षया असतः परमापाङ्गेनेक्षतो मम येन अनुरूपा तदुद्धरणक्षमा ईदृशी स्फूर्त्तिलक्षणा गतिः चित्तवृत्तिरदर्शि प्रकाशिता । यद्वा मम दुष्टस्य योग्या ईदृशी दुःखात्मिकावस्था येन कृपादृष्टिविषयीकृता । अन्यथेयं तत्स्फूर्त्तिर्न स्यादेवेति भावः ॥ १२ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

पूर्व्वजन्मस्मरणेन वैराग्ये जातेऽपि "तरति शोकमात्मवित्" इति श्रुतेः ज्ञानमवश्यमपेक्ष्यत इति यथा भगवदिच्छया पूर्व्वकर्म्मस्मृतिः तथा जीवब्रह्मस्वरूपज्ञानमपि तस्य जातमित्याह । आरभ्येति । सप्तममासमारभ्य सप्तममासादूर्ध्वं जन्मपर्य्यन्तं लब्धबोधो भवति कालादीनां पराक्रमं स्मृत्वातिवेपितश्च भवति वस्तुस्वभावेश्च वेपितो भवतीत्याह । नैकत्रास्त इति । प्रसूतिवातैर्वेपितः सन् नैकत्रास्ते जातेऽपि ज्ञाने क्रियैव बलिष्ठेति ज्ञापयितुमाह । असत्तुल्यतां विष्ठाभूरिवेति विष्ठायां जातो यथा कृमिः । ननु महतोऽस्य कथमेवं निन्दावचनं तत्राह । यतोऽयं सोदरः समानमुदरं यस्य । यद्ययं महान् स्यात् सोदरो न स्यात् भगवत्प्रेरितैर्वस्तु स्वभावानां बलिष्ठताप्रदर्शनं ज्ञानस्याप्रयोजकत्वं ज्ञात्वा भगवद्भजनार्थम् ॥ १० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अतस्तथा ज्ञात्वा भगवत्स्तोत्रं कृतवानित्याह । नाथमान इति । नाथमान उपतप्यमानः "नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु" इति धातुपाठात् भगवन्तं वा नाथमानः स्तुवीतेत्यपि अर्थात्खनिस्तारं ऋषिरित्यलौकिकज्ञानस्य वृत्तत्वाग्भन्मदर्शी मन्त्रेण हि स्तुतः अलौकिक आत्मा प्रसन्नो भवति । ननु प्रसन्ने भगवति आविर्भूते स्तोत्रं कर्तव्यमयमन्तर्यामी भगवानाविर्भूतो न प्रसन्नः अत आह । भीत इति । स्तोत्रमुभयथापि क्रियते भीतेन प्रसादविषयेण च यद्यप्ययं प्रसादपात्रं न भवति तथापि भीतः सन् प्रसादार्थं स्तोत्रं कुर्यात् । ननु गर्भान्निर्गमे जाते स्तोत्रं कर्तव्यं किमिदानीं स्तोत्रेणेत्याशङ्क्याह । सप्तवध्रिरिति । वध्रिश्चर्ममयी वन्धिका रज्जुः तादृशः सप्त सन्ति त्वगाद्याः तेन सर्वथा बद्धः विलम्बं न सहते । इयं स्तुतिः प्रार्थनार्थेति ज्ञापयति । कृताञ्जलिरिति । प्रेम्णो जातत्वात् सफलेयं स्तुतिरिति ज्ञापयितुमाह । विक्लवया वाचेति । फलं चेदानीं दुःखनिवृत्तिरेवेति येनोदरेऽर्पित इत्युक्तम् ॥ ११ ॥

प्रार्थनां पुरस्कृत्य दशभिः स्तोत्रमुक्तवान् ।
भक्तिप्रपत्ती कर्तव्ये इति शास्त्रार्थबोधनात् ॥
शरणागमनं पूर्वं जीवब्रह्मविभाजनम् ।
जीवहीनत्वतश्चापि सत्सङ्गादेव तद्भवेत् ॥
एवं हरिस्तु हितकृत् कृपाप्रार्थनमेव च ।
प्रत्युपकारासामर्थ्यं ज्ञानदातृत्वमेव च ॥
संसारस्यातिदुष्टत्वं तदभावस्तु याच्यते ।

प्रथमतः शरणागमनमाह । तस्येति । पूर्वधर्मवशादवतीर्णस्य हरेः पूर्वं भावुक इति तमेव शरणं गच्छति अद्यापि भक्तिमार्गेण न निविष्ट इति जगद्रक्षार्थं भगवदवतारमाह उपपन्नं खेनैव निर्मितं जगदवितुं स्वेच्छया आत्ताः स्वीकृताः नाना तनवो येन अत एव तादृशस्य लसच्चरणारविन्दं शरणं व्रजामि भक्त्यर्थमेवैषा शरणागतिः । चरणनिरूपणाद्युक्तमेव यद्भीतो रक्षकस्य चरणशरणं गच्छतीति तत्रापि पूर्ववद्भावश्चेद्रक्षार्थं शरणागतिरित्यत आह । अकुतोभयमिति । नन्वयमेव दुःखदाता "सुखं दुःखम्" इत्यादिवाक्यात् तनश्च मारकस्य शरणागमनमनुचितमित्याशङ्क्याह । येनेदृशी गतिरदर्शि यदि केवलमेतादृशीं गतिं प्रयच्छेत् न तज्ज्ञापयेत् तर्हि शरणं न गच्छेत् यत्पुनः ज्ञापयति असत एतादृशी गतिरिति तेनैवं ज्ञायते सत्त्वेन नैवं गतिर्भविष्यतीति ज्ञापयति तत्र सत्त्वं सति भगवति प्रवेशादेव सदसतोर्विभागः हेयत्वेन ग्राह्यत्वेन च निर्द्धारितः प्राकृतमसद्भगवान् सदिति यथा जीवस्य स्वरूपतः सतोऽपि असति प्रवेशे असत्त्वं तथा सति प्रवेशे सत्त्वमिति सत्प्रवेशार्थं भगवच्छरणागतिर्युक्तैवेत्यर्थः ॥ १२ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

दैवात् पूर्वकर्मवशाद्दीर्घं चिरकालं व्याप्य अनुच्छ्वासं यथा भवत्येवं स्मरन् ॥ ९ ॥

सूतिहेतुभिर्वातैर्वेपितश्चालितः सन् सोदरः समानोदरजन्मा विष्ठाभूः कृमिरिव ॥ १० ॥

नाथमानः भगवत्कृपा मयि भूयादिति स्वाशिषमाशिषं कुर्वन् ऋषिरात्मदर्शी भीतः संसारात् सप्तवध्रयो बन्धनभूता धातवो यस्य सः । विक्लवया विह्वलया तं स्तुवीतेति गर्भे विध्यादेः सम्भवाभावात् "हेतुहेतुमतोर्लिङ्"इति फले लिङ् ततश्च यो भगवन्तं भजेतेति हेतुरत्र गम्यः । तेन च यो भगवन्तं भजेत स तं गर्भेऽपि स्तुवीतेत्यन्यो जीवस्तु न स्तुवीतेत्यर्थो लभ्यते तस्यैव स्तुवानस्य जीवस्याग्रे संसारो वर्णयिष्यते वर्णितश्च न तु भगवन्तं स्तुवानस्यापि

अकामादपि ये विष्णोः सकृत्पूजां प्रकुर्वते
न तेषां भवबन्धस्तु कदाचिदपि जायते इति
सकृदेव प्रपन्नो यस्तवास्मीति च याचते
अभयं सर्वदा तस्मै ददाम्येतद्व्रतं मम

इत्यादिपरःसहस्रवचनविरोधादत एव शेते विण्मूत्रयोर्गर्त्त इति मूर्च्छामाप्नोत्युरुक्लेश इति आस्तं कृत्वा शिर इत्यादिवद्दशमास्यो जीवो हरिं स्तौतीति वर्त्तमानप्रयोगो न कृतः किन्तु जीव उवाचेति भूतकालप्रयोग एव । तेन च पूर्वकालभवः कश्चिद्भक्तो जीव एवं गर्भे हरिं स्तुवान आसीन्नतु सर्व इत्यर्थो ज्ञापितः । अत एव नैरुक्ता अपि पठन्ति । "नवमे सर्वाङ्गसम्पूर्णो भवति"इति पठित्वा

"मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृत"

इत्याद्यनन्तरम्

अवाङ्मुखः पीड्यमानो जन्तुश्चैवं समन्वितः ।
साङ्ख्यं योगं समभ्यस्येत् पुरुषं पञ्चविंशकम् ।

ततश्च दशमे मासि प्रजायत

इत्यादिगर्भोपनिषद्वाक्यमत्र वाशब्दबलात् कश्चित् कर्मी जीवो "मृतश्चाहं पुनर्जात" इत्यादिपूर्वपूर्वजन्ममात्रं स्मरति कश्चिज्ज्ञानी साङ्ख्यं कश्चिद्योगी योगं कश्चिद्भक्तश्चतुर्विंशप्रधानात् परं पञ्चविंशं पुरुषं परमेश्वरमभ्यसेत् भक्तेरिति पूर्वाऽभ्यस्तमेव गर्भे स्फुरेदिति युक्तेः ॥ ११ ॥

भुवि चलदिति । श्रीकृष्णावताराभिप्रायेणेति स्वामिचरणाः अत्र लिङ्गं गृहीतनानातनोरिति तस्यैव सर्वावतारित्वात् । कपिलोक्तिश्चेयं पूर्वकल्पगततदवतारापेक्षयेति सन्दर्भः । ईदृशी गर्भदुःखोद्भिनिवासलक्षणा गतिः असाधोर्मम समुचितैव अदर्शि दर्शिता । यद्वा । अदर्शि कृपादृष्टिविपयीकृता अन्यथा इयं तदीयस्फूर्तिर्ममातिपापिष्ठस्य न सम्भवेदिति भावः ॥ १२ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पञ्जरे शकुन्तः पक्षी यथा स्वाङ्गचेष्टायामकल्पः असमर्थः तत्र गर्भे दैवात् परमेश्वरात् लब्धस्मृतिः जन्मशतसञ्चितं कर्म स्मरन् दीर्घमनुच्छ्वासं यथा स्यात्तथा स्थितः सन् शर्म सुखं किंनाम विन्दते न किमपि ॥ ९ ॥

सूतिवातैर्वेपितः कम्पितः सोदरः समानोदरजातः विष्ठाभूः कृमीव नैकत्रास्ते ॥ १० ॥

नाथमानः स्तव्यमानः ऋषिर्दैवात्प्राप्तबहुजन्मबोधः भीतः पुनर्गर्भप्रवेशात् सप्त वध्रयः बन्धनभूता धातवो यस्य येन उदरे अर्पितस्तं विक्लवया वाचा स्तुवीत ॥ ११ ॥

यस्त्वत्र बद्ध इव कर्मभिरावृतात्मा भूतेन्द्रियाशयमयीमवलम्ब्य मायाम्।
आस्ते विशुद्धमविकारमखण्डबोधमातप्यमानहृदयेऽवसितं नमामि ॥ १३ ॥
यः पञ्चभूतरचिते रहितः शरीरे च्छन्नोऽयथेन्द्रियगुणार्थचिदात्मकोऽहम्।
तेनाविकुण्ठमहिमानमृषिं तमेनं वन्दे परं प्रकृतिपूरुषयोः पुमांसम् ॥ १४ ॥
यन्माययोरुगुणकर्मनिबन्धनेऽस्मिन् सांसारिके पथि चरंस्तदभिश्रमेण।
नष्टस्मृतिः पुनरयं प्रवृणीत लोकं युक्त्या कया महदनुग्रहमन्तरेण ॥ १५ ॥
ज्ञानं यदेतददधात्कतमः सदेवस्त्रैकालिकं स्थिरचरेष्वनुवर्तितांशः।
तं जीवकर्मपदवीमनुवर्तमानास्तापत्रयोपशमनाय वयं भजेम ॥ १६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

येन असतः दुष्टस्य मे अनुरूपा योग्या ईदृशी गर्भवासरूपा गतिः अदर्शि दर्शिता तस्य उपसन्नं जगदवितुमिच्छया स्वेच्छया आविष्कृतनानामूर्तेः भक्तकार्य्यार्थं भुवि चलच्चरणारविन्दम् अकुतोभयं नास्ति कुतोऽपि भयं यस्मादुपासितात् एवम्भूतं सोऽहं शरणं व्रजामि ॥ १२ ॥

---

### भाषा टीका।

तहां पर भगवत् इच्छा से उसको स्मृति होती है तब सौ जन्म के कर्म को स्मरण करता है तब लंबे श्वास छोडता है तो उसको क्या सुख होगा ॥ ९ ॥

सात मे महिना से लेकर सुखदुःख का ज्ञान वाला होकर भी प्रसूति के पवनों से कांपता हुआ एक ठिकाने नहीं ठहर सकता है विष्ठा के कीडों सरी का विष्ठा मे पडा रहता है ॥१०॥

तब ज्ञानी होने से सात धातुओं से बंधे रहने से पुनर्जन्म से डर कर हाथ जोड कर जिस भगवान् ने पेट मे रखा है उस भगवान् की अति दीन वचन से स्तुति करता है ॥ ११ ॥

जंतु बोलता है। जिन भगवान् ने मेरे दुष्ट के योग्य इस प्रकार की गति दिखाई है और शरणागत जगत् के रक्षा करने के वास्ते जिन ने नाना मूर्ति धारण की हैं उन भगवान् का निर्भयदायक पृथिवी मे चलता हुआ जो चरणारविंद तिस के मैं शरण मे प्राप्त हूं ॥ १२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

ननु कोऽसौ यं शरणं व्रजसि को वा तव तस्य च विशेषो येन सेव्यसेवकत्वमित्यपेक्षायामाह। अत्र मातुर्देहे भूतेन्द्रियाशयमयीं देहाकारपरिणतां मायामवलम्ब्याश्रित्य कर्मभिरावृतस्वरूप इव बद्ध इव च य आस्ते सोऽहम् यस्त्वत्रैवास्ते तं नमामि कथम्भूतमित्यपेक्षायां तुच्छोक्तं विशेषं दर्शयति। आतप्यमाने हृदयेऽवसितं प्रतीतमेवमप्यविकारं कुतः विशुद्धं निरुपाधिं तत्कुतः अखण्डो बोधो यस्य तम् ॥ १३ ॥

ननु त्वमपि वस्तुतः शुद्ध एव "असङ्गो ह्ययं पुरुष" इत्यादिश्रुतेः तत्कथं युवयोरयं विशेषस्तत्राह। यः पञ्चभिर्भूतैः रचिते शरीरे अयथा मिथ्यैव छन्नो न वस्तुतः यतस्तेन शरीरेण रहितोऽसङ्गोऽतोऽयथैवेन्द्रियगुणार्थचिदात्मकः इन्द्रियाणि च गुणाश्च अर्थाश्च चिदाभासश्च तदात्मकः सोऽहं तं वन्दे कथंभूतं तेन शरीरेणाविकुण्ठो महिमा यस्य तम् अवगुण्ठेतिपाठेऽप्यसङ्गं गुण्ठनमावरणं यस्य स महिमा यस्येत्यर्थः तत्र हेतुः प्रकृतिपुरुषयोः परं नियन्तारं कुतः ऋषिं सर्वज्ञं विद्याशक्तिमित्यर्थः विद्याविद्याकृतो विशेष इति भावः ॥ १४ ॥

ननु ज्ञानेनायं बन्धो निवर्त्तिष्यते किं परमेश्वरवन्दनेन तत्राह। यस्य मायया नष्टस्मृतिः सन् संसारसंबन्धिनि पथि तदभिश्रमेण तत्कृतेन क्लेशेन चरन्नयं जीवो महतस्तस्यैवेश्वरस्यानुग्रहं विना पुनः कया युक्त्या लोकं निजस्वरूपं प्रवृणीत संभजेत अभिश्रमहेतुत्वेन पन्थानं विशिनष्टि। उरूणि गुणनिमित्तानि कर्माणि नितरां बन्धनानि यस्मिन्नीश्वरस्य प्रसादं विना ज्ञानाभावात्स एव सेव्य इत्यर्थः ॥ १५ ॥

ईश्वर एव ज्ञानद इत्युपपादयन्नाह। यदेतत्त्रिकालविषयं ज्ञानं तस्तं विना कतमो मय्यदधान्न कोऽपि किन्तु स देव ईश्वर एव नन्वन्यः प्रकृष्टो जीवो दधातु नेत्याह। जीवरूपां कर्मपदवीमनुवर्तमाना वयमिति तद्व्यतिरेकेण न कोऽपि समर्थ इत्यर्थः अन्यस्यात्रासम्भवमुक्त्वा तस्य सम्भवमाह। स्थिरेषु चरेषु चान्तर्यामिरूपोऽनुवर्तितोंऽशो येन तं भजेम ॥ १६ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी।

विशेषोऽत्र धर्मवैलक्षण्यं येन। विशेषेण अत्र। जीवभोग्यदेह एव यस्तु नियन्तृतयास्ते तं नमामि प्रतीतमनुभूतम्। एवमपि हृदयस्थत्वेऽपि चिच्छक्त्या मायाभिभावकत्वात् जीववज्जन्मादिविकारानभिभूतमखण्डो विषयकालानवच्छिन्नः ॥ १३ ॥

तत्तस्मादसङ्गत्वेन शुद्धत्वात् युवयोरिति वाग्युक्तिः अयं निर्विकारत्वसविकारत्वलक्षणः अयथैव मिथ्याज्ञानेनैव अर्थाश्च तत्सादिन्द्रियविषयाः चिदाभासश्च प्राकृताहङ्कारः सोऽहमध्यासवान् तत्र अकुण्ठमहिमत्वे विद्या स्वरूपभूता चिच्छक्तिः अविद्या

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

"अनात्मन्यात्मबुद्धिर्या साविद्येति च कथ्यत" इति विष्णुपुराणोक्ता ताभ्यां कुतोऽयं नित्यमुक्तत्वसर्वज्ञत्वबद्धत्वाकिञ्चिज्ज्ञत्वलक्षणो विशेष इति ॥ १४ ॥

अयमविद्याकृतः यस्य मायया बहिर्मुखत्वप्रयुक्तया "भयं द्वितीयाभिनिवेशतः स्यात्"इत्यादेः तत्कृतेन जन्ममरणलक्षणसंसारकृतेन ईश्वरानुग्रहहेतुजिज्ञासायान्तु श्लेषेण "महत्सेवां द्वारमाहुर्विमुक्तेः" इत्यादिप्रसिद्धा याद्दच्छिकमहत्सङ्गो व्याख्येयः॥१५॥

प्रकृष्टः भक्तिशून्यत्वेऽपि विद्यादिगुणगरिष्ठ इति व्याख्येयमत एव वयमिति स्वसाधारणजीवान्तरदृष्ट्या बहुवचनम् अन्यथा "रहूगणैतत्तपसा न याति"इत्यादिवाक्यं व्याकुप्येत् पञ्चाद्वितीयान्तविशेषणत्वेन व्याख्यानादनुवर्त्तितांघ्रिमित्येव पाठो नत्वनुवर्त्तितांघ्र इति ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कोऽसौ यं शरणं व्रजसि को वा तस्य तव च विशेषः येन शरण्यत्वशरणागन्तृत्वभाव इत्याकाङ्क्षायामाह । य इति । अत्र मातुर्देहे भूतेन्द्रियाशयमयीं भूतादिरूपेण परिणतां मायामवलम्ब्य धृत्वा कर्मभिराबृतात्मा कर्मरूपाविद्यातिरोहितस्वस्वरूपः बद्धो जीवः स इव यः स्वयमप्यास्ते तेन सह प्रकृतौ वसतीत्यर्थः एवं जीवेन सह वसन्तमपि विशुद्धं प्रकृतिगतदोषैरस्पृष्टमनेनापहतपाप्मत्वमुक्तमविकारं जन्मजरामृत्युशोकमोहाशनायापिपासाविकाररहितमनेन हेयगुणराहित्यमुक्तं कल्याणगुणजातमाह । अखण्डबोधं नित्यासङ्कुचितज्ञानगुणकज्ञानस्वरूपमात्मन्यमाने । हृदये अवस्थितं प्रतीतं वा नमामि कर्मवश्यो जीव इव स्वयमशुचिर्देहे वसन्नपि तद्गतदोषैरस्पृष्टो यस्तं नमामीत्यर्थः । ननु भगवतोऽकर्मवश्यत्वे सत्यपि नानाविधाशुचिदेहसम्बन्धोऽपुरुषार्थ एव तन्नियमनार्थं स्वेच्छया तत्प्रवेशेऽप्यपुरुषार्थसम्बन्धोऽवर्जनीयः पूयशोणितादिमज्जनं हि स्वेच्छाकारितमप्यपुरुषार्थ एव अतो यद्यपि जगदेककारणं सर्वज्ञतादिकल्याणगुणाकरं च ब्रह्म तथापि "यः पृथिव्यां तिष्ठन् य आत्मनि तिष्ठन् यो रेतसि तिष्ठन्" इत्यादिवचनात्तत्र तत्रावस्थितस्यापुरुषार्थाः सन्त्येव मैवं निरस्तनिखिलदोषत्वस्य समस्तकल्याणगुणाकरत्वस्य चात्रैवोक्त्यापुरुषार्थप्रतिषेधात् जीवस्य तु तत्स्वरूपं कर्मणा तिरोहितमित्यपुरुषार्थसम्बन्धोऽवर्जनीयः जीवस्य कर्मवश्यत्वात्तत्कर्मानुगुण्येन तत्तद्वस्तुसम्बन्ध एवापुरुषार्थः परस्य तु ब्रह्मणः स्वाधीनस्य स एव सम्बन्धस्तद्विचित्रनियमनरूपलीलारसायैव स्यात् । ननु स्वेच्छया नियमनं कुर्वतोऽपि तत्तद्वस्तुस्वभावायत्तोऽपुरुषार्थसम्बन्धोऽवर्जनीयः मैवं नह्यचिद्वस्त्वपि स्वभावतोऽपुरुषार्थस्वरूपं कर्मवश्यानां तु कर्मस्वभावानुगुण्येन परमपुरुषसंकल्पादेकमेव वस्तुकालभेदेन पुरुषभेदेन च दुःखाय सुखाय च भवति वस्तुस्वरूपप्रयुक्ते तु ताद्रूप्ये सर्वं सर्वदा सर्वस्य सुखाय दुःखायैव वा स्यात् न चैवं दृश्यते । तथाचोक्तम्

नरकस्वर्गसंज्ञे वै पापपुण्ये द्विजोत्तम ! ।
वस्त्वेकमेव दुःखाय सुखायेर्ष्यागमाय च ।
कोपाय च यतस्तस्माद्वस्तुवस्त्वात्मकं कुतः ।
तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते ।
तदेव कोपाय यतः प्रसादाय च जायते ।
तस्माद्दुःखात्मकं नास्ति न च किञ्चित्सुखात्मकम् ।

इति तस्मात्कर्मवश्यत्वाकर्मवश्यत्वहेयार्हत्वहेयप्रतिभटत्वादिभिः जीवपरयोर्वैलक्षण्यमविहतमेव ॥ १३ ॥

एतदेव वैलक्षण्यं स्पष्टयन्नमस्करोति । य इति । पञ्चभूतरचिते पञ्चभिराकाशादिभूतैरारब्धे शरीरे यथाहं छन्नः आवृतः शरीरेणावृतः तथाच्छन्नोऽपि यो भगवान् रहितः शरीरसम्बन्धायत्तदोषैरस्पृष्टः तत्र हेतुः इन्द्रियगुणार्थचिदात्मकः इन्द्रियाणि ज्ञानकर्मभेदेन्द्रियाणि गुणार्थाः गुणपरिणामरूपाः शब्दादयः । यद्वा । गुणाः सत्त्वादयः अर्थाः शब्दादयः चिज्जीवः एते आत्मा शरीरं यस्य सः चिदचितोर्नियन्तृत्वेनावस्थितः नत्वहमिव कर्मसंकुचितस्वभावः प्रकृतिपारवश्येन नियाम्यतयावस्थित इत्यर्थः । यद्वा । इन्द्रियगुणार्थचिदात्मक इत्यहमित्यस्य विशेषणमिन्द्रियाणां गुणपरिणामरूपेषु शब्दादिष्वेव चिज्ज्ञानं यस्य विषयासक्तचित्तोऽहमित्यर्थः तेन शरीरेणाविकुण्ठमहिमानं नित्यासंकुचितज्ञानमेवम् ऋषिं सर्वज्ञं प्रकृतिपुरुषयोः परं विलक्षणं तन्नियन्तारं पुमांसं परमपुरुषं वन्दे संसृतिनिवृत्तिकामः शरणं व्रजामीत्यर्थः ॥ १४ ॥

कथं मच्छरणवरणेन संसृतिर्निवर्त्तिष्यत इत्यपेक्षायाम् "य एव बन्धकः स एव मोचक" इति न्यायेन त्वत्सङ्कल्पायत्तावेव बन्धमोचावित्याह । यन्मायेति । अयं जीवः यन्मायया यस्य भगवतः सङ्कल्परूपज्ञानेन उरूणि सत्त्वादिगुणनिमित्तकानि कर्माणि बन्धसाधनानि यस्मिन् सांसारिके संसारसम्बन्धिनि पथि प्रवृत्तिमार्गे चरन् तदभिश्रमेण तत्र सञ्चारक्रमेण नष्टस्मृतिः विनष्टजीवपरयाथात्म्यज्ञानः पुनर्महदनुग्रहमन्तरेण महतस्तस्य भगवतोऽनुग्रहं विना कया युक्त्या केनोपायेन पुनर्लोकं स्वलोकमाविर्भूतगुणाष्टकस्वस्वरूपं प्रवृणीत प्राप्नुयात् । यद्वा । लोकं स्वपरयाथात्म्यज्ञानस्वरूपं मुक्त्युपायं प्राप्नुयादित्यर्थः ॥ १५ ॥

भगवानेव ज्ञानप्रदानद्वारा संसृतेर्मोचकः न ब्रह्मादिष्वन्यतमो जीवः न हि स्वयं निगलितोऽन्यान्निगलितान्मोचयेदिति वदन्नाह । ज्ञानमिति । यदेतत्त्रैकालिकं त्रिष्वपि कालेष्वसंकुचितं जीवपरयाथात्म्यज्ञानं महदनुग्रहमन्तरेण कतमो जीवः व्यधाद्दध्यादित्यर्थः किन्तु स एव देवः ईश्वर एव नत्वन्यस्त्वत्तः प्रकृष्टो जीवो विदधातु नेत्याह । वयं ब्रह्मादयो वयं जीवानामात्मनां यानि कर्माणि संसृतिकराणि तेषां पदवीं परम्परामनुवर्त्तमानाः सर्वे वयं कर्मरूपाविद्यातिरोहितज्ञाना इत्यर्थः अतस्त्वद्व्यतिरेकेण कोऽपि न समर्थ इत्यर्थः अन्यस्यासम्भवमुक्त्वा तस्य सम्भवमाह । स्थिरचरेषु स्थावरजङ्गमेषु शरीरेष्वनुचरितैः अन्तरात्मतयांशभूतो जीवो येन सः जीवान्तरात्मतया वसन्निखासंकुचितज्ञानस्वरूपज्ञानगुणकस्तं भजेम ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

यो भूतेन्द्रियाशयमयीमाकाशादीनि पञ्चभूतानि श्रोत्रादीनि दशेन्द्रियाणि आशयो मनः एतदात्मना विकृतां मायां प्रकृतिमवलम्ब्य प्रवर्तकत्वेनाश्रित्य पुण्यपापलक्षणैः कर्मभिरावृतात्मा सक्तः कर्मबद्धो जीव इव अत्रास्मिञ्छरीरे आस्ते तुशब्देनास्यान्तर्वैलक्षण्यमनयोरस्तीति दर्शयति "तुच्छेनाभ्यपिहितम्" इति श्रुतेः वैलक्षण्यं स्पष्टमाह । विशुद्धमिति । अविकारमस्ति जायत इत्यादिविकारशून्यं तत्र हेतुगर्भविशेषणमाह। अखण्डेति। अखण्डबोधमपरिच्छिन्नज्ञानं मम तापत्रयेण तप्यमानहृदये निरस्ततापत्रयत्वेनावसितं निश्चितं हरिं नमामीत्यन्वयः "सत्यं ज्ञानमनन्तं ब्रह्म य आत्मनि तिष्ठन्" इत्यादिश्रुतिः ॥ १३ ॥

एतदेव विवृणोति । यः पञ्चेति । आत्मक आत्माभास इन्द्रियाणि चक्षुरादीन्द्रियाणि गुणान् सत्त्वादीनर्थाञ्छब्दादीनुपभोग्यतया वेत्ति मन्यत इति इन्द्रियगुणार्थविदहं यथा पञ्चभूतरचिते शरीरे छन्नो वसामि तथायमिन्द्रियगुणार्थतत्त्वज्ञो विष्णुः शरीरे छन्नोऽवहितोऽसङ्गत्वेन स्थितः तेन हरिणा प्रेरितोऽहं तमविकुण्ठमहिमानमृषिं सर्वज्ञं प्रकृतिपुरुषयोः श्रीब्रह्मणोः परमेनं पुमांसं वन्द इत्यन्वयः स्वप्रत्यक्षविषयत्वादेनमित्युक्तं "त्वमग्ने ! प्रथमो अङ्गिरा ऋषिः । अक्षरमस्वरान्तधृनेः" इत्याद्यत्र मानम् ॥ १४ ॥

तत्प्रेरणयैव तद्वन्दनामति कटाक्षितमिति स्पष्टयति । यन्माययेति । यस्य हरेर्माययेच्छयाधीनया प्रकृत्योरुभिर्महद्भिः सत्त्वादिगुणैः कर्मभिश्च नितरां बन्धनं यस्मिन् स तथा तस्मिन् संसाराभिधाने पथि चरन्नयं लोकः पुनस्तदतिश्रमेण तापत्रयातपतापेन नष्टस्मृतिर्नष्टज्ञानो महतो हरेरनुग्रहं प्रेरणालक्षणमन्तरेण विना कया युक्त्या तं हरिं प्रवृणीत मम स्वामीति शरणं गच्छेदित्यन्वयः ॥ १५ ॥

अतस्तदनुग्रहेणैव तज्ज्ञानमित्याह । ज्ञानमिति । यः कतमः सुखतमः सः भूमा देवस्त्रैकालिकमतीतजन्मादिविषयमेतज्ज्ञानं मेऽदधादिति यद्यस्मादतः श्रेष्ठत्वाद्वयं तं त्वां तापत्रयोपशमनाय भजेमेत्यन्वयः न केवलं मय्येव स्थितोऽन्यत्राप्येवमिति भावेनोक्तम् । स्थिरचरेष्विति । अनुवर्तिता अन्तर्यामित्वेनानुगता अंशा अनन्तानि रूपाणि यस्य स तथा अनुमतजीवत्वलक्षणस्य ममानेन सहाभेदो नास्तीति भावेनोक्तम् जीवेति जीवानां कर्मपद्वीं संसारमार्गमनुवर्त्तमानाः ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

आतप्यमाने स्वहृदये स्थितस्याप्यस्फुरतस्तस्य तामेवाकस्मिकीं स्फूर्त्तिं दर्शयति । यस्त्विति । अत्र मद्विधजीवशरीरे तत्सहस्थायित्वात् । तत्कर्म्मभिर्बद्ध इव तस्मिन् मत्स्फूर्त्तेस्तैरावृतात्मेव च यस्त्वास्ते नत्वहमिव निरुद्ध एवेति तुशब्दस्यार्थः । किं कृत्वा । मायामवलम्ब्य प्रवर्त्य । अतो मायाप्रवर्त्तके तस्मिन्न कर्म्मबन्धादिकम् । किन्त्वविवेकिनां प्रतीतिदोष एव स इति भावः वस्तुतस्तु विशुद्धमित्यादि ।अवसितमनुभूतम् । यद्वा । अत्रेति भवतीत्यर्थः । अवतारसमये तथा तथानुकरणात् । तदुक्तम् । कृष्णमेनमवेहीत्यादि ॥ १३ ॥

तदेवं बन्धाबन्धादिकं योजयति । य इति । शरीरे यथाहं छन्नस्तथान्तर्यामितया तत्प्रवेशात् यस्तत्र छन्नोऽपि रहितस्तत्स्पर्शशून्यः । तत्र स्वस्य तत्स्पर्शे हेतुरिन्द्रियेति । तस्य तु तदस्पर्शेन विशेषमाह । तेनेति । शरीरेन्द्रियादिस्पर्शशून्यत्वेनाविकुण्ठेत्यादि । यतः प्रकृतिपुरुषयोः परमाविद्यास्पर्शास्पर्शयोग्यस्वरूपवैलक्षण्यादावयोरिति भावः । यद्वा । य इन्द्रियगुणार्थचिदात्मको लिङ्गशरीराध्यस्तचिद्रूपो यथा येन निजेश्वराज्ञानादिप्रकारेण पञ्चभूतरचिते शरीरे च्छन्नस्तेन चावृतस्तथा तेनैव प्रकारेण सोऽहं तेन पूर्वोक्तेन निजेश्वरेण रहितस्तस्माद्विमुखतां प्राप्तस्तमेनमकस्मान्मनस्याविर्भवन्तं वन्दे महाकरुणामयतया स्तौमि तत्र तस्य महिमकीर्त्तने स्वायोग्यतां दर्शयति । अविकुण्ठेत्यादिना । ऋषिं ब्रह्मादीनामपि गुरुं प्रकृतेस्तद्द्रष्टुर्महापुरुषस्य च परं परमतत्त्वं तं नराकारं श्रीकृष्णाख्यं स्वयम्भगवन्तमित्यर्थः ॥ १४ ॥

नन्वितो निःसृत्य भजनं कुरु इत्याशङ्क्य तस्य दुर्लभतामाह । यदिति । यस्य माययेत्यादि तं लोकं स्वाश्रयं त्वां पुनस्तत्प्राप्तिकारणं महदनुग्रह एव तावद्दुर्लभ इति भावः ॥ १५ ॥

तस्मात् प्राचीनमहदनुग्रहादरेण प्रकटितात्मज्ञानं तमेवाविस्मृतये स्मरति प्रपन्ना इत्याह । ज्ञानमिति । बहुत्वं स्वसाधारणजीवान्तरसद्भावनया त्रैकालिकं नित्यरूपं तम् ॥ १६ ॥ १७ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

जीवब्रह्मणोः पूर्वोक्तसिद्ध्यर्थं रूपभेदमाह । यस्त्वत्रेति । अत्रैव शरीरे यः शकुन्त इव बद्धः प्रतिभासते स जीवः तस्य बन्धे हेतुः कर्मभिरावृतात्मेति कर्मभिरपि सम्बन्धे हेतुः । भूतेन्द्रियाशयमयीमवलम्ब्य मायामिति । भूतानि देहः इन्द्रियाण्यन्तःकरणञ्च आत्मानं व्यामोहयितुमेतद्रूपा माया जाता अतस्तामवलम्ब्य आत्मत्वेनाधारत्वेन वा य आस्ते स बद्ध इव जीवः यस्तु तथाविधां मायां नावलम्ब्यास्ते स विशुद्धः अनेनादेहरूपता निरूपिता निवृत्त्यर्थमाह । अविकारमिति । सर्वे विकारा इन्द्रियजन्याः । अखण्डबोधमिति । अन्तःकरणरूपताव्यावृत्त्यर्थमेवम्भूतोऽपि सन् अस्मत्कृपया स्वस्य सखित्वप्रतिपादनार्थमासमन्तात्तप्यमाने हृदये अवसितं प्रतीतम् अत एव नमामि अतो भगवतो दोषाभावा गुणाश्चोक्ता जीवस्य दोषा उक्ताः तन्निवृत्त्यर्थञ्च नमनमिति निरूपितम् ॥ १३ ॥

ननु किं नमनेन ज्ञानेन हि माया निवर्तिष्यते ततः कर्मबन्धाभावे देहसम्बन्धाभावः ततो मुक्तो भविष्यतीति मुक्त्यर्थं भगवन्नमनं न कर्तव्यमित्याशङ्क्याह । यः पञ्चभूतरचित इति । अयं देहः पञ्चभूतै रचितः तानि च भूतानि भगवन्नियमितानि भगवदधीनान्येव "अजनि च यन्मयं तदविमुच्य नियन्तृ भवेत्" इति वाक्यात् तादृशे अन्याधीने शरीरे यो रहितः तं तादृश एव शरीरे यश्छन्नः यथावदिन्द्रियगुणार्थचिदात्मकः सोऽहं वन्द इति सम्बन्धः शरीरस्याच्छादकत्वं तदैव भवति यदि पूर्वं चिद्रूपोऽपि अन्यत्र सम्बद्धो भवति यथा दर्पणगतः सूर्यः स्नाप्यते प्रतिमागतो वा विष्णुः गन्धादिभिः पूज्यत इति तदर्थं प्रथमतः देहसम्बन्धात्पूर्वमिन्द्रियादिसम्बन्धो निरूप्यते । यथेति दृष्टान्तेन वा शरीराच्छादनं स्थाप्यते यथायमिन्द्रियाणि गुणाः

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

अन्तःकरणरूपा अर्थः आधिभौतिकः त्रितये प्रकाशार्थं यः चिद्रूपेण प्रविष्टः स चतुष्टयात्मा भवति आध्यात्मिकादिरूपः त्रितयवेदनरूपश्च यथायमिन्द्रियादिसम्बद्धः तथात्मसम्बद्धोऽपीत्यर्थः अतः एकस्मिन्नत्र शरीरे विद्यमानयोरेको रहितो भवति एकश्च छन्नो भवति तेन कारणेनाविकुण्ठमहिमानं जीवस्यालौकिकोपकारकरणसमर्थम् ऋषिमेनं पूर्वोपकारिणं पूर्वस्मिन्बाधकनिवृत्त्यर्थं प्रकृतिपुरुषयोः परं नियन्तारं निराकारपक्षव्यावृत्त्यर्थं पुमांसं वन्द इति स्वस्य हीनतां निरूप्य पूर्वोक्तमेव अनुवादेनोक्तम् ॥ १४ ॥

एवं शरणागतिर्नमनादिकञ्च भगवद्भक्तकृपयैव भवतीत्याश्चर्यज्ञानेन स्मृत्वा भक्तसङ्गमेव प्रार्थयितुं तदनुग्रहं स्तौति यन्मायचेति। स्वसामर्थ्ये गते शास्त्रतोऽप्यचिकित्स्ये अलौकिकद्वारा भगवद्भक्ता एव तं भगवत्परं कर्तुं शक्नुवन्तीति युक्तमन्यथा स्वतः सामर्थ्ये एवं दुर्दशा न स्यात् प्रतीकारो हि ज्ञानक्रिययोः सद्भावे भवति तत्र ज्ञानाभावः नष्टस्मृतिरिति श्रमप्रतिपादनात् क्रियाशक्त्यभावश्च श्रमस्य नित्यमुत्पत्त्यर्थं यस्य भगवतो मायया मोहनेन कारणभूतया उरूणि यानि कर्माणि तैर्नितरां बन्धनं यत्र एतादृशेऽस्मिन् सांसारिके मार्गे निरन्तरं चरन्निति मुक्तोऽपि निरन्तरं चरन् श्रान्तो भवति किमुत बद्धः सोऽपि बन्धः कर्मकृतः स्वतोऽपि मोचयितुमशक्यः कर्माण्यपि न प्रायश्चित्तादिना निवर्तयितुं शक्यानि यतो भगवन्माययैव जायन्ते गुणाश्च स्वभावभूताः चित्तं तत्परमेव कुर्वन्ति अस्मिन्निरन्तरं परिदृश्यमानत्वेन निवृत्तिर्दुर्घटा सूचिता पर्थानि अनिवृत्तिः सूचिता कया युक्त्येति लौकिक उपायो न सङ्गच्छत इत्युक्तम् ॥ १५ ॥

नन्वेवं भक्तकृपैव कथं भवतीत्याशङ्क्याह। ज्ञानं यदेतदिति। यदेतदस्माकं जातं त्रैकालिकवस्तुविषयज्ञानं तद्भगवतैव दत्तमन्यथा यो हृदयस्थितो न भवति स कथं हृदये ज्ञानं ददाति अयं च स्थिरचरेष्वनुवर्तितः स्वांशो यस्य येनेति वा अयं हि स्वांशं जीवमनुवर्तते अन्तर्यामिरूपो वा अंशः सर्वत्र वर्तत इति अयमेव ज्ञानमदधात्। ननु सर्वेन्द्रियादावधिष्ठातारो देवाः सन्ति न ते ज्ञानं प्रयच्छन्ति अयं च सर्वेषु वर्तत इति। तथापि मह्यमेव दत्तवान् अतोऽयं कतमो देवः अत्यन्तं कः परब्रह्मरूपः अल्पदेवानां न कृत्यं कतम इत्यनेन विशेषतो वक्तुमप्यशक्य इत्युक्तम् अत एवैतादृशमुपकारिणं जीवानां कर्मपदवीं संसारमार्गमनुवर्तमाना वयं सर्वे तापत्रयोपशमनाय भजेम। ये केचन जीवभावं प्राप्ताः तेषां दास्यं परमो धर्मः देहभावं परित्यज्य ब्रह्मभावात्पूर्वं जीवभाव एव प्रथमप्रवृत्तत्वात् तापत्रयोपशमनायेत्युक्तं वयमिति बहुवचनं स्वसमानशीलानां सर्वेषां विज्ञापनार्थं भजनेनैव भगवान् कृपयतीति ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

तस्य स्वप्रभोरद्भुतां लीलां कृपालुताञ्च स्मरन् साश्चर्यमाह। यः खल्वत्रास्मद्विधदुर्जीवानां नानादुःखमयप्रतिशरीर एवास्ते किमस्मान् पालयितुं किम्वा स्वैरलीलत्वेनेति न विद्म इति भावः। तमहं नमामीत्यन्वयः। अहं स्वदुष्कृतफलं भुञ्जानः कर्मबद्धो यदत्रास्मि तदुचितमेव स कथमत्र दुर्गन्धे महानरके अन्तर्यामित्वेनापि तिष्ठतीत्याह। कर्मभिर्बद्धः इव न तु बद्धः वृन्दावनभुवि चलच्चरणारविन्दत्वादावृतात्मा अहं यथा तथैव देहेनावृतस्वरूप इव नत्वावृतः उक्तयुक्तेरेव किं कृत्वा भूतादिमयीं मायां स्वशक्तिमवलम्ब्य प्रवर्त्य। नन्वेवं तर्हि तस्मिन् मायावलम्बनान्मालिन्यं विकारश्च प्रसज्येतेत्यत आह। विशुद्धं निर्विकारञ्च तत्र हेतुः अखण्डबोधं मज्ज्ञानमिव यस्य ज्ञानं मायया खण्डयितुमशक्यमित्यर्थः। ननु कथमिदमवगतं त्वयेत्यत आह। आसमन्तात्तप्यमानेऽत्र हृदये मया अवसितं प्रतीतम्। सन्तप्तेति। मदीयहृदये स्थित्वा येन मह्यमप्यैवं ज्ञानं दत्तं तस्य ज्ञानं कथं खण्डितं भवेदिति ॥ १३ ॥

नन्वेवञ्चेत् स कथमत्र शरीरे तिष्ठंस्तत्राह। यः शरीरेऽत्र रहितः इन्द्रियाणि गुणाश्च अर्थाश्च तेष्वेव चिच्चैतन्यं यस्य तथाभूत आत्मा स्वरूपं यस्य सोऽहं यथात्र शरीरे छन्न एव तथा योऽत्र रहितः स्थितोऽप्यस्थित एवेत्यर्थः तेन हेतुना न विशेषेण कुण्ठो महिमा यस्य तं तेनावगुण्ठेति पाठे भागुरिमतेऽकारलोपेनात्र समासेऽवगुण्ठमहिमानमनावृतैश्वर्यम्। प्रकृतेस्तद्द्रष्टुर्महापुरुषस्य च परं ताभ्यां परतत्त्वं पुमांसं श्रीकृष्णम् ॥ १४ ॥

नन्वीदृशी भक्तिस्त्वया कथं प्राप्तेति तत्र भक्तेः प्राप्तिकारणं महदनुग्रह एवेत्याह। यदिति। तदतिश्रमेण तत्पथपर्यटनश्रमेण हेतुना नष्टस्मृतिरयं मल्लक्षणो जनः महदनुग्रहं विना कया युक्त्या लोके भगवतो धाम प्रवृणीत स्वाभीप्सितपरत्वेन वृणुयात्। अपि तु न कयापीत्यतः पूर्वजन्मनि कृष्णभक्तस्य कस्यचिन्मद्गुरोः प्रसादविलसितमेवैतन्मे कृष्णभजनमिति भावः ॥ १५ ॥

ननु तं परमेश्वरं केन प्रमाणेन ज्ञात्वा भजसीति तत्रानुमानेनैवेत्याह। ज्ञानं यदेतन्मय्यधमेऽपि अदधात् धारयामास अर्पयतिस्मेत्यर्थः। स कतमो देवो भवेत्। देवेषु मध्ये कश्चिन्मुख्यो भवेदिति मज्ज्ञानान्यथानुपपत्त्यैवानुमीयमानं त्रैकालिकं भूतभविष्यद्वर्त्तमानकालेषु विराजमानं स्थिरचरेष्वनुवर्त्तितोऽन्तर्यामिरूपोऽंशो येन तम्। जीवसम्बन्धिनीं कर्मपदवीम् ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अचेतनरूपायां भगवच्छक्तिभूतायां मायायां तन्मोहितश्चेतनो भगवदात्मकोऽपि स्वकर्मभिर्बद्धः विस्मृतात्मानात्मपरमात्मस्वरूपः चेतनाचेतनविलक्षणस्वरूपस्य कृपां विना विमुक्तो भवितुं नार्हतीति त्रिभिर्वदन् भगवन्तं प्रणमति। अहं तं प्रणमामि कस्सः यो बद्ध इव यथा प्रसिद्धः पापकर्मा नृपत्यादिभिर्बद्धो भवति तद्वत् निजकर्मभिर्बद्धः यत आवृतात्मा माययेति शेषः भूतादिमयीं मायामवलम्ब्य इयं सुखदेत्येवमाश्रित्य अत्र मायामये आतप्यमाने हृदये आस्ते सः कथम्भूतं ज्ञानप्रदत्वेनावसितं निश्चितं विशुद्धमविकारमखण्डबोधं च ॥ १३ ॥

अहं तमेनं पुमांसं वन्दे कस्त्वं यस्तेन शरीरेण रहितः पृथग्भूतोऽपि यथा यथावदेव शरीरे छन्नः शरीरेण रहितत्वे छन्नत्वे च एकेनैव विशेषणेन हेतुमाह। इन्द्रियगुणाः शब्दादयः एव अर्थाः इष्टाः तेषु वार्थः प्रयोजनं यस्य सः चिद्ब्रह्म

देह्यन्यदेहविवरे जठराग्निनासृग्विण्मूत्रकूपपतितो भृशतप्तदेहः।
इच्छन्नितो विवसितुं गणयन् स्वमासान्निर्वास्यते कृपणधीर्भगवन्! कदा नु ॥ १७ ॥
येनेदृशीं गतिमसौ दशमास्य ईश! संग्राहितः पुरुदयेन भवादृशेन।
स्वेनैव तुष्यतु कृतेन स दीननाथः को नाम तत्प्रति विनाञ्जलिमस्य कुर्यात् ॥ १८ ॥
पश्यत्ययं धिषणया ननु सप्तवध्रिः शारीरके दमशरीर्यपरः स्वदेहे।
यत्सृष्टया स तमहं पुरुषं पुराणं पश्ये बहिर्हृदि च चैत्यमिव प्रतीतम् ॥ १९ ॥
सोऽहं वसन्नपि विभो! बहुदुःखवासं गर्भान्न निर्जिगमिषे बहिरन्धकूपे।
यत्रोपयातमुपसर्पति देवमाया मिथ्यामतिर्यदनु संसृतिचक्रमेतत् ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

आत्मा अंशिरेवनाथयो यस्यांशभूतस्य स चिदात्मकः स चासौ स च ब्रह्मांशत्वेन शरीरभिन्न एव जीवः इन्द्रियगुणालुब्धत्वेन शरीरावृत इत्यर्थः कथम्भूतं प्रकृतिपुरुषयोः परमकुण्ठमहिमानमूर्ति सर्वधर्मप्रवर्तकञ्च॥ १४ ॥

यत् यस्य मायया नष्टस्मृतिः लुप्तविवेकः सन् अयं जीवः उरूणि गुणनिमित्तानि कर्माणि नितरां बन्धनानि यस्मिंस्तस्मिन् सांसारिके पथि तदभिश्रमेण तत्कृतेन क्लेशेन चरन् महतस्तस्यैवानुग्रहं विना पुनः कया युक्त्या लोकं वृणीत विमुक्तबन्धनः सन् परमात्मपदं प्राप्नुयादित्यर्थः॥ १५ ॥

स एव मम लुप्तात्मपरमात्मविवेकस्य विवेकदातेत्याह। एकः त्रैकालिकं ज्ञानं कतमः मयि अद्धयात् न कतमोऽपि किन्तु यद एव प्रकृतिपुरुषयोः परः तं स्थिरचरेष्वनुवर्तितांश चेतनाचेतनेषु अनुवर्तितः अंशो येन तम्।

अथ वा बहुनैतेन किं ज्ञानेन तवार्जुन!।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥

इति श्रीमुखवचनात् जीवानामस्माकं यानि कर्माणि तेषां पदवीं फलभूतां संसृतिमनुवर्त्तमानाः वयं भजेम॥ १६ ॥

———

भाषाटीका।

जो भगवान् देह इंद्रिय अंतःकरण रूपी माया को अवलंबन करके उन के कर्मों से संयुक्त होकर बंधे सरी के प्रतीत होकर भी विशुद्ध अविकार अखंड ज्ञान वाले हैं तपायमान मेरे हृदय में भी प्रकाशमान हैं तिनको मै नमस्कार करता हूं॥ १३ ॥

जो भगवान् पंचभूत रचित देह मे रह करभी उससे पृथक् हैं इंद्रिय गुण विषय चिदाभास अहं प्रतीत से प्रकाशमान होने पर भी उस शरीरादिक से ज्ञान रहित न होकर रहनेवाले दिव्य महिमा वाले प्रकृति पुरुष दोनों से परे स्थित परम पुरुष तिनको मैं वंदना करता हूं॥ १४ ॥

उन भगवान् की माया से बहुत गुण कर्म रूप बंधनों से युक्त इस संसार मार्ग मे घूमता हुआ यह जीव उसी संसार के परिश्रम से स्मरण के नष्ट होने से दुखित है तब महत्पुरुषों के अनुग्रह के बिना किस युक्ति से अपने स्वरूप ज्ञान को या वैकुंठलोक को प्राप्त हो सकता है॥ १५ ॥

यह मेरे को जो इस समय मे तीनों कालों का ज्ञान है सो वही किसी परमात्मा का दिया है जिसका कि एक अंतर्यामी रूप सब स्थावर जंगम जीवों में वर्तमान है तब जीव कर्म पदवी में वर्तमान हम लोग तीनो तापों के नाश होने के वास्ते उसी देव का भजन करेंगे॥ १६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका।

स्वदुःखं विज्ञापयन्नाह। देहीति। अन्यदेहविवरे मातुरुदरकुहरे योऽसृग्विण्मूत्रकूपस्तस्मिन् पतितस्तत्र जठराग्निना भृशं तप्तो देही यस्मात एव कृपणधीरितो विवराद्विवसितुं निर्गन्तुमिच्छन् स्वमासान् गणयन्नसौ कदा नु अहो बहिर्निर्वास्यते॥ १७ ॥

तत्कृतमुपकारं स्मरन्नाह। येनेदृशीं गतिं ज्ञानं भवादृशेनेति निरुपमेनेत्यर्थः स्वकृतेनैव स्वयं तुष्यतु अञ्जलिमात्रं विना तत्कृतोपकारे प्रत्युपकारं कः कुर्यादित्यर्थः॥ १८ ॥

ईदृशीं गतिमित्यनेन जात्यन्तरविलक्षणं ज्ञानं प्रापितवानित्युक्तं तदेव वैलक्षण्यमाह। पश्यतीति। अयमपरः पश्वादिः सप्तवध्रिर्जीवः स्वदेहे शारीरके शरीरभवे सुखदुःखे केवलम् ननु पश्यति अहं पुनर्यत्सृष्टया धिषणया यद्दत्तेन विवेकज्ञानेन दमशरीरी दम इत्युपलक्षणं शमदमादियुक्तशरीरवानासमभवं तमेव च पुराणमनादिं पुरुषं पूर्णं बहिश्च हृदि च पश्ये पश्यामीत्यन्वयः। कथमपरोक्षतया प्रतीतं चैत्यमिव अहङ्कारास्पदं भोक्तारमिवेत्यर्थः॥ १९ ॥

विवेकज्ञानकृतं संसारोद्वेगमनुवदन्मोक्षमार्गमेवाध्यवस्यति। सोऽहमिति द्वाभ्याम्। हे विभो! बहुदुःखवासं यथा भवति तथा गर्भे वसन्नपि सोऽहं गर्भाद्बहिर्न निर्गन्तुमिच्छामि। तत्र हेतुः। अन्धकूपप्राये यत्र बहिरुपयातं गतं प्राणिनं देवस्य तव माया उपसर्पति व्याप्नोति यदनु यां मायामनु मिथ्यामतिर्देहेऽहंबुद्धिः संसृतिचक्रञ्च कलत्रपुत्रादिसम्बन्धादुपसर्पति॥ २० ॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी।

तत्रोदरकुहरे इत उदरकुहरात् ॥ १७ ॥

तत्कृतमीश्वरकृतं ज्ञानं भक्त्यनुकूलं न तु शुष्कं "श्रेयःसृतिं भक्तिमुदस्य" इत्यादिना तस्य मोचकत्वासम्भावात् स्वकृतेनैव ज्ञानग्रहणोपकारेण अस्य अनेनेश्वरेण कृतं तत्तमुपकारं कः प्रतिकुर्यादिति योज्यम्। "छन्दांसि व्यवहिताश्च" इत्यनुशासनादत एव तत्कृतोपकारे इत्याद्यार्थिकोऽर्थः ॥ १८ ॥

सप्तवध्रयस्त्वगाद्यावरणानि यस्य बहिश्च सत्तारूपेण अन्तश्चान्तर्यामिरूपेण यथाहङ्कारास्पदभोक्ताहमिति प्रत्यक्षसिद्धस्तथान्तर्यम्यपि "कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत्" इति वाक्यानुभवबलात्प्रत्यक्षसिद्धः किन्तु पूर्वत्र मानसप्रत्यक्षता उत्तरत्र ज्ञानलक्षणा प्रत्यासत्तिरिति ज्ञेयम् ॥ १९ ॥

विवेको देहादात्मनः पृथक्त्वं तदज्ञानेन कृतं संसारोद्वेगं विवेकज्ञाने सति उद्वेगनिवृत्तेः विवेकज्ञानकृतमिति लेखकभ्रमः आत्मानात्मविवेके सति देहनाशे आत्माभिमाननिवृत्तेः संसारोद्वेगस्य तत्कार्यत्वाभावात् प्रत्युत तद्विनाशत्वात्तत्र बहिर्निर्गमनेच्छाभावे ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवं जीवान्तरात्मतयावस्थितस्य सर्वज्ञस्य भगवतो ज्ञानप्रदानद्वारा मोचकत्वात्तस्यैव भजनीयत्वं नत्वन्येषामित्युक्तम् अथ विज्ञापयन्नाह। देहीति। हे भगवन्! अन्यदेहविवरे मातुरुदरकुहरे यः असृग्विण्मूत्ररूपः कूपस्तस्मिन् पतितस्तत्र जठराग्निना भृशं तप्तो देहो यस्य सः अत एव कृपया धीर्यस्य सः इतो विवराद्गर्भाद्विवसितुं निर्गन्तुमिच्छन् स्वमासान् गणयन्नसौ देही जीवः कदा नु बहिर्निर्वास्यते निर्गमिष्यति ॥ १७ ॥

एवं स्वदैन्यमावेद्य ज्ञानप्रदानरूपं भगवत्कृतं महोपकारं स्मरंस्तस्याप्रत्युपकार्यतामाह। येनेति। हे ईश! भवादृशेन त्वत्समेन निरुपमेनेत्यर्थः पुरुदयेन निरतिशयदयावता येन त्वया दशमास्यः दशमासपरिमितोऽसौ जीवः ईदृशीं गतिं विवेकं सम्यग्ग्राहितः स दीननाथो भगवान् स्वेनैव कृतेन स्वकल्पितेनैवोपकारेण तुष्यतु स्वयमेव तुष्यतु अञ्जलिं विना को नाम पुमान् तत्प्रति कुर्यात्तत्कृतोपकारं प्रत्युपकारं कुर्यादित्यर्थः ॥ १८ ॥

एवं भगवत एव विवेकादिसम्पत्तिस्तस्य महोपकर्तृत्वं चोक्तं इमामेव भगवतो विवेकादिसम्पत्तिं विवेकिजननिदर्शनेन स्वस्मिन्नपि प्रार्थयते। पश्यतीति। शारीरके शारीरः परमपुरुषः तत्सन्निधाने परमपुरुषाधिष्ठिते ब्रह्मपुरे इति यावत्तस्मिन् स्वदेहे स्वस्य जीवस्य देहे जीवकर्मायत्त इत्यर्थः अपरः शरीराद्भिन्नः सप्तवध्रिः सप्तत्वग्वेष्टितदेहधारी अयं दमशरीरी शमदमादियुक्तो जीवः योगीति यावत् यत्सृष्टया यस्मिन् कृतया येनेश्वरेण दत्तया धिषणया उपासनात्मिकया बुद्ध्या यत ईश्वराद्धेतोः सृष्टया कल्पितयेति वा अनेन निरन्तरायमुपासनानिर्वृत्तिरपि परमपुरुषप्रसादादेवेत्युक्तं यं पश्यति साक्षात्करोति तं चैवं योगपरिशुद्धचित्तग्राह्यं पुराणं पुरुषं स इव दमशरीरीव अहमपि बहिर्हृदि च प्रतीतं प्रतीतिविषयं यत्सृष्टया धिषणया पश्यामि साक्षात्करोमीत्यर्थः ॥ १९ ॥

किं विशेषेण मदुपासनातो मत्साक्षात्कारं प्रार्थयसे यथा पूर्वं गर्भान्निर्गत्य प्रवृत्तिधर्मे नेच्छसीत्यत्र गर्भाश्रिगतस्य स्वस्यानर्थं स्वाभिप्रेतं च निवेदयन्नुपसंहरति। सोऽहमिति द्वाभ्याम्। हे विभो! बहूनां दुःखानां वासो यत्र तस्मिन् बहुदुःखास्पदं गर्भं प्रतिवसन्नपि सोऽहं गर्भाद्बहिर्निर्जिगमिषे निर्गन्तुं नेच्छामि कुतः यत्र गर्भाद्बहिरन्धकूपेऽन्धकूपवत् स्वपरयाथात्म्यज्ञानतिरोधायके गार्हस्थ्यधर्मे उपयातमुपगतं देवस्य भगवतः सम्बन्धिनी माया "दैवी ह्येषा गुणमयी" इत्युक्तविधा देहात्माभिमानस्वतन्त्रात्माभिमानकारिणी माया उपसर्पति यदनु यस्या मायाया अनु पश्चान्मिथ्यामतिः देहात्माभिमानादिरूपमिथ्याभिमानस्तत्प्रयुक्तसुखदुःखानुभवः पुनर्गर्भवासादिरित्येतदेवंभूतं संसृतिचक्रं चक्रवत्परिवर्त्तमानं संसरणमुपयाति ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

इदानीमात्मनो गर्भाद्राशु निर्गमनाभिप्रायं विज्ञापयति। देहीति। अन्यदेहविवरे मातृदेहोदरे वर्तमानोऽसृग्विण्मूत्रपूर्णकूपे पतितो मातुर्जठराग्निना भृशतप्तदेहः इतो देहाद्विवसितुं निर्गन्तुमिच्छन् स्वमासान् कल्पतीताः कल्पवशिष्टा इति स्वविषयान्मासान् गणयन् कृपणधीर्देह्ययं भवता कदा नु निर्वास्यते निष्कास्यत इत्यन्वयः ॥ १७ ॥

यतः ईदृशमप्रतिक्रियं ज्ञानं मह्यं येन दत्तमतोऽसौ सर्वस्मात्प्रियानित्याशयेनाह। येनेति। हे ईश! असौ दशमास्योऽहं येन भवादृशेन पुरुवेषोद्दर्शी भगवद्विषयां गतिं संग्राहितः स दीननाथो भगवान् स्वेनैव कृतेन तुष्यतु "न ऋते त्वत्क्रियत" इत्यादिमन्त्रवर्णोऽत्र मानं को नाम तत्प्रति तस्य हरेः कृतस्य प्रतिनिधिं प्रत्युपकारमस्य हरेरञ्जलिं विना कुर्यात् न कोऽपि कर्तुं समर्थ इत्यर्थः करोति चेद्भवादृश एव न त्वितर इत्यतो भवादृशेनेत्युक्तम् ॥ १८ ॥

भगवदनुगृहीतज्ञानफलमाह। पश्यत्ययमिति। सप्तवध्रयो ज्ञानेन्द्रियाणि यस्य स तथोक्तोऽयं जीवोऽस्य हरेरधीने देहे शारीराणां जीवानां भेदमुपलक्षणमेतज्जडादीनामपि यत्सृष्टया येन हरिणानुगृहीतया धिषणया मत्या ज्ञानेन पश्यति "श्रुतं मे अश्विन हवं सप्तवध्रिश्च मुञ्चन्तम्" इति श्रुतिः अत्राधिकदृष्टान्तमाह। अशरीरवदिति। अशरीरः परमात्मा "अशरीरश्च" इति श्रुतेः यथा पञ्चविधं भेदं पश्यति तथेति अनेन ज्ञानस्य नैर्मल्यं सूचितं नन्वित्यनेनोक्तार्थावधृतिं प्रमाणानुमतिं वा दर्शयति। सोऽहं तं पुराणं पुरुषं चैत्यं चित्ताभिमानिनं चतुर्मुखमिव हृदि बहिश्च प्रतीतं विज्ञातं पश्ये संपश्य इत्यन्वयः एतादृशं ज्ञानं देवानामेव योग्यं न त्वितरेषां बहुजन्मसाध्यं तदुक्तम् "तत्त्वज्ञानं तु देवानां गर्भस्थानां भविष्यति" इति॥ १९ ॥

न केवलमेतज्ज्ञानं वर्तमानविषयं किन्त्वेष्यद्विषयमपीति भावेनाह। सोऽहमिति। भो विभो! बहुदुःखवासं वसन्ननुभवन्नपि सोऽहं गर्भाद्बहिर्विषयं न निर्जिगमिषे निर्गन्तुं नेच्छामि किं कारणमत्राह। यत्रेति। यत्र बहिरन्धकूपेऽज्ञानलक्षणगर्ते उपयातं पतितं मां देवस्य मायया प्रकृत्या निर्मिता मिथ्यामतिर्देहेऽहंममेत्यादिलक्ष-

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गोपमर्पति व्याप्नोति ततश्च किमत्राह । यदन्विति । यदनु यस्याः मिथ्यामतेरुत्पत्त्यनन्तरमेतत्संसृतिचक्रं जननमरणादिलक्षणं संसारमण्डलं भवत्यत इत्यर्थः ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ईदृशीं त्वद्भक्तिलक्षणां गतिमवस्थाम् । भवतेत्यध्याहारात् भवत्तत्वेन भवतेति निरुपमत्वं व्याञ्जतम् । स्वकृतेनैव स्वयं तुष्यत्विति दुर्गतनमोऽयं यदि सकृन्मयानुगृहीतस्तर्हि कथं त्यजतेति विचार्य्येत्यर्थः ॥ १८ ॥

ईदृशीं गतिमित्यनेन मनुष्यजातावपि अन्यविलक्षणां ज्ञानं प्रापितवानित्युक्तं तदेव वैलक्षण्यं स्पष्टयति । पश्यतीति । अयं मनुष्यजातिमापन्नः सप्तवध्रिर्गर्भगतो जीवः सर्व एव तत्रोत्पन्नया धिषणया अनेकजन्मगतशरीरभवे सुखदुःखे केवले पश्यति । तेष्वपरस्तु कश्चिद्भाग्यवान् दमशरीरी तदुपलक्षितयोगयुक्तशरीरवानपि भवति । अहं पुनः स तत्तज्जीववर्गान्निर्विशेषोऽपि यद्दत्तया धिषणया तमपि पश्यामि । तत्र निरुक्तञ्च दर्शितम् । "मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृत" इत्यादि तद्भावनावाक्यानन्तरम् । "साङ्ख्यं योगं समभ्यस्येत् पुरुषं वा पञ्चविंशकम्" इति । अत्र टीकाकृद्भिरपि अहं पुनरित्यनेन मनुष्यजातिष्वप्येवायं विलक्षणतया सम्मतः ॥ १९ ॥ २० ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एवं भजनमुक्त्वा विज्ञापनमाह । देहीति । अयं स्वलक्षणो देही अन्यस्य मातृलक्षणस्य देहविवरे उदरे जठराग्निना भृशं तप्तदेहः असृग्विण्मूत्रपूर्णो पतितः त्रिविधदुःखभोक्ता माता मूलस्थानीया अग्निर्दैविकः अतस्त्रिविधदुःखपीडितः इतो विवसितुं निर्गन्तुमिच्छन् स्वमासान् गणयन् वर्त्तते पूर्वनिवृत्तान् अग्रिममासानां नियमाभावात् हे भगवन् ! कदा वा निर्वास्यते हे भगवन्नित्यत्र त्वमेव समर्थः कृपणधीरिति धैर्याभाव उक्तः अनन्तदुःखस्मरणात् गणनाकालेनापि दुःखनिवृत्तिं मत्वा भगवतेत्यर्थात् एवं तत्र दुःखानुभवादन्यत्र गमनं प्रार्थितम् ॥ १७ ॥

नतु कृतोपकारस्य ज्ञानदानलक्षणस्य प्रत्युपकारं चेत्कुर्यात्तदा अग्रे विचासनमपि कुर्यात् प्रत्युपकाराभावे कथं करिष्यतीत्याशङ्क्याह । येनेति । येन भवादृशेन असौ मल्लक्षणः दशमास्यः दशभिर्मासैः परिच्छिन्नः ईदृशीं गतिं ज्ञानं सम्यग्ग्राहितः । ननु ग्राहकोऽन्यः कश्चिद्धर्माधिष्ठाता देवः अहं त्वन्य इति किं मां प्रत्युच्यत इत्याशङ्क्याह । भवादृशेनेति । स एव भवान् भवत्सदृशो वा किमनेन निर्धारेण किन्तु स्वेनैव कृतेन स तुष्यतु यथा पङ्कमग्नां गामुद्धृत्य स्वयमेव तुष्यति तथा स्वत एव भगवान् तुष्यतु कोनाम तस्य प्रतिविधिं प्रत्युपकारं करिष्यति स्वनिष्कृत्यर्थञ्चेत् किञ्चित्कुर्यात्तदाञ्जलिं कुर्यात् न त्वतिरिक्तं कर्तुं शक्नोतीत्यर्थः ॥ १८ ॥

ननु कं प्रत्येवमुच्यते यतः कोऽपि नाभिव्यक्त इत्याशङ्क्याह । पश्यतीति । यद्यपि भगवान्नाभिव्यक्तः अथापि अयं दमशरीरी शमदमादिसाधकदेहसहितः स्वयं सप्तवध्रिरपि येन भगवता सृष्टया धिषणया बुद्ध्या स्वदेह एव स्वयमपरः नियामकत्वेनान्यो भाति स्वयन्तु नियम्यत्वेन अतः तद्दत्तज्ञानेनैव तं पश्ये सोऽहं कृतोपकारः तमुपकारिणं भगवन्तमहं शारीरः अस्मिन्नेव पुरे शेते यः तमिति प्रतीतिरुक्ता पुराणमिति नागन्तुकत्वमतः परिचयोऽप्युक्तः देहाद्बहिः हृदि च प्रतीतं यथा चैत्यो जीवः तद्वदपि प्रतीतं सर्वभावेन सर्वत्र प्रतीतं यथा जीवप्रतीतौ न साधनाद्यपेक्षा तथा भगवानपि स्वतः स्फुरतीति तत्संस्कारकत्वेन नान्यापेक्षा ज्ञानन्तु साधनमुक्तमेव अतो दृष्टेव प्रार्थनादिकमिति न किञ्चिद्दूषणम् ॥ १९ ॥

एवं सर्वत्र भगवद्दर्शने "अभितो ब्रह्मनिर्वाणं वर्त्तते विदितात्मनाम्" इति भगवद्वाक्यात् किञ्चित्सुखं प्राप्य गर्भ एव गतव्यथः बहिर्बाधकं स्मृत्वा अन्तरेऽवस्थितिं प्रार्थयति । सोऽहमिति । अस्मिन् गर्भे बहुदुःखवासं यथा भवति तथा वसन्नपि इतो बहिर्न निर्जिगमिषे यतो बहिरन्धकूपं यद्यपीदमपि सर्वतो वेष्टकं कूपप्रायं तथाप्यत्र ज्ञानमस्ति बहिर्नास्तीत्यन्धकूपः । नन्विदं ज्ञानं तत्राप्यनुवर्तिष्यत इति चेत्तत्राह । यत्रोपयातमिति । गर्भाद्बहिर्निर्गतं जीवं भगवतो माया अनुल्लङ्घ्या उपसर्पति ततो मायामोहितस्य मिथ्यादेहादावहंमतिर्भवति तदनुसंसृतिचक्रं जन्ममरणाद्यावृत्तिश्च भवति अतः पुनरत्रागन्तव्यमतो निर्गतस्य न कश्चित्पुरुषार्थः । एतदिति । परिदृश्यमानमावश्यकमित्यर्थः ॥ २० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

हे प्रभो ! मम दुःखं सुखं त्वच्चरणप्राप्तिश्चेत्येतत्सर्वं त्वदधीनमित्यहमतिबाल्यादतितारल्याच्च किमपि पृच्छामीत्युद्देशेनैव भगवन्तमाह । अहं देही अन्यदेहविवरे मातुरुदरकुहरे अत इतो विवरात् विवसितुं वियुक्तीभवितुमिच्छन् स्वमासान् अयमष्टमोऽयं नवमोऽयं दशम इत्येवं गणयन् कृपणधीः स्वीयदुःखसुखदत्तदृष्टित्वात् कुबुद्धिर्मल्लक्षणोऽयं जनः कदा निर्वास्यते बहिर्निष्क्रमयिष्यते भवतेत्यत्रत्यस्य कष्टस्य सोढुमशक्यत्वाद्बहिरेव तत्र त्वां भजेयेति भावः ॥ १७ ॥

ननु तर्हि कदा निर्वास्यते इति मामुक्त्वा मयि सम्प्रत्यपि त्वामितो बहिर्निष्क्रमयति निर्दयत्वमेव किं प्रसञ्जयसीति तत्र सलज्जं सशङ्कं सरसनादंशं सात्मधिक्कारमाह । येन ईदृशीं देवैरपि दुर्लभां गतिं त्वद्भक्तत्वलक्षणामवस्थां दशमास्यो गर्भस्थोऽप्यहं ग्राहितः पुरुदयेन भवादृशेनेति भवतेत्याक्षेपलब्धस्य विशेषणात् भवत्सदृशो दयालुर्भवानेव नान्य इत्यनन्वयालङ्कारो बोधितः । एतत् प्रतिकृतिस्तु मया ब्रह्मायुपाप्यशक्यैत्याह । स्वकृतेनैव स्वयं तुष्यतु । अञ्जलिमञ्जलिमात्रं विना तत्प्रतिविधिं को नाम कुर्य्यात् कर्त्तुं शक्नुयात् अस्य तव ॥ १८ ॥

स्वस्मिन् भगवत्कृपातिशयमन्यतो वैलक्षण्येनाह । पश्यतीति । अयं मनुष्यजातिमापन्नः सप्तवध्रिर्गर्भगतो जीवः शारीरके शरीरभवे सुखदुःखे एव धिषणया बुद्ध्या पश्यति ततोऽप्यपरः कश्चिद्भाग्यवान् स्वदेहे स्थितो दमशरीरी ज्ञानी भवति । अहं तु

तस्मादहं विगतविक्लव उद्धरिष्य आत्मानमाशु तमसः सुहृदात्मनैव ।
भूयो यथा व्यसनमेतदनेकरन्ध्रं मा मे भविष्यदुपसादितविष्णुपादः ॥ २१ ॥

॥ कपिल उवाच ॥

एवं कृतमतिर्गर्भे दशमास्यः स्तुवन्नृषिः ।
सद्यः क्षिपत्यवाचीनं प्रसूत्यै सूतिमारुतः ॥ २२ ॥
तेनावसृष्टः सहसा कृत्वाऽवाक्शिर आतुरः ।
विनिष्क्रामति कृच्छ्रेण निरुच्छ्वासो हतस्मृतिः ॥ २३ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स प्रसिद्धः पापात्मापि यत्सृष्टया यद्दत्तया धिषणया तं पुराणं पुरुषं पुरुषोत्तमं चैत्यं चित्ताधिष्ठातारं चित्तेनापि सेव्यं प्रभुं बहिश्च हृदि च प्रतीतमपरोक्षतया प्राप्तमिव पश्ये पश्यामि अत्र निरुक्ते च वाशब्देन दर्शितं जीवानां त्रैविध्यम् "मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः" इति तद्भावनावाक्यानन्तरं "साङ्ख्यं योगं समभ्यस्येत् पुरुषं वा पञ्चविंशकम्" इति ॥ १९ ॥

ननु त्वं भक्त्यैव मामेवं ब्रूषे किञ्चात्र दुःखेनोद्विजसे च यतः कदा निर्वास्यत इति निवेदयस्यतस्त्वामधुनैवातो गर्भान्निष्क्रमयामीति तत्र न नेत्याह। सोऽहमिति। यत्र बहिरुपयातं प्राणिनं देवस्य तव माया उपसर्पति व्याप्नोति यदनु यामनु मिथ्यामतिर्देहे अहंबुद्धिस्ततश्च संसृतिचक्रम् ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अन्यदेहविवरे असृग्विण्मूत्रकूपपतितः जठराग्निना भृशतप्तदेहः देही अहम् इतो विवसितुं निर्गन्तुमिच्छन् स्वमासान् गणयन् कृपणधीः कदा हे भगवन्! निर्वास्यते ॥ १७ ॥

हे ईश! येन भवादृशेन ईदृशीं गतिं ज्ञानवत्तां सङ्ग्राहितः स दीननाथः स्वेनैव कृतेन स्वयमेव च तुष्यतु अस्योपकारस्य प्रत्युपकारमञ्जलिं प्रणामं विना को नु कुर्यात् न कोऽपीत्यर्थः ॥ १८ ॥

अयमपरः पश्वादिः सप्तवध्रिर्जीवः स्वदेहे शारीरके सुखदुःखे केवलं ननु अहो पश्यति अहं तु यत्सृष्टया धिषणया आत्मानात्मपरमात्मविवेकवत्या बुद्ध्या तं पुराणमनादिं जगत्कारणं पुरुषं पूर्णं पूर्णत्वमाह। हृदि बहिश्च पश्ये चैत्यं चित्तस्थमन्तःकरणावच्छिन्नम् "बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः" इति श्रुतिप्रसिद्धमणुपरिमाणकं जीवात्मानं च पश्ये प्रतीतं प्रत्यक्षमनात्मानं देहादिकं च पश्ये इवशब्दोऽत्रावधारणार्थः किं च दमशरीरी शमदमादितद्भजनयोग्यशरीरवान् आसमभवम् यदनुग्रहादिति शेषः ॥ १९ ॥

गर्भाद्बहिर्निर्गमनेऽपि भगवद्दत्तेन ज्ञानेन दोषं दृष्ट्वाह। सोऽहमिति। बहुदुःखवासं यथा भवति तथा गर्भे वसन्नपि हे विभो! गर्भात् बहिरन्धकूपे संसारे न निर्जिगमिषे यत्र उपयातं हे देव! माया उपसर्पति देहेन्द्रियमनोबुद्धीन्द्रियार्थरूपा प्रकृतिः व्यामोहयति यदनु मायोपसर्पणानन्तरं मिथ्यामतिः परमात्मनि वासुदेवे देवतान्तरतुल्यबुद्धिः आत्मनि अवासुदेवात्मकत्वबुद्धिः अनात्मनि आत्मबुद्धिश्च भवति संसृतिचक्रं च मिथ्यामतियोगादुपसर्पति ॥ २० ॥

भाषा टीका।

हे भगवन्! यह देही जीव अन्य माता के गढेसे पेट में रह कर जठराग्नि रक्त विष्ठा मूत्र के कुआ मे पडा हुआ देह मे अति तपायमान होता है इहां से निकलने की इच्छा से अपने महिनों को गिनता रहता है ऐसा यह दुःखी कब इहां से निकाला जायगा ॥ १७ ॥

हे ईश! दश महिना के होने पर जिन अति दया वाले आप सरीके नें ऐसी ज्ञान की गति ग्रहण कराई है सो दीननाथ आप अपनेहीं उपकार से संतुष्ट होवोगे नहीं तो ऐसा कौन है कि जो केवल हाथ जोडने के सिवाय और आपका प्रत्युपकार कर सके ॥ १८ ॥

और दूसरा जीव तो इस देह मे सात धातु से बंधा हुआ अपने शरीर मे सुख दुखों को देखता है मै तो शमदमादिवाला होकर आप के दिये ज्ञान से पुराण पुरुष वाहिर तथा हृदय मे चैत्य सरी के प्रतीत आप को साक्षात्कार करता हूं ॥ १९ ॥

हे विभो! सो मै वडे दुःख के निवास गर्भ से निकलने नहीं चाहता हूं क्योंकि वाहिर का संसार तो वडा अन्ध कुआ है जहां जाने से आप की माया लगजाती है जो कि मिथ्या बुद्धि है जिसके पीछे यह संसार चक्रका भोग होता है ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

तस्मादत्रैव स्थितोऽपि विगतविक्लवोऽव्याकुलः सन् सुहृदा आत्मना सारथिरूपया बुद्ध्यैवाऽऽत्मानं तमसः संसारादुद्धरिष्याणि अनेकरन्ध्रं नानागर्भवासरूपमेतद्व्यसनं दुःखं यथा मे माभविष्यन्न भविष्यति तथा काऽत्र तव साधनसामग्री तत्राह।

पतितो भुव्यसृङ्मूत्रे * विष्ठाभूरिव चेष्टते ।
रोरूयति गते ज्ञाने विपरीतां गतिं गतः ॥ २४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

उपसादितौ हृदयं प्रापितौ विष्णोः पादौ येन मया सः ॥ २१ ॥

दश मासाः परिच्छेदका यस्येति प्रसूतिपूर्वक्षणोपलक्षणम् ऋषिर्जीवः सद्यस्तत्क्षणमेव अवाचीनमवाङ्मुखं सूतिहेतुर्मारुतः क्षिपति नुदति ॥ २२ ॥

अवसृष्टोऽधः क्षिप्तः सन् ॥ २३ ॥

रोरूयति रोरूयते ॥ २४ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

तस्माद्बहिरागमनस्यानर्थावहत्वादत्रैव गर्भ एव अत्र तादृशोद्धरणे भुवि चलच्चरणारविन्दमित्यत्रोक्तव्याख्यानुसारात् विष्णुशब्देनात्र श्रीकृष्ण एव वाच्यः "विक्रीडितं व्रजवधूभिरिदञ्च विष्णोः" इत्यत्र "तत्रांशेनावतीर्णस्य विष्णोर्वीर्याणि शंस नः" इत्यादौ च सर्वावतारावतारिव्यापकत्वेन तस्यैव प्रसिद्धेः ॥२१॥

नवममासादावपि प्रसूतिदर्शनात्प्रसूतेः पूर्वक्षणस्योपलक्षणमिदमेवं स्तुवन् सन् कृतमतिः कृतभगवदनुभवो भवतीति पृथगेव वाक्यम् एवं प्रपन्नस्य वक्ष्यमाणसंसारासम्भवादत एवोत्तरार्द्धे द्वितीयान्तपरानां प्रयोगः कृतः एकवाक्यत्वे तु पूर्वार्द्धेऽपि द्वितीयान्तपदान्येव प्रयुज्येरन्निति ज्ञेयम् तस्मादुत्तरार्द्धं एवमवतरणिका । यस्तु बहिर्मुखो जीवस्तस्य तु दुरवस्था श्रूयतामित्याह । सद्य इति ॥ २२ ॥

हता स्मृतिः पूर्वपूर्वजन्मानुसन्धानलक्षणा यस्य भगवत्स्मृतेर्नाशयोगात् "न वै जनो जातु कथञ्चनाव्रजेत्" इत्यादौ "स्मरन्मुकुन्दाङ्घ्र्युपगूहनं पुनर्विहातुमिच्छेन्न रसग्रहो यतः" इत्युक्तेः ॥२३॥

पतित इति त्रिकम् । ज्ञानेऽनेकजन्मगतसुखदुःखादिविषये गते नष्टे विपरीतां गतिं देहात्मविषयकं ज्ञानं प्राप्तः ॥ २४ ॥ २५ ॥ २६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्माद्विगतविक्लवः विगताधार्ष्ट्यः अहमात्मानं सुहृदात्मनैव सर्वभूतसुहृदात्मना त्वयैव हेतुभूतेन तमसः संसृतेराशूद्धरिष्येऽनेकरन्ध्रं नानागर्भवासरूपमेतद्व्यसनं दुःखं पुनः यथा मे माभविष्यत् किमत्र साधनं तत्राह । उपसादितौ शरणं प्राप्तौ विष्णोः पादौ येन सोऽहम् ॥ २१ ॥

एवं सप्तमान्मासादारभ्यादशमान्तं गर्भस्थजीवनिर्वेदमभिधायानन्तरावस्थामाह । एवमिति । एवमुक्तरीत्या गर्भे कृतनिश्चयं सपदि तदा दशमास्यं दशमासपरिमितम्*ऋषिं जीवं सद्यः तत्क्षणमेवावाचीनमवाङ्मुखं तं प्रसूतिहेतुर्मारुतः प्रसूत्यै क्षिपति प्रेरयति बहिर्निःसारयितुं चालयतीत्यर्थः ॥ २२ ॥

तेन सूतिवायुनाऽवसृष्टः स्वस्थानाच्चालितः शिरः अवागधः कृत्वा आतुरः दुःखितः उच्छ्वासरहितः हतस्मृतिः विनष्टगर्भस्थदशास्मृतिरतिकृच्छ्रेणातिसंकटेन निष्क्रामति ॥ २३ ॥

असृजा लोहितेन दिग्धो लिप्तः भुवि पतितः विष्ठाभूः कृमिरिव चेष्टते ज्ञाने गर्भवासकालिके ज्ञाने गते सति तद्विपरीतां मतिं प्राप्तः रोरूयते भृशं रोदिति ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तस्मात्किं निरणायीति तत्राह । तस्मादिति । यस्माद्गर्भान्निर्गमने संसारमण्डलं भवति तस्मादहं सुहृदात्मनैव अनिमित्तबन्धोर्हरेरनुग्रहादेव विगतविक्लवो भूत्वा तमसो नरकादात्मानमाशूद्धरिष्य इत्यन्वयः भूयः पश्चाद्यथैतदनेकरन्ध्रमनेकानर्थद्वारं व्यसनं मा मे भविष्यन्माभूदिति कृत्वा अत्र किं बलमत्राह । उपसादितेति । अनेन हरिचरणशरणस्य पुरुषस्य स्वात्मोद्धारे न कोऽपि प्रयास इति सूचितम् ॥ २१ ॥

भगवतो हरेर्महिमाऽगणितप्रभाव इति ध्वनयन् गर्भस्थस्य प्रसूतिप्रकारं वक्ति । एवमिति । ऋष्यादिकुल उत्पत्स्यमानस्य तत्क्षणे ज्ञानं भवतीति द्योतनाय सपद्यृषिमित्युक्तम् "ऋषिस्त्रिकालदर्शी स्यात्" इति हलायुधः सर्वोऽपि क्षणिक इत्याशयेनोक्तं सद्य इति अवाचीनमधः शिरसम् ॥ २२ ॥

तेन वायुना येन देहाभिमानेन पूर्वमुपस्पृष्टः संसारमन्वभूत्तेन देहाभिमानेन सहेति वा शिरोऽवाक् कृत्वेत्यवाचीनमित्यस्य विवरणं तेन पादप्राथम्येन जन्माशयिकमिदमेव सर्वत्र प्रधानमिति ध्वनयति गतस्मृतिर्नष्टजन्मान्तरज्ञानः ॥ २३ ॥

विष्ठैव भूः स्थानं यस्य स तथा विष्ठातो भवति उत्पद्यत इति वा विष्ठाभूः कृमिः रोरूयति रोरूयते तुशब्देन विपरीतां गतिं मनुष्यवासनां गतः ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यस्मादीदृक्कृपाभाजनं कृतोऽस्मि तस्मादात्मना परमात्मनैव सुहृदा उपसादितौ सन्निधापितौ "तत्रांशेनावतीर्णस्य विष्णोर्वीर्याणि शंस नः" इति प्रसिद्धेः श्रीकृष्णाख्यस्य विष्णुरूपस्य स्वस्य पादौ यत्र सोऽहं तथात्मानमुद्धरिष्ये यथाभूय इत्यादि ॥२१॥

अत्र श्रीभगवानुवाचेति कश्चित् । य ऋषिर्भगवद्दृष्ट्या पूर्वोक्तरीत्या ब्रह्मवैवर्त्तवर्णितश्रीशुकदेव इव कश्चित् स दशमास्य एव स्तुवन् कृतमतिः पूर्णभगवज्ज्ञानो भवति । अतः प्रसङ्गे नैवोक्तमद्दिम्नस्तस्य जन्मादिसांसारिकावस्थाभासो न वर्णनीय

* एवं कृतमतिंर्गर्भेदशमास्यं सपद्यृषिम् इति श्रीवीर० विज० ।

* असृग्दिग्ध इति श्रीवीरराघवपाठः ।

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति भावः । यस्तु प्रस्तुतो दुर्जीवस्तस्य तु पुनर्दुरवस्था श्रूयतामित्याह । सद्य इति । अवाचीनमधोगच्छन्तं संसारपदवीमनुवर्त्तमानमित्यर्थः । तं दशमास्यन्ते सति सूतिहेतुर्मारुतः सद्यः क्षिपति । यस्तु शुकदेववद्भगवज्ज्ञानपूर्णः स तु तद्वत् स्वातन्त्र्येणैवाविर्भवतीत्यर्थः । मध्यस्थितानान्तु जीवानां तारतम्यं ज्ञेयमिति भावः । अत्रैकवाक्यत्वे सति पूर्व्वार्द्धेऽपि द्वितीयान्तान्येव पदानि प्रयुञ्ज्यैरन्निति ज्ञेयम् ॥ २२ ॥

हता स्मृतिः पूर्व्वपूर्व्वजन्मानुसन्धानलक्षणा यस्य सः ॥ २३ ॥

पतित इति त्रिकम् । विण्मूत्रे विष्ठाभूः कृमिरिव । ज्ञाने अनेकजन्मगतसुखदुःखादिविषये पूर्व्वपूर्व्वमहादुःखे विस्मृते साम्प्रतिकक्षुद्रदुःखेनैव दुःखी भवतीत्यर्थः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

नन्वत्र स्थित्वा किं कर्त्तव्यं तदाह । तस्मादहमिति । अत्रैव स्थित्वा वैक्लव्यं परित्यज्य आत्मानं तमसः सकाशात्सुहृदा आत्मनैव भगवतैव उद्धरिष्ये सङ्काने पतितमात्मानं स्वरूपे स्थापयिष्यामि तत्र सत्सङ्गादिकं नापेक्षते यतः परमोपकारी भगवानेव सर्वं सम्पादयति । ननु किमुद्धारेणात्रैव स्थित्वा भगवान्निव कथं न स्वतन्त्रो भवेदित्याशङ्क्याह । भूय इति । यथानेकरन्ध्रं व्यसनं मे मा भविष्यत् अत्र स्थित्वैव तथा भगवद्ध्यानलक्षणमुपायं करिष्यामि यथा व्यसनं न भविष्यति जाते तु व्यसने प्रतीकारः कठिनः अत्रापि व्यसनं भविष्यतीति चेत्तत्राह । मे उपसादितविष्णुपादः उपसादितौ विष्णुपादौ येन स उपसादितविष्णुपादस्तादृशस्य मे तत्र तु मायामाहात् उपसादनं भविष्यति न वेति न सन्देहः एवमध्यवसायान्ता स्तुतिरुक्ता भगवत्स्तोत्रस्य फलश्लोकं यत्र कचित्स्थित्वा भगवच्चरणोपसादनं कर्त्तव्यमिति ॥ २१ ॥

एवं जीवस्योर्द्ध्वगमनार्थं जीवसंस्कारमुक्त्वा तादृशस्य गतिं वक्तुं प्रस्तुतमाह । एवमिति । दशमासपरिच्छिन्नो गर्भः स्तुवन् ऋषिर्भूत्वा निश्चयमतिर्जातः मन्त्रादर्शित्वे भजनं न स्यादिति कृतिर्वलिष्ठेति पूर्वमुक्तत्वात्सूतिमारुतः तादृशमपि प्रसूत्यै प्रसवार्थम् अवाचीनं क्षिपति अधोमुखो भवतीत्यर्थः ॥ २२ ॥

ततः किमत आह । तेनेति । तेन वायुना अवसृष्टः ततः प्रक्षिप्तः कृच्छ्रेण विनिष्क्रामतीति सम्बन्धः सहसेति सावधानाभावार्थम् अवाक्शिरो भूत्वा शिरः अवागधोमुखं कृत्वा वा प्रथमतः आतुरो भवेद्व्यसनस्य प्राप्तत्वात् ततोऽतिकृच्छ्रेण निष्क्रामति निष्क्रमणे हेतुः निरुच्छ्वास इति अन्तरुच्छ्वासस्थानाभावात् हतस्मृतिरपि भवति अन्यथा क्रियायाः प्रावल्यं न स्यात् साधनयाखाणाञ्च वैयर्थ्यापत्तेः ॥ २३ ॥

निष्क्रमणानन्तरकृत्यमाह । पतित इति । विष्ठा स्वस्यैव मूत्रं गर्भोदकं पश्चाद्भुवि पतितः प्रथमतो विष्ठाभूरिव चेष्टते क्रियाव्यतिरेकेण ज्ञानस्याप्रयोजकत्वज्ञापनार्थं निन्दावचनं ततु ज्ञानं ज्ञापकमेवेति प्रसूतिवायुना तदुपहतिमाह । रोरूयतीति । ज्ञाने गते विपरीतां गतिं गतो देहोऽहमिति बुद्ध्या रोरूयति रोदिति शब्दमात्रं करोतीति रोरूयतीत्युक्तम् यथा सर्वस्वे गते प्राणी शब्दं करोति ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तर्हि किं निर्विण्णोऽपीति तत्राह । तस्मादिति । तत्रैव स्थितो दुःखेनापि विगतविक्लवोऽव्याकुलः सन् सुहृदा आत्मना सारथिरूपया बुद्ध्यैव अनया त्वद्दत्तया आत्मानं तमसः संसारादुद्धरिष्यामि यथा पतत् अनेकरन्ध्रं नवद्वारस्थूलदेहलक्षणं व्यसनं विपत्तिर्मे मम मामविष्यन्न भविष्यति कान्न तव साधनसामग्री तत्राह । उपसादितौ स्मरणकीर्त्तनादिभिराश्रितौ विष्णोस्तव पादौ येन तस्य ॥ २१ ॥

एवं कृत्वा गर्भे एवोषित्वा कृष्णं भजामीति निश्चिता मतिर्येन सः स्तुवन् सन् ऋषिरेव भवेदित्यन्वयः । न तस्य गर्भोक्तिः सुतस्य पुनः संसार इति भावः । यस्तु प्रस्तुतः पूर्व्वाध्यायत एव प्रक्रान्तो जीवस्तस्य दुरवस्था श्रूयतामित्याह । सद्य इति । अवाचीनमाधोगच्छन्तं सांसारिकं सूतिहेतुर्मारुतः प्रसूत्यै सद्यो दशमासीयक्षण एव क्षिपति । तेन यः स्तुवन् ऋषिर्भवेत् स तु सूतिमारुतक्षेपं विनैव गर्भान्निर्गच्छतीत्यर्थो लभ्यते अत्रैक एव जीवो यदि विवक्षितः स्यात्तदा पूर्व्वार्द्धेऽपि कृतमतिमित्येवं द्वितीयान्तान्येव पदानि प्रयुञ्ज्यैरन्निति सन्दर्भः ॥ २२ ॥

हता स्मृतिः "मृतश्चाहं पुनर्जातः„ इत्यादि पूर्व्वपूर्व्वजन्मानुसन्धानलक्षणा यस्य सः ॥ २३ ॥

विष्ठाभूः कृमिरिव रोरूयति रोरूयते ज्ञाने प्राचीने गते सति विपरीतामज्ञत्वलक्षणां भक्तजीवस्यापि वस्तुस्वाभाव्यादाबाल्यं प्रायो ज्ञानमावृतं तिष्ठति ततः किञ्चिन्मात्रं सत्सङ्गेनोद्बुद्धपूर्व्वसंस्कारस्य भक्त्या भगवत्प्राप्तिरिति ज्ञेयम् । परस्य छन्दमभिप्रायमविदुषा स्तन्यार्थं रोदने उदरव्यथां प्रकल्प्य निस्वरसं पाययता उदरव्यथायां रोदने क्षुधां प्रकल्प्य स्तन्यं पाययता जनेन मात्रादिना नेशः न समर्थः रोरूयते इत्यनुषङ्गः ॥२४॥२५॥२६॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यस्माद्बहिर्निर्गमने मायोपसर्पति तस्मादिहैव उपसादितविष्णुपादः विक्लिवतरवलरहितः अत एव आत्मना परमात्मना विष्णुनैव सुहृदा भक्तेषु चित्तेन उपायभूतेन आत्मानं तमसः संसारलक्षणादन्धकूपात् उद्धरिष्ये अनेकरन्ध्रं नवच्छिद्रं शरीरं व्यसनं दुःखरूपं यथा मे भूयो मा भविष्यत् भविष्यति ॥ २१ ॥

एवं कृतमतिं मारुतः सूतिहेतुभूतः पवनः सद्यस्तत्क्षणमेव अर्वाचीनमवाङ्मुखं क्षिपति नुदति ॥ २२ ॥

तेन मारुतेन अवसृष्टः अधः क्षिप्तः ॥ २३ ॥

विष्ठाभूः कृमिरिव असृङ्मूत्रे चेष्टते ज्ञाने गते सति विपरीतां गतिं गतः रोरूयति रोरूयते असमर्थः भगवन्तं शरणं गतो नैव संसारं प्राप्नोति किन्तु यावत्प्रारब्धकर्मसमाप्ति तावदेव संसारे तिष्ठति ततो विमुक्तो भवति अत एवं विधविवेकपूर्वकं भगवच्चरणं शरणं सर्वो जनो न व्रजति किन्तु कश्चि-

परच्छन्दं न विदुषा पुष्यमाणो जनेन सः ।
अनभिप्रेतमापन्नः प्रत्याख्यातुमनीश्वरः ॥ २५ ॥
शायितोऽशुचिपर्यङ्के जन्तुः *स्वेदजदूषिते ।
नेशः कण्डूयनेऽङ्गानामासनोत्थानचेष्टने ॥ २६ ॥
तुदन्त्यामत्वचं दंशा मशका मत्कुणादयः ।
रुदन्तं विगतज्ञानं कृमयः कृमिकं यथा ॥ २७ ॥
इत्येवं शैशवं भुक्त्वा दुःखं पौगण्डमेव च ।
अलब्धाभीप्सितोऽज्ञानादिद्धमन्युः शुचाऽर्पितः ॥ २८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

न्मुमुक्षुरेव व्रजति तदभिप्रायेण भगवच्चरणशरणागतिरुक्ता विपरीतां गतिं गत इत्युक्तिः सामान्यतो गर्भे किंचिज्ज्ञानं प्राप्य यो जायते तदभिप्रायेण अन्यथा सर्वेषां मुक्तिप्रसङ्गः स्यादिति ॥ २४ ॥

भाषा टीका ।

तिस हेतुसे मै धैर्य धारण करके आप विष्णु भगवान् के चरण की उपासना करने से जैसे मेरेको फिर यह नवच्छिन्द्रोंका शरीर रूपदुःख मत होवे तैसे सुहृद आत्मा आपके सहायता से इस अज्ञान अन्धकार मेंस आत्माको शीघ्रही उद्धार करूंगा ॥ २१ ॥

श्रीकपिलजी बोले जब दश महिना वाला होकर इस प्रकार की निश्चित बुद्धि कर के अपि होता है तब प्रसूत करा ने वाला पवन नीचे को मुखकर के पैदा होनेके वास्ते शीघ्रही फेंकता है ॥ २२ ॥

वह पवन जब उसको उहांसे हटाता है तब शीघ्रही नीचे को मुख होकर बडी आतुरता से श्वास रहित होजाता है स्मरण नष्ट होजाता है ऐसे बडे कष्ट से निकलता है ॥ २३ ॥

तब पृथिवी मे रक्तमूत्र के बीच मे गिरता है विष्ठा के कीडा सरीका शरीर को हिलाता है उस ज्ञान के चले जानेसे विपरीत गति को प्राप्त होकर अति रोदन करता है ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

परस्य च्छन्दमभिप्रायमविदुषा अनभिप्रेतं स्तन्यार्थं रोदने उदरव्यथां प्रकल्प्य निम्बरसपानमुदरव्यथया रोदने स्तनपानमित्यादि ॥ २५ ॥

आसनोत्थानचेष्टने चानीशः सन् रोरूयतीत्यनुषङ्गः ॥ २६ ॥

आमा कोमला त्वग्यस्य तम्। विगतं गर्भे जातं ज्ञानं यस्य ॥२७॥

शैशवं पञ्च वर्षाणि ततः पौगण्डं यौवनादर्वाक् तत्र चाध्ययनादिदुःखम्। यौवने दुःखमाह। सार्धैस्त्रिभिः । अलब्धाभीप्सितत्वेन शुचार्पितो व्याप्तः अज्ञानादिद्धो दीप्तो मन्युर्यस्य सः ॥ २८ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

मत्कुणः खटमलेतिख्यातो स्वेदजाविशेषः आदिना यूकादिपरिग्रहः ॥ २७ ॥

इतीति युग्मकम् । यौवनादर्वागिति व्याख्यानेन पौगण्डेनाजहल्लक्षणया आपोडशात्कैशोरमपि क्रोडीकृतं "दश वर्षाणि ताडयेत्"इत्युक्तेरध्ययनादिदुःखस्य तत्र पर्यवसानात् प्रारब्धमन्तरेप्सितासिद्धेरज्ञानादित्युक्तम् । प्रतिकूलेषु विग्रहं चकरादनुकूलेषु मैत्रीं करोति ॥ २८ ॥ २९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

परस्य शिशोः छन्दमभिप्रायमविदुषा जनेन सः शिशुः पुष्यमाणः अनभिप्रेतं स्तन्यार्थं रोदने उदरव्यथां परिकल्प्य पाययिष्यमाणं निम्बरसादिकम् उदरव्यथया रोदने दीयमानं स्तन्यादिकं चापन्नः प्राप्तः ॥ २५ ॥

जन्तवः दंशमशकमक्षिकादयः स्वेदजाश्च तैर्दूषितेऽशुचिपर्यङ्के शायितः शयनं कारितः अङ्गानां कण्डूयने आसनादौ च नेशः असमर्थः रोरूयतीत्यनुषङ्गः ॥ २६ ॥

आमा कोमला त्वग्यस्य तं दंशाः दंशनस्वभावाः मत्कुणादयः विगतं गर्भज्ञानं यस्य तं तुदन्ति व्यथयन्ति यथा कृमिम् ॥ २७ ॥

शैशवं पञ्चवर्षपरिमितवयःशिशुत्वं तद्दुःखं ततः पौगण्डं यौवनात् प्रागवस्था तद्दुःखं च भुक्त्वा विग्रहं करोतीत्युत्तरान्वयः पौगण्डदुःखमाह । अलब्धमभीप्सितं येन इत्थमज्ञानात् इद्धः प्रवृद्धः मन्युः क्रोधः यस्य सः शुचार्पितः व्याप्तः शोकं प्राप्तः ॥ २८ ॥

* जन्तुखेदजांति श्रीवीरराघवपाठः ।

सह देहेन मानेन वर्धमानेन मन्युना ॥
करोति विग्रहं कामी कामिष्वन्ताय चाऽऽत्मनः ॥ २९ ॥
भूतैः पञ्चभिरारब्धे देहे देह्यबुधोऽसकृत् ।
अहंममेत्यसद्ग्राहः करोति कुमतिर्मतिम् ॥ ३० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

परच्छन्दमन्यस्याभिप्रेतं प्रत्याख्यातुं नापेक्षितमिति निराकर्तुमनीश्वरोऽसमर्थः ॥ २५ ॥

अशुचिपर्यङ्के शकृन्मूत्रभिन्नत्वादशुद्धे दोलायमाने दारुविरचिते तल्पाविशेषे ॥ २६ ॥

आमत्वचं मृदुरूपनूतनत्वचं दंशाः सूचीमुखा मशकाः सूक्ष्ममक्षिकाः कृमिक मणिकीटम् ॥ २७ ॥

पञ्चवर्षपर्यन्तं शैशवं तत आसप्तमवर्षात्कौमारं तत आदशवर्षात्पौगण्डमज्ञानादिति अनभीष्टकर्तुरभिमानिनामिति शेषः ॥ २८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इतीति युग्मकम् ॥ २८—३१ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

उत्पन्नस्य बाल्यदुःखमाह । परच्छन्दमिति । बालकस्य इच्छामविदुषा जनेन पुष्यमाणो भवति ततः अनभिप्रेतमापन्नो भवति क्षुधया रोदने औषधं व्यथायां स्वन्नमिति प्रत्याख्यातुं निराकर्तुमनीश्वरः असमर्थः अतो महद्दुःखमुक्तम् ॥ २५ ॥

पीडाक्षुद्भावदशायामपि दुःखमाह । शायित इति । अशुचिपर्यङ्के शायितो भवति दशदिवसपर्यन्तं सूतीगृहस्थानां पदार्थानां शुद्ध्यभावः अनेन तस्य ज्ञानोत्पत्तौ प्रतिबन्ध उक्तः जन्तवो मत्कुणादयः स्वेदजा मशकाः तैर्दूषित इति सुतरां सोपद्रव उक्तः अधर्माद्व्यसनाच्च ज्ञानं नोत्पन्नमित्युक्तं व्यसनप्रतीकारे अशक्तिमाह । नेश इति । अङ्गानां कण्डूयने असमर्थः आसने उत्थाने चेष्टने वा किन्तु सर्वदा पतितस्तिष्ठतीति अनिवृत्तौ हेतुः अनेनाध्यात्मिकं दुःखमुक्तम् ॥ २६ ॥

भौतिकं दुःखमाह । तुदन्तीति । आमा अपक्वा त्वग्यस्य दंशाः स्थूलमशकाः मत्कुणा लोहितवर्णाः खट्वाकीटाः आदिशब्देनान्येऽपि वस्त्रकीटादयः उभयोर्ज्ञानाभावमाह । रुदन्तमिति । विगतं ज्ञानं यस्य अतः रोदिति अन्यथा सहेत तेऽप्येनं सजातीयं मत्वा दशन्तीत्याह । कृमयः कृमिकं यथेति । स्थूलः कृमिः कृमिकः ॥ २७ ॥

इति दुःखमतिबाल्ये एवं प्रकारकमेव शैशवं पञ्चवर्षपर्यन्तं नरकादागतः विद्याधनयुक्ते कुले न भवतीति अतिदरिद्राणां गृहे दुःखमेतादृशमेव पौगण्डमपि तत्र दुःखं पञ्चवर्षादूर्ध्वं नववर्षपर्यन्तं पौगण्डं तत्राप्येतज्जातीयमेव दुःखमतो दुःखाभिभूतस्य न ज्ञानमिति भावः अग्रे ज्ञानं भविष्यतीत्याशङ्क्य तत्र कामादयो बाधका भवन्तीत्याह । अलब्धाभीप्सित इति । न लब्धमभीप्सितं येन अभीप्सितमप्यज्ञानात् अज्ञानादेव वृद्धो मन्युर्यस्य विद्धो मन्युना वा शोकेन च अर्पितो भवति कामक्रोधशोका उत्पन्नाः ज्ञानमुत्पादयितुं न प्रयच्छन्तीत्यर्थः ॥ २८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

आमा कोमला त्वग्यस्य तं कृमिकं क्षुद्रकृमिम् ॥ २७ ॥

इद्धमन्युरुद्दीप्तक्रोधः शुचार्पितः शोकव्याप्तः ॥ २८ ॥ २९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

छन्दमाशयम् ॥ २५ ॥ २६ ॥

आमत्वचम् आमा अपक्वा त्वग् यस्य तम् ॥ २७ ॥

अर्पितो व्याप्तः ॥ २८ ॥

---

भाषाटीका ।

बालकपन में उसके मनकी व्यथा को नहीं जानने वाले मनुष्य से पोषित होता है तब अपने को जो बात प्रतिकूल भी है तिसके बन्द करने को कहने में भी असमर्थ रहता है ॥ २५ ॥

बडे बुरे अपवित्र बिछौना में सुलाया जाता है लीख आदि कीडे उसमें रहते हैं तौ भी उनके काटने पर शरीर अङ्गों को खजुवाने में आसन से उठने में समर्थ नहीं हो सकता है ॥ २६ ॥

जैसे किसी कीडे को कोई कीडे काटैं तैसे उसके होस छोड कर रोने पर भी उसके कोमल त्वचा में डांश मखी खटमल आदि काटते हैं ॥ २७ ॥

इस प्रकार से बाल अवस्था को भोगकर के फिर पौगण्ड अवस्था के दुःखों को भोगता है अपने मनोरथ के नहीं मिलने से बडा क्रोधित होता है अज्ञानसे शोचता है ॥ २८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

देहेन सहैव वर्धमानेनाभिमानेन मन्युना च विग्रहं विरोधं करोति आत्मनोऽन्ताय नाशाय ॥ २९ ॥

तदर्थं कुरुते कर्म यद्बद्धो याति संसृतिम् ।
योऽनुयाति ददत्क्लेशमविद्याकर्मबन्धनः ॥ ३१ ॥
यद्यसद्भिः पथि पुनः शिश्नोदरकृतोद्यमैः ।
आस्थितो रमते जन्तुस्तमो विशति पूर्ववत् ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अज्ञानं प्रपञ्चयति । भूतैरारब्धे देहे असदाग्रहोऽहंममेति मतिं करोति ॥ ३० ॥

तदर्थं देहार्थम् यथेन कर्मणा बद्धः यो देहः मनुयाति पुनः पुनरायात्यनुवर्तत इति वा कुतः अविद्याकर्मभ्यां बद्धचत इति तथा ॥ ३१ ॥

यद्यसद्भिरास्थितोऽधिष्ठितः संस्तेषां पथि रमते पाथे सन्मार्गे आस्थितोऽपि यद्यसद्भिः सह रमत इति वा तर्हि यातना देह आवृत्येत्यादिपूर्वोक्तप्रकारेण तमो नरकं प्रविशति ॥ ३२ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

आरब्धे जनिते तत्र स्वदेहेऽहमिति पुत्रादिदेहे ममेति मतिं करोति स्वदेहपरदेहयोर्भौतिकत्वाविशेषात् भोक्तुश्चात्मनः सर्वत्रैक्यात् कुमतिरित्युक्तम् ॥ ३० ॥

यो देहः क्लेशं ददद्नुयाति तदर्थं तत्कर्म कुरुत इत्यन्वयः ॥ ३१ ॥

पापात्मककर्मणो निरयहेतुत्वं विशेषेणाह । यदीति । असद्भिः पापिष्ठैः यदीतिप्रतियोगिनिर्देशात्

यदि सद्भिः पथि पुनः कृष्णसेवापरायणैः ।
आस्थितो रमते जन्तुः कृष्णं प्राप्नोति पूर्ववत् ॥

इति तत्प्रतियोगिवाक्यं गम्यम् ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यौवनदुःखमाह । सहेति । देहेन सहैव वर्द्धमानेनाभिमानेन मन्युना चात्मनोऽन्ताय नाशाय कामिषु विग्रहं विरोधं करोति स्वयं कामी स्वकामविरोधिषु विग्रहं करोतीत्यर्थः ॥ २९ ॥
यौवनावस्थामेव प्रपञ्चयति । भूतैरिति । पञ्चभिर्भूतैरारब्धे देहे असदाग्रहः अहंममेतिकुमतिं करोति ॥ ३० ॥

तदर्थं देहार्थं कर्म करोति येन कर्मणा बद्धः संसृतिं पुनर्याति तदेवाह । यो देही अविद्या कर्मबन्धनः "अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते,, इत्युक्तकर्माख्याविद्याबद्धः ददत्क्लेशं क्लेशावहं देहमनुयाति पुनः पुनरनुवर्त्तते ॥ ३१ ॥

असद्भिर्दारादिभिराश्रितः तेषां पुण्यसन्मार्गे स्थितः शिश्नोदरार्थं कृतप्रयत्नः यदि रमते वैषयिकेषु सुखेषु तर्हि पूर्ववत्तमः "यातनादेहआवृत्य" इत्यादिपूर्वोक्तप्रकारेण नरकं प्रविशति ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

सह देहेन मानेन देहाभिमानेन विग्रहं वैरमात्मनोऽन्ताय स्वस्य नाशाय कामिषु विषयलालसेषु ॥ २९ ॥

सह देहेनेत्येतद्विवृणोति । भूतैरिति । अहंममेत्यसद्ग्राहो दुराग्रहो यस्यां सा तथा ताम् ॥ ३० ॥

तदर्थमहंममेत्यसद्ग्राहदृढीकरणाय येन कर्मणा बद्धः ॥ ३१ ॥
एतदेव स्पष्टयति । येनेति । ईदृशं नरकादिलक्षणं क्लेशमविद्याकर्मबन्धनञ्च मनुष्ययोनेः पुरुषार्थहेतुत्वात् कथं निन्द्यत्वमत्राह । यदीति । पथि पुरुषार्थहेतौ मनुष्ययोनौ स्थितो जन्तुः शिश्नोदरयोः पोषणे कृत उद्यमः प्रयत्नो यैस्ते तथा तैरसद्भिर्जीवपरमात्माद्यभेदविद्भिश्चासुरप्रकृतिभिः सह यदि रमते तर्हि पूर्ववत्तमो विशतीत्यन्वयः ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

साधारणकामासक्तिदोषमुक्त्वा पापजतदासक्तिदोषमाह । यदीति । असद्भिः पापिष्ठैः ॥ ३२ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

ततः पुष्टस्य सुतरां ज्ञाननाशहेतूनाह । सह देहेनेति । यथा देहो वर्द्धते तथा मानो मन्युश्च मन्युस्तु देहवृद्धिमपि नापेक्षते अभिमानस्यैव तदपेक्षेति पृथग्वचनमात्मनः अन्ताय नाशाय कामिषु विग्रहं करोति एकवस्तुविषये कामश्चेद्बहूनां तदा बलिष्ठैर्बहुभिरितरो हन्यते तदा पूर्ववत् स्वतन्त्रसुकृताभावान्नेष्टसिद्धिः ॥ २९ ॥

वाक्याज्ज्ञानं दूरापास्तमिति वक्तुं प्रत्यक्षतोऽपि दृष्टे यत्र ज्ञानं न भवति तत्र किं वक्तव्यमन्यस्माद्भविष्यतीत्याह । भूतैरिति द्वाभ्याम् । आकाशादिपञ्चमहाभूतैरारब्धे देहे देही देहाभिमानवान् पूर्वज्ञानरहितः असकृदहंममेति मतिं करोति यतोऽयं कुमतिः दृश्यत एव भूतादिजनितत्वं देहे एवं प्रत्यक्षदृष्टेऽपि चेदबुधः अबोधे हेतुः देहाभिमानी सर्वदा वासनावशात् भौतिकत्वेऽपि अहंममाभिमानो भवति अयमभिमानः स्वतो न निवर्त्तत इत्यसकृदित्युक्तम् असद्ग्राह इति पदबोधन वैयर्थ्यं स्वतो युक्त्यनुसन्धानाभावाय कुमतिरिति ॥ ३० ॥

सत्यं शौचं दया मौनं बुद्धिः श्रीर्ह्रीर्यशः क्षमा ।
शमो दमो भगश्चेति यत्सङ्गाद्याति संक्षयम् ॥ ३३ ॥
तेष्वशान्तेषु मूढेषु खण्डितात्मस्वसाधुषु ।
सङ्गं न कुर्याच्छोच्येषु योषित्क्रीडामृगेषु च ॥ ३४ ॥
न तथाऽस्य भवेन्मोहो बन्धश्चान्यप्रसङ्गतः ।
योषित्सङ्गाद्यथा पुंसो यथा तत्सङ्गिसङ्गतः ॥ ३५ ॥
प्रजापतिः स्वां दुहितरं दृष्ट्वा तद्रूपधर्षितः ।
*रोहिद्भूतां सोऽन्वधावदृक्षरूपी हतत्रपः ॥ ३६ ॥

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एवं देहे अहंममेति बुद्धौ स्थिरायां यद्भवति तदाह । तदर्थमिति । देहार्थं कर्म कुरुते कर्मणा च बद्धः जन्ममरणरूपं संसारं याति देहोऽपि तं न त्यजतीत्याह । योऽनुयातीति । यो देहः सर्वदा क्लेशं दददनु पश्चाद्याति यतः आत्मना स बद्धः प्रथमतः अविद्या ततः कामः ततः कर्माणि तैर्बन्धनं यस्य एवं देहाभिमानेन नष्टो भवतीत्युक्तम् ॥ ३१ ॥

एतदुपरि असत्सङ्गश्चेत्तदा नष्ट एव जात इत्याह । यद्यसद्भिरिति । पुनः पथि पूर्वोक्त एव संसारमार्गे असद्भिः सह आस्थितः सन् रमते तदा पूर्ववत्तमो, विशति अतो न तस्य किञ्चिद्वक्तव्यं व्याख्यातत्वात् । असद्भिरिति षष्ठ्यर्थे वा तृतीया असतां लक्षणं शिश्नोदरार्थं कृतः उद्यमो यैरिति न भगवदर्थं अनेन गृहस्थाः सर्व एव असन्त इत्युक्तम् । यद्यन्येऽप्येतादृशाः सुतरामसन्तः वर्जनीयतया यस्तिष्ठेत् यो वा न रतः तयोर्न नाश इत्युक्तम् । जन्तुरित्यल्पबुद्धिः अतो रमणम् ॥ ३२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अज्ञानं दर्शयति । भूतैः पञ्चभिरारब्ध इति । देहस्य स्वतोऽन्यत्वं स्पष्टमेव तदपि तत्रैव अहंममेति मतिं करोति असद्ग्राहः असद्वस्त्वेव गृह्णाति न तु सत् ॥ ३० ॥

तदर्थं देहार्थं यद्येन कर्म्मणा बद्धः यो देहः जीवाय क्लेशं नरकादिदुःखं दददातुमनुयाति अविद्यया कर्म्मबन्धनं यतः सः यो देहः क्लेशं ददाति तमेव पापकर्म्मणापि पुष्यतीति मौढ्यम् ॥ ३१ ॥

पूर्ववदिति । "यातनादेह आवृत्य" इति पूर्व्वोक्तप्रकारेण नरकं विशति यद्यसद्भिरित्यनेन ।

यदि सद्भिः पथि पुनः कृष्णसेवाकृतोद्यमैः ।
आस्थितो रमते जन्तुः कृष्णं प्राप्नोति पूर्ववत् ॥

इति च लभ्यते । अत्र पूर्ववदिति पूर्व्वोक्तभक्तजीववदित्यर्थः ॥ ३२ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अन्ताय नाशाय ॥ २९ ॥

असद्ग्राहः दुराग्रहः देहेऽहमिति गृहादौ ममेति च मतिं करोति ॥ ३० ॥

अविद्ययानाद्यज्ञानेन यानि कर्माणि तैर्बन्धनभूतो यो देहः क्लेशं ददत् अनुयाति पुनः पुनः आयाति तदर्थं कुरुते कर्म यत् येन कर्मणा बद्धः संसृतिं याति ॥ ३१ ॥

शिश्नार्थमुदरार्थं च कृत उद्यमो यैस्तैः सहास्थितः सङ्गतस्तेषां पथि दुराचारे यदि रमते तदा जन्तुः पूर्ववत्तमो विशति ॥ ३२ ॥ ३३ ॥

---

### भाषाटीका ।

देह अभिमान क्रोध इन सबों के बढने से आप कामी होकर भी अपने नाश होने के वास्ते कामी जनों से विरोध करता है ॥ २९ ॥

अज्ञानी यह देह धारी जन पञ्च भूतों से रचित देह में कुमति होनेसे मैंहूं मेरा शरीरहै ऐसा आग्रह वारम्वार करताहै ॥ ३० ॥

अज्ञान कृत कर्म से बना हुआ अपने को क्लेश देने वाला जो देह जिसमें बंधने से संसार को प्राप्त होता है तिस देह के वास्ते कर्म करता रहता है ॥ ३१ ॥

लिङ्ग तथा पेटके वास्ते उद्यम करने वाले असत्पुरुषों के साथ जब मार्ग में स्थित होता है तब फिर उस विषय में रमता है फिर वह जीव पहिले सरीके नरकों को जाता है ॥ ३२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

असत्सङ्गं निन्दति । सत्यमिति त्रिभिः । बुद्धिः परमपुरुषार्थविषया श्रीर्धनधान्यलक्षणा ह्रीर्लज्जा यशः कीर्तिः क्षमा सहिष्णुत्वं शमो बाह्येन्द्रियनिग्रहः दमो मनोनिग्रहः भग उन्नतिः यत्सङ्गाद्येषामसतां सङ्गात् ॥ ३३ ॥

खण्डितात्मसु देहात्मबुद्धिषु शोचितं क्रीडामृगवदधीनेषु ॥ ३४ ॥

---

*ऋक्षयरूपी इति गतत्रप इति चक्रमेण श्रीवि० श्रीवी० पाठः ।

श्रीधरस्वामिकृतभावार्थदीपिका ।

यथा च योषित्सङ्गिनां सङ्गतो बन्धस्तथाऽन्यप्रसङ्गतो न भवेत् ॥ ३५ ॥

योषित्सङ्गस्यानर्थहेतुत्वं प्रपञ्चयति । प्रजापतिरिति सप्तभिः । रोहिद्भूतां मृगीरूपां सतीमृक्षरूपी मृगाकारः सन् हतत्रपो निर्लज्जः ॥ ३६ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

येषामसतां सङ्गात् ॥ ३३ ॥

नित्यस्यात्मनः खण्डितत्वासम्भवाद्देहनाशे तन्नाशमननात् देहात्मबुद्धिर्ध्वंसति व्याख्यातम् । चकारेण पूर्वदोषासद्भावे गुणसत्त्वे च योषित्क्रीडामृगत्वमेव महान् दोष इत्यभिप्रेतम् ॥३४॥

तदेव दर्शयति । न तथेत्यष्टभिः । मोहो ह्यमूढता बन्ध इन्द्रियविक्षेपः । तत्सङ्गिसङ्गत इति । तत्रापि वैशिष्ट्यं तस्य तद्विलासरूपत्वात् ॥ ३५ ॥ ३६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

असत्सङ्गं निन्दति । सत्यमिति त्रिभिः । यत्सङ्गाद्येषामसतां सङ्गात्सत्यादयः क्षयं यान्ति नाशं यान्ति ॥ ३३ ॥

अशान्तेषु विषयवैतृष्ण्यरहितेषु खण्डितात्मसु देहात्मबुद्धिषु मूढेषु योषितां क्रीडामृगवदधीनेषु शोच्येषु विवेकिभिरिति शेषः तेष्वसाधुषु सङ्गं न कुर्यात् ॥ ३४ ॥

योषितां सङ्गाद्योषित्सङ्गिसङ्गतश्च यथा पुंसो मोहो बन्धश्च भवेत्तथाऽन्यप्रसङ्गतो मोहादिर्न भवेत् ॥ ३५ ॥

योषित्सङ्गस्यानर्थहेतुत्वं प्रपञ्चयति । प्रजापतिरिति सप्तभिः प्रजापतिर्ब्रह्मा स्वां दुहितरं सरस्वतीं दृष्ट्वा तस्या दुहितुः रूपेण शरीरसौन्दर्येण धर्षितः मोहितः रोहिद्भूतां मृगीभूतां सः ऋष्यरूपी स्वयमपि मृगरूपी सन् गतह्रीगतलज्जोऽन्वधावदन्ववर्त्तत तया सह रेमे इत्यर्थः॥ ३६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मुक्तिसाधनसत्यादिगुणवत्त्वे कथमसत्सङ्गात्तमःप्रवेश इति तत्राह । सत्यमित्यादिना । बुद्धिः पुरुषार्थविषया श्रीभगवद्भक्तिसंपल्लक्षणा श्रीरकार्यकरणे लज्जा क्षमा सापराधेषु वैष्णवेषु तत्सहनशीलता शमो बाह्येन्द्रियनिग्रहः दमोऽन्तःकरणनिग्रहः भगो देशाभिपत्याद्यैश्वर्यादिलक्षणः ॥ ३३ ॥

अशान्तेषु हरिनिष्ठादिगुणरहितेषु अविवेकिष्वखण्डितात्मा परमात्मापरिच्छिन्नत्वात्तल्लक्षणः खण्डितात्मा जीवः "अणुर्ह्येष आत्मा" इति श्रुतेः न एवास्मिञ्छरीरेऽस्ति नान्य इत्यवसायो येषां ते तथा तेषु जीवमात्रज्ञानिषु संङ्गं स्नेहादिलक्षणं योषितां क्रीडामृगवद्वर्तमानेषु ॥ ३४ ॥

जीवेश्वराभेददर्शिसङ्गवद्दुष्टस्त्रीसङ्गोऽपि मोहकारणतया दुःखकर इति निरूपयति । न तथेत्यादिना । अन्येषां प्राकृतानां प्रसङ्गतस्तासां सङ्गिनां पुंसां सङ्गतः ॥ ३५ ॥

अत्र किंपुनर्न्यायमाह । प्रजापतिरिति । रोहितां मृगीभूताम् ऋष्यरूपी दुहितरमिति वचनं स्त्रीणामतिमोहकत्वद्योतनाय दुष्टजनमोहनार्थं चेति ज्ञातव्यमन्यथा "न कर्हिचिन्मे मनसो मृषा गतिः" इति वचनविरोधः स्यात् ॥ ३६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

दयेत्यत्र तप इति क्वचित् एष पुण्यारण्यसंमतः ॥ ३३ ॥

चकाराद्यथैवासाधुषु तेषु न कुर्य्यात् तथा योषित्क्रीडामृगेषु न कुर्य्यादित्यर्थः ॥ ३४ ॥

तद्दोषमेव दर्शयति । न तथेति । सङ्गोऽत्र तत्तद्वासनया तत्तद्वासनामयः ॥ ३५ ॥ ३६ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

असतां सङ्गस्य दोषानाह । सत्यमिति । पुरुषे द्वादशगुणाः मोक्षे अन्तरङ्गाः यैर्मोक्षो भवत्येव ते नश्यन्तीति तान् गणयति सत्यं यथार्थता कायवाङ्मनोगता नश्यति शौचमपि शुद्धत्वं तथा दया परदुःखप्रहाणेच्छा मौनं वृथालापनिवृत्तिः बुद्धिर्भगवद्विषयिणी सन्मार्गविषयिणी वा श्रीर्धनं शोभा च ह्रीर्लज्जा यशः कीर्त्तिः क्षमा क्षान्तिः शमो मनोनिग्रहः दम इन्द्रियाणां भगो भाग्यमैश्वर्यादिभगवद्धर्माः एते असतां सङ्गमात्रेणैव गच्छन्ति ॥ ३३ ॥

मोक्षे प्रेप्सोः तत्सङ्गो न कर्त्तव्य इति वदन् असतां विशेषमाह । तेष्विति । यथा भगवत्संबन्धिनो भागवताः सन्तः षड्गुणयुक्ता भवन्ति एवमसन्तोऽप्यसन्मूलदैन्यरूपं षड्दोषयुक्तं प्राप्ता भवन्तीति षड्दोषा उच्यन्ते तेषामन्तःकरणे कदापि न शान्तिः अनेन सत्त्वगुणाभाव उक्तः प्रायिकं रजोऽपि नास्तीत्याह । मूढेष्विति । शास्त्रज्ञानरहिताः मूढाः खण्डित आत्मा विषयैर्येषां पूर्वापरानुसन्धानाभावार्थं खण्डनमसाधुषु अनाचारेषु एवं चतुष्टयमुक्त्वा निषेधमाह । पुरुषार्थचतुष्टयबाधकत्वात् शोच्येषु साधूनां सत्यामपि प्रज्ञायां भगवदग्रहणात् योषितां च ते क्रीडामृगाः षडेतानि लक्षणानि प्रत्येकमसत्त्वसाधकानीति चकारः ॥ ३४ ॥

तत्रापि ये स्त्रीसङ्गिनः स्त्रियश्च मुख्यतया असच्छब्दवाच्या इति तत्सङ्गाभावमाह । न तथास्येति । अस्य पुरुषस्य मोक्षेप्सोः अन्यैर्वस्त्रादिभिश्च तथा मोहो न भवेत् यथा योषितां सङ्गात्पुंस इति प्रतियोगित्वं यथा वा तत्सङ्गिनां सङ्गात् योषित्सङ्गापेक्षयापि तेषां सङ्गो नाशकः उपायपूर्वकं नाशजननात् ॥ ३५ ॥

तत्र स्त्रिया नाशकत्वं जातित्वेनैव नतु व्यभिचारादिदोषत्वेनेति वक्तुमाह । प्रजापतिरिति । कथा पूर्वमुक्ता स्वां दुहितरं वाचं तद्रूपेण धर्षितः गतविवेकः तद्रूपपरित्यागेऽपि न त्यक्तवानित्याह । रोहिद्भूतामिति । तदर्थमात्मानमपि नाशितवानित्याह । ऋक्षरूपीति । रोहिदृक्षौ सजातीयस्त्रीपुरुषवाचकौ गतत्रप, इति मरीच्यादिषु पश्यत्स्वपि नग्नः स्फुटावयवश्च ॥ ३६ ॥

तत्सृष्टसृष्टसृष्टेषु को न्वखण्डितधीः पुमान्।
ऋषिं नारायणमृते योषिन्मय्येह मायया ॥ ३७ ॥
बलं मे पश्य मायायाः स्त्रीमय्या जयिनो दिशाम्।
या करोति पदाक्रान्तान् भ्रूविजृम्भेण केवलम् ॥ ३८ ॥
सङ्गं न कुर्यात् प्रमदासु जातु योगस्य पारं परमारुरुक्षुः।
मत्सेवया प्रतिलब्धात्मलाभो वदन्ति या निरयद्वारमस्य ॥ ३९ ॥
योपयाति शनैर्माया योषिद्देवविनिर्मिता।
तामीक्षेतात्मनो मृत्युं तृणैः कूपमिवावृतम् ॥ ४० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

असन्त एव के इति तान् लक्षयन् तत्सङ्गं निषेधति। सत्य-मिति त्रिभिः ॥ ३३ ॥

खण्डितात्मसु आत्मनोऽधः पातनादात्मघातिष्वित्यर्थः ॥ ३४ ॥

यथा च तत्सङ्गिसङ्गत इति चकारोऽत्र अध्याहार्य्यः ॥ ३५ ॥

न च विवेकज्ञानादिमतां महापुरुषाणां धियं भ्रंशयितुं योषित् शक्नोतीति वाच्यमित्याह। प्रजापतिर्ब्रह्मा रोहिद्भूतां मृगी-रूपां सतीम् ऋक्षरूपी मृगाकारः सन् ॥ ३६ ॥

देवमनुष्यादयस्तेषु को नु पुमानखण्डितधीरनाकृष्टमनाः ॥ ३७ ॥

दिशां जयिनः शूरानपि ॥ ३८ ॥

प्रतिलब्ध आत्मरूपो लाभो येन अस्य मुमुक्षोर्याः प्रमदाः निरयद्वारं वदन्ति योगिनः ॥ ३९ ॥

शनैः शुश्रूषादिमिषेणोपयाति या योषिद्रूपा माया तां मृत्युं प्रतिकूलमीक्षेत ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

खण्डिते देहगेहादौ च आत्मा अहमिति ममेति च बुद्धि-र्यस्य। यद्वा। खण्डितो विक्षिप्त आत्मा मनो यस्य ॥ ३४ ॥ ३५ ॥

रोहिद्रूपां मृगीरूपाम् ऋष्यरूपी मृगरूपः ॥ ३६ ॥

---

भाषाटीका

जिन लोगों के सङ्ग से सत्य शौच दया मौन बुद्धि लज्जा यश क्षमा शम दम ऐश्वर्य ए सब क्षय होजाते हैं ऐसे अशान्त विषयासक्त आत्मनाशक असत्पुरुष स्त्रियों के अ-त्यन्त परवश शोचनीय मनुष्यों का कभी सङ्ग न करै ॥ ३३ ॥ ॥ ३४ ॥

इस पुरुष को स्त्रीके सङ्ग से औ स्त्रीके सङ्ग वाले के सङ्ग से जैसा मोह होता है तैसा मोह दूसरे के सङ्ग से नहीं होता है ॥ ३५ ॥

ब्रह्माजी अपनी पुत्री को देखकर उस के रूपसे मोहित होगये तब वह सरस्वती मृगीके रूप को धारण करके भगी तब ऋष रूप बनकर वह भी पीछे से लज्जा छोडकर दौडे ॥ ३६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका

तेन ब्रह्मणा सृष्टा मरीच्यादयस्तैः सृष्टाः कश्यपादयस्तैरपि सृष्टा

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी।

यद्यपि श्रीनारायणस्य विधिसृज्यत्वं नास्ति तथापि अव-तारलीलायास्तत्सृष्टचन्तः पातविवक्षया तथोक्तम्। यद्वा। यो नारा-यणम् ऋषिमृते तद्भिन्नाभूतस्तद्बहिर्मुखः इति यावत् स को न्वखण्डितधीरिति योज्यम् ॥ ३७ ॥

केवलं भ्रूविजृम्भेणैवेत्यर्थः इत्यङ्गसङ्गादौ कैमुत्यमभिप्रेतम्। "निर्णीते केवलम्" इत्यमरसिंहः ॥ ३८ ॥

मत्सेवया आत्मज्ञानार्थं कृतया प्रतिलब्धः सर्वश्रेष्ठतया ज्ञातः आत्मरूपो लाभो येन अत एव योगस्य समाधेः परं पारं परमात्मानं प्राप्तुमिच्छुः प्रमदासु स्त्रीयास्वपि ॥ ३९ ॥

यथा स्वपालयपश्वन्तरमुद्दिश्य तृणैरावृतं कूपं मृत्युरूपमीक्षते तथा मनोहरस्त्रीरूपत्वेनावृतां तामात्मनो मृत्युरूपामीक्षेते-त्यर्थः ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका।

तेन ब्रह्मणा सृष्टा मरीच्यादयस्तैः सृष्टाः कश्यपादयः तैरपि सृष्टा देवमनुष्यादयः तेषु मध्ये कः पुमान्नारायणमृषिं विना योषि-न्मय्या मायया भगवन्मायया अखण्डितधीरनाकृष्टमनाः सर्वोऽपि खण्डितधीरेव भगवन्मायाया मोहकत्वात्तत्समानधर्मत्वाद्योषि-न्मायात्वेन रूपिता ॥ ३७ ॥

स्त्रीरूपाया मे मम मायायाः बलं मोहकत्वरूपं सामर्थ्यं पश्य या स्त्री केवलं भ्रूविक्षेपेणैव दिशां जयिनः दिग्विजयिनः शूरानपि स्वाधीनान् करोति ॥ ३८ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अतः योगस्य परं पारमन्तं भक्तियोगफलं मत्पदमित्यर्थः आरोढुमिच्छुः मत्सेवया प्रतिलब्ध आत्मबोधः प्रकृतिविलक्षणात्मयाथात्म्यज्ञानं यस्य सः प्रमदासु कदाचिदपि सङ्गं न कुर्यात् याः प्रमदाः अस्य मुमुक्षोर्निरयद्वारं नरकद्वारं वदन्ति अतस्तासु सङ्गं न कुर्यादित्यर्थः ॥ ३९ ॥

येति । शनैः शुश्रूषादिव्याजेन देवेन भगवता निर्मिता या योषिद्रूपा माया उपयाति तां योषितमात्मनो मृत्युमनर्थकरीमीक्षेत तृणैरावृतं कूपमिव ॥ ४० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

* तस्य ब्रह्मणः सृष्टौ सृष्टाः स्वायम्भुवादयस्तैः सृष्टाः प्रियव्रतादयस्तेषु सृष्टौ सृष्टा मरीच्यादयस्तत्सृष्टाः कश्यपादयस्तत्सृष्टा उत्तमादयस्तेष्विति वा । योषिन्मय्यात्ममायया मोहकशक्त्याखण्डितधीः कः पुमान् न कोऽपीत्यर्थः किमत्राह । ऋषिमिति ॥ ३७ ॥

अन्येषां तज्जयित्वं किं न स्यादेवमत्राह । बलमिति । या केवलं भ्रूविजृम्भेण दिशां जयिनो राजादीन्निजायत्तान् स्वाधीनान् करोति तस्याः मे स्त्रीमय्याः मायायाः मयस्य प्रधानस्य मम वशायाः मोहकशक्त्या बलं पश्येत्यन्वयः "मयः प्रधान उद्दिष्टो माया तद्वश उच्यते" इति वचनात् मे मायाया इति ॥ ३८ ॥

फलितमाह । सङ्गं न कुर्यादिति । तत्त्वविस्मरणहेतुत्वात् प्रमाणखण्डनसाधनत्वाद्वा । प्रकृष्टमदजनकत्वाद्वा । प्रमदाः स्त्रियस्तासु जातु कदाचित्प्रहेलिकाविषयेऽपि सङ्गं रागादिलक्षणं न कुर्यादित्यन्वयः कुत इत्यत उक्तं योगस्येति अयोग्यत्वे केवलयोगारोहेच्छया किं स्यादित्यत उक्तं मत्सेवयेति वेदान्तादिशास्त्रश्रवणादिलक्षणया मत्सेवया प्रतिलब्ध आत्मलाभो विषयत्यागेन स्वरूपानन्दो येन स तथा निर्जितेन्द्रियग्रामत्वेन स्वरूपानन्दानुभवेन सन्तुष्ट इत्यर्थः प्रतिलब्धात्मभाव इति पाठे सम्यक् सम्प्राप्तपरमात्मभक्तिरित्यर्थः अनेन स्वज्ञानदानयोग्यपुरुषेषु युक्तो नियतभार्यासु च सङ्गमन्तरेणेतरसङ्गो वर्जनीय इति प्रकाशितम् तदुक्तम्

> सत्पुंसु च तथा स्त्रीषु न सङ्गो दोषमावहेत् ।
> यथायोग्यगुणायैव दोषकृद्दुष्टजन्तुषु ॥

इति तत्सङ्गात्कोऽनर्थ इत्यत उक्तम् यामिति अस्य कामुकस्य अनेन स्त्रियः सर्वथा वर्जनीया इत्युक्तम् तदुक्तम्

> अङ्गारसदृशी नारी घृतकुम्भसमः पुमान् ।
> तस्मान्नारीषु संसर्गं दूरतः परिवर्जयेत् ॥
> गौडी माध्वी तथा पैष्टी विज्ञेया त्रिविधा सुरा ।
> चतुर्थी प्रमदा ज्ञेया ययेदं मोहितं जगत् ॥
> माद्यति प्रमदां दृष्ट्वा सुरां पीत्वैव माद्यति ।
> यस्माद्दृष्टिमदा नारी तस्मात्तां नावलोकयेत् इति ॥ ३९ ॥

इतोऽपि सर्वप्रयत्नेन दुष्टा स्त्री वर्ज्येत्याह । योपयातीति । या देवनिर्मिता योषिन्माया भार्यात्वेनोपयाति मुमुक्षुस्तामात्मनो मृत्युमीक्षेत किञ्च तृणैरावृतं कूपमिव ॥ ४० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्सृष्टयन्तरवतारित्वेऽपि श्रीनारायणस्य त्वखण्डितधीत्वमेवेत्याह । ऋषिमिति । अथवा नारायणविनाभूतस्तदनासक्तो यः स्यादेष को नु तादृश इत्यर्थः ॥ ३७ ॥

"निर्णीते केवलम्" इत्यमरकोषात् । केवलमित्यव्ययम् । ततश्च भ्रूविजृम्भस्य विशेषणं ततो भ्रूविजृम्भेणैवेत्यर्थः ॥ ३८ ॥

प्रमदासु स्वीयास्वपि निरयः संसारः ॥ ३९ ॥

तामिति । यथा स्वपालयं पश्वन्तरं पतन्तं प्रति तृणैरावृतं कूपं मृत्युरूपमीक्षते तथा योषित्त्वेनावृतां तामात्मनो मृत्युरूपामीक्षेतेत्यर्थः ॥ ४० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अतः स्वरूपतः कश्चित्सङ्गे जातेऽपि दोषरहितो भविष्यतीति नाशङ्कनीयमित्याह । तत्सृष्टेति । तेन ब्रह्मणा सृष्टा मरीच्यादयः तत्सृष्टाः कश्यपादयः तत्सृष्टं सर्वमेव जगत् को न्विति वितर्के न खण्डिता धीर्यस्य तादृशः कोऽपि नास्तीत्यर्थः एकोऽस्ति नारायणः तथाभूतः स इति एकादशे वक्ष्यते न केवलं सा नाशयति किन्तु तस्यामाविष्टाधिदैविकी भगवन्माया सा योषिन्मयी सर्वधनादिरूपापि योषित्प्रधाना यद्यपि मार्कण्डेयोऽपि तथोक्तः तथापि कल्पान्तरे सोऽन्यथा भविष्यतीति नारायण एवोक्तः ॥ ३७ ॥

स्त्रीणां मायात्वमुपपादयति । बलमिति । मे मायाया बलं पश्य यद्यपि सर्वरूपैव माया बलिष्ठा तथापि स्त्रीमयी अतिबलिष्ठा तस्या बलमाह । या करोतीति । दिग्जयिनोऽपि स्त्रीजिता इति ॥ ३८ ॥

सामान्यतः तस्याः सङ्गं दूषयित्वा योगेषु सुतरां बाधकत्वमाह । सङ्गं न कुर्यादिति । प्रमदास्विति योगेऽननुरूपास्तरुण्यो निषिद्धाः जात्विति कदाचिदपि योगस्य परं पारमारुरुक्षुः सङ्गत्यागे सामर्थ्यमाह । मत्सेवयेति । प्रतिलब्धः आत्मभावः भगवद्भावो येन अन्यथा सा मोहयेदेव योगो हि स्वात्मयोजकः एनमेवात्मानं संस्कारविशेषैः भगवद्भावपर्यन्तं नयति तस्य रेत एव स्थानं तदसति प्रविष्टं नरकं प्रापयतीति अस्य योगस्य यां योषितं निरयद्वारं प्राहुः अनेन स्वत उद्यमोऽपि निवारित इति सिद्धम् ॥ ३९ ।

शास्त्रान्तरानुरोधेन स्वत आगतायामबाधामाशङ्क्याह । योपयातीति । शनैः शनैरिति हृदयं प्रविशन्ती सा योषिन्मायैव एतद्व्यामोहार्थमेव देवेन निर्मिता तस्याः व्यामोहकत्वे सिद्धे स्वस्यासुरत्वमपि सिद्धमतः संसारोऽन्धं तमश्च अतस्तामात्मनो मृत्युमीक्षेत आपाततस्तथा ज्ञानाभावे हेतुः तृणैः कूपमिवावृतमिति । हस्तिबन्धनार्थं तथा क्रियते ॥ ४० ॥

---

* तमोविशति यद्वद्यो येनासौ मर्त्यजन्मनि । येनयातीदृश क्लेशम् इत्येकत्रिंशन्मध्ये श्रीविजयध्वजतीर्थपाठः ।

यां मन्यते पतिं मोहान्मन्मायामृषभायतीम् ।
स्त्रीत्वं स्त्रीसङ्गतः प्राप्तो वित्तापत्यगृहप्रदम् ॥ ४१ ॥
तामात्मनो विजानीयात्पत्यपत्यगृहात्मकम् ।
दैवोपसादितं मृत्युं मृगयोर्गायनं यथा ॥ ४२ ॥
देहेन जीवभूतेन लोकाल्लोकमनुव्रजन् ।
भुञ्जान एव कर्माणि करोत्यविरतं पुमान् ॥ ४३ ॥
जीवो ह्यस्यानुगो देहो भूतेन्द्रियमनोमयः ।
तन्निरोधोऽस्य मरणमाविर्भावस्तु सम्भवः ॥ ४४ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तेन ब्रह्मणा सृष्टा मरीच्यादयस्तैः सृष्टाः कश्यपादयस्तैरपि देवमनुष्यादयस्तेषु मध्येषु कथम्भूतेषु नारायणमृते नारायणं विना वर्त्तमानेषु नारायणमनुपासीनेष्वित्यर्थः । तेषु मध्ये नारायणं विनेति न व्याख्येयं नारायणस्य विधिसृज्यत्वापत्तेः ॥ ३७ ॥

दिशां जयिनः सर्वा दिशो विजित्य स्वान्तःपुरमागताः चक्रवर्त्तिनोऽपि वा मां त्यक्त्वा अन्यदेशीयाः स्त्रीः सम्भोक्तुं दिग्विजयं करोषि धिक् त्वामिति व्यञ्जकेन कोपकुटिलीकृतेन भ्रूविजृम्भेण मानिनी स्त्रीजातिस्तान् प्रणमतः पदाक्रान्तान् पदप्रहारपरिभूतान् करोतीति केवलं निर्णीतं नात्र युक्तिरन्वेष्टव्येति भावः "निर्णीते केवलम्" इत्यमरः ॥ ३८ ॥

प्रमदासु स्त्रीयास्वपि सङ्गमासक्तिं परं पारमारुरुक्षुर्ज्ञानी च प्रतिलब्धात्मभावो भक्तश्च तेन न कुर्यात् "नो शयानः पतत्यधः" इति न्यायेन कर्म्मी स्त्रीसङ्गकृदपि न बुध्यतीति लभ्यते । अस्य पुंमात्रस्य ॥ ३९ ॥

या च पुरुषं विरक्तं ज्ञात्वा स्वीयनिष्कामतां व्यञ्जयन्ती शुश्रूषादिमिषेणोपयाति सा स्वनर्थकारिणीत्याह । योपयातीति । ईक्षेत ईक्षेत । अत्र तृणाच्छादितकूपस्य मयि जनः पतत्विति भावनाभावात् कस्यचित् पार्श्वेऽध्वनागमनात् सर्व्वत्रोदासीना वा भक्तिज्ञानवैराग्यादिमती वा उन्मादादचेतना निद्राणा वा मृतापि वा स्त्री सर्व्वथैव दूरे परित्याज्येति व्यञ्जितम् ॥ ४० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्त्रीमय्या मायया अखण्डितधीः अविमोहितचित्तः ॥३७॥३८॥

मत्सेवया मद्ध्यानादिभजनेन प्रतिलब्धः आत्मलाभो देहधारणफलं येन योगस्य भगवद्ध्यानस्य परं पारं भगवद्भावापत्तिलक्षणं मोक्षमारुरुक्षुः अस्य आरुरुक्षोः याः निरयद्वारमाहुः मुनयः तासु ॥ ३९ ॥

शनैः परिचर्य्यादिमिषेण ॥ ४० ॥

---

### भाषाटीका ।

उन ब्रह्मा के बनाये जीवों मे एक श्री बदरी नारायण जी को छोडकर और कौन है जिस की बुद्धि स्त्री रूपी माया से मोहित नहीं भयी होगी ॥ ३७ ॥

मेरी बनाई हुई स्त्री रूपी मायाके बल को देखो जोकि सब दिशों के जीतने वाले हैं तिनको अपने भौंके कटाक्ष मात्र से पादौं मे नम्र कर लेती है ॥ ३८ ॥

सत्पुरुषों की सेवा से जिसको आत्मलाभ हुआ है वह पुरुष योग के पर पारको आरोहण करनेकी इच्छा वाला होवे तो जिन स्त्रियों को नरक का द्वार कहते हैं उनका सङ्ग कभी न करे ॥ ३९ ॥

यदि परमात्मा की बनाई स्त्री रूपी माया धीरेसे अपने पास आवै भी तो उस को अपना मृत्यु समझै जैसे कि घांस से ढका हुआ कुआ धोखा देता है तैसे जाने ॥ ४० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

मुमुक्षुं स्त्रियं प्रत्येतदेवाह । यां मन्यते इति द्वाभ्याम् । ऋषभायतीं पुरुषवदाचरन्तीं यां मम मायां वित्तादिप्रदं पतिं मन्यते तदा तां पुरुषरूपां मायां मृत्युं विद्यादित्युत्तरेणान्वयः यतः पूर्वजन्मनि अयं पुमान् स्त्रीसङ्गतोऽन्तकाले स्त्रीध्यानेन स्त्रीत्वं प्राप्तो जीवः ॥ ४१ ॥

तां पत्यादिरूपं मृत्युं विजानीयान्मृगयोर्लुब्धकस्य गायनमनुकूलत्वेन प्रतीयमानमपि यथा मृगस्य मृत्युः ॥ ४२ ॥

तदेवं जीवस्य संसृतिः प्रपञ्चिता तत्र च तस्य कर्मवशेन लोकाल्लोकान्तरगमनं जन्ममरणं चोक्तम् । तत्रैव शङ्क्यते । ननु व्यापकस्य कथं लोकाल्लोकान्तरगमनं नित्यस्य च कथं जन्ममरणे भोगेन कर्मक्षये च सति जन्म मरणञ्च नेष्येते तत्कुतः पुनरपि तस्य कर्मसम्भव इति तत्र लोकान्तरगमनं कर्म च सम्भवतीत्याह । देहेनेति । जीवस्योपाधितया भूतेन जातेन लिङ्गदेहेन लोकान्तरमनुव्रजन् अविरतं कर्माणि करोतीति कर्मणामसमाप्तिरुक्ता ॥ ४३ ॥

जन्ममरणसम्भवमाह । जीवो जीवोपाधिर्लिङ्गदेहोऽस्यात्मनोऽनुगोऽनुवर्ती भूतेन्द्रियमनोमयः स्थूलभूतादिविकारो देहो

### श्रीधरस्वामिकृतभावार्थदीपिका ।

भोगायतनं तयोर्निरोधः कार्यायोग्यता तदस्य जीवस्य मरणमुच्यते आविर्भावस्तु सम्भवो जन्मोच्यते ॥ ४४ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

यामितियुग्मकम् । एतत् । पत्युरपि मृत्युरूपत्वम् । अपत्यादीनां तदेकसाध्यत्वात्तदात्मकत्वव्यपदेशः ॥ ४१ ॥ ४२ ॥

तत्र च संसृतिप्रपञ्चने तत्र लोकान्तरगमनादौ तत्र व्यापकस्येत्यणोरपि जीवस्य व्यापकत्वेन निर्देशोऽद्वैतमतानुसारेण वस्तुतस्तु अदृश्याणोः कथं गमनमिति शङ्का यावत्प्रारब्धं कर्म तावदस्य देहस्य मरणं देहान्तरजन्म च न स्यात् किन्तु प्रारब्धकर्मक्षये च सत्येव देहान्तरजन्मास्य च देहस्य मरणं चेष्यत इति व्याख्येयम् । तत्तस्मात्कर्मक्षयाद्धेतोः तस्य जीवस्य पुनः कर्मसम्भवः कुतो हेतोः स्यादिति शङ्कात्रयं तत्र । शङ्कात्रयमध्ये यथा व्यापकस्याकाशस्यान्यत्र गत्यसम्भवेऽपि घटगतौ घटावच्छिन्नस्याकाशस्यापि गतिः प्रतीयते तथा लिङ्गशरीरावच्छिन्नतया लोकान्तरगमनं सङ्घटते अविरतमित्युक्त्या तद्देहप्रारब्धनाशेऽपि देहान्तरारम्भकाणां कर्मणां सत्त्वात्कर्मसम्भव एवेति शङ्काद्वयसमाधिः ॥ ४३ ॥

उपाधिनैव लोकान्तरगमनवज्जन्ममरणसम्भवमाह । जीव इति । लिङ्गदेहः सप्तदशलिङ्गात्मकः अस्य जीवात्मनोऽनुवर्ती तथा स्थूलदेहोऽप्यस्यानुगः तयोर्लिङ्गदेहस्थूलदेहयोः कर्तृत्वभोक्तृत्वलक्षणकार्यायोग्यतैव भ्रान्त्या जीवस्य मरणमित्युच्यते तथा द्वयोरपि देहयोस्तत्तत्कार्यविशिष्टतयाविर्भावस्तु भ्रान्त्याहङ्कारेण जीवस्य मरणमित्युच्यते ॥ ४४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं मुमुक्षुणा पुरुषेण स्त्रीसङ्गो न कार्य इत्युक्तमथ मुमुक्षोः स्त्रिया अपि पुरुषसङ्गो न कार्य इत्याह । यामिति द्वाभ्याम् । अयमात्मा स्त्रीसङ्गादन्तकाले स्त्रियमेव ध्यायन् "यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्" इत्युक्तरीत्या स्त्रीत्वं प्राप्तः अहं स्त्रीति मन्यमानः ऋषभवदाचरन्तीं भर्तृरूपामित्यर्थः मे यां मायां मोहाद्वित्तादिप्रदं पतिं मन्यते पत्युरपि मोहकत्वादेव मायात्वरूपणं तं वित्ताद्याश्रयं पतिमात्मनो दैवोपसादितं मृत्युं जानीयात् यथा मृगयोर्व्याधस्य गायनं मृगस्य मृत्युकरं तथेत्यर्थः ॥ ४१ ॥ ४२ ॥

एवं गर्भजन्मादियौवनान्ताः क्लेशा उक्ताः जरामरणादिक्लेशास्तु पूर्वस्मिन्नेवाध्याये प्रपञ्चिताः तत्र नित्यस्यात्मनः कथं जन्ममरणे सम्भवतः सम्भवे वा तयोः स्वरूपं किं भोगेन सर्वकर्मक्षये सति कथं शरीराच्छरीरान्तरगमनं तत्सम्भवेऽपि किं प्राक्तनैर्भूतसूक्ष्मैः सम्परिष्वक्तो गच्छति उत तानि विहाय गच्छतीतीमा आशङ्का निराकुर्वन् वैराग्यसिद्ध्यर्थं देहस्यानात्मत्वप्रतिपादनाय तदेकदेशस्येन्द्रियस्यानात्मत्वमाह । देहेनेति चतुर्भिः । पुमान् जीवः जीवभूतेन जीवाभिन्नत्वेनाभिमतेन देहेन भूतेन्द्रियमनआत्मकेन सूक्ष्मेण देहेन लोकात् सूक्ष्मपरिणामरूपात् स्थूलाच्छरीराल्लोकान्तरं तत्परिणामरूपं देहान्तरमनुव्रजन् कर्माणि प्राक्तनस्थूलशरीरनिष्पादितकर्मफलानि भुञ्जानः पुनरुत्तरशरीरारम्भकाणि कर्माण्यविरतमविच्छेदेन करोति ॥ ४३ ॥

कुत एतद्देहेन लोकाल्लोकान्तरगमनं जायत इत्यत्राह । सूक्ष्मो यो भूतेन्द्रियमनोमयो देहः अस्य देहस्यानुगो जीवः अनुसृत्य गन्ता देहेन सहितो गन्तेत्यर्थः । यद्वा । जीवः जीवत्वेनाभिमतः भूतेन्द्रियात्मको देहः सूक्ष्मदेहः अस्यात्मनोऽनुगो हीति श्रुतिस्मृतिप्रसिद्धिं द्योतयति श्रुतिस्तावत् "पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इत्यादिका स्मृतिरपि ।

> मनः षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ।
> शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ॥

गृहीत्वैतानि संयाति ।

इत्यादिका अत्राविरतं कर्माणि करोतीत्यनेन कर्मणामसमाप्तिरुक्ता अभ्युपगतप्रारब्धानां भोगेन विनाशेऽप्यनभ्युपगतप्रारब्धानामविनष्टत्वात् । नन्वेवमपि कथं नित्यस्यात्मनः जन्ममरणे सम्भवत इत्यत्राह । तन्निरोध इति । तस्मिन्सूक्ष्मे शरीरे स्थूलस्य निरोधः संहारः स्थूलावस्थां परित्यज्य सूक्ष्मावस्थाप्राप्तिरेवास्य जीवस्य मरणमाविर्भावः पुनः सूक्ष्मावस्थाप्रहाणेन स्थूलावस्था प्राप्तिरेवास्य सम्भवः देहद्वारके उत्पत्तिमरणे न स्वत इत्यर्थः ॥ ४४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पतिर्यां मोहात् स्त्रीं सङ्गतः स्त्यै ष्ट्यै शब्दसङ्घात इति धातोः शब्दादिष्वासक्तितः कारणात् स्त्रीत्वं प्रमदाभावं प्राप्तामृषभायतीं रतौ पुरुषीकरणं नामारोपितपुरुषधर्मस्तमाचरन्तीं मन्मायां वित्तापत्यगृहप्रदां मन्यते तामिति पूर्वेण सम्बन्धः ॥ ४१ ॥

हरिभक्त्यादियुता पत्न्यपि हरिभक्तिरहितं पतिमात्मनो मृत्युमीक्षेत नरकहेतुं पश्येत् किंविशिष्टम् अपत्यगृहात्मकं कथमिव यथा मृगयोः मृगान् वधार्थं यातीति "मृगय्वादयश्च" इति कुः मृगयुस्तस्य मृगयोर्व्याधस्य "व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः" इत्यमरः गायनं मृगस्य मृत्युहेतुस्तथेत्यर्थः सत्पुंसु च तथा स्त्रीष्वित्याद्युक्तमत्रापि प्रमाणम् ॥ ४२ ॥

ज्ञानं विना न कर्मक्षयः किं तु कर्मपरम्परामेव करोतीत्याह । देहेनेति । जीवभूतेन जीवानां कर्मजातेन लोकाल्लोकं देहाद्देहं स्वायोग्यभार्यादिप्राप्तौ किं कारणमित्यतो वा कर्मकारणमित्याह । देहेनेति ॥ ४३ ॥

जीवलक्षणमाह । जीव इति । भूतेन्द्रियमनोमयो देहो यस्यानुगः स जीव इति मृतो जात इति व्यवहारात् जीवोऽनित्य एवेति न शङ्कनीयं तस्य देहवियोगसंयोगावेव मरणजनने नतु स्वरूपनाशः तथा सति मोक्षादिभोग्यताकथनं व्यर्थं स्यादिति भावेनाह । तन्निरोध इति । अस्य जीवस्य तन्निरोधस्तस्य देहस्य नाशो भूतेषु लयो मरणमाविर्भावो भूतसंयोगलक्षणो विशेषतया प्रकाशः सम्भवो जननं नाम तुशब्दस्तेषां किञ्चिद्विशेषद्योतकः ॥ ४४ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

यामिति युग्मकम् ॥ ४१ ॥ ४२ ॥

अथ जीवस्य स्वतो निरीहत्वादिकेऽपि लोकान्तरगमनादिकं योजयति। देहेनेति चतुर्भिः ॥ ४३ ॥

अनुगः कर्म्माधीनः ॥ ४४ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

नचैतदन्यस्त्रीपरम्मन्तव्यमित्याह। यां मन्यत इति। यां मन्मायां पतिर्जायात्वेन मन्यते भार्या पुनऋषभायतीं पतित्वेन भासमानामेवमुभयोरन्योऽन्यं माया पतिमिति पाठे स्त्रिया एष उपदेशः। ननु स्त्रिया मुक्तिर्नास्तीति किमुपदेशेनेत्यत आह। स्त्रीत्वं स्त्रीसङ्गतः प्राप्त इति। न हि स निसर्गतः स्त्रीरूपः किन्तु स्त्रीसङ्गतः स्त्रीत्वं प्राप्तः तस्य पतिर्माया वित्तापत्यगृहप्रदमिति पत्युर्विशेषणं संसारजननाय ॥ ४१ ॥

पूर्वसंस्कारवशादात्मज्ञाने पातिव्रत्यं स्वधर्मं इति तत्परित्यागे दोषो भविष्यतीति शङ्का न कर्त्तव्या किन्तु तं पतिमात्मनो मृत्युमेव जानीयादित्याह। तमात्मन इति। पतिरपत्यं गृहञ्च एतदात्मकं मृत्युं तं प्रसिद्धं विजानीयात् पूर्वमेव प्रारब्धवशादेवं जातमधुनाप्येवम्भावे सर्वथा नाश इति पुनः पुनः प्रवृत्तत्वाद्देवोपज्ञादितं मृत्युं जानीयात्। नन्वनुभवेन तदनुसारिवाक्यैश्चानन्दजनकत्वमनुभूयते तथा सति कथं मृत्युत्वमित्याशङ्क्याह। मृगयोर्गायनं यथेति। यद्यपि मृगयुर्व्याधः मृगान् युनक्ति इति धृत्वा मृगान् क्रीडति आरण्यापेक्षया ग्राम्यात्युत्तमात् भक्ष्यान् प्रयच्छति गीतञ्च श्रवणसुखं करोति तथापि बन्धकः पारतन्त्र्यञ्च महद्दुःखहेतुः अतः ऐहिकं सुखं पारलौकिकञ्च सुखं तत्प्रसङ्गजनितं बन्धहेतुत्वादुपेक्ष्यमेवेत्यर्थः ॥ ४२ ॥

एवं सङ्गदोषं सर्वं निरूप्य देहदोषं निरूपयति। देहेनेति चतुर्भिः।

> नित्या स्यात् संसृतिः पुंसः तथापि वशगो ह्ययम्।
> दोषार्थमेव तच्चापि तद्वाभ्यां साधनं क्वचित् ॥

आदौ देहेन कृत एवास्य संसार इत्याह। जीवं स्थानप्राप्तेन देहेन स्वोकाल्लोकान्तरमनुव्रजन् कर्मफलम् भुञ्जान एवाविरतं कर्माणि करोति दोषत्रयं देहस्य निरूपितम्। निरन्तरपरिभ्रमणेन नैकत्र स्थितिः कर्मफलभोगः कर्मकरणञ्चेति अन्ते कर्मनिरूपणात्पुनरावृत्तिरप्युक्ता ॥ ४३ ॥

दोषार्थञ्चायं वशे जात इत्याह। जीवस्येति। भूतेन्द्रियमनोमयः आधिभौतिकादिरूपः चैतन्यव्यतिरेकेण न समर्थो भवतीति चिद्रूपस्य जीवस्यानुगो भवति युक्तश्चायमर्थः अचेतनो हि सचेतनमपेक्षते इति तथात्वे दोषमाह। तन्निरोध इति। जन्ममरणे दोषः तत्र मरणस्य स्वरूपमाह। तन्निरोधोऽस्य मरणमिति। अस्य जीवस्य तन्निरोधो देहनिरोधो मरणं नितरां रोधः सजातीयप्रवाहानुत्पादनं सूक्ष्मैस्तदवयवैः धर्मान्तरसहकृतैः पश्चात्सन्तत्यन्तरोत्पादनमिन्द्रियमनसामपि विशिष्टानां भिन्नत्वादन्यत्वमेव तस्मिन्निरुद्धे तदभिमानात् 'मृङ् प्राणत्यागे' इति धातोः येन प्रयत्नेन धृतः प्राणः स प्रयत्नः शरीरादिसाध्यो भवतीति तेषु निरुद्धेषु प्रयत्नोऽपि गच्छतीति योगस्तथा निरुक्तः कालकर्मस्वभावानां तत्तद्देवाधिष्ठितानां नियामकत्वादपमृत्युप्रभृतीनां व्यवस्था उत्पत्तेः स्वरूपमाह। आविर्भावस्तु सम्भव इति। यो देहस्याविर्भावः स एव जीवस्य सम्भव उत्पत्तिरित्यर्थः सर्वत्र हि भगवत्स्वरूपे सर्वे पदार्थाः सन्तीति पूर्वमुक्तं यत्र यावद्दूरे पदार्थानाविर्भावयति तावदाविर्भवन्ति यत्र पुनः कारणेषु निविष्टः देहमाविर्भावयति तत्राविर्भवतीति तथोक्तम् ॥ ४४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

यथा भक्तिज्ञानवतां पुंसां योषिदनर्थहेतुस्तथैव भक्तिज्ञानवतीनां योषितां पुमांश्चेत्याह। यामिति द्वाभ्याम्। ऋषभायतीं पुरुषवदाचरन्तीं यां मम मायां पतिं वित्तादिप्रदं मन्यते स्त्रीसङ्गतः अन्तकाले स्त्रीध्यानेन स्त्रीत्वं प्राप्तो जीवः ॥ ४१ ॥

तां मायां पत्यादिरूपं मृत्युं जानीयाद्यथा मृगयोर्लुब्धकस्य गानं सुखदमपि मृगो मृत्युं जानीयात् ॥ ४२ ॥

तदेवं जीवस्य संसारः प्रपञ्चितः तत्रैवं शङ्कते। ननु जीवः शुभाशुभं कर्म्म येन देहेन कुरुते तं देहं त्यक्त्वा देहान्तरे तत्फलं स्वर्गादिकं भुङ्क्ते इति को न्यायः तत्र येनैव देहेन कर्म्म कुरुते तेनैव देहेन भुङ्क्ते इत्याह। देहेन जीवभूतेन लिङ्गशरीरेण लोकान्मर्त्यलोकाल्लोकं स्वर्गं नरकादिकमनुव्रजन्निति उपाधिगमनेनैव कर्म्म कुरुते उपाहितस्य जीवस्यापि गमनं सम्भावितं तत्र भुञ्जान एव भोगमसमाप्तवन्नेव पुनर्मर्त्यलोकमागत्य कर्म्माणि कुरुते अतो लिङ्गदेहेनैव कर्म्म कुरुते भुङ्क्ते चेत्युक्तम् ॥ ४३ ॥

ननु तर्हि इतो मर्त्यलोकान्मृत्वा स्वर्गं भुङ्क्ते स्वर्गाद्वा गत्य जायते इति मृत्युजन्मप्रतीतिः कुतस्त्येत्यत आह। जीवो जीवोपाधिर्लिङ्गदेहस्तथाप्यात्मनोऽनुवर्ती स्थूलदेहो भोगायतनं मिलित्वा एक एव देहो भूतेन्द्रियमनोमयो भवति तस्य निरोधः कार्य्यायोग्यत्वमस्य जीवस्य मरणं तच्च स्थूलदेहविगमे स्थूलान्तरप्राप्तिप्राक्काले भवेत् सुषुप्त्यादौ तु स्वकार्य्याकारित्वेऽपि कार्य्यं प्रति योग्यता अस्त्येव सुषुप्तिभङ्गे सति सद्य एव तत्तद्योग्यतादर्शनादाविर्भावः प्रकटीभावस्तु सम्भवो जन्म स च भोगायतनदेहविगमे स्थूलान्तरप्राप्तौ गर्भान्निष्क्रमणसमये भवेत् ॥ ४४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

मुक्तिकामा स्त्री अपि पतिपुत्रादिरूपिणीं मोक्षप्रतिबन्धकतयोपस्थितां भगवन्मायां विजानीयादित्याह। यामिति द्वाभ्याम्। स्त्रीसङ्गात् स्त्रीत्वं प्राप्तो जीवः ऋषभायतीमृषभवत्पुरुषवदाचरन्तीं मम मायां यां मोहाद्वित्तापत्यगृहप्रदं पतिं वा मन्यते ॥ ४१ ॥

तां पत्यपत्यगृहात्मकं पत्यात्मकं पतिदत्तवित्तापत्यगृहात्मकं

द्रव्योपलब्धिस्थानस्य द्रव्येक्षायोग्यता यदा।
तत् पञ्चत्वमहंमानादुत्पत्तिर्द्रव्यदर्शनम् ॥ ४५ ॥
यथाक्ष्णोर्द्रव्यावयवदर्शनायोग्यता यदा।
तदैव चक्षुषो द्रष्टुर्द्रष्टृत्वायोग्यतानयोः ॥ ४६ ॥
तस्मान्न कार्यः सन्त्रासो न कार्पण्यं न सम्भ्रमः।
बुद्ध्वा जीवगतिं धीरो मुक्तसङ्गश्चरेदिह ॥ ४७ ॥
पुंसो यथैवेन्द्रियाणि विन्दन्ति स्वगतं परम्।
सुखं दुःखं नान्यगतं तथेशांशाः पृथक्कलाः ॥ ० ॥
आत्मनः केवलं ज्ञानमर्थे देहाद्यसङ्गिनः।
सुखदुःखादयो भावा न देहस्य न चात्मनः ॥ ० ॥
सम्यग्दर्शनया बुद्ध्या योगवैराग्ययुक्तया।
मायाविरचिते लोके चरेन्न्यस्य कलेवरम् ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे कापिलेयोपाख्याने साधनानुष्ठानं नाम एकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

च मृत्युं विजानीयान्मृगयोर्गायनं यथा प्रियमपि मृगस्य मृत्युरेव ॥ ४२ ॥

यदि स्त्रीपुरुषदेहरूपाया मायायाः विलक्षणस्तर्हि कीदृशः इत्याकाङ्क्षायामणुपरिमाणकः कर्तृत्वादिधर्मवानित्यो जीव इत्याह। देहेनेत्यादिना। पुमानणुपरिमाणको जीवः जीवभूतेन जीवयति स्थूलदेहमिति जीवः लिङ्गाख्यो देहस्तेन लोकाल्लोकं लोकान्तरमनुव्रजन् भुञ्जानः कर्मफलमिति शेषः कर्माणि करोति ॥ ४३ ॥

कथम्भूतः सूक्ष्मरूपाणि पञ्चभूतानि दशेन्द्रियाणि मनश्च तन्मयः यो जीवः पूर्वोक्तो लिङ्गदेहः अनुग्राहकश्चिरकालस्थायी अस्य अनुगतः अनुग्राह्यो यो देहः स्थूलं शरीरं तस्य निरोधो नाशः अस्य प्रस्तुतस्य पुंसः क्षेत्रज्ञस्य मरणमुच्यते उक्तप्रकारेण आविर्भावो हि सम्भवो जन्मोच्यते ॥ ४४ ॥

भाषाटीका।

जो स्त्री भी पहिले जन्म में स्त्री के ध्यान करके मरने से आप स्त्री हो जाने पर धन पुत्र गृहादि देने वाले मैथुनकर्त्ता ऐसी हमारी माया को अपना पुरुष मानती है ॥ ४१ ॥

वह मुमुक्षु स्त्री उस पुरुष रूप माया को पति पुत्र गृहादि रूप को ऐसा जाने कि जैसे व्याध का गान मृग का मृत्यु होता है तैसे यह प्रारब्ध के वशसे प्राप्त हमारा मृत्यु है ॥ ४२ ॥

जीव का संसार हेतु जो देह तिस के सहित जीव एक लोक से दूसरे लोक को जाता है पूर्व कृत कर्म फलों को भोगता हुआ फिर भी निरन्तर पुरुष कर्मों को करता है ॥ ४३ ॥

पञ्चभूत मन दश इन्द्रिय रूप देह जीव के पीछे जाता है उस देह का ही तिरोहित हो जाना मरण है उसका आविर्भाव हो जाना उत्पत्ति है ॥ ४४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

एतदेव दृष्टान्तेन स्पष्टयति। द्रव्योपलब्धिस्थानस्य नेत्रगोलकादेर्द्रव्येक्षायां रूपादिदर्शने काचकामलादिदोषेण यदायोग्यता भवति तदैव चक्षुष इन्द्रियस्याप्ययोग्यता अनयोः स्थानचक्षुषोर्यदायोग्यता तदैव द्रष्टुर्जीवस्य द्रष्टृत्वायोग्यता एवं स्थूलदेहवैकल्ये लिङ्गस्य वैकल्यं तदैव जीवस्य मरणं न स्वत इत्यर्थः क्वचिदेकः श्लोकोऽधिकः पठ्यते तत्रायमर्थः द्रव्योपलब्धिस्थानस्य स्थूलशरीरस्य द्रव्येक्षायां यदायोग्यता तत्पञ्चत्वं मरणमहंमानादिदमेवाहमित्यभिमानेन द्रव्यस्य स्थूलशरीरस्य दर्शनमुत्पत्तिः अक्ष्णोर्गोलकयोर्द्रव्यावयवस्य रूपादेर्दर्शनेऽयोग्यता शेषं समानम् ॥ ४५ ॥ ४६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यस्मान्न वस्तुतो जीवस्य जन्ममरणादि तस्मान्मरणात्संत्रासो न कार्यो जीवने च न कार्पण्यं दैन्यं कार्यं सम्भ्रमश्च जीवनप्रयत्ने ॥ ४७ ॥

ननु सर्वथा मुक्तसङ्गत्वे कथं जीवितमत आह । सम्यक् पश्यति विचारयतीति सम्यग्दर्शना तया बुद्ध्या मायाविरचिते लोके कलेवरं न्यस्य निक्षिप्य तस्मिन्नासक्तिं त्यक्त्वा विचरेदित्यर्थः ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीधरस्वामिकृतभावार्थदीपिकायाम् एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

अधिकश्लोकस्तु पूर्वश्लोकपूर्वार्द्धोत्तरार्द्धयोर्मध्ये आपतितस्तमन्तरा प्रकृतश्लोकश्चायम् ।

द्रव्योपलब्धिस्थानस्य द्रव्येक्षायोग्यता यदा ।
तदैव चक्षुषो द्रष्टुर्द्रष्टृत्वायोग्यतानयोः ।

इति तस्यैवोत्थानिकेयमेतदेवेति देहद्वययोग्यतायोग्यतयोरध्यासेन जीवस्य मृषा जन्ममरणत्वमेवैकदेशदृष्टान्तेन स्पष्टयति । रूपादिगुणवतो घटादेर्द्रव्यस्य ज्ञानकरणेन्द्रियस्थानं यद्गोलकादि तस्य द्रव्येक्षायां द्रव्यनिष्ठरूपादिदर्शने तत्र । पठ्यमानाधिकश्लोके श्लोकाधिक्यपक्षे द्रव्योपलब्धीतियुग्मकम् । किन्तु श्लोकाधिक्ये प्रथमश्लोकार्थस्तु दार्ष्टान्तिकरूप एव ज्ञेयः द्रव्येक्षायां सर्वेन्द्रियकरणकसर्वपदार्थज्ञाने यथाक्ष्णोरिति पद्यार्थस्तु दृष्टान्तरूप एवेति ज्ञेयम् ॥ ४५ ॥ ४६ ॥

जीवगतिं जीवस्य नित्यज्ञानस्वरूपताम् ॥ ४७ ॥

तस्मिन् कलेवरे तथाच प्रारब्धवशाज्जीवने सिद्धे न तत्रातीवास्था कर्त्तव्येति भावः ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीराधारमणदासगोस्वामिविरचितदीपिन्याख्यदीपिकाटिप्पण्याम् एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एतदेवोपपादयन् जन्ममरणस्वरूपमाह । द्रव्येति । द्रव्योपलब्धिस्थानस्य पृथिव्यादिभूतोपलब्धिस्थानस्य देहस्य यथा द्रव्येक्षायोग्यता पार्थिवाप्यतैजसादिद्रव्यांशनिरीक्षणायोग्यता सूक्ष्मावस्थेत्यर्थः यथा पुंसो भवति तदेवास्य पञ्चत्वं मरणं पृथिव्यादिद्रव्यत्वेन ज्ञायमानदेहस्यात्माभिमानविषयत्वात्तस्य द्रव्यांशनिरीक्षणायोग्यतैव पुंसो मरणमित्यर्थ अहंमानाद्द्रव्यदर्शनमहमित्यभिमानेन द्रव्यस्य दर्शनमेव देहस्योत्पत्तिः सैव पुंस उत्पत्तिरित्यर्थः अत्रेदमवधेयम् ।

तदेतदक्षरं नित्यं जगत्स्थावरजङ्गमम् ।
प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।

इत्याद्युक्तरीत्या प्रकृतिपुरुषयोरुभयोरपि नित्यत्वाच्चोत्पत्तिविनाशौ यद्यपि सम्भवतः तथाप्यात्मनोऽपरिणामित्वाच्च साक्षादुत्पत्त्यादिसम्भवः किन्तु प्रकृतिद्वारा सम्भवत्येवोत्पत्त्यादिः प्रकृतेस्तु साक्षादुत्पत्त्यादयः सम्भवन्त्येव नचैवं तस्यानित्यता शङ्क्या द्रव्यस्य नित्यत्वात् उत्पत्तिविनाशादयो हि सतो द्रव्यस्यावस्थाविशेषाः तन्तुप्रभृतीनि हि द्रव्याणि सन्त्येव रचनाविशेषयुक्तानि पटादीन्युच्यन्ते असत्कार्यवादिना चैतदेवोपलभ्यते न हि तत्र तन्तुसन्तानविशेषातिरेकेणान्यत्पदार्थान्तरं प्रतीयते कारकव्यापारनामान्तरभजनव्यवहारविशेषाणामेतावतैवोपपत्तेर्न द्रव्यान्तरकल्पना युक्ता अत उत्पत्तिविनाशादयः सतो द्रव्यावस्था विशेषाः उत्पत्त्याख्यामवस्थामुपजातस्य द्रव्यस्य तद्विरोध्यवस्थान्तरप्राप्तिर्विनाश इत्युच्यते मृद्द्रव्यस्य पिण्डत्वघटत्वकपालत्वचूर्णत्वादिवत्परिणामिद्रव्यस्य परिणामपरंपराऽवर्जनीया तत्र चूर्णत्वावस्थद्रव्यस्याचरावस्थाप्राप्तिर्विनाशः सैव तदवस्थस्योत्पत्तिरिति ॥ ४५ ॥

एवमुत्पत्तिविनाशस्वरूपमुपपादितमथ वैराग्योदयाय साक्षादुत्पत्तिविनाशयोगिद्रव्यस्य देहस्यानात्मत्वं वक्तुं तदेकदेशस्येन्द्रियस्यानात्मत्वमुपपादयति । चक्षुरिन्द्रियाधिष्ठानं गोलकमक्षीत्युच्यते "आदित्यश्चक्षुर्भूत्वा अक्षिणी प्राविशत्" इति श्रुतेः दृष्टापि निरभिधेतामक्षणी चक्षुरेतयोरत्युक्तत्वात् अक्ष्णोरिन्द्रियगोलकयोर्दर्शनायोग्यता यथा तथैव चक्षुरिन्द्रियस्यापि दर्शनायोग्यता सिद्धा काचतिमिरायुपहतदृष्टेश्चक्षुर्गोचरसद्भावे दर्शनाभावादिन्द्रियगोलकस्य न द्रष्टृत्वमेवं शोभनदृष्टेरपि पुरुषस्यात्मन्यनभिमते सत्युन्मीलितमपि चक्षुर्न पश्यतीति चक्षुषो द्रष्टृत्वायोग्यता भवति तस्माच्चेतनस्यैव द्रष्टृत्वं द्रष्टृतायोग्यतानयोरिति पाठान्तरं तत्र द्रष्टुश्चेतनस्यैव द्रष्टृता द्रष्टृत्वमनयोः चक्षुर्द्रष्ट्रोः योग्यतासम्बन्धयोग्यताकरणत्वकरणिस्वरूपसम्बन्धयोग्यतेत्यर्थः एवञ्च यथा चक्षुषोऽनात्मत्वं तथा देहस्याप्यनात्मत्वं सिद्धमत्र तन्निरोधस्तु मरणमाविर्भावस्तु सम्भव इत्यस्यानन्तरम् ।

द्रव्योपलब्धिस्थानस्य द्रव्येक्षायोग्यता यथा ।
तथैव चक्षुषो द्रष्टुर्द्रष्टृत्वायोग्यतानयोरिति ॥

कश्चिदधिकः पठ्यते तं चैवं केचिद्व्याचक्षते द्रव्योपलब्धिस्थानस्य नेत्रगोलकादेर्द्रव्येक्षायां रूपादिदर्शने काचकामलादिदोषेण यथायोग्यता भवति तथैव चक्षुष इन्द्रियस्यायोग्यता अनयोः स्थानचक्षुषोर्यथायोग्यता तथैव द्रष्टुर्जीवस्य द्रष्टृत्वायोग्यतेति निरोधाविर्भावयोरेव जन्ममरणत्वे दृष्टान्त इति तत्र स्थानचक्षुषोरिव द्रष्टुर्जीवस्याप्यद्रष्टृत्वे कस्य तर्हि द्रष्टृत्वमिति प्रष्टव्यं व्याहतं चैतद्द्रष्टुरद्रष्टृत्वमिति दृष्टान्तोऽप्यसङ्गतः नह्यनेन किञ्चिद्दृष्टान्तदार्ष्टान्तिकगतं साधर्म्यमुच्यते तस्मादेवं व्याख्येयः यदि तन्निरोध एव मरणं तर्हि सूक्ष्मावस्थयावस्थितस्य देहस्योपलम्भः स्यात्तत्राह । द्रव्येति । द्रष्टुः शोभनद्रष्टुर्जीवस्य चक्षुषश्चैतनयोर्द्रव्योपलब्धिस्थानस्य पृथिव्यादिभूतोपलब्धिस्थानस्य देहस्य द्रव्येक्षायोग्यता ,पार्थिवाप्यतैजसादिद्रव्यदर्शनयोग्यता यथा भवति स्थूलत्वादतस्तस्य यथा दर्शनविषयता स्वभावसिद्धा तथा सूक्ष्मेऽपि शरीरे अनयोश्चक्षुरात्मनोर्द्रष्टृत्वायोग्यता सूक्ष्मत्वात्तस्य दर्शनविषयत्वयोग्यता नास्तीत्यर्थ इति ॥ ४६ ॥

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका।

उपसंहरति। तस्मादिति। तस्मात् साक्षाज्जन्ममरणादिभाजो देहस्यानात्मत्वात्संभ्रमः देहप्रयुक्तागामिजन्ममरणादिदुःखविषयज्ञानरूपभयं न कार्यः कार्पण्यमतीतपुरुषमरणादि स्मृतिनिमित्तं दैन्यं सम्भ्रमः पुत्रजन्मादिनिमित्तसन्तोषश्च न कार्यः किन्तु धीरः सुखदुःखसमः जीवगतिं ब्रह्मात्मकप्रकृतिविलक्षणात्मस्वरूपं बुद्ध्वा मुक्तसङ्गः देहापत्यकलत्रादिष्वनासक्तः इह लोके विचरेत् ॥ ४७ ॥

तथा सम्यग्दर्शनया सम्यगबाधितं दर्शनं शास्त्रजन्यं ज्ञानं यस्यां तया प्रकृतिविविक्तात्मयाथात्म्यज्ञानं वैराग्यं कामानभिष्वङ्गः स च प्राप्यपरब्रह्मव्यतिरिक्तवस्तुवैतृष्ण्यरूपस्ताभ्यां युक्तया धिया विवेकादिजन्यभगवदुपासनात्मिकया बुद्ध्या मायाविरचितेऽस्मिँल्लोके कलेवरं न्यस्य त्यक्त्वा कलेवरे आसक्तिमकृत्वेत्यर्थः। चरेन्निवृत्तिधर्ममिति शेषः ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

उक्तमर्थं स्पष्टयति। द्रव्योपलब्धीति। द्रव्याणां पञ्चभूतानामुपलब्धिस्थानस्य शरीरस्य पृथिव्यादिविषयज्ञानाश्रयत्वाद्‌द्रव्येक्षाया घटादिदर्शनस्यायोग्यता घटादिद्रव्यदर्शनयोग्यत्वं यदा नास्ति तदा तद्दर्शनं पञ्चत्वं मरणसंज्ञं भवति अहंमानादहमिदं शरीरमित्यभिमानाद्‌द्रव्यदर्शनमेवोत्पत्तिरित्यन्वयः ॥ ४५ ॥

इदं दृष्टान्तयति। यथेति। यथा चाक्ष्णोश्चक्षुषोर्द्रव्यावयवः शौक्ल्यादिरूपं तस्य दर्शनेऽयोग्यता कामलादिदोषदुष्टतया सामर्थ्यं नास्ति तदैव चक्षुषः सकाशाद्‌द्रष्टुरात्मनो द्रष्टृत्वं नेति शेषः यदानयोश्चक्षुषोर्योग्यता अस्तीति शेषः तदा चक्षुषः सकाशात् द्रष्टृत्वं प्रतीयत इत्यन्वयः ॥ ४६ ॥

नन्विह संसरन् जीवो ब्रह्मैव चेतनत्वाद्ब्रह्मैव संसरति ब्रह्मैव मुच्यत इत्याचार्योक्तेस्तत्राह। पुंस इति। पुंसः पुरुषस्य चक्षुरादीन्द्रियाणि यथा परं केवलं स्वगतं स्वविषयं रूपादिकं तन्निमित्तसुखादिकं विन्दन्ति नान्यगतं चक्षुर्ग्राह्यं श्रोत्रं न जानाति श्रोत्रग्राह्यं चक्षुरित्यादितो मिथ इन्द्रियाणां भेदः प्रसिद्धः तथेशांशाः जीवाः संसरन्तः पृथक्कलाः अन्योऽन्यं हरेश्च भिन्ना इष्यत आचार्योऽपि तत्त्वज्ञानी न स्यादित्यर्थः "यः सर्वज्ञ" इति श्रुतेश्च ॥ ० ॥

नन्वेवं तर्हि यावज्जीवमस्य संसारबन्ध एव नास्मान्मुक्तिरीदृग्दुःखनिवर्तकसाधनाभावादित्यत्राह। आत्मन इति। आत्मनो जीवस्य केवलमद्वन्द्वं हरेर्ज्ञानमेवार्थः पुरुषार्थः ईदृग्दुःखनिवृत्तिसाधनलक्षण इत्यर्थः एवंविधज्ञानोत्पत्तौ मुख्यसाधनं ध्वनयति। देहादीति। अहं ममेति देहाद्यसङ्ग एव साधनमित्यर्थः। ननु देहाद्यसङ्गिनो ॰ जीवस्योत्पद्यमानं कथङ्कारमुत्पद्यते ज्ञानमित्यतस्तं प्रकारमाह। सुखदुःखादय इति। "बलमानन्द ओजश्च"इत्यादिश्रुतेः स्वतः सुखादिरूपत्वादात्मनो जीवस्य सुखदुःखादयो भावा न सन्ति किमुत देहस्याचेतनत्वादिति चशब्दार्थः ॥ ० ॥

तस्मादिति। यस्माद्देहदेहिनोर्न सर्वसुखादयो भावाः किन्त्वाभिमानिकाः अज्ञानादुत्पद्यन्ते तस्मात्त्रासादिकं न कार्यमित्यर्थः ॥ ४७ ॥

ननु जीवन्मुक्तोऽस्मिँल्लोके कथं वर्तेत इति तत्राह। बुद्ध्वेति। यस्य देहाद्यसङ्गिनो जीवस्य कलेवरं मायाविरचिते श्रीनारायणेच्छानिर्मिते लोके कर्मभूमौ चरेच्चरति वर्तते स मुक्तसङ्गो धीरो गम्भीरो ज्ञानी सम्यग्यथार्थं दर्शनं ज्ञानं यस्याः सा तथा तया भक्तियोगवैराग्ययुक्तया बुद्ध्या जीवानां गतिं स्वर्गनरकादिलक्षणामाश्रयं श्रीनारायणं बुद्ध्वा तमेव निरन्तरं निषेधमाणश्चरेद्वर्तेत इत्यन्वयः ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

द्रव्योपलब्धीति युग्मकम्। अनयोः स्थूलसूक्ष्मशरीरयोः ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

ननु देहोत्पत्तिप्रलयाभ्यां जीवस्य तथात्वं कथमिति चेत्तत्राह। द्रव्योपलब्धिस्थानस्येति। द्रव्याणां रूपादीनामुपलब्धेर्ज्ञानस्य यत्स्थानं गोलकरूपं तस्य यदा द्रव्येक्षायोग्यता द्रव्येक्षायामयोग्यता काचकामलादिभिर्भवति तदैव चक्षुषोऽप्ययोग्यता भवति तदैव द्रष्टुरपि गोलके आच्छन्ने प्रमाणप्रमात्रोरप्ययोग्यता तदाह। द्रष्टृत्वायोग्यतानयोरिति। दर्शनकरणत्वं कर्तृत्वमनयोः करणकर्त्रोरयोग्यतेति एकश्लोकपाठेऽर्थः श्लोकद्वयपाठे तु द्रव्योपलब्धिस्थानस्य सर्वद्रव्यव्यवहारसाधकस्य देहस्य यदा द्रव्येक्षायां सर्वद्रव्यव्यवहारेऽयोग्यता तत्पञ्चत्वं मरणमित्यर्थः यस्य यः स्वभावः स चेत् सर्वात्मना निवृत्तः तदा कारणे लीन इति ज्ञातव्यं तथा पञ्चभूतेभ्यः आविर्भूतेभ्य आविर्भूतो देहः स्वकार्यं चेन्न करोति तदा कारणत्वात्पञ्चत्वमेव जीवस्य तु तथात्वमहंमानाद्व्यदर्शनं द्रव्याणामुपलम्भः द्वयासादिकार्यकरणसामर्थ्यं सैव देवस्योत्पत्तिः मध्ये प्रविश्याभिमानाज्जीवस्य च ॥ ४५ ॥

तत्र दृष्टान्तमाह। यथाक्ष्णोरिति। अक्ष्णोर्गोलकयोः द्रव्यावयवस्य रूपादेः यदैव दर्शनायोग्यता काचकामलादिभिस्तदैव चक्षुष इत्यादिपूर्ववत् ॥ ४६ ॥

एवं सर्वेषां बाधकत्वे किं कर्तव्यमिति चिन्तां परिहरन् शास्त्रार्थमुपसंहरति। तस्मादिति द्वयेन। त्याज्यकर्तव्यभेदेन तत्र

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

प्रथमं त्याज्यमाह। तस्मादिति। त्रयं त्यक्तव्यं भयं दैन्यं सम्भ्रमश्च उत्तालता सम्भ्रमः देहादीनां पूर्वमेव सिद्धत्वात्तत्कार्यवाधनमपि पूर्वमेवानुवर्तत इति "अङ्गीकृता ग्लानिर्न दोषाय" इति न्यायेन भयं त्यक्तव्यमेते बुधास्त्याज्या एवेति एतन्निर्वाहार्थं कार्पण्यमपि त्यक्तव्यमेतद्बाधकानामस्मन्निमित्तत्वात्स्वस्य कर्त्तव्याभावात्का उत्तालता जीवस्य गतिरुक्तैव अतो जीवगतिं बुद्ध्वा देहगतदोषातिक्रमं सोढ्वा धीरो भूत्वा बाधकं सङ्गं त्यक्त्वा चरेन्नैकत्र तिष्ठेदित्यर्थः॥ ४७॥

एवं बहिःस्थितिरुक्ता अन्तःस्थितिमाह। सम्यगिति। सम्यगात्मनो दर्शनं यस्यां तस्या बुद्धेर्योगो वैराग्यश्चाङ्गं तया स्वात्मानं स्थिरीकृत्य मायया विशेषेण रचिते लोके कलेवरं न्यस्य लोकानुसारिणं कृत्वा स्वयं चरेदुदासीनो भवेदित्यर्थः॥ ४८॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे

श्रीमद्वल्लभाचार्यकृतसुबोधिन्याम्

एकत्रिंशाध्यायविवरणम्॥ ३१॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

मृत्युजन्मनोर्लक्षणं पुनः स्पष्टमाह। द्रव्येति। द्रव्यायत्र दृष्टान्तदृष्ट्या मर्त्यलोकस्थान्येव वस्तुमात्राण्युच्यन्ते तानि च यद्यपि लिङ्गदेहेनैवोपलभ्यन्ते तदपि द्रव्योपलब्धिस्थानस्य स्थूलशरीरस्य भङ्गुरत्वे सति द्रव्येक्षायां यदा यदयोग्यता तदेव पञ्चत्वं स्थूलदेहस्य भङ्गुरत्वे सूक्ष्मदेहस्यापि द्रव्योपलब्ध्यायोग्यता तदेव जीवस्य मरणं न स्वत इत्यर्थः। अहंमानादिदमेवाहमिति स्थूलान्तरेऽभिमानप्रवेशादुत्पत्तिर्जन्म। द्रव्यस्य मर्त्यलोकस्थवस्तुमात्रस्य दर्शनं दर्शनहेतुरित्यर्थः। अत्र दृष्टान्तो यथा अक्ष्णोर्नेत्रगोलकयोर्द्रव्यावयवानां दर्शने अयोग्यता काचकामलादिदोषरूपेण भङ्गुरत्वेन भवेत्तदैव चक्षुष इन्द्रियस्यायोग्यता अनयोः स्थानचक्षुषोर्यदा अयोग्यता तदैव द्रष्टुः पुरुषस्यापि द्रष्टृत्वस्यायोग्यतेति। सा चायोग्यता मर्त्यलोक एव सम्भवेन्नतु स्वर्गनरकयोरिति दार्ष्टान्तिकेऽपि तथा व्याख्यानलाभात् स्वर्गनरकगतस्थूलदेहानामुत्पत्तिविनाशयोर्न जन्ममरणव्यवहारः स्थूलस्य नाश एव सूक्ष्मस्य जीवस्य च नाशः उपचर्य्यते एवमुत्पत्तिश्च॥ ४५॥ ४६॥

यस्मादात्मनो वस्तुतो नास्ति जन्ममरणादि तस्मादिति॥ ४७॥

कलेवरं न्यस्य तत्रासक्तिं त्यक्त्वा॥ ४८॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।

तृतीय एकत्रिंशोऽयं सङ्गतः सङ्गतः सताम्॥ ३१॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

स्थूलदेहस्यापि जीवसम्बन्धराहित्येन व्यवहारानर्हत्वं मरणं तत्सम्बन्धे सति जन्म न तु वस्तुतः सत्कार्यत्वादित्याह। द्रव्योपलब्धिस्थानस्य द्रव्येक्षायोग्यता जीवसम्बन्धाभावेन द्रव्यग्रहणायोग्यता तदेवं पञ्चत्वं न तु मूलनाशः अहम्मानादहं पश्यामि शृणोमीत्यादिजीवसम्बन्धिमानाद्द्रव्यदर्शनं रूपादिमद्द्रव्यग्रहणं यदा तदुत्पत्तिः न तु तन्मूलभूतपृथिव्यास्तदुत्पत्तिस्तेषां प्रागेव विद्यमानत्वात्॥ ४५॥

एवम्भूताभ्यां स्थूलदेहजन्ममरणाभ्यां जीवस्य जन्ममरणोपचारं प्रागुक्तं दृष्टान्ताभ्यां स्पष्टयति। यथेति। यथा अक्ष्णोर्गोलकयोर्द्रव्यावयवस्य दर्शने काचकामलादिदोषेण यदा अयोग्यता तदैव चक्षुषः इन्द्रियस्य अयोग्यता यथा वा अनयोः गोलकेन्द्रिययोर्यदा रूपदर्शने अयोग्यता तदा द्रष्टुर्जीवस्य "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वात्" इति श्रुतेर्नित्यद्रष्टृत्वयुक्तस्यापि द्रष्टृत्वायोग्यता स्यात्तया देहनिरोध एव जीवनिरोध इत्यर्थः॥ ४६॥

यस्माज्जीवस्य स्वरूपतो जन्ममरणे न स्तस्तस्मात्संत्रासादिर्न कार्यः॥ ४७॥ ४८॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

एकत्रिंशाध्यायार्थप्रकाशः॥ ३१॥

---

भाषा टीका।

पञ्चभूतों के दीखने का स्थान जो देह तिस का स्थूलरूप से दर्शन न होना यही मरण है पञ्चभूत द्रव्यरूप देह का दर्शन ही जन्म है॥ ४५॥

जैसे कि नेत्रों की जिस समय में द्रव्य रूपादि कों की देखने की योग्यता नहीं होती है तबही नेत्र की भी देखने की अयोग्यता होती है तबही जीवभी नहीं देखता है॥ ४६॥

जैसे पुरुष के इन्द्रिय अपने विषय रूपादि कों से अन्य शब्दादिकों को नहीं जानते हैं तैसेही अन्यके सुख दुःखोंको न जाननेसे सबजीव आपसमें तथा परमेश्वरसे भी भिन्न हैं॥ ०॥

सुख दुःखादिक आत्माके स्वाभाविक धर्म नहीं है तो देहके कहां से होंगे ऐसा ज्ञान कर देहादिकों मे आसक्ति नहीं कर के केवल आत्माके ज्ञान मात्र से परमात्मा का ज्ञानसे मोक्ष होताहै॥ ०॥

तिस हेतु से कभी त्रास नहीं करै अधैर्य न करै यव-

भाषाटीका ।

रावै नहीं जीव की गतिको जानकर धीर होकर सब सङ्ग छोडकर इस लोक मे बिचरै ॥ ४७ ॥

योग वैराग्य युक्त सुन्दर ज्ञान वाली बुद्धि से माया-रचित इस लोक में शरीरका अभिमान छोड कर विचरा करै ॥ ४८ ॥

इति श्रीमद्भागवत तृतीयस्कन्ध इकतीसमे अध्यायका भाषानुवाद लक्ष्मणाचार्यकृत समाप्त ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे एकत्रिंशोऽध्यायः समाप्तः ॥ ३१ ॥

## द्वात्रिंशोऽध्यायः ।

### कपिल उवाच ।

अथ यो गृहमेधीयान् धर्मानेवावसन् गृहे ।
काममर्थञ्च धर्मान् स्वान् दोग्धि भूयः पिपर्ति तान् ॥ १ ॥
स चापि भगवद्धर्मात्काममूढः पराङ्मुखः ।
यजते क्रतुभिर्देवान् पितॄंश्च श्रद्धयान्वितः ॥ २ ॥
तच्छ्रद्धयाक्रान्तमतिः पितृदेवव्रतः पुमान् ।
गत्वा चान्द्रमसं लोकं सोमपाः पुनरेष्यति ॥ ३ ॥
यदा चाहीन्द्रशय्यायां शेतेऽनन्तासनो हरिः ।
तदा लोका लयं यान्ति त एते गृहमेधिनाम् ॥ ४ ॥

---

#### श्रीधरस्वामिकृतभावार्थदीपिका ।

द्वात्रिंशे सात्त्विकैर्धर्मैरूर्ध्वं गतिरुदीर्यते ।
तत्त्वज्ञानविहीनस्य ततश्च पुनरागतिः ॥ १ ॥

तदेवं पापकर्मणो गतिरुक्ता इदानीं काम्यकर्मणो गतिमाह । अथेति चतुर्भिः । यो गृह एवावसन्स्वान्धर्मान्दोग्धि दोह्यमाह । काममर्थञ्च तान्दुग्धान्धर्मान् भूयः पिपर्ति पूरयत्यनुतिष्ठति ॥१॥

सोऽपि भगवदाराधनरूपाद्धर्मात्पराङ्मुखः सन्प्राकृतानपि देवान्पितॄंश्चयजते ॥ २ ॥

ततः किं तत्राह । तेषां श्रद्धयाक्रान्ता व्याप्ता मतिर्यस्य पित्रर्थं देवार्थञ्च व्रतं नियमो यस्य सोमपाः तत्र सोमं पीत्वेत्यर्थः ॥ ३ ॥

लोके तिष्ठत्यपि पुण्यक्षयात्पातमुक्त्वा लोकानामपि लयमाह । यदा चाहरहः प्रलये ॥ ४ ॥

---

#### श्रीराधारमणदासगोस्वामिविरचिता
#### दीपिन्याख्या दीपिकाटिप्पणी ।

धर्मैर्वर्णाश्रमनिवन्धनैः ततश्चोर्ध्वंगतेः सकाशाद्धर्मान् स्वीयगृहस्थधर्मान् प्रति तेभ्यस्सकाशाद्दुग्धस्थानीयं कामं विषयभोगमर्थं धनादिद्रव्यं धर्मान् गोस्थानीयान् ॥ १ ॥

सोऽपि वेदोक्तकाम्यधर्मानुष्ठातापि चस्त्वर्थे भगवद्धर्माच्छ्रीभगवदर्पिताखिलकामधर्मात् पराङ्मुखत्वे हेतुः काममूढः कामेन विवेकरहितत्वात्तुच्छविषयलम्पट इत्यर्थः क्रतुभिः काम्ययज्ञैः वेदवाक्यविश्वासरूपया श्रद्धया ॥ २ ॥

ततो यजनात्तेषां देवपितॄणां सम्बन्धिन्या अत्र पानकाले पुनरागमनासम्भवात्सोमपाः भूत्वेत्यध्याहारं कृत्वा तत्र लोके सोमं पीत्वेत्यार्थिकोऽर्थः ॥ ३ ॥

शेत इत्यत्र तमोवृत्तिरूपाया निद्राया असम्भवात्त्रिलोक्या-मवधानं न करोतीत्यर्थः लोकास्त्रीण्यपि भोगस्थानानि ॥ ४ ॥

---

#### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

एवमतीताध्यायद्वयेन वैराग्यसिद्ध्यर्थं गर्भजन्मजरामरणादि-। क्लेशाः अनिष्टाद्यधिकारिणां गतिश्चोपपादिताः अथेष्टादिकारिणां परब्रह्मोपासकानां च गतिमाह तत्र तावदिष्टादिकारिणां गतिमाह । अथेति चतुर्भिः । अथ ननु यो गृहाश्रमी गृह एवावसन् गृहमेधीयान् गृहमेधो गृहाश्रमः तत्प्रयुक्तान् धर्मानेवानुतिष्ठन्निति शेषः धर्मानेवेत्येवकारेण निवृत्तिधर्मव्यावृत्तिः धर्मानावसन् कुर्वन्निति वा स्वकान् धर्मान् काममर्थं दोग्धि प्रपूरयति धर्माननुतिष्ठन्कामार्थौ लभत इत्यर्थः स भूयस्तान् धर्मान्पिपर्त्ति पालयति ॥ १ ॥

एवकारसूचितमर्थमाह । स इति । सचापि केवलगृहमेधीयधर्मी कामेन विषयासङ्गेन मूढः अत एव भगवद्धर्मात्पराङ्मुखः प्रतिनिवृत्तः श्रद्धया प्रतिनिवृत्तिधर्मत्वरया युक्तः क्रतुभिर्देवान्पितॄंश्च यजते ॥ २ ॥

तच्छ्रद्धया पितृदेवयजनश्रद्धया आक्रान्ता मतिर्यस्य पित्रर्थं देवार्थं च व्रतं नियमो यस्य सः सोमयाजी पुमान् चान्द्रमसं लोकं गत्वा धूमरात्र्यपरपक्षदक्षिणायनषण्मासपितृलोकाकाशचन्द्रक्रमेणारुह्य पुनः चन्द्रमसः स्थानादाकाशवायुधूमाभ्रक्रमेण एष्यत्यवरोहति ॥ ३ ॥

कल्पान्तरस्थायिचन्द्रादिलोकगतानां क्षयिष्णुफलत्वमुक्तमथ केवलेष्टादिकारिप्राप्यानां लोकानां क्षयिष्णुत्वमाह । यदेति । यदा कल्पान्तेऽनन्तासनः शेषासनो भगवान् अहीन्द्रः शेषः स एव शय्या तस्यां शेते तदा ये केवलगृहमेधिनां प्राप्या लोकास्त एते लोका लयं नाशं यान्ति ॥ ४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अर्चिरादिमार्गं एवानावृत्तिमुक्तिसाधनं स च भक्त्यैकलभ्य इत्यर्थमस्मिन्नध्याये वक्ति । तत्रादौ धूमादिमार्गः कर्मिणां स्वर्गप्राप्तिसाधनं सोऽपीषद्भगवद्भक्तिमत एवेत्यतः प्रधानसाधनं भक्तिरेवेति दर्शयितुमाह । अथेति । अथ प्रवृत्तिमार्गस्थस्य फलमुच्यते किन्तादिति यो गृहे स्थितो गृहमेधीयान् गृहस्थयोग्यान् धर्मानेवावसन् तेष्वेव वर्तमानो धर्ममर्थञ्च कामञ्च दोग्धि । तत्फलमिति शेषः भूयस्तानेव पिपर्ति "पृपालनपूरणयोः" इति धातोः पुत्रादिपूपदेशेन रक्षति स्वयं कृत्वा वर्धयतीत्यर्थः ॥ १ ॥

तद्वर्धनप्रकारमाह । स चापीति । चशब्दो हेत्वर्थः दुःखनिवृत्तिसुखप्राप्तिलक्षणभगवद्धर्माद्भक्तिसाधनात्पराङ्मुखोऽपि काममूढश्च स्रक्चन्दनवनितादिकाममूढत्वेन स गृही क्रतुभिर्देवान् यजते श्राद्धादिना पितॄंश्चेत्यन्वयः ॥ २ ॥

तत्पूजाफलमाह । तच्छ्रद्धयेति । तेषां देवादीनां यजनकर्तव्यताश्रद्धया पितॄणां देवानां सन्तुष्टियोग्यं व्रतं यस्य स तथा धूमादिमार्गेण चान्द्रमसं चन्द्रेणाधिकृतं लोकं स्वर्गैकदेशं गत्वा भगवद्धर्मात्पराङ्मुखः पुमान् पुण्यफलं भुक्त्वा पुनः पापफलं भोक्तुं निरयमेष्यति भगवदीषद्भक्तः स्वर्गकाममूढः पुमान् स्वर्गं गत्वा भुक्तपुण्यशेषेण पुनर्भूलोकमुपैष्यति इत्येतत्तात्पर्यार्थः

ईषद्भक्तो भगवति सुकर्मा स्वर्गमेष्यति ।
अभक्तो निरयं याति सुकर्मापि न संशयः ।

इत्यनेनावगम्यते ॥ ३ ॥

प्रवृत्तिधर्मिणां लोकानामन्तवत्त्वेन तच्छ्रद्धा न कार्येति भावेन तन्नाशावधिमाह । यदेति । चशब्देन लोकनाशस्यावश्यं भावित्वमाह ॥ ४ ॥ ५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

धर्मान् गोस्थानीयान् दुग्धस्थानीयं फलं दोग्धि धर्मान् स्वानिति क्वचित्पाठः ॥ १ ॥

स चापीति । चश्च उक्तमुत्तमयार्थः । यथा पूर्वोक्तः पापकर्मा भगवद्धर्माद पराङ्मुखस्तथा स चेत्यर्थः । अपीति । यद्यपि वैदिककर्मा तथापीत्यर्थः । सर्वकामदादपि तस्माद्भगवद्धर्मात्पराङ्मुखत्वे तथा तदन्यसम्मुखत्वे च हेतुः । कामेन मूढः विवेकरहितः ॥ २ ॥ ३ ॥

शेते त्रिलोक्यामवधानं न करोतीत्यर्थः ॥ ४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

कालस्य बाधकत्वे हि निषिद्धफलमीरितम् ।
निषिद्धरूपता चोक्ता पुण्यस्य फलमीर्यते ॥ १ ॥
त्रिविधस्यापि धर्मस्य द्वात्रिंशे फलमुच्यते ।
ज्ञानं मुख्यं फलं तस्य ससाधनमिहोच्यते ॥ २ ॥
अधोगतिर्मध्यगतिः पूर्वमत्र निरूपिता ।
उत्तमा मोक्षपर्यन्तं यथा स्यात्तदिहोच्यते ॥ ३ ॥
पुरुषार्थत्रयं तस्य तदर्थं साधनं परम् ।
फलञ्च तादृशं तस्य तस्य नाशश्च वर्ण्यते ॥ ४ ॥

तत्र प्रथमं तामसधर्मस्य फलमाह चतुर्भिः । प्रथमं स्वरूपमाह । अथेति । ऊर्ध्वगतित्वाद्भिन्नः प्रक्रमः यो गृहमेधीयानेव धर्मानाचरति आश्रमधर्मा अपि गृहस्थानुगुणा इति गृहमेधीयानेवेत्युक्तम् धर्मानेवेति निषिद्धव्यावृत्तिः आवसन्नित्युभयत्र सम्बन्धः धर्मात्मा गृहे तिष्ठन्निति सुतरां काम्यकर्मपर इत्याह धर्ममर्थञ्च कामञ्च धर्मे बहुवचनं पञ्चाग्निरूपणां च तस्य मोक्षोपयोगमपि ज्ञापयितुं यथान्नं भुक्त्वा कृष्याधन्नमुत्पादयति धनेन धनं वर्द्धयति धर्मेणापमृत्युं दूरीकृत्य पुनर्धर्मं वर्द्धयतीति तथा तं पिपर्त्ति पूरयति ॥ १ ॥

एवं धर्मार्थकामपरोऽपि तद्विषयत्वेन भगवत्परश्चेत्तदापि न काचिच्चिन्ता भगवत एव मोक्षपर्यवसानादतस्तादृशोऽपि भगवद्वैमुख्येनैव सर्वं करोतीत्याह । स चापीति । भगवान् कामं दूरीकरोतीति कामरक्षार्थं भगवत्परित्यागः कामेन विवेकाभावो वा भगवद्धर्मेषु भगवानेव सेव्यो न त्वन्यः तद्वैमुख्याज्ञानाविधैः क्रतुभिः देवान्पितॄंश्च यजते सर्वत्राग्निहोत्रादिकर्मसु देवेषु पितृषु च तृप्तिर्भवतीति तदर्थं यः कर्माणि करोति स राजस इति ॥ २ ॥

वस्तुतस्तद्देवादिश्रद्धयाक्रान्तमतिः पितृदेवसन्तर्पणमेव व्रतं यस्य तादृशः तैः साधितं फलं प्राप्नोतीत्याह । गत्वेति । चान्द्रमसं लोकं गत्वा पञ्चाग्निविद्यया पुनरिहैवैष्यति सोमपा इति न सोमव्यतिरिक्तयागैरिदं फलं सिद्ध्यतीत्युक्तम् ॥ ३ ॥

तस्य फलस्य परिमितकालत्वमाह । यदैवेति । यदैव भगवान् शेते तदैव तेषां लोकाः क्षयं यान्ति तच्छयनं वर्षेष्वपि भवतीति तद्व्यावृत्त्यर्थमाह । अहीन्द्रशय्यायामिति । शेषशायी तदैव शेते सम्वत्सरान्तेऽपि तादृशः प्रलयो भवतीति तद्व्यावृत्त्यर्थमाह । अनन्तासन इति । हरिरिति भगवच्छयनं सर्वसुखार्थं तदा गृहमेधिनां लोकाः क्षयं यान्ति तेषामेव लोकानां क्षयो न तु त्रिलोक्याः ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

द्वात्रिंशे तु सकामानां निष्कामानाञ्च कर्मिणाम् ।
पुनरावृत्त्यनावृत्ती प्रोच्याभक्तानिनिन्द च ॥ ० ॥

तदेवमविहितस्य पापस्य कर्मणो गतिमुक्त्वा विहितस्य काम्यकर्मणो गतिमाह । अथेति । गृह एव गृहमेव आवसन् धर्मान् दोग्धि दोह्यमाह । काममर्थञ्च धर्मांश्चेति भूयः पुनरपि तान् धर्मान् पिपर्त्ति पूरयत्यनुतिष्ठति । यथा गाश्चारयित्वा दुग्धानि दोग्धि पुनरपि दुग्धमाप्स्याम्याशया ताश्चारयतीति ॥ १ ॥

विहितकृदप्यसौ निन्द्य एवाधिकारीत्याह । स चापीति ॥ २ ॥
सकामकर्मिणां पुनः पुनरावृत्तिमुक्त्वा सोमपास्तत्र सोमं पीत्वा पुनरेष्यति पुनरधः पतिष्यति ॥ ३ ॥

ये स्वधर्मान्न दुह्यन्ति धीराः कामार्थहेतवे ॥
निःसङ्गा न्यस्तकर्माणः प्रशान्ताः शुद्धचेतसः ॥ ५ ॥
निवृत्तिधर्मनिरता निर्ममा निरहङ्कृताः ॥
स्वधर्माख्येन सत्त्वेन परिशुद्धेन चेतसा ॥ ६ ॥
सूर्यद्वारेण ते यान्ति पुरुषं विश्वतोमुखम् ॥
परावरेशं प्रकृतिमस्योत्पत्त्यन्तभावनम् ॥ ७ ॥
द्विपरार्धावसाने यः प्रलयो ब्रह्मणस्तु ते ॥
तावदध्यासते लोकं परस्य परचिन्तकाः ॥ ८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

तेषामधः पातस्य का वार्त्ता तेषां प्राप्या लोका अपि ब्रह्मणः प्रतिदिनमधः पतन्तीत्याह । यदा चाहरहः प्रलये ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

भगवद्धर्मपराङ्मुखस्य सात्त्विकैर्धर्मैः ऊर्ध्वलोकप्राप्तिं ततः पुनरागतिं भगवद्भक्तानां भगवत्प्राप्तिं चाह। अथेति द्वाभ्यां। तान् धर्मान् विपर्त्ति पूरयति ॥ १ ॥ २ ॥

तत्तेषां श्रद्धया आक्रान्ता अभिभूता मतिर्यस्य सः सोमपाः तत्र सोमं पीत्वा पुनरेष्यति अत्रैवागच्छति ॥ ३ ॥

यदा नैमित्तिकप्रलयकाले ॥ ४ ॥

---

भाषा टीका।

श्रीकपिलजी बोले जो पुरुष घर में ही रहकर गृहस्थाश्रम के धर्मों को काम को अर्थ को सेवन करता है उनके फल की चाहना से फिर उन्हीं कर्मों को पुष्ट करता है ॥ १ ॥

सो भी कामना में मोहित होने से भगवद्धर्मों से विमुख होकर यज्ञों से श्रद्धापूर्वक देव पितरों को पूजता है ॥ २ ॥

वह सोमादि यज्ञ करने वाला उन देवादिकों में श्रद्धा युक्त होने से देव पितरों का व्रत करता है सो तो चन्द्रमा के लोक को जाकर फिर भी यहां ही आवैगा ॥ ३ ॥

जिस समय में प्रलय के वखत शेषशय्या पर भगवान् हरि शयन करते हैं तब ये जो गृहस्थों के यज्ञों से मिले स्वर्गादि लोक हैं सो सब नष्ट होजाते हैं ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

भगवद्धर्मनिष्ठानां तत्प्राप्तिमेव गतिमाह त्रिभिः। ये तु कामार्थप्रयोजनाय स्वधर्मान्न दुह्यन्ति न दुहन्ति निःसङ्गा अनासक्ताः न्यस्तानीश्वरे समर्पितानि कर्माणि यैः ॥ ५ ॥ ६ ॥

विश्वतोमुखं परिपूर्णं पुरुषं यान्ति तथाच "श्रुतिः सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः पुरुषो ह्यव्ययात्मा" इति प्रकृतिमुपादानकारणम्। उत्पत्त्यन्तभावनं निमित्तकारणम् ॥ ७ ॥

परमेश्वरदृष्ट्या हिरण्यगर्भोपासकानामपि क्रमेण तत्प्राप्तिमाह। द्विपरार्धावसान इति त्रिभिः। परस्य हिरण्यगर्भस्य परचिन्तकाः परमेश्वरदृष्ट्या हिरण्यगर्भोपासकाः ॥ ८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी।

ये स्वधर्मानिति त्रिकम्। प्रकर्षेण शान्ताः भगवन्निष्ठबुद्धयः "शमो मन्निष्ठता बुद्धेः" इति श्रीभगवद्वाक्यात् निःसङ्गा विषयासक्तिशून्याः स्वधर्माख्येन भगवदर्पितनिष्कामवर्णाश्रमधर्माख्येन सत्त्वेन सत्त्वकार्य्येण सूर्य्यद्वारेणेति सूर्य्यस्य तदधिष्ठानत्वं व्यञ्जितम् "ध्येयः सदा सवितृमण्डलमध्यवर्त्ती" इत्युक्तेः। उपादानकारणमिति "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इति न्यायात् चकारोऽत्र निमित्ततासमुच्चयार्थः श्रुतौ विरजाः प्राकृतसङ्गशून्याः यत्रेति धामप्राप्तेस्तत्प्राप्त्याभेदनिर्देशः तस्मान्मूलेऽपि सूर्य्यद्वारेणेत्युक्त्या तदन्तर्भावनायाः साधनत्वमेवाभिव्यञ्जितमन्यथा श्रुत्यैकार्थता न स्यादिदिति चिन्त्यम् ॥ ५ ॥ ६ ॥ ७ ॥

तत्प्राप्तिं भगवत्प्राप्तिं तावत्प्रलयावधिपर्य्यन्तं ब्रह्मलोकमध्यासते ततः परं हिरण्यगर्भेण भक्तेन सह मुच्यन्ते तस्याभक्तत्वे स च ते च यथा पूर्वं प्रजायन्त इत्यग्रे वक्ष्यत्येव ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका।

अथ परब्रह्मोपासकानां गतिमाह। य इति। ये धीराः जितेन्द्रियाः कामार्थयोर्निमित्तं स्वधर्मान् वर्णाश्रमोचितधर्मान्न दुह्यन्ति नानुतिष्ठन्ति किन्तु निःसङ्गाः असत्सङ्गरहिताः न्यस्तानि भगवति समर्पितानि कर्माणि स्ववर्णाश्रमोचितकर्माणि यैस्ते प्रशान्ताः शमदमादिसम्पन्नाः शुद्धचेतसः स्वधर्मानुष्ठानेन निर्मलान्तःकरणाः ॥ ५ ॥

निवृत्तिधर्मा भगवद्गुणश्रवणकीर्त्तनादयः तेषु निरताः सत्त्वेन

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

त्यागो हि पुरुषव्याघ्र ! त्रिविधः सम्प्रकीर्त्तितः ।
यस्तु कर्मफलत्यागः स त्यागः सात्त्विकः स्मृतः ।

इत्युक्तसात्त्विकत्यागयुक्तेन स्वधर्माख्येन पञ्चमहायज्ञादिना । यद्वा । स्वधर्माख्येन सत्त्वेनेत्युपचारादुक्तं स्वधर्मजन्येनेत्यर्थः परिशुद्धेन चेतसा भगवत्प्रवणेन चेतसा अहङ्कारममकार-रहिताः ॥ ६ ॥

ते सूर्यद्वारेण सूर्यद्वारेणेत्यर्चिरादीनामुपलक्षणम् । अर्चिरहः सितपक्षोदगयनाब्दमरुदर्केन्दुविद्युद्वरुणेन्द्रधातृक्रमेण पुरुषं परम-पुरुषं मामुपयान्ति पुनरनावर्त्तयितृत्वसूचनाय पुरुषं विशिनष्टि । अस्य विश्वस्य प्रकृतिं बन्धमोक्षकारणं परमपुरुषसङ्कल्पादेव हि बन्धो मोक्षश्च अस्य विश्वस्योत्पत्तिस्थितिसंहारान् भावयति करो-तीति तथा विश्वतो मुखं सर्वज्ञं परे ब्रह्मादयोऽवरे यस्मात् स चासावीश्वरश्च अनेन विशेषणजातेन स्वसङ्कल्पकृतजगदुदय-विभवलयमोक्षलीलत्वान्निरतिशयप्रीतिविषयान् स्वभक्तान् स्वपदं प्रापय्य पुनरनावर्त्तयितुं समर्थं इत्युक्तं भवति प्रतिपादितं चैतत्पुरस्तात् अत्र सूर्यद्वारेणेत्यनेन "सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा" इति श्रुत्यर्थ उक्तः ॥ ७ ॥

एवं धूमादिरर्चिरादिश्चेति मार्गद्वयमुक्तमथ योगियानेन चतुर्मुखलोकगतानामपि ब्रह्मणा सह महाप्रलयदशायां मुक्ति-रुच्यते द्विपरार्द्धेत्यादिना ।

उत्तरो देवमार्गस्तु योगियानस्तु मध्यमः ।
दक्षिणः पितृयानस्तु तत्रान्त्या नागवीथिका ।

इति ह्युच्यते द्विपरार्द्धावसानः द्वयोः परार्द्धयोःपूर्वोत्तरयो-रवसानमन्तो यस्मिन् द्विपरार्द्धावसानरूपो वा यः ब्रह्मणश्चतुर्मु-खस्य प्रलयः तावत्तदवधि परस्य परमात्मनः परिचिन्तका योगिनः लोकं ब्रह्मणो लोकं लोके "अधिशीङ्स्थासां कर्म" इत्याधारस्यैव कर्मसंज्ञायां द्वितीया अध्यासते इत्यनेन निष्का-मकर्मिणामपि पुष्कलज्ञानोत्पत्तेः प्रागेव मरणे ब्रह्मलोक-प्राप्त्या तत्र ज्ञानाभ्यास उक्तः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

निवृत्तिधर्मिणां मार्गं गम्यं तत्साधनं च संक्षिप्याह । निवृ-त्तीति । पुरुषस्य स्वरूपधर्मः सत्त्वगुणस्तेन । यद्वा । सत्त्वेनात्मभावेन परमात्मभक्त्या ॥ ६ ॥

सूर्यद्वारेणार्चिरादिमार्गेण मानवनामानं पुरुषं यान्ति किं तत्रै-वावस्थानमुतान्यत्रापीति तत्राह । विश्वतो मुखमिति । विभक्ति-विपरिणामेन पुरुषेणेत्यनुवर्तनीयं मानवपुरुषेणाप्रतीकालम्बना अपि विश्वतोमुखं सर्वज्ञं परावरेशं मुक्तामुक्तप्रपञ्चेश्वरं प्रकृतिं मूलकारणमस्य जगत उत्पत्त्यन्तभावनं सृष्टिसंहारकारणं विष्णुं यान्तीत्यन्वयः इदमुक्तं भवति प्रतीकालम्बना अप्रतीकालम्बना उभयेऽपि ज्ञानिनो विष्णुं प्राप्यापि मानवपुरुषेण कार्यब्रह्मप्रापिता-स्तत्समीपे वसन्तीति ॥ ७ ॥

प्रतीकालम्बनानामप्रतीकालम्बनानां च कियन्तं कालं तत्र निवास इति तत्राह । द्विपरार्धेति । द्विपरार्धस्यावसानं समाप्तिर्य-स्मिन् काले स तथोक्तः स ब्रह्मणः प्रलयो यावता कालेन भवति तावन्तं कालं परस्य परिचिन्तकाः परमात्मोपासकास्ते उभयेऽपि कार्यब्रह्मणो लोके सत्याख्येऽध्यासते मुक्तवत्तिष्ठन्तीत्यन्वयः नात्रा-धिकः कर्मापेक्षी किं त्वधिकर्तेति ज्ञातव्यम् ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ये स्वधर्मानिति त्रिकम् । प्रशान्ताः प्रकर्षेण शान्ता भगव-न्निष्ठबुद्धय इति साक्षात्तदाराधननिर्देशः ॥ ५ ॥ ६ ॥

सूर्येति । श्रुतौ तत्स्थानप्राप्तिनिर्देशेन तत्प्राप्तिनिर्देशः अत्र तु साक्षादिति तत्तात्पर्य्येणैकार्थता । तथाच तयोरैकात्म्य-मेवोपलब्धम् । एवमन्यत्रापि ज्ञेयम् । तत्र श्रुतौ विरजाः प्रकृति-सङ्गरहिता इति पदार्थः । अनेन तस्य लोकस्याप्राकृतत्वं यत्रामृतः पुरुष इत्यनेन तद्वासित्वञ्च बोधितम् ॥ ७ ॥

तावदिति । तस्याद्यांशं प्राप्येत्यर्थः ॥ ८ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

अथ सात्त्विकानां निष्कामाणां धर्मं सफलमाह । ये स्वधर्मानिति । फलार्थं धर्मं कृत्वा देहादिकं प्रसाद्य तेन पुनः न धर्मं कुर्वन्ति सोऽद्रोहः अपेक्षिताकरणे हेतुः धीरा इति धर्मार्थं तु धर्मं दु-हन्त्येव अतस्तद्व्यावृत्त्यर्थमाह । कामार्थहेतव इति । कामः अर्थश्च हेतुः धर्मदोहे तादृशं धर्मदोहं न कुर्वन्ति तेषां निवृत्तिधर्मेऽधि-कारमाह । निःसङ्गा इति । बहिः सङ्गपरित्यागः तत्सङ्गेन च यानि कर्माणि क्रियन्ते तेषामपि परित्यागः अन्यथा सापेक्षत्वादन्यतर-परित्यागो न संभवति प्रशान्ताश्चेतीन्द्रियविक्षेपाभावः रजोगुणा-भाव उक्तः विवेकवती शुद्धा मेधा येषामेवं साधनचतुष्टयमुक्तं वैराग्यं न्यासो योगः सांख्यं चेति ॥ ५ ॥

तदनन्तरधर्माभावे पातित्यं स्यादिति तद्धर्मनिरूपणपूर्वकं दोषत्रयाभावमाह । निवृत्तीति । निवृत्तिधर्मा वैराग्योपाधयः भगवद्ध-र्मांश्चतुर्थाश्रमधर्मांश्च तत्र निरता इति तद्धर्मैरेव नित्यसिद्धिः अहंममेति दोषद्वयाभावमाह । निर्ममेति । अन्तःकरणाशुद्धिश्च महान् दोष इति साधनपूर्वकं तदभावमाह । स्वधर्माख्येति । स्वधर्माः दास्यरूपाः निवृत्तिधर्मास्तु उक्ता एव अत एव स्वधर्म इति आख्या यस्य तादृशेन सत्त्वेन गुणेन परितः शुद्धेन चेतसा ॥ ६ ॥

एवं ज्ञानकर्मणोः फलं सूर्यद्वारेणेति पुरुषं प्रकृतेः परं ब्रह्माण्डा-त्मकं व्यावर्त्तयति । विश्वतो मुखमिति । सर्वतो मुखः स कालात्मा ततोऽपि पुरुषोत्तमं यान्तीति तमेव पुरुषं विशिनष्टि । परे काला-दयः अवरे ब्रह्मादयस्तेषां नियन्ता सर्वस्यापि समवायी अस्यो-त्पत्त्यादिनिमित्तं च साकारं च नियन्तारं समवायिनिमित्तकं तेषां कालनियममाह । द्विपरार्द्धावसान इति । तुशब्दः कल्पा-न्तरव्यावृत्त्यर्थः ते तावत्परस्य ब्रह्मणो लोकमध्यासते यतस्ते परचिन्तकाः पुरुषोत्तमत्वेन चिन्तयन्ति परस्य भगवतो वा ॥ ७ ॥ ८ ॥

क्ष्माम्भोनलानिलवियन्मनइन्द्रियार्थभूतादिभिः परिवृतं प्रतिसंजिहीर्षुः ॥
अव्याकृतं विशति यर्हि गुणत्रयात्मा कालं पराख्यमनुभूय परः स्वयंभूः ॥ ९ ॥
एवं परेत्य भगवन्तमनुप्रविष्टा ये योगिनो जितमरुन्मनसो विरागाः ॥
तेनैव साकममृतं पुरुषं पुराणं ब्रह्म प्रधानमुपयान्त्यगताभिमानाः ॥ १० ॥
अथ तं सर्वभूतानां हृत्पद्मेषु कृतालयम् ॥
श्रुतानुभावं शरणं व्रज भावेन भामिनि ! ॥ ११ ॥
आद्यः स्थिरचराणां यो वेदगर्भः सहर्षिभिः ॥
योगेश्वरैः कुमाराद्यैः सिद्धैर्योगप्रवर्तकैः ॥ १२ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सकामकर्मिणां पुनः पुनरावृत्तिमुक्त्वा निष्कामकार्मिणां पुनरनावृत्तिमाह । ये इति । न दुह्यन्ति न दुहन्ति न धर्म्मफलं स्वर्गादिकमिच्छन्तीत्यर्थः । निःसङ्गाः अनासक्ताः न्यस्तकर्म्माणः ईश्वरार्पितकर्म्मफलाः ॥ ५ ॥ ६ ॥

ज्ञानं प्राप्य विश्वतोमुखं परिपूर्णं पुरुषं यान्ति प्राप्नुवन्ति मुक्ता भवन्तीत्यर्थः । तथाच श्रुतिः । "सूर्य्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः पुरुषो ह्यव्ययात्मा" इति । अस्य जगतः प्रकृतिमुपादानकारणमुत्परयन्तभावनं निमित्तकारणम् ॥ ७ ॥

ब्रह्मा परमेश्वरस्य गुणावतार एवेति परमेश्वरदृष्ट्या हिरण्यगर्भोपासकानामपि क्रमेण भक्तिमिश्रज्ञानेन ब्रह्मणा सह मुक्तिर्भवेदेव ।

ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥

इति श्रुतेः । ये तु केवलं हिरण्यगर्भोपासकास्तेषां ब्रह्मणो मुक्तावपि न मुक्तिरित्याह । द्विपरार्द्धावसान इति त्रिभिः । लोकं सत्यलोकं परस्य ब्रह्मणः परिचिन्तका वैराजध्यानपराः ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ये तु भगवद्धर्म्मनिष्ठास्ते भगवन्तं प्राप्नुवन्तीत्याह । ये इति त्रिभिः ॥ ५ ॥ ६ ॥

परावरेशं जीवप्रकृत्याख्ययोः परापरप्रकृत्योरीशं नियन्तारम् चिदाचिच्छक्तिमन्तमत एव अस्य चिदचिदात्मकस्य प्रकृतिमुपादानकारणमुत्परयन्तभावनं निमित्तकारणं च अत एव विश्वतोमुखं सर्वात्मानं पुरुषं सूर्यद्वारेण यान्ति तथाच श्रुतिः "सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः पुरुषो ह्यव्ययात्मा" इति अनेन "तेऽर्चिषमभिसम्भवन्ति"इत्यर्चिरादिमार्ग एव सूचितः यत्रामृतः पुरुष इत्यनेन प्रकृतिमण्डलभिन्नदेशस्थः मुमुक्षुप्राप्यः पुरुषो दर्शितः "अत्र ब्रह्म समश्नुते" इतिश्रुत्या तु ध्याने ब्रह्मप्राप्तिरुक्तेति दिक् ॥ ७ ॥

परमपुरुषदृष्ट्या ये हिरण्यगर्भोपासकाः हिरण्यगर्भं प्राप्य ततः पुनर्यथा भगवज्ज्ञानभक्ती लब्ध्वा तेनैव परमोपकारिणा सह भगवन्तं प्राप्नुवन्तीत्याह । द्विपरार्द्धावसाने इति त्रिभिः । यः प्राकृतिकः परस्य हिरण्यगर्भस्य परचिन्तकाः परमात्मदृष्ट्या हिरण्यगर्भध्यातारः ॥ ८ ॥

---

### भाषाटीका

जो लोग धीर हैं आसक्ति रहित हैं सर्व कर्म फलों का त्याग करते हैं शान्त हैं शुद्धचित्त वाले हैं फलकी इच्छा नहीं करते हैं ॥ ५ ॥

निवृत्ति धर्ममें रत हैं निर्मम हैं निरहङ्कार हैं अपने धर्म के सत्व के निमित्त से शुद्ध चित्त से रहने से वे लोग सूर्यद्वार से सर्वव्यापक परमात्मा ब्रह्मादिकों के नियन्ता इस जगत्के उत्पत्यादि करने वाले नारायण को प्राप्त होते हैं ॥ ६ ॥ ७ ॥

ब्रह्मा के लोक को जाने वाले पुरुष द्विपरार्ध में जब ब्रह्मा का प्रलय होता है तब तक ब्रह्म लोक में वास करते हैं ॥ ८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

क्ष्मादीनि पञ्च महाभूतानि मनश्चेन्द्रियाणि चार्थाश्च शब्दादयो भूतादिश्चाहङ्कार एवमादिभिः परिवृतं युक्तं ब्रह्माण्डं प्रति संहर्तुमिच्छुः सन् अव्याकृतमीश्वरं पराख्यं द्विपरार्धलक्षणं कालम् ॥ ९ ॥

परेत्य दूरं गत्वा भगवन्तं हिरण्यगर्भमनुप्रविष्टा ये योगिनोऽमृतं परमानन्दरूपं प्रधानमुत्कृष्टं ब्रह्म तेनैव सहोपयान्ति न तु पूर्वम् । यतस्तदाऽगताभिमानाः तथाच स्मृतिः ।

ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥

इति ॥ १० ॥

भगवदुपासकास्तु साक्षादेव तं प्राप्नुवन्ति न क्रमेणातस्त्वं साक्षात्तमेव भजेत्याह । अथ तस्मात् भावेन प्रेम्णा ॥ ११ ॥

एवं तावद्भगवद्भक्तानां निरन्तरमेव तत्प्राप्तिर्भगवद्भेदेन हिरण्यगर्भोपासकानां तु क्रमेणेत्युक्तम् । भेदेनोपासने तु ब्रह्मादयोऽप्यावर्तन्ते किमुतान्य इत्याह । आद्य इति चतुर्भिः । यो वेदगर्भः सोऽपि गुणव्यतिकरे जाते यथापूर्वं ब्रह्मपदाधिकृतः सन् प्रजायते इति तृतीयेनान्वयः । न केवलं स एवैकः किन्तु ऋषिभिर्मरीच्यादिभिर्योगेश्वरादिभिश्च सह ॥ १२ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

भगवत्प्राप्तौ क्रममाह । क्ष्माम्भ इति । स्वदेहवैराजं प्रति संहर्तुं त्यक्तुं गुणत्रयात्मा प्रकृतितादात्म्यं प्राप्येत्यर्थः ॥ ९ ॥

एवं हिरण्यगर्भवत् प्रकृतिपर्य्यन्तं दूरं गत्वा तेनैव हिरण्यगर्भेण सह तत्र हेतुद्वयं ब्रह्मोपासका इत्येवमभिमानो न गतो येषामिति भगवत उपास्यत्वज्ञाने पूर्वमेतत्प्राप्तिः स्यादित्यवधेयम् । ते सर्वे ब्रह्मोपासकाः प्रतिसञ्चरे प्रलये परस्य द्विपरार्द्धस्य ॥ १० ॥

तस्मात्साक्षात्प्राप्तेर्दुर्घटत्वात् ॥ ११ ॥

भेदेनोपासने त्विति । तत्र ब्रह्मणो भेदेनोपासनं हिरण्यगर्भ एवाहमीश्वर इति प्रतीकोपासनं तदुपासकानां तु तद्ब्रह्मैवेश्वर इत्याकारकमिति ज्ञेयम् । आद्य इति चतुष्कम् । भेददृष्ट्या परमेश्वराद्भिन्नत्वेन हिरण्यगर्भत्वस्योत्कृष्टत्वदृष्ट्या यथा विष्णुः पालने तथा सृष्टौ स्वतन्त्रः कर्त्ताहमेवास्मीत्यभिमानेन कर्तृत्वाच्चेति जन्मनि हेतुद्वयम् । स्वकर्मनिर्मितं योगादिलक्षणस्वकर्मजन्यमैश्वर्यमणिमादि पुरुषं प्रकृत्युपाधिकम् ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

क्ष्माम्भ इति । क्ष्मादीनि वियदन्तानि पञ्च महाभूतानि मनश्चेन्द्रियाणि चार्थाश्च शब्दादयः भूतादिस्तामसाहङ्कारः एवमादिभिः परिवृतं युक्तं ब्रह्माण्डं सञ्जिघृक्षुः संहर्तुमिच्छुः गुणत्रयं सत्त्वादिगुणमयं जगद्यस्यात्मा शरीरं स्थूलचिदचिद्विशिष्टमित्यर्थः गुणत्रयस्यात्मेति वा स भगवान् यर्हि यदाऽव्याकृतं विशति नामरूपविभागानर्हनिरतिशयसूक्ष्मचिदचिद्विशिष्टत्वावस्थां प्रविशति प्राप्नोति तदा परः इन्द्रादिभ्य उत्कृष्टः स्वयंभूर्ब्रह्मा द्विपरार्द्धाख्यं काळमनुभूय पुराणं पुरुषं यातीति विभक्तिविपरिणामेनोत्तरत्रान्वयः ॥ ९ ॥

एवं तथा ये योगिनः भगवन्तं हिरण्यगर्भमनुप्रविष्टाः प्राप्तास्तेऽपि तत्र जितमरुन्मनसः जितप्राणेन्द्रियाः विरागाः प्राप्यपरब्रह्मव्यतिरिक्ताणिमाद्यष्टैश्वर्यवैतृष्ण्ययुक्ताः विगतदेहात्माभिमानस्वतन्त्रात्माभिमानास्तेनैव साकं ब्रह्मणा सह प्रधानं सर्वोत्कृष्टं ब्रह्म स्वरूपतो गुणतश्च निरतिशयबृहत्पुराणं पुरातनं पुरुषं परमपुरुषमुपयान्ति अतः

> सन्न्यासयोगाद्यतयः शुद्धसत्त्वाः । ते ब्रह्मलोके तु परान्तकाले
> परामृतात् परिमुच्यन्ति सर्वे
>
> ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।
> सर्वस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ।

इत्यादिश्रुतिस्मृत्यर्थं उक्तः ॥ १० ॥

एवमत्रापरिनिष्पन्नभगवद्भक्तियोगानां केषांचिद्धिरण्यगर्भलोकप्राप्तिपूर्वकं परिपूर्णभगवद्भक्तिनिष्पादनेन भगवत्प्राप्तिरुक्ता अथात्रैव पूर्णभक्तियोगानामविलम्बेनार्चिरादिगत्या भगवत्प्राप्तिरतस्त्वमपि पूर्णभक्तियोगं निर्वर्तयेत्याह । अथेति । हे भामिनि ! अथ तस्मात् सर्वभूतहृत्पद्मावासं श्रुतप्रभावं मत्तस्त्वया श्रुतप्रभावं तं भगवन्तं शरणं भावेन "माता पिता भ्राता निवासः शरणं सुहृत्" इत्याद्युक्तभावेन भज व्रज पूर्वं साङ्गः सपरिकरो भक्तियोग उक्तः अत्र तदङ्गभूतशरणागतिरुक्ता एवंचरमश्लोकोक्तरीत्या शरण्यो भगवान् भक्तियोगविरोधीनि पापानि निरस्य भक्तियोगं निर्वर्त्तयतीति हृदयम् उपयान्ति गताभिमाना इति ब्रह्मलोकवासिनामपि देहात्माभिमानस्वतन्त्रात्माभिमानरहितानामेव भगवत्प्राप्तिरुक्ता । अथ यदि केनचित्सुकृतविशेषेण ब्रह्मलोकं प्राप्ताः फलासङ्गरहितकर्मणोऽपि देहात्माभिमानादियुक्ताश्चेत्ते पुनः संसरेयुरन्ये पुनः साभिमानाः संसरन्तीति किमु वक्तव्यम् ॥ ११ ॥

ब्रह्मापि साभिमानश्चेत् सोऽपि नरकादिभिः संसरेदित्याह । आद्य इति चतुर्भिः । स्थिरचराणामाद्यः कारणभूतः श्रेष्ठ इत्यर्थः स पुरुषः समष्टिपुरुषः वेदगर्भः ब्रह्मापि सनत्कुमारप्रभृतिभिर्मरीच्यादिभिः ऋषिभिस्तथा योगप्रवर्तकैरन्यैश्च सिद्धैः सह भेददृष्टिरब्रह्मात्मकस्वतन्त्रवस्तुतयाभिमानः शरीरात्माभिमानस्तेन निःसङ्गेनापि कर्मणा सगुणं साम्यावस्थापन्नगुणत्रयाविशिष्टं ब्रह्म सूक्ष्मचिदचिद्विशिष्टं पुरुषं परमात्मानं व्रजेत् प्राप्नुयात् सूक्ष्मचिदचिद्विशिष्टे ब्रह्मणि लीनो भवेत् कुतः कर्तृत्वात् भेददृष्ट्यभिमानपूर्वकं निःसङ्गकर्मकर्तृत्वात् ॥ १२ ॥ १३ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ब्रह्मप्रलये विमुक्तिः कीदृशीति तत्राह । क्ष्माम्भ इति । गुणत्रयात्मा सत्त्वादिगुणत्रयादानकर्ता परः सर्वजीवोत्तमः स्वयम्भूः ब्रह्मा परं द्विपरार्धाख्यं स्वं कालमनुभूय प्रतिसंजिहीर्षुः स्वसृष्टं जगत्संहर्तुकामः क्ष्माम्भोनलानिलवियन्मनइन्द्रियार्थभूतादिभिः पृथिव्यादिपञ्चभूताभिमानिदेवैर्मनोभिमानिभिरिन्द्रियाभिमानिभिरर्थाः शब्दादयस्तदभिमानिभिश्च भूतादिभिरहङ्कारतदभिमानिभिश्च देवैः स्वबिम्बद्वारेण गरुडशेषमार्गद्वयेनात्मानं प्रविष्टैः परिवृतः अव्याकृतं लक्ष्मीतत्त्वं यर्हि यदा विशति लक्ष्मीद्वारा परब्रह्म विशतीत्यर्थः ॥ ९ ॥

तदा परेत्य देहान् योगेन विसृज्यैवमुक्तप्रकारेण देवयानेन गत्वा भगवन्तं विकुण्ठनाथं ब्रह्माणं चानुप्रविष्टा जितमरुन्मनसः प्राप्तवायुमनोजया अत एव विरागा विषयतृष्णारहिता ये योगिनो ज्ञानिनस्ते स्वबिम्बद्वारेण प्रविष्टब्रह्माणस्तेन ब्रह्मणा साकममृतं नित्यमुक्तं प्रधानं सर्वोत्तमं पुरुषं पूर्णषड्गुणं ब्रह्मोपयान्ति लिङ्गशरीरत्यागलक्षणां मुक्तिं प्राप्नुवन्तीत्यर्थः । ननु शरीराभावे जीवत्वमपि नष्टं स्यादित्यत उक्तमगताभिमाना इति अत्यक्तजीवत्वाभिमानाः ॥ १० ॥ ० ॥ *

एतदेव मुक्तिस्वरूपं विविच्य दर्शयति । आद्य इति । यो वेदगर्भो ब्रह्मा स्थिरचराणां स्थावरजङ्गमानामाद्यः आदौ भूतः सहर्षिभिर्मनुष्योत्तममारभ्य गरुडशेषान्तैर्ज्ञानिभिः सिद्धैः साधनसामग्रीमद्भिर्योगेश्वरैः कुमाराद्यैः सनकाद्यैर्योगाचार्यैश्च सह ॥ १२ ॥

---

* अत्रत्यः श्लोकः पञ्चदशश्लोकानन्तरं विद्यते ।

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

प्रतिसञ्जिहीर्षुस्त्यक्तुमिच्छुर्जिघृक्षुरिति पुरयारण्यः । गुणत्रयात्मेति प्रकृत्या सह तादात्म्यं प्राप्त इत्यर्थः ॥ ९ ॥ १० ॥

अथेति । भावेन "येषामहं प्रिय आत्मा सुतश्च" इत्युक्तरीत्या प्रियत्वाद्यभिमानैकतमेन । तत्रापि प्राप्ततया सुतभावेनैवेत्याह । भाविनीति ॥ ११ ॥

आद्य इति चतुष्कम् । भेददृष्ट्या परमेश्वराद्भिन्नत्वेन हिरण्यगर्भदृष्ट्या । तथा हिरण्यगर्भ एवाहमस्मीत्यभिमानेन च यत् कर्तृत्वमुपासकत्वं तस्मादित्यर्थः । उपासना हि क्षयरहिता । ननु बलवत् कर्मान्तरमन्यथा जन्मान्तरं प्रापयतु तत्राह । निःसङ्गेनेति । तत्रापि कर्तृत्वादिति योज्यम् किन्तु क्रियानिष्पादकत्वादित्यर्थः । तत्र महर्ष्यादीनां सृष्टिं विशिष्य दर्शयति । ऐश्वर्यमिति । पूर्ववत् कर्मणा धर्म्मेण योगेन च विनिर्मितम् ॥ १२–१५ ॥

———

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

भगवद्भक्तानामेव तादृशधर्मयुक्तानां पुरुषोत्तमप्राप्तिः नान्येषामिति वक्तुमन्येषां प्रकृतावेव लयमाह । क्ष्माम्भोऽनलेति द्वाभ्याम् । केचित्तु परस्य ब्रह्मणः परत्वेन भगवत्त्वेन चिन्तका इति पूर्वफलमपि हिरण्यगर्भोपासकानामेवेत्याहुः । तद्भिन्नप्रक्रमे निमित्ताभावाच्चिन्त्यं त्रैविध्यस्यैव वक्तव्यत्वाच्च क्ष्माम्भोऽनलानिलवियन्ति पञ्च भूतानि मनश्च इन्द्रियाणि अर्था विषयाः भूतादिरहङ्कारः तैः परितः कृतं वृतं वा ब्रह्माण्डं सर्वमेव सर्वां प्रकृतिमेव सञ्जिहीर्षुः प्रतिकूलेन संहर्तुमिच्छुः यदा भगवानेवं भवति तदा स्वयम्भूः ब्रह्मा प्रकृतिं विशति यर्हि गुणत्रयात्मा न तु भगवद्भक्तः तस्य ब्रह्मत्वैकफलं पराख्यं कालमनुभूयेति परशब्देन ब्रह्मणः शतवर्षमायुः न तु मुक्त्यर्थं ब्रह्मा जात इति पुनरिति पूर्वमपि स एवम्विध एव ॥ ९ ॥

तत्सहचरा अपि प्रकृतावेव लीनाश्च भवन्तीत्याह । एवमिति । ये मृत्वा लोकान्तरे वा गत्वा भगवन्तमनुप्रविष्टा नारदादयोऽधिकारिणः ये वा योगिनो योगाधिकारयुक्ता विरागा इति योगफलतत्फलानि निरूपितानि तानि येषां जातानि ते तु ब्रह्मतुल्याः अतस्तेनैव साकं ब्रह्मणा सह अमृतमक्षरात्मकं पुरुषं पुराणं पुरुषत्रयादतिरिक्तं ब्रह्मशब्दवाच्यं मूलभूतं प्रधानं प्रकृतिपुरुषोत्पादकमुपयान्ति न तु पुरुषोत्तमे गच्छन्ति तत्र हेतुः अगताभिमानाः न गतः अभिमानो येषां वस्तुतस्तु कर्त्ता भगवान् नारदादयः स्वात्मानं मन्यन्ते अतः अक्षर एव लयः पुनरागमनं च वक्ष्यति यद्यप्यक्षरमपि भगवानेव तथापि सृष्टीच्छावशग इति पूर्वमुक्तममृतमिति तत्स्थानानाशाय पुरुषमिति मतान्तरव्युदासाय पुराणमिति पुरुषान्तरव्युदासाय ब्रह्मेत्यक्षरत्वख्यापनाय प्रधानमिति "आसीज्ज्ञानमथो ह्यर्थः" इत्यत्र एकादशे वक्ष्यति प्रकृतिपुरुषहेतुत्वेन अत एवाक्षरोपासकानामपि भगवान्स्वसायुज्यमेवाह। एवकारेणाक्षरप्रवेशं वारयति "ते प्राप्नुवन्ति मामेव" इति अक्षरानन्दस्य लक्ष्म्यात्मकत्वादानन्दाभावे फलं न किञ्चिदिति अत एतेषामपि निरोधमात्रं न तु तद्गतफलसम्बन्धः "श्रोत्रियस्य चाकामहतस्य" इति तस्यापि तावान् स्वरूपानन्द एव ॥ १० ॥

अतो भगवद्भजनमवश्यं कर्त्तव्यं भगवदानन्दार्थमित्याह । अथेति । यतोऽभिमाने महत्यपि ज्ञाने योगे वा न सम्यक्कार्यसिद्धिः अतो भगवद्भजनमेव कर्त्तव्यं न तु ब्रह्मादीनामिव वैयर्थ्यमुचितमित्यर्थान्तरत्वम् तं पुरुषोत्तमं प्राप्त्यर्थमाह । सर्वभूतानां हृत्पद्मेषु कृतालयमिति । यतोऽत्रैवान्तर्यामिभजने तत्प्राप्तिर्भविष्यतीति भावः । मन्त्रप्रकारेण भजनं व्यावर्त्तयति । श्रुतानुभावमिति । श्रुतः अनुभावो यस्य भगवन्माहात्म्यं श्रुत्वा भगवन्मार्गानुसारेण शरणं व्रज भावेनेति स्नेहपूर्वकं भक्त्या सह वा प्रपन्ना भव भामिनीति सम्बोधनमुत्तमस्यैव विश्वासो भवतीति तदर्थं भामिनी महती स्त्री ॥ ११ ॥

यतो न प्रकारान्तरेण पुनरावृत्तिरहितं फलं भवति अतः भगवानेव सेव्य इति वक्तुं सर्वसाधनसम्पत्तिर्यथा ब्रह्मादीनां तथा नान्यस्य भविष्यति तेऽपि चेन्न मुक्ताः किं ज्ञानादिसाधनैरिति पूर्वोक्तं भगवद्भजनं दृढीकर्तुं ब्रह्मादीनां वृत्तान्तमाह । आद्य इति चतुर्भिः ।

स्वरूपतो महत्त्वं च दोषस्तत्फलमेव च ।
पुनरप्यधिकारित्वमन्येषां च निरूप्यते ॥

प्रथमं तेषां सर्वसाधनसहितं स्वरूपमाह । स्थिरचराणामाद्य उत्पादकः । महत्त्वमुक्तं वेदगर्भ इति ज्ञानादिसर्वसाधनान्युक्तानि ऋषिभिः संहेति सत्सङ्गः ये सनत्कुमारादयोऽपि योगेश्वराः योगफलं नियमयितुमपि शक्नुवन्ति किं पुनः प्राप्तुं कुमारशब्देन तेषां कालजयोऽपि सूचितः केवलमधिष्ठातृदेवत्वं योगनियामकत्वं किन्तु योगसिद्धिरप्यस्तीत्याह । सिद्धैरिति । योगप्रवर्त्तकैरिति । अन्येभ्योऽपि स्वसमानफलदानसामर्थ्यं सूचितम् ॥ १२ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ततश्च महाप्रलये सति ब्रह्मा मुच्यत इत्याह । क्ष्मेति । क्ष्मादिभिः परिवृतं स्वदेहं वैराजं प्रति सञ्जिहीर्षुः त्यक्तुमिच्छुः अव्याकृतं परमेश्वरं प्रकृत्यन्तर्यामिणं विशति गुणत्रयात्मा रजोगुणोपाधिकोऽपि त्रिगुणः पराख्यं द्विपरार्द्धलक्षणं कालं ज्ञात्वा ॥ ९ ॥

एवं ब्रह्मणो मुक्तावपि तदुपासका भक्त्यभावान्न मुच्यन्त इत्याह । एवमिति । परेत्य ब्रह्मलोक एव देहं त्यक्त्वा भगवन्तं ब्रह्माणमनुप्रविष्टाः ये योगिनस्ते तेनैव ब्रह्मणैव साकं पुराणं पुरुषं परमेश्वरं प्रधानमुत्कृष्टं ब्रह्म उपयान्ति प्रविशन्ति अगताभिमाना वयं हिरण्यगर्भोपासका इत्यभिमानवन्तः तेन परमेश्वरे तेषामात्यन्तिको न लयः किन्तु प्राकृतिक एवेति तेन पुनर्जगत्सर्गे तेषामपि सर्गो भावीति भावः ॥ १० ॥

अथेति । यस्माद्भक्तिं विना न कोऽपि निस्तरन्त्यतस्त्वं तमेव भगवन्तं शरणं व्रज हे भाविनि ! मयि परमेश्वरे पुत्रभाववतीति त्वयि भक्त्युपदेशः पिष्टपेषरूप एवेति भावः ॥ ११ ॥

ननु ब्रह्मा मुक्तो भवेदथ च स्वभक्तान्मोचयितुं नेष्ट इति कथं प्रतीमस्तत्र "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इति भगवत्प्रतिज्ञाश्रुतेर्भक्तिं विना ब्रह्मापि संसरति के पुनरन्ये वराका इत्याह । आद्यः स्थिरचराणां स्रष्टृत्वात् कारणरूपोऽपि

भेददृष्ट्याभिमानेन निःसङ्गेनापि कर्मणा ।
कर्तृत्वात् सगुणं ब्रह्म पुरुषं पुरुषर्षभम् ॥ १३ ॥
स संसृत्य पुनः काले कालेनेश्वरमूर्त्तिना ।
जाते गुणव्यतिकरे यथापूर्वं प्रजायते ॥ १४ ॥
ऐश्वर्यं पारमेष्ठ्यं च तेऽपि धर्मविनिर्मितम् ।
निषेव्य पुनरायान्ति गुणव्यतिकरे सति ॥ १५ ॥
ये त्विहासक्तमनसः कर्मसु श्रद्धयान्विताः ।
कुर्वन्त्यप्रतिषिद्धानि नित्यान्यपि च कृत्स्नशः ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वेदगर्भः सर्व्ववेदविदपि ऋषिभिर्मरीच्यादिभिरपि सह योगिभिः साधकैः सहेति किं वक्तव्यं योगेश्वरैः सिद्धैरपि सह । भेददृष्ट्या यथा रुद्रः संहरति विष्णुः पालयति तथाहमपि ब्रह्मा सृजामीति भगवतः सकाशाद्भेददृष्ट्या योऽभिमानस्तेन यत्कर्त्तृत्वं स्रष्टृत्वं तस्मात् सगुणं कल्याणगुणमयं ब्रह्म महत्स्रष्टारं काले महाप्रलयकाले प्रविश्य पुनः कालेन गुणव्यतिकरे महत्तत्त्वादौ जाते सति यथापूर्व्वं प्रजायते ब्रह्मा भवतीत्यर्थः । तेऽपि तत्सङ्गिनो महर्ष्यादयोऽपि कर्मज्ञानयोगादिविनिर्मितमणिमाद्यैश्वर्य्यादिकं पूर्व्वमहाकल्प एव निषेव्य पुनर्महाकल्पान्ते आयान्ति आवर्त्तन्ते । ननु योगेश्वराणां सनत्कुमारादीनां च सिद्धानामन्येषाञ्च योगप्रवर्त्तकत्वेन सर्व्वज्ञानिगुरूणां च कथं भेददृष्टिरभिमानो वा सम्भवेत् । ताभ्यां स्थिताभ्याञ्च कथं योगेश्वरादित्वम् । उच्यते तेषां निरभिमानानां निर्भेदब्रह्मानुसन्धानमस्त्येव किन्तु भेदव्युदासे भगवत्यपि मायाशबलितब्रह्मत्वबुद्ध्या मायिकवस्तुत्वबुद्ध्या भेददृष्टिस्तथा वयं ब्रह्मानुभविनः साकारं रूपं निषिध्याम इत्यभिमानश्च ताभ्यामेव दोषाभ्यां यत्कर्त्तृत्वं कर्म्माधिकारस्तस्मादावृत्तिरित्येतच्च काचित्कब्रह्माण्डवर्त्तिब्रह्मब्राह्मणयोगिज्ञानिकुमारादीनामभक्तत्वादुक्तम् । तदन्यसर्व्वब्रह्माण्डवर्त्तिनां ब्रह्मादीनां तेषान्तु भक्तिमत्त्वान्मुक्तिप्रेमभक्तिभगवद्दास्यादिभावप्राप्तयो यथायथं भक्तितारतम्याज्ज्ञेयाः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

क्ष्मा भूः अम्भो जलं अनलो वायुः वियन्नभः मनः इन्द्रियाणि अर्थाः शब्दादयः भूतादिरहङ्कारः तैः परिवृतं विश्वं स्वदेहं यर्हि सञ्जिहीर्षुर्भवति गुणत्रयकार्यभूतः प्रपञ्चः आत्मा देहो यस्य सः तर्हि पराख्यं द्विपरार्द्धं कालमनुभूय अव्याकृतं परमात्मानं विशति ॥ ९ ॥

ये योगिनो भगवन्तं ब्रह्माणमनुप्रविष्टास्तल्लोकं गताः तेऽपि एवं परेत्य तेनैव ब्रह्मणा सह अमृतं पुरुषं मुक्तप्राप्यमुपयान्ति ॥ १० ॥

तं ब्रह्मादिप्राप्यं त्वमपि य. आद्यस्तेन श्वशुरेण ऋषिभिर्मनुकर्दमाद्यैः पितृभर्त्राद्यैश्च योगेश्वरैः शिवादिभिश्च कुमारैर्ज्येष्ठैश्च सिद्धैरस्मदादिभिश्च सह शरणं व्रजेति द्वयोरन्वयः । ब्रह्मादिसेवितं मार्गमाश्रित्य मुक्ता भवेति भावः ॥ ११ ॥ १२ ॥

---

भाषाटीका ।

जिस समय पृथिवी जल अग्नि वायु आकाश मन इन्द्रिय शब्दादि विषय अहङ्कार इन सबों से संयुक्त ब्रह्माण्ड को संहार करने की इच्छा से द्विपरार्द्ध काल को अनुभव करके गुणत्रयरूप वाले ब्रह्माजी परमात्मामें प्रवेश करते हैं ॥ ९ ॥

तैसे ही तब हिरण्यगर्भ को प्राप्त भये प्राणायाम करने वाले वैराग्ययुक्त अभिमानरहित योगिजन उन ब्रह्माजी के साथ ही उन पुराण पुरुष परब्रह्म नारायण को प्राप्त होते हैं ॥ १० ॥

इस हेतुसे हे माता! सब भूतों के हृदय में निवास करने वाले जो भगवान् हैं जिनका प्रभाव आपने सुन रखा है सब प्रकार से उन के शरण जावो ॥ ११ ॥

स्थावर जङ्गम सबजीवों का आदि जो ब्रह्माजी वेदगर्भ निष्काम कर्मों के करने पर भी देहादि अभिमान रहने से सब पुरुषोंमें श्रेष्ठ सगुण परब्रह्म को प्राप्त होकर भी सृष्टि काल में ईश्वरमूर्ति कालसे गुणों के क्षोभ होने से जगत् कर्म मे अधिकृत रहने से पूर्वकल्प के तुल्य योगेश्वर सिद्धि योग प्रवर्तक सनत्कुमार नारदादिकों के सहित फिर उत्पन्न होते हैं ॥ १२ ॥ १३ ॥ १४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

जन्मनि हेतुद्वयम् । भेददृष्ट्याभिमानेन कर्तृत्वादिति च यथा पूर्वत्वे हेतुः । निःसङ्गेन निष्कामेण कर्मणेति ॥ १३ ॥

किं कृत्वात्र प्रजायते प्रथमं पारमेष्ठ्यमैश्वर्यं निषेव्य पश्चात्प्रलये सगुणं गुणाधिष्ठातारं प्रथमावतारूपं पुरुषं संसृत्य प्राप्य तेऽपि ऋषिप्रमुखाः स्वकर्मनिर्मितमैश्वर्यं निषेव्य पुरुषं च संसृत्य यथापूर्वं स्वस्वाधिकारेण पुनरायान्तीत्यन्वयः ॥१४॥ ॥ १५ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

यदा ब्रह्मोपासकानामपि भेददर्शनाभिमानाभ्यामेवमावृत्तिस्तदा काम्यकर्मिणां किं वक्तव्यामिति तान्निन्दन्नाह षड्भिः । ये त्विह कर्मस्वासक्तमनसः सन्तोऽप्रतिषिद्धानि काम्यानि नित्यानि च कर्माणि कृत्स्नानि कुर्वन्ति तेऽयंपणो दक्षिणेन पथा धूममार्गेण पितृलोकं व्रजन्तीति पञ्चमेनान्वयः । मध्ये तन्निन्दा ॥ १६ ॥ १७ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपन्याख्या दीपिकाटिप्पणी ।

ये त्विति पञ्चकम् । दैवेनेति । तेषामदृष्टं नरकप्रापकमेवेत्युक्तं तद्वर्णनेनेत्यर्थः । ननु सुधायामपि कथमरुचिस्तत्राह । पुरीषमिवेति । यथा विड्भुजो हि खण्डादि हित्वा पुरीषमेवान्विष्यन्ति तथा स्वभावत्वादिति भावः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

संसृत्य सूक्ष्मचिदचिद्विशिष्टे ब्रह्मणि संसर्गं प्राप्य पुनरीश्वरमूर्तिना कालेन काले "तदैक्षत बहुस्याम्" इति बहुभवनसङ्कल्पदशायां गुणव्यतिकरे गुणवैषम्ये जाते सति पुनः सृष्टिदशायामित्यर्थः यथापूर्वं पूर्ववत्प्रजायते ॥ १४ ॥

पारमेष्ठ्यमप्यैश्वर्यं धर्मविनिर्मितं कर्मार्यत्तमेवातस्तदपि निषेव्यानुभूय परमात्मनि लीनः पुनर्गुणव्यतिकरे स्वयाया-न्तीत्यर्थः ॥ १५ ॥

एवं निष्कामकर्मणामपि साभिमानानां पुनः संसार उक्तः । साभिमानाः सकामकर्माणः संसरेयुरिति किं वक्तव्यमिति वक्ष्यंस्तान्निन्दति । येत्विति चतुर्भिः । इह पारमेष्ठ्यैश्वर्यान्तेष्वासक्तचित्तास्तत्साधनेषु कर्मसु त्वरया युक्ता अप्रतिषिद्धानि काम्यानि नित्यान्यपि च कर्माणि स्वर्गाद्यर्थतया कुर्वन्ति ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भेददृष्ट्या जीवेश्वरादिविषयपञ्चविधभेदज्ञानेन भेदज्ञानस्य मुक्तिरजतज्ञानवद्धेयत्वेन न तेन मुक्तिनिश्चय इत्यत उक्तं अभिमानेनेति । अभिमानेन पूर्णज्ञानेन यावता मुक्तिः स्यात्तावता ज्ञानेनेत्यर्थः । निःसङ्गेन फलाभिसन्धिरहितेन ज्ञानोत्तरकालीनेन कर्मणापि जगत्सृष्ट्यादिकर्तृत्वात्सगुणं ज्ञानैश्वर्याद्यनन्तगुणोपेतं नेदं शबलमित्याह । ब्रह्मेति । "अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणाः" इति श्रुतेः स्वत एव सर्वगुणापूर्णमित्यर्थः ।नाकाशवन्नीरूपमित्याह । पुरुषमिति । भक्तानुकम्पया गृहीतपुरुषाकारमनेन गुणाश्चैश्वर्यादयः ननु सत्त्वादय इति ध्वनयति "ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः" इत्यादेः इतोऽपि न शबलमित्याह । पुरुषर्षभमिति । क्षराक्षरपुरुषातीतत्वात्पुरुषोत्तमं सङ्गतः प्रविष्टो भवति सायुज्यादिलक्षणां मुक्तिमाप्नोतीत्यर्थः ॥ १३ ॥

स ब्रह्मादिजीवसङ्घः सृष्टावपि सायुज्यमेव भुङ्क्ते किं ततो निर्गच्छतीति तत्राह । स सङ्घेति । स ब्रह्मादिजीवराशिः संगत्य प्रलये प्रविश्य परमेश्वरं पुनः कायेन कालान्तर्यामिणेश्वरमूर्तिना हरिणा काले गुणव्यतिकरे सृष्टिलक्षणे जाते प्राप्ते । अगुणव्यतिकरे त्रिगुणव्यतिकररहित वाह्यः श्वेतद्वीपे यथापूर्वमुच्चनीचादिभावेन यथा संसारदशायामन्यन्तान्योऽन्यभेदेन स्थितस्तथा प्रजायते प्रादुर्भूतानन्दो वर्तते यो वेदगर्भः प्रलये प्राप्ते परमेश्वरं संगत्य पुनः सृष्टिकाले प्राप्ते यथापूर्वं प्रजायत इति वा तदुक्तम् ।

> ब्रह्मा देवैः परिवृतः प्रलये परमेश्वरम् ।
> प्रविश्य सर्गे तु पुनः श्वेतद्वीपे प्रमोदते ॥ १४ ॥

एवं मुक्तानां प्रतिसर्गं निर्गमः प्रतिलयं भगवत्प्रवेशश्च नित्य इति भावेनाह । ऐश्वर्यमिति । ते मुक्ता अपि सम्भाविताः हरिणेति शेषः । सृष्टिकाले प्राप्ते हरेर्निर्गताः श्वेतद्वीपे यत्पारमेष्ठ्यं परमेष्ठिनः सर्वोत्तमस्य हरेः प्रसादादुपपन्नं धर्मविनिर्मितं ज्ञानधर्मफलमैश्वर्यमणिमादिभोगजातं तन्निषेव्य भुक्त्वा पुनर्गुणव्यतिकरेऽसति प्रलये प्राप्ते स्वोत्तमप्रवेशपूर्वकं परमेश्वरमायान्तीत्येवं मुक्तगणस्य सृष्टौ संहारे च संसर्गनिर्गमौ स्वरूपानन्दभोगो बहुविधविषयभोगाश्च सन्तीति । तदुक्तम् ।

> ज्ञानधर्मफलांस्तत्र भोगान्भुक्त्वा लये पुनः ।
> नारायणं समाविश्य ज्ञानव्यक्तं निजं सुखम् ।
> भुञ्जते त्वेवमेवैषां काले संसर्गनिर्गमौ ।
> नित्यौ नित्यसुखं चैव सृष्टौ भोगास्तथोत्तमाः ।
> गुणव्यतिकराभावेऽप्युच्चनीचादिपूर्ववद् ।
> विष्णोश्चैव विमुक्तानां न कदाचन गच्छति ।

इति "सर्वेऽस्मै देवा बलिमावहन्ति"

इति श्रुतेः सर्वजीवोत्तमस्य ब्रह्मणो नीचत्वं हरेरेव नान्यस्मात्तदुक्तम् ।

> यथापूर्वं हरेः सर्वगुणैर्नीचारमता सदा ।
> ब्रह्मणश्च तथान्येषामन्येषां च यथापदम् ॥

इति ॥ १५ ॥

पुंसां तेषां परमात्मप्रसादेन परमानन्दावाप्तिरस्तु स्त्रियाः मम कथं स्यादित्याशङ्क्य सर्वेषामपि स्वयोग्यतानुसारेण सेवासामग्र्यां सत्यां सा स्यादित्युपसंहारमुखेन तां सेवां विधत्ते । अथेति । यतो भगवदुपासकानां नित्यानन्दलक्षणमुक्तिप्राप्तिः अथ तस्मात्तत्प्राप्त्यर्थं यो ब्रह्मादिमुक्तिदस्तं नारायणं शरणं व्रजेत्यन्वयः । केन साधनेनेत्यत उक्तं भावेनेति मम स्वामी भगवानहं तत्किङ्कर इति भावेन भक्तिक्रियया "भावो लीला क्रिया चेष्टा" इति यादवः । कं गुणमुपसंहृत्येत्यत उक्तं श्रुतानुभावमिति । कुत्र स्थितमहं शरणं यामीत्यत उक्तं सर्वभूतानामिति । अनेन "अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि संस्थित" इति श्रुत्युक्तभगवद्रूपं शरणं व्रजेदयुक्तं भवति । भामिनि भद्रे भगवति भक्तिगुणत्वेनेति-शेषः ॥ ० ॥

एवं मुक्तिस्वरूपं निरूप्याधुना तदयोग्यानाह । ये त्विति । तुशब्दोऽत्यन्तवैलक्षण्यद्योतकः । इह मनुष्यादौ ये स्वर्गादावेवासक्तमनसो यज्ञादिकर्मस्वेव श्रद्धया युक्ताः अप्रतिषिद्धानि "अग्नीषोमीयं पशुमालभेत" इत्यादिविहितानि यागादिकर्माणि नित्यानि सन्ध्यावन्दनादीनि कृत्स्नश एकाविलोपेन कुर्वन्ति ॥ १६ ॥

रजसा कुण्ठमनसः कामात्मानोऽजितेन्द्रियाः ।
पितॄन् यजन्त्यनुदिनं गृहेष्वभिरताशयाः ॥ १७ ॥
त्रैवर्गिकास्ते पुरुषा विमुखा हरिमेधसः ।
कथायां कथनीयोरुविक्रमस्य मधुद्विषः ॥ १८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ये त्विति पञ्चकम् ॥ १६—२० ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

तस्य दोषमाह । भेददृष्ट्येति । अन्ततो गत्वा वयं मुक्ता नान्यो मुक्त इत्यभिमानो वयमपि कर्तार इति एवं दोषद्वयेन कृत्वा यद्यपि निःसङ्गं कर्म करोति तथापि कर्तृत्वाभिमानात् सगुणमेव ब्रह्म गच्छति पूर्वोक्तं स्वापेक्षया हीनभावव्यावृत्त्यर्थमाह । पुरुषं कुरुषर्षभमिति । पुरुषो विराट् स हि स्वयमेव स्वोत्तमस्तु प्रकृतिपुरुषो भवति ततः पुरुषर्षभः अव्ययात्मा ॥ १३ ॥

तत्र गतस्य पुनरावृत्तिमाह । स संसृत्येति । स ब्रह्मा अक्षरमपि प्राप्य संसृत्य सम्यक् तत्र परिभ्रमणं कृत्वा पुनः प्रत्यागमनकाले ईश्वरमूर्त्तिना कालेन गुणव्यतिकरे जाते प्रकृतिपुरुषयोरुद्गमानन्तरमनुद्गमे वा क्षोभमात्रे जाते यथापूर्वं महदादिद्वारा ब्रह्माण्डे उत्पन्ने तत्र नारायणनाभिकमलाद्यथापूर्वं प्रजायते एवमक्षरे गतस्यापि पुनरावृत्तिरुक्ता ॥ १४ ॥

अन्येषामप्याह । ऐश्वर्यं परमेष्ठिसमायां यदैश्वर्यं प्रसिद्धं तत्तेषां निवृत्तिधर्मेण निर्मितमाधिदैविके महत्तत्त्वे अक्षरे वा अनुभूय गुणव्यतिकरे सति पुनरायान्ति । सतीति सम्बोधनं वा । ऐश्वर्यं पारमेष्ठ्यं वा आयान्तीति ॥ १५ ॥

एवं भगवन्मार्गानुसारेण भगवद्भजनाभावे ब्रह्मादीनामप्येषा गतिरिति निरूप्य ये पुनस्तामसाः ऐहिकाः ते भजनाभावे सर्वथा नष्टा भविष्यन्तीति किं वक्तव्यमिति वक्तुं तामसधर्मप्रवर्तकानां स्वरूपसाधनफलान्याह पड्भिः । ये त्विहासक्तमनस इति । राजसानामिति वा ।

तेषां स्वधर्मकरणं दोषाश्चापि चतुर्विधाः ।
भगवद्विमुखाश्चैते लौकिकाश्चापि ते सदा ।

यमं प्राप्य निवर्तन्त

इति तेषां गतिर्निरूप्यते प्रथमतस्तेषां स्वधर्ममाह । इह संसारे आसक्तं मनो येषामिति बहिर्मुखाः कर्ममार्ग एव श्रद्धान्विताः संसारसाधकत्वात्कर्मणामप्रतिषिद्धानि लौकिकानि कुर्वन्ति नित्यान्यप्यग्निहोत्रादीनि सर्वाण्येव कुर्वन्ति इहासक्त्या पुनरागमनं कर्मणा पुनर्जन्म अप्रतिषिद्धं करणाद्याधोगतिः नित्यकरणात्पितृलोकः "स्वकर्मणा पितृलोक" इति श्रुतेः ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अत्र भक्त्यभावे सति ब्रह्मादीनामप्येवमावृत्तिस्तत्र काम्यकर्मिणां कस्यां लेखायां स्थितिरिति तान्निन्दन्नाह षड्भिः । ये त्विहेति । अप्रतिषिद्धानि काम्यानि नित्यान्यपि सर्वाण्येव कर्माणि कुर्व्वन्ति तेऽपि निन्द्यन्ते किमुत विकर्माणः कर्मिण इति भावः ॥ १६ ॥ १७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं साक्षाद्भगवदुपासनायास्तु का कथा तदात्मके हिरण्यगर्भेऽपि तदुपासनया भगवत्प्राप्तिर्भवतीत्युक्तमिदानीमन्यस्य तु का कथा हिरण्यगर्भमपि स्वातन्त्र्येण आराध्य पुनरावृत्तिलोकमेव प्राप्नोतीति निरूपयति । भेद इत्यादि त्रिभिः । भेददृष्ट्या अयमेव स्वातन्त्र्येणोपास्य इति बुद्ध्या अहं स्वतन्त्रकर्ता इति स्वतन्त्रकर्तृत्वात्स्वकल्पितात् योऽभिमानस्तेन च सगुणं ब्रह्म हिरण्यगर्भं पुरुषमन्यं वा देवं पुरुषर्षभः हिरण्यगर्भसदृशोऽपि यः ॥ १३ ॥

स संसृत्य आराध्य गुणव्यतिकरे जाते यथापूर्वं जायते न तु मुक्तो भवतीति भावः ॥ १४ ॥

ये भगवदितरोपासकाः केनापि धर्मेण ब्रह्मलोकगता अपि यदि स्युस्तर्हि तेऽपि धर्मनिर्मितं स्वकर्मफलं पारमेष्ठ्यमैश्वर्यं निषेव्य चकारात्प्रलयं निषेव्य गुणव्यतिकरे समये हे सति पुनः आयान्ति ॥ १५ ॥

यदा हिरण्यगर्भसदृशानां निष्कामकर्मकारिणां हिरण्यगर्भोपासकानामपि भेदाभिमानाभ्यां पुनरावृत्तिस्तदा काम्यकर्मणां किं वक्तव्यमिति दर्शयितुं प्रवृत्तिमार्गस्थान्निन्दति ये त्वित्यादिपड्भिः । इह कर्मफले आसक्तमनसः । ये कर्माणि कुर्वन्ति ते पितृलोकं व्रजन्तीति पञ्चमेन सम्बन्धः ॥ १६ ॥

भाषा टीका ।

धर्मसे सम्पादित ब्रह्मलोक को भोग करके कर्मों के क्षय होने से फिर भी अपने अधिकारों में आजाते हैं ॥ १५ ॥

इस संसार में जिन का मन कर्मों में आसक्त हो रहा है तिस से श्रद्धा युक्त हैं सम्पूर्ण विहित नित्य कर्मों को भी करते हैं ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

हरति संसारं मेधा यस्य कथनीया उरवो विक्रमा यस्य तस्य मधुद्विषः कथायां विमुखाः सन्तो ये त्रैवर्गिकाः ये

नूनं दैवेन विहता ये (१)चाच्युतकथासुधाम् ।
हित्वा शृण्वन्त्यसद्गाथाः पुरीषमिव विड्भुजः ॥ १९ ॥
दक्षिणेन पथाऽर्यम्णः पितृलोकं व्रजन्ति ते ।
(२)प्रजामनु प्रजायन्ते श्मशानान्तक्रियाकृतः ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

चाच्युतस्य कथासुधां हित्वासतां गाथाः शृण्वन्ति ते नूनं दैवेन विहता इत्यन्वयः ॥ १८ ॥ १९ ॥

पितृलोकात्पुनः प्रजामनु स्वपुत्रादिषु प्रजायन्ते गर्भाधानादारभ्य श्मशानान्ताः क्रियाः कृतवन्तः यथोक्तकारिण इत्यर्थः ॥ २० ॥

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

रजोगुणेन विक्षिप्तमनसः कामासक्तचित्ताः अत एवाजितेन्द्रिया अत एव गृहेष्वासक्तान्तःकरणाः अनुदिनं पितॄन् यजन्ति ॥ १७ ॥

कथनीयनिरतिशयकीर्त्तेर्हरिमेधसः संसृतिनाशकोपासनात्मकज्ञानविषयस्य मधुद्विषो भगवतः कथायां विमुखाः सन्तो ये त्रैवर्गिकाः धर्मार्थकामपरायणास्ते ॥ १८ ॥

ये चाच्युतकथासुधां हित्वा विड्भुजः शूकरादयः पुरीषमिवासतां गाथाः शृण्वन्ति ते च नूनं दैवेन विहताः ॥ १९ ॥

तेषां का गतिरित्यत्राह । अर्यम्णो दक्षिणेन पथा धूमादिमार्गेण पितृलोकं व्रजन्ति पितृलोकात्पुनः प्रजामनु स्वपुत्रादिषु जायन्ते ॥ २० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

किञ्च रजसा रजोगुणेन कुण्ठमनस उपरञ्जितमनसोऽत एव कामात्मानो विषयलोलस्वभावा अत एवाजितेन्द्रिया अत एव गृहेष्वभिरताशया नित्यविषक्तमनोरथा अनुदिनं पितॄन् यजन्ति ॥ १७ ॥

हरावनर्पितश्राद्धादिकर्तारस्ते पुरुषास्त्रैवर्गिका धर्मार्थकामयोग्या एव न तु मोक्षयोग्याः तत्र कारणमाह । विमुखा इति । कथनीयः प्रबन्धीकर्त्तुं योग्य उरुर्महान् विक्रमो यस्य स तथा तस्य हरिमेधसः मनोहरप्रज्ञस्य मधुद्विषो हरेः कथायां विमुखा इति यतोऽतो न मुक्तियोग्या इति ॥ १८ ॥

भगवद्भक्तिवर्जितैः पुम्भिः प्राप्यफलमाह । नूनमिति । ये चाच्युतकथासुधां हित्वासद्गाथाः काव्यनाटकादिविषयाः शृण्वन्ति दैवेन हरिणा विहताः देहवियोगं प्रापिताः विड्भुजः विड्वराहादय इव पुरीषममेध्यतुल्यं निरयं यान्तीति शेषः तदुक्तम् ।

ये तु तद्भक्तिवर्जिताः ।
अन्यसामान्यवेत्तारस्तदन्योत्तमवेदिनः ॥
तद्भक्तनिन्दकाश्चैव यान्त्येव निरयं ध्रुवम् ।
अपि धर्मैकनिलया नात्र कार्या विचारणा । इति ॥ १९ ॥

नित्यसंसारिणां त्रैवर्गिकाणां किं फलमित्याह । दक्षिणेनेति । ये त्विहाप्रतिषिद्धानि नित्यानि च कर्माणि कुर्वाणाः हरावनर्पकास्ते दक्षिणेन पथा दक्षिणायनमार्गेणार्यम्णो यमस्य पितृणामधिपस्य लोकं व्रजन्ति किं तत्रैव तेषां नित्यो निवास इति तत्राह । प्रजायामिति । स्वर्गमनुष्यलोकावासिस्तेषां सनातनेत्याशयेनाह । श्मशानान्तक्रियाकृत इति । त्रैवर्गिकाः स्वसन्तानेषु पुत्ररूपेण भूत्वा गर्भाधानादिश्मशानान्ताः क्रियाः कृत्वा ततो मृत्वा स्वर्गं गत्वा ॥ २० ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

दैवेनेति । तेषां नरकादुद्धार एव नास्ति इति ते न वर्ण्या इत्यर्थः अच्युतकथेति । तदन्याः सर्व्वा एवासत्कथा इति ज्ञापितम् । खण्डादिकं हित्वा विड्भुजो यथा पुरीषमेवाभिगच्छन्तीत्यर्थः ॥ १९ ॥

* श्मशानान्ताः क्रियाः कृतवन्तः ता लब्धवन्त इत्यर्थः ॥ २० ॥ २१ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

रजसा गुणेन कुण्ठितं मनो येषामयं सहजो दोषो विक्षेपात्मा कामात्मानः आगन्तुको दोषः काम एव अत एवाजितेन्द्रियाः संसर्गदोषवन्तः पितॄन् यजन्तीति स्वपितृपितामहानामेव यागं कुर्वन्ति तेन नालौकिकभजनमयं लौकिकमध्य एवेति गुणाभावार्थमुक्तः गृहेष्वभिरताशया इति कदाचिदपि मोक्षाभावार्थमुक्तः ॥ १७ ॥

तेषां भगवद्वैमुख्ये हेतुः । त्रैवर्गिका इति । धर्मार्थकामेष्वेव ते साधवः अत एव हरिमेधसो वासुदेवाद्विमुखाः हरिः सर्वदुःखहर्त्री मेधा बुद्धिर्यस्य बुद्धिमात्रेणैव संसारं नाशयिष्यतीति भयाद्विमुखाः कथाया अपि विमुखाः तद्वार्तामपि न कुर्वन्ति कथनीया उरवो विक्रमा यस्य पराक्रमश्रवणे सर्वेषामसिरुचिर्लौकरुच्यापि न शृण्वन्ति स्वपुरुषार्थनाशकत्वं ज्ञात्वा निषिद्धमिव परित्यजन्तीति भावः मधुद्विष इति जगत्कर्तृ ब्रह्म मक्षकनाशकत्वेन भगवन्निरूपणात्तद्भजने कृतघ्नतापि सूचिता पापनाशार्थमपि न भजन्त इति निरूपितम् ॥ १८ ॥

(१) त्वच्युतकथा । (२) प्रजायान्तु श्रीविज० ।

* पूर्वं विंशत्यन्ताङ्कस्त्वन्यश्लोकेणापतितः ।

ततस्ते क्षीणसुकृताः पुनर्लोकमिमं सति!।
पतन्ति विवशा देवैः सद्यो विभ्रंशितोदयाः ॥ २१ ॥
तस्मात्त्वं सर्वभावेन भजस्व परमेष्ठिनम्।
तद्गुणाश्रयया भक्त्या भजनीयपदाम्बुजम् ॥ २२ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ननु ते स्वधर्मनिष्ठाः परधर्मत्वं ज्ञात्वा न भजन्तीति चेत्तत्राह। नूनमिति। ते हि लोकवार्त्ताः शृण्वन्ति न तु भगवत्कथामतो धर्मव्यापृता भगवत्कथाया अनवकाशाभिवर्त्तन्त इति न शङ्कनीयं किं तु दैवेनैव निहताः प्रतिकूलेन्द्रियदानाद्भगवता ते चेद्बधिराः कृताः स्युस्तदा यथा स्थाने एव तिष्ठेयुः तदपि नास्तीति नूनं दैवेन निहताः यतः विद्यमानामपि तां कथां हित्वा तत्रापि सुधारूपामसतां गाथाः "यास्तु श्रुता" इति वाक्योक्तधर्मयुक्ताः शृण्वन्ति। ननु शास्त्रात्कथं न निवर्त्तन्ते तत्राह। पुरीषमिव विड्भुज इति। भगवता ते तथैवोत्पादिताः विद्यमानेऽपि स्वन्ने शूकरादयः स्वभक्ष्यमेव भक्षयन्ति तेषां जिह्वा न रसान्तरं गृह्णाति ॥ १९ ॥

एवं तेषां स्वरूपसाधनप्रवृत्तिं दूषयित्वा फलमाह। दक्षिणेनेति। दक्षिणमार्गाः बहवः सन्ति तद्व्यावृत्त्यर्थमाह। अर्यम्ण इति। अर्यमात्र यमः मुख्ययमस्य स्वाधिकारप्रच्युतौ स यमो भवतीति पूर्वमुक्तत्वात् "अबिभ्रदर्यमा दण्डम्" इति वाक्यादनेन मुख्ययमश्चेत्तिष्ठेत्तदा तेषां सापि गतिर्न संवदेति सूचितं तस्य वैष्णवत्वाच्चद्धक्ष्यति पश्चे येन मार्गेण यमो गच्छति क्रूरात्मा स भयानको मार्गः परं नाधोगतिरूपः किं तु तल्लोकात्मकः यत्राग्निष्वात्तादयः पितरस्तिष्ठन्ति तेन पथा ते पितृलोकं व्रजन्ति अनेन मार्गक्लेशः तत्र नीलभावश्च सूचितः पुनरावृत्तिमाह। प्रजामनुप्रजायन्त इति। प्रजा स्वस्यान्तःकोशः तस्याः स्वयमन्तःकोशा भवन्ति पुत्रगृहे पुत्रा भवन्तीत्यर्थः। ननु श्राद्धादिना मोक्षो भवतीति श्रूयते सुदरिद्रोपाख्याने तत्कथमुच्यते पितृलोकादागत्य तस्य जन्मेत्याशङ्क्य तेषां पुत्रगृहे जन्मैव मोक्ष इति श्रुत्यर्थं वक्तुं प्रजामनुप्रजायन्त इति श्रौतपदमुक्तम् "प्रजामनुप्रजायन्ते तदु ते मर्त्यामृतम्" इति श्रुतेः तत्रापि नाल्पस्य तत् किं तु श्मशानान्ताः निषेकाद्याः वैदिक्यः क्रियाः कृता येषु ते श्मशानान्तक्रियाकृतः ॥ २० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

हरति संसारं मेधा यस्य तस्य ॥ १८ ॥

अच्युतकथैव सुधा तां त्यक्त्वेति तदन्याः सर्वा एवासद्गाथाः ननु सुधां प्राप्य के नोपभुञ्जते तत्राह। पुरीषमिवेति। क्षीरखण्डादिकं त्यक्त्वा विड्भुजो हि पुरीषमेवान्विष्यन्तीत्यर्थः ॥ १९ ॥

पितृलोकात् पुनः प्रजामनु स्वपुत्रादिषु प्रजायन्ते गर्भाधानादारभ्य श्मशानान्ताः क्रियाः कृतवन्तः आलोककर्मकारिण इत्यर्थः ॥ २० ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

रजसा कुण्ठं मनो येषां कामे भोगे आत्मा चित्तं येषामत एव गृहेष्वभिरतः आशयोऽन्तःकरणं येषां ते ॥ १७ ॥

धर्मार्थकामपराः हरति संसारं मेधा यस्य हरिमेधसः कथनीया उरवो विक्रमा यस्य तस्य मधुद्विषः कथायां विमुखाः ॥ १८ ॥ १९ ॥

अर्यम्णो दक्षिणेन पथा दक्षिणायनोपलक्षितेन धूममार्गेण ते गर्भाधानसंस्कारादिश्मशानान्तक्रियाकृतः कर्मिणः पितृलोकं व्रजन्ति ततः पुनः प्रजामनु पुत्रादिषु प्रजायन्ते ॥ २० ॥

---

### भाषा टीका।

रजोगुण से जिनकी बुद्धि मलिनहोगयी है कामो मे जिनके चित्त लगे हैं जोइन्द्रियों को नहीं जीतते हैं वे लोग प्रतिदिन गृहादिक मे रत होकर पितर आदिकों को पूजते हैं ॥ १७ ॥

वे लोग संसारके दुःख को हरने वाली जो मधुसूदन त्रिविक्रम भगवान् की कथा है तिससे विमुख हैं धर्मार्थ काममे लगे हैं ॥ १८ ॥

निश्चित है कि उन लोगोंको प्रारब्धने नष्ट करदिया है जो लोग भगवान् की कथा रूप अमृत को छोड कर जैसे शूकर विष्ठा को खाता है तैसे अन्य खोटी कथाओं को सुनते हैं ॥ १९ ॥

जो लोग श्मशानान्त क्रिया मे रत हैं वे लोग पितृराज अर्यमाके दक्षिण मार्ग से पितृलोक को जाते हैं फिर पुत्रादिरूप से पैदा होते हैं ॥ २० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

कथं प्रजायन्ते तदाह। ततस्ते पुनरिमं लोकं प्रति पतन्ति विभ्रंशित उदयो भोगसाधनं येषाम् ॥ २१ ॥

परमेष्ठिनं परमेश्वरं सर्वभावेनातिप्रीत्या तस्य गुणानाश्रयते या भक्तिस्तया ॥ २२ ॥

भजने च ज्ञानवैराग्ये स्वत एव भवत इत्याह। वासुदेव इति ॥ २३ ॥

वासुदेवे भगवति भक्तियोगः(१)प्रयोजितः ।
जनयत्याशु वैराग्यं ज्ञानं यद्ब्रह्मदर्शनम् ॥ २३ ॥
यदास्य चित्तमर्थेषु समेष्विन्द्रियवृत्तिभिः ।
न विगृह्णाति वैषम्यं प्रियमप्रिय(२)मित्युत ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवोपपादयति । यदास्य भक्तस्य चित्तं भगवद्गुणानुरागेण तस्मिन्नेव निश्चलं सदिन्द्रियवृत्तिभिर्वैषम्यमर्थेषु न विगृह्णाति ॥ २४ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपन्याख्या दीपिकाटिप्पणी ।

ततः पितृलोकादिमं मर्त्यलोकम् ॥ २१ ॥

तस्माद्बहिर्मुखानां तथा गतेः सर्वभावेन सर्वप्रकारेण प्रीत्या प्रेम्णा गुणान् कारुण्यादीन् भक्त्या आनुकूल्येन ॥ २२ ॥ २३ ॥

मुमुक्षोस्तदेव ज्ञानजननमेव तस्मिन्नेव भगवत्येव वैषम्यं श्रेष्ठत्वनिकृष्टत्वरूपमर्थेषु विषयेषु प्रेम्णा तथा पेक्यज्ञानं "तच्चापि चित्तवडिशम्" इतिवन्मुक्तीच्छासंस्कारदोषादेवेति भावः ॥२४॥२५॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

ततो गर्भाधानादिश्मशानान्तसंस्कारिणः पुनरमुं लोकं प्राप्य तत्र भोगेन क्षीणसुकृताः तत्रत्यैर्देवैः सद्य एव विभ्रंशिताः उदया भोगोत्कर्षा येषां ते विवशाः कर्मवश्याः पुनरिमं लोकं प्रति पतन्ति ॥ २१ ॥

एवं काम्यकर्मणां गतिमभिधाय मातुः पूर्वोक्तभगवद्भक्तियोगश्रद्धावैकल्याय प्रोत्साहयति । तस्मादिति । तस्मात् सकामकर्मणां गतेरेवंविधत्वात्त्वं सर्वभावेन "येषामहं प्रिय आत्मा सुतश्च" इत्याद्युक्तसर्वभावेन परमेष्ठिनं परमव्योमाधिपतिं भजनीयं सुराराध्यं पदाम्बुजं यस्य तं भगवन्तं स भगवान् गुणाश्च ज्ञानशक्तिबलादयस्त एवाश्रयो विषयो यस्यां तया स्वरूपरूपगुणविषययेत्यर्थः । भक्त्या प्रेमपूर्वानुध्यानात्मिकया भक्त्या भजस्व ॥ २२ ॥

कथं भक्तियोगारम्भाच्चर्यादितोपायवैराग्यमन्तरेण मम भक्तियोगारम्भ इत्यत्राह । वासुदेव इति । भगवति वासुदेवे भक्तियोगः प्रयोजितः यद्यस्माद्ब्रह्म दृश्यतेऽनेनेति ब्रह्मदर्शनं साक्षात्कारोपायभूतं भक्तियोगात्मकज्ञानमुत्पद्यते तद्वैराग्यमाशु जनयति आरब्धभक्तियोग एव वैराग्यमपि जनयतीत्यर्थः ॥ २३ ॥

कदायमारब्धभक्तियोगो ब्रह्मसाक्षात्कुर्यादित्यत्राह । यदेति । अस्योपासकस्य चित्तं यदा इन्द्रियवृत्तिभिरर्थेषु शब्दादिषु सममनुकूलप्रतिकूलशब्दादिविषयान् प्राप्याविकृतं सदनुकूलादिविषयसम्बन्धकृतं प्रियाप्रियरूपं वैषम्यं न गृह्णाति ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ततः स्वर्गात् क्षीणसुकृताः भुक्तपुण्यशेषाः देवैः सद्यो विभ्रंशितोदयाः अत एव विवशाः इमं मनुष्यलोकं पतन्तीति पुनः शब्दः क्रियासमभिव्याहारार्थः तदुक्तम् ।

> अल्पल्पभक्ता विष्णौ च सदा श्राद्धादिकारिणः ।
> पितृलोकं समाविश्य स्वसन्ताने पुनः पुनः ॥
> क्षिप्रमेव प्रजायन्त ।

इति देवादिमनुष्योत्तमान्तानां मुक्तियोग्यत्वं हरावल्पभक्तानां मध्यममनुष्याणां श्राद्धादियज्ञादिकृतां स्वर्गविशेषयोग्यत्वं हरौ द्वेषयुक्तानामसुराणां तमोयोग्यत्वमित्ययं विशेषः ।

> मुक्तियोग्यास्तु देवाद्या मानुषा यज्ञभागिनः ।
> मनुष्यमेवाः श्राद्धादिकृतो विद्वेषिणो हरौ ।

इति वाक्येनावगन्तव्य इति ॥ २१ ॥

पूर्णगुणोपास्तिरेव मुक्तिसाधनं न निर्गुणोपासनेति भावेनोक्तार्थमुपसंहरति । तस्मात्त्वमिति । सर्वभावेन स्वस्वयोग्यगुणपूर्णभक्त्या यस्माद्भक्तिमन्तरेणापेक्षितपुरुषार्थाभावस्तस्माद्ब्रह्मणः सर्वत्र सत्ताबुद्ध्येति वा ब्रह्मादिजीवराशेर्विलक्षणो मम स्वामीति भक्त्या ॥ २२ ॥

भजने किं फलमिति तत्राह । वासुदेव इति । ब्रह्म दृश्यतेऽनेनेति ब्रह्मदर्शनं यज्ज्ञानं तज्जनयति वैराग्यस्य भक्तेः पूर्वभावित्वेऽपि कार्यकारणभावो न दूषणं भक्तिप्रागुत्पन्नवैराग्यं प्रचिनोतीति ॥ २३ ॥

वैराग्यादिसाधनसम्पन्नस्यास्योपासकस्यापरोक्षज्ञानोत्पत्तिसमयमाह । यदास्येति । यदास्योपासकस्य चित्तं बन्धकत्वेन समेषु शब्दाद्यर्थेषु ममेदं प्रियमप्रियमुतेतीन्द्रियवृत्तिभिर्वैषम्यं न विगृह्णाति किं तु शब्दाद्यर्थाः सर्वे बन्धकत्वेन ममाप्रिया एव सर्वस्माद्भगवानेव प्रेष्ठ इति निश्चिनोति ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सर्वभावेन सर्वात्मना । भक्त्या प्रेम्णा । ननु सा कथं

---

(१) प्रचोदतः । (२) मीप्युता ।

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

स्यात्तत्राह । तद्गुणा एवाश्रयः प्रवृत्तिहेतुर्यस्याः "अहो बकीयम्" इत्यादिरीत्या तदनुसन्धाने कृते सा प्रवर्त्तत एवेति भावः भजनीयपदाम्बुजमिति तदा तस्य सौन्दर्य्यादिकमप्युल्लासितं तत्तु तद्भजनं निरन्तरमेव रोचयिष्यतीत्यर्थः । तदेवं तत्र पुरुषार्थान्तरमपि निरस्तम् ॥ २२ ॥

ज्ञानादीच्छुरपि तामेव कुर्य्यादित्याह । वासुदेव इति ॥ २३ ॥

"तथापि चित्तवडिशं शनकैर्वियुङ्क्ते" इति न्यायेन टीका सङ्गमनीया ॥ २४ ॥ २५ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

एवं बहुवारगमनागमनाभ्यामिहैव लोके जायस्व म्रियस्वेति मार्गं गत्वा ततोऽपि सर्वथा क्षीणसुकृताः देवानां चक्षुष्याग उत्पाद्य तैर्विभ्रंशितोदयाः सन्तः तदवध्यानजनितपापाः पूर्ववत्पुनः अधोलोकेषु गच्छन्तीत्याह । तत इति । पुनरिमं लोकमिति ततः पुनरूर्ध्वगमनाभावः सूचितः सतीति सम्बोधनं तेषु रागाभावबोधनार्थं दैवैरेव विवशाः सद्यः इति विलम्बाभावार्थं विलम्बेन नाशे ज्ञाते प्रतिक्रियां करिष्यन्तीति तथोक्तमन्तकालेऽपि प्रतिक्रियाकरणनिवृत्त्यर्थं विभ्रंशितः उदयो येषामित्युक्तं तदैव सर्वस्वनाशो मरणं चेति तदुदयो धनाद्यैश्वर्याणि ॥ २१ ॥

एवं भगवद्भजनार्थमेव तन्निन्दामुक्त्वा प्रकृतमाह । तस्मात्त्वमिति । ये केचिद्यथा कथञ्चिद्भवन्तु नाम त्वं सर्वभावेन भगवन्तं भजस्व यावन्ति रूपाणि भजनीयानि ऐहिकपारलौकिकसाधनानि देहमारभ्येश्वरपर्यन्तं यावन्तो भजनीयाः यैर्यैर्भावैश्च ते सर्वे भावा भगवत्येव कर्त्तव्या इति सर्वभावः । परमेष्ठिनमिति । परमोत्कृष्टस्थानस्थितं पुरुषोत्तममिति यावद्भक्त्यैव च भजनं न मार्गान्तरेण अन्यस्य तथा साधकत्वाभावात् सापि भक्तिस्तद्गुणानेवाश्रित्य वर्तते अन्यथा कालादिभिरुपहृता भवति लोकादिभिः प्रतिबन्धात्कदाचिदपि भजनाभावमाशङ्क्य तन्निराकरणार्थमाह । भजनीयपदाम्बुजमिति । सर्वैरेव भजनीयं पदाम्बुजं यस्य साभिमानमार्गाणां सर्वेषां पुनरावृत्तिहेतुत्वान्निरभिमानमार्गः समाश्रयणीयः स तु भगवन्मार्ग एवेति निश्चीयते अन्यथा स्वस्य पूर्वसंस्कारे बलिष्ठे विद्यमाने शास्त्रीयं ज्ञानं प्रकृत्यविवेकेन कर्तृत्वमित्यादिदुर्बलमेव मत्वा न कदाचिदप्यहङ्कारनिवृत्तिर्भवेद्भगवानेव सर्वं करोतीत्युक्तेऽपि भजनाभावे न सिद्ध्यतीति भजनमवश्यं कर्त्तव्यमित्युक्तम् ॥ २२ ॥

तस्य मोक्षपर्यवसायित्वं स्वमार्गानुसारेणाह । वासुदेव इत्यष्टभिः ।

> ज्ञानवैराग्यजननं परीक्षाज्ञानसम्भवे ।
> ततश्च निरहङ्कारो ज्ञानमेव हरिः परः ।
> वैराग्यस्यापि माहात्म्यं युक्तिस्तज्जननेऽपि च ।
> तदर्थं च जगज्जातं वैराग्ये सर्वनिश्चयः ।

तत्र प्रथमं भक्तेर्मोक्षसाधकत्वं ज्ञानवैराग्यजननद्वारेति भक्त्या ज्ञानवैराग्योत्पत्तिमाह । वासुदेव इति । वासुदेवे भगवतीति । हृदये आविर्भूते भगवति प्रत्यक्षतया भक्तियोगः फलसाधक इत्युक्तं प्रथमतः स्वसामर्थ्यादेवाशु वैराग्यं ज्ञानं च जनयति ज्ञानं प्रतीकविषयकमपि भवतीति विशिनष्टि । यज्ज्ञानं ब्रह्म दर्शयतीति ब्रह्मदर्शनरूपं वा यस्मिन् जाते ब्रह्माविर्भवति तद्देवतारूपं ज्ञानं मननादिना वा साधने सम्पन्ने साक्षात्कार इति ॥ २३ ॥

ज्ञानस्य परीक्षामाह । यदास्येति । अस्य ज्ञानाधिकारिणः पुरुषस्य चित्तं वस्तुतः समेष्वेवार्थेषु पाञ्चभौतिकेषु भगवदाधारेषु भगवद्रूपेषु वा इन्द्रियवृत्तिभिः स्वरागजनिताभिः यदा वैषम्यं न गृह्णाति तस्य वैषम्यस्य स्वरूपमाह । विप्रियं प्रियमिति । रागकृतमेवेत्युक्तमुतेति प्रकारान्तरमप्युक्तं साध्वसाध्वित्यादि ॥ २४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

कथं प्रजायन्ते तत्राह । ततस्ते पुनः इमं लोकं प्रति पतन्ति उदयो भोगसाधनम् ॥ २१ ॥

निवृत्तकर्म्मपराणामन्ते यथा अथ तमित्यत्र श्रुतानुभाव शरणं व्रज भावेन भाविनीत्याह स्म तथैव प्रवृत्तकर्म्मपराणामन्तेऽप्याह । तस्मात्त्वमिति । तेन त्वं निवृत्तं प्रवृत्तञ्च कर्म्म माकुर्विति भावः सर्व्वभावेन सर्व्वात्मना हरिं भक्त्या भजस्व । ननु सैव कथं स्यात्तत्राह । तद्गुणा एवाश्रयः प्रवृत्तिहेतुर्यस्यास्तया भजनीयं भजनार्हमिति अम्बुजं खलु कस्मै मधुव्रताय न रोचते इति भावः ॥ २२ ॥

ज्ञानादीच्छुरपि भक्तिमेव कुर्य्यादित्याह । वासुदेव इति । ब्रह्मदर्शनं ब्रह्मानुभवः ॥ २३ ॥

ननु भक्तिजन्ये ज्ञानवैराग्ये केन लक्षणेन ज्ञातव्ये इत्यपेक्षायामाह । यदास्य भक्तिमतश्चित्तं भगवद्गुणानुरागेण तस्मिन्नेव निश्चलं सत् इन्द्रियवृत्तिभिः समेषु अर्थेषु प्राकृतेषु दृश्यश्रव्यस्पृश्यादिवस्तुषु इन्द्रियग्राह्यत्वांशेन वस्तुतस्तुल्येष्वपि इदं मे प्रियं श्रव्यादि इदमप्रियं श्रव्यादीति वैषम्यं न गृह्णाति निन्दास्तुत्यादिषु लोष्ठकाञ्चनादिषु च समभावनं स्यादित्यर्थः॥२४॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तत्प्रकारमाह । तत इति । हे सति ! क्षीणसुकृतः भोगेन नष्टपुण्याः अत एव दैवैर्भिभ्रंशितोऽपहृत उदय ऐश्वर्यं येषाम् ॥ २१ ॥

यस्मादन्यभक्तानां निष्कामाणामपि तल्लोकप्राप्तानां पुनरावृत्तिर्भवति तस्मात्परमेष्ठिनं परमलोकवासिनं परमात्मानं तद्गुणानाश्रयते या तया भजस्व ॥ २२ ॥ २३ ॥

अस्य मुमुक्षोर्यदा ब्रह्मज्ञानलाभे चित्तं ब्रह्मशक्तिपरिणामत्वेनाचेतनेषु तदंशत्वेन चेतनेषु च समेषु च इन्द्रियवृत्तिभिः वैषम्यं न विगृह्णाति ॥ २४ ॥

---

स तदैवात्मनात्मानं निःसङ्गं समदर्शनम् ॥
हेयोपादेयरहितमारूढं पदमीक्षते ॥ २५ ॥
ज्ञानमात्रं परं ब्रह्म परमात्मेश्वरः पुमान् ॥
दृश्यादिभिः पृथग्भावैर्भगवानेक ईयते ॥ २६ ॥
एतावानेव योगेन समग्रेणेह योगिनः ॥
युज्यतेऽभिमतो ह्यर्थो यदसङ्गस्तु कृत्स्नशः ॥ २७ ॥
ज्ञानमेकं पराचीनैरिन्द्रियैर्ब्रह्म निर्गुणम् ॥
अवभात्यर्थरूपेण भ्रान्त्या शब्दादिधर्मिणा ॥ २८ ॥

भाषाटीका ।

हे सति ! माता ! वे क्षीण पुण्यवाले मनुष्य तिसके पीछे फिर इसी लोक में आजाते हैं देवता उनके भोगकों नष्टकर देते हैं तब वे इहां गिरपडते हैं ॥ २१ ॥

तिस कारण से आप तो अब भगवान् के गुणोंवाली भक्ति से युक्त होकर सब प्रकार से प्रेम से सब के भजने करने योग्य चरण कमल वाले भगवान् को भजो ॥ २२ ॥

वासुदेव भगवान् के विषै भक्तियोगकरने से उसीसे शीघ्र ही वैराग्य और ब्रह्मका दिखाने वाला ज्ञान भी हो जाताहै ॥ २३ ॥

जिस समय में इस जीवका चित्त तुल्य सब रूपादि विषयों मे प्रीति वा द्वेष इन्द्रिय वृत्तियों से नहीं करता है जब विषमता नहीं रहती है तब तिस समय मे वह जीव अपने मनसे निःसङ्ग समदर्शन हेयोपापादेय रहित उत्तम पद में प्राप्त ऐसे आत्मस्वरूप को देखता है ॥ २४ ॥ २५ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदैवात्मनात्मानं स्वप्रकाशमीक्षते कथंभूतं समं च तद्दर्शनं च तत्कुतः निःसङ्गं सङ्गाद्धि वैषम्यं भवति निःसङ्गत्वे हेतुः हेयोपादेयरहितं तत्कुतः पदं व्यवसितमारूढं परमानन्दोऽहमिति निश्चयं प्राप्तमित्यर्थः ॥ २५ ॥

समेष्ववैष्वित्युक्तं तदेव साम्यं दर्शयति । ज्ञानमात्रमेव परब्रह्मादिशब्दैः प्रसिद्धं दृश्यादिभिर्दृश्यद्रष्टृकरणरूपेण पृथक् प्रतीयते ज्ञानमात्रत्वेन समेष्वित्यर्थः ॥ २६ ॥

ननु ज्ञानमात्रमात्मनः स्वरूपत्वान्नित्यप्राप्तमेवेति किमनेकसाधनेन योगेन प्राप्यते तदाह । एतावानिति । युज्यते प्राप्यते प्रपञ्चसङ्गव्युदास एव योगफलमित्यर्थः ॥ २७ ॥

ननु कथं प्रत्यक्षादिप्रतीतः प्रपञ्चो व्युदसितुं शक्यते प्रतीतेर्भ्रान्तित्वादित्याह । ज्ञानमिति । पराचीनैः पराङ्मुखैः शब्दादिर्धर्मो यस्य तेनार्थरूपेण ज्ञानरूपं निर्गुणं ब्रह्मैवावभाति न त्वर्थः पृथगस्तीत्यर्थः ॥ २८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता दीपन्याख्या दीपिकाटिप्पणी ।

ज्ञानमात्रत्वेन । सर्वप्रतीत्यधिष्ठानमात्रत्वेन कल्पितस्याधिष्ठानानतिरेकात् ॥ २६ ॥

नित्यसिद्धस्यापि स्वरूपस्याज्ञानेन मेघैः सूर्यवदाच्छन्नत्वात् प्रपञ्चसङ्गव्युदास एव योगफलमिति भावः ॥ २७ ॥

अर्थरूपेणाकाशादिना । प्रपञ्चस्य कल्पितत्वाद्व्युदासः सम्भवतीत्यर्थः ॥ २८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यदा च चित्तं निःसङ्गं शब्दादिविषयासङ्गरहितम् अत एव हेयोपादेयरहितं द्वेष्याद्वेष्यविषयरहितं समदर्शनं समं दर्शनं यस्य तत् सर्वस्य ब्रह्मात्मकत्वानुसन्धानपरं पदं शुभाश्रयं प्रत्यारूढं भवति स तदैवात्मना उक्तविधेन चित्तेनात्मानमीश्वरमीक्षते साक्षात्करोतीत्यन्वयः समदर्शनमित्यनेन सर्वस्य जगतो ब्रह्मात्मकत्वेनानुसन्धानमुक्तम् ॥ २५ ॥

कथं विश्वस्य ब्रह्मात्मकत्वमित्यत्राह । ज्ञानमात्रमिति । ज्ञानमात्रं न क्वापि जडमित्यर्थः परब्रह्मपरमात्मादिशब्दवाच्यः ज्ञानमात्रस्वरूपः परमपुरुषो भगवानेक एव दृश्यादिभिः पृथिव्यादिभिः पृथग्भावैः परस्परविलक्षणधर्मैरीयते प्रतीयते भगवानेक एव पृथिव्यादिपञ्चभूतसम्भूतात्मकदेवादिरूपभेदेन प्रतीयते अतः सर्वं जगद्भगवदात्मकमित्यर्थः ॥ २६ ॥

अत्रान्तराचिन्तान्यायेन किमस्य भक्तियोगस्य फलमित्यत्राह । एतावानिति । योगिनां समग्रेण साङ्गेन भक्तियोगेनाभिमतोऽर्थः पुरुषार्थः युज्यते निरतिशयसुखरूपः परमपुरुषार्थरूपापहतपाप्मत्वादिगुणाष्टकविशिष्टस्वरूपेण युक्तो भवति कृत्स्नशः कार्त्स्न्येनासङ्गः प्रकृतिसम्बन्धराहित्यं चेत्येतावानेवानिष्टनिवृत्तिरिष्टप्राप्तिरेव भक्तियोगफलमित्यर्थः ॥ २७ ॥

दृश्यादिभिरिति । परमात्मनः पृथिव्यादिविशिष्टत्वमुक्तं जीवस्य पृथिव्यादिविशिष्टत्वे विशेषमाह । ज्ञानमिति । निर्गुणम् सत्त्वादिगुणरहितमेकं ज्ञानस्वरूपम् ब्रह्म जीवः "ब्रह्मणो हि प्रतिष्ठाहम्"

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

इति जीवेऽपि कचिद्ब्रह्मशब्दप्रयोगात् पराचीनैः परस्मै प्रकाशकैरिन्द्रियैः शब्दादिधर्मिणार्थरूपेण शब्दादिधर्मकाकाशादिपञ्चभूतारब्धदेवादिरूपेण भ्रान्त्यावभाति परस्य सर्वविशिष्टस्यापि सर्वज्ञत्वान्न भ्रान्तिः जीवस्य तु ज्ञानस्वरूपस्य सत्त्वादिगुणरहितस्य स्थूलाकारादिदेहाकारो भ्रान्तिरित्यर्थः ॥ २८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स तदा बाह्यान्तःकरणे विनष्टशक्तिके सत्यात्मना स्वरूपचिन्मत्नसात्मानं स्वबिम्बपरमात्मानमीक्षते आत्मा संसार्येवात्रोच्यत इत्यन्यथा प्रतीतिं निवारयति । निःसङ्गमित्यादिना । "असङ्गो ह्ययं पुरुषः" इति श्रुतेः समदर्शिनं यथार्थज्ञानिनं "निर्दोषं हि समं ब्रह्म" इति स्मृतेः नित्यनिर्दोषज्ञानरूपत्वाद्धेयोपादेयरहितमत एवारूढपदं सर्वोत्कृष्टस्थानम् ॥ २५ ॥

तत्तच्छब्दादिसिद्धनामधेयोऽप्ययमेव न पृथगिति भावेन विशिनष्टि । ज्ञानमात्रमिति । तत्र ज्ञानमिति सङ्गिरन्ते सौगताः परं ब्रह्मेति वेदान्तिनः परमात्मेति योगिनः ईश्वर इति वैशेषिकाः पाशुपताश्च पुमानिति साङ्ख्याः भगवानिति पौराणिकाः इत्येतैः शब्दैरेक एवेर्यते कैर्लिङ्गैरित्यत उक्तं दृश्यादिभिरिति ज्ञानमेव मात्रापरिमाणं यस्य तत्तथोक्तं ब्रह्मसूत्रतत्त्वेषु परमुत्तमं परं ब्रह्म आत्मभ्यो जीवेभ्यः परमत्वात्परमात्मा ईशनशक्तिमत्त्वादीश्वरः अव्याहतपुंशक्तिमत्त्वात् पुमानिति ऐश्वर्यादिगुणाकरत्वाद्भगवानेवंविधगुणो दृश्यस्पृश्यादिभिः पृथग्भावैर्लिङ्गैर्घटादयो जडत्वेन मूर्तत्वेन दृश्याः स्पृश्याः न तथेत्यादिरूपैः ॥ २६ ॥

इदानीमुक्तार्थनिगमनमुखेन मुक्तेरन्तरङ्गभक्तियोगस्य मुख्यफलमाह । एतावानिति । इहोपासकानां मध्ये स्थितस्य भक्तियोगिनः समग्रेणाष्टाङ्गोपेतेन भक्तियोगेन साध्योऽभिमतोऽर्थः पुरुषार्थ एतावानेव युज्यते युक्तोऽनुभूयते क इत्यत उक्तं यदसङ्ग इति यत्कृत्स्नशः साकल्येनासङ्गः लिङ्गशरीरसम्बन्धो न भवति ॥२७॥

इदानीं मत्स्याद्यवताररूपं ब्रह्माप्यप्राकृतदेहत्वेन मुमुक्षुणा ज्ञातव्यमन्यथा दर्शनेऽन्धं तम एवेत्याशयेनाह । ज्ञानमेकमिति । एकं सर्वोत्तमं स्वगतभेदवर्जितं वा ज्ञानं सच्चिदानन्दलक्षणं ब्रह्म बहुत्वसंख्याविशेषविषयपूर्णं मत्स्यादिरूपं निर्गुणं प्रकृतिगुणनिर्मितदेहरहितं परब्रह्मशब्दादिधर्मिणां शब्दस्पर्शादिविषयधर्मवतामज्ञानां पराचीनैर्बहिर्विषयेषु प्रवृत्तैश्चक्षुरादीन्द्रियैरर्थरूपेण भौतिकशरीरेण भ्रान्त्या मिथ्याज्ञानेनावभाति "पूर्णमदः पूर्णमिदम्" इति श्रुतेः तस्मात्तथा प्रतिभानवानन्धं तमो यातीति शेषः इत्यर्थः तदुक्तम् ।

> मत्स्यकूर्मादिरूपं च विष्णोर्ज्ञानैकमात्रकम् ।
> तन्मन्यन्ते भौतिकं तु ये गच्छन्त्यधरं तमः ॥

इति ॥ २८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तथैव योजयति । ज्ञानमात्रमिति । दृशिज्ञानं भावो भावना पृथक् पृथक् भावनैर्ज्ञानयोगादिभिरेक एव भगवान् परब्रह्मादिरूप ईर्यते इति भगवत एवांशित्वमायातं व्याख्यान्तरे तु मात्रपदेनैव विवक्षितसिद्धेरेकपदस्योपादानं पुंस्त्वञ्च न युक्तं स्यात् । तत्र ज्ञानयोगेन परब्रह्मेर्यते । अष्टाङ्गयोगविशेषेण परमात्मा । शुद्धया भक्त्या तु स्वयं भगवानेवेति विवेचनीयं तत्र च ब्रह्मणो लक्षणं ज्ञानमात्रमिति । परमात्मन ईश्वरः पुमान् इति प्रकृतेः परस्तदाद्यन्तर्यामी पुरुष इत्यर्थः भगवतस्तु भगवानेवेति । पूर्णषडैश्वर्ययुक्तमहावैकुण्ठनाथः तदेतदनन्ततदाविर्भावस्याप्युपलक्षणं ज्ञेयम् ॥ २६ ॥

तत्र सर्वत्र मूलं भक्तिरेव ज्ञानादियोगेन तु प्रपञ्चव्युदासमात्रमित्याह । एतावानिति ॥ २७ ॥

ननु ब्रह्मणो ज्ञानमात्रत्वेऽपि नित्यतदाश्रयकस्य प्रपञ्चस्य ज्ञानमात्रेण कथं व्युदासः स्यात् । सति च तस्मिन् भगवत्तायाः कथं न स्यात् । उच्यते । उभयस्य तदाश्रयकत्वेऽपि भगवत्तायाः नित्यमेव स्वरूपशक्तिसिद्धत्वात् स्वरूपवदेवात्मारामाणां पुरुषार्थत्वाच्च न व्युदासः कर्त्तुं शक्यते कर्त्तुमिष्यते वा ब्रह्म च जीवानां शब्दगोचर एव नत्वनुभवगोचरः "तन्त्वौपनिषदं पुरुषं पृच्छामि" इति श्रुतेः । "शास्त्रयोनित्वात्" इति न्यायाच्च तत्र तत्कार्य्यस्य प्रपञ्चस्य सम्बन्धश्च शब्देनैव व्युदस्यते "एकमेवाद्वितीयं ब्रह्म" इत्यादिना धाम्ना स्वेन सदेत्यादिना च । अतस्तत्र जीवानां तर्कप्रयासो न किञ्चित्करः । जीवस्वरूपं चिद्रूपस्त्वेव तु जीवैर्जाग्रदादिष्वनुभूयते । जाग्रत्स्वप्नयोर्जडस्य प्रकाश्यस्य प्रकाशकत्वेन सुषुप्तौ तु स्वयमेव स्फुरद्रूपत्वेन यतः सुखमहमस्वाप्समित्यादि प्रतिसन्धीयते । तदेवं सति शरीरद्वयमिदं चिज्जडात्मकत्वेन यज्जीवानां भासते तत्र चिदंशो जीवस्वरूपं जडांशः प्रधानस्य कार्य्यं चिदंशस्तु नानाजडसम्बन्धेनैव नाना भासते यदेव संसारहेतुर्भवति । तस्माच्चिदंशोऽयं जडात् पृथग्विभातीत्यभिप्रेत्य तथैव विभावयति । ज्ञानमिति द्वाभ्याम् । एकं शुद्धं यत एव निर्गुणं ज्ञानं चिद्रूपं जीवस्वरूपं सूर्य्यस्थानीयस्य ब्रह्मणो रश्मिपरमाणुस्थानीयत्वेन ब्रह्माभिन्नं सत् । पराचीनैस्तत्पराङ्मुखैरिन्द्रियैर्या भ्रान्तिस्तयैव शब्दादिधर्म्मणा शरीरगतव्योमाद्यर्थरूपेणावभाति तत्तादात्म्यापन्नत्वेन प्रतीयते तस्मात्तद्व्युदासार्थमेवं विवेकः कर्त्तव्य इत्यर्थः ॥ २८ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

किमेवं निदर्शनसहिते ज्ञाने भवतीत्याशङ्कायामाह । स तदैवेति । ज्ञानरूपं प्राप्तेनात्मनैव आत्मानं स्वस्वरूपं प्रकृतिसङ्गरहितं सर्वत्र समदर्शनरूपं प्रकृतितद्विकारोपधानरहितमित्यर्थः हेयोपादेयरहितं प्रवर्तकनिवर्तकसर्वशास्त्राणां पर्यवसानरूपं पदमारूढं साध्यांशरहितमीक्षते मुक्तरूपश्चात्मानमेव पश्यतीत्यर्थः ॥ २५ ॥

ननु ज्ञाने एव जाते कथमेवं भवति न हि ज्ञानं वस्तूत्पादयति । अतः स्वभावत एव आत्मा तादृश इति मन्तव्यं ततश्च न साङ्ख्यसिद्धिः किन्तु मायावादिनामिव मतं सेत्स्यतीत्याशङ्क्य ज्ञानस्यैव तत्सम्पादकत्वमुपपादयति । ज्ञानमात्रमिति । ज्ञानं नामाविर्भूतं नित्यं केवलोपनिषद्वेद्यं चैतन्यं तदेव ब्रह्मशब्देनोच्यते ब्रह्मप्रकरणे तदेव पुनः स्वेच्छाविर्भूतैश्वर्यमीश्वरशब्देनोच्यते यस्मिन्नाविष्टे प्राकृतोऽपि पुरुषः "मय्येव सकलं जातं मयि

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

सर्वं प्रतिष्ठितम्" इति मन्यते अतस्तदेवेश्वररूपं ब्रह्मरूपं च उपाख्यानान्तरेऽपि अन्तर्दृष्ट्या बोधनभेदप्रकारेण आत्मेत्युच्यते तदेव ज्ञानमन्तर्दृष्ट्या आत्मत्वेन दृष्टं परमात्मशब्देनोच्यते तदेव च पुनर्बहिर्दृष्ट्या दृष्टमीश्वरशब्देन कालशब्देनोच्यते स एव च पुनः उपास्यरूपेण व्यवहाररूपेण च दृष्टः पुमान् त्रिविधपुरुषरूपेण भासते अतो मूलभूते तस्मिन्नाविर्भूते सर्वमेव सङ्गच्छत इति न किञ्चिदनुपपन्नम्। नन्वेकमेव वस्तु कथमनेकधा भवतीत्याकाङ्क्षायामाह। दृश्यादिभिरिति। द्रष्टुर्भावभेदेनैव एक एव भगवान् बहुधा ईयते भावास्तु पृथग् यथैक एव देवदत्तः पित्रादिशब्दैरनेकभावैर्व्यवह्रियते भवति च तथा तथापि यस्य यो भाव उत्पद्यते तं प्रति तथैवेति तथैवार्थसिद्धिः अतो मूलरूपाविर्भावार्थं यत्नः कर्तव्य इति सिद्धम् ॥ २६ ॥

ज्ञानस्य प्रशंसां स्वरूपं चोक्त्वा वैराग्यस्य प्रशंसास्वरूपाण्याह। एतावानेवेति चतुर्भिः। प्रथमतः सर्वेषां शास्त्राणां वैराग्यमेव फलमिति प्रमाणनिर्णयमाह। सम्पूर्णेनापि योगेन योगशास्त्रं सर्वेषामेव ज्ञानभक्तिकर्मादीनां योगशब्दवाच्यत्वैव अतो योगिनः सर्वैरेवोपायैरयमेवार्थो युज्यते यदा सर्वतश्चेदसङ्गो भवति तुशब्दः पक्षान्तरं व्यावर्तयति। ये वैराग्यं नाभिमन्यन्ते वैराग्याभावे ज्ञानमेव न भवेज्जातं वा न किञ्चित्कार्यं कुर्याद्दोषस्यानिवृत्तत्वात् सर्वथा निवृत्ते दोषे स्वप्रकाशरूप आत्मा आविर्भविष्यतीति कोऽपि न तत्र प्रयासः कर्तव्यः अतः सर्वशास्त्राणां फलं वैराग्यम् ॥ २७ ॥

एवं प्रमाणविचारेण वैराग्योत्कर्षमुक्त्वा प्रमेयविचारेणाप्याह। ज्ञानमेकमिति। वस्तुतः सर्वं जगद्बोधान्वयव्यतिरेकानुसरणाद्बोधमात्रमित्यवसीयते यः कश्चन लौकिको वैदिकः सर्वोऽपि व्यवहारः बोध एव पर्यवसित इति यथा सर्वे तरङ्गाः समुद्रे पर्यवसिता इति अत एकमेव ज्ञानं पराचीनैरेव प्राकृतैरिन्द्रियैर्व्यापकत्वाद्बृंहणत्वाच्च निर्गुणमेव गुणानां तदतिरिक्तानामभावाद् घटपटाद्यर्थरूपेण भ्रान्त्यावभाति अतः शुक्तिकारजतवत् प्रतिभासत इति वस्तुविचारेणापि तत्रासक्तिर्नोचिता ते हि प्राकृताः स्वबुद्ध्यनुसारेणैव तद्गृह्णन्ति एकदेशग्रहणेन स्वस्वभावग्रहणेन च तदन्यथा गृहीतं भवति अतः स्वेन्द्रियादिधर्मा एव तत्रारोप्य गृह्यन्ते इति ख्यातिवादा बहुविधा उत्पन्नाः धर्माणामेव वस्तुतः प्रतिभानमित्यन्यख्यातिः आधारमपि पुरस्कृत्य तत्र कञ्चनार्थं परिकल्प्य ग्राहकधर्मसम्बन्धादन्यथेत्यप्याहुः यथा प्रतीतिर्भ्रान्ता तथा कल्पनापीति नात्यन्तमाग्रहः कर्तव्यः शब्दादिधर्मवांश्चायम् आदिशब्देनार्थः तद्वच्छब्दधर्मादयो गृहीताः ते च धर्मा अनादिवासनया स्फुरन्तीति मिथ्यावादिनोऽपि एकदेशिवैराग्यप्रवेशेन सङ्गृहीता भवन्ति ॥ २८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

तथैव आत्मना बुद्ध्या आत्मानं स्वीयजीवं निःसङ्गत्वादिभिर्हेतुभिः पश्यं, वैकुण्ठं ब्रह्मस्वरूपं वा आरूढमारूढप्रायमीक्षते अनुभवति ॥ २५ ॥

एवञ्च भक्तियोगाध्यायोक्तं "पश्यन्ति ते मे रुचिराण्यम्ब" इत्यादिभिर्भक्तिफलं भगवद्धाम्नि प्रेमवत्पार्षदत्वम्। तथा ज्ञानयोगाध्यायोक्तं "निःश्रेयसं स्वसंस्थानं कैवल्याख्यं मदाश्रयम्" इत्यादिना ज्ञानफलं ब्रह्मैक्यं तथाष्टाङ्गयोगाध्यायोक्तं "मुक्ताश्रयं यर्हि निर्विषयं विरक्तं निर्वाणमृच्छति" इत्यादिभिर्योगफलमपि ज्ञानवैराग्याभ्यां मोक्षमेव साम्प्रतं तु तस्मात्त्वमित्यादिना वासुदेव इत्यादिना च तत्तत्सर्वं भक्तिज्ञानयोगफलं केवलयैव भक्त्या सिद्ध्यतीत्युच्यते।

> अकामः सर्वकामो वा मोक्षकाम उदारधीः।
> तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥
>
> इति उक्तञ्च यत्कर्मभिर्यत्तपसेत्यादौ।
>
> सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा।
> स्वर्गापवर्गं मद्धाम कथञ्चिद्यदि वाञ्छति।

इति वक्ष्यते च तत्र का युक्तिरित्यपेक्षायामाह। ज्ञानमात्रमिति। एको भगवान् षडैश्वर्यपूर्णः वैकुण्ठनाथ एव दृश्यादिभिर्दृशिज्ञानं तदादिभिः साधनैः पृथग्भावैः पृथग्भावनावद्भिरुपासकैः परं ब्रह्मादिरूप ईयते। इयत इति च पाठः। यद्वा। दृश्यैः स्वरूपैः अदृश्यैः स्वरूपैर्दृश्यादृश्यैश्च स्वरूपैः तत्र परब्रह्मणो लक्षणं ज्ञानमात्रमिति परमात्मनो लक्षणमीश्वरः पुमानिति तेन भगवत एव ब्रह्मत्वात् परमात्मत्वाच्च भगवत्साधनभूतया भक्त्यैव स्वसाध्यं प्रेमवत्पार्षदत्वं, ज्ञानयोगसाध्यं सायुज्यञ्च सिद्ध्यति न च तथा ब्रह्मसाधनेन ज्ञानेन परमात्मसाधनेन योगेन वा प्रेमवत्पार्षदत्वं सिद्ध्यति प्रमाणाभावादेवेति अत्र ब्रह्मणो निराकारत्वाददृश्यं स्वरूपं परमात्मनोऽपि निराकारत्वाददृश्यम्। "केचित् स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम्। चतुर्भुजम्" इत्यादिना "सहस्रशीर्षा पुरुषः" इत्यादिश्रुत्या च केषाञ्चिन्मते साकारत्वाद्दृश्यं भगवतस्तु ब्रह्मत्वात् परमात्मत्वाच्चादृश्यं भगवदवतारकाले दृश्यमन्यदा दृश्यादृश्यञ्च यदुक्तं विष्णुपुराणे प्रथमेंऽशे।

> प्राकृतं ब्रह्मरूपस्य विष्णोः स्थानमनुत्तमम्।
> तत्राव्यक्तस्वरूपोऽसौ व्यक्तरूपो जगत्पतिः।
> विष्णुर्ब्रह्मस्वरूपेण स्वयमेव व्यवस्थितः। इति

अस्यार्थः अनुत्तमं निकृष्टं तत्र प्राकृते अव्यक्तस्वरूपस्तेनाप्राकृते उत्तमे स्थाने व्यक्तरूप इति ॥ २६ ॥

त्रयाणामेवोपासकानां कमपि साधारणं धर्मफलसाधकमाह। एतावानेवेति। योगेन भक्त्याख्येन ज्ञानाख्येन योगाख्येन च योगिनो भक्तस्य ज्ञानिनोऽष्टाङ्गयोगिनश्च यत् कृत्स्नशोऽसङ्गः इन्द्रियार्थेष्वनासक्तिरेतावानेव अभिमतार्थसाधकत्वात् अभिमतोऽर्थः प्रयुज्यते युक्त उचितो भवतीत्यर्थः। कृत्स्नशोऽनासक्त्यैव स्वाभिमतं वस्तु प्रेमा मोक्षो वा लभ्यत इत्यर्थः ॥ २७ ॥

ननु भक्तिरस्मभिर्विकीर्षिता श्रुतावगता च ज्ञानयोगावप्यस्माभिर्ज्ञास्यौ श्रुतावगतौ च। तत्र यदद्वैतं ज्ञानं तत्र सम्यगवगतमतः संक्षेपेण ब्रूहीत्यतो विवर्तवादिनां सम्मतं ज्ञानमाह। ज्ञानमेकमद्वैतं ब्रह्म यत्तदेव पराचीनैः पराङ्मुखैर्मायाशक्त्युत्थैरिन्द्रियैः श्रोत्रादिभिर्हेतुभिः शब्दादिधर्मेण अर्थरूपेण शब्दवानयं मृदङ्गो रूपवतीयं स्त्री रसवदिदं क्षीरं स्वादितमित्यादिरूपेण जीवस्य भ्रान्त्या अवभाति इन्द्रियाणां सर्वेषामभावे

यथा महानहंरूपस्त्रिवृत् पञ्चविधः स्वराट् ॥
एकादशविधस्तस्य वपुरण्डं जगद्यतः ॥ २९
एतद्वै श्रद्धया भक्त्या योगाभ्यासेन नित्यशः ॥
समाहितात्मा निःसङ्गो विरक्त्या परिपश्यति ॥ ३० ॥
इत्येतत् कथितं गुर्वि ज्ञानं तद्ब्रह्मदर्शनम् ॥
येनानुबुध्यते तत्त्वं प्रकृतेः पुरुषस्य च ॥ ३१ ॥
ज्ञानयोगश्च मन्निष्ठो नैर्गुण्यो भक्तिलक्षणः ॥
द्वयोरप्येक एवार्थो भगवच्छब्दलक्षणः ॥ ३२ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ज्ञानभेदाभावाद्यदेकं ज्ञानं तदद्वैतं ब्रह्मैवेत्यर्थः । ननु तर्हि भ्रमप्रतीतवस्तुनां मिथ्यात्वमिव विश्वस्यास्य मिथ्यात्वं प्रसज्जेत । मैवं रजतमिदमिति प्रतीतौ शुक्तित्वेन प्रतीत्यभावात् शुक्तौ रजतत्वस्य मिथ्यात्वमेव । चक्षुषा रूपमेव पश्यतीत्यत्र तु चक्षुःकरणकमेतत्कर्तृकं रूपविषयकं ज्ञानमिति ज्ञानमात्रस्य ब्रह्मणो विशेष्यत्वेनानुभवो भवत्येव केवलं कर्तृकरणकर्म्माणि विशेषणानि ज्ञानपदार्थभेदकानि मायया बहिरङ्गशक्त्या सृज्यन्त इति न तेषां मिथ्यात्वं ज्ञेयम् । सृष्ट्या चाविद्यया स्ववृत्त्या जीवः स्वाहजिकं ज्ञानं भ्रमयित्वा स्वसृष्टकर्त्रादिविशेषणवैशिष्ट्यादनन्तविधे ज्ञाने पात्यते एवैव जीवस्यार्थरूपे नानाविधे ज्ञाने भ्रान्त्या प्रवृत्तिर्यथा गोगर्दभादीनां शुद्धे गङ्गोदके वर्त्तमानेऽपि प्रणालिकादिविविधखातजलेष्वेव पिपासया प्रवृत्तिर्भ्रान्त्यैव न त्वभ्रान्तधियां मनुष्याणामिति । अत्र पराङ्मुखैरितीन्द्रियाणां विशेषणादपराङ्मुखैरबहिर्मुखैर्भगवदुन्मुखैरिन्द्रियैस्तु मधुरशब्दवतीयं भगवन्मुरली श्यामसुन्दरोऽयं भगवद्देह इत्यादि चिद्वस्तुनिष्ठो ज्ञानभेदो न व्यवच्छिद्यते तस्य ब्रह्मत्वादेवेत्याहुर्भागवताः ॥ २८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स मुमुक्षुर्निर्मलचित्तः आत्मना निर्मलेन चित्तेन आत्मानं परमात्मानं निःसङ्गमाकाशवत्सर्वचेतनाचेतनगुणास्पृष्टं समं दर्शनं यस्मात्तं निर्मलज्ञानदातारं हेयोपादेयाभ्यां बन्धमोक्षादिजीवधर्माभ्यां रहितमारूढं हृद्याविर्भूतं पदं पदनीयमीक्षते ॥ २५ ॥

अर्थानां समत्वं ब्रह्मात्मकत्वादित्याह । ज्ञानमात्रमिति । ज्ञानं प्रत्यक्तत्त्वं मात्रा अंशो यस्य तत् परं सर्वचेतनविलक्षणस्वरूपं तद्ब्रह्म बृहत्स्वरूपगुणयुक्तं परगुणयुक्तं परमात्मा ईश्वरः दृश्यादिभिः पृथग्भावैः कार्य्यैः कारणभूतः भगवानेकः समानाधिकशून्यः ईयते निश्चीयते इत्यर्थः ॥ २६ ॥

उक्तसाधनकदम्बस्य फलमाह । एतावानिति । योगिनः साधकस्य एतावानेव अर्थः प्रयोजनं कः अभिमतः परम इष्टः भगवान् येन साधनेन युज्यते कृत्स्नशः संसारात्तु असङ्गः इति यद्यः संसारनिवृत्तिः परमेश्वरप्राप्तिश्च सर्वसाधनप्रयोजनमित्यर्थः ॥ २७ ॥

ननु नानाकार्यरूपैः कारणभूतः भगवानेक एवेयते इति न युक्तं नानाकार्यरूपस्य जगतः अचेतनरूपस्याचेतनपरिणामत्वासम्भवादतः परमाणवादिकारणवादो युक्त इत्यत आह । ज्ञानमिति । ज्ञानं ज्ञानस्वरूपमेवैकं ब्रह्मैवार्थरूपेण इन्द्रियार्थरूपेण शब्दादिधर्मिणा आकाशादिरूपेणावभाति ।

तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः
एतस्माज्जायते प्राणः मनः सर्वेन्द्रियाणि च ।
खम्वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी ॥

इत्यादिश्रुतिभ्यः अत एकं चेतनं ब्रह्म श्रुतिप्रोक्तं विहाय नानाचेतनरूपपरमाणवादिवादो निर्मूलत्वादुपेक्षणीय इति भावः कथंभूतं निर्गुणं कृत्स्नहेयगुणशून्यम् । ननु यदि ब्रह्मैव अवभाति तर्हि साधनप्रयासः किमर्थस्तत्राह । पराचीनैः कार्यमात्रग्राहकैर्बहिर्मुखैरिन्द्रियैः अवभाति तत्रापि भ्रान्त्या बाह्योऽर्थोऽपि इन्द्रियैर्याथातथ्येन न गृह्यते किमुत सर्वकारणं सर्वाधारं सर्वनियन्तृ ब्रह्म तैर्न गृह्यते इति वक्तव्यम् । तद्विज्ञानार्थं साधनप्रयास इति भावः ॥ २८ ॥

---

### भाषा टीका ।

परमात्मा परं ब्रह्म ईश्वर पुरुष ज्ञान मात्र भगवान् एक होकर भी दृश्यादि नाना भावों से अनेक प्रकार प्रतीत होते हैं ॥ २६ ॥

योगिको सङ्क्षेप से इतना हि सब प्रयोजन अभिमत है जोकि सब प्रकार से सब वस्तुओं का सङ्ग आसक्ति का छूटजाना है ॥ २७ ॥

जोकि प्राकृतगुण रहित एक परब्रह्म हैं सोई ब्रह्म बाह्य वृत्ति वाली इन्द्रियों से भ्रान्ति से शब्दादि धर्म रूप से अर्थाकार प्रतीत होते हैं ॥ २८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अर्थरूपत्वमेवोदाहृत्य दर्शयति । यथेति । अहंरूपोऽहङ्कारः स च त्रिवृत् त्रिगुणात्मकः पुनश्च भूतरूपेण पञ्चविधः इन्द्रियरूपेणैकादशविधश्च स्वराट् जीवरूपः तस्य जीवस्य वपुरण्डं

श्रीधरस्वामिकृतभावार्थदीपिका ।

जगच्च यतो येभ्यो महदादिभ्यः तथावभाति ॥ २९ ॥

ननु तर्हि जनः किमित्येवं न प्रत्येति तत्राह । एतद्ब्रह्म ॥ ३० ॥

उक्तमेवार्थं सुखप्रतिपत्त्यर्थं संक्षेपेणानुवदति । इतीति । हे गुर्वि ! पूज्ये ! ॥ ३१ ॥

अनेन च ज्ञानयोगेन भगवानेव प्राप्यो यथा भक्तियोगेनेत्याह । नैर्गुण्यो ज्ञानयोगश्च मन्निष्ठो भक्तिलक्षणश्च यो योगस्तयोर्द्वयोरप्येक एवार्थः प्रयोजनं कोऽसौ भगवच्छब्दोलक्षणं ज्ञापको यस्य । तदुक्तं गीतासु " ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः " इति ॥ ३२ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपन्याख्या दीपिकाटिप्पणी ।

अर्थरूपत्वमेव । कल्पितस्वरूपत्वमेव उदाहृत्य कः कल्पितोऽर्थ इत्यभिनीय यथा महानिति सृष्टिक्रमेणोदाहरणम् । अण्डं ब्रह्माण्डं जगच्च स्थावरजङ्गमरूपम् ॥ २९ ॥

यर्हि बाधितसामानाधिकरण्येन सर्वं ब्रह्मैव तर्हि एवं ब्रह्मत्वेनैव भक्तव्येति निरीश्वरयोगसांख्यादिव्युदासः ॥ ३० ॥

तस्य शास्त्रैकगम्यस्य ब्रह्मणो दर्शनं ज्ञानद्वारं प्रकृतेः प्रधानस्य पुरुषस्य जीवस्य तत्त्वं यथावद्रूपम् ॥ ३१ ॥

यद्यपि निर्विशेषं ब्रह्मैव ज्ञानेन प्राप्यं तथापि भगवत एवासम्यग्ज्ञानरूपत्वाद्विशेष्यमात्रं तद्विशिष्टान्न भिन्नमिति भगवानेव प्राप्य इत्युक्तम् । तत् ब्रह्मणो भगवदभिन्नत्वम् ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

परमप्रस्तुतं सर्वस्य ब्रह्मात्मकत्वमुपपादयति । यथेति । महान् महत्तत्त्वमहंरूपः अहङ्कारः स च त्रिवृद्वैकारिकादिभेदेन त्रिधा वर्तमानः पुनश्च भूतरूपेण पञ्चविधः इन्द्रियरूपेणैकादशविधः एतत्तत्त्वात्मकं यदण्डं स्वराट् ब्रह्मा च यत उत्पन्नं तस्यैवैतत् सर्वं जगद्वपुः शरीरं यथा यथावत् परमार्थं इत्यर्थः ॥ २९ ॥

केनोपायेनायं सर्वात्मकत्वेन ब्रह्म साक्षात्कुर्यादित्यत्राह । एतदिति । एतत् कृत्स्नस्य ब्रह्मात्मकत्वं श्रद्धया भक्त्या वैराग्येण च परिपश्यति श्रद्धाभक्तिवैराग्यादिभिः सर्वात्मकं ब्रह्म साक्षात्कुर्यादित्यर्थः ॥ ३० ॥

अशाष्टाध्याय्या प्रतिपादितमर्थमुपसंहर्तुं सुखप्रतिपत्तये संक्षेपेणानुवदति । इतीति । हे गुर्वि! पूज्ये ! इत्युक्तरीत्या एतत्कथितम् किं तदित्यत्राह । येन प्रकृतेरचेतनायाः भूम्यादिरूपायाः "भूमिरापोऽनलो वायुः" इत्याद्युक्तायाः तथा "अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्" इत्युक्ताया जीवात्मकप्रकृतेश्च पुरुषस्य परमपुरुषस्य च तत्त्वं याथात्म्यमवबुध्यते तद्ब्रह्मदर्शनं ब्रह्मदर्शनोपायभूतं ज्ञानं कथितमित्यर्थः ॥ ३१ ॥

तथा ज्ञानयोगः प्रकृतिनिलक्षणब्रह्मात्मकप्रत्यगात्मोपासनरूपो ज्ञानयोगो नैर्गुण्यः सत्त्वादिगुणत्रयराहित्यसंपादको मन्निष्ठो मद्विषयः भक्तिलक्षणः भक्तिरूपो योगश्च कथितः द्वयोर्ज्ञानयोगभक्तियोगयोरुभयोरपि भगवच्छब्दो लक्षणम् "तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः" इत्युक्तरीत्यानुपचारेण बोधको यस्य स एव परमपुरुषः एक एवार्थः प्रयोजनं फलमिति "भक्तियोगश्च योगश्च मया मानव्युदीरित" इति कथितः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्त्रीत्वादिममर्थं कथं जानामीत्यत उदाहरति । यथा महानिति । महान्महत्तत्वाभिमानी ब्रह्मा वैकारिकाद्यात्मना त्रिवृत्त्रिविधोऽहङ्कारोऽहङ्काराभिमानी रुद्रः आकाशादिपञ्चभूताभिमानित्वेन पञ्चविधः मनआद्येकादशेन्द्रियाभिमानित्वेनैकादशविधः स्वराडिन्द्रश्चैते अज्ञानिनां भौतिकशरीरत्वेनापि यथा प्रतीयन्ते तथा मत्स्यादिरूपं परं ब्रह्मेत्यर्थः अभिमानित्वमात्रेणाभिमन्यमानदेहत्वं कथमित्येतत्स्पष्टयति । तस्येति । इदमण्डं सर्वजगच्च तस्येन्द्रस्य वपुरिति यतोऽत इति अनेन ब्रह्मरुद्रयोरपि भौतिकदेहत्वं स्पष्टमित्युक्तं भवति अत्र यथा प्रतीतार्थो दार्ष्टान्तिकेऽनुपयुक्तः स्यादित्येवं व्याख्यातमिति ज्ञातव्यम् ।

एकादशेन्द्रियात्मा च पञ्चभूतात्मकस्तथा ।
सर्वाभिमानी भगवान् स्वराडिन्द्रः पुरन्दरः ॥
इदमण्डं जगत्सर्वं शक्रदेहं विदुर्बुधाः ।
तत्पतिस्त्रिगुणो रुद्रस्तस्य ब्रह्मा ततो हरिः ।

इति वचनात् ॥ २९ ॥

तर्हि तद् ब्रह्म यथावज्ज्ञातुं कथं शक्यत इति तत्राह । एतदिति । एतैः साधनैः अधिकार्येतन्मत्स्याद्यवताररूपं ब्रह्म परिपश्यति प्राकृतदेहादिदोषपरित्यागेन ज्ञानानन्दाद्यनन्तगुणपूर्णत्वेनापरोक्षीकरोतीत्यन्वयः कैरित्यत उक्तम् । श्रद्धयेत्यादिभिरिति । नित्यशोऽनुक्षणं यमादियोगाभ्यासेन कीदृशोऽधिकारी समाहितात्मा हराविव सम्यगर्पितमनाः निःसङ्गो दुष्टसङ्गरहितः निर्णीतसज्जनसङ्गो वा "निर्निर्णयनिषेधयोः" इति यादवः विरक्तः सर्वमसारमनित्यं चेति ज्ञानवान् वा इत्यनेनैतैरेव साधनैर्नापरैरैक्यज्ञानादिभिर्ब्रह्मदर्शनं स्यादिति सूचयति । ज्ञानरूपमेकं निर्गुणं ब्रह्म भ्रान्त्यार्थरूपेण पञ्चात्मनावभातीत्याद्यपव्याख्याननिरासाय च "मत्स्यकूर्मादिरूपं च विष्णोर्ज्ञानैकमात्रकम्" इत्याद्युदाहृतमाचार्यैरिति ज्ञातव्यम् ॥ ३० ॥

तत्त्वोपदेशमुपसंहरति । इतीति । ब्रह्म दर्शयतीति ब्रह्मदर्शनं तात्पर्यातिशयजननाय ज्ञानं विशिनष्टि । येनेति । प्रकृतिशब्दवाच्यस्य लक्ष्म्यादेः पुरुषशब्दवाच्यस्य विष्वादेस्तत्त्वमनारोपितरूपं येन ज्ञानेनानुबुध्यत इत्यन्वयः ॥ ३१ ॥

अवश्यज्ञानानुष्ठानार्थं येन विना मुक्तिमात्रं न स्यात्तत्साधनं निर्दिशति । ज्ञानमिति । यो नैर्गुण्यो भक्तिलक्षणो योगो यच्च ज्ञानं योगस्तयोर्द्वयोरप्येक एवार्थो विषयः स क इति तत्राह । भगवच्छब्देति । भगवच्छब्दवाच्य इत्यर्थः भक्तिज्ञानयोगयोरैश्वर्याद्यनन्तगुणपूर्णश्रीनारायणो विषय इति भक्तिज्ञाने मुक्तेरवश्यसाधने मयोपदिष्टे इति ।

ज्ञानभक्ती विना नैव मुक्तिः कस्यापि विद्यते ।
तयोरेकतरेणापि विष्णुनोभयं विना ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एवमप्येतयोरेकभावेऽन्यानर्थतध्रुवम् ।

एकेनापि भवेन्मुक्तिस्तदर्थं त्वन्यसाधनम् इति

वाक्यार्थज्ञानाय लक्षणा इत्युक्तम् "लक्ष दर्शनाङ्कनयोः" इति धातोः सूचितोऽयमर्थ इति ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदेवं विवेके सति व्यष्टिरूपोऽयं जीवस्तथावभाति यथा समष्टिरूपो ज्ञानप्रधानतया स्वराट् स्वप्रकाशः सन्नवभातीत्यर्थः समष्टिरूपोऽयं जीवः कीदृशोऽपि स्वराट् तयावभाति तत्राह । महानित्यादिना । समष्टिमहदादिनादात्म्यापन्नोऽपीत्यर्थः तस्य स्वराट्जीवस्य समष्टिरूपत्वमेव दर्शयति । तस्येति । यतो जगत् स्थावरजङ्गमवृन्दं भवतीति ॥ २९ ॥

एतच्चिद्वस्तु च श्रद्धापूर्विका या भक्तिर्भगवदुपासना तत्पूर्वको यो योगाभ्यासः पूर्वोक्तः सवीजो नित्यशः क्रियमाणस्तेनैव समाहितात्मेत्यादिरूपः सन् परिपश्यति । निरीश्वरसांख्यस्तु भक्त्यादिकं विना विवेकमात्रेण न पश्यतीत्येवेत्यर्थः ॥ ३० ॥

इत्येतत् पूर्वप्रकारकं ज्ञानं कथितं कीदृशं तस्य शास्त्रमात्रज्ञेयस्य ब्रह्मणो दर्शनं ज्ञानद्वारम् । पूर्वप्रकारत्वमेवानुवदति । येनेति । प्रकृतेः प्रधानस्य पुरुषस्य जीवस्य ॥ ३१ ॥

ज्ञानमात्रमित्यत्रोक्तं सुष्ठु बोधयन् भगवत्येव सर्वतात्पर्यं दर्शयति । ज्ञानेति द्वयेन । मन्निष्ठो नैर्गुण्यश्चेत्युभयमप्युभयोरेव विशेषणं तत्र यद्यपि "कैवल्यं सात्त्विकं ज्ञानं मन्निष्ठं निर्गुणं स्मृतम्" इति भगवदुक्त्या नैर्गुण्यत्वं न सम्भवति । तथापि तत्फलस्य कैवल्यस्य निर्गुणत्वापेक्षया निर्गुणत्वमित्युक्तम् । एतदेवाह । द्वयोरप्येक एवार्थ इति ॥ ३२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तानेव भेदान् गणयति युक्त्या विचारयन्निव । यथेति । तत्त्वानां तद्भावापन्नत्वेन तत्त्वशब्दवाच्यत्वोपपत्तेर्यथा महदादयः प्राकृतैर्धर्मैः कृत्वा तत्त्वशब्दवाच्या जायन्ते वस्तुतोऽन्यधर्मवत्त्वेन ज्ञानमेव तत्तच्छब्दवाच्यमेवमिदानीमपि प्रतीयमानमित्यर्थः अहङ्कारस्यानेकरूपत्वादहम्पदस्यात्मशब्दवाच्यत्वाच्च तत्संदेहनिवृत्त्यर्थं रूपपदं त्रिवृत्त्रिविधः ततः सर्वे पञ्चविधाः मात्राः भूतप्राणादिरूपा एकादशविधा इन्द्रियरूपाः मध्ये स्वराडिति पुरुषो नारायणः इन्द्रियापेक्षारहित इति ततः पूर्वं निरूपितः तस्य वपुर्विराडण्डं तस्यावरकं जगत्तस्यैव मध्ये कार्यं यतो धर्मसहितज्ञानप्रतीत्यैव केवलमवभासते ॥ २९ ॥

साधितं युक्त्या फलमुखेन साधयति । एतदिति । एतत्पूर्वोक्तं विरक्तः परिपश्यति नाविरक्तः तच्च वैराग्यं भगवतः षष्ठो गुण इति ततः पूर्वं पञ्चभिः पदार्थसाधकैः सिद्ध्यतीति तत्साधकत्वेन पञ्चसाधनान्याह । तत्रार्थे आस्तिक्यबुद्धिर्भगवति बुद्धिः अष्टाङ्गो योगश्चेति गुणत्रयं दोषाभावद्वयमाह । समाहितात्मा निःसङ्ग इति । अन्तर्बहिः सङ्गाभावो निरूपितः एवं सप्तविधः शास्त्रार्थो निरूपितः भगवत्प्रतिपादकत्वेन गुणानां प्रत्येकप्रकारप्रतिपादकत्वेन च अतः शास्त्राणां निरूपणभेदेषु परस्परविरोधो न शङ्कनीयः ॥ ३० ॥

उपसंहरति । इत्येतदिति । हे गुर्वि ! एतावदुपदेशोऽपि नाहं गुरुः किं तु त्वमेव गुरुः आज्ञया परं निरूपितमिति इतीति समाप्त्यर्थं एतत्सर्वं ज्ञानमेव निरूपितं सप्तविधोऽपि सिद्धान्तः ज्ञानमेवेति तेनोपसंहारः अनेन ब्रह्माविर्भावो भवतीति ब्रह्माविर्भावः फलमुक्तं यदपि देवहूत्या पृष्टम् "जिज्ञासयाहं प्रकृतेः पूरुषस्य" इति तदप्यनेनैव भवतीत्याह । येनावबुद्ध्यत इति ॥ ३१ ॥

एवं सप्तविधं ज्ञानशास्त्रं भक्तिशास्त्रं चापरं तस्य च बहुविधा भेदा उक्ताः स हि क्रियाप्रधानः यथा पुरुषस्य स्वरूपं गुणाः कर्माणि चेति तत्र स्वरूपप्रतिपादकं वैदिकं शास्त्रं षडन्यानि गुणप्रतिपादकानि क्रियाप्रतिपादकं च भक्तिशास्त्रं तेषां भिन्नान्येव सर्वेषां फलानि तत्र स्वरूपज्ञानमुख्यभक्तिशास्त्रयोः एकं फलमित्याह । ज्ञानयोगश्चेति । मन्निष्ठ इति षण्णां व्युदासः नैर्गुण्यो भक्तिलक्षण इति निर्दुष्टो भक्तिमार्ग उक्तः द्वयोरप्येकमेव फलं भक्त्यापि भगवान् प्राप्यते धर्मी मुख्येनापि ज्ञानेन अत एव भगवच्छब्देन लक्ष्यते भगवच्छब्दो वा लक्षणं यस्येति अतः शास्त्रद्वयमेकं षडन्यान्यङ्गशास्त्राणीति सिद्धम् ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अर्थरूपेणावभातीत्युक्तमतोऽर्थमध्यपतितमेव सर्वं मायिकं वस्त्विति दर्शयति । यथेति । महांश्चित्तम् अहंरूपोऽहङ्कारः त्रिवृत् त्रिगुणात्मकः स च पञ्चविधः शब्दादिरूपेणाकाशादिरूपेण च पुनरेकादशविध इन्द्रियरूपेण स्वराट् समष्टिर्व्यष्टिश्च विराडशुद्धजीवस्य वपुरण्डश्चेति यतो महदादिभ्यो जगत् मायिकमिदं विश्वं भवति महदादीनामेषां बुद्धिविषयत्वादर्थरूपत्वम् ॥ २९ ॥

अस्य ज्ञानस्याधिकारिणमाह । एतज्ज्ञानरूपं ब्रह्म एतच्चिद्वस्तु च ॥ ३० ॥

उक्तमेवार्थं सुखबोधार्थं सङ्क्षेपेणानुवदति गुर्वि ! हे मातः ! ॥ ३१ ॥

योगस्यायत्यां ज्ञानत्वादेतत्प्रकरणोक्तेर्ज्ञानं भक्तिश्चेति द्वे एव साधने भवतः तत्साध्ययोर्ब्रह्मप्राप्तिभगवत्प्राप्त्योर्द्वित्वेऽप्युक्तन्यायेन भगवत एव ब्रह्मत्वात् भगवत्प्राप्तिरित्येकमेव फलं स्यादित्याह । ज्ञानेति । मन्निष्ठ इति । ममैव ब्रह्मत्वादिति भावः नैर्गुण्यो निर्गुणो भक्तिलक्षणश्च यो योगस्तयोर्द्वयोरेक एवार्थः प्रयोजनं कोऽसौ भगवच्छब्दो लक्षणं ज्ञापको यस्य तदुक्तं गीतासु । ते प्राप्नुवन्ति मामेव सर्वभूतहिते रता इति ।

ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।

शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥

इत्यतः सायुज्यप्रेप्सोर्भगवत एव सिद्धिः ॥ ३२ ॥

यथेन्द्रियैः पृथग्द्वारैरर्थो बहुगुणाश्रयः ।
एको नानेयते तद्वद्भगवाञ्छास्त्रवर्त्मभिः ॥ ३३ ॥
क्रियया क्रतुभिर्दानैस्तपःस्वाध्यायमर्शनैः ।
आत्मेन्द्रियजयेनापि संन्यासेन च कर्मणाम् ॥ ३४ ॥
योगेन विविधाङ्गेन भक्तियोगेन चैव हि ।
धर्मेणोभयचिह्नेन यः प्रवृत्तिनिवृत्तिमान् ॥ ३५ ॥
आत्मतत्त्वावबोधेन वैराग्येण दृढेन च ।
ईयते भगवानेभिः सगुणो निर्गुणः स्वदृक् ॥ ३६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उक्तार्थं द्रढयति । यतो ब्रह्मण एव चिदचिच्छक्तिनः सकाशात् महानहङ्कारश्च अभूत् त्रिवृत् वैकारिकादिभेदेन पञ्चविधः भूतरूपेण एकादशविधं इन्द्रियरूपेण स्वराट् जीवश्च तस्य स्वराजः वपुषः स्थानं ब्रह्माण्डं जगत् यथा यथावद्भूत् ॥ २९ ॥

एतत् विश्वकारणम् ॥ ३० ॥

हे गुर्वि ! आर्य्ये ! ॥ ३१ ॥

नैर्गुण्यः दम्भादिमायागुणवर्जितः ज्ञानयोगो भक्तियोगश्च मन्निष्ठ एव यतः तयोरेक एव अर्थो विषयः फलं कः भगवच्छब्दो लक्षणं वाचको यस्य सः ॥ ३२ ॥

---

### भाषाटीका

जिस प्रकार महान् अहङ्कार तीन प्रकार का आकाशादि पाञ्चप्रकार फिर ग्यारह इन्द्रियरूप उसका शरीर है जिससे जगत् भया है ॥ २९ ॥

तिसको नित्य श्रद्धा से भक्ति से योगाभ्यास से सावधान होकर निःसङ्ग होकर वैराग्यसे देखता है ॥ ३० ॥

हे माता ! मैने आप से यह ज्ञान कहा है यह ज्ञान ब्रह्मका दर्शाने वाला है जिससे प्रकृतिपुरुष का तत्व जाना जाता है ॥ ३१ ॥

हमारे से निष्ठावाला ज्ञान योग और निर्गुण भक्तियोग ये दोनों का एक ही अर्थ है दोनो भगवान् के प्रापक हैं ॥ ३२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु ज्ञानयोगस्यात्मलाभः फलं शास्त्रेणावगम्यते भक्तियोगस्य तु भजनीयेश्वरप्राप्तिः कुतस्तयोरेकार्थत्वमित्याशङ्क्य दृष्टान्तेनोपपादयति । यथा बहूनां रूपरसादीनां गुणानामाश्रयो गुडक्षीरादिरेक एवार्थो मार्गभेदप्रवृत्तैरिन्द्रियैर्नाना प्रतीयते चक्षुषा शुक्ल इति रसनेन मधुर इति स्पर्शनेन शीत इत्यादि तथा भगवानेक एव तत्तद्रूपेणावगम्यते ॥ ३३ ॥

शास्त्रमार्गानेव प्रपञ्चयति । क्रिययेति त्रिभिः । क्रियया पूर्तरूपया क्रतुभिर्यागैः मर्शनं मीमांसा आत्मेन्द्रियजयो निषिद्धवर्जनम् ॥ ३४ ॥

उभयाचिह्नेन सकामनिष्कामलक्षणेन । तमेवाह । य इति । सकामधर्मप्राप्यं स्वर्गाद्यपि भगवत एव सगुणं स्वरूपमितिभावः ॥ ३५ ॥

एभिर्वर्त्मभिः स्वदृक् स्वप्रकाशः ॥ ३६ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपन्याख्या दीपिकाटिप्पणी ।

पृथग्भावैरिति पृथग्भावो दर्शनादिक्रिया येषां तैश्चक्षुरादिभिः पृथग्द्वारैरिति पाठान्तरं तत्र द्वारशब्दो व्यापारवचनः इन्द्रियैर्नाना तत्तदंशतया गृह्यते मनसा तु सर्वांश एव गृह्यते तथा मनःस्थानीयेन भक्तियोगेन सर्वांशिभगवानिति ज्ञेयम्॥३३॥

क्रिययेति त्रिकम् । तदेव । शास्त्रमार्गैर्नानाप्रत्ययनमेव क्रियादित्रयं गृहस्थधर्मः तपः वानप्रस्थस्य स्वाध्यायमर्शने ब्रह्मचारिणः आत्मेन्द्रियाजयादिद्वयं भिक्षोरिति ज्ञेयमेवं हीति सर्वत्र भक्तिसापेक्षत्वं व्यञ्जितम् एवं कर्मकाण्डमार्ग उक्तः तत्फलञ्च सगुणः स्वर्गादिरूपस्तत्र गृहस्थस्य स्वर्गः वानप्रस्थादेस्तु तत्तारतम्येन महर्लोकादि उपासनाकाण्डमार्गानाह ।योगेनेति। पूर्वोक्तगृहस्थादिधर्मेष्वेव कश्चन विशेषं फले आह । धर्मेणेति । तत्र वैष्णवयोगस्य भक्तिद्वारा भगवानेव फलं निर्बीजस्य ब्रह्म सकामस्याणिमादिसिद्धिद्वारा आत्मतत्त्वावबोधस्य फलं ब्रह्मानुभवः वैराग्यं तु ज्ञानाङ्गमेवेति न पृथक् फलं भक्तियोगस्य च फलं विशिष्टो भगवानेवेति ज्ञेयम् ॥ ३४ ॥ ३५ ॥ ३६ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

कथं ज्ञानयोगभक्तियोगाभ्यां भगवानेव प्राप्य इत्यत्राह । यथेति । पृथग्द्वारैः पृथग्भिन्नानि द्वाराणि रूपरसादिग्रहणानि येषां तैरिन्द्रियैर्बहूनां गुणानां रूपरसादीनामाश्रयोऽर्थः क्षीरादिरूपोऽर्थः एक एव नाना ईयते प्रतीयते रूपग्राहकेण चक्षुषा

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

शुक्लादिगुणविशिष्टत्वेन रसनेन्द्रियेण मधुरादिगुणविशिष्टतया त्वगिन्द्रियेण शीतोष्णादिस्पर्शविशिष्टतया च यथा गृह्यते इत्यर्थः तथा भगवानेक एव शास्त्रोक्ततत्तन्मार्गविशेषैराराध्यत्वाकारेण प्राप्यत्वाकारेण च बुध्यत इत्यर्थः ॥ ३३ ॥

शास्त्रीयमार्गविशेषान् प्रपञ्चयति त्रिभिः । क्रियया पञ्चरात्रोदितपूजाकलापेन क्रतुभिर्वेदपूर्वभागोदितयज्ञैः दानतपसी स्मृतिचोदिते तत्र तपः कृच्छ्रचान्द्रायणादि स्वाध्यायः वेदाध्ययनं मर्शनं वेदार्थविमर्शनम् आत्मजयः शम इन्द्रियजयो दमः कर्मणां संन्यासः फलासङ्गराहित्येनानुष्ठानम् ॥ ३४ ॥

विविधाङ्गेन बह्वङ्गोपकृतेन भक्तियोगेन भगवद्भक्तियोगेन तथाविधेन योगेन प्रकृतिविविक्तात्मयाथात्म्यज्ञानयोगेन उभयचिह्नेन सकामनिष्कामलक्षणेन धर्मेण तमेवाह । य इति । सकामधर्मप्राप्यं स्वर्गाद्यपि भगवत एवेत्यर्थः अत्र

इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः तदेवाग्निस्तद्वायुस्तत् सूर्य्यस्तदु चन्द्रमाः ।

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ॥
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ।
स तया श्रद्धया युक्तस्तस्याराधनमीहते ॥
लभते च ततः कामान् मयैव विहितान् हि तान् ।
अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ॥

फलमत उपपत्तेः । ३ । ३ । ३८ । इत्यादिश्रुतिस्मृतिसूत्रार्थोऽभिप्रेतः ॥ ३५ ॥

तस्मादात्मतत्त्वावबोधेनात्मयाथात्म्यज्ञानयोगेन दृढेन वैराग्येण च एभिः क्रियाभिश्च सगुणः मङ्गलगुणकः निर्गुणः हेयगुणरहितः स्वदृक् स्वप्रकाशः भगवानेक एवेयते प्राप्यते तत्र क्रत्वादिभिरिन्द्रादिरूपेणाराध्यमानोऽन्तवत्फलप्रदः साक्षाज्ज्ञानयोगभक्तियोगादिभिराराधितस्तु निरतिशयमोक्षाख्यफलप्रद इति भावः ॥ ३६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

एकस्यानेकगुणविषयत्वं कुत्र दृष्टमिति तत्राह । यथेति । यथा बहूनां शब्दस्पर्शरूपरसगन्धगुणवादीनां गुणानामाश्रयो बहुगुणाश्रय एकोऽर्थः पदार्थो नानेयते कैः पृथक्कारैः पृथक्कारश्रवणं वर्तनं येषां तानि तैर्भिन्नमार्गैरिन्द्रियैः श्रोत्रेण शब्दवान् त्वचा स्पर्शवांश्चक्षुषा शुक्लादिरूपवान् जिह्वया रसवान् घ्राणेन गन्धवान् पाणिना गुर्विति ज्ञायते एवं स भगवानेको ज्ञानानन्दादिबहुगुणाश्रयः शास्त्रवर्त्मभिर्वेदान्तादिसच्छास्त्रमार्गैरानन्दवान् ज्ञानवानित्यादिबहुगुणविषयत्वेन ज्ञायत इत्यन्वयः ॥३३॥

भक्तिज्ञानविषयत्वस्साधनक्रियादीनामपि भगवानेव विषय इत्याह । क्रिययेत्यादिद्वाभ्यां श्लोकद्वयेन । क्रियया सन्ध्यावन्दनादिलक्षणया भगवल्लिङ्गानां दर्शनेनात्मनो मनसश्चक्षुरादीन्द्रियाणां जयेन कर्मणामशास्त्रविहितानां संन्यासेन त्यागेन ॥ ३४ ॥

एकस्य धर्मस्योभयचिह्नत्वं कथमिति तत्राह । य इति । मतुप्प्रत्येकमभिसम्बध्यते प्रवृत्तिमान्निवृत्तिमानिति भगवदुपासनादिप्रवृत्तिर्हिंसादिनिवृत्तिस्तद्वानित्यर्थः ॥ ३५ ॥ ३६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

इन्द्रियैर्नानेयते इति मनसा तु सर्व्वांश एव गृह्यते इति अतः सर्व्वांशप्रत्यायकत्वाद्भगवद्भक्तियोगस्तु मनःस्थानीयो ज्ञेयः अतः स एवाङ्गित्वेन निगदितः । भावैरित्यत्र कामैरिति क्वचिन्नानायते इति पुण्यारण्यः ॥ ३३ ॥

तत्र पूर्णदर्शनहेतुं भक्तियोगं खण्डदर्शनहेतुं क्रियादिकञ्च गणयन् तत्तत्प्राप्यतदाविर्भावभेदान् दर्शयति । क्रिययेति त्रिकेण । क्रिययेत्यादित्रयं गृहस्थस्य धर्मः । तपो वानप्रस्थस्य स्वाध्यायमर्शने ब्रह्मचारिणः । आत्मेति द्वयं संन्यासिन इति कर्म्मकाण्डमार्गमुक्त्वा उपासनाकाण्डमार्गानाह । योगेनेति । विविधाङ्गेन नानाभेदेन ज्ञानकाण्डमार्गानाह । भक्तियोगेनेति । आत्मतत्त्वावबोधेनेति च प्रेम्णा ब्रह्मानुभवेन चेत्यर्थः । तत्र भक्तेर्द्वारभूतानुष्ठानविशेषमाह । धर्म्मेणेति । भगवद्धर्मेणेत्यर्थः तदेव दर्शयति । उभयं चिह्नं यत्र तेनेति । उभयचिह्नत्वमेव व्यञ्जयति । यो धर्म्मः प्रवृत्तिः श्रीभगवति निवृत्तिरन्यत्र तद्वयवानिति । द्वितीयमार्गस्य द्वारमाह । वैराग्येण च निवृत्तिमात्रात्मकेनेत्यर्थः अत्र साधनमप्यन्तर्भूतं ज्ञेयमत्र प्राप्यस्याविर्भावभेदानाह । सगुणः स्वर्गादिरूपः कर्म्ममार्गैः । निर्गुणो ब्रह्मरूपो ब्रह्मानुभवेन स्वदृक् स्वस्वरूपेणैव सर्व्वद्रष्टा भगवांस्तु भक्तियोगेन अष्टाङ्गयोगस्तु तद्द्वयाङ्गत्वसंपादनानुसारेण तद्द्वयप्रापकः क्वचित् तत्तत्सिद्धिरूपसगुणप्रापकश्चेत्यर्थः ॥ ३४ ॥ ३५ ॥ ३६ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

नन्वेको भगवान् कथमनेकविधानि शास्त्राणीति आशङ्क्य दृष्टान्तेन स्पष्टयति । यथेन्द्रियैरिति । यथा रूपरसगन्धस्पर्शवद्द्रव्यं सर्वैरेवेन्द्रियैः पृथक् पृथक् प्रतीयते चक्षू रूपपुरस्कारेण पदार्थं गृह्णाति रसना रसपुरस्कारेण घ्राणं गन्धपुरस्कारेणेत्यादि एवमनेकधर्मयुक्तो भगवांस्तत्तद्धर्मपुरस्कारेण प्रतिपाद्यत इति सर्वेषां शास्त्राणामेक एव भगवांस्तत्तद्धर्ममुख्यतया नाना ईयते ॥ ३३ ॥

किं च सर्वैरेव साधनैरेक एव प्राप्यत इत्याह । क्रिययेत्यादित्रिभिः । क्रियया स्नानादिस्मार्तक्रियया क्रतुभिर्यज्ञैर्दानैस्तुलापुरुषादिभिः तपः स्वाध्यायो वेदाध्ययनम् अवमर्शो विचारः मीमांसा आत्मान्तःकरणमिन्द्रियाणि च तेषां जयः संन्यासः अहंममेत्यादिसर्वपरित्यागः कर्मणामित्यावश्यकत्वज्ञापकम् ॥३४॥

विविधाङ्गो योगः षडङ्गोऽष्टाङ्ग इत्यादिभक्तियोगोऽप्यनेकविधः धर्मौ यो विधीयते वैराग्यरागोपाधिभेदेन द्विविधः अतस्तयोर्भेदमाह । यः प्रवृत्तिनिवृत्तिमानिति ॥ ३५ ॥

प्रावोचं भक्तियोगस्य स्वरूपं ते चतुर्विधम् ।
कालस्य चाऽव्यक्तगतेर्योऽन्तर्धावति जन्तुषु ॥ ३७ ॥
जीवस्य संसृतीर्बह्वीरविद्याकर्मनिर्मिताः ।
यास्वङ्ग ! प्रविशन्नात्मा न वेद गतिमात्मनः ॥ ३८ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

आत्मतत्त्वावबोधः साङ्ख्यं दृढेन वैराग्येणेति विरक्तिशास्त्रमेवं सर्वैरेव साधनैः एक एव भगवान् पृथक् पृथगीयते । ननु सोपाधीनां गुणप्राप्तिः निरुपाधीनां चात्मप्राप्तिरिति कथमेकं फलमित्याशङ्क्याह । स एव सगुणो निर्गुणः स्वदगात्मा चेत्यर्थः ॥ ३६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

न केवलं ज्ञानभक्तिगम्य एव भगवानपि त्वनन्तशक्तित्वात् सर्वसाधनगम्य इत्यत्र दृष्टान्तमाह । यथेति । बहूनां रूपरसादीनां गुणानामाश्रयः क्षीरादिरेक एवापि पृथग्द्वारैः पृथङ्मार्गप्रवृत्तैरिन्द्रियैर्नानां प्रतीयते चक्षुषा शुक्ल इति रसनेन मधुर इति त्वचा शीत इति नासिकया सुगन्ध इति श्रोत्रेण क्षीराभिधान इत्येवमेकैक एव स्वग्राह्यो धर्म्मोऽनुभूयते नान्यग्राह्योऽत एव तत्तद्धर्मवात्तानापि क्षीररूपोऽर्थः । मनसेन्द्रियराजेन तु सुखदस्तुसिकरोऽयं शुक्लमधुरशीतलसुगन्धक्षीरौभिधानोऽयमर्थ इति तत्तत्सर्वधर्मसंयुक्त एव स प्रतीयते तथैव शास्त्रवर्त्मभिः कर्म्मज्ञानादिभिरपि साधनैः स्वर्गापवर्गादिरूपत्वात् स्वर्गप्रद ईश्वर इत्यपवर्गप्रद आत्मा ब्रह्मेत्येकोंऽश एवानुभूयते भक्त्या तु साधनमुख्यया प्रेमविषयीभूतो भगवान् स्वर्गापवर्गादिसर्व्वफलप्रद ईश्वरादिशब्दवाच्यः स सर्व्वथैवानुभूयत इति भागवतामृतदृष्टा व्याख्या तथा हि ।

यथा रूपरसादीनां गुणानामाश्रयः सदा ।
क्षीरादिरेक एवार्थो ज्ञायते बहुधेन्द्रियैः ॥
दृशा शुक्लो रसनया मधुरो भगवांस्तथा ।
उपासनाभिर्बहुधा स एकोऽपि प्रतीयते ॥
जिह्वयैव यथा ग्राह्यं माधुर्य्यं तस्य नापरैः ।
तथैव चक्षुरादीनि गृह्णन्त्यर्थं निजं निजम् ॥
तथान्या बाह्यकरणस्थानीयोपासनाखिलाः ।
भक्तिस्तु चेतःस्थानीया तत्तत्सर्व्वार्थलाभतः ॥
इति प्रबलशास्त्रेषु तस्य ब्रह्मस्वरूपतः ।
माधुर्य्यादिगुणाधिक्यात् कृष्णस्य श्रेष्ठतोच्यते । इति ॥ ३३ ॥

शास्त्रमार्गानेव प्रपञ्चयति । क्रिययेति त्रिभिः । क्रियादित्रयं गृहस्थस्य धर्म्मः । तपो वानप्रस्थस्य । मर्शनं मीमांसा । स्वाध्यायमर्शने ब्रह्मचारिणः । आत्मेति द्वयं भिक्षोः ॥ ३४ ॥

भक्तियोगेन चैवहीति चकारेण क्रिययेत्यादीनां भक्तिमिश्रत्वं ज्ञापयति । क्रिअया भक्तियोगेन च क्रतुभिर्भक्तियोगेन च दानैर्भक्तियोगेन चेत्येवं सर्व्वत्र योजनाद्भक्तियोगमिश्रणं विना क्रियादीनां प्रतिस्वफलसाधकत्वाशक्तिं बोधयति एवहिशब्दाऽवधारणनिश्चयवाचकाभ्यां क्रियादिसाध्यं वस्तु भक्तियोगेनैव केवलेन लभ्यं निश्चितं स्यादिति च बोधयत्यतो भक्तियोगस्य सर्व्वमुख्यत्वं भगवत्स्वरूपस्येव ज्ञेयम् । उभयचिह्नेन सकामनिष्कामलक्षणेन तदेव स्पष्टयति । यो धर्मः प्रवृत्तिनिवृत्तिमान् ॥ ३५ ॥

सगुणः क्रियाकरत्वादिप्राप्यः स्वर्गादिरूप इत्यर्थः निर्गुणः संन्यासयोगादिप्राप्यः ब्रह्मपरमात्मादिस्वरूप इत्यर्थः । स्वदृक् स्वरूपेणैव सर्व्वसाधनसाध्यद्रष्टा तन्त्रेणान्यश्चार्थः स्वदृक् स्वाननन्यभक्तानेवासक्त्या पश्यतीति स्वदृक् स्वस्यैव भगवद्रूपस्यैव न तु परमात्मादिरूपस्य दृक् दर्शनं साधयत्वज्ञानं यत्र सः शुद्धभक्तियोगप्राप्यो भगवद्रूप इत्यर्थः ॥ ३६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अन्यान्यपि साधनानि सर्वाणि भगवद्विषयकान्येवेति सदृष्टान्तमाह । यथेति । बहुगुणाश्रयः पुष्पादिनानेन्द्रियैः पृथग्द्वारैः पृथक् प्रवृत्तिनिमित्तैः । एक एवेयते विषयीक्रियते तद्वच्छास्त्रवर्त्मभिः शास्त्रीयैः साधनैर्भगवान् एष एव विषयीक्रियते ॥ ३३ ॥

एतदेव प्रपञ्चयति । क्रिययेति त्रिभिः ॥ ३४ ॥ ३५ ॥

सगुणः कल्याणगुणनिधिः निर्गुणः हेयगुणशून्यः ॥ ३६ ॥

---

भाषा टीका ।

जैसे अनेक द्वार वाले इन्द्रियों से बहुत गुणों का आश्रय द्रव्यादि नाना प्रकार से ग्रहण किया जाता है तैसेही अनेक शास्त्रों के मार्गों से भगवान् भी जाने जाते हैं ॥ ३३ ॥

क्रिया से यज्ञों से दानों से तप से वेदाध्ययन से वेद विचार से मन के इन्द्रियों के जय से कर्म फलों के त्याग से ॥ ३४ ॥

अनेक अङ्गवाले योग से और भक्ति योग से प्रवृत्ति निवृत्ति रूप दोनों चिन्ह वाला जो धर्म है तिस से ॥ ३५ ॥

आत्मतत्त्व के ज्ञान से दृढ वैराग्य से इन सब उपायों से स्वयं प्रकाश ( सगुण निर्गुण ) प्राकृत गुण रहित दिव्य गुण युक्त भगवान् जाने जाते हैं ॥ ३६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवं ज्ञानयोगमुपसंहृत्य तस्य च भक्तियोगेन समानार्थत्वमुक्त्वा भक्तियोगाद्युपसंहरति । प्रावोचमिति द्वाभ्याम् । चतुर्विधं

नैतत् खलायोपदिशेन्नाविनीताय कर्हिचित्।
न स्तब्धाय न भिन्नाय नैव धर्मध्वजाय च ॥ ३९ ॥
न लोलुपायोपदिशेन्न गृहारूढचेतसे।
नाभक्ताय च मे जातु न मद्भक्तद्विषामपि ॥ ४० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

त्रिगुणनिर्गुणभेदेन अन्तर्धावति उत्पत्तिनिधनादि करोति॥ ३७ ॥

भद्रे ! हे मातः ! ॥ ३८ ॥

उपदेशेऽनधिकारिणो दर्शयति। नैतदिति द्वाभ्याम्। खलाय परोद्वेजकाय भिन्नाय दुराचाराय धर्मध्वजाय दाम्भिकाय ॥ ३९ ॥ ४० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपन्याख्या दीपिकाटिप्पणी।

प्रावोचमिति युग्मकम्। यासु गतिषु गतिं स्वरूपम्। ॥ ३७ ॥ ३८ ॥

नैतदिति युग्मकम्। अविनीताय शिष्यमर्य्यादारहिताय स्तब्धायान्यहेलनगर्ववते। लोलुपाय पूर्वोक्तदोषाभावेऽपि लोभेन गतधैर्याय। न मद्भक्तद्विषामिति षष्ठ्यन्तनिर्देशस्तत्सम्बन्धिनेऽपि नोपदिशेदित्यभिप्रायेण बहुत्वं च तद्भेदेष्वेकस्याप्यग्रहणाय ॥ ३९ ॥ ४० ॥

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका।

अन्यदपि पूर्वोक्तमनुवदति। प्रावोचमिति द्वाभ्याम्। तथा भक्तियोगस्य चतुर्विधं तामसराजससात्त्विकादिभेदेन सात्त्विकावान्तरनैर्गुण्यरूपेण चतुर्विधं स्वरूपं नैर्गुण्यभक्तियोगस्य सात्त्विकभक्त्यन्तर्भूतत्वेऽपि तस्य सर्वोत्कृष्टत्वात्तदभिप्रायेण चतुर्विधमित्युक्तं जन्तुष्वन्तर्यो धावति परिच्छिनत्ति तस्याव्यक्तगतेः व्यक्तैरिन्द्रियैर्न व्यज्यते इत्यव्यक्ता गतिर्यस्य तस्य कालस्य स्वरूपम् ॥ ३७ ॥

तथा हे अम्ब ! आत्मा जीवः यासु प्रविशन्नात्मनो गतिः प्रकारः याथात्म्यमित्यर्थः तां न वेद ता अविद्याख्यकर्मनिर्मिता जीवस्य संसृतीश्च प्रावोचमुक्तवानहम् ॥ ३८ ॥

मयोक्तमिदं सर्ववेदान्तार्थरूपमतिगोप्यमनधिकारिणे नोपदेष्टव्यमधिकारिणे एवोपदेष्टव्यमिति वदन्नेतच्छ्रवणकीर्त्तनादिफलं च दर्शयन्नुपसंहरति। नैतदिति। खलाय परोद्वेजकाय स्तब्धाय मूर्खाय भिन्नाय दुराचाराय धर्मध्वजाय दाम्भिकाय ॥ ३९ ॥ ४० ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

इदानीमुक्तपरमप्रमेयमुपसंहरति। प्रावोचमिति ॥ ३७ ॥

संसृतीर्गतीः यासु संसृतिषु प्रविशन्नयं जीव आत्मनः स्वस्य गतिं शरणमात्मानं न वेद ॥ ३८ ॥

उपदिष्टतत्त्वज्ञानानधिकारिण आह। नैतदिति। खल इन्द्रियारामो दुर्जन इत्यर्थः स्तब्धो गुरुनियोगमकुर्वाणः भिन्नो वैष्णवसमयेतरसमयनिष्ठः धर्मध्वजो दम्भवान् ॥ ३९ ॥

लोलुपो विषयाभिलाषी खलत्वादिदोषरहितोऽपि ममाभक्तश्चैवोपदेशायोग्यः प्रसङ्गेनापीत्याशयेनोक्तम् जात्विति। नैतावता पूर्यत इत्याह। न मद्भक्तद्विषामिति ॥ ४० ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तत्र भक्तियोगमेव प्राधान्यादनुवदति। प्रावोचमिति युग्मकेन। स्वं तस्यैव स्वरूपं रूप्यते येन तच्चतुर्विधं लक्षणम्। तदर्थमेव च कालादयो निरूपिता इत्याह। कालस्येति ॥ ३७ ॥ ३८ ॥

नैतदिति युग्मकम्। खलः परपक्षोऽपि दूषयितुमिच्छया प्रविष्टः अविनीतः शिष्यगुर्य्यादारहितः। स्तब्धो गर्व्वी भिन्नो मतान्तरेण भेदं प्राप्तः धर्म्मध्वजो जीविकामात्रार्थमाचारमात्रं तादृशत्वव्यञ्जकः लोलुपस्तत्तद्दोषरहितोऽपि लोभेन गतधैर्य्यः। गृहारूढचेताः पुत्रजायादिष्वत्यन्तासक्तः अभक्तः स्तद्विपरीतगुणयुक्तोऽपि मद्भक्तिविरोधिसंस्कारः भक्तद्विषो भक्तिसंस्काराभाससद्भावेऽपि भक्तविरोधरूपमहादोषवन्तः। बहुत्वं तद्भेदेष्वेकोऽपि न ग्राह्य इति भावः ॥ ३९ ॥ ४० ॥

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

एवमेकं फलमुपपाद्य उक्तानां भक्तिभेदानां सगुणनिर्गुणभेदप्रतिपादनार्थं चातुर्विध्यमाह। प्रावोचमिति। भेदः पारमार्थिकः इति शास्त्रं पुरस्कृत्य त्रिविधो भक्तियोग उक्तः ते च सांप्रतं विष्णुस्वाम्यनुसारिणः तत्त्ववादिनः रामानुजाश्चेति तमोरजः सत्त्वैर्भिन्नाः अस्मत्प्रतिपादितश्च नैर्गुण्यः एवं चतुर्विधोऽपि भगवता प्रतिपादितः "अभिसंधाय यो हिंसाम्" इत्यादिभिः वैराग्यार्थं कालस्याप्यव्यक्तगतेः स्वरूपमुक्तमव्यक्ततायां हेतुः योऽन्तर्धावति जन्तुष्विति ॥ ३७ ॥

तस्य वैराग्यशेषत्वप्रतिपादनायाह। जीवस्येति। त्रिविधा गतयो जीवस्योक्ताः प्रत्येकं बहुविधाः अविद्याकर्मनिर्मिता इति सर्वा एवाज्ञानोपाधिकर्मनिर्मिताः प्रावोचमिति सम्बन्धः तासां कथनस्य प्रयोजनमाह। यास्वनुप्रविशन्निति। यासु गतिषु कर्मणा स्वयमनुप्रविशन्नात्मनो गतिं न वेद अत एव तत्प्रवेशाभाव एवात्मगतिर्भवतीति निषेधार्थमुक्तमित्यर्थः ॥ ३८ ॥

श्रद्दधानाय भक्ताय विनीतायानसूयवे ।
भूतेषु कृतमैत्राय शुश्रूषाभिरताय च ॥ ४१ ॥
बहिर्जातविरागाय शान्तचित्ताय दीयताम् ।
निर्मत्सराय शुचये यस्याहं प्रेयसां प्रियः ॥ ४२ ॥
य इदं शृणुयादम्ब ! श्रद्धया पुरुषः सकृत् * ।
यो वाभिधत्ते मच्चित्तः स ह्येति पदवीं च मे ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे कापिलेयोपाख्याने साधनानुष्ठानं नाम द्वात्रिंशत्तमोऽध्यायः ॥ ३२ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एवं सर्वमेव सिद्धान्तमुक्त्वा इयं सर्गलीलेति अस्या वक्तारो भविष्यन्तीति येष्वेतद्वक्तव्यं येषु च न वक्तव्यं तानुभयान् भेदेन निर्दिशति । नैतत्खलायेति चतुर्भिः । द्वाभ्यां निषेधमाह । खलः सूचकः परमर्मभेदी राजसभासु प्रसिद्धः अनुरोधात्तस्योपदेशः प्राप्नोति अविनीतस्तब्धः श्रद्धारहितः स्पष्टः भिन्नो मतान्तरैः धर्मध्वजः पाखण्डी ॥ ३९ ॥

लोलुप इन्द्रियविषयेष्वतिचपलः गृहेष्वारूढं चित्तं यस्य सर्वथा गृहस्थः मम चाभक्तः मद्भक्तानां सर्वेषामेव वा द्वेषी एवं नवविधाः अवक्तव्या निरूपिताः ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तदेवं ज्ञानयोगमुपसंहृत्य तस्य च भक्तियोगप्राप्त्ये भगवत्येव निष्ठां प्रदर्श्य समुचितदृष्टान्तेन भगवत एव कर्म्मादिसर्व्वमार्गलभ्यत्वमुपपाद्येदानीं भक्तियोगादिकमुपसंहरति । प्रावोचमिति द्वाभ्याम् । चतुर्विधं त्रिगुणनिर्गुणभेदेन ॥ ३७ ॥ ३८ ॥

एतदुपदेशानधिकारिणो दर्शयति । नैतदिति । खलो दूषणार्थमेव कृत्रिमभक्त्या अधिजिगमिषुः अविनीतः शिष्यमर्य्यादारहितः स्तब्धोऽतिगर्ववान् भिन्नो मतान्तरेण भेदं प्राप्तः धर्म्मध्वजो लाभप्रतिष्ठाद्यर्थमेव धर्म्मनिष्ठः । लोलुपस्तत्तद्दोषरहितोऽपि विषयभोगेऽतिलोभी गृहारूढचेताः विषयेष्वनतिलोलुपोऽपि पुत्रदारधनादिष्वत्यासक्तः अभक्तः उक्तानुक्तसर्व्वदोषरहितोऽपि मद्भक्तिहीनः । किञ्च । भ्रमप्रमादतः कदाचिदेभ्योऽप्युपदिशतु नाम जातु कदाचिदपि मद्भक्तद्विषामिति षष्ठ्यन्तनिर्देशेन तत्सम्बन्धिनेऽपि नोपदिशेत्‌ किमुत तेभ्य इति ॥ ३९ ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्लोकं संगृह्णन्नुपसंहरति । प्रावोचमिति द्वाभ्याम् । अन्तर्धावति उत्पत्त्यादि कुर्वन् प्रविशति ॥ ३७ ॥

अङ्ग ! हे अम्ब ! ॥ ३८ ॥

श्लोकशास्त्रश्रवणादेः । अनधिकारिणः अधिकारिणश्चाह । नैतदिति चतुर्भिः । खलाय परोद्वेजकाय भिन्नाय बाह्याय ॥ ३९ ॥ ॥ ४० ॥ ४१ ॥ ४२ ॥

---

भाषा टीका ।

चार प्रकार के भक्तियोग का स्वरूप मैंने आप के आगे कहा है जो अप्रगट गति वाला है जन्तुओं के भीतर दौड़ता है तिस काल का भी स्वरूप मैंने आप से कहा है ॥ ३७ ॥

अज्ञान कर्म से निर्मित बहुतसी जीव की गती भी कही हैं हे माता ! जिन मे प्रविष्ट होकर आत्मा अपनी गति को नहीं जानता है ॥ ३८ ॥

यह ज्ञान खल को उपदेश नहीं करना चहिये अविनीत को नहीं देना स्तब्धको नहीं देना भेदरखने वाले को केवल धर्मध्वजा वाले को नहीं देना ॥ ३९ ॥

लोभीको नहीं देना घरमे मन लगनेवालेको अभक्तको नहीं देना मेरे भक्तों के द्वेषी को कभी नहीं देना ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अधिकारिण आह । श्रद्दधानायेति द्वाभ्याम् ॥ ४१ ॥ ४२ ॥

एतच्छ्रवणकीर्तनपरस्यापि मत्पदप्राप्तिरेव फलमित्याह । य इति । अप्यर्थे चकारः । सोऽपि मत्पदवीमिति हि निश्चितम् ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीधरस्वामिकृतभावार्थदीपिकायाम् द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

* श्रद्दधत् इति श्रीवल्लभाचार्यपाठः ।

श्रीराधारमणदासगोस्वामिविरचिता
दीपन्याख्या दीपिकाटिप्पणी ।

श्रद्धानायेति युग्मकम् ॥ ४१ ॥
पदवीं भक्तियोगम् ॥ ४२ ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीराधारमणदास-
गोस्वामिविरचितदीपन्याख्यदीपिकाटिप्पण्याम्
द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

अधिकारिणमाह । श्रद्धानाय शुश्रूषात्वरान्विताय बहिर्जातविरागायेति दम उक्तः शान्तचित्तायेति शम उक्तः इदं च शमदमादिगुणजातं श्रवणोपयुक्तं न त्वात्यन्तिकमुच्यते तस्य श्रवणानन्तरभाविनस्ततः पूर्वंतनत्वासम्भवात्प्रशान्तचित्ताय शमान्वितायेत्यादिवच्छुचये सदाचारनिष्ठाय यस्य प्रेयसां प्रीतिविषयाणां वस्तूनां मध्ये अहं प्रियः निरतिशयप्रीतिविषयस्तस्मै ॥ ४१ ॥ ४२ ॥

य इति । हे अम्ब ! इत्थं मदुक्तमध्यायात्मकं यः पुरुषः श्रद्धया सकृदपि शृणुयाद्यश्चाभिधत्ते सोऽपि मच्चित्तः जातवैराग्यो मदुपासननिष्ठो भूत्वा मे पदवीं मार्गं मुक्तिमेति प्राप्नोति ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिकायाम्
द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तर्ह्यनधिकारित्वेनैतदुत्सादनं स्यादिति तत्राह । श्रद्धानायेति अनसूयुर्गुणेषु दोषाविष्करणबुद्धिरहितः ॥ ४१ ॥

बहिः स्वर्गादौ प्रेयसां प्रियतमानां पुत्रादीनां सकाशात् "तदेतत्प्रेयः" इति श्रुतेः ॥ ४२ ॥

अधिकारिणः फलज्ञानात् क्षिप्रप्रवृत्तिः स्यादित्यतस्तत्फलमाह । य इदमिति । अम्ब ! "हिताहितवेदन"इति धातोस्तस्य टापि कृतेऽम्बेति तत्सम्बुद्धिरम्ब ! मातः ! अभिधत्ते वक्ति"हि हेतावधारणे" इत्यभिधानादुभयमपि ग्राह्यमेत्येव मम पदवीमेति हि यस्मात्तस्मात् श्रवणादिकं कर्तव्यमिति ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तद्विपरीतानधिकारिण आह । श्रद्धानायेति युग्मकेन । श्रद्धानो मद्भक्तगुरुमदुपदिष्टशास्त्रयोर्विश्वासवान् भक्तो भक्तिसंस्कारयुक्तः विनीतः शिष्यमर्य्यादायुक्तः । अनसूयुः सतीर्थादिषु गुणाधिक्येन गुर्वादराधिक्ये दृष्टे प्रत्युत सुखवान् । कृतमैत्रो दयायुक्तः शुश्रूषाभिरतो गुरुसेवायामनलसः । बहिरिति द्वयस्य यथा बहिर्विरक्तस्तथान्तरमपीत्यर्थः । निर्मत्सरः सर्व्वशुभाकाङ्क्षी शुचिर्बहिरन्तःपवित्रः एषां हेतुहेतुमत्त्वञ्च यथेष्टं विवेचनीयम् । यस्याहमिति । तेन गुरुणा दयित इत्यन्वयाद्गुरुलक्षणमप्युक्तम् । यद्वा । तादृशशिष्यस्य फलमाह । यस्येति । एवम्भूतस्य यस्याहमतिप्रेयान् भविष्यामीत्यर्थः । अत्र यद्यपि पूर्व्वदोषा अपि त्यक्ताः स्युस्तथापि तेषामुद्देशो व्यतिरेकस्यापि पृथग्ज्ञानार्थं इति ज्ञेयम् । किञ्च । एते गुणास्तु समुदिता एव ज्ञेयाः तत्तदङ्गवैकल्ये तु न्यूनाधिकारित्वमिति तानेव गुणान् समुद्दिश्याह । शुचय इति । ॥ ४१ ॥ ४२ ॥

फलश्रुत्यापि निजोपदेशवृन्दतात्पर्य्यं निर्द्धारयति । य इदमिति । पदवीं भक्तियोगम् ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एकादशविधा वक्तव्याः अन्ये मध्यमाः श्रवणे परमश्रद्धावान् भक्तो भगवतः विनीतो वक्तरि सर्वत्र च असूयारहितश्च तथा सर्वप्राणिषु कृता मैत्री येन शुश्रूषायामभितो रतिर्यस्य ॥ ४१ ॥

बाह्येष्वर्थेषु जातो विरागो यस्य शान्तं च चित्तं यस्य मात्सर्यरहितो निर्मत्सरः शुचिर्यः पापादिनानभिभूतः अथवा शुचय इति सर्वत्र विशेषणं पूर्वोक्तनवविधस्यापि यस्य चाहं प्रेयसामपि प्रियः तस्मै सर्वथा वक्तव्यं सर्वगुणदोषविचाराभावेनेति पृथगुक्तम् ॥ ४२ ॥

एवं कथने श्रोतृगुणदोषानुक्त्वा श्रोतुर्वक्तुश्च फलमाह । य इदमिति । अम्बेति सम्बोधनं स्नेहसूचकं श्रवणे श्रद्धा मुख्यमङ्गं पुरुष इति यः पुरुष एव न तु स्त्रिया वञ्चनार्थं मायापुरुषः स्वदृग्गिल्यात्मदर्शी अवहिर्मुख उक्तः बहिर्मुखस्य वक्ष्यमाणं फलं न भवतीति वक्तापि चेन्मच्चित्तः भगवत्प्रीत्यर्थमेव न धनाद्यर्थं कथयति युक्तं ह्युभयोर्मत्पदवीगमनं चकारात्कामितं च प्राप्नोति ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमद्वल्लभाचार्यकृतसुबोधिन्याम्
द्वात्रिंशाध्यायविवरणम् ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अधिकारिण आह । श्रद्धानायेति द्वाभ्याम् । बहिर्वाह्यविषयेषु विरक्ताय ॥ ४१ ॥ ४२ ॥

एतदनुष्ठातृणां भाग्यं किं वक्तव्यमेतच्छ्रवणकीर्त्तनमात्रकृतो भाग्यं शृणिवत्याह । य इदमिति । स मच्चित्तः सन् मत्पदवीं मध्वरणविन्यासस्थलीम् ॥ ४३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
द्वात्रिंशोऽयं तृतीयस्य सङ्गतः सङ्गतः सताम् ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्लोकशास्त्रश्रवणादिफलमाह । य इति ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
द्वात्रिंशाध्यायार्थप्रकाशः ॥ ३२ ॥

भाषा टीका ।

जो श्रद्धावाला होवे विनीत होवे अनिन्दक होवे सब भूतों में मित्रता करै शुश्रूषामें रत होवै ॥ ४१ ॥

बाहिर की वस्तुओं में विरागवाला होवै शान्तचित्त होवै मत्सररहित होवै शुचि होवै जिसको मैं अतिप्रिय हूं तिसको अवश्य देना चाहिये ॥ ४२ ॥

हे माता ! जो पुरुष श्रद्धासे इस को एक वारभी सुनैगा अथवा मेरेमें मन लगाकर कथन करैगा सो मेरी पदवीको प्राप्त हो जायगा ॥ ४३ ॥

इति श्रीमद्भागवत तृतीयस्कन्ध बत्तीसमे अध्यायका
भाषानुवाद लक्ष्मणाचार्यकृत समाप्त ॥ ३२ ॥

---

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे द्वात्रिंशोऽध्यायः समाप्तः ॥ ३२ ॥

---

# त्रयस्त्रिंशोऽध्यायः ।

## मैत्रेय उवाच ॥

एवं निशम्य कपिलस्य वचो जनित्री सा कर्दमस्य दयिता किल देवहूतिः ।
विस्रस्तमोहपटला तमभिप्रणम्य तुष्टाव तत्त्वविषयाङ्कितसिद्धिभूमिम् ॥ १ ॥

## देवहूतिरुवाच ॥

अथाप्यजोऽन्तःसलिले शयानं भूतेन्द्रियार्थात्ममयं वपुस्ते ।
गुणप्रवाहं सदशेषबीजं दध्यौ स्वयं यज्जठराब्जजातः ॥ २ ॥
स एव विश्वस्य भवान् विधत्ते गुणप्रवाहेण विभक्तवीर्यः ।
सर्गाद्यनीहोऽवितथाभिसन्धिरात्मेश्वरोऽतर्क्यसहस्रशक्तिः ॥ ३ ॥
स त्वं भृतो मे जठरेण नाथ ! कथं नु यस्योदर एतदासीत् ।
विश्वं युगान्ते वटपत्र एकः शेते स्वमायाशिशुरङ्घ्रिपानः ॥ ४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

त्रयस्त्रिंशे तु तस्यैव कपिलस्योपदेशतः ।
ज्ञानभावेन तन्मातुर्जीवन्मुक्तिरुदीर्यते ॥ १ ॥

विस्रस्तं मोहरूपं पटलमावरणं यस्याः सा तत्त्वान्येव विषयस्तेनाङ्किता सिद्धिः सांख्यज्ञानं तस्य भूमिं क्षेत्रं प्रवर्तकम् ॥ १ ॥

अथेति वाक्यान्तरे । अजोऽपि तव वपुः केवलं दध्यौ न तु दृष्टवान् स च स्वयं साक्षाद्यस्य तव जठराब्जाज्जातः स भवानेव विश्वस्य सर्गादि विधत्ते न तु तव सर्गादिकर्ता कश्चिदस्ति स एवंभूतस्त्वं मे मया कथं जठरेण धृत इति त्रयाणामन्वयः कथंभूतं वपुः सत् व्यक्तम् तत्र हेतुः अन्तःसलिले शयानं कीदृशं भूतानीन्द्रियाणि च अर्थाश्च शब्दादय आत्मा च मन एतन्मयमेतैर्व्याप्तमित्यर्थः कुतः गुणानां प्रवाहो यस्मिंस्तत् कुतः अशेषस्य कार्यकारणस्य बीजं कारणम् ॥ २ ॥

कथम्भूतो भवान् सर्गादि विधत्ते गुणप्रवाहरूपेण विभक्तं वीर्यं शक्तिर्येन सः शक्तिद्वारेण विधत्ते न साक्षादित्यर्थः यतोऽनीहो निष्क्रियः तर्हि कथं शक्तिद्वारेणापि सर्गादि विधत्ते तत्राऽऽह । अवितथाभिसन्धिः सत्यसङ्कल्पः किमर्थं विधत्ते आत्मनां जीवानामीश्वरः जीवानां भोगार्थमित्यर्थः । ननु कथं विचित्रान् भोगानेक एव विदध्यात्तत्राऽऽह । अतर्क्याः सहस्रमपरिमिताः शक्तयो यस्य ॥ ३ ॥

किञ्च प्रलये यस्योदरे एतद्विश्वमासीत् स त्वं मया जठरेण कथं धृतः । ननु शिशौ मयि किमेतदुच्यते तत्राऽऽह । वटपत्र इति । अङ्घ्रिं पादाङ्गुष्ठं पिबतीत्यङ्घ्रिपानः इदमपि शिशुत्वं तद्वदेव मायेति भावः ॥ ४ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपन्याख्या दीपिकाटिप्पणी ।

विषयस्तत्तत्त्वविचारस्थानं तेनाङ्किता लाञ्छिता आत्मानात्मविवेकलक्षणं ज्ञानं हि तत्त्वविचारेण लक्षितं भवत्येव पूर्वं स्वामिभिरेव तथा व्याख्यानात् ॥ १ ॥

अथेति त्रिकम् । साक्षाज्जात इति । तस्य तादृशवैशिष्ट्येऽपि ध्यानमात्रमेव तस्य न तु दर्शनमपीति दौर्लभ्यं सूचितं तत्र व्यक्तत्वे शयानं गर्भोदशायिरूपं तदुक्तं लघुभागवतामृते ॥

गर्भोदकशयः पद्मनाभोऽसावनिरुद्धकः ।
सोऽयं हिरण्यगर्भस्य प्रद्युम्नत्वे नियामकः ॥ इति

यथा वटे शिशुत्वं मध्यमपरिमाणकमपि ब्रह्माण्डव्यापित्वादचिन्त्यशक्तिविलास एव तथेदं मत्सम्बन्धिशिशुत्वमप्यचिन्त्यशक्तिविलास एव मध्यमाकारत्वेऽपि विभुत्वादिति भावार्थः ॥ २ ॥ ॥ ३ ॥ ४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं श्रुततत्त्वहितपुरुषार्था देवहूतिः किमकरोदित्यत्राह मैत्रेयः । एवमुक्तरीत्या कर्दमस्य दयिता भार्या कपिलस्य जनित्री माता सा देवहूतिः कपिलस्य वचो निशम्य श्रुत्वा विस्रस्तं ध्वस्तं मोहोऽज्ञानं स एव पटलमावरकं यस्याः सा सती तत्त्वविषयाङ्कितसिद्धभूमिं तत्त्वानि प्रकृतिपुरुषेश्वररूपाणि तानि विषयो

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यस्य तज्ज्ञानं तेनाङ्किताः प्रसिद्धाः सिद्धा योगिनः तेषां भूमिराश्रयस्तं विषयाङ्कितासिद्धोति पाठे तत्त्वविषयेणाङ्किता ज्ञापिता सिद्धिर्योगसिद्धिः येषां तेषामाश्रय इत्यर्थः तं कापलं प्रणम्य तुष्टाव स्तुतवती ॥ १ ॥

स्तुतिमेवाह सप्तभिः। तत्र प्रथमं ब्रह्मणापि समधिगम्य विग्रहो जगदुत्पत्तिस्थितिलयलीलः सर्वज्ञत्वाद्यनन्तकल्याणगुणनिधिस्त्वं मदुदराज्जातः अत एतदस्मद्भाग्यफलमित्याह । अथापीति । अथ हे भगवन् ! यस्य तव जठराब्जान्नाभिकमलाज्जातो ऽजो ब्रह्मापि ते तव वपुर्विग्रहं दध्यौ ध्यानेन साक्षात्कृतवान् वपुः कथम्भूतमन्तःसलिले शयानं भूतानि पृथिव्यादीनि इन्द्रियाण्येकादशेन्द्रियाणि अर्थाः शब्दादयः आत्मानो जीवाः तन्मयं तत्प्रचुरं जठरगतचिदचित्समुदायमित्यर्थः अत एवाशेषस्य कार्यजातस्य बीजं कारणं सद्गुणप्रवाहं स्वान्तर्भूतप्रकृतिगतसत्त्वादिगुणप्रवृत्तिहेतुत्वाद्गुणप्रवाहमित्यर्थः ॥ २ ॥

स एव भगवान् गुणप्रवाहेण ब्रह्मादीनां रजआदिगुणोन्मेषेण विभक्तवीर्यः ब्रह्मादिगुणोन्मेषानुगुणां प्रविभक्तसर्गादिशक्तिः ब्रह्मादिष्वनुप्रवेशेन तद्गुणानुगुणमाहिता जगत्सर्गादिशक्तियेनेति यावत् स्वयमनीहो निर्व्यापारोऽप्यवितथाभिसन्धिः सत्यसङ्कल्पः सङ्कल्पमात्रकृतजगदुदयादिलील इत्यर्थः आत्मेश्वरः स्वयमीश्वरान्तररहितः "पतिं विश्वस्यात्मेश्वरम्" इतिश्रुतेः कथं सङ्कल्पमात्रनिर्वर्त्तितजगदुदयादिलील इत्यत्राह । अप्रतर्क्या अचिन्त्या अनन्ताः शक्तयो यस्य भगवानस्य विश्वस्य सर्गादि सृष्ट्यादीन् विधत्ते ॥ ३ ॥

युगान्ते कल्पान्ते इदं विश्वमुदरे आसील्लीनमासीत् यश्च तथा भगवान् मायाशिशुः स्वसङ्कल्पेन शिशुभावं प्राप्तः अङ्घ्रिं पादाङ्गुष्ठं पिबति चुम्बतीत्यङ्घ्रिपानः एक एव वटपत्रे शेते स्म स त्वं ममोदरेण कथम्भृतः तत्र कारणं न विद्मः अस्मद्भाग्यमेवेति भावः ॥ ४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कपिलावतारेणोपदिष्टं तत्त्वज्ञानं देवहूत्याः सिद्धमभूदिति तत्स्तुतिव्याजेन विज्ञापयन् इति तदेतत्प्रतिपाद्यतेऽस्मिन्नध्याये पूर्वं कर्दमस्य शुश्रूषया कर्शिता तत्प्रीतिकरत्वात्तस्य दयिता प्रेष्ठाभूत्सा देवहूतिरेवं तदुक्तं निशम्य तमभिप्रणम्य कपिलस्य विष्णुत्वं सूचयन्ती तं तुष्टावेत्यन्वयः कीदृशी विस्रस्तमुन्मीलितं मोहपटलमज्ञानाख्यं तिमिरं यस्याः सा तथा कीदृशं तत्त्वं विष्णुस्तद्विषयाश्च ते अखिला अनल्पाश्च सिद्धाः ब्रह्मादयस्तेषां भूमिमाश्रयम् । यद्वा । तत्त्वस्थितमज्ञानलक्षणां विषं यापयतीति तत्त्वविषया भगवत्तत्त्वाज्ञानरहितेत्यर्थः ॥ १ ॥

तत्त्वज्ञानं नास्तीति ध्वनितं स्पष्टयति । अथेति । अथ मङ्गलमस्तु भगवंस्ते तव जठराब्जजातः उदरनाभिपद्मसम्भूतो ब्रह्मा स्वयं यद्वपुर्दध्यौ किं क्रियाविशिष्टमत्राह । अप्ययान्त इति । अप्ययान्ते सलिले प्रलयजलमध्ये शयानं प्रलयावसाने दध्याविति वा किं गुणविशिष्टमत्राह । भूतेति । आकाशादीनि भूतानि श्रोत्रादीनीन्द्रियाणि अर्थाः शब्दादयः आत्मा मनः एतेभ्यो मयं प्रधानं "मयं प्रधानमुद्दिष्टम्" इति वचनात् अत्र प्रधानकार्यभूतादिभ्यः प्राधान्यकथनेन प्रधानादप्युत्तममिति ज्ञातव्यं "त्वं प्रधानमयो देवप्रधानादधिको यत" इति वचनात् अत्र प्रधानादिशब्देन तदभिमानिनो लक्ष्म्यादयो ग्राह्याः ततस्तदुत्तमत्वगुणविशिष्टमित्यर्थः स्वतन्त्रमपीति भावेनाह । गुणप्रवाहमिति । सृष्ट्यादौ सत्त्वादिगुणान् प्रवाहयति प्रवर्तयतीति ज्ञानादिगुणा अस्य सन्तीति अतोवाह । गुणप्रवाहमिति । ज्ञानादिगुणानां प्रवाहो यस्मिंस्तत्तथा नान्यदं सगुणं किं न स्यादित्यत उक्तं सदिति सत्सत्यं "सत्सत्यंऽभ्यर्हिते श्रेष्ठ साधीयसि भवत्यपि" इति यादवः "सदेव सौम्येदमग्र आसीत्" इति श्रुतेर्न शवलं किन्तु निर्गुणम् इदं निर्गुणं चेज्जगत्स्रष्टृ अन्यत्स्यादित्यत उक्तमशेषबीजमिति जगद्व्यञ्जकं निर्गुणमेव स्रष्टृ इत्यर्थः ॥ २ ॥

जगद्व्यञ्जकत्वं स्पष्टयन्ती भवानपि स एवेत्याह । स एवेति । स एव तादृक् वपुष्मानेवाणुमात्रभेदरहितो भगवान् विश्वस्य सर्गादि विधत्त इत्यन्वयः युगपन्नेत्याह । गुणप्रवाहेष्विति । गुणप्रवाहेषु गुणैः सृष्ट्यादिपरंपरासु ब्रह्मादिरूपेण विभक्तं राजससात्त्विकतामसप्रवर्तकत्वभेदेन पृथक्कृतं वीर्यं माहात्म्यं यस्य स तथा कार्येषु प्रवर्तमानो देवदत्तवत्क्लिष्टकारी किं नेत्याह । अनीह इति। अत्र हेतुगर्भविशेषणमाह । अवितथाभिसन्धिरिति सत्यसङ्कल्पादित्यर्थः एवंविधोऽन्यो नास्तीति भावेनाह । आत्मेश्वर इति अविशेषेणात्मनां जीवानामीश्वरत्वादन्यो नास्तीत्यर्थः एकस्यापि चित्रशक्तिस्वभावादीश्वरत्वं कथमुपपद्यत इति तत्राह । अतर्क्येति "विचित्रशक्तिः पुरुषः पुराणः" इतिश्रुतेः ॥ ३ ॥

अतर्क्यशक्तिसहस्रत्वमनुमापयति । स त्वमिति । नाथ! यस्य तव जठरे एतद्विश्वमासीद्युगान्ते माययेच्छया शिशुरङ्घ्रेरङ्गुष्ठस्य पानं यस्य सोऽङ्घ्रिपानो भूत्वा एक एव सन् वटपत्रे शेते स त्वं मे जठरेण कथं नु भृतः स्म अहो तवातर्क्यसहस्रशक्तित्वमनुमिनोमि यतोऽहं सर्षपमात्रभारमपि वोढुमशक्ता त्रैलोक्यधरं त्वामवहमिति ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यानि तत्त्वानि तत्त्वविचारस्य विषयाः तैराङ्किता लक्षिता या सिद्धिः परमात्मस्फूर्त्तिस्तस्या भूमिमाश्रयं प्रवर्त्तकमित्यर्थः एवमन्यत्र । एतदिति पुण्यारण्यमतः पाठः । सिद्ध इति सम्बन्धोक्तिमतः ॥ १ ॥

अथेति त्रिकम् । अथ वाक्यान्तरे । अजं इति प्रसिद्धोऽपि ब्रह्मा यस्य तव जठराज्जातस्ते तव रूपं दध्यौ स्वीयश्रेष्ठत्वसम्पादनार्थमुपासनाञ्चकारेत्यर्थः । कतमत्तद्रूपं तत्राह । सलिल इति । गर्भोदकशायीत्यर्थः । तच्च किं स्वरूपं सत् कीदृशतया दध्यौ तत्राह । सदिति । सच्चिदानन्दस्वरूपमेवाशेषबीजं दध्यौ अनश्वरबीजतया चिन्तितवानित्यर्थः । यतो भूतादीनां य आत्मा कारणं प्रकृतिः तन्मयं तच्छक्तिकमित्यर्थः । अत एव गुणानां प्रवाहो यस्मात् तादृशं तदेवं यस्य जठराज्जातोऽसौ स एव सर्गादि विधत्ते न तदादयः ॥ २ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तत्र हेतुः। गुणप्रवाहेण तद्वृत्तिपरम्पराभेदेन विभक्तं ब्रह्मादिष्वः विभज्य दत्तं वीर्यं स्वशक्तियेन सः तेन च तस्य न लेप इत्याह। अनीहश्चावितथाभिसन्धिश्चेति। तत्रानीहत्वे हेतुः। आत्मा परमसाक्षी उत्तरत्र हेतुः ईश्वरः स्वच्छन्देच्छ इति तत्राविरोधे हेतुमाह। अतर्क्येति। अचिन्त्यानन्तशक्तेस्तस्य नैतावनाश्चर्यत्वम् अपरमपि तदनन्तत्वमस्तीत्यर्थः "श्रुतेस्तु शब्दमूलत्वात्" इति भावः॥ ३॥

स त्वमिति। शैशवलीलार्थं मदिच्छयेति चेत् सा च स्वत एव स्यादित्याह। वटपत्र इति माया अतर्क्या शक्तिस्तत्प्रधानः शिशुः॥ ४॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवमष्टभिरध्यायैर्मेताष्टकमुदीरितम्।
सर्वेषां तु फलं मुक्तिरतः सात्र निरूप्यते॥ १॥
त्रयस्त्रिंशे तथाध्याये त्रिधा मुक्तिरुदीर्यते।
सर्गस्तदवधिर्यस्माद्देवास्ते लीलयोद्गताः॥ २॥
त्रयस्त्रिंशद्विधा लीला सर्गाख्या देववान्धवी।
वसवश्च तथा रुद्रा एक इन्द्रः प्रजापतिः॥ ३॥
आदित्याश्च यतः सत्त्वात्ते चतुर्दशधा मताः।
मुक्तः प्रसादाद्धि भवेन्न शास्त्रैः साधनैरपि॥ ४॥
प्रसादश्च स्वतः प्रीते न सम्बन्धादिभिः क्वचित्।
अतः स्तोत्रं प्रसादश्च मुक्तिश्चापि फलं ततः॥ ५॥
सर्गत्वख्यापनार्थाय वक्तुः स्थितिरुदीर्यते।
भगवत्त्वास्थितौ तस्य सर्वः सर्गः प्रतिष्ठितः॥ ६॥
शास्त्रार्थेऽवगते सम्यक् प्रसादे यत्नवान् भवेत्।
अतः प्रसादनार्थाय तस्या यत्न उदीर्यते॥ ७॥

एवं पूर्वोक्तप्रकारेण सर्वसिद्धान्तरहस्यं वचो निशम्य तुष्टावेति सम्बन्धः एवं शास्त्रार्थपरिज्ञाने तत्प्रसादव्यतिरेकेण शास्त्रज्ञानसाधनफलसिद्धयो न भवन्तीति तत्प्रसादः प्रास्त्य इति बुद्धिः केन धर्मेण तस्या जाता इत्याकांक्षायामाह। जनित्रीति। येन धर्मेण तादृशं पुत्रमुत्पादितवती सेति प्रसिद्धा स्वधर्मैस्तपसा च भर्तृमुक्त्यापि स्वस्य कार्यं सिद्ध्यतीति ज्ञापयितुमाह। कर्दमस्य दयितेति। किलेति तस्या धर्मः प्रसिद्धः देवहूतिरिति देवानां हूतिर्यस्मादिति योगेनापि देवसान्निध्यम् एवं पञ्चधा तस्या माहात्म्यमुक्तम्। किंच। शास्त्रफलमपि तस्या जातमित्याह। विस्रस्तमोहपटलेति। पुत्रादिषु यो मोहस्तदेव पटलं ज्ञानाच्छादकं तदधः पतितं यस्याः अत एव तं पुत्रमप्यभिप्रणम्य नमस्कारे मोहाभावो हेतुः गुरुत्वात् स्तोत्रे भगवानेव हेतुः अतस्तोत्रमनुचितमित्याशङ्क्य भगवतो ज्ञानकलावतार इति साङ्ख्यप्रवर्तकत्वादुपपादयति। तत्त्वविषयाङ्कितसिद्धिभूमिमिति। तत्त्वलक्षणो यो विषयः वाच्योऽर्थस्तेनाङ्किता चिह्निता या सिद्धिः सांख्यशास्त्रं तत्त्वविषयेण वाङ्कितं यच्छास्त्रं तेन सिद्धं यत् ज्ञानं तस्य भूमिमाधारं पूर्वव्याख्याने प्रवर्तकं वा तत्त्वविषयं वा ज्ञानं तत्त्वज्ञानं तेनाङ्किता या सिद्धिर्भगवतो ज्ञानकला तस्या भूमिः ज्ञानकलावतार इत्यर्थः अतः स्तुत्यः॥ १॥

सर्वसिद्धान्तवक्तारं भक्तेर्विषयमेव च
प्रसादे ह्यात्मदं देवं सप्तभिः स्तौति भास्करैः॥
प्रत्यक्षाश्चर्यहेतूक्तिर्जन्मादेः कारणादवृद्धवत्।
अवतारामता लीला महोदार इति स्थितिः॥
नाम्नः स्तुत्यादिमाहात्म्यं नाम्नश्च हि हरेर्महत्।
एवं तं भगवत्त्वेन स्तुत्वान्ते नमनक्रिया॥
हरौ कृत्यमिहैतावदतस्तुष्ट इतीर्यते।

प्रथमं तव दर्शनं दुर्लभमित्याह। अथेति। यद्यप्यजो महान् अथापि यद्वपुर्दध्यौ न तु प्रत्यक्षतया दृष्टवान् तस्य महत्त्वमाह। जातोऽपि अजत्वं प्राप्तः यज्जठराब्जजातः यस्य नारायणस्य जठराब्जाज्जातो माता तु भक्ता पुत्रस्त्वात्मैव पुत्रेण चेन्न दृष्टः कथमाविर्भावस्थानं द्रक्ष्यति तच्छक्तेः सर्वस्याः कार्येण सह निर्गमात्। किञ्च। शयानो भगवान् सर्वैरपि द्रष्टुं शक्यते न तु यो जागर्ति तत्रापि सलिले शयानः अनन्यरूपतया उपलभ्यत इति। किञ्च। भूतेन्द्रियादिभिर्व्याप्तं स्वरूपमुपलभ्यते न तु तद्रहितं जगतामाधारभूतं च प्रत्यक्षं भवितुमर्हति कारणं च प्रत्यक्षं भवति अन्यथा कार्यमप्रत्यक्षं स्यात् अन्तःसलिले सलिलमध्ये भूतानि इन्द्रियाणि अर्थास्तन्मात्रा आत्मा अन्तःकरणं मनोबुद्धिरहङ्कारः चित्तमिति एतैर्व्याप्तं "भूतैर्यदा पञ्चभिरात्मसृष्टैः"इति वाक्यात्पुरुषशरीरं भौतिकं भवति तैर्व्याप्तं तन्मयं गुणानां प्रवाहो यस्मिन् सत् व्यक्तमशेषस्यापि जगतो बीजं स्वयमजस्तु भगवानेव एवमपि नं दृष्टवान् मया तु दृष्टमित्याश्चर्यम्॥ २॥

नन्विदं रूपमन्यदेव न तु ब्रह्मरूपमित्याशङ्क्याह। स एवेति। स एव भवान् यो ब्रह्मणा ध्यातः यतो विश्वस्य सर्गादि विधत्ते एतस्य जगत्कर्तृत्वं विश्वरूप इव तत्र दृश्यत इति तथोक्तम् गुणानां प्रवाहेण अन्योऽन्यमेलनपरम्परया सृष्ट्यादौ करणेन विभक्तं वीर्यं यस्य ब्रह्मादिरूपेषूत्पत्तिस्थितिप्रलयरूपं वीर्यं विभक्तमित्यर्थः कर्तृत्वेऽपि लौकिकवन्न कर्तृत्वं किन्तु चिन्तामण्यादिवदित्याह। अनीह इति। न विद्यते ईहा चेष्टा यस्य। ननु चिन्तामण्यादौ परेच्छा नियामिका तथा भगवतोऽपि अन्येच्छया सृष्टिकरणे जडता स्यादत आह। अवितथाभिसन्धिरिति। अभिसन्धिरभिसन्धानमिच्छेति यावत् स्वेच्छयैव करोतीत्यर्थः। ननु तर्हि निमित्तं स्यादत आह। आत्मेति। सर्वस्य जगत आत्मा स्वरूपं समवायिकारणमिति यावत्। नन्वेकस्य कथं द्विरूपता समवायित्वं निमित्तत्वञ्चेति तत्राह। ईश्वर इति। सर्वं कर्तुं समर्थो हीश्वरः। नन्वीश्वरोऽपि लोके युक्तिसिद्धमेव करोति न तु युक्तिबाधितमित्याशङ्क्य युक्तिमाह। अतर्क्यसहस्रशक्तिरिति। अतर्क्याः सहस्रं शक्तयो यस्य अत एकमाश्चर्यं समर्थितम्॥ ३॥

द्वितीयमाश्चर्यमाह। स त्वं भूत इति। स एव त्वं चतुर्दशलोकात्मा मे मम जठरेण कथम्भूतो धृतः नन्वस्मादेव हेतोः नाहं स्व इति चेत्तत्राह। नाथेति। हे नाथ! स्वामिन्! नह्यन्यः स्वामी भवितुमर्हति। नन्वहं तवोदरे तदा सूक्ष्म एव स्थित इतिचेत्तत्राह। कथं नु यस्योदर एतदासीदिति। तदेव भगवद्रूपं यद्विश्वाधारं गर्भस्थितिदशायां यदि विश्वाधारता न स्याद्ब्रह्मत्वमपि न स्यादिति तदानीमपि विश्वाधारता वक्तव्या तत्कथं जातमित्याश्चर्यम्। एतदिति। ब्रह्माण्डरूपं स्थूलं दर्शितम्। ननु परस्परविरोधे

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एकं त्याज्यमिति न्यायेन गर्भस्थितेर्हेयत्वाज्जगदाधारत्वं नास्तीति मन्तव्यमिति चेद्युगान्ते वटपत्रे एक एव मायाशिशुर्भूत्वा अङ्घ्रिपानः अङ्गुष्ठं पिबन् यः शेते स भवानिति यथा तदा बाल्यं जगदाधारत्वं चोभयमविरुद्धं तथोदरेऽपीति भावः ॥ ४ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

त्रयस्त्रिंशे देवहूत्या स्तुतः श्रीकपिलो ययौ ।
वनं तदुपदिष्टेन वर्त्मनैव तमाप सा ॥ ० ॥

जनित्री जनयित्री विस्रस्तं मोहपटलं भक्तिज्ञानादिविषयकमज्ञानसमूहो यस्याः सा तत्त्वविषयेषु भक्तितत्त्वसाङ्ख्यज्ञानयोगतत्त्वादिविषयेषु अङ्कितः परमनिपुणत्वेन अङ्कः गणनायां रेखा सञ्जाता यस्य स चासौ सिद्धा भूमयो भूतलस्था जना यतः स चेति तम् ॥ १ ॥

तत्त्वमुपदिश्य यत्त्वं मां संसारादुद्धरसि नैतच्चित्रं चित्रं खल्वेतदेव यन्मानुष्या निकृष्टाया ममापि गर्भाज्जातोऽसि जठरीकृतानन्तकोटिब्रह्माण्डपरमेश्वर इत्याह । अथेति वाक्यान्तरे । अजोऽपि ब्रह्मापि अन्तःसलिले ब्रह्माण्डमध्यस्थितसलिले शयानं वपुर्गर्भोदशायिरूपं तव दध्यौ केवलं न तु प्रथममेव ददर्शेति भावः कीदृशं भूतानि च इन्द्रियाणि च अर्थाश्च आत्ममयाः स्वमयाश्चिदानन्दरूपा एव न तु प्रकृतिविकारा यत्र तत् । गुणान् भक्तवात्सल्यादीन् प्रकर्षेण वहतीति सत् सत्यम् अशेषस्य जगतो बीजं कारणम् ॥ २ ॥

गुणप्रवाहेण रजआदिगुणपरम्परया विभक्तं विभज्य दत्तं वीर्यं सृष्ट्यादिशक्तिर्येन सः अवितथाभिसन्धिः सत्यसङ्कल्पः ॥ ३ ॥

स त्वं मया मानुष्या कथं जठरेण भृतः इत्याश्चर्यस्य कारणं त्वमेव ब्रूहीति भावः । ननु स्वशिशौ मयि कथमेवं ब्रूषे तत्र सत्यमेव त्वं शिशुरेवेत्याह । युगान्ते प्रलये वटस्य एकस्मिन् पत्रे भवान् शेते स्म किमर्थं मायाशिशुः मां बाललालनाऽऽत्रासिनः सांसारिका अपि लोका ध्यातुं शक्नुवन्त्विति कृपामयबालमूर्तिरित्यर्थः । तत्र समुचितमधुरलीलामाह । अङ्घ्रिपानः स्वचरणाङ्गुष्ठपानकर्ता सर्वमेव सुखं त्यक्त्वा मच्चरणमाधुर्ये एव सर्वे मनीषिणो निमज्जन्ति तदेतन्मयाप्यास्वाद्यानुभवनीयमिति बुद्ध्येति भावः ॥ ४ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मात्रा संस्तुतस्य श्रीकपिलस्य स्वाश्रमं प्रति गमनं श्रीदेवहूत्या भगवत्प्राप्तिलक्षणा मुक्तिश्च निरूप्यते । एवमिति त्रयस्त्रिंशेन । विस्रस्तं मोहात्मकं पटलमावरणं यस्याः सा तत्त्वानि चिदचिद्ब्रह्माख्यानि विषयो यस्य तत्तत्त्वविषयं वर्णाय साङ्ख्य तेनाङ्किता भूषिता सिद्धीनां भूमिः आलयः स चासौ स च तम् ॥ १ ॥

अथेति मङ्गले । यस्य तव जठराब्जजातः पुत्रभूतः अजोऽपि तस्य ते वपुः केवलं दध्यौ न तु दृष्टवान् स भवान् विश्वस्य सर्गादि विधत्ते न तु तव सर्गादिकर्त्ता कश्चिदस्ति तथाभूतस्त्वं मे मया कथं जठरेण भृतः इति त्रयाणामन्वयः । वपुषो द्वैविध्यं दर्शयन्ती तद्वर्णयति । सलिले शयानं सर्वाश्रयमप्राकृतं निजासाधारणं तदाश्रितं भूतादिमयं च भूतानि इन्द्रियाणि च अर्थाश्च शब्दादयः आत्मान्तःकरणं च तन्मयं गुणानां प्रवाहो यस्मिन् सतां कार्याणामशेषाणां बीजं विभक्तं वीर्यं शक्तिर्येन सः गुणप्रवाहेण स्वचक्रिगुणविकारेण न तु स्वरूपविकारेण विश्वस्य सर्गादीन् विधत्ते ॥ २ ॥ ३ ॥

युगान्ते यस्योदरे एतद्विश्वमासीत् हे नाथ ! स त्वं मे मया जठरेण कथं भृतः अथ नासम्भावितमिदमिति स्वयमाह । सर्वाधारत्वेऽपि मायया वयुनेन सङ्कल्पेन शिशुः अङ्घ्रिं पादाङ्गुष्ठं पिबतीति स तथा वटपत्रे शेते स्म तद्वन्मद्धिताय स्वसङ्कल्पेन मम जठरे प्रवेशः सङ्गच्छते इति भावः ॥ ४ ॥

———

भाषाटीका ।

मैत्रेयजी बोले कर्दमजी की भार्या कपिलजी की माता देवहूतीजी इस प्रकार वचन को श्रवण करके सब अज्ञान के छूट जाने से तत्त्वों के जानने वाले सिद्धों में श्रेष्ठ श्री कपिलजी को प्रणाम करके स्तुति करने लगीं ॥ १ ॥

देवहूतीजी बोलीं हे प्रभो ! आपके जठर में से उत्पन्न जो कमल तिसमें से पैदा होने वाले ब्रह्मा ने भी आपका जल में सोया हुआ जो पञ्च भूत एकादश इन्द्रिय शब्दादि विषय रूप गुणों के प्रवाह का कारण सब प्रपञ्च का बीज ऐसे आपके शरीर मात्रका ध्यान हीं किया है ॥ २ ॥

सोई आप गुणों के उद्रेक होने से अपने वीर्यको विभाग करने वाले शक्ति द्वारा सृष्टि करने वाले स्वयं क्रिया रहित होकर भी सत्य संकल्प वाले होने से सब आत्मों के ईश्वर होकर अचिन्त्य अनेक शक्तियों को धारण करके आप सब जगत्की सृष्टि करते हो ॥ ३ ॥

हे नाथ ! प्रलय के समय में जिन आपके उदरमें यह सब जगत् रहा है सो आप मेरे उदर में कैसे रहे हो यह केवल आपका चरित्र है जैसे कि चरणाङ्गुष्ठको पान करके एकले आप वटपत्र पर सोते थे ॥ ४ ॥

———

त्वं देहतन्त्रः प्रशमाय पाप्मनां निदेशभाजां च विभो ! विभूतये ।
यथावतारास्तव सूकरादयस्तथायमप्यात्मपथोपलब्धये ॥ ५ ॥
यन्नामधेयश्रवणानुकीर्तनाद्यत्प्रह्वणाद्यत्स्मरणादपि क्वचित् ।
श्वादोऽपि सद्यः सवनाय कल्पते कुतः पुनस्ते भगवन्नु दर्शनात् ॥ ६ ॥
अहो बत श्वपचोऽतो गरीयान् यज्जिह्वाग्रे वर्तते नाम तुभ्यम् ।
तेपुस्तपस्ते जुहुवुः सस्नुरार्या ब्रह्मानूचुर्नाम गृणन्ति ये ते ॥ ७ ॥
तं * त्वामहं ब्रह्म परं पुमांसं प्रत्यक्स्रोतस्यात्मनि सम्विभाव्यम् ।
स्वतेजसा ध्वस्तगुणप्रवाहं वन्दे विष्णुं कपिलं वेदगर्भम् ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अथवा न त्वं मयापत्यान्तरमिव जठरे भृतः किन्तु वराहाद्यवतारवदिच्छयैवाविर्भूतोऽसीत्याह । त्वं देहतन्त्रो देहपरिकरः स्वीकृतमूर्तिरसि पाप्मनां दुष्टानां निदेशभाजामाज्ञानुवर्तिनां विभूतये समृद्धये आत्मपथोपलब्धये ज्ञानमार्गप्रदर्शनाय ॥ ५ ॥

अतस्त्वद्दर्शनादहं कृतार्थास्मीति कैमुत्यन्यायेनाह । यन्नामधेयस्य श्रवणमनुकीर्तनं च तस्मात् क्वचित्कदाचिदपि श्वानमत्तीति श्वादः श्वपचः सोऽपि सवनाय सोमयागाय कल्पते योग्यो भवति अनेन पूज्यत्वं लक्ष्यते ॥ ६ ॥

तदुपपादयति । अहो बतेत्याश्चर्ये यस्य जिह्वाग्रे तव नाम वर्तते स श्वपचोऽप्यतोऽस्मादेव हेतोर्गरीयान् यद्यस्माद्वर्तते अत इति वा कुत इत्यत आह । त एव तपस्तेपुः कृतवन्तः जुहुवुर्होमं कृतवन्तः सस्नुस्तीर्थेषु स्नाताः आर्यास्त एव सदाचाराः ब्रह्म वेदमनूचुरधीतवन्तः त्वन्नामकीर्तने तपआद्यन्तर्भूतमतस्ते पुण्यतमा इत्यर्थः । यद्वा । जन्मान्तरे तैस्तपोहोमादि सर्वं कृतमिति त्वन्नामकीर्तनमहाभाग्योदयादवगम्यत इत्यर्थः ॥ ७ ॥

प्रत्यक्स्रोतसि प्रत्याहृते आत्मनि मनसि सम्विभाव्यं संचिन्त्यम् वेदा गर्भे यस्य सः ॥ ८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपन्याख्या दीपिकाटिप्पणी ।

देह एव तन्त्रं परिकरो लीलासामग्री यस्य स तथासि ॥ ५ ॥

यस्मात्त्वमिच्छयैवाविर्भूतोऽसि न प्राकृतवदतः श्वानमत्तीति वर्त्तमाननिरुक्तेः श्वपच इति व्याख्यानाच्च श्वभक्षकजातिविशेषत्वमेवाङ्गीकृतं कादाचित्कभक्षणप्रायश्चित्तविवक्षायामत्ति स्मेति अतीतनिरुक्तिः क्रियेत तस्मात्तादृशजातेः प्रारब्धफलत्वात्ततः शुद्धौ तन्निवृत्तेः सर्वप्रारब्धहारित्वे स्पष्टमेवेदमुदाहरणमिति ज्ञेयं तदुक्तं श्रीरसामृतसिन्धौ

दुर्जातिरेव सवनायोग्यत्वे कारणं मतम् ।
दुर्जात्यारम्भकं पापं यत् स्यात्प्रारब्धमेव तत् । इति

योग्यो भवतीति सम्भावनोक्त्या शिष्टाचाराभावाज्जन्मान्तरापेक्षाविरहितपापानां ब्राह्मणबालकानां यज्ञोपवीतापेक्षावदित्यनुसन्धेयम् अनेन कल्पत इति क्रियापदेन ॥ ६ ॥

तत् नामोच्चारणस्य श्वपचत्वापहारित्वम् अग्रपदेन समग्रजिह्वाप्रयोगादसम्यक्त्वेनोच्चारितमपीत्यर्थः नामेत्येकवचनश्रुत्या एकमेव तथाशक्तं नात्र बह्वपेक्षेति व्यञ्जितं वर्तत इति पूर्णत्वाभावोपोद्बलकम् अस्मादेव जिह्वाग्रनामवर्तनादेव पूर्वार्थे नाम्नि सर्वस्यान्तर्गतत्वमुक्त्वा तदुच्चारणस्य बहिर्मुखान् प्रवर्त्तयितुं सर्वफलत्वमपि व्याचष्टे । यद्वेति । किन्तु तादृशभाग्यजनने तपोहोमादेस्तदर्थविनियोक्तृत्वमेव प्रयोजकमिति ज्ञेयं तदुक्तं प्रथमे

कुर्वाणा यत्र कर्माणि भगवच्छिक्षयासकृत् ।
गृणन्ति गुणनामानि कृष्णस्यानुस्मरन्ति च

इति ॥ ७ ॥

स्वतेजसा चिच्छक्त्या ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इदं तु प्रसिद्धं सर्वावतारसाधारणं कारणं जानीम इत्याह । त्वं देहतन्त्र इति । पाप्मनां दुष्कृतां विनाशाय निदेशभाजां भवदाज्ञानुवर्तिनां विभूतये परित्राणाय च त्वं देहतन्त्रः देहपरिकरः परिगृहीतदेहोऽसि यथान्ये तव सूकराद्योऽवतारास्तथायमप्यवतारः साधूनामात्ममार्गज्ञापनायाभूदिति विभ इत्यर्थः ॥ ५ ॥

किम्वा भवत्ववतारप्रयोजनं नाम्नैव सर्ववृजिननिरसनेन निरतिशयपाप्मनः कृतार्थयतस्तव दर्शनाद्वयं कृतार्था अभूमेति कैमुत्यनयेनाह । यन्नामेति । क्वचिदपि यस्य तव नाम्नः श्रवणादनुकीर्तनात्प्रह्वणात् प्रणामात् स्मरणाच्च श्वादः श्वपचोऽपि सद्यः सवनाय तत्परिग्रहावसराय कल्पते योग्यो भवति भवतानुगृहीतो भवति हे भगवन् ! तव दर्शनाद्वयं कृतार्था इति कुतः पुनः किं पुनर्वक्तव्यमित्यर्थः एवम्विधानि नामस्मरणादिना पापिनामपि कृतार्थताप्रतिपादकानि वचनान्यन्तिमस्मरणविषयाणि द्रष्टव्यानि तथा चोक्तं पुरस्तात् ।

यस्यावतारगुणकर्मविडम्बनानि ।
नामानि येऽसुविगमे विवशा गृणन्ति इति ॥ ६ ॥

* त्वाद्धाहमिति श्रीविजयध्वजतीर्थपाठः ।

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

एतदेव देहावसाने भगवन्नामस्मरणं सर्वेषां तपआदीनां बहुजन्मोपार्जितानां फलमित्याह । अहो इति । ते तुभ्यं तव नाम यस्य जिह्वाग्रे वर्तते स श्वपचोऽपि गरीयान् कुत इत्यत आह । यं ते तव नाम गृणन्त्यन्तकाले ते पूर्वमन्तिमस्मरणार्थमेवार्याः श्रेष्ठाः तपस्तेपुः चक्रुः जुहुवुर्होमं कृतवन्तः सस्नुस्तीर्थेषु स्नाताः ब्रह्म वेद-मनूचुः कथितवन्तः प्रबलप्रतिबन्धवशाच्छ्वपचादिजन्मप्राप्तावपि पूर्वजन्मसु तपआदिभिर्भगवन्तमाराधितवन्त इत्यनुमन्यामह इति भावः ॥ ७ ॥

स्तुतिमुपसंहरति । तमिति । प्रत्यक्स्रोतसि प्रत्यग्गतौ प्रत्यक्-प्रकाशे स्वस्मै प्रकाशमाने इति यावत् तस्मिन्नात्मनि जीवे अन्तरात्मतया भावितव्यं चिन्तनीयं ब्रह्म बृहत्त्वबृंहणत्वादि-गुणयुक्तं स्वतेजसा स्वप्रकाशेन ध्वस्तः गुणानां सत्त्वादीनां प्रवाहः प्रवृत्तिः संसारो यस्य सः जीवान्तरात्मतया वसन्तमपि नित्यासंकुचितानन्तस्वप्रकाशेन हेयप्रतिभटमित्यर्थः वेदाः गर्भे यस्य तं कपिलाख्यं विष्णुं परमपुरुषमुक्तविधं त्वा त्वां वन्दे नम-स्करामीति ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इदानीं कपिलस्य भगवतोऽतर्क्यसहस्रशक्तिना हरिणैकत्वं प्रकाश्य तदवतारप्रयोजनं विज्ञापयति । त्वं देहतन्त्र इति । विभो ! व्याप्त ! देहेन तन्त्रं सूतिःप्रकाशो यस्य स तथा स त्वं सच्चिदानन्दाद्यात्मकदेहेनैव प्रकाशितवानवतारवानासि न तु जीववत्प्राकृतभौतिकदेहवत्त्वेन देव ! यथा तव सूकरादयोऽवताराः हिरण्याक्षादिपाप्मनां प्रशमाय यथा निदेशभाजामाज्ञाकारिणां ब्रह्मादिदेवानां विभूतये कृताः स्युस्तथायमप्यवतारः कल्पादिना प्रलुप्तस्य सत्पथस्य ज्ञानमार्गस्योपलब्धये प्रकाशनाय त्वया कृतः इति शेषः ॥ ५ ॥

स्त्रीत्वेऽपि वयं त्वद्दर्शनादिना कृतार्था इत्यत्र कैमुत्यन्या-यमाह । यन्नामधेयेति । श्वादः श्वभक्षकः सवनाय सोमलतावहन-नाय यज्ञकरणायेत्यर्थः कल्पते समर्थो भवति ॥ ६ ॥

श्रीविष्णुभक्त्यभावे सोमयाजित्वमप्यप्रयोजकमिति भावेनाह । अहो बतेति । अनन्तरातीतग्रन्थे सोमयाजी सामान्यतः प्रस्तुत-स्तत्र द्वित्वं सम्भाव्यते वैष्णवश्चावैष्णवश्चेति अतोऽनयोरवैष्णव-सोमयाजिनः श्वपचो गरीयानहो विष्णुभक्तेः सारस्यं सा स्यास्तीत्याह । यज्जिह्वेति । यस्य श्वपचस्य जिह्वाग्रे तुभ्यं तव नाम वर्तते लटा क्रियासमभिव्याहारं सूचयति । तुभ्यमिति चतुर्थ्या नारायणाय नम इत्यादिनाम चतुर्थ्यन्तेन प्रयोक्तव्यमिति ध्वन-यति । नन्विदं भक्तिमत एव सम्भाव्यते भक्तिस्तु बहुजन्मस-ञ्चीर्णपुण्यवत एव "बहूनां जन्मनामन्ते कृष्णे भक्तिः प्रजायते" इति वचनादतः कथं तामसयोनेः श्वपचस्येति तत्राह । तेपुस्तप इति । इदानींतननामसङ्कीर्तनेनानुमितपुरातनतपआदिनान्तः-करणशुद्धिरस्तीति ज्ञायते ॥ ७ ॥

अवतारमूलरूपयोर्न कश्चिद्विशेषोऽस्तीति यदुक्तं तन्मया सम्यगवबुद्धमिति विज्ञापयन्ती स्तुतिमुपसंहरति । तन्त्वेति । अहं ज्ञानमेकमित्यादिना प्रतिपादितो यस्तं त्वां वन्द इत्यन्वयः न केवलं वाचा किन्तु कायेनापीति भावेनोक्तमद्धेति अनेन मा-तृत्वाभिमानेन पूज्यत्वाभिमानमपहस्तयति । प्राकृताप्राकृतयोरैक्यं कथं स्यादित्यत उक्तं ब्रह्मेति । ब्रह्मशब्दस्यानेकार्थप्रवृत्तेः कथं निर्णय इत्युक्तं परम्पुमांसमिति "अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" इति गीतोक्तत्वादित्यर्थः तत्र ज्ञानिप्रत्यक्षं प्रमाणमिति भावेनाह । प्रत्यक्स्रोतस्यात्मनीति । विषयसञ्चरणं मुक्त्वा प्रत्यगा-त्मनि हरौ नदीप्रवाहवत्स्यन्दमाने आत्मनि मनसि सम्भाव्यं प्रत्यक्षी-करणयोग्यं चक्षुरादीन्द्रियैः सह प्रत्यगञ्चति आत्मनि हृदये इति वा कथमपरोक्षीकुर्वन्तीति तत्राह । स्वतेजसा स्वरूपभूत-सच्चिदानन्दलक्षणप्रभावेण ध्वस्तगुणप्रवाहं नित्यनिरस्तसंसारं कथं निरूप्य वन्दनमिति तत्राह । विष्णुं कपिलमिति । सकलजग-द्व्यापी नारायणः कपिलनाम्नावतीर्ण इति बलानन्दस्वरूपत्वा-द्विष्णुः कं सुखं पिबतीत्यानन्दानुभवाह्लात् सर्वादानाच्च कपिल इत्येकार्थत्वाच्च "ला आदाने" इति धातुः अत्र प्रमाणं ध्वनयति । वेदगर्भमिति "षकारो बलमेष ह्यानन्दमादत्त" इत्यादिवेदेन गर्भः ग्रहणं ज्ञानं यस्य स तथा "तं गृभ्णामि ते सौभगत्वाय हस्तम्" इति श्रुतेः । यद्वा । वेदतात्पर्यमित्यर्थः वेदा गर्भे यस्य स तथा तमिति वा स्वगुणप्रतिपादकत्वेनातिप्रियत्वादिति वा वेदं विस्तीर्य, बिभर्तीति वा अनेन वेदनित्यत्वस्यं ग्राहकेष्विदमेव मुख्यं प्रमाणमिति ध्वनयति । अत्र हरेरन्यान्यपि यानि यानि नामानि तैस्तैर्विशिष्टं त्वां वन्द इति द्योतनाय ब्रह्मादिबहुनामग्रहण-मित्यवगन्तव्यम् ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एतादृशश्च प्राकट्यं किमर्थमित्यत्राह । त्वमिति । तत्र त्वमि-त्यर्द्धेन सामान्यतः प्रयोजनं योजयित्वा विशेषत आह । यथेति । तस्मादिति शेषः ॥ ५ ॥

क्वचित् कदाचिदपि नामधेयश्रवणादिहेतोरित्येवान्वयः । उत्तरानुरोधादपिशब्दस्यासङ्गतेश्च श्वादत्वमत्र श्वभक्षक-जातिविशेषत्वमेव श्वानमत्तीति निरुक्तौ वर्त्तमानप्रयोगात् क्रव्यादवच्छीलत्वप्राप्तेः कादाचित्कभक्षणे प्रायश्चित्तविवक्षया त्वतीतप्रयोगः क्रियेत रूढिर्योगमपहरतीति न्यायेन च तद्विरुध्यते अत एव श्वपच इति टीकाकाराः सद्यः सवनाय कल्पत इति

सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् ।

बद्धः परिकरस्तेन मोक्षाय गमनं प्रति । इतिवत्

तत्र योग्यतायां लब्धारम्भो भवतीत्यर्थः । तदनन्तरजन्म-न्येव द्विजत्वं प्राप्य तदाद्यधिकारी स्यादिति भावः ॥ ६ ॥

तस्मात् सद्यः सवनाय कल्पत इति यदुक्तं तदपि न किञ्चि-द्यतस्तपआदिकं सर्व्वं तन्नामग्रहणमात्रान्तर्भूतमेव स्याद्यत एव तस्य तन्नामग्रहीतुस्तपआदिकर्तृकेभ्यो गरीयस्त्वमपि स्यादित्यभिप्रेत्याह । अहो बतेति । व्याख्या तु टीकायाः प्रथमपद्य-गतैव ग्राह्या ॥ ७ ॥ ८ ॥ ९ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

नन्वेतत् सर्वं सच्चिदानन्दरूपे ब्रह्मणि न तु देहभाजि मयीत्याशङ्क्याह। त्वं देहतन्त्र इति। एतदपि मुख्यसिद्धान्तानवगमाद्धृदि तल्लीलाविग्रह इति लोकदृष्टिः पुराणवाक्यानि च पाप्मनां प्रशमाय आज्ञाकारिणां विभूतये च त्वं देहतन्त्रः देहपरिकरः स्वीकृतमूर्तिः देहाधीन इति वा प्रतीत्या विभो इति सम्बोधनं प्रकृतोपयोगिसामर्थ्यबोधनाय अनेन स्वेच्छया देहतन्त्रत्वमित्युक्तं तच्च स्वतन्त्रस्य परतन्त्रता न युक्तेत्याशङ्क्याह। यथावतारा इति। यथा सूकरादयः क्रियावतारास्तद्व्यतिरेकेण क्रिया नोपपद्यत इति तथैतदवतारव्यतिरेकेण ज्ञानमपि न सम्भवतीति आत्मपथोपलब्धये आत्ममार्गसिद्धये ज्ञानायायमवतार इत्याह। तथायमिति। अनेनास्यावतारस्य प्रयोजनद्वयमुक्तं सद्वचा अधर्मनाश इति सामान्यम् आत्ममार्गभूतज्ञानार्थमिति विशेषप्रयोजनम् ॥ ५ ॥

एवं श्लोकद्वयेन द्वितीयमप्याश्चर्यं स्थापयित्वा रूपे आश्चर्यद्वयं प्रतिपाद्य नाम्नि आश्चर्यद्वयमाह। यन्नामधेयेति द्वाभ्याम्। नामश्रवणादेर्धर्मस्य धर्मद्वारा नाममाहात्म्यं साक्षान्नाम्नश्च तत्र प्रथममाह। यस्य भगवतो नामधेयस्य गुरोः सकाशाच्छ्रवणानन्तरं यदनुकीर्त्तनं तेन श्वादोऽपि चाण्डालोऽपि सद्यः सवनाय सोमाभिषवयोग्यत्वाय सद्यस्तस्मिन्नेव जन्मनि अवकल्पते कुतः पुनः तव दर्शनात् सोमाभिषवयोग्यो भवतीति किं वक्तव्यमित्यर्थः श्रवणानन्तरं कीर्त्तनकथनाद्वैष्णवदीक्षया मन्त्रोपदेशपर इति केचित् सद्यः सवनायेति "सर्वमेध्याय वा चाण्डालम्" इति वाक्यात् पर्यग्निकरणपर्यन्तं तद्योग्यत्वमित्यपरे वस्तुतस्त्वाश्चर्यरूपं माहात्म्यमेव लौकिकोपपत्त्या चेत्सिद्धेदाश्चर्यमेव न भवेद्धर्मसंस्कृतभूतविशेषैर्हि चाण्डालशरीरमारभ्यते सर्वोत्कृष्टधर्मसंस्कृतभूतविशेषैस्तु ब्राह्मणशरीरं भगवन्नाम्ना दीक्षया प्राप्तेन वा सर्वान् दोषानौत्पत्तिकान् परिहृत्य तान्येव भूतान्युत्कृष्टसंस्कारेण संस्कृतानि क्रियन्त इति नाम्नो युक्तमेव महात्म्यम् अनेन सर्वदोषनाशनपूर्वकसर्वगुणोपपादकत्वं नाम्न उक्तं श्रवणयोग्येनानुकीर्त्तनेन वा श्रवणेन दोषनिवृत्तिः कीर्त्तनेन गुणाधानमिति वा। नन्वेतदत्याश्चर्यमुच्यत इत्याशङ्क्य कैमुतिकन्यायेन तदुपपादयति। यत्प्रह्वणाद्यत्स्मरणादिति। प्रह्वो नम्रीभावो नमनामिति यावत् नम्रीभावस्याख्यानमप्रसिद्धं स्मरणस्य तु वाल्मीकेः स हि चाण्डाल एव मार्गघातकः ऋषेरुपदेशात् पूर्वं महर्षित्वभावनां कृत्वा पश्चाद्रामस्मरणेन तस्मिन्नेव जन्मनि वाल्मीकिर्जात इति न किञ्चिदनुपपन्नमत एव क्वचिदित्युक्तं यत्र नामरूपं वा स्वसामर्थ्यं प्रकटयति तत्रैव भवेत्यतिप्रसक्तिरपि निवारिता श्वादश्चाण्डालानामधमः उत्कृष्टस्योत्तमत्वे कः सन्देह इत्यपिशब्दार्थः ते दर्शनात् सवनाय पुनः कुतः कल्पते पूर्वमेवमजातत्वादित्यकाराध्याहारपक्ष अर्थः अथवा कुत इति किमित्यर्थे अव्ययं किं पुनर्भगवद्दर्शनात् सवनाय कल्पते इति वक्तव्यमित्यर्थादेवं पर्यवसानवृत्त्या नामश्रवणादेर्माहात्म्यमुक्तम् ॥ ६ ॥

साक्षान्नाम्नो माहात्म्यं प्रतिपादयन्ती प्रह्लादवद्भगवद्दृष्टिमध्यत्वात् ब्राह्मणापेक्षया श्वपचो महानिति वदन्ती तत्र युक्तिमाह। अहो वतेति। न च वक्तव्यं ब्राह्मणाच्छ्वपचः कथं महानिति न ब्रूमो वयं जात्या स्वाचारेण कर्मणा वा श्वपचो महानिति किन्तु हेत्वन्तरेणैव स महांस्तदाह। श्वपचोऽतो गरीयानिति। प्रथमतो नाममाहात्म्ये हृदयं प्रविष्टे पूर्वं ब्राह्मणमाहात्म्यं ज्ञातवत्या इदानीं हीनभावे अहो इत्याश्चर्यं ब्राह्मण्यदृष्ट्या वतेति खेदे स्वस्य ब्राह्मण्याभावेन एतावत्काल खिन्नायाः नाममाहात्म्ये अवगते सति वतेति हर्षे वा अतो हेतोः श्वपचो गरीयान् निर्वृतोऽपि ब्राह्मणः स्वस्य धर्माणामुत्कर्षं ज्ञात्वा कदाचिदन्यदुच्चारयेदभिमानादिदोषयुक्तो वा भवेदतस्तत्र नाम न तिष्ठेत् अतः निरन्तरं नामस्थानं श्वपचजिह्वैव तस्यैव तथा दर्शनात् स निरूपितो वाल्मीकिः किञ्च यज्जिह्वाग्रे विद्यमानमपि नाम तुभ्यं त्वदर्थमेव न तु तेनापि शुद्धौ जातायां कार्यान्तरं करोति किन्तु यथा स रामकथामेव लोके प्रकटितवान् एतन्नाममाहात्म्यमसम्भावितं मत्वा युक्त्या साधयति। तेपुस्तप इति। ये पूर्वजन्मनि प्रथमं तपस्तेपुः शुद्धब्राह्मणजन्मनि जुहुवुः यज्ञादिकं कृतवन्तः ततोऽप्युत्कृष्टजन्मनि सस्नुः सर्वतीर्थाभिगमनं कृतवन्तः ततोऽप्यग्रिमजन्मनि आर्याः सन्तो जाताः वेदवेदार्थपरिनिष्ठिताः ततोऽप्यग्रिमजन्मनि सर्वोत्कृष्टदेहं प्राप्य व्यासवाल्मीकिशुकपराशरादिरूपा भूत्वा ब्रह्मानूचुः ब्रह्मोपदेशकर्त्तारो जातास्त एव नाम गृणन्ति अतः श्वपचस्यापि तथा नामग्रहणे केवलमल्पपापवशाद्भगवदिच्छया नाममाहात्म्यं ख्यापयितुं श्वपचत्वं जातमिति निरन्तरनामोच्चारणादवसीयते अयं महानेव तथा जात इति अतो युक्तमुक्तमित्यर्थः ॥ ७ ॥

एवं भगवतो माहात्म्यं साक्षात् परम्परया चोक्त्वा अभिप्रेतार्थसिद्ध्यर्थं तं नमस्यति। [illegible] त्वामहमिति। तं पूर्वोक्तप्रसिद्धियुक्तं त्वां तथैव परिदृश्यमानं व्यवहारे पुत्रत्वान्नमस्कारानौचित्यमाशङ्क्याह। परं ब्रह्मेति। जीवानां मध्येऽयम्व्यवहारः न तु परब्रह्मणि तस्य लौकिकसम्बन्धकृतगुणदोषौ नस्तः। पुमांसमिति। स एव सर्वत्र पुरि वर्त्तत इति किञ्च उपास्यो भवानेव यतः प्रत्यक्स्रोतस्यन्तर्मुखे चित्ते सम्यग्विभाव्यो भवान् "कश्चिद्धीरः प्रत्यगात्मानमैक्षत्"इति श्रुतेः स भवानतो भवान् फलरूपः साधनरूपश्च एवं भगवदवतारत्वमुक्त्वा तत्रापि विशेषमाह। स्वतेजसा ध्वस्तगुणप्रवाहमिति। स्वस्यैव तेजसा चिच्छक्त्या स्वप्रकाशज्ञानेन ध्वस्तो गुणप्रवाहो देहाद्यध्यासो येन अतो मोक्षेप्सोः ज्ञानकलावतीर्ण एव सेव्य इत्युक्तमतस्तमेव वन्दे विष्णुमिति तस्य मूलरूपकीर्त्तनं वेदार्थरूपं वा प्रमाणमाह। वेदगर्भमिति। तस्यैव निःश्वसिताः वेदा इत्यर्थः ॥ ८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

किञ्च। तव स्वभाव एवायं यत् कृपयैवमवतरसीत्याह। त्वं देहतन्त्रः अन्यबालको यथा मातृकुक्षिप्रविष्टो मातुर्देहाधीनस्तथा त्वमपि लीलया मम मातुर्देहाधीनः। यद्वा। देहे तन्त्रं वस्त्रालङ्कारपरिच्छेदो यस्य सः किमर्थं द्रष्टुः पाप्मनां पापानां प्रशमाय निदेशभाजां त्वदाज्ञानुवर्तिनां विभूतये भक्तिज्ञानादिसम्पत्त्यै अयमपि कपिलावतारः स्वीयभक्तिज्ञानमार्गोपलब्धये ॥ ५ ॥

त्वद्दर्शनाल्लोकः कृतार्थीभवतीति कैमुत्यन्यायेनाह। यदिति।

मैत्रेय उवाच ॥

ईडितो भगवानेवं कपिलाख्यः परः पुमान् ।
वाचाविक्लवयेत्याह मातरं *मातृवत्सलः ॥ ९ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रह्वणं नमस्कारः क्वचिदिति कादाचित्कादपि स्मरणादित्यर्थः श्वादोऽपि स्वपचोऽपि सद्यस्तत्क्षण एव सवनाय सोमयागाय कल्पते योग्यो भवति सोमयागकर्ता ब्राह्मण इव पूज्यो भवतीति दुर्जात्यारम्भकप्रारब्धपापनाशो व्यञ्जितः। यदुक्तं श्रीरूपगोस्वामिचरणैः ।

दुर्जातिरेव सवनायोग्यत्वे कारणं मतम् ।
दुर्जात्यारम्भकं पापं यत् स्यात् प्रारब्धमेव तत् इति । ॥ ६ ॥

सद्यः सवनाय कल्पत इति यदुक्तं तदपि न किञ्चिदनः सोमयागकर्तृभ्योऽप्याधिक्यमेवास्य फलतो भवेदित्याह। अहो बतेत्याश्चर्यौ-दप्येतदाश्चर्यमित्यर्थः । यस्य श्वपचस्य जिह्वाग्रे जिह्वाया अग्रे एव न तु सम्पूर्णायां तस्यामित्यसम्यक्कयोच्चारितमित्यर्थः। वर्त्तते एव न तु वृत्तमित्यसम्पूर्णमुच्चारितमित्यर्थः नाम एकमेव न तु नामानीत्यर्थः। सम्पूर्णजिह्वायां सम्पूर्णोच्चारितानि बहूनि नामानि तु किमुतेति भावः। तुभ्यमेव त्वां प्रीणयितु वशीकर्तुं चेति वा अत एव स श्वपचो गरीयानतिशयेन गुरुर्भवतीत्यन्यानपि नामात्मकमन्त्रमुपदेष्टुं योग्यतां धत्ते इति भावः। ननु तर्हि स श्वपचो यज्ञाध्ययनतपआदिकं करोत्विति तत्राह। तेपुरिति। तस्यैकस्य का वार्ता अन्येऽपि ये तव नाम गृणन्ति त एव तेपुरित्यवधारणं लभ्यते अन्येषां तपःसामस्त्यसाङ्गत्वाद्यदर्शनादेवं विशेषानुक्तेः सर्व्वमेव तपः। जुहुवुः सर्वेष्वेव यज्ञेषु। सस्नुः सर्व्वेष्वेव तीर्थेषु आर्य्या अपि त एव नान्ये ब्रह्म वेदं त एव अनूचुरधीतवन्तः "अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु यः" इत्यमरः अत्र तेपुरित्यादिषु भूतनिर्द्देशाद्गृणन्तीति वर्तमाननिर्देशात्तन्नामानि गृह्णमाणा एव तपोयज्ञादयः सर्व्वे कृता एव भवन्ति न तु क्रियमाणो नापि करिष्यमाणाः इत्यतस्तांस्ते कथं पुनः कुर्य्युरित्यत एव भक्तानां कर्मस्वनाधिकारोऽपि ज्ञेयः । परोक्षवाचिलिडन्तपदप्रयोगेण सिद्धान्येव तानि तपआदीन्यपि ते न जानन्ति किं पुनस्तत्साधनश्रममिति भावः। अत्र गृणन्तीति वर्त्तमानप्रयोगेण नामग्रहणाविच्छेद एव यदि स्यात्तदैवैवं स्यादिति तु न व्याख्येयम्

चित्रं विदूरविगतः सकृदाददीत ।
यन्नामधेयमधुना स जहाति बन्धम् ॥

इति "यन्नाम सकृद श्रवणात् पुल्कसोऽपि विमुच्यते संसारात्" इत्यादिवाक्येषु सकृत्पदप्रयोगव्याकोपात् ॥ ७ ॥

अनन्तस्त्वामहमज्ञा स्तोतुं नैव प्रभवामीति केवलं वन्दे तमिति। प्रत्यक्स्रोतसि प्रत्याहृते मनसि ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे विभो ! यथा शूकरादयस्तव अवताराः पाप्मनां दुष्टानां प्रशमाय निदेशभाजामाज्ञानुवर्तिनां विभूतये तथा अयमवतारः आत्मपथोपलब्धये स्वज्ञानभक्तिमार्गप्रदर्शनाय अतः देहतन्त्रोऽसि आविष्कृतदेहोऽसि मम जठरे आविर्भूतोऽसीत्यर्थः ॥ ५ ॥

क्वचिदपि स्खलनविजृम्भणादौ यन्नामधेयश्रवणादिमात्रतः श्वानमत्तीति श्वादः जन्मना कर्मणा च नीचः सवनाय सोमयागाय कल्पते योग्यो भवति पूज्यत्वं प्राप्नोति तव मातृभावं गताया मे कृतार्थतायां कः सन्देह इति भावः ॥ ६ ॥

तदुपपादयति। अहो इत्याश्चर्ये वतेति हर्षे श्वपचोऽपि अतः गरीयान् यतो यस्य जिह्वाग्रे तुभ्यं तव नाम वर्त्तते यतः ये जना ते तव नाम गृणन्ति ते एव तपः संन्यासिवनस्थसाधारणं तेपुः कृतवन्तः जुहुवुः होमं कृतवन्तः गृहस्थधर्मं कृतवन्त इत्यर्थः ब्रह्म वेदमनूचुः अधीतवन्तः ब्रह्मचारिधर्मं कृतवन्तः सस्नुस्तीर्थेषु स्नाता आर्याः शिष्टाः पदद्वयेन सर्वसाधारणधर्मं कृतवन्त इत्यर्थः ॥ ७ ॥

प्रत्यक्स्रोतसि अन्तर्मुखे आत्मनि मनसि सन्निवेश्य ध्येयम् ॥ ८ ॥

---

भाषा टीका

आपतो स्वतन्त्र देहवाले हो जैसे जीवों के पापोंके नाश करने को तथा आज्ञा माननेवालों के समृद्धि करने को आप के सूकर आदि अवतार भये हैं तैसेही हे विभो ! यह भी आपका अवतार आत्मज्ञान मार्गको दिखाने के वास्ते है ॥ ५ ॥

जिन आपके नामके कभी श्रवणकरने से कीर्तन करने से आपके नमस्कार करने से स्मरण करने से चाण्डालभी सोमयागवाले सरीका होजाता है हे भगवन् ! तिन आपके दर्शन से तो हमसरीके जीवोंके कृतार्थ होनेमे क्या सन्देह है ॥ ६ ॥

अहो वह श्वपचभी बडा है जिसके कि जिह्वा के अग्रमे आपका नाम है जो पुरुष आपके नाम को लेते हैं उनने तप कर लिया होमकरलिया वे श्रेष्ठ हैं उनने तीर्थस्नान करलिया वेदपाठकर लिया है ॥ ७ ॥

परम पुरुष विषयों से निवृत्तमनसे ध्यान करने योग्य अपने तेज सें सब गुणों के प्रवाह को नाश करने वाले वेदों को गर्भ मे रखने वाले विष्णु कपिलजी आप के मै शरण प्राप्त हूं ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अविक्लवया गम्भीरया वाचा ॥ ९ ॥

---

* पितृवत्सल इति श्रीवीरराघवाचार्यपाठः ।

## कपिल उवाच ॥

मार्गेणानेन मातस्ते सुसेव्येनोदितेन मे ॥
आस्थितेन परां काष्ठामचिरादवरोत्स्यसि ॥ १० ॥
श्रद्धत्स्वैतन्मतं मह्यं जुष्टं यद्ब्रह्मवादिभिः ॥
येन मामभवं याया मृत्युमृच्छन्त्यतद्विदः ॥ ११ ॥

## मैत्रेय उवाच ॥

इति प्रदर्श्य भगवान् * सतीं तामात्मनो गतिम् ॥
स्वमात्रा ब्रह्मवादिन्या कपिलोऽनुमतो ययौ ॥ १२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ते तव सुसेव्येन सुखसेव्येन मे मयोदितेन आस्थितेनानुष्ठितेन परां काष्ठां जीवन्मुक्तिमवरोत्स्यसि प्राप्स्यसि ॥ १० ॥

यायाः यास्यसि अतद्विदो मन्मतमविद्वांसः ॥ ११ ॥

अनुमतोऽनुज्ञातः ॥ १२ ॥

———

### श्रीराधारमणदासगोस्वामिविरचिता दीपन्याख्या दीपिकाटिप्पणी ।

गम्भीरया दुर्विबोधाशयया ॥ ९ ॥

सुसेव्येन भक्तियोगस्य सुकुमारस्वभावत्वात् ॥ १० ॥

येन मतेन ॥ ११ ॥ १२ ॥

———

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

कपिलाख्यः परमपुरुषो भगवानेवमीडितः स्तुतः पितृवत्सलः पित्रोर्वत्सलः अविक्लवया गम्भीरया वाचा मातरं प्रति इति वक्ष्यमाणप्रकारेणाह उवाच ॥ ९ ॥

हे मातः ! मे मया उदितेन कथितेन सुसेव्येन सुखमनुष्ठेयेनानेन मार्गेणास्थितेन त्वया अनुष्ठितेनाशु परां काष्ठां फलपर्यन्तदशां मुक्तिमिति यावदवरोत्स्यसि प्राप्स्यसि ॥ १० ॥

एतन्मह्यं मम मतं श्रद्धत्स्व एतस्मिन्मते श्रद्धां कुर्वित्यर्थः मतं विशिनष्टि यन्मतं ब्रह्मवादिभिः ब्रह्मोपदेष्टृभिः जुष्टं पुनः पुनः संशीलितं येन मतेनाभयं मां यायाः प्राप्नुयाः अतद्विदः मन्मतानभिज्ञाः मृत्युं संसारमृच्छन्ति ॥ ११ ॥

इति एवं भगवान् कपिलः उशतीं कमनीयामात्मनो गतिं ज्ञानमार्गं मात्रे प्रदर्श्य तया ब्रह्मवादिन्या मात्रानुमत आज्ञापितः ययौ गतवान् ॥ १२ ॥

———

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नन्वनेन स्तोत्रेण कपिलस्य कश्चित्प्रसादविशेषो जातश्चेदुक्तं सर्वं सत्यं स्यादिदं चाध्येतुः प्रयोजकं स्यादतोऽत्र तादृशं लिङ्गं किमित्याशङ्क्य भगवान् तादृग् लिङ्गगर्भितां वाचं वक्तीत्याह । ईडित इति । अविक्लवया अदीनया इदमेकं प्रसादलिङ्गमितीति शब्देन सूचितम् ॥ ९ ॥

प्रसादविशेषं स्पष्टयति । मार्गेणेति । काष्ठामानन्दोत्कर्षमवरोत्स्यसि नित्याभिव्यक्तं करिष्यसि अचिरादित्यनेन कपिलस्य मातरि प्रसादातिशयं सूचयति ॥ १० ॥

न मयैतद्गाथावदुक्तं किन्तु मात्रोपदेशवदतोऽत्र त्वयास्तिक्यबुद्धिः कर्तव्येत्याह । श्रद्धत्स्वैतदिति । मह्यं मम मामुद्दिश्येति वा नैतत्तन्त्रज्ञानमुक्तं किन्तु वैदिकमेवेति भावेनाह । जुष्टं यदिति । त्वत्प्राप्तावहेतुश्चेद्वैदिकमप्यप्रयोजकमिति तत्राह । येनेति । अनेन त्वं साक्षात्परं ब्रह्मेति देवहूत्या यदुक्तं तत्सत्यमिति द्योतितं विपक्षे बाधकमाह । मृत्युमिति । न तन्मतं विदन्तीत्यतद्विदः मृत्युं संसारं तन्मतविरुद्धमैक्यमतं विदन्तीति मृत्युं नित्यमरणरूपमन्धं तमो गच्छन्तीत्यर्थः ॥ ११ ॥

देवानां नृषु चिरवासो न धर्म इति विदुषा स्वयमपि तज्ज्ञातित्वात्पुनर्हरिणा किमकारीति तत्राह । इतीति । इतिशब्देन गतेर्ज्ञानस्य समग्रानुग्रहहेतुत्वलक्षणत्वं वक्ति । उपदेशेन प्रदर्श्य मातुर्विश्वासार्थं कचित्प्रसङ्गात् स्वात्मनो गतिं स्वरूपस्थितिं वा प्रदर्शयत्यनेन द्योतयति । उशतीमभीष्टवर्षिणीं स्वेच्छाज्ञानोपदेष्टृत्वेन गुरुत्वादात्मपुत्रत्वेन सुहृत्त्वात्सा देवहूतिः पुत्रगमनं कथमनुजज्ञे निर्दयहृदयत्वेनेत्याशङ्क्यापरिहार्यत्वाद्ब्रह्मज्ञानित्वात्स्वात्मस्थत्वाच्च ॥ १२ ॥

———

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सुसेव्येन भक्तियोगस्य तथोक्तत्वात् ॥ १० ॥ ११ ॥

उशतीमित्यत्र सतीं तामिति कचित् ॥ १२ ॥

———

* उशतीमिति श्रीवीरराघवश्रीविजयध्वजतीर्थयोः पाठः ।

सा चापि तनयोक्तेन योगादेशेन योगयुक् ।
तस्मिन्नाश्रम आपीडे सरस्वत्याः समाहिता ॥ १३ ॥
अभीक्ष्णावगाहकपिशान् जटिलान् कुटिलालकान् ।
आत्मानं चोग्रतपसा बिभ्रती चीरिणं कृशम् ॥ १४ ॥
प्रजापतेः कर्दमस्य तपोयोगविजृम्भितम् ।
स्वगार्हस्थ्यमनौपम्यं प्रार्थ्यं वैमानिकैरपि ॥ १५ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं स्तुते मातुरभिप्रायं ज्ञात्वा प्रसन्नो जात इत्याह । ईडित इति । स्तोत्रमस्य युक्तमिति ज्ञापयितुमाह । भगवानिति । एवमीडितः कपिल इत्याख्यामात्रं वस्तुतः पर एव पुमान् कार्यमभगवत्त्वव्यावृत्त्यर्थमुक्तम् । विक्लवया वाचेति । तस्यां दयोत्पत्तिः सूचिता मातुः स्तोत्रमात्रमेव महदिति मातरमित्याह अयं च प्रसादः सर्वथा न मर्यादाकृतः किन्तु पुष्टिकृत इत्याह । मातृवत्सल इति । मातरि वत्सलः ॥ ९ ॥

प्रसादमार्गमाहात्म्ये क्रमेणाह । मार्गेणेति । हेमातः । अनेन मदुक्तेन मार्गेण भगवद्ध्यानयुक्तयोगेन कर्त्तुं सुकरेण मयोदितेनेति अन्योक्तकथने तद्गताज्ञान्तरापेक्षा अस्ति न वेति सन्देहोऽपि भवेत् मयैवोक्तमिति नात्रान्यापेक्षा अत एव सम्यगाश्रिताचिरादेव परां काष्ठामसंप्रज्ञातसमाधिं ततो मत्सायुज्यं च अवरोत्स्यसि प्राप्स्यसीति वरः ॥ १० ॥

लोकमार्गस्योत्कर्षं चाह । श्रद्धत्स्वैतदिति । फलमप्यहमेवेत्याह । मद्धामेति । एतन्मत्स्वम्बाधिमतं प्रामाणिकं यतो ब्रह्मवादिभिर्जुष्टमवश्यं फलसाधकमित्याह । येन मामभयं यायादिति । येन मतेन अभयमिति स्वस्य फलत्वम् एतन्मतानभिज्ञास्तु मृत्युमेव ऋच्छन्तीत्यन्यनिन्दयाप्येतद्दृढीकृतं मृत्युप्राप्तिस्तु स्वकारणादेव तस्माद्विधेयप्रशंसार्थमेव एतदुक्तं सर्वभावेन तत्र श्रद्धार्थम् ॥ ११ ॥

एतावदुक्त्वा तां कृतकृत्यां ज्ञात्वा ततः स्वयं निर्गत इत्याह । इतीति । कथनमात्रेण वक्तुर्माहात्म्यात्तस्याः शास्त्रार्थज्ञानं भविष्यतीत्यभिप्रायेणाह । भगवानिति । गतिश्शोभती कमनीया स्वस्यैव गतिरिति स्वेनैव ज्ञायते नान्येनेति ज्ञापितं तथापि तदुक्तोऽर्थः हृदये निश्चित इति ज्ञापयितुमाह । स्वमात्रेति । सापि पूर्वभावं परित्यज्य शास्त्रार्थदार्ढ्याद्ब्रह्मवादिनी जाता यस्त्वत्यन्तं यन्मताभिनिविष्टः सव्यवहारेऽपि तदेव वदति तस्य च फलं मोहाभावः अत एव तयाऽप्यनुज्ञातः स्वयं तु मोहरहितः ततो ययौ गन्तव्यो देशः पश्चाद्वक्ष्यते तस्याः सिद्ध्यनन्तरमन्यथा फलविसम्वादे सर्वमेवोक्तं व्यर्थं स्यात् ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

विक्लवया सगद्गदया यतो मातृवत्सलः ॥ ९ ॥

सुसेव्येन भक्तियोगेनेत्यर्थः । आस्थितेन अनुष्ठितेन परां प्रेमसिद्धिमवरोत्स्यसि प्राप्स्यसि नित्यसिद्धमातृभावेऽपि तां तथोक्तिर्लोकशिक्षार्थमेव ज्ञेया ॥ १० ॥

मद्धाम मम । यायाः यास्यसि ॥ ११ ॥

अनुमतौ हेतुः ब्रह्मवादिन्या स्वपुत्रमपीमं ब्रह्मैव ब्रवीमि जानामि च तत्कथं स्वेच्छया गृहे रक्षितुं प्रभवामीति विचारेण ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अविक्लवया विपुलया ॥ ९ ॥

त्वयि आस्थितेन अनुष्ठितेन परां काष्ठां मद्भावापत्तिलक्षणां मुक्तिमवरोत्स्यसि प्राप्स्यसि ॥ १० ॥

एतदेव द्रढयितुमाह । श्रद्धत्स्वेति । मां मद्भावं यायाः यास्यसि ॥ ११ ॥

आत्मनः स्वस्य गतिं प्राप्तिमार्गमनुमतः अनुज्ञातः ॥ १२ ॥

---

भाषा टीका ।

मैत्रेयजी बोले कपिल नामक परम पुरुष भगवान् इस प्रकारकी स्तुति करने पर माता पर बडी कृपा करके व्याकुल वचन से माता के प्रति बोलने लगे ॥ ९ ॥

श्री कपिल जी बोले हे माता आपके अत्यन्त सेवने योग्य मेरे कहे हुये इस मार्ग मे स्थिति रहने से थोडे काल मे मोक्ष की परम स्थिति मे आप प्राप्त होजाओगी ॥ १० ॥

ब्रह्मज्ञानियों से सेवित यह हमारा मत है इस पर तुम श्रद्धा करो इस से संसार रहित मेरे को तुम प्राप्त होजाओगे इसको नहीं जानने वाले लोक संसार को प्राप्त होते हैं ॥ ११ ॥

मैत्रेय जी बोले भगवान् कपिल जी सती देवहूती जी को अपनी इस गति को दिखा कर ब्रह्मवादिनी अपनी माता से आज्ञा मांग कर चले गये ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सरस्वत्या आपीडे पुष्पमुकुटतुल्ये । सरस्वत्येति पाठे मुकुटेनेव सम्वेष्टिते विन्दुसरसि समाहिता बभूव ॥ १३ ॥

कथम्भूता सती समाहिता तदाह । अभीक्ष्णं त्रिषवणमव-

**पयःफेननिभाः शय्या दान्ता रुक्मपरिच्छदाः।**
**आसनानि च हैमानि सुस्पर्शास्तरणानि च ॥ १६ ॥**

### श्रीधरस्वामिकृतभावार्थदीपिका।

गाहः स्नानं तेन कपिशान्पिशङ्गान् स्वत एव कुटिलानलकान् केशांस्तथात्मानं देहं चीरधारिणं कृशं च विभ्रती सती ॥ १४ ॥

प्रजापतेः कर्दमस्य तपोयोगाभ्यां विजृम्भितमतिशयितं स्वगार्हस्थ्यं हित्वा पुत्रभूतेश्वरविरहातुरा सती वदनं किञ्चिदनिर्वाच्यं शोकव्याकुलं चकारेति षष्ठेनान्वयः ॥ १५ ॥

यत्र गार्हस्थ्ये क्षीरफेननिभा मृदुशुभ्राः शय्या आस्तरणान्याभान्ति दन्तघटिता मञ्चकाश्च स्वर्णमयाः परिकराः आसनानि पीठादीनि सुस्पर्शान्यास्तरणानि येषु ॥ १६ ॥ १७ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपन्याख्या दीपिकाटिप्पणी।

सा चेति युग्मकम्। सरस्वत्येति तृतीयान्तपाठे आपीडे इति अर्शआदिभ्यो मत्वर्थीयाच्प्रत्ययत्वादापीडवति सरस्वत्येति प्रकृत्याभिरूप इतिवदभेदे तृतीया तथा च मुकुटेनेव मुकुटनिरूपितसादृश्यप्रयोजकधर्म्मवदभिन्नया सरस्वत्या सम्बोपेत इत्यर्थः समाहिता बभूवेति साध्यक्रियाध्याहारः ॥ १३ ॥ १४ ॥

प्रजापतेरिति षट्कम्। तत्रापि बहुवाक्यैकवाक्यत्वाद्गर्भेऽङ्काः कर्तव्याः तत्र प्रजापतेरित्येकमेव पय इति त्रिकम्। अन्यद्द्वयमेकैकं तथैव मूले टीकायां चाङ्काः कर्त्तव्याः एवमन्यत्रापि शोकव्याकुलमतिमलिनमिति यावत् ( १ ) यत्रेत्यग्रिमपद्यादाकृष्टं दन्तघटिताः हस्तिदन्तरचिताः परिकरा घटकरकस्थाल्यादयः (२) (३) तद्गार्हस्थ्यम् (४) ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका।

सा चापि देवहूतिरपि पुत्रोपदिष्टेन योगानुशासनेन तस्मिन्नेव सरस्वत्या नद्या आपीडेऽलङ्कारभूते आश्रमे समाहितचित्ताभूत् ॥ १३ ॥

कथम्भूता सती समाहिता साभीक्ष्णावगाहस्त्रिषवणस्नानं तेन कपिशान् पिशङ्गान् स्वत एव कुटिलानलकान् केशांस्तथा उग्रतपसा कृशं चीरिणं वल्कलधारिणं चात्मानं देहं विभ्रती ॥ १४ ॥

कथमस्य प्रजापतेस्तपोयोगाभ्यां विजृम्भितमतिशयितं वैमानिकैरपि प्रार्थ्यं स्वगार्हस्थ्यं गृहाश्रमसम्बन्धि गृहं हित्वा पुत्रविरहातुरा सती वदनं किञ्चिच्चकारेति षष्ठेनान्वयः ॥ १५ ॥

गार्हस्थ्यं विशिनष्टि। यत्र गार्हस्थ्ये क्षीरफेनवन्मृदुला दान्ताः शुभ्राश्च स्वर्णमयाः परिच्छदाः परिकरा आसनानि पीठादीनि सुवर्णमयानि सुखस्पर्शान्यास्तरणानि ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

तथापि तस्या इतोऽधिकं दुःखं नाभूदिति लक्षयति। सा चापीति। सा देवहूतिश्च स्वगार्हस्थ्यं तृणवद्धित्वा अक्लेशापि पुत्रविश्लेषणातुरा सती वदनं किञ्चिच्चकार पुत्रविरहोत्पन्नदुःखानलशुष्कं कृतवतीत्यर्थः अपि सम्भावितमेतल्लोकदृष्टत्वात्किं ततोऽन्यत्र गतेत्यत उक्तं तस्मिन्निति। सरस्वत्यास्तटे आसीनत्वात् समाहिता समाधानस्य फलमाह। योगादेशेनेति। योगादेशेन ज्ञानलक्षणोपायोपदेशेन कारणेन योगं भगवद्ध्यानं युङ्क्ते इति योगयुक् ॥ १३ ॥

तथानेनान्तरशुद्धिरस्या एवं बाह्यशुद्धिरप्यस्तीति भावेनाह। अभीक्ष्णेति। अनेन नित्यस्नानेन स्त्रीणां तिथ्यादौ स्नानं व्यावर्तयति। आत्मानं देहं कृशं विभ्रतीत्यनेन फलमूलाद्यशनमपि नास्तीति लभ्यते ॥ १४ ॥

स्वगार्हस्थ्यत्यागे किं कारणं येन योगेन दुःखं स्यादिति तत्राह। अनौपम्यमित्यादिना। न उपमाया योग्यं यस्य तदनौपम्यं वैमानिकैर्देवैरेवम्विधमाहात्म्ये निमित्तमाह। प्रजापतेरिति ॥ १५ ॥

प्रार्थ्यत्वेऽपि निमित्तमाह। पयःफेननिभा इति। यत्र गार्हस्थ्ये गोक्षीरफेनमृदुशय्यादयः सन्तीति शेषः दान्ताः गजदन्तनिर्मिताः रुक्मेण स्वर्णेन परिच्छदोऽलङ्कारो यासां ताः सुस्पर्शाः स्पर्शसुखकराः आस्तरणानि कटादयो येषु तानि तथा ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

सा चेति युग्मकम्। सरस्वत्येति पाठे आपीडवति तस्मिन् विन्दुसरसीत्यर्थः। प्रकृत्याभिरूप इतिवत्तृतीया ॥ १३ ॥

अभीक्ष्णावगाहेत्यत्र अभीक्ष्णगाहेति स्वामिपुण्यारण्ययोर्मतः ॥ १४ ॥

प्रजापतेरिति षट्कम्। विबुधानुचराः विबुधानुचर्य्यः किञ्चित् किमपि अनिर्वचनीयम्। अतिमलिनमिति यावत्। तत्र हेतुः पुत्रेति ॥ १५ ॥ २० ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

तस्याः स मार्गः सिद्ध इत्याह। सा चापीत्यादिविंशत्या। योगे परित्यागस्यानङ्गत्वात्स्वस्य परित्यागाधिकाराभावात्तस्मिन्नेवाश्रमे सा स्थितेत्याह। सा चापि पूर्वोक्तापि तस्मिन्नेव स्वाश्रमे स्थिता तनयोक्तेन योगोपदेशेन योगयुक्ता जाता स्वगृहे योगः न सिध्यतीति दूषणं तत्र नास्ति यतः सरस्वत्यास्तदाश्रममापीडं मुकुटस्थानीयम् अगृहं गृहं वा न प्रयोजकं किन्तु विशिष्टदेशत्वमेव समाहितेति सावधानान्तःकरणा अनेन शमा उक्ताः ॥ १३ ॥

नियमानाह। अभीक्ष्णेति। स्निग्धकुञ्चितकेशा अपि संस्काराव्यतिरेकेण निरन्तरावगाहेन कपिलवर्णा जाताः केशा जटि-

स्वच्छस्फटिककुड्येषु महामारकतेषु च ।
रत्नप्रदीपा आभान्ति ललनारत्नसंयुताः ॥ १७ ॥
गृहोद्यानं कुसुमितै रम्यं बह्वमरद्रुमैः ।
कूजद्विहङ्गमिथुनं गायन्मत्तमधुव्रतम् ॥ १८ ॥
यत्र प्रविष्टमात्मानं विबुधानुचरा जगुः ।
वाप्यामुत्पलगन्धिन्यां कर्दमेनोपलालितम् ॥ १९ ॥
हित्वा तदीप्सिततममप्याखण्डलयोषिताम् ।
किञ्चिच्चकार वदनं पुत्रविश्लेषणातुरा ॥ २० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ताश्च अन्योऽन्यश्लेषयुक्ताः पूर्वं कुटिलालकाः एतादृशान् त्वभ्रतीति देहपरिकराणामसंस्कार उक्तः शरीरस्याप्यसंस्कारमाह । आत्मानमिति । चकारेण दन्तनखादिसंस्कारा अपि निवाततः उग्रतपसा युक्तं कृशं वा तपसैव ज्ञानं भवतीति नियमानन्तरं तपो निरूपितं तपः साङ्गमित्याह । चीरिणमिति । चीरवाससैव तपः कर्त्तव्यमिति कृशत्वं च तस्याभिव्यञ्जकम् ॥ १४ ॥

तस्या वैराग्यं वक्तुं पदार्थानामुत्कर्षं वर्णयति । प्रजापतेरिति पञ्चभिः ।

अलौकिकं तदुत्कृष्टं सर्वोपकरणोत्तमम् ।
गृहं च सर्वशोभाढ्यमुद्यानातिमनोहरम् ॥
मनःसौख्यप्रदं स्वस्य तादृशे ममतां त्यजेत् ।
अविद्यमानसन्त्यागे लोकयोर्भ्रष्ट एव हि ॥
ऐहिकं सुगमं नोचेद्दूरे ह्यन्यस्य साधनम् ।
प्रथमं तदलौकिकं गार्हस्थ्यमित्याह ॥

प्रजापतेर्ब्रह्मतुल्यस्य नाम्नापि तुल्यस्य तपोयोगाभ्यां विजृम्भितं विवाहप्रभृतिविमानभोगादिकं तपोयोगाभ्यामेव जातं यद्यपि भगवता सम्पादितं तथापि त्यागे तत्त्वं हेतुर्न भवतीति तपोयोगाभ्यामेव विजृम्भितमित्युक्तं गार्हस्थ्यं गृहस्थाश्रमः सपरिकरः अनौपम्यमुत्तरलोकानां फलरूपत्वात्किन्नरादीनां च फलरूपत्वात् मर्यादात्वेन तथोत्कर्षाभावाच्च ब्रह्मादीनां गार्हस्थ्याभावाद्गार्हस्थ्यं कर्दमस्यानुपममेव वैमानिकानां किन्नरादीनां तत्सम्भवमाशङ्क्य परिहरति । प्रार्थ्यमिति । नियतभोगिनां मध्ये वैमानिकाः उत्तमाः ॥ १५ ॥

परिकराणामुत्कर्षमाह । पय इति । दुग्धफेनवत्कोमलाः उज्ज्वलाः उत्तुङ्गाः शय्याः दन्तनिर्मिताः रुक्मपरिच्छदाः शय्याः काष्ठांशाः सुवर्णेन चित्रिताः अन्तभागा येषां दान्तानामासनानि चकाराद्भाण्डादीन्यपि हैमानि सुस्पर्शानि कोमलानि नानाविधानि वस्त्राणि आस्तरणानि परिकराणि द्विविधानि भाण्डमयानि वस्त्रमयानि चेति द्वयमुक्तम् ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

आपीडे पुष्पमुकुटतुल्ये ॥ १३ ॥

अभीक्ष्णं त्रिषवणमवगाहः स्नानं कुटिलालकान् जटिलान् । आत्मानं देहं च चीरिणं चीरधारिणम् ॥ १४ ॥

प्रजापतेरित्यादीनां वदनं किञ्चिदनिर्वाच्यं शोकव्याकुलं चकारेति षष्ठेनान्वयः । प्रविष्टमात्मानं देवहूतिम् ॥ १५-२० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तस्मिन् स्वाश्रमे सरस्वत्याः आपीडे पुष्पमुकुटतुल्ये समाहिता सती स्वगार्हस्थ्यं हित्वापत्यविरहातुरा वदनं किञ्चिच्चकारेत्यष्टश्लोकानामन्वयः ॥ १३ ॥

अभीक्ष्णावगाहेन त्रिकालनित्यस्नानेन कपिशान् ॥ १४ ॥

तपोयोगाभ्यां विजृम्भितमतिशयितम् ॥ १५ ॥

गार्हस्थ्यमेव वर्णयति । पयःफेननिभेत्यादिना । यत्र गार्हस्थ्ये पयःफेननिभाः श्वेताः कोमलाः शय्याः ॥ १६ ॥

भाषा टीका ।

सो देवहूती जी भी पुत्र के कहे योग उपदेश से योगयुक्त होकर सरस्वती के किनारे उसी श्रेष्ठ आश्रम में सावधान होकर वास करती रहीं ॥ १३ ॥

निरन्तर उग्र तपस्या के करने से शरीर को वकला पहिराकर रखती रहीं निरन्तर तीर्थ में स्नान करने से जटा होकर केश टेढे होगये शरीर अति कृश हो गया ॥ १४ ॥

कर्दम प्रजापति के तप से योग से प्राप्त जो गृहस्थी का भोग ऐश्वर्य जोकि अन्य को दुर्लभ है और देवता जिसकी चाहना करते हैं ॥ १५ ॥

दूध के फेन सरी की नरम शय्या जोकि हाथी दांतों से बना पलंग आदि सुवर्ण के कामों से जडी हैं सुवर्ण के आसन सुन्दर सुखदायक बिछौना जिन में बिछे हैं ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

बहुभिरमरद्रुमैः रम्यम् ॥ १८ ॥

वनं प्रव्राजिते पत्यावपत्यविरहातुरा ।
ज्ञाततत्त्वाप्यभून्नष्टे वत्से गौरिव वत्सला ॥ २१ ॥
तमेव ध्यायती देवमपत्यं कपिलं हरिम् ।
बभूवाचिरतो वत्स ! निःस्पृहा तादृशे गृहे ॥ २२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यत्रोद्याने प्रविष्टमात्मानं देवहूतिम् ॥ १९ ॥

आखण्डल इन्द्रस्तस्य या योषितस्तासामपीप्सिततमं प्राप्तुमिष्टतमं तद्धित्वा तत्राभिमानं त्यक्त्वा ॥ २० ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

महान्त्यनर्घाणि मरकतानीन्द्रनीलान्यलङ्कारार्थे संयुक्तानि येषु तेषु स्वच्छस्फटिकमयकुड्येषु ललना एव प्रतिबिम्बिता रत्नानि तैः संयुता रत्नानि पद्मरागादीन्येव दीपास्तेषामर्चिषा भान्ति ॥१७॥

बहुभिरमरद्रुमैः पारिजातादिभिः कुसुमितैः रम्यं गृहोद्यानं हित्वेत्युत्तरत्रान्वयः गृहोद्यानं विशिनष्टि । कूजन्ति विहङ्गानां मिथुनानि यस्मिन् गायन्तो मधुपानमत्ता भ्रमरा यस्मिन् ॥ १८ ॥

यत्र यस्मिन् गृहोद्याने प्रविष्टमात्मानं देहं विबुधानुचराः किन्नरादयः जगुः उत्पलगन्धिन्यां वाप्यां कर्दमेनोपलालितमात्मानं च हित्वा आखण्डलस्येन्द्रस्य योषितामपीप्सिततममभीष्टतमं त्यक्त्वा तत्राहंममतामकृत्वापि पुत्रस्य विश्लेषणेनातुरा दुःखिता सती वदनं किञ्चित्सङ्कुचितं चकार ॥ १९ ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ललनारत्नैः संयुता रत्नदीपार्चिषः कुड्येषु न्यस्तस्त्रीरत्नहस्तन्यस्तरत्नदीपार्चिषः स्वच्छस्फटिकादिमणिमयकुड्येषु भान्तीत्यर्थः ॥ १७ ॥

कुसुमितैर्बहुभिरमरद्रुमैः रम्यं गृहोद्यानं च भातीत्यर्थः ॥१८॥

यत्र गृहोद्याने उत्पलगन्धिन्यां वाप्यां प्रविष्टं कर्दमेनोपलालितमात्मानं विबुधानुचरा जगुरित्यन्वयः ॥ १९ ॥

पुनरपि कीदृशं स्वगार्हस्थ्यमाखण्डलयोषितामिन्द्रस्त्रीणामीप्सिततममत्यर्थं कमनीयम् ॥ २० ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

स्वच्छानि निर्मलानि स्फटिकमयानि कुड्यानि येषु गृहेषु कुड्यान्येव वा महामरकतनिर्मितेषु च तत्र योजिता रत्नमयाः प्रदीपा आभान्ति स्त्रीरहिता गृहा अपि न शोभन्त इति ललनाः स्त्रियोऽपि रत्नाभरणसंयुतास्तेषु गृहेष्वाभान्ति ॥ १७ ॥

गृहस्योद्यानं पुष्पवाटिका देवद्रुमैः कल्पवृक्षैः रम्यं कूजतां विहङ्गानां मिथुनानि यत्र गायन्तो मत्ता मधुव्रता यत्र उद्यानस्य सर्वविषयवत्त्वप्रतिपादनाय उद्दीपनविभावत्वाय च पारावतादीनां कूजनं भ्रमराणां च गानमुक्तम् ॥ १८ ॥

यत्र विमाने उद्याने गृहे वा प्रविष्टमात्मानं देवहूतिं विबुधानुचरा गन्धर्वादयो जगुः वाप्यां च प्रविष्टमुत्पलगन्धयुक्तायां कर्दमेन चोपलालितं कर्दमसहितं चात्मानं जगुः ॥ १९ ॥

एवं गार्हस्थ्यं वर्णयित्वा तत्त्यागो भगवद्ध्यानार्थ एव युक्त इति वक्तुं केवलशास्त्रे भगवत्स्मरणं दृढं न भवतीति निरन्तरभगवत्स्मरणार्थं भगवदिच्छया भगवत्त्वेन पुत्रत्वेन च पुत्रे स्नेहस्थित इत्याह । हित्वेति । आखण्डलयोषितामिन्द्रस्त्रीणामीप्सिततमं तद्गृहं हित्वा पुत्रे निर्गते पुत्रविश्लेषेण किञ्चित्कातरं वदनं चकार शास्त्रपुत्रत्वयोः संरक्षार्थं किञ्चिदिति अव्ययं क्रियाविशेषणं वा ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ललनारत्नैः संयुताः ॥ १७ ॥ १८ ॥

यत्रोद्याने ॥ १९ ॥

आखण्डलयोषितामिन्द्रभार्याणामीप्सिततमं प्रार्थ्यतमं हित्वोपेक्ष्य वदनं किञ्चिच्चकार पुत्रविरहव्यथाव्याप्तमकरोत् ॥ २० ॥

---

भाषा टीका ।

अतिनिर्मलस्फटिकमणिके दीवालों मे मरकतमणिके दिवालों मे रत्नों के दीपकप्रकाशितहैं रत्नों के अलंकारवाली अनेकस्त्री उनमे वर्तमान हैं ॥ १७ ॥

घरोंके वगीचों मे फूले हुए बहुत देवतों के वृक्षों से शोभा हो रही है अनेक पक्षियोंके जोडाशब्दकररहे हैं मतवाले भौंरा गान कररहे हैं ॥ १८ ॥

जिसस्थानमे देवहूती के जाते मात्र कर्दमजीकी अतिप्रिया होने से कुमोदिनी के फूलों के गन्धवावाली वावडियोंमे देवताओंकी स्त्री देवहूजी को गान करतीथीं ॥ १९ ॥

इन्द्रकी स्त्री भी जिसको चाहना करतीथी ऐसे स्थान को भी देवहूतीजीने छोडदिया परन्तु अपने पुत्र कपिलजी के विरहसे दुःखितहोनेसे कुछ मुख को विवर्ण करलिया ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सुहृद्वियोगस्य दुःसहतामाह । वनमिति । नष्टे वत्से वत्सला गौरिवाभूत् ॥ २१ ॥

ध्यायन्ती भगवद्रूपं यदाह ध्यानगोचरम् ।
सुतः प्रसन्नवदनं समस्तव्यस्तचिन्तया ॥ २३ ॥
भक्तिप्रवाहयोगेन वैराग्येण बलीयसा ।
युक्तानुष्ठानजातेन ज्ञानेन ब्रह्महेतुना ॥ २४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

विरहकृतध्यानफलमाह । निःस्पृहा निर्वामना वत्स विदुर ! ॥२२॥

ततः स्वसुतः कपिलो यदाह । तद्भगवतो रूपं ध्यायन्ती तदात्मानं च विश्वतोमुखं सर्वगतं ध्यायन्ती ब्रह्मण्यवस्थितमतिर्बभूवेति पूर्वस्यैवानुषङ्गः । केन ध्यायती विशुद्धेनात्मना मनसा ॥ २३ ॥

विशुद्धौ कारणान्याह । भक्तिप्रवाहरूपेण योगेन वैराग्येण च युक्तानुष्ठानेन जातं यज्ज्ञानं तेन च युक्तानुष्ठानं च गीतासूक्तम्

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ इति

ब्रह्महेतुना ब्रह्मत्वापादकेन ॥ २४ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपन्याख्या दीपिकाटिप्पणी ।

वात्सल्याख्याया रतेः प्राबल्यमाह वनमिति । वत्सेति देवहूतिशोकेनार्त्या सम्बोधनम् ॥ २१ ॥

तमेवेति सार्द्धचतुष्कम् । ब्रह्मणि चिन्मात्रे विशेष्याकारे ब्रह्मज्ञानं चात्र "ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति" इति न्यायेन क्रमसोपानवद्भगवज्ज्ञानपोषकमेव ज्ञेयं परिच्छेद उपाधिना परिच्छिन्नत्वं भगवति षडैश्वर्यपूर्णे निवृत्तेति सार्द्धकम् जीवभावो लिङ्गशरीराध्यासः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥२७॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सुहृद्भ्यां पतिपुत्राभ्यां वियोगस्य दुःसहतामाह । वनमिति । पत्यौ कर्दमे वनं प्रति प्रव्रजिते संन्यस्य गते सति नितरां पुत्रविश्लेषेण खिन्ना सती ज्ञातं तत्त्वं चिदचिदीश्वरयाथात्म्यं यया सापि वत्से नष्टे सति वत्सला गौरिवाभूदित्यर्थः ॥ २१ ॥

तमेवापत्यं कपिलाख्यं हरिं देवं हे वत्स ! विदुर ! अचिरतः बहुकालपर्यन्तं ध्यायन्ती तादृशे उक्तविधे गृहे निःस्पृहा विगतस्पृहाभूदित्यथ॥: २२ ॥

तत्सुतः कपिलो भगवान् ध्यानयोग्यं यद्भगवतो रूपं प्रसन्नवदनाम्भोजम् इत्यादिना आह । तदेव प्रसन्नवदनादियुक्तं भगवद्रूपं कार्त्स्न्येनावयवशश्च चिन्तया ॥ २३ ॥

भक्तेर्यः प्रवाहः प्रवृत्तिः स एव योगस्तेन बलीयसा वैराग्येण तथायुक्तानुष्ठानं स्वोचितपूजादिरूपकर्मानुष्ठानं तेन जातेन ज्ञानेनात्मयाथात्म्यज्ञानेन ब्रह्महेतुना ब्रह्मप्राप्तिहेतुना ज्ञानयोगकर्मयोगवैराग्यादिभिरनुगृहीतेन मुक्त्युपायभूतेन भक्तियोगेनेत्यर्थः ॥ २४ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पतिविरहादपि पुत्रविरहो दुःसह इति भावेनोक्तमेव विवृणोति । वनमिति ॥ २१ ॥

नन्वेवं तर्हि पुत्रविरहोद्भूतदुःखार्तमना भगवदुपास्तिमप्यभाङ्क्षीत्किं तत्राह । तमेवेति । अनेन तस्या उपास्तिप्रकारो दर्शितः इति एवकारेण सूचितां विजातीयव्यावृत्तिं स्पष्टयति । निःस्पृहेति ॥ २२ ॥

ननु सुतोक्तमन्यदन्यदुपास्ते पुत्रवियोगभ्रान्तबुद्धित्वादित्याशङ्क्याह । ध्यायन्तीति । समस्तचिन्ता सर्वावयवचिन्ता व्यस्तचिन्तैकैकावयवचिन्ता तया ॥ २३ ॥

तस्या उपास्तेः फलमाह । भक्तिप्रवाहेति । सा देवहूतिर्विष्णुः सर्वोत्तम इति ज्ञानसहितनिरतिशयप्रेमलक्षणभक्तिनदीप्रवाहयोगेन बलीयसा स्वर्गादेः पुरुषार्थवादिशास्त्रार्थश्रुतिमुग्धबुद्धिराहित्येन बलिष्ठेन वैराग्येण युक्तं सदनुष्ठानमखण्डध्यानं तस्माज्जातेन ब्रह्महेतुना परब्रह्मप्रसादजननकारणेन ब्रह्महेतिनेति पाठे ब्रह्मवशीकरणायुधेनेत्यर्थः ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भगवति वात्सल्याख्यायाः प्रीतेः सर्वोपमर्दित्वमाह । वनमिति । ज्ञाततत्त्वापि शुद्धान्तःकरणत्वात् श्रवणसमय एव तत्तत्साधनसाध्याविर्भाववत्यपि ॥ २१ ॥

तमेवेति सार्द्धचतुष्कम् । तत्र पूर्ववर्णितगृहत्यागोऽपि तथैव जात इत्याह । तमिति । हरिं कपिलं ध्यायन्ती कपिलरूपेणैवाविर्भूतं स्मरन्ती तच्चापत्यं ध्यायन्ती अपत्यत्वेनैव स्मरन्तीत्यर्थः॥२२॥

कथं वा कीदृशत्वेन वा ज्ञाततत्त्वाप्यभूत्तत्राह । ध्यायन्तीति सार्द्धैस्त्रिभिः । ज्ञानकथनसमये ब्रह्मण्यवस्थितमतिर्बभूव । भक्तिकथनसमये भगवत्यवस्थितमतिर्बभूव । किन्तु ब्रह्मज्ञानमपि तत्र भगवज्ज्ञानोपोद्बलकमेव जातमिति ज्ञेयम् "ब्रह्मभूतः प्रसन्नात्मा" इत्यादिगीताद्यनुसारात्तथैव भगवन्तं विशिनष्टि । आत्मसंश्रये "ब्रह्मणो हि प्रतिष्ठाहम्" इति श्रीगीतानुसारात् "शुभाश्रयः सचित्तस्य सर्वगस्य तथात्मनः" इति श्रीविष्णुपुराणानुसाराच्च ब्रह्मण्यवस्थाने हेतुरिति अस्य विशेषणं युक्तानुष्ठानजातेन ब्रह्महेतुजातेन ब्रह्महेतुनेति च ब्रह्माविर्भावकारणेनेत्यर्थः । पूर्वं साधनवैराग्येणेति विशुद्धेनेत्यादि च आत्मानं शुद्धजीवं विशेषतः शुद्धेन अविद्यास्पर्शसम्भावनामात्रहीनेन आत्मना परमात्मना तत्तादात्म्येन विश्वतोमुखं सर्वगतं ध्यायन्तीति जीवात्मनः शुद्धत्वप्रकारमाह । स्वानुभूत्येति । भगवत्यवस्थाने हेतुर्भक्तिप्रवाहयोगेनेति । मद्गुणश्रुतिमात्रेणेत्यादिरीत्या प्रेमप्रवर्तितसन्तत-

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मनोगत्येत्यर्थः । तत्पूर्वसाधनं समस्तव्यस्तचिन्तया अन्वयव्यतिरेकाविचारपूर्वकं यद्भगवद्रूपं प्रसन्नवदनः सुतो ध्यानगोचरमाह । ध्यानविषयत्वेनोपदिष्टत्वात् तत् ध्यायन्तीति । यदेव वासनान्तरानुसारेण ज्ञानफलतयोपदिष्टं तदेव हि स्ववासनानुसारेण प्रमफलतयानुष्ठितमिति भावः । तथाप्यानुषङ्गिकतया ज्ञानहेतुत्वमपि तस्यैव ज्ञेयम् "श्रेयःसृतिं भक्तिमुदस्य"इत्यादेः । तदानीन्तनीं तदवस्थामाह । सार्द्धैस्त्रिभिः । तत्र निवृत्तेति सार्द्धकम् । जीवापत्तिर्लिङ्गशरीराध्यासः ॥ २३—२७ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

न केवलं वदन एव विकारः किन्तु हृदयेऽपीत्याह । वनमिति । पत्यौ प्रव्रजिते सति वनं च प्रविष्टे सति परिव्राजस्तु परित्यागो लोकस्येति लोकस्थितो न परित्यागी ये तु भिक्षादिनियमा उक्ताः त आश्रमस्थानां तत्र परित्यागः पूर्वसिद्धपदार्थानामेवं स्वतन्त्रपरित्यागे वनप्रवेश एव तदाह । वनं प्रव्रजित इति । अपत्यविरहेण चातुरा भर्तुर्विरहो नित्य उक्तः आगमनात्तत्सङ्गे पुत्रविरह उक्त इति सोऽपि नित्यः अत आतुरा । ननु शास्त्रतो ज्ञानेन देहाध्यासे निवृत्ते विरहद्वयं न बाधकमिति चेत्तत्राह । ज्ञाततत्त्वेति । ज्ञातं तत्त्वमात्मनो यया एतादृश्यपि पुत्रे दूरं गते वत्से नष्टे गौरिव व्याकुला जाता यतो वत्सला पुत्रस्नेहाधिक्ययुक्ता ॥ २१ ॥

अयं स्नेहस्तस्य उपकाराय जात इत्याह । तमेवेति । तमेव पुत्रं भगवन्तं योगेन ध्यायन्ती अचिरतः शीघ्रमेव तादृशे गृहे निःस्पृहा जाता यतः स हरिः स्पृहा च दुःखात्मिका वत्सेति विदुरसम्बोधनं स्वयाप्येतत्कर्त्तव्यमिति बोधनार्थं परित्यागलक्षणं वैराग्यं प्रकृतेनास्तीति स्पृहाभाव एवोक्तः ॥ २२ ॥

न केवलं भगवद्ध्यानेन गृहानासक्तिः सिद्धा किन्तु योगोऽपि सिद्ध इत्याह । ध्यायन्तीति । सुतो यदाह भगवद्रूपं सर्वेषामेव योगिनां ध्यानगोचरं सुत एव भगवानिति सुतं ध्यायन्ती सुत इति वा पाठः प्रसन्नवदनमिति तस्य ध्याने भगवान् प्रसन्न एवाभिव्यक्त इति कार्यसिद्धिसूचनार्थं प्रसाद उक्तः समस्तव्यस्तप्रकारः ध्याने उक्त इति तथैवाह । समस्तव्यस्तचिन्तयेति । समस्तचिन्ता "प्रसन्नवदनाम्भोजमिति व्यस्तचिन्ता साञ्चिन्तयेद्भगवतः" इति ॥ २३ ॥

तादृशध्यानेन यदासीत्तदाह । भक्तिप्रवाहयोगेनेति चतुर्भिः ।

> चित्तशुद्धेः साधनानि कार्यं शुद्धस्य चेतसः ।
> ज्ञानस्याप्युत्तमावस्था दोषाभावश्च सर्वतः ॥

भगवच्चिन्तनेन क्रमेण परमामवस्थां प्राप्तवतीति वक्तुं चिन्तनेन जातं क्रममाह । आदौ भक्तिप्रवाहो जातः स चोपायभूत इति योगः ध्यानेन प्रथमं भक्तियोगो जात इत्यर्थः भक्तेः प्रवाहनित्यत्वैवेति प्रवाहपदं ततो दृढं वैराग्यं ततो भगवद्धर्मेषु परमश्रद्धया परलोके युक्तं यदनुष्ठानजातं निवृत्तिधर्मरूपं तदनन्तरं ब्रह्मप्रापकं ज्ञानम् एतावता साधनत्रयसहितेन ज्ञानेन चित्तमत्यन्तं शुद्धं भवति ॥ २४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भगवति वात्सल्याख्यायाः प्रीतेः सर्वोपमर्द्दित्वमाह । वनमिति । पत्यौ कर्द्दमे वनं गतेऽपि यदपत्यं वीक्षमाणा जीवन्त्यासीत् तस्यापि विरहेणातुरेति हन्त भोः के कुत्र वर्तन्ते पश्यन्तु मदपत्यं शीघ्रमेव परावर्त्तयन्तां भवन्तो नो चेदहं न जीविष्यामीति विलपन्ती गौरिवेति सर्व्वमेव तत्त्वज्ञानं सहसैव विस्मृतवती वेति भावः ॥ २१ ॥

विरहोत्थध्यानफलमाह । तमेवेति ॥ २२ ॥

ततश्च हन्त हन्त विरहातुराया मम मनो भगवति पुत्रभावं न जहाति तदहं स्वगृहमेकान्ते उपविश्य पुत्रभावं विहाय मनः प्रणिधाय तदुक्तं ध्यानमेवाश्रयिष्यामीति सा दध्याविल्याह । ध्यायन्तीति । भगवद्रूपं ध्यायन्ती ब्रह्मणि भगवत्यवस्थितमतिरासीदित्यन्वयः । भक्तेः प्रवाहरूपेण योगेन युक्तं समुचितं यदनुष्ठानजातं तेन । यद्वा । गीतासूक्तम्

> युक्ताहारविहारस्य युक्तचेष्टस्य कर्म्मसु ।
> युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥

इति युक्तानुष्ठानं तस्माज्जातेन वैराग्येण तथा ज्ञानेन ब्रह्महेतुना तथा ब्रह्मानुभवस्य हेतुना शुद्धभक्त्युत्थेनेत्यर्थः न तु ब्रह्मरूपेण ऐक्यपदार्थज्ञानेनेत्यर्थः । अत एव निर्गुणत्वाद्विशुद्धेन तदात्मानं तस्य भगवतः आत्मानं स्वरूपं विश्वतो दशदिक्ष्वेव मुखं यस्य तथाभूतं स्फूर्तिप्राप्तं स्वानुभूत्या स्वानुभवेन पश्यन्तीति शेषः । तिरोभूता मायाया गुणविशेषा येन तत्तया स्यात्तथा पश्यन्ती ब्रह्मणि भगवति आत्मनां जीवानां संश्रये परमात्मनीति क्रमेण ज्ञानिनां भक्तानां योगिनाञ्च प्राप्ये वस्तुनि परिपूर्णेऽङ्गिनि स्वरूपे अवस्थिता मतिर्यस्याः सा । तेन भक्तिप्रवाहयोगेनेत्यनेन प्रवाहपदव्यञ्जिता मद्गुणश्रुतिमात्रेणेत्युक्तलक्षणा भावभक्तिस्तस्याः अभूदेव । तथा ज्ञानिनां तृतीयभूमिकाविनाभूतं यत् त्वंपदार्थतत्पदार्थयोर्ज्ञानं तद्भक्तिमते उपासकोपास्ययोर्भक्तभगवतोर्ज्ञानमुपयुज्यते एव यदुक्तम् "ज्ञानवैराग्ययोर्भक्तिप्रवेशायोपयोगिता" इति तथैवाष्टाङ्गयोगिनां यत् सप्तमं ध्यानं तत्तवाङ्गभक्तेस्तृतीयमङ्गं परमोपयुक्तमेवेति देवहूत्या ज्ञानिनां तज्ज्ञानं योगिनां ध्यानञ्च सारङ्ग इव सारभुगिति न्यायेन गृहीत्वा स्वानुष्ठेयायां भक्तावन्तर्भावितमत एवोक्तं ज्ञानेन ब्रह्महेतुनेति यदाह । ध्यानगोचरं सुत इति ततश्च "जरयत्याशु या कोषम्" इत्युक्तलक्षणां भक्तेरानुषङ्गिकञ्च फलं तस्यामुद्भूतमित्याह । निवृत्ता जीवस्य जीवात्मनः आपत्तिरापद्रूपा अविद्या यस्यास्तस्या भावस्तत्त्वं तस्मात् क्षीणक्लेशा अत एवाप्तनिर्वृतिः । यद्वा । भगन्मातृत्वात् स्वरूपत एव सा अविद्यारहिता तदपि तथोक्तिरयमात्मा अपहतपाप्मेतिवत् । भक्तानां मते ध्यानानन्दमोह एव समाधिरुच्यते इति तस्या नित्यारूढसमाधित्वात् परावृत्तः भ्रान्तः गुणेषु विषयेषु भ्रमो भ्रमणं पर्य्यटनं यस्याः सा आत्मानं देहम् ॥ २३ ॥ २४ ॥ ॥ २५ ॥ २६ ॥ २७ ॥

---

विशुद्धेन तदात्मानमात्मना विश्वतोमुखम्।
स्वानुभूत्या* तिरोभूतमायागुणविशेषणम् ॥ २५ ॥
ब्रह्मण्यवस्थितमतिर्भगवत्यात्मसंश्रये।
निवृत्तजीवापत्तित्वात् क्षीणक्लेशाप्तनिर्वृतिः ॥ २६ ॥
नित्यारूढसमाधित्वात् परावृत्तगुणभ्रमा।
न सस्मार तदात्मानं स्वप्ने दृष्टमिवोत्थितः ॥ २७ ॥
तद्देहः परतः पोषोऽप्यकृशश्चाध्यसम्भवात्।
बभौ मलैरवच्छन्नः सधूम इव पावकः ॥ २८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

नष्टे वत्से वत्सला गौरिवाभूत् ॥ २१ ॥

वत्स ! हे विदुर ! ॥ २२ ॥

भगवतो विग्रहं सर्वतोमुखं स्वस्वरूपं च तिरोभूतमायागुणविशेषणं जीवस्वरूपं च ध्यायन्ती आत्मानं विसस्मारेत्याह। ध्यायन्तीति पञ्चभिः। सुतः कपिलः यदाह। तद्भगवतो रूपं विग्रहं ध्यायन्ती ॥ २३ ॥

भक्त्यादिना युक्तं यदनुष्ठानजातं तेन च ब्रह्महेतुना ब्रह्मप्रापकेण ॥ २४ ॥

भाषा टीका।

पति के वनमे चले जाने से पुत्रके भी विरह होनेसे देवहूतीजी आतुर होगईं पुत्र पर वडा स्नेह होने से वछराके हिरानेसे जैसे गऊ दुःखी होवै तैसी होगईं ॥ २१ ॥
उन्ही हरि पुत्र कपिल देवजी को ध्यान करती रही तिस से हे वत्स ! विदुर ! पूर्वोक्तगृहादिकों मे मोह को छोड दिया ॥ २२ ॥

ध्यान के विषय जिस भगवान् के रूपको पुत्र कपिलजी कहगयेथे प्रसन्नमुखारविन्दवाले उसी रूप को एक एक अङ्गकी और संपूर्ण शरीरकी चिन्तासे ध्यान करती रहीं ॥२३॥

निरन्तर भक्तिभावसे अतिदृढ वैराग्य से यमादिक अनुष्ठानों से ब्रह्मप्राप्ति के हेतु ज्ञानसे निरन्तर भगवान् मे हीं स्थित होगईं ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

विश्वतोमुखत्वे हेतुः स्वानुभूत्या स्वरूपप्रकाशेन तिरोभूतं मायागुणैर्विशेषणं परिच्छेदो यस्य ॥ २५ ॥

कथम्भूते ब्रह्मणि आत्मनां जीवानां संश्रये भगवति तस्याः जीवन्मुक्तिमाह। सार्धैस्त्रिभिः। त[ला]च निवृत्ता जीवापत्तिर्जीवभावो यस्यास्तस्या भावस्तत्त्वं तस्माद्विगतक्लेशा प्राप्तनिर्वृतिश्च सत्यात्मानं देहं न सस्मारेत्युत्तरेणान्वयः ॥ २६ ॥

ननु तथापि गुणानां विद्यमानत्वात्कथमस्मरणं तत्राह। नित्यारूढो लब्धप्रतिष्ठः समाधिर्यस्यास्तस्या भावस्तत्त्वं तस्मात् परावृत्तः शान्तो गुणनिमित्तो भ्रमो यस्याः सा ॥ २७ ॥

परतः पराभिरेव कर्दमसृष्टविद्याधरीभिः पोषः पोषणं यस्य आधिर्मनोग्लानिस्तदसम्भवादकृशः मलैरवच्छन्नोऽपि बभौ ॥ २८ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपन्याख्या दीपिकाटिप्पणी।

मनोग्लान्यसम्भवे भगवदावेशानन्दो हेतुर्ज्ञेयः ॥ २८ ॥ २९ ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

विशुद्धेनात्मना मनसा आत्मानं विश्वतोमुखं सर्वज्ञं स्वानुभूत्या स्वप्रकाशेन विरहिता मायागुणाः सत्त्वादयः तेषां विशेषणानि विशेषाः शोकमोहादीनि यस्य तमशनायाद्यूर्मिषट्करहितमात्मानं परमपुरुषं ध्यायन्ती ॥ २५ ॥

आत्मनां जीवानां संश्रये आश्रये भगवति ब्रह्मण्यवस्थिता मतिर्यस्याः सा निवृत्तजीवापत्तिः जीवस्यापत्तिः क्लेशाद्यापत्तिर्यतः सा प्रकृतिः। यद्वा। आपत्तिरापत्क्लेशादिरूपा यतः सा प्रकृतिः। निवृत्ता निवृत्तप्राया जीवापत्तिर्यस्याः सा तस्याः भावस्तत्त्वं तस्मान्निवृत्तप्रायप्रकृतिसम्बन्धत्वादित्यर्थः वीतक्लेशा विगतशीतोष्णादिक्लेशा आप्ता परमात्मानुभवरूपा निर्वृतिरानन्दो यया सा ॥ २६ ॥

नित्यमारूढः समाधिर्यया सा तस्याः भावस्तत्त्वं तस्मान्नित्यं प्रकृतिविलक्षणप्रत्यगात्मशरीरकपरमात्मनि समाहितचित्तत्वात् परावृत्तः निवृत्तः तमआदिप्रकृतिगुणकार्यदेहात्माभिमानादिविपरीतभ्रमो यस्याः सा सती आत्मानं शरीरं न सस्मार स्वप्नादुत्थितः पुरुषः स्वप्ने दृष्टं वस्तुजातमिव यथा स्वप्नादुत्थितः पुरुषः स्वाप्नं वस्त्वनित्यमिति निश्चित्य स्वाप्नवस्त्वायत्तसुखदुःखादिभिरनाकुल एवं देहानुबन्धिसर्वं कर्मायत्तमस्थिरमिति मत्वा तत्पोषणापोषणादिनिमित्तसुखदुःखैरनभिभूता सती देहः पुष्टः कर्शित इति वा न सस्मारेत्यर्थः ॥ २७ ॥

* विरहितमायागुणविशेषणम् इति श्रीवीरराघवाचार्यपाठः।

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका

अत एव तस्याः देहः परतः परैः पोष्योऽपि परायत्तपोषणोऽप्यकृशः कुत आध्यसम्भवात्पोषणाभावप्रयुक्तमनःपीडाया अभावान्मलैरवच्छन्नः अभ्यङ्गोद्वर्त्तनाभावान्मलैर्युक्तोऽपि सधूमः पावक इव बभौ ॥ २८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अत एव विशुद्धेनैकत्वसंशयलक्षणदोषरहितेनाविर्भूतेन ज्ञानेनात्मना स्वस्वरूपमनसात्मानं स्वबिम्बभूतं विश्वतोमुखं सर्वज्ञं च स्वत एव स्वानुभूत्या तिरोभूतं दूरतो निरस्तं मायागुणैः सत्त्वादिभिः देहबन्धलक्षणं यस्य स तथा तं हरिं ददर्शेति शेषः ॥ २५ ॥

सापरोक्षज्ञानोदयानन्तरमीदृशीमवस्थां प्रापेत्याह । ब्रह्मणीति । सा यदा परमात्मानमद्राक्षीत्तदात्मानं स्वशरीरं न सस्मारेत्यन्वयः । कीदृशी आत्मसंश्रये स्वाधारे भगवति षड्गुणपूर्णे ब्रह्मणि कालतो देशतो गुणतो व्याप्ते हरावबस्थितमतिरेकाग्रमना निवृत्तजीवभावत्वान्मुक्तलिङ्गशरीराभिमानत्वाद्धीतक्लेशा निरस्तदुःखा प्राप्तनिर्वृतिराप्तपरमानन्दा ॥ २६ ॥

नित्यारूढसमाधित्वाखिलं हरावेव सन्निविष्टमनस्कत्वात्परावृत्तगुणभ्रमातपरावृत्तः पराभूतः गुणेषु शब्दादिविषयेषु दुःखसाधनेषु सुखसाधनत्वबुद्धिभ्रमो यस्याः सा कथमिव स्वप्नदृष्टमिवोत्थितः स्वप्नादुत्थितः स्वप्ने दृष्टं यथा न स्मरति तथेति । नन्विदं निदर्शनं निवृत्तजीवभावत्वे कथमुपपद्यते स्वप्नदृशो जीवत्वानिवृत्तेरितीयमाशङ्का ।

> जीवोपाधिप्रवृत्तय आयुक्तेः सर्वदेहिनाम् ।
> नियमात्सन्त्यभावस्तु निष्फलत्वादुदीर्यते ॥

इत्यनेन परिहरणीया एतत्स्मृत्यर्थद्योतनाय स्वप्नोत्थितनिदर्शनमिति तात्पर्यार्थो ज्ञातव्यः ॥ २७ ॥

इदमपरोक्षज्ञानोदयानन्तरं लक्षणमित्याह । तद्देह इति । यस्य दोषोऽपगतः स तस्या देहो बभाविरयन्वयः आध्यसम्भवाच्छरीररक्षादर्यहेतुमनोदुःखाभावादकृशत्वमकृत इति पाठे विहितस्नानादिशून्य इत्यर्थः "पुनेऽप्रपाते पर्याप्ते कृतं क्लीबे हितेऽर्थवत्" इति यादवः । यद्वा । अपर्याप्तोऽसमाप्तप्रारब्धकर्मा ॥ २८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

न केवलमेतावत् किन्तु तद्देहश्चाकृशोऽभूत् कीदृशोऽपि तत्राह । परत इति । अकृशत्वे हेतुः । आध्यसम्भवादिति । भगवदावेशानन्देनेति भावः अत एव बभौ कीदृशोऽपि तत्राह । मलैरिति । अपीति योज्यम् । तत्र दृष्टान्तः । सधूम इति ॥ २८ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

तदा शुद्धचित्तकार्यमाह । विशुद्धेनेति । तदेति तदैव शुद्धिः न ज्ञानात्पूर्वं चित्तं शुद्धं भवतीत्युक्तमतो विशुद्धेनात्मना आत्मानं ध्यायन्ती जागात पूर्वमेव सम्बन्धः । संसारावस्थातः तदानीन्तनमात्मानं विशिष्टमाह । विश्वतोमुखमिति । पूर्वमात्मा हृदयाभिमुखः शरीरप्रवणः विशुद्धे चित्ते सर्वतोमुखमात्मानं दृष्टवती सर्वत्र विद्यमानः सर्वतोमुखः पूर्वमविद्यावच्छिन्नो देहाभिमानी साम्प्रतं च तद्रहितमित्याह । स्वानुभूत्यैव तिरोभूता माया प्रकृतिः तद्गुणाः सत्त्वादयः तद्विशेषास्तत्कार्याणि परिच्छेदादयो यस्य ॥ २५ ॥

आत्मज्ञाने प्रादुर्भूते मायागुणकार्याणि जीयन्त इति अविद्यातत्कार्यविलये ब्रह्मण्येव स्थितो जात इत्याह । ब्रह्मण्यवस्थितमतिरिति । तदेव ब्रह्म पूर्वं ध्यातो भगवानिति ततो ज्ञातवती ततोऽपि स भगवान्ध्यानं नापेक्षते किन्तु आत्मन्येव स्वस्मिन्नेव सम्यगाश्रयो यस्य तादृशं ज्ञातवती एवं स्वस्मिन्भगवत्स्फुरणे जीवभावो निवृत्त इत्याह । निवृत्तेति । आधाराधेयभावोऽपि निवृत्तः स्वस्य परिच्छेदेऽपि तिरोहितानन्दत्वं जीवभावः प्रकटानन्दः स्वयमेव भगवान् जात इत्यर्थः एवं सत्यविद्यादयः सर्वे क्लेशाः क्षीणा भवन्ति क्लेशेषु च निवृत्तेषु परमा निर्वृतिः प्राप्यते प्राप्यं रूपमधिकारातीतमिति ज्ञापनार्थं प्राप्तेऽपि भगवद्रूपे पुनर्निर्वृतिरुक्ता । ब्रह्मभावेऽपि वा आधाराधेयभावः स्थित एव मध्यावस्था वा एषा ॥ २६ ॥

निर्वृतौ जातायामिन्द्रियैः पुनरानयनापेक्षाभावान्नित्यारूढसमाधिर्जाता नित्यमारूढः समाधिर्यया सा देवहूतिर्नित्यारूढसमाधिः तस्या भावकथनं तत्स्थैर्यार्थमेवं समाधिदार्ढ्यं परावृत्ताः गुणैः कृता भ्रमा यस्याः आनन्दतिरोभावस्तमसः परिच्छेदो रजसः भेदः सत्त्वस्येति त्रयोऽपि निवृत्ताः । एवं सत्यध्यासाश्रयभूतस्य देहस्यापि स्फुरणं सर्वदोषहेतुः न जातमित्याह । न सस्मारेति । स्वप्नदृष्टं देहं यथा उत्थितः अहमिति न मन्यते तदपेक्षयापि इमं देहमात्मानं न सस्मार स्मृतवत्यपि न ॥ २७ ॥

ननु देहास्मरणे कथं देहस्थितिश्चेदिति शङ्कां परिहरंस्तस्य देहस्य अन्तर्ज्ञानप्रकाशेन प्रकाशमानत्वमाह । तद्देह इति । परतः योगनिर्मितस्त्रीभिः पोषितोऽप्यकृशः बहिर्वस्त्रादिनैव पोषो न तु भोजनकृतः तथापि न कृशः तत्र हेतुः । आध्यसम्भवादिति । आधिर्मनःपीडा मृत्युः पूर्वमेव जित इति देहवृद्धिश्चानपेक्षिता इति केवलं मनःपीडयैव देहह्रासो भवति तदभावादकृशः चकारात्कान्तिनाशाभावश्च । अन्तःस्थितज्ञानेन बहिःस्थितमलेन च मलैरवच्छन्नो बभौ उभयमेकत्र साधयितुं दृष्टान्तः । सधूम इव पावक इति ।

> अन्तः प्रज्वलितो वह्निर्बहिर्निःसृतधूमकः ।
> तादृशो ज्ञानसम्पन्नस्तपसा मलिनो बभौ ॥ २८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तदानीन्तनीं तदवस्थामाह । तस्या देहः परतः पराभिरेव कर्दमसृष्टविद्याधरीभिः पोषः पोषणं यस्य सः आधिर्मानसी व्यथा तदसम्भवाद्भगवदावेशानन्दादकृशश्च "निर्वृतिरतिस्थूलङ्करणी" इति वैद्यकोक्तेः ॥ २८ ॥

---

स्वाङ्गं तपोयोगमयं मुक्तकेशं गताम्बरम् ।
दैवगुप्तं न बुबुधे वासुदेवप्रविष्टधीः ॥ २९ ॥
एवं सा कपिलोक्तेन*मार्गेणाचिरतः परम् ।
आत्मानं ब्रह्म निर्वाणं भगवन्तमवाप ह ॥ ३० ॥
तद्वीरासीत् पुण्यतमं क्षेत्रं त्रैलोक्यविश्रुतम् ।
नाम्ना सिद्धपदं यत्र सा संसिद्धिमुपेयुषी ॥ ३१ ॥
तस्यास्तद्योगविधुतमार्त्यं मर्त्यमभूत् सरित् ।
स्रोतसां प्रवरा सौम्य ! सिद्धिदा सिद्धसेविता ॥ ३२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विश्वतोमुखं सर्वगतं सर्वात्मानं ध्यायन्ती स्वानुभूत्या देहेन्द्रियमनोबुद्धिप्राणादिविलक्षणाणुपरिमाणज्ञानस्वरूपबन्धमोक्षार्हस्वस्वरूपानुभवेन तिरोभूतं मायागुणविशेषणं देहात्माहङ्कारादिकं यस्मात्तं स्वात्मानं च ध्यायन्ती ॥ २५ ॥

आत्मनो जीवस्य संश्रये आश्रये अंशिनि आपत्तयः क्लेशमोहाद्याः निवृत्ता जीवापत्तयो यस्याः सकाशात्सा तथा तस्याः भावस्तत्त्वं तस्मात् ॥ २६ ॥

नित्ये विश्वकारणे भगवति रूढः सुस्थिरः समाधिर्यस्यास्तस्या भावस्तत्त्वं तस्मात् परावृत्ता गुणकृता भ्रमाः परमेश्वरे देवान्तरसमत्वादिबुद्धिवृत्तयः जीवे अज्ञात्मकत्वादिबुद्धिवृत्तयः देहादावहंममादिबुद्धिवृत्तयो यस्याः सा आत्मानं देहम् ॥ २७ ॥

परतः पराभिः पोषः पोषणं यस्य सः ॥ २८ ॥ २९ ॥

---

भाषा टीका ।

अपने अनुभव मायाके गुणोंके विशेषोंसे तिरोधान करने वाले सर्वत्र व्याप्त परमात्मा के स्वरूप को देवहूतीजी ने निर्मलचित्त होने से ध्यान किया ॥ २५ ॥

सब आत्माओं के आश्रय भगवान् में मनके लगजाने से सब क्लेश क्षय होगए तब संसार के दुःखों से रहित होगई उत्तम सुख को प्राप्त होगई ॥ २६ ॥

नित्य समाधि में स्थित रहने से गुणों के भ्रम सब छूटगये तब जैसे स्वप्न देखकर जगने पर उसबात को मनुष्य छोडदेता है तैसे देह के अध्यास को देवहूतीजीने छोडदिया ॥ २७ ॥

देवहूतीजी का शरीर यद्यपि दूसरी दासियों से सेवितथा अब सब भोग छोडदिये तौभी कोई चिन्ता न रहने से कुछ दुबला नहीं भया जैसे धुंआ से अग्नि छिप जाता है तैसे शरीर मैलसे ढकगया ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

दैवगुप्तमारब्धकर्मपालितम् ॥ २९ ॥

निर्वाणं नित्यमुक्तम् ॥ ३० ॥

हे वीर ! विदुर ! उपेयुषी प्राप्ता ॥ ३१ ॥

हे सौम्य । तस्यास्तन्मर्त्यं शरीरं सरिदभूत् कथम्भूतं योगेन विधूता विलीना मार्त्याः दैहिका धातुमला यस्य ॥ ३२ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपन्याख्या दीपिकाटिप्पणी ।

प्रकाशभेदेनात्मानं परमात्मानं ब्रह्म च ॥ ३० ॥

तस्थानं यत्रेत्यनेनान्वयात् ॥ ३१ ॥

सरिन्नदीविशेषः ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तपोयोमप्रचुरं मुक्तकेशं विकीर्णशिरोजं विगतवस्त्रमपि स्वाङ्गं देहं दैवगुप्तं दैवेन रक्षितं न बुबुधे न बुद्धवती तत्र हेतुः वासुदेवे भगवति प्रविष्टा धीर्यस्याः सा भगवदनुभवजनितानन्दसंप्लवे मग्नत्वान्न बुबुधे इत्यर्थः ॥ २९ ॥

एवं कपिलोपदिष्टेन ज्ञानमार्गेणाशु सा देवहूतिः परब्रह्म निरतिशयमानन्दरूपं भगवन्तमवाप हेति विस्मये ॥ ३० ॥

हे वीर ! विदुर ! यत्र सा मुक्तिमवाप तत्पुण्यतमं क्षेत्रं नाम्ना त्रैलोक्ये विश्रुतं प्रसिद्धमासीत् किं नाम तत्राह । यत्र क्षेत्रे सिद्धपदं सिद्धशब्दः प्रवर्त्तते सिद्धाश्रम, इत्युच्यत इत्यर्थः सिद्धपदप्रवृत्तौ निमित्तमाह । यत्र क्षेत्रे सा देवहूतिः संसिद्धिं मुक्तिमुपेयुषी प्राप्तवती अतस्तत्सिद्धक्षेत्रमिति प्रसिद्धमित्यर्थः ॥ ३१ ॥

तस्या इति । हे सौम्य ! तस्या देवहूत्याः मर्त्यं शरीरं तद्योगविधुतमार्त्यं तस्या देवहूत्याः योगेन विधुताः निरस्ता मार्त्याः वलिपलितादयो देहधर्मा यस्मिंस्तत्तथाभूतं सत्तया त्यक्तं शरीरं स्रोतसां नदीनां मध्ये प्रवरा सिद्धादिभिः सेविता सरिदभूत् सरिद्रूपेण प्रावहदित्यर्थः ॥ ३२ ॥

---

* मार्गेणाविरहम् इति श्रीविज० ।

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

शरीराभिमानाभावाद्ध्यसम्भवोऽनुमीयत इति भावेनाह। स्वाङ्गमिति। गोप्त्रभावात्कथं तद्देहावस्थानमत्राह। दैवेति। दैवेन हरिणा गुप्तं रक्षितं रक्षणे निमित्तमाह। वासुदेवेति ॥ २९ ॥

श्रवणसुखस्याप्यस्य प्रसङ्गस्य कदा नु समाप्तिरिति मन्दां शङ्कां परिहरंस्तद्देहस्य प्रारब्धकर्मनिर्वाणेन तस्याः श्रीनारायणप्राप्तिं वक्ति। एवं सेति। अविरहं सर्वगतं निर्वाणं प्रकृतिप्राकृतशरीररहितं निर्वृतं वा इत्यनेनेतिहाससमाप्तिं सूचयति ॥ ३० ॥

पूर्वं शुक्लस्य हरेरश्रुबिन्दुनिपाताद्बिन्दुसरोनामाभूदिदानीमस्याः देवहूत्याः सिद्धपदहेतुत्वात्सिद्धपदमिति नामान्तरं वक्ति। तद्वीरेति। वीर! विदुर! ॥ ३१ ॥

तत्र तद्देहो दाहकाभावाच्छ्वसृगालगोचरश्चेल्लोकहितेषणाच्चेत्रस्तुतिर्व्यर्था स्यादिति तत्राह। तस्या इति। तन्मर्त्यं शरीरं स्रोतसां नदीनां प्रवरा * सरित् ॥ ३२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

दैवेन श्रीवासुदेवेनैव गुप्तम् "किमजितोऽवति नोपसन्नान्" इति न्यायेन ॥ २९ ॥

प्रकाशविशेषेण परमात्माख्यं ब्रह्माख्यञ्च भगवन्तं महावैकुण्ठनाथमवाप तं च निर्वाणं संसारदुःखनिवृत्तिपूर्वकं यथा स्यात्तथा अवापेत्यर्थः तदाभासस्यापि तदानवस्थितेः ॥ ३० ॥ ३१ ॥

श्रीकपिलदेववद्रूपान्तरेण महावैकुण्ठस्थितापि लोकनिस्तारार्थं स्वदेहं सर्वत्र भ्रमयतीति लोकप्रसिद्धं सरिद्रूपमासाद्य स्वयं तदधिष्ठात्री भूत्वा पृथिव्यामपि व्यूह्य स्थितेत्याह। तस्या इति ॥ ३२ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

कदाचिदुत्थानदशायां देहं स्मरिष्यतीत्याशङ्क्याह। स्वाङ्गमिति। तपोयोगाभ्यां व्याप्तं मुक्तकेशमिति दैवगत्या केशविमोकेऽपि स्त्रीणां लज्जया अत्यावश्यकेऽपि निमित्ते देहं न बुबुधे स्थितिस्तु दैवाधीनेत्याह। दैवगुप्तमिति। अबोधे हेतुः वासुदेवे प्रविष्टा धीर्यस्याः ॥ २९ ॥

एवं तस्या बाह्याभ्यन्तरव्यवस्थामुक्त्वा आन्तरं फलितमाह। एवमिति। सा देवहूतिः कपिलोक्तेन मार्गेण भक्तिज्ञानयोगात्मकेन अचिरतः शीघ्रमेव परमात्मानं ब्रह्मानन्दं भगवन्तं सर्वशास्त्रप्रतिपाद्यमवाप हेत्याश्चर्ये स्त्रिया मुक्तिर्दुर्लभेति ॥ ३० ॥

तस्या मुक्तिः सर्वजनीना जातेति चेत्रप्रसिद्ध्या निरूपयति। तद्वीरासीदिति। वीरेति सम्बोधनं तथा शौर्यकरणार्थं स्वधर्मप्रतिपादनेन विश्वासार्थं वा तत् चेत्रं नाम्ना सिद्धशब्दवाच्यं सिद्धपदं पुण्यतममासीत्त्रैलोक्यविश्रुतमिति तन्मुक्तावेवेति तन्मुक्तौ प्रमाणमन्यथा सर्वेषु तीर्थेषु विद्यमानेषु तस्यैव कथं प्रसिद्धिः स्यात् अतः प्रसिद्धेर्हेतुमाह। सा संसिद्धिमुपेयुषीति। सा हि सम्यक्सिद्धिमुपेयुषी प्राप्तवती ॥ ३१ ॥

शरीरस्य विनियोगमाह। तस्या इति। तस्यास्तद्योगविधुतमार्त्यं मर्त्यमभूत्सरित्तपोयोगेन विधुतं मार्त्यं मृदंशो यस्य जलमेव हि घनीभूतं मृद्भवति यथा हिमं यथा वा करका यथा वा सैन्धवः योगीश्वरो वा महता तापेन तद्विशकलितं भवति अत एव एतादृशं मर्त्यं तत्सरिदभूत्। सा स्रोतसि सरस्वत्याः प्रविष्टा स्रोतसां प्रवरा सरस्वत्येवाभूत् सौम्येति सम्बोधनं विश्वासार्थं यथा वा सोमः अमृतमयः पाने विशकलितावयवो भवति नवम्याः सोमकलायाः पाता यम इति। ततः प्रभृति सा सरस्वती सिद्धिदा जाता तत्रैव अतः सिद्धसेविता जाता ॥ ३२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

दैवगुप्तं भगवता रक्षितम् ॥ २९ ॥

परं श्रेष्ठमात्मानं भगवन्तं वैकुण्ठनाथम्। ननु सा किं निर्वाणं न प्राप तत्राह। तस्या भगवानेव ब्रह्मनिर्वाण इत्याह। ब्रह्मेति। यद्वा। अधोक्षजालम्भमिहेत्यादौ "तद् ब्रह्म निर्वाणसुखं विदुर्बुधाः" इति सप्तमोक्तेर्ब्रह्मनिर्वाणपदवाच्यं तं कपिलमेव स्वपुत्रं कपिलवैकुण्ठे प्राप ॥ ३० ॥

हे वीर! विदुर! ॥ ३१ ॥

हे सौम्य! तस्यास्तन्मर्त्यं शरीरं सरिदभूत् कीदृशं योगेन विधुता विलीना मार्त्या धातुमला यस्य तत् ॥ ३२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तस्या भगवत्प्राप्तिलक्षणां मुक्तिमाह। एवमिति ॥ ३० ॥

हे वीर! सिद्धिं मुक्तिमुपेयुषी प्राप्ता ॥ ३१ ॥

हे सौम्य! तस्याः तन्मर्त्यं शरीरं सरिदभूत् कीदृशं योगविधुतमार्त्यं योगेन भगवद्ध्यानेन विधुता मार्त्या दैहिकाः धातुमला यस्य तत् ॥ ३२ ॥ ३३ ॥

---

### भाषा टीका

देवहूती जी का चित्त श्री वासुद मे प्रविष्ट होगया तब तप योग स्वरूप जो अपना देह है केश जिस के खुल गये हैं वस्त्र जिस में से गिर गया है केवल प्रारब्ध के ही अधीन है ऐसे देह का उनको कुछ स्मरण नहीं रहा ॥ २९ ॥

इस प्रकार से सो देवहूती जी कपिल जी के कहे मार्ग में स्थित होने से थोडे ही काल में ब्रह्म निर्वाण आत्मा भगवान् को प्राप्त होगई ॥ ३० ॥

---

* मातस्त्वं कपिलस्याद्य कपिलानामतः शुभे।
ममापि देहसार्थक्यमन्ततः कुरु भामिनीति।
कपिलमाहात्म्योक्तेः कपिला नद्येव देवहूतिरिति प्राञ्चः।

कपिलोऽपि महायोगी भगवान् पितुराश्रमात् ।
मातरं समनुज्ञाप्य प्रागुदीचीं दिशं ययौ ॥ ३३ ॥
सिद्धचारणगन्धर्वैर्मुनिभिश्चाप्सरोगणैः ।
स्तूयमानः समुद्रेण दत्तार्हणनिकेतनः ॥ ३४ ॥
आस्ते योगं समास्थाय सांख्याचार्यैरभिष्टुतः ।
त्रयाणामपि लोकानामुपशान्त्यै समाहितः ॥ ३५ ॥
एतन्निगदितं तात ! यत्पृष्टोऽहं तवानघ ! ।
कपिलस्य च संवादो देवहूत्याश्च पावनः ॥ ३६ ॥
य इदमनुशृणोति योऽभिधत्ते कपिलमुनेर्मतमात्मयोगगुह्यम् ।
भगवति कृतधीः सुपर्णकेतावुपलभते भगवत्पदारविन्दम् ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे [illegible]यस्कंन्धे कापि-
लेयोपाख्याने कपिलान्तर्धानं नाम त्रयस्त्रिंश-
त्तमोऽध्यायः ॥ ३३ ॥

समाप्तश्चायं तृतीयःस्कन्धः ।

---

भाषा टीका ।

हे वीर ! विदुर जी वह स्थान पुण्यतम तीनों लोकों [illegible]ख्यात सिद्ध पदनामका क्षेत्र होगया जहांपर श्रीदेवहूतीजी को प्राप्त भई ॥ ३१ ॥

सौम्य विदुर ! उन देवहूतीजी का योगसे शुद्ध जो मनुष्य सबमलों के नष्टहोने से सब नदियों में श्रेष्ठ सिद्धों से [illegible]दायक कपिलानामक नदीरूप होगया ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

का[illegible] यथावित्युक्तं तदेव प्रपञ्चयति । कपिलोऽपीति समनुज्ञा[illegible]प्याज्ञां संप्रार्थ्य ॥ ३३ ॥ दिशं ययौ[illegible]र्थं निकेतनं च ययौ ॥ ३४ ॥ ॥ ३३ ॥ ३४ ॥ [illegible] समाहित आस्ते ॥ ३५ ॥ [illegible]पसंहरति । एतदिति । तव त्वया ॥ ३६ ॥ [illegible]र्तनफलमाह । य इति । सुपर्णकेतौ गरुडध्वजे [illegible]ति ॥ ३७ ॥

श्रीमत्कापिल[illegible] स्तादृशीं गतिमेव [illegible]

[illegible]मद्भागवते महापुराणे तृतीयस्कन्धे
[illegible]स्वामिकृतभावार्थदीपिकायाम्
[illegible]त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
[illegible]प्तेयं तृतीयस्कन्धव्याख्या ।

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपन्याख्या दीपिकाटिप्पणी ।

तदेव यानमेव प्राक् प्रथमं योगिनां सदाचारादुदीचीमेव दिशं ययौ पश्चाद्गङ्गासागरसङ्गम एव स्थिरो बभूवेत्यर्थः॥३३॥

सिद्धेति युग्मकम् । समाहित इति मर्य्यादालीलाशालित्वं व्यञ्जितम् ॥ ३४ ॥ ३५ ॥

यद्वस्तु प्रतिपृष्ट एतन्निगदितम् सामान्यत उक्तस्यैव विवरणं कपिलस्येति ॥ ३६ ॥

अत्र श्रोतृवक्त्रोरपि साक्षात्पदारविन्दलाभाभिधानेन देवहूत्या निर्विशेषप्राप्तिः प्रकरणस्य तत्परत्वं च दूरोत्सारितमिति ज्ञेयम् ॥ ३७ ॥

मृत्योर्विमोच्य येनाहं तृती[illegible]स्कन्धदीपनम् ।
प्रापितोऽस्मि प्रपद्येऽहं चैतन्यं प्राणपालकम् ॥ १

कृष्णगोविन्दमिश्रेण राधारमणसेविना ।
राधारमणदासेन तृतीये दीपनं कृतम् ॥ २ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीरा[illegible]
गोस्वामिविरचितदीपन्याख्यदीपिकाटि[illegible]
त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

समाप्तेयं तृतीयस्कन्धव्याख्[illegible]

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

कपिलोऽनुमतो यथाविस्युक्तं क ययौ इत्यत्राह। हे विदुर! महायोगी भगवान् कपिलोऽपि मातरं देवहूतिं समनुज्ञाप्य मात्रानुज्ञातः प्रागुदीचीमीशानदिशं प्रति ययौ ॥ ३३ ॥

तत्र सिद्धचारणादिभिः स्तूयमानः समुद्रेण दत्तमर्हणं निकेतनं निवासस्थानं च यस्य स ययौ ॥ ३४ ॥

आस्ते इति। साङ्ख्याचार्यैः कपिलोक्तसाङ्ख्यप्रवर्तकयोगिभिरभिवन्दितः लोकानामुपशान्त्यै क्षेमाय समाहितमनाः स्वयमपि योगमास्थायास्त इत्यर्थः ॥ ३५ ॥

स्तुतिर्व्यर्था यम्भुवस्य च मनोर्वंश इत्यादिना कृतस्य प्रश्नस्य यदुत्तरं स्रोतसां नदद्युपसंहरति। एतदिति। हे अनघ विदुर! अहं यत्पृष्टः ...ति त्वया पृष्टस्तदेतत्तव तुभ्यं निगदितं मया तत्प्रसङ्गात् कपिलस्य देवहूतेश्च लोकपावनः शुश्रूषणकथनपराणां च लोकानां पावनः सम्वादोऽपि निगदितः ॥ ३६ ॥

कपिलदेवहूतिसम्वादश्रवणादिफलमाह। य इति। कपिलेन पूर्वं फलमुक्तमत्र तु मैत्रेयेणेति वक्तृभेदा... पौनरुक्त्यम् इदमात्मनो योगरूपं गुह्यतमं कपिलमुनेर्मतं य... णोति वक्ति सनि यो वाभिधत्ते श्रोतृषु सत्सु श्रावयति स पुमान् सुपर्णकेतौ गरुडध्वजे भगवति कृतधीः निष्पन्नभक्तियोगो भूत्वा भगवत्पदारविन्दं लभते प्राप्नोति ॥ ३७ ॥

इति श्रीवत्सान्वयपयःपारावारराकासुधाकरस्य सर्वविद्यानिधेः श्रीशैलगुरोः सुतेन तच्चरणकमलपरिचर्याप्रसन्नतत्सूक्तिसमधिगतश्रीमद्भागवतार्थहृदयेन श्रीवैष्णवदासेन श्रीवीरराघवविदुषा कृतायां श्रीमद्भागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां तृतीयस्कन्धे त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

श्रीमते रामानुजाय नमः।
श्रीमते निगमान्तमहादेशिकाय नमः॥
समाप्तेयं तृतीयस्कन्धव्याख्या।

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

पूर्वं कपिलगमनस्य कर्म नोक्तमधुना तत्पूर्वं तद्गमनं वक्ति। ...ऽपीति। महायोगी पूर्णज्ञानी प्रागुदीचीं दिशं शङ्कर... ॥ ३३ ॥

अर्हणनिकेतने पूजानिवासस्थाने यस्मै स तथा ॥३४॥

...यानलक्षणं प्राणायामलक्षणं वा साङ्ख्याचार्यैः यथा... सनकादिभिः नायं योगः स्वप्रयोजनोपदेशार्थः ...र्थ इत्याह। त्रयाणामिति। उपशान्त्यै मङ्ग...

...सम्बोधयंस्तत्प्रदनपरिहारकथनमुपसंहरति। एत... देवहूत्या एव सिद्धिरेवं किं तु लोकस्य

श्रोत्रादीनां क्षिप्रप्रवृत्त्यर्थं श्रवणादिफलमाह। य इदमिति। आत्मयोगगुह्यं परमात्मप्राप्तिसाधनज्ञानोपायानां मध्ये रहस्यं यः सुपर्णकेतौ गरुडध्वजे भगवति कृतधीः श्रवणादिनेदं मतमभिधत्ते अभ्यस्यति स च भगवत्पदारविन्दमुपलभतेऽपरोक्षीकरोतीति ॥ ३७ ॥

सुनीलनीरदश्यामं सच्चिदानन्दविग्रहम्।
रमारमणमीशेशं विठ्ठलं समुपास्महे ॥ १ ॥
पदरत्नावली नाम तृतीयस्कन्धकाशिनी।
वनमालेव देवेश! तव कण्ठे विराजताम् ॥ २ ॥
तृतीयस्कन्धमारुह्य गिरीन्द्रमिव गह्वरम्।
अवरूढे मयि स्निग्धाः कृपां कुर्वन्तु साधवः ॥ ३ ॥

इति श्रीमन्महेन्द्रतीर्थपूज्यपादशिष्यविजयध्वजमुनीन्द्रकृतायाम् श्रीमद्भागवतटीकायां पदरत्नावल्याम् तृतीयस्कन्धे त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
समाप्तेयं तृतीयस्कन्धव्याख्या।

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

प्राक् प्रथमं सदाचारादुदीचीमेव दिशं ययौ पश्चाद्गङ्गासागरसङ्गम एव स्थिरतामवापेत्यर्थः ॥ ३३ ॥

सिद्धेति युग्मकम् ॥ ३४ ॥ ३५ ॥

एतदित्यत्र एवमिति पुण्यारण्यः ॥ ३६ ॥

श्रीकपिलदेवोक्ततात्पर्य्यं फलेन दर्शयन् श्रीदेवहूत्यास्तादृ... गतिमेव द्रढयति। य इदमिति। योऽभिधत्ते मात्रं यो वा श्रृ... मात्रं किमुतानुतिष्ठति यः किमुततरां श्रीदेवहूतिरित्यर्थः ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
समाप्तोऽयं तृतीयस्कन्धक्रमसन्दर्भः

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं तस्याः सर्वसिद्धिमुक्त्वा ... समाप्य तस्य सर्गस्य विसर्गसाधकत्व एव सर्गस्य ... त्तरोपयोगार्थं कपिलस्य स्थितिमाह। कपिलोऽपी... स्तोत्रं प्रतिष्ठा च त्रयमाह गुणान्वितम्। तत्र... महायोगी गमने प्रयासरहितः मातुः सिद्धिं ... कर्त्तव्यमपि जानातीति भगवानिति सर्गनिया... राश्रमान्मातरं समनुज्ञाप्य प्रागुदीचीं दिशं ... वै देवमनुष्याणां शान्ता दिक् ॥ ३३ ॥

गमने सिद्धादीनां स्तोत्रमाह। सिद्धेति ... मुक्ताः ते भगवदंशाः षड्विधा निरूपिताः ... ... अप्सरसां गणाः येषां ते इ...

